॥ श्रीः ॥

चौखम्बा संस्कृत ग्रन्थमाला

( ग्रन्थ-संख्या १०२ )

श्रीश्वेतायनव्यासविरचिता

# श्रीलक्ष्मीनारायणसंहिता

## कृतयुगसन्तानाख्यः प्रथमः खण्डः

( प्रथमखण्डे प्रथमो भागः )

सम्पादकः संशोधकश्च

**स्वामी श्रीकृष्णवल्लभाचार्यः शास्त्री**



चौखम्बा संस्कृत सीरीज आफिस, वाराणसी-१

# स्वामी श्रीकृष्णवल्लभाचार्य-विरचितपुस्तकानि

## संस्कृतम्

१ न्यायसिद्धान्तमुक्तावल्याः किरणावली
२ तर्कसंग्रहदीपिकायाः किरणावली
३ न्यायबोधिनीपदकृत्ययोष्टिप्पणी
४ सांख्यकारिकायाः स्वामिनारायणभाष्यम्
५ सांख्यतत्त्वकौमुद्याः किरणावली
६ सांख्यकारिकागौडपादभाष्यस्य किरणम्
७ योगसूत्राणां स्वामिनारायणभाष्यम्
८ योगसूत्रभोजवृत्तेः किरणम्
९ श्रीस्वामिनारायणवेदान्तसारः
१० श्रीगुणातीतब्रह्मोपनिषत्
११ विशिष्टाद्वैतेऽपि विशिष्टब्रह्माद्वैतत्त्वम्
१२ ख्यातिविमर्शः
१३ प्रमात्वविमर्शः
१४ जातिविमर्शः
१५ वचनामृतप्रामाण्यहेतवः सूत्राणि च
१६ श्रुतितात्पर्यनिर्णयः
१७ साकारत्वविमर्शः
१८ श्रीहरिस्वरूपनिर्णयस्य सत्संगभाष्यम्
१९ सुधासिन्धोः ब्रह्मरसायनभाष्यम्
२० अवतारावतारित्वे पुराणादिवचनानि
२१ अन्योऽपि च, स्तोत्राणि च

## संस्कृत-हिन्दी

२२ हितोपदेशे मित्रलाभकिरणावली

## संस्कृत-गुजराती

२३ श्रीगुणातीतानन्दस्वामिवार्ता
२४ श्रीगोपालानन्दस्वामिवार्ता

## हिन्दी

२५ श्रीस्वामिनारायणवचनामृतानि
२६ शिक्षापत्री
२७ शिक्षापत्र्याः किरणावली
२८ अखिलभूमण्डलीयसाम्प्रदायिकमुक्तिव्यवस्था

## संस्कृते प्रमाणप्रमेयम्

२९ तत्त्वप्रभावली



॥ श्रीः ॥

चौखम्बा संस्कृत ग्रन्थमाला

( ग्रन्थ-संख्या १०२ )

श्रीश्वेतायनव्यासविरचिता

# श्रीलक्ष्मीनारायणसंहिता

## कृतयुगसन्तानाख्यः प्रथमः खण्डः

( प्रथमखण्डे प्रथमो भागः )

सम्पादकः संशोधकश्च
न्यायाचार्यः
**स्वामी श्रीकृष्णवल्लभाचार्यः शास्त्री**
( नवानगर, सौराष्ट्र )



चौखम्बा संस्कृत सीरीज आफिस, वाराणसी-१

१९७१

प्रकाशक : चौखम्बा संस्कृत सीरीज आफिस, वाराणसी
मुद्रक : विद्याविलास प्रेस, वाराणसी
संस्करण : प्रथम, वि० संवत् २०२८
मूल्य : ७५-०० ( प्रथम खण्ड, भाग १-२ )





पोस्ट आफिस 'चौखम्बा', पोस्ट बाक्स नं० ८
वाराणसी-१ ( उ० प्र० )
भारतवर्ष
फोन : ६३१४५

THE
CHOWKHAMBA SANSKRIT SERIES
( WORK NO. 102 )

# ŚRĪLAKṢMĪNĀRĀYAṆASAṂHITĀ

OF

ŚRĪ ŚVETĀYANA VYĀSA

VOL. I : PART–I

( KṚTAYUGASANTĀNA )

EDITED BY

NYĀYĀCHĀRYA

SWAMĪ SRĪKṚṢṆAVALLABHĀCĀRYA, ŚĀSTRĪ

THE
CHOWKHAMBA SANSKRIT SERIES OFFICE
VARANASI-1 ( India )
1971

Publisher : The Chowkhamba Sanskrit Series office, Varanasi-1
Printer : Vidya Vilas Press, Varanasi-1
Edition : First Edition, 1971
Price : Rs. 75-00 ( Vol. I : Parts I-II )


Oriental and Foreign Book-Sellers and Publishers
P. O. Chowkhamba, Post Box 8,
Varanasi-1 ( India )
1971
Phone : 63145

# भूमिका

## संहिताहृदयम्

आत्मनां भगवत्सान्निध्यहितकर्तृत्वं संहितात्वम्, यत्र लौकिकपारमार्थिकज्ञानविज्ञानादि-मूर्तिस्वरूपाणि श्रेयःप्रेयःसम्पादकानि भवन्ति, 'सन्मूलाः सौम्येमाः सर्वाः प्रजाः सत्प्रतिष्ठाः सहायतनाः सन्निधना' इति बोधितपरमात्माऽनुरूपितसमष्टिव्यष्टिगर्भगताऽस्मदनुसन्धानं सततम-भ्युदयपूर्वकाऽपवर्गगोचरं संहितया निर्दिश्यते, सन्मूलानाम् एशियाऽऽफ्रिकाऽमेरिकौष्ट्रेलियादिमहा-खण्डाऽन्तर्गतखण्डानां प्रजानां पारम्पर्यं चेतिहासं संहितायामत्र प्राथमिकश्वेतायनव्यासेन प्रदर्शितम्, प्रजानां नैष्कर्म्यभक्तिविविधधार्मिकसामाजिकनैसर्गिकचर्याश्चाऽप्यत्र निरूपिताः, एषा संहिता श्रीलक्ष्मीनारायणसंहितानाम्ना कृतयुगसन्तानत्रेतायुगसन्तानद्वापरयुगसन्तानतिष्ययुगसन्तानात्मक-खण्डचतुष्टयात्मिका षड्विंशतिसाहस्रान्वितलक्षश्लोकानां ग्रन्थनात्मिका वर्तते अस्याः कृतसन्तानः षट्पञ्चाशत्साहस्रश्लोकात्मकोऽयं वर्तते, अत्र ब्रह्मसृष्टीश्वरसृष्टितत्त्वसृष्टिदेवसृष्टिपितृसृष्टिमहर्षिमान-वसुराऽसुरतिर्यगादिसृष्टयो निरूपिताः, सर्वे धर्मा वर्णिताः, सृष्टिसमधिकारिणामाख्यानानि प्रवर्णितानि, तत्राऽऽराधना ब्रह्मविद्यामहादेवीदिव्यचिह्नपतिव्रताधर्मभगवदवताराः, महातीर्थयोगगति-स्वर्गतारकिगतिनादमाहात्म्याऽप्सरोवंशकाश्यादिमहातीर्थपुरुषोत्तमपुर्यादिमहाक्षेत्राणि, गणेशादि-देवोद्भवधर्मप्रजाब्रह्मलोकगोलोकवैकुण्ठादिवर्णनम्, रैवताचलादिव्यवस्थानाऽऽसुरपरिहाणसतीशिव-विवाहविष्णुलक्ष्मीविवाहाः, दक्षयज्ञब्रह्मवंशकाल्याद्याख्यानानि, द्वारिकाद्याख्यानं, गंगायमुना-द्यवतरणसर्वैकादशीव्रताख्यानानि, सर्वतिथिव्रताख्यानवार्षिकतिथ्याख्यानश्राद्धप्रकरणशुद्धाविद्धैकाद-श्याख्यानपुरुषोत्तममासमाहात्म्यानि, जालन्धराख्यानतुलसीविवाहशालग्रामशिवलिङ्गाद्याख्यानानि, माथुरक्षेत्रतीर्थादिमाहात्म्यम्, पितृप्रकरणम्, यमराजप्रकरणम्; समुद्रमथनाख्यानम्, नलनहुषा-दिकथाः, प्रतिव्रतासतीनामाख्यानानि, पद्मानारायणोद्वाहः, वेंकटादिमाहात्म्यम्; सौराष्ट्रभूमीश्वर-माहात्म्यानि, वैदिकसुरभूपादिवृत्तान्ताः, महर्षिचमत्काराः, चमत्कारपुर्यादिचमत्काराः, श्रीकृष्णा-

धवतरणम् , गर्वहरणाख्यानानि, विशालायुद्धववृत्तान्ताः, श्रीकृष्णनारायणचमत्काराः, तीर्थसहस्रादिवर्णनम् , नार्मदादिमहाख्यानानि, इन्द्रद्युम्नाद्याख्यानानि, तत्र तत्र पारेसहस्रं प्राचीनाऽतिप्राचीनदिव्यसत्पुरुषसूर्यचन्द्रवह्नितपस्विमुनिदेवीमानुषीप्रभृतीनां चमत्कारा धर्मार्थकाममोक्षात्मकमहोपदेशा अपि सन्ति स्पष्टाः, पारेसाहस्रप्राचीनाऽतिप्राचीनचमत्कारसंभृतमहाविभूतीनां चमत्कारैश्वर्याण्यत्र श्रीश्वेतायनव्यासेनाऽऽदिव्यासेन वायुपुराणव्यासाध्याये प्रोक्तेन वर्णितानि, अत्राऽन्तःप्रविश्य वाचकानां महाविद्याकलाज्ञानविज्ञानादिसागरसमतालाभः स्यात् , अन्यत्राऽनुपलब्धानामत्र प्रायशो दर्शनान्नवनवो लाभो भवेदितिहासरसिकानामिति, विद्वद्भिस्तूपादाय सम्यक् परिशीलनीयोऽयं श्रीलक्ष्मीनारायणसंहितायाः कृतयुगसन्तानखण्डः, एतल्लब्धज्ञानपाण्डित्यलाभाऽग्रे तु मूल्यमपि किञ्चिन्मात्रमिदमत्र दर्शितम् , भूमण्डले यावन्तो देशाः प्रदेशास्तेषां तत्तत्प्रसंगोपाख्यानानामत्र दत्तदृष्टीनां लाभः स्यादित्यलम् ।

विनीतः—

**कृष्णवल्लभाचार्यः**

श्रीरामनवमी
वि० सं० २०२८

# प्रकाशकीयं निवेदनम्

नातितिरोहितमेतद् विपश्चिदपश्चिमानां यदियमस्माकं संस्था शताधिकवर्षैरप्रकाशितपूर्वानलभ्यांश्च वेदादिपाकशास्त्रान्तसर्वशास्त्रीयाननेकान् संस्कृतग्रन्थान् चौखम्बासंस्कृतग्रन्थमालायां प्राकाश्यं प्रापय्य सामोदं सुरभारतीं भारतीयसंस्कृतिरसिकान् विदुषश्च समभ्यर्चयति। यद्यपि वस्तुवादकवलितेऽतिकरालेऽस्मिन् काले द्रव्यलाभदृष्ट्या संस्कृतग्रन्थप्रकाशनं ग्रन्थमालाधिकारिणां न समृद्ध्यै भवति तथापि विदुषां सपरितोषकृपाकटाक्षपातमात्रलालसया सोऽयं भारतीसेवामार्गोऽद्यापि नास्माभिः परिहातुं शक्यते।

तामेव पूर्वजजनप्रवर्तितां धर्म्यां परम्परामनुसरतां, श्रीश्वेतायनव्यासप्रोक्तायाः साङ्गोपाङ्गसनातनधर्मप्रतिपादनपरायाः श्रीलक्ष्मीनारायणसंहितायाः कृतयुगसन्तानाख्यं प्रथमं भागं बुधजनकरसरोरुहेषु सप्रश्रयमुपायनीकुर्वतां नश्चेतांसि अमन्दानन्दसन्दोहमेव गाहन्ते। विदाङ्कुर्वन्तु प्रेक्षावन्तो विपश्चितो यत् श्रीलक्ष्मीनारायणसंहिताख्योऽयं पुराणदेशीयो महाग्रन्थः कृत-त्रेताद्वापरतिष्येतिसन्तानचतुष्टयविभक्तः किञ्चिदधिकसार्धलक्षश्लोकात्मकश्च। तस्य कृतयुगसन्तानाख्यः प्रथमभाग एवाधुना प्रकाश्यते। शेषाश्च त्रयो भागा यथाकालमेव क्रमतो मुद्राप्यात्रभवतां समक्षमुपस्थापयिष्यन्ते।

अद्यावधि क्वाप्यप्रकाशिताया अस्याः संहिताया एतदेवेदंप्रथमतया विहितं संस्करणम्। तच्च सौराष्ट्रप्रान्तान्तःपातिजीर्णदुर्ग-( जूनागढ ) वास्तव्यैः नानाशास्त्रपारावारपारीणैः शास्त्रोद्धारैकव्रतैः स्वामिनारायणसम्प्रदायविद्वद्वरैः श्रीकृष्णवल्लभाचार्यमहाभागैर्भूयसा परिश्रमेण सम्पादितम्। इमे महात्मानः सांख्ययोग-तर्कवेदान्तादिशास्त्रेषु कृतभूरिपरिश्रमा अनेकदार्शनिक ग्रन्थकर्तारः टीकाकृतश्च। अध्ययनाचरणप्रचारणैः स्वधर्मं सेवमानानामनेकग्रन्थप्रणयनेन विद्यार्थिनां विदुषां च महोपकारं विदधतामेतेषां शुभ्रं यशः कृत्स्नं भारतभूमण्डलमापूरयतीति नातिरञ्जितं वचः। इमे महानुभावा अशेषानर्घसमयव्ययेन भूयसा च परिश्रमेण कुशाग्रया च स्वशेमुष्याऽतिजीर्णहस्तलिखितप्राचीनपाण्डुलिपिमवलम्ब्य लुप्तप्रायस्यास्य ग्रन्थरत्नस्योद्धारं विधाय सर्वेषां विद्यानुरागिणां कृतवेदिताभाजनं जाता इत्यत्र न कस्यापि क्वापि विचिकित्सा।

मूलग्रन्थस्य महत्त्वप्रतिपाद्य-रचयितृ-रचनाकालादिविषयान् अनतिविलम्बं प्रकाशं गमिष्यति द्वितीयभागे भूमिकादर्शनादेव ज्ञास्यन्ति जिज्ञासव इत्यत्र न बहु वक्तव्यं प्रकाशकेन।

आशास्महे विद्वांसः स्वकृपाकटाक्षाभिवृष्ट्या एतद्ग्रन्थसम्पादने सम्पादकमहोदयानां श्रममस्माकं च तत्प्रकाशने समुपेतमुत्साहं सफलयिष्यन्तीति कृतमतिप्रपञ्चितेन वाचाम्। इति।



ओम्

श्रीलक्ष्मीनारायणीयसंहितायाः

# प्रथमखण्डस्य कृतयुगसन्तानस्याऽनुक्रमणिका

अध्यायाः पृष्ठाः

अध्यायाः | पृष्ठाः

॥ इतिश्रीलक्ष्मीनारायणीयसंहितायाः कृतसन्तानात्मकस्य प्रथमखण्डस्य अध्यायविषयाणामनुक्रमणिका ॥

॥ ५५,५२७ श्लोकाः कृतसन्तानस्य सन्ति ॥





अनादिश्रीकृष्णनारायणाय नमः

श्रीगणेशाय नमः

# ॐ श्रीलक्ष्मीनारायणसंहिता

प्रथमः—

## ॥ कृतयुगसन्तानः ॥



परंब्रह्मांडपरंब्रह्म श्रियं नारायणं हरिम् ।
सर्वाऽन्तर्यामिणं वन्दे देवं सर्वाऽवतारिणम् ॥ १ ॥
श्रीश्च लक्ष्मीश्च यत्पत्न्यौ विप्राग्नी यन्मुखं मतम् ।
सन्तो यद्धृदयं शश्वत् तस्मै चाऽन्वयिने नमः ॥ २ ॥
दिविषद्बर्हिषत् त्रिषत् पितृसद्भूतसच्च यः ।
ध्यानलभ्यस्वरूपाय तस्मै शंवर्षिणे नमः ॥ ३ ॥
हिमवच्छिखरे रम्ये स्वाश्रमे पर्वतोत्तमे ।
नारायणेन वै लक्ष्म्यै या प्रोक्ता निजसंहिता ॥ ४ ॥
बद्रिकाश्रमतीर्थे तां ततो लब्ध्वाऽऽदिरूपधृक् ।
श्वेतव्यासो दिव्यदृष्टिश्चतुःशिष्यानुवाच ह ॥ ५ ॥
श्वैतिं च सुशिखं चापि श्वेताश्वं श्वेतलोहितम् ।
चत्वारस्ते महात्मानो ब्रह्मिष्ठा ब्रह्मपारगाः ॥ ६ ॥
भूत्वा धाम हरेः प्रापुः पुनरावृत्तिवर्जितम् ।
अनादिश्रीकृष्णनारायणपत्न्यस्तु ताः कथाः ॥ ७ ॥
पतिं नारायणं प्रेम्णा पप्रच्छुर्लोमशाऽऽश्रमे ।
सौराष्ट्रे कुंकुमवापीक्षेत्रेऽश्वपट्टसारसे ॥ ८ ॥
नारायणश्च ताभ्यो वै जगादेमां हि संहिताम् ।
लक्ष्मीनारायणसंहिताख्यां सर्वार्थसंभृताम् ॥ ९ ॥
पञ्चविंशतिसाहस्राऽधिकलक्षं हि वर्तते ।
श्लोकानां यत्र संख्यानं मोक्षदं पाठमात्रतः ॥१०॥
एकदा नारदः प्रायात् कर्तुं वैकुण्ठिदर्शनम् ।
सभा तेन समासीना दृष्टा श्रीविष्णवधिष्ठिता ॥११॥
दिव्या मुक्तास्त्वक्षराख्या गोलोकस्थास्तथाऽपरे ।
वैकुण्ठवासिनो मुक्ताः श्वेतद्वीपनिवासिनः ॥१२॥
अव्याकृताऽमृतवासाः श्रीलक्ष्मीधामवासिनः ।
बद्रीक्षीराऽब्धिमाश्चापि तदन्यद्धामवर्तिनः ॥१३॥
ऋषयः पितरो देवाः सिद्धा गान्धर्वचारणाः ।
लोकपालाश्च मनवस्तापसाः साधवश्च ये ॥१४॥
मुनयो दिव्यगतयो दिव्याऽहतसुविग्रहाः ।
आसन् सर्वे तत्र योगे नारायणपरायणाः ॥१५॥
लक्षयोजनविस्तीर्णाऽऽप्रान्तसंकुलिता सभा ।
नारदेन तु संदृष्टा ह्यर्धा पुंभिः प्रकाशिता ॥१६॥
वामभागे यत्र लक्ष्मीस्तत्र देव्यस्तु संस्थिताः ।
मुक्तान्यो वासुदेवान्यो गोप्यः सख्यस्तथा पराः ॥१७॥
ईश्वरिण्यो भगवत्यः पार्षदाण्यश्च सेविकाः ।
ब्रह्माण्यो मातरो देव्यो मानव्यः सिद्धविग्रहाः ॥१८॥

नारदेन सभा दृष्टा ह्यर्धा नारीप्रकाशिता ।
कृष्णनारायणं देवं हरिं विष्णुं सनातनम् ॥१९॥
श्रियं लक्ष्मीं महामायां नारदः प्राणमन् मुदा ।
सर्वां सभां प्रणम्याऽथ विष्णुदत्ते सुविष्टरे ॥२०॥
न्यषीदन्नारदस्तत्र तैः सर्वैः सत्कृतः ऋषिः ।
व्यासोऽहं श्वेतसंज्ञो वै सूतः सुशिखनामकः ॥२१॥
व्याख्यातारस्तथा चान्ये बृहस्पतिपुरोगमाः ।
दिव्यरूपास्तु ते सर्वे नारायणसमीहया ॥२२॥
कथास्तु विविधास्तत्र चक्रुर्भक्तिविवर्धनाः ।
तत्र नारायणेनोक्तं नारदोऽयं महामुनिः ॥२३॥
बहुश्रुतो बहुज्ञाता समाख्याननिधिर्महान् ।
लोकवृत्तान्तकुशलः प्रष्टव्यो वृत्तवित्तये ॥२४॥

**लक्ष्मीरुवाच—**

भो तपस्विन् महायोगिन् विष्णोरंश महामुने ।
कुतस्त्वादागम्यते किं वर्तते विष्णुसृष्टिषु ॥२५॥
कथंव्रता जना भूमौ समयश्चापि कीदृशः ।
तीर्थानां सुसतां पृथ्व्या भूसुराणां गवां तथा ॥२६॥
दीनानां सुकृतस्यापि साध्वीनां न्यासिनां स्थितिः ।
कीदृशी साम्प्रतं चास्ति मोक्षाध्वा कच्चिदक्षतः ॥२७॥
ज्ञानं विज्ञानसहकृत् कच्चिद्द्विप्रेषु राजते ।
नारायणस्य सद्भक्तिर्लोकेषु वर्तते न्विति ? ॥२८॥

**श्रीनारद उवाच—**

पितरौ सर्वदा वन्दे कृपालू मुक्तिदायकौ ।
स्वरूपं नाऽविदितं चापि पित्रोः सर्वज्ञयोः किल ॥२९॥
तथापि शिष्यधर्मत्वात् कथयामि यथाक्रमम् ।
पर्यटन् सुबहून् लोकान् दृष्ट्वा कृतयुगस्थितिम् ॥३०॥
विलोक्य विष्णुसृष्टौ वै विष्णुभक्तियुतान् जनान् ।
हृष्यामि च मुहुर्मातः पातिव्रत्यपराः प्रजाः ॥३१॥
धन्योऽयं भगवान् विष्णुर्धन्या मा परमेश्वरी ।
यत्प्रतापाद् ध्रुवा मुक्तिर्लभ्यते मानवैः किल ॥३२॥
श्रवणात्कीर्तनाद्विष्णोः स्मरणात्पादसेवनात् ।
अर्चनाद्वन्दनात् सख्याद्दास्याद्वाऽऽत्मनिवेदनात् ॥३३॥
ज्ञानाऽज्ञानकृताद्वापि संसारमलवर्जनात् ।
सद्यः संप्राप्यते मोक्षस्तस्माद्भाग्यं नु किं परम् ॥३४॥
सकृज्जपन्ति ये जाप्यं गृणन्ति नाम वा हरेः ।
दिव्यभावनया मातर्मुक्तिं यान्ति तु ते ध्रुवाम् ॥३५॥
सामान्यामथवा मुख्यां विष्णोर्दीक्षां हि ये जनाः ।
गृह्णन्त्याबालवृद्धाद्यास्ते स्युर्वैकुण्ठवासिनः ॥३६॥

आनुकूल्यं सदा विष्णोः प्रातिकूल्यविवर्जनम् ।
विष्णौ पूर्णो हि विश्वासस्तवाऽस्मीतिविरेषणा ॥३७॥
देहेन्द्रियमनःप्राणाऽभिमतिधीषणात्मनाम् ।
न्यासो विष्णौ तथा दीनाऽधीनता च हरेः सदा ॥३८॥
सर्वस्वं मे हरिः साक्षान्नान्यच्चेति मतिः स्थिरा ।
इत्येवं षड्विधा विष्णौ प्रपन्तिः शरणागतिः ॥३९॥
तदेकं वा समासाद्य नारायणपरायणः ।
भावैक्यं वा क्रियैक्यं वा ह्यात्मैक्यं वा प्रसाधयेत् ॥४०॥
तथा तु श्रीहरेरैक्यं यथा यावत्प्रजायते ।
तावत्तथा स्वयं नारायणानन्दं समश्नुते ॥४१॥
प्रेमतत्त्वं द्रवरूपं चात्मापि द्रवतां भजेत् ।
द्रवद्वयं समासाद्य स्वयं विष्णुर्द्रवो भवेत् ॥४२॥
आनन्दघनचिद्घनविज्ञानघनमिष्टताः ।
नित्यतृप्तनित्यशैत्यनित्यसुखसुपुष्टताः ॥४३॥
नारायणैक्यमापन्नः सर्वान् कामान् समश्नुते ।
क्वचित्पार्श्वे क्वचिन्मूर्तौ क्वचित्तस्मिन् प्रलीयते ॥४४॥
क्वचिन्मुक्तः क्वचिल्लक्ष्मीः क्वचिद्दासः प्रवर्तते ।
शरीरवच्चेन्द्रियवन्मनोवत्तस्य जायते ॥४५॥
अहं तु नारदो मातर्विष्णोर्मन इतीरितः ।
त्वं तु लक्ष्मीस्तस्य चाऽर्धे शरीरात्मेति कथ्यसे ॥४६॥
सन्पदार्थो हरिः साक्षाच्चिदर्थस्त्वं नु सम्मता ।
तयोर्द्रवे महानन्दः सच्चिदानन्द उच्यते ॥४७॥
येन केनापि भावेन त्वात्मा वै द्रवतां व्रजेत् ।
तद्भावद्रवमासाद्य मुक्तिं विष्णुमयीं व्रजेत् ॥४८॥

**श्रीश्वेतव्यास उवाच—**

इत्युक्त्वा द्रवरूपेण नारदो लीनतां गतः ।
विष्णौ प्रेमपराकाष्ठासुखानुभववारिधौ ॥४९॥
पश्यतां तु सभास्थानां सर्वेषामिदमद्भुतम् ।
चमत्कृतिकरं जातम् अहो भक्तस्य भक्तता ॥५०॥
लक्ष्मीर्जिज्ञासमाना वै नारायणपरायणा ।
पप्रच्छ परमात्मानं लोकोपकारसत्तये ॥५१॥

**श्रीलक्ष्मीरुवाच—**

अहो भक्तास्तु बहवा दृष्टास्ते परमात्मनः ।
न कश्चिदीदृशो दृष्टो योऽयं त्वयि गतो द्रवम् ॥५२॥
मन्ये तु कारणं तत्र करुणा श्रीमतस्तव ।
यस्योपरि भवेद् देव निःसीमानुग्रहस्तव ॥५३॥
तस्यैव नाथ नो भिन्नो भवसीति मतिर्मम ।
एतादृशात्मलाभार्थं यथा यद् भवतो मतम् ॥५४॥

यद्वाऽनुग्रहलब्ध्यर्थं किं कर्तव्यं त्वयेष्यते ? ।

**श्रीश्वेतव्यास उवाच—**

नारायणस्तु तच्छ्रुत्वासर्वेषां हितकाम्यया ॥५५॥
उवाच परमप्रीत्या स्वल्पमप्यतुलार्थभृत् ।
येन साधारणा जीवा अपि यान्तीदृशीं गतिम् ॥५६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने
वैकुण्ठे लक्ष्मीनारायणीयसभायां नारदीय-
द्रवीभावभक्तिचमत्कृतिनिरूपणात्मकः
प्रथमोऽध्यायः ॥ १ ॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि प्रवक्ष्यामि भक्तस्य द्रवलब्धये ।
यथा मेऽनुग्रहः प्राप्यस्तद्विधारय तत्त्वतः ॥ १ ॥
मुक्तसृष्टावीशसृष्टौ जीवसृष्टावपि प्रभुः ।
असृजत्साकृतीन्सर्वान् शरीरिण इति स्थितिः ॥ २ ॥
आत्मा त्विन्द्र इतिप्रोक्तः सर्वशक्तिगुणाश्रयः ।
मनश्चित्तमहंबुद्धिस्तस्य करणमान्तरम् ॥ ३ ॥
इन्द्रस्य शक्तयश्चैताश्चतस्रः समुदाहृताः ।
श्रोत्रत्वङ्नेत्ररसनाघ्राणवाक्पादपाणयः ॥ ४ ॥
पायूपस्थे चेन्द्रियाणि बहिःकरणकानि हि ।
दशापि शक्तयश्चैता इन्द्रस्यैव भवन्ति वै ॥ ५ ॥
ग्राह्येषु तास्तु गच्छन्ति पदार्थेषु बहिर्बहिः ।
ग्राह्याकारेण ता भूत्वा ग्राह्याकारं भजन्ति वै ॥ ६ ॥
परावृत्य तु ताः सर्वा धार्याकारं भजन्ति च ।
विध्वाऽन्तःकरणान्येता आत्मानं यान्ति वै यदा ॥ ७ ॥
भोग्याकारं गतास्ताश्च ता इन्द्रानुभवं गताः ।
अपरोक्षानुभावोऽयं स्वात्मन्येव भवत्यथ ॥ ८ ॥
अहमिन्द्रे स्थितः साक्षात्सर्वशक्तिप्रपूरकः ।
इन्द्रो मद्योगतः पूर्णशक्त्याश्रय इतिस्थितिः ॥ ९ ॥
आग्राह्यात्तु मदन्तं वै प्रेमतत्त्वं द्रवो मतः ।
सर्वत्र निहितं तद्वै तेन स्निह्यन्ति मूर्तयः ॥१०॥
स्नेहपूर्णाऽऽनन्दपूर्णप्रेमपूर्णः सुखाश्रयः ।
द्रवपूर्णो ह्यहं विष्णुर्मद्योगाद्द्रववान् हि सः ॥११॥
सर्वं स्थूलं तथा सूक्ष्मं चेतनं चाऽन्यदेव वा ।
मद्द्रवाद्द्रवितं सर्वं मेऽनुग्रहोऽत्र कारणम् ॥१२॥
'अयं तु द्रवितो भूयादि'तिमेऽनुकृपा भवेत् ।
तदा द्रवति तत्कालं नाऽन्यथा तु कदाचन ॥१३॥
मत्कृपायाः साधनं तु सर्वस्वात्मार्पणं मतम् ।
सर्वदाऽहं कृपापूर्णः कृपालुः करुणोदधिः ॥१४॥
भक्तोल्लासात्कृपावृष्टिं करोमि कृपयाऽन्वितः ।
यथा यथा कृपाया मे प्रवाहो विशति ध्रुवे ॥१५॥
भक्ते तथा तथा तत्त्वं द्रवतां यात्यभीक्ष्णशः ।
एक एवाऽद्वितीयोऽहं स्थितोऽस्म्यक्षरधामनि ॥१६॥
मन्मूर्तौ तत्र मे मुक्ता ब्रह्म चाऽक्षरमित्यपि ।
द्रवन्ति प्रेमबाहुल्यान्मेऽनुग्रहबलादपि ॥१७॥
तदा सम्राड्विराजेऽहं न किञ्चिद्व्यतिरिच्यते ।
मुक्तिं सेयं तदैक्यात्माऽऽप्यते तत्स्थितिवेदिभिः ॥१८॥
स एकाकी न रमते चैच्छद्द्वितीयमात्मनः ।
ब्रह्म तचाऽक्षरं तस्मात्प्रादुर्भूतं महात्मनः ॥१९॥
द्वेधाऽभूत्तन्निराकारं साकारं चेशवाञ्छया ।
निराकारं परं धाम यस्माद् धामानि जज्ञिरे ॥२०॥
साकारं स्वसमाकारं मूर्तं मूर्त्यनुरूपकम् ।
स हरिस्तु पुनरैच्छन्नैकरूपत्वमात्मनः ॥२१॥
मुक्ता अनादिनस्तस्मात्प्रादुर्भूता अनन्तशः ।
तत्राऽऽसँस्तन्मण्डलानि त्रिपादे दिवि चामृते॥२२॥
मुक्ता ब्रह्म परब्रह्म ब्रह्मसृष्टिस्त्रिकं मतम् ।
रूपानुरूपावयवा दिव्याः सर्वे सरूपिणः ॥२३॥
आत्मरूपाणीन्द्रियाणि तत्त्वाऽभिन्नानि सन्ति वै ।
उपचारात्तु नामानि रसशक्त्यात्मकानि हि ॥२४॥
मनः श्रोत्रं च वाक् चक्षुस्त्वग् रसादीनि तानि वै ।
पूर्णे चिन्हेऽपि गुप्ता न तद्रतिर्वासना न च ॥२५॥
अमातृजं यतस्तत्र कोशषट्कं न विद्यते ।
प्राणस्तत्राऽऽत्मनः शक्तिः काशोऽनावरणात्मता ॥२६॥
सुहिरण्यकेशनखदन्ता नैव वियोगिनः ।
सच्चिद्रूपैकमानास्ते स्वात्मकाः प्रविभान्ति हि ॥२७॥
दिव्याः सर्वे प्रकाशास्ते राजन्ते दिव्यधामनि ।
इत्ययं ब्रह्मलोकस्तु औपनिषद उच्यते ॥२८॥
ब्राह्मी मुक्तिस्तनुर्ब्राह्मी ब्रह्मानन्दानुभोग्यता ।
सोऽश्नुते सर्वकामाँस्तु सह श्रीहरिणा सदा ॥२९॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुग-
सन्ताने अक्षरधाम्नि परब्रह्मब्रह्ममुक्तादीनां
द्रवमुक्त्याऽपि साकारतादर्शको
द्वितीयोऽध्यायः ॥ २ ॥

**श्रीनारायण उवाच—**

अथाऽक्षरस्वरूपस्य हरेर्वामाऽङ्गसंस्थितेः ।
वामारूपेण सेवेच्छां सफलां कर्तुमिच्छता ॥ १ ॥
नारायणेव वामांगात्स्वात्मशक्तिमयं शुभम् ।
सर्वमांगल्यसौभाग्यप्रेमस्नेहद्रवाश्रयम् ॥ २ ॥
रूपानुरूपं स्वाधानं स्वक्षेत्रं स्वाश्रयं स्वकम् ।
स्वगुणैश्वर्यसामर्थ्यरजोबलगुहाश्रयम् ॥ ३ ॥
मूर्तं लक्ष्म्यात्मकं रूपं धृतं रतिगुणाश्रयम् ।
अमोघरतिसाफल्यं लक्ष्म्या इच्छन् कृपानिधिः ॥ ४ ॥
अमोघवीर्यवद्रूपं वासुदेवाख्यमादधत् ।
सोऽयं नारायणो वासुदेवः श्रीहरिरीरितः ॥ ५ ॥
द्वेधाऽभवत् स लक्ष्मीनारायणेतिसमाह्वयः ।
लक्ष्मीर्दृष्ट्वा ब्रह्मलोके सर्वान्मुक्तांस्तु पूरुषान् ॥ ६ ॥
स्वां त्वेकां स्वसमाकारां नाऽन्यां तत्र व्यलोकयत् ।
तदा त्वप्रार्थयद् देवं स्वपतिं श्रीहरिं मुदा ॥ ७ ॥
पतिपत्नीकृते स्थानं योग्यं प्रकल्पय प्रभो ।
तस्या भावं समाज्ञाय प्रियायाः शुभवांछया ॥ ८ ॥
वैकुण्ठाख्यं धाम दिव्यं ब्रह्मलोके ह्यकल्पयत् ।
सेवार्थं दासदासीश्च तत्राऽप्यवासयत्प्रभुः ॥ ९ ॥
तदर्थं दिव्यभोगांश्च दिव्योपकरणान्यपि ।
दिव्यां तदीश्वरीं सृष्टिं पूर्णां पूर्णमनोरथाम् ॥१०॥
सर्वसाधनसम्पन्नां स्मृद्धिसौख्यसमन्विताम् ।
चकार श्रीहरिः साक्षान्मेने तदीयपूर्णताम् ॥११॥
सोऽहं सा त्वमयं लोको वैकुण्ठश्चावयोरिति ।
दृष्ट्वा चैनं महायोगं पतिपत्नीमयं नवम् ॥
त्रिगुणाऽजा हरेः शक्तिर्नित्या या तत्त्वसूतिका ॥१२॥
अनादिनिधना माया चकमे श्रीहरिं पतिम् ।
यथा तत्त्वात्मिका सृष्टिर्जायते यत्र लीयते ॥१३॥
सा वै लक्ष्मीसमं रूपं धर्तुमिष्टं तदाऽऽर्थयत् ।
प्रभुं सर्वेश्वरं नाथं श्रीहरिं तु तदा पुनः ॥१४॥
प्रभुणा तु समाज्ञप्ता रूपं मोहकरं नवम् ।
राधारूपं हि सुभगं ह्यसंख्यरतिभाजनम् ॥१५॥
दधाराऽभिन्नपत्नीत्वे स्थिता चापि तदिच्छया ।
श्रीहरिस्तु तदर्थं श्रीकृष्णरूपो बभूव ह ॥१६॥
सर्वकामाश्रयः सर्वरसवर्षी पुमान्परः ।
अमोघाऽमेयवीर्यश्रीसौन्दर्यबलकान्तिमान् ॥१७॥
राधारमणयोग्यार्थयुवमूर्तिधरः प्रभुः ।
राधा विलोक्य सुभगं स्वानुयोग्यं वरं पतिम् ॥१८॥
स्वाऽऽवासमार्थयद् दिव्यं स्वतन्त्रं तत्र धामनि ।
मद्विहारकृतोद्यानं मद्रत्यर्थमहाश्रयम् ॥१९॥
मद्विभूतिपराकाष्ठं मत्सामग्रीसमाहितम् ।
सच्चिदानन्दरूपाणि सर्वोपस्करणानि च ॥२०॥
श्रीकृष्णस्य कृते तत्र सर्वाणि संभवन्त्विति ।
राधाऽभिलाषया सर्वं जातं दास्यश्च कोटिशः ॥२१॥
सुस्मृद्धं तत्परं दिव्यं धाम गोलोकमक्षरम् ।
प्रसीम्ना लोक्यते यत्तद् ब्रह्मलोके समायतम् ॥२२॥
चारु गोलोकसद्धाम राधाकृष्णौ ह्यकल्पयत् ।
श्रीहरिणा समाज्ञप्तं राधाकृष्णसभाजितम् ॥२३॥
शाश्वतं ब्रह्मलोके तद्धाम गोलोकमाहितम् ।
तत्र राधाकृतां सेवां गृह्णाति कृष्णरूपधृक् ॥२४॥
ब्रह्मलोके च गोलोके वैकुण्ठे भोग्यसञ्चयाः ।
समानाः श्रीहरेः सन्ति भक्तानन्दकराः सदा ॥२५॥
यथालिंगं यथारूपं यथायोगं यथार्हणम् ।
यथाजोषं यथापेक्षं हरेः कामाद्भवन्ति ते ॥२६॥
दिव्यं रतिसुखं नित्यं दिव्याऽऽनन्दरस्तदात्मनाम् ।
दिव्यं प्रेम हरेर्योगान्नित्यं तत्राऽऽभिजायते ॥२७॥
स्वप्रियासु सदा नाथो वैकुण्ठे रमते यथा ।
गोलोकेऽपि तथा भर्ता प्रेयसीषु प्रमोदते ॥२८॥
अक्षरे तु परे धाम्नि मुक्तेषु रमते हरिः ।
मुक्तान् भक्तान् सखीन् दासीः स्वयं क्रीडयति प्रभुः ॥२९॥
एकं वा युगलं रूपं यथा मां समुपासते ।
तथा ते मां प्रपद्यन्ते स्वामिनं सुखदं पतिम् ॥३०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुग-
सन्ताने लक्ष्मीराधाकृते वैकुण्ठगोलोक-
धामद्वयक्लृप्तिनिरूपणनामा
तृतीयोऽध्यायः ॥३॥

**श्रीनारायण उवाच—**

स ऐक्षत प्रजायेय परमात्मा स्वयं हरिः ।
महाकालं स्वकां शक्तिं ससर्ज विभुरात्मनः ॥ १ ॥
सर्वेषामन्तकर्तारं मायाक्षोभकरं परम् ।
आज्ञां चक्रे हरिस्तस्मै मायां संक्षोभयेति हि ॥ २ ॥
मायां तत्क्षोभितां दृष्ट्वा पुमान्मुक्तस्तु वै हरेः ।
आज्ञाकरोऽपरः कश्चिन्मायया युयुजे तदा ॥ ३ ॥
सा माया प्रकृतिर्मूला पुमांस्तु पुरुषः पतिः ।
इति प्रकृतिपुरुषौ सर्गं ससर्जतुः स्वकम् ॥ ४ ॥

ताभ्यां प्रधानपुरुषा जज्ञिरे कोटिशः खलु।
प्रधानं तु महत्तत्त्वं त्रिगुणं क्षेत्रमुच्यते ॥५॥
पूरुषस्तत्पतिः प्रोक्तो युगलानि भवन्ति वै।
पूरुषा ईश्वराः सर्वे लीना ये प्रकृतौ तु प्राक्॥६॥
प्रादुर्भूताश्च ते सर्वे जायापतिसरूपिणः।
प्रधानपुरुषाभ्यां तु महाविष्णुः प्रजायत॥७॥
अहंकारः स वै प्रोक्तः स्वर्णपूरुष इत्यपि।
प्रधानायाः सुपुत्री सा त्वहंकृतिरिति स्मृता॥८॥
हिरण्या सा महालक्ष्मीर्महाविष्णोः सहायिनी।
महालक्ष्मीर्महाविष्णुर्युगलं तत्प्रकीर्तितम्॥९॥
महाविष्णोर्महालक्ष्म्यां यो गर्भः समजायत।
हिरण्यगर्भ इत्युक्तस्तच्चाण्डं समजायत॥१०॥
हिरण्याऽण्डं द्विधा भिन्नं ततो जज्ञे विराडयम्।
वैराज्यपि प्रमदा च विराट्पत्नी तु सा मता॥११॥
अहंकृतेर्महाविष्णोस्तत्त्वानि षोडशोऽभवन्।
सात्त्विकात्तु समनस्कानीन्द्रियाणि दशाऽभवन्॥१२॥
तामसात्तन्मात्रवर्गो तद्देवा राजसात्तथा।
श्रोत्रत्वङ्नेत्ररसना वाक्पाणिपादपायवः॥१३॥
उपस्थं चेतीन्द्रियाणि मनः करणमान्तरम्।
पञ्चज्ञानेन्द्रियं बोध्यं पञ्च कर्मेन्द्रियं मतम्॥१४॥
श्रोत्रादीनां तु पञ्चानां ज्ञानोत्पादनशक्तितः।
वागादीनां तु पञ्चानां कर्मोत्पादनशक्तितः॥१५॥
ज्ञानकर्मेन्द्रियाख्या वै मनः स्यादुभयात्मकम्।
दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः ॥१६॥
चन्द्रश्चेति मता देवा ईशसृष्टिमया इमे।
ईश्वराणां शरीरेषु गोलकेषु वसन्ति ते॥१७॥
मनश्चैकं चतुर्धा तु जायते वृत्तिभेदतः।
मनोऽहंचित्तबुद्ध्याख्यं प्रोच्यते तत्त्ववेदिभिः॥१८॥
तानि विराट्स्वरूपेण संहतानीशवाञ्छया।
तथापि प्राणशून्यं तन्नोदतिष्ठद् यदा विराट्॥१९॥
श्रीहरिः प्राणरूपो वै भूत्वा तत्र विवेश ह।
प्राणशक्तिर्जीवनाख्या येन न्यस्ताऽऽन्तरे ततः॥
प्राणात्मनश्चेतनस्य श्रीहरेस्तत्समन्वयात्॥२०॥
वैराजं रूपमित्यर्थे कार्येऽन्वर्थं बभूव ह।
तस्य नाभिमहानालपद्माद्ब्रह्म व्यजायत॥२१॥
राजसः सर्जकः सोऽथ रुद्रस्तद्भालतोऽभवत्।
तामसः स तु संहर्ता हृदो विष्णुर्बभूव ह॥२२॥
सात्त्विकः पोषकः प्रोक्तस्ते स्वशक्तिसमन्विताः।
ब्रह्मणस्तु शरीरस्था ब्राह्मी प्रोक्ता तदंगना॥२३॥
सृष्टिरिति समाख्याता ब्रह्मणोऽर्धांगना हि सा।
रुद्रशक्तिस्तु रुद्राणी शिवा हरांगना सती॥२४॥
वैष्णवी विष्णुशक्तिर्या साऽपि लक्ष्मीरिति स्मृता।
तेषां त्रयाणां तिस्रस्ताः सृष्टिविनष्टिपुष्टिदाः॥२५॥
पत्न्यस्तदात्मिकास्तत्तत्कार्यसाहाय्यदा मताः।
परब्रह्माऽऽज्ञया सृष्टिप्रवाहं वाहयन्ति ते॥२६॥
आमूलपुरुषात्सर्वे केशान्ता ईश्वराः स्मृताः।
शुद्धसत्त्वशरीरास्ते सत्त्वं भूतिस्तु सा हरेः॥२७॥
तस्मादीशास्तु ते सर्वे परब्रह्मविभूतयः।
तत्रेश्वरेषु सर्वेषु प्रविष्टो दीव्यति प्रभुः॥२८॥
तेषां तूपास्यमूर्तिधृक् श्रीहरिः संबभूव ह।
वासुदेवः स वै प्रोक्त ईश्वराणां नियामकः॥२९॥
ईश्वराणां महाराज ईश्वरेड्यपदाम्बुजः।
स्वशक्त्या वासुदेव्या स सहितो भगवानयम्॥३०॥
धाम्न्यक्षरे स्ववासाय श्वेतं निर्माय धाम तत्।
श्वेते दिव्ये स्वके धाम्नि निवासमकरोत्प्रभुः॥३१॥
अमृताख्ये परे धाम्नि वासुदेवः स एव हि।
वासुदेवः स्वयं स्वस्येश्वरसृष्टिकृते पुनः॥
जन्मपुष्टिलयार्थे स्वं रूपत्रयमधारयत्॥३२॥
ईशसृष्टिसमुन्नेता ह्यनिरुद्धो व्यजायत।
ईशसृष्टेस्तु सम्पोष्टा प्रद्युम्नः समजायत॥३३॥
ईशसृष्टेर्विलोप्ता स संकर्षणोऽनुजायत।
तिस्रस्तु मूर्तयः साक्षाद्वासुदेवस्य सन्ति हि॥३४॥
श्रीहरिणा स्वयं प्रोह्य धृतं रूपचतुष्टयम्।
व्यूहचतुष्टयं तस्मात्प्रोच्यते शास्त्रवेदिभिः॥३५॥
व्यूहाधीनास्तत्र केचिदीशाश्चतुर्मुखाः परे।
अष्टमुखास्तथा चान्ये षोडशास्याः शताननाः॥३६॥
सहस्रास्या अयुतास्या नियुतास्यास्तथा परे।
अर्बुदास्याः कोटिमुखास्तावच्चरणपाणयः॥३७॥
विष्णोस्तत्राऽण्डगोलास्तु चतुर्दशसमीरिताः।
सदाशिवस्य रुद्रस्य त्वष्टाविंशतिगोलकाः॥३८॥
अण्डाः प्रधानमायायाः षट्पञ्चाशत्समीरिताः।
महाविष्णोः शते द्वे च तथा द्वादश गोलकाः॥३९॥
प्रकृतिपुरुषाण्डानि सन्ति पञ्चशतानि वै।
महाकालस्य लोकास्तु सहस्रं परिकीर्तिताः॥४०॥
वासुदेवस्य कृष्णस्य नारायणस्य भूमयः।
दिव्याऽनन्ता असंख्याताः सन्ति वाचामगोचराः॥४१॥
ईश्वराणान्तु सर्वेषां मनोबुद्धीन्द्रियादयः।
आत्मभूताः शक्तयः स्वाः शुद्धसत्त्वान्विता मताः॥४२॥

भोग्यभोगोपकरणभोगसाधनभूमयः ।
शुद्धसत्त्वात्मिकाः सन्ति परमानन्दमिश्रिताः ॥४३॥
परमात्मा हरिस्तत्र प्राविर्भवत्यभीक्ष्णशः ।
यथाकार्यं यथा तत्तदीशप्रार्थनभावनम् ॥४४॥
ईश्वराणां तु कार्याणि निर्वर्त्य श्रीहरिस्ततः ।
तत्तदीशाऽऽयुषा स्थित्वा तिरोभावमुपैति हि ॥४५॥
तत्तत्स्वरूपसद्भक्त्या तेऽपि यान्ति परां गतिम् ।
पूर्णमैश्वर्यमाभुक्त्वा ते गच्छन्त्यपुनर्भवम् ॥४६॥
तदा मुक्तास्तु ते सर्वे श्रीहरिं समुपासते ।
ईश्वराणामपि मुक्तिरेवं भवति शाश्वती ॥४७॥
स्वामी नारायणः श्रीमाँस्तेषां मुक्तिकरः प्रभुः ।
नियामकः परब्रह्माऽन्वितोऽपि व्यतिरेकवान् ॥४८॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने
वासुदेवादिब्रह्मान्तेश्वराणां सृष्टिकथननामा
चतुर्थोऽध्यायः ॥ ४ ॥

**श्रीनारायण उवाच—**

वासुदेवः समुत्पन्नः स्वप्रयोजनमार्थयत् ।
किं ममाऽत्र विधेयं स्यात् कथमीदृक्स्वरूपवान् ॥ १ ॥
इति सञ्चिन्त्य सस्मार परमं मूलरूपिणम् ।
श्रीहरिस्तु तदा तस्मै रूपत्रयमदर्शयत् ॥ २ ॥
वासुदेवात् समुत्पन्ना वासुदेवेऽप्ययं गताः ।
अनिरुद्धश्च प्रद्युम्नस्तथा संकर्षणोऽपरः ॥ ३ ॥
वासुदेवो हरावास्ते वासुदेवे त्विमे त्रयः ।
दृष्ट्वा ज्ञात्वा पुनस्तावद्विचारं कृतवान् हि सः ॥ ४ ॥
किं ममैभिस्त्रिभी रूपैरनुष्ठेयं भवेदिति ।
श्रीहरिणा ततस्तस्मै ईशसृष्टेस्तु नेतृता ॥ ५ ॥
दर्शिता भूस्थैर्यभंगमयी सा त्र्यधिनीकृता ।
सृष्टिस्तु कीदृशी कार्या कीदृशो लोकविस्तरः ॥ ६ ॥
इतिसञ्चिन्तने तस्मै वासुदेवाय वै हरिः ।
स्वमूर्तौ तत्कृतीः सर्वाः कलाः सर्वा अदर्शयत् ॥ ७ ॥
अनन्तायाममायायामगाधायां हरेस्तनौ ।
स्वस्वधामान्यपश्यँश्च सर्वे स्वस्वविभूतिभिः ॥ ८ ॥
महाकालं च प्रकृतिपूरुषं भूमपूरुषम् ।
प्रधानपुरुषं चापि महापूरुषमित्यपि ॥ ९ ॥
महाविष्णुं तथा तद्वद् वैराजपुरुषं ह्यपि ।
तथा हिरण्यगर्भं च ब्रह्मविष्णुमहेश्वरान् ॥१०॥
गोलोकं चामृतं वैकुण्ठकं श्वेतं च धाम यत् ।
अव्याकृतं तथा धाम श्रिया विष्णोश्च धाम यत् ॥११॥
सदाशिवकृतं धाम महामायाप्रमण्डलम् ।
चतुर्विंशतितत्त्वानां धामानि विविधानि च ॥१२॥
सन्निवेशो यथा यस्य यथाशक्तिबलोदयाः ।
यथा व्यवस्थया यत्र यादृशी दिव्यता परा ॥१३॥
यादृशानि समाश्चर्यप्रकाराणि भवन्ति च ।
ऐश्वर्याणि चमत्कारा ब्रह्मरससरांसि च ॥१४॥
इष्टमिष्टलता सम्पत् स्विष्टमिष्टविभूतयः ।
ब्रह्मरसप्रवाहार्था अत्याश्चर्याणि यानि वै ॥१५॥
रूपानुरूपघटनाः कल्पाऽनुकल्पवल्लयः ।
मोदप्रमोदतरवो नन्दाऽनुनन्दभूमयः ॥१६॥
तृप्त्यनुतृप्तपानास्वादनसौगन्धिकार्चनम् ।
शैत्याऽनुशैत्यनिवहा ह्लादानुह्लादरञ्जनम् ॥१७॥
ये च यानि यत्र यत्र चित्राश्चर्याणि तानि वै ।
दर्शयामास भगवान् श्रीहरिः स्वतनौ तदा ॥१८॥
वासुदेवस्तु भगवानीशलोकाऽनुसंकृतीः ।
दृष्ट्वा दृष्ट्वा तु तत्पारं नाऽऽयान् नेति जगौ तदा ॥१९॥
स्वविभूतेः स्वयमन्तं नेयाय वासुदेवराट् ।
जगाद हरये तावदनन्तोऽसि नियामकः ॥२०॥
शशंस बहुधा रूपं वत्रे ज्ञानं च नैत्यकम् ।
तथाऽस्त्विति हरिः प्राह वहेशसृष्टिभावनम् ॥२१॥
प्राविर्भावय पुंसस्त्रीन् ईशभारवहान् स्वकान् ।
इत्याज्ञां समभिगृह्य वासुदेवेन चाऽऽत्मतः ॥२२॥
अनिरुद्धश्च प्रद्युम्नः संकर्षण इति त्रयः ।
ईश्वराणान्तु सर्वेषां सृजिपुष्टिविरामकाः ॥२३॥
समाविर्भाविताः स्वस्माद् राजाधिराजराजकाः ।
तेषामंशास्त्रयो देवा ब्रह्मविष्णुमहेश्वराः ॥२४॥
वैराजदेहोत्पन्नानां ब्रह्माण्डानां नियामकाः ।
अवराऽण्डप्रणेतारो जीवसृष्टिप्रशासकाः ॥२५॥
अनिरुद्धादयस्तस्मादीशसृष्टिप्रशासकाः ।
परसृष्टिप्रणेतारः परमात्मस्वरूपकाः ॥२६॥
इत्येवं सृष्टिवैचित्र्यमीश्वराणामनुस्मृतम् ।
तत्तदीश्वरभावत्वं परब्रह्माऽन्वयान्मतम् ॥२७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुग-
सन्ताने वासुदेवस्येशसृष्टिप्रदर्शननामा
पञ्चमोऽध्यायः ॥ ५ ॥

**श्रीनारायण उवाच—**

वैराजस्य नाभिदेशात् कमलं यदजायत ।
तत्र चतुर्मुखो ब्रह्मा समजायत प्राग् यथा ॥ १ ॥
ततस्तन्नाभिदेशाद्वै द्वितीयं पद्ममुत्थितम् ।
तत्र ब्रह्मा द्वितीयोऽभूदष्टानन इति श्रुतः ॥ २ ॥
ततस्तृतीयपद्मे तु ब्रह्मा षोडशमस्तकः ।
चतुर्थे कमले ब्रह्मा द्वात्रिंशन्मस्तको ह्यभूत् ॥ ३ ॥
पञ्चमे कमले ब्रह्मा पञ्चाशन्मुखवानभूत् ।
षष्ठे जाते तु कमले ब्रह्मा शतमुखो ह्यभूत् ॥ ४ ॥
ततस्तु सप्तमे पद्मे ब्रह्मा पञ्चशताननः ।
अष्टमे पंकजे वेधाः सहस्रानन इत्यभूत् ॥ ५ ॥
ब्रह्मा पञ्चसहस्राऽऽस्यो जातो वै नवमे कजे ।
दशमे ह्यभवद्ब्रह्मा दशसाहस्रमस्तकः ॥ ६ ॥
एकादशे कजे पञ्चाशत्साहस्राननो ह्यजः ।
समुद्भूतस्तथा तु द्वादशे लक्षमुखो ह्यजः ॥ ७ ॥
त्रयोदशे तु कमले द्विलक्षमुखवानजः ।
पद्मे चतुर्दशे पञ्चाशल्लक्षमुखवानजः ॥ ८ ॥
जातः पञ्चदशे पद्मे कोट्यास्यश्च प्रजापतिः ।
षोडशे कमले ब्रह्मा जज्ञे ह्यर्बुदमस्तकः ॥ ९ ॥
ततः सप्तदशे पद्मे विश्वसृडब्जमस्तकः ।
अष्टादशे तथा पद्मे ब्रह्मा खर्वप्रमस्तकः ॥१०॥
एकोनविंशके तत्र पद्मास्यः समभूद्धि सः ।
विंशके कमले वेधाः परार्धमुखवानभूत् ॥११॥
इत्येवं तत्र तत्रैककमले ब्रह्मकोटयः ।
समुद्भूताः सजातीयाः संख्यास्तेषामनन्तकाः ॥१२॥
तथैव विष्णुरुद्राणां कोटयश्च तथाविधाः ।
तत्तत्स्थानात्समुत्पन्नास्तेषां संख्या न विद्यते ॥१३॥
ईशसृष्टौ यथैषां वै पारो नास्ति तथा पुनः ।
वैराजानां न चास्त्यन्तस्तत्पितॄणां महात्मनाम् ॥१४॥
महाविष्णुप्रभृतीनामसंख्यानां तु तत्र वै ।
संख्यापारमपाराणां केनाप्याप्तुं न शक्यते ॥१५॥
अथ तेषां चतुरास्यप्रभृतिवेधसां कृते ।
अधिकारः सुनिर्णीतश्चतुर्दशस्तरात्मके ॥१६॥
अष्टास्यानां तु सत्ता स्यादष्टाविंशतिभूस्तरे ।
ब्रह्माण्डेऽथ तथा बोध्या षोडशाननवेधसाम् ॥१७॥
षट्पञ्चाशद्विवरात्मब्रह्माण्डेष्वधिकारिता ।
द्वात्रिंशन्मस्तकानान्तु शतस्तराऽण्डनेतृता ॥१८॥
शतद्वयप्रभूमिधृग्ब्रह्माण्डेष्वधिकारिता ।
संस्थापिता विराजेण पञ्चाशन्मुखवेधसाम् ॥१९॥
शतास्यब्रह्मणां पंचाशतस्तराण्डनेतृता ।
पञ्चशतमुखाऽजस्य सहस्रबिलकेऽण्डके ॥२०॥
नेतृताऽधिकृता चाथ सहस्राननवेधसः ।
द्विसहस्रस्तराऽण्डेषु नेतृता विहिता तथा ॥२१॥
पञ्चसहस्रमुखवद्वेधसो नेतृता तथा ।
चतुःसहस्रकक्षाऽण्डे विराजेण स्थिरीकृता ॥२२॥
दशसहस्रमुखवद्वेधसोऽप्यधिकारिता ।
दशसाहस्रकक्षाऽण्डे विराजेण सुनिश्चिता ॥२३॥
अधिकारिपदं पञ्चाशत्साहस्राननस्य तु ।
कृतं विंशतिसाहस्रविवराण्डेषु तेन वै ॥२४॥
लक्षास्यस्य चतुश्चत्वारिंशद्बिलाण्डकेषु तत् ।
द्विलक्षमुखवान् वेधा लक्षभूम्यण्डकार्यकृत् ॥२५॥
पञ्चाशल्लक्षमुखवान् द्विलक्षबिलकाण्डके ।
कृतो नेताऽथ कोट्यास्यः पञ्चलक्षस्तराण्डके ॥२६॥
कृतो नेताऽर्बुदास्यस्तु दशलक्षस्तराण्डके ।
अब्जाऽऽस्यो विंशतिलक्षबिलाण्डनेतृतां गतः ॥२७॥
खर्वास्यस्तु कृतः पञ्चाशल्लक्षबिलकाण्डके ।
नेताऽथ पद्मसंख्यास्यः कृतः कोटिस्तरात्मके ॥२८॥
परार्धमुखवान् ब्रह्मा कोटिदशस्तरात्मके ।
ब्रह्माण्डे स्थापितश्चैते ह्येवमन्येऽपि चाऽऽहिताः ॥२९॥
स्वस्वकार्यं प्रकुर्वन्ति स्वाधिकारानुसारतः ।
अथैकदा विराजस्य राजसूयमहोत्सवे ॥३०॥
विराजस्य गृहे चेशाः समाजग्मुः सहस्रशः ।
नैकभुजा विष्णवोऽपि रुद्रा विभिन्ननेत्रिणः ॥
समाजग्मुश्च वैराजा तथाऽन्येऽपीश्वरेश्वराः ॥३१॥
तत्रोत्सवे समाजे वै को यायादग्रपूज्यताम् ।
इतिजाते विचारे तु महान् कोलाहलोऽभवत् ॥३२॥
केचिदाहुः परार्धास्यो ब्रह्माऽग्रपूज्यतां लभेत् ।
अन्येऽप्याहुः परार्धदृक् शंभुरग्राहंणां लभेत् ॥३३॥
परे त्वग्राहंणां विष्णुः परार्धभुजवाँल्लभेत् ।
इतिवादे विवादे च निर्णयं नैव लेभिरे ॥३४॥
तदा विचारितं सर्वैर्वादे जाते परस्परम् ।
वृद्धानां वचनं ग्राह्यं कार्ये वादादिविभ्रमे ॥३५॥
वृद्धस्तु प्रपिता तेषां महाविष्णुस्तु बुद्धिमान् ।
यं वै निर्णयमास्थाय दर्शयेत् स भवेन्मतः ॥३६॥

इति ते समयं कृत्वा महाविष्णोः समन्तिके ।
नत्वा निवेदयामासुः सर्वं वृत्तान्तमीश्वराः ॥३७॥
महाविष्णुः क्षणं ध्यात्वा प्राह पौत्रान् विचारितम् ।
भवन्तस्तु त्रयस्तुल्याः समानबलशालिनः ॥३८॥
समपूज्याः समश्रेष्ठाः समकार्यवहास्तथा ।
परस्परं न वै न्यूनाः पूजनार्हास्त्रयोऽपि हि ॥३९॥
तथापि राजसूये तु पूजैकस्य भवेदिति ।
विचार्यैव भवन्तो वै निर्णयं यान्तु चेश्वराः ॥४०॥
एकस्मै पूज्यता देया द्वाभ्यां ग्राह्याऽनुवृत्तिता ।
इत्याज्ञाप्य महाविष्णुर्मौनमास्थाय संस्थितः ॥४१॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने
बहुविधब्रह्मादीनामधिकारादिवर्णननामा
षष्ठोऽध्यायः ॥६॥

**श्रीनारायण उवाच—**

ततस्तेषां त्रयाणान्तु स्वाग्रपूज्यत्वलब्धये ।
दुराग्रहेण महता जातः कोलाहलः परः ॥ १ ॥
अहं पूर्वं तु पूज्यः स्यां न त्वं नान्य इतीश्वराः ।
स्वस्य पूज्यत्वसंप्राप्त्यै कलहं समचक्रिरे ॥ २ ॥
तिरस्कुर्वन्ति चान्योन्यमधिक्षेपं दधत्यपि ।
दुरुक्तैर्वाक्प्रवाणैश्च विध्यन्त इव मर्मसु ॥ ३ ॥
कलहं चक्रिरे यावत्तावत्तेषां मतानुगाः ।
कोटिशो विष्णवो रुद्रा ब्रह्माणः समुदायुधाः ॥ ४ ॥
युयुधुर्भृशमत्युग्रमर्दनं तदभून्महत् ।
यदैकस्य प्रपूज्यत्वे निर्णयो न कृतश्च तैः ॥ ५ ॥
तदा वैराजपुरुषैर्महाविष्णुसमन्वितैः ।
ईशो देवो हरिः साक्षान्निर्णयाय समर्थितः ॥ ६ ॥
परंब्रह्म स्वयं तेषामर्थनामवगत्य वै ।
न्यायालयं परं स्थानमव्याकृतसुधाम यत् ॥ ७ ॥
विरचय्याऽक्षरे धाम्नि न्यायकर्ताऽपि च स्वयम् ।
भूमपुरुषरूपेण न्यायाधीशो विराजितः ॥ ८ ॥
न्यायसम्पादकाश्चान्ये ईश्वरास्तेन योजिताः ।
भूम्ना स्वस्य वामभागाद् भूम्नी लक्ष्मीः प्रसंकृता ॥ ९ ॥
सापि न्यायपराधीशा न्यायकर्त्री परेश्वरी ।
अव्याकृतं च तद्धाम भूमभूम्न्योः परं कृतम् ॥१०॥
न्यायकर्त्र्यस्तथा न्यायाधीशास्तत्राऽप्यनेकशः ।
उपनिर्णयदाः सन्ति परावरनियामकाः ॥११॥
सन्ति प्रकृतिपुरुषप्रधानपुरुषात्मक,- ।
महाविष्णुविराजादीश्वराणां निर्णयप्रदाः ॥१२॥
तत्र तत्र तेषु तेषु स्थानेष्वीश्वरकोटयः ।
न्यूनातिरिक्तसुखदैश्वर्यवत्यो भवन्ति हि ॥१३॥
परार्धभुजवान् विष्णुः पूज्यो राजसुसम्मतः ।
भूम्ना न्यायः कृतस्तद्वद् राजसूयोऽपि निर्वृतः ॥१४॥
न्यायाज्ञया कृतन्यायप्रोतसर्वेशसृष्टिभिः ।
फलन्तु न्यायकार्यस्य तत्र तत्र ह्यवाप्यते ॥१५॥
एकराजक्षयेऽन्यस्य पट्टाभिषेकसूत्सवः ।
कार्ये विनिमये प्राप्ते नेतॄणां परिवर्तनम् ॥१६॥
युद्धकाले विनाशे वा चाकस्मिक उपद्रवे ।
व्यूहांशविभवाऽऽवेशविभूतीनां प्रकाशने ॥१७॥
ब्रह्माण्डेष्ववताराणां प्रेषणे च विकर्षणे ।
सर्वथाऽप्यधिकारोऽस्ति भूम्नो भगवतः सदा ॥१८॥
श्रीहरिस्तु स्वयं साक्षाद्भूमपूरुषरूपतः ।
अव्याकृते स्वके धाम्नि न्यायकार्यार्थमास्थितः ॥१९॥
ब्रह्माण्डे च यदा यर्हि यस्मिन् यस्मिन् स्थले स्थले ।
हानिर्धर्मस्य बुध्येत तदांऽशं प्रेरयत्ययम् ॥२०॥
रामकृष्णादयः सर्वे विभिन्ना वै युगे युगे ।
अवतारा अनन्ता वै भवन्त्यण्डे पृथक्-पृथक् ॥२१॥
ईश्वराणां च लोकेषु ह्यवतारा अनन्तकाः ।
भवन्ति समशीलास्तत्समरूपाः समक्रियाः ॥२२॥
श्रीहरेरवताराणां नाऽन्तः संख्या न विद्यते ।
कालाऽऽनन्त्यात्सृष्ट्यपारात्कार्याऽऽनन्त्याच्च कृत्स्नशः ॥२३॥
अथेश्वराणां सर्वेषां सर्वदा सुखलब्धये ।
श्रीहरिणा हृदि ध्यातं तपश्चाथ बृहद्व्रतम् ॥२४॥
सर्वेश्वराः सदा सन्तु सुखिनः सत्त्वसंभृताः ।
प्रकृतिपुरुषश्चाथ प्रधानपुरुषस्तथा ॥२५॥
भूमपुरुषलोकस्था महाविष्णुमहेश्वराः ।
हिरण्यगर्भा वैराजा अष्टावरणकेश्वराः ॥२६॥
गोलोकस्था विकुण्ठस्थाः श्वेतद्वीपस्थितास्तथा ।
अव्याकृतस्थिता विष्णुरुद्रमायाक्षरस्थिताः ॥२७॥
सर्वे भवन्तु सुखिनः सदा मत्तपसा त्विति ।
दयया हरिणा चैवं कृतं धाम तपःकृते ॥२८॥
अक्षराख्यप्रदेशे तद्दिव्यं बदरिकाश्रमम् ।
तपस्त्यागमयं रम्यं शान्त्यानन्दमयं सदा ॥२९॥
बृहद्व्रतधरं रूपं दिव्यं श्रीहरिणा धृतम् ।
स वै नारायणः स्वामी दिव्यषोडशवार्षिकः ॥३०॥

अक्षरेण तदा तस्य सेवार्थं रूपमर्थितम् ।
नराकारं च तद्रूपं धृतं षोडशवार्षिकम् ॥३१॥

सेवकः स नरः, स्वामी नारायण इति हरिः ।
नरनारायणः सोऽयमक्षरादिपरः प्रभुः ॥३२॥

राजते तत्र तेजस्वी ब्रह्मवर्चस्ववारिधिः ।
ऊर्ध्वस्रोता ब्रह्मचारी नरनारायणः प्रभुः ॥३३॥

ईश्वरास्तत्र गच्छन्ति दर्शनार्थं हरेर्मुहुः ।
मुक्तास्तत्र ह्यसंख्याता ऋषयो नैष्ठिकाः स्थिताः ॥३४॥

ते वै दयालवः शान्ताः साधवो मुनयो मताः ।
ईशानान्तु गृहस्थानामुद्धारकरणाय वै ॥३५॥
भ्रमन्तीश्वरलोकेषु शरणागतरक्षकाः ।
मन्त्रं नारायणस्यैव दत्वा मोक्षं नयन्त्यपि ॥३६॥
उपासनां हरेः साक्षात्परब्रह्मण इत्यपि ।
प्रवर्तयन्ति चेशेषु मोक्षयन्ति च ताँस्ततः ॥३७॥
गोलोकोऽप्यथ वैकुण्ठः श्वेतद्वीपोऽथ दिव्यकः ।
अव्याकृतश्च बदरिकाश्रमश्चेति नामभिः ॥३८॥
कीर्त्यमानानि धामानि दीव्यान्यक्षरधामनि ।
अक्षरस्य प्रदेशेषु हरिणा रचितानि हि ॥३९॥
श्रीकृष्णः श्रीरामचन्द्रः श्रीनारायण इत्ययम् ।
श्रीभूमा श्रीनरनारायणः श्रीहरिरेव च ॥४०॥
स्वयं ब्रह्मेश्वरः साक्षादक्षराधिपतिः प्रभुः ।
ब्रह्मलोकेश्वरस्तानि रूपाणि धारयत्यतः ॥४१॥
पुरुषोत्तमसंज्ञो यो भगवान्परमेश्वरः ।
सर्वत्र संस्थितः सोऽयं भिन्नरूपेण राजते ॥४२॥
धाम्नस्त्वक्षरसंज्ञस्य प्रदेशेषु कृतानि वै ।
धामान्यन्यानि तत्तेषु सर्वत्राऽक्षरमस्ति हि ॥४३॥
तस्माद् गोलोकादिमध्ये धाम व्यापकमक्षरम् ।
परंधाम ब्रह्मलोकः सर्वत्रास्तीति वर्ण्यते ॥४४॥
ईश्वराणां च लोकानां सीमा प्रकृतिरुच्यते ।
सीम्नि धामानि चैतानि ब्रह्मलग्नानि सन्ति हि ॥४५॥
तस्मादक्षरसंज्ञास्ते ऽक्षरव्याप्या भवन्ति च ।
प्रकृतेः स्पर्शरहिताः प्रकृतेरुपरि स्थिताः ॥४६॥
लोका मोक्षभूमयस्ते गद्यन्ते मर्मवेदिभिः ।
इतीशसृष्टिसंस्थानं लक्ष्मि ! संज्ञेयमञ्जसा ॥४७॥
तवैव सर्वसामर्थ्यं तवैवैतत्प्रभावजम् ।
सर्वमीश्वरसंस्थानं त्वां विना नैव शोभते ॥४८॥

त्वं चाऽहं च सदा तत्र सर्वात्मरूपधारकौ ।
त्वां विना न ममेशत्वं मां विना न रतिस्त्वयि ॥४९॥

सञ्चितोः सर्वथा तत्र प्रानन्दः सुखमुच्यते ।
सर्वे लोका ईश्वराश्चाऽश्नुवते सुखमावयोः ॥५०॥

तस्मान्नारायणलक्ष्म्यात्मकमीश्वरमण्डलम् ।
प्रादुर्भूतं तदावाभ्यां तिरोभवति चावयोः ॥५१॥

आत्यन्तिके लये लीनं प्रारंभे पुनरुत्थितम् ।
भवतीति विचार्य्यैव भजन्तीशाः सदा नु माम् ॥५२॥
मदैश्वर्यं समापन्ना ईश्वरा मदधिष्ठिताः ।
मद्योगादीश्वरा जाता मद्विना नेश्वरा इति ॥५३॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुग-
सन्तानेऽव्याकृतधामबदरिकाश्रमधाम-
प्रदर्शननामा सप्तमोऽध्यायः ॥७॥

**श्रीनारायण उवाच—**

नमः परस्मै देवाय भूम्ने शक्तित्रयाय च ।
साक्षिणे देहिनां मध्येऽनुपलक्ष्यात्मवर्त्मने ॥ १ ॥
नमो भूयः सतां गोत्त्रेऽसतां नाशात्तभूतये ।
नमो निरस्तसाम्याऽतिशयाय धाम्नि रंस्यते ॥ २ ॥
कुयोगिनां विदूराय सन्निकृष्टाय ते नमः ।
नारायणपरा वेदा नारायणपरा मखाः ॥ ३ ॥
नारायणपरं ज्ञानं सृजिर्नारायणात्मिका ।
नारायण इदं सर्वं नारायणपरा गतिः ॥ ४ ॥
गुणत्रयं समागृह्य निर्गुणोऽपि हरिः स्वयम् ।
वैराजपुरुषो भूत्वा ससर्जाऽऽपः स्वदेहतः ॥ ५ ॥
आपो नारा इति बोध्या आपस्तु नरपुत्रिकाः ।
कृत्वा तास्वयनं शेते ततो नारायणः स्वयम् ॥ ६ ॥
जले तत्र शयानस्याऽतीताः सहस्रवत्सराः ।
तदा तन्नाभितो नालं पाद्मं प्रादुर्बभूव ह ॥ ७ ॥
पद्मोपर्यभवद्ब्रह्मा नारायणसमीहया ।
स ददर्शाऽभितो वारि नान्यत्स प्रमुमोह च ॥ ८ ॥
कथं कस्मात्कुतश्चाहं किं करोम्यत्र केवले ।
तस्मान्मूलं मदीयं वै दिदृक्षाम्यनुनालतः ॥ ९ ॥
निश्चित्यैवं स्वयं नाले ब्रह्मा संप्रविवेश ह ।
चतुर्युगसहस्रं तच्चचालान्तं न चाप्तवान ॥१०॥
तदा विश्रम्य तन्नाले न्यवर्तत यदा तु सः ।
योगसिद्धिसहायेन वेगादुपरि संस्थितः ॥११॥
किमर्थं वा कथं चाहं समुत्पन्नो जले कजे ।
विचारयति यावत्स वागुवाचाऽशरीरिणी ॥१२॥

तपः कुरु स्थितस्तत्र काले ज्ञानं भविष्यति ।
वेत्स्यसि स्वजनेरर्थं श्रुत्वा तां तप आस्थितः ॥१३॥
ततो ज्ञानं ह्यभूत्तस्य सृष्ट्यर्थं मे जनिस्त्वियम् ।
सृष्टिस्तु कीदृशी कार्या मयेत्यर्थे मनो दधौ ॥१४॥
तावन्नारायणमूर्तौ सृष्टिं पूर्वां ददर्श ह ।
पूर्वात्पूर्वतरां चापि दृष्ट्वा संमुमुदे स च ॥१५॥
तपोमहिम्ना स्वगुरुं हरिं स वै समाधिमाप्याऽनुददर्श कारणम् ।
कृत्वा जले वै शयनं महाप्रभुं समस्तसृष्ट्यन्वितचित्ररूपकम् ॥१६॥
दिव्येन चक्षुषा तत्र वैराजे जडचेतनम् ।
भावि सृष्ट्यात्मकं सर्वं दृष्टवान् नामरूपकम् ॥१७॥
पादमूलेऽस्य पातालं पार्ष्णिभागे रसातलम् ।
ददर्श गुल्फयोरस्य लोकं ब्रह्मा महातलम् ॥१८॥
तलातलं तथा लोकं जंघयोः स ददर्श वै ।
जान्वोस्तु सुतलं लोकमुर्वोस्तु वितलाऽतले ॥१९॥
भूतलं सक्थिमूलेऽथ नाभौ भुवर्दिवं हृदि ।
ग्रीवायान्तु महर्लोकमास्ये जनं ददर्श सः ॥२०॥
ललाटेऽस्य तपोलोकं सत्यं शिर्षिण व्यचष्ट सः ।
बाह्वोरिन्द्रादिदेवाँश्च कर्णयोर्दिश एव च ॥२१॥
श्रोत्रे शब्दं च नासत्यौ नासारन्ध्रे ददर्श सः ।
घ्राणे गन्धं मुखे वह्निं द्यां तु नेत्रद्वयाण्डयोः ॥२२॥
चक्षुषोः सूर्यचन्द्रौ तत्पक्ष्मणोर्दिवसं निशाम् ।
भ्रूविलासे परमेष्ठिपदं तालौ जलं तथा ॥२३॥
जिव्हायान्तु रसाँस्तस्य दंष्ट्रायां यममित्यपि ।
मेधायां चाऽस्य छन्दांसि कटाक्षे कालविप्लवम् ॥२४॥
उत्तरौष्ठे तथा व्रीडामधरौष्ठे तु गर्धनम् ।
स्तनयोरुभयोर्धर्मं पृष्ठेऽधर्मं तु दृष्टवान् ॥२५॥
शिश्ने प्रजापतिं मित्रावरुणौ तु तदण्डयोः ।
कुक्षिष्वस्य समुद्राँश्च गिरीनस्थिषु दृष्टवान् ॥२६॥
नदीर्नाडीसु वृक्षाँस्तु व्याचष्टे स हि रोमसु ।
श्वासे वायुं गतौ कालं मेघान्केशेषु तस्य वै ॥२७॥
सन्ध्यां वाससि हृदये मायां मनसि चन्द्रकम् ।
चित्ते महदहंकारे रुद्रं नखे गजाश्वकान् ॥२८॥
नैपुण्ये पक्षिणः सर्वान् बुद्धौ स्वायंभुवं मनुम् ।
नितम्बयोर्मृगान्सर्वान्स्मृतौ गन्धर्व गायकान् ॥२९॥
वीर्ये त्वासुरसैन्यानि मुखेऽस्य ब्राह्मणाँस्तथा ।
भुजयोः क्षत्रियानूर्वोर्वैश्यानंघ्रौ तु शूद्रकान् ॥३०॥
स्थावरं जंगमं यावत् सृज्यं स्वेन भवेत्तु यत् ।
सर्वं वैराजदेहेऽयं ब्रह्मा सम्यक् ददर्श ह ॥३१॥
कार्यं यस्य यथा यावत् करणं यस्य यद् यथा ।
कार्ययोगसमाकृष्टिश्लेषाविर्भाववैभवम् ॥३२॥
हस्तामलकवत्सर्वं दृष्टवान् स प्रजापतिः ।
तत्त्वाधीनां मनोऽधीनां द्वेधा ज्ञात्वाऽथ पद्मजः ॥३३॥
बीजजां मानसीं चेति सृष्टिं प्रति मुमोद ह ।
पूर्वं नष्टां स्मृतिं लब्ध्वा ब्रह्मा तुष्टाव केशवम् ॥३४॥
नमः सृष्टिस्वरूपाय नमो वैराजमूर्तये ।
नमोऽवान्तरसर्गाय नमो ब्रह्मादिरूपिणे ॥३५॥
नमो हिरण्यगर्भाय महाविष्णुस्वरूपिणे ।
नमः प्रधानपतये प्रकृतिस्वामिने नमः ॥३६॥
नमो भूम्नेऽनिरुद्धाय प्रद्युम्नाय च ते नमः ।
नमः संकर्षणाख्याय वासुदेवाय ते नमः ॥३७॥
नमो महापूरुषाय महाकालाय ते नमः ।
नमोऽक्षरनिवासाय मुक्तान्तर्यामिणे नमः ॥३८॥
व्यापकाय परेशाय नैकरूपाय ते नमः ।
सति त्वयि विपर्यासो विवर्तः परिणामकः ॥३९॥
जगतोऽस्य भवेन्नूनं तदभिन्नाय ते नमः ।
साक्षिणे सर्वनेत्राय स्वराजे च नमो नमः ॥४०॥
नानाश्चर्यनिवासाय नानारूपधराय च ।
भिन्नात्मदर्शिने पूर्वं पश्चादेकात्मदर्शिने ॥४१॥
अन्विताऽनन्वितार्थाय नमः सदसदात्मने ।
परमाणुस्वरूपाय व्यापकाय च ते नमः ॥४२॥
त्रिधाच्छेदविहीनाय स्त्रीपुंरूपात्मने नमः ।
नमो ज्ञानाय दिव्याय ज्ञेयाय ज्ञातृरूपिणे ॥४३॥
नमो मानस्वरूपाय मानाय मितये नमः ।
प्रमात्रे च नमस्तेऽस्तु सत्कार्याय च ते नमः ॥४४॥
फलव्याप्तिस्वरूपाय श्रुतिवादाय ते नमः ।
वाग्विश्रान्तिस्वरूपाय नमो ज्ञप्तिलयात्मने ॥४५॥
प्रकाशाऽकाशतनवे दिव्याऽदिव्यगुणात्मने ।
सर्वं यस्माद्यत्र सर्वं यश्च सर्वात्मकः प्रभुः ॥४६॥
स्वप्नाऽस्वप्नोभयार्थाय शास्त्रे तेऽस्तु नमो नमः ।
त्वया कृपालुना देव हृत्कपाटं प्रबोधितम् ॥४७॥
यदर्थं तत्करिष्येऽहं तत्र मां विस्मर प्रभो ।
त्वत्प्रदत्तप्रबोधेन करिष्ये सर्गवर्द्धनाम् ॥४८॥
तत्र मे बन्धनं मा स्यात्साहाय्यं प्रार्थये तव ।
सर्वकार्यसमुत्पादे क्लृप्तिदर्शकरो भव ॥४९॥
इति स्तुत्वा स्वयं ब्रह्मा तूष्णीमास क्षणान्तरे ।
तावन्नारायणेनाऽपि संहृतं नैकभावनम् ॥५०॥

वैराजस्य स्वरूपन्तु यावत्पश्यति पद्मजः ।
तावद्वैराजहृद्देशाद्विष्णुः प्रादुर्बभूव ह ॥५१॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने
ब्रह्मणः सृष्टिज्ञानप्राप्त्यादिनिरूपणनामा
अष्टमोऽध्यायः ॥ ८ ॥

**श्रीनारायण उवाच—**

विष्णुः सर्वगुणोपेतः सर्वपोषणशक्तिमान् ।
सर्वाश्चर्यनिधिः श्रीमान् कुन्दनाभिमहोज्ज्वलः ॥ १ ॥
प्रान्तभुग्नपिशंगाभस्निग्धकेशाक्तमस्तकः ।
नैकरत्नमणिप्रोतसौवर्णमुकुटावहः ॥ २ ॥
शष्कुल्याकृतिसत्कर्णधृतसौवर्णकुण्डलः ।
विशालोज्ज्वलरेखात्रययुग्भालस्थचन्द्रकः ॥ ३ ॥
कैसरं तिलकं बिभ्रत् ललाटेऽगुरुचन्दनः ।
कामबाणप्ररोहाऽर्हवक्रभ्रूकुटिभंगुरः ॥ ४ ॥
अरविन्ददलाऽऽशुभ्रप्रान्तरक्ताऽऽभनेत्रकः ।
कज्जलाऽञ्जनसंसिक्ताऽऽकर्णान्ताऽक्षिप्रकोणकः ॥ ५ ॥
तिलपुष्पप्रफुल्लाभनासिको दीर्घगण्डकः ।
सुवर्तुलसमाकाररक्तद्वयकपोलकः ॥ ६ ॥
सुगन्धपद्मकेयूरो दिव्यपुष्पावतंसकः ।
शुद्धचामीकरकर्णपूरकर्णटिभूषणः ॥ ७ ॥
सूक्ष्मनीलहिरण्याग्रोद्भवच्छ्मश्रुप्रसुन्दरः ।
रक्तबिम्बाऽऽभसद्धास्यसमाश्रितसमौष्ठकः ॥ ८ ॥
कम्बुकण्ठः सुचिबुकस्तेजोमण्डलकंधरः ।
देदीप्यमानवपुषा हृत्तिमिरप्रणाशकः ॥ ९ ॥
पौष्पान् हारांश्च सौवर्णान् गले बिभ्रत्सुकौस्तुभम् ।
सुपुष्टांसः सुप्रलम्बभोगपूर्वार्धबाहुकः ॥१०॥
आजानुलम्बहस्तश्च सुप्रकोष्ठश्चतुर्भुजः ।
विद्योतचन्द्रसदृशनखरक्तकरद्वयः ॥११॥
स्वर्णांगुलीयसत्तेजोरत्ननद्धसुपद्मकः ।
धनुश्चक्रध्वजस्वस्तिकेनमीनांकहस्तकः ॥१२॥
शंखचक्रगदापद्महेतिर्हारधरः प्रभुः ।
श्रीवत्सांकः सुरशनः कुन्ददन्तः सुपृष्ठकः ॥१३॥
विशालोन्नतसद्वक्षाः पुष्टकटिसुलिङ्गकः ।
करिहस्तोरुयुगलः समवर्तुलजानुकः ॥१४॥
क्रमवृत्ताऽऽपुष्टजंघः समनिम्नसुपत्तलः ।
मध्यनिम्नोन्नतरक्तचारुदृश्यपदाम्बुजः ॥१५॥
सर्वतीर्थाश्रयपुण्यप्रपदः पाण्डुरच्छविः ।
अङ्गुल्युपरिसत्सूक्ष्मरोमराजिविराजितः ॥१६॥
सूक्ष्मरोमावलिराजत्तत्त्वद्वीर्यसुकुक्षिकः ।
त्रिगुल्फचरणः श्रीमान् सर्वाभरणभूषणः ॥१७॥
अम्लानमधुसत्सौरभाऽऽर्द्रविविधपुष्पया ।
विराजितो वैजयन्त्या दिव्यया वनमालया ॥१८॥
पद्मकेत्वंकुशवज्रस्वस्तिकजवजम्बवः ।
अष्टकोणोर्ध्वरेखेऽङ्कानि पदे दक्षिणे नव ॥१९॥
मीनाऽर्धचन्द्रकलशत्रिकोणव्योमगोष्पदम् ।
धनुश्चेति पदे वामे सप्त चिन्हानि संदधत् ॥२०॥
आप्रान्तद्वयसंलग्नविस्तीर्णभालरेखया ।
षड्विधं भगमैश्वर्यं व्यञ्जयन् सात्त्विकीं जनिम् ॥२१॥
वामे सक्थिनि सत्तेजःपाण्डुरांऽकं तु सुन्दरम् ।
सहजायास्तु लक्ष्म्यास्तचन्द्राभं चिन्हमुद्वहन् ॥२२॥
एतादृशोऽभवद्विष्णुर्बहुरूपगुणाश्रयः ।
दृष्ट्वा ब्रह्मा स्वयंभूस्तं सृष्टिनेत्रभिमानवान् ॥२३॥
कोऽयमन्योऽभवद्रूपगुणवीर्यबलाधिकः ।
इतिकृत्वाऽपृच्छदेनं विष्णुं लोकप्रपोषकम् ॥२४॥
कस्त्वमेतादृशो विद्वन् मत्प्रतिद्वन्द्वरूपकः ।
सृष्टेः कर्ताऽहमेकोऽस्मि सर्वैश्वर्यविभूतिमान् ॥२५॥
सर्वधाता सर्वपोष्टा सर्वनेतृत्वमावहन् ।
मत्तो नाऽन्योऽस्ति कश्चिद्वै सृष्टेः संहारपोषकः ॥२६॥
को वै हेतुस्तवोत्पत्तौ किंकर्ता किंविधायकः ।
मद्विरोधं प्रकुर्वन् वै न कश्चित्सुखभाग्भवेत् ॥२७॥
श्रुत्वा प्रहस्य विष्णुस्तं ब्रह्माणं प्रत्युवाच ह ।
सृष्टिर्मयि त्वहं सृष्टौ चाहं सृष्टिमयो विभुः ॥२८॥
त्वादृशाः पद्मजा नैके मयि लीनाः समासते ।
अहमनादिनिधनो धाताऽहं विश्वतोमुखः ॥२९॥
व्याप्यव्यापकभावेन विश्वमावृत्य यः स्थितः ।
सर्वसृष्टिमयो देवोऽनन्तब्रह्मादिसंस्तुतः ॥३०॥
सोऽहं नारायणो विष्णुर्नाऽन्यः कश्चित्परः समः ।
गच्छ दूरमितो नो चेद्विनाशं यास्यसि ध्रुवम् ॥३१॥
इति विष्णुवचः श्रुत्वा ब्रह्मा लोकपितामहः ।
प्राह विष्णुं च मा गर्वं कुरु दर्शनबालिश ॥३२॥
माऽवमंस्थाश्च मां देव एष त्वां नाशयाम्यहम् ।
इत्युच्चार्य तु संरब्धौ परस्परजिघांसया ॥३३॥
अहमेव वरो नत्वमहमेकः परः प्रभुः ।
इतिब्रुवौ हन्तुकामौ चक्रतुर्युद्धरंभणम् ॥३४॥

युयुधाते परौ वीरौ मानव्याजौ महायुधौ ।
अहंकारनिवेशाद्वै युद्धं तयोर्बभूव ह ॥३५॥
ईश्वरास्तत्समकक्षाः समाजग्मुर्दिदृक्षवः ।
क्षिपन्तः पुष्पवर्षाणि पश्यन्तो युद्धवर्तिनौ ॥३६॥
तावत् क्रुद्धो हरिस्तत्र बाणान्मुमोच दुःसहान् ।
अस्त्राणि विविधान् क्षेपान् ब्रह्मवक्षसि पारगान् ॥३७॥
अथ ब्रह्मा परं क्रुद्धो विष्णोर्वक्षसि दुःसहान् ।
बाणान् विद्युत्सतेजस्कानस्त्राणि विविधानि च ॥३८॥
मुमोचेति तयोर्युद्धं द्रागाश्चर्यकरं ह्यभूत् ।
प्रसमीक्ष्येश्वराः सर्वे प्रशशंसुः समाकुलाः ॥३९॥
विष्णुर्वेगवशो भूत्वाऽग्न्यस्त्रं मुमोच वेधसे ।
पर्जन्यास्त्रेण विधिना तदस्त्रं सन्निवारितम् ॥४०॥
विष्णुना प्रेरितं तत्र विद्युदस्त्रं समेघकम् ।
ब्रह्मणा नाशितं तद्वै वायव्यस्त्रेण महाम्बरे ॥४१॥
विष्णुर्युयोज गिर्यस्त्रं को वज्रास्त्रं मुमोच ह ।
हरिर्नागास्त्रमसृजद् ब्रह्मा चिक्षेप गारुडम् ॥४२॥
हरिणा प्रहितं भारं लघिम्ना ब्राह्मणा हृतम् ।
वियोगशक्तिमुद्यम्य विष्णुर्जघान कोरसि ॥४३॥
ब्रह्मा शूलेन तां छित्वा जृम्भृगास्त्रं मुमोच ह ।
विष्णुर्निद्राप्रमन्त्रेण जृम्भणं प्रविलय्य च ॥४४॥
जग्राह यावद्ब्रह्मास्त्रं ब्रह्मा चापि च तद् दधे ।
द्वयोर्ब्रह्मास्त्रयोर्युद्धं प्रघोरं चाऽम्बरेऽभवन् ॥४५॥
महानलास्ततो जाता ईशसृष्टिप्रदाहकाः ।
विष्णुस्तावत् स्वकं चक्रं संजग्राह सुदर्शनम् ॥४६॥
कोटिसूर्यसमानोग्रं तीक्ष्णधारं विनाशकम् ।
ईशास्तावत्तु सन्त्रस्ता हाहाकारं प्रचक्रिरे ॥४७॥
ब्रह्मणस्तु विनाशाय यावत्प्रेरयति प्रभुः ।
तावद् ब्रह्मा विष्णुनामभक्त्याख्यं कवचं दधौ ॥४८॥
"विष्णुर्नारायणो देवो मय्यावसतु दुःखहाः ।
परंब्रह्म शिरः पातु ब्रह्म पातु गलं मम ॥४९॥
वासुदेव उरः पातु कटिं पात्वनिरुद्धकः ।
प्रद्युम्न उदरं पातु संकर्षणस्तु पृष्ठकम् ॥५०॥
भूमा शिश्नं तु मे पातु महाविष्णुस्तु सक्थिनी ।
हिरण्यगर्भो मे जानू जंघे वैराजपूरुषः ॥५१॥
गुल्फौ प्रधानपुरुषः पादौ प्रकृतिपूरुषः ।
कृष्णः पूर्वे हरिः पश्चाद् वैकुण्ठश्चोत्तरेऽवतु ॥५२॥
नारायणस्तु पश्चान्मेऽन्तर्यामी सर्वतोऽवतु ।
विष्णुस्त्वं मयि सर्वांगे प्रविश्याऽवतु मां विभो ॥५३॥
सत्त्वाश्रयस्तु मे सत्त्वं पातु नारायणः स्वयम् ।
रक्ताश्रयस्तु मे रक्तं पातु श्रीभगवान् स्वयम् ॥५४॥
भयाश्रयं तु मां पातु चक्री चाऽभयदानदः ।
नालस्थितं तु मां पातु नालोद्भवकरः प्रभुः ॥५५॥
आकस्मिकमहादुःखात्पाहि मां शरणागतम् ।
ब्रह्मास्त्रे शान्तय चक्रं संहराऽत्र दयां कुरु" ॥५६॥
स्तुत्वेत्थं परमं देवं ब्रह्मा तूष्णीं बभूव ह ।
ब्रह्मभक्तिं समज्ञाय विष्णुश्चक्रं मुमोच न ॥५७॥
परं ब्रह्मास्त्रयोस्तेजः संहारार्थं मनो दधे ।
संकर्षणस्वरूपो यः परंब्रह्म जनार्दनः ॥५८॥
महाज्योतिर्मयस्तम्भो द्वयोर्मध्ये बभूव सः ।
ब्रह्मास्त्रे चापि ते तावत्सर्वसंहारसंक्षमे ॥५९॥
निलिल्याते क्षणेनैव महाज्योतिर्मयेऽनले ।
अस्त्रशान्तिकरं तेजः परं दृष्ट्वा तदद्भुतम् ॥६०॥
ब्रह्मा विष्णुस्तथेशा ये तत्र सन्ति समागताः ।
लेभिरे विस्मयं मुग्धाः किमेतज्ज्योतिरित्यहो ॥६१॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने
ब्रह्मविष्ण्वोर्विवादभक्तिकवचादिनिरूपणनामा
नवमोऽध्यायः ॥९॥

**श्रीनारायण उवाच—**

अहो तेजोमयं बिम्बं स्तंभाकारं किमुत्थितम् ।
अस्योर्ध्वं च तथाऽधस्ताद् ब्रह्मतेजोमयं न्विदम् ॥ १ ॥
इतितर्कयतोस्तत्र पश्यतोश्च क्षणान्तरे ।
तयोस्तु देवयोर्युद्धयद् ब्रह्मास्त्रे द्वे लयं गते ॥ २ ॥
स्तंभतेजसि लीनत्वादस्त्रयोर्ब्रह्मरूपिणोः ।
द्वयोर्मध्ये महान् कः स्यादित्यनिर्णयतः पुनः ॥ ३ ॥
ब्रह्मास्त्रग्राससामर्थ्याश्रयस्याऽस्य तु यो द्वयोः ।
अधःप्रान्तं परं प्रान्तं नयेत् सोऽस्तु महानिति ॥ ४ ॥
एवं संकेतमास्थाय मिलितौ वीरमानिनौ ।
प्रतस्थातेऽथ कार्यन्तु द्वयोरेकं न संभवेत् ॥ ५ ॥
विचार्येति हरिर्विष्णुः गारुडं रूपमास्थवान् ।
ब्रह्मा हंसतनुर्भूत्वा तदन्तं वीक्षितुं गतः ॥ ६ ॥
विष्णुर्वर्षशतं दिव्यं दूराद् दूरतरं गतः ।
नाऽपश्यत्तु यदा तस्य स्तंभस्य मूलमित्यतः ॥ ७ ॥
अतिश्रान्तश्च निर्विण्णः प्राप पूर्वं रणाजिरम् ।
ब्रह्मा वर्षशतं दिव्यमूर्ध्वादूर्ध्वतरं गतः ॥ ८ ॥
अगत्वाऽन्तं क्षणं स्थित्वा चिन्तामग्नो ह्यजायत ।
तदानीमेव समये ज्योतिरूपः परः प्रभुः ॥ ९ ॥

व्यचिन्तयदहो देवौ कीदृशौ बालवन्मतौ ।
अनन्तस्याऽप्रमेयस्य मे मानं कर्तुमुद्यतौ ॥१०॥
नैकस्याऽपि गभस्तेर्मे प्रान्तं प्राप्तुमपि स्वयम् ।
वासुदेवोऽपि संशक्तः का वार्ताऽन्येशमानिनाम् ॥११॥
परिहासं विधायेत्थं शिरःकम्पं चकार ह ।
तावज्ज्योतिदिशिरोभागात्पुष्पं वै पतितं शुभम् ॥१२॥
केतक्याः सौरभं पुष्पं दिव्ययुगशतच्युतम् ।
ब्रह्मा ददर्श तत्पुष्पं पतमानं तदग्रतः ॥१३॥
पप्रच्छ च विधिः किं त्वं कस्मात्पतसि पुष्पराट् ।
श्रुत्वा प्राह विधिं पुष्पं धृतोऽहं परमात्मना ॥१४॥
स्वेन ज्योतिःस्वरूपेण मूर्ध्नि तस्मात्पताम्यहम् ।
व्यतीतं मे युगशतं पततस्तस्य मूर्धतः ॥१५॥
तथाऽप्यल्पप्रमाणो वै मार्गः प्रोल्लंघितो मया ।
न पश्यामि गभस्तेस्तु कदा प्रान्तो भविष्यति ॥१६॥
तस्मात्त्वमपि जह्याशामनन्तस्याऽन्तदर्शने ।
परावृत्य तदा ब्रह्मा केतक्या सह मन्त्रणाम् ॥१७॥
कृतवान् यत् सखे मेऽद्य त्वया कर्तव्यमीप्सितम् ।
विष्णोस्तु सन्निधौ वाच्यं त्वयैतद्वै मया सह ॥१८॥
धात्रा दृष्टो ज्योतिषोऽन्तस्तत्र साक्ष्यहमच्युत ।
इतिकृत्वा केतकं तु ब्रह्मा ननाम वै मुहुः ॥१९॥
असत्यमपि शस्तं स्यादापत्काले हि शासनात् ।
ब्रह्मपुष्पे समायाते यत्राऽभूद्वै रणांगणम् ॥२०॥
ब्रह्मा समीक्ष्य विष्णुं च जयहीनं ननर्त ह ।
उवाच कपटी षण्ढः सत्याधारं तु केशवम् ॥२१॥
ज्योतिःस्वरूपस्य परं तु चान्तं
दृष्ट्वा नु देवाऽत्र समागतोऽहम् ।
अथाऽत्र साक्षी खलु केतकोऽयं
पप्रच्छविष्णो ! नु महानहं हि ॥२२॥
कूटसाक्ष्यं कृतं तद्वै केतकेन मृषापि सन् ।
'ब्रह्मा चान्तं जगामे'ति विष्णुः सत्यममन्यत ॥२३॥
नमस्कृत्वा वेधसं च मत्वा स्वस्य शिरोमणिम् ।
षोडशैरुपचारैश्च पूजयामास वेधसम् ॥२४॥
ब्रह्मणा तु प्रसह्यात्तं महत्त्वं कूटसाक्षिणा ।
ब्रह्मकेतकयोस्तत्र दण्डं कर्तुं महाप्रभुः ॥२५॥
परब्रह्म स्वयं कृष्णः स्वज्योतीरूपमध्यतः ।
प्रादुर्बभूव साकारः स सदाशिवरूपधृक् ॥२६॥
संकर्षणांश इत्युक्तो लयकृत्स सदाशिवः ।
परब्रह्मस्वरूपस्य संकर्षणमहात्मनः ॥२७॥
शिरसः किरणं चैकं ज्योतिःस्तंभोऽभवत् खलु ।
तस्य बाणस्वरूपत्वं लिंगरूपत्वमित्यपि ॥२८॥
ब्रह्मतेजःस्वरूपत्वमर्चिमार्गत्वमित्यपि ।
सुषुम्णातेजसो राशिर्ब्रह्म चापि निराकृति ॥२९॥
अनाकारं शंभुतत्त्वं कीर्त्यते बहुनामभिः ।
परब्रह्मललाटोत्थकिरणान्तरतो जनैः ॥३०॥
ललाटाच्छिवसंभूतिरिति वेदः प्रवक्त्यपि ।
साकारं सच्चिदानन्दं शिवं दृष्ट्वा तु पद्मजः ॥३१॥
सकम्पः प्रांजलिर्भूत्वा परिगृह्य च तत्पदम् ।
सत्रिशूलं शिवं प्राह क्षमस्व परमेश्वर ॥३२॥
मम कल्मषनाशाय भवान् दण्डधरः प्रभुः ।
प्रादुर्भूतो महादेव प्रसीद करुणाकर ॥३३॥
शाधि मां मोहमापन्नं मृषा गौरवमाश्रितम् ।
शरण्य शरणायातं त्राहि मां भ्रातरं तव ॥३४॥
मोहबुद्ध्या मया तत्र कृतं विष्णोरमाननम् ।
विष्णुरस्ति परब्रह्म महान् मान्योऽस्ति मे सदा ॥३५॥
तस्मात् क्षमस्व देवेशाऽनृतं मां दण्डमावह ।
परब्रह्मस्वरूपत्वं परब्रह्मात्मको हरिः ॥३६॥
द्वयोर्भेदं न कुर्वीत भेदद्रष्टा पतत्यधः ।
अजानता मया चेदृङ्महिमा श्रीजनार्दनः ॥३७॥
अतीवाऽवमतश्चाऽप्यनृतं प्रोक्तं तथा पुनः ।
अतस्तद्दोषपात्रत्वाद् दण्ड्योऽहं भगवँस्त्वया ॥३८॥
शिरश्छिन्ध्यनृतं छिन्धि छिन्धि वा कल्मषं मम ।
भेददृष्टिं च मे छिन्धि यथेष्टं कुरुशंकर ॥३९॥
त्वं विष्णुस्त्वं परेशानस्त्वं देवः परमेश्वरः ।
त्वं ज्योतिस्त्वं निराकारो व्यापको ब्रह्म इत्यपि ॥४०॥
त्वं साकारः परब्रह्म ज्योतिषो मूलमेव च ।
तव ब्रह्मन्मुखतेजःपरिधेः किरणं तु यत् ॥४१॥
अनन्तपारं सन्दृष्टं तस्य ते महिमा महान् ।
शान्तिं देहि क्षमां देहि त्राहि त्वच्छरणागतम् ॥४२॥
प्रार्थयित्वेत्थमीशेशं ब्रह्मज्योतिःस्थमच्युतम् ।
परब्रह्माकृतिं देवं महादेवं सदाशिवम् ॥४३॥
नमस्कृत्य पुनर्नत्वा मुहुर्नत्वाऽपतत् पदे ।
तूष्णीमास यदा ब्रह्मा तमुत्थाप्याऽब्रवीच्छिवः ॥४४॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने तेजोमयब्रह्मलिंगाविर्भावपूर्वकशंकरप्राविर्भाववर्णननामा दशमोऽध्यायः ॥१०॥

**श्रीनारायण उवाच—**

लीनमर्थं यतो गच्छेत्ततो लिंगमुदीरितम् ।
लीनो ब्रह्मपरः श्रीमान् पुरुषोत्तमकेशवः ॥ १ ॥
तं वै गमयते तस्य तेजोमण्डलमात्रकम् ।
तद्वै तेजो भवेल्लिंगं बाणं चेति प्रकीर्तितम् ॥ २ ॥
तेजस्तेजस्विनोस्तत्राऽभेदात्तेजो हरिः स्वयम् ।
तस्माच्छिवस्तथा लिङ्गं परब्रह्मेति वैदिकाः ॥ ३ ॥
वदन्त्यपुनरावृत्तिप्रदः स्वेच्छाऽऽत्तविग्रहः ।
शिवः प्रोवाच नम्रं तं विधिं मा भैष्ट चाऽग्रज ॥ ४ ॥
शिरश्छेदाद्वरं मन्ये महतामवमाननम् ।
मानहानिर्महाभंगो महतां मरणं मतम् ॥ ५ ॥
शिरश्छेदसमं दण्डं दास्ये त्वां कल्मषापहम् ।
ब्रह्मँस्त्वं पूज्यताकांक्षी कितवत्वं समग्रहीः ॥ ६ ॥
ततो लोके न वै ते स्यादिष्टदेवोत्सवादिकम् ।
इष्टदेवतया त्वं वै पूज्यो नैव भविष्यसि ॥ ७ ॥
किन्तु यज्ञेषु गृह्येषु भवत्स्थानं भविष्यति ।
सर्वांगदक्षिणो यज्ञस्त्वदृते निष्फलो भवेत् ॥ ८ ॥
अतो दैवबलिप्राप्तौ यज्ञे भागस्तवाऽस्त्विति ।
पितामहं हि सर्वेषां मान्यस्थानस्थितं त्वयि ॥ ९ ॥
त्वंकारेण व्यवहरिष्यन्ति त्वां तु जना विधे ।
अथाह भगवान् देवः केतकं कूटसाक्षिणम् ॥१०॥
मत्पूजायामनर्हस्त्वं भविष्यसि न संशयः ।
नापि देवाः स्वपूजायां त्वां ग्रहीष्यन्ति केचन ॥११॥
इतिश्रुत्वा महादेवं केतकः समतोषयत् ।
देवदेव महादेव नमस्तेऽखिलनायक ॥१२॥
प्रसादं कुरु देवेश क्षमस्व किल्बिषं मम ।
विधेहि सफलं नाथ जन्म मे ते नमो नमः ॥१३॥
प्राह शंभुस्तदा तं तु करुणालय ईश्वरः ।
मद्गणास्त्वां धरिष्यन्ति जन्म ते सफलं भवेत् ॥१४॥
मदालये विताने ते स्थानं दास्यामि शं लभ ।
इत्यादिश्य महादेवो यावद्विरमते स्वयम् ॥१५॥
तावज्ज्योतिर्मयं लिंगं शनैः संकोचतां गतम् ।
स्वल्पं भूत्वाऽऽविशत् तत्र सदाशिवतनौ स्फुटम् ॥१६॥
तदा तु वेधसा चैव विष्णुना च सदाशिवः ।
साकारः पूजितो देवः परब्रह्मस्वरूपकः ॥१७॥
ब्रह्माकृतिमयं लिङ्गः निराकारस्वरूपकम् ।
परब्रह्मप्रतीकाख्यं ताभ्यां तत्र प्रपूजितम् ॥१८॥
स्थापितं चापि तत्रैव यत्र चेश्वरसृष्टयः ।
तमादिकालमारभ्यः लिङ्गपूजा प्रवर्तिता ॥१९॥
ब्रह्मविष्णूभयाभ्यां वै विष्णुपूजा तु वेधसा ।
शिवपूजाऽप्युभाभ्यां वै तदानीमेवमास्थिता ॥२०॥
असद्वाग्वेधसः पूजा न केनाऽप्यादृता यतः ।
विष्णुशिवौ प्रपूज्येते न वेधास्तु कदाचन ॥२१॥
तत्र स्थितैस्तदेशैर्वैं शिवविष्णू प्रपूजितौ ।
भविष्यत्सृष्टिलाभाय पूजनं तत्प्रवर्तितम् ॥२२॥
अथ ज्योतिर्मयं लिङ्गं यदा चाऽदृश्यतां गतम् ।
तावज्जिज्ञासितं मूलं पुंरूपं समदृश्यत ॥२३॥
द्विभुजं सच्चिदानन्दं परब्रह्माख्यमेव यत् ।
तत्तेजःपरिधिप्रेर्य-लिंगाख्यकिरणात्तु वै ॥२४॥
प्रकृतिपुरुषस्तस्मात्प्रधानपुरुषस्ततः ।
महाविष्णुस्ततः साक्षाद्वैराजपुरुषः पिता ॥२५॥
दृष्टो देवत्रयेणापि त्रयो यत्र समासते ।
नाभौ ब्रह्मा हृदि विष्णुर्ललाटे शंकरः स्वयम् ॥२६॥
स्वं स्वं व्यलोकयन्पश्चाद् भ्रातरश्चेति मेनिरे ।
प्रसम्मील्य परिष्वज्ज्य त्रयो देवास्तमीडिरे ॥२७॥
नमोऽद्भुतस्वरूपाय जनकाय नमो नमः ।
स्वेच्छया चातिदूराय कृपयाऽन्तिकवर्तिने ॥२८॥
नारायणाय वैराजपूरुषाय नमो नमः ।
वयं त्रयो भवत्पुत्रा भवदाज्ञावहा यतः ॥२९॥
शाधि तातेतिकर्तव्यं करिष्यामो न संशयः ।
वैराजेन तदा काय सृष्टिकार्यं समर्पितम् ॥३०॥
विष्णवे सृष्टिपुष्ट्याख्यं शिवाय प्रलयस्त्विति ।
तदालोक्य तदानीं वै समस्तेश्वरकोटिभिः ॥३१॥
अभिषिक्तास्तथा तेऽपि तत्तद्धिष्ण्येष्ववस्थिताः !
किरीटहारनुपूरकेयूरमणिकुण्डलः ॥३२॥
क्षौममाल्योत्तरीयस्रग्यज्ञसूत्रांगुलीयकैः ।
पुष्पताम्बूलकर्पूरचन्दनात्तरभूषणैः ॥३३॥
धूपकुंकुमदीपाच्छच्छत्रव्यञ्जनचामरैः ।
राजाधिराजसच्चिह्नध्वजदिव्योपहारकैः ॥३४॥
दिव्यैस्तत्तद्वयक्तियोग्यैर्वाङ्मनोऽतीतवैभवैः ।
पूजितास्ते त्रयो देवाः सर्वैः सम्यक् सभाजिताः ॥३५॥
विष्णोस्तु वैष्णवी लक्ष्मीः शंकरस्य तु शांकरी ।
ब्रह्माणी ब्रह्मणश्चैवोत्पन्ना तेषां तु वामतः ॥३६॥
विष्णुब्रह्ममहेशानां स्वपत्नीसहितात्मनाम् ।
निवासा ईशलोकेषु वैराजेनापि कल्पिताः ॥३७॥

विष्णोर्वैकुण्ठमन्यत्तत्, कैलासोऽन्यो हरस्य सः ।
वेधसः सत्यधामाऽन्यत्, स्वस्वधाम्नि गताश्च ते ॥३८॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे
कृतयुगसन्ताने परमेष्ठिकेतकयोरपूज्य
ताशिक्षाकरणलिङ्गमूलदर्शनादिनामा
एकादशोऽध्यायः ॥ ११ ॥

**श्रीनारायणउवाच—**

श्रृणु पद्मे प्रवक्ष्यामि ब्रह्माऽण्डानि यथाऽकरोत् ।
चतुर्विंशतितत्त्वात्मवैराजतनुमध्यतः ॥१॥
ब्रह्मा कराञ्जलौ पिण्डं गृहीत्वैकं च तं पुनः ।
मर्दयित्वाऽसंख्यभागानणुरूपानकल्पयत् ॥२॥
तांश्च हस्ततले धृत्वा फुत्कारेणोदडीडयत् ।
सत्त्वात्मकमहाकाशे समन्तादुड्डितास्तु ते ॥३॥
अण्डस्वरूपगोलात्मब्रह्माण्डान्यभवन् प्रिये ।
तदानीं ब्रह्मणा तत्र संकल्पा बहवः कृता ॥४॥
'महाम्बरे प्रतिष्ठन्तु सर्वेऽसंख्याऽणवः पृथक् ।
परस्परं सदा तत्राऽघट्टयन्तः स्थिरा' इति ॥५॥
सर्वे तथैव वर्तन्ते परस्परमनाहताः ।
'अथ प्रत्येकमध्येऽस्तु महाकाशोऽवकाशदः' ॥६॥
इतिसंकल्पमात्रेण मध्याकाशास्तदाऽभवन् ।
तत्र चतुर्दशाद्याश्च भूमिकाः संभवन्त्विति ॥७॥
तादृक्संकल्पमात्रेण चतुर्दशादिभूमिकाः ।
प्रत्येकाऽण्डे तु जाताः सन्तमोव्याप्ता हि सर्वशः ॥८॥
तेषु प्रवेशनार्थाय ब्रह्मविष्णुमहेश्वराः ।
योगशक्त्याऽसंख्यसूक्ष्मस्वस्वरूपाण्यधारयन् ॥९॥
तत्तण्डे तत्र तत्र देवाः प्रविविशुस्त्रयः ।
तत्राऽऽलोक्य तमस्तीव्रं वेधाः संकल्पमाचरत् ॥१०॥
सर्वेष्वत्र प्रविलेषु तेजोद्रव्याणि सन्त्विति ।
तदा सर्वपरे लोके सत्यदीपः प्रकाशितः ॥११॥
सत्यसंयमजो दीपो यतस्तत्र प्रकाशते ।
अतस्तद्भूमिकायास्तु सत्यलोक इति प्रथा ॥१२॥
ततोऽधोभूमिकायान्तु तपसश्च प्रकाशनात् ।
ततोलोकइतिख्यातिर्ब्रह्मणा परिकल्पिता ॥१३॥
ततोऽप्यधस्तरे पितृजनानां पुण्ययोगतः ।
प्रकाशः समभूत्तस्माज्जनलोकाऽभिधा कृता ॥१४॥
ततोऽधो भूमिकायां वै महर्दीपः प्रकाशितः ।
पितृदेहोत्थसत्तेजो महश्चेत्यभिनिश्चितम् ॥१५॥
महःप्रदीपयोगाद्वै महर्लोकाभिधा कृता ।
ततोऽधस्तात्तथा लोके सूर्यप्रदीपसंगमात् ॥१६॥
स्वर्गलोकस्तथा ताराद्योतनाद् द्यौरिति प्रथा ।
ततोऽधस्तादन्तराले नक्षत्रेक्षणदीपनात् ॥१७॥
अन्तरीक्षमिति ख्यातिर्भुवर्भूविवरादपि ।
अतोऽधस्ताद्भूमिकायां पृथोरग्नेः प्रकाशनात् ॥१८॥
अग्निनामा पृथिवीति भूरिति भ्राजनादपि ।
ततोऽधस्तात्तलानां तु सप्तानां सप्त दीपकाः ॥१९॥
मणयः मणि दिव्यार्थास्तत्तदाद्यक्षरादियुक् ।
तत्तन्नाम कृतं सम्यक् तत्तन्नामानि मे श्रृणु ॥२०॥
ओषधयस्त्वधोलोके प्रकाशन्तेऽतलं ततः ।
वैदूर्यमणितेजस्त्वाद् वितलं तदधः स्मृतम् ॥२१॥
कौस्तुभस्तोमकान्त्या च सुतलं तदधो मतम् ।
फणाताल्मणिदीपात् तलातलमितीरितम् ॥२२॥
मारकतमणीनां तु प्रकाशात्तन्महातलम् ।
रत्नानां तु विभिन्नानां प्रकाशात्तद् रसातलम् ॥२३॥
पुष्पराजमणीनां च प्रकाशात् पत्तलस्थितेः ।
पातालमिति तत्संज्ञा कृता वै ब्रह्मणा स्वयम् ॥२४॥
महर्जनतपःसत्यप्रस्तराः पुण्यतत्त्वजाः ।
स्वर्गे तेजस्तरो वायोः स्तरो भुवरितीरितः ॥२५॥
पृथिव्यास्तु कृता भूश्चाऽतलाद्यास्तु तमस्तराः ।
इत्येवं तत्स्तराणां वै क्लृप्तनं ब्रह्मणा कृतम् ॥२६॥
तेष्वपि पार्थिवा भागा दार्ढ्यार्थे स्वल्पमात्रकाः ।
क्वचित्तेजोमया भागा धातवः स्तरमिश्रिताः ॥२७॥
क्वचिज्जलीयभागाश्च सुदृढास्तामसा अपि ।
स्तराः प्रजासमाधारा विवराख्या भवन्ति हि ॥२८॥
अथ ब्रह्मा स्तराधारं स्तंभं मध्येऽप्यकल्पयत् ।
सौवर्णः स तु पातालादासत्यं सुव्यवस्थितः ॥२९॥
सत्यलोके स्वकं धाम ब्रह्मा वै समकल्पयत् ।
मध्यलोके तु कैलासं शंभुः स्वं समकल्पयत् ॥३०॥
विष्णुस्तु शेषशायी स्वं पातालाऽधो जले स्वकम् ।
क्षीरे तु सागरे वासं स्वयोग्यं समकल्पयत् ॥३१॥
योगिनां दर्शनार्थं वै नारदादि महात्मनाम् ।
देवानां चापि सिद्धानां गतिर्यत्र भवत्यपि ॥३२॥
ऋषीणां च गतिर्यत्र रुचिरं धाम तन्मतम् ।
अन्येषां दिव्यदेहानां यत्र वै सुगतिर्भवेत् ॥३३॥
द्वितीयं तादृशं श्वेतद्वीपाख्यं समरोचयत् ।
क्षीराब्धेश्चोत्तरे भागे दिव्यो द्वीपः स वै स्मृतः ॥३४॥

ततश्चापि तृतीयं स्वं मानवैर्गम्यमर्थदम् ।
भूमौ हिमगिरेः श्रृंगे बद्रिकाश्रमनामकम् ॥३५॥
नरनारायणमूर्त्या तपस्तपति तत्र सः ।
लोकक्षेमकरा देवा ब्रह्मविष्णुमहेश्वराः ॥३६॥
प्रयतन्ते सदैवं ते रक्षार्थं तत्स्थिता यतः ।
तेषां धामानि चाऽण्डेऽत्र भौतिकान्यवराणि च ॥३७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्तानेऽसंख्यब्रह्माण्डोत्पत्तिस्तर-व्यवस्थात्रिदेववासादिनिरूपणनामा द्वादशोऽध्यायः ॥१२॥

**श्रीनारायण उवाच—**

एतद्ब्रह्माण्डमानं तु पञ्चाशत्कोटियोजनम् ।
भूम्यावरणमित्येतत् कटाहं प्रथमं मतम् ॥ १ ॥
अथोत्पन्नेष्वसंख्येषु ब्रह्माण्डेषु च तेषु वै ।
मध्योत्पन्नोष्मणा भौमं कटाहं शीर्णतोन्मुखम् ॥ २ ॥
दृष्ट्वा तु ब्रह्मणा तत्तच्छान्त्यर्थं चापरं ततः ।
तादृग्गुणं कटाहं तु सलिलावरणात्मकम् ॥ ३ ॥
आहितं तत्समावृत्तं पञ्चाऽब्जयोजनावृतम् ।
जलातिशैत्यनियमकृते तैजसमावृतम् ॥ ४ ॥
तृतीयं जलतस्तद्वै दशोत्तरगुणं मतम् ।
तन्नियमकृते वायोस्ततोऽपि दशपुष्टिकम् ॥ ५ ॥
तस्याकाशं ततस्तस्याऽहंकारस्तस्य वै महान् ।
महतः प्रकृतिः प्रोक्ता चाऽष्टमाऽवरणात्मिकी ॥ ६ ॥
एतान्यष्टकटाहानि ब्रह्माण्डाऽवरणानि वै ।
प्रत्येकं तत्र लग्नानि तेषां दार्ढ्यकराणि हि ॥ ७ ॥
ब्रह्माण्डानां च सृष्टीनां वैराजादेश्च कृत्स्नशः ।
आयुष्यनियमार्थं तु परब्रह्म स्वयं हरिः ॥ ८ ॥
महाकालं स्वमूर्तेस्तु प्रकटीकृतवाँस्ततः ।
महाकालस्य रूपं वै समयः परिकथ्यते ॥ ९ ॥
कालः कलयते लोकान् कालः संहरते प्रजाः ।
क्षणादारभ्य च महाप्रलयाऽवधिकार्यकृत् ॥१०॥
स एवाऽऽयुष्यसंक्षेप्ता हरिणा परिकल्पितः ।
क्षणः स्याद् या परमाण्वोर्विभागजनिका क्रिया ॥११॥
क्रियाविशिष्टकालः सः क्षणाख्यां लभते ततः ।
विभागेनाऽप्यभिव्याप्तः कालः क्षणो द्वितीयकः ॥१२॥
पूर्वसंयोगनाशाढ्यः कालः क्षणस्तृतीयकः ।
उत्तरदेशसंयोगव्याप्तः क्षणश्चतुर्थकः ॥१३॥
चतुर्भिश्च क्षणैः कालः कूट इत्यभिधीयते ।
त्रिभिः कूटैस्त्रुटिः प्रोक्ता तिस्रस्त्रुट्यो लवो मतः ॥१४॥
लवत्रयं निमेषः स्यान्निमेषा दश पंच च ।
काष्ठा प्रोक्ता तथा पञ्चदशकाष्ठास्तु नाडिका ॥१५॥
ते द्वे मुहूर्तः संप्रोक्तः प्रहरः षण्मुहूर्तकाः ।
प्रहराः सप्त यामः स्यात्, दिवा यामचतुष्टयम् ॥१६॥
तथा यामाश्च चत्वारो निशा, रात्र्यहनी ह्युभे ।
पञ्चदश भवेत्पक्षः, द्वौ पक्षौ मास उच्यते ॥१७॥
मासोऽयन्तु मनुष्याणां पितृणां तदहर्निशम् ।
द्वौ तावृतुः षडयनं दक्षिणं चोत्तरं मतम् ॥१८॥
दक्षिणन्तु निशा प्रोक्तोत्तरं तु दिवसो दिवि ।
अयने द्वे तु मासानां द्वादश, वत्सरोऽपि सः ॥१९॥
दिव्यवर्षप्रमाणेन युगाः समनुकीर्तिताः ।
कृतं त्रेता द्वापरं च कलिश्चेति युगाः स्मृताः ॥२०॥
चत्वारि त्रीणि द्वे चैकं वर्षाणां तु यथाक्रमम् ।
तत्तद्युगानां समयो वर्षदशसहस्रकम् ॥२१॥
तथा सन्ध्यंशयोस्तेषां समयो द्विसहस्रकम् ।
अष्ट षडथ चत्वारि द्वे वर्षाणि यथाक्रमम् ॥२२॥
तादृशं युगसाहस्रं ब्रह्मणो दिनमुच्यते ।
तावत्येव निशा तस्य यत्र त्रिलोकि नश्यति ॥२३॥
प्रातः पुनः समुदेति, सायं नाशो यथाक्रमम् ।
ब्रह्मणस्तु दिने यान्ति मनवो वै चतुर्दश ॥२४॥
मनुः स्वं समयं भुंक्ते चतुष्कीमेकसप्ततिम् ।
इन्द्रोऽपि समयं भुंक्ते स्वचतुष्क्येकसप्ततिम् ॥२५॥
ब्रह्मणोऽपि स्वदिवसैः परमायुर्वयःशतम् ।
पञ्चाशद्वर्षमानन्तु पूर्वार्धमिति तन्मतम् ॥२६॥
एवमेव परार्धं तत्पञ्चाशद्वर्षमानकम् ।
ब्रह्मणो यद्भवेद्वर्षं वैराजस्य दिवा हि सः ॥२७॥
वैराजस्य च यद्वर्षं महाविष्णोर्दिवा तु सः ।
महाविष्णोस्तु यद्वर्षं प्रधानपुरुषस्य सः ॥२८॥
दिवसोऽथाऽस्य यद्वर्षं प्रकृतिपूरुषस्य सः ।
दिवसस्तत्प्रमाणेन वर्षाणां शतमित्ययम् ॥२९॥
सृष्टिमयः समयः स उन्मेषोऽक्षरब्रह्मणः ।
तस्य प्रतिनिमेषस्तु महाप्रलय उच्यते ॥३०॥
निमेषोन्मेषयोस्तस्य सृष्ट्योऽनन्तरीतयः ।
विलीयन्ते च जायन्ते तत्प्रवाहस्य नाऽदिता ॥३१॥
अथवा कालमानं तु सूक्ष्मं क्षणचतुष्टयम् ।
षष्टिः क्षणचतुष्काणां विपलः परिकीर्तितः ३२॥

विपलानां तु या षष्टिः पलः स समयोमतः ।
पलानां तु च या षष्टिः सा घटिकेति सम्मता ॥३३॥
सार्धद्वयघटिकानां घण्टाकालः प्रकीर्तितः ।
चतुर्विंशतिघण्टानां रात्रिदिनं तु मानुषम् ॥३४॥
वर्षन्त्वह्नां च रात्रीणां पञ्चषष्टिः शतत्रयम् ।
एवं कालः सदा सर्वान् स्वायत्तीकृत्य वर्तते ॥३५॥
पक्षो यो मानुषश्चात्र चान्द्रः स दिवसो मतः ।
रात्रिश्च तादृशी लग्ना मासो रात्रिदिवं ततः ॥३६॥
चान्द्रं बोध्यं तथा सौर्ये रात्रिशून्यं तु मण्डलम् ।
ध्रुवेऽति दिवसो नित्यो यतः सृष्टिर्विभिन्नगा ॥३७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुग-
सन्ताने आयुःप्रमापकसमयव्यवच्छेदादि-
निरूपनामा त्रयोदशोऽध्यायः ॥१३॥

**श्री नारायण उवाच—**

अथ ब्रह्मा मानसीं तु सृष्टिं चैच्छत् सरूपिणीम् ।
मृद्र्मर्दकभावेन गुणसृष्टिमकल्पयत् ॥ १ ॥
ब्रह्मा स्वविवित्तिविभवाद्बहुवीतिधाराः
स्वेच्छाप्रवाहविभवादभिलाषधाराः ।
यत्नात् स्वकीयगुणतो बहुयत्नकूटा-
नुत्पाद्य सृष्टिकरणाय पुरुक्रियाश्च ॥ २ ॥
स्वस्मान्मनांस्यपरिमाणगुणानि कृत्वा
संख्यां परार्धगुणितां च ततोऽप्यसंख्याम् ।
मानं च ह्रस्वमणु दीर्घमथो महच्च
सृष्ट्वा वियोगमसुयोगमतः परं च ॥ ३ ॥
ज्येष्ठत्वमर्थसुकनिष्ठकताऽन्तिकत्वे
दूरत्वमर्थगुरुतां द्रवतां ततोऽन्यम् ।
स्नेहं तथा कमलजो विरचय्य नैजात् देहाद् गुणान्
बहुविधान् समतिष्ठिपत्तान् ॥ ४ ॥
मायां निगृह्य निजमानससंस्थितां सः
तस्यास्तमोऽपि च विमोहमपि द्वितीयम् ।
मोहं महान्तमपि तुर्यसुपर्वसंज्ञं
तामिस्रमन्धतमसं च ससर्ज पञ्च ॥ ५ ॥
अज्ञानवृत्तय इति स्म भवन्ति सृष्टा-
वालम्ब्य या भववहाः सुभवन्ति जीवाः ।
ता एव रूपविवरेण विभिन्नसंज्ञा
आविद्यमस्मिभवनं समरागकश्च ॥ ६ ॥
द्वेषो भयं त इति सर्वशरीरिसक्ता
ब्रह्मा ससर्ज पुनरप्यथ सत्प्रमाणम् ।
वैकल्पकं च नु विपर्ययमुग्रनिद्रां
स्वप्नं सुषुप्तिमथ घोरतरां नु वृत्तिम् ॥ ७ ॥
मौढ्यं च नर्म हसनं कपटं च मायां
वेधास्ततः समससर्ज नु संशयं च ।
तर्कं च वादमथ जल्पमथो वितण्डां
कापट्यचौर्यमथ तच्छलमामृषात्वम् ॥ ८ ॥
लौल्यं तृषामपि तथाऽऽसुरभावनां च
नास्तिक्यमुग्रतरनिर्दयतामशान्तिम् ।
अस्निग्धतां परमरुक्षतरत्वमार्तिं
वार्ततिरस्कृतिमथार्धगडुत्वमुग्रम् ॥ ९ ॥
सृष्टिं समानां समुपद्रवान्वितां
दृष्ट्वा विचार्याऽथ तमोमयीं मुहुः ।
पापीयसीं स्वस्य विरुद्धयामिनीं
नचित्तशान्तिं समवाप्तवानजः ॥१०॥
अशान्तस्य विधेः पृष्ठादधर्मः समजायत ।
अनीतिस्तेन साकं वै प्रोत्पन्ना सहचारिणी ॥११॥
भार्यास्तथाऽभवंश्चिन्ताऽसूयेर्ष्या ममता मृषा ।
आशाऽहन्ता तथा तृष्णा दुष्टता निकृतिः स्पृहा ॥१२॥
हिंसा दुरुक्तिरश्रद्धाऽशान्तिनिर्दयता तथा ।
अमेधा चाऽप्यतुष्टिश्चाऽपुष्टयमैत्र्यक्रियास्तथा ॥१३॥
अबुद्धिरगतिश्चाप्यतितिक्षाऽथाऽगतिस्तथा ।
अनुन्नतिरमूर्तिश्चाऽनुपरक्तिस्तथाऽक्षमा ॥१४॥
अस्मृतिश्च सुषुप्तिश्चाऽजायन्त संसृतिप्रदाः ।
तत्पुत्रास्तु मदो लोभो रसो मोहश्च मत्सरः ॥१५॥
दंभः कामस्तथा क्रोधो दर्पः पारुष्यमनृतम् ।
स्नेहो मानं च कालुष्यं द्रोहोऽशौचं कलिस्तथा ॥१६॥
अशौचं चाऽप्यविश्वासश्चौर्यं पानं द्युतं तथा ।
गर्वो नास्तिक्यमेवापि प्रमादो राग एव च ॥१७॥
पैशुन्यं व्यसनं दुःखं द्वेषोऽज्ञानं भयं तथा ।
पापं मृत्युरनैश्वर्यं कौटिल्यं चाऽप्यनिग्रहः ॥१८॥
अमार्दवमसन्तोषोऽधैर्यं चैवाऽप्यनर्थकः ।
अत्यागश्चाऽप्ययोगश्चाऽप्रसादोऽप्रश्रयस्तथा ॥१९॥
अलाभोऽनुद्यमश्चाऽप्यदमो विघ्नमिति स्मृताः ।
पुत्र्यश्चैवाऽप्यधर्मस्य जाता बह्व्यो हि दुःखदाः ॥२०॥
घृणा निन्दा च कुत्सा च जुगुप्सा कूटता तथा ।
प्रतारणा छलाऽन्याया प्रसह्यता च धिकृतिः ॥२१॥

छिच्छिकारा ह्यररांटी हाहाकारा च वेदना ।
पीडा हृदयदाहा च कालिमा मोहिनी तथा ॥२२॥
हृत्फाला प्रभया योनिर्मलदा फट्प्रकाण्डिका ।
कामना च रजस्रोता लिट्करी क्षुवती तथा ॥२३॥
कुदृष्टिश्च कुशीला च प्रगुह्याशाऽङ्गलिङ्गिका ।
कृपणता पराधीना मलिनता दरिद्रता ॥२४॥
अरिष्टा चाऽपशकुना दुरिता पापिणी तथा ।
कुणपा रक्तपा शुक्रपायिनी पातिनी तथा ॥२५॥
परस्वभेदिका षण्ढा मारिणी विह्वला तथा ।
अभाना च तमस्करी घोरा दिग्विभ्रमा तथा ॥२६॥
आडम्बरा विडम्बाना चाकस्मिकी मृतंकरी ।
एताः प्रोक्ता अधर्मस्य पुत्र्य उद्वेजिकाः सदा ॥२७॥
साऽपत्यं तु तमधर्मं दृष्ट्वा वेधास्तुतोष न ।
तदा शान्तिप्रदां सृष्टिं कर्तुमैच्छद् हृदा पुनः ॥२८॥

इति श्रीलक्ष्मीनारायणीयसंहितायां प्रथमे
कृतयुगसन्ताने ब्रह्मणो मानससृष्टौ
गुणाऽज्ञानाऽधर्मसृष्टिनिरूपणनामा
चतुर्दशोऽध्यायः ॥ १४ ॥

**श्रीनारायण उवाच—**

लक्ष्मी ! प्रजानां सुखदा सृष्टिः कार्या मया पुनः ।
पद्मजेन विचार्येत्थं धर्मः स्वहृदयात्कृतः ॥ १ ॥
शुभ्रवर्णः सुप्रकाशो विद्याशक्तिसमन्वितः ।
सुखस्वर्गप्रमोक्षादिफलदः सात्त्विकप्रियः ॥ २ ॥
धर्मस्यापि तथा पत्न्यः श्रद्धा शान्तिर्दया गतिः ।
मेधा तुष्टिस्तथा पुष्टिर्मैत्री लज्जा क्रियोन्नतिः ॥ ३ ॥
मूर्तिर्बुद्धिस्तितिक्षा च भक्तिराराधनादिकाः ।
धर्मेण सह सञ्जाता हृदयाद्वेधसस्तु ताः ॥ ४ ॥
तासां प्रजास्तु सौम्याऽऽस्याः सौम्यरूपाः सुखप्रदाः ।
ऐश्वर्यं चाऽऽर्जवं ज्ञानं वैराग्यमभयं तपः ॥ ५ ॥
स्थैर्यं धैर्यं सुखं क्षेमः सत्यं शौचं च मार्दवम् ।
त्यागो योगो दमो यज्ञः सन्तोषो निग्रहः शमः ॥ ६ ॥
आस्तिक्यं च प्रसादश्च तेजः स्वाध्याय उद्यमः ।
प्रश्रयोध्यानमर्थश्च साम्यं लाभश्च वेदनम् ॥ ७ ॥
अलोभोऽमत्सरोऽदंभोऽकामोऽक्रोधोऽरसस्तथा ।
अमोहो निर्मदोऽदर्पोऽस्नेहोऽमानोऽकलिः ऋतम् ॥ ८ ॥
अपारुष्यमशौचं च विश्वासोऽचौर्यमेव च ।
अगर्वोऽद्युतमभयमद्वेषोऽरागमेव च ॥ ९ ॥
अपैशुन्यमपापं च पुण्यं सत्कर्म इत्यपि ।
ऋजुत्वं चाऽशठत्वं चाऽव्यसनं दानमित्यपि ॥१०॥
इत्येते धर्मपुत्रा वै जज्ञिरेऽथ कुमारिकाः ।
दया सूक्तिरहिंसा च कृतिः स्मृतिश्च दक्षता ॥११॥
क्षमा चोपरतिर्विद्या रतिः स्मृतिश्च साम्यता ।
कान्तिः कोमलता चाऽथ दक्षता च स्वतन्त्रता ॥१२॥
गंभीरताऽथ स्थिरता निर्भयता प्रगल्भता ।
अगर्वताऽप्यहिंसा च निर्मानिताऽप्यदंभता ॥१३॥
अस्तेयता तथा सेवा शुश्रूषा च शरण्यता ।
ब्रह्मण्यता रक्षता च निष्परिग्रहता तथा ॥१४॥
रूपता मित्रता तृप्तिः पवित्रता प्रसन्नता ।
शुद्धता स्वच्छता चैव निर्मलता प्रकाशिता ॥१५॥
दिव्यता चेशता चाऽथ सेव्यता सानुकूलता ।
स्मृद्धिर्धवलता सम्पत् सुखता मोहता तथा ॥१६॥
लीला प्रमोदता चाऽप्युज्ज्वलता रसता तथा ।
विषयार्था धनवती रत्नवती विभूषिका ॥१७॥
शरद्वती सस्यवती धान्यवती प्रगायना ।
रागिणी मिष्टता चापि लावण्यता मधुरता ॥१८॥
माधवी रमणाऽऽरामा रमणी रमणीयता ।
सुन्दरता चमत्कारा सामर्थ्या फलता तथा ॥१९॥
पोषिका शक्तिदा चापि विलासा प्रविलासिका ।
ईश्वरिण्यश्च दिव्याश्च मूर्ताश्चाऽमूर्तिकास्तथा ॥२०॥
सहस्रशो धर्मपुत्र्यः समुत्पन्नाः कुमारिकाः ।
ताभिस्तैश्च स्वयं वेधाः सन्तुष्टः स्वस्य मानसे ॥२१॥
धर्मसर्गमिमं दृष्ट्वाऽऽत्मानं सिद्धममन्यत ।
परं परिश्रमो जातस्तेनाऽजो विकलोऽभवत् ॥२२॥
तावत्तस्य ललाटाद्वै स्वेदबिन्दुः पपात ह ।
बिन्दुस्तु पतितो यावत् तत्र रुद्रो बभूव ह ॥२३॥
श्वेतरूपः सुकुमारो बालोऽप्यद्भुतदर्शनः ।
पञ्चशिरास्त्रिनेत्रश्च दशहस्तस्तमोगुणः ॥२४॥
शरीरव्याप्तरोमा च विकरालो दिगम्बरः ।
रक्तनेत्रो जटाधारी तीक्ष्णदंष्ट्रः कपर्दवान् ॥२५॥
ढक्कात्रिशूलरुद्राक्षपिनाकदण्डपाशधृक् ।
ललाटशशिसल्लेखो नेत्रप्रान्तारुणप्रभः ॥२६॥
उत्पन्नः सन् रुरोदाऽयं मा रोदीरब्रवीदजः ।
तस्माद् रुद्र इति प्रोक्तस्तं ब्रह्माऽऽह प्रजाः सृज ॥२७॥

रुद्रः पितुर्निदेशं स्वीकृत्याऽसृजदथ प्रजाः ।
तामसीः स्वसमानाश्च ह्युपद्रवकरी भृशम् ॥२८॥
उल्बणा व्यग्रचित्ताश्च क्षुधारोषसमन्विताः ।
बहुरूपा विरूपाश्च कृष्णा लोहितिकास्तथा ॥२९॥
चतुर्दशेषु लोकेषु व्याप्ता रुद्रस्य ताः प्रजाः ।
सर्वास्ता रुद्रजातीया अभवन् सर्वतोदिशि ॥३०॥
केचनाऽऽसन् कृशदेहाः स्थूलकंधरनासिकाः ।
आसंश्च केचन दीर्घघोणाः पीवरश्रोणयः ॥३१॥
पीनाश्च वामना एके खर्वार्धा लम्बनोर्ध्वकाः ।
ह्रस्वोत्तमा लम्बपादा मञ्जुषाकारपृष्ठकाः ॥३२॥
अन्ये ऋक्षा महोदरास्स्तम्भहस्ता गुहाननाः ।
कृष्णाद्रिसदृशाश्चान्ये महाकालसमाः परे ॥३३॥
यत्र तत्राऽभवन् रुद्राः कोटिरर्बुदमेव च ।
चतुर्दशसु लोकेषु रुद्रा रुद्रा न चेतरे ॥३४॥
क्रूराः क्रुद्धा युयुधाना भोक्तुं ब्रह्माणमाययुः ।
रुद्रं स्वेषां प्रस्रष्टारं चापि जग्धुं प्रदुद्रुवुः ॥३५॥
तदा ब्रह्मा स्वपुत्रं तं प्राहेमान् द्राक् प्रसंहर ।
नेदृशी तु प्रजा क्वापि लोकशान्तिकरी भवेत् ॥३६॥
रूपेणाऽप्यप्रतिमा च गुणेन क्षयकारिणी ।
रुद्रान् भयंकरं कर्म कुर्वाणान् भक्षकानिमान् ॥३७॥
शीघ्रं नाशय पुत्र त्वं नेदृशी सृष्टिरिष्यते ।
रुद्रेण पितृवाक्यं तत्समागृह्य क्षणान्तरे ॥३८॥
स्वाट्टहासाद् बिभत्सो ना कृतान्ताख्यो महाबलः ।
पाशखड्गकरो दंष्ट्राचूर्णिताऽण्ड इवाऽद्वयः ॥३९॥
समुत्पादित एवाऽयं धृतहस्तांजलिर्मुहुः ।
कस्मादुत्पादितश्चाहं किं कार्यं मेऽनुशाधि माम् ॥४०॥
रुद्रः प्राह त्विमां सृष्टिं कापथमनुगामिनीम् ।
रौद्रां भयंकरीं सर्वलोकसंस्थासु संस्थिताम् ॥४१॥
शीघ्रं नाशय भद्रं ते मम प्रीत्या भविष्यति ।
कृतान्तस्तां जनकाज्ञां समादाय प्रचक्रमे ॥४२॥
क्षयं कर्तुं हि रुद्राणामग्निमुत्पाद्य वक्त्रतः ।
नेत्रेभ्यश्च तथा ज्वालानलमुत्पाद्य सर्वशः ॥४३॥
चतुर्दशसु लोकेषु यत्र यत्राऽभवन् प्रजाः ।
रौद्रयस्तत्र हि सर्वत्र विनाशं कृतवान् परम् ॥४४॥
नेत्रवक्त्रशरीरेभ्यो ज्वालाकर्षणविद्युतः ।
उत्पन्ना दीर्घप्रवहा ब्रह्माण्डे च स्थले स्थले ॥४५॥
गत्वा गत्वा च रुद्राँस्तानन्विष्याऽविष्य कृत्स्नशः ।
प्रसंजहुरशेषाँस्तान् हाहाकारो महानभूत् ॥४६॥
विद्रवन्ति प्रद्रवन्ति चोत्पतन्ति ततस्ततः ।
प्रक्रोशन्ति सकरुणं त्रायस्वेति वदन्ति च ॥४७॥
तथापि यत्र गच्छन्ति तत्र ज्वालास्तदग्रगाः ।
विनाशार्थमथाऽऽयान्ति नास्ति त्राणस्थलं मनाक् ॥४८॥
कुत्राऽप्यलब्धत्राणास्ते परावृत्य पतन्ति वै ।
ज्वालानले महाकाये क्षयं रुद्राः प्रपेदिरे ॥४९॥
यदा चतुर्दशबिलेष्वेकोऽपि नहि शेषितः ।
तदा कृतान्तो विरतः शान्तश्चाजोऽभवत्तदा ॥५०॥
रुद्रश्चाथ स्वपुत्रेण कृतान्तेन समं सदा ।
निवासार्थं स्वकं स्थानं ययाचे स्वस्य पितृतः ॥५१॥
दत्तं च ब्रह्मणा तस्मै धाम सत्यस्थमैश्वरम् ।
नाम्ना रौद्रं तु दिव्यं तत्ख्यातं लोकं तु वै महः ॥५२॥
यत्र ब्राह्मास्तु संकल्पाः सत्या भवन्ति सर्वदा ।
यद्यदिच्छन्ति सत्यस्थास्ते फलन्ति च तत्तथा ॥५३॥
सत्यलोकस्य माहात्म्यं सत्यमेव भवत्यपि ।
सत्येतिब्रह्मणः शब्दः सत्तामात्रस्तु सम्मतः ॥५४॥
ब्रह्मलोकस्ततः सत्यो ब्रह्मणैव प्रभास्वरः ।
ब्रह्मणः स तु सामर्थ्यादप्रतीघातलक्षणः ॥५५॥
तस्मादयं सत्यलोको ह्यपुनर्भवगामिणाम् ।
तत्रापि न्यायहीनानां कृतान्तो दण्डदः स्मृतः ॥५६॥
नाम्ना कृतपुरं चेति तस्य न्यायालयः स्मृतः ।
ब्रह्मणोऽपि सुधर्माख्या सभा लोकोत्तरा मता ॥५७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे
कृतयुगसन्ताने धर्मरुद्रयोः सृष्ट्यादिनिरूप-
णनामा पञ्चदशोऽध्यायः ॥१५॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! प्रवक्ष्यामि ततो वै ब्रह्मणा स्वयम् ।
कृतं लोकनिवासार्थं यद्यत् सृष्ट्यर्थमेव च ॥ १ ॥
ततस्तु सात्त्विकीं सृष्टिं ब्रह्मा कर्तुं मनो दधे ।
संकल्पं कृतवान् सर्वे सात्त्विकाः संभवन्त्विति ॥ २ ॥
तावद्ब्रुद्रात्समुत्पन्ना रुद्रा वै सात्त्विकाः शिवाः ।
शुद्धाः शुद्धतमाः सर्वे विद्वांसो घनमूर्तयः ॥ ३ ॥
सर्वे सूक्ष्मशरीरास्ते स्थिरलोकस्थिताः सदा ।
प्रकाशाः शुद्धबुद्धिस्थाः सिद्धाश्च योगधर्मिणः ॥ ४ ॥
सर्वे ते ब्रह्मणा सार्धं समैश्वर्यावसायिनः ।
शान्ताः सुखदतनवः सर्वे ते भावनामयम् ॥ ५ ॥

आनन्दं ब्रह्मणः प्राप्य चाऽमृतत्वाय ते गताः ।
सर्वे वै सुखदात्मानो बुद्धशुद्धतया मताः ॥ ६ ॥
आनन्दं ब्रह्मणः प्राप्याऽमृताऽऽनन्दं भजन्त्युत ।
द्वन्द्वैस्तैर्नाभिभूयन्ते भावदुःखविवर्जिताः ॥ ७ ॥
आधिपत्यं विना तुल्या ब्रह्मणस्ते महौजसः ।
प्रभावविजयैश्वर्यस्थितिवैराग्यदर्शनैः ॥ ८ ॥
ते ब्राह्मलौकिकाः सर्वे ब्राह्मीं प्राप्य गतिं शुभाम् ।
वीतरागा जितक्रोधा निर्मोहाः सत्यवादिनः ॥ ९ ॥
स्वस्मिन् प्रणिहितात्मानो दयावन्तो जितेन्द्रियाः ।
निःसंगाः शुचयश्चैव ब्रह्मसायुज्यगाः स्मृताः ॥१०॥
अकामयुक्तैर्ये वीरास्तपोभिर्दग्धकिल्बिषाः ।
तेषामभ्रंशिनो लोका अप्रमेयसुखाः स्मृताः ॥११॥
एतद्ब्रह्मपदं दिव्यं परमं व्योम्नि भास्वरम् ।
यत्र गत्वा न शोचन्ति ह्यमरा ब्रह्मणा सह ॥१२॥
च्यवन्ते न यतो भूयो ब्रह्माणं त उपासते ।
अपुनर्मारकामानां ब्रह्मलोकः स उच्यते ॥१३॥
पुरस्ताद् ब्रह्मलोकस्य त्वण्डादर्वाक् च वेधसः ।
मध्ये दिव्यं पुरं रम्यं स्थानं रुद्रमनोमयम् ॥१४॥
तद्विग्रहवतः स्थानमीश्वरस्याऽमितौजसः ।
शिवं नाम पुरं तत्र शरणं ब्रह्मवासिनाम् ॥१५॥
सहस्राणां शतं पूर्णं योजनानां सुविस्तरम् ।
आभ्यन्तरे विशालं तद् व्यासमंडलसंस्थितम् ॥१६॥
बहुमध्याह्नसूर्यादिपरतेजोऽतिमर्दिना ।
शातकौंभेन महता प्राकारेणाऽर्कवर्चसा ॥१७॥
मण्डितं चाथ सौवर्णैर्मुक्तादामविभूषितैः ।
चतुर्द्वारैः शुभैर्गम्यं दिव्यं सुकृतरूपकम् ॥१८॥
तच्चाकाशे महद्व्योम्नि सत्ये लोके स्थितं पुरम् ।
न तत्र क्रमते मृत्युर्न तापो न जरा श्रमः ॥१९॥
न तच्चान्यैः पुरैः क्वापि रूपमाप्तुं हि शक्यते ।
तादृशं तत्तु नगरं गोवृषांकस्य तैजसम् ॥२०॥
भावेन मानसी भूमिर्विन्यस्ता कनकात्मिका ।
रत्नवालुकया पूर्णा तेजसा व्याप्य वर्तते ॥२१॥
शारदेन्दुप्रकाशानि बालसूर्यनिभानि च ।
अर्धश्वेताऽर्धरक्तानि सौवर्णानि तथैव च ॥२२॥
रथचक्रप्रमाणानि नालैर्मरकतप्रभैः ।
सुकुमारेण रूपेण गन्धिनाऽप्रतिमेन च ॥२३॥
तत्र दिव्यानि पद्मानि वनेषूपवनेषु च ।
भृंगपत्रनिकाशानि तपनीयानि यानि च ॥२४॥
अर्धकृष्णाऽर्धरक्तानि सुकुमारान्तराणि हि ।
आतपत्रप्रमाणानि पंकजानि भवन्ति वै ॥२५॥
पुण्याऽमृतप्रवाहाश्च नद्यो दिव्या वहन्ति च ।
पद्मोत्पलदलोन्मिश्रं फेनाद्यवर्त्तविग्रहम् ॥२६॥
जलं मणिदलप्रख्यमावहन्ति सरिद्वराः ।
तद्वै ये ध्यानमव्यग्रा सुयुक्ता विजितेन्द्रियाः ॥२७॥
पश्यन्तीह महात्मानः पुरं तद्गोवृषात्मनः ।
मध्ये पुरवरेन्द्रस्य दिव्यो भद्रश्रिया वृतः ॥२८॥
सहस्रपादः प्रासादस्तपनीयमयो महान् ।
अनुपमैश्च रत्नैश्च सर्वतः स विभूषितः ।
स्फटिकैश्चन्द्रसंकाशैर्वैदूर्यैः सोमसंप्रभैः ॥२९॥
बालसूर्यप्रभैश्चैव सौवर्णैश्चाग्निसन्निभैः ।
राजतैश्चापि शुशुभे हीन्द्रनीलमयैः शुभैः ॥३०॥
दृढैर्वज्रमयैश्चैव निर्मितः सुमहत्तरैः ।
जलैश्च विविधाकारैर्दीप्यद्भिरधिवासितम् ॥३१॥
पुरं चन्द्रप्रकाशाभिः पताकाभिरलंकृतम् ।
रुक्मघंटादिनादैश्च नित्यमुत्सवसंश्रितम् ॥३२॥
रुद्रदासास्तु गान्धर्वाः किन्नराः सुतमागधाः ।
स्तुवन्तीशं महारुद्रं परिवारसमेतकम् ॥३३॥
रुद्रप्रासादराजोऽसौ शतभूमिर्विराजते ।
वासन्तीप्रतिमा यत्र त्र्यम्बकस्य निवेशने ॥३४॥
रुद्राणी शाम्भवी शक्तिर्देवी रूपगुणान्विता ।
सुगन्धितशरीरा सा रुद्रं देवं हि सेवते ॥३५॥
श्रीश्च लक्ष्मीश्च माया च कीर्तिः शोभा सरस्वती ।
देव्या वै सहिता एता रूपगन्धसमन्विताः ॥३६॥
नित्याश्चाऽपरिसंख्याताः परस्परगुणाधिकाः ।
भूषा वै सर्वरत्नानां देव्यः कान्तिविलासयोः ॥३७॥
कोटीशतं महाभाग्या विभज्याऽऽत्मानमात्मना ।
भगवन्तं महारुद्रं प्रतिमोदन्त्यतन्द्रिताः ॥३८॥
तासां सहस्रं चान्यास्तत्पृष्ठतः परिचारिकाः ।
रूपिण्यश्च श्रियायुक्ताः सर्वाः कमललोचनाः ॥३९॥
लीलाविलाससंयुक्तभावैरतिमनोहरैः ।
रुद्रैस्ताः सह मोदन्ते युवभिः पावकोत्तमैः ॥४०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुग-
सन्ताने सात्त्विकरुद्ररुद्राणीभवनादिनिरूप-
णनामा षोडशोऽध्यायः ॥१६॥

श्रीनारायण उवाच—

निबोध लक्ष्मि ! वक्ष्यामि बहूपासनतत्पराः ।
रुद्रस्याऽसंख्यदासीश्च गणाँश्चाऽऽयुधरूपिणः ॥ १ ॥
रम्याः सौम्याः सुरूपाः सुदृढबन्धनगात्रिकाः ।
समसक्थिकटिजंघाः समसूक्ष्मसुमध्यमाः ॥ २ ॥
काश्चित् कुब्जा वामनिका वरगात्राः शुभाननाः ।
पुण्ड्राश्च विकटाश्चैव करालाश्चिपिटाननाः ॥ ३ ॥
लम्बोदरा ह्रस्वभुजास्त्रिनेत्राश्च हयाननाः ।
मृगेन्द्रवदना ह्रस्वपादिकाश्च गजाननाः ॥ ४ ॥
गजवक्त्रोदराश्चान्याः सिंहव्याघ्राननास्तथा ।
लोहिताक्षा महास्तन्यः सुभगाश्चारुलोचनाः ॥ ५ ॥
ह्रस्वकुंचितकेशाश्च सुन्दर्यश्चारुगण्डकाः ।
सर्वास्ताः कामरूपिण्यो दृढमध्या वराः स्त्रियः ॥ ६ ॥
पूर्णप्रियसुसद्भाषा हावभावान्विताः सदा ।
रमते भगवाँस्ताभिर्दशबाहुर्महेश्वरः ॥ ७ ॥
नन्दिना च गणैः सार्धं विश्वरूपैर्महात्मभिः ।
तथा रुद्रगणैश्चापि तुल्यौदार्यपराक्रमैः ॥ ८ ॥
पावकात्मजसंकाशैर्शूर्पदंष्ट्रोत्कटाननैः ।
वन्द्यमानो विमानस्थैःपूज्यमानश्च तत्परैः ॥ ९ ॥

सर्वर्तुकुसुमां मालां प्रसंजिघ्रन्नुरस्थिताम् ।
नीलोत्पलदलश्यामं पृथुताम्रायतेक्षणम् ॥१०॥
ईषत्कराललम्बोष्ठं तीक्ष्णदंष्ट्रगणाश्रितम् ।
षडूर्ध्वनेत्रं दुष्प्रेक्ष्यं रुचिरं दिव्यवाससम् ॥११॥
आहवेष्वपरिक्लिष्टं सर्वेषामरिनाशनम् ।
बाहुना बाहुमावेश्य पार्श्वे सव्येऽन्तरे स्थितम् ॥१२॥
राजते पट्टिशं तस्य वामाग्रकरगोचरम् ।
महाभैरव निर्घोषं बलेनाऽप्रतिमौजसम् ॥१३॥
दशवर्णधनुश्चैव विचित्रं शोभतेऽधिकम् ।
त्रिशूलं विद्युताभासममोघं शत्रुनाशनम् ॥१४॥
जाज्वल्यमानो वपुषा परशुस्तत्त्विषायुतः ।
असिश्चैवौजसां श्रेष्ठः शीतरश्मिः शशी तथा ॥१५॥
तेजसा वपुषा कान्त्या देवेशस्य महात्मनः ।
स्थितः पुरस्ताद् देवस्य शातकुंभमयो महान् ।
शोभते रुचिरः श्रीमान् सर्वारिसुकमण्डलुः ॥१६॥
असिमावेश्य कोशे च पाण्डुराम्बरधारिणी ।
वक्षःस्थितेन महता मौक्तिकेन विराजिता ॥
चतुर्भुजा महाभागा विजया लोकसम्मता ॥१७॥
देव्या आद्यप्रतीहारी श्रीरिवाऽप्रतिमा परा ।
भ्राजमाना स्थिता चैव कृत्वा देवस्य चांजलिम् ॥१८॥
तस्याः पृष्ठाऽनुगाश्चान्याः स्त्रियोऽप्सरोगणान्विताः ।
ताः खल्वभिनवैः कान्तैरुपतिष्ठन्ति शंकरम् ॥१९॥
सर्वलक्षणसम्पन्ना वादित्रैरुपबृंहिताः ।
उपगायन्ति देवेशं गणा गन्धर्वयोनयः ॥२०॥
अभ्युन्नतो महोरस्कः शरन्मेघसमद्युतिः ।
शोभते नदमानश्च गोपतिस्तस्य वेश्मनि ॥२१॥
परिवारयुतः स्कन्दः पुत्रोऽस्याऽमितवीर्यवान् ।
रक्ताम्बरधरः श्रीमान् वराऽम्बुजदलेक्षणः ॥२२॥
तस्य शाखो विशाखश्च नैगमेयश्च चाष्टवान् ।
व्यपेतव्यसनाः शिष्याः प्रजानां पालने रताः ॥२३॥
तैः सार्धं स महावीर्यः शोभते शिखिवाहनः ।
बालक्रीडनकैः संक्रीडति वै विश्वतोमुखः ॥२४॥
व्याघ्राश्चैवानुगास्तत्र काञ्चनाभास्तरस्विनः ।
स्वच्छन्दचारिणः सर्वे स्वयं देवेन निर्मिताः ॥२५॥
मृत्योर्मृत्युसमास्ते तु यमदर्पाऽपहारिणः ।
सिंहा रुद्रगणाः सन्ति रुद्रेच्छावशवर्तिनः ॥२६॥
मन्दराद्रिप्रकाशानां बलेनाऽप्रतिमौजसाम् ।
हारकुन्देन्दुवर्णानां विद्युद्घननिनादिनाम् ॥२७॥
चूडामणिधराणां वै मेघसन्निभवाससाम् ।
श्रीवत्सांकितवक्षाणामंगुलीशूलपाणिनाम् ॥२८॥
एवंविधसुरूपाणां देवानां दैवशालिनाम् ।
सिंहानां तस्य प्रासादमुख्यस्तंभेष्ववस्थितिः ॥२९॥
यद्वै सहस्रं सिंहानामीश्वरेण महात्मना ।
निज क्रोधात्कृतं क्रोधास्ते सर्वे सिंहविग्रहाः ॥३०॥
अथ रुद्रमहेशस्य भक्तियैरनुकल्पिता ।
ह्रीमन्तः सूर्जिता दान्ताः शौर्ययुक्ता ह्यलोलुपाः ॥३१॥
कर्मणा मनसा वाचा विशुद्धेनान्तरात्मना ।
अनन्यमनसो भूत्वा प्रपन्ना ये महेश्वरम् ॥३२॥
तैर्लब्धं रुद्रसालोक्यं शाश्वतं पदमव्ययम् ।
भवस्य रूपसादृश्यं नीताश्चैव ह्यनुत्तमम् ॥३३॥
सर्वे वैश्वानरमुख्या विश्वरूपाः कपर्दिनः ।
नीलकण्ठाः सितग्रीवास्तीक्ष्णदंष्ट्रास्त्रिलोचनाः ॥३४॥
अर्धचन्द्रकृतोष्णीषा जटामुकुटधारिणः ।
सर्वे दशभुजा वीराः पद्मान्तरसुगन्धिनः ॥३५॥
तरुणादित्यसंकाशाः सर्वे ते पीतवाससः ।
पिनाकपाणयः सर्वे श्वेतगोवृषवाहनाः ॥३६॥

श्रियाऽन्विताः कुण्डलिनो मुक्ताहारविभूषिताः ।
तेजसोऽप्यधिका दैवात्सर्वज्ञाः सर्वदर्शिनः ॥३७॥
विभज्य बहुधाऽऽत्मानं जरामृत्युविवर्जिताः ।
क्रीडन्ति विविधैर्भावैर्भोगान्प्राप्य सुदुर्लभान् ॥३८॥
स्वच्छन्दगतयः सिद्धाः सिद्धैश्चान्यैर्विबोधिताः ।
एकादशानां रुद्राणां कोट्योऽनेकास्ततः कृताः ॥३९॥
एभिः सह महात्मा स देवदेवो महेश्वरः ।
भक्तानुकम्पी भगवान् मोदते भक्तसत्पतिः ॥४०॥
आभूतसंप्लवे घोरे सर्वप्राणभृतां क्षये ।
महाभूतविनाशान्ते प्रलये समुपस्थिते ॥४१॥
अनेकरुद्रकोट्यश्चाऽनेकदासीगणास्तथा ।
अनेकगणव्याघ्राद्या नैकसिद्धादयश्च ये ॥४२॥
रुद्रलोकगताः सर्वे महात्मानो महेश्वरे ।
रुद्रे यान्ति लयं सर्वे रुद्रो ब्रह्मणि लीयते ॥४३॥
प्रपद्य परया भक्त्या ज्ञानयुक्तेन चेतसा ।
प्राप्नोति रुद्रसालोक्यं शाश्वतं पदमव्ययम् ॥४४॥
अजपुत्रस्य रुद्रस्य सृष्टी रुद्रात्मिकी त्वियम् ।
दासदासीगणव्याघ्रयानवाहनरूपिणी ॥४५॥
आयुधसिद्धगन्धर्वाऽप्सरोमागधसेविका—
गृहोद्यानमहासौधनदीपद्मादिमण्डना ॥४६॥
सर्वा सत्त्वमयाकारा सत्त्वरूपा सुसौख्यदा ।
रुद्रस्य रौद्रभावो यः स न वै वर्ततेऽत्र यत् ॥४७॥
तस्मात्तु ब्रह्मणा चेयं सत्यलोकनिवासिनी ।
रौद्री तु सात्त्विकी सृष्टिः सर्वदा वै स्थिरीकृता ॥४८॥
दृष्ट्वेमां सुखदां सृष्टिं ब्रह्मा तुष्टिं जगाम ह ।
किन्तु सात्त्विकदेवास्ते रुद्रास्तद्दासदासिकाः ॥४९॥
सुखं सात्त्विकमासाद्य प्राप्यैश्वर्याणि कृत्स्नशः ।
ऐश्वर्येषु सुखेष्वासन् लीना वै बोधदुर्बलाः ॥५०॥
अतस्ते वञ्चिता यत्स्युर्ज्ञानेन पारमार्थिना ।
तथासति कदाचिद्वा मोक्षमार्गस्य रोधनम् ॥५१॥
आपत्तेश्चाऽनर्थप्राप्तिरित्येवं मा भवेदिति ।
विचार्य्यैव स्वयं ब्रह्मा सृष्टिं ज्ञानभरां शुभाम् ॥५२॥
मोक्षदां ब्रह्मसंलग्नां मानसीं ब्रह्मरूपिणीम् ।
कर्तुं मनो दधे पश्चात् ध्यातुं चक्राम सिद्धये ॥५३॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने
सात्त्विकरुद्रदासदासीगणादिसृष्टिकथननामा
सप्तदशोऽध्यायः ॥ १७ ॥

**श्रीनारायण उवाच—**

ब्रह्मणा योगमास्थाय समाधिमधिगम्य च ।
आत्मानं श्रीहरौ साक्षात् परे धाम्नि तदा प्रभौ ॥ १ ॥
तादात्म्येन प्रयत्नेन समैकीकृत्य चार्थितम् ।
शान्तिप्रदा यथा सृष्टिर्भवेच्छान्ताश्च पूरुषाः ॥ २ ॥
मोक्षदाश्च तथाऽन्येषां ब्रह्मभानपरिप्लुताः ।
सर्वेषां बोधकर्तारो निर्लेपाः सात्त्विकोत्तराः ॥ ३ ॥
ब्रह्मरूपाः सदा ब्रह्मभावनापरिसंभृताः ।
ब्रह्मानन्दपरिस्नाता ब्रह्ममूर्तिविचिन्तकाः ॥ ४ ॥
गुरवो लोकसृष्टीनां धर्मसम्पत्समाश्रयाः ।
दैवेश्वरसमकक्षा आब्रह्माऽहत सर्पणाः ॥ ५ ॥
पुत्रा भवेयुर्मे नाथ यैर्लोका सुखिनः सदा ।
इत्यभ्यर्थनमाज्ञाय परेण ब्रह्मणा तदा ॥ ६ ॥
मुक्ताश्चत्वार आज्ञप्ताः पुत्रार्थं परमेष्ठिनः ।
संकल्पजाश्चतुर्मुक्ता अक्षरब्रह्मधामतः ॥ ७ ॥
लोकानतीत्य चैशांश्च सत्यलोकमुपागताः ।
ब्रह्माऽपि व्युत्थितो योगाद् दृष्ट्वा मुक्तांश्चतुःसमान् ॥ ८ ॥
इमे मे मानसाः पुत्रा भवन्तु मोक्षहेतवः ।
इतिसंकल्प्य मुक्तांस्तान् सुरूपान् पञ्चहायनान् ॥ ९ ॥
जातमात्रान् ब्रह्मरूपान् ब्रह्मानन्दमयान् परान् ।
तेजोमण्डलकृच्छुभ्रवस्त्रान् स्थलाब्जसत्प्रभान् ॥१०॥
दिव्यान् सदैकमानांश्चाऽऽब्रह्माण्डस्थितिजीवनान् ।
लब्ध्वा पुत्रांस्तु चतुरो बहुतोषमवाप ह ॥११॥
नाम्ना ते मानसाः पुत्रा लोककल्याणहेतवः ।
सनकश्च सनन्दश्च सनतश्च सनातनः ॥१२॥
साधवस्ते साधुधर्माः पुण्याः पुण्यमयाः सदा ।
दर्शनाद् दोषहर्तारो दुःखशोकलयंकराः ॥१३॥
दयालवः क्षमाशीलाः सर्वसृष्टिहितेच्छवः ।
तितिक्षवश्चाऽनसूयाः शान्ता अनुदिताऽरयः ॥१४॥
अनीर्ष्यवश्च निर्वैरा निर्मानाश्च विमत्सराः ।
मान्याश्च मानदाः सर्वप्रियसत्यगिरः सदा ॥१५॥
निर्मदाः क्रोधलोभादिदोषहीना निरञ्जनाः ।
अहन्ताममताशून्या जितकामप्रवर्तनाः ॥१६॥
निर्दंभाः शुचयो दान्ताः ऋजवो मितभाषिणः ।
निर्द्वन्द्वाश्चाऽप्रमत्ताश्च धीराश्चैव जितेन्द्रियाः ॥१७॥
बोधपूर्णा आत्मनिष्ठा अपरिग्रहशालिनः ।
सर्वोपकारिणः श्रद्धाऽऽस्तिक्यभक्तिगुणाश्रयाः ॥१८॥

उदाराश्च तपोनिष्ठा निरपेक्षपरिग्रहाः ।
पैशुन्यस्तैन्यरहिताः परगुप्ताऽप्रकाशकाः ॥१९॥
जितशारीरभावाश्च सन्तुष्टाः स्थिरबुद्धयः ।
सुखदुःखसमास्तृष्णारहितास्तोषणान्विताः ॥२०॥
परनिन्दादिरहिता आत्मवृत्तिसमाश्रिताः ।
दैवीसम्पत्समायुक्ता धर्मवंशनिवासिनः ॥२१॥
हरिज्ञानमहापूरनिधयो ब्रह्मसदृशाः ।
हरेर्भक्तिं विना येषां क्षणो याति न निष्फलः ॥२२॥
श्रवणमनन निदिध्यासनादिसमाश्रयाः ।
एवंलक्षणसम्पन्नाः सन्तस्ते सनकादयः ॥२३॥
कर्मणा मनसा वाचा विशुद्धेनाऽन्तरात्मना ।
अनन्यमनसो भक्तिं नित्यं कुर्वन्ति वै हरेः ॥२४॥
पपद्य परया भक्त्या ज्ञानयुक्तेन तेजसा ।
विराजन्मूर्तयो दिव्याः सौम्यभावसुदर्शनाः ॥२५॥
ऋद्धिसिद्धिनिधियोगान् तृणवद् गणयन्ति ते ।
आत्मानन्दमहामग्ना ब्रह्मरूपाश्च मोक्षदाः ॥२६॥
संसारदावदग्धानां दर्शनामृतवर्षणाः ।
भाविजीवसमूहानां गुरवो मुक्तिदायकाः ॥२७॥
पूर्वजाः साधुवंशानां तारका ब्रह्मघातिनाम् ।
स्तयो विपथगानां दृष्टान्ता ब्रह्मचारिणाम् ॥२८॥
आश्रयाः सर्वविद्यानां वीजानि श्रेयसां तथा ।
निधयः सर्वशास्त्राणां रूपाणि सात्त्वनात्मनाम् ॥२९॥
आश्रयाः सर्वसिद्धीनां प्रश्रयाः शरणार्थिनाम् ।
मोक्षदास्तु मुमुक्षूणां फलदाः सर्वकर्मिणाम् ॥३०॥
सदाशिषां प्रेरकाश्च मण्डनं ब्रह्मवर्चसाम् ।
तपः साक्षात् तपोवतां संयमा यमिनां तथा ॥३१॥
सदा दिव्याः पञ्चवर्षा मूर्तयः कोमलान्तराः ।
यौवनोद्भेदरहिता जरामरणवर्जिताः ॥३२॥
चत्वारो देहतो बाला वृद्धास्तु ज्ञानतो मताः ।
पितरं स्वमजं नत्वा प्रोचुः किं करवाम शम् ॥३३॥
तदा तु ब्रह्मणा ते वै संस्कृता ब्रह्मवारिभिः ।
उपनीताः कृताश्चाथ नैष्ठिका ब्रह्मचारिणः ॥३४॥
स्थापिता ब्रह्मलोके ते सत्ये व्योम्नि सुमण्डले ।
पुण्ये संकल्पजे रम्ये विमाने कामगे परे ॥३५॥
महारुद्रपुरी यत्र स्तरे व्योम्नि सुवर्तते ।
तत्र स्तरे समे तेषां कृते धाम सुकल्पितम् ॥३६॥
दिव्यं सर्वर्द्धिसम्पन्नं स्वेष्टसंलब्ध्युपकृतिम् ।
संकल्पोत्थफलपुष्पमञ्जरीशालिवृक्षकम् ॥३७॥

पुण्यतत्त्वसमुत्पन्नसमीहामात्रलब्धिकम् ।
भोग्यभोगोपकरणखानपानादिवस्तुकम् ॥३८॥
पुण्यं प्रकाशं भवनं वनाधिष्ठितसौरभम् ।
उद्यानोपवन क्षेत्रौषधिरसायनान्वितम् ॥३९॥
सौवर्णस्तु रसस्तत्र पावनस्तृप्तिकारकः ।
राजतं तु जलं कल्पनदीजन्यं सुखावहम् ॥४०॥
ब्रह्मकुण्डाः शीतकुण्डा वह्निकुण्डाः स्वभावजाः ।
सर्वदा व्ययनाशादिरहिता वाडवार्थदा ॥४१॥
ब्रह्मवृक्षमहापर्णकुटिराणि महान्ति च ।
योगिवाससमर्हाणि तापसार्थकृतानि च ॥४२॥
तत्र संकल्पजाऽनन्ताः सनकादिसमाः शुभाः ।
ज्ञानभक्तिधनाढ्या वै वर्तन्ते बालविग्रहाः ॥४३॥
तादृशं तद्विमानन्तु धामोद्यानमयं कृतम् ।
वै हायसं यथाकामगतिकं सत्यसंग्रहम् ॥४४॥
शातकौम्भं शतभौमं विशालं लक्षयोजनम् ।
सभाशालाविहाराग्निहोमादिभिन्नभूमिकम् ॥४५॥
एतादृशं निवासार्हं धाम निर्माय ब्रह्मणा ।
कुमारेभ्यश्चतुर्भ्यस्तदर्पितं वासलिप्सया ॥४६॥
अथ ज्ञानं प्रदातुं वै ब्रह्मणा तु विचारितम् ।
ध्यातो हरिः परंब्रह्म तत्त्वज्ञानाय स प्रभुः ॥४७॥
तावच्छ्रीहरिणा तत्र प्रेरिता वेदपूरुषाः ।
ब्रह्मधाम्नः समागत्य ब्रह्माग्रे समुपस्थिताः ॥४८॥
मूर्तिमन्तः स्वयं दिव्या ज्ञानविज्ञानसंभृताः ।
पितामहे लयं प्राप्ता विद्यारूपाः प्रकाशकाः ॥४९॥
यत्र ज्ञानानि सर्वाणि सर्वसृष्टिकृतानि वै ।
सर्वमोक्षप्रदान्यत्र परत्र सुखदानि च ॥५०॥
धर्मार्थकाममोक्षाख्याश्चत्वारः पुरुषार्थकाः ।
सन्ति यत्र सदा वर्ण्यास्तान्वेदान् विधिधानजः ॥५१॥
तेभ्यो दातुं मनश्चक्रे, विधिवत्समपाठयत् ।
चत्वारो ब्रह्म पुत्रास्ते वेदानधीत्य कृत्स्नशः ॥५२॥
नित्यं रक्षन्ति विज्ञानं वैदिकं पाठयन्ति च ।
तत्तत्पठनयोग्यांश्च कोटिशो नैष्ठिकान्पुनः ॥५३॥
शिष्यांश्च मानसान् चक्रे पञ्चवर्षान् सनातनान् ।
सनकादिसमप्रज्ञरूपतेजोबलादिकान् ॥५४॥
सनकादिसमवासभोग्यैश्वर्यर्द्धिविग्रहान् ।
ब्रह्मचर्यव्रतपरान् दिव्यान् पुण्यमयान् परान् ॥५५॥
सनातनान् सुपुत्रांश्च वेदविज्ञानवारिधीन् ।
तान्सर्वांस्तत्र सत्ये वै धाम्नि सनकसंश्रिते ॥५६॥

सतः साधुगुणान् सर्वान् वासयामास सात्त्विकान्।
मानसानपरामेयाँस्तान् सनातनविग्रहान् ॥५७॥
समावस्थगुणरूपानाशीर्भिः समयोजयत्।
आदिसर्गादाप्रलयादेतस्याऽण्डस्य तेऽन्तरे ॥५८॥
वेदविज्ञाननिधयस्तिष्ठन्ति वेदरक्षकाः।
इति कार्यं परं कृत्वा ब्रह्मा तोषमगात्पुनः ॥५९॥
क्षणं ब्रह्मपरं ध्यात्वाऽऽत्मानमाश्रित्य संस्थितः।
सृष्टिं विलोक्य सुखदां जन्मसाफल्यमास्थितः ॥६०॥

इति श्रीलक्ष्मीनारायणीयसंहितायां प्रथमेकृतयुग-
सन्ताने सनकादिमानससृष्टितद्गुणनिवासा-
दिवेदप्राकट्यादिनिरूपणनामाऽष्टा-
दशोऽध्यायः ॥१८॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि! प्रवक्ष्यामि साधूनां श्रेष्ठता यतः।
सन्तो दिशन्ति चक्षूंषि सन्तस्ते हृदयं मम ॥ १ ॥
मुक्तिमार्गोऽनवरतस्तादृशैः साधुभिर्मम।
उद्धारितः प्रवृत्तश्च मुच्यन्ते तेन जन्तवः ॥ २ ॥
वेदज्ञानं जनाचारो दैवं पैत्र्यं च कर्म यत्।
प्रवर्तते सदा तेभ्यो मोदन्ते तेन जन्तवः ॥ ३ ॥
भक्तेर्बलं च वैराग्यं कल्याणं विविधं च तैः।
जायतेऽथ विरक्तास्तु मुक्तिं संयान्ति तेन वै ॥ ४ ॥
साधुवंशा आर्षवंशा ब्रह्मचारिप्रणालिकाः।
प्रवर्तन्ते सदा तैस्तु तेन मोक्षो ध्रुवो भवेत् ॥ ५ ॥
सनकादिसमा दिव्या आबाल्याद् ब्रह्मचारिणः।
सन्तो ब्रह्म स्वयं बोध्यास्त एव परमेश्वराः ॥ ६ ॥
सतामाशीर्वचोभिस्तु न्वहं नारायणोऽभवम्।
सतामाशीर्वचोभिस्त्वं लक्ष्मीरभव आर्थिकी ॥ ७ ॥
सन्तो यदि प्रयाचेयुर्लक्ष्मीरस्मभ्य आवह।
तदा सद्भ्योऽप्यहं लक्ष्मीस्त्वां प्रियां नु समर्पये ॥ ८ ॥
यदाऽन्यत् किन्न देयं मे सतामर्थे भवेत्परम्।
सर्वाधिकप्रियां त्वां यद् ददामि तेभ्य आदरात् ॥ ९ ॥
दासा दास्यश्च वैकुण्ठं भोग्यसाधनसम्पदः।
लक्ष्मीश्चाहं च सर्वं मे सतां भोग्यं न संशयः ॥१०॥
बहुजन्मकृतं पुण्यं यदा भवति साम्प्रतम्।
तदा सन्तः स्वगेहं वै समागच्छन्ति भाग्यतः ॥११॥
यदि सन्तोषिता वृद्धा बहुभिर्जन्मभिस्तदा।
आगच्छेयुः समाः सन्तो गृहं तु गृहिणां मुदा ॥१२॥
सन्तो वाञ्छन्ति यद्यन्मे गृहदाराधनादिकम्।
निःसंशयं तु तत्प्रेम्णा सद्भ्यः सर्वं समर्पये ॥१३॥
ब्रह्मलोको न गोलोको वैकुण्ठोऽव्याकृतो न च।
न लक्ष्मीर्न रमा राधा सद्भ्यो नास्त्यधिकं हि मे ॥१४॥
लक्ष्मि! सन्तः सदा सेव्यास्त्वया च मनसाऽन्वहम्।
सन्तो मम प्रतीका वै सन्तस्तु मम मूर्तयः ॥१५॥
सन्तो नखशिखायावद्देहदिव्या भवन्ति हि।
चरणानां जलं तेषां प्रपुनाति भुवस्तलम् ॥१६॥
चरणानां रजस्तेषां पुनाति शिरसा धृतम्।
चरणानां तलं तेषां पुनाति वक्षसि धृतम् ॥१७॥
चरणानां स्पर्शनं वै पुनाति भुवनत्रयम्।
पादसंवाहनं तेषां प्रारब्धं सुकरोति हि ॥१८॥
साधूनां पादयोः स्वस्य मस्तके धारणे कृते।
पवित्रं जायते सर्वं शरीरं मोक्षभाजनम् ॥१९॥
पादयोर्लेहने तेषामात्मा शुद्ध्यति किल्बिषात्।
जंघासंवाहने तेषां सम्राड् भवति सेवकः ॥२०॥
सक्थिसंवाहने तेषां सार्वभौमो नृपो भवेत्।
कटिसंवाहने तेषां त्रिलोकीशो भवेद् ध्रुवम् ॥२१॥
पृष्ठसंवाहने तेषां परमेष्ठिपदं लभेत्।
हस्तसंवाहने तेषां वैराजं पदमालभेत् ॥२२॥
अंगानां मर्दने तेषां विष्णुराज्यं परं लभेत्।
सतां संकल्पपूर्त्या स्वं सर्वं प्रपूरितं भवेत् ॥२३॥
सतां शरीरे भगवच्छरीरं सतां विचारे भगवद्विचारः।
सतां प्रयत्ने भगवत्प्रयत्नस्ततः सुसन्तः खलु तोषणीयाः ॥२४॥
सतां पदे श्रीहरिपादशक्तिः सतां करे श्रीहरिहस्तशक्तिः।
ससां हृदि श्रीहरिवासशक्तिः सतां विहारे हरिगम्यशक्तिः॥२५॥
सतां मनः श्रीहरिमानसं मतं
ज्ञानं सतां ज्ञानममुष्य सम्मतम्।
इच्छा सतां श्रीहरिवाञ्छनं मतं
कार्यं सतां श्रीहरिणा कृतं मतम् ॥२६॥
सतां तु नाड्यः परमेशनाड्यो रक्तं सतां श्रीपरमेशरक्तम्।
धातुः सतां श्रीपरमेशधातुः श्वासः सतां श्रीपरमेशवायुः ॥२७॥
चक्षुः सतां श्रीपरमेशचक्षुः कर्णः सतां श्रीपरमेशकर्णः।
मुखं सतां श्रीपरमेश्वरास्यं जिव्हा सतां श्रीपरमेशजिव्हा ॥२८॥
भोज्यं सतां श्रीपरमेशभोज्यं ग्राह्यं सतां श्रीपरमेशलभ्यम्।
भोग्यं सतां श्रीपरमेशभोग्यं दिव्यं भवेद्वस्तु सतां प्रसंगात् ॥२९॥

सन्तः सदा श्रीभगवत्समाना मोक्षप्रदास्ते शरणागतेभ्यः ।
पापानि सद्यः खलु मार्जयन्ति पुण्यान्यनन्तानि समर्पयन्ति ॥३०॥

सतां त्वचो ह्यक्षरदिव्यतुल्याऽऽ-
नन्दप्रदाः स्पर्शकृतां भवेयुः ।
सतां समस्तेन्द्रिययोगलाभो
मुक्तिप्रदः पुण्यद एव बोध्यः ॥३१॥

सतां सकाशात् खलु येन पुत्रो
लब्धः सुपुत्रः कुलपावनः सः ।
हरेस्तु गोत्रान्ननु सोऽपि जातः
सता समो वै हरिणा समः सः ॥३२॥

सतां प्रसादो मुखपंकजस्य लब्धस्तु येनाऽत्र स मुक्तिपात्रम् ।
सतां समस्तं शरीरन्तु येन सम्मर्दितं तस्य समस्तसौख्यम् ॥३३॥

जनाः सतां भोजनदानमग्रतः
कृत्वा तु गृह्णन्ति सतां प्रसन्नताम् ।
जिव्हेन्द्रियाऽर्प्याऽर्थ्यसुमिष्टमश्नतां
स्वीकुर्वतां शिष्यसुदत्तसूपदाः ॥३४॥

रसस्तु सर्वो मधुरादिरूपः सत्स्वीकृतो निर्गुणभावमीयात् ।
रूपं तथा शुक्लसुरूपसौम्याकृति प्रदृष्टं ह्यगुणत्वमीयात् ॥३५॥

शब्दस्तु सद्भिः खलु संश्रुतो यः
स दिव्यतां याति सतां प्रसंगात् ।
स्पर्शस्तथा सत्पुरुषैः कृतो यः
स मुक्तिदः स्याद्धि सतां प्रसंगात् ॥३६॥

गन्धस्तु सद्भिर्ग्रहणे धृतो यः स निर्गुणो वै भवति प्रदिव्यः ।
संकल्पमात्रं तु सतां विबोध्यं मोक्षप्रदं पुण्यसुदं समर्द्धम् ॥३७॥

यदासनं सद्भिरधिष्ठितं च यद् यानं शरीरं पशुपक्षिणां तथा ।
यच्चाऽप्यधिष्ठाय सुखस्य मात्रां गच्छन्ति सन्तस्तदु मोक्षगामि ।३८।

यद्यज्जडानामथ चेतनानां देहेषु सन्तः सुखमामनन्ति ।
तत्तज्जडं चेतनमस्य योगाद् दिव्यं सुमुक्तिं गतमित्यवेहि ॥३९॥

यस्मिन् गृहे पादतलस्य लब्धिः सतां भवेत्तद्गृहमिष्टदिव्यम् ।
यस्मिन्पदार्थे करयोः सतां तु स्पर्शो भवेद्वस्तु तदेव दिव्यम्॥४०॥

सतां स्तवे येन तु वाक् प्रयुक्ता सा दिव्यतां याति न बन्धनाय ।
आस्यं प्रजन्यं च सतां प्रसंगात् सदा पवित्रं भवतीह दिव्यम् ॥४१॥

शारीरकं यत्करणं च कार्यं प्रत्येकमंगं च समस्तदेहः ।
यद्यत्सतां स्यादुपयोगलभ्यं तत्तद्भवेन्मोक्षकरं तु दिव्यम् ॥४२॥

देहस्य भोग्यानि सुपौरटाणि वा राजतादीनि सुभूषणानि ।
कौशेयकार्पासकृतानि यानि वस्त्राणि यावत्प्रकराणितानि ॥४३॥

तैलानि मृद्यानि सुगन्धितानि
लेप्यानि चाऽर्च्यानि तु चन्दनानि ।
पुष्पाणि रम्याणि सुगन्धिभाञ्जि
सद्भ्योऽर्पितान्याप्नुयुरत्रिगौणम् ॥४४॥

अहो विशेषात् किमहं ब्रवीमि
सन्तस्तु सर्वान्नु पवित्रयन्ति ।
पापान् सुदुष्टान्मलिनान् शठाँश्च
तमः प्रधानानधमाँश्च जीवान् ॥४५॥

प्रजापतीन् मनून् देवानृषीन् पितॄन् पृथक्स्थितान् ।
गन्धर्वाँश्चारणान् सिद्धान् यक्षान् विद्याधराऽसुरान् ॥४६॥
किंपुरुषाँश्चाऽप्सरसः किन्नरानुरगाँस्तथा ।
मातॄः पिशाचान् रक्षांसि भूतान् प्रेतान् विनायकान् ॥४७॥
वेतालोन्मादकूष्माण्डान् वृद्धबालग्रहाँस्तथा ।
पशून्मृगान्खगान्वृक्षान्पर्वताँश्च सरीसृपान् ॥४८॥
स्थावरान् जंगमान् सर्वान् भूवारिगगनौकसः ।
शुद्धसत्त्वान्मिश्रसत्त्वान्राजसाँस्तामसाँस्तथा ॥४९॥
सर्वान् शुभाऽशुभाञ्जीवान् पुण्याऽपुण्यपरिप्लुतान् ।
सन्तः पुनन्ति संकल्पान्मोक्षं नयन्ति दर्शनात् ॥५०॥
दिव्यान् कुर्वन्ति संसर्गात् स्मृद्धान्कुर्वन्ति सेवनात् ।
ईशान् कुर्वन्ति वचनात् शान्तान्कुर्वन्ति संगमात् ॥५१॥
तेषां श्रेष्ठत्वं क्रमाद् बोध्यं क्रमस्तु ज्ञानमात्रया ।
भक्त्या चापि क्रमो बोध्यो वदामि शृणु पद्मजे ! ॥५२॥
अस्मादिभ्योऽत्र जीवेभ्यः श्रेष्ठाः सन्ति तृणादयः ।
अन्नौषध्यादयस्तेभ्यस्ततः श्रेष्ठाश्च वीरुधः ॥५३॥
तत आम्रादयो वृक्षाः श्रेष्ठा देवद्रुमास्ततः ।
स्थास्नुभ्यस्तु चराः श्रेष्ठाः सूक्ष्मा ये जन्तवः खलु ॥५४॥
तेभ्यः पिपीलिकाः श्रेष्ठास्तेभ्यस्तु शलभादयः ।
भ्रमराद्यास्ततस्तेभ्यश्चटकाप्रमुखा मताः ॥५५॥
शशादयस्ततोऽजाद्यास्तेभ्यः श्रेष्ठा गवादयः ।
ततो मनुजास्तेषु वर्णाश्चत्वारो सदुत्तमाः ॥५६॥
ब्राह्मणास्तेषु तेषां च धर्मनिष्ठा वरा मताः ।
ज्ञानिनोऽथ वरास्तेभ्यो ज्ञानिभ्यो देवकोटयः ॥५७॥
देवेभ्यः पितरः श्रेष्ठास्तेभ्य ऋषय उत्तमाः ।
ऋषिभ्योऽपि परंश्रेष्ठो य एकान्तिकभक्तिमान् ॥५८॥
ऐकान्तिकेषु भक्तेषु श्रेष्ठः साधुगुणालयः ।
सर्वस्वात्मनिवेदी यो भगवत्त्वाय कल्पितः ॥५९॥
श्रीहरेरंकजः पुत्रः साधुः सद्गुणभाजनम् ।
श्रीहरेरंशजः शिष्यः सत्पुरुषो हि दायभाग् ॥६०॥

दायो मुक्तिस्तस्य भागू यः स साधुर्हरिरेव सः ।
हरेर्वंशो हरेर्गोत्रं हरेर्मूर्तिः स सम्मतः ॥६१॥
नाऽल्पो न्यूनो हरेः साक्षाद्धरिस्तस्मान्न रिच्यते ।
तस्माच्छ्रेष्ठो न कोऽप्यऽस्ति सदाऽऽस्ते तत्र यद्धरिः ॥६२॥
तारतम्यं विदित्वैवं बहुमान्या हरिश्रिताः ।
हरेः समाश्रिताः साक्षाद्धरेस्तु हृदयात्मकाः ॥६३॥
हरौ सन्तस्तु ते सौम्यास्तिष्ठन्त्यभेदवृत्तितः ।
यतयः साधवो दिव्याः साक्षाच्छ्रीहरिमूर्तयः ॥६४॥
जनलोकसमा भूत्वा तोषयन्ति जनान् सदा ।
आसने शयने खाद्ये भोजने पात्रलेपने ॥६५॥
रमणे गमने हास्ये खेलने सहवासने ।
श्लेषणे दर्शने श्रेष्ठे उत्सवे यानवाहने ॥६६॥
मनोरंजनके कार्ये तोषयन्ति जनाँस्तु ये ।
तान् प्रसाद्य सदा लक्ष्मि ! सौख्यं भवति शाश्वतम् ॥६७॥
परोपकारशीलास्ते परकार्यशरीरकाः ।
परार्थसाधका मोक्षदायिनो जीवतारकाः ॥६८॥
साधवास्ते हरेर्भक्ता जीवमात्रहितावहाः ।
सर्वसहाः सदा पूज्या मान्याः स्वेष्टाधिकत्वतः ॥६९॥
साधूनां संश्रयात्पापा भवन्ति पुण्यशालिनः ।
सतां संसेवनान्नार्यो नरा यान्ति परां गतिम् ॥७०॥
देहधनमनस्त्यागात्साधूनामग्रतः सदा ।
स्वसर्वस्वाऽर्पणाद्वापि मुक्तिर्भवत्यसंशया ॥७१॥
ये वै साधुवशे जाताः साधवस्तद्वशंगताः ।
भूत्वा प्राप्यं परं मोक्षं नयन्ति स्वप्रतापतः ॥७२॥
यन्नेत्रे मम दर्शने प्रणिहिते यन्मानसं मन्मतम्,
यत्कर्णौ मम दिव्यकार्यचरितानां संश्रवे सुस्थितौ ।
यन्नासा मम मूर्तियोगसुभवामोदग्रहे सम्मता
यज्जिह्वा मम कीर्तने च रसना मे रासने वर्तते ॥७३॥
ओष्ठौ वै मम मूर्तिचूम्बनविधौ सौख्यं दधाते परं
येषां त्वक् स्पृशति प्रकृष्टममलं बिम्बं मदीयं सदा ।
येषां श्लेषणमेव मे तनुकृतं नान्यत्परं सम्मतं
तेषां त्वेव सतां सदाऽहमवनं कुर्वे मदीया यतः ॥७४॥
सेवां तेषां सदा कुर्वे भक्तिं चापि सदा त्वहम् ।
तेन समृद्धः सदा चास्मि त्वया सह पतिव्रते ! ॥७५॥
अहं यथा तथा त्वं वै सेवां तेषां सदा कुरु ।
तेन वै सेवितः स्यां यत् पातिव्रत्यादपि त्रयात् ॥७६॥
मानसाद् दैहिकाद् वाचो यथा वै सेवितोऽस्म्यहम् ।
तथा ते साधवः सेव्याः सदा शं ते भविष्यति ॥७७॥
तेषामाशीर्वचोभ्यस्ते मे विश्लेषो न वै भवेत् ।
कदाचित्त्वपि कमले ! तस्मात्सेव्याश्च ते त्वया ॥७८॥
सदा पूज्यान् सदा मान्यान् सदा मत्परिचायकान् ।
मदर्थे कृतसंत्यागान् प्रणमामि हि तान्मुहुः ॥७९॥
सतां कामो न रत्यर्थं लोभः स्वार्थाय नैव च ।
क्रोधो नोद्वेगफलको मोहोऽपि बन्धनाय न ॥८०॥
मदो गर्वाय नैव स्यादाशा तृष्णाकरी नहि ।
स्पर्धा सद्गुणलाभाय दया दुःखहराय च ॥८१॥
इत्येवं तु परेषां वै ह्युपकाराय सर्वथा ।
सतां सन्ति स्वभावास्ते सुखमोक्षकराः सदा ॥८२॥
तस्मात् सन्तोऽन्वहं दिव्याः परोपकरणास्तथा ।
परोपकारे भगवान् वसामीति वदाम्यहम् ॥८३॥

इति श्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुग-
सन्ताने सनकादिसत्पुरुषमाहात्म्यकथन-
नामैकोनविंशोऽध्यायः ॥ १९ ॥

**श्रीलक्ष्मी रुवाच—**

भगवन् देवदेवेश जगतामभयंकर ! ।
सन्तो यथाऽन्वहं सेव्याः पुंवर्गा ब्रह्मचारिणः ॥१॥
सत्योऽपि ब्रह्मचारिण्यः सेवार्हाः सन्ति वा न वा ।
याभिर्मोक्षगतिश्चापि जीवानां तु भवेद् ध्रुवा ॥२॥
सजातीयगुरूणां वै सेवा ह्यारामकारिणी ।
नारीणां तु कृते साध्व्यः सत्यो गुर्व्यो हि मोक्षदाः ॥३॥
स्नापने मर्दने पाने भोजने शयनेऽर्थने ।
संवादे स्पर्शने याने वाहने रमणेऽर्हणे ॥४॥
आश्लेषे भूषणे रूपे श्रृंगारे देहवाहने ।
नर्मणि प्रोत्सवे चापि समाजे च प्रवासने ॥५॥
ज्ञाने विज्ञापने हार्दे शारीरे लोकमानने ।
आर्तवे शुद्धिकरणे व्रते विद्यागमे वने ॥६॥
गृहेऽरण्ये स्थले रात्रौ दिवा चाऽप्येकले जने ।
दैवे पैत्र्ये घने देवपूजने मार्जने तथा ॥७॥
शौचे वा सूतके स्वापे मूर्छायां नर्तनेऽथवा ।
विवाहे विपदि वाचि विवेकेऽथ प्रवासके ॥८॥
पलायने सखीयोगे ब्रह्ममन्त्रादिधारणे ।
शरणागतिसंग्राहे विवस्त्रस्थितिवर्तने ॥९॥
नारीण्यामिङ्गिते सम्यक् सदा सेव्यतया गुरुः ।
साध्वी सती भवेद् गुर्वी ह्यसंकोचादसंशयम् ॥१०॥

तस्मात्साध्व्यः समुत्पन्नाः सन्ति वा नहि ? मे वद ।
यज्ज्ञात्वा लोककल्याण्यः स्युरुपास्याः स्त्रियाः सदा ॥११॥

श्रीनारायण उवाच—

शृणु लक्ष्मि ! प्रवक्ष्यामि पृष्टमेतदनुत्तमम् ।
साध्व्यः कुमारिका बह्व्यो मुक्तिदा ब्रह्मणा कृताः ॥१२॥
अक्षता वै सदा तास्तु विवाहपरिवर्जिताः ।
सदा द्वादशवार्षिक्यो राजस्वल्याऽनवप्लुताः ॥१३॥
ऋतुधर्ममनापन्ना नित्यं ब्रह्मपरास्तु ताः ।
साध्व्यः साधुधर्मपरा ब्रह्ममूर्त्यंगनिःसृताः ॥१४॥
तत्र मुख्यां महागीतां नारायणसरूपिणीम् ।
ब्रह्मरूपां ब्रह्मभूतां सच्चिदानन्द लक्षणाम् ॥१५॥
दिव्यां मुक्तमयीं मुक्तां श्रीहरिमूर्तिसंस्थिताम् ।
द्रवरूपां सदा शान्तां सदानन्दमयीं पराम् ॥१६॥
उत्पादयामास हरिः परब्रह्म स्वयंप्रभुः ।
गीतां कुमारिकामेकां भगवान् हृदयात्स्वकात् ॥१७॥
सर्वतेजोमयीं सर्वावयवैः कमनीयकाम् ।
सर्वकामसमापूर्णां पुरुषार्थकृताहर्णाम् ॥१८॥
दिव्यां सुरूपां द्वादशवार्षिकीं सुभगां शुभाम् ।
एकैकांगानन्दपूर्णां सर्वांगपूर्णसुदृढाम् ॥१९॥
सर्वावयवसुघटसुयोगरूपसंयुताम् ।
सर्वप्रकाशसंदात्रीं सर्वमुक्तिकरीं प्रियाम् ॥२०॥
सर्वज्ञानमयीं रम्यां प्रकाशाऽमृतवर्षिणीम् ।
यावद्धर्मसमोपेतां सर्वभक्त्यधिकारिणीम् ॥२१॥
पापानां पापराशीनां नाशिकां बोधसंभृताम् ।
रूपानुरूपलावण्यां स्वाश्रितानां सुखावहाम् ॥२२॥
यथाकथंचिदपि स्वप्रपत्तिमभियायिनः ।
श्रीहरेः शरणं दिव्यं नयित्रीं मोक्षकारिणीम् ॥२३॥
चतुर्दशविवरस्थनैकदेहसुधारिणाम् ।
श्रयमात्रात् परब्रह्मप्रापिणीं ब्रह्ममूर्तिकाम् ॥२४॥
अक्षरब्रह्मणि यस्तु श्रीहरिर्वर्तते सदा ।
नित्यं तत्र हरौ नित्यज्ञानरूपा विराजते ॥२५॥
श्रीहरिणा समं सा तु सर्वत्र चाभिगच्छति ।
यत्र यत्र हरेः प्राविर्भावो भवति तत्र सा ॥२६॥
श्रीहरिणा समं गीता सुमूर्ता गच्छति ध्रुवम् ।
कदाचिद्भगवन्मूर्तौ कदाचिद्वर्तते बहिः ॥२७॥
स्वर्गमृत्युसुपातालेष्वभियाति सुमुक्तिदा ।
वर्तते सर्वदा तेजस्विनी पापप्रणाशिका ॥२८॥
साध्वी साधुपराशीला साधुधर्मसुपालिनी ।
सतां हृदयसंकृतवासा विज्ञानरूपिणी ॥२९॥
ब्रह्मशीलव्रता दोषहारिणी शुद्धिदा स्मृता ।
नित्यशुद्धा सदा बुद्धा शश्वन्निर्दोषमूर्तिका ॥३०॥
परा नारायणी देवी गीता नारायणात्मिका ।
साध्वी स्वस्मात्समुत्पाद्य श्रीहरिणा स्वयं हि प्राक् ॥३१॥
ब्रह्मधामस्थमुक्तेभ्योऽर्पिताऽऽनन्दप्रलब्धये ।
ततः सा मुक्तिलाभाय हीश्वरेभ्यः समर्पिता ॥३२॥
ततोऽपि मोक्षदानाय जीवेभ्योऽप्यर्पिता सदा ।
यावत्सृष्टेः सन्निवेशो वर्तते मायया कृतः ॥३३॥
तत्र सर्वत्र सृष्टौ सा गीता साध्वी सुपोषिता ।
यदा श्रीभगवान् गीतां प्रेषयत्यवरां गतिम् ॥३४॥
तदा तु गीतया देवात्प्रार्थितं स्वस्य रक्षणम् ।
मा मां प्रतारयेत् कश्चित्, तथाऽस्त्विति हरिर्वदन् ॥३५॥
गीताया रक्षणं यावत् सर्वथा प्रकरोति हि ।
गीतायाः सेविकानां तु सहस्राण्ययुतानि च ॥३६॥
उत्पादितानि गीतायाः सजातीयानि तानि वै ।
तास्तु सर्वाश्च गीतायाः समरूपा गुणैः समाः ॥३७॥
सर्वा गीतास्तु मुक्तान्यो ब्रह्मचारिण्य इष्टदाः ।
मोक्षदाः पुण्यदाः पुण्याः पवित्राः पावनाः पराः ॥३८॥
दास्यो गीतास्तु सेवन्ते महागीतां महेश्वरीम् ।
महागीता च गीताश्च ह्यनुगीतास्तथा पराः ॥३९॥
सुन्दर्यो लोकसुन्दर्यो मूर्तिमत्यो महाबलाः ।
विचरन्ति सदा साध्व्यः सन्यासिन्योऽत्र गोलके ॥४०॥
पापाऽपापप्रसक्तानां नारीणां पापिनां तथा ।
बालशूद्राऽन्त्यजानां च वर्णसंकरकारिणाम् ॥४१॥
पितृषिदेवयक्षादिप्रेतमर्त्याघशालिनाम् ।
भूतवेतालकूष्माण्डनागसर्पतमोजुषाम् ॥४२॥
चराणामचराणां च गुणकर्माऽभिधाजुषाम् ।
सर्वेषां तारिका गीताः साध्व्यश्चरन्ति गोलके ॥४३॥
दिव्यदृशां तु साक्षात्ता दृश्या भवन्ति सर्वदा ।
पापकृतामदिव्यानां ज्ञानशब्दात्मिकास्तु ताः ॥४४॥
ज्ञानशास्त्रात्मिकास्तास्तु तिष्ठन्ति सुलभाः शुभाः ।
तासां शरणमादाय तरन्ति भववारिधिम् ॥४५॥
मैथुनस्था रजःसंस्थाः सूतकस्था अशुद्धिगाः ।
पल्यङ्कस्थाः पराङ्कस्थाः कामशय्यास्थिताश्च वा ॥४६॥
विपत्तौ परहस्तस्था असंस्कारहताश्च वा ।
दैवाधीनपराधीना नष्टभाण्डसमाश्रयाः ॥४७॥

नृत्यनाटकचाण्डालक्षंसत्कार्यनियोगगाः ।
अप्सरो गणिका गुप्तपतिका बालघातिकाः ॥४८॥
पातिव्रत्यादिरहिता धर्महीना मदान्धिकाः ।
मद्यमांसपराभ्रष्टवासगेहादिवृंहिताः ॥४९॥
उपप्लवादिदारिद्र्यदोषकृत्परभोगदाः ।
भुजिष्याः प्रमदाः सर्वा गीताश्रयात् तरन्ति ताः ॥५०॥
गर्भपातपतिहन्तृधर्मकामविहन्तृजाः ।
दोषा नश्यन्ति तासां वै गीतादेवीसमाश्रयात् ॥५१॥
नास्ति पापं परं त्वेवं नास्ति दोषो महानिति ।
क्रिया नास्त्यधमा यद्वै गीता तन्न विशोधयेत् ॥५२॥
यं यं देहमभिगृह्य ज्ञानगीता प्रकाशिता ।
तत्तन्नाम्ना तु सा गीता ज्ञानशब्दात्मिका मता ॥५३॥
ऋषीणां च मुनीनां च परब्रह्मविदां तथा ।
देवानां देवगुरूणां मानवानां विमानिनाम् ॥५४॥
श्रीहरेरवताराणामीश्वराणां च वेदिनाम् ।
अनन्तत्त्वाद्धि गीतानामप्यन्तो नैव विद्यते ॥५५॥
ब्रह्मगीता मुक्तगीता विष्णुगीता तथा परा ।
नारायणकृता गीता हरिगीताऽथ तत्परा ॥५६॥
सतीगीता वधूगीता गीताः सन्ति तु कोटिशः ।
तासां समाश्रयान्म्लेच्छः सद्यो भवति पावनः ॥५७॥
हृत्कपाटं समुद्घाट्याऽऽन्तरां नाशयतीषणाम् ।
प्रसन्नयति चात्मानं समुन्नयति धाम तत् ॥५८॥
तस्माद् गीता सदा सेव्या नारीभिरघमर्षणा ।
भवहर्त्री मुक्तिकर्त्री ब्रह्मसायुज्यदायिनी ॥५९॥
इति ते कथिता लक्ष्मि ! साध्वी स्वसेविकान्विता ।
महागीताऽन्यगीताभिः सखीभिः सह मुक्तिदा ॥६०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुग-
सन्ताने मोक्षप्रदमहासतीसाध्वीमहागीता-
माहात्म्यकथननामा विंशोऽध्यायः ॥२०॥

**श्रीलक्ष्मीरुवाच—**

गीताभ्यस्तु व्यतिरिक्ताः सन्ति साध्व्योऽपरा न वा ? ।
लोककल्याणकाराय ब्रूहि देव जगद्गुरो ! ॥ १ ॥

**श्रीनारायण उवाच—**

गीताभ्यः खलु साध्वीभ्योऽप्यतिश्रेष्ठा अतिप्रियाः ।
उपनिषदः साध्व्यः सन्त्याश्रयेण प्रमुक्तिदाः ॥ २ ॥
यासां संसेवनान्मूर्तौ हरेर्लीना भवन्त्यरम् ।
ब्रह्मरूपप्रदा ब्रह्माऽभिन्नताप्रापिकाश्च ताः ॥ ३ ॥
अक्षरब्रह्मधामस्थश्रीहरिणा स्वयं पुनः ।
स्वात्मतत्त्वपरानन्दरसरूपाद् विभाविताः ॥ ४ ॥
मुक्तान्यो ब्रह्मसाधर्म्यावच्छिन्ना दिव्यमूर्तयः ।
हिरण्यकेशा हिरण्यभ्रूकुटिनेत्रगोलकाः ॥ ५ ॥
कुन्ददत्यः स्थलपद्मच्छदरक्तोष्ठकान्तयः ।
रक्तोत्पलान्तरराजद्गण्डोत्तमकपोलकाः ॥ ६ ॥
स्वर्णवर्णाननकान्तिसौम्यहास्यमनोहराः ।
स्वल्पजंबीरसंस्थानस्तनवक्षःसुशोभनाः ॥ ७ ॥
वरदानाऽभयदानान्वितरक्तसुहस्तकाः ।
सूक्ष्मकट्यः स्वल्पमध्याः शुण्डसक्थ्न्यः सुपत्कजाः ॥ ८ ॥
नित्यं ता ब्रह्मचारिण्यो विवाहवर्जिताऽक्षताः ।
उपनिषत्समाख्याता ज्ञानवारिधयोऽव्ययाः ॥ ९ ॥
ईश्वराश्च तथा जीवा ये के चाध्यात्मसंचराः ।
मुक्तिं यान्ति परां ब्राह्मीमुपनिषत्समाश्रयात् ॥१०॥
अप्राप्तयौवनोद्भेदा ब्रह्मचारिण्य आत्मदाः ।
साध्वीरूपैस्तु लोकेषु विचरन्ति दयालयाः ॥११॥
असंख्याः सन्ति ताः साध्वीरूपा ज्ञानात्मिकास्तथा ।
ज्ञात्वा ताः शरणापन्ना नार्यो यान्ति परां गतिम् ॥१२॥
ईश्वरिण्यश्च देवान्यो मानव्यस्तलजाश्च याः ।
अपि भ्रष्टाश्च पापाश्च मुक्तिं यान्ति तदाश्रयात् ॥१३॥
स्मृतमात्राद्ब्रह्मलोकं प्रापयन्ति महाबलाः ।
सर्वा उपनिषत्साध्व्यः श्रयणीया मुमुक्षुभिः ॥१४॥
आत्मज्ञानप्रदानेन ब्रह्ममन्त्रार्पणेन च ।
शरणागतिदानेन तारयन्त्यात्मनोऽनिशम् ॥१५॥
तृष्णाक्षयविधानेन वासनाविलयेन च ।
आत्मतृप्तिप्रदानेन तारयन्त्यात्मनोऽनिशम् ॥१६॥
कर्माशयविनाशेन हेतूनां दहनेन च ।
तमोविध्वंसनेनैव तारयन्त्यात्मनोऽनिशम् ॥१७॥
स्वात्माऽपरोक्षलाभेन ब्रह्मात्मयोजनेन च ।
ब्रह्मत्वाऽऽपादनेनैव तारयन्त्यात्मनोऽनिशम् ॥१८॥
नित्यानन्दविधानेन नित्यतृप्त्याहितेन च ।
सर्वपूर्णरसाप्त्या वै सुखयन्त्यात्मनोऽनिशम् ॥१९॥
सर्वज्ञत्वप्रदानेन पूर्णकामभवेन च ।
सर्वात्मत्वप्रकाशेन ह्लादयन्त्यात्मनोऽनिशम् ॥२०॥
हरेः सालोक्यदानेन सार्ष्टेरापादनेन च ।
सारूप्यासादनेनैवाऽऽनन्दयन्त्यात्मनोऽनिशम् ॥२१॥

सायुज्यसंग्रहेणैवाऽप्येकत्वापादनेन च ।
ब्रह्मामृतत्वलाभेनाऽऽस्वादयन्त्यात्मनोऽनिशम् ॥२२॥
यावद्ब्रह्मात्मबोधेन ब्रह्मदृष्ट्यागमेन च ।
अपरोक्षानुभूत्या च मोक्षयन्त्यात्मनोऽनिशम् ॥२३॥
साध्व्यः परोपकरणशीला मुक्तिप्रदाश्च ताः ।
सर्वथा च मया सेव्यास्त्वया चापि मुहुर्मुहुः ॥२४॥
मुक्ता वै सर्वधामस्था ईश्वरा ईशसृष्टयः ।
जीवा जीवाण्डमध्यस्था सन्त्युपनिषदाश्रिताः ॥२५॥
तथोपनिषदां दास्यः कुमार्यो ब्रह्मसंभवाः ।
श्रुतयो विविधाकाराः साध्व्यो दिव्या असंख्यकाः ॥२६॥
परब्रह्मस्तवकर्यः परब्रह्मनिरूपिकाः ।
परब्रह्मार्थसर्वस्वाः परब्रह्माप्तिसंप्रदाः ॥२७॥
सर्वा दिव्याः सुरूपाश्च ह्युपनिषत्समप्रभाः ।
सर्वा द्वादशवार्षिक्यः सर्वसृष्टिसुसंचराः ॥२८॥
श्रीहरेर्दिव्यरूपस्य प्रत्येकांऽगसमुद्भवाः ।
अपाराः श्रुतयो देव्यो धारणान्मुक्तिदा मताः ॥२९॥
नैकार्था नैकरूपास्ताः साकाराऽऽकारवर्जिताः ।
हिरण्यवर्णा हरिण्यः स्वर्णकनककान्तयः ॥३०॥
श्वेतपाण्डुररक्ताश्च कमलच्छदकोमलाः ।
पेशलाः पापनाशिन्यः श्रयणाच्छ्रवणात्तथा ॥३१॥
गीतास्तथोपनिषदः श्रुतयश्चाऽक्षरे परे ।
धाम्नि स्वीयकृताऽऽवासा मुक्तरूपाः सदा तु ताः ॥३२॥
अथापि वेधसा चात्र प्रार्थिता धामतः खलु ।
समागत्य परे सत्ये लोके वसन्ति नित्यशः ॥३३॥
तासां सृष्टिरनन्ता वै ह्यसंख्या भवनादयः ।
अमूल्याः स्मृद्धयस्तासां परमेष्ठिसमर्धयः ॥३४॥
सदा दिव्याः सदा कन्याः कुमार्यश्च सदा हि ताः ।
ध्येयाः पूज्या विचिन्त्याश्च सेव्या देव्योऽन्वहं च ताः ॥३५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने
उपनिषच्छ्रुत्यात्मकसाध्वीमाहात्म्यकथननामा
एकविंशोऽध्यायः ॥२१॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! तथा चान्याः पराविद्याः सुमोक्षदाः ।
असंख्याता महासत्यः साध्व्यो द्वादशवत्सराः ॥ १ ॥
निर्वाणदाः पराविद्या याभिर्ब्रह्माऽधिगम्यते ।
ता विद्याश्च हरिणा स्वनेत्राभ्यां प्रकटीकृताः ॥ २ ॥
दिव्या मूर्ताः सुप्रकाशाः प्रोज्ज्वलाः सुकुमारिकाः ।
ज्ञानानन्दभृताः साध्व्यो ब्रह्मप्राप्तिविधापनाः ॥ ३ ॥
सुभगाः शुभ्रवर्णाश्च सुलावण्यधराः प्रभाः ।
यौवनोद्भेदरहिताऽवयवाऽऽपूरसंभृताः ॥ ४ ॥
चमत्कृतिकराः सौम्याः शान्ताः सात्त्विकमूर्तयः ।
रूपाऽनुरूपसौन्दर्याऽऽनखस्वर्णजटाधराः ॥ ५ ॥
गूढस्तन्यो मृदुमध्याः सुगन्धपूरणाऽङ्गिकाः ।
अनिमेषा मन्दहास्याः शमशान्ता अविक्रियाः ॥ ६ ॥
नित्यसार्वज्ञ्यसंप्राप्ताः सत्यसंकल्पमानसाः ।
अविद्यानाशिका आकर्षणसामर्थ्यसंभृताः ॥ ७ ॥
बोधयन्त्यो जनान्सर्वान्नाशयन्त्यान्तरं तमः ।
प्रापयन्त्योऽक्षरं धाम विजयन्तेऽमृतप्रदाः ॥ ८ ॥
प्रसादयन्त्यः खलु जीवतत्त्वं
निभालयन्त्यः परमात्मरूपम् ।
विवाहयन्त्यः शरणागतान्स्वान्
विमोक्षयन्त्यो विजयन्त्यभीक्ष्णम् ॥ ९ ॥
संश्रावयन्त्यः सुखरूपतां स्वकां
विभावयन्त्यो बृहदात्मरूपताम् ।
सुपाययन्त्योहरिमिष्टसुद्रवान्
सुयोजयन्त्योहरिमूर्तिलीनताम् ॥१०॥
प्रावेशयन्त्यो हरिकृष्णरूपतां
प्रकाशयन्त्योऽन्तरधीप्रदीपकान् ।
प्रमार्जयन्त्योऽणुरजस्कजालकान्
सुप्रापयन्त्योऽक्षरधामलोकताम् ॥११॥
विरामयन्त्योऽक्षरतेजसा समं
सुतर्पयन्त्यो हरिकृष्णसद्रसैः ।
आपादयन्त्यो हरिकृष्णसद्रतिं
प्रारोहयन्त्यो भगवत्परां गतिम् ॥१२॥
अक्षिविद्या मधुविद्याः पञ्चाग्निदहरादिकाः ।
उद्गीथादिमहाविद्याः या या हरौ समासते ॥१३॥
ताः सर्वाः कन्यकाः साध्व्यो भूत्वा ब्रह्माण्डकोटिषु ।
विचरन्त्यो नरान् नारीर्मुक्तिं वै प्रापयन्त्यरम् ॥१४॥
ता उपास्या ब्रह्मवत् संसेव्याश्च ब्रह्मवत् सदा ।
ध्येयाश्च ब्रह्मवन्नित्यं प्राप्या ब्रह्मप्रियाश्च ताः ॥१५॥
तासां तु ब्रह्मविद्यानां सेविकाः सन्ति कोटिशः ।
ता वै ब्रह्मप्रियाः प्रोक्ता अक्षरब्रह्मणि स्थिताः ॥१६॥
सर्वा ब्रह्मप्रिया ब्रह्मरूपिण्यो ब्रह्मविग्रहाः ।
ब्रह्मात्मिका ब्रह्मतन्व्यो ब्रह्मतादात्म्यसंगताः ॥१७॥

मुक्त्यर्थमीशलोकेषु जीवलोकेषु चाऽप्यथ ।
साध्व्यः साधुस्वरूपा वै विचरन्त्यामहालयम् ॥१८॥
तासां दास्यश्च सख्यश्च दासीदास्यस्तथाऽपराः ।
सेविका अक्षताः सर्वा कोटिशः सन्ति मुक्तिदाः ॥१९॥
सेवनात्समृद्धिदाश्चैता आश्रयाच्छ्रेयसाम्प्रदाः ।
तस्मात् सेव्या ध्रुवं साध्व्यो ब्रह्मचारिण्य आन्तरात् ॥२०॥
ब्रह्मणा प्रार्थितादद्देवाच्छ्रीहरेर्नेत्रनैमिषात् ।
प्रादुर्भूता ब्रह्मप्रियाः सख्यः कोट्यर्बुदानि च ॥२१॥
दास्यः सर्वाश्च ताः प्रोक्ता महाविद्याप्रसेविकाः ।
पूज्या मान्याः सेवितव्या मोक्षार्थे प्रमदाजनैः ॥२२॥

इति श्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुग-
सन्ताने पराविद्यात्मकसाध्वीनां ब्रह्मप्रिया-
त्मकतद्दासीनां च माहात्म्यकथन-
नामा द्वाविंशोऽध्यायः ॥२२॥

**श्रीलक्ष्मीरुवाच—**

देवदेव जगन्नाथ प्राणप्रेष्ठ महाप्रभो ! ।
नारायण ! नमस्तेऽस्तु त्वयाऽहं तारिता ध्रुवम् ॥ १ ॥
मया तु दृश्यते ब्रह्मन् ! भगवान् जयतीति यत् ।
कस्य मन्त्रो भगवता जप्यते परमात्मना ॥ २ ॥
त्वां जपन्ति सदा भक्ता नान्यद्वै जापपात्रकम् ।
सर्वैर्जप्यो भवान्देवो सोऽन्यं कं जपतीति मे ॥ ३ ॥
चिन्तनं जायते दृष्ट्वा तत्समावेहि मे प्रिय ! ।
नारायणः स्वपत्न्यास्तच्छ्रुत्वा प्राह यथातथम् ॥ ४ ॥

**श्रीनारायण उवाच—**

शृणु देवि ! रहस्यं मे सर्वकल्याणकारकम् ।
सर्वकल्याणसत्पात्रमहमेव न संशयः ॥ ५ ॥
सर्वजप्योऽहमेवाऽपि तत्राऽप्यस्ति न संशयः ।
तथापि लोकशिक्षार्थे प्रजपामि मनुं मम ॥ ६ ॥
वासुदेवमहाविष्णुब्रह्मप्रभृतिसृष्टयः ।
सम्यगुत्पादिता यावन्मया तावच्च तैः पुनः ॥७॥
जप्तुं मन्त्रोऽर्थितो मत्तो मया मन्मूर्तितस्ततः ।
मम मूर्तिमयी शक्तिर्मद्देहात्प्रकटीकृता ॥ ८ ॥
मत्तोऽन्यूना मत्स्वरूपा मदैश्वर्या मदात्मिका ।
ध्यानादाकर्षिणी दिव्या जपाच्छान्तिप्रदायिनी ॥ ९ ॥
रूपतेजोमयी रम्या सर्वसौभाग्यसुन्दरी ।
मोक्षसामर्थ्यसम्पन्ना कन्या द्वादशहायना ॥१०॥
दृष्ट्वा तां मुमुक्षुः सर्वे मुक्ता ईशास्तथा परे ।
किंकार्यविमूढास्ते वै बभूवुस्तु यदा तदा ॥११॥
मया कन्या स्वयं जप्ता गीतां त्राणार्थमेव सा ।
गायत्री सा समाख्याता मां जेपुश्च सुरेश्वराः ॥१२॥
मम मूर्तिं तु गायत्रीं जपन्ति च भजन्ति ये ।
ते स्वकर्मखनिं दग्ध्वा प्राप्नुवन्ति पदं मम ॥१३॥
गायत्र्या प्रार्थितं मह्यं मा वै मां नाथ विस्मर ।
सर्वदा भवता रक्ष्या भवेयं सबला ततः ॥१४॥
पापानां पापकर्माणि दग्धुं प्रभव्यन्नथा कथम् ।
सामर्थ्यं यदि भवता मह्यं न दीयते हरे ! ॥१५॥
ततो मया वरो दत्तस्त्वां स्मरिष्यामि वै सदा ।
ततो मदाज्ञया देवी गायत्री सर्वतो गता ॥१६॥
ईशलोकेष्वथ जीवब्रह्माण्डेष्वपि सर्वशः ।
गायत्री कन्यका गुर्वी साध्वी मम तनुप्रभा ॥१७॥
दृश्या तु दिव्यनयनैरदृश्या जडनेत्रकैः ।
वर्तते जापकानान्तु समुद्धारप्रकारिणी ॥१८॥
सुमूर्ता कन्यकारूपा ज्ञानरूपा हृदि स्थिता ।
शब्दात्मिका जपयोग्या त्रिधा तस्या व्यवस्थितिः ॥१९॥
ब्रह्मणा तु यदा वेदा मत्सकाशात् समर्थिताः ।
तदा मया तु गायत्र्या विनिष्कास्य तदर्पिताः ॥२०॥
तस्मात्सा वेदमातेति प्रसंख्यातिमुपागता ।
गायत्र्यो बह्व्योऽन्याश्च तस्याः सेवार्थमित्यपि ॥२१॥
मया सामर्थ्यलेशाद्वै मत्तन्वा प्रकटीकृताः ।
तास्तु लोकप्रलोकेषु मम भिन्नाभिधानतः ॥२२॥
भिन्नभिन्नानुपूर्व्यात्मप्रभिन्नाऽऽकृतयो मताः ।
ताः सर्वा मुख्यगायत्र्या दास्यो भवन्ति कोटिशः ॥२३॥
अप्राप्तयौवनाऽऽवेगाः सुकुमार्योऽक्षताऽऽन्तरा ।
विचरन्ति महासाध्व्यो जापकेभ्यो नु मुक्तिदाः ॥२४॥
ब्रह्मतेजोऽन्विता ब्रह्ममूर्तयो ब्रह्मयोगदाः ।
ब्रह्मात्मिकाः परे सत्ये सुलोके प्रवसन्ति वै ॥२५॥
सर्वज्ञाः सर्ववेत्त्र्यस्ता यत्र लोकाः स्मरन्ति ताः ।
तत्र द्रागभिगम्य स्वान् जापकान् शोधयन्ति ताः ॥२६॥
जीवा वा ईश्वरा देवा यक्षा रक्षांसि वा परे ।
पापाः पापप्रसक्ता वा तामसा राजसाश्च ये ॥२७॥
एता उपासते ताँस्ताः स्त्रीर्नरान् मोचयन्त्यघात् ।
रक्षन्ति सहसंयानान्निर्वाणं गमयन्ति च ॥२८॥

इति ते कारणं देवि ! जपनस्य समीरितम् ।
त्वां जपामि सदा लक्ष्मी ! यथा त्वं जपसीति माम् ॥२९॥
अहन्तु भगवान् देवि ! भक्तान् जपामि नित्यशः ।
भक्ता जपन्ति मां नित्यं हीत्यन्योन्यं जपामहे ॥३०॥
अहन्तु जपनं तेषां रक्षणार्थं करोमि हि ।
ते तु मे जपनं देवि ! कुर्वन्ति मुक्तलब्धये ॥३१॥
अथ भाषां विना नैव जपो भवति कश्चन ।
तस्माद्वाणी प्रयोक्तव्या सा च वर्णान् विना कथम् ॥३२॥
ये चेश्वराः समुत्पन्ना न वक्तुं शेकिरे हि ते ।
ज्ञानमौनाः समासँस्ते वाग्व्यवहारवर्जिताः ॥३३॥
ब्रह्मादयोऽपि मौनास्तेऽस्तुवन् श्रीहरिमच्युतम् ।
मौनस्तुतिमिमां ज्ञात्वा वाक्प्रणेता स्वयं हरिः ॥३४॥
स्वजिह्वाग्रप्रदेशाद्वै दिव्यां कन्यां चकार ह ।
सा चोत्पन्ना स्वयं देवं किं मे कार्यं भवेदिति ॥३५॥
जिज्ञासमानां तां देवीं स्वात्मशक्तिमयीं प्रभुः ।
प्रत्याननं प्रसाराख्यां शक्तिं तस्यै प्रदाय च ॥३६॥
वाक्स्वरूपां कृतवाँस्तां सा वै जाता सरस्वती ।
दिव्यां वीणां समादाय वादयन्ती मुहुर्मुहुः ॥३७॥
ऐशे जैवे च सर्वत्र लोके लोके जगाम सा ।
व्यक्तौ व्यक्तौ प्रवेशायाऽनन्तरूपाण्यधारयत् ॥३८॥
अनन्तकोट्यस्ता जाता वाङ्मय्यः शारदाः स्त्रियः ।
कन्याः कुमारिकाः संख्यारहिता हरिमूर्तिजाः ३९॥
सर्वास्ता ह्यभवन् दास्यो गायत्रीणां तु सेविकाः ।
मिष्टा मधुरा ऋक्षाश्च स्पष्टाश्च ध्वनयस्तथा ॥४०॥
रौद्रा बीभत्सकरुणहास्यक्षुद्रभयानकाः ।
दिव्या अदिव्याः सूक्ष्माश्च स्थूला बह्वर्थसंयुताः ॥४१॥
विविधाकारमापन्नाः सर्वा द्वादशहायनाः ।
अक्षता अस्खलिताश्च सुभगा अर्थसंभृताः ॥४२॥
सुमूर्ता ज्ञानरूपाश्च वाणीरूपाश्च तास्त्रिधा ।
साध्वयः शीलव्रतोपेताः सन्त्युपास्यास्तु मुक्तये ॥४३॥
मां विना नैव मुक्तिः स्यात् सरस्वत्यो मदात्मिकाः ।
मज्जिह्वाश्च मदैश्वर्यात्मिक्यस्तास्तनवो मम ॥४४॥
सदोपास्याः सदा सेव्याः सदा ध्येयास्तु मुक्तये ।
यावद्वर्णसमाम्नायाः सरस्वत्यात्मकाः कृताः ॥४५॥
यथाऽहं व्यापकश्चास्मि वाणी सा व्यापिका तथा ।
शब्दब्रह्मणि निष्णातः परंब्रह्माधिगच्छति ॥४६॥
ब्रह्मणो मे विमर्शः स्याद् विमर्शाद् बिन्दुरस्ति च ।
बिन्दोर्नादः समुत्पन्नो नादाद्वै ध्वनयः स्मृताः ॥४७॥
ध्वनेरक्षरविन्यासाः स्फोटब्रह्मान्विताः खलु ।
जायन्ते वाङ्महादेव्यः सरस्वत्यो जनेषु ताः ॥४८॥
साधुधर्मान्वितास्ता वै मोक्षयन्त्याश्रितान् स्वकान् ।
प्रापयन्ति परं धाम सेविता ब्रह्मणोऽन्वयात् ॥४९॥
ब्रह्मलोके परे सत्ये दिव्यानि भुवनानि च ।
वनानि भोग्यजातानि वस्त्वानन्त्यानि चैव हि ॥५०॥
तासां कृते विधत्तानि ह्यतर्क्यनगराणि च ।
यानवाहनवादित्रभोग्यपेयाऽव्ययानि च ॥५१॥
न ततः सुन्दरं किञ्चित् तल्लोके भवतीति मे ।
वासः सरस्वतीमध्ये समत्रोध्यस्त्वया प्रिये ! ॥५२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे
कृतयुगसन्ताने गायत्रीसरस्वतीनिरूपणनामा
त्रयोविंशोऽध्यायः ॥ २३ ॥

**श्रीनारायण उवाच—**

अथ पूर्वे महासर्गे ब्रह्माण्डे परमेष्ठिनः ।
क्षीरोदधौ शयानस्य तत्र नारायणप्रभोः ॥ १ ॥
एकादशेन्द्रियेभ्यो या कन्या दानवनाशिनी ।
समुद्भूता महासाध्वी सैकादशी महालये ॥ २ ॥
पुनर्नारायणमूर्तौ लयं प्राप्ता च या ततः ।
यावदिन्द्रियसामर्थ्यात्मकतेजांसि तद्विभोः ॥ ३ ॥
संस्थितानि सदा मूर्तौ तानि नारायणः स्वयम् ।
महासर्गसमारंभे चेशानां व्रतकाम्यया ॥ ४ ॥
ताः कन्याः स्वर्णवर्णाढ्या दिव्या द्वादशहायनाः ।
सर्वांगरूपसंपूर्णास्तपस्तेजःसमन्विताः ॥ ५ ॥
प्रकटीकृतवान्, ताश्चेश्वरेभ्यो व्रतकारणात् ।
अर्पिताः श्रीभगवता नारायणपरायणाः ॥ ६ ॥
नारायणान्न ता न्यूना मोक्षदाने महाबलाः ।
ब्रह्माऽक्षरे परे धाम्नि वर्तन्ते मुक्तिमण्डिताः ॥ ७ ॥
ईश्वरास्तद्व्रतं कृत्वा मुक्तिं यान्त्यक्षरे पदे ।
ब्रह्मदेहा ब्रह्मरूपा ब्रह्मैश्वर्यसमन्विताः ॥ ८ ॥
ब्रह्ममुक्तिप्रदाः सर्वा ब्रह्माण्यो ब्रह्मदायिकाः ।
यदा तु वेधसा स्वस्य सृष्टावागमनाय च ॥ ९ ॥
प्रार्थिताश्च तदा नारायणोऽहं मिषमात्रतः ।
मुरनाममहाद्वेष्टृनाशाय संयतोऽभवम् ॥१०॥
क्षीरे तु सागरे यावत् तत्र स्वपिमि दानवः ।
मुराख्यस्तु महाघोरो बलिष्ठः समुपागतः ॥११॥

युद्धार्थं तस्य नाशाय मया शक्तिः प्रकाशिता ।
सा चैकादशसंख्याकेन्द्रियसामर्थ्यसंभृता ॥१२॥
कन्या मोहकरी रम्या मया तेजोविवर्धिता ।
दानवस्य विनाशाय प्रेरिता स्वर्णसुन्दरी ॥१३॥
यावद्गच्छति नाशाय दानवस्तावदासुरः ।
दृष्ट्वा तां मोहमापन्नोवत्रे तां चकमे मुहुः ॥१४॥
कन्यया तु तदाऽभ्युक्तो युद्धे नारायणं च माम् ।
जित्वा पत्नीं कुरु दुष्ट ! नान्यथा स्यात् त्वदीप्सितम् ॥१५॥
दानवः स समाकर्ण्य मुग्धो यावत्तु युद्ध्यति ।
तावत्तु कन्यया पूर्वं खड्गेनच्छिन्नमस्तकः ॥१६॥
पपात धरणौ तत्र ममार न समुत्थितः ।
तदास्य मया लक्ष्मि ! कन्यकायै वरो महान् ॥१७॥
दत्तस्त्वद्व्रतकर्तारो यास्यन्ति परमां गतिम् ।
तव पूजाप्रकर्तारः प्राप्स्यन्ति ब्रह्मचाऽक्षरम् ॥१८॥
तवोद्यापनकर्तारो लप्स्यन्ते स्वर्गमिष्टदम् ।
तव दानप्रकर्तारो मुक्तिं यास्यन्ति पापिने ॥१९॥
तव पुण्यप्रदातारोऽवाप्स्यन्ति भोगवैभवम् ।
स कामाः कामशून्या वा शरणं ते गता जना ॥२०॥
नरा नार्योऽथ वा चान्ये देवा दैत्यादयश्च ये ।
ते स्वेष्टं समवाप्स्यन्ति स्वर्गं मोक्षप्रदं ध्रुवम् ॥२१॥
महापापाऽतिपापानां नाशयित्री सुखावहा ।
पावयित्री जनानां च मोक्षदा भव कन्यके ! ॥२२॥
इति सा मे वरप्राप्त्या सर्वपापप्रणाशिनी ।
महामोक्षगतेर्दात्री वर्तते सर्वतोऽधिका ॥२३॥
मामथ प्राह सा देवी नाथैकाऽहं त्वया कृता ।
जना लोकाश्च बहवस्तत्र व्याप्तिश्च मे कथम् ॥२४॥
तस्माद्बहुस्वरूपाऽहं भवेयं तत्तथा कुरु ।
ततो मया तु सामर्थ्यं दत्तं तस्यै महत्तरम् ॥२५॥
मुख्याश्चतुर्विंशतिसुस्वरूपा जातास्ततोऽनन्ततनुस्वरूपाः ।
ब्रह्माण्डवैपुल्यगता नु चैकादश्यो भवन्त्यप्रमितस्वरूपाः ॥२६॥
ततो मयाऽपि संकल्पाच्चैकादश्यः पुनः पुनः ।
कोटिशश्चाऽप्यनन्ताश्च स्वमूर्तेः प्रकटीकृताः ॥२७॥
मुख्यास्तथा परास्तासां दास्योऽनन्ता मया कृताः ।
ब्रह्माण्डेषु च सर्वत्र सन्ति मोक्षकरा नृणाम् ॥२८॥
अत्र तु वेधसः सत्ये लोके तद्धाम निर्मितम् ।
तपस्विन्यस्तपःकर्त्र्यस्तत्र साध्व्यो वसन्ति हि ॥२९॥
सर्वदाऽक्षतसौभाग्या नारायणपरायणाः ।
कुमार्योऽक्षतसामर्थ्या दिव्या द्वादशहायनाः ॥३०॥
मुक्त्यात्मिकां दशामेकां सुसमृद्धां प्रापयन्त्यतः ।
एकादश्यो मता नाम्ना भवच्छेत्र्योऽघमर्षणाः ॥३१॥
दिव्या मूर्तिस्वरूपास्ताः पूजां गृह्णन्ति नित्यशः ।
मया समं सदा पूज्याः सेव्याः साध्व्योऽन्वहं त्वया ॥३२॥
अथेशानां च देवानामृषीणां पशुपक्षिणाम् ।
मानवानां च दैत्यानां जलस्थलनिवासिनाम् ॥३३॥
समाजेषु यदा मे स्यादाविर्भावस्तदा तदा ।
तेषां जयः सुविजयो भवतीति मया सह ॥३४॥
जयाख्या विजयाऽऽधाना दासी मत्तनुजा शुभा ।
प्राकट्याख्या सुसामर्थ्या मदभिन्ना समागता ॥३५॥
वर्तते सर्वथा दिव्या भक्तानां जयदा शुभा ।
कन्यका सुकुमारी सा भक्तानां मुक्तिदा ध्रुवम् ॥३६
नारायणी जयन्तीति समाख्याता मदात्मिका ।
ब्रह्मरूपा मम मूर्तिर्मत्स्वरूपा तु सा सदा ॥३७॥
मद्विना नैव कुत्रापि वसतीति मया सह ।
वर्तमाना मुक्तिदात्री जयन्तीति जयावहा ॥३८॥
तस्यै चापि मया नैकरूपधारणशक्तयः ।
प्रदत्ताश्च ततः सापि नैककोटिस्वरूपताम् ॥३९॥
धृत्वा जायन्त इत्येता जयन्त्योनन्तसंख्यकाः ।
प्राविर्भवामि यत्राऽहं श्रीहरिस्तत्र तत्र वै ॥४०॥
जयन्ती जायते सार्धं साध्वी मोक्षप्रदायिनी ।
गौण्यश्चापि जयन्त्यस्तु मयाऽसंख्या नवीकृताः ॥४१॥
तास्तु दास्यः सदा मुख्यजयन्तीभिश्च संगताः ।
सेवनात्पूजनाच्चासां व्रताचरणभावनात् ॥४२॥
मोचयन्ति जनान् सर्वान् जीवेशसृष्टिसुस्थितान् ।
तासां वासो मया सार्धं यत्राऽहं तत्र ताः स्थिताः ॥४३॥
ब्रह्मलोके चेशलोके जीवलोकेऽथ वेधसः ।
सत्यलोके जयन्तीनां दिव्या लोकाः स्थिरीकृताः ॥४४॥
जयन्त्यः कोटिशस्तत्र तत्राऽऽवसन्ति सर्वथा ।
यत्रोत्सवो हरेस्तत्र तत्राऽऽगच्छन्ति रूपतः ॥४५॥
साध्वीरूपाः सुरूपाश्चोत्सवरूपास्तथैव ताः ।
अरूपा व्रतरूपास्ता मोक्षदाः सर्वथा मताः ॥४६॥

तस्माज्जयन्त्यो मम सर्वदैव
संसेवनीया निजमुक्तिकामैः ।
नरैस्तथा स्त्रीभिरदभ्रभावान्
मुक्तिः सदा तत्करसंस्थिता स्यात् ॥४७॥

इत्येवं मे जयन्त्यो वै जन्माऽहस्सु समर्चिताः ।
मदर्हणसमा भक्तान् भावयन्ति मदात्मकान् ॥४८॥

शुद्धो वा मलिनो वापि यो भक्तो व्रतमाचरेत् ।
तेन प्रसादयित्वा मां यति मत्पदमव्ययम् ॥४९॥
श्रुत्वा तत्तत्कथां रम्यां दत्वा दानानि भूरिशः ।
कृत्वा तत्तद्व्रतं शुद्धं पूजयित्वा च तास्ततः ॥५०॥
कृपातः श्रीहरेस्ते ते सर्वे यान्ति परां गतिम् ।
विजयन्ते जयन्त्योऽत्र मोक्षदानविधापनात् ॥५१॥
नित्यं गर्जति गायत्री सरस्वती च गर्जति ।
एकादश्यश्च गर्जन्ति गीता गर्जति तावता ॥५२॥
यावन्नैव जयन्त्यो वै गर्जन्ति भुवनत्रये ।
मुक्तिदानां तथाऽन्यासां गर्जनाऽपि न तावती ॥५३॥
यावती गर्जना कृष्णजयन्त्या मस्तकायते ।
तस्माद्धरेर्जयन्ती वै श्रेष्ठा मुक्तिप्रदापने ॥५४॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने
एकादशीनां जयन्तीनां च माहात्म्यादिकथननामा
चतुर्विंशोऽध्यायः ॥२४॥

**श्रीलक्ष्मीरुवाच—**

नारायण पते विश्वंभर देव महाप्रभो ! ।
तव गीतादयः सर्वा मूर्तयो मोक्षदा इति ॥ १ ॥
यदुक्तं तत्तथैवास्ति परं यत्नमयं हि तत् ।
अयत्नसाध्यं सरलं कृतमेव फलेद् द्रुतम् ॥ २ ॥
नाऽन्याऽपेक्षं परं श्रेष्ठं साधनं यद्धि संभवेत् ।
तन्मे ब्रूहि महाराज ! सर्वेषां हितकृद् भवेत् ॥ ३ ॥
बालैश्च वृद्धैर्युवभिः स्त्रिया वा नरेण मूर्खेण सुपण्डितेन ।
स्मृद्धेन दारिद्र्यसुदुःखितेन येनापि केनापि विधापितेन ॥ ४ ॥
साधनेन परो देवो भगवान् पुरुषोत्तमः ।
प्राप्यते तत्तथा स्त्रीभिः समाश्रेयं तदुच्यताम् ॥ ५ ॥

**श्रीनारायण उवाच—**

गीतादयोऽपि साध्व्योऽपि यस्या आश्रयणाद् द्रुतम् ।
परां मुक्तिं सुसंयान्ति तां देवीं कथयाम्यहम् ॥ ६ ॥
सर्वासु साध्वीषु शिरःस्वरूपा ह्ययत्नसाध्या हरिवल्लभा या ।
आरंभिता द्राक् सुखमुक्तिदात्री भक्तिस्तु माता बहुसम्मता मे ।७।
ईशसृष्टिसमारंभे वासुदेवादयो हि माम् ।
प्रार्थयामासुरनुजाः प्रेमपूरितभावतः ॥ ८ ॥
नारायण जगद्धातर्जगच्छ्रेयोविधायक ।
अस्माकं मूलरूपो यः श्रीहरिर्धाम्नि राजते ॥ ९ ॥

तन्मूर्तेर्दिव्यसामर्थ्याऽनन्तकल्याणशक्तयः ।
प्राविर्भवन्ति साध्व्यस्ताः कल्याणाय तु देहिनाम् ॥१०॥
तासां चैव तथाऽस्माकं श्रीहरावैक्यसाधनम् ।
समाश्रितं भवेच्छ्रेष्ठं परं किञ्चिद्भवेन्न वा ॥११॥
इति जिज्ञासितश्चाहं न किञ्चिदवदं तदा ।
हृदि प्रस्फुरितं सम्यग् गच्छामः सन्निधौ हरेः ॥१२॥
वासुदेवादयः सर्वे भगवन्तस्तथेश्वरा ।
जग्मुर्यत्र हरिः साक्षात्परं ब्रह्म विराजते ॥१३॥
परमेऽक्षरलोके तन्निकषोपस्थिता वयम् ।
नत्वा स्तुत्वा दण्डवच्च कृत्वोपाविविशुस्तले ॥१४॥
स्वागतं तेन संपृष्ठमातिथ्यं च कृतं मुदा ।
अस्माभिः कुशलं पृष्टं कृपा जिज्ञासिता परा ॥१५॥
पित्राऽस्माकं तु हार्दं तद्विज्ञाय विनिवेदितम् ।
यूयं सर्वे यदर्थं वै चायाताः सन्ति तद्धयम् ॥१६॥
विमृशामि परां साध्वीं मम मूर्तिमयीं जनुम् ।
रामकृष्णवासुदेवनारायणपरात्मनाम् ॥१७॥
तत्पत्नीनां तथा पूज्यां तनुं सृजामि मन्मयीम् ।
मूर्तौ तथा ह्यमूर्तौ च मूर्तौ तु मत्तनुं शुभाम् ॥१८॥
अमूर्तौ तु तत्तदात्मनिवासार्हां जनिप्रथाम् ।
संकल्प्यैवं स्वयं साक्षात् श्रीहरिः पुरुषोत्तमः ॥१९॥
स्वीयं विवृत्य पुंरूपं भक्तिरूपो बभूव ह ।
सा च देवी महादिव्या परब्रह्ममयी शुभा ॥२०॥
सौम्या रम्या सुरूपा च सर्वसद्गुणभूषणा ।
सर्वैश्वर्यसुसम्पन्ना माता सर्वसुखान्विता ॥२१॥
परंब्रह्म स्वयं चापि भक्तिरूपो व्यवर्तत ।
तत्र का न्यूनता वा स्यात् किं किं न संभवेत् ततः ॥२२॥
यावत्तद्रससंपूर्णा यावत्सौभाग्यशालिनी ।
सर्वैश्वर्यसमापूरा परब्रह्ममयी तनुः ॥२३॥
प्रेमपूर्वकसेवाया रूपं श्रीहरिणा धृतम् ।
सर्वस्वं निहितं तत्र नाऽण्वपि न्यूनता ततः ॥२४॥
सा च माताऽवताराणां तथा भगवतामपि ।
ईशानां च सदा माता भक्तिर्मोक्षकरी मता ॥२५॥
अयत्नसाध्या सर्वत्र भक्तिर्माता तु वर्तते ।
मानसी भावनारूपा प्रेमरूपा तु चेतने ॥२६॥
क्रियारूपा शरीरे सा दिव्या स्नेहमयी स्मृता ।
विविधा विविधाकारा विविधार्थनिबन्धिनी ॥२७॥
भक्तिः साध्वी महादेवी बहुधा परितः स्थिता ।
भगवन्तो ह्यवतारा ईशास्तत्प्रमदादयः ॥२८॥

ऋषयः पितरो देवा मानवा यक्षराक्षसाः ।
भूतप्रेतपिशाचाश्च कूष्माण्डाश्च विनायकाः ॥२९॥
वेताला डाकिनी चैव शाकिनी योगिनी तथा ।
सूताश्च मागधाश्चैव बन्दिनो भाटचारणाः ॥३०॥
विद्याधराश्च साध्याश्च विश्वेदेवाश्च मारुताः ।
नागाः सर्पास्तथा दैत्या दानवा उरगाश्च ये ॥३१॥
स्थावरा जंगमाश्चैव तिर्यञ्चोऽपि च ये पुनः ।
सूक्ष्माः स्थूलाश्च मूर्ताश्चाऽमूर्ता दिव्याश्च केचन ॥३२॥
सृष्टौ जीवाः सदेहा वा अदेहा लोकजाश्च ये ।
अलोके वर्तमानश्च याम्ये धर्मपुरे तथा ॥३३॥
स्वर्गे वा नरके दिव्ये सत्ये वैदवरभूमिषु ।
ये च केचन सृष्टिस्थाः पापाः पुण्याश्च जीविनः ॥३४॥
मलिनाश्चाऽमलिनाश्च पात्राण्यपात्रजातयः ।
ज्ञानिनो ज्ञानहीना वा वेद्यावेद्यधुरोज्झिताः ॥३५॥
तेभ्यो भक्तिर्महासाध्वी मुक्तिदा नाऽत्र संशयः ।
श्रीहरौ प्रेमरूपा सा द्रागेव मोक्षदायिनी ॥३६॥
सर्वैः कार्या सदा पूज्या मान्या सेव्या हृदि प्रिया ।
सदा धार्या च दृश्या च द्राव्या मुक्तिप्रदायिनी ॥३७॥
नैतादृशी परा देवी क्वापि जाता न जायते ।
जनिष्यते न चान्या वै भक्तिर्माता परा मता ॥३८॥
सर्वेषां केवला भक्तिर्ब्रह्मसायुज्यकारिणी ।
इति निश्चित्य सर्वेशो सद्रूपां तां ससर्ज ह ॥३९॥
परमानन्दचिन्मूर्तिः सुन्दरी कृष्णवल्लभा ।
हरिं पप्रच्छ देवेशी किं करोमीति सांजलिः ॥४०॥
तदा त्वाज्ञापयद् देवो मद्भक्तान् पोषयेति च ।
अंगीकृतं तया तद्वै प्रसन्नोऽभूद्धरिस्तदा ॥४१॥
मुक्तिं दासीं ददौ तस्यै पुत्रौ ज्ञानविरागकौ ।
भक्तिर्गोलोकवैकुण्ठाक्षराव्याकृतधामसु ॥४२॥
पोषिता भगवद्रूपैः पार्षदैः शाश्वतीकृता ।
ईश्वराणां तु लोकेषु पोषितेश्वरकोटिभिः ॥४३॥
स्वर्गे भूमौ च पाताले पोषिता नारदादिभिः ।
मुक्तिज्ञानविरागैश्च सहिता यत्र संगता ॥४४॥
तत्र सर्वत्र सा भक्तिर्महानन्देन संस्थिता ।
सत्याऽसत्यमये काले धर्माधर्ममये युगे ॥४५॥
भक्तिस्तु सर्वथा दिव्या मुक्तिदा प्रबला मता ।
सृष्टौ सद्भिर्वर्धमाना गेहे गेहे जने जने ॥४६॥
वर्तते मुक्तिमादाय स्वेभ्यो मुक्तिं ददाति हि ।
भक्त्यान्विताश्च ये जीवा भविष्यन्ति युगे युगे ॥४७॥
पापिनोऽपि गमिष्यन्ति निर्भयं हरिधाम यत् ।
येषां चित्ते वसेद् भक्तिः सर्वदा प्रेमरूपिणी ॥४८॥
न ते पश्यन्ति कीनाशं स्वप्नेऽप्यमलमूर्तयः ।
न प्रेतो न पिशाचो वा राक्षसो वाऽसुरोऽपि वा ॥४९॥
भक्तियुक्तमनस्कानां दर्शनेऽपि प्रभुर्भवेत् ।
न तपोभिर्न वेदैश्च न ज्ञानेन न कर्मणा ॥५०॥
हरिस्तु लभ्यते भक्त्या भक्तिरूपो यतो हरिः ।
प्राणिनां सुकृतबलाद् भक्तौ प्रेमा विवर्धते ॥५१॥
हरौ भक्तिर्हरिर्भक्तिर्भक्त्या कृष्णः पुरःस्थितः ।
भक्तिद्रोहकरा ये स्युस्ते सीदन्ति जगत्त्रये ॥५२॥
अलं व्रतैरलं तीर्थैरलं योगैरलं मखैः ।
अलं ज्ञानकथालापैर्भक्तिरेकैव मुक्तिदा ॥५३॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुग-
सन्ताने भक्तिमाहात्म्यकथननामा
पञ्चविंशोऽध्यायः ॥२५॥

**श्रीनारायण उवाच—**

प्रेमपूर्वकसेवा वै भक्तिर्बोध्या समासतः ।
सा सेवा तु हरेः प्रोक्ता ब्रह्मधामपतेः सदा ॥ १ ॥
कामात्स्नेहाद्भयाल्लोभान्मदात्स्वार्थात्तथाऽन्यतः ।
प्राणिना विहिता भक्तिर्मुक्तिदा भवति ध्रुवम् ॥ २ ॥
पत्नीभक्तिः पतिभक्तिर्भक्तिः कौटुम्बिकी तथा ।
देशभक्तिर्दैवभक्तिरात्मभक्तिश्च भक्तयः ॥ ३ ॥
सर्वाभ्यः खलु भक्तिभ्यो हरेर्भक्तिर्विशिष्यते ।
बहुरूपा ह्यनन्ताश्च भक्तेर्दास्यस्तु भक्तयः ॥ ४ ॥
कोट्यस्तु भक्तयस्तास्ता हरेर्भक्तिं समाश्रिताः ।
पितृभक्तिर्गुरोर्भक्तिर्भक्तिर्दैवीजनस्य च ॥ ५ ॥
ईशभक्तिर्लोकभक्तिर्गवां भक्तिस्तथा च या ।
सर्वास्तु भक्तयो दास्यो हरेर्भक्तेरिति स्थितिः ॥ ६ ॥
ब्रह्माण्डानामनन्तत्वात् तत्तत्प्रणालिभेदतः ।
भक्तेः रूपाणि भिन्नानि मान्यताभेदतोऽपि च ॥ ७ ॥
अथ भक्तेर्यथा दासी मुक्तिर्भवति सर्वदा ।
तथा ह्याराधना दासी दासी पूजाऽपि सम्मता ॥ ८ ॥
नीराजनाऽपरा दासी दासी चापि प्रदक्षिणा ।
स्तुतिर्दासी समाधिश्च दासो दासी च वन्दना ॥ ९ ॥
धारणा च मता दासी प्रार्थना सा तथाऽपरा ।
पुष्पाञ्जलिर्मता दासी दास्यः सर्वाश्च सिद्धयः ॥१०॥

एताः सर्वास्तु दास्यो वै हरेर्मूर्तेः प्रकाशिकाः ।
हरेर्मूर्त्यात्मिकाः सर्वा भक्तितुल्यबलोदयाः ॥११॥
ब्रह्मधाम्नि कृतावासाः सर्वा द्वादशहायनाः ।
दिव्या मुक्तान्य इत्येता हरेर्मूर्तय एव ताः ॥१२॥
हर्षभिन्नाः सदा सेव्याः पूज्या मान्याश्च तत्तथा ।
यास्तु सन्तीश्वराणां वै लोकेषु भक्तयस्तु ताः ॥१३॥
तत्तद्धामनिवासास्तु वर्तन्तेऽसंख्यविग्रहाः ।
वेधसस्तु परे सत्ये लोकेऽन्नत्या वसन्ति ताः ॥१४॥
विविधोपासना दास्यो दास्य आज्ञाश्च या मताः ।
ता अपि तत्तन्निवासे स्वामिन्या सह सुस्थिताः ॥१५॥
दासीष्वाराधना तावत्साधनार्था भवत्यथ ।
पूजा सत्कारसत्प्रख्या विविधा सा मता ततः ॥१६॥
नीराजना भवेदारात्रिकं रक्षाकरं सदा ।
प्रदक्षिणा तु भक्तस्य दक्षिणे हरिवर्तनम् ॥१७॥
स्तुतिर्गुणगणाऽऽगानं स्तवनात्मकमीरितम् ।
समाधिस्तत्स्वरूपेऽस्यैकात्म्येन लीनवत्स्थितिः ॥१८॥
वन्दना चात्मनो भावो वाण्या बहिः प्रकाश्यते ।
धारणा श्रीहरौ ज्ञानवृत्तीनामेकतानता ॥१९॥
प्रार्थना स्वेष्टवस्तूनां वरणा सम्मता तथा ।
पुष्पाञ्जलिर्हृदः प्रेम पुष्पद्वारा प्रकाश्यते ॥२०॥
सिद्धयस्त्वणिमा चैव महिमा गरिमा तथा ।
लघिमा प्राप्तिः प्राकाम्यमीशिता वशिता तथा ॥२१॥
ऊहः शब्दस्तथाऽभ्यासो दुःखघातास्त्रयस्तथा ।
सुहृत्प्राप्तिश्चदानं च सिद्धयश्चापि सम्मताः ॥२२॥
तारा सुताराऽप्यथ तारतारा
रम्या प्रमोदाऽप्यथ मोदमाना ।
सदा तथा वै मुदिता सलीला
सिद्धिप्रकारा बहवो मता हि ॥२३॥
उपासना हरेरग्रे वासार्थं विमला कृतिः ।
आज्ञास्तत्र हरेच्छायारनुवृत्तेस्तु पालनम् ॥२४॥
सर्वा एतास्तु भगवन्मूर्तेर्वै प्रकटीकृताः ।
भगवता हरिणैव स्वात्मिका मोक्षदा मताः ॥२५॥
कन्यका अक्षताश्चैताः कल्याण्यः सर्वमंगलाः ।
स्मृतमात्राः प्रपन्नानां दिव्यदर्शनदाः स्मृताः ॥२६॥
जातमात्राश्च ताः सर्वास्तपो दिव्यं समाचरन् ।
लक्ष्यं तत्र हरिः स्वामी प्रसन्नः सर्वदा भवेत् ॥२७॥
तासां तु प्रेमतपसा हरिर्धामाधिपः प्रभुः ।
अत्यर्थं सुप्रसन्नोऽभूत् वराय प्रैरयच्च ताः ॥२८॥
ताभिर्वराः शुभाः प्राप्ताः सकाशाच्छ्रीहरेरिति ।
भक्तवाञ्छापूरकत्वमव्ययत्वं तथा सदा ॥२९॥
मूर्ताऽमूर्तस्वरूपत्वं साध्वीधर्मसुशीलनम् ।
कन्यकाऽक्षयभावत्वं हरीच्छारूपवर्तनम् ॥३०॥
सदा द्वादशवर्षत्वं भक्तिदासीत्वरक्षणम् ।
हरेर्भक्तेश्च यद्वासस्तत्र वासपरत्वकम् ॥३१॥
हरेर्मूर्तौ सदा वासो हरेः सामर्थ्यशालिता ।
अक्षरधामपर्यन्तं यथेष्टगतिमत्त्वकम् ॥३२॥
दिव्यनारीस्वरूपत्वमरजस्कत्वमित्यपि ।
मायापाशरहितत्वं नित्यमुक्तत्वमित्यथ ॥३३॥
महास्मृद्धिप्रदत्वं च सदा पावित्र्यमेव च ।
इत्येवं वरसंप्राप्त्या मोदन्ते मोदयन्ति ताः ॥३४॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने भक्तिदासीनामाराधनादिसिद्धयादीनामुद्देशादिनामा षड्विंशोऽध्यायः ॥ २६ ॥

**श्रीनारायण उवाच—**

अथापि श्रूयतां लक्ष्मि ! मूर्तयस्ते सनातनाः ।
सनातनस्वरूपे मे सदाऽभिन्ना मदात्मिकाः ॥ १ ॥
महालक्ष्मीश्च लक्ष्मीश्च रमा राधा सती तथा ।
वृन्दा च मातरश्चैव गंगाद्याः कन्यकास्तथा ॥ २ ॥
मया मदंगभूतास्ताः पृथक्कृत्वा स्वयं धृताः ।
सर्वदैता मदभिन्ना मद्वन्मोक्षप्रदा मताः ॥ ३ ॥
मन्मूर्तौ चाक्षरे धाम्नि श्रीहरौ सन्ति ऋद्धयः ।
महालक्ष्मीस्वरूपास्ता मयैव प्रकटीकृताः ॥ ४ ॥
तथा तत्रैव मन्मूर्तौ सन्ति याः स्मृद्धयः पराः ।
लक्ष्मीरूपा मया ता वै सर्वशः प्रकटी कृताः ॥ ५ ॥
तथा तत्रैव मन्मूर्तावस्ति या रमणीयता ।
मयैव सा पृथक्कृत्वा रमास्ताः प्रकटीकृताः ॥ ६ ॥
तथा तत्र च मूर्तौ मे सिद्धेच्छाश्च भवन्ति याः ।
तास्तु मयैव मन्मूर्तेः राधास्ताः प्रकटीकृताः ॥ ७ ॥
तथा तत्र च मन्मूर्तौ सत्ता या सार्वभौमिका ।
सतीरूपा मयैवेताः सर्वास्ताः प्रकटीकृताः ॥ ८ ॥
तथा मूर्तौ च मे तत्र सामर्थ्ये वरदानकम् ।
तत्सामर्थ्ये पृथक्कृत्य वृन्दाः सर्वाः प्रकाशिताः ॥ ९ ॥
तथा तत्र च मन्मूर्तौ पोषिकाः शक्तयस्तु याः ।
ताः पृथक्कृत्य सर्वा वै मातरः प्रकटीकृताः ॥१०॥

तथा मूर्तौ च मे तत्र द्रव्यः प्रेमरसात्मिकाः ।
ताः पृथक्कृत्य सर्वा वै गंगाद्याः प्रकटीकृताः ॥ ११ ॥
सर्वा अप्यरजस्कास्ताः सर्वाश्चाऽक्षतमध्यमाः ।
सर्वाः शाश्वततनवः सर्वा मन्मूर्तयः स्मृताः ॥१२॥
ममाक्षरे परे धाम्नि सन्ति मुक्तान्य एव ताः ।
ईशसृष्टौ च सर्वत्र सन्तीश्वराण्य एव ताः ॥१३॥
जीवलोके परे सत्ये सन्ति देव्यस्तु ताः स्त्रियः ।
तथा कार्यस्वरूपास्ता निवसन्ति स्तरे स्तरे ॥१४॥
महालक्ष्मीः स्मृद्धिरूपा लक्ष्मीः स्वर्णादिरूपिणी ।
रमा सम्पत्स्वरूपा च राधा सिद्धिस्तु कार्यजा ॥१५॥
वृन्दाऽऽशीर्वादसाफल्यं तुलसीरूपिणी तथा ।
सती साध्व्याः सत्सामर्थ्ये मातरः पुष्टिशक्तयः ॥१६॥
गंगा द्रवजलख्याता मुक्तिदास्ता हरेर्मताः ।
सरांसि पुष्करादीनि तत्प्रेमरसबिन्दवः ॥१७॥
क्षेत्राणि तु हरिद्वारनैमिषारण्यकानि च ।
हरेरक्षरधामांऽशप्रभवाणि भवन्ति हि ॥१८॥
तेषु क्षेत्रेषु पुण्येषु साध्व्यो दिव्या वसन्ति हि ।
पूर्यो ह्यक्षरधामस्थब्रह्मपूर्यंशजा मताः ॥१९॥
तत्र सर्वत्र लक्ष्म्याद्याः कुमार्यः प्रवसन्ति वै ।
दिव्यदृष्ट्या तु दृश्यन्ते दिव्यमुक्तिप्रदास्तु ताः ॥२०॥
नारीजन्म गृहीत्वा तु महालक्ष्म्यादयः क्वचित् ।
श्रेयःकर्त्र्यः कुमार्यस्ता जायन्ते गृहमेधिषु ॥२१॥
साध्व्यो भवन्ति चाऽऽबाल्यात्कुमार्योऽक्षतयोनयः ।
दीक्षितास्तु भवन्त्येता योगिन्यो योगसाधिकाः ॥२२॥
काश्चित्सन्यासमालम्ब्य सन्यासिन्यो भवन्ति हि ।
काश्चिद्रागविनाशेन वीतरागिण्य इत्यपि ॥२३॥
काश्चित् सांख्यविचारेण ब्रह्मयोगेन चैव हि ।
भवन्ति सांख्ययोगिन्यो ब्रह्मचर्यपराः सदा ॥२४॥
नैष्ठिकब्रह्मचारिण्यः सृष्टौ भवन्ति मोक्षदाः ।
शुद्धाश्चाग्निस्वरूपास्ता ब्रह्माण्यस्तारयन्ति नॄन् ॥२५॥
शीलव्रतधराः साध्व्यः सूर्यवर्चस्वकान्तयः ।
चन्द्रशान्तिमयाऽऽस्यास्तास्तापत्रैविध्यनाशिकाः ॥२६॥
दर्शनाद् दुःखनाशिन्यः सेवनात्सुखकारिकाः ।
वन्दनाद्विषहारिण्यः श्रवणाच्छुद्धताप्रदाः ॥२७॥
कीर्तनात्काम्यफलदाः स्मरणात् स्मरहारिकाः ।
अर्चनादर्चिमार्गं तु नयन्त्यो मुक्तिदाश्च ताः ॥२८॥
दास्याद् दासत्वदात्र्यस्ताः सख्यात्सखित्वलंभिकाः ।
आत्मनिवेदनाद् भक्तं हर्यात्मनि निवेशिकाः ॥२९॥
भोजनाच्छादनवस्त्रवस्तुसामग्रिकार्चिताः ।
श्रीहरेरक्षरं धाम प्रापयन्ति हरेर्बलात् ॥३०॥
पादगात्रादिसंवाहाद् वाहयन्ति हरेः पदम् ।
तत्तदिष्टविधानाद्वै भक्तः स्वेष्टं लभेत वै ॥३१॥
काषायाम्बरधारिण्यो हर्यर्थे प्रीतिबन्धनाः ।
ब्रह्मार्थं ब्रह्मचारिण्यो नैष्ठिक्यो हरिनिष्ठया ॥३२॥
मुक्तान्यो मुक्तिनिधनाद् ब्रह्माण्यो ब्रह्मसंभवात् ।
मोक्षाण्यो मोक्षमूर्तित्वाद् ब्राह्म्यो ब्रह्मसमर्पणात् ॥३३॥
सत्यः सतीत्वसंतत्या साध्व्यः साधुगुणाश्रयात् ।
देव्यो दिव्यदशाप्राप्तेर्गुर्व्यो ज्ञानोपदेशनात् ॥३४॥
दास्यो दासीसदाचारात् ब्रह्मदास्यस्तु ता मताः ।
ईश्वराण्यस्तु ता बोध्या परमेश्वरसंश्रयात् ॥३५॥
पत्न्यस्तास्तु हरेः पातुर्लाभाद् बोध्याः पतिव्रताः ।
पतितस्य परंधाम नायनात् पत्न्य इत्यपि ॥३६॥
स्त्रियः संत्राणनाद् बोध्या नार्यो नॄहरिप्रापणात् ।
सम्राज्ञ्यो राजराजाधिराजहर्यैकवेशनात् ॥३७॥
त्यागिन्यस्त्यजनात्प्रोक्ताः स्वामिन्यः स्वीयताऽर्पणात् ।
मुण्डिन्यो ब्रह्मकेशानां हर्यर्थे मुण्डनादिति ॥३८॥
आचार्याण्यश्च ताः प्रोक्ता आचाराणां प्रवर्तनात् ।
आखाल्यश्च ताः प्रोक्ता हरेः शब्दस्य लापनात् ॥३९॥
लिङ्गिन्यश्चापि ताः प्रोक्ता लीनार्थहरिगामनात् ।
अवधूत्यश्च ताः प्रोक्ता मायाया अवधूननात् ॥४०॥
भगवत्यश्च ताः प्रोक्ताः षड्भगैश्वर्यलंभनात् ।
मातरश्चापि ताः प्रोक्ता मुक्तेर्मानप्रदापनात् ॥४१॥
दीक्षिताण्यश्च ताः प्रोक्ता ज्ञानदानाऽघसंक्षयात् ।
अबला अपि ता बोध्या अस्य विष्णोर्बलाश्रयात् ॥४२॥
आर्ष्यस्तास्तु सदा बोध्याः ऋषिवेदादिसंश्रयात् ।
आर्यास्तास्तु परा बोध्या हरेरारात्तु यापनात् ॥४३॥
नारायण्यश्च ता बोध्या नॄन् नारायणयापनात् ।
हरिण्यश्चापि ता बोध्या हरिं नयति चाश्रितान् ॥४४॥
श्रियश्चापि तथैव स्युः श्रीहरेः श्रयणादिति ।
साध्व्यस्तास्तु सदा दिव्याः प्रसंगाद् दिव्यताप्रदाः ॥४५॥
मूर्तिस्तासां परा दिव्या नारायणनिवासनात् ।
हरेर्दीक्षां समापन्ना हर्यङ्कन्निषादनाः ॥४६॥
हरेः प्रतीक्षां कुर्वन्त्यो हरेर्धाम प्रयान्ति ताः ।
नयन्ति सहमान् जीवानाश्रितान् भक्तिमार्गगान् ॥४७॥
तास्तु साध्व्यः सदा सेव्या नरदेवेश्वरादिभिः ।
नारीभिस्तु सदा सेव्याः पूज्या वन्द्याश्च भक्तितः ॥४८॥

भगवान् श्रीहरिर्देवो राजते तन्मयः सदा।
साध्वीषु तत्र संराजे सदाऽहं दिव्यमूर्तिकः ॥४९॥
साध्व्याः रूपं च भावं च धर्मं चाऽऽकृतिमेव च।
गृहीत्वाऽहं सदा राजे साध्वीषु मूर्तिमान् स्वयम् ॥५०॥
साध्व्यो मत्तो न वै भिन्ना न मे न्यूना न भूतजाः।
माणिक्यो न च विज्ञेया मम रूपास्तु ता यतः ॥५१॥
अणुमात्रमपि तासां गात्रं न मायिकं स्मृतम्।
तासां गात्रं तु मद्गात्रं मम मूर्तय एव ताः ॥५२॥
रूपलावण्यसौन्दर्याकर्षणामृतमिष्टताः ।
माधुर्यहृद्यतासौम्यसान्त्वनाशीततादयः ॥५३॥
नम्रताऽधीनतासेवाप्रश्रयाश्रयतृप्तताः ।
दैन्यसारल्यसौजन्यवात्सल्यमृदुतादयः ॥५४॥
आरामस्नेहकौशल्यसहिष्णुत्वाऽनुगामिताः ।
श्रद्धाविश्वाससत्यार्थममतारक्षणादयः ॥५५॥
दानपोषणसर्वस्वार्पणालम्बनमित्रताः ।
धृत्याधानसुहृद्वृत्तिसुखदुःखसमानताः ॥५६॥
सहनद्रवताभक्तिसेवानुवृत्तिकीर्तयः ।
प्रशंसागुप्तिगांभीर्यौदार्यलज्जादयो गुणाः ॥५७॥
सर्वे मदीया मन्मूर्तौ मया ताभ्यः समर्पिताः।
अहं सर्वान् गुणान् दत्वा साध्वीष्वेव वसामि यत् ॥५८॥
तासां प्रसन्नता याभिर्लब्धा सा मामकी मता।
सांख्ययोगिन्य एवैताः साध्व्यः साधुगुणालयाः ॥५९॥
अज्ञानपापनाशिन्यः प्रदायिन्योऽमृतस्य च।
श्रीहरेरधिकारिण्यो मान्या मद्वत् त्वया प्रिये ॥६०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुग-
सन्ताने नारायणमूर्त्यात्मकमहालक्ष्म्यादि-
साध्वीनां बहुविधनामनिरुक्त्यादिनिरू-
पणनामा सप्तविंशोऽध्यायः ॥२७॥

**श्रीनारायण उवाच—**

मदीयास्तु गुणास्तासु दिव्या वसन्ति सर्वदा।
तान्गुणान्सार्थकान् तुभ्यं कथयामि शृणु प्रिये ॥ १ ॥
सर्वभूतहितो भावः सत्यं तत्र प्रकीर्तितम्।
हेयप्रतिभटत्वं तु शौचं तत्र प्रकीर्तितम् ॥ २ ॥
परदुःखनिराकारो दया तत्र प्रकीर्तिता।
अपराधसहिष्णुत्वं क्षमा तत्र प्रकीर्तिता ॥ ३ ॥
स्वार्थेऽप्यनादरस्त्यागः सन्तोषः पूर्णकामता।
आर्जवं सर्वलोकेषु सारल्यं संप्रकीर्तितम् ॥ ४ ॥
शमः क्लेशाऽपरिभवो दम इन्द्रिययन्त्रणम्।
तप इच्छानिरोधः स्यात् साम्यं सर्वाऽविशेषता ॥ ५ ॥
तितिक्षा सहनैश्वर्यं श्रुतं शास्त्रार्थवेत्तृता।
विरामस्तु प्रयत्नस्याऽनुद्भवः परिकीर्तितः ॥ ६ ॥
ज्ञानं तत्त्वयथावत्तापरिचय इति स्मृतम्।
वैराग्यं सर्वथा रागशून्यत्वं परिकीर्तितम् ॥ ७ ॥
ऐश्वर्यं तु नियन्तृत्वं सर्वेशनस्वभावता।
शौर्यं स्वभावविजयस्तेजोऽप्रधृष्यतामता ॥ ८ ॥
बलं देहात्मसामर्थ्यं स्मृतिर्भानं तु शाश्वतम्।
स्वातन्त्र्यं चाऽपराधीनमन्याऽनपेक्षमीरितम् ॥ ९ ॥
कौशलं सर्वकार्येषु नैपुण्यं परिकीर्तितम्।
कान्तिः सर्वमनोहारि सौन्दर्यं सहजं मतम् ॥१०॥
धैर्यं तु विषमप्राप्तावव्याकौल्यं सुसम्मतम्।
मार्दवं तु स्वभावस्याऽकाठिन्यं सर्वथा मतम् ॥११॥
प्रागल्भ्यं प्रतिभोन्मेषाऽगाधता परिकीर्तिता।
प्रश्रयो विनयो बोध्यः शीलं वृत्तेस्तु शुद्धता ॥१२॥
सहस्तु सर्वथा प्रत्यापत्तेर्वै परिपाचनम्।
ओजः कार्यसमारंभे तत्सिद्ध्यान्तरतेजनम् ॥१३॥
भगो ज्ञानप्रकाशादेरुत्कर्षः सर्वदा मतः।
गाम्भीर्यं तदभिप्रायेऽप्यगाधत्वं प्रकीर्तितम् ॥१४॥
कीर्तिर्लोकजनैर्गीतयशःपात्रत्वमुच्यते ।
मौनं प्रलापराहित्यं स्थैर्यंचाञ्चल्यशून्यता ॥१५॥
आस्तिक्यं त्वाप्तवाक्यार्थविश्वासः संप्रकीर्तितः।
गुणाभिमानराहित्यमगर्वः खलु सम्मतः ॥१६॥
दूरहंकारशून्यत्वमममानित्वं तु सम्मतम्।
अदंभित्वं वञ्चकत्वफलाऽश्राव्यसुवर्तनम् ॥१७॥
मिताहारो यथापेक्षतृप्तिसाधनग्राह्यता ।
दक्षता भग्नकार्याणां पारदर्शित्वमीरितम् ॥१८॥
मैत्री सर्वतनुभृतां विश्वासाधारता मता।
उपकारः प्रतिलाभाऽनपेक्षप्रसहायता ॥१९॥
अद्रोहस्तु कथंचिद्वै परपीडाविवर्जनम्।
मानदत्वं यथायोग्यं सर्वसत्कारकारिता ॥२०॥
षडूर्मिविजयः प्रोक्तः सर्वथा षड्विजेतृता।
क्षुधा तृषा शोकमोहौ जरामृती षडूर्मयः ॥२१॥
शरणागतपालत्वं शरण्यत्वं प्रकीर्तितम्।
तृष्णातन्तुरहितत्वमनीहत्वं तु कीर्तितम् ॥२२॥

यथापेक्षाऽधिकाऽग्रहश्चाऽपरिग्रह उच्यते ।
सेवनं सर्वथा चैव पोषणं प्राणिनां च वै ॥२३॥
गुणा ह्येताः सदा सन्ति श्रीहरौ ते च मोक्षदाः ।
भक्तैर्ग्राह्या भवेयुस्ते हरेरुपास्तिवेगतः ॥२४॥
तैरेव सद्गुणैर्युक्तः साध्वीषु निवसाम्यहम् ।
ततः साध्व्यः सदा पूज्याः पवित्राः पंक्तिपावनाः ॥२५॥
मत्पुत्र्यः सांख्ययोगिन्यः सत्यः साधुगुणाश्रयाः ।
कुमार्यः सत्यसंकल्पाः स्वप्रपन्ना स्त्रियस्तु याः ॥२६॥
प्रापयन्ति परंधाम सुखयन्ति च तास्तथा ।
ह्लादयन्ति हरेर्मूर्तावर्पयन्ति च ता मयि ॥२७॥
मम कार्यस्य करणान्मम साधुनिषेवणात् ।
मदंशुकस्य धरणान्मत्तो न्यूना न ता मताः ॥२८॥
अक्षरे परमे धाम्नि योगैश्वर्याणि यानि मे ।
तानि मया पृथक्कृत्वा योगिन्यः प्रकटीकृताः ॥२९॥
तास्त्वनन्ताः सदा दास्यो मत्स्वरूपा भवन्ति वै ।
सर्वलोकेषु दिव्यास्ता विचरन्ति मदाज्ञया ॥३०॥
दिव्या दिव्यचमत्काराः सदा द्वादशहायनाः ।
अयोनिजाः सदा सत्ये ब्रह्मलोके वसन्ति ताः ॥३१॥
आतिवाहिक्य एतास्तु देवताः परिकीर्तिताः ।
ता एव मुक्तिमार्गे तु नयन्ति मुक्तिभागिनम् ॥३२॥
असंख्यातास्तु विज्ञेया देशकालार्हशक्तयः ।
यत्र यादृग् भवेत् कार्यं तत्र कुर्वन्ति तादृशम् ॥३३॥
मन्मूर्तौ यस्तु सन्न्यासो गुणो भवति सर्वथा ।
तद्गुणं तु पृथक्कृत्य सन्न्यासिन्यस्ततः कृताः ॥३४॥
ता अपि दिव्यरूपास्तु सृष्टौ चरन्ति नित्यशः ।
दिव्या द्वादशवार्षिक्यो मुक्तिं नयन्ति देहिनः ॥३५॥
मन्मूर्तौ यस्तु वैराग्यः पृथक्कृत्वा च तद्गुणम् ।
तस्मान्मदिच्छया वीतरागिण्यः प्रकटीकृताः ॥३६॥
बाला द्वादशवार्षिक्यो दिव्यामुक्तिप्रदापिकाः ।
यथाऽहं शाश्वतो वर्ते तथा शाश्वत्य एव ताः ॥३७॥
तथा तत्राऽक्षरे धाम्नि मन्मूर्तौ सांख्यवेदनम् ।
तद्वद्योगसु सामर्थ्ये वर्तते ह्युभयं तु तत् ॥३८॥
पृथक्कृत्वा ततो दिव्याः कन्यका द्वादशाब्दिकाः ।
सौम्या उत्पादिता रम्या मत्सारूप्यसमन्विताः ॥३९॥
सर्वात्मरससंपूर्णाः सर्वानन्दपरिप्लुताः ।
अप्राप्तयौवनोद्भेदाः सर्वपुष्टिमयाऽङ्गनाः ॥४०॥
एतास्तु सांख्ययोगिन्यः सर्वथा ब्रह्मभावनाः ।
सर्वदा ब्रह्मदेहास्ता सर्वब्रह्म मया यतः ॥४१॥
तास्तु दिव्यस्वरूपेण चरन्ति सर्वसृष्टिषु ।
मोचयन्ति सदा जीवानीश्वरान्वा तमोऽन्तरात् ॥४२॥
यदा तु क्वापि नारीणां गर्भात्प्रादुर्भवन्ति ताः ।
तदा चिह्नानि तासां तु भवन्ति करपादयोः ॥४३॥
दैवीचिह्नैस्तु विज्ञेया आश्रेयाश्च मुमुक्षुभिः ।
चिह्नानि तानि संवक्ष्ये शृणु लक्ष्मि ! ममाग्रतः ॥४४॥
मध्ये तु स्तनयोर्यासां हृदि नारायणस्य वै ।
चरणोर्ध्वतिलकाख्यपुँड्ररेखा भवन्ननु ॥४५॥
नाभ्यधोजघने भागे भवेत्स्वर्णसुपिंगला ।
बाणाकृतिसमारेखा ललाटे मुकुटाकृतिः ॥४६॥
गण्डे तु दक्षिणे चाथ ललाटे मध्यदेशके ।
शोणबिन्दुर्भवेच्चापि सुदर्शनसमस्तथा ॥४७॥
उरसि यच्चतुर्हस्तविष्णुरेखा तु संभवेत् ।
यस्या वामे भुजबन्धे गदाचिह्नं तु संभवेत् ॥४८॥
वामसक्थिन तु यस्याः स्यात्पदुकाचिह्नमग्रतः ।
हृदये वैजयन्त्याश्च रेखा यस्यास्तु पौरटी ॥४९॥
कमलं तु करे धृत्वा हस्तिर्यस्याः करे भवेत् ।
लक्ष्मीः स्वयं तु विज्ञेया कन्या मानुषरूपिणी ॥५०॥
अथान्यान्यपि चिह्नानि स्वाभाविकानि वर्णये ।
यासां पदे करे वा ता ज्ञेया नारायणांगनाः ॥ ५१ ॥

इति श्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुग-
सन्ताने भगवद्गुणात्मकदिव्यसाध्वीनां दैवी-
चिह्नप्रदर्शननामाऽष्टाविंशोऽध्यायः ॥२८॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! प्रवक्ष्यामि चिह्नानि तव पादयोः ।
यदा जन्म भवेल्लोके तदा बोध्या जनैस्तु तैः ॥ १ ॥
दक्षिणे तु पदेऽङ्गुष्ठमूलाऽधः फणके वरम् ।
शंखचिह्नं तु सम्बोध्यं, तथाऽङ्गुल्योस्तु मूलके ॥ २ ॥
विमानचिह्नं फणके, कनिष्ठामूलसन्निधौ ।
नौकाचिह्नं, तथा शंखाऽधोगदाचिह्नमित्यपि ॥ ३ ॥
मकराकारचिह्नं च, ततोऽधः शिखरं भवेत् ।
ततः पार्ष्णौ मत्स्यरेखा, मध्ये ताम्बूलवल्लिका ॥ ४ ॥
तत्र वामेऽङ्गुष्ठमूले यवचिह्नं प्रकीर्तितम् ।
तदधस्तु महाँस्तत्र प्रासादः परिकीर्तितः ॥ ५ ॥
तदधस्तु भवेच्छत्रम्, ऊर्ध्वरेखा तु शाश्वती ।
अंगुल्योर्मूलके तत्र कमलं फणके मतम् ॥ ६ ॥

तदधस्तु ध्वजरेखा, तत्पार्श्वेऽकुशमुच्यते ।
ततोऽधः कुमुदं, पार्श्वे श्रीफलं, कलशस्तथा, ॥ ७ ॥
ततोऽधः स्थलकमलं, पार्ष्णौ द्वितीयचन्द्रमाः ।
दशचक्राणि पूर्णानि स्वर्णरेखा फणोपरि ॥ ८ ॥
अंकान्येतानि मे लक्ष्मि ! दृश्यन्ते तु यदा तदा ।
श्रीलक्ष्म्याख्यं परंब्रह्म तद्विज्ञेयं न संशयः ॥ ९ ॥
द्वयं वाथ त्रयं वापि चत्वारि पञ्च वा यदा ।
दृश्यन्ते चरणे देवि ! तवांशा मानुषी मता ॥१०॥
ललाटे पौरटो हारः, स्वर्णरेखा च बिन्दुकः ।
दक्षे कपोलके रक्तबिन्दुश्चिबुकबिन्दुकः ॥११॥
दक्षस्तने हस्तरेखा, वामे स्तने तु चक्रकम् ।
कंठे तु पौरटो हारश्चोरस्यहं चतुर्भुजः ॥१२॥
योनेरुपरि सधनुःकामदेवस्य चिह्नकम् ।
सक्थ्नोः कुमुदयो रेखे, स्वस्तिको दक्षिणे करे ॥१३॥
ध्वजो मत्स्यश्च वंशी च धनुश्चाऽप्यथ मत्स्यकः ।
कलशश्चेति बोध्यास्ता नारायणांशकन्यकाः ॥१४॥
एकं वाऽथ द्वयं वापि तदधिकं तु वा पुनः ।
चिह्नं च दृश्यते बोध्या ब्रह्मावतारकन्यकाः ॥१५॥
नारायणो यदा श्रीमान्नररूपेण मानवः ।
तदा तद्दक्षिणे हस्ते ध्वजवज्राब्जवेणवः ॥१६॥
स्वस्तिकश्च धनुर्बाणौ त्रिशूलं मत्स्यकस्तथा ।
पद्मं शंखस्तथा चक्रं सूर्यो हस्तिर्मयूरकः ॥१७॥
एकं द्वयं त्रयं वा मेऽवतारे तु ध्रुवं भवेत् ।
हृदये स्वर्णरेखात्मलक्ष्मीचिह्नं शुभं भवेत् ॥१८॥
उरसि चर्मणि स्वर्णहाररेखा शुभा भवेत् ।
उदरे त्रिवलीरेखा लम्बमाना भवेन्ननु ॥१९॥
लिंगे कृष्णो भवेद्बिन्दुर्ललाटे तिलकं भवेत् ।
रेखाऽप्येका ललाटस्य प्रान्तद्वयप्रसारिणी ॥२०॥
वामे सक्थ्नि भल्लवेक्ष्म पाण्डुलं पटरं महत् ।
दक्षजंघोपरि कृष्णबिन्दुस्तु संभवेत् तथा ॥२१॥
गुल्फत्रिकं भवेत्तस्य पादयोस्तु द्वयोः शुभम् ।
शरीरं स्वर्णवर्णं तद्रम्यं सौन्दर्यशोभितम् ॥२२॥
राजीवप्रेमभृन्नेत्रे रक्तप्रान्ते दयायुते ।
भ्रूकुट्याः सकटाक्षे सुवक्रभंगतरंगके ॥२३॥
स्वस्तिकध्वजयवांकुशदण्डा अष्टकोणपविजंबुकजानि ।
अर्धचन्द्रघटगोष्पदखानि सत्रिकोणशफरेन्दुधनूंषि ॥२४॥
दक्षिणे पत्तले तानि स्वस्तिकादीन्यथो नव ।
वामे तलेऽर्धचन्द्राद्या रेखाः सप्त भवन्ति वै ॥२५॥

एकं द्वयं त्रयं वापि दृश्यते यस्य सोऽच्युतः ।
अवतारो हरेरेव भगवान् हरिरंशजः ॥२६॥
निर्लेपः स तु विज्ञेयः पापतापप्रणाशकः ।
स्त्रीधनादिमहाभोगेऽप्यनिर्बाध्यः स वै प्रभुः ॥२७॥
मायायां वर्तमानोऽपि मायां दिव्यां करोति सः ।
स्वयोगं तु समायातान् पावयत्यतिपापिनः ॥२८॥
कामात् क्रोधाद्भयाल्लोभान्मत्सरात्तं भजन्ति ये ।
तत्प्रतापात्तु ते सर्वे मुक्तिं यान्त्यपुनर्भवाम् ॥२९॥
स्वस्थद्रव्याणि संदग्ध्वा वह्निस्तिष्ठत्यलेपकः ।
सर्वकर्माणि संदग्ध्वा कृष्णस्तिष्ठत्यलेपकः ॥३०॥
वह्नौ मलिनधात्वादि निपत्याऽच्छं भवेद् यथा ।
हरौ मलिनकामादि समर्प्याऽच्छं भवेत्तथा ॥३१॥
अप्रमेयसमर्थस्य स्वभावाऽच्छस्य वै हरेः ।
सम्बन्धात्तु नरा नार्यः शुद्ध्यन्त्यंशात्मकप्रभोः ॥३२॥
करयोर्मध्यांगुल्योस्तु शंखौ यस्य स्त उत्तमौ ।
अन्यासु षट्सुचक्राणि तथैवांगुष्ठयोरपि ॥३३॥
चक्रे द्वे प्रान्तभागेषु स स्याद्वै भगवान् स्वयम् ।
हस्तौ तौ पद्मसंज्ञौ वै वामे करतले तथा ॥३४॥
मध्ये लम्बा चोर्ध्वरेखा यस्य स्यात् भगवान् हि सः ।
यत्र हस्तं दधात्येषस्त्वक्षयं जायते हि तत् ॥३५॥
उक्तचिह्नान्यतमादिचिह्नयुक्तस्तु देहयम् ।
नारीरूपो नररूपो गृही त्यागी च वा भवेत् ॥३६॥
सोऽहं नारायणः साक्षान्नृनाट्यं विदधन् सदा ।
अज्ञवद्वर्तमानोऽपि सर्वानुद्धारयाम्यहम् ॥३७॥
दर्शयामि क्वचित् किञ्चित्स्वल्पमैश्वर्यमेव तत् ।
भक्तकार्यार्थमित्येव न ममोत्कर्षसिद्धये ॥३८॥
लौकिकास्तु जनाः पापाः स्वार्थस्यैव तु साधकाः ।
स्वार्थं संसाध्य गच्छन्ति दूरे मत्तोऽघकारकाः ॥३९॥
दर्शयामि न वै तस्माच्चमत्कारं तु कंचन ।
सत्या भक्तास्तु वै चमत्कृतिं विनापि यान्ति माम् ॥४०॥
शास्त्रप्रोक्तेन चिह्नेन निश्चितो भगवाँस्तु यैः ।
चमत्कारो न तैः कांक्ष्यो दोषा ग्राह्या न वैकृताः ॥४१॥
अंशावतारः कृतसर्वकार्यः
संपश्यति घ्राति विहन्ति भुंक्ते ।
निद्राति चाऽऽश्लिष्यति चुम्बतीति
सम्मेहतीशं पिबतीति दिव्यम् ॥४२॥
अष्टचक्रकरः स्वामी कोटिस्त्रीणां पतिर्भवेत् ।
राजाधिराजलक्ष्म्या संसेव्यते राजवद्धि सः ॥४३॥

सर्वज्ञव्यासरूपोऽयं सर्वविद्यादिवारिधिः ।
बृहस्पत्यधिकः साक्षाद् भगवान् मानवोऽपि सः ॥४४॥
मया लक्ष्मि ! कथितानि चिह्नान्यालोक्य निश्चयात् ।
नारायणीं हरिं वापि ज्ञात्वा प्रपत्तिमाचरेत् ॥४५॥
सेवेत सर्वभावेन सर्वस्वार्पणमाचरेत् ।
भक्त्या प्रीत्या च रत्या च मोक्षभाक् स द्रुतं भवेत् ॥४६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुग-
सन्ताने नारायणावतारनरनारीणां
दिव्यचिह्नादिनिरूपणनामा
एकोनत्रिंशोऽध्यायः ॥२९॥

**श्रीलक्ष्मी रुवाच—**

दयालो परमानन्द देवदेव कृपानिधे ! ।
अपूर्वं कथ्यते सर्वं ब्रह्मणः परिचायकम् ॥ १ ॥
पुरुपुण्येन कृपया श्रोतुमेतद्धि लभ्यते ।
विना त्वां कः समर्थो वै देवचिह्नविवेचने ॥ २ ॥
नारीरूपे नृरूपे वा सचिह्नस्तु यदा भवान् ।
प्राप्यते प्रजया तर्हि भवेत्तासां तु मोक्षणम् ॥ ३ ॥
भाग्यहीनप्रजानान्तु कथं स्यात्तव सन्निधिः ।
साक्षान्न प्राप्यते यावत्तावन्नेयाद्धिमोक्षणम् ॥ ४ ॥
सन्तः साध्व्यश्च वा लोके सर्वेषां गृहमेधिनाम् ।
विकटेषु निवासेषु कथं गच्छेयुरादरात् ॥ ५ ॥
सतां वा सुसतीनां च नैरपेक्ष्याच्च सर्वतः ।
गृहस्थानां न लाभः स्यात्कथं मोक्षो भवेदिति ॥ ६ ॥
युगभेदाच्च गार्हस्थ्यं बहुधा वञ्चनायुतम् ।
अनाचाराऽऽनृताऽधर्मकापथ्यादिप्रवर्धितम् ॥ ७ ॥
कुटुम्बपोषणाऽसक्तं लुब्धं दुर्वृत्तमेव च ।
परघातकरं स्वार्थसाधकं मलिनान्तरम् ॥ ८ ॥
बह्वाऽऽयासाऽल्पभोग्यं च प्रातिपदिकवञ्चनम् ।
अपत्यान्नधनवस्त्रवाहनाऽऽवरितं सदा ॥ ९ ॥
अर्जनक्लेशसंघृष्टं व्यापृतं चाऽप्यहर्निशम् ।
कामाद्यर्थपराकृष्टं कथं मुक्तिं व्रजेदिति ॥१०॥
साधुसंगविहीनं तत्सत्कार्यविधुरं तथा ।
येन गृहस्थकौटुम्बं यायान्मुक्तिं च तद्वद ॥११॥

**श्रीनारायण उवाच—**

सत्यमुक्तं त्वया लक्ष्मि ! पुण्यहीननरस्य तु ।
प्राप्तोऽपि साधुसंगो वै दूरे गच्छत्यभाग्यतः ॥१२॥
ससूया चाप्यविश्वासो ह्यश्रद्धा भावहीनता ।
नास्तिक्यं स्वीयसर्वाऽन्यश्रेष्ठत्वाभिमतिः सदा ॥१३॥
सर्वथा सर्वदा दोषमात्रदर्शित्वमप्युत ।
अत्यर्थं च महत्तासत्कारमानेषणाः सदा ॥१४॥
अज्ञानित्वं च मूर्खत्वं दंभित्वं तामसात्मता ।
निन्दकत्वं चाऽऽसुरत्वं वैरं पापचयस्तथा ॥१५॥
पुण्याशीर्वादहीनत्वं दैवीसम्पद्वियोगिता ।
दोषा ह्येते सदा स्वस्य घ्नन्ति साधुसमागमम् ॥१६॥
पुण्येन लभ्यते पत्नी तपसा लभ्यते पतिः ।
दानेन लभ्यते पुत्रः स्मृद्धिर्दक्षिणयाऽऽप्यते ॥१७॥
दीपेन लभ्यते चक्षुर्घृतेनाऽऽयुर्हि लभ्यते ।
रसैस्तु लभ्यते धातुः शास्त्रेण ज्ञानमाप्यते ॥१८॥
यत्नेन लभ्यते सिद्धिर्विद्याऽभ्यासेन लभ्यते ।
यज्ञेन लभ्यते स्वर्गं पत्न्या संप्राप्यते रतिः ॥१९॥
धर्मेण प्राप्यते सौख्यं स्त्रीभिर्वंशो ह्यवाप्यते ।
सत्कार्येणाऽऽप्यते कीर्तिर्भक्त्या प्रसन्नताऽऽप्यते ॥२०॥
सेवया साध्यते स्वामी लुब्धो द्रव्येण साध्यते ।
क्षुधितः साध्यते भोज्यैर्मानी मानेन भज्यते ॥२१॥
शंसया पत्यते गर्वी वीरो वेगेन पत्यते ।
तेन तेन कृतेनापि नाऽऽप्यते सत्समागमः ॥२२॥
सर्वेषां दुर्लभः साध्वि ! सत्समागम ईरितः ।
तेषां तु भाग्यहीनानां स्वार्थार्थं गृहमेधिनाम् ॥२३॥
रक्षणार्थं च मोक्षार्थं परलोकार्थमेव वा ।
मन्मूर्तिस्थाऽऽत्मनिवेदित्वं वै संकृश्य मत्पृथक् ॥२४॥
पातिव्रत्यं मया सृष्टं दिव्यं सर्वार्थसाधकम् ।
पत्युर्नार्या कृता सेवा पातिव्रत्यमिहोच्यते ॥२५॥
पातिव्रत्यात्मिका सेवा कन्यारूपा बभूव ह ।
स्वर्गमोक्षौ करे धृत्वा पुण्यान्याधाय पादयोः ॥२६॥
देवांस्तु शरीरे धृत्वा यज्ञान् योनौ विगुह्य च ।
पत्तले सर्वतीर्थानि सक्थ्नोस्तु कल्पपादपान ॥२७॥
कुचयोः कामधेनूश्च हृदि चिन्तामणिं तथा ।
पुण्यवल्लीस्तु केशेषु शशिसूर्यौ च नेत्रयोः ॥२८॥
धर्मं सवंशं मनसि वाचि सिद्धीस्तु यावतीः ।
धृत्वा मस्तककेशेषु पुरुषार्थचतुष्टयम् ॥२९॥
कर्णयोर्दिक्प्रपालाँश्च ललाटे यावदीश्वरान् ।
आत्मनि श्रीहरेः सर्वानवतारान् सुगृह्य च ॥३०॥
जिह्वायां सत्युगं धृत्वा कुक्षावानन्दमित्यपि ।
ओष्ठयोरर्चिधूम्राख्यौ मार्गौ धृत्वा सुशोभनौ ॥३१॥

रम्या दिव्या सुप्रकाशा तेजःपरिधिमण्डिता ।
विकसद्यौवनस्तनी पूर्णा द्वादशहायना ॥३२॥
रत्युद्भवदशापन्ना द्रवाऽनाप्तरजस्वला ।
सूक्ष्मरोमावलीस्वर्णा कामसौन्दर्यहारिणी ॥३३॥
सलज्जा सत्यवृत्त्याढ्या नारायणसरूपिणी ।
अक्षता शाश्वती देवी वरार्हा गूढचंचला ॥३४॥
पातिव्रत्याह्वया साध्वी सती बद्धकराञ्जलिः ।
नत्वा हरिं स्थिता चाग्रे प्रार्थयामास देशनाम् ॥३५॥
आज्ञापय हरे स्वामिन्नारायण जगद्गुरो ! ।
किमर्थं चाऽहमुत्पन्ना किं कार्यं च ममेष्यते ॥३६॥
नारायणोऽप्यहं तां तु योजयामास सर्वथा ।
नारीवर्गेण साकं वै त्वया स्थेयं तु सर्वदा ॥३७॥
राधायां च रमायां च लक्ष्म्यां श्रीषु सतीषु च ।
ईशासु जीवनारीषु साध्वीषु मुक्तिदासु च ॥३८॥
नारीसृष्टिषु सुभगे ! सर्वदा वस भामिनी ।
संविवाहितदम्पत्योर्गृहे जायासु संवस ॥३९॥
तव वासात्कुटुम्बं तन्मलिनं पापकृच्च वा ।
शुद्धं सत्स्वर्गमोक्षाख्यान् लोकान् यास्यत्ययत्नतः ॥४०॥
याभिराराध्यते त्वं तु तत्र स्थेयं त्वयाऽपि च ।
सहस्रयज्ञकृद्गेहे त्वया स्थेयं सदाऽनघे ॥४१॥
पित्रोस्तु सेविनो गेहे त्वया स्थेयं सदाऽनघे ।
ब्रह्मात्मवेदिनो गेहे त्वया स्थेयं सदाऽनघे ॥४२॥
आत्मनिवेदिभक्तस्य गेहे स्थेयं त्वयाऽनघे ।
षट्कर्मकृद्भूदेवस्य गृहे स्थेयं त्वयाऽनघे ॥४३॥
नैष्ठिकव्रतसाध्व्यास्तु तनौ स्थेयं त्वयाऽनघे ।
देहे सदा सांख्ययोगिनीनां स्थेयं त्वयाऽनघे ॥४४॥
योगारूढासु साध्वीषु देहे स्थेयं त्वयाऽनघे ।
यासां न साग्निकः स्वामी तासां पतिरहं मतः ॥४५॥
वैधव्यधर्मनारीषु सदा स्थेयं त्वयाऽनघे ।
त्वया मम प्रतापेन लोका नेया पदेऽक्षरे ॥४६॥
ओमित्यङ्गीचकारैषा प्रार्थयत्पुनरेव तम् ।
प्रतिव्यक्तिशरीरं मे रूपं भिन्नं भवेदिति ॥४७॥
नाऽन्यथा मम सर्वासु साध्वीष्वाप्तिः प्रसंभवेत् ।
तथाऽस्त्विति हरिः प्राह ततोऽनन्तस्वरूपिणी ॥४८॥
पातिव्रात्या च सा कन्या भूत्वा भूत्वा प्रवेशिता ।
यत्र यत्राऽर्पिताऽऽवासा तत्र सर्वत्र संगता ॥४९॥
नैकसृष्टिषु नारीषु नैकात्मा साऽभिवर्तते ।
सकामेभ्यस्तु सुस्वर्गान् अकामेभ्यस्तु मोक्षणम् ॥५०॥
ददाति श्रीहरेर्देवी नारायणी गृहे गृहे ।
युगे युगे च लोकेषु ब्रह्माण्डेऽधमतारिणी ॥५१॥
तस्मात्पतिव्रता नारी सेव्या पूज्या हि मे तनुः ।
दृश्या प्रभोजनीया सत्कार्या नम्या च सर्वदा ॥५२॥
सापि साध्व्येव संबोध्या न न्यूना मामकी तनुः ।
अधमानां समुद्धारायाऽत्र लोके मया कृताः ॥५३॥
साध्व्यः पतिव्रतानार्यो मम मूर्तय एव ताः ।
तासां कामो न कामाय पत्युः शुश्रूषणाय तु ॥५४॥
तासां रागो न रागाय पत्युः संरमणाय तु ।
तासां रतिर्न भोगाय पत्युर्वशकराय तु ॥५५॥
तासां भोगो न सौख्याय पत्युरानन्दनाय तु ।
तासां स्पर्शो न शैत्यार्थं पत्युः शान्तिकराय तु ॥५६॥
तासां स्रावो न सत्त्वर्थं पत्युस्तृप्तिकराय तु ।
तासां गर्भो न दुःखाय पत्युरिष्टकराय हि ॥५७॥
तासां व्रतं न नैजार्थं पत्युर्मुक्तिकराय हि ।
तासामायुर्न सृष्ट्यर्थं पत्युः पारंगमाय हि ॥५८॥
तासां मृतिर्न शोकार्थं पत्युः शोकहराय तु ।
तासामाशीर्न मोहाय पत्युर्मोहहराय तु ॥५९॥
तासां गेहं सर्वदा पुण्यपात्रं
तासां देहः सर्वदा देवपात्रम् ।
तासां धर्मः सर्वदा सौख्यपात्रं
तासां प्राप्तिः सर्वदा धामपात्रम् ॥६०॥
तासां गतिश्चाऽक्षरधामगामिनी
तासां मतिर्ब्रह्मसुरूपयामिनी ।
तासां कृतिर्निर्गुणभावभाविनी
तासां धृतिः श्रीहरिसंगमापिनी ॥६१॥
इति ते साधनं लक्ष्मि ! पापानां शुद्धिकारकम् ।
गृहस्थानां मया प्रोक्तं कृतं चाऽप्युपधार्यताम् ॥६२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पतिव्रतायाः समुद्भवसामर्थ्यादिप्रदर्शननामा त्रिंशोऽध्यायः ॥३०॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि महादेवि त्वं वै पूर्वं प्रपूजय ।
पातिव्रत्यां महादेवीं कन्यां दिव्येन गन्धिना ॥ १ ॥
कुंकुमेनाऽक्षतेनाऽथ भोजयैनां सुभावतः ।
परमान्नेन मिष्टेन ताम्बूलेन फलेन च ॥ २ ॥

श्रीलक्ष्मीरुवाच—

देहि द्रव्याणि भगवन्! पूजाया भोजनस्य च ।
यैरहं पूजये देवीं कन्यां सौभाग्यमंगलाम् ॥ ३ ॥
इत्यर्थनां समाश्रुत्य स्वयं श्रीहरिणा स्वकात् ।
तनोः शैत्यं सुगन्धश्च द्रवरूपौ प्रकाशितौ ॥ ४ ॥
तद्वै हिरण्मये पात्रे जातं सुगन्धि चन्दनम् ।
ततो नारायणेन स्वस्यौष्ठाद् रक्तं प्रकाशितम् ॥ ५ ॥
द्रवच्चूर्णे परिणतः कुंकुमं दिव्यमद्भुतम् ।
धृतं तद्राजते पात्रे लक्ष्म्याः पूजार्थमेव यत् ॥ ६ ॥
ततो नारायणेनाऽऽस्यादमृतं प्रकटीकृतम् ।
धृतं तत्सन्मणिपात्रे जातास्तस्मात्कणाऽक्षताः ॥ ७ ॥
लब्ध्वा द्रव्याणि तान्येव लक्ष्म्या तु पूजनं कृतम् ।
पातिव्रत्यात्मकन्याया भोज्यार्थे च मनो दधे ॥ ८ ॥
तदा नारायणेनापि स्वतालोरमृतं कृतम् ।
तदमृतं परं दिव्यं श्वेतं यावद्बहिर्गतम् ॥ ९ ॥
तस्य पिण्डस्तु तत्रैव सञ्जातो वै तदिच्छया ।
पिण्डादर्धात् सुरूपा वै सुदोग्ध्री गौरजायत ॥१०॥
श्वेता सर्वांगसम्पन्ना चतुष्पादा त्रिहायना ।
कल्याणी सुरभिं लक्ष्मीर्दुदोह परमादरात् ॥११॥
दुग्धं तु मधुरं लब्ध्वा किं करोमीत्यचिन्तयत् ।
नारायणेन नेत्रात्स्वात् तावदग्निः प्रकाशितः ॥१२॥
अग्निना फाणिते दुग्धे कणान् चिक्षेप साऽऽज्ञया ।
ततः किमिति कार्यं मे यदा चिन्तयति स्वयम् ॥१३॥
तावच्छ्रीहरिणा स्वस्य जिह्वाग्रादमृतं कृतम् ।
रसरूपं समुद्भूतं शुभ्रं मिष्टं परं च तत् ॥१४॥
शर्करारूपतां प्राप्तं तच्चिक्षेप हरीच्छया ।
संयुक्तं च त्रयं पक्वं क्वथितं कुशलं यदा ॥१५॥
परमान्नं तु तज्जातं दुग्धपाकः स कथ्यते ।
तत्राऽन्यसौरभार्थाय दक्षिणात्तु नसस्ततः ॥१६॥
एलाः प्रकाशिताः सूक्ष्माः सुगन्धाऽऽस्वादसञ्ज्ञिताः ।
वामाच्चैव नसस्तेन जातीफलमथो कृतम् ॥१७॥
वायुकोपप्रहाराय तद्वै शोषणकं मतम् ।
स्वर्णरंगप्रकाशार्थं पुनः श्रीहरिणा स्वकात् ॥१८॥
हिरण्यश्मश्रुभागाद्वै केसरं प्रकटीकृतम् ।
तद्वै सर्वं यथायोग्यं निहितं परमान्नके ॥१९॥
मिश्रितं सुसमापन्नो दुग्धपाकः सुशर्करः ।
हरीच्छयाऽथ दुग्धस्य दध्यर्थं तन्मनो दधे ॥२०॥
मधुराम्ब्लात्मकं तक्रं चाऽमृतं तद्विलक्षणम् ।
स्वक्रकाटात्कृतं तेन निक्षिप्तं दुग्धभाजने ॥२१॥
तद्योगात्तु दधि रम्यं निष्पन्नं मधुराम्ब्लकम् ।
तत्र हरीच्छया पक्वं नवनीतं प्रकाशितम् ॥२२॥
ततो घृतं कृतं देव्या लक्ष्म्या नारायणाज्ञया ।
सुगन्धं च परं दिव्यं कथं स्यादौपयोगिकम् ॥२३॥
विचारयति यावत्सा तावन्नारायणेन तु ।
अवशिष्टात्पादपिण्डाद् गोधूमाः कणिशाः कृताः ॥२४॥
ततः श्रीहरिणा स्वस्य भ्रूकुट्योर्भ्रममात्रतः ।
चक्रद्वयं कृतं रम्यं पेषणी सा मता शुभा ॥२५॥
तदेव कालचक्रस्य स्वरूपमभवत्पुनः ।
कालचक्रं सदा जीवान् चूर्णयत्यतिवेगतः ॥२६॥
विकरालभ्रूकुटेस्तु चूर्णिका प्रमदा कृता ।
चूर्णिकाऽप्यभवत्सृष्टौ विपत्तिनामधारिणी ॥२७॥
विपत्त्या जन्तवः सर्वे चूर्ण्यन्ते क्षणे क्षणे ।
तया चूर्णिकया पिष्टं गोधूमानां कृतं मृदु ॥२८॥
तस्मात्तु पोलिका लक्ष्म्या घृतेनाऽऽक्ता कृता शुभा ।
लक्ष्म्या पतिव्रतादेव्यै भोजनं कारितं शुभम् ॥२९॥
शेषेण पिण्डपादेन ब्राह्मणः पुरुषः कृतः ।
स वै ब्रह्मतनुः प्रोक्तस्तत्र मन्त्रा धृताः सदा ॥३०॥
गोषु हविः समाधत्तं तेन यज्ञः प्रजायते ।
ब्राह्मणाय प्रदत्ता सा गौः सदा यज्ञलब्धये ॥३१॥
ब्राह्मणात् सर्वलोकेषु ब्रह्मवंशाः प्रकाशिताः ।
प्रथमं ब्राह्मणाः सर्वेऽप्यासन् ब्रह्मजनित्वतः ॥३२॥
सुरभेस्तु हरेः सृष्टौ गवां वंशाः प्रकाशिताः ।
पातिव्रत्याख्यदेव्यास्तु पतिव्रताः प्रकाशिताः ॥३३॥
केसरात् केसरगुल्मा जायन्ते स्म सदा त्विह ।
जातिफलात्तु तद्वृक्षा जाता इह तथाफलाः ॥३४॥
एलाबीजात्तदेलानां स्वल्पगुल्माः कृता इति ।
शर्करारसतो लोके दीर्घा दण्डा सदिक्षवः ॥३५॥
जाताः सर्वत्र सृष्टौ वै ह्यमृतं च तदुच्यते ।
अग्नेः सकाशात् पाकानामग्नयो बहवो मताः ॥३६॥
अक्षतेभ्यो ह्यजायन्त तण्डुला व्रीहयः खलु ।
हरेरोष्ठद्रवाज्जाता हरिद्रा रक्तवर्णजा ॥३७॥
पिशंगा च ततो लोकैः कुंकुमं साध्यते सदा ।
अमृताच्चन्दनरसाद् वृक्षाश्चन्दनशीतलाः ॥३८॥
अजायन्त ततो बोध्याः श्रीहरेरुद्भवा इति ।
अथ मिष्टं जलं तत्र हरेरास्यात्प्रकाशितम् ॥३९॥

जलं पीत्वा चुलुकं च कृत्वा तिष्ठति यावता ।
तावल्लक्ष्मीश्चिन्तयति किं देयानि फलानि तु ॥४०॥
श्रीहरिणा ततः स्वाऽऽस्यादमृतं प्रकटीकृतम् ।
तस्मान्मिष्टफला वृक्षा आम्रदाडिमसन्तुराः ॥४१॥
नारीकेलाऽङ्गुदीरामफलाऽनानसशार्कराः ।
नवरंगाऽमृतजम्बुजम्बीरद्राक्षखारिकाः ॥४२॥
सफलांजनकदलपुष्पपनसखर्जुराः ।
जातास्तत्फलबाहुल्यं समादायाऽर्पितं ततः ॥४३॥
तान्यत्त्वा संस्थितायै तु किं देयं मुखशोधकम् ।
यावच्चिन्तयते लक्ष्मीस्तावच्छ्रीहरिणाऽमृतात् ॥४४॥
नागवल्ली सपत्रा च सुगन्धोत्तेजना शुभा ।
कृता तत्पक्वपात्रे तु शैत्यार्थं गण्डतः स्वकात् ॥४५॥
चूर्णं खादिरमारक्तं समुत्पादितमेव च ।
दन्तेभ्यः श्वेतचूर्णं सोत्तेजनं च कृतं तथा ॥४६॥
पत्रे लिप्त्वा च निक्षिप्य चूर्णं ताम्बूलमादधत् ।
भ्रूकुटेः श्रीहरेस्तावत्स्वेदबिन्दुः पपात ह ॥४७॥
स वै पूगीफलं जातं द्रागेवाऽऽस्यस्य शोधकम् ।
वरीयसीतृणं जातं मुखस्याऽमृतबिन्दुतः ॥४८॥
गृहीत्वा तद्द्वयं तत्र ताम्बूलं सुविनिर्मितम् ।
तस्माच्चाऽपरबिन्दोस्तु त्वक्लवंगे कृते कटू ॥४९॥
ते सूक्ष्मे तत्र ताम्बूले पोथिते च ततः पुनः ।
स्वर्णपत्रिकया लिप्तं ताम्बूलं चार्पितं शुभम् ॥५०॥
चर्वितं च तया पातिव्रत्यया कन्यया च तत् ।
लक्ष्म्या चापि तथा नारायणेनापि कृतं परम् ॥५१॥
ग्रस्तं चर्वितमास्ये तत्, रसस्ताम्बूलजः परः ।
गण्डुषः सर्वलोकेषु निक्षिप्तः स रसो महान् ॥५२॥
बहुधा भेदमापन्नो लोके सृष्टौ स्थितो हि सः ।
पक्वकाले फले मिष्टो यो रक्तो रस एव सः ॥५३॥
फलानां रक्तता या या सा साऽपि रस एव सः ।
धातूनां रक्तता या या गैरिकाणां च रङ्गिणाम् ॥५४॥
सन्ध्याया रक्तता चाग्नेः शरीराणां च रक्तता ।
ओष्ठयोर्गण्डयोश्चैव पुष्पाणाम् ऋतुभागिनाम् ॥५५॥
या या तु रक्तता रम्या मिष्टा चापि रसस्य सा ।
रतिर्देवी रसात्तस्मात् उद्भूता रमणप्रिया ॥५६॥
रक्ता रक्तरसोपेता सर्वरक्तगुणाश्रया ।
कन्या रतिः सुरूपा सा प्राप्तनवीनयौवना ॥५७॥
पूर्णरक्तभरा स्वर्णवर्णा सर्वांगसुन्दरी ।
आज्ञया श्रीहरेः सा तु रतिः पतिव्रता तथा ॥५८॥
आगते तेऽत्र सर्वत्र लोके स्थिते पृथक् पृथक् ।
ताभ्यामागत्य लोकेऽत्र तज्ज्ञानं च प्रसारितम् ॥५९॥
खदिरः कथको जातः पूगी तु तृणराजकः ।
तृणानि यानि चान्यानि जातानि तद्रसात्तथा ॥६०॥
इत्येवं श्रीहरेर्मूर्तेरुत्पन्नाः सारसौरभाः ।
तत्र गावो ब्राह्मणाश्च प्रोक्तमा मामकी तनुः ॥६१॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने
कुंकुमादिद्रव्याऽक्षतादिधान्यताम्बूलादिवल्लीनारी-
केलाऽम्रादिफलरक्तगैरिकादिरतिप्रभृतिरसाद्युत्पत्ति
वर्णननामा एकत्रिंशोऽध्यायः॥३१॥

**श्रीलक्ष्मीरुवाच—**

सर्वव्यापिन्नन्तरात्मन्नात्मात्मन्नक्षराधिप ! ।
स्वामिन्नारायणाऽर्थ्यस्त्वं सर्वं पूरयसि प्रभो ! ॥ १ ॥
गावस्तु पशवः प्रोक्ताः कथं वै तारयेज्जनान् ।
समर्थस्तारयेदन्यान् नाऽसमर्थः कथञ्चन ॥ २ ॥

**श्रीनारायण उवाच—**

पाशो बन्धनमित्युक्तं बन्धो मायात्मको मतः ।
यत्र माया भवेत् तत्र सर्वं वै पशुसंज्ञितम् ॥ ३ ॥
शरीरं तु समानं वै भोजनाऽऽपानसंश्रितम् ।
कामलोभात्मकस्वार्थव्याप्तं पशुमनुष्ययोः ॥ ४ ॥
मनुं वै भगवन्मन्त्रं दिव्यं संयाति यो जनः ।
स वै मनुष्य इत्युक्तोऽन्यथा तु पशुसत्तमः ॥ ५ ॥
गावस्तु मम गोलोके सर्वथा मत्स्वरूपिकाः ।
कृष्ण कृष्ण जपन्त्यो वै मोदन्ते ब्रह्मतन्मयाः ॥ ६ ॥
सुरभ्यस्तु सदा मन्त्रं नारायण इति ध्रुवम् ।
रटन्त्यश्चाऽटनं स्वर्गे कुर्वन्ति मम मोक्षदाः ॥ ७ ॥
वैकुण्ठेऽपि च ता गावो मुक्तान्योऽपि वसन्ति वै ।
मम नाम भजन्त्यश्च सर्वानन्दपरिप्लुताः ॥ ८ ॥
न ता बोध्या हि पशवः पशवस्त्वज्ञमानवाः ।
वृन्दावने कृष्ण कृष्ण स्मरन्त्यन्वहमादरात् ॥ ९ ॥
देव्यः स्वर्गादिषु यास्ताः कृष्णार्थे स्तन्यदा मताः ।
समीहापूर्णतार्थे वै गावो भूत्वा वसन्ति ताः ॥१०॥
सर्वज्ञाः सर्वभाषाज्ञा मोक्षदाः सर्वदा मताः ।
भगवन्मुखपिण्डास्ता अमृताऽऽधानमातरः ॥११॥
रोम्णि रोम्णि मताः पूज्या ममांगसंभवा यतः ।
अहं तासु वसाम्येव धर्मो वृषात्मकस्तथा ॥१२॥

गोषु वसाम्यहं गोपो गावो ब्राह्मी तनुर्मम ।
ललाटे तु गवां ब्रह्मधाम तत्र वसाम्यहम् ॥१३॥
शृंगे मे ध्वजदण्डौ स्तो, मध्यं सिंहासनं मम ।
नेत्रे द्वे मम गोलोकवैकुण्ठौ धामनी मते ॥१४॥
नासा मेऽव्याकृतं धाम, मुखं मायात्मकं मम ।
दन्ताः षोडशतत्त्वानि, जिह्वा बुद्धिर्महद्धि तत् ॥१५॥
रांभणं प्रणवस्तासाम्, ओष्ठौ रजस्तमो मते ।
श्वेतद्वीपविशाले तु कर्णौ, सास्ना हिरण्मयम् ॥१६॥
तासां सदाशिवः कण्ठः, पादा वेदचतुष्टयम् ।
स्तनाः पुमर्थचत्वारो, नाभिर्वैराजनालकम् ॥१७॥
उदरं तासां वैराजो, महाविष्णुरुरो मतः ।
जठरं ब्रह्मतेजोऽग्निः, पृष्ठः सत्यं तु वेधसः ॥१८॥
मूत्रं गंगाजलं दिव्यं शकृल्लक्ष्मीः स्वयं मता ।
आर्तवं तु जलं सारस्वतं, कुक्षिः समुद्रकाः ॥१९॥
योनिरण्डकटच्छिद्रं पुच्छमूलं जनादयः ।
पुच्छं स्वर्गस्तथा गुच्छो रोम्णां देवादिमण्डलम् ॥२०॥
शिवविष्णू नितम्बौ स्तो, ब्रह्मा ओध उदाहृतः ।
गर्भस्तु पार्वती देवी, रोमाणि देवयोनयः ॥२१॥
अस्थीनि पितरस्तासां, खुराः पातालजातपः ।
इत्येवं तु मया पिण्डः संकल्प्यैव तदा कृतः ॥२२॥
गावो विभूतयो मे स्युरमृतानि वसन्ति यत् ।
तदमृतकृतग्रासात् सर्वे तृप्यन्ति मन्मुखाः ॥२३॥
गावश्चाहमहं गावो मातरो जगतां मताः ।
पोषणात्तारणाद् ब्रह्मगामनात्पुष्टिमुक्तिदाः ॥२४॥
पूजनात् पुण्यदाः प्रोक्ता वृद्धिदास्तु तृणार्पणात् ।
दानान्मोक्षं गमयति स्वर्गं ददाति सेवनात् ॥२५॥
दानाद् दहन्ति पापानि यान्त्यमृतं जलार्पकाः ।
दंशानां वारणाद् यावद् दारिद्र्यं घ्नन्ति सर्वशः ॥२६॥
तासां प्रदक्षिणा प्रोक्ता पृथिव्यास्तु प्रदक्षिणा ।
पञ्चगव्यं सदा तासां स्वर्ग्यं भवन्ति देहिनाम् ॥२७॥
तासां पुच्छजलं दुष्टान् पवित्रयति पापिनः ।
तासां खुररजस्तीर्थं प्रक्षालयति मायिनः ॥२८॥
उभयतोमुखीं दत्वा सर्वयज्ञफलं लभेत् ।
वत्सप्रसवकालीना प्रोक्ता ह्युभयतोमुखी ॥२९॥
प्रेतानां रक्षसां भूतजन्मनामगतिंजुषाम् ।
गतिर्भवति गोदानात् पापनाशनपूर्विका ॥३०॥
प्रेतस्य पापयुक्तस्य यमवाटगतस्य च ।
वैतरणीप्रतरणं गोदानाद्भवति ध्रुवम् ॥३१॥
स्वर्गे मर्त्ये च पाताले ऐश्वरेऽपि सहायदाः ।
पूज्या वन्द्या च दातव्या भोजनीयाः सदा जनैः ॥३२॥
सेव्या माल्या रक्षणीया नम्याः स्पृश्याश्च ताः सदा ।
सदा महापापी निजान्प्राणन् गवां मध्ये जहाति चेत् ॥३३॥
स वै दिव्यगतिं याति दूरं यान्ति यमानुगाः ।
गवां शुश्रूषकस्त्वत्र परे ताभिस्तु रक्ष्यते ॥३४॥
गवां प्रसादमाप्तोऽत्र सर्वप्रसादवान् भवेत् ।
अन्यन्नैव कृतं किञ्चित् गवां तु सेवनं कृतम् ॥३५॥
तत्फलं ब्रह्मलोकादि तदर्थं शाश्वतं भवेत् ।
गवां प्रसादनं चैव ब्रह्मप्रसादनं तथा ॥३६॥
द्वयं तुल्यं मतं चात्र परत्र हरिणा स्वयम् ।
गवां नार्याश्च कन्यायाः स्वसुर्मातुस्तथाऽत्र यः ॥३७॥
प्रपन्नाया अधीनाया दुःखकृद् दुःखभाग् भवेत् ।
वत्सं वत्सां वृषं गां च यो वै पालयते गृही ॥३८॥
तेन वै पालिता पृथ्वी पृथ्वीपालफलं लभेत् ।
न द्रव्यं धनमित्याहुर्गोधनं धनमुच्यते ॥३९॥
अत्र रसान् वितरति, परलोके सहायकृत् ।
भक्षयन्ति तृणान् भूमौ निवसन्ति सदाऽप्यधः ॥४०॥
सहन्ते शीततापादि चार्पयन्ति रसान् बहून् ।
पोषयन्ति कुटुम्बं स्वं तर्पयन्त्यमरान् पितॄन् ॥४१॥
तारयन्ति त्वधःपातात् गावो देव्यो हरेः स्मृताः ।
ब्राह्मणास्तारकाः प्रोक्ता वेदमन्त्रजपादिभिः ॥४२॥
परं पापपराभूतास्तरन्ति तेऽपि गोबलात् ।
गावश्च ब्राह्मणाश्चैव ह्येकं तत्त्वं द्विधा कृतम् ॥ ४३॥
मन्त्रा ह्येकत्र निहिता हविरन्यत्र चार्पितम् ।
मन्त्रेण हविषा यज्ञो यज्ञाद् वृष्टिर्भवत्यथ ॥४४॥
वृष्टेरन्नं जलं चैव ततो धातुस्ततः प्रजाः ।
प्रजया प्राप्यते स्वर्गे स्वर्गात् सौख्यं समुत्सवः ॥४५॥
उत्सवादुत्सवं यान्ति सेव्या गावस्ततोऽन्वहम् ।
किं बहुना समुक्तेन गावो ब्रह्मपदं हि मे ॥४६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुग-
सन्ताने धेनुमाहात्म्यकथननामा
द्वात्रिंशोऽध्यायः ॥३२॥

**श्रीलक्ष्मीरुवाच—**

ताम्बूलचर्वणाद् देव मोदते मम मानसम् ।
ताम्बूलस्य रसास्वादान्मदो भवति मानसे ॥ १ ॥

रसो नाड्यां वितननात् मनो धावति चंचलम् ।
कमिव स्मरति हार्दे दीव्यति हृदयंगमम् ॥ २ ॥
रसः परिणतो रक्ते चोत्तेजयति चाऽऽन्तरम् ।
औष्ण्यं ज्ञापयति प्रेष्ठं तापं जनयतीव मे ॥ ३ ॥
क्लेदं वाहयते चांगे खर्जनं विदधाति वै ।
शान्तिं कुरु कृपानाथ कोऽयं रोगो बभूव मे ॥ ४ ॥
श्रुत्वा लक्ष्म्यास्तु चांचल्यं ताम्बूलरसजं तदा ।
नारायणेन कामाख्यो देवः स्वस्यैव मानसात् ॥ ५ ॥
जनितो रूपसौन्दर्ययौवनोद्भेदवारिधिः ।
कृष्णां प्रान्तपिशंगीं च जटां स्निग्धां दधन् घनाम् ॥ ६ ॥
कलिंग मयूरपर्णाभां विद्युन्मस्तकमण्डिकाम् ।
ललाटे च दधन् रम्यं मणिं तेजःप्रभोद्भवम् ॥ ७ ॥
इषत्कृष्णामिषत्स्वर्णां वक्रां भ्रूकुटिमावहन् ।
रत्यानन्दप्रवाहं स्वनेत्राभ्यां प्रक्षिपन् मुहुः ॥ ८ ॥
ओष्ठाभ्यां प्रेमधारां वै रक्ताभ्यां वाहयन्मुहुः ।
चूम्बनाऽऽदरयन्नौष्ठमध्यचञ्चुद्वयं मिलन् ॥ ९ ॥
इषत्कृष्णामिषत्सूक्ष्मां श्मश्रुरेखां प्रकाशयन् ।
पूर्णप्रेमसरश्चक्षुःसौम्यभावं विभावयन् ॥१०॥
चित्ताकृष्टिसमारब्धमन्दहास्यभराबुभौ ।
रक्तौ कपोलकौ कृत्वा रतिं देवीं कटाक्षयन् ॥११॥
क्वचित्क्वचिद् द्वयोर्योगं बोधयन्ती रतिक्रियाम् ।
नेत्रयोः प्रान्तभागे तन्मुहुः कुर्वन् मिलन्क्रियाम् ॥१२॥
भ्रूकुटेर्वक्रभावस्य कृत्वा तु कामठं धनुः ।
धृत्वा तत्राऽऽम्रपुष्पाणां बाणं तु प्रथमं हि सः ॥१३॥
सुगन्ध्यत्तरतैलादि द्वितीयं बाणमेव च ।
तृतीयं सर्वतोभावप्रबलाऽऽसक्तत्राटकम् ॥१४॥
चतुर्थं युवरूपांगदर्शनाऽऽकर्षणाह्वयम् ।
पञ्चमं मोहसंवेगं निकषागमकं तथा ॥१५॥
चंचत्स्वर्णसमे काये रोम-जनन-दर्शनम् ।
स्वर्णवर्णं तरं वस्त्रं लूतान्तुतसमं दधन् ॥१६॥
धातूद्भेदकरं सर्वं किशोरं षोडशाब्दकम् ।
रूपं सन्दर्शयन् धीरः श्रीहरिं प्रणनाम ह ॥ १७ ॥
किं मे कार्यं भवेद् देव ! सेवकस्येत्युवाच सः ।
मयोक्तस्त्वं प्रतिव्यक्ति भूत्वाऽऽविश श्रियो हृदि ॥१८॥
रज उत्पादकस्त्वं वै रत्यर्थं भव सर्वदा ।
तय्याविश्य तथा वीर्योत्पादको भव सर्वथा ॥१९॥
अन्येष्वाविश्य सृष्टौ मे सर्वत्र तत्करो भव ।
सृष्टिर्येन सदा तत्तद्भावबद्धा स्थिरा भवेत् ॥२०॥
इत्याज्ञां स समागृह्य सन्निवेशितवान् हृदि ।
तदा त्वं प्रथमं लक्ष्मि ! समाश्लेषितवत्यभूः ॥२१॥
मदंगसंगमाल्लक्ष्मि शान्तस्ते ज्वर आस ह ।
मम वीर्यस्य ते गर्भे वासात्पुत्रोऽभवद्धनम् ॥२२॥
धनं सुशुविषे तं त्वं यत्काले समयः स च ।
तृतीयेन च कामेन ह्यावयोः कृतयोजनात् ॥२३॥
तथा पुत्रतृतीयाभ्यामावाभ्यां सुदशागमात् ।
धनेन च सह त्रयो वयं प्राप्ता दशां शुभाम् ॥२४॥
दशा पुत्रवती जाता धनत्रयोदशी मता ।
अत्र ते पूजनं ये वै कुर्वन्ति धनकांक्षिणः ॥२५॥
तेषां सुवर्णरजतरत्नादिधनमावह ।
कामस्ततः समाज्ञप्तो मया बाणसहायकः ॥२६॥
गच्छ सृष्टौ किशोरेषु देहेष्वाविश सर्वतः ।
रजोवीर्यसमुत्पत्तिकरः सृष्टिसहायकृत् ॥२७॥
कामेनाऽभ्यर्थिता स्वस्य सहाया पूर्वगामिनी ।
युवावस्था मया दत्ता कामाय पूर्वचारिणी ॥२८॥
ततस्तत्र कृते वासे द्वितीया सहचारिणी ।
रतिः पत्नी मया सृष्टा दत्ता कामाय रामणी ॥२९॥
दासः स्वार्थाऽभिधस्तस्मै मया कामाय चार्पितः ।
अनुजः स तु कामस्य मानसो मम बालकः ॥३०॥
हावभावौ तथा पुत्रौ मानसौ च मया कृतौ ।
दत्तौ कामाय तौ तत्र भवतः सहसञ्चरौ ॥३१॥
प्रेमाख्यश्च ततः पुत्रो मानसश्च मया पुनः ।
समुत्पाद्य प्रदत्तोऽस्मै सोऽप्यभूदस्य साहभूः ॥३२॥
संश्लेषाख्यस्ततो गुप्तात्पुत्र उत्पाद्य चार्पितः ।
सोऽप्यभूत् कामदेवस्य गुप्तेन्द्रियसहायकः ॥३३॥
जागराख्यस्ततो दासो मया दत्तोऽस्य जाग्रते ।
स्वादभोगौ च तद्दासौ समुत्पाद्य समर्पितौ ॥३४॥
स्रावाख्यश्च ततः पुत्रो मयोत्पाद्य तथाऽर्पितः ।
सोऽप्यभूत् तत्र बिन्दूनां कामवेगसहायकः ॥३५॥
आनन्दाख्यस्ततः पुत्रो मया धातोः प्रकाशितः ।
स चाऽप्यस्मै प्रदत्तो वै कार्ये फलसहायकृत् ॥३६॥
उत्तेजनस्तथा पुत्रो मयोत्पाद्य तथाऽर्पितः ।
चिरं जाग्रद्बलाऽऽपूरकार्कश्येन सहायकृत् ॥३७॥
निर्वृत्तिश्च मया दासी ततोऽप्यस्मै समर्पिता ।
स्रावोत्तरं समागम्य विश्लेषयति देहिनौ ॥३८॥
शैथिल्यं च ततो दासो मयोत्पाद्य समर्पितः ।
तिष्ठति तत्र घटिका कामनिवृत्तिबोधकः ॥३९॥

इत्येवं मण्डलं देवि! मया सृष्ट्यर्थमादृतम्।
कृतं दत्तं रक्षितं च ऐशे जैवे द्वये द्वये ॥४०॥
तद्वै मदात्मकं सर्वं भावयन्नैति बन्धनम्।
मया पञ्चाग्नयः क्लृप्ताः स्वस्मादेव प्रकाशिताः ॥४१॥
नरो नारी तथा कामो वीर्यं रजश्च पञ्चकम्।
अग्नयः पञ्च ते प्रोक्ता मया मत्तः प्रकाशिताः ॥४२॥
धातोश्चापि तथाऽवस्थाः पञ्च पञ्चाग्नयस्त्विमे।
पुरुषः प्रथमो ह्यग्निः पौरुषो धातुरुच्यते ॥४३॥
लिङ्गमग्निर्द्वितीयस्तु लैङ्गो धातुः स उच्यते।
योनिस्ततस्तृतीयोऽग्निर्यौनो धातुस्तदोच्यते ॥४४॥
गर्भस्ततश्चतुर्थोऽग्निर्गार्भो बालः स उच्यते।
अपत्याग्निः पञ्चमश्चाऽऽपत्येयो मूर्त उच्यते ॥४५॥
इत्येवं धातुबीजाद्वै सृष्टिः प्रचलति ध्रुवम्।
ज्ञात्वा मदात्मकान् तांस्तूपास्ते व्यक्तिः समाहितः ॥४६॥
मम भावपरिध्यानान्मामेति नैति बन्धनम्।
कामस्तु देहिनोः स्नेहाद् बन्धनाय प्रकल्प्यते ॥४७॥
स एव ब्रह्मणोः स्नेहः कल्पितौ मुक्तये मतः।
ब्रह्मदृष्ट्या गुणो यस्माद् भेददृष्ट्या तु दूषणम् ॥४८॥
निर्गुणत्वाद्धरेः सर्वा योगाच्च निर्गुणाः क्रियाः।
हरेर्जाताद्धरेर्योगाद्धरेः प्रजननाश्रयात् ॥४९॥
देवो हि प्रोच्यते कामो रतिर्देवी तदाश्रयात्।
तस्माद्देवस्य देवत्वं सर्वदेवहरेर्बलात् ॥५०॥
कामो मूर्तिर्हरेर्बोध्या देह्यानन्दसुखप्रदा।
आनन्दो ब्रह्मणो रूपं ब्रह्मदृष्ट्या न बन्धकृत् ॥५१॥
लक्ष्मि! ते च सुतौ द्वौ वै व्याजश्च व्यवसायकः।
तौ ददामि जना याभ्यां सोद्यमाः स्युः सुखाश्रयाः ॥५२॥

इति श्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने ताम्बूलनिमित्तकामोत्पत्तितत्सन्तानक्रियाऽग्नीनां वर्णननामा त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

**श्रीलक्ष्मीरुवाच—**

नारायणस्य पिण्डाद्वै ब्राह्मणो यो ह्यजायत।
स क्व गतश्चकाराऽथ किं किं तद् ब्रूहि मे हरे! ॥ १ ॥

**श्रीनारायण उवाच—**

ब्राह्मणः पुरुषश्चाद्यो दिव्यः षोडशहायनः।
पित्रा समुपदिष्टो वै सर्वविद्याविशारदः ॥२॥
नारायणसमस्तन्वा गुणैश्चापि स तत्समः।
रूपेण वयसाऽऽकृत्या नारायण इवाऽपरः ॥३॥
अस्तौन्नारायणं देवं पितरं स्वोपदेशिकम्।
नारायण! गवां नाथ! पिता त्वं जगतां गुरुः ॥४॥
किं कार्यं मे भवेच्छाधि पालयामि न संशयः।
पाति यः स पिता प्रोक्तः पुत्रस्त्वाज्ञाप्रपालकः ॥५॥
पिता विष्णुः पिता दैवं पितांऽशो वासुदेवजः।
पिता कृष्णः परब्रह्म पिता तस्मात् प्रपूज्यते ॥ ६ ॥
पितृतीर्थं परं तीर्थं तारकं पुण्यदं वरम्।
पिता देवो वरो देवः पिता ब्रह्मसनातनम् ॥ ७ ॥
पिता बीजप्रदाता यः पोषकः पालकस्तथा।
सर्वं चार्पयिता स्वस्य कोऽन्यस्तस्मात्परो मतः ॥ ८ ॥
पिता सन्तोषितो येन तेन सन्तोषितो हरिः।
पिता च सेवितो येन तेन संसेवितो हरिः ॥ ९ ॥
दानपुण्यव्रताऽऽतिथ्ययज्ञहोमदमादयः।
अकृता अपि सुकृताः स्युः पिता येन सेव्यते ॥१०॥
महापापोऽतिपापश्च पशुघ्नश्चाऽऽत्मघातकः।
पितृपादोदकं पीत्वा ब्रह्मलोके महीयते ॥११॥
पितृब्रह्म परंब्रह्म शरण्यः शरणार्थिनः।
देहज्ञानधनादीनां प्रदाता पोषकः प्रभुः ॥१२॥
पितुराज्ञा कृता येन तेन सर्वं कृतं भवेत्।
अन्यन्नैवाऽवशिष्येत पित्राशीर्भ्यो विधेयकम् ॥१३॥
संस्कृतः संस्कृतो वा न पुत्रः पित्रा निभालितः।
निर्भयो भवते मान्यो महद्भिश्चापि सर्वथा ॥१४॥
न विष्णुर्न महादेवो न वैराजो न चेश्वराः।
पितृतुल्या भवन्त्येते पिता ह्येव पिता मतः ॥१५॥
जलाऽन्नवस्त्रवाहाद्यैः पादसंवाहनादिभिः।
वार्धक्ये पार्श्ववासेन पितुः सेवां करोति यः ॥१६॥
आह्वाने वर्तने चापि नेति न प्रतिवक्ति यः।
ओमित्येव करोतीष्टं स मोक्षभाङ् न संशयः ॥१७॥
पितुर्मतं विना नैव किञ्चित्कार्यं करोति यः।
आज्ञयैव प्रकर्ता यः सर्वथा फलभाग् हि सः ॥१८॥
आपद्भिर्नीयमानो यो दुःखैरामर्दितश्च यः।
विघ्नैश्चापि पराभूतः पितृभक्त्या हि रक्ष्यते ॥१९॥
तादृशेन सुपुत्रेण पिता वै पुत्रवान् मतः।
अनाज्ञाकरपुत्रेण पिता नैव हि पुत्रवान् ॥२०॥
तस्मात्तातः करोम्याज्ञां येन जन्मफलं भवेत्।
कृतं सर्वं सुकृतं स्यात् तदाज्ञां देहि सत्वरम् ॥२१॥

पितृभक्तिं प्रदर्श्यैवं यावद् बद्धांजलिः स्थितः ।
तावन्नारायणः साक्षात् पिता प्राह सुपुत्रकम् ॥२२॥
अहो पुत्र चिरं जीव, वर्धितोऽसि शुभाशिषा ।
पितृभक्तिपरः पुत्रे धर्मेण वर्धतेऽन्वहम् ॥२३॥
ईदृशस्ते विचारोऽस्ति वर्तनं पितृभक्तिकृत् ।
पितृ भक्ति विवेकेऽहं वर्ते वै पुत्र सिद्धिदः ॥२४॥
सुपुत्रः स हि विज्ञेयः पिता येन सुपालितः ।
वन्दितः सेवितो नित्यं पूजितश्च नमस्कृतः ॥२५॥
प्रातरुत्थाय ये पुत्रः पितॄन्देवान्गुरूँस्तथा ।
वन्दन्ते च नमन्त्यार्यास्तेऽक्षयाऽर्थप्रभागिणः ॥२६॥
तेषां वै चाऽक्षया लोकास्तेषां चाऽक्षयममृतम् ।
तेषां वै चाऽक्षयं श्रेयस्तेषामभ्युदयः परः ॥२७॥
तेषां दाराः सदा साध्व्यः पातिव्रत्यपरायणाः ।
मिष्टवाण्यो मिष्टदाव्यो मिष्टभोग प्रदास्तथा ॥२८॥
तेषां गृहाणि दिव्यानि स्मृद्धिकोटिभृतानि च ।
रसद्रव्यधरासम्पल्ललितानि भवन्ति च ॥२९॥
सेवन्ते ये जनाः पितॄन् वस्त्रभोजनवारिभिः ।
सेवाऽनुवृत्तिशुश्रूषापरिचर्यादिभिस्तथा ॥३०॥
तेषां स्युरक्षया लोका अक्षयाश्च विभूतयः ।
अक्षयं च सुखं दिव्यं निर्विघ्नं चिरजीवनम् ॥३१॥
सिद्धयस्तत्र तिष्ठन्ति पितरो यत्र सत्कृताः ।
समृद्धयस्तत्र चाऽऽयान्ति पित्राशीर्वादयोजिताः ॥३२॥
स्वर्णं रौप्यं धनं धान्यं रत्नानि विविधानि च ।
शय्या मृद्व्यो दुग्धफेना गौर्यो नार्यस्तथा रसाः ॥३३॥
यानवाहनसौधानि दीव्यन्ति पितृसेविनाम् ।
उद्यानोपवनाऽऽवाससरोविहारभूमयः ॥३४॥
विमानानि च दिव्यानि गावो दास्यः सुमध्यमाः ।
दासाश्चाज्ञाकराः सौम्या भवन्ति पितृसेविनाम् ॥३५॥
पितृसेवाऽक्षयो लाभो नाऽन्यो लाभस्तथाऽपरः ।
येन लाभेन मोदन्ते पुत्राश्चात्र परत्र च ॥३६॥
पूर्वं यैस्तु पिता भक्त्या सेवितः परितोषितः ।
तैः पदं पारमेष्ठ्यादि लब्धं चाऽथाऽपुनर्भवम् ॥३७॥
पितृप्रसन्नतापात्रं यमो नैवाऽभिसर्पति ।
पितृप्रसन्नतापात्रात् कालश्चापि पलायते ॥३८॥
पितृप्रसादपात्रस्य हरेः प्रसादपात्रता ।
पितृप्रसादहीनानां दुरन्ता कष्टदा गतिः ॥३९॥
लब्धपितृप्रसादानां वंशो न शीर्यते क्वचित् ।
पितृप्रसादमाप्तानां स्वास्थ्यं न जीर्यति क्वचित् ॥४०॥
पितृप्रसादमाप्तानामीतयो यान्ति दूरतः ।
आध्यात्मिकानि दुःखानि दृश्यन्ते नैव नैव हि ॥४१॥
इन्द्रियाणि सदा तेषां निरोगाणि भवन्ति हि ।
पिता बीजप्रदः पूज्यो माता गर्भे विवर्धिनी ॥४२॥
बाल्ये तु सेविका माता सेव्या माता यथा पिता ।
पिता नारायणो बोध्यो माता लक्ष्मीस्वरूपिणी ॥४३॥
मातृसेवा कृता येन सेविता देवकोट्यः ।
माता दधाति वै गर्भे गर्भार्थे नियमे स्थिता ॥४४॥
इष्टान्भोग्यान्भोज्यपानादिकान् त्यक्त्वाऽपि रक्षति ।
जन्मदाने परं दुःखं सहते मृतिमूर्छनम् ॥४५॥
बालं मूत्रमलोपेतं निर्मलं प्रकरोति सा ।
निद्रां त्यक्त्वाऽपि बालार्थं चिन्ता ग्रस्ता भवत्यसौ ॥४६॥
ध्यायतीश्वरवद् बालं सेवते पोषयत्यपि ।
रक्षति स्वार्जितं सर्वं ददाति तत्कृते सदा ॥४७॥
किं ! ऋणं तूलनां याति पुत्रे मातुः ऋणस्य वै ।
पुत्रस्तत्प्रतिकर्तुं न क्षमो वर्षशतैरपि ॥४८॥
यादृशौ तादृशौ वापि पितरौ ब्रह्मवन्मतौ ।
पूज्यौ सेव्यौ सदा वन्द्यौ पुत्रैः पुण्याभिलाषिभिः ॥४९॥
अन्धौ रुग्णौ दरिद्रौ वा कृपणौ व्यभिचारिणौ ।
स्तेनौ हिंसापरौ वापि पितरौ पूजनार्हणौ ॥५०॥
धन्योऽसि त्वं सदा पुत्र यन्मदाज्ञां करोषि हि ।
मदाज्ञैव च धर्मस्ते धर्मात्मा भव सर्वदा ॥५१॥
पत्नीव्रतमितिप्रख्यां करोमि तव पुत्रक ! ।
पत्नीव्रतस्त्वमेवाऽसि ब्राह्मणो दिव्यसिद्धिमान् ॥५२॥
मम कृष्णस्य रूपस्त्वं ममाऽतिवल्लभो यतः ।
कृष्णवल्लभ इत्याख्य आचार्यो भव पुत्रक ! ॥५३॥
ममाऽवतार एव त्वं भगवान् सर्वमोक्षकृत् ।
मत्सृष्ट्यसंख्यसाध्वीनामेकलः सत्पतिर्भव ॥५४॥
सर्वसृष्टौ दिव्यरूपो भूत्वा व्यापक एव च ।
नरे नरे निवासं च कुरु कोटिगुणो भव ॥५५॥
शृणु पत्नीव्रतं तेऽहमुपदिशामि तत्त्वतः ।
तथा नरेषु वृत्त्यं वै तथासन्मोक्षदो भव ॥५६॥
पत्युर्भागं स्वके गर्भे नयते रक्षणाय या ।
पत्नी प्रोक्ता च साऽप्यग्निसाक्षिणी सहचारिणी ॥५७॥
तदर्थं तत्सुखार्थं च तस्यामेव पुमर्थकम् ।
वर्तनं व्रतमित्येवं पत्नीव्रतमितीरितम् ॥५८॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने
पितृसेवापत्नीव्रतपुरुषात्मकब्राह्मणमहिमकथननामा
चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

श्रीनारायण उवाच—

पत्नीव्रतस्य शब्दस्य सम्यगर्थो मयोदितः ।
तव पत्न्याः कृते किं किं कार्यं तद्वक्ष्यते मया ॥ १ ॥
प्रथमं ब्रह्मचारित्वं पश्चाद्गार्हस्थ्यमेव च ।
ब्रह्मचारी पुरा भूत्वा पत्न्या सह ततो वसेत् ॥ २ ॥
ब्रह्मचर्यं गृहाण त्वं यज्ञोपवीतमित्यपि ।
वेदार्थांश्च निबोध त्वं पश्चात् पत्नीयुतो भव ॥ ३ ॥
इत्याज्ञप्य स्वकं पुत्रं ब्राह्मणं यौवनोन्मुखम् ।
मुहूर्ते शुभमास्थाय प्रवृत्तो ह्युपनायने ॥ ४ ॥
तथोपनीतिं पुत्रस्य कर्तुमुत्सुकमानसः ।
सर्वान् सम्पादयामास संभारानुरुविक्रमः ॥ ५ ॥
तदा मंगलवाद्यानि ह्यवाद्यन्त मुहुर्मुहुः ।
लक्ष्म्यादयो जगुस्तत्र गीतान्यानन्दतस्तदा ॥ ६ ॥
कृच्छ्रत्रयनिमित्तेन धेनुत्रयप्रदानकम् ।
कामचाराऽशनाऽशुद्धिशान्तये कृतमुत्तमम् ॥ ७ ॥
त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम् ।
त्र्यहं परं च नाऽश्नीयाच्छुद्धं कृच्छ्रमुदीरितम् ॥ ८ ॥
मातृकापूजनं चैव नान्दीश्राद्धं तथैव च ।
स्वस्तिवाचो ग्रहशान्तिं द्विजभोजनमित्यपि ॥ ९ ॥
स्थण्डिले तु समुद्भववह्निस्थापनमित्यथ ।
पूजनादि तथा तस्य चकार श्रीहरिः स्वयम् ॥१०॥
स्नातं भुक्तं कृतकेशवापं च समलंकृतम् ।
दक्षभागे स्थितं संस्कारयामास सुतं तु सः ॥११॥
कौपीनं कटिसूत्रं च नवं यज्ञोपवीतकम् ।
त्रिगुणं स्म ददात्याज्यहोमं कृत्वाऽवदत्प्रभुः ॥१२॥
सामाख्यस्ते भवेद् वेदो गोत्रं श्रीब्रह्म विद्यते ।
प्रवरास्ते त्रयो नारायणः कृष्णो हरिस्तथा ॥१३॥
शाखा पत्नीव्रताख्या ते नाम्ना भविष्यति ह्यनु ।
इदानीं त्वं ब्रह्मचारी भवसीति निबोधय ॥१४॥
शृणु धर्मास्तव योग्यान्कथयामि समासतः ।
जुहुध्यग्निं प्रातरादावपोशानं तथा कुरु ॥१५॥
गुरोः सेवां कुरु नित्यं ब्रह्मपाठं तथा कुरु ।
गृहाणेमं च गायत्रीमन्त्रं जपं सदा कुरु ॥१६॥
ॐ नारायणायविद्महे वासुदेवाय धीमहि ।
तन्नो विष्णुः प्रचोदयादित्यावर्त्तय मालिकाम् ॥१७॥
ब्रह्मदण्डं गृहाणेममैणाऽजीनमिदं तथा ।
सन्ध्योपास्तिं विधेहि त्वं क्रोधाऽनृते तु वर्जय ॥१८॥
ब्रह्मचर्यं तथा रक्ष विकृतिं माऽऽविश क्वचित् ।
अशुद्धं भक्षणं पानं माऽऽतिष्ठ हननं क्वचित् ॥१९॥
व्यसनं मा कुरु ब्रह्मन् निन्दनं मा कुरु क्वचित् ।
स्नानं सन्ध्यां जपं होमं स्वाध्यायं पितृतर्पणम् ॥२०॥
आत्मज्ञानं हरेः पूजामष्टौ नित्यं समाचरेः ।
ओमित्यादाय तद्वाक्यमुपतस्थे रविं तथा ॥२१॥
अग्नेः प्रदक्षिणां चक्रे भिक्षां जग्राह मातृतः ।
श्रीहरिर्गाः स्वर्णमुद्रा वासांस्याभरणानि च ॥२२॥
ईश्वरेभ्यो ददाति स्म ये ते तत्र समागताः ।
भोजनानि दक्षिणाश्च दत्वा सन्तर्पिताश्च ते ॥२३॥
पुत्रं ज्ञानस्तवात्मानं वेदमध्यापयद्धरिः ।
जटाकमण्डलूदण्डचर्मवल्कलधारिणः ॥२४॥
पत्नीव्रताख्यपुत्रस्य विवाहार्थं व्यचिन्तयत् ।
पतिव्रताख्यया सार्धं रूपयौवनपूरया ॥२५॥
कन्यया तद्विवाहं च नारायणो ह्यकारयत् ।
द्वयोर्जन्माऽक्षरे दृष्ट्वा लग्नार्थं निश्चिकाय सः ॥२६॥
मुहूर्तं च बलं दृष्ट्वा लग्नपत्रं लिलेख च ।
गीतिं मांगलिकीं स्वस्तिवाचनिकां विधाप्य वै ॥२७॥
मुखं मिष्टं तथा कृत्वा वरस्याऽक्षतबिन्दुकम् ।
पिष्टचूर्णैर्वरस्थांगं मर्दयित्वा ह्यपूजयत् ॥२८॥
मण्डपारोपणं कृत्वा माणेकस्तंभरोपणम् ।
गणेशस्थापनं कृत्वा मातृकापूजनं तथा ॥२९॥
कलशस्थापनं कृत्वा यज्ञकुण्डमकारयत् ।
करे कामफलं ( मींढोलकं ) बध्वा वरं मण्डपमानयत् ॥३०॥
कन्यां तत्र समानीय वरमालामधारयत् ।
गार्हपत्यं च कुण्डेऽग्निं प्रतिष्ठाप्य ह्यजूहवत् ॥ ३१॥
हस्तयोर्मेलनं कृत्वा मुखे मिष्टमदापयत् ।
वस्त्रग्रन्थिं समाबध्य प्रदक्षिणा ह्यकारयत् ॥३२॥
वेदवाद्यध्वनिं कृत्वा मंगलादीन्यगापयत् ।
मुद्रादिभी रामयित्वा हस्तद्रव्याणि चार्पयत् ॥३३॥
सह धर्मं चरेत्युक्त्वा लग्नकर्माऽसमापयत् ।
विद्वान् शिरस उत्तार्य ह्याशीर्भिः समयोजयत् ॥३४॥
ब्राह्मेण विधिना दत्त्वा वरकन्ये ह्यवाहयत् ।
अथ नारायणस्तत्र दम्पतिभ्यामशिक्षयत् ॥३५॥
पतिभिन्ना न वै पत्नी पत्नीभिन्नो न वै पतिः ।
द्वयोः प्रेम्णोरभिन्नत्वाद्द्वयोरैक्यं स्वभावजम् ॥३६॥
पत्युर्गुप्तं महावीर्यं पत्नी गर्भे दधाति हि ।
अंगयोश्च तयोरैक्याद्दम्पत्योरैक्यमंगजम् ॥३७॥

पितुर्भागः स्थितो गर्भे पत्नीभागेन पुष्यते ।
द्वयोर्बालो भवेदेकस्ततो ह्यैक्यं द्वयोरपि ॥३८॥
एकस्याऽनिष्टताप्राप्तौ द्वयोर्दुःखं समं भवेत् ।
एकस्य सुखसम्पत्तौ द्वयोः सौख्यं समं भवेत् ॥३९॥
हानिर्लाभः सुखं दुःखं समं द्वाभ्यां नु वेद्यते ।
आत्माऽऽत्मनि द्वयोः सक्तस्तस्मादैक्यं द्वयोरपि ॥४०॥
एकेनाप्यर्जिते द्रव्येऽन्यस्य स्वत्वं प्रवर्तते ।
एके न कृतपुण्यस्य द्वितीयो भजते फलम् ॥४१॥
एकेन तु कृते कार्ये विश्वसित्यपरो यतः ।
एकेनोपार्जितं भोज्यं भुंक्ते तु द्वयमेव वै ॥४२॥
दिवा रात्रौ सहैकत्वं देहयोर्मनसोरपि ।
ममाऽहन्ते न वै भिन्ने तस्मादैक्यं द्वयोरपि ॥४३॥
रोदने रुदनं याति हर्षणे हर्षणं तथा ।
मूर्छने मूर्छनं याति चिन्तने चिन्तनं भवेत् ॥४४॥
द्वयोरैक्यादिदं सर्वं भिन्नयोर्नहि जायते ।
तस्मात्तु सर्वथा बोध्यं दम्पत्योरैक्यमुत्तमम् ॥४५॥
इत्येवमैक्यसामर्थ्यात्पुण्येऽप्यैक्यं भवत्यपि ।
शत्रुदण्डे राजदण्डे सहनैक्यं भवत्यपि ॥४६॥
तीर्थे दाने चोपकारे शुभे पुण्ये च धर्मणि ।
पतिपत्न्योः समो भागः स्मृद्धौ चाऽत्र परत्र च ॥४७॥
तस्मादर्धं शरीरस्य स्वस्याऽन्यस्य परार्धकम् ।
पुंसोऽर्धं वाम पत्न्येव पत्न्यर्धं दक्षिणं पतिः ॥४८॥
पत्न्यां पतिः सदा ह्यास्ते कान्ते पत्नी च वर्तते ।
तस्मादर्धांगना पत्नी पतिश्चाऽर्धांगनो मतः ॥४९॥
ततः स्वार्थं परित्यज्य द्वयोरर्थे विबुध्य च ।
द्वाभ्यामाजीवनं चार्थे स्थातव्यं तु परस्परम् ॥५०॥
परस्परं स्वकं ज्ञात्वा प्रतिबिम्बं सहायकृत् ।
प्रसोढ्वापि द्वयोर्मर्दं कर्तव्यं कार्यमन्वहम् ॥५१॥
पत्न्या यथा पतिः सेव्यो मान्यः पूज्यश्च देववत् ।
पत्या तथा सदा पत्नी सेव्या मान्येव देविका ॥५२॥
भोजनाच्छादनाऽऽलापविहारोत्सवखेलने ।
श्रृंगारहाससम्मानाऽऽसनयानाऽधिरोहणे ॥५३॥
वर्तने वार्तने स्वत्वे पूजने सत्कृतेऽर्हणे ।
पत्नी तु सर्वथा ह्यग्रे गणनीया नरेण हि ॥५४॥
रमण्यो यत्र पूज्यन्ते वसन्ति तत्र देवताः ।
रमण्यो यत्र तुष्यन्ति तत्र वसन्ति सम्पदः ॥५५॥
रमण्यो यत्र मोदन्ते वर्धन्ते स्मृद्धयोऽत्र वै ।
रमण्यो यत्र तृप्यन्ति तत्राऽऽकृष्यन्त ऋद्धयः ॥५६॥

नार्यो ह्यानन्दयन्त्यत्र तत्राऽऽगच्छन्ति सिद्धयः ।
नोद्वेज्या नैव ताड्याश्च नार्यो वंशधरा यतः ॥५७॥
जनकं तु परित्यज्य याऽऽगता पतिवेशने ।
पत्यधीना पतिभाग्या कस्तामुद्वेजयेद् बुधः ॥५८॥
दासीवाऽऽजीवनं या वै भूजिष्येव नु वर्तते ।
दीनेव कृपणा भूत्वा पतिं चैवाऽनुवर्तते ॥५९॥
गोवत् वा वह्यते यत्र दीना वहति तत्र वै ।
छाया त्विव शरीरस्य कस्तां बुद्धो नु दुःखयेत् ॥६०॥
दत्तं भुंक्ते परं वृंक्ते चाऽभियुंक्तेऽवशेषजम् ।
पराधीना पतिं धत्ते कस्तां न रक्षयेद् बुधः ॥६१॥
क्षुधां तृषां प्रसोढ्वापि गृहकार्यं करोति या ।
कष्टं कालं सहित्वाऽपि पतिकार्यं करोति या ॥६२॥
त्यक्त्वा निद्रां तथाऽऽलस्यं विगणय्य मनः स्वकम् ।
पत्युः कामप्रवृत्त्यर्थमुपतिष्ठत्यधो भुवि ॥६३॥
ताडने भर्त्सने क्रोशेऽधिक्षेपे त्यजनेऽपि या ।
निर्बला सहते सर्वं कस्तां दुःखं प्रदापयेत् ॥६४॥
एतादृश्यां सुशीलायां पत्न्यां लक्ष्मीः प्रतिष्ठति ।
राधा रमा जया पद्मा शारदा च सरस्वती ॥६५॥
एकादशी रतिः सन्ध्या मोहिनी च जयन्त्यपि ।
एताश्चान्या महादेव्यस्तत्र पत्न्यां वसन्ति हि ॥६६॥
अन्धा रुग्णा दरिद्रा वा कुरूपा कुभगाऽपि वा ।
कुस्तनी कुमुखी कुब्जा स्थूला शैथिल्यमध्यमा ॥६७॥
कुश्वासा कुपदी कुष्ठा कुप्रिया कुस्वभाविनी ।
अपि दुष्टा दुराचारा पत्नी सेव्येव पद्मजा ॥६८॥
न क्वापि दुःखिन्नीं कुर्यात् स्वस्य श्रेयो ह्यभीप्सता ।
तस्या निःश्वासमात्रेण सर्वं दह्यति तत्क्षणात् ॥६९॥
तस्या दुःखकृतोच्छ्वासान् निर्वंशो जायते नरः ।
पुण्यं पूर्वकृतं नश्येत् तस्याः कल्पान्तवह्निना ॥७०॥
तस्मात्पुत्र सदा पत्नीं पूजय त्वं यथोचितम् ।
स्वस्माद् दशगुणं पत्न्यै देहि सर्वं त्वयाऽर्जितम् ॥७१॥
तेन गृह्यसुखं लब्ध्वा सह स्वर्गं विगाह्य च ।
अन्ते ब्राह्मं पदं दिव्यं प्रयास्यथोऽपुनर्भवम् ॥७२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने
पत्नीव्रताख्यपुरुषस्य ब्रह्मचर्यगार्हस्थ्यदम्पती
त्वधर्ममाहात्म्यादिनिरूपणनामा
पञ्चत्रिंशोऽध्यायः ॥३५॥

श्रीनारायण उवाच—

शृणु त्वं कमले! लोकव्यवहारप्रवद्धनाम्।
यच्छ्रुत्वाऽऽश्चर्यमेव स्यात्कथयामि तु तत्त्वतः॥ १॥
कर्मलोके व्यवहारो ह्यादानप्रतिदानजः।
परस्परसहायेन सर्वदा बन्धनात्मकः॥ २॥
दरिद्रेभ्यो निर्धनेभ्योऽशक्येभ्यो धनवान् सदा।
द्रव्यं ददाति साहाय्यं देहयात्राप्रवृत्तये॥ ३॥
समयस्तेन कठिनो निर्याति सुखपूर्वकम्।
यदा स्वस्य सुयोगः स्यात्समयश्चापि लाभदः॥ ४॥
तदा तु धनिनो द्रव्यं सम्प्रदेयमशेषतः।
ग्रहीता यदि दद्यान्न ऋण्येव म्रियते यदि॥ ५॥
ऋणाऽपाकरणार्थाय पुनर्जन्मनि वै तदा।
मनुष्यो यदि जायेत प्राक् पिता भवतीति सः॥ ६॥
तदानीं पूर्वदातारः पुत्रा भवन्त्यकर्मठाः।
पत्नीगर्भे स्थिता एव कारयन्ति बहुव्ययम्॥ ७॥
पत्नीं तु रोगिणीं कुर्युस्तदर्थं द्रव्यनाशकाः।
जन्मन्यपि न सारल्यं तदानीं द्रव्यनाशकाः॥ ८॥
जन्मोत्तरं न सुस्वास्थ्यं तदानीं द्रव्यनाशकाः।
बाल्येऽपि सर्वथा दुष्टाः कारयन्ति व्ययं बहुम्॥ ९॥
भोजनाच्छादनापानविलेपनमहोत्सवैः।
कुर्वन्ति विपुलं नाशं पितृद्रव्यस्य पुत्रकाः॥१०॥
रोगे व्ययो व्रते व्ययो व्यसने व्यय एव च।
विद्याध्याये विवाहे च व्ययाद् व्यय इतीयते॥११॥
यावन्नोपार्जनार्हास्ते तावत्तु व्यय एव वै।
यावदुपार्जनार्थाय समयः प्रतिदृश्यते॥१२॥
तावद् युवा कृतः पुत्रोऽकस्माद् वा म्रियते यतः।
पूर्वजन्मनि दत्तं यत् सर्वमादाय याति सः॥१३॥
अथवा दीर्घजीवी चेद् विचित्तोन्मत्तवद्भवेत्।
तदर्थं सर्वथा द्रव्यव्यय एव न संशयः॥१४॥
इत्येवं पूर्वदातारो जायन्तेऽत्र तु पुत्रकाः।
दत्तं द्रव्यं समाप्यैव यान्ति कर्मानुसारतः॥१५॥
तस्मात्पूर्वप्रदातारः पुत्राः ज्ञेया स्वके गृहे।
ये वा न प्रतिदातारः पशवोऽपि भवन्ति ते॥१६॥
वृषा अश्वा रासभा वा चोष्ट्रा भूत्वा वहन्ति ते।
तद्द्वारा स्वामिनो द्रव्यं दत्वा यान्त्यन्यविग्रहम्॥१७॥
ऋणमुक्तो भवेद्यस्तु न किंचित्कस्यचिच्च वै।
ऋणं यस्याऽवशिष्येत स नैवाऽपत्यवान् भवेत्॥१८॥
तस्मात्पुत्राः सदा बोध्या द्रव्यनाशार्थमागताः।
सत्पुत्रास्त्वागते योग्ये समये लाभदायकाः॥१९॥
कर्मानुबन्धिसंसारे यस्य यत्र ऋणं भवेत्।
स तत् तस्य समादाय दूरं चिराय गच्छति॥२०॥
न कश्चित्कस्यचित् पुत्रो न कश्चित्कस्यचित्पिता।
ऋणादानप्रदानाभ्यां पितृपुत्राऽऽत्मयोजनाः॥२१॥
स्वपितृसेवनं पुत्रास्त्यक्त्वोत्पथगता यदि।
पितृनिःश्वाससंदग्धा यान्त्यधोऽप्यधमां गतिम्॥२२॥
मातरं पितरं वापि वृद्धं पाल्यं गृहाद् यदि।
निष्कासयति कुपुत्रो नष्टपुण्यो भवत्यरम्॥२३॥
गुरुं हूंकृत्य तूंकृत्य पितरं मातरं वदेत्।
श्मशाने जायते वृक्षः कंकगृध्रोपसेवितः॥२४॥
मात्रे पित्रे वृद्धतायां योऽन्नं नैव ददाति च।
देवाः स्युस्तस्य वै रुष्टा अन्ननाशकरास्तथा॥२५॥
ताभ्यां वासं तु वृद्धत्वे जीविकां न ददाति यः।
तस्य वासं जीविकां च हरन्ति देवयोनयः॥२६॥
पित्रोस्तु भर्त्सनं यद्वा ताडनं चाऽवमाननम्।
करोति यः कुपुत्रः स परे तत्तत्प्रपद्यते॥२७॥
कुपुत्रैर्भवितव्यं न भवितव्यं सुपुत्रकैः।
सुपुत्रस्य कृते स्वर्गे सम्पन्मोक्षोऽपि हस्तगः॥२८॥
सुदेवाऽऽराधनं यद्वा याभ्यां पुण्यं पुरा कृतम्।
ताभ्यां तु लभ्यते पुत्रः सुपुत्रो धार्मिकः शुचिः॥२९॥
सेवको मानदाताऽऽज्ञापालकोऽनुसृतः सदा।
गुर्वर्थे सुखदुःखादिसहनः परिपोषकः॥३०॥
सत्पुत्रजनने योगा अपेक्ष्यन्ते शुभाः सदा।
गर्भस्य धारणे योगाः सुयोगा वै सुपुत्रदाः॥३१॥
ऋतुदाने पितुर्यादृग् विचारो वर्तते हृदि।
कामः क्रोधोऽथवा लोभो भर्त्सनं चौर्यमेव वा॥३२॥
मोहो दंभो मलिनत्वं शाठ्यं कौटिल्यमेव वा।
शौर्यं विद्या सात्त्विकत्वं राजसं तामसं च वा॥३३॥
द्यूतं पानं व्यसनं च यद्यदनिष्टमेव वा।
वर्तते तन्मयो बिन्दुः पुत्रोऽपि तन्मयो भवेत्॥३४॥
दानधर्मदयाप्रेमकोमलान्तरतास्तथा।
वर्तेरन् तन्मयो बिन्दुस्तत्पुत्रस्तद्गुणो भवेत्॥३५॥
ऋतुदाने शुनः शब्दा गर्दभादेस्तथाऽशुभाः।
क्लेशकलहशब्दा वा श्रूयन्ते चेत्तथा तदा॥३६॥
बिन्दवस्तन्मया भूत्वा गर्भे ते वै पतन्ति यत्।
पुत्रा अपि श्वखरवत् जायन्ते तद्गुणास्तथा॥३७॥

नीचजातेः सहवासात् तद्भावानां च वर्तनात् ।
तादृशा बिन्दुदाने वै जायन्ते बालकास्तथा ॥३८॥
गृहे सर्वत्र भित्त्यादौ यादृश्यः सन्ति मूर्तयः ।
तादृशाऽऽकृतयस्तेषां पुत्राणान्तु भवन्ति हि ॥३९॥
कृष्णवर्णास्तामसाश्च युद्धारंभाः प्रतारकाः ।
चौराश्च कामनावन्तो हास्यसदनकारकाः ॥४०॥
दरिद्राश्च धनाढ्यश्च विजयिनः पलायिताः ।
राक्षसाश्च तथा प्रेता भूता भाण्डाश्च नर्तकाः ॥४१॥
नटा नट्यो यथा या या आकृतयो भवन्ति वै ।
गृहे वा दर्शने वाऽथ स्मरणे बिन्दुपातने ॥४२॥
तथा तथा गुणास्तेषां भवन्त्येव प्रजासु वै ।
तस्मान्निषेककार्येऽपि सुकृतं चिन्तयेद् बुधः ॥४३॥
सन्तं धर्मयुतं भक्तं यशोभाजं च सुकृतम् ।
श्वेतं पुण्ययुतं शान्तं सद्गुणं मानवं तथा ॥४४॥
गुरुं पतिं च पितरं मातरं देवमेव वा ।
विद्वांसं सत्क्रियं शूरं सुरेखं भाग्यशालिनम् ॥४५॥
गौरं प्रख्यातकार्यं च शीलवन्तं तपस्विनम् ।
लोकहितकरं देवपूजनाऽऽस्तिकमेव वा ॥४६॥
उद्यमिनं च नीतिज्ञं सौम्यं देवगुणाकरम् ।
परोपकारशीलं च सुभगं दानशालिनम् ॥४७॥
सर्वसद्गुणसद्वासं पवित्रं चिन्तयेत् तदा ।
नरं वाऽप्यथवा नारीं देवं देवीं तथापि वा ॥४८॥
सन्तं साध्वीं भगवन्तं तथा भगवतीं च वा ।
यादृशं यादृशीं चैव निषेकसमये तु यः ॥४९॥
या च संस्मरति तादृगपत्यं लभते तथा ।
ऋतुदाने यथा यादृग्भावो भवति देहिनोः ॥५०॥
तथाऽपत्यानि जायन्ते दम्पत्योर्भाववन्ति हि ।
अत्र सृष्टौ तु बहुधा स्वभावाः संकरीकृताः ॥५१॥
परस्परानुमिश्रेण शुद्धा नैव भवन्ति हि ।
तथापि सुखदं चिन्त्यं यावद्बुद्धिबलोदयम् ॥५२॥
तेनाऽपत्यं भवेत्तस्य सुखदं मानदं सदा ।
आर्तवस्तु गुणः सर्वाऽपत्येष्वाविशति ध्रुवम् ॥५३॥
ऋत्वारंभाद् भवेद्गर्भकमलं व्यात्तसम्मुखम् ।
आषोडशदिनं पश्चाद् गर्भं गृह्णाति नैव तत् ॥५४॥
मध्यरात्र्युत्तरं मत्वा चाऽऽगामिमध्यरात्रिकम् ।
यदा रजः सुदृश्येत तद्दिनाद्गणना भवेत् ॥५५॥
रजोदिनानि चत्वारि विहायाऽऽषोडशाऽवधिम् ।
गर्भाऽऽधानस्य योग्यत्वं भवतीत्यवधार्यं च ॥५६॥

यद्वा तद्वा रजोयुक्ता रात्र्यश्चतस्र एव तु ।
हातव्यास्तपरे काले पञ्चमी कन्यकाप्रदा ॥५७॥
षष्ठी रात्रिः पुत्रदा वै भवतीत्येवमंकतः ।
गणयित्वा यथेष्टं तु योगः कार्यः फलप्रदः ॥५८॥
पुत्रदास्तस्य युग्माः स्युरयुग्माः कन्यकाप्रदाः ।
ऋतुरजोऽन्विता रात्र्यश्चतस्रस्तत्र गर्हिताः ॥५९॥
तासु योगो न कर्तव्यो गर्भनाशक एव सः ।
तस्माद्धैर्यपदो भूत्वा शुद्धिं कृत्वा तु संविशेत् ॥६०॥
त्यक्त्वा चन्द्रमसं दुष्टं मघां मूलं विहाय च ।
शुचिं सन्निविशेत्पत्नीं पुन्नामर्क्षे विशेषतः ॥६१॥
पतिः पत्न्याः सह शुद्धिं कृत्वा शय्यां समाविशेत् ।
शुचिं पुत्रं प्रपद्येत पुमर्थस्य प्रसाधकम् ॥६२॥
मालिन्ये तु तयोः पुत्रा मलिनाः स्युश्च पापिनः ।
नार्या शृंगारहास्यादि कार्यं मैथुनकर्मणि ॥६३॥
तेनाऽपत्यं प्रकृष्टं स्यात् सुखभाक् सौम्यदर्शनम् ।
हास्ययुग् दिव्यरूपं च भवेन्मानसरंजनम् ॥६४॥
दुग्धपाकं तथा मिष्टं शुक्लं भुक्त्वा तु संविशेत् ।
तेनोज्ज्वलमपत्यं स्याद् रूपाढ्यं सुदृढं सदा ॥६५॥
शाकं भुंक्त्वा यदा गच्छेत् स्त्रियं तस्य तु बालकम् ।
कृष्णवर्णं भवेत्तस्माच्छाकं भोज्यं न तद्दिने ॥६६॥
उज्ज्वलेन प्रभोज्येन वीर्यं भवति चोज्ज्वलम् ।
तस्माद् द्वाभ्यां तदा भक्ष्यमुज्ज्वलं पय आदिकम् ॥६७॥
ततः ऋतुप्रसंगस्तु कार्यः सर्वशुभावहः ।
शुभे काले शुभे योगे मूहूर्तादौ शुभे तथा ॥६८॥
संगः कार्यो नाऽन्यथा तु सदपत्यसुलब्धये ।
सत्समयं त्वनादृत्य कामवेगेन ये जनाः ॥६९॥
अकाले गर्भदातारस्तेषां बालास्तु दुर्भगाः ।
अल्पवीर्या अल्पसत्त्वा अल्पसुकृतकारिणः ॥७०॥
बुद्धिहीना दुःखदाश्च जायन्ते दुःखवर्तनाः ।
तस्माच्छुभप्रजायास्तु लाभाय सर्वदा युवाम् ॥७१॥
वर्तेथां धर्मसद्भावे नाऽन्यभावे कदाचन ।
तेन सौख्यं परं भूयाद् भवतोरेकभावयोः ॥७२॥
लोकद्वयविजेतारौ भवतां, शं भवत्वपि ।
भूयास्तं च सदा साथौं वियोगरहितौ तथा ॥७३॥
दाम्पत्यसुखमश्नन्तौ नित्यमानन्दशालिनौ ।
देहसम्पत्कृतौ पुष्टौ भूयास्तं भाग्यशालिनौ ॥७४॥
रजस्वलारजो दोषो ह्यशुद्धिभ्राजको हि सः ।
तावद्दूरेऽन्वहं स्थेयं यावद्दिनचतुष्टयम् ॥७५॥

नार्या रजस्वलाधर्मस्थया स्पृश्यं न सर्वथा ।
गृहवस्त्वादिकं यत्तत्स्पर्शादशुचितां व्रजेत् ॥७६॥
अज्ञानाद्वा प्रसंगाद्वा स्पार्शनो दोष उद्भवेत् ।
तन्निवृत्तिर्भवेद्वर्षे तद् ऋषिपंचमीव्रतात् ॥७७॥
उपवासस्तत्र कार्यो नार्या देवप्रपूजनम् ।
भाद्रशुक्लसुपक्षस्य पञ्चमी ऋषिपञ्चमी ॥७८॥
तद्व्रते तु फलाहारो ह्यशक्तानां मतः शुभः ।
तथाकृते व्रतस्यापि भंगो नैव भवेदिति ॥७९॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने ऋणानुबन्धसन्ततिदाम्पत्यनिषेकानुरूपसन्तान-राजस्वल्यदोषपरिहारकव्रतादिनिरूपणनामा षट्त्रिंशोऽध्यायः ॥३६॥

**श्रीनारायण उवाच—**

पत्नीव्रतपतिव्रते श्रीहरिणा विवाहिते ।
नमस्कृत्य परं देवं ततो लोकेषु चेरतुः ॥ १ ॥
ताभ्यां संकल्पमात्रेण कोटिशो ब्राह्मणाः कृताः ।
एते तु ब्राह्मणाः सर्वे संकल्पसिद्धयोऽभवन् ॥ २ ॥
तेषां न मैथुनी सृष्टिर्नाऽन्यसाधनबन्धिनी ।
न च पुण्यस्य सापेक्षा न वा वेधःसहायिनी ॥ ३ ॥
इयं तु ब्रह्मसृष्टिर्वै ब्राह्मणा ब्रह्मरूपिणः ।
नारायणसभाः सर्वे नारायणस्वरूपिणः ॥ ४ ॥
ब्रह्मा स्वकीयसृष्ट्यर्थं यदा स्वं त्वकरोत्तपः ।
तदा तु समये सृष्टिरियं ब्राह्मणमात्रजा ॥ ५ ॥
प्रजापतेस्तु दिवसे प्रथमे ब्राह्मणाश्च ते ।
सर्वे नारायणी सृष्टिर्न तु वैधसी साऽभवत् ॥ ६ ॥
विप्राणां तत्र सर्वेषामायुष्यं ब्रह्मणा समम् ।
वेधसा च सहोत्पन्नाः सह यान्ति प्रलीनताम् ॥७॥
दिव्यास्ते ब्राह्मणाः सर्वे यान्ति ब्रह्मपुरे परे ।
अथ सत्यात्मके स्थाने दिव्ये वै परमेष्ठिनः ॥ ८ ॥
तिष्ठन्तो ब्राह्मसृष्टौ तु विप्रास्त एव सर्वशः ।
ब्रह्मर्षयः संभवन्ति ब्राह्मदिवसवर्तिनः ॥ ९ ॥
प्रथमं तु दिनारंभे सत्यलोकेऽप्यनन्तकाः ।
तपोलोकेऽपि त एव जनेऽपि ब्राह्मणाश्च ते ॥१०॥
महर्लोकेऽपि त एव ब्राह्मणा दिव्यमूर्तयः ।
स्वर्गे चैवाऽन्तरीक्षे च पृथ्व्यां पातालसप्तके ॥११॥
सर्वत्र ब्राह्मणा दिव्याश्चैकरूपैकभावनाः ।
एकसंस्कृतभाषाज्ञाश्चैकवर्णैकवृत्तयः ॥१२॥
सर्वे षोडशवर्षाश्च नार्या द्वादशहायनाः ।
समावस्था विकारादिरहिताः कामवर्जिताः ॥१३॥
नाऽशुद्धिर्न मनोजन्यो विकारो मिथुनाऽर्थितः ।
ब्रह्मध्यातार एवैते ब्रह्मयज्ञपराः सदा ॥१४॥
चतुर्दशसु लोकेषु गमनाऽगमनक्षमाः ।
आकाशगामिनः सर्वे यथेष्टरूपधारिणः ॥१५॥
दृश्याऽदृश्यस्वरूपज्ञाः सूक्ष्मस्थूलादिसंभवाः ।
एकज्ञातय एवैते संकल्पकृतसाधनाः ॥१६॥
भोजनं चामृतं तेषां गवां दुग्धं फलानि च ।
गावः कामदुघाः सर्वाः प्रदत्ता हरिणा च याः ॥१७॥
ता एव सह वर्तन्ते चतुर्दशस्तरेषु यत् ।
न न्यूनं जायते तेषां नारायणस्वरूपिणाम् ॥१८॥
यद्यदपेक्ष्यते वस्तु तत्तद्भवति तत्र वै ।
शीलसन्तोषतृप्त्यादिशालिनां च तपस्विनाम् ॥१९॥
नाऽऽसन् वर्णाश्रमास्तत्र नासन् ग्रामादयस्तथा ।
नासन् बालादिजन्मानि नासन् मरणवृद्धताः ॥२०॥
नासन् देहपरिणामा नासन् गृहनिवासिनः ।
नासन् क्षेत्राणि कृष्यर्थं नासन् वाहनजातयः ॥२१॥
नदीपर्वतकासारगुहोच्चभूमिवासिनः ।
जले केचित् स्थले केचित्केचिद्व्योमनिवासिनः ॥२२॥
वाय्वाधाराः स्तराधारा बाष्पाधाराश्च केचन ।
सिद्धयाधारास्तथैश्वर्याधाराः सर्वे निवासिनः ॥२३॥
ब्रह्मपूजापरा ब्रह्मध्यानादिनिरताश्च ते ।
ब्राह्मणाः सर्वलोकानामनन्ता युगलाः स्मृताः ॥२४॥
पतिव्रताकृताः सर्वाः कन्या ह्यर्बुदकोटयः ।
पत्नीव्रतकृताः सर्वे कुमाराश्चाऽब्जकोटयः ॥२५॥
यावन्तः सत्यलोके ते तावन्तस्तापसे जने ।
महर्लोके च तावन्तः स्वर्गे भुवरि भूस्थले ॥२६॥
अतले वितले तद्वत्सुतले च तलातले ।
महातले च पाताले ब्राह्मण्यो ब्राह्मणा हि वै ॥२७॥
व्यवस्थास्तु तदा नाऽऽसन् केषाञ्चित्कुत्रचित्प्रथाः ।
आसन् स्नानं तथा ध्यानं जपः श्रीहरिपूजनम् ॥२८॥
आतिथेयश्च सत्कारः स्वाध्यायः षट् च सत्क्रियाः ।
संकल्पेनोपतिष्ठन्ति किमर्थं कोशरक्षणम् ॥२९॥
सर्वे वैकुण्ठगन्तारः पुनरावर्तना मुहुः ।
परलोके प्रगन्तारः पुनरावाससंगताः ॥३०॥

भवन्त्येव यथा मुक्ता मुक्तान्यश्च यथा सदा ।
अव्याहतशरीरास्तेऽव्याहताऽर्थ्यपदार्थकाः ॥३१॥
अप्रतिहतसंकल्पा अव्याहतश्रियश्च ते ।
वैकुण्ठे ब्रह्मणो लोके नासीद्भेदो मनागपि ॥३२॥
चतुर्दशसु लोकेषु नासीद् वैषम्यमण्वपि ।
यथा पुंसु तथा स्त्रीषु नासीद् भेदोऽङ्गमन्तरा ॥३३॥
दिव्यदृष्ट्या तु ते सर्वे परस्परप्रभालिनः ।
दिव्यरूपैर्विराजन्ते यथासंकल्पसंपदः ॥३४॥
तेषां तु प्रेमभक्त्या या श्रीहरेः स्यात्प्रसन्नता ।
सैव धर्मः सदाचारः सैवाऽऽनन्दप्रसाधनम् ॥३५॥
सर्वे तु वैष्णवा आसन्नारायणपरायणाः ।
नारायणप्रपन्नास्ते मुक्ताविव परिप्लुताः ॥३६॥
वसन्ति च जराजन्ममृतिव्याधिविवर्जिताः ।
न चिन्ता न च वोपाधिर्न विघ्नो नास्त्यरिष्टकम् ॥३७॥
न भाग्याऽऽलंबनं तत्राऽऽलम्बनं हरिरेव यत् ।
शास्तुरालम्बनं नैव शास्ता श्रीहरिरेव यत् ॥३८॥
इत्येवं प्रथमः कालः समारंभस्य वर्तते ।
वेधसो हि महादिव्यः सत्कालः स हि वर्तते ॥३९॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने
प्रजापतेः प्रथमदिवसीयसर्वादिब्राह्मणमात्रसृष्टि-
निरूपणनामा सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! ततो ब्रह्मा स्वयंभूर्भगवान्प्रभुः ।
सिसृक्षुर्जीवसंघातानभिध्यानमथाऽकरोत् ॥ १ ॥
सत्यलोके मम सृष्टिर्मानसी सात्त्विकी भवेत् ।
इत्येवं ध्यायतस्तत्र ब्राह्मणाः सात्त्विकाश्च ये ॥ २ ॥
ऊर्ध्वस्रोतस एवैते परं चोर्ध्वे व्यवस्थिताः ।
व्यवर्तन्त यत ऊर्ध्वमूर्ध्वस्रोतस आमताः ॥ ३ ॥
ते सुखप्रीतिबहुला अन्तर्बहिश्च सद्व्रताः ।
प्रकाशा वहिरन्तश्च ब्रह्मस्रोतस एव च ॥ ४ ॥
ऋषयस्ते सदा ऋषेर्ब्रह्मणो ज्ञानसंभृतेः ।
ऋषेर्वेदस्य विज्ञानादृषयस्ते सदा मताः ॥ ५ ॥
ऋषीत्येव गतौ धातु श्रुतौ सत्ये तपस्यथ ।
एतत्सन्नियतस्तस्मिन् ब्राह्मणः स ऋषिः स्मृतः ॥ ६॥
निवृत्तिसमकालन्तु बुद्ध्याऽव्यक्तमृषिः स्वयम् ।
परं हि ऋषते यस्मात्परमर्षिस्ततः स्मृतः ॥ ७॥
गत्यर्थाद् ऋषतेर्धातोर्नामनिर्वृत्तिरादितः ।
यस्मादेषः स्वयंभूतस्तस्माच्च ऋषिता मता ॥ ८ ॥
ईश्वराः स्वयमुद्भूता मानसा ब्रह्मणः सुताः ।
यस्मान्न हन्यते मानैर्महान्परिगतः पुरः ॥ ९ ॥
यस्मादृषन्ति ये धीरा महान्तं सर्वतो गुणैः ।
तस्मान्महर्षयः प्रोक्ता बुद्धेः परमदर्शिनः ॥१०॥
ब्रह्मचारिण एवैते सन्ति वेधःसमायुषः ।
भवन्ति ब्रह्मणा तुल्या रूपेण विषयेण च ॥११॥
आनन्दं ब्रह्मणः प्राप्य सन्त्यैश्वर्येण तत्समाः ।
अष्टाशीतिसहस्राणि ऋषयस्तूर्ध्वरेतसः ॥१२॥
ब्रह्मणो मानसाः सर्वे जाताः सत्यनिवासिनः ।
तेषां तु नामधेयानि यथापेक्षं दधात्यजः ॥१३॥
अथाऽभिध्यायतः सर्गो ज्ञानस्रोतोऽभ्यवर्तत ।
ऋषयो ज्ञानिनो दिव्या ज्ञानात्मब्रलपूर्वकाः ॥१४॥
संन्यासा ब्रह्मरन्ध्रात्तु ब्रह्मणः समजज्ञिरे ।
वैखानसा बालखिल्या औदुम्बराश्च फेनपाः ॥१५॥
कुटीचकाश्च बह्वोदा हंसाः परमहंसकाः ।
अष्टौ संन्यासिनो भेदास्तत्राऽऽद्यास्तु सहस्रशः ॥१६॥
सन्ति षष्टिसहस्राणि बालखिल्या महर्षयः ।
तदन्ये कोटिशो बोध्या औदुम्बरप्रभृतियः ॥१७॥
अथाऽभिध्यायतस्तस्य ऋभुरग्निर्बभूवतुः ।
पुनश्च ध्यायतस्तस्य दश पुत्राः प्रजज्ञिरे ॥१८॥
लोकसन्तानकर्तारो ज्ञानविज्ञानविद्वराः ।
मरीचिरत्र्यंगिरसौ पुलस्त्यः पुलहः क्रतुः ॥१९॥
भृगुर्वशिष्ठो दक्षश्च दशमस्तत्र नारदः ।
उत्संगान्नारदो जज्ञे दक्षोंऽगुष्ठात्तु वेधसः ॥२०॥
प्राणाद्वशिष्ठः संजातो भृगुस्त्वचः करात् क्रतुः ।
पुलहो नाभितो जज्ञे पुलस्त्यः कर्णयोर्ऋषिः ॥२१॥
अंगिरा मुखतोऽक्ष्णोऽत्रिर्मरीचिर्मनसोऽभवत् ।
पुण्यस्तु दक्षिणस्तनात् पापो जातस्तु पृष्ठतः ॥२२॥
छायायाः कर्दमो जज्ञे त्रयस्तेऽपि च मानसाः ।
अथाऽभिध्यायतो जज्ञे स्वायंभुवमनुस्तथा ॥२३॥
शतरूपा च तत्पत्नी दम्पती तौ बभूवतुः ।
ताभ्यां मिथुनधर्मेण प्रजा ह्येधाम्बभूविरे ॥२४॥
अथाऽभिध्यायतस्तस्य जज्ञिरे ऋषयस्त्विमे ।
वंशविस्तारयितारो लोकसन्तानहेतवः ॥२५॥
युगे तु प्रथमे सर्वे मानसाः संभवन्ति हि ।
कल्पान्तरे तु ते केचिज्जायन्ते वंशजा अपि ॥२६॥

योनिजाऽयोनिजत्वे तु विष्णोरिच्छैव कारणम् ।
येषां यत्र यदाऽपेक्षा तदा तान्प्रेरयत्यपि ॥२७॥
दिशः काव्यानि रागाश्च सूक्ष्माणि विषयाणि च ।
इन्द्रियाणि तथा प्राणा ब्रह्मणो मानसानि वै ॥२८॥
रुचिरग्निस्तथा मेधा ब्रह्मणो मानसाश्च ते ।
काव्यो बृहस्पतिश्चैव कश्यपश्चोशनास्तथा ॥२९॥
उतथ्यो वामदेवश्च सयोज्यश्चौशिजस्तथा ।
कर्दमो विश्रवाः शक्तिर्बालखिल्यास्तथाऽधराः ॥३०॥
श्वेतश्च ऋषयो ज्ञानान्मानसा ब्रह्मणो मताः ।
वत्सरो नग्नहूश्चैव भारद्वाजोऽनलायनः ॥३१॥
बृहदुक्थः शरद्वाँश्च ह्यगस्त्यश्चौशिजस्तथा ।
ऋषिर्दीर्घतमाश्चैव बृहद्ग्रन्थः शरद्वतः ॥३२॥
वाजश्रवाः सुवित्तश्च सुवागू वेषपरायणः ।
दधीचः शंखमाँश्चैव राजा वैश्रवणस्तथा ॥३३॥
एतेऽपि मानसाः सर्वे सत्येन ऋषयो मताः ।
भृगुः काव्यः प्रचेतास्तु दधीचो ह्यात्मवानपि ॥३४॥
और्वोऽथ जमदग्निश्च विदः सारस्वतस्तथा ।
अद्विषेणो ह्यरूपश्च वीतहव्यः सुमेधसः ॥३५॥
वास्तुः पृथुर्दिवोदासः परवास्यो गृत्समान्नभः ।
अत्रिरर्चिसनश्चैव श्यामवाँश्चाथ निष्ठुरः ॥३६॥
वल्गूतको मुनिर्धीमाँस्तथा पूर्वातिथिश्चयः ।
इत्येते मानसाः पूर्वे मन्त्रैस्ते ऋषयो मताः ॥३७॥
अंगिरा वैधसश्चैव भारद्वाजोऽथ बाष्कलिः ।
अमृतश्च तथा गार्ग्यः श्येनी संहृतिरित्यपि ॥३८॥
पुरुकुत्सश्च ऋषभः कण्वश्चैवाऽथ मुद्गलः ।
उतथ्यश्च भरद्वाजस्तथा वाजश्रवा अपि ॥३९॥
आप्यायश्च सुवित्तिश्च वामदेवस्तथैव च ।
कक्षिवानौगजो दीर्घतपा व्यासश्च देवलः ॥४०॥
कश्यपो विभ्रमो रैभ्योऽसितश्चैव पराशरः ।
वशिष्ठो याज्ञवल्क्यश्च मैत्रावरुण एव च ॥४१॥
इन्द्रप्रमीतिः कुण्डिश्च कुशश्च पिप्पलायनः ।
गोपालः कम्मरा चेति दम्पती ब्रह्मणः प्रजाः ॥४२॥
इत्यासन् मानसाः पूर्वे पश्चात्ते योनिजा अपि ।
अन्येऽपि मानसाः पश्चाज्जाता योनिसमुद्भवाः ॥४३॥
तेषां वंशप्रवंशाश्चाऽभवन् यैः पूरितं जगत् ।
कल्पे कल्पे प्रजायन्तेऽन्येऽन्ये ब्रह्माज्ञया पुनः ॥४४॥
लोकसंग्रहकर्तारस्ततः सत्यं प्रयान्ति ते ।
वेधःसालोक्यसायुष्यसार्ष्टिभाजो भवन्ति च ॥४५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने सत्यलोकीयऋष्यादिमानसीसृष्टिकथन नामाऽष्टात्रिंशोऽध्यायः ॥३८॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! प्रवक्ष्यामि पितॄँस्तु मानसान् बहून् ।
ब्रह्मणः सृजतः पुत्रान् जज्ञिरे पितरोऽस्य वै ॥१॥
मध्वादयः षडृतवः पितरः समजज्ञिरे ।
अग्निष्वात्तास्तथा बार्हिषदास्ते मानसाः खलु ॥ २ ॥
आज्यपाः सोमपाश्चैते पितरो मानसा अपि ।
अयज्वानस्तथा तेषामासन्वै गृहमेधिनः ॥ ३ ॥
अग्निष्वात्तास्तु ये ते वै पितरोऽनाहिताग्नयः ।
यज्वानस्तेषु ये ते तु पितरः सोमपीथिनः ॥ ४ ॥
ये च बार्हिषदास्ते वै पितरस्त्वग्निहोत्रिणः ।
ऋषयः पितरश्चैते ब्रह्मसंकल्पजा हि ते ॥ ५ ॥
मधुमाधवौ रसात्कौ शुचिशुक्रौ तु शुष्मिणौ ।
नभनभस्यौ जिवाविषोर्जौ तु सुधया प्लुतौ ॥ ६ ॥
सहसहस्यौ समन्यू तपस्तपस्यौ घोरकौ ।
त इमे ऋतवो द्वन्द्वाः कार्यकारणरूपिणः ॥ ७ ॥
तत्र ये ब्रह्मणः पुत्रा मानसास्तेऽभिमानिनः ।
कार्यस्थलं कलाकाष्ठामाससंवत्सरादिकम् ॥ ८ ॥
स्थानिनस्त्वभिमानज्ञाश्चेतनाः पितरो हि ते ।
संवत्सरो महान् कालस्तत्पुत्राः ऋतवः स्मृताः ॥ ९ ॥
युगाः कल्पास्तु ये ते तु महत्तर महत्तमाः ।
कार्यकारणरूपा वै पितरो ब्रह्मसूद्भवाः ॥१०॥
ऋत्वात्मजा दिनाद्या आर्तवास्तेषां कलादयः ।
आर्तवेयाः सुताः स्थानेश्वराः स्थात्मका अपि ॥११॥
प्रजापतिः स्वयं ब्रह्मा संवत्सरादिरूपधृक् ।
संवत्सरः स्वयमग्निर्ऋतमित्यर्थकस्तु सः ॥१२॥
ऋतात्तु ऋतवस्तेभ्यो मासाश्च आर्तवा मताः ।
द्विपदां च चतुष्पदां पक्षिणां सर्पतां तथा ॥१३॥
स्थावराणां च यत्पुष्पं तद्वै कालार्तवं मतम् ।
कार्यहेत्वोरभेदाश्च नामैक्यं पितृबोधकम् ॥१४॥
इत्येवं पितरो ज्ञेया ऋतवश्चार्तवास्तथा ।
सर्वभूतानि तेभ्योऽथ ऋतुकालात्प्रजज्ञिरे ॥१५॥

तस्मादेतेऽपि पितरः आर्तवा ब्रह्मणाः कृताः ।
जज्ञातेऽथ च पितृभ्यः कन्ये मेना च धारणी ॥१६॥
योगिन्यौ ब्रह्मवादिन्यौ पित्र्यौ ते चापि सम्मते ।
बार्हिषदास्तु तां मेनां पत्नीं हिमवते ददुः ॥१७॥
मैनाको मेनया जातो धारण्या मन्दरस्ततः ।
कन्या वेला नियतिश्च आयतिश्चापि जज्ञिरे ॥१८॥
धातुश्चैवाऽऽयतिः पत्नी विधातुर्नियतिः स्मृता ।
सुषुवे सागराद्वेला सामुद्रीं कन्यकां शुभाम् ॥१९॥
सावर्णिना च सामुद्री सुषुवे दशपुत्रकान् ।
प्राचीनबर्हिषस्ते वै प्रचेतस इति दश ॥२०॥
तेभ्योऽथ कन्यकां वार्क्षीं ददुर्वृक्षास्ततः परम् ।
प्राचेतसोऽभवद् दक्षः, दक्षान्ताः पितरः स्मृताः ॥२१॥
पत्न्यश्च ताः पित्र्यो बह्व्यस्तपोलोके वसन्ति वै ।
सर्वा सा मानसी सृष्टिर्मन्वन्तरे तु योनिजाः ॥२२॥
अथापि सत्यलोकस्था ये वै ऋषय ईरिताः ।
तेषां वंशेषु चोत्पन्नाः पितरस्तेऽपि कीर्तिताः ॥२३॥
भृगुरंगिरा मरीचिः पुलस्त्यः पुलहः क्रतुः ।
अत्रिश्चैव वशिष्ठश्च ह्यष्टौ ते ब्रह्मणः सुताः ॥२४॥
एभिस्तु मानसैः पुत्रैर्ब्रह्मणा प्रेरितैस्तदा ।
उत्पादितास्तपोलोकवासिनः पितरस्तथा ॥२५॥
ते भार्गवाश्चांगीरसो मारीचाश्च तथा परे ।
पौलस्त्याः पौलहाश्चैव क्रातवाश्च तथा परे ॥२६॥
आत्रेयाश्च तथा वाशिष्ठा इति लोकविश्रुताः ।
पितॄणां ते गणाः प्रोक्तास्तपोलोकनिवासिनः ॥२७॥
तत्र केचिदमूर्ताश्च प्रकाशाश्च तथाऽपरे ।
ज्योतिष्मन्तस्तथा चान्ये भवन्ति पितरो हि ते ॥२८॥
दक्षपुत्राश्च हर्यश्वाः शबलाश्वास्तथा पुनः ।
दशसाहस्रसंख्याकाः सहस्राणि च पंच च ॥२९॥
ते सार्धैकसहस्रं वै सर्वे तु ब्रह्मवर्चसः ।
एते तपःपथं प्राप्य वर्तन्ते तपआस्थिताः ॥३०॥
नारदस्योपदेशेन ब्रह्माऽन्वेषणतत्पराः ।
तपोलोकमुपागम्य तिष्ठन्ति दिव्यकान्तयः ॥३१॥
त एते पितरः सर्वे प्रजाकल्याणकारकाः ।
ऋभुः सनत्कुमाराद्याः क्वचित्तिष्ठन्ति तापसे ॥३२॥
तपसि कार्यवाहार्थे, ध्यानार्थे तु सति स्थिताः ।
मरीचिः कश्यपो दक्षो वशिष्ठश्चांगिरा भृगुः ॥३३॥
पुलस्त्यः पुलहश्चैव क्रतुरित्येवमादयः ।
पूर्वं ते सम्प्रसूयन्ते ब्राह्मणो मनसा सह ॥३४॥

ततः प्रजाः प्रतिष्ठाप्य जनमेवाऽऽश्रयन्ति ते ।
यामादयो गणाः सर्वे महर्लोकनिवासिनः ॥३५॥
महर्लोकविनाशे तु जनमेवाऽऽश्रयन्ति ते ।
सर्वे सूक्ष्मशरीरास्ते तत्र गत्वा भवन्ति हि ॥३६॥
तेषां ते तुल्यसामर्थ्यास्तुल्यमूर्तिधरास्तथा ।
जनलोके विवर्तन्ते यावद्रात्रिस्तु वेधसः ॥३७॥
तत्रापि पूर्वकल्पानां पुण्यख्यातिबलान्विताः ।
प्रजापतय ये चाऽऽसन्निवृत्ताधिपतित्वतः ॥३८॥
निवृत्तवृत्तयः सर्वे स्वस्थाः सुमनसस्तथा ।
तपोलोकं प्रपद्यन्ते जनमुत्सृज्य तैः सह ॥३९॥
मन्वन्तराणां च स्वायंभुवाद्यानां जने स्थितिः ।
विनिवृत्ताधिकाराणां देवानां महसि स्थितिः ॥४०॥
शुक्राद्याश्चाक्षुषान्ताश्च मन्वन्तरा भवन्ति ये ।
ते महर्लोकसंस्थाश्च ब्रह्ममानससंभवाः ॥४१॥
मरीचिः कश्यपो दक्षस्तथा स्वायंभुवोंऽगिराः ।
भृगुः पुलस्त्यः पुलहः क्रतुरित्येवमादयः ॥४२॥
लोकयात्राप्रवाहाय महर्लोकेऽपि यान्ति हि ।
प्रजानां पतयः सर्वे वर्तन्ते तत्र तैः सह ॥४३॥
सत्यस्था अपि कार्यार्थमिह प्यायान्त्यभीक्ष्णशः ।
कार्यं सम्पाद्यते सर्वे पुनर्यान्ति स्वकं गृहम् ॥४४॥
लोकाः सोमपदा नाम महर्जनमिति स्मृताः ।
पितरस्तत्र वर्तन्ते ह्यग्निष्वात्तादयश्च ते ॥४५॥
वसवश्चापि वर्तन्ति अमावस्वादयस्तु ते ।
सुसूक्ष्मा अग्निस्फुलिंगा ते वै पितरो देवताः ॥४६॥
विरजायास्तु ये पुत्रा वैराजा नाम ते गणाः ।
अग्निष्वात्ताः स्मृतास्तत्र पितरो भास्वरप्रभाः ॥४७॥
स्वधापुत्रास्तथा स्वाहापुत्रा ये ज्योतिभास्वराः ।
मरीचिगर्भास्ते तत्र पितरो ह्यग्निरूपिणः ॥४८॥
आज्यपा नाम पितरो ये भवन्ति विहंगमाः ।
मानसा नाम तल्लोका भवन्ति यत्र ते स्थिताः ॥४९॥
विरजस्य तु पुत्रा ये वैराजा नामतो मताः ।
भास्वराः पुण्यभक्ष्याश्च ह्यमूर्तय गणास्तु ते ॥५०॥
पितॄणां या दुहितरो दौहित्राश्च तु ये मताः ।
पितरो वंशविस्तारा बोध्या भिन्ननिवासिनः ॥५१॥
पृथ्व्यां साध्वीसाधुरूपा अन्तरिक्षेऽनिलात्मकाः ।
स्वर्गे देवात्मका महर्जनतपस्सु मानसाः ॥५२॥
पितरः संवसन्तीति मूर्ताऽमूर्तस्वरूपिणः ।
आदिदेवास्तु ते सर्वे महासत्त्वा महौजसः ॥५३॥

सर्वकामप्रदास्तृप्ता रुष्टाः सर्वहरा मताः।
तस्मात् सर्वप्रयत्नेन तोषणीयाः सदा हि ते ॥५४॥
महरादौ स्थिता ये वै तेषां सिद्धिस्तु मानसी।
सद्यश्चोत्पद्यते तेषां मनसा सर्वमीप्सितम् ॥५५॥
इत्येवं तु प्रिये लक्ष्मि! सर्वे महर्षयः स्थिताः।
तपोलोके जनलोके पितरः सर्वथा स्थिताः ॥५६॥
महर्लोके लोकपाला रुद्राः प्रजेश्वरास्तथा।
मनवः पितरश्चैव यथाकार्यं समस्थिताः ॥५७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने
महर्जनतपोलोकेषु मानसीसृष्टिपितॄणां निर्देशनामा
एकोनचत्वारिंशोऽध्यायः ॥३९॥

**श्रीलक्ष्मीरुवाच—**

पितरः कतिधा बोध्याः किं देयं किं फलं तथा।
अभिसन्धाय पितरं पितुश्च पितरं तथा ॥ १ ॥
पितुः पितामहं चैव त्रिषु पिण्डेषु नामतः।
कानि श्राद्धानि देयानि कथं गच्छन्ति वै पितॄन् ॥ २ ॥
भुवि भुवरि स्वर्गे वा दुःखिनः सुखिनोऽपि वा।
पूर्वजा देहमापन्ना भवेयुः पितरो न वा ॥ ३ ॥

**श्रीनारायण उवाच—**

देवाश्च ऋषयश्चैव जीवाश्चापि ह्यनेकशः।
कर्मलोके समागम्य कृत्वा कर्माणि भूरिशः ॥ ४ ॥
जायन्ते पितरस्ते वै पृथ्व्यादिलोकवासिनः।
केचित्पृथ्व्यां संवसन्ति तिष्ठन्त्यन्ये भुवः स्तरे ॥ ५ ॥
ते तु सर्वे वासनाभिर्जाताऽऽकस्मिकमृत्यवः।
केचित्स्वर्गे तु गच्छन्ति ये वै पुण्यपरायणाः ॥ ६ ॥
केचिन्महर्जनतपोलोकान्प्रयान्ति पुण्यतः।
सोमलोकं सूर्यलोकं विद्युल्लोकं तथा परे ॥ ७ ॥
अग्निलोकं चेन्द्रलोकं नक्षत्रादिग्रहस्तरान्।
यान्ति पुण्यानुसारेण देवास्ते पितरः स्मृताः ॥ ८ ॥
भवन्ति पितरो देवा देवाश्च पितरः पुनः।
लोकाः सान्तानिका नाम पितॄणां भास्वरा मताः ॥ ९ ॥
यत्र क्वापि स्थितान् पितॄन् स्मरन्ति वंशजास्तु यान्।
सान्तानिकैस्तु पितृभिस्तत्राऽऽगन्तव्यमेव यत् ॥१०॥
पितॄणां तु भवेद्राजा सोमश्चाऽप्यर्यमा तथा।
अर्यमा किरणैः सोममुत्तेजयति चाऽन्वहम् ॥११॥
सोमश्च किरणैः सर्वमाप्याययति वै जगत्।
तस्माच्च पितरः सर्वे सोमं तृप्यन्ति चाऽऽप्य वै ॥१२॥
सोमं तु पितरं श्राद्धैराप्याय्य तृप्तिमाप्नुयुः ॥
सोमलोकनिवासा ये पितरः सोमजीवनाः ॥१३॥
श्राद्धैराप्यायितः सोमो लोकोनाप्याययिष्यति।
कृत्स्नं सपर्वतवनं जंगमाजंगमैर्वृतम् ॥१४॥
श्राद्धानि पुष्टिकामाश्च ये करिष्यन्ति मानवाः।
तेभ्यः पुष्टिं प्रजाश्चैव दास्यन्ति पितरः सदा ॥१५॥
श्राद्धे येभ्यः प्रदास्यन्ति त्रीन् पिण्डान् नामगोत्रतः।
सर्वत्र वर्तमानास्ते पितरः प्रपितामहम् ॥१६॥
तेषामाप्याययिष्यन्ति श्राद्धदानेन च प्रजाः।
सुखिनो दुःखिनो वापि पितरस्तु सवासनः ॥१७॥
तेभ्योऽवश्यं जलमन्नं देयं शक्त्या तु वंशजैः।
पितरस्तेन तृप्ताः स्युः सुमूर्ता वाप्यमूर्तयः ॥१८॥
तेषां सप्त समाख्याता गणास्त्रैलोक्यपूजिताः।
अमूर्तयस्त्रयस्तेषां चत्वारस्तु समूर्तयः ॥१९॥
उपरिष्टात् त्रयस्तेषां वर्तन्ते भावमूर्तयः।
तेषामधस्ताद् वर्तन्ते चत्वारः सूक्ष्ममूर्तयः ॥२०॥
श्रद्धया भावनया च तृप्यन्ति भावमूर्तयः।
अन्नादिपुण्यतृप्तास्ते भवन्ति सूक्ष्ममूर्तयः ॥२१॥
मनोजवाः स्वधाभक्ताः सर्वदेय सुवस्तवः।
अन्नं सोमं च संलब्ध्वाऽऽप्यायन्ते तृप्तमानसाः ॥२२॥
तत्र श्राद्धे जलान्नैस्ते तृप्यन्ति दानभावनैः।
ज्ञानिनो विष्णुभक्तास्ते ब्रह्मार्पणक्रियादिभिः ॥२३॥
पूर्णयुगसहस्रान्ते जायन्ते ब्रह्मवादिनः।
उत्सृज्य देहजातानि मोक्षं गच्छन्त्यमूर्तयः ॥२४॥
क्रियया गुरुपूजाभिस्तृप्यन्ति तु समूर्तयः।
श्राद्धे तृप्ताः पुनः सोमं पिबन्ति पितरश्च ते ॥२५॥
सहस्रशस्तु विप्रान्वै साधून् बालाँश्च भोजयेत्।
तृप्यन्ति पितरस्तेषां साध्वीनां भोजनेन च ॥२६॥
विप्राणां तु सहस्रेण स्नातकानां शतेन च।
अनाथानां सहस्रेण वानप्रस्थशतेन च ॥२७॥
साध्वी चैका साधुरेको भोजने तु विशिष्यते।
साधुः साध्वी हरेर्बालौ ज्ञानध्यानमयौ यतः ॥२८॥
दिव्यौ मोक्षकरौ तुष्टौ योगिनौ ब्रह्मतन्मयौ।
पुत्रः पौत्रः प्रपौत्रो वा बालौ तौ भोजयिष्यति ॥२९॥
पितरस्तस्य तृप्यन्ति सुवृष्टेनेव कर्षुकः।
अलाभे साधुसाध्वीनां भोजयेद् ब्रह्मचारिणौ ॥३०॥

तदलाभे तु दौहित्रं ह्यतिथिं चापि भोजयेत् ।
सिद्धाश्च गुप्तरूपेण चरन्ति बहुधाऽन्वहम् ॥३१॥
साधुसाध्वीस्वरूपं तमतिथिं पूजयेत्सदा ।
उर्वी सागरपर्यन्तां देवा योगेश्वरास्तथा ॥३२॥
नानारूपैश्चरन्त्येते प्रजाधर्मप्रपालकाः ।
सिद्धाः सन्तश्च साध्व्यश्च विचरन्ति महीतले ॥३३॥
लक्ष्मीनारायणरूपास्तेषां पूजनमाचरेत् ।
दद्याच्च भोजनं रम्यं व्यंजनानि फलानि च ॥३४॥
देवाश्च पितरश्चैव वह्निश्चाऽतिथिरूपकान् ।
आविश्य भुंजते तद्वै पूजयेदतिथीन्सदा ॥३५॥
बालानभ्यागतान् खिन्नान्साधून् साध्वीर्निराश्रयान् ।
भक्ताँश्च याचकान् जानीयादतिथ्यात्मकान् सदा ॥३६॥
अभ्यागतो याचकः स्यादतिथिः स्यादयाचकः ।
पिपासिनाय श्रान्ताय भ्रान्तायाऽतिबुभुक्षते ॥३७॥
विदुषे साधवे साध्व्यै बालायाऽनाश्रयाय च ।
तस्मै सत्कृत्य दातव्यं यज्ञस्य फलमिच्छता ॥३८॥
साधवश्च महात्मानः श्राद्धे सत्कृत्य पूजिता ।
मोक्षं योगमथैश्वर्यं प्रयच्छन्ति पितामहाः ॥३९॥
सर्वेषां राजतैः पात्रैरपि वा रजतान्वितैः ।
दत्तं स्वधां पुरोधाय तथा प्रीणाति वै पितॄन् ॥४०॥
पितॄन् प्रीणाति वै भक्त्या पितरः प्रीणयन्ति तम् ।
पितरः पुष्टिकामस्य पूजाकामस्य वा पुनः ॥४१॥
पुष्टिं प्रजां च सुस्वर्गं प्रयच्छन्ति न संशयः ।
विमानानि सहस्राणि युक्तान्यप्सरसां गणैः ॥४२॥
सर्वकामप्रसिद्धानि प्रयच्छन्ति पितामहाः ।
प्रज्ञां पुष्टिं स्मृतिं मेधां राज्यमारोग्यमित्यपि ॥४३॥
मुक्तावैदूर्यवासांसि वाजिनागाऽयुतानि च ।
कोटिशश्चापि रत्नानि प्रयच्छन्ति पितामहाः ॥४४॥
सौवर्णं राजतं ताम्रं पितॄणां पात्रमुच्यते ।
रजतं रजताक्तं वा पितॄणां पात्रमुत्तमम् ॥४५॥
रजतस्य कथा वापि दर्शनं दानमेव च ।
अनन्तमक्षयं स्वर्ग्यं पितॄणां दानमुच्यते ॥४६॥
पितॄनेतेन दानेन सत्पात्रास्तारयन्त्युत ।
कांचनं राजतं ताम्रं दौहित्रः कुतपास्तिलाः ॥४७॥
वस्त्रं च पावनीयानि साध्वी च साधुरित्यपि ।
प्रीयन्ते पितरो येन भोज्येन सुरसेन च ॥४८॥
तानि तेषां प्रवक्ष्यामि सर्वकामप्रदानि वै ।
श्राद्धकाले सुभोज्यानि पितॄणां तोषणाय वै ॥४९॥
परमान्नं दुग्धपाकः पूरिकाः पोलिकास्तथा ।
शतच्छिद्राण्यपूपाश्च मिष्टाः पूरणपोलिकाः ॥५०॥
रुतल्यश्च तथा घारिपूरिकाश्च प्ररोटकाः ।
फाफटाः स्थिरकाश्चैव घृतचूर्णा गुडौदनाः ॥५१॥
शष्कुल्यः खाजकाश्चैव संयावो मोदकास्तथा ।
कंसारः पर्पिकाखण्डाः पिण्डका ग्रन्थकास्तथा ॥५२॥
कलिकालड्डुकाश्चापि कलिकाः सेविकास्तथा ।
सोहालिका मण्डकाश्च वटिका घृतपूरणाः ॥५३॥
पूपाश्च मौक्तिकाश्चैव शाटकाः सूत्रफेणिकाः ।
सुखदाः शालिपिष्टाश्च मुद्गमोदकघुर्घुराः ॥५४॥
तिलशृंखा गुन्द्रपाकः पीतसाराश्च शर्कराः ।
मेशुभो मोहनस्थाल ओदनः पुष्पवट्टिकाः ॥५५॥
निवाराश्च यवाश्चैव राजगर्वादयस्तथा ।
शृंगाटका रक्तालवो वटाणा द्विदलास्तथा ॥५६॥
व्हालाश्च पर्पटाश्चैव पर्पट्यः क्वथिका दधि ।
हरिन्माषाश्च मुद्गाश्च तुवर्यश्चैव दुग्धकम् ॥५७॥
शाकानि त्वङ्लवंगैलासंस्कृतानि मधूनि च ।
गवाहारा भिण्डकाश्च रक्तालवश्च चिर्भटाः ॥५८॥
कर्कट्यः कारवेल्लाश्च कूष्माण्डाः सूरणस्तथा ।
वृन्ताकः शर्कराकन्दः शिम्बिकाखर्बुजस्तथा ॥५९॥
पटोला गण्डकाश्चापि घृतघोढाः परावलाः ।
लूनिका मेथिका राज्ञी जीवन्ती सुवमूलकाः ॥६०॥
ताण्डुलाज्यो ह्यम्ब्ललूनी राजग्रहश्च दुग्धिका ।
कुनराः शर्करातिक्ताः पत्रवल्लयश्च नैकधा ॥६१॥
वृन्ताकभर्जनंचापि चटन्यो नवनीतकम् ।
धान्याकाकौथुमीबुद्धिहीनानां चटनी तथा ॥६२॥
द्राक्षाखारिककदलै राजिकातिक्तवस्तुजम् ।
दध्याक्तं राजिकाराद्धमारनालान्यनेकधा ॥६३॥
मिष्टान्नानि नवान्येव भोज्याकानि वराणि च ।
पेयानि मिष्टमिश्राणि सुगन्धीनि रसानि च ॥६४॥
इक्षुनारंगकदलजम्बीराङ्कुदसन्तुराः ।
सेतुराऽमृतसफलजननरपतिजाम्बवः ॥६५॥
इङ्गुदीनारिकेलाऽऽम्रपनसलिम्पिकाम्चिकाः ।
बदराङ्कुरपूपीयाऽनानसाऽऽमलकास्तथा ॥६६॥
रामफलपपनससीताफलसुबिल्वकाः ।
फलान्येतानि ताम्बूलपूगीवरीयसीत्वचः ॥६७॥
जलं तु तीर्थसंभूतं पुष्पाणि सुसुगन्धयः ।
देयं श्राद्धे विशेषेण पितॄणां तृप्तिहेतवे ॥६८॥

येन प्रदीयते यस्मै यत्तृप्त्यर्थं च यत्र वै।
त्रिष्वत्र भगवान् साक्षाद् दाता ग्रहीता नायकः ॥६९॥
यजमानेन स्वरूपं दातारं व्यापकं हरिम्।
विभाव्य पात्ररूपाय हरये देयमेव ह ॥७०॥
स हरिर्व्यापकः श्रीमान् पितर्यपि सुवर्तते।
सर्वत्र तु हरेर्योगात् तृप्तिस्तु पितॄणां भवेत् ॥७१॥
पितॄणां नाम व्याहृत्यः दातव्यं हरिबुद्धितः।
अक्षय्या सा भवेत् तृप्तिः स्वल्पमप्यतुलं भवेत् ॥७२॥
कन्यका विधवा नार्यो वृद्धा आधारवर्जिताः।
सौभाग्या भोजनीयाश्च श्राद्धे फलमनन्तकम् ॥७३॥
ग्रामो धूम्रनिरोधेन भोजनीयाः फलार्थिना।
यज्ञाधिकं फलं तस्य भुज्यन्ते पशुपक्षिभिः ॥७४॥
जलस्थैश्चापि भुज्यन्ते यत्र कीटादिभिस्तथा।
श्राद्धः सर्वान्तरात्मात्मा सार्वभौमः स कथ्यते ॥७५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने विविधपितृतत्पात्र-तद्देयान्नफलादि-तत्प्राप्तिफलादि-वर्णननामा चत्वारिंशोऽध्यायः ॥ ४० ॥

**श्रीनारायण उवाच—**

प्रीयन्ते पितरो येन जप्येन नियमेन च।
स्तोत्रं तेषां प्रवक्ष्यामि सर्वकामप्रदं शुभम् ॥ १ ॥
श्राद्धकाले प्रवक्तव्यं पितॄणां तोषणाय तत्।
यजमानेन पुत्रेण ब्राह्मणेन सुसाधुना ॥ २ ॥
अमूर्तानां समूर्तानां पितॄणां दीप्ततेजसाम्।
नमस्यामि सदा तांस्तु ध्यानिनो योगचक्षुषः ॥ ३ ॥
इन्द्रादेर्जनयितारो भृगुमारीचयोस्तथा।
सप्तर्षीणां पितॄणां च तान्नमस्यामि कामदान् ॥ ४ ॥
मन्वादीनां सुरेशानां सूर्याचन्द्रमसोरपि।
जनयितॄन्नमस्यामि पितॄन् कुशलदायकान् ॥ ५ ॥
नक्षत्राणां चरादीनां पितॄनथ पितामहान्।
द्यावापृथिव्योः पितॄँश्च नमस्यामि कृताञ्जलिः ॥ ६ ॥
देवर्षीणां जनयितॄन् सर्वलोकनमस्कृतान्।
अभयस्य सदा दातॄन् नमस्येऽहं कृताञ्जलिः ॥ ७ ॥
प्रजेशाय कश्यपाय सोमाय वरुणाय च।
योगयोगेश्वरेभ्यश्च नमस्यामि कृताञ्जलिः ॥ ८ ॥
पितृगणेभ्यः सप्तभ्यो नमो लोकेषु सप्तसु।
स्वयंभुवे नमस्तस्मै ब्रह्मणे योगचक्षुषे ॥ ९ ॥

अनेन स्तोत्रवरेण त्रीन्वराँल्लभते जनः।
अन्नमायुः सुतांश्चैव ददते पितरः सुखाः ॥१०॥
यत् किञ्चित्पच्यते गेहे भक्ष्यं भोज्यादिकं तथा।
अनिवेद्य न भोक्तव्यं देवपितृभ्य इत्यपि ॥११॥
पितृभ्यो यस्तु माल्यानि सुगन्धीनि च सर्वशः।
सदा दद्याच्छ्रिया युक्तः स विभाति दिवाकरः ॥१२॥
गुगुलादींस्तथा धूपान् पितृभ्यो यः प्रयच्छति।
संयुक्तान्मधुसर्पिर्भ्यां सोऽश्वमेधफलं लभेत् ॥१३॥
धूपं गन्धगुणोपेतं कान्तं पितृपरायणम्।
लभते स्त्रीष्वपत्यानि हीह चामुत्र चोभयोः ॥१४॥
दीपं पितृभ्यः प्रयतः सदा यस्तु प्रयच्छति।
स लोकेऽप्रतिमं चक्षुर्लभते दिव्यदृष्टिदम् ॥१५॥
तेजसा यशसा चैव कान्त्या चापि बलेन च।
स्वयंप्रकाशो भवति भ्राजते च त्रिविष्टपे ॥१६॥
अप्सरोभिः परिवृतो विमानाग्रे तु मोदिते।
गन्धान् पुष्पाणि धूपाँश्च दद्यादाज्याहुतीश्च वै ॥१७॥
फलमूलनमस्कारैः पितॄणां प्रीतिमावहेत्।
श्राद्धकाले तु सततं वायुभूताः पितामहाः ॥१८॥
आविशन्ति द्विजान्साधून् साध्वीर्दृष्ट्वा च हर्षतः।
वस्त्रैरन्नैः प्रदानैश्च भक्ष्यैर्भोज्यैस्तथैव च ॥१९॥
पानैर्गोभिस्तथा ग्रामैः पूजयेत् पात्रसंस्थितान्।
काशाः पुनर्भवा ये च बर्हिणा उपबर्हिणा ॥२०॥
त एव पितरो देवा देवाश्च पितरः पुनः।
द्विजात्यभिमुखो दद्याद् दर्भान् पिण्डाँश्च यत्नतः ॥२१॥
अथाऽऽहृत्य दक्षिणां च ततो होमो विधीयते।
अग्नये कव्यवाहाय स्वधा चांगिरसे नमः ॥२२॥
सोमाय वै पितृमते स्वधा चांगिरसे नमः।
यमाय चैवांगिरसे स्वधा नम इति ब्रुवन् ॥२३॥
बहुहव्यत्वमेवाऽग्नौ सुसमिद्धे विशेषतः।
विधूमे लेलिहाने च होतव्यं कर्मसिद्धये ॥२४॥
अप्रबुद्धे सधूमे च जुहुयाद् यो हुताशने।
यजमानो भवेदन्धः सोऽपुत्रो भवतीत्यपि ॥२५॥
अल्पेन्धनो वा रूक्षो वा विस्फुलिंगश्च सर्वशः।
ज्वालाधूमोऽपसव्यश्च स तु वह्निर्न सिद्धये ॥२६॥
दुर्गन्धश्चैव नीलश्च कृष्णश्चैव विशेषतः।
भूमिं विगाहते यत्र तत्र विद्यात्पराभवम् ॥२७॥
अर्चिष्मान् पिण्डितशिखः सर्पिष्कांचनसंभवः।
स्निग्धः प्रदक्षिणश्चैव वह्निः स्यात्कार्यसिद्धये ॥२८॥

अनुज्ञातः कुरुष्वेति तथैव द्विजसत्तमैः ।
पत्नीमादाय पुत्राँश्च जुहुयाद्धव्यवाहनम् ॥२९॥
समानप्लक्षीन्यग्रोधप्लक्षाऽश्वत्थविकंकताः ।
उदुम्बरास्तथा बिल्वचन्दना यज्ञगा समिध् ॥३०॥
सरलो देवदारुश्च शालश्च खदिरस्तथा ।
समिदर्थे प्रशस्ताः स्युरेते वृक्षा विशेषतः ॥३१॥
विश्वेदेवाश्च ये प्रोक्ता ह्येतेऽपि पितरो ह्युत ।
तेषामाज्यं च पिण्डं च वह्नौ दद्यात्प्रयत्नतः ॥३२॥
पुष्पाणां च फलानां च भक्ष्यान्नानां तथैव च ।
अग्रमुद्धृत्य सर्वेषां जुहुयाज्जातवेदसि ॥३३॥
तीर्थे होमश्च पिण्डाश्च श्राद्धं कर्तव्यमादरात् ।
देवालयो गुरोर्वासः पर्वताः सरितस्तथा ॥३४॥
पुण्यवृक्षास्तडागानि यत्र वा ब्राह्मणो भवेत् ।
ते ते श्राद्धार्हदेशाः स्युस्तत्र पुण्यमसंख्यकम् ॥३५॥
पृथ्वीं सागरवेलान्तां दिव्याः सत्पुरुषाः सदा ।
नानारूपैश्चरन्त्यत्र तेषां योगात्तु मोक्षणम् ॥३६॥
सिद्धाः सन्तश्च साध्व्यश्च तीर्थानां तीर्थमुत्तमम् ।
लक्ष्मीर्नारायणश्चात्र तद्रूपेषु वसत्यरम् ॥३७॥
पिपासिताय श्रान्ताय क्षुधिताय विवस्त्रिणे ।
सत्कृत्य किंचिद् दातव्यं यज्ञस्य फलमाप्नुयात् ॥३८॥
श्राद्धे स्थूलः स्थूलमत्ति पितरोऽदन्ति सुकृतम् ।
तृप्तिमात्मा स्वयं भुंक्तेऽन्वितब्रह्मसमर्पणात् ॥३९॥
कर्मलोके तु कृत्वैव दत्वैव च मुहुर्मुहुः ।
परे लोके ह्यवाप्यन्ते तस्माद् देयं विशेषतः ॥४०॥
येषां दास्यन्ति पिण्डाँस्त्रीन् बान्धवा नामगोत्रतः ।
भूमौ कुशोत्तरायां च ब्राह्मणोक्तविधानतः ॥४१॥
सर्वत्र वर्तमानाँस्ते पिण्डाः प्रीणन्ति वै पितॄन् ।
यदाहारो भवेज्जन्तुराहारः सोऽस्य जायते ॥४२॥
यथा गोष्ठे प्रनष्टां वै वत्सो विन्दति मातरम् ।
तथा तं नयते मन्त्रो जन्तुर्यत्राऽवतिष्ठते ॥४३॥
नाम गोत्रं च मन्त्रश्च दत्तमन्नं नयन्ति तम् ।
अपि योनिशतं प्राप्ताँस्तृप्तिस्तानन्नुगच्छति ॥४४॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने
पितृस्तोत्रहोमाग्निवृक्षस्थानादिनिरूपणनामा
एकचत्वारिंशोऽध्यायः ॥४१॥

**श्रीनारायण उवाच—**

अथ देवव्यवस्थां तु कथयामि समासतः ।
ब्रह्मणो मानसा देवाः स्वर्गे सर्वे सुसंस्थिताः ॥ १ ॥
शृणु लक्ष्मि ! प्रवक्ष्यामि ततः किं किमभूदिति ।
सत्तपोजनमहसां पितॄणां पुष्टिकारकाः ॥ २ ॥
अपेक्षिताश्च राजानः प्रजानां परिपालकाः ।
लोकानां पालकाश्चैव मनवोऽपि निरीक्षकाः ॥ ३ ॥
तेषां कृते निवासाश्च प्रकाशाः पुष्टिहेतवः ।
विचार्येति स्वयं ब्रह्मा ह्यभिध्यानमकुर्वत ॥ ४ ॥
नारायणं परं स्मृत्वा कर्तव्यं प्रत्यपद्यत ।
प्रथमं तु महत्तेजः पाकप्रकाशकारकम् ॥ ५ ॥
द्वितीयं तु महत्तेजः शक्तिपुष्टिकरं तथा ।
प्रार्थयच्छ्रीहरेस्तस्मात् समाधौ प्रांजलिर्मुदा ॥ ६ ॥
तदा प्रागेव दक्षाद्वै नेत्रात्तु श्रीहरेस्ततः ।
कणस्तु तेजसो जज्ञे ब्रह्माण्डानां प्रकाशकः ॥ ७ ॥
तस्मात्कणा ह्यसंख्याता जाताश्चोग्रतमास्ततः ।
तेऽपि तत्तद्विरञ्चीनां ब्रह्माण्डेषु प्रवेशिताः ॥ ८ ॥
तत्र तत्र च सूर्यास्ते जातास्तेजोमया इति ।
एवं सूर्यं समासाद्य वेधसा परमेष्ठिना ॥ ९ ॥
प्रकाशार्थं च लोकानां स्वर्गे संस्थापितो हि सः ।
तस्मै चाज्ञापयामास ब्रह्मा लोकपितामहः ॥१०॥
सर्वदा त्वं त्रिलोक्यां वै भास्करो भव तेजसा ।
जीवानां नेत्रमात्राणि वस्तूनां ग्राहकाणि न ॥११॥
यत्र नास्ति प्रकाशोऽत्र वस्तूनां ग्राह्यता कथम् ।
तस्मात् तेजःसुयोगेन द्रष्टृत्वं वै भविष्यति ॥१२॥
तेन लोकस्य यात्रापि सर्वा दर्शनमूलिका ।
सम्पत्स्यते तु वै तस्मात् त्वं दिवाकरतां व्रज ॥१३॥
एवमाज्ञापितः सूर्यस्तेजोदानेन सर्वथा ।
शंकमानः क्षयं स्वस्य ब्रह्माणं प्रत्यभाषत ॥१४॥
देवदेव जगत्कर्तस्त्वदाज्ञां पालयाम्यहम् ।
अपि वै मम देहस्य तेजोह्रासात् क्षयो भवेत् ॥१५॥
विनाशं च गमिष्यामि शीघ्रं यद्रक्षको भव ।
रक्षणोपायमत्र त्वं कुरु मे स्यामविक्षतः ॥१६॥
ब्रह्मणा तत्समाश्रुत्य स्मृतः श्रीहरिरव्ययः ।
सूर्यस्याऽऽपूरणार्थाय स्वयमापूरको भव ॥१७॥
नारायणो हरिस्तस्य ब्रह्मणः प्रार्थनां तु ताम् ।
अंगीकृत्याऽब्रवीद् देवं ब्रह्माणं पूर्तिदं यथा ॥१८॥

ब्रह्मन् ददामि भद्रन्ते सूर्यस्य मम चक्षुषः ।
यथा ह्यक्षय्यभावः स्यात्तथा रूपं प्रपूरकम् ॥१९॥
इत्युच्चार्य हरिः साक्षात्तेजोराशिर्घनाद्घनः ।
हिरण्मयाख्यः पुरुषो हिरण्यश्मश्रुकस्तथा ॥२०॥
हिरण्यकेश आनखात्सर्व एव सुवर्णकः ।
बभूव षोडशवर्षः स्वर्णालंकारभूषणः ॥२१॥
मुञ्चत्सहस्ररश्मींस्तु ललाटं यस्य केवलम् ।
ऊर्ध्वं मुञ्चल्लक्षरश्मीन् मस्तकं यस्य केवलम् ॥२२॥
कोटिरश्मीन्प्रमुञ्चद्वै शरीरं यस्य केवलम् ।
रोम्णि रोम्णि स्वर्णमयस्तेजोराशिप्रपूरितः ॥२३॥
रूपसौन्दर्यमाधुर्यकल्याणगुणसंश्रितः ।
मुकुटी कुण्डली स्रग्वी स्वर्णप्रावरणान्वितः ॥२४॥
अक्षय्यतेजसां राशिः सूर्यतेजःप्रकाशकः ।
भगवानीदृशो भूत्वा विवेशाऽर्कस्य मण्डलम् ॥२५॥
पूरयन् सर्वतेजांसि स्वीयतेजःप्रवाहकैः ।
रविणा ब्रह्मणा चान्यैर्महर्लोकादिवासिभिः ॥२६॥
पूजितो वन्दितो देवः षोडशात्मोपचारकैः ।
सूर्यनारायणस्तस्य स्वर्णपुंस उपासनम् ॥२७॥
करोत्यविरतं लोकचक्षुर्दातृत्वहेतवे ।
वक्ति स्तोत्रं प्रार्थनायामिदं तेजःप्रपूर्तये ॥२८॥
ॐ नमः तेजःप्रसवित्रे बृहतेऽव्ययतेजसे ।
तेजस्विभ्योऽव्ययतेजःप्रदात्रे ब्रह्मणे नमः ॥२९॥
यस्य गावो भूरिशृंगा अयासो भान्ति वर्षणे ।
ईशानीषु तदीशेषु यस्य भ्राज्योऽन्वयं ययुः ॥३०॥
नमो भ्राजिष्णवे तस्मै गोमते गोप्रसारिणे ।
हृत्तमोद्राविणे दिव्यासाय देवाय ते नमः ॥३१॥
प्रकाशयितृसम्राजे स्वप्रकाशकृणे नमः ।
नमो भावित्तिविप्राय ज्ञानप्रबोधसूरिणे ॥३२॥
नमः श्राणविधातस्ते नम आत्मसदात्मने ।
नमो राजिष्णवे दीव्यन् सप्तभाजनुदायिने ॥३३॥
नमो भौमाय रक्ताय नमो दिव्याय विद्युते ।
नमः सूर्याय चोग्राय नमो हिरण्मयाय ते ॥३४॥
नमः खानेयसद्धेम्ने नम उदर्यतेजसे ।
नम उडुपभावाय नमो यावत्प्रभात्मने ॥३५॥
नमः कार्यस्वरूपाय नमः कारणरूपिणे ।
हिरण्मयाय देवाय ब्रह्मणे परमात्मने ॥३६॥
त्वं स्रष्टा त्वं पोषयिता संहर्ताऽपि त्वमेव वै ।
त्वमेव परमं तेजस्तेजस्विनां दृगग्रजम् ॥३७॥
सदा तेजःप्रदानेन रक्ष मां परमेश्वर ।
चक्षुष्मन्तश्च यावन्तो भविष्यन्ति प्रभाप्रभुम् ॥३८॥
त्वमेव भगवान् भावान् प्रभावाँश्च प्रभास्वरः ।
त्वमेव नेत्रवान् त्राताऽऽमत्राता चाऽविनश्वरः ॥३९॥
महर्चक्षुः स्वर्गचक्षुर्भुवर्चक्षुस्त्वमेव हि ।
भौमचक्षुः सर्वचक्षुश्चक्षुषां चक्षुषे नमः ॥४०॥
ॐ ॐ ॐ भूर्भुवः स्वस्तत् ॐ तत्सवितुर्वरेण्यम् ।
भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॥४१॥
इति मन्त्रं तु यः कोऽपि जपेद्ध्यायेदतन्द्रितः ।
हिरण्मयः परो देवः साक्षाद्याति तदग्रतः ॥४२॥
अयुतं जपनात्तस्य स्वयं सूर्यो महान्प्रभुः ।
वरदो भवते तस्य भगवत्त्वं ददाति च ॥४३॥
दिव्यं करोति तच्चक्षुरुद्घाटयति चान्तरम् ।
उत्तेजयति चात्मानं सम्पादयति ब्रह्म तत् ॥४४॥
तस्माद्ध्यानपरो भूत्वा जपेत् स्वश्रेयसे सदा ।
स्तोत्रं सूर्यकृतं स्वोपास्त्यर्थं हिरण्मयस्य वै ॥४५॥
ततो वै ब्रह्मणा सूर्यो हिरण्मयपुमन्वितः ।
सर्वमध्यान्तराले वै सर्वतेजःप्रदो भवेत् ॥४६॥
तथा संस्थापितः स्वर्गे जगच्चक्षुः स एव हि ।
चक्षुष्मन्तस्तदभावे ह्यचक्षुष्का भवन्ति वै ॥४७॥
सूक्ष्माणुरूपभाभिस्तु चक्षुर्देवो भवत्यपि ।
चक्षुषां स्वकतेजोऽणुपूरकः स प्रवर्तते ॥४८॥
रात्रौ दिवा च यत्किंचित्प्राणिमात्रं भवेद्धि तत् ।
स्वल्पं वा बहुलं वापि सूर्यतेजस्विनेत्रकम् ॥४९॥
दिवा घनं भवेत्तेजो रात्रौ तु विरलं भवेत् ।
तच्चापि सूर्यसंभूतं तदात्ताऽऽत्तप्रभामयम् ॥५०॥
सूर्याय तु जलं देयं पत्रं पुष्पं फलं तथा ।
नमस्काराः सदा देया जगन्नारायणो हि सः ॥५१॥
हिरण्मयस्तु पुरुषो लक्ष्मीं हिरण्मयीं तनुम् ।
सह स्वेन रवेस्तत्र मण्डलेऽरक्षयत्सदा ॥५२॥
कल्पान्ते च यदा स्वर्गविनाशो जायते तदा ।
सूर्यो हिरण्मयो लक्ष्मीर्देव्यः सूर्याण्य इत्यपि ॥५३॥
ब्रह्मलोकं तु गच्छन्ति परमाक्षरमव्ययम् ।
ततस्तत्र निवासाय श्रीहरिणा स्वयं कृतम् ॥५४॥
हिरण्याख्यं स्वकं धाम दिव्यमक्षरधामनि ।
तत्र हिरण्यया लक्ष्म्या साकं हिरण्मयः पुमान् ॥५५॥
कोट्यर्बुदहिरण्याऽऽभदासीदासप्रसेवितः ।
राजते सर्वदा राजाधिराजः परमेश्वरः ॥५६॥

तत्तु दिव्यं परंधाम सूर्येऽत्र स्थूलमुच्यते ।
मूलं ब्रह्मगतं धाम तच्छायं सूर्यमण्डलम् ॥५७॥

पुरुषः स परब्रह्म स्वर्णः सूर्यश्च चाक्षुषः ।
ध्यानाऽक्षिविद्यया सोऽयं लभ्यते मोक्षकांक्षिभिः ॥५८॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने
मानससूर्योत्पत्तितत्स्तोत्रहिरण्मयपुरुषादिनिरूपणनामा
द्विचत्वारिंशोऽध्यायः ॥४२॥

## श्रीनारायण उवाच—

यदा तु ब्रह्मणा दृष्टं तेजः केवलमुल्बणम् ।
सर्वं दह्येद्विनश्येच्च पुष्येच्छिश्येत नैव च ॥ १ ॥

ततस्तच्छान्तिकाराय पुष्ट्यै च प्रार्थयत् प्रभुम् ।
देवं नारायणं तावन्नारायणस्य मानसात् ॥ २ ॥

संकल्पाद्वामचक्षुष्ट उद्भूतं तेज अल्पकम् ।
शीतलं पोषकं तृप्तिकरं चामृतवर्षि यत् ॥ ३ ॥
तस्मादेकात्कणांन्नानाकोट्यर्बुदकणाः कृताः ।
गोलकास्ते महान्तो वै जाता वेधस इच्छया ॥ ४ ॥
वेधोभी रक्षितास्ते वै ब्रह्माण्डेषु स्वकेषु च ।
तत्र जाताश्च ते चन्द्राश्च शैत्यं द्रावयन्त्यतः ॥ ५ ॥
तस्य तेजः प्रपूर्त्यर्थं याचितो भगवान् यदा ।
प्राह सूर्यनिवासेन किरणेन मया सदा ॥ ६ ॥
पोषणं दास्यते तत्र पूर्तिस्ते तेजसो भवेत् ।
इत्यतः स्वर्णपुरुषस्तेजोऽर्पयत्यहर्निशम् ॥ ७ ॥
शान्तिपुष्टिकरं पेयममृतं सुखसंभृतम् ।
स्निग्धमानन्दभृत्सर्वं तापनिवृत्तिकारणम् ॥ ८ ॥
उष्णदुःखात्तारकत्वात्तारकं तेज एव तत् ।
चस्य शैत्यस्य संदानात् चान्द्रं तेजोऽपि चैव तत् ॥ ९ ॥
तादृशं तु परं तेजोमयं चन्द्रं विधाय च ।
ब्रह्मा रक्षितवान् स्वर्गे मिष्टाऽऽनन्दाय देहिनाम् ॥१०॥
चन्द्रोऽपि सर्वदा पूर्णः सदैकस्थितिको ह्यभूत् ।
पश्चात्कालान्तरे स्त्रीषु पक्षपातात्क्षयं गतः ॥११॥
पुनश्च शंकरेणापि तद्रोगादर्धतारितः ।
तथैव तस्य योग्यत्वादर्धरक्षा कृता तदा ॥१२॥

## श्रीलक्ष्मीरुवाच—

कथा चन्द्रमसः स्त्रीषु पक्षपातितया च या ।
क्षयंकराऽभवत्तां मे श्रावयस्व कृपानिधे ! ॥१३॥
काश्च तस्य स्त्रियः कति कथं तत्पक्षपातिता ।
कथं शापः कथं मुक्तिः कथं चार्धक्षयिष्णुता ॥१४॥
एतत्सर्वं समाक्षस्व परमाश्चर्यमत्र मे ।
देवस्याऽपीदृशी पीडा तव रूपस्य हे विभो ! ॥१५॥

## श्रीनारायण उवाच—

शृणु सांगां कथां तस्य विचित्रां कामवेगजाम् ।
श्रुत्वा सापत्न्यदुःखाऽपि त्वं मां मैवं करिष्यसि ॥१६॥
ब्रह्मणो मानसः पुत्रो दक्षः प्रजापतिः पुरा ।
मनसा कल्पयामास कन्यकाः सृष्टिहेतवे ॥१७॥
सप्तविंशतिकन्यास्तु रोहिणीप्रमुखा इति ।
ददौ चन्द्रमसे यास्तु नक्षत्राणि भवन्ति ताः ॥१८॥
नाम्नाऽश्विनी च भरणी कृत्तिका रोहिणी तथा ।
मृगशीर्षा तथाऽऽर्द्रा च पुनर्वसुश्च पुष्यकम् ॥१९॥
आश्लेषा च मघा पूर्वाफाल्गुन्युत्तरफाल्गुनी ।
हस्तिश्चित्रा तथा स्वातिर्विशाखा चानुराधिका ॥२०॥
ज्येष्ठा मूलं तथा पूर्वाषाढा चोत्तरषाढिका ।
श्रवणं च धनिष्ठा च शततारा तथा च वै ॥२१॥
पूर्वभाद्रपदा चैवोत्तरभाद्रपदा तथा ।
रेवती चेति चन्द्रस्य पत्न्यस्तु सप्तविंशतिः ॥२२॥
सर्वा दिव्याः कांचनाभा रक्ता द्वादशहायनाः ।
तास्वपि रूपलावण्यसौभाग्यसद्गुणोर्जिता ॥२३॥
रोहिणी सर्वदा कामकुशला प्राणहारिणी ।
चन्द्रो यथा यथा हीच्छेद् रोहिणी वर्तते तथा ॥२४॥
नेत्रं प्रेमभरं तस्मै दर्शयत्येव चित्तहृत् ।
मुखं हास्यभरं सौम्यं सर्वशृंगारतैजसम् ॥२५॥
वक्रनेत्रभ्रुवोर्भंगं दर्शयत्यपि चित्तहृत् ।
रक्तावोष्ठौ फुल्लगण्डौ दर्शयत्येव शान्तिदौ ॥२६॥
पुष्पमालां करे धृत्वा मनोज्ञामर्पयत्यपि ।
स्तनौ स्वल्पौ सुघटौ च कंचुकीदृढतां गतौ ॥२७॥
रम्यौ केसररंगाढ्यौ युवती दर्शयत्यपि ।
उदरं सुवर्णवर्णं कटिं तन्वीं सुकोमलाम् ॥२८॥
नितम्बौ मध्यकुंभाभौ वासस्तारल्यदर्शनौ ।
अलोमकं सूक्ष्ममध्यं स्वर्णाभं दर्शयत्यपि ॥२९॥
सक्थ्नोः सुवर्णयोर्मूलं मन्थरं दर्शयत्यपि ।
आगत्य गण्डके तालीं दत्वा गच्छति सत्वरम् ॥३०॥
परावृत्य पुनः कण्ठे हस्तं कृत्वा च चुम्बनम् ।
स्पृष्ट्वा गुप्तं मुखं दत्वा विलासं भावयत्यपि ॥३१॥

क्वचिद्दासो विना भूत्वा स्वात्मानं दर्शयत्यपि ।
मनो जहार चन्द्रस्य लज्जां सन्त्यज्य सर्वथा ॥३२॥
चन्द्रः षोडशवर्षोऽपि वीर्यस्याऽक्षयशेवधिः ।
रेमे रेमे पुना रेमे तृष्त्या रेमे पुनः पुनः ॥३३॥
सर्वदैव तु रोहिण्यां रेमे रेमे पुनः पुनः ।
रोहिण्यपि नवं सौम्यं रूपं चक्रे पुनः पुनः ॥३४॥
रमित्वाऽपि पुना रेमे नाऽन्याः सस्मार चन्द्रमाः ।
क्वचित्कदाचिदन्याभिः संरेमेऽपि तथापि ताः ॥३५॥
क्वाचित्काद्रमणात्तृप्तिं न यान्ति रोहिणीव हि ।
सर्वासां यौवने पुष्टे सदृशेऽपि तु चन्द्रमाः ॥३६॥
रोहिणीरोधतः सर्वा भेजे समतया नहि ।
ततस्ताभिः प्रार्थितः स्वपतिः सौख्याय भागतः ॥३७॥
तथापि रोहिणी तासां सौख्यार्थे नाऽन्वमन्यत ।
स्वार्थमात्र पराक्रान्ता पक्षपातमकारयत् ॥३८॥
तदा त्वन्या उदासीना ह्यकुर्वन् शोकमात्मसु ।
किं नाम कृतलग्नेन यासां पतिसुखं नहि ॥३९॥
वेगारूढयुवत्वाऽऽढ्यकामव्याप्तद्वयोरपि ।
यदि कामसुखो योगो न स्यात् किं तेन लग्निना ॥४०॥
पूरुषस्य स्त्रियाश्चापि यथेष्टं कामतर्पणम् ।
न स्याद् यदि कृतं तेन लग्नेन विफलार्थिना ॥४१॥
कामपूर्णशरीरा या नवयौवनशालिनी ।
पत्युः सुखं लभेच्चेन्न किं लग्नेन कृतेन वै ॥४२॥
वैधव्यं वा कुमारीत्वं तस्मात्तु वरमुच्यते ।
सति पत्यौ न कामस्य सुखं प्राप्नोत्यभागिनी ॥४३॥
वरं तु कूपपतनं वरं दहनमग्निना ।
वरं तु गरलं भक्ष्यं कामदाहनदुःखतः ॥४४॥
वरं पितृगृहे वासो वरं साध्वीत्वमित्यपि ।
न तु पत्यौ सति कामाग्निना ह्यात्मप्रदाहनम् ॥४५॥
मा वै भवतु कासांचित् पतिर्नपुंसकः क्वचित् ।
वा मा भवतु दुष्प्रेमा विप्रेमा क्षणिकोऽपि वा ॥४६॥
मा वा भवतु सापत्न्यं शात्रवं दुःखमण्वपि ।
एवं विलप्य बहुधा सर्वास्ताः स्वपितुर्गृहे ॥४७॥
गत्वा निवेदयामासुः पत्युर्दुःखं पुनः पुनः ।
पितः कन्या न दातव्या प्रेमहीनाय शुष्मिणे ॥४८॥
पक्षपातप्रगन्त्रे च रोगिणेऽन्यासु शायिने ।
अस्माभिर्नैव गन्तव्यं चन्द्रस्य भवने क्वचित् ॥४९॥
अस्मान् समतया चन्द्रो भजते नैव कर्हिचित् ।
पितुर्गृहं यथा शुष्कं पत्युर्गृहं ततोऽधिकम् ॥५०॥
शुष्कं शुष्कायते सर्वं पूर्णं रतिसुखं विना ।
सत्यं यथानुभूतं वै वदामः सर्वथा पितः ! ॥५१॥
जामाता रोहिणीं ते तु सर्वदा भजते मुहुः ।
नास्मान् क्वचित्क्वचिच्चेद्वै तत्रापि नैव पूर्णता ॥५२॥
ततो वयं न गन्तास्माश्चन्द्रस्य भवने पुनः ।
मर्तव्यं नैव गन्तव्यं यत्र दुःखं हि केवलम् ॥५३॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुग-
सन्ताने चन्द्रोत्पत्तिस्ततो रोहिण्यां पक्ष-
पातेनाऽन्यासां पत्नीनां दक्षाय निवेद-
नादिनामा त्रिचत्वारिंशोऽध्यायः ॥४३॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! ततः पश्चाद् यद्भूतं तद् ब्रवीमिते ।
पिता दक्षस्तदाकर्ण्य परं खेदमवाप ह ॥ १ ॥
शनैः श्वासं परामुच्य कन्याः प्राह दयावशः ।
समागच्छन्तु चन्द्रं तु शिक्षयामि पुनः स हि ॥ २ ॥
नैवं कुर्यात् प्रकुर्यात्तु सर्वासु समकामनाम् ।
इति कृत्वा गताः सर्वे चन्द्रभवनमादरात् ॥ ३ ॥
दक्षः प्राह शशिन्देव ! त्वं मे शिष्योऽसि सुव्रत ! ।
सुज्ञोऽसि किन्तु बहुना वक्तव्यं ते प्रशिक्षणम् ॥ ४ ॥
सर्वाः समाना मे कन्या युवत्यस्तेऽर्पिता मया ।
तव पत्न्यश्च ताः सर्वास्त्वयि रक्ता विलोक्य तु ॥ ५ ॥
सर्वा भज समाना वै पक्षपातं जहीति च ।
सर्वा नारीर्भजस्व त्वं समकामसुखेप्सया ॥ ६ ॥
नैकस्यामनुरक्तोऽभूः सर्वास्वेव रतो भव ।
सर्वाश्च कामय चन्द्र ! तास्तृप्ताः स्युर्यथा यथा ॥ ७ ॥
नारीणां कामदाहस्य यः पतिः शान्ततां नयेत् ।
स्मृद्धिः स्वर्गं च तस्यैव विविधाश्च विभूतयः ॥ ८ ॥
भवन्त्यक्षतकुशला विवर्धन्ते दिने दिने ।
पत्नीनां प्राणदात्रीणां रंजनाद् रंजनं सदा ॥ ९ ॥
तासां हृत्कल्पकाद् दुःखान्नरो नरकमाप्नुयात् ।
नरस्यैव तु सद्धर्मो नारीणां कामशान्तनम् ॥१०॥
तन्न कुर्यात्तदा लग्नं कृतं केवलमृत्यवे ।
वरं नार्या समं नार्या लग्नं कामधुरोज्झितम् ॥११॥
यदि लग्नफलं न स्यान्नार्याः पुंसः समागमे ।
तदा नार्याश्च वा पुंसो लग्नं भाराय केवलम् ॥१२॥
यदि लग्ने कृतेऽनंगाऽऽनन्दं नाप्नोति मानवः ।
द्वन्द्वार्थं तत्कृतं लग्नं नाऽभूद रत्यर्थमित्यथ ॥१३॥

नार्योः पुंसोश्च वा द्वन्द्वो लग्नतः स्यात् कथं नहि ।
कथंकारं नरं नारीं रचयेद् भगवान् हरिः ॥१४॥
कथं वा चाऽर्प्यते नारी नराय न नरः पुनः ।
कथं वा तत्र गृह्णाति नरो नारीं नरं तु न ॥१५॥
इति चन्द्र विचार्य्यैव सर्वाः सौभाग्यसम्पदः ।
तव पत्न्यः सदा सेव्यास्त्वया सौख्यप्रदापने ॥१६॥
चन्द्र ओमिति सम्मत्वा दक्षं संपूज्य भावतः ।
पत्नीः सर्वाः समागृह्य बहुधाऽरमयच्च सः ॥१७॥
काले बहुतिथे जाते रोहिण्यामेव सर्वथा ।
पूर्ववत् स्नेहबाहुल्यमन्यास्वल्पं पुनर्व्यधात् ॥१८॥
तदा पुनः पुनस्ताभिर्दक्षः सम्यङ्निवेदितः ।
भूत्वा दक्षस्तदा क्रुद्धः प्राह चन्द्रमसं हितम् ॥१९॥
चन्द्र ! त्वं शिक्षितः सम्यङ् शिक्ष्यते च पुनर्मया ।
वर्तितव्यं त्वया सर्वदारेषु समभावतः ॥२०॥
तदा त्वं सर्वदा स्मृद्धो योगीव भव शक्तिमान् ।
अक्षय्यवीर्यतेजस्कः सर्वासां समतृप्तिकृत् ॥२१॥
इति तेऽनुग्रहं कुर्वे पुत्रीणां स्नेहतस्तव ।
यदि शापं सृजामि त्वां पुत्रीणां दुःखदो भवेत् ॥२२॥
तस्मात्त्वामनुशिक्ष्यामि सर्वासु समभाग्भव ।
सर्वाः सम्यक् संभजस्व यथेष्टं सुखदो भव ॥२३॥
यदि प्रवर्त्स्यसे नैवं तदा क्षयमवाप्स्यसि ।
शक्तेश्च तेजसश्चैव क्षयं दुःखमवाप्स्यसि ॥२४॥
एकया कलया त्वं वै जीविष्यसि न संशयः ।
एवं मे वचने याहि कलापूर्णः सदा भव ॥२५॥
इति दक्षकथितं तदभिध्याय पुनः पुनः ।
रमते सर्वपत्नीभिः सर्वदा स मुहुः समः ॥२६॥
रोहिणी तु हठात्तं वै निरोधयति कामिनी ।
स्वगृहे एव बहुधा कामनाऽतृप्तमानसा ॥२७॥
पत्न्यश्चान्याः प्रतीक्षन्ते मार्गे चन्द्रस्य चांगणे ।
न चायाति यदा नाथः शपन्त्यस्तास्तदाऽरुदन् ॥२८॥
नाथे सति वयं पत्न्यो नाप्नुमः कामदानताम् ।
अन्यथा तु तदा कन्या नाथे सत्यप्यनाथवत् ॥२९॥
अस्माकं यदि नाथो न रोहिण्या अपि मा भवेत् ।
इत्याक्रुद्य च ताः सर्वाः शेपुर्नाथं पुनः पुनः ॥३०॥
क्षयं याहि सदा चन्द्र ! तेजोवीर्यक्षयस्तव ।
सवीर्ये वा ह्यवीर्ये वा त्वयि सत्त्वेऽपि पक्षग ! ॥३१॥
नाऽस्माकं ऋतुलाभोऽपि तस्माद् वीर्यक्षयस्तव ।
रूपक्षयोऽपि भवतु पक्षपातिन् ! करोषि किम् ! ॥३२॥

अतिभोगकरी चेयं रोहिणी रोगिणी भवेत् ।
रक्तस्रावा प्रदरार्ता रोहिणि ! भव रोगिणी ॥३३॥
इतीदं तस्य पत्नीनामुल्बणं शापवाचनम् ।
दक्षस्यापि वचोभंगकृतात्तदोषमुल्बणम् ॥३४॥
चन्द्रस्य तु तदैव द्राक् क्षीणं तेजः सवीर्यकम् ।
षण्ढश्चैककलामात्रजीवनः समवर्तत ॥३५॥
सदा दुःखी सदा त्याज्यो नारीभिः समजायत ।
रोहिण्यपि रक्तस्रावा प्रदरार्ता बभूव ह ॥३६॥
चन्द्रो गृहं परित्यज्य पत्नीः सर्वाश्च तत्क्षणम् ।
प्राप्तस्तपः समाकर्तुं सौराष्ट्रे वारिधेस्तटे ॥३७॥
तत्र वर्षशतं तेपे तपः परमदारुणम् ।
स्वस्य रोगविनाशाय रोगो नैव न्यवर्तत ॥३८॥
शोकं जगाम बहुलं विमना इव सोऽभवत् ।
रोहिण्यपि सदा रक्तस्रावाऽद्यापि च वर्तते ॥३९॥
अथाऽत्र समये लोके शतवर्षेषु भूतले ।
चन्द्रामृतं विना सर्वा ओषधयः क्षयं गताः ॥४०॥
कणा नैव तु जायन्ते तुषेषु पुष्पकेषु च ।
पृथ्व्या रसश्च कन्देषु मूलेषु न च रोहति ॥४१॥
पुष्टिस्तु सर्वदा नष्टा जीवास्तदा तु दुःखिताः ।
देवाश्चाऽप्यलब्धरसाः ऋषयश्चाऽमृतक्षयाः ॥४२॥
ब्रह्माणमुपसंगम्य प्रार्थयन् दुःखनाशनम् ।
चन्द्रस्तत्र महादेवं शिवं संस्थाप्य यत्नतः ॥४३॥
पुनर्वर्षशतं तप्त्वा शंकरं चाऽप्रसादयत् ।
प्रसन्नः शंकरस्तस्मै प्राह किं ते ह्यपेक्षितम् ॥४४॥
वरं वरय भद्रं ते सुखी भव सदा शशिन् ।
चन्द्रस्तदाऽऽह नन्दीशं देव ! सोमेश्वरो भव ॥४५॥
मया प्रसादितश्चात्र तपस्तप्त्वा सुदारुणम् ।
सौराष्ट्रे पश्चिमे प्रान्ते वारिधेस्तटसन्निधौ ॥४६॥
मम पूज्यो महादेवः सदा सोमेश्वरो भव ।
मम दक्षवचोजन्यं क्षयं रोगं विनाशय ॥४७॥
तव देव महादेव ! प्रतिष्ठां प्रकरोम्यहम् ।
ब्रह्मादींश्चात्र चाऽऽहूय कुर्वे यज्ञमहोत्सवम् ॥४८॥
इति संकल्प्य चन्द्रेण ब्रह्माद्या देवतास्तथा ।
ऋषयो मुनयस्तत्र प्रजानां पतयस्तथा ॥४९॥
मनवो देवगन्धर्वाः सूतमागधनर्तकाः ।
शंकरस्य प्रतिष्ठार्थमाकारिताः समागमन् ॥५०॥
भद्रावत्यास्तु नद्यास्तत्क्षेत्रं दक्षिणदिग्भवम् ।
आभद्राया आसमुद्रं क्षेत्रं मोक्षकरं नणाम् ॥५१॥

तत्र कुंकुमवाप्याख्यनगरे संवसन् द्विजः ।
पत्नीव्रताख्यविप्रर्षिर्वेदान् नीत्वाऽगमत्तथा ॥५२॥
परब्रह्माऽवतारोऽयं श्रीकृष्णः स्वयमेव हि ।
विधिना सोमनाथस्य प्रतिष्ठानमकारयत् ॥५३॥
प्रतिष्ठानोत्तरं ब्रह्मा तदा प्राह त्रिशूलिने ।
चन्द्रक्षयेण यावत्य ओषधयः क्षयं गताः ॥५४॥
तन्मूलाश्च प्रजाः सर्वाः क्षयं यान्ति मुहुर्मुहुः ।
ततश्चन्द्रक्षयो नाश्यो भवता सुकृपालुना ॥५५॥
शंभुः प्राह तु तान्सर्वान् गच्छामो दक्षमातुरम् ।
कथयामो हितं कर्तुं यथा स्यात् सुसुखं जगत् ॥५६॥
इत्यामन्त्र्य प्रजग्मुस्ते दक्षस्य भवनं प्रति ।
स्वागतं कृतवान् दक्षो निषेदुश्च यथास्थलम् ॥५७॥
कुशलं पृष्ठवान्दक्षो जिज्ञासां कृतवानपि ।
मयि प्रयोजनं न स्यान्निस्पृहाणां महात्मनाम् ॥५८॥
तथापि मम लाभाय क्षेमाय च हिताय च ।
भवतामागमो भाव्यो दासः किं करवाणि वः ॥५९॥
इत्यावेद्य नमः कुर्वन्दक्षः प्राञ्जलिरास वै ।
सोमार्थं च तदा शंभुः प्राह दक्षमिदं वचः ॥६०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने दक्षकृतचन्द्रशिक्षणशापरोगसोमनाथप्रतिष्ठापनादिनामा चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

**श्रीनारायण उवाच—**

शंभुः प्राह तदा दक्षं चन्द्ररोगं विनाशय ।
दक्षः प्राह च मे शापं हरिष्यामि तु शंकर ! ॥ १ ॥
पुत्रीणां सोमतो नैराश्यजं दुःखं पुनः पुनः ।
को हरिष्यति तद्दुःखं नित्यजं शशिनं विना ॥ २ ॥
साध्वीनां तस्य पत्नीनां दुःखदाहकृतं पुनः ।
शापं को वारयेद् देवो यथेष्टं कुरु शंकरः ॥ ३ ॥
इत्याश्रुत्य गुरोर्वाक्यं दक्षस्य प्रयतात्मनः ।
शंभुः प्राह तदा चन्द्रं दक्षशापो विनश्यतु ॥ ४ ॥
सवीर्यो भव शीतांशो मैवं पक्षगमो भव ।
अथ पत्नीकृतशापविनाशायाऽपि शंकरः ॥ ५ ॥
रेवतीप्रभृतिभ्यस्तत्क्षमां याचितवान्प्रभुः ।
पत्नीभिश्च तदा रोगो नाशं याहीति कीर्तितम् ॥ ६ ॥
रोगो वीर्यक्षयो नष्टो न नष्टस्तु कलाक्षयः ।
पक्षपातित्वदोषस्य विनाशाय क्षमापितम् ॥ ७ ॥
रोहिण्यामेव पातित्वं परित्यक्तं हिमांशुना ।
वीर्यक्षयप्रपातित्वं शंभुना सम्विनाशितम् ॥ ८ ॥
सर्वासु समगामित्वमंगीकृतं हिमांशुना ।
कलानां क्षयगामित्वं न नाशितं तु शंभुना ॥ ९ ॥
तदा चन्द्रः पुनर्देवं ब्रह्माणं प्रत्यभाषत ।
पितस्तेजःक्षयो दुःखं सर्वदुःखाद्विशिष्यते ॥१०॥
तेजस्तेजस्विनामात्माते जः सम्मानमुच्यते ।
तेजः कीर्तियशो द्रव्यं महत्ता तेजसि स्थिता ॥११॥
निस्तेजा यो भवेल्लोके गणनातो बहिष्कृतः ।
तेजस्विनां तु गणने तेजस्वी परिगण्यते ॥१२॥
अन्यगुणैर्विहीनोऽपि तेजोरूपसमन्वितः ।
चक्षुषां तु प्रियः स्याद्वै पुष्पं किंशुकजं तथा ॥१३॥
नैकगुणैर्युतं चापि रूपतेजोविहीनकम् ।
चक्षुःप्रियतरं न स्यात्कृष्णं व्याप्तं तमो यथा ॥१४॥
शुक्लं नीलं तथा पीतं रक्तं च हरितं तथा ।
कपीशं कर्बुरं चेति सप्तरूपाणि तन्वते ॥१५॥
सर्वेभ्यस्तत्र शुक्लं वै श्रेष्ठं रूपं हि कथ्यते ।
ततः पीतं ततो रक्तं कपीशं तदनन्तरम् ॥१६॥
हरितं च ततः प्रोक्तं ततो नीलं तु गण्यते ।
कर्बुरं चित्रसंज्ञं तु ततः प्रियं त्विहोच्यते ॥१७॥
शुक्लं तेजो ब्रह्मणस्तु परब्रह्मण इत्यपि ।
मुक्तानां ब्रह्मसंज्ञानां गोलोकादिस्थलीजुषाम् ॥१८॥
रूपं श्वेतं सदा चक्षुःप्रियताकरमिष्यते ।
मम रूपं सदा शुक्लं तेजआधारकं मतम् ॥१९॥
विनातेजोऽप्यहं कृष्णो लोहमृत्तिकया समः ।
तस्मात्तेजो मदीयं मे शाश्वतं देहि पद्मज ! ॥२०॥
नाऽहं तेजोविहीनो वै स्थातुमिच्छामि पूर्वज ! ।
तेजोहीनं च मां सर्वे तिरस्कुर्वन्ति सर्वथा ॥२१॥
नार्यश्चापि मदीया न मानयिष्यन्ति पूर्ववत् ।
पूर्वं तेजःसमुद्रेकाद् व्यराजं देवसंसदि ॥२२॥
इदानीं तेजसा हीनः कथं यामि सुरगृहे ।
तेजोहीनो न जीवेयं म्रियेय वच्मि चान्तिकम् ॥२३॥
सोम इत्यभ्यर्थयति यावत्तावत्तु तत्र वै ।
ओषधयः समायाता विविधा भिन्नलोकजाः ॥२४॥
काश्चिदोषधयस्तत्र कलैकाऽमृतजीवनाः ।
काश्चिदोषधयस्तत्र द्विकलाऽमृतजीवनाः ॥२५॥
त्रिकलाऽमृतपा कश्चित्काश्चिच्चतुःकलाऽमृताः ।
काश्चित्पञ्चकलाभोक्त्र्यः काश्चिच्छट्कलनाऽमृताः ॥२६॥

काश्चित् सप्तकलाभोक्त्र्यः काश्चिदष्टकलाऽमृताः ।
काश्चिन्नवकलाभोक्त्र्यः काश्चिद्दशकलाऽमृताः ॥२७॥
काश्चिदेकादशकलाः काश्चिद्द्वादशसत्कलाः ।
काश्चित् त्रयोदशकलाः काश्चिच्चतुर्दशाऽमृताः ॥२८॥
काश्चित्पञ्चदशकलाऽमृतभोगाऽऽप्ततृप्तयः ।
प्राप्ते तत्तद्दिने तास्ता भक्षयन्त्यमृतं स्वकम् ॥२९॥
एवं विभिन्नसामर्थ्या विभिन्नाऽमृतजीवनाः ।
विभिन्नकलया पुष्टा ह्यासँस्तत्र समागताः ॥३०॥
ओषधिभिर्विभिन्नाभिः प्रार्थितं स्वार्थजीवनम् ।
ह्रासवृद्धिकलायुक्तश्चन्द्रमा यदि पाक्षिकः ॥३१॥
वर्तेत तु तदाऽस्माकं जीवनं चापि पौष्टिकम् ।
सफलं सरसं स्मृद्धं यथाभक्ष्यसुपोषणम् ॥३२॥
यथावृद्धि यथापोषं यथार्तवं सबीजकम् ।
यदि पूर्णकलश्चन्द्रः सर्वदा स्यात्तथा तु ताः ॥३३॥
कला असहमानाश्च नश्यामो वयमंजसा ।
सर्वकलाऽमृतस्याऽस्य शैत्याग्निदहनाऽक्षमाः ॥३४॥
कुमार्यः पेशलाः सर्वा नाशमाप्स्यन्त्यहर्निशम् ।
तस्माच्चन्द्रमसो नित्यशीततासहनाऽक्षमा ॥३५॥
कोमला ह्यंकुरादेव मा नाशं यान्तु वल्लयः ।
इति तासां प्रार्थनां तु श्रुत्वा ब्रह्मा च शंकरः ॥३६॥
चन्द्रमोषधिनाथं तौ प्राहतुः सुखकृद्वचः ।
चन्द्र त्वयाऽवधार्यं वै वल्लीनां प्रार्थितं खलु ॥३७॥
स्वीकुर्वे तत्प्रसह्याऽत्र नाऽन्यो मार्गोऽत्र दृश्यते ।
ओषध्यधीनमेवैषां लोकानां जीवनं कृतम् ॥३८॥
ओषधीनां जीवनन्तु कलाः षोडश ते मताः ।
भिन्ना भिन्नाः कलास्तां तां जीवयत्यन्वहं यतः ॥३९॥
कलाधारो भवान्प्रोक्तः स चेत् कृपां न चाचरेत् ।
सर्वानि नष्टा भवेयुर्वै परस्परतया मुहुः ॥४०॥
तस्मात्तेजःकलालाभे कथयावस्तथा कुरु ।
भव पक्षे वर्धमानः पक्षे क्षयमवाप्नुहि ॥४१॥
पक्षपातित्वदोषस्ते कलास्वेव निवेशितः ।
कलायास्ते क्षयः स्याद्वै वीर्यं ते चाऽक्षयं भवेत् ॥४२॥
पत्नीप्रदत्तशापो वै वज्रः केन हि वार्यते ।
पोष्यवर्गोऽर्थ्यमिष्टं तु पोष्यार्थं त्यज्यते न किम् ॥४३॥
परोपकारशीलास्तु परेषां सुखहेतवे ।
निजार्थं स्वानुकूलं च त्यजन्ति परमार्थतः ॥४४॥
चन्द्र ! सर्वासु पत्नीषु समानं रमणं कुरु ।
मा निःश्वासं तु तासां वै गृहाण सुखवान् भव ॥४५॥
ओषधीनां जीवनस्य पुण्यं गृहाण पक्षधृक् ।
एवं चन्द्रमसं कृत्वा ब्रह्मा च शंकरस्तथा ॥४६॥
देवाः कलाह्रासवृद्धी तथैवाऽस्थापयँस्तदा ।
तदारभ्य सदा चन्द्रः पूर्णवीर्यसुसंभृतः ॥४७॥
रेमे नक्षत्ररूपाभिः पत्नीभिः समभावतः ।
कलानाशविवृद्धी तु ह्योषधिप्रार्थिते स्थिते ॥४८॥
ब्रह्माद्याश्च तथा देवा ह्यगच्छन्स्वनिकेतनम् ।
अथ शंभुर्ययाचे तं चन्द्रं ललाटभूषणम् ॥४९॥
ब्रह्मा प्रादादब्धिजं तत्कलाचन्द्रं द्वितीयकम् ।
अत्रेर्जातश्च यश्चन्द्रः स तु राजा तृतीयकः ॥५०॥
ते ते चन्द्राः प्रभिन्ना वै बोध्या विभिन्नकार्यजाः
यावन्तः शंभवः सन्ति यावन्त्यण्डानि सन्ति च ॥५१॥
तावन्तश्चन्द्रमसः स्युः कल्पभेदात् त्वनन्तकाः ।
इति ते कथितं लक्ष्मि ! चन्द्रेऽपि क्षयकारणम् ॥५२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने
चंद्रस्य तेजःकलाह्रासवृद्धिस्थितिकारणप्रदर्शननामा
पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

**श्रीनारायण उवाच—**

अथ लक्ष्मि ! प्रवक्ष्यामि देवसृष्टं तु मानसीम् ।
तत्राऽभिमानिनो देवान्मानसानसृजत् त्वजः ॥ १ ॥
आभूतसंप्लवावस्थान् नामतस्तान्निबोध मे ।
आपोऽग्निः पृथिवी वायुरन्तरिक्षं दिशस्तथा ॥ २ ॥
स्वर्गं दिवः समुद्राश्च नदाः शैला द्रुमा लताः ।
ओषधीनां तथाऽऽत्मानो ह्यात्मानो वृक्षवीरुधाम् ॥ ३ ॥
लवः काष्ठा कला सन्धिर्मुहूर्तं च दिवानिशम् ।
मासार्धमयनं मासश्चाब्दं युगश्च साधिका ॥ ४ ॥
स्थानाभिमानिनो देवा इत्येतानसृजत् त्वजः ।
नक्षत्रग्रहताराणामभिमन्त्रीश्च देवताः ॥ ५ ॥
अष्टाविंशतिकोटींश्च ससर्ज सुकृतात्मनाम् ।
वैमानिकास्तु ताः प्रोक्ता देवलोके दिवौकसः ॥ ६ ॥
देवाश्च पितरश्चैव मुनयो मनवस्तथा ।
तेषामनुचरा ये च मनुपुत्रास्तथैव च ॥ ७ ॥
प्रसंख्यया त्रीण्यब्जानि कोट्यो द्विनवतिस्तथा ।
सप्तलक्षाणि च तथा सहस्राण्यष्ट सन्ति हि ॥ ८ ॥
देवा ह्येतेऽभिमन्तारस्तत्तल्लोकदेवताः ।
आधिपत्यं विना ते वै ऐश्वर्येणाऽजसन्निभाः ॥ ९ ॥

जंगमाः स्थावराश्चैते ब्रह्मणो मानसीप्रजाः ।
तुषितान्मरुतः साध्यान् विश्वेदेवाँश्च विद्युतः ॥१०॥
स्तनयित्नूँश्च भानूँश्च वसूनष्टौ तथैव च ।
द्रोणप्राणध्रुवाऽर्काऽग्निदोषवसुविभावसून् ॥११॥
सिद्धान् यक्षाँश्च गन्धर्वानसुरान् राक्षसाँस्तथा ।
अप्सरसश्चारणाँश्च पिशाचप्रेतभूतकान् ॥१२॥
विद्याधरान् किंपुरुषानश्वमुखाँश्च किन्नरान् ।
वेतालान् डाकिनीं चैव शाकिनीं योगिनीस्तथा ॥१३॥
विनायकाँश्च कूष्माण्डान् वेतालाँश्च ग्रहानपि ।
यातुधानाँस्तथोन्मादान्मातॄर्गुह्यकचारणान् ॥१४॥
प्रजापतीनृषींश्चैव नागान्सर्पांस्तथोरगान् ।
खगान्मृगान्पशून्वृक्षान् गिरीन्मर्त्यान्सरीसृपान् ॥१५॥
सूतमागधबन्दींश्च भाट्टमिन्द्रं यमं तथा ।
वरुणं च कुबेरं च हीशानं निर्ऋतिं तथा ॥१६॥
अष्टसिद्धीर्नवनिधीन् रुद्रानेकादशाऽपि च ।
दैत्याश्च दानवाँश्चैव मानसानसृजत् स्वजः ॥१७॥
यज्ञान्पुण्यजनान् देववाहनानि पशूनपि ।
गौरजो महिषः कृष्णः सूकरो गवयो रुरुः ॥१८॥
अविरुष्ट्रादयश्चैते द्विशफाः पशवस्तथा ।
खरोऽश्वः शरभो गौरश्चमर्येकशफा इमे ॥१९॥
श्वा श्रृगालो वृको व्याघ्रो मार्जारः शशशल्लकौ ।
सिंह कपिर्गजः कूर्मो गोधा च मकरादयः ॥२०॥
कंकग्रध्रवटश्येनभासभल्लुकबर्हिणः ।
हंससारसचक्राह्वकाकोलूकसकुक्कुटाः ॥२१॥
एवमादीन् नामतस्तान्मानसानसृजत् स्वजः ।
आद्यं सर्गं महत्तत्त्वं गुणवैषम्यमसृजत् ॥२२॥
द्रव्यज्ञानक्रियाकृदहमं द्वितीयमसृजत् ।
तन्मात्राणि तृतीयं तु द्रव्यशक्तं समसृजत् ॥२३॥
इन्द्रियाणि चतुर्थं तु ज्ञानकर्मात्म चाऽसृजत् ।
पञ्चमं तु मनोदेवान् षष्ठमाविद्यमसृजत् ॥२४॥
सप्तमं स्थावरं सर्गं वानस्पत्यमवासृजत् ।
अष्टमं तु गवादीन्वै तिर्यञ्चः समवासृजत् ॥२५॥
मर्त्यं तु नवमं देवसर्गं दशममसृजत् ।
तत्र तत्राऽपेक्षितं च गौणसर्गमथाऽसृजत् ॥२६॥
द्रव्यं कर्म स्वभावं च सह ओजो बलं तथा ।
प्राणं दशविधं चक्रे मानसान् स पितामहः ॥२७॥
अशनापिपासे तालूं जिव्हां वाचं हुताशनम् ।
घ्राणं च नासिकां नेत्रे श्रोत्रे चैव दिशो दश ॥२८॥
रोमाणीन्द्रं करं पादौ गतिमानन्दशिश्नकम् ।
रजो योनिं च वायुं च मित्रं यज्ञं सहव्यकम् ॥२९॥
पायूं च मित्रकं चैव बीजं वीर्यं च रक्तकम् ।
नाभिमपानं मृत्युं च कुक्षिमन्त्राणि नाडिकाः ॥३०॥
तुष्टिं नदीः समुद्राँश्च पुष्टिं हृदयमित्यपि ।
मनश्चन्द्रं च संकल्पं कामं त्वचं च चर्म च ॥३१॥
मांसं रक्तं च मेदं च मज्जामस्थि तु भूतजान् ।
इत्येतान्मानसाँश्चक्रे प्राक् सृष्टौ तत्र विश्वसृक् ॥३२॥
तत्र तत्र तदावासे देवाँस्ताँस्तानतिष्ठिपत् ।
आस्ये त्वग्निं लोकपालं वाण्यादेवमतिष्ठिपत् ॥३३॥
तालौ तत्र वरुणं तु जिव्हादेवमतिष्ठिपत् ।
नस्यश्विनीकुमारौ तु घ्राणदेवावतिष्ठिपत् ॥३४॥
महत्तत्त्वे तु वागीशं बुद्धिदेवमतिष्ठिपत् ।
चरणयोस्तथा विष्णुं पाददेवमतिष्ठिपत् ॥३५॥
अक्षि त्वष्टारमादित्यं चक्षुर्देवमतिष्ठिपत् ।
करयोरिन्द्रं वार्तार्थं हस्तदेवमतिष्ठिपत् ॥३६॥
चर्मण्यनिलं प्राणाय त्वचो देवमतिष्ठिपत् ।
कर्णयोर्दिक् यथायोग्यं श्रोत्रदेवमतिष्ठिपत् ॥३७॥
गुदे मित्रं विसर्गाणं पायुदेवमतिष्ठिपत् ।
त्वचि कण्डूकृते यावदोषधीन् समतिष्ठिपत् ॥३८॥
गुह्ये मेढ्ं महानन्दं ब्रह्मदेवमतिष्ठिपत् ।
हृदि मनो विकाराय चन्द्रमसमतिष्ठिपत् ॥३९॥
महत्तत्त्वे महत्सत्त्वमहंकारेऽभिमानकम् ।
चित्ते विज्ञानमाधत्त मानसान् तानकल्पयत् ॥४०॥
मुखात्तु ब्राह्मणं ब्रह्म बाह्वोस्त्राणं तु राजकम् ।
उर्वोर्वृत्तिं विशं पद्भ्यां सेवां शूद्रानकल्पयत् ॥४१॥
ब्रह्मा स्वस्य शरीरे वै सृष्टिं सस्मार मानसीम् ।
इन्द्रादयो बाहवो मे दिशः कर्णौ ध्वनिः श्रुतिः ॥४२॥
नासत्यदस्रौ नासे चाऽक्षिणी द्यौश्चक्षुरर्यमा ।
पक्ष्माण्यहनी चोभे भ्रूविजृम्भो ह्यजधिष्ण्यकम् ॥४३॥
अपस्तालू रसो जिव्हा छन्दः शिर्ष्णस्तथैव च ।
यमो दंष्ट्रा द्विजाः स्नेहकलोन्मादस्तु हास्यकम् ॥४४॥
अपांगमोक्षः सर्गोऽयं व्रीडा चोत्तर ओष्ठकः ।
लोभस्त्वधर ओष्ठः स्यात् स्तनौ धर्मो मतस्तथा ॥४५॥
पृष्ठमधर्मः को मेढ्ं वृषणौ मित्रकाविति ।
कुक्षिः समुद्रा गिरयोऽस्थिसंघाः श्वसितं जगत् ॥४६॥
नद्यो नाड्यस्तनुरुहाणि भूरुहा गतिर्वयः ।
गुणप्रवाहः कर्म स्यात् केशा मेघा मनः शशी ॥४७॥

अव्यक्तं हृदयं वासः सन्ध्या ज्ञानं महत्त्वकम् !
गिरित्रिमन्तःकरणं नखान्यश्मोष्ट्रहस्तिनः ॥४८॥
श्रोणिर्मृगा वयांसि तु शष्फाणि मनीषा मनुः ।
मर्त्यो निवासो गन्धर्वविद्याधाऽप्सरसः स्वरः ॥४९॥
स्मृतिर्वीर्यं ब्राह्मणास्तु मुखं क्षत्रा भुजास्तथा ।
विड्रुरुरंघ्रिः शूद्रो वै नानाद्रव्याणि कर्म च ॥५०॥
हव्यकव्याऽमृतान्नादिरसो जिव्हा मनस्तु हृत् ।
विक्रमो भूर्भुवः स्वश्च छन्दांसि सप्तधातवः ॥५१॥
तीर्थानि नाड्यः कामास्तिश्चरणं ह्युदरं मृतिः ।
कोशश्मश्रुनख्यानेव शिलालोहाऽभ्रविद्युतः ॥५२॥
शिश्न आनन्दपर्जन्यजलवीर्यस्रवा इति ।
पायुर्यमपरिमोक्षमित्र इत्यपि मानसीम् ॥५३॥
हिंसा निर्ऋतिर्निरयो मृत्युर्गुदमिति प्रधीः ।
तमोऽधर्मपराभूतिः पृष्ठोऽस्थीनि तु पर्वताः ॥५४॥
रक्तेऽव्यक्तरसाः सर्वे प्राक् ध्याता मानसा इमे ।
स्वात्मन्येवं परं ध्यात्वा मानसीं सृष्टिमित्यतः ॥५५॥
योग्यस्थानानि तेषां वै कृत्वा दत्वा च तान्यपि ।
तेभ्यो ह्यवासयत्सर्गे देवान् ताराग्रहादिकान् ॥५६॥
भूवरी यक्षरक्षःप्रभूतप्रेतपिशाचकान् ।
रुद्रान् रुद्रगणाँश्चापि गणिकाः समवासयत् ।
भुवि मर्त्यान्पशून्पक्षिगणान् जन्तूननेकशः ॥५७॥
पर्वतादौ महारण्ये गन्धर्वाश्चारणाँस्तथा ।
किन्नरान् किंपुरुषाँश्च विद्याधरविहंगमान् ॥५८॥
अतलादिपञ्चलोकेऽसुरदानवदैत्यकान् ।
महातले काद्रवेयान् सर्पांश्च पन्नगाँस्तथा ॥५९॥
पाताले तु महानागान् ब्रह्मा वासमदापयत् ।
एषा सर्वा महासृष्टिर्मानसी प्रथमे युगे ॥६०॥
यद्यथाऽपेक्ष्यते कार्ये तथा सृष्टिस्तु कल्प्यते ।
ब्रह्मा विकल्प्य सर्वं तन्मानसाद् व्याकरोत्तदा ॥६१॥
ऐश्वर्यस्रोतसश्चाऽत्र ईश्वराः सत्यलोकजा. ।
संप्रज्ञास्रोतसश्चात्र ऋषयो ज्ञानिनोऽमलाः ॥ ६२ ॥
संतृप्तिस्रोतसश्चात्र पितरः श्राद्धतृप्तिजाः ।
संपुण्यस्रोतसश्चात्र देवाः पुण्यादिसम्पदः ॥ ६३ ॥
संध्यानस्स्रोतसश्चात्र प्रेता वासनध्यानजाः ।
समूर्ध्वस्रोतसश्चापि राक्षसा दैत्यदानवाः ॥६४॥
अर्वाक्प्रस्रोतसः पृथ्व्यां मनुष्या राजसाः सदा ।
तिर्यक्स्रोतस एवाऽत्र पशुकीटप्रपक्षिणः ॥६५॥
तमःस्रोतस एवाऽत्र नागसर्पादयो मताः ।
अविद्यस्रोतसश्चाऽत्र पर्वतास्तरुगुल्मकाः ॥६६॥

इत्येवं दशस्रोतस्कान्सर्गान् ध्यानकृतान्पुनः ।
तत्र तत्र स्थले लोके ब्रह्मा सम्यगतिष्ठिपत् ॥६७॥
तेषां तु भोजनं स्वस्माच्छरीरात्समकल्पयत् ।
ऋषीणां तु पयः छन्दोमयं भोज्यमकल्पयत् ॥६८॥
पितॄणां भोजनं कव्यं सिद्धानां सिद्धयोऽदनम् ।
दैतेयानां सुरा प्रोक्ता दानवानामथाऽऽसवम् ॥६९॥
गन्धर्वाणां तु संगीतमप्सरसां तु सौभगम् ।
विद्याध्राणां नभोविद्यां मायिनामप्यदर्शनम् ॥७०॥
यक्षराक्षसभूतादिप्रेतानां मांसरक्तकम् ।
सर्पादीनां तु गरलं पशूनां यवसं तथा ॥७१॥
दंष्ट्रिणां पललं वृक्षवल्लीनां विविधं रसम् ।
गिरीणां भिन्नधातूँश्च देवानाममृतं तथा ॥७२॥
मनुष्याणां गोधूमादि पक्षिणां च वनस्पतीन् ।
जलजानां जलजन्तून् सर्वेषां पाञ्चभौतिकम् ॥७३॥
ब्रह्मैव कल्पयामास यस्य यादृगपेक्षितम् ।
तेनेयं लोकयात्रा निर्वहत्भूतसंप्लवम् ॥७४॥
एवं युगे तु प्रथमे सांगोपांगं तु सर्जनम् ।
सर्वं तु मानसं कृत्वा विरराम पितामहः ॥७५॥
सृष्टिर्विवर्धते नैव नवीना जायते नहि ।
यथा यादृक् तथा तावत् तावदेव हि वर्तते ॥७६॥

इति श्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुग-
सन्ताने देवयक्षमानुषपशुपक्षिदैत्यदानवनागसर्प-
स्थावरादिसृष्टितदभिमानिदेवादिप्रदर्शननामा
षट्चत्वारिंशोऽध्यायः ॥४६॥

**श्रीनारायण उवाच—**

मया सृष्टेः सभारंभे दिवसे प्रथमे प्रिये ! ।
सृष्टिस्तु मानसी प्रोक्ता सत्ययुगमयी हि सा ॥ १ ॥
स्थानाभिमानिनश्चैव स्थानानि च पृथक् पृथक् ।
स्थानात्मनः स स्रष्टा वै युगावस्थां विनिर्ममे ॥ २ ॥
कृतं त्रेतां द्वापरं च कलिं चैव तथा युगम् ।
कल्पस्यादौ सत्ययुगेऽसृजत्स मानसीं प्रजाम् ॥ ३ ॥
चत्वारि तु सहस्राणि वर्षाणां तत्कृतं युगम् ।
सन्ध्यांशौ तस्य दिव्यानि शतान्यष्टौ च संख्यया ॥४॥
अब्दानां त्रिसहस्राणि तथा त्रेतायुगं मतम् ।
सन्ध्यांशौ तस्य दिव्यानि षट्शतानि तु संख्यया ॥ ५ ॥
वर्षाणां द्विसहस्राणि युगं द्वापरमुच्यते ।
सन्ध्यांशौ तस्य दिव्यानि चतुःशतानि संख्यया ॥ ६ ॥

वर्षाणामेकसाहस्रं युगं कलिमथोच्यते ।
सन्ध्यांशौ तस्य दिव्यानि द्विशतानि तु संख्यया ॥ ७ ॥
द्वादशाब्दसहस्राणि चतुर्युगं व्यधादजः ।
तत्र कृतयुगे लक्ष्मि ! प्रजा मानससिद्धयः ॥ ८ ॥
धर्माऽधर्मौ न तास्वास्तां निर्विशेषाः प्रजास्तु ताः ।
तुल्यमायुः सुखं रूपं तासां तस्मिन्कृते युगे ॥ ९ ॥
सरित्सरःसमुद्रांश्च सेवन्ते पर्वतानपि ।
तदानात्यम्बुशीतोष्णा युगे तस्मिंश्चरन्ति वै ॥१०॥
मनःसिद्ध्युद्भवं मिष्टमाहारमाहरन्ति ताः ।
सर्वशः कामचारिण्यो मानसीं सिद्धिमास्थिताः ॥११॥
न तासां प्रतिघातोऽस्ति न द्वन्द्वं नापि च क्रमः ।
विशोकाः सत्त्वबहुला एकान्तसुखिताः सदा ॥१२॥
पशवः पक्षिणश्चैव नित्यं मुदितमानसाः ।
सर्वकामसुखः कालो मनोऽभिलषितप्रदः ॥१३॥
उत्तिष्ठन्ति पृथिव्यां वै ताभिर्ध्याता रसादयः ।
बलरूपप्रदास्तासां सिद्धिः सा रोगनाशिनी ॥१४॥
दृढपुष्टशरीरास्ताः प्रजाः सुस्थिरयौवनाः ।
तदा सत्यमलोभश्च क्षमा तुष्टिः सुखं दमः ॥१५॥
निर्विशेषास्तु ताः सर्वा रूपाऽऽयुःशीलचेष्टितैः ।
सत्याधारो व्यवहारः प्रजानां जायते स्वयम् ॥१६॥
अप्रवृत्तिः प्रजानां तु कर्मणोः शुभपापयोः ।
वर्णाश्रमव्यवस्थाश्च न तदाऽऽसन् न संकरः ॥१७॥
रागद्वेषविहीनास्ता वर्तयन्ति परस्परम् ।
तुल्यसिद्ध्यायुषः सर्वा अधमोत्तमवर्जिताः ॥१८॥
सुखप्राया अशोकाश्च महोत्साहा महोत्सवाः ।
नित्यप्रहृष्टमनसो महासत्त्वा महाबलाः ॥१९॥
लाभाऽलाभौ न तास्वास्तां मित्रा मित्रे प्रियाऽप्रिये ।
मनसा विषयस्तासां निरीहाणां प्रवर्तते ॥२०॥
अन्योन्यं नैव लिप्सन्ति नानुगृह्णन्ति चैव ताः ।
अकृष्टपच्यं वै सर्वमवृष्टिसलिलं भुवि ॥२१॥
अप्रयत्नकृतं भोज्यमनायाऽऽस्तसद्रसम् ।
तत्र प्रसवदुःखं न न गर्भधारणं तथा ॥२२॥
नारीणां नाऽऽर्तवं तत्र नृणां न वीर्यसंस्रवः ।
सर्वाः कामदुघा गावः सर्वाः संकल्पसिद्धयः ॥२३॥
चतुर्दशसु लोकेषु निर्विशेषास्तु सम्पदः ।
गतयोऽव्याहताः सर्वा वाचः परिचितास्तथा ॥२४॥
वैमानिका अविमाना योगसिद्धितपोबलाः ।
ईश्वरा एव सर्वे ते पूर्णकामा इवेति च ॥२५॥
ध्यानं परं कृतयुगे त्रेतायां ज्ञानमुच्यते ।
प्रवृत्तो द्वापरे यज्ञो दानं कलियुगे वरम् ॥२६॥
सत्त्वं कृतं रजस्त्रेता रजस्तमसी द्वापरम् ।
कलिस्तमस्तु विज्ञेयो युगवृत्तवशेन ते ॥२७॥
पादावशिष्टो भवति युगधर्मस्तु सर्वशः ।
सत्ये युगे तु निःशेषे सिद्धिस्त्वन्तर्दधे हि सा ॥२८॥
सिद्धिरन्या युगे तस्मिंस्त्रेतायामभवत्पुनः ।
आपां सौक्ष्म्ये विनष्टे तु तदा मेघात्मना पुनः ॥२९॥
मेघेभ्यः स्तनयित्नुभ्यः प्रवृत्तं वर्षणं सकृत् ।
सकृदेव तया वृष्ट्या प्लाविते पृथिवीतले ॥३०॥
प्रादुरासँस्तदा ह्यापः कल्पवृक्षा गृहस्थिताः ।
सर्वप्रत्युपभोगस्तु तेभ्यस्तासां प्रजायते ॥३१॥
कल्पद्रुमैर्वर्तयन्ति त्रेतायुगमुखे प्रजाः ।
तदा राजसभावेन तासामेव विपर्ययात् ॥३२॥
रागलोभात्मको भावस्तदा ह्याकस्मिको भवत् ।
यत्तद्भवति नारीणां जीवितान्ते तदार्तवम् ॥३३॥
सत्ये मानससृष्टानां मिथुनानां सहस्रकम् ।
प्रत्येकं प्राणिनां यत्तदिदानीमार्तवं व्यधात् ॥३४॥
ततो वै हर्षमापास्ते द्वन्द्वीभूतास्तु जन्तवः ।
अन्योन्यहृच्छयाऽऽविष्टा मैथुनायोपचक्रमुः ॥३५॥
ततः प्रभृति त्रेतायां मिथुनोत्पत्तिरुच्यते ।
आयुषोऽन्ते ह्येकवारमार्तवं तत्र योषिताम् ॥३६॥
जायते कामभोगार्थं सुगर्भधारणाय च ।
तत्तदा न सुषुविरे सेवितैरपि मैथुनैः ॥३७॥
आयुषोऽन्ते प्रसूयन्ते मिथुनान्येव ताः सकृत् ।
समं जन्म च रूपं च म्रियन्ते चापि ताः सह ॥३८॥
तस्मिन् क्षीणे कृतांशे तु त्रेतायां कालधर्मतः ।
क्षीयन्ते मानसीसिद्धितपःश्रुतबलाऽऽयुषः ॥३९॥
क्षीयन्ते च तदा यावत्कृतधर्माः शनैः शनैः ।
पादन्यूनबलतत्त्वसामर्थ्यसुखवैभवाः ॥४०॥
अथेन्द्रेण हते वृत्रे ब्रह्महत्यात्मकं मलम् ।
नारीवृक्षाऽऽबिलास्वेतच्चतुर्भागं प्रसञ्जितम् ॥४१॥
ततः प्रभृति नारीणां जीवितान्तं यदार्तवम्
तदेव तासां प्रवृत्तं मासे मासे तदार्तवम् ॥४२॥
ततस्तेनैव योगेन वर्ततां मिथुने तदा ।
तासां तत्कालभावित्वान्मासि मास्युपगच्छताम् ॥४३॥
अकाले ह्यार्तवोत्पत्तिर्गर्भोत्पत्तिरजायत ।
विपर्ययेण कालेन तासां विकलनेन च ॥४४॥

कल्पवृक्षाः प्रणष्टा वै सर्वे सर्वगृहस्थिताः ।
क्वचित्क्वचित् त्ववशिष्टा आश्रयागतसिद्धिदाः ॥४५॥
कल्पवृक्षेषु नष्टेषु विभ्रान्ता व्याकुलेन्द्रियाः ।
गत्वा क्वाचित्ककल्पद्रून् अभिध्यायन्ति वस्तुकम् ॥४६॥
तदा वस्त्राणि सूयन्ते फलान्याभरणानि च ।
तेष्वेव जायते तासां गन्धमिष्टरसादिकम् ॥४७॥
अमाक्षिकं महावीर्यं पुटके पुटके मधु ।
एवं सर्वपरिकराः प्रवर्तन्ते प्रयत्नतः ॥४८॥
तेन ता वर्तयन्ति स्म सुखं त्रेतायुगार्धके ।
हृष्टपुष्टास्तथा तुष्टाः कल्पवृक्षैर्गतज्वराः ॥४९॥
अथ काले गम्यमाने पुनर्लोभाऽऽवृताः प्रजाः ।
वृक्षाँस्तान् जगृहुस्तेषां बलान्मधुफलादिकम् ॥५०॥
तासां तेनाऽपचारेण तथा कालबलेन च ।
प्रणष्टाः कल्पवृक्षास्ते प्रजास्तु निरुपाश्रयाः ॥५१॥
शीतवातातपैस्तीव्रैस्ततस्ता दुःखिता भृशम् ।
द्वन्द्वैश्च पीड्यमानास्तु चक्रुरावरणानि च ॥५२॥
कृत्वा द्वन्द्वप्रतीकारं निकेतानि हि भेजिरे ।
यथायोग्यं निकेतानि सस्यक्षेत्राणि भेजिरे ॥५३॥
मरुत्वत्सु प्रनिम्नेषु पर्वतेषु नदीषु च ।
संश्रयन्ति स्म दुर्गाणि प्रदेशं शाश्वतोदकम् ॥५४॥
यथायोगं यथाकामं समेषु विषमेषु च ।
आरब्धास्ते निकेता वै कर्तुं शीतोष्णवारणम् ॥५५॥
आरब्धानि च सस्यानां कृषिक्षेत्राणि पार्श्वतः ।
तत्र संस्थापयामासुः खेटानि च पुराणि च ॥५६॥
ग्रामाँश्चैवं यथाजोषं तथैवाऽन्तःपुराणि च ।
संप्रमाप्यांऽगुलैः स्वीयैर्गृहाद्यं चक्रिरे ततः ॥५७॥
कनिष्ठांगुष्ठवितस्तिर्द्वादशांगुल उच्यते ।
चतुर्विंशतिभिश्चैव हस्तः स्यादंगुलैरथ ॥५८॥
चतुर्हस्तं धनुर्दण्डो द्विहस्तो बाण उच्यते ।
धनुःसहस्रे द्वे तत्र गव्यूतिः परिकीर्तिताः ॥५९॥
गव्यूतीनां चतुष्टयं योजनं परिकीर्तितम् ।
एतेन पृथुना राज्ञा सन्निवेशोऽपि वै कृतः ॥६०॥
धनूँषि दश विस्तीर्णः श्रीमान् राजपथः कृतः ।
नृवाजिरथनागानामसंबाधः सुसंचरः ॥६१॥
अमितो दशधानुष्कं गृहं मध्यमवर्गकृत् ।
शतधनुष्कं नृपतेः सम्राजस्तु सहस्रकम् ॥६२॥
इत्येवं वर्तमानानां गृहप्रासादकेषु च ।
कल्पवृक्षेषु नष्टेषु वार्तोपायो विचिन्तितः ॥६३॥

वृष्टैर्जलानि खातेभ्यो निम्नगानि कृतानि वै ।
अपां भूमेश्च संश्लेषादोषध्यस्तासु चाऽभवन् ॥६४॥
ऋतुपुष्पफलाश्चैव वृक्षा गुल्माः प्रजज्ञिरे ।
कणा अफालकृष्टाश्च प्रसंपूर्णा प्रजज्ञिरे ॥६५॥
तेनौषधेन वर्तन्ते प्रजास्त्रेतायुगे तदा ।
ततः पुनरभूत्तेषां रागो लोभश्च कालतः ॥६६॥
ततस्ता जगृहुश्चापि नदीक्षेत्राणि पर्वतान् ।
वृक्षान् गुल्मौषधींश्चैव प्रसह्य तु यथाबलम् ॥६७॥
बलात्प्रसह्य भोक्तारः कृत्वा स्वकीयमेव च ।
हठात्प्रबला गृह्णन्ति चाऽल्पतेजोभ्य एव हि ॥६८॥
बलैश्च प्रबलैश्चैव स्वकीया वै कृता क्षितिः ।
अल्पबलास्तदा तेषां सेवया निर्वहन्ति वै ॥६९॥
ते तु शूद्रास्तदा जाताः परिचर्यापरायणाः ।
कृषिं कृत्वा तु जीवन्तो वैश्या जातास्तथा परे ॥७०॥
बलात् पृथ्व्याः प्रशास्तारः क्षत्रा जातास्तथा परे ।
शान्तास्तु सात्त्विकास्तत्र भिक्षां याचन्त एव ये ॥७१॥
ब्राह्मणास्ते तथाभूता महात्मानः शुभाशयाः ।
इत्येवं कर्मतो वर्णा ब्राह्मणेभ्यो विजज्ञिरे ॥७२॥
एवं विप्रतिपन्नेषु मानवेषु परस्परम् ।
तेन दोषेण तेषां ता ओषध्यो मिषतां तदा ॥७३॥
प्रणष्टा ह्रियमाणाश्च नीरसा ह्यभवन् पुनः ।
पत्रपुष्पफलैर्हीना शुष्कायन्ते समग्रतः ॥७४॥
प्रजा भोज्यविहीनास्तु विभ्रान्ताश्च समन्ततः ।
स्वायंभुवं प्रभुं जग्मुः क्षुधाऽऽविष्टाः प्रजापतिम् ॥७५॥
वृत्त्यर्थमर्थितं ज्ञात्वा ब्रह्मा सम्यग् विचार्य च ।
कृत्वा वत्सं सुमेरुं च दुदोह पृथिवीमिमाम् ॥७६॥
तदा प्रजज्ञिरे ग्राम्याऽऽरण्या ओषधयः पुनः ।
व्रीहयश्च यवाश्चैव गोधूमा अणवस्तिलाः ॥७७॥
प्रियंगवो ह्युदाराश्च कारुषाश्च सतीनकाः ।
माषा मुद्गा मसूराश्च निष्पावाः सकुलत्थकाः ॥७८॥
आढक्यश्चणकाश्चैव श्यामाकाः सगवेधुकाः ।
कुरुविन्दा वेणुयवा निवारा जर्तिलास्तथा ॥७९॥
मर्कटकाश्चेत्यफालकृष्टाः सर्वा मताः शुभाः ।
वृक्षा गुल्मलतावल्लीविरुधस्तृणजातयः ॥८०॥
ऋतुपुष्पफलाः सर्वा ओषध्यो जज्ञिरे त्विह ।
यदा प्रसृष्टा ओषध्यो न प्ररोहन्ति ताः पुनः ॥८१॥
तदा ब्रह्मा प्ररोहार्थं वार्तोपायं चकार ह ।
कृष्या तु वार्तया तास्तु कृष्टपच्या हि जज्ञिरे ॥८२॥

कर्षुकास्तत्र वैश्याश्च रक्षकाः क्षत्रियास्तथा ।
परिचरन्तः शूद्राश्च ब्रह्मार्पणास्तु ब्राह्मणाः ॥८३॥
गुरुत्वं तु कृतं स्थानं ब्राह्मणानां क्रियावताम् ।
राज्यं स्थानं क्षत्रियाणां संग्रामेष्वपलायिनाम् ॥८४॥
वैश्यानां भूमिजं स्थानं कृष्यादियत्नजीविनाम् ।
ग्रामान्तकं कृतं स्थानं शूद्राणां सेवया धृतम् ॥८५॥
ततः स्थितेषु वर्णेषु स्थापयामास चाश्रमान् ।
गृहस्थो ब्रह्मचारी च वानप्रस्थश्च भिक्षुकः ॥८६॥
चातुर्वर्ण्यात्मकः पूर्वो गृहस्थश्चाश्रमो महान् ।
त्रयाणामाश्रमाणां स प्रतिष्ठा योनिरेव च ॥८७॥
स्वस्वधर्मे स्थितानान्तु स्थानानि ब्रह्मणा स्वयम् ।
कल्पितानि च तान्येव कथयामि निबोध मे ॥८८॥
गृहस्थानां ब्राह्मणानां प्राजापत्यं मतं परम् ।
क्षत्रियाणां भवेदैन्द्रं न्यासिनां ब्रह्मणो गृहम् ॥८९॥
सत्यं तु ब्रह्मचाराणां वानप्रस्थगतायुषाम् ।
वैश्यानां मारुतस्थानं गान्धर्वं शूद्रसत्कृते ॥९०॥
पन्थानो देवयानाय तेषां द्वारं रविः स्मृतः ।
तथैव पितृयानानां चन्द्रमा द्वारमुच्यते ॥९१॥
इत्येषाऽऽदौ तु त्रेतायां सृष्टिः सर्वाऽभ्यवर्तत ।
त्रेतान्ते द्विपादह्रासबलवीर्यसुजीवनाः ॥९२॥
द्वापरे त्रिपादह्रासबलवीर्यादिजीवनाः ।
कलौ यथाकथंचिज्जीवना वै सकलाः प्रजाः ॥९३॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने युगवर्षसंख्याकृतयुगसिद्धिपादह्रासमिथुनसृष्टिनगरादिमानभक्ष्यौषधिवर्णाश्रमस्थापनादिनामा सप्तचत्वारिंशोऽध्यायः ॥४७॥

**श्रीलक्ष्मीरुवाच—**

इन्द्रस्य ब्रह्महत्या तु कथं जातेति मे हृदि ।
परं कुतूहलं प्राप्तं तत्कथां कथय प्रभो ! ॥ १ ॥
पृथुना च कदा पृथ्वी समीकृतेति कीर्तय ।
तत्पूर्वं कीदृशी देवी समासीत्पृथिवी प्रभो ! ॥ २ ॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! प्रवक्ष्यामि ह्यादितस्तां कथां शुभाम् ।
या श्रुता भगवद्योगात्पापहन्त्री भवत्यपि ॥ ३ ॥
ब्रह्मणो मरीचिः पुत्रस्तस्य वै कश्यपः सुतः ।
कश्यपस्य त्वदित्यां च त्वष्टा पुत्रो ह्यभूच्छुभः ॥ ४ ॥
त्वष्टा पत्न्यां रचनायां विश्वरूपमजीजनत् ।
विश्वरूपोऽभवत्तत्र देवानां तु पुरोहिताः ॥ ५ ॥
एकदेन्द्रसभायां तु बृहस्पतिरुपागमत् ।
अभ्युत्थानादिना चेन्द्रः सत्कार तस्य नाऽऽचरत् ॥ ६ ॥
तत आरभ्य गुरुराड् बृहस्पतिर्दिवौकसाम् ।
पौरोहित्यं तु तत्याज देवानामित्यतः परम् ॥ ७ ॥
पौरोहित्यं ददाविन्द्रो विश्वरूपाय तत्परम् ।
इन्द्रेण तु कृते यज्ञे विश्वरूपः पुरोहितः ॥ ८ ॥
देवेभ्यस्तु बलिं दत्वाऽसुरेभ्योऽपि ददौ रहः ।
दैत्यास्तु मातुलास्तस्य तस्माच्छन्नं बलिं ददौ ॥ ९ ॥
प्रच्छन्नं तत्प्रदत्तं वै बलिं ज्ञात्वा तु देवराट् ।
चुक्रोध जगृहे शस्त्रं चिच्छेद तच्छिरस्त्रयम् ॥१०॥
एकं तु मस्तकं तस्य सोमपानकरं ह्यभूत् ।
तच्छेदने तु सञ्जाताः पक्षिणो वै कपिञ्जलाः ॥११॥
द्वितीयं मस्तकं तस्य क्वाथपानकरं ह्यभूत् ।
तच्छेदने तु सञ्जाताः कलविंकास्तु पक्षिणः ॥१२॥
तृतीयं मस्तकं तस्य चाऽन्नभोजनकृत् त्वभूत् ।
तच्छेदने तु सञ्जातास्तित्तिराख्यास्तु पक्षिणः ॥१३॥
पुरोहितच्छिरश्छेदे ब्रह्महत्या बभूव सा ।
रक्ता क्षारा हरित् कृष्णा भयदा चित्ररूपिणी ॥१४॥
ववल्गे सा महेन्द्रं तु चित्रवर्णाऽभवद्धि सः ।
ततो देवैर्मिलित्वा तां चतुर्भागैर्विभज्य च ॥१५॥
यज्ञाऽन्तेऽश्रावयत्स्पष्टं देया विनिमयेन हि ।
ब्रह्महत्यातुर्यभागं गृह्णन्तु व्यक्तयस्तु याः ॥१६॥
ताभ्यो देयो वरस्तासामिष्ट एव न संशयः ।
श्रुत्वा तु कामतृप्त्यर्थं नारीभिरीप्सितो वरः ॥१७॥
अर्थितः कामभोगे वै बहुमैथुनसेवने ।
कृतेऽपि न श्रमो नित्यकामभोगोऽस्तु चैच्छिकः ॥१८॥
देवैरेवं वरं दत्वा ब्रह्महत्या चतुर्थकः ।
भागोऽर्पितस्तु नारीभ्यस्तद्रक्तमार्तवं ह्यभूत् ॥१९॥
तत आरभ्यनारीणां कामदेवो नवो नवः ।
मासि मासि रजोलाभः पुष्पं गर्भधृगप्यभूत् ॥२०॥
अथ भूम्याऽर्थितं यत्र यत्र मे निम्नता भवेत् ।
खातता वा तत्र तत्र प्रपूर्तिर्मे सदा भवेत् ॥२१॥
इमं वरं धरायै तु दत्वा भागं चतुर्थकम् ।
भूमेः खातप्रदेशास्तु पूर्यन्ते तत्स्वभावतः ॥२२॥

तत्र तत्र क्षारभागो भवतीति तु तत्फलम् ।
अथवृक्षादिभिस्तत्राऽर्थितं ह्याकस्मिकस्थितौ ॥२३॥
क्षते छिन्ने च भुग्ने च पुनः संरोहणं भवेत् ।
दत्वा द्रुम्यो वरस्तत्र हत्याभागचतुर्थकः ॥२४॥
द्रुम्यो दत्तश्च तेषां वै कृष्णगुन्द्रस्रवश्च यः ।
न भक्ष्यते स वै कीटो ब्रह्महत्याफलात्मकः ॥२५॥
अथाऽद्भिः स्वेप्सितस्तत्र वरोऽप्यर्थित उद्गमे ।
जलपूर्तिर्भवेत्प्रस्रवणाग्रेषु समन्ततः ॥२६॥
यत्र द्रव्ये जलक्षेपस्तस्य वृद्धिर्भवेत् सदा ।
तत्र वासो रसरूपेणाऽस्माकं भवतादिति ॥२७॥
तादृग्वरस्तु तेभ्यो वै हत्वा हत्याच्चतुर्थकम् ।
दत्ते तेन जले भूमौ सर्वदा पूर्तिरीक्ष्यते ॥२८॥
जले हत्यास्वरूपन्तु शैवालः फेनबुद्बुदाः ।
इत्येवं ब्रह्महत्यानां भागाश्चत्वार ईरिताः ॥२९॥
इच्छुकेभ्यश्च दत्तास्ते हीन्द्रः शुद्धिं जगाम ह ।
तत आरभ्य देवेन्द्रो यज्ञान्कारयति प्रथान् ॥३०॥
अथेन्द्रस्य विवधार्थं पुत्रनिष्क्रयलब्धये ।
हतपुत्रस्तदा त्वष्टा जुहावाऽग्नौ समन्त्रकम् ॥३१॥
इन्द्रशात्रृ विवर्धस्व जहीन्द्रं चाऽत्र सत्वरम् ।
इति होमेन तत्रैव पुरुषो घोरदर्शनः ॥३२॥
समुत्पेदे महाकायः कालसन्निभरूपधृक् ।
नित्यं सहस्र हस्तानां वर्धमानोऽग्रधूम्रभः ॥३३॥
कान्त्या सन्ध्याऽभ्रसदृशः त्रिशूलं भ्रामयन् स्थितः ।
ताम्राभकेशजटिलो मध्याह्नार्काग्रनेत्रवान् ॥३४॥
गर्जंश्च कम्पयन् पृथ्वीमाकाशं संलिहन्निव ।
प्रकाशं भक्षयन्नग्रेऽन्धं तम उद्वमन्निव ॥३५॥
अन्धकारस्वरूपेण तेन लोकाः समावृताः ।
स वै वृत्र इति नाम्ना त्वष्ट्राऽऽहूतस्तु दारुणः ॥३६॥
तं देवाः समभिद्रुत्य निजघ्नुर्दिव्यहेतिभिः ।
अस्त्रशस्त्राणि सर्वाणि सोऽग्रसत्सर्वतः स्वयम् ॥३७॥
विस्मिताश्च तदा देवा विषण्णा नष्टतेजसः ।
अन्तःस्थितं प्रभुं देवमस्तुवन् भग्नवृत्तयः ॥३८॥

नमोऽस्तु ते श्रीपुरुषोत्तमाय
ब्रह्माधिदेवाय परात्पराय ।
ब्रह्मात्मने मुक्ततनुस्थिताय
नमोऽस्तु ते त्राहि भयावृतान्नः ॥३९॥
श्रीवासुदेवप्रभृतीश्वराणां
वैकुण्ठधामादिपतीश्वराणाम् ।
सदाशिवादीश्वरकोटिकानां
शास्त्रे नमस्त्राणमथो कुरु त्वम् ॥४०॥
त्वयास्वपृष्ठे विधृतस्तु शैलः
शृंगे स्वकीयेऽवधृता तु नौका ।
त्वयास्वदन्तेऽवधृता वसुन्धा
स एव देवः प्रकरोतु रक्षाम् ॥४१॥
वयं विसृष्टाः परिपालनाय त-
न्नश्याम ईक्षान्धतमः सुविक्लवाः ।
शस्त्राऽस्त्रहीना अरिणाऽर्दिता मुहु-
र्देवाधिदेवोऽरणमार्तिहा क्रियात् ॥४२॥

इति स्तुत्वा विररमुर्देवा ब्रह्मपुरोगमाः ।
भगवान् श्रीहरिस्तत्राऽऽविर्बभूव धृतायुधः ॥४३॥
सर्वावयवसौन्दर्यदिव्यध्येयमनोहरः ।
दण्डवत्पतिता देवाः पुनरुत्थाय तुष्टुवुः ॥४४॥
पाहि नाथ महाघोराद् वृत्रासुरमहाभयात् ।
हरे त्वां वै प्रपन्नाः स्म त्रातारमच्युतं प्रभुम् ॥४५॥

**श्रीहरिरुवाच—**

इन्द्र याहि स्वस्ति वोऽस्तु दध्यंचं योगिनमृषिम् ।
विद्यातपोमयं गात्रं याचतेति प्रदास्यति ॥४६॥

**श्रीनारायण उवाच—**

इत्युक्त्वा श्रीहरिस्तावत् तत्रैवान्तर्दधे ततः ।
देवा गत्वा तु दध्यञ्चमयाचत मुहुस्तनुम् ॥४७॥
दध्यञ्चा सुप्रसन्नेन परोपकृतिशालिना ।
शरीरं योगमास्थाय परित्यक्तं तदैव हि ॥४८॥
तदस्थिकारितं वज्रमिन्द्रश्चादाय हर्षतः ।
वृत्रमभ्यद्रवद्धन्तुं हर्षयन्देवमण्डलम् ॥४९॥
तत्र देवा रुद्रवस्वादित्याग्निवायवस्तथा ।
पितरः ऋभवः साध्या विश्वेदेवाः कुमारकाः ॥५०॥
अन्ये च देवतास्तत्र मिलिता रणगामिनः ।
असुराश्चापि वृत्रस्था वृत्रपक्षप्रपातिनः ॥५१॥
नमुचिशंबराऽनर्वद्विमूर्धर्षभकालयः ।
हयग्रीवशंकुशिरविप्रचित्तिस्वयोमुखाः ॥५२॥
पुलोमवृषपर्वादिहेतिप्रहेतिदानवाः ।
यक्षाश्च राक्षसाश्चापि सिंहगर्जनकारकाः ॥५३॥
सर्वशस्त्रकरास्ते वै गदापरिघपाणयः ।
बाणतोमरमुद्गरप्रासशूलपरश्वधैः ॥५४॥

खड्गैः शस्त्रैस्तथाऽस्त्रैश्च शतघ्नीभूशुण्डिभिर्हि सः ।
सर्वतोऽवाकिरन्क्रोधात्तुमुलं विबुधर्षभान् ॥५५॥
तेषां शस्त्राणि देवैस्तु भग्नान्येव सहस्रधा ।
वृत्रपक्षाः पलायिता देवाः स्वास्थ्यं प्रलेभिरे ॥५६॥

इति श्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने विश्वरूपस्य हत्यायाश्चतुर्धा वितरणं वृत्रोत्पत्तिर्वृत्रनाशाय दध्यंचाऽस्थिनिर्मितवज्रेण युद्धमिति निरूपणनामाऽष्टचत्वारिंशोऽध्यायः ॥४८॥

**श्रीनारायण उवाच—**

वृत्रः प्राह प्रभग्नाँस्तान्पलायतो विहस्य वै ।
हे विप्रचित्ते नमुचे पुलोमन् शम्बरादयः ॥ १ ॥
ध्रुवो जन्मजुषां मृत्युः शूराणामपि देहिनाम् ।
आगतस्य स्वभावस्य प्रतीकारो न विद्यते ॥ २ ॥
शूराणां रणमध्ये वै शत्रूणां प्रतिवक्षसि ।
कथं मृत्युर्न वै पूज्यो यशसे श्रेयसे तथा ॥ ३ ॥
मोक्षदौ तु मतौ मृत्यू द्वावेव नियतौ यथा ।
योगिनां योगरन्ध्रेण शूराणां शस्त्ररन्ध्रतः ॥ ४ ॥
इत्येवं बोध्यमानाऽपि वृत्रसेना पलायिता ।
नाऽगृह्णात् तद्धर्मवचः प्राणापत्त्रस्तमानसा ॥ ५ ॥
तदा क्रुद्धः पुनर्वृत्रो व्याजहार सभर्त्सनम् ।
किं मातृहन्तृभिः क्षुद्रैर्नामधामविनाशिभिः ॥ ६ ॥
पृष्ठमृत्युसमासद्भिर्मातृदुग्धविडम्बिभिः
न वै पलायने कीर्तिर्न लोको न परागतिः ॥ ७ ॥
नाऽयं द्रवद्रणः श्लाघ्यः क्षुल्लकानामिवाऽऽर्तिदः ।
स्वस्था भवन्तु सम्मुखा जयं यान्तु ममाग्रतः ॥ ८ ॥
इति श्रुत्वा बलं प्राप्ताः परावृत्य तदा च ते ।
भीषयन्तः सुरान् शस्त्रैरर्दयामासुरुल्बणाः ॥ ९ ॥
वृत्रस्त्विन्द्रेभकुंभे वै गदां चिक्षेप घातवीम् ।
गजः प्रहारघातेन सप्तधनुरपासरत् ॥१०॥
इन्द्रो जग्राह वज्रं तद् दैत्यभ्रातृहणं यदा ।
वृत्रः प्राह परं क्रुद्धो दिष्ट्या मे समवस्थितः ॥११॥
ब्रह्महा गुरुहा मे च भ्रातृहा शिष्यहा तथा ।
दिष्ट्याऽनृणो भवाम्येष शूलेन सादितो मया ॥१२॥
श्रोत्रीयं च गुरुं बालं विश्वस्तं दीक्षितं द्विजम् ।
खड्गेन हत्वा ते नूनं का गतिः संभविष्यति ॥१३॥
ह्रीश्रीदयादिहीनं त्वां ग्रध्राः खादन्तु भूतले ।
मम शूलेन निर्भिन्नमस्पृष्टवह्निकं शवम् ॥१४॥
यदि वज्रेण नष्टोऽहं गतिं यास्यामि शूरगाम् ।
यदि शूलेन नष्टस्त्वं पदमैन्द्रं मम ध्रुवम् ॥१५॥
अथवा किन्तु राज्येन निरयेण मतेन वै ।
रागद्वेषौ न मे स्यातां श्रीहरिर्मे प्रसीदतु ॥१६॥
दासानुदासो भविता तव वज्रेण नाशितः ।
संसारपाशदुःखाब्धेर्मोचितः स्यामहं त्वया ॥१७॥
सेविष्ये भगवत्पादं करिष्ये भक्तसेवनम् ।
किमनेन विनश्वरकायलोकपदादिना ॥१८॥
मा भूयान्मम चित्तस्य संगो गेहात्मजादिषु ।
सर्वदा मम संभूयाद् वासस्तच्चरणादिषु ॥१९॥
इत्येवं कत्थमानाय वृत्राय प्राहिणोद् गदाम् ।
गुर्वीं पर्वतसंकाशामिन्द्रो वज्रधरस्तदा ॥२०॥
लीलयेव गदां तां तु वृत्रो जग्राह पाणिना ।
तावदिन्द्रः स्वकं वज्रं प्राहिणोद् वृत्रशान्तये ॥२१॥
तं च लोहमयं वज्रमग्रसन्मुखगर्तया ।
वृत्रोऽथेन्द्रविनाशाय त्रिशूलं समवासृजत् ॥२२॥
जगादाऽद्य हतोऽस्यत्र पाप याहि यमालयम् ।
इन्द्रः शताऽरवज्रेणाऽच्छिनत् क्षणात् त्रिशूलकम् ॥२३॥
यावद्वृत्रो द्वितीयं तु शूलं जग्राह पाणिना ।
तावदिन्द्रोऽन्यवज्रेणाऽच्छिनत्सभुजशूलकम् ॥२४॥
एकेन हस्तेन तदा च वृत्रो वेगेन जग्राह च शूलमन्यत् ।
चिक्षेप चेन्द्राय पुनस्तदानीं संगृह्य चान्यं परिघं तमाह ॥२५॥
मृतोऽसीन्द्र गतोऽसीन्द्र पूर्वजानां गमिस्थले ।
कृत्वा तु गर्जनां घोरां तताडेन्द्रं हनौ प्रघम् ॥२६॥
हस्तात्तु न्यपतद्वज्रं मघवाऽपि भ्रमिं गतः ।
देवाः सिद्धाश्च शूराश्च हा हेति चुक्रुशुर्भृशम् ॥२७॥
वृत्रश्चेन्द्रं तदा प्राह वज्रं गृहाण पाणिना ।
रणभूमौ गतानां तु का ह्रीर्वलतुलाऽऽपणे ॥२८॥
आयुः श्रीः कीर्तिरैश्वर्यं गृहदारासुसम्पदः ।
नैव सन्तीति कृत्वैव विहरस्व रणांगणे ॥२९॥
सुखं दुःखं मृत्युजीवौ मानामाने जयाजयौ ।
सर्वं मायामयं ज्ञात्वा विहरस्व रणांगणे ॥३०॥
रणासनश्च शस्त्राक्षः प्राणग्लहोऽयमुच्यते ।
अकस्माद्विजयः कस्य याते प्राणे प्रपत्स्यते ॥३१॥
श्रुत्वेदन्तु भागवतं वचनं वृत्रनोदितम् ।
तुतोष परमं तस्मै वज्रमादाय पाणिना ॥३२॥

चिक्षेप यावद् वृत्राय तावत् स दैत्यराट् द्रुतम् ।
कृत्वाऽधरां हनुं भूमौ वृत्रो दिव्युत्तरां हनुम् ॥३३॥

शीघ्रं सवज्रमिन्द्रन्तु वृत्रो जग्रास तत्क्षणम् ।
हाहाकारो महानासीच्चुक्रुशुश्च महर्षयः ॥३४॥

तावदिन्द्रः स्ववज्रेणोदरं तद्वज्रकर्तितम् ।
भित्त्वा कुक्षिं विनिष्क्रम्य ह्युच्चकर्त शिरस्ततः ॥३५॥

पपात भूमौ यावद्वै वृत्रच्छिन्नमहातनुः ।
नेदुर्दुन्दुभयो देवमार्गे हृष्टा महर्षयः ॥३६॥

जगुर्गन्धर्वसिद्धाश्चाऽप्सरसो ननृतुर्मुदा ।
पुष्पवृष्टिस्तदा देवैः कृता विजयगीतिका ॥३७॥

वृत्रात्मा पश्यतां तत्र लीनो महसि ब्रह्मणः ।
हते वृत्रे तदा लोका विज्वरा ह्यभवन्नथ ॥३८॥

प्रतिजग्मुः स्वधिष्ण्यानि देवा ब्रह्मादयः पुनः ।
वृत्रघातसमुत्पन्नहत्ययेन्द्रस्तु दुःखितः ॥३९॥

न च शर्म मनाक् लेभे हत्यां नाशयितुं ततः ।
महर्षीन् प्रार्थयामास हत्यां क्व मार्जयाम्यहम् ॥४०॥

प्राहुस्तु ऋषयस्तं वै हयमेधेन याजय ।
इष्ट्वा नारायणं देवं मोक्ष्यसे पापराशितः ॥४१॥

ब्रह्महा पितृहा गोहा मातृहा गुरुहा तथा ।
शुद्ध्यति यजनाद् यस्य नामकीर्तनसेवनात् ॥४२॥

एवं प्रेरित इन्द्रस्तु ब्रह्महत्यापराद्रुतः ।
उदीचिं दिशमाश्रित्य मानसाख्ये सरोवरे ॥४३॥

वर्षमेकं महानाले ह्युवास तापपीडितः ।
चाण्डाली घोरकृष्णा सा रक्तवस्त्राऽऽन्त्रचर्विणी ॥४४॥

दुर्गन्धा परितस्तत्र सरसोऽप्यन्ववर्तत ।
ऋषयस्तं समाहूय हयमेधेन सर्वशः ॥४५॥

यथावद् दीक्षयांचक्रुः पुरुषाराधनेन च ।
पूर्णेऽश्वमेधे संजाते हत्यानाशं गता तथा ॥४६॥

इन्द्रो विधूतपापः सन् स्वर्गराज्यमगात्पुनः ।
कथेयं लक्ष्मि ! दिव्याऽस्ति सूक्ष्मरूपेण मत्कृता ॥४७॥

स्थूलाख्यानेन ते देवि ! दर्शिता सुखसंश्रवा ।
सूर्यादिग्रहगतिदा शक्तिरिन्द्रः समुच्यते ॥४८॥

जलप्रकाशरोधाऽऽढ्या शक्तिर्वृत्रः समुच्यते ।
जलप्रकाशसामर्थ्याद् ग्रहाः सुगतिकाः सदा ॥४९॥

वृत्रोऽन्धकाररूपः स गतिरोधं करोति वै ।
तन्नाशाय महानिन्द्रो युद्धं करोति नित्यशः ॥५०॥

विशेषेण तु शरदि हीन्द्रो हन्त्यसुरं तदा ।
इति ते सर्वमाख्यातं हत्याफलमनिष्टदम् ॥५१॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने
वृत्रनाशोत्तरब्रह्महत्याविनाशकहयमेधकरणादि-
निरूपणनामैकोनपंचाशत्तमोऽध्यायः ॥४९॥

**श्रीनारायण उवाच—**

अथ पृथ्व्याः समीकारः कथं वै पृथुना कृतः ।
तत्ते वच्मि महालक्ष्मि ! कथेयं ब्रह्मदायिनी ॥ १ ॥
आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
तस्य तास्वयनं यस्मात्ततो नारायणो विराट् ॥ २ ॥
विराजो नाभिपद्माद्वै पद्मं यदभवन्महत् ।
तत्र ब्रह्मा स्वयं जज्ञे ददर्श जालपूरितम् ॥ ३ ॥
कमलं तु स्वकीयं तज्जले कर्दमरूपिणी ।
पृथिवीक्लेदिमाव्याप्ता न रौक्ष्यं तत्र दृश्यते ॥ ४ ॥
विना रौक्ष्यं कथं तत्र पार्थिवजनिसेविनाम् ।
निवासो वृक्षवल्लीनामुद्भवश्चापि संभवेत् ॥ ५ ॥
ततस्तु ब्रह्मणा नारायणस्य स्तुतिरीरिता ।
नारायण दयासिन्धो सर्वाधार प्रपोषक ॥ ६ ॥
विना पृथुलभावं वै जले स्थास्यन्ति काः प्रजाः ।
तस्माज्जले स्थितामार्द्रां सूक्ष्मकर्दमरूपिणीम् ॥ ७ ॥
स्थूलावस्थां समानय्य पृथ्वीरूपं कुरु प्रभो ।
तद्विना मानवी सृष्टिश्चतुःखन्यभिरूपिणी ॥ ८ ॥
कुत्र स्थास्यन्ति भक्ष्यं वा कस्मात्प्राप्स्यन्ति इत्यपि ।
नमोऽनन्तस्वरूपाय नमो धर्मधराय च ॥ ९ ॥
नमः स्थूलस्वरूपाय नमः सूक्ष्मस्वरूपिणे ।
नमोऽन्वयस्वरूपाय सर्वान्तर्यामिणे नमः ॥१०॥
नमोऽक्षरस्वरूपाय नमो मुक्तात्मकाय ते ।
नमो व्यूहस्वरूपाय नमः कालस्वरूपिणे ॥११॥
नमः कृष्णादिरूपाय नमो हिरण्मयाय च ।
नमो वैराजरूपाय नमो गोलोकवासिने ॥१२॥
नमो वैकुण्ठवासाय नमोऽव्याकृतवर्तिने ।
नमो देवाय शान्ताय सूक्ष्मतत्त्वान्तरात्मने ॥१३॥
नमः कार्यस्वरूपाय नमः कारणरूपिणे ।
नमो नारीस्वरूपाय नमो बीजप्रदायिने ॥१४॥
नमः पृथुस्वरूपाय नमः सलिलशायिने ।
नमोऽग्न्यर्कस्वरूपाय नमो यज्ञमयाय च ॥१५॥

कृपां कुरु कृपानाथ जलात्स्थौल्यं विभावय ।
इत्येवं स्तूयमानः स देवदेवो जनार्दन ॥१६॥
दिव्यं श्वेतं सौम्यरूपं दधार कार्यसिद्धये ।
सहस्रवदनो देवः सहस्रलम्बदन्तुरः ॥१७॥
सहस्रघोणनासास्यः सहस्रखुरपादुकः ।
द्विसहस्रमहानेत्रो महारोमाञ्चगात्रकः ॥१८॥
सहस्रपुच्छवालर्धिः सहस्रद्वयकर्णकः ।
महामेरुसमस्तत्र बभूव क्षणमात्रतः ॥१९॥
प्रहस्याऽजं स्वयं प्राह जलान्मे वै प्रतापतः ।
पृथ्वीं स्थूलां करिष्येऽहमानयिष्ये ततस्तदुत् ॥२०॥
मम वक्रेषु दन्तेषु लम्बमानेषु सर्वथा ।
अम्भलमाकर्षकं पिण्डीकारं सामर्थ्यमाभृतम् ॥२१॥
मम दन्तसमाश्लेषाज्जलानि निर्मलानि च ।
भविष्यन्त्यचिरात् तत्र स्थूलभावः पृथग्भवेत् ॥२२॥
कर्दमानां पिण्डीभावसामर्थ्येन तु दन्तुराः ।
पिण्डान् विधाप्य तान्सर्वानेकीकृत्य समग्रतः ॥२३॥
काठिन्यभावमापन्नां पृथ्वीं गोलकरूपिणीम् ।
क्षणतश्चानयिष्यन्ति जलोर्ध्वस्थां तवाग्रतः ॥२४॥
ब्रह्मँस्तत्र निवासस्तु सर्वेषां सुगमो भवेत् ।
इत्यामन्त्र्य गतो देवो वाराहः श्वेतरूपवान् ॥२५॥
जलमालोक्य कृत्स्नं तत्स्थौल्यकर्दमसंस्तरान् ।
पिण्डान्कृत्वा स्वके घोणे स्थापयामास कोटिशः ॥२६॥
एकीकृत्य च तान्सर्वान्गोलकं संविधाय च ।
धृत्वा घोणदतोर्मध्ये ह्याजगाम जलोपरि ॥२७॥
गोलं पृथ्वीमहापिण्डं निधाय च जलोपरि ।
विरराम महाभूतः शूकरः परमेश्वरः ॥२८॥
ब्रह्मा च ऋषयः सर्वे नारदाद्या मुनीश्वराः ।
तुष्टुवुः कृतकार्यं तं सौम्यं पृथ्वीधरं हरिम् ॥२९॥
नमो यज्ञस्वरूपाय चितीमुखाय ते नमः ।
वेदपाद्युपदंष्ट्राय तत्क्रतुवक्षसे नमः ॥३०॥
अनलजिह्वाय दर्भरोम्णे तपस्विने नमः ।
ब्रह्मशिर्ष्णे नमो वेदतदंगश्रुतिस्रग्विणे ॥३१॥
अहोरात्रक्षणधृगे नमः स्रुवसुतुण्डिने ।
नमः सदाज्यनासाय सामघोषस्वनाय च ॥३२॥
महते सत्यधर्माय नमो विक्रमशालिने ।
प्रायश्चित्तरथाय ॐ घोराय पशुजानवे ॥३३॥
उद्गात्रन्त्राय देवाय होमलिंगाय ते नमः ।
स्थानबीजाय देवाय सन्महौषधये नमः ॥३४॥
नमो मन्त्रस्फिजे भूम्ने नमो वेद्यान्तरात्मने ।
नम आज्यस्पृजे सोमशोणिताय च ते नमः ॥३५॥
वेदस्कन्धाय शान्ताय हविर्गन्धाय ते नमः ।
हव्यकव्यातिवेगाय नमः प्राग्वंशदेहिने ॥३६॥
नमो द्युतिमते नानादीक्षान्विताय ते नमः ।
नमस्ते दक्षिणाहृदे योगिने सत्ररूपिणे ॥३७॥
नमः प्रवर्ग्यवित्तादिभूषणाय महात्मने ।
उपाकर्मेष्टिरुचिरब्रह्मणे प्रभवे नमः ॥३८॥
नानाछन्दोगतिपथजुषे प्राणाय ते नमः ।
नमो गुह्योपनिषदासनाय सवनाय ते ॥३९॥
इति स्तुतः परो देवो ह्याशीर्दत्वा तिरोदधे ।
वाराहस्य तिरोधाने पृथ्वीं दृष्ट्वा स्वयं त्वजः ॥४०॥
चिन्तयामास सततं सर्वतः शिखरान्विताम् ।
क्वापि निम्नां च खातां च क्वापि पाषाणपर्वताम् ॥४१॥
सम्यगालोच्य वेधाः स पुनः सस्मार तं प्रभुम् ।
तदा पृथुस्वरूपेण सधनुष्कः स आबभौ ॥४२॥
तस्य दक्षकरे चक्रधनुषोश्चिह्नमीक्षितम् ।
ब्रह्मणा निश्चितो देवो भगवानयमित्यथ ॥४३॥
पृथिव्याः प्रविभागाय पृथ्वीं नाथ समीकुरु ।
इत्यर्थितः पृथुर्देवस्तदा संवर्तकाग्निना ॥४४॥
दाहयामास भूतुण्डान् विशीर्णा भस्मसंचयाः ।
जाताः सर्वे मृदवस्ते मृत्तिकास्ताः प्रकीर्तिताः ॥४५॥
समीकृत्य महीं सर्वां मृत्तिकास्तरशोभनाम् ।
बीजान्याधाय तत्स्थल्यां सस्यसम्पत्करीं व्यधात् ॥४६॥
यत्राऽदग्धास्तु पाषाणास्तत्र तत्पर्वतान्व्यधात् ।
यत्र निम्नप्रदेशास्तु तत्र सारसकान् व्यधात् ॥४७॥
पृथुना तु भगवता नारायणमहात्मना ।
स्वेन क्षेत्राण्यरण्यानि ग्रामनगरखर्वटाः ॥४८॥
खाताऽखाताः समुद्राश्च नद्यो नदमहाप्लवाः ।
कृताः समयमालोक्य यत्राऽऽवश्यकता यथा ॥४९॥
लोकान्प्रकल्पयित्वा च प्रजासर्गं ससर्ज सः ।
पृथुः राज्यं परं कृत्वा व्यवस्थां वासदायिनीम् ॥५०॥
कृत्वा च ब्रह्मणे दत्वा स्वयमन्तर्बभूव ह ।
तत आरभ्य सपटा समाना च समस्थली ॥५१॥
बभूव महती देवी पृथ्वीं योग्यवसानका ।
पुनर्नाशे पुनर्देवः पृथुर्भूत्वा हरिः स्वयम् ॥५२॥
करिष्यति समां पृथ्वीं राजा भूत्वा मुहुर्मुहुः ।
ब्रह्मणः खलु कल्पान्ते दशलोकात्मिका तु भूः ॥५३॥

लयं जले यदा यायात् तदा तत्र मुहुर्मुहुः।
स्वयं हरिः पृथुर्भूत्वा पृथ्वीं समीकरिष्यति ॥५४॥
कदाचित्तु पृथुश्चाहं मानसः संभवामि ह।
कदाचित्तु ऋषिभ्यो वा राजभ्यो वा जनिग्रहः ॥५५॥
इति तं सर्वमाख्यातं पृथुरूपं मया धृतम्।
अथ वै द्वापरान्ते तु किमभूत् कथयामि ते ॥५६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने
जलशायिनारायणेन वाराहरूपेण पृथ्व्युद्धारः
पृथुरूपेण पृथ्वीसमीकरणादिनिरूपणनामा
पंचाशत्तमोऽध्यायः ॥ ५० ॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि! प्रजा यास्तु स्युर्वै मिथुनधर्मजाः।
वेधसोऽभिध्यायतो वै पतिः पत्नी बभूवतुः ॥ १ ॥
प्राक् च स्वायंभुवमनुः शतरूपा च तद्वधूः।
ताभ्यां मिथुनधर्मेण प्रजा ह्येधाम्बभूविरे ॥ २ ॥
लब्ध्वा स्वायंभुवः पत्नीं रेमे सार्धं तया मुहुः।
प्रथमं सम्प्रयोगः सः कल्पादौ समवर्तत ॥ ३ ॥
प्रियव्रतोत्तानपादौ तयोः पुत्रौ बभूवतुः।
आकूतिश्च प्रसूतिश्च द्वे कन्ये च बभूवतुः ॥ ४ ॥
ददौ प्रसूतिं दक्षाय आकूतिं रुचये ददौ।
आकूत्यां मिथुनं जज्ञे यज्ञश्चापि च दक्षिणा ॥ ५ ॥
ताभ्यां प्रजास्तु यामाख्या देवा द्वादश जज्ञिरे।
दक्षात्प्रसूत्यां कन्यास्तु चतुर्विंशतिजज्ञिरे ॥ ६ ॥
सर्वास्ता ब्रह्मवादिन्यो योगिन्यो लोकमातरः।
श्रद्धा लक्ष्मीर्धृतिस्तुष्टिः पुष्टिर्मेधा क्रिया तथा ॥ ७ ॥
बुद्धिर्लज्जा वपुः शान्तिः सिद्धिः कीर्तिस्त्रयोदशी।
एतास्तु प्रतिजग्राह धर्मः पत्न्यर्थमेव हि ॥ ८ ॥
ताभ्यः शिष्टा यवीयस्य एकादश सुलोचनाः।
ख्यातिः सत्यथ संभूतिः स्मृतिः प्रीतिः क्षमा तथा ॥ ९ ॥
सन्नतिश्चाऽनसूया च ऊर्जा स्वाहा स्वधा तथा।
तास्ततः प्रत्यपद्यन्त एकादश महर्षयः ॥१०॥
भवो भृगुर्मरीचिश्च ह्यंगिराः पुलहः क्रतुः।
पुलस्त्योऽत्रिर्वशिष्ठश्च पितरोऽग्निस्तथैव ते ॥११॥
सतीं भवाय प्रायच्छत्ख्यातिं च भृगवे तथा।
मरीचये तु संभूतिं स्मृतिमंगीरसे ददौ ॥१२॥
प्रीतिं ददौ पुलस्त्याय क्षमां तु पुलहाय च।
क्रतवे सन्नतिं चैव ह्यनसूयां तथाऽत्रये ॥१३॥
ऊर्जां ददौ वशिष्ठाय स्वाहां च ह्यग्नये ददौ।
स्वधां चैव पितृभ्यस्तु तास्वपत्यानि मैथुनात् ॥१४॥
श्रद्धां कामं विजज्ञे वै दर्पो लक्ष्म्याः सुतः स्मृतः।
धृतेस्तु नियमः पुत्रस्तुष्ट्याः सन्तोष उच्यते ॥१५॥
पुष्ट्या लाभः सुतश्चापि मेधापुत्रः श्रुतस्तथा।
क्रियायास्तु नयः प्रोक्तो दण्डः समय इत्यपि ॥१६॥
बुद्धेर्बोधः सुतश्चापि ह्यप्रमादश्च तावुभौ।
लज्जाया विनयः पुत्रो व्यवसायो वपुःसुतः ॥१७॥
क्षेमः शान्तिसुतश्चापि सुख सिद्धेर्व्यजायत।
यशः कीर्तेः सुतश्चापि हीत्येते धर्मसूनवः ॥१८॥
कामस्य हर्षः पुत्रौ वै देव्यां रत्यां व्यजायत।
इत्येषो वै सुखोदर्कः सर्गो धर्मस्य मैथुनात् ॥१९॥
भवः सत्यामसंख्यातान् रुद्रान् रौद्रान्समसृजत्।
ब्रह्मणा मा सृजेत्युक्ते ह्यूर्ध्वरेताः स्थितो हरः ॥२०॥
ततः प्रभृति शंभुस्तु प्रासूयत न वै प्रजाः।
ब्रह्मचारी स्थितः स्थाणुर्यावदाभूतसंप्लवम् ॥२१॥
ज्ञानं वैराग्यमैश्वर्यं तपः सत्यं क्षमा धृतिः।
स्रष्टृत्वमात्मसंबोधस्त्वधिष्ठातृत्वमेव च ॥२२॥
ऐश्वर्याणि दशैतानि नित्यं तिष्ठन्ति शंकरे।
सर्वदा भानयुक्तत्वाद् युक्तयोगी महेश्वरः ॥२३॥
महेश्वरप्रसादाद्वै त्रीदण्डी जायते नरः।
वाक्दण्डः कर्मदण्डश्च मनोदण्डश्च ते त्रयः ॥२४॥
यस्यैते नियता दण्डास्त्रिदण्डी मुक्त एव सः।
अरिष्टानि स्वयं ज्ञात्वा मृत्युं पश्यति चात्मनः ॥२५॥
शृणु लक्ष्मि! प्रसंगाद्वै तानि वक्ष्यामि कृत्स्नशः।
विज्ञायेत यदैवं तज्ज्ञातव्यं मरणं स्वकम् ॥२६॥
अरुन्धतीं ध्रुवं चैव सोमच्छायां सितम्पथम्।
यो न पश्येत् स नो जीवेन्नरः संवत्सरात्परम् ॥२७॥
अरश्मिवन्तमादित्यं रश्मिवन्तं च पावकम्।
यः पश्येन्न स जीवेद्वै मासादेकादशात्परम् ॥२८॥
वमेन्मूत्रं पुरीषं वा सुवर्णं रजतं तथा।
प्रत्यक्षमथवा स्वप्ने दशमासान् स जीवति ॥२९॥
अग्रतः पृष्ठतो वापि खण्डं यस्य पदं भवेत्।
पांसुले कर्दमे वापि सप्तमासान् स जीवति ॥३०॥
काकः कपोतो गृध्रो वा निलयेद् यस्य मूर्धनि।
क्रव्यादो वा खगः कश्चित् षण्मासान् नातिवर्तते ॥३१॥
बध्येत वायसपंक्त्यां पांशुवर्षेण वा पुनः।
छायां वा विकृतां पश्येच्चतुः पंच स जीवति ॥३२॥

अनभ्रे विद्युतं पश्येद् दक्षिणां दिशमाश्रिताम् ।
उदकेन्द्रधनुर्वापि त्रयो द्वौ वा स जीवति ॥३३॥
अप्सु वा यदि वाऽऽदर्शे आत्मानं यो न पश्यति ।
अशिरस्कं तथाऽऽत्मानं मासादूर्ध्वं न जीवति ॥३४॥
शवगन्धि भवेद्गात्रं वसागन्धि ह्यथापि वा ।
मृत्युर्ह्युपस्थितस्तस्य चार्धमासं स जीवति ॥३५॥
यस्य वै स्नातमात्रस्य हृत्पादौ वाऽवशुष्यतः ।
धूमं वा मस्तकात्पश्येद् दशाहं न स जीवति ॥३६॥
संभिन्नो मारुतो यस्य मर्मस्थानानि कृन्तति ।
अद्भिः स्पृष्टो न हृष्येच्च तस्य मृत्युरुपस्थितः ॥३७॥
ऋक्षाऽजवानरयुक्तरथेनाऽऽशां तु दक्षिणाम् ।
गत्यन्नथ व्रजेत् स्वप्ने विद्यान्मृत्युरुपस्थितः ॥३८॥
कृष्णाम्बरधरा श्यामा गायिका वाऽथ चांगना ।
यं नयेद् दक्षिणामाशां स्वप्ने सोऽपि न जीवति ॥३९॥
छिद्रं वासश्च कृष्णं च स्वप्ने यो बिभृयान्नरः ।
भग्नं वा श्रवणं दृष्ट्वा विद्यान्मृत्युरुपस्थितः ॥४०॥
आमस्तकतलाद् यस्तु निमज्जेत्पंकसागरे ।
दृष्ट्वा तु तादृशं स्वप्नं सद्य एव न जीवति ॥४१॥
भस्मांऽगारांश्च केशांश्च नदीं शुष्कां भुजंगमान् ।
पश्येद् यो दशरात्रं तु न स जीवेत्तु तादृशः ॥४२॥
कृष्णैश्च विकटैश्चैव पुरुषैरुद्यतायुधैः ।
पाषाणैस्ताडयते स्वप्ने यः सद्यो न स जीवति ॥४३॥
सूर्योदये प्रत्यूषसि प्रत्यक्षं यस्य वै शिवा ।
क्रोशन्ती सम्मुखाऽभ्येति स गतायुर्भवेन्नरः ॥४४॥
यस्य वै स्नातमात्रस्य हृदयं पीड्यते भृशम् ।
जायते दन्तहर्षश्च तं गतायुषमादिशेत् ॥४५॥
भूयो भूयः श्वसेद् यस्तु रात्रौ वा यदि वा दिवा ।
दीपगन्धं च नो वेत्ति विद्यान्मृत्युमुपस्थितम् ॥४६॥
रात्रौ चेद्रायुधं पश्येद् दिवा नक्षत्रमण्डलम् ।
परनेत्रेषु चात्मानं न पश्येन्न स जीवति ॥४७॥
नेत्रमेकं स्रवेद् यस्य कर्णौ च भ्रश्यतः स्थलात् ।
नासा तु वक्रा भवति स ज्ञेयो गतजीवितः ॥४८॥
यस्य कृष्णा खरा जिह्वा पंकभासं च वै मुखम् ।
गण्डे चिपिटके रक्ते तस्य मृत्युरुपस्थितः ॥४९॥
मुक्तकेशो हसंश्चैव गायन्नृत्यँश्च यो नरः ।
याम्याऽऽशाभिमुखो गच्छेत्तदन्तं तस्य जीवितम् ॥५०॥
यस्य स्वेदसमुद्भूताः श्वेतसर्षभसन्निभाः ।
स्वेदा भवन्ति ह्यसकृत् तस्य मृत्युरुपस्थितः ॥५१॥
उष्ट्रा वा रासभा वापि युक्ताः स्वप्ने रथेऽशुभाः ।
यस्य सोऽपि न जीवेद्वै दक्षिणाऽभिमुखो गतः ॥५२॥
घोषं न शृणुयात्कर्णे ज्योतिर्नेत्रे न पश्यति ।
दूरं दृष्टिर्न च याति रक्तं दृश्येत मण्डलम् ॥५३॥
मुखे चोष्माऽऽकृष्टनाभिः प्रोष्णमुत्रो न जीवति ।
श्वभ्रे यो निपतेत् स्वप्ने द्वारं चास्य न विद्यते ॥५४॥
न चोत्तिष्ठति यः श्वभ्रात् तदन्तं तस्य जीवितम् ।
दिवा वा यदि वा रात्रौ प्रत्यक्षं योऽभिहन्यते ॥५५॥
तं पश्येदथ हन्तारं स हतस्तु न जीवति ।
अग्निप्रवेशं कुरुते स्वप्नान्ते यस्तु मानवः ॥५६॥
स्मृतिं नोपलभेच्चापि तदन्तं तस्य जीवितम् ।
यस्तु प्रावरणं शुक्लं स्वकं पश्यति मानवः ॥५७॥
रक्तं कृष्णमपि स्वप्ने तस्य मृत्युरुपस्थितः ।
रक्तैकवस्त्रां नग्नां वा स्नापयन्तीं स्त्रियं तु यः ॥५८॥
स्वप्ने पश्यत्यालिंगन्तीमथ वा स न जीवति ।
स्वप्ने करालकृष्णं तु दूतं दृष्ट्वा न जीवति ॥५९॥
छिन्नं स्वमस्तकं हस्ते नीत्वा गच्छति यो रणे ।
स्वप्ने पश्यति शूरात्मा तस्याऽवश्यं मृतिः स्मृता ॥६०॥
वातवेगे जलौघे वा ज्वालामुखे च भूतले ।
यन्त्रे वृक्षे पशौ सौधे प्रवेशः पतनं च वा ॥६१॥
मर्दनं मूर्छना वाऽपि स्वप्ने पश्येत्तु यो नरः ।
तस्याऽऽसन्नमृतिर्बोध्या विद्युत्पाताऽभिमर्शिनः ॥६२॥
प्रवासे शकुने कृष्णसर्पसम्मुखदर्शनम् ।
मरणापादकं मृत्युसमकष्टप्रदं च वा ॥६३॥
अग्रे तु रजको याति पृष्ठे चाऽऽयाति नापितः ।
मध्ये कदा न गन्तव्यं मृतिर्वा कार्यनाशनम् ॥६४॥
स्वप्ने रौति स्वेष्टदेवः पिता माता विरौत्यपि ।
महादुःखं भवेद् यद्वा मृतिस्तत्र ह्युपस्थिता ॥६५॥
पतेत् सिंहासनाद्राजा रुदन्ति देवमूर्तयः ।
धूम्रकेतोरुदयनं त्वसंख्यजननाशकाः ॥६६॥
काकः सिंहासने रौति रौति श्वा सन्मुखं स्थितः ।
गवादीनां विह्वलता ज्ञापयन्ति भयं द्रुतम् ॥६७॥
प्रस्थाने ह्युलूकदृशिः कृष्णसर्पदृशिस्तथा ।
छिन्ननसो दृशिश्चेति ज्ञापयन्ति मृतिं मुहुः ॥६८॥
चिह्नान्येवं परिज्ञाय मृतिं निश्चित्य चात्मनः ।
आत्मानं ब्रह्मणा युञ्ज्याद् हरेर्मूर्तिपरो भवेत् ॥६९॥
भोग्यं देहं तु नार्युक्ता नर आत्मा स्वयं मतः ।
नारीं त्यक्त्वा नरो भक्त्या नारायणं समश्नुते ॥७०॥

नाऽन्यमालोचयेत् किंचिन्नान्यवृत्तिं विभावयेत् ।
आत्मवृत्त्या परात्मानं स्वं निजं समभावयेत् ॥७१॥
न कस्मैचिद्भयं दद्यात्सर्वस्याऽभयकृद्भवेत् ।
भयं द्रोहश्च हिंसा च पापमेव हि सर्वथा ॥७२॥
अहिंसा परमो धर्मः परलोकसहायकृत् ।
भयं हिंसा न वै धर्मः परलोकात्प्रपातकः ॥७३॥
वसोरुत्तानपादेस्तु हिंसायज्ञस्य कीर्तनात् ।
स्वर्गात् पातोऽभवच्छीघ्रं पृथिव्यां च लयोऽभवत् ॥७४॥
तस्माद् द्वेषं यथा तद्वद् रागं चैव परित्यजेत् ।
आत्मनाऽऽत्मानमालम्ब्य ब्रह्ममार्गे परिव्रजेत् ॥७५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुग-
सन्ताने मिथुनीसृष्टिमरणसूचकस्वप्नादिप्रद-
र्शननामैकपंचाशत्तमोऽध्यायः ॥५१॥

**श्री लक्ष्मीरुवाच—**

कदा यज्ञः प्रवृत्तः स किमभूत्तत्र पापकृत् ।
केन कृतः कथं वसोः पतनं समभूत्कुतः ? ॥ १ ॥

**श्रीनारायण उवाच—**

प्रथमे तु युगे त्रेतानामके राजचिह्नवान् ।
उत्तानपादपुत्रस्तु वसुनामाऽभवन्नृपः ॥ २ ॥
विष्णोरंशेन जायन्ते पृथिव्यां चक्रवर्तिनः ।
आजानुबाहवश्चैव धनुर्हस्ता वृषांकिताः ॥ ३ ॥
ताम्रप्रभौष्ठदन्तौष्ठाः श्रीवत्साश्चोर्ध्वरोमशाः ।
केशस्थिता ललाटोर्णा जिव्हा चैषां प्रमार्जनी ॥ ४ ॥
न्यग्रोधपरिणाहाश्च सिंहस्कन्धाः सुमेहनाः ।
गजेन्द्रगतयश्चैव महाहनव एव च ॥ ५ ॥
ऐश्वर्येणाऽणिमाद्येन प्रभुशक्त्या बलेन च ।
अन्नेन तपसा चैव ऋषीनभिभवन्ति वै ॥ ६ ॥
नयेन तपसा चैव देवदानवमानुषान् ।
अभिभवन्ति योगेन विष्णुप्रदत्तशक्तिभिः ॥ ७ ॥
पादयोश्चक्रमत्स्यौ च शंखपद्मे तु हस्तयोः ।
धनुर्भुजे ध्वजौ छत्रं रेखास्ताश्चक्रवर्तिनाम् ॥ ८ ॥
चक्रं रथो मणिः खड्गं धनूरत्नं च पंचमम् ।
केतुर्निधिश्च सप्तैते रत्नश्रेष्ठा अचेतनाः ॥ ९ ॥
राज्ञी पुरोहितश्चैव सेनानी रथसारथिः ।
मन्त्र्यश्वः कलभश्चैते रत्नश्रेष्ठाः सचेतनाः ॥१०॥
दिव्यैतानि चतुर्दश सर्वेषां चक्रवर्तिनाम् ।
अन्तरिक्षे समुद्रे च पाताले पर्वतेषु च ॥ ११ ॥
अहता गतयस्तेषां चतस्रश्चक्रवर्तिनाम् ।
चक्रवर्ती भवेदंशस्तस्य श्रीपरमात्मनः ॥१२॥
तेन तस्य प्रजायां वै प्रादुर्भवन्ति शक्तयः ।
दिव्याश्च लौकिकाश्चापि राज्यसीमान्तबोधिकाः ॥१३॥
दूरश्रवणयन्त्राणि दूरभ्यो दूरदर्शनाः ।
कालमानसुयन्त्राणि दूरवाचकरश्मयः ॥१४॥
दूरमूर्तिदर्शकानि दिव्यकाचानि भूरिशः ।
देहानावरणदृष्टिप्रदविद्युत्प्रसाधनम् ॥१५॥
धातुतन्तुधृतिविद्युत्प्रकाशाः सुप्रदीपकाः ।
अग्नियन्त्रोद्भवोद्योगा जलयन्त्राणि भूरिशः ॥१६॥
जलान्तर्गतियानानि व्योमयानानि चाप्यथ ।
विमानानि ह्यसंख्यानि काचिका दूरदर्शिनी ॥१७॥
वायुतन्तुध्वनिग्राह्यशब्दशक्तिनियन्त्रणा ।
प्रवासयानयन्त्राणि भूविमानानि भूरिशः ॥१८॥
जलप्रवासयन्त्राणि मेघोत्पादकशक्तयः ।
सैनिका व्योमगतिका जलान्तर्गतिका अपि ॥१९॥
धूम्रयानानि वाष्पाणां शकटानि रथास्तथा ।
मोहमारणद्रव्याणि संहाराण्डानि भूरिशः ॥२०॥
चक्रद्रावणगतयश्चौषधीनां सुशक्तयः ।
ग्रहान्तरगतिश्चाग्नौ गतिः पृथ्व्युदरेक्षणम् ॥२१॥
रूपान्तरधृतिश्चापि ह्यदृश्यभवनादिकम् ।
भौतिक्यः शक्तयश्चैताः सहाऽऽगच्छन्ति तेन वै ॥२२॥
तत्तच्छक्तिमया देवा मानुषा वा भवन्ति च ।
तत्तदाविष्कृतैर्भौमैर्जलीयैस्तैजसैरपि ॥२३॥
धातुजैर्मानसैश्चैव साधनैश्चक्रवर्तिनः ।
मानवा राज्यभारं निर्वहन्ति चालयन्ति च ॥२४॥
लोकान्तरगतं राज्यं द्वीपान्तरगतं च वा ।
समुद्रान्तरितं राज्यं करोति निकटे इव ॥२५॥
पश्यति च शृणोत्यपि स्पृशत्यपि प्रजिघ्रति ।
वदति चानुभवति स्वगृहे इव संस्थितम् ॥२६॥
चक्रवर्तिप्रजाः सर्वास्तत्समा भाग्यशालिनी ।
तत्समानप्रभोगा च पुण्ययुगबलाद्भवेत् ॥२७॥
उत्तानपादतनुजो व्योमगामी वसुर्नृपः ।
चक्रवर्त्यभवद्धर्मसत्येज्यादानसत्तपाः ॥२८॥
तदा विश्वभुगिन्द्रश्च यज्ञं प्रावर्तयच्छुभम् ।
देवैस्तु सहितैः सर्वैर्मुनिभिः ऋषिभिस्तथा ॥२९॥

पितृभिर्यक्षराक्षसगन्धर्वकिन्नरोरगैः ।
मानुषैर्नदनदीभिः समुद्रैस्तीर्थपर्वतैः ॥३०॥
नक्षत्रदैत्यदानवसाधुसाध्वीसुतत्त्वकैः ।
जलस्थलचरैर्वृक्षवल्लीगुल्मलतादिभिः ॥३१॥
सात्त्विकैर्मनुभिश्चापि राजसैर्नरमानवैः ।
तामसैर्देवदेवीभिः सहितश्चाकरोन्मखम् ॥३२॥
मानसी मैथुनी सृष्टिः सर्वा तत्राऽगमन्मुदा ।
अथाऽश्वमेधे वितते तामसाश्चाऽर्धतामसाः ॥३३॥
यजन्ते पशुभिर्मेध्यैर्हुत्वा मांसप्रियाशनाः ।
कर्मव्यग्रेषु ऋत्विक्षु सन्तते यज्ञकर्मणि ॥३४॥
संप्रगीतेषु तेष्वेवमागमेष्वथ सुस्वरम् ।
परिक्रान्तेषु लघुषु चाध्वर्युवृषभेषु च ॥३५॥
आहुतेषु च देवेषु यज्ञभांक्षु महात्मसु ।
आलब्धेषु च मेध्येषु तथा पशुगणेषु वै ॥३६॥
हविष्यग्नौ हूयमाने देवानां देवहोतृभिः ।
य इन्द्रियात्मका देवा यज्ञभाजस्तथा तु ये ॥३७॥
कल्पादिषु च ये देवास्तान् यजन्ते ह्यध्वर्यवः ।
तदा तु सात्त्विकाः प्रैषकाले ये वै महर्षयः ॥३८॥
वीक्ष्योत्थिता अध्वर्यवो दीनान्पशुगणान् स्थितान् ।
पप्रच्छुरिन्द्रं संभूय कोऽयं यज्ञविधिस्तव ॥३९॥
अधर्मो बलवानेषो हिंसाकार्येच्छया तव ।
नेष्टः पशुवधस्त्वेषस्तव यज्ञे सुरोत्तम ! ॥४०॥
अधर्मो धर्मघाताय प्रारब्धः पशुभिस्त्वया ।
नाऽयं धर्मो ह्यधर्मोऽयं न हिंसा धर्म उच्यते ॥४१॥
हिंसा नाम शरीरस्य सजीवस्य विघानतम् ।
सर्वेषां देहिनां तादृक् दुःखं नान्यत्तु विद्यते ॥४२॥
यथाऽकस्माच्छस्त्रघाताद् दुःखं भवति प्राणिनाम् ।
यत्कर्मणा भवेद् दुःखं पापं तत्तु प्रकीर्तितम् ॥४३॥
तस्मान्न हिंसया पुण्यं कस्यापि च कदापि च ।
कथं त्वं कुरुषे पापं देवो भूत्वा सुराधिप ! ॥४४॥
निरागसां च मौनानां पराधीनप्रजीविनाम् ।
हिंसनं मा कुरु चेन्द्र कर्मैतन्निन्द्यमेव यत् ॥४५॥
ऋषीनिन्द्रस्तदा प्राह यज्ञे हिंसा सुखप्रदा ।
यज्ञे हुता इमे जीवा यास्यन्ति स्वर्गमीप्सितम् ॥४६॥
मोक्षोऽथ भवते तेषां यान् भुंक्तेऽग्निमुखो हरिः ।
पशुयोनेश्च मोक्षोऽपि दुःखबाहुल्यनिभृतेः ॥४७॥
ऋषयः प्राहुरिन्द्रैवं यज्ञे होमाच्च मोक्षणम् ।
दुःखनाशस्तथा स्वर्गे ! सुखं तादृक् न को लभेत् ॥४८॥
सर्पसत्रे भावियुगे कुहकेन सह द्विजाः ।
तव होमं करिष्यन्ति तदा ते शिक्षणं भवेत् ॥४९॥
पारमेष्ठ्यं चैन्द्रपदं सार्वभौमं रसातलम् ।
वैराजं तत्त्वधामानि प्राकृतं लोकघट्टनम् ॥५०॥
सर्वे मायाफेनजन्या निरया ब्रह्मणो हरेः ।
तवाऽपीन्द्र ! पदं तादृङ् निरय एव नाऽपरम् ॥५१॥
दुःखदं क्लेशबहुलं पशुप्रायं विभाति नः ।
तस्मादिन्द्र ! इमं देहं पदं चैन्द्रं परित्यज ॥५२॥
यज्ञे स्वयं पशुर्भूत्वा होमं कुरु निजस्य वै ।
यदि स्वहोमे त्रासस्ते स्वं होमं न करिष्यसे ॥५३॥
वयं तु ऋषयस्त्वां वै जुह्मोऽव्यग्रः स्थिरो भव ।
तेन होमेन ते राजन् परं स्वर्गं भविष्यति ॥५४॥
यद्वै ब्रह्मपदं प्राहुर्मोक्षस्थानमनुत्तमम् ।
तत्र गन्ताऽसि चागच्छ त्वां प्रजुह्मो हरेऽग्र वै ॥५५॥
तव मांसेन यज्ञेशः प्रसन्नः संभविष्यति ।
अस्माकमपि पुण्यं स्यान्मांसहोमेन ते मतम् ॥५६॥
अन्नस्येन्द्रत्वलाभः स्यात्पशवः स्युः सुजीविनः ।
लाभाः सुबहवश्चेन्द्र ! हते त्वयि भवन्ति हि ॥५७॥
तत आगच्छ देवेन्द्र भवान् हुतो भवत्विति ।
इत्येवमृषिभिश्चोक्ते शच्या ह्याक्रन्दनं कृतम् ॥५८॥
इन्द्रोऽपि त्रासमापन्नो मरणक्षणदर्शनात् ।
मण्डपे च सदस्येषु महान्कोलाहलोऽभवत् ॥५९॥
इन्द्रो हूयते ऋषिभिर्ब्रह्मनिष्ठैं भवेदिति ।
इन्द्रस्तु मरणश्रावात् मुखेन श्यामलोऽभवत् ॥६०॥
तेजस्तिमिरतां यातं शुष्कास्यो ह्यभवत्क्षाणत् ।
त्रासात् हृदयकंपश्च वेपथुर्देहजोऽभवत् ॥६१॥
शक्तिहीनानि गात्राणि ह्यभवन्मरणश्रवात् ।
अथवा ऋषिभिः प्रोक्तं मा ते होमोऽस्तु देवराट् ! ॥६२॥
बहवः सन्ति होतारस्तेषां होमो भवत्वथ ।
अध्वर्यवः ऋत्विजाश्च होतारश्च सदस्यकाः ॥६३॥
अनेके सन्त्युपस्थितास्ते हुताः संभवन्त्विति ।
तेनाऽग्र्य प्रीयतां कृष्णः पशवः सन्तु रक्षिताः ॥६४॥
हुताः सर्वे गमिष्यन्ति ब्रह्मणः पदमव्ययम् ।
देवमानुषनिरयात् प्रयास्यन्ति प्रमोक्षणम् ॥६५॥
श्रुत्वैतदिन्द्रः स्वस्थोऽभूत्कथंचिज्जीवनाशयः ।
अध्वर्युहोतृप्रमुखाश्चिन्तामग्नास्तदाऽभवन् ॥६६॥
अहो कष्टमिति प्रोचुर्नेच्छामो मोक्षणं जगुः ।
न च मुक्तिं न वै होमं न भोज्यं न च दक्षिणाम् ॥६७॥

वस्तु किमपि नेच्छामस्तव सर्वे भवत्विति ।
न स्थास्यामो वयं चात्र मरणं कस्य वै प्रियम् ॥६८॥
गमिष्यामो गृहान्स्वान्स्वान् होमद्रव्याणि नो वयम् ।
इत्येवं त्रासमाप्तानां महान् कोलाहलो ह्यभूत् ॥६९॥
तावत्तत्र समायातो राजोपरिचरो वसुः ।
विमानात्स समुत्तीर्य यज्ञमण्डपमागमत् ॥७०॥
इन्द्रादिभिः सत्कृतः सन्न्यषीदन्मध्यमासने ।
ऋषिभिस्तु तदा प्रोक्तं हिंसायज्ञो न वैदिकः ॥७१॥
आगमेन सदा यज्ञं करोतु यदिहेच्छसि ।
विधिदृष्टेन यज्ञेन धर्ममव्ययहेतुना ॥७२॥
यज्ञबीजैः सुरश्रेष्ठ ! येषु हिंसा न विद्यते ।
त्रिवर्षपरमं कालमुषितैरप्ररोहिभिः ॥७३॥
एष धर्मो महानिन्द्र स्वयं विचार्य साध्यताम् ।
एवं विश्वभुगिन्द्रस्तु मुनिभिस्तत्त्वदर्शिभिः ॥७४॥
प्रोक्तस्ते तु विवादेन खिन्ना दिव्या महर्षयः ।
संधाय पशुमुभयं पप्रच्छुश्चेश्वरं वसुम् ॥७५॥
वसो राजन्कथं दृष्टस्त्वया यज्ञविधिर्नृप ।
औत्तानपादे प्रब्रूहि संशयं छिन्धि नः प्रभो ॥७६॥
श्रुत्वा सर्वमुभयेषामविचार्य बलाबलम् ।
वेदशास्त्रमनुसृत्य यज्ञतत्त्वमुवाच ह ॥७७॥
इन्द्रस्य च सुरेशस्य छायामाश्रित्य पक्षतः ।
रागाच्चाऽप्यविरोधेन क्षत्त्रांशप्रबलेन च ॥७८॥
यथोपदिष्टैर्यष्टव्यमिति होवाच पार्थिवः ।
यष्टव्यं पशुभिर्मेध्यैरथ बीजैः फलैस्तथा ॥७९॥
हिंसास्वभावो यज्ञस्य इति मे दर्शयत्यसौ ।
यथेहसंहितामन्त्रा हिंसालिंगा महर्षिभिः ॥८०॥
दीर्घेण तपसा युक्तैर्दर्शनैस्तारकादिभिः ।
तत्प्रामाण्यान्मया चोक्तं तस्मान्मां मन्तुमर्हथ ॥८१॥
यदि प्रमाणं तान्येव महावाक्यानि वै द्विजाः ! ।
तदा प्रावर्ततां यज्ञो ह्यन्यथा नोऽनृतं वचः ॥८२॥
एवं प्राप्तोत्तरास्ते वै युक्तात्मानस्तपोधनाः ।
भूत्वा ह्यधोमुखा वसुं प्राहुर्मा वद पार्थिव ॥८३॥
वेदार्थस्तलस्पर्शित्वबुद्ध्या नैवाऽऽहृतस्त्वया ।
वेदस्य नहि तात्पर्यं कदापि हिंसने मतम् ॥८४॥
स्वभावप्राप्तहिंसाया निवृत्तौ युक्तिकृद्वचः ।
अनालोड्योच्यते हिंसा विधिश्चेत्यनृतो भवान् ॥८५॥
मिथ्यावादी वसुः सोऽयं सत्यं नैव ब्रवीत्यपि ।
इत्युक्तमात्रे नृपतिः प्रविवेश रसातलम् ॥८६॥
ऊर्ध्वचारी वसुस्त्वासीद् रसातलचरोऽभवत् ।
वसुधाऽधः सदावासी मिथ्यावाक्येन सोऽभवत् ॥८७॥

तस्मान्न वाच्यमेकेन बहुज्ञेनापि संशयात् ।
बहुद्वारस्य धर्मस्य सूक्ष्मात् सूक्ष्मतरा गतिः ॥८८॥
तस्मान्न निश्चयाद्वक्तुं धर्मः शक्यस्तु केनचित् ।
ततो न हिंसा धर्मस्य द्वारं भवति कर्हिचित् ॥८९॥
पत्रं मूलं फलं शाकं मुन्यन्नं पय एव च ।
यज्ञे दत्वा महीयन्ते स्वर्गे लोके तपोधनाः ॥९०॥
अद्रोहश्चाऽप्यलोभश्च दमो भूतदया तपः ।
ब्रह्मसेवा च सत्यं च ह्युपकारः क्षमा धृतिः ॥९१॥
सनातनस्य धर्मस्य मूलान्येतानि सर्वथा ।
तस्माद् द्रोहं मा कुरु त्वं पशून्मोचय यज्ञतः ॥९२॥
फलान्नादिद्रव्यहव्यैर्यज्ञं कुरु सुरेश्वर ।
इत्येतद्वाक्यमादृत्य शक्रेण हतपायसैः ॥९३॥
यज्ञः कृतस्ततः पश्चाद् यज्ञास्तु सात्त्विकाः सदा ।
वैष्णवाः सर्वथा त्रेतायां प्रावर्तन्त चाऽद्रुहः ॥९४॥
ऋषयस्तु तदारभ्य शं प्राकुर्वन् सुसत्तपः ।
यज्ञाँश्च वैष्णवाँश्चक्रुरहिंसाधर्मसंभृतान् ॥९५॥
'अजेन तु यजेते'ति अजस्त्रैवार्षिको व्रिहिः ।
न जायतेंऽकुरो यस्य तद्धान्यमज उच्यते ॥९६॥
मैथुने मादके मांसे तामसानां स्वभावजा ।
प्रवृत्तिर्भवतीति तन्निरोधाय विधिर्मतः ॥९७॥
मैथुनेच्छा यदि तीव्रा विवाहेन प्रशाम्यतु ।
यदीच्छा मांसरसने यज्ञैनैव प्रशाम्यतु ॥९८॥
यदीच्छा मादके पाने सौत्रामण्या प्रशाम्यतु ।
कथंचिदनुभूयैतान्निवृत्ताः संभवन्त्विति ॥९९॥
विधिपूर्वो निषेधः स न विधिस्तत्त्रयेऽपि वै ।
मद्यमांसमिथुनैर्यो नाऽऽक्रान्तो मुक्त एव सः ॥१००॥
अहिंसा परमो धर्मो ब्रह्मचर्यं महत्तपः ।
अमादकं परा शुद्धिस्त्रिभिर्ब्रह्म सुविन्दति ॥१०१॥
अथापि कालवेगाश्च तामसाहारमिश्रणात् ।
अन्नादिलाभवैधुर्याद् रसनारसलोलनात् ॥१०२॥
तामसैस्तामसी रीतिर्गृह्यते तत्त्रयात्मिका ।
तेषां दण्डप्रदानार्थं धर्मो वैवस्वतो यमः ॥१०३॥
वर्तते न्यायकर्ता श्रीनारायणसमीहया ।
तदन्यायपरा शुद्धिर्यमलोके करोति सः ॥१०४॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुग-
सन्ताने चक्रवर्तिचिह्नमहेन्द्रयज्ञसम्बन्धिहिंसा-
प्रतिपादकोपरिचरवसुप्रपतनादिनिरूपणनामा
द्विपंचाशत्तमोऽध्यायः ॥५२॥

श्रीलक्ष्मीरुवाच—

प्राणप्रिय त्रिकालज्ञ सर्पसत्र कदाऽभवन् ।
कथं कस्माद् यतश्चेन्द्रस्तत्र हुतो महाद्विजैः ॥ १ ॥
यमो वैवस्वतश्चापि कदाऽऽसीत् किं करोति सः ।
कीदृशो यमलोकश्च ब्रूहि तेऽहं यदि प्रिया ॥ २ ॥

श्रीनारायण उवाच—

शृणु कथां तां सुरसां सर्पसत्रमयीं प्रिये ।
आद्ये तु द्वापरे जातां कथयामि समासतः ॥ ३ ॥
जाते त्रेतायुगे क्षीणे द्वापरः प्रतिपद्यते ।
प्रणश्यन्ति प्रजानां वै त्रेतायाः सिद्धयस्तु याः ॥ ४ ॥
उद्भवन्ति तदा दोषा अधैर्यं लोभ इत्यपि ।
वाणिज्यं च तथा युद्धं तत्त्वज्ञानाऽविनिर्णयः ॥ ५ ॥
वर्णानां स्वार्थसंभेदो कार्याणां चाऽप्यनिर्णयः ।
याच्ञा वधः पणो दण्डो मदो दंभोऽक्षमाऽबलम् ॥ ६ ॥
एषा रजस्तमःप्राया प्रवृत्तिर्द्वापरे तदा ।
धर्मभेदोऽभवत्तेन रागद्वेषौ क्षणे क्षणे ॥ ७ ॥
करणानां तु वैकल्यात् कारणानामनिश्चयात् ।
दोषाणां दर्शनाचैव मतिभेदास्तदा नृणाम् ॥ ८ ॥
कर्मणा मनसा वाचा कृच्छ्राद्वार्ता प्रसिद्धयति ।
कायक्लेशस्तु बहुलो धर्माणां संकरस्तथा ॥ ९ ॥
वर्णाश्रमपरिध्वंसाः कामद्वेषौ महाबलौ ।
स्वमानं चाऽपराऽमानं दोषा ह्यासन् महाबलाः ॥१०॥
असत्यवाचनं प्रायो व्यापारे व्यवहारके ।
स्वस्वोदरभरत्वं च प्रायशः परिवर्तते ॥११॥
एतादृशद्वापरस्य समयस्य प्रभावतः ।
गृहवन्तो जनाः स्वीयं स्वत्वं कर्तुं समुद्यताः ॥१२॥
क्षेत्रं गृहं समुद्यानं वाटिका पशवो द्रुमाः ।
वाप्यः खन्यो वनान्यार्द्रारण्यानि च सरांसि च ॥१३॥
येषां स्वत्वावृतास्तेषां भोग्या भवन्ति ते तदा ।
इत्येवं मानसीं वृत्तिं संकोचप्रवणां सदा ॥१४॥
मनुजानां विलोक्यैवं सत्यं विलीनतां गतम् ।
पृथ्व्या रसः क्षयं यातो द्रुमा नैव फलानि च ॥१५॥
कल्पवृक्षा न दृश्यन्ते कामना पूर्यते नहि ।
गावः कामदुघा नैव दृश्यन्ते द्वापरे तदा ॥१६॥
प्रलीनाश्चिन्तामणयः कामवृष्टिर्न वर्षति ।
न फलन्त्यार्तवा वृक्षाः सस्यान्यपि फलन्ति न ॥१७॥
तदा तत्र बलं यस्य भुंक्ते स बलवानमुम् ।
इत्येवं ह्रास आपन्नस्तदा वै द्वापरे बहुः ॥१८॥
राजापि द्वेषवान् मानी ब्रह्मावमानानाऽऽदरः ।
प्रजा स्वार्थसाधिका च किं वाच्यं कालपर्यये ॥१९॥
एवं काले प्रवृत्ते वै सर्पसत्रमयी कथा ।
प्रवृत्ताऽभूच्छृणु लक्ष्मि ! भवबन्धविमोचिनीम् ॥२०॥
हर्याराधनसंदात्रीं गाथां जगत्सुपावनीम् ।
श्रुत्वा तां तु कथां रम्यां पूयन्ते श्रवणादराः ॥२१॥
स्वायंभुवमनोः पुत्रः प्रियव्रत इतीरितः ।
तस्य रैवतनामाऽभूत्पुत्रः परमधार्मिकः ॥२२॥
आबाल्याच्च तपोयोगभक्तिसेवापरायणः ।
स्नानं त्रिषवणं कुर्वन् सन्ध्यावन्दनतत्परः ॥२३॥
प्रातस्तु पितरौ नत्वा वृद्धान्नत्वा च भूसुरान् ।
गवां च पूजनं कृत्वा पितॄन् जलांजलीन् ददौ ॥२४॥
अग्नावाज्यं च हव्यं च दत्वा ततो निजाश्रितान् ।
भोजयित्वाऽतिथीन् विप्रान् स्वं आद देवतार्पितम् ॥२५॥
शेषं तु समयं सर्वं मालया भजनेन च ।
सार्थकयन् स्वकं जन्म सर्वान् भजनमादिशत् ॥२६॥
नारायण हरे कृष्ण स्वामिन्माधव सत्पते ।
वासुदेव परब्रह्माऽन्तर्यामिन् पाहि सर्वदा ॥२७॥
इत्येवं भजतस्तस्य नारदोऽगाद् यदृच्छया ।
रैवतेनाऽऽदृतं तस्य स्वागतं चासनादिकम् ॥२८॥
पादावनेज्य च ऋषेः कृपाकांक्ष्यवदत् स तम् ।
दयालो लोकजीवानां समुद्धारक दिव्यदृक् ॥२९॥
स्वयं ब्रह्म त्वमेवोक्तो नारायणमनोजनिः ।
त्वादृग्ब्रह्मविदो योगी हरेर्योगसमो मतः ॥३०॥
निस्पृहाणां सतां नैव मादृशात्स्यान्नु वाञ्छितम् ।
तथापि करुणाः सन्तो ह्यायान्ति परभूतये ॥३१॥
अवश्यं मे करगतं श्रेयो भवति निश्चितम् ।
नान्यथा भगवद्दृशां दर्शनं संभवेद् द्रुतम् ॥३२॥
शाधि शिष्यं चानुकूलं सेवादासं प्रशाधि माम् ।
नारदो वादयन् वीणां कृष्णनारायणं गृणन् ॥३३॥
प्राह रैवत ! धन्योऽसि बाल्याद्भजसि केशवम् ।
कोऽन्यलाभो जनिमतः प्राकृतात्कर्दमाद्भवेत् ॥३४॥
सदिति ब्रह्मणः शब्दस्तद्वन्तो ये भवन्त्युत ।
सायुज्यं ब्रह्मणोऽत्यन्तं तेन सन्तः प्रचक्षते ॥३५॥
तादृशा च सता भाव्यं नाऽसता तु कदाचन ।
सत्सु सतां विरामः स्यान्न त्वसत्सु कदाचन ॥३६॥

तत्र निष्कामसद्भक्त्या लक्ष्मीनारायणः स्वयम् ।
प्रसन्नः सन् प्रैरयन्मां किञ्चिदावेद्यमस्ति यत् ॥३७॥
ब्रह्मधामाधिपः श्रीमान् हरिर्नारायणः स्वयम् ।
प्रभुर्दामोदरो भूत्वा पृथ्व्यामागन्तुमिच्छति ॥३८॥
ब्रह्मधामप्रदेशं स्ववासायाऽऽनेतुमिच्छति ।
शृणु तत्कारणं राजन् पृथ्व्यां पश्चिमभूतले ॥३९॥
सुरत्रासपथं छिद्रं शतगव्यूतिरायतम् ।
वर्तते तद्विवरेणाऽतलाद् दैत्यप्रकोटयः ॥४०॥
स्वर्गं गत्वा सुरान्सर्वान् त्रासयन्ति निरागसः ।
सुरत्रासकरं छिद्रं शतगव्यूतिविस्तरम् ॥४१॥
पूरणीयं मया तत्र वस्तव्यं चापि सर्वदा ।
रैवताय तदर्थं वै दास्येऽक्षरप्रदेशकम् ॥४२॥
शतगव्यूतिविस्तारं दिव्यं समृद्धं सुखप्रदम् ।
यत्र स्वर्णरसाः कूपाः स्वर्णरक्षा सरित्तथा ॥४३॥
संजीवनी शल्यहर्त्री छेदसन्धा ह्यमूर्छना ।
रक्तदा धारहन्त्री च क्षुत्तृण्निरोधिनी तथा ॥४४॥
विविधौषधयस्तत्र भविष्यन्ति मया सह ।
यत्र भद्रा सुभद्रा मे पत्नी भद्रावती नदी ॥४५॥
यत्र चोर्जा मम पत्नी तत्र ओजस्वती भवेत् ।
यत्राऽऽर्द्रकुंकुमं लक्ष्म्याः सिक्तं कुंकुमवापिका ॥४६॥
यत्र पत्नीव्रतो विप्रो मदंशः संभविष्यति ।
यत्रा वाडवमादाय सरस्वती समुद्रगा ॥४७॥
यत्र मे प्लक्षछायायां क्षणं वासो भविष्यति ।
यत्र स्वर्णपुरी रम्या द्वीपान्तर्मे भविष्यति ॥४८॥
यत्र खट्वांगदो राजा तव पुत्रो भविष्यति ।
यत्र सोमेश्वरो देवो महादेवो भविष्यति ॥४९॥
यत्र तलस्य नाशाद्वै तलश्यामो भविष्यति ।
यत्र गुप्ततया यागात् प्रयागोऽपि भविष्यति ॥५०॥
यत्र भक्तो महान्मे वै दामनामा भविष्यति ।
यत्रैकतद्वीतत्रीताः भविष्यन्त्यृषयस्त्रयः ॥५१॥
यत्र तपःप्रियो दत्तात्रेयः स्थास्याम्यहं नगे ।
यत्रोन्मत्ता च गंगा सा मदर्थे प्रवहिष्यति ॥५२॥
यत्र भवेश्वरपत्न्याः सिंहाः स्थास्यन्ति वाहनम् ।
यत्र सर्वस्वदाता मे भक्तिमार्गो भविष्यति ॥५३॥
यत्र जया ललिता मे राधा लक्ष्मीर्भविष्यतः ।
यत्र सूर्योऽर्कवृक्षस्य रूपं जन्म ग्रहीष्यति ॥५४॥
यत्र शत्रुंजिता देवी नदीरूपा भविष्यति ।
यत्राऽऽनर्तः पुना राजा तपसे संगमिष्यति ॥५५॥

यत्र सर्पगररोधान्नगरं च निवत्स्यति ॥
यत्र कृष्णो धनुश्चिह्नः साधुरूपो भविष्यति ॥५६॥
गोपालकम्भरे मे च पितरौ संभविष्यतः ।
यत्र ममाऽवताराश्च भविष्यन्ति महर्षयः ॥५७॥
यत्र मद्राज्यदेष्टारो भविष्यन्ति ममांशिनः ।
यत्र नृपाभिषिक्ता च देवानीको भविष्यति ॥५८॥
यत्र मे नियतस्थानं रजिकुट्टं भविष्यति ।
तत्र मे युगलं कृष्णः स्वयं संस्थापयिष्यति ॥५९॥
अनादिनिधनं तन्मे स्थानं दिव्यं भविष्यति ।
कृष्णमुक्तिप्रदः सोऽयं द्वीपो दिव्यो भविष्यति ॥६०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने
द्वापरधर्मरैवतगृहनारदागमपश्चिमभूतलविवरपूरक-
ब्रह्मप्रदेशानयनमतिभविष्यत्तत्त्वोद्देशादिप्रदर्शन-
नामा त्रिपंचाशत्तमोऽध्यायः ॥५३॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! प्रदेशः स विवरात्मा क्व विद्यते ।
अम्बिकाख्यप्रदेशात्तु पूर्वं कच्छाच्च दक्षिणम् ॥ १ ॥
नर्मदायाः पश्चिमं तत् सिंहारण्यत उत्तरम् ।
प्रदेशः स सुरत्राता सुराष्ट्रः संभविष्यति ॥ २ ॥
प्रतीच्यां मलयाद्रेश्च प्राच्यामम्बिकदेशतः ।
आयतो विस्तृतो विश्वक् पंचसाहस्रयोजनः ॥ ३ ॥
सिंहारण्यमिति ख्यातो देशोऽविच्छिन्नभूमिकः ।
सिंहारण्यादुदग्देशो देवदमनसंज्ञकः ॥ ४ ॥
देवदमनभूदेशात् शतगव्यूतिरुत्तरम् ।
महाभूविवरं चास्ति तस्य वै पूरणाय च ॥ ५ ॥
श्रीहरिस्ते यथापेक्षं प्रदेशं स्वं प्रदास्यति ।
समागच्छ मया साकं वैकुण्ठं प्रति चाऽनघ ! ॥ ६ ॥
देयं देशं तु सौराष्ट्रं नीत्वा त्वायाहि भूतले ।
विवरं तत्सम्प्रपूर्य दिव्यं तद्भूतलं कुथाः ॥ ७ ॥
सुरत्रातरि तद्देशे सौराष्ट्रे त्वं स्थिरो भव ।
तत्र देशे मणिस्वर्णमयो ब्रह्मगिरिर्महान् ॥ ८ ॥
सोम-भद्रामध्यदेशे स्वनिवासाय कल्पय ।
रैवतस्य निवासात्ते पर्वतोऽपि च रैवतः ॥ ९ ॥
रेवताचलसंज्ञः स्याद् दिव्यो ब्रह्मगिरिर्महान् ।
रेवतस्य स्वकन्याया रेवतीतिसमाह्वया ॥१०॥

तत्र स्थास्यति तीर्थाख्या गोलोकस्थापि सर्वदा ।
रैवतो भगवद्भक्तश्चिरं तत्र निवत्स्यति ॥११॥
पञ्चमस्त्वं मनुर्भूत्वा पुनस्तत्र निवत्स्यसि ।
रैवताचलतीर्थं तन्महत्तीर्थं भविष्यति ॥१२॥
यत्र दामोदरः कृष्णः शंभुर्यत्र भवेश्वरः ।
ब्रह्मा यत्र स्वयंभूश्च तत्र किं नाम मायिकम् ॥१३॥
कृष्णयोगात्सदा दिव्या भूमिः कृष्णा रसान्विता ।
वासनायाः कर्षणाच्च वैकुण्ठं नयनात्तथा ॥१४॥
सौराष्ट्रः कृष्ण आख्यातो नाम्ना रूपेण चौजसा ।
कृतस्मरो गिरिश्चापि रैवताचलपश्चिमे ॥१५॥
तेन लग्नो महान् भावी कदाचिद्वडवानलम् ।
नीत्वा सरस्वती देवी तन्मार्गेण गमिष्यति ॥१६॥
महासमुद्रे क्षेपार्थं तदा स्मरगिरिः स्वयम् ।
उत्थाय तत्समीपे च निरोधं संकरिष्यति ॥१७॥
तदा क्रुद्धो वडवाग्निर्गिरिं भस्मीकरिष्यति ।
तद्भस्मस्तरपाषाणा मृदुश्वेता भवन्त्यपि ॥१८॥
शिल्पिभिस्तैः करिष्यन्ते प्रासादाः श्वेतभूमयः ।
चूर्णं श्वेतं सौधद्रव्यं वह्निपाकात् ततो भवेत् ॥१९॥
अथर्षयः पितृसिद्धा देवाः साध्यश्च साधवः ।
योगिनो यतयो भक्ताः स्थास्यन्ति रैवते गिरौ ॥२०॥
दशपर्वतप्राकारो लक्ष्म्यम्ब्रासौधशोभितः ।
कोटियात्रालुभक्तौघैः कार्तिक्यां कृत्प्रदक्षिणः ॥२१॥
श्रोण्यां मेघसमाकीर्णः श्रृंगे देवर्षिसेवितः ।
मूले कृष्णजनाकीर्णः पार्श्वे विमानसत्पथः ॥२२॥
पूर्वे शत्रुंजिता वार्गा चतुर्योजनतः परम् ।
तीर्थं कुंकुमवाप्याख्यं योजनत्रयतः परम् ॥२३॥
यस्योत्तरे च भद्राख्या सरित् द्वियोजनात्परम् ।
यस्याऽवाच्यां सोमतीर्थं चतुर्योजनतः परम् ॥२४॥
यस्य प्रतीच्यां योगिनीपर्वतस्यैव छायया ।
रक्षितोच्चभुवो देशस्त्वायतः क्रोशविस्तरः ॥२५॥
तत्र त्वया स्वकं निर्मातव्यं वै रैवतं पुरम् ।
ततस्तव सुतो नाम्ना खट्वांगदो भविष्यति ॥२६॥
स द्वितीयः शशी भूत्वा नैशं तमो हरिष्यति ।
तन्नाम्ना तत्पुरं खट्वांगदसंज्ञं भविष्यति ॥२७॥
तद्वंशे हाटको राजा भविष्यति तु भक्तराट् ।
हाटकेशमहादेवं पातालादानयिष्यति ॥२८॥
तन्नाम्ना तत्पुरं हाटकेशपुरं भविष्यति ।
तद्वंशे मणिमान् राजा शंभोर्गणो भविष्यति ॥२९॥
तन्नाम्ना तत्पुरं मणिपुरं ख्यातं भविष्यति ।
प्राचीनानां तु दुर्गाणां दर्शनान्मानवास्तदा ॥३०॥
जीर्णदुर्गपुरं नाम्ना ख्यापयिष्यन्ति कालतः ।
ततस्तत्र गते काले पार्षदो विजयः प्रभोः ॥३१॥
प्राविर्भविष्यति तत्र राज्यं सोऽपि करिष्यति ।
तन्नाम्ना विजयपुरमित्याख्यां संगमिष्यति ॥३२॥
साध्यश्च साधवस्तत्र मोक्षदा ब्रह्ममूर्तयः ।
सर्वदा तु निवत्स्यन्ति लोककल्याणहेतवः ॥३३॥
चमत्कारा भविष्यन्ति तत्र भूमौ युगे युगे ।
दैवास्तु पुरुषास्तत्र भविष्यन्ति युगे युगे ॥३४॥
भुवो रक्षणकर्तारो धर्मस्य स्थापकास्तथा ।
कृष्णदामोदराऽऽवासाद्रोप्यश्चापि मुहुर्मुहुः ॥३५॥
तत्र तत्र भविष्यन्ति मानव्यो वै महाव्रताः ।
साध्व्यो भूत्वा भजिष्यन्ति कृष्णं सन्तं प्रतापिनम् ॥३६॥
तदाश्रयं सुकुर्वाणा नरा नार्यो मृगाः खगाः ।
मोक्ष्यन्ते संसृतेः पाशात्ताद्दशी भूमिका भवेत् ॥३७॥
अथ भावी रैवतोऽयं म्लेच्छाश्रयः समन्ततः ।
तदा कल्पस्य सायं वै कल्केरन्तिमजन्मनः ॥३८॥
नेत्रक्रोधात् क्वथितो वै ज्वालामुखो भविष्यति ।
ज्वालाभी रससन्तप्तो देशोऽपि रसतां व्रजेत् ॥३९॥
रसो वैकुण्ठमासाद्य यथापूर्वो भविष्यति ।
सौराष्ट्रो वैकुण्ठजनिर्वैकुण्ठं पुनरेष्यति ॥४०॥
अथ कल्पान्तरे चापि यथापूर्वं भविष्यति ।
तस्मादागच्छ राजेन्द्र वैकुण्ठं तु मया सह ॥४१॥
दास्यति श्रीहरिस्तुभ्यं प्रदेशं वै सुराष्ट्रकम् ।
इत्यामन्त्र्य गतस्तत्र रैवतो नारदेन च ॥४२॥
सह वैकुण्ठमभ्येत्य प्रणिपत्य प्रभुं हरिम् ।
ननाम शिरसा दण्डवच्च तुष्टाव सांजलिः ॥४३॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने प्रपूरितभूविवरभावितीर्थादिनिर्देशनिरूपणनामा चतुःपंचाशत्तमोऽध्यायः ॥ ५४ ॥

**श्रीनारायण उवाच—**

श्रृणु लक्ष्मि ! रैवताख्यो मनुर्वैकुण्ठमास्तवान् ।
तुष्टाव च महाप्रेम्णा दयालुं मां त्वयाऽन्वितम् ॥ १ ॥
नमः सच्चित्स्वरूपायाऽऽनन्दसन्दोहवार्धये ।
नमस्त्वेकस्वरूपायोभयरूपाय ते नमः ॥ २ ॥

नमो हिरण्यकेशाय श्मश्र्वश्मश्रुमते नमः ।
नमः स्तन्याऽस्तन्यवते बीजाऽबीजधृते नमः ॥ ३ ॥
नमो बहिः प्रचिह्नायांऽबहिश्चिह्नाय ते नमः ।
नमो विश्वक्प्रवालाय क्वचिद्वालाय ते नमः ॥ ४ ॥
नमो दक्षिणसत्त्वाय वामसत्त्वाय ते नमः ।
नम ऊर्ध्वस्वरूपायाऽनूर्ध्वरूपाय ते नमः ॥ ५ ॥
नम आधेयरूपायाऽऽधाररूपाय ते नमः ।
नमो द्विदलरूपायाऽङ्कुरप्रसूतये नमः ॥ ६ ॥
नमो वैकुण्ठवासाय कुण्ठवासाय ते नमः ।
नमो मानसरूपाय भक्तरूपाय ते नमः ॥ ७ ॥
नमस्ते करुणासिन्धो नमः सौराष्ट्रवर्धिने ।
नमो रैवतवासाय दामोदराय ते नमः ॥ ८ ॥
नमः पत्नीव्रताख्याय नमः कृष्णाय विष्णवे ।
नमोऽनन्तस्वरूपाय ममाऽन्तर्यामिणे नमः ॥ ९ ॥
स्वतन्त्रस्त्वं महाविष्णो न जाने त्वं किमिच्छसि ।
भक्तो यदर्थमाहूतस्तद्वै विधातुमर्हसि ॥१०॥
दासोऽयं कृपया विष्णो नेयः पारं भवाध्वनः ।
यत्र ते चरणौ स्तस्तद्देशो मे ह्यरणं भवेत् ॥११॥
न वै त्याज्यः कृपानाथ दासोऽयं शरणागतः ।
करुणया गृहीतोऽयं न वै तं त्यक्तुमर्हसि ॥१२॥
यदिष्टं क्षेमकृल्लोके तदिष्टं संविधीयताम् ।
इति स्तुत्वा विरराम रैवतो भक्तसत्तमः ॥१३॥
प्राह तं भगवान् श्रीमान् वैकुण्ठाधिपतिः प्रभुः ।
गृहाणेमां चाणुरूपां मम वैकुण्ठभूमिकाम् ॥१४॥
स्वयंभ्वाख्यचतुर्वक्त्रब्रह्मणो गोलके तव ।
प्रियव्रतस्य भूराज्ये पश्चिमं विवरं महत् ॥१५॥
सुरत्रासपथं छिद्रं शतगव्यूतिरायतम् ।
पूरणीयं भूमिकया विकसन्त्या त्वयैव तत् ॥१६॥
सुरत्राणं भवेत्तेन सौराष्ट्रसंज्ञतां व्रजेत् ।
तत्राऽहं श्रीसमायुक्तो निवत्स्ये तव कारणात् ॥१७॥
अन्यद् यन्नारदेनोक्तं विधास्ये तत्र चोषितः ।
इत्यभिधाय देवेन वैकुण्ठाऽणुः समर्पितः ॥१८॥
तमादायाऽऽज्ञया विष्णोः रैवतः पुनरागतः ।
यथोक्तं तमणुं यावद्विवरे न्यस्तुमिच्छति ॥१९॥
तावद्विपुलतां यातं शतगव्यूतिरायतम् ।
जाड्ये भूस्तरतुल्यं तद् दिव्यं पंचगुणात्मकम् ॥२०॥
यथापेक्षं यथास्थानं स्थितं छिद्रं प्रपूरितम् ।
अदिव्ये दिव्यसंमिश्रात् सन्धिः श्वेतरणात्मकः ॥२१॥

श्वेताऽऽखातश्च भूः श्वेता व्यावर्तयति मण्डलम् ।
शतगव्यूतिमात्रं तन्मण्डलं श्यामपाण्डुरम् ॥२२॥
दिव्यत्यखण्डभूमध्यं सुराष्ट्रं रैवताऽर्जितम् ।
रैवतस्तन्मध्यभागे विष्णुं ध्येयं विधाय च ॥२३॥
सर्वदाऽऽराधनपरो ह्यास्ते विसृज्य मायिकम् ।
नारायणः स्वयं तस्मै दत्ते सकरुणेक्षणम् ॥२४॥
ददौ चास्मै मणेः स्वस्य सहस्रांशं तदा हरिः ।
स वै स्थौल्यं समापन्नः शैलरूपं परं दधौ ॥२५॥
सोऽयं संस्थापितो मध्ये सुराष्ट्रस्याऽथ नामतः ।
नेतुर्नाम्ना ह्यभूत् ख्यातो रैवताचल इत्ययम् ॥२६॥
रैवतेन पुरं तत्र निर्मितं रैवताह्वयम् ।
रैवतः सर्वदा विष्णोः स्मरणे कीर्तने श्रवे ॥२७॥
सेवने ह्यर्चने स्तोत्रे दास्ये सर्वनिवेदने ।
ह्यवर्तत महाभक्तो जाग्रत्स्वप्नसुषुप्तिषु ॥२८॥
राज्यभारे व्यवहारे भोजने शयने तथा ।
सर्वथा देवदेवेशं नारायणं समाभजत् ॥२९॥
तत्रैकदा महामंचे शयानो योगनिद्रया ।
आत्मनि श्रीहरिं ध्यायन् समाधिं त्वगमद्धि सः ॥३०॥
नारायणेच्छया तस्य दक्षिणस्य भुजस्य च ।
स्वर्णांगदो द्रवो भूत्वा पतितो मंचकेऽभवत् ॥३१॥
स्वर्णवर्णः किशोरोऽभूत् श्वेतकान्तिः शशीव ह ।
शीतश्वेतप्रकाशस्य परिधिः सर्वतोऽभवत् ॥३२॥
सर्वतः श्वेतकिरणैर्व्याप्तोऽभूदित्यखण्डितः ।
प्रासादं नगरं देशं दुग्धधवलतेजसा ॥३३॥
कुर्वन् वितिमिरं सर्वमास्ते स्म मंचके तु सः ।
यदृच्छया महाभक्तो रैवतो जाग्रतोऽभवत् ॥३४॥
खट्वायां स्वांगदोत्पन्नं कुमारं प्रत्यपद्यत ।
चन्द्रमसमिव शुक्लं सौम्यं तेजोमयं शुभम् ॥३५॥
दिक्षु विदिक्षु धवलीकुर्वन्तमखिलं जगत् ।
जातमात्रं सुसंस्कृतं षोडशाब्दं सदाप्रभम् ॥३६॥
चक्रवर्तिधनुश्चिह्नं कुशलं ज्ञप्तिसंभृतम् ।
ज्ञात्वा राज्यासनं दत्वा रैवतो रैवताचले ॥३७॥
विशालायां कन्दरायां जगामोपासनाकृते ।
तत्र समाधिमापन्नो रैवतः सर्वदा हरौ ॥३८॥
एकात्मना स्थितो यावत्पंचमो मनुराभवेत् ।
अथोत्तरे महाकाले कल्पे कल्पे तु स स्वयम् ॥३९॥
सत्ये महाविभूत्याख्ये वर्तिष्यत इति स्थितिः ।
तत्र तत्र तस्य वंशे खट्वांगदनृपादयः ॥४०॥

भूमिचक्रप्रशास्तारो भविष्यन्त्यब्दकोटिषु ।
खट्वायामंगदाज्जातो नाम्ना खट्वांगदः कृतः ॥४१॥
ऊर्ध्वपुण्ड्रं स्वर्णरेखं ललाटे तिलकं त्वचि ।
स्वाभाविकमभूत्तस्य मध्यरक्ताभबिन्दुकम् ॥४२॥
कण्ठे स्वर्णमयी माला त्वचि स्वाभाविकी ह्यभूत् ।
सर्वैश्वर्याश्रयो भूभृत् तेजसा तिमिरं हरन् ॥४३॥
विमानमधिरुह्याऽथाऽन्तरीक्षे व्यचरन्मुहुः ।
दूराद्दूरतरंज्ञातं अमादौ तिमिरं निशि ॥४४॥
यत्र चन्द्रशून्यदेशे तत्राऽगच्छद् विहायसा ।
तिमिरं नाशयन् सर्वं द्वितीयश्चन्द्रमा इव ॥४५॥
मासि मासि भ्रमन् व्योम्नि शून्यदिक्षु निशापतेः ।
लोकान् करोति साऽऽलोकान् शीतरश्मीन् प्रसारयन् ॥४६॥
अथैवं तु कृते तत्र समुद्राः पार्वणाः सदा ।
क्षुब्धा भूमिस्तरप्लावा वेलाभिरभवन्मुहुः ॥४७॥
वेला ऊर्ध्वं समायान्ति निवर्तन्ते न वै तथा ।
भूमयस्तु जलाक्रान्ता जायन्ते स्म तदा तदा ॥४८॥
एकद्वित्रिकलापोष्या औषध्यः प्रायशस्तदा ।
पोष्याऽतिशैत्यसंघातादजीर्णत्वात्क्षयं ययुः ॥४९॥
इत्येवं हानिमालोक्य विमानं स्वं न्यवारयत् ।
तादृशोऽभून्महादिव्यः शीततेजोमयः स्वराट् ॥५०॥
करोति श्रीहरेर्भक्तिं कारयत्यपरान् जनान्
उद्घोषयति प्रातः स विष्णुः पूज्यः सदा जनैः ॥५१॥
पुण्ड्रं सचन्द्रकं कार्यं भोज्यं प्रार्प्यं हरौ सदा ।
सायं विष्णोर्गृहे गत्वा स्तुत्यो देवो जनार्दनः ॥५२॥
साध्व्यः सन्तश्चातिमान्या भोज्यपानादिदापनैः ।
होतव्यमनले देयं देवेभ्यो भक्तिपूर्वकम् ॥५३॥
नारायणपरो यो वै भजेन्नारायणं सदा ।
न मया तु करस्तस्माद् ग्रहीतव्यः कदाचन ॥५४॥
एवं तेन कृता भूमिः सर्वा वैष्णवमण्डिता ।
नाऽभक्तो ह्यभवत् कश्चिच्चक्रे तस्मिन्प्रशासति ॥५५॥
एवं भक्तियुते चक्रे शान्तः खट्वांगदो नृपः ।
राज्यचिन्तां परित्यज्य भगवन्तं सदाऽस्मरत् ॥५६॥
विमानं कन्दरे स्थाप्य स्वयमाराधनेऽभवत् ।
काले बह्वर्बुदे क्रान्ते तपसे ह्यकरोन्मतः ॥५७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने लक्ष्मीशस्तुतिमणिभूम्यणुग्रहणभूविवरपूरण-सतेजस्का-ऽपरचन्द्रीभवनतेजःप्रसारणभक्तिविधापनादिनिरू-पणनामा पञ्चपञ्चाशत्तमोऽध्यायः ॥५५॥

श्रीनारायण उवाच—

शृणुलक्ष्मि ! ततो राजा वैराग्यावेगजृंभितः ।
रैवताचलतः पूर्वे योजनत्रयतः परम् ॥ १ ॥
अश्वपट्टं सरोरम्यं व्याघ्रारण्ये महत्तरम् ।
अखण्डसलिलं मूलफलवृक्षादिपार्श्वकम् ॥ २ ॥
निर्जनं चापि निरुपद्रवं ज्ञात्वा स भूपतिः ।
जगामाऽश्वपट्टतीरे नाऽतिदूरेऽथ निर्जने ॥ ३ ॥
शीतछायामयं देशं दृष्ट्वा खट्वांगदो नृपः ।
बदरीदाडिमजम्बूद्रुचिंचागुंद्रादिसुद्रुमैः ॥ ४ ॥
व्याप्ते देशे च पातालजलवापीसमन्विते ।
वाप्या जलं तु सततं निर्झरणस्वरूपतः ॥ ५ ॥
स्रवद्ध्युपरितो याति ह्यश्वपट्टसरोवरम् ।
तत्र वाप्युपकण्ठस्थबदरीमूले भुवस्तले ॥ ६ ॥
शालग्रामं पुरस्कृत्य तपः खट्वांगदोऽतपत् ।
वर्षाणां तु सहस्रं सोऽकरोज्जाम्बूप्रभक्षणम् ॥ ७ ॥
द्वितीयं तु सहस्रं सोऽकरोद् गुंद्रप्रभक्षणम् ।
तृतीयं तु सहस्रं सोऽकरोद् दाडिम भक्षणम् ॥ ८ ॥
चतुर्थं तु सहस्रं सोऽकरोद् बदरभक्षणम् ।
पंचमं तु सहस्रं सोऽकरोत् चिंचाम्ब्लभक्षणम् ॥ ९ ॥
षष्ठं चाऽथ सहस्रं सोऽकरोत् कन्दप्रभक्षणम् ।
सप्तमं तु सहस्रं सोऽकरोत् पत्रप्रभक्षणम् ॥१०॥
अष्टमं तु सहस्रं सोऽकरोत् सलिलभक्षणम् ।
नवमं तु सहस्रं सोऽकरोद् वायुप्रभक्षणम् ॥११॥
दशमं तु सहस्रं सोऽनाहारोऽङ्गुष्ठसंस्थितः ।
तिष्ठन् ध्यायन् शालग्रामे कृष्णनारायणं गुरुम् ॥१२॥
चिन्तयन् सततं देवं विष्णुं श्रीमन्तमेव च ।
जपन् लक्ष्मीपते श्रीमन्नारायणाय ते नमः ॥१३॥
तावत्तदस्य मूर्ध्नो वै प्रादुर्भूतोऽनलो महान् ।
धूमस्तस्य महाज्वालः संव्याप्नोद् भुवनत्रये ॥१४॥
देवान्दैत्यान् मानवादीन् प्राज्वालयन्नभःस्थितान् ।
चकम्पे पृथिवी देवी चुक्षुभुः सागरास्तथा ॥१५॥
दावानलो महाँस्तत्र तपोऽग्निप्रसमुद्भतः ।
तत्र दावानले व्याप्ते लक्ष्मीनारायणः प्रभुः ॥१६॥
दयालुस्तपतो देहभानहीनस्य तस्य वै ।
रक्षणायाऽगमत्तत्र मूर्ध्न्यसिञ्चत्तदमृतम् ॥१७॥
तेन शान्तस्तु मूर्ध्नोऽग्निर्दावाग्निश्च न्यवर्तत ।
प्राह नारायणस्तस्मै भक्त ! भक्त्या वशीकृत ॥१८॥

खट्वांगद महाभक्त भक्तिं कुर्वन्प्रशोभसे ।
तपो भक्तिमयंकुर्वन्प्रजाश्रेयो विधास्यसि ॥१९॥
विरमेद्दशतपसो दर्शनं कुरु मेऽनघ ! ।
निःस्पृहस्य तु भक्तस्य किञ्चिन्नाऽदेयमस्ति मे ॥२०॥
किं तेऽपेक्ष्यं वृणु राजन् ददामि यदभीप्सितम् ।
इत्यादिश्य हरिः श्रीमान् मौनमास्ते तदा तु सः ॥२१॥
नेत्रे उद्घाट्य चष्टे तं नारायणमुपस्थितम् ।
अहो भाग्यमहो भाग्यमिति स्नेहप्रपूरितः ॥२२॥
नर्तनं दर्शनाच्चक्रे पद्रजो शिरसा वहन् ।
विलुण्ठितो मुहुर्लक्ष्मीनारायणपदेषु सः ॥२३॥
पादसेवां सदा वव्रेदासो भूत्वा स चक्रराट् ।
यत्र तपः कृतं तत्र स्वस्य मूर्तेश्च सन्निधौ ॥२४॥
लक्ष्मीं नारायणं वव्रे सदा दर्शनकांक्षया ।
नारायणाऽऽज्ञया तत्र तदा लक्ष्म्या तथास्त्विति ॥२५॥
उक्त्वा कुंकुमार्द्रचन्द्रस्तस्य भाले कृतः शुभः ।
लक्ष्म्याः करगतार्द्रस्य कुंकुमस्य च बिन्दवः ॥२६॥
बहवः पतिता वाप्यां तथा प्रक्षालितौ करौ ।
पीत्वा जलं तथा स्नात्वा पाययित्वा नृपं तथा ॥२७॥
शालग्रामे शाश्वतं स्वं निवासमकरोत्प्रभुः ।
श्रीसार्थश्च सदा नारायणश्चास्ते महाप्रभुः ॥२८॥
तत आरभ्य सा वापी कुंकुमवापिकाऽभिधा ।
तत्र तेन नृपतिना श्रीनारायणमन्दिरम् ॥२९॥
सप्तभौमं कारितं च सेवां तस्याऽकरोत् स्वयम् ।
सा च लक्ष्मीः सुखं कं वै बिभ्रतीति तु कम्भरा ॥३०॥
गोः पृथिव्याः पालकं तु नृपं खट्वांगदं सदा ।
शरणे लाति गृह्णाति गोपालः श्रीहरिर्हि सः ॥३१॥
उच्येते कम्भरागोपालाख्यौ लक्ष्मीनरायणौ ।
तयोः पत्नीव्रतः पुत्रः स्वयं नारायणांशजः ॥३२॥
तत्रैव तप आतिष्ठन्नास्ते कल्पे प्रकल्पके ।
ध्यायन् स्वपितरौ देवौ सुतस्तु कृष्णवल्लभः ॥३३॥
तीर्थे कुंकुमवाप्याख्ये श्रितमोक्षप्रदे शुभे ।
आस्ते दिव्यशरीरेण सर्वत्र व्यापकोऽपि सन् ॥३४॥
एतदश्वसरो दिव्यं व्याघ्रारण्यं च विस्तृतम् ।
दिव्या कुंकुमवापी कम्भरागोपालमन्दिरम् ॥३५॥
पत्नीव्रतद्विजतीर्थं खट्वांगदकृतं पुरम् ।
रम्यं कुंकुमवाप्याख्यं ह्यासन् देशे सुराष्ट्रके ॥३६॥
सर्ववैकुण्ठसामग्रीं दासदासीगणं तथा ।
ऋद्धिमैश्वर्यमादाय कृष्णस्तत्र विराजते ॥३७॥
तस्य यावद्रजःकणाः पवित्रा मोक्षदायकाः ।
दिव्या भूमिर्दिव्यजला दिव्यवैकुण्ठसन्निभा ॥३८॥
यागश्राद्धव्रतदानपुण्यस्थलीप्रमुक्तिदा ।
तत्र नारी नरो वापि यां कांचिद्योनिमास्थितः ॥३९॥
त्यजन्देहं परां याति मुक्तिं ब्रह्माऽक्षराऽभिधाम् ।
तत्र भूमौ नरा ये वै ते सर्वे हरिपार्षदाः ॥४०॥
नार्यश्चापि वसन्ति यास्ताः सर्वाः कृष्णचारिकाः ।
पशुपक्ष्यादयः सर्वे वृक्षवल्ल्यादयस्तथा ॥४१॥
मुक्ता वैकुण्ठधामस्था नान्ये बोध्या नृचक्षुषा ।
दिव्यदृष्ट्या भालनीया न तु वै चार्मचक्षुषा ॥४२॥

इति श्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने
अश्वपट्टसरोवरे खट्वांगदतपश्चरणेन लक्ष्मीनारायण-
प्रत्यक्षदर्शनं कुंकुमचन्द्रककरणे बिन्दुक्षरणात्
कुंकुमवापीतितीर्थपुरं कंभरागोपालरूपेण
लक्ष्मीनारायणनिवासश्चेतिनिरूपणनामा
षट्पंचाशत्तमोऽध्यायः ॥ ५६ ॥

**श्रीनारायण उवाच—**

खट्वांगदस्य पुत्रो वै बर्हिषांगद ईरितः ।
मयूरास्तपतस्तस्य तिष्ठन्त्यागत्य मस्तके ॥ १ ॥
बर्हाणि मोचयन्त्यत्र न चायं तत्तु पश्यति ।
तत्र मयूरपिच्छानां समूहे समुपस्थिते ॥ २ ॥
पत्नीव्रतेन तेषां वै मार्जनी महती कृता ।
मन्दिरमार्जनकार्ये रक्षिता मूर्तिसन्निधौ ॥ ३ ॥
खट्वांगदेन सा दृष्टा गृहीता करयोर्यदा ।
मार्जनाय प्रवृत्तः स तावद्वृष्टिरभूच्च खात् ॥ ४ ॥
मार्जनीं तां गृहीत्वा स कुट्यां प्रविश्य तिष्ठति ।
दिवारात्रौ महावृष्टिः समभूद् बहुवर्षणा ॥ ५ ॥
मार्जनीपूलकं चोष्णं स्निग्धं संकोमलं तथा ।
चित्रं तथैव सुस्पर्शं शीतसंहारकं तथा ॥ ६ ॥
पार्श्वे निधाय शय्यायां नीद्राऽधीनोऽभवत्तदा ।
तत्रेच्छया हरेः रूपं चाप्सरसं व्यलोकयत् ॥ ७ ॥
स्वाप्नः स्रावोऽभवत्तस्य धातोर्बर्हिषु तेषु च ।
तस्य द्रागेव पुत्रोऽभूत प्रातर्यावद्विपश्यति ॥ ८ ॥
तं तु पुत्रं महासिद्धं जातमात्रस्य यौवनम् ।
वीक्ष्य तदाऽभिधां चक्रे बर्हिषांगद इत्ययम् ॥ ९ ॥

तद्राज्ये त्वभिषिक्तश्च मानी शूरो धनुर्धरः ।
खट्वांगदपुरे रम्ये राजधान्यां तु पूजितः ॥१०॥
भक्तः स एकदाऽरण्ये परिमेयाऽनुगः शुचिः ।
विचरन् स्वपितुर्दिव्ये व्याघ्रारण्ये परिभ्रमन् ॥११॥
कुंकुमवापीसत्तीर्थे पत्नीव्रतद्विजाश्रमे ।
समागच्छत्तदा तत्र दर्शनार्थं द्विजन्मनाम् ॥१२॥
गुरूणां च पितुर्लक्ष्मीनारायणस्वरूपयोः ।
देवयोर्दर्शनं कृत्वा यावदायाति सद्गुरोः ॥१३॥
समीपे तत्र समये समाधौ संस्थितो गुरुः ।
नाऽऽवैत् राज्ञ अकस्माचाऽऽगमनं चान्तरस्थितेः ॥१४॥
स्वागतं चापि सन्मानं चासनं चादरं तथा ।
नैव लेभे स राजर्षिराश्रमे जनवर्जिते ॥१५॥
राजा क्षणं च सन्मानं नाऽध्यगच्छद् यदा तदा ।
मानाधीनो नष्टबुद्धिः क्षुद्रं स्वार्थमकल्पयत् ॥१६॥
अहो ह्यस्मद्धान्यभोक्ता भिक्षुको नोऽवमन्यते ।
वाण्याऽपि नैव सत्कारं करोति ब्रह्ममान्ययम् ॥१७॥
नेत्रे निमील्य कपटात् कीदृशं ध्यानमास्थितः ।
यदि जागर्मि नृपतेः सम्मानं कर्तुमापतेत् ॥१८॥
तस्मात्समाधिमास्थाय स्थातव्यमिति वञ्चनाम् ।
पुरस्कृत्य द्विजोऽयं मेऽवमानं तु करोति वै ॥१९॥
तस्मान्नैवेदृशो विप्रो ह्युपेक्षितव्य इत्ययम् ।
बर्हिषांगदनृपतिर्महासर्पं मृतं गले ॥२०॥
पत्नीव्रतस्य निक्षिप्य गतवान् स्वपुरं प्रति ।
तावत्तस्य ऋषेः ब्रह्मव्रतः समागतः ॥२१॥
ऋषेः शिष्यैः स्वयंप्रकाशादिभिः सहितः स्थितः ।
ऋषेर्गले मृतं सर्पं दृष्ट्वा ज्ञात्वा समाधिना ॥२२॥
राज्ञा सर्पो मृतः क्षिप्तस्तं शापं प्रैरयत्खलम् ।
अहो श्वा वै गृहपतिं भषन् पद्भ्यां विमानयन् ॥२३॥
धूलीं प्रक्षिपतीत्येतद् वैचित्र्यं विषमं महत् ।
ब्राह्मणैरभिषिक्तो वै मलकीटो भुजंगताम् ॥२४॥
नीतस्तानेव दशति कीदृशीयं कुपात्रता ।
मूषको भयमापन्नो सिंहत्वे येन योजितः ॥२५॥
समीहते तमोवाऽत्तुं का नाम क्षुद्रताऽपरा ।
श्वेव बलिभुक् पापात्मा पत्नीव्रतं निरागसम् ॥२६॥
अविगणय्य पितरं पूजनीयं सुदैवतम् ।
गलेऽक्षिपत् शवं सार्पमवश्यं दण्डमर्हति ॥२७॥
पुनरेवं कुकुरास्ते कुर्युर्नैव विमाननम् ।
इत्यामत्य जलं धृत्वा करे दक्षेऽवदत्सुतः ॥२८॥
येन सर्पो गले क्षिप्तः कुहकान्मृत्युमेतु सः ।
मासाभ्यन्तर एवेति सलिलं व्यसृजद्भुवि ॥२९॥
दत्वा ब्रह्मव्रतः शापं सतीर्थ्यैः परिवेष्टितः ।
यावद् रोदिति गुर्वग्रे समाधेरुत्थितो गुरुः ॥३०॥
पश्यति स्म गले स्वस्य मृतसर्पशवं यदा ।
रुदन्तं चाऽशृणोत्स्वीयं सुतशिष्यसुमण्डलम् ॥३१॥
सान्त्वयामास तान् सर्वान् पत्नीव्रतो गुरुस्तदा ।
यूयं सर्वे किमर्थं वै रुदथाऽत्र निबोधत ॥३२॥
शवे मानुषदेहे वै शवः सर्पो धृतो यतः ।
हारः स वै तु मन्तव्यः शवस्य शवपूजने ॥३३॥
नाऽत्र हानिर्न वा दोषो ह्येषः स्नानं करोम्यहम् ।
शुद्धिर्वै स्नानमात्रेण किमर्थं रुदथ भृशम् ॥३४॥
शान्तिस्तु सर्वदा रक्ष्या क्षमा रक्ष्या च सर्वथा ।
शान्त्या च क्षमया सर्वे ऋषयः पूज्यतां गताः ॥३५॥
सत्यं शीलं तपो ध्यानं स्वाध्यायः शं तितिक्षणम् ।
क्षमा चेति धनं दिव्यं मौर्धन्यं नो मतं सदा ॥३६॥
तन्न त्याज्यं कदाचिद्वै तदस्माकं तु दैवतम् ।
क्षमा तु परमं शस्त्रं क्रोधशस्त्रनिबर्हणम् ॥३७॥
क्षमया वाडवाः सर्वे देवैः पूजामवाप्नुयुः ।
पुत्राः ! पृच्छामि युष्माभिस्तस्याऽनिष्टं नु चिन्तितम् ॥३८॥
इति पृष्टास्तदा पुत्राः ऋषिं तत्र न्यवेदयन् ।
राजानं भिन्नमर्यादं मासान्तरे तु सर्पराट् ॥३९॥
कुहकोऽस्मन्नोदितो वै दंक्ष्यतीत्येव नोदितम् ।
ऋषिर्वज्रमयं श्रुत्वा राजनाशनमुल्बणम् ॥४०॥
तेपेऽतीव स्वहृदये क्षणं तु मौनमास्थितः ।
आह स्वयंप्रकाशं वै त्वनाहार्यं त्वया हृतम् ॥४१॥
स्वल्पे द्रोहे महान् दण्डो न वै न्याय्यं कृतं त्वया ।
राज्ञि शास्तरि चौराद्या न प्रजाः पीडयन्त्यपि ॥४२॥
राजशून्ये प्रजाः स्वं स्वं घ्नन्ति लुण्टन्ति दस्यवः ।
अपक्वबुद्धिना तात ! त्वया शप्तं तु दारुणम् ॥४३॥
अज्ञातेन कृतं दोषं भगवान् क्षन्तुमर्हति ।
अपराधिसहस्रेषु सत्स्वपि नैव शोचति ॥४४॥
क्लिश्यति नो प्रतिकारं करोति भक्तिमान् जनः ।
तिरस्कृतास्ताडिताश्चाऽऽक्रुष्टाश्च कुत्सितीकृताः ॥४५॥
गालीदत्ताः प्रशप्ताश्च विप्रकृताश्च पातिताः ।
आपत्स्वपि न दुष्टानां प्रतिकुर्वन्ति साधवः ॥४६॥
तस्मात् स्वयंप्रकाश ! त्वं याहि शीघ्रं निवेदय ।
मासाऽऽभ्यन्तर एव त्वां कुहको दंक्ष्यतीति वै ॥४७॥

इति तु प्रेरितः शिष्यो जगाम बर्हिषांगदम् ।
राजर्षिः खेदमापन्नो दुष्टतां स्वां व्यचिन्तयत् ॥४८॥
अहोऽनार्योऽपि नो कुर्यात् कृतं तादृङ्मया ह्यवम् ।
ब्राह्मणे पूजनीये मे महत्पापं समर्जितम् ॥४९॥
सम्पत्तिर्यौवनं गर्वो सत्ता चैवाऽविवेकिता ।
विपत्तेः कारणान्याहुर्मर्त्येवाऽन्वर्थतामगुः ॥५०॥
अहो मे को भवेल्लोको ब्रह्मद्वेष्टुर्विजृम्भृतः ।
अस्य पापस्य प्रत्यर्थोवश्यं मे भवतु क्षयः ॥५१॥
पुनरेवं न वै कुर्यां तथा शास्तु धरामरः ।
अथवा क्षेमकुशले राज्ञां विप्राभिसत्कृते ॥५२॥
तथापि मे महान् दण्डो भगवान् दातुमर्हति ।
एवं चिन्तयतस्तस्य ब्रह्मदण्डार्थसंभृता ॥५३॥
शिष्यवाणी कुहकाद्वै मृत्युशंसिन्युपस्थिता ।
श्रुत्वा विनयसम्पन्नोऽनशनव्रतमास्थितः ॥५४॥
ब्राह्मणं तु नमस्कृत्य स्वात्मानं ब्रह्मणि न्यधात् ।
खट्वांगदपुरात्प्राच्यां रैवताधित्यकाभुवि ॥५५॥
भवेशसरसो मध्ये द्वीपे जलमये तदा ।
व्रतं चानशनं कृत्वा निषसाद उदङ्मुखः ॥५६॥
ज्ञात्वा समाधियोगेन ऋषयो मनवस्तथा ।
पितरो देवगन्धर्वाः सुरा यक्षाश्च मानवाः ॥५७॥
ब्राह्मणाः साधवः साध्व्यो तीर्थानि पर्वतास्तथा ।
ग्रहर्क्षतारका दिव्या औषध्यः कल्पपादपाः ॥५८॥
कामदुघाः सुरभ्यश्च मातरो लोकपालकाः ।
आययुस्तान्समभ्यर्च्य ववन्दे दण्डवन्मुहुः ॥५९॥
तेषु सुखोपविष्टेषु राजा मानसमर्थितम् ।
अन्ते कर्तव्यमालक्ष्य न्यवेदयचिकीर्षितम् ॥६०॥
अहो दयाभृतां मुक्तिदातृणां पुण्यशालिनाम् ।
दर्शनं त्वघनाशाय परलोकप्रसत्तये ॥६१॥
द्विजशापोऽनुग्रहो मे यन्निमिषं भवदागमः ।
निर्वेदमूलं संजातो मुक्तये प्रेरकोऽपि च ॥६२॥
मिष्टं वा कटु विप्रोक्तं सर्वथा श्रेयसे भवेत् ।
तद् यूयं मे दृष्टिपथं याताः सन्तो मृतिक्षणे ॥६३॥
स्थेयं कृपालुभिस्तावद् गेयं हरेर्दशस्तथा ।
कुहको दशतु स्वेष्टं न मे चिन्ताऽद्य वर्तते ॥६४॥
सतां मण्डलमध्ये मे प्राणो यातु सुखंजुषः ।
यत्र यामि तत्र ब्रह्मजुषां सेवां लसाम्यहम् ॥६५॥
इति कृत्वा च नत्वा च भवेश्वरसरोवरे ।
मध्यद्वीपे निराहारो निषसाद महीपतिः ॥६६॥
तदा देवैश्च मुनिभिरप्सरोभिर्मुहुर्मुहुः ।
प्रशस्य वृष्टिः पुष्पाणां कृता जयध्वनिश्रिता ॥६७॥
तावत्तत्राऽऽगतो व्यासः श्वेतव्यासमुनिः स्वयम् ।
श्वेतरूपधरः कल्पे प्रथमे यो ह्यजायत ॥६८॥
तेजसा सूर्यसंकाशो विद्यया ज्ञानभासुरः ।
योगेन ब्रह्मसदृश ऐश्वर्येण हरिः स्वयम् ॥६९॥
आगताय नमश्चक्रुरुत्थाय तत्र येऽभवन् ।
तं चोपवेशयामासुः समर्हे तु महासने ॥७०॥
आसीनं तं स नृपतिः प्रणनाम कृतांजलिः ।
परिपप्रच्छ विनयात् श्रेयस्करमदः शुभम् ॥७१॥
वयं वै क्षत्रदायादाः कर्मणा ह्यधमाः पुनः ।
भवादृशैः समागत्य लोकानामुपरिकृताः ॥७२॥
तिर्थीभवन्ति सौधानि यस्याऽभिधानकीर्तनात् ।
दर्शनस्पृशिसान्निध्यसेवामर्दनप्रह्वणैः ॥७३॥
सेविताः साधवः सम्यक् सेवकान्प्रपुनन्ति हि ।
येषां पादरजःप्राप्त्या शुद्ध्यन्ति गृहमेधिनः ॥७४॥
गृहाण्यपि विशुद्ध्यन्ति किं पुनस्तत्समागमात् ।
भवतो दर्शनं मह्यं दयामृते कथं भवेत् ॥७५॥
तस्मान्मोक्षो मम ध्रुवं भविता शाश्वतीसमाः ।
अथ मे किं विधेयं वै म्रियमाणस्य सर्वथा ॥७६॥
पृच्छामि श्रवणं जापो भजनं वा यथोचितम् ।
अन्यद्वा दानहोमादि श्रेयस्करं प्रदर्श्यताम् ॥७७॥

इति श्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने बर्हिषांगदोत्पत्ति-पत्नीव्रताश्रमगमन-सन्मानाऽलाभप्रयोज्य-महर्षिगलमृतसर्पनिक्षेप-तदृषिपुत्रकृतमासाभ्यन्तरकुहक-सर्पदंशजमृत्युशाप-तज्ज्ञानोत्तरप्रायोपवेशनव्रतर्षिसमागम-श्वेतव्यासागमनस्वश्रेयस्करजिज्ञासादिप्रश्ननिरूपण-नामा सप्तपंचाशत्तमोऽध्यायः ॥५७॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! ततस्तत्र किं किं जातं निबोध मे ।
श्वेतव्यासमुनिश्चाद्यः प्रोवाच हाटकांगदम् ॥ १ ॥
राजंस्तवाश्रमस्तादृक् श्रेयोऽर्थः स्वल्प आप्यते ।
आत्मतत्त्वस्य लाभो न निद्राव्यवायकर्मभिः ॥ २ ॥
वयो व्यत्येति कामेन रात्र्यो निर्यान्ति निद्रया ।
दिनान्युदरपूर्त्यर्थं व्यवसायविडम्बनैः ॥ ३ ॥

द्रष्टा पश्यत्यविरतं लीयमानं क्षणं जगत् ।
गृहाऽपत्यकलत्रादि मृतं पश्यन्न पश्यति ॥ ४ ॥
ह्यः समुपार्जितं चाऽऽद्य श्वो वा नाशं प्रयात्यपि ।
लोको नैव विजानाति स्वस्य नाशमुपस्थितम् ॥ ५ ॥
सर्पेणाऽर्धे मुखे ग्रस्तो मण्डुको निकटाऽऽगताम् ।
यतते मक्षिकामत्तुं जीविताशा दुरत्यया ॥ ६ ॥
कश्चिदेव कृपालेशाद् विजानात्यात्ममोक्षणम् ।
कश्चिदेव कृपापात्रं यतते श्रेयसे पुनः ॥ ७ ॥
कश्चित् तत्रापि सुकृती मोक्षार्थमेव तिष्ठति ।
राजन् सम्यग्व्यवसितं त्वया वै मोक्षकांक्षिणा ॥ ८ ॥
श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यः श्रीहरिः प्रभुः ।
योगसाधनसम्पत्तेः सांख्यविज्ञानसंधृते ॥ ९ ॥
शास्त्राणां च तथाऽभ्यस्तेर्लाभो मोक्षविनिश्चयः ।
लाभो मानवसंभूतेर्यदन्ते श्रीहरिस्मृतिः ॥१०॥
साधवः प्रायशो राजन् रमन्तेऽजगुणाऽर्णवे ।
निर्गुणा अपि कुर्वन्ति कथाकीर्त्यादिकं हरेः ॥११॥
कीर्तनं तु चरित्राणां मूर्तेश्च स्मरणं तथा ।
समागमस्तद्भक्तानां परं श्रेयो ददाति हि ॥१२॥
श्रवणं तत्कथानां तद्विभूतीनां च विज्ञता ।
उपासा हृत्स्थितेस्तस्य परं मोक्षं ददाति हि ॥१३॥
श्रीहरेस्तु कृपायोगाच्छ्रीहरेः किरणोद्भवः ।
श्वेतव्यासमुनिश्चाद्यो निर्गुणोऽहं हरो हरिम् ॥१४॥
ध्यायामि च स्मरामि च कीर्तयामि कथा हरेः ।
कथास्तास्तु मया लक्ष्मीनारायणमुखाच्छ्रुताः ॥१५॥
ताभिश्चाऽहं स्थितिं प्राप्तो निर्गुणां मुक्तिरूपिणीम् ।
तथाप्येताः श्रावयामि जनान् परममुक्तये ॥१६॥
लक्ष्मीनारायणसंहितैषा तु ब्रह्मरूपिणी ।
महाभागवती वाणी ब्रह्मरूपान् करोति हि ॥१७॥
यत्र स्थले श्रवश्चास्या मासपारायणेन वै ।
सारस्यापि स्थलं तद्वै दिव्यं वैकुण्ठकं भवेत् ॥१८॥
येषां श्रवणगा ह्येषा संहिताऽऽत्मन्यधिष्ठिता ।
ते वै मुक्ताः सदा बोध्या देहधृगोऽपि मानवाः ॥१९॥
एषां तु संहितां राजन् षट्वांगदः पिता तव ।
श्रुतवान् कुंकुमवाप्यां गतवानभयं हरिम् ॥२०॥
ब्रह्मणा संश्रुतेयं तु संहिता ऋषिभिः समम् ।
त्रेतायां सत्यलोके च देवैश्च पितृभिः समम् ॥२१॥
वैकुण्ठे पाठमस्याश्च लक्ष्मीर्देवी करोति हि ।
एतत्पारायणं सर्ववेदेभ्योऽप्युत्तमं मतम् ॥२२॥
सर्वतः प्रागिदं शास्त्रं नारायणमुखोद्गमम् ।
परब्रह्माऽवतारास्तद्विभूतिकोटयस्तथा ॥२३॥
प्रवर्णिता यथार्था वै नारायणमुखाच्छ्रुताः ।
सर्वेषामादिमं शास्त्रं संहितेयं मुनिर्मिता ॥२४॥
आद्यव्यासेन वै श्वेतेनेयं संविशदीकृता ।
इमामाधारमादाय शास्त्रपुराणसंहिताः ॥२५॥
ग्रन्थिष्यन्त्यन्यव्यासाद्याः पुराणेतिकथानकान् ।
तदिदं परमं श्राव्यं नारायणपदार्जकम् ॥२६॥
एकाग्रेणैव मनसा चिन्त्यस्तस्यार्थ उत्तमः ।
येन मोक्षो भवेत्सद्यो ब्रह्मलोकगमात्मकः ॥२७॥
विषयेभ्य इन्द्रियाणां विगमं हि समाचरेत् ।
वृत्तीनां चान्तरे तत्त्वे लयमन्वहमाचरेत् ॥२८॥
आन्तराणां तु वृत्तीनां स्वस्मिन् स्थैर्यं समाचरेत् ।
स्वस्य योगं तु हरिणा समं सुदृढमभ्यसेत् ॥२९॥
इत्येवं ब्रह्मशीलस्य द्राग्विमुक्तिः करे स्थिता ।
स्वस्तिकासनमासीनः प्राणायामपरायणः ॥३०॥
इन्द्रियवृत्तीराहृत्य स्थूलं प्राग्वै प्रधारयेत् ।
मूर्ते वै श्रीहरेः रूपं लक्ष्मीनारायणात्मकम् ॥३१॥
इषद्धास्यामृतझरं प्रसन्नं प्रेमनिर्झरम् ।
रम्यमाकर्षकं सौम्यं सप्रभं धवलं मुखम् ॥३२॥
तयोः पृथक्पृथग्धार्यं भक्तेन तु मुमुक्षुणा ।
हरेर्नेत्रद्वयं चाब्जराजीवपत्रिकाऽऽयतम् ॥३३॥
प्रेमरसप्रवाहाढ्यं ह्ययन्निव सुदर्शकम् ।
विशालं प्रान्त धवलं स्मरमूर्तिविडम्बनम् ॥३४॥
कमनीयं तयोर्ध्येयं पृथक्पृथङ्मुमुक्षुणा ।
भ्रुकुटीयुगलं ध्येयं तिर्यक्स्निग्धं क्रमात्कृशम् ॥३५॥
सूक्ष्मरोमावलीप्रान्तपिच्छमाकर्णमायतम् ।
मध्ये तु कामचन्द्राढ्यं सुमूर्तमिव सूज्ज्वलम् ॥३६॥
अथाऽलकाः कृशाः स्निग्धा वक्राश्चकचकायकाः ।
प्रोज्ज्वला मध्यसन्न्यस्तब्रह्ममार्गाऽवलम्बनाः ॥३७॥
तयोर्द्वयोः पृथग् ध्येयाः स्वर्णमुकुटमण्डिताः ।
गुम्फितं धम्मिलं यद्वा चूडामणिं शिखामणिम् ॥३८॥
तन्वीमुक्तादाममृष्टे कपोले धारयेद् द्वयोः ।
ऊर्ध्वे वा चन्द्रकं तत्र धारयेन्मन आत्मनः ॥३९॥
उद्गमाऽनुद्गमश्मश्रुपक्वबिम्बफलोष्ठकौ ।
आकिंचिन्मिलितौ भुग्नौ दर्शितचुम्बनक्षणौ ॥४०॥
हृद्यौ धनुष्कसद्रेखाव्यञ्जितावमृतंधरौ ।
पृथक् तौ धारयेद्भक्त्या शनैस्तत्रैकतानयेत् ॥४१॥

चिबुकेऽञ्चितसद्रत्नस्वर्णबिन्दुचमत्कृते ।
तयोर्वै धारयेत्कर्णौ स्वर्णशष्कुलिकावृतौ ॥४२॥
कर्णपूराऽवतंसस्त्रक्सुबुद्बिमलसद्वरौ ।
एवं लक्ष्म्याननं काम्यं रम्यं नारायणाननम् ॥४३॥
प्रोल्लसन्मिष्टपाण्डुराऽमृततेजःसुवर्तुलम् ।
ध्याने चाऽऽकृष्याऽऽत्मवृत्तौ ध्येयं स्थाप्यं ततः पुनः ॥४४॥
तत्र चित्तस्यात्मनश्च लीनीभावः समाधिकृत् ।
एवमात्मनि चात्मानं परब्रह्मणि योजयेत् ॥४५॥
कृतं तु योजनं येन तेन सर्वं कृतं निजम् ।
इत्येव कण्ठहृदयभुजोदरकटीगनम् ॥४६॥
सक्थिजानुनलपिण्डीगुल्फप्रपदपार्ष्णिकान् ॥
अवयवान्महालक्ष्म्या महानारायणस्य च ॥
प्रत्येकं धारयेद् ध्यायेत्समादध्याच्च सर्वदा ॥४७॥
मोक्षस्तेन भवेत् सद्योऽपुनरावर्तनात्मकः ।
अथ बन्धकरं तत्राऽऽवरणं वस्तुमात्रकम् ॥४८॥
ब्रह्मांडस्थं विरोधि स्यात् तत्रापीक्षेत तं तदा ।
पाताले तस्य चरणौ पार्ष्णिद्वयं रसातले ॥४९॥
महातले तु तद्गुल्फौ जंघे तस्य तलातले ।
सुतले जानुनी तस्योरुद्वयं वितले तथा ॥५०॥
अतले मेहनं तस्य सक्थिमूलं महीतले ।
नभस्तले नाभिकूपं स्वर्गे तद्धृदयं तथा ॥५१॥
महरि तस्य कण्ठं वै जने तस्याऽऽस्यमीक्षयेत् ।
ललाटं तस्य तपसि सत्ये शोर्षाणमीक्षयेत् ॥५२॥
इन्द्रादिषु च तद्बाहून् दिक्षु कर्णौ समीक्षयेत् ।
शब्दे तस्य श्रवणं चाऽऽश्विनेययोश्च नासिकाम् ॥५३॥
गन्धे तस्य घ्राणमिद्धाऽनले तस्याऽऽननं तथा ।
दिवि तस्याऽक्षिणी पश्येत् सूर्ये तन्नेत्रमीक्षयेत् ॥५४॥
दिवारात्रौ पक्ष्मणी तद्भ्रुवं ब्रह्मासने तथा ।
अप्सु पश्येद्धरेस्तालूं रसे जिव्हां समीक्षयेत् ॥५५॥
छान्दस्सु तच्छिरो दंष्ट्रा यमे स्नेहे द्विजांस्तथा ।
मायायां श्रीहरेर्हासं सर्गे कटाक्षमोक्षणम् ॥५६॥
तदुत्तरौष्ठं व्रीडायां लोभे चौष्ठमधःस्थितम् ।
धर्मे स्तनमधर्मे तु पृष्ठं हरेः समीक्षयेत् ॥५७॥
मेढ्रं वेधसि तस्यैव मित्रयोर्वृषणौ हरेः ।
समुद्रेषु हरेः कुक्षीन् गिरिष्वस्थिचयाँस्तथा ॥५८॥
नदीषु तस्य नाडींश्च वृक्षेषु तत्तनूद्भवान् ।
पवने श्वसनं तस्य वयसि श्रीहरेर्गतिम् ॥५९॥
क्रियां गुणप्रवाहे च केशान्मेघेषु तस्य वै ।
सन्ध्यासु तस्य वस्त्राणि प्रधाने तस्य सूक्ष्मताम् ॥६०॥
चन्द्रे हरेर्मनः पश्येद्विज्ञाने महनीयताम् ।
रुद्रे तदन्तःकरणम् अश्वादिषु नखानि वै ॥६१॥
कटिं पृष्ठं पशुष्वेव तच्चातुर्यं तु पक्षिषु !
स्वायंभुवे हरेर्बुद्धिं पर्णकुटिं नरेषु च ॥६२॥
गन्धर्वेषु स्मृतिं तस्याऽसुरसैन्येषु सद्बलम् ।
ब्राह्मणेषु मुखं तस्य क्षत्रियेषु भुजद्वयम् ॥६३॥
वैश्येषूरुद्वयं तद्वच्चरणे शूद्रमीक्षयेत् ।
कामे तस्य तु संकल्पं स्त्रीषु दिव्यहरेस्तनुम् ॥६४॥
नरेषु दिव्यवीर्यं तस्याऽऽनन्दं ब्रह्मभावनम् ।
स्थूले सूक्ष्मं महत्यल्पं वैराजे कृष्णमीक्षयेत् ॥६५॥
एवं सर्वत्र च श्रीमन्नारायणमितीक्षयेत् ।
श्रवणं मननं ध्यानं तेन तत्र समापयेत् ॥६६॥
तदानन्दं तस्य सौख्यं तस्य मिष्टरसं ध्रुवम् ।
सर्वदैव भजतोऽन्यत् सर्वं तन्मयतां नयेत् ॥६७॥
इति मुक्तेः कृते राजन् विधेयं ते प्रदर्शितम् ।
तेन मार्गेण साक्षाद्वै हरिः सन्निहितो भवेत् ॥६८॥

इति श्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने श्वेतव्यासकृतोपदेश-संहितापारायणनिर्देशभगवन्मूर्तिधारणा-विभूत्यादिहरितादात्म्यधारणादि-कथननामाऽष्टपंचाशत्तमोऽध्यायः ॥५८॥

**श्रीनारायण उवाच—**

अथापि वासनालेशाद् बहुजन्मभ्रमेस्तथा ।
मनो यदि पुनश्चायात्स्थैर्यं नैव समाश्रयेत् ॥ १ ॥
तदा तु मन एवेदं ब्रह्म इत्यपि धारयेत् ।
तस्मिन् यदुद्भवेच्छुक्लं मन्तव्यं कृष्णमेव वा ॥ २ ॥
तदपि ब्रह्म एवेति नान्यो वै विषयो हि सः ।
इत्येवं कल्पयेत् प्राज्ञो मुमुर्क्षुर्नाऽन्यमर्थयेत् ॥ ३ ॥
अथापि तत्र भासः स्याद्विविधानां तु देहिनाम् ।
पशुकलत्रपुत्रादिद्रव्यभवनसम्पदाम् ॥ ४ ॥
सर्वं वै ब्रह्म इत्येवं कल्पयेन्नान्यमर्थयेत् ।
एवं तद्ब्रह्मभावेन ब्रह्मरूपाणि तानि वै ॥ ५ ॥
भवन्त्येव ततस्तानि नैव बन्धकराणि हि ।
अथापि तन्मनो ब्रह्मरूपं कृत्वा स्वयं जनः ॥ ६ ॥
सर्वं ब्रह्ममयं पश्येन्नान्यत् किंचिद्विलोकयेत् ।
नेन्द्रियैर्नान्तिरैर्नैव वासनाकिरणेन वा ॥ ७ ॥
स्वात्मरिक्तं विपश्येद्धि किंचिदन्यदतन्मयम् ।
तादृशं स्वं मनश्चैव मन्तव्यं ब्रह्मरूपकम् ॥ ८ ॥

कृत्वा ततः परंब्रह्म ध्यायेच्छान्तरयेण वै ।
तद् यथा स्वं ब्रह्म कृत्वा परंब्रह्म सुमूर्तकम् ॥ ९ ॥
चिन्तयेत् सौम्यरूपं तं सूक्ष्मं प्रादेशमात्रकम् ।
चतुर्भुजं शंखचक्रगदापद्मधरं प्रभुम् ॥१०॥
सुप्रसन्नमुखांभोजं पद्मपत्रायतेक्षणम् ।
केसरपिशंगधौत्रं रत्ननद्धसुभूषणम् ॥११॥
महारत्नाऽञ्चितप्रान्तकलिंगकिरीटकुण्डलम् ।
श्रीवत्सं वक्षसि दधद्वनमालासुकौस्तुभम् ॥१२॥
रशनाऽऽवृत्तकट्याढ्यं स्वर्णनूपुरपत्कजम् ।
कोमलस्वर्णपत्त्राणं वरप्रावारसंवृतम् ॥१३॥
सुवर्णश्रृंखलायुक्ताऽङ्गुलीयकंकणान्वितम् ।
स्निग्धाऽऽभुग्ननीलकेशं मन्दहासाऽमृताननम् ॥१४॥
प्रेमरसोद्रमन्नेत्रं भ्रूचांचल्यकृपापरम् ।
इत्येवं दिव्यतेजस्कं सुरूपं चिन्तयेन्निजे ॥१५॥
तथा नखशिखापूर्णमेकैकमंगमीक्षयेत् ।
यावन्नस्थिरतां यायात् समभ्यस्येत्तु तावता ॥१६॥
सुखस्थिरासनसंस्थो जिह्वासुर्लोकसुल्बणम् ।
प्राणान्यच्छेन्मनो यच्छेद् बुद्धिं यच्छेन्निजात्मनि ॥१७॥
आत्मानं ब्रह्मणि यच्छेद् ब्रह्मात्मानं परात्मनि ।
एवं क्रमात्परं रुद्धः शान्तस्तद्रूपतां गतः ॥१८॥
विरमेत शनैः कृत्यान्न गुणा बन्धनप्रदाः ।
कुतोऽन्यत्कालमायादि यत्पदं वैष्णवं तु तत् ॥१९॥
नाभिं संकुच्य च गुदं क्रमाच्चक्राणि लंघयेत् ।
सुषुम्णया भ्रुवोर्मूले गुरुं ध्यात्वोर्ध्वमागतः ॥२०॥
मूर्ध्नश्छिद्रं ततो भित्त्वा मुक्तैः सह परिव्रजेत् ।
शुक्लं वैश्वानरं गत्वा सूर्यं चान्द्रं च तारकाः ॥२१॥
पैत्र्यं स्थानं समुल्लंघ्य ऋषीणां मण्डलानि च ।
सत्यं लोकं समुल्लंघ्याऽष्टैश्वरावरणानि च ॥२२॥
समुल्लंघ्य ततो गच्छेद्विराट्नारायणं प्रभुम् ।
हिरण्यगर्भमुल्लंघ्य महाविष्णुपदं ततः ॥२३॥
तच्चापि संपरित्यज्य प्राधाने प्राकृते पदे ।
समपोह्य ब्रह्मलोकं शाश्वतं धाम चाप्नुयात् ॥२४॥
न मृत्युर्न जरा तत्र न कालो न च शोचनम् ।
नार्तिर्नोद्वेग इत्येषः श्रीहरेर्लोक उच्यते ॥२५॥
तन्मूर्तैस्तु परानन्दमाप्नोत्यानन्दतन्मयः ।
एवं मुमुक्षुः क्रियया ध्यानेनोपासनेन वा ॥२६॥
उपासित्वा तथा ध्यात्वा परंब्रह्म समश्नुते ।
भगवता श्रीहरिणा लक्ष्म्यै सृती प्रदर्शिते ॥२७॥
क्रियायोगो भक्तियोगो येनात्मा मोक्षमाप्नुयात् ।
हरिः सर्वत्र नियतः सर्वं चैव हरौ मतम् ॥२८॥
तेन सर्वात्मना ध्यायेद् द्रष्टारमन्तरात्मनि ।
अतः सर्वस्वभावेन सर्वत्र सर्वदा हरिम् ॥२९॥
शृणुयात्कीर्तयेद्ध्यायेद् येन तन्मयतां व्रजेत् ।
ये वै कथामृतं नित्यं पिबन्ति हरिमाश्रिताः ॥३०॥
प्रज्वलन्त्याशयास्तेषां व्रजन्ति तत्पदाम्बुजम् ।
एवं विज्ञानरसनामाश्रितो रसविज्जनः ॥३१॥
क्षितिं तु गेन्दुकं कृत्वोपबर्हणं भुजद्वयम् ।
अञ्जलिं भुजिसत्पात्रं दिशो वस्त्रं प्रकल्प्य च ॥३२॥
वृक्षाद्भिक्षां सरिद्भ्यश्च जलं गुहागृहं तथा ।
नारायणात्तु सन्तोषं प्राप्याऽऽत्मरमणो मुनिः ॥३३॥
किं कस्मात्तु समीहेत नारायणमृते पुनः ।
सकामो वाथ निष्कामो हरिं ध्यायेत्तदात्मना ॥३४॥
प्रतीकेष्वप्रतीके वा तत्तानस्तन्मयो भवेत् ।
तेनैवैकेन देवेन स्वस्मात् स्वस्य विभूतयः ॥३५॥
भिन्नोपासककामानां तृप्त्यर्थं प्रकटीकृताः ।
यतो नाऽयं जनः सर्वो मृतौ भवति निस्पृहः ॥३६॥
सुबहून् मृतिकालेऽपि पदार्थानीहते पुनः ।
ततस्तेनापि तत्तस्मिन् ब्रह्मभावनया मुहुः ॥३७॥
सकामनया विचिन्त्यमिष्टदं ब्रह्मचैव तत् ।
विप्रतेजस्विताकामो भजेत्पत्नीव्रतं हरिम् ॥३८॥
लक्ष्मीकामो भजेल्लक्ष्मीं त्वां सुवर्णप्रदां सदा ।
इन्द्रियसौष्ठवमिच्छन् भजेदिन्द्रं शचीपतिम् ॥३९॥
अपत्येच्छुर्भजेदत्र दक्षादिकप्रजापतीन् ।
अप्रधृष्यत्वकामोऽग्निं द्रव्यकामो वसून्भजेत् ॥४०॥
वीर्यकामो भजेद्रुद्रमन्नेच्छुरदितिं भजेत् ।
स्वर्गेच्छुस्तु भजेत् सूर्यं राज्येच्छुर्विश्वदेवताः ॥४१॥
प्रजावशित्वकामस्तु साध्यदेवान् यजेत वै ।
चिरायुरिच्छुरश्विनौ पुष्टीच्छुः पृथिवीं यजेत् ॥४२॥
प्रतिष्ठेच्छुर्व्योमभूमी पत्नीच्छुरुर्वशीं यजेत् ।
रूपकामस्तु गन्धर्वान् कीर्तिकामः क्रतुं यजेत् ॥४३॥
सर्वाधिपत्यकामस्तु यजेद् ब्रह्माणमेव च ।
धनसंग्रहकामस्तु वरुणं वै प्रपूजयेत् ॥४४॥
विद्याकामो यजेच्छंभुं धर्मेच्छुर्विष्णुमर्चयेत् ।
दाम्पत्यप्रेमकामस्तु सतीमुमां सदा यजेत् ॥४५॥
सन्तानकुलवृद्ध्यर्थं यजेत् पितॄनतन्द्रितः ।
सर्वथा दुःखनाशाय यज्ञान् कुर्यान्मुहुर्मुहुः ॥४६॥

बलेच्छुको मरुद्देवान् राज्येच्छुर्मनुदेवताः ।
भोगेच्छुः शशिनं शत्रुनाशेच्छू राक्षसान् यजेत् ॥४७॥
मुक्तिकामस्तु पुरुषं परमात्मानमीश्वरम् ।
भजेत सततं भक्तः कामाऽकाममयो धिया ॥४८॥
तमेव परमात्मानं सर्वस्वप्रदमर्थयेत् ।
तत्तत्कामप्रसिद्धिः स्यात् सिद्धौ तृप्तिस्तृषाक्षयः ॥४९॥
ततोऽपि नित्यसच्चिदानन्दसन्दोहमर्थयेत् ।
विहारे भोजने पाने शृंगारे मेहने रतौ ॥५०॥
परशूनामपि कालो वै पृथग्गच्छत्यतो नु किम् ।
तरवोऽपि हि जीवन्ति भस्त्राश्चापि श्वसन्ति वै ॥५१॥
कथा नैव श्रुता कर्णे तेऽपि तादृग्विधा जनाः ।
कथाश्रुतिं विना कर्णौ वाल्मीकौ तु बिलौ मतौ ॥५२॥
संकीर्तनमृते जिह्वा दार्दुरिक्येव भौतिकी ।
मुकुटार्हं शिरो नतिमृते भारस्तु केवलः ॥५३॥
हरेः सेवामृते हस्तौ स्वर्णार्हावपि चेन्धनौ ।
हर्यद्दर्शनकृन्नेत्रे मायूरबर्हचन्द्रके ॥५४॥
हर्यमन्दिरगौ पादौ वृक्षस्तम्बौ हि केवलौ ।
हरेरंघ्रिरजो लाभं विना मर्त्यो जीवन्मृतः ॥५५॥
हरेर्वृन्दापुष्पगन्धं विना नासापि शाविकी ।
हरेर्भक्तौ द्रवाऽभावे हृदयं प्रस्तरोपमम् ॥५६॥
हरेः कथायां यन्नेत्रे जलं रोमेषु हर्षणम् ।
अंगेषु पुलको भावो द्रवो हृदि स सात्त्वतः ॥५७॥
सात्त्वतानां हृदि साक्षान्नारायणो वसाम्यहम् ।
नमस्तस्मै परेशाय तज्जलाय नमो नमः ॥५८॥
अनन्तशक्त्यधिष्ठानान्तरात्मँस्ते नमो नमः ।
अदृश्यरूपिणेऽलक्ष्यवर्त्मने ब्रह्मणे नमः ॥५९॥
दुरीतनाशनेऽखिलप्राणिरूपाय ते नमः ।
असन्निरसननाम्ने सात्त्वताम्पतये नमः ॥६०॥
दीनानां बन्धवे तुभ्यं स्वधाम्नि रंस्यते नमः ।
निरस्तातिशयसाम्यगुणैश्वर्यवते नमः ॥६१॥
अयोगिनां विदूराय स्वहृदिस्थाय ते नमः ।
यत्कीर्तिश्रवदृश्यर्हास्मृतिस्तोत्राणि सर्वथा ॥६२॥
कल्मषाणि विधुन्वन्ति तस्मै भद्रकृते नमः ।
प्रपन्ना यत्पदोपास्त्या मात्रास्पृशिं विधूय च ॥६३॥
निराशया ब्रह्मगतिं यान्ति तस्मै च ते नमः ।
शीलदानक्रियामन्त्रयज्ञत्यागतपोव्रताः ॥६४॥
यदर्पणमृते क्षेमं विन्दन्ति नहि ते नमः ।
श्वादमत्स्यादचर्मकृद्यवनाऽऽभोरसंकराः ॥६५॥
कंकशबरझल्लादपारधिर्गणिकापिवाः ।
किरातखसघाताश्च पापाश्चान्येऽपि जन्तवः ॥६६॥
यदाश्रिताश्रयाच्छीघ्रं शुद्ध्यन्ति ते नमो नमः ।
अवतारमयः सोऽयं साधुसाध्वीमयः प्रभुः ॥६७॥
ईशेशाऽजामयो देवो नारायणः प्रसीदताम् ।
ऋषिपितृदेवमयो मानवासुरनागधृक् ॥६८॥
पतिपत्नीमयो देवो नारायणः प्रसीदताम् ।
नरनारीस्वरूपोऽयं नृपराज्ञीमयः प्रभुः ॥६९॥
लोकधामधराधीह्रीश्रीपतिर्मे प्रसीदताम् ।
यत्पादध्यानधौतान्तर्हृदो विन्दन्ति यं प्रभुम् ॥७०॥
तदोतप्रोतसद्बुद्ध्या यादृग्रूपः स दृश्यते ।
तथा तं कवयो लोके वर्णयन्ति परात्परम् ॥७१॥
ब्रह्मवाण्यां ब्रह्मरूपो लोकवाण्यां रसात्मकः ।
उभवाण्यां मिष्टतिक्तो प्रसीदतां कथेष्टदः ॥७२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुग-
सन्ताने भगवद्ध्यान-ब्रह्मलोकगमन-तत्तद्वि-
भूतिध्यानादिकथननामैकोनषष्टि-
तमोऽध्यायः ॥५९॥

**श्रीनारायण उवाच—**

इत्येवं प्रत्यहं लक्ष्मि ! हाटकांगदभूपतिः ।
कथाः श्वेतव्याससुखाच्छृणोति श्रोतृभिः सह ॥ १ ॥
ऋषेर्वाल्कृताच्छापात्प्रेरितः कुहकः फणी ।
समागच्छति दंशार्थे पश्चिमाशाविभागतः ॥ २ ॥
विप्ररूपं स वै धृत्वा व्रतदाख्यसरित्तटे ।
विश्रान्तो वटच्छायायां यावत्तिष्ठति सर्पराट् ॥ ३ ॥
तदा तत्र समायातो वैद्यवेषाऽपरो द्विजः ।
सोऽयं धन्वन्तरिर्वैद्यो विषनाशकमौषधम् ॥ ४ ॥
आदाय गच्छति यत्र त्वस्याः पारायणं वृतम् ।
राज्ञो विषं हरिष्येऽहं लप्स्ये स्वर्णमयं बहु ॥ ५ ॥
पारितोषिकमित्येवं कृत्वा तं हाटकांगदम् ।
रक्षितुं याति सोऽप्यत्र महावटतरोरधः ॥ ६ ॥
छायां सुशीतलां प्राप्य (व्रतदा) कन्कलासलिलं शुभम् ।
पातुं विश्रमितुं तत्र निषसाद वटस्थले ॥ ७ ॥
कुहकेन परिपृष्टः प्राह धन्वन्तरिस्तदा ।
हाटकांगदराजर्षेर्विप्रशापकृताद्भयात् ॥ ८ ॥

कुहकदंशजन्याद्र गरलात्मकविघ्नतः ।
तं गच्छामि मोचयितुं पारितोषिकवाञ्छया ॥ ९ ॥
कुहकेन तु तच्छ्रुत्वा कथितं शृणु भो द्विज ।
कुहकस्य गरं तीव्रं कथं त्वं वारयिष्यसि ॥१०॥
कुर्वन्नैव वटे तस्य परीक्षां याहि भो ततः ।
दशाम्येनं वटं त्वं तं कुरु पल्लवितं पुनः ॥११॥
उक्त्वैवमदशद्वृक्षं न्यग्रोधं यावदेव हि ।
तावदामूलतो वृक्षः शुष्कोऽभूद् विषयोगतः ॥१२॥
धन्वन्तरिस्तदा नद्या जलमादाय चौषधम् ।
आप्लाव्य तस्य मूले तु यावत्करोति सेचनम् ॥१३॥
तावद्वटोऽप्यंकुरितः पत्ररसभरो यथा ।
पूर्वमासीत्तथैव द्राग्जातो हरित इत्यपि ॥१४॥
आश्चर्यमिदमालोक्य कुहकः प्राह तं द्विजम् ।
मा याहि भो द्विजश्रेष्ठ कस्त्वं मां सन्निवेदय ॥१५॥
द्रव्यं स्वर्णं परार्धं ते ददामि तत्र याहि मा ।
द्विजो धन्वन्तरिः प्राह नारायणांशजोऽस्म्यहम् ॥१६॥
हाटकांगदभक्तं मे रक्षितुं यामि मानद ।
कुहकः प्राह ते दिष्टया ब्रह्मशापो बभूव ह ॥१७॥
भवानेव कथं तद्वै व्यलीकं कर्तुमिच्छति ।
आयुषस्तस्य सान्तत्वात्सुकृतस्य क्षयादपि ॥१८॥
तव संकेतकार्यत्वान्नाशं यातु धरापतिः ।
गृहाणेदं परार्धं वै स्वर्णमणिमयं धनम् ॥१९॥
परागच्छ महाराज याम्यहं दंशनाय तम् ।
कुहकस्त्वेवमाभाष्य मणिं स्वमूर्ध्न आददौ ॥२०॥
यस्मात्स्वर्णमनन्तं वै स्पर्शाद्भवति लोहतः ।
धन्वन्तरिर्धनं नीत्वा गतः स्वस्य निकेतनम् ॥२१॥
कुहकस्तु भावियोगात्कथास्थानमगाद् द्रुतम् ।
वटोऽमृतौषधिप्राप्तेस्तूर्णं त्वमरतां गतः ॥२२॥
श्वेतहरितपर्णाढ्यो यावत्कल्पं भविष्यति ।
धन्वन्तरिवटख्यातिं लोके वै स गमिष्यति ॥२३॥
रैवतात्पर्वतान्नैर्ऋत्यायां दिशि वटोऽल्पकः ।
योजनत्रितयं दूरे वर्तते सूचयन् स्थितिम् ॥२४॥
महालयक्षितेः पश्चाद् दूरं गव्यूतिरस्ति सः ।
तीर्थं विषहरं तद्वै स्नानमात्रात्प्रशस्यते ॥२५॥
वटस्पर्शनमात्राच्च विषं नश्यति देहिनाम् ।
मन्त्रो विषहरश्चायं धन्वन्तरिसमीरितः ॥२६॥
'विषाऽपसर्प भद्रं ते गच्छ विष इतो द्रुतम् ।
हाटकांगदरक्षार्थं धन्वन्तरिवलं स्मर' ॥२७॥
इति मन्त्रं समुच्चार्याऽवतारयति यो विषम् ।
द्रागेव प्रलयं याति विषमुल्बणमुल्बणम् ॥२८॥
अथ सः कुहको विप्ररूपधृक् सदसि द्रुतम् ।
प्रच्छन्नश्च समागम्य कथां शृणोति नित्यशः ॥२९॥
प्राप्ते त्रिंशत्तमे त्वह्नि पूर्वं सायाह्न एव तु ।
पारायणसमाप्तौ वै व्यासपूजोत्तरं तदा ॥३०॥
हाटकांगदभूपालं यजमानं यदा गुरुः ।
व्यासो जगाम सहाशीर्वाददानाय तावता ॥३१॥
रूपान्तरं शलाकेव सूक्ष्मं कृत्वा तु सर्पराट् ।
हारपुष्पेषु वै लीनः पुष्पवर्ण इवाऽकळः ॥३२॥
हारेण सह नृपतेः कण्ठे तिष्ठति वाञ्छया ।
यावद् राजापि वदति व्यासदेव नमोऽस्तु ते ॥३३॥
तव प्रसादाद् विघ्नो मे गत एवेति लक्षये ।
तावत्स कुहकः कण्ठे सूक्ष्मं दंशं चकार वै ॥३४॥
विषं स्वमुल्बणं तीव्रं दंष्ट्रयाऽसिञ्चदण्वपि ।
राज्ञस्तद्ब्रह्मरन्ध्रे वै गतं नाड्या तु सत्वरम् ॥३५॥
अव्याप्नोत्तावदानखशिखं हाहाध्वनिस्तदा ।
समभूच्च सदस्यानां शोकोद्विग्नधियां महान् ॥३६॥
राजा तु कृष्णसंलग्नमानसात्मेव योगिराट् ।
दिव्यविग्रहवान् भूत्वा ययौ ब्रह्मपुरं परम् ॥३७॥
कुहुकस्तु स्वकं रूपं दर्शयित्वा निगूह्य च ।
सत्वरं परिदुद्राव जगाम निजमालयम् ॥३८॥
अथ राज्ञः सुपुत्रेण स्वर्णांगदेन यज्ञराट् ।
सर्पयज्ञः कृतो यत्र सर्पाणामनले हवः ॥३९॥
स्वपितुः प्रतिकाराय कृतो रोषनिवृत्तये ।
सर्पाणां तु विनाशाय सर्पमन्त्रविदस्तदा ॥४०॥
समाहूय द्विजाँस्तूर्णं सर्पसत्रं समाचरत् ।
अग्निं प्राज्वाल्य नामानि सर्पाणां परिहूत्य च ॥४१॥
जुहाव सुबहून् सर्पान् पेतुश्चाग्नौ च संघशः ।
कुहकस्तु तदा चेन्द्रशरणं गतवान् किल ॥४२॥
प्राह रक्ष सुराधिप मृतेरस्याः दयां कुरु ।
श्रुत्वेति च तदा हीन्द्रो राजा त्रिलोकिरक्षकः ॥४३॥
सर्पं ररक्ष पार्श्वे स्वे न वै पतति सर्पराट् ।
ध्यानेन तु तदा विप्रैर्ज्ञात इन्द्रसुरक्षितः ॥४४॥
तदा वै ब्राह्मणास्तत्र मन्त्रानुच्चार्य वेगतः ।
सुपर्णद्विजमुख्यास्ते प्रसह्याहूय भोगिनः ॥४५॥
जुहुवुश्चानले मुख्यान् गौणाँश्चापि समन्ततः ।
सेन्द्रं च कुहकं मन्त्रमुच्चार्याऽप्यजुहोद् यथा ॥४६॥

'ओमग्नये स्वाहा कुहकं सेन्द्रं जुहोमि'मन्त्रम् ।
यावदुच्चार्य सर्षपान् जुहोत्यग्नौ तदा स्वयम् ॥४७॥
इन्द्रः कुहकयुक्तो वै स्वासनात्पतितो भुवि ।
अग्नौ ससर्पः पतितः प्रजज्ज्वालाऽऽकटि द्रुतम् ॥४८॥
ब्रह्मणा स निरुद्धो वै मैवं देवेऽतिगं कुरु ।
तदा द्विजः सुपर्णस्तु द्विजाश्चान्ये महाबलाः ॥४९॥
पितामहवचः श्रुत्वा निवृत्ताः कर्मणस्ततः ।
इन्द्रं धन्वन्तरिरेत्य त्वौषधेनाऽचिकित्सयत् ॥५०॥
नीरुजं तु चकारैनं जगाम स्वनिकेतनम् ।
कुहकस्त्वर्धदग्धो वै शेषेणाऽऽगत्य मोचितः ॥५१॥
जीवितः प्राणसन्धिन्या समौषध्या ततः खलु ।
सर्पाः कुहकजातीयाः पृष्ठे देशे समन्ततः ॥५२॥
कृष्णपीतसुधूम्रादिविचित्रचन्द्रकाः सदा ।
दग्धत्वचां दर्शनानि भवन्ति त्वग्निपाशतः ॥५३॥
इत्येवं प्रथमद्वापरस्य जातं कथानकम् ।
तदानीमिन्द्रदेवस्य त्रासोऽभून्मरणस्य वै ॥५४॥
तद्वत् त्रासो भवत्येव प्राणिनां घातकर्मणि ।
तस्माद् घातो न कर्तव्यः केनचित्तु दयालुना ॥५५॥
इत्येवं तु कथा दिव्या प्रोक्ता कल्पादिकालजा ।
भक्त्यहिंसादिधर्माढ्या परश्रेयस्करी शुभा ॥५६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने व्रतदाननदीतटीयवटच्छायायां कुहकधन्वन्तरिबलपरीक्षण-सर्पदंशजहारकांगदनिधन-सर्पसत्राग्निमध्यसेन्द्र-कुहकहोमसुपर्णद्विजादिकृतहवनग्रस्तेन्द्रकुहका-दिकरुणाकृद्ब्रह्मशेषादिवचनद्वारकरक्षणादि-निरूपणनामा षष्टितमोऽध्यायः ॥ ६० ॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! प्रवक्ष्यामि तव प्रश्नानुसारिणीम् ।
कथां यमस्य तत्पूर्या यत्रास्ति जीवनिष्कृतिः ॥ १ ॥
द्वापरे प्राणिनां भावाः सत्यहीना यदाऽभवन् ।
पापे च कपटे बुद्धिर्यदा मुहुरवर्तत ॥ २ ॥
पक्षपातस्तदा चौर्यं स्वार्थो मिथ्याभिशंसनम् ।
प्रसह्य च परस्वादि हर्तव्यमपि दूषणम् ॥ ३ ॥
हिंसा द्रोहोऽवमानं च निन्दाऽन्याऽभिभवोऽर्दनम् ।
इत्यादिदोषसहितान् लोकान् दृष्ट्वा प्रजापतिः ॥ ४ ॥
स्वयंभूर्भगवान् ब्रह्मा दण्डार्थं तु व्यचिन्तयत् ।
देवं नारायणं दध्यौ क्षणं तावद्धरिः स्वयम् ॥ ५ ॥
प्राविर्भूय प्रसन्नास्यः प्राह कस्मादहं स्मृतः ।
ब्रह्मा निवेदयामास देवाय परमात्मने ॥ ६ ॥
द्वापरे खलु संप्राप्ते लोकाः सत्यविवर्जिताः ।
परस्परस्वहर्तारो मिथ्यावादाश्च निर्दयाः ॥ ७ ॥
तेषां कृते तु कर्तव्यं किन्तु वै भगवन् मया ।
दण्डस्तेषामवश्यं वै कर्तव्यो भवति प्रभो ॥ ८ ॥
अन्यथा त्वव्यवस्था स्याल्लोका विनाशमाप्नुयुः ।
भोजनाच्छादनगृहावासेष्वपि बलिष्ठकैः ॥ ९ ॥
कृतादुपद्रवात्तेषां सुखं स्यान्न कदाचन ।
तस्मात्तेषां नियमनं किमप्याधेहि शं कुरु ॥१०॥
श्रुत्वैवं ब्रह्मणो वाक्यं नारायणः स्वयं हरिः ।
सस्मार धर्मं शास्तारं धर्मस्तत्राऽऽगतो द्रुतम् ॥११॥
प्रणिपत्य च संपूज्य देवदेवं जनार्दनम् ।
ब्रह्माणं चापि पितरं नमस्कृत्याऽब्रवीदिदम् ॥१२॥
किन्तु मे कार्यमापन्नं देह्याज्ञां तत्करोम्यहम् ।
हरिः प्राह तदा धर्मं दण्डकार्यं गृहाण वै ॥१३॥
लोकानां स्वार्जितानां तु कर्मणां फलदो भव ।
सत्कर्मणां सत्फलदोऽसत्कर्मणामसत्प्रदः ॥१४॥
रूपद्वयं गृहीत्वा त्वं दण्डकार्यं कुरु द्विज ।
ब्रह्मणा मोदितः सोऽपि तत्कार्यं शिरसि न्यधात् ॥१५॥
पुनर्धर्मस्तदा प्राह नारायणं जगद्गुरुम् ।
किं कार्यं केन रूपेण क्व स्थले कैश्च हेतुभिः ॥१६॥
कथं दण्डयितव्यं तच्छाधि श्रीपरमेश्वर ।
तदाह भगवान् कृष्णो गृहाण त्वं तनुद्वयम् ॥१७॥
घोररूपं तु तत्रैकं त्रासदं च भयंकरम् !
अपरं सौम्यरूपं तु सुखदं शान्तिदं सदा ॥१८॥
तदेतद्रूपलब्ध्यर्थं सूर्याऽपत्यं भवाऽचिरम् ।
यमरूपो विकरालस्वरूपस्त्रासदो भवा ॥१९॥
द्वितीयं तू तव रूपमिदमेव भवत्वथ ।
ततस्ते वासयोग्यं वै स्थानं दक्षिणदिग्भवम् ॥२०॥
कल्पयिष्ये विशालं तत्पुरी संयमनीति यत् ।
दण्डाख्यं पुरुषं दास्ये यमदूतांश्च कोटिशः ॥२१॥
लेखकांश्चापि संदास्ये चित्रगुप्ताख्यमुख्यकान् ।
स्वकर्मफलभोगाय स्थानानि कर्मिणां कृते ॥२२॥
विविधानि रचयिष्ये गच्छ सूर्यसुतो भव ।
इत्यादिश्य हरिस्तस्मात्स्थानात्तिरोऽभवत्तदा ॥२३॥

ब्रह्माणं तु नमस्कृत्य धर्मः सूर्ये विवेश ह !
सूर्योऽप्यैच्छत्तदा पत्नीं पुत्रसन्ततिहायिनीम् ॥२४॥
अथ सर्वगुणोपेता प्राप्ता संज्ञाभिधा प्रिया ।
विश्वकर्मसुता दिव्या रविणा सा विवाहिता ॥२५॥
सूर्यस्तु तेजसा तीव्रः संज्ञा मृद्वी स्वतेजसा ।
सूर्यतेजोऽसहमाना रवेः सेवां करोत्यपि ॥२६॥
यदा सूर्यस्तु संज्ञाया मुखं पश्यति कामतः ।
तदा संज्ञा सूर्यतेजःप्रधृष्या भवति द्रुतम् ॥२७॥
सूर्यस्य तेजसा संज्ञा नेत्रे निमिलते सदा ।
प्रेम्णा पश्यन्त्यपि सूर्ये तेजसाऽभिभवात्तदा ॥२८॥
नहि विवृत्तनेत्रेण द्रष्टुं शक्ता भवत्यसौ ।
सूर्यः स्वयं स्वभावाद्धि देहेऽप्युष्णतमः परः ॥२९॥
संज्ञा सूर्यस्य तत्तेजो ह्युग्रं सोढुं शशाक न ।
यदा यदा तु सूर्यस्तां समाश्लिष्यति वै प्रियाम् ॥३०॥
तदा तु सूर्ये सन्तप्तं दृष्ट्वा च विवशा हि सा ।
पतिं दृष्ट्वा मुहुः संज्ञा स्वाक्षिसंयमनं व्यधात् ॥३१॥
सूर्यस्तु प्रेमसमये प्रियां संरुद्धलोचनाम् ।
मुहुर्दृष्ट्वा ह्यधीरः सन् रोषाद्वचनमब्रवीत् ॥३२॥
मम योगे सदा भीरु कुरुषे स्वाक्षिसंयमम् ।
तस्मान्मद्वीर्यतस्तेऽपि पुत्रो भवतु संयमः ॥३३॥
नाम्ना यमस्तु विख्यातो यमराजेति वै महान् ।
जीवानां कर्मपाकस्य दण्डदाता भविष्यति ॥३४॥
मम क्रोधवशात् सोऽपि क्रूरधर्मा भविष्यति ।
तव नेत्रसंयमनात् सोपि तादृग्भविष्यति ॥३५॥
यदा तु कर्मपाकं वै दण्डं दास्यति कर्मणे ।
तदा ह्याक्रोशतो जीवान्नैव द्रक्ष्यति नेत्रतः ॥३६॥
नेत्रे सम्मील्य दण्डं वै यथाकर्म प्रदास्यति ।
यादृग् वै संगमे पित्रोर्भावस्तादृक् तु बालके ॥३७॥
इत्येवं वदमाने तु रवौ संज्ञा यथा तथा ।
प्रियचिकीर्षया पत्युश्चंचलाऽप्यभवत्तदा ॥३८॥
हावं भावं दर्शयन्ती स्नेहरतिं करोति वै ।
कामभोगं रतिं रीत्या नेत्रे चोन्मील्य भावतः ॥३९॥
शं निर्वर्तयते यावत् सूर्याद्गर्भं समादधौ ।
सूर्यः प्राह तदा संज्ञां प्रिये त्वं चञ्चला मुहुः ॥४०॥
विलोलितसुचाञ्चल्यपूर्णदृष्ट्या च मां पुनः ।
विलोकयसि रमणाद् रंजयसि च मां मुहुः ॥४१॥
ततोऽपत्यं द्वितीयं ते चंचलं संभविष्यति ।
सापि कन्या त्वया तुल्या चंचला वै भविष्यति ॥४२॥
इत्येवं यमकं गर्भे दधार रविकाम्यया ।
अथ प्राप्ते तु समये सुषुवे यमकं तु सा ॥४३॥
पतिप्रदत्तवच्चनात्तस्या जज्ञे यमो यमी ।
जातमातं तु षोडशहायनं समभूद् द्वयम् ॥४४॥
सूर्यगृहे तु रमते यमकं तद् यमो यमी ।
पुत्रो द्वितीयः संज्ञायाः श्राद्धदेवोऽभवन्मनुः ॥४५॥
यमस्तु यमराजोऽभूत् संयमिन्यां फलप्रदः ।
यमी तु यमुना भक्ता नदी कृष्णेच्छयाऽभवत् ॥४६॥
गोलोकात्कृष्णचन्द्रेण प्रेरिताऽत्र समागता ।
सूर्यपुत्री स्वयं भूत्वा वृन्दावने गमिष्यति ॥४७॥
कलिन्दस्य सुता पश्चात् कालिन्दी सा भविष्यति ।
यमुना सा महादेवी दिव्या मोक्षप्रदायिनी ॥४८॥
आकल्पान्तं जलरूपा वृन्दावनविहारिणी ।
कृष्णकेलिहृदरम्या गोपगोपीकृताऽऽप्लवा ॥४९॥
देवदेवीमहापूज्या गोकुलाग्रे गमिष्यति ।
एवं पुत्रद्वयं पुत्रे संज्ञा संसुषुवे रवेः । ॥५०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने
सूर्योत्पादितस्वपत्नीसंज्ञागर्भोत्पन्नश्राद्धदेवयमयमी-
प्राविर्भावकथननामैकषष्टितमोऽध्यायः ॥ ६१ ॥

**श्रीनारायण उवाच—**

श्रृणु लक्ष्मि ! ततः पश्चात् संज्ञाया या कथा ह्यभूत् ।
नित्यं सूर्यप्रसंगेऽस्या ज्वलनं दुःसहं ह्यभूत् ॥ १ ॥
एवं संज्ञा रवेस्तेजोमहद्दुःखेन भामिनी ।
असहन्तीव सा चित्ते चिन्तयामास वै सदा ॥ २ ॥
किं करोमि क्व गच्छामि क्व यामि सुखदं स्थलम् ।
यदि यामि विना ह्याज्ञां सूर्यो मे कोपवान्भवेत् ॥ ३ ॥
तस्मादाज्ञां गृहीत्वैव स्वपितुर्गृहमेम्यहम् ।
इति सञ्चिन्त्य बहुधा सूर्यं प्राह मुहुस्तदा ॥ ४ ॥
देव मे जायते नित्यं विचारस्तु पितुर्गृहम् ।
गन्तुं मीलयितुं सर्वान् स्वसृभ्रातॄन्सखीजनान् ॥ ५ ॥
आज्ञापयतु मां नाथ यामि देवाय रोचते ।
सूर्यः प्राह न वै देवि कालोऽयं गमनाय न ॥ ६ ॥
पुत्रपालनकालोऽयं गृहसंभालनाय च ।
पत्युः सेवातिलाभाय समयोऽयं तव प्रिये ॥ ७ ॥
तत्र गत्वा नु ते लाभः को वा भावी मम प्रिये ।
मां विहाय वियोगस्थं कथं स्थास्यसि तत्र वै ॥ ८ ॥

अनाहूता पितुर्गेहे पुत्री गच्छति वेगतः ।
सती शंकरपत्नीव दुर्दशामाप्नुयाद्धि सा ॥ ९ ॥
तस्मान्मा गच्छ रम्भोरु गन्तव्यं त्वन्यदा पुनः ।
कन्या विवाहपूर्वं वै शोभन्ते तु पितुर्गृहे ॥१०॥
कृतोद्वाहास्तु ताः पश्चाच्छोभन्ते स्वपतिगृहे ।
स्नानपानविलेपाऽभ्यंजनप्राभूषणादिभिः ॥११॥
वस्त्रवाहनयानोद्यानोपवनविहारकैः ।
विविधैःस्मरणोत्तेजिसाधनैस्तु नवैर्नवैः ॥१२॥
रमयन्ति पतिं प्रेम्णा तृप्यन्ति पतिसौख्यतः ।
निर्धनो वा पिता यासां व्ययाऽशक्तश्च सर्वथा ॥१३॥
पुत्र्यस्तद्गृहमागत्य दुःखे तं योजयन्ति हि ।
वस्त्रैर्धनैराभरणैश्चान्यैर्भोग्यैस्तु वस्तुभिः ॥१४॥
अशक्तो रंजने पुत्र्या मा दुःखे पातयन्तु तम् ।
दिने देहप्रयासेन श्रम्यं कार्यं विधाय च ॥१५॥
धनं स्वोदरपूर्त्यात्म नीत्वा सायं गृहं गतः ।
एवं तु प्रतिदिवसं स्वोद्योगाऽर्ज्याऽल्पनाणकम् ॥१६॥
नीत्वा क्रीणात्यन्नवस्त्रं मा तं दुःखे निपातय ।
इत्येवं बहु सन्दिष्टा ह्यनुनीता मुहुर्मुहुः ॥१७॥
संज्ञा तेजोऽसहं दुःखं भर्त्रे नैव वदत्यपि ।
पश्चात्तु मोहमापन्ना विचार्य च मुहुः स्वयम् ॥१८॥
पतिर्यथा न ज्ञायेत द्वितीयं रूपमादधे ।
सेयं तनुर्द्वितीया सा छाया स्वस्यैव दैहिकी ॥१९॥
ह्यभूत्तत्र तु संकल्प्य चेतनं समनोदयत् ।
तेजस्विनी वह्निसमा सूर्यतेजःसहा तथा ॥२०॥
पार्थिवांशसमक्रान्ता छायाऽभूत् स्त्रीस्वरूपिणी ।
तथा सा चेतनवती नारीरूपा तु सुन्दरी ॥२१॥
संज्ञासदृशरूपा च सर्वं संज्ञामयं ह्यभूत् ।
पितुर्गृहं ततो गन्तुं कृतबुद्धिर्यशस्विनी ॥२२॥
छायामाहूय सत्कृत्य दत्वा गृहधनादिकम् ।
तां प्रोवाच त्वया स्थेयमत्र भानोर्यथा मया ॥२३॥
तथा सम्यगपत्येषु वर्तितव्यं यथा रवौ ।
न दुष्टमपि वाच्यं ते यथा बहुमतं मम ॥२४॥
संज्ञाऽहमस्मि सैवेति वाच्यमेवं त्वयाऽनघे ।
यदि पृच्छेत्पतिः क्रोधात्प्रेमतो वान्यकारणात् ॥२५॥
त्वं तु सूर्यस्य तापं वै सहिष्यसे यथा तथा ।
शीतलं ते शरीरं वै भविष्यति तथा तथा ॥२६॥
तापसहनयोग्ये वै शान्तिदे ज्वरनाशके ।
सुखदे ते शरीरे वै तापः शमिष्यति द्रुतम् ॥२७॥
उष्णस्य लयकरणात् सूर्योऽपि शान्तिमेष्यति ।
तस्मात्त्वया सदा सेव्यः सूर्यो मयेव भावतः ॥२८॥
भर्त्सने ताडने वाथ गालीदाने सुमर्दने ।
त्वया नोदासितव्यं न प्रकाश्यं मम गोपनम् ॥२९॥
छाया प्रोवाच संज्ञां तु सहिष्ये सर्वमादरात् ।
आकेशग्रहणाचाहमाशापाच्च वचस्तथा ॥३०॥
करिष्ये पालयिष्यामि यावत्केशापकर्षणात् ।
यदा वा मरणं यावद् दुःखं पश्यामि तावता ॥३१॥
न तथापि कथयिष्ये तव वा मम वर्तनम् ।
गच्छ देवि ! भगिनि ! त्वं पितुर्गृहं सुखा भव ॥३२॥
कदाचिच्चित्तवैक्लव्येस्मर्तव्याऽहं त्वया स्वसः ।
इत्येवं समयं कृत्वा संज्ञा ययौ पितृर्गृहम् ॥३३॥
ददर्श तत्र त्वष्टारं तपसैधितविग्रहम् ।
नमस्कृत्य च पितरौ निषसाद तदन्तिके ॥३४॥
बहुमानाच्च तेनाऽपि पूजिता विश्वकर्मणा ।
पितुर्गृहे सुखं तस्थै बहुकालमनिन्दिता ॥३५॥
पत्युर्गृहं प्रति गन्तुं यदा नेच्छति पुत्रिका ।
ततः प्राह स धर्मज्ञः पिता पुत्रीं चिरोषिताम् ॥३६॥
त्वां तु मे पश्यतो वत्से दिनानि सु बहून्यपि ।
मुहूर्तेन समानि स्युर्बालं कस्य न रोचते ॥३७॥
पुत्रो वा यदि वा पुत्र्यः सगुणा निर्गुणाश्च वा ।
सुचित्ता वा विचित्ता वा यथा तथा च वा पुनः ॥३८॥
तथापि पित्रोः स्निग्धाः स्युराह्लादकारकाः सदा ।
त्वं पुत्रि यौवनवती रविणा च विवाहिता ॥३९॥
चिरं त्वत्र निवासेन तव धर्मो विलुप्यति ।
बान्धवेषु चिरं वासो नारीणां न यशस्करः ॥४०॥
इच्छन्ति बान्धवा धर्मं पत्न्याः पतिगृहे स्थितिम् ।
सा त्वं त्रैलोक्यनाथेन भर्त्रा सूर्येण संगता ॥४१॥
पितुर्गेहे चिरं कालं वस्तुं नार्हसि पुत्रिके ।
पत्युर्गृहे निवासं वै कर्तुमर्हसि पुत्रिके ॥४२॥
अतो भर्तृगृहं गच्छ दृष्टोऽहं पूजिता च मे ।
पुनरागमनं कार्यं दर्शनाय शुभे क्षणे ॥४३॥
यदि ते मनसि किञ्चिद् दुःखं जामातृतः कृतम् ।
भवेज्ज्ञापयितव्यं मे सत्वरं पुत्रिकेऽत्र वै ॥४४॥
नो चेद् दुःखं सुखं गच्छ सेवयांऽशुकरं प्रभुम् ।
तेन त्वमत्र चामुत्र धर्म्यां सिद्धिं गमिष्यसि ॥४५॥
इत्युक्तापि स्वकं दुःखं लज्जमाना सती तदा ।
नोवाच पितरं किंचिद् विचार्यापि मुहुर्मुहुः ॥४६॥

तथेत्युक्त्वा च नत्वा च पूजयित्वा गुरूँस्तथा ।
भ्रातॄन्स्वसॄश्च संश्लिष्य सा जगामोत्तरान् कुरून् ॥४७॥
सूर्यतापकृतोद्वेगा तेजसस्तस्य बिभ्यती ।
न गता सा सूर्यगेहं गतारण्यं तपःप्रिया ॥४८॥
तत्राऽन्येषामविदिता वडवारूपधारिणी ।
तपश्चचार परमं घासग्रासादिजीवना ॥४९॥
संज्ञामित्येव मन्वानो छायायां तु दिवाकरः ।
जनयामास तनयौ कन्यां चैकां मनोरमाम् ॥५०॥
नाम्ना तु सावर्णिमनुं तापीं शनैश्चरं तथा ।
सावर्णिस्तु मनुर्भावी शनैश्चरो ग्रहो भवेत् ॥५१॥
तपती तु नदी तापी गौर्जरे भाविनी प्रिये ।
संज्ञामित्येव निश्चित्य छायायां च दिवाकरः ॥५२॥
रत्या संयुज्यमानो वै रेमे सुबहुवत्सरान् ।
नाऽविदत्सेयमन्येति तदा दैववशात्तु सा ॥५३॥
छाया दिवानिशं सम्यक् स्वस्याऽपत्यस्य वै मुहुः ।
चकाराऽभ्यधिकं स्नेहं भोजनाच्छादनादिषु ॥५४॥
संज्ञाया न तथा पुत्रीपुत्रयोश्चाऽप्यवर्तत ।
मनुस्तत्क्षान्तवानस्या यमस्तस्या न चाऽक्षमत् ॥५५॥
प्रागभूद्बहुमानः स सपत्न्या दुःखितोऽत्र च ।
सपत्न्याश्चावमानाय क्रोधं स तु चकार वै ॥५६॥
ततो रोषाच्च बाल्याच्च भाविनोऽर्थस्य वै बलात् ।
ताडनाय तु तां छायां पादस्तेन समुद्यतः ॥५७॥
तस्याः पुनः क्षान्तमना न तु देहे न्यपातयत् ।
ततः शशाप तं क्रोधात् सपत्नी जननी यमम् ॥५८॥
किञ्चित्प्रस्फुरमाणौष्ठी विचलत्पाणिपल्लवा ।
पत्न्यां पितुर्यदि मयि पादमुद्यच्छसे बलात् ॥५९॥
भुवि तस्मादयं पादस्तवाद्यैव पतत्विति ।
इत्याकर्ण्य यमः शापं मातर्यतिविशंकितः ॥६०॥
अभ्येत्य पितरं प्राह प्रणिपातपुरःसरम् ।
तातैतन्महदाश्चर्यमदृष्टमिति च क्वचित् ॥६१॥
क्रोधं करोति नित्यं मे सुबहु भर्त्सयत्यपि ।
माता वात्सल्यमुत्सृज्य शापं पुत्रे प्रयच्छति ॥६२॥
निर्गुणेष्वपि पुत्रेषु न माता निर्दया भवेत् ।
यथा माता तु मां चख्यौ नेयं माता तथा मम ॥६३॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुग
सन्ताने संज्ञायाः स्वच्छायारूपनारीं सूर्याय
समर्प्य स्वपितृगृहगमनं छायाया यमं
प्रति स्नेहशून्यवर्तनं चेतिवर्णन-
नामा द्विषष्टितमोऽध्यायः ॥६२॥

श्रीनारायण उवाच—

यमस्यैतद्वचः श्रुत्वा भगवान् लोकभास्करः ।
हार्दं गम्भीरमेवैतज्ज्ञात्वा प्रोवाच वै यमम् ॥ १ ॥
असंशयं महत्पुत्र भविष्यत्यत्र कारणम् ।
येन त्वामाविशत्क्रोधो मातरं प्रति तत्तथा ॥ २ ॥
पुत्रं प्रत्यपि मातुश्च क्रोधः समाविशन्ननु ।
पुत्र त्वमसि धर्मज्ञः सत्यवादी च मानदः ॥ ३ ॥
न शक्यमेतन्मिथ्या तु कर्तुं मातुर्वचस्तव ।
कृमयो मांसमादाय यास्यन्ति तु महीं तव ॥ ४ ॥
ततः पादं महाप्राज्ञ पुनः संप्राप्स्यसे सुखम् ।
कृतमेवं वचः सत्यं मातुस्तव भविष्यति ॥ ५ ॥
शापस्य परिहारेण त्वं च त्रातो भविष्यसि ।
आदित्यस्त्वब्रवीच्छायां किमर्थं तनयेषु वै ॥ ६ ॥
न्यूनाधिको नु तुल्येषु स्नेहो वै क्रियते त्वया ।
कथमेवं द्वितीयां तु विना स्यात्पक्षपातिता ॥ ७ ॥
का त्वं सैव द्वितीया वा वद याथार्थ्यमेव मे ।
सा चाह तनया त्वष्टुरहं संज्ञा विभावसो ॥ ८ ॥
पत्नी तव त्वयाऽपत्यान्येतानि जनितानि मे ।
इत्थं विवस्वतस्तां तु बहुशः पृच्छतो यदा ॥ ९ ॥
नाऽऽचक्षे तु तदा क्रुद्धो रविस्तां शप्तुमुद्यतः !
ततः सा कथयामास यथावृत्तं विवस्वते ॥१०॥
विदितार्थश्च भगवान् सूर्यः शशाप तां तदा ।
सर्वदा त्वं कृष्णवर्णा छाया वृक्षादिजा भव ॥११॥
अन्धकारस्वरूपा त्वं मद्वियोगवती सदा ।
रोधकवस्त्वावरणा जडरूपा सदा भव ॥१२॥
गच्छ गेहात्सदा दूरं मा मां दर्शय ते मुखम् ।
मद्रश्मिरोधकवस्त्वधस्तात्त्वं तु सदा वस ॥१३॥
निर्विवास्येति वै छायां जगाम त्वष्टुरालयम् ।
तत्र संपूजयामास त्वष्टा सूर्यमुपागतम् ॥१४॥
भास्वन्! किं रहितः शक्त्या मम गेहमुपागतः ।
पप्रच्छाऽथ च तस्मै स कथयामास तत्त्वतः ॥१५॥
प्राह त्वष्टाऽऽगता साऽत्र भवतः प्रेषिता रवे! ।
मम गृहात्पुनर्याता तव गेहं दिवाकर ॥१६॥
दिवाकरः समाधौ ताम् वडवारूपधारिणीम् ।
तपश्चरन्तीमाचष्टे चोत्तरेषु कुरुष्वथ ॥१७॥
तां शप्तुकामो भगवान्नाशाय कुपितो रविः ।
त्वष्टा तु तं यथान्यायं सान्त्वयामास वै शनैः ॥१८॥

देव ते साऽसहमाना तेजसा ह्यतिपीडिता ।
वडवाभनिजरूपस्य छायारूपं विमुच्य च ॥१९॥
घोरारण्ये तु सा गत्वा तपश्चरति दुश्चरम् ।
घृण्यौष्ण्याद् दग्धदेहा सा तपश्चरति दुःसहम् ॥२०॥
येन त्वां तेजसाऽसह्यं शरीरेणाऽप्यसंस्कृतम् ।
बहुशृंगोच्चधारं च खररूक्षोच्चनीचिनम् ॥२१॥
वज्रादपि सुकठिनं द्रष्टुं सोढुं शशाक न ।
तवेदमतिवैरूप्यं नैव भाति न शोभते ॥२२॥
असह्य तस्य सा संज्ञा वने चरति शाद्वले ।
तस्माद्रूपं व्रज मन्दं तादृङ्निर्वर्तये त्वहम् ॥२३॥
रूपं विवस्वतस्त्वासीदव्यवस्थं खराऽघटम् ।
एकतः प्रज्वालयति चाऽन्यतोऽनुष्णशीतलम् ॥२४॥
विवस्वानथ तच्छ्रुत्वा व्रीडितोऽभून्मुहुस्तदा ।
अनुज्ञातस्ततस्त्वष्टा रूपसमीकराय वै ॥२५॥
भ्रमिमारोप्य सूर्यं तु शातयामास शाणतः ।
शृंगदेशास्तदा तस्य द्वादश शातिताः पृथक् ॥२६॥
समीकृतस्तदा सौम्यः सुरूपोभूच्च भास्करः ।
सह्यतेजाः स्पर्शयोग्यः सहवास्योऽभवद्रविः ॥२७॥
द्वादशेभ्यस्तु खण्डेभ्यस्त्वष्टाऽऽयुधानि निर्ममे ।
चक्रं सुदर्शनं कृत्वा विष्णवे तत्समार्पयत् ॥२८॥
त्रिशूलं सुमहत् कृत्वा शंभवे तत्समार्पयत् ।
शक्तिं कृत्वा महालम्बां कार्तिकाय समार्पयत् ॥२९॥
वज्रं कृत्वाऽष्टधारं तत्सुरेन्द्राय समार्पयत् ।
दण्डं कृत्वा महाघोरं यमाय स समार्पयत् ॥३०॥
मणिं कृत्वा महामूल्यं कुबेराय समार्पयत् ।
पाशं कृत्वा तु वैद्युतं वरुणाय समार्पयत् ॥३१॥
खड्गं कृत्वा महद्घोरं देव्यै काल्यै समार्पयत् ।
कृपाणं तु महाघोरं कृत्वाऽग्नये समार्पयत् ॥३२॥
फलं कृत्वा महाबाणे नराय तत्समार्पयत् ।
उल्कां कृत्वा महादिव्यां वायवे तां समार्पयत् ॥३३॥
कृकशां दन्त्रिकां कृत्वा निर्ऋताय समार्पयत् ।
तदन्ये स्वल्पखण्डास्तु हीरका मणयोऽभवन् ॥३४॥
अथ सुसंस्कृतः सूर्यो देवरूपं दधार च ।
ददर्श योगमास्थाय स्वां भार्यां वडवां रविः ॥३५॥
गतस्तत्र स्थले रूपं प्रच्छाद्य चाऽस्पृशत्ततः ।
अश्वरूपेण मार्तण्डः तां चुचुम्ब मुहुर्मुहुः ॥३६॥
पृष्ठे गच्छन्नथोर्ध्वं तां समारोहति कामतः ।
मैथुनाय विचेष्टन्तं परपुंसं विशंक्य सा ॥३७॥

विवृत्य तत्समीपे तु मुखं कृत्वा स्थिताऽभवत् ।
अश्वरूपोऽपि सूर्यस्तु कामवेगेन चाकुलः ॥३८॥
कंधरायां समुत्प्लुत्य घ्राणे लिंगं निवेश्य च ।
वीर्यं सर्वमसिञ्चद्वै नासिकायां द्विधा तदा ॥३९॥
सा तं निरधमच्छुक्रं नासिकाश्वासवायुना ।
देवौ तस्मात्समुत्पन्नावश्विनौ भिषजांवरौ ॥४०॥
नासत्यश्चैव दस्रश्च स्मृतौ द्वावश्विनाविति ।
अत्यद्भुतशरीरौ तौ देववैद्यौ बभूवतुः ॥४१॥
अवशेषेण वीर्येण नासिकातस्तदैव हि ।
तृतीयोऽभूद् रेवताख्यः पुत्रो नीलसुरूपकः ॥४२॥
स वै तस्मात् तपः कर्तुं पश्चिमायां गतो दिशि ।
रैवताचलमासाद्य तत्र वासं चकार ह ॥४३॥
रैवतस्य गिरेः सोऽयमातिवाहिकदैवतः ।
भूत्वा वसति तत्रैव कल्पान्तं तप आदधन् ॥४४॥
अथ सूर्यः स्वकं रूपं भास्करं समदर्शयत् ।
तदा संज्ञापि विश्वस्ता पतिपादौ प्रपूज्य च ॥४५॥
क्षमाप्य स्वापराधं वै जगाम रविमण्डले ।
सर्वदा सा महादिव्या देवी सूर्यसरूपिणी ॥४६॥
समास्ते रमते सार्धं सूर्येण दिवि मोदते ।
इत्येवं सूर्यबालानां नवानां दिव्यजन्मता ॥४७॥
श्राद्धदेवो यमो यमी सावर्णिश्च शनैश्चरः ।
तपती चाश्विनीबालौ रेवतश्च नव स्मृताः ॥४८॥
तत्र यमाय सूर्येण ब्रह्मणा च समर्पितम् ।
लोकपालत्वमेवैत्य दक्षिणां दिशमास्थितः ॥४९॥
यमपूरीति सा प्रोक्ता कृतानां तु विकर्मणाम् ।
फलभोगाय दुःखात्मनिष्कृतिस्तत्र कार्यते ॥५०॥
प्रायश्चित्तेनाऽत्र लोके पांक्तो भवति मात्रतः ।
यमपूर्यां फलभोगाच्छुद्धो भवति चाऽऽत्मतः ॥५१॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने
संज्ञाया वडवारूपेण तपश्चर्या, सूर्योऽश्वो भूत्वा तया
संश्लिष्टोऽश्विनीकुमारौ रेवतं चोत्पादयामास
विश्वकर्मणा शाणोल्लीढसूर्यस्य खण्डै-
र्दिव्यचक्रशूलादिशस्त्रोत्पादन-
मित्यादिवर्णननामा
त्रिषष्टितमोऽध्यायः ॥६३॥

श्रीनारायण उवाच—

याम्यनैर्ऋतयोर्मध्ये पुरं वैवस्वतस्य तु ।
सर्वं वज्रमयं दिव्यमभेद्यं यत् सुराऽसुरैः ॥ १ ॥
चतुरस्रं चतुर्द्वारं सप्तप्राकारतोरणम् ।
स्वयं तिष्ठति तस्याऽन्तर्यमो दूतैः समन्वितः ॥ २ ॥
योजनानां सहस्रं हि प्रमाणेन तु दृश्यते ।
सर्वं रत्नमयं दिव्यं विद्युन्मालार्कवर्त्तुलम् ॥ ३ ॥
पञ्चविंशप्रमाणेन योजनानि समुच्छ्रितम् ।
वृतं स्तम्भसहस्रैस्तु वैदूर्यमणिमण्डितम् ॥ ४ ॥
मुक्ताजालं गवाक्षन्तु पताकाशतभूषितम् ।
घण्टाशतनिनादाढ्यं तोरणानां शतैर्वृतम् ॥ ५ ॥
तत्रस्थो भगवान् धर्म आसने नियते शुभे ।
दशयोजनविस्तीर्णे नीलजीमूतसन्निभे ॥ ६ ॥
धर्मज्ञो धर्मशीलश्च धर्मन्यायहितो यमः ।
भयदः पापयुक्तानां धर्मिणां तु सुखप्रदः ॥ ७ ॥
पुरमध्ये प्रवेशे तु चित्रगुप्तस्य वै गृहम् ।
पञ्चविंशतिसंख्यानां योजनानां प्रमाणतः ॥ ८ ॥
दशोच्छ्रितं महादिव्यं लोहप्राकारवेष्टितम् ।
प्रतोलीशतसञ्चारं पताकाशतशोभितम् ॥ ९ ॥
दीपिकाशतसंकीर्णं गीतध्वनिसमाकुलम् ।
चित्रितं चित्रकुशलैश्चित्रगुप्तस्य वै गृहम् ॥१०॥
मणिमुक्तामये दिव्ये आसने परमाद्भुते ।
सुस्थितो गणपत्यायुर्मानुषेष्वितरेषु च ॥११॥
न मुह्यति कथंचित्सः सुकृते दुष्कृतेऽपि च ।
जन्मनोपार्जितं यावत् सदसद्वेति तस्य तत् ॥१२॥
देहेन्द्रियमनोभिश्च कृतं कर्म लिखत्यसौ ।
चित्रगुप्तगृहात्प्राच्यां ज्वरस्याऽस्ति महागृहम् ॥१३॥
दक्षिणे चापि शूलस्य लूताविस्फोटकस्य च ।
पश्चिमे कालपाशस्य अजीर्णस्याऽरुचेस्तथा ॥१४॥
मध्यपीठोत्तरे ज्ञेया नानाविधा विसूचिका ।
ऐशान्यां तु शिरोरोगो वह्निदिशि तु मूर्च्छना ॥१५॥
नैर्ऋत्यामतिसारश्च वायव्यां दाहपीडनम् ।
एभिः परिवृतो नित्यं चित्रगुप्तः स वर्तते ॥१६॥
यत्कर्म क्रियते यैश्च तत्सर्वं तु लिखत्यसौ ।
धर्मराजगृहद्वारि दूतास्तिष्ठन्ति कोटिशः ॥१७॥
यमलोकस्य चाऽध्वा वै अन्तरो मानुषस्य च ।
दुःखेन पापिनो यान्ति यममार्गं सुदुर्गमम् ॥१८॥
यमश्चतुर्भुजो भूत्वा शंखचक्रगदाब्जभृत् ।
आहूयपापिनः सर्वान् दूतैर्दण्डं ददाति वै ॥१९॥
प्रलयाम्बुदनिर्घोषो ह्यंजनाद्रिसमप्रभः ।
महिषस्थो दुराराध्यः सूर्यतेजःसमद्युतिः ॥२०॥
योजनत्रयविस्तृतदेहो क्रूरोऽतिभीतिदः ।
दोर्ष्णा दण्डधरो भीमः पाशपाणिर्दुराकृतिः ॥२१॥
रक्तनेत्रोऽतिभयदो दर्शनं याति पापिनाम् ।
अंगुष्ठमात्रःपुरुषो हाहाकुर्वन् कलेवरात् ॥२२॥
यदेव नीयते दूतैर्याम्यैर्यमपुरीं तदा ।
दर्शयन्ति भयं तीव्रं दूताः संतर्जयन्ति हि ॥२३॥
शीघ्रं प्रचल दुष्टात्मन् यास्यसि त्वं यमालयम् ।
कुम्भीपाकादिनरकान् त्वां नेष्यामो द्रुतं कुरु ॥२४॥
मार्गे प्रयाति वै प्रेतो ह्यसिपत्रवनान्विते ।
कण्टकशर्करातप्तवालुकाविषकर्दमे ॥२५॥
अहन्यहनि स प्रेतो योजनानां शतद्वयम् ।
चत्वारिंशत्तथा सप्त अहोरात्रेण गच्छति ॥२६॥
त्रयोदशेऽह्नि स प्रेतो नीयते यमकिंकरैः ।
तस्मिन्मार्गे व्रजत्येको गृहीत इव मर्कटः ॥२७॥
सप्तदशदिनान्येको वायुमार्गेण गच्छति ।
अष्टादशेत्वहोरात्रे पूर्वं याम्यपुरं व्रजेत् ॥२८॥
याम्यं तु प्रथमं प्रोक्तं सौरिपुरं द्वितीयकम् ।
सुरेन्द्रपुरं तृतीयं गन्धर्वनगरं ततः ॥२९॥
शैलपुरं पञ्चमं च षष्ठं क्रूरपुरं तथा ।
सप्तमं क्रौंचनगरं चित्रपुरं तथाऽष्टमम् ॥३०॥
बह्वापन्नगरं पश्चाद् दशमं दुःखदं पुरम् ।
दशैकमाक्रन्दपुरं सुतप्तनगरं ततः ॥३१॥
त्रयोदशं रौद्रपुरं पयोवृष्टं चतुर्दशम् ।
पञ्चदशं शीतपुरं बहुभयं तु षोडशम् ॥३२॥
सप्तदशं धर्मपुरं याम्यं चाष्टादशं पुरम् ।
पुराण्येतानि सन्त्येव मार्गे विश्रान्तिलब्धये ॥३३॥
पापी मृतो भवेत्प्रेतः प्रेतदेहं तु विन्दति ।
प्रेतदेहस्तु नवभिरहोरात्रैः सुबद्ध्यते ॥३४॥
देहनिष्पत्तिलाभाय पिण्डा देयाः पृथक् पृथक् ।
प्रथमेऽहनि यः पिण्डस्तेन मूर्द्धा प्रजायते ॥३५॥
ग्रीवास्कन्धौ द्वितीये तु तृतीये हृदयं भवेत् ।
चतुर्थेऽह्नि भवेत् पार्ष्णिर्नाभिर्वै पंचमे तथा ॥३६॥
षष्ठे कटिः सप्तमे तु गुह्यं पूर्णं प्रजायते ।
दिनेऽष्टमे सक्थिनी च जान्वंघ्री नवमे तथा ॥३७॥

नवभिर्देहमासाद्य दशमेऽह्नि भवेत् क्षुधा ।
देहरूपः क्षुधितश्च गृहाग्रोपरि तिष्ठति ॥३८॥
दशमेऽहनि तं पिण्डं दद्यात्क्षुधानिवर्तकः ।
एकादशद्वादशाहे प्रेतो भुंक्ते दिनद्वयम् ॥३९॥
त्रयोदशेऽह्नि वै प्रेतो नीयते तु महापथे ।
सप्तदशदिनं यावत् वायुमार्गेण गच्छति ॥४०॥
अष्टादशे त्वहोरात्रे पूर्वं याम्यपुरं व्रजेत् ।
तत्र महान्प्रेतगणः पुष्पभद्रानदीतटे ॥४१॥
महान्यग्रोधछायायां प्रेतो विश्राममृच्छति ।
क्रन्दति करुणैर्वाक्यैस्तृषार्तः श्रमपीडितः ॥४२॥
शम्बलस्तत्पुराध्यक्षः प्रेताय संप्रयच्छति ।
यदि दत्तं सुतैः पुत्रैः स्नेहाद्वा कृपयाऽथवा ॥४३॥
मासिकं पिण्डमत्त्वा च याति सौरिपुरं ततः ।
तत्र नाम्ना तु राजा वै जंगमः कालरूपधृक् ॥४४॥
त्रिपाक्षिकं तु पिण्डं वै ददात्यस्मै सुभुक्तये ।
जलं चान्नं तत्र भुक्त्वा तत्पुरं सोऽतिगच्छति ॥४५॥
मासद्वयाऽऽभ्यन्तरे वै सुरेन्द्रपुरमृच्छति ।
सुरेन्द्रो भीषणस्तन्ताऽधिष्ठाताऽस्मै ददाति हि ॥४६॥
मासद्वयान्तरे दत्तं पिण्डं वा यदि भोजनम् ।
व्यतिक्रम्य पुरं तच्च तृतीये मासि चापरम् ॥४७॥
गन्धर्वपुरमासाद्याऽश्नाति पिण्डं त्रिमासगम् ।
ततः शैलपुरं मासि चतुर्थे प्रेत एति च ॥४८॥
पतन्ति तत्र पाषाणाः प्रेतस्योपरि पृष्ठतः ।
चतुर्थमासिकं श्राद्धं भुक्त्वा क्रूरपुरं गतः ॥४९॥
पञ्चमे मासि तत्रस्थः पिण्डं पञ्चममासिकम् ।
भुक्त्वा याति क्रौंचपुरं षष्ठं क्रौंचाऽधिवासितम् ॥५०॥
सार्धपंचममासार्ज्यमूनषाण्मासिकं तथा ।
श्राद्धे दत्तं तु पिण्डादि भुक्त्वा विश्रम्य याति च ॥५१॥
चित्रपुरं सप्तमं तत्पुरराजस्तु चित्रकः ।
यमाऽनुजो ह्यधिष्ठाता पिण्डं षाण्मासिकं जलम् ॥५२॥
भोजयत्यथ भुक्त्वा स मार्गे गच्छति चाग्रतः ।
आयान्ति सम्मुखास्तत्र कैवर्तास्तु सहस्रशः ॥५३॥
वयं त्वां तारयिष्यामो महावैतरणीं नदीम् ।
शतयोजनविस्तीर्णां पूयशोणितपूरिताम् ॥५४॥
आमिषादपतत्र्यहिझषक्रकचसंवृताम् ।
येन तत्र प्रदत्ता गौः प्रेतं तारयति द्रुतम् ॥५५॥
न प्रदत्ता यदि धेनुर्वैतरण्यां स मज्जति ।
स्वस्थाऽवस्थे शरीरे तु वैतरिण्या व्रतं चरेत् ॥५६॥
देया च विदुषे धेनुस्तां नदीं तर्तुमिच्छता ।
षाण्मासिकं कृतं श्राद्धं तत्र भुक्त्वा प्रसर्पति ॥५७॥
सप्तमे मासि संप्राप्ते याति बह्वापदं पुरम् ।
तत्र भुक्त्वा प्रदत्तं यत् साप्तमासिकसंभवम् ॥५८॥
तत्पुरं स व्यतिक्रम्य पुरं दुःखदमृच्छति ।
महद्दुःखमनुभूय क्रोशत्यत्र प्रतापितः ॥५९॥
मास्यष्टमे प्रदत्तं यत् तत्र. भुक्त्वा स गच्छति ।
नवमं मासिकं भुंक्ते नानाक्रन्दपुरे स्थितः ॥६०॥
तत्राऽयं शून्यहृदयः समाक्रन्दति दुःखितः ।
विहाय तत्पुरं प्रेतो याति तप्तपुरं प्रति ॥६१॥
सुतप्तनगरं प्राप्य दशमे मासि सोऽश्नुते ।
भोजनैः पिण्डदानैस्तु दत्तैस्तत्र फलं भवेत् ॥६२॥
मासि चैकादशे पूर्णे रौद्रं पुरं स गच्छति ।
दशैकमासिकं भुक्त्वा पयोवृष्टं प्रगच्छति ॥६३॥
मेघास्तत्र प्रवर्षन्ति प्रेतानां दुःखकारकाः ।
न्यूनाऽऽब्दिकं च यच्छ्राद्धं तत्र भुंक्ते परेतकः ॥६४॥
सम्पूर्णे च ततो वर्षे याति शीतपुरं ततः ।
महाशीतार्दितः प्रेत आक्रन्दति मुहुर्जडः ॥६५॥
शीतपुरं चातिक्रम्य बहुभीतिपुरं व्रजेत् ।
तत्र क्षुत्तृट्भयाद् दग्धो याति धर्मपुरं ततः ॥६६॥
यत्रोष्मणा प्रबाष्पेण भर्जितो भवते मृतः ।
खादन्ति यमदूतास्तं मार्गश्रमापनुत्तये ॥६७॥
बहुभीतिपुरं धर्मपुरं च धर्मखेटकौ ।
धर्मराजपुरस्यैतौ शाखाग्रामौ समीपगौ ॥६८॥
अथ प्रेतं नयन्तीमे याम्यं धर्मपुरं परम् ।
चतुरशीतिलक्षैश्च मूर्ताऽमूर्तैरधिष्ठितम् ॥६९॥
यमदूतैर्महाक्रूरैरागतानां प्रपीडकैः ।
प्रेतमत्र न्यायसौधे दूताः कुर्वन्त्युपस्थितम् ॥७०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने यमपुरपरिणाहचित्रगुप्तसौध-मार्गीयाऽष्टादशपुरगमनवत्प्रेतदशाप्रदर्शननामा चतुःषष्टितमोऽध्यायः ॥६४॥

**श्रीनारायण उवाच—**

श्रृणु लक्ष्मि ! याम्यपुरे श्रावणा द्वादशोऽनुगाः ।
ब्रह्मपुत्राः प्रतीहाराः मनुष्याणां तु चेष्टितम् ॥ १ ॥
शुभाऽशुभं तु यत्कर्म विचार्य्यैव पुनः पुनः ।
श्रावयन्ति तदानीं वै चित्रगुप्ते यमे तथा ॥ २ ॥

नरैस्तुष्टैश्च रुष्टैश्च यद्यत्कर्म कृतं भवेत् ।
सर्वमावेदयन्ति स्म यथार्थं यादृशं च यत् ॥ ३ ॥
दूराछ्रवणविज्ञानं दूराद् दर्शनगोचरम् ।
स्वर्भूःपातालवासानां चेष्टाज्ञानं च दूरतः ॥ ४ ॥
एवं तेषां शक्तिरस्ति मर्त्यादौ गुप्तबोधिनी ।
ते वै प्रेतस्य यावद्धि कर्म गायन्ति तत्र च ॥ ५ ॥

श्रीलक्ष्मीरुवाच—

श्रावणाः कस्य पुत्रास्ते कथं यमपुरे स्थिताः ।
त्रिलोकस्थैः कृतं कर्म कथं जानन्ति ते प्रभो ! ॥ ६ ॥
कथं शृण्वन्ति ते सर्वे कस्माज्ज्ञानं समागतम् ।
कदा ते च समुत्पन्ना ब्रूहि मे कान्त सर्वथा ॥ ७ ॥

श्रीनारायण उवाच—

आदौ जगत्समुत्पन्नं ब्रह्मया निर्मितं हि तत् ।
मया तु पालितं तद्वै रुद्रः संहारकृत् ततः ॥ ८ ॥
धर्मराजो मया सृष्टश्चित्रगुप्तेन संयुतः ।
स्वस्वकार्यं निर्वहन्ति त्रयो देवाः स्वतन्त्रतः ॥ ९ ॥
सर्वेऽप्याद्ये सत्ययुगे स्वतन्त्रा ह्यभवन् जनाः ।
सर्वे त्रिदेवसदृशा न तेषु कस्य शासनम् ॥१०॥
त्रेतायामपि तद्वच्च स्वतन्त्राः कर्म चक्रिरे ।
शास्तृणां तदविदितं शास्तृत्वं कुत्र सार्थकम् ॥११॥
तदा देवास्त्रयस्तत्र मिलिताश्चिन्तनाय वै ।
प्राणिनां तु स्वतन्त्राणां कर्मज्ञानं न नो यदि ॥१२॥
न जानीमः कथं शासयितव्याः प्राणिनस्तदा ।
विचार्येत्थं विममृशुः स्रष्टव्यास्तादृशाः सुताः ॥१३॥
तदा ब्रह्मा शिवविष्ण्वोर्मतमादाय मन्त्रयुक् ।
गृहीत्वा द्वादशकुशान् जलं संप्रोक्ष्य तत्र च ॥१४॥
ददौ धर्माय सजलकुशान् द्वादश चेतनान् ।
यमो हस्ते गृहीत्वा तान् संकल्पयति पुत्रकान् ॥१५॥
तेजोराशीन् विशालाक्षान् दूरश्रवणदर्शनान् ।
आत्मद्रष्टॄनिंगितज्ञान् परसंकल्पबोधकान् ॥१६॥
अदृश्यान् दृश्यरूपाँश्च सोऽसृजद् द्वादशात्मजान् ।
यमपुत्रा इमे लोके सर्वत्र कर्णनेत्रगाः ॥१७॥
यो यं वदति लोकेऽस्मिन् यत् करोति शुभाऽशुभम् ।
प्रापयन्ति च ते शीघ्रं यमस्य कर्णगोचरे ॥१८॥
दूराच्छ्रवणविज्ञानं दूरादर्शनगोचरम् ।
सर्वं शृण्वन्ति ते सर्वे तेनैव श्रावणा मताः ॥१९॥

विचरन्ति वायुरूपाः स्थित्वा चाकाशवर्त्मनि ।
जन्तूनां चेष्टितं ज्ञात्वा यमाय प्रवदन्ति ते ॥२०॥
मृत्योरुत्तरकाले ते यथाकर्म यथाकृतम् ।
धर्मं चार्थं च कामं च यद्वा मोक्षं यथा कृतम् ॥२१॥
तथा सर्वं प्राणिनां तु चित्रगुप्ताय सत्वरम् ।
निवेदयन्ति पश्चाद्वै यमायाऽऽवेदयन्ति च ॥२२॥
श्रावणास्ते बहुरूपाण्यपि धारयितुं क्षमाः ।
चतुर्दशभुवनेषु नैकरूपैश्चरन्ति ते ॥२३॥
धर्मचरा जना ये ते यान्ति विमानसंस्थिताः ॥
अर्थदास्तेऽप्सरोभिर्यान्ति विमानसंस्थिताः ॥२४॥
कामदानप्रदातारो यान्त्यश्वयुक्तसद्रथैः ।
हंसहस्तिविमानैश्च मोक्षभाजः प्रयान्ति वै ॥२५॥
अधार्मिकास्तु पद्धत्यां वै यान्ति मार्गे सुदुःसहम् ।
पाषाणैः कण्टकैः क्लिष्टं ह्यसिपत्रवनात्मकम् ॥२६॥
तप्तवालुकया व्याप्तं पाशबद्धाः प्रयान्ति वै ।
तेषां सुखप्रवासार्थं दानं देयं यथाबलम् ॥२७॥
छत्रोपानहवस्त्राणि मुद्रिका च कमण्डलुः ।
आसनं भाजनं चैव वाहनं भूषणं जलम् ॥२८॥
अन्नमाज्यमुपवीतं गोमहिष्यादिकं धनम् ।
दातव्यं प्रेतमुद्दिश्य मार्गे सुखकरं भवेत् ॥२९॥
मृतोद्देशेन यत्किंचिद् दीयते स्वगृहे प्रिये ।
जलात्मा साक्षिकस्तद्धि वरुणो वेत्ति सर्वथा ॥३०॥
गृह्णाति वरुणो दानं मम हस्ते प्रयच्छति ।
अहं नारायणस्ततोऽर्पयामि भास्करे रवौ ॥३१॥
भास्करात् स च वै प्रेतः संगृह्याऽश्नाति चेत्यतः ।
देयं प्रेतसुखार्थं वै दानं बहुविधं प्रिये ! ॥३२॥
यस्तु धर्मः कृतो नैव दानं पश्चान्न दीयते ।
पुण्यं तु नाऽर्जितं स्वैश्च नरकान् याति दारुणान् ॥३३॥
चतुरशीतिलक्षास्ते नरकाः सन्ति दुःखदाः ।
तेषां मध्ये मुख्यतमा धौरेयास्त्वेकविंशतिः ॥३४॥
तामिस्रश्चान्धतामिस्रो महारौरवरौरवौ ।
कुंभीपाकः कालसूत्रमसिपत्रवनं तथा ॥३५॥
सूकरास्यमन्धकूपः कृमिभोजनमित्यपि ।
संदंशस्तप्तसूर्मिश्च वज्रकंटकशाल्मली ॥३६॥
पूयोदो वैतरणी च प्राणरोधो विशंसनम् ।
अयःपानमवीचिश्च श्वादनं लाळभक्षणम् ॥३७॥
इत्येते मुख्यरूपा वै यमपूर्यां मतास्तथा ।
तेभ्योऽधस्तात्परे सप्त सन्त्यन्ये नामतः शृणु ॥३८॥

क्षारकर्दम एकोऽन्यो रक्षोगणप्रभोजनः ।
शूलप्रोतो दन्दशूकोऽवटनिरोधनस्तथा ॥३९॥
पर्यावर्तनकश्चैव सूचीमुखमिति पृथक् ।
अथाऽन्ये नरकग्रामास्तत्र सन्ति निषोध तान् ॥४०॥
तलपातो महाज्वालः शबलश्च विकर्तनः ।
अधःशिरा रुधिरान्धश्चक्षुःशूलःप्रपाचनम् ॥४१॥
शैलपातो लोहशंकुप्रतोदनिगडास्तथा ।
लोहयन्त्रश्च काकोलो मृतजीवनवैशसौ ॥४२॥
नरकाणीति चान्यानि भेदप्रभेदतस्तथा ।
भवन्ति पापकर्तॄणां निष्कृत्यर्थं कृतानि वै ॥४३॥

इति श्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने द्वादशश्रवणाख्यदूतानामष्टाविंशत्यादिनरकाणामुद्देश-नामा पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

श्रीनारायण उवाच—

येषां तु नरके घोरे गतान्यब्दशतानि वै ।
सन्ततिर्नैव विद्येत दूतत्वं ते प्रयान्ति हि ॥ १ ॥
यमेन प्रेषितास्ते वै मानुषादेर्मृतस्य च ।
दिने दिने प्रगृह्णन्ति दीपमन्नं घटादिकम् ॥ २ ॥
प्रेतस्यैव प्रयच्छन्ति ह्यन्नकामस्य सत्तृषः ।
तृप्तिं प्रयान्ति ते सर्वे प्रत्यहं चैव वत्सरम् ॥ ३ ॥
चित्रगुप्तपुरं पूर्वं योजनानां तु विंशतिः ।
कायस्थास्तत्र पश्यन्ति पापपुण्ये च सर्वथा ॥ ४ ॥
योजनानां चतुर्विंशतिस्तु वैवस्वतं पुरम् ।
तत्र गत्वा प्रेष्यदूताः प्रतीहारं वदन्ति वै ॥ ५ ॥
धर्मध्वजप्रतीहारे ब्रूते तस्य शुभाऽशुभम् ।
यमराजस्य दूतास्तु भीषणा यमकिंकराः ॥ ६ ॥
पाशदण्डधरा घोराः सहस्राणि च षोडश ।
एकैकस्य पुरस्याऽग्रे सहस्रैकं च तिष्ठति ॥ ७ ॥
धर्मराजः स्वयं न्यायं ददात्यस्मै तु पापिने ।
तत्र तत्र च नरकान् प्रभुंक्ते तद्यथा शृणु ॥ ८ ॥
प्रसह्य परवित्तस्त्र्यपत्यपत्यादिहारकाः ।
पतन्ति तत्र तामिस्रे भृशं क्षुत्तृट्प्रबाधिताः ॥ ९ ॥
वंचयित्वा परवित्ताऽपत्यनार्यादिभोगिनः ।
पतन्ति त्वन्धतामिस्रे नष्टदृङ्मतयस्तु ते ॥१०॥
पतन्ति हिंसका महारौरवे तत्र देहिनः ।
क्रव्यादा रुरवो भूत्वा घातयन्ति स्वघातकम् ॥११॥
भूतद्रोहैः कुटुम्बस्य पोषका यान्ति रौरवे ।
भूतानि रुरवः सर्पा भूत्वा हिंसन्ति हिंसकान् ॥१२॥
पश्वादिरन्धका दुष्टाः कुंभीपाके पतन्ति वै ।
दूतास्ताँस्तप्ततैलेषु रन्धयन्ति मुहुर्मुहुः ॥१३॥
गुरुपितृब्रह्मसाधुसाध्व्यादिप्राणिनां द्रुहः ।
यान्ति वै कालसूत्राख्येऽयुतयोजनमण्डले ॥१४॥
वह्नितप्ते ताम्रखले लोठयन्ति दहन्ति ते ।
स्वधर्महन्ता पाखण्डी वने यात्यसिपत्रके ॥१५॥
उभतोधारखड्गैः संछिद्यते मृद्यते मुहुः ।
अन्यायदण्डदा यान्ति सूकरास्याख्ययन्त्रके ॥१६॥
निष्पीड्यमानाऽवयवाश्चूर्णीभवन्ति तत्र वै ।
ईशकल्पितवृत्तीनां यूकामशकपक्षिणाम् ॥१७॥
जन्तूनां नाशकर्तारो ह्यन्धकूपे पतन्ति वै ।
तत्र दूता जन्तुरूपा द्रुग्धा द्रुह्यन्ति तान्पुनः ॥१८॥
असंविभज्य भोक्तारः पतन्ति कृमिभोजने ।
भक्ष्यन्ते कृमिभिस्ते च शतसाहस्रयोजने ॥१९॥
स्तेयाद्बलात्परस्वर्णरत्नभ्वाद्यपहारकाः ।
संदंशे यान्त्ययोदंशैर्निष्कृन्तन्ति च तान् यमाः ॥२०॥
अगम्याँस्तु नरान्नारीर्बलात्कारेण कामुकान् ।
तप्तसूर्म्यां तप्तलोष्ठपुत्तल्याऽऽलिंगयन्ति ते ॥२१॥
पश्वादिनरमादादासु प्रसह्य कामुकान् जनान् ।
वज्रकंटकशाल्मल्यामारोप्य कर्तयन्ति वै ॥२२॥
पश्वाचारा नष्टशौचाः श्लेष्मविण्मूत्रपूयके ।
पूयोदाख्ये पतन्त्येते ह्यश्नन्ति तन्मलं तथा ॥२३॥
रक्षका भक्षका भूत्वा रक्ष्यान् भिन्दन्ति भीतिदाः ।
विण्मूत्रपूयरक्तात्मवैतरण्यां वहन्ति ते ॥२४॥
मृगयासक्तपश्वादिवातिनः प्राणरोधने ।
पातयित्वेषुभिस्तत्र विध्यन्ति यमपूरुषाः ॥२५॥
विशंसने पशुपक्षिमनुष्यादिविदारकान् ।
विदारयन्ति खादन्त्यसृक् पिबन्ति च ते पुनः ॥२६॥
असंख्यजन्तुनाशोत्थमदिरापानकृज्जनान् ।
तप्ताऽयोरसपानं वै कारयन्ति बलाद् यमाः ॥२७॥
कूटसाक्ष्यप्रकर्तॄंश्चावीचौ याम्याः पुनः पुनः ।
गव्यूतिद्विशतोच्छ्रायगिरेस्तु पातयन्ति वै ॥२८॥
विषदानग्निदान्दुष्टान् श्वादनेऽदन्ति कुक्कुराः ।
रेतःप्रपायकान् लालाः पाययन्ति यमानुगाः ॥२९॥
पूज्यपूजाव्यतिचारकर्ता तु क्षारकर्दमे ।
पतत्यवाक्शिरास्तत्र तत्फलं च समश्नुते ॥३०॥

पशुपक्षिनरनारीखादकानां यमानुगाः ।
खादन्त्यसृक् प्रापिबन्ति रक्षोगणप्रभोजने ॥३१॥
प्राणिनां कण्टकसूचीशूलैस्तु वेधकान्मुहुः ।
शूलप्रोते प्रविध्यन्ति तीक्ष्णाग्रैर्यमसेवकाः ॥३२॥
प्राण्युद्वेगप्रकर्तॄंश्च दंदशूके शताननाः ।
दन्दशूकास्त्रोटयन्ति ग्रसन्ते च मुहुर्मुहुः ॥३३॥
गुहाविवरकुसूलबिलादौ प्राणिरुन्धकान् ।
याम्या रुन्धन्ति धूमाद्यैर्वह्निना सगरेण च ॥३४॥
मांसादिखादकान् दूताः खादन्ति क्षुधिताः पुनः ।
करस्पर्शेण जायन्ते पूर्णाः खादन्ति तान्पुनः ॥३५॥
आढ्याभिमानिनं तिर्यक्प्रेक्षकं पापकारिणम् ।
सूचीमुखे पातयित्वा सूत्रैः परिवयन्ति च ॥३६॥
दीनदुर्बलसत्पात्रमीक्षते क्रुद्धचक्षुषा ।
तन्नेत्रे वज्रतुण्डैरुत्पाटयन्ति पतत्रिणः ॥३७॥
अन्येषां तु वृक्षफलचौर्यकर्तारमेव तु ।
ताले उत्तोल्य भूभागे पातयन्ति यमानुगाः ॥३८॥
अरण्यक्षेत्रदग्धारं महाज्वाले निपात्य वै ।
वन्हौ तं भर्जयन्त्येव यमदूता मुहुर्मुहुः ॥३९॥
अशुद्धं भोजयितारं शमले पातयन्ति हि ।
तत्राऽशुद्धं च दुर्गन्धं भोजयन्ति यमानुगाः ॥४०॥
कंचुकपुटकं ये चोत्कृत्य द्रव्यं हरन्ति तान् ।
विकर्तने क्षिपन्त्युग्राः कृन्तन्ति प्रपिबन्त्यसृक् ॥४१॥
भित्त्यादौ विवरं कृत्वा चोरयन्ति च ये धनम् ।
तानधःशिरसा व्योम्नि तोलयन्ति तलाग्निना ॥४२॥
दुग्धदानन्नतोयाभ्यां सेवन्ते न पशून्नराः ।
रुधिरान्धे पातयन्ति रुधिरं तत् पिबन्ति ते ॥४३॥
दृश्याऽनर्हे दुष्टचक्षुःप्रयोक्तारं यमानुगाः ।
शूलं नेत्रे प्रविश्यैव दण्डं ददति तत्र वै ॥४४॥
अग्निना रन्धिता जीवाः पाचयन्ति च तं तु ते ।
पाषाणैर्भूतहन्तॄन्वै पातयन्ति शिलोपरि ॥४५॥
निरागसो बन्धयिता बध्यते निगडैर्यमैः ।
ज्ञात्वा जन्तुचूर्णयिता चूर्ण्यते लोहयन्त्रकैः ॥४६॥
जीवान्दुःखप्रदाता तु काकोले परिपीड्यते ।
आजीवनं दुःखदाता मिथ्याभिशंसकश्च यः ॥४७॥
मारयित्वा खादयित्वा जीवयित्वा यमानुगाः ।
कृन्तन्ति संछेदयन्ति खादयन्ति ह्यमुं यमाः ॥४८॥
पत्न्यै दुःखप्रदाता यः स्वामिने दुःखदा च या ।
आश्रितानां दुःखदा ये ते पतन्ति तु रौरवे ॥४९॥
इत्येवं रक्षका यत्र भक्षका लुब्धजीविनः ।
सर्वे ते नारकाः पाप्या जायन्ते यमकिंकरैः ॥५०॥
इत्येवं निरयाः सन्ति प्राणिनां निष्कृतात्मकाः ।
यत्र शुद्ध्यन्ति पापिष्ठास्ततो गच्छन्ति जन्मने ॥५१॥
यस्य यादृक् जन्म कर्म विद्यते प्राक् तु संचितम् ।
तस्य तथैव मार्गेण यमः प्रापयते जनिम् ॥५२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने चत्वारिंशन्नरकगामिनां पापफलवर्णननामाषट्षष्टितमोऽध्यायः ॥ ६६ ॥

**श्रीनारायण उवाच—**

नरकाणां महाकष्टमनुभूय तु नारकाः ।
स्वकर्मशेषभागेन प्राप्नुवन्ति च वै तनुम् ॥ १ ॥
दैविकीं पैतृकीं योनिं मानुषीं वाथ नारकीम् ।
प्राप्य धर्मस्य वचनान्मुक्तिर्भवति वा ततः ॥ २ ॥
यथा यथा कृतं कर्म तां तां योनिं व्रजेन्नरः ।
तत्तथैव हि भुञ्जानो विचरेत्सर्वयोनिषु ॥ ३ ॥
येन कर्मविपाकेन यथा निरयभाग्भवेत् ।
यथा तदुत्तरं जन्म तत्तन्मे श्रृणु पद्मजे ! ॥ ४ ॥
यातनाऽन्ते विमुक्तास्ते ह्यनेकां जीवसन्ततिम् ।
गत्वा मानुषयोनौ तु पापचिह्ना भवन्ति ते ॥ ५ ॥
तत्राऽनृतप्रवाही तु गलत्कण्ठोऽर्धजिह्वकः ।
यद्वा मूको भवेदेव देवादीनां विनिन्दकः ॥ ६ ॥
जीवहा तु क्षयी कुष्ठी श्यावदन्तस्तु मद्यपः ।
स्वर्णहारी कुनखी दुश्चर्मा स्त्रीभोगकृद् बलात् ॥ ७ ॥
मात्सर्यादपि जात्यन्धो जन्मान्धोऽन्याक्षिसंहरन् ।
फलहर्ता वानरः स्यात् काकश्चौर्याऽन्नभोजनात् ॥ ८ ॥
अन्यवंशं विनिन्दन्वै वंशहीनोऽनपत्यकः ।
द्रव्यहर्ता भवेद् गोधा गरदः सर्पजन्मवान् ॥ ९ ॥
प्रसह्य तु बलात्कारी जायतेऽत्र पिशाचकः ।
चातको जलहर्ता स्याद् धान्यहर्ता तु मूषकः ॥१०॥
जलप्रस्रवणभेत्ता जले मत्स्यो भवेदिति ।
वञ्चनाकर्मकृत्प्राणी ह्युलूको जायते मुहुः ॥११॥
अन्यादाच्छिद्य भुंजानः सारमेयोऽभिजायते ।
प्रतिश्रुत्याऽददन्प्राणी जम्बूको जायते वने ॥१२॥
चौर्यं कृत्वा सदा भुंजन् विड्वराहः प्रजायते ।
पूज्यानां त्ववमानाद्वै लभते काच्छपी तनुम् ॥१३॥

सर्वेषां तु तिरस्कर्ता चाण्डालो जायतेऽत्र वै ।
स्यादन्यस्य ऋणग्राही वृषोऽश्वो गर्दभश्च वा ॥१४॥
रतिविघ्नकरः षण्ढो मार्जारः परमांसभुक् ।
पारक्यस्य प्रहर्ता वै तित्तिरो जायते वने ॥१५॥
प्रसह्य वशकर्तारो नारीजन्म ह्यवाप्नुयुः ।
प्रसह्य रतिकर्तारो भगलिंगादिरोगिणः ॥१६॥
गृहावासादिहर्तारो जायन्तेऽरण्यजन्तवः ।
पशूनां घातकाश्चात्र जायन्ते घात्यजन्तवः ॥१७॥
स्वामिद्रव्यापहर्तारो दरिद्राः संभवन्त्यपि ।
विद्वन्निन्दाप्रकर्तारो मूर्खा भवन्ति बालिशाः ॥१८॥
विश्वासयित्वा जन्तूनां बन्धका घातका जनाः ।
पञ्जरीयपशुपक्षिजन्मानः संभवन्ति हि ॥१९॥
मनुष्याणां तिरस्कर्ता विचित्तो जायतेऽत्र वै ।
शाठ्यकापट्यनैर्घृण्यपोष्टा कितवतां व्रजेत् ॥२०॥
मनुष्यहा जायतेऽत्र पाशधृक् पारधिश्च वै ।
पशुहा घातकी भूत्वा शतजन्मा ह्यजो भवेत् ॥२१॥
मत्स्यादो मत्स्यजन्मा स्यात् सर्वादो झष एव च ।
अन्यान्नवस्त्रगेहादेर्हर्ता वृक्षोमरुस्थले ॥२२॥
गन्धचन्दनसंहर्ता नासाहीनः प्रजायते ।
गुरुपितृपूज्यनिन्दाश्रोता स्याद् बधिरोऽत्र वै ॥२३॥
पादहर्ता भवेत् पङ्गुर्हस्तघ्नो वृक्ण एव च ।
नारीणां दुःखकृत्कुंभकारस्य गर्दभो भवेत् ॥२४॥
पत्युर्दुःखकरी नारी गर्दभी संभवेत्तथा ।
कर्मचारिद्रव्यछेत्ता दरिद्रो वानरो भवेत् ॥२५॥
जन्तुजां नाशको भित्तिजन्तवदा गोधकी भवेत् ।
मलिनो मक्षिकाजन्म क्रोधी सर्पत्वमाप्नुयात् ॥२६॥
द्वेषी ग्राम्यशुनः पिपीलिकानां जन्म चाप्नुयात् ।
अन्यायकामी वृषणोच्छेत्ता स्यात् षण्ढगोवृषः ॥२७॥
धर्मान्नद्रव्यवस्त्वादेर्हर्ता स्यादार्तिकुक्कुरः ।
पारक्यान्नादिभोक्तारः कुक्कुटीं योनिमाप्नुयुः ॥२८॥
कार्यहन्ता तु घूकः स्यात् कार्यरोद्धा शृगालकः ।
परिवेषितपात्राणां हर्ता स्याद्वृक्षवागुली ॥२९॥
नारीहर्ता राक्षसः स्यात् मान्त्रिकः स्यात् पिशाचकः ।
वासनिकस्तु भूतः स्यात् क्रूरदृष्टिस्तु शाकिनी ॥३०॥
समात्सर्या डाकिनी स्यात् पिशाचिन्यभिचारिका ।
गर्भहन्त्री गणिका स्यात् कुलटा पत्यकामना ॥३१॥
पराऽपत्याऽसहाऽप्यत्राऽपत्यहीना भवत्यपि ।
ऋतुदानाऽग्राहिका तु षण्ढा भवति सर्वथा ॥३२॥

परोच्छेदकरी स्वीयोच्छेदकर्त्री भवेत्पुनः ।
सुतनाशप्रकर्तारो हन्यन्ते घातकीगृहे ॥३३॥
परसस्यप्रलोप्तारो भवन्त्यक्षेत्रवृत्तयः ।
परकर्मविलोप्तारो जायन्तेऽकर्मयोनिषु ॥३४॥
तैलहारी तैलपायी पूतिवक्त्रस्तु सूचकः ।
धान्यहार्यतिरिक्तांगः पिशुनः पूतिनासिकः ॥३५॥
ब्रह्महा श्वाः स्वरोष्टः स्यान्मूकश्चान्ते भवत्यपि ।
द्रव्यचौरः कृमिः कीटस्तृणादो गुरुनाशकः ॥३६॥
क्षयरोगी श्यावदन्तः कुनखी स्वर्णचौर्यकृत् ।
पक्वहर्ता त्वनाहारी मूको रागाऽपहारकः ॥३७॥
तुलकूटप्रमाकर्ता वटवागुलिका भवेत् ।
विक्रेयकूटसांकर्यकर्ता श्वासार्तिको भवेत् ॥३८॥
अन्येषां प्राणरोद्धा वै क्षयरोगार्तिको भवेत् ।
क्रयविक्रयकौटिल्यकर्ताऽर्षरोगवान्भवेत् ॥३९॥
उच्छिष्टजलपाता स्यान्मूत्रकृच्छ्रादिरोगवान् ।
अन्यवृत्तिहरो लोके भिक्षुकः सतिरस्कृतः ॥४०॥
अन्योन्याऽत्यसहो दुष्टश्चाण्डालो वाघरिर्भवेत् ।
छलछद्मप्रकर्ता स्याद् धीवरः शबरोऽपि च ॥४१॥
वस्त्रविक्रयकापट्यतन्तुवायो भवत्यपि ।
रथ्याचतुष्कमालिन्यकर्ता मलहरोऽन्त्यजः ॥४२॥
स्नानशुद्धिनिषेद्धा स्याद् रजको वस्त्रशोधकः ।
अन्याऽनिष्टेच्छुकचौरो मार्जारो जायते रुदन् ॥४३॥
कूटौषधप्रदाता स्यान्नकूलो निर्जने वने ।
कूटवस्तुप्रकर्ता स्यात् कूटस्त्रीपुत्रकोऽत्र वै ॥४४॥
स्वर्णरूप्यादिसांकर्यं कापट्येन करोति यः ।
वर्णसंकरजन्मा स्याद् गलत्कुष्ठो भवेत्तथा ॥४५॥
कौमार्यदुषकाश्च स्युराजीवनं विधूरकाः ।
स्वामिन्यसत्प्रवक्ता स्यान्नापितः क्षुरकर्मकृत् ॥४६॥
आयुधानां तु निर्माता जलौका संप्रजायते ।
पशुपक्षिगवाजादिमांसादाः गृध्रविड्भुजः ॥४७॥
सिंहा व्याघ्रा वृका दीपा जायन्ते मांसभोजिनः ।
कन्याविक्रयकर्तारो जायन्ते योनिकीटकाः ।
रससांकर्यकर्तारो जायन्ते मलकीटकाः ॥४८॥
निराधारप्रदोग्धारो भवन्ति मास्तिकीयूकाः ।
पंक्तिभेत्तोदरंभरो जायते चान्त्ररोगवान् ॥४९॥
दम्पतीक्लेशकर्तारो भांडा भवन्ति नर्तकाः ।
कामासक्तवियोक्तारो वृन्दलाः संभवन्ति हि ॥५०॥
कामसुखप्रभंक्तारोऽरण्ये शून्यरंतिमृगाः ।
मण्डुकाश्चैव जायन्ते रतिमात्सर्यवन्नराः ॥५१॥

साधुसाध्वीद्रोहकर्ता स्यान्मूको बधिरो जनेः ।
पोष्याऽपोषणकर्तॄणां मलमूषकता भवेत् ॥५२॥
दुग्धदप्राणिहन्तॄणां जन्म निर्जलभूफणम् ।
वाग्बाणमर्मभेत्तॄणां कंकिटक्ककलासजम् ॥५३॥
पिष्टचौर्यप्रकर्तॄणां जन्म भल्लुकरूक्षजम् ।
महच्चौर्यप्रकर्तॄणां जन्म त्वन्धसरीसृपे ॥५४॥
देवतीर्थगुरुद्रोही धर्माणां निन्दकस्तथा ।
कुटुम्बक्लेशकर्ता स्यादरण्ये काकदीपकः ॥५५॥
मदिरामांससंजीवी सिंहोऽरण्ये नृपो भवेत् ।
जालतर्कटपाशाऽशी बहुशृंगो मृगो भवेत् ॥५६॥
स्नानालसस्तु खड्गाख्यमृगो गेन्डो भवेदिति ।
भल्लुकः स्यात् पिष्टहर्ता वागुली गुप्तभोजिनी ॥५७॥
चित्रपिच्छा छलकर्त्री शिलकी स्यात् स्वतन्त्रिणी ।
गुप्तपिबा गृहगोधा गवयो गुप्तभोजनः ॥५८॥
यथा वा वासनायोगाज्जायन्ते चित्रदेहिनः ।
चतुरशीतिखन्यन्ताश्चित्रकर्मकरा मुहुः ॥५९॥
जायन्ते तामसाः कीटा वृक्षाद्या वा तृणौकसः ।
वृद्धापमानकर्तारो जायन्ते माहिषा वृषाः ॥६०॥
दाम्पत्यभंगकर्तारो विधुरा जन्मजन्मसु ।
मलेन्द्रियातिलुब्धास्तु कीटा मलगताः सदा ॥६१॥
गुप्तघातास्तु झल्लादाः पाशिनः श्वपचादयः ।
इन्द्रियहा भवेदिन्द्रियेण हीनः क्षतिश्रितः ॥६२॥
आततायिजना यान्ति भुग्नदेहान् सदार्तिदान् ।
तामसाः संप्रजायन्ते यवना दैत्यराक्षसाः ॥६३॥
पत्युर्हन्त्र्यः प्रजायन्ते विधवा जन्मजन्मसु ।
श्वश्रूदुःखप्रदा नारी गर्दभी जायते कृशा ॥६४॥
वधूद्वेष्ट्री भवेन्मार्जारिका कुष्ठादिरोगिणी ।
सापत्न्यद्वेषकर्त्री स्याच्छुनी खर्जनरोगिणी ॥६५॥
पक्षपातकरी यायाद् दरिद्रे पाशवीं दशाम् ।
कार्यहन्त्री भवेद् घूकी क्लेषदा कावरी भवेत् ॥६६॥
अनैवेद्यरसास्वादा भवेद् गृध्रा च गर्जुकी ।
श्येना बकी भवेत् सा या गृहे कापथ्यवर्तिनी ॥६७॥
धूर्ता काकी भवेत् कृष्णा शृगाली नापिती तथा ।
जांगुलिकी भवेद् द्विष्टा सन्ताने द्वेषचारिणी ॥६८॥
षण्ढा स्यात् लिंगपातात्माऽभिचारादिप्रयोगिणी ।
मन्त्राभिचारकर्त्री स्याद् भूती पिशाचिका तथा ॥६९॥
बालहा गर्भहा बीजहन्त्री तु राक्षसी भवेत् ।
अन्तर्दाहकरी दुःखप्रदा स्याद् यवनी खसी ॥७०॥
इत्येवं बहुजन्मानो भवन्ति नारका जनाः ।
पुनः कर्म पुनर्जन्म लक्षयोनिषु जायते ॥७१॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने नारकाणां पुनर्जन्मचिह्नपरिचयादिकथननामा सप्तषष्टितमोऽध्यायः ॥६७॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! प्रवक्ष्यामि जनं शारीरचिह्नकम् ।
कीदृग्रूपो जनः कीदृक्कर्मा कीदृग्गुणो भवेत् ॥ १ ॥
संक्षेपात्तत्प्रवक्ष्यामि लोकविज्ञानहेतवे ।
शरीराणि समान्येव नरनारीदिवौकसाम् ॥ २ ॥
आकृतेर्भेदभावो वै परिचायक एव ह ।
चिह्नानां भेदभावस्तु कर्मणां परिचायकः ॥ ३ ॥
धनहीनस्य तु पादौ शूर्पाकारौ शिरालकौ ।
वक्रौ रुक्षौ च संशुष्कौ पाण्डुनखौदरांगुली ॥ ४ ॥
वंशस्य नाशकौ पादावुत्कमठौ कषायकौ ।
ब्रह्मघ्नस्य भवेतां तु चरणौ शंकुसन्निभौ ॥ ५ ॥
निर्धनस्य रोमकूपे एकैक एव रोमकः ।
नृपस्य श्रोत्रियस्यापि द्वौ द्वौ श्रीधीमतां तथा ॥ ६ ॥
त्र्याद्यैर्निःस्वा दुःखभाजो निन्दिताश्च भवन्ति हि ।
यस्य केशाः कुंचिताः स्युः स प्रवासे म्रियेत वै ॥ ७ ॥
यस्य जानू तु निर्मांसौ सौभाग्यः स भवेज्जनः ।
निम्नाऽल्पजानुमान् बोध्यः सर्वदा स्त्रीरतो जनः ॥ ८ ॥
दरिद्रो विषमजानुः पुष्टजानुर्नृपो भवेत् ।
महज्जानुर्दीर्घजीवी वक्रजानुस्तु कामुकः ॥ ९ ॥
यस्य पादौ मृदुतलौ कमलोदरसन्निभौ ।
श्लिष्टांगुली ताम्रनखौ सुपार्ष्णी च शिरोज्झितौ ॥१०॥
उष्णौ कूर्मोन्नतौ गूढगुल्फौ स नृपतिर्भवेत् ।
यो नरो ह्यल्पलिंगः स्यादपत्यरहितस्तु सः ॥११॥
यस्तु भवेत् स्थूललिंगः सापत्योऽपि धनोज्झितः ।
मेढ्रं वामनतं यस्य तस्य पुत्रार्थहीनता ॥१२॥
लिंगमधोनतं यस्य दारिद्र्यं तस्य सर्वदा ।
दक्षवक्रं यस्य मेढ्रं पुत्रवान्स मतौ जनः ॥१३॥
स्थूलग्रन्थियुते लिंगे शिराले बहुपुत्रकः ।
कोषगूढे प्रजनने नृपः स्याद्बहुपुत्रकः ॥१४॥
दीर्घकाषो भुग्नकोषो धनहीनः सदा भवेत् ।
दुर्बलत्वेकवृषणो विषमवृषणश्चलः ॥१५॥

समाभ्यां नृपतिः प्रोक्तः प्रलम्बेन शताब्दवान् ।
भवेत् सिंहकटी राजा निःस्वः कपिकटिर्नरः ॥१६॥
सर्पोदरा दरिद्राः स्युर्धनिनः स्थूलपार्श्वकाः ।
समकक्षाश्च भोगाढ्या निम्नकक्षा धनोज्झिताः ॥१७॥
नृपाश्चोन्नतकक्षाः स्युर्जिह्मा विषमकक्षकाः ।
अशीघ्रमैथुन्यल्पायुर्दीर्घायुः शीघ्रमैथुनी ॥१८॥
सुखी स्याद्विस्तीर्णनाभिर्दुःख्यतिनिम्ननाभिकः ।
वलिमध्यगतो नाभिः शूलपीडां करोति वै ॥१९॥
मेधावी दक्षिणावर्तो वामावर्तो वशी नरः ।
पार्श्वायता चिरायुः स्यादुपरिष्टाद्धनेश्वरः ॥२०॥
एकवलिः शतायुः स्यात् श्रीभोगी द्विवलिर्नरः ।
त्रिवलिः क्ष्मेश आचार्य ऋजुभिर्वलिभिः सुखी ॥२१॥
दक्षिणावर्तरोमा स्याच्छासकः सुमहान् जनः ।
वामावर्ताऽन्यथावर्तरोमा प्रेष्यश्च दुःखितः ॥२२॥
अनुद्धतैश्चुचुकैश्च भवन्ति सुभगा जनाः ।
उद्धतैर्विषमैर्दीर्घैः पीताग्रैर्निर्धना नराः ॥२३॥
समोन्नतं च हृदयमकम्पं मांसलं पृथु ।
नृपाणामधमानां च खररोमशिरालकम् ॥२४॥
समवक्षास्तु धनवान् पीनवक्षाः रमापतिः ।
निर्धनो विषमवक्षाः शस्त्रेण मृत्युमाप्नुयात् ॥२५॥
विषमजत्रुको निःस्वः पीनजत्रुर्धनाधिपः ।
निर्धनश्चिपिटकण्ठः शिराशुष्कगलः सुखी ॥२६॥
शूरः स्यान्महिषग्रीवः शास्त्रान्तो मृगकण्ठकः ।
कम्बुग्रीवश्च नृपतिर्लम्बकण्ठोऽतिभक्षकः ॥२७॥
कक्षाऽश्वत्थदला श्रेष्ठा सुगन्धिर्मगरोमिका ।
अन्यथा त्वर्थहीनानां दारिद्र्यस्य च कारणम् ॥२८॥
समांसौ विपुलौ श्लिष्टौ भुग्नाल्पौ पीवरौ तथा ।
वृत्तावाजानुलम्बौ च भुजौ दैवौ च राजकौ ॥२९॥
निःस्वानां रोमशौ ह्रस्वौ, श्रेष्ठौ करिकरप्रभौ ।
हस्तांगुलय एव स्युः स्वर्णवर्णा धनेशितुः ॥३०॥
ताश्च मेधाविनां सूक्ष्मा भृत्यानां चिपिटाः स्मृताः ।
सुस्थूलांगुलयो निःस्वाः कपितुल्यकरास्तथा ॥३१॥
पितृद्रव्यविनाशी स्यान्निम्नकरतलो जनः ।
मणिबन्धो निगूढः स्याद् राज्यदो धनदो वृतः ॥३२॥
करैः करतलैश्चैव लाक्षाभै रक्तकोमलैः ।
गुरवः स्युः पीतरुक्षैर्निधना एव सर्वदा ॥३३॥
तुषतुल्यनखाः क्लीबा निःस्वाः स्फुटितवक्रकैः ।
कुनखैश्च विवर्णैश्च परतर्ककरा मताः ॥३४॥

ताम्रैश्च वर्तुलैर्देवा मध्योन्नतनखैर्मताः ।
सयवांऽगुष्ठको राजा पुत्री पर्वप्रपूर्णकः ॥३५॥
युगमीनांकितकरो भवेत्सत्रप्रदो नरः ।
वज्रचिह्नं तु धनिनां विदुषो मत्स्यपुच्छकम् ॥३६॥
शंखाऽऽतपत्रशिबिकागजपद्मानि भूभृति ।
कुंभांऽकुशपताकाश्च मृणालश्च निधीश्वरे ॥३७॥
दामरेखा गवाढ्ये वै स्वस्तिकश्च नृपेश्वरे ।
चक्राऽसितोमरधनुर्दन्तरेखा नृपेश्वरे ॥३८॥
उलूखलसमा रेखा याज्ञिकस्य करे मता ।
चक्राणि बहूनि चैव वेदीरेखाऽग्निहोत्रिणि ॥३९॥
वापीदेवीनदीरेखास्त्रिकोणो धार्मिके करे ।
अंगुष्ठमूलगा रेखाः सुखकृत्सुतबोधिकाः ॥४०॥
कनिष्ठामूलतः प्रदेशिनीमूलगता च या ।
शतायुर्बाधिका रेखा छिन्ना चेत् तरुतो भयम् ॥४१॥
निःस्वाश्च बहुरेखाः स्युर्निधनाश्चिबुकैः कृशैः ।
मांसलैः रक्तवर्णैश्च ह्यधरैर्धनवान्भवेत् ॥४२॥
बिम्बोपमैश्च स्फुटितै रूक्षैर्विषमखण्डितैः ।
ओष्ठैर्धनरहिताः स्युर्दन्ताः स्निग्धा घना शुभाः ॥४३॥
तीक्ष्णा दन्ताः समाः श्रेष्ठा जिव्हा रक्ता समा शुभा ।
श्लक्ष्णा दीर्घा तु विज्ञेया तालुः श्वेतो धनक्षयः ॥४४॥
कृष्णा तु परुषा जिह्वा रक्ताग्रा रोगिणी मता ।
वक्त्रं सौम्यं समं श्लक्ष्णं संवृतं नृपतेः स्मृतम् ॥४५॥
विपरीतं तु दुःखानां दुर्भगाणामलोककम् ।
आढ्यानां वर्तुलं वक्त्रं निर्द्रव्याणां तु दीर्घकम् ॥४६॥
भीरुवक्त्रः पापकारी धूर्तानां चतुरस्त्रकम् ।
निम्नं वक्त्रं त्वपुत्राणां कृपणानां च ह्रस्वकम् ॥४७॥
सम्पूर्णं भोगिनां कान्तं श्मश्रुस्निग्धं शुभं मृदु ।
संहतं चाऽस्फुटिताग्रं रक्तश्मश्रु च चौरकम् ॥४८॥
शंकुकर्णास्तु राजानो रोमकर्णा गतायुषः ।
बृहत्कर्णा धनिनृपाः कृपणा ह्रस्वकर्णकाः ॥४९॥
भोगी वै निम्नगण्डः स्यान्मन्त्री सम्पूर्णगण्डकः ।
शुकनासः सुखी प्रोक्तः शुकनासोऽतिजीवनः ॥५०॥
छिन्नाग्रकूपनासस्तु बहुनारीव्यवायकः ।
दीर्घनासः सौभगः स्याच्चौरः कुञ्चितनासिकः ॥५१॥
चिपिटनासः क्रूरः स्यात्तथा भाग्यविहीनकः ।
स्वल्पछिद्रा सुपुटा चाऽवक्रा सा नृपतेर्मता ॥५२॥
क्रूरे दक्षिणवक्रा स्याद् वामवक्रा ह्यनिष्टदा ।
वक्रान्तैः पद्मपत्राभैर्लोचनैः सुखभागिनः ॥५३॥

मार्जारलोचनैः पाप्मा दुरात्मा मधुपिंगलैः ।
क्रूराः केकरनेत्राश्च हरिताक्षाः सकल्मषाः ॥५४॥
जिह्मैश्च लोचनैः शूराः सेनान्यो गजलोचनाः ।
गंभीराक्षा ईश्वराः स्युर्मन्त्रिणः स्थूलचक्षुषः ॥५५॥
नीलोत्पलाक्षा विद्वांसः सौभगाः श्यामचक्षुषः ।
स्युरुत्पाटनकर्तारः कृष्णतारकचक्षुषः ॥५६॥
मण्डलाक्षाश्च पापाः स्युर्निःस्वा स्युर्दीनलोचनाः ।
धनी दीर्घसंसक्तभ्रूर्दरिद्रा विषमभ्रुवः ॥५७॥
विशालोन्नतबालेन्दून्नतभ्रुवः सुखाढ्यकाः ।
निःस्वो भवति खण्डभ्रूर्दारकभ्रूश्च निर्धनः ॥५८॥
निर्धना विपुलैः शंखैर्ललाटैर्विषमैस्तथा ।
अर्धेन्दुसमभालैस्तु धनवन्तो मता जनाः ॥५९॥
शुक्तिविशालैराचार्याः शिरालैः पापकारिणः ।
उन्नताभिः शिराभिश्च स्वस्तिकाभिर्नरेश्वराः ॥६०॥
निम्नैर्मौलैर्वधार्हाश्च क्रूरकर्मरतास्तथा ।
संवृतैश्च ललाटैश्च कृपणा उन्नतैर्नृपाः ॥६१॥
अकम्पं हसितं श्रेष्ठं निमीलितमघावहम् ।
असकृद्धसितं दुष्टं सदर्पं घातकं भवेत् ॥६२॥
ललाटोपसृतास्तिस्रो रेखाः स्युः शतवर्षिणाम् ।
नृपः स स्याच्चतसृभिः पंचनवतिर्जीवति ॥६३॥
अरेखेनाऽऽयुर्नवतिर्विच्छिन्नाभिस्तदर्धकम् ।
केशान्तोपगताभिश्च ह्यशीत्यायुर्नरो भवेत् ॥६४॥
पंचभिः सप्तभिः षड्भिः पंचाशत् बहुभिस्तथा ।
चत्वारिंशच्च रक्ताभिस्त्रिंशद् भ्रूलग्नगामिभिः ॥६५॥
विंशतिर्वामवक्राभिरायुः क्षुद्राभिरल्पकम् ।
छत्राकारैः शिरोभिस्तु नृपो बाणसमो धनी ॥६६॥
घटमूर्धा पापरुचिः पितुर्मृत्युश्चिपीटकः ।
कृष्णाऽऽकुंचितस्निग्धाग्राऽभिन्नान्तकेशवान् नृपः ॥६७॥
राज्ञ्याः पादौ मृदुतलौ मत्स्यांकुशध्वजांऽचितौ ।
बज्राब्जहलचिह्नौ च निगूढगुल्फकौ मतौ ॥६८॥
अश्वत्थपत्रसदृशं विपुलं गुह्यमुत्तमम् ।
गूढः शुकश्च शुभदो मांसलं वर्तुलं मुखम् ॥६९॥
नाभिः प्रदक्षिणावर्ता मध्यं त्रिवलिशोभितम् ।
आरक्तावधरौ श्रेष्ठौ मांसलं वर्तुलं मुखम् ॥७०॥
स्निग्धनीलाश्च मृदवो मूर्धजाः कुंचिताः शुभाः ।
स्त्रीणां पादतले यद्वा पाणिद्वयतले इमाः ॥७१॥
वाजिकुंजरश्रीवृक्षयूपेषुयवतोमराः ।
ध्वजचामरमालाश्च शैलकुण्डलवेदिकाः ॥७२॥
शंखातपत्रकमलमत्स्यस्वस्तिकसद्रथाः ।
अंकुशाद्याश्च रेखाः स्युर्देव्यस्ता राजवल्लभाः ॥७३॥
हर्येशाः स्वस्तिकधनुस्त्रिशूलध्वजमत्स्यकाः ।
रेखा या मणिबन्धोत्था गता मध्यांगुलीकरे ॥७४॥
ऊर्ध्वरेखा तु सा प्रोक्ता हस्ते पादेऽथवा भवेत् ।
स्त्रीणां पुंसां तथा सा स्याद् राज्याय च सुखाय च ॥७५॥
नरचिह्नवती नारी नरश्च स्त्रीस्वरूपकः ।
न मंगलकृतौ स्यातां वैपरीत्यकरावुभौ ॥७६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुग-
सन्ताने नरनारीदैवीशारीरचिह्नप्रदर्शन-
नामाऽष्टषष्टितमोऽध्यायः ॥६८॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! प्रवक्ष्यामि तव चिह्नानि मे प्रिये ! ।
पश्य नाभिं दक्षिणावर्तां ते गाम्भीर्यशालिनीम् ॥ १ ॥
अरोमां त्रिवलीं पश्य हृत्स्तनौ रोमवर्जितौ ।
मध्यांशं सर्वशक्त्याढ्यं पश्याऽन्तर्दृढकुण्डलम् ॥ २ ॥
नाभ्यधः पश्य रेखां तु स्वर्णबाणस्य पिंगलाम् ।
वामसक्थ्नि तथा पश्य पादुकाचिह्नमग्रतः ॥ ३ ॥
वक्षसि स्तनयोर्मध्ये पादरेखां विलोकय ।
ललाटे मुकुटाकारां गण्डे बिन्दुं च लोकय ॥ ४ ॥
उरसी पश्य विष्णुं मां रेखारूपचतुर्भुजम् ।
वामे भुजे गदाचिह्नं चाऽवलोकय मे प्रिये ॥ ५ ॥
हृदये वैजयन्त्यास्तु रेखां पश्य प्रपौरटीम् ।
गजं करतले दक्षे सपद्मं पश्य चाऽनघे ॥ ६ ॥
दक्षिणे तु पदे पश्य शंखचिह्नं सुमंगलम् ।
अंगुल्या मूलके पश्य रेखां विमानसदृशीम् ॥ ७ ॥
कनिष्ठायाः पश्य मूलाधस्त्वं नौकां सुरेखया ।
तथा शंखगदारेखाः पश्य मकरलेखनम् ॥ ८ ॥
तथा मध्ये सुशिखररेखां निभालय प्रिये ।
पश्य पार्ष्णौ मत्स्यरेखां मध्ये ताम्बूलवल्लिकाम् ॥ ९ ॥
पश्य वामांगुष्ठमूले यवचिह्नं सुरेखया ।
तदधस्तु महान्तं वै प्रासादं पश्य रेखया ॥१०॥
छत्रं पश्य तदधस्तु युतं तच्चोर्ध्वरेखया ।
कमलरेखां फणके ध्वजरेखां प्रपश्य च ॥११॥
अंकुशचिह्नं कुमुदं पश्य श्रीफलमित्यपि ।
स्थलीयपद्मरेखां च घटरेखां निभालय ॥१२॥

द्वितीयायाश्चन्द्ररेखां दशचक्राणि पश्य च।
स्वर्णरेखां फणोपरि भाले तान्तिकलेखनाम् ॥१३॥
चिबुके बिन्दुकं पश्य स्तने वामे तु चक्रकम्।
दक्षे स्तने हस्तरेखां कण्ठे हारं सुपिंगलम् ॥१४॥
जघने तु सुवर्णा वै धनूरेखां प्रपश्य च।
स्वस्तिकं दक्षिणे हस्ततले मत्स्यं ध्वजं तथा ॥१५॥
धनुर्वंशीमत्स्यरेखाः पश्य कलशरेखिकाम्।
अंकुशं मण्डलं चक्रं पश्य दक्षे करे तले ॥१६॥
पश्य प्राकाररेखां च तत्र तोरणमित्यपि।
पश्य लांगलचिह्नं च तत्रैव फणके प्रिये ॥१७॥
गूढं शुकं पश्य लक्ष्मि! आरक्तावधरौ तथा।
हस्ते दक्षे चोर्ध्वरेखां पश्य वामे तथैव च ॥१८॥
पादतलयोस्तूर्ध्वरेखाः प्रपश्य मम प्रिये।
पादे तु वाजिनं चैव कुंजरं श्रीमहाद्रुमम् ॥१९॥
यूपं बाणं यवं चैव तोमरं पश्य रेखया।
हस्ते च मालिकारेखां पश्य दीपं च चामरम् ॥२०॥
पश्य शैलं कुण्डलं च वेदिकां पश्य रेखया।
मुखनेत्रभ्रूललाटौष्ठनासिकाकपोलकान् ॥२१॥
पश्य विभ्राजमानाँस्ते गौरान् स्वर्णमनोहरान्।
तत्तच्चिह्नैस्तथा देव्यो भवन्ति भगवत्प्रियाः ॥२२॥
भक्तिमत्यश्च मे नार्यो लक्ष्मीरूपा भवन्ति वै।
ममोपासनसामर्थ्यात् करोमि कमलालयाः ॥२३॥
ब्रह्मलोकनिवासिन्यो गोलोकभूकृतालयाः।
वैकुण्ठवासमापन्नाः श्वेतद्वीपगताश्च याः ॥२४॥
अमृतधामस्थायिन्यो वह्निमण्डलमध्यगा।
सूर्यलोकनिवासिन्यः चन्द्रमण्डलसंस्थिताः ॥२५॥
सत्यलोकनिवासिन्य ईश्वरसृष्टिसंभवाः।
पितृसर्गगता याश्च ऋषिपत्न्यस्तथा च याः ॥२६॥
देव्यश्चाथ मनुष्याण्योऽदेव्यो नागादिसंप्रियाः।
सर्वास्तु मां पराभक्त्या समासाद्याऽभवन् श्रियः ॥२७॥
ताश्चाऽहं नैकलोकेषु नारायणस्वरूपकः।
रमयामि महालक्ष्मि! यथा त्वामत्र धामनि ॥२८॥
मम भक्त्या तु सर्वास्ता लक्ष्म्यो जायन्त एव हि।
याश्च मां न भजन्त्यन्याः तास्तु पापेन कर्मणा ॥२९॥
गच्छन्ति विविधाकारखनिष्वत्र परत्र च।
यमलोके महादुःखान्यनुभूयापि जन्मनि ॥३०॥
जायन्ते नहि शुभदा दुःखाय संभवन्ति ताः।
यमपुर्यास्तु या नार्यो यातना अनुभूय च ॥३१॥
पापलेशाज्जन्मवत्यो दुःखदा एव कीर्तिताः।
शृणु ता अपि संक्षेपात्प्रसंगात्प्रवदामि ते ॥३२॥
कनिष्ठिकाऽनामिका वा यस्या न स्पृशते महीम्।
अंगुष्ठं वा गताऽतीत्य तर्जनी कुलटा च सा ॥३३॥
रोमशे चातिमांसे च जंघे चातिशिरालके।
वामावर्तं निम्नमल्पं गुह्यं यस्या हि दुःखदा ॥३४॥
ग्रीवया ह्रस्वया निःस्वा दीर्घया च कुलक्षयः।
पृथुलया प्रचण्डा च भवत्येव न संशयः ॥३५॥
केकरे पिंगले नेत्रे श्यामे लोले तु चाऽसती।
स्मिते कूपे गण्डयोश्च सा ध्रुवं व्यभिचारिणी ॥३६॥
प्रलम्बिनी ललाटे तु देवरं हन्ति चांगना।
उदरे श्वशुरं हन्ति पतिं हन्ति स्फिचोर्द्वयोः ॥३७॥
या तु रोमोत्तरौष्ठी स्यान्न शुभा भर्तुरेव ह।
स्तनौ सरोमावशुभौ कर्णौ च विषमौ तथा ॥३८॥
कराला विषमा दन्ताः क्लेशाय तु भवन्ति ताः।
चौर्याय कृष्णमांसाभा द्वीर्घा भर्तुश्च मृत्यवे ॥३९॥
क्रव्यादरूपैर्हस्तैश्च वृककाकादिसन्निभैः।
शिरालैर्विषमैः शुष्कैर्वित्तहीना भवन्ति ताः ॥४०॥
समुन्नतोत्तरौष्ठी या कलहैः रूक्षभाषिणी।
लम्बकर्णस्वरा श्मश्रुमती पादे तु कालिका ॥४१॥
नेत्रे रक्ता भुवि तीव्रा स्वल्पभाला तु घातिनी।
बहुरेखा बहुरोमा बहुभाषाऽतिचञ्चला ॥४२॥
बहुसंगा बहुनिद्रा बह्वालस्या बहुव्यया।
सर्वथा निर्धनत्वं च दारिद्र्यं मन्त्रयत्यसौ ॥४३॥
तस्मात् सत्कर्म कर्तव्यं नाऽसत्कर्म कदाचन।
सुसत्कर्मकृतात्पुण्याच्छरीरं शुभलक्षणम् ॥४४॥
प्राप्यते धनधान्यार्थ्यगृहोद्यानादि चोत्तमम्।
कालः प्रतीक्षते नैव किमनेन कृतं न वा ॥४५॥
म्रियते जायते जन्तुः पुष्यते च पुनः पुनः।
मरणं जननं पुष्टिर्या तु मोक्षाय निर्मिता ॥४६॥
सा वै स्वेनैव कर्तव्या यद्वा पुत्रकुटुम्बिभिः।
शुभं जन्तोर्भवेद् येन तथाऽऽचर्य्यं दिवानिशम् ॥४७॥
पृथ्वी वासाय सलिलं तृप्तये शान्तये मरुत्।
देहः श्रमाय चान्नाय श्रेयः कस्मान्न साधयेत् ॥४८॥
सर्वत्राऽतिशयश्चास्ति विचार्यैव पुनः पुनः।
यथाऽपेक्षे चातिशयो नास्तीत्यपि विचार्य च ॥४९॥
यदृच्छयोपपन्नेन निर्वाह्य स्वकलेवरम्।
नातिसंसक्तमनसा लोकयात्रां तु निर्वहन् ॥५०॥

नारायणं भजेन्नित्यं यथा त्वं कमलेक्षणे ।
तस्य नास्ति सुखं श्रेयो मोक्षश्च दूरमण्वपि ॥५१॥
साधुसाध्वीस्वरूपं मां भजेत् सर्वसमर्पणात् ।
दीनाऽतिथिनिराधाररूपं मां सेवयेन्मुदा ॥५२॥
विद्यार्थिबालबालासुवृद्धगुर्वादिरूपतः ।
विचरामि क्वचिद् देवि ! तद्रूपं मां प्रसेवयेत् ॥५३॥
तत्रस्थोऽहं परं श्रेयः करिष्यामि यथा स्वयम् ।
भक्तस्य तु सदा श्रेयः कर्तुं दीक्षां वहाम्यहम् ॥५४॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने लक्ष्मीचिन्हानि प्रमदान्तरचिह्वानि चेत्यादिकथननामा एकोनसप्ततितमोऽध्यायः ॥६९॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! विना मुक्तिं परलोकगतिः सदा ।
कष्टा कष्टप्रदा स्याद्वै ह्यात्म स्वार्जितजीवनः ॥ १ ॥
मृतस्य यदि कार्येऽपि योग्यपिण्डादि नार्पयेत् ।
अग्रे गतेर्विलोपः स्याद् दुःखबाहुल्यमापतेत् ॥ २ ॥
तस्मात्कर्मगतिं यास्यन् मरिष्यँश्च स्वयं तदा ।
जीवन्नेव स्वसौख्यार्थं कुर्यात्पुण्यमतन्द्रितः ॥ ३ ॥
नरो वा यदि वा नारी शरीरेन्द्रिययोगतः ।
सुखं धर्मं दुःखमधर्मं कुर्वन्ति स्वभावतः ॥ ४ ॥
सुखार्थं धर्ममाकुर्यादधर्मं तु दुःखाय वै ।
स्वेन नैव कृतं किञ्चित् पाश्चात्यः किं करिष्यति ॥ ५ ॥
तथापि स्नेहिलो लोको जनश्चापि तथा विधः ।
स्नेहाधीनः करोत्येव पाश्चात्येऽपि जनः क्वचित् ॥ ६ ॥
यदा जन्तुः शरीराद्वै परलोकाय याति वै ।
तदा प्राणैर्विहीनं तच्छरीरं शवसंज्ञितम् ॥ ७ ॥
अस्पृश्यं जायते तूर्णं कृमिविड्भस्मसंज्ञितम् ।
मृतस्योत्क्रान्तिसमयात् षट्पिण्डान् क्रमतोऽर्पयेत् ॥ ८ ॥
मृतस्थाने शवो नाम पिण्डस्तत्र प्रदीयते ।
तेन भूमिर्भवेत् तुष्टा तदधिष्ठातृदेवता ॥ ९ ॥
द्वारदेशे भवेत्पान्थस्तेन नाम्ना प्रदीयते ।
तेन दत्तेन तुष्यन्ति गृहवास्त्वधिदेवताः ॥१०॥
चत्वरे खेचरो नाम तन्नाम्ना तु प्रदीयते ।
तेन तत्रोपघाताय भूतकोटिः पलायते ॥११॥
विश्रामे भूतसंज्ञोऽयं तमुद्दिश्य प्रदीयते ।
पिशाचा राक्षसा यक्षा ये चान्ये तत्र वासिनः ॥१२॥
तस्य होतव्यदेहस्य नैवाऽयोग्यत्वकारकाः ।
चितायां साधको नाम प्रेतस्तस्मै प्रदीयते ॥१३॥
इत्येवं पञ्चपिण्डैर्हि शवस्याऽऽहुतियोग्यता ।
देहदोषविनाशश्च ततोऽग्निर्ज्वालयेच्चिताम् ॥१४॥
संमृज्य चोपलिप्याऽथ उल्लिख्योद्धृत्य वेदिकाम् ।
अभ्युक्षीय समाधाय वह्निं तत्र विधानतः ॥१५॥
पुष्पाक्षतैः सुसम्पूज्य देवं क्रव्यादसंज्ञकम् ।
स्वर्गं मृतं नयेत्युक्त्वा शरीराहुतिमाचरेत् ॥१६॥
अर्धदेहे तथा दग्धे दद्यादाज्याहुतिं ततः ।
यमाय चान्तकायेति मृत्यवे ब्रह्मणे तथा ॥१७॥
जातवेदोमुखे देया ह्येका प्रेतमुखे तथा ।
ऊर्ध्वं तु ज्वालयेद् वह्निं पूर्वभागे चितां पुनः ॥१८॥
असौ स्वर्गाय लोकाय स्वाहा ज्वलति पावकः ।
एवमाज्याहुतिं दत्वा तिलमिश्रां समन्त्रकाम् ॥१९॥
ततो दाहः प्रकर्तव्यः पुत्रेण किल निश्चितम् ।
रोदितव्यं ततो गाढं एवं तस्य सुखं भवेत् ॥२०॥
दाहस्यानन्तरं तंत्र कृत्वा संचयनक्रियाम् ।
प्रेतपिण्डं प्रदद्याच्च दाहार्तिशमनं किल ॥२१॥
ततः सचैलकं स्नानं पुत्रैः कृत्वा तिलोदकम् ।
शिलायां नामगोत्रेण दद्याच्च करताडनीम् ॥२२॥
विष्णुर्विष्णुरिति ब्रूयात् ततस्तस्य गृहं जनाः ।
द्वारस्य दक्षिणे गत्वा गोमयं गौरसर्षपान् ॥२३॥
निधाय वरुणं देवमन्तर्धाय स्ववेश्मनि ।
भक्षयेन्निम्बपत्राणि घृतं प्राश्यं गृहं व्रजेत् ॥२४॥
अश्रुपातं न कुर्वीत दत्वा चाथ जलांजलिम् ।
श्लेष्माश्रु बान्धवैर्भुक्तं प्रेतो भुंक्ते यतोऽवशः ॥२५॥
दुग्धं च मृन्मये पात्रे तोयं दद्याद् दिनत्रयम् ।
श्मशानं चत्वरं गेहं पश्यन् याम्यैः सनीयते ॥२६॥
गर्तपिण्डान् दशाहानि प्रदद्याच्च दिने दिने ।
जलांजलयो दातव्याः प्रेतमुद्दिश्य नित्यदा ॥२७॥
पुत्रो भार्या च वा शिष्यो भ्राता क्रियां करोतु वै ।
प्रत्यहं तु प्रदत्तस्य पिण्डस्याऽर्धं तु देहदम् ॥२८॥
तृतीयं यमदूतानां चतुर्थेनोपजीवति ।
अहोरात्रैस्तु नवभिः प्रेतो निष्पत्तिमाप्नुयात् ॥२९॥
जन्तोर्निष्पन्नदेहस्य दशमे तु क्षुधा भवेत् ।
देहभूतः क्षुधाविष्टो गृहोपरि स तिष्ठति ॥३०॥
तत्र स्थित्वा यममार्गे गच्छन्त्यथ यमालये ।
दुःखान्यनुभवन् पश्चाज्जन्म प्राप्स्यन् प्रशोचति ॥३१॥

अहो किंचिन्मया नैव स्वास्थ्ये मोक्षप्रदं कृतम्।
न हरेर्नामजपनं न कथाश्रवणं कृतम् ॥३२॥
न मया कीर्तनं गीतं स्मरणं न हरेः कृतम्।
न कृतं त्वर्चनं तस्य सतां पादाभिमर्दनम् ॥३३॥
न स्तोत्रं न नमस्कारः शरीरेण कृतं नहि।
शरीरं तन्मदीयं न यन्मया पोषितं बहु ॥३४॥
रक्षितं लालितं सम्यक् सेवितं च मुहुर्मुहुः।
वृथैव तत्परित्यक्तं तेन कार्यं न साधितम् ॥३५॥
इन्द्रियैः सह सम्मील्य देहो व्यर्थं प्रयापितः।
समयो मोक्षलाभार्थं न मया सार्थकीकृतः ॥३६॥
अनुकूलाऽभवन्नारी पतिश्चाप्यभवत् प्रियः।
पुत्र दासाश्चानुकूलास्तथाऽप्यात्मा प्रवञ्चितः ॥३७॥
धनं चासीद्विपुलं मे दानार्थं वस्तुजातयः।
केवलेन प्रलोभेन मया मोक्षो न चार्जितः ॥३८॥
साधुसाध्वीजनानां तु सेवा नैव कृता मया।
दुष्कृतस्य फलं भुंजे किमिदानीं भवेन्नु ॥३९॥
महता पुण्ययोगेन मानुषं जन्म लभ्यते।
तन्मया सार्थकं नैव कृतमन्यत्कृतं बहु ॥४०॥
क्रीडया यापितं बाल्यं यौवनं क्षपितं रतौ।
वार्धक्यं चिन्तया क्षिप्तं मृतौ किं स्यादशक्तिना ॥४१॥
शरीरं तत्कल्पवृक्षकामधेनुमणिप्रभम्।
क्षपितं चान्यकार्येषु नाऽऽत्मकार्यं कृतं मया ॥४२॥
किंकरैः पीड्यतेऽत्यर्थं पराधीनः करोमि किम्।
दानं नैव प्रदत्तं वै तपस्तप्तं न वै मया ॥४३॥
व्रतं वा पालितं नैव हुतं साधुमुखे नहि।
तीर्थे नैव कृतं किञ्चिद् वाप्यादि नैव कारितम् ॥४४॥
गोचरं न कृतं क्वापि साहाय्यं कः करिष्यति।
कृतः परोपकारो न न कृतं पारलौकिकम् ॥४५॥
नियमा नादृताः सम्यक् इदानीं किं भवेन्नु।
गुरोः पित्रोस्तथा सेवा नैव क्वापि मया कृता ॥४६॥
नारीदेहो महाकष्टः पराधीनः सदाऽशुचिः।
भक्त्या वा सेवया नैव मया वै सार्थकीकृतः ॥४७॥
नरदेहो महाभारो नैकतृष्णावहोऽशुभः।
भजनेन च पुण्येन न मया सार्थकीकृतः ॥४८॥
एवं स यातनाप्रेतो ब्रूते शोचति रोदिति।
पीड्यते ताड्यते दूतैः क्रन्दन्त्यपि मुहुर्मुहुः ॥४९॥
जायाधनधराधामसुखं स्मरति दुःखितः।
भृत्यमित्रसुतापुत्रकुटुम्बं संप्रशोचति ॥५०॥
मार्गे गन्तुं समर्थो न दूतैराकृष्यते ह्यधः।
करुणं विलपत्येव रे प्रिये हे सुतादयः ॥५१॥
मोचयन्तु समागत्य मामेतद्दुःसहाऽर्दनात्।
पुत्रः पौत्रो बान्धवो वा पुण्यं करोतु मत्कृते ॥५२॥
धेनुदानं मदर्थं वै करोतु मम पुत्रक!।
वैतरणीं तरिष्याम्यन्यथा मे तत्र मज्जनम् ॥५३॥
मया पाथेयमल्पं तु न नीतं पुण्यनामकम्।
न तप्तं न हुतं जप्तं न दत्तं कुत आव्रजेत् ॥५४॥
उष्णेनार्द्रेण शीतेन मार्गेण गम्यते यदा।
मूर्छितस्त्रासितस्तत्र हृदि शोचति केवलम् ॥५५॥
यदि मे बान्धवः कोऽपि वस्त्रादेर्दानमर्पयेत्।
तदैतद्दुःखनाशः स्यान्नान्यथा भोग एव ह ॥५६॥
किंकरास्तु वदन्त्येनं क्व ते पुण्यं हि तादृशम्।
तदा हा दैव सम्प्रोच्य धैर्यमालभते क्षणम् ॥५७॥
यदि वै मानुषं देहं प्राप्नुयां पुनरेव चेत्।
अवश्यं मुक्तिदं मार्गमाश्रयिष्ये शपाम्यहम् ॥५८॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने
मृतशवस्य क्रियापिण्डदानशोकप्रेतशोकादिप्रदर्शन-
नामा सप्ततितमोऽध्यायः ॥ ७० ॥

**श्रीनारायण उवाच—**

यमपुर्यास्तु दुःखानि समनुभूय नारकाः।
विनिःसृताश्च नरकाद्विचरन्ति यथा शृणु ॥ १ ॥
ते तु प्रेता यदि जन्म किमप्याप्तुमनिश्चिताः।
कुटुम्बं स्वं समन्विष्य पत्न्यां पुत्रे कुटुम्बिनि ॥ २ ॥
बान्धवे वा कृतस्थाना निवसन्ति गृहे जने।
विचरन्त्यशरीरास्ते क्षुत्पिपासार्दिता भृशम् ॥ ३ ॥
क्वचित्कदाचिद्बलतो रुन्धन्ति मोहयन्ति तान्।
दुःखयन्ति मूर्छयन्ति पीडयन्ति मुहुर्मुहुः ॥ ४ ॥
कथं त्वया मदर्थं वै मोक्षणार्थं कृतं नहि।
तस्माद् वयं प्रेतभूताः पीडयिष्याम उल्बणम् ॥ ५ ॥
इतिरोषेण संरब्धा पीडयन्ति पुनः पुनः।
पितृद्वाराणि रुन्धन्ति तन्मार्गरुन्धकास्तथा ॥ ६ ॥
पितृभागांश्च गृह्णन्ति पथिकांस्तस्करा इव।
स्ववेश्मनि मलमूत्रोत्सर्गाद्यशुद्धभूतले ॥ ७ ॥
उषित्वा च निरीक्षन्ते यं जनं स्यात् स रोगवान्।
पीडयन्ति ज्वररूपैस्तद्भक्ष्यं भक्षयन्ति च ॥ ८ ॥

पिबन्ति चापि तद्रक्तं सूक्ष्मं स्वल्पं क्वचित्क्वचित् ।
चिन्तयन्ति सदाऽनिष्टमुच्छिष्टादिस्थलस्थिताः ॥ ९ ॥
पिबन्ति तत्र पानीयं भोजनोच्छिष्टयोजितम् ।
कुटुम्बस्याऽऽत्मजादीनां चिन्तयन्ति छलं सदा ॥१०॥
एवमनिष्टमतयः स्वकान् पीडां प्रकुर्वते ।
स्वकुलं पीडयेत् प्रेतः परं छिद्रेण पीडयेत् ॥११॥
जीवन् स स्नेहवानासीन्मृतो दुष्टत्वमेति हि ।
छिद्रं मालिन्यमासाद्य मुहुः पीडां करोति सः ॥१२॥
सर्वक्रियापरिमृष्टं देवपूजाविहीनकम् ।
अशुद्धभोज्यभोक्तारं जनं प्रेतः प्रपीडयेत् ॥१३॥
एकस्य पुत्रनाशः स्यात्पुत्रं न लभतेऽपरः ।
एकः सन्ततिहीनः स्यात्प्रेतदोषोऽस्ति तत्र वै ॥१४॥
सन्ततिर्गर्भतो नश्येत् समुत्पन्नो विनश्यति ।
पशुद्रव्यविनाशश्च विरोधो बान्धवैः समम् ॥१५॥
प्रकृतिश्च विवर्तेत सुतेषु कलहस्तथा ।
अकस्माद् व्यसनप्राप्तिः सा पीडा प्रेतसंभवा ॥१६॥
उन्मत्तता ह्यनिद्रा च भोजनाऽपाचनो ज्वरः ।
उद्गारा उदरशूलं सा पीडा प्रेतसंभवा ॥१७॥
चौर्यरुचिर्गृहकलिर्धनधान्यदरिद्रता ।
सम्पत्तेस्तु शनैर्ह्रासः पीडेयं प्रेतसंभवा ॥१८॥
बहुत्पन्नमपि द्रव्यं विनिःसरति हस्ततः ।
सुभिक्षे कृषिनाशः स्याद् उद्योगे विपरीतता ॥१९॥
हीनकर्माऽभियानं स्यात् चौराग्निराजभिर्भयम् ।
महारोगोपपत्तिश्च स्वदेहपीडनं तथा ॥२०॥
पूर्वं तु सेविका पत्नी पश्चाच्छूनीव जायते
गृहनाशमतिर्नित्यं पीडा सा प्रेतसंभवा ॥२१॥
भावना स्मृतिहीना च कार्यं मानसवर्जितम् ।
कलहोऽनुदिनं स्वेषु सा पीडा प्रेतसंभवा ॥२२॥
स्त्रीणां गर्भविनाशः स्यान्न पुष्पं दृश्यते तथा ।
पुष्पं प्रदृश्यतेऽथापि फलं नैव प्रदृश्यते ॥२३॥
जीवितानां क्रमान्नाशो गृहे दन्तकलिः सदा ।
भोजने कोपसमुद्वेगादिना तृप्तिशून्यता ॥२४॥
कलहो घातकाश्चैव पुत्राः शत्रोरिवात्मजाः ।
न प्रीतिर्न च वै सौख्यं सा पीडा प्रेतसंभवा ॥२५॥
पित्रोर्वाक्यं न कुरुतो स्वपत्नीं न च सेवते ।
पत्नी पतिदृशि नाऽऽयात् सा पीडा प्रेतसंभवा ॥२६॥
अकस्मान्मृतिकर्तारः प्रेता भवन्ति पीडकाः ।
विकर्मणा भवेत् प्रेतो विधिहीनक्रियस्तथा ॥२७॥
तत्काले दुष्टसंसर्गाद् वृषोत्सर्गादृते तथा ।
दुष्टमृत्युवशाद्वापि ह्यदग्धवपुषस्तथा ॥२८॥
दाहक्रियादिलोपाच्च खट्वादिमृतिदोषतः ।
क्षुत्तृट्दाहमृतेर्दोषात् प्रेतत्वं जायते प्रिये ॥२९॥
वासनावशतः क्वापि वाणीचेष्टाविवर्जितम् ।
प्रेतत्वं सुस्थिरं भावि प्रेतमुक्तिं समाचरेत् ॥३०॥
न यो वै मनुते प्रेतान् मृतः प्रेतत्वमाप्नुयात् ।
प्रेतदोषः कुले यस्य सुखं तत्र न विद्यते ॥३१॥
मतिः प्रीतिः रतिर्बुद्धिर्लक्ष्मीः पञ्चविनाशनम् ।
तृतीये पंचमे पुंसि वंशच्छेदोऽभिजायते ॥३२॥
दरिद्रो निर्धनश्चैव पापकर्मा भवे भवे ।
प्रेता एवं दुःखयन्ति स्वानेव क्रूरभावतः ॥३३॥
क्षुत्पिपासार्दिताः प्रेताः प्रविशेयुः स्ववेश्मनि ।
प्रविष्टा वायुदेहेन शयानान् स्वस्ववंशजान् ॥३४॥
स्वप्ने पुत्रकलत्रादीन् दर्शयन्ति स्वरूपकम् ।
गजो हयो वृषो भूत्वा दृश्यन्ते विकृताननाः ॥३५॥
मार्जारो वनिता सर्पो दृश्यन्तेवै क्षणं मुहुः ।
शयनं विपरीतं वा स्वात्मानं वा विपर्ययम् ॥३६॥
उत्थितः संवीक्षते वै यः स प्रेतेन पीड्यते ।
निगडैर्बध्यते स्वप्ने प्रेतकृत् तन्न संशयः ॥३७॥
अन्नं तु याचते स्वप्ने वध्यते बहुशस्त्रकैः ।
स्वयं वा हन्ति मनुजं तत्सर्वं प्रेतदर्शितम् ॥३८॥
भुंजानस्य तु पक्वान्नं गृहीत्वा वै पलायते ।
स्वस्य वाऽन्यस्य सलिलं तृषार्तस्तु पिबेद् बलात् ॥३९॥
वृषभारोहणं स्वप्ने वृषभैः सह वाऽटनम् ।
उत्प्लुत्य व्योमगमनं तीर्थे वा क्षुधया गतिम् ॥४०॥
स्वकलत्रं स्वबन्धूंश्च स्वसुतं स्वपतिं गुरुम् ।
विद्यमानं मृतं पश्येत् तत्सर्वं प्रेतदर्शितम् ॥४१॥
यस्त्वपो याचते स्वप्ने क्षुत्तृषाभ्यां परिप्लुतः ।
तस्य प्रेतस्य मुक्त्यर्थं तीर्थे पिण्डान्प्रदापयेत् ॥४२॥
निर्गच्छतो गृहाद् रात्रौ स्वप्ने पुत्राँस्तथा पशून् ।
पितृभ्रातृकलत्राणि प्रेतदोषेण पश्यति ॥४३॥
तच्छान्त्यर्थं गृहे तीर्थे श्रीवृक्षे तर्पणं चरेत् ।
कृष्णधान्यानि संपूज्य प्रदद्याद् वेदपारगे ॥४४॥
सर्वविघ्नानि सन्त्यज्य मुक्त्युपायं करोति यः ।
तस्य कर्मफलं साधु प्रेततृप्तिश्च शाश्वती ॥४५॥
आत्मैव श्रेयसा युज्यत् प्रेततृप्तिं व्रजेच्चिरम् ।
ते तृप्ताः शुभमिच्छन्ति स्वात्मबन्धुषु सर्वदा ॥४६॥

अन्यथा तु दुरात्मानः क्लेशयन्ति स्ववंशजान् ।
दर्शनाद्भाषणाद् यस्तु चेष्टनात्पीडनादपि ॥४७॥
सद्गतिं न प्रापयति प्रेतशापैः प्रपीड्यते ।
अपुत्रकोऽपशुश्चैव दरिद्रो व्याधितस्तथा ॥४८॥
वृत्तिहीनश्च दीनश्च भवेज्जन्मनि जन्मनि ।
तस्मान्मुक्तिः प्रकर्तव्या प्रेतानां तर्पणैः सदा ॥४९॥
ते तृप्ता वारयन्ति स्वान् जायमानानुपद्रवान् ।
पश्चात्ते मुक्तिमायान्ति काले प्राप्ते तु पुत्रतः ॥५०॥
सदाबन्धुषु यच्छन्ति ऋद्धिं वृद्धिं च सम्पदः ।
पितॄनुद्दिश्य यः कुर्यान्नारायणबलिं शुभम् ॥५१॥
कृतेन तेन विघ्नानि विनश्यन्ति न पीड्यते ।
भूतप्रेतपिशाचादिपीडाभ्यो मुच्यते ध्रुवम् ॥५२॥
नारायणबलिं कृत्वा वृषोत्सर्गादिकं क्रियात् ।
सर्वोपद्रवराहित्यं सर्वसौख्यमवाप्नुयात् ॥५३॥
पितृमातृसमं लोके नाऽस्त्यन्यद् दैवतं परम् ।
प्रभुः शरीरजन्मकृत् प्रत्यक्षदैवतं पिता ॥५४॥
हितानामुपदेष्टा च गुरुः प्रत्यक्षदैवतम् ।
तस्मात् पितागुरुर्माता वृद्धाः पूज्याः पतिस्तथा ॥५५॥
शरीरं सम्पदो दाराः सुता लोकाः सनातनाः ।
यस्य प्रसादात्प्राप्यन्ते कोऽन्यः पूज्यतमस्ततः ॥५६॥
पुंनाम्नो नरकाद् यस्मात् पितरं त्रायते तु यः ।
तस्मात् पुत्र इति प्रोक्तस्तस्मात् पितरं तारयेत् ॥५७॥
अपमृत्युमृतौ स्यातां पिता माता च कस्यचित् ।
धर्मे तीर्थे विवाहादि श्राद्धं सांवत्सरं क्रियात् ॥५८॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने प्रेतानामशुद्धभूवास-प्रेतकृतविविधपीडा-प्रेतकृतस्वप्न-चिह्न-तन्निवृत्त्यादिनिरूपणनामा एकसप्तति-तमोऽध्यायः ॥७१॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! प्रवक्ष्यामि प्रेतान् त्वकालमृत्युजान् ।
पाखण्डकान् लोभमृतान् चाऽसंस्कारमृताँस्तथा ॥ १ ॥
चाण्डालादुदकात्सर्पात् शापाद् द्रुमाच्च वैद्युतात् ।
दंष्ट्रिशृंगिपशुभ्यश्च मृताः प्रेता भवन्ति ते ॥ २ ॥
उद्बन्धनमृता ये च विषशस्त्रादिसंहता ।
आत्मघातिन एवाऽऽभिचारकर्मादिसंहताः ॥ ३ ॥
महाकष्टैर्मृता रोगैर्दस्युभिर्मारिताश्च ये ।
विसूच्यग्निहता ये च भूखण्डादिमृताश्च ये ॥ ४ ॥
असंस्कृताः प्रमृता ये मलिना मलमृत्यवः ।
पिण्डलुप्ता वृषोत्सर्गक्रियाहीना मृताश्च ये ॥ ५ ॥
पर्वताद् भित्तिपाताद्वा व्योम्न्येव गमनान्मृताः ।
रजस्वलास्थितौ वाऽथ मैथुने शौचगे मृताः ॥ ६ ॥
अन्तरिक्षे ह्यन्तराले सीम्नि निर्जनके मृताः ।
दुष्टशल्यादिना नष्टाः सूतकादौ मृताश्च ये ॥ ७ ॥
तृषायां ये जलाऽनाप्ताः कुमृत्युवशगाश्च ये ।
ते वै प्रेताः प्रजायन्ते त्वटन्ति क्षितिमण्डले ॥ ८ ॥
गौपशुग्रासलोप्तारो जलाऽऽरामविनाशकाः ।
देववृत्तिविनेष्टारो दीनवृत्तिविभेदकाः ॥ ९ ॥
दानकर्मविलोप्तारः पुण्यकार्यप्रभञ्जकाः ।
बहूनां दुःखकर्तारः प्रेता भवन्ति पापतः ॥१०॥
परद्रोहरताः पापाः पापमृत्युवशंगताः ।
क्षुत्पिपासार्दिता नित्यं प्रेतत्वमुपयान्ति ते ॥११॥
न माता न पिता प्रेतजन्मादौ कारणं मतम् ।
प्रेतत्वं कर्मतो याम्यसंकल्पाच्च भवत्यतः ॥१२॥
तत्र वै विकृताकारा लम्बोष्ठा विकृताननाः ।
बृहच्छरीरदशना वक्राऽऽस्याश्चापि केचन ॥१३॥
सर्पास्याश्च बिडालास्या विविधास्या भवन्ति ते ।
नामापि यादृशं कर्म कृत्वा भवन्ति नारकाः ॥१४॥
तादृग्गुणं भवत्येव प्रेतस्य तु तदा तदा ।
यादृक्पापं विधायैव प्रेततां याति मानवः ॥१५॥
तथा तथा क्षुधा तस्य पिपासापि मुहुर्भवेत् ।
भोजनं वा जलं वापि शुद्धं नैवाप्यते क्वचित् ॥१६॥
शुद्धे तु भोजने क्वापि जले वा नास्त्यधिकृतिः ।
शुद्धं त्वन्नं वसुभिश्च शुद्धं जलं तु वारुणैः ॥१७॥
सर्वदा रक्षितं तत्र प्रेतानां भाग एव न ।
श्लेष्ममूत्रपुरीषैश्च रेचकैः समलैः सह ॥१८॥
पर्युषितैस्तथोच्छिष्टैः प्रेतानां भोजनं भवेत् ।
शौचहीनं मलिनं यत् प्रेता भुंजन्ति तत्सदा ॥१९॥
यस्य गृहे न वै शुद्धिर्न वा देवार्पणं भवेत् ।
मद्यमांसमये दुष्टे प्रेता भुंजन्ति तद्गृहे ॥२०॥
लोभक्रोधमदालस्यनिद्राशोकभयानि च ।
मायाकलहकापट्यं मालिन्यं स्नानहीनता ॥२१॥
धात्वादिमलशुद्धिर्न रजोवीर्याक्तमम्बरम् ।
लालालिप्तमयी भित्तिर्नालिका मूत्रसंभृता ॥२२॥

यत्र यत्र गृहे सन्ति प्रेता भुंजन्ति तत्र वै ।
नित्यं लिंगभगाभ्यां च क्षरत् तत्प्रेतभोजनम् ॥२३॥
मृत्युर्नित्यं वरं जन्तोः प्रेतत्वं मा भवेत् क्वचित् ।
पतितान्नेन भुक्तेन जठरस्थेन यो मृतः ॥२४॥
पापमृत्युवशाद् यो वै स प्रेतो जायते नरः ।
देवद्रव्यं परस्वादि हरेत्प्रेतः स जायते ॥२५॥
गुरुद्रव्यं परन्यासं हरेत् प्रेतः स जायते ।
विश्वासघातः कूटश्च कन्याविक्रयकृज्जनः ॥२६॥
भ्रातृधृक् जनहा गोघ्नः पशुघ्नः पारदारिकः ।
हेमहर्ता भुवो हर्ताऽनृतः प्रेतः स जायते ॥२७॥
मातरं भगिनीं भार्यां स्नुषां दुहितरं सुतम् ।
पितरं यो वा त्यजति स प्रेतो जायते नरः ॥२८॥
शिष्टाचारविहीना ये पित्रोर्भक्तिविहीनकाः ।
मद्यमांसरता ये च पशुघातादिकर्मिणः ॥२९॥
परद्रोहप्रकर्तारो महात्रासप्रदाश्च ये ।
ये छिद्रान्वेषिणो नित्यं परकल्पान्तकारकाः ॥३०॥
बहुव्यवायसंसक्ता ह्यार्दमांसादिभक्षकाः ।
क्रूरा व्यसनिनो दुष्टा निषिद्धाचरणे रताः ॥३१॥
चान्ये ये तादृशास्तेषां जायते ह्यायुषः क्षयः ।
स्वल्पायुषं कुशरीरं हित्वा प्रेता भवन्ति ते ॥३२॥
तादृशेन शरीरेण श्रेयः स्वस्य प्रसाधयेत् ।
पुण्येन कर्मणा स्वर्गं साधयेन्मोक्षमेव वा ॥३३॥
प्राक्तनैः कर्मपाकैस्तु सुखं दुःखं तु विन्दति ।
तदत्र जन्मनि सौख्यप्रदं धर्मं समाचरेत् ॥३४॥
नरो वा यदि वा नारी स्वार्थं कृत्वापि भूतले ।
परार्थं साधयेन्नित्यं श्रेयो मोक्षकरं परम् ॥३५॥
अन्यत्तु विस्मरेत् कामं मोक्षं तु नैव विस्मरेत् ।
अन्यत्तु विस्मरेत्कार्यं धर्मं तु नैव विस्मरेत् ॥३६॥
अन्यत्तु विस्मरेद् भोग्यं आत्मसौख्यं न विस्मरेत् ।
कृत्रिमं विस्मरेद् योगं हरिं हृत्स्थं न विस्मरेत् ॥३७॥
प्रभुं विहाय सुखदं दुःखदं भजते तु यः ।
दुःखं स्यात्तु फलं तस्य नान्यत् श्रेयः स विन्दति ॥३८॥
नारकास्त्रिविधास्तस्मात् विज्ञेयाः कमलेक्षणे ! ।
एके यमपुरस्थाश्चाऽऽपरे तु प्रेतरूपिणः ॥३९॥
अन्ये तु नारकाः सर्वे गृहे गृहेऽतिदुःखिनः ।
येषां गृहे न वै सौख्यं भोज्यभोजनवैभवात् ॥४०॥
नारीपुत्रधनधान्यात् तेऽत्र प्रत्यक्षनारकाः ।
येषां कुटुम्बं बहुलं पोषणे तु दरिद्रता ॥४१॥
वस्त्रान्नानि न पूर्यन्ते तेऽत्र प्रत्यक्षनारकाः ।
एकाऽधिकस्त्रीपतिर्यः स तु प्रत्यक्षनारकी ॥४२॥
व्यभिचारो गृहे यस्य तद्वै प्रत्यक्षनारकम् ।
परदारगणिकादिरतः प्रत्यक्षनारकः ॥४३॥
श्ववत् स्वनार्यां गणितः सोऽत्र प्रत्यक्षनारकी ।
पत्नी शुनीव या यत्र सापि प्रत्यक्षनारका ॥४४॥
येषां हूँ तूँ कृतो द्वेषः क्लेशो गृहजनेषु वै ।
न निद्रा न सुखं प्रेम ते वै प्रत्यक्षनारकाः ॥४५॥
स्वजनश्चौर्यकृत् यत्र स्वजनो यत्र घातकी ।
स्वजनो वंचको यत्र तद्वै प्रत्यक्षनारकम् ॥४६॥
आज्ञाकरा न पुत्राद्याः प्रेमदा वनिता नहि ।
कुटुम्बं मानदं नास्ति तद्वै प्रत्यक्षनारकम् ॥४७॥
भोजनं सर्वदा रूक्षं गालीदानादिपूर्वकम् ।
दर्शनं द्वेषनेत्रेण सोऽत्र प्रत्यक्षनारकी ॥४८॥
स्फाटितानि तु वस्त्राणि गृहं रथ्या च चत्वरम् ।
सत्कारे तु तिरस्कारः स तु प्रत्यक्षनारकी ॥४९॥
पराधीना दशा नित्यं सेवकाः क्षेपकास्तथा ।
स्वजनः श्वजनवच्च स तु प्रत्यक्षनारकी ॥५०॥
आधिव्याधिसमुपाधिक्लेशगृहं तु यद्गृहम् ।
छिद्ररौद्रधूर्तशाठ्याश्रयं प्रत्यक्षनारकम् ॥५१॥
पत्नी कामप्रदा नैव सर्वथा प्रतिपक्षिणी ।
पतिः रतिप्रदो नैव ताडकः सोऽत्र नारकः ॥५२॥
जन्मक्षता जन्मरोगा जन्मदुःखाः प्रतापिनः ।
क्लेशाढ्या जन्मत एव ते वै प्रत्यक्षनारकाः ॥५३॥
नरकं तु शरीरं वै तत्र वासात्तु नारकी ।
नरकः खलु संसारस्तत्र वासात्तु नारकी ॥५४॥
भक्त्या श्रेयःप्रकर्ता तु नरकान्मुच्यते खलु ।
यावन्नैव प्रमुच्यन्ते तावत् सर्वे तु नारकाः ॥५५॥
नरकस्य मलानां च लाळानां धातुयोगिनाम् ।
द्वाराण्यालम्ब्य रमते सोऽत्र साक्षाद्धि नारकी ॥५६॥
नरकेभ्यः समुत्पन्नो नरके सज्जते पुनः ।
पुष्टौ नरकरूपोऽयं कोऽन्यस्तस्माद्धि नारकी ॥५७॥
अवमानं महादुःखं बन्धनं तु ततोऽधिकम् ।
पराधीनं महात्रासस्तद्वानत्रैव नारकी ॥५८॥
तृष्णाख्यं नरकं यस्य लग्नं स नारकी मतः ।
एवं तृतीयनरकं सर्वस्यात्र गृहे गृहे ॥५९॥
अविशुद्धिः क्षयश्चैवाऽतिशयश्च त्रिदोषकम् ।
यस्य यस्याऽभवत् श्लिष्टं स वै नारकवद् भवेत् ॥६०॥

एते प्रेतास्तु जीवन्तो मृताः प्रेता यमालये ।
अदृश्या वायुरूपाश्च प्रेतास्त्रयः परेतकाः ॥६१॥
सर्वे वै दुःखभोक्तारः सर्वे च दुःखदास्तथा ।
सर्वे भक्तिविहीनाश्च को भेदोऽत्र परेतके ॥६२॥
याम्याश्चैव च वायव्या मानवीयाश्च ते त्रयः ।
यदि श्रेयो न कुर्वन्ति तर्हि प्रेताः समास्त्रयः ॥६३॥
तस्मान्मानुषदेहेन कर्तव्यं मोक्षकारकम् ।
तेन मुक्तिं प्रगन्तारः प्रेतत्वं नैव यान्ति हि ॥६४॥
नारी तु डाकिनी यस्य पतिर्वा भूतभीतिदः ।
पुत्रा राक्षसहन्तारः प्रेतस्तस्मात्पलायते ॥६५॥
योनिस्तु कण्डनी यस्याः क्लेदिनी मूत्रवीर्यकैः ।
कर्दमाऽऽभं शरीरं च तस्या भोक्ता तु नारकी ॥६६॥
श्वपचा ग्रामब्राह्यस्था अशुद्धा दोषपेटकाः ।
दोषे दोषस्तु को देयः प्रेतस्तत्र करोति किम् ॥६७॥
प्रेतं प्रेतो यथा नैव त्रासयेन्न च पीडयेत् ।
तथा प्रेतसमं दुष्टं पीडयित्वा लभेत किम् ॥६८॥
तादृशं तु कुटुम्बं वै त्यक्त्वा प्रेताः प्रयान्ति वै ।
तीर्थेऽरण्येऽथवाऽन्यत्र वसन्ति नित्यदुःखिताः ॥६९॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने केषां प्रेतत्वं प्रेतानां वासो भोजनादि प्रेतास्त्रिविधेत्यादि-वर्णननामा द्वासप्ततितमोऽध्यायः ॥७२॥

**श्रीनारायण उवाच—**

सर्वेषां सर्वयोन्यादौ सुखं न्यूनाधिकं कृतम् ।
मनुष्ययोनौ धर्मात्मा सुखी भवति सर्वथा ॥ १ ॥
पुण्यं पापं मनुष्याणां विधिजं च निषेधजम् ।
आगर्भात् पञ्चवर्षाणि न वै पापेन लिप्यते ॥ २ ॥
पञ्चवर्षोत्तरं देही त्वर्धपापेन लिप्यते ।
द्वादशाब्दपरो देही सर्वपापैः प्रलिप्यते ॥ ३ ॥
यथावस्थं यथापापप्रलेपस्तत्प्रमापतः ।
मृतस्य सूतकं चात्राऽधिकं न्यूनं च गम्यते ॥ ४ ॥
यावन्मासे गर्भपातस्तावद्दिनानि सूतकम् ।
तस्य किञ्चिदपि कर्म कर्तव्यं नैव विद्यते ॥ ५ ॥
जन्मत आचूडान्मृत्यौ बालं गर्ते विनिःक्षिपेत् ।
दुग्धं देयं यथाशक्ति बालानां तुष्टिहेतवे ॥ ६ ॥
आचूडात्पञ्चवर्षे तु मृतौ देहं दहेत्ततः ।
क्षीरं भोज्यं प्रदातव्यं बालानां भोजनं यतः ॥ ७ ॥
पूर्णपंचमवर्षस्य मृतौ कर्माणि सर्वथा ।
और्ध्वदैहिकानि यथाविधि कार्याणि सर्वथा ॥ ८ ॥
कुमाराणां च बालानां भोजनं वस्त्रवेष्टनम् ।
महादानविहीनं तु कुमारे कृत्यमाचरेत् ॥ ९ ॥
बाले वा तरुणे वृद्धे घटो भवति देहिनाम् ।
गर्ते निक्षेपणं बालमावर्षद्वयमेव ह ॥१०॥
ततः परं वा सर्वस्य देहदाहो विधीयते ।
शिशुरादन्तजननाद् बालः स्याद् यावदाशिखम् ॥११॥
ततः परं कुमारश्च स्यादामौञ्जीप्रबन्धनम् ।
पञ्चवर्षाधिके मृत्यौ वृषोत्सर्गविधिं विना ॥१२॥
तथा सपिण्डीकरणं विना ह्येकादशेऽहनि ।
श्राद्धानि षोडश कुर्यादुदकुंभं च दापयेत् ॥१३॥
दीपान्नजलवस्त्रादिस्वर्णदानादि भोजनम् ।
कारणीयं यथायोग्यं प्रेतत्वविनिवृत्तये ॥१४॥
पुत्रमुखं पिता दृष्ट्वा पितुः ऋणात्प्रमुच्यते ।
अत औरसपुत्रस्तु कुर्याच्छ्राद्धं तु पार्वणम् ॥१५॥
पौत्रं दृष्ट्वा ऋणत्रयान्मुच्यते स्वर्गमाप्नुयात् ।
अनौरसाः संगृहीताः पुत्रा नवविधा मताः ॥१६॥
एकोद्दिष्टं नवभिस्तैः कर्तव्यं श्राद्धमेव हि ।
औरसेन प्रकर्तव्यं सपिण्डीकरणं पितुः ॥१७॥
संवत्सरे तु सम्पूर्णे कुर्यात् पिण्डप्रवेशनम् ।
वर्षान्ते च कृते पिण्डमेलने याति सद्गतिम् ॥१८॥
एवं कृते तत एव प्रेतः पितृगणो भवेत् ।
भिक्षुर्भिक्षां न गृह्णीयाद् यावन्न स्यात्सपिण्डनम् ॥१९॥
स्वगोत्रेष्वशुचिस्तावद् यावत् पिण्डं न मेलयेत् ।
आनन्त्यात्कुलधर्माणां पुंसां चैवायुषः क्षयात् ॥२०॥
अस्थिरत्वाच्छरीरस्य द्वादशाहे सपिण्डयेत् ।
त्रिपक्षे वा षण्मासे वा वत्सरे या सपिण्डयेत् ॥२१॥
पुत्राऽभावे प्रिया कुर्यात् पत्न्यभावे सहोदरः ।
भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा ॥२२॥
सपिण्डनक्रियां कृत्वा कुर्यादभ्युदयं ततः ।
सर्वेषां पुत्रहीनानां पुत्री कुर्यात् सपिण्डनम् ॥२३॥
ऋत्विजः कारयेद्वापि पुरोहितमथापि वा ।
कृतचूडैः सुतैश्चापि पितृश्राद्धं च कारयेत् ॥२४॥
तेन वै पितरस्तृप्ताः प्रेततृप्तिस्तथा भवेत् ।
प्रेतस्य सुखलाभाय सर्वं पुत्रेण कार्यते ॥२५॥
तारयेन्नरकात्पुत्रो यदि मोक्षो न विद्यते ।
अपुत्रस्य गतिर्नास्ति स्वर्गे नैव च नैव च ॥२६॥

दाहः पुत्रेण कर्तव्यो ह्यग्निदाता च पौत्रकः।
तिलैर्दर्भैश्च भूम्यां वैकुण्ठे तत्र मतिर्भवेत् ॥२७॥
पञ्चरत्नानि वक्त्रे च तेन जीवः प्ररोहति।
प्रलेप्या गोमयैर्भूमिस्तिलान्दर्भांश्च निक्षिपेत् ॥२८॥
तस्यामेवाऽऽतुरो न्यस्तः सर्वं दहति दुष्कृतम्।
दर्भतूली नयेत्स्वर्गमातुरं तु न संशयः ॥२९॥
सर्वत्र वसुधा पुण्या लिप्ता निर्लेपजा ह्यपि।
यातुधानाः पिशाचाश्च राक्षसाः क्रूरकर्मगाः ॥३०॥
अलिप्ते ह्यातुरं मुक्तं विशन्त्येते वियोनयः।
ब्रह्मा विष्णुश्च रुद्रश्च श्रीर्हुताशन एव च ॥३१॥
मण्डले चोपतिष्ठन्ति तस्मात्कुर्वीत मण्डलम्।
अन्यथा म्रियते यः संक्रीडते वायुना स तु ॥३२॥
मम देहसमुत्पन्नास्तिलाः लक्ष्मि ! पवित्रकाः।
असुरा दानवा दैत्या विद्रवन्ति तिलैः स्थितैः ॥३३॥
दर्भा रोमसमुत्पन्नास्तिलाः स्वेदादतो न्यसेत्।
दर्भमूले स्थितो ब्रह्मा दर्भमध्ये तु केशवः ॥३४॥
दर्भाग्रे शंकरश्चास्ते त्रयो देवाः कुशे स्थिताः।
विष्णुरेकादशी गंगा तुलसी विप्रधेनवः ॥३५॥
असारे दुर्गसंसारे षट्पदी मुक्तिदायिनी।
निवारयन्ति चैतानि दुर्गतिं प्राप्तमातुरम् ॥३६॥
विष्णुदेहसमुत्पन्नो यतो वै लवणो रसः।
प्राणयाने तु लवणं देयं वै स्वर्गमार्गदम् ॥३७॥
दानं वै तत्र दातव्यं तेन पुण्येन रक्ष्यते !
तिलाँश्च गां क्षितिं हेम कार्पासं लवणं तथा ॥३८॥
सप्तधान्यं तथा लोहं ह्येकैकं पावयेत्तु तम्।
हेमदानात्सुखं स्वर्ग्यं भूमिदानान्नृपो भवेत् ॥३९॥
सप्तधान्यैस्तु धान्यात्तिस्तृप्ताश्च यमकिंकराः।
लोहदानेन याम्यास्तु नागच्छन्ति मृतगृहे ॥४०॥
कुठारो मुशलं दण्डः खड्गश्च च्छुरिका तथा।
पाशः कशा मुद्गरं च यमहस्तायुधानि वै ॥४१॥
कुरिणाः सार्वसूत्रापाः शूण्डा मर्कास्त्वनुर्वराः।
शबलाः श्यामदूताश्च प्रीणिता लोहदानतः ॥४२॥
उद्धरेत्तु लोहदानं ह्यात्मानं पापसंचयात्।
वैतरणीं तारयेद्वा स्वर्गं मोक्षं नयेद्धि गौः ॥४३॥
गवां सेवां महादेवो गोलोकोऽप्यकरोन्मुहुः।
श्रीहरिस्तु गवां सेवां सर्वदा प्रकरोति वै ॥४४॥
गावः सर्वविधा लक्ष्मीः गोषु नित्यं वसाम्यहम्।
हेमदानात्सूर्यलोकं चन्द्रस्याऽग्नेश्च वैभवम् ॥४५॥
दत्तं तु लवणं स्वर्गद्वारमुद्धाटयेत्तथा।
तिलदानं तु मर्त्यस्य महापातकनाशनम् ॥४६॥
तदन्यानि च दानानि वस्तूपकरणानि च।
दातव्यानि परेतस्य सुखमोक्षप्रपत्तये ॥४७॥
भूमिस्थं पितरं दृष्ट्वा ह्यर्धोन्मीलितलोचनम्।
स्वस्थानाच्चलिते श्वासे दानमातुरमुच्यते ॥४८॥
तस्मिन् काले सुतो यस्तु सर्वदानानि दापयेत्।
नारायण हरे कृष्ण श्रीपते कमलापते ॥४९॥
वासुदेव परब्रह्म स्वामिन् श्रीराम गोपते।
इत्येवं भजनं कार्यं प्राणप्रयाणसंगतौ ॥५०॥
श्रीहरिः शरणं मम श्रीकृष्ण त्वं गतिर्मम।
ॐ नमो भगवते वासुदेवायेति वा जपेत् ॥५१॥
दद्यादातुरसन्यासं मन्त्रं श्रीहरिरित्यपि।
श्रीकृष्ण इत्यपि मन्त्रं लक्ष्मीनारायणेत्यपि ॥५२॥
श्रीमन्नारायणेत्येव स्वामिन्नारायणेत्यपि।
रामकृष्ण हरिकृष्ण राधाकृष्ण ओमित्यपि ॥५३॥
नृसिंह दत्तात्रेय श्रीशंभो विष्णो जपेत्यपि।
जय गोविन्द गोपाल जय माधव इत्यपि ॥५४॥
विष्णुर्माता पिता विष्णुर्विष्णुः स्वजनबान्धवाः।
जलं विष्णुः स्थलं विष्णुर्विष्णुर्भूर्वैष्णवः कुशः ॥५५॥
विष्णुर्विप्रस्तिला गावो हेम धान्यं तु वैष्णवम्।
विष्णुर्दाता गृहीता च नेता प्रापयिताऽपि सः ॥५६॥
तमेव पूजयेन्नित्यमन्तकाले तु कीर्तयेत्।
न तस्याऽसद्गतिः क्वापि प्रेतभावोऽपि नैव च ॥५७॥
येन सन्तस्त्वन्तकाले दृष्टा नताश्च सेविताः।
प्रसादिताः स वै मोक्षं याति द्राक् नाऽत्र संशयः ॥५८॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने मृतस्य यथायोग्यसूतकसपिण्डीकरणादितिलादिदानाऽऽतुरमन्त्रप्रदानादिप्रदर्शननामा त्रिसप्ततितमोऽध्यायः ॥७३॥

**श्रीनारायण उवाच—**

अन्तकाले गवां दानं स्वर्गवासफलं खलु।
अश्वारूढाश्च ते यान्ति ददते ये ह्युपानहौ ॥ १ ॥
प्रेतस्तु छत्रदानेन छायया विचरेत्सुखम्।
एवं तथाऽन्नदानेन क्षुधाहीनश्चरेत्सुखम् ॥ २ ॥
तद्वद्वै दीपदानेन प्रकाशे याति सौख्यतः।
प्राङ्मुखोदङ्मुखो दीपो देवागारे कृतो भवेत् ॥ ३ ॥

आसनं भाजनं दद्यात् परलोकहितावहम् ।
कमण्डलुजलं दद्यात् तृषितः पिबतीति वाः ॥ ४ ॥
एकादशाहे दातव्यं कुसुमं चांगुलीयकम् ।
भाजनं चान्नदानं च प्रेतो यात्युत्तमां गतिम् ॥ ५ ॥
कुंभदानं वस्त्रदानं गजाश्वरथदानकम् ।
महिषीदानमित्येवं दातव्यं मृतनामतः ॥ ६ ॥
शय्यादानं सवस्त्रं चान्यानि वै शक्तितस्तथा ।
कार्याणि प्रेतसंतृप्तिसुखशान्त्युपलब्धये ॥ ७ ॥
शरीराद् वायुमिश्रः स आत्मा यदा प्रयाति हि ।
कस्यूर्ध्वरोमच्छिद्रेभ्य इन्द्रियगोलकात्तथा ॥ ८ ॥
प्राणः पुण्यकृतो यात्यन्यस्याऽधोभागतः सरेत् ।
दशेन्द्रियचतुरन्तःकरणपंचमात्रकम् ॥ ९ ॥
सूक्ष्मं देहं पुण्यपापे गृहीत्वा याति यत्र च ।
तत्र कर्मानुसारेण नवं देहं गृहं मतम् ॥१०॥
एकविंशतिलक्षाणि जरायुजानि तावता ।
स्वेदजा उद्भिज्जाश्चैव अण्डजाश्चापि तावता ॥११॥
इत्येवं चतुरशीतिलक्षाणि योनयो मताः ।
तत्र तत्र गतः प्रेतो पुनर्दुःखी पुनस्तथा ॥१२॥
पुनर्गर्भे निवसति जनिर्मृतिः पुनः पुनः ।
हरिं चाऽभजमानस्य गर्भे वासः पुनः पुनः ॥१३॥
स्त्रीषु पुरुषबीजेन गर्भा जायन्त इत्यतः ।
ऋतुकाले तु नारीणां त्यजेद् रात्रिचतुष्टयम् ॥१४॥
सप्तरात्रिमध्यगतो गर्भस्तु मलिनो भवेत् ।
पूर्वसप्तकमुत्सृज्य ततो युग्मेषु संविशेत् ॥१५॥
षोडशर्तुनिशाः स्त्रीणां गर्भधारणकारिकाः ।
चतुर्दश्यास्तु या रात्रिर्गर्भस्तिष्ठति तत्र चेत् ॥१६॥
गुणभाग्यनिधिस्तत्र पुत्रो जायेत धार्मिकः ।
युग्मासु पुत्रा जायन्ते स्त्रियास्त्वेकासु रात्रिषु ॥१७॥
पञ्चमेऽहनि नारीणां गौल्ममाधुर्यभोजनम् ।
कटुकारं च तीक्ष्णं च साज्यं युवतीभोजनम् ॥१८॥
नार्या स्त्वेवाऽऽतपो वर्ज्यः शीतलं केवलं चरेत् ।
ताम्बूलगन्धश्रीखण्डैः समं संगः शुभेऽहनि ॥१९॥
निषेकसमये शुक्रशोणितमिश्रणे यथा ।
नरनारीप्रचित्ते तु भावना तद्युतः सुतः ॥२०॥
चैतन्यं बीजरूपे तु शुक्रे नित्यं व्यवस्थितम् ।
कामं चित्तं च शुक्रं च यदा ह्येकत्वमाप्नुयुः ॥२१॥
तदा द्रवमवाप्नोति योषागर्भाशये नरः ।
रक्ताऽऽधिक्ये भवेन्नारी शुक्राधिक्ये भवेन्नरः ॥२२॥
शुक्रशोणितयोः साम्ये गर्भः षण्ढत्वमाप्नुयात् ।
अहोरात्रेण कललं बुद्बुदं पञ्चभिर्दिनैः ॥२३॥
दशमेऽहनि कर्कन्धुर्विंशाहे घनमांसता ।
तथा मासे तु सम्पूर्णे पञ्चतत्त्वानि धारयेत् ॥२४॥
मासद्वये त्वचामेदौ मज्जास्थीनि त्रिभिस्तथा ।
चतुर्थे तु गुल्फकेशाः पञ्चमे कर्णनासिके ॥२५॥
सप्तमे कण्ठगुह्यादि ह्यष्टमेऽङ्गप्रपूर्णता ।
नवमे बहिर्जिगमिषा दशमे तु प्रसूयते ॥२६॥
पृथिव्यास्त्वगस्थिनाडीरोममांसेतिपञ्चकम् ।
अपां लाळामूत्रशुक्रमज्जारक्तेतिपंचकम् ॥२७॥
वह्नेः कान्तिक्षुधानिद्रातृष्णाऽऽलस्येतिपञ्चकम् ।
वायोःश्वासगतिरोधाऽऽकुंचप्रसारपञ्चकम् ॥२८॥
रागद्वेषभयलज्जामोहा वा पञ्च वायुजाः ।
व्योम्नो घोषाश्रयच्छिद्रगाम्भीर्यश्रवणा गुणाः ॥२९॥
इडा पिंगला सुषुम्णा गान्धारी गजजिह्विका ।
पूषा यशा ह्यलम्बुषा कुहूः शंखिनी नाडिकाः ॥३०॥
प्राणोऽपानः समानश्चोदानो व्यानश्च वायवः ।
नागः कूर्मः कृकलश्च देवदत्तो धनंजयः ॥३१॥
हृदि प्राणो गुदेऽपानः समानो नाभिमण्डले ।
उदानः कण्ठदेशे स्याद् व्यानः सर्वशरीरगः ॥३२॥
नागस्य जृंभणं कूर्मवायो संकोचनं मतम् ।
शूलं कृकलजं देवदत्तस्योद्गारप्रभृति ॥३३॥
धनंजयो विकासाय मृतेऽपि त्रिदिवास्थितिः ।
कर्णाक्षिनासिकाननगुदगुह्यानि वै नव ॥३४॥
नाभिर्दशमी ब्रह्मरन्ध्रमेकादशकं स्मृतम् ।
स्त्रीगुह्ये गर्भगर्तौ द्वादशं स्तनौ चतुर्दश ॥३५॥
रोमकोटिस्तथा तिस्रो ह्यर्धकोटिसमन्विता ।
द्वात्रिंशद्दशनाः प्रोक्ता नखा विंशतिरेव च ॥३६॥
त्रिलक्षकेशा मूर्धन्या मुखस्थाश्चेति वै स्थितिः ।
त्रयस्तु मातृतो रोमलोहितमांससंज्ञकाः ॥३७॥
पितृतश्च स्नाय्वस्थिमज्जानश्च कोषषड्विधम् ।
मांसं पलसहस्रैकं रक्तं पलशतं तथा ॥३८॥
पलानि दश मेदश्च मज्जा पलं दश द्वयम् ।
रक्तं पलत्रयं प्रोक्तं शुक्रं द्विकुडवं तथा ॥३९॥
शोणितं कुडवं श्लेष्मा षट् विण्मूत्रं तथाऽर्धकम् ।
मनो बुद्धिरहं चित्तमेतत्करणमान्तरम् ॥४०॥
तत्सर्वं देहसंभूतो गर्भः प्रसूतिवायुना ।
निष्कासितो बहिर्याति मूर्छितो जन्म चैति हि ॥४१॥

ब्रह्माण्डस्याऽऽकृतिः सर्वा शरीरे समवस्थिता ।
सत्यलोकं शिरोरन्ध्रं तपोलोकं ललाटकम् ॥४२॥
जनलोकं मुखं प्रोक्तं महः कण्ठमुदाहृतम् ।
हृदयं तु स्वरं विद्याद्भुवर्लोकमुदर्यकम् ॥४३॥
भूलोकं नाभ्यधोभागो ह्यतलं कटिसंस्थितिः ।
वितलं गुह्यमाख्यातं सुतलं सक्थिमूलयोः ॥४४॥
ऊरू तलातलं महातलं जानुद्वयं तथा ।
रसातलं मते जंघे पादौ पातालमुच्यते ॥४५॥
क्षारोदस्त्वत्र तु मूत्रे दुग्धे क्षीरोदसागरः ।
सुरोदधिः श्लेष्मसंस्थो मज्जायां घृतसागरः ॥४६॥
रसोदधिर्मिष्टरसे शोणिते दधिसागरः ।
स्वादूदकः कुक्षिभागे गर्भोदः शुक्रसंस्थितः ॥४७॥
नेत्रयोः सूर्यचन्द्रौ च ओष्ठे तु मंगलः स्मृतः ।
बुधस्तु हृदये बोध्यो गुरुर्ज्ञाने व्यवस्थितः ॥४८॥
शुक्रे शुक्रः शनिर्नाभौ मुखे राहुर्व्यवस्थितः ।
केतुर्गुह्ये स्थितश्चेति पिण्डं ब्रह्माण्डमीरितम् ॥४९॥
आयुर्विद्या च वित्तं च यशो निधनमेव च ।
पञ्चैवैतानि सृज्यन्ते गर्भस्थस्यैव देहिनः ॥५०॥
अधोमुखं चोर्ध्वपादं गर्भादायाति वै बहिः ।
रक्ष्यमाणो जन्मकर्त्र्या रक्षँश्चान्यान्निजाश्रितान् ॥५१॥
पुत्रैः संरक्षितः पश्चान्मृतः पुनः स एव हि ।
भक्त्या हरिं भजेन्नित्यमतन्द्रितमनुक्षणम् ॥५२॥
तदा मुक्तिर्भवेदेव स्वर्गे सर्वसुखास्पदम् ।
यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् ॥५३॥
अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम् ।
सोऽश्नुते सर्वकामाँश्च सह ब्रह्मणा विपश्चिता ॥५४॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने दानफल-निषेकसमयगर्भनिर्माणशारीरकोषब्रह्माण्डैक्यतादि-कथननामा चतुःसप्ततितमोऽध्यायः ॥७४॥

**श्रीनारायण उवाच—**

षडशीतिसहस्राणि योजनानां प्रमाणतः ।
मार्गो यमपुरस्येति सर्वैः पाथेयमिष्यते ॥ १ ॥
यमग्रामेऽपि भोज्यं तैरिष्यते वंशजैः कृतम् ।
वृक्षास्तु रोपिता येन तडागादिजलाशयाः ॥ २ ॥
कृता येन हि मार्गे तत्सुखं यान्ति यमाध्वनि ।
हिमे तुषारशीताभ्यां पीड्यते न यमालये ॥ ३ ॥
तप्यमानः सुखं याति हीन्धनानि ददाति यः ।
यज्ञोत्सवादिकर्तारो भवन्ति तत्र मोदिनः ॥ ४ ॥
तृप्ता विभूषिताश्चैव गन्धपुष्पसमन्विताः ।
भूमिदानैः सुखं यान्ति सर्वकामैश्च पूरिताः ॥ ५ ॥
सुवर्णभूमिमुक्तादिवस्त्राभरणगोधनम् ।
तेन सर्वमिदं दत्तं येन दत्ता वसुन्धरा ॥ ६ ॥
व्यंजनानि विचित्राणि भक्ष्यभोज्यानि यानि च ।
दीयन्ते विधिना पुत्रैः पित्रे तदुपतिष्ठति ॥ ७ ॥
अपक्वे मृन्मये पात्रे दुग्धं दद्याद् दिनत्रयम् ।
आकाशस्थः पिबेद् दुग्धं प्रेतो वायुवपुर्धरः ॥ ८ ॥
चतुर्थे संचयं कृत्वा गंगास्पर्शो विधीयते ।
प्रातः प्रथमयामे तु दद्यादाद्यजलांजलिम् ॥ ९ ॥
अधरोत्तरवस्त्राभ्यां वस्त्रग्रन्थिं च दापयेत् ।
एकवस्त्रः प्रदद्यात्तु सदर्भे च तिलांजलिम् ॥१०॥
दिनत्रयं वसेत्तोये अग्नौ चापि दिनत्रयम् ।
आकाशे च वसेत् त्रीणि दिनमेकं च वासवे ॥११॥
वायुरूपो भ्रमत्येव वायुः कुत्र्यां स गच्छति ।
एकादशाहे यत् श्राद्धं तत्सामान्यमुदाहृतम् ॥१२॥
कृत्वा चैकादशाहन्तु पुनः स्नात्वा शुचिर्भवेत् ।
प्रथमेऽहनि यः कुर्यात् स दशाहं समापयेत् ॥१३॥
एकादशाहे प्रेतस्य दद्यात् पिण्डं समन्त्रकम् ।
सिद्धान्नं तस्य दातव्यं शर्कराऽपूपकादयः ॥१४॥
शय्यादानं च कर्तव्यं पश्चात् कोऽनुप्रदास्यति ।
तावद्बन्धुः पिता तावद् यावज्जीवति मानवः ॥१५॥
मृतमेनं शवं ज्ञात्वा क्षणात् स्नेहो निवर्तते ।
आत्मा वै ह्यात्मनो बन्धुरात्मा चैवात्मनो रिपुः ॥१६॥
अतो जीवन् हि सर्वस्वं स्वहस्तेनैव दापयेत् ।
तस्मात् काष्ठमयीं खट्वां हेमादिपट्टिकाभृताम् ॥१७॥
सगेन्दुकां सोपधानां साऽऽदर्शगुप्तदोरकाम् ।
गन्धवस्त्रादिसत्पुष्पां सद्व्यजनसदन्तिकाम् ॥१८॥
सप्रच्छादनपट्टिकां हैमलक्ष्मीहरिश्रिताम् ।
घृतकुंभं च ताम्बूलं कर्पूरागुरुचन्दनम् ॥१९॥
कुंकुमं दीपकं छत्रं चामरासनभाजनम् ।
उपानहौ सप्तधान्यं भृंगारकं वितानकम् ॥२०॥
एवं शय्यादिदानेन स्वर्लोकः सुखदो भवेत् ।
उपयुक्तं च तस्यासीद् यत्किञ्चिद्धि गृहे तथा ॥२१॥
गात्रे चापि च यल्लग्नं वस्त्रभाजनभूषणम् ।
दातव्यमुपतिष्ठेत्तदैन्द्रे सौर्येऽपि धामनि ॥२२॥

नवकं षोडशश्राद्धं शय्यां संवत्सरक्रियाम् ।
भर्तुर्या कुरुते नारी तस्याः श्रेयो भवेदिह ॥२३॥
प्रमदाया मृतौ देयं वस्तु स्त्रीभूषणादिकम् ।
आचार्याय प्रदातव्यं शय्यारत्नाऽम्बरादिकम् ॥२४॥
बहुभ्यो न प्रदेयानि गौर्गृहं शयनं स्त्रियः ।
एकस्मै तु प्रदातव्यमाचार्याय तु केवलम् ॥२५॥
यत्पुण्यं च व्यतीपाते कार्तिक्यामयने तथा ।
एकादश्यां च यत्पुण्यं चन्द्रसूर्यग्रहे तथा ॥२६॥
प्रयागे नैमिषे यच्च कुरुक्षेत्रे तथाऽर्बुदे ।
गंगायां यमुनायां च सिन्धुसागरसंगमे ॥२७॥
शय्यादानादिकार्येण तत्तत्फलमवाप्नुयात् ।
यत्रासौ जायते जन्तुर्भुंक्ते तत्रैव तत्फलम् ॥२८॥
कर्मक्षये क्षितौ जातो मानुषः शुभलक्षणः ।
महाधनी च धर्मज्ञः सर्वशास्त्रविशारदः ॥२९॥
अर्होऽसौ हव्यकव्येषु पितृभिः सह मोदते ।
दिव्यं विमानमारुह्य त्वप्सरोभिः समावृतः ॥३०॥
देवैः सुसत्कृतो याति वैकुण्ठं मरणोत्तरम् ।
श्राद्धे तृप्तः पिता दद्यात्पुत्रान् सन्ततिवर्धकान् ॥३१॥
तथा तृप्तो गोधनं तु सन्ददाति पितामहः ।
तथा तृप्तो हेमदः स्याद् यस्तस्य प्रपितामहः ॥३२॥
दद्याद्विपुलमन्नाद्यं वृद्धस्तु प्रपितामहः ।
नारायणबलिं कुर्याद् यस्य वंशो न विद्यते ॥३३॥
विमुक्तः सर्वपापेभ्यो मुक्तः स नरकाद् ध्रुवम् ।
धनिष्ठां तु समारभ्य रेवत्यन्तं तु पञ्चकम् ॥३४॥
पंचके तु मृतस्याऽत्र दाहो नैव विधीयते ।
शवस्य तु समीपे च क्षिप्यन्ते पुत्तलास्ततः ॥३५॥
दर्भमयाश्च चत्वारः ऋक्षमन्त्राभिपूजिताः ।
ततो दाहश्च कर्तव्यस्तैश्च पुत्तलकैः सह ॥३६॥
पञ्चकेषु मृतो योऽसौ न गतिं लभते नरः ।
दीयते न जलं तत्र सर्वदा ह्यशुभं भवेत् ॥३७॥
लोकयात्रा न कर्तव्या दुःखार्तः स्वजनो यदि ।
पंचकानन्तरं सर्वं कर्तव्यं विधिपूर्वकम् ॥३८॥
पुत्राणां गोत्रिणां तस्य सन्तापस्त्वन्यथा भवेत् ।
गृहे हानिर्भवेत् तस्य पंचके तु मृतस्य वै ॥३९॥
सूतकान्ते ततः पुत्रः कुर्याच्छान्तिकृदुत्तमम् ।
तिलान् गाँश्च हिरण्यं च तस्योद्देशे घृतं दिशेत् ॥४०॥
भोजनोपानहौ छत्रं हेममुद्रा च वाससी ।
दक्षिणा दीयते चापि प्रेतपातकनाशिनी ॥४१॥
अष्टादशैव वस्तूनि प्रेतश्राद्धे विवर्जयेत् ।
आशिषो द्विगुणा दर्भाः स्वस्त्यस्तु प्रणवस्तथा ॥४२॥
अग्नौकरणमुच्छिष्टं श्राद्धं तु वैश्वदैविकम् ।
विकीरश्च स्वधाकारः पितृशब्दोऽप्रवाचनम् ॥४३॥
आवाहनमुल्मुकं चाऽऽसीमान्तं च प्रदक्षिणा ।
विसर्जनं तिलहोमः पूर्णाहुतिर्दशाऽष्ट तान् ॥४४॥
ताम्बूलं दन्तकाष्ठं च भोजनं ऋतुसेवनम् ।
ग्राममध्ये स्थिते प्रेते वर्जयेत् पिण्डपातनम् ॥४५॥
कृत्वा निरशनं यो वै मृत्युमाप्नोति कोऽपि चेत् ।
मानुषीं तनुमुत्सृज्य प्राप्नोति हरितुल्यताम् ॥४६॥
तस्मादनशनं नृणां वैकुण्ठपददायकम् ।
स्वस्थावस्थेन देहेन मोक्षस्यैव प्रसाधकम् ॥४७॥
अनशनव्रतकर्ता ऋषीणां मण्डले वसेत् ।
यद्वा वैराजदेवेषु ईशेषु वाऽथ मोक्षणे ॥४८॥
तुष्टा ब्रह्मादयस्तस्य याम्याः सन्ति न यातनाः ।
अस्थीनि मानुषे देहे षष्ट्यधिकशतत्रयम् ॥४९॥
उदकुंभेन पुष्टानि जलकुंभः प्रदीयते ।
सुलिप्ते भूमिभागे च पक्वान्नमपि दीयते ॥५०॥
इत्येवमपि कर्तव्यं ब्रह्मभावनया सदा ।
नारायणः स्वयं तस्य मुक्तिं करोति संस्मृतः ॥५१॥
मृत्युपूर्वे मृतौ शवयात्रायां शवदाहने ।
श्राद्धे सर्वत्र वाच्यं श्रीहरिर्नारायणो मुहुः ॥५२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने प्रकीर्णकदानशय्यादानादिपंचकमृतोर्ध्वकार्याऽनशनकृन्मृत्यूत्तरगत्यादिनिरूपणनामा पञ्चसप्ततितमोऽध्यायः ॥७५॥

**श्रीश्वेतव्यास उवाच—**

एवं सुशिख ! भजनाद्धरेर्नामानुकीर्तनात् ।
हाटकांगदराजाऽपि कथारससुखोऽभवत् ॥ १ ॥

**श्रीनारायण उवाच—**

शृणु प्रिये प्रसंगाद्वै मया तु बहु वर्णितम् ।
लोकस्यैव हितार्थे तत् कथयेऽप्यधिकं हितम् ॥ २ ॥
जीवन्नेव जनः कुर्यान्मोक्षमार्गावलम्बनम् ।
मोक्षदानि मया चात्र कल्पसानि सुबहून्यपि ॥ ३ ॥
ज्ञानान्मुक्तिः कर्मनाशान्मुक्तिर्वैराग्यवेगतः ।
तीर्थान्मुक्तिः सता संगाद्धर्मान्मुक्तिर्गुरूश्रयात् ॥ ४ ॥

निष्कामकर्मतो मुक्तिर्मुक्तिः सन्यासमार्गतः ।
साध्वीधर्माश्रयान्मुक्तिर्मुक्तिस्त्यागाच्च सेवया ।
स्वस्याऽकर्तृत्वविज्ञानान्मुक्तिः संकीर्तनादपि ॥ ५ ॥
पित्रोस्तु सेवया मुक्तिर्मुक्तिः पतिनिषेवया ।
सर्वब्रह्मात्मविज्ञानान्मुक्तिः सर्वसमर्पणात् ॥ ६ ॥
परोपकारकरणान्मुक्तिः परसुखार्पणात् ।
अन्यार्थितप्रदानाच्च मुक्तिरात्मसुतोषणात् ॥ ७ ॥
वासनाक्षयतो मुक्तिर्मुक्तिर्विमलबोधतः ।
सर्वकार्ये कृतेऽप्यात्मा निर्लेपो मुक्त एव सः ॥ ८ ॥
अहंममत्वरहितः शीतोष्णरहितस्तथा ।
अब्रह्मसत्त्वरहितो मुक्त एव न संशयः ॥ ९ ॥
विसृज्य सच्चिदानन्दं भानं मृषाजडार्तिकम् ।
मनुते स्वं स वै बद्धो न मनुते स मुक्तकः ॥१०॥
भगवद्योगतीर्थानि पुर्यश्च हरिनिर्मिताः ।
नद्यश्च पर्वताः पुण्यारण्यानि मन्दिराणि च ॥११॥
शालग्रामशिला देवशिला बाणश्च मूर्तयः ।
तुलसीचन्दनप्लक्षधात्रीबिम्बवटद्रुमाः ॥१२॥
रोपणात्पालनात्सेकान्नमःस्पर्शनकीर्तनात् ।
निर्माणोद्धारकरणात्पापक्षपा हि मुक्तिदाः ॥१३॥
ज्ञानह्रदे सत्यजले रागद्वेषमलापहे ।
यः स्नातो मानसे तीर्थे मुक्तिं यायान्न संशयः ॥१४॥
देवः सर्वत्र वसति यदि भावोऽस्ति निर्मलः ।
देवः क्वापि न वसति नास्तिक्यं यदि राजते ॥१५॥
प्रातः प्रातः प्रपश्यन्ति गंगाद्यां मत्स्यघातकाः ।
सूर्यं सर्वेऽपि पश्यन्ति भावहीनो न मुक्तिभाक् ॥१६॥
पितृमातृसाधुसाध्वीगुरुगोदेवधर्मणाम् ।
कृते प्राणाँस्त्यजन् व्यक्तिर्निश्चयं मोक्षमाप्नुयात् ॥१७॥
जीवनं दानभोगाभ्यां मरणं रणतीर्थयोः ।
अवश्यं मुक्तिदं स्यात्तद् यदि देवार्पणान्वितम् ॥१८॥
पुण्यक्षेत्रे पुण्यतीर्थे पुण्यजनसमाश्रये ।
पुण्यस्थितौ पुण्यतिथौ मरणं मोक्षदं भवेत् ॥१९॥
कन्यादाता भुवो दाता दाता चाऽप्यभयस्य यः ।
देवप्रासादनिर्माता सद्मदाता च मुक्तिभाक् ॥२०॥
वापीकूपतडागानामारामोद्यानधर्मिणाम् ।
जीर्णोद्धारं प्रकुर्वाणो मुक्तिभाग् संशयो नहि ॥२१॥
सर्वोपकरणोपेतं गृहं धेनुं सवत्सकाम् ।
कन्यां सर्वगुणाढ्यां वै ददन् मुक्तिमवाप्नुयात् ॥२२॥
साध्वी पतिव्रता नारी पतिं विलोक्य वै मृतम् ।
स्वांगुष्ठादग्निमुत्पाद्य पत्या सह प्रयाति चेत् ॥२३॥
तिस्रः कोट्योऽर्धकोटिश्च समाः स्वर्गे महीयते ।
यदि भक्तिमती नारी पतिं नयति धामनि ॥२४॥
महापापसमाचारो भर्ता चेद् दुष्कृतो भवेत् ।
तस्याऽप्यनुव्रता नारी नाशयेत् सर्वकिल्बिषम् ॥२५॥
नित्यमन्नप्रदाता यः सदा ज्ञानप्रदायकः ।
नित्यात्मसुखदाता यः स वै मोक्षमवाप्नुयात् ॥२६॥
विद्यादानप्रदाता यः कन्यादानकरश्च यः ।
जीवनवृत्तिदाता यः स वै मोक्षमवाप्नुयात् ॥२७॥
सुकृतैः स्वर्गमाप्नोति स्वर्गे मोक्षस्थलं मतम् ।
त्यक्त्वा फल्गुक्रियां तस्मात्सततं मोक्षभाग्भवेत् ॥२८॥
दानं देयं दरिद्राय कन्या निर्वेशकाय च ।
अनाथकाय सद्वृत्तिः साधवे स्वेष्टवस्तुकम् ॥२९॥
भावना गुरवे देया विद्या पात्राय मोक्षिणे ।
ज्ञानं सात्त्विकशिष्याय भक्तिर्देयाऽन्तरात्मने ॥३०॥
मोहजालं तु मायायै सर्वस्वं परमात्मने ।
मुक्तिश्च स्वात्मने देया स्वात्मा देयः परात्मने ॥३१॥
एवं मोक्षं प्रपद्येत दाता दानफलं लभेत् ।
तस्मात्सर्वं प्रदातव्यं कोटियज्ञफलाधिकम् ॥३२॥
सर्वदानप्रदाता यः स्वस्मिन्नरक्षकश्च सः ।
अर्थान्मुक्त इति भाव्यो नित्यमुक्तः स सम्मतः ॥३३॥
नार्या कार्यं शृणु लक्ष्मि ! दानं कीदृग्विधं मतम् ।
मात्रेऽर्पणीयं कन्यात्वं कौमार्यं लग्नवह्नये ॥३४॥
देहस्तु पतये देयः पुत्रायाऽहंममत्वकम् ।
सौन्दर्यं तु जरायै च वासनाऽर्प्या तु मृत्यवे ॥३५॥
अपत्यस्नेहो वध्वै च ननामिक्यै तु बन्धनम् ।
भावना ब्रह्मणे देया भक्तिर्देयाऽन्तरात्मने ॥३६॥
मुक्तिश्च स्वात्मने देया स्वात्मा देयः परात्मने ।
इति सर्वस्वदानं वै कर्तव्यं मोक्षकांक्षिभिः ॥३७॥
विना विनिमयं नैव वस्त्वमूल्यमवाप्यते ।
सर्वस्वदानमूल्येनाऽमूल्यमोक्षमवाप्नुयात् ॥३८॥
आत्मा तु नित्यशुद्धोऽस्ति शुद्धिस्तस्य न शिष्यते ।
शरीरेणाऽप्यशुद्धेन शुद्धस्याऽशुद्धता कथम् ॥३९॥
पात्रं नैवाऽस्त्यशुद्धं वै लग्नं द्रव्यं त्वशुद्धिदम् ।
लग्नद्रव्याद्यपसारात्पात्रं तु शुद्धमेव ह ॥४०॥
हस्तो नास्त्यशुद्धो वै तु मलं चाऽशुद्धिरुच्यते ।
मलापसरणाद्धस्तः शुद्ध एवेति मन्यते ॥४१॥

यदि पात्रं च हस्तश्चाऽशुद्धौ भवतः संगतः।
तदा नाश्यं भवेत्पात्रं हस्तश्छेद्यो भवेत्तथा ॥४२॥
किन्तु नैवं प्रकुर्वन्ति मलं निष्कासयन्ति वै।
एवमात्मासदा शुद्धः स्वर्णाऽग्निव्योमवन्मतः ॥४३॥
रागद्वेषमलास्तस्मादपनेया धियाऽग्निना।
भक्त्याऽऽराधनया प्रेम्णा प्रीत्या स्नेहेन भावतः ॥४४॥
मला ध्मेया विनाश्याश्च निर्मलो ब्रह्मएव सः।
ब्रह्मरूपः स्वयं भूत्वा परब्रह्म भजेत्सदा ॥४५॥
नारायणबलं प्राप्य नारायणमवाप्नुयात्।
नारायणबलिस्तस्य कर्तव्यो नाऽवशिष्यते ॥४६॥
नारायणबलं यस्य नास्ति तस्यैव मुक्तये।
नारायणबलिः कार्यस्तद्रीतिं कथयामि ते ॥४७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने मुक्तेर्विविधसाधनानि निष्कामतया कृतानि निष्कामतया प्रदत्तवस्तूनि च मुक्तिदानि, देयदानानि निजात्मशुद्ध्यादीनि चेतिनिरूपणनामा षट्सप्ततितमोऽध्यायः ॥७६॥

**श्रीनारायण उवाच—**

तव स्नेहात् प्रिये ज्ञानं प्रोक्तं भवनिबर्हणम्।
नारायणबलिं ब्रूवे लोकोपकृतिहेतवे ॥ १ ॥
अकस्मातादिनष्टानामुद्धारार्थमयं विधिः।
शुभे तीर्थे शुभे क्षेत्रे पवित्रे देवमन्दिरे ॥ २ ॥
वारितटे पुण्यवृक्षतले नारायणबलिम्।
कुर्याद्विष्णुं समुद्दिश्य मन्त्रैः पौराणवैदिकैः ॥ ३ ॥
दक्षिणाभिमुखो भूत्वा प्रेतं विष्णुमिति स्मरेत्।
नारायण हरे कृष्ण प्रेतमोक्षकरो भव ॥ ४ ॥
पूर्णे तु तर्पणं कार्यं श्राद्धान्येकादशापि च।
तोयव्रीहियवान् दद्याद् गोधूमाँश्च प्रियंगवान् ॥ ५ ॥
हविष्यान्नं शुभां मुद्रां छत्रोष्णीषौ च चेलकम्।
क्षीरं क्षौद्रं च धान्यानि वस्त्रे चोपानहौ तथा ॥ ६ ॥
भूमौ स्थितेषु पिण्डेषु गन्धपुष्पाऽक्षतादिभिः।
दातव्यमथ शंखे वा पात्रे ताम्रे च तर्पणम् ॥ ७ ॥
प्रथमं वातधारेण जानुभ्यामवनीं गतः।
जलार्घ्यं चार्पयेद् देवमेकोद्दिष्टं पृथक्-पृथक् ॥ ८ ॥
'आपो देवी मधुमती'—त्वादिपिण्डे प्रकल्पिता।
'उपयाम—गृहीतोऽसि' द्वितीये तु निवेदयेत् ॥ ९ ॥
'येनापावतवामत्क'—तृतीये पिण्डसर्जने।
'ये देवाः स'—चतुर्थे तु, 'समुद्रं गच्छ'—पञ्चमे ॥१०॥
'अग्नि ज्योति' स्तथा—षष्टे, 'हिरण्यगर्भः'—सप्तमे।
'यमाय' त्वष्टमे ज्ञेयं, 'यज्जाग्रन्नवमे' तथा ॥११॥
दशमे 'याः फननी' ति, पिण्डे चैकादशे ततः।
'भद्रं कर्णेभि'रित्याद्यैः कुर्यात् पिण्डविसर्जनम् ॥१२॥
कृत्वैकादशदैवत्यं श्राद्धं कुर्यात्परेऽहनि।
विप्रानावाहयेदर्घ्यं दद्याद्देवान् विधापयेत् ॥१३॥
विष्णुं सर्वमयं रुद्रं ताम्रजं लोहजं यमम्।
ब्रह्माणं राजतं प्रेतं सीसकं दर्भकं च वा ॥१४॥
ततो 'यमाय त्वे'त्यादिमन्त्रेण सामवेदिनम्।
'अग्ने आयाहि'मन्त्रेण गोविन्दं पश्चिमे न्यसेत् ॥१५॥
'अग्निमीळे'तिमन्त्रेण पूर्वाशायां प्रजापतिम्।
'इषे त्वे'त्यादिमन्त्रेण दक्षिणे स्थापयेद् यमम् ॥१६॥
मध्ये तु मण्डले तत्र स्थाप्यो दर्भमयो नरः।
ब्रह्मा विष्णुस्तथा रुद्रो यमः प्रेतश्च पंचमः ॥१७॥
पृथक् कुंभेषु संस्थाप्याः पञ्चरत्नयुतेषु हि।
वस्त्रयज्ञोपवीतानि मुद्राश्चैव पृथक्पृथक् ॥१८॥
जपं कुर्यात्पृथक् तत्र ब्रह्मादिदेवतासु वै।
पंच श्राद्धानि कुर्वीत देवतानां यथाविधि ॥१९॥
जलधारां ततः कुर्यात् पिण्डे पिण्डे पृथक्पृथक्।
शंखे वा ताम्रपात्रे वा ह्यलाभे मृण्मयेऽपि वा ॥२०॥
तिलोदकं समादाय सर्वौषधिसमन्वितम्।
आसनं मुद्रिकां छत्रमुपानहौ कमण्डलुम् ॥२१॥
पात्रं भोज्यार्हधान्यं च वस्त्राण्यष्टविधं पदम्।
ताम्रपात्रं तिलपूर्णं सहिरण्यं सदक्षिणम् ॥२२॥
दद्यात्तु विधिना तत्र मुख्याय ब्राह्मणाय वै।
ऋग्वेदिने तु विप्राय दद्यात् ससस्यमेदिनीम् ॥२३॥
यजुर्वेदिब्राह्मणाय दद्याद् गां तु पयस्विनीम्।
सामवेदिब्राह्मणाय दद्यात् सद्वस्त्रधौत्रकम् ॥२४॥
दद्याद् यमं समुद्दिश्य तिलान् लोहं च दक्षिणाम्।
अथ पुत्तलकः कार्यः सर्वौषधिसमन्वितः ॥२५॥
पलाशस्य च वृन्तानां भागं कृत्वा च तत्र वै।
कृष्णाजिनं समास्तीर्य कुशैश्च पुरुषाकृतिम् ॥२६॥
शतत्रयषष्टियुतैर्वृन्तैः प्रोक्तोऽस्थिसंचयः।
विन्यस्य तानि बध्नीयात् कुशैरङ्गे पृथक्पृथक् ॥२७॥
चत्वारिंशच्छिरोभागे ग्रीवायां च दश न्यसेत्।
विंशतिश्चोरसि क्षेप्यं विंशतिर्जठरे तथा ॥२८॥

बाहुद्वये शतं दद्यात् कस्यां दद्याच्च विंशतिम् ।
ऊरुद्वये शतं चापि त्रिंशच्च जंघयोर्द्वयोः ॥२९॥
दद्याच्चतुष्टयं शिश्ने षड् दद्याद् वृषणद्वये ।
दश पादांगुलीभागे एवमस्थीनि क्लृप्तयेत् ॥३०॥
शिरःस्थाने नारिकेलं दद्यात्तारं च तालुके ।
आस्ये दद्यात्पंचरत्नं जिव्हायां कदलीफलम् ॥३१॥
अन्त्रेषु वालुकां दद्याद् वाह्लीकं घ्राण एव च ।
वसायां मृत्तिकां दद्याद् गोमूत्रं मूत्रके तथा ॥३२॥
गन्धकं धातवे दद्याद् हरितालं मनःशिलाम् ।
यवपिष्टं तथा मांसे मधु शोणित एव च ॥३३॥
केशेषु च जटाजूटं त्वचायां च मृगत्वचम् ।
पारदं रेतसः स्थाने पुरीषे पित्तलं तथा ॥३४॥
मनःशिलां तथा गात्रे तिलकल्कं च सन्धिषु ।
कर्णयोस्ताडपत्रं च स्तनयोश्चैव गुंजकौ ॥३५॥
नासायां शतपत्रं च कमलं नाभिमण्डले ।
वृन्ताकं वृषणे दद्यात् लिंगे तु गृंजनं शुभम् ॥३६॥
घृतं नाभ्यां प्रदद्याद्वै कौपीने तु त्रपु स्मृतम् ।
मौक्तिकं स्तनयोर्मूर्ध्नि कुंकुमेन विलेपनम् ॥३७॥
कर्पूरागुरुधूपैश्च शुभैर्माल्यैः सुगन्धिभिः ।
परिधाने पट्टसूत्रं हृदये रुक्मकं न्यसेत् ॥३८॥
ऋद्धिवृद्धिसुजौ द्वौ च नेत्रयोश्च कपर्दिकाम् ।
सिन्दूरं नेत्रकोणेषु ताम्बूलाद्युपहारकैः ॥३९॥
सर्वौषधियुतां प्रेतपूजां कृत्वा यथोदिताम् ।
साग्निकैश्चापि विधिना यज्ञपात्राणि चार्पयेत् ॥४०॥
'शन्नो देवी पुनन्तु मे' 'इमं मे वरुणे' ति च ।
प्रेतस्य पावनं कृत्वा शालग्रामशिलोदकैः ॥४१॥
विष्णुमुद्दिश्य गोदानं महादानं तिलानि च ।
वैतरणीं प्रदद्याच्च सर्वाभरणभूषिताम् ॥४२॥
प्रकुर्याद् वैष्णवं श्राद्धं प्रेतमुक्त्यर्थमात्मना ।
प्रेतमोक्षं ततः कुर्याद्धरिं तत्र प्रकल्पयेत् ॥४३॥
'त्वं विष्णु' रिति संस्मृत्य प्रेतमग्नौ दहेत्तथा ।
त्रिदिनं सूतकं रक्ष्यं दशाहं गतपिण्डकाः ॥४४॥
सर्वं वै वर्षपर्यन्तं कर्तव्यं प्रेतमुक्तये ।
स्वर्णभूगोप्रदानं च कर्तव्यं मोक्षलब्धये ॥४५॥
संक्रान्तौ कृतदानं तु द्युप्रदं सप्तकल्पकम् ।
हरौ सर्वस्वदानं तु स्यादनन्तं प्रमोक्षदम् ॥४६॥
वैतरणी भवेद् द्वेधा एका वै याम्यमार्गगा ।
शतयोजनविस्तीर्णा गोदानात्सा तु तीर्यते ॥४७॥
अपरा वासना साक्षाद् वैतरणी हृदि स्थिता ।
अनन्तयोजनदीर्घा ज्ञानभक्त्या हि तीर्यते ॥४८॥
प्रथमा तत्र दुर्गन्धा द्वितीया भावगन्धिनी ।
आद्या रक्तपूयतोया रागद्वेषजलाऽपरा ॥४९॥
मांसकर्दमयुक्ताऽऽद्या धातुकर्दमकाऽपरा ।
वज्रतुण्डैः शिशुमारैर्मकरैर्वज्रकर्तनैः ॥५०॥
क्रकचैः खर्जकैर्जीवैर्युक्ताऽऽद्या विषयैः परा ।
पतन्ति तत्र मर्त्यास्तु क्रन्दमाना हि पापिनः ॥५१॥
पयस्विन्याश्च गोर्दानं तारयेत् पूयशोणितम् ।
अमृतकृद्धरेर्दानं तारयेद् वासनानदीम् ॥५२॥
प्राणाः प्राघूणिका बोध्या न यास्यन्त्यात्मना सह ।
अत्रैव लयमेष्यन्ति प्राणदं त हरिं भज ॥५३॥
सप्राणं मरणं निद्रा ह्यप्राणं मरणं मृतिः ।
द्वयोर्नास्त्येव विश्वासो जीवस्य जीवनाय हि ॥५४॥
मोक्षार्थमद्य कुर्वीत यावन्न मरणं भवेत् ।
मरणं मोक्षपर्यायं प्राप्यं नाऽन्याभिधानकम् ॥५५॥
कः पतिः कस्य वा नारी कः पुत्रः कस्य वा पिता ।
ऋणानुबन्धसंसर्गाः सन्ति वैतरणीप्रदाः ॥५६॥
ममेदमिति सम्मत्वा घोरयत्नं करोति यत् ।
तत्सर्वं तु यत्नकृतः त्यक्त्वा तिष्ठति दूरतः ॥५७॥
वल्गन्तं नैव वल्गन्ति मानयन्तं न मन्वते ।
स्निह्यन्तं नैव स्निह्यन्ति तथाप्यज्ञो न पश्यति ॥५८॥
गुणवन्तं तु शुष्कार्था जनाः शंसन्ति वाह वाह ।
रूक्षाः स्वार्थं प्रसाध्यैव यान्ति दूरं न तान् स्मरेत् ॥५९॥
आदौ सार्थस्तथा मध्ये योऽन्तेऽपि सार्थतां भजेत् ।
अन्यत् त्यक्त्वा सदा सार्थं सखायं संभजेत तम् ॥६०॥
येन कर्तव्यमन्यद्वै नावशिष्येत किंचन ।
कर्तव्यं तत्कृतं सर्वं सखा मित्रं विमोक्ष्यते ॥६१॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने नारायणबलिक्रियानिरूपणनामा सप्तसप्ततितमोऽध्यायः ॥७७॥

**श्रीलक्ष्मीरुवाच—**

गतयो विविधाः कर्मप्राप्यास्तु संश्रुता मया ।
प्रेतानां मोक्षणं दानं प्रभुणा श्रावितं तथा ॥ १ ॥
प्रसंगाद्यमराजस्तु यमलोकोऽपि बोधितः ।
धन्वन्तरेः कथां चापि श्रोतुमिच्छामि माधव ! ॥ २ ॥

श्रीनारायण उवाच—

पूर्वे सत्ये तथा त्रेतायुगे संकल्पसिद्धिजम् ।
सर्वमासीद् यथेष्टं वै यदेच्छात्युपतिष्ठते ॥ ३ ॥
नासीदपूर्णता काचित्कस्यचिद्वस्तुनोऽपि च ।
सदा तृप्तिः सदा तोषः सदैवः कामनाफलम् ॥ ४ ॥
पञ्चभूतानि च तदा परिवर्तन्त इच्छया ।
जनो यदिच्छति भूतात् तत्तस्माल्लभते द्रुतम् ॥ ५ ॥
सर्वलोका हृष्टपुष्टा नीरोगाः स्वात्मतृप्तयः ।
आसन्प्राप्ते द्वापरे तु जातं तत्परिवर्तनम् ॥ ६ ॥
शक्तिस्तु कल्पवृक्षाणां किञ्चिन्नष्टाऽभवत्तदा ।
चिन्तामणीनां सामर्थ्यं किंचिन्नाशोन्मुखं गतम् ॥ ७ ॥
ऐश्वर्यं कामधेनूनां लयमापत् क्वचित्क्वचित् ।
तदा क्षेत्रवने स्वत्वं जना ह्यस्थापयन् स्वकम् ॥ ८ ॥
भोज्यादिलब्धिका चिन्ता जनानामभवद् हृदि ।
स्वत्वपरत्वभेदेन चिन्ताशोकस्पृहाऽऽधयः ॥ ९ ॥
अधर्मवंशाः स्वाऽऽवासं चक्रुर्जनहृदि द्रुतम् ।
जनाश्चिन्ताद्याकुलास्तु शुष्कायन्ते शरीरतः ॥१०॥
तेषां व्यथां निर्बलत्वं दूरीकर्तुं तदा खलु ।
ह्यपेक्षा समभूत्तत्रौषधानां बलदायिनाम् ॥११॥
भोज्यौषधिकणादीनां भाजानां फलमूलिनाम् ।
जनानां भोज्यसम्पत्त्यै कृषिसिद्ध्यै तदा खलु ॥१२॥
अपेक्षा समभूदुद्भिज्जातीनां लोकवृत्तये ।
का चौषधिर्भक्ष्यफलकणपत्रात्मिकेति वै ॥१३॥
का च कथं सुसम्पोष्या ह्युपयोज्या कथं भुजि ।
इत्येवमुद्भिद्विज्ञानी कश्चिन्नासीत्तदा ह्यजः ॥१४॥
ज्ञातृगुरुं प्रसस्मार पुनर्नारायणं पुनः ।
आगतो भगवाँस्तत्र सर्वज्ञानमयो विभुः ॥१५॥
शंखचक्रगदापद्मधरः सौवर्णकुण्डलः ।
सुवर्णमुकुटः स्वर्णमालाकौस्तुभराजितः ॥१६॥
मन्दहास्यं सर्वँस्तेजःसंव्याप्तमुखमण्डलः ।
पीताम्बरधर आयुर्वेदसंस्तुतसद्यशाः ॥१७॥
सर्वरसप्रपूर्णो हि यावद्दुग्धाब्धिपूजितः ।
यावच्छाकरसैर्वन्द्यः सर्वगुन्द्राऽभिसन्नतः ॥१८॥
दिव्यौषधिलतावृक्षतृणकन्दादिसंस्तुतः ।
शुभ्रमुखो हरिद्वर्णो रक्तपादकराम्बुजः ॥१९॥
युञ्जन् शुभाशिषा विश्वसृजं प्राह दयामयः ।
ब्रह्मन् कथं त्वया संस्मारितोऽहं द्वापुरे युगे ॥२०॥

ब्रह्मोवाच तदा देवं सर्वज्ञं भिषजां वरम् ।
नमस्करोमि देवेश वन्दे युगलपत्कजम् ॥२१॥
नमो ह्यणुस्वरूपाय द्व्यणुकाय नमो नमः ॥
त्र्यणुकाय नमश्चतुरणुकाय नमोनमः ॥२२॥
नमः पञ्चाणुरूपाय रजोरूपाय ते नमः ।
नमो धूलीस्वरूपाय नमस्ते कंकरात्मने ॥२३॥
नमो ग्रावस्वरूपाय नमस्ते पिण्डनामिने ।
नमः पिण्डाढ्यबीजाय नमोऽव्यक्तांऽकुरात्मने ॥२४॥
नमः पत्रस्वरूपाय नमः काण्डादिरूपिणे ।
नमः शाखप्रशाखाय नमः स्तम्बादिहेतवे ॥२५॥
नमो नालाय पुष्पाय नमो रसफलात्मने ।
नमः कणस्वरूपाय नमः पिष्टरसात्मने ॥२६॥
नमोऽपाकजरूपाय पक्वरूपाय ते नमः ।
नमो भक्ष्यभोज्यलेह्यचोश्यरूपाय ते नमः ॥२७॥
नमो मिश्रस्वरूपाय नम ओषधिरूपिणे ।
नमः क्वाथादिरूपाय नमश्चूर्णादिरूपिणे ॥२८॥
नमो रेचकमात्राय नमो भस्मादिवेदिने ।
नम आयुःप्रदात्रे ते नम ओषधिशक्तये ॥२९॥
नमस्ते परमेशान क्षेमकुशलकीर्तये ।
भोक्त्रे भोग्यप्रदानाय सर्वान्तर्यामिणे नमः ॥३०॥
देवदेव शरीराणां धाता त्वं पोषकोऽविता ।
युगेऽस्मिन् कल्पनासिद्धिर्लयं प्रयाति देहिनाम् ॥३१॥
संकल्पितं न चायाति नोपतिष्ठति नेक्ष्यते ।
तस्माद्वृत्तिकरं धान्यं पत्रं पुष्पं फलादिकम् ॥३२॥
कणं मूलं तथा स्तम्बं तृणं सस्यं पयोभृतम् ।
षड्रसं मधुरं स्निग्धं पथ्यं वै सर्वदेहिनाम् ॥३३॥
मृगयित्वा संविशुद्ध्य मिश्रयित्वा महौषधीन् ।
भोज्यं चाऽप्यौषधं लोकान् प्रबोधयितुमर्हसि ॥३४॥
न कश्चित् त्वामृते चास्य प्रोद्भिद्वर्गस्य बोधकः ।
विज्ञाताऽपि भवेन्नैव यः सर्वज्ञः स सर्ववित् ॥३५॥
कार्यकारणविज्ञाता यस्य ज्ञानमयं तपः ।
तस्माद् रसायनं सर्वं यद्भोज्यं पेयमेव वा ॥३६॥
यल्लेह्यं मृग्यमाम्रेयमासेव्यं शान्तिदं भवेत् ।
आस्वादनीयमाबन्ध्यं तत्सर्वं कर्तुमर्हसि ॥३७॥
यत्तप्यं यच्च वै क्वथ्यं यद्भृज्यं चूर्ण्यमेव यत् ।
यन्मिश्र्यं यत्साररूपं तत्सर्वं कर्तुमर्हसि ॥३८॥
इत्येवमर्थितो विष्णुर्मेरोस्तु शिखरे स्वकाम् ।
कुटीं चक्रे निवासं च तस्यामेवाऽकरोत्प्रभुः ॥३९॥

देवर्षिमुनिपितृभ्यो मानवादिभ्य एव च।
दत्तास्तु मार्गणं कृत्वा कृष्योषधय इत्यथ ॥४०॥
कर्षुकास्ताः सस्यरूपा वर्धयामासुरुत्सुकाः।
ताभ्यो विविधदेशेषु विविधान्नानि जज्ञिरे ॥४१॥
ताः कृषिवृत्तयो जाता उद्यानानि च भूरिशः।
अथापि प्राणिनां ताभिर्वनौषधिभिरप्ययम् ॥४२॥
बललाभाय भगवान् आयुर्वेदं लिलेख वै।
तादृशाः संप्रयोगाश्च व्याप्ता धन्वन्तरिकृताः ॥४३॥
रसायनादिशालाश्च कृता मेरौ बहुप्रथाः।
यत्रौषधं त्रिकालीयं ज्ञातव्यं नावशिष्यते ॥४४॥
कर्तव्यं मिश्रणं यत्रौषधीनां नावशिष्यते।
इति तु प्रथमे चतुर्युगे त्वेवाऽभवद्धरिः ॥४५॥
स्वयं धन्वन्तरिर्दिव्यः प्रभुर्ब्रह्माण्डरक्षकः।
अथापि कलिमापन्ना लोकास्तु बहुदुःखिताः ॥४६॥
तदा वै भगवान् साक्षादवतरीतुमिच्छति।
स वै द्वितीयरूपेण धन्वन्तरिर्बभूव ह ॥४७॥
वंशपरम्पराजन्मा काश्यां सोऽभूद् भिषग्वरः।
शृणु तां च कथां लक्ष्मि ! कस्मिन् वंशे बभूव सः ॥४८॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुग-
सन्ताने आद्यसत्युगीयधन्वन्तरिप्रादुर्भाव-
कथनादिनामाऽष्टसप्तति-
तमोऽध्यायः ॥७८॥

श्रीनारायण उवाच—

ब्रह्मणो मानसः पुत्रोऽत्रिऋषिर्लोकविश्रुतः।
काष्ठवदूर्ध्वबाहुः सँस्तपश्चचार दुश्चरम् ॥ १ ॥
त्रीणि वर्षसहस्राणि दिव्यानि विगतानि वै।
तस्याऽनिमिषनेत्राभ्यां तपस्तेजोमयं जलम् ॥ २ ॥
सुस्राव द्योतयन्दश दिशः कान्त्या सुदुग्धया।
तं तु जलात्मकं गर्भं दिशो विध्याज्ञया दश ॥ ३ ॥
दधुस्तथाप्यशक्तास्तद्धारणेऽतो जलं हि तत्।
घनीभूतं शुक्लवर्णं शीतहिमसुगोलकम् ॥ ४ ॥
पतितं वै पृथिव्यां तत् समादाय तु पद्मजः।
रथमारोपयामास लोकानां हितकाम्यया ॥ ५ ॥
तुष्टुवुर्ब्रह्मणः पुत्राः पुलस्त्यः पुलहः क्रतुः।
भृगुरंगिरा मरीचिर्वशिष्ठाश्चेति मानसाः ॥ ६ ॥
ऋग्भिर्यजुर्भिर्बहुभिरथर्वांगिरसैरपि ।
एवं विवर्धमानस्य तेजः सोमस्य बृंहितम् ॥ ७ ॥
आर्द्रीकुर्वंच्च लोकाँस्त्रीन्सर्वत्र पुष्टिमादधत्।
शुक्लं शीतं च तेजस्तत्पृथिवीमन्वपद्यत ॥ ८ ॥
ओषध्यस्ताः समुद्भूतास्तेजसा पोषणं गताः।
ब्रह्मणाऽपि रथो वाजिसहस्रसहितः शुभः ॥ ९ ॥
सोमायाऽर्पित एवेति तेन प्रोचरिते दिवि।
एवं पोष्टाऽभवद् देवो जगतः सर्वदेहिनाम् ॥१०॥
तपस्तेपे पुनश्चन्द्रः पद्मानां दशतीर्दश।
हिरण्यवर्णा लक्ष्म्यस्तु धारयन्त्यात्मना जगत् ॥११॥
विभुस्तासां धरः सोमो बभार ताः स्वतेजसा।
ततस्तस्मै ददौ राज्यं ब्रह्मा ब्रह्मविदां वरः ॥१२॥
बीजौषधिषु सर्वासु चाऽप्सु विप्रेषु रात्रिषु।
स तत्प्राप्य महद्राज्यं सोमः सोमवतां प्रभुः ॥१३॥
यज्ञं चक्रे राजसूयं सहस्रशतदक्षिणम्।
हिरण्यगर्भश्चोद्गाता ब्रह्मा ब्रह्मत्वमासवान् ॥१४॥
सदस्यस्तत्र भगवान् हरिर्नारायणः स्वयम्।
सनत्कुमारप्रमुखैराद्यैर्ब्रह्मर्षिभिर्वृतः ॥१५॥
दक्षिणायां त्रिलोकान्वै सोमोऽर्पयन्तु सर्वथा।
तं सिनी च कुहूश्चैव वपुः पुष्टिः प्रभा वसुः ॥१६॥
कीर्तिर्धृतिश्च लक्ष्मीश्च नव देव्यः सिषेविरे।
प्राप्याऽवभृथमव्यग्रः सर्वदेवर्षिपूजितः ॥१७॥
अतिराजातिराजेन्द्रः प्राप्यैश्वर्यं तु गर्वितः।
पत्नीं बृहस्पतेस्तारानाम्नीं जहार कामतः ॥१८॥
स याच्यमानो देवैश्च देवर्षिभिश्च वै पुनः।
नैव व्यसर्जयत्तारां बृहस्पतय इत्यतः ॥१९॥
शुक्रो बृहस्पतेर्द्वेषादग्रहीत्सासुरोडुपम्।
हरो गुरुसुतं स्नेहात्सर्वभूतगणावृतः ॥२०॥
सर्वदेवगुणोपेतो महेन्द्रो गुरुमन्वयात्।
जग्राह तेन रुद्रोऽपि स्वीयमाजगवं धनुः ॥२१॥
सुराऽसुरविनाशोऽभूत्सर्वेषां कदनं महत्।
संजातं च तदा दैवास्तुषितानामकाश्च वै ॥२२॥
ब्रह्माणं शरणं जग्मुरादिदेवं पितामहम्।
ततो निवार्योशनसं रुद्रं ज्येष्ठं च शंकरम् ॥२३॥
ददौ बृहस्पतये तु तारां स्वयं पितामहः।
अन्तर्वत्नीं च तां तारां दृष्ट्वा प्राह बृहस्पतिः ॥२४॥
तारे ! चन्द्रमसो गर्भं समुत्सृज्य त्विमं बहिः।
तारा नाऽवसृजत्तं तु कुमारं दस्युहन्तमम् ॥२५॥
तदा बृहस्पतिर्गर्भाकर्षणं त्वकरोत्स्वयम्।
जातमात्रः सचेताः स देवेभ्योऽप्यतिभास्वरः ॥२६॥

अभात् स रूपवान् सर्वदेवाधिदेवसदृशः ।
तं विलोक्य बृहस्पतिर्लुलोभ पुत्रके नवे ॥२७॥
ममाऽयमिति जग्राह पुत्रः प्राह न तेऽस्म्यहम् ।
अहं चन्द्रमसः पुत्रो मा मां स्पृश बृहस्पते ! ॥२८॥
तदानीं ब्रह्मणा पुत्रः सोमायैव समर्पितः ।
बुध इत्यकरोन्नाम तस्य पुत्रस्य चन्द्रमाः ॥२९॥
बुधस्येलाख्यपत्न्यां तु पुत्रः पुरुरवा ह्यभूत् ।
तस्य रूपगुणौदार्यशीलौजस्कपराक्रमान् ॥३०॥
नारदेनेन्द्रभवने गीयमानान्महागुणान् ।
श्रुत्वोर्वशी मनश्चक्रे पुरूरवसमीक्षितुम् ॥३१॥
मित्रावरुणौ तत्राऽऽस्तां गायकौ तु तया सह ।
ऊर्वश्या तु मनस्तत्र मानुषे संगतं परम् ॥३२॥
ज्ञात्वा तु मित्रावरुणौ प्राहतुरूर्वशीं प्रियाम् ।
देवौ विहाय मानुष्ये स्वैरिण्याश्चलते मनः ॥३३॥
तस्मात्स्वर्गादधो गच्छ नरेण संगता भव ।
एवं शापात्तु द्रागेव स्वर्गादूर्वश्यधोगता ॥३४॥
भूमौ तु मार्गयामास पुरूरवसमेव सा ।
कोकिलालापमधुरवीणयोपवने जगौ ॥३५॥
तादृशीमूर्वशीं तत्र राजा पुरूरवस्तदा ।
उवाच सुन्दरीं दृष्ट्वा भार्या मम भवेति च ॥३६॥
साऽपि तत्र सकामाऽऽसीत् ततस्तं प्रत्यभाषत ।
भवत्वेवं महाराज ! समयं यदि मे भवान् ॥३७॥
करोतु चेन्निवसामि करोमीत्यब्रवीन्नृपः ।
ऊर्वशी प्राह मेषौ द्वौ पुत्रभूतौ मतौ मम ॥३८॥
यावद् रक्षिष्यसि राजँस्तावद्वत्स्यामि ते गृहे ।
न नग्नो दृश्यसे राजन् कामादन्यत्र वै क्षणे ॥३९॥
नोच्छिष्टं मे यावद् दद्यास्तावद्वत्स्यामि तेऽन्तिके ।
अत्स्यामि घृतमात्रं वै रमिष्ये च त्वया सह ॥४०॥
एवमस्त्विति राजोक्त्वा जगृहे तत्करं वरम् ।
विमाने तां समारोप्याऽलकायां तु हिमालये ॥४१॥
वने चैत्ररथे पृथ्व्यां सरित्सु च सरस्सु च ।
अन्तरीक्षे च मेरौ च मानसेऽपि सरोवरे ॥४२॥
कमलानां वने कुन्दवने च रैवताचले ।
सरस्वतीतटे तद्वद् रेमे वर्धितरागतः ॥४३॥
एकषष्टिं स वर्षाणि रममाणां ह्यरंजयत् ।
सापि स्वर्गे तु विस्मृत्य तस्मिन्नेव स्पृहावती ॥४४॥
नाऽमन्यत देवलोकं रमणीयं च तं विना ।
अथ विश्वावसुनामा गन्धर्वस्तां विनाऽऽकुलः ॥४५॥

तामानेतुं स्वर्गलोकाद्भूर्लोकमगमत् क्षणात् ।
ऊर्वश्या सह राज्ञस्तु कृतं वाक्समयं ततः ॥४६॥
विदित्वा सह गन्धर्वैः संयुतश्च निशान्तरे ।
ऊर्वश्याः शयनाभ्याशाज्जहारोरणकं जवात् ॥४७॥
ऊर्वश्याहोरणः केन गृह्यते त्यज्यतामयम् ।
पुरूरवास्तदा श्रुत्वा वस्त्रहीनो विचार्य वै ॥४८॥
मां न नग्नं निरीक्षेत देवीति न ययौ तदा ।
जहाराऽन्यं तु तन्मेषं विललापोर्वशी तदा ॥४९॥
अनाथाया मम बालौ गृह्येते तस्करैरहो ।
नास्ति मे रक्षकः कश्चित् कं यामि शरणं नरम् ॥५०॥
अमर्षवशमापन्नं श्रुत्वा तद्वचनं नृपः ।
खड्गमादाय निर्वस्त्रो नग्नोऽधावत्तमोमये ॥५१॥
को दुष्टो हरते मेषं कुतो यासि स्थिरो भव ।
सन्तिष्ठ मत्प्रियामेषावादाय नैव जीवसि ॥५२॥
तावद्विद्युल्लता दीप्ता गन्धर्वैर्जनिता भृशम् ।
तत्प्रकाशैस्तदा देवी राजानं विगताम्बरम् ॥५३॥
दृष्ट्वा समाप्तसमया तद्गृहात्सा विनिर्ययौ ।
त्यक्त्वा मेषौ च गन्धर्वश्चित्ररथोऽपि निर्ययौ ॥५४॥
राजा मेषौ समादायाऽगमत्स्वशयनान्तिकम् ।
ऊर्वशीं तत्र नाऽऽलोक्य बभ्रामोन्मत्तवद्भुवि ॥५५॥
मार्गयन्नूर्वशीं भूमौ कुरुक्षेत्रमवाप ह ।
रम्ये सरोवरे तत्र कमलैः सर्वतोवृते ॥५६॥
चतुर्भिरप्सरःस्त्रीभिः क्रीडमानां विलोक्य सः ।
हे जाये क्वाऽऽगता चात्र स्नानार्थं मां विहाय वै ॥५७॥
आगच्छ मद्गृहं त्वेहि रमस्वाति मया सह ।
त्वां विना नैव जीवेयं प्रिये कस्मादिहाऽऽगता ॥५८॥
इत्येवं लपमानं तं प्रोवाचोर्वशिका ऋतम् ।
राजराजाऽलमेतेन चाऽऽग्रहेण तव प्रिय ! ॥५९॥
त्वत्तोगर्भिण्यहं वर्ते रतिं नैव करोम्यहम् ।
वर्षपूर्वे भवानत्र चायातु पुत्रलब्धये ॥६०॥
पुत्रजन्मोत्तरमेकां रात्रिं वत्स्यामि वै त्वया ।
इत्युक्तो नृपतिः प्रायात् राजधानीं सचिन्तनः ॥६१॥
ऊर्वशी वर्णयामास पतिं क्ष्मेशं सुसद्गुणम् ।
उषितास्मि सहानेन राज्ञा कामवशा चिरम् ॥६२॥
श्रुत्वा तदूर्वशीसख्यः साधु साध्विति चाऽब्रुवन् ।
प्राहुः सर्वा वयमपि रंस्यामोऽनेन भूभृता ॥६३॥
अथाऽब्दे तत्र राजाऽपि ययौ तटाकसन्निधौ ।
ऊर्वशीं पुत्रयुक्तां वै दृष्ट्वाऽतिहर्षमाप सः ॥६४॥

आयुषाख्यं सुपुत्रं सा ददौ तस्मै यथा पुनः।
सकामा तेन साकं तां रात्रिमेकां निनाय वै ॥६५॥
पञ्चपुत्रप्रदं गर्भं दधारोवाच तं पुनः।
गन्धर्वेभ्यो वरान् राजन् गृहाण मनसि स्थितान् ॥६६॥
तावत्तत्रापि गन्धर्वा दृष्टा राज्ञाऽथ चाह तान्।
अहं सम्पूर्णकोशश्च विजिताऽरातिमण्डलः ॥६७॥
ऊर्वश्या सह वासेन कालं नेतुं सदा वृणे।
गन्धर्वास्तत्समाकर्ण्य स्वर्गारोहणकारिणीम् ॥६८॥
अग्निस्थालीं स्त्रियं राज्ञे ददुः प्रोचुर्नृपं तदा।
अग्निं त्रेधा विभज्य त्वं यज्ञं कुर्वनया सह ॥६९॥
तेन त्वमूर्वशीलोकं प्राप्स्यसी नात्र संशयः।
अग्निस्थालीं गृहीत्वाऽथ राजा तस्मिन् वनेऽनया ॥७०॥
अग्निस्थाल्या स्त्रिया साकं रेमे तृप्तमना अलम्।
अथ स्त्र्यग्रे तु यत् पात्रं स्थालीरूपं तदाऽभवत् ॥७१॥
राजा चिक्षेप तत्पात्रं वने व्यर्थं विदित्य हि।
तावत् सा स्त्रीरग्निवर्णा तूर्णमदृश्यतां गता ॥७२॥
पात्रं चापि तदाऽदृश्यं जातं तदवमानतः।
राजा निराशतां प्राप्तश्चाययौ निजमन्दिरम् ॥७३॥
किन्तु कामप्रवेगेन चिन्तयामास तन्मुहुः।
अहो नारी गता पात्रं गतं क्षिप्तं वने मया ॥७४॥
ऊर्वशीलोकसंप्राप्त्यै गन्धर्वेणार्पितं हि मे।
तदाहरिष्ये तत्पात्रं विचार्येत्थं वनं ययौ ॥७५॥
गत्वा ह्याराधनां चक्रेऽग्निस्थालीपात्रयोर्मुहुः।
तावत्तत्राग्निस्थाली सा वृक्षरूपेण चोद्गता ॥७६॥
अग्निनारी शमीरूपा पात्रं स्थाली तु पिप्पलः।
शमीं च पिप्पलं राजा गृहीत्वा गृहमाययौ ॥७७॥
तयोर्विश्वासमापन्नश्चोर्वशीलब्धिदाविमौ ।
यद्वा नारी तथा स्थाली पुनः स्यातामिमाविति ॥७८॥
गृहे राजा संप्रतर्क्य निर्ममन्थोभयं सह।
अधोऽरणीं शमीं चक्रे पिप्पलं चोत्तरारणीम् ॥७९॥
गायत्र्यक्षरसंख्याकांगुलमानारणीद्वयात् ।
निर्मथनात् समुत्पन्नं तत्राग्नित्रयमेव तत् ॥८०॥
जुहावाग्नित्रयं राजा यज्ञे चोर्वशिकाप्तये।
यज्ञेष्वग्निः प्रसन्नोऽभूद्विमानं चानयत् दिवः ॥८१॥
तेनैव दिव्ययानेन यज्ञपुण्यप्रतापतः।
ऊर्वशीलोकमासाद्य रेमे राजा तया सह ॥८२॥
अथेन्द्रस्य सभायां तु नृत्यं सुरांगनाकृतम्।
राजा व्यलोकयत् तत्रोर्वशीनृत्यं मुहुः कृतम् ॥८३॥
नृत्याभिनयसामर्थ्यगर्वयुक्तोर्वशी तदा।
पुरूरवसं सान्निध्ये जहासातीव मोदतः ॥८४॥
राजा प्रसन्नतां प्राप्तो जहासापि निजां पुरः।
नाट्याचार्यस्तुम्बुरुस्तौ विलोक्य क्रोधमाप वै ॥८५॥
असंख्यदेवसदसि नृत्ये वै हसनं वृथा।
तस्मात्तु युवयोस्तावद्वियोगो भवतु द्रुतम् ॥८६॥
एवं शप्तौ तदेन्द्रं तौ जग्मतुः शरणं ततः।
इन्द्रः प्राह दयां कृत्वा पृथ्व्यां वै गन्धमादने ॥८७॥
पर्वते तु युवां गत्वा तीर्थे साध्यामृताभिधे।
सुस्नानं कुरुतं तेन शापमोक्षो भविष्यति ॥८८॥
सदा योगश्च युवयोः सुसम्पन्नो भविष्यति।
इत्येवं कृतवन्तौ तौ ततो दिवि विमानगौ ॥८९॥
रेमाते पञ्चपुत्राश्च तयोरासन् महाबलाः।
एको ज्येष्ठतमस्त्वायुर्मिलित्वा षट् सुपुत्रकाः ॥९०॥
गन्धर्वलोके विदिताः—आयुः, धीमान्, अमावसुः।
विश्वायुश्च, शतायुश्च, गतायुश्चोर्वशीसुताः ॥९१॥
राज्यं चक्रुः प्रयागे ते प्रतिष्ठाने सुभूतले।
तद्वंशेऽभूद्धन्वन्तरिर्भगवास्तं वदाम्यथ ॥९२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने अत्रेः सोमस्तस्य बृहस्पतिपत्नीतारायां बुधोत्पत्तिस्तस्य पुरूरवास्तस्योर्वश्यप्सरायां षट् पुत्रा इत्यादिप्रदर्शननामा एकोनाशीतितमोऽध्यायः ॥७९॥

**श्रीनारायण उवाच—**

यः पुरूरवसः पुत्र आयुस्तस्याऽभवन् सुताः।
पञ्चाऽऽद्यस्तत्र नहुषः, क्षत्रवृद्धो द्वितीयकः ॥ १ ॥
रजस्तत्र तृतीयस्तु चतुर्थो रंभनामकः।
पञ्चमस्तु—अनेना वै, पितृतुल्यपराक्रमाः ॥ २ ॥
क्षत्रवृद्धस्य चैको वै सुतहोत्रोऽभवत् सुतः।
सुतहोत्रस्य दायादास्त्रयः परमधार्मिकाः ॥ ३ ॥
काश्यः कुशो गृत्समदो गृत्समदस्य वै सुतः।
शुनकस्तस्य सुतः शौनकाख्यस्तस्य वै सुताः ॥ ४ ॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैवाऽभवन् शुभाः।
कुशात्मजो ह्यार्ष्टिषेणश्चरन्तस्तस्य चात्मजः ॥ ५ ॥
शौनकाश्चार्ष्टिषेणाश्च क्षत्रोपेता द्विजातयः।
काश्यस्य काशिस्तत्पुत्रो राष्ट्रो दीर्घतपास्ततः ॥ ६ ॥

दीर्घतपसो भगवान् धन्वन्तरिः सुतः प्रभुः ।
सोऽयं काशीपुरीराजो ह्यायुर्वेदप्रवर्तकः ॥ ७ ॥
यस्य नाम स्मरेज्जन्तुस्तस्य रोगो विनश्यति ।
द्वितीयोऽयं धन्वन्तरिः परमेश्वर एव ह ॥ ८ ॥
प्राक् तु जातः समुद्रे तु मथ्यमानेऽमृतार्थधृक् ।
स प्रोवाच तदा नारायणं पुत्रोऽस्मि ते प्रभो ! ॥ ९ ॥
विधत्स्व भागं स्थानं च मम लोकेऽत्र मे पितः ।
श्रीहरिः प्राह तं पुत्रं धन्वन्तरिं समुद्रजम् ॥१०॥
कृतो यज्ञविभागस्तु यज्ञियैर्हि सुरैस्तथा ।
वेदेषु विधियुक्तं च विधिहोत्रं महर्षिभिः ॥११॥
न शक्यस्तु त्वया होमः कर्तुं तत्तुल्य एव ह ।
अर्वाक् सुतोऽसि हे देव ! नाममन्त्रोऽसि वै प्रभो ॥१२॥
तस्मादिदानीं ते भागो नैव यज्ञे भविष्यति ।
किन्तु द्वितीये त्वं तत्र जन्मनि ख्यातिमेष्यसि ॥१३॥
अणिमादियुता सिद्धिर्गर्भस्थस्य भविष्यति ।
तेनैव च शरीरेण देवत्वं प्राप्स्यसि ध्रुवम् ॥१४॥
चरुमन्त्रैर्घृतैर्गन्धैर्यक्ष्यन्ति त्वां द्विजातयः ।
अथ च त्वं पुनश्चैव आयुर्वेदं विधास्यसि ॥१५॥
अवश्यंभावि ह्यर्थोऽयं प्रथमस्त्वं तु मानसः ।
समुद्रजो द्वितीयो वै काशीराजस्तृतीयकः ॥१६॥
इत्येवं त्रिविधं धन्वन्तरेः प्राकट्यमस्ति वै ।
द्वापरे तत्र सम्प्राप्ते पुत्रार्थं तप आचरन् ॥१७॥
दीर्घतपा न्यपश्यद्वै भगवन्तं हरिं पुरः ।
प्रसन्नास्यं प्रशान्तं च किंचिद्दातुं समागतम् ॥१८॥
जगाद भगवान् दीर्घतपसं वृणु चेप्सितम् ।
दीर्घतपास्तदोवाच प्रांजलिर्विनयान्वितः ॥१९॥
भगवान् यदि तुष्टस्त्वं पुत्रो मे धृतिमान् भव ।
तथेति समनुज्ञाय प्रभुरन्तरधीयत ॥२०॥
तस्य देहात् समुत्पन्नो लक्ष्मि ! धन्वन्तरिर्हरिः ।
काशीराजो महाराजः सर्वरोगप्रणाशकः ॥२१॥
धनुश्चिह्नकरो देवो भगवान् लोकरक्षकः ।
पोषकः सर्ववस्तूनां ज्ञानदो मोक्षदस्तथा ॥२२॥
आयुर्वेदं स वै देवश्चकार सभिषक्क्रियम् ।
तमष्टधा पुनर्व्यस्य शिष्येभ्यः प्रत्यपादयत् ॥२३॥
धन्वन्तरिसुतश्चासीत् केतुमान् सुमहायशाः ।
केतुमतो भीमरथो दिवोदासाऽपराऽभिधः ॥२४॥
दिवोदासो महानासीद् भक्तो विष्णुसमो बली ।
प्रजायां वर्धिता तेन हरेर्भक्तिस्तु सर्वथा ॥२५॥
स्थितोऽपि भगवान् शंभुर्मन्दरं चारुकन्दरम् ।
काशीं विना सुखं नाऽऽप दिवोदासनृपोषिताम् ॥२६॥
भगवान् शंकरो देवो वैष्णवोऽस्त्येव सर्वथा ।
नारायणं परंब्रह्म भजत्येव समाधिना ॥२७॥
दिवोदासोऽपि तु तद्वत्परमो वैष्णवो मतः ।
निष्कासयित्वा तं भक्तं वासमैच्छत्तु शंकरः ॥२८॥

**श्रीश्वेतव्यास उवाच—**

सुशिखैवं शंकरस्य कथायोगं प्रशान्तिदम् ।
दिवोदासस्य भक्तस्य चापि श्रुत्वा द्रुतं तदा ॥२९॥
लक्ष्मीः पप्रच्छ चाकर्ण्य दिवोदासं त्रिलोचनः ।
काशीं संत्याजयामास कथं तत्राऽगमत् नगात् ॥३०॥
किं कृतं तेन देवेन दिवोदासो यदत्यगात् ।
काशीं तु राजधानीं स्वां श्रोतुमिच्छामि माधव ! ॥३१॥
हाटकांगद ! इत्येवं लक्ष्मीः पृष्ट्वा पतिं प्रभुम् ।
एकाग्रमानसाऽभूत् तां नारायण उवाच ह ॥३२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुग-
सन्ताने धन्वन्तर्यवतारत्रयकथनना-
माऽशीतितमोऽध्यायः ॥ ८० ॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! पवित्रां तां कथां भक्तचमत्कराम् ।
दिवोदासो मम भक्तस्ततोऽपि भूतराट् स्वयम् ॥ १ ॥
परमो मम भक्तो वै तिष्ठती मन्दरे गिरौ ।
मन्दरेण तपस्तप्तं घोरं परमदारुणम् ॥ २ ॥
तपसाऽतिप्रसन्नो वै महादेवो जगत्पतिः ।
मन्दरं प्राह भूभृत् ! ते हृदये किं नु विद्यते ॥ ३ ॥
प्रसन्नोऽस्मि महादेवो वृणु स्वेष्टं वदाम्यहम् ।
मन्दरः प्राह देवेश ! तव वासं वृणोम्यहम् ॥ ४ ॥
तव वासेन मे कायः पवित्रः संभविष्यति ।
तीर्थमौर्धन्यमापन्नो मान्यतां संव्रजिष्यति ॥ ५ ॥
सर्वे देवर्षिमुनयो भवद्दर्शनमागताः ।
स्वपादजलदानेन पावयिष्यन्ति मां सदा ॥ ६ ॥
इत्यभ्यर्थनमासाद्य शंकरो लोकशंकरः ।
उवास मन्दरगिरौ तदा सर्वे दिवौकसः ॥ ७ ॥
ऋषयो मुनयश्चाथ यक्षराक्षसपार्षदाः ।
सर्वेऽपि मन्दरवासं चक्रुः शंभुसमाश्रयाः ॥ ८ ॥

काश्यां पूर्वे च ये ह्यासन् स्कन्दविष्णुगणाधिपाः ।
सूर्यो देव्यस्तथा चान्ये त्यक्त्वा काशीं गिरिं गताः ॥ ९ ॥
गतेषु देवसंघेषु दिवोदासः प्रतापवान् ।
चकार राज्यं निर्द्वन्द्वं प्रभोर्भक्तिभरं शुभम् ॥१०॥
राजधानी कृता राज्ञा वाराणसी सुनिश्चला ।
वर्धयामास भक्त्या तां प्रजा धर्मेण पालयन् ॥११॥
काशीवासास्तु ये देवाः स्वर्गिणः साऽप्सरोगणाः ।
संयमेन तु हीनाँस्तान् दिवोदासो व्यवासयत् ॥१२॥
धर्महीनैर्व्रतहीनैः संयमेन तु वर्जितैः ।
मम काश्यां न वै स्थेयं देवैरन्यैरपि ध्रुवम् ॥१३॥
भगवद्भक्तिहीनैश्च विशेषेण न वै क्षणम् ।
स्थातव्यं चेति राजा वै देवादीन् निरकासयन् ॥१४॥
सूर्यवत् स प्रतपिता दुर्हृदां हृदि नेत्रयोः ।
चन्द्रवत् सुहृदामासीत् हृदि मनसि नेत्रयोः ॥१५॥
शत्रुगणाः पलायन्ते दृष्ट्वा तं तु धनुर्धरम् ।
धर्माधर्मविवेक्ता स धर्मराज इवाऽपरः ॥१६॥
इन्द्र इव बली चैव पाशीव वैरिपाशकृत् ।
कुबेरइव धनवान् प्राण इव प्रजाग्रहः ॥१७॥
राजराजः स एवासीद् रुद्र इव रिपुञ्जयः ।
विश्वदेवसमो रूपे ह्यसाध्यो वसुनाऽधिकः ॥१८॥
दस्रतो रूपमापन्नो मरुतामपि रोदकः ।
सर्वविद्याधरो गीतिकुशलो लोकतोषणः ॥१९॥
यक्षराक्षसनागाश्च दानवास्तं सिषेविरे ।
गुह्यका गुप्तदासास्तु यस्य कर्मकराः सदा ॥२०॥
पवनो यस्य चाश्वान्वै परां गतिमशिक्षयन् ।
दानिनस्तु गजा यस्य दानमन्यानशिक्षयन् ॥२१॥
सभायां यस्य बोद्धारो योद्धारश्च रणाजिरे ।
शास्त्रैर्यस्य विजेता न न शस्त्रैः केनचित् क्वचित् ॥२२॥
राज्ये यस्य न वै द्वेष्याः प्रजाः सुखमयाशयाः ।
कलावानेक एवाऽऽसीज्जनाः सर्वे कलालयाः ॥२३॥
न कोऽप्यासीद् गोत्रभित् तद्राज्ये स्व एव गोत्रभित् ।
नासीत् कोपि क्षयी तस्य राज्ये स्वर्गे क्षयी शशी ॥२४॥
न तद्राज्येऽवग्रहोऽभूद् ग्रहास्तु नव वै दिति ।
हिरण्यगर्भो दिव्येको ह्यस्य सर्वे हिरण्मयाः ॥२५॥
स्वर्गे सप्ताश्च एकोऽस्त्यस्य जना बहुवाजिनः ।
स्वर्गाप्सरोगणश्रेष्ठा विषयेऽस्याऽप्सराः सदा ॥२६॥
एकैव पद्मा वैकुंठेऽस्य वै पद्माकराः शतम् ।
इति दुःखानि नैवाऽस्य नासन्नुपद्रवाः क्वचित् ॥२७॥
वसुधा वसुदा सर्वा धनहास्तु गृहे गृहे ।
एवं सुखयतो राज्यप्रजा राज्ञोऽयुताऽष्टकम् ॥२८॥
शरदां तु गतप्रायं तदा शंभुर्मनो दधे ।
वाराणस्यां निवासाय प्रतीकारं चिकीर्षति ॥२९॥
देवा बृहस्पतिं प्राप्य तेन चक्रुश्च मन्त्रणाम् ।
वयं भवद्युताः स्यामो विपत्कर्तार एव ह ॥३०॥
यद्यपि भूभृता तेन देवा यज्ञैः सुमानिताः ।
तथापि मानवा नैव मित्राणि वस्तुतो मताः ॥३१॥
यद्यपि तेन चास्माकं नापकृत्यं विधीयते ।
तथापि द्युसदां रीतिः परोत्कर्षाऽसहिष्णुता ॥३२॥
दिवोदासगृहे राज्ये नाल्पोऽप्यधर्मसंग्रहः ।
नाऽस्य पराभवो राज्ञः कर्तुं केनापि शक्यते ॥३३॥
एकपत्नीव्रताः सर्वे नरास्तस्य च मण्डले ।
पातिव्रत्यपरा नार्यो विद्यन्ते चाऽस्य मण्डले ॥३४॥
तद्राज्येऽविद्यविप्रो न नाऽवीरो बाहुजस्तथा ।
नाऽनुद्योगोऽपि वैश्योऽस्ति नाऽसेवाकृत् तु शूद्रकः ॥३५॥
नाऽस्य राज्ये ब्रह्मचार्यब्रह्मव्रतपरायणः ।
नाऽप्यसत्कारकृदस्य गार्हस्थ्यमपि मण्डले ॥३६॥
नाऽप्यवन्यवृत्तिकरा वानप्रस्थाश्च निःस्पृहाः ।
न चाऽसंगविहीनास्तु सन्यासपथगामिनः ॥३७॥
एवमन्येऽपि तद्राज्ये नाऽवर्त्मगतिका वृथा ।
नाऽनपत्यो न चाऽभक्तो नाऽद्रव्यः कोऽपि तद्भुवि ॥३८॥
नाऽवृद्धसेवी नाऽकाण्डमृतिर्नाऽद्रोहकेतरः ।
न चाटा नैव वाचाटा न शठा वंचका नहि ॥३९॥
न पाखण्डा न वै भण्डा न रण्डा न च शौण्डिकाः ।
तस्य राज्ये तु सर्वत्र श्रुतिशास्त्रादिसेवनम् ॥४०॥
सर्वत्र शुभकृद्वाणी मद्यमांसादिहीनता ।
न द्यूतद्योतकास्तत्र ऋणिनो न न तस्कराः ॥४१॥
पितृदेवादिपूजापि न विच्छिन्ना कदाचन ।
न तद्राज्ये व्रतलोपो नाऽतीर्थसेवनं तथा ॥४२॥
पतिपत्न्योः सदा स्नेहः कुटुम्बं क्लेशकृन्नहि ।
वन्द्यन्ते वन्दकैर्वन्द्याः पूज्यन्ते पूजकैः पराः ॥४३॥
आद्रियन्ते तु विद्वांसः प्रजाभिस्तत्र सर्वदा ।
विद्वद्भिश्च तपःश्रेष्ठास्तापसैश्च जितान्नराः ॥४४॥
जितान्तैर्ज्ञानधना ज्ञानिभिर्ब्रह्मविज्जनाः ।
ब्रह्मविद्भिः सर्वतत्त्वमीक्ष्यते ब्रह्मरूपकम् ॥४५॥
विप्रसाधुप्रसाध्वीनां मुखे देवान्नमर्प्यते ।
वापीकूपतडागानां जलान्यापूरवन्ति च ॥४६॥

मेधा मेहन्त ऐशान्या सस्यवस्त्रा मही सदा ।
हृष्टपुष्टाः प्रजास्तस्य शुचयोऽप्युभये सदा ॥४७॥
मार्गयन्तोऽपि छिद्रं तद्राज्ये देवा मनागपि ।
नाप्नुवन्नथ देवाँस्तान् बृहस्पतिरुवाच वै ॥४८॥
पराभवो विना छिद्रं नैव भावीति सर्वथा ।
उपायं भेदमादायाऽछिद्रोऽपि परिभूयते ॥४९॥
अस्मत्पक्षा अपि तत्र भवन्ति सुखसम्पदः ।
तथापि भेदकार्ये तु साहाय्याः स्युरतन्मताः ॥५०॥
इति निर्णयमासाद्य तदाऽस्याऽन्तर्बहिश्चरान् ।
विज्ञाप्य द्युसदः सर्वे चाग्निदेवं ववन्दिरे ॥५१॥
इन्द्रोऽप्यग्निं तदा प्राह त्वं काश्यां संप्रतिष्ठितः ।
मूर्तिरूपो भवाँस्तत्र राजते विषयात् ततः ॥५२॥
तामुपासंहर क्षिप्रमेवं स्याद्विजयस्तु नः ।
मूर्तिशून्ये याजकास्तु हव्यकव्यादिवर्जिताः ॥५३॥
विरंक्ष्यन्ते नृपे तत्र प्रजा अप्यर्थशून्यताम् ।
राजशब्दस्य चालोक्य रूढिशक्तिविहीनताम् ॥५४॥
प्रजास्तत्र विरक्ताः स्युः क्षीणं कोशबलं भवेत् ।
राजाऽपि क्षीणवृत्तिः स्यात् त्रिवर्गः क्षीयते स्वयम् ॥५५॥
दिवोदासस्तथा क्षीणो नश्यत्यथवा यास्यति ।
तेन चास्माकमेवात्र काश्यां वासो ह्यकण्टकः ॥५६॥
अतिशयाख्यदोषाद्यसंभिन्न एव संभवेत् ।
इत्यग्निरिन्द्रकथितमुपागम्य हृदि स्मरन् ॥५७॥
महादेवं स्वकां मूर्तिमाजहार स्थलात् ततः ।
आहवनीयां च गार्हपत्यां दाक्षिणकां त्रिकम् ॥५८॥
जाठराग्निं चापि तत्रत्यप्रजानां जहार सः ।
राजा प्रजा न विन्दन्ति प्रातर्मध्याह्नकर्मसु ॥५९॥
कमप्यग्निं तदा सर्वे कर्मठाः पाचकास्तथा ।
चिन्तयामासुरुग्रं वै किं स्यात्कृत्यं विनाऽग्निना ॥६०॥
राजा माध्याह्निकं कृत्वा प्रविवेश महानसम् ।
वैश्वदेवाय भोज्याय यावदागत्य तिष्ठति ॥६१॥
आन्धसिका वेपमानाः क्षुधार्ते तं व्यजिज्ञपन् ।
यदि विश्रावयेद् राजन् भवानभयदक्षिणाम् ॥६२॥
तदा विज्ञापयिष्यामः किमभूदिति तत्त्वतः ।
राज्ञा तथा कृतादेशाः पाचका ह्यूचिरे शनैः ॥६३॥
न जानीमो वयं नाथ कथमग्निरपासरत् ।
पुरात् कृशानौ विगते कथं पात्रादि संभवेत् ॥६४॥
सूर्यपाकेन यत्पक्वं तत् किंचिदानयामहे ।
तावद्राजा विवेदैतद्देवानां कृत्यमेव ह ॥६५॥
तपोबलादवेत्यैतद्विचार्याऽप्यवदत्तदा ।
अग्नौ गते न मे हानिर्देवानां हानिरेव वै ॥६६॥
मया तेभ्यो न राज्यं वै लब्धं लब्धं पितामहात् ।
स्वात्मबलाद् रचयिष्ये वायुमग्निं जलं भुवम् ॥६७॥
प्रकाशं चेति तत्सर्वं यद्यद्वाऽपेक्ष्यतेऽत्र तत् ।
सर्वं करिष्ये चैतन्याज्जडे मे न प्रयोजनम् ॥६८॥
इति चिन्तयतस्तस्याऽऽययुर्जानपदा जनाः ।
तमेव विरावं कर्तुं द्वाःस्थेनाऽन्तः प्रवेशिताः ॥६९॥
दत्त्वोपदां यथार्हं ते निषेदुर्मानदासने ।
जगदुर्दुःखमत्यर्थं वह्नियात्राकृतं तदा ॥७०॥
प्राह राजा तदाश्रुत्य सर्वस्य सुखमावहन् ।
चिकीर्षुरहमेवाऽऽसं पौराः ! कार्यमिदं पुरा ॥७१॥
परं ह्युपेक्षितप्रायं द्रोहो न स्यादितीच्छया ।
गतोऽनलोऽभवद्भद्रं प्राणोऽपि यात्वितो द्रुतम् ॥७२॥
शशी सूर्यो वरुणश्च भूराकाशोऽपि यान्त्वितः ।
भगवद्योगप्राबल्यादहमग्निर्भवाम्यहम् ॥७३॥
चतुर्धा वह्निरूपेण गृह्णामि पाचयामि यत् ।
अहं प्राण स्वयं भूत्वा जीवयिष्यामि देहिनः ॥७४॥
महावायुः स्वयं भूत्वा धारयिष्यामि गोलकान् ।
शशी चाहं स्वयं भूत्वाऽऽप्याययिष्येऽङ्कुरं जगत् ॥७५॥
तापयिष्ये स्वयं सूर्यो भूत्वेमां मेदिनीं सदा ।
मेघो भूत्वा स्वयं वृष्टिं करिष्ये वरुणोऽप्यहम् ॥७६॥
स्थास्येहं जलरूपेण भूरूपोऽपि भवामि च ।
धारयिष्ये जगत्सर्वं व्योमरूपो भवामि च ॥७७॥
इत्युक्त्वा सान्तयित्वा स्वप्रजा राजा ह्यभूत् तथा ।
बहुरूपश्च संभूय तत्तत्कार्याण्यवर्तयत् ॥७८॥
भगवल्लब्धयोगेन ह्येकोऽप्यनेकशोऽभवत् ।
तदा दिवौकसां राजा शल्यरूपो बभूव ह ॥७९॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने शंकरस्य मन्दरगिरौ वरदानकृतावासः काशीतो देवा अपि तत्र गताः दिवोदासराज्ये गुणवर्णनं काशीतो दिवोदासस्य निष्कासनोपायरचनं चेत्यादि- निरूपणनामा एकाशीतितमोऽध्यायः ॥८१॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! महादेवो मन्दराचलमन्दिरे ।
सुखं नाऽऽप काश्ययोगात्सर्वथोपस्करान्विते ॥ १ ॥

सुखदोमन्दरस्तस्य सुखमान्यकरोऽभवत् ।
लेपार्थं चन्दनं तस्य पांसुलेन्धनमाभवत् ॥ २ ॥
कंकणानि मृणालानि कंकराण्यभवँस्तदा ।
भाल चन्द्रोऽभवत्तस्य विरहाऽनलचन्द्रकः ॥ ३ ॥
काशीवियोगमूर्धन्यतापशान्तिकृतेऽमुना ।
जटाघट्टधृता गंगा न त्यक्ता रक्षिता बलात् ॥ ४ ॥
देवैश्चापि न विदितो विरहाग्निवदीश्वरः ।
ध्यानमग्नो यथापूर्वमास्ते मन्दरभूभृति ॥ ५ ॥
ह्येषैव लीला देवस्य स्वमूर्त्या तप्यते प्रभुः ।
अष्टमूर्तिः स्वयं यो वै तापयत्यखिलं जगत् ॥ ६ ॥
विषं हालाहलं कण्ठगतं नो तापयत्यमुम् ।
काशीविरहतापस्तं तापयत्यतिवर्धितः ॥ ७ ॥
अपि शीतलचन्द्रकान्तजा ननु माला विधृता तु वक्षसि ।
विरहान्नवकाशिकाकृताद् रविकान्तभ्रममावहत्यसौ ॥ ८ ॥
यदपांगविमोक्षणोद्भवादनलाद्भूलोकसुखावहोऽप्ययम् ।
ननु मानसभूश्च भस्मसादभवत्सोऽप्यनलेन तप्यते ॥ ९ ॥
श्रुतिमार्गमभिद्रुतोऽपि यो निजभक्तान्तरसौख्यसंप्रदः ।
स हि शान्तरयो वियोगजानलतप्तो भवतीति वैशसम् ॥१०॥
अपि काशिसुगंगजान्कणानभिसंगृह्य समागतोऽनिलः ।
स्पृशते यदि मां वियोगिनं परिसौख्यं मम जायते तदा ॥११॥
अपि काशिसुरथ्यगं रजो यदि च्यायात्यनिलेन वाहिना ।
तदपि प्रभु स्याद्वियोगजं ह्यसुखं वारयितुं बलादलम् ॥१२॥
इत्येवं शोकसंमग्नं शंकरं वीक्ष्य पार्वती ।
पतिदेवं नमस्कृत्य प्राह चान्तरखेदहृत् ॥१३॥
कथं देव महादेव जगतां नाथ चेश्वर ।
हृदि सन्तप्यसे लोकसन्तापहर शंकर ! ॥१४॥
वामा वामस्वरूपा ते संस्थिताऽस्मि तवार्चने ।
तापहाराय मे नाथ कथमुत्तप्यसे त्वया ॥१५॥
भूवारग्न्यनिलाकाशचन्द्रसूर्यात्ममूर्तिक ! ।
साक्षाऽनुमोपमाशब्दार्थापत्त्यैतिह्यमानवन् ! ॥१६॥
अनुपलंभाऽसंभवचेष्टायोगजभानवन् ! ।
कथं काशिवियोगस्ते सर्वयोगिन् प्रधर्षति ॥१७॥
सर्वान्तरात्मन् सर्वज्ञ काशवद्ब्रह्मरूपधृक् ।
त्रिशूलाऽग्रेऽस्ति ते काशी कस्तापस्तत्कृतस्त्वयि ॥१८॥
तथापि देवयोगात्सा दिव्या मोक्षकरी च पूः ।
न कालदेशवस्तुकृतपरिच्छेदोऽत्र वर्तते ॥१९॥
न विवृत्तिः परिणामो न ध्वंसो न मृषात्मता ।
न लयो न तिरोभावस्त्वद्योगात् काशिकाऽऽशवत् ॥२०॥

दिव्या दिव्यगणोपेता दिव्यतीर्था च पावनी ।
दिव्यमोक्षप्रदा काशी गन्तव्या नाथ ! सर्वथा ॥२१॥
नैव काशीसमं सौख्यं नैव काशीसमा स्थितिः ।
नैव काशीसमा शान्तिः काशी सर्वार्थदायिनी ॥२२॥
कं सुखमाप्यते का सा शं सुखमीयतेऽतः शी ।
काशी सुखमयी तस्मात् सर्वसेव्या भवत्यपि ॥२३॥
कस्य वै ब्रह्मणो वासादस्य विष्णोः समाश्रयात् ।
शस्य शंभोर्निवासाच्च काशी त्रिदेवमूर्तिका ॥२४॥
का तु सरस्वती प्रोक्ता आ तु लक्ष्मीः रमा स्वयम् ।
शी तु देवी पार्वती वै काशी देवीत्रयात्मिका ॥२५॥
न मन्दरो न हिमवान् नोद्यानानि वनानि च ।
वैहायसानि भूगानि सुखयन्ति तु काशिवत् ॥२६॥
न कर्मदेवो नाऽधर्मो न याम्यो नापि नाकजः ।
काशीवासिजनं दण्डयितुं शक्तो भवेदिह ॥२७॥
वासनानां क्षयो यत्र मरणान्न पुनर्भवः ।
निवासात्कर्मलेपो न कदा दृश्ये नु तां विभो ! ॥२८॥
पुराणि सन्त्यनेकानि नगराण्यपि वै तथा ।
पदे पदे स्मृद्धिमन्ति न काशीसदृशानि वै ॥२९॥
सत्यस्था भूमयः सर्वाः काशीतुल्या भवन्ति न ।
यथा त्वां च तथा मां च बाधते काशितापना ॥३०॥
काशी तापहरा यादृङ् न तादृङ् मम जन्मभूः ।
तपोयज्ञेष्टपूर्त्यर्हादानधर्मव्रतादिभिः ॥३१॥
न तथा प्राप्यते मुक्तिः काश्यां तु देहपातनात् ।
न योगसांख्यवेदान्तकर्मकाण्डात्मवित्तिभिः ॥३२॥
यथा काश्यां देहपातान्मुक्तिर्भवति शाश्वती ।
न वेदाध्ययनाद् ब्रह्मव्रतादपि गतिस्तथा ॥३३॥
न सत्ये चेन्द्रलोके वा मुनीनां निलयेऽपि न ।
नाऽतलादौ तथा क्वापि सुखं काश्यां तु यादृशम् ॥३४॥
मनसा संस्मृत्य काशीं योगाभ्यासफलं लभेत् ।
मानवात्खलु तिर्यक्त्वं काश्यां श्रेष्ठं मतं सदा ॥३५॥
मरणादेव मुक्तिः स्याज्ज्ञानजन्मनि किं फलम् ।
तस्माद् यायां यथा काश्यानन्दारण्यं तथा कुरु ॥३६॥
शंभुरुवाच देवेशि ! जानासि मम यद्व्रतम् ।
अभुक्तपूर्वमन्येन वस्तूपाश्नामि नेतरत् ॥३७॥
ब्रह्मणा नोदितो दिवोदासो धर्मेण तां पुरीम् ।
शास्ति तत्र कथं गम्यमन्यशास्तरि संस्थिते ॥३८॥
दिवोदासः पुरीं काशीं त्यक्त्वा यायाद् यथा तथा ।
कर्तव्यमेव सम्मील्य ततो वासः सुखावहः ॥३९॥

अधर्मिणस्तु विघ्नानि भवेयुर्न तु धर्मिणः।
धर्मस्थितस्य यो विघ्नमाचरेत् स विपद्यते ॥४०॥
विना छिद्रं कथं धर्मयुक्तो ह्युत्साद्यते स्थलात्।
न जरा न महाकालो न मृत्युर्व्याधयोऽशमाः ॥४१॥
न विघ्ना नैव रोगाश्च न ग्रहा न पिशाचकाः।
नेतयो नापि भूतानि बाधन्ते धर्मसंग्रहम् ॥४२॥
तस्मात्कं प्रेषयामीशे ! यस्तं विद्रावयेत् ततः।
एवं चिन्तयतः शंभोर्योगिनीमण्डलं पुरः ॥४३॥
उपस्थितं तु तच्चक्रं प्राह वाक्यमिदं हरः।
सत्वरं यात योगिन्यो यत्र राजाऽतिधार्मिकः ॥४४॥
दिवोदास इतिख्यातः काश्यां धर्मेण शास्त्ययम्।
यथा काशीं त्यजेच्छीघ्रं तथा कुरुत मायया ॥४५॥
अहं ततो नवीकृत्य पुरीं वाराणसीं शुभाम्।
सन्निवत्स्यामि तत्रैव शीघ्रं सर्वं विधीयताम् ॥४६॥
इत्याज्ञां शिरसा ताश्च गृहीत्वा ययुरुत्सुकाः।
प्रवदन्त्यो धन्यतमा वयं देवप्रसादिताः ॥४७॥
प्रेषिताश्चापि कार्यार्थं श्रीमदानन्दकाननम्।
उड्डीय मन्दरद्रोण्या व्योम्नि काश्युपरि स्थिराः ॥४८॥
ददृशुर्दिव्यसौधाढ्यं पुरं स्वर्गमिवाऽपरम्।
पताकाभिस्तु मार्गस्थान्पान्थानाह्वयतीव तत् ॥४९॥
श्वेतमणिमहाजालैर्नीलं व्योमापि निर्मलम्।
सर्वं धवलयत्तेजःप्रवाहैः स्वर्गगामिभिः ॥५०॥
अथ व्योम्न्येव सर्वाभिः स्वरूपाणां विवर्तनम्।
विविधं तु कृतं ताश्च विभिन्नज्ञानवर्तनाः ॥५१॥
विभिन्नवेषा ह्यभवन् काश्यां स्थले स्थले स्त्रियः।
अवतेरुश्च योगिन्यः सुन्दर्यः कार्यसिद्धये ॥५२॥

इति श्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने मन्दराचलगुहायां शंभोः काशीविरहजतापोत्तरं दिवोदासस्य विघ्नार्थं योगिनीचक्रप्रेषणमित्यादिकथननामा द्व्यशीतितमोऽध्यायः ॥८२॥

**श्रीनारायण उवाच—**

पश्य लक्ष्मि ! कियद्द्वेषा नार्यो स्वार्थार्थमुद्यताः।
बहुरूपाणि कुर्वन्ति यावत्स्वार्थौ न सिद्ध्यति ॥ १ ॥
योगिनीत्वं परित्यज्य देवीत्वं चाऽवगुह्य च।
काचित् सन्यासिनी काचित् तपस्विनी तु मानवी ॥ २ ॥
काचिद् बभूव सैरन्ध्री काचित्तु भिक्षुकी तथा।
काचित्तु मालिनी काचित् नापिती सूतिकाऽभवत् ॥ ३ ॥
काचिद्भिषग्वरारोहा काचित् तुलासुविक्रया।
काचिच्छाकविक्रयिणी काचित् सर्पादिरक्षिका ॥ ४ ॥
काचित्तु नर्तकी जाता काचिद् धात्री च किंकरी।
अपरा गायिका जाताऽन्या वादित्रप्रवादिनी ॥ ५ ॥
काचित् तालकरी चान्या जाता कार्मणमन्त्रदा।
काचिन्मालागुम्फनज्ञा काचित्तैलादिविक्रया ॥ ६ ॥
परा द्यूतविधानज्ञा इतरा गोपवल्लभा।
काचिन्नटी च काचित्तु रथ्याचत्वरमार्जिका ॥ ७ ॥
अन्या मध्वादिव्यापारा रथ्याचीवरमार्गणा।
अपत्यदाऽपरा जाता श्वपची चर्मकारिणी ॥ ८ ॥
साध्वी च कर्षुकी दुग्धरसव्यापारहारिणी।
तीर्थवासिनी चान्या च मुण्डिनी ग्रामठाऽपरा ॥ ९ ॥
काचिद् रेखाचिह्नद्रष्ट्री काचिल्लेखनचित्रिका।
वशीकरणमन्त्रज्ञा काचिज् ज्वरप्रमार्जिका ॥१०॥
काचिदंजनकुशला गुटिकासिद्धिबोधिका।
धात्वादिमिश्रिका काचिद् वास्त्रपत्त्राणकारिणी ॥११॥
पुंमोहिनी बहुरूपा वागग्निस्तंभबोधिका।
अदृश्यत्वखेचरत्वाऽन्याकारत्वादिमन्त्रदा ॥१२॥
उच्चाटनाऽऽकर्षणज्ञा युवचित्तविमोहिनी।
चिन्तितार्थप्रदा ज्योतिर्विज्ञाऽन्या पशुरक्षिका ॥१३॥
दन्तधावनदात्री च गोशकृत्संग्रहाऽटिनी।
मृत्तिकायाश्च विक्रेत्री काचित्तु नागरी तथा ॥१४॥
कर्मचारिणि दासी च भूत्वा भूत्वा प्रतिगृहम्।
प्राविशँस्ताश्च योगिन्योऽहर्निशं विचरन्ति च ॥१५॥
विघ्नार्थं छिद्रमल्पं वा मार्गयन्त्योऽपि नाऽलभन्।
ततस्ता एत्य गंगायास्तीरे समेत्य निष्फलाः ॥१६॥
किं कर्तव्यं क्व गन्तव्यं दिवोदासे प्रजासु च।
छिद्रं नो लभ्यते किंचित्कथं दूरं प्रकुर्महे ॥१७॥
कार्यसिद्धिं विना नैव गन्तव्यं स्वामिनं प्रति।
संमन्त्र्येति तत्र तस्थुर्न गता मन्दराचलम् ॥१८॥
प्रभोः कार्यमनिष्पाद्य प्रेष्यः को निकटे भवेत्।
प्रभुं विनापि काश्यां वै जीविष्यामोऽत्र सर्वदा ॥१९॥
प्रभू रुष्टो हरेद् वृत्त्यं काशी त्वर्थचतुष्टयम्।
तस्मात्काश्यां प्रवस्तव्यं गन्तव्यं नहि मन्दरम् ॥२०॥
इत्यारभ्य च योगिन्यः काश्यां तिष्ठन्ति सर्वदा।
चरित्वा दिक्षु विदिक्षु तिष्ठन्त्यागत्य तत्र वै ॥२१॥
नारायणं प्रभजन्त्यो दिवोदासं नमन्ति च।
आत्मनः परमं लाभं मन्यन्ते स्म च ताः सदा ॥२२॥

काशीसेवाकृतात्पुण्यादीशोऽप्यस्मान् समेष्यति ।
काशीं विना स तत्रापि दुःखितोऽत्राऽऽगतो भवेत् ॥२३॥
इति निश्चित्य योगिन्यः शंभोरानन्दकानने ।
अतिष्ठन् संस्मरन्त्यस्तं शंकरं लोकशंकरम् ॥२४॥
तासां नामानि वक्ष्यामि शृण्वत्र कमलालये ! ।
गजास्या सिंहवक्त्रा च गृध्रास्या काकतुण्डिका ॥२५॥
उष्ट्रास्याऽश्वखरग्रीवा वाराहस्या शिवानना ।
उलूकाक्षी घोररवा मायूरी शरभानना ॥२६॥
कोटराक्षी चाष्टवक्त्रा कुब्जा च विकटानना ।
शुष्कोदरी ललज्जिह्वा श्वदंष्ट्रा वानरानना ॥२७॥
ऋक्षाक्षी केकराक्षी च बृहत्तुण्डा सुराप्रिया ।
कपालहस्ता रक्ताक्षी शुकी श्येनी कपोतिका ॥२८॥
पाशहस्ता दण्डहस्ता प्रचण्डा चण्डविक्रमा ।
शिशुघ्नी पाशहन्त्री च काली रुधिरपायिनी ॥२९॥
वसापाना गर्भभक्षा शवहस्ताऽऽन्त्रमालिका ।
ऋक्षकेशी महाकुक्षिर्नागास्या प्रेतपृष्ठका ॥३०॥
दन्दशूकधरा क्रौंची मृगशृंगा वृषानना ।
फाटितास्या धूमश्वासा व्योमपादोर्ध्वदृष्टिका ॥३१॥
तापिनी शोषिणी स्थूलघोणोष्ठा कोटरी तथा ।
विद्युल्लोला बलाकास्या मार्जारी कटपूतना ॥३२॥
अट्टहास्या च कामाक्षी मृगाक्षी चेति ता मताः ।
चतुःषष्टिस्तु योगिन्यः पूजिता नवरात्रके ॥३३॥
दुष्टबाधां नाशयन्ति गर्भबालादिरक्षिकाः ।
न डाकिन्यो न शाकिन्यो न कूष्माण्डा न राक्षसाः ॥३४॥
तस्य पीडां प्रकुर्वन्ति नामान्येतानि यः पठेत् ।
रणे राजकुले वापि विवादे जयदान्यपि ॥३५॥
बलिपूजोपहारैश्च धूपदीपसमर्पणैः ।
क्षिप्रं प्रसन्ना योगिन्यो प्रयच्छेयुर्मनोरथान् ॥३६॥
कृष्णचतुर्दशीरात्रावुपवासी नरोत्तमः ।
प्रणवादिचतुर्थ्यन्तनामभिर्हवनं चरेत् ॥३७॥
प्रत्येकं हवनं चासां शतमष्टोत्तरं मतम् ।
ससर्पिषा गुग्गुलुना लघुबदरमानतः ॥३८॥
एकाग्रमनसा शुद्धः स्वेष्टं विचिन्त्य सर्वथा ।
यां यां सिद्धिमभीप्सेतां तां सुप्राप्नोति मानवः ॥३९॥
अथेशो योगिनीचक्रेऽनागते चिरमित्यपि ।
सूर्यं संप्रेषयामास ज्ञातुं काशीप्रवर्तनम् ॥४०॥
प्राह शंभुस्तु सूर्यं वै दिवोदासस्य वै रवे ! ।
धर्मक्षत्या निवासः स्यात्तथा कुरु दिवाकर ! ॥४१॥
धर्ममार्गस्थितस्यात्र भक्तस्य योऽवमाननम् ।
करोति तस्य सर्वस्वनाशो भवति भास्कर ! ॥४२॥
यावद्धर्मे स्थिरा बुद्धिर्यावद्भक्तिश्च माधवे ।
तावद्विघ्नोदयो नास्ति तथापि कुरु चेष्टितम् ॥४३॥
रविः शंभोर्वचसा चाऽगमत्काश्यां मनुष्यवत् ।
अन्तर्बहिश्चरन्काश्यां दिवोदासे प्रजासु च ॥४४॥
धर्मभक्तिप्रवाहे तु मनाक् क्षतिं न चैक्षत ।
वत्सरं विचरन्सूर्योऽतिथिर्भूत्वाऽऽर्थयच्च तम् ॥४५॥
सर्वं संप्राप्तवान् पश्चाद् बहुरूपाण्यधारयत् ।
याचको बहुदो दीनो गणको मन्त्रदोऽप्यभूत् ॥४६॥
कदाचिन्नास्तिको धूर्तो जटिलश्च दिगम्बरः ।
जांगलिको विषवैद्यः पाखण्डी ब्रह्मवाद्यपि ॥४७॥
व्रतकृदैन्द्रजालज्ञः कथाकारः कपालधृक् ।
द्विजो ज्ञानी धातुवेत्ता खगोलज्ञः सुमन्त्रवित् ॥४८॥
साधुः सन्यासधर्मा वै सन्यासिनीस्वरूपधृक् ।
विप्रः क्षत्रियवैश्यौ च शूद्रो ब्रह्मचरो गृही ॥४९॥
वनस्थः संकररूपोऽथापि चाण्डालरूपधृक् ।
इत्येवं विचरन् काश्यां क्वापि छिद्रं न चाप सः ॥५०॥
तदाह्यकृतकार्योऽसौ गन्तुं तु मन्दरं पुनः ।
नैयेषाऽवमानभयाद् दिवोदासबलात्तथा ॥५१॥
काश्यामेव कृतावासो भक्तिलग्नहृदन्तरः ।
अनिर्वेदनजन्यैनोनाशो भक्त्या भविष्यति ॥५२॥
धर्मो हि रक्षितो येन सर्वं तेन तु रक्षितम् ।
अयमेव हि सद्धर्मः काशीसेवनसंभवः ॥५३॥
पुत्रमित्रकलत्राणि क्षेत्राणि च धनानि च ।
प्रतिजन्मेह लभ्यन्ते काश्येका नैव लभ्यते ॥५४॥
दिवोदाससमो भक्तो नैवाऽन्यत्र क्वचिन्मिलेत् ।
तस्मादत्रैव वस्तव्यं निश्चित्यैवं दिवाकरः ॥५५॥
भूत्वा द्वादशरूपोऽसौ काशीपुर्यां व्यवस्थितः ।
लोकार्क उत्तरार्कश्च साम्बादित्यः खखोलकः ॥५६॥
द्रुपदादित्यो मयूखाऽऽदित्यस्तथाऽरुणाऽऽह्वयः ।
वृद्धार्कः केशवार्कश्च विमलार्को यमाह्वयः ॥५७॥
गंगादित्यौ द्वादशेतिरूपैः काश्यां व्यवस्थितः ॥
भजते श्रीहरिं नित्यं दिवोदाससमागमे ॥५८॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने दिवोदासछिद्रान्वेषणाय चतुःषष्टियोगिनीनां रूपान्तरधृतिः काश्यामेव वासो रवेश्चापि तथैव तत्कार्यार्थमागमनं काश्यामेव द्वादशरूपैर्वासश्चेत्यादिप्रदर्शननामा त्र्यशीतितमोऽध्यायः ॥८३॥

श्रीनारायण उवाच—

लक्ष्मि ! देवो महादेवो यं यं प्रेषयति प्रभुम् ।
स सः पुनर्न चायाति चिन्तामग्नो हरोऽभवत् ॥ १ ॥
नाद्याप्यायान्ति योगिन्यो नाद्याप्यायाति भास्करः ।
काश्यां वासो न वै स्याच्चेत् ! कालो यास्यति केन मे ॥ २ ॥
अधाक्षिषमहं कामं कामो मां दुनुयात्तराम् ।
काशीप्रवृत्तिमन्वेष्टुं कं वा प्रहिणुयामितः ॥ ३ ॥
इति चिन्त्य विधातारं बहुमानपुरःसरम् ।
शिवः प्रोवाच योगिन्यः सूर्यश्च प्रेषिता मया ॥ ४ ॥
नाद्यापि ते निवर्तन्ते काश्या विज्ञाय वर्तनम् ।
नाद्याधिष्ट तथा क्ष्वेडं मां काशीविरहो यथा ॥ ५ ॥
विधे विधेहि मे कार्यं याहि काशीं यतस्व च ।
अद्यैव च मया सत्या गन्तव्यं किन्तु धार्मिकम् ॥ ६ ॥
दिवोदासं तु राजानमुल्लंघयितुं नोत्सहे ।
नान्यराज्ये प्रवस्तव्यं नोच्छिष्टं भोज्यमेव च ॥ ७ ॥
स्वस्तिमान् गच्छ पन्थास्ते शुभोदर्को भवत्वलम् ।
आदायाऽऽज्ञां विधिर्द्राग्वै काशीमायाद् विहायसा ॥ ८ ॥
हंसस्थोऽपश्यदानन्दवाटिकां काशिकां शुभाम् ।
गंगा वृक्षा जनाः सौधा यत्राऽऽनन्दमयाः सदा ॥ ९ ॥
काशिभूरालोचिता यैरिन्द्रियैस्तानि सन्ति वै ।
वराणि तृणधान्यानि काश्यां यानि पतन्ति हि ॥१०॥
अद्य मे सफलं चायुरहो मे भाग्यगौरवम् ।
अद्य मे फलितो वृक्षो देहो यत्काशिदर्शनम् ॥११॥
मया सृष्टिः कृता सर्वा बहुदाक्ष्यपुरःसरा ।
परमन्यादृशी काशी देवेन निर्मिता स्वयम् ॥१२॥
इतिहृष्टमना वेधा वृद्धब्राह्मणवेषधृक् ।
अवतीर्य क्षितौ हंसाद् दिवोदासं ददर्श ह ॥१३॥
राज्ञा संमानितो वृद्धब्राह्मणः सत्कृतस्तथा ।
उपविश्यासने रम्ये चाशीर्वादान् ददौ नृपम् ॥१४॥
कोशवृद्धिः सत्यद्रव्येऽसौख्यवृद्धिः समान्तरे ।
गतिवृद्धिः सत्यमार्गे काशवृद्धिस्तवान्तरे ॥१५॥
राजा प्राह कथं द्व्यर्थं भाषसे वृद्धभूसुर ! ।
धर्मभक्त्योर्यत्र वृद्धिस्तत्र वृद्धिः सती सदा ॥१६॥
अद्रव्ये च अमार्गे च सति वृद्धिर्भयप्रदा ।
अद्रव्ये सत्यण्डवृद्धिरमार्गे सति धावनम् ॥१७॥
वर्षान्तरे ह्यसौख्यं तु धार्मिकस्य न संभवेत् ।
अधार्मिकस्याऽऽन्तरे तु असौख्यं सदृशं भवेत् ॥१८॥
स्तुतौ प्रकाशवृद्धिः स्यादन्तरे नान्यथाऽविले ।
किमिच्छसि वृद्धविप्र ! द्रव्यहीनः कुमार्गगः ॥१९॥
हृदि मे किं दंभवृद्धिर्वर्षपूर्वं च दुःखभाक् ।
भवाम्यहं दिवोदासः इतीच्छसि किमीच्छसि ॥२०॥
काश्याः पलायनं मे स्यादितीच्छसि किमिच्छसि ।
कूटवाग् ब्राह्मणो यत्र भूसुरः कूटवेषधृक् ॥२१॥
कूटधर्मो भवेत्तत्र कूटाशीर्वादवान् भव ।
ब्रह्मा प्राहात्र कूटं च कापट्यं श्रृंगगौरवम् ॥२२॥
श्रेष्ठवाग् ब्राह्मणो यत्र भूसुरः श्रेष्ठवेषधृक् ।
श्रेष्ठधर्मो भवेत्तत्र श्रेष्ठाशीर्वादवानहम् ॥२३॥
कापट्यं यदि शाठ्यं वै तदा तादृङ् न चाऽन्यथा ।
शाठ्यवाग् ब्राह्मणो यत्र भूसुरः शाठ्यवेषधृक् ॥२४॥
शाठ्यधर्मो भवेत्तत्र शाठ्याशीर्वादवान् भवेत् ।
राजा प्राह तदा विप्रं ब्रह्माणं कूटधर्मकम् ॥२५॥
यद्येवं धर्ममूर्तिस्त्वं कथं शाठ्ये प्रवर्तसे ।
शाठ्ये पराजयो भाव्यः शाठ्यपादः पतत्यधः ॥२६॥
एहि विप्र ! स्वागतं ते करोम्यशाठ्यधर्मतः ।
पाद्यं भोज्यं फलं गांगजलं पेयं प्रसाधनम् ॥२७॥
सर्वं गृहाण विप्रेन्द्र ! वृणु यद् हृदि वर्तते ।
ब्रह्मोवाच गृहीतं तत्, भक्त्या प्रवर्धसे नृप ! ॥२८॥
विद्यया सत्यबोधिन्या जयसे धर्मणा नृप ! ।
राजानो बहवो दृष्टा यज्वानो भूरिदक्षिणाः ॥२९॥
श्रोत्रिया नीतिनिपुणाः सत्त्वशीला जितेन्द्रियाः ।
क्षमादयासुगांभीर्यदाक्षिण्यसौम्यभूमयः ॥३०॥
परं तेभ्यस्त्वयि राजन् गुणा द्वित्रा विशेषतः ।
प्रजा एव कुटुम्बं ते ब्राह्मणा एव दैवतम् ॥३१॥
भक्तिधर्मौ सहायौ ते तपस्विनां सहायकः ।
एते नान्येषु दृश्यन्ते धन्यो मान्योऽसि वै सताम् ॥३२॥
सद्गुणैः पूजनीयोऽसि भक्त्यां धर्मेण वर्धसे ।
देवा द्रोहं च ते कर्तुमपि बिभ्यति धार्मिक ! ॥३३॥
अहं तु ब्राह्मणो राजन् यज्ञान् कर्तुमिहागतः ।
त्वादृशं भक्तमासाद्य मम वासोऽत्र भूयताम् ॥३४॥
अन्यत्तु मन्त्रितं दूरं तत्सदा दूरमस्तु वै ।
अत्र तीर्थत्रयं राजन् ! त्वं गंगा भूः परात्परम् ॥३५॥
यत्र कृतानां कार्याणां संवर्तेऽपि न संक्षयः ।
संचितं यद्धनं यत्नाद् विनियुज्येत तन्मखे ॥३६॥
इति जोषं स्थितं विप्रं दिवोदास उवाच ह ।
हरिं यियक्षमाणस्य तव दासोऽस्मि सर्वथा ॥३७॥
कोशाद् गृहाण मे यज्ञसंभारान् समपेक्षितान् ।
स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गसुसैन्यकम् ॥३८॥

विनियुंक्ष्वाऽऽवश्यकं तत्स्वार्थे तन्न मनागपि ।
पुत्रैः कलत्रैर्देहेन राजा प्रजास्तु रंजयेत् ॥३९॥
प्रजासन्तापजो वह्निर्वज्रादपि भयंकरः ।
द्वित्रान् विनाशयेद् वज्रं तापो राज्यं कुलं तनुम् ॥४०॥
विप्रपादरजोभिस्तु करोम्यवभृथं सदा ।
विप्रानने प्रहुतं तन्मन्ये यज्ञाद्विशिष्टकम् ॥४१॥
एकैवाद्यापि जागर्ति समीहा ब्राह्मणकृते ।
स्वदेहोऽपि तदर्थे वै चार्पणात् सफलो भवेत् ॥४२॥
अद्य मे सफलं जन्म कुरु यज्ञान् सुदक्षिणान् ।
यज देवान् कृतं विद्धि साहाय्यं सर्ववस्तुभिः ॥४३॥
श्रुत्वा राज्ञो वचो विप्रब्रह्मा संभारमाहरत् ।
इयाज दशभिर्गंगातीरेऽश्वमेधयज्ञकैः ॥४४॥
यत्र स्थले च तत्तीर्थे पूर्वो रुद्रसरोऽभिधाम् ।
त्यक्त्वा दशाश्वमेधाख्यामापेदे विश्रुतं तथा ॥४५॥
दिवोदासस्य भक्तस्य छिद्रं नाऽवाप किंचन ।
किं वदेन्मन्दरं गत्वा शंभोरग्रे तु विश्वसृक् ॥४६॥
अतो दशाश्वमेधेशं लिंगं ब्रह्मेश्वरं तथा ।
स्वकां मूर्तिं च संस्थाप्य विधिस्तत्रैव चाऽवसत् ॥४७॥
दिवोदासस्य सत्संगाद् हरेर्भक्तोऽभवत् सदा ।
सत्यलोके च वैराजे वैष्णवे शांभवे पदे ॥४८॥
मोक्षाख्यं यद्भवेत्सौख्यं तद्वै काशिनिषेवणात् ।
ज्येष्ठशुक्लप्रतिपदि स्नात्वा मुच्येत बन्धनात् ॥४९॥
स्नानं दानं जपो होमः स्वाध्यायः पितृतर्पणम् ।
संध्या देवार्चनं श्राद्धं कृतं तत्राऽक्षयं भवेत् ॥५०॥
स्नात्वा दशहरायां च लिंगं सम्पूज्य चाऽऽप्नुयात् ।
पुण्यं दशाश्वमेधीयं न पुनर्गर्भमाविशेत् ॥५१॥
ब्रह्मा ब्राह्मणरूपेण स्थितो यावच्छिवागमः ।
ब्रह्मणे तु दिवोदासो ब्रह्मशालामकारयत् ॥५२॥
अहल्यया कृता तत्र ब्रह्मपुरी सुशोभिता ।
इत्येषा भूः सदा ब्राह्मी ब्रह्मलोकप्रदायिनी ॥५३॥
दिवोदासो महाभक्तः कीदृशो मेऽभवत् प्रिये ! ।
यस्य ब्रह्मादयो देवाः प्रतिकर्तुं न चाऽशकन् ॥५४॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने मन्दराचलतः शंभुप्रेषितब्रह्माऽपि विप्ररूपेण कूटश्लोकद्वाराऽऽशीर्वादान् ददौ, तत्संवादोत्तरं दशाश्वमेधयज्ञान् कृत्वा काश्यामेवोवासेत्यादिकथननामा चतुरशीतितमोऽध्यायः ॥८४॥

श्रीनारायण उवाच—

शृणु लक्ष्मि ! महादेवि ! मन्दरे निवसन् हरः ।
शुशोच बहुधा तत्र गता नायान्ति वै पुनः ॥ १ ॥
किं वै काश्यां स्थितास्ते वाऽकृतकार्या हतौजसः ।
नायान्ति योगिनीसूर्यवेधसः प्रहिणोमि कान् ॥ २ ॥
चिन्तयन्निति देवेशो गणानाहूय भूरिशः ।
प्रेषयामास भो यात काशीं विवसितुं द्रुतम् ॥ ३ ॥
शंकुकर्णं महाकालं घण्टाकर्णं महोदरम् ।
नन्दिषेणं सोमनन्दिकालपिंगलकुक्कुटान् ॥ ४ ॥
कुण्डोदरं मयूराक्षं बाणगोकर्णतारकान् ।
तिलपर्णं स्थूलकर्णं द्रुमिचण्डं प्रभामयम् ॥ ५ ॥
सुकेशं विन्दतिं छागं कपर्दिपिंगलाक्षकौ ।
वीरभद्रं किरातं च चतुर्मुखं निकुंभकम् ॥ ६ ॥
पंचाक्षं भारभूतं च क्षेमकं लांगलिं तथा ।
त्र्यक्षं विराधं सुमुखमाषाढिं स्कन्दमेव च ॥ ७ ॥
महाशाखं विशाखं च शाखं नन्दिनमेव च ।
भृंगिणं नैगमेयं च प्रेषयामास शंकरः ॥ ८ ॥
एते गणा महाभागाः स्वामिभक्ता दृढव्रताः ।
कृत्वा मायां बहुविधां बहुरूपा विचक्षणाः ॥ ९ ॥
अनिमेषक्षणास्तस्थुः क्षोणीशच्छिद्रकांक्षिणः ।
धर्मे सत्ये दयायां च दण्डे प्रजाप्रपालने ॥१०॥
रक्षणे दानधर्मे च राज्यधर्मे श्रुतौ स्मृतौ ।
वर्णाश्रमविपद्धर्मदेशकालादिधर्मसु ॥११॥
पञ्चयज्ञजपभक्तिसेवासत्कारवृत्तिषु ।
क्वापि कुत्राप्यलब्ध्वा वै क्षतिं त्रुटिं सच्छिद्रताम् ॥१२॥
राजानं चाऽपराभव्यं दिवोदासं प्रपूज्य च ।
सर्वे गणा असिद्धस्वस्वामिकार्याः सुलज्जिताः ॥१३॥
स्वस्वनाम्ना महादेवं प्रतिष्ठाप्य निरन्तरम् ।
काश्यामेव निवासान् स्वान् चक्रिरे विगतज्वराः ॥१४॥
न निवृत्ता मन्दरं ते काशीमाहात्म्यबोधनात् ।
वाराणसी न वै त्याज्या स्वर्गादपि गरीयसी ॥१५॥
आनन्दोद्यानसंलब्धसुखतुल्यं न चेतरत् ।
अत्र कैलास एवास्ति वैकुण्ठोऽप्यत्र विद्यते ॥१६॥
काशीं त्यक्त्वा कथं कार्या शुष्का मन्दरसंस्थितिः ।
वाराणसीति काशीति आनन्दोद्यान इत्यपि ॥१७॥
मुखेन येन संप्रोक्तं नास्ति तस्य यमाद्भयम् ।
पञ्चक्रोश्या परिमिता तनुस्त्रिदेवसंभवा ॥१८॥

अनाकलितपुण्यानां परिक्षीणधनायुषाम् ।
सर्वोपायविहीनानां गतिर्वाराणसी पुरी ॥१९॥
काश्यां वसन्ति ये धीरा आपंचत्वविनिश्चयाः ।
जीवन्मुक्तास्तु ते ज्ञेया वन्द्या पूज्यास्त एव ह ॥२०॥
यत्र काश्यां मृतो जन्तुर्ब्रह्मनारायणादिभिः ।
प्रबद्धमूर्धाञ्जलिभिर्नमस्येताऽतियन्नतः ॥२१॥
मरणं मंगलं यत्र विभूतिर्यत्र भूषणम् ।
कौपीनं यत्र कौशेयं काशी कुत्रोपमीयते ॥२२॥
अपास्य सोदरान्दारान्पुत्रं क्षेत्रं गृहं वसु ।
अप्यंगीकृत्य निधनं वस्तव्यमत्र चैव ह ॥२३॥
इति ते निर्णयं कृत्वा काश्यामेव व्यवस्थिताः ।
अथ शंभुर्गतान्काश्यां स्थितान्पुनरनागतान् ॥२४॥
गणान् ज्ञात्वा च हेरम्बं प्राहिणोत्तु गजाननम् ।
गच्छ पुत्र विना त्वां वै कश्चिन्न पारयेन्नृपम् ॥२५॥
यथाबुद्धि यथाकालं यथायोग्यं प्रकल्प्य च ।
दिवोदासं विनिष्कास्य काशीं करगतां कुरु ॥२६॥
तत्र स्थितोपि संसिद्ध्यै यतस्व सहितो गणैः ।
निर्विघ्नं कुरु चास्माकं नृपे विघ्नं समाचर ॥२७॥
आज्ञामादाय शिरसा प्रणिपत्य च धूर्जटिम् ।
प्रतस्थे त्वरितः काशीं गणेशः पितृसिद्धये ॥२८॥
शंभोः काश्यागमोपायं चिन्तयन्वाडवोऽभवत् ।
स्थूलवेष्टनपंचांगपत्रधृक् शकुनं दिशन् ॥२९॥
नक्षत्रज्ञो महाज्योतिश्चक्रवेत्ताऽऽविशत्पुरीम् ।
चचार प्रत्यवरोधं स्थवीरो रेखया दिशन् ॥३०॥
हस्तरेखां शकुनानि भाग्यं जन्माक्षराणि च ।
सुदृष्ट्वा गणितं कृत्वा पौराणां प्रीतिमानभूत् ॥३१॥
स्वयमेव निशायां तु स्वप्नं संदर्शयन्नृणाम् ।
प्रातस्तेषां गृहं गत्वा तेषां वक्ति शुभाऽशुभम् ॥३२॥
प्रश्नान् संकारयित्वा तान् फलं स्वाप्नं जगाद तान् ।
स्वप्ने रात्रौ भवान् मज्जन् जले मज्जन् तटं गतः ॥३३॥
तटस्थकर्दमे मग्नः पुनर्मग्नोऽसि भूरिशः ।
स्वप्नस्याऽस्य फलं दुष्टं जले घातो भवेत्तव ॥३४॥
अन्यस्यापि गृहे गत्वा फलं स्वाप्नं ह्यवर्णयत् ।
मुण्डी काशाम्बरधरः प्रैक्षि स्वप्ने त्वया ततः ॥३५॥
मरणतुल्यदुःखं वा मरणं वा फलं भवेत् ।
स्वप्ने सूर्यग्रहो दृष्टो मृतिर्वा तत्समं फलम् ॥३६॥
ऐन्द्रं धनुर्द्वयं रात्रौ यदलोकि ध्रुवा मतिः ।
पश्चिमायां स्वयं सूर्य उदयं प्राप्य शीतगुम् ॥३७॥

प्रोद्यन्तं व्योममार्गाद्वै पातयामास भूतले ।
इति स्वप्ने त्वया दृष्टं राज्यनाशो भवेद् ध्रुवम् ॥३८॥
धूमकेतुद्वयं युध्यमानं व्योम्नि व्यलोकि यत् ।
तच्चापि राष्ट्रभंगाय फलं स्वाप्नं विनाशकृत् ॥३९॥
विशीर्य त्वेकदशनं नीयमानं च दक्षिणे ।
आत्मानं यत् समद्राक्षीः मृतिः कुटुम्बभीषणा ॥४०॥
त्वयैक्षताऽपररात्रौ प्रासादध्वजभंजनम् ।
राज्यक्षयकरं चैतन्महोत्पातः प्रजासु च ॥४१॥
समुद्रेण पुरं चैतत्प्लावितं यददर्शि तत् ।
द्विमासाऽभ्यन्तरे एव महानाशः पुरौकसाम् ॥४२॥
स्वप्ने वानरयानेन त्वं प्रयातोऽसि दक्षिणाम् ।
अतस्तव विनाशो वा पुरत्यागोऽथवा ध्रुवः ॥४३॥
रुदती या त्वया दृष्टा नारी रात्रौ दिगम्बरा ।
मुक्तकेशी व्योमगाऽभूत् फलं राज्यविपर्ययः ॥४४॥
देवालयस्य कलशः पतन् दृष्टस्त्वया यतः ।
द्राक् स्वल्पैर्दिवसैरेव राज्यभंगो भवेद् ध्रुवम् ॥४५॥
पुरीं परित आगत्य मृगाः शिवादयो मुहुः ।
रोरूयमाणा दृश्यन्ते तन्मासे नोद्वसीं क्रियात् ॥४६॥
घूकश्येनबकगृध्रा उड्डयन्त्यभितः पुरीम् ।
सूचयन्ति महाकष्टं भविष्यत्यत्रवासिनाम् ॥४७॥
गदामादाय हनुमान् पृष्ठे लग्नो ध्रुवं क्षयः ।
यमदूताः प्रदृश्यन्ते महिषाऽनःपरस्थिताः ॥४८॥
प्रजामादाय गच्छन्ति प्रजानाशो भवेद् ध्रुवः ।
परराज्यभटश्चात्रऽऽगत्येमान् ताडयन्ति तत् ॥४९॥
फलं काशीपरिभंगो लोकानां कदनं भवेत् ।
तस्मान्मासान्तरे एव गन्तव्यमितरत्र वै ॥५०॥
नात्र वासो हि सुखदो भवेन्मासद्वयोत्तरम् ।
एवं निर्वासयामास शंसन्बहून् प्रजाजनान् ॥५१॥
प्रायशोऽर्धे प्रजायास्तु गतं देशान्तरं प्रति ।
अथापि ग्रहचारं वै विलोक्याह जनान्पुनः ॥५२॥
एकराशौ स्थिताः शुक्रशनिभौमा विनाशकाः ।
धूमकेतुरयं व्योम्नि भित्त्वा सप्तर्षिमण्डलम् ॥५३॥
संयाति पश्चिमामाशां वैश्यानां नाशको भवेत् ।
शनिश्चरः समुल्लंघ्य राशिं वक्रः प्रयाति वै ॥५४॥
राहुकेतुभौमयुक्तो महाविनाशकृद्धि सः ।
सायंकाले तु भूकम्पोऽवश्यं नाशकरो भवेत् ॥५५॥
उतराद्दक्षिणां याता व्योम्न्युल्का गर्जनाकरी ।
लीना चापि तु सैवाऽस्याः सूचयत्येवनाशनम् ॥५६॥

चत्वरस्थचैत्यवृक्षो वातेनोन्मूलितोऽपि सः ।
सूचयत्येव काश्याश्च प्रजानां कदनं महत् ॥५७॥
प्रातः सूर्योदये प्राच्यां काको वक्ति भयं भवेत् ।
काशीमध्ये मृगौ कौचिदारण्यकौ प्रविश्य च ॥५८॥
जनदृष्टिं प्रविच्याव्य गतावुद्वाससूचकौ ।
शरदि दृश्यते चाम्रशालपुष्पं फलांकुरम् ।
महाकालभयं मन्ये पुर्यामस्यामकालजम् ॥५९॥
साध्वसं जनयित्वेति गणेशेन द्विजेन वै ।
उच्चाटिता धनाढ्याश्च भूमन्तोऽपि कुटुम्बिनः ॥६०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने शंकरेण द्विचत्वारिंशद्गणानां प्रेषणं गणेशप्रेषणं कृतं तेन च विविधस्वाप्नप्रत्यक्षादिशकुनोत्पातादिवर्णनेन प्रजानां काशीतो निष्कासनं कृतमितिवर्णननामा पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! तदा स्त्रीणां विश्वासाय समाधिना ।
प्रागुदन्तं परिज्ञाय गणेशोऽन्तःपुरं ह्यगात् ॥ १ ॥
दृष्टार्थमेव कथयन् स्त्रीणां विश्वासभूरभूत् ।
यद्यत्पूर्वं तु सञ्जातं तत् सर्वं कथयत्ययम् ॥ २ ॥
एकामासाद्य संप्राह पुत्राणां नवतिस्त्रयम् ।
तव जज्ञे तेषु चैकोऽश्वात्पतितो ममार च ॥ ३ ॥
सगर्भेयं शुभां कन्यां जनयिष्यति भाग्यतः ।
अद्यापि यावद्दुर्भाग्या साम्प्रतं सुभगा त्वियम् ॥ ४ ॥
राज्ञा यस्यै प्रदत्तोऽयं मुक्ताहारः सुशोभनः ।
सेयं राज्ञिषु मान्या वै भवतीवाति जीववत् ॥ ५ ॥
इमां राजाऽतिमनुते बहुस्नेहास्पदां मुहुः ।
द्वौ ग्रामौ तु प्रसादेन चास्यै दातुमुदीरितौ ॥ ६ ॥
अन्यां राज्ञीं ततः प्राह कुमारो यदि जायते ।
तदा तुभ्यं प्रदास्ये वै दशग्रामाँस्तु वृत्तये ॥ ७ ॥
इति राज्ञा प्रतिज्ञातं शय्यायां तव सन्निधौ ।
अपरां तु तदा प्राह यदि त्वं स्याः सुपुत्रका ॥ ८ ॥
अर्धं राज्यं प्रदास्ये त्वां, सुपुत्रायै ततोऽवदत् ।
अन्यस्यै प्रेमसमये राजा प्राह मदर्थकम् ॥ ९ ॥
ताम्बूलं यद् रक्षितं तद् देहि दास्ये पुरत्रयम् ।
इत्येवं प्रत्यक्षजातं समुवाच गणाधिपः ॥१०॥
स्वप्नानप्याह तासां वै तेन विश्वासभूरभूत् ।
वर्णयन्ति च राज्ञ्योऽस्य परोक्षे च गुणान् बहून् ॥११॥
अहो कश्चित् स्थवीरो वै विप्रः सत्यविवेचनः ।
प्रागुदन्तं यथार्थं वै वक्ति सर्वं प्रमाणतः ॥१२॥
अलोलुपः सदाचारः सन्तुष्टो भूतभाविदृक् ।
प्रसन्नास्यः शुचिः शास्त्रश्रुतिस्मृतिविशारदः ॥१३॥
यद्यद् वक्ति ज्योतिषा सः सर्वं सत्यं प्रवर्तते ।
नान्यादृशः स्वप्नवक्ता साक्षाद्वक्ता च दृग्गतः ॥१४॥
दिवोदासस्य पट्टांगी राज्ञी लीलावती स्वयम् ।
प्राह राज्ञे महाराज विप्रो ब्रह्मसमो निधिः ॥१५॥
काश्यां कश्चित् समायातो द्रष्टव्यो ग्रहबोधने ।
का दशा कीदृशं स्वप्नं कः कालः शकुनं किमु ॥१६॥
वेत्ति सर्वं तदस्माद्वै प्रष्टव्यं किं च भावि वै ।
इत्याकर्ण्य तदा राज्ञा ह्याकारितो गणाधिपः ॥१७॥
समाजगाम राजर्षिं लब्धवान् सत्कृतिं ततः ।
समुपविष्टोविष्टरे ह्याशीर्भिरभ्यनन्दयत् ॥१८॥
क्षेमं ते कुशलं चास्तु श्रेयोऽभ्युदय इत्यपि ।
शिवो धर्मोऽस्तु ते सौधे तव वासो हरेर्गृहे ॥१९॥
समाकर्ण्य च राजा तं ब्राह्मणं प्राह भो द्विज ! ।
प्राप्तं संरक्षितं क्षेमं कौ पृथ्व्यां शं सुखावहम् ॥२०॥
तत्सर्वं लं लयं यायादिति तेऽस्ति मनोरथः ।
मम श्रेयोऽभ्युदयश्च शिवो शिवार्थमस्त्विति ॥२१॥
अभ्युदयः शिवो यो वै सोऽप्यधर्मो भवत्विति ।
मम सौधे शिवराज्यं मम मुक्तिर्हराविति ॥२२॥
अस्मात्स्थानाद्विनाशो मे किमिच्छसि द्विजोत्तम ।
दिवोदासस्य सार्वज्ञ्यं ज्ञात्वाऽऽश्चर्यमवाप सः ॥२३॥
संगृह्याऽर्हां गणेशस्तु स्वस्थानं संजगाम ह ।
राजा राज्ञीं तदा प्राह विप्रोऽस्त्ययं त्रिकालदृक् ॥२४॥
प्रजा यान्त्यन्यविषयं स्वप्नं भाति भयावहम् ।
उद्घोषः श्रूयते भाविविनाशोन्मुखता स्थिता ॥२५॥
प्रातराहूय प्रष्टव्यः किं भविष्यदिति स्फुटम् ।
मन्ये देवो विरुद्धो मे शंकरोऽप्यस्त्यशंकरः ॥२६॥
यद्भावि तद्भवेदेव नारायणसमिच्छया ।
प्रातराहूय सत्कृत्य राजा पप्रच्छ हृद्गतम् ॥२७॥
शासितेयं मही सर्वा भुक्ता भोगा विभूतयः ।
राज्यप्रजा ह्यतन्द्रिणा प्रपालिताः स्वजीववत् ॥२८॥
द्विजसेवा कृता पूर्णा नाऽपूर्णं मेऽवशिष्यते ।
प्रजापलायनं स्वाप्नदुष्टतां तु विलोक्य वै ॥२९॥

किंभावीति प्रमुग्धोऽहं दृष्ट्वा तथ्यं निवेदय ।
गणेशः प्राह राजानः प्रायः कर्णप्रसादनाः ॥३०॥
मिष्टं मिष्टं तु श्रृण्वन्ति दण्डयन्ति कटुब्रुवम् ।
अहं मिष्टं कटुचापि तथ्यं वच्मि प्रसह्यताम् ॥३१॥
विक्रान्तो भाग्यवान् शूरो यशः पुण्यसुबुद्धिमान् ।
यादृशोऽसि तथा नास्ति त्रिदशेशोऽपि वै दिवि ॥३२॥
धिया गुरुसमश्चासि प्रसादेन सुधाकरः ।
तेजसाऽसि भानुसमः प्रतापेनाग्निना समः ॥३३॥
बलेऽसि वायुना तुल्यः श्रिया कुबेरसदृशः ।
शास्ता रुद्रसमो देवो निर्ऋतिसदृशो रणे ॥३४॥
दुष्टपाशे वरुणोऽसि दण्डे तु यमराडसि ।
क्षमया भूमिसदृशो मर्यादया सरित्पतिः ॥३५॥
महत्त्वे हिमवाँश्चासि शुक्रो नीत्यां नृपस्य वै ।
राजासि मनुसदृशस्तापहा मेघवन्मतः ॥३६॥
पवित्रो गंगया तुल्यः काशीव सुगतिप्रदः ।
सृजिपुष्टिहृतिकार्ये ब्रह्मविष्णुहरार्थवान् ॥३७॥
सरस्वती मुखे तेऽस्ति कमला ते कराम्बुजे ।
विषं ह्यस्ति तव क्रोधेऽमृतं वाचि तव स्थितम् ॥३८॥
हृदि नारायणस्तेऽस्ति मच्छिष्याः सन्ति न त्वयि ।
तेषां वृत्तिप्रदानाय ह्यागतोऽस्मि तवांगणे ॥३९॥
तथ्यं वच्मि न चाऽतथ्यं गुप्तं वच्मि न चाऽनृतम् ।
स्वार्थं वच्मि परार्थाढ्यं मिष्टं वच्मि फलं कटु ॥४०॥
आरभ्याऽत्र दिनाद्भूप ब्राह्मणोऽष्टादशेऽहनि ।
उदीच्यः कश्चिदागत्याऽवश्यं त्वामुपदेक्ष्यति ॥४१॥
तत्तथैव प्रकर्तव्यं त्वं हृत्स्थं प्राप्स्यसे ततः ।
अद्याहं स्वगृहं यामि प्रतीक्षस्व तदागमम् ॥४२॥
इत्युक्त्वा श्रीगणेशस्तु काश्यामेव हि तस्थिवान् ।
कीर्तये श्रीगणेशस्य नामानि मूर्तयो यथा ॥४३॥
दुण्ढिविनायकश्चार्कविनायको गणाधिपः ।
दूर्गोऽथ भीमचण्डश्च देहलिनायकस्तथा ॥४४॥
उद्दण्डः पाशपाणिश्च खर्वः सिद्धिविनायकः ।
बाह्यावरणगाश्चैते काश्यामष्टौ विनायकाः ॥४५॥
लंबोदरः कूटदन्तः तथा शालकटंकटः ।
कूष्मांडो मुण्डो विकटदन्तोऽथ राजपुत्रकः ॥४६॥
प्रणवश्चाष्टौ द्वितीयावरणे तु विनायकाः ।
वक्रतुण्डो ह्येकदन्तः कपिसिंहद्विपाननः ॥४७॥
पञ्चास्यो हेरम्बनामा विघ्नराजो वरप्रदः ।
मोदकप्रिय एतेऽष्टौ तृतीयावरणस्थिताः ॥४८॥
अभयदः सिंहतुण्डः कूणिताक्षो गजाननः ।
क्षिप्रप्रसादनश्चाथ चिन्तामणिविनायकः ॥४९॥
दन्तहस्तः पिचिण्डिल उद्दण्डमुण्डसंज्ञकः ।
एतेऽष्टौ तु गणाधीशाश्चतुर्थावरणस्थिताः ॥५०॥
स्थूलदन्तः कलिप्रियश्चतुर्दन्तो द्वितुण्डवान् ।
ज्येष्ठो गजस्तथा कालो नागेशः पञ्चमावृतौ ॥५१॥
मणिकर्ण आशाविनायकः सृष्टिगणाधिपः ।
यक्षाख्यगजकर्णश्चित्रघण्टः स्थूलजंघकः ॥५२॥
मंगलो मित्रनायकोऽष्टौ ते षष्ठ्यावृतौ मताः ।
मोदः प्रमोदः संमोदो महामोदोऽथ अर्थदः ॥५३॥
ज्ञानो द्वारो विमुक्ताख्योऽष्टौ सप्तमावृतौ स्थिताः ।
षट्पंचाशद्गणेशास्ते काश्यां परित आस्थिताः ॥५४॥
नामान्येतानि श्रुत्वाऽपि दुःखेभ्यो विप्रहीयते ।
जातु विघ्नैर्न बाध्येत पापेभ्योऽपि प्रहीयते ॥५५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने राज्ञोऽन्तःपुरस्त्रीणां विश्वासाय गणेशेन प्रागुदन्तस्वप्नादि कथितं दिवोदासाय भाविविपदादि कथितं षट्पंचाशद्गणेशस्थित्यादि कथितं चेतिनिरूपणनामाषडशीतितमोऽध्यायः ॥ ८६ ॥

**श्रीलक्ष्मी रुवाच—**

पतिदेव ! नमस्तुभ्यं कृष्णात्मा तु गजाननः ।
काश्यामवस्थितः पश्चान्मन्दरेऽभूद्धरस्य किम् ॥ १ ॥

**श्रीनारायण उवाच—**

शंकरेण तदा विष्णुः प्रोक्तः काशीगमाय तु ।
तथा त्वमपि मा कार्षीर्यथा प्राक्प्रस्थितैः कृतम् ॥ २ ॥
विष्णुश्चतुर्भुजः प्राह यथाबुद्धिबलोदयम् ।
उद्यमः प्राणिना कार्यः फलं दैवकृतं मतम् ॥ ३ ॥
अतीव यदसाध्यं तत्सुसाध्यं हर्यनुग्रहात् ।
सुमुहूर्तं संविलोक्य सलक्ष्मीको हरिः स्वयम् ॥ ४ ॥
विष्णुश्चतुर्भुजोऽगच्छत् काशीं स्नातश्च गंगया ।
सा वै पादोदकी गंगा कीर्त्यते भक्तपुंगवैः ॥ ५ ॥
कृतपादोदकस्नानं पीतपादोदकोदकम् ।
दत्तपादोदपानीयं नरं न निरयः स्पृशेत् ॥ ६ ॥
विष्णुपादोदके तीर्थे प्राश्य पादोदकं सकृत् ।
जातुचिज्जननीस्तन्यं पातव्यं न भवेदिति ॥ ७ ॥

सचक्रशालग्रामस्य शंखेन स्थापितस्य च ।
अद्भिः पादोदकस्याऽम्बु पिबन्नमृततां व्रजेत् ॥ ८ ॥
विष्णुपादोदके तीर्थे विष्णुपादोदकं पिबेत् ।
सप्त सप्त तथा सप्त स्ववंशाँस्तारयिष्यति ॥ ९ ॥
तत्र तीर्थे स्वयं विष्णुः स्वमूर्तिं दार्षदीं व्यधात् ।
आदिकेशवनाम्नीं तां स्वयमस्थापयत्ततः ॥१०॥
श्वेतद्वीपइतिस्थानं तत्काशीसीम्नि वर्तते ।
यत्र यत्र स्थितः सुप्तो विश्रान्तो निद्रितस्तथा ॥११॥
तत्र तत्र च तीर्थानि जातानि विष्णुसंज्ञया ।
क्षीराब्धिनामकं तीर्थं शंखतीर्थं तथा परम् ॥१२॥
चक्रतीर्थं गदातीर्थं तीर्थं च पद्मसंज्ञकम् ।
महालक्ष्म्यभिधं तीर्थं तार्क्ष्यतीर्थं तथापरम् ॥१३॥
तत्र नारदतीर्थं च प्रह्लादतीर्थमित्यपि ।
अम्बरीषमहातीर्थमादिकेशवतीर्थकम् ॥१४॥
दत्तात्रेयमहातीर्थं तीर्थं च भार्गवं तथा ।
तथा वामनतीर्थं च नरनारायणाभिधम् ॥१५॥
यज्ञवाराहतीर्थं च गोपीगोविन्दतीर्थकम् ।
लक्ष्मीनृसिंहतीर्थं च शेषतीर्थं तथापरम् ॥१६॥
शंखमाधवतीर्थं च तीर्थं हयाननं तथा ।
मत्स्योदरीमहातीर्थं राधाकृष्णसुमन्दिरम् ॥१७॥
काशीविश्वेश्वरसौधं तीर्थमेवमनेकधा ।
विष्णुना तत्र वासाय स्थापिता निजमूर्तयः ॥१८॥
विष्णुना चाथ कार्यं वै शंकरार्थं तु किं कृतम् ।
सौगतं प्रथमं रूपं कृतं त्रिलोकिमोहनम् ॥१९॥
लक्ष्मीस्तदा तु संजाता सुभगा परिव्राजिका ।
गरुत्मानपि संजातः शिष्यो हस्ताग्रपुस्तकः ॥२०॥
गुरुः पुण्यसूर्यभिधः शिष्यो विनयसूरिकः ।
लक्ष्मीरार्यसूरिणी च विवेचयन्ति चत्वरे ॥२१॥
विनयसूरिः पप्रच्छ गुरुं धर्मं सनातनम् ।
पुण्यसूरिर्गुरुः प्राह जनानां शृण्वतां तदा ॥२२॥
अनादिसिद्धः संसारः कर्तृकर्मविवर्जितः ।
स्वयं प्रादुर्भवेदेषः स्वयमेव विलीयते ॥२३॥
आत्मैवैकस्तु सर्वत्र नामान्येकस्य सन्ति च ।
शरीरं भूतजं कालकृतं कालेन लीयते ॥२४॥
आहारो मैथुनं निद्रा भयं चेति समानकम् ।
अत्र चतुष्टये सर्वे तुल्याः सन्ति विचार्यते ॥२५॥
कर्मकृतं परं सर्वे नाऽस्मात्कश्चित्परो मतः ।
भजनं कस्य कर्तव्यं नास्ति कश्चित्परो यतः ॥२६॥
धर्मो जीवदयातुल्यो नास्ति पाल्यः स सर्वदा ।
हिंस्यन्ते जन्तवः स्नाने तस्मात्स्नानं न धार्मिकम् ॥२७॥
दह्यन्ते जन्तवो दीपे तस्माद्दीपो न धार्मिकः ।
उपवासैः प्रमर्तव्यं कर्मनाशस्तदा भवेत् ॥२८॥
आत्मा भवेत्परमात्मा सर्वे तथा भवन्त्विति ।
पंचकर्मेन्द्रियाण्येव पंचज्ञानेन्द्रियाणि च ॥२९॥
मनो बुद्धिश्च संपूज्यं द्वादशायतनं शुभम् ।
न धर्मो नाऽप्यधर्मश्च स्वर्गं न नरकं नहि ॥३०॥
सुखं स्वर्गो दुःखमन्यत् तन्नाशो मोक्ष उच्यते ।
वृक्षान् छित्वा कणान् हुत्वा वृथा विनाश्य कर्मणि ॥३१॥
दग्ध्वा वह्नौ तिलाज्यादि यज्ञस्तु पापमेव तत् ।
न कर्तव्यं न कर्तव्यं कर्महिंसामयं क्वचित् ॥३२॥
तद्विनाशाय गन्तव्यं पर्वतारण्यभूमिषु ।
ज्ञानश्रवणमित्येतत् कृत्वाऽन्येपि जनास्तदा ॥३३॥
त्रयाणां तत्र शिष्या वै भवन्ति बहवो जनाः ।
प्रयान्ति काशीं विसृज्य पर्वता रण्यभूमिषु ॥३४॥
अथ नारीषु आर्या सा ह्युपदेशं करोत्यपि ।
प्राह देहो मनुष्याणां स्वकर्मणा ह्यवाप्यते ॥३५॥
कर्म तु हिंसनाद्यात्म न सेवात्म विचार्यते ।
नैको नियामकश्चान्या नियम्येति यथातथम् ॥३६॥
सेवया चान्यदेहस्य यदि लभ्येत नाकदम् ।
स्वस्य देहस्य तां सेवां कथं नैव प्रकुर्महे ॥३७॥
स्वार्थैव पतिसेवाऽस्ति न पुण्यादिकरी मता ।
पराधीनं महादुःखं स्वाधीनं सुखमुच्यते ॥३८॥
तस्मान्नरेण पत्न्यास्तु सेवा कस्मान्न चेष्यते ।
अतः सेवा न कर्तव्या हिंसा स्वार्थश्च पापकृत् ॥३९॥
इत्यार्याया उपदेशान्नार्यः सेवां न कुर्वते ।
दानहोमादिकार्यं च प्रतिरुद्धं न जायते ॥४०॥
देवस्नानविधिः सर्वो विलीनश्च ततः पुनः ।
अभ्यस्याकर्षिणीं विद्यां वशीकृतिमतीमपि ॥४१॥
नरा नार्यो विमोहेन ब्रह्मचर्यं च तत्यजुः ।
एवं सर्वेषु पौरेषु पराङ्मुखेषु धर्मतः ॥४२॥
प्रविष्टोऽधर्मपादश्च राजा संकल्पकुण्ठितः ।
सामर्थ्यं लीनमेवाऽस्य दिवोदासस्य सर्वथा ॥४३॥
अजिगणद्दिवोदासोऽप्यष्टादशदिनावधिम् ।
तावदष्टादशे प्राप्ते दिवसेऽगाद् द्विजोत्तमः ॥४४॥
स एव विष्णुः प्रत्यक्षो द्विजो भूत्वा समागतः ।
तं स नत्वा प्रपूज्याऽन्तःपुरे निनाय चाह तम् ॥४५॥

मासद्वये तु मद्राज्यं निर्माल्यमिव दृश्यते ।
न शक्तिर्न च संपत्तिर्न प्रजा न च धार्मिकम् ॥४६॥
कीदृशोऽयं समायातः समयो न च वेद्म्यहम् ।
चित्ते विराग आयातश्चाहं जिगमिषुर्वनम् ॥४७॥
सर्वं सम्यक् कृतं राज्यं भोग्यं भुक्तं हरेर्बलात् ।
एक एवाऽपराधस्तु मया देवास्तृणीकृताः ॥४८॥
निष्कासिता मया राज्यात्तपोबलमुलम्बिना ।
यदेव कथयस्वाऽत्र तत्तथैव करोम्यहम् ॥४९॥
अवन्तोऽपि प्रजाः सर्वा निजधर्ममनुव्रताः ।
पुरा ते त्रिपुराः शेन लीलया भस्मसात्कृताः ॥५०॥
बलिर्यज्ञकृतां श्रेष्ठं पाताले नीतवान् हरिः ।
वृत्तवानपि वै वृत्र इन्द्रेणैव निषूदितः ॥५१॥
दधीचिविप्रो देवैरस्थिकृते तु हतोऽमलः ।
तस्माद्विरोधो भद्राय न भवेद् दैवतैः सह ॥५२॥
विष्णुः प्राह तदा तस्मै दिवोदासाय मुक्तये ।
न भवत्सदृशो राजा भवन् भूतो भविष्यति ॥५३॥
त्वया धर्मस्य देवानां किमप्यपकृतं नहि ।
काशीविश्वेश्वरो दूरं कृतोऽपराध एव सः ॥५४॥
तच्छान्त्यै लिंगमेकं वै काशीविश्वेश्वराभिधम् ।
प्रतिष्ठाप्यं त्वया पश्चात् सप्तमे ह्यद्यवासरात् ॥५५॥
दिव्यं विमानमारुह्य गन्तव्यं श्रीहरेः पदम् ।
श्रुत्वा राजाऽप्यदाद् देयं विप्रं प्रणम्य भावतः ॥५६॥
सर्वतो मन आकृष्य लिंगं संस्थाप्य शोभनम् ।
ॐ नमो भगवते वासुदेवायेति संजपन् ॥५७॥
प्रायोपवेशनव्रतं गृहीत्वा पश्चिमे तटे ।
महान्तं मण्डपं कृत्वा समाहूय प्रजाजनान् ॥५८॥
आहूय पण्डितान्सर्वान् सामात्यान्मण्डलेश्वरान् ।
सर्वांस्तत्तत्कृताध्यक्षान् पुत्रान् पञ्चशतानि च ॥५९॥
पुरोहितं प्रतीहारमृत्विजो गणकान् द्विजान् ।
सामन्तान् राजपुत्राँश्च सूपकाराँश्चिकित्सकान् ॥६०॥
बहून् वैदेशिकाँश्चापि बालगोपालवृद्धकान् ।
साऽन्तःपुराञ्च महिषीं सर्वान् प्रोवाच भावतः ॥६१॥
आद्यारभ्यसप्तमेऽह्नि मरणं मे भवेद् ध्रुवम् ।
मम राज्येऽभिसिञ्चामि कुमारं समरंजयम् ॥६२॥
काशीविश्वेश्वरार्थं च सौधं कुर्वन्तु शिल्पिनः ।
लक्ष्मीनारायणसंहितासप्ताहं श्रृणोम्यहम् ॥६३॥
सारमेव च द्रव्यं मे व्ययार्थं दीयतां मुहुः ।
अथ शंभुः स्वयं सर्वं मण्डलं स्वं निनाय च ॥६४॥
विप्ररूपेण काश्यां वै तत्कथायां समागतः ।
ब्राह्मणस्तु स्वयं विष्णुर्वेदशास्त्रार्थपारगः ॥६५॥
वक्ताऽभवत् तदा तत्र पाठकश्च हरोऽभवत् ।
जापका ऋषयस्तत्र देवाः प्रजाः सभासदः ॥६६॥
धर्मयशो महान् जातो न भूतो न भविष्यति ।
स्वयमग्निः समाप्तौ तु नीराजयति नित्यशः ॥६७॥
सप्तमे तु दिने पूर्णे मन्दिरे स्वर्णशोभिते ।
विश्वेश्वरं प्रतिष्ठाप्य महता विधिना ततः ॥६८॥
कथापूर्णाहुतिं कृत्वा कोटिजिनानभोजयत् ।
राजा यज्ञप्रसादं चाऽजिघ्रद् व्यासाज्ञयाऽथ च ॥६९॥
यावत्तिष्ठति मध्याह्ने सन्ध्यायां हरिसन्निधौ ।
तावद्विमानमाकाशादुज्ज्वलं ब्रह्मलोकजम् ॥७०॥
अल्पमवातरद् भूत्वा तस्मान्नारायणः श्रिया ।
सहितस्तत्र सप्ताहस्थले प्रत्यक्षतामगात् ॥७१॥
रूपानुरूपाऽवयवं कंजनेत्रं कृपामयम् ।
प्रसन्नवदनं हास्यं कुर्वन्तं च मनोहरम् ॥७२॥
ब्रह्मधामस्थितं दिव्यं स्वरूपं तर्कभूम्यगम् ।
आयाहीति ब्रुवन्तं श्रीनारायणं प्रणम्य सः ॥७३॥
दिवोदासः पराभक्त्या विस्मृत्याऽन्यदहो प्रभो ! ।
आयामीति वदन् देहं दिव्यं तमेव वर्तयन् ॥७४॥
सदेहस्तु महालक्ष्म्या ब्रह्मवार्यभिसिञ्चितः ।
महामुक्तोऽभवद् दिव्यो विष्णुतुल्यः सदेहकः ॥७५॥
आरुरोह विमानं तत् प्रार्थयामास वै हरिम् ।
या प्रजा तव भक्ताऽस्ति नय तामपि मोक्षद ॥७६॥
हरिः प्राह दिवोदास ! याभिर्यैः समभीप्स्यते ।
वैकुण्ठं तु समागन्तुमायान्तु तेऽनिवारिताः ॥७७॥
श्रुत्वैवं डिण्डिमं विष्णोः प्रजा लक्षप्रलक्षकाः ।
नागरा देशिकाश्चान्ये जानपदसभासदाः ॥७८॥
अर्बुदाश्च परार्धाश्च दिवोदासेन वै समम् ।
आरुरुहुर्विमानं ता वैकुण्ठगमनेच्छया ॥७९॥
सर्वे दिव्या दिव्यदेहा भूत्वा त्यक्त्वाऽनवानि वै ।
तावद्विमानमाकाशे महद्रूपं व्यदृश्यत ॥८०॥
सूर्यचन्द्रादयो यस्य निकटे सर्षपा इव ।
कोटिपार्षदसंजुष्टं कोटिमुक्तसमन्वितम् ॥८१॥
ऊर्ध्वमपासरन् तावत्क्षणेनादृश्यतां गतम् ।
काश्यां त्रिलोक्यां त्रैलोक्यां जयशब्दास्तदाऽभवन् ॥८२॥
एवं राजा दिवोदासो भक्त्या वैकुण्ठमाप्तवान् ।
एतां कथां पठेद्वापि श्रृणुयान्मुक्त एव सः ॥८३॥

भक्त्या ह्यनेकजीवाँश्च स वै तारयितुं क्षमः।
दिवोदाससमानस्य वैकुण्ठोऽत्र परत्र च॥८४॥
ततः सर्वेऽपि देवा वै शंकरः सकुटुम्बकः।
काशीं चावासयन् सर्वां राजधानीं पुरा यथा॥८५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने हरेण काशीं प्रति विष्णुः प्रेषितः, विष्णुतीर्थानि, विष्णुना सुगतरूपेण नास्तिकोपदेशद्वारा प्रजा धर्मशून्या नास्तिका कृता, तेन दिवोदासस्य प्रतापस्य ह्रासः, ततः अस्याः संहितायाः श्रवणम्, काशीविश्वेश्वर-स्थापनम्, ततो दिव्यविमानेन दिव्यदेहस्य दिवोदासस्य प्रजया सह वैकुंठगमन-मित्यादिनिरूपणनामा सप्ताशीति-तमोऽध्यायः॥८७॥

**श्रीलक्ष्मीरुवाच—**

मन्दराद्रिप्रार्थनेन शंभुस्तु गतवान्पुरा।
कथं देवापराधो वै दिवोदासस्य सोऽभवत्!॥१॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि! कथां दिव्यां कथं द्रोहस्त्वजायत।
पुरैकदा महावृष्टिर्जाता काशीविनाशिनी॥२॥
वृष्ट्या काश्या विनाशेन देशविप्लवजेन च।
ध्यानस्थितस्य शंभोर्वै दुःखेनाऽन्तरदूयत॥३॥
तदा देवो महादेवो मेघानाहूय सर्वतः।
सर्वान् निबध्य जटया समाध्यन्तर्हितोऽभवत्॥४॥
गत्वा कैलासशिखरे गणान् संस्थाप्य रक्षकान्।
दशवर्षं समाधौ तु सोऽभूत् जागरितो नहि॥५॥
अनावृष्ट्या तदा देशा विनाशं परमं ययुः।
दिवोदासस्तदा भक्तो घोरे तपसि संस्थितः॥६॥
पृथ्वी राज्यविहीनाऽऽसीत् देवाः स्वर्गं गतास्तदा।
मनुष्या नैव दृश्यन्ते लोकविप्लव आपतत्॥७॥
अव्यवस्था चतुर्योनौ यज्ञादयो भवन्ति न।
न भक्ष्यं न च हव्यं वा पत्रं पुष्पं न लभ्यते॥८॥
देवानां पूजनं चापि यज्ञीयं भोजनं च यत्।
सावग्रहं तु तत्सर्वं जातं तदा दिवौकसाम्॥९॥
इतस्ततः प्रधावन्ति मनुजा राक्षसास्तथा।
देवाश्च प्राणिनो भूताः पिशाचा वनिनस्तथा॥१०॥
अव्यवस्थं ह्यभूत्सर्वं महाभयं तु भूतलम्।
बाला नार्यो ह्रियन्तेऽन्यैर्द्रव्यं भोज्यं न लभ्यते॥११॥
अराजके तदा देशे दुःखिनो देवमानवाः।
ब्रह्माणं तु समाराध्य नृपतिं सुप्रतापिनम्॥१२॥
वव्रिरे देवसाहाय्यं यथा वै वर्षणं भवेत्।
मार्गयन्नृपतिं विष्णुसमं ब्रह्मा ह्युवाच तान्॥१३॥
यान्तूपायं करिष्येऽहं दुःखनाशाय सर्वथा।
स्वयं विमानमारुह्य जगाम हिमपर्वतम्॥१४॥
तपस्यन्तं महाघोरं विद्युत्प्रभं प्रतापिनम्।
दिवोदासं विलोक्यैव ब्रह्मोवाच हितावहम्॥१५॥
पश्य राजन् स्वयं ब्रह्मा लोकरक्षणहेतवे।
आगतोऽस्मि भवानत्र तापसः सन्करोति किम्॥१६॥
परोपकारसदृशं तपो न न च पौरुषम्।
न ध्यानं न च होमो वा न क्रियान्तरमित्यपि॥१७॥
आराधितो यदि हरिस्तपसा ततः किं
नाराधितो यदि हरिस्तपसा ततः किम्।
निष्कामतां यदि गतस्तपसा ततः किं
सत्कामतां यदि गतः फलमाप्नुहि त्वम्॥१८॥
फलं स्वयं समागत्य हस्ते पतति यत्स्वतः।
न गृह्णाति नोपयुंक्ते कोऽन्यस्तस्माद् विचेतनः॥१९॥
देवाः प्रयोजनवशात् तुष्यन्ति यस्य योगतः।
तान्नाद्रियत इत्यस्मात्कोऽन्यस्तु विफलायतिः॥२०॥
तपः समाप्य नृपते! निबोध मद्वचो हितम्।
त्वां विनाऽवग्रहं घोरं नान्यो वारयितुं क्षमः॥२१॥
त्वां विष्णुं त्वां महारुद्रं ब्रह्माणं त्वां प्रजापतिम्।
मन्ये तत्कार्यकर्तृत्वात् तत्प्रतीकं तदात्मकम्॥२२॥
त्वादृशानां तपो धर्मो नोचितो देशविप्लवे।
सेवाधर्मं गृहाण त्वं राज्यं कुरु मयाऽर्पितम्॥२३॥
आगच्छ तव मूर्ध्न्यत्र मुकुटं स्थापयामि वै।
अभिषेकं कारयामि मत्कमण्डलुवारिणा॥२४॥
इदानीं शंकरो देवो ह्यविमुक्तं महावनम्।
परित्यज्य महामेघान् बध्वा नीत्वा गतो दरीम्॥२५॥
त्वं गृहाण महाराज्यं राजधानीं तु काशिकाम्।
अभिषेके त्वयि जाते द्राग्वृष्टिः संभविष्यति॥२६॥
प्राणिनः सुखिनः स्युश्च हरिस्तुष्टो भविष्यति।
तपसाऽप्यधिकं जन्मसाफल्यं संभविष्यति॥२७॥
इत्युक्ते ब्रह्मणा राज्ञि नेत्रे प्राम्नित्य वेधसम्।
प्रणम्य दण्डवद्भूमौ ववन्दे हृदयेन वै॥२८॥

पितामह नमस्तुभ्यं पित्राज्ञां पालयाम्यहम् ।
प्राप्ते प्रसन्नवदने पितरि को न तुष्यति ॥२९॥
प्राप्ते क्षणे तु देवानां पितॄणां वा सतां जनः ।
नाज्ञावहो भवेद् भाग्यविक्रेता स न संशयः ॥३०॥
पिता पितामहश्चापि प्रपितामह इत्यपि ।
आज्ञापयेत्तु यत्तद्वै कार्यं पुत्रेण धीमता ॥३१॥
त एव तु त्रयो देवा वेदाश्चापि त एव ह ।
त एव मुक्तिदातार आशीर्वादपरायणाः ॥३२॥
किन्तु निर्वाहके पुत्रे यदि विघ्नं तु किंचन ।
दृश्यते तन्नाशनीयं तस्मात् किंचिन्निवेदये ॥३३॥
देवानां देवलोकेषु दैत्यदानवभोगिषु ।
नास्ति धर्मव्यवस्था या मानुषेष्विह निर्मिता ॥३४॥
यदि मानुषभिन्नो वा कश्चिद्वसति भूतले ।
तदा मानुषधर्माणां बाधा स्यात्प्रमदादिषु ॥३५॥
देवाः पत्नीव्रतं धर्मं मन्वते नैव चेत्यतः ।
यदि मद्विषये न स्यू राज्यं करोमि धार्मिकम् ॥३६॥
ब्रह्मा प्राह वरं राजन् वर्धसे विमलाशयः ।
गृहाण मुकुटं गांगं जलं खड्गं च मालिकाम् ॥३७॥
देवाः संकल्पितास्तत्र क्षणादाययुरग्रिमाः ।
अभिषेकः क्षणाज्जात उद्घोषः सदसि कृतः ॥३८॥
शृण्वन्तु देवताश्चान्येऽत्रत्याऽन्यलोकवासिनः ।
दिवोदासस्य राज्ये तु नागतव्यममानवैः ॥३९॥
वसन्ति ये च तैः सर्वैर्देवैर्गन्तव्यमन्यतः ।
यो न मन्वीत मे न्यायं स देवेभ्यो बहिष्कृतः ॥४०॥
मत्सृष्टेश्च बहिष्कार्य इत्याज्ञा वैधसी ध्रुवा ।
सर्वे त्वमानवा देवा अतलादिगृहास्तथा ॥४१॥
काश्या निर्गत्य नाकेऽन्यपर्वतादौ गतास्तदा ।
न यत्र मानवो वासो न देवानां च संकरः ॥४२॥
शंकरस्तु ययौ पूर्वं मन्दरेणार्थितो यदा ।
गताः स्वस्वामिवासेषु त्रिदेवास्त्रिदशालयाः ॥४३॥
निष्कासनेन देवानां दिवोदासो महान् रिपुः ।
देवानामपराद्धा स विवासदण्डकृच्च वै ॥४४॥
नागन्तव्यं मम राज्ये देवैः क्वापि कदाचन ।
स्वार्थाः परार्थलुब्धाश्च परदारसुसंगिनः ॥४५॥
ते राज्ये मे न चाऽऽयान्तु त्वागता नाशमाप्नुयुः ।
इत्युद्घोषस्ततो जातस्तेन देवा रुषं गताः ॥४६॥
सूर्यो नैव प्रतपति चन्द्रो न शैत्यदोऽभवत् ।
पचत्यग्निर्न वै भोज्यमिन्द्रो नैव हि वर्षति ॥४७॥
न वाति पवनस्तत्र ऋतवो विमुखास्तदा ।
एवं सर्वेऽपि रुष्टास्ते दिवोदासस्तदा स्वयम् ॥४८॥
नारायणहरेर्योगात् तपते सूर्यरूपधृक् ।
पोषयत्यौषधींश्चन्द्रो भूत्वा ददाति चामृतम् ॥४९॥
अग्निर्भूत्वा पाचयति मेघो भूत्वा प्रवर्षति ।
वायुर्भूत्वा प्रवात्येव विकासयति सन् ऋतुः ॥५०॥
यत्र यत्र च यत्कार्यं देवाधीनं बभूव ह ।
तत्तद्देवात्मको भूत्वा स्वयं साधयति द्रुतम् ॥५१॥
स्वयं यज्ञः प्रभूत्वा च भूत्वा तद्देवमण्डलम् ।
स्वयं नारायणे प्रार्प्य स्वयमश्नाति शेषजम् ॥५२॥
नाऽन्यमाह्वयते कंचिद्देवं नारायणोऽपरः ।
अतोऽतिरुष्टा देवास्ते नाऽऽयान्ति तत्र केऽपि वै ॥५३॥
अवग्रहकृतो दोषो दिवोदासेन नाशितः ।
रिपूंन्नारायणबलाज्जयतीति रिपूञ्जयः ॥५४॥
इतिख्यातिं समापन्नो दिवो नारायणस्य च ।
दासश्चेति दिवोदास इत्येवं नाम सार्थकम् ॥५५॥
सत्यं शीलं ब्रह्मचर्यमहिंसा त्याग आर्जवम् ।
सर्वब्रह्मात्मदृष्टिश्च तथा सर्वात्मवेदिता ॥५६॥
सेवा सतां सतीनां च नारायणेन चैकता ।
इत्येवं सद्गुणास्तत्र सन्ति शीलपुरोगमाः ॥५७॥
कामदुघाः कल्पवृक्षाश्चिन्तामणय इत्यमी ।
नित्यं तद्राज्यवास्तव्यप्रजानां तु गृहे गृहे ॥५८॥
राजा तु नवधा भक्त्योपास्ते नारायणं हरिम् ।
कामवर्ष्यभवत्तस्य स्वयं नारायणः प्रभुः ॥५९॥
गृहकार्यकरी चासील्लक्ष्मीर्नारायणी च मा ।
वैकुण्ठ इव तद्राज्यं विकासमगमच्छ्रिया ॥६०॥
किं न्यूनं वै भवेद् यस्य भाले वसति श्रीहरिः ।
डिण्डिमोद्घोषिता राज्ये ह्याबाल्युववार्धकाः ॥६१॥
सर्वे भजन्तां गोविन्दं नान्यं कुर्वन्तु तद्विना ।
पूजयन्तु च गोविन्दं शृण्वन्तु श्रीहरेः कथाम् ॥६२॥
ध्यायन्तु श्रीहरेर्मूर्तिं पश्यन्तु प्रतिमां हरेः ।
स्पृशन्तु तत्सतां पादान् भक्षयन्तु निवेदितम् ॥६३॥
जिघ्रन्तु हरिपुष्पाणि सेवयन्तु च तत्सतः ।
रटन्तु हरिनामानि विहरन्तु तदालये ॥६४॥
आनन्दयन्तु हर्यर्थमुत्सृजन्तु विशुद्धये ।
स्वपन्तु हरिशय्यायां जाग्रतु हरिसेवने ॥६५॥
आन्तरं चापि यत्किंचित् कुर्वन्तु हरिगोचरम् ।
मा कुर्वन्त्वन्यमुद्योगं दिवोदासे प्रशासति ॥६६॥

यद्यद् यस्य भवेदिष्टं तस्य तस्य तु लब्धये ।
श्रीनारायणमूर्त्यग्रे स्थित्वोच्चार्यं च नाम वै ॥६७॥
प्रार्थनीयममुकं मे भूयाद्विश्वंभर प्रभो ।
दिवोदासस्य भक्त्या श्रीनारायणो ददातु मे ॥६८॥
इत्येवं प्रार्थ्यते येन प्राप्स्यते तेन सर्वथा ।
अन्यथा मे भवेद् घात्यो ध्रुवं चेत्यनुशासनम् ॥६९॥
कण्ठे स्रजस्तुलस्याश्च भाले तिलकं चान्दनम् ।
चन्द्रकं कुंकुमाढ्यं च जपार्थं करमालिका ॥७०॥
श्रीनारायणमूर्तिश्च सौवर्णी कण्ठगा सदा ।
इत्येवं पञ्चचिह्नानि रक्षेन्नारायणस्य वै ॥७१॥
यस्यैवं नैव मान्यं मे घात्यः खड्गेन वै स मे ।
पशुवृक्षलतापक्षिप्राणिनो यस्य सन्ति वै ॥७२॥
तान्सर्वान् वैष्णवान् कुर्युरित्यस्ति मम शासनम् ।
नाऽवैष्णवी प्रजा मे स्यान्न देशो मे त्ववैष्णवः ॥७३॥
नाऽवैष्णवं च वस्तु स्यादिति मे शासनं महत् ।
अनिवेद्य न भोक्तव्यं न पातव्यमनर्पितम् ॥७४॥
नोद्वर्त्यं नैव चाभूष्यं नाऽऽधार्यं चाऽनिवेद्य वै ।
नन्दयन्तु विहरन्तु रामयन्तु सदा प्रजाः ॥७५॥
मिलिताभ्यां जयहरिरितिवाच्यं न चान्यथा ।
वक्तव्यं यत्किमप्येतत् हरेश्चरित्रमेव ह ॥७६॥
आज्ञोल्लंघयितुः कण्ठे मे खड्गो विचरिष्यति !
इत्येवं तु दिवोदासो राज्यं चकार वैष्णवम् ॥७७॥
सर्वं वैकुण्ठभं त्वासीन्न न्यूनं तु किमप्यभूत् ।
प्रजाः कामविमानैश्च विहरन्ति सदाऽम्बरे ॥७८॥
गृहे गृहे विमानानि कामदुघा गृहे गृहे ।
कल्पवृक्षाः प्रतिगृहं कल्पशिलाः प्रतिस्थलम् ॥७९॥
स्वर्णहरिः प्रतिव्यक्ति साक्षाद्वैकुण्ठ इत्यभूत् ।
एवं प्रभावो राजाऽसौ प्रजा नीत्वा हरिश्रिताः ॥८०॥
आगात्सदेहो वैकुण्ठं कोऽन्यस्तद्वत् प्रयास्यति ।
ये ये तत्रागता देवाः कापट्येन च शांकराः ॥८१॥
विष्णुना रक्षितास्ते च खड्गाघातं न लेभिरे ।
इत्येषा भगवन्माया कर्ता कारयिता हि सः ॥८२॥
यस्य ललाटे वसति तस्य सर्वं समावसेत् ।
प्रयाति यस्य भालात्स ह्यपयात्यखिलं ततः ॥८३॥
प्रसह्य वेधसो द्वारा देवानां यद्विवासनम् ।
तदेव त्वपराधः स यत्फलं स्वस्य मोक्षणम् ॥८४॥
अपराधोऽपि मोक्षाख्यं फलं दद्याच्छुभो हि सः ।
इत्येवं कथितो भक्तप्रतापोऽन्यत् किमिच्छसि ॥८५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने दिवोदासस्य राज्यपदोत्तरं देवानां काशीतो निष्कासनमपराधः, स्वस्य सर्वदेववत्कार्यसामर्थ्यं वैष्णवधर्मभक्तिप्रवर्तनमित्यादिनिरूपणनामाऽष्टाशीतितमोऽध्यायः ॥ ८८ ॥

**श्रीलक्ष्मीरुवाच—**

भगवान् सर्वहृद्वास सर्वज्ञ बहुरूपधृक् ।
धन्वन्तरिस्तृतीयो वै जज्ञे रत्नाकरात्कथम् ॥ १ ॥
तां कथां श्रावय स्वामिन्नारायण जगद्गुरो ।
श्रुत्वा पतिमुखाद् वार्तां नैव तृप्यामि मोक्षदाम् ॥ २ ॥

**श्रीनारायण उवाच—**

द्वापरे तु युगे चान्ते यदा सर्वेऽल्पबुद्धयः ।
स्वार्थसाधनमात्रार्था अतृप्तस्वस्ववृत्तयः ॥ ३ ॥
लोभमानाद्यधर्मांशव्याप्ता देवाश्च मानवाः ।
आसँस्तदा युगेचेन्द्रो राज्याभिमानवानपि ॥ ४ ॥
राजसेन तु भावेन समाविष्टः पुरन्दरः ।
तर्कयामास मनसा दृष्ट्वा कालं सदूषणम् ॥ ५ ॥
अहो सत्यं तथा त्रेता कीदृशौ समयौ शुभौ ।
व्यतीतौ सुभगौ सर्वसम्पत्प्रदौ यथेष्टदौ ॥ ६ ॥
द्वापरे गम्यमानेऽत्र मानसानि फलन्ति न ।
नेष्टं च प्राप्यते किंचित् दुरापं जायते मुहुः ॥ ७ ॥
दोषोऽत्र न प्रजानां स्याद् यथा राजा तथा प्रजा ।
अतोऽत्राऽऽहूय दिक्पालान् शास्मि कालस्य शुद्धये ॥ ८ ॥
राज्ञोऽपि वा कियान् दोषो राजानो गुरुशासिताः ।
गुरवोऽत्र तु दृश्यन्ते लुब्धाः स्वार्थपरायणाः ॥ ९ ॥
तस्माद् दण्ड्याश्च गुरवः कालशुद्धिस्ततो भवेत् ।
यादृशा राज्यगुरवस्तादृशा राज्यपालकाः ॥१०॥
तस्मादाहूय सर्वान् वै केनाऽप्युत्सवछद्मना ।
विज्ञापयामि सौख्यार्थे–'स्थेयं सत्ययुगे यथा, ॥११॥
कालः कलुषतां नेयात् वर्तन्तां तत्तथैव हि' ।
एवं विचार्य शक्रेण स्वर्गे ह्याकारिता सभा ॥१२॥
श्रावितं च त्रिलोक्यां वै स्वर्गे चेन्द्रसभागृहे ।
समागन्तव्यमानागमर्त्यदेवमुनीश्वरैः ॥१३॥

समाजे चात्र देवानां भविष्यति महोत्सवः ।
नरोत्पन्नाऽप्सरसां तु नवं नृत्यं भविष्यति ॥१४॥
धर्मस्य पत्न्यां मूर्त्यां यौ जातौ नरनरायणौ ।
पित्रोराज्ञामनुप्राप्य तपोऽर्थं कृतमानसौ ॥१५॥
तपतस्तौ विघ्नकर्तुं मयेन्द्रेण प्रणोदिताः ।
अप्सरसो मोहनार्थं तदा नरेण चाज्ञया ॥१६॥
नारायणस्याऽऽम्रपुष्पैरूर्वशी प्रकटीकृता ।
सुरूपा यौवनव्याप्ता रूपमूर्धन्यभास्वरा ॥१७॥
यदग्रेऽन्याः कृष्णवर्णा निस्तेजस्का इवाऽभवन् ।
सैवोर्वशी तु मे दत्ता सा वै नृत्यं करिष्यति ॥१८॥
तद्दर्शनाय सर्वैस्तु समागन्तव्यमेव ह ।
इत्युद्घोषयित्वेन्द्रेण कृता स्वर्गे महासभा ॥१९॥
नृत्यं करोत्यूर्वशी च नृत्ये रूपे च मोहिता ।
कण्ठस्वरे प्रलीना च ह्यमाना त्वभवत्सभा ॥२०॥
लोकपालाश्च देवाश्च ऋषयोऽप्सरसस्तथा ।
गन्धर्वाश्च तथा सिद्धा विद्याध्राश्चारणादयः ॥२१॥
देव्यश्चापि तदा सर्वा मुग्धास्तल्लग्नमानसाः ।
अभवँस्तावदागच्छद् देवराजगुरुः सुधीः ॥२२॥
बहुशिष्यैः परिवृतो बृहस्पतिरुदारधीः ।
नृत्ये संवर्तमानेऽत्र सभाक्षोभो भवेदतः ॥२३॥
इन्द्रस्तत्राऽऽगतं पश्यन् गुरुं वाचस्पतिं द्विजम् ।
नोवाच किंचिद् दुर्मेधा वचो मानपुरःसरम् ॥२४॥
नाऽऽह्वानं नाऽऽसनं तस्य सत्कारं नाऽकरोत्तदा ।
देवास्तु सहसा दृष्ट्वा प्रणेमुस्तमुपस्थितम् ॥२५॥
तदोर्वशी स्वयं तत्र गुरुं ज्ञात्वा बृहस्पतिम् ।
ननाम नृत्यं संत्यज्य सभाक्षोभोऽभवत्तदा ॥२६॥
इन्द्र उत्थाय यावद्वै 'कालः शुभो भवेद् यथा—
भवेद् यदि शुभो राजा, सोऽपि स्याद् चेत् शुभो गुरुः ॥२७॥
शुभेन गुरुणा राजा प्रजा कालः शुभा मताः' ।
इत्युपदिशति तावत् सुराचार्यो रुषान्वितः ॥२८॥
ज्ञात्वा शक्रं प्रमत्तं च मदाद् राज्यस्य दुर्मतिम् ।
तिरोधानमनुप्राप्तः क्व गतो नैव भालितः ॥२९॥
गते देवगुरौ तस्मिन् वैमनस्यं गताः सुराः ।
यक्षनागाश्च गन्धर्वा अप्सरस द्विजर्षयः ॥३०॥
नृत्यगानाऽवसाने तु हरिः प्राह सुराँस्तदा ।
क्व गतोऽयं देवगुरुर्नारदः प्राह तं तदा ॥३१॥
त्वया कृता ह्यवज्ञा वै गुरोर्मानं तु न कृतम् ।
गुरोरवज्ञया राज्यं लीयते भयमागतम् ॥३२॥
नरो यतते सौख्यार्थं तदेव दुःखकृद् भवेत् ।
सोऽयं कालस्य संवेगो न राजा कालकारणम् ॥३३॥
न गुरुर्न प्रजा हेतुर्युगः कालस्य कारणम् ।
युगः पर्यावर्तयति मानसानि महात्मनाम् ॥३४॥
तथापि भद्रसन्तत्यै यतितव्यं यथाबलम् ।
गुरुः क्षमापनीयो वै सर्वभावेन तु त्वया ॥३५॥
नारदस्य वचः श्रुत्वा सदःस्थैः परिवारितः ।
आसनात्सहसोत्थायाऽगच्छद् गेहं बृहस्पतेः ॥३६॥
दृष्ट्वा तारां प्रणम्याह क्व गतो हि महातपाः ।
न जानामीत्युवाचेत्थं तारा देवान् गृहस्थिता ॥३७॥
तदा चिन्तान्वितो भूत्वा शक्रः स्वालयमाव्रजत् ।
ऐरावतं समारुह्य गुरोर्मार्गणकाम्यया ॥३८॥
व्योममार्गात्पृथिव्यां वै यावदागच्छति द्रुतम् ।
मार्गे मुनिर्महाक्रोधो दुर्वासा रुद्रकांशजः ॥३९॥
पारिजातप्रसूनानां मालामादाय चागतः ।
गुरोश्चिन्तनजान्मोहाद् भाविभाग्यपरिक्षयात् ॥४०॥
काला वेगात्तथा तत्र तुराषाण्न ननाम तम् ।
तथापि ऋषिणा राज्ञः सत्कार्यधर्मगौरवात् ॥४१॥
माला व्योम्नैव मार्गेण त्विन्द्रकण्ठे समर्पिता ।
इन्द्रस्तां तु समुत्तार्य दत्तवान् हस्तिमस्तके ॥४२॥
हस्तिना सा करेणैव फालिता निहिता पदे ।
कचरिता मर्दिता च दृष्ट्वा चुक्रोध तां मुनिः ॥४३॥
क्रोधज्वालापरीतांगो विकरालभयंकरः ।
ओष्ठौ दशन् गरं नेत्रे दर्शयन् स्फारयन् थरन् ॥४४॥
उवाच दुष्ट देवेश दूरे तिष्ठतु माननम् ।
प्रत्युत मानितोऽपि त्वं मालां गणयसे नहि ॥४५॥
विदित्वा देवराजं त्वां पूजयित्वा तथापि वै ।
शठराजः प्रभूत्वा मन्मालां क्षिपसि भूतले ॥४६॥
मर्दनं हस्तिपादेन कारयस्यवमाननम् ।
पुष्पे पुष्पे तु रत्नानि लक्ष्म्यो वसन्ति मद्बलात् ॥४७॥
वैकुण्ठाच्छ्रीहरेः प्रासादिकी लब्धाऽर्पिताऽत्र ते ।
सा प्रदत्ता मया तां त्वं कचरयसि पत्तले ।
रत्नानां लक्ष्मीनां चापि नाशं करोषि मौढ्यतः ॥४८॥
तस्मात् त्रिलोकिराज्यं ते विनाशं यातु सर्वथा ।
सम्पदः स्मृद्धयो लक्ष्म्यो रत्नानि विविधानि च ॥४९॥
लयं यान्तु महावार्धौ त्वमनिद्रो भव क्षणात् ।
दुर्वासा एवमुक्त्वैव कैलासमगमत् ततः ॥५०॥
अम्बालिकाध्वजस्तत्रैवाऽपतद्भूतले ततः ।
मुकुटोऽप्यपतन्मूर्ध्नः क्षौति स्म च करी तदा ॥५१॥

अंकुशं वै विगलितं हस्तात् हस्तिपकस्य तु ।
एतस्मिन्नन्तरे स्वर्गे त्वनिष्टान्यभवन्क्षणात् ॥५२॥
ऐरावतश्चालितोऽपि स्वर्गं प्रति न गच्छति ।
उन्मत्तः सन् देवराजं द्रावयत्येव चाभितः ॥५३॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने नरनारायणोत्पादितोर्वश्या नर्तनोत्सवसमाजे बृहस्पतेरवमाननं दुर्वाससोऽवमानं राज्यलक्ष्मीनाशकशापश्चेन्द्रस्येत्यादि-निरूपणनामा एकोननवति-तमोऽध्यायः ॥ ८९ ॥

**श्रीनारायण उवाच—**

देवगुरुः स्वयं यातो कावेर्याश्चोत्तरे तटे ।
होमं चकार चेन्द्रस्य राज्यनाशाय शेषतः ॥ १ ॥
'ॐ नमो भगवति ऋक्षकर्णि चतुर्भुजे ।
ऊर्ध्वकेशि कालरात्रि वसारुधिरभोजने ॥ २ ॥
इन्द्रस्य प्राप्तकालस्य मृत्युदे हुं फट् हन ।
हन दह दह मांसं रुधिरं पच पच स्वाहा' ॥ ३ ॥
इति होमं प्रकुर्वता कृत्या क्रूरा तु निर्मिता ।
सा गता चेन्द्रनाशाय दृष्ट्वेन्द्रो विह्वलोऽभवत् ॥ ४ ॥
पलायितो व्योममार्गाद् ब्रह्मणः सदनं ययौ ।
कृत्या परावृता तस्माद् बृहस्पतिमुपागता ॥ ५ ॥
बृहस्पत्याज्ञया चेन्द्ररत्नानां नाशनाय हि ।
गता स्वर्गे तदा सर्वे भयभीता स्वितस्ततः ॥ ६ ॥
विनाशिकां महाघोरां कालानलसमप्रभाम् ।
व्यात्ताननां सशस्त्रां च दृष्ट्वा चक्रुः पलायनम् ॥ ७ ॥
दुर्वाससो मुनेः शापो महाकायः करालकः ।
कृष्णपर्वतसन्निभो मेघान् लिहन् स्वजिह्वया ॥ ८ ॥
सूर्यचन्द्रनिभे नेत्रे विस्फारयन् प्रभक्षकः ।
त्रिलोक्यास्तु विनाशाय स्वर्गे तु प्रथमं गतः ॥ ९ ॥
करालकः स पुरुषः कृत्या ऋक्षश्रवस्यपि ।
विनाशयामासतुश्च स्वर्गरत्नानि सर्वतः ॥१०॥
तदा शची तिरोधानं गता तु कमलेक्षणा ।
ऐरावतो महानागस्तथैवोच्चैःश्रवा हयः ॥११॥
प्रदुद्रुवुस्तथा चान्यरत्नानि स्वर्गतः किल ।
पातालस्थेन बलिना ज्ञात्वा शक्रस्य दुर्दशाम् ॥१२॥
अकारि स्वर्गलाभाय युद्धं दैत्यप्रसेनया ।
लब्धाऽमरावती तेन रत्नान्यास्कन्दितानि च ॥१३॥
सप्तांगं सकलं तस्येन्द्रस्य नीतं तलातलम् ।
शुक्रप्रसादाद् दैत्यास्तु तदा विजयिनोऽभवन् ॥१४॥
समुद्रे पतितावुच्चैःश्रवऐरावतैस्तदा ।
अन्यान्यपि च रत्नानि ह्यनेकानि बहून्यपि ॥१५॥
स्वर्गान्नीतानि दैत्यैश्च दैत्यानहार्णि तानि तु ।
विद्रुत्वा तानि दैत्येभ्यः पतितानि तु सागरे ॥१६॥
चन्द्रो जलद्रवो भूत्वा भूत्वा कामदुघा पयः ।
कल्पवृक्षः पारिजातश्चादृश्यौ बीजभावतः ॥१७॥
अप्सरसो नदीरूपा हीरकाः कंकरास्तथा ।
अमृतं तु तदा भूत्वा वारिरसमयो द्रवः ॥१८॥
ऋद्धिस्मृद्धिरमारामा भूत्वा रूपान्तरात्मिकाः ।
जग्मुः समुद्रमध्याऽधस्तले विश्रान्तिमाप्नुवन् ॥१९॥
देवभोग्यानि रत्नानि दैत्यभोग्यानि नैव हि ।
तदा स विस्मयाविष्टो बलिराह गुरुं प्रति ॥२०॥
बलाज्जितानि रत्नानि पेतुर्जलमहार्णवे ।
शुक्रः प्राहाऽश्वमेधानां शतेनाऽऽप्त्वा सुरेशताम् ॥२१॥
यस्तिष्ठति सुरराजाऽऽसने रत्नानि तस्य वै ।
अश्वमेधशतं कृत्वा तेषां भोक्ता न संशयः ॥२२॥
अश्वमेधैर्विना किञ्चित्स्वर्गीयं नैव भुज्यते ।
गुरोर्वचनमाज्ञाय बलिः प्राह गुरुं तदा ॥२३॥
यतिष्ये प्राप्तसमये नेदानीं समयोऽस्ति सः ।
अथेन्द्रोऽपि शिक्षितः श्रीब्रह्मणा परमेष्ठिना ॥२४॥
ब्रह्माणं लोकपालाँश्च पुरस्कृत्य सुरास्तथा ।
मुनीन् देवाँश्चाऽगमत् स समुद्रं क्षीरसागरम् ॥२५॥
प्राप्ता विमृश्य ते सर्वे हरिं स्तोतुं प्रचक्रमुः ।
देवानां दुःखहर्त्रे ते क्षीरसागरवासिने ॥२६॥
सर्वान्तर्यामिणे तस्मै शयानाय नमो नमः ।
कालकृतं महादुःखं देवानां समुपस्थितम् ॥२७॥
प्रविधोतुं च दुःखं तत् त्वमेवाऽसि बलान्वितः ।
देवदेव जगत्त्रातः परमात्मन्नमोऽस्तुते ॥२८॥
कृपालुर्भगवन् भूत्वा रक्ष सुरान्स्वकान्द्रुतम् ।
गुरोरवज्ञया चापि दुर्वाससोऽवमाननात् ॥२९॥
शतक्रतुर्भ्रष्टराज्योऽभवत्तं वै समुद्धर ।
तदा तु भगवानाह मदः पातित्यकारकः ॥३०॥
गुरोरवज्ञया सर्वे नाशं यात्यखिलं स्वकम् ।
पित्रोर्गुरोस्तथा पत्युः पत्न्याः साध्व्याः सतां तथा ॥३१॥
गवां चैवापमानस्य कर्तृणां स्यान्महान् क्षयः ।
कृतमिन्द्रेण तादृग्वै तद्दोषात्सकलं जगत् ॥३२॥

क्षणाद्दुःखं समापन्नं सद्य एव निरीक्ष्यताम् ।
विपरीतो यदा कालस्तदा सर्वं समापयेत् ॥३३॥
विपरीते तदा काले धैर्यमालम्ब्य सन्धिना ।
शत्रुणाऽपि मिलित्वैव स्वकार्यं साधयेत् सुधीः ॥३४॥
अत इन्द्र त्वया कार्यो दैत्यैः सह समागमः ।
मिलित्वा नष्टरत्नानि प्राप्स्यन्ते तूद्यमात्पुनः ॥३५॥
साहाय्यदो भविष्यामि समुद्रमथनेऽन्वहम् ।
दैत्या देवा मिलित्वैव प्राप्स्यामः स्वधनं पुनः ॥३६॥
इत्याज्ञप्तस्तदा चेन्द्रो जगाम सुतलं बलिम् ।
आश्रितो विनयी भूत्वा ननाम प्रबलं बलिम् ॥३७॥
बलिनाऽपि तदा दृष्टो निःश्रीको निष्प्रभोऽमदः ।
विमत्सरो गततेजाः सुरराजो महार्तिमान् ॥३८॥
निर्मदं तं परं दृष्ट्वा दयापन्नो बलिस्तदा ।
उवाचेन्द्रं तु सामान्य प्रहसन्निव दाक्ष्यतः ॥३९॥
कस्मादिहाऽऽगतः शक्र ! सुतलं प्रति कथ्यताम् ।
जिज्ञासमानं ज्ञातारं समयज्ञं बलिं तदा ॥४०॥
इन्द्रः प्राह बले ! सर्वरत्नानि विगतानि वै ।
यथा वयं तथा यूयं रत्नहीनाः कलिश्रिताः ॥४१॥
मम राज्यं त्वया नीतं कालवेगेन विग्रहात् ।
न ते भोग्यं जायते तद्विनेन्द्रपदवीं नृप ! ॥४२॥
दैत्यहस्तगतान्येव रत्नानि सुबहून्यपि ! ।
अयोग्यानीति तान्येव यत्रत्यानि गतानि तत् ॥४३॥
इदानीं राज्यरत्नादिविहीनोऽहं तलाधिप ! ।
तस्मात्प्रयत्नः कर्तव्यो रत्नानां लब्धये त्वया ॥४४॥
शरणार्थमहं प्राप्तः सुरैः सह तवान्तिकम् ।
अमृतं तु समुद्राद्वै पुनराप्तव्यमेव ह ॥४५॥
तत्र ते तु यथायोग्यं स्वत्वं दास्ये तु लब्धिजम् ।
देवा दैत्या मिलित्वैव समुद्रमथनं मुहुः ॥४६॥
करिष्यामस्तदा तत्र गतानि यानि तानि वै ।
लप्स्यामहे शरण्यस्त्वं साहाय्यं दातुमर्हसि ॥४७॥
एवमुक्तस्तदेन्द्रेण बलिर्दैत्यपतिः स्वयम् ।
विमृश्य परया बुद्ध्या कार्याकार्यविचक्षणः ॥४८॥
शक्रं संपूजयामास बहुमानपुरःसरम् ।
शक्रः संस्मृत्य वचनं विष्णोः स्वार्थप्रसाधनम् ॥४९॥
प्राप्तव्यानि त्वया वीर रत्नानि सुबहून्यपि ।
शीघ्रं चोद्धरणे दैत्य ! यत्नो मन्थे विधीयताम् ॥५०॥
एवं स समयं कृत्वा यत्नार्थमकरोन्मनः ।
बलिराह तदा शक्रं केनेन्द्र ! मथनं भवेत् ॥५१॥
तदा नभोगता वाणी विष्णुरूपात्मिका शुभा ।
उवाच देवदैत्यांश्च मन्थत क्षीरसागरम् ॥५२॥
मन्दराचलमन्थानं मन्थनरज्जुवासुकिम् ।
कृत्वा देवाश्च दैत्याश्च संहत्य कुरुताऽर्थदम् ॥५३॥
इति श्रुत्वा तदा दैत्या उद्यमं कर्तुमुत्सुकाः ।
पातालेभ्यो निर्गतास्ते दानवा असुरादयः ॥५४॥
कोटिशस्ते तदा चाथ देवा अपि तु कोटिशः ।
उद्युक्ता ब्रह्मविष्णुभ्यां युक्ता ययुश्च मन्दरम् ॥५५॥
चन्द्रं स्पृशते यच्छृंगं पादानि बलिसत्तले ।
श्रोणीः पृथ्व्यां तु यस्यास्ति मन्दरं तं नमामहे ॥५६॥
अनेकदेवसंवासं रत्नानामाकराकरम् ।
सर्वौषधिसमाकीर्णं नताः स्मो गिरिमन्दरम् ॥५७॥
अद्रे ! सुरा वयमत्र साहाय्यार्थं समागताः ।
बलिरिन्द्रो बभाषाते प्रस्तावसदृशं वचः ॥५८॥
अमृतोत्पादनस्यार्थे मन्थस्त्वं भव गोत्रज ! ।
तथेति मत्वा शैलेन्द्रः प्राह तच्छृण्वतां वचः ॥५९॥
त्वया वज्रेण पक्षौ मे शातितौ हि सुरेश्वर ! ।
कथमायामि गच्छामि व्योममार्गं विना तटम् ॥६०॥
तदा महाबला देवा दैत्याश्च मिलिता गिरिम् ।
मूलादुत्पाट्यामासुर्धृत्वा स्कन्धेषु तं तदा ॥६१॥
क्षीराब्धितटमाप्तुं वै जग्मुर्बहुबलेश्वराः ।
देवा दैत्या मन्दरातिभाराक्रान्ता बहुश्रमाः ॥६२॥
मार्गे एव निषेदुश्च मन्दरः पतितो भुवि ।
तदधस्तान्मृताः केचित्केचिद्भग्ना विमूर्छिताः ॥६३॥
पुनर्नेतुं न वै शक्ता मृतशोकपरायणाः ।
रत्नानि तु कदाऽऽप्स्यन्ते ह्येते तु जीवतो गताः ॥६४॥
माऽस्माभिः प्राणहा यत्नः कर्तव्यश्चाशया ह्ययम् ।
दूरे तिष्ठन्तु रत्नानि पर्वतोऽप्यत्र तिष्ठतु ॥६५॥
वयं स्वं स्वं तु विवरं गमिष्यामः सुखाश्रयम् ।
एवं निराशा भूत्वैवाऽभवँस्तूष्णीं किमीक्षकाः ॥६६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने बृहस्पतिसमुत्पादितकृत्यया दुर्वाससः शापपुरुषेण च स्वर्गं पराभूतं रत्नानि समुद्रे गतानि ब्रह्मेन्द्रादयो विष्णुं नीत्वा बलिना दैत्यैश्च सन्धाय समुद्रमथनार्थं मन्दराचला-ऽऽनयनयत्नवन्तोऽभवन्निति निरूपणनामा नवतितमोऽध्यायः ॥९०॥

श्रीनारायण उवाच—

पश्य लक्ष्मि! पर्वतोद्वाहने कष्टं तु कीदृशम्।
असाध्ये तु महाकार्ये दुःखं पूर्वं ततः सुखम्॥ १॥
विष्णुः स्वयं तदा देवान् दैत्यान् प्राह हितं वचः।
एष आयामि गृह्णामि चोत्तोलयामि पर्वतम्॥ २॥
मृता भवन्तु सप्राणाः स्वस्थाश्च सुबलास्तथा।
मा हृद्बलं परित्याज्यं मा कार्या हास्यपात्रता॥ ३॥
इत्येवं प्रोच्य पक्षीन्द्रं गरुडं प्राह चोन्नय।
लीलया तोलयित्वैव चञ्च्वा तं गरुडस्ततः॥ ४॥
क्षीरोदधेरुत्तरे तु तटे निक्षिप्य तत्स्थलात्।
गतो वैकुण्ठमेवेति देवा दैत्यादयस्तदा॥ ५॥
वासुकिं वरयामासू रज्ज्वर्थे सोऽपि चागतः।
मन्थनं मन्दरं कृत्वा वासुकिं रज्जूमेव च॥ ६॥
कृत्वा सुरासुराः सर्वे ममन्थुः क्षीरसागरम्।
देवा मुखं परिगृह्य यदा तु संस्थितास्तदा॥ ७॥
दैत्याः प्राहुर्वयं पुच्छे न स्थास्यामोऽतिमानिताः।
कृत्वा देवान् हरिः पुच्छे मुखे दैत्यांश्चकार ह॥ ८॥
क्षीराब्धौ मथ्यमाने च वासुक्यस्थ्नां वियोजनाम्।
तदा जातं वासुकिश्च मृत एवोपदृश्यते॥ ९॥
अथ विष्णुः स्वयं तत्र प्रविष्टो रज्जुरूपतः।
वासुकिश्च तदा पुष्टो बलमासाद्य संस्थितः॥१०॥
अथापि मथ्यमानेऽथ पर्वतोऽपि गुरुत्वतः।
विमग्नोऽगात्तले नीत्वा देवान्दैत्यान्प्रमन्थकान्॥११॥
तदा विष्णुरभूत्कूर्मो गत्वा वार्धितलां स्वयम्।
ऊढ्वा तं निजपृष्ठे स दधारेति तदद्भुतम्॥१२॥
अथापि मथ्यमानेऽथ पार्श्वे नमति मन्दरः।
तं तु स्थिरं तदा कर्तुं मध्ये मूर्धानमास्थितः॥१३॥
विष्णुः स्वयं चतुर्भ्यां वै दोर्भ्यां धृत्वा व्यवस्थितः।
तदा सुरासुराः सर्वे ममन्थुः क्षीरसागरम्॥१४॥
कठोरं कमठपृष्ठं कठोरो मन्दराचलः।
द्वयोः संघर्षजो वह्निरभूत् तत्र भयंकरः॥१५॥
ज्वालामालामहाव्याप्तो दिधक्षन्निव सागरम्।
देवा दैत्याश्च तं दृष्ट्वा प्रदुद्रुवुरितस्ततः॥१६॥
प्राह विष्णुस्तदा सर्वान् मा भयं गच्छतोऽखिलाः।
प्रशाम्यामि क्षणादेनं पश्यन्तु मम पौरुषम्॥१७॥
संकर्षणस्तदा भूत्वा विष्णुर्मुखं विवृत्य च।
श्वासमेकं जगृहेऽथ वह्निरुदरमाविशत्॥१८॥

अथापि मथ्यमानेऽपि विषं हालाहलं ह्यभूत्।
महोल्बणं महाधूम्रं महाबाष्पतनूल्बणम्॥१९॥
व्योम्नि सर्वत्र चाऽव्याप्नोद् बाष्परूपं विनाशकम्।
यत्र यत्र गतं तत्र प्राणिनोऽनाशयत्क्षणात्॥२०॥
श्वासं नीत्वा तदा सर्वे मूर्छिताः शून्यतां गताः।
महद्विषं तले चासीद् यावद्वह्निर्न चागतम्॥२१॥
तावन्तु तत्स्थलं त्यक्त्वा विष्णुनारदबोधिताः।
अमूर्छिता देवदैत्याः शंकरं प्रति चाययुः॥२२॥
बहुधा प्रार्थयामासुः विषनाशाय शंकरम्।
मांगल्यं मंगलानां च देवं पशुपतिं विभुम्॥२३॥
सञ्जीवय महादेव त्वं त्राता त्रिपुरान्तक!।
रक्षोल्बणाद्गरलात् त्वं कालकूटान्मृतीश्वर!॥२४॥
एवमभ्यर्थितः शंभुः प्राह सर्वान्सुरासुरान्।
मत्पुत्रं विघ्नहर्तारं श्रीगणेशं तु ये जनाः॥२५॥
न पूजयन्ति चारंभे कार्यसिद्धिर्न संभवेत्।
प्रत्युत जायते विघ्नो नाऽत्र कार्या विचारणा॥२६॥
अस्माभिर्निर्मितो देवो गणेशः कार्यसिद्धये।
यूयं सर्वे महामग्नाः पाण्डित्यकाण्डकत्थनाः॥२७॥
गणेशं नाऽभिसंपूज्य कार्यारंभकरा यतः।
कालकूटं विषं तस्माद् विघ्नार्थं समुपस्थितम्॥२८॥
तस्मान्नमन्तु तं देवं पूजयन्त्वद्य एव हि।
विघ्नं नष्टं भवेत् सद्यो माऽत्र विलम्बयन्तु वै॥२९॥
अन्यथा हि कृते ह्यर्थेऽन्यथात्वं संभवेत् किल।
यदि देवो न पूज्येत कार्यसिद्धिकरः सुतः॥३०॥
कार्यसिद्धिर्न तेषां वै भवेत्तु भवतां यथा।
द्रागेव शंभुवचनं गृहीत्वा ते सुरादयः॥३१॥
पूजयन्ति गणेशं स्म कैलासे शंकरगृहे।
आवाहनं चासनं च पाद्यमाचमनार्घके॥३२॥
पञ्चामृतकृतस्नानमभिषेकाप्लवस्तथा।
वस्त्रेण मार्जनं वस्त्रं यज्ञोपवीतमेव च॥३३॥
अबीरं च गुलालं च सिन्दूरकं च कुंकुमम्।
अक्षताश्च तथा दूर्वांकुराणि धूपदीपकौ॥३४॥
चन्दनं पुष्पहारश्चाऽऽभूषणानि प्रभोजनम्।
जलपानं लड्डुकाश्च ताम्बूलाऽऽरार्त्रिके तथा॥३५॥
प्रदक्षिणं दण्डवच्च नमस्कारः स्तुतिस्तथा।
फलानि च क्षमायाञ्चा वन्दनं कुसुमाञ्जलिः॥३६॥
द्वात्रिंशदुपचारैः सः पूजितस्तेजसा ज्वलन्।
सन्तुष्टः सन् गणाध्यक्षो देवानां वरदोऽभवत्॥३७॥

सगणेशः तदा शंभुः प्रसन्नोऽब्धिं जगाम ह।
बाष्पात्मकं विषं तत्र ग्रसित्वा श्वासवायुना ॥३८॥
हालाहलं महाक्ष्वेडमाकृष्याऽब्धितलात्स्वयम्।
पपौ ब्रह्मप्रतापेन कण्ठे ररक्ष तद्विषम् ॥३९॥
शुष्कीकृतं समाधिस्थयोगैश्वर्येण शंभुना।
तत्र त्वचि गले कृष्णतिलं परिणतं तु तत् ॥४०॥
कण्ठे नीलतिलात्तस्य नीलकंठाऽभिधाऽभवत्।
विषपानस्य समये क्षूयमानस्य धूर्जटेः ॥४१॥
स्वल्पा विषकणाः श्वासाद् बहिर्ये पतिताश्च तान्।
गृह्णन्तो देहिनो जीवा ये ते विषाढ्यजातयः ॥४२॥
दंदशूकाश्च सर्पाश्च वृश्चिकाः कृकलासकाः।
गोधाश्च जळलाळाश्च खर्जनाकटुवल्लयः ॥४३॥
समभवँस्ततोऽप्येतेममन्थुर्मन्दराचलम् ।
जलशैत्यघ्नावस्थहिमदेहस्तु चन्द्रमाः ॥४४॥
द्वितीयायाः कलारूपः पीयूषसंभृतस्तदा।
अतिशीतं तु तं ज्ञात्वा जगृहुर्न सुरासुराः ॥४५॥
शंभुर्विषोष्णता व्याप्तः शीतांशुं जगृहे भ्रुवि।
भृगुः प्राह तदा देवान् ग्रहाः सर्वेपि चोत्तमाः ॥४६॥
कार्यसिद्धिं प्रशंसन्ति यत्नं कुरुत लीलया।
चन्द्रं गुरुः समायातो बुधश्चैव समागतः ॥४७॥
सूर्यश्चैव तथा शुक्रः शनिर्मंगल एव च।
तस्माच्चन्द्रबलं श्रेष्ठं कार्यस्य सिद्धये भवेत् ॥४८॥
गोमन्तनामकोऽयं च मुहूर्तोऽस्ति जयप्रदः।
एतच्छ्रुत्वा बलं ते तु द्विगुणं प्राप्य गर्जिताः ॥४९॥
ममन्थुरब्धिं त्वरितास्तावत्सुरभिर्गौः सदा।
कामदुधा कपिला सा तूधो भारवती शनैः ॥५०॥
जलमार्गात्तीरमायात् सर्वैः संपूजिता च सा।
येषां दुग्धं भवेद् भोग्यं तैर्नेया सेति निर्णये ॥५१॥
ऋषिभिर्देवकार्यार्थं यज्ञार्थं च स्वकीकृता।
तावदन्याः सिताः पीताः कृष्णा अरुणपाण्डुराः ॥५२॥
हरिद्वर्णाश्चित्रवर्णा गावोऽनेकास्ततोऽभवन्।
विप्रास्तु मुनयस्ता वै जगृहिरे प्रमाणतः ॥५३॥
अथ सर्वे सुसंरब्धा ममन्थुः क्षीरसागरम्।
कल्पवृक्षस्तथा पारिजात आम्रादयो द्रुमाः ॥५४॥
जज्ञिरेऽथ च तान्सर्वान् तटेऽस्थापयदच्युतः।
पुनः संमथ्यमानाद्वै कौस्तुभाख्यं महाप्रभम् ॥५५॥
रत्नानामुत्तमं रत्नं चिन्तामणिसमन्वितम्।
हीरकैश्च सहोत्पन्नं कौस्तुभं विष्णवे ददुः ॥५६॥
चिन्तामणिः सुरेशाय दैत्येभ्यो हीरकान्ददुः।
अथापि मथ्यमानात्तदुच्चैःश्रवसमद्भुतम् ॥५७॥
बहुभिरश्वजातीयैरुत्पन्नं हरये ददुः।
अथापि मथ्यमानाद्वै चतुःषष्टिगजान्वितम् ॥५८॥
ऐरावतं महारत्नं चतुर्दन्तमदान्वितम्।
पाण्डुरं शृंगिसदृशं तुराषाहेऽपि तं ददुः ॥५९॥
अन्ये गजाश्च बहवो लोकपालेभ्य आर्पिताः।
अथापि मथ्यमानाद्वै मदिरा विजया तथा ॥६०॥
कटुशृंगी चाहिफेनं गृञ्जनं लशुनं तथा।
धत्तूरश्च तमालश्चोन्मादका अभवँस्तदा ॥६१॥
दैत्यैश्च तामसैस्तानि गृहीतानि प्रसह्य वै।
अथापि मथ्यमानाद्वै लक्ष्मीः प्रादुर्बभूव ह ॥६२॥
सुरूपा हास्यवदना वस्त्राभरणभूषिता।
गौरवर्णा दिव्यतन्वी यौवनांकुरसुस्तनी ॥६३॥
करात्तवनमाला च नारायणसरूपिणी।
नारायणं परं विष्णुं मार्गयन्तीव मोहिका ॥६४॥
आन्वीक्षिकी ब्रह्मविद्यामूलविद्यासरस्वती।
ऋद्धिः सिद्धिः स्मृद्धिः सम्पद्वैष्णवी प्रकृतिः परा ॥६५॥
युक्ताऽन्याभिः सुदासीभिः सुग्रीवा चारुलोचना।
बिम्बौष्ठी सुनसा स्निग्धा सुदती च सुमध्यमा ॥६६॥
नानारत्नप्रकाशैश्च नीराजितमुखाम्बुजा।
सौम्यप्रेमभृतनेत्रा नूपुररशनाधरा ॥६७॥
मूर्धनि ध्रियमाणेन स्वर्णछत्रेण राजिता।
चामरैर्विज्यमाना च स्तूयमाना सखीजनैः ॥६८॥
पाण्डुरंगगजारूढा वीक्षिताश्च सुरासुरैः।
देवांश्च दानवान् सिद्धाँश्चारणान्पन्नगान्नगान् ॥६९॥
वीक्ष्य दैत्यान्सदोषान्सा योग्यं विष्णुमचिन्तयत्।
सर्वे तदा विस्मिताश्च मुदमापुस्तदाऽद्भुतम् ॥७०॥
लक्ष्म्या वृतो महाविष्णुर्लक्ष्मीस्तेनैव संवृता।
एवं परस्परं प्रीत्या वव्राते प्रेमतत्परौ ॥७१॥
सर्वैः सभाजितौ रत्नैर्नीराजितौ प्रपूजितौ।
शुशुभाते तदा लक्ष्मीनारायणौ जगद्गुरू ॥७२॥
प्रणम्य सच्चिदानन्दं रमायुक्तं जनार्दनम्।
सर्वे ममन्थुर्वेगेन जज्ञे धन्वन्तरिस्ततः ॥७३॥
सोऽयं धन्वन्तरिर्वैद्यः पूर्वं यः कथितो मया।
तृतीयो वैद्यसामुद्रो युवा मृत्युजयोऽजितः ॥७४॥
सुधासम्पूर्णकलशं पाणिभ्यां परिगृह्य च।
रूपेण वयसा कान्त्याऽधरीकृत्य सुराऽसुरान् ॥७५॥

समुद्रात्तीरमायान्तं दृष्ट्वा तस्तंभुरीश्वराः।
न ज्ञातवन्तो यावत्ते सुधां चास्य करस्थिताम् ॥७६॥
मथ्यमानार्णवात्तावल्लक्षमप्सरसां शुभम्।
समुत्पन्नं स्थितं तीरे धन्वन्तरौ सुमोहितम् ॥७७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने समुद्रे मन्दरमन्थने विष्णुरूपाणि, मन्थनोत्पन्नस्य वडवानलस्य संकर्षणकृतं पानं शंकरकृतं विषस्यपानं गणेशपूजनं विविधरत्नोत्पत्तिश्चेति निरूपणनामा एकनवतितमोऽध्यायः ॥९१॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि! त्वया तुल्यास्तन्व्यो द्वादशहायनाः।
अप्सरसः सुरूपाश्च शशिशीतलमध्यमाः ॥ १ ॥
स्वर्गे जग्मुः स्वकं स्थानं त्वाज्ञया श्रीहरेस्ततः।
पश्यतां दैत्यवर्याणां दानवादिप्रमाथिनाम् ॥ २ ॥
धन्वन्तरिं तदा प्राह दानवेन्द्रो बलिः स्वयम्।
भगवन् किं धृतं हस्ते कलशेऽत्र प्रपूरितम् ॥ ३ ॥
स्वकं वा सार्वजनिकं सुधा नोत्पद्यते कुतः।
धन्वन्तरिर्बलिं प्राह सुधाऽत्र कलशे स्थिता ॥ ४ ॥
नातः परा समुद्रे वै सुधा स्वल्पापि शिष्यते।
तावत्तु दैत्यधौरेया हर्तुकामाद् बलाद् ययुः ॥ ५ ॥
वृषपर्वा महादैत्यो घटं नीत्वा पलायितः।
असुरास्तु तदा सर्वे जगर्जुरितिभीषणम् ॥ ६ ॥
मन्दरं वासुकिं त्यक्त्वा लब्धकार्याः स्वमानिनः।
स्वार्थमात्रपरास्तत्राऽमृतं लब्ध्वातिचुक्रुशुः ॥ ७ ॥
नारायणो गरुडेन मन्दरं नीतवान् स्थले।
अन्यरूपाणि संहृत्य संस्थितोऽब्धितरे प्रभुः ॥ ८ ॥
दैत्याः सुधाधरं नीत्वा पलायन्ते पयोऽर्णवात्।
रत्नान्यन्यानि देवैस्तु गृहीतान्येव केवलम् ॥ ९ ॥
तस्मात्सुधां ग्रहीष्यामोऽन्येभ्यो दास्याम एव न।
इत्युच्चार्य सुधां नीत्वा पलायन्ते तु यावता ॥१०॥
तावद्विष्णुः स्वयं कन्या बभूव मोहिनी शुभा।
श्वेततेजःपूरितांगा समंकुरितयौवना ॥११॥
मितहास्या कंजनेत्रा हावभावविलासिनी।
अनंगपूर्णा नेत्राभ्यामाह्वयन्ती विलासिनः ॥१२॥
नेत्रापांगैः सुधायुक्तं दैत्यं चान्यान् विमोहितुम्।
तेषां पालायने मार्गे समीपे समुपस्थिता ॥१३॥
श्लथयन्ती शनैर्नीवीं वस्त्रं हस्तेन बिभ्रती।
सक्थिस्तनौ दर्शयन्ती कामव्याप्तेव कामिनी ॥१४॥
दैत्या अयत्नलभ्यां तां परिरब्धुं प्रपेदिरे।
अहं पूर्वमहं पूर्वं मम भार्या न वै तव ॥१५॥
मया नेत्रेण पूर्वं वै दृष्टा च द्योतिता मया।
न त्वयेति मुहुर्मुग्धाः सुधां त्यक्त्वा परस्परम् ॥१६॥
तदा विवदिरे देवी सुधायाः कलशं करे।
धृत्वा प्राह च तान्दैत्यान् मत्कृते विवदन्तु मा ॥१७॥
सुधापानं कारयित्वा नो भजिष्ये सदाऽमृतान्।
ये वै मयोक्तं गृह्णीयुस्तान्पास्यामि सुधामृतम् ॥१८॥
तेषां दासी भवाम्येव भुज्यतां प्रमदामृतम्।
धन्या यूयं महाभागा विना यत्नेन चागतम् ॥१९॥
प्राप्स्यथ प्रमदारत्नं सुधापानोत्तरं ध्रुवम्।
अहो मयाऽत्र संसारे नराः सर्वेऽवलोकिताः ॥२०॥
भवतां सदृशा नैव ज्ञातारो भद्रकारिणः।
शान्ता विभज्य भोक्तारो विश्वस्ता निर्मलान्तराः ॥२१॥
परोपकारधर्मज्ञाः स्त्रीवचोन्यस्तनिर्णयाः।
स्त्रीणां सुखेन सुखिनः स्त्रीकुच्छासनमार्दवाः ॥२२॥
स्त्रीप्रदत्तप्रभोक्तारो धन्या यूयं भवादृशाः।
विद्वांसो नैव कुर्वन्ति विश्वासं प्रमदाजने ॥२३॥
वृथा दोषान्कल्पयन्ति मायासाहसमनृतम्।
अतिलोभोऽतिमूर्खत्वमशौचं निर्दयालुता ॥२४॥
अस्नेहो धूर्तता स्वार्थः प्रच्छन्नकारितादयः।
ममास्ति यदि विश्वासस्तदा पिबन्तु मत्करात् ॥२५॥
सर्वे तिष्ठन्तु पंक्त्या वै नाऽपांक्तोऽमृतमश्नुते।
वामे देवाः प्रतिष्ठन्तु दक्षिणे दैत्यदानवाः ॥२६॥
द्वयोः परिवेषयित्री भवामि न्यायतः क्रमात्।
एषा घटं च गृह्णामि दधत्वग्रे प्रपापुटम् ॥२७॥
मोहिनी चेत्यभिधाय तूष्णीमासीत् क्षणं हृदि।
पश्चाद्विचार्य प्रोवाच हृद्यं सर्वाभिसम्मतम् ॥२८॥
शृण्वन्तु चासुराः सर्वे भवन्तो ज्येष्ठपूर्वजाः।
अविभज्य न भोक्तव्यं यल्लब्धं सार्वयत्निकम् ॥२९॥
सुरासुराणां यत्नस्तु समानोऽस्त्यब्धिमन्थने।
किञ्चिदपि प्रमाथिभ्यो न्याय्यं देयं सुधामृतम् ॥३०॥
महद्भ्यश्चाधिकं देयं स्वल्पेभ्यो न्यूनमेव च।
बलाबले परिज्ञायाऽवश्यं देयं प्रमाथिने ॥३१॥
यत्ने ये तु सहार्थाः स्युः फले तु पक्षपातिनः।
तेषां पातः सदा भावी लब्धार्थोऽपि विनश्यति ॥३२॥

असुराणां यदि मान्यं मदुक्तं न्यायतो भवेत् ।
तदा सुरेभ्यो दातव्यममृतं भागशः कृतम् ॥३३॥
पुच्छे सुरा मुखे यूयं मध्ये देवो जनार्दनः ।
तस्मादर्धे सुरेभ्यश्चाऽसुरेभ्योऽर्धं प्रदीयते ॥३४॥
बलिस्तत्र प्रमाणं वै कार्याकार्यविचक्षणः ।
एवमेव बलिः प्राह सर्वे प्राहुश्च ओमिति ॥३५॥
अथामृतविभागार्थं घटोऽन्योऽप्यर्थितस्त्वया ।
दैत्यैस्तु संभ्रमात् तूर्णं घटो रिक्तोऽत्र यो भवेत् ॥३६॥
दातव्य इति कृत्वैव मदिराया घटश्च यः ।
मदिरापातृभिः पीत्वा मदिरां तु विसर्जितः ॥३७॥
रिक्तो घटः प्रदत्तः स मोहिन्या संधृतस्ततः ।
मदिराया घटे तस्मिँश्चानमय्य सुधाघटम् ॥३८॥
यथाऽर्धममृतं तत्र दीयते धारया तथा ।
मृषैव दर्शितं सर्वं मोहिन्या स्वप्रभावतः ॥३९॥
दृश्यते चामृतं क्षिप्तं जायते मदिरा तु सा ।
सापि मृषैव मदिरा मिष्टा चाऽमृतसदृशी ॥४०॥
संक्लृप्ता मदिरा मिथ्या मोहिन्या मायया स्वया ।
अमृतं चेति वै तत्राऽसुराणां निश्चयोऽभवत् ॥४१॥
सत्यामृतघटं वामे मिथ्यामृतं तु दक्षिणे ।
करे धृत्वा मोहिनी सा पंक्तिमध्ये चचार वै ॥४२॥
सा मिथ्यामदिरादानं करोत्यसुरपात्रके ।
सत्यामृतप्रदानं तु करोति सुरपात्रके ॥४३॥
प्रददाति समस्ताँश्च मोहयत्यपि नर्मणा ।
अग्रे त्वग्रे गता तुष्टा दत्वा दत्वाऽसुरान्सुरान् ॥४४॥
प्रशंसन्तः पिबन्ति स्म देवा दैत्यादयस्तथा ।
घट्टुकं घट्टुकं पीत्वा डकारयन्ति तृप्तितः ॥४५॥
मोहिन्यपि तदा देवान् पिबताऽमृतमुत्सवात् ।
दैत्यान् प्राहाऽऽस्वादयन्तु मिष्टं परममुत्सवात् ॥४६॥
अहो सुराणां परमो भाग्योदय उपस्थितः ।
यदमृतं प्राप्यतेऽद्याऽऽस्वादयन्तु मुहुर्मुहुः ॥४७॥
अहो देवा पिबन्त्वत्राऽमृतं भाग्याऽवलम्बितम् ।
इन्द्र सूर्य शशिन्नग्ने जलेश यम निर्ऋत ! ॥४८॥
कुबेरेशान वायो मंगल चान्द्र बृहस्पते ।
धर्म वसवो रुद्राश्च ब्रह्मविष्णुमहेश्वराः ॥४९॥
निधयः ऋषयः साध्या नक्षत्रा मरुतोऽपि च ।
गन्धर्वाः किन्नराः किंपुरुषा विद्याध्रविश्विनः ॥५०॥
संवत्सराः पावकाः पितरो देव्यश्च पार्षदाः ।
पिबन्त्वमृतमाकण्ठं दिव्यभाण्डात्प्रदीयते ॥५१॥

अथ दैत्यान्प्रसंबोध्य मोहिनी प्राह वै शठा ।
बले राजन् वृषपर्वन् नमुचे शंखबुद्बुदौ ॥५२॥
सुदंष्ट्र शृणु संह्राद कालनेमे विभीषण ।
वातापे चेल्वल कुंभ निकुंभ प्रघस शृणु ॥५३॥
उपसुन्द भो निशुंभ शुंभ भो सुन्द संशृणु ।
मातंग माहिष महिष बिडालास्य च चिक्षुर ॥५४॥
बहुबाहो जृंभ वृष विबाहो घोरदर्शन ।
घोराक्ष भो महादैत्याः शृण्वन्तु पानकालिकम् ॥५५॥
नाऽयं लाभो भवेत्क्वापि मम हस्तात्सुकोमलात् ।
कुमारिकाकरात् प्राप्तं स्वादानन्दं भजन्त्विह ॥५६॥
नासा नेत्रे तु सम्मील्य गृह्णन्तु घुटकान् बहून् ।
दास्ये पुनः पुनः पेयं मृषा देहोऽयमित्यतः ॥५७॥
संपिबन्तु महाभागा नाम्नाऽप्यमृतवत्सुखम् ।
प्राप्तं यस्य तु सत्यं स जायते त्वमृतः सदा ॥५८॥
वदमाना ददाना च रम्याऽग्रे याति मोहिनी ।
वाक्यार्थज्ञो राहुनामा जानन्वै स्वामृतं मृषा ॥५९॥
सत्यामृतप्रपानाय देवानां रूपधारकः ।
उपविष्टो देवपंक्तौ मध्ये चन्द्रार्कयोः क्रमात् ॥६०॥
मोहिनी प्रददाना चाऽऽगता तत्र क्रमागतम् ।
सूर्यं राहुं तथा चन्द्रं देवं दृष्ट्वा ददौ सुधाम् ॥६१॥
तावत्सूर्येण संदिष्टो राहुः पंक्तौ प्रवेशितः ।
शशिनाऽपि स आदिष्टो देवो नाऽयं सुरारिराट् ॥६२॥
मोहिनी तु निजं कार्यं करोत्यग्रे प्रगच्छति ।
विष्णुरूपः स्वयं राहोः शिरश्चिच्छेद चक्रतः ॥६३॥
गलोर्ध्वं सुधया व्याप्तं कबन्धः क्लिन्नतां गतः ।
एकस्मात्तु सुधायोगाद् राहुकेतू बभूवतुः ॥६४॥
द्वौ तौ चामरतां प्राप्तौ ग्रहावभवतां ततः ।
शिरः केतुः कबन्धस्तु राहुर्ग्रहोऽस्ति दैत्यराट् ॥६५॥
सूर्यं पर्वणि ग्रसति क्वचिच्चन्द्रं स राहुकः ।
तौ द्वौ तदा सुधां त्यक्त्वा पंक्तितो वै पलायितौ ॥६६॥
धूम्ररूपोऽभवत्पूर्वं धूम्ररूपौ बभूवतुः ।
आकाशे भ्रमति सोऽयं धूम्रकेतुर्ग्रहो हि सः ॥६७॥
दितेः पुत्रास्तथा चान्ये व्योम्नि वै धूम्रकेतवः ।
न सूर्यं न च चन्द्रं ते ग्रसन्ते न ग्रहा यतः ॥६८॥
अथैतत् कौतुकं वीक्ष्य शंकमाना तु मोहिनी ।
तदानीं त्वरिता पंक्तौ देवानपाययत्सुधाम् ॥६९॥
राहुणा द्विस्वरूपेण दैत्येभ्यस्तत्र सूचितम् ।
युष्माभिर्नाऽमृतं पीतं पीता या मदिरा तु सा ॥७०॥

नार्या पंक्तिविभेदस्तु कृतो नाशकरो महान्।
तस्माद्युद्धं प्रकुर्वन्तु मारयन्तु सुरान्द्रुतम् ॥७१॥
कापट्येन तथा दत्ता मदिराऽपि मृषात्मिका।
विष्णुना स्त्रीस्वरूपेण देवेभ्यश्चार्पिता सुधा ॥७२॥
यौगपद्येन सर्वैस्तु क्षीराब्धेर्मथनं कृतम्।
सिद्धिर्जाता हि देवानामसिद्धिस्तु सुरारिणाम् ॥७३॥
विना दैवेन जानीध्वमुद्यमं हि निरर्थकम्।
ततः कोपानलो मायामोहिताऽसुरमण्डले ॥७४॥
प्रोद्भूतस्तेन शस्त्रास्त्रैर्युता युद्धाय निर्ययुः।
देवाश्चापि तथा सज्जा बभूवुर्भयवर्जिताः ॥७५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने असुराणां प्रतारणाय मोहिनीरूप विष्णुना देवेभ्यः सुधा दैत्येभ्यो मृषामदिरा पायिता राहुशिरच्छेदः केतुग्रहश्च कृत इत्यादिनिरूपणनामा द्विनवतित-मोऽध्यायः ॥ ९२ ॥

**श्रीनारायण उवाच—**

असुरा गर्जमानास्ते आक्षिपन्तो रणे सुरान्।
शतकोटिप्रमुख्याश्च बलेन बलिना सह ॥ १ ॥
प्रदुद्रुवुः सुराँस्ते वै महाबलपराक्रमान्।
स्वानि रूपाणि बिभ्रन्तः समापेदुः सहस्रशः ॥ २ ॥
केचिद्व्याघ्रकृतस्वाराः केचिन्महिषपृष्ठगाः।
केचिदश्वसमारूढा द्विपपृष्ठस्थिताः परे ॥ ३ ॥
सिंहारूढास्तथा केचित्केचिच्छरभवाहनाः।
केचिद्गृध्रसमारूढाः केचिच्छार्दूलपृष्ठगाः ॥ ४ ॥
केचित्कुलिंगमयूरहंसकाकादिवाहनाः।
अन्ये मकरकूर्मोष्ट्रश्वाऽश्वजम्बूकपृष्ठगाः ॥ ५ ॥
एवं पशुवलत्सवाहाः पक्षिपृष्ठासवाहनाः।
जलाकाशादिसंचारिप्राणिपृष्ठासनास्तथा ॥ ६ ॥
रथयन्त्रशकटादिवह्निविमानसंस्थिताः।
पादात्या बहवस्तत्र खड्गशक्त्यृष्टिपाणयः ॥ ७ ॥
पट्टिशपाशपरिघशूलमुद्गलपाणयः।
भूशुण्डीछुरिकाखड्गगदाचक्रशरायुधाः ॥ ८ ॥
विमानानां गजानां च रथानां वाजिनां तथा।
पद्मानां तत्र सैन्यानि बलिमुख्यानि कोटिशः ॥ ९ ॥
स्पर्धमानास्ततोऽन्योन्यं गर्जमाना भया मिथः।
बहुक्रुद्धा दुराधर्षा योद्धुकामा व्यवस्थिताः ॥१०॥
वदन्ति स्म च विश्वासो न कार्यो दुर्हृदां क्वचित्।
न विश्वसेत्पूर्वविरोधिषु स्वार्थिजनेष्वपि ॥११॥
यो विश्वसेदरातौ स क्लेशाब्धिं मस्तके वहेत्।
पूर्वं परिचिता देवा बहुवारं तु दानवैः ॥१२॥
तत्र पुनः पुनः शाठ्यं कृतवन्तस्त एव तु।
सुधा न पायिताऽस्मभ्यं मनागपि न दीयते ॥१३॥
तस्माद्युद्धेन नाशस्तु तेषां कार्यस्ततोऽमृतम्।
स्वर्गराज्यं च भोक्ष्यामो वयं युद्धार्जितं स्वकम् ॥१४॥
ध्वजैश्छत्रैः पताकैश्च रणभूमिममण्डयन्।
चामरैः पटहैः शंखैस्तूर्यैश्च द्विगलैस्तथा ॥१५॥
तद्वत् सर्वे सुराश्चेन्द्रप्रमुखा रणगामिनः।
पीत्वाऽमृतं महाभागा वाहानारुह्य दंशिताः ॥१६॥
स्वस्वबलसमायुक्ता दैत्यान्प्रति समुत्कटाः।
गजारूढो महेन्द्रश्च सूर्यश्चोच्चैःश्रवःस्थितः ॥१७॥
शशारूढः शशी तद्वद् यमो महिषमास्थितः।
नैर्ऋतः प्रेतपृष्ठस्थो वरुणो मकरे स्थितः ॥१८॥
पवनस्तुमृगारूढो वृषारूढः शिवस्तथा।
कुबेरः पुष्पकारूढो देवाश्चान्ये बलान्विताः ॥१९॥
विमानस्था लक्षलक्षाः पक्षिस्थाः कोटिशस्तथा।
पशुमृगादिवाहस्था ह्यर्बुदा देवकोटयः ॥२०॥
स्वस्वाभिमानसंयुक्ताः सर्वे देवास्त्वरान्विताः।
छत्रचामरसंवीताः शोभिता विजयश्रिया ॥२१॥
विष्णुं प्रणम्य संग्रामे रणे दैत्यानुपस्थिताः।
भीमास्तत्राऽसुराः सर्वे सुराश्च भीमविक्रमाः ॥२२॥
तेषां घोरमभूद् युद्धं दैत्यदानवनाकिभिः।
महाघोरं महानाशं सर्वभूतभयावहम् ॥२३॥
बाणवर्षि शस्त्रघाति चाऽस्त्रक्षेपि भयानकम्।
शब्दा ह्यन्नाशका जाताः शरपातास्तथाऽभवन् ॥२४॥
तीरतोमरनाराचैराहतास्त्वपतन् भुवि।
वध्यमानास्तथा केचित्समाधिं तत्र लेभिरे ॥२५॥
भल्लैर्भग्ना निपतिता नाराचैः शकलीकृताः।
क्षुरैः प्रहारिताः केचिन्मुद्गरैश्च विपोथिताः ॥२६॥
शस्त्रघातैः प्रभिन्नाश्च छिन्नाश्च बाणपातनैः।
दैत्यसैन्यं महामारैर्भग्नं देवाश्च प्रहृषुः ॥२७॥
शंखनादान्प्रकुर्वाणाः सूचयांचक्रिरे जयम्।
देवान्प्रति कृतामर्षा दानवास्ते महाबलाः ॥२८॥
बलिप्रभृतयः सर्वे संभ्रमेणोत्थिताः पुनः।
विमानैः सूर्यसंकाशैरनेकैस्त्वरयाऽन्विताः ॥२९॥

द्वन्द्वयुद्धमभूत्तेषां सुराणामसुरैः सह ।
बलिना दानवेन्द्रेण महेन्द्रो युयुधे तदा ॥३०॥
यमो नमुचिना सार्धं नैर्ऋतः प्रघसेन च ।
कुंभेन सह वरुणो निकुंभेन समीरणः ॥३१॥
सुदंष्ट्रेण कुबेरस्तु शेषैः शेषा ववल्गिरे ।
राहुं केतुं समायान्तौ दृष्ट्वा देवाः पलायिताः ॥३२॥
केतुना व्योमसदृशं मुखं स्वस्य प्रसारितम् ।
देवानां वै भक्षणार्थं देवाः प्रदुद्रुवुस्तदा ॥३३॥
केचिद्धरिं स्मरन्ति स्म केचिद्भक्त्या विनायकम् ।
केचिद् दुर्गां तथा शंभुं ब्रह्माणं चाऽपरेऽमृतम् ॥३४॥
राहुशिरः पुरस्कृत्य दैत्या जयोन्मुखाः सुरान् ।
ताडयामासुरत्युग्राः शस्त्रास्त्रप्रस्तरादिभिः ॥३५॥
देवाः पलायिता दैत्या जयं समाप्नुवँस्तदा ।
केतुरादौ मुखं स्वं वै व्यादाय ग्रसितुं हरिम् ॥३६॥
चन्द्रं शक्रं तथा सूर्यं तं तं समीपमागतम् ।
उद्युक्तोऽभूदमृतोऽसौ वज्रेणापि न नश्यति ॥३७॥
तदा चन्द्रो महादेवमस्तौत् धावन् कृतांजलिः ।
त्वं शंभो त्राहि मां देव शरणागतरक्षक ॥३८॥
देवाँस्त्राहि तथा सर्वान् केतुदुःखं विनाशय ।
एवमभ्यर्थितः शंभुर्मा भैष्टेत्यवदत्सुतान् ॥३९॥
केतुस्तत्राऽगमच्चन्द्रं ग्रसितुं यावदेव हि ।
धृतश्च शंभुना केतुर्मुण्डमालासु गुम्फितः ॥४०॥
केतू रूपद्वयं कृत्वा जगाम दिवि तत्स्थलात् ।
शंभुं तदा पुरस्कृत्य देवा युद्धे मनो दधुः ॥४१॥
सुरैर्दैत्या हन्यमानाः शस्त्रास्त्रबाणतोमरैः ।
निपेतुर्बहवस्तत्र क्षता भग्नाश्च कर्तिताः ॥४२॥
चक्रुर्भुवं मृता दैत्या मांसशोणितकर्दमाम् ।
नद्यो भयावहास्तत्र वहन्ति मृतदानवान् ॥४३॥
ध्वजयन्त्रपताकाऽनोगजवाजिशिरांसि च ।
अगाधाः शोणितोदाश्च प्रवहन्ति रणांगणे ॥४४॥
तथा तस्मिन्महारौद्रे सुरासुरसमागमे ।
शक्त्या जघान देवेन्द्रं वैरोचनिरमर्षणः ॥४५॥
शक्तिं तां वंचयित्वेन्द्रो बलिं वज्रेण तत्क्षणम् ।
जघान बाहुं चिच्छेद भूमावपातयद् बलिः ॥४६॥
वज्रेण च पुनर्वृषपर्वाणमप्यपातयत् ।
तत्रापि शतधारेण वज्रेणैव पुनः पुनः ॥४७॥
अन्येन हेतिना चेन्द्रो दानवानवधीद्रणे ।
शिरांसि कर्तितान्येवेन्द्रेण प्रकुपितेन वै ॥४८॥
यमेन वायुना चैव वरुणेन तथाऽग्निना ।
नैर्ऋतेन कुबेरेण शंभुनापि विदारिताः ॥४९॥
इत्येवं कदनं दृष्ट्वा कालनेमिमहासुरः ।
सिंहस्थो दंशितश्चोग्रः त्रिशूलेन समन्वितः ॥५०॥
दैत्यानामर्बुदेनैव सिंहारूढेन संगतः ।
सिंहस्थां दैत्यसेनां तां दृष्ट्वा चेन्द्रपुरोगमाः ॥५१॥
किं कुर्मोऽद्य वयं सर्वे जेष्यामः कथमासुरान् ।
विना विष्णुं नाऽस्य जेता कश्चिदन्यो हि लक्ष्यते ॥५२॥
इति विष्णुं स्मरन्तश्चाऽस्तुवन्नारायणं हरिम् ।
नमस्तुभ्यं भगवते नमस्ते विश्वनायक ॥५३॥
श्रीनिवास नमस्तुभ्यं सुरत्रात्रे नमो नमः ।
त्रातुमर्हसि दैत्येन्द्रकालनेमिभयादिह ॥५४॥
श्रुत्वा स्तोत्रं हरिः शीघ्रमारुह्य गरुडं स्वकम् ।
चक्रपाणिः समायातो देवानां विजयाय वै ॥५५॥
हरिं दृष्ट्वा कालनेमिः प्रहस्योवाच रोषतः ।
कस्त्वं कथं समायातो मम शस्त्रस्य भोजनम् ॥५६॥
हरिः प्राह तदा दैत्यं युद्धार्थं समुपागतः ।
देवानां मूलभूतोऽहं स्थिरो भव सुमृत्यवे ॥५७॥
सपक्षसिंहसैन्येन कालनेमिर्विहायसा ।
युयुधे सगरुडेन शार्ङ्गपाणिसुविष्णुना ॥५८॥
गरुडेन तदा तुण्डपक्षनखादिहेतिभिः ।
सिंहा दैत्याः पाटिताश्च खण्डिताश्च विनाशिताः ॥५९॥
विष्णुना स्वीयचक्रेण निहताः शकलीकृताः ।
त्रिशूलेनाऽहनद्विष्णुं कालनेमिः प्रतापवान् ॥६०॥
वामहस्तेन संगृह्य त्रिशूलं तत्तु लीलया ।
तेनैव च त्रिशूलेन कालनेमिं जघान ह ॥६१॥
मूर्छितः पतितश्चाथोत्थायोन्मील्य स्वलोचने ।
धृत्वा खड्गं समधावद्विष्णुं तावत्तु विष्णुना ॥६२॥
चक्रेण कर्तितं तस्य मस्तकं तत्क्षणात् खलु ।
अन्ये दैत्यास्तु देवैश्च हता नष्टा क्षयं गताः ॥६३॥
कालनेमिर्हतो दैत्यो देवा जाता ह्यकंटकाः ।
तिरोधानं गतो विष्णुरिन्द्रस्तत्राऽकरोद् दयाम् ॥६४॥
पतितक्लीबरूपाणां भग्नानां भीतचेतसाम् ।
मुक्तकच्छशिखानां च चक्रे स्वास्थ्यक्रियां हरिः ॥६५॥
आयात् त्रिविष्टपं चाथ सुरसेनान्वितो हरिः ।
बभूवुर्मुदिताः सर्वे यक्षगन्धर्वकिन्नराः ॥६६॥
देवर्षयो ब्रह्मर्षयः प्रोचुरिन्द्रोऽभिषिच्यताम् ।
स एवेन्द्रोऽमरावत्यामभिषिक्तः शचीयुतः ॥६७॥

तदा महोत्सवो लक्ष्मि! देवलोके परोऽभवत् ।
शंखपटहमृदंगमुरजानकगोमुखाः ॥६८॥
भेरीदुन्दुभितूर्याणि नेदुः स्वर्गे गृहे गृहे ।
जगुश्च गायकाः सर्वे गन्धर्वाः किन्नरास्तथा ॥६९॥
तुष्टुवुश्च तदा सिद्धगन्धर्वचारणर्षयः ।
ननृतुश्चाप्सरोगणा उत्सवोऽभूत्स्थले स्थले ॥७०॥
शुक्राचार्यो दैत्यगुरुस्तपोऽर्थे मानसोत्तरम् ।
गतोऽभूत् क्षयमाश्रुत्य जगाम समरांगणे ॥७१॥
संजिवन्या विद्यया स मृतदैत्यानजीवयत् ।
निद्रापायगता यद्वदुत्थितास्ते तदासुराः ॥७२॥
तेऽपि सर्वे निवासार्थे पातालमगमन् सुखम् ।
सुधापानप्रलाभेन देवा नैवाऽम्रियन्त ह ॥७३॥
वाहनादीनि भगवान् संकल्पेनाऽप्यजीवयत् ।
इति देवि! समुद्रस्य मन्थनं त्वभवत्पुरा ॥७४॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने सुधापानभेदजन्यदेवाऽसुरसंग्रामेन्द्राभिषेकादिनिरूपणनामा त्रिनवतितमोऽध्यायः ॥९३॥

**श्रीलक्ष्मी रुवाच—**

नारायणं भवन्तं वै त्यक्त्वा गणेशपूजनम् ।
प्रथमं वै कथं केन कदा क्लृप्तं तदुच्यताम् ॥ १ ॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि! कथां रम्यां श्रीकृष्णात्मकबोधदाम् ।
स चांशः कृष्णचन्द्रस्य तथैवाऽयोनिसंभवः ॥ २ ॥
महालक्ष्मीः स्वयं माया दक्षकन्या बभूव ह ।
सा च नाम्ना सती शंभोर्निन्दया दक्षजन्यया ॥ ३ ॥
देहं त्यक्त्वा मेनकायां हिमालयात्तु पार्वती ।
जाता तां पर्वतः पुत्रीं शंकराय ददौ मुदा ॥ ४ ॥
तां गृहीत्वा महादेवो जगाम विजनं वनम् ।
गार्हस्थ्ययोग्यकुट्यां तु सदा निवसतोस्तयोः ॥ ५ ॥
सहस्रवर्षपर्यन्तं शृंगारो ह्यभवत् सुखः ।
देवानां गर्भतो जन्म पुत्राणां नैव जायते ॥ ६ ॥
पुत्राऽलब्ध्या तु पार्वत्याः सुखं किञ्चिन्न जायते ।
दिने दिने गते तस्याः पुत्रस्पृहा व्यवर्धत ॥ ७ ॥
रतेः फलं सुखं पुत्रो ह्युभयं संभवत्यपि ।
पुत्रफलं विनाऽऽनन्दो वार्धक्ये दुःखदो भवेत् ॥ ८ ॥
पुत्रशून्यं रतिमात्रं भाव्युद्वेगाय कल्प्यते ।
विनाऽपत्यं स्त्रिया कालक्षेपः कार्यस्तु केन वै ॥ ९ ॥
पत्या समं रतेः कालक्षेपो भवति स्वल्पकः ।
तदन्यकालगमकं स्त्रियोऽपत्यं भवेदिह ॥१०॥
लालने पालने तस्य क्रीडनकादिकर्मणि ।
समयोऽत्येति नारीणां स एव स्वर्ग उच्यते ॥११॥
स्वामिसुखं प्रथमं च स्वर्गं, द्वितीयमंगजम् ।
अपत्यसुखकृत्स्वर्गं, तृतीयं धनधान्यजम् ॥१२॥
चतुर्थं तु भवेत्स्वर्गमारोग्यं, पंचमं यशः ।
इत्येतान्येव सौख्यानि स्वर्गाणि लौकिकानि हि ॥१३॥
इति चिन्तान्विता नित्यं रेमे स्वस्वामिना सह ।
शंभुर्विज्ञाय तद्धार्दं तां पप्रच्छ पतिव्रताम् ॥१४॥
किमिच्छसि प्रिये! नित्यं किं ते मनसि वर्तते ।
किं वै चिन्तयसे रत्यां ब्रूहि क्रिये तवेप्सितम् ॥१५॥
पार्वती प्राह देवेश! किं मे न्यूनं तवान्तिके ।
सर्वदः सर्वलोकानां कर्ता लब्धो मया यतः ॥१६॥
यत्र भगवतो वासस्तत्र स्युः सुसमृद्धयः ।
न न्यूनं नाऽप्यशान्तिश्च नाऽलाभः प्रेष्ठवस्तुनः ॥१७॥
ऋतूत्तरं तु नारीणां प्रेष्ठः पतिस्ततः सुतः ।
मया पतिस्त्रिलोकेशः प्राप्तोऽपि नास्ति मे सुतः ॥१८॥
पुत्रेषणा हृदये मे जागर्ति तव दर्शने ।
यदा यदा तु देवेश पश्यामि त्वां तदा तदा ॥१९॥
संकल्पो जायते मोहाद् बलेन चाग्रपूजया ।
पतिदेवसमानो मे कदा पुत्रो भवेदिति ॥२०॥
कान्तानां कान्तविच्छेदः प्रथमं दुःखमुच्यते ।
कान्तसत्त्वे यद्यरतिर्द्वितीयं दुःखमुच्यते ॥२१॥
दुःखातिरेकिदुःखं च तृतीयमनपत्यता ।
त्रैलोक्यकान्तं कान्तं त्वां लब्ध्वापि न च मे सुतः ॥२२॥
या स्त्री पुत्रविहीनाऽस्या जीवनं तन्निरर्थकम् ।
जन्मान्तरकृतं पुण्यं तपोदानजपादिभिः ॥२३॥
तदा पुत्रः प्रजायेत परत्रेह सुखप्रदः ।
सुपुत्रो निजपित्रंशः पितृतुल्यसुखप्रदः ॥२४॥
कुपुत्रस्तु कुलांगारो मनस्तापाय केवलम् ।
प्रार्थयन्ति जनास्तस्मात् सुपुत्रो मे भवेदिति ॥२५॥
स्वामी स्वांशेन सुस्त्रीणां गर्भे जन्म लभेद् ध्रुवम् ।
साध्वी स्त्री मातृतुल्या च सततं हितकारिणी ॥२६॥
असाध्वी वैरितुल्या च शश्वत्संतापदायिनी ।
किमुपायं करिष्यामि वद पुत्रफलप्रद ॥२७॥

इत्युक्त्वा पार्वती देवी तूष्णीमास यदा तदा ।
प्रहस्य शंकरो देवो बोधयामास पार्वतीम् ॥२८॥
शृणु पार्वति ! वक्ष्यामि तव भद्रं भविष्यति ।
प्रयत्नतः कार्यसिद्धिः सर्वेषां खलु जायते ॥२९॥
सर्वसिद्धिप्रदं ह्युद्यमुपायं कथयामि ते ।
हरेराराधनं कृत्वा व्रतं कुरु वरानने ॥३०॥
पुण्यकव्रतसंज्ञं तद् वर्षमेकं करिष्यसि ।
मनोरथकल्पतरुं सुखदं पुत्रदं व्रतम् ॥३१॥
सर्वव्रतानां संश्रेष्ठं हरेस्तत्पुण्यकं व्रतम् ।
यथा गंगा सरित्श्रेष्ठा यथा देवेषु वै हरिः ॥३२॥
वैष्णवेषु यथा चाहं देवीषु त्वं महासती ।
यथा वर्णेषु विप्रो वै श्रेष्ठस्तीर्थेषु पुष्करः ॥३३॥
पुष्पेषु पारिजातं च पत्रेषु तुलसीदलम् ।
तिथिष्वेकादशी श्रेष्ठा वारेषु रविरुत्तमः ॥३४॥
मासेषु मार्गशीर्षश्च सर्वर्तुषु वसन्तकः ।
संवत्सरो वत्सरेषु कृतं युगेषु चोत्तमम् ॥३५॥
पूज्येषु च यथा विद्वान् माता गुरुजनेषु च ।
पत्नी यथा हितकृत्सु विश्वस्तेषु ह्रदन्तरम् ॥३६॥
यथा धनेषु रत्नानि प्रियेषु च पतिर्यथा ।
यथा बन्धुषु सत्पुत्रो वृक्षेषु कल्पपादपः ॥३७॥
तथा हरेर्व्रतं श्रेष्ठं सर्वव्रतेषु पुण्यकम् ।
फलेष्वाम्रफलं श्रेष्ठं वने वृन्दावनं यथा ॥३८॥
यथा स्त्रीषु शतरूपा ह्युर्वश्यप्सरसां यथा ।
यथा मातृषु कमला सूर्यस्तेजस्विषूत्तमः ॥३९॥
आह्लादकेषु चन्द्रश्च सुन्दरेषु च मन्मथः ।
श्रेष्ठाः शास्त्रेषु वेदाश्च सिद्धेषु कपिलो यथा ॥४०॥
कीर्तिदेषु यथा विद्या व्यापकेषु प्रभुर्यथा ।
श्रेष्ठं चक्षुर्यथांगेषु सत्यं पुण्येषु चोत्तमम् ॥४१॥
तपस्सु श्रीहरेः सेवा गव्येषु घृतमुत्तमम् ।
श्रेष्ठममृतं भक्ष्येषु शुद्धेषु च हुताशनः ॥४२॥
तैजसेषु यथा स्वर्णं मिष्टेषु प्रियभाषणम् ।
पतत्रिषु च गरुडः करिष्वैरावतो यथा ॥४३॥
तथा हरेर्व्रतं श्रेष्ठं सर्वव्रतेषु पुण्यकम् ।
देवर्षिषु नारदश्च योगिषु सनकादयः ॥४४॥
गन्धर्वेषु चित्ररथस्तत्त्वेषु चेतनो यथा ।
कवने जीवने शुक्रः क्षमावत्सु यथा च भूः ॥४५॥
श्रेष्ठा लाभेषु वै मुक्तिः सम्पत्सु भक्तिरुत्तमा ।
पवित्रेषु यथा साधुर्वर्णेषु प्रणवो यथा ॥४६॥
मन्त्रेषु श्रीहरेर्मन्त्रो गोषु कामदुघा यथा ।
वेदेषु सामवेदश्च तृणेषु कुश उत्तमः ॥४७॥
सुखदेषु यथा ज्ञानं सर्पेषु वासुकिर्यथा ।
अक्षरेषु अकारश्च यथा तातो हितैषिषु ॥४८॥
चतुष्पात्सु यथा सिंहः शालग्रामश्च मूर्तिषु ।
यथा बुद्धिः करणेषु शक्तिमत्सु हरिर्यथा ॥४९॥
नाशवत्सु द्व्यणुकश्च दधीचिर्दातृषूत्तमः ।
ब्रह्मास्त्रं तु यथाऽस्त्रेषु चक्रेषु च सुदर्शनम् ॥५०॥
सर्वसारो यथा कृष्णो व्रतेषु पुण्यकं तथा ।
व्रतं कुरु महादेवि ! शीघ्रं स्वेष्टप्रदायकम् ॥५१॥
सर्वश्रेष्ठस्तु पुत्रस्ते व्रतादेव भविष्यति ।
व्रताराध्यो हरिः कृष्णो गोलोकाधिपतिः प्रभुः ॥५२॥
प्रसन्नः सर्वदाता स भुक्तिमुक्तिप्रदो भवेत् ।
जनो यत्सेवया बन्धान्मुच्यते पितृकोटिभिः ॥५३॥
उद्धृत्य कोटिपुरुषान् गोलोके सुखमृच्छति ।
भ्रातॄन्भृत्यान्सहायाँश्चाश्रितान्नारीसुतादिकान् ॥५४॥
कृष्णभक्तः समुद्धृत्य सुखं याति हरेः पदम् ।
तस्माद् गृहाण गिरिजे ! हरेर्मन्त्रव्रतं परम् ॥५५॥
कुरु व्रतं जप मन्त्रं शीघ्रं सिद्धिर्भविष्यति ।
इत्युक्त्वा जलमादाय देव्यै मन्त्रवरं ददौ ॥५६॥
शंभुर्वामे गिरिजायाः कर्णे मन्त्रं जजाप ह ।
पार्वती तं दीयमानं मन्त्रं दध्यौ हृदि त्विमम् ॥५७॥
"ओं नमो हरिकृष्णाय पतिरूपधराय च ।
बीजाय गर्भरूपायाऽपत्यरूपाय शंभवे ॥५८॥
संकल्पगर्भह्वाय नमः पुत्रप्रदाय च ।
विजेत्रेऽग्र्याऽर्च्यरूपाय नमो देहि सुपुत्रकम् ॥५९॥
सर्वविजयिनं देहि सर्वाग्र्याऽर्च्यं च मे सुतम् ।
पुण्यकं ते व्रतं कृष्ण क्रियते प्रीतये तव ॥६०॥
निर्विघ्नं सफलं तत्स्यात् पुत्रात्मन् सुतदो भव ।
त्वत्समं मे सुतं देहि चिरंजीवि नमो नमः" ॥६१॥
इतिमन्त्रं हरदत्तं गृहीत्वा पार्वती सति ।
जगाम जाह्नवीतीरं शंभुना सह पावनम् ॥६२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पार्वत्यै पुत्रजिज्ञासमानायै शंकरप्रदत्तबहुदृष्टान्तसमन्वितकृष्णमन्त्रप्रदानप्रदर्शननामा चतुर्नवतितमोऽध्यायः ॥९४॥

**श्रीनारायण उवाच—**

श्रुत्वा व्रतस्य कर्तव्यं पार्वती हृष्टमानसा।
सर्वं व्रतविधानं तु पप्रच्छ शंकरं पुनः ॥ १ ॥
पुण्यकं तद्व्रतं नाथ नियमेन युतं मया।
कया रीत्या प्रकर्तव्यं कानि द्रव्याणि तत्र च ॥ २ ॥
फलान्यन्यानि देयानि भवन्तीति निरूप्यताम्।
यद्यदपेक्षितं वस्तु तन्नियोजय कल्पय ॥ ३ ॥
नारीणां व्रतकर्त्रीणां स्वामी सर्वार्थदो मतः।
पिता कौमारसमये सदा पालयते सुताम् ॥ ४ ॥
लग्नोत्तरं पतिः पाता वार्धक्ये तु सुतादयः।
पिता प्राणसमां पुत्रीं दत्वा सत्पतये सुखी ॥ ५ ॥
पतिः पत्नीं स्वपुत्रेषु सन्न्यस्यैव सुखी भवेत्।
एवं त्रययुता नारी लोके भाग्यवती मता ॥ ६ ॥
एकेन रहिता मध्या सर्वहीना तु दुःखिनी।
एतैस्तु रक्षिता धन्या निन्दिताऽन्याश्रयस्थिता ॥ ७ ॥
पितृरक्षणयोग्यं तु कौमारं विगतं मम।
भर्तृरक्षणयोग्यं च यौवनं तु गमिष्यति ॥ ८ ॥
विना पुत्रं तु वार्धक्ये को मे रक्षां करिष्यति।
अतो देहि सुतं नाथ मम निर्वृत्तिकारणम् ॥ ९ ॥
सर्वज्ञस्य समीपे वै पाण्डित्यं कलुषायते।
न ममाऽन्ययाचितव्यं सुतदां सत्कृपां विना ॥१०॥
इति श्रुत्वा तु पार्वत्याः शंकरः प्राह पार्वतीम्।
श्रृणु देवि कृष्णव्रतात्सफलः स्यान्मनोरथः ॥११॥
माघशुक्लत्रयोदश्यां व्रतारंभः शुभः प्रिये।
द्वादश्यां माघशुक्लस्य व्रतस्य पूर्णता भवेत् ॥१२॥
सांवत्सरं व्रतमेतत्पुण्यकं कृष्णतुष्टिकृत्।
कर्तव्यं तु विधानेन पुत्रार्थिन्या तु योषया ॥१३॥
द्वादश्यां तु समुपोष्य शिरःसंस्कारपूर्वकम्।
गात्रशुद्धिं वस्त्रशुद्धिं कृत्वा रात्रौ हरिं स्मरेत् ॥१४॥
निद्रोत्तरं ब्राह्मकाले तल्पादुत्थाय वै हरिम्।
स्मरन् शौचादिकं दन्तधावनं स्नपनं तथा ॥१५॥
कृत्वा चाऽऽचम्य हरये दत्त्वाऽर्घ्यं धौतवाससी।
धृत्वोपविश्य च ततः पुनराचम्य चान्दनम् ॥१६॥
बिन्दुं वा तिलकं कृत्वा कौंकुमं च हरिं स्मरेत्।
स्वाह्निकं नैत्यकं कृत्वा वृणुयात्सुपुरोहितम् ॥१७॥
घटं संस्थाप्य विधिवत्स्वस्तिवाचनपूर्वकम्।
संकल्पं वेदविहितं कारयित्वा व्रतं चरेत् ॥१८॥

उपचारैः षोडशभिः पूजनीयो हरिः स्वयम्।
आवाहनमासनं च पाद्यमर्घ्यं ततः परम् ॥१९॥
आचमनं तथा स्नानं मधुपर्कं तथाऽम्बरम्।
चन्दनं भूषणं पुष्पं धूपं दीपं निवेदनम् ॥२०॥
यज्ञसूत्रं च ताम्बूलं देयानि भक्तिभावतः।
तत्र न्यूनं न कर्तव्यं फलहानिकरं हि तत् ॥२१॥
दानानि तु यथाशक्ति देयानि कृष्णविष्णवे।
यद्यद्दानेन यत्प्राप्तिर्भवेत् तद्वच्मि संश्रृणु ॥२२॥
पुष्पं तु पारिजातस्य देयं सुरूपहेतवे।
श्वेतचम्पकपुष्पं तु देयं सौन्दर्यहेतवे ॥२३॥
पद्मं देयं तु कृष्णाय मुखसौघस्व्यहेतवे।
रत्नाढ्यं दर्पणं देयं नेत्रयोर्दीप्तिहेतवे ॥२४॥
नीलोत्पले तथा देये चक्षुषो रूपहेतवे।
श्वेतं तु चामरं देयं केशसौन्दर्यहेतवे ॥२५॥
रत्नाक्तपुटकं देयं नासासौन्दर्यहेतवे।
देये बन्धूकपुष्पे च स्वोष्ठयोः रक्तताकृते ॥ २६॥
मुक्ताफलानि देयानि दन्तसौन्दर्यहेतवे।
रत्नगण्डूषके देये गण्डसौन्दर्यहेतवे ॥२७॥
रत्नपाशास्तथा देया सुष्ठु चिबुकहेतवे।
सरत्नकर्णभूषाश्च देयाः कर्णप्रसुष्ठवे ॥२८॥
माध्वीकं शार्करं देयं स्वरमाधुर्यहेतवे।
मिष्टं सुधाऽमृतं देयं वाणीमाधुर्यहेतवे ॥२९॥
देयो रत्नप्रदीपश्च दृष्टिनैर्मल्यहेतवे।
जलपात्रादयो देया बलदाढ्यस्य हेतवे ॥३०॥
पद्मनालानि देयानि बाहुदार्ढ्यस्य हेतवे।
रक्तपद्मानि देयानि करसौन्दर्यहेतवे ॥३१॥
अंगुलीयानि देयानि त्वंगुलीष्टत्वहेतवे।
देयास्तु श्वेतमणयो नखसौन्दर्यहेतवे ॥३२॥
रत्नहारास्तथा देया वक्षःसौघस्व्यहेतवे।
पक्वेऽर्प्ये श्रीफले तस्मै स्तनसौन्दर्यहेतवे ॥३३॥
स्वर्णपत्रं तथा देयं देहसौन्दर्यहेतवे।
देया रत्नकृता नाभिर्नाभिसौन्दर्यहेतवे ॥३४॥
द्वे रत्नखचिते चक्रे देये नितम्बसुष्ठवे।
रंभास्तंभाः प्रदेयाश्च श्रोणिसौन्दर्यहेतवे ॥३५॥
स्थलपद्मानि देयानि पादसौन्दर्यहेतवे।
स्वर्णमत्स्यानि देयानि गतिचांचल्यहेतवे ॥३६॥
स्वर्णहंसगजेन्द्राश्च देयाः सुगतिहेतवे।
देयं चामीकरच्छत्रं मूर्ध्नः सौन्दर्यहेतवे ॥३७॥

मालतीकुसुमं देयं सौम्यहास्यादिहेतवे ।
देयान्यमूल्यरत्नानि व्रतपूर्त्यै सुखाप्तये ॥३८॥
देयाः स्फाटिकमणयो मनःप्रशान्तयेऽमलाः ।
देयाः प्रवालमणयः प्रियारागविवृद्धये ॥३९॥
देया माणिक्यमणयः स्वामिसौभाग्यहेतवे ।
कूष्माण्डं नवरंगं च जम्बीरं श्रीफलं तथा ॥४०॥
देयानि हरिकृष्णाय पूजायां पुत्रहेतवे ।
रत्नसाराणि देयानि स्वामिनो धनवृद्धये ॥४१॥
वाद्यं सम्पत्तिवृद्ध्यर्थं श्रीहरिं श्रावयेद् व्रते ।
पायसं पिष्टकं सर्पिः शर्कराः केसरं तथा ॥४२॥
देयानि हरये भक्त्या स्वामिनो भोगवृद्धये ।
पुष्पमालाः प्रदातव्या हरौ भक्तिविवृद्धये ॥४३॥
मधुरस्वादुनैवेद्यं देयं मिष्टान्नलब्धये ।
तुलसीपत्रपुष्पाणि देयानि कृष्णतुष्टये ॥४४॥
साधून् साध्वीश्च दीनाँश्च भोजयेत् सस्यवृद्धये ।
पुष्पाञ्जलिप्रणामास्तु कर्तव्या भक्तिवृद्धये ॥४५॥
षण्मासाँश्च हविष्यान्नं मासान्पंच फलादिकम् ।
हविः पक्षं पयः पक्षं भक्षयेत्तु व्रते स्थिता ॥४६॥
अखण्डदीपकं कुर्यादासंवत्सरमच्युते ।
नित्यं कुशासने मध्यरात्रिजागरणं चरेत् ॥४७॥
ब्रह्मचर्यं सदा पाल्यं व्रतस्य फललब्धये ।
क्षतौ तु निष्कृतिः कार्योपवासोऽष्टौ शतं जपाः ॥४८॥
प्रतिक्षति प्रकर्तव्या व्रताऽखण्डिततासये ।
माघशुक्लत्रयोदश्यां कार्यस्तदुत्सवो महान् ॥४९॥
यथाशक्ति प्रदातव्या स्वर्णमुद्रा च राजती ।
वस्त्राणां त्रिशतं षष्ट्यधिकं तावच्च रूप्यकाः ॥५०॥
स्वर्णमुद्राश्च तावत्यो भोज्यास्तावन्त आर्षकाः ।
तिलहोमः प्रकर्तव्यस्त्रिशतं चापि षष्टिकः ॥५१॥
एतत् प्रतिदिनं कृत्यं वर्षान्ते कार्यमेव वा ।
हरितुल्यो भवेत्पुत्रो विजेताऽग्र्याऽर्च्य एव च ॥५२॥
सौन्दर्यं पतिसौभाग्यमैश्वर्यं विपुलं धनम् ।
सर्वेष्टसिद्धयश्चास्या जायन्ते व्रतवैभवात् ॥५३॥
व्रतान्ते स्वपतिशय्या रन्तव्या न व्रतेऽन्तरा ।
व्रतस्य वत्सरे नार्या न रन्तव्यं कदाचन ॥५४॥
व्रतमध्ये तु रमणे व्रतभंगो भवेदतः ।
ऋतुकालाऽसेवनं यद्दूषणं चात्र भूषणम् ॥५५॥
एवं त्वं वार्षिकं चैकं व्रतं कुरु महेश्वरि ! ।
पुत्रस्त्वयोनिजस्ते स्यान्मम धातोस्तु पार्वति ! ॥५६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पुत्रार्थं पुण्यकाख्यवार्षिकव्रतनिरूपणदेयदाननिरूपणनामा पंचनवतितमोऽध्यायः ॥ ९५ ॥

**श्रीश्वेतव्यास उवाच—**

सुशिख ! शंकरः प्राह देवेशीं तु पुरावृतम् ।
वैवस्वतमनोः पत्नी शतरूपा ह्यपुत्रिणी ॥ १ ॥
शुशोच निष्फलं जन्म धनमैश्वर्यमित्यपि ।
गृहस्थानां गृहं स्मृद्धं विना पुत्रं न शोभते ॥२॥
तपोदानोद्भवं पुण्यं जन्मान्तरकृतं भवेत् ।
तदा पुत्रीपुत्रमुखदर्शनं जायते नृणाम् ॥ ३ ॥
फलं पुन्नामनरकात्तारणं पुत्रतः स्मृतम् ।
सुशिवे ! निष्किंचनाऽऽर्षा अपीच्छन्ति सुशिष्यकम् ॥ ४ ॥
स्वयं नारायणो देवो विना शिष्यं न तिष्ठति ।
शिष्यः पुत्रो ह्यदाराणां सदारस्य सुतो धनम् ॥ ५ ॥
नित्यवन्ध्याविधुरयोः पुत्रा मेनाशुकादयः ।
तस्मात् सुतं विना वासो वरो भवति तापसः ॥ ६ ॥
राज्यं चाभिजनो लक्ष्मीर्निरर्थं सुतमन्तरा ।
अपुत्रिणोर्मुखं प्रातर्न वै पश्यन्ति मानवाः ॥ ७ ॥
मुखं दर्शयितुं लज्जां समवाप्नोत्यपुत्रकः ।
इत्येवं शोकसन्तप्ता ब्रह्मणेऽवेदयत्तदा ॥ ८ ॥
ब्रह्मोवाच शृणु वत्से माघशुक्लत्रयोदशी ।
पुण्यकव्रतयोग्या सा तदारभ्य तु वत्सरम् ॥ ९ ॥
व्रतं कुरु यथोक्तं वै लभ विष्णुसमं सुतम् ।
ब्रह्मणो वचनात्सा तु चकार विधिना व्रतम् ॥१०॥
प्रियव्रतोत्तानपादौ लेभे पुत्रौ मनोहरौ ।
देवहुतिर्व्रतं कृत्वा लब्ध्वा नारायणाद्वरम् ॥११॥
नारायणांशं कपिलं लेभे सिद्धमुनिं सुतम् ।
अरुन्धती व्रतं कृत्वा लेभे शक्त्यभिधं सुतम् ॥१२॥
शक्तिकान्ता व्रतं कृत्वा लेभे पुत्रं पराशरम् ।
अदितिश्च व्रतं कृत्वा लेभे पुत्रं तु वामनम् ॥१३॥
शच्यपीदं व्रतं कृत्वा जयन्तमाप वै सुतम् ।
उत्तानपादपत्नीदं कृत्वा लेभे ध्रुवं सुतम् ॥१४॥
अनसूया व्रतं कृत्वा लेभे चन्द्रं सुतं शुभम् ।
अंगिरो भार्यया बृहस्पतिर्लब्धो व्रतेन वै ॥१५॥

भृगोः ख्यातिर्व्रतं कृत्वा लेभे शुक्रं सुतं शुभम् ।
तथा व्रतप्रभावेण स्वयं नारायणः सुतः ॥१६॥
कंभराया गृहे जातः स ते पुत्रो भविष्यति ।
कथयित्वेति देवेशीं दत्वा बहुगणं धनम् ॥१७॥
साधनानि कथयित्वा शिवो ध्याने व्यवस्थितः ।
हरेराराधनपरो ज्ञानानन्दाब्धिभावनः ॥१८॥
पार्वती सर्वद्रव्याणि चानीय व्रतहेतवे ।
विप्रं सनत्कुमारं वै विधये चाऽवृणोत्तदा ॥१९॥
देवेशास्तु समाजग्मुर्ज्ञात्वा व्रतमहोत्सवम् ।
ब्रह्माऽऽजगाम सभार्यः सलक्ष्मीकश्चतुर्भुजः ॥२०॥
ध्यानं त्यक्त्वा तदा शंभुराजगाम व्रतस्थले ।
सनकश्च सनन्दश्च कपिलश्च सनातनः ॥२१॥
आसुरिश्च क्रतुर्हंसो वोढुः पञ्चशिखोऽरुणिः ।
यतिर्वशिष्ठः सुमतिः पुलस्त्यः पुलहो भृगुः ॥२२॥
अगस्त्योऽत्रिरंगिराश्च दुर्वासाश्च्यवनस्तथा ।
पत्नीव्रतः प्रचेताश्च कण्वो मरीचिकश्यपौ ॥२३॥
गौतमश्च जरत्कारुर्बृहस्पतिश्च सौभरिः ।
उतथ्यो जमदग्निश्च जैगिषव्यश्च देवलः ॥२४॥
संवर्तो वामदेवश्च विश्वामित्रो विभाण्डकः ।
ऋष्यश्रृंगः पारिभद्रो मार्कण्डेयश्च लोमशः ॥२५॥
गोकर्णश्च मृकण्डुश्च पुष्करः पिप्पलायनः ।
कौत्सो द्वीतश्चैकतश्च त्रीतो वत्सश्च लेखनः ॥२६॥
शंखः शंकुरापिशलिः स्वयंप्रकाश आरुणिः ।
दक्षः कणादो बालाग्निरघमर्षणपाणिनी॥२७॥
कात्यायनो नारदश्च नरो नारायणस्तथा ।
ब्रह्मव्रतो महाश्वेतव्यासश्चान्ये महर्षयः ॥२८॥
गीता जयन्त्यो गायत्री लक्ष्मीर्विद्या सरस्वती ।
स्तुतिश्चाराधना पूजा भक्तिर्नीराजना रमा ॥२९॥
एकादश्यश्च योगिन्यः सांख्ययोगिन्य इत्यपि ।
साध्व्यश्च वीतरागिण्यो न्यासिन्यः सिद्धयस्तथा ॥३०॥
मातरः सरितः पुर्यस्तथाऽन्या विविधाः स्त्रियः ।
आजग्मुस्तत्र पार्वत्या व्रतोत्सवसमुत्सुकाः ॥३१॥
प्रदिक्पालास्तथा देवा यक्षा गन्धर्वकिन्नराः ।
किंपुरुषाश्चारणाश्च पर्वता दिव्यविग्रहाः ॥३२॥
हिमालयो हर्षभरः सापत्यश्च सभार्यकः ।
समाजगाम सगणो द्रव्यरत्नमणीन्नयन् ॥३३॥
व्रते यावन्ति दानानि तानि संगृह्य चाऽऽययौ ।
पार्वत्यै तानि दत्तानि व्रतसिद्धिप्रपूर्तये ॥३४॥
अनन्तरत्नप्रभवः शैलः पुत्र्यै ददौ बहु ।
ब्राह्मणा मनवः सिद्धा नागा विद्याधरास्तथा ॥३५॥
साधवो भिक्षुका बन्दिजना सूताश्च मागधाः ।
विद्याधर्यश्च नर्तक्यो नर्तकाऽप्सरसस्तथा ॥३६॥
आजग्मुर्व्रतकन्यास्तु पार्वत्यास्तोषहेतवे ।
आशीर्वादाः प्रदत्तास्तैस्ताभिः पुत्रवती भव ॥३७॥
सर्वेषां स्वागतं सेवा भोजनातिथ्यमाननम् ।
शंभुना सत्कृतं सर्वे तुष्टा ददुः शुभाशिषः ॥३८॥
नताः कृताऽऽशिषश्चर्याश्च पूजिता भोजिताश्च ते ।
कैलासे तु महत्यां वै सभायां संहिताः सुराः ॥३९॥
रत्नसिंहासनस्थं श्रीहरिं कृष्णं नरायणम् ।
महादेव उवाचेदं श्रीनिवास श्रृणु प्रभो ! ॥४०॥
व्रतानां फलदो देवो मन्त्राणां फलदो भवान् ।
पार्वती तु व्रते नैव पुत्रं वाञ्छति सौख्यदम् ॥४१॥
विष्णुः प्राह महादेव नारायणो जगद्गुरुः ।
भक्तप्राणश्च भक्तेशो भक्तानुग्रहकारकः ॥४२॥
भक्त्यधीनो हि भगवान् सर्वसिद्धिं प्रदास्यति ।
कृष्णव्रतं कृष्णमन्त्रं सर्वकामफलप्रदम् ॥४३॥
व्रते पूर्णे तु सम्पन्ने पार्वत्या सह संगमे ।
तव धातोर्वह्निःस्कन्नात्स्वयोनिजः सुपुत्रकः ॥४४॥
विजेता सर्वसैन्यानां कार्याणां मंगलप्रदः ।
भविष्यति न सन्देहो देवाः कांक्षन्ति तं सुतम् ॥४५॥
इत्येवमुच्यमाने च तदा देवादिसन्निधौ ।
पार्वती कृष्णचरणे नमनाय समागता ॥४६॥
नत्वा पादाववनेज्य प्राह विष्णुं जनार्दनम् ।
भक्तकल्पतरो श्रीमन्नारायण ! नमोऽस्तु ते ॥४७॥
कृतेन तव पुण्यकव्रतेन सुतवत्यहम् ।
यथा स्यां तत्तथा देव ! संकल्पं च कृपां कुरु ॥४८॥
कृष्णः प्राह तदा देवीं सावधानतया त्वया ।
कर्तव्यं व्रतमेव त्वां द्रक्ष्ये पूर्णे व्रते पुनः ॥४९॥
देवकार्यसहायाऽनुष्ठातृपुत्रवती भव ।
गच्छामि स्वस्य गोलोकं व्रते तन्द्रां तु मा कुरु ॥५०॥
सत्कृतः पूजितो देवस्तथाऽन्येऽपि दिवौकसः ।
आशिषश्च तदा देव्यः प्रयुज्य स्वगृहान् ययुः ॥५१॥
पार्वती माघशुक्लस्य द्वादश्यां देहशुद्धये ।
उपवासेन साकं वै सर्वं कृतवती सती ॥५२॥
त्रयोदश्यामाह्निकं यत्प्रातःकृत्यं विधाय तत् ।
सर्वरत्नमणिधान्यद्रव्यवस्त्रादिभिः सह ॥५३॥

मण्डपे तु समागत्य संस्थिताऽपूजयद् गुरून्।
नत्वा सर्वांस्तत्रसंस्थान् हरिं नत्वाऽन्तरात्मना ॥५४॥
संस्थाप्य रत्नकलशं शुक्लधान्योपरि स्थिरम्।
पञ्चपल्लवसंयुक्तं फलाक्षतादिशोभितम् ॥५५॥
चन्दनाऽगुरुकस्तूरीकुंकुमादिविराजितम्।
तथा पुरोहितं नत्वा पूजयित्वा त्रिदेवताः ॥५६॥
समारेभे पूजनं तु स्वस्तिवाचनपूर्वकम्।
आवाह्याभीष्टदेवं तं श्रीकृष्णं मंगले घटे ॥५७॥
भक्त्या ददौ क्रमेणैव चोपचारांस्तु षोडश।
यानि व्रते विधेयानि देयद्रव्याणि यानि च ॥५८॥
वेदमन्त्रेण सर्वाणि दत्त्वा होमान् व्यधापयत्।
त्रिलक्षाणि तदा होमान् तिलैश्च सर्पिषा तथा ॥५९॥
मन्त्रजापं तथा कृष्णं स्मरन्ती ब्राह्मणान् बहून्।
भोजयामास विधिना प्रत्यहं पूर्णवत्सरम् ॥६०॥
समाप्तिदिवसे कृष्णः सर्वात्मा स्मारितो मुहुः।
आगच्छतु स्वयं कृष्णः प्रसन्नः पूजनस्थले ॥६१॥
तुष्टुवुस्तं तदा सर्वे सायुधं च चतुर्भुजम्।
कोटिकन्दर्पलावण्यं कोटिमन्मथमोहनम् ॥६२॥
प्रसन्नवदनं कृष्णं कोटिचन्द्रसमप्रभम्।
वासयामास तं देवं रत्नसिंहासने वरे ॥६३॥
तं प्रणेमुश्च शिरसा ब्रह्मशक्तिशिवादयः।
स्वागतोत्तरमाराध्यो व्रतेनाप्लावितो हरिः ॥६४॥
प्राह देवि! व्रतं पूर्णं तव जातं सुपुत्रदम्।
पार्वती च तदा प्राह देवदेव महाप्रभो! ॥६५॥
पुत्रं देहि विजेतारं सर्वाऽग्राच्र्यं सुतं तथा।
कृष्णः प्राह तदा देवीं तथास्त्विति ब्रुवन्प्रभुः ॥६६॥
देवा दैत्यविनाशाय तारकासुरहानये।
प्रार्थयन्ति मुहुस्तस्माद् विजेतॄणां शिरोमणिः ॥६७॥
पुत्रश्चैको भविता ते द्वितीयोऽपि सुतः शुभः।
सर्वदेवाग्रपूज्यश्च सर्वमंगलदस्तव ॥६८॥
भविता चेत्युभौ पुत्रावयोनिजौ तु वीर्यतः।
शंकरस्य भवेतां वै पतिं रंजय भामिनि! ॥६९॥
शिवा प्राह तदा विष्णुं कर्मणां फलदायकम्।
ध्यायन्ति योगिनः केचिच्छान्तं साकारमद्भुतम् ॥७०॥
पीताम्बरं चतुर्हेतिं लक्ष्मीकान्तं चतुर्भुजम्।
केचित्किशोरं द्विभुजं सुन्दरं रत्नभूषितम् ॥७१॥
श्यामं गोपांगनाकान्तं मायानाथं मनोहरम्।
अहं पुत्रप्रदं देवं ध्यायामि कृष्णमच्युतम् ॥७२॥
तव प्रेरणया नाथ! तव तेजोंशसंभवा।
मायया तव मायाऽहं मोहयित्वाऽसुरान्पुरा ॥७३॥
निहत्य सर्वान् शैलेन्द्रमगमं तं हिमालयम्।
ततोऽहं संस्तुता देवैस्तारकाक्षेण पीडितैः ॥७४॥
अभवं दक्षजायायां शिवस्त्री भवजन्मनि।
त्यक्त्वा देहं दक्षयज्ञे शिवाऽहं शिवनिन्दया ॥७५॥
अभवं शैलजायायां मेनकायां तु कालिका।
अनेकतपसा प्राप्तः शिवश्चात्रापि जन्मनि ॥७६॥
पाणिं जग्राह मे योगी प्रार्थितो वेधसा मुहुः।
शृंगारजं च तत्तेजो नाऽलभं देवमायया ॥७७॥
स्तौमि त्वामेव देवेश विना पुत्रं तु दुःखिता।
व्रते भवद्विधं पुत्रं लब्धुमिच्छामि साम्प्रतम् ॥७८॥
सर्वसेनाविजेतारं सर्वपूज्यं च वाऽपरम्।
श्रुत्वा सर्वं कृपासिन्धो! कृपां मे कर्तुमर्हसि ॥७९॥
इत्यभ्यर्थ्य तदा देवी तूष्णीमास च पार्वती।
स्वस्मिन् कृष्णेन दिव्यौ द्वौ पुत्रौ देव्यै प्रदर्शितौ ॥८०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पुत्रार्थं व्रतकर्त्रीणां दृष्टान्तानि देवर्षिणां समागमन-माशीर्वादाश्च श्रीकृष्णदर्शनं चेत्यादिवर्णन-नामा षण्णवतितमोऽध्यायः ॥९६॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि! कृपालुः स श्रीकृष्णः करुणानिधिः।
स्वरूपं दर्शयामास प्रथमं सर्वमोहनम् ॥ १ ॥
ब्रह्मचर्यस्वरूपं वै साक्षाद्रूपनिधिं परम्।
षण्मुखं समयूरं च बहुहेतिसमन्वितम् ॥ २ ॥
बहुज्ञानं बहुबलं बहुकलं सुयौवनम्।
दिव्यं सेनास्वामियोग्यचिह्नं षोडशहायनम् ॥ ३ ॥
अथ द्वितीयरूपं स्वं स्थूलं वंशकरं परम्।
वनमालागलं श्यामं रत्नभूषणभूषितम् ॥ ४ ॥
किशोरवयसं सर्पयज्ञोपवीतशोभनम्।
कोटिकन्दर्पलावण्यं मूषकस्थिरवाहनम् ॥ ५ ॥
अतीव हृष्टं सर्वेशं भक्तानुग्रहकारकम्।
दृष्ट्वा रूपे रूपवती पुत्रौ तदनुरूपकौ ॥ ६ ॥
मनसा वरयामास वरं सम्प्राप्य तत्क्षणम्।
वरं दत्वा तदा कृष्णस्तत्तेजोऽन्तरधीयत ॥ ७ ॥

प्राप्तौ पुत्राविति हृष्टा जगदम्बा निरम्बिका ।
ब्राह्मणभिक्षुबन्दिभ्यो ददौ दानानि चाम्बिका ॥ ८ ॥
तांस्तथा भोजयामास पूजयामास शंकरम् ।
दुन्दुभिं वादयामास कारयामास मंगलम् ॥ ९ ॥
संगीतं गापयामास कृष्णसम्बन्धि सुस्वरम् ।
व्रतं समाप्य शैलोत्था भोजयित्वा तदाश्रितान् ॥१०॥
दुग्धपाकं पूरिकाश्च बुभुजे स्वामिना सह ।
ताम्बूलं सुसुगन्धाढ्यं बुभुजे शंभुना सह ॥११॥
सर्वान् प्राघूणिकान् सा तु प्रस्थाप्य प्रयता पुनः ।
श्रांगारिकं परिष्कृत्य शारीरकं प्रमोदनम् ॥१२॥
पयःफेननिभां शय्यां रम्यां सद्रत्नमंचके ।
पुष्पचन्दनसंयुक्तां कस्तूरीदानवासिताम् ॥१३॥
रहसि स्वामिना सार्धं सुष्वाप परमेश्वरी ।
सुगन्धिकुसुमाढ्येन वायुना सुरभीकृते ॥१४॥
भ्रमरध्वनिसंयुक्ते पुंस्कोकिलरुताश्रये ।
कैलासधामसीमान्ते रम्ये चन्दनकानने ॥१५॥
गन्धमादनभूभागे सिषेवे सुरतं पतिम् ।
व्यहार्षीत् सा सुरसिका शंकरेण सहाम्बिका ॥१६॥
द्वयोः सुरतमापन्नं यद् द्वयोश्च तदाऽभवत् ।
स्कन्दनं महदाश्चर्यं प्रथमे वीर्यपातने ॥१७॥
वीर्यमग्निस्वरूपं तद् भयकृच्च महाप्रभम् ।
योनिद्वारे स्खलितं तद् बहिरेव प्रवाहितम् ॥१८॥
अयोनिजस्य पुत्रस्योत्पत्तयेऽभूद्धरीच्छया ।
अथ प्रवाहरूपेण ज्वालारूपेण रेतसा ॥१९॥
उष्णतेजःसमुद्भूतोष्मस्वरूपेण चाऽम्बरे ।
अन्तरिक्षे भूतले च प्राणिनो मूर्छनां ययुः ॥२०॥
तच्छान्त्यर्थं स्वयं ब्रह्मा विष्णुश्चान्ये दिवौकसः ।
सस्मरुर्मनसा चाग्निं सोऽप्याजगाम सत्वरम् ॥२१॥
देवानामनुमत्या च विवेश सुरतस्थलम् ।
तदंगणमनुप्राप्य भिक्षां देहीति तूचिवान् ॥२२॥
पाणिपात्रस्य मे ह्यम्ब भिक्षां देहि व्रजाम्यहम् ।
भिक्षां तस्मै ददौ चाम्बा दुग्धरूपामुपस्थिताम् ॥२३॥
परमान्नं दुग्धपाकं प्रदत्तं चांजलौ यदा ।
तदा च प्रासरद् रेतः शंभोर्व्योमाध्वनश्च्यवत् ॥२४॥
वन्ह्यंजलौ प्रपतितं मिष्टं सुगन्धि सद्रसम् ।
निगीर्णं मिश्रितं भैक्षं प्रत्यक्षं वह्निना स्वयम् ॥२५॥
रसास्वादे मोहितोऽग्निरन्यद्रेतोऽपि यत्त्वभूत् ।
व्योम्नोऽन्तरिक्षाद्भूमेश्च शय्यायाश्चाऽलभेद्धि तत् ॥२६॥
तत् सर्वं भिक्षया सार्धं रसलोभाच्चमोहतः ।
स्वयमेव गृहीत्वा तन्मिश्रयित्वा मुहुर्मुहुः ॥२७॥
जग्रासाऽऽस्वादयन्दुग्धपाकं वीर्यं च भावतः ।
न किंचिदवशिष्टं हि पुत्रार्थं पार्वतीशये ॥२८॥
तदा चिन्तापरा गौरी रसास्वादे प्रलोभिनम् ।
वह्निं शशाप भो वह्ने रसास्वादप्रदूषणात् ॥२९॥
बीजं पुत्रात्मकमपि शय्यास्थं भक्षितं त्वया ।
तस्माद् भिक्षो मम शापात्सर्वभक्षो भवाऽऽशु वै ॥३०॥
शापः प्राप्तो महद्दुःखमभवद्वह्निमानसे ।
रेतो न जीर्णं प्रबलं तेजोऽप्युष्णतरं यतः ॥३१॥
प्रत्युत वह्निं तद्रेतः प्राज्वालयदतीव च ।
वह्निर्जाज्वल्यमानो वै गत्वा गंगामहाह्रदे ॥३२॥
वमति स्म च तत्सर्वं वह्निः स्वस्थोऽभवत्तदा ।
किन्तु वीर्योष्मणा गंगा तप्ता दग्धाऽभवत्तदा ॥३३॥
जलान्युच्छलितान्यासन् तत्तापं नैव सेहिरे ।
गंगया प्रोज्झितो धातुः शरस्तम्बे पपात ह ॥३४॥
तत्र समज्वलद्धातुर्वह्निभ्रान्तिकरस्तदा ।
सप्तर्षिप्रमदास्तत्र गंगायां स्नातुमागताः ॥३५॥
दृष्ट्वा प्रज्वलितं तत्र स्नाताश्च शीतपीडिताः ।
कृत्तिकास्तप्तुसंकल्पा ह्यरुन्धत्या निवारिताः ॥३६॥
अपि तत्रागमन् षड् वै ऋषिपत्न्यश्च तत्स्थले ।
यावत् तेपुश्च ताः सर्वा रेतसः परमाणवः ॥३७॥
विविशू रोमकूपेषु तासां तत्रैव सत्वरम् ।
सगर्भास्ताश्च संजाताः षड्गर्भैर्जज्वलुर्भृशम् ॥३८॥
शुशुचुश्च कुतस्ताद्वै गर्भवत्यो भवाम ह ।
दाहयत्यखिलं देहं किमिदं त्वनलादभूत् ॥३९॥
त्यजामश्चैनमेवाऽत्र नालखण्डौषधिग्रसात् ।
पीत्वा रसं च तद्रेतः उत्ससृजुर्भुवस्तले ॥४०॥
ऐकपद्येन तद्रेतः षण्मुखं हाटकप्रभम् ।
अपत्यं द्रागभवद्वै सुरूपं सुकुमारकम् ॥४१॥
गंगायाः पुलिने जातः कार्तिकेयः प्रतापवान् ।
जातो यदा हि गंगायां षण्मुखः शंकरात्मजः ॥४२॥
तदानीमेव गिरिजा जाता स्नुतपयोधरा ।
शिवं निरीक्ष्य तन्वंगी हे शंभो प्रस्नवः स्तनात् ॥४३॥
संजातो मे महादेव किमर्थस्तन्निरीक्ष्यताम् ।
समाधिना महादेवो ज्ञात्वाऽब्रवीत् सुतोऽभवत् ॥४४॥
नारदेन तदागत्य कथितं जन्म तस्य तत् ।
शिवाय च शिवायै च पुत्रो जातोऽतिसुन्दरः ॥४५॥

तदाकर्ण्य वचो विप्राः ऋषयः प्रमथास्तथा ।
कैलासं भूषयामासुर्वितानध्वजतोरणैः ॥४६॥
पताकाकदलीस्तंभैः स्वस्तिमंगलमण्डनैः ।
तदा सुरर्षयः सिद्धाश्चारणा अप्सरोगणाः ॥४७॥
यक्षाः सर्पा मानवाश्च जग्मुर्गंगातटं शुभम् ।
द्रष्टुं गांगेयमारुह्य वृषभं शंकरस्तथा ॥४८॥
पार्वत्या सह सगणो गंगातटमुपाययौ ।
तथा शंखाश्च भेर्यश्च नेदुस्तूर्याण्यनेकशः ॥४९॥
केचिन्नृत्यन्ति गायन्ति स्तुवन्ति तद्गुणार्णवम् ।
यावत्समीक्षयामासुर्गांगेयं शंकरोपमम् ॥५०॥
ददृशुस्तेजसा व्याप्तं बालं सूर्यसमप्रभम् ।
सुमुखं सुश्रियं रम्यं सुनासं सस्मितेक्षणम् ॥५१॥
प्रसन्नं चारुदशनं सर्वावयवसुन्दरम् ।
स्निग्धालकं कुमारं तं देवा ववन्दिरे तदा ॥५२॥
प्रमथाश्च गणाः सर्वे वीरभद्रादयस्तथा ।
ब्रह्मा विष्णुर्महेन्द्रश्च परिवार्य कुमारकम् ॥५३॥
उपसंस्थास्तथा चान्ये वामदक्षिणभागतः ।
अवतीर्य वृषाच्छंभुः पार्वत्या सह सुव्रतः ॥५४॥
पुत्रं ददर्श चात्मानं स्नेहप्लुतो बभूव ह ।
उपगुह्य गुहं तत्र पार्वती प्रेमसंप्लुता ॥५५॥
प्रस्नुतं पाययामास स्तन्यं चांके निधाय वै ।
चुचुम्ब पार्वती पुत्रमश्लिक्षत् शंकरः पिता ॥५६॥
योजितो ह्याशिषा सर्वैः शर्करा दापिता तदा ।
दानानि विविधान्येव दापितानि हरेण वै ॥५७॥
दम्पती तौ तदा तत्र चैकपद्येन रेजतुः ।
कुमारस्तु तदा रेमे धृत्वा कंठस्थवासुकिम् ॥५८॥
अथ तत्रगता गंगा कृत्तिका श्चाग्निदेवता ।
दृष्ट्वा बालं महारूपं सबलं सूर्यवर्चसम् ॥५९॥
ममाऽयं न च ते बालो विवदन्ते स्म चाग्रहात् ।
बालः प्राह तदा साक्षान्मदालोकात् तु यत्स्तनात् ॥६०॥
दुग्धं परिस्नुतं स्नेहात् तस्याश्चाहं सुपुत्रकः ।
इत्युच्चार्य ननाम स्वपितरौ प्राक् ततोऽपरान् ॥६१॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पार्वत्यै श्रीकृष्णप्रदत्तपुत्रद्वयरूपदर्शनं शंकरपार्वतीवह्निगंगा-शरस्तम्बकृत्तिकाद्वारा कार्तिकेयजन्म चेतिप्रदर्शननामा सप्तनवतितमोऽध्यायः ॥९७॥

श्रीनारायण उवाच—

शिवः प्राह तदा देवान् कुमारोऽयं प्रतापवान् ।
जातमात्रो युवा दिव्यो देवानां कार्यकृन्मतः ॥ १ ॥
तद् भवद्भिः सन्नियोज्यो यथेष्टं बलवान् कृती ।
देवाः प्राहुस्तदा शंभुं सर्वेषां सुखहेतवे ॥ २ ॥
तारकाद्भयमस्त्येव सर्वेषां जगतां विभो ।
तस्मात् सेनापतित्वेऽभिषेचनीयः सुतस्त्वयम् ॥ ३ ॥
इत्येवं सम्मतौ तत्र शंकरः सुमुहूर्तके ।
सैनापत्यप्रदानाय लिलेखोत्सवपत्रिकाः ॥ ४ ॥
गणा मंगलपत्राणि ययुर्नीत्वा चतुर्दश ।
चतुर्दशसु लोकेषु ऋषिपितृद्युवासिनाम् ॥ ५ ॥
यक्षराक्षसगन्धर्वभूतप्रेतपलाशिनाम् ।
मानवासुरसर्पाणां किन्नरोरगभूभुजाम् ॥ ६ ॥
प्रतिगृहं प्रददुस्ताः पत्रिकाश्च शिवाज्ञया ।
आययुः ऋषयः सत्यलोकात्तु ब्रह्मणा सह ॥ ७ ॥
पितरश्च तपोलोकादग्निष्वात्तादयस्तथा ।
बर्हिषदा आज्यपाश्च सोमपा वत्सरादयः ॥ ८ ॥
पावना वह्नयः सर्वे यमप्रेता दिगीश्वराः ।
समीयुश्च स्थले तत्र मनवो मरुतस्तथा ॥ ९ ॥
इन्द्रः कुबेरो वरुणो यमो यमगणास्तथा ।
बालखिल्यास्तथा सर्वे सप्तर्षयश्च नैर्ऋताः ॥१०॥
अधर्मधर्मसन्तानाः सुमेधाः स्तनयित्नवः ।
वसन्ताद्या ऋतवश्च कामो बाणादिनाऽन्वितः ॥११॥
विष्णुर्लक्ष्मीपतिर्लक्ष्म्या पार्षदैः सह चागमत् ।
देव्यः साध्व्यश्चतुर्दशलोकगार्हस्थ्यशोभनाः ॥१२॥
विलासिन्यश्च नर्तक्यः सेविकाश्च पतिव्रताः ।
समाजग्मुश्च भूदेवा नदा नद्यश्च पर्वताः ॥१३॥
अरण्यानि च तीर्थानि पुर्यो धामानि मूर्तयः ।
भूतानि प्राणिनस्तत्र सूतमागधबन्दिनः ॥१४॥
मानवा नागसर्पाश्च वृक्षा वल्ल्यश्च पक्षिणः ।
गगनस्था जलचर्याः स्थलस्थाः स्थास्नुजंगमाः ॥१५॥
दिव्यदेहाः समाजग्मुः सैनापत्यमहोत्सवे ।
गायका नर्तका नर्मकारिणो नाटकंविदः ॥१६॥
वादकाः सेवकाश्चान्ये ये देवाऽदेवजातयः ।
सर्वे तत्र समाहूता आगताः प्रोत्सवार्थिनः ॥१७॥
सैनापत्यस्थानयोग्यं बालकं द्रष्टुमुत्सुकाः ।
विधिं द्रष्टुं समाजग्मुः प्रायो द्रष्टुं स्वरक्षकम् ॥१८॥

समाजं च तथा द्रष्टुं प्रायः सर्वे समागताः ।
शंकरेण तदा स्वस्य कैलासः सुपरिष्कृतः ॥१९॥
मण्डपो हि महान् स्वर्णरत्नवस्त्रादिभिः कृतः ।
कदलीस्तंभकलशतोरणोल्लेचशोभितः ॥२०॥
पटमण्डपलक्षाणि कोटिशः पर्णशालिकाः ।
सभास्थानानि रम्याणि विहारोद्यानगोपुराः ॥२१॥
भक्ष्यभोज्यान्यनन्तानि लेह्यचोष्याणि कोटिशः ।
पेयानि स्वादुमिष्टानि सौगन्धीन्यपि लक्षशः ॥२२॥
दृश्यानि च मनोरंजनकान्यगणितानि वै ।
अमृतानि विविधानि स्वादुफलान्यनेकशः ॥२३॥
पक्वान्नानि सुदिव्यानि सितासुधाज्यवन्ति वै ।
अतितृप्तिप्रदान्येवं ताम्बूलादीनि चाऽभवन् ॥२४॥
स्थानोपवेशनबृस्यो रत्नसिंहासनानि च ।
जवनिकासुसौधानि विमानानि ह्यनेकशः ॥२५॥
वाहनानि जलव्योमभूगामीनि च कोटिशः ।
भाजनानि च भोग्यानि दर्पणाः केशदन्तुराः ॥२६॥
पुष्पाणि तैलसौगन्ध्यचन्दनानि च भूरिशः ।
कुंकुमानि च धूपाश्च दीपा वाद्यानि भूरिशः ॥२७॥
स्थले स्थले पृतनाधिपत्यसूचकसुध्वजाः ।
प्रस्फुरन्ति स्मान्तरीक्षे गीयन्ते जयगीतिकाः ॥२८॥
मुहूर्तेऽभिजिति प्राप्ते स्वस्तिवाचनपूर्वकम् ।
वेदघोषान् प्रचक्रुर्वै भूदेवाः ऋषयस्तथा ॥२९॥
यज्ञोपवीतं रक्षायाः सूत्रं जयमणिं तदा ।
धारयामास तं स्कन्दं बृहस्पतिरुदारधीः ॥३०॥
तिलकं साक्षतश्चन्द्रः कौंकुमश्च कृतः शुभः ।
गुरुणा गांगतोयैश्च प्रोक्षणं च कृतं शुभम् ॥३१॥
मन्त्रा बलप्रदास्तत्र योजिता दक्षकर्णके ।
दर्भः कर्णोपरि न्यस्तो मंगलं मस्तके तथा ॥३२॥
द्रव्यं तु प्रोक्षितं मूर्ध्नि मुकुटो ब्रह्मणाऽर्पितः ।
कर्णयोः कुण्डले दत्ते कुबेरेण तदा शुभे ॥३३॥
समुद्रेण तदा रत्नहारास्तस्य गलेऽर्पिताः ।
हिमालयेन स्वर्णानां भूषणान्यर्पितानि वै ॥३४॥
दिक्पालैस्तत्तत्प्रदेशोद्भववद्वस्तु समर्पितम् ।
वरुणेनार्पितं छत्रं श्वेतं चन्द्रसमं तदा ॥३५॥
गंगया रमया तत्र चामरे करयोर्धृते ।
इन्द्रेण कवचं दत्तं सैनापत्यस्य रक्षकम् ॥३६॥
सैनापत्यस्य वेषश्च दत्तो वै विष्णुना स्वयम् ।
आदित्येन रथो दत्तो रणाऽक्षतदृढांगकः ॥३७॥
खड्गं चर्म प्रदत्ते वै दृढे तु विश्वकर्मणा ।
शंभुना तु धनुर्दत्तमिषुध्यक्षय्यसायकौ ॥३८॥
चक्रं तु हरिणा दत्तं गदादण्डौ यमेन वै ।
वज्रं तदाऽग्निना दत्तं शक्तिश्च वायुनाऽर्पिता ॥३९॥
मयूराऽश्वगजा दत्ताः पर्वतैर्व्योमगामिनः ।
अस्त्रशस्त्रायुधहेतिपाशर्ष्टितोमरादयः ॥४०॥
प्रदत्ता विविधैर्देवैः तदुत्सवसमागतैः ।
देवीभिर्विविधास्तस्मै प्रदत्ताः शक्तयोऽक्षयाः ॥४१॥
पार्वत्याऽऽशीर्वचो दत्तं सर्वदा विजयी भव ।
सेनाभोग्यः परिकरो मुनिभिश्चार्पितस्तदा ॥४२॥
न्यूनं सर्वं पूरितं च तदा दक्षादिराजकैः ।
ततो विजयघोषोऽभूत्कार्तिकस्य महात्मनः ॥४३॥
अवाद्यन्त च वाद्यानि बभूवुर्जयघोषणाः ।
आसन्नुग्राः सुरपक्षाः सेनापतिकृतावनाः ॥४४॥
मंगलानि विविधानि जातानि सुरयोषिताम् ।
समाजस्तत्र लोकेभ्यश्चतुर्दशभ्य आगतः ॥४५॥
भोज्यैर्मिष्टैर्मिष्टपानैः सुवास्यैश्च सुतर्पितः ।
पुरुषाः प्रमदाश्चैव वर्धयन्ति स्म शांकरम् ॥४६॥
सेनापतिं महाशक्तं दुर्धर्षं सर्वतोऽधिकम् ।
सैन्यान्यपि सुवक्लृप्तानि लोकपालैस्तदा ततः ॥४७॥
तदन्येभ्यस्तु संदत्वा पाथेयान्युपदास्तथा ।
शंभुना प्रेषिताः सर्वे स्वस्वधामानि ते ययुः ॥४८॥
अथ सम्मिलिता देवाः ब्रह्मविष्णुपुरोगमाः ।
मन्त्रयांचक्रुरत्रैव दिवानिशि महासुरः ॥४९॥
दिविषदां तारकाख्यस्त्रासयते महाबलः ।
अयं स्कन्दो महासत्त्वो हनिष्यति तु तारकम् ॥५०॥
दिनानि सप्तजातानि जन्मतोऽस्य तथापि वै ।
महासेनापतिर्जातो देवदत्तबलैर्बली ॥५१॥
तस्मादद्यैव यास्यामस्तारकं हन्तुमुद्यताः ।
मत्वा तथेति सहसा निर्जग्मुस्तारकासुरम् ॥५२॥
तदा भेर्यो मृदंगाश्च पटहाऽऽनकगोमुखाः ।
अवाद्यन्त च वाद्यानि तूर्याणि विविधानि च ॥५३॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने कार्तिकेयस्य सेनापतित्वधिकारतदंगायुधादिवर्णन-नामाऽष्टनवतितमोऽध्यायः ॥९८॥

श्रीनारायण उवाच—

शृणु लक्ष्मि ! तदा लोके मयाऽभये बभूवतुः ।
देवानामुद्यमं ज्ञात्वा प्रबलस्तारकासुरः ॥ १ ॥
असुरसैन्यकृत्कोट्या ययौ योद्धुं सुरान्प्रति ।
असुरा राक्षसा दैत्या दानवास्तत्र संगताः ॥ २ ॥
आक्रोशन्तो महादर्पा निर्ययुर्युद्धवांछया ।
ताडकस्य महत्सैन्यं त्वागतं देवसन्निधौ ॥ ३ ॥
तदा देवान्नभोवाणी प्राह प्रसन्नताऽन्विता ।
स्कन्दं विजयिनं चाग्रे कृत्वा यान्तु जयो भवेत् ॥ ४ ॥
विजयार्थं तु पार्वत्या पुत्रः स प्रकटीकृतः ।
येषां स्कन्दोग्रगो युद्धे तेषां वै विजयो ध्रुवः ॥ ५ ॥
श्रुत्वा देवा जहृषुर्वै योद्धुकामाश्च निर्भयाः ।
ब्रह्मणा तत्र तावद्वै नोदितैका कुमारिका ॥ ६ ॥
मृत्योः पुत्री समायाता मृत्युसेनाऽभिधा तदा ।
वरणार्थं कुमारस्य तपः परममाश्रिता ॥ ७ ॥
शत्रूणां मारयित्री सा सुन्दरी वरमालया ।
कुमारं कार्तिकं तत्र वरयामास मार्त्यवी ॥ ८ ॥
तया युक्तस्तदा स्कन्दः सेनापतिरियाय वै ।
रणांगणे तदा घोरा रक्तोत्तेजकगोमुखाः ॥ ९ ॥
महादुन्दुभयो नेदुर्डिण्डिमान्यद्भुतानि च ।
रणकर्कशतूर्याणि मृदंगपटहाऽनकाः ॥१०॥
खरशृंगाणि शंखाश्च भेर्योऽवाद्यन्त उत्कटाः ।
ऐकपद्येन चोत्तस्थुर्योद्धुकामाः सुराऽसुराः ॥११॥
कुमारं गजमारोप्य देवेन्द्रो ह्यग्रगोऽभवत् ।
सुरसैन्येन महता लोकपालैः समावृतः ॥१२॥
यमोऽपि स्वगणैः सार्धं मरुद्भिश्च समीरणः ।
यादोभिर्वरुणस्तत्र कुबेरो गुह्यकैर्वृतः ॥१३॥
शंकरः प्रमथैः सार्धं नैर्ऋतो व्याधिभिः सह ।
अन्तर्वेद्यां स्थिताः सर्वे गाङ्गयामुनमध्यगाः ॥१४॥
पातालाच्च समायातास्तारकस्योपजीविनः ।
दैत्याश्च दानवाश्चैव राक्षसा असुराश्च ये ॥१५॥
गजा उष्ट्रा एडकाश्च हया अश्वतराः खगाः ।
स्यन्दनानि विचित्राणि विमानानि च भूरिशः ॥१६॥
पदातयो बहवश्चाऽशोभन्त सायुधास्तदा ।
खड्गतोमरनाराचैः पाशमुद्गरपट्टिशैः ॥१७॥
बाणपरिघचक्रैश्च शक्तिशूलपरश्वधैः ।
तैः सुयुक्ते तदा सैन्ये दैत्यानां च दिवौकसाम् ॥१८॥
शुशुभाते महाकालवक्रदृष्ट्या निरीक्षिते ।
युद्धारंभध्वजौ दृष्ट्वा मुमुचुः सायकाँस्तदा ॥१९॥
बाणान्ववर्षुरातीक्ष्णान् क्षुरधारान्समन्ततः ।
शिखानर्धचन्द्रांश्च त्रिधारान्पंचधारकान् ॥२०॥
बाणैराच्छादितं व्योमाऽविध्यन्त विशिखैर्भटाः ।
प्रफुल्लकिंशुका यद्वद् राजन्ते कर्तिता भटाः ॥२१॥
सैन्ये परस्परं बाणैश्छन्ने गर्जन्ति तद्भटाः ।
भूमौ च पतिताः केचित्केचिन्मुण्डा लुठन्ति वै ॥२२॥
केषांचिद्बाहवश्छिन्नाः कंधराश्च विदारिताः ।
हृदयानि विनिर्भिन्नान्यन्येषां चूर्णिता कटिः ॥२३॥
पाशैर्भल्लैरंकुशैश्च कुन्तैश्च ऋषिभिस्तथा ।
भटाश्च बहवस्तत्र भूशय्या ह्यभवन्क्षणात् ॥२४॥
सदंशौष्ठशिरांस्याच्छादयद्वै रणमण्डलम् ।
नृत्यमानकबन्धानि धावन्त्यन्यजिघृक्षया ॥२५॥
भौमश्चैवाऽऽन्तरिक्षश्च संग्रामो दारुणोऽभवत् ।
नास्ते परिचयस्तत्र शस्त्रपातनकर्मणि ॥२६॥
जल्पन्तं शत्रुमादाय चूर्णयन्ति गदादिभिः ।
नद्यः प्रवर्तिता रक्तप्रवाहिन्यः शवस्तराः ॥२७॥
रक्ते रणांगणे रक्तश्छिन्ना भिन्ना भटास्तदा ।
द्वन्द्वयुद्धं च कुर्वन्तो जयाय बहवो हताः ॥२८॥
कुजंभो वायुना सार्धं जंभः सार्धं यमेन वै ।
वरुणेन बलश्चाथ कुबेरेण सह त्रिपात् ॥२९॥
अग्निना सह संह्लादो नैर्ऋतेन महाहनुः ।
ईशेन सह मेघाभ इन्द्रेण सह तारकः ॥३०॥
यक्षाः पिशाचा उरगाः पतंगाः पितरस्तथा ।
व्याधयः सन्निपाताश्च ज्वर भूताश्च गुह्यकाः ॥३१॥
युयुधुः प्रमथा अस्त्रशस्त्रैश्च बहुभिस्तदा ।
एवं युद्धे सुतुमुले देवदानवसंकुले ॥३२॥
तारकेणैव देवेन्द्रः शक्त्या परमया हतः ।
सद्यः पपात नागाद्वै पृथिव्यां मूर्छितोऽभवत् ॥३३॥
स्वस्थो द्रागेव संभूत्वा वज्रमादाय वेगतः ।
विव्याध तारकं वक्षस्थले दैत्योऽपतद् भुवि ॥३४॥
मूर्छितश्छिन्नहृदयो भिन्नपृष्ठाऽस्थिदण्डकः ।
शुक्रेण सन्धिनीवल्लीबलेन सन्धितः पुनः ॥३५॥
उत्थितश्च जघानेन्द्रं ब्रह्मास्त्रं प्राणनाशकम् ।
विष्णुर्नारायणस्तद्वै जग्रास जिह्वया द्रुतम् ॥३६॥
इन्द्रस्ततो महारोषान्महाकालाऽस्त्रमादधे ।
विष्णुः प्राह तदा त्विन्द्रं मा मा मारय तं हरे ! ॥३७॥

तस्य हन्ता कुमारोऽयं समुद्भूतः शिवात्मजः ।
तस्माद्भवद्भिः स्थातव्यं बालेन युध्यता सह ॥३८॥
सेनानीताडकौ चोग्रौ युद्ध्यमानौ महाबलौ ।
शुशुभातेऽतिसंरब्धौ प्रहारैर्जर्जरीकृतौ ॥३९॥
महाँस्तत्र गणो वीरो वीरभद्रो रुषान्वितः ।
गणैः सुबहुभिर्युक्तस्तारकं हन्तुमुद्यतः ॥४०॥
त्रिशूलैर्ऋष्टिभिः प्रासैः खड्गैः परिघपट्टिशैः ।
जघ्नतुः समरेऽन्योन्यं सुराऽसुरविमर्दने ॥४१॥
तारको वीरभद्रेण त्रिशूलेन हतो भृशम् ।
पपात सहसा तत्र क्षणं मूर्छामवाप च ॥४२॥
उत्थाय च मुहूर्तार्द्धे शक्त्या तु तारको बली ।
शिवस्याऽनुचरं शूलं वीरभद्रं जघान ह ॥४३॥
त्रिशूलेन तु घोरेण वीरभद्रोऽपि तारकम् ।
जघान हृदये वेगात्तारकः पोथितो भुवि ॥४४॥
हरिः प्राह तदा वीरभद्रं तु तारकोऽसुरः ।
कार्तिकेयस्य वध्योऽस्ति मा कुरु त्वं परिश्रमम् ॥४५॥
न रोचतेऽस्य तद्वाक्यं तारकस्य वधं प्रति ।
वीरभद्रो रुषाविष्टो जगर्ज जलदोपमः ॥४६॥
अतारकां महीं चाऽद्य करिष्ये नाऽत्र संशयः ।
तावत्कपर्दिनोऽनेके जटाजूटविभूषिताः ॥४७॥
वृषारूढा दशहस्ताः शूराः क्रूरास्त्रिलोचनाः ।
पञ्चास्या नीलकण्ठाश्च गणा वै चन्द्रशेखराः ॥४८॥
युयुधुस्ते महादैत्यैस्तारकासुरजीविभिः ।
देवदानवदैत्यानां सन्निपातो महानभूत् ॥४९॥
अश्ववाराश्च वाजिस्थान् गजिनो गजिनस्तथा ।
जघ्नू रथस्थान् रथिनो व्योमगा व्योमगामिनः ॥५०॥
वीरभद्रस्तारकं संगृह्य वै पादयोस्तदा ।
भ्रामयित्वाऽन्तरीक्षेऽथ पोथयामास भूतले ॥५१॥
क्षयं प्रणीता बहवोऽपरे याता रसातलम् ।
पलायमाना बहवो भीताः प्रांजलयोऽपरे ॥५२॥
शरण्याश्च रणाद्भग्ना मृताः केचिद्भुवस्तले ।
निपेतुः शिखराणीव वीरभद्रादिनाशिताः ॥५३॥
एवं भ्रष्टं स्वकं सैन्यं दृष्ट्वा वै ताडकासुरः ।
भुजानामयुतं कृत्वा हन्तुं देवगणान् ययौ ॥५४॥
विष्णुः प्राह तदा स्कन्दं नाऽन्यो हन्ताऽस्ति कर्तिक ! ।
तस्मात् त्वयैव नेतव्यस्तारको यमसादनम् ॥५५॥
तारकेण पुरा वीर ! तपस्तप्तं भयावहम् ।
तपसा तेन चोग्रेण ह्यजेयत्वमवाप्तवान् ॥५६॥
जिता इन्द्रादिलोकेशास्त्रैलोक्यं च जितं तथा ।
तस्मात् त्वया निहन्तव्यः शान्तिः स्याच्च तदा परा ॥५७॥
इत्याश्रुत्य तदा स्कदः शक्तिमादाय पारगाम् ।
अथावत्तारकं तावत्तारकः शक्तिमाददे ॥५८॥
प्रोवाच दैत्यो गर्विष्ठो देवानविगणय्य तु ।
इन्द्रः पलायितोऽथापि यूयं देवा गतत्रपाः ॥५९॥
कुमारं यत्पुरस्कृत्य रणाग्रेऽत्र व्यवस्थिताः ।
मरुतो घातिता गर्भे धर्षिता गौतमप्रिया ॥६०॥
विश्वरूपो हतो विप्रो वृत्रो येन निषूदितः ।
कारयितुं कुमारस्य घातं क्व प्रगतो हरिः ॥६१॥
दक्षयज्ञे त्वनेकेषां विप्राणां नाशको ह्ययम् ।
न बालो वै वीरभद्रः सन्निधौ मम तिष्ठतु ॥६२॥
वीरं चेन्द्रं कुमारं च नयामि यमसादनम् ।
उक्त्वैवं तु तदा शक्तित्रयं जग्राह तारकः ॥६३॥
तावदिन्द्रो बहुधारं वज्रं चिक्षेप तारके ।
पतितोऽपि समुत्थाय शक्त्येन्द्रं प्राहरद् रुषा ॥६४॥
पतितं चेन्द्रमालोक्य गत्वा पदा निपीड्य च ।
वज्रं तस्याऽहरत्पश्चाद् यावदिन्द्रं जिघांसति ॥६५॥
तावत् त्रिशूलमुद्यम्य वीरभद्रेण ताडितः ।
पतितश्चासुरोभूमौ द्रागेव पुनरुत्थितः ॥६६॥
प्रजघान त्रिशूलेन वीरवक्षसि वेगतः ।
वीरभद्रस्ततः क्रुद्धस्त्रिशूलेन जिघांसति ॥६७॥
कुमारेण निषिद्धो यत् मम नाश्यो ह्ययं त्विति ।
अथो जयेत्यभिप्रोक्तो देवैराकाशसंस्थितैः ॥६८॥
जगर्ज च महातेजाः कार्तिकेयो महाबलः ।
मूर्ध्नि कण्ठे चोदरेऽपि जान्वोश्चैव कटिभ्रमौ ॥६९॥
वक्षसि पृष्ठ उरसि त्वन्योन्यं प्रविजघ्नतुः ।
न ववौ च तदा वायुर्निष्प्रभोऽभूद्दिवाकरः ॥७०॥
चचाल वसुधा सर्वा सशैलवहुकानना ।
हिमालयादयः सर्वे पर्वताश्च चकम्पिरे ॥७१॥
कुमारः प्राह पापिष्ठ देवानां दुःखदायक ।
घातयामि महाशक्त्या स्मर स्वेष्टं स्थिरो भव ॥७२॥
इति क्षिप्ता महाशक्तिस्तीक्ष्णाग्राऽष्टप्रधारिका ।
तारके वक्षसि शीर्णे पारं पृष्ठे जगाम सा ॥७३॥
तारकं विद्धमादाय पृथ्व्यामर्धा विवेश सा ।
विशीर्णस्तारकश्चायं पुनः स्कन्देन मारितः ॥७४॥
ददृशुस्तं सुरगणाः ऋषयो गुह्यकाः खगाः ।
किन्नराश्चारणाश्चापि सिद्धाश्चाप्सरसां गणाः ॥७५॥

परमेण प्रहर्षेण तुष्टुवुस्तं कुमारकम् ।
विद्याधर्यश्च ननृतुर्गायकाश्च जगुस्तथा ॥७६॥
देवा निरामया जाताः सन्तुष्टाश्च शिवादयः ।
गिरिजा हर्षमापन्ना स्वांकमारोप्य चात्मजम् ॥७७॥
परिष्वज्य शुभाशीर्भिर्युयोज जयिनं सुतम् ।
परिश्रमं क्षतं देहे स्फाटितं वा प्रफुल्लितम् ॥७८॥
पार्वती स्वकरस्पर्शान्नीरुजं त्वकरोत्क्षणात् ।
देवाः कल्याणरूपाय नमश्चक्रुस्तदा मुदा ॥७९॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने मृत्युपुत्र्या सेनया वृणीतेन कार्तिकेयेन युद्धे तारकासुरो हत इत्यभिवर्णननामा नवनवतितमोऽध्यायः ॥ ९९ ॥

**श्रीश्वेतव्यास उवाच—**

एवं सुशिख ! सन्नष्टं तारकं लोकहारकम् ।
नष्टं श्रुत्वा स्वयं लक्ष्मीर्नारायणमुवाच ह ॥ १ ॥

**श्रीलक्ष्मीरुवाच—**

नारायण महाविष्णो दैत्यः स तारकासुरः ।
क आसीच्च कथं कस्माद्वरं प्राप्तोऽत्र मे वद ॥ २ ॥

**श्रीनारायण उवाच—**

श्रृणु चैकहृदा देवि ! वज्रांगसुततारकम् ।
मानसो ब्रह्मणः पुत्रो दक्षो नाम प्रजापतिः ।
तेन कन्या दितिर्दत्ता कश्यपाय महात्मने ॥ ३ ॥
तस्या गर्भे मरुत्देवा महेन्द्रेण विकर्तिताः ।
एकोनपञ्चाशज्जाता देवास्ते मरुतो मताः ।
किन्तु दितिस्तुराषाहो विनाशाय तपोऽकरोत् ॥ ४ ॥
दशवर्षसहस्राणि, तेन वज्रांगदः सुतः ।
समुत्पन्नो जन्मतः स वज्रसारमयांऽगकः ॥ ५ ॥
जातमात्रो महायोद्धा शस्त्रशास्त्रप्रपारगः ।
उवाच मातरं भक्त्या मातः किं करवाण्यहम् ॥ ६ ॥
माता प्राह सुरेन्द्रेण सुता मे बहवो हताः ।
तेषामपचितिं चिकीर्षामि शक्रवधादहम् ॥ ७ ॥
बाढमित्येवमुक्त्वा स जगाम त्रिदिवं तदा ।
पादेनाऽऽकृष्य चैवेन्द्रं मातुरन्तिकमानयत् ॥ ८ ॥

ब्रह्मा तावत्कश्यपश्च प्रोचतुर्मुञ्च वज्रिणम् ।
अवमानं मृत्युरस्य त्वया मातुर्वचः कृतम् ॥ ९ ॥
तथा पितुर्वचः कार्यं मुञ्चाऽमुं तु सुरेश्वरम् ।
नत्वा स पित्रोश्चरणे तं मुमोच शतक्रतुम् ॥१०॥
वज्रांगदस्ततो यातो वने कर्तुं तपो महत् ।
ब्रह्मणा च तदानीं तु वरांगी कन्यकाऽर्पिता ॥११॥
तां पत्नीं तु समादाय वज्रांगो ह्यगमद्वनम् ।
ऊर्ध्वबाहुः स दैत्येन्द्रोऽतिष्ठदब्दसहस्रकम् ॥१२॥
तावन्नधोमुखः कालं तावत्पंचाग्निसाधकः ।
ततः सोऽन्तर्जले चक्रे तपो वर्षसहस्रकम् ॥१३॥
तत्पत्नी सरस्वतीरे तपस्तेपे पतिव्रता ।
इन्द्रो विभीषणाश्चक्रे भूत्वा वै मर्कटः स्वयम् ॥१४॥
जलकुंभं बभंजाऽस्या मेषरूपो भयं ददौ ।
सर्परूपस्ततो भूत्वा बबन्ध चरणावुभौ ॥१५॥
गोमायूश्च ततो भूत्वा रौति सन्निधिमागतः ।
अग्निरूपस्ततो भूत्वा तस्या ददाह वस्त्रकम् ॥१६॥
वायुर्भूत्वा चकर्षैनां सिंहो भूत्वा ह्यभीषयत् ।
तावद्वर्षसहस्रं तु व्यतीतं च पितामहः ॥१७॥
आययावथ वज्रांगो धर्मवृत्तिं ततोऽवृणोत् ।
एवमस्त्विति दत्वा तद्वरं ब्रह्मा तिरोदधे ॥१८॥
शोकार्तां स्वां स्त्रियं राजा वज्रांगोऽपश्यदाह च ।
किं ते कार्यं ददामीह मा शोकं कुरु भामिनि ॥१९॥
पत्नी प्राह कृपा चेन्मे पुत्रं दुःखस्य तारकम् ।
देहि, चेन्द्रः सदा मां तु त्रासं ददाति चेत्यतः ॥२०॥
वज्रांगस्तु विरक्तोऽपि ह्यनुकम्प्या प्रियेति यत् ।
मत्वा तथेति जायायै पुनस्तपश्चकार ह ॥२१॥
यावदब्दसहस्रं वै निराहारं तपोऽकरोत् ।
ब्रह्मा प्राह पुनस्तस्मै कथं विधीयते तपः ॥२२॥
प्राह दैत्यो देहि पुत्रं गीर्वाणदर्पनाशकम् ।
ब्रह्मोवाच तव पत्न्यां पुत्रो वै दुःखतारकः ॥२३॥
देवसीमन्तिनीनां यो धम्मिलकविमोक्षकः ।
भविष्यतीति तत्स्थानात् दंपती तौ प्रजग्मतुः ॥२४॥
स्वाश्रमं चाथ सा गर्भं दितिर्दधार तारकम् ।
पूर्णं वर्षसहस्रं तु दधारोदर एव वै ॥२५॥
ततो जाते सुपुत्रे तु प्रचचाल वसुन्धराः ।
चेलुर्धराधराः सर्वे ववुर्वाताः प्रभीषणाः ॥२६॥
सूर्याद्याश्च जहुः कान्तिं नीहाराच्छादिता दिशाः ।
विषण्णमनसो देवा दानवास्तु महोत्सवाः ॥२७॥

जातमात्रस्तु दैत्येन्द्रो ह्यभिषिक्तोऽसुरादिभिः ।
महाराज्येऽथ सर्वान्स प्राह सुरजिगीषया ॥२८॥
सुरास्तु शत्रवोऽस्माकं जय्यास्ते तपसो बलात् ।
तपः कर्तुं तु गच्छामि पारियात्रगिरेर्दरीम् ॥२९॥
तत्र गतः शिवं ध्यात्वा शिवमन्त्रं जजाप सः ।
निराहारः पञ्चतपास्तथावर्षाऽयुतं गतम् ॥३०॥
ततः स्वदेहादुत्कृत्य कर्षं कर्षं दिने दिने ।
मांसस्याऽग्नौ जुहावैव ततो निर्मांसतां गतः ॥३१॥
देहश्चाग्निमयो जातस्तेन भूतानि जज्वलुः ।
ब्रह्मा तस्मै वरं दातुं सुप्रसन्नो जगाम ह ॥३२॥
ब्रह्मोवाचोत्तिष्ठ पुत्र ! वरं वृणीष्व चेप्सितम् ।
तारकः प्राञ्जलिर्भूत्वा वरं वव्रे तदेप्सितम् ॥३३॥
जातिवैरेण देवास्तु सर्वदा त्रासयन्ति नः ।
अतो दैत्यसमुद्धर्ता भवेयमिति मे मतिः ॥३४॥
अवध्य सर्वभूतानामस्त्राणां च महौजसाम् ।
स्यामहं चाऽमरश्चैष वरो देयो मदीप्सितः ॥३५॥
ब्रह्मा प्राह च तं मृत्युमृते देही न जायते ।
जातस्य हि ध्रुवो मृत्युस्तस्मादन्यद् वृणु प्रियम् ॥३६॥
मोहितोऽपि स दैत्येन्द्रः शिशोरासप्तवासरात् ।
वव्रे मृत्युं तथेत्याह ब्रह्मा शंकरवाक्यतः ॥३७॥
दैत्यो जगाम राज्ये स्वे महार्णवतटोत्तरे ।
सर्वसमृद्धिपरिष्वक्तो मोदते स सभाजितः ॥३८॥
सर्वाऽस्त्रज्ञश्च शस्त्रज्ञो युद्धरीतिविशारदः ।
सर्वान्दैत्यान्दानवाँश्चाऽसुरान्नीत्वा स्वरायyौ ॥३९॥
दिक्पालान् लोकपालाँश्च जित्वा देवान्ग्रहाँस्तथा ।
त्रिलोक्याश्च स्वयं राज्यं चक्रे देवान् व्यवासयत् ॥४०॥
स्वयमिन्द्रो निमिर्वह्निः कालनेमिर्यमोऽपि च ।
जम्भश्च निर्ऋतिस्थाने महिषो वरुणस्तथा ॥४१॥
मेषो वाताऽधिकारश्च कुजंभो धनदोऽभवत् ।
अन्येषां चाधिकाराँश्च दैत्येभ्यस्तारको ददौ ॥४२॥
एवं विप्रकृता देवा महेन्द्रसहितास्तदा ।
ययुः स्वायंभुवं धाम तुष्टुवुः परमेष्ठिनम् ॥४३॥
नमो जगत्प्रसूत्यै ते हेतवे पालकाय च ।
संहर्त्रे च नमस्तुभ्यं तारकाद् रक्षणं कुरु ॥४४॥
ब्रह्मा प्राह तदा सर्वान् जाने युष्मान् विवासितान् ।
तस्य हन्ता च नाद्यापि स जातो भुवने पुमान् ॥४५॥
स च वव्रे वधं दैत्यः शिशुतः सप्तवासरात् ।
स वै सप्तदिनो बालः स्कन्दाख्यः शंकरोद्भवः ॥४६॥
कालरात्रिर्मम तनुः दक्षपुत्री सती च या ।
तनुं त्यक्त्वा पुनः सा च पार्वती संभविष्यति ॥४७॥
विवाहः शंभुना तस्या भविष्यति यदा तदा ।
स्कन्दाख्यः खलु पुत्रो यो भविष्यति महाबलः ॥४८॥
सप्तदिनो हनिष्यति सेनानीस्तारकासुरम् ।
प्राप्ते तु समये सर्वं भविष्यति हरीच्छया ॥४९॥
इत्यनेनागते काले सेनान्या च रणांगणे ।
हतो वै तारको दैत्यः शान्तिमापुस्तदा सुराः ॥५०॥
अथ सेनान्यनुजस्य गणेशस्य च तां कथाम् ।
शृणु वच्मि ततो लक्ष्मि ! श्रीकृष्णस्मारिकां शुभाम् ॥५१॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने तारकासुरस्य ब्रह्मणो वरदानजन्मादिकथननामा शततमोऽध्यायः ॥१००॥

**श्रीनारायण उवाच—**

ततो वसन्तसमये शंकरो लोकशंकरः ।
कोकिलाकूजितं श्रुत्वा घ्रात्वा सौगन्धिकं द्रवम् ॥ १ ॥
दृष्ट्वा श्रांगारिकैः पुष्टं यौवनं रतिसंभृतम् ।
पत्नीं स्वांके निधायेशो रमते स्म चिरं चिरम् ॥ २ ॥
शतवर्षसमः कालो ययौ रतिक्रियापरः ।
विष्णुर्वरं प्रदत्तं प्राक् स्मृत्वा तत्रागमत्स्वयम् ॥ ३ ॥
पार्वत्या चाग्रपूज्यो वै वृतः पुत्रो मदात्मकः ।
अयोनिजः स एवाहं भवेयं मिषतः स्वयम् ॥ ४ ॥
इति विचिन्त्य कृष्णः स विप्रो बभूव तत्क्षणम् ।
रेतःपातनकाले च स विष्णुर्निजमायया ॥ ५ ॥
विधाय विप्ररूपं तदाजगाम रतिगृहम् ।
जटावन्तं विना तैलं कुचैलं भिक्षुकं तथा ॥ ६ ॥
अतीव शुक्लदशनं तृष्णाव्याप्तहृदन्तरम् ।
अतीव कृशगात्रं च बिभ्रत्तिलकमुज्ज्वलम् ॥ ७ ॥
बहुघर्घस्वरं दीनं दैन्यात् कुत्सितमूर्तिकम् ।
करदण्डावलम्बं च वार्धक्यादतिदुर्बलम् ॥ ८ ॥
एतादृशेन रूपेण रतिकालेऽन्नयाचकः ।
भूत्वा स्थितो वदन् स्वस्ति यजमानस्य चास्त्विति ॥ ९ ॥
पुनराह महादेव किं करोषि शरण्यद ! ।
पश्य वृद्धं जराग्रस्तं क्षुत्तृषाद्यतिपीडितम् ॥१०॥
सप्तरात्रिव्रतेऽतीते पारणाऽऽकांक्षितं च माम् ।
विप्रं संभोजयित्वाऽत्र रक्ष मां शरणागतम् ॥११॥

मांतरुत्तिष्ठ मेऽन्नं त्वं प्रयच्छाऽद्य शिवं जलम्।
अनन्तरत्नयुक्पुत्रि! रक्ष मां शरणागतम् ॥१२॥
मातर्मातर्जगन्मातरेहि देहि सुभोजनम्।
सीदामि क्षुत्तृड्भ्यां कस्मात् स्थितायामात्ममातरि ॥१३॥
इति दीनं स्वरं श्रुत्वा शिवस्योत्तिष्ठतो द्रुतम्।
पपात वीर्यं शय्यायां योनिमुखाद् बहिर्गतम् ॥१४॥
पार्वती तत्र शय्यायां नाऽवैत् पतितवीर्यकम्।
स्वपित्येव मुहुः पार्श्वे परावर्तयतिं स्म सा ॥१५॥
धातुः सर्वोपि पार्वत्याः पृष्ठे पार्श्वे तनौ तदा।
लग्नः शुष्कोऽभवद्दिव्यो राजतो वर्णतः खलु ॥१६॥
न जानति शरीरे मे किं लग्नं वै परिश्रमात्।
स्वाप्ननिद्राभिभूता सा स्वपित्येव परिश्रमात् ॥१७॥
शंकरस्तु बहिर्द्वारमाजगाम ददर्श तम्।
याचन्तं ब्राह्मणं दीनं जरया परिपीडितम् ॥१८॥
वृद्धं जर्जरमात्रं च बिभ्रतं दण्डमानतम्।
तपस्विनमशान्तं च कुर्वन्तं नमनं मुहुः ॥१९॥
शंकरः प्राह विप्रर्षे किमिच्छसि कुतो भवान्।
आगतोऽस्ति स्वागतं ते मम भाग्यादुपस्थितः ॥२०॥
अद्य मे सफलं जन्म ब्राह्मणो मद्गृहेऽतिथिः।
अतिथिः श्रीहरेः रूपं पूजितः पूजितं जगत् ॥२१॥
देवास्तिष्ठन्त्यतिथिषु ब्राह्मणाः पुण्यदाः सदा।
अतिथेः पादपात्रेषु वसन्ति तीर्थजातयः ॥२२॥
अतिथेः पादसलिलात् पुरुषार्थचतुष्टयम्।
प्राप्यते गृहसंस्थानैर्लभ्यन्ते स्मृद्धयोऽक्षयाः ॥२३॥
स्नातानि सर्वतीर्थानि यज्ञा निर्वर्तितास्तथा।
महादानानि दत्तानि येनाऽतिथिः सुसत्कृतः ॥२४॥
वेदशास्त्रादिवर्ण्यानि सत्कर्माणि च यानि वै।
तानि चातिथिसेवायाः कलां नार्हन्ति षोडशीम् ॥२५॥
असत्कृतोऽतिथिर्यस्य गृहाद्वै विनिवर्तते।
पापानि गृहिणे दत्वा पुण्यमादाय गच्छति ॥२६॥
अतिथेरसमर्हायां वियन्ति पितृदेवताः।
साधोः साध्व्या असत्कारे गृही देवैरसत्कृतः ॥२७॥
सर्वसम्पद्विहीनः स्यात्पापं भुंक्ते दरीभरम्।
विप्रः प्राह शुभं भूयाद् ब्रह्मँस्तेऽतिथिभावतः ॥२८॥
जानासि चेदतिथिर्मे वेदोक्तं कुरु पूजनम्।
मनोमतं च दातव्यं निराहाराय चार्तिणे ॥२९॥
नानाविधं तु मिष्टान्नं दीयतां मे सुतृप्तिकृत्।
तृप्तश्चाऽहं भवत्पुत्रो भविष्यामि न संशयः ॥३०॥
सर्वाग्र्याऽर्च्यो भविष्यामि भविष्यति भवान् पिता।
ताताः पञ्चविधाः प्रोक्ता मातरस्त्वष्टधा मताः ॥३१॥
पुत्राः पञ्चविधाः साधो तन्मध्येऽहं भवामि वै।
विद्यादाताऽन्नदाता च भयत्राता च जन्मदः ॥३२॥
कन्यादाता ब्रह्मणोक्ता नराणां पितरः स्मृताः।
गुरोः पत्नी गर्भधात्री स्तन्यदात्री पितुः स्वसा ॥३३॥
स्वसा मातुः सपत्नी च पुत्रभार्याऽन्नदायिका।
एता अष्टविधा माता पूजनीया सुपुत्रकैः ॥३४॥
भृत्यः शिष्यश्च पोष्यश्च वीर्यजः शरणागतः।
पञ्च पुत्राः सदा बोध्या वीर्यजोऽत्र विशेषकः ॥३५॥
क्षुत्तृड्भ्यां सुपरीतांगं पुत्रं मां शरणागतम्।
पिष्टकं परमान्नं च सुपक्वानि फलानि च ॥३६॥
इक्षुरसं शर्करां च क्षीरं शाल्यन्नमित्यपि।
लड्डूकाँश्चूर्णगोधूमान् व्यञ्जनानि तिलानि च ॥३७॥
प्रेयांसि पेयखाद्यानि पिच्छलं मधुरं दधि।
मम प्रियाणि वस्तूनि सुधया तुल्यकानि च ॥३८॥
ताम्बूलं च वरमेलापूगीकर्पूरमिश्रितम्।
रसमिष्टसुगन्धाढ्यं द्रव्याण्येतानि दापय ॥३९॥
स्वामी त्वं त्रिजगत्कर्ता प्रदाता सर्वसम्पदाम्।
महालक्ष्मीस्वरूपा ते पत्नी चैश्वर्यदायिनी ॥४०॥
रत्नसिंहासनं रम्यममूल्यं रत्नभूषणम्।
वह्निशुद्धांशुकं चारु प्रदास्यसि सुदुर्लभम् ॥४१॥
सुदुर्लभं हरेर्मन्त्रं हरौ भक्तिं सुदुर्लभाम्।
सर्वसिद्धिप्रदं नाम किमदेयं सुताय ते ॥४२॥
इच्छया कुरुते कर्म ततो भोगो भवत्यपि।
सुखदुःखे सदा लग्ने देहिनांविरमेदतः ॥४३॥
कर्म निर्मूलयन्त्येव सन्तो हि सततं मुदा।
हरिस्मरणशीलानां नाऽयुर्याति सतां वृथा ॥४४॥
न तेषामीश्वरः कालो नान्ये वा तन्नियामकाः।
चिरं जीवन्ति ते भक्ताः स्वच्छन्दं सर्वगामिनः ॥४५॥
जातिस्मरा हरेर्भक्ता जानन्ति जन्मनां शतम्।
कथयन्ति कथां जन्म लभन्ते स्वेच्छया च ते ॥४६॥
परं पुनन्ति ते पूतास्तीर्थानि स्वीयलीलया।
पुण्यक्षेत्रेऽत्र सेवार्थं परार्थं च भ्रमन्ति ते ॥४७॥
वैष्णवानां पदस्पर्शात् सद्यः पूता वसुन्धरा।
गुरोरास्याद् विष्णुमन्त्रो यस्य कर्णे विशत्यपि ॥४८॥
तं वैष्णवं तीर्थपूतं कथयत्येव माधवः।
पुरुषाणां शतं पूर्वमुद्धरन्ति शतं परम् ॥४९॥

लीलया परया भक्त्या सोदरान् पितरं तथा ।
मातामहानां पुरुषान्दश पूर्वान्दशाऽपरान् ॥५०॥
मातुः प्रसूमुद्धरन्ति दारुणात् यमताडनात् ।
भक्तदर्शनमाश्लेषं मानवाः प्राप्नुवन्ति ये ॥५१॥
ते याताः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षिताः ।
न लिप्ताः पातकैर्भक्ताः सन्ततं हरिमानसाः ॥५२॥
त्रिकोटिजन्मनामन्ते प्राप्नोति जन्म मानवम् ।
प्राप्नोति भक्तसंगं स मानुषे कोटिजन्मतः ॥५३॥
भक्तसंगाद् भवेद् भक्तेरंकुरो जीवितो हर ! ।
अंकुरश्चाविनाशी च वर्धते प्रतिजन्मनि ॥५४॥
तत्तरोर्वर्धमानस्य हरेर्दास्यं भवेत् फलम् ।
परिणामे भक्तिपाके पार्षदश्च भवेद्धरेः ॥५५॥
तस्माद्भक्तिं हरौ देहि यथा ते श्रीहरौ सदा ।
गणेशरूपः श्रीकृष्णः कल्पे कल्पे तवाऽऽत्मजः ॥५६॥
भविष्यति शुभं तेऽस्तु देहि भिक्षां मम प्रियाम् ।
आगतोस्मिनिवासाय यदि तेऽपि मतं भवेत् ॥५७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पार्वत्याः सहवासे शंकरमाह्वयन् श्रीकृष्णो ब्राह्मणरूपेण भिक्षार्थमागतस्तयोः सद्भक्तमाहात्म्यसंवादश्चेति निरूपण-नामा एकाधिकशततमोऽध्यायः ॥१०१॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! ततो यद्वै सम्पन्नं कथयाम्यहम् ।
इत्यभ्यर्थ्य स्वपितरं शंकरं लोकशंकरम् ॥ १ ॥
तूष्णीमास यदा विप्रः शंभुराश्वास्य तं द्विजम् ।
गृहान्तरे गतः शंभुः पार्वतीं निद्रितां प्रियाम् ॥ २ ॥
शीघ्रं प्रबोधयामास भिक्षार्थं च द्विजातये ।
सर्वं निवेदयामास यद्यदिच्छति वाडवः ॥ ३ ॥
पार्वती करपादादि शोधयित्वा जलेन च ।
विप्रेप्सितानि वस्तून्याहारयामास चांगणे ॥ ४ ॥
संकल्पेन तु सिद्धानि यान्यप्यन्यानि वाञ्छति ।
तत्सर्वं तत्र वृद्धाय ब्राह्मणाय समार्पयत् ॥ ५ ॥
न वै न्यूनमभूत् किंचित् तुतोषाति स वाडवः ।
वस्तून्यादाय विप्रः सः श्रीकृष्णः परमेश्वरः ॥ ६ ॥
पुत्रो भवितुमिच्छन् वै तत्रैवाऽदृश्यतां गतः ।
पार्वत्यास्तु शरीरे यो धातुर्लग्नोऽस्ति शांकरः ॥ ७ ॥
तत्र धातौ प्रविष्टोऽयं श्रीकृष्णः पुरुषोत्तमः ।
पार्वत्यपि तदा स्वांगेष्वभिलग्नं सचेतनम् ॥ ८ ॥
धातुं दृष्ट्वा शारीरं तन् मलं धूल्यादिसंभवम् ।
मत्वा शुद्धिं तदा नैव चकार परमेश्वरी ॥ ९ ॥
शरीरं बहुधूल्यादिमलाढ्यं प्रविलोक्य च ।
स्नानं विशालं सोद्वर्तं करिष्येऽद्य दिने शनैः ॥१०॥
निर्मलं वै शरीरं च नद्यामेव भविष्यति ।
एवं विचारं दधती स्थिता प्रातः शुभासने ॥११॥
स्नानयोग्यविचित्राणि गन्धद्रव्याण्यकारयत् ।
दासीभिर्गृहकार्याणि मंगलादीन्यकारयेत् ॥१२॥
अथ शंभुः स्वयं देवनद्यां स्नानाय निर्गतः ।
गणैः सह स वै यातोऽन्ये गणास्तमनुद्रुताः ॥१३॥
कैलासे पार्वतीक्षेत्रे गोपुरे नास्ति रक्षकः ।
सर्वे गणास्तदा याता ज्ञात्वा स्नानोत्सवं परम् ॥१४॥
शंभुमर्ध्यैश्चन्दनैश्च तैलैः सुगन्धिभिस्तथा ।
सौरभैस्तिलपिष्टैश्च कैसरैः कर्पुरैस्तथा ॥१५॥
उपमृद्य महादेवं स्नापयन्ति स्म धारया ।
गणानामपि सर्वेषां विहारस्नानतारणैः ॥१६॥
जलकेल्यादिभिस्तत्र सुमहानुत्सवोऽभवत् ।
स्नानान्ते तु गणैः शंभोः संस्कृता तु शिरोजटा ॥१७॥
भस्मपुष्पसुगन्ध्यादिद्रवैः संप्रोक्षिताऽभवत् ।
ललाटे बालचन्द्रस्य रेखया सह चन्दनम् ॥१८॥
लेखया कृतरेखं तु चर्चितं पुण्ड्रकं यथा ।
कर्णपूरौ च रुद्राक्षैः कृतौ कण्ठे च वासुकिः ॥१९॥
हारो रुद्राक्षसम्पन्नो मुण्डमालाऽपि पौरटी ।
कर्णयोर्धत्तूरपुष्पे रुद्राक्षद्वयबुट्टिके ॥२०॥
भुजयोः सर्पराजौ च प्रकोष्ठे भुजगद्वयम् ।
कौश्यस्तु मुद्रिका रत्नश्रृंखलेंऽगुलिहस्तयोः ॥२१॥
यज्ञोपवीतं शुभगं हस्तिचर्मसुकंचुकम् ।
सिंहचर्मकृतधौत्रं कट्यां च मुञ्जमेखला ॥२२॥
त्रिशूलं हस्तसन्न्यस्तं कौपीनं मृगचर्मणः ।
सत्काष्ठपादुके रम्ये शरीरे भस्म संधृतम् ॥२३॥
अथ नेत्रे ध्यानयुक्ते परावृत्याऽर्धमेलिते ।
व्याघ्रचर्मणा प्रातर्वै सन्ध्यार्थं संस्थितो हरः ॥२४॥
अपां कमण्डलुः पार्श्वे पञ्चपात्राणि चाग्रतः ।
कुशपुष्पाऽक्षतधूपदीपचन्दनकुंकुमम् ॥२५॥
न्यस्तं गणैः स्वयं देवो ध्यानमग्नो बभूव ह ।
समाधिं स्वात्मनि प्राप्तो निस्पृहः सर्वथा सदा ॥२६॥

यदा तिष्ठति ध्याने वा समाधौ शंकरस्तदा ।
नास्ति कालस्य नियमो निस्पृहस्य तृणं जगत् ॥२७॥
समाधौ संस्थितो देवो गणास्तत्र वितस्ततः ।
नृत्यन्ति च प्रगायन्ति रमन्ते च वनादिषु ॥२८॥
वृक्षेष्वारोहाऽवरोहौ कुर्वन्ति च स्वपन्ति च ।
फलमूलान्याहरन्ति गृह्णन्ति मादकानि च ॥२९॥
पुष्पपत्राणि चिन्वन्ति नयन्ति हरसन्निधौ ।
निवेद्य ध्यानमग्नाय शंभवेऽथ च ते गणाः ॥३०॥
फलकन्दादि खादन्ति रसानास्वादयन्ति च ।
एवमुत्सवकर्तॄणां संगवस्तत्र वै गतः ॥३१॥
गणाः शंभुं विहायैव न चायान्ति हरगृहम् ।
प्रतीक्षते पार्वती तु नाऽऽयादेकोऽपि सेवकः ॥३२॥
ततः स्नातुं समीहाना तैलसौरभवारिभिः ।
सुगन्धितद्रवैर्देवी सकेशं स्नानमिच्छति ॥३३॥
द्वारे कश्चिन्मया स्थाप्यो द्वारपालो निरोधकः ।
स्नाने कश्चिन्न चाऽऽगच्छेद् रहसीति विचार्य वै ॥३४॥
स्वस्या धूल्यादिकं लग्नं शंभुधातुमयं मलम् ।
स्वेदमिश्रं द्रवं मत्वा विश्लिष्य कृतपेशिकम् ॥३५॥
पुत्तलं सुन्दरं तस्य सर्वावयवशोभितम् ।
सत्यः पुत्रो यथा वा स्यात् तादृशं विरच्य्य च ॥३६॥
यावत्करेण देहं तं स्निग्धचिक्कणताप्तये ।
परिमार्जयते मोहात्तावत् तावत्तु तत् स्वयम् ॥३७॥
चैतन्ये सद्रूपे भावे विवृतिं प्राप्य शोभते ।
शिरः करतलेनैव यावन्मार्जयते शिवा ॥३८॥
तावत्तु मस्तकं तस्य सकेशं सूज्ज्वलं ह्यभूत् ।
ललाटे मुखनेत्रादौ यावद्धस्तौ सुयोजितौ ॥३९॥
तावन्नेत्रे सुरूपे सुग्राहकेऽभवतां तदा ।
कपोलौ प्रोल्लसद्गोलौ ललाटं चारुचन्द्रकम् ॥४०॥
ओष्ठौ रक्तौ मुखं मन्दहास्यकृत् कलिदन्तवत् ।
सुनासं च सुरूपं च निर्वृत्तं तत्क्षणाच्छुभम् ॥४१॥
तावत्तु पार्वती देवी सहास्या स्वसखीस्तदा ।
आह्वयते प्रपश्यन्तु बालोऽयं निर्मितो मया ॥४२॥
हसन् बालोऽपि मन्दं स्वनेत्रे तूद्घाट्य पश्यति ।
मातरं तत्सखीश्चेति सर्वानन्दकरोऽभवत् ॥४३॥
ततो मात्रा कृतं स्वस्ति पुत्रस्य करयोस्तथा ।
पृष्ठे वक्षसि कट्यां च सक्थ्नोस्तथैव जानुनोः ॥४४॥
जंघयोः पादयोश्चांगुलिषु प्रोक्ष्यद्रवैः शुभैः ।
स्वहस्तौ भ्रामितौ तस्यांगानि प्रमार्जितानि च ॥४५॥
यत्र यत्र प्रदेशे च स्पृष्टे हस्ततले शुभे ।
पार्वत्यास्तत्र तत्रायं बालो भवति चेतनः ॥४६॥
सुरूपः सुष्ठ्ववयवः पुष्टश्च मातृजो यथा ।
क्रीडया पुत्तलं सृष्टं पुत्रो जातः स चेतनः ॥४७॥
इत्याश्चर्यं महत्प्राप्य पूजनं प्राणरक्षणम् ।
सर्वावयवपूर्णत्वं कृतं देव्या विशेषतः ॥४८॥
संस्मृत्य पार्वती कृष्णप्रदत्तं वरदानकम् ।
अयोनिजोऽग्रपूज्यस्ते पुत्रश्चान्यो भवेदिति ॥४९॥
तदिदं वरदानं वै कृष्णरूपं सुपुत्रकम् ।
मत्वा निश्चयतस्तस्य महापूजनमाचरत् ॥५०॥
सुगन्धैः स्नापितो द्रव्यैरर्चितो भोजितस्तथा ।
श्रृंगारवस्तुभिः सम्यक् शोभितो बोधितस्तया ॥५१॥
मम पुत्रेति चाहूय चुम्बनं सा व्यधान्मुहुः ।
स्तन्यपानं निधायांऽकेऽकारयत्प्राह पार्वती ॥५२॥
मम रक्षाकरः पुत्रः कृष्णोऽयं भगवान् स्वयम् ।
प्रादुर्भूतो मम कल्पवादपः फलितोऽधुना ॥५३॥
अहो सख्यः कुमारं मे वर्धयन्तु शुभाशिषा ।
सख्य आयान्तु पुत्रं मे बलं ददतु रक्षकम् ॥५४॥
अहो आल्यः कुमारं मे शिरस्त्राणं सुकंचुकम् ।
यज्ञोपवीतकं रम्यं हारं कांचनजं तथा ॥५५॥
रत्नहीरकभूषाश्च धारयन्तु यथास्थलम् ।
धौत्रं पीताम्बरं कटिसूत्रं च कटिबन्धनम् ॥५६॥
समर्पयन्तु तद्योग्यं ददत्वन्यदपेक्षितम् ।
कुर्वन्तु जयतिलकं चन्द्रकं साक्षतं तथा ॥५७॥
एवं श्रृंगारितश्चापि वर्धितश्च सखीजनैः ।
सत्या च बोधितो मे त्वं रक्षको भव गोपुरे ॥५८॥
दत्तान्यस्मै महद्धार्ये त्रिशूलं चर्म खड्गकम् ।
शक्तिः पाशः कुठारश्च रक्षाया मालिकेति च ॥५९॥
एवं सुसज्ज्य पुत्रं तं शंभोरन्यूनसद्बलम् ।
स्वस्नानोद्यानमार्गस्य गोपुरेऽस्थापयत् सती ॥६०॥
तयाऽऽज्ञप्तो वयं स्नामो देवनद्या ह्रदे शुभे ।
उद्याने संस्थिते तत्र जलागाधे रमामहे ॥६१॥
मम पुत्रो गणेशस्त्वं मा प्रवेशय कंचन ।
यावद्वयं निवृत्ताः स्म स्नानादत्र गृहांगणे ॥६२॥
तावत्कश्चिज्जनो नायाद् गोपुरान्तरमित्ययम् ।
आदेशो मे त्वया रक्ष्यो मा पुमान् विशतु स्थलीम् ॥६३॥
यदि प्रसह्य चागच्छेद् बलात्तं विनिवार्य वै ।
रक्षणं तव मातुस्तु पार्वत्या मे करोत्विति ॥६४॥

यावत्स्नानानि जायन्ते तावन्न प्रविशेन्नर।
एवमुक्त्वा दृढयित्वाऽर्पयित्वा चाऽऽयुधानि सा ॥६५॥
मन्त्राण्यपि तदा दत्वाऽतिष्ठिपद्गणनायकम्।
सोऽयं गोपुरमवति यथादेशमतन्द्रितः ॥६६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने कृष्णात्मकविप्रस्य भिक्षाप्राप्त्युत्तरमदृश्यता, पार्वत्याः शारीरधातुमलाद् गणेशोत्पत्तिः सप्राणगणेशस्य पार्वत्याः स्नानकाले गोपुररक्षार्थे नियुक्तिश्चेत्यादिवर्णननामा द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

**श्रीनारायण उवाच—**

शृणु प्रिये सहाऽऽलीभिः पार्वती हरसुन्दरी।
देव्यः सर्वाश्च दास्यश्च मिलित्वा यमुनदीं सह ॥ १ ॥
गताः स्नानार्थमित्यत्र निःशंकं स्नान्ति वारिषु।
सुगन्धिसारतैलानि सम्मृद्याऽत्यमृतानि च ॥ २ ॥
दधीनि मधुमिश्चापि रस्यान्यपि कटूनि च।
सख्यः स्नानं कारयन्ति पार्वतीं जगतः प्रसूम् ॥ ३ ॥
रमयन्ति जले तां वै प्रांजलिक्षेपणादिभिः।
सुगन्धि सलिलं जातं सुगन्धद्रवमिश्रितम् ॥ ४ ॥
स्नाने सखीविहारेऽत्र तृप्तिर्नासां प्रजायते।
स्नान्ति चैव पुनः स्नान्ति पतन्ति सलिले मुहुः ॥ ५ ॥
विनिर्गत्य पुनः स्नान्ति स्नानान्तं नैव यान्ति हि।
संगवो विगतः कालः शंभुर्ध्यानाद् बहिस्तदा ॥ ६ ॥
आगतः स्वासनं त्यक्त्वा चैकाकी स्वाश्रमं गतः।
गणांश्चान्ये न जानन्ति स्नानलग्नास्तदाऽभवन् ॥ ७ ॥
शंभुः स्वाभाविको ध्यानी शनैः शनैः प्रयाति हि।
स्वाश्रमस्य महद्द्वारं यावत् प्रविशतीश्वरः ॥ ८ ॥
तावत्पार्वत्यात्मजेन निरुद्धो याहि मा त्विति।
कस्त्वं कस्मात्समायातः कस्माद्विशसि गोपुरम् ॥ ९ ॥
तिष्ठ विवृत्य तं मार्गं याहि येनाऽऽगतोऽत्र वै।
नाऽत्र स्थातुं प्रदेयो वै मया कोऽपि जनो नरः ॥१०॥
आज्ञा नास्त्येव मे मातुस्तस्माद्विगच्छ गोपुरात्।
तथापि शंकरस्तस्य नैव श्रुत्वा प्रयाति हि ॥११॥
तावत् क्रोधसमाविष्टो गणेशो मातृसेवकः।
प्रोद्घुष्य च समुत्प्लुत्य प्रदुद्राव हरं प्रति ॥१२॥
गत्वा तन्मार्गमारुध्य मा गच्छोक्त्वा ह्युपस्थितः।
परागच्छ परागच्छ कोऽसि क्व गच्छसि द्रुतम् ॥१३॥
अत्रोद्याने प्रवेशाय मन्मात्राज्ञा न वर्तते!
स्नानं कुर्वन्ति सख्यश्च मन्मात्रा सह वारिभिः ॥१४॥
मा याहि नैव गन्तव्यं विगच्छेतो बहिः पिबन्!।
शंभुः प्राह तमज्ञात्वा कोऽसि रोद्धा मम गृहम् ॥१५॥
ममोद्यानं तु गच्छामि कस्त्वं रोद्धा ममापि च।
गच्छ याहि त्वितः स्थानात् कया त्वं योजितोऽत्र वै ॥१६॥
बहिर्गच्छ मम द्वाराद्गोपुरान्मम रक्षितात्।
इत्याक्रुश्य हरेण स्वमविज्ञाय तु बालकम् ॥१७॥
हस्ते धृत्वा गोपुरात् स बहिर्निष्कासितो बलात्।
तावद्गणेशस्तद्धस्ताद्धस्तं स्वं प्रवियुज्य च ॥१८॥
शंभुं हस्तद्वये धृत्वा चाकृष्य नीतवान् बहिः।
प्राह शंभुं याहि दूरं मा मुखं मे प्रदर्शय ॥१९॥
शंभुनाऽपि तदा ज्ञातं मत्तोऽपि बलवानयम्।
न वै शारीरयुद्धेन जेतुं शक्यो भवेदयम् ॥२०॥
अहो मदीयः कैलासो गृहोद्यानश्च रक्षसा।
स्वायत्तीकृत एवैत्य केनाऽपि ध्रुवमर्थतः ॥२१॥
क्व स्याद् देवी मम पत्नी किमभूद् विपरीतकम्।
किं कर्तव्यं मया चात्र ह्ययं तु बलवानिति ॥२२॥
यदि गत्वा गणान् वक्ष्ये तदा मे बलहीनता।
हास्यास्पदत्वमाप्नुयां युद्धे चापि पराजयम् ॥२३॥
स्वस्य मानं धनं मन्त्रं चावमानं च मैथुनम्।
दानं धर्मं गृहक्लेशं कार्यं नैव प्रकाशयेत् ॥२४॥
ततः किमिति वै कार्यं बालोऽयं बलवानिति।
पार्वती चेद् विजानीयाद् युद्धे शंभुः पराजितः ॥२५॥
तदग्रे च मया भाव्यं नतकंधरवर्तिना।
वक्त्ययं पार्वतीपुत्रः किमेवं संभवेदिति ॥२६॥
सर्वस्माज्जयमिच्छेद्वै पुत्राच्छिष्यात्पराजयम्।
अतः साम्ना बोधयित्वा गच्छामि मम मन्दिरम् ॥२७॥
विचार्यैत्थं क्षणं स्थित्वा यावद्वदति शंकरः।
गणेशोऽपि तदा द्वारं निरुद्ध्य प्रतितिष्ठति ॥२८॥
शंभुः प्राह ममैषो वै कैलासो वर्तते गृहम्।
पत्नी भार्या मम देवी पार्वती वर्ततेऽगज! ॥२९॥
माऽहं त्वया निरोद्धव्यो गन्तुं देहि मम गृहम्।
श्रुत्वैतत्स गणेशस्तु प्राह तं रोषतः खलु ॥३०॥
मा वोच्चः शठ पत्नीति भार्येति चांगजेति च।
मारयिष्यामि च त्वां वै नो चेद् गच्छसि दूरतः ॥३१॥
स्थूलो महानरण्यस्थो गच्छ दूरं न ते गमः।
शंभुः प्राह च तं ज्ञात्वा मातृभक्तं समुद्यतम् ॥३२॥

अहो बाल! न ते माता न पिता तेऽस्ति कश्चन्।
माता पितेति नाम्ना वै स्वार्थमात्रनिबन्धना ॥३३॥
कथं प्राणान् प्रियाँस्त्यक्तुमीहसे मातृनामतः।
हनिष्ये त्वां त्रिशूलेन नो चेन्मुञ्चसि मार्गकम् ॥३४॥
इत्युक्त्वा तं हरश्चाऽपासारयत् स्वकरेण वै।
गणेशोऽपि हरं चापासारयत् स्वकरेण हि ॥३५॥
गोपुरान्निर्गतौ बाह्ये देशे युयुधतुश्च तौ।
केशाकेशि मुष्टामुष्टि दण्डादण्डि निजघ्नतुः ॥३६॥
बहुबलेन पाशेन बाहुभिर्जानुभिस्तथा।
कफोणिकाभिरन्योन्यं ताडयामासतुर्मुहुः ॥३७॥
तयोस्तु ताडनं तत्र त्वाकण्ठाग्रं यदा ह्यभूत्।
गणेशस्तु तदा शंभुमूर्ध्वमुत्तोल्य वेगतः ॥३८॥
भुवि प्रक्षिप्य तद्वक्षः प्रपीड्योपरि संस्थितः।
युवा क्रुद्धो गणेशस्तं मूढमारममारयत् ॥३९॥
शंभुः प्राह अहो हा हा मृतोऽस्मि मुञ्च मां यदि।
तदा ते लड्डुकान्दत्वा पूजयिष्यामि चाग्रतः ॥४०॥
गणेशस्तु तदा त्यक्त्वा शंभुं पार्श्वे स्थितोऽभवत्।
शंभुर्जटां समां कृत्वा धूलीर्देहादमार्जयत् ॥४१॥
स्वस्थो भूत्वा च यावद्वै गोपुरान्तर्विविक्षति।
त्रिशूलं तु गणस्तावत् समादाय रुणद्धितम् ॥४२॥
शंभुश्चापि महाक्रुद्धः प्राह बालमनिन्दितम्।
कथं प्राणान् विहातुं त्वं मया विरोधमिच्छसि ॥४३॥
गच्छाऽन्तः पृच्छ जननीं शंकरः को भवेत्तव।
यदि सा कथयेन्मां स्वपतिं देहि प्रवेशनम् ॥४४॥
गणेशः प्राह धूर्तस्त्वं वध्यो भवसि शस्त्रतः।
शंभुः प्राह वराकस्त्वं वध्यो भवसि शूलतः ॥४५॥
गणः प्राह स्वमात्रार्थे यदि प्राणाः परेतकाः।
तदापि मे शुभं भूयात् स्वर्गं विन्दामि सेवया ॥४६॥
मात्रर्थे जनकार्थे च पत्न्यर्थे च सतां कृते।
प्राणान्यर्पयिता याति स्वर्गं वा मोक्षमित्यपि ॥४७॥
यदि प्राणा मम यान्ति मात्रर्थे सफलं जनुः।
हतो यद्यज्ञातपित्रा तथापि सफलं जनुः ॥४८॥
एवमुक्त्वा नमः कृत्वा जग्राह च त्रिशूलकम्।
शंभूरपि वरं पुत्रहस्तान्मृत्युमुपस्थितम् ॥४९॥
यावदज्ञातचर्यौ स्वस्तावत् स्नेहः कुतो मतः।
मृत्युर्बुद्धिमताऽपोह्यो यावद्बुद्धिबलोदयम् ॥५०॥
विचार्येत्थं हरिं स्मृत्वा जग्राह स्वत्रिशूलकम्।
परस्परं प्रजघ्नतुर्दयां कृत्वा तु पृष्ठतः ॥५१॥

गणेशेन तदा शंभोस्त्रिशूलं परिगृह्य च।
द्विवृत्तं वलयं कृत्वा क्षेपितं भूतले द्रुतम् ॥५२॥
दृष्ट्वा बालबलं शंभुः क्षणमात्रं सुमोहितः।
पुनः परशुमादाय जघान गणकंधरे ॥५३॥
गणस्तं परशुं स्वस्य कुठारेण बभंज वै।
द्वेधा जातं तु परशुं त्यक्त्वा शक्तिमुपाददे ॥५४॥
गणेशोऽपि त्वरितः सन् उत्प्लुत्य व्योमवर्त्मनि।
शक्तिं विधृत्य च बलाच्छंभुं तया जघान सः ॥५५॥
मूर्छितो रोषमापन्नो निषसाद हरो भुवि।
पुनरुत्थाय यावद्वै खड्गं गृह्णाति शंकरः ॥५६॥
गणस्तावत् त्रिशूलेन खड्गं द्वेधा बभंज ह।
शंकरश्चातिखिन्नः सन् महाकालसुरूपधृक् ॥५७॥
गणस्यैव त्रिशूलं त्वास्कन्द्य प्रामारयद् गले।
छिन्नः कण्ठो गणेशस्य पतितं मस्तकं भुवि ॥५८॥
कृष्णे तल्लीनतां प्राप्तं कबन्धो वर्ततेऽत्र तु।
शंभुः सरोषताम्राक्षः स्नात्वा स्वां पार्वतीं प्रति ॥५९॥
तत्र स्थाने गतो यावद् दृश्यते कालरूपधृक्।
पार्वती भयमापन्ना द्रागेव पादयोर्गता ॥६०॥
क्षमापय महादेव! किं क्रोधो देहरक्तता।
किं कृतं भवता स्वामिन् कथं रक्तप्लुतो भवान् ॥६१॥
क्व युद्धं केन साकं वा जातं चाऽनिष्टमागतम्।
शंभुस्तदा प्रियाश्लिष्टः शान्तो भूत्वाऽब्रवीदिदम् ॥६२॥
कोऽयं गोपुरसंरोद्धा त्वया रक्षित उज्जडः।
किं किं देव कृतं किं वा किं जातं वद मे भ्रमः ॥६३॥
तव पुत्रो गणेशः स बहुना तपसाऽर्थितः।
मया स्नानप्रकालस्येतरप्रवेशरोधकः ॥६४॥
निषादितः किमनिष्टं जातं प्राणद मे वद।
इति कृत्वा गले लग्नां शंभुः प्राह मृतो ह्ययम् ॥६५॥
मया त्रिशूलघातेन नाशितः काद्वियोजितः।
पार्वती तु समाश्रुत्य रोदिती कुररीव सा ॥६६॥
अहो पुत्रजनेः सौख्यं निधने दुःखमित्यपि।
पतिं त्यक्त्वा सत्वरं सा दुद्राव गोपुरं प्रति ॥६७॥
पतितं तत्कबन्धं तु स्वांके स्थाप्यरुरोद ह।
स्वात्माभिमानजं दुःखं सति ज्ञाने निवर्तते ॥६८॥
पुत्रं शोचामि किं वा मे पतिं शोचामि नाशकम्।
गृहे हन्ता च घात्यश्च कं शोचामि गृहिण्यहम् ॥६९॥
रे पुत्र त्वं स्वयं कृष्णो ह जनिमृतिरेव ह।
न वै ते मरणं योग्यं ह्येवं चेच्च प्रियेऽप्यहम् ॥७०॥

यदि त्वां न जीवयते शंकरस्ते विनाशकः ।
अनाहारव्रतं कृत्वा यात्रापारं करोम्यहम् ॥७१॥
इत्युक्त्वा ह्यशनं त्यक्त्वा विललाप मुहुर्मुहुः ।
संगृह्य गोपुरस्थाने कबन्धं तत्र संस्थिता ॥७२॥
अहो हो लोकमाता सा ह्यशोकाऽपि शुचान्विता ।
लोकोऽयं देहसम्बद्धो ज्ञानिनामपि शोककृत् ॥७३॥
क्षणं भवति संमोहाद्भ्रामकः का विचित्रता ।
श्रुत्वा विलापं पार्वत्याः सख्यस्तत्र समागताः ॥७४॥
शंभुश्च कार्तिकेयश्च ब्रह्मविष्णुसुरादयः ।
गणाश्च प्राययुः सर्वे विलोपं चक्रिरे तदा ॥७५॥
चतुर्दशसु लोकेषु शोकोऽयं प्रसृतो द्रुतम् ।
आजग्मुस्तत्क्षणे तत्र चतुर्दशबिलस्थिताः ॥७६॥
शोकार्तां पार्वतीं देव्यो बोधयन्ति नरास्तथा ।
शंभुः स्वयं विचारं संचक्रे तज्जीवनाय च ॥७७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने गणेशशंकरयोर्युद्धे गणेशमस्तकच्छेदतज्जन्यशोकश्वेत्यादिनिरूपणनामा त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

**श्रीनारायण उवाच—**

एतस्मिन्नन्तरे तत्र वाग् बभूवाऽशरीरिणी ।
मा शोकं कुरु देवेशि ! सुतस्ते कृष्ण ईश्वरः ॥ १ ॥
यत्तेजो योगिनः शश्वद् ध्यायन्ति सततं मुदा ।
ध्यायन्ति वैष्णवा देवा ब्रह्मविष्णुशिवादयः ॥ २ ॥
यस्य पूज्यस्य सर्वाग्रे कल्पे कल्पे च पूजनम् ।
यस्य स्मरणमात्रेण सर्वविघ्नो विनश्यति ॥ ३ ॥
नासीत् स भिक्षुको विप्रः स आसीद्वै जनार्दनः ।
किं वा विलापं कुरुषे न नाशस्तव शांकरेः ॥ ४ ॥
एषां सरस्वतीं श्रुत्वा धैर्यं चालम्ब्य यत्नतः ।
तथापि विरहात् साऽभूद् विलप्य क्षणमूर्छिता ॥ ५ ॥
विस्मितास्ते सुराः सर्वे पुत्रदेहोपरिप्रगाम् ।
मृतामिव प्रपश्यन्ति चित्रपुत्तलिकां यथा ॥ ६ ॥
देव्यश्चैव सुराश्चैव सर्वेऽपि दुःखमूर्छिताः ।
तान्सर्वांस्तु तदवस्थान् दृष्ट्वा कृष्णः स्वयं हरिः ॥ ७ ॥
सद्वाक्यैर्बोधयामास शीताद्भिर्व्यजनैस्तथा ।
सुखयित्वाऽकरोत् तत्र प्रस्तावं शांकरिकृते ॥ ८ ॥
किं कार्यमस्य बालस्य मस्तकस्य सुयोजने ।
प्राण आत्मा तु पार्वत्याः शक्त्या निहित एव वै ॥ ९ ॥
स चात्र पुनरागच्छेत्पार्वत्यास्तु प्रभावतः ।
मस्तकं तु गणेशस्य कृष्णे विलीनतां गतम् ॥१०॥
तस्माद् द्वितीयमानव्यं मस्तकं तु शिवादिभिः ।
गणेशो जीवितो भूयादस्माभिः पूजितो भवेत् ॥११॥
ब्रह्मा प्राह तदा विष्णुं भवान् सर्वज्ञ उच्यते ।
कर्मणां गतिवेत्ता त्वं ऋणानुबन्धभानवान् ॥१२॥
कस्य केन समं कर्म भोग्यं वेत्ति न चाऽपरः ।
वृक्षशाखा परिच्छिन्ना भुवि न्यस्ताऽपि रोहति ॥१३॥
तत्र बीजं विना जीवः कर्मबलात् सुयुज्यते ।
केचिद् बीजाच्च केचिद्वै देहात् कीटादयोऽपरे ॥१४॥
पार्थिवकर्दमादन्ये स्तम्बात् काण्डाच्च मांसतः ।
अन्नादन्ये देहयोगाद्धातुयोगात् तथाऽपरे ॥१५॥
जायन्ते जन्तवस्तेषां स्वस्वकर्मानुसारतः ।
तस्मात् त्वमेव विज्ञाता मस्तकं कीदृशं भवेत् ॥१६॥
यस्माऽनेन शरीरेण मस्तकस्यऋणं भवेत् ।
तस्यैव मस्तकं त्वत्र कबन्धे योज्यमेव वै ॥१७॥
ब्रह्मा प्राह तदा सर्वान् यमो गच्छेद् वनान्तरे ।
प्रथमं यो मिलेत् प्राणी तदा तस्यैव मस्तकम् ॥१८॥
गृहीत्वा च समागत्य गणस्कन्धे नियोजयेत् ।
विष्णुः प्राह तदा तत्र मम शृण्वन्तु देवताः ॥१९॥
उत्तरस्यां दिशि पुष्पभद्रायाः सरितस्तटे ।
अस्य ऋणानुबन्ध्येको हस्ती वर्तत इत्यमुम् ॥२०॥
हस्तिनं प्रति गत्वाऽहं मस्तकं तस्य शोभनम् ।
कबन्धैतत्परिणाहमानग्रीवसुमण्डलम् ॥२१॥
छित्वा सुदर्शनेनैव नयामि तत्र यामि च ।
इत्याश्वास्य च तान्सर्वानारुह्य गरुडं हरिः ॥२२॥
जगाम पुष्पभद्रायास्तटे यत्र स ईभराट् ।
सुघट्टवृक्षवल्ल्यादिसंवृते तत्र कानने ॥२३॥
गजेन्द्रं दिव्यवपुषं श्वेतं स्वहस्तिनीयुतम् ।
तथोदकूशिरसं रम्यं सुखिनं सुरतश्रमात् ॥२४॥
परितः शावकान् कृत्वा परमानन्दमानसम् ।
ददर्श भगवाँस्तं वै प्राह चैनं गजाधिपम् ॥२५॥
सुखितोऽसि कुटुम्बेन दारापत्यजनादिभिः ।
अथोत्तरं महत्सौख्यं लभ्यं दानादिकर्मभिः ॥२६॥
गजः प्राह भवान् कोऽस्ति मेऽतिथिः प्रसमागतः ।
कदलीवनजातानि स्वर्णानि कदलानि वै ॥२७॥
दास्ये भुंक्ष्व परं श्रेयः कुर्वस्माकं वनंजुषाम् ।
पशूनां नेदृशो लाभो कदापि भवति प्रभो ॥२८॥

पूर्वजातिस्मरात् त्वां वै मन्ये कृष्णः समागतः ।
मत्पूर्वकर्मणः पाशाद् बन्धनं पाशवं मया ॥२९॥
ज्ञातं च ज्ञास्यते यद्वै भावि तदपि मे कुरु ।
भगवानपि तद्दत्तं जग्राह यावदर्हणम् ॥३०॥
त्वरा मेऽस्ति मम प्रार्थ्यं देहि श्रेयो भविष्यति ।
गजः प्राह प्रभुः साक्षान्मदर्थं तु समागतः ॥३१॥
तस्मात्पुत्रैः स्त्रिया चान्यैर्मा शोकस्तु विधीयताम् ।
नाथ गृहाण यन्नेयं शीघ्रं कुरु प्रसन्नताम् ॥३२॥
तव योगान्मम मुक्तिः कुटुम्बस्यापि वै ध्रुवा ।
इति प्रोच्य प्रणम्याऽथ समीपे समुपस्थिता ॥३३॥
हरिः सुदर्शनेनैव चिच्छेदे तच्छिरो मुदा ।
गरुडे स्थापयामास रुधिराक्तं मनोहरम् ॥३४॥
विच्छिन्नांगं पतिं दृष्ट्वा रुरोद हस्तिनी प्रिया ।
रुरुदुः शावकास्तस्य विलप्य च शुचातुराः ॥३५॥
सा तुष्टाव रमाकान्तं शान्तं सस्मितमास्थितम् ।
शंखचक्रगदापद्मधरं पीताम्बरं हरिम् ॥३६॥
गरुडस्थं जगन्नाथं भ्रामयन्तं सुदर्शनम् ।
संसारसुखदातारं तद्भर्तारं नमाम्यहम् ॥३७॥
अनाथिन्यै पुनर्नाथप्रदातारं नमाम्यहम् ।
भक्तायाः सुखकर्तारं नमामि पतिजीवनम् ॥३८॥
प्रभुस्तत्स्तवनात्तुष्टस्तस्यै प्राह प्रहर्षितः ।
तव कार्यं पुनः कृत्वा जीवयित्वा पतिं तव ॥३९॥
ततो गमिष्ये भद्रं ते क्षणं शोकं परित्यज ।
इत्युक्त्वा च महारण्यं जगाम तत्र यूथपः ॥४०॥
प्राप्तः कालवशाच्छुभ्रो मृतोऽभूत्कश्चिदीभराट् ।
अखण्डितशरीरस्य तस्यैव मृतमस्तकम् ॥४१॥
पृथक्कृत्य युयुजेऽत्राऽऽगत्य कबन्धमण्डले ।
यद्यपि भगवान् कृष्णः सर्वसामर्थ्यवान् विभुः ॥४२॥
गणेशस्य मस्तकं वै योक्तुं तदेव चार्हति ।
नवं वा मस्तकं तत्र चांकुरयितुमर्हति ॥४३॥
हस्तिनोऽपि मस्तकं तद् द्वितीयं कर्तुमर्हति ।
तथापि यत्कृतं चात्र स्वेच्छाया ऋणबन्धनात् ॥४४॥
एवं तं जीवयामास हस्तिनं चरणांबुजम् ।
रुर्वांगे योजयामास परिवारं पवित्रयन् ॥४५॥
त्वं जीवाऽऽकल्पपर्यन्तं परिवारैः समं गज ।
इत्युक्त्वा च गरुडेन कैलासं ह्याजगाम वै ॥४६॥
कबन्धं तु गणेशस्य नीत्वा स्वस्यैव वक्षसि ।
रुचिरं तच्छिरः सम्यग् योजयामास बालके ॥४७॥
जीवयामास तं शीघ्रं हुंकारोच्चारणेन च ।
सर्वे प्रसन्नाः संजाताः कण्ठे तु सन्धिनीं दधौ ॥४८॥
गणेशः पुत्ररूपोऽसौ प्रणनामाऽऽगतान्मुहुः ।
सर्वैः सभाजितो देवैराशीर्भिश्चिरजीविता ॥४९॥
प्रदत्ताऽथ ततो विष्णुरुवाच पार्वतीं सतीम् ।
ब्रह्मादिकीटपर्यन्तं फलं भुंक्ते स्वकर्मणः ॥५०॥
शुभाऽशुभं कृतं यद्यत् प्रतियोनौ प्रपद्यते ।
इन्द्रः स्वकर्मणा कीटयोनौ जन्म व्रजेत् सति ! ॥५१॥
कीटश्चापि भवेदिन्द्रः पूर्वकर्मफलेन वै ।
सिंहोऽपि मक्षिकां हन्तुमक्षमः प्राक्तनं विना ॥५२॥
मशको हस्तिनं हन्तुं क्षमः प्राक्तनकर्मणा ।
सुखं दुःखं भयं शोकमानन्दः कर्मणः फलम् ॥५३॥
सुकर्मणः सुखं हर्षमितरे पापकर्मणः ।
इहैव कर्मणां भोगः परत्र च शुभाशुभैः ॥५४॥
गोलोकनाथः श्रीकृष्णः परिपूर्णतमः स्वयम् ।
तव पुत्रः समुत्पन्नः श्रुत्वा तुष्टा च पार्वती ॥५५॥
स्तनं ददौ च शिशवे तं प्रणम्य गदाधरम् ।
तुष्टाव प्रांजलिर्भक्त्या विष्णुं तं कमलापतिम् ॥५६॥
आशिषं युयुजे विष्णुः शिशुं च शिशुमातरम् ।
ददौ कण्ठे बालकस्य कौस्तुभं च स्वभूषणम् ॥५७॥
ब्रह्मा ददौ मुकुटं च धर्मो वै रत्नभूषणम् ।
सिद्धासनं ददौ धर्मस्तस्मै वेधाः कमण्डलुम् ॥५८॥
शंकरो योगपट्टं च तत्त्वज्ञानं सुदुर्लभम् ।
रत्नसिंहासनं शक्रः सूर्यश्च मणिकुण्डले ॥५९॥
माणिक्यमालां चन्द्रश्च कुबेरश्च किरीटकम् ।
वह्निशुद्धं च वसनं ददौ तस्मै हुताशनः ॥६०॥
रत्नछत्रं च वरुणो वायू रत्नांगुलीयकम् ।
क्षीरोदोद्भवसद्रत्नरचितं वलयं वरम् ॥६१॥
मञ्जीरं चापि केयूरं ददौ लक्ष्मीर्हरिप्रिया ।
कण्ठभूषां च सावित्री भारती हारमुज्ज्वलम् ॥६२॥
क्रमेण सर्वे देवाश्च देव्यश्च यौतकं ददुः ।
मुनयः पर्वतांश्चैव रत्नानि विविधानि च ॥६३॥
वसुन्धरा ददौ तस्मै वाहनाय च मूषकम् ।
क्रमेण देवा देव्यश्च मुनयः पर्वतादयः ॥६४॥
गन्धर्वाः किन्नरा यक्षा मनवो मानवास्तथा ।
नानाविधानि द्रव्याणि स्वादूनि मधुराणि च ॥६५॥
पूजां चक्रुश्च ते सर्वे क्रमाद्वै भक्तिपूर्वकम् ।
पार्वती जगतां माता स्मेराननसरोरुहा ॥६६॥

रत्नसिंहासने पुत्रं वासयामास जीवितम् ।
कर्तुं पूजां ततस्तस्य विशेषेणोपचक्रमे ॥६७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने व्योमवाण्या श्रीकृष्णोऽयं गणेश इति विज्ञापिते श्रीहरिणा हस्तिमस्तकसन्धानं कृतं ब्रह्मादिभिरुपदादानं कृतमित्यादिनिरूपणनामा चतुरधिकशततमोऽध्यायः ॥१०४॥

**श्रीनारायण उवाच—**

सर्वतीर्थोदकैः रत्नकलशावर्जितैः स्तुतैः ।
स्नापयामास वेदोक्तमन्त्रेण मुनिभिस्तदा ॥ १ ॥
अग्निशुद्धे च वसने ददौ तस्मै सती मुदा ।
गोदावर्युदकैः पाद्यमर्घ्यं गंगोदकेन च ॥ २ ॥
दूर्वाभिरक्षतैः पुष्पैश्चन्दनेन समन्वितम् ।
पुष्करोदकमानीय ददावाचमनीयकम् ॥ ३ ॥
मधुपर्कं रत्नपात्रैः सुपेयं शर्करान्वितम् ।
स्नानीयं विष्णुतैलं च स्वर्वैद्याभ्यां विनिर्मितम् ॥ ४ ॥
अमूल्यरत्नरचितं चारुभूषाकदम्बकम् ।
पारिजातप्रसूनानामन्येषां शतकानि च ॥ ५ ॥
मालतीचम्पकादीनां पुष्पाणि विविधानि च ।
पूजार्हाणि च पत्राणि तुलसीसहितानि च ॥ ६ ॥
चन्दनागुरुकस्तूरीकुंकुमानि च सादरम् ।
रत्नप्रदीपनिकरं धूपं च परितो ददौ ॥ ७ ॥
नैवेद्यं तत्प्रियं चैव तिललड्डुकपर्वतान् ।
यवगोधूमचूर्णानां लड्डुकानां च पर्वतान् ॥ ८ ॥
पक्वान्नानां पर्वतांश्च सुस्वादुसुमनोहरान् ।
पर्वतान् स्वस्तिकानां च सुस्वादुशर्करान्वितान् ॥ ९ ॥
गुडाक्तानां च लाजानां पृथुकानां च पर्वतान् ।
शाल्यन्नानां पिष्टकानां पर्वतान् व्यञ्जनैः सह ॥१०॥
पयोभृत्कलशानां च लक्षाणि प्रददौ मुदा ।
लक्षाणि दधिपूर्णानां कलशानां च पूजने ॥११॥
मधुभृत्कलशानां च त्रिलक्षाणि च पार्वती ।
सर्पिःसुवर्णकुंभानां पंचलक्षाणि सादरम् ॥१२॥
दाडिमानां श्रीफलानामसंख्यानि फलानि च ।
खर्जुराणां कपित्थानां जम्बूनां विविधानि च ॥१३॥
आम्राणां पनसानां च कदलीनां फलानि च ।
अन्यानि परिपक्वानि कालदेशोद्भवानि च ॥१४॥
ददौ तानि महादेवी स्वादूनि मधुराणि च ।
स्वच्छं सुनिर्मलं चैव कर्पूरादिसुवासितम् ॥१५॥
गंगाजलं च पानार्थं पुनराचमनीयकम् ।
ताम्बूलं च वरं रम्यं कर्पूरादिसुवासितम् ॥१६॥
सुवर्णपात्रशतकं भक्ष्यपूर्णं च सा ददौ ।
शैलराजप्रियाऽमात्याः पुपूजुः शैलजात्मजम् ॥१७॥
विष्णुः स्वयं पुपूजैनं ह्युपहारैरनुत्तमैः ।
सर्वाग्रे तव पूजा च मया दत्ता सुरोत्तम ॥१८॥
सर्वपूज्यश्च योगीन्द्रो भव वत्सेत्युवाच तम् ।
वनमालां ददौ तस्मै ब्रह्मज्ञानं च मुक्तिदम् ॥१९॥
सर्वसिद्धिं प्रदायैव चकाराऽऽत्मसमं हरिः ।
ददौ द्रव्याणि चारूणि चोपचारांश्च षोडश ॥२०॥
नामभिः स्तवनं चक्रे मुनिभिश्च समं सुरैः ।
विघ्नेशश्च गणेशश्च हेरम्बश्च गजाननः ॥२१॥
लम्बोदरश्चैकदन्तः शूर्पकर्णो विनायकः ।
एतान्यष्टौ च नामानि सर्वसिद्धिप्रदानि च ॥२२॥
यद्यत्कार्यं भवेत् किंचिन्महद्वा तत्र सर्वदा ।
पूजनं तु गणेशस्य कार्यं प्रथममेव वै ॥२३॥
ततोऽन्येषां तु देवानां ममापि पूजनं भवेत् ।
गणेशपूजनादीनि विहाय कोपि साधकः ॥२४॥
यद्यन्यत्कुरुते कार्यं न स्यात् सिद्धं ध्रुवं हि तत् ।
ऋषिभिर्मुनिभिः पितृदेवमन्वन्तरादिभिः ॥२५॥
दिक्पालैर्लोकपालैश्च यक्षगन्धर्वकिन्नरैः ।
भुवरन्तरीक्षसद्भिर्मानवैरतलादिजैः ॥२६॥
चतुर्दशस्तरावासैः सर्वैरेव सदा कृतौ ।
गणेशः प्रथमः पूज्य इति ब्रह्मानुशासनम् ॥२७॥
इत्यग्रपूज्यता दत्ता सभायां तत्र वेधसा ।
श्रीकृष्णेन स्वयं तत्र प्रथमं पूजितश्च सः ॥२८॥
अथ पूजोत्तरं तस्याशीर्वादा देवसत्कृताः ।
विष्णुः प्राह शिवतुल्यज्ञानी चिरायुरीश्वरः ॥२९॥
पराक्रमे च मे तुल्यः सर्वसिद्धीश्वरो भव ।
ब्रह्मोवाच यशःकीर्तिख्यातिभिस्त्वतिगो भव ॥३०॥
सर्वेषामग्रतः पूजा जायतां तेऽतिदुर्लभा ।
धर्मः प्राह मया तुल्यो धर्मिष्ठो भव भक्तिमान् ॥३१॥
शंभुः प्राह मया तुल्यो दाता भक्तो हरेर्भव ।
विद्याबुद्धिसुपुण्याढ्यः शान्तो दान्तः सदा भव ॥३२॥

लक्ष्मीः प्राह ममाऽऽवासो गेहे देहे भवेत्तव ।
पतिव्रता मया तुल्या कान्ता तव भवत्विति ॥३३॥
वाणी प्राह मया तुल्या कविता धारणा स्मृतिः ।
विवेचना सुमेधा सच्छक्तिर्भवतु ते सदा ॥३४॥
सावित्र्युवाच वत्स त्वं वेदज्ञानी जपी भव ।
शैलः प्राह हरौ कृष्णे भक्तिर्भवतु ते सदा ॥३५॥
श्रीकृष्णतुल्यो गुणवान् भव कृष्णपरायणः ।
मेनोवाचाऽब्धितुल्यस्त्वं गांभीर्येऽनंगरूपवान् ॥३६॥
श्रीयुक्तः श्रीस्वामितुल्यो धर्मे धर्मसमो भव ।
पृथ्वी प्राह मया तुल्यः क्षमया सर्वरत्नवान् ॥३७॥
शरण्यो विघ्ननिघ्नश्च पारण्यो भव शोभनः ।
उमोवाच महायोगे ताततुल्योऽर्थसिद्धिदः ॥३८॥
मृत्युञ्जयश्च भगवान् भवत्वतिविशारदः ।
ऋषयो मुनयः सिद्धाः सर्वे युयुजुराशिषः ॥३९॥
ब्राह्मणा बन्दिनश्चैव युयुजुः सर्वमंगलम् ।
ब्राह्मणेभ्यो ददौ तत्र कोटिरत्नानि पार्वती ॥४०॥
अश्वानां च गजानां च सहस्राणि शतानि च ।
बन्दिभ्यः प्रददौ तत्र दानानि विविधानि च ॥४१॥
ब्राह्मणान् भोजयामास साधून् साध्वीश्च बालकान् ।
वेदाँश्च पाठयामास कारयामास मंगलम् ॥४२॥
"ॐ श्रीं ह्रीं क्लीं गणेशाय ब्रह्मरूपाय चारवे ।
सर्वसिद्धिप्रदेशाय विघ्नेशाय नमो नमः" ॥४३॥
इतिमन्त्रेण संपूज्य दत्वा द्रव्याणि भक्तितः ।
सर्वे प्रमुदितास्तत्र ब्रह्मविष्णुहरादयः ॥४४॥
द्वात्रिंशदक्षरो मालामन्त्रोऽयं सर्वकामदः ।
धर्मार्थकाममोक्षाणां फलदः सर्वसिद्धिदः ॥४५॥
पञ्चलक्षजपेनैव मन्त्रसिद्धिर्हि मन्त्रिणः ।
विघ्नानि च पलायन्ते तन्नामस्मरणेन वै ॥४६॥
यात्राकाले पठित्वा यो याति तद्भक्तिपूर्वकम् ।
तस्य सर्वाभीष्टसिद्धिर्भवत्येव न संशयः ॥४७॥
रात्रौ दृष्टं तु दुःस्वप्नं सुस्वप्नमुपजायते ।
कदापि न भवेत्पाठाद्ग्रहपीडापि दारुणा ॥४८॥
शत्रुनाशो बुद्धिवृद्धिर्लक्ष्मीवृद्धिः सदा भवेत् ।
आधयो व्याधयश्चैव शोकाश्चैव भयावहाः ॥४९॥
नाशं यान्ति न चायान्ति गणेशस्याऽर्चनात्स्तवात् ।
विनायकस्य कवचं सर्वापद्विनिवारकम् ॥५०॥
कथयामि महालक्ष्मि ! सर्वलोकेषु शान्तिकृत् ।
उक्तं कौथुमशाखायां सामवेदे मनोहरम् ॥५१॥
कवचं बिभ्रतां मृत्युर्न भिया याति सन्निधिम् ।
नाऽऽयुर्व्ययो नाऽशुभं च ब्रह्माण्डे न पराजयः ॥५२॥
दशलक्षजपेनैव सिद्धं तु कवचं भवेत् ।
संसारमोहकस्याऽस्य कवचस्य प्रजापतिः ॥५३॥
ऋषिश्छन्दो बृहती च देवो लम्बोदरः स्वयम् ।
धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्तितः ॥५४॥
ॐ गं हुं श्रीगणेशाय स्वाहा मे पातु मस्तकम् ।
द्वात्रिंशदक्षरो मन्त्रो ललाटं मे सदाऽवतु ॥५५॥
ॐ ह्रीं श्रीं गमिति वै सततं पातु लोचने ।
तालुकं पातु विघ्नेशः सततं च धरातले ॥५६॥
ॐ ह्रीं श्रीं क्लीमिति परं सन्ततं पातु नासिके ।
ॐ गौं गं शूर्पकर्णाय स्वाहा पात्वधरौ मम ॥५७॥
दन्ताँश्च तालुकं जिह्वां पातु मे षोडशाक्षरः ।
ॐ लं श्रीं लम्बोदरायेति स्वाहा गण्डौ सदाऽवतु ॥५८॥
ॐ क्लीं ह्रीं विघ्ननाशाय स्वाहा कर्णौ सदाऽवतु ।
ॐ श्रीं गं गजाननायेति स्वाहा स्कन्धं सदाऽवतु ॥५९॥
ॐ ह्रीं विनायकायेति स्वाहा पृष्ठं सदाऽवतु ।
ॐ क्लीं ह्रीमिति काङ्कलं पातु वक्षःस्थलं परम् ॥६०॥
करौ पादौ सदा पातु सर्वांगं विघ्ननाशकृत् ।
प्राच्यां लम्बोदरः पातु चाग्नेय्यां विघ्ननायकः ॥६१॥
दक्षिणे पातु विघ्नेशो नैर्ऋत्यां तु गजाननः ।
पश्चिमे पार्वतीपुत्रो वायव्यां शंकरात्मजः ॥६२॥
कृष्णस्यांशश्चोत्तरे च परिपूर्णतमस्य च ।
ऐशान्यामेकदन्तश्च हेरम्बः पातु चोर्ध्वतः ॥६३॥
अधो गणाधिपः पातु सर्वपूज्यश्च सर्वतः ।
स्वप्ने जागरणे चैव पातु मां योगिनां गुरुः ॥६४॥
इत्येतत्कवचं कृष्णो गोलोकेऽदात्स्वयं तु मे ।
मया नारायणेनात्र यमादिसुरसन्निधौ ॥६५॥
शनैश्चरायाऽर्पितं तत् सर्वसंकटतारकम् ।
तदेवेदं महालक्ष्मि ! सर्वेभ्यः श्रावितं मया ॥६६॥
गुरुमभ्यर्च्य विधिवत् कवचं धारयेत्तु यः ।
कण्ठे वा दक्षिणे बाहौ सोऽपि विष्णुसमो भवेत् ॥६७॥
सर्वत्र विजयी पूज्यो भवेद्ग्रहणमात्रतः ।
भूतप्रेतपिशाचाश्च कूष्माण्डा ब्रह्मराक्षसाः ॥६८॥
डाकिनीयोगिनीयक्षवेताला भैरवादयः ।
बालग्रहा ग्रहाश्चैव क्षेत्रपालादयस्तथा ॥६९॥
वर्मणः शब्दमात्रेण पलायन्ते तु भीरवः ।
ऋजवे गुरुभक्ताय स्वशिष्याय प्रकाशयेत् ॥७०॥

अथ गणेशदेवस्याऽष्टकं वक्ष्ये सुखप्रदम् ।
यत्पाठकं स्वयं कृष्णो गणेशोऽवति सर्वदा ॥७१॥
ॐ नमोऽन्तःसुसत्त्वाय शिवसत्त्वाय ते नमः ।
ॐ नमः कृष्णरूपाय शैलजांऽगाय ते नमः ॥७२॥
ॐ नमो वृद्धविप्राय सत्त्वसंस्थाय ते नमः ।
ॐ नमः पिण्डरूपाय न्यस्तचित्ताय ते नमः ॥७३॥
ॐ नमः सिद्ध्यधिष्ठाय सर्वविद्याय ते नमः ।
ॐ नमो गोपुरत्रात्रे मात्राज्ञापाय ते नमः ॥७४॥
ॐ नमोऽस्त्वलक्ष्यपित्रे पितृशरत्याय ते नमः ।
ॐ नमः। स्कन्धरूपाय कर्याननाय ते नमः ॥७५॥
ॐ नमः शिवपुत्राय सर्वपूज्याय ते नमः ।
ॐ नमश्चाग्रजार्चाय लड्डुकाऽऽद्याय ते नमः ॥७६॥
ॐ नमो विघ्ननाशाय मूषकासनिने नमः ।
ॐ नमो हेतिलाभाय चिरजीवाय ते नमः ॥७७॥
ॐ नमो दिव्यवर्ष्मणे भव्यवर्मणे ते नमः ।
ॐ नमः कवचाऽऽप्याय वर्चोऽव्ययाय ते नमः ॥७८॥
ॐ नमो मंगलाढ्याय भक्तिदार्व्याय ते नमः ।
ॐ नमः श्रीगणेशाय श्रीकृष्णाय नमो नमः ॥७९॥
इति स्तुत्वा नरो भक्त्याऽमरो भवति मोक्षगः ।
गणेशवृत्तमित्युक्तं किं भूयः श्रोतुमिच्छसि ॥८०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने गणेशस्य विशेषाग्रपूजाऽऽशीर्वादमन्त्रकवचस्तोत्रादि-प्रदर्शननामा पंचाधिकशततमोऽध्यायः ॥१०५॥

**श्रीलक्ष्मीरुवाच—**

गणेशस्य शिरोनाशः कथं वै केन कर्मणा ।
गजमस्तकसन्धानं कथं वै केन कर्मणा ? ॥ १ ॥
परिपूर्णतमः श्रीमान्परमात्मा परात्परः ।
गोलोकनाथः स्वांशेन पार्वतीपुत्रतामगात् ॥ २ ॥
आश्चर्यं श्रीहरेस्तस्य मस्तकच्छेदनादिकम् ।
विघ्नेशस्य कथं विघ्नं संभवेत्परमात्मनः ॥ ३ ॥

**श्रीनारायण उवाच—**

सावधाना शृणु लक्ष्मि ! समैतिह्यं पुरातनम् ।
एकदा शंकरः सूर्यं जघान परमष्टधा ॥ ४ ॥
सुमालिमालिहन्तारं शूलेन च तदा रविः ।
जहौ स्वचेतनां सद्यो रथाच्च निपपात ह ॥ ५ ॥
ददर्श कश्यपः पुत्रं मृतवत्तूर्ध्वलोचनम् ।
कृत्वा वक्षसि तं शोकाद्विललाप भृशं मुहुः ॥ ६ ॥
अन्धीभूतं जगत्सर्वं बभूव भयकातरम् ।
निष्प्रभं तनयं दृष्ट्वा चाऽशपत् कश्यपः शिवम् ॥ ७ ॥
मत्पुत्रस्य यथा तेजश्छिन्नं शूलेन वक्षसि ।
त्वत्पुत्रस्य शिरश्छिन्नं भविष्यति सतैजसम् ॥ ८ ॥
शिवश्च गलितक्रोधो जीवयामास तं रविम् ।
वक्षः सन्धानयामास पूरयामास तेजसा ॥ ९ ॥
सूर्यस्तु चेतनां प्राप्य समुत्तस्थौ पितुः पुरः ।
सूर्यो ययौ निजाऽऽवासे ब्रह्मणा कृतमंगलः ॥१०॥
माली सुमाली दैत्यौ तु व्याधिग्रस्तो बभूवतुः ।
श्वित्रौ गलितसर्वांगौ शक्तिशून्यौ हतप्रभौ ॥११॥
सूर्यकोपेन मलिनौ ब्रह्मोवाच तदा तु तौ ।
'ॐ ह्रीं नमो भगवते सूर्याय परमात्मने स्वाहा' ॥१२॥
इत्यनेन तु मन्त्रेण सावधानं दिवाकरम् ।
भक्त्या संपूज्य संदत्त्वा तूपचारांश्च षोडश ॥१३॥
एवं संवत्सरं यावद् ध्रुवं मुक्तौ भविष्यथः ।
अथ सूर्यस्य कवचं बिभ्रतो व्याधयो नहि ॥१४॥
प्रजापतिः ऋषिश्छन्दो गायत्री देवता रविः ।
व्याधिप्रणाशे सौन्दर्ये विनियोगः प्रकीर्तितः ॥१५॥
ॐ क्लीं ह्रीं श्रीं श्रीसूर्याय स्वाहा मे पातु मस्तकम् ।
अष्टादशाक्षरो मन्त्रः कपालं मे सदाऽवतु ॥१६॥
वक्षः पातु रविः शश्वन्नाभिं सूर्यः सदाऽवतु ।
कंकालं मे सदा पातु सर्वदेवनमस्कृतः ॥१७॥
करौ पातु सदा ब्रध्नः पातु पादौ प्रभाकरः ।
विभाकरो मे सर्वांगं पातु सन्ततमीश्वरः ॥१८॥
इत्येतत्कवचं धृत्वा नीरुजौ तु भविष्यथः ।
स्तवनं सामवेदोक्तं सौर्यं व्याधिविनाशकम् ॥१९॥
सर्वपापहरं सारं धनारोग्यकरं परम् ।
ततस्तौ राक्षसौ गत्वा पुष्करं तीर्थमुत्तमम् ॥२०॥
धृत्वा वर्म रविं स्तोत्रमन्त्रेणाराध्य भावतः ।
ततः सूर्याद् वरं प्राप्य निजरूपौ बभूवतुः ॥२१॥
गणेशमस्तकच्छेदविघ्नं शापोंऽशुमालिनः ।
जातस्तु शंकरायेति कारणं कथितं तव ॥२२॥
अथ हस्तिकथां वच्मि शिरःसम्बन्धबोधिनीम् ।
स्थितेष्वन्येषु बहुषु जन्तुष्वपि गजस्य यत् ॥२३॥
मस्तकं योजितं तस्य कारणं शृणु पद्मजे !
एकदा देवराजो वै पुष्पभद्रानदीं ययौ ॥२४॥

तत्तीरेऽतिरहःस्थाने पुष्पोद्याने सुगन्धिनि ।
ददर्श कामुकीं रंभां चन्द्रलोकात्समागताम् ॥२५॥
हावभावाऽनंगचेष्टास्वेदकटाक्षचंचलाम् ।
आह्वयन्तीमिव रन्तुं प्रोवाचेन्द्रो गजे स्थितः ॥२६॥
रंभोरु ! त्वामनाश्लिष्य न गन्तुमिष्यते मया ।
रंभोवाच न चाहं ते सन्तोषजननी मता ॥२७॥
कृतकार्यजनानां तु धूर्तानां का नु मित्रता ।
नारी स्वादुत्तमं याति मधु त्यक्त्वेव मक्षिका ॥२८॥
कामुकी काकवल्लोला फलं भुक्त्वा प्रयाति वै ।
युवानं रसिकं शान्तं सुवेषं सुन्दरं प्रियम् ॥२९॥
गुणिनं धनिनं स्वच्छं कान्तमिच्छति कामिनी ।
दुःशीलं रोगिणं वृद्धं रतिशक्तिविहीनकम् ॥३०॥
अदातारमविज्ञं च नैव वाञ्छन्ति योषितः ।
तवाऽऽज्ञाकारिणीं दासीं गृहाणाऽत्र यथासुखम् ॥३१॥
इत्युक्त्वाऽऽगत्य देवेन्द्रं कण्ठे लग्ना बभूव सा ।
पुष्पभद्रातटे तत्र तयोः रतिसमागमे ॥३२॥
एतस्मिन्नन्तरे तेन वर्त्मना शंकरालयम् ।
वैकुण्ठाद् याति दुर्वासा दृष्टश्चेन्द्रेण मानितः ॥३३॥
पारिजातप्रसूनं तु दुर्वासा हरये ददौ ।
पुष्पं यस्य गृहे चैतल्लक्ष्मीस्तं न जहाति वै ॥३४॥
तस्माद्रक्ष सदैवैतदम्लानं स्मृद्धिवर्धनम् ।
सर्वविघ्नहरं नारायणप्रसादलब्धिकम् ॥३५॥
मालया सहितं मूर्ध्नि यस्य तस्य जयः सदा ।
पुरः पूजा च सर्वेषां देवानामग्रणीर्भवेत् ॥३६॥
तच्छायेव महालक्ष्मीर्न जहाति कदापि तम् ।
ज्ञानेन तेजसा बुद्धया विक्रमेण बलेन च ॥३७॥
सर्वदेवाधिकः श्रीमान् विष्णुतुल्यपराक्रमः ।
भक्त्या मूर्ध्नि न गृह्णाति योऽहंकारेण मानवः ॥३८॥
नैवेद्यं च हरेरत्र स नष्टश्रीः स्वजातिभिः ।
दुर्वासास्तु ततः स्थानादगच्छच्छांकरं गिरिम् ॥३९॥
इन्द्रो रंभान्तिके वेगी तत् तां चिक्षेप हस्तिनि ।
कुंभयोः पतितां पुष्पमालां हस्ती निजे पदे ॥४०॥
शुण्डेनाऽऽप्त्वा ममर्दाऽपि तद्दृष्ट्वा श्रीर्विनिर्गता ।
तथा रंभा दिवं याता गजोऽरण्यं विवेश च ॥४१॥
पावनं मस्तकं तस्य मालापुष्पप्रसंगतः ।
छित्वा नीत्वा हरिस्तद्वै योजयामास बालके ॥४२॥
एवं श्वेतगजस्यास्य गणेशस्थं शिरः सदा ।
लक्ष्मि ! प्रपूज्यतां यातं त्वैरावतस्य कं हि तत् ॥४३॥

अथ कश्यपशापेन प्रेरितस्तु शनिश्वरः ।
संज्ञासूर्यात्मजो वक्रदृष्टिमान् दुःखदायकः ॥४४॥
तत्र व्योमपथाऽऽयातो ददर्श गणनायकम् ।
गोपुरे स यदा देव्या रक्षार्थं स्थापितस्तदा ॥४५॥
शंकरेण सह तस्य गणेशस्याऽभवद्रणः ।
सव्यलोचनकोणेन सन्ददर्श शिशोर्मुखम् ॥४६॥
शनेस्तु दृष्टिमात्रेण चिच्छिदे मस्तकं हरः ।
इत्येवं कारणं तत्र शनेर्दृष्टिः रवेः शपिः ॥४७॥
गजकुंभः पारिजातमाला लक्ष्मीरनन्तका ।
त्रयं त्वेकस्य भाग्ये न देवानामपि दुर्लभम् ॥४८॥
सर्वे स्वकर्मणा साध्वि ! भुंजते विविधं फलम् ।
कोटिकल्पैरप्यलुप्तं कर्म कर्तारमीयते ॥४९॥
कर्मणा ब्रह्मरुद्राद्या मानवाः पशुपक्षिणः ।
राजा भृत्याश्च वैकुण्ठवासिनोऽपि स्वकर्मभिः ॥५०॥
व्याधिविषयसौन्दर्यधनदारिद्र्यशालिनः ।
सुदारापुत्रसुखवान् बन्धुकुटुम्बकण्टकः ॥५१॥
अदारापुत्रदुःखाढ्या जायन्ते कर्मभिर्जनाः ।
विभिन्नकर्मणां तेषां मूर्तिः शनिश्वरः स्वयम् ॥५२॥
तत्तत्कर्मानुसारेण वक्रदृष्ट्या स पश्यति ।
शनिश्वरोऽपि दुःखेन जीवतीत्यपि कर्मणा ॥५३॥
शनिश्वराय कन्यां स्वां ददौ चित्ररथस्ततः ।
ऋतुस्नाता सुवेषं स्वं विधाय मन्मथाऽर्दिता ॥५४॥
शनिं स्मरति दानार्थं शनिर्नैव स्मरत्यपि ।
ऋतुनाशाद् रत्यलाभात् कोपतः सा शशाप तम् ॥५५॥
न दृष्टाऽहं त्वया येन न कृतं ऋतुरक्षणम् ।
तस्मात् सदैव ते दृष्टिः सुखदा नैव जायताम् ॥५६॥
त्वया दृष्टं भवेद्वस्तु तत्सर्वं वै विनश्यतु ।
इतिशापाच्छनिर्वक्रदृष्ट्या पश्यति यद् यदा ॥५७॥
तद्वै नश्यति सर्वं द्राक् तत्तत्कर्मानुयोगतः ।
शनिः प्रकृतिनम्रास्यो विना कर्म न पश्यति ॥५८॥
कर्मणा प्रेरितो वै सः कर्तारमभिपश्यति ।
इति ते कथितं सर्वं किमन्यच्छ्रोतुमिच्छसि ॥५९॥
गजास्ययोजनायाश्च कारणं गहनं महत् ।
यज्ज्ञात्वा सुखदुःखादौ शुभाऽशुभे न मुह्यति ॥६०॥
अंशेनात्मान्तरस्थस्य कृष्णस्यात्मान्तरकृतात् ।
कर्मणो नैव लेप्यत्वं भुंक्ते त्वात्मान्तरः कृतम् ॥६१॥
अवताराः सदा सर्वे निर्लेपाः सन्ति पद्मजे ! ।
यत्रात्मन्यवतीर्णास्ते स आत्मा कर्मभोगभाक् ॥६२॥

सखायौ सयुजौ द्वौ च सुपर्णौ कर्मद्रुस्थितौ ।
तयोः कर्मकृदश्नात्यकर्मकृतो न तत्स्पृशिः ॥६३॥
तस्मात् कृष्णस्य नैवास्ति कण्ठच्छेदकृतिव्यथा ।
सा तु तत्रान्यभोक्तुः स्यादात्मान्तरं हि तन्मतम् ॥६४॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने गणेशोपरि शनिदृष्टिः शिवस्य सूर्यशापः इन्द्रस्य श्वेतकरिकृतं दुर्वासःप्रदत्तप्रसादिपुष्पमालामर्दनं तन्मालापुष्पस्पर्शजन्यकुंभमस्तकपावनताप्रयोज्य गणेशमस्तकयोजनापूज्यता चेत्यादिनिरूपणनामा षडधिकशततमोऽध्यायः ॥१०६॥

**श्रीलक्ष्मीरुवाच—**

गणेशस्य श्रुता नाथ ! कथा चित्रपराक्रमा ।
भाद्रे कृष्णे चतुर्थ्यां तु चन्द्रोदयाऽऽद्ययामके ॥ १ ॥
गणेशस्तु समुत्पन्नस्तदा तस्य व्रतं मतम् ।
सांगदेवो निरंगो वा पूज्यः किं तत्तु मे वद ॥ २ ॥

**श्रीनारायण उवाच—**

पत्नीपुत्रवाहनैश्च सहितोऽर्च्यो गणेश्वरः ।
मातृपितृसमश्चापि सदा पूज्यो गणेश्वरः ॥ ३ ॥
स्कन्दो गणपतिश्चैतौ मातापित्रोः सुखौ सुतौ ।
तयोर्विवाहकार्यार्थे शिवाशंभू समूचतुः ॥ ४ ॥
विवाहश्च कथं कार्यः पुत्रयोरुभयोः शुभः ।
षण्मुखः सेनयाऽऽप्तश्च गणेशो मे प्रियोज्झितः ॥ ५ ॥
गणेशस्य विवाहार्थे यत्नः कार्यः शुभो मतः ।
कार्तिकेयस्य वाञ्छाऽस्ति विवाहाय पुनस्तथा ॥ ६ ॥
हार्दे कन्याप्रदानाय विश्वरूपप्रजापतेः ।
द्वाभ्यां कन्याद्वयं देयं वर्ततेऽतस्तथा भवेत् ॥ ७ ॥
किन्तु देयं गणेशाय कन्यारत्नद्वयं वरम् ।
कदाचित्तौ समाहूय कथयामासतुस्तदा ॥ ८ ॥
शृणुतं सुसुतौ प्रीत्या कथयावो यथार्थकम् ।
एकः सदारो ज्येष्ठोऽसि गणेशो दारवर्जितः ॥ ९ ॥
युवयोर्वै विवाहस्य सुखदो नियमः कृतः ।
समौ द्वावपि सत्पुत्रौ विशेषो नाऽत्र लभ्यते ॥१०॥
तस्मात्पणः कृतः शंदः पुत्रयोरुभयोरपि ।
यश्चैव पृथिवीं सर्वां क्रान्त्वा पूर्वमुपाव्रजेत् ॥११॥
तस्यैव प्रथमं कार्यो विवाहः शुभलक्षणः ।
श्रुत्वैतद्वचनं पित्रोः कार्तिकेयो महाबलः ॥१२॥
जगाम मन्दिरात्तूर्णं शिखिवाहनसंस्थितः ।
पृथिव्यास्तु बहुवेगात् परिक्रमणहेतवे ॥१३॥
गणनाथस्तु तत्रैव संस्थितः सुविचार्य वै ।
वाहनं मम तु पृथ्व्यां गतिमन्नैव धावति ॥१४॥
व्योममार्गेण गन्ता क्व क्वाहं पृथिवीमार्गगः !
किं कर्तव्यं क्व गन्तव्यं स्वयं स्थूलशरीरकः ॥१५॥
क्रोशमात्रं गते चाग्रे श्रमाद्गन्तुं न शक्यते ।
किं पुनः पृथिवीं क्रान्त्वा विजयाशा विडम्ब्यते ॥१६॥
इत्येवं सुविचार्यैव गृहं स्नात्वा प्रविश्य च ।
प्रणम्य पितरौ देवो गणेशः समुवाच तौ ॥१७॥
माता पृथ्वी पिता स्वर्गं गौस्तु ब्रह्माण्डमुच्यते ।
माता मे पार्वती देवी पिता मे शंकरः प्रभुः ॥१८॥
गौस्तयोर्वाहनं चास्ति वृषभोऽयं सुधर्मराट् ।
गौस्तु पृथ्वीस्वरूपा मे माताऽपीलास्वरूपिणी ॥१९॥
पिता मे शंकरस्तस्य शरीरं वसुधा मता ।
पूजा त्रयाणां कर्तव्या मया यात्रासुसिद्धये ॥२०॥
आसने स्थापिते चात्र पूजार्थं भवतोस्तथा ।
अतिष्ठतं गुरू चात्र पूरयतं मनोगतम् ॥२१॥
इतिश्रुत्वा वचस्तस्य तत्पूजाग्रहणाय तौ ।
अस्थातामासने तौ च पुपूज गणनायकः ॥२२॥
प्रदक्षिणं तयोः सप्तवारं पुत्रेण सत्कृतम् ।
प्रणामाश्चापि विहिताः सप्त एवार्पितं ततः ॥२३॥
गणेशः प्राह मातर्मे शीघ्रं विवाहनं कुरु ।
माता प्राह द्रुतं पुत्र पृथ्वीप्रदक्षिणां कुरु ॥२४॥
कुमारात्पूर्वमायाहि विवाहः प्रथमो भवेत् ।
गणेशः प्राह रे मातः श्रूयतां वचनं मम ॥२५॥
मया तु पृथिवी क्रान्ता सप्तवारं पुनः पुनः ।
माता प्राह कदा पुत्र त्वया क्रान्ता वसुन्धरा ॥२६॥
गणेशः प्राह भवतोः कृतं प्रदक्षिणं मया ।
तेन वै सा समुद्रान्ता मया प्रदक्षिणीकृता ॥२७॥
माता धरा पिता द्यौश्च द्वयोर्धर्मस्वरूपता ।
वृषभो वाहनं धर्मस्तस्य वामाधर्के तु गौः ॥२८॥
इत्युक्त्वा वृषभं तातं मातरं च प्रदक्षिणाम् ।
चक्रे तेन तदा जातं पृथ्वीप्रदक्षिणं ततः ॥२९॥
पितरावूचतुः हृष्टौ बाढं पुत्र त्वया कृतम् ।
प्राप्तं तेन समग्रायाः पृथ्व्याः प्रदक्षिणाफलम् ॥३०॥

श्रद्धयाऽवाप्यते धर्मः श्रद्धयाऽवाप्यते हरिः ।
श्रद्धयाऽवाप्यते सिद्धिः श्रद्धयाऽवाप्यते फलम् ॥३१॥
माता पिता गृहे तीर्थं गंगा तु गृहिणी सदा ।
यदि श्रद्धा न तत्राऽस्ति व्यर्थं सर्वं कृतं भवेत् ॥३२॥
पित्रोस्तु पूजनं कृत्वा प्रक्रान्तिं च करोति यः ।
तस्य वै पृथिवीक्रान्तिजन्यं सम्पद्यते फलम् ॥३३॥
अपहाय गृहे यो वै पितरौ तीर्थमाव्रजेत् ।
न तीर्थफलभागी स्यादसेवादोषभाग् भवेत् ॥३४॥
पुत्रस्यात्र महत्तीर्थं पित्रोश्चरणपंकजम् ।
इदं सन्निहितं तीर्थं सुलभं धर्मसाधनम् ॥३५॥
पत्न्यास्तीर्थं पतिः प्रोक्तः पुत्रस्य पितरौ तथा ।
पत्युः पतिव्रता पत्नी तीर्थानि तारकाणि वै ॥३६॥
यदि सत्यं शास्त्रदृष्टं सदा पृथ्वीप्रदक्षिणम् ।
जातं प्राह गणेशो मे न चेच्छास्त्रमसत्यकम् ॥३७॥
पितृभक्तिरसत्या स्यात् सर्वा सा निष्फला भवेत् ।
मातृभक्तिर्गवां भक्तिः सर्वथा निष्फला भवेत् ॥३८॥
तस्मात् प्रदक्षिणं पृथ्व्याः सर्वथाऽत्र मया कृतम् ।
शीघ्रं च भवितव्यो मे विवाहः क्रियतां शुभः ॥३९॥
इति श्रुत्वा वचस्तस्य प्रसन्नौ पितरौ च तम् ।
प्राहतुः पुत्र शास्त्रज्ञ बुद्धिस्ते शास्त्रगामिनी ॥४०॥
कैरपि शास्त्रमर्यादाऽन्यथाकर्तुं न शक्यते ।
उपस्थिते त्वगम्ये वै कार्ये श्रद्धा तु शास्त्रजा ॥४१॥
युज्यते च तथा दुःखे यस्य बुद्धिर्विशिष्यते ।
तस्य दुःखं विनश्येत्तु बुद्धिप्रज्ञाप्रभावतः ॥४२॥
बुद्धिर्यस्य बलं तस्य निर्बुद्धेस्तु कुतो बलम् ।
कूपे सिंहो मदोन्मत्तो गोमायुना निपातितः ॥४३॥
सम्यक् कृतं त्वया पुत्र पृथ्वीप्रदक्षिणं कृतम् ।
गोमातृपितृक्रमणात् कृतं धर्मस्य पालनम् ॥४४॥
कार्तिकस्तु न चायाति पराधावति वेगतः ।
मार्गे त्वग्रे मूषकस्थं यान्तं पश्यति चानुजम् ॥४५॥
यतो गणेशः पित्रोस्तु यदाऽकरोत्प्रदक्षिणाम् ।
तस्य पुण्यस्य लाभेन गणेशस्याऽन्यरूपकम् ॥४६॥
भूत्वा धावति चाग्रे वै कार्तिकेयस्य वेगतः ।
कार्तिकेयस्तु तद्दृष्ट्वा शुशोच परमं तदा ॥४७॥
अहोऽयमुन्दुरुः स्वल्पस्तत्र स्थूलो गणेशकः ।
कीदृशेन च वेगेन त्वग्रे प्राग्रे प्रधावति ॥४८॥
मया मयूरबर्हाणि कशया वायुना तथा ।
पातितानि हि सर्वाणि वेगार्थं ताडितो मुहुः ॥४९॥
मयूरोऽपि तथा यावद्बलेनोड्डीयतेऽधुना ।
तथापि न गणेशं वै संप्राप्नोमि क्रमेत कः ॥५०॥
उल्लंघनं प्राग्गमनं स्वप्नेऽपि नैव दृश्यते ।
तस्मान्नाऽयं विवाहोऽन्यो मया कार्यः शपे त्विति ॥५१॥
इति कृत्वा परावृत्याऽगच्छद् यत्र गृहं स्वकम् ।
शान्तो भूत्वा प्रविश्य सेनया श्रममपानुदत् ॥५२॥
गणेशस्य विवाहार्थं पितरावुद्यतौ तदा ।
कार्तिकेयस्य मार्गे च प्रतीक्षन्तौ प्रतिष्ठतः ॥५३॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने गणेशकार्तिकेयविवाहे गणेशेन पृथिवीप्रदक्षिणा-फलार्थं मातापितृगोप्रदक्षिणा कृतेत्यादि-निरूपणनामा सप्ताधिकशत-तमोऽध्यायः ॥ १०७ ॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! जगन्माता पार्वती बहुहर्षिता ।
स्नुषाद्वयं भविष्यन्मे चक्रे तत् बहुमंगलम् ॥ १ ॥
एतस्मिन्नन्तरे तत्र विश्वरूपः प्रजापतिः ।
द्वे पुत्र्यौ स्वस्य दानार्हे नीत्वैव विधिनोदितः ॥ २ ॥
एका वराय दातव्यो गणेशाय गुणाब्धये ।
अन्या स्कन्दाय दातव्या यद्वा कन्यामतं मतम् ॥ ३ ॥
दृष्ट्वा स्कन्दं वधूयुक्तं वव्राते न द्वयं तु तम् ।
गणेशं कन्यके दृष्ट्वा वव्राते रूपसद्गुणम् ॥ ४ ॥
सिद्धिर्बुद्धिरुभे पत्न्यौ गणेशस्य बभूवतुः ।
महोत्सवो विवाहस्य तदा जातोऽतिहर्षकृत् ॥ ५ ॥
देवगान्धर्वविद्याध्रकिन्नरागुह्यकादयः ।
सन्तुष्टाश्च त्रिलोकस्थास्तद्विवाहे समागमन् ॥ ६ ॥
सहधर्मं चरेतामित्यादिपुरोहितस्य वाक् ।
सफला तत्र संजाता गणेशस्य विवाहने ॥ ७ ॥
गणेशस्तु सदा सौख्यं ताभ्यां वै प्राप्तवान् परम् ।
लोके सापत्नशत्रुत्वं दुःखदं खलु जायते ॥ ८ ॥
यस्य भाग्यं भवेद् भग्नं लोकेऽस्य स्त्रीद्वयं भवेत् ।
द्विभार्यस्तु नरश्चार्धं मृतोऽस्त्येव विनिश्चयः ॥ ९ ॥
न वै तं शत्रवो घ्नन्ति द्विभार्यस्तु मृतो यतः ।
एका स्वपिति यावद्वै द्वितीया द्वेष्टि वै क्रुधा ॥१०॥
अन्या सेवां करोत्यत्र प्रथमा चेर्ष्यति क्रुधा ।
क्षणे क्षणे द्विभार्यस्य क्रोधागारं गृहं मतम् ॥११॥

एकया पुत्रसम्पत्त्या द्वितीयां तु घृणायते ।
द्वितीया धनसम्पत्त्या प्रथमां वै तृणायते ॥१२॥
एकया रूपसम्पत्त्या द्वितीया नोत्सवायते ।
द्वितीया स्नेहसम्पत्त्या प्रथमां कुत्सितायते ॥१३॥
शयने भोजने याने विलासे वस्त्रधारणे ।
हावे भावे तथा माने चोत्सवे नरकं द्वयम् ॥१४॥
तत्रापि काकजातीये श्वजातीये यदा स्त्रियौ ।
तदा साक्षात्तु वै कुंभीपाकाख्यं नरकं हि ते ॥१५॥
यदि भार्ये कुटुम्बिन्यौ सुनिषेकभवे तदा ।
क्लेशो नैव भवेत् तत्र स्वर्गवाच्यं गृहं मतम् ॥१६॥
परस्परं सहायिन्यौ सुखदुःखसमक्रिये ।
परस्परप्रदायिन्यौ नैकां विहाय तिष्ठतः ॥१७॥
नाऽन्योन्याऽऽन्तरभेदिन्यौ ह्येकक्रियैकमानसे ।
परस्परोपकारिण्यौ समशीलव्रताऽर्थिके ॥१८॥
अपत्येष्वेकभाविन्यौ तथोपकरणैकते ।
स्वर्गसुखं पतिस्तत्र भुंक्ते ताभ्यां प्रमोदितः ॥१९॥
सिद्धिर्बुद्धिश्च तादृश्यौ पत्न्यौ शंदे बभूवतुः ।
कियता चैव कालेन गणेशस्य महात्मनः ॥२०॥
सिद्धेर्गणेशपत्न्यास्तु क्षेमनामाऽभवत्सुतः ।
बुद्धेर्लाभाभिधः पुत्रः समजायत शोभनः ॥२१॥
अथ श्रीनारदश्चायात् स्कन्दस्य गृहमद्भुतम् ।
प्राह वच्मि मत्सरान्न नाऽसत्यं न छलेन च ॥२२॥
पितृभ्यां ते कृतं यादृक् तादृक् नान्यः करिष्यति ।
निष्कास्य त्वां प्रादक्षिण्ये मिषमुत्पाद्य तद्विधम् ॥२३॥
गणेशस्य वरोऽकारि विवाहः स्त्रीद्वयेन यत् ।
पत्न्योर्द्वयोर्गणेशोऽसौ लेभे पुत्रद्वयं शुभम् ॥२४॥
मातापित्रोर्मतेनैव सुखं भुंक्ते निरन्तरम् ।
भवता पृथिवी क्रान्ता तयोर्वै छलकर्मणा ॥२५॥
यदि माता च वा तातश्छलधर्मेण पुत्रकम् ।
वञ्चयत्यन्यलोकस्य का वार्ता छलधर्मिणि ॥२६॥
असम्यग्वै कृतं ताभ्यां त्वत्पितृभ्यां हि कर्म तत् ।
विचार्यतां त्वयाऽपीह मच्चित्ते न शुभं मतम् ॥२७॥
दद्याद् यदि गरं माता विक्रीणीयाद् पिता यदि ।
राजा हरति सर्वस्वं कोऽन्यो रक्षाकरो भवेत् ॥२८॥
येनैवेदं कृतं कर्म स्वपुत्रे पक्षपातजम् ।
कः शान्तिमान् सुधीः पुत्रस्तादृक्तातगृहे वसेत् ॥२९॥
इतिनीतिर्मया प्रोक्ता यथेच्छसि तथा कुरु ।
इत्युक्त्वा नारदस्तस्माद् ययौ सत्यपुरं ततः ॥३०॥
स्कन्दः शोकं समुद्वेगं समापन्नो गृहात्ततः ।
विनिर्गत्य च पितरौ प्रणम्य क्रोधपूरितः ॥३१॥
जगाम पर्वतं क्रौंचं पितृभ्यां वारितोऽपि सन् ।
यत्रैवं कपटं प्रीतिनपहाय कृतं मयि ॥३२॥
गणेशस्य सुलग्नस्य कार्यं सारल्यतः कृतम् ।
अहन्तु घोरपन्थार्थं गृहान्निष्कासितस्ततः ॥३३॥
मया नाऽत्र गृहे यावज्जीवं स्थातव्यमेव हि ।
मयूरं स्वं समारुह्य सेनां त्यक्त्वा पितुर्गृहे ॥३४॥
ययौ क्रौंचे महाशैले नारायणपरायणः ।
परमो वैष्णवो भूत्वा भजत्यनिशमच्युतम् ॥३५॥
स्वामित्वं स समापन्नः साधुतामग्रहीत्ततः ।
ब्रह्मव्रते सदा तिष्ठन् वर्तते साधुशीलवान् ॥३६॥
कार्तिकस्वामिनामाऽसौ पूज्यते क्रौंचपर्वते ।
कार्तिक्यां तु सदा देवा ऋषयश्च सतीर्थकाः ॥३७॥
दर्शनार्थं कुमारस्य गच्छन्ति च मुनीश्वराः ।
अथोमा दुःखमापन्ना स्कन्दस्य विरहे सति ॥३८॥
उवाच शंकरं दीना तत्र गच्छ मया सह ।
तत्सुखार्थं स्वयं शंभुर्गतः स्वांशेन पर्वते ॥३९॥
मल्लिकार्जुननामा स शंभुः सत्या सहाऽवसत् ।
कार्तिकस्तद्व्रतं ज्ञात्वा विरज्याऽन्यत्र गच्छति ॥४०॥
तावद् देवादिभिस्तत्र प्रार्थितो ह्यवसत् खलु ।
योजनत्रयमुत्सृज्य स्थितः स्कन्दः सुशीलधृक् ॥४१॥
पुत्रस्नेहातुरौ तौ वै शिवौ पर्वणि पर्वणि ।
दर्शनार्थं कुमारस्य स्नेहिलौ चापि गच्छतः ॥४२॥
अमावास्यादिने तत्र स्वयं शंभुः प्रयाति हि ।
पूर्णिमायां स्वयं याति पार्वती सेनया युता ॥४३॥
इत्येवं श्रीगणेशस्य सिद्धिर्बुद्धिश्च वै प्रिये ।
क्षेमो लाभश्च पुत्रौ द्वौ सह तैः पूजनं क्रियात् ॥४४॥
एतदाख्यानमनघं यशस्यं सुखवर्धनम् ।
आयुष्यं स्वर्ग्यमतुलं शिवभक्तिविवर्धनम् ॥४५॥
कथितं ते महालक्ष्मि ! मातृसेवाविवर्धनम् ।
अपवर्गप्रदं प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥४६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने विश्वरूपप्रजापतिना सिद्धिबुद्धिनामककन्याद्वयं श्रीगणेशाय विवाहविधिनाऽर्पितं, ततः क्षेमो लाभश्चेति पुत्रोत्पत्तिः कार्तिकेयस्य क्रौंचाद्रिं प्रति सदा गमनमित्यादि-कथननामाऽष्टाधिकशततमोऽध्यायः ॥१०८॥

श्रीलक्ष्मीरुवाच—

भगवन् देवदेवेश श्रावितं परमाऽद्भुतम् ।
कथानकं गणेशस्य कार्तिकेयस्य वै तथा ॥ १ ॥
अत्र मे भगवन् काचिज्जिज्ञासा भवतीति ते ।
पृच्छामि देवदेवेश श्रुत्वा शमय तां प्रभो ॥ २ ॥
कार्तिकेयस्तु पितरौ त्यक्त्वाऽगाद्दूरमेव यत् ।
तद्योग्यं न भवेल्लोके शास्त्रेऽपि संभवेन्नहि ॥ ३ ॥
मातुः पितुर्गुरोः सेवा कार्येति मोक्षदा शुभा ।
सेवां त्यक्त्वा गतो दूरे दुरितं तत्कृतं भवेत् ॥ ४ ॥
दुरितस्य तु पापस्य प्रायश्चित्तं तथा क्षयः ।
फलं स्यादिति कस्मात्तत्कार्तिकेये बभूव न ॥ ५ ॥
मातुःसेवा मुक्तिकरो माता बहुविधा मता ।
स्तनदात्री गर्भधात्री भक्ष्यदात्री गुरुप्रिया ॥ ६ ॥
अभीष्टदेवपत्नी च पितुः पत्नी च कन्यकाः ।
सगर्भा भगिनी चापि पुत्रपत्नी प्रियाप्रसूः ॥ ७ ॥
मातुर्माता पितुर्माता सोदरस्य प्रिया तथा ।
मातुः पितुश्च भगिनी मातुलानी तथैव च ॥ ८ ॥
जनानां वेदविहिता मातरः षोडश स्मृताः ।
ता वै पूज्या नमस्कार्याः सेव्याः स्तुत्याः सुपुत्रकैः ॥ ९ ॥
तासां त्वाशीर्वचोऽप्यत्र पुत्रं रक्षति किल्बिषात् ।
तासां सेवा कृता येन स याति ब्रह्म शाश्वतम् ॥१०॥
तासां तु सेवया पुत्रो भाग्यवान् भवति ध्रुवम् ।
तासां हृदयदुःखेन भाग्यं दह्यति वै शुभम् ॥११॥
पुण्यं नश्यति सल्लक्ष्मीस्तं त्यक्त्वाऽन्यत्र याति च ।
तत्कथं कार्तिकेयेन त्यक्ता मा जगदीश्वरी ॥१२॥
सेना पतिव्रता पत्नी कथं त्यक्ता प्रिया निजा ।
पतिव्रतायास्त्यजने नरकं प्राप्नुयान्नरः ॥१३॥

श्रीनारायण उवाच—

शृणु लक्ष्मि मया सर्वं पुरैव विहितं तथा ।
मयाऽजशंभुपित्रर्षिदेवाश्यण्डं विनिर्मितम् ॥१४॥
आद्ये सत्ययुगे सर्वे ब्राह्मणा ब्रह्मतेजसः ।
परमात्मसमा ह्यासन् संकल्पसमृद्धयोऽभवन् ॥१५॥
त्रेतायां न्यूनसामर्थ्या ह्यभवन्कालभेदतः ।
द्वापरे तु विशेषेण सामर्थ्यहीनतां गताः ॥१६॥
सामर्थ्यं तु तपोमूलं तपोहानौ विनश्यति ।
प्रजायां तपसो ह्रासात्सामर्थ्यहीनताऽभवत् ॥१७॥
यथा यथा च सामर्थ्यं हीयते तु तथा तथा ।
अधर्मवंशसामर्थ्यं वर्धते तु शनैः शनैः ॥१८॥
अधर्मेण प्रजास्तत्राऽसत्यलोभमदान्विताः ।
परस्परं दुःखदात्र्योऽभवन्कालस्य वेगतः ॥१९॥
दृष्ट्वैवं ब्रह्मणा तावन्नारायणपरेश्वरः ।
स्मृतस्तत्र प्रजारक्षोपायार्थं श्रीहरिस्तदा ॥२०॥
ब्रह्मधामस्थितः साक्षाल्लोकरक्षणहेतवे ।
संकल्पं वेधसो ज्ञात्वा द्रागेव चाययौ हरिः ॥२१॥
ब्रह्मा प्राह तदा देवं नत्वा स्तुत्वा पुनः पुनः ।
महाराज कृपासिन्धो ह्यधमोद्धारकारक ॥२२॥
युगभेदात्प्रजाः सम्यङ् न वर्तन्ते तपःप्रियाः ।
तपोऽभावान्न वै पुण्यं सामर्थ्यं सुखदं भवेत् ॥२३॥
तदभावाच्च दुःखाढ्या मानवा दैववर्जिताः ।
कथं मया रक्षणीयाः प्रभो ! भक्ता मुमुक्षवः ॥२४॥
शुष्केण साकं सरसं दह्यत्यपि निरागसम् ।
तद्रक्षणाय भगवन् कमुपायं करोमि वै ॥२५॥
भक्तानां तपसो योगाद् भजनात्परमेश्वर ।
सर्वे जीवाः प्रसुखिनो भवन्त्येव हि निश्चितम् ॥२६॥
कालयोगाच्च भक्ता वै तपःसाधनवर्जिताः ।
भवन्ति चेत्तदा जीवा रक्ष्यन्ते केन कर्मणा ॥२७॥
तस्मात्प्रजानां सौख्यार्थमुपायं परिकल्पय ।
युगेषु येन सर्वेषु भक्ताः स्युः सुखिनः सदा ॥२८॥
इति वेधःकृतां जीवरक्षागर्भितराधनाम् ।
श्रुत्वा नारायणः श्रीमान् परंब्रह्म स्वयं हरिः ॥२९॥
ब्रह्माणं प्राह देवेश ! मा चिन्तां वह पद्मज ।
तव ब्रह्मांडजीवानां मुमुक्षूणां तु रक्षणम् ॥३०॥
अहमेव करिष्येऽत्र नान्यस्तादृग्भवेदतः ।
मयैव तत्समाचिन्त्य यावद्ब्रह्माण्डसंस्थितिः ॥३१॥
तावत्तु रक्षणं कार्यं मम भक्ता यतः प्रियाः ।
यद्यन्यं रक्षकं तत्र योजयामि तदा तु सः ॥३२॥
कालवेगेन गलितो दुःखं प्रत्युत चाप्नुयात् ।
तस्मादहं स्वयं साक्षात्परब्रह्म परात्परः ॥३३॥
अक्षरं ब्रह्म नीत्वैव साकं प्रजावनाय वै ।
निवसाम्यत्र लोके तच्छ्रेयः स्याज्जगतां परम् ॥३४॥
धर्मदेवान्मम जन्म मूर्त्या संकल्पमात्रतः ।
स्वीकृत्यात्र भविष्यामि नरनारायणात्मकः ॥३५॥
यावज्जीवं ब्रह्मचारी ब्रह्मतपसि संस्थितः ।
तपसैव प्रजा रक्षन् करिष्येऽवनमादरात् ॥३६॥

नारायणः परंब्रह्माऽक्षरं ब्रह्म नरः स्मृतः ।
उभौ ब्रह्मव्रताढ्यौ वै तपसि कृतमानसौ ॥३७॥
वर्तिष्यामह इत्येतत्साधनं रक्षणं परम् ।
ब्रह्मचर्यव्रतं मेऽस्ति प्रियं प्रियतमं सदा ॥३८॥
तद्व्रतं सर्वदा ब्रह्मलोके संपालयामि वै ।
तत्रैव दिव्ये बदरिकाश्रमे पालयामि च ॥३९॥
ईश्वराणां रक्षणार्थं सदा तपसि संस्थितः ।
अत्राऽप्यागत्य हिमवच्छिखरे योगमास्थितः ॥४०॥
सर्वेन्द्रियप्रतिरोधात्मके तपसि संस्थितः ।
तपःपुण्यप्रदानेन रक्षिष्यामि जनान्मम ॥४१॥
चिन्तां मा कुरु पद्मस्थ तपसा रक्ष्यते जगत् ।
भवन्ति विविधान्येव तपांसि रक्षणाय वै ॥४२॥
घ्राणेनाऽन्यन्न घ्रातव्यमित्येतत्तप उच्यते ।
ततोऽपि च त्वचा चान्यन्न स्प्रष्टव्यं विशिष्यते ॥४३॥
ततोऽपि चक्षुषा चान्यन्न द्रष्टव्यं विशिष्यते ।
ततोऽप्यन्यन्न श्रोतव्यं श्रोत्रेणेति विशिष्यते ॥४४॥
ततो रसनया चान्यन्न रस्यं वै विशिष्यते ।
ततो वाचा न वक्तव्यं तपो वै श्रेष्ठमुच्यते ॥४५॥
ऊर्ध्वहस्तश्चैकपादो निराहारस्तपःस्थितः ।
मौनादप्यधिकः प्रोक्तस्तापसः कष्टमास्थितः ॥४६॥
ततोऽपि निर्जलः श्रेष्ठस्ततोऽप्यकल्पितक्रियः ।
श्रेष्ठस्ततोऽपि सर्वस्मान्निष्कामश्चोर्ध्ववीर्यवान् ॥४७॥
ऊर्ध्वरेता ब्रह्मचारी रत्यभावाद्विशिष्यते ।
सर्वेन्द्रियेभ्यो लिंगस्य निरोधो बलवत्तपः ॥४८॥
रसनाया निरोधश्च मनोनिरोध इत्यपि ।
धातोर्निरोधस्त्वग्रोधो रोधाश्चत्वार ईरिताः ॥४९॥
ब्रह्मचर्ये निरोधास्ते चत्वारः संभवन्ति वै ।
तस्मात्कष्टतरो रोधो नाऽन्योऽस्ति बलवान् खलु ॥५०॥
येन ब्रह्मव्रतं सांगोपांगं संपालितं तु सः ।
मूर्तिमान् वै परब्रह्म हरिर्नास्त्यत्र संशयः ॥५१॥
ब्रह्मचर्यव्रतस्थस्याऽन्यत्कर्तव्यं न शिष्यते ।
कान्ताकनकसूत्रेण वेष्टितं सकलं जगत् ॥५२॥
तासु तेषु विरक्तो यो द्विभुजः परमेश्वरः ।
ब्रह्मचर्यबलात् सोऽत्र तारयत्यखिलं जगत् ॥५३॥
अहमन्ने निवसामि शुद्धसत्त्वमयः प्रभुः ।
जाठरेऽहं निवसामि परातृप्तिप्रदः प्रभुः ॥५४॥
धातुष्वहं निवसामि रजोवीर्यात्मकः प्रभुः ।
तस्याऽवनं कृतं येन मम तेनाऽवनं कृतम् ॥५५॥
कामभोगस्य संकल्पः कर्तव्यो नैव सर्वथा ।
कामभोगाय वार्तायाः श्रवणं कार्यमेव न ॥५६॥
कामभोगस्य वचनं नोच्चार्यं सर्वथा यतः ।
कामभोगस्य संस्पर्शो विधेयो नैव सर्वथा ॥५७॥
कामभोगकृते कामिदर्शनं कार्यमेव न ।
कामभोगकृते गुप्तसंकेतः कार्य एव न ॥५८॥
कामभोगाऽध्यवसायो नैव कार्यः कथंचन ।
रजोवीर्यप्रपातश्च नैव कार्यः कदाचन ॥५९॥
इत्येवं ब्रह्मचर्यं वै सर्वेषां दुष्करं मतम् ।
मिथुनीभूतजीवानां दुष्करं चाऽतपस्विनाम् ॥६०॥
तादृशं ब्रह्मचर्यं तु नरनारायणमृते ।
नाऽन्यत्राऽस्तीति तद्रूपं धृत्वा धास्ये परं तपः ॥६१॥
तद्व्रतेन प्रजां सर्वां रक्षिष्यामि तनुं मम ।
पापादुद्धारयिष्ये तां सुखयिष्ये समन्ततः ॥६२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने स्वप्रजारक्षणाय ब्रह्मचर्यतपःकरणाय नारायणेन ब्रह्मणे नरनारायणावतारावश्यकतेतिकथितमिति-प्रदर्शननामा नवाधिक-शततमोध्यायः ॥१०९॥

**श्रीनारायण उवाच—**

इत्येवं तु मया लक्ष्मि ! प्रतिज्ञातं तु वेधसे ।
ततश्चाहं ततःस्थानाद् द्रागेवाऽदृश्यतां गतः ॥ १ ॥
ममाऽक्षरे परे धाम्नि ब्रह्मचारिव्रते स्थितः ।
वर्ते यद्वत्सर्वथैव वर्ते बद्रीवने तथा ॥ २ ॥
दिव्ये चाऽक्षरधाम्नस्तु प्रान्तभागे तदाश्रमे ।
तथैव च प्रसंकल्प्य धर्मदेवे प्रविष्टवान् ॥ ३ ॥
अक्षरब्रह्मणा साकं धर्मान्मूर्तौ प्रविष्टवान् ।
मूर्त्यां मम जनन्या च तदा संकल्पमात्रतः ॥ ४ ॥
बालौ प्रविर्भावितौ तौ नरनारायणात्मकौ ।
जातमात्रौ षोडशाब्दौ सुरूपौ काममोहनौ ॥ ५ ॥
सुपुष्टहृष्टसर्वांगौ माला पुस्तिकराब्जकौ ।
कोटिकोट्यर्कसंकाशौ प्रोज्ज्वलौ परमेश्वरौ ॥ ६ ॥
सूक्ष्मस्वर्णतन्तुतुल्यजटाशोभितमस्तकौ ।
कौपीनाच्छादनौ वृक्षशालाकन्थाकमण्डलू ॥ ७ ॥
सोपवीतौ ब्रह्मचर्यव्रतपूर्णौ तपस्विनौ ।
अन्यत्र पुरुषे नारीभागौ तु भवतो यथा ॥ ८ ॥

पूरुषस्य वामभागो न्यूनशक्त्याश्रयो भवेत् ।
मयि नारायणे वामे न्यूनशक्तिर्न वै मनाक् ॥ ९॥
वामदक्षिणयोः सर्वाः समाना एव शक्तयः ।
न्यूनशक्त्यात्मको नारीभागो मयि न विद्यते ॥१०॥
विद्येते वक्षसि चिह्ने स्तनयोस्तु ममैव ते ।
स्तनचिह्नस्य विरहे मूर्तौ मे न्यूनता भवेत् ॥११॥
सर्वांगपूर्णता न स्यात् ततश्चिह्ने तु रक्षिते ।
नरेऽथ मम रूपे वै विद्येते न स्तनौ यतः ॥१२॥
तस्मिन्नरे मया नारीभावलेशस्य हीनता ।
दर्शिता न तु सामर्थ्यन्यूनाधिक्यमुभांऽगयोः ॥१३॥
निस्तनस्तु नरो बोध्यः सस्तनोऽहं नरायणः ।
मया लक्ष्मीः सदा रक्ष्या स्तनो वै रक्षितौ ततः ॥१४॥
नररूपे तु लक्ष्म्यास्ते सुसत्त्वे न प्रयोजनम् ।
ब्रह्मचर्यस्वरूपे मे पत्न्या नास्ति प्रयोजनम् ॥१५॥
इत्यतो नररूपं मे ब्रह्मचर्यं परं मतम् ।
तादृग्रूपौ समुत्पन्नावाजानुभुजपंकजौ ॥१६॥
दृष्ट्वा तु पितरौ सम्यक्प्रसन्नौ च प्रचक्रतुः ।
संस्कारौ जातसंशुद्ध्यै समाज्ञप्तौ तपःकृते ॥१७॥
तदा ह्यावां नरनारायणौ तौ च ववन्दतुः ।
सेवार्थे न तपोऽर्थे वै सेवा पित्रोस्तु दुर्लभा ॥१८॥
सेवायां तु सदा सम्यग्वर्तनीयं सुपुत्रकैः ।
लोके सृष्टौ सदा माता पुत्रं गर्भे सुरक्षति ॥१९॥
तन्निमित्तं सदा कष्टं सहते जननी महत् ।
प्रसवे चापि कष्टं च पालने कष्टमित्यपि ॥२०॥
रात्र्यहं चानुसन्धानं क्षालनं मलमूत्रयोः ।
प्राणवद् रक्षणं शश्वत्स्तन्यपानेन पोषणम् ॥२१॥
अंके कट्यां च वहनं स्वमभुक्त्वा प्रपोषणम् ।
लालनं रंजनं सेवा मात्रा तु क्रियते सदा ॥२२॥
तस्या जनन्या आजन्म आमृति सेवयाऽपि वै ।
न पुत्रो निरृणो वै स्यादसेवकस्य किं भवेत् ॥२३॥
सेवाहीनस्य पुत्रस्य मातृणं न निवर्तते ।
तस्मात्सेवा प्रकर्तव्या चेत्यावाभ्यां प्ररोच्यते ॥२४॥
मातृसेवाविहीनस्तु पुत्रो न पुत्र उच्यते ।
स त्वपुत्र इति प्रोक्तो मातृभारकरो हि सः ॥२५॥
तस्मात्सेवां करिष्यावो ह्युभौ पित्रोस्तु सर्वदा ।
असेवकस्य पुत्रस्य नरके नियता गतिः ॥२६॥
कालपाशेन बद्धः स्यात्प्रेतश्चापि भवेत्तथा ।
ऋणदानाय विविधां योनिं गच्छेच्च यातनाम् ॥२७॥
ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ।
सऋणस्य गतिर्नास्ति न स्वर्गे नाऽपुनर्भवः ॥२८॥
पितृणं पुत्रमुत्पाद्य देवर्णं यागकर्मणा ।
ऋष्यृणं विद्ययाऽपोह्य मनस्तपसि योजयेत् ॥२९॥
तस्मात्सेवां करिष्यावोऽन्यथाऽधोगतिमाप्नुवः ।
वृद्धौ तु पितरौ पुत्रैः पालनीयौ समन्ततः ॥३०॥
अनुजाः पालनीयाश्च रक्ष्याः स्वसार इत्यपि ।
विवाहनीयाः सततं दत्त्वा साहाय्यमर्थजम् ॥३१॥
कुटुम्बपोषणं कार्यमुद्यमश्च धनार्जने ।
सुखदुःखे समे चोह्ये सम्बन्धिभिर्गृहस्थितैः ॥३२॥
पित्रोरास्वर्गवासं वै सेवनीयौ तु तौ मतौ ।
पुत्रो युवा भविष्यन्वै रक्षिष्यति च नौ तदा ॥३३॥
सुखिनौ वै भविष्याव इति पित्रोः प्रकल्पनम् ।
भंक्त्वा यायाद्वने पुत्रो न पुत्रः स तु राक्षसः ॥३४॥
वने फलं न वै तस्य भवेत्प्रत्युत पातकम् ।
पित्रोराशीर्वचोयुक्तान् पुण्यसंघान्न योऽर्जयेत् ॥३५॥
स स्वर्गे वाऽथ साम्राज्ये स्थितोऽपि नारकी मतः ।
तस्मात्तु युवयोः सेवां करिष्यावस्तु सर्वथा ॥३६॥
मातृसेवा कृता येन तेन सर्वं कृतं भवेत् ।
दानं यज्ञस्तपो होमो वेदाध्ययनमेव च ॥३७॥
देवताः पूजितास्तेन ध्यानं सर्वं कृतं तथा ।
तपस्तप्तं च विविधं ब्रह्मविद्याऽपि चार्जिता ॥३८॥
साम्राज्यं च कृतं तेन स्वर्गे हस्तगतं कृतम् ।
पारमेष्ठ्यपदं लब्धं येन माता प्रसेविता ॥३९॥
पितरस्तर्पितास्तेन ऋषयः पूजितास्तथा ।
अतिथयोऽर्चितास्तेन येन माता सुसेविता ॥४०॥
गमितानि च तीर्थानि क्षेत्राण्यायतनानि वै ।
विहितानीष्टपूर्तानि येन माता प्रसेविता ॥४१॥
नास्ति सेवासमं पुण्यं सांख्ययोगादिचर्वणे ।
नास्ति मातृसमा देवी नापि पितृसमो हरिः ॥४२॥
म्रियमाणोऽपि बालो वै पितृभ्यां च निरीक्षितः ।
तथापि स्वर्गमाप्नुयात् कस्तौ देवौ परित्यजेत् ॥४३॥
इन्द्रः सूर्यः शशी विष्णुर्गणेशः शंकरोऽब्जजः ।
वरुणोऽग्निस्तथा चान्ये देवास्तु जनके स्थिताः ॥४४॥
जनकस्य सुतः सम्यक्सेवया लभतेऽन्वहम् ।
देवपूजाफलात्कोटिगुणं सत्फलमक्षयम् ॥४५॥
लक्ष्मीः सरस्वती सन्ध्या सावित्री च सती तथा ।
गायत्री रोहिणी संज्ञा वारुणी वैष्णवी तथा ॥४६॥

सर्वाश्च पूजितास्तेन येन माता सुसेविता ।
तासां पूजाकृतपुण्यात् कोटिपुण्यं प्रसूस्थितम् ॥४७॥
सर्वास्ता जननीमूर्तौ तिष्ठन्त्येव न वै पृथक् ।
तस्मान्मातुश्च सेवां वै पितुश्चापि प्रसेवनम् ॥४८॥
करिष्यावोऽत्र पित्रोस्तु पादयोर्वासमास्थितौ ।
पित्रोः सेवामहिमानं विजानन्तौ नराच्युतौ ॥४९॥
महापापाभिभूतस्य पितृसेवारतस्य तु ।
पुत्रस्य नयने दूता यमस्य प्रभवो न वै ॥५०॥
मृतिकाले यदि पित्रोर्नेत्राभ्यां नेत्रमेलनम् ।
क्रियते तु सुपुत्रेण तदापि सद्गतिर्भवेत् ॥५१॥
मृत्युकाले सुपुत्रेण मुखे वृन्दादलं जलम् ।
दीयतेऽपि च तन्मात्रात् पित्रोस्तु सुगतिर्भवेत् ॥५२॥
यस्य गेहे भवेत्पुत्रः प्रतुष्यन्ति पितामहाः ।
पुत्रहीनं कुटुम्बन्तु शपन्त्येव पितामहाः ॥५३॥
वंशे श्राद्धप्रकर्तारमदृष्ट्वा प्रपितामहाः ।
मुञ्चन्त्युष्णप्रणिःश्वासान् भाविनीरशनार्दिताः ॥५४॥
स्वसारश्चापि निःश्वासान् मुञ्चन्त्यभ्रात्र्य इत्यतः ।
नाऽस्मभ्यः कंचुकीदाता भ्राताऽपि विद्यते इति ॥५५॥
लोका वदन्त्यनपत्यानन्नं द्रश्यं न मंगलम् ।
कन्यां वदन्ति नभ्रात्रीं निर्वंश्योऽयं जनो वदेत् ॥५६॥
पुत्रशून्यं गृहं सौधो विमानं च श्मशानवत् ।
पुत्रशून्याः खानपानाभरणादिविभूतयः ॥५७॥
कृष्णाहिविषवद्बोध्या नानन्दाय भवन्ति ताः ।
देवाश्च ऋषयः सर्पा नागाश्चाण्डजजातयः ॥५८॥
सर्वेऽपीच्छन्ति सत्पुत्रान् जन्माऽपुत्रं निरर्थकम् ।
तस्माद्भाव्यं सुपुत्रेण सुसेवकेन सर्वथा ॥५९॥
अतो ह्यावां करिष्यावः सेवां पित्रोस्तु सर्वदा ।
तत्रः श्रेयः परं भाव्यं सेवा मुक्तिप्रदायिनी ॥६०॥
इति पित्रोर्महिमानमुक्त्वा नरनरायणौ ।
तूष्णीं बभूवतुस्तत्र सेवाधर्मरतौ यदा ॥६१॥
पितृभक्तिमयौ मातृसेवाकृतविनिश्चयौ ।
तुतुषतुर्मूर्तिधर्मौ शुभाशीर्वादयोजिनौ ॥६२॥

इति श्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने नरनारायणाभ्यां स्वजन्मोत्तरं पित्रोः सेवाधर्मप्रशंसननामा दशाधिकशततमोऽध्यायः ॥११०॥

श्रीनारायण उवाच—

शृणु लक्ष्मि ! ततो धर्मदेवः सेवाविनिश्चयौ ।
पुत्रौ प्राह परं धर्मं परो यस्मान्न विद्यते ॥ १ ॥
सर्वधर्मसमावेशो यत्र धर्मे प्रतिष्ठितः ।
तं धर्मं प्रथमं धाम्नि हरिणा संप्रदर्शितम् ॥ २ ॥
सर्वश्रेयस्करं धर्मंमृणाऽब्राध्यं प्रमोक्षदम् ।
श्रुतं नारायणमुखान्मुक्तिदं साधनोत्तरम् ॥ ३ ॥
धर्मः प्राह शृणुतं वै पुत्रौ परमशोभनौ ।
धर्मवन्तौ पितृभक्तौ यदुक्तं तत्सुशोभते ॥ ४ ॥
लक्षणं तत्सुपुत्रस्य मातापित्रोः सुसेवनम् ।
तत्ततोऽप्यधिकं धर्मं शृणुतं हरिणोदितम् ॥ ५ ॥
ब्रह्मचर्यसमो धर्मो नास्ति नास्त्येव नैव हि ।
अन्ये सर्वे तु धर्माणः कलां नार्हन्ति षोडशीम् ॥ ६ ॥
ब्रह्मचर्यं ब्रह्मधर्मो ब्रह्म वै स स्वयं मतम् ।
ब्रह्मरूपं ब्रह्ममूर्तिर्ब्रह्मात्मा ब्रह्मरूपदः ॥ ७ ॥
तुष्टे ब्रह्मणि सर्वेशे सर्वं तुष्टं सदा भवेत् ।
सेवा ऋणानि दानानि तदग्रे स्वल्पमात्रकम् ॥ ८ ॥
यज्ञप्राप्यं तु यत्प्रोक्तं ब्रह्मचर्येण लभ्यते ।
तस्माद् यज्ञो ब्रह्मचर्ये संप्रतिष्ठति सर्वथा ॥ ९ ॥
इष्टापूर्तेन यत्प्राप्यं ब्रह्मचर्येण लभ्यते ।
तस्मादिष्टं ब्रह्मचर्ये सम्प्रतिष्ठति सर्वदा ॥१०॥
यदिदं ब्रह्मणो रूपं ब्रह्मचर्यमिति स्मृतम् ।
परं तत्सर्वधर्मेभ्यस्तेन मोक्षः प्रलभ्यते ॥ ११ ॥
ब्रह्मचर्ये स्थितो धर्मो ब्रह्मचर्ये स्थितं तपः ।
ब्रह्मचर्ये स्थिता ये ते ब्रह्मधाम्नि स्थिता मताः ॥१२॥
योगेन जायते सिद्धिः सिद्ध्या कीर्तिः प्रवर्तते ।
कीर्तिः सिद्धिश्च तपसा तपो ब्रह्मणि चर्यया ॥१३॥
इन्द्रियनिग्रहोऽसाध्यो ब्रह्मचर्येण साध्यते ।
ब्रह्मचर्येण तपसा ब्रह्मलोको ह्यवाप्यते ॥१४॥
ब्रह्मचर्यप्रवृत्तस्य ब्रह्मलोकोऽपि कामदः ।
किं पुनर्देवलोकाद्या ब्रह्माधानं हि तत्ततः ॥१५॥
सत्त्रायणेन यत्प्राप्यं ब्रह्मचर्येण लभ्यते ।
सत्त्रायणं ब्रह्मचर्ये संप्रतिष्ठति सर्वथा ॥१६॥
मौनव्रतेन लभ्यं यद्ब्रह्मचर्येण लभ्यते ।
मौनं ततो ब्रह्मचर्ये संप्रतिष्ठति सर्वथा ॥१७॥
अनाशकायनेनाऽऽप्यं ब्रह्मचर्येण लभ्यते ।
अनाशकायनं ब्रह्मचर्ये तिष्ठति सर्वथा ॥१८॥

अरण्यायनसंप्राप्यं ब्रह्मचर्येण लभ्यते ।
अरण्यायनमप्यत्र ब्रह्मचर्ये प्रतिष्ठति ॥१९॥
त्यागायनेन संप्राप्यं ब्रह्मचर्येण लभ्यते ।
दृष्टानुश्रविके त्यागो ब्रह्मचर्ये प्रतिष्ठति ॥२०॥
अहिंसया च यत्प्राप्यं ब्रह्मचर्येण लभ्यते ।
अहिंसा सार्वभौमा सा ब्रह्मचर्ये प्रतिष्ठति ॥२१॥
सत्यव्रतेन यत्प्राप्यं ब्रह्मचर्येण लभ्यते ।
सत्यं तस्माद् ब्रह्मचर्ये त्रिविधं प्रतितिष्ठति ॥२२॥
अस्तेयेन च यत्प्राप्यं ब्रह्मचर्येण लभ्यते ।
अस्तेयं सर्वथा द्वेधा ब्रह्मचर्ये प्रतिष्ठति ॥२३॥
अपरिग्रहलभ्यं यद्ब्रह्मचर्येण लभ्यते ।
अपरिग्रह एवापि ब्रह्मचर्ये प्रतिष्ठति ॥२४॥
शौचेन प्राप्यते यद्वै ब्रह्मचर्येण लभ्यते ।
शौचं द्वेधा ब्रह्मयोगाद् ब्रह्मचर्ये प्रतिष्ठति ॥२५॥
सन्तोषाल्लभ्यते यत्तद्ब्रह्मचर्येण लभ्यते ।
सन्तोषः सर्वथाऽऽत्मीयो ब्रह्मचर्ये प्रतिष्ठति ॥२६॥
तपश्चर्या विविधा या ब्रह्मचर्येण पूर्यते ।
ततस्तपोमहाकाण्डो ब्रह्मचर्ये समाप्यते ॥२७॥
स्वाध्यायेन च यल्लभ्यं ब्रह्मचर्येण लभ्यते ।
स्वाध्यायः सर्वतोव्याप्तो ब्रह्मचर्ये प्रतिष्ठति ॥२८॥
ईश्वरस्य प्रणिधानं ब्रह्मचर्ये प्रवर्तते ।
तत ईशप्रणिधानं ब्रह्मचर्ये प्रतिष्ठति ॥२९॥
गोरक्षादीन्यासनानि ब्रह्मचर्ये फलन्ति वै ।
तस्मादासनकूटस्तु ब्रह्मचर्ये प्रतिष्ठति ॥३०॥
प्राणायामेन यल्लभ्यं ब्रह्मचर्येण लभ्यते ।
प्राणायामश्चतुर्धाऽतो ब्रह्मचर्ये व्यवस्थितः ॥३१॥
प्रत्याहारस्त्विन्द्रियाणां सति ब्रह्मव्रते फलेत् ।
तस्मादिन्द्रियरोधो वै ब्रह्मचर्ये प्रतिष्ठति ॥३२॥
ध्यानेन यद्भवेल्लभ्यं ब्रह्मचर्येण लभ्यते ।
ध्यानं प्रत्ययैकतानं ब्रह्मचर्ये प्रतिष्ठति ॥३३॥
धारणा यत्र कर्तव्या ब्रह्मचर्येण लभ्यते ।
तस्मात्तु धारणा सर्वा ब्रह्मचर्ये प्रतिष्ठति ॥३४॥
समाधिर्यत्र कर्तव्यो ब्रह्मचर्येण सिद्ध्यति ।
तस्माद्द्वेधा चतुर्धा स ब्रह्मचर्ये प्रतिष्ठितः ॥३५॥
दमशान्तितितिक्षेहोपरमादिभिराप्यते ।
यच्च तद्वै ब्रह्मचर्याल्लभ्यते नाऽत्र संशयः ॥३६॥
विवेकाच्च विभो काचाऽभ्यासात्सत्क्रियया तथा ।
कल्याणाचाऽनवसादादनुद्धर्षाच्च यद्भवेत् ॥३७॥
तत्सर्वं तु ब्रह्मचर्याल्लभ्यते नात्र संशयः ।
ज्ञानाद्धर्माच्च विज्ञानाद्भक्त्या विविधया तथा ॥३८॥
तत्त्वज्ञानान्मृषाप्रज्ञालोपाचापि तु यद्भवेत् ।
तत्सर्वं ब्रह्मचर्येण लभ्यते नात्र संशयः ॥३९॥
शब्दब्रह्मणि निष्णातः परंब्रह्माधिगच्छति ।
शब्दब्रह्मात्र विस्ताराद् ब्रह्मचर्ये प्रतिष्ठति ॥४०॥
ब्रह्मविमर्शसद्बिन्दुनादध्वानगिरोऽपि च ।
प्रवर्तन्ते ब्रह्मणस्तद्ब्रह्मचर्यफलं मतम् ॥४१॥
अणिमा महिमा प्राप्तिर्गरिमा लघिमा तथा ।
प्राकाम्यमीशिता सर्ववशिताऽपि च सिद्धयः ॥४२॥
तारसुतारताराताररम्यकसलिलकाः ।
प्रमोदमुदितमोदमानाश्चापि च सिद्धयः ॥४३॥
ऊहः शब्दोऽध्ययनं च दुःखघातास्त्रयस्तथा ।
सुहृत्प्राप्तिर्ज्ञानसिद्धिश्चाप्यष्टौ सिद्धयश्च याः ॥४४॥
दूरश्रवणदर्शनादानगमनाऽदृश्यताः ।
सिद्धयश्च तथा सर्वा लभ्यन्ते ब्रह्मचर्यतः ॥४५॥
नेत्या धोत्या च बस्त्या च कुंजरक्रियया तथा ।
यदाप्यते त्वाप्यते तद्ब्रह्मचर्येण सर्वथा ॥४६॥
पितॄणां तर्पणात् श्राद्धाद् यदाप्यते तदाप्यते ।
ब्रह्मचर्येण श्राद्धादि ब्रह्मचर्ये प्रतिष्ठति ॥४७॥
पुत्रोत्पत्त्या विद्ययाऽग्निहोत्रेणाऽऽराध्यते तु यत् ।
तत्समाराध्यते ब्रह्मचर्येणैवेति निर्ऋणम् ॥४८॥
श्रुत्या स्मृत्या च यल्लाभस्तल्लाभो ब्रह्मचर्यतः ।
प्रतीकोपासनालभ्यं यन्मतं धाम तत्खलु ॥४९॥
ब्रह्मचर्येण सम्प्राप्यं भवत्येव न संशयः ।
मातृपितृकुटुम्बानां लोकानां सेवया च यत् ॥५०॥
लभ्यते तद्ब्रह्मचर्याल्लभ्यते नात्र संशयः ।
गोविप्राणां सुराणां च साध्वीनां महतां तथा ॥५१॥
साधूनां सेवया लभ्यं ब्रह्मचर्येण लभ्यते ।
पतिव्रताया लोकास्ते लभ्यन्ते ब्रह्मचर्यतः ॥५२॥
कर्मठानां शर्मवतां धर्मिष्ठानां च या गतिः ।
ततोऽप्युच्चतरा सा वै ब्रह्मचर्येण लभ्यते ॥५३॥
पुण्यात्मनां दानिनां च या गतिर्जायते शुभा ।
ततोऽप्युच्चतरा प्राप्तिर्ब्रह्मचर्यवतो भवेत् ॥५४॥
यक्षरक्षोभूतवैनायककूष्माण्डमातरः ।
पिशाचप्रेतवेतालास्त्रस्यन्ति ब्रह्मचर्यतः ॥५५॥
डाकिनीशाकिनीशूलयोगिनीतालिकास्तथा ।
विद्रवन्ति ब्रह्मचारिबलान्नास्त्यत्र संशयः ॥५६॥

मानुषा भूतयः सर्वा देवानां स्मृद्धयस्तथा ।
लभ्यन्ते ब्रह्मचर्याद्वै ब्रह्मचर्ये प्रतिष्ठिताः ॥५७॥
ऐन्द्रं च वारुणं स्थानं कौबेरं सौममेव वा ।
सौर्यं च गाणपत्यं च भौमं स्वर्ग्यं च पैतृकम् ॥५८॥
वैराजमैश्वरं वार्षं पारमेष्ठ्यं पदं च वा ।
लभ्यते ब्रह्मचर्येण ब्रह्मचर्ये प्रतिष्ठति ॥५९॥
आग्नेयं वैष्णवं ब्राह्मं शांभवं च हिरण्मयम् ।
प्राकृतं पौरुषं मौक्तं लभ्यन्ते ब्रह्मचर्यतः ॥६०॥
अव्याकृतं च गोलोकं वैकुण्ठं चामृतं तथा ।
क्षैरं श्वैतं बाद्रिकं च लभ्यन्ते ब्रह्मचर्यतः ॥६१॥
ब्रह्मचर्यप्रभावेण जीवोऽपि याति शंभुताम् ।
योऽयमात्मा हृतपाप्मा विशोको मृत्युवर्जितः ॥६२॥
अक्षुधश्चातृषश्चाप्यजरः सत्यमनोरथः ।
सत्यफलो भवत्येव ब्रह्मचर्यप्रतापतः ॥६३॥
परब्रह्मसमो भूत्वा सर्वतद्भावभावितः ।
समश्नुते सर्वकामान् ब्रह्मचर्यप्रतापतः ॥६४॥
आप्रकृतिपूरुषं यद् दासऽऽयोगस्थमण्डलम् ।
किंकरं चरणे भूत्वा पतति ब्रह्मचारिणः ॥६५॥
अप्रस्खलितधातोस्तु ब्रह्मचर्यव्रतः सदा ।
तदूर्ध्वरेतसो देवा दासा भवन्ति किंकराः ॥६६॥
ब्रह्मचारिकृते लोका वर्तन्ते शाश्वताः सदा ।
प्रगच्छेद्येन मार्गेण ब्रह्मचारी जनस्तदा ॥६७॥
विघ्नाः कृत्या ग्रहा दैत्याः शूलाश्चाऽमंगलानि च ।
प्रयान्त्यपशकुनानि दूराद्ब्रह्मप्रतापतः ॥६८॥
यत्र मार्गे ब्रह्मचारी प्रगच्छति प्रतापवान् ।
समीपे स्वागतार्थं तं समायान्ति सुरादयः ॥६९॥
लोकपाला दिशाम्पालाः प्रजेशा मनवश्च तम् ।
अभियान्ति ब्रह्मचर्यप्रतापं ब्रह्मचारिणम् ॥७०॥
सम्वत्सराश्च ऋतवो मासाश्च दिवसा निशाः ।
अभियान्ति स्वागतार्थं ब्रह्मचर्यप्रतापिनम् ॥७१॥
विश्वेदेवा मरुतश्च विद्याध्राः किन्नरादयः ।
देव्यश्चाभिप्रयान्त्येनं ब्रह्मचर्यप्रतापिनम् ॥७२॥
अग्नयो दक्षिणाहोमावसथगृहिणो जनाः ।
अभियान्ति ब्रह्मचर्यबलिनं ब्रह्मचारिणम् ॥७३॥
साध्याः किंपुरुषाश्चैव गन्धर्वाश्चारणादयः ।
ब्राह्मणाश्चाऽप्यभियान्ति ब्रह्मचारिजनं मुदा ॥७४॥
नरनारीमिथुनानि ब्रह्माण्डे सन्ति कोटिशः ।
तानि पवित्रतां यान्ति ब्रह्मचारिपदाश्रयात् ॥७५॥
ब्रह्मचारी स्वयं ब्रह्म ब्रह्मचर्यबलेन वै ।
पृथ्वीजलादितत्त्वानि परावर्तयितुं क्षमः ॥७६॥
ब्रह्मचारी स्वयं स्वस्य प्राणस्य रक्षणे तथा ।
विसर्जने समर्थो वै न कालस्तत्र वै प्रभुः ॥७७॥
महाकालो याति दूरं यमो यमानुगास्तु के ।
वालखिल्याः सनकाद्याः सिद्धा योगेश्वरास्तथा ॥७८॥
हर्यश्वाः शबलाश्वाश्च साधवः साध्विकास्तथा ।
ब्रह्मचर्यप्रतापेन ब्रह्मभावमितो गताः ॥७९॥
हनुमान्कार्तिकेयश्च वर्तेते ब्रह्मचारिणौ ।
भगवत्यो महाभागाः सरस्वत्यादिकास्तथा ॥८०॥
ब्रह्मचारिण्य एवैता ब्रह्मभावमितो गताः ।
तस्मात्पुत्रौ ब्रह्मचर्ये तिष्ठन्तौ कुरुतं तपः ॥८१॥
ब्रह्मचर्यप्रतापेन ऋणं सर्वं निवर्तते ।
ब्रह्मचर्यसमं नान्यत्तपो भवति दुष्करम् ॥८२॥
ब्रह्मचारिशरीरे वै ब्रह्म साक्षाद्धि वर्तते ।
ब्रह्मचारिपूजनेन परब्रह्म प्रपूजितम् ॥८३॥
ब्रह्मचारिभोजनेन परब्रह्म सुभोजितम् ।
ब्रह्मचारिदर्शनेन परब्रह्मप्रदर्शनम् ॥८४॥
ब्रह्मचारिस्पर्शनेन परब्रह्मस्पृशिर्मता ।
ब्रह्मचारिनमस्कारे परब्रह्मनमस्कृतिः ॥८५॥
ब्रह्मचारिपरिचर्या ब्रह्मशुश्रूषणं मतम् ।
ब्रह्मचारिजलपाने ब्रह्मणा पीयते जलम् ॥८६॥
ब्रह्मचारिपार्श्ववासे ब्रह्मण्यावास उच्यते ।
ब्रह्मचारिप्रनेत्राभ्यां ब्रह्मैव संप्रपश्यति ॥८७॥
ब्रह्मचारिनासिकया ब्रह्मजिघ्राति वै मुदा ।
ब्रह्मचारिजिह्वया वै ब्रह्म वक्त्येव सर्वथा ॥८८॥
ब्रह्मचारिरसनया ब्रह्मैवास्वादयत्यपि ।
ब्रह्मचार्याननद्वारा भुंक्ते ब्रह्मपरं सदा ॥८९॥
ब्रह्मचारिकरपादा ब्रह्मणः करपत्कजाः ।
ब्रह्मचारिमनोवृत्त्या मनुते ब्रह्म सर्वथा ॥९०॥
ब्रह्मचारिकृतभोगं ब्रह्मभोग्यं तु तन्मतम् ।
ब्रह्मचारिकृतावासो ब्रह्मवासो मतः सदा ॥९१॥
ऊर्ध्वरेता नैष्ठिकश्चोपकुर्वाणो हरिः स्वयम् ।
माताऽपि पूजिता तेन पिता संसेवितस्तथा ॥९२॥
ब्रह्मचर्यव्रतं येन रक्षितं ब्रह्मरूपिणा ।
ब्रह्मचारिकृतं सर्वं ब्रह्मणा कृतमेव तत् ॥९३॥
तस्माद् ब्रह्मपरो धर्मो ब्रह्मचर्यान्न शिष्यते ।
अवतारा हरेर्ये वै ब्रह्मचारिण एव ते ॥९४॥

ब्रह्मचारिण आमुक्तिः सदा करतले स्थिता।
अतिष्ठतं ब्रह्मचर्ये पुत्रौ नरनरायणौ ॥९५॥
इत्याज्ञा पितृभ्यां दत्ता गृहीत्वा तौ नरो हरिः।
नत्वाभिवन्द्यशैत्याद्रिं तप्तुं तु दुष्करं तपः ॥९६॥
जग्मतुस्तत्र बद्र्यादिशोभिते शिखरे सदा।
बद्र्यधस्तात्तपो लोकसुखार्थं कुरुतो हि तौ ॥९७॥
तथाऽयं कार्तिकेयोऽपि तपत्येव दृढं तपः।
ब्रह्मचारिव्रतो भूत्वा विष्णुं भजति नित्यशः ॥९८॥
नास्त्यतो योग्यता तत्राऽपराधस्यापि लेशतः।
ब्रह्मचर्यतुलायां त्वसेवाऽकिंचित्करी मता ॥९९॥
असेवा वै न सा बोध्या सेवा तपःस्वरूपिणी।
ब्रह्मचर्यतपोयोगादुद्धारयति यत्स्वकौ ॥१००॥
मातापितरौ सा सेवा नाऽन्यतुल्याऽल्पिका मता।
यत्कृतेन सदा मातुः पितुः प्रसन्नता भवेत् ॥१०१॥
तत्कृतं सर्वदा सेवा नाऽन्या सेवा विशिष्यते।
कार्तिकेन कृता सेवा ब्रह्मव्रततपोमयी ॥१०२॥
इष्टं तपस्तु पार्वत्यास्तथा शंभोरपि ध्रुवम्।
लोके योग्यं च शास्त्रेऽपि तपः कार्यमिति प्रथा ॥१०३॥
ब्रह्मव्रतं तपो लक्ष्मि! मोक्षदं दुरितं न तत्।
माता शिवा प्रसन्नाऽऽसीत् पिता शंभुः प्रसादवान् ॥१०४॥
सेनापतित्वमाप्यैव तारकासुरनाशनम्।
कृतं पित्रोर्वचनं तत् त्वाज्ञासेवात्मकं परम् ॥१०५॥
मयैव विहिता चेयं स्कन्दस्थितिरनुत्तमा।
इति ते कथितं लक्ष्मि! किमन्यच्छ्रोतुमिच्छसि ॥१०६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने ब्रह्मचर्यमाहात्म्यवर्णनपूर्वककार्तिकेयाऽदुरिततादिप्रदर्शन-नामा एकादशाधिकशततमोऽध्यायः ॥१११॥

**श्रीलक्ष्मीरुवाच—**

नारायण हरेकृष्ण प्राणनाथ महाप्रभो।
भवतोक्तं महादेवो वैष्णवाग्र्योऽस्ति सर्वथा ॥ १ ॥
कथं स वैष्णवः प्रोक्तस्तत्कथां श्रोतुमुत्सहे।
क्व कदा वैष्णवो जातः श्रावयाऽद्य मम प्रिय! ॥ २ ॥

**श्रीनारायण उवाच—**

शृणु देवि! कथां दिव्यां महावैष्णवकारिणीम्।
मोक्षदां विष्णुसम्बद्धां कथयामि समासतः ॥ ३ ॥
सन्ति पृथ्व्यां पर्वताश्च देवादिवासदायिनः।
तेषां प्रियतमः शैत्यप्रदो मोक्षप्रदस्तथा ॥ ४ ॥
हिमालयः सदा शान्तस्तत्र बदरिकाश्रमम्।
पुरुषौ तत्र वर्तेते नरनारायणावुभौ ॥ ५ ॥
तत्रैकः श्वेतपुरुषश्चान्यः कृष्णस्तु रूपतः।
अनुजः पिंगलः प्रोक्तः कृष्णो नारायणः स्वयम् ॥ ६ ॥
द्विबाहुश्च चतुर्बाहुर्नरो नारायणः क्रमात्।
तत्र देवा वसन्तीह ऋषीणां चाश्रमाः शुभाः ॥ ७ ॥
गंगा यत्राऽलकनन्दा दिव्या वहति सर्वदा।
एकस्मिन्वत्सरे तत्र महेशस्तप्तवाँस्तपः ॥ ८ ॥
तदा नारायणो देवो भक्तानामभयंकरः।
सुप्रसन्नोऽब्रवीच्छंभुं वरं वरय शंकर ॥ ९ ॥
यं यमिप्ससि देव त्वं तं तं कामं ददाम्यहम्।
शंभुः प्राह तदा नारायणं तु करुणाकरम् ॥१०॥
अहं गृह्णामि भो देव यदि दातुं त्वमिच्छसि।
द्वौ वरौ मम दीयेतां सुप्रसन्नो जनार्दन! ॥११॥
तव भक्तिः सदैवाऽस्तु भक्तराजो भवाम्यहम्।
सर्वलोके प्रसिद्धः स्यां शिवो भक्तो महानिति ॥१२॥
विष्णुभक्त इतिख्यातिर्लोकेषु भुवनेष्वपि।
जायतां सर्वदा विष्णु! नारायण! जगत्प्रभो! ॥१३॥
अथ ये मां भजिष्यन्ति ग्रहीष्यन्त्याश्रयं मम।
तस्य तव प्रसादेन मुक्तिदाता भवाम्यहम् ॥१४॥
यस्याहं वरदाता स्यां तस्य मुक्तिर्भवेद् ध्रुवा।
विष्णुभक्तो मुक्तिदाता स्यां मे देहि वरद्वयम् ॥१५॥
इति श्रुत्वा स्वयं कृष्णः प्राह शंभुं गुणाकरम्।
भव शंभो मम भक्तो दाता मुक्तेश्च संभव ॥१६॥
एवं वरौ तदा लब्ध्वा शंकरः प्राह तं हरिम्।
देहि दीक्षां च मे नाथ वैष्णवश्च भवाम्यहम् ॥१७॥
नाऽवैष्णवो भवेद्भक्तो मुक्तिदो नाऽप्यवैष्णवः।
भुक्तिर्मुक्तिश्च ते योगाद्वैष्णवत्वे सति ध्रुवा ॥१८॥
वैष्णवेन ततो भाव्यं देहि दीक्षां कृपां कुरु।
विष्णुर्नारायणो देवः श्रुत्वा प्राह तु शंकरम् ॥१९॥
साधु संकल्पितं शंभो सर्वलोकहितार्थि यत्।
गृहाण शंभो प्रथमं मन्त्ररत्नं शुभावहम् ॥२०॥
'ब्रह्माहं ब्रह्मभक्तोस्मि' जपस्वैनं निरन्तरम्।
मन्त्ररत्नमिदं नाम प्रपाति शरणागतम् ॥२१॥
लक्ष्मीनारायणश्चेति मन्त्रः सर्वफलप्रदः।
श्रीमन्नारायणश्चेति मन्त्रः सर्वार्थसाधकः ॥२२॥

स्वामिनारायणश्चेति मन्त्रो मोक्षप्रदः स्मृतः ।
नरनारायणश्चेति मन्त्रो ब्रह्मगतिप्रदः ॥२३॥
हरिनारायणश्चेति मन्त्रो दुःखविनाशकः ।
कृष्णनारायणश्चेति मन्त्रो विभूतिदायकः ॥२४॥
मन्त्रो वासुदेवनारायणस्त्वैश्वर्यदायकः !
रामनारायणश्चेति मन्त्रः पापविनाशकः ॥२५॥
ॐ श्रीनारायणो मन्त्रो भुक्तिमुक्तिप्रदायकः ।
मन्त्रः प्रपत्तिदस्त्वेषः—'श्रीहरिः शरणं मम' ॥२६॥
इत्येवं मन्त्रदशकं देयं भक्तेभ्य उत्तमम् ।
ॐ नमो भगवते वासुदेवायेति मन्त्रराट् ॥२७॥
मन्त्रराजं मन्त्ररत्नं दशमन्त्रांश्च शंकर ! ।
एतान् द्वादशमन्त्रांस्त्वं देहि शिष्यजनाय वै ॥२८॥
मन्त्रोच्चारणमात्रेण चातितुष्टोऽस्मि नित्यदा ।
मन्त्राधिकारिणः सर्वे ये मे भक्ता मुमुक्षवः ॥२९॥
ज्ञानिनो योगिनश्चान्ये जडा नार्यस्तथाऽऽश्रिताः ।
भक्तिश्रद्धान्विताः सर्वे मानवा ह्यधिकारिणः ॥३०॥
ब्रह्माण्डे येऽत्र तिष्ठन्ति सुराद्याश्चाधिकारिणः ।
तेभ्योऽन्यतममन्त्रो वै दातव्यः श्रेयसे भवेत् ॥३१॥
शंखं चक्रं गदां पद्मं गृहाण भुजयोस्तथा ।
तप्तमुद्रांकनं चैतच्चन्दनांकनमेव वा ॥३२॥
गृहाण शंभो बाह्वोस्तद्विष्णुरूपत्वदायकम् ।
पञ्चविंशत्यक्षरां च गायत्रीं च गृहाण वै ॥३३॥
ॐ नारायणाय विद्महे वासुदेवाय धीमहि ।
तन्नो ब्रह्म प्रचोदयादिति जप्याऽन्वहं त्वया ॥३४॥
ध्यायस्व मां सुरूपं च द्विभुजं वा चतुर्भुजम् ।
द्विभुजं ब्रह्मणो रूपं ब्रह्मधामनि संस्थितम् ॥३५॥
सर्वावतारसंधर्तृ परब्रह्मात्मकं शुभम् ।
चक्रहस्तं तथाऽभयप्रदहस्तं द्विहस्तकम् ॥३६॥
हारकुण्डलमालाकटकमुकुटभूषणम् ।
पीताम्बरं षोडशाब्दं प्रसन्नं परमेश्वरम् ॥३७॥
चतुर्भुजं शंखचक्रगदापद्मकरान्वितम् ।
वामांकस्थश्रिया सार्धं रूपं ध्यायस्व हृद्गमम् ॥३८॥
अथ मां षोडशदिव्योपचारैः पूजयस्व च ।
आवाहनं स्वासनं च पाद्यमर्घ्यं ततः परम् ॥३९॥
आचमनं तथा स्नानं मधुपर्कं तथाऽम्बरम् ।
चन्दनं भूषणं पुष्पं धूपं दीपं निवेदनम् ॥४०॥
यज्ञसूत्रं च ताम्बूलं देहि मे भक्तिभावतः ।
सुगन्ध्यर्कं कर्पूरं च सुगन्धं देहि मेऽनघम् ॥४१॥
कुरु प्रदक्षिणां दण्डवच्च नमस्क्रियाः कुरु ।
स्तुतिं पुष्पाञ्जलिं देहि क्षमां याचस्व मत् तथा ॥४२॥
विसर्जय त्वहिष्टो मां स्वे हृदि स्थापयाऽऽत्मनि ।
श्रवणं कीर्तनं चैव स्मरणं पादसेवनम् ॥४३॥
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ।
ध्यानं समाधिरैक्यं च कुरु भजस्व साधनैः ॥४४॥
ऊर्ध्वपुण्ड्रं च तिलकं ललाटे कुरु शंकर ।
बाह्वोश्च हृदये चाप्यूर्ध्वपुण्ड्रं तिलकं कुरु ॥४५॥
चन्दनेन सुगन्धेन सत्केसरयुतेन च ।
तन्मध्ये चन्द्रकं तेन कुंकुमेनाऽथवा कुरु ॥४६॥
कण्ठे गृहाण तुलसीग्रैवेयं द्विसरं शुभम् ।
कण्ठी सा तु सदा धार्या न तु त्याज्या कदाचन ॥४७॥
तुलसीमालिकां चाष्टोत्तरशतार्थपूरिताम् ।
गृहाण जपकार्याय मण्यादिनिर्मितां च वा ॥४८॥
ईश्वरान्तं च ते नाम प्रकरोमि महेश्वरम् ।
पालकेन रमया च कृतस्त्वं 'परमेश्वरः' ॥४९॥
परेण च मया लक्ष्म्या कृतस्त्वं 'परमेश्वरः' ।
पं विष्णुं रं रमां मश्च मिमीते भजते तु यः ॥५०॥
ऐश्वर्याश्रय इत्युक्तस्त्वं शंभुः 'परमेश्वरः' ।
ईश्वरान्तानि नामानि तव शंभो भवन्तु वै ॥५१॥
एवं लक्ष्मि ! मया दीक्षा दत्ता श्रीशंकराय वै ।
तदारभ्य सदा शंभुर्भजते मामनन्यभाग् ॥५२॥
दीक्षामादाय शंभु स गतो वै गन्धमादने ।
स्वीयावासे तु कैलासे भजते मामहर्निशम् ॥५३॥
पत्रं पुष्पं फलं कन्दं तोयं ग्राह्यं च यद्भवेत् ।
तत्सर्वं मामनिवेद्य नैव गृह्णाति शंकरः ॥५४॥
करोति तिलकं स्थाने मां च जपति मालया ।
तिष्ठति ध्यानमग्नोऽसौ मम मूर्तावनीहया ॥५५॥
दृष्ट्वैवं वैष्णवीं भक्तिं शंकरं प्राह पार्वती ।
कस्य ध्यानं च मालाभिर्जपश्च तिलकादिकम् ॥५६॥
क्रियते लोकनाथेन परमेश्वररूपिणा ।
भवानेव परब्रह्म परात्परतरः स्वयम् ॥५७॥
इत्येवं पूर्णरूपस्य कस्य ध्यानं जपश्च वै ।
इति श्रुत्वा महादेवः पार्वतीं प्राह तात्त्विकम् ॥५८॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने बदरिकाश्रमे नारायणेन शंकराय वैष्णवीदीक्षाप्रदानं तदंगकलापादिप्रदर्शनं चेति निरूपणनामा द्वादशाधिकशततमोऽध्यायः ॥११२॥

श्रीनारायण उवाच—

पार्वत्या वचनं श्रुत्वा वैष्णवश्च महेश्वरः ।
संप्रवक्तुं समारेभे तज्जिज्ञासानिवृत्तये ॥ १ ॥
श्रृणु सति ! प्रवक्ष्यामि विष्णुं भजेऽहमंजसा ।
कृष्णनारायणो विष्णुः परब्रह्म परेश्वरः ॥ २ ॥
भजनीयः पूजनीयो जपनीयश्च सर्वदा ।
मया दीक्षा तदीया वै ग्रहीता बदरीवने ॥ ३ ॥
तं वै परेश्वरं नित्यं ध्याये भजामि भावतः ।
पार्वती प्राह देवेश ! विस्तरात् तद्यथातथम् ॥ ४ ॥
मामपि श्रावय सर्वं यदि ग्राह्यं मया भवेत् ।
येनाऽहमपि गोविन्दमाश्रित्य श्रेय आप्नुयाम् ॥ ५ ॥
कथं नाऽद्यापि मे नाथ ! कथितं नहि तत्क्वचित् ।
एतावत्कालपर्यन्तं श्रीहरेर्भजनं विना ॥ ६ ॥
दिवसाः सर्वथा व्यर्था गमिता मे हरिं विना ।
यद्यहं ते देवदेव ! सत्पात्र सम्मतास्मि वै ॥ ७ ॥
तदा मामपि भक्तां श्रीहरेः संदीक्षय प्रभो ।
गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुदेवो जनार्दनः ॥ ८ ॥
गुरुः स्वस्याः पतिः प्रोक्तः पत्यौ सर्वं समास्थितम् ।
पत्युः सेवा परा सेवा पत्युर्भक्तिः परा मता ॥ ९ ॥
पतिधर्मः परो धर्मस्तं धर्मं देहि शंकर ।
पतिस्तु वैष्णवो यस्याः पत्नी यदि न वैष्णवी ॥१०॥
अवैष्णव्या कृता सेवा भक्तिः सर्वापि निष्फला ।
अवैष्णव्या कृतं भोज्यमशुद्धं पावनं नहि ॥११॥
अवैष्णव्याः करजलं ह्यपेयं पावनं नहि ।
अवैष्णव्या गृहं सर्वं श्मशानमिति गीयते ॥१२॥
अवैष्णव्या गृहाल्लक्ष्मीर्निःसरति सर्वथा ।
तस्मादहं स्वामिधर्मं वैष्णवं पावनं परम् ॥१३॥
संग्रहीतुं समिच्छामि विस्तराद्ब्रूहि तत्त्वतः ।
श्रुत्वैवं पार्वतीगाथां प्राह शंभुर्महेश्वरीम् ॥१४॥
नाऽद्यापि पात्रता तेऽभूत् तस्मान्न कथितं मया ।
बहूनां जन्मनां पुण्यैः पात्रता प्राप्यते खलु ॥१५॥
एतज्जन्मनि पात्रत्वं पुष्टिं याति कथाश्रवात् ।
सतां तु सेवया चात्मा दिवो भवति नित्यशः ॥१६॥
पातिव्रत्येन पत्युश्च सेवयाऽऽत्मा बलं व्रजेत् ।
बलवान्भाग्यवान्साधुसेवको यो भवेज्जनः ॥१७॥
तस्यैव निर्मला वृत्तिर्भवत्यान्तरबाह्यजा ।
नैर्मल्यं तु भवेद्बीजं श्रद्धायाः सर्वथा प्रिये ॥१८॥
ततो भवति जिज्ञासा तया चाऽप्यधिकारिता ।
तथा सति गुरोर्योगे सर्वं फलति यत्कृतम् ॥१९॥
तवेदानीं तु तत्सर्वं समुत्पन्नं च योजितम् ।
ह्युपस्थितं च संजातं तस्मात् त्वं पात्रमुत्तमम् ॥२०॥
जाताऽस्यद्य महादेवि ! प्रसन्नश्च भवाम्यहम् ।
अहो मम प्रिया पत्नी वैष्णवीं स्थितिमिच्छसि ॥२१॥
अस्मात् किन्नु महद्भाग्यं परं मम कृते भवेत् ।
अत्यतीव प्रसन्नोऽस्मि श्रुत्वा ते हृदयं प्रिये ॥२२॥
सर्वं तेऽहं प्रदास्ये वै यतस्त्वं वैष्णवी भव ।
देवि ! चाद्यापि पर्यन्तं भोज्यं पेयं यदर्पितम् ॥२३॥
विष्णवे तत्समर्पय्य पश्चाद् भुक्तं मया हि तत् ।
किं वच्मि देवदेवेशि ! ह्यद्याऽऽनन्दमयो महान् ॥२४॥
सूर्योदयः सुवर्णस्य मम जातोऽस्ति सर्वथा ।
पतिसेवाफलं सर्वं सखि ! ते भवतु प्रिये ! ॥२५॥
गृहं सर्वं मम भूयाद्वैष्णवं भाग्यवानहम् ।
अद्य देवि ! देहशुद्ध्यै कार्तिके शुक्लपक्षके ॥२६॥
दशम्यां तु निराहारमुपवासं कुरु प्रिये ! ।
देहशुद्ध्यर्थमेवात्र पंचगव्यं गृहाण च ॥२७॥
मण्डपं श्रीकृष्णपूजाकृते रचय शोभनम् ।
कदलीस्तंभसन्नद्धमशोकदलतोरणम् ॥२८॥
सप्तधान्यकृतं तत्र सर्वतोभद्रमण्डलम् ।
रचय त्वं महाभागे तत्र स्थापय सद्घटम् ॥२९॥
अष्टदिक्षु घटान्पार्श्वे स्थापयाऽष्टौ नवाँस्ततः ।
कण्ठे वेष्टय वस्त्राणि मुखे पंचार्द्रपल्लवान् ॥३०॥
नारीकेलफलान्यष्ट कृष्णं लक्ष्मीं च तत्र वै ।
मध्ये घटे स्वर्णपात्रे प्रतिष्ठापय भावतः ॥३१॥
गणेशपूजनं कृत्वा श्रीकृष्णपूजनं ततः ।
लक्ष्म्याश्च पूजनं नारायणेन सह कारया ॥३२॥
निवेदय वराण्येव ह्युपचाराणि षोडश ।
रात्रौ जागरणं कुर्याः प्रातः स्नानं तथा कुरु ॥३३॥
उपचारैः षोडशभिः श्रीकृष्णं प्रतिपूजय ।
तत्र समागतं दीक्षाविधिज्ञातारमेव च ॥३४॥
आचार्यं मां श्रय पूर्वं हर्याश्रयणसिद्धये ।
आचिनोति च शास्त्रार्थानाचारे स्थापयत्यपि ॥३५॥
स्वयं त्वाचरते यस्मात् ब्रह्माध्यापयति ध्रुवम् ।
मन्त्रं जानाति विष्णोश्च भक्तिं करोति सर्वथा ॥३६॥
श्रीमन्नारायणसम्प्रदायविद्यां तु वेत्ति यः ।
तारयति स्वकं शिष्यमाचार्यः स मतो गुरुः ॥३७॥

तद्वाक्येषु सुविश्वासः शिष्यो भक्तिपरायणः ।
गृह्णीयान्मन्त्ररत्नं तदेकादश्यां तु कार्तिके ॥३८॥
गृहाण देवि ! दीक्षांगं शंखचक्रसुमुद्रणम् ।
पंचामृतैः प्रसंस्नाप्य शंखं चक्रं प्रपूज्य च ॥३९॥
अग्निं संस्थाप्य विधिना जुहुध्याज्यं विधानतः ।
घृतपायसयोर्होममष्टोत्तरशतं कुरु ॥४०॥
शंखचक्रे प्रतप्ते च कुरु ह्यग्नौ ततो गुरुः ।
अहं शंभुर्गुरुस्त्वां वै चक्रेण जलजेन च ॥४१॥
अंकयामि द्वयोर्बाह्वोः पुनः प्रपूज्य तद्द्वयम् ।
कलशस्थजलेनाऽत्राऽभिषेकं कुरु मस्तके ॥४२॥
नूतनां शाटिकां धृत्वा जलेनाचमनं कुरु ।
ललाटे तिलकं चोर्ध्वपुंड्रं सचन्द्रकं कुरु ॥४३॥
चन्दनेन कुंकुमेन ततो मन्त्रं गृहाण मे ।
'ब्रह्माहं ब्रह्मभक्ताऽस्मि' त्रिवारं तद् गृहाण मे ॥४४॥
ततो मां प्रपूजयाऽद्रितनये ! मां नमस्कुरु ।
गृहाण तुलसीकण्ठीं कण्ठे धारय चाद्रिजे ॥४५॥
लक्ष्मीनारायणश्चेति मन्त्रं गृहाण चाद्रिजे ! ।
महेश्वरीति ते नाम परमेश्वरी चेत्यपि ॥४६॥
बोध्यं ततः कुरु ध्यानं श्रीहरिं द्विभुजं तथा ।
लक्ष्मीनारायणं दिव्यं ध्याने गृहाण सर्वदा ॥४७॥
परस्माद् ब्रह्मणो नारायणाद् देवोऽस्ति नो परः ।
तस्यैव चापरो मन्त्रः 'श्रीहरिः शरणं मम' ॥४८॥
गृहाणैनं शिवेऽद्य त्वं जाता पूज्या सुवैष्णवी ।
कुरु भक्तिं हरेर्नित्यं गुरोर्मे सेवनं कुरु ॥४९॥
शिष्यप्रशिष्यशाखाश्च मन्त्रदानेन वर्धय ।
लक्ष्म्यावासस्त्वयि प्राप्तो मयि नारायणस्य च ॥५०॥
आवां भक्तिं करिष्यावो नारायणस्य सर्वदा ।
सेवां तस्य करिष्यावो येन मुक्तिर्ध्रुवा भवेत् ॥५१॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने कैलासे शंभुना पार्वत्यै श्रीवैष्णवीदीक्षादत्ते-त्यंगभूतकाण्डनिरूपणनामा त्रयोदशा-ऽधिकशततमोऽध्यायः ॥११३॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! ततो देव्या वैष्णव्या प्रार्थितं पुनः ।
शंभोरग्रे कथयामि श्रवणार्हं परं यतः ॥ १ ॥
पार्वत्युवाच देवेश ! महादेव ! सुरेश्वर ! ।
विष्णुभक्तिं ममाऽऽचक्ष्व मुक्तिदां विस्तरात्पुनः ॥ २ ॥
नारायणस्वरूपाणि मन्त्रपूजाविधींस्तथा ।
तद्विभूतिगुणार्दीश्च तद्धामगतिसाधनम् ॥ ३ ॥
धाम्नस्तस्य स्वरूपं च चिह्नमाहात्म्यमित्यपि ।
विस्तरेण मयि प्रीत्या ब्रूहि सर्वमशेषतः ॥ ४ ॥
इति पृष्टो महादेव्या शंभुर्वैष्णवसत्तमः ।
उवाच परमप्रेम्णा नत्वा नारायणं हरिम् ॥ ५ ॥
साधु पृष्टं महादेवि ! सर्वजीवहितैषिणि ! ।
भक्तवर्ये ! शीलरूपगुणोपेते ! महेश्वरि ! ॥ ६ ॥
परितुष्टोऽस्मि ते प्रश्नाद् धन्याऽसि वैष्णवि ! प्रिये ! ।
कृतपुण्याऽसि भक्ताऽसि प्रभोर्नारायणस्य च ॥ ७ ॥
वक्ष्याम्यहं च ते देवि ! भगवद्भक्तिमुत्तमाम् ।
नारायणस्वरूपं च मन्त्रपूजाविधिं तथा ॥ ८ ॥
परब्रह्म परमात्मा परमेश्वर एव सः ।
सर्वेश्वरो महामुक्तेश्वरोऽक्षरपरः प्रभुः ॥ ९ ॥
परमः पुरुषः पुरुषोत्तमः श्रीहरिः स्वयम् ।
भगवानक्षरातीतो वासुदेवोऽच्युतः परः ॥१०॥
कृष्णो नारायणो देवेश्वरो विष्णुः सनातनः ।
ईशेश्वरो महामायेश्वरः साक्षी सदाशिवः ॥११॥
हिरण्यगर्भः श्रीमान् श्रीयज्ञो नारायणो नरः ।
लक्ष्मीपतिः स्वाम्यनन्तश्चात्मारामो गुणातिगः ॥१२॥
सर्वनेत्रसर्वविज्ञः सर्वहृत्स्थो नियामकः ।
गुणाकरो दिव्यमूर्तिः श्यामलो हृदयंगमः ॥१३॥
नित्यं भक्तेषु वसति रक्षत्यपि स्वकान् जनान् ।
शेषवेदोपवेदाद्यैः सबृहस्पतिदैवतैः ॥१४॥
माहात्म्यं तस्य देवस्य वक्तुं नैव हि पार्यते ।
तस्य भक्तिकलापं ते वच्मि शृणु पृथक्प्रिये ॥१५॥
मूर्तिर्हरेः सदा ध्येया स्वात्मन्येव मुहुर्मुहुः ।
तस्य चक्रस्य शंखस्य ह्यंकनं प्रथमं मतम् ॥१६॥
धारणं चोर्ध्वपुंड्राणां तन्मन्त्राणां परिग्रहः ।
अर्चनं तज्जपो ध्यानं तन्नामस्मरणं मुहुः ॥१७॥
कीर्तनं श्रवणं तस्य वन्दनं चरणार्हणम् ।
चरणामृतपानं च तन्निवेदितभोजनम् ॥१८॥
तदीयानां सतां सेवा द्वादश्येकादशीव्रतम् ।
तुलसीरोपणं चैव भक्तिः षोडशधा हि सा ॥१९॥
अथ श्रीमन्दिरे तस्य मार्जनं लेपनं तथा ।
क्षालनं धूपनं चैवान्दोलनं दीपनं तथा ॥२०॥

बीजनं मर्दनं रंगरंजनं चांजनं तथा।
सुगन्धनं तथा वस्तुप्रदापनमनुव्रतम् ॥२१॥
हासनं वार्तनं चैव स्वापणं षोडशाऽपराः।
भक्तिभेदा भवन्त्येव क्रियारूपा हरेः कृते ॥२२॥
एतैः सेवाप्रभेदैश्च भवबन्धो विनश्यति।
सर्वेषामेव देवानां देवीनां च ममापि च ॥२३॥
साधूनां ब्राह्मणानां च वैष्णवानां विशेषतः।
पूजनीयो हरिर्नित्यं विधिवत्पूजयेद्धि तम् ॥२४॥
शंखचक्रगदापद्मांकनं वै बाहुमूलयोः।
धारयित्वैव विधिवद् ब्रह्मपूजां समाचरेत् ॥२५॥
पापानि क्षालयित्वा स याति विष्णोः परं पदम्।
चक्रांकनविहीनेन कृता पूजा निरर्थिका ॥२६॥
विष्णुचक्रविहीनेन भुक्तं श्राद्धे निरर्थकम्।
निराशाः पितरो यान्ति तदा दृष्ट्वा त्ववैष्णवम् ॥२७॥
देयं गोभूहिरण्यादि चक्रांकितभुजाय वै।
चक्रहीनाय यद्दत्तं तद्गृह्णन्त्यसुरा बलात् ॥२८॥
तप्तचक्रांकित बाहुमूला यान्ति हरेः पदम्।
चक्रचिह्नितभक्तेषु तीर्थयज्ञा वसन्ति वै ॥२९॥
चक्रचिह्नविहीनस्तु ब्राह्मणः प्राकृतो मतः।
न तस्य किंचिदश्नीयादपि क्रतुसहस्रिणः ॥३०॥
चक्रं नारायणस्यैव संसारचक्रनाशकम्।
तप्तं वा चान्दनं चक्रं धार्यं कर्मप्रसिद्धये ॥३१॥
श्रौतस्मार्तादिसिद्ध्यर्थं मन्त्रसिद्ध्यर्थमेव च।
हरेरर्चनसिद्ध्यर्थं वैष्णवत्वस्य सिद्धये ॥३२॥
ज्ञानस्य सिद्धये चैव चक्रं धार्यं विशेषतः।
अचक्रधारिणं विप्रं दूरतः परिवर्जयेत् ॥३३॥
वाहने तं समारोप्य बहिः कुर्यात्स्वपत्तनात्।
श्वपाकमिव नेक्षेत लोके विप्रमवैष्णवम् ॥३४॥
दक्षिणे तु भुजे विप्रो बिभृयाच्च सुदर्शनम्।
वामे शंखं तु बिभृयादिति बोध्यं परेश्वरि ! ॥३५॥
गोविन्दस्याऽऽयुधान्यंगे बिभ्रन् सुश्रोणि ! वै द्विजः।
तुरीयं धामतद्विष्णोर्महिष्ठः प्राप्नुयादिति ॥३६॥
चमूषच्छ्येनः शकुनो बिभृत्वेति ऋगब्रवीत्।
ब्राह्मणे तु शतपथे तप्तं चक्रं द्विहस्तयोः ॥३७॥
धार्यमग्निहोत्रमेव भवति ब्रह्ममुक्तिदम्।
तप्तं चक्रं भुजे धार्यं विष्णुलोकगतिर्भवेत् ॥३८॥
सुदर्शनं तु सन्धार्यमित्यूर्ध्वपुंड्रमित्यपि।
द्विरेखं भवति वेद ब्रह्मसायुज्यमेति सः ॥३९॥

तप्तं चक्रं भुजे धार्यं ब्रह्मसायुज्यमिच्छता।
तप्तं चक्रं भुजे धार्यं तत्पुरुषपरेण हि ॥४०॥
देवासः पितरो येन विधृतेन च बाहुना।
सुदर्शनेन प्रयतास्स्वर्गं लोकं यदंकितः ॥४१॥
मनवो लोकसृष्टिं वै वितन्वन्ति तदंकिताः।
तप्तं चक्रं भुजे धार्यमूर्ध्वपुंड्रं समालिखेत् ॥४२॥
द्विरेखं भवति तेन पुनरागमनं नहि।
विष्णुदैवततप्तं तच्चक्रं धार्यं भुजद्वये ॥४३॥
तप्तं चक्रं भुजे धृत्वा देवा गच्छन्ति केशवम्।
ब्राह्मणा धारयन्त्यूर्ध्वपुंड्रं द्विरेखमीशदम् ॥४४॥
निचक्षेप मुषणं भिद्यमानं मध्येबाहुमदधत् सुदर्शनं च।
विष्णोरिदं भूरिदं भूरितेजो दिवानक्तं बिभृयुस्तज्जनासः ॥४५॥
पवित्रमित्यग्निर्नेमिः सहस्रारस्तन्नेमिना।
तप्ततनूर्ब्राह्मणो वै ब्रह्मसायुज्यमाप्नुयात् ॥४६॥
चक्रं बिभर्ति वपुषाभितप्तं बलं देवानाममितस्य विष्णोः।
स एति नाकं दुरितानि विधूय प्रयान्ति यत्र यतयो वीतरागाः ॥४७॥
एभिर्वयमुरुविक्रमस्य चिह्नै-
रंकिता लोके नु सुभगा भवामः।
तद्विष्णोः परमं पदमक्षराख्यं
ये गच्छन्ति लांछितास्तैः परस्मिन् ॥४८॥
प्र ते विष्णो ह्यब्जचक्रे पवित्रे
जन्मांभोधिं तर्तवे चर्षणीन्द्राः।
मूले बाह्वोर्दधतेऽन्ये पुराणा
लिंगान्यंगे तावकान्यर्पितानि ॥४९॥
धृतोर्ध्वपुंड्रः कृतचक्रधारी
विष्णुं परं ध्यायति यो महात्मा।
स्वरेण मन्त्रेण सदा हृदिस्थितं
परात्परं यन्महतो महान्तम् ॥५०॥
ऊर्ध्वपुंड्रं तथा चक्रं नित्यं धारयते जनः।
तेन तस्याऽशुभं नश्येच्छुभमस्य विवर्धते ॥५१॥
उपवीतादिवद्धार्याः शंखचक्रगदादयः।
महापत्सु प्ररक्षन्ति विष्णुरिव तदायुधाः ॥५२॥
सुदर्शनेन यस्यांगं लांछितं तु भवेत्सदा।
देहे तस्य वसेन्नित्यं श्रिया युक्तः स्वयं हरिः ॥५३॥
चक्रायुधांकितं दृष्ट्वा यमोऽपि हृदि शंकते।
प्रणामं दूरतः कृत्वा विष्णुभक्तं प्रयाति वै ॥५४॥
पशुपुत्रादिकं सर्वं गृहोपकरणानि च।
अंकयेच्छंखचक्राभ्यां नाम कुर्याच्च वैष्णवम् ॥५५॥

पत्नी पतिश्च कुर्यातां संस्कारपंचकं यदा।
सधर्मिणौ भवेतां तु तदा भक्तौ न चान्यथा ॥५६॥
वैष्णवा मुनयः सर्वे सुदर्शनेन मुद्रिताः।
तेषां पादोदकं पीत्वा सर्वपापैः प्रमुच्यते ॥५७॥
धृतोर्ध्वपुंड्रः परमेशितारं
नारायणं सांख्ययोगाधिगम्यम्।
ध्यात्वा विमुच्येत नरः समस्तैः
संसारपाशैरिह चैति विष्णुम् ॥५८॥
धृतोर्ध्वपुंड्रो धृतचक्रलांछनो
नारायणं पूजयति स्म लक्ष्मीम्।
अर्घ्यादिभिः पौरुषसूक्तमन्त्रैः
स प्राप्नुयाद्विष्णुपदं महात्मा ॥५९॥
तत्प्रियार्थं शुभार्थं च रक्षार्थं मुक्तिलब्धये।
सद्भक्तो धारयेन्नित्यमूर्ध्वपुंड्रं भयापहम् ॥६०॥
शंखचक्रगदापद्मखड्गशार्ङ्गादिचिह्नितः।
तुलसीचन्दनैर्लिप्तः कुर्यात्सन्ध्यामुपासनाम् ॥६१॥
स्नानं दानं जपो होमः सन्ध्या स्वाध्यायकर्म च।
यज्ञः पितृक्रियोर्ध्वपुंड्रं विना निष्फलं मतम् ॥६२॥
अतप्ततनुर्न तदामो अश्नुते शृतास वै।
इद्वहन्तस्तत्समाशत वृत्तदीर्घे कराधिक्रुण्महे ॥६३॥
अस्य विष्णोस्तप्ततनवः तरेयुः पातकांबुधिम्।
पवित्रं चरणं नेमिर्हरेश्चक्रं सुदर्शनम् ॥६४॥
दीर्घे समूर्ध्वतिलकं कृत्वा यान्ति परं पदम्।
तेन तप्ता तनुर्येषां ते यान्ति परमाक्षरम् ॥६५॥
सहस्रारं प्राकृतघ्नं ब्रह्मद्वारं महौजसम्।
पवित्रमर्चिवदग्ने ब्रह्म तेन पुनीहि नः ॥६६॥
येन देवाः पवित्रेण ह्यात्मानं पुनते सदा।
तेन सहस्रधारेण पवमान्यः पुनन्तु माम् ॥६७॥
प्राजापत्यं पवित्रं तच्छतोद्यामं हिरण्मयम्।
वयं ब्रह्मविदस्तेन पूतं ब्रह्म पुनीमहे ॥६८॥
सनेमिचक्रं सततं चाक्षरस्य महात्मनः।
तस्मिँश्चक्रवृते देहे महोन्नतिपदं लसेत् ॥६९॥
दिवस्पतेः सुविततं पवित्रं यस्य दक्षिणे।
न तप्यते भुजे सम्यक्तस्य शोचन्ति वै क्रियाः ॥७०॥
ये वहन्ति भुजे चक्रं शंखं च विधिना जनाः।
परानपि विलोमस्थाँस्ते रक्षन्ति हरेः प्रियाः ॥७१॥
द्विविधं वैष्णवं प्रोक्तं बाह्यमाभ्यन्तरं तथा।
शंखचक्रादिभिर्बाह्यमान्तरं हरिरक्षणम् ॥७२॥
अंगे चक्रादिहेतीनामंकनं वैष्णवं पुरा।
भक्त्या हृदि सदा श्रीमन्नारायणसुसेवनम् ॥७३॥
तदेतद्द्वययुक्तत्वे वैष्णवत्वं ध्रुवं भवेत्।
इत्येवं चक्रमाहात्म्यं वैदिकार्थपुषं बहु ॥७४॥
तस्माद्धार्यं महादेवि ! पार्वती ! तत्सुदर्शनम्।
येन रक्षा तथा मुक्तिरुभयं जायते ध्रुवम् ॥७५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने षोडशविधभक्तितप्तचक्रपुंड्रादिमहिमवर्णननामा चतुर्दशाधिकशततमोऽध्यायः ॥११४॥

**श्रीनारायण उवाच—**

शंभुः प्राह ततो देवीं पार्वतीं स्वप्रियां प्रिये !।
शृणु शैल्याद्रिसत्पुत्रि ! महिमानं तथाऽपरम् ॥ १ ॥
ऊर्ध्वपुंड्रस्य संवक्ष्ये धारणान्मुक्तिरिष्यते।
ऊर्ध्वं ब्रह्मपरं लोकं पुंसे दद्याद् विमुक्तये ॥ २ ॥
रक्षयेच्च जगद्वन्धात्तदूर्ध्वं पुंड्रमीरितम्।
मध्ये तु चन्द्रके लक्ष्मी पुंड्रे देवो जनार्दनः ॥ ३ ॥
द्वयोर्वासो ललाटाग्रे यस्य सोऽक्षयमोक्षभाक्।
तस्यैव दर्शनात्प्रातर्ज्वलन्ति त्वघपर्वताः ॥ ४ ॥
यस्य देहे चोर्ध्वपुंड्रं स नारायणमन्दिरम्।
ऊर्ध्वपुंड्रललाटस्य सर्वतीर्थफलं भवेत् ॥ ५ ॥
सर्वयज्ञफलं चापि चेष्टापूर्तफलं भवेत्।
सर्वदानफलं चाथ सर्वयोगफलं भवेत् ॥ ६ ॥
ऊर्ध्वपुंड्रललाटं वै दृष्ट्वा पापैः प्रमुच्यते।
नमस्कृत्य विमानस्थो याति ब्रह्मपदं परम् ॥ ७ ॥
श्राद्धे चोर्ध्वपुंड्रधरं भोजयिष्यति यो जनः।
आकल्पकोटि पितरस्तृप्ता हृष्टा भवन्ति वै ॥ ८ ॥
सोर्ध्वपुंड्रधरादेवकृतश्राद्धे गयाफलम्।
यज्ञदानजपातिथ्यसत्क्रियाहोमतापनम् ॥ ९ ॥
सोर्ध्वपुंड्रभक्तकृतं तस्य पुण्यमनन्तकम्।
ऊर्ध्वपुंड्रविहीनेन कृतं यज्ञादिकं वृथा ॥१०॥
अनूर्ध्वपुंड्रको देहः श्मशानसदृशो भवेत्।
अनूर्ध्वपुंड्रकस्यात्र पुण्यं सन्ध्याहिजापनम् ॥११॥
हरन्ति राक्षसास्तद्वै स्वयं दोषेण लिप्यते।
अनूर्ध्वपुंड्रको यायान्नैजपापाद्यमक्षयम् ॥१२॥
सकेसरसुगन्धाढ्यचन्दनेनाऽथवा मृदा।
पाण्डुरया पिशंग्या वा कुंकुमेनाऽथवा क्रियात् ॥१३॥

ललाटभूषणं तद्वै चतुर्धा बोध्यमेव ह ।
ऊर्ध्वपुंड्रं च पुंड्रं च पट्टपुण्ड्रं त्रिपुण्ड्रकम् ॥१४॥
ऊर्ध्वपुंड्रं द्विरेखं स्यादेकरेखं तु पुण्ड्रकम् ।
पट्टस्थूलं पट्टपुंड्रं सुसत्र्यंकं त्रिपुण्ड्रकम् ॥१५॥
देवादिपूजने दैवकार्ये द्विरेखमादृतम् ।
राज्याभिषेकप्रभृतौ तिलकं दीपवत्स्मृतम् ॥१६॥
अशून्यकललाटार्थं पट्टाकारमहर्निशम् ।
शृंगारहासलिंगादिपूजने तु त्रिपुंड्रकम् ॥१७॥
चान्दनं चोर्ध्वपुंड्रं वै कौंकुमं तिलकं मतम् ।
श्वेतमृदा तु पट्टाख्यं भस्मना तु त्रिपुंड्रकम् ॥१८॥
विष्णुभक्तैर्मानवैर्वै कार्यमूर्ध्वं तु पुण्ड्रकम् ।
एकान्तिनो महाभागवतास्तु सात्त्वताः सदाः ॥१९॥
कुर्वन्ति सान्तरालं तदूर्ध्वं हरिपदाकृति ।
मध्ये सचन्द्रकं तद्वै श्रीहरेर्मन्दिरं स्मृतम् ॥२०॥
ऋजु सौम्यं सुशलाकं मनोहारि सुशोभनम् ।
तनुरेखं कैसरं तदूर्ध्वपुंड्रं सचन्द्रकम् ॥२१॥
नरनारीभिराधार्यं दर्शने मंगलावहम् ।
सान्तराले चोर्ध्वपुंड्रे मध्यकुंकुमचन्द्रके ॥२२॥
मध्ये लक्ष्म्या सयुक्तः श्रीहरिस्तत्र विराजते ।
निरन्तरालात्तु ततः सश्रीहरिर्निवर्तते ॥२३॥
निरन्तरालं निःश्रीकं सान्तरालं श्रियाऽन्वितम् ।
मृदं पिंगतडागस्य वैकुण्ठाख्यहृदस्य च ॥२४॥
श्वेतां पिशङ्गीं वाऽऽदाय कुर्यादूर्ध्वं तु पुण्ड्रकम् ।
तीर्थप्रासादिकीं भूमिं मृदामादाय शोधयेत् ॥२५॥
तुलसीमूलभूमेर्मृदूर्ध्वपुंड्रे प्रशस्यते ।
श्रीकृष्णेलाभुवश्चापि गंगायमीप्रतीरयोः ॥२६॥
गोमतीतीरभूमेस्तूर्ध्वपुंड्रं तीर्थपुण्यदम् ।
यज्ञाग्निहोत्रयोर्भस्म हरिक्षेत्रादिमृत्तिका ॥२७॥
कुंकुमंवापिकामृद्वै पावनी हरिणीसमा ।
बिल्वपिप्पलतुलसीवटामलक्युदम्बराः ॥२८॥
देववृक्षास्तदधोभूः पवित्रा तिलकार्हणा ।
नगाग्रस्था सरित्संस्था जलान्तःस्था च सिन्धुजा ॥२९॥
वल्मीकस्था मन्दिरस्था क्षेत्रस्था भूमिगर्भगा ।
देवस्नानजलैः सिक्ताऽरण्यस्था वृष्टिवाहिता ॥३०॥
मृत्तिका सर्वतीर्थानां धाम्नां पुरीवनादिजा ।
हर्यवतारोद्भवभूर्भगवद्वासयोगिनी ॥३१॥
पावनी च तया कार्यमूर्ध्वपुड्रं सुमोक्षदम् ।
कृष्णं तु शान्तिदं रक्तं वश्यकृन्मोक्षदं सितम् ॥३२॥
पीतं लक्ष्मीप्रदं प्रोक्तं धूसरं श्रीविनाशकम् ।
विच्छिन्नं वा बहुस्थूलं वक्रं तिर्यगदर्शनम् ॥३३॥
तथाऽसमान्तरालं च सूक्ष्मं वा विषमान्तरम् ।
ह्रस्वदीर्घादिरेखं च स्थूलसूक्ष्मादिरेखकम् ॥३४॥
प्रान्तलग्नान्तरव्यासं विच्छिन्नमूलकं तथा ।
अर्धं त्र्यर्धं लम्बमानं शुष्कं निस्तेज आततम् ॥३५॥
कुदृश्यं वर्तुलं चोर्ध्वपुंड्रं हानिकरं स्मृतम् ।
नासामूलं समारभ्य भ्रुवोः संलग्नके तु वै ॥३६॥
द्वे रेखेऽङ्गुलविस्तारे आकेशप्रान्तके गते ।
नासामूले निम्नभागे द्वितीयाचन्द्रवद्भुजे ॥३७॥
सम्पद्येतोर्ध्वपुंड्रं तद् ब्रह्मधामप्रदायकम् ।
ललाटे तु परब्रह्म लक्ष्मीनारायणं हृदि ॥३८॥
दक्षे बाहौ वासुदेवं वामे नरनरायणौ ।
स्मृत्वा विष्णुजलद्रावैर्द्रव्यैः कार्याणि सर्वदा ॥३९॥
नारायणं समुदरे गोविन्दं कण्ठकर्कटे ।
विष्णुं वै दक्षिणे पार्श्वे वामनं वामपार्श्वके ॥४०॥
त्रिविक्रमं कंधरे तु स्मृत्वा दामोदरं त्रिके ।
पृष्ठे स्मृत्वा पद्मनाभं वासुदेवं तु मूर्धनि ॥४१॥
एवं द्वादशपुंड्राणि महाभागवतश्चरेत् ।
ललाटे भुजयुग्मे च त्रिके कण्ठे च पृष्ठके ॥४२॥
चतुरंगुलकं मानं पार्श्वयोस्तु दशांगुलम् ।
कंधरे मूर्ध्न्युदरे वक्षस्यष्टांगुलं क्रियात् ॥४३॥
सबीजं सान्तरालं तु श्रियाः कुंकुमचन्द्रयुक् ।
क्षत्रियाणां तु चत्वारि ललाटे भुजयोर्हृदि ॥४४॥
विशां भाले हृदये द्वे भालैकं शूद्रयोषितोः ।
गिरिजे ! तव भक्तानामश्वत्थदलसदृशम् ॥४५॥
मम शंभोस्तु भक्तानां पद्मकुड्मलसदृशम् ।
गणेशादिप्रभक्तानां वेणुपत्रादिसदृशम् ॥४६॥
हरेर्भागवतानां तद् ऊर्ध्वं हरिपदाकृति ।
किरणाकारमूर्ध्वं तु पुण्ड्रं मोक्षकरं सदा ॥४७॥
मध्ये हरिद्राकुंकुमबिन्दुर्लक्ष्मीनिवासभूः ।
भालमध्ये रेखयोरस्पृष्टो घट्टसमस्तरः ॥४८॥
हारिद्रः कौंकुमो बिन्दुश्चन्द्रवच्छ्रीप्रदः सदा ।
बिन्दूर्ध्वपुण्ड्रकौ बोध्यौ लक्ष्मीनारायणौ सदा ॥४९॥
भाले हृदि तथा बाह्वोर्यस्य तस्य जयः सदा ।
तच्छून्यस्य परे चात्राऽनुपदं तु पराजयः ॥५०॥
इति ते कथितो गौरि ! ह्यूर्ध्वपुंड्रादिनिर्णयः ।
नारायणेन मह्यं यः कथितः सर्वथा शुभः ॥५१॥

ब्रह्मविष्णुमहेशानां देवीदेवतपस्विनाम् ।
भक्ता ये स्वैरिणो भाव्या मनिष्यन्ते तु नर्मवत् ॥५२॥
ते तु नारीसमानास्याः कबरीकेशवेषिणः ।
भविष्यन्ति पुमांसोऽपि नारीश्रृंगारिकक्रियाः ॥५३॥
नारीवद्वस्त्रधर्तारो नारीभावस्वदर्शकाः ।
नार्यो नरादिवेषस्था नररूपस्वदर्शिकाः ॥५४॥
स्वस्वधर्मादिहीनाः स्युः स्वस्वमोक्षस्य घातकाः ।
अचिह्नास्ते विचिह्ना वै यास्यन्ति नरकान्मुहुः ॥५५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने ऊर्ध्वपुंड्रादिमाहात्म्यनिरूपणनामा पञ्चदशाधिकशततमोऽध्यायः ॥११५॥

**श्रीनारायण उवाच—**

शृणुलक्ष्मि ! ततः शंभुर्मन्त्रमाहात्म्यमुत्तमम् ।
पार्वतीं प्राह सर्वार्थं सबीजं च सविस्तरम् ॥ १ ॥
अवैष्णवोपदिष्टेन मन्त्रेण नैव सिद्धयति ।
मोक्षो वा कार्यमेवापि तस्माद्वैष्णवमाश्रयेत् ॥ २ ॥
वैष्णवाचार्यदत्तो वै मन्त्रः सर्वार्थसाधकः ।
गुरुं तु वैष्णवं कुर्यान्नाऽवैष्णवं कदाचन ॥ ३ ॥
वैष्णवस्य गुरोर्योगाच्छुद्धा भवन्ति मानवाः ।
वैष्णवस्तु गुरुः प्रोक्तो नारायणस्वरूपकः ॥ ४ ॥
नारायणसमो देवो गुरुर्वै तारयेज्जनान् ।
गुरुर्नारायणः साक्षान्मन्त्रदो मोक्षदस्तथा ॥ ५ ॥
न वै नारायणान्न्यूनो नारायणसुखप्रदः ।
नारायणसमो देहे नारायणसमो गुणे ॥ ६ ॥
नारायणसमो मोक्षे नारायण इवार्थदः ।
तस्माद्वैष्णवमूर्धन्याद्गुरोर्ग्राह्यः सुमन्त्रकः ॥ ७ ॥
सहस्रशाखाध्यायी च सर्वयज्ञाधिकारवान् ।
विप्रादिजन्मवाँश्चापि न गुरुः स्यादवैष्णवः ॥ ८ ॥
गुरुमाश्रित्य मन्त्रार्थः सम्यग् ज्ञातव्य एव च ।
शंखचक्रादिचिह्नाक्तः कृतोर्ध्वपुड्रचन्द्रकः ॥ ९ ॥
कण्ठस्थतुलसीमालो मन्त्रार्थं चिन्तयेद् बुधः ।
न्यासश्चाष्टाक्षरो मन्त्रो 'ब्रह्माहं ब्रह्मभक्तोऽस्मि' ॥१०॥
अन्येऽपि वैष्णवा मन्त्रा 'लक्ष्मीनारायणा' दयः ।
न्यासो मन्त्रो मन्त्ररूपं वैष्णवानां परं मतम् ॥११॥
तदन्ये वैष्णवा मन्त्रास्तारकाः सन्ति देहिनाम् ।
न्यासार्थे तु परिज्ञाते ज्ञातव्यार्थो न शिष्यते ॥१२॥
तस्माच्छृणु महादेवि ! मन्त्ररत्नार्थमेव च ।
ब्रह्माहं ब्रह्मभक्तोऽस्मि तत्र चतुष्पदानि वै ॥१३॥
ब्रहत्वाद् बृंहणत्वाच्च व्यापकं ब्रह्म चोच्यते ।
तद्वै ब्रह्म भवेद् द्वेधा साकारं च निराकृति ॥१४॥
साकारं मूर्तिमत्सेवाधर्मवद्धाम्नि संस्थितम् ।
सेवकं चाक्षरं ब्रह्म वर्तते पार्षदा यथा ॥१५॥
कदाचिन्मम मुक्ताख्यं कदाचिच्छ्रीस्वरूपकम् ।
नररूपं कदाचित्तु कदाचित् सिंहमासनम् ॥१६॥
तस्य धर्मोऽनन्यसेवा पातिव्रत्येन सेवनम् ।
सेवाधर्मो ब्रह्मधर्मो तद्वद् ब्रह्मसुमूर्तिकम् ॥१७॥
द्वितीयं तु निराकारं ब्रह्मलोकः स उच्यते ।
अक्षरं धाम चेत्युक्तं श्रीहरेर्व्योमधाम तत् ॥१८॥
अतितेजोमयं शान्तं रम्यमाह्लादसौख्यदम् ।
तेजोमयः प्रदेशः स व्यापकं धाम चोच्यते ॥१९॥
परब्रह्मनिवासाय मुक्तानां वासहेतवे ।
सर्वदा शाश्वतं रूपं वर्तते दिव्यभूस्तरः ॥२०॥
सच्चिदानन्दतत्त्वं तत् चिदाकाशाख्यमेव वै ।
तत्र दिव्यो हरिः साक्षात्पुरुषोत्तमसंज्ञकः ॥२१॥
वसत्येव परे धाम्नि चाक्षराख्ये सुखाश्रये ।
तस्य धाम्नो भवत्येव धर्मो निर्लेपितात्मकः ॥२२॥
मायातत्त्वेषु सर्वेषु व्यापकं चाऽप्यलेपि तत् ।
मायाधर्मैर्न लेपोऽस्ति तस्मादलेपि कीर्त्यते ॥२३॥
इत्येवं द्विविधौ धर्मौ सेवा निर्लेपता तथा ।
सेवकश्चापि निर्लेपो ब्रह्मशब्दार्थ उच्यते ॥२४॥
अहंशब्दः शरीर्यर्थमात्मानं बोधयत्यपि ।
विशेषदेहमापन्नश्चेतनश्चाहमुच्यते ॥२५॥
मुमुक्षुस्तादृशो ह्यात्मा देहभिन्नस्तदाश्रितः ।
अहंपदेन बोद्धव्यो नामरुपोपलक्षितः ॥२६॥
पुंस्त्रीशारीरआत्माहं निर्लेपः सेवकस्तव ।
इति ब्रह्माहमित्यस्य तात्पर्योर्थोऽवधार्यताम् ॥२७॥
ब्रह्मभक्तपदे ब्रह्म परब्रह्मपद परेश्वरः ।
परमात्माऽक्षरपरः पुरुषोत्तम उच्यते ॥२८॥
तस्य वै विविधा भक्तिः पातिव्रत्यसमाह्वया ।
तदाश्रयः सदा भक्तः प्रपन्नः शरणागतः ॥२९॥
भक्तिः प्रपत्तिः शरणागतिः षड्रूपधारिणी ।
विश्वासो वरणं न्यासः कार्पण्यं च स्थिरा मतिः ॥३०॥
अनुवृत्तिश्च बोध्या सा षड्विधा शरणागतिः ।
पत्नी देहः पतिश्चात्मा तयोरैक्येन वर्तनम् ॥३१॥

पातिव्रत्यं भवेद्धर्मः सा भक्तिः पतिसेवनम् ।
श्रवणं कीर्तनं तस्य स्मरणं पादसेवनम् ॥३२॥
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ।
इति भक्तिः प्रेमपूर्वा सेवा वै स्वामिसेवनम् ॥३३॥
निपत्य पादयोस्तस्य यत्करोतु कुरुष्व मे ।
इत्यर्पणं सर्वथा सा प्रपत्तिः प्राणनार्पणम् ॥३४॥
व्याप्याऽधीनाऽसमर्थादिधर्मी योऽहंपदाश्रयः ।
सोऽहं पत्युः स्वामिनश्च प्राणप्रियस्य सेवनम् ॥३५॥
कारोमीत्येव त्रैकालाऽबाध्यसेवाश्रयोऽभवम् ।
समष्ट्यर्थस्तु 'ब्रह्माहं ब्रह्मभक्तोऽस्मि' मन्त्रजः ॥३६॥
"व्याप्याऽधीनाऽसमर्थादिधर्म्यहं सेवको हरेः ।
निर्लेपः सन् पातिव्रत्यश्रवणादिकभक्तिमान् ॥३७॥
शाश्वतिकपदावासोऽभवमित्यर्थ ईरितः" ।
एवं वै मन्त्ररत्नार्थं वारं वारं विचार्य च ॥३८॥
ब्रह्मानन्दे सुमग्नेन भाव्यं भक्ते न सर्वथा ।
नारायणं विना नैव सुखदो मोक्षदोऽपरः ॥३९॥
तस्मात् तत्रैव सर्वस्वं स्थाप्यं चार्प्यं समन्ततः ।
मन्त्रादौ ब्रह्मणो नाम नियोज्यं ओमिति ध्रुवम् ॥४०॥
अकारोकारमवर्णा वेदास्त्रयस्तु वै खलु ।
अकारेण स्वयं विष्णुरुकारेणोच्यतेऽब्धिजा ॥४१॥
मकारेण तयोर्भक्त ओमितित्रय एव ते ।
अकारो वासुदेवः स्यादुकारः श्रीप्रबोधकृत् ॥४२॥
मकारेण तयोर्दास ओमित्येव त्रयो मताः ।
अकारस्तु परब्रह्म उकारो ब्रह्म कथ्यते ॥४३॥
मकारेण तयोर्भक्तः सेवादास इति स्मृतः ।
भास्करस्य प्रभेवास्ति नित्यं ततोऽनपायिनी ॥४४॥
लक्ष्मीर्नारायणतनुः पत्नी विष्णोर्मनोरमा ।
जगतामीश्वरी नित्या माता जगद्विधारिणी ॥४५॥
ज्ञानो ज्ञानगुणो ज्ञानाश्रयः सूक्ष्मो हृदिस्थितः ।
चेतनानन्दसन्दोहाश्रय आत्मा ह्यहं मतः ॥४६॥
शेषभूतो दासभूतो भक्तः श्रीमद्धरेर्मतः ।
स्वस्वत्वं तु हरौ न्यस्य तदायत्तात्मजीवनः ॥४७॥
नारायणस्य सामर्थ्यान्नाऽलभ्यं चात्मनो भवेत् ।
नराणां तु समूहो वै नारा आत्मान एव ते ॥४८॥
तत्राऽयनं भवेदस्य तेन नारायणः स्मृतः ।
सर्वच्चिदचित्तत्त्वेषु व्यापकः श्रीहरिस्तु सः ॥४९॥
नराज्जातं जलं नारं तत्रायनान्नरायणः ।
नराणां जगतां यत्र प्रलयेऽयनमुच्यते ॥५०॥
तस्मान्नारायणो देवः सृष्टिसंहारकारकः ।
यत्र सर्वं यतः सर्वं यश्च सर्वं नरायणः ॥५१॥
अनन्तचक्षुश्चरणोऽनन्तशीर्षाऽमृताधिपः ।
हिरण्यगर्भो विष्णुर्वै भूतभव्यभवत्प्रभुः ॥५२॥
ब्रह्मसृष्टावीशसृष्टौ जीवसृष्टावपि स्थितः ।
त्रिपाल्लोके ह्येकपाद व्याप्य तिष्ठति यो हरिः ॥५३॥
परब्रह्माऽक्षरंब्रह्म वासुदेवो हिरण्मयः ।
वैराजो विष्णुरीशेशो यज्ञो वै सविता शिवः ॥५४॥
स च वै सर्वतस्पृत्वा भूमिमावृत्य तिष्ठति ।
दित्यदित्यौ ततो जाते ये के चोभयतोदतः ॥५५॥
ग्राम्यारण्यास्ततो जाताः साध्याश्च ऋषयश्च ये ।
यज्ञसूत्राग्तथाऽसूत्रास्तत एवाग्नयस्तथा ॥५६॥
कृताः परिधयस्तेनाऽऽनखचूडामयं जगत् ।
दिशांपालास्तथा लोकालोकपालास्ततोऽपि हि ॥५७॥
जायन्ते च तस्तस्मिँस्तस्य भक्तो भवाम्यहम् ।
इत्यर्थं परिविज्ञाय सिद्धिं विन्दति सेवकः ॥५८॥
भक्तभूतं दासभूतं देहभूतं सदा जगत् ।
भजनीयं सेवनीयं देहिनं तं समाश्रयेत् ॥५९॥
अथाऽन्यमन्त्रसत्यार्थरहस्यं श्रृणु सुन्दरि ! ।
लक्ष्मं मोहकरं चिह्नं पारावारकृपा तु सा ॥६०॥
तया युक्ता महाशक्तिः सा वै लक्ष्मीरुदाहृता ।
नारायणस्तया युक्तो लक्ष्मीनारायणः प्रभुः ॥६१॥
श्रीः प्रोक्ता दिव्य सम्पत्तिः सा यस्याऽस्तीति स प्रभुः ।
श्रीमन्नारायणः प्रोक्तस्तत्कृपा सम्पदाम्प्रदा ॥६२॥
अव्याहतं स्वमैश्वर्यं षड्विधं चाष्टधाऽपि च ।
सर्वज्ञाता नित्यतृप्तिः सफलेच्छाऽहनाकृतिः ॥६३॥
नित्यानन्दो नियामकतेति षट् सन्ति तत्र वै ।
आहतपाप्मताऽशोकताऽविजिघत्सता तथा ॥६४॥
तथाऽपिपासता चैव विजरत्वं विमृत्युता ।
सत्यसंकल्पता सत्यकामतेतिगुणाष्टकम् ॥६५॥
यत्राऽस्ति स स्वयं स्वामी नारायणः परः प्रभुः ।
नं ब्रह्मचर्यं राति यो नरो नारायणः प्रभुः ॥६६॥
हरति भक्तदुःखानि हरिनारायणः स हि ।
मायां निकृष्य नयते कृष्णनारायणः स हि ॥६७॥
वसति दीव्यति चान्तर्यामी यश्च प्रकाशकः ।
वासुदेवः स वै नारायणः श्रेयस्करः प्रभुः ॥६८॥
रमन्ते योगिनो यत्र रामनारायणः स हि ।
ओमित्युक्तः परब्रह्म श्रीरित्युक्ता हरिप्रिया ॥६९॥

ताभ्यां युक्तो नरसंघस्तत्रान्तर्यामिता हरेः ।
ऐश्वर्यं च तथा वीर्यं यशो लक्ष्मीश्च विज्ञता ॥७०॥
वैराग्यं चेति षण्णां वै भगसंज्ञा प्रकीर्तिता ।
तद्वते वासुदेवाय नम उत्कृष्टवान् भव ॥७१॥
ज्ञानशक्तिबलैश्वर्यवीर्यतेजांसि यत्र च ।
सन्त्ययं भगवान् श्रीमान् परब्रह्मपरात्परः ॥७२॥
आत्मायनाय जानामि ध्यायाम्यन्तःस्थितं हरिम् ।
व्यापकः स प्रभुस्त्वस्मान्मोक्षकार्ये प्रवर्तयेत् ॥७३॥
गायत्रीमन्त्रमित्यर्थं ज्ञात्वा यो भजते हरिम् ।
तस्य मुक्तिः सदा देवि ! हस्तमध्ये कृतास्पदा ॥
श्रीहरिः शरणं मेऽस्ति प्रपत्तिरर्थसंभृता ॥७४॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुग-
सन्ताने वैष्णवगुरुप्रदत्तविविधशरणागति-
मन्त्राणामर्थप्रदर्शननामा षोडशा-
धिकशततमोऽध्यायः ॥११६॥

**श्रीनारायण उवाच—**

पार्वती प्राह देवेशं वैष्णवाग्र्यं महेश्वरम् ।
नाथ ब्रूहि यथा नारायणरूपस्य गौरवम् ॥ १ ॥
मुक्तिदं चामृतं पीत्वा न वै तृप्यति मानसम् ।
कथमेतावता दीर्घकालेनापि न बोधितम् ॥ २ ॥
एतत्तु परमं श्राव्यं परब्रह्माऽमृताऽमृतम् ।
श्रवणीयं मया नित्यं नूतनं तु श्रवे श्रवे ॥ ३ ॥
शंभुः प्राह तदा देवीं पार्वतीं परमेश्वरीम् ।
शृणु देवि ! ममाऽप्येषा नारायणमयी कथा ॥ ४ ॥
नूतना सुरसा भाति तदाह्लादो विवर्धते ।
यथास्मर्यं कथयामि ह्यवाङ्गोचरमस्त्यपि ॥ ५ ॥
परब्रह्म स्वयं साक्षाद्दिव्यो नारायणः प्रभुः ।
राजते सर्वदा धाम्नि स्वयं राजाधिराजकः ॥ ६ ॥
अनन्तशीर्षा पुरुषश्चानन्ताक्षोऽप्यसंख्यपात् ।
स सृष्टिं सर्वतस्पृत्वाऽत्यतिष्ठत्केशमात्रके ॥ ७ ॥
स वै सर्वत्र संभाति मोक्षेशानोऽतिऋद्धिमान् ।
नान्योऽतोऽस्ति परः कश्चिन्न समो नापि दायभाग् ॥ ८ ॥
प्रतल्लोकचतुर्थांशो सर्वा जीवेशसृष्टयः ।
त्र्यंशस्तु ब्रह्मलोकोऽत्र ब्राह्मणा व्योम्नि वै परे ॥ ९ ॥
नास्ति तत्र विजिघत्सा नो पिपासा प्रवर्तते ।
क्षुत्पिपासाश्रया माया तदधस्ताद्विकासते ॥१०॥
तस्य धाम्नि च धामानि परमाणि भवन्ति वै ।
मुक्तानां चेश्वराणां चावताराणां मनांसि सः ॥११॥
स्वस्मिन् वै धारयन् दिव्यो देव एको विराजते ।
एवं बृहत्स्वरूपोऽयं ब्रह्मणा सहराजते ॥१२॥
अनन्तकोटिमुक्तैश्च पार्षदैः परिसेवितः ।
ईश्वरीभिस्तथा श्रीभिः शक्तिभिश्चातिसेवितः ॥१३॥
निःसीमदिव्यभोगाढ्यदिव्यमंगलरूपवान् ।
युवाऽच्युतमहासत्त्वः सुकुमारोऽगकोमलः ॥१४॥
जगज्जननीश्रीपूर्णज्योत्स्नामूर्तिकयौवनः ।
कोटिकन्दर्पलावण्याऽक्षयप्रेमप्रपूरितः ॥१५॥
श्रियः संकल्पसिद्ध्यर्थं वैकुण्ठकृतमण्डलः ।
राधायै सुखदानार्थं गोलोके श्यामलः स्थितः ॥१६॥
मुक्तसौख्यप्रदं धामाऽक्षरं ब्रह्म सदा मतम् ।
भोगार्थं परमे व्योम्नि वैकुण्ठं धेनुलोककम् ॥१७॥
लीलार्थं भक्तवासार्थं त्रिसृष्टमखिलं जगत् ।
सुखभोगप्रलीलाख्या भूमिकास्ता विभूतयः ॥१८॥
तिस्रो भवन्ति तस्यैव विभूतित्रयमेव तत् ।
लीलाख्या सकला सृष्टिर्भोगार्थं धाम तद्द्वयम् ॥१९॥
मुक्तसौख्यप्रदानार्थं परमं धाम चास्थितम् ।
यदा लीलां महासृष्टिं संहरते जनार्दनः ॥२०॥
तदा भोगविभूतौ वै नित्या स्थितिस्तु विद्यते ।
ततोऽप्यन्या महानन्दा परा मूर्तिमयी स्थितिः ॥२१॥
लीला भोगस्तथा सौख्यं त्रयं तस्यैव शक्तयः ।
त्रिपात् तत्परमं धाम नित्यं शाश्वतमैश्वरम् ॥२२॥
तस्यैव प्रान्तभागेषु धामान्यन्यानि नित्यदा ।
तानि सर्वत्र भक्तानां सेवाभोगार्थमातनोत् ॥२३॥
अमृतं धाम बदरीधामाऽव्याकृतमित्यपि ।
लक्ष्मीधाम श्वेतधाम सेवाभोगार्थमातनोत् ॥२४॥
तपोर्थं चापि व्यतनोल्लोकरक्षणहेतवे ।
त्रिपात्तत्तु शाश्वतं वै पादमेकमशाश्वतम् ॥२५॥
अच्युतं ब्रह्मरूपाढ्यं वैकुण्ठं च गवांस्थलम् ।
अमृतं श्रीपुरं चेति राधिकायाः श्रियस्तथा ॥२६॥
अन्यासां प्रभुपत्नीनां क्रीडार्थानि कृतानि वै ।
भगवान्श्रीहरिस्तत्र नित्यं यौवनमाश्रितः ॥२७॥
नित्यैषा च जगन्माता लक्ष्मीश्च राधिका तथा ।
यथा सर्वगतो विष्णुस्तथा लक्ष्मीश्च राधिका ॥२८॥
ईशानो भूतभव्यस्य तथेशानी महेश्वरी ।
श्रीश्च लक्ष्मीश्च राधा च विष्णोश्चैवाऽनपायिनी ॥२९॥

सर्वतोहस्तचरणा सर्वतोऽक्षिशिरोमुखा ।
नारायणी च कृष्णा च विष्णुपत्नी जगन्मयी ॥३०॥
महामाया जगत्कर्त्री सृष्टिसंहारकारिणी ।
यदपांगस्थितं सर्वं जडचेतनमिश्रणम् ॥३१॥
मेषोन्मेषकृतं यस्या लयोद्भवमयं जगत् ।
नित्याऽजा वामभागा मा महालक्ष्मीः परेश्वरी ॥३२॥
अव्यक्ता व्यक्तरूपा सा समव्याप्या व्यवस्थिता ।
पृथ्व्यां रसा सुधा स्वर्गे पुण्या सा पितृमन्दिरे ॥३३॥
जले मिष्टाऽनले पाका लक्ष्मीश्च धनरूपिणी ।
सौन्दर्यं कान्तिसौभाग्ये रूपं लावण्यमित्यपि ॥३४॥
नारीणामखिलं सर्वं तस्या एवास्ति संगतम् ।
तया ब्रह्मपदं शैवं माहेन्द्रं याम्यमित्यपि ॥३५॥
सौर्यं कौबेरमाग्नेयं चान्द्रं दृष्टं समृद्धिमत् ।
महामाया महालक्ष्मीर्लक्ष्मीः श्रीः राधिका प्रिया ॥३६॥
कमला शारदा पद्मा विद्या मा परमा रमा ।
अब्धिपुत्री सती श्यामा महादेवी च वैष्णवी ॥३७॥
नारायणी महाविद्या विष्णुपत्नी महेश्वरी ।
गौरी सरस्वती शान्तिः प्रभा स्वाहा स्वधा रतिः ॥३८॥
सावित्री कंभरादेवी पार्वतीति द्विषोडश ।
नामान्यस्याः प्रतिप्रातः पाठ्यानि भूतिलब्धये ॥३९॥
हिरण्यवर्णां हरिणीं हिरण्यरजतात्मिकाम् ।
चान्द्रीं स्वर्णमयीं लक्ष्मीं नारायणो म आवह ॥४०॥
धनां धान्यां गोस्वरूपां वाहनीं पुरुषात्मिकाम् ।
नारायणो म आवह लक्ष्मीमनपगामिनीम् ॥४१॥
तृप्तिं तेजस्विनीं स्वर्णप्राकारां भास्वरां श्रियम् ।
दैवीं वर्चस्विनीं वार्क्षीं कीर्तिं कृष्णो म आवह ॥४२॥
सुगन्धाढ्यामनाधृष्यां नित्यपुष्टां करीषिणीम् ।
सर्वेश्वरीं महालक्ष्मीं नारायणो म आवह ॥४३॥
आकूतिचितिसंकल्पसिद्धिं हरिर्मे आवह ।
हिरण्यदासदासीदां तामिहोपह्वये श्रियम् ॥४४॥
यैरेवं प्रस्तुता लक्ष्मीस्तेषामनपगामिनी ।
हरेर्वक्षसि नित्याप्ता स हरिः पुरुषोत्तमः ॥४५॥
सर्वेश्वरः सर्वस्वामी नारायणो गुणाकरः ।
सर्वज्ञः सर्वशक्त्याढ्यः पूर्णकामः सुहृत्सुखी ॥४६॥
करुणासागरः श्रीमान् शरणागतवत्सलः ।
स्वर्गापवर्गविभवस्तस्य दास्यं करोम्यहम् ॥४७॥
सर्वदा सर्वथा सर्वावस्थासु तं भजाम्यहम् ।
दास्यं तस्य करोम्येव दासभूतमिदं हरेः ॥४८॥
श्रीमान् नारायणः स्वामी सेव्यः प्राप्यः परोऽक्षरात् ।
स एव जननी भ्राता पिता पुत्रश्च बान्धवः ॥४९॥
शरणं चाश्रयो वासो गतिर्निधनमेव सः ।
सर्वदिव्यगुणैर्युक्तो मायागुणादिवर्जितः ॥५०॥
नारायणः परंब्रह्म तत्त्वं नारायणः परः ।
नारायणः परोज्योतिरात्मा नारायणः परः ॥५१॥
नारायणपरो ध्याता ध्यानं नारायणः परः ।
यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा ॥५२॥
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ।
हृदये जीवमध्ये स परमात्मा व्यवस्थितः ॥५३॥
स वै तत्र परे धाम्नि श्रीयुङ्नारायणः स्थितः ।
तस्य शक्त्या श्रिया मूलप्रकृत्या रचितं महत् ॥५४॥
ततो विराडभूद्भूमिर्ग्राम्यारण्याश्च जीविनः ।
यदास्यबाहूरुपादा वर्णा वै संभवन्ति हि ॥५५॥
प्रविप्रक्षत्रविड्दासा ह्यजायन्त मखो हि सः ।
हव्यं कव्यं च होता च भागभुक् समिधश्च सः ॥५६॥
यज्ञं नारायणं देवा अयजन्त च ताः क्रियाः ।
प्रागेवाऽऽसन् परे धर्मा आराधनादिभक्तयः ॥५७॥
पूर्वे मुक्ताः परे धाम्नि महिमानं सचन्त वै ।
तद्दासभक्तिकर्तारो यान्ति नारायणं पदम् ॥५८॥
ते वै दिव्याः सदा सिद्धा मुक्ता वसन्ति धामनि ।
मायापारे परे लोके ब्रह्मसाधर्म्यमास्थिताः ॥५९॥
न वै मायामहाकालपापकर्मयमादिभीः ।
यद्गत्वा न परावृत्तिस्तद्धरेर्धाम चाक्षरम् ॥६०॥
माया जगन्मयी नित्या त्रिगुणा प्रकृतिर्हि सा ।
अविद्या योगनिद्रा च प्रधानाऽव्यक्तशाश्वती ॥६१॥
धामच्छायास्वरूपा सा ज्ञानघनस्वरूपिणी ।
लूतातन्तुसमं चाण्डमनित्यं प्रकरोति हि ।
तयाऽऽवृतं जगत्सर्वं सा ब्रह्मतेजसाऽऽवृता ॥६२॥
मायाब्रह्मसम्बन्धश्च सीमा धाम्नः समुच्यते ।
सर्वव्यापि त्वसीमं तत् तूपचारात् ससीमकम् ॥६३॥
मायान्तरे गतं सर्वं संकोचं च विकासनम् ।
तिरःप्राविर्भवत्येव भक्ता गच्छन्ति तद्बहिः ॥६४॥
तदा सीम्नि ब्रह्महदे तेजआनन्दचेतने ।
स्नात्वा यान्ति ब्रह्मतनुं परज्योतिःप्रतापतः ॥६५॥
निष्पद्यन्ते तदात्मानः स्वेन रूपेण मूर्तयः ।
नरो वा यदि वा नारी भक्त्या यान्ति यदाऽक्षरम् ॥६६॥
सीम्नि ब्रह्महदे स्नान्ति तनुर्ब्राह्मी स्वयं भवेत् ।
नाऽन्यद्रव्यविभूतेर्वा योगो देहेऽस्ति कश्चन ॥६७॥

आत्मा सुदृक् हरिरूपाऽनुरूपो दृश्यते स्वयम् ।
न योगो न विभागो वा न योगिद्रव्यसाकृतिः ॥६८॥
एकात्मतत्त्वमूर्त्यात्मा सुमूर्तः स हरिर्यथा ।
महामाया तु विरजा सा तु वैकुण्ठगामिनाम् ॥६९॥
वैकुंठमाययोर्मध्ये नारायणद्रवात्मिका ।
दृश्यते तत्र संस्नात्वा श्रीर्यथा पार्षदा यथा ॥७०॥
निष्पद्यन्ते दासदास्यस्तथा नित्या विकुंठके ।
यत्तु ज्योतिःपरं व्योमाऽक्षरं ब्रह्म सनातनम् ॥७१॥
सच्चिदानन्दतत्त्वं तद्दिव्यं वै ब्रह्मसंज्ञितम् ।
कोटिसूर्याग्निरोमैकमजरं लयवर्जितम् ॥७२॥
स्वप्नादिशून्यमानन्दवार्धिशीतलशान्तिकृत् ।
यदक्षरं वेदगुप्तं निषेदुर्मुक्तकोटयः ॥७३॥
तन्न विदुः ऋचस्तस्य विदस्तत्र समासते ।
तद्विष्णोः परमं स्थानं यत्प्रपश्यन्ति सूरयः ॥७४॥
वैराजा अपि यल्लोकं न वै पश्यन्ति यत्पदम् ।
यत्र गावो भूरिशृंगा आयताः सुखदाः सदा ॥७५॥
तद्वै धाम परं कृष्णः कृष्णस्य गोसुखावहम् ।
आदित्यवर्णं तमसः परस्ताद्यान्ति तद्विदः ॥७६॥
तत्र पूर्वे ह्यनादिनः साध्या मुक्ता वसन्ति हि ।
विश्वे विश्वाद्वता देवा मुक्ताः सचन्त तत्सुखम् ॥७७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने परब्रह्माऽक्षरधामविभूतिलीलाब्राह्मीतनुनारायणनारायणीगौरवप्रभृतिवर्णननामा सप्तदशाधिकशततमोऽध्यायः ॥११७॥

**श्रीनारायण उवाच—**

शंभुः प्राह ततो देवीं ब्रह्मधामविभूतिकाः ।
कथयिष्ये समासेन शृणु पर्वतपुत्रिके ! ॥ १ ॥
अक्षरं धाम परमं ब्रह्मव्योम परं सदा ।
राजते तद्धि सर्वत्र श्वेततेजोमयः स्तरः ॥ २ ॥
यावन्तस्तारकाः सर्वे सूर्याः स्युर्दिवि संस्थिताः ।
पृथ्वी सृष्टिसुयुक्ता च दिव्यकाचमयी भवेत् ॥ ३ ॥
परस्परं च तद्योगाद्यादृशं तेजउद्भवेत् ।
तादृशं तु घनं तेजो महत् सत्ये तु वेधसः ॥ ४ ॥
तादृग्वेधःस्तरात्सत्यात् कोटिगुणं तु तैजसम् ।
वैराजैककण्ठमणौ वर्ततेऽथ ततोऽपि वै ॥ ५ ॥
कोटिगुणं महत्तेजो महाविष्णोः शिरोमणौ ।
ततः कोटिगुणं तेजो वासुदेवस्य वै मणौ ॥ ६ ॥
तादृशाश्चाप्यनन्ताश्च मणयोऽव्याकृते स्तरे ।
वदर्याममृते श्वेते श्रीपुरे च विकुण्ठके ॥ ७ ॥
गोलोके चेति तेजांसि तेषामादाय पिण्डकम् ।
कुर्याच्चेत्तत्त्वक्षराख्यधाम्नः पूगीफलस्थले ॥ ८ ॥
लीनतां तु समीयाद्वै पूर्णं तत्कीदृशं भवेत् ।
तादृशाक्षरधाम्नश्च मुक्तानां तेजसां तथा ॥ ९ ॥
समूहो लीनतां गच्छेच्छ्रीहरेरेकरोम्णि यत् ।
तदा पूर्णहरौ तत्र तेजः कीदृग्भवेन्महत् ॥१०॥
अपि शक्यं नानुमातुमगम्यं तेज ऐश्वरम् ।
अहन्तु नहि साक्षाद्वै द्रष्टा किन्तु समाधिना ॥११॥
ब्रह्माण्डपिण्डब्रह्माख्यधामगं श्रीहरिं प्रभुम् ।
एकीकृत्यात्मनि स्वस्मिन्पश्याम्यलौकिकेन वै ॥१२॥
तत्तदा सन्निकर्षेण दृश्यतेऽपारमेव यत् ।
मन्तुं चिन्तयितुं बोद्धुं नैन शक्यमगोचरम् ॥१३॥
कथं तर्हि भवेद्वक्तुं शक्यं चावैहि सुन्दरि ! ।
तादृशोऽनन्ततेजस्वी तथाऽसीमगुणार्णवः ॥१४॥
सौन्दर्यरूपसौम्येषद्धास्याऽपारमहोदधिः ।
कोटिमुक्तचकोराऽक्षिस्थिरवृत्त्येकचन्द्रमाः ॥१५॥
राजाधिराजो भगवान् परमात्मा परात्परः ।
विराजते महासिंहासने षोडशहायनः ॥१६॥
रूपानुरूपावयवो मन्दहास्यलसन्मुखः ।
कोटिकोट्यर्कचन्द्राग्निलीनमाणिक्यकुण्डलः ॥१७॥
असंख्यमणिरत्नादिनद्धकिरीटकल्गिकः ।
दिव्यहीरकसद्रत्नाऽमूल्यहाटकहारधृक् ॥१८॥
यावत्तेजःखनित्रातिकौस्तुभौज्ज्वलकण्ठकः ।
नैकतेजःप्रसरत्सत्किरणोद्भवमण्डकः ॥१९॥
दिव्यप्रकाशसंराजन्मध्यभालसुभास्वरः ।
मेघघट्टसदानीलक्लसकेसरकुन्तलः ॥२०॥
नैककामकृतवक्रधनुःप्रान्तभ्रुवान्वितः ।
स्वर्णसूक्ष्मनिमेषाढ्यपुटरोमालिनेत्रकः ॥२१॥
दिव्यश्वेतस्फटिकाग्र्यसत्कोणनेत्रगोलकः ।
रक्तसूक्ष्मसुकिञ्जल्कभासवत्पार्श्वनायनः ॥२२॥
मध्यदिव्यघट्टरूपस्फुरत्तेजस्विकृष्णिकः ।
तत्रापि ग्राह्यसामर्थ्यस्फुरत्कृष्णकनीनिकः ॥२३॥
शरत्सरोजपत्राभाऽऽकर्णान्तव्यासनेत्रकः ।
कोमलसत्सवलयशष्कुलीपीतकर्णकः ॥२४॥
दिव्यपुरटसत्फुल्लचम्पकशृंगलाश्रवाः ।
गोलफुल्लाढ्यकार्पाससपिण्डकोमलगण्डकः ॥२५॥

तिलपुष्पपिशंगद्विपुटनतान्तनासिकः ।
सूक्ष्मस्वर्णतन्तुकल्परेखाराजितश्मश्रुकः ॥२६॥
मध्याग्राणिकवक्रान्तधनूरेखोत्तरौष्ठकः ।
प्रेमपात्रसरिन्मूर्तिकामस्थानाऽधरौष्ठकः ॥२७॥
रक्तस्थलाब्जपत्राभरससेतूभयौष्ठकः ।
अत्रहिरचिपीटाग्रनिम्नसुघटचीबुकः ॥२८॥
कुन्दशुभ्रसुतीक्ष्णाग्र्याऽविरलस्थिरदन्तकः ।
रक्तरसाव्यदाडिमबीजचंचद्दतस्थलिः ॥२९॥
स्वर्णमुख्यमणिप्राप्तशंखतुल्यकृकाटिकः ।
मेरुमूलसमस्थूलारंभद्युधरकन्धरः ॥३०॥
युगचन्द्रकलाव्यस्ताऽऽस्कन्धाधिष्ठितजत्रुकः ।
तत्त्वपूरबलाऽऽबद्धोन्नतस्कन्धसुपुष्टकः ॥३१॥
योगिध्यानसदायोग्यरोमद्रुकुक्षिकन्दरः ।
शेषभोगसमाकारस्वर्णपुष्टसुबाहुकः ॥३२॥
चित्सुपुष्टलसद्रक्तकंचनाभोभसद्भुजः ।
ध्रुवचक्रभ्रमिबिन्दुस्थिरकीलकफोणिकः ॥३३॥
क्रमवृत्तपुष्टतनुसुघटोभयहस्तकः ।
धृतकार्तस्वरसौम्यश्रृंखलाकटकांगदः ॥३४॥
रत्नहीरकमण्याढ्योर्मिकाभूषाञ्चितांगुलिः ।
नखचन्द्रस्फुरत्कान्तिद्योतिसद्रक्तमण्डलः ॥३५॥
सुपेशलसुरंगाढ्यमखमल्लांगरक्षकः ।
स्वर्णप्रान्तकृतशोभोत्तरीयाऽभ्यन्वितांऽसकः ॥३६॥
दिव्यराजत्स्वर्णरेखश्रीवत्सोरःसुलांछनः ।
सप्तविंशतिस्रक्कूक्लृप्तस्वर्णमण्याढ्यमेखलः ॥३७॥
ब्रह्मकूपसमानाभिप्रसरत्त्रिवलोदरः ।
क्रमवृत्तकरिशूण्ढोज्ज्वलकामाढ्यसक्थिकः ॥३८॥
करिकुंभरचनार्हपुष्टगद्दिकश्रोणिकः ।
अष्टसिद्ध्यक्षयवीर्यसमवर्तुललिङ्गकः ॥३९॥
युवतीव्रातमध्वत्यानन्दरसरतिप्रदः ।
स्वर्णरोमावलीराजत्स्वर्णवर्णपटोदरः ।
समवर्तुलशोभाढ्यकठिनोज्ज्वलजानुकः ॥४०॥
पुष्टतनुनलीपश्चिमाऽस्थितार्हसुजंघकः ।
अन्तरेकबहिःसत्त्रिघुटिकामणिबन्धनः ॥४१॥
उपमुक्तिकृतनिम्नोऽधोधनुर्दण्डवक्रपत् ।
स्वर्णरक्तनखकान्तिचन्द्रसच्छविशोभनः ॥४२॥
पुष्टिपृष्ठः स्वस्तिगुप्तश्रोत्तमोत्तममूर्तिकः ।
विराजते महाधाम्नि हरिः सिंहासनस्थितः ॥४३॥
सर्वैश्वर्यक्रियाशक्तिज्ञानयोगादिभिर्युतः ।
सिंहासनं चतुष्पादं पौरटं च सुशोभितम् ॥४४॥
सप्तसोपानकं चास्ते कम्मानिकाऽभितोलितम् ।
मखमल्लमहागद्दीपार्श्वतक्कीयराजितम् ॥४५॥
उपरि संधृतं छत्रं शलाकाविंशतिवृतम् ।
पौरटं कोमलं दिव्यं वस्त्रं छत्रे नियोजितम् ॥४६॥
स्वर्णनिर्मितकलशं रत्नाद्यञ्चितदण्डकम् ।
परितो मणयो बद्धाः स्वर्णकिंकणिकास्तथा ॥४७॥
समन्ततः सप्तरूपिदिव्यझल्लरिकायुतम् ।
चामरे तद्भवे श्वेते व्यजनो दर्पणस्तथा ॥४८॥
दिव्या मुक्तास्तथा सन्ति सेवाधर्मसुसंस्थिताः ।
छत्रोपरिमहामुक्तः सहस्रफणराजितः ॥४९॥
महद्रूपं फणी धृत्वा फणाभिः कृद्वितानकः ।
सेवते श्रीहरिं पश्चात्तिष्ठन्धामनिभो महान् ॥५०॥
तत्र सिंहासने पश्चाद्भागे दिव्यमहापटः ।
स्वर्णतन्तुमयो मुक्तश्चित्ररंगादिसेवनः ॥५१॥
कमलाकारमग्र्यं यत्स्तंभा दिव्यास्तथा स्थिताः ।
मुक्तानां च मणीनां च मण्डलानि च तेषु वै ॥५२॥
सच्चिदानन्दरूपाश्च शुकसारसमेनकाः ।
वृक्षवल्ल्यादयस्तत्र स्तंभेषु कृतसुस्थलाः ॥५३॥
शोभन्ते चेतनाः सर्वे परब्रह्मप्रसंगिनः ।
चित्रशिल्पकलारम्यं पीठिकाकोमलास्तरम् ॥५४॥
तेजोवार्धिरिव दृश्यं रत्नकोटिविराजितम् ।
नखचन्द्रमणिकान्तिद्योतितानन्तमुक्तकम् ॥५५॥
सिंहासनं स्वयमक्षराख्यं धाम न चेतरत् ।
तत्र मूर्तौ महातेजःपरिधिर्वर्तुलो महान् ॥५६॥
मिष्टशैत्यसौम्यतेजोऽनन्तगोव्याप्तपार्श्वकः ।
सप्तरूपः सप्तभूमिः परिधिः सोपि मुक्तकः ॥५७॥
दशदिक्षु हरेस्तेजो महासिंहासनेऽभितः ।
व्याप्नोत्येव न चाऽऽन्तोऽस्ति गावस्ता भूरिश्रृंगिकाः ॥५८॥
यत्र सिंहासने तद्वै मण्डपः समयोजनः ।
तत्र दिव्यमहास्तंभा ह्यक्षराः कदलीकृताः ॥५९॥
हरिद्वर्णा हरित्पत्रा हरित्कदलमंगलाः ।
शतस्तंभाः स्वर्णवर्णा वस्त्रवेष्टितशोभनाः ॥६०॥
तेषां कम्मानिकाः शिल्पकलाव्याप्तिविचित्रिताः ।
नानाविधा गजाः श्वेताः मकरा हंससारसाः ॥६१॥
मेनाशुकश्वेतपारावतचक्रकचातकाः ।
सर्वे मुक्ता भवन्त्येव सच्चिदानन्दविग्रहाः ॥६२॥

दिव्यसुस्वरमाधुर्यकृतगीतिकमंगलाः ।
तत्रत्यसंस्कृतवाण्या गायन्ति गुणकीर्तनम् ॥६३॥
नैककोटिमहामुक्तमण्डलानि तु मण्डपे ।
प्रतिष्ठन्ति स्थले भूमौ मध्ये चोपरि चान्तरे ॥६४॥
सृष्टिसृष्टयन्तरे यानि रूपाणि संधृतानि वै ।
हरिणा तानि सर्वाणि मण्डपे स्थापितानि हि ॥६५॥
शोभन्ते विविधाकारा विविधैश्वर्यचिह्नकाः ।
तत्तज्जन्माऽवतारादिचरित्रोद्बोधहेतयः ॥६६॥
वृत्तान्तबोधकाकारा भगवन्तो विभूतयः ।
सर्वे तिष्ठन्ति तत्रैव मण्डपाग्रोर्ध्वमध्यतः ॥६७॥
तत्रत्या मुक्तमूर्धन्याः सूर्यचन्द्रादिदर्पणाः ।
भूत्वा भूत्वा तेषु तेषु स्तंभेषु संवसन्ति वै ॥६८॥
उल्लेचस्तत्प्रमाणाढ्यो यत्र मुक्तात्मतारकाः ।
लग्नाः सम्यक्प्रकाशन्ते शीतकान्तिप्रवर्तकाः ॥६९॥
मुक्ताश्च तोरणास्तत्र मणिहीरकरूपकाः ।
काचकान्तिकरा नैकदिव्यदीपकचन्द्रकाः ॥७०॥
ऊर्ध्वमधस्तथा पार्श्वे दिक्षु सर्वविदिक्षु च ।
मण्डपात् किरणा यान्ति प्रोज्ज्वला व्योममार्गगाः ॥७१॥
तादृशो मण्डपस्तादृक्सिंहासनमथापि वा ।
नान्यधामसु विद्येते का वर्ण्या तच्चमत्कृतिः ॥७२॥
शोभा दिव्यापि नान्यत्र न वर्ण्या जायते मया ।
मण्डपोपरिप्रासादः श्रीहरेस्तं शृणु प्रिये ! ॥७३॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने-ऽक्षरधामस्थपरब्रह्मतत्सिंहासनतन्मण्डपवर्णननामा-ऽष्टादशाधिकशततमोऽध्यायः ॥११८॥

**श्रीनारायण उवाच—**

शंभुः प्राह पुनर्देवीं श्रीहरेर्मण्डपोपरि ।
प्रासादं शृणु कल्याणि ! न भूतो न भविष्यति ॥ १ ॥
लक्षयोजनविस्तारः सहस्रयोजनोच्छ्रयः ।
सहस्रस्तंभपंक्त्येका सहस्रपंक्तयस्तथा ॥ २ ॥
कम्मानिकाचतुष्कीवत्सर्वत्र प्रोत्थिताः शुभाः ।
मध्ये महान् घूम्मटश्च दिक्षु चत्वार एव च ॥ ३ ॥
चतुष्कोणेषु चत्वारि शिखराणि लसन्ति वै ।
शिखराणि सप्त तं वै घूम्मटं ध्रुवमेत्य च ॥ ४ ॥
त्रीणि दक्षे च वामेऽपि त्रीणि मध्ये महत्तमम् ।
यत्कोल्यां मण्डपस्तत्र यदधः सिंहमासनम् ॥ ५ ॥
सौधोपरि कोष्ठलोऽपि सहस्रयोजनोच्छ्रयः ।
कोष्ठलोपरि शिखरं सार्धसहस्रयोजनम् ॥ ६ ॥
तत्र स्थिता पद्मशिला पञ्चशतसुयोजनम् ।
तत्र स्थलीशिला चास्ते शतयोजनमुच्छ्रया ॥ ७ ॥
तदूर्ध्वे दिव्यसौवर्णकलशाः शतमेव च ।
तदुपर्येककलशी ततस्तद्वरिमो मतः ॥ ८ ॥
ते वै पञ्चशतोच्छ्राया ध्वजदण्डस्ततः परम् ।
सहस्रयोजनोच्छ्रायो वंशश्चापि तथोच्छ्रयः ॥ ९ ॥
ध्वजस्तत्राऽऽमूलपुच्छं पञ्चशतसुयोजनः ।
सप्तरंगो द्विपुच्छश्च कोटिसूर्यसमोज्ज्वलः ॥१०॥
त एते चेतना मुक्ताः सेवार्थरूपधारिणः ।
चिह्नदेहाः सदा मुक्तास्तथा तिष्ठन्ति सेवने ॥११॥
शिखरे सांख्ययोगिन्यो योगिन्यो दिक्षु सन्ति वै ।
सिंहाश्चान्ये नरसिंहा ह्यवतारा भवन्ति वै ॥१२॥
गवाक्षास्तत्र शिखरे मुक्ताक्षाः संवसन्ति वै ।
पुत्तलिकास्तथा चान्या मुक्तान्यः संवसन्ति ताः ॥१३॥
ध्वजदण्डे पाटलिका साध्वी मुक्ता तु सा मता ।
घण्टिण्यस्ताश्च मुक्तान्यो दिव्याः श्रीहरिसेविकाः ॥१४॥
दीपस्तत्र महादीपो महामुक्तो न चापरः ।
महतोऽपि महीयान्वै दीपः सर्वोत्तमो हि सः ॥१५॥
अन्येष्वपि तु शृंगेषु सर्वे मुक्ता वसन्ति वै ।
सौधोपरि घुम्मटोऽपि सहस्रयोजनोच्छ्रयः ॥१६॥
दिव्योऽयं वै महासौधो व्योमगस्तैजसः स्वयम् ।
यथेष्टश्रीहरेः कामाद्गच्छत्येव समन्ततः ॥१७॥
तत्रर्षीणां विमानानि कामगानि भ्रमन्ति वै ।
प्रदक्षिणां मन्दिरस्य तानि कुर्वन्ति भक्तितः ॥१८॥
दिव्याः शीतोष्णजलदा वह्निकुण्डाश्च शाश्वताः ।
अनिलाः शीतगन्धाश्च प्रकाशा दुग्धरूपिणः ॥१९॥
प्रदीपाः सत्यसंकल्पा उपस्कराश्च कामजाः ।
वस्त्रभोजनभूषादिपानवाहाश्च कामजाः ॥२०॥
गृहा गृहोपसम्पत्तिः सेवकाः सेविकास्तथा ।
दिव्या दिव्यवपुष्मन्तो मुक्ता मूर्तय एव ते ॥२१॥
महासौधे स्वकं रम्यं सिंहासनं तु मध्यगे ।
तत्पार्श्वे धर्मदेवस्य भक्तेश्च वसतिर्ध्रुवा ॥२२॥
वामपार्श्वे तु मुक्तेश्च रतेश्च वसतिर्ध्रुवा ।
ज्ञानस्य धर्मपार्श्वे तु विरक्तेर्वसतिर्ध्रुवा ॥२३॥
मुक्तिपार्श्वे उपास्तेश्चाऽऽज्ञायाश्च वसतिर्ध्रुवा ।
आज्ञापार्श्वे मुमुक्षायाः प्रपत्तेर्वसतिर्ध्रुवा ॥२४॥

ज्ञानपार्श्वे कथायाश्च वार्ताया वसतिर्ध्रुवा ।
वार्तापार्श्वे दासताया दीक्षाया वसतिर्ध्रुवा ॥२५॥
इतिसप्तशिखराऽधोवासस्ते कीर्तितो मया ।
घुम्मटे वर्तुलं प्रदक्षिणायां गोत्रमण्डलम् ॥२६॥
ससकुटुम्बकौटुम्बितत्तद्दासा भवन्ति वै ।
वर्तुलगोपुरे विद्या परा तदाप्यते यया ॥२७॥
वर्तुलस्तु महान्स्वर्णदिव्यप्राकार उच्यते ।
परितस्तत्र राजन्ते सौधा अनादिमुक्तजाः ॥२८॥
नित्यं तेषां तु सौधास्ते विमानानीव चेतनाः ।
कामगाः कामचारास्ते सर्वस्मृद्धिप्रपूरिताः ॥२९॥
भोज्यपानविलेपार्घ्यसर्वरससुखाश्रयाः ।
तेजस्विनः सदा दिव्या मुक्ताः श्रीहरिरूपिणः ॥३०॥
यथेष्टसर्वसामर्थ्या यथेष्टोत्पादभावनाः ।
तेषां नामानि वक्ष्ये त्वां शृणु पार्वति सुस्थिरा ॥३१॥
गुणातीतश्च गोपालो ब्रह्म मुक्तः शुकः शतः ।
सुव्रतो निष्कुलो भूमा विधाता वासुदेवकः ॥३२॥
नित्योऽचिन्त्यश्च शान्तश्च कृष्णस्त्यागः कृपस्तथा ।
परहंसो विरागश्चिन्मयश्चाक्षर ईशनः ॥३३॥
स्वप्रकाशश्च कैवल्यो विरक्तश्चेतनस्तथा ।
चिद्रूपश्च नरश्चैव श्रीचरणश्च पावनः ॥३४॥
धीरो महापूरुषश्च शिवश्चाधार एव च ।
चैतन्यो वैष्णवो विश्वात्मको निर्गुण एव च ॥३५॥
सूरिः कल्याण ईशेशो ह्यरूपोऽमृत एव च ।
गोपः पद्मधराः श्वेतो वैकुण्ठो देव इत्यपि ॥३६॥
प्रकाशश्च प्रसादश्च सुधर्मश्च सुखश्रयः ।
सुखरूपश्च सन्तोषो ज्ञानो विजय इत्यपि ॥३७॥
बद्रिकश्च निवृत्तश्च नयो ध्यानश्च शान्तनुः ।
शमः सुखो महासुखोऽचिन्त्योऽमोघः प्रमोदकः ॥३८॥
गवेन्द्रोऽनुभवश्चादित्योऽचलो विश्वरूपकः ।
प्रज्ञो बोधश्च वेदान्तो मुकुन्दः क्षेम इत्यपि ॥३९॥
पुण्डरीको विधाता च्वाऽग्राह्यः शाश्वत इत्यथ ।
ध्रुवोऽमेयः पवित्रश्च स्थविष्ठश्च ऋषीककः ॥४०॥
प्रभूतो नियमो योगो जगदीशो दयालयः ।
सुरो धर्मो मुनिर्नारो बलभद्रः प्रकाशनः ॥४१॥
सिद्धः सुखकरश्चैव विश्रामः केशवस्तथा ।
कपिलः स्ववशो द्रष्टा सज्जनः सांख्य इत्यपि ॥४२॥
भास्करश्च प्रभश्चापि ऋषभः सगुणस्तथा ।
निर्द्वन्द्वश्च नृसिंहश्च विदेहो देव इत्यथ ॥४३॥

निरालम्बश्च विश्वासो निर्विकारः प्रदीपनः ।
निरपेक्षो निरन्नश्च सत्त्वो लक्ष्मण इत्यपि ॥४४॥
निर्मोहो भूधरश्चैव भद्रो मानद इत्यपि ।
हंसः प्रद्युम्न आनन्दो मंजुलश्च प्रतोषणः ॥४५॥
भजनो निर्मलः शान्तः प्रशान्तो धन्य इत्यथ ।
सविता धरणः सुज्ञः सत्येशो ज्योतिषस्तथा ॥४६॥
प्रबोधश्च प्रभुश्चैव पद्मः तापस इत्यपि ।
तुरीयश्च स्वरूपश्च विवेको वामनस्तथा ॥४७॥
निवासो मंगलश्चैवाऽक्षयः सुव्रत एव च ।
अभेदश्च तुरीयश्च क्षेमकश्च दृढव्रतः ॥४८॥
निर्विशेषो विचारश्च जिष्णुर्मधुश्च वैष्णवः ।
अव्ययो मुक्तिगश्चैव वरदः संशितस्तथा ॥४९॥
वल्लभश्च सुपर्णश्च विश्वभ्रो दुर्लभस्तथा ।
धनश्चैव प्रसादश्च श्यामश्च दहरस्तथा ॥५०॥
ऐश्वर्यश्चावदातश्च राधश्च धर्मरूपणः ।
व्रजो भागवतो बालः उपशमश्च स्वस्तिकः ॥५१॥
संकर्षणः श्रीधरश्चामृतो यज्ञो हिरण्यकः ।
ईशानः प्रभवः पूतो भूगर्भः प्राणदः प्रणः ॥५२॥
संवत्सरः कृतः शिवः कृतज्ञश्च सुरेश्वरः ।
बुधो वृषो वसुः साम गुणोऽध्यक्षः प्रवेदनः ॥५३॥
लोको व्यूहः सर्वगश्च भ्राजिष्णुश्चरणस्तथा ।
सहिष्णुश्चतुरोऽनघश्चोर्जितः कारणस्तथा ॥५४॥
उपेन्द्रश्च धृतश्चैव सत्त्वः सात्त्वत इत्यपि ।
उत्साहो विश्रुतश्चैवाऽनिर्देशश्चाऽनिमेषणः ॥५५॥
उदारश्च सुभूषश्चाऽनिलश्च विक्रमस्तथा ।
सत्कारः संवृतो वृत्तो विशिष्टः सिद्धिमाँस्तथा ॥५६॥
वर्धनश्च विविक्तश्च बृहद्रूपः पृथुःश्रवः ।
अशोकश्च सुदामश्च सानुकूलोऽतुलस्तथा ॥५७॥
आदिदेवः श्रीगर्भश्च निर्वाणो भाजनस्तथा ।
व्यवसायश्च सन्तोषो विरामो नन्द इत्यथ ॥५८॥
स्थिरः सुदर्शनश्चैव विशालो दक्ष इत्यपि ।
धर्मयूपस्तथेज्यश्च मखः सूक्ष्मः प्रमाणकः ॥५९॥
ब्रह्मण्यो वत्सलश्चैव शुभांगश्च पुरातनः ।
सन्धानश्च प्रमोदश्च नन्दनश्च सुपुण्यकः ॥६०॥
दुर्जयः कुमुदश्चैव सुलभः शुद्ध इत्यपि ।
योगीशश्च सुविद्यश्च साक्ष्यो धनंजयस्तथा ॥६१॥
अखण्डश्च त्रिलोकश्च सुहृद् भूमा हिरण्मयः ।
भवो भावः क्रतुश्चैव समाराधन इत्यपि ॥६२॥

वत्सलो वात्सलश्चैव सुस्नेहश्च कुबेरजित् ।
सोमोऽलर्कश्च शूरश्च मन्त्रो मञ्चश्च मूलजित् ॥६३॥
तिलकः कुण्डलश्चैव किरीटः कटकोऽगदः ।
नक्तकः कौस्तुभश्चैव प्रावारः कंचुकस्तथा ॥६४॥
इत्येवं पार्षदास्तत्र प्राकारे कृतसंश्रयाः ।
सदा तिष्ठन्ति सौधेषु प्रथमावरणे हि ते ॥६५॥
अनादिनश्च ते मुक्ता वसन्ति हरिसेविनः ।
असंख्याताश्च ते सन्ति द्वितीयाऽवरणेऽपि च ॥६६॥
सर्वे मूर्तिसमाकारा मूर्तितुल्यैश्वराश्च ते ।
सर्वे पश्यन्ति साम्येन श्रीहरेर्मन्दिरं करे ॥६७॥
न न्यूनाधिकभावोऽस्ति तत्रैश्वर्यादिसद्गुणे ।
यथेच्छन्ति भवन्त्येव नित्यसार्वज्ञ्यचाक्षुषाः ॥६८॥
कोटियोजनविस्तारः प्राकारः प्रथमो हि सः ।
अब्जयोजनविस्तारः प्राकारो द्वित्वसंख्यकः ॥६९॥
परार्धयोजनायामः प्राकारस्तु तृतीयकः ।
तत्र चेश्वरलोकेभ्यो गता मुक्ता वसन्ति वै ॥७०॥
तुर्यः परार्धगुणितपरार्धयोजनायतः ।
प्राकारस्तत्र मुक्तानां गतानां सन्ति सृष्टयः ॥७१॥
ततस्तु पंचमं तत्रावरणं स्यादनन्तकम् ।
असीमं तत्र गोलोको वैकुण्ठोऽमृत इत्यपि ॥७२॥
अव्याकृतस्तथा श्वेतो बद्रिकाश्रम इत्यपि ।
मात्स्यलोकः कूर्मलोको वाराहो लोक इत्यपि ॥७३॥
कापिलं धाम हारेयं वासुदेवगृहं तथा ।
पार्थवं च पदं दत्तात्रेयधाम च हांसकम् ॥७४॥
नृहरेर्धाम च यद्वदार्षमं वामनेयकम् ।
परशुरामलोकश्च याज्ञं साकेतमित्यपि ॥७५॥
कौमारं धाम च हायग्रीवं नारदधाम च ।
राजराजेयधामानि व्यासाश्रयाणि यान्यपि ॥७६॥
बौद्धं धाम तथाऽन्यान्यसंख्यधामानि सन्ति वै ।
अनन्ता ह्यवताराश्चानन्ता ब्रह्माण्डकोटयः ॥७७॥
अनन्तसृष्टयस्तत्रावताराणां न संख्यनम् ।
अतस्तत्तद्धाम्नां वै संख्या नैव च नैव च ॥७८॥
पंचमावरणस्यापि संख्या नैव च नैव च ।
तत्रारण्यानि नद्यश्च पार्वता मुक्तकोटयः ॥७९॥
उद्यानानि विहाराणि भूमयोऽक्षरसंज्ञिकाः ।
धातवः खनयः खाता उच्छ्र्याः शिखराणि च ॥८०॥
विमानान्येव सर्वाणि तत्तत्सेवकजातयः ।
गान्धर्वा नर्तकास्तत्राऽऽख्यानका देशबोधकः ॥८१॥
सेवका याज्ञिका साम्नां स्तावका व्यवसायकाः ।
कलाकाराश्च श्रांगारा मुक्तानीमुक्तमण्डलाः ॥८२॥
असंख्याता न संख्यातुं कोऽपि नारायणमृते ।
सोऽपि प्राह मम धाम्नो मुक्तानां नास्ति संख्यनम् ॥८३॥
अवताराणां च धाम्नां नैवाऽस्ति गणनं तथा ।
एवं दिव्येऽक्षरे धाम्नि विभूतौ त्रिपदि प्रथे ॥८४॥
वर्तन्ते धामधामानि श्रीहरेर्लीलया ततः ।
महामायाकृता सृष्टिर्भवन्तीश्वरकोटयः ॥८५॥
नान्तो नान्तं वर्णनेऽपि कर्तुं शक्यो हि कश्चन ।
कथमहं तदन्तेन वर्णनं पारयामि वै ॥८६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने श्रीहरिप्रासादपरिकरतत्प्रावरणतन्मुक्तपार्षदतदवतार-धामादिसामान्यविशेषोद्देशनामा एकोनविंशाधिकशततमोऽध्यायः ॥ ११९ ॥

**श्रीनारायण उवाच—**

ततो लक्ष्मि ! जगद्बन्धुः शंकरो लोकशंकरः ।
पार्वतीं कथयामास गोलोकपरिवर्णनम् ॥ १ ॥
गोलोकं श्रीहरेः कृष्णभगवतो निवासनम् ।
सर्वस्मृद्धिविलासादिदासीदासाद्यनन्तवत् ॥ २ ॥
अवधारय देवेशि ! समाधौ दर्शितं तु मे ।
विरजाया महानद्याः पारे प्राकारवान् गिरिः ॥ ३ ॥
शतश्रृंगश्च पंचाशत्कोटियोजनवर्तुलः ।
कोटियोजनमूर्ध्वे व्यासो दशकोटियोजनः ॥ ४ ॥
तस्यैकश्रृंगे रासमंडलं तु दशयोजनम् ।
ततो वृन्दावनं तद्वद् द्वात्रिंशच्च वनानि वै ॥ ५ ॥
ततोऽग्रे त्वक्षयवटो गोपगोप्यादिसृष्टयः ।
तत ऊर्ध्वं चिदाकाशे गोलोकं च ततोऽक्षरम् ॥ ६ ॥
विचित्रं सुभगं धाम जरामृत्युहरं हि तत् ।
ब्रह्मणा धार्यमाणं च निर्मितं स्वेच्छया हरेः ॥ ७ ॥
नैव वर्णयितुं शक्यं तथापि वर्णये त्वणु ।
विरजायाः पृथुतीरौ मया दृष्टौ समाधिना ॥ ८ ॥
शुद्धस्फटिकसंकाशौ सुविस्तीर्णौ मनोहरौ ।
मुक्तामाणिक्यपरममणिरत्नाकरान्वितौ ॥ ९ ॥
कृष्णशुभ्रहरिद्रक्तमणिराजिविराजितौ ।
सुप्रकाशप्रवालौ तौ कुत्रचित्सुमनोहरौ ॥१०॥

परमाऽमूल्यसद्रत्नाकरराजिविभूषितौ ।
अन्यादृश्यमहाश्चर्यस्वर्णनिध्याकरान्वितौ ॥११॥
पद्मरागेन्द्रनीलानामाकरौ कुत्रचित् प्रिये ।
कुत्रचिच्च मरकताकरश्रेणीसमन्वितौ ॥१२॥
स्यमन्तकाकरौ कुत्र कुत्रचिद् रुचकाकरौ ।
अमूल्यपीतवर्णाभौ मणिश्रेण्याकरान्वितौ ॥१३॥
रत्नाकरौ कुत्रचिच्च कुत्रचित् कौस्तुभाकरौ ।
कुत्र निर्वचनीयानां मणीनामाकरौ शुभौ ॥१४॥
कुत्रचिद्दिव्यसद्रम्यविहारप्रस्थलौ मतौ ।
तादृशी विरजा रम्या सरित् तीरैः सुशोभिता ॥१५॥
संवेष्टय वर्तुला चास्ते शतश्रृंगं तु पर्वतम् ।
दिव्यस्वर्णमयं कोटिसूर्यप्रसरदुज्ज्वलम् ॥१६॥
पारिजाततरूणां च वनैर्दीर्घैर्विराजितम् ।
नानाकल्पतरुव्याप्तं कामधेनुसुमण्डितम् ॥१७॥
कोटियोजनमूर्ध्वं च व्यासे दशगुणोत्तरम् ।
शैलदैर्घ्यं मितं तत्र पञ्चाशत्कोटियोजनम् ॥१८॥
प्राकाराकारमस्यैकशिखरे रासमण्डलम् ।
दशयोजनविस्तीर्णं वर्तुलाकारमुत्तमम् ॥१९॥
नैकपुष्पोद्यानकोटिसुगन्धिपुष्पवासितम् ।
कामोत्तेजकवस्त्वादिराजितं रासमण्डलम् ॥२०॥
तत्र रत्यर्थसौधादिरत्नमण्डपकोटयः ।
रत्नसोपाननिःश्रेणीमण्डिता नैकभूमयः ॥२१॥
सद्रत्नस्वर्णकलशैर्मणिस्तम्भैः सुशोभिताः ।
स्तम्भेषु खचिता हरिन्मणयश्च मनोहराः ॥२२॥
सिन्दूरवर्णमणय इन्द्रनीलाः प्रभाकराः ।
नद्धरत्नप्रभेदाश्च मणिभेदाः सुदर्शनाः ॥२३॥
तस्य मण्डपवर्यस्य चत्वारो गोपुरास्तथा ।
दृष्टाः कपाटशोभाढ्या दिव्या गगनचूम्बिनः ॥२४॥
रज्जुग्रन्थिसमायुक्तरसालपल्लवान्विताः ।
कदलीस्तम्भनिवहा यत्र शोभन्त आदितः ॥२५॥
स्थले स्थले मण्डपेऽत्र शोभा क्लृप्ता नवा नवा ।
शुक्लधान्यपर्णजालफलदुर्वांकुरान्विता ॥२६॥
चन्दनागुरुकस्तूरीकुंकुमद्रवचर्चिता ।
रमन्ते गोपकन्यानां समूहाः कोटिशोऽत्र वै ॥२७॥
रत्नालंकारभूषाढ्या रत्नमालाविराजिताः ।
रत्नकंकणकेयूररत्नूपुरभूषिताः ॥२८॥
रत्नकुण्डलत्रोट्याादिगण्डस्थलविराजिताः । ।
रत्नांगुलीयललितहस्तांगुलिविराजिताः ॥२९॥
रत्नपाशकभूषाढ्यपदांगुलिसुशोभिताः ।
रत्नभूषाभूषिताश्च सद्रत्नमुकुटोज्ज्वलाः ॥३०॥
गजेन्द्रमुक्तालंकारराजितशुभनासिकाः ।
अलकाऽधःस्थलोज्ज्वलकृतसिन्दूरचन्द्रकाः ॥३१॥
पीतचम्पकवर्णाभाश्चन्दनद्रवचर्चिताः ।
पीताम्बरपरीधाना बिम्बाधरमनोहराः ॥३२॥
शरत्पार्वणचन्द्रोत्थप्रभोज्ज्वलमुखाम्बुजाः ।
शरत्प्रफुल्लपद्माग्र्यदलशोभितलोचनाः ॥३३॥
नेत्रपुटद्वयलग्नप्राञ्जितकज्जलोन्मदाः ।
प्रफुल्लमालतीमालाजालकंधरशोभिताः ॥३४॥
गजहंसगतिश्रेष्ठमन्थरागतिमोहनाः ।
वक्रभ्रूभंगसंयोगदलक्ष्यस्मितसमन्विताः ॥३५॥
पक्वदाडिमबीजाभदन्तपंक्तिविराजिताः ।
खगेन्द्रचञ्चुशोभाढ्यनासिकोन्नतिभूषिताः ॥३६॥
गजेन्द्रगण्डयुग्माभस्वर्णस्तनभराऽऽनताः ।
नितम्बकठिनश्रोणीपीनभारभराऽऽनताः ॥३७॥
कन्दर्पदर्पविलसन्मानसा मदविह्वलाः ।
दर्पणे पूर्णचन्द्रास्यसौन्दर्यदर्शनोत्सुकाः ॥३८॥
राधिकाकृष्णचरणसेवासक्तमनोरथाः ।
सुन्दर्यः षोडशवर्षा भरयौवनमार्गणाः ॥३९॥
विहरन्ति महादिव्ये रासमण्डलमण्डपे ।
क्रियासरांसि लक्षाणि पुष्पोद्यानानि कोटिशः ॥४०॥
लोहितश्वेतरक्ताभपद्मकोट्यन्वितानि वै ।
दिव्यमधुपसन्नादगुञ्जिततीरवन्ति च ॥४१॥
पुष्पशय्यागर्भकुंजकुटीरकोटिशोभितः ।
मण्डपः परितो रत्नप्रदीपकिरणोज्ज्वलः ॥४२॥
भोगद्रव्यसकर्पूरताम्बूलवस्त्रसंयुतः ।
श्वेतचामरदर्पणविचित्रपुष्पहारकः ॥४३॥
भव्यस्तु शोभते रासमण्डपोऽथ ततः परम् ।
विचित्रशोभं रम्यं च सुदिव्यं वर्तते वनम् ॥४४॥
वनं वृन्दावनं नाम राधामाधवयोः प्रियम् ।
तयोः क्रीडाविहारार्थं कल्पद्रुममयं परम् ॥४५॥
मन्दवायुप्रकम्पेन शोभते चेतनं सदा ।
कमलस्थलपद्मादिकस्तूर्यादिसुगन्धितम् ॥४६॥
कोकिलाकूजनैर्नूत्नपल्लवैश्च मनोहरम् ।
रमणार्थं कदम्बानां कुंजैः सुकमनीयकम् ॥४७॥
बकुलकुन्दमन्दारचन्दनस्वर्णचम्पकैः ।
तत्तत्सुगन्धिसत्पुष्पैः परितः सुरभीकृतम् ॥४८॥

नागरंगपनसाऽऽम्रतालश्रीफलखर्जुरैः ।
जम्बूबदरिकागुर्वाकाम्रातकसुदाडिमैः ॥४९॥
जम्बीरकदलीनारिकेलैर्युक्तं मनोरमम् ।
शाल्मल्यश्वत्थतिन्तिडीनिम्बपिप्पलिसर्जकैः ॥५०॥
संकुलं विविधैर्वृक्षैः सर्वदा फलपुष्पधृक् ।
मल्लिकामालतीस्वर्णाकेतकीमाधवीयुतम् ॥५१॥
यूथिकाचित्रपुष्प्यादिवल्ल्युल्लोचविराजितैः ।
चारुकुंजकुटीरैश्च पंचाशत्कोटिभिर्युतम् ॥५२॥
रत्नदीपाः कोटिकोट्यो धूपास्तत्र सुगन्धिनः ।
शृंगारद्रव्यसम्मिश्राऽनिला वान्ति समन्ततः ॥५३॥
सुगन्ध्यर्कचन्दनाक्तपुष्पशय्याः स्थले स्थले ।
दिव्यमुक्तधृतरूपद्विरेफरवनादिते ॥५४॥
रम्ये वृन्दावने गोप्यो रत्नालंकारशोभिताः ।
पंचाशत्कोटिगोप्यस्ता वसन्ति राधिकाज्ञया ॥५५॥
तत्राभ्यन्तरभूमौ द्वात्रिंशद्वनानि सन्ति वै ।
कल्पद्रुपारिजाताख्यकदम्बादिकनामभिः ॥५६॥
तत्तद्वृक्षविशेषैश्च वनानि सन्ति वर्तुले ।
ततो वृन्दारकं स्थानं गोपगोपीकृतगृहम् ॥५७॥
गोष्ठानां गोपगोपीनां नगराणि वसन्ति वै ।
पुष्पोद्यानसहस्राणां सहस्राणि भवन्ति च ॥५८॥
पञ्चाशत्कोटिगोपीनां गृहेभ्योऽप्युत्तमानि वै ।
सौधानि सन्ति प्रत्येकं श्रीकृष्णस्येव रूपतः ॥५९॥
श्रीकृष्णतुल्यरूपाश्च सर्वा द्वादशहायनाः ।
अर्बुदाऽर्बुदसंख्याका रूपरूपातिरूपणाः ॥६०॥
गोप्यो गोपा ह्यसंख्याता वृन्दारके वसन्ति हि ।
रत्नहीरकमाणिक्यमणिस्वर्णादिभूमिके ॥६१॥
दिव्ये वृन्दारके तत्र समृद्धयः सन्त्यनन्तशः ।
तत आरभ्य गोलोको ब्रह्मधाम्नि स्थितोऽन्तरे ॥६२॥
तस्य वै परितो गोपगोपीनां मण्डलानि वै ।
वृन्दारके चाभितस्तु गोलोकस्याभितस्तथा ॥६३॥
वसतयो वर्तुले वै वृन्दारके वसन्ति हि ।
वृन्दारकाणां वासानां मध्ये गोलोकमुत्तमम् ॥६४॥
पूर्वे वृन्दारके भागे तत्राऽक्षयवटोऽस्ति वै ।
पञ्चयोजनविस्तीर्णो दशयोजनमूर्ध्वगः ॥६५॥
सहस्रस्कन्धसंरोहशाखाकोटिसमन्वितः ।
रक्तपक्वफलाढ्यश्च नवपल्लवशोभितः ॥६६॥
सुघट्टछायासुखदस्तदधो रत्नवेदिकाः ।
सन्ति तत्र कृष्णरूपा रमन्ते गोपबालकाः ॥६७॥
पीताम्बरधरा क्रीडालग्नमानससद्रसाः ।
चन्दनोत्तमसौगन्ध्यान्वितगात्रसुरूपिणः ॥६८॥
पार्षदास्ते कृष्णतुल्यरूपयौवनभासुराः ।
सर्वभूषासुशोभाढ्या रमन्ते विहरन्ति च ॥६९॥
ततः पार्श्वे द्वितीयस्तु भाण्डीरवटसंज्ञकः ।
राधया सह कृष्णस्य योगः संजायतेऽत्र वै ॥७०॥
वटोऽस्ति पंचयोजनविस्तारो द्विगुणोच्छ्रयः ।
सहस्रस्कंधकोटिशाखाप्रशाखासुदिव्यकः ॥७१॥
तदधो रत्नखचितस्वर्णवेदिमयानि वै ।
गोपीनां कन्यकानां वै विहाराणि भवन्ति हि ॥७२॥
सर्वाश्च गोपकन्यास्ता राधावद्रूपभासुराः ।
विहरन्ति रमन्ते ताः सर्वा द्वादशहायनाः ॥७३॥
कृष्णं नित्यं प्रतीक्षन्ते चायान्ति यान्ति कोटिशः ।
कृष्णं प्राणाधिकं लब्ध्वा सेवित्वा च प्रयान्ति वै ॥७४॥
तयोस्तु वटयोर्मध्ये राजमार्गो मनोहरः ।
राधाकृष्णमहासौधं प्रति गच्छति दूरतः ॥७५॥
पार्श्वे पार्श्वे तु सिन्दूरमणिनिर्मितवेदिकाः ।
क्वचिदिन्द्रनीलवल्लता रुचकैर्हीरकैस्तथा ॥७६॥
पद्मरागैः स्फटिकैश्च निर्मिता वेदिकाः क्वचित् ।
विश्रान्तिमण्डपा धर्मशालाश्च पार्श्वतः क्वचित् ॥७७॥
क्वचिच्चन्दनकस्तूरीकुंकुमद्रवशोभितः ।
क्वचित् लाजाफलपुष्पदधिदुर्वादिमण्डितः ॥७८॥
स्वर्णचम्पकमन्दारपारिजातादिपार्श्वकः ।
नवपल्लवपुष्पादिसमृद्धवृक्षविराजितः ॥७९॥
रंभावनानि शोभन्ते शोभन्ते फलिशाखिनः ।
सुरत्नाञ्चितगर्गर्यो मस्तकस्थाः सुशोभनाः ॥८०॥
जलाहरणकार्यार्था गोपीनां भान्ति वारिभिः ।
घटास्तासां कटितटे स्थापिता भान्ति पौरटाः ॥८१॥
सिन्दूरकुंकुमाक्ताश्च गन्धसुगन्धवासिताः ।
भूषिताः पुष्पभूषाभिः यतो गच्छन्ति गोपिकाः ॥८२॥
मार्गान्मार्गान्तरं रथ्यारूपं गच्छन्ति कन्यकाः ।
स्वस्वसौधेषु रम्येषु रत्नसोपानवर्त्मसु ॥८३॥
वह्निशौचांशुकधराः स्वर्णभूषाविभूषिताः ।
श्वेतचामरदर्पणपुष्पतल्पे स्वपन्ति ताः ॥८४॥
तेन मार्गेण गोपाश्च गोप्यो यान्ति सुसुन्दरान् ।
पार्श्वस्थान्स्वीयसौधान्वै पुष्पमाल्यसुतोरणान् ॥८५॥
षोडशद्वारसंयुक्तप्राकारपरिवेष्टितान् ।
परितः परिखायुक्तान् द्वारपालैश्च रक्षितान् ॥८६॥

इत्येवं राजमार्गः सः पार्श्वद्वयसुशोभितः ।
प्राकारद्वारमाविश्य याति श्रीकृष्णमन्दिरम् ॥८७॥
प्राकारान्तर्वसतयो भवन्ति कोटिशस्तथा ।
प्राकारो वर्तुलाकारः कोटियोजनविस्तृतः ॥८८॥
गोलोकोऽयं महादिव्यो महागोलोकसंज्ञकः ।
निजगोलोक इत्येवं राधागोलोक इत्यपि ॥८९॥
नाम्ना परिचयस्तस्य कुर्वन्ति गोपगोपिकाः ।
अथ ते मुख्यगोलोकं कथयामि शिवे ! शृणु ॥९०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने
गोलोके विरजाशतशृंगरासमण्डपवृन्दावनाऽक्षयवट-
भाण्डीरवटराजमार्गवृन्दारकादिवर्णननामा
विंशत्यधिकशततमोऽध्यायः ॥१२०॥

**श्रीनारायण उवाच—**

ततो लक्ष्मि ! महादेवः पार्वतीं प्राह शोभनम् ।
सप्राकारं तु गोलोकं मन्दिरादिस्थलान्वितम् ॥ १ ॥
तस्य प्राकारविस्तारः कोटियोजनमुच्यते ।
चतुर्द्वारान्वितश्चैवाकाशविमानसंश्रितः ॥ २ ॥
गोपसमूहरक्षाढ्यो द्वारपालसमन्वितः ।
प्रासादा रत्नखचिता बहुभोग्यार्थसंभृताः ॥ ३ ॥
कृष्णार्थकृतसर्वस्वपंचाशत्कोटिगोपिकाः ।
सन्ति वसन्ति तत्रत्यप्रासादेषु च ताः प्रियाः ॥ ४ ॥
तत्राश्रमाश्च भक्तानां गोपानां शतकोटयः ।
वृक्षवल्लीभोग्यजातप्रपूरितसुखप्रदाः ॥ ५ ॥
ततोऽप्यधिकविस्तारा रत्नमणिचमत्कृताः ।
आश्रमाः पार्षदानांच भवन्ति दशकोटयः ॥ ६ ॥
सर्वसिद्धिप्रपूर्णाश्च न न्यूनं विद्यतेऽप्यणु ।
द्वादशहायनाः कन्याः कुमाराः षोडशाब्दिकाः ॥ ७ ॥
ततोऽपि पार्षदवराः श्रीकृष्णरूपधारिणः ।
प्रासादकृतवासास्ते वर्तन्ते कोटिशोऽपरे ॥ ८ ॥
नैतेषां श्रीकृष्णवासान्निवासे न्यूनताऽल्पिका ।
प्रासादा राधिकाशुद्धभक्तगोपीजनैर्युताः ॥ ९ ॥
रत्नमणिस्वर्णकृता द्वात्रिंशत्कोटयोऽपरे ।
राधाभक्तप्रगोपीणां किंकरीणां तथा गृहाः ॥१०॥
भवनानि विचित्राणि सन्ति वै दशकोटयः ।
दिव्याः स्वर्णमया रत्नमणिहीरकनिर्मिताः ॥११॥
गोलोकान्तर्गताः सर्वे प्रासादाः सन्ति कामदाः ।
शतजन्मतपःपूता हरिभक्तिरताश्च ये ॥१२॥
कृष्णार्थकृतसर्वस्वा राधाकृष्णेतिजापकाः ।
यान्ति गोलोकधामैते प्राकारे प्रवसन्ति च ॥१३॥
तेषां निवासाः सद्रत्नमणिमाणिक्यनिर्मिताः ।
पुष्पशय्यापुष्पमालाश्वेतचामरशोभिताः ॥१४॥
रत्नदर्पणशोभाढ्या हरिन्मणिप्रशोभिताः ।
अमूल्यरत्नकलशव्रातप्रान्वितशेखराः ॥१५॥
अमोघवीर्यसंभृतदिव्यपुष्टशरीरकाः ।
गोपगोपीगणा भक्ताः सूक्ष्मवस्त्रविभूषणाः ॥१६॥
विविधाऽमृतभोगाश्च वसन्ति कोटिकोटयः ।
ततो मध्ये महोद्याने रासेश्वर्याः परो महान् ॥१७॥
आश्रमो वर्तते व्यस्तो राधायाः स्मृतिसंभृतः ।
देवाधिदेव्या गोपीनां वरायाश्चारुनिर्मितः ॥१८॥
प्राणाधिकायाः कृष्णस्य रम्यद्रव्यमनोहरः ।
सुचारुवर्तुलाकारः षड्गव्यूतिप्रमाणकः ॥१९॥
शतमन्दिरसंयुक्तो ज्वलितो रत्नतेजसा ।
अमूल्यरत्नसाराणां चयैर्विरचितो वरः ॥२०॥
दुर्लंघ्याभिर्गभीराभिः परिखाभिः सुशोभितः ।
कल्पवृक्षैः परिवृताः पुष्पोद्यानशतान्तरः ॥२१॥
सुमूल्यरत्नखचितप्राकारेण सुवेष्टितः ।
सद्रत्नवेदिकागर्भसप्तद्वारैः सुशोभितः ॥२२॥
वर्तुलः सुमहाँस्तत्र तूद्यानो वर्ततेऽभितः ।
सर्वतस्तत्र तत्रापि वृक्षवल्लीसमन्वितः ॥२३॥
आन्तरोद्यानमध्येऽत्र प्राकारो वर्ततेऽपरः ।
सर्वतस्तत्र तत्रापि षोडशद्वारसंयुतः ॥२४॥
सहस्रधनुरुर्ध्वोत्थः कलशशृंगमण्डितः ।
तेजसा प्रज्ज्वलन् रम्यो विमानशतमण्डितः ॥२५॥
प्राकारं परितस्तं च कृष्णप्रासादसदृशाः ।
गोपानां गोपिकानां च शतसौधमिताश्रमाः ॥२६॥
प्राकारान्तर्गतस्तत्रोद्यानो दिव्यफलान्वितः ।
दिव्यपुष्पान्वितश्चैव दिव्यवारिसुकुण्डकः ॥२७॥
दिव्यं सरोवरं रम्यं वर्तते तत्र दक्षिणे ।
तत्तीरे नृपसौधोऽस्ति यत्र नृत्यन्ति नर्तकाः ॥२८॥
सुतानं चारुसंगीतं राधाकृष्णगुणान्वितम् ।
गायन्ति गीतपीयूषं वादका गायकास्तथा ॥२९॥
नानावेषधरास्तत्र गोपिकाश्च मनोहराः ।
स्थाने स्थाने प्रदृश्यन्ते कृष्णप्रसादलालसाः ॥३०॥

काश्चिन्मृदंगहस्ताश्च काश्चिद्वीणाकरास्तथा ।
काश्चिच्चामरहस्ताश्च करतालकराः पराः ॥३१॥
काश्चिद् वादित्रहस्ताश्च काश्चिन्नूपुरशोभिताः ।
किंकिणीभूषणैः काश्चिच्छब्दयन्ति तु मण्डपम् ॥३२॥
काश्चित्कुंभान् गृहीत्वा तु करयोर्मस्तके तथा ।
पुंवेशनायिकास्तत्र नृत्यन्ति बहुवेधतः ॥३३॥
कृष्णवेशधराः काश्चिद् राधावेशधराः पराः ।
काश्चिद्दूरं स्थिताः काश्चित् कृष्णालिंगनतत्पराः ॥३४॥
क्रीडासक्ताश्च गोप्यस्ताः कृष्णं भजन्त इत्यपि ।
तत्पार्श्वे सरसस्तीरे सौधाः सन्ति वरा वराः ॥३५॥
राधासखीनां ते गेहा वर्तन्ते भव्यदर्शनाः ।
त्रयस्त्रिंशद्वयस्यास्ता राधायाः पूर्यौवनाः ॥३६॥
रूपेणैव गुणेनैव वेषेण यौवनेन च ।
सौभाग्येनैव वयसा सदृश्यो राधया च ताः ॥३७॥
नामानि शृणु गिरिजे त्रयस्त्रिंशत्तु मुख्यतः ।
चन्द्रकला सुशीला च यमुना माधवी रतिः ॥३८॥
कदम्बमाला सुकुन्ती जाह्नवी च स्वयंप्रभा ।
पद्ममुखी च सावित्री गायत्री सुमुखी सुधा ॥३९॥
पद्मालया पारिजाता सुगौरी सर्वमंगला ।
कालिका कमला दुर्गा भारती च सरस्वती ॥४०॥
गंगाऽम्बिका मधुमती चम्पाऽपर्णा च सुन्दरी ।
कृष्णप्रिया ब्रह्मसती नन्दिनी नन्दना तथा ॥४१॥
एतासां तानि सौधानि कृष्णसौधसमानि हि ।
रत्नधातुभोग्यवस्तुस्वर्णकलशवन्ति वै ॥४२॥
यत्र यत्र कन्यकाश्च गोप्यः सख्यश्च गोपकाः ।
कृष्णार्थकृतसर्वस्वास्तत्र तत्र गृहे गृहे ॥४३॥
नैकरूपधरः कृष्णो वर्तते रमते तया ।
तया तया च प्रेयस्या तेन तेन च सर्वथा ॥४४॥
राधाकृष्णस्य सौधस्य ये प्राकारे तु षोडश ।
गोपुराः सन्ति तत्रादिर्गोपुरो मणिरत्नजः ॥४५॥
वेदिकायुग्मसंयुक्तो वज्ररत्नकपाटकः ।
वर्तते द्वारपस्तत्र वीरभानुः सुयौवनः ॥४६॥
रत्नसिंहासनस्थश्च रत्नभूषणभूषितः ।
पीताम्बरधरो रत्नमुकुटोज्ज्वलमस्तकः ॥४७॥
यस्याज्ञायां सार्धद्वयलक्षगोपा भवन्ति हि ।
द्वितीये गोपुरे तत्र ततोऽप्यधिकसुन्दरे ॥४८॥
द्वारपालश्चन्द्रभानुः किशोरः श्यामलोऽस्ति हि ।
स्वर्णवेत्रधरो रत्नसिंहासनसमस्थितः ॥४९॥
यस्याज्ञायां पंचलक्षगोपा वर्तन्त ईश्वराः ।
तृतीये गोपुरे तत्र ततोऽतिमणितैजसे ॥५०॥
द्वारपालः सूर्यभानुः किशोरो मुरलीधरः ।
रत्नदण्डकरः स्वर्णमणिकुण्डलराजितः ॥५१॥
यस्याज्ञायां नवलक्षगोपाः श्यामलसुन्दराः ।
चतुर्थे गोपुरे तेभ्यो विलक्षणविभूषिते ॥५२॥
वसुभानुर्द्वारपालः किशोरोऽस्ति व्रजेश्वरः ।
मणिदण्डधरो रत्नसिंहासनकृतासनः ॥५३॥
पक्वबिम्बाधरौष्ठश्च सर्वभूषाविभूषितः ।
यस्याज्ञायां नवलक्षगोपाः सन्ति मनोहराः ॥५४॥
पंचमे गोपुरे वज्रभित्तिचित्रप्रचित्रके ।
द्वारपालो देवभानुश्चारुसिंहासनस्थितः ॥५५॥
मयूरपिच्छचूडश्च रत्नमालासुकुण्डलः ।
यस्याज्ञायां दशलक्षगोपाः सन्ति व्यवस्थिताः ॥५६॥
षष्ठे तु गोपुरे वज्रभित्तिकपाटशोभिते ।
द्वारपालः शक्रभानुः सर्वाभरणभूषितः ॥५७॥
यस्याज्ञायां दशलक्षगोपाः सन्ति व्यवस्थिताः ।
सप्तमे गोपुरे षड्भ्यश्चातिशोभे विलक्षणे ॥५८॥
द्वारपो रत्नभानुः श्रीहरेः प्रियतमो युवा ।
पुष्पचन्दनभूषाढ्यो सिंहासनस्थवेत्रधृक् ॥५९॥
यस्याज्ञायां तु वर्तन्ते गोपा द्वादशलक्षकाः ।
अष्टमे गोपुरे तेभ्यः सप्तभ्योऽपि विलक्षणे ॥६०॥
द्वारपालः सुपार्श्वोऽस्ति रत्नदण्डसुभूषणः ।
रत्नकुण्डलशोभाढ्यो बन्धुजीवाऽधरौष्ठकः ॥६१॥
यस्याज्ञायां सदा सन्ति गोपा द्वादशलक्षकाः ।
नवमे गोपुरे वज्ररत्नाढ्ये चित्रमालके ॥६२॥
द्वौवारिकः सुबलोऽस्ति ललिताकृतिभूषणः ।
यस्याज्ञायां तथा सन्ति गोपा द्वादशलक्षकाः ॥६३॥
दशमे गोपुरे रम्येऽनिर्वाच्यवर्णने परे ।
द्वारपस्तु सुदामाऽस्ति कृष्णतुल्यमनोहरः ॥६४॥
दण्डहस्तो यदाज्ञायां गोपा विंशतिलक्षकाः ।
एकादशे गोपुरे सुचित्ररम्ये तथाद्भुते ॥६५॥
द्वारपालः श्रीदामाऽस्ति रत्नसिंहासनस्थितः ।
पीतवस्त्रधरोऽमूल्यभूषाचन्दनशोभितः ॥६६॥
कुण्डलकटकपुष्पमालामुकुटसूज्ज्वलः ।
यस्याज्ञायां कोटिगोपास्तेन राजेन्द्रसदृशः ॥६७॥
द्वादशे गोपुरेऽमूल्यरत्नवेदिचतुष्टये ।
विचित्रचित्रसद्वज्रभित्तिचित्रमनोहरे ॥६८॥

द्वारपास्तत्र गोप्यो वै सन्त्याभरणभूषिताः ।
नवयौवनसम्पन्नाः कबरीभारभूषिताः ॥६९॥
पीतरक्ताद्यम्बरास्ताः सुगन्धिपुष्पधम्मिलाः ।
रत्नस्वर्णमणिभूषाभूषिताः स्वर्णकंकणाः ॥७०॥
केयूरनूपुरकुण्डलाग्र्यशोभितविग्रहाः ।
पीनश्रोणीभरानम्रां नितम्बभारमन्थराः ॥७१॥
शतगोप्यो हरेः प्रेष्ठाः श्रेष्ठास्तिष्ठन्ति गोपुरे ।
तासां तु सेविकाः कोटिगोप्यः सन्ति हरिप्रियाः ॥७२॥
त्रयोदशे चतुर्दशे पंचदशे च गोपुरे ।
गोप्यस्तु द्वारपाः सन्ति प्रोद्भिन्ननवयौवनाः ॥७३॥
श्रेष्ठा मनोहरा रम्या वरा धन्याः सुशोभनाः ।
राधाप्रियाः सुभूषाढ्याः कृष्णसौभाग्यमंगलाः ॥७४॥
कोट्यब्जगोपिकास्तासामाज्ञाकर्यो भवन्ति हि ।
षोडशे गोपुरे मुख्यास्त्रयस्त्रिंशत्तु गोपिकाः ॥७५॥
सन्ति तु द्वारपास्तासां रूपं वक्तुं न शक्यते ।
न पार्वती न वै लक्ष्मीर्नोर्वशी राधिका किमु ॥७६॥
तादृश्यस्ता रत्नभूषाभूषिता दृढयौवनाः ।
रत्नकंकणकेयूरस्वर्णनूपुरभूषिताः ॥७७॥
सकिंकिणीरशनाभिर्मध्यदेशे सुभूषिताः ।
रत्नकुण्डलतेजोभिर्गण्डस्थलसमुज्ज्वलाः ॥७८॥
प्रफुल्लमालतीमालामणिहारादिशोभिताः ।
शरत्पार्वणचन्द्रार्हमुखमण्डलमण्डिताः ॥७९॥
पारिजातप्रसूनादिमालाहारलसत्स्तनाः ।
पक्वबिम्बाधरौष्ठ्यश्च स्मेराननसरोरुहाः ॥८०॥
पक्वदाडिमबीजाग्र्यकुन्ददन्तसुपंक्तयः ।
स्वर्णचम्पकसद्वर्णास्तनूदर्यः कटिकृशाः ॥८१॥
गजमौक्तिकसंसक्तस्वर्णवालिकनासिकाः ।
शुकचञ्चुनिम्ननासाः कठिनस्तनबन्धनाः ॥८२॥
पीनश्रोणीभराः कृष्णचरणासक्तमानसाः ।
स्वर्णताराञ्चितदीर्घपटकपाटतोरणे ॥८३॥
गोपुरे वेदिकायुक्ते तास्तिष्ठन्ति हरिप्रियाः ।
गोपुरान्तःस्थलं सर्वं मणिरत्नादिभूषितम् ॥८४॥
हरित्सिन्दूरमणिभिर्भित्तिद्वयविराजितम् ।
पारिजातप्रसूनानां मालाभिश्च सुवासितम् ॥८५॥
तदन्तस्तत्र पुष्पाणामुद्यानो वर्तते महान् ।
तत्र राधामहासौधः कृष्णमन्दिरमेव सः ॥८६॥
मन्दिराणां च मध्यस्थः शतशालो मनोहरः ।
विमानैः सप्तकैः काम्यैः शालासु गम्यते तु सः ॥८७॥
केवलैः रत्नसारैश्च रचितो दिव्य एव सः ।
नानारत्नमणिस्तम्भैर्वज्रयुक्तैश्च भूषितः ॥८८॥
पारिजातप्रसूनानां मालाजालैश्च राजितः ।
मुक्तामाणिक्यहीरककृतभित्तिमनोहरः ॥८९॥
श्वेतचामरदर्पणव्यजनैः कलशैर्युतः ।
पट्टसूत्रग्रन्थियुक्तश्रीखण्डपल्लवान्वितः ॥९०॥
मणिस्तंभसमूहैश्च रम्यप्रांगणभूषितः ॥
चन्दनागुरुकस्तूरीकुंकुमद्रवसंयुतः ॥९१॥
शुष्कधान्यशुक्लपुष्पप्रवालफलतण्डुलैः ।
पर्णदुर्वाऽक्षतलाजाकुंभहारविराजितः ॥९२॥
विविधगन्धसंसक्तपवनैः सुरभीकृतः ।
अदृष्टाऽश्रुतमग्र्यं यद् ब्रह्माण्डे दुर्लभं च यत् ॥९३॥
तत्तद्वस्तुशोभितश्च प्रासादो राधिकाकृते ।
रत्नमंचाः सुललिताः सूक्ष्मवस्त्रपरिच्छदाः ॥९४॥
कोटिशो रत्नकुंभाश्च रत्नपात्राणि सन्ति वै ।
अमूल्यचारुविविधतत्तद्वस्तुविभूषितः ॥९५॥
नानाप्रकारवाद्यानां मिष्टनादैर्निनादितः ।
स्वरयन्त्रैश्च वीणाभिर्गोपीसंगितसुश्रुतः ॥९६॥
मोहनो वाद्यशब्दैश्च गायिकागीतिभिस्तथा ।
गोपानां कृष्णतुल्यानां समूहैः परिवारितः ॥९७॥
राधासखीनां गोपीनां बहुवृन्दैर्विराजितः ।
राधाकृष्णगुणोद्रेकपदसंगीतसुश्रुतः ॥९८॥
श्रूयते मधुरं गीतं दृश्यते नृत्यमुत्तमम् ।
आप्यते परमानन्दः कृष्णलीलारसोऽद्रिजे ! ॥९९॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने गोलोकप्राकारप्रासादोद्यानान्तःपुरप्राकारप्रासादोद्यान-षोडशगोपुरद्वारपालादिवर्णननामैकविंशत्यधिक-शततमोऽध्यायः ॥ १२१ ॥

**श्रीनारायण उवाच—**

शृणु प्रिये ! ततः शंभुः प्राह स्वस्य प्रियां सतीम् ।
राधिकाकृष्णप्रासादे रत्नसिंहासनं वरम् ॥ १ ॥
धनुः शतप्रमाणं च परितो वर्तुलाकृति ।
उच्चावचैः स्वर्णघटैः शोभितं शिखरादिषु ॥ २ ॥
दिव्यभक्तापुत्तलिकाप्रेमदासीप्रभूषितम् ।
कोट्यर्कद्युतिसंव्याप्तं तदूर्ध्वे सप्ततालवत् ॥ ३ ॥

अद्भुतं सर्वतेजस्विपदार्थाधिकसुन्दरम् ।
तेजस्तेजोऽम्बरं तेजोराशिस्तेजःखनिप्रथम् ॥ ४ ॥
दिव्यं सिंहासनं तद्वै यथेष्टं व्योम्नि गच्छति ।
सिंहपादं वल्लिचित्राण्यनन्तगोपगोपिकाः ॥ ५ ॥
गावो वत्सा वत्सतर्यस्तथा भक्ता प्रियास्तथा ।
सिंहासने च सोपाने स्तंभे द्वारि च तोरणे ॥ ६ ॥
वादका नर्तकाश्चैव गायकाः पार्श्वभागके ।
पुत्तलिकास्वरूपास्ते कलशाः सर्वे विभान्ति वै ॥ ७ ॥
मयूराः सारसा हंसाश्चातकाः शुकमेनकाः ।
शुभाः पुत्तलिकाश्चैता यथास्थानं व्यवस्थिताः ॥ ८ ॥
दिव्ये सिंहासने तेजोराशौ कृष्णो विराजते ।
वरो वरेण्यो वरदो वरदानां च कारणम् ॥ ९ ॥
सर्वमंगलदः साक्षान्मंगलानां सुमंगलम् ।
निर्लेपश्च निरीहश्च दिव्यैश्वर्यगुणाश्रयः ॥१०॥
सनातनश्च साकारः कलाविभूतिधारकः ।
सर्वाधारः सर्वरूपः सर्वबीजो ह्यतीन्द्रियः ॥११॥
जडचेतनदेहश्च स्वतन्त्रदिव्यमूर्तिकः ।
सर्वसाक्षी सर्वदर्शी सच्चिदानन्द ईश्वरः ॥१२॥
सर्वेशोऽनादिनिधनो विधाता जनकः पिता ।
एकैकरोमविवरे ब्रह्माण्डमेकमेककम् ॥१३॥
यस्यैव महतो विष्णोः स कृष्णः षोडशांशजः ।
यं वै ध्यायन्ति योगज्ञाः सेवन्ते दासतां गताः ॥१४॥
किशोरः सुन्दरतरः कान्तानां कमनीयकः ।
नवीनजलदश्यामः पीताम्बरधरो वरः ॥१५॥
द्विभुजो मुरलीहस्तः सस्मितः सुमनोहरः ।
मयूरपिच्छचूडश्च मालतीमालमण्डितः ॥१६॥
चन्दनागुरुकस्तूरीकुंकुमद्रवचर्चितः ।
अमूल्यरत्नसाराणां सारभूषणभूषितः ॥१७॥
अमूल्यरत्नरचितकिरीटमुकुटोज्ज्वलः ।
शरत्प्रफुल्लपद्मानां प्रभामोष्यास्यचन्द्रकः ॥१८॥
पक्वबिम्बसमानेन ह्यधरौष्ठेन राजितः ।
पक्वदाडिमबीजाभदन्तपंक्तिमनोहरः ॥१९॥
सुस्मितपरमाह्लादः त्रैलोक्यचित्तमोहनः ।
गण्डस्थलकपोलाभ्यां ज्वलन्मकरकुण्डलः ॥२०॥
सद्रत्ननूपुराभ्यां च चरणांभोजराजितः ।
वह्निशुद्धहरिद्राभामूल्यवस्त्रविराजितः ॥२१॥
मणिस्वर्णादिदिव्याभूषणवर्यैर्विभूषितः ।
विनोदमुरलीयुक्तबिम्बाधरमनोहरः ॥२२॥
प्रसन्नताप्रपूर्णश्च भक्तानुग्रहकारकः ।
सद्रत्नगुटिकायुक्तकवचोरःस्थलोज्ज्वलः ॥२३॥
कौस्तुभासक्तसद्रत्नप्रदीप्ततेजसोज्ज्वलः ।
श्रीकृष्णः स परब्रह्म किशोरो दीव्यति प्रभुः ॥२४॥
तस्य वामे तु चार्वंगी सखी तिष्ठति राधिका ।
पश्यन्तं सस्मितं कान्तं पश्यन्ती वक्रचक्षुषा ॥२५॥
मुक्तापंक्तिपरोत्कर्षदन्तपंक्तिविराजिता ।
ईषद्धास्यप्रसन्नास्या शरत्पंकजलोचना ॥२६॥
शरत्पार्वणचन्द्रातिरेकभाऽऽस्यमनोरमा ।
बन्धुजीवप्रमाधिक्याधरौष्ठरुचिरानना ॥२७॥
रणन्मंजीरयुग्मेन पादाम्बुजविराजिता ।
मणीन्द्राणां प्रभामोषनरराजिविराजिता ॥२८॥
कुंकुमाभासमाच्छाद्य पदाधोरागभूषिता ।
अमूल्यरत्नसाराणां रशनाश्रोणिभूषिता ॥२९॥
हुताशनविशुद्धांशुकाऽमूल्यज्वलितोज्ज्वला ।
महामणीन्द्रसाराणां किंकिणीमध्यसंयुता ॥३०॥
सद्रत्नहारकेयूरकरकंकणभूषिता ।
रत्नेन्द्रसाररचितकपोलोज्ज्वलकुण्डला ॥३१॥
कर्णोपरि मणीन्द्राणां कर्णभूषणभूषिता ।
खगेन्द्रचञ्चुनासाग्रगजेन्द्रमौक्तिकान्विता ॥३२॥
मालतीमालया वक्रकबरीभारशोभिता ।
मालया कौस्तुभेन्द्राणां वक्षःस्थलसुशोभिता ॥३३॥
पारिजातप्रसूनानां मालाज्वालोज्ज्वलांबरा ।
रत्नांगुलीयनिकरैः करांगुलिविभूषिता ॥३४॥
प्रतप्तस्वर्णवर्णाभा कनकोज्ज्वलविग्रहा ।
नितम्बश्रोणिललिता पीनस्तनसुशोभिता ॥३५॥
सौन्दर्यभूषिता सर्वैर्भूषणैश्चापि भूषिता ।
पद्मपत्रदीर्घनेत्रा प्रेमभारसुमन्थरा ॥३६॥
कृष्णकामनिधानासा सर्वयौवनसागरा ।
सर्वरूपपराकाष्ठा धवला रक्तसूज्ज्वला ॥३७॥
प्रेमप्रवाहप्रसरत्कृष्णचित्तमनोहरा ।
कृष्णस्पर्शं विना नैव क्षणमात्रं कृतस्थितिः ॥३८॥
कान्तं कृष्णं विना नैव कान्ता तिष्ठति केवला ।
इत्येवं शोभया युक्तौ राधाकृष्णौ प्रतिष्ठतः ॥३९॥
दिव्ये सिंहासने तत्र राजाधिराजशोभया ।
किं वै न्यूनं भगवतो भगवत्याः समागमे ॥४०॥
पूर्णस्य ब्रह्मणः पूर्णब्रह्मण्याः का न्वपूर्णता ।
गोलोके तिष्ठतां यद्वै क्षणं याति सुखावहम् ॥४१॥

तन्मात्रे तु क्षितौ यान्ति सप्तमन्वन्तराणि वै ।
तादृशे सर्वदादीर्घानन्दभूमौ तु तत्र वै ॥४२॥
गावः सुरभयः कामधेनवो नीलगोवृषाः ।
चतुर्दन्ता हस्तिनश्च श्वेताः स्वर्णादिभूषणाः ॥४३॥
प्रमदवर्षिणः षष्ठिहायना व्योमगामिनः ।
श्यामकर्णाश्च तुरगाः सपक्षा व्योमसंचराः ॥४४॥
मयूरगरुडहंसाश्च शुकसारसमेनकाः ।
विविधाः पक्षिणस्तत्र वृक्षावल्ल्यश्च भूरिशः ॥४५॥
डंकानिशानाः शिबिकागुप्तकातावदानकाः ।
मानववाहाः शतशो निजेच्छावाहनानि च ॥४६॥
विविधाः स्मृतयस्तत्र वाय्वप्तेजांसि सेवकाः ।
ऋतवश्च रसगन्धशब्दरूपादिसेवकाः ॥४७॥
उपतिष्ठन्ति गोलोके यथेष्टं भोगलब्धये ।
दिव्या रथा व्योमगाश्च दिव्यास्तादृग्विभूतयः ॥४८॥
किं वै दिव्यस्य कृष्णस्याऽदिव्यं वै संभवेत्तदा ।
कृष्णो दिव्यो महाराजो दिव्या राज्ञी च राधिका ॥४९॥
विरजा द्रवदिव्या वै पार्षदा गोपगोपिकाः ।
प्रासादा वस्तुमूर्धन्याः सर्वे दिव्या वसन्ति हि ॥५०॥
श्रीकृष्णस्य रथस्तत्र राजते दिव्यविग्रहः ।
मणिरत्नेन्द्रसारेण हीरकेण विभूषितः ॥५१॥
श्वेतचामरलक्षेण शोभितो दर्पणाऽयुतैः ।
सूक्ष्मकाषायवस्त्रेण वह्निशुद्धेन भूषितः ॥५२॥
सद्रत्नकलशानां च सहस्रेण सुशोभितः ।
पारिजातप्रसूनानां मालासंघैर्विराजितः ॥५३॥
पार्षदप्रवरैर्युक्तः शातकुंभमयः शुभः ।
तेजस्तेजःस्वरूपश्च शतसूर्यसमप्रभः ॥५४॥
कृष्णः क्वचिद्रथे तत्र नारायणश्चतुर्भुजः ।
भूत्वा तिष्ठति लोकाद्वै लोकान्तरं प्रगच्छति ॥५५॥
तदा स पुरुषः श्यामः सुन्दरः कमनीयकः ।
शंखचक्रगदापद्मधरः पीताम्बराम्बरः ॥५६॥
किरीटी कुण्डली दिव्यवनमालाविभूषितः ।
चन्दनागुरुकस्तूरीकुंकुमद्रवचर्चितः ॥५७॥
चतुर्भुजः स्मेरवक्त्रो भक्तानुग्रहकातरः ।
मणिरत्नेन्द्रसाराणां सारभूषणभूषितः ॥५८॥
महालक्ष्म्या महादेव्या सर्वदा कृतसेवनः ।
भवत्यैश्वर्यधृक्सर्वदेवदेवीप्रवन्दितः ॥५९॥
तद्वामे च रथे रम्ये शुक्लवर्णा प्रतिष्ठति ।
रत्नालंकारशोभाढ्या शोभिता पीतवाससा ॥६०॥
शरत्पार्वणचन्द्रास्या शरत्पंकजलोचना ।
पक्वबिम्बाधरौष्ठी च स्मेरानना च कामदा ॥६१॥
वेणुवीणाग्रन्थहस्ता भक्तानुग्रहकातरा ।
विद्याधिष्ठातृदेवी च ज्ञानरूपा सरस्वती ॥६२॥
दक्षिणे तु सुपार्श्वे वै शतचन्द्रसमप्रभा ।
प्रतप्तस्वर्णवर्णाभा सस्मिता सुमनोहरा ॥६३॥
सद्रत्नकुंडलाभ्यां च सुकपोलविराजिता ।
अमूल्यरत्नखचिताऽमूल्यवस्त्रेण भूषिता ॥६४॥
अमूल्यरत्नकेयूरकरकंकणशोभिता ।
सद्रत्नसारमंजीरकलशब्दसमन्विता ॥६५॥
मणीन्द्रकिंकिणीगुंजन्मध्यकटिसमन्विता ।
पारिजातादिपुष्पाणां हारैर्वक्षःस्थलोज्ज्वला ॥६६॥
प्रफुल्लमालतीमालाप्रोतकबरिकायुता ।
शरच्चन्द्रातितेजस्विमुखमण्डलशोभिता ॥६७॥
कस्तूरीबिन्दुसम्मध्यसिन्दूरतिलकान्विता ।
सुचारुकज्जलश्लिष्टशरत्पंकजलोचना ॥६८॥
सहस्रदलशोभाढ्यमहत्कमलहस्तगा ।
नारायणं हरिं कृष्णं पश्यन्ती वक्रचक्षुषा ॥६९॥
तिष्ठन्तो रथमध्येऽपि विहरन्ति त्रयोऽपि ते ।
अन्योऽपि सुरथस्तस्य निर्मितो विश्वकर्मणा ॥७०॥
पंचाशद्योजनोर्ध्वश्च चतुर्योजनविस्तरः ।
स्वर्णसारविकारश्च नानारत्नपरिच्छदः ॥७१॥
मणीन्द्रसारसंयुक्तो वह्निशुद्धांशुकान्वितः ।
श्वेतचामरसंयुक्तो भूषितो दर्पणान्वितः ॥७२॥
सद्रत्नसारकलशो मालाहारविराजितः ।
सहस्रचक्रसंयुक्तो मनोयायी मनोहरः ॥७३॥
ग्रीष्ममध्याह्नमार्तण्डतुल्यतेजाः सुदर्शनः ।
मुक्तामाणिक्यवज्रादिहीरकैश्च समुज्ज्वलः ॥७४॥
चित्रपुत्तलिकापुष्पसरःकाननचित्रितः ।
रतियोग्यवधूयुक्तः शोभते रतिमन्दिरैः ॥७५॥
तत्र श्रीकृष्णसेवार्थं महामायाऽपि तिष्ठति ।
स्वर्णसारातिसत्कान्तिरत्नालंकारभूषिता ॥७६॥
महातेजोऽधिककान्ता प्रभावारिधिसदृशी ।
सहस्रभुजसंयुक्ता नानाऽऽयुधादिधारिणी ॥७७॥
ईषद्धास्यप्रसन्नास्या कृष्णकेलिकृते स्थिता ।
गण्डस्थलकपोलस्थस्वर्णरत्नसुकुण्डला ॥७८॥
रत्नेन्द्रसाररचितक्वणन्मंजीरमंजुला ।
सन्मणिनद्धसौवर्णरशनाकटिशोभिता ॥७९॥

रत्नाक्तस्वर्णकटककेयूरशृंखलान्विता ।
मन्दारकल्पप्रसूनमालाराजिविराजिता ॥८०॥
नितम्बकठिनश्रोणीकर्कशस्तनभंगुरा ।
शरत्पार्वणचन्द्रास्या तेजःपरिधिसूज्ज्वला ॥८१॥
सत्कज्जलरक्तरेखान्वितपंकजलोचना ।
चान्दनकैसरद्रव्यकृतपत्रललाटिका ॥८२॥
मुक्तादाडिमकुन्दाभशुभ्रदन्तविराजिता ।
विभिन्नपुष्पकबरीयुक्तधम्मिलमन्थरा ॥८३॥
शुकगरुडचञ्च्वाभनासानिम्नत्वशोभिता ।
सामुद्रफेनसैंहादिमौक्तिकधृतमालिका ॥८४॥
उज्ज्वलाम्बरकंचुकीस्वर्णतारसुचन्द्रका ।
कृतोर्ध्वतिलका देव्यस्तथान्याः सन्ति सेवने ॥८५॥
रुक्मिणी सत्यभामा च तथा जाम्बवती प्रिया ।
कालिन्दी मित्रविन्दा च सत्यभामा तथाऽपरा ॥८६॥
भद्रा च लक्ष्मणा चेति महिष्यस्तत्र सन्ति वै ।
शतं षोडशसाहस्रं पत्नीनां मंडलं महत् ॥८७॥
कृष्णसेवां प्रकुर्वद्वै राजते कृष्णसन्निधौ ।
अन्यासामपि नान्तोस्ति सर्वं कृष्णवशं जगत् ॥८८॥
एकविंशत्यब्जगोप्यः कृष्णस्यैव भवन्ति वै ।
अन्याश्चापि नसंख्याताः सर्वे तद्दास्यवव्रतः ॥८९॥
त्रयस्त्रिंशद्वयस्याश्च ह्यष्टपट्टांगनास्तथा ।
राधा चेति प्रमुख्या वै भवन्ति गोकुले प्रियाः ॥९०॥
वसुदेवो देवकी च नन्दो यशोवती तथा ।
उद्धवः सात्यकिर्गर्गोऽक्रूरश्चान्ये च सात्वताः ॥९१॥
गोकुले तु महारम्ये तत्तत्प्राकारभूमिषु ।
सोद्यानेषु महादिव्यप्रासादेषु वसन्ति वै ॥९२॥
कृष्णसमानसंभोगा न किंचिन्न्यूनमस्ति हि ।
कृष्णाश्रितसखीनां तु भ्रमणार्थं महान्रथः ॥९३॥
चतुर्योजनविस्तीर्ण ऊर्ध्वे च पञ्चयोजनः ।
शुद्धस्फटिकसंकाशो रत्नसारविनिर्मितः ॥९४॥
अम्लानपारिजातानां मालाजालविराजितः ।
मणीनां कौस्तुभानां च भूषणेन विभूषितः ॥९५॥
अमूल्यरत्नकलशो हीरहारविराजितः ।
मनोहरैः परिष्वक्तः सहस्रकोटिमन्दिरैः ॥९६॥
सहस्रद्वयचक्रश्च सहस्रद्वयघोटकः ।
सूक्ष्मवस्त्राच्छादितश्च गोपीकोटिभिरावृतः ॥९७॥
किमन्यद्वर्णये तस्य कृष्णस्य श्रीहरेः प्रभोः ।
महानसानि रम्याणि भोज्यागाराणि यानि च ॥९८॥
स्नानागाराणि शृंगारभूषागाराणि यानि च ।
केल्यागाराणि मित्राणां सभागाराणि वै तथा ॥९९॥
नृत्यागाराणि च समाजोत्सवागारकाण्यपि ।
क्रीडागाराणि च विहाररत्यागारकाणि च ॥१००॥
शय्यागाराणि सुचन्द्रशालाः सहस्रभूमयः ।
यानि यान्येव सन्त्यत्र नान्यधामसु तानि वै ॥१०१॥
स्वयं श्रीहरिणा कृष्णरूपेण सुखदेन वै ।
सुखदानाय भक्तानां नारीणां तु विशेषतः ॥१०२॥
धृतं रूपं राजसं चामोघवीर्यं बलं हि तत् ।
तत्र किं नाम वक्तव्यं न्यूनं स्वल्पं च वा नहि ॥१०३॥
परिपूर्णस्य सर्वत्र का नामाऽपूर्णतया भवेत् ।
इति ते कथितं देवि ! किञ्चिद्गोलोकमण्डलम् ॥१०४॥
सर्वथा नैव वक्तुं वै चेष्टे कृष्णोऽपि तत् स्वयम् ।
य इमं कृष्णगोलोकं श्रोष्यति वा पठिष्यति ॥१०५॥
सुदुर्लभां दृढां भक्तिं श्रीकृष्णे स हि लप्स्यते ।
अणिमादिकसिद्धिं च सालोक्यादिचतुष्टयम् ॥१०६॥
इहैव कृष्णतुल्यत्वं वाक्सिद्धिं च यशो महत् ।
पुत्रं विद्यां कवित्वं च निश्चलां कमलां तथा ॥१०७॥
पत्नीं पतिव्रतां साध्वीं सुशीलां सुस्थिरां प्रजाम् ।
कीर्तिं च चिरकालीनां त्वन्ते कृष्णान्तिके गतिम् ॥१०८॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने रत्नसिंहासनश्रीकृष्णराधिकातत्समृद्धिरथचतुर्भुज-रूपसरस्वतीमहामायारूपमहालक्ष्मीराधाशत-सहस्राष्टपट्टांगनातत्सौधादिनिरूपणनामा द्वाविंशत्यधिकशततमोऽध्यायः ॥१२२॥

**श्रीनारायण उवाच—**

श्रुत्वा गोलोकसंस्थानं पार्वती बहुहर्षिता ।
श्रोतुं दिव्यां कथामुक्त्वा प्राह वै शंकरं वरम् ॥ १ ॥
वैकुण्ठं श्रोतुमिच्छामि दिव्यं धाम रमाकृते ।
नारायणेन दिव्यं यन्निर्मितं श्रीधरेण वै ॥ २ ॥
श्रुत्वेदं युक्तयोगीन्द्रो महादेवोऽस्मरद्धरिम् ।
नारायणं क्षणं ध्यात्वा दृष्ट्वा वैकुण्ठमुत्तमम् ॥ ३ ॥
वर्णयामास तत्सर्वं क्रमशो भक्तिभावतः ।
शृणु मे वैष्णवि पत्नि वर्णने स्वाद्यते रसः ॥ ४ ॥

रसं विना हरेर्भक्तेः रसाश्चान्ये मृषा मताः ।
त्रिपाद्विभूतेर्लोका वै ह्यसंख्याता भवन्ति हि ॥ ५ ॥
ब्रह्मधाममयाः सर्वे ब्रह्मानन्दसुखाश्रयाः ।
शाश्वता निर्विकाराश्च हेयदोषविवर्जिताः ॥ ६ ॥
सर्वे दिव्यसुवर्णाभाः कोटिसूर्यसमप्रभाः ।
नारायणपदांभोजभक्तिसद्रससेविताः ॥ ७ ॥
भगवत्सामगानादिपूर्णसुखप्रदा मताः ।
सुमूर्तपार्षदमुक्तवेदशास्त्रादिवर्णिताः ॥ ८ ॥
दिव्यविद्यात्मनारीभिर्ब्रह्मपुंभिरधिष्ठिताः ।
प्रेमज्ञानसुचिद्रससरोभिरुपशोभिताः ॥ ९ ॥
श्रुत्याख्यप्रमदाभिश्च स्मृत्याख्यस्त्रीजनैस्तथा ।
शास्त्राख्यदिव्यपुरुषैः सर्वदावासवर्धिताः ॥१०॥
सर्वं वै ब्रह्मलोकेषु भोग्यं भोज्यं तथा परम् ।
चेतनं ब्रह्मतत्त्वोत्थं चैतन्यं त्वेव विद्यते ॥११॥
न माया न जडं किंचिन्न दुःखं नैव नाशवत् ।
न तमो न समुत्पन्नं न नाशि किन्तु शाश्वतम् ॥१२॥
अक्षरब्रह्मणः सीम्नि यथा गोलोकसंस्थितिः ।
तथाऽक्षरधामसीम्नि वैकुंठस्यापि संस्थितिः ॥१३॥
मायापारे महादिव्या पत्नी वैकुण्ठवासिनी ।
नारायणस्य प्रेम्णो वै सम्यक्पात्रं हि या मता ॥१४॥
नारायण रतेर्भक्त्या ह्यत्यानन्दे कृताऽऽप्लवा ।
स्वभानं विस्मृतवती द्रवरूपा ह्यजायत ॥१५॥
नारायणस्य संयोगात् कामरसे विलीननात् ।
नारायणस्य मूर्तौ सा कोट्यानन्दप्रवाहकैः ॥१६॥
सरैः स्वस्याः स्वरूपैर्वा युनक्ति हरिमीश्वरम् ।
विलीना भवते नित्यमानन्दपरिकाष्ठिता ॥१७॥
हरिस्तामानन्दसैर्युनक्त्यपि निजात्मनि ।
ततः सा सरयूरूपा सरिज्जाता विकुण्ठके ॥१८॥
मायापारे च सा दिव्या वर्तुला सुमहानदी ।
ब्रह्मरसप्रपूर्णा सा नित्यानन्दप्रवाहिणी ॥१९॥
वर्तते स्वर्णमत्स्या सा श्रेष्ठरजतवालुका ।
दिव्यकाशकुशव्याप्ता सूर्यतेजःसमोज्ज्वला ॥२०॥
मणिहीरकशुक्त्यादिचाकचक्यमनोहरा ।
दिव्यकिरणसंयोगात्कोटिसूर्यसमप्रभा ॥२१॥
सद्रत्नहीरकाद्यैश्च कृतसोपानघट्टना ।
विशालस्नानकार्यार्हाऽवताराऽसंख्यभूषिता ॥२२॥
वैकुण्ठवसतिस्नानविहारादिसुखप्रदा ।
शुद्धस्फटिकसंकाशतीरद्वयसुशोभिता ॥२३॥

कृष्णशुभ्रहरिद्रक्तविचित्रमणिभासुरा ।
कुत्रचिदुज्ज्वलसौम्यप्रवालसपटान्विता ॥२४॥
कुत्रचिद्रजतस्वर्णप्रभृतिधातुसंधरा ।
क्वचिदिन्द्रनीलपद्मरागाकरसुशोभिता ॥२५॥
कुत्रचिद्वै मारकतमणिश्रेष्ठकृतस्तरा ।
क्वचिद्विहारस्नानादिस्थलीभिरुपशोभिता ॥२६॥
कुत्रचिच्छाद्वला रम्या वनराजिविराजिता ।
क्वचिद्वै कामधेनूनां मण्डलैः कृतविश्रमा ॥२७॥
विविधाभिस्तु नौकाभिर्दिव्याभिर्बहुदर्शना ।
दिव्यगरुडहंसादिदेवपक्षिसमाश्रिता ॥२८॥
यज्जलेनाऽभिषिक्ता वै प्राणिनो नित्यरक्षणाः ।
मुक्ता वैकुण्ठलोकस्था शाश्वताऽऽवासकारिणः ॥२९॥
भवन्ति तत्तटे रम्ये वनं कौसलमस्ति वै ।
सरयूमनु तच्चापि वर्तुलाकारमेव ह ॥३०॥
दिव्यवृक्षमयं पारिजातादिबहुसद्द्रुमम् ।
कल्पवृक्षकल्पवल्लीदीर्घवनविराजितम् ॥३१॥
दैर्घ्यं परिमितं तस्य त्वर्बुदाऽर्बुदयोजनम् ।
क्वचित्कल्पद्रुमाः सन्ति क्वचिद्वै पारिजातकाः ॥३२॥
क्वचित् सोमरसा वल्लयः क्वचित्त्वाम्रा रसालकाः ।
क्वचिद्वै मधुकाः सन्ति जम्बुवृक्षास्त्वसंख्यकाः ॥३३॥
क्वचित्तु कर्मदाः सन्ति क्वचित् टिम्बुरुपादपाः ।
श्रीवृक्षाणां समूहाश्च तिलका गगनस्पृशः ॥३४॥
क्वचित्तु नवरंगाणां जम्बीराणां च जातयः ।
सन्ति क्वचित्कदल्यो वै क्वचिद्दाडिमपादपाः ॥३५॥
क्वचिद् द्राक्षालता नागवल्ल्यस्तिक्तसुवल्लिकाः ।
क्वचित् त्वग्वृक्षका नारीकेलखर्जूरखारिकाः ॥३६॥
क्वचित् सेतुरपुष्पीयाः क्वचिद् रामफलादयः ।
बदामबदरीसर्जपिप्पलीबकुलादयः ॥३७॥
क्वचित्केसरवृक्षाश्च कदम्बनीपनिम्बकाः ।
पनसाश्चम्पकाशोकवृक्षाश्चन्दनपादपाः ॥३८॥
श्रीफलशाल्मलीतालतिन्तिडीमाधवीद्रुमाः ।
मल्लिकामालतीस्वर्णायूथिकाऽश्वत्थकुन्दकाः ॥३९॥
सन्ति वृक्षा विविधा वै सर्वे वैकुण्ठयोगिनः ।
क्वचित्सरांसि सत्कूपाः पल्वलानि च दीर्घिकाः ॥४०॥
क्वचित् विविधाः सरितो दुग्धमिष्टजलावहाः ।
क्वचिच्छृङ्गाणि चाद्रीणां क्वचित्स्थल्यो वनौकसाम् ॥४१॥
क्वचिद्देवांगनारम्यविहारार्थकृतगृहाः ।
अनन्ताः सृष्टयस्तत्र वने सन्ति वनौकसाम् ॥४२॥

नारायणप्रसंगेन कल्पे कल्पान्तरे च ये ।
प्राणिनो मुक्तिमापन्नाः पशुपक्षिसरीसृपाः ॥४३॥
मुक्तास्ते कोसले तत्र वने वसन्ति शाश्वताः ।
नारायणेच्छया तेषां कामरूपत्वमस्ति वै ॥४४॥
क्वचिद् याने विमाने वा चान्तरीक्षे प्रयान्ति हि ।
क्वचिद् देवाः क्वचिन्मुक्ताः क्वचित् तत्तत्सुजातयः ॥४५॥
भवन्त्येव वसन्त्येव फलपानादितृप्तिकाः ।
दिव्या भोगपानरसाः फलानि विविधानि च ॥४६॥
कौसल्याख्यवनस्थानां कृते विष्णुविनिर्मिताः ।
वने तत्र सुकुंजास्तु वृक्षाणां सन्ति भूरिशः ॥४७॥
वटानां गुन्द्रकाणां चामलकीनां तथा शुभाः ।
किंशुकोदुम्बराणां च पिप्पलानां घटासु च ॥४८॥
शोभनाः स्वर्णसंकाशाः पिशंगाः वल्लयस्तथा ।
वृक्षेषु लग्नाः शोभन्ते कुंजार्थे कृद्वितानकाः ॥४९॥
मण्डपाः सन्ति सद्रत्नमणिहीरकभूमयः ।
दिव्यसोपानसन्मार्गारोहणार्थविमानिकाः ॥५०॥
सहस्रभूमयस्ते वै गगने गतसुध्वजाः ।
सूर्यकलशसम्पन्ना विविधोद्यानसंवृताः ॥५१॥
शीतोष्णजलकुण्डाढ्या वह्निमण्डलमण्डिताः ।
नैसर्गिकवस्तुरम्या भवन्ति काचदीपकाः ॥५२॥
गावस्तत्र कामदुघा विहरन्ति चरन्ति च ।
तथा वसतयो दिव्या वैकुण्ठवनवासिनाम् ॥५३॥
लक्ष्म्यो रमासमा रामाः षोडशाब्दसुयौवनाः ।
सुरूपाः सस्वामिकाश्च स्वकुटुम्बसमन्विताः ॥५४॥
अच्युतगोत्रकाः सर्वा वसन्ति भक्तिमानसाः ।
क्रीडाविहाररम्याऽऽस्यबृसीबंकटमंचिकाः ॥५५॥
शयनार्हविहारार्हरमणार्हा भवन्ति वै ।
सप्राकाराश्च सोधानाः सवारिवह्निसाधनाः ॥५६॥
व्यजनैश्चामरैर्युक्ता नैकदर्पणभूषिताः ।
भोजनाच्छादनालापनृत्यवादनमण्डिताः ॥५७॥
सौधाश्च मण्डपाः सन्ति रत्नप्रदीपसुप्रभाः ।
धूपाः सुगन्धिनस्तत्र कुटीरेषु भवन्ति वै ॥५८॥
शृंगारद्रवपवनाः शीतला वान्ति सौख्यदाः ।
रमणार्थं रमणीनां चेतनं कौसलं वनम् ॥५९॥
पञ्चाशत्कोटयस्तत्र कुंजकुटीरमण्डपाः ।
स्नात्वा सरय्वां भूत्वा च मुक्तदेहो व्रजेत्ततः ॥६०॥
कौसलं तद्वनं रम्यं यदि स्थातुं समीहते ।
तत्रैव वासमादाय रमते मुक्तवद्धि सः ॥६१॥
इतोऽप्यग्रे महारक्षास्थानप्राकार ऐश्वरः ।
महाप्राकारवर्यः स भवत्यर्बुदयोजनः ॥६२॥
वर्तुलाकार एवैषो लक्षयोजनमूर्ध्वगः ।
तदुच्छ्रये महादिव्याः सन्ति प्रासादकोटयः ॥६३॥
सर्वे विहायसा यान्ति विमानैरेव पौरटैः ।
शतैकयोजनोच्छ्राया व्यासे साहस्रयोजनाः ॥६४॥
सन्ति विमानतुल्यास्ते प्रासादा व्योमगामिनः ।
सर्वे वैकुण्ठसदृशा नरा नार्यश्च कामगाः ॥६५॥
युवत्यश्च युवानश्च द्वादशषोडशाब्दजाः ।
कबरीकेशशोभाढ्याः पुष्पमालाधरास्तथा ॥६६॥
कटकांगदकेयूरशृंखलामुकुटान्विताः ।
ऊर्मिकाकौस्तुभमणिस्वर्णभूषाविभूषिताः ॥६७॥
कामनोत्कटभ्रूभागाः प्रेमप्रवाहसंवहाः ।
पुष्टाः श्वेतारुगरूपाः स्वर्णवस्त्रान्तगात्रकाः ॥६८॥
स्वर्णरूपाः सदा रम्याः सूर्यकोटिसमप्रभाः ।
शरच्चन्द्रसमशैत्याः सुखानामाकरा इव ॥६९॥
भवन्त्येव तु पंचाशत्कोटिभक्ताण्य एव ताः ।
भक्ताश्च शाश्वतास्तेऽपि पंचाशत्कोटयस्तथा ॥७०॥
निवसन्ति तथाऽन्येऽपि प्राकारे तत्र वर्तुले ।
तस्य द्वाराणि चत्वारि चतुर्दिक्षु भवन्ति वै ॥७१॥
भगवत्पार्षदैस्तत्र कृता वै द्वारपालता ।
रत्नभूषाभूषितैश्च सद्रत्नमुकुटोज्ज्वलैः ॥७२॥
दिव्यहेतिधरैः सर्वैः किरीटकटकान्वितैः ।
दिव्यैः षोडशवर्षैश्चाऽवितं द्वारचतुष्टयम् ॥७३॥
एवं दुर्गोत्तमव्याप्ता वर्तुलाकृतिकैव च ।
तदन्ते वर्तते दिव्या साकेताख्या सुभूमिका ॥७४॥
नित्या साकेतधामाख्या नैकवसतिसंश्रिता ।
उद्याना बहवस्तत्र वाटिकाश्चाप्यनन्तकाः ॥७५॥
ब्रह्मरसमहानद्यः शैलशृंगाणि भूरिशः ।
सुक्षेत्राण्यप्यसंख्यानि वनान्युपवनानि च ॥७६॥
वैष्णवानां विहारार्थं विनोदार्थं वधूमताम् ।
दाराणां च निवासार्थं तत्र वसतयः कृताः ॥७७॥
ग्रामास्तत्र सदुर्गाश्च प्राऽर्बुदाऽर्बुदकोटयः ।
नगराणि विचित्राणि कोटिलक्षाणि सन्ति वै ॥७८॥
साकेतनगरग्रामाः सद्रत्नमणिभूमयः ।
मणीनां मण्डपास्तत्र रत्नहीरकसद्गृहाः ॥७९॥
मुक्तामाणिक्यसौधाश्च स्फाटिकस्ततिभित्तयः ।
दिव्या गावश्च वत्साश्च वत्सतर्यः शुभाः शुभाः ॥८०॥

सौधाश्च घुम्मटाश्चैव भूरीणि शिखराणि च ।
चन्द्रशाला ह्यसंख्यातास्तथा विश्रान्तिभूमिकाः ॥८१॥
देशमार्गा राजमार्गा विमानरथवाहनाः ।
गरुडा यानहंसाश्च वृषहस्तिप्रघोटकाः ॥८२॥
स्मृद्धयो विविधाः सर्वाः प्रमदाः प्रमदोत्तमाः ।
द्वादशहायनाः सर्वाः किंचिदुद्भिन्नयौवनाः ॥८३॥
अर्बुदार्बुदभक्तान्यो वैष्णव्यश्च वसन्ति ताः ।
कामोत्तेजकसद्द्रव्यैः राजिता रतिशारदाः ॥८४॥
रत्नालंकारभूषाढ्या रत्नमालाविराजिताः ।
रत्नकंकणकेयूररत्नभूषणभूषिताः ॥८५॥
रत्नसत्कुण्डलाद्यैश्च गण्डस्थलसमुज्ज्वलाः ।
रत्नखचितस्वर्णाङ्गुलीयधृताङ्गुलिप्रभाः ॥८६॥
मुक्तामौक्तिकसद्राजत्पौरटाभूषणान्विताः ।
रक्तचंचत्कुंकुमादिकृतभालसुचन्द्रकाः ॥८७॥
ललन्तिकावालिकातन्तिकात्रोटिविराजिताः ।
प्रकोष्ठकाटकीशोभा बंगिडीशृंखलान्विताः ॥८८॥
रशनाराजत्कट्यः सकिंकिणीनुपूरकाः ।
शरत्पार्वणचन्द्रास्याः पद्मपत्रसुलोचनाः ॥८९॥
कबरीकेशवेशाक्तसुगन्धिपुष्पमालिकाः ।
मनोजमन्थरगतिवक्रभ्रूलतिकान्विताः ॥९०॥
कठिनस्वल्पसुस्तन्यो नारायणसमर्पिताः ।
पीतचन्दनस्वर्णाभाः पीताम्बरप्रवारणाः ॥९१॥
सुदत्यः सुस्वराः सौम्याः प्रेमपात्राणि वै हरेः ।
नार्यो रमासजातीयाः रमातुल्यसुमस्तकाः ॥९२॥
सर्वाऽऽलिकाः सतिलकाः सततमुद्रचिह्निताः ।
नराश्चतुर्भुजाः सर्वे शंखचक्रगदाब्जकाः ॥९३॥
कौस्तुभमालभूषादिशोभिताः श्वेतपाण्डुराः ।
शाश्वताः षोडशवर्षवयस्काः पूरयौवनाः ॥९४॥
सिद्धयो यत्र तिष्ठन्ति कल्पवृक्षा गृहे गृहे ।
संकल्पमणयस्तत्र साकेते प्रतिमुक्तकम् ॥९५॥
दिव्याश्च स्मृद्धयः सर्वा भोज्यपानविलेपनाः ।
स्नानदानविहारादिनृत्यरमणवादनाः ॥९६॥
समाजोत्सवपरिषत्पूजासत्कारसत्क्रियाः ।
सर्वा भवन्ति दिव्याश्चाऽमृतकुण्डप्रवाहणाः ॥९७॥
फलपुष्पोत्तमरससुगन्धिद्रवपर्वताः ।
न न्यूनं विद्यते किंचित्साकेते धाम्नि वासिनाम् ॥९८॥
महालक्ष्म्याज्ञया सर्वं साकेतं भक्तवासितम् ।
दिव्यदृष्ट्या दर्शनार्हं मायानेत्रेण नेक्ष्यते ॥९९॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने
महावैकुण्ठे दिव्यसरयूकौसलवनतत्रत्यवसतितदन्त-
दुर्गवर्तुलवसतितत्साकेतभूमिकारमारामा-
वैष्णवादिनिवासप्रभृतिवर्णननामा
त्रयोविंशत्यधिकशततमो-
ऽध्यायः ॥१२३॥

**श्रीनारायण उवाच—**

शंभुस्ततो महादेवीं प्राह तत्परवर्णनम् ।
साकेते तत्र वर्तुलाभ्यन्तरे राजमार्गकः ॥ १ ॥
कोटियोजनदीर्घोऽस्ति याति नारायणालयम् ।
पार्श्वे वनान्यनन्तानि कल्पद्रुमन्ति सन्ति वै ॥ २ ॥
धर्मशालाः शान्तिशाला विश्रान्तिभूमयोऽपि च ।
द्वयोस्तु पार्श्वयोः सन्ति कूपतडागदीर्घिकाः ॥ ३ ॥
क्वचित्सौधाश्च धवलाः प्रासादाश्च क्वचित् तथा ।
सन्ति प्रवासिनां सर्वसत्काराढ्यसद्गृहाः ॥ ४ ॥
मणिस्वर्णमयाः सर्वे स्वर्णकलशशृंगिणः ।
सुधासद्रससरसो नागवल्ल्यादिशोभिताः ॥ ५ ॥
सोद्यानाः सोपभोगाश्च वरकन्यानिवासदाः ।
वैष्णववैष्णवीसौधाः पार्श्वयोर्विलसन्ति हि ॥ ६ ॥
पताकातोरणध्वजमञ्चदर्पणदीपकैः ।
सौम्यमृदूपकरणैर्भक्ष्यपेयादिवर्धितैः ॥ ७ ॥
विविधैः साधनैर्युक्ताः प्रासादास्ते लसन्ति हि ।
वैकुण्ठान्नैव किञ्चिद्वै न्यूनताऽस्ति विभूतिषु ॥ ८ ॥
साकेतात्तु समारभ्य वैकुण्ठो दिव्यलोककः ।
अन्तरीक्षे ब्रह्मधाम्नि स्थितो वै वर्तते परः ॥ ९ ॥
तस्य वै परितः सर्ववैष्णवानां निवासिनाम् ।
वर्तुले वै वसतयः साकेते संवसन्ति हि ॥१०॥
साकेतकृन्निवासानां मध्ये वैकुण्ठमुत्तमम् ।
पूर्वे साकेतसद्भागे ब्रह्मपनसपादपः ॥११॥
पञ्चयोजनविस्तीर्णो दशयोजनमूर्ध्वगः ।
सहस्रस्कन्धशोभावान् कोटिशाखाप्रविस्तरः ॥१२॥
पीतपक्वफलाढ्यश्च हरित्पल्लवशोभितः ।
सुच्छायासुखदस्तस्याऽधश्चतुरस्रवेदिका ॥१३॥

सन्ति तत्र रमन्ते वै रमावैष्णवबालकाः ।
नारायणसमा रूपे पीतवस्त्राश्चतुर्भुजाः ॥१४॥
गन्धचन्दनकस्तूरीप्रभृतिवर्ष्मवासिताः ।
सर्वलक्षणशोभाढ्या रमन्ते विहरन्ति च ॥१५॥
ततः पार्श्वे द्वितीयस्तु लक्ष्मीपनसपादपः ।
वर्तते विस्तृतः पंचयोजनं द्विगुणोच्छ्रयः ॥१६॥
विहारिण्या रमायास्तद्विश्रान्तिस्थलमस्ति वै ।
सद्रत्नसारमाणिक्यवेदिकाः सन्ति वर्तुले ॥१७॥
वैष्णवीनां कन्यकानां विहाराणि च तत्र वै ।
सर्वास्ताः कन्यका लक्ष्मीसमरूपगुणाश्रयाः ॥१८॥
भासुरास्ता रमन्ते स्म दिव्या द्वादशहायनाः ।
नारायणं प्रतीक्षन्ते यान्त्यायान्ति पुनः पुनः ॥१९॥
नारायणं प्राणपतिं संसेव्यैव प्रयान्ति ताः ।
तयोः पनसयोर्मध्ये राजमार्गो मनोहरः ॥२०॥
लक्ष्मीनारायणसौधं प्रतिगच्छति पारतः ।
तस्य पार्श्वद्वये रत्नमाणिक्यमणिवेदिकाः ॥२१॥
दिव्यगृहाश्च प्रासादा वैष्णवाऽऽवासशोभिताः ।
वैष्णव्यः कन्यकाः पूजापात्राण्यादाय यान्ति च ॥२२॥
विविधोद्यानपुष्पाणां मालाशेखरहस्तकाः ।
नारायणं प्रपूज्यैव पुनरायान्ति तत्र वै ॥२३॥
तप्तकार्तस्वरवस्त्रास्तप्तकांचनविग्रहाः ।
कोटिकामविमोहास्याः सेवन्ते श्रीहरिं गृहे ॥२४॥
वैकुण्ठवासिनां चैव साकेतवासिनां तथा ।
बहिरन्तर्गमो मार्गः संकुलितोऽस्ति सर्वदा ॥२५॥
पार्श्वे क्वचित्सहकारतरूद्यानानि सन्ति वै ।
क्वचित्पनसरंभादिफलोद्यानसुमण्डितः ॥२६॥
पुष्पोद्यानमनोहारिसरःशोभासमन्वितः ।
सोऽयं विशति पूर्वस्मात्पूर्वे प्राकारगोपुरम् ॥२७॥
प्राकारान्तर्गतं सर्वं वैकुण्ठं हरिमन्दिरम् ।
प्राकाराभ्यन्तरे सन्ति भक्तावासास्तु कोटिशः ॥२८॥
प्राकारो वर्तुलाकारः कोटियोजनविस्तृतः ।
ब्रह्मधाम्नि स्थितो व्योम्नि महावैकुण्ठ उच्यते ॥२९॥
नित्यवैकुण्ठ इत्येव परवैकुण्ठ इत्यपि ।
नाम्ना परिचयस्तत्र कुर्वन्ति वैष्णवा जनाः ॥३०॥
प्राकारोपरि वर्तन्ते विमानानि तु कोटिशः ।
ब्रह्मधाम्नि प्रगच्छन्ति साकेते विहरन्ति च ॥३१॥
ब्रह्माण्डेषु स्वकान् भक्तानादायाऽऽयान्ति धाम तत् ।
सर्वे ते पार्षदा नारायणपादाग्र्यसेवकाः ॥३२॥
दिव्या वसन्ति प्राकारे प्रासादेषु महत्सु च ।
सद्रत्नमणिमाणिक्यहीरकादिसुकोष्ठिकाः ॥३३॥
स्थले स्थले तु वर्तन्ते प्रासादे तत्र शोभनाः ।
बहुभोगार्थसम्पूर्णा बहुसौख्यप्रदद्रवाः ॥३४॥
भवन्ति तत्र प्राकारप्रासादेषूत्तरोत्तराः ।
नारायणार्थसर्वस्वार्पितवैष्णवकन्यकाः ॥३५॥
पंचाशत्कोटिसंख्याका वसन्ति श्रीहरिप्रियाः ।
आश्रमा वर्तुले तत्र प्राकारे सप्तभूमिषु ॥३६॥
कोट्यब्जाः सन्ति दिव्यास्ते नारायणस्य पार्षदैः ।
कृतावासाः शाश्वताः श्रीहर्यन्यूनविभूतयः ॥३७॥
व्योमोद्यानसुधाखन्यो निसर्गानन्दराशयः ।
भक्ताश्च वैष्णवश्रेष्ठाः शतकोटिर्वसन्ति वै ॥३८॥
सर्वे चतुर्भुजाः षोडशाब्दा नारायणा इव ।
द्वादशवत्सराः कन्याः सर्वास्ताः कमला इव ॥३९॥
ततोऽप्यन्ते महाभक्ताः सात्त्वताः हरिरूपिणः ।
प्रासादेषु कृतावासा वर्तन्ते कोटिशोऽपरे ॥४०॥
लक्ष्मीदेव्याः किंकरीणां द्वात्रिंशत्कोट्योऽपराः ।
वसन्ति तत्र प्राकारसौधेषु हरितन्मयाः ॥४१॥
नारायणं परब्रह्म विदित्वैत्यतिमृत्युताम् ।
तस्य तत्र भवेद्वासो महावैकुण्ठमण्डले ॥४२॥
नारायणपराभक्त्या रमायाः सेवया तथा ।
गच्छन्त्यपुनरावृत्तिं महावैकुण्ठमेव ते ॥४३॥
तेषां कृते निवासास्ते प्राकारे मणिनिर्मिताः ।
पुष्पशय्यापुष्पमालाऽमृतभोज्यादिसमृद्धयः ॥४४॥
छत्रचामरदर्पणस्वर्णकलशभूषणाः ।
वस्त्राभरणशोभाढ्यास्तेषां वासा भवन्ति ते ॥४५॥
अव्ययाऽमोघवीर्याऽऽसन्नहृष्टपुष्टशरीरकाः ।
निवसन्ति स्वसौधेषु वैष्णवाः कोटिकोटयः ॥४६॥
अष्टौ सन्ति महान्तो वै प्राकारे तत्र गोपुराः ।
रक्षिता द्वारपालैर्वै चतुर्दशाधिभूमयः ॥४७॥
ऐन्द्रं च पावकं चैव याम्यं च नैर्ऋतं तथा ।
वारुणं चैव वायव्यं सौम्यमैशानमेव च ॥४८॥
द्वारपालत्वमेवैतद्देवानां निर्मितं सदा ।
देवास्ते वैष्णवाः सर्वे नित्या मुक्ता वसन्ति ये ॥४९॥
ते वै द्वाराधिपाः सन्ति न तु स्वर्गादिपालकाः ।
इन्द्रश्च पावकश्चैव यमश्च निर्ऋतस्तथा ॥५०॥
वरुणः पवनश्चैव कुबेर ईश इत्यपि ।
एतन्नामान इत्येते मुक्ता वैकुण्ठवासिनः ॥५१॥

तेषां वशास्तु वैकुण्ठे कोट्यर्बुदास्तु वैष्णवाः ।
एकैकस्य तु ते सर्वे प्राकाराभ्यन्तरे स्थिताः ॥५२॥
अयं तु सप्तमो व्यूहस्ततोऽप्यभ्यन्तरेऽपरम् ।
शंखचक्रगदापद्मखड्गशार्ङ्गहलानि च ॥५३॥
मूसलं चाऽऽयुधान्यष्टौ तत्तन्नाम्ना तु पार्षदाः ।
चतुर्भुजा मूर्तिमन्तो मन्त्रशस्त्रास्त्रसंयुताः ॥५४॥
षष्ठं व्यूहं विरचय्याऽष्टदिक्षु सन्ति वै क्रमात् ।
एकैकस्य वशे सन्ति वैष्णवाश्चार्बुदास्तथा ॥५५॥
अथ वै पञ्चमे व्यूहे षष्ठस्याभ्यन्तरस्थिते ।
ऋग्वेदश्च यजुर्वेदः सामवेदो ह्यथर्वणः ॥५६॥
सावित्री गरुडो धर्मो मखश्चाष्टौ तु पार्षदाः ।
वैकुण्ठस्था मूर्तिमन्तो वसन्ति दिव्यऋद्धयः ॥५७॥
तेषां वश्या भवन्त्येव कोटिकोट्यस्तु वैष्णवाः ।
अथ व्यूहे चतुर्थे वै तिष्ठन्ति दिव्यविग्रहाः ॥५८॥
सत्यश्चैवाऽच्युतश्चैवाऽनन्तो दुर्गस्तथाऽपरः ।
विश्वक्सेनो गणेशश्च दिव्या मुक्ताश्च ते स्मृताः ॥५९॥
एतेषामपि वश्या वै कोटिशः सन्ति वैष्णवाः ।
अथ व्यूहे तृतीये तु चतुर्थाऽभ्यन्तरे स्थिते ॥६०॥
मत्स्यश्च कच्छपश्चैव वाराहो नरसिंहकः ।
वामनः परशुरामो रामचन्द्रश्च कल्किकः ॥६१॥
दिव्या विभूतयो नारायणस्यांशास्तु वैष्णवाः ।
तदधीनास्तथा तत्र वैष्णवाः कोटिकोटिशः ॥६२॥
अथ व्यूहे द्वितीये तु प्रह्लादो नारदस्तथा ।
पराशरः पुण्डरीकः कृष्णद्वैपायनस्तथा ॥६३॥
अम्बरीषो ध्रुवश्चैव वाल्मिकाद्या महर्षयः ।
कोटिशः सन्ति दिव्या वै भक्ता वैकुण्ठवासिनः ॥६४॥
प्रथमे व्यूहने वै प्राग्वासुदेवस्य मन्दिरम् ।
आग्नेय्यां वसति लक्ष्मीर्याम्यां संकर्षणालयः ॥६५॥
सारस्वतं तु नैर्ऋत्यां प्राद्युम्नः पश्चिमे तथा ।
रतिलोकस्तु वायव्यामुदीच्यामनिरुद्धभूः ॥६६॥
ऐशान्यां शान्तिलोकश्चेत्येवं प्रथममण्डलम् ।
एते सर्वे स्वस्वभक्तार्बुदपारार्ध्यकोटिभिः ॥६७॥
निवसन्ति परे महावैकुण्ठे हरिसन्निधौ ।
नैतेषां तु विभूतीनां प्रासादानां च हीनता ॥६८॥
स्मृद्धीनां भोग्यभावानां भोज्यपेयविलासिनाम् ।
प्रमदानां सुवस्त्राणां मृद्यानां द्रवभाविनाम् ॥६९॥
सुगन्धानां सुद्रस्यानां स्पृश्यानां श्रवमार्गिणाम् ।
दृश्यानां दिव्यभोगानामुद्यानानां सुधार्थिनाम् ॥७०॥
दधिदुग्धादिमिष्टानां शयनासनवाहिनाम् ।
शीतोष्णव्यंजनादीनां व्यजनाऽऽदर्शवर्त्तिनाम् ॥७१॥
रमारामाविहाराणां सौधप्रासादशालिनाम् ।
विभूषाणां कज्जलानां रंगाणां स्वादिनां तथा ॥७२॥
लेप्यानां च प्रभक्ष्याणां पात्राणां कर्मिणां तथा ।
दासीनां दासदासानां वैष्णवानां सुसेविनाम् ॥७३॥
किंकरीणां सुलोकानां फलपुष्पसुपत्रिणाम् ।
वृक्षोद्यानवनानां च मधुवापीसरित्सताम् ॥७४॥
भौतिकानां च दिव्यानां काचकम्बलद्रुत्वचाम् ।
मुखवासादिवस्तूनां विमानानां विमानिनाम् ॥७५॥
सेवकानां सुरतानां विलासिनीविलासिनाम् ।
रूपाणां कोमलानां च वस्तूनां वासदायिनाम् ॥७६॥
वाद्यानां सामनृत्यानां समाजोत्सवशालिनाम् ।
सिंहासनानां वृसीनां पात्राणां पत्रिणां तथा ॥७७॥
रूपे गुणे च सामर्थ्ये वैभवे चैश्वरे तथा ।
नारायणान्न वै न्यूनं लक्ष्म्या न्यूनं च वा नहि ॥७८॥
सर्वे नारायणसमा भक्ता नार्यो रमासमाः ।
महावैकुण्ठवासे वै नारायणान्न हीनता ॥७९॥
लक्ष्मीनारायणे यद्वत् तद्वत्स्वस्मिन्न भिन्नता ।
न बलिर्न जरा पलितता नैव च क्षीणता ॥८०॥
न ह्रासो नाऽप्यकान्तिश्च न शोको मरणं कुतः ।
न वै संकल्पहानिश्च यद्यदिच्छति तद्भवेत् ॥८१॥
सर्वं चिन्तामणिव्याप्तं संकल्पद्रुमनैत्यकम् ।
सर्वमक्षयकरणं ब्रह्मधामप्रपूरितम् ॥८२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने महावैकुण्ठे राजमार्गब्रह्मपनसलक्ष्मीपनसमहाप्राकार-प्रासादगोपुरसप्तव्यूहादिवर्णननामा चतुर्विंश-त्यधिकशततमोऽध्यायः ॥ १२४ ॥

**श्रीनारायण उवाच—**

शंकरः पार्वतीं प्राह महावैकुण्ठवर्णनम् ।
त्रिपाद्विभूतेरक्षरब्रह्मस्था धामसृष्टयः ॥ १ ॥
शुद्धाः शान्ताः सुसन्तश्च ब्रह्मानन्दसुखात्मिकाः ।
नित्याश्च निर्विकाराश्च हेयभागविवर्जिताः ॥ २ ॥
हिरण्मया असंख्याताः कोटयब्जसूर्यकान्तयः ।
नारायणपदांभोजभक्तिसद्रसपूरिताः ॥ ३ ॥

सामादिस्तुतिकर्तारो यत्र सन्ति हि सात्त्वताः ।
तद्वदिदं महावैकुण्ठाख्यं धाम परं पदम् ॥ ४ ॥
निःश्रेयसं च निर्वाणं कैवल्यं मोक्ष उच्यते ।
नारायणचरणयोः रसभोगसुवर्धिताः ॥ ५ ॥
महात्मानो महाभागा वैष्णवा निवसन्ति हि ।
दास्यो वैष्णवमूर्धन्या हरेः सेवारताः सदा ॥ ६ ॥
तद्विष्णोः परमं धाम वैकुण्ठं तद्धरेः पदम् ।
नानाजनपदाकीर्णं सच्चिद्ब्रह्मसुखप्रदम् ॥ ७ ॥
पद्मरागैरिन्द्रनीलैर्बहुरत्नैः सुशोभितम् ।
कोटिवैश्वानरप्रख्यं सर्वविद्यामयं महत् ॥ ८ ॥
आमोदकरमन्दारवृक्षैर्बहुभिरावृतम् ।
नानामणिमयैर्दिव्यैर्विमानैः कोटिभिर्युतम् ॥ ९ ॥
स लोको विपुलः पुण्यः शुद्ध आत्ममयः शुभः ।
युगपत्कोटिसाहस्रसूर्यभासाप्रभासितः ॥१०॥
नित्योऽयं वैष्णवो लोकः प्रधानान्ते न लीयते ।
मया ब्रह्मादिदेवैश्च न द्रष्टुमपि शक्यते ॥११॥
कल्पचिन्तामणिवृक्षाऽमृतवल्ल्यादिपूरितः ।
मिष्टाम्बुदिव्यसोपानदीर्घिकालसितः शुभः ॥१२॥
स्वर्णवर्णैः सदाऽम्लानैः समरूपैस्तु पंकजैः ।
रमन्ते कन्यकास्तत्र विमानैर्विहरन्ति च ॥१३॥
ज्वलदग्निसमैः कान्तैर्भूषणैः कोटिभिर्युताः ।
निरन्तरं मुक्तपक्षिसंघैः सामभिरीडितः ॥१४॥
नृत्यस्य मण्डपस्तत्र सुगन्धद्रव्यशोभितः ।
ऊनषोडशवर्षैश्च दिव्यनारीनरैर्वृतः ॥१५॥
सर्वलक्षणशोभाढ्यैर्दिव्यशोभिविभूषणैः ।
सर्वत्र लसितः सम्यक् त्वानन्देन प्रपूरितः ॥१६॥
नृत्यं भवति नित्यं वै तत्र तारस्वरादिभिः ।
आनन्दो जायते तेन मुहुर्वैकुण्ठवासिनाम् ॥१७॥
एवं रम्यप्रदेशेषु मुदितैः पतिभिः सह ।
नारायणं त्वर्चयन्ति प्रमदाः सात्त्वतप्रियाः ॥१८॥
नारायणकृपालब्धं सुखमश्नन्ति सर्वदा ।
गायन्ति भगवल्लीलां चरितानि शुभानि च ॥१९॥
पद्मेक्षणाः कमलवत्कोमलांग्यश्च योषितः ।
दिव्यस्रग्वसनोपेताः पद्मया सदृशाः शुभाः ॥२०॥
शंखचक्रगदापद्मधरैर्भूषणभूषितैः ।
स्रग्विभिः पीतवसनैः पतिभिः सह संस्थिताः ॥२१॥
सेवन्ते श्रीहरिं नारायणं दिव्यं भजन्ति तम् ।
अन्योन्यरममाणानां हरेर्भक्तेः सुखो रसः ॥२२॥
सर्वदा वर्धत एव द्रवनिष्ठो भवत्यपि ।
इत्येवं वसतिव्यासं व्यूहाभ्यन्तरमण्डलम् ॥२३॥
मण्डलाभ्यन्तरे तत्र प्राकारो विद्यते महान् ।
चतुर्द्वारसमायुक्तस्तुङ्गगोपुरसंयुतः ॥२४॥
विमानानि च सौधानि सन्ति दुर्गेऽपि तत्र च ।
चण्डप्रचण्डौ प्राग्द्वारे याम्ये भद्रसुभद्रकौ ॥२५॥
वारुण्यां जय विजयौ सौम्ये धाता विधातृकः ।
कुमुदः कुमुदाक्षश्च पुण्डरीकोऽथ वामनः ॥२६॥
शंकुकर्णः सर्वनिद्रः सुमुखः सुप्रतिष्ठितः ।
अष्टौ प्राकारपतयो गौणद्वारेषु सन्ति हि ॥२७॥
प्राकाराभ्यन्तरे तत्र प्राकारभवनानि वै ।
कोटिवैश्वानरतुल्योज्ज्वलानि रत्नवन्ति च ॥२८॥
आरूढयौवनदिव्यनारीनरयुतानि वै ।
वर्तुलप्राकारलग्नस्थितिमन्ति भवन्ति हि ॥२९॥
प्राकारो वर्तुलाकारो दशलक्षसुयोजनः ।
सप्तभौमो महाव्योम्नि वर्तुलो वर्ततेऽभितः ॥३०॥
गोपुरेषु द्वादशसु राजमार्गाः सुलम्बनाः ।
प्राकाराभ्यन्तरे तत्र राजसौधं प्रयान्ति वै ॥३१॥
दुर्गे त्वनु राजसौधमभितो नगरी शुभा ।
दिव्या ह्ययोध्या सुभगा नारायणविनिर्मिता ॥३२॥
अनन्तमणिभास्करगृहपंक्तिभिरावृता ।
प्रोद्भिन्नयौवनैः रम्यैर्दिव्यनारीनरैर्युता ॥३३॥
दिव्यनदनदीयुक्ता प्रेमजलसुनिर्झरा ।
दिव्यभोज्यपानवस्त्रा संकल्पोद्भवसाधना ॥३४॥
असंख्यदिव्यसौधादिवैष्णवगृहशोभिता ।
महाभागवतसात्त्वतात्मनिवेदिसंश्रिता ॥३५॥
नरा नारायणाकाराश्चतुर्हस्ताः सुवैष्णवाः ।
नार्यो लक्ष्मीसमाकारा मालाकौस्तुभभासुराः ॥३६॥
चन्दनागुरुकर्पूरकुंकुमाऽऽमोदसंयुताः ।
नानापुष्पोद्यानयानवाहनगृहसंश्रिताः ॥३७॥
मध्ये मध्ये कल्पवृक्षोद्यानानि सन्ति भूरिशः ।
चत्वराश्चन्द्रशालाश्च विश्रान्तिशालिमण्डपाः ॥३८॥
दिव्याः सहस्रभौमाश्च सन्ति नारायणेच्छया ।
कल्पद्रुमतले स्थित्वा छायायां कमलाननाः ॥३९॥
दिव्यसुगन्धशोभाग्र्यनानापुष्पपरिच्छदाः ।
शुभास्तरणसंवृत्तश्लक्ष्णपर्यंकसंस्थिताः ॥४०॥
सुधांशुकोटिसंकाशा दिव्याभरणभूषिताः ।
सुवर्णसुभ्रूयुगलश्लक्ष्णनासाञ्चिताननाः ॥४१॥

रमन्ते वैष्णवास्तत्र सच्चिदानन्दविग्रहाः ।
वैष्णव्यः सर्वदा नारायणं सेवन्त आदरात् ॥४२॥
अयोध्यायां तु दिव्यायां मन्दिराणि त्वनेकशः ।
नारायणीनां देवीनां वैष्णवीनां भवन्ति वै ॥४३॥
अथाऽप्यन्तःपुराण्येव सप्राकाराणि सन्ति हि ।
सोद्यानानि समस्तेष्टसाधनान्वितकानि वै ॥४४॥
अष्टदिक्ष्वष्टसौधाः सप्राकाराः सन्ति चोन्नताः ।
अत्राष्टशक्तयो लक्ष्म्यास्तनवः परितः स्थिताः ॥४५॥
रमा च रुक्मिणी सीता पद्मा पद्मालया शिवा ।
सुदक्षिणा सुशीला च रत्यनङ्गप्रदास्तु ताः ॥४६॥
शंखचक्रगदापद्मखड्गशार्ङ्गादिहेतयः ।
सर्वा नूत्ननवरूपा प्राप्तयौवनपूरिताः ॥४७॥
वर्तुले स्वस्वसौधेषु नारायणेन संगताः ।
तप्तकांचनसंकाशाः सर्वाभरणभूषिताः ॥४८॥
सुस्निग्धनीलकुटिलाऽलकराजिविराजिताः ।
मन्दारपारिजातादिदिव्यपुष्पविराजिताः ॥४९॥
रत्नाऽवतंसशोभाढ्याश्चिकुरान्तालिसन्निभाः ।
केयूरांऽगदहाराद्यैर्भूषणैरुपशोभिताः ॥५०॥
पीनस्तन्यो वैष्णव्यस्ता नारायण्यो निरन्तरम् ।
क्रीडन्तिस्माऽमोघवीर्यवारिधिहरिणा सह ॥५१॥
स वै नारायणः स्वामी सर्वदासीमनोहरः ।
क्रीडत्यन्तःपुरेष्वत्र तासां यावदनंगदः ॥५२॥
ईश्वरीभिः स देवेशो रतिं विन्दति नैकधाम् ।
सुधांशुकोटिसंकाशो दिव्याभरणभूषितः ॥५३॥
सुवर्णसुभ्रूयुगलश्लक्ष्णनासाञ्चिताननः ।
स्निग्धायतसुलावण्यकपोलाभ्यां विराजितः ॥५४॥
नीलकुञ्चितकेशाढ्यो रक्ताब्जदललोचनः ।
मन्दारकेतकीजातीकबरीकृतकेशवान् ॥५५॥
स्निग्धबिम्बफलाभौष्ठः सुस्मिताननपंकजः ।
अनर्घ्यमौक्तिकाभासदन्तावलिविराजितः ॥५६॥
हरिचन्दनलिप्तांगः कस्तूरीतिलकांकितः ।
उन्नतांसभुजैर्दिव्यैश्चतुर्भिरुपशोभितः ॥५७॥
जपाकुसुमसंकाशकरपल्लवशोभितः ।
स्फुरत्केयूरकटकैरङ्गुलीयैश्च शोभितः ॥५८॥
श्रीवत्सकौस्तुभाभ्यां च शोभितः पृथुवक्षसा ।
मुक्तामयसुशोभाढ्यदिव्यस्रग्भिरलंकृतः ॥५९॥
बालार्कसदृशज्योत्स्नापीतवस्त्रेण वेष्टितः ।
माणिक्यनूपुरोपेतपदपद्मविराजितः ॥६०॥
अकलंकितचन्द्राभनखपंक्तिविराजितः ।
रक्तोत्पलनिभश्लक्ष्णशुभांऽघ्रियुगपंकजः ॥६१॥
पांचजन्यरथांगाभ्यां बाहुयुग्मे विराजितः ।
तप्तजांबूनदश्लक्ष्णशुभांघ्रिद्वयपंकजः ॥६२॥
ताभिः क्रीडति देवेशो नारायणः सनातनः ।
बहुरूपधरः श्रीमान्नैकश्रीभिः सुसेवितः ॥६३॥
प्रतिश्रि राजते राजाधिराजोऽन्तःपुरेषु सः ।
आसां नारायणमहालक्ष्मीतुल्याः समृद्धयः ॥६४॥
न न्यूना अण्वपि सन्ति नारायण्यो यतश्च ताः ।
नारायणैकपतिका नारायणैकसंश्रयाः ॥६५॥
नारायणैकसत्प्राणा नारायणात्मिका हि ताः ।
नारायणसमैश्वर्या नारायणपरायणाः ॥६६॥
नारायणे सदा मग्ना नारायणार्थकृत्स्वकाः ।
भजन्ति स्नेहसन्नर्महास्यविलासखेलनैः ॥६७॥
प्रेमानन्दपरिकेलिस्वांगमर्दनभावनैः ।
एतासां तु रमादीनामष्टानां वर्तुलान्तरे ॥६८॥
उद्यानस्तु महान् दिव्यश्चन्द्रशीतलभूरुहाम् ।
सुखवृक्षा मिष्टवृक्षास्तथैवाऽऽनन्दवल्लयः ॥६९॥
मणिहीरकसोपानाऽवतारकुण्डसुस्थलाः ।
अमृतनिर्झरणाढ्याश्चित्रपुष्पाः प्रदेशकाः ॥७०॥
मौक्तिकवालुकाः स्वर्णभूमयो दुग्धवार्धयः ।
मृद्वास्तरणसुस्थानाः सुदिव्यवनराजयः ॥७१॥
स्वल्पानि तु विमानानि सन्ति स्रुतिवरास्तथा ।
जलफुत्कारयन्त्राणि दोलावृक्षाश्च शोभनाः ॥७२॥
कुंजा वल्लीप्रकृतिकाऽऽवरणाः सन्ति भूरिशः ।
शय्यास्थानानि रम्याणि विश्रान्तिप्रस्थलानि च ॥७३॥
रतिस्थानान्यनेकानि प्रच्छन्नस्थानभूमिकाः ।
नारायणेच्छया तद्वै जायतेऽपेक्ष्यते यथा ॥७४॥
अदृश्यत्वं च दृश्यत्वं प्रकाशत्वं ततोऽन्यथा ।
यथापेक्षं तदा तत्तदिच्छया परिवर्तते ॥७५॥
तादृशवर्तुलोद्यानमध्ये नारायणस्य वै ।
प्रासादः शतशिखरो वर्तते सुमहोज्ज्वलः ॥७६॥
शतसद्भूमिकश्चैव दिव्यरत्नमयो महान् ।
शतयोजनविस्तारो वरतोरणशोभितः ॥७७॥
विमानैर्गृहसंकाशैर्गृहैश्च बहुभिर्युतः ।
मणिमाणिक्यसद्रत्नस्फटिकोप्तसुभित्तिकः ॥७८॥
दिव्यसोपानसंराजद्गवाक्षाक्षिसुशोभितः ।
घुम्मटैर्विविधैर्युक्तः पताकाध्वजदर्शनः ॥७९॥

बहुभिः स्वर्णकलशैर्नैकचन्द्रप्रभोज्ज्वलः ।
दिव्यदासीगणैः स्त्रीभिः सर्वतः समलंकृतः ॥८०॥
अन्तःपुरं महालक्ष्म्या नारायणस्य सर्वथा ।
प्रासादोऽयं भवत्येव मुख्याऽन्तःपुरमेव वै ॥८१॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने महावैकुण्ठे व्यूहाभ्यन्तरप्राकारतद्वसतितदभ्यन्तराऽयोध्यावसतिरमाद्यष्टदासीप्रासादतदभ्यन्तरोद्यानतन्मध्यमहालक्ष्मीप्रासादतदुपकरणादिवर्णननामा पंचविंशत्यधिकशततमोऽध्यायः ॥१२५॥

**श्रीनारायण उवाच—**

ततो लक्ष्मि ! महादेवो वर्णयामास शोभनम् ।
महालक्ष्म्याः स्वतन्त्रं तदन्तःपुरमशेषतः ॥ १ ॥
चतुर्दिक्षु स्वर्णमणिसोपानानि भवन्ति वै ।
मणिकान्तिकराः स्वल्पस्तम्बगुल्माश्च कोटिशः ॥ २ ॥
निःश्रेणीपार्श्वयोः सन्ति नवपल्लवशोभिताः ।
रत्नपुष्पप्रकाशिन्यो वल्लिकाः पार्श्वयोस्तथा ॥ ३ ॥
विरामपट्टिकाश्चैव तथा सन्ति सहस्रशः ।
रक्तहरिन्मणिक्लृप्ताः साऽऽदर्शाः सहशुक्तिकाः ॥ ४ ॥
भित्तिका मणिचूर्णानां सचित्राः परिकल्पिताः ।
पार्श्वास्तासां प्रगल्भानां स्फटिकानां च निर्मिताः ॥ ५ ॥
स्थलान्यपि जलानीव जलान्यपि स्थलानि वा ।
अग्रचतुष्किकाः स्थल्यो भ्रान्तयन्ति सखीन्मुहुः ॥ ६ ॥
स्तंभेषु सन्ति पक्षाढ्या वरमालाकराः शुभाः ।
उड्डयन्तीव देव्यश्च रमातुल्याः सुयौवनाः ॥ ७ ॥
आह्वयन्तीव सत्कारं कुर्वन्तीव सचेतनाः ।
करात्तस्वर्णपात्रास्ता लाजया वर्धयन्ति ताः ॥ ८ ॥
स्वर्णसूक्ष्माम्बराः स्वर्णकान्तयो द्वादशाब्दिकाः ।
स्तंभमूले नरसिंहा नृहरेरूपमास्थिताः ॥ ९ ॥
सौम्या हास्यमुखाः सन्ति चेतना रक्षका इव ।
कम्मानिकासु नृत्यन्ति नर्तक्यो ह्येकवस्त्रिकाः ॥१०॥
नारायणप्रसादाय मुहुः संकोचमन्तरा ।
वादकास्तु विविधानि वादित्राण्यवगृह्य च ॥११॥
वादयन्ति विलासान्तं विलासार्थं हरेर्मुहुः ।
द्वारोपरि प्रतिस्थालं सूतमागधबन्दिनः ॥१२॥
वैष्णवा भालतिलका गायन्ति हरिकीर्तनम् ।
अवतारचरित्राणि विचित्राणि मुदा मुहुः ॥१३॥
विद्याध्राः किन्नराश्चैव सर्तिकपुरुषजातयः ।
प्राकृसृष्टेः सुचरित्राणि गायन्ति श्रीहरेः सदा ॥१४॥
क्वचित्तु द्वादशवर्षाः कन्यका हरितृप्तये ।
शीतसुगन्धिमिष्टादिमिश्रं पेयं नयन्ति हि ॥१५॥
अन्यत्र श्रीहरेर्भोज्यं पाकेनाऽष्टोत्तरं शतम् ।
अर्पयन्ति तथा कन्या रमाः सर्वा हरिप्रियाः ॥१६॥
अपरत्र तु कामिन्यः शय्यां कुर्वन्ति तत्कृते ।
तथाऽन्याः श्रीहरेरर्थं स्नानसामग्रिकायुताः ॥१७॥
काश्चित्पूजाप्रकाण्डं वै गृहीत्वा यान्ति तं पतिम् ।
श्रांगारिकद्रवद्द्रव्याण्यादाय यान्ति गौरिकाः ॥१८॥
कज्जलालक्तगन्धाढ्यतैलप्रसूनसद्रसान् ।
ताम्बूलचर्व्यसद्वस्तु नीत्वा यान्ति प्रियं प्रति ॥१९॥
फलानि लेह्यचोष्याणि यान्त्यादाय हरिं प्रति ।
दृश्यस्पृश्यसुसंश्राव्यरस्यघ्रातव्यवस्तुकम् ॥२०॥
समादाय पतिं स्वानां यान्ति रमयितुं रमाः ।
कल्किमुकुटभूषाश्चादाय यान्ति प्रभोः प्रियाः ॥२१॥
विद्युच्चंचत्स्वर्णवस्त्राः स्वर्णतन्व्यः सुमध्यमाः ।
क्वणत्किंकिणिकाभूषा विलासार्थं प्रयान्ति च ॥२२॥
स्थले स्थले प्रतोलीषु दिव्यचन्द्रा भवन्ति हि ।
वल्लभीषु गवाक्षेषु शीतसूर्या ज्वलन्ति वै ॥२३॥
वायवो मन्दसुरभिशीतला वान्ति चेतनाः ।
सूक्ष्मा मेघा रतिमध्ये वर्षन्ति घर्मशान्तये ॥२४॥
दिव्या द्यौस्तत्र संवासे प्रतिकोणं प्रकाशते ।
दूरदृष्टिप्रयन्त्राणि दूरश्रवणपट्टिकाः ॥२५॥
दूरग्राहाः सिद्धिवर्या वसन्ति प्रतिमन्दिरम् ।
प्रबोधाय सुयन्त्राणि वादयन्ति हि वादकाः ॥२६॥
स्थले स्थले प्रतिसौधं हरिश्चास्ति सहस्रधा ।
दासदास्यौ रमयन् स रमते चापि तद्गमम् ॥२७॥
स्नानागाराणि शयनागाराणि रतिमण्डपाः ।
श्रृंगारमण्डपाश्चैव पूजाया मण्डपास्तथा ॥२८॥
पानलेपनसत्केलिगृहाणि क्रीडनक्षयाः ।
विहारव्यवहारादिसभास्थानानि तत्र च ॥२९॥
पाकस्थानानि शस्त्रादिस्थानानि हेतिसंक्षयाः ।
स्वर्णमणिहरिद्रत्नमाणिक्यस्फटिकक्षयाः ॥३०॥
गुप्ता यत्र कृताः सन्ति ततः सर्वोपरि स्थितः ।
विमानगृहमुख्यैश्च प्रासादैर्बहुभिर्युतः ॥३१॥
दिव्याप्सरोगणैः स्त्रीभिः सर्वतः समलंकृतः ।
राजप्रासादवर्योऽस्ति न भूतो न भविष्यति ॥३२॥

मध्ये नारायणस्यैव राजस्थानं महोत्सवम् ।
माणिक्यस्तंभसाहस्रजुष्टं रत्नमयं शुभम् ॥३३॥
दिव्यवैष्णवसंकीर्णं सामगानोपशोभितम् ।
मध्ये सिंहासनं रम्य सर्वदेवमयं शुभम् ॥३४॥
धर्मज्ञानमयैश्वर्यवैराग्यैः पादविग्रहैः ।
ऋग्यजुःसामाऽथर्वाणरूपजानुभिराहितम् ॥३५॥
श्रद्धाशक्त्याधारशक्तिचिच्छक्तिशिवशक्तिभिः ।
व्याप्तं सूर्यशशिवह्निविद्युत्सुधांशुभिस्तथा ॥३६॥
कूर्मः शेषो गरुडश्च हंसश्छन्दांसि मन्त्रकाः ।
पीठरूपा भवन्त्येते मध्ये पद्मं तु वैधसम् ॥३७॥
अष्टदलं च मध्ये सावित्री तत्कर्णिका स्थिता ।
महालक्ष्म्या सुयुक्तोऽत्र नारायणः प्रतिष्ठति ॥३८॥
रत्नसिंहासनस्थश्च रत्नालंकारभूषितः ।
रत्नकेयूरवलयरत्ननूपुरशोभितः ॥३९॥
रत्नकुंडलयुग्मेन गण्डस्थलविराजितः ।
पीतवस्त्रपरीधानो वनमालाविभूषितः ॥४०॥
शान्तः सरस्वतीकान्तो लक्ष्मीधृतपदांबुजः ।
कोटिकन्दर्पलीलाभः स्मितवक्त्रश्चतुर्भुजः ॥४१॥
चन्दनोक्षितसर्वांगः सुरत्नमुकुटोज्ज्वलः ।
परमानन्दरूपः स भक्तानुग्रहकारकः ॥४२॥
इन्दीवरदलश्यामः कोटिसूर्यप्रकाशवान् ।
युवा कुमारः स्निग्धांगः कोमलावयवैर्युतः ॥४३॥
फुल्लरक्तांबुजकान्तिः कोमलांऽघ्रिकराब्जवान् ।
प्रबुद्धपुंडरीकाक्षः सुभ्रूलतायुगांकितः ॥४४॥
सुनासः सुकपोलाढ्यः सुशोभमुखपंकजः ।
मुक्ताफलाभदन्ताढ्यः सस्मिताधरसुन्दरः ॥४५॥
कोटिपूर्णेन्दुसंकाशः कबरीकृतकेशवान् ।
सुस्निग्धनीलकुटिलकुन्तलैरुपशोभितः ॥४६॥
प्रातरुद्यत्सहस्रांशुनिभकौस्तुभशोभितः ।
हारस्वर्णस्रगासक्तकम्बुग्रीवाविराजितः ॥४७॥
सिंहस्कन्धनिभैः प्रोच्चैः पीनैरंसैर्विराजितः ।
मीनवृत्तायतहस्तैश्चतुर्भिरुपशोभितः ॥४८॥
अंगुलीयैश्च कटकैः श्रृंखलाभिश्च शोभितः ।
नानारत्नविचित्रांघ्रिकटकाभ्यां विराजितः ॥४९॥
सज्योत्स्नचन्द्रप्रतिभनखपंक्तिसमुज्ज्वलः ।
सौन्दर्यवीर्यलावण्यपुष्ट्यादिनिधिरच्युतः ॥५०॥
शंखचक्रगृहीताभ्यामुद्बाहुभ्यां विराजितः ।
वरदाऽभयहस्ताभ्यामितराभ्यां सुशोभितः ॥५१॥

वामांके संस्थिता देवी महालक्ष्मीर्महेश्वरी ।
हिरण्यवर्णा हरिणी सुवर्णरजतस्रजा ॥५२॥
दिव्यचिह्नसमायुक्ता यौवनारंभविग्रहा ।
दिव्यचन्दनलिप्तांगा नीलाकुंचितमूर्धजा ॥५३॥
रत्नकुण्डलशोभाढ्या दिव्यहारालिशोभिता ।
मन्दारकेतकीजातीपुष्पाञ्चितसुकुन्तला ॥५४॥
सुभ्रूः सुनासा सुश्रोणी पीनोन्नतपयोधरा ।
सस्मितपूर्णचन्द्रास्या सूर्यकुण्डलराजिता ॥५५॥
स्वर्णवर्णा स्वर्णभूषा चतुर्हस्ताऽब्जहस्तगा ।
हारकेयूरकटकैरंगुलीयैः सुशोभिता ॥५६॥
स्वर्णतन्तिलिलाटा च धृतपद्मभुजद्वया ।
गृहीतमातुलुंगाख्यजाम्बूनदकराञ्चिता ॥५७॥
गन्धद्वारा दुराधर्षा नित्यपुष्टा करीषिणी ।
कर्णनासादिसद्भूषा सौभाग्यपुण्ड्रचन्द्रका ॥५८॥
चामरोशीरवृन्तार्द्रतांबूलदा तु विष्णवे ।
मोदते सा महावैकुण्ठाख्ये नारायणेन वै ॥५९॥
एवं नित्याऽनपायिन्या महालक्ष्म्या नरायणः ।
मोदते परमे व्योम्नि वैकुण्ठे शाश्वते प्रभुः ॥६०॥
दक्षिणे धर्मदेवश्च नन्दः सुनन्द इत्यपि ।
श्रुतदेवो जयन्तश्च विजयश्च जयस्तथा ॥६१॥
चंडश्चैव प्रचण्डश्च पुष्पदन्तश्च सात्वतः ।
विश्वक्सेनो वैनतेयः प्रबलो बल इत्यपि ॥६२॥
कुमुदः कुमुदाक्षश्च सन्ति ते पार्षदाः सदा ।
दिव्याश्च वैष्णवा दासाः सेवाकार्यकृतक्षणाः ॥६३॥
वामे तु धरणी लीला विमलोत्कर्षिणी क्रिया ।
योगा च सगुणा प्रह्वी ज्ञाना सत्येशनी तथा ॥६४॥
पद्मा जया च पांचाली भार्गवी ललिता रमा ।
पार्वती च प्रभा माणिक्या च लक्ष्मीश्च मंजुला ॥६५॥
ऊर्जा धनेश्वरी दीपावली प्रेमरसेश्वरी ।
देवा देववरा बालेश्वरी चोजस्वती शुभा ॥६६॥
कान्ता शान्ता च चतुरा हंसाऽमृतरसा तथा ।
मूलिका कस्तूरिका च सावित्री मौक्तिकेश्वरी ॥६७॥
जयदा मुक्तिदा हेममाला गोदावरी वरा ।
रंभा च जाह्नवी कान्तीश्वरी लाङ्गलिकेश्वरी ॥६८॥
नन्दा च दमयन्ती च निर्मला रत्नपुष्करा ।
मणीश्वरी तथा रालियन्ती चम्पावती दया ॥६९॥
रमा जयेश्वरी पानेश्वरी च सविता प्रमा ।
शान्तिः सुखकरी चेति महिष्यः परमात्मनः ॥७०॥

गृहीत्वाऽर्हणसामग्रीः सेवयन्ति पतिं प्रभुम् ।
दिव्याप्सरोगणाः पञ्चशतमुख्या हरिप्रियाः ॥७१॥
अन्तःपुरनिवासिन्यः कोटिवैश्वानरप्रभाः ।
रमाः सर्वाः समाना वै शीतांशुसदृशाननाः ॥७२॥
सेवयन्ति महाराजं श्रीमन्नारायणं हरिम् ।
तमेव परमात्मानं त्वक्षरे धाम्नि संस्थितम् ॥७३॥
दिव्यरूपानुरूपं चाऽवतारिस्वस्वरूपिणम् ।
महामाया प्रतुष्टाव मां भजस्व महाप्रभो ! ॥७४॥
तदा नारायणो भूत्वा महावैकुण्ठनामकम् ।
धाम संरचयामासाऽक्षरप्रान्ते तु शाश्वतम् ॥७५॥
स्ववामजां महामायां महालक्ष्मीं विधाय च ।
महावैकुण्ठधाम्न्येव रमते श्रीहरिः स्वयम् ॥७६॥
अन्येष्वप्यवतारेषु यत्र नारायणेन वै ।
स्वेन साकं गृहीता सा ताः रमाः संभवन्ति हि ॥७७॥
ताश्च सर्वा भजन्ति स्म पतिं नारायणं परम् ।
तासामपि च दासीनां कोटीनां पतिरेव सः ॥७८॥
नारायणोऽत्र वैकुण्ठे सेवां गृह्णाति भावतः ।
महाभागवताश्चान्ये ये भूतास्तेऽपि चात्र वै ॥७९॥
वसन्ति हरिसौधेषु भजन्ति प्रेयसं हरिम् ।
नारायणं भजित्वा वै भक्त्या तु बहुरूपया ॥८०॥
गत्वाऽस्मिन्न निवर्तन्ते विष्णुना सह संस्थिताः ।
तत्समानसुखं नित्यं प्राप्नुवन्त्यात्मवेदिनः ॥८१॥
नारायणानुचरतां मोक्ष एव सुखप्रदः ।
सततं संस्मरेद् विष्णुं शाश्वतानन्ददं प्रभुम् ॥८२॥
नामोच्चारणमात्रेण प्राप्नुयात्परमं पदम् ।
तस्मान्नारायणं लोकं गौरि ! संप्रार्थयेत् सदा ॥८३॥
भक्त्या त्वनन्यया देवं भजेत करुणाकरम् ।
सः सर्वज्ञः स्वकं ज्ञात्वा रक्षत्येव यथा तथा ॥८४॥
तदूर्ध्वपुंड्रं तन्मन्त्रं तत्कण्ठीं तस्य मालिकाम् ।
तद्भक्तिं तन्नाम कृत्वा महावैकुण्ठमेति वै ॥८५॥
महालक्ष्म्याः कृते चैतन्महावैकुण्ठमक्षरे ।
कृतमेकं हरिणैव तदेतत्परमं पदम् ॥८६॥
वैराजस्य तु पुत्रेण द्वितीयं विष्णुना कृतम् ।
वैकुण्ठं तु सहलक्ष्म्या वासार्थं ध्रुवतः परम् ॥८७॥
सत्याच्चतुर्दशाल्लोकात्परे वैराजसंस्तरे ।
जलावरणप्रान्ते तेजो वैकुण्ठं द्वितीयकम् ॥८८॥
देवादीनां तु गत्यर्थं प्रार्थनार्थं पुनः पुनः ।
गतिमेलनलाभाय श्वेतद्वीपाख्यमित्यपि ॥८९॥
कृतं तृतीयं वैकुण्ठं सुगमं स्वस्य मेलनम् ।
ततोऽपि योगिगम्यं स्वशयनार्थे प्रशान्तिकृत् ॥९०॥
शेषशायिस्वरूपेण क्षीरसागरमध्यगम् ।
चतुर्थं तु कृतं स्वेन वैकुण्ठं शान्तिलब्धये ॥९१॥
तत्र ते प्रथमं देवि ! महावैकुण्ठमीरितम् ।
अथ वार्यावरणस्थं द्वितीयं कीर्तये शृणु ॥९२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने महालक्ष्म्याः महाप्रासादस्थविविधरमाकृतसेवासेवास्थान-सिंहासनतत्स्थनारायणमहालक्ष्मीतत्पार्षदतदन्य-महिष्यादिसेवानिर्देशनामा षड्विंशत्यधिक-शततमोऽध्यायः ॥१२६॥

**श्रीनारायण उवाच—**

ततो लक्ष्मि ! महादेवि ! शंकरस्तां सतीं प्रियाम् ।
जलावरणप्रान्तस्थं द्वितीयं प्राह धाम यत् ॥ १ ॥
वैकुण्ठाख्यं तु विष्णोर्वैराजपुत्रस्य धाम तत् ।
कोटिवैश्वानरप्रख्यं सर्ववस्तुसमन्वितम् ॥ २ ॥
सुगन्धिकल्पवृक्षैश्च बहुभिः समशोभितम् ।
सद्रत्नमणिमाणिक्यविमानैः कोटिभिर्युतम् ॥ ३ ॥
महावैकुण्ठसदृशं पञ्चाब्जयोजनावृतम् ।
देवगंगा महादिव्या वर्तुला वर्ततेऽनु तत् ॥ ४ ॥
सर्वशोभावती दिव्यदुग्धसलिलभासुरा ।
स्वर्णमणिरत्नशुक्तिमाणिक्यहीरकैः कृता ॥ ५ ॥
अवतारास्तटाश्चैव शोभन्ते वनराजिभिः ।
नैकैश्वर्ययुता मुक्ता ईश्वरास्तत्र संस्थिताः ॥ ६ ॥
गरुडहंससारसशुकमेनाविहंगमाः ।
दैवाः पतत्रिणस्तत्र सुस्वराः कोकिलादयः ॥ ७ ॥
सुरूपाश्चातकबर्हिसारससारिकादयः ।
स्वर्णमृगमहादिव्यकेसरिकिरिणस्तथा ॥ ८ ॥
शबलाश्च महावेगा आकाशगामिनो मताः ।
वाहनानि विचित्राणि वनान्युपवनानि च ॥ ९ ॥
सरीसृपाः सुरूपाढ्या दिव्या ईश्वरकोटयः ।
वसन्ति रोहिता मत्स्याः स्वर्णमत्स्यादयश्च ते ॥१०॥
कमठमकरमत्स्यावतारवंशजाश्च वै ।
स्वर्णरूपा मणिपृष्ठाः कामरूपधरा हि ते ॥११॥
जीवलोके चेशलोकेष्वावरणेषु चारिणः ।
भवन्ति श्रीहरेर्नारायणबलात्प्रमाभिनः ॥१२॥

नदीमनु वर्तुलं तां तदभ्यन्तरमास्थितम् ।
वनं देवजयारामाभिधानं त्वब्जयोजनम् ॥१३॥
तत्राम्रैः पनसैर्जम्बूश्रीफलैर्नागरंगकैः ।
बदरीकदलीपुष्पीद्राक्षखर्जूरसेतुरैः ॥१४॥
एलापूगीलवंगैश्च विविधामृतसद्द्रुमैः ।
कुन्दाशोकस्थलपद्मजातीकमलचम्पकैः ॥१५॥
केतकैर्वकुलैश्चान्यैः सुगन्धिपुष्पिवल्लिभिः ।
शालसर्जतरुतालकदम्बदेवदारुभिः ॥१६॥
पिप्पलोदुम्बरवृन्दाखदिरकिंशुकादिभिः ।
बहुजातितृणवृक्षवल्लीकमलसस्यकैः ॥१७॥
संशोभितं वनं देवजयोद्यानाभिधं महत् ।
तत्र विहारभवनस्नानरमणभूमयः ॥१८॥
स्वास्थ्यनिवाससौधानि क्षेत्राणि विविधानि च ।
वैकुण्ठवासिनां रम्योद्यानानि फलवन्ति च ॥१९॥
वर्तन्ते सुभगान्येव दिव्यानीश्वरचेतनाः ।
वनस्याऽभ्यन्तरे तत्र राजमार्गो महान् मतः ॥२०॥
संगच्छति देववतीं वैष्णवीं नगरीं प्रति ।
तैजसे सुस्तरे तत्र वर्तुले वैष्णवा हरेः ॥२१॥
वसन्ति च नरा नार्यो षोडशाब्दाः सुयौवनाः ।
वनं तु वर्तुलाकारं प्रदेशोऽपि च वर्तुलः ॥२२॥
कोटियोजनविस्तारो यत्र देशास्तु वैष्णवाः ।
वैष्णवानां नगराणि बहूनि विविधानि च ॥२३॥
वैष्णवानां वसतयः सर्वसमृद्धिमया हि ताः ।
यानवाहनशकटविमानगरुडादिभिः ॥२४॥
व्योम्नि गच्छन्ति ते सर्वे वैष्णवाः प्रमदाजनाः ।
वसत्यभ्यन्तरे तत्र प्राकारः सप्तभूमिकः ॥२५॥
लक्षयोजनविस्तारश्चतुर्द्वाराष्टगोपुरः ।
वैष्णवपार्षदैः श्रेष्ठैर्वैष्णवाभिरधिष्ठितः ॥२६॥
चण्डादिद्वारपालाद्यैः कुमुदाद्यैः सुरक्षितः ।
नानामणिमयैर्दिव्यैर्गृहपंक्तिभिराजितः ॥२७॥
तदभ्यन्तरभागे तु नाम्ना देववती पुरी ।
वितता पंचपंचाशत्साहस्रयोजनाऽमितः ॥२८॥
वर्तुला तं च भवति प्राकारमनुसंस्थिता ।
शतयोजनसून्नतप्रासादकोटिभिर्वृता ॥२९॥
आरूढयौवनैर्दिव्यैः पुंभिः स्त्रीभिश्च शोभिता ।
नरा नार्यः समरूपाः श्रीविष्णोः प्रतिरूपकाः ॥३०॥
दिव्यस्रग्वस्त्रसद्भूषाश्चन्दनोत्तरचर्चिताः ।
स्नानभोजनशयनविहारकेलिभूमयः ॥३१॥
मनोरंजननाट्यानि गीतवादित्रशालिकाः ।
स्नाननर्मसुकन्दुकक्रीडाप्रदेशभूमिकाः ॥३२॥
आरामोद्यानविश्रान्तिद्यूतशालाप्रदेशकाः ।
गजाश्वगोवृषवैनतेयहंससुपंजराः ॥३३॥
प्रदेशाः श्रमनोदाय सन्ति तत्र सहस्रशः ।
कन्याशालास्तथा रम्या भक्तिशालास्तथाऽपराः ॥३४॥
पक्वान्नशाला विविधाः सुप्तिशालाश्च शोभनाः ।
शृंगारशाला रमणीरामाणि मन्दिराणि च ॥३५॥
भवन्ति विविधाः सर्वा राजमार्गोपमार्गकाः ।
सवृक्षचित्रशोभाढ्याः सत्कलशध्वजान्विताः ॥३६॥
भवन्ति सौम्यभवनसंघभागाः पृथक्पृथक् ।
स्त्रियश्च पुरुषाश्चात्र सर्वलक्षणशोभिताः ॥३७॥
मोदन्ते तत्र देवेशि ! भक्त्याह्लादमनोरमैः ।
लक्ष्मीनारायणमन्त्रजापका वैष्णवास्तु ते ॥३८॥
वैकुण्ठपदमाविश्य मोदन्ते मनसेप्सितम् ।
गत्वास्मिन्न निवर्तन्ते विष्णुना सह संस्थिताः ॥३९॥
लये प्राकृतिके ते तु यान्ति ब्रह्म सविष्णुकाः ।
अविच्छिन्ना गतिस्तेषां विष्णुना संगतिः शुभा ॥४०॥
विष्णुसमप्रसौख्यं च भुंजते तेऽपि सात्त्वताः ।
चतुर्भुजा नरा नार्यो न न्यूना विष्णुपद्मयोः ॥४१॥
यत्र यत्र हरेर्लोकास्तत्र गच्छन्ति ये जनाः ।
गत्वा पुनर्नचायान्ति संसारे यान्ति धाम तत् ॥४२॥
यथा भरतशत्रुघ्नलक्ष्मणाः शेषशारदाः ।
विष्णुलोकगताः सर्वे दिव्या भवन्ति सर्वथा ॥४३॥
ते यद्यायान्ति संसारे स्वेष्टलोकाद् यथेच्छया ।
न तु कर्मकृता तेषां गतिर्वा बन्धनं न वै ॥४४॥
यथाऽऽगतास्तथा यान्ति तत्पदं शाश्वतं परम् ।
न कर्मबन्धनं जन्म वैष्णवानां तु विद्यते ॥४५॥
विष्णोरनुचरत्वं वै मोक्षस्तत्र हि गण्यते ।
विष्णोर्दास्यं सदैवेति बन्धनं नान्यदस्ति हि ॥४६॥
सर्वबन्धननिर्मुक्ता हरेर्दासा महाबलाः ।
भक्त्या त्वनन्यया देवं भजन्ति करुणाम्बुधिम् ॥४७॥
सः सर्वज्ञानगुणवान् रक्षत्येव स्वकान् जनान् ।
श्रीमन्नारायणं मन्त्रं जप्त्वा सुखमयं परम् ॥४८॥
प्राप्नुवन्ति परं लोकं वैष्णवं सर्वकामदम् ।
देववत्याश्च पुर्याश्चाऽभ्यन्तरे वर्तुलेऽत्र वै ॥४९॥
प्रासादौ वैष्णवः सौधः शतशृंगैः सुशोभितः ।
महद्विमानरूपोऽयमन्तरीक्षे हि लभ्यते ॥५०॥

तत्र मणिमयस्तंभाः सहस्रसूर्यरश्मयः ।
दिव्यरत्नमया भित्तिप्रकाण्डा दिव्यभूमयः ॥५१॥
स्वर्णहीरकमण्याद्यैः कृतश्रृङ्गादिशोभिताः ।
प्रदेशाश्चन्द्रशालाश्च विभान्ति ब्रह्मधामवत् ॥५२॥
सर्वविभूतिसम्पन्नाः सर्वरूपरसान्विताः ।
ऊनषोडशवर्षाश्च नरा नार्यो वसन्ति च ॥५३॥
सर्वे ते वैष्णवास्तस्य हरेः प्रवरपार्षदाः ।
सर्वाश्च सुभगा दिव्याः पार्षदान्यो हरेः प्रियाः ॥५४॥
खानपानार्चनभोग्यस्पृश्यादिदिव्यऋद्धिभिः ।
न न्यूना भूमिका काचित्कामसंसिद्धभूतयः ॥५५॥
तत्र प्रासादमध्ये तु दिव्यं सिंहासनं शुभम् ।
पुष्पविमानवद्भाति तस्य पीठं हिरण्मयम् ॥५६॥
आधाराद्यशक्त्यधिष्ठिताऽष्टपत्राब्जमण्डले ।
नानावर्णसुरंगाढ्ये रत्नसिंहसाने वरे ॥५७॥
दिव्यो नारायणः श्रीमान् संस्थितो भगवान् हरिः ।
प्रातरुद्यत्सूर्यलक्षकोटितुल्यसरत्प्रभः ॥५८॥
रूपानुरूपावयवः कोटिकामप्रसुन्दरः ।
मणिस्वर्णविभूषाढ्यो हारवस्त्रादिभूषितः ॥५९॥
पूजितः प्रेमभक्ताभिः कामस्त्रीभिश्च सेवितः ।
वन्दितो वैष्णवैः सर्वैः राजते पुरुषः परः ॥६०॥
तस्य दक्षिणपार्श्वे च जगन्माता हिरण्मयी ।
सर्वलक्षणसम्पन्ना दिव्या द्वादशवार्षिकी ॥६१॥
मालाभूषासुवस्त्रादिमांगल्यद्रव्यचर्चिता ।
पद्मव्यजनचामरयुक्तहस्तानिशोभना ॥६२॥
सुधापानं वसुपात्रं मातुलुंगं धृतं करैः ।
राजते सर्वदा नारायणी सेवां करोति च ॥६३॥
वामतः पृथिवी देवी कान्ता कमललोचना ।
भूषाम्बरसुगन्धादिश्रृङ्गारादिविभूषिता ॥६४॥
संधृते चोर्ध्वकरयोः रम्ये रक्तोत्पले शुभे ।
अन्ययोः करयोर्धान्यपात्रे मांगल्यदे धृते ॥६५॥
एवं पृथ्व्या च लक्ष्म्या च पार्श्वयोः सेवितो हरिः ।
राजते तत्र देवेशो विमलादिकृतार्चनः ॥६६॥
विमला सुमतिः श्यामा सुशीला कुशला तथा ।
दीपावली जयन्ती च रमा भागीरथी तथा ॥६७॥
सुखा च कनका विद्युल्लता चन्द्रकला तथा ।
लक्षशः प्रमदास्तस्य सर्वलक्षणशोभिताः ॥६८॥
सेवन्ते स्म हरिं कान्तं तासां मध्ये स्थितं पतिम् ।
शंखचक्रगदापद्महारकेयूरकौस्तुभैः ॥६९॥
नुपूरांगदकटकमुकुटांगुलिभूषणैः ।
कुण्डलश्रृङ्खलामालाविभूतिभिर्विराजितः ॥७०॥
तत्रत्यैस्त्रिदशैर्नित्यैः सेवितः परमेश्वरः ।
आस्ते वैकुण्ठनगरे वैराजे नित्यभोगवान् ॥७१॥
इत्येवं पार्वति ! तेऽयं लोको वैकुण्ठसंज्ञकः ।
द्वितीयो दर्शितश्चाथ वक्ष्यामि तृतीयं शृणु ॥७२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने जलावरणोपरि द्वितीयवैकुण्ठवर्णने देवगंगादेवजयोद्यानराजमार्गतद्वैभवप्राकारदेववतीनगरीवैष्णवप्रासादविभूतिवैष्णवभक्तदासदासीरत्नसिंहासन नारायणतत्प्रियादिनिरूपणनामा सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥

श्रीनारायण उवाच—

शृणु लक्ष्मि ! ततो देवः शंकरः पार्वतीपतिः ।
कथयामास पत्नी स्वां व्यूहं तृतीयमुत्तमम् ॥ १ ॥
तृतीयमेतद्वैकुण्ठं श्वेतद्वीपाख्यमुच्यते ।
क्षीराब्धेरुत्तरं कूलं श्वेतद्वीपस्य भूमिका ॥ २ ॥
सन्दर्शनाय योगीन्द्रसनकादिमहात्मनाम् ।
सनकश्च सनन्दश्च तृतीयस्तु सनातनः ॥ ३ ॥
सनत्कुमारश्चतुर्थस्तथा सनत्सुजातकः ।
वोढुः पंचशिखश्चैव ब्रह्मणो मानसाः सुताः ॥ ४ ॥
ऋभुरष्टौ शुद्धसत्त्वा योगिनो सुमहौजसः ।
भगवद्दर्शनोद्भूतसुखैकरसवेदिनः ॥ ५ ॥
अन्येऽपि ऋषयस्तत्र तन्वाद्याश्च वसन्ति वै ।
नरनारायणाभ्यां च श्वेतद्वीपे वसन्ति च ॥ ६ ॥
तत्रत्यास्तु निरन्ना वै मुक्ताः सन्ति तपस्विनः ।
केचित्फलकृताहारा वाय्वाहाराश्च केचन ॥ ७ ॥
अन्ये मूलजलाहारा बाष्पाहाराश्च केचन ।
परे धूम्रकृताहाराः सूर्यकिरणभक्षकाः ॥ ८ ॥
चन्द्रकिरणपानाश्च पानाहारविवर्जिताः ।
शालत्वक्कृतवस्त्राश्च दिगम्बरनिवासिनः ॥ ९ ॥
पुंड्रकण्ठीनाममन्त्रमुद्राधारिण एव ते ।
नारायणं हरिं सर्वे भजन्ति च तपन्ति च ॥१०॥
विरक्ताः सर्वभोगेषु रागद्वेषविवर्जिताः ।
भक्त्याहारा भक्तिकार्याः कृष्णसत्संगमाश्रयाः ॥११॥
नरा नार्योऽपि तपसा क्षपयन्त्यशुभं स्वकम् ।
पुण्याः पुण्यतमाः सर्वे श्वेताः श्वेतकृतिप्रथाः ॥१२॥

सात्त्विकाः क्रोधकामादिवर्जिता मुक्तिभागिनः ।
अनन्तास्ते तपोऽर्थे वै वसन्ति वैष्णवा जनाः ॥१३॥
तेषां सन्दर्शनार्थाय तेषां सन्निहितो हरिः ।
कोटिचन्द्रसमे रम्ये नानामणिसुरत्नके ॥१४॥
श्वेतद्वीपे महायोगिजनैः संसेविते शुभे ।
नारायणः स्वयं त्वास्ते योगिनां दर्शिहेतवे ॥१५॥
तत्रोद्यानानि रम्याणि विशाला वनभूमयः ।
सौधाः रैवतसदृशा नद्यो देवनदीसमाः ॥१६॥
पारिजाताम्रकल्पद्रुकल्पवल्ल्यो भवन्ति च ।
फलपुष्पकन्दपत्रव्याप्तास्ता भूमयो मताः ॥१७॥
चतुर्दशस्तराणां ये ऋषयो मुनयस्तथा ।
साध्व्यश्च साधवश्चान्ये यान्त्यायान्ति दर्शिकृते ॥१८॥
सान्तानिकलता बह्व्यश्चन्दनानि बहून्यपि ।
सरःसु फुल्लपद्मानि स्थलपद्मादयस्तथा ॥१९॥
कुन्दबकुलशृंगारमालतीमल्लिकादयः ।
तृणराजनागरंगनारीकेलफलादयः ॥२०॥
पूगीलवंगजावंत्रीजीवफलवनादयः ।
बदरीकदलीजम्बूकर्मदाऽमृतजंबिराः ॥२१॥
वनेषु परितः सन्ति नानातोयालयानि च ।
कूपाश्च दीर्घिकाश्चैव शीतनिर्झरणानि च ॥२२॥
उष्णकुण्डा मिष्टखाता वनौषधिसुजीवनाः ।
भवन्ति द्वीपमध्ये वै द्वीपप्रान्तेऽपि सर्वथा ॥२३॥
आश्रमाः सन्ति मुक्तानां तापसानामितस्ततः ।
सकुटुम्बाश्च ऋषयो वसन्ति तत्र सात्त्वताः ॥२४॥
दर्शनभक्तिकार्यास्ते वन्यवस्तुप्रजीवनाः ।
दिव्याश्चन्द्रसमा रम्याः सौम्याश्चोज्ज्वलमूर्तयः ॥२५॥
ते वसन्ति श्वेतधाम्नि तत्रास्ति नगरी शुभा ।
नाम्ना ऐरावती बोध्या बहुप्रासादसंकुलाः ॥२६॥
दिव्यपुंस्त्रीभिराक्रान्ता रत्निविमानशोभिता ।
तत्र वसन्ति भक्ता वै सकुटुम्बा नराः स्त्रियः ॥२७॥
सर्वाः स्मृद्धय एवात्र संकल्पोत्था भवन्ति वै ।
विमानानि विहाराणि शयनानि धनानि च ॥२८॥
विविधान्येव सन्त्येव खनेर्यथा मिलन्ति हि ।
कल्पवृक्षैरवाप्यन्ते तपोबलविभावतः ॥२९॥
वैकुण्ठान्नहि किंचिद्वै न्यूनं स्मृद्धौ विभूतिषु ।
ऐरावत्यां सत्यलोकवासिनो मुनयोऽपि वै ॥३०॥
महरादिवसतयः स्वर्गस्था अपि देवताः ।
ऋषयो भूगताश्चान्ये मेर्वादिक्षेत्रकास्तथा ॥३१॥
पातालगामिनो दैत्या भक्तात्मानस्तु ये मताः ।
तेषां तत्र निवासा वै प्रासादाः सन्ति भूरिशः ॥३२॥
बालसूर्यनिभास्तुंगा वर्तुलाः सन्ति कोटिशः ।
विमानान्यब्धियानानि जलयानानि कोटिशः ॥३३॥
समुद्रतलयानानि मार्गयानानि लक्षशः ।
पर्वतारण्ययानानि भवन्त्यपि च कोटिशः ॥३४॥
राजमार्गा महाव्यासा हस्तिसद्वाजिवाहनाः ।
भवन्ति सर्वदा दिव्याः सुशोभा मदसिञ्चिताः ॥३५॥
तथाविधायाः पुर्यास्तु मध्ये वै मण्डपो महान् ।
दिव्योद्यानसमावृत्तो मणिकांचननिर्मितः ॥३६॥
चन्दनागुरुकर्पूरकुंकुमामोदगन्धितः ।
नानाकुसुमतोरणवितानैः समलंकृतः ॥३७॥
दिव्याप्सरः कृतावासः सामगानोपशोभितः ।
नृत्यगीतसमाजोत्कोत्सवजयादिनादितः ॥३८॥
नैसर्गिकभोग्यशालासहस्रक्लृप्तभूस्तरः ।
नवधाभक्तिसत्कार्याराधनार्थसुभूमिकः ॥३९॥
नारायणस्य पूजायाः सामग्रीभिर्बहुस्थलः ।
पानभोजनमर्दनलेपनार्हकृतगृहः ॥४०॥
वैष्णवीसेवनस्वीकारार्थकृतगृहान्तरः ।
स्वल्पमपि न वैकुण्ठान्न्यूनो वै वस्तुभिश्च सः ॥४१॥
विमानानि तु देवानामायान्ति यान्ति वायुना ।
संकुलो देवसंघैश्च राजाधिराजशोभनः ॥४२॥
मध्ये सिंहासनं तत्र नारायणकृतेऽस्ति वै ।
कोटिसूर्यसमाभं च मध्ये पद्मं शशिप्रभम् ॥४३॥
तत्र कोमलगद्दीकपार्श्वतूलादि कोमले ।
स्वर्णवर्णे मृदुलेऽत्र राजते तु स्वयं हरिः ॥४४॥
स्वर्णवर्णः स्वर्णमणिमुक्ताहारविभूषितः ।
शंखचक्रगदापद्महेतियुक्तकरोज्ज्वलः ॥४५॥
हारकेयूरकटकैरंगुलीयैः सुभूषितः ।
कांचनोज्ज्वलयुगलचरणाब्जविराजितः ॥४६॥
पूर्णचन्द्रनिभशुभ्रस्वल्पनखविराजितः ।
षोडशाब्दवयोरूपयौवनादिसुदर्शनः ॥४७॥
कृतोर्ध्वपुंड्रतन्मध्यसुगन्धिचन्द्रशोभितः ।
स्निग्धकबरीचंचद्वक्रकेशविराजितः ॥४८॥
दुग्धफेनशशिकान्तिसमसद्वस्त्रवेष्टितः ।
मुक्तामणिहीरकादिनद्धकुण्डलकर्णकः ॥४९॥
पद्मासनं शुभं कृत्वा समासीनो विराजते ।
तस्य नारायणप्रभोर्वामांके दिव्यरूपिणी ॥५०॥

द्वादशहायना लक्ष्मीः रूपे तस्यैव सदृशी।
राजते सर्वसौख्यार्हकृतश्रृंगारशोभना ॥५१॥
पद्मकिंजल्कसद्रूपा यौवनाऽऽवेगसेविता।
सर्वलक्षणसम्पन्ना शीलगुणगणाश्रया ॥५२॥
कांचनतारवसना सुगन्धिहारराजिता।
स्थलपद्ममालतीसत्कुसुमाञ्चितमूर्धजा ॥५३॥
चतुर्भुजैः राजमाना केयूरांगदभूषिता।
मुक्ताहारैः शोभमाना मन्दारकृतशेखरा ॥५४॥
निम्ननासा कुन्ददन्ता चंचत्कुण्डलकर्णिका।
कस्तूरीकृततिलका नासाधृतसुमौक्तिका ॥५५॥
सूक्ष्मसुवर्णकलशप्रख्यसुघट्टसुरतनी।
दिव्यसुगन्धिसद्देहा पुष्पमालादिशोभिता ॥५६॥
धृतकमलपुष्पादिरमणीया मनोहरा।
आदर्शमातुलुङ्गस्वर्णाब्जवस्त्रादिधृक्करा ॥५७॥
नारायणस्य पत्युर्वै चेतसाऽभीष्टकारिणी।
राजते श्रीहरेर्वामांकार्धभागे सदा प्रिया ॥५८॥
तत्सदृश्यस्तथा कृष्णयोग्याश्चान्याश्च शक्तयः।
विराजन्ते हि सेवायां नारायणपरायणाः ॥५९॥
ईशावास्या महादेवी जाह्नवी कमला रमा।
सावित्री च तथा शान्ता कान्ता ब्राह्मी सरोजिनी ॥६०॥
दास्यश्चापि तथा तत्र प्रज्ञा मेधा धृतिः क्षमा।
श्रद्धा च धारणा शान्तिः श्रुतिर्मनीषिणी स्मृतिः ॥६१॥
वृष्टिर्वृद्धिर्मतिर्वन्याः श्रियः कैंकर्यकारिकाः।
ततोऽन्याः कोटिशः पत्न्यः सन्ति नारायणस्य हि ॥६२॥
अनन्तो वैनतेयश्च हँसः करी सुवैष्णवाः।
अनन्ताः किंकराः सन्ति नारायणपरायणाः ॥६३॥
साध्या मरुद्गणाश्चैव विश्वेदेवाश्च किन्नराः।
विद्याधराश्च गन्धर्वा नारायणपरायणाः ॥६४॥
दासा दास्यश्च वर्तन्ते श्वेतद्वीपेऽत्र धामनि।
प्रासादेषु विमानेषु गृहेषु नगरेषु च ॥६५॥
वनेषूपवनेष्वेवं गृहोद्यानेषु चाम्बरे।
प्राकारेषु निकुंजेषु तटेषु तटिनीस्थले ॥६६॥
क्रीडन्ति नित्यसौख्याढ्या हेयनिष्फलवर्जिताः।
नारायणकृपालब्धदिव्यभोगानुरञ्जिताः ॥६७॥
नारायणसमा रूपगुणाकृतिवयोंऽघ्रिभिः।
ये विष्णुमन्त्रजसारो विष्णुस्मरणतत्पराः ॥६८॥
हरिवासरकर्तारस्तत्पदं यान्ति तेऽव्ययम्।
भक्त्या त्वनन्यया लभ्यो विष्णुलोकः सनातनः ॥६९॥
कीर्तनं नामगृणनं ध्यानं मन्त्रजपो हरेः।
तर्पणं होमकरणं विष्णोर्विष्णुपदप्रदम् ॥७०॥
तत्रत्या विष्णुसंकल्पसुखाधीनसुखार्थिनः।
नरा नार्यश्चावसाने महावैकुण्ठगामिनः ॥७१॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने तृतीयश्वेतद्वीपाख्यवैकुण्ठस्थऋषिमुनितापसनरनारीरत्नोद्यानैरावतीनगरीमण्डपविभूतिसिंहासनलक्ष्मीदासदासीप्रभृतिवर्णननामाऽष्टाविंशत्यधिकशततमोऽध्यायः ॥१२८॥

**श्रीनारायण उवाच—**

श्रृणु कान्ते ! ततः शंभुः पार्वतीं प्राह शोभनम्।
क्षीरसागरसंस्थानं वैकुण्ठं वै चतुर्थकम् ॥ १ ॥
दिवौकसां रक्षणार्थं दुग्धाब्धौ परमेश्वरः।
सदा शान्तिपरो देवो निद्रया योगसंज्ञया ॥ २ ॥
स्वात्मन्यवस्थितो नीलाम्बुजवर्णो हरिः स्वयम्।
वर्ततेऽभ्यन्तरतले दिव्यवासाय निर्मिते ॥ ३ ॥
वैकुण्ठे विस्तृते मत्स्यकूर्माऽऽविर्भावराजिते।
दुग्धाब्धौ मेदिनीपीठे नारायणस्य तेजसा ॥ ४ ॥
सुदर्शनेन चक्रेण स्तम्भिते क्षीरसुस्तरे।
जातानि भूतलान्यत्र दुग्धधवलभूमिकाः ॥ ५ ॥
दुग्धानामेव पक्वानां प्राकाराणां चतुष्टयम्।
वितानप्रस्तरं दिव्यं दुग्धानामेव निर्मितम् ॥ ६ ॥
भित्तयो गोपुराः सौधाः प्रासादा वनराजयः।
मार्गोपमार्गाः पन्थानो वृक्षवल्लीवनानि च ॥ ७ ॥
मणयो भूषणान्यत्र वासांसि भोजनानि च।
पेयानि शयनान्येव यानानि वाहनानि च ॥ ८ ॥
दुग्धोत्पन्नानि सर्वाणि नारायणसमीहया।
प्रदीपा मणयस्तत्र फलानि क्षीरजानि च ॥ ९ ॥
पुष्पस्रक्चन्दनादीनि गन्धद्रव्याणि यानि च।
कज्जलादीनि सौभाग्यद्रव्याणि दुग्धजानि वै ॥१०॥
लक्षयोजनविस्तारो मण्डपो दुग्धनिर्मितः।
दुग्धस्फटिकमाणिक्यमणिरत्नादिनिर्मितः ॥११॥
धवलो ब्रह्मतेजोवत् दिव्यो ब्रह्मविभूतिवत्।
महावैकुण्ठवत् सौख्यः शान्तिदो ब्रह्मलोकवत् ॥१२॥
तत्रानेके रंगसौधा भक्तानां वासहेतवे।
भवन्ति श्रीहरेः कामनया दिव्याः सुऋद्धयः ॥१३॥

न न्यूनं किंचिदत्रास्ति भोग्यकरणसाधनम् ।
तन्मध्ये तु सहस्रास्यः शेषोऽनन्तो व्यवस्थितः ॥१४॥
धवलः कोमलः स्निग्ध उष्णः शय्याधिकारवान् ।
शरीरवलयैस्तत्र कृतशय्यो हरेः कृते ॥१५॥
फणाभिश्च सहस्रेण कृतच्छत्रो हरेः कृते ।
पुच्छेन कृतसोपानस्तत्राऽऽरोढुं हरेः कृते ॥१६॥
फणास्थमणिभिस्तत्र कृतदीपो हरेः कृते ।
तस्मिन्ननन्तपर्यंके शेतेऽसौ कमलापतिः ॥१७॥
नूत्नयुवा श्यामलश्च पीताम्बरधरो हरिः ।
सकेशमुकुटमूर्धा हारकौस्तुभराजितः ॥१८॥
यज्ञोपवीतपुंड्राऽब्जजलभूचक्रहेतिमान् ।
सगदः सगरुडश्च वनमालाविराजितः ॥१९॥
लक्ष्मीमर्दितचरणः कटकांगदभूषितः ।
स्फुरद्रक्तारविन्दाभहस्तांघ्रितलशोभितः ॥२०॥
रशनापादुकोर्मिकाश्रृंखलाभूषणान्वितः ।
खड्गचर्मशार्ङ्गशक्तिनाराचपरिधान्वितः ॥२१॥
हरिचन्दनकुंकुमकस्तूर्युत्तमपूजितः ।
कल्पमन्दारबकुलपारिजातादिपुष्पवान् ॥२२॥
समोन्नतसुनासांसजानुभालविराजितः ।
किंकिणीजालनुपूरधृतांऽघ्रिनखकान्तिमान् ॥२३॥
अशोकपुष्परक्तौष्ठः पूर्णचन्द्रनिभाननः ।
मौक्तिकदन्तसंशोभस्मितवक्त्रमनोहरः ॥२४॥
आरूढयौवनाऽऽपूरः शरण्यः शरणार्थिनाम् ।
परिश्रान्त इव शेते विरामे इव सर्वदा ॥२५॥
दैत्यैः सह सुयुद्धानि कृत्वा शेते पुनःपुनः ।
सदृशी तस्य लक्ष्मीस्तु रूपशीलगुणादिभिः ॥२६॥
स्वर्णसदृशसद्रूपा तप्तकांचनभूषणा ।
सेवायां सर्वदा तत्र शय्यायां सह वर्तते ॥२७॥
विशालाक्षी मृगाक्षी सा तरुणी तनुमध्यमा ।
रूपलावण्यमाधुर्यकान्तिशीलगुणान्विता ॥२८॥
दुग्धफेनप्रभाशाटीकंचुकीनक्तशोभिता ।
मन्दारकेतकीजातीपुष्पाञ्चितशिरोरुहा ॥२९॥
तैलसुगन्धिचिपिटसूचीकबरीधम्मिला ।
कस्तूरीकृततिलका रत्नतन्तीसुशोभिता ॥३०॥
नानामौक्तिकरत्नाढ्यकर्णभूषणभूषिता ।
पक्वबिम्बप्रवालादिरक्तभासाधरान्विता ॥३१॥
कट्यालम्बिनीलवक्रस्निग्धकेशैरलंकृता ।
स्वल्पोन्नतदृढपीनगण्डश्रोणिपयोधरा ॥३२॥
ईषदुन्नतसूज्ज्वलमृदुलोककपोलका ।
चतुर्हस्तैः राजमाना प्रेमापगाप्रवाहिणी ॥३३॥
उद्वाहुभ्यां धृतवती हेमपद्मयुगं शुभम् ।
इतराभ्यां क्वचित्प्रेम्णा समाश्लिष्य पतिं स्थिता ॥३४॥
वर्तते नित्यसेवायां लक्ष्मीर्देवी हरेः प्रिया ।
तथाऽन्यास्तुल्यरूपाश्च नर्मदा तपती तथा ॥३५॥
तुंगभद्रा च कावेरी गंगा गोदावरी तथा ।
सिन्धुः फल्गुर्गण्डकी च ताम्रपर्णी सरस्वती ॥३६॥
करतोया कर्मनाशा साभ्रमती च गोमती ।
ओजस्वती भद्रावती सरयूः स्वर्णरक्षिका ॥३७॥
इन्द्रद्युम्नं पुष्करं च नारायणसरस्तथा ।
अश्वपट्टसरश्चैवाऽख्यातान्यन्यानि यानि वै ॥३८॥
मानसं च सरो रामसरः कृष्णसरस्तथा ।
मत्स्यसरस्तथा शोणो ब्रह्मपुत्रश्च गर्गरः ॥३९॥
एवं नदाश्च नद्यश्च सरांसि सागरास्तथा ।
क्रौंचमैनाकहीमाद्रिविन्ध्यमन्दररैवताः ॥४०॥
पर्वताः पृथिवी देवी वरुणोऽन्ये च वैष्णवाः ।
मार्कण्डेयो बलिर्द्रोणोश्वत्थामहनुमद्वराः ॥४१॥
निमिर्बिभीषणः पर्शुरामो व्यासो मनुस्तथा ।
सत्यव्रतश्च नन्दश्च गयश्च तल इत्यपि ॥४२॥
एते चान्येऽपि देवाद्या दिव्या नारायणाश्रिताः ।
वर्तन्ते दिव्यवपुषः क्षीरसागरमण्डपे ॥४३॥
दुग्धाब्धौ निर्मिते तत्र वैकुण्ठे वर्तते प्रभुः ।
दैत्यैर्वध्यमानैर्हि ब्रह्मरुद्रादिभिः सुरैः ॥४४॥
संस्तूयमानो देवेशो गरुडेन विराजितः ।
दैत्यांश्च राक्षसान् हत्वा पुनरेत्याऽत्र तिष्ठति ॥४५॥
शेषाख्यशयने शेते दासदासीप्रसेवितः ।
इत्येवं पार्वति देवि ! सर्वं ते विनिवेदितम् ॥४६॥
वृत्तयश्चेन्द्रियाणां तु जायन्ते कुण्ठिता यदा ।
यदा तदा तत्रैव वैकुण्ठं बोद्धव्यं मोक्षमिच्छता ॥४७॥
धन्याऽसि कृतकृत्याऽसि भक्तासि पुरुषोत्तमे ।
इत्येवं बहुधा व्याप्तं जानासि व्यूहवैभवम् ॥४८॥
अहं भजामि देवेशि ! तं श्रीनारायणं हरिम् ।
मया तुभ्यं प्रमोक्षार्थे साधनं शरणागतिः ॥४९॥
समन्त्रा च समुद्रा च सकण्ठी सोर्ध्वपुंड्रका ।
साऽभिधा कथिता पाल्या यया मुक्तिर्भवेदिति ॥५०॥
ज्ञानाद्ध्यानाच्च तपसो योगाद्यज्ञाद्विरामतः ।
जपाच्छ्रवात्तथा न स्याद्यथा मुक्तिस्तदर्पणात् ॥५१॥

तद्वदात्मनिवेदित्वं गृहाण त्वं मम प्रिये ।
तेन मुक्तिध्रुवा भाव्या ब्राह्मीश्रीहर्यनुग्रहान् ॥५२॥
एवं शंभुर्ददौ दीक्षां स्वीयपत्न्यै तु वैष्णवीम् ।
तत आरभ्य सा नित्यं लक्ष्मीनारायणस्य वै ॥५३॥
पूजा कृत्वाऽर्पणं कृत्वा गृह्णात्यन्नं जलं च वा ।
ततस्तौ वैष्णवौ भक्तौ पार्वतीपरमेश्वरौ ॥५४॥
ममैवाराधनपरौ मदर्थात्मनिवेदिनौ ।
ममैवानुचरौ शिष्यौ मदात्मानौ मम प्रियौ ॥५५॥

**श्रीलक्ष्मीरुवाच—**

यदि तौ वैष्णवौ देवौ त्वय्येवात्मनिवेदिनौ ।
कथं भस्मत्रिपुंड्ररुद्राक्षान्दधाति शंकरः ॥५६॥
सोयं मे संशयो जातस्तन्निषूदय सत्यते ।
न ज्ञाता विष्णुतां जह्याद् भवेदन्यत्तु कारणम् ॥५७॥
इत्याश्रुत्य हरिर्लक्ष्मीमुवाच तत्कथानकम् ।
कथं भस्मत्रिपुंड्रादि बाह्ये दधाति शंकरः ॥५८॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने क्षीरसागरे चतुर्थवैकुण्ठवसानमण्डपदिव्यभोगशेषतल्पलक्ष्मीनदनदीपर्वतादिचिरंजीविवैष्णवभक्तादिवैष्णवशंभुकृतभस्मत्रिपुंड्रादिधारणशंकाप्रदर्शननामैकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! यथा पृष्टं त्वया मह्यं तथैव हि ।
पार्वत्याऽपि हरायेदं पृष्टं भस्मादि किं धृतम् ॥ १ ॥
शंभुः प्राह तदा देवीं कथां रम्यां पुरातनीम् ।
सकारणां शृणु त्वं तामासुराणां तु मोहिनीम् ॥ २ ॥
पार्वत्युवाच गुह्यं ते पृच्छामि देव शंकर ! ।
मयि प्रीत्या समाचक्ष्व संशयो वर्तते भृशम् ॥ ३ ॥
कपालभस्मचर्मास्थिधारणं बहुगर्हितम् ।
तत्त्वया धार्यते शंभो गर्हितं केन हेतुना ॥ ४ ॥
स्त्रीचापल्येन देवेश पृच्छामि त्वां महामते ।
अप्रष्टव्यमपि प्रश्नं क्षन्तुमर्हसि मे प्रभो ॥ ५ ॥
इति देव्या हरः पृष्टो रहस्ये जनवर्जिते ।
उवाच परमं गुह्यं यद्यदाचरितं स्वकम् ॥ ६ ॥
शृणु देवि प्रवक्ष्यामि गुह्याद्गुह्यतरं परम् ।
अपृथक्त्वाच्छरीरस्य वक्ष्यामि तव सुव्रते ॥ ७ ॥
न वक्तव्यं त्वयाऽन्यत्र वा जनेषु कथञ्चन ।
नमुच्याद्या महादैत्याः खलाः स्वायंभुवेऽन्तरे ॥ ८ ॥
महाबलपरीवारा महावीर्या महौजसः ।
यदासंस्तैरर्दिताश्च भग्ना इन्द्रपुरोगमाः ॥ ९ ॥
विष्णोः समीपमागत्य रक्षणं वव्रिरे सुराः ।
अजेयान्सुमहावीरान्तपोनिर्धूतकल्मषान् ॥१०॥
त्वमेवैतान्महादैत्यान् जेतुमर्हसि केशव ! ।
इत्याकर्ण्य हरिस्तेषां देवानां भयमागतम् ॥११॥
तानवध्यान्विदित्वाथ शंकरं प्राह मां हरिः ।
त्वं हि रुद्र महाबाहो मोहनार्थे सुरद्विषाम् ॥१२॥
पाखण्डाचरणं किंचिद्धर्मं कुरुष्व मोहकम् ।
येन पथा गता दैत्या निर्बलाः स्युरधोगताः ॥१३॥
बलहीना भवेयुश्च निस्तेजस्काश्च सर्वथा ।
यथा स्वकर्मभ्रष्टाँस्तान्पतितान्मृतसदृशान् ॥१४॥
देवा विजित्य सुखिनो भवेयुः शून्यकण्टकाः ।
धर्मं पाखण्डमूर्धन्यं ग्रन्थान्पाखण्डकल्पितान् ॥१५॥
दैत्यमोहकरान्विष्णुविरोधिप्रवरान्कुरु ।
मलिनान्यपि चिह्नानि कल्पितानि तथा कुरु ॥१६॥
यथा वै तामसानां तत्सर्वं सुरुचिकं भवेत् ।
तवोपदेशात्ते शास्त्रात्तव कल्पितवर्तनात् ॥१७॥
तामसास्ते विनष्टा वै भविष्यन्ति स्वभावतः ।
अहं विष्णुस्तथा देवा दैत्यविश्वासहेतवे ॥१८॥
त्वया कृतं च तत्सर्वं किंचित्कालं च बाह्यतः ।
समनुमोदयिष्यामस्तेन विश्वासमागताः ॥१९॥
दैत्यास्तं कल्पितं सर्वं पाखण्डं पातकारणम् ।
सत्यधिया ग्रहीष्यन्ति ततोऽस्मद्विजयो भवेत् ॥२०॥
इत्याज्ञाग्रहणार्थं वै शंभु प्राह तदाऽच्युतम् ।
त्वयोदितमिदं देव ! करोमि यदि भूतले ॥२१॥
तेन नाशोऽपि मे नाथ भवेदेव भयावहः ।
न शक्यं हि मया कर्तुमेतत्कृत्यं त्वदाश्रिणा ॥२२॥
त्वदाज्ञापि च नोल्लंघ्या ह्येतद्दुःखतरं महत् ।
एवमुक्तस्तदा देवः समाश्वास्य च मां पुनः ॥२३॥
प्राह शंभो न ते नाशो भवेद्यत्तेऽस्मि रक्षकः ।
देवतानां हितार्थाय कुरुष्व वचनं मम ॥२४॥
ममाज्ञया कुरु शंभो न ते बाधो भविष्यति ।
कर्ता सन्नपि निर्बाधो ह्यकर्ता मम शासनात् ॥२५॥
जपन्नामानि नित्यं मे मदाज्ञयाऽनुसंचरन् ।
करोति लौकिकं वापि नैव बध्नाति मानवः ॥२६॥

हृदये मां स्मरन् शाश्वज्जप मन्त्रं मदर्थकम् ।
'ओं हरये नम' इतिमन्त्रं ब्रह्म समाचर ॥२७॥
ज मां भक्तिलभ्यं त्वं कुरु कार्यं मदर्थितम् ।
ममाज्ञैव महान् धर्मो मद्भक्तस्य मया कृतः ॥२८॥
कामः क्रोधस्तथा लोभो वंचना कपटं घृणा ।
अशुभं वा च हिंसा वा मयोक्तं धर्म एव सः ॥२९॥
मया यदुक्तं साक्षाद्वै स एव वेद उच्यते ।
प्रत्यक्षं वा परोक्षं वा मदुक्तं वेद एव सः ॥३०॥
यदा नियुञ्जे कुर्विति तदा धर्मस्तु तन्मयः ।
यदा रुणध्मि मा कुरु तदा धर्मो निवर्तना ॥३१॥
तस्मान्ममाज्ञा धर्मः स्यादनाज्ञा तद्विपर्ययः ।
कुरु शंभो तव कृतं पूजयिष्ये युगे युगे ॥३२॥
तेन दैत्यास्तामसाश्च पूजयिष्यन्ति ते कृतम् ।
यथाऽहं च तथा त्वं वै निर्लोपोऽसि सदा प्रभुः ॥३३॥
शीघ्रं कुरु हितं विघ्नान् नाशयिष्याम्यहं तव ।
मदन्यदेवताभक्तिर्न ते शंभो भविष्यति ॥३४॥
मनसैवाऽर्चय मां वै यावत्कालं प्रयोजनम् ।
मदाज्ञां कुरु मत्प्रीत्या सर्वमेतच्छुभं तव ॥३५॥
इति सन्दिश्य मां देवि ! विससर्ज मरुद्गणान् ।
मयापि चिन्तितं तत्र कियत्याखण्डकल्पनम् ॥३६॥
येन दैत्या मोहिताः स्युर्निर्बलाश्चरणात्तथा ।
ततो देवहितार्थाय दैत्यसंहारहेतवे ॥३७॥
कपालचर्म भस्माऽस्थिधारणं वै कृतं मया ।
त्रिपुंड्ररेखारुद्राक्षधारणं वै कृतं मया ॥३८॥
बाह्यतस्तानि सर्वाणि धारयामि न चान्तरम् ।
अन्तःप्रविश्य देवेशि ! तुलसीकण्ठमालिकाम् ॥३९॥
ऊर्ध्वपुंड्रं तथा मुद्रां वैष्णवांकानि सर्वथा ।
धारयामि प्रगुप्तानि यथा दैत्या विदुर्नहि ॥४०॥
नारायणहरेराज्ञा मम धर्मः सनातनः ।
दैत्यानां च प्रतीत्यर्थं पाखण्डमिश्रितानि वै ॥४१॥
तामसानि शैवपाशुपततन्त्राणि निर्ममे ।
तानिमान्मत्कृतग्रन्थानालम्ब्य च विलोक्य माम् ॥४२॥
भगवद्विमुखाः सर्वे भवन्ति दैत्यतामसाः ।
भस्मादिधारणं कृत्वा मांसाऽसृक्चन्दनादिभिः ॥४३॥
मामेव पूजयन्ति स्म महोग्रतमसाऽऽवृताः ।
सर्वधर्मपरिभ्रष्टाः कामक्रोधसमन्विताः ॥४४॥
मत्तो वरप्रदानानि लब्ध्वा विषयवर्तिनः ।
सत्त्वहीनाश्च निर्वीर्याः शनैर्यान्त्यधमां गतिम् ॥४५॥
भस्मादिधारणं ये मे मतं गृह्णन्ति तामसाः ।
सर्वधर्मैस्तु रहिताः पश्यन्ति निरयं हि ते ॥४६॥
दैत्यास्तु तामसाः सर्वे तथा चान्येऽपि तन्मताः ।
सर्वदा देवैर्जिता दैत्या नश्यन्ति सर्वथा ॥४७॥
एवं देवहितार्थाय वृत्तिर्मे देवि ! गर्हिता ।
विष्णोराज्ञां पुरस्कृत्य कृतं भस्मास्थिधारणम् ॥४८॥
बाह्यचिह्नमिदं देवि ! मोहनार्थाय विद्विषाम् ।
अभ्यन्तर्हृदये नित्यं ध्याये नारायणं हरिम् ॥४९॥
जपन्नेव च तन्नाम सदानन्दगुणाकरम् ।
सुखमात्यन्तिकं ब्रह्म ह्यश्नामि च त्वया सह ॥५०॥
ततो भक्ता ह्यसत्त्वस्था भस्माद्यं चार्पयन्ति मे ।
जानन्ति तामसा ये ते शंभोर्भस्मादिकं प्रियम् ॥५१॥
मामपि तामसं देवं मन्यन्ते ते तथाविधाः ।
तामसान्यर्पयन्ति मे भंगागंजादि तामसम् ॥५२॥
अहं तु वैष्णवो देवि ! न गृह्णाम्यनिवेदितम् ।
विष्णुप्रासादिकं पुण्यं गृह्णामि नान्यदित्यतः ॥५३॥
मा त्वं मोहे पत देवि ! तामसं मा गृहाण च ।
सात्त्विकं सेवय देवि ! वैष्णवी ह्यसि सर्वथा ॥५४॥
मया नारायणायैवाऽनिवेद्य गृह्यते नहि ।
किन्तु मया हरेरग्रे प्रतिज्ञातं तु भक्तितः ॥५५॥
स्वामिभोग्यं च यद्वस्तु दासभोग्यं न तद्भवेत् ।
एवं धर्मं समाश्रित्याऽनिवेद्य नहि भुज्यते ॥५६॥
भुज्यते स्वाम्यभोग्यं यद्धत्तूरकुंकुमादिकम् ।
तदाज्ञयेति नैव स्यादात्मनिवेदने क्षतिः ॥५७॥
भस्मास्थिधारणाद्या वै दैहिक्यशुद्ध्यमंगला ।
सापि शुद्धिर्मंगला तन्नामजापात् तदाज्ञया ॥५८॥
इत्येतत्ते समाख्यातं तामसांकादिधारणम् ।
सहेतुकं महादेवि ! ज्ञात्वा नाऽत्र विमुह्यसि ॥५९॥
अशुद्धिर्हिंसनं यत्र मारणोच्चाटनादिकाः ।
मन्त्राश्च तामसी पूजा यत्र स्यात्तद्धि तामसम् ॥६०॥
तन्न ग्राह्यं महादेवि ! मोक्षार्थिभिः कदाचन ।
विनाशान्तं दुःखदं वै सर्वथा तामसं यतः ॥६१॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने वैष्णवशंभोर्वैष्णवीपार्वत्या भस्मास्थिकपालादिधारणस्य कारणप्रश्नेऽसुरविमोहनाय विष्णोराज्ञया तदितिवृत्तान्तकथननामा त्रिंशदधिकशततमोऽध्यायः ॥१३०॥

**श्रीनारायण उवाच—**

श्रीहरेरवताराणां वैभवानां च सर्वथा।
याथातथ्यं नवै वेत्तुं शक्नोतीह तु कश्चन ॥ १ ॥

**श्रीलक्ष्मी रुवाच—**

ननु दैत्याश्च के ह्यासन् कस्य बलेन वर्धिताः।
किं निमित्तं समुत्पाद्य विष्णुना मारिताश्च ते ॥ २ ॥
विष्णोः सम्बन्धतः पूतां कथां पापप्रणाशिनीम्।
श्रोतुमिच्छाम्यवतारान् श्रीविष्णोः परमात्मनः ॥ ३ ॥

**श्रीनारायण उवाच—**

शृणु देवि! प्रवक्ष्यामि मत्स्यरूपं सनातनम्।
ब्रह्माऽसृजत्प्रजाधीशान् प्रथमे सृष्टिसर्जने ॥ ४ ॥
भृगुं मरीचिमत्रिं च दक्षं कर्दममित्यपि।
पुलस्त्यं पुलहं चैवाऽङ्गिरसं च तथा क्रतुम् ॥ ५ ॥
मरिचिर्भगवाँस्तत्र जनयामास कश्यपम्।
कस्यपस्य चनस्तो वै पत्न्यो जाता विजातिकाः ॥ ६ ॥
अदितिश्च दितिश्चापि कद्रूश्च विनता तथा।
अदितेस्तु सुताः सर्वे देवा वै शुभदर्शनाः ॥ ७ ॥
दितेः पुत्रास्तु दैत्या वै तामसाऽसुरराक्षसाः।
दितिस्तु चैकदाऽऽसीना ग्रीष्मे स्वपतिना सह ॥ ८ ॥
विमानवरमारुह्य समुद्रतीरमागता।
कश्यपेन सह तत्र निषसाद महीतले ॥ ९ ॥
समुद्रजलसम्मिश्रशीतलानिलयोगतः ।
चकमे स्वपतिं देवी कामवेगेन पीडिता ॥१०॥
पतिं सा सेवयामास पादसंवाहनादिभिः।
सुमृदुवालुकायुक्ते वृक्षवल्ल्यादिदर्शने ॥११॥
शीतसलिलबिन्द्वाक्तपवनैः शीतलीकृते।
सुखदे तत्तटे सेवां करोति रतिविह्वला ॥१२॥
विविधन्तु रतेः सौख्यं ददाति पतये यदा।
सूर्यस्याऽस्तमनपूर्वं तदैव जलजन्तवः ॥१३॥
मकराश्च जलघोटाः कच्छपा जलमानवाः।
पवनार्थे च तापार्थे निषीदन्ति तटं गताः ॥१४॥
सायंतनरवेर्योगात्प्रकाशन्ते सुवर्णवत्।
वालुकायां तटे तत्र नक्रैश्च जलघोटयोः ॥१५॥
कश्यपप्रस्तावकाले तु कलहोऽभूत्सविग्रहः।
दितिकश्यपयोर्दृष्टिर्गता मकरघोटयोः ॥१६॥
तदैव च निषेकोऽपि समभूत् सफलः स्थले।
निषेके यादृशी दृष्टिर्बुद्धिश्च यादृशी भवेत् ॥१७॥
तादृशो जायते गर्भो रूपसंस्कारतादृशः।
तेन देहो मकरवत् मस्तकं घोटवत्तथा ॥१८॥
गर्भे संस्कारतां प्राप्य स्थितोऽभूद्बालकः स हि।
दम्पती स्वविमानं तु समारुह्य गृहं प्रति ॥१९॥
समागतौ स्मरन्तौ तं मकरं जलघोटकम्।
विमानदर्शनाद्वारिप्राणिनो विविशुर्जलम् ॥२०॥
तद्भावभावितं गर्भं सुषुवे समये दितिः।
देहे तु मकराकारं मस्तके हयसदृशम् ॥२१॥
हयग्रीवो मकरोऽयं कश्यपेन सुसंस्कृतः।
भूवासोऽपि विशेषेण जलावासोऽभवद्धि सः ॥२२॥
उपनीतः कश्यपेन मात्रा भीक्षाप्रदापितः।
कामरूपधरो बालो वेदाध्ययनवांछया ॥२३॥
ब्राह्मणं रूपमास्थाय जगाम च पितामहम्।
प्रणिपत्य च सामुद्ररत्नोपहां निधाय च ॥२४॥
ययाचे वेदविद्यां सकपटो विप्ररूपधृक्।
ब्रह्मा पप्रच्छ पितरौ नामसंस्कारप्रभृति ॥२५॥
अहं कश्यपदायाद इत्याह प्रपितामहम्।
ब्रह्मापि स्वीयपुत्रस्य मरीचेश्च सुतस्य वै ॥२६॥
कश्यपस्य सुतं वेदान् प्रपौत्राय ददौ तदा।
वेदान्नीत्वा हयग्रीवो जगाम काश्यपं गृहम् ॥२७॥
पिताऽभूत्सुप्रसन्नो वै कश्यपः पण्डितं सुतम्।
विलोक्य प्राह पुत्र त्वं चान्यानध्यापयेति हि ॥२८॥
हयग्रीवस्तदा प्राह नाऽहमध्यापये पितः।
वेदविद्या न दातव्या कस्मैचिदपि सर्वथा ॥२९॥
वेदैः समेधिता देवा विरुध्यन्त्यसुरान्मुहुः।
वेदास्तु सर्वथा नाश्या न पोष्या वै कदाचन ॥३०॥
वेदैर्यज्ञाः प्रवर्तन्ते धर्मकर्मापि चापि वै।
यज्ञाश्च धर्मकर्माणि मृषा सन्ति यतः पितः ॥३१॥
मया विधिनिषेधौ तु वेदे दृष्टौ पुनः पुनः।
तौ सदा निग्रहकरौ निग्रहो मे न रोचते ॥३२॥
भक्ष्यं सर्वं तथा पेयं माद्यं भोग्यं यथेष्टकम्।
न विधिर्न निषेधो वै चास्माकं बलिनां भवेत् ॥३३॥
तस्मान्न पाठयिष्येऽन्यान्न वर्तिष्ये विधानवत्।
नाशयिष्ये वेदविद्या ध्वंसयिष्ये नु पाठकान् ॥३४॥

अर्दयिष्ये वैधजनान् मारयिष्ये क्रतुस्थितान् ।
कर्मकाण्डान् करिष्ये न वर्तयिष्ये ततोऽन्यथा ॥३५॥
इतिवदन्तं पुत्रं तं समाकर्ण्य च कश्यपः ।
शुशोचाऽसुरभावं तं स्वालयाऽमधिकारिणम् ॥३६॥
नास्तिकं ज्ञानहर्तारं वेदविद्याविनाशकम् ।
वेदस्तेनं पशुप्रायं देवपुष्टिविरोधिनम् ॥३७॥
ईर्ष्याज्वरं भाविसौख्याऽप्रदं सर्वस्वहानिदम् ।
कश्यपस्तं तपोविद्याकुपात्रं परिचिन्त्य च ॥३८॥
गृहान्निष्कासयामास दितिमापृच्छ्य सर्वथा ।
दैत्यो हयशिराः सोऽपि माकरं रूपमास्थितः ॥३९॥
उवास च महाब्धौ वै भक्षयन् जलवासिनः ।
पर्वतेषु प्रदेशेषु गत्वा गत्वा क्रतुस्थलम् ॥४०॥
नाशयामास यज्ञान्वै विप्रान्धर्मान्मुहुर्मुहुः ।
ब्राह्मणानां समाजे वै भक्षयामास भूसुरान् ॥४१॥
देवरूपं सुरूपं च धृत्वा स्वर्गं जगाम सः ।
दारापत्यगृहाण्याशु देवानां स जहार च ॥४२॥
ऋषीणामपि संवासान् विनाश्याऽर्दनमाचरत् ।
ततो देवर्षिभिर्गत्वा ब्रह्मा तन्नाशनेऽर्थितः ॥४३॥
ब्रह्मा सस्मार देवेशं दैत्यनाशकरं हरिम् ।
क्षीरसागरसद्रत्नमण्डपे शेषशायिनम् ॥४४॥
तदा नारायणो लक्ष्मीं हित्वा चक्रं प्रगृह्य च ।
गदां खड्गं तथा शक्तिं नीत्वा युद्धाय चागमत् ॥४५॥
यत्र ब्रह्मा स्थितो दुग्धसागरस्य तटेऽभवत् ।
तत्र विष्णुः स्वयं चाजं ददर्श युद्धरूपधृक् ॥४६॥
गरुडे सुस्थितो देवः प्राह शीघ्रं प्रजापतिम् ।
कथं वै स्मारितो ब्रह्मन् वद शीघ्रं करोमि तत् ॥४७॥
ब्रह्मोवाच नमस्तुभ्यं देववेदमयाऽच्युत ! ।
गरुडवाहनोद्धर्तः सृष्टिपुष्टिविनष्टिकृत् ॥४८॥
त्वमेव दधसे रूपं जगद्रक्षणहेतवे ।
विप्रवेदक्रतुगोभूधर्मत्राता त्वमेव हि ॥४९॥
त्वमेव सर्वधर्माणामाश्रयः पुरुषोत्तम ! ।
त्वमेव यज्ञो विद्या च वेदाश्चासि त्वदुद्गमाः ॥५०॥
त्वदाधारं जगत्सर्वं त्वदायत्ता महर्षयः ।
त्वदायत्ता वयं सर्वे निषेधविधिवर्तनाः ॥५१॥
त्वदाज्ञयैव सर्वत्र वर्तयिष्यामहे जनान् ।
तमिमं मार्गमालम्ब्य वर्तसे पुरुषोत्तमः ॥५२॥
त्वयैव प्रेरिता लोका वर्तन्ते साध्वसाधुषु ।
मर्यादा त्वत्कृता रक्ष्या धर्मोऽस्माकमिति ध्रुवम् ॥५३॥

अधीत्य वेदान् गुरुतः ततश्चाध्यापयेत् शिशून् ।
धर्मान्प्रवर्तयेत्तत्स्थानित्याज्ञा पारमेश्वरी ॥५४॥
तां मर्यादां समुल्लंघ्य काश्यपो माकरोऽसुरः ।
हयास्यः स्वेच्छया वै संवर्तते देवदुःखदः ॥५५॥
वेदानाहृत्य दैत्यः सः प्रविष्टोऽस्ति महार्णवम् ।
वेदाधारमिदं सर्वं वेदैर्धर्मपरिष्कृतिः ॥५६॥
वेददर्शितकरणात्सर्वा तृप्तिः प्रजायते ।
तस्मादसुरमाहत्य नास्तिकं विधिनाशकम् ॥५७॥
ततो वेदान्समानेतुं त्वमेवार्हसि केशव ! ।
एवमुक्तो हृषीकेशो ब्रह्मणा परमेश्वरः ॥५८॥
प्राह शान्तिं कुरु ब्रह्मन् गरुडश्चात्र तिष्ठतु ।
गच्छामि जलयोग्यं वै रूपमास्थाय वारिधिम् ॥५९॥
ऋषीन् नत्वा स्वयं नारायणो मत्स्यो बभूव ह ।
महातिमिंगिलगिलो तीक्ष्णतुण्डो ह्यपूर्वकः ॥६०॥
हिमाद्रिसदृशदेहो बभूव स क्षणान्तरे ।
मकरान् शिखरप्रायान् भक्षयन् जलमाविशत् ॥६१॥
समुद्रः क्षोभितस्तेन चकम्पे पृथिवी मुहुः ।
मेघाश्चैवाऽपतन्व्योम्नो ग्रहाश्चक्षुभिरे तदा ॥६२॥
देवा महर्षयस्तत्रागत्य तुष्टुविरे हरिम् ।
नारायणः समुद्रान्तस्तलमाविश्य सर्वतः ॥६३॥
मार्गयित्वा महादैत्यं जग्राहाऽऽरुह्य तं गले ।
तदाऽसुरो महामायो भूत्वा त्वदृश्य एव हि ॥६४॥
धीवरं रूपमास्थाय गदाजालकरान्वितः ।
हिमालयसमो भूत्वा मत्स्यं यावज्जिघृक्षति ॥६५॥
नारायणोऽपि रौद्रं वै महाकालाऽनलोपमम् ।
रूपमासाद्य गदया ताडयामास धीवरम् ॥६६॥
तावत्स धीवरं रूपं त्यक्त्वाऽभूत्पर्वतो महान् ।
यस्य मस्तकपादादि कुत्रापि नैव लभ्यते ॥६७॥
तलमाश्रित्य सुप्तोऽभूत् पृष्ठं कृत्वा तु वज्रवत् ।
नारायणेन शक्तिर्वै क्षिप्ता यावत्प्रवेगतः ॥६८॥
आरपारं गता विध्वा पृष्ठं वज्रसमं तदा ।
दैत्यो रूपान्तरं मात्स्यं कृत्वा स्थानान्तरं स्थितः ॥६९॥
मत्वा स्वां जातिजां सृष्टिं मारयेन्नैव मामिति ।
अथवा वञ्चयित्वैव मारयामि च तं पुनः ॥७०॥
वञ्चयित्वा हरिं तत्र पुच्छेन ताडितः पुनः ।
दुद्राव जलमध्ये सः प्रवेशाय तु कर्दमे ॥७१॥
तावदारुह्य पीठे तं गले जग्राह वै पुनः ।
तुण्डाग्रेण विदार्यैनं जघान हरिरीश्वरः ॥७२॥

तद्बुद्धिस्थान् सर्ववेदान् सांगोपांगाँस्तदात्मनः ।
ज्ञानरूपान्समाकृष्य तिरोभावय्य सर्वथा ॥७३॥
शक्त्या समाधिना नीत्वाऽब्धेरुपर्याजगाम ह ।
आसुरात्मानमज्ञाने विनिःक्षिप्य तु तामसे ॥७४॥
याम्ये लोके विनिपात्याऽऽजगामाऽब्धितटं हरिः ।
मात्स्यं रूपं तदा हिमशैलतुल्यं विलोक्य च ॥७५॥
देवर्षिमुनयस्तत्राश्चर्यस्तब्धा बभूविरे ।
क्षणं प्रदर्श्य तद्रूपं स्वल्पमत्स्यो बभूव सः ॥७६॥
ततो नराकृतिर्देवो नारायणः सुदर्शनः ।
समभूत्संस्तुतः सर्वैः सौम्यमूर्तिर्जलार्दनः ॥७७॥
वेदान्सर्वान्ददौ तस्मै ब्रह्मणे परमेष्ठिने ।
ज्ञानं वेदमयं सर्वं ब्रह्मणे ह्यर्पयद्विभुः ॥७८॥
सर्वानाशीः प्रयुज्यैव पूजामादाय तत्कृताम् ।
गारुडं यानमारुह्याऽन्तर्दधे दुग्धवारिधौ ॥७९॥
इतिमत्स्यावतारस्य प्रथमद्वापरस्य वै ।
चरितं कथितं लक्ष्मि ! श्रृणु मात्स्यं द्वितीयकम् ॥८०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने
कश्यपपुत्रहयग्रीवदैत्योत्पत्तितत्कृतवेदज्ञानापहरण-
तन्नाशकृन्नारायणमत्स्यावतारद्वारकदैत्य-
नाशादिकथननामा एकत्रिंशदधिक-
शततमोध्यायः ॥१३१॥

**श्रीनारायण उवाच—**

यदा यदा महालक्ष्मि ! सायाह्नो वेधसो भवेत् ।
तदा तदा लये नित्ये दश लोकाः स्वरादयः ॥ १ ॥
पातालान्ता लयं यान्ति पूर्वसृष्टौ यथा ह्यभूत् ।
तथा तथा लये काले बीजरक्षणहेतवे ॥ २ ॥
हरिर्गृह्णाति मात्स्यं वै रूपं सलिलसञ्चरम् ।
प्रथमं ब्रह्मणः सायं वर्षशतमवग्रहः ॥ ३ ॥
वृष्ट्यभावात् सुदुर्भिक्षाद्देहिनो यान्ति नाशताम् ।
जलं शुष्कायते सर्वमुद्भिज्जा यान्ति नाशताम् ॥ ४ ॥
सूर्यतापेन पृथिवी रुक्षा भवति सर्वथा ।
बीजानि भर्जितान्येव भवन्ति क्रमशस्तदा ॥ ५ ॥
कन्दमूलानि नश्यन्ति प्राणिजातं च नश्यति ।
शतवर्षं क्रमादेव वृष्टिहीनं प्रतापितम् ॥ ६ ॥
भवत्यतः समुद्रा वै शुष्कायन्ते समन्ततः ।
तदा तत्स्थं प्राणिजातं सर्वं नश्यति सर्वथा ॥ ७ ॥
सूर्या द्वादश चोत्तप्ता उग्रास्तपन्ति कृत्स्नशः ।
तेनेयं शतवर्षेषु पृथ्वी सतलपर्वता ॥ ८ ॥
दग्धा भस्मसमा सर्वा जायते हि समन्ततः ।
आपातालाच्च आस्वर्गात् सर्वेपि जन्तवो मृताः ॥ ९ ॥
सूक्ष्मशरीरसहिता तदा यान्ति महर्तलम् ।
महर्लोके च ते सर्वे तिष्ठन्ति पुण्यरश्मिभिः ॥१०॥
मेघास्ततः प्रवर्षन्ति शतवर्षाणि सर्वदा ।
आदशभुवनं यावत् सर्वं जलमयं भवेत् ॥११॥
आस्वर्गं वै जलं तत्र पूर्यते प्रलये बहु ।
एवं सायाह्नमारभ्य प्रातःपर्यन्तमेव ह ॥१२॥
दशलोकविनाशोऽयं नित्यप्रलय उच्यते ।
पुनः प्रातः स्वयं ब्रह्मा सृजति दशभूस्तरान् ॥१३॥
स्वर्गमारभ्य पातालान् सृष्ट्वा सृष्टिं करोति सः ।
पूर्वं पूर्वं तदा स्मृत्वा यथापूर्वमकल्पयत् ॥१४॥
प्राप्ते पुनश्च सायाह्ने पुनर्वै विलयो भवेत् ।
लयकाले तदा देवः स्वयं नारायणो हरिः ॥१५॥
सर्वसद्बीजरक्षार्थं मत्स्यरूपो भवत्यपि ।
वेधोदिनावसाने स स्वयमेव दयानिधिः ॥१६॥
समागत्य सुरक्षार्हं रक्षत्येव कृपावशात् ।
दिनावसाने सायं वै ब्रह्मा सन्ध्यार्थमुत्थितः ॥१७॥
कमण्डलुं स्वमादाय पुष्करं प्रति गच्छति ।
स्नात्वा कमण्डलौ वारि भृत्वा तीरं समासीनः ॥१८॥
आचमनाय यावद्वै गृह्णात्यम्बु कमण्डलोः ।
हस्ततले तदा मत्स्यरूपं स्वरूपं ददर्श सः ॥१९॥
यवबीजसमं ह्रस्वं यथा वै क्षुद्रजन्तुकम् ।
जले जलांजलिं यावन् क्षिपत्येव पितामहः ॥२०॥
तावद्वितस्तिमात्रं तद् भूत्वोत्प्लुत्याऽपतत्तटे ।
प्राह मां रक्ष देवानां पितामह ! कमण्डलौ ॥२१॥
तथा करोत्यजो यावन्ममौ नैव कमण्डलौ ।
ततःप्राह तिमिस्तं वै नालं मे भवति प्रभो ॥२२॥
देहो मे वर्धते द्राग्वै तस्मात्कूपे तु मां क्षिप ।
ब्रह्मणा वै ततः कूपे निक्षिप्तोऽपि प्रववृधे ॥२३॥
कूपे मातुं न योग्योऽभूत् स प्राह वेधसं ततः ।
न कूपोऽयमलं मे स्यात् पितः सरसि माक्षिप ॥२४॥
उद्धृत्य ब्रह्मणा कूपात् पुष्करे सरसि धृतः ।
तावत्पुष्करदेहोऽयं महान् बभूव तत्क्षणात् ॥२५॥
पुष्करे न ममौ सोपि पुनराह पितामहम् ।
नालं मे पुष्करं जातं समुद्रे मां क्षिपेष्टकृत् ॥२६॥

ब्रह्मणा तु ततो नीत्वा समुद्रे विनिपातितः ।
उक्तश्च कस्त्वमत्रासि वदाश्चर्यं करोषि माम् ॥२७॥
समुद्रे वर्धितो मत्स्यस्तदोवाच पितामहम् ।
अहं नारायणः साक्षाज्जगद्रक्षणहेतवे ॥२८॥
मत्स्यरूपं सुधृतवान् सायं तेऽह्नो भवत्यतः ।
दशलोकास्तापशुष्का जलमग्ना द्रुतं मताः ॥२९॥
तस्माद्बीजानि मुख्यानि चतुःखनिगतानि वै ।
गृहीत्वाऽयं मनुश्चतुर्दशो नावि प्रतिष्ठतु ॥३०॥
नौरपि कोटिगव्यूतिदीर्घा गभीरभूमिका ।
शतभूमिर्दृढा पूरणीया बीजैः प्ररोहणैः ॥३१॥
ऋषीन्मुनींस्तथा देवान् गोहस्तियानवाहनम् ।
उद्भिज्जातीनि बीजानि पृथ्वीं देवीं च भूसुरान् ॥३२॥
यद्यत्पुनस्तव प्रातरुपयुक्तं सृजौ भवेत् ।
तत्सर्वं बीजरूपं वै नीत्वा संस्थाप्य नावि तत् ॥३३॥
मनुं सत्यं तत्र वै त्वं प्रतिष्ठाप्य व्रज स्वकम् ।
सत्यलोकं ततोऽहं वै नावं शृंखलयाञ्चिताम् ॥३४॥
मम शृंगे निबध्यैव भ्रमिष्यामि महाजले ।
अवग्रहे सूर्यतापे वर्षणे शतवार्षिके ॥३५॥
महापातालवारीणां निधौ नावं निनाय च ।
रक्षिष्यामि च तान्सर्वानारात्रिप्रलयावधिम् ॥३६॥
आप्रातस्तान्पोषयिष्ये मम दिव्यबलान्ननु ।
मा त्वं खेदं कुरु ब्रह्मन् प्रातर्दास्ये पुनर्धनम् ॥३७॥
करिष्यति ततो दशलोकानां सृष्टिमेव ताम् ।
इत्याज्ञप्तस्ततो ब्रह्मा मनुं प्राह चतुर्दशम् ॥३८॥
बीजान्यर्पय्य सदेवमुनिबीजान्तराणि च ।
नावं समर्पयामास मत्स्याय केशवाय सः ॥३९॥
ब्रह्मा तु गतवान् सत्यं लोकं रात्रिर्बभूव ह ।
सन्ध्याकाले तदा युगसहस्रान्ते युगक्षये ॥४०॥
सदा जाता अनावृष्टिस्तदा सा शतवार्षिकी ।
सप्तरश्मिरथो भूत्वा ह्युदतिष्ठद्विभावसुः ॥४१॥
तस्य ते रश्मयः सप्ताऽपिबन्नम्भो महार्णवात् ।
ततस्तेषां प्रतापेन दह्यमाना वसुन्धरा ॥४२॥
साद्रिनद्यर्णवा सर्वा विस्नेहा समपद्यत ।
तीक्ष्णप्रदीप्तकिरणैरेकज्वालं बभूव ह ॥४३॥
ततः संवर्तको घोरो लोकान् जहार पावकः ।
निर्दह्य सर्वपातालानूर्ध्वं ददाह वै दिवम् ॥४४॥
ततो गजकुलाकारास्तडिद्भिः समलंकृताः ।
उत्तिष्ठन्ति स्म वै घोरा व्योम्नि संवर्तका घनाः ॥४५॥
नीलाः श्वेताश्चांजनाश्च धूम्राः पीताः पयोधराः ।
घोररूपा घोरनादाः पूरयन्ति स्म वृष्टिभिः ॥४६॥
सुघोरमशिवं सर्वं शमयन्ति स्म पावकम् ।
नष्टे चाग्नौ वर्षशते जलपूर्णं नभस्तलम् ॥४७॥
इत्यम्भसाऽऽवृते लोके सर्वमेकार्णवं जगत् ।
जलं विना तदानीं वै प्राज्ञायत न किंचन ॥४८॥
चतुर्युगसहस्रान्ते रात्रिं स्म कुरुते प्रभुः ।
मत्स्यावतारो भगवान्नावं रक्षति सर्वथा ॥४९॥
शतवर्षे सुदुर्भिक्षे महाकालानलान्तरे ।
स्वस्याऽमृतप्रतापेन नावं रक्षति स प्रभुः ॥५०॥
रात्रौ रक्षति चैवाऽयं तमस्येकार्णवे जले ।
ततो रात्रिक्षये प्राप्ते प्रतिबुद्धः प्रजापतिः ॥५१॥
रचयामास विविधान् दशलोकान् यथाप्रजान् ।
एवं लयं करोति स्म प्रतिसायाह्नमेव हि ॥५२॥
सृष्टिं पुनः करोति स्म प्रतिप्रातः सदैव सः ।
सोऽयं दैनन्दिनः प्रोक्तः प्रलयो दशलोकिनाम् ॥५३॥
एवं वर्षशतान्ते वै ब्रह्माण्डं ब्रह्मणा सह ।
नश्यते स तु संप्रोक्तो लयो नैमित्तिकोऽपरः ॥५४॥
ततोऽपि मूलमायायाश्चतुर्विंशतिमूर्तयः ।
विलीयन्ते तदा बोध्यः प्राकृतप्रलयो महान् ॥५५॥
जीवस्य तु प्रभोः सम्यग्योगाद् भक्तेश्च भावतः ।
यदा मोक्षो भवेत् सोऽयं बोध्यस्त्वात्यन्तिको लयः ॥५६॥
प्रलये तत्र रात्रौ तु सृष्ट्यभावान्न वाऽवनम् ।
अवनार्थं मनूनां च नैवावश्यकतास्ति यत् ॥५७॥
अतो मन्वन्तराणां वै रात्रौ सृष्टिर्न विद्यते ।
अन्तिमो यो मनुः प्रोक्तो बीजानि ऋषयस्तथा ॥५८॥
महानौकास्थितास्तेषां निद्रावृत्तिसुवर्तिनाम् ।
विष्णोर्नारायणेच्छाया बलान्मृत्युर्न विद्यते ॥५९॥
आप्रातस्ते तु जीवन्ति सृष्टेर्बीजतया स्थितेः ।
चिरंजीवास्तु ये सर्वे ब्रह्मनारायणेहया ॥६०॥
प्रातः सृष्टिं पुनः कृत्वा स्वयं ब्रह्म हि ताँस्ततः ।
लीनीकरोति तत्रैव सृष्टौ वै नान्यथा क्वचित् ॥६१॥
इत्येवं मत्स्यरूपाणि जायन्ते मे सहस्रशः ।
अवतारा यथाकार्यं लक्ष्मि ! जानामि तानहम् ॥६२॥
एवं दितेरपत्यं यो हिरण्याक्षोऽभवन्महान् ।
असुरः स तदा सृष्टेः प्रारंभे कर्दमस्थितिम् ॥६३॥
जलान्तःस्थां महापृथ्वीं भुंक्ते राजाधिराजवत् ।
तमहं ब्रह्मणो नस्तः संभूय नाशयामि वै ॥६४॥

वाराहरूपमास्थाय नयामि यमसादनम्।
असुरं तं तदा हत्वा पृथ्वीं कृत्वा सुपिण्डिकाम् ॥६५॥
नायाम्युपरि वारां तां स्थापयामि च सुस्थिराम्।
एवं वाराहरूपाणि सहस्राणि भवन्ति मे ॥६६॥
यदा यदाऽऽवश्यकत्वं भवेत् क्रोडो भवाम्यहम्।
इति ते सर्वमाख्यातं किमन्यत् कथयाम्यनु ॥६७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने ब्रह्मणः सायाह्ने नित्यप्रलये सबीजनौकारक्षणार्थं मत्स्यावतारधारणहिरण्याक्षहृतपृथिव्युद्धारणार्थ-वराहरूपधारणादिकथननामा द्वात्रिंशदधिक-शततमोऽध्यायः ॥१३२॥

**श्रीलक्ष्मी रुवाच—**

हिरण्याक्षो यथा जातो यथा पृथ्वीं जहार सः।
प्रभुस्तस्य विनाशाय कदा क्रोडोऽभवत्पुनः ॥ १ ॥
इति दिव्यां कथां विष्णोः सम्बन्धरसदायिनीम्।
कथयस्व हरे कृष्ण तृप्यामि न कथाश्रवे ॥ २ ॥

**श्रीनारायण उवाच—**

श्रृणु लक्ष्मि! मारिचेस्तु कश्यपस्याऽधिकारिणी।
पत्नी दितिश्चकारोग्रं तपः पुत्रसुलब्धये ॥ ३ ॥
प्रथमं सा मृतं पुत्रं शुशोच बहुवासरान्।
हयग्रीवं पुनः पुनः संस्मृत्य तनुतां गता ॥ ४ ॥
न खादति सुभोज्यानि वारिपानादि नेच्छति।
न वै श्रांगारिके भावे प्रहृष्यति कदाचन ॥ ५ ॥
यदा यदा कश्यपस्य मुखं पश्यति भामिनी।
नेत्रयोर्जलधारा वै तदा पतति शोकतः ॥ ६ ॥
प्रवासितो निष्कासितो विचित्तो विधुरोऽपि वा।
सन्न्यस्तः परलोकस्थः पुत्रो दहति मातरम् ॥ ७ ॥
हयग्रीवं गृहात्स्वात् वै निष्कासितमपि मृतम्।
श्रुत्वा शुशोच बहुधा पुत्रस्नेहो हि तादृशः ॥ ८ ॥
विष्णोः पुत्रनाशयितुर्नाशार्थं सा मनो दधे।
नष्टपुत्रप्रतीकारं बहुधाऽऽप्तुं समीहते ॥ ९ ॥
बलवन्तौ मम पुत्रौ भवेतां विष्णुनाशिनौ।
येन ज्येष्ठहयास्यस्य निष्कृतिं बहुधा लभे ॥१०॥
विना वै तपसां सिद्धिं नैव स्यान्मे मनोरथः।
एवं विचार्य सा देवी शतवर्षं तपोऽकरोत् ॥११॥
कन्दमूलफलाहारा पञ्चाशद्वर्षमास्थिता।
पञ्चविंशतिवर्षाणि जलाहाराऽभवत्तथा ॥१२॥
पञ्चदशप्रवर्षाणि बाष्पाहाराऽभवत्पुनः।
दशवर्षाणि सा देवी निराहाराऽभवत्तथा ॥१३॥
दितिस्तपसा ब्रह्माणमाराधयत्पुनः पुनः।
नान्यत्पश्यति सुभगा नान्यं स्पृशति सर्वथा ॥१४॥
नान्यत्करोति श्रृंगारं सर्वदा तपसि स्थिता।
स्वपिति भूतले नित्यं नांगमर्दनमिच्छति ॥१५॥
'ओं नमो ब्रह्मणे तुभ्यं प्रजानां पतये नमः।
प्रजां देहि प्रजां देहि विष्णुतुल्यपराक्रमाम्' ॥१६॥
एवं मन्त्रजपं नित्यं नियमेन करोति सा।
वर्षशतं नीतवती तपो निर्विघ्नमेव हि ॥१७॥
त्वगस्थिशेषशुष्का सा महापूजनमाचरत्।
उक्तमन्त्रेण होमं वै चकार दशलक्षकम् ॥१८॥
अन्ते ब्रह्मा समागत्य प्राह तां तापसीं वधूम्।
किं ते लभ्यं भवेद्देवि! ब्रूहि ददामि मा तप ॥१९॥
वृणु शीघ्रं च ते काम्यं पूरयिष्ये तपोबलात्।
नाऽदेयं ते कृते मेऽस्ति किमप्यत्र द्रुतं वृणु ॥२०॥
दितिस्तं वेधसं नत्वा सलज्जा प्राह मानसम्।
स्वागतं मे वृद्धमान्यश्वशुरस्य करोम्यहम् ॥२१॥
प्रपितुश्च पदोर्नत्वा वन्दे पूज्यं प्रपूर्वजम्।
क्षमां याचेऽपराधस्य यदि स्यादविनीतता ॥२२॥
वृद्धा वंशाऽवितारोऽनुग्रहं कुर्युर्न चेद् यदि।
तर्हि वंश्या दुःखिनो वै क्व चेयुः शरणं परम् ॥२३॥
यदि शक्ताः पूर्ववृद्धा वंश्यानां कामपूरणम्।
न कुर्युश्चेत्तदा वंश्योद्धारकाः स्युश्च केऽपरे ॥२४॥
ततोऽहं निर्णयं कृत्वा पूज्याद् वृद्धपितामहात्।
प्राप्स्ये स्वेष्टस्य संसिद्धिमेवं तपसि संस्थिता ॥२५॥
वृणोमि प्रबलौ पुत्रौ विष्णुवीर्यपराक्रमौ।
याभ्यां ज्येष्ठस्य पुत्रस्याऽपचितिः स्यान्मदींगिता ॥२६॥
ब्रह्मा प्राह तथाऽस्त्वेव नारायणः करोतु तत्।
भविष्यतस्ते सत्पुत्रौ विष्णुतुल्यपराक्रमौ ॥२७॥
विष्णुर्वा विष्णुभक्तौ वा विष्णुसाम्यपराक्रमौ।
नान्यत्राऽस्ति क्वचित्क्वापि विष्णुतुल्य पराक्रमम् ॥२८॥
तस्मान्नारायणं गत्वा वैकुण्ठं प्रार्थयाम्यहम्।
दितिमाशीः प्रदत्वैव ब्रह्मा त्वन्तरधीयत ॥२९॥
गतः स द्राङ्महावेगान्महावैकुण्ठमित्यथ।
यत्र नारायणो देवो भगवान् भक्तरक्षकः ॥३०॥

राजाधिराजः सर्वेषां शंकर्ता हि विराजते।
नत्वा स्तुत्वा चोपविश्याऽऽसने कृष्णं जगाद ह ॥३१॥
दीनबन्धो दयासिन्धो जगदुद्धारकृद्भवान्।
दित्यै तपःफलं दातुं समर्थोऽस्ति सदाऽच्युत ॥३२॥
तयाऽर्थितौ सुतौ नारायणतुल्यौ पराक्रमैः।
त्वमेव तौ प्रदानाय विचारं कुरु माधव ॥३३॥
यथा तस्या भवेतां वै पुत्रौ स्वेष्टौ तथा कुरु।
नारायणस्तदा स्वस्य ज्येष्ठभ्रातुस्तु वेधसः ॥३४॥
वचनं सफलीकर्तुं विचारं कृतवान् हृदि।
निमित्तं किंचिदुत्पाद्य पूरयेयं मनोरथम् ॥३५॥
यन्निमित्तमुपागृह्य ममापि गमनं भुवि।
यन्मिषेण मनुष्याणां मल्लीलाचरितानि च ॥३६॥
गेयानि च मिलिष्यन्ति तेन यास्यन्ति मोक्षणम्।
तस्मादेतन्निमित्तं मे भक्तार्थे सुखदं भवेत् ॥३७॥
मद्भक्तौ मत्समौ स्यातां मदन्यूनपराक्रमौ।
दितेस्तावेव सत्पुत्रौ कारयित्वा मम द्रुहौ ॥३८॥
तपःफलं प्रदातव्यं मम कार्यं तथा भवेत्।
विचार्येति हरिः साक्षादविनयं स्वपार्षदौ ॥३९॥
द्वारस्थौ जयविजयाख्यौ प्रावेशयन् स्ववाञ्छया।
सनन्दनादिचतुरः प्रैरयन्निजदर्शने ॥४०॥
यावच्च वेधसा साकं विष्णोर्वार्ता भवत्यति।
तावत्तु ब्रह्मणः पुत्राः संकल्पवेगवत्तमाः ॥४१॥
विष्णोस्तु दर्शनं कर्तुमाजग्मुः सनकादयः।
सनातनश्च सनकः सनन्दनस्तृतीयकः ॥४२॥
सनत्कुमारस्तुर्यश्च सर्वे ते ब्रह्मवर्चसः।
ब्रह्मणो मानसाः पुत्राः सर्वज्ञा ज्ञानमूर्तयः ॥४३॥
वैराग्यं च तृणीकृत्य वर्तमाना दिगम्बराः।
ते पञ्चहायनाः सौम्या ब्रह्ममूर्तय एव च ॥४४॥
नरनारीशरीरस्था दोषा यत्र न सन्ति वै।
भगवन्तं विना येषां वृत्तयो नान्यसञ्चराः ॥४५॥
ब्रह्मदृष्टिं विना येषां दृष्टिर्नोद्भवति क्वचित्।
येषां हृत्सु हरेर्मूर्तिं विना नान्यद्विशत्यपि ॥४६॥
नामानि प्रगृणन्तस्ते चायान्ति राजमार्गतः।
वैकुण्ठवासिनोऽनेके वैष्णवा यान्ति तानन्तु ॥४७॥
प्रशंसन्ति च तान्बालानहो पश्यत वैष्णवाः।
रूपे कृष्णसमाश्चैते मन्दहास्यास्यचन्द्रकाः ॥४८॥
स्वर्णवर्णाः सूर्यतुल्यास्तेजोपरिधिशोभनाः।
मनोहार्यंगसंपुष्टाः स्थलपद्मांगकोमलाः ॥४९॥
नातिदीर्घस्वर्णवर्णस्निग्धप्रान्ताऽलकाऽन्विताः।
किरणोद्गमभालेन मुष्णन्तो जनमानसम् ॥५०॥
शरदब्जदलनेत्रस्थिरदृष्ट्यतिहृद्भमाः।
रक्तपल्लवसत्ताम्ररक्तौष्ठचित्तहारकाः ॥५१॥
कृतोर्ध्वपुंड्रकाः सर्वे कर्णपुष्पावतंसकाः।
देवैर्धृतार्चनहाराः कोटिकोट्यर्कभासुराः ॥५२॥
वामस्कन्धब्रह्मसूत्राः कटिस्थमुञ्जमेखलाः।
रूपानुरूपावयवाः स्वर्णाभकरपत्तलाः ॥५३॥
कण्ठे करे च तुलसीमालां बिभ्रन्त ऐश्वरीम्।
स्वर्णरेखामहालक्ष्मीवासो वक्षसि दृश्यते ॥५४॥
नारायणसमा रूपे चाकृतौ कृष्णसदृशाः।
श्वैत्ये ध्याने शंभुरूपाः शरीरे ब्रह्मणाः समा ॥५५॥
भक्तौ लक्ष्मीसमाश्चैते के भवेयुर्जना इमे।
पश्यन्तु वैष्णवास्त्वेतान्महापुरुषलक्षणान् ॥५६॥
अस्मद्भाग्यवशादेतान्पश्यामो देवपुरूषान्।
इतिद्वितीयवैकुण्ठवासिनो वैष्णवा ह्यमून् ॥५७॥
प्रशंसन्ति प्रपश्यन्ति तृप्तिं यान्ति न दर्शने।
आगच्छतां च नग्नानां सर्वेषां बालरूपिणाम् ॥५८॥
गोपुर आगतो यत्र द्वाःस्थौ द्वारं हि रक्षतः।
जयश्च विजयश्चैव प्रोत्तस्थतुः सवेत्रकौ ॥५९॥
तावनापृच्छय गच्छन्ति यावत्तावत्सवेत्रकौ।
प्राहतुः का इमे नग्ना गच्छन्त्यन्तःपुरं कथम् ॥६०॥
तिष्ठन्तु नैव गच्छन्तु प्रत्यावर्तन्तु के गताः।
अविनयेन चाविष्टाः प्रतिषेधन्ति तान्मुहुः ॥६१॥
तथापि तावनादृत्य गच्छन्ति ब्रह्ममानसाः।
किं द्वारं के द्वारपाला नैव पश्यन्ति योगिनः ॥६२॥
आत्मतत्त्वं विना चान्यद् येषां दृष्टौ न किल्बिषम्।
तेषां को वा विधिश्चाथ निषेधो रोध एव कः ॥६३॥
मा गच्छन्तु च मा यान्तु क एते बधिराः किमु!।
रे स्तब्धाः कन्यकादृश्याः के यूयं पायुगूभराः ॥६४॥
अज्ञाताः क्व न्विमे यान्ति जय गच्छ निवर्तय।
के वै गर्दभिकापुत्राः कस्माच्छूनीसुता इमे ॥६५॥
अत्र चैवागताः सन्ति संबध्नन्तु जना इमान्।
ताडयन्तु च पाषाणैर्बन्धयन्तु द्रुमैः सह ॥६६॥
निर्लज्जा यान्त्यगणय्य दृश्यन्ते वै निरञ्जनाः।
अरे वः पितरौ स्तो वा मृतिं यान्तौ कथं मृगाः ॥६७॥
विवस्त्रा निष्परिग्रहाः कस्य भ्रमथ मार्गणे।
न सन्ति मातरो वोऽत्र द्रुतं धावन्त्वितः स्थलात् ॥६८॥

निवर्तन्ते न चेदेते यष्टिं कुरु गुदस्थले।
इत्येवं विजयो यावज्जयं वक्ति तदा पुनः ॥६९॥
परावृत्य च संस्थित्वा श्रुतं सर्वममंगलम्।
न गच्छन्त्यग्रतस्तावन्न वदन्ति किमुत्तरम् ॥७०॥
जयो गत्वा स्ववेत्रेण तान्पृष्ठे मृद्वताडयत्।
मध्ये नितम्बयोस्तेषां लकुट्या समपीडयत् ॥७१॥
दत्वा चपेटिकां गण्डे मस्तके समताडयत्।
लिंगां गृहीत्वा चैतेषां छेदयन्त्वित्यभीषयत् ॥७२॥
इति भर्त्स्यं तिरस्कृत्य प्रकोष्ठे परिगृह्य च।
बद्ध्वैकवल्लिकारज्ज्वा चतुरोऽप्यनिष्कासयत् ॥७३॥
धूलीः प्रक्षिप्य पृष्ठे तान् मुखे कार्ष्णमकारयत्।
इत्येवं जयविजयावविनयेन मोहितौ ॥७४॥
बालान्मत्वा तिरस्काराद्यपराधान्प्रचक्रतुः।
तावद्रमा जया चान्याः सख्यो विहर्तुमुत्सुकाः ॥७५॥
तद्गोपुरेण निर्गत्य यान्त्यस्तान्ददृशुस्तदा।
परिचितान्विष्णुरूपाँश्चतुर्नारायणानिमान् ॥७६॥
पतित्वा पादयोस्तेषामर्हणं चक्रिरेऽवनम्।
धूलीनिर्धूननं रज्जुबन्धप्रमोक्षणं तथा ॥७७॥
पादयोश्चुम्बनं चैव मार्जनं चक्रिरे मुहुः।
अहो केनेव दुष्टेन नाथानामर्दनं कृतम् ॥७८॥
कस्य हस्तौ च पादौ च भग्नौ भाग्यं च विस्फुटम्।
वा कस्याऽन्नमितः स्थानात् समाप्तिमगमत् खलु ॥७९॥
कस्य जलं तूद्दिनष्टमुदियाय रविर्घृणी।
कस्य वा पुण्यरेखाऽद्य त्रूटिता धरणीं गता ॥८०॥
एतादृशानां साधूनामवमानं तु कैः कृतम्।
तेषां नैवात्र वासोऽस्ति भवेन्नैव विदन्तु ते ॥८१॥
यावन्नारायणोनैव जानाति तावदेव हि।
अवमानयितुस्त्वत्र स्थितिः पश्चात्तु नास्ति हि ॥८२॥
इत्येवं लपमानास्ता दृष्ट्वा दृष्ट्वा रुदन्ति च।
तावल्ललितया गत्वा नारायणाय वेदितम् ॥८३॥
यावच्छृणोति देवेशो द्राक् पद्भ्यां धावितः स्वकात्।
सिंहासनात् समुत्थायाऽप्रावृताभ्यां चिरवेद च ॥८४॥
यावदायाति वै तत्र गोपुरे श्रीहरिः स्वयम्।
तावत्तु लक्षशः पत्न्यः कोटिशो वैष्णवा अपि ॥८५॥
समाजग्मुः स्थले तत्र प्रणेमुः सनकादिकान्।
श्रीहरिस्तान् चतुःसाधून् प्रणनाम सदण्डवत् ॥८६॥
किं कृतं केन चेत्येवमपृच्छदवमानकम्।
भवादृशानां साधूनां कृतं येनाऽवमाननम् ॥८७॥
न स मे गोपुरे चैव वैकुण्ठे वासमर्हति।
मम पादौ च हस्तौ साध्वपराधकरौ यदि ॥८८॥
छिन्द्यां तौ यदि नेत्रं वा जिह्वां वा कर्तयामि ताम्।
लक्ष्मीं स्वकां जहाम्येव साध्वपराधकारिणीम् ॥८९॥
लोकवायुस्पर्शहीनाः किल्बिषाऽस्पृष्टमानसाः।
बाला अपि विहरन्ति कल्याणाय गृहार्थिनाम् ॥९०॥
बाला अपि न वै बाला मोक्षादेः पितरो मताः।
पावनाः पापिनां लोकपावका विचरन्ति हि ॥९१॥
क्षमापयन्त्वपराधान् कृपां कृत्वा ममोपरि।
अन्तःसौधं समायान्तु गृह्णन्तु दाससेवनम् ॥९२॥
इत्यभ्यर्थ्य च तेषां वै पादपांसून् शिरस्यधात्।
नीत्वा नारायणस्ताँश्च यावदायाच्च गोपुरे ॥९३॥
पार्षदौ जयविजयौ तावत्तेजोविहीनकौ।
म्लानमुखौ सकम्पौ च दृष्टौ नारायणेन वै ॥९४॥
तावत्तैः शिशुभिः प्रोक्तं हरेर्धाम्न्यत्र निर्गुणे।
पवित्रे सर्वथा शान्ते सुखदे मोक्षभूमिके ॥९५॥
निर्विकारे महासौम्ये दिव्ये हरिनिकेतने।
नेदृशौ द्वारपौ योग्यौ दुःखदौ मोक्षनाशकौ ॥९६॥
सविकारौ तथा क्रुद्धावश्लीलवाचौ स्तब्धकौ।
शिष्टाचाररहितौ चाऽसुरवत्कृत्यकारिणौ ॥९७॥
यतो योग्यावासुरिं वै योनिमेव प्रसेवितुम्।
न तु योग्यौ शुद्धसत्त्ववैकुण्ठं धाम सेवितुम् ॥९८॥
श्रीहरेः पादयोरेतौ क्रूरौ योग्यौ न वै मतौ।
यत्पापामासुरीं योनिं युवां यातं पदच्युतौ ॥९९॥
यावद्वै पततः स्थानात् शापयोगात्तदा पुनः।
प्रार्थयामासतुर्विप्रान्क्षमार्थं चाश्रुनेत्रकौ ॥१००॥
नारायणेच्छया प्रह्वीभावं याता दयालवः।
मुनयः शिशवश्चाहुस्तानात्रिजन्म तत्तथा ॥१०१॥
ततश्चासुरभावं तु विहायैतत्समाप्स्यथः।
पुनर्दौवारिकत्वं वै गमिष्यामो न संशयः ॥१०२॥
एवं शप्तौ स्वभवनात्पतितौ विष्णुलोकतः।
दितेः पुत्रौ तु तौ जातौ महादैत्यौ महाबलौ ॥१०३॥
वैकुंठे च तयोः स्थाने अजं अजयमेव च।
नियुयोज हरिर्द्वारपालौ यावत्तदागमः ॥१०४॥
लक्षकोटिदासदासीरमारामाजयादिभिः।
आतिथ्यं पूजनं चापि भोजनं पादवाहनम् ॥१०५॥
विविधं सेवनं पानं मर्दनं शयनादिकम्।
सम्पादितं चतुर्णां तु सनकादिकशंजुषाम् ॥१०६॥

कृत्वैव दर्शनं सम्यक् दत्वा च दर्शनं स्वकम् ।
पुण्यं नीत्वा च दत्वा चागता लोकं तु सत्यकम् ॥१०७॥
वेधसा सह चायातास्ते वै स्वपितृमन्दिरम् ।
ततो गताः कश्यपं वै द्रष्टुं मेरौ ततश्च ते ॥१०८॥
पुत्रयोर्हरिसमयोराशीर्वादान्विधाय च ।
जग्मुर्धाम हरेर्दिव्यं श्वेतद्वीपं सदासनम् ॥१०९॥
अथ जयश्च विजयो ह्यासुरं भावमास्थितौ ।
हिरण्यकशिपुर्ज्येष्ठो हिरण्याक्षोऽनुजोऽभवत् ॥११०॥
वर्षशतं गर्भसंस्थौ न च जन्म ह्यवापतुः ।
यदि जन्म भवेत्तर्हि दुःखं प्राप्स्यावहे यतः ॥१११॥
जन्म नैव परिग्राह्यमिति मत्वा न निर्गतौ ।
नारदेन तदागत्य तत्र तौ तु प्रबोधितौ ॥११२॥
जन्मनां ग्रहणेनैव त्रिजन्मान्ते पुनः स्वकम् ।
प्राप्स्यथो वैष्णवं धाम पार्षदौ च भविष्यथः ॥११३॥
इत्यादिश्य ततो मन्त्रमादिदेश पुनस्तथा ।
लक्ष्मीनारायणेत्येव माश्राव्याऽऽज्ञापयत्तदा ॥११४॥
द्वेषभावेन वै लक्ष्मीनारायणं भजिष्यथः ।
द्वितीये जन्मनि सीतारामं चैव भजिष्यथः ॥११५॥
तृतीये जन्मनि कृष्णं नरं चापि भजिष्यथः ।
ततो मुक्तिं प्रगन्तारौ भविष्यथो न संशयः ॥११६॥
इति चोक्त्वा गतो देवो नारदः स्वं त्रिलोकनम् ।
अटनार्थं पार्षदौ त्वासुरौ जन्म ह्यवापतुः ॥११७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने दितेः पुत्रार्थं तपो वेधस आशीर्वादो वैकुण्ठगमनं तत्रविष्णुं सम्प्रार्थ्य वेधसा नारायणसमपुत्रप्राप्तिवरदानकथन ततो हरिप्रेरणया सनकादीनां वैकुण्ठगमने जयविजयाभ्यां तिरस्कृते जन्मत्रयाऽसुरभावप्राप्तिशापेन हिरण्यकशिपुहिरण्याक्षजन्मादिवृत्तान्तकथननामा त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥१३३॥

**श्रीनारायण उवाच—**

कश्यपस्य च तौ पुत्रौ जातमात्रौ महाबलौ ।
हिरण्यसमवर्णाभौ महावीर्यबलोद्धतौ ॥ १ ॥
हिरण्यकशिपुर्ज्येष्ठो हिरण्याक्षोऽनुजः स च ।
अप्रमाणशरीरोऽभूत् भ्रूस्तस्य पर्वतीसमा ॥ २ ॥
स वै महाजले याति याति पवनमण्डले ।
गमने चान्तरीक्षे च दिवि याति पुनःपुनः ॥ ३ ॥
ग्रहवद् भ्रमति व्योम्नि पाताले याति शेषवत् ।
प्रयाति पक्षिवत् मेरौ चाकाशे वैनतेयवत् ॥ ४ ॥
अष्टावरणपारं वै याति कृष्णविमानवत् ।
महाकायो हिरण्याक्षो नो गणयति कंचन ॥ ५ ॥
यथेच्छति तथा देहं वर्धयति क्षितिप्रवत् ।
यदा यदा विहारार्थं याति लोकान्तरे तदा ॥ ६ ॥
चिन्तां करोति सः स्वीयजन्मगृहस्य तत्र वै ।
यदि कश्चिद्धरेन्मे वै गृहं स्वर्णमयं तदा ॥ ७ ॥
निराधारो भविष्यामि विचार्याऽऽवर्तते पुनः ।
हिरण्याक्षेण सौधः स्वः कारितो विश्वकर्मणा ॥ ८ ॥
मेरोर्नितम्बभूमौ वै चान्तरीक्षे समस्तरे ।
पृथ्व्या ऊर्ध्वं सहस्रं वै योजनानां समान्तरे ॥ ९ ॥
योजनदशसाहस्रं परिणाहो गृहस्य वै ।
उच्छ्रायश्च सहस्रं वै योजनानां कृतस्तथा ॥१०॥
यावदिन्द्रस्य सूर्यस्य सोमस्य वरुणस्य च ।
बृहस्पतेर्वेधसश्च स्मृद्धयोऽस्याऽभवँश्च ताः ॥११॥
नूतनं मनसो भाव्यं सौम्यं वा सुन्दरं हि यत् ।
दृष्टिपथं चास्य यायाद्भवेत् तन्महतामपि ॥१२॥
प्रसह्य तत्समानीय गृहे भुंक्ते ह्यकण्टकः ।
एवं स्मृद्धं गृहं तस्य मेरावासीत्स्वरन्यदुत् ॥१३॥
एवं स्मृद्धं गृहं त्यक्त्वा याति विहारभूमिषु ।
तदा चिन्तां करोत्येव द्रोग्धुर्वै परतो भयम् ॥१४॥
अतः स एकदा सम्यग्ववृधे मेरुवन्महान् ।
उद्धाव्य बाहुसाहस्रं चोत्पाट्य च महीमिमाम् ॥१५॥
सान्तर्द्वीपां सशैलां च मेरोः सौधं वियुज्य च ।
मेरोर्दूरभुमौ नीत्वा प्रविवेश महाजलम् ॥१६॥
हाहाकारो महानासीत्पृथ्वीनाशे त्रयोदश ।
लोकाश्चात्राऽवशिष्यन्तेऽन्येषां नाशोऽपि वै भवेत् ॥१७॥
प्राणिसमाश्रिता सर्वा पृथ्वी नीता सपर्वता ।
सवनकानना सर्वा महादैत्येन संधृता ॥१८॥
कराऽऽमलकवन्नीता प्रापिताऽधो महाजलम् ।
ततो देवगणाः सर्वे चुक्रुशुर्भयपीडिताः ॥१९॥
शरणं प्रययुर्देवं नारायणहरिप्रभुम् ।
दुग्धाब्धितीरमासाद्य तुष्टुवुर्बहुविस्तरम् ॥२०॥
रक्ष त्राहि हरे पाहि प्रोच्य पेतुः पदोर्भुवि ।
रक्ष त्राहि हरे पाहि प्रोच्य पेतु पदोर्हिकैः ॥२१॥
श्रुत्वा नारायणो देवः समागाच्छतपतत्त्रिणा ।
सर्वान् विश्वासयामास ज्ञातवानद्भुतं महत् ॥२२॥

शंखचक्रगदाधारी विश्वरूपी जनार्दनः ।
वाराहरूपमास्थाय संस्थितो देवसंयुतः ।
अनादिमध्यान्तवपुर्महादंष्ट्रो महाभुजः ॥२३॥
हांहांकारं महाशब्दं कुर्वन्रोमाणि धूनयन् ।
विश्वतः पाणिपाच्चक्षुःसर्वयज्ञमयो हरिः ।
कृष्णवर्णो मेघनीलो बभूव मेरुसन्निभः ॥२४॥
मुखां वाराहरूपं वै देहो नारायणात्मकः ।
शंखचक्रगदाखड्गशक्तिचर्मादिधृक्प्रभुः ।
जगाम तरसा व्योम्नाऽधोऽधोऽधो यन्महाजलम् ॥२५॥
तस्य गतौ गतो भ्रान्तश्चक्रितोऽभून्महाऽनिलः ।
तदाधारा गृहाश्चापि कृष्यन्ते स्माऽस्य पृष्ठतः ॥२६॥
महाजलं यदा देवः प्रविष्टश्च तदाऽसुरः ।
भयेन तरसा व्याप्तोऽप्यभूद् युद्धाय तत्परः ॥२७॥
पृथ्वीं कुक्षौ तदाऽऽस्थाप्य हिरण्याक्षो महासुरः ।
मेरुवज्जगृहे देहं गदां शैत्याचलोपमाम् ॥२८॥
भ्रामयित्वा महादैत्यो युयोध जगदीश्वरम् ।
गदायुद्धं शतवर्षं बहुजातं विनाशकम् ॥२९॥
तदा वाराहरूपोऽसौ हरिर्मेरुसमोऽभवत् ।
दंष्ट्रो च वर्धिता दीर्घा वज्रातिवज्रनिष्ठुरा ॥३०॥
पञ्चहिमालयस्थूला दशहिमाद्रिदीर्घिका ।
दंष्ट्राग्रं तु महातीक्ष्णं शतगव्यूतिमानवत् ॥३१॥
बलं वैराजदेहस्य प्राविर्भाव्य तदा हरिः ।
दंष्ट्रया तं महादैत्यं पफाड परमेश्वरः ॥३२॥
मरणेऽकारि दैत्येन महारावो भयानकः ।
त्रासकृद्ब्राह्मसृष्टीनां वैराजेश्वरवासिनाम् ॥३३॥
देवानामाह्लादकृच्च दैत्यादीनां भयंकरः ।
अव्याप्नोत्सर्वसृष्ट्यादावुत्सवोऽभूत् स्थले स्थले ॥३४॥
संचूर्णितमहागात्रो ममार दितिजोऽधमः ।
पतितां धरणीं दृष्ट्वा स्वर्णसौधं च तत्र वै ॥३५॥
दंष्ट्रयोद्धृत्य देवेशो ह्याजगाम भुवस्तलम् ।
मेरौ यथाऽभवल्लग्ना तथा पृथ्वीं सुयुज्य च ॥३६॥
तथैव दृश्यरूपोऽसौ जगाम वै स्वकं गृहम् ।
तत्र क्षीरनिधेस्तीरे क्रोडरूपं महाहरिम् ॥३७॥
दृष्ट्वा वै देवता भक्तिनम्रास्तुष्टुवुरादरात् ।
नमो महावराहाय सुयज्ञमूर्तये नमः ॥३८॥
नमो मेरुस्वरूपाय दैत्यघ्नाय नमोनमः ।
नमो महासुदंष्ट्राय धरणीधारिणे नमः ॥३९॥
समग्रवेदवेदांगमूर्तये ते नमोनमः ।
नमः सहस्रहस्ताय नमो विश्वस्वरूपिणे ॥४०॥
सर्गस्थितिस्वरूपाय नमः कालस्वरूपिणे ।
नूत्नरूपधृते ते च सर्वत्राऽत्रे नमोनमः ॥४१॥
श्रीभूलीलारमालक्ष्मीकंभरापतये नमः ।
नमः शान्तस्वरूपाय सर्वान्तर्यामिणे नमः ॥४२॥
इति स्तुत्वा तदा देवैर्मुनिभिः ऋषिभिर्भुवा ।
वाराहस्य हरेः पूजा कृतास्रक्चन्दनादिभिः ॥४३॥
समर्च्यमानस्तैर्देवैस्तेषामिष्टं वरं ददौ ।
यदा यदा च देवानामृषीणां मत्कलात्मनाम् ॥४४॥
आपदायात्तदा रक्षां करिष्ये स्मारितो यदा ।
इत्यभिधाय गन्धर्वैप्सरोभिर्महर्षिभिः ॥४५॥
गीयमानस्स्तूयमानस्तत्रैवान्तरधीयत ।
एवं क्रोडावताराश्च कल्पे कल्पे तदन्तरे ॥४६॥
भवन्ति मे जलयोगे महाकार्ये ह्युपस्थिते ।
एतत्ते सर्वमाख्यातं वाराहं वैभवादिकम् ॥४७॥
हिरण्याक्षाद्बलिनोऽपि हिरण्यकशिपोर्वधे ।
नारसिंहं धृतं रूपं वक्ष्ये लक्ष्मि ! शृणु प्रिये ॥४८॥

इति श्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने स्ववैमानिकप्रासादेन सह पृथ्वीं नीतवतो हिरण्याक्षस्य वाराहरूपेण महाजले कृतसंहारादिवर्णननामा चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥

**श्रीनारायण उवाच—**

शृणु देवि महालक्ष्मि ! हिरण्यकशिपुः स्वकम् ।
भ्रातरं निहतं श्रुत्वा पर्यतप्यद्रुषा ज्वलन् ॥ १ ॥
उवाच दशनैरोष्ठं दशन् चाऽस्फोटयन्नुरू ।
नेत्रे च चूर्णयन् रक्ते क्रोधाग्निज्वालिते श्वसन् ॥ २ ॥
गर्जयन् विवरं भौमं निरीक्षन् धूम्रमम्बरम् ।
विकरालो महाक्रूरः कम्पयँश्च पदा महीम् ॥ ३ ॥
दुष्प्रेक्ष्यभूनेत्रकुटिः स्वेदबिन्दुललाटकः ।
प्रालेयमेघवद्व्यग्रो ह्युद्गच्छद्रोषवारिधिः ॥ ४ ॥
खड्गं दीर्घं करे धृत्वा समुत्थाय सदासनात् ।
आक्रोशन्मेघवच्छीघ्रं खड्गमुत्तोल्य चाम्बरे ॥ ५ ॥
सम्बोधयन्दैत्यसभां पृथ्वीं निर्वीर्यशोभनाम् ।
मन्यते यदि वै कश्चित् स घासग्रासमत्ति वै ॥ ६ ॥
निर्वीर्या नहि दैतेया न भूर्निर्वीर्यधारिणी ।
निर्वीर्यास्तु श्वसन्तोऽपि मृता एव विना मृतिम् ॥ ७ ॥

न गणये महाविष्णुं महाविष्णोः पितामहम् ।
तर्हि को नाम विष्णुर्वै पशुरूपेण सञ्चरन् ॥ ८ ॥
यदि विष्णुः स्वमनसि जानाति बलगर्वितः ।
दैत्यमूर्धन्यहन्ताऽहं तदाऽत्ति घासमेव सः ॥ ९ ॥
न दैत्या वै मृताः सर्वे येन विष्णुः सुखी भवेत् ।
सति दैत्ये सुखी स्यात् चेद्दैत्योऽत्ति घासमेव सः ॥१०॥
सति विष्णौ न वै दैत्यः सति दैत्ये न माधवः ।
विष्णुर्जीवेन्म्रियेद्दैत्यो दैत्यो जीवेन्म्रियेद्धरिः ॥११॥
न द्वयोर्जीवतोः पृथ्व्या राज्यं तु स्यादकण्टकम् ।
बलेन यदि वा स्मृद्धया वाहनेन च हेतिभिः ॥१२॥
सैन्येन विद्ययाऽस्त्रैश्च मन्त्रेण न्यूनताऽस्ति चेत् ।
करिष्ये सुतपो घोरं येन विष्णुरभूद्धरिः ॥१३॥
अहं ततोऽप्यधिकं वै करिष्ये तप उल्बणम् ।
तादृशान्कोटिविष्णून् वै ग्रसिष्ये कवलेन यत् ॥१४॥
महाकालमपिग्रासं करिष्ये कोऽयमेडकः ।
मेषोऽस्ति मम साम्येऽयं विष्णुर्वैष्णवपूजितः ॥१५॥
दूरं दैत्यकुलाद्याति चान्तर्याति जलालयम् ।
तस्माद्दैत्या भवन्त्येव सुसज्जाः शस्त्रपाणयः ॥१६॥
अपचितिं करिष्यामो मम भ्रातुर्महात्मनः ।
मद्धेतिभिन्नदेहस्य भूरिणा रुधिरेण वै ॥१७॥
रक्तप्रियं तर्पयिष्ये भ्रातरं मे गतव्यथः ।
भो नमुचे शतबाहो द्विमूर्धस्त्र्यक्ष शम्बर ! ॥१८॥
भो शतारे सहस्रारे भो पुलोमन् समिल्वल ।
भो प्रमेद्र महाधूम्र भो देवारे गजासुर ॥१९॥
रे भो शकुन काकाक्षे श्रृणुताऽनन्तरं मम ।
यूयं यात भुवं सर्वे विप्रक्षत्रादिरूपतः ॥२०॥
सूदयध्वं तपोयज्ञकारिणो ब्राह्मणान्मुहुः ।
विष्णोर्बलं ब्राह्मणैर्वै यज्ञैः संवर्धितं सदा ॥२१॥
यज्ञैर्देवाः सदा पुष्टिं यान्ति स्वर्गनिवासिनः ।
पितरश्चापि यज्ञेन तृप्ता भवन्ति सर्वदा ॥२२॥
मुनयः ऋषयश्चापि विष्णुर्वैकुण्ठवासिनः ।
सर्वेऽपि यज्ञभागैर्वै पुष्टिं यान्ति मुहुर्मुहुः ॥२३॥
यज्ञेनेन्द्रः प्रवर्षति मेघाश्च वृष्टिसन्मुखाः ।
ब्राह्मणा दक्षिणापूर्णा यज्ञो मूलं हि जीवने ॥२४॥
ब्राह्मणानां विनाशेन यज्ञा नष्टा भवन्ति वै ।
यज्ञनाशे कुतो वृष्टिर्देवानां जीवनं कुतः ॥२५॥
विप्रयज्ञसुराणां च विनाशे सुखिनो वयम् ।
एवं तपःप्रभावेण समेधिता महर्षयः ॥२६॥
तस्मान्नारीः सह नीत्वा कुर्वन्तु तपसां क्षयम् ।
रूपान्तराणि कार्याणि साध्यन्ते ह्यनुरूपकैः ॥२७॥
तस्माद् भवन्तु ब्राह्मण्यो दैत्यपत्न्यः स्थले स्थले ।
दैत्या भवन्तु विप्राश्च मुनीनां सेवकास्तथा ॥२८॥
ऊटजानि महारण्ये रचयित्वा वसन्तु वै ।
मृषाग्निहोत्रकर्तारो मृषायज्ञप्रदर्शकाः ॥२९॥
मृषाधर्मप्रदेष्टारो भवन्तु वनवासिनः ।
मृषा ब्राह्मणधर्मेण तेष्वाविश्य च छद्मना ॥३०॥
मारयन्तु भक्षयन्तु नाशयन्तु यथाक्षणम् ।
यत्र यत्र द्विजा यज्ञा गावो धर्माश्च सत्क्रियाः ॥३१॥
तत्र तत्र यात यूयं सन्दीपयत वृश्चत ।
प्रतिज्ञां प्रकुरुताऽत्र सदस्युद्धृतहेतयः ॥३२॥
सर्वैर्दैत्यैर्मिलित्वैव ह्येकीभूय च सर्वदा ।
ब्राह्मणानां ऋतूनां च नाशः कार्यः सदैव हि ॥३३॥
अत्र ये संगता न स्युस्ते ज्ञेयाः सुरवर्धकाः ।
हन्तव्यास्ते दैत्ययूथैरन्यथा मातृघातकाः ॥३४॥
इत्याश्रुत्य हिरण्याक्षकशिपोर्विजयोऽस्तु वै ।
उच्चार्यैवं च दैत्यास्ते सशस्त्रोद्धृतपाणयः ॥३५॥
चक्रुः प्रतिज्ञां तद्वाक्याद् याता देशान्तरं भवि ।
विप्राणां कदनं चक्रुः प्रदेहुः पत्तनानि च ॥३६॥
बिभिदुर्नगराण्यन्ये प्रादहन् शरणार्थिनः ।
बभञ्जुर्यज्ञविस्तारान्कदनं चक्रिरे महत् ॥३७॥
तदा देवाश्च विप्राश्च पृथ्व्यां चेरुरलक्षिताः ।
तदा लक्ष्मि ! महादैत्यो हिरण्यकशिपुः स्वकान् ॥३८॥
उपदिश्यैव चैकाकी जगाम मन्दराचलम् ।
भोगान्सर्वान्परित्यज्यैकाकी च निर्जने वने ॥३९॥
तपस्तेपे महाघोरं दिव्यवर्षसहस्रकम् ।
वायुभक्षो निराहारः पादांगुष्ठोपरि स्थितः ॥४०॥
रुद्रोपरि महादैत्यो 'रुद्राय नम' ईरयन् ।
पूर्णे वर्षसहस्रे तु मूर्ध्नस्तस्य महात्मनः ॥४१॥
धूमः समुद्भवन् घोरो व्योम्न्युत्थितो व्यवर्धयत् ।
आब्रह्मभवनं व्याप्तो महातेजोऽतितापनः ॥४२॥
यथाग्नेर्वा रवेर्वापि ज्वालामालान्वितो भवेत् ।
दावानलोऽथवा किं वा वाडवानल एव वा ॥४३॥
तथाऽनलो धूम्रवर्णो ह्युत्थितो व्योमपारगः ।
तेनाऽग्निना समन्ताद्वै जज्वलुश्च दिशो दश ॥४४॥
तेन तप्ताः स्वर्गदेवा ब्रह्मलोकं ययुस्तदा ।
ब्रह्मणे ज्ञापयामासुस्तपो दैत्यस्य दुःसहम् ॥४५॥

तदुत्थवह्निशमनं विधेहि त्वरितं प्रभो ।
अन्यथा स महादैत्यो वैराजपदमिच्छति ॥४६॥
ब्रह्मविष्णुमहेशास्तु तृणयन्ते तदग्रतः ।
इतिसंकल्पबलिना तपसा जेतुमिच्छति ॥४७॥
विनाशयित्वा देवादीन् विधास्ये सुनवां सृजिम् ।
दैत्यरूपां स्वानुकूलां दैत्यमयीं स्वतेजसा ॥४८॥
महाकालं वशीकृत्य चाऽपुनर्मारकां सृजे ।
किं कालकवलापन्नान्वृथा विष्णुपदादिभिः ॥४९॥
इतिनिर्बन्धमास्थाय करोति दुश्चारं तपः ।
तद्विधत्स्व यथान्यायं त्राहि शीघ्रं सुरादिकान् ॥५०॥
देवान्नीत्वा सह ब्रह्मा रुद्रं प्रति गतस्ततः ।
श्रावयामास रुद्राय नीत्वा च सह शंकरम् ॥५१॥
जग्मुः सर्वे मन्दरस्य द्रोण्यां यत्र स दैत्यराट् ।
आकाशात्परितो दृष्टं स्थलं क्वास्ते महासुरः ॥५२॥
न स्पष्टो दृश्यते क्वापि बहुधा मार्गितोऽपि सः ।
तथापि निर्जने शुष्केऽरण्ये वल्मिकमस्तकात् ॥५३॥
ज्वालामालासमुच्छ्रायो षट्धूम्रोर्ध्वमिश्रितः ।
सर्वैर्दृष्टस्तर्कितश्च दैत्यराजोऽत्र संभवेत् ॥५४॥
यावत् त्ववतरन्तीमे ज्वालामालिप्रदेशके ।
तत्र दृष्टो महान्भूमेरुच्छ्रायो मृन्मयोत्थितः ॥५५॥
पिपीलिकाभिराचीर्णो वृक्षाग्र्यतृणकीचकैः ।
व्याप्तः शुष्कैर्महास्तम्बैः सुश्रृंगैरिव पर्वतः ॥५६॥
विविधैः स्वल्पश्रृंगाढ्यैर्वल्मीकैः परिगोपितः ।
प्रच्छन्नः शुष्कमांसास्त्वगस्थिलम्बितजीवनः ॥५७॥
तत्र समाधिना दृष्टो ब्रह्मणा परमेष्ठिना ।
ब्रह्माऽप्याश्चर्यमग्नोऽभूदन्ये तु कम्पितास्तदा ॥५८॥
अहो तपःपराकाष्ठेत्यूचुर्विगलितान्तराः ।
प्राह वेधाः प्रहसन् वै प्रपौत्रं काश्यपं तदा ॥५९॥
उत्तिष्ठ पुत्र प्रोत्तिष्ठ तपःसिद्धिरभूत् तव ।
अयं रुद्रो महादेवो वरदानाय चागतः ॥६०॥
कश्यपस्तव जनकस्तस्यापि जनकस्तथा ।
मरिचिरप्यागतोऽस्ति तस्य भ्रातर उत्तमाः ॥६१॥
समायातास्तव कृते प्रसन्नास्तपसा तव ।
वरप्रदा इमे प्राप्ता वृणु त्वं यदभीप्सितम् ॥६२॥
पश्यामस्ते चात्मबलं तपऔग्र्यं ततोऽपि च ।
न कृतं न करिष्यन्तीदृशं चान्ये मदन्तरे ॥६३॥
निर्जलं चाऽस्थिसंघाते प्राणान् वर्षाणि वै शतम् ।
कोऽन्यस्तु धारयेदेवं यथेप्सितं वरं वृणु ॥६४॥
पुनः पुनर्बोध्यमानो बहिर्नायात्स वै यदा ।
देहोऽस्य पृथ्व्यां संलीनश्चात्मा लीनस्तु शंकरे ॥६५॥
कः शृणोति को जागर्ति शवकल्पसमाधिगः ।
शुष्ककाष्ठकठोरास्थिसंधयः काष्ठतां गताः ॥६६॥
पाषाणकल्पो दैत्येन्द्रो यदा न कम्पते मनाक् ।
तदा तु ब्रह्मणा स्वस्य कमण्डलुजलं शुभम् ॥६७॥
करे निधाय मन्त्रैश्च सजीवनविधायकैः ।
अभिमन्त्र्य प्रोक्षितस्तद्वल्मीके तावदेव सः ॥६८॥
युवा सूर्यसमो रूपे सुपुष्टो दिवि देववत् ।
वज्रतुल्यशरीरांगः स्वर्णवर्णः समुत्थितः ॥६९॥
विधूय शरीराद् वृक्षस्तम्बपिपीलिकामृदः ।
दृष्ट्वा देवान् ब्रह्मरुद्रकश्यपादीन् ननाम च ॥७०॥
प्रहर्षितश्चकारैषामातिथ्यमश्रुचक्षुषा ।
रुद्रः प्राह तदा दैत्यं किं ते मनसि रोचते ॥७१॥
यदर्थं तप आतिष्ठो वृणु वरान्ददाम्यहम् ।
श्रुत्वा दृष्ट्वा च वरदं नत्वा गद्गदया गिरा ॥७२॥
नमः सर्वाधिभूताय सर्वान्तर्यामिणे नमः ।
तपःफलप्रदात्रे ते ब्रह्मणे शंभवे नमः ॥७३॥
नमोऽस्तु जनकायाऽत्रभवते कश्यपाय च ।
नमो मरीचये तद्वत् सर्वर्षिभ्यो नमोनमः ॥७४॥
सर्वे शुभप्रदातारो भवन्तु मम सर्वदा ।
यदि देया वरा मह्यं पात्रं चाहं मतोऽस्मि वः ॥७५॥
सुराऽसुरमनुष्याणां गन्धर्वोरगरक्षसाम् ।
पशुपक्षिमृगाणां च सिद्धानां च महात्मनाम् ॥७६॥
यक्षविद्याधराणां चोद्भिज्जानां किन्नरात्मनाम् ।
किंपुंसां सर्वरोगाणां मन्त्र्यायुधास्त्रयन्त्रिणाम् ॥७७॥
सर्वेषां दत्तशापानामवध्यत्वं च मे भवेत् ।
नाऽन्तर्बहिर्न दिवसे न रात्रौ चिज्जडैर्न च ॥७८॥
न पृथ्व्यां नाऽम्बरे मृत्युर्मम स्यादजसृष्टितः ।
युद्धे चाऽप्रतिद्वन्द्वत्वमैकपत्यं च देहिनाम् ॥७९॥
सर्वेषां लोकपालानामीश्वरत्वमखण्डितम् ।
तपोयोगप्रभावाणामविनाशो ममास्त्विति ॥८०॥
इत्येते तु वराः स्वेष्टा दीयन्तां पितृभिश्च मे ।
ब्रह्माज्ञया तदा रुद्रः प्राह शिष्यं तपस्विनम् ॥८१॥
शिष्य चैते वराः जन्मवतां तु दुर्लभाः सदा ।
तथापि वितरामोऽद्य कः सृष्टौ शाश्वतो जनः ॥८२॥

इति दत्त्वा वरान् रुद्रब्रह्माद्याः केतनं ययुः ।
हिरण्यकशिपुश्चापि निववृते तपःस्थलात् ॥८३॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने हिरण्यकशिपुः सक्रोधो विप्रयज्ञादिनाशार्थं दैत्यानुत्तेजयन्मन्दराचले तपोऽर्थं जगाम, रुद्रब्रह्मादिभिः समागत्य तस्मै वेधसः सृष्ट्याऽमरत्वं वितरितमितिवर्णननामा पंचत्रिंशदधिकशततमोऽध्यायः ॥१३५॥

श्रीनारायण उवाच—

श्रूयतां सा कथा लक्ष्मि ! त्वया चैकमनीषया ।
एवं वरान्समापन्नो हिरण्यकशिपुः रिपुः ॥ १ ॥
स्मृत्वा भ्रातृविनाशं वै द्वेषं करोति माधवे ।
गत्वा गत्वा दिशाः सर्वा जित्वा तथा च सागरान् ॥ २ ॥
द्वीपाँस्तथोपसुद्वीपान् पातालसहितां भुवम् ।
वेधःस्थानं परित्यज्य सर्वं वशीचकार सः ॥ ३ ॥
मनूनृषीन्पितृपतीन्सुरासुरान्दिवस्पतीन् ।
सिद्धचारणगान्धर्वान् विद्याध्रान्मानुषाँस्तथा ॥ ४ ॥
यक्षरक्षःप्रेतभूतपिशाचोरगकिन्नरान् ।
किंपुरुषाँश्च कूष्माण्डान् वेतालाँश्च विनायकान् ॥ ५ ॥
साध्याँश्च मरुतो विश्वेदेवान्सरित्पाँस्तथा ।
नागान् सलिलकृद्रासाँस्त्रिलोकिस्थानधीश्वरान् ॥ ६ ॥
जित्वा वशं परं कृत्वा विश्वजित्सोऽभवन्नथ ।
लोकपालकृता देवाः प्रासादाः स्मृद्धयस्तथा ॥ ७ ॥
देवोद्यानानि सर्वाणि सामुद्रं रत्नजातकम् ।
महेन्द्रभवनं यावत् दिक्पालानां गृहाणि च ॥ ८ ॥
ग्रहाणां च रथाः सर्वे देवा देव्यो नवा नवाः ।
सर्वं वशीकृतं तेन दैत्याः सर्वत्र योजिताः ॥ ९ ॥
चतुर्दशभुवनानामग्र्या लक्ष्मीर्निजीकृता ।
महन्तो दिव्यसत्सौधाः प्रासादाः परमालयाः ॥१०॥
यत्र विद्रुमसोपाना दिव्यस्फाटिकभित्तयः ।
महामारकतीस्थल्यो वैदूर्यस्तम्भराजयः ॥११॥
दिव्याम्बरवितानानि पद्मरागासनानि च ।
विमानानि महार्हाणि चन्द्रशालाः सुदीप्तयः ॥१२॥
दुग्धफेनसमाः शय्या मुक्तामणिपरिच्छिदाः ।
खानपानविलासाश्च विलासिन्योऽब्दषोडशाः ॥१३॥
स्वर्णवर्णाः सुगन्धाढ्याः मृगाक्ष्यो विदितेङ्गिताः ।
सकिंकिणीकनकक्वन्नूपुरशब्दितगृहाः ॥१४॥
सद्रत्नखचिताऽऽदर्शदृष्टाननसरोरुहाः ।
सुदत्यः स्वल्पमध्याश्च पद्मपत्रायतेक्षणाः ॥१५॥
सुसंकोचविकासादिशक्तिस्वातन्त्र्यसंभृत-
दृढग्रन्थ्यग्रमध्यान्तह्रस्वावकाशयोनयः ।
स्वर्णवर्णचमत्कारचंचद्गात्राः सुरस्त्रियः ॥१६॥
विलसन्ति यत्र दैत्यं रमयन्ति च सर्वदा ।
प्रासादास्तेन ते सर्वे स्वाधिकारे वशीकृताः ॥१७॥
सर्वदेवाभिवन्दितपादपीठो महाबलः ॥
राजते च महेन्द्रस्य सिंहासनविराजितः ।
अशेषधिष्ण्यपैर्दिव्योपदाभिः परिपूजितः ॥१८॥
विश्वावसुतुम्बुरुगान्धर्वाग्र्यैरत्यभिस्तुतः ।
सिद्धर्षिमुनिविद्याध्राऽप्सरोभिः कृतसंस्तवः ॥१९॥
नारायणोऽपर इव राजते भुवनैकराट् ।
यज्ञेषु दानकार्येषु वैश्वानरविधानके ॥२०॥
इत्याभागान् स्वयं भुंक्तेऽर्पिता ऋत्विग्भिरादरात् ।
भूस्तस्यासीद् वसुमती मेदिन्यकृष्टपाकदा ॥२१॥
स्वर्गे कामप्रवर्ष्यभूद् वायुः शान्तिकरोऽवसत् ।
रत्नान्यर्पयते चाब्धिः सरितः सलिलानि च ॥२२॥
सप्तद्वीपाः समुद्राश्च सेवन्ते वर्धयन्ति तम् ।
शैला द्रुमा वनोद्यानाः ऋतवो गगनं तथा ॥२३॥
स्वस्वपरिच्छदैस्तस्य सेवां कुर्वन्ति नित्यशः ।
अग्निस्तस्य पावकोऽभूद् वायुर्वै गृहमार्जकः ॥२४॥
पृथ्वी शय्याकरी चासीज्जलं वारिहरं ह्यभूत् ।
मेधाः शैत्याभिव्यञ्जकव्यजनाऽर्पयिणोऽभवन् ॥२५॥
चन्द्रो रतिश्रमनोदे शैत्यदोऽभूत्सदास्थितः ।
कुबेरस्तस्य भूषाधृक् गायिका च सरस्वती ॥२६॥
इन्द्रः पानप्रदाताऽभूद् यमो हाराधिपोऽभवत् ।
क्षीरमिष्टोदकाः सर्वे सागराश्चोदकुम्भयः ॥२७॥
सूर्यस्तस्य किरीटस्याऽभवन्मण्यमणिः स्वयम् ।
पातालानि च दैत्यस्य पादपीठास्तदाऽभवन् ॥२८॥
अप्सरसः सदा दास्यो देव्यश्च पादमर्दिकाः ।
नद्यः स्नानविधायिन्योऽरण्यानि फलदानि च ॥२९॥
किं न्यूनं कृतभक्तेश्च दासस्य पदभ्रंशने ।
तत्रापि तपसा प्राप्तप्रसादस्य सदा प्रिये ॥३०॥
न मे भक्तस्य किञ्चिद्वै न्यूनं भोग्ये भवेदिह ।
यद्यदिच्छति तस्मादप्यधिकाधिकमुद्ददे ॥३१॥

ऐश्वर्यं मदसम्पत्तिर्यौवनं चाऽविवेकिता ।
प्रत्येकं चाप्यनर्थाय किमु यत्र चतुष्टयम् ॥३२॥
तस्मात्तु सर्वदा भाव्यं निर्लेपत्वेन सर्वथा ।
स वै भोगं च मोक्षं च विन्दतेऽन्यः पतत्यधः ॥३३॥
यथा यथा प्रभुंक्ते वै मूढो विषयपर्वतान् ।
तथा तथा भवेल्लुब्धो मोहपाशप्रजालितः ॥३४॥
यथेष्टं सः प्रभुञ्जानो विषयान् सार्वभौमजान् ।
नाऽत्यतृप्यन्महामूर्खः प्रत्युतोत्पथगोऽभवत् ॥३५॥
उग्रदण्डैर्लोकपालानुद्वेजयति तामसः ।
रक्षति न प्रजा दैत्यानुत्तेजयति पक्षतः ॥३६॥
दैत्यपक्षवर्धयिता सुरपक्षविनाशकः ।
निनाय कालमर्बुदमब्दानामेवमेव सः ॥३७॥
ततो दुःखं परं प्राप्ता उद्विग्ना लोकपालिनः ।
ऋषयो मुनयश्चैव ब्राह्मणा नष्टरक्षणाः ॥३८॥
देवाश्च पितरश्चान्ये ये ये दुःखदशान्विताः ।
ते सर्वे क्षीरधेस्तीरे शरणं ययुरच्युतम् ॥३९॥
नमः शरण्याय शान्तस्वरूपाय नमोनमः ।
दुःखावासाय दैत्यांशलक्ष्मीस्थिताय ते नमः ॥४०॥
रक्षाकर्त्रे यतिसन्यासार्थिने हरये नमः ।
परिवर्त्तनिवासाय परिवर्तात्मने नमः ॥४१॥
बहुकालं स्वभक्ताय दैत्याय सार्वभौमकम् ।
दत्तवान् साम्प्रतं दैत्यभिन्नेभ्यो दातुमर्हसि ॥४२॥
सुरादिवाञ्छितं चापि कृपया दातुमर्हसि ।
परावर्त्तं कुरु विष्णोत्वसह्यः समयो गतः ॥४३॥
इति प्रार्थ्य सुराः सर्वे क्षीराब्ध्युत्तरभूतले ।
समाधौ सुस्थिताश्चान्ये जपयज्ञे व्यवस्थिताः ॥४४॥
नारायणाद्वरं लब्ध्वा रक्षाया वचनं तथा ।
ततो यास्याम इति मे प्रतिपत्तिं विधाय च ॥४५॥
स्मरन्ति स्म हरिं कृष्णं नारायणमहाप्रभुम् ।
तावदाकाशशब्दाख्या वागुवाचाऽशरीरिणी ॥४६॥
भो भोः सुरादयो मुख्या युष्मत्कार्यं भविष्यति ।
आयतिः सुभगा युष्मत्कृते चायाति निश्चितम् ॥४७॥
सर्वेषां कालचक्रस्योदयस्याऽवनतेस्तथा ।
समयो भवति पश्चान्न भवत्येव सर्वथा ॥४८॥
पुण्याऽपुण्यकृतं चक्रं सर्वेषां कृतिबन्धनम् ।
प्रवर्तते यथान्यायं तदस्यास्ति प्रवर्धितः ॥४९॥
अपि महत्तरं पुण्यं हिरण्यकशिपोः खलु ।
प्रकाशते च यावत् तन्नाशोऽपि दुष्करः खलु ॥५०॥
दौरात्म्यं पूज्यहानिश्चाऽधर्मः पत्न्यन्यव्रतं तथा ।
आयुर्नाशं करोत्येव पुण्यनाशं तु वेगतः ॥५१॥
सोऽयं लक्ष्मीमदान्धो वै समाचरति तद्बहु ।
पूर्णे नाशं करिष्यामि चेक्षन्तां कालमागतम् ॥५२॥
द्विजदेवगवां साध्वीसाधुधर्मकृतां मम ।
विद्वेषो नाशकृद्द्याशु मद्भक्तस्य विशेषतः ॥५३॥
तदस्य दिवसाः प्रायः समाप्ता एव सर्वथा ।
तदुपायं करोम्येव यात यूयं स्वकं स्थलम् ॥५४॥
इत्यभिधाय सा वाणी विरमेऽथ सुरादयः ।
तद्दिशं श्रीहरिं स्मृत्वा नत्वा सदंडवत्पुनः ॥५५॥
सर्वे याताः स्वकं स्थानं हतं दैत्यं च मेनिरे ।
हरिः प्रल्हादमालक्ष्य दैत्यनाशमचिक्लृपत् ॥५६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने हिरण्यकशिपुकृतसुरमुन्यादिद्वेषतद्वैभवतद्विनाशार्थ-देवादिकृतविष्ण्वाराधनादिवर्णननामा षट्त्रिंश-दधिकशततमोऽध्यायः ॥ १३६ ॥

**श्रीनारायण उवाच—**

नारायणः स्वयं लक्ष्मीपतिः लक्ष्मि ! सुलक्ष्मकृत् ।
देवानां हितकार्याय सर्वार्पणं करोति वै ॥ १ ॥
सुता तूत्तानपादस्य कल्याणीनामकन्यका ।
हिरण्यकशिपोः पत्नी सुषुवे चतुरः सुतान् ॥ २ ॥
प्रह्लादश्चापि संह्लाद आह्लादो ह्लाद एव ते ।
प्रथमस्तत्र मद्भक्तो महातेजा बभूव ह ॥३॥
महापुरुषसेवायां त्यक्तान्यः सर्वथाऽभवत् ।
ब्रह्मण्यः शीलसम्पन्नः सत्यवर्तनमानसः ॥ ४ ॥
आत्मेव सर्वलोकानां हृदयंगम एव सः ।
महतां पादसेवायां किंकर इव वर्तते ॥ ५ ॥
दीनदुःखहरः सौम्यः पर्युपासितमाधवः ।
विद्याभक्तिप्रभुशक्तिस्मृद्ध एव तु जन्मतः ॥ ६ ॥
गुरुगोविप्रभक्तश्च व्यसनादिविवर्जितः ।
अनित्याऽशुचिदुःखानि जानन् तत्त्वानि दैहिके ॥ ७ ॥
नाऽभूदासक्त ईर्ष्यादिमायाकार्यविवर्जितः ।
न बालक्रीडनकेऽस्ति प्रसन्नो वै मनागपि ॥ ८ ॥
क्रीडा तस्य हरेर्मूर्तौ सुहृत् तस्य हरिः स्वयम् ।
अनुरक्तो हृषीकेशे गर्भवासेऽपि यो हरौ ॥ ९ ॥
सर्वावस्थासु कार्येषु ममोवाक्कायकर्मभिः ।
नान्यं जानाति वै विष्णोर्नारायणात् सनातनात् ॥१०॥

यस्मिन्महागुणाः सर्वे सात्त्वतानां सदा मताः।
वासुदेवे हरौ कृष्णे तस्य नैसर्गिकी मतिः ॥११॥
जगत्प्रति सुषुप्तः स जागर्ति श्रीहरिं प्रति।
स्वपन् श्वसन् समुत्तिष्ठन् चलन् पार्श्वे विवर्तयन् ॥१२॥
प्लवमानः क्षुतौ पश्यन् रसन् जिघ्रन् वदन् स्पृशन्।
पिबन् क्षलन् प्रभुंजानो मिलन् किंचिद्विचारयन् ॥१३॥
नान्यवृत्तिर्हरौ वृत्तिं रक्षन् गृणन् हरे हरे।
ध्यायति स्मरति प्रतिक्षणं चिन्तयते प्रभुम् ॥१४॥
क्वचिदश्रूणि वै प्रेम्णा विमुंचति हरिं स्मरन्।
क्वचिद्धसति देवं स दिव्यं पश्यन् हृदि स्थितम् ॥१५॥
क्वचिदुद्गायति नामान्यतिप्रेम्णा हरेः स्वयम्।
क्वचिन्नृत्यति प्रेमात्मा हरौ द्रवति च क्वचित् ॥१६॥
क्वचित्स्पृष्टो दिव्यमूर्त्या विलीनो जाड्यमेति सः।
एवं ब्रह्मरसप्लुतो नारायणे सुवर्तते ॥१७॥
क्षुधा न तृषा तस्य न भूषा नांगमार्जनम्।
न वस्त्रादिसमीभावो नान्यचित्ते वसत्यदः ॥१८॥
नेत्रे हरिर्मुखे कृष्णो जिव्हायां हरिरेव च।
बाह्ये चैवान्तरे कार्ये हरिर्यस्याश्रयोऽभवत् ॥१९॥
स काले चोपनीतः सन् गुरोर्गेहेऽवसत् सुधीः।
गुरुः पुरोहितस्तस्य काव्यश्चासुरपूजितः ॥२०॥
काव्यस्य तस्य शुक्रस्य सुतौ द्वौ शास्त्रपारगौ।
आद्यः षण्डोऽपरोऽमर्कस्तौ राज्ञार्पितपुत्रकम् ॥२१॥
पाठयामासतुः पाठ्यानर्थानासुरभावनान्।
तथा च सामवेदादीन् ग्राह्यं गृह्णाति नाऽपरम् ॥२२॥
दैव्योऽदैव्यो महाविद्या बह्व्यः सर्वाः प्रपाठिताः।
गुरुप्रोक्तं हि तत्सर्वं शुश्रावानुपपाठ च ॥२३॥
यया मोक्षो भवेत् तां स सम्यक् गृह्णाति भावतः।
असद्ग्रहाश्रयां चान्यां विद्यां त्यजति चान्तरात् ॥२४॥
अधीत्य सर्ववेदाँश्च शास्त्राणि विविधानि च।
कस्मिँश्चिदथ काले च गुरुणा सह दैत्यजः ॥२५॥
पितुः समीपमागत्य ववन्दे पातयोः पतन्।
तं परिष्वज्य बाहुभ्यां तनयं शुभमानसम् ॥२६॥
अंकमारोप्य पप्रच्छ हिरण्यकशिपुः पिता।
प्रह्लाद ! चिरकालं त्वं गुरोर्गेहे निवेशितः ॥२७॥
शिक्षितं गुरुणा श्रेष्ठं तन्ममाऽऽचक्ष्व साधु यत्।
प्रह्लादस्तु नमस्कृत्य प्रहृष्टः सन् जगाद तत् ॥२८॥
"गृहजालं महायाम्यं परित्यज्याऽऽत्मवित् पुमान्।
आत्ममालं हृच्छयनं परिष्वज्याऽऽत्मना यजेत् ॥२९॥
सर्वविद्यार्थसंचारी योऽस्ति श्रीपरमेश्वरः।
स वै सर्वगतः साधुरर्थोऽन्योऽर्थस्त्वपार्थकः" ॥३०॥
श्रुत्वा पुत्रगिरो विष्णुभक्तिप्रवाहगर्भिताः।
दैत्यस्तु प्रहसन् प्राह गुरून् पुत्रप्रशासने ॥३१॥
बालबुद्धिः स्वच्छवस्त्रसमा पार्श्वस्थरोपिणी।
विष्णुपक्षिकृतो भेदो बुद्धावस्य कथं गतः ॥३२॥
यथा न भिद्यते चाऽस्याऽपक्वा बुद्धिस्तथाऽर्थतः।
शासथैनं पूज्यपादाः पुनर्नैवं वदेदयम् ॥३३॥
तदा वै गुरवस्तं स्वं गृहमानीय सामभिः।
समपृच्छन्त केनायं विष्णुरर्थोऽधिशिक्षितः ॥३४॥
नाऽयमर्थो दैत्यपक्षसुखदस्तं परित्यज।
स्वतो वा परतस्तेऽयमर्थो विष्णुमयः कुतः ॥३५॥
प्रह्लादः प्राह सर्वात्मा नारायणपरेश्वरः।
सर्वान्तरात्मा दिशति भज नारायणं सदा ॥३६॥
गुरुः प्राह त्वया प्रोक्तो नारायणः स ते पिता।
नान्यो नारायणः कश्चित्तं भजस्व सुखी भव ॥३७॥
शिष्यः प्राह गुरो सत्यं नारायणस्य भक्तितः।
नारायणसमा भक्ता भवन्त्येवं न मे पिता ॥३८॥
नरसमूहवासेन नारायणोऽपि मे पिता।
कालग्रासो न तु दिव्यो नारायणोऽक्षराधिपः ॥३९॥
तयोरस्ति महान् भेदः पतंगद्युपतंगयोः।
खद्योतं मम पितरं मृषा वेद्मि न भास्करम् ॥४०॥
आत्मप्रकाशकं सत्यं वेद्मि नारायणं गुरो।
तथापि पितरं मन्ये पितरमेव केवलम् ॥४१॥
नात्यधिकं नारायणद्वेषित्वान्माननं न मे।
गुरुः प्राह तथापि त्वं पितृशासनमावह ॥४२॥
पितुः पूजां परिचर्यां सेवामाज्ञां सदाऽऽवह।
शिक्षित इति प्रह्लादः सायं गृहमुपागतः ॥४३॥
पित्रा संपरिष्वज्यांके स्नेहपूर्वं निषादितः।
साम्ना पृष्टश्च मे पुत्राऽद्य त्वयाऽधीतमत्र किम् ॥४४॥
वद श्रुत्वा सुखी स्यां ते विद्यामस्मत्कुलोचिताम्।
प्रह्लादः प्राह पितरं नत्वाऽधीतं ब्रवीमि तत् ॥४५॥
"भवान्नारायणो राज्यान्मृषा नैव यथार्थतः।
लक्ष्मीनारायणः सत्यो वैकुण्ठवासिसेवितः ॥४६॥
तं भजामि भजत्वेनं भवानपि पितर्मम।
श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥४७॥

नवधाऽध्यापनं श्रेष्ठमन्यत् सर्वं विडम्बनम् ।
नवधाऽध्ययनं कार्यं किमन्येन विडम्बिना ॥४८॥

श्रुत्वैतत्परमं भक्तिमयं दैत्यपतिस्तदा ।
सरोषो गुरुमाहेत्थं किमेतच्छिक्षितं त्वया ॥४९॥

ममात्मजस्य दुर्बुद्धे हरिसंस्तवभृद्वचः ।
किमर्थमुक्तवानस्मत्कुलाकार्यै सुरोचितम् ॥५०॥

गुरुपुत्र किमेतद्वै विपक्षगतशिक्षणम् ।
प्रच्छन्नोऽसि विष्णुपक्षपोषकश्छद्मवेशधृक् ॥५१॥

कपटिनामसाधूनामपि कालो न दूरतः ।
गुरुपुत्रस्य पुत्रस्य सह दण्डो भविष्यति ॥५२॥

गुरुपुत्रस्तदा प्राह नेहगध्यापितं मया ।
बुद्धिर्नैसर्गिकी त्वस्य मा कदर्थीकरोतु नः ॥५३॥

तथापि प्राह दैत्येन्द्रो नाऽधीतं तु गुरोस्त्वया ।
कस्मादधीतमेतद्वै वद बाल यथोचितम् ॥५४॥

प्रह्लादः प्राह दैत्येन्द्र कृष्णदत्ता मतिर्मम ।
कृष्णभक्तरजोलेशाभिषिक्ततनुमन्तरा ॥५५॥

साधुप्रसंगसत्सेवामृते न त्वीदृशी मतिः ।
कृपया देवदेवस्य शिक्षितोऽस्मि हरेः प्रभोः ॥५६॥

नाऽन्यो गुरुर्मे वदति स एव प्रेरको हरिः ।
श्रोता मन्ता तथा वक्ता द्रष्टा सर्वत्र वर्तते ॥५७॥

हरिरेवाऽक्षयः शास्ता बुद्धिदाताऽपि स प्रभुः ।
तदा हिरण्यकशिपुः प्राह पुत्रं रुषान्वितः ॥५८॥

अहमेवेश्वरो लोके त्रैलोक्याधिपतिर्मतः ।
मामेवाऽर्चय गोविन्दं त्यज शत्रुं तमच्युतम् ॥५९॥

अथवा शंकरं देवं रुद्रं लोकगुरुं प्रभुम् ।
अर्चयस्व सुराध्यक्षं सर्वैश्वर्यप्रदं शिवम् ॥६०॥

प्रह्लादः प्राह देवस्य मायामोहमिमे गताः ।
राक्षसा अपि मन्यन्ते वयमेवेश्वरा इति ॥६१॥

शंकरोऽपि स्वयं विष्णुभक्तोऽस्ति वैष्णवाग्र्यगः ।
दैत्योऽयं किं न जानाति कथमेवं भ्रमंगतः ॥६२॥

पितर्नैतद्विजानासि मदगर्वधियाऽऽवृतम् ।
नारायणः परब्रह्म तत्त्वं नारायणः परः ॥६३॥

नारायणः परो ध्याता ध्यानं नारायणः परम् ।
गतिर्विश्वस्य जगतः शाश्वतः स प्रभुः परः ॥६४॥

धाता विधाता जगतो वासुदेवः सनातनः ।
विश्वमेवेह पुरुषस्तद्विश्वमुपजीवति ॥६५॥

हिरण्मयशरीरः स पुण्डरीकनिभेक्षणः ।
तेनैव सृष्टौ ब्रह्मेशौ वर्तेते तस्य शासने ॥६६॥

भीषाऽस्माद्वाति पवनो भीषोदेति दिवाकरः ।
भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पंचमः ॥६७॥

आसीदेको हरिर्देवो दिव्यो नारायणः परः ।
न ब्रह्मा न तथेशानो न च चन्द्रदिवाकरौ ॥६८॥

न वा द्यावापृथिव्यौ च नक्षत्राणि दिवौकसः ।
विष्णोः परं पदं तस्य सदा पश्यन्ति सूरयः ॥६९॥

त्यक्त्वा तं श्रीहरिं कस्मात्पूजये पितरं शिवम् ।
यमर्चयन्ति ब्रह्मेशशक्राद्या देवतागणाः ॥७०॥

यं ध्यायन्ति महात्मानो योगिनः सनकादयः ।
यस्य लक्ष्म्याः कटाक्षार्धदृष्ट्या हृष्टा दिवौकसः ॥७१॥

ब्रह्मेन्द्ररुद्रवरुणयमसोमधनाधिपाः ।
यन्नामजपनादेव मुक्तिर्भवति शाश्वती ॥७२॥

तं श्रीपतिं देवदेवमनन्तं पुरुषोत्तमम् ।
श्रीवत्सकौस्तुभोरस्कं नित्यानन्दसुखप्रदम् ॥७३॥

रक्षकं पूजयिष्यामि लक्ष्मीनारायणं हरिम् ।
प्राप्स्यामि सुसुखेनैव तद्विष्णोः परमं पदम् ॥७४॥

चित्स्थं नारायणं देवमक्षरं परमं प्रभुम् ।
विश्वतः परमं नित्यं विश्वं नारायणं हरिम् ॥७५॥

नारायणं सदा ज्ञेयं विश्वात्मानं परायणम् ।
नारायणं परंज्योतिरूपं नारायणात्मकम् ॥७६॥

यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा ।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणं स्थितम् ॥७७॥

ऋतं सत्यं परंब्रह्म पुरुषं कृष्णपिंगलम् ।
नारायणं च्चोर्ध्वशीलं वन्दे विश्वस्वरूपिणम् ॥७८॥

एवं पुत्रवचः श्रुत्वा हिरण्यकशिपुस्तदा ।
क्रोधेन महताऽऽविष्टः कषायीभूतनेत्रकः ॥७९॥

भक्तं स्वपुत्रं स्वोत्संगात् पर्यत्यजन्महीतले ।
परितो वीक्ष्य दैतेयानित्याह क्रोधमूर्छितः ॥८०॥

भीषणैः शस्त्रसंघातैः प्रह्लादं त्वपथस्थितम् ।
ममाऽऽज्ञया घातयन्तु शत्रुपूजनतत्परम् ॥८१॥

वध्यतामाश्रयं वध्यो हित्वा स्वान् सुहृदोऽधमः ।
पितृव्यहन्तुर्यः पादौ विष्णोर्दासवदर्चति ॥८२॥

अंगं रुग्णं च्चाऽचिकित्साविषयं छेद्यमेव तत् ।
परोऽपि हितनिवहः सेव्यस्तिक्तौषधादिवत् ॥८३॥

रक्षिता हरिरेवेति चोच्यते तेन वै बलात् ।
अद्यैव सफलं जन्म पश्येय हरिरक्षणम् ॥८४॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने हिरण्यकशिपोः प्रह्लादे पुत्रे विद्याधीते भगवद्भि-व्याऽभिव्यंजनाद्द्वेषप्रयुक्त मृत्य्वाज्ञादिकथन-नामा सप्तत्रिंशदधिकशततमोऽ-ध्यायः ॥ १३७ ॥

**श्रीनारायण उवाच—**

ततो लक्ष्मि ! मम भक्तं नैर्ऋताः शूलपाणयः ।
तीक्ष्णदंष्ट्राः करालास्यास्ताम्रश्मश्रुकुमूर्धजाः ॥ १ ॥
कुर्वन्तो भैरवान्नादान् छिन्धि भिन्धीतिवादिनः ।
परिवार्य च तं जघ्नुः शूलतोमरशक्तिभिः ॥ २ ॥
प्रह्लादस्य वपुस्तत्र हरेः संस्मरणाच्छुभे ।
वज्रभूतमभूत्तत्र ह्यासन् घातास्तु निष्फलाः ॥ ३ ॥
संप्राप्याऽऽशु स्पृश्य तद्देहं महास्त्राणि तु रक्षसाम् ।
भग्नानि च क्षितौ पेतुः पद्मशुष्कदलादिवत् ॥ ४ ॥
स्वल्पमप्यस्य तद्गात्रं भेत्तु दैत्याः क्षमा नहि ।
विस्मिताऽवाङ्मुखास्तस्थुर्दैत्यराजान्तिके भटाः ॥ ५ ॥
परे ब्रह्मण्यनिर्देश्ये भगवत्यखिलात्मनि ।
युक्तात्मनि महाभक्ते कस्याऽस्त्रं सफलं भवेत् ॥ ६ ॥
प्रयासे निष्फले जाते दृष्ट्वा पुत्रं तमव्रणम् ।
विस्मयं परमं प्राप्तो हिरण्यकशिपुस्तदा ॥ ७ ॥
महादुःखैर्हृदि चान्धो मूर्छित इव रोषतः ।
चकार तद्वधोपायानभिचारावपातनैः ॥ ८ ॥
मायाभिः सन्निरोधैश्चाऽभोजनैर्गलबन्धनैः ।
सर्वत्र श्रीहरिस्तस्य रक्षां चकार मातृवत् ॥ ९ ॥
एवं कृतेऽपि निर्विघ्ने पुत्रे दैत्यस्तु शंकितः ।
म्रियेत वा न म्रियेत मारयेत वा किं क्रियात् ॥१०॥
शत्रुस्तथापि हन्तव्यो यावद्बुद्धिबलोदयः ।
आदिदेश ततः सर्पान् दन्दशूकान्महाविषान् ॥११॥
वासुकितक्षकादींश्च खादयन्त्विति संब्रुवन् ।
एवमादेशमाप्तास्ते नागा विषोल्बणास्तदा ॥१२॥
ज्वलितास्या महाभीमास्तं चखदुर्महाबलम् ।
गरुडध्वजदासं तं विदश्य गरलायुधाः ॥१३॥
निर्विषाश्छिन्नदशना बभूवुरनिलाशनाः ।
विष्णुप्रेरितगरुडच्छिन्नमर्मादिगात्रकाः ॥१४॥
दुद्रुवुस्ततःस्थलात् तूर्णमपृष्ठदर्शिनः पुनः ।
वमन्तो रुधिरं भग्ना मृताश्च किंचनाऽभवत् ॥१५॥
महासर्पानपि पुत्रे निष्फलाँश्च विलोक्य सः ।
आदिदेश महाक्रुद्धो दिग्गजाननिवार्यकान् ॥१६॥
मदोद्धता महाक्रुद्धा दन्तिनः परिवार्य तम् ।
जघ्नुर्दन्तैः पृथुतमैस्तथापि वज्रदेहवान् ॥१७॥
मम कृपावशो रोम्णि मनागपि न वै क्षतः ।
प्रत्युत हस्तिनां दन्ता मूलात् छिन्ना अधोऽपतन् ॥१८॥
दन्तैर्विना कृता नागाः प्रदुद्रुवः सुदुःखिनाः ।
दृष्ट्वैवं तु चमत्कारं विरराम तथापि न ॥१९॥
अहो माया हरेः सुभ्रु ! पातयत्यधमाधमम् ।
महानागैरथाऽच्छिन्नं पुत्रं दृष्ट्वा स रोषतः ॥२०॥
प्रज्वालिते महावह्नौ चिक्षेप सुतमात्मनः ।
हाहाकारो महानासीद् ग्रामे खेटे च राष्ट्रके ॥२१॥
अग्निर्देवोऽपि भक्तन्तं जलशायिहरिप्रियम् ।
मत्वा नैव ददाहाऽऽस्ते शान्तो वह्निः शशीव सः ॥२२॥
मूढस्तथापि नो वेत्ति रक्षकश्चास्य वर्तते ।
पश्चाद् विषं महाघोरं दत्तवान् पानभोजने ॥२३॥
अर्चने वस्त्रसंग्राहे प्रयुक्तमपि नाऽस्पृशत् ।
विषमप्यमृतं जातं नारायणप्रभावतः ॥२४॥
अथापि चाक्षतं पुत्रं यथापूर्वं प्रपश्य सः ।
खनिं महत्तरां भूमौ खनयामास तत्र तम् ॥२५॥
प्रक्षिप्य च महाग्राव्णैर्महीमापूरयत् समाम् ।
नारायणेन प्रह्लादो राजसौधे सुकर्षितः ॥२६॥
यत्राऽसुरो महासिंहासने वैराजतेऽत्र तम् ।
जीवन्तं देवसदृशं दृष्ट्वाऽऽगतं भयान्वितः ॥२७॥
ममायं मारकश्चास्ति निश्चिकायाऽऽह दैत्यराट् ।
उन्नीत्वा राक्षसा एनं क्षिपन्तु जलधौ द्रुतम् ॥२८॥
कृतं तथैव तैः सर्वैस्तेभ्यः पूर्वं गृहागतः ।
दृष्ट्वैवं तं हिमाद्रौ तु महाग्नि ततोऽक्षिपन् ॥२९॥
नरनारायणस्तं चाऽरक्षयद् हिमवारणात् ।
अप्रापयत् तु दैत्यस्य सौधं दृष्टः स राक्षसैः ॥३०॥
मृतेरुपायाः सन्त्येव परं नात्र फलन्ति ते ।
किं कर्तव्यं क्व गन्तव्यं मृत्युर्नास्त्यस्य मे यथा ॥३१॥
मया वरो मम कृते प्राप्तः स फलितोऽत्र किम् ।
पिता पुत्रः समौ श्लाघ्यौ परं वैष्णवताऽऽर्तिदा ॥३२॥
भावि दस्त्यात् तेन भाव्यं मम स्वित् मृत्युरस्त्ययम् ।
तथापि निर्णयं कुर्वे भक्तौ काष्ठाऽस्य किंबला ॥३३॥

विचार्येत्थं सुतं प्राह त्वया चोक्तं मयाग्रतः ।
व्यापित्वात्सर्वभूतानां विष्णुरित्यभिधा यतः ॥३४॥
तस्य सर्वत्र चास्तित्वं प्रत्यक्षं दर्शयस्व मे ।
यश्च सर्वगतो देवः स एव परमेश्वरः ॥३५॥
तस्यैश्वर्यशक्तितेजोज्ञानवीर्यबलानि च ।
रूपस्मृद्धिविभूतिसद्गुणचारित्र्यकाणि च ॥३६॥
दृष्ट्वा सम्यक् ततो मन्ये तव विष्णुं सुराधिपम् ।
मत्तो यदि स ज्येष्ठोऽस्ति जित्वा मां बलवीर्यतः ॥३७॥
ईश्वरत्वं लभत्वत्र नान्यथा तु कदाचन ।
मम प्रतिबलो नास्ति लोके देवेषु कश्चन ॥३८॥
रुद्रस्य वरदानेन ह्यवध्यो दुर्जयोऽस्म्यहम् ।
इतिपितुर्वचः श्रुत्वा प्रह्लादः प्रहसँस्तदा ॥३९॥
हरेः प्रभावं दैत्यस्य कथयामास सर्वथा ।
यो वै नारायणः श्रीशः परमात्मा परात्परः ॥४०॥
नृषु नारेषु अयनान्नारायणः स उच्यते ।
वसनात्सर्वभूतेषु वासुदेवः स एव सः ॥४१॥
सर्वस्य जगतः पोष्टा विष्णुरित्यपि वेशनात् ।
न चाऽनेन विना किंचिज्जगत्स्थावरजंगमम् ॥४२॥
सर्वचिदचितोर्मध्ये रूपमस्यैव वर्तते ।
त्रिपाद्व्याप्तिः परे धाम्नि पादव्याप्तिस्तु मायिकी ॥४३॥
सोऽयं चक्रगदापाणिर्भक्तिदृश्योऽस्ति सर्वथा ।
रोषमत्सरमानादिदुर्गुणैर्नहि दृश्यते ॥४४॥
देवतिर्यङ्मनुष्येषु स्थावरेषु च जन्तुषु ।
व्याप्य तिष्ठति सर्वेषु क्षुद्रेषु च महत्सु च ॥४५॥
यावदेवं कथयति प्रह्लादे तावदेव तु ।
हिरण्यकशिपोर्वामनेत्रोष्ठांऽसादयोऽस्फुरन् ॥४६॥
काको रुरोद नृपतेर्ध्वजदण्डे मुहुर्मुहुः ।
ध्वजभंगोऽभवत्तावदपतत् स्खलनात् स्वयम् ॥४७॥
चकम्पे हृदयं तस्य जानतोऽशकुनानि यत् ।
धूम्रकेतुः सकल्गिश्च व्योममार्गे ह्यदृश्यत ॥४८॥
कृष्णाऽजशकटी दृष्टा याम्यां दिशं प्रयाति या ।
रक्तैकवस्त्रा स्वपत्नीर्दृष्टा स्वश्लेषिता क्षणम् ॥४९॥
दृष्टं स्वमस्तकं देहात् पृथक् स्वहस्तगं क्षणम् ।
दिवा शुक्रस्तदा दृष्टः स्वर्गे दिशः सधूलिकाः ॥५०॥
दृष्ट्वा दृष्ट्वैव मृत्युर्मे भवितैतद्विरोधतः ।
ज्ञातवानथ तं किंचिन्म्लानश्रियमधोमुखम् ॥५१॥
शण्डामर्कौ शुक्रपुत्रौ सान्त्वनायेति होचतुः ।
मा खेदं कुरु राजेन्द्र ! जगज्जेता त्वमेव हि ॥५२॥
आवां तं शिक्षयिष्यावो यथा स्यात् कुलधर्मगः ।
बद्ध्वा वरुणपाशैस्तं रक्षिष्यावो निजे गृहे ॥५३॥
वयसः पक्वभावे तु बुद्धिः सुज्ञा भविष्यति ।
इति संगृह्य तद्वाचं शोकं च परित्यज वै ॥५४॥
अर्पयामास पुत्रं तौ राजधर्माद्यधीतये ।
गृहधर्मोपदेशाय धर्मार्थकामलब्धये ॥५५॥
गुरुपुत्रावपि योग्यानुक्तान्धर्मान् यथायथम् ।
शिक्षयामासतुस्तान् स नोपाजग्राह चात्मनि ॥५६॥
यया द्वन्द्वानि जायन्ते न सा विद्या तु मुक्तये ।
मत्वैवं रिक्तसमये बालानाहूय सद्‌ज्ञान् ॥५७॥
उपादिदेश मोक्षाख्यान् धर्मानासुरताऽतिगान् ।
स्वच्छात्मानश्च ते बाला सुमिष्टानिव मोक्षदान् ॥५८॥
आत्मानन्दप्रदान् स्वच्छान् धर्मान् जगृहुरादरात् ।
तानाह भोः स्वच्छबाला विष्णुः सर्वत्र तिष्ठति ॥५९॥
स्वच्छात्मसु च बालेषु विशेषेण च तिष्ठति ।
बालैरभ्यर्हितं सर्वं भक्त्याऽर्पयति केशवः ॥६०॥
अभ्यर्थितेषु सर्वेषु मोक्षोऽस्त्यभ्यर्थिताग्र्यगः ।
स एवाऽभ्यर्थनीयोऽत्राऽध्रुवमानुषजन्मना ॥६१॥
आत्माऽयं बहुवारं वै सुराऽसुरादियोनिषु ।
जातो जातः समायाति भोगविलासवर्त्मना ॥६२॥
मोक्षपथेन नाऽऽयाति मोक्षः सर्वत्र दुर्लभः ।
सर्वत्राऽऽप्तं सुखमैन्द्रियकं स्वभावसारि तत् ॥६३॥
तत्र प्रयासे स्वायुर्वै वृथैव विगतं भवेत् ।
श्रीहरिपादपाद्मं तु कुशलक्षेमकारणम् ॥६४॥
यावद्देहो न नश्येत स्वं क्षेमं साधयेद्बुधः ।
पुंसश्चायुरब्जवर्षं कोट्यब्दं लक्षवत्सरम् ॥६५॥
सहस्राब्दं शताब्दं वा विंशत्यब्दमथापि वा ।
तत्रार्धं निद्रया नीतं दशांशं बालखेलने ॥६६॥
दशांशं विद्यया नीतं दशांशं वृद्धताहृतम् ।
दशांशश्चावशिष्येत विषये वा धनार्जने ॥६७॥
तस्य व्ययो भवेच्चेद्भोः कदाऽऽत्मार्थं कृतं भवेत् ।
मोक्षार्थं न कृतं किञ्चित्तदा सर्वं कृतं नहि ॥६८॥
मोक्षार्थं चेत्कृतं किंचित्तदा सर्वं कृतं भवेत् ।
विचार्यैवं सदा बालाः कर्तव्यं मोक्षसाधनम् ॥६९॥
साधनीयः स्वयं स्वामी हरिः सर्वान्तरस्थितः ।
स्त्रीस्नेहः पुत्रकृत्स्नेहः सुहृत्स्नेहः कुटुम्बिनाम् ॥७०॥
भ्रातृस्वसृदुहितॄणां स्नेहो निगडबन्धनम् ।
औपस्थ्यजैह्वयविषयान् बहुमत्वाऽत्र सज्जते ॥७१॥

दुःखे कुटुम्बपुष्टौ च क्लिष्टे च विषयार्जने ।
तापत्रयेणाऽऽर्दितोऽपि यत्नं नैव जहाति वै ॥७२॥
द्रव्यचित्तो द्रव्यहर्ताऽशान्तकामो विनश्यति ।
ज्ञाताऽपि नैव कैवल्यं विन्दते विशति मृतिम् ॥७३॥
कामनानिगडप्राप्तः क्रीडामृगो न मुच्यते ।
तस्माद् बाला मृषा त्यक्त्वा हरिं भजत भावतः ॥७४॥
द्रागेव हृष्यति देवो ददात्यानन्दमात्मजम् ।
स्थूलसूक्ष्मप्रभूतेष्विन्द्रियप्राणान्तरेषु च ॥७५॥
विकृताऽविकृताऽवस्थमायायामपि माधवः ।
एक एव हि चान्विष्टो व्यतिरिक्तोऽपि चैव सः ॥७६॥
दृश्यात्मा च प्रद्रष्टात्मा व्याप्यव्यापक एव सः ।
आनन्दपूर्णचरणबाहूदरसुखादिकः ॥७७॥
सुराऽसुरादिसर्वात्मा हृदि तिष्ठति केशवः ।
ऋतं सत्यं हितं कार्यमिति वक्ति हृदि प्रभुः ॥७८॥
मृषा मिथ्या हतं त्याज्यमिति वक्ति स एव सः ।
असत्यर्थे नेति वक्ति सत्येऽर्थे वक्ति ओं हि सः ॥७९॥
आसुरं भावमुत्सृज्य येन तुष्यति माधवः ।
तेन सौहृदभावेन वर्तध्वं. भजताऽच्युतम् ॥८०॥
धर्मादयो हरिरेव यमाश्च नियमा हरिः ।
साधनानि हरिरेव विद्याः सर्वाः कला हरिः ॥८१॥
यावत्कृत्यफलं विष्णौ सर्वात्मार्पणमुच्यते ।
हरौ हरेर्दासदासीभक्तेषु विमला मतिः ॥८२॥
तेषां पादरजःस्नानं सारं मोक्षप्रदं महत् ।
मह्यं नारददेवेन गर्भेऽध्यापितमेव यत् ॥८३॥
हरिस्तत्साधवः सेव्यास्तदन्यजन्मदं यतः ।
मायादमभिमानं वै हरेः सन्तस्तु मुक्तिदाः ॥८४॥
श्रुत्वैतद्दैत्यपुत्रास्तं पप्रच्छुर्नारदः कदा ।
आलम्ब्य समये गर्भेऽकरोद् बोधमसंभवम् ॥८५॥

इति श्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने हिरण्यकशिपुकारितप्रह्लादमारणोपायनैष्फल्यगुरुकृतोपदेश-प्रह्लादकृतदैत्यबालकोपदेशनिरूपणनाम्नाऽष्टत्रिंशदधिक-शततमोऽध्यायः ॥१३८॥

### श्री नारायण उवाच—

प्रह्लादः प्राह तान्दैत्यार्भकान् ज्ञानानुरागिणः ।
मन्दराद्रौ मे पितरि तपति धूम्र उत्थिते ॥ १ ॥
वल्मीकवंशकाष्ठादिच्छन्ने दैत्या निराशकाः ।
मृतो दैत्यप्रमूर्धन्य इति मत्वा च दुःखिताः ॥ २ ॥
तदा तान्निर्बलान् ज्ञात्वा चक्रुर्युद्धमतिं सुराः ।
हता दैत्याः सुरसैन्यैर्दुद्रुवुः सर्वतोदिशम् ॥ ३ ॥
स्त्रीपुत्रदुहितृस्वसृपितृकुटुम्बजीविनः ।
धनधान्यपरिच्छदान् परित्यज्य च दुद्रुवुः ॥ ४ ॥
देवाः सर्वबलोपेताः व्यलुम्पन् दैत्यसंग्रहान् ।
राजप्रासादमाच्छिद्य कल्याणीं मम मातरम् ॥ ५ ॥
इन्द्रो नीत्वा यदा याति स्वर्गं तावच्च नारदः ।
मार्गे एव मिलितस्तं प्राह क्व नयसि द्रुतम् ॥ ६ ॥
सतीं नेतुमयोग्यस्त्वं मुंचैनां वै निरागसम् ।
इन्द्रः प्राह तदाऽस्यास्तु गर्भे दैत्यस्य बालकः ॥ ७ ॥
अप्रसह्योऽस्ति तस्माद्वै यावत्प्रसवं रक्षये ।
कृतार्थेन परित्याज्या नान्यन्मेऽस्ति प्रयोजनम् ॥ ८ ॥
नारदः प्राह चेन्द्राय गर्भो महान् स वैष्णवः ।
देवविष्णुगवां भक्तो विप्रसात्त्वतसेवकः ॥ ९ ॥
यद्भयं तेऽस्ति तन्नैव शंकनीयं परित्यज ।
नारदोक्तं तदा हीन्द्रः स्वीकृत्यैनां विहाय च ॥१०॥
नमस्कृत्य गतः स्वर्गं नारदोऽपि महान्प्रभुः ।
मातरं मे सह नीत्वा जगाम स्वाश्रमं प्रति ॥११॥
आश्वासनेन सम्बोध्य यावत्तपसस्ते पतिः ।
आगच्छेत् तावदत्रैव सुखं वत्से समुष्यताम् ॥१२॥
इत्याश्रयं शुभं लब्ध्वा सत्यवात्सीच्च निर्भया ।
नित्यं परमया भक्त्या ऋषिं पर्यचरन्मुदा ॥१३॥
ऋषिः सकरुणस्तस्यै प्रादात् ज्ञानं तु मोक्षदम् ।
तत्सर्वं तु मया गर्भगतेनाऽऽसादितं स्थिरम् ॥१४॥
तन्मातुर्मे लयं यातं ममैव दृढतां गतम् ।
दृढसंस्कारकं सर्वं स्मरामि च यथोदितम् ॥१५॥
ज्ञानं रोचयमानानां बालानां भवतां मुदा ।
श्रेयस्करं परं नोऽस्ति श्रद्धाग्राह्यं हि तद्व्रतः ॥१६॥
वच्मि किञ्चिच्च तज्ज्ञानं सारमाकृष्य सर्वतः ।
आदर्शस्वच्छहृदये द्रागुलग्नं मोक्षदं भवेत् ॥१७॥
स्त्रीबालानां कृते येन लाभः सारल्यतो भवेत् ।
तद्यथावन्मनो दत्वा श्रोतव्यं सारमात्मनः ॥१८॥
पूर्वकर्मानुसारेण तेजस्व्यात्माऽतिसूक्ष्मकः ।
पितुर्धातौ विशत्येव वीर्ये गर्भे निषिच्यते ॥१९॥
वीर्ये तद्भौतिकं वस्तु जीवः सच्चित्सुखात्मकः ।
अणुः प्रकाशो नित्यश्च ज्ञाता ज्ञानघनात्मकः ॥२०॥
जीवात्मनाऽन्वितं वीर्यं रजोयुक्तं भवत्यथ ।
रजोवीर्यात्मभिः सर्वा सृष्टिर्भवति चेतना ॥२१॥

न्यात्मकोऽयं भवेद् देहः पुरुषः प्रमदाऽथवा ।
नपुंसको वा जायेत षट्कोशात्मात्रिधाऽपि वै ॥२२॥
पितृतः स्नाय्वस्थिमज्जा मांसरोमाऽस्रजः स्त्रियाः ।
षट्कोशास्ते शरीरस्थाः षट्स्वात्मा संप्रतिष्ठति ॥२३॥
स्थूले बालशरीरे वै पृथ्व्यप्तेजोऽनिलाऽम्बरम् ।
भूतपंचकमस्त्येव तत्र विषयपंचकम् ॥२४॥
स्थूलं गन्धरसरूपस्पर्शशब्दात्मकं तथा ।
घ्राणजिह्वानयनत्वक्श्रोत्रग्राह्यं क्रमाद्धि तत् ॥२५॥
वाग्घस्तपादपायूपस्थेन्द्रियाणि पराणि च ।
वाण्यादानविहरणमलमूत्रविसर्जनम् ।
कार्यं क्रमाद्धि बोधव्यं मनश्चित्तमहंमतिः ॥२६॥
अन्तःकरणमित्युक्तं तत्परं प्रकृतिर्मता ।
सत्त्वरजस्तमोयुक्ता समावस्था हि कारणम् ।
विषमावस्थिका सैव संसारस्तत्त्वविग्रहः ॥२७॥
मायायास्तु विकारा ये नाशवन्तस्तु ते मताः ।
आत्माऽस्त्यमायिकः शुद्धो नाशो नास्य कदाचन ॥२८॥
देहस्तु जायते पश्चाद् वर्धते बहुभोजनैः ।
विपरिणमते चैव क्षीयते नश्यते मृषा ॥२९॥
आत्मा च तत्र सर्वत्र वर्ततेऽस्ति ह्यतः स सन् ।
देहादि जडमित्येव चात्मा चेतन एव हि ॥३०॥
देहादि दुःखरूपं वै ह्यात्माऽऽनन्दमयः सदा ।
सच्चिदानन्द इत्युक्तो न दैत्यो न च दानवः ॥३१॥
न सुरो नाऽसुरश्चात्मा न नारी न पुमान् हि सः ।
नपुंसको न रागी न न द्वेषी शुद्ध एव सः ॥३२॥
अज्ञस्तु बोधहीनो वै क्वचित्सात्त्विकभावनः ।
क्वचित्तु राजसोभावः क्वचित्तामसभावनः ॥३३॥
सत्त्वं सुखकरं मन्ये रजो रागकरं भवेत् ।
तमः पीडाकरं प्रोक्तं तस्मात् सत्त्वगुणं भजेत् ॥३४॥
सत्त्वमप्यात्मनो लाभकरं हितदमिष्यते ।
यद्यहितं मोक्षदं न तदा तदपि त्यज्यते ॥३५॥
स्वात्मन्यवस्थिते नारायणे या सात्त्विकी मतिः ।
सा वै सदा भवेल्लाभकरी मोक्षप्रदापि च ॥३६॥
जाग्रत्स्वप्नं सुषुप्तिश्च देहादौ नात्मनि क्वचित् ।
स्थौल्यं सौक्ष्म्यं कारणत्वं देहादौ नात्मनि क्वचित् ॥३७॥
पापं पुण्यं चोभयं च जन्मपुष्टिर्मृतिस्तथा ।
देवदैत्यमानवत्वं देहादौ नात्मनि क्वचित् ॥३८॥
न गृहं गृहमित्युक्तं शरीरं गृहमुच्यते ।
क्षणभंगुरकं तच्च तेन मोक्षं प्रसाधयेत् ॥३९॥
आत्मा ह्यसंगः सर्वत्र जनसंगी भवेद्यदि ।
शुद्धे संगः कुलजातेरभिमानकरो भवेत् ॥४०॥
तेन द्वेषो भवेत् तत्तद्विपरीते ऋतार्थके ।
अहं दैत्य इत्यहंकारेण चात्मा यदि वृतः ॥४१॥
तदा द्वेषो भवेद्देवे नारायणे तु सर्वथा ।
पतनं मुक्तिमार्गाच्च द्वेषान्नारायणे तथा ॥४२॥
तस्माद् बाला वयं शुद्धा यावन्न बुद्धिभेदकाः ।
शब्दाः पक्षानुगा लब्धास्तावन्मोक्षं प्रसाधयेत् ॥४३॥
चतुर्विंशतितत्त्वेषु पंचविंशं तु मार्गयेत् ।
स्वयं स्वं मार्गयित्वैव षड्विंशे तं समर्पयेत् ॥४४॥
तावत्पर्यन्तमेवाऽयं संसारो वासनात्मकः ।
आत्मतदात्मनोर्यावत् संविवेकोऽत्र नो कृतः ॥४५॥
शान्तं घोरं च मूढं च तत्त्वजालं विबुध्य च ।
तत्परं स्वं परिज्ञाय परात्परं समाश्रयेत् ॥४६॥
न माता न पिता पुत्रो भगिनी बान्धवास्तथा ।
परलोके सहायाः स्युः हरिः साहाय्यदो भवेत् ॥४७॥
स च सर्वत्र भूतेषु वर्तमानोऽपि देहिना ।
विना साधनसम्पत्त्या नोपलभ्यत एव सः ॥४८॥
प्रभुप्राप्तेः साधनानि गुरोः शुश्रूषणं तथा ।
प्रेमभक्तिः सदा सेवा सर्वलब्धार्पणं तथा ॥४९॥
साधुसाध्वीप्रसंगश्च विष्णोराराधनं परम् ।
तत्कथाश्रवणं तस्य कीर्तनं गुणवर्णनम् ॥५०॥
तन्मूर्तेर्ध्यानमत्यर्थं दर्शनं स्मरणादिकम् ।
सर्वभूतेषु तद्भानं भक्तानां तत्समार्हणम् ॥५१॥
सर्वं समर्प्यते तत्र रतिः सर्वापि तत्र च ।
क्रियाः सर्वाश्च तन्मय्यस्ततोऽन्यन्नावबुध्यते ॥५२॥
ध्याने वा धारणायां वा समाधौ चापि तन्मयः ।
जाग्रति वा तथा स्वप्ने सुषुप्तावपि तन्मयः ॥५३॥
प्रवृत्तौ वा निवृत्तौ वा सर्वावस्थासु तन्मयः ।
हसनं रोदनं गानं नर्तनं क्रन्दनं स्वपिः ॥५४॥
छिक्कनं वर्तनं पानं भोजनं रमणं गतिः ।
सदनं मार्गणं यद्वा दर्शनं स्पर्शनं श्रुतिः ॥५५॥
क्षुवनं चिन्तनं निर्णायनमध्यासनं तथा ।
मननं तन्मयं हर्षोत्पुलकाश्रुसगद्गदम् ॥५६॥
भवेत्तदा हरिश्चात्र भक्तियोगेन दृश्यते ।
तस्य कथाश्रवं कृत्वा मननं कार्यमेव यत् ॥५७॥
तस्य मूर्तेश्चिन्तनेन कल्मषं क्षालितं भवेत् ।
निर्मलात्मा तदा स्वस्मिन्नन्यत्रापि च सर्वथा ॥५८॥

नारायणं प्रपश्येत् संभजध्वं वै ततोच्युतम् ।
प्राज्ञेनाऽऽप्यं ध्रुवं तत्त्वं त्याज्यमध्रुवमेव यत् ॥५९॥
ध्रुवेण चात्मना प्राप्तव्यो ध्रुवो हरिरेव वै ।
स वै सर्वत्र संपोष्टा सुखदो मोक्षदस्तथा ॥६०॥
सुखं सातिशयं त्याज्यं क्षयिष्णु त्याज्यमेव च ।
अविशुद्धं सदा त्याज्यं ग्राह्यं तद्दोषवर्जितम् ॥६१॥
तत्तु नारायणादेव नाऽन्यस्मान्मिलति क्वचित् ।
तस्मान्नारायणो ध्येयः स्वात्मन्याराध्य एव सः ॥६२॥
दृष्टानुश्रवदोषास्तं सर्वं मायामयं जगत् ।
तच्छून्यं सुखसंस्थानं नारायणो भवत्यतः ॥६३॥
तद्भक्त्या शाश्वतानन्दः प्राप्तव्योऽस्माभिरर्भकाः ।
अशाश्वतं सुखं यत्र पुत्रदारगृहादिषु ॥६४॥
धने राज्ये तथाऽमात्ये गजाश्वेषु जनादिषु ।
प्रासादे वा सुहृद्वर्गे तुच्छे शाश्वतिकेषु यत् ॥६५॥
क्षणं दृश्येत सुभगं सह देहेन नश्वरम् ।
अनर्थदं क्षणादर्थाभासं दुःखातिकृत्तथा ॥६६॥
को वाऽस्त्यत्राऽऽत्मनः स्वार्थः शाश्वतस्तन्निरूप्यताम् ।
देहे दैहिकसंघाते वस्तुन्यपि च यत्प्रियम् ॥६७॥
तत्तु विष्णोर्निवासाद्यत् हरिः सर्वप्रियात्मकः ।
यत्र क्वापि गतो जीवो दैत्यो यक्षोऽथवाऽसुरः ॥६८॥
सुरो वा मानवो वापि गन्धर्वो वापि राक्षसः ।
भजन्नारायणं देवं स्वस्तिमान् स्यान्न तद्दते ॥६९॥
मुकुन्दप्रीणने नैव व्रतदानतपःक्रियाः ।
बहुज्ञतावयोरूपेज्याशौचातिकुलार्थिताः ॥७०॥
कारणं, निर्मला भक्तिर्भावनार्द्रात्मनि प्रभा ।
एवंविधां परां भक्तिं हरौ कुर्वन्तु बालकाः ॥७१॥
मया सदा कृता भक्त्या यया पश्यामि केशवम् ।
ऋषयः पितरो देवा मुनयो मानवास्तथा ॥७२॥
दानवा राक्षसा दैत्या यक्षाः किंपुरुषाश्च ये ।
किन्नराश्चैव गान्धर्वाश्चारणाः सिद्धपूरुषाः ॥७३॥
विद्याधराः पिशाचा वा भूतप्रेताश्च येऽपरे ।
साध्या विश्वाश्च कूष्माण्डा वैनायकाश्च भैरवाः ॥७४॥
वेतालाश्च गणाश्चैव याम्या नागाः सरीसृपाः ।
खगा मृगा जलवासा भूवासाः पवनाश्रयाः ॥७५॥
अन्तरीक्षगता ये च ग्रहाः स्थावरजङ्गमाः ।
बाला वृद्धाः स्त्रियः शूद्राः संकराः पापयोनयः ॥७६॥
हित्वा पापं गता मुक्तिं श्रीमन्नारायणाश्रयात् ।
तस्मादस्माभिरप्यत्र दुर्लभे नरजन्मनि ॥७७॥
भजनीयो हरिः साक्षात् तदन्यत्तु विडम्बनम् ।
इत्यादेशो मया गर्भगतेनाऽऽप्तस्तु नारदात् ॥७८॥
नारायण हरे कृष्ण श्रीपते कमलापते ।
पार्वतीशेश मुक्तेश प्रभेशेश च ते नमः ॥७९॥
एवं भजँश्च वर्तेऽहं यूयं कुरुत तत्तथा ।
श्रुत्वैवं बालकाः सर्वे जगृहुस्तद्यथातथम् ।
शालायां ते जगृहुर्न गुरुशिक्षितमण्वपि ॥८०॥
तदाचार्यसुतः खिन्नो भयभीतश्च भूभृते ।
निवेदयामास सर्वं बालास्तु कुपथंगताः ।
श्रुत्वा स्वपुत्रकर्तव्यमतिक्रोधेन कम्पितः ॥८१॥
पुत्रस्य निधनं कर्तुं पिता दैत्यो मनो दधे ।
प्रह्लादं च समाहूय वाचा परुषया क्षिपन् ॥८२॥
पापेन चक्षुषा पश्यन् तिरश्चीनेन रोषतः ।
प्राह शान्तं कुलोद्धारयोग्यं भागवतं सुतम् ॥८३॥
रे बुद्ध्याऽधम मे विद्याभेदकाऽन्यकृताश्रय ।
मन्यसे न स्वयं शिक्षामन्यांश्च नयसेऽपथम् ॥८४॥
अभीत इव लोकानां शासितुः शासनं मम ।
न गणयसि दुष्टात्मन् प्रेषयिष्ये यमालयम् ॥८५॥
चतुर्दशानां लोकानां राज्ञोऽनादृत्य मे वचः ।
बलं कस्य समाश्रित्य स्तब्धो भवसि रेऽधम ॥८६॥
प्रह्लादः प्राह तच्छ्रुत्वा पितस्ते चास्ति यद्बलम् ।
बलं तस्यापि मे चास्ति यद्बलाद् बलवज्जगत् ॥८७॥
ब्रह्मरुद्रादयः सर्वे यत्सहौजोबलादिभिः ।
राजाधिराजा राजन्ते तद्बलं चावयोः सदा ॥८८॥
द्वेषभावं परित्यज्य पितस्त्वं धत्स्व मानसे ।
प्रह्वीभावेन तद्ध्यानं मनुते स समर्हणम् ॥८९॥
तावताऽप्युद्धरेदात्मा नान्यथा तु कदाचन ।
दिग्जेतारोऽपि मोहस्य क्रोधस्य क्षुद्रवेगिनः ॥९०॥
आपन्ना वशमेवेति मा याहि तद्वशं पितः ।
नैवमात्मा पातितव्यस्त्रिलोकेशेन भूभृता ॥९१॥
भक्त्या त्वारोहयितव्यो हरेर्धाम परं पदम् ।
कथं पापं चार्जयसे सर्वनाशकरं पितः ॥९२॥
श्रुत्वैतत्स्वसुतोक्तं स हिरण्यकशिपुस्तदा ।
मुमूर्षुरसहमानोऽविषह्यवेदनानलम् ॥९३॥
प्राह पुत्रं तव मृत्युर्व्यक्तं चात्र समागतः ।
अस्थाने कत्थसे दुष्ट क्वास्ति ते परमेश्वरः ॥९४॥
नान्यो मदन्य ईशोऽस्ति चेदस्ति त्वां स रक्षयेत् ।
सर्वत्राऽस्ति यदि चासौ यदि सर्वगतो भवेत् ॥९५॥

स्तम्भे दर्शय तं विष्णुमन्यथा वधमर्हसि।
इत्युक्त्वा खड्गमादाय सहसा दितिजेश्वरः ॥९६॥
प्रचक्रमे सुतं हन्तुं तावत् स्तम्भो द्विधाऽभवत्।
जातो भयंकरः शब्दः स्तंभाद्व्याप्तो दिगम्बरम् ॥९७॥
संवर्तनाशसंरावैः खमिव स्फुटितान्तरम्।
तेन शब्देन महता दैत्यश्रोत्रविघातिना ॥९८॥
सर्वे निपातिता भूमौ दैत्यास्तु मेनिरे तदा।
जगत्त्रयं विनष्टं वा प्रलयश्चागतोऽस्ति नः ॥९९॥
तावत् स्तंभे महातेजा निष्क्रान्तो वै महागिरिः।
नृसिंहवपुरास्थाय चकार घोरनिःस्वनान् ॥१००॥
अनेककोटिसूर्याग्नितेजसा प्रज्वलन् रुषा।
मुखे पञ्चाननप्रख्यः शरीरे मानुषाकृतिः ॥१०१॥
दंष्ट्राकरालवदनः स्फुरज्जिह्वाग्रदैर्घ्यकः।
ज्वालावलितकेशान्तस्तप्तालातेक्षणो विभुः ॥१०२॥
दिव्यमालाम्बरधरो दिव्याभरणभूषितः।
तस्थौ नृकेसरी तत्र संहर्तुं दैत्यदानवान् ॥१०३॥
दृष्ट्वाऽदृष्टपूर्वरूपं विह्वलांगो महासुरः।
हिरण्यकशिपुर्दैत्यः पपाताऽन्ये च मूर्छिताः ॥१०४॥
प्रह्लादोऽथ तदा दृष्ट्वा नारसिंहोपमं हरिम्।
जयशब्देन देवेशं नमश्चक्रे जनार्दनम् ॥१०५॥
नारसिंहे तदा भक्तो भुवनानि ददर्श ह।
शृणु लक्ष्मि! प्रवक्ष्यामि यथावद्दर्शितं तु यत् ॥१०६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने गर्भस्थप्रह्लादस्य नारदोपदेशग्रहणसमयहिरण्यकशिपु-विवादबालोपदेशखड्गघातनृसिंहप्रादुर्भावनिरूपण-नामा एकोनचत्वारिंशदधिकशत-तमोऽध्यायः ॥१३९॥

**श्रीनारायण उवाच—**

प्रह्लादोऽन्ये च दैतेया निश्चिक्युर्नैव वस्तु यत्।
कुतः कस्मादयं शब्दो लोकस्फोटनकृन्महान् ॥ १ ॥
दृश्यते शब्दमूलं न नाकृतिर्नाभिभावकम्।
निशम्याऽपूर्वनिर्ह्रादं . सुरभिन्ना वितत्रसुः ॥ २ ॥
सत्यं प्रकुर्वन् प्रह्लादाभिहितं ब्रह्मणोदितम्।
वरं चायं हरिः कृष्णो नृहरिः समजायत ॥ ३ ॥
मूर्तेर्द्राक्कुसुमहत्तेजोऽव्याप्नोदाब्रह्मलोकगम्।
शनैः शनैश्च तत्तेजोऽन्तःसभायां व्यलीयत ॥ ४ ॥
तावत्स्तंभान्तरे सत्त्वं महाक्रूरं व्यलोकि तत्।
नाऽयं मृगो न मनुषः किमेतन्नृमृगेन्द्रवत् ॥ ५ ॥
यावद्दैत्याश्च दैत्येशो व्यक्तं पश्यति नृहरिम्।
भयानकं ललज्जिह्वं स्फारलोहितलोचनम् ॥ ६ ॥
सूर्यवच्चाकचक्यास्यं हरीवज्जृम्भिताननम्।
महातेजःस्फुरत्स्वर्णविद्युद्वल्लीभकेसरम् ॥ ७ ॥
करालदंष्ट्रं भ्रूकुटीचण्डकोपाऽनलान्वितम्।
स्तब्धोर्ध्वकर्णं व्यात्ताऽऽननन्नासं च कलासहम् ॥ ८ ॥
चन्द्रांशुवालं महाखड्गातितीक्ष्णनखायुधम्।
तावत्तद्विवृधे सत्त्वं महाकायं महाबलम् ॥ ९ ॥
दिव्यं यन्मन्दरसमं प्रासादस्तु व्यलीयत।
दिव्ये नारायणे सिंहे नरेऽपूर्वकृताकृतौ ॥१०॥
ददर्श तस्य गात्रेषु प्रह्लादो भुवनानि वै।
लोकान् समुद्रान् सद्वीपान् सुरगन्धर्वमानुषान् ॥११॥
अण्डजानि सहस्तानि सटाग्रे स ददर्श वै।
ददर्श नेत्रयोस्तस्य सूर्यचन्द्रादिकान् ग्रहान् ॥१२॥
कर्णयोरश्विनौ देवौ दिशश्च विदिशस्तथा।
ललाटे ब्रह्मरुद्रौ च नभो वायुं च तन्नसि ॥१३॥
इन्द्राग्नी तस्य वक्त्रान्ते जिह्वायां च सरस्वतीम्।
दंष्ट्रासु सिंहशार्दूलशरभाँश्च महोरगान् ॥१४॥
कण्ठे ददर्श मेर्वद्रिं स्कन्धे हिमाचलादिकान्।
देवतिर्यङ्मनुष्यांश्च बाहुष्वपि परात्मनः ॥१५॥
नाभौ चाऽस्याऽन्तरीक्षं च पादयोः पृथिवीं तथा।
रोमस्वस्यौषधीन् सर्वान्पादपान्नखपंक्तिषु ॥१६॥
निःश्वासेऽस्य चतुर्वेदान् सांगोपांगान्ददर्श सः।
आदित्याँश्च वसून् रुद्रान् विश्वेदेवान्मरुद्गणान् ॥१७॥
अप्सरसश्च गन्धर्वान् विद्याध्रोरगराक्षसान्।
एवमापाललोकान्सोपस्करप्रजान्वितान् ॥१८॥
ददर्शांगेषु प्रह्लादस्ततः सौम्यं ददर्श तम्।
श्रीवत्सकौस्तुभोरस्कं वनमालाविभूषितम् ॥१९॥
शंखचक्रगदाखड्गशार्ङ्गादिहेतिभिर्युतम्।
सर्वोपनिषदामर्थं दृष्ट्वा ननाम दंडवत् ॥२०॥
हर्षाश्रुजलसिक्तांगो ध्यायन्पार्श्वे ह्युपस्थितः।
तावद्धिरण्यकशिपुः क्रोधान्मृत्युवशे स्थितः ॥२१॥
किंस्विदयं नु हन्ता मे हन्मि तं पुरतो जये।
योद्धुं खड्गं समुद्यम्य नृसिंहं तमथाऽद्रवत् ॥२२॥
देवाश्च मुनयः सर्वे प्राणिनो ब्रह्मसृष्टिजाः।
आजग्मुः श्रीहरेस्तस्य युद्धस्य दर्शनाय च ॥२३॥

अथ दैत्यगणाः सर्वे सज्जशस्त्रा महाबलाः ।
जघ्नुर्हरिं महावेगाः पेतुर्वह्नौ पतंगवत् ॥२४॥
नृहरिणा सटोद्भूतवह्निना दानवा भृशम् ।
निर्भस्मिताः क्षणात्सर्वे सहस्राण्यायुधानि च ॥२५॥
अन्ये च राक्षसा दैत्या दानवा ह्यसुरास्तथा ।
ये चापतन् रणं कर्तुं तान् द्वेधाऽपातयद्धरिः ॥२६॥
काँश्चिद् दंष्ट्राभिरुग्राभिः काँश्चिन्नखैः सुतीक्ष्णकैः ।
काँश्चिच्छस्त्रैर्महाघोरैर्नाशयामास केशवः ॥२७॥
प्रह्लादं सानुगं हित्वा भस्मिते रक्षसां बले ।
नाशिते दैत्यसैन्ये च कालानलशिखोपमः ॥२८॥
हिरण्यकशिपुर्यावदुग्र्याऽसिं तु नृहरेः ।
वधाय कृतयत्नोऽभूत् तावज्जग्राह तं प्रभुः ॥२९॥
खड्गमाच्छिद्य देवेशो मोचयामास तं रिपुम् ।
गदामादाय दैत्येशश्चकार मण्डलानि च ॥३०॥
गदापि पातिता यावत् चर्मखड्गान्तरं महत् ।
गृहीत्वाऽभ्यद्रवद् दैत्यस्तं हरिर्मण्डलेन वै ॥३१॥
निनाय च गृहद्वारे मध्ये चोत्प्लुत्य धर्षितम् ।
बहुबलं प्रकुर्वन्तं क्षिपन्तं पत्करादिकान् ॥३२॥
पातयामास देवेशस्तदा चैकेन पाणिना ।
गृहीत्वा पतितं भूमौ मुहुः सम्मृद्य चाऽसुरम् ॥३३॥
पादघातैश्चार्धमृत्युं कृत्वोत्संगे निधाय च ।
नखैर्विदारयामास तीक्ष्णैर्वज्रनिभैर्घनैः ॥३४॥
विष्णुनिन्दाकृतं पापं तथा वैष्णववैरजम् ।
नृहरेः स्पर्शनादेव निर्भस्मितमभूत्तदा ॥३५॥
वक्षो दैत्येश्वरस्याऽसौ विददाराऽस्थिमण्डलम् ।
तद्गात्रं शतधा भित्त्वा नखैस्तीक्ष्णैर्महाहरिः ॥३६॥
आकृष्याऽऽन्त्राणि दीर्घाणि गले संसक्तवान् प्रभुः ।
स निर्मलात्मा दैत्येन्द्रः पश्यन् साक्षान्मुखं हरेः ॥३७॥
हरिहस्ताऽऽगतमृत्युः कृतार्थो विजहावसून् ।
नाकाशे न क्षितौ मृत्युर्नान्तर्बहिर्न सृष्टिजैः ॥३८॥
न शुष्कैर्नाऽऽर्द्रतत्त्वैश्च सत्यं कर्तुं हरिः स्वयम् ।
असृष्टेः रूपमास्थाय धामाकाशं विधाय च ॥३९॥
निधायाऽङ्के नखैः सायं मध्ये द्वारिजघान तम् ।
हरिर्जानाति यत्कर्तुं नान्यो जानाति तत्तथा ॥४०॥
अथ दैत्येन्द्ररक्तेन किंशुकीभूतनृहरिम् ।
हन्तुमुदायुधा दैत्याः समन्तात् शस्त्रपाणयः ॥४१॥
अभ्यधावँस्तदा ताँश्चाऽहन् पार्ष्णिनखदोर्मुखैः ।
चक्रे च गर्जनां ब्रह्माण्डावृतीन् प्रविभिद्य या ॥४२॥
अट्टहासान्विता व्याप्ता ब्रह्मलोके च धामसु ।
जलदाश्चापतन् व्योम्नो ग्रहाश्च कम्पिताः स्थलात् ॥४३॥
चुक्षुभुर्वारिनिधयो दिगिभाश्च विचुक्रुशुः ।
द्यौर्भ्रमिता विमानानि स्तब्धानि भूश्च कम्पिता ॥४४॥
उत्पेतुः भूभृतः शैलाः खं ककुभो न रेजिरे ।
दैत्यशून्ये च भक्ताढ्ये प्रासादे नृहरिं तदा ॥४५॥
प्रहर्षपूरिता देव्यो ववृषुः कुसुमानि वै ।
देवर्षिमुनयो दिव्यविमानस्थास्तदा हरिम् ॥४६॥
पश्यन्ति स्म च वादित्रान्दुन्दुभिप्रभृतीँस्तदा ।
वादयामासुराप्रेम्णाऽप्सरसो ननृतुस्तथा ॥४७॥
गन्धर्वा गायनं चक्रुर्जगुः स्वस्ति सुरस्त्रियः ।
ब्रह्माण्डवासिनस्तत्राऽऽगत्येडिरे च नृहरिम् ॥४८॥
ब्रह्मा रुद्रेन्द्रगिरीशपितृसिद्धर्षिचारणाः ।
प्रजापतयो मनवो विद्याधरमहोरगाः ॥४९॥
यक्षाः किन्नरवेतालाः गन्धर्वाऽप्सरसां गणाः ।
किम्पुरुषाः साध्यदेवा विश्वेदेवाश्च याज्ञिकाः ॥५०॥
भूदेवाः पार्षदा नन्दसुनन्दकुमुदादयः ।
ईडिरे तं नरसिंहं महाभयकरद्दशम् ॥५१॥
नमोऽक्षरपररूपाक्षरान्तर्यामिणे च ते ।
नमो मुक्ताभिवन्द्याय नमो व्यूहात्मने च ते ॥५२॥
नमः प्रकृतिरूपाय प्रधानपुरुषाय ते ।
महाकालस्वरूपाय भूमरूपाय ते नमः ॥५३॥
अप्रतर्क्यस्वरूपायाऽनन्तरूपाय ते नमः ।
अभक्तानाशकर्त्रे ते भक्तरक्षणकारिणे ॥५४॥
वरदानानुरूपाय तथैव दैत्यघातिने ।
सर्वात्मने करालाय विकरालाय ते नमः ॥५५॥
यज्ञभागप्रदात्रे ते रक्षकाय नमोनमः ।
हृदि बोधाय देवानां त्रात्रे तस्मै नमोनमः ॥५६॥
तपोमार्गप्रवृत्ताय ऋषिगम्याय ते नमः ।
श्राद्धतृप्तिप्रदायाऽत्र परत्रदायिने नमः ॥५७॥
योगगतिप्रसाराय सिद्धिसमृद्धिगृहाय च ।
तपोबलप्रकृष्टाय धर्मात्मँस्ते नमोनमः ॥५८॥
स्तुतिस्तुत्याय विद्यायाः शुभाधिपतये नमः ।
रत्नप्रदात्रे न्यायाय नीतिधात्रे नमोनमः ॥५९॥
मनुत्वसंरक्षकाय प्रजापतित्वदायिने ।
नटनाट्यगायकानां क्रीडागीत्यात्मने नमः ॥६०॥
वाहकत्वप्रदात्रे ते सपर्यादिप्रदायिने ।
विष्टिकार्यनियोक्त्रे ते जगदीशाय ते नमः ॥६१॥

वैष्णवानां रक्षकाय बहुरूपधराय ते ।
नारायणाय कृष्णाय श्रीहरये नमो नमः ॥६२॥
नित्यं शान्तस्वरूपायेदानीं भयंकराय ते ।
अविस्मृतस्वरूपायाऽद्भुताय हरये नमः ॥६३॥
इत्याकाशात् तुष्टुवुस्तेऽन्तिकं केऽपि न चाययुः ।
उग्रमृत्योर्मुखे गन्तुं श्रीमृते कः पतेत् श्वसन् ॥६४॥
ते प्रसादयितुं भीता ज्वलितं विश्वतोमुखम् ।
मातरं जगतां धात्रीं चिन्तयामासुरीश्वरीम् ॥६५॥
हिरण्यवर्णां हरिणीं सर्वोपद्रवनाशिनीम् ।
विष्णोर्नित्याऽनवद्यांगीं ध्यात्वा नारायणीं शुभाम् ॥६६॥
श्रीसूक्तं संजपन्तो वै नमश्चक्रुः परेश्वरीम् ।
चिन्त्यमाना तु सा देवी तत्रैवाऽऽविरभूत्तदा ॥६७॥
चतुर्भुजा विशालाक्षी सर्वभूषाद्यलंकृता ।
दुकूलशाटिकायुक्ता कौस्तुभस्रक्सुमंगला ॥६८॥
तां दृष्ट्वा देवदेवस्य पत्नीं मां जगतां ततः ।
ऊचुः प्रांजलयो देवाः प्रसन्नं श्रीहरिं कुरु ॥६९॥
इत्युक्ता सहसा लक्ष्मीः प्रियं दूरात्पतिं हरिम् ।
प्रणिपत्य नमस्कृत्य प्रसीदेति ह्युवाच तम् ॥७०॥
तथापि श्रीहरेस्तस्य क्रोधः शशाम नो मनाक् ।
अदृष्टाऽभूतपूर्वत्वात् सा नोपेयाय चान्तिकम् ॥७१॥
तदा ते प्रेषयामासुर्भक्तं ब्रह्ममयं शिशुम् ।
प्रह्लादं स जगामाऽऽशु पादयोः पतितस्तदा ॥७२॥
ननाम दण्डवद्देवं प्रहसन् विधृतांजलिः ।
दृष्ट्वा तमर्भकं रक्ष्यं कृपालुः श्रीहरिस्तदा ॥७३॥
तमुत्थाप्याऽभयहस्तं तन्मूर्ध्न्यधान्मुहुर्मुहुः ।
आश्लिक्षद्धृदये कृत्वा ददौ स्वचरणौ हृदि ॥७४॥
तावच्छ्रीरपि देवेशं गत्वा नत्वा च संस्थिता ।
अंकमादाय तां देवीं समाश्लिष्य दयानिधिः ॥७५॥
कृपासुधार्द्रदृष्ट्या वै निरैक्षत महाहरिः ।
ततो जयजयेत्युच्चैः स्तुवतां नमतां तदा ॥७६॥
तद्यथादृष्टितुष्टानां सानन्दः संभ्रमोऽभवत् ।
ततो देवगणाः सर्वे हर्षनिर्भरमानसाः ॥७७॥
ऊचुः प्रांजलयो देवं नमस्कृत्य जगत्पतिम् ।
द्रष्टुमत्यद्भुतं तेजो न शक्तास्ते जगत्पते ॥७८॥
अत्युग्रं ते नवं रूपं द्रष्टुमपि न शक्नुमः ।
कथंकारं समीपे ते स्थातुं शक्नुम ईश्वराः ॥७९॥
अत्यर्थितस्तु विबुधैस्तेजस्तदतिभीषणम् ।
न शशाम च रौद्रं तद्रूपं प्रह्लाद ईश्वरम् ॥८०॥
नृसिंहं हृदये ध्यात्वाऽस्तौषीद्धरिं समाहितः ।
नमो देवाधिदेवाय सत्त्वविलीनमूर्तये ॥८१॥
ब्रह्मादयो बिभ्यति यद्रूपात् तद्रूपिणे नमः
घनाऽभिजनसौन्दर्यतपःश्रुतबलादिभिः ॥८२॥
स्मृद्धिवाक्पटुताभिश्चाऽतुष्यते ते नमोनमः ।
तवाऽङ्घ्रिविमुखो विप्रो यमैश्च नियमैर्युतः ॥८३॥
भक्तश्चादात् कनीयान्स भक्तहृष्टाय ते नमः ।
मानहीनाय दीनाय तुष्यते ते नमोनमः ॥८४॥
भक्तिमार्गाश्रितसौख्यकर्त्रे ते हरये नमः ।
रक्षाविभूतिसम्पत्सुसौख्यदात्रे पुनर्नमः ॥८५॥
ब्रह्मादयोऽपि देवाश्च शान्तदर्शनकांक्षिणः ।
स्तुवन्ति त्वां परात्मानं शान्तरूपं ततः कुरु ॥८६॥
नाऽहं बिभेमि देवेश क्रूरान्नृसिंहरूपणात् ।
बिभेमि कामरोषादेस्ततो रक्षां विधेहि मे ॥८७॥
असुराद्रक्षणां तत्तु देहस्य रक्षणं कृतम् ।
तद्वै मे रक्षणं नास्ति तस्मान्मद्रक्षणं कुरु ॥८८॥
क्लेशकर्मविपाकादेरजाया बन्धनात् खलु ।
रक्षणं कुरु विश्वेश तन्मतं रक्षणं भवेत् ॥८९॥
ईहाः पुत्रकलत्रादेर्धनैश्वर्यदिवस्पतेः ।
कदापि नैव पूर्यन्ते ताभ्यो मे रक्षणं कुरु ॥९०॥
दैत्येन्द्रस्य मया दृष्टाः स्मृद्धयस्ता न रक्षिकाः ।
ऐश्वर्याणि मया दृष्टान्येतान्यवन्ति नैव हि ॥९१॥
सिद्धयश्चापि देवानां रक्षा कुर्वन्ति नैव च ।
भक्तानां त्वं रक्षणाय बहुरूपी भवस्यथ ॥९२॥
उद्धारयसि विश्वात्मन् तथोद्धारं च मे कुरु ।
राज्यं तु बन्धनं प्रोक्तं पापंपापतरं महत् ॥९३॥
यत् सतां सेवने विघ्नं मानसत्तादिदूषणैः ।
दीनत्वे तप आस्थाय वांच्छन्ति कामनामयान् ॥९४॥
भोगानासाद्य पश्चात् त्वां विस्मरन्तीति किल्बिषम् ।
ततो देवाधिदेवत्वं दारासत्ताधनादिषु ॥९५॥
मा योगं मे देहि नाथ देहि त्वच्चरणाम्बुजे ।
तव दासस्य दासानां मध्ये योगं प्रदेहि मे ॥९६॥
इमे दिवास्तव रूपं सौम्यं कांक्षन्ति दर्शने ।
तस्मात् सौम्यं सुखदं वै रूपं दर्शय माधव ॥९७॥
इत्यर्थितः स भगवान् तेजस्तदतिभीषणम् ।
रोषान्वितं तु संहृत्य बभूव सुखदर्शनः ॥९८॥
शरत्कोटीन्दुसंकाशः पुण्डरीकनिभेक्षणः ।
सुधामयसटापुंजविद्युत्कोटिनिभप्रभः ॥९९॥

सद्रत्नाढ्यकटककेयूरोर्मिकादिभूषितः ।
शंखचक्रगृहीताभ्यामुद्वाहुभ्यां विराजितः ॥१००॥
वरदाऽभयहस्ताभ्यामितराभ्यां सुशोभितः ।
श्रीवत्सकौस्तुभोरस्को वनमालाविभूषितः ॥१०१॥
कुण्डलहाररशनामणिस्वर्णविराजितः ।
सव्यांगस्थश्रिया युक्तोऽभवत्तदा नृकेसरी ॥१०२॥
लक्ष्मीनृसिंहं तं दृष्ट्वा देवताः समहर्षयः ।
आनन्दाश्रुजलैः सिक्त्वा नमश्चक्रुर्निरन्तरम् ॥१०३॥
अर्पयामासुरात्मेशं दिव्यपुष्पादिपूजनम् ।
रत्नकुंभैः सुधापूर्णैरभिषिच्य सनातनम् ॥१०४॥
वस्त्रैराभरणैर्गन्धैः पुष्पैर्धूपैर्मनोरमैः ।
दिव्यैर्निवेदितैर्दीपैरर्चयित्वा जनार्दनम् ॥१०५॥
तुष्टुवुर्दिव्यसत्स्तोत्रैर्नमश्चक्रुर्मुहुर्मुहुः ।
पादयोः पतितान्सर्वान्दत्त्वेष्टाशीर्वचांसि सः ॥१०६॥
प्रह्लादं सर्वदैत्यानां चक्रे राजानमव्ययम् ।
वरार्थं प्रेरयामास प्रसन्नो भगवान्पुनः ॥१०७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने नृसिंहस्पष्टदर्शनतत्तेजोव्यापनहिरण्यकशिपुविदारण-देवादिकृतस्तवनप्रह्लादकृतस्तुतिसौम्यदर्शन-लक्ष्मीकृतस्तवनादिनिरूपणनामा चत्वा-रिंशदधिकशततमोध्यायः ॥१४०॥

श्रीनारायण उवाच—

अथ लक्ष्मि! नृसिंहः स भक्तपरीक्षणाय वै ।
प्राह वरान् ग्रहीतुं च प्रसह्य निजभक्तकम् ॥ १ ॥
गृहाण राज्यं पृथ्व्यास्तदासमुद्रं सुखी भव ।
सप्तद्वीपवतीं पृथ्वीं गृहाण त्वं सुखी भव ॥ २ ॥
सप्तपातालराज्यं वा स्वीकुरु भक्तपुंगव ।
सप्तस्वर्गमयं राज्यं कुरु ध्रुवपदं तथा ॥ ३ ॥
गृहाण नूतनं राज्यं ब्रह्माण्डं चार्पये प्रिय ।
यद्यत्कामयसे भक्त तत्तद्ददामि ते सुखम् ॥ ४ ॥
यानानि प्रमदा दास्यो दासा गजास्तुरंगमाः ।
दिव्यानि च विमानानि सिद्धयश्चाऽणिमादिकाः ॥ ५ ॥
वेधः पदं शिवपदं विष्णुपदं विराट्पदम् ।
नूतनमेव दास्येऽहं गृहाण यदि रोचते ॥ ६ ॥
ब्रह्माण्डानां मदग्रे वै नास्ति वै गणना मनाक् ।
असंख्यानि च वर्तन्ते शासने मम तानि वै ॥ ७ ॥
लोकाश्च लोकपालाश्च तथा ब्रह्माण्डपालकाः ।
ब्रह्मविष्णुमहेशाना ह्यसंख्याः सन्ति मद्वशे ॥ ८ ॥
तथा त्वामपि चैशं वा वैराजं वैष्णवं च वा ।
धामाऽर्पये स्वतन्त्रं वै यथेच्छसि गृहाण भोः ॥ ९ ॥

इत्येवं भ्राम्यमाणोऽपि निःस्पृहः प्राकृतेऽर्थके ।
विना हरेः पदं नैव ययाचे स जनार्दनात् ॥१०॥
यद्यद्दित्ससि गोविन्द तवैवाऽस्तु न मे स्पृहा ।
विनाश्यर्थयिता नाऽस्मि प्राकृतं नष्टमेव यत् ॥११॥
अविनाशी शाश्वतोऽयं नाशान्तं कथमर्थये ।
तत्सर्वं कृत्रिमं राज्यं नास्त्यकृतः कृतेन वै ॥१२॥
अकृतश्च सदा मोक्ष्यः कृतेन कर्मणा नहि ।
आत्मना शरणागत्या नित्यो मोक्षो हि लभ्यते ॥१३॥
प्रकृतिपुरुषस्यात्र प्रधानपुरुषस्य वा ।
वैराजानां महाविष्णोर्विष्णोर्वा वेधसस्तथा ॥१४॥
रुद्रस्य लोकपालानां देवानां फणिनां तथा ।
लोका राज्यानि विभवाः स्थानानि स्मृद्धिमन्ति च ॥१५॥
प्राकृतानीति सर्वाणि रजस्तमोमयानि वा ।
सात्त्विकान्यपि गौणानि प्रोच्यन्ते निरया हि यत् ॥१६॥
परंधामाऽक्षरमृते प्राकृता निरया हि ते ।
नास्ति मे तत्र कुत्रापि स्पृहा हरिपदं विना ॥१७॥
तस्मान्नाथ सदा देहि धाम्नि त्वच्चरणाम्बुजम् ।
तव सेवां सदा देहि तथा त्वद्भक्तसेवनम् ॥१८॥
सत्सु रतिं सदा देहि वासं प्रयच्छ धामनि ।
त्वयि प्रेमास्पदं देहि चैकां निष्ठां सदा त्वयि ॥१९॥
देहि चात्मकृतानन्दं त्वय्येव शाश्वतं परम् ।
नाऽन्याऽऽनन्दं समीहेऽत्र परत्राऽशाश्वतं क्षयम् ॥२०॥
तवेच्छाया यदा यत्र यस्य यस्माच्च यत्कृते ।
येन यं वा योऽहं कुर्यां तत्त्वय्यैव तवार्थतः ॥२१॥
भवत्सम्बन्धकं सर्वं कृष्णार्पणं सदाऽस्तु मे ।
देहेन्द्रियमनोबुद्धिप्राणास्तृप्ताः कदापि न ॥२२॥
त्वयि स्याच्छाश्वतीतृप्तिस्तां वृणे देहि नाथ मे ।
त्वय्यारामं सदा यच्छ त्वद्विनाऽन्यद् विदारय ॥२३॥
मोक्षं यच्छ सतां सेवां प्रयच्छ शरणप्रद ।
इत्यभ्यर्थ्य विरराम प्रह्लादो ज्ञानिनां वरः ॥२४॥
भगवानाह तं भक्तं यो नेच्छति ददामि ते ।
य इच्छेन्न ददाम्यस्मै इति मे वक्रवर्तनम् ॥२५॥
मयाज्ञया गृहाणेदं राज्यं तव पितुर्हि यत् ।
तत्र त्वं बन्धनं नैव मन्नियोगात्प्रयास्यसि ॥२६॥

मदर्पणं विना नैव भोक्तव्यमपि वस्तु सत् ।
शरीरे मानसे वापि मां सदा स्मर कर्मणि ॥२७॥
बालोऽसि वृद्धविज्ञोऽसि भक्तोऽसि नित्यमुक्तवत् ।
तस्माद् गृहाण राज्यं वै सप्तपातालसंभवम् ॥२८॥
आशया भजते यो मां नवै भजामि तं जनम् ।
अनाशया भजन् भक्तो लभतेऽर्घ्यं ममाऽग्रतः ॥२९॥
अहं स्वाम्यस्पृहे भक्ते दृष्ट्वा भक्तं तु सस्पृहम् ।
दूरं यामि नान्तिकं वै निष्कामं यामि सर्वथा ॥३०॥
अतो मन्वन्तरं राज्यं दैत्यानामनुभुंक्ष्व तत् ।
कथां शृण्वँश्च कथयन् मदीयां मोक्षदायिनीम् ॥३१॥
कर्माणि चार्पयन्मह्यं कुरु राज्यमकंटकम् ।
सदा मामनुसन्धाय कुरु नैष्कर्म्यमेव हि ॥३२॥
कृतस्य कुरु भोगेन क्षपणं नूतनं च यत् ।
तत्तु समर्पणेनैवाऽभोग्याऽऽयति विधापय ॥३३॥
कालेन देहे विलये मामुपैष्यसि सद्यशः ।
प्रह्लादः प्राह देवेश वरं मे पितृशोधनम् ॥३४॥
देहि तवापराधं स कृतवान् निन्दया घृणी ।
तव भक्ते मयि चाप्यपराधं कृतवान् स हि ॥३५॥
तदस्मात्पाप्मनः सद्यः पूयेत त्वत्कृपाश्रयः ।
भवेदिति वृणे नान्यद् वृणे नाथ नमोऽस्तु ते ॥३६॥
हरिः प्राह त्वया वंश्याश्चैकविंशतिसंख्यया ।
तारिता भक्तवर्येण किमत्राऽस्ति प्रशंसनम् ॥३७॥
यत्र मे साधवः सन्ति प्रशान्ताः समदर्शिनः ।
तद्देशा म्लेच्छकाऽऽचारास्तत्रत्या मानवा अपि ॥३८॥
पूयन्ते त्वादृशभक्तयोगादत्र न संशयः ।
कुरु पितुः प्रेतकार्यं स च यास्यति वैधसे ॥३९॥
सत्ये लोके पुना रामे जन्मनि राक्षसो भवेत् ।
रावणाख्यस्तृतीये तु कार्ष्णे जन्मनि मेऽनघ ॥४०॥
शिशुपालोऽसुरो भावी ततो मोक्षं गमिष्यति ।
प्रह्लाद पार्षदौ मे यौ जयश्च विजयश्च तौ ॥४१॥
सनकाद्यपराधेन भ्रातरौ द्वौ बभूवतुः ।
हिरण्यकशिपुर्ज्येष्ठो हिरण्याक्षस्ततोऽनुजः ॥४२॥
तावेव रावणो ज्येष्ठः कुंभकर्णस्तयोऽनुजः ।
तावेव दन्तवक्त्रश्च शिशुपालो भविष्यतः ॥४३॥
ततो शापाद् विमुक्तौ तावेष्यतः पार्षदं पदम् ।
भक्तयोरेतयोर्योगात् मम जन्मकथामयम् ॥४४॥
गास्यन्ति चरितं लोकास्तेन यास्यन्ति मोक्षणम् ।
तव भक्त्या च भक्तानां दार्ढ्यं भक्तौ भविष्यति ॥४५॥
एवं प्रसन्नो लक्ष्मीशस्तस्मायिष्टान्वरान्ददौ ।
ततो देवगणैः सार्धं सर्वेशो भक्तवत्सलः ॥४६॥
प्रह्लादं सर्वदैत्यानां चक्रे राजानमव्ययम् ।
आश्वास्य भक्तं प्रह्लादं चाभिषिच्य सुरोत्तमैः ॥४७॥
दत्त्वा नैष्कर्म्यरूपां च भक्तिमव्यभिचारिणीम् ।
हरिर्देवगणैः सार्धं स्तूयमानो नृकेसरी ॥४८॥
विकीर्णः पुष्पवर्षैस्तु सिंहारण्ये जगाम ह ।
तत्र शरभरूपेण शंभुना कृतवान् रणम् ॥४९॥
परस्परं परित्यज्य देहावदृश्यतां गतौ ।
सिंहः शिला नारसिंही शंभुस्तु शरभेश्वरः ॥५०॥
वर्तिष्येते च यावद्वै सृष्टिः स्थास्यति तावता ।
ततः सुरगणाः सर्वे स्वं स्वं स्थानं प्रपेदिरे ॥५१॥
पुनश्च यज्ञभागाँश्च बुभुजुः प्रीतमानसाः ।
प्रह्लादस्तु तदा चक्रे राज्यं वैष्णवधर्मतः ॥५२॥
बहुभिर्यज्ञदानाद्यैरर्चयित्वा हरिं ततः ।
यास्यत्यन्ते हरेर्धाम योगिगम्यं सनातनम् ॥५३॥
इत्येतत्प्रह्लादचरितं श्रोष्यन्ति ये हरेर्जनाः ।
ते सर्वे पापनिर्मुक्ता यास्यन्ति श्रीहरेः पदम् ॥५४॥
एतत्ते कथितं लक्ष्मि ! नृसिंहवैभवं हरेः ।
तद्वंश्या सिंहमूर्धन्याः रैवतारण्यवासिनः ॥५५॥
अथ वामनरूपं ते कथयिष्ये शृणु प्रिये ! ।
रैवताद्रौ दिव्यगिरौ वामनोऽयात् स्वयं हरिः ॥५६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने
नृहरिणा प्रह्लादाय वरदानं पितृराज्येऽभिषेचनं
नृसिंहस्याऽरण्येऽदृश्यताचेतिकथननामा
एकचत्वारिंशदधिकशततमोऽध्यायः ॥१४१॥

**श्रीनारायण उवाच—**

वामनं श्रीहरेः रूपं यन्निमित्तमभूत् प्रिये ! ।
तत्सर्वं सुस्फुटं तेऽहं कथयामि यथातथम् ॥ १ ॥
सौराष्ट्रे पश्चिमे प्रान्ते रैवताद्रिर्महान्गिरिः ।
यत्र देवगणाऽऽवासाः सिद्धा वसन्ति लक्षशः ॥ २ ॥
योगिन्यश्चापि तीर्थानि निवसन्ति निरन्तरम् ।
प्रह्लादस्याऽभवत् पुत्रो विरोचन इतीरतः ॥ ३ ॥
तस्य पुत्रो महाबाहुर्बली राजाऽभवद्बली ।
तेन यज्ञाः कृताः श्रेष्ठा बहवो भिन्नभूमिषु ॥ ४ ॥

एको यज्ञः कृतस्तत्र रैवताद्रितलस्थले ।
यत्रागत्य स्वयं देवो वामनोऽभ्यर्थयद्बलिम् ॥ ५ ॥
तत्कथां परमां दिव्यां पावनीं मोक्षदायिनीम् ।
कथयामि महालक्ष्मि ! तृप्तिर्नास्ति कथामृते ॥ ६ ॥
यत्र दामोदरं तीर्थं नारायणह्रदस्तथा ।
किमन्यैर्बहुभिस्तीर्थैस्तयोः स्नात्वा प्रमुच्यते ॥ ७ ॥
सिंहारण्यस्योत्तरे वै व्याघ्रारण्यमये स्थले ।
सोमनाथस्य सान्निध्ये ह्युदयान्तो गिरिर्महान् ॥ ८ ॥
यः कृतस्मर इत्युक्तो वाडवानलभस्मितः ।
तस्यैव पार्श्वभागे तु रैवताख्यो गिरिः स्मृतः ।
श्रीहरेः कौस्तुभमणेः खण्डोऽयं स्थूलतां गतः ॥ ९ ॥
रैवताख्यो मनुस्तत्र तदध्यात्मतया स्थितः ।
सोऽयं वै रैवतगिरिर्दिव्यः कृष्णहृदि स्थितः ।
महतो हस्तिनः कण्ठे स्वर्णघंटाद्वयं यथा ॥१०॥
पूर्णिमायास्तथा सायं चालम्बेते शशी रविः ।
स्वर्गं यावत् तदुच्छ्रायोऽन्तरीक्षं कटिसंश्रितम् ॥११॥
दत्तात्रेयादयः सिद्धा वसन्ति शिखरेऽस्य वै ।
शिखराणां कुक्षिभागे वसन्ति सर्वदेवताः ॥१२॥
पर्वतस्य कटिभागेऽर्हन्नाथगौतमादयः ।
वसन्ति भगवन्तो वै मुनयः साधुयोगिनः ॥१३॥
पर्वतस्योरुभागे तु गान्धर्वाः किन्नरास्तथा ।
विद्याधरास्तथा सौम्याः किंपुरुषा वसन्ति हि ॥१४॥
पर्वतस्य जानुभागे योगिन्यः शंकरप्रियाः ।
देव्यश्च कृत्तिकाश्चैवाऽऽभीराण्यः साध्विकास्तथा ॥१५॥
जंघाभागे पर्वतस्य कामधेनुकुलानि वै ।
देवाश्च देवकरिणः श्वेताश्चतुःसुदन्तकाः ॥१६॥
सिंहा व्याघ्रास्तथा दैवा नरसिंहकुटुम्बिनः ।
वसन्ति व्योमगतयो दिव्याः सूर्यसमप्रभाः ॥१७॥
पादस्थाने रैवतस्य गोप्यः कृष्णप्रियाः शुभाः ।
दिव्यास्तथापि मानुषरूपेण विचरन्ति हि ॥१८॥
मुचुकुन्दस्य महती गुहा पातालसंचरा ।
राधाया मन्दिरं रम्यं स्वर्णरक्षानदीगतम् ॥१९॥
रुक्मांगदादिराज्ञां वै राजधानी च वर्तते ।
पत्नीव्रताख्यविप्रस्य चमत्कारा भवन्ति च ॥२०॥
यत्रारण्यानि चूतानां क्षीरिकाणां वनानि च ।
कर्मदानां टिम्बुरूणां जाम्बूनां प्रवणानि च ॥२१॥
सीताफलानां सौवर्णकदलीनां वनानि च ।
इक्षूणां शर्कराकन्दमूलानां प्रस्थलानि च ॥२२॥
बोरियाख्यमहास्थल्यां देव्यः स्नान्ति वसन्ति च ।
नारायणह्रदस्थल्यां योगिन्यो विचरन्ति च ॥२३॥
देव्यस्तु काष्ठवाहिन्योऽरण्ये तीर्थे भ्रमन्ति च ।
पारिजातप्रसूनानां कुन्दानां कल्पशाखिनाम् ।
वनान्यत्र भवन्त्येव सुगन्धशतयोजनम् ॥२४॥
परितः पवनो नीत्वा करोति सुरभिस्थलीः ।
अग्नेरुष्णाः प्रकुण्डाश्च क्वचिच्छैत्यजलाशयाः ॥२५॥
सरितः स्वर्णरूप्याभा निर्मलोदकसंचराः ।
सरसा ओषधिमिश्ररसवत्यो वहन्ति च ॥२६॥
यज्जलानि जनाः पीत्वा देवा देव्यो भवन्ति च ।
पार्थिवा अपि नृनार्यो तज्जलौषधिभोगिकाः ॥२७॥
षोडशाब्दाः सदा हृष्टपुष्टाः कामातिगोज्ज्वलाः ।
चन्द्रमुख्यो विलसन्ति स्वर्गभ्रमणकारिकाः ॥२८॥
नवरंगपनसादिफलानां नाल्पता क्वचित् ।
खर्जूराणां श्रीफलानां नारीकेलाऽमृतात्मनाम् ॥२९॥
आमलकत्रिफलानां संघात्संघा भवन्ति वै ।
गुंद्रकाणामिङ्गुदीनां शिम्बिपत्रफलत्वचाम् ॥३०॥
वृक्षाणां वंशमालानां बिल्वतिन्दुकशाखिनाम् ।
उदुम्बरवटसर्जतिलकानां वनानि च ॥३१॥
तुलसीनां वनान्यत्र देवदारुप्रशाखिनाम् ।
द्राक्षाणां नागवल्लीनां तिक्तानां वल्लयस्तथा ॥३२॥
मालतीमल्लिकाश्वेताजीवन्तीस्वर्णवल्लयः ।
फलपुष्पपत्रसम्पद्विलसन्त्योऽत्र भान्ति वै ॥३३॥
स्थले स्थल्यां निर्झरणा जलानां प्रवहन्ति च ।
स्वर्णकारास्ताम्रकाराः कायाकल्पकरास्तथा ॥३४॥
क्षुत्तृट्विनाशिकाश्चापि वल्ल्यो वृक्षा भवन्ति च ।
कुण्डा दिव्यास्तत्र सन्ति स्नानेनाऽदृश्यता भवेत् ॥३५॥
स्वर्णजलास्तथा कुण्डा लौहं स्वर्णं भवेज्जलात् ।
पत्रतृणानि वै सन्ति छिन्नो देहः सुसीव्यते ॥३६॥
रक्तं घट्टं भवत्येव संजीवनी च वर्तते ।
जलकुण्डास्तथा सन्ति स्नात्वा नारी नरो भवेत् ॥३७॥
नरो वा जायते नारी ततस्तु पर्वते गतिः ।
नान्यथा इति सामर्थ्यं रैवताद्रौ समीक्ष्यते ॥३८॥
क्वचित्कुण्डे कृतस्नानात् पक्षौ भवत उड्डुने ।
पुनः स्नानान्मानवत्वं यथावस्थं भवेन्ननु ॥३९॥
यद्द्रोण्यां योनिदानेन नार्यो भवन्ति देवताः ।
नरा लिंगप्रदानेन जायन्ते सिद्धयोनयः ॥४०॥

क्वचिदोषधयोगेन जनः सिंहवपुर्भवेत् ।
मार्गयित्वा हरिणादीन् पुनश्च मानवो भवेत् ॥४१॥
कामरूपजलाः कुण्डाः स्वल्पकाः सन्ति पर्वते ।
यथेच्छति तथारूपं जायते स्नातुरत्र वै ।
तत्रत्यास्तु प्रजाः सर्वाः स्वर्गान्न्यूनं न भुंजते ॥४२॥
वनानि विविधान्येव कामपूरणकानि हि ।
सर्वदा फलवन्त्येव पत्रपुष्पादिमन्ति च ।
मेघास्तत्र सदा मध्ये श्रोण्यां वसन्ति वृष्टिदाः ॥४३॥
विद्युतश्च सदा रात्रौ शनैस्तेजो ददत्यमुम् ।
ताराः स्थिराः क्वचित्तत्र वसन्ति श्रमनोदने ॥४४॥
राजत्यः स्वर्णखन्यश्च विविधधातुमिश्रिताः ।
खन्यो हीरकमाणिक्यस्फाटिकरत्नविद्रुमाः ॥४५॥
रसायनानि दिव्यानि पातालमूलवन्ति च ।
विद्यन्तेऽत्र रैवताद्रौ लभ्यन्ते पुण्यशालिभिः ॥४६॥
अप्सरसः स्वर्गवत्योऽत्राऽऽगत्य स्नान्ति यान्ति च ।
यात्रालवो लक्षकोटिसुरमानवसज्जनाः ।
नरा नार्यो महाप्रादक्षिण्यमूर्जे भ्रमन्ति हि ॥४७॥
गणाश्च गणिकाश्चैव शुद्ध्यन्ति तनुदानतः ।
परीसरोवरं तत्र परीणां स्नानकारणात् ।
इन्द्रसरोवरं तद्वद् देवीनां स्नानकारणात् ॥४८॥
रोहसरोवरं तत्र देवाऽऽप्लवनकारणात् ।
दातृसरोवरं द्रोण्यां दातॄणां स्नानकारणात् ।
वीरसरोवरं द्रोण्यां पितॄणां स्नानकारणात् ॥४९॥
सतीसरोवरं श्रेष्ठं सतीनां स्नानकारणात् ।
भवेश्वरतडागं च सर्वौषधिरसायनम् ।
भवन्त्येवं तत्र शैले दिव्यानि च सरांसि च ॥५०॥
परितस्तत्र सरितो निःसरन्त्यक्षयैर्जलैः ।
रैवताद्रौ स्थिताः सर्वे पश्यन्ति मेदिनीं दिशम् ।
समुद्रान्पर्वतान्देशान् ग्रामान् लोकान् प्रदेशकान् ॥५१॥
सदेहेन यदा वाञ्छा स्वर्गं गन्तुं भवेत् तदा ।
रैवताद्रेः शिखरे वै गत्वा स्नानेन सिद्धताम् ॥५२॥
प्राप्य यायात् ततो नैव पतेद् यदि न वासना ।
गौमुख्यां स्नानमात्राच्च कमण्डलुजलाप्लवात् ।
दत्तात्रेयजलबिन्दुपानात् सिद्धा भवन्ति हि ॥५३॥
ग्रहास्तच्छिखरे श्रान्तिं लब्ध्वा यान्ति दिशान्तरम् ।
दिवोजुषां विमानानि तत्र विश्रम्य यान्ति च ॥५४॥
ब्राह्मं चैशं वैष्णवं च मोक्षीयं चैश्वरं तथा ।
याम्यं स्वर्ग्यं च पन्थानं तच्छृंगाद् यान्ति वै जनाः ॥५५॥
भीरवजपनामानं स्थलमासाद्य मानवः ।
पतत्यरण्ये तस्यैव तत्र स्वर्गं भवत्यपि ॥५६॥
न स्वर्गान्न्यूनता तत्र किंचिन्मात्रमपि ध्रुवम् ।
तत्र तीर्थानि देवानामनेकानि भवन्ति वै ॥५७॥
रैवताद्रिं प्रदक्षिणं कर्तुमायान्ति देवताः ।
ऋषयो मुनयः स्वर्ग्याः पितरो योगिनस्तथा ॥५८॥
सिद्धा विद्याधराश्चैव चारणा देवयोनयः ।
साधुरूपेषु देवाश्च सिद्धाः क्राम्यन्ति तं परि ॥५९॥
साध्वीरूपेषु देव्यश्च परिक्राम्यन्ति तं गिरिम् ।
श्रीकृष्णः श्रीरामचन्द्रो दत्तात्रेयश्च नृहरिः ॥६०॥
कपिलो वामनो हंसः ऋषभो नारदस्तथा ।
परशुरामश्च वै व्यासः कुमारो बुद्ध इत्यपि ॥६१॥
सनन्दनादयः सर्वे व्यूहा ब्रह्मादयस्तथा ।
कार्तिक्यां तु प्रबोधिन्यां पूर्णिमायां च यावता ॥६२॥
सर्वे देवाश्च तीर्थानि पूर्यः क्षेत्राणि धाम च ।
पर्वताः सरितः सर्वे सागरा भूमयस्तथा ॥६३॥
आयान्ति च वसन्त्यत्र रैवताद्रौ स्थले स्थले ।
पत्रे पत्रे वसन्त्येते देवाः कर्तुं प्रदक्षिणम् ॥६४॥
रैवताद्रेस्तदानीं वै कृतं येन प्रदक्षिणम् ।
कृतं तेन पृथिव्यां वै सविधानप्रदक्षिणम् ॥६५॥
रैवताद्रिपरिक्रामयितारो मानवास्तदा ।
मनुष्या नहि द्रष्टव्या द्रष्टव्या देवकोटयः ॥६६॥
तेषां पादरजोलाभे मुच्यन्ते जन्मकोटयः ।
बालाः कुमाराः स्थविरा नरा नार्योपि ये तदा ॥६७॥
रैवतं परिक्रामन्ति पावनास्ते हरिश्रिताः ।
साधुः साध्वी च सन्यासी सन्यासिनी विरागिणी ॥६८॥
वैष्णवी शांकरी देवी वैष्णवः शांकरोऽथवा ।
गाणपत्याश्च वा मोक्षमार्गगास्ते तु देवताः ॥६९॥
तेभ्यो वै भोजनं दानं वस्त्रं वाऽन्यत् स्वकं भवेत् ।
तद्दातव्यं समस्तं वै सेवायां स्वर्गदं भवेत् ॥७०॥
यस्याग्रे यद्भवेद्वस्तु तद्देयं तत्र सर्वथा ।
सन्तः साध्व्यस्तोषणीयाः कायवाङ्मानसैरपि ॥७१॥
सर्वस्वार्पणकर्त्रे वै नारायणहरिः स्वयम् ।
स्वीयं सर्वं ददात्येव भक्ताय ब्रह्मरूपिणे ॥७२॥
दामोदरेऽतितीर्थे ये मृता वै यत्र तत्र हि ।
ते वसन्ति हरेर्गेहे न पतन्ति भवे क्वचित् ॥७३॥
स्वार्पणं प्रथमं दानं द्वितीयं तु धनार्पणम् ।
क्षेत्रादिकं तृतीयं च नैजार्पणं चतुर्थकम् ॥७४॥

एतत्सर्वं गिरेस्तस्य परिक्रमणजं फलम् ।
लभ्यते तत्र पापानि ज्वलन्ति नोद्भवन्ति वै ॥७५॥
यत्किंचिद्वा परोपकाराख्यं स्वार्थे परार्थकम् ।
दैह्यं चैन्द्रियिकं हार्दं कृतं पुण्यं च मोक्षकृत् ॥७६॥
जयेद् ब्रह्मात्मभावस्तु देहभावः पराजयेत् ।
असंशयो विमुच्येत संशयात्मा विनश्यति ॥७७॥
तन्ममापि महालक्ष्मि ! स्थानं रैवतपर्वकम् ।
अतीव रोचते तत्र दामोदरो वसाम्यहम् ॥७८॥
रुक्मदुर्गे मन्दिरेऽहं त्रिविक्रमो वसामि वै ।
मध्येनगरं नृसिंहरूपेणापि वसाम्यहम् ॥७९॥
स्थले वृक्षे सुमे पत्रे मूले रजसि पर्वते ।
सरित्सु भूतले वाप्यां तडागे च वने जले ॥८०॥
तत्रत्ये कमले पद्मे कुमुदे स्थलपद्मके ।
पाषाणे भूविवरे च वल्मीके तरुगुल्मके ॥८१॥
यत्र क्वापि रैवतोस्ति तत्सर्वत्र वसाम्यहम् ।
अहं वै रैवतगिरिः रैवतोऽहं न भिन्नता ॥८२॥
मम भूषा मम तनुः रैवतः पावनः परः ।
सौराष्ट्रवासिनां नैव यमाः पश्यन्ति वै गृहम् ॥८३॥
आनर्तेन तपः कृत्वा गोलोकात् क्षत्रियेण वै ।
कृष्णात्प्राप्याऽत्र च मणेर्भागो वै स्थापितोऽस्ति सः ॥८४॥
सौराष्ट्र इतिविख्यातस्तत्रत्यानां कुतोभयम् ।
तदस्मिन्पर्वते दिव्ये गतानां तु कुतो भयम् ॥८५॥
यत्र वै धातवो रक्ताः श्वेता नीलाः सितास्तथा ।
पाषाणा कुंजराकाराः सन्त्यन्ये स्वर्णराजताः ॥८६॥
चणकाकृतयश्चान्या बालुका गोक्षुरायताः ।
दिव्याश्च तरवो वल्ल्यो गुल्माः सन्तानपादपाः ॥८७॥
सर्वं तेजोमयं स्वर्णं मूलं पुष्पं फलं दलम् ।
नहि पश्यति पापात्मा मुक्तः पापेन पश्यति ॥८८॥
सेव्यते स गिरिर्नित्यं धात्वादिखनिमार्गणैः ।
वर्णाश्चाश्रमिणस्तत्र भ्रमन्ति च वसन्ति च ॥८९॥
पक्षिणस्तत्र बहवः सारसा व्योमवासिनः ।
कोकिलाश्चातका मेना हंसा मयूरकास्तथा ॥९०॥
गरुडा गृध्रजातीयाः कपोता दीर्घदर्शिनः ।
चक्रवाकाः कृकवाकुः तित्तिरा दिव्यजातयः ॥९१॥
सर्वे शुभाक्षरभाषाः शिवाः शिवकराः सदा ।
मृगाश्च वानरेन्द्राश्च व्याघ्राः सिंहास्तथैव च ॥९२॥
भल्लुकाश्च गजाश्चैव दैवाश्वाः सात्त्वतास्तथा ।
तस्य तीर्थप्रभावेण दुष्टं नैवाऽऽचरन्ति ते ॥९३॥

कालेन निधनं चाप्ताः पशुपक्षिसरीसृपाः ।
सर्वे विमानमारूढा गच्छन्ति वैष्णवं पदम् ॥९४॥
वायुना पतितं यच्च पत्रपुष्पफलादिकम् ।
स्वर्णरक्षाजले तत्र सर्वं वै मुक्तिमेति यत् ॥९५॥
सुवर्णाख्या हरेः पत्नी प्रेमद्रवेण सर्वदा ।
दामोदरस्य सेवायां नदीरूपेण वर्तते ॥९६॥
नदी सुवर्णरक्षा सा स्वर्णवालुकया युता ।
चकास्ति स्वर्णमय्येव स्वर्णांश्चान्यान् करोति च ॥९७॥
तत्र स्नातुं नागराजो भित्वा भूमिं तु वासुकिः ।
तेन मार्गेण मूलेन विवरेणाऽऽगते ह्यभूत् ॥९८॥
स्वर्गादागत्य चेन्द्रोऽपि यष्ट्वा यज्ञेषु पुष्कलम् ।
पुण्यमादाय मुक्त्यर्थं गतः स्वर्गं निराभयम् ॥९९॥
कुर्वन्त्यनशनं चैकदिवसीयमथो जनाः ।
ते श्रीहरेः प्रतापेन चाप्नुयुर्धाम वै हरेः ॥१००॥
वासुदेवोऽनिरुद्धश्च प्रद्युम्नश्च सुकर्षणः ।
तथाऽन्ये त्वीश्वराः शतलक्षकोट्यो वसन्ति हि ॥१०१॥
प्रक्रीडन्ति प्रियास्तेषां नित्यं दामोदराग्रतः ।
सुचन्द्रवदना गौर्यः श्यामाश्च दृढमध्यमाः ॥१०२॥
नितम्बिन्यः सुकेश्यश्च सुनासायतलोचनाः ।
सुगुल्फाः सुभ्रुवस्तत्र सुकुक्ष्यः सुपयोधराः ॥१०३॥
शोभनास्याः सुजंघाश्च सुपादांघ्र्युदरास्तथा ।
रैवताख्ये गिरौ तस्मिन् रमन्ते च हसन्ति च ॥१०४॥
तत्राऽस्ति रेवतीकुण्डस्तत्र स्नात्वा तु याऽङ्गना ।
दद्यात् स्वर्णादिदानानि पुत्रिणी सुभगा भवेत् ॥१०५॥
गीतिकानर्तनैर्दामोदराग्रे तु पुनः पुनः ।
देशभाषाविभाषिण्यो रामा जाग्रति कार्तिके ॥१०६॥
तास्तु भूत्वा रमा लक्ष्म्यो यान्ति श्रीहरिमन्दिरम् ।
पञ्चपाषाणकं रम्यं सुन्दरं हरिमन्दिरम् ॥१०७॥
कृत्वा वा शिखरं दैवं बहुरूपसमन्वितम् ।
सर्वान् कामानतिक्रम्य परंब्रह्माऽधिगच्छति ॥१०८॥
पंचवर्णं ध्वजं दद्याद् दामोदरगृहोपरि ।
तन्तुप्रमाणवर्षाणि दिव्यानि विष्णुलोकगः ॥१०९॥
दामोदरस्वरूपेण वामनोऽत्र विराजते ।
तस्य षड्गव्यूतिमात्रं क्षेत्रं वस्त्रापथं शुभम् ॥११०॥
गिरेरारोहणाद् यावत् पश्चिमे वामनस्थलीम् ।
साषड्गव्यूतिदीर्घा वस्त्रापथाऽऽन्तरभूमिका ॥१११॥
गयो राजा हरेर्भक्तो ह्येकवारं समागतः ।
विष्णुयागं स कृतवान् प्रजाभिः सह वैष्णवः ॥११२॥

दत्वादानान्यनेकानि हविर्हुत्वा हुताशने ।
विष्णुयागं चकारात्र रैवताचलसन्निधौ ॥११३॥
केचित् तदानीं तद्यज्ञेऽपिबन् धूममधोमुखाः ।
शुष्कपत्राशनाश्चान्येऽपरे वै फलभोजनाः ॥११४॥
मूलानां भक्षकाश्चान्ये परे वाय्वशना द्विजाः ।
पंचाग्निसाधकाः केचित्केचिच्च सलिलासनाः ॥११५॥
केचिज्जपन्ति गायत्रीं देवीमन्ये सरस्वतीम् ।
केचिज्जपन्ति सूक्तानि द्वादशार्णं जपन्ति च ॥११६॥
अष्टाक्षरं तथा केचित् कश्चिद्धरिरिति गृणन् ।
एकभक्तं तथा नक्तमयाचितमुपोषितम् ॥११७॥
एवमादीनि पुण्यानि कृत्वा दामोदराग्रतः ।
कृतकृत्याश्च ते जाता विष्णुयागे महामखे ॥११८॥
गयो राजा तु ऋष्याद्यैर्यावद्भिः सह राजते ।
विमानानां सहस्राणां सहस्राण्यागतानि च ॥११९॥
गन्धर्वाऽप्सरसस्तत्र सिद्धचारणकिन्नराः ।
विष्णोस्तु पार्षदैः साकं वैकुण्ठं नेतुमागताः ॥१२०॥
समारूढा विमानेषु ऋष्यादयस्तदा प्रजाः ।
सर्वैर्जानिपदैः सार्धं स राजा भार्यया सह ॥१२१॥
गतो विमानमारूढो विष्णोर्लोकं निरामयम् ।
तत्र क्षेत्रे वामनस्तु बलिं भिक्षामयाचत ॥१२२॥
तादृशं तत्परं क्षेत्रं न भूतं न भविष्यति ।
यत्र वासाद्भवेन्मुक्तिः कर्तव्यं नावशिष्यते ॥१२३॥
तत्र बहूनि तीर्थानि सन्ति तानि वदाम्यहम् ।
स्थानं बलवता पुंसा बलवद् भवतीत्यतः ॥१२४॥
तीर्थानि तत्र त्वायान्ति स्वपावित्र्याय पद्मजे ।
तानि वै प्रथमं स्मृत्वा वक्ष्ये त्रिविक्रमं ततः ॥१२५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने रैवताचले दामोदराख्यवामनप्रतापदेवादिनिवासचमत्कारिकमाहात्म्यविभूतिकार्तिकपरिक्रमणदिव्यवसतिगयकृतयज्ञादिनिरूपणनामा द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥

**श्रीनारायण उवाच—**

तत्र वस्त्रापथे लक्ष्मि ! कार्तिक्यां कुरुते तु यः ।
यात्रां विगाह्य तत्तीर्थे कृतमोक्षः प्रजायते ॥ १ ॥
दामोदरे सरित्प्रोक्ता स्वर्णरक्षाभिधा शुभा ।
ब्रह्मकुण्डं तत्र तीर्थे तथा ब्रह्मेश्वरः शिवः ॥ २ ॥
कालमेघश्च संप्रोक्तो भवो दामोदरस्तथा ।
गव्यूतिद्वितये दूरे कालिका शिखरोपरि ॥ ३ ॥
इन्द्रेश्वरो वायुदिशि मृगीकुण्डो भवान्तिके ।
कृते सारणिकं तीर्थं त्रेतायां हेममारकम् ॥ ४ ॥
पश्चिमे उन्नत्रीलेति क्षेत्रं योजनदूरगम् ।
तत्र तीर्थान्यनेकानि सिद्धस्थानानिषोडश ॥ ५ ॥
सूर्यकुण्डस्तत्र तीर्थे गंगेशो मंगलं तथा ।
सिद्धेश्वरमहादेवो गव्यूतिः पश्चिमे पुरे ॥ ६ ॥
इन्द्रेश्वरे चक्रतीर्थे हाटकेशस्तु पश्चिमे ।
यक्षेश्वरी महादेवी तत उपरिक्ष्माधरः ॥ ७ ॥
सोमलिंगेति मध्यः स यत्र तीर्थान्यनेकशः ।
गजेन्द्रस्य पदं तत्र तत्रैव रसकूपिका ॥ ८ ॥
कुण्डानां च शतं तत्र ह्यम्बिका शिखरोपरि ।
प्रद्युम्नश्च तथा साम्बस्तथा गोरक्षकोऽपि च ॥ ९ ॥
गणेशो हनुमाँश्चापि रामलक्ष्मणमाधवाः ।
वसन्ति वनमध्ये ते तत्तन्नाम्ना वनानि च ॥१०॥
भवस्तत्र समायातः कथयामि कथामिमाम् ।
कैलासशिखरे रम्ये शिवस्य सन्निधौ क्वचित् ॥११॥
ब्रह्मविष्णुसुरेन्द्राद्या देवास्तत्राऽऽययुर्द्रुतम् ।
विष्णुः प्रोवाच तं शंभुं दैत्यानां च वरप्रदम् ॥१२॥
नाहं पालयितुं शक्तस्त्वं ददासि वरान् बहून् ।
दैत्यानां दानवानां च रक्षसां च महेश्वर ॥१३॥
विकृतिं यान्ति पश्चात् ते कष्टवध्या भवन्ति मे ।
श्रुत्वोवाच तदा शंभुर्वरं यदि ददामि न ॥१४॥
तदा तु तपसा दैत्याः सर्वं कुर्युर्हि भस्मितम् ।
त्वयाऽहं ब्रह्मणा देवैर्वरदानाय योजितः ॥१५॥
मदीया प्रकृतिस्त्वेषा तां कथं त्यक्तुमुत्सहे ।
येन केन प्रकारेण प्रजाः पाल्यास्त्वया प्रभो ॥१६॥
क्षन्तव्यं मे वरदानकर्मापि बहुदं भवेत् ।
त्वां विना श्रीहरे विष्णो दैत्यानामन्तको हि कः ॥१७॥
मया वा ब्रह्मणा वापि वरदानेन योजिताः ।
दैत्या वा दानवा वा च राक्षसा वापि ये च के ॥१८॥
त्वया युक्त्या प्रहन्तव्या नान्यथा कुशलं भवेत् ।
अपराधस्तु सोढव्यः करुणासागरो भवान् ॥१९॥
जालन्धरो हिरण्याक्षो हिरण्यकशिपुस्तथा ।
अन्ये चासुरमूर्धन्या युक्त्या त्वयैव घातिताः ॥२०॥
यथा युक्तिं भवान्वेत्ति तथा जानाति नाऽपरः ।
वयं तु वरदास्तेषां भवाँस्तेषां तु शान्तिकृत् ॥२१॥

इत्यस्माभिश्चालितं वै संसारचक्रकं महत् ।
तथैवैतत् संचलति क्षमस्व पुरुषोत्तम ॥२२॥
अहं व्यक्तो विचरामि तेनाऽऽगच्छन्ति देवताः ।
दैत्याश्च वरलाभार्थं ततोऽव्यक्तो भवाम्यहम् ॥२३॥
देवीं तु पार्वतीं रक्ष गच्छाम्यविदितस्थलम् ।
इति कृत्वा महादेवस्तत्रैवान्तरधीयत ॥२४॥
कैलासं तु परित्यज्य रैवताचलमागतः ।
गिरीणां मध्यमास्थाय त्यक्त्वा दिव्ये च वाससी ॥२५॥
गजाऽजिनं परित्यज्य त्यक्त्वा मूर्तं सुरूपकम् ।
भित्त्वा भूमितलं शंभुः स्थाणुरूपो बभूव ह ॥२६॥
यस्मात्स्वयं बभूवेति भवेश्वरः स्वयं शिवः ।
स्वयंभूर्वै भवो जातो भवेश्वरतडागके ॥२७॥
अत्रान्तरे तु कैलासे ते न पश्यन्ति शंकरम् ।
ततो देवाः प्रचलिताः कृत्वा गौरीं पुरःसराम् ॥२८॥
नन्दिभद्रादयः सर्वे देवा इन्द्रादयस्तथा ।
पुत्रेण सहिता देवी सिंहारूढा स्वयं ययौ ॥२९॥
अधिरुह्य गरुत्मन्तं ययौ विष्णुः सनातनः ।
हंसाधिरूढो भगवान् ब्रह्मा चायाति पृष्ठतः ॥३०॥
ऐरावतं समारुह्य देवराजो गतः स्वयम् ।
गंगा सरस्वती देवी यमुना च शरद्वती ॥३१॥
देवताश्चागताः सर्वा नागा यक्षाश्च किन्नराः ।
अधिरुह्य गिरेः शृंगमम्बादेवी व्यवस्थिता ॥३२॥
ब्रह्मा विष्णुस्तथा देवा मार्गयांचक्रुरीश्वरम् ।
ददृशुस्तं तडागस्य निम्नभूमौ महेश्वरम् ॥३३॥
किमर्थं वा कथं चात्र समायाताः सुरादयः ।
मया त्वत्रैव वस्तव्यं भवेश्वरसुरूपतः ॥३४॥
भवन्तो यदि सन्तुष्टाः सुरा नद्यश्च सेवकाः ।
गिरौ रैवतके विष्णुरम्बा सर्वेऽत्र वाहकाः ॥३५॥
सिंहादयोऽपि तिष्ठन्तु कैलासोऽन्य इवात्र वै ।
सुवर्णा भगवत्पत्नी स्वर्णरेखा नदी मता ॥३६॥
तत्र गंगासरस्वत्यादयो वसन्तु सर्वदा ।
पर्वते स्वर्णरक्षा सा स्वर्णरेखा तु सा भुवि ॥३७॥
एवं शंभुर्भवेशाख्यो विष्णुर्दामोदरः स्वयम् ।
ब्रह्मा स्वयंभूस्तत्रास्ति चेन्द्र इन्द्रेश्वरे स्थितः ॥३८॥
अन्याऽन्ये यत्र सारल्यं तत्र तत्र व्यवस्थिताः ।
तत एतन्महत्तीर्थं मृत्युसंसारतारकम् ॥३९॥
बहुरात्रं हरिस्तत्र कृत्वा दैत्यनिबर्हणम् ।
समागत्य च विश्रान्तिं नयत्येव दयानिधिः ॥४०॥
रेमे रैवतके विष्णुर्यावदाभूतसंप्लवम् ।
हिरण्यकशिपुं हत्वा गत्वा च रैवते गिरौ ॥४१॥
शरभं शिवमास्कन्ध्य नारसिंहं मुमोच सः ।
हिरण्याक्षं तथा हत्वा गत्वा रैवतके गिरौ ॥४२॥
वने व्याघ्रमवस्कन्ध्य वाराहं समुमोच वै ।
पृथ्वीं कृत्वा समां देवः पृथुश्चोवास रैवते ॥४३॥
जयमाला पृथुना दामोदरांसे निवेशिता ।
ब्रह्मघ्नश्च सुरापश्च भ्रूणहा गुरुतल्पगः ॥४४॥
स्वर्णरक्षाजले स्नातो मुच्यते सर्वपातकैः ।
भवदामोदराऽम्बानां दर्शनाद्याति धाम तत् ॥४५॥
वामनस्तु बलिं प्राप्य जित्वा रैवतके स्थितः ।
कैलासपर्वतं त्यक्त्वा देवीं देवांश्च संगतान् ॥४६॥
वैशाखे पंचदश्यां तु भूमिं भित्त्वा भवोऽभवत् ।
तस्मिन्नेव दिने लक्ष्मि ! स्वर्णरक्षानदीजलात् ॥४७॥
पन्थानं वासुकिः प्राप सर्वपापप्रणाशनम् ।
ऐरावतपदाक्रान्त ऊर्जयन्तो महागिरिः ॥४८॥
सुस्राव तोयं बहुधा गजपादोद्भवं शुचि ।
वस्त्रापथस्य क्षेत्रस्य प्रमाणं शृणु पद्मजे ॥४९॥
हरस्य भ्रमतो भूमौ पतितं वस्त्रभूषणम् ।
तावन्मात्रं हि तत्क्षेत्रं देवैर्वस्त्रापथं कृतम् ॥५०॥
उत्तरेण नदी भद्रा पूर्वे कुंकुमवापिका ।
दक्षिणे च बलेः स्थानमूर्जयन्तीनदीमनु ॥५१॥
पश्चिमायां परं नद्योः संगमो वामनात्पुरः ।
एतद्वस्त्रापथं क्षेत्रं भुक्तिमुक्तिप्रदायकम् ॥५२॥
ज्ञेयः क्षेत्रस्य चायामो योजनानां चतुष्टयम् ।
क्षेत्रस्य दीर्घता योजनानां द्वादशकं मता ॥५३॥
भूमौ लुण्ठन्दण्डवच्च कृत्वा प्रक्रामति क्रमात् ।
दण्डप्रमाणभूमेर्वा प्रक्रमेद् धूलिकां वहन् ॥५४॥
स सप्तसागरां पृथ्वीं शासित्वाऽन्ते हरेः पदम् ।
शतभौमविमानस्थो दिव्यदेहो व्रजत्यथ ॥५५॥
विधाय भुजबन्धं वा पादौ बध्वा शनैः शनैः ।
मौनेन मानुषो यायाद् दामोदरं भवेश्वरम् ॥५६॥
सर्वपापैः प्रमुच्येत मोक्षमन्ते ह्यवाप्नुयात् ।
वस्त्रापथे महाक्षेत्रे नगरे वामनस्थले ॥५७॥
वशिष्ठो भगवाँस्तप्तुं तपस्तत्राऽऽजगाम ह ।
ईशानकोणे नगरात् स्वर्णरेखानदीजले ॥५८॥
स्नात्वा ध्यात्वा हरिं देवं प्रणनाम मुनिर्यदा ।
तदा हरिहरौ तत्र समायातौ तमूचतुः ॥५९॥

त्वं वै वर्षशतं चात्र घोरे तपसि संस्थितः ।
महर्षे तव तुष्टौ स्वः किं ते प्रार्थ्यं वदस्व तत् ॥६०॥
वसिष्ठः प्राह देवेशौ यदि देयो वरो मम ।
तदा भवद्भ्यामत्रैव स्थेयमाचन्द्रतारकम् ॥६१॥
ममापि दर्शनं सेवा युवयोः सर्वदा भवेत् ।
अत्र ये पापिनो लोका जलं पीत्वा क्षणं च वा ॥६२॥
ग्रहीष्यन्ति च विश्रामं तेषां पापलयो भवेत् ।
ह्येतद्वासिष्ठसंज्ञं च तीर्थं ख्यातं भवेत्सदा ॥६३॥
तथास्त्विति समुच्चार्य देवौ चांशेन तिष्ठतः ।
स्वर्णदुर्गे तु नगरे कृष्णाया उत्तरे तटे ॥६४॥
दातारस्य तु दैत्यस्य विनाशाय सुदर्शनम् ।
चक्रं वै प्रहितं तच्च दग्ध्वा ऽसुरमुपागतम् ॥६५॥
तदा नारायणो यत्र विश्रामं प्राप्तवान् हरिः ।
तत्र त्रिविक्रमो देवः सिद्धेश्वरश्च शंकरः ॥६६॥
श्रीकृष्णो राधया साकं गणेशो हनुमाँस्तथा ।
देवाश्चान्ये समायाता नारायणदिदृक्षया ॥६७॥
पर्वतीयजनैः शुद्धैः कल्याणीयसुमार्गगैः ।
दिव्यदृष्ट्या तु ते देवा दृष्टास्तत्र समागताः ॥६८॥
तैर्भक्तपुंगवैर्देवाः सात्वतैः समपूजिताः ।
नमस्कृतास्तथा देवाः प्रसन्ना जगदुश्च तान् ॥६९॥
भक्त्या तु भवतां तुष्टा वदन्तु किमपेक्षितम् ।
प्राहुस्ते तु तदा देवान् यदि देयो वरो भवेत् ॥७०॥
वसन्तु चात्र संस्थाने कल्याणाय तु देहिनाम् ।
पर्वतीयास्तथाऽरण्यवासिनोऽपि त्वदीक्षणात् ॥७१॥
मुक्तिं यास्यन्ति तस्माद्वै संप्रयच्छन्तु तद्वरम् ।
तथास्त्विति वरं दत्वा स्थिताश्चांशैस्तु मन्दिरे ॥७२॥
सुवर्णसिंहराज्ञा वै कारितेऽत्र महत्तरे ।
सुवर्णकलशैः स्वर्णाऽऽसनद्वारैः सुशोभिते ॥७३॥
रक्तपीतैः श्वेतनीलैर्मणिभिः कृतभूमिके ।
स्फाटिकाद्यैश्च सुक्लृप्तसोपानभित्तिमण्डले ॥७४॥
अत्रागत्य तु ये लोका करिष्यन्तीक्षणादिकम् ।
दानं पुण्यं जपं होमं साधुसाध्व्यादितर्पणम् ॥७५॥
श्राद्धं तथोत्सवं दैवं तेषां पुण्यमनन्तकम् ।
उद्यापनं करिष्यन्ति जीर्णोद्धारं च ये जनाः ॥७६॥
नैवेद्यं फलदानादि सतां सेवां धनादिभिः ।
तनुभिश्च करिष्यन्ति ते यास्यन्त्यक्षरं पदम् ॥७७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने रैवते वस्त्रापथे विविधतीर्थभवेश्वरदामोदरस्वयंभूत्रि-विक्रमवासिष्ठस्वर्णरक्षादिनिवासकारणप्रदर्शनादिनामा त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥१४३॥

श्रीनारायण उवाच—

अहं वसामि सत्तीर्थे लोकोद्धारणहेतवे ।
सर्वत्रापि निवसामि चान्तर्यामित्वहेतवे ॥ १ ॥
मूर्तौ मूर्तौ सदा वर्ते सेवाग्रहणहेतवे ।
तत्तत्स्थाने वसाम्यत्र भक्तसौहार्दहेतवे ॥ २ ॥
क्वचिद्भक्ताऽऽग्रहाद् यद्वा मम संकल्पकारणात् ।
क्वचित्कार्यावश्यकत्वान्निवसामि स्थले स्थले ॥ ३ ॥
भारते पश्चिमे भागे यावत्सागरसंगते ।
रैवताद्रिसमं तीर्थं नान्यद् दिव्यं हि वर्तते ॥ ४ ॥
तत्रैव दक्षिणेऽरण्ये सोमनाथस्य संस्थितिः ।
उत्तरे स्वर्णनगरेऽनादिकृष्णस्य संस्थितिः ॥ ५ ॥
पूर्वे कुंकुमवाप्यां च गोपालकृष्णसंस्थितिः ।
पश्चिमे वामनस्थल्यां त्रिविक्रमस्य मे स्थितिः ॥ ६ ॥
एवं सर्वत्र तद्देशे निवसामि स्थले स्थले ।
महत्यां वै राजधान्यां लक्ष्मीनारायणस्थितिः ॥ ७ ॥
प्रान्ते प्रान्ते जनोद्धारहेतवे निवसाम्यहम् ।
युगान्ते मम सौधानि विवर्तन्ते त्वितस्ततः ॥ ८ ॥
विलीयन्ते तु जीर्णानि कार्यन्ते नूतनानि च ।
यथा भक्ता भवन्त्येव तद्वत्पुनर्भवाम्यहम् ॥ ९ ॥
नान्तोऽस्मि मम दिव्यानां स्थानानां युगभेदतः ।
भूमिर्देशास्त एव स्युरहमप्यस्मि चैव सः ॥१०॥
अर्चकस्य तपःश्रैष्ठ्याद् भक्तभक्तिबलात्तथा ।
मूर्तीनामतिसौन्दर्यादहं वर्ते समक्षवत् ॥११॥
बलेर्भक्तिं विलोक्यैव कश्यपस्य तपस्तथा ।
दीर्घोऽपि वामनो भूत्वाऽवसं वै रैवताचले ॥१२॥
कश्यपेन महोग्रं वै तपस्तप्तं नदीतटे ।
ओजस्वत्याश्चोत्तरे वै चूतवृक्षाभिसंवृते ॥१३॥
ऊर्जयन्त्या जलं पीत्वा तत्र वर्षसहस्रकम् ।
पुत्रार्थं निर्जने स्थाने यत्रास्ते वामनस्थली ॥१४॥
तत्राऽदित्या सह तेन कश्यपेन हरिः स्वयम् ।
प्रसादितश्च पुत्रत्वे वृत्तोऽतो वामनोऽभवम् ॥१५॥
तत्कारणं तु ते वच्मि शृणु लक्ष्मि ! मनोगतम् ।
हिरण्यकशिपुं हत्वा नृसिंहो भगवान् स्वयम् ॥१६॥
ददाविन्द्राय त्रैलोक्यं प्रह्लादायाऽतलादिकम् ।
काले हरिपदं प्राप्तः प्रह्लादः सात्त्वताग्रगः ॥१७॥
प्रह्लादस्य सुतः श्रेष्ठो विरोचन इतीरितः ।
स वर्षाणामयुतं वै राज्यं कृत्वा दिवं ययौ ॥१८॥

तस्य पुत्रो महाबाहुः सात्वतानां वरो बलिः ।
सत्यप्रतिज्ञो धर्मिष्ठो भक्तः प्रियतमो हरेः ॥१९॥
स जित्वा लोकपालाँश्च दिक्पालाँश्च समन्ततः ।
त्रींल्लोकान्स्ववशे कृत्वा राजाऽभूत् त्रिभुवां पतिः ॥२०॥
एकातपत्रां पृथिवीं बलिश्चक्रे बलैतिनः ।
अकृष्टपच्या पृथिवी बहुसस्यफलप्रदा ॥२१॥
गन्धवन्ति च पुष्पाणि रसवन्ति फलानि च ।
आस्कन्धफलिनो वृक्षा पुटके पुटके मधु ॥२२॥
गावः पूर्णदुघाः सर्वा बलौ राज्ये प्रशासति ।
स्वधर्मनिरताः सर्वे नराः पापविवर्जिताः ॥२३॥
अर्चयन्ति हृषीकेशं सततं वैष्णवीप्रजाः ।
इन्द्रादित्रिदशास्तस्य किंकराः समुपस्थिताः ॥२४॥
ऐश्वर्यं त्रिषु लोकेषु बुभुजे बलदर्पकृत् ।
चतुर्वेदा द्विजास्तस्य राज्ये यज्ञादिकारिणः ॥२५॥
क्षत्रिया रक्षणे सक्ता युद्धशास्त्रार्थकोविदाः ।
गोषु सेवापरा वैश्याः शूद्रा शुश्रूषणे रताः ॥२६॥
दारिद्र्यदुःखमरणैर्विमुक्ताश्चिरजीविनः ।
मणिदीपप्रकाशास्तु दिवेव निशि सन्ति यत् ॥२७॥
सर्वे कुटुम्बिनो हृष्टाः सुखिनः स्वेष्टवस्तुभिः ।
नित्यं वैवाहवादित्रैर्गर्जन्ति यूपमण्डपाः ॥२८॥
यज्ञे सन्तोषिता देवा नाऽतो युद्धं परस्परम् ।
सापत्निककलिर्नास्ति पशुपक्षिजनेष्वपि ॥२९॥
मैत्रीभावं गतं सर्वं जगत् स्थावरजंगमम् ।
तदा तु नारदो युद्धं त्रैलोक्ये नहि पश्यति ॥३०॥
तावत्तस्योदरे पीडा महती समजायत ।
किं तर्पणेन स्नानेन जपहोमादिभिश्च किम् ॥३१॥
तत् स्नानं यत्र युद्ध्यन्ते गजा दन्तविघट्टनैः ।
सन्ध्या यत्र रक्तैर्भूः कबन्धानां तु पाटला ॥३२॥
क्रव्यादा यत्र तृप्यन्ति तर्पणं तन्मम प्रियम् ।
पूजा क्षत्रियशस्त्रौघैर्हन्यन्ते क्षत्रिया रणे ॥३३॥
स होमो यत्र हूयन्ते हन्यन्ते नरपुंगवाः ।
युद्धं विना त्रिलोक्यां मे शून्यं तु दृश्यतेऽन्वहम् ॥३४॥
तथा करिष्ये चेन्द्रस्य बलिना कलहो भवेत् ।
नारदस्तद्विचिन्त्यैव ययाविन्द्रं प्रति द्रुतम् ॥३५॥
इन्द्रो ददर्श च्यायान्तमुदासीनं तु नारदम् ।
सिंहासनं परित्यज्य समुत्थायाऽग्रतः स्थितः ॥३६॥
स्वागतेनाऽभिवन्द्याऽथ बभाषे नारदं हरिः ।
महर्षे कुशलोऽस्यद्य कुतो वाऽऽगम्यते त्वया ॥३७॥
स्नाने सन्ध्यार्चने होमे कुशलं स्विन्नु विद्यते ।
इति पृष्टो विहस्याऽथ नारदः प्राह तं प्रति ॥३८॥
बलिर्यावन्महाँश्चक्रवर्ती भवति सर्वगः ।
तत्र किं कुशलं मेऽस्ति तेऽपि पृच्छामि तन्मृषा ॥३९॥
कुशलं तु तदा मह्यं प्रष्टव्यं यदि संयुगे ।
देवानां विजयं द्रक्ष्ये बलेश्चाधोगतिं तथा ॥४०॥
आदित्याद्या ग्रहाः सर्वे बलिं नमन्ति योजिताः ।
बलेर्यज्ञैस्तथा मेघा वर्षन्ति हविषा भुवि ॥४१॥
रोगादिमरणं नास्ति किं यमस्य प्रयोजनम् ।
त्रिलोकीशो महेन्द्रश्च दिक्पालो लोकपालकः ॥४२॥
सुराधिपं बलिं त्वद्य स्तुवन्ति मानवा अपि ।
त्वां तु हसन्ति दैत्येन्द्रा जल्पन्ति निर्बलान्सुरान् ॥४३॥
वसुन्धरां स्वर्णमयीं स्वायत्तीकृत्य सर्वथा ।
बलिर्न मनुते त्वां वै सुरेश्वर इति स्वयम् ॥४४॥
सुराः सर्वे बल्यधीना बलिकृतुसुभोजिनः ।
रंभा तिष्ठति बल्यग्रे मनुते त्वां न मेनका ॥४५॥
तिलोत्तमा बलिं याति तूर्वशी च बलेर्वशा ।
सुकेशी मञ्जुघोषा च निरीक्षेते बलिं सदा ॥४६॥
पुलोमा पुलकोद्भेदं न करोति बलिं विना ।
पौलोमी च बलिं स्तौति नमति द्यौर्बलिं सदा ॥४७॥
नारदः पर्वतश्चैव हाहा हूहूश्च तुम्बुरुः ।
बलेः राज्यं प्रशंसन्ति ते किमस्ति प्रयोजनम् ॥४८॥
बृहस्पतिर्यदाचष्टे न तद्वाच्यं मया तव ।
इन्द्राणी तु बलिं चेन्द्रं मत्वा प्रातः प्रपश्यति ॥४९॥
इति श्रुत्वा महेन्द्रस्तु कोपज्वलितमानसः ।
गजं वज्रं प्राह सूतौ रथमानयतं द्रुतम् ॥५०॥
सूर्यं रुद्रं यमं वायुं सुसज्जान् कुरुतं तथा ।
रणवाद्यानि वाद्यन्तां प्रयान्तु त्वरिता भटाः ॥५१॥
इतीन्द्रं क्रुद्धमालोक्य बृहस्पतिरुदारधीः ।
प्राह सामाद्युपायेन बलिर्जय्यो न चान्यथा ॥५२॥
यदधीनं जगत्सर्वं विष्णुं सुरसुरक्षकम् ।
मन्त्रयन्तु समाहूयाऽनुतिष्ठन्तु तदारितम् ॥५३॥
अथवा राजते विष्णुः कार्यार्थे मन्दरे गिरौ ।
गच्छामस्तत्र ऋषयः सेन्द्रा ब्रह्मपुरोगमाः ॥५४॥
गौतमोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ कश्यपः ।
जमदग्निर्वशिष्ठश्च बालखिल्याश्च नारदः ॥५५॥
गताः सर्वे तदा विष्णुर्बालखिल्याँस्तु वामनान् ।
जहासाऽङ्गुष्ठपर्वाभान् भाविकार्यबलाद्धरिः ॥५६॥

तदा सर्वे बालखिल्या उच्चैरूचुः परस्परम् ।
अस्मान् हससि तस्मात्त्वं वामनो वै भविष्यसि ॥५७॥
वस्त्रापथे रैवताद्रौ देवकार्यं विधाय च ।
वामनत्वं परित्यज्य दामोदरो निवत्स्यसि ॥५८॥
इत्युक्तो बालखिल्यैः स विष्णुः स्वागतमाचरत् ।
इन्द्रो बलेस्त्रिलोकाधिपत्यं प्राह सुदुःसहम् ॥५९॥
वशीकृतं तु बलिना दैत्या यज्ञभुजः कृताः ।
तस्माद्बलिर्भ्रष्टराज्यः पातालमधितिष्ठतु ॥६०॥
सूर्यसोमान्वये कश्चिद् राजा भवतु भूतले ।
इत्याश्रुत्य स्वयं प्राह करिष्ये च तथा हरिः ॥६१॥
ऋषयस्तत्र गच्छन्तु कारयन्तु महामखम् ।
अहं तत्र समागत्य साधयिष्यामि तं बलिम् ॥६२॥
इत्युक्ता मुनयः सर्वे स्वस्वस्थानं ययुस्तदा ।
कालं प्रतीक्षमाणास्ते प्रतीक्षन्ते हरेर्जनिम् ॥६३॥
कश्यपोऽपि सुतं त्विन्द्रं भ्रष्टराज्यं विलोक्य च ।
आदित्या सह सौराष्ट्रे तपस्तेपे पयोव्रतम् ॥६४॥
अर्चयामास देवेशं पद्मनाभं जनार्दनम् ।
शरीरे तु तयोस्तत्र पिपीलिकाभिरावृते ॥६५॥
तेजो महत्तयोर्व्याप्तं सौराष्ट्रे परितस्तदा ।
लोकास्तु विस्मितास्तेन तौ स्तुवन्ति पुनः पुनः ॥६६॥
हरिर्वर्षसहस्रान्ते प्रसन्नस्तपसा तयोः ।
तत्रैवाविरभूत् तस्य देव्या सह सनातनः ॥६७॥
तं दृष्ट्वा पुण्डरीकाक्षं शंखचक्रगदाधरम् ।
इन्दीवरदलश्यामं सर्वाभरणशोभितम् ॥६८॥
किरीटहारकेयूरकुण्डलश्रृंखलान्वितम् ।
पीतांबरं श्रीवत्सांककौस्तुभंहारवक्षसम् ॥६९॥
लक्ष्मीयुक्तं गरुडस्थं प्रसन्नं जगदीश्वरम् ।
हर्षनिर्भरहृदयस्तुष्टाव कश्यपो हरिम् ॥७०॥
नमो नमस्ते लक्ष्मीश सर्वेश भुवनेश्वर ।
स्वाश्रितानां सुखदात्रे भक्तकार्यकृते नमः ॥७१॥
आदिमध्यान्तरहितनित्यरूपाय ते नमः ।
नमः सर्वत्राणकृते वेदवेदांगचक्षुषे ॥७२॥
सूक्ष्माय स्थूलरूपाय नारायणाय ते नमः ।
कल्याणगुणपूर्णाय परात्मने च ते नमः ॥७३॥
नमस्ते योगिगम्याय भक्तेच्छापूरकाय ते ।
नित्यमुक्तैकभोगाय परधामेश्वराय च ॥७४॥
चतुरात्मन्नमस्तुभ्यं व्यूहात्मने च ते नमः ।
पंचपंचस्वरूपाय पंचसंस्कारिणे नमः ॥७५॥
नारायणाय कृष्णाय वासुदेवाय ते नमः ।
शार्ङ्गिणे विश्वरूपाय धात्रे त्रात्रे च ते नमः ॥७६॥
विष्णवे जिष्णवे तुभ्यं शुद्धसत्वाय ते नमः ।
बलेर्बलं महज्जातं तन्निषूदय माधव ॥७७॥
देवास्तदा सुखिनः स्युरिति चाभ्यर्थनाऽस्ति मे ।
यद्यपि बलिराजोऽसौ भक्तोऽस्ति सुरमेलनः ॥७८॥
किन्तु सुरातिक्रमणं मास्तु दैत्यस्य माधव ।
तस्मात् त्रिलोकगं राज्यं त्विन्द्रस्यैव सदाऽस्तु वै ॥७९॥
बलेस्त्वासुरराज्यं च पातालादौ यथास्तु च ।
तथाऽस्त्यभ्यर्थनीयं मे यथेच्छसि तथा कुरु ॥८०॥
उक्त्वा तु कश्यपस्तत्र विरराम हरेः पुरः ।
अदितिः प्राह देवेशं नत्वा स्तुत्वा जगत्प्रभुम् ॥८१॥
हेनाथ यदि देवानां शास्तृत्वं चासुरे भवेत् ।
तदाऽस्मत्पुत्रबाहुल्ये नास्ति किञ्चित्प्रयोजनम् ॥८२॥
यदि श्रृगालाः काकाश्च स्युर्देवस्य विभूतयः ।
किं सिंहेन च हंसेन तदा वै महिमा तव ॥८३॥
यदि दैत्याः सार्वभौमा भ्रातरस्ते च किंकराः ।
अलं तर्हि जीवितेन त्वदित्या रमया श्रिया ॥८४॥
यदि भवान्महैश्वर्यो दैत्योऽपि तादृशो भवेत् ।
अलं भगवता तर्हि दैत्यो वै माधवो भवेत् ॥८५॥
तस्मात्पात्राधिकारेण देया समृद्धिर्हि नाऽन्यथा ।
यदि लौहं गले न्यस्तं शोभते रूपभासुरम् ॥८६॥
कृतं तर्हि सुवर्णेन व्यर्थं सृष्टं हि हाटकम् ।
यदि दैत्यौ भवेदिन्द्रो व्यर्था ह्यप्सरसस्तथा ॥८७॥
राजमातरो राक्षस्यश्चेदिन्द्राण्या ह्यलं तदा ।
किंबहूक्तेन मे नाथ व्यवस्थां कुरु केशव ॥८८॥
इत्यभ्यर्थित एवाऽयं श्रीपतिः परमेश्वरः ।
प्राह तौ वै वरार्थाय कश्यपः प्राह तं तदा ॥८९॥
पुत्रत्वं मम देवेश संप्राप्य त्रैदशं हितम् ।
प्रकुरुष्वेन्द्रावरजो भूत्वोपेन्द्रो मम प्रियः ॥९०॥
येन केनाप्युपायेन बलिं निर्जित्य लीलया ।
त्रैलोक्यं देहि देवाय शक्रायेति सुखं कुरु ॥९१॥
इत्युक्तस्तेन विप्रेण तथेत्याह जनार्दनः ।
अदितिः कश्यपश्चैनं पूजयामासतुर्बहु ॥९२॥
देवैः संस्तूयमानः श्रीहरिस्त्वन्तरधीयत ।
अदितिः कश्यपश्चैतौ मध्यदेशं गतौ तदा ॥९३॥
हिमालयस्य भूमौ वै कंचित्कालं समूषतुः ।
एतस्मिन्नेव समये कश्यपस्य महात्मनः ॥९४॥

अदित्या गर्भमागच्छद् भगवान् माधवः स्वयम् ।
प्राविर्भावमगमत् स देवस्त्र्यंगुलदेहवान् ॥९५॥
दशवर्षवयस्कः स वितस्तिदेहवानभूत् ।
मात्रे पित्रे वने तत्रैकदा ह्यासुरसैन्यपः ॥९६॥
अदृश्यत बलिः पृथ्व्यां जेतुं सर्वान् समागतः ।
ततो देवान् मुनीन् पितॄन् जेतुं यास्यति यावता ॥९७॥
तावता ह्यदितिः प्राह कश्यपं प्राणवल्लभम् ।
बलिः सैन्येन देवान्वै जित्वा स्मृद्धिं हरिष्यति ॥९८॥
किं कर्तव्यं मम पुत्रोऽद्यापि वितस्तिमात्रकः ।
रक्षणं दुर्लभं चास्य देवानां तु कथं हि तत् ॥९९॥
तथा भवतु यद्भावि हरिः रक्षां करिष्यति ।
इति दीनां मातृवाचं संश्रुत्वा गुप्तमाधवः ॥१००॥
तदा प्रादर्शयन्मात्रे वितस्तिविग्रहे शुभे ।
अनन्तानन्तसृष्ट्यण्डकोटीर्याश्चाणुरूपिणीः ॥१०१॥
उड्डीयन्ते स्म चाण्डानि सप्तावरणवन्ति तु ।
लोकालोकश्च मेरुश्चाऽद्रयोऽन्ये तत्र दर्शिताः ॥१०२॥
आपगाश्चाब्धयश्चापि नक्षत्रग्रहतारकाः ।
मेघा वनानि पातालालयास्तेषां गृहाणि च ॥१०३॥
उच्चावचानि सर्वाणि स्थलानि दर्शितानि वै ।
तत्र हिमगिरिस्तस्य वनानि तत्र कश्यपः ॥१०४॥
अदितिश्च स्वयं कृष्णो वितस्तिमात्रविग्रहः ।
बलेः सैन्यं तथा सर्वं दर्शितं तत्र वामने ॥१०५॥
वामनेन महादीर्घे देहे प्रदर्श्य तत्तनुम् ।
क्षणात्तिरोहितं तत्राऽभवद्वितस्तिमानकः ॥१०६॥
अथैवं दर्शने जाते पित्रोराश्वासनं ह्यभूत् ।
देवानां भयहर्ताऽयं प्राप्ते काले भवेदिति ॥१०७॥
ततः षोडशवर्षोऽयं हस्तमात्रप्रमाणकः ।
प्राप्तश्मश्रुस्वर्णरेखः कौस्तुभेन विराजितः ॥१०८॥
स्वर्णान्तमेघवत्स्निग्धकेशयूथसुमस्तकः ।
पद्मपत्रनिभनेत्रश्चन्द्रोज्ज्वलास्यशोभनः ॥१०९॥
सुदृढपक्वशरीरः कोमलः करपत्तलैः ।
हस्ते स्वल्पं स्वातपत्रं यष्टिका रत्नपौरटी ॥११०॥
मालिका शुक्लमणिभिः कृता करगता शुभा ।
चन्दनस्योर्ध्वपुंड्रं च भाले कुंकुमचन्द्रकः ॥१११॥
सुवर्णवर्णं स्वल्पं सुयज्ञोपवीतमंसके ।
रक्तोर्णायाः पटं मूर्ध्नि कौस्तुभो हृदये तदा ॥११२॥
स्वर्णप्रान्तं श्वेतवस्त्रमुत्तरीयं च कंचुकम् ।
कट्यां तु कोमला चार्द्रा शुभा मुञ्जस्य मेखला ॥११३॥
पीताम्बरं स्वर्णवर्णं पादुके स्वर्णभूषिते ।
काष्ठकमण्डलुर्हस्ते रज्जूः कार्पासनिर्मिता ॥११४॥
करे पुरुषविष्णुनारायणसूक्तपुस्तकम् ।
पूजार्थं वंशपात्रं च ग्रथितं राजते करे ॥११५॥
आसनं चाजिनं कुक्षौ धृत्वा नत्वा च पादयोः ।
पित्रोराशीः समादाय विजयायाऽभिजित्क्षणे ॥११६॥
तत्स्थलात्स विनिर्यातो यात्रानिमित्तमच्युतः ।
अथापि बलिभूपः सः पृथ्वीं जित्वा दिवं तथा ॥११७॥
आजगाम भुवं रम्यां रैवताचलयोगिनीम् ।
रैवताद्रेर्निर्ऋतायां दक्षिणे वामनात्पुरात् ॥११८॥
आम्रारण्यं नदीं चोजस्वतीं देशं सुपल्लवम् ।
जलस्थलतरुच्छायासुखं सर्वं विलोक्य च ॥११९॥
उवास यज्ञखातानि कारयामास वै बलिः ।
बलिखातप्रदेशः सो बलिमखेति विश्रुतः ॥१२०॥
भूमिं तां संस्कृतां कारयित्वा च मखमण्डपम् ।
द्वादशाहं महायज्ञं प्रारभत् सर्वदक्षिणम् ॥१२१॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने नारायणस्य सत्तीर्थवासो बलिगुणवर्णनं नारदस्येन्द्रं प्रति गमनं बलेः पातनमन्त्रणा कश्यपादित्योः सौराष्ट्रे तपश्चर्या नारायणाद्वरप्राप्तिर्वामनजन्म-बलिदिग्विजयः सौराष्ट्रे बलिमखारंभश्चेति-वर्णननामा चतुश्चत्वारिंशदधिकशत-तमोऽध्यायः ॥१४४॥

श्रीनारायण उवाच—

शृणु लक्ष्मि ! वामनोऽपि तीर्थानि व्यचरद्भुवि ।
ययौ सः प्रथमं हरिहरक्षेत्रं ततः पुरीम् ॥ १ ॥
कपिलाश्रममासाद्य ब्रह्मपुत्रानदं ययौ ।
कामरूपस्य कामाक्षीं दृष्ट्वा पशुपतिं तथा ॥ २ ॥
केदारेश्वरमासाद्य ययौ बदरिकाश्रमम् ।
हनुमत्तीर्थमासाद्य कैलासाद्रिमुपाययौ ॥ ३ ॥
अगात्ततो हरिद्वारं कुरुक्षेत्रं ततः परम् ।
प्रययौ यामुनं वृंदावनं गोकुलमित्यपि ॥ ४ ॥
ततोऽयोध्यापुरीं गत्वा सरयूं च प्रयागकम् ।
गयां गोदावरीं गत्वा कावेरीं गतवाँस्ततः ॥ ५ ॥
कांचीं गत्वा च कृष्णां च ताम्रपर्णीं कुमारिकाम् ।
सेतुबन्धं चापि जनार्दनं च मलयाचलम् ॥ ६ ॥

अरुणाचलमासाद्य पद्माक्षेत्रं वराहकम् ।
भूतपुरीं ततः सिंहारण्यं च नर्मदां ततः ॥ ७ ॥
तापीं सिद्धपदं पश्चात्पुष्कराख्यं सरस्ततः ।
सिन्धुं नारायणसरः सुवर्णद्वारिकां ततः ॥ ८ ॥
समुद्रे गोमतीसंगे यावत् स्नाति तु वामनः ।
तावत्तत्र समायाताः स्नानार्थं मुनयोऽपि च ॥ ९ ॥
गौतमोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ कश्यपः ।
जमदग्निर्वसिष्ठो नारदोऽपश्यन्परेश्वरम् ॥१०॥
वामनं लक्षणैर्ज्ञात्वा नेमुस्तं परमेश्वरम् ।
हरिः प्राह च तान्सर्वान् गच्छन्तु बलिखातकम् ॥११॥
ऋषयस्तत्र गच्छन्तु कारयन्तु महामखम् ।
अहं तत्राऽऽगमिष्यामि साधयिष्यामि तं बलिम् ॥१२॥
इत्युक्ताः ऋषयः सर्वे गतास्ते यज्ञमण्डपे ।
द्वादशाहो महायज्ञः प्रारब्धः सर्वदक्षिणः ॥१३॥
शुक्रेणाऽऽमन्त्रिताः सर्वे मुनयो यज्ञकर्मसु ।
पत्नीव्रतः समायातो ब्राह्मणो यज्ञकर्मणि ॥१४॥
ऋषयः पितरो देवा मुनयो यक्षराक्षसाः ।
दैत्याश्च दानवा नागाः सर्पा उरगजातयः ॥१५॥
भूताः प्रेताः पिशाचाश्च वैनायकाश्च किन्नराः ।
सूताश्च मागधाश्चैव बन्दिनश्चारणास्तथा ॥१६॥
गान्धर्वा नर्तकाश्चैव नटाश्चाद्या बहिर्ग्रहाः ।
कूष्माण्डाश्चैव वेताला अशुद्धाः शुद्धजातयः ॥१७॥
द्यौर्ग्रहाः केतवश्चापि तत्त्वान्यपि च शक्तयः ।
सिद्धयो योगिनीचक्रं साध्व्यश्च साधवस्तथा ॥१८॥
ब्राह्मणाः क्षत्रिया वैश्यास्तथा सेवकजातयः ।
नद्यश्च पर्वताश्चापि क्षेत्रतीर्थानि सागराः ॥१९॥
सरांसि चाप्यरण्यानि चैतानि चाण्डजानि च ।
यानि कानि च दिव्यानि पुण्यरूपधराणि च ॥२०॥
चतुर्दशस्तरस्थानि बलिराज्ये स्थितानि च ।
तानि त्वाकारयामास बलिस्त्रैलोक्यराज्यकृत् ॥२१॥
लक्षशः कोटिशस्तत्र पृथ्व्यां दिवि च पर्वते ।
समुद्रेऽरण्यदेशे च नूपुरेत्य समन्ततः ॥२२॥
सर्वेषां तु कृते राज्यसमाः सौधा विनिर्मिताः ।
अन्तरीक्षविमानानि नगर्यो जलवासिनाम् ॥२३॥
वायोः स्तरे च सौधानि मेघस्थभवनानि च ।
पर्वतेऽरण्यवृक्षादौ भूमौ भूम्यन्तरे तथा ॥२४॥
यथा यथा च येषां वै वासे देहानुकूलता ।
तथा तथा च तेषां वै भवनान्यकरोन्नृपः ॥२५॥
विश्वकर्मा मयश्चाथ कारवः शिल्पिनस्तथा ।
चतुःषष्ठिकलाः सर्वाः शिल्पविद्याः सुमूर्तिकाः ॥२६॥
नगराणि तथा ग्रामा मूर्तिमन्त उपस्थिताः ।
कारणानि च कार्याणि ऋतवो मासवत्सराः ॥२७॥
अग्नयो मरुतः सर्वे दिक्पाला लोकपालकाः ।
मूर्तिमन्ति च तत्त्वानि भूतानि विषयास्तथा ॥२८॥
ब्रह्मविष्णुमहेशाश्च पार्षदा दासकोटयः ।
वैष्णवाः शिवभक्ताश्च तथाऽन्ये दैवसात्त्वताः ॥२९॥
यज्ञे त्वाकारितास्तत्र शकुनाऽशकुनानि च ।
कामदुघाश्च पशवः पक्षिणो गरुडादयः ॥३०॥
अमृतानि च दुग्धानि विविधान्नानि सर्वशः ।
पेयान्यनेकजातीनि भक्ष्यभोजनपर्वताः ॥३१॥
रसाश्च विविधास्तत्र मद्यपललमादकाः ।
रूक्षा आर्द्रास्तथा स्निग्धाः खेचरान्नानि भूरिशः ॥३२॥
निवाराश्च यवाश्चैव गोधूमचणकाऽक्षताः ।
तिला जवरिका माषा हवींष्यन्नानि भूरिशः ॥३३॥
न दृष्टानि श्रुतान्येव चतुर्दशसु भूमिषु ।
यानि येषां सुभोज्यानि फलपत्रादिकानि च ॥३४॥
अब्धिजान्यग्निजान्यत्र सम्भारोत्तमजानि च ।
पात्रवस्त्रविभूषादियानवाहनपंक्तयः ॥३५॥
विद्युद्दीपाः कोटिशश्च जलयन्त्राण्यनेकशः ।
कूपा वाप्यो वस्त्रसौधा रसवत्यः सहस्रशः ॥३६॥
सूदाश्च याज्ञिकास्तत्र ऋत्विजा लक्षशः कृताः ।
जापकाः पूजकांस्तत्र गायका वैदिकास्तथा ॥३७॥
वृताश्च कोटिशः साध्या विश्वेदेवास्तथाऽपरे ।
विद्वांसो देवगुरवो दैत्यानां गुरवस्तथा ॥३८॥
यज्ञस्य विविधे कार्ये तथाऽङ्गे योजितास्तदा ।
देव्यो गङ्गादिसरितः शारदा च सरस्वती ॥३९॥
सावित्र्याद्यास्तथा चान्या गीतकीर्तिप्रगल्भिकाः ।
ऋचो वेदाश्च शास्त्राणि मूर्तिमन्ति भवन्ति च ॥४०॥
तत्र का न्यूनता वै स्याद् यत्र त्रैलोक्यपालकः ।
महाभागवतो राजा बलिर्वै यज्ञकारकः ॥४१॥
प्रवर्षन्तीच्छया यस्य सदा लोकाश्चतुर्दश ।
महायज्ञे तदाऽत्राऽभूत् सर्वं वै वामनं विना ॥४२॥
कामो वसन्तो बाणाश्च रतिश्चापि समागताः ।
रागिण्यश्च तथा रागा ग्रामाश्च मूर्छना ययुः ॥४३॥
मन्वन्तराणि धर्मस्य वंशजाः सद्गुणादयः ।
वसवो निधयो रुद्रा दिशा आदित्यदेवताः ॥४४॥

चन्द्रमसश्च नक्षत्रा ग्रामाः खेटाश्च खर्वटाः ।
ओषध्यो जलजाश्चापि स्थलजा मूलजास्तथा ॥४५॥
अमृतवल्लिका नागवल्ल्यश्च जीववल्लिकाः ।
भूगोलज्ञाः खगोलज्ञा दैवज्ञा गणकास्तथा ॥४६॥
मुहूर्तानि तथा योगाः सर्वे ये ते समाययुः ।
मल्ला नटा बहुरूपा नाटकानि च खेलकाः ॥४७॥
प्रदर्शनानि दिव्यानि वह्निस्फोटानि भूरिशः ।
पशुयुद्धानि रम्याणि नरव्यायामकाणि च ॥४८॥
व्याख्यानानि कथकाश्च त्यागिसन्यासिसाधवः ।
ब्रह्मचारिजना बालखिल्यास्तथोर्ध्वशीलिनः ॥४९॥
यत्किंचिद्वै जगत्तत्त्वं सर्वं तत्र समागतम् ।
बलिना बहुमानेन स्वागतेनाऽऽहृतं जगत् ॥५०॥
सिंहारण्यं तदा सर्वं प्रजादेवमयं ह्यभूत् ।
अन्तरीक्षं जलं स्थानं प्राघूर्णिकसुपूरितम् ॥५१॥
यथा वा नूतनं तत्र ब्रह्माण्डमिव दृश्यते ।
नेदृशस्तु समाजो वै भूतो भावी न वा पुनः ॥५२॥
यज्ञस्य मण्डपस्तत्र शतगव्यूतिमानतः ।
आ च स्वर्णद्वारिकात आ च सोमेश्वरावधि ॥५३॥
आ च मकरालयत आ च कुंकुमवापिकम् ।
भूमिस्तु मण्डपैः सा शोभते द्यौरिव नूतना ॥५४॥
यज्ञकुण्डो योजनं तु कमलाकारवत्कृतः ।
अरण्येभ्यः पिप्पलापामार्गोदुम्बरकिंशुकाः ॥५५॥
होमकाष्ठानि चान्यानि समिधां पर्वताः कृताः ।
आज्यनारीकेलरंभाद्राक्षादिफलपर्वताः ॥५६॥
तिलशालियवधान्यनिवाराणां च पर्वताः ।
पुष्पपत्रमूलशाखामञ्जरीबीजपर्वताः ॥५७॥
शर्करा दुग्धपाकाश्च पायसान्नानि भूरिशः ।
हूयन्ते पुष्कलान्येव वेदघोषाश्च नाकगाः ॥५८॥
भोजनानि प्रभुज्यन्ते यज्ञशिष्टानि नित्यदा ।
मिष्टपानानि पीयन्ते यज्ञप्रासादिकानि वै ॥५९॥
ईश्वराणां च देवानामागमो गम इत्यपि ।
मण्डपे वर्तते तत्राऽव्यवच्छिन्नप्रवाहणः ॥६०॥
एकतश्च द्वितश्चापि त्रितश्चेति ऋषित्रयम् ।
तत्तद्देवादिमन्त्रैश्च नवमुत्पाद्यतेऽर्थकम् ॥६१॥
अर्को द्वितीयरूपेण द्वितीयश्चन्द्रमास्तथा ।
प्रकाशेते सदा तत्र दिवारात्र्योर्न वै भिदा ॥६२॥
अव्यवच्छेद्यधाराभिर्घृतानामग्निसम्मुखैः ।
भुङ्क्ते हरिर्वामनोऽयं व्यापकः श्रीहरिः स्वयम् ॥६३॥
एवं सततमाग्नेयं कर्म सम्पद्यते शुभम् ।
किमु तत्र वर्णनीयं शेषोऽपि श्रममाप्तवान् ॥६४॥
श्रममापुर्दर्शका वै वर्णकानां तु का कथा ।
भगवद्भक्तियुक्तस्य सर्वे स्मृद्धं न संशयः ॥६५॥
प्रभोर्भक्तेः प्रतापाद्वै त्वनन्ताः स्मृद्धयो बलेः ।
नित्यं होमस्य भोज्यस्य पानस्याऽर्थ्यर्पणस्य च ॥६६॥
दक्षिणायां सुवर्णस्याऽऽनन्त्यस्यान्तो न दापने ।
दीयतां दीयतां चेति भुज्यतां भुज्यतां तथा ॥६७॥
पीयतां पीयतां चेति नीयतां नीयतां तथा ।
स्वागतं स्वागतं वश्च पञ्चकं नात्र शाम्यति ॥६८॥
वेदघोषा गीतिघोषा नामघोषा हरेस्तथा ।
वाद्यघोषाः कीर्तिघोषाः पञ्चकं नात्र शाम्यति ॥६९॥
अतिहृष्टो बलिर्यज्ञे ददौ दानं परार्धकम् ।
सुवर्णानां हीरकाणां रूप्यकाणां च कोटिकाः ॥७०॥
गवां दानपरार्धाणि वस्त्रदानाऽर्बुदार्बुदम् ।
विभूषाणां रूप्यकाणां मुद्राणां त्वब्जकोटयः ॥७१॥
छत्राणां पादुकादीनां पात्राणां च परार्धकम् ।
यानानां वाहनानां च हस्तीनां वाजिनां तथा ॥७२॥
रथानां कन्यकानां च कोटिकोट्यर्बुदानि च ।
दानान्येवं ददौ साक्षाद् विष्णुः कृष्ण इवाऽपरः ॥७३॥
वसवो दानकार्येऽत्र मुख्याश्चैवाऽभवँस्तदा ।
लक्ष्मीः रमा महालक्ष्मीः मुख्याः स्वर्णादिदापने ॥७४॥
द्यौश्च पृथ्वी कृते मुख्ये रत्नभोज्यादिदापने ।
मेरुस्तत्र महामुख्यः पात्रपश्वादिदापने ॥७५॥
समुद्राश्च कुबेरश्च हिमाद्यादय इत्यपि ।
अरण्यानि विश्वकर्मा मयश्चान्ये दिवौकसः ॥७६॥
रत्नभूषाविभूत्यादियानवाहनदापने ।
मुख्याः कृताश्च ते सर्वे ददुः सर्वस्वमेव यत् ॥७७॥
उद्घोषोऽभूच्चतुर्दशलोकेषु सर्वतो दिशि ।
त्रिलोकेशो बलिर्यज्ञे ददौ दानानि कोटिशः ॥७८॥
स्वर्णपात्रेषु सर्वेभ्यो दीयते भोजनं बहु ।
अतिथिर्ब्राह्मणो विद्वान् सर्वस्वेनापि पूज्यते ॥७९॥
सर्वलोकनिवासिन्यः प्रजास्तत्राऽऽययुर्मखे ।
गच्छन्तु प्रतिगृह्णन्तु दानं भुञ्जन्तु भोजनम् ॥८०॥
पश्यन्तु कीदृशो यज्ञो न भूतो न भविष्यति ।
सौराष्ट्रदेशे विख्यातो रैवताचलसन्निधौ ॥८१॥
क्षेत्रं वस्त्रापथं ख्यातं तत्राऽयं वैष्णवो मखः ।
पश्चिमाद् दक्षिणे भागे बलेरस्ति महामखः ॥८२॥

इत्युद्घोषं परं श्रुत्वा वामनोऽपि महाप्रभुः ।
सर्वज्ञोऽप्यसर्वज्ञवत् एवं चेष्टामि लब्धये ॥८३॥
इति कुर्वन् चतुर्वेदी ब्राह्मणस्तीर्थयात्रया ।
रैवताद्रौ समायातो लोकैरज्ञातचेष्टितः ॥८४॥
महोदरो ह्रस्वभुजो ह्रस्वपादो महाशिराः ।
महाहनुः स्थूलकण्ठः स्थूलजंघोऽतिलालसः ॥८५॥
बद्धशिखो धृतवस्त्रच्छत्रोपानत्कमण्डलुः ।
वस्त्रापथे समायातः स्वर्णरक्षानदीतटे ॥८६॥
वामनश्चिन्तयामास सोमनाथं भवेश्वरम् ।
दामोदरं तथा दत्तात्रेयं रैवतकं गिरिम् ॥८७॥
दृष्ट्वा दत्तं ततो यामि बलेर्यज्ञस्थलं खलु ।
इति कृत्वा गतः सोमेश्वरं शंभुं ददर्श च ॥८८॥
सोमनाथो महादेवो विष्णुं प्रोवाच वामनम् ।
सिद्धस्त्वं सर्वथा विष्णो कार्यसिद्धिर्भविष्यति ॥८९॥
तं नत्वा च ययौ यत्र हरस्त्वास्ते भवेश्वरः ।
सम्प्राप्तस्तद्वनं दिव्यं रम्यं रैवतके गिरौ ॥९०॥
यत्र वृक्षा नैकविधा दीर्घशाखाः फलान्विताः ।
वटोदुम्बरबिल्वाश्च सर्जाऽर्जुनकदम्बकाः ॥९१॥
पलाशाश्वत्थजम्ब्वश्च धवाद्या वारुणद्रुमाः ।
शमीकंकोलनिम्बाश्च बीजपूराश्च दाडिमाः ॥९२॥
बदर्यश्च बकाः पूगाः शिवाः कमलशल्यकाः ।
हिन्तालाश्च शिरीषाश्च बीजका वंशखादिराः ॥९३॥
अजमोदा निकुंभाश्च इङ्गुद्यश्च करीरकाः ।
धामार्गवाः कुरबकाः करंजाश्च पुनर्नवाः ॥९४॥
अंकोलाः पारिभद्राश्च कम्बल्यः पनसास्तथा ।
उत्पलाश्च हरिद्राश्च गण्डीरा वायसीद्रुमाः ॥९५॥
तमालका रसालाश्च खर्जूर्यः करमर्दकाः ।
सेवतीशाल्मलीशाला मधूकाश्च बिभीतकाः ॥९६॥
हरीतक्यः कन्दराला वटाश्चैवाटरूषकाः ।
विकंकताः कपित्थाश्च रोहिणीवेत्रपाटलाः ॥९७॥
मदनाश्चैव निर्गुण्ड्यः कदल्यः शिंशपादयः ।
एलालवंगलवलीसरलागुरुपादपाः ॥९८॥
श्रीखण्डकरवीराश्च कल्पवृक्षा महोत्तमाः ।
वामनेन तदा दृष्टाः छायावृक्षाः सुरार्चिताः ॥९९॥
उदयास्तमने येषां छाया न प्रतिहन्यते ।
दृष्ट्वा वृक्षाँस्तडागे च स्नात्वा मूलं गिरेर्ययौ ॥१००॥
वापिकाया जलं पीत्वा यावद्विश्रान्तिमिच्छति ।
क्षेत्रपालाः पञ्च तावद् दर्शनाय समागताः ॥१०१॥
एकपादभिधो गिरेस्तटे वसति सर्वदा ।
गिरिदारुणनामाऽसौ द्वितीयो वर्तते गिरौ ॥१०२॥
ऊर्जयन्तगिरेर्मूर्ध्नि मेघनादस्तृतीयकः ।
भवानीशिखरे रम्ये सिंहनादश्चतुर्थकः ॥१०३॥
स्वर्णरक्षानदीतीरे कालमेघो वसत्यपि ।
वामनस्य दर्शनं च कृत्वा ते स्वस्थलं गताः ॥१०४॥
एकादशीं समारभ्य यावद्वै पूर्णिमातिथिः ।
तद्भीष्मपंचकं श्रेष्ठं कार्तिके मोक्षकृद्धि तत् ॥१०५॥
प्रदक्षिणा प्रकर्तव्या स्वर्णरक्षाप्लवस्तथा ।
दर्शनं सर्वथा कार्यं दामोदरभवेशयोः ॥१०६॥
अथ नृसिंहो भगवान् वामनं द्रष्टुमागतः ।
स्तुत्वा स्थितस्तदा तं वै वामनः प्राह नृहरे ! ॥१०७॥
दामोदराग्रे भवता स्थेयं वै वचनान्मम ।
सदात्र रक्षा कर्तव्या सर्वेषां तीर्थवासिनाम् ॥१०८॥
देवस्याऽग्रे सदा स्थेयं यावदिन्द्राश्चतुर्दश ।
एवमस्त्विति तत्रैषस्तीर्थरक्षां करोति वै ॥१०९॥
ततो वै वामनो देवो भवानीं स्कन्दमातरम् ।
द्रष्टुं स च हरिर्यातो शिखरे गगनाश्रिते ॥११०॥
दृष्ट्वा भवानीं तामम्बामूर्ध्वबाहुर्व्यवस्थितः ।
निरीक्ष्य मेदिनीं सर्वां पश्चिमे सागराम्बराम् ॥१११॥
ततो गतो गोरक्षस्य शिखरे स्वयमच्युतः ।
ततस्तृतीये शिखरे दत्तात्रेयं व्यलोकयत् ॥११२॥
उड्डीय पूर्वस्यामश्वपद्दसरोवरम् ।
कुंकुमवापीं गत्वा कंभरागोपालदर्शनम् ॥११३॥
कृत्वा पत्नीव्रततीर्थमायादुड्डीय रैवतम् ।
ततो मणिपुरं चायात् ततः स वामनं पुरम् ॥११४॥
आसुरेऽत्र पुरे तत्र वामनस्तु गृहाद् गृहम् ।
ब्राह्मणानां शुभं गत्वा नित्यं भिक्षां तु याचते ॥११५॥
चतुष्पथेषु रम्येषु देवतायतनेषु च ।
आस्ते परिवृतो लोकैश्चालयन् स्थूलयष्टिकाम् ॥११६॥
विधुनोति शिरः स्थूलं नृत्यति बाललीलया ।
क्वचिद्याति ह्रस्वपादैर्गायत्यतिमनोहरम् ॥११७॥
वेदानधीते चतुरो घनच्छटाविभूषितान् ।
दैत्यानां तनुजाः सर्वे ब्राह्मणानां तथैव च ॥११८॥
वामनं परितो यान्ति दिवारात्रं तु नर्मभिः ।
विचित्रं वामनं रूपं द्रष्टुमायान्ति मानवाः ॥११९॥

कुमारैर्बहुभिर्नीतो वामनो यज्ञमण्डपे ।
यत्रास्ति दानकर्ता वै यजमानो बलिर्नृपः ॥१२०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने वामनस्य तीर्थयात्रा, बलियज्ञे चतुर्दशभवानां कोट्यब्जादिसमाजैकत्रीभवनं, यज्ञमण्डपकुण्डहोमदानानि, वामनस्य रैवताचलयात्रा, वामनपुरस्थितिस्ततो यज्ञमण्डपे बलिं प्रत्यागमनमिति निरूपणनामा पञ्चचत्वारिंशदधिकशततमोऽध्यायः॥१४५॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ममाश्चर्यकरं वामनदर्शनम् ।
विलक्षणं तु सर्वेभ्यो दृष्ट्वा जातं कुतूहलम् ॥ १ ॥
महान् कोलाहलो जातः कश्चिद्ध्रस्वः समागतः ।
रूपेण तेजसा विष्णुसमो देहेन छद्मकृत् ॥ २ ॥
ब्राह्मणैर्बहुभिः सार्धं वेदानुच्चारयन् स्थितः ।
प्रविष्टैर्दैत्यबालैः स दैत्याय विनिवेदितः ॥ ३ ॥
द्रष्टुं समागतोऽयं वै ब्राह्मणो वामनोऽध्वरम् ।
बलिर्हृष्टोऽब्रवीद्वाक्यं मम भाग्योदयो ह्ययम् ॥ ४ ॥
निरीहो वामनो देवो याचते नैव किंचन ।
पूजयिष्यामि विप्रेन्द्रं दास्ये चास्य यदीप्सितम् ॥ ५ ॥
अभ्यागतः स्वयं विष्णुस्तस्मै देयं यदिच्छति ।
किंचिद्वेदमयं पात्रं किंचित्पात्रं तपोमयम् ॥ ६ ॥
पात्रं सत्यं समागत्य बलिमुद्धारयिष्यति ।
यज्ञे प्रवर्तमाने तु दातव्या दक्षिणा मया ॥ ७ ॥
सहस्रपूरकश्चायं यज्ञो मेऽन्तिम एव वै ।
सर्वस्वमत्र दातव्यं याचकेभ्योऽविचार्य यत् ॥ ८ ॥
इन्द्रपदप्रलाभाय शतं तु क्रतवो मताः ।
पारमेष्ठिपदलाभः सहस्रक्रतुभिर्भवेत् ॥ ९ ॥
तस्मादयं महायज्ञो मा भून्नकारसंकरः ।
दातव्यमेव दातव्यं दातव्यं सर्वथैव हि ॥१०॥
नकारो नैव वक्तव्यो देहस्त्र्यपत्यवस्तुषु ।
धन्योऽस्मि कृतकृत्योऽस्मि सफलं मम जीवितम् ॥११॥
पूजयामास विधिना निवेश्य कुसुमासने ।
प्रणिपत्य नमस्कृत्वा प्राह गद्गदया गिरा ॥१२॥
त्वां समभ्यर्च्य विप्रेन्द्र किं करोमि तव प्रियम् ।
आगतोऽसि यदर्थं त्वं मामुद्दिश्य द्विजोत्तम ॥१३॥
तत्प्रयच्छामि ते शीघ्रं ब्रूहि वेदविदां वर ।
ह्रस्वः प्रहृष्टमनसा तमुवाच महीपतिम् ॥१४॥
अग्निकुण्डस्य पृथिवीं देहि दैत्यपते मम ।
मम त्रिविक्रममितां पृथ्वीं त्वं दातुमर्हसि ॥१५॥
सर्वेषामेव दानानां भूमिदानं महोत्तमम् ।
यो ददाति महीं राजन् विप्रायाऽकिंचनाय वै ॥१६॥
अंगुष्ठमात्रामपि वा स भवेत्पृथिवीपतिः ।
न भूमिदानसदृशं पोषकं चेह विद्यते ॥१७॥
भूमिं यः प्रतिगृह्णाति भूमिं यश्च प्रयच्छति ।
उभौ तौ पुण्यकर्माणौ नियतौ स्वर्गगामिनौ ॥१८॥
तस्माद् भूमिं महाराज प्रयच्छ त्रिपदीं मम ।
एतामल्पां महीं दातुं मा विशंक महीपते ॥१९॥
जगत्त्रयप्रदानेन नाम भूप भविष्यति ।
ततः प्रहृष्टहृदयस्तथेत्याह महीपतिः ॥२०॥
तस्मै महीप्रदानं तु कर्तुं मेने विधानतः ।
तावत्तस्य गुरुः शुक्रो वारयामास तं बलिम् ॥२१॥
अन्यद्वै दीयतां दानं मा राजन् दीयतां मही ।
किन्त्वन्यच्छ्रूयतां राजन्नकार्यं क्रियते त्वया ॥२२॥
बहिः पूज्या द्विजा ये स्युर्दीनान्धकृपणादयः ।
बधिरा वामनाः कुब्जा वृक्णा रुग्णाश्च निष्ठुराः ॥२३॥
ऋतुकुण्डान्तिके नैव खाण्डास्तेऽर्हन्ति पूजनम् ।
सुवर्णरजतैर्वस्त्रैर्वामनः पूज्यता बहिः ॥२४॥
चतुर्णां तु वृथा जन्म वृथा दानानि षोडश ।
अपुत्राणां वृथा जन्म ह्यधर्मिणां वृथा जनिः ॥२५॥
पराऽन्निनां वृथा जन्म परस्त्रैणी वृथाजनिः ।
व्यर्थमब्राह्मणे दानमनूढे पतिते तथा ॥२६॥
सन्ध्याहीननामविप्रे कुटिले तस्करे तथा ।
गुरोश्चाऽप्रीतिजनके पितृमातृपराङ्मुखे ॥२७॥
ब्रह्मबन्धौ कृतघ्ने च वेदविक्रयिणि तथा ।
स्वग्रामयाचके स्त्रीनिर्जिते च वृषलीपतौ ॥२८॥
व्यालग्राहे निन्दके च वृथादानानि षोडश ।
अत्रान्तरे बलिर्ब्रूते नैवं वाच्यं त्वया गुरो ॥२९॥
वेदानधीते यः कश्चित् स मे विष्णुसमो मतः ।
न विलम्बस्तु कर्तव्यः श्रोत्रिये गृहमागते ॥३०॥
अभ्युत्थानेन वचसा पादप्रक्षालनेन च ।
यथाशक्त्या प्रदातव्यं भोजनं गृहमेधिना ॥३१॥
अपूजितो यदा याति वामनो यज्ञमण्डपात् ।
तदाऽयं व्यर्थतां याति यज्ञः सर्वस्वदक्षिणः ॥३२॥
तस्मादेनं द्विजं छन्नं वामनं विष्णुरूपिणम् ।
प्रकाशमानं वपुषा पिंगलं सूर्यसन्निभम् ॥३३॥

यथेष्टं तस्य दास्ये वै राज्यं किं न समिच्छति ।
धन्योऽहं यस्य मे यज्ञे प्राप्तो विष्णुसमो द्विजः ॥३४॥
इति कृत्वा ददौ तस्मै षोडशोपचराणि वै ।
मधुपर्कं च गां तस्मै सत्वरं स न्यवेदयत् ॥३५॥
आघ्राय मधुपर्कं च गौर्हस्वेन नमस्कृता ।
यज्ञं यज्ञगतान् सर्वान्नमस्कृत्य च वामनः ॥३६॥
अहमर्थी समायातो दीयतां वद किं बले ।
वासार्थं मम दैत्येन्द्र दीयतां मे क्रमत्रयम् ॥३७॥
विधाय कुटिकां दिव्यां शिष्यानध्यापयाम्यहम् ।
दत्तं क्रमत्रयं तुभ्यं गृहीतं वामनोऽब्रवीत् ॥३८॥
मा देहीत्यवदच्छुक्रो विष्णुरेषः सनातनः ।
बलिः प्राह तदा शुक्रं पात्रं स्यात् किमतः परम् ॥३९॥
सव्यं कृत्वा बलिर्दर्भान् साक्षतान् दक्षिणे करे ।
प्रयोगं न गुरुश्चक्रे न मुंचति जलं करे ॥४०॥
सभासदश्च होतारो विस्मिता ऋषयस्तथा ।
विप्राः सुरास्तथा लोका दैत्यास्तस्य कुटुम्बिनः ॥४१॥
दत्तं गृहीतमित्युक्ते कस्मात्तोयं न मुञ्चति ।
वामनाय करे तोयं कल्याणाय प्रदीयते ॥४२॥
यद् दानं वचसा दत्तं कर्मणा नोपपद्यते ।
दातारं निरये क्षिप्त्वा तत्कुटुम्बं निकृन्तति ॥४३॥
उशनाः प्राह दैत्येन्द्रं वामनो हरिरित्ययम् ।
एष विष्णुः परेशोऽथ देवैः सम्प्रार्थितो हरिः ॥४४॥
केनापि दैवयोगेन त्वां द्रष्टुं समुपागतः ।
वञ्चयित्वा महीं सर्वां त्वत्तः प्राप्तुमिहागतः ॥४५॥
अप्रियं वा प्रियं वापि न जाने किं करिष्यति ।
तस्मान्मही न दातव्या तस्मै राजन्महात्मने ॥४६॥
अन्यमर्थं समादत्स्व वचनान्मम भूपते ।
ततः प्रहस्य राजाऽसौ तं गुरुं प्राह धैर्यतः ॥४७॥
जानाम्यहं दैवबलाद् विष्णोरनुग्रहात्तथा ।
यज्ञस्तु पूर्णतां चेयाद् द्विजैः पूर्णो भवत्यपि ॥४८॥
अहमिन्द्रो द्विजो विष्णुर्द्रव्यमादित्यदेवता ।
तत्कथं न मया देयं विष्णवे प्रीयतामिति ॥४९॥
इत्युक्त्वा स ददौ तोयं वामनाय करे बलिः ।
हां हां हां किमिदं राजन् क्रियते योग्यमेव न ॥५०॥
इत्युच्चार्य तदा शुक्रः संस्थितो मण्डपाद्बहिः ।
प्रीतये वासुदेवस्य सर्वं पुण्यं कृतं मया ॥५१॥
अद्य धन्योऽस्म्यहं विष्णुः स्वयमेवाऽऽगतो यदि ।
तस्य प्रदेयमेवाऽद्य जीवितं च महासुखम् ॥५२॥
तस्मादस्मै प्रयच्छामि त्रिलोकीमपि च ध्रुवम् ।
परिणीय नमस्कृत्य पादौ प्रक्षाल्य भक्तितः ॥५३॥
चरणामृतमेवाऽऽस्ये बलिना मूर्ध्नि च धृतम् ।
प्रहृष्टेनात्मना तेन दत्वा वै दक्षिणं वसु ॥५४॥
धन्योऽस्मि कृतकृत्योऽस्मि प्राह दत्वा महीं तदा ।
यथेष्टं तव विप्रेन्द्र तद्गृहाण महीमिमाम् ॥५५॥
अपि चेदिच्छसि राज्यं स्वर्णं वा हीरकादिकम् ।
नैकधानि च रत्नानि दासदासीशतानि च ॥५६॥
गोधनं च तदन्यच्च प्रासादा भवनानि च ।
साधनानि विमानानि ददामीच्छसि चेद् यदि ॥५७॥
अहं वा राजपत्नी मे पुत्रपौत्रादिकं च यत् ।
सर्वं ददामि देवेश त्वदर्थं मम यद् भवेत् ॥५८॥
अनन्तजन्मतपसा नाऽऽप्यतेऽपि परः पुमान् ।
कृपया स यदि प्राप्तः किं मे दाराधनादिभिः ॥५९॥
इत्युच्चार्य बलिर्भक्तोऽलुंठद् वामनपादयोः ।
वामनः प्राह भक्तेन्द्र सर्वं पदत्रये स्थितम् ॥६०॥
तव भक्त्या प्रसन्नोऽस्मि राजँस्तव समीपतः ।
मापयामि पदेनाऽद्य पृथिवीं तव पश्यतः ॥६१॥
इत्युक्त्वा बटुरूपं तद् विहाय परमेश्वरः ।
ववृधे वामनोऽतीव कृत्वा रूपं चतुर्भुजम् ॥६२॥
वर्धमानं हरिं दृष्ट्वा ब्राह्मणाः ऋषयः सुराः ।
तुष्टुवुर्गगने जातं भगवन्तं जनार्दनम् ॥६३॥
जय विष्णो जय विष्णो जय भक्तकृपाकर ।
जय ह्रस्व जय दीर्घ जय भिक्षुक वामन ॥६४॥
जय देवकृपाकर्तृ जय भक्तस्य गोचर ।
जय यज्ञ जय हव्य जय वह्ने जयाऽच्युत ॥६५॥
जयाऽर्थिन् दातृ नेतृ त्वं जय ब्रह्माण्डकृद्वपुः ।
जय मत्स्य नमस्तुभ्यं जय कूर्म धराधर ॥६६॥
जय वाराहरूपधृक् नृसिंहाय नमोऽस्तु ते ।
जय कृष्ण जय श्रीमन्नारायण नमोऽस्तु ते ॥६७॥
नमः कृष्णाय कम्भरागोपालाय नमो नमः ।
नमः पत्नीव्रताख्याय लक्ष्मीनाथाय ते नमः ॥६८॥
वर्णितं बहुधा शास्त्रे दृष्टं नैव कदापि यत् ।
दृश्यतेऽद्य कृपालेशाच्चतुर्दशधरास्थितैः ॥६९॥
वैराजं ते महद्रूपं दृष्ट्वा हृष्टाः स्म तारिताः ।
योगिनः सनकाद्या ये ते स्तुवन्ति जनार्दनम् ॥७०॥
गगनार्धे गते कृष्णे वर्धमाने बलेः पुरः ।
ऊर्ध्ववक्त्राः स्थिताः सर्वे निरीक्षन्ते दिवं गतम् ॥७१॥

छत्रं यष्टिर्मृगचर्म कमण्डलुश्च पादुके ।
यद् यदभूद्धरेरग्रे सर्वं वै ववृधे सह ॥७२॥
दृष्टच्छत्राकृतिस्तावत् पश्चादूर्ध्वंगतो हरिः ।
चूडामणिरिवाऽऽभाति भास्करो हरिमस्तके ॥७३॥
ततः पुनर्ववृधेऽथ ललाटे तिलकायते ।
अथापि वर्धितो हरिः सूर्यः स कुण्डलायते ॥७४॥
उच्चैर्गतो हरिस्तस्मात् सूर्यः स कौस्तुभायते ।
अग्रे गत्वा महेन्द्रेण वनमाला गलेऽर्पिता ॥७५॥
पृथिवी कम्पते भारात् स्वर्गस्थं ग्रहमण्डलम् ।
नाशमेष्यति दैत्यास्ते भीताः पश्यन्ति वामनम् ॥७६॥
अथापि ववृधे कृष्णो नाभौ पद्मायते रविः ।
पञ्चाशत्कोटिविस्तीर्णां ससमुद्रमहीधराम् ॥७७॥
ससागरां सद्वीपां च सदेवासुरमानुषाम् ।
पादेनैकेन पुरुषो जग्राह मधुसूदनः ॥७८॥
तत्पदं पृथिवीं सर्वामाक्रम्य पद्मजे शुभे ।
अतिरिक्तं समभवच्छतयोजनमायतम् ॥७९॥
दिव्यं चक्षुर्ददौ तस्मै दैत्येशाय सनातनः ।
तद्विश्वरूपं देवस्य दृष्ट्वा दैत्येश्वरो बलिः ॥८०॥
प्रहर्षमतुलं लेभे सानन्दाश्रुपरिप्लुतः ।
दृष्ट्वा देवं नमस्कृत्य स्तुत्वा स्तुतिभिरेव च ॥८१॥
प्राह गद्गदया वाचा प्रहृष्टेनाऽन्तरात्मना ।
धन्योऽस्मि कृतकृत्योऽस्मि त्वां दृष्ट्वा परमेश्वरम् ॥८२॥
लोकत्रयं त्वमेवैतद् गृहाण परमेश्वर ।
अथ सर्वेश्वरो विष्णुर्द्वितीयं पदमच्युतम् ॥८३॥
ऊर्ध्वं प्रसारयामास ब्रह्मलोकान्तमच्युतः ।
पादो न परिपूर्णोऽभूदच्युतस्य शुभानने ॥८४॥
वेगेनोत्क्षिप्य हरिणा नीतो ब्रह्माण्डमस्तके ।
ब्रह्माण्डं जर्जरं जातं पादांगुष्ठाभिघातनात् ॥८५॥
भिन्नं चास्मिन् समायातं बाह्यं तोयं जगत्त्रये ।
विष्णुपादोद्भवा गंगा तत्स्थानात् प्रसृता तदा ॥८६॥
पितामहो हरेः पादं चक्रपद्मादिचिह्नितम् ।
ज्ञात्वा कमण्डलुं भृत्वा ततस्तज्जलवारिभिः ॥८७॥
मुहुः प्रक्षालयामास श्रीहरेश्चरणाम्बुजम् ।
तत् तोयमक्षय्यमेव जातं कृष्णप्रभावतः ॥८८॥
तत्तीर्थं मेरुशिखरे पपात सलिलं शुभम् ।
जगतः पावनार्थं वै चतुर्दिक्षु प्रवाहितम् ॥८९॥
पूर्वे सीता दक्षिणे साऽलकनन्देति कीर्तिता ।
पश्चिमे चक्षुरित्याख्या भद्राख्या चोत्तरे मता ॥९०॥
तत्र चालकनन्दापि त्रिधा नाम्नाऽभवत् तदा ।
ऊर्ध्वे मन्दाकिनी प्रोक्ता मध्ये गंगा प्रकीर्तिता ॥९१॥
पाताले सा यदा प्राप्ता ह्यजो भोगवती मता ।
स्वर्धुनी प्रोच्यते स्वर्गे गंगा तु गां गता सती ॥९२॥
पातालं तु गता साऽभून्नाम्ना त्रिपथगाऽपि च ।
सेविता पूजिता दृष्टा स्पृष्टा पीताऽवगाहिता ॥९३॥
प्रज्वाल्य सर्वपापानि मुक्तिं ददाति देहिने ।
तां दृष्ट्वा मेरुमध्यात्तु प्रस्रवन्तीं शुभानने ॥९४॥
अतिवेगप्रवाहैश्च पतन्तीं धारयेत्तु कः ।
महाप्रवाहवेगं भूर्दृष्ट्वा भीता विदारणात् ॥९५॥
प्रार्थयामास शंभुं तां धारयितुं जटावने ।
आत्मनः पावनार्थाय मूर्ध्ना शंभुरधारयत् ॥९६॥
दिव्यवर्षसहस्रं सा जटायामेव संस्थिता ।
ततो भागीरथो राजा गौतमश्च महातपाः ॥९७॥
प्रसाद्य तपसया शंभुं गंगार्थं समयाचत ।
सर्वलोकहितार्थाय ताभ्यां दत्ता तु शंभुना ॥९८॥
गौतमेन समानीता गौतमीति प्रकीर्तिता ।
भगीरथेन चायाता भागीरथीति चोच्यते ॥९९॥
जह्नुना पीयमाना सा जानोश्च प्रकटीकृता ।
जाह्नवीति समाख्याता समुद्रान्ता हि पावनी ॥१००॥
कपिलस्याऽऽश्रमे दग्धान् सगरस्यात्मजान् बहून् ।
उद्धारयित्वा षष्टिसाहस्रानब्धावपतत् ॥१०१॥
एवं वृद्धिं गतो विष्णुर्जगृहे च पदद्वयम् ।
स्थानं नास्ति तृतीयस्य ब्रह्माण्डं सकलं हृतम् ॥१०२॥

इति श्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने वामनस्य यज्ञस्थले प्रवेशः, भूमियाचना, शुक्रकृन्निषेधेऽपि त्रिपदभूमिदानं, वामनवर्धनं, द्वितीयपदेनाऽण्डकटाहाद् गंगोद्भव इत्यादिनिरूपणनामा षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥

**श्रीनारायण उवाच—**

असुराणां तदा चाऽऽसीत्कश्मलं परमं महत् ।
विचक्रमे पदैकेन क्षितिं स वा मनो रमे ! ॥ १ ॥
सप्तस्वर्गान् द्वितीयेन तृतीयार्थे न शिष्यते ।
अथ ब्रह्मा मरीच्याद्याः सनन्दाद्याश्च योगिनः ॥ २ ॥
वेदोपवेदा नियमा यमाः पुराणसंहिताः ।
यतयो मुनयो ब्रह्मचारिणश्चोर्ध्वरेतसः ॥ ३ ॥

ववन्दिरे पदं सत्याक्रान्तं श्रीवामनस्य ते ।
तोयैः पुष्पैश्चन्दनैश्च दिव्यगन्धानुलेपनैः ॥ ४ ॥
सुगन्धधूपदीपैश्च लाजाऽक्षतफलादिभिः ।
स्तवनैर्जयशब्दैश्च शंखदुन्दुभिनिःस्वनैः ॥ ५ ॥
नृत्यवादित्रगीतैश्च तत्सामर्थ्यमयैस्तथा ।
पुपूजुर्विजयस्यास्य महोत्सवमघोषयत् ॥ ६ ॥
असुरास्तु प्रज्वलिता हृत्सु नैतद् विषेहिरे ।
कपटिनो वामनस्याऽसत्यक्रमस्य सर्वथा ॥ ७ ॥
देवपक्षप्रपातेश्च वध एवास्ति शासनम् ।
इत्यायुधानि जगृहुर्दैत्या ह्यासुरदानवाः ॥ ८ ॥
सहेतिहस्तका उग्राः स्वार्थमात्रपरायणाः ।
अनिच्छन्तो बलेः राज्ञः प्राद्रवञ्जातमन्यवः ॥ ९ ॥
तान्प्रति पार्षदा विष्णोर्धृतशस्त्रास्त्रपाणयः ।
बलो नन्दः सुनन्दोऽथ प्रबलः कुमुदस्तथा ॥१०॥
विश्वक्सेनः कुमुदाक्षो गरुडः सात्त्वतस्तथा ।
जयन्तः श्रुतदेवश्च पुष्पदन्तस्तथाऽपरे ॥११॥
सर्वे नागायुतबलाश्चमूं ते जघ्नुरासुरीम् ।
बलिस्तु वारयामास दैत्यान् दानवपुंगवान् ॥१२॥
मा युध्यत निवर्तध्वं कालो नाऽस्माकमर्थदः ।
यो नो भवाय देवोऽभूद् दिवौकसां विपर्यये ॥१३॥
स एव भगवानद्याऽस्मत्तो विपर्ययं गतः ।
तस्मात्पराजयं प्राप्य स्थेयं तच्छासनेऽधुना ॥१४॥
प्राप्ते पुनस्तु समये विजेष्यामो हरेर्बलात् ।
दैत्या वाक्यं बलेः श्रुत्वा विविशुस्ते रसातलम् ॥१५॥
अथाऽत्र गरुडः पाशैर्बलिं बबन्ध वारुणैः ।
हाहाकारो महानासीद् ब्रह्माण्डेऽत्र स्थले स्थले ॥१६॥
वामनः प्राह बद्धं तं राज्यहीनं श्रियोज्झितम् ।
पदानि त्रीणि दत्तानि तत्रैकमवशिष्यते ॥१७॥
द्वाभ्यां क्रान्तं तव राज्यं तृतीयमुपकल्पय ।
प्रतिश्रुतमदातुस्ते नरके वसतिर्ध्रुवा ॥१८॥
विप्रलब्धेः फलं भुंक्ष्व निरयं कतिचित्समाः ।
एवं विप्रकृतो भक्तः प्राह देवं हि रञ्जयन् ॥१९॥
न मे वचो व्यलीकं स्यात् तवानुग्रहकारणात् ।
मच्छरीरं तृतीयस्य पदस्यार्थे समर्पितम् ॥२०॥
तव पाशश्च पादश्च मम स्यादभवाय हि ।
श्लाघ्यश्चासुरभावानां परोक्षस्थितिको गुरुः ॥२१॥
पितामहो मम देव त्वया रक्षित एव ह ।
प्रह्लादस्तद्वदत्रापि भवपाशात्सुरक्षितः ॥२२॥
तव हस्तकृतः पाशो न पाशः किन्तु मुक्तये ।
राज्यं स्वर्गं सुखं बन्धुर्जीवनं मरणं गुरुः ॥२३॥
मुक्तिः पाशश्च यत्किंचित् तन्मे त्वमेव वर्तसे ।
नान्यं जानामि सुखदं बन्धदं मोक्षदं च वा ॥२४॥
आसनाच्च तदागत्य प्रह्लादः प्राह केशवम् ।
त्वया दत्ते पदे मोहोऽस्यात्र त्वया विनाशितः ॥२५॥
स एवानुग्रहो जातस्त्वां विना को विमोचयेत् ।
सन्ध्यावली बलेः पत्नी प्रांजलिः प्राह माधवम् ॥२६॥
त्वया दत्तं त्वया भुक्तं त्वयैवोपहृतं तथा ।
तव क्रीडामयं सर्वं मूढ स्वामित्ववैभवाः ॥२७॥
ब्रह्मोवाच तदा देवं मुञ्चैनं सात्त्वतं बलिम् ।
आत्मनिवेदिनं भक्तं हृष्यन्तं बन्धनेऽपि यत् ॥२८॥
हृतं सर्वस्वमेवाऽस्य बन्धनं चापि संकृतम् ।
शरीरं चार्पितं तेन नाऽयमर्हति निग्रहम् ॥२९॥
वामनः प्राह मद्भक्तेऽहंममत्वे तु मायया ।
अहिते यदि राज्यादेस्तदा कोऽनुग्रहो नु मे ॥३०॥
जन्मकर्मवयोरूपविद्यैश्वर्यधनादिभिः ।
यदि नैव विमुह्येत सोऽयं त्वनुग्रहो मम ॥३१॥
यदि मुह्येत तन्मोहं नाशयामि प्रसह्य वै ।
तदापि मन्मति स्याच्चेदजैषीदजयां हि सः ॥३२॥
कीदृशोऽयं मम भक्तः परीक्षितो मयाऽधुना ।
क्षीणरिक्थश्च्युतः स्थानाद् बद्धश्चैवापमानितः ॥३३॥
गुरुणा प्रतिसिद्धोऽपि सत्यं जहौ न मत्कृते ।
छलेन याचितः सर्वस्वं बलात् हृतवानहम् ॥३४॥
तथापि मम दासत्वं नैव त्यजति सन्मतिः ।
तस्मान्नाहं त्यजाम्येनं मदाराधनतत्परम् ॥३५॥
रसातलं शुभं लोकं ददाम्यस्मै समृद्धिमत् ।
सर्वेषां दानवानां च नागानां यादसामपि ॥३६॥
राजानं तु बलिं कुर्वे यावदाभूतसम्प्लवम् ।
मन्वन्तरे च सावर्णौ पुनश्चेन्द्रो भविष्यसि ॥३७॥
बले यमनुगृह्णामि तत्सर्वं विधुनोम्यहम् ।
मानं मोहं विनाश्यैव पुनः स्मृद्धं करोमि तम् ॥३८॥
बलिः प्राह तदा देवं नाथाऽऽत्तं यादृशं मया ।
तादृशं नान्यलब्धव्यं वच्मि किं मेऽतिधन्यताम् ॥३९॥
तृतीयचरणार्थे मे शिरश्चात्राऽवशिष्यते ।
निधेहि चरणं तत्र सर्वं प्राप्तं मया भवेत् ॥४०॥
हरिः सकरुणस्तस्य न्यधान्मूर्ध्नि पदं स्वकम् ।
तृतीयं क्रममासाद्य प्रसम्पूर्णमनोरथः ॥४१॥

बलिं प्रसह्य भारेण रसातलमवानयत् ।
तत्र राज्ये नियुयोज ज्ञातिभिः परिवारितम् ॥४२॥
बलिस्तं वामनं प्राह भगवन् पद्मकोमले ।
पत्तले ते मम लोमशूलाः प्रोता हि दुःखदाः ॥४३॥
क्व दैत्यस्य वपुर्वज्रं क्व हरेः पादपंकजम् ।
पादे पीडाऽभवद् यस्मात्कुरु नाथ मयि क्षमाम् ॥४४॥
इति कृत्वा बलिस्तत्र लिलेह जिव्हया पदम् ।
चुचुम्ब पत्तलं प्रेम्णा कोमलं मोक्षदं मुहुः ॥४५॥
यल्लाभे लब्धमेवेदं सर्वं यत्र प्रतिष्ठितम् ।
कथं तल्लेहनं न स्यादानन्दामृतपानदम् ॥४६॥
हरिः प्राह बलेऽलं ते भक्त्या तुष्टोऽस्मि वाञ्छितम् ।
वृणु तद् यदि किंचित्स्यान्न मेऽदेयं तवाऽस्ति यत् ॥४७॥
बलिः प्राह सदा त्वेतच्चरणं मे गृहे वसेत् ।
शश्वत्प्रपूजनार्थाय दैत्याघक्षालकं शुभम् ॥४८॥
कृपां कुरु मयि श्रीश सदा रक्षां विधेहि मे ।
न पुनर्दैत्यतां यायां पार्षदं कुरु मां प्रभो ॥४९॥
हरिः प्राह तदा रक्षां करिष्ये द्वारसंस्थितः ।
सुदर्शनं च मे चक्रं राज्यरक्षां करिष्यति ॥५०॥
नाहं बलिं विना तिष्ठे मां विना न बलेः स्थितिः ।
तुभ्यं दर्शनदानाय तिष्ठामि तव गोपुरे ॥५१॥
त्वच्छासनाऽतिगान्दुष्टाँश्चक्रं मे सूदयिष्यति ।
रक्षयिष्ये सदाऽहं त्वां सकुटुम्बपरिच्छदम् ॥५२॥
सदा सन्निहितं मां त्वं द्रक्ष्यसे भवने तव ।
मम कृपावशात्ते ह्यासुरो भावो विनङ्क्ष्यति ॥५३॥
कुरु रासातलं राज्यं सुतले ते पितामहः ।
प्रह्लादोस्ति मम भक्तः पाताले हाटकेश्वरः ॥५४॥
शंभुश्चास्ति मम भक्तस्तत्र तत्र वसाम्यहम् ।
गदामादाय गोविन्दो वसामि बलिमन्दिरे ॥५५॥
वामनो भगवान् साक्षाद् कृत्वा रूपान्तरं ततः ।
बलेः सौधे निवसति सदा रक्षणहेतवे ॥५६॥
प्रतिगृह्य बलेर्लोकान् बटुवेषेण वामनः ।
महेन्द्राय समुकुटहारतिलकभूषितम् ॥५७॥
कृत्वा मंगलसत्कार्यं ददौ राज्यं त्रिलोकगम् ।
ततो देवाः सगन्धर्वाः ऋषयश्च महौजसः ॥५८॥
चतुर्दशस्तरावासाः पुपूजुस्त्विन्द्रमच्युतम् ।
यज्ञान्तिमस्तदा होमः सश्रीफलसमेधितः ॥५९॥
विष्णुना चेन्द्रहस्तेन कारितस्तत्र पूर्तकृत् ।
शुक्रं प्राह हरिस्तत्र कर्मच्छिद्रं तथाऽऽक्रमम् ॥६०॥
वैषम्यं परिहार्यं च त्वया वै गुरुणा यतः ।
शुक्रः प्राह हरिं यत्र कर्मद्रष्टा भवान्मतः ॥६१॥
कुतस्तत्कर्मवैषम्यं यज्ञेशो यत्र पूजितः ।
मन्त्रतस्तन्त्रतश्छिद्रं देशकालार्हवस्तुतः ॥६२॥
सर्वं जातं तु निश्छिद्रं तव साक्षादुपस्थितेः ।
पूर्णाहुतिं विधायाऽवभृथस्नानं च वारिधौ ॥६३॥
सोमनाथे महाक्षेत्रे कृतवन्तश्च याज्ञिकाः ।
विष्णुना प्रेषिताः सर्वे गता स्वस्वनिकेतनम् ॥६४॥
त्रैलोक्यं महदैश्वर्यमवाप त्रिदशेश्वर ।
अथ प्रजापतिर्ब्रह्मा विष्णुस्तथा च शंकरः ॥६५॥
दक्षभृग्वंगिरोमुख्या देवर्षिपितृभूमिपाः ।
कश्यपस्याऽदितेः प्रीत्यै सर्वलोकस्य शान्तये ॥६६॥
दिक्पाला लोकपालाश्च ह्यकुर्वन् वामनं पतिम् ।
ऋषीणां च मुनीनां च देवानां भूभृतां तथा ॥६७॥
लोकानां लोकपालानां धर्माणां यशसां श्रियः ।
व्रतानां दानधर्माणां यज्ञानां पुण्यकर्मणाम् ॥६८॥
मङ्गलानां विभूतीनां तथा स्वर्गाऽपवर्गयोः ।
उपेन्द्रं कल्पयाञ्चक्रे पतिं सर्वविभूतये ॥६९॥
तदा सर्वे मुमुदिरे वामनं प्रणिपत्य च ।
गताः स्वस्वराजधानीमिन्द्रोऽनुजं तु वामनम् ॥७०॥
देवयानेन सौधं स्वं नीत्वाऽपूजयदच्युतम् ।
प्राप्य त्रिलोकजं राज्यं चोपेन्द्रभुजरक्षितः ॥७१॥
महेन्द्रो मुमुदे देवाः सुखिनो वामनाश्रिताः ।
इत्थं सुरक्षिताः सेन्द्रदेवाः श्रीविष्णुना पुरा ॥७२॥
देवानां परमो हर्षः सञ्जातो वामनार्पितः ।
निवासाय मनश्चक्रे वामनो वामनस्थलीम् ॥७३॥
वामनेन पुरा यत्राऽर्थिता भिक्षा मुहुर्मुहुः ।
बलेस्तु निग्रहात् तद्वै पुरं दैत्यैर्विनाशितम् ॥७४॥
पुरं सर्वं तथा स्मृद्धिं निन्युर्दैत्या रसातलम् ।
ततस्तं ब्राह्मणं गर्गं पप्रच्छ भगवान्प्रभुः ॥७५॥
कस्मिन्स्थाने मया कार्यं वैष्णवं नगरं वद ।
यत्र सौख्यं तथा मुक्तिर्नृणां स्याद् भवबन्धनात् ॥७६॥
वस्त्रापथे रैवतस्य पश्चिमे वामनस्थली ।
नगरी कारिता विश्वकर्मणा विप्रसात्कृता ॥७७॥
पत्नीव्रतेन विप्रेण राज्यं तस्याः कृतं पुरा ।
वंशपरम्पराप्राप्तं युगान्तेऽन्यकरस्थितम् ॥७८॥
तीर्थानां रैवते सार्धकोटित्रयं वसत्यपि ।
भद्रा मधुमती चोजस्वती स्वर्णसुरक्षिका ॥७९॥

सर्वा वै भगवत्पत्न्यो नदीरूपेण संस्थिताः ।
यन्नामस्मरणाद् यत्र स्नानाद् दानाच्च तीर्यते ॥८०॥
प्रतिकल्पं महायज्ञा भवन्ति बलिना कृताः ।
क्वचिद् हिमगिरेः प्रान्ते क्वचिद्भूमौ तु पुष्करे ॥८१॥
क्वचिच्च रैवते त्वद्रौ नर्मदायास्तटे क्वचित् ।
कल्पान्तरे वामनोऽयं नर्मदायास्तटे बलेः ॥८२॥
यज्ञे गत्वा बलिं बध्वा त्रिलोकीं तु हरिष्यति ।
एवं वामनरूपाणि सहस्राणि भवन्ति वै ॥८३॥
कल्पे कल्पे चतुष्क्यां च भिन्ना वै वामनाः स्मृताः ।
नान्तोऽस्ति मेऽवताराणां दिङ्मात्रं प्रोच्यते मया ॥८४॥
एतत्ते सर्वमाख्यातं वामनं वैभवं प्रिये ।
वद लक्ष्मि ! ततः पुण्यं हृद्यं श्रोतुं किमिच्छसि ॥८५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने बलेः पाशबन्धनं, रसातलराज्यदानं, वामनस्य बलिगृहे वासः, इन्द्राय त्रिलोकीदानम्, अवभृथस्नानं, वामनस्थलीनाम्नी पुरी कारितेत्यादिनिरूपणनामा सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥१४७॥

**श्रीलक्ष्मीरुवाच—**

पयोव्रतमवैधव्यव्रतं च कीदृशं कथम् ।
कर्तव्यं येन पुत्राऽऽप्तिः पत्युर्योगः सदा भवेत् ॥ १ ॥

**श्रीनारायण उवाच—**

ब्रह्मणा प्रथमं प्रोक्तं कश्यपाय महात्मने ।
तेन पत्न्यै ततोऽदित्यभिधायै कथितं ततः ॥ २ ॥
हिरण्याक्षादिपुत्रवत्यदितिः सम्बभूव ह ।
तद्व्रतं द्वादशाहं तु कार्यं केशवतोषकृत् ॥ ३ ॥
फाल्गुनस्य सिते पक्षे व्रतमेतत्प्रकीर्तितम् ।
प्रतिपद्दिनमारभ्य यावच्छुक्लत्रयोदशी ॥ ४ ॥
ब्रह्मचर्यमधःस्वापः स्नानं त्रिषवणं चरेत् ।
सत्यं वदेत् त्यजेद्भोगानुच्चावचाँस्तु राजसान् ॥ ५ ॥
द्रोहं हिंसां त्यजेन्नित्यं कारयेत्पूजनं हरेः ।
नृत्यवादित्रगीतैश्च स्तुतिभिः स्वस्तिवाचनैः ॥ ६ ॥
षोडशोपचारकैश्च कथाभिर्भजनैस्तथा ।
शक्तितो ब्राह्मणान् पञ्च नित्यं वै भोजयेत् तथा ॥ ७ ॥
आरम्भे तु ह्यमावास्यादिने मध्याह्नतो गृहम् ।
संलिप्य गोषकृता च मृदा च शुद्धतां नयेत् ॥ ८ ॥

स्वयं प्रक्षाल्य वस्त्रादि नारी शुद्धिं समाचरेत् ।
सायंकाले शुद्धमृदाऽऽलिप्य स्नायाद् व्रतंकरी ॥ ९ ॥
मृत्तिकामानयेत् क्षेत्राज्जलस्रोतस एव वा ।
उदाहरेन्मृदादाने मन्त्रं स्वभाषया वधूः ॥१०॥
त्वं देवि ! श्रीवराहेण पृथ्वीरूपा समुद्धृता ।
उद्धरामि नमस्तुभ्यं पाप्मानं मे विनाशय ॥११॥
इत्युच्चार्य समुन्नेया मृत्तिकाऽथ ततो गृहे ।
स्नात्वा संपूजयेद् विष्णुं नारायणं निशादिमे ॥१२॥
निशारंभे षोडशोपचारैः संपूजयेद्धरिम् ।
संकल्पयेच्च श्वोदिनात् करिष्येहं पयोव्रतम् ॥१३॥
पुत्रस्य प्राप्तये तन्मे पूर्णं ते कृपया भवेत् ।
द्वादशाहे व्रते तत्र ब्रह्मचर्यादिकान् यमान् ॥१४॥
पालयिष्ये भोजयिष्ये द्वयवरान् ब्राह्मणान् सदा ।
द्वादशाहं तव पूजां करिष्ये षोडशर्द्धिभिः ॥१५॥
अर्चायां स्थण्डिले सूर्ये जले वह्नौ गुरावपि ।
पत्यौ वा श्रीहरिं नित्यं पूजयेद् भक्तिभावतः ॥१६॥
भाषया च स्तुतिं कुर्यादर्थसन्दर्भितां शुभाम् ।
नमो भगवते तुभ्यं परपुंसे नमोनमः ॥१७॥
सर्वान्तःकृतवासाय वासुदेवाय साक्षिणे ।
नमोऽव्यक्ताय सूक्ष्माय व्यक्तपुंसे नमोनमः ॥१८॥
चतुर्विंशतितत्त्वाय विकृतिहेतवे नमः ।
नमो द्विमूर्ध्ने त्रिपदे चतुःशृंगाय सूत्रिणे ॥१९॥
सप्तहस्ताय क्रतवे वेदत्रयात्मने नमः ।
महादेवाय रुद्राय वृषभाय नमो नमः ॥२०॥
यावद्विद्याऽधिष्ठिताय प्राणिनां पतये नमः ।
नमो हिरण्यकोशाय जगत्प्राणात्मने नमः ॥२१॥
योगसिद्ध्यैश्वर्यवते योगकर्त्रे च ते नमः ।
नमः सर्वादिदेवाय नमस्ते चात्मवर्तिने ॥२२॥
नमस्ते हरिकृष्णाय नरनारायणर्षये ।
नमः इन्दीवरश्यामवपुषे श्रीमते नमः ॥२३॥
नमस्ते केशवाऽनन्त ! पीतवस्त्रवते नमः ।
वरदाता वरेण्यश्च त्वं जनाभीष्टदः प्रभुः ॥२४॥
उपासिता मोक्षदा वै तव पादादिरेणवः ।
देवास्त्वामनुवर्तन्ते स्थिता श्रीस्तव पादयोः ॥२५॥
स्पृहयामि कृपाऽऽमोदं भगवन्मे प्रसीदताम् ।
इति संस्तूय तं कृष्णमावाहयेज्जगद्गुरुम् ॥२६॥
पाद्यमर्घ्यमाचमनमासनं दापयेद्धरिम् ।
सुतैलार्कादि संमृद्यं ततः पञ्चामृतं दिशेत् ॥२७॥

पयोदधिघृतमधुशर्करास्नानमर्पयेत् ।
शुद्धोदकजलस्नानमभिषेकं च कारयेत् ॥२८॥
वस्त्रेण मार्जनं कृत्वा शुभवस्त्राणि चार्पयेत् ।
यज्ञसूत्रं कौस्तुभं च तैलसारार्कमर्चयेत् ॥२९॥
कुंकुमाबीरगुलालाक्षतैर्देवं समर्चयेत् ।
चन्दनकुसुमधूपदीपनैवेद्यमर्पयेत् ॥३०॥
भूषाहेतिमुकुटादि तिलकादि च धारयेत् ।
जलमारार्त्रिकं दद्यान्मुखे ताम्बूलकं तथा ॥३१॥
फलं दद्याज्जलं दद्यात् कुर्यान्नमः सदण्डवत् ।
प्रदक्षिणं दक्षिणां च दद्यादर्घ्यं निवेदयेत् ॥३२॥
द्वादशाहं तव पूजां करिष्ये देहि पुत्रकम् ।
ॐ नमो भगवते वासुदेवायेति संजपेत् ॥३३॥
अष्टोत्तरशतं जप्त्वा दुग्धपाकोऽन्यदेव वा ।
घृतशर्करसम्पूर्णं जुहुयाज्जपविद्यया ॥३४॥
निवेदितं दुग्धपाकं मिष्टान्नमन्यदेव वा ।
स्वल्पं स्वल्पं तु भक्तेभ्यो दद्यात्प्रसादभावतः ॥३५॥
स्वयं भुञ्जीत पुत्रार्थं स्तुवीत स्तुतिभिः प्रभुम् ।
तज्जलं शिरसि धृत्वा ततो देवं विसर्जयेत् ॥३६॥
द्वयवरान् ब्राह्मणाँस्तत्र भोजयेत्पायसेन च ।
भुञ्जीत तैरनुज्ञातो व्रती व्रतकरी च वै ॥३७॥
निशारंभे प्रसंसाध्य स्वप्यादथ भुवि व्रती ।
स्वप्याद् रात्रौ ब्रह्मचारी श्वोभूते प्रथमे दिने ॥३८॥
ब्राह्मे मुहूर्ते विधिवत् स्नात्वा चोक्तविधानतः ।
स्नपयित्वा च विधिवन्नित्यं प्रातः प्रपूजयेत् ॥३९॥
देवं नारायणं कृष्णं यावद्व्रतसमापनम् ।
एकभक्तं प्रभुञ्जीत दुग्धपाकं न चेतरत् ॥४०॥
दिवसं क्षपयेद् भक्त्या रात्रिं जपेन निद्रया ।
नित्यं संजुहुयादग्नौ ब्राह्मणाँश्चापि भोजयेत् ॥४१॥
एवं प्रतिदिनं कुर्याद् द्वादशाहं पयोव्रती ।
पयोभक्षव्रतमिदं चरेद्धर्यर्चनान्वितः ॥४२॥
हरेराराधनं होमं पूजनं साधुभोजनम् ।
प्रतिपद्दिनमारभ्य यावच्छुक्लत्रयोदशी ॥४३॥
कृष्णपरायणः कुर्यात् पतिः पत्नी ह्युभावपि ।
त्रयोदश्यां प्रभाते वै श्रीहरेः स्नपनादिकम् ॥४४॥
कारयेद् विधिना सर्वं ब्राह्मणैर्विधिकोविदैः ।
महापूजां प्रकुर्वीत वित्तशाठ्यं न चाचरेत् ॥४५॥
श्रपयित्वा चरुं दुग्धपाकस्याऽग्नौ हवार्थिनि ।
तेन श्रृतेन च वह्निमुखं कृष्णं यजेत सः ॥४६॥

नारायणाय नैवेद्यं दद्यात् सुव्रहुतुष्टिदम् ।
आचार्यं श्रोत्रियं ज्ञानसम्पन्नं तोषयेद् बहु ॥४७॥
धेन्वाभरणवस्त्राद्यैः ऋत्विजश्चापि तोषयेत् ।
भोजयेत्ताँश्च बहुभिर्मिष्टान्नैः दक्षिणादिभिः ॥४८॥
अन्यान् विप्राँस्तथा साधून् साध्वींश्च भोजयेन्मुदा ।
विप्राचार्यगुरुसाधुसाध्वीभ्यश्च यथार्हतः ॥४९॥
दद्याच्च दक्षिणां श्रेष्ठां तथान्यान् समुपागतान् ।
अभ्यागताननतिथींश्चाऽऽश्वपाकान् प्रीणयेदपि ॥५०॥
अन्नजलादिदानेन दीनान्धकृपणादिकान् ।
तेषां तृप्तो भवेद्विष्णोस्तृप्तिश्चेति विचारयन् ॥५१॥
गोश्वपिपीलिकादींश्च दत्त्वा भुञ्जीत बन्धुभिः ।
नामप्रकीर्तनैः कृष्णकथाभिः स्तवनैर्जपैः ॥५२॥
दिनं शेषं क्षपयेद् यत्पुरुषाराधनं परम् ।
पयोव्रतमिदं प्रोक्तं मया ते समुदाहृतम् ॥५३॥
दुग्धपाके तण्डुला वा निवारा वा मताः शुभाः ।
शाकाहारो न कर्तव्यः श्यामलः शाकजो भवेत् ॥५४॥
दुग्धपाकश्च भोक्तव्यस्तेनाऽपत्यं वलोज्ज्वलम् ।
व्रतपूर्णाहुतौ पश्चाद् युग्मासु रात्रिषु स्वयम् ॥५५॥
पत्नी तु संविशेत् तेन जायेत शक्तिमान्सुतः ।
अयुग्मासु विशेत् पत्नीं कन्या जायेत सिद्धिदा ॥५६॥
तपःसारमिदं लक्ष्मि ! व्रतं पुत्रप्रदं शुभम् ।
पत्या पत्न्या ह्युभाभ्यां च कर्तव्यं तत्फलप्रदम् ॥५७॥
नान्यथा फलदं वै स्यात् सन्दिग्धफलवत्तु तत् ।
अवैधव्यव्रतं चापि कथयामि श्रृणु प्रिये ! ॥५८॥
रैवतस्य गिरेः पुत्री रैवती रैवताचले ।
दामोदरात् पश्चिमायां दिशि तिष्ठति नित्यदा ॥५९॥
तत्र वै रैवतीकुण्डो वर्तते पापनाशकः ।
अवैधव्यं च नारीणां तथा सन्तानकारणम् ॥६०॥
सौभाग्यं सर्वनारीणां सम्पादयति तज्जलम् ।
तत्र स्नात्वा भवेन्नारी बहुपुत्रधनान्विता ॥६१॥
न वैधव्यं भवेत् तस्याः सौभाग्यमतुलं भवेत् ।
स्नात्वा फलानि देयानि कुंकुमं च सकज्जलम् ॥६२॥
गौरीसूत्रं प्रदातव्यं ताम्बूलं पुष्पमित्यपि ।
पीतं वस्त्रं प्रदातव्यं कंचुकं यष्टिका तथा ॥६३॥
फलानि वंशपात्रेषु भृत्वा मिष्टान्नमित्यपि ।
स्त्रीणां तु साध्वीनां सतीनां च सदक्षिणम् ॥६४॥
प्रातः स्नात्वा प्रदातव्यं रैवतीदर्शनं ततः ।
पूजनं च षोडशोपचारैः कर्तव्यमेव च ॥६५॥

स्तुतिं पुत्रार्थमेवाऽवैधव्यार्थमपि च क्रियात् ।
सदा कृपावति देवि रैवति मे कृपां कुरु ॥६६॥
अवैधव्यं सदा मेऽस्तु पुत्रपौत्रवती तथा ।
धनधान्यवती च स्यां देहि मे वांछितं शुभे ॥६७॥
इति स्तुत्वा नमस्कृत्य दामोदरस्य दर्शनम् ।
कृत्वा कार्तिक शुक्ले वै पञ्चदशदिनावधिम् ॥६८॥
गन्तव्यं स्वगृहे नित्यं भोज्यं दुग्धान्नमित्यपि ।
मिष्टान्नं व्यञ्जनं चापि घृतपक्वादिकं तथा ॥६९॥
सहवासश्च पतिना कार्यो न तु निषिध्यते ।
नोपवासस्तथा कार्यो नान्या पूजाऽप्यपेक्षते ॥७०॥
वती कुण्डस्नपनं रैवतीस्तुतिदर्शने ।
उत्तःफलादिदानं च दामोदरस्य दर्शनम् ॥७१॥
पञ्चदशदिनप्रातःकृतं सौभाग्यवर्धकम् ।
इति तुभ्यमवैधव्यकरंव्रतं तु दर्शितम् ॥७२॥
अथाऽन्यत् त्वं महालक्ष्मि ! किं मत्तः श्रोतुमिच्छसि ।
लक्ष्मीः प्राह कृपासिन्धो तीर्थानि रैवते गिरौ ॥७३॥
तत्पार्श्वे च यदन्यानि वसन्ति तानि मे वद ।
कियत्सामर्थ्यवन्त्येव श्रोतुमिच्छामि केशव ॥७४॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पुत्रप्राप्तिदं पयोव्रतम् अवैधव्यव्रतं चेतिनिरूपणनामाऽष्ट-चत्वारिंशदधिकशततमोऽध्यायः ॥ १४८ ॥

श्रीनारायण उवाच—

शृणु लक्ष्मि ! रैवतस्थतीर्थानि कथयाम्यहम् ।
यात्राफलसुयुक्तानि भुक्तिमुक्तिप्रदानि च ॥ १ ॥
वस्त्रापथस्य तीर्थानि यानि येन कृतानि च ।
तान्यपि ते कथयिष्ये स्वर्गमोक्षप्रदानि च ॥ २ ॥
पूर्वे कृतयुगे कान्यकुब्जे भोजनृपोऽभवत् ।
तस्मै वनात् समभ्येत्य वनपालब्रवीदिदम् ॥ ३ ॥
आश्चर्यं भ्रमता राजन् मया दृष्टं वनेधुना ।
मृगयूथगता नारी मया दृष्टा मृगानना ॥ ४ ॥
ततस्तु भोजराजः सः सेनाध्यक्षमुवाच ह ।
इदानीमेव गन्तव्यं यत्र सा युवती स्थिता ॥ ५ ॥
साऽश्वाश्च पत्तयो यान्तु वेष्टयन्तु वनं गिरिम् ।
स्त्रीवेषधारिणी नारी वशं नेया मृगी हि सा ॥ ६ ॥
गिरिं संवेष्टयामास भोजः सैन्यपदातिभिः ।
प्लवमाना तु सैन्येन विधृता हरिणानना ॥ ७ ॥
नारीदेहां समानिन्ये कान्यकुब्जे मृगीं नृपः ।
दृष्ट्वाऽऽश्चर्यं तु सर्वेषां जायते नृपमन्दिरे ॥ ८ ॥
राजा तां स्नापयामास दिव्यगन्धानुलेपनैः ।
एकान्ते निर्जने राजा बभाषे समलंकृताम् ॥ ९ ॥
का त्वं कस्य सुता केन हेतुना च मृगानना ।
इति पृष्टापि नोवाच न भुंक्ते न पपौ तथा ॥१०॥
तदा भोजस्तु दैवज्ञान् मन्त्रज्ञान् भिषजस्तथा ।
तान्त्रिकान् सुनमस्कृत्य बभाषे पश्यत द्विजाः ! ॥११॥
नारीदेहा कथं न्वेषा कथं च हरिणाऽऽनना ! ।
मनुष्यवाणीवदना कथमेषा भविष्यति ॥१२॥
विप्राः प्राहुः कुरुक्षेत्रे सारस्वताख्यभूसुरः ।
जानाति स च वृत्तान्तं यथातथं स वक्ष्यति ॥१३॥
भोजो जगाम तं विप्रं तपन्तं तप इत्यमुम् ।
नमस्कृत्योपविष्टं तं भोजं प्राह स भूसुरः ॥१४॥
गच्छामो यत्र सा नारी वक्ष्यति स्वयमेव तत् ।
इत्यागता यत्र नारी ततः सारस्वतो द्विजः ॥१५॥
उपलिप्य च भूभागं स्वस्तिकं सन्निवेश्य च ।
सजलं कलशं न्यस्य चाग्निकार्यं निधाय च ॥१६॥
इन्द्रं देवाँश्च दिक्पालान् कलशे सन्निवेश्य च ।
हुत्वाऽग्निं च चरुं कृत्वा ग्रहपूजामकारयत् ॥१७॥
अभिषेकं स्वयं चक्रे तां नारीं चाभिषेचयत् ।
तावता दिव्यदृष्ट्या सा बभाषे प्राग्भवान् बहून् ॥१८॥
भोज ! त्वं सप्तमे पूर्वे जन्मनि भर्त्ता मया सह ।
कलिंगदेशनृपतिरहं पत्नी च बङ्गजा ॥१९॥
दुष्टात्मा त्वमनाचारो दयाधर्मविवर्जितः ।
गोभूविप्रगुरुवेददेवशास्त्रविनाशकृत् ॥२०॥
मिलित्वा च प्रजाभिस्त्वं हतो लोकविरोधकः ।
मृतं कान्तं गृहीत्वाऽग्नौ प्रविष्टाऽहं मृता सह ॥२१॥
मृतं कान्तं समादाय भार्याऽग्नौ प्रविशेद् यदि ।
महीयेते द्युभौ स्वर्गे यावदाभूतसम्प्लवम् ॥२२॥
ततस्तु मालवे देशे विप्रस्त्वं नास्तिकोऽभवः ।
अहं तु ब्राह्मणी भक्तिमती भार्याऽभवं तव ॥२३॥
त्वयाऽर्जितं धनं स्वर्णं त्यक्त्वाऽऽसं मरणं यदा ।
सहाऽहं न मृता लोभात् किन्तु कालान्तरे मृता ॥२४॥
श्वेतसर्पोऽभवस्त्वं वै विप्रकन्याऽभवं त्वहम् ।
परिणीताऽन्यविप्रेण विप्रं त्वमदशश्च तम् ॥२५॥
अहन्तु विधवा जाता सर्पस्त्वं मारितो जनैः ।
वैधव्यं मम दत्वा तु द्विजसर्पावुभौ मृतौ ॥२६॥

त्वं मृत्वा मकरो जातो गोदावर्यां तदाऽप्यहम् ।
तीर्थे भीमेश्वरं द्रष्टुं समायाता जनैः सह ॥२७॥
यावत् स्नातुं प्रविष्टाऽहमाकृष्टा मकरेण वै ।
लोकैः कुन्तादिघातेन मकरो विनिपातितः ॥२८॥
अहं मकरदंष्ट्राभिस्तदानीं च मृतिं गता ।
त्वं ततो लुब्धको जातोऽहं शबर्यभवद्वने ॥२९॥
अग्नेर्जलाच्च सर्पाच्च गजात् सिंहाद्भयादपि ।
रोषाद्विस्फोटकान्मृत्युर्येषां ते नरकंगमाः ॥३०॥
आत्महा भ्रूणहा स्त्रीघ्नो ब्रह्मघ्नः कूटसाक्षिणः ।
कन्याविक्रयकर्ता च मिथ्यापवाददायकः ॥३१॥
विक्रीणाति क्रतुं यस्तु मन्त्रं पाति द्विजस्तु यः ।
राजद्रोही स्वर्णचौरो ब्रह्मवृत्तिविलोपकः ॥३२॥
गोघ्नश्च निक्षेपहरो ग्रामसीमहरस्तु यः ।
सर्वे ते नरकं यान्ति या च स्त्री पतिवञ्चकी ॥३३॥
शबर्यहं मृता रोगात् क्रौंची जाता वने तदा ।
क्वचित् क्रौंचेन कामेन क्रीडितुमुद्यताऽभवम् ॥३४॥
तावद्व्याधेन स क्रौंचो बाणेन विनिपातितः ।
क्रौंचेन च तदा शप्तः क्रूरो भव महावने ॥३५॥
स्त्रीहीनः शार्दूलरूपो दुःखी भव पुनः पुनः ।
ततस्त्वं शार्दूलरूपो रैवते च गिराबभूः ॥३६॥
मृता दैववशात् क्रौंची मृग्यभूद् रैवते गिरौ ।
भवेश्वरात्पश्चिमे तु स्वर्णरक्षानदीजलम् ॥३७॥
पातुं चाहं समायाता दृष्टा केसरिणा तदा ।
उत्प्लुता तद्भयाच्चाहं पतिता चाऽपरं तटम् ॥३८॥
तावत् सिंहः समुत्प्लुत्य मदग्रे पतितो बलात् ।
अहं यावत्परावृत्योत्प्लवितुमुपचक्रमे ॥३९॥
पार्श्वस्थकीचकस्तम्बे जलस्थे मम मस्तकम् ।
द्वयोः कीचकयोर्मध्ये प्लवने पाशवत् ह्यभूत् ॥४०॥
शरीरं जलमध्ये मे मस्तकं वंशमध्यगम् ।
सिंहेन संधृतं कण्ठाद्दंष्ट्राभिश्च वियोजितम् ॥४१॥
यावत् सिंहोऽपि मे वर्ष्म जलमध्याद् विकर्षति ।
तावत् सैबलयोगेन पद्भ्यां सृप्त्वा जलेऽपतत् ॥४२॥
अगाधाच्च जलात् शैवालबाहुल्यात्समन्ततः ।
न निर्गन्तुं शशाकाऽसौ मृतिमापत् स केसरी ॥४३॥
स्वर्णरक्षाजले सिंहो मृतो भोजोऽभवन्नृपः ।
तस्य तीर्थप्रभावेण नृपत्वं समजायत ॥४४॥
इदं हि सप्तमं जन्म राजाभोजेति विश्रुतम् ।
लम्बते मे शिरो वंशे शरीरं जलमध्यगम् ॥४५॥

स्वर्णरेखाजले तत्र विशीर्णे मम तद्वपुः ।
न तु वक्त्रं निपतितं त्वङ्मांसं शिरसि स्थितम् ॥४६॥
ततोऽहं हरिणीगर्भे जाता मानुषरूपिणी ।
जातं वक्त्रं मृगीणां मे यस्मान्न पतितं जले ॥४७॥
नाऽहं हरिणकन्याऽस्ति किन्तूद्दालकसन्मुनेः ।
कन्याऽस्मि चैकदा स्वर्णरक्षायां स्नातुमागतः ॥४८॥
स तदानीं च तत्रैव योगिन्यः स्नातुमागताः ।
योगिनीभिस्तदा तत्र मुनिः परीक्षितो मुहुः ॥४९॥
कीदृशोऽयं ब्रह्मचारी दृढो वाऽदृढ इत्यमुम् ।
गृहीत्वा कण्ठपाशैश्च समाश्लिष्य मुहुर्मुहुः ॥५०॥
क्रीडयन्ति बहुरीत्या ऋषिर्न विकृतिं गतः ।
अथैका योगिनी नाम्ना कामदाहाऽभिधा तदा ॥५१॥
उद्दालकस्य देहेऽन्तःप्रविष्टा योगसद्बलात् ।
तावत्कामोऽभवद्भीतो विदुद्राव ऋषेस्तनोः ॥५२॥
अन्यथा दग्धतां कुर्याद् योगिनी साऽऽन्तरस्थिता ।
कामदेवस्य विद्रावाद् योगिन्या उष्णतावशात् ॥५३॥
यौवनोद्रेकवेगाच्च सहक्रीडनकादिकात् ।
स्तम्भितोऽपि तदा धातुर्वेगाच्च पतितो जले ॥५४॥
प्रवाहेण सह धातुर्नारायणह्रदे गतः ।
तत्रैका हरिणी वारि पपौ तद्धातुमिश्रितम् ॥५५॥
तद्गर्भे मम वासोऽभूत् पूर्वकर्मानुसारतः ।
अहमुद्दालकऋषेः पुत्री जाता मृगानना ॥५६॥
योगिनीभिर्वर्धिताऽस्मि योगिनीनां सुता यतः ।
योगिन्यस्मि मृगीमुखा दिव्याऽपि मानुषी तथा ॥५७॥
राजँस्तव तथा मेऽपि सप्तमं जन्म विद्यते ।
जानात्ययमृषिः सारस्वतो योगबलाद्धि तत् ॥५८
प्रविश्याऽग्नौ मृता पूर्वं त्वया सार्धं तु सप्तमे ।
त्वां विना मे पतिर्मा भून्मरणे याचितं मया ॥५९॥
तदाऽन्तरीक्षे राजेन्द्र वागुवाचाऽशरीरिणी ।
राजाऽसौ दुष्टकर्माऽस्ति हिंस्रः क्रूरोऽतिलुब्धकः ॥६०॥
न वेदशास्त्रकुशलो दयाधर्मविवर्जितः ।
कामी मानी महाक्रोधी सत्याचारविवर्जितः ॥६१॥
न देवं न गुरुं विप्रान्न जानाति दुराशयः ।
न साधून्न च साध्वींश्च पूजयत्यतिमानवान् ॥६२॥
असत्यवादी दुष्टात्मा यज्ञधर्मविनाशकः ।
पललाशी च वै विष्णोर्निन्दको वृत्तिहारकः ॥६३॥
वेश्यागामी स्नानदानधर्मकर्मविवर्जितः ।
चण्डालतामयं प्राप्तस्तस्य पापं कियद्गुणम् ॥६४॥

गणयितुं न शक्येत तादृशः पापवानयम् ।
यद्यपि त्वं सती नारी दग्धा भवसि तेन वै ॥६५॥
ततस्त्वं सप्तजन्मानि सहयुक्ता भविष्यसि ।
किन्तु चाऽस्य महापापैः स्वर्गं नाऽस्य भविष्यति ॥६६॥
आदौ पापफलं भुक्त्वा पश्चाद् राज्यं भविष्यति ।
अष्टमं चास्य सज्जन्म देवजन्म भविष्यति ॥६७॥
तदा त्वं मानुषी भूत्वा पश्चात्स्वर्गं गमिष्यसि ।
इत्युक्त्वा सा विरराम सर्वं स्मरामि योगतः ॥६८॥
अपि मे मस्तकस्यास्ति खर्परं वंशसंस्थितम् ।
यदि वस्त्रापथे गत्वा शिरः कश्चिद् विमुञ्चति ॥६९॥
स्वर्णरक्षाजले राजन् मानुषं स्यान्मुखं मम ।
अस्म्यहं मानुषवक्त्रा दृश्यतेऽन्यैर्मृगानना ॥७०॥
पापच्छायावृतं चैतन्मृगाकृतिमुखं मम ।
श्रुत्वैतद्भोजराजेन प्रतीहारस्तु तत्स्थलम् ॥७१॥
प्रेषितस्तेन दृष्टं तत् स्वर्णरेखाजलोपरि ।
वर्तते तन्मृगशिरो वंशप्रोतं महावने ॥७२॥
गृहीत्वा पातितं यावत् स्वर्णरेखाजले तदा ।
भोजराजगृहे तस्या मुखं चन्द्रसमं शुभम् ॥७३॥
मानुषं चाऽभवद् दिव्यं पद्मपत्रसुलोचनम् ।
सुशोभनं दीर्घकेशं दीर्घकर्णं शुभद्विजम् ॥७४॥
कम्बुग्रीवं पद्मगन्धं सर्वलक्षणसंयुतम् ।
न देवी न च गान्धर्वी नाऽऽसुरी न च किन्नरी ॥७५॥
यादृशी सा तदा जाता तीर्थभावेन सुन्दरी ।
परिणीता तु सा तेन भोजराजेन सुन्दरी ॥७६॥
मृगाननेति विख्याता देवी सा भोजसुन्दरी ।
कृताऽसौ पट्टमहिषी भोजराजेन धीमता ॥७७॥
देशानां प्रवरो देशो गिरीणां प्रवरो गिरिः ।
क्षेत्राणामुत्तमं क्षेत्रं वनानामुत्तमं वनम् ॥७८॥
गंगासरस्वतीरेवाः स्वर्णरेखाजले स्थिताः ।
ब्रह्मा विष्णुश्च सूर्यश्च सर्वे रुद्रादयः सुराः ॥७९॥
नागा यक्षाश्च गन्धर्वा अस्मिन् क्षेत्रे व्यवस्थिताः ।
स्वर्णरक्षानदीवार्षु स्नात्वा नारायणे ह्रदे ॥८०॥
मृगीतीर्थे तथा स्नात्वा कुण्डे दामोदराभिधे ।
तथा च रेवतीकुण्डे स्नात्वा स्वर्मोक्षमाप्नुयात् ॥८१॥
गंगा सरस्वती पुण्या यमुना स्वर्णरूपिणी ।
नद्यामागत्य तिष्ठन्ति दृश्यन्ते स्वर्णपत्रिकाः ॥८२॥
सरस्वती स्वर्णरूपा गंगा रजतपत्रिकाः ।
यमुना ताम्रपत्राणि नद्यम्सु प्रचकासति ॥८३॥
एवं सुवर्णरक्षाख्या स्वर्णरेखाभिरन्विता ।
सरित् सा रैवते भूध्रे वर्तते मोक्षदायिनी ॥८४॥
ब्रह्मघ्नश्च सुरापश्च भ्रूणहा गुरुतल्पगः ।
स्वर्णरेखाजले स्नात्वा मुच्यते सर्वपातकैः ॥८५॥
ये च कीटपतंगाद्याः स्वर्णरेखाजले मृताः ।
वृक्षवल्लीतरुगुल्मास्तेऽपि यान्ति परां गतिम् ॥८६॥
भोजः सारस्वतं विप्रं स्तुत्वा वचनमब्रवीत् ।
ब्रह्मा विष्णुर्हरः सूर्य इन्द्रोऽग्निर्मरुतां गणाः ॥८७॥
ब्रह्मचर्येण तपसा त्वया सन्तोषिताः प्रभो ।
त्वया सह मया चापि यात्रार्थं रैवते गिरौ ॥८८॥
कृपा चेत् तर्हि गन्तव्यं कृतार्थश्च भवाम्यहम् ।
किं ग्राह्यं किं च भोक्तव्यं किं देयं किं न दीयते ॥८९॥
तीर्थोपवासः स्नानं च सन्ध्यास्नानविधिक्रमः ।
पूजा निद्रा जपो रात्रौ सर्वं संक्षेपतो वद ॥९०॥
इति सारस्वतः पृष्टो भूभृता प्राह तद्विधिम् ।
दानादिकं फलं सर्वं प्राह विप्रो यथातथम् ॥९१॥

इति श्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पूर्वकृतयुगे भोजाख्यराज्ञस्तत्पत्न्याश्च मृगाननायाः सप्तजन्मवृत्तान्तमुखेन स्वर्णरक्षानद्या माहात्म्यवर्णन-नामोनपंचाशदधिकशततमोऽध्यायः ॥१४९॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! ततो विप्रः सारस्वतो महामुनिः ।
सौराष्ट्रे रैवतगिरेर्यात्राबलं जगाद तम् ॥ १ ॥
सौराष्ट्रदेशे गन्तव्यं गिरौ रैवतके यदा ।
तदा गुरुबलं वीक्ष्य कृत्वा सूर्यस्य तर्पणम् ॥ २ ॥
वामे पृष्ठे च कृत्वाऽन्यद् दिनशुद्धिं विलोक्य च ।
चन्द्रलग्नग्रहान् दृष्ट्वा बलिष्ठान् जन्मराशितः ॥ ३ ॥
शकुनं च शुभं बुद्ध्वा प्रस्थातव्यं जनैः खलु ।
अश्विनी रेवती चित्रा धनिष्ठा समलंकृतौ ॥ ४ ॥
मृगाश्विचित्रापुष्याश्च मूला हस्ता शुभाः सदा ।
कन्याप्रदाने यात्रायां प्रतिष्ठादिषु कर्मसु ॥ ५ ॥
शुक्रचन्द्रौ तु जन्मस्थौ शुभदौ च द्वितीयके ।
शशिज्ञशुक्रजीवाश्च राशौ चाथ तृतीयके ॥ ६ ॥
भौममन्दशशांकार्का बुधः श्रेष्ठश्चतुर्थके ।
शुक्रजीवौ पञ्चमौ च चन्द्रकेतुसमाहितौ ॥ ७ ॥
मन्दार्कौ च कुजः षष्ठे गुरुचन्द्रौ च सप्तमे ।
ज्ञशुक्रावष्टमे श्रेष्ठौ नवमस्थो गुरुः शुभः ॥ ८ ॥

अर्कोऽर्किचन्द्रा दशमे एकादशेऽखिला ग्रहाः ।
बुधोऽथ द्वादशे चैव भार्गवः सुखदो भवेत् ॥ ९ ॥
सिंहेन मकरः श्रेष्ठः कन्यया मेष उत्तमः ।
तुलया सह मीनस्तु कुंभेन सह कर्कटः ॥१०॥
धनुषा वृषभः श्रेष्ठो मिथुनेन च वृश्चिकः ।
एतत् षडष्टकं प्रीत्यै भवत्येव न संशयः ॥११॥
चरः सौम्यो गुरुः क्षिप्रो मृदुः शुक्रो रविर्ध्रुवः ।
शनिश्च दारुणो ज्ञेयो भौम उग्रः शशी समः ॥१२॥
चरक्षिप्रैः प्रयातव्यं प्रवेष्टव्यं मृदुध्रुवैः ।
दारुणोग्रैश्च योद्धव्यं क्षत्रियैर्जयकांक्षिभिः ॥१३॥
नृपाभिषेकोऽग्निकार्यं सोमवारे प्रशस्यते ।
सोमे तुले प्रमाणं च कुर्याच्चैव गृहादिकम् ॥१४॥
सैनापत्यं शौर्ययुद्धं शस्त्राभ्यासः कुजे स्मृतः ।
सिद्धिकार्यं च मन्त्रश्च यात्रा चैव बुधे स्मृता ॥१५॥
पठनं देवपूजा च वस्त्राद्याभरणं गुरौ ।
कन्यादानं गजारोहः शुक्रे स्यात् समयः स्त्रियाः ॥१६॥
स्थाप्यं गृहप्रवेशश्च गजबन्धः शनौ शुभः ।
सप्तमोपचयाद्यस्थश्चन्द्रः सर्वत्र शोभनः ॥१७॥
शुक्लपक्षे द्वितीयस्तु पञ्चमो नवमस्तथा ।
सम्पूज्यमानो लोकैस्तु गुरुवद् दृश्यते शशी ॥१८॥
जन्मस्थः कुरुते तुष्टिं द्वितीये नास्ति निर्वृतिः ।
तृतीये राजसन्मानं चतुर्थे कलहागमः ॥१९॥
पञ्चमेन मृगांकेन स्त्रीलाभो वै तथा भवेत् ।
धनधान्यागमः षष्ठे रतिः पूजा च सप्तमे ॥२०॥
अष्टमे प्राणसन्देहो नवमे कोषसञ्चयः ।
दशमे कार्यनिष्पत्तिर्ध्रुवमेकादशे जयः ॥२१॥
द्वादशेन शशांकेन मृत्युरेव न संशयः ।
अशुक्ला प्रतिपत् श्रेष्ठा द्वितीया चन्द्रसूनुना ॥२२॥
तृतीया भूमिपुत्रेण चतुर्थी च शनैश्चरे ।
गुरौ शुभा पञ्चमी स्यात् षष्ठी मंगलशुक्रयोः ॥२३॥
सप्तमी सोमपुत्रेण अष्टमी कुजभास्करौ ।
नवमी चन्द्रवारेण दशमी तु गुरौ शुभा ॥२४॥
एकादश्यां गुरुः शुद्धो द्वादश्यां च पुनर्बुधः ।
त्रयोदशी शुक्रभौमौ शनौ श्रेष्ठा चतुर्दशी ॥२५॥
पौर्णमास्यप्यमावास्या श्रेष्ठा स्याच्च बृहस्पतौ ।
मूलेऽर्कः श्रवणे चन्द्रः प्रोष्ठपद्युत्तरे कुजः ॥२६॥
कृत्तिकासु बुधश्चैव गुरौ चाथ पुनर्वसुः ।
पूर्वफल्गुनी शुक्रे च स्वातिश्चैव शनैश्चरे ॥२७॥
एते चामृतयोगाः स्युः सर्वकार्यप्रसाधकाः ।
हस्तेऽर्कश्च गुरुः पुष्ये अनुराधा बुधे शुभा ॥२८॥
रोहिणी च शनौ श्रेष्ठा सौमं सोमेन वै शुभम् ।
शुक्रे च रेवती श्रेष्ठा अश्विनी मंगले शुभा ॥२९॥
एतेषु सिद्धियोगा वै सर्वदोषविनाशकाः ।
कार्यसिद्धिप्रदाश्चैव तत्र कार्यं समारभेत् ॥३०॥
अश्विनीमैत्ररेवत्यो मृगमूला पुनर्वसुः ।
पुष्या हस्ता तथा ज्येष्ठा प्रस्थानेश्रेष्ठमुच्यते ॥३१॥
योगिन्योऽपि प्रयोद्धव्याः सन्मुखेऽतीव दुःखदाः ।
ब्रह्माणी संस्थिता पूर्वे प्रतिपन्नवमीतिथौ ॥३२॥
माहेश्वरी चोत्तरे च द्वितीयादशमीतिथौ ।
पञ्चम्यां च त्रयोदश्यां वाराही दक्षिणे स्थिता ॥३३॥
षष्ठ्यां चैव चतुर्दश्यामिन्द्राणी पश्चिमे स्थिता ।
सप्तम्यां पौर्णमास्यां च चामुण्डा वायुगोचरे ॥३४॥
अष्टम्यमावास्ययोगे महालक्ष्मीशगोचरे ।
एकादश्यां तृतीयायामग्निकोणे तु वैष्णवी ॥३५॥
द्वादश्यां च चतुर्थ्यां तु कौमारी नैर्ऋते तथा ।
योगिनीसम्मुखे नैव गमनादि प्रकारयेत् ॥३६॥
चतुर्थी चाऽशुभा षष्ठी अष्टमी नवमी तथा ।
अमावास्या पूर्णिमा च द्वादशी च चतुर्दशी ॥३७॥
द्वादशीं दहते भानुः शशी चैकादशीं दहेत् ।
कुजो दहेच्च दशमीं नवमीं च बुधो दहेत् ॥३८॥
अष्टमीं दहति जीवः सप्तमीं भार्गवो दहेत् ।
सूर्यपुत्रो दहेत् षष्ठीं गमनाद्यासु नास्ति वै ॥३९॥
प्रतिपन्नवमीष्वेव चतुर्दश्यष्टमीषु च ।
बुधवारे च प्रस्थानं दूरतः परिवर्जयेत् ॥४०॥
मेषे कर्कटके षष्ठी कन्यायां मिथुनेऽष्टमी ।
वृषे कुंभे चतुर्थी च द्वादशी मकरे तुले ॥४१॥
दशमी वृश्चिके सिंहे धनुर्मीने चतुर्दशी ।
एता दग्धा न गन्तव्यं किल जीवादिमानवैः ॥४२॥
विशाखात्रयमादित्ये पूर्वाषाढात्रये शशी ।
धनिष्ठातृतीयं भौमे बुधे वै रेवतीत्रयम् ॥४३॥
रोहिण्यादित्रयं जीवे शुक्रे पुष्यात्रयं तथा ।
शनिवारे वर्जयेच्च उत्तराफल्गुनीत्रयम् ॥४४॥
एष औत्पातिको योगो मृत्युरोगादिकं भवेत् ।
विष्कंभे घटिकाः पञ्च शूले सप्त प्रकीर्तिताः ॥४५॥
षट् गण्डे चातिगण्डे च नव व्याघातवज्रयोः ।
व्यतीपाते परीघे च वैधृते च दिने दिने ॥४६॥
एते मृत्युयुता ह्येषु सर्वकर्माणि वर्जयेत् ।
विशाखा चोत्तरा त्रीणि मघार्द्रा भरणी तथा ॥४७॥

आश्लेषा कृत्तिकाः चैताः प्रस्थाने मरणप्रदाः ।
तदेतद्वै विचार्यैव प्रस्थानं सुखदं भवेत् ॥४८॥
पूर्णकुंभं द्विजं वेश्यां शुक्लधान्यानि दर्पणम् ।
दध्याज्यं मधुलाजाँश्च पुष्पं दूर्वाऽक्षतान् सितान् ॥४९॥
वृषं गजेन्द्रं तुरगं ज्वलदग्निं सुवर्णकम् ।
ऊर्णं च परिपक्वानि फलानि विविधानि च ॥५०॥
पतिपुत्रवतीं नारीं प्रदीपं मणिमुत्तमम् ।
मुक्तां प्रसूनमालां च सद्योमांसं च चन्दनम् ॥५१॥
पुरो दृश्यन्त एतानि वस्तूनि मंगलानि वै ।
विप्रः कन्या शवं गौश्च शंखो भेरी वसुन्धरा ॥५२॥
वेणुः स्त्रीः पूर्णकुंभश्च यात्रायां दर्शने शुभाः ।
सव्ये शिवोष्ट्रखरनकुलकुंभशवाः शुभाः ॥५३॥
राजहंसो मयूरश्च खञ्जनश्च शुकः पिकः ।
पारावतः शंखचिल्लश्चक्रवाकश्च मांगला ॥५४॥
कृष्णसारश्च सुरभिः चमरीः श्वेतचामरम् ।
धेनुर्वत्सप्रयुक्ता च पताका दक्षिणे शुभाः ॥५५॥
कार्पासौषधितैलानि पङ्काऽङ्गारभुजङ्गमाः ।
मुक्तकेशी रक्तमाल्यं नग्नाद्यशुभमीक्षितम् ॥५६॥
हिक्काऽऽग्नेये शोककरी दक्षिणे हानिदा मता ।
नैर्ऋत्ये चोद्वेगकरी पश्चिमे मिष्टभुक्तिदा ॥५७॥
वायव्येऽर्थप्रदा प्रोक्ता उत्तरे कलहंकरी ।
ईशाने मृत्युदा चेति ज्ञेयं शुभाशुभं फलम् ॥५८॥
तीर्थे सदैव गन्तव्यं सर्वे मासाश्च शोभनाः ।
तिथयश्चोत्तमाः सर्वाः स्नानदानार्चनादिषु ॥५९॥
वसन्ते तीर्थयात्रायाः प्रयाणं श्रेष्ठमुच्यते ।
निगृह्य नियमान् भूत्वा शुचिः स्नातो जितेन्द्रियः ॥६०॥
गजवाजिरथान् त्यक्त्वा पादाभ्यां यान्ति ये जनाः ।
हंसयुक्तविमानेन यान्ति ते कृष्णमन्दिरम् ॥६१॥
एकभक्तेन नक्तेन तथैवाऽयाचितेन च ।
भिक्षाहारेण तोयेन फलाहारेण वा यदि ॥६२॥
उपवासेन कृच्छ्रेण शाकाहारेण वा जनाः ।
तीर्थयात्रां प्रकुर्वन्ति तेषां लोकास्तु शाश्वताः ॥६३॥
यद्वा याति दिवं देवीगणैः संवीजितोऽर्चितः ।
अनुपानत्पदो यात्राकर्ता यात्यर्कमण्डलम् ॥६४॥
मातरं पितरं देशं भ्रातृस्वजनबान्धवान् ।
ग्रामं भूमिं गृहं त्यक्त्वा कृत्वा चेन्द्रियसंयमम् ॥६५॥
गृहीत्वा वैष्णवीं दीक्षां रैवतं याति यो जनः ।
भुक्तिर्मुक्तिर्भवेत्तस्य दामोदरप्रभावतः ॥६६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने प्रस्थानयात्रादौ शुभाऽशुभग्रहनक्षत्रवारयोगिनीशकुनादिप्रदर्शननामा पञ्चाशदधिकशततमोऽध्यायः ॥१५०॥

**श्रीनारायण उवाच—**

ततः सारस्वतः प्राह राजानं भोजपुंगवम् ।
मिष्टान्नं भोजनं रम्यं पानमुच्चावचं शुभम् ॥ १ ॥
पूजार्हाणि च पात्राणि पुष्पाण्युपस्कराणि च ।
वस्त्राणि दानयोग्यानि सुगन्धिचन्दनानि च ॥ २ ॥
कमलानि विचित्राणि स्वर्णरूप्याद्यलंकृतीन् ।
स्कन्धे निधाय पद्भ्यां च यात्रां करोति यो जनः ॥ ३ ॥
अर्पयित्वा च हर्यग्रेऽक्षयपुण्यमवाप्नुयात् ।
गंगोदकं मधु घृतं कुंकुमाऽगुरुचन्दनम् ॥ ४ ॥
गुग्गुलं बिल्वपत्राणि धत्तूरकुसुमं तथा ।
पादचारी भजन् देवं स्कन्धे स्वयं निधाय च ॥ ५ ॥
भवनाथं तु यो गच्छेद् दृष्ट्वा निवेदयेत्तथा ।
स्वर्णनद्यां तथा स्नात्वा दामोदरं समर्चयेत् ॥ ६ ॥
सर्वबन्धविनिर्मुक्तः स वै कैलासमाप्नुयात् ।
गणो मुक्तो भवत्येव यावदाभूतसम्प्लवम् ॥ ७ ॥
कलत्रमित्रपुत्रैर्वा भ्रातृभिः सुजनैर्जनैः ।
सुहृत्सम्बन्धिभिश्चान्यैर्याति देवं स्मरँस्तु यः ॥ ८ ॥
स तन्मण्डलसहितः स्वर्गे यात्यादिवाकरम् ।
देवमूर्तिं शुभां कृत्वा रथस्थां सुप्रतिष्ठिताम् ॥ ९ ॥
चन्दनागुरुकर्पूरैरर्चितां कुंकुमेन च ।
पूजयन् विविधैः पुष्पैर्धूपदीपादिकैस्तथा ॥१०॥
गीतनृत्यैः सवादित्रैर्हास्यैर्लास्यैरनेकधा ।
धरित्रीं कांचनं गां च जलान्नवसनानि च ॥११॥
तृणेन्धने प्रियां वार्णीं यच्छन् याति तु रैवते ।
दामोदरे तथा भवेश्वरे गत्वाऽर्चयत्यथ ॥१२॥
स्वर्णवत्यां तडागे वा कुण्डे च रैवतीकृते ।
स्नाति जपति गोविन्दं ददात्यन्नानि भूरिशः ॥१३॥
तत्र यच्छति दानानि सर्वस्वानि च यो जनः ।
देवांगनाकरग्राहे गृहीतो नन्दने वने ॥१४॥
गत्वा भुंक्ते शुभान् भोगान् यावदाचन्द्रतारकम् ।
तीर्थे विप्रवचः कृत्वा स्नात्वा सन्ध्याऽर्चनादिके ॥१५॥

दर्भास्तिलान् हविष्यान्नं प्रयुञ्ज्याच्छ्रद्धया ततः ।
अगस्तं भृंगराजं च पुष्पं शतदलं शुभम् ॥१६॥
कर्पूरागुरुश्रीखण्डं कुंकुमं तुलसीदलम् ।
तीर्थे संकल्पितं मर्त्यैस्तदनन्तं प्रजायते ॥१७॥
बिल्वप्रमाणपिण्डानि दद्याद्वै तीर्थभूमिषु ।
ताम्बूलफलनैवेद्यतिलदर्भोदकैस्तथा ॥१८॥
मासान्तरे शुक्लपक्षे क्षयाहे मातृ-पैतृके ।
गजच्छायां त्रयोदश्यां द्रव्ये प्राप्ते द्विजोत्तमे ॥१९॥
गृहे श्राद्धं प्रकुर्वीत पितॄणामृणमुक्तये ।
गृहाच्छतगुणं नद्यां या नदी याति सागरम् ॥२०॥
ततोऽनन्तगुणं देवमन्दिरे देवसन्निधौ ।
प्रभासे पुष्करे तीर्थे गयायां पिण्डतारके ॥२१॥
प्रयागे चाथ गोमत्यां भावे दामोदरे तथा ।
नर्मदायां तपत्यां च कुर्याच्छ्राद्धं त्रिविक्रमे ॥२२॥
स्वर्णरक्षाऽऽपगायाश्च नारायणह्रदे तथा ।
ओजस्वत्यां च भद्रायां तथा शत्रुंजितातटे ॥२३॥
वामनस्थलकुण्डाग्रे कुर्याच्छ्राद्धं नरो यदि ।
सर्वपापविनिर्मुक्ताः पितरो यान्ति सद्गतिम् ॥२४॥
सन्तानमुत्तमं लब्ध्वा भुक्त्वा भोगाननुत्तमान् ।
दिव्यं विमानमारुह्य श्राद्धकृद्याति मोक्षणम् ॥२५॥
जातकर्मादियज्ञेषु विवाहे गृहकर्मणि ।
देवप्रतिष्ठाप्रारम्भे कूपवाप्यादिकर्मणि ॥२६॥
तृप्यन्ति देवताः सर्वा हृष्यन्ति पितरो नृणाम् ।
वृद्धिश्राद्धे कृते गेहे जायते सर्वमंगलम् ॥२७॥
कामः क्रोधश्च लोभश्च मोहो मद्यं मदादयः ।
मायामात्सर्यपैशुन्यमविवेकोऽविचारिता ॥२८॥
अहंकारो यहच्छा च चापल्यं लौल्यमित्यपि ।
अन्यायसाधनाऽऽयासः प्रमादो द्रोहसाहसे ॥२९॥
आलस्यं दीर्घसूत्रत्वं परदारोपसेवनम् ।
एते दोषाः सदा त्याज्यास्तीर्थगामिनरादिना ॥३०॥
स स्याद्वै मण्डनं भूमेदेशस्य नगरस्य च ।
श्रीमान् विद्वान् कुलीनः स्यात् स तीर्थफलमश्नुते ॥३१॥
स्नानं सन्ध्या जपो होमः स्वाध्यायः पितृतर्पणम् ।
श्राद्धं देवस्य पूजा च त्यक्तदोषस्य जायते ॥३२॥
उत्थायोत्थाय स्नातव्यं पूज्यौ हरिहरौ तथा ।
सत्यं वाच्यं हितं कार्यं दानं देयं स्वशक्तितः ॥३३॥
परापवादभीरुत्वं परदारविवर्जनम् ।
तैर्थिकदोषाऽग्राहित्वं सेवनं च सतां मुदा ॥३४॥

पितृमातृगुरूणां च नाऽप्रियं मनसा वहेत् ।
औषधं शाकमर्थिभ्यो दातव्यं गृहमेधिना ॥३५॥
एकादशी पञ्चदशीचतुर्दश्यष्टमीषु च ।
अमायां च व्यतीपाते संक्रान्तौ ग्रहणेषु च ॥३६॥
वैधृतौ पितृमातॄणां क्षयाहे शुभवासरे ।
युगमन्वादिदिवसे गृहे कार्यो महोत्सवः ॥३७॥
तीर्थे वा गमनं कार्यं पुण्यं शतगुणं भवेत् ।
इन्द्रियाणां जयः कार्यो मद्यद्यूतविवर्जनम् ॥३८॥
स्नानं दानं जपो होमः सुरपूजा द्विजार्चनम् ।
साधुसाध्वीप्रपूजा च कर्तव्याऽक्षयपुण्यदा ॥३९॥
एकाऽपि गोः प्रदातव्या वस्त्रालंकारभूषिता ।
दोग्ध्री सवस्त्रा तरुणी सवत्सा सुद्विजाय च ॥४०॥
साधवेऽन्नसुभोज्यानि साध्व्यै वस्त्राद्यलंकृतिः ।
देयान्यन्नानि वस्तूनि यथा स्याद्वै प्रसन्नता ॥४१॥
सप्तजन्मसु पापिष्ठ इह जन्मनि चाऽधमः ।
एकां ददाति यो धेनुं मुच्यते सर्वपातकैः ॥४२॥
यदाऽसौ नीयते बद्धो यममार्गेण किंकरैः ।
तदा धेनुः समागत्य स्वं पुत्रमिव रक्षति ॥४३॥
विजित्य हुंकृतेनैव तान् दूतान् दूरतः कृतान् ।
गौर्दातारं समादाय याति वै हरिमन्दिरम् ॥४४॥
वृषो धर्म इति प्रोक्तस्तीर्थे दानं वृषस्य च ।
कर्तव्यं रक्षयेद् धर्मो दातारं नयते दिवम् ॥४५॥
ग्रासमात्राऽपि भिक्षा सत्तीर्थे देया गृहस्थितैः ।
कुंभपत्रादिसिद्धान्नछत्रोपानत्कमण्डलुम् ॥४६॥
अंगुलीयकवासांसि दत्वा याति नरो दिवि ।
पानं श्रान्ततृषार्ताय क्षुधार्तायाऽन्नमेव च ॥४७॥
नग्नाय वस्त्रं संदेयं देवो नयन्ति तं दिवम् ।
भोजनं सततं देयं यथाशक्त्या घृतप्लुतम् ॥४८॥
क्षुत्पीडा महती लोके तस्यान्नं भेषजं मतम् ।
तेन सा शान्तिमायाति चान्नदानं तदुत्तमम् ॥४९॥
अन्नं वस्त्रं फलं तोयं तक्रं शाकं घृतं मधु ।
पत्रं पुष्पं तथोपानत् कन्था यष्टिः कमण्डलुः ॥५०॥
छत्रं पात्रं तथा विद्या पुस्तकं च सुरार्चनम् ।
कन्याकुशोपनीतानि बीजौषधिगृहाणि च ॥५१॥
रत्नं क्षेत्रं यज्ञपात्रं योगपट्टं च पादुके ।
कृष्णाजिनं बुद्धिदानं धर्मदेशकथानकम् ॥५२॥
तीर्थे गत्वा बहु देयं तेन श्रेयो महद्भवेत् ।
सर्वपापक्षयं कृत्वा दाता याति हरेः पदम् ॥५३॥

अश्वमेधादिभिर्यज्ञैर्गयायां पिण्डदानतः ।
यत्फलं स्यान्नृणां तत्स्याद् दृष्टे दामोदरे भुवि ॥५४॥
एकादश्यां कृतस्नानो देवपूजापरो भवेत् ।
पंचामृतेन संस्नाप्य स्नात्वा तीर्थोदकेन च ॥५५॥
कुंकुमागुरुश्रीखण्डकर्पूरोदकमिश्रितैः ।
पूजयित्वा ततः पुष्पैः शतपत्रैः सुगन्धिभिः ॥५६॥
मालतीकुसुमैः शुभ्रैर्बहुभिस्तुलसीदलैः ।
वस्त्रं यज्ञोपवीतं च धूपं चैव प्रधूपयेत् ॥५७॥
दीपं दद्याद् घृतेनैव तैलेनापि घृतं विना ।
नैवेद्यं विविधं दद्यात् फलं ताम्बूलमित्यपि ॥५८॥
प्रासादपूजां कुर्याच्च ध्वजदानादिना तथा ।
गां सवत्सां ततो दद्यात् संसारार्णवतारिणीम् ॥५९॥
ततः प्रदक्षिणं कृत्वा गीतवादित्रनिःस्वनैः ।
वेदपाठपुराणैश्च व्याख्यादिव्यकथानकैः ॥६०॥
देवाग्रे जागरं कुर्याद् दीपद्योतितभूमिषु ।
सप्तधान्यमयान् सप्त पर्वतान् दीपसंयुतान् ॥६१॥
फलताम्बूलपक्वान्नपूजितान् परिकल्पयेत् ।
विद्वद्भिः श्रोत्रियैः शान्तैर्ब्राह्मणैः साधुभिस्तथा ॥६२॥
साध्वीभिश्च गृहस्थैश्च श्रोतव्या वैष्णवी कथा ।
एवं जागरणं कार्यं रागद्वेषादिवर्जितैः ॥६३॥
कृत्वा जागरणं रात्रावुदिते सूर्यमण्डले ।
पूर्वां सन्ध्यां कृतस्नानः कृत्वा मध्याह्नमाचरेत् ॥६४॥
देवान् पितॄन् मनुष्यांश्च तर्पित्वा विधिपूर्वकम् ।
कृत्वा स्नानं पितॄणां च दानं दद्यात्तु शक्तितः ॥६५॥
देवं दामोदरं पुष्पधूपादिना प्रपूज्य च ।
रैवतीकुण्डसलिले स्नानं कुर्यात् ततः पुनः ॥६६॥
राधादेरीदर्शनं वै कुर्याच्च स्वर्णदीजले ।
तत आरोहणवाप्यां प्रगच्छेच्च हनूमतः ॥६७॥
दर्शनं च प्रकुर्याद्वै जलं पिबेत् ततः पुनः ।
पर्वतारोहणं कुर्याद् यद्वाऽऽगच्छेत् पुरं प्रति ॥६८॥
त्रिविक्रमरणच्छोडदर्शनं संविधाय च ।
विविधानि च दानानि भोजनादीनि सर्वथा ॥६९॥
दत्वा कृत्वा प्रगच्छेच्च स्वालयं तीर्थकारकः ।
इति ते तीर्थकरणं कथितं मोक्षदं परम् ॥७०॥
श्रुत्वैतद् भोजराजोऽपि जगाम रैवताचलम् ।
ददर्श मुख्यतीर्थानि मंगलानि विधाय च ॥७१॥
भवं दामोदरं स्वर्णरक्षां मृगाननास्थलीम् ।
अम्बां दत्तात्रेयरूपं नारायणह्रदं तथा ॥७२॥
रैवताचलमालोक्य गंगां गोमुखिकां तथा ।
त्रिविक्रमरणच्छोडमन्दिरं वामनस्थलीम् ॥७३॥
बलेर्मखस्थलीं भद्रां तथा कुंकुमवापिकाम् ।
ओजस्वतीं सोमनाथं सुवर्णद्वारिकां तथा ॥७४॥
तीर्थान्येवं विविधानि कृत्वा दत्वा महीं च गाः ।
सुवर्णरजतादीनि रत्नाभूषणकानि च ॥७५॥
वस्त्राण्यन्नानि विप्रेभ्यः साधुसाध्वीभ्य एव च ।
दीनान्धकृपणादिभ्यो दत्वा देयानि भूरिशः ॥७६॥
आजगाम स्वकं राज्यं कान्यकुब्जं नराधिपः ।
स्वराज्ञ्या सह यात्राया महोत्सवमकारयत् ॥७७॥
तावद् भोजस्य दृष्टिर्वै दिव्याऽभूत् पुण्ययोगतः ।
वैकुण्ठं चाथ कैलासं हरिं हरं सपार्षदम् ॥७८॥
ददर्श सुविमानं च दिव्यं मोक्षकरं ततः ।
पार्षदैः स्थापितस्तत्र सस्त्रीको दिव्यविग्रहः ॥७९॥
ययौ वैकुण्ठमेवाऽयं मुक्तो भूत्वा हरेर्बलात् ।
इत्युक्तस्ते चमत्कारो रैवतस्य, प्रिये रमे ! ॥८०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने तीर्थविधिदानादिप्रदर्शननामैकपंचाशदधिक-शततमोऽध्यायः ॥१५१॥

**श्रीनारायण उवाच—**

तीर्थे पाल्यांश्च नियमान् यमांश्च वच्मि पद्मजे ! ।
नियमानां यमानां च पालनं फलदं भवेत् ॥ १ ॥
कामक्रोधविजेता यो लोभमोहादिवर्जितः ।
श्रद्धालुश्चाऽऽस्तिकः शुद्धः स तीर्थफलभाग्भवेत् ॥ २ ॥
करपादोदरजिह्वामनःशिश्नानि यस्य हि ।
संयतानि भवेयुर्वै स तीर्थफलमश्नुते ॥ ३ ॥
सत्यवाक् सुव्रतः शान्तः सर्वेष्वात्मोपमदृशिः ।
तपोविद्याकृतशुद्धिः सतीर्थफलमश्नुते ॥ ४ ॥
तीर्थे ह्युपोषणं कार्यं क्षौरं श्राद्धं सपिण्डकम् ।
भोजनीयाः साधुसाध्व्यो दानं देयं तु भावतः ॥ ५ ॥
नारीणां पतिवत्नीनां क्षौरं नैव विधीयते ।
परीक्षा भोजनीयानां कर्तव्या नैव केनचित् ॥ ६ ॥
तत्रत्यदेवतानां च कर्तव्यं मुख्यमर्चनम् ।
भूषावासोद्रव्यपात्रफलनैवेद्यवस्तुभिः ॥ ७ ॥
अशक्तस्तु नमः कुर्यात् तथा सम्मार्जनादिकम् ।
साधुचरणशुश्रूषां सेवां प्रसन्नताप्रदाम् ॥ ८ ॥

साधवः सेविता येन तनुमानसवस्तुभिः ।
महापूजाफलं तस्य सर्वं तीर्थफलं भवेत् ॥ ९ ॥
साधवस्तोषिता येन सर्वस्वार्पणसाधनैः ।
सर्वदानफलं तस्य साधुर्नारायणो यतः ॥१०॥
पुण्यतीर्थेषु यत्कार्यं क्रियते सानुसंगमे ।
सहस्रगुणितं चाऽप्यनन्तफलकरं भवेत् ॥११॥
कृतं तीर्थे स्वल्पमपि तीर्थबलाद्विवर्धते ।
पुण्यं विवर्धते नित्यं पापं तु लीयते सदा ॥१२॥
तीर्थे कृतानां जीवानां पापलेशो न विद्यते ।
तारयति जनान् यस्मात् तस्मात् तत्तीर्थमुच्यते ॥१३॥
यद्यत् करोति सत् तीर्थे सर्वं तत्पुण्यदं भवेत् ।
नियमेन च तीर्थे वै स्थातव्यं तनुधारिभिः ॥१४॥
मनःशुद्धिं तथा सेवां सतां कुर्याद्धि तीर्थकृत् ।
लुब्धस्य पिशुनस्याथ क्रूरस्य दांभिकस्य च ॥१५॥
मलिनस्य च चौरस्य नास्तिकस्य शठस्य च ।
निन्दकस्य तथा द्रोग्धुर्न स्यात् तीर्थफलं क्वचित् ॥१६॥
शारीरमलसंत्यागे मनो न निर्मलं भवेत् ।
दोषदृष्टिपरित्यागे मनस्तु निर्मलं भवेत् ॥१७॥
रागद्वेषौ मलरूपौ तत्त्यागे निर्मलो भवेत् ।
नारीभिश्च नरैर्वापि तीर्थे वीक्ष्या तु दिव्यता ॥१८॥
दिव्यभावेन स्वस्याऽन्तर्दिव्यता वर्धतेऽन्वहम् ।
दिव्यान्तःकरणे धार्यो भगवान् तीर्थमण्डले ॥१९॥
स वै संतारयेद् भक्तं निर्मलं पुण्यभाजनम् ।
अहिंसा सत्यमस्तेयं ब्रह्मचर्यमनाग्रहः ॥२०॥
शौचं तपश्च सन्तोषः स्वाध्यायो भजनं हरेः ।
जपश्च पूजनं देवदर्शनं श्रवणं नतिः ॥२१॥
कर्तव्यानि विशेषेण पूर्णं तीर्थफलं भवेत् ।
क्रोधस्तीर्थे न कर्तव्यः पुण्यप्रज्वालको हि सः ॥२२॥
तीर्थेऽन्यस्य न भोक्तव्यं पेयं नान्यस्य वै क्वचित् ।
प्रतिग्रहश्च न ग्राह्यस्तपस्तेजोहरो हि सः ॥२३॥
लड्डुकैर्मौक्तिकैः रम्यैः कंसारैर्घृतपूरकैः ।
संयावपायसाऽपूपैः शष्कुलीखाजकादिभिः ॥२४॥
पर्पिकापिण्डकाद्यैश्च व्यञ्जनैर्द्विदलादिभिः ।
दधिदुग्धैश्च तक्रैश्च श्रीखण्डदौग्धसद्रसैः ॥२५॥
घृतशर्करसुपक्वैश्चान्यैर्भक्ष्यसुलेह्यकैः ।
तर्पणीयाः साधुविप्रसाध्व्यश्च दीनबालकाः ॥२६॥
पितरस्तेन तृप्ताः स्युस्तस्य पुण्यमनन्तकम् ।
भोक्तव्यं भोजनीयाश्च तीर्थस्य फलमिच्छता ॥२७॥
वन्ध्यं तीर्थं न वै कुर्यात् यदि सौख्यं समीहते ।
जडतीर्थात् चेतनं तु तीर्थं तीर्थोत्तमं मतम् ॥२८॥
सन्तः साध्व्यो योगिनश्च यतयो ब्रह्मचारिणः ।
ते सर्वे चेतनं तीर्थं तल्लाभे सुकृतं महत् ॥२९॥
चातुर्मास्ये विशेषेण तीर्थसेवा विधीयते ।
तपोनियमसत्काले फलं त्वनन्तकं भवेत् ॥३०॥
अल्पायासान् बहुफलान् पुत्रलक्ष्मीप्रदायकान् ।
चातुर्मास्यव्रतश्रेष्ठान् कुर्वतः फलमक्षयम् ॥३१॥
गां स्पृष्ट्वा ब्राह्मणं नत्वा सम्पूज्य साधुदैवतान् ।
तपस्विनं यतिं शान्तं श्रोत्रियं ब्रह्मचारिणम् ॥३२॥
मातापितरौ भगिनीं तत्पतिं दुहितुः पतिम् ।
भागिनेयं च दौहित्रं मित्रसम्बन्धिबान्धवान् ॥३३॥
साध्वीः सतीश्च कन्याश्च दीनान्धकृपणान् जनान् ।
बालान् वृद्धानातुराँश्च गाश्चाऽतिथीननाथकान् ॥३४॥
भिक्षुकान् क्षुधितान् श्रान्तान् पथिकान् तीर्थवासिनः ।
भोजयित्वा पातकैः संमुच्यन्ते गृहमेधिनः ॥३५॥
राजा गजाश्वनकुलसतीवृषमहीधराः ।
आदर्शक्षीरवृक्षान्नप्रदाः साधुजनास्तथा ॥३६॥
जलस्थलात्मतीर्थानि देवमन्दिरमूर्तयः ।
दृष्टमात्राः पुनन्त्येते चातुर्मास्यव्रतस्थिताः ॥३७॥
वेदधर्मकथां श्रुत्वा दृष्ट्वा मुक्तिपरान्नरान् ।
स्मृत्वा लक्ष्मीं हरिं शंभुं शिवां गंगां च स्वर्णदीम् ॥३८॥
कृत्वा जागरणं विष्णोर्दत्वा दानं च शक्तितः ।
ताम्बूलं कुसुमं दीपं नैवेद्यं तुलसीदलम् ॥३९॥
गीतं नृत्यं च वाद्यं च विधाय सुरमन्दिरे ।
महोदयमवाप्नोति फलं स्वर्ग्यं च मोक्षदम् ॥४०॥
इन्द्रियाणां च मनस ऐकाग्र्यं तप उत्तमम् ।
तदैकाग्र्यं वासुदेवे कार्यं ध्यानादिना जनैः ॥४१॥
ऋषयो मुनयश्चातुर्मास्ये जैव्हं रसं द्रुतम् ।
जित्वा तपः प्रकुर्वन्ति तीर्थयात्राफलाप्तये ॥४२॥
फलाहारः पयःपानं चैकभुक्तमथापि वा ।
शाकत्यागोऽथवा शाकमात्राहारस्तिलादनम् ॥४३॥
दधिप्राशो घृतत्यागश्चैकान्नभोजनं तथा ।
माषमुद्गादिमात्रस्य भोजनं व्रतमेव वा ॥४४॥
भूशयनं जलस्नानं तैलाभ्यंगादिवर्जनम् ।
भजनं पूजनं मालाजपः श्रीहरिकीर्तनम् ॥४५॥
कथायाः श्रवणं नित्यमिष्टदेवस्य दर्शनम् ।
साधूनां सेवनं तीर्थे व्रतं पुण्यप्रदं बहु ॥४६॥

ब्राह्मणः साधवश्चार्च्या भोजनीयाश्च सद्रसैः ।
षोडशोपचारवयैर्नित्यं कृष्णार्हणं व्रतम् ॥४७॥
साधूनां पूजनं नित्यं यद्वा होमो व्रतं परम् ।
घृतैक्षवलवणादेर्वर्जनं च व्रतं मतम् ॥४८॥
नित्यं भगवतेऽप्यैव पेयं खाद्यं च तद्व्रतम् ।
कृतेन कर्मणा येन साधवो भगवाँस्तथा ॥४९॥
प्रीयरेन् तद्व्रतं श्रेष्ठं कर्तव्यं मोक्षदं यतः ।
मातापित्रोर्गुरोः सेवा व्रतानां व्रतमुत्तमम् ॥५०॥
पत्युः सेवा व्रतं पत्न्याः पत्नीतोष पतिव्रतम् ।
शिष्यव्रतं गुरोः सेवा शिष्यतोषो गुरोर्व्रतम् ॥५१॥
रैवते कार्तिकव्रतं कर्तव्यं तु विशेषतः ।
वटताले हरिहरक्षेत्रे च कपिलाश्रमे ॥५२॥
व्रतं मासोपवासाख्यमथवा चान्द्रकालिकम् ।
चान्द्रायणं व्रतं कार्यं पूर्णिमातस्तपः शुभम् ॥५३॥
आश्वीनपूर्णिमायां वै कवला दश पञ्च च ।
कार्तिककृष्णप्रतिपद्दिने ग्रासाश्चतुर्दश ॥५४॥
एकैकस्य तिथिक्रमाद्ग्रासो वै कवलस्य च ।
अमायामुपवासः स्यात्प्रतिपद्येक एव च ॥५५॥

ग्रासद्वयं द्वितीयायामेवमापूर्णिमावधि ।
ग्रासवृद्धिर्यथातिथिवृद्धि कार्यं च तद्व्रतम् ॥५६॥
ग्रासश्चैकेन यत्नेन गलाधो याति तादृशः ।
न न्यूनो नाऽधिको वाऽपि व्रतार्थे सम्मतः सदा ॥५७॥
यद्वाऽन्यत् तीर्थकर्तॄणां तपोव्रतमुदीर्यते ।
उदयास्तावधि दिवा जलकृच्छ्रं जले स्थितिः ॥५८॥
दशम्यां गोमूत्रशकृद्घृतदुग्धदधिग्रहः ।
एकादश्यामुपवासो हरिकृच्छ्रव्रतं हि तत् ॥५९॥

सप्तमीतः क्रमाद्ग्राह्यं जलं क्षीरं दधिघृतम् ।
एकादश्यामुपवासः कृच्छ्रः पैतामहस्तु सः ॥६०॥
षष्ठीतस्त्रिदिनं दुग्धपानं त्र्यहमुपोषणम् ।
माहेन्द्रकृच्छ्र इत्युक्तस्तीर्थे कार्यो विशेषतः ॥६१॥
तृतीयातस्त्र्यहं भोज्यं निवारादि ततस्त्र्यहम् ।
यवादिकं त्र्यहमुपोषणं कृच्छ्रः स वैष्णवः ॥६२॥
पञ्चदिनं पयःपानं पञ्चाहं दधिभोजनम् ।
एकादश्यामुपवासो भास्करकृच्छ्र उच्यते ॥६३॥
पञ्चमीतः क्रमात् भाजीं यवान् शाकं दधि क्षीरम् ।
घृतं जलमेकादश्याम् ऋषिकृच्छ्रः स उच्यते ॥६४॥
पलाशबिल्वदर्भाब्जोदुम्बरपर्णसुशृतम् ।
पयः पेयं प्रतिपदः षष्ठ्यां कुर्यादुपोषणम् ॥६५॥

तदिदं व्रतमाग्नेयकृच्छ्राख्यं समुदीरितम् ।
सप्तमीतः पयोबिल्वांबुजमृणालभक्षणम् ॥६६॥
एकादश्यामुपवासो लक्ष्मीकृच्छ्र उदीरितः ।
एकादशदिनेष्वेव पर्णादः पर्णकृच्छ्रकृत् ॥६७॥
त्र्यहं प्रातस्त्र्यहं सायं त्र्यहं भोज्यमयाचितम् ।
त्र्यहं चोपवसेत् कृच्छ्रः प्राजापत्य उदीरितः ॥६८॥
द्वादशाहोपवासैस्तु पाराककृच्छ्र उच्यते ।
फलमात्रग्रहणेन फलकृच्छ्रः प्रकीर्त्यते ॥६९॥
जलमात्रग्रहणेन जलकृच्छ्रः स उच्यते ।
दलमात्रग्रहणेन दलकृच्छ्रस्तथोच्यते ॥७०॥
पुष्पमात्रग्रहणेन पुष्पकृच्छ्रः प्रकीर्त्यते ।
बीजमात्रग्रहणेन बीजकृच्छ्रः स भण्यते ॥७१॥
तिलमात्रग्रहणेन चणकग्रहणेन च ।
भर्जिततण्डुलग्राहे तत्तत्कृच्छ्रः स उच्यते ॥७२॥
पक्वकृच्छ्रश्चामकृच्छ्रः सक्तुकृच्छ्रौदनव्रते ।
कार्तिके शुक्लपक्षे ते कृच्छ्राः कार्या विधानतः ॥७३॥
तत्तद्भगवतो भक्त्या सहिता एव सर्वथा ।
भुक्तिमुक्तिफलदास्तेऽन्यथा तु स्वर्गदा मताः ॥७४॥

कृच्छ्रमध्ये भवेन्मूर्छा गोक्षीरं पाययेत्तदा ।
जलं मूलं फलं दुग्धं पत्रं पुष्पं घृतं दधि ॥७५॥
तक्रं तैलं शर्करादि मुन्यन्नं शाकमब्धिजम् ।
कर्पूरं त्वङ्लवंगैलातिक्तमरीचमौषधम् ॥७६॥
मुखशुद्धिकरद्रव्यमार्द्रकं क्वाथमित्यपि ।
चतुर्विंशतितत्त्वान्यव्रतघ्नानि भवन्ति हि ॥७७॥
अथवाऽयाचितं भैक्ष्यमपक्वाशनमेव वा ।
शाकत्यागः फलत्यागो रसत्यागोऽन्नसुत्यजिः ॥७८॥

क्षारत्यागो दौग्धवस्तुत्याग ऐक्षवसुत्यजिः ।
व्रतान्येतानि सूक्तानि भुक्तिमुक्तिकराणि वै ॥७९॥
तीर्थे कार्याणि चैतानि वर्षासु कार्तिकेऽथवा ।
अन्नदानं जलदानं वस्त्रदानं सहायकृत् ॥८०॥
यानदानं भुवो दानं कन्यादानं गवार्पणम् ।
स्वर्णदानं तिलदानं दीपदानं गृहार्पणम् ॥८१॥
एवं स्वापेक्षितं सर्वं दातव्यं पुनरिच्छता ।
रमादामोदरस्यापि पूजनं व्रतमुच्यते ॥८२॥
केतकीजात्यगस्तीनां कुसुमैरम्बुजैरपि ।
कमलैस्तुलसीपत्रैर्लक्षेण पूजयेद्धरिम् ॥८३॥
पत्रे पत्रे च कुसुमेऽश्वमेधफलमाप्नुयात् ।
धात्रीफलरसात्तांगो धात्रीफलसुभोजनः ॥८४॥

धात्रीफलभूषितांगो धात्रीछायासमाश्रितः ।
दामोदरं समभ्यर्च्य व्रजेन्नारायणं पदम् ॥८५॥
देय आकाशदीपश्च देवालये निशामुखे ।
पक्वान्नानि प्रदेयानि देवाय धनिभिः सदा ॥८६॥
गृह्णीयात् कार्तिके दीक्षां महाभागवतीं जनः ।
हरेः पदार्पितां मालां तुलसीजां गले धरेत् ॥८७॥
सा व्यक्तिर्मुच्यते नूनं जन्मसंसारबन्धनात् ।
एकेनापि व्रतेनोर्जे चातुर्मास्यफलं लभेत् ॥८८॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने
पालनीययमनियमदानकृच्छ्रव्रतादिनिरूपणनामा
द्विपंचाशदधिकशततमोऽध्यायः ॥१५२॥

**श्रीनारायण उवाच—**

वस्त्रापथस्य वायव्ये कोणे दिव्यं सरोवरम् ।
तस्य पश्चिमदिग्भागे वनं गहनभूरुहम् ॥ १ ॥
बिल्ववृक्षमयं तत्र मध्ये लिंगं तु मृन्मयम् ।
तत्रैको लुब्धकः प्राप्तो वसन्ते जलकांक्षया ॥ २ ॥
पिप्पलस्य द्रुमस्याऽधः समागत्य व्यवस्थितः ।
मूले क्षणं तु विश्रम्य जलं पातुं च गच्छति ॥ ३ ॥
तावत्तेन तदा दृष्टौ पुरुषौ कृष्णपाण्डुरौ ।
पीताम्बरचर्मवस्त्रौ सुकेशसुजटाधरौ ॥ ४ ॥
कौस्तुभमुण्डकधरौ चक्रत्रिशूलहस्तकौ ।
वृन्दारुद्राक्षमालौ च पद्मनेत्र त्रिनेत्रकौ ॥ ५ ॥
तिलकचन्द्रकभालौ पद्मासतीप्रसेवितौ ।
पतत्रिवासुकियुक्तौ कम्बुनीलाभसद्गलौ ॥ ६ ॥
दिव्यौ पोषान्तकरूपौ जीवनिवृत्तियत्नकौ ।
सत्वतमःपराक्रान्तौ व्योममार्गावलम्बिनौ ॥ ७ ॥
बिल्ववनं प्रति यातौ यावत् पश्यति लुब्धकः ।
तावत्तावदृश्यभावं लिंगे च प्रस्तरे गतौ ॥ ८ ॥
श्वेतो लिंगेऽभवल्लुप्तः कृष्णस्तु प्रस्तरे गतः ।
लुब्धकश्च तदाश्चर्ययुक्तो जगाम तत्स्थले ॥ ९ ॥
तावल्लिंगं मृन्मयं च विष्णुमूर्तिं शिलामयीम् ।
दृष्ट्वा तु लुब्धकस्तत्र जलपानं विहाय च ॥१०॥
तत्रैव सुस्थितो देवौ चिन्तयँस्तत्र भावतः ।
क्षुधितस्तृषितः सायमेवमेव व्यवस्थितः ॥११॥
माघकृष्णचतुर्दश्यां सायं वृत्तमिदं यदा ।
निर्जने तत्र तौ देवौ संस्मृत्य च पुनः पुनः ॥१२॥
लुब्धको बिल्वपत्राणि पद्मानि सरसस्तथा ।
समादायाऽर्पयत्येतौ लिङ्गविष्णू भजन् मुहुः ॥१३॥
पश्चाज्जलं परिगृह्य स्नापितौ पुष्पपूजितौ ।
वन्दितौ तावता रात्र्या मध्ये तौ नीलपाण्डुरौ ॥१४॥
तस्मादेव समुद्भूतौ पुरुषौ दिव्यविग्रहौ ।
प्राहतुस्तं लुब्धकं तौ यस्मादत्र वनान्तरे ॥१५॥
त्वयाऽऽगत्याऽद्य दिवसे बिल्वपद्मे समर्पिते ।
एतत्पूजाप्रभावेण दग्धान्यंहांसि ते तथा ॥१६॥
आभूतसंप्लवं स्वर्गे व स देवशरीरकः ।
लुब्धकस्त्वं भव देवः शिवरात्रिप्रपूजनात् ॥१७॥
शिवरात्रेर्व्रतयोगात् शिवरात्रिप्रजागरात् ।
पिप्पलाऽधोनिवासाच्च विष्णुभक्तो भविष्यसि ॥१८॥
एवं वरं प्रदत्त्वैव तिरोभूतौ हरिर्हरः ।
तावत् तत्र विमानं सुरुक्मवर्णं शशिप्रभम् ॥१९॥
अवातरद्व्योममार्गाद् अप्सरोभिः सुशोभितम् ।
सर्वसमृद्धिसमायुक्तं दासदासीनिवासितम् ॥२०॥
देव्यः प्राह तदा तं वै लुब्धकं पुण्यशालिनम् ।
आगच्छ कान्त सुस्वर्गे वयं त्वत्ताश्च तेऽङ्गनाः ॥२१॥
भवान् देवोऽस्ति सम्पन्नः शिवविष्णुप्रपूजनात् ।
माघे सोमे चतुर्दश्यां कृष्णायां जागरे कृते ॥२२॥
तदेतल्लभ्यते सर्वं समारोह गृहाण च ।
एवं दिव्यांगनास्तं च लुब्धकं कान्तमेव ह ॥२३॥
कृत्वाविमानमारोप्य जग्मुर्दिवं हरेः पुरम् ।
इन्द्रोऽपि तं समालोक्य तदाऽत्यन्तसुविस्मितः ॥२४॥
लुब्धकश्च तदा पृष्ठः केन पुण्येन लब्धवान् ।
उक्तवान् स तदा शैवरात्र्यां तयोस्तु दर्शनम् ॥२५॥
व्रतं पूजां यथावृत्तं तत्सर्वं देवरूपवान् ।
ततः पुनः समायाते माघे कृष्णे चतुर्दशे ॥२६॥
दिने चेन्द्रः समायातो लक्ष्मि ! देवि ! धरातले ।
असंख्यदेवदेवीभिर्भवं नत्वा च माधवम् ॥२७॥
पूजयामास विधिना व्रतं पूर्णं चकार सः ।
किं दानैर्बहुभिर्दत्तैः किं व्रतैः किं सुरार्चनैः ॥२८॥
किं यज्ञैः किं तपोभिश्च ब्रह्मचर्येण किं तथा ।
गयापिण्डप्रदानेन प्रयागमरणेन किम् ॥२९॥
सोमेश्वरे सरस्वत्यां सोमपर्वणि किं गतैः ।
कुरुक्षेत्रे गतैः किं स्याद् राहुग्रस्ते दिवाकरे ॥३०॥
तुलासुवर्णदानेन वेदपाठेन किं भवेत् ।
सर्वपापक्षयो येन वृषोत्सर्गेण तेन किम् ॥३१॥

गोदानं किं करोत्येव तिलदानं करोतु किम् ।
अयने विषुवे चैव संक्रान्तौ कीदृशं फलम् ॥३२॥
माघे मासि चतुर्दश्यां यादृशं जागरे कृते ।
अक्षय्यं फलमाप्नोति महेन्द्रः प्राप्तवान् फलम् ॥३३॥
वामनं त्रिविक्रमं च दामोदरं भवेश्वरम् ।
यथाशास्त्रं पूजयित्वा व्रतं कृत्वा तथा हरिः ॥३४॥
नारायणे ह्रदे स्नात्वाऽऽचम्य गोमुखतो जलम् ।
अम्बां नाथं च दत्तात्रेयं नमस्कृत्य वासवः ॥३५॥
उत्तराभिमुखं गत्वा विश्रान्तिमाप वै क्षणम् ।
तत्र चेन्द्रेश्वरं लिंगं स्थापितं देवभूभृता ॥३६॥
वासवेन पूजितं तद् देवीभिः स्नापितं तथा ।
साक्षादिन्द्रस्य देवेशो भवो दृष्टिपथं गतः ॥३७॥
विष्णुर्देवस्तथा तत्र व्यदृश्यत चतुर्भुजः ।
इन्द्रेण स्थापितो विष्णुश्चतुर्भुजस्तथा स्थले ॥३८॥
पूजितो भोजितश्चैव नीराजितश्च वन्दितः ।
विष्णुः प्राह तदेन्द्रं त्वं ब्रह्मा जन्मान्तरे भव ॥३९॥
अन्यब्रह्माण्डराज्यं वै कृत्वा वैकुण्ठमाप्नुहि ।
इतीन्द्रस्तद्वरं प्राप्य प्रतिष्ठाप्य हरं हरिम् ॥४०॥
स्वर्गं जगाम देवेशः प्रतिवर्षं प्रयाति सः ।
शिवरात्रिव्रतवन्तं वस्त्रापथनिवासिनम् ॥४१॥
नारायणह्रदे स्नान्तं दामोदरप्रसेविनम् ।
भवेश्वरस्य सद्भक्तं त्रिविक्रमप्रपूजकम् ॥४२॥
नेतुं वरं तथा कर्तुं समायान्ति वरांगनाः ।
वरं द्रष्टुमिन्द्रवासाद् वरयन्ति परस्परम् ॥४३॥
शंभुनारायणसमो दिव्यो मे भवतात्पतिः ।
ममायं न तवास्त्येषः पतिर्वै पुरुषोत्तमः ॥४४॥
वृक्षाः कीटाः पतंगा वा पशवः पक्षिणस्तथा ।
म्रियन्ते ते विष्णुसमा भूत्वा स्वर्गं प्रयान्ति हि ॥४५॥
वस्त्रापथे तदा तांस्तान् पतिं कुर्वन्ति देविकाः ।
प्राप्य देवं शंभुसमं विष्णुरूपं पतिं च ताः ॥४६॥
प्रहसन्ति च गायन्ति नृत्यन्ति कीर्तयन्ति च ।
जयं वदन्ति नयन्ति सुखशय्यां च तं सुरम् ॥४७॥
नन्दनेऽपि वने देव्यः पृच्छां कुर्वन्ति तं सुरम् ।
वद केन प्रभावेण देवो दिव्यो भवानभूत् ॥४८॥
तदा वक्ति स देवो वै वस्त्रापथप्रभावतः ।
देवा भवन्ति दिव्यास्तत् तीर्थं मुक्तिं ददात्यपि ॥४९॥
ऐरावतं समारुह्य यदाऽऽयातो महेश्वरः ।
ऊर्जयन्तगिरेर्मूर्ध्नि गजराजः स्म तिष्ठति ॥५०॥
तदग्रे चरणं हस्ती ददौ मूर्ध्नि स कारणात् ।
तेनाऽऽक्रान्तो गिरिवरस्तोयं सुस्राव निर्मलम् ॥५१॥
गजपादोद्भवं वारि जातं तद्वै सदा स्थिरम् ।
इति कृतं सुरेन्द्रेण तैर्थिकानां हितार्थकम् ॥५२॥
अथ चोत्तरदिग्भागे धनदेन प्रतिष्ठितम् ।
धनदेश्वरमित्याख्यं लिंगं तीर्थे सुखप्रदम् ॥५३॥
त्रिशूलिनी तथा देवी पार्वती तत्र राजते ।
भवस्य निर्ऋते कोणे गणो हैरम्बसंज्ञितः ॥५४॥
यमेन स्थापितं यमेश्वरं बाणं तु वर्तते ।
चित्रगुप्तस्थापितं वै चित्रगुप्तेश्वरं तथा ॥५५॥
प्रजापतिश्चकारोच्चैः केदारेशं तु पश्चिमे ।
पर्वते रैवते शृंगे निमिनाथशिवस्तथा ॥५६॥
भवस्य दक्षिणे भागे नृसिंहः श्रीहरिस्तथा ।
स्थापितौ श्रीवामनेन पूजनीयौ विशेषतः ॥५७॥
सम्प्राप्य मानुषं जन्म ज्ञात्वा हरं हरिं तथा ।
शिवरात्रिर्वामनद्वादशी कार्यामुमुक्षुभिः ॥५८॥
पुण्यदा सौख्यदा प्रोक्ता भुक्तिमुक्तिप्रदायिनी ।
द्वादशाब्दं व्रतमेतत्कर्तव्यं वार्षिकं जनैः ॥५९॥
जीवितं चंचलं नृणां कर्तव्यं प्रातिमासिकम् ।
प्रतिमासं शिवरात्रेर्द्वादश्याश्च व्रतं चरेत् ॥६०॥
विघ्नश्च जायते मध्ये यदि वा दैवयोगतः ।
न भवेद् व्रतभंगश्च समाप्तं तत्कृतं मतम् ॥६१॥
कृष्णायां तु चतुर्दश्यां द्वादश्यां च कृताह्निकः ।
गृह्णीयाद् व्रतनियमं स्नायान्नद्यां ह्रदे शुभे ॥६२॥
तैलाभ्यंगो न कर्तव्यो न कार्या राजसी क्रिया ।
तीर्थसेवा प्रकर्तव्या साधुसेवा सुखावहा ॥६३॥
देवसेवा प्रकर्तव्या ब्रह्मचर्यपरायणैः ।
रात्रौ देवाग्रतो गत्वा कर्तव्याः सप्त पर्वताः ॥६४॥
पक्वान्नफलताम्बूलपुष्पधूपादिपूजिताः ।
घृतदीपः प्रकर्तव्यः पापनाशनहेतवे ॥६५॥
दिवा वा निशि सन्ध्यायां दीपः कार्यः स्वशक्तितः ।
दिव्यो दीपः प्रकर्तव्यः फलं तस्य महन्मतम् ॥६६॥
किंचित्प्रकाशमात्रेण देवास्तुष्यन्ति सर्वथा ।
रात्रौ जागरणं कार्यं गीतवादित्रपूर्वकम् ॥६७॥
शिवरात्रिचरित्रं च वामनद्वादशीव्रतम् ।
श्रोतव्यं च भजनानि कर्तव्यानि तु मण्डलैः ॥६८॥
रात्रौ देयानि दानानि व्रते जागरणे तथा ।
पुनः स्नानं प्रभाते च पूज्यौ हरिहरावुभौ ॥६९॥

साधवः पूजनीयाश्च भोजनाच्छादनादिभिः ।
तपस्विनां प्रदातव्यं भोजनं गृहमेधिभिः ॥७०॥
द्वादशाऽष्टौ चतस्रः षड् भोजनीया विशेषतः ।
एकोऽपि ब्रह्मवेत्ता वा ब्रह्मचारी तु पूजितः ॥७१॥
सहस्राणां समो भक्त्या गृहे संपूजितो भवेत् ।
अक्षारलवणैश्चान्नैर्भोक्तव्यं प्राक्दिने स्वयम् ॥७२॥
पुत्रमित्रकलत्राणां दातव्यं भोजनं तथा ।
अनेन विधिना कार्या द्वादशी शिवरात्रिका ॥७३॥

वामनस्तु स्वयं तुष्येत् शिवस्तुष्येत्मुहुः पुनः ।
व्रतान्ते गौः प्रदातव्या कृष्णा वत्सयुता शुभा ॥७४॥
सवस्त्राभरणा दिव्या घण्टाशृंगादिशोभिता ।
गुरवे दक्षिणा देया ब्राह्मणेभ्यश्च शक्तितः ॥७५॥
तपस्विभ्यो वितीर्याऽन्नं देयं क्षमापयेत्तथा ।
एवं यः कुरुते भक्तस्तस्य पापं न विद्यते ॥७६॥
पुण्यात्मा विमलो भूत्वा भुक्त्वा भोगाननुत्तमान् ।
सन्तानमुत्तमं लब्ध्वा शान्तिं लब्ध्वैहिकीं तथा ॥७७॥
दिव्यं विमानमारूढो दिव्यस्त्रीपरिवेष्टितः ।
गीतवादित्रनिर्घोषैर्नीयते लोकमैश्वरम् ॥७८॥
मासि भाद्रे शुक्लपक्षे द्वादश्यां श्रवणाख्यभे ।
बुधे मध्याह्नसमये वामनस्त्वदितेरभूत् ॥७९॥
एकादश्यां द्वादश्यां च फलाहारो विधीयते ।
एकादश्यामुपवासो द्वादश्यां नक्तमेव वा ॥८०॥
पूजनार्थं तदा कुर्यात् वामनार्चां तु पौरटीम् ।
ह्रस्वां सजटां छत्रदण्डकमण्डलूयुताम् ॥८१॥
पीताम्बराऽऽभरणाढ्यां पुष्पाऽक्षतादिभिस्ततः ।
सुषोडशोपचारैर्वै वामनं संप्रपूजयेत् ॥८२॥

मण्डले सर्वतोभद्रे मध्याह्ने पूजयेत्तु तम् ।
यथालब्धोपचारैश्च भक्त्या पञ्चामृतादिभिः ॥८३॥
अदितिं कश्यपं चेन्द्रं सकुटुम्बं प्रपूजयेत् ।
घृतखण्डादिमिष्टान्नं नैवेद्यं चार्पयेत् शुभम् ॥८४॥
वामनस्याऽवतारस्य चरित्राणि तु गापयेत् ।
त्रयोदश्यां तु मिष्टान्नैस्तर्पयेत् क्षुधितान् बहून् ॥८५॥
माघकृष्णचतुर्दश्यां महादेवो महानिशि ।
विष्णोश्च ब्रह्मणोर्मध्ये श्रीहरेः किरणात्मकः ॥८६॥
शिवलिंगात्मको जातः कोटिसूर्यसमप्रभः ।
अदृश्य स वै लिंगे महादेवस्तृतीयकः ॥८७॥
ब्रह्मविष्णुमहेशानां सृष्टिकाले ह्यभूदिदम् ।
चतुर्दश्यां महादेवं चित्रवासांसि धारयेत् ॥८८॥

सतीं शाटीं सुचित्रां च पौरटाऽऽभरणानि च ।
धारयेत्पूजयेत् प्रीत्या सकुटुम्बं महेश्वरम् ॥८९॥
प्रपाठयेद्रुद्रसूक्तं त्वभिषेकपुरःसरम् ।
निशीथे पूजयेत् शंभुं भंगादुग्धफलच्छदैः ॥९०॥
मल्लिकाकुन्दपुष्पैश्च कनकैः करवीरकैः ।
वस्तुभिः षोडशविधैरर्चयेच्चान्यवस्तुभिः ॥९१॥
नैवेद्यं विविधं दद्याद् देशकालानुसारतः ।
तदा चैकात्मपद्यानि गापयेद्धररुद्रयोः ॥९२॥

दानानि विधिनान्येव दद्याद्रत्नानि भूरिशः ।
द्वितीये दिवसे भोज्योत्सवं कुर्यान्महत्तमम् ॥९३॥
एवं हरेर्हरस्यापि व्रतं कुर्यात्तु रैवते ।
कार्तिके माघमासे च यात्रां कुर्यात्तु मोक्षदाम् ॥९४॥
कैलासो विष्णुलोकश्च मोक्षश्च तस्य निश्चितः ।
नरो वा प्रमदा वापि व्रतेन मोक्षमाप्नुयात् ॥९५॥
सकामा प्रमदा तेन रमा वा पार्वती भवेत् ।
अकामा प्रमदा तेन मुक्तिं यात्येव धामनि ॥९६॥
ऊर्जे प्रदक्षिणा कार्या सव्रता सर्वमानवैः ।
माघे तु पूजनं दानं सव्रतं रैवताचले ॥९७॥

कर्तव्यं तेन पृथ्व्याश्च प्रक्रमणं कृतं भवेत् ।
त्रयस्त्रिंशत्प्रकोटीनां देवानां पूजनं भवेत् ॥९८॥
वन्ध्यौ मासौ न नेतव्यौ ऊर्जमाघौ मुमुक्षुभिः ।
वन्ध्यत्वे सर्ववन्ध्यत्वं बोध्यं मानवजन्मनः ॥९९॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने लुब्धकस्य हरिहरदर्शनोत्तरमिन्द्रेश्वरविष्णुप्रतिष्ठानं गजपदं धनेश्वरत्रिशूलिनीयमेश्वरचित्रगुप्तेश्वरनृसिंहतीर्थानि च वामनद्वादशीशिवरात्र्योर्व्रतमहिमा चेत्यादिनिरूपण-नामा त्रिपंचाशदधिकशततमोऽध्यायः ॥१५३॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! मणिव्राते रैवते दिव्यतैजसे ।
मन्दराद्रिः समायातः स्वर्णपाषाणमिश्रणः ॥ १ ॥
दिव्ये तेजोमये तत्राऽन्तर्गत्वा स्थूलभावतः ।
मिलित्वा संस्थितस्तेन मणेस्तेजो न दृश्यते ॥ २ ॥
कुमुदाद्रिस्तथा तत्राऽऽयातो रैवतके गिरौ ।
सोऽप्यन्तर्भूय स्थौल्येन वर्तते रैवताचले ॥ ३ ॥
शृणु दिव्यां कथां तां वै पूर्वकृतयुगोद्भवाम् ।
पुरा कृतयुगे सर्वे सपक्षाः पर्वताः कृताः ॥ ४ ॥

उड्डयन्तो महाकाया निपतन्ति यदृच्छया ।
मेरुमन्दरकैलासा ब्रह्मणा वारिताः स्थिराः ॥ ५ ॥
अन्ये तु वारिताश्चापि स्थायिनो न यदाऽभवन् ।
तदेन्द्रेण स्ववज्रेण पक्षास्तेषां निकृन्तिताः ॥ ६ ॥
मेरोर्दक्षिणशृंगे तु कुमुदो नाम पर्वतः ।
दिव्यः सपक्षः सौवर्णो दिव्योद्यानसमृद्धिमान् ॥ ७ ॥
सर्वा वैकुण्ठसदृशी स्थली स्मृद्धा सुशोभना ।
तत्रोपरि पुरी दिव्या वैष्णवी विष्णुना कृता ॥ ८ ॥
तन्मध्ये च महान् विष्णो प्रासादो रमया युतः ।
मेरोः शृंगे मन्दराख्ये पुरी शिवस्य शोभना ॥ ९ ॥
सौवर्णा च सभा तत्र भवानी मोदते सदा ।
ब्रह्मणश्चापि नगरी प्रासादश्च सुपौरटः ॥१०॥
रत्नहीरकमण्याढ्यः शृंगे तस्याऽरुणाचले ।
वर्तते यत्र ते देवास्त्रयः कुर्वति मन्त्रणाम् ॥११॥
कुमुदे वैष्णवे स्थाने सौवर्णा वल्लयोऽभवन् ।
पुष्पाण्यपि पिशंगानि सौवर्णानि च सौरभः ॥१२॥
सुगन्धो दीयते नित्यं पुर्यां पौष्पः सुवायुना ।
वृक्षाश्चापि सुगन्धाढ्यपत्रमञ्जरिकान्विताः ॥१३॥
सुगन्धं वाहयन्त्येव प्रतिसौधं च वायवः ।
एकदा भगवान् रुद्रः कुमुदे तु समागतः ॥१४॥
गृहागतं हरं दृष्ट्वा विष्णुना परिपूजितः ।
लक्ष्म्या च पूजिता गौरी हर्षिता सत्कृता ह्यति ॥१५॥
एकासनोपविष्टौ तौ मन्त्रयन्तौ परस्परम् ।
तावद्वै कुमुदस्तत्र मन्दरश्चापि पर्वतः ॥१६॥
नररूपं सुधृत्वा वै सेवायां समुपागतौ ।
शंभुः प्राह हरिं तत्र बलिस्तु बलवान् यतः ॥१७॥
त्वया नेयस्तु सुतलं पृथ्वीतः सर्वथा हरे ! ।
वामनं रूपमास्थाय गिरौ तु रैवताचले ॥१८॥
मयापि तत्र गन्तव्यं गिरौ वै रैवताचले ।
बलेः सुतले वासं च कारयित्वा तु छद्मना ॥१९॥
पुनश्चात्राऽऽगमिष्यामः कृतकार्यौ दिवौकसाम् ।
संप्राह माधवस्तम् ओम् तावत्तौ पर्वतौ मुदा ॥२०॥
कुमुदमन्दरौ हरिहरौ प्रार्थयतः पुरः ।
आवां सह गमिष्यावस्तत्र यत्र हरिर्हरः ॥२१॥
तथाऽस्त्विति वरं प्राप्य भूभृतौ तौ तिरोगतौ ।
हरिहरौ सपत्नीकौ जग्मतुर्वेधसं प्रति ॥२२॥
अरुणाचलशिखरे पुरी यत्र प्रजापतेः ।
बलेः सुतलवासार्थे कृत्वा वै मन्त्रणां ततः ॥२३॥
तौ प्रत्याजग्मतुः स्वस्वपुर्यौ स्वस्वगिरौ पुनः ।
प्राप्ते तु समये विष्णुर्वामनः संबभूव ह ॥२४॥
जगाम च बलेर्यज्ञे शंकरोऽपि जगाम च ।
सौराष्ट्रे रैवते देशे तदा कुमुदमन्दरौ ॥२५॥
आययतुः सपक्षौ तावुड्डयित्वाऽन्तरीक्षगौ ।
तावन्यान् बहुनक्षत्रगणानाकृष्य वेगतः ॥२६॥
आजग्मतुः स्वर्णरेखानदीस्थे रैवताचले ।
तदा तयोस्तदन्यायं ज्ञात्वा देवेश्वरः स्वयम् ॥२७॥
गृहीत्वा च स्वकं वज्रं पक्षनाशनहेतवे ।
विमानवरमारुह्य जगाम यत्र तौ गिरी ॥२८॥
यावद् वज्रं प्रहिणोति तावत् तौ पर्वतौ मुहुः ।
प्राञ्जली प्राहतुर्देवौ रक्षणाय हराऽच्युतौ ॥२९॥
द्रागेवेन्द्रः स्तम्भितश्च सवज्रहस्तकस्तदा ।
मा हन्तव्याविमावद्री प्राहतुस्तं हराच्युतौ ॥३०॥
इन्द्रस्तौ प्रार्थयामास स्तंभनस्य विमुक्तये ।
वरयामास कुमुदमन्दरोड्डयनक्षयम् ॥३१॥
तथाऽस्त्विति वरं दत्वा महेन्द्रस्तंभनं तदा ।
निवार्य च कुमुदाद्रिं मन्दराद्रिं तु रैवते ॥३२॥
तैजसेऽद्रौ हरिहरौ स्थापयामासतुः सदा ।
अम्न्राया मन्दरः सोऽयं कुमुदस्तु समन्ततः ॥३३॥
कमलाकारतां प्राप्तो द्वादशपत्रभेदतः ।
ताविमौपर्वतौ शैलौ दृश्येते तैजसे मणौ ॥३४॥
रैवते तैजसे तत्त्वे पार्थिवौ तौ निषेदतुः ।
तत्र दामोदरो विष्णुर्भवः शंभुर्निषेदतुः ॥३५॥
ब्रह्माऽरुणाचलं नीत्वा समाजगाम तत्र वै ।
मन्दरात् पूर्वदिग्भागेऽस्थापयत् सोऽरुणाचलम् ॥३६॥
तत्र ब्रह्मा स्वकं वासं कृत्वोवास कमण्डलुम् ।
यत्र वै मन्दरे कुण्डे बभार स जलाशयः ॥३७॥
जातः कमण्डलुकुण्डस्तीर्थमक्षयपुण्यदम् ।
अरुणाद्रौ प्रथमे तु शृंगे ब्रह्मा ह्युवास यत् ॥३८॥
स्थलं तद् ब्रह्मकुल्याख्यं जातं तीर्थं तु मोक्षदम् ।
अरुणाद्रौ द्वितीये च दत्तात्रेयो महान् प्रभुः ॥३९॥
दारुणं वै तपस्तेपे तीर्थं मोक्षकरं च तत् ।
एवं वेधोहरिहरास्तिष्ठन्ति रैवताश्रिते ॥४०॥
मन्दरे कुमुदे चैवाऽरुणाद्रौ प्रक्षिणि प्रिये ।
प्राप्ते लये गमिष्यन्ति मेरौ ते पर्वतास्त्रयः ॥४१॥
सपक्षा वै गमिष्यन्ति तावत् स्थास्यन्ति तत्र वै ।
तेषु · त्रिषु त्रयो देवास्त्रयस्त्रिंशच्च कोटयः ॥४२॥

देवा वसन्ति तत्रापि रहस्यं कथितं प्रिये ।
रैवतस्य प्रक्रमणो कृतं मेरुप्रदक्षिणम् ॥४३॥
रैवतस्य पूजने च कृतं मेरोः प्रपूजनम् ।
रैवतस्य दर्शने तु कृतं मेरोश्च दर्शनम् ॥४४॥
त्रिंशत्क्रोशं रैवताद्रिं ये प्रयान्ति प्रदक्षिणम् ।
कृतं मेरोश्च पृथ्व्याश्च प्रदक्षिणं तु तैरिह ॥४५॥
मन्दरारुणयोर्यैस्तु कृतं प्रदक्षिणं तु तैः ।
प्रदक्षिणं कृतं सत्यकैलासाभिधलोकयोः ॥४६॥
कुमुदस्य द्वादशपर्वतानां तु प्रदक्षिणम् ।
येन कृतं कृतं तेन वैकुण्ठस्य प्रदक्षिणम् ॥४७॥
यदा देवास्त्रयश्चाऽत्र निवासाय समागताः ।
नरनरायणौ तत्र बोरियाख्ये वने गतौ ॥४८॥
ब्रह्मकमण्डलुकुण्डाद् गंगा गुप्ता तु जाम्नवी ।
पतत्यधो बोरियाख्ये भूगते बद्रिकाश्रमे ॥४९॥
नरनारायणौ सर्वर्षिभिर्युक्तौ तु तापसौ ।
जनाऽदृश्यौ हि वर्तेते दृश्येते पुण्यशालिभिः ॥५०॥
दक्षिणे मन्दराद्गंगामूले तौ वसतः सदा ।
उत्तरे मन्दरात् तत्र भवन्त्याम्रवनानि वै ॥५१॥
वैकुण्ठात्परमाद् वार्यावरणस्थात् समागतः ।
लक्ष्मीनारायणः सीतापतिश्चाम्रवनैः सह ॥५२॥
आत्मा मुक्ताः शाश्वता वै सर्वदा फलशालिनः ।
सुघटापत्रशाखाभिः साकेतानां निकेतनम् ॥५३॥
सुघट्टं च वनं तत्र सीतावनमितीरितम् ।
लक्ष्मणस्य वनं राम वनं कीशवनं तथा ॥५४॥
सीतापटी वनक्ष्मा च दिव्या धामसमास्ति सा ।
यत्र सूर्यो न वै भाति न भाति शशितारकम् ॥५५॥
विद्युतो यत्र नो भान्ति ह्यग्निर्भाति कुतस्तदा ।
तादृशं तन्महादिव्यजलप्रस्रवणान्वितम् ॥५६॥
स्वर्णरूप्यगैरिकादिधातुभूखनिकाऽन्वितम् ।
सर्वर्तुसुखदं दिव्यं विशालं वनमस्ति यत् ॥५७॥
शाश्वते तत्र साकेते वने प्रस्रवणात्मिका ।
सरयूर्भिन्नसलिलनिर्झरणैर्वहत्यपि ॥५८॥
हनुमान् वर्तते तत्र वने रक्षणकारणात् ।
तीर्थमेतत् महत् प्रोक्तं भुक्तिमुक्तिप्रदं परम् ॥५९॥
पूर्वे च रैवते भागेऽरुणाऽचलसमीपतः ।
इन्द्रद्युम्नसरस्तत्र समागत्य प्रतिष्ठति ॥६०॥
ब्रह्मविष्णुमहेशांश्च नरनारायणं तथा ।
लक्ष्मीनारायणं सीतारामं श्रुत्वा समागतान् ॥६१॥
पुरुषोत्तमपुर्यास्तु जगन्नाथः स्वयं प्रभुः ।
नीलाख्यं पर्वतं नीत्वा वटवृक्षं तथाऽङ्घिजम् ॥६२॥
समागतोऽत्र वासाय न्यूषुस्ते प्रागुदिशि ध्रुवम् ।
टीम्बुरुफल्जातानि जाम्ब्वामलककर्मदाः ॥६३॥
आम्राश्च रावणाश्चैव बदर्यश्चामृतानि च ।
सीताफलानि बहुशः सन्ति यत्र वनानि वै ॥६४॥
दुग्धसमं जलं यत्राऽमृतस्वादुफलानि च ।
सुखं स्वर्गसमं यत्र प्राग्भागेरैवताचले ॥६५॥
कृष्णा च मृत्तिका यत्र स्वर्णरससुमिश्रिता ।
विभिन्ना धातवः सन्ति विंशतिक्रोशभूमयः ॥६६॥
ततः पूर्वे शुभं क्षेत्रमश्वपट्टसरोवरम् ।
चिञ्चांऽगूदीवनं रम्यं शुभा कुंकुमवापिका ॥६७॥
शत्रूञ्जितानदी सौम्या कंभराक्षेत्रमुच्यते ।
लक्ष्मीनारायणश्च कंभरागोपालसंज्ञया ॥६८॥
पूज्यते वन्द्यते देवैर्भूसुरैर्मानवैस्तथा ।
पत्नीव्रतस्य विप्रस्य वंशस्तत्रापि तिष्ठति ॥६९॥
कुंकुमवापिकायाश्चोत्तरे क्रोशद्वयात् परम् ।
क्षेत्रं पुण्यमरण्यादियुतं रम्यं च विद्यते ॥७०॥
लंकाचतुष्टकीक्षेत्रं यत्र गुप्ता सरस्वती ।
प्रकाशा वर्तते चापि सुदिव्यसलिलान्विता ॥७१॥
हिमाचलाद् यदा देवी सरस्वती महानदी ।
वाडवाऽग्निं समादाय याता पश्चिमवारिधिम् ॥७२॥
तदाऽर्बुदाचलात् सिद्धक्षेत्रं श्रीनगरं तथा ।
गत्वा विराटनगरं सारंगं दुर्गमेत्य च ॥७३॥
उन्मत्तगंगां भोगां च भद्रां सम्प्राप्य वै ततः ।
लंकाचतुष्टकीक्षेत्रं प्राप्त्वा जयन्तमागता ॥७४॥
भद्रेश्वरनृसिंहाख्यघट्टं गत्वा तदुत्तरम् ।
स्कन्दपुरं तथा कालीवटं च नगरं गता ॥७५॥
आज्यां प्रकाशमासाद्य सुवर्णद्वारिकां गता ।
ततो दक्षिणदिग्भागे बराटाख्ये तु पर्वते ॥७६॥
त्रित्वेशं हर्षदां प्राप्य नवनीताद्रिमागता ।
वामनस्थलमासाद्य वस्त्रापथमुमागता ॥७७॥
रैवताद्रिं परिवीय पर्वतं च कृतस्मरम् ।
प्रज्वाल्य बलिखातं च गत्वा प्राचीस्थपिप्पलम् ॥७८॥
एकतर्षिस्थलं प्राप्य सोमनाथं समागता ।
व्याघ्रारण्ये शुभं गुप्तप्रयागं प्राप्य सा ततः ॥७९॥
सिंहारण्ये दिव्यभूमौ गत्वाऽरोऽब्धौ विवेश सा ।
वाडवाऽग्निं समुत्सृज्य पुनः सा रैवताचले ॥८०॥

सर्वदा संस्थिता देवी प्रतिस्थानं सरस्वतीं।
कुण्डे कुण्डे स्थिता देवी जनकल्याणहेतवे ॥८१॥
हनुमन्नामविख्याताः कपयो रैवताचले।
सीतामढी च हनुमन्मढी सन्तमढी तथा ॥८२॥
व्याघ्रेश्वरी महादेवी माहिषाख्ये गिरौ स्थिता।
श्रीरामपादुकातीर्थं बिल्वेशं हाटकेश्वरम् ॥८३॥
एवमन्यानि तीर्थानि सन्ति लक्ष्मि ! तु रैवते।
तारकाणि प्राणिनां वै भुक्तिमुक्तिप्रदानि च ॥८४॥
यथाकथञ्चिच्छूद्राद्यैः स्वार्थेनापि प्रहेलया।
कृतानि येन तीर्थानि दृष्टपीतानि वा तथा ॥८५॥
स्नातानि तज्जलधूलीकर्दमानि धृतानि वा।
तेषां पापविनाशेन भुक्तिर्मुक्तिर्भवेद्ध्रुवम् ॥८६॥

इति श्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने तैजसरैवताचले कुमुदमन्दराऽरुणनीलादिपर्वतानां बद्रिकानरनारायणलक्ष्मीनारायणसीतारामजगन्नाथ-सरस्वतींप्रभृतितीर्थानामागमननिरूपणनामा चतुःपंचाशदधिकशततमोऽध्यायः ॥१५४॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! महालक्ष्मीः परवैकुण्ठवासिनी।
यथा नारायणेनैव सहाऽऽजगाम रैवते ॥ १ ॥
बलिर्यदा हरिणा वै बद्धस्तदाऽत्र रैवते।
मण्डपे तु बलेः पत्नी सस्मार परमेश्वरीम् ॥ २ ॥
महालक्ष्मीं तदा स्तोत्रैर्बलेर्बन्धनिवृत्तये।
महावैकुण्ठधामस्थां प्रह्वीभावेन हृद्गताम् ॥ ३ ॥
सन्ध्यावली प्राञ्जलिस्तां नत्वा हृदि जगाद च।
"नमो मात्रे महालक्ष्म्यै त्राहि भक्तं च मे पतिम् ॥ ४ ॥
नमः प्रकृतिसंज्ञायै मूलायै ते नमोनमः।
संहर्त्र्यै ब्रह्ममात्रे ते कुक्षिसृष्ट्यै नमोनमः ॥ ५ ॥
वामना वापि दीर्घाश्च नारायणास्तु ते मुखे।
महाकालादयश्चापि सन्ति ग्रासाश्च ते नमः ॥ ६ ॥
संकर्षणास्तथा रुद्रा यमाश्चैव तवाऽऽनने।
दंष्ट्रैकचर्वणाः सर्वे महामात्रे नमोनमः ॥ ७ ॥
वासुदेवस्तथा भूमा नारायणाश्च पूरुषाः।
त्वत्पल्लताताडितास्ते महाशक्त्यै नमोनमः ॥ ८ ॥
त्वत्तो लक्ष्मीः समुत्पन्ना महाविष्णुस्त्वदंकजः।
ब्रह्माण्डानि च ते रोम्णि रक्ष लक्ष्म्यै नमोनमः ॥ ९ ॥
महाभयस्तु ते गुप्ते त्वत्स्वेदे वाडवाऽनलाः।
भगवन्तश्च ते गर्भे चण्डलक्ष्म्यै नमोऽस्तु ॥१०॥
जृम्भे ते प्रलयाः सन्ति चण्डे कालः प्रकम्पते।
चूर्णायन्ते महाण्डानि पृष्ठक्रीडे नमोऽस्तु ते ॥११॥
रक्ष रक्ष महामाये पतिं मे परमेश्वरि।
चण्डी तण्डी महामुण्डी घमण्डी डिण्डिकादिकाः ॥१२॥
कालीकरालीप्रज्वालीलिहालीरक्तिलादिकाः।
शक्तयस्ते रक्तलेशः पाहि कान्तं द्रुतं कुरु ॥१३॥
पाहि शीघ्रं चान्यथा त्वां गलं निकृत्य पूजये।
यद्यहं विधवा स्यां चेत् पूर्वं त्वं विधवा भव ॥१४॥
यद्यहं राज्यशून्यां स्यां त्वं वैकुण्ठं विना भव।
यद्यवमानितो राजा स्यात्पतिस्तेऽप्यमानितः ॥१५॥
मद्यज्ञे चेद् भवेत् विघ्नं तव यज्ञे तथाऽस्तु वै।
वदत्येवं चण्डवेगा शृण्वन्त्यपि सभासदः ॥१६॥
मा मेत्येवं तदा देवा निवारयन्ति तां स्त्रियम्।
तावत् तत्रागता पत्नी महालक्ष्मीर्महाप्रभोः ॥१७॥
सान्त्वयित्वा च तां राज्ञीं पतिता खर्वपादयोः।
मा मैवं देव चात्यन्तं मा भक्तस्य हर प्रभो ॥१८॥
वामनश्च तदा प्राह नैनं वै मारयाम्यहम्।
राज्यभ्रष्टं च नैवाऽहं करोम्येनं सुसेवकम् ॥१९॥
सन्ध्यावली सदैवाऽस्तु सुसौभाग्यवती प्रिये।
दैत्योऽयं दैत्यराज्यं वै करोतु सुतले प्रिये ॥२०॥
वैकुण्ठं यद्यहं त्यक्ष्ये निवत्स्ये तद्बलेर्गृहे।
त्वया सह महालक्ष्मि राज्ञी सेवां करोतु मे ॥२१॥
देवराज्यं तु देवेभ्यो दैत्यराज्यं तु तद्बलौ।
दत्वा निधाय गन्तव्यं सन्ध्यावल्याः शुभं भवेत् ॥२२॥
तदा तु दैत्यवर्यैः सा महालक्ष्मीः प्रपूजिता।
देवैश्च पूजिता माता सर्वसौभाग्यरक्षिका ॥२३॥
वामनेन समं साऽपि रैवतेऽभ्यर्थिता च तैः।
सदोषिता महालक्ष्मीः सर्वसौभाग्यहेतवे ॥२४॥
रैवतात्पश्चिमे तत्रोच्छ्राये नित्यं व्यवस्थिता।
महामाया महालक्ष्मीः प्राणरक्षणकारिणी ॥२५॥
वन्दिता पूजिता पुष्पकुंकुमाक्षतचन्दनैः।
सिन्दूरश्रीफलवस्त्रशाटीतैलसुगन्धिभिः ॥२६॥
तथा सौभाग्यद्रव्यैश्च भोजनैर्विविधैः शुभैः।
आभरणकटकोर्मिश्रृंखलात्रोटिकादिभिः ॥२७॥
पेयैर्नानाविधैश्चैव कंचुकीशाटिकादिभिः।
मंगलसूत्रकर्णादिभूषणादिभिरादरात् ॥२८॥
प्रसन्ना सा महालक्ष्मीर्दीपोत्सवदिने सदा।
असौभाग्यममांगल्यमनर्थं चेति हस्ति सा ॥२९॥

ददाति कुशलं राज्यं कान्तं पुत्रं धनं तथा ।
पूजनार्थं महालक्ष्म्या मूर्तिः कार्या चतुर्भुजा ॥३०॥
पौरटी सुस्वरूपा च रम्या षोडशहायना ।
पद्मामृतघटकरा पूजापात्रकरा तथा ॥३१॥
अभयदानहस्ता च दक्षयोर्वामयोः क्रमात् ।
षोडशोपपरिचारवस्तुभिः पूजयेत् तु ताम् ॥३२॥
नैवेद्यं फलताम्बूलं दत्त्वा नीराजयेत् ततः ।
भोजनानि विविधानि दातव्यानि च दक्षिणाः ॥३३॥
दानानि रत्नहीरकमणिस्वर्णमयानि च ।
वस्त्राणां च दुकूलानां कम्बलानां गवां तथा ॥३४॥
तस्याऽक्षयं भवेत्पुण्यं महालक्ष्मीप्रतापतः ।
अन्ते वैकुण्ठवासः स्याद् भुक्त्वा भोगाननेकशः ॥३५॥
कन्यका द्वादशवर्षपूर्वा लक्ष्मीस्वरूपिकाः ।
पूजनीया यथालक्ष्मीर्वस्त्रान्नधनदापनैः ॥३६॥
भोजनीयास्तथा भूषालंकारद्रव्यशोभिताः ।
विविधैर्मिष्टपक्वान्नपायसान्नादिसद्रसैः ॥३७॥
भोजनीयास्तथा साध्व्यो विरक्ताः सांख्ययोगगाः ।
पूजनीयाश्च दातव्यं विविधं दानमिष्टकृत् ॥३८॥
सति वै विभवे तत्र सापत्यसधवाः स्त्रियः ।
विधवाश्चापि दीनाश्च शरण्याश्च निराश्रिताः ॥३९॥
भोजनीयाः पूजनीया दापनीयाश्च दक्षिणाः ।
सम्माननीयाः सततं यत्तृप्तौ श्रीश्च तृप्यति ॥४०॥
महालक्ष्म्यां प्रसन्नायां सर्वा स्मृद्धिर्विवर्धते ।
न्यूनं किञ्चिद्भवेन्नैव यद्यत्स्वपेक्षते मिलेत् ॥४१॥
अलक्ष्मीं द्रावयत्येषा गृहात् सर्वा प्रपूजिता ।
शृणु लक्ष्मि ! कथां तेऽत्र समुद्रमथने तु या ॥४२॥
जाता तां कथयाम्यद्य प्रसंगात्सुखदायिनीम् ।
दुर्वाससा प्रदत्तां तु पारिजातसुमालिकाम् ॥४३॥
इन्द्रश्चिक्षेप करिणो मूर्ध्नि गजेन पत्तले ।
कचरितां तु तां दृष्ट्वा शशाप द्युपतिं ऋषिः ॥४४॥
मालाऽवमानकर्तुस्ते लक्ष्मीर्नष्टा भवत्विति ।
अन्तर्दधे क्षणाल्लक्ष्मीः पेतुः रत्नानि वारिधौ ॥४५॥
तदुद्धाराय दुग्धाऽब्धिर्मथितो देवदानवैः ।
मन्दराद्रिस्तदा पृष्ठे कूर्मात्महरिणा धृतः ॥४६॥
मन्थनादुद्भूत् प्राग्वै कालकूटं महाविषम् ।
तत्सर्वं पीतवानीशो ममन्थुः पुनरेव तम् ॥४७॥
तस्मिन् प्रमथ्यमाने तु मया देवैश्च पद्मजे ।
ज्येष्ठा देवी समुत्पन्ना रक्तस्रग्वाससाऽऽवृता ॥४८॥

अलक्ष्मीः सा भगिनी ते ज्येष्ठा देहेऽप्यसुन्दरी ।
किरातीसदृशी रूपे धीवरीसदृशी मुखे ॥४९॥
कृकलाससमा कर्णे नालिकाभा तथा नसि ।
महिषीसदृशी नेत्रे राक्षसीव तु मस्तके ॥५०॥
खग्राससदृशी भाले मषीतुल्या तु गण्डयोः ।
शूलाग्रसदृशी दन्ते उष्ट्रीनिभा तु चोष्ठयोः ॥५१॥
हस्तिनीसदृशी कण्ठे गर्दभीसदृशी स्वरे ।
बर्बुरद्रुनिभा हस्ते वल्मीकाभा स्तनद्वये ॥५२॥
कुसूलतुल्याऽप्युदरे शिलातुल्या तु पृष्ठके ।
तैलियन्त्रसमा कट्यां खर्जूरद्रुनिभा पदे ॥५३॥
जलौकाभा चांगुलीषु कूर्मपृष्ठनिभा नखे ।
दर्दुरीभा तु जिह्वायां स्वभावे तु शुनीसमा ॥५४॥
दरिद्राभा प्रसादे च हास्ये कंगालसदृशी ।
चर्मकारीनिभा वस्त्रे चण्डालाभा निवासने ॥५५॥
रिक्तजलनिखाताभा जम्मणे म्रोडने खनिः ।
भाण्डीनिभा सहवासे विवाहे क्षारभूनिभा ॥५६॥
संवादे रणभूसाम्या वैमनस्ये समृद्धिभा ।
दृष्ट्वैनां तत्रसुरस्तत्र देवदानवमानवाः ॥५७॥
विचारं चक्रिरे केयं सर्वाऽमंगलभूषणा ।
कालरात्रिर्महामारिः किंवा प्रलयक्षुत् स्त्रियम् ॥५८॥
हस्ते मालां शंखलानां गृहीत्वा पतिमिच्छति ।
गच्छतीतस्ततस्तावत्पतिं मृगयितुं यदा ॥५९॥
दृष्ट्वा सुराऽसुराः सर्वे दूरं धावन्ति नेच्छुकाः ।
नेयं नेतो याहि मा मामन्यं गच्छेतिवादिनः ॥६०॥
यदा कैश्चित् स्वीकृता न वरमाला निरीहया ।
निराशा प्राह मे वासो दीयतां क्वापि यत्र नु ॥६१॥
उत्पन्नाऽहं निरर्थाऽहं किं कर्तव्यं मयेति च ।
तामब्रुवँस्तदा देवीं सुराऽसुरगणा द्रुतम् ॥६२॥
येषां गृहान्तरे नित्यं कलहः संप्रवर्तते ।
तत्ते स्थानं प्रयच्छामो वस तत्राऽशुभान्विता ॥६३॥
यस्य गेहेऽभिचारार्थे कपालाऽस्थिप्रपूजनम् ।
परुषं भाषणं यत्र मन्त्रतन्त्राभिमारणम् ॥६४॥
अनृतं साहसं द्यूतं पानं च मृगया मदः ।
मातापित्रोरसेवा च गुरोश्चैवाऽवमाननम् ॥६५॥
स्त्रीबालानां च निःश्वासाः क्लेशः कुटुम्बिबान्धवे ।
व्यभिचारश्च यत्रास्ति पंक्तिभेदोऽस्ति यत्र च ॥६६॥
तेषां वेश्मनि सन्तिष्ठ दुःखदारिद्र्यदायिनी ।
गवादिस्ववशप्राणिनिःश्वासा यत्र सन्ति वै ॥६७॥

आश्रितानां पालनं च यत्र नीत्या न जायते ।
श्वश्रूश्वशुरयोश्चैव पतिपत्न्योश्च पुत्रयोः ॥६८॥
पुत्रपित्रोश्च भ्रात्रोश्च मातृपुत्र्योः परस्परम् ।
स्वस्रोर्यत्र वैमनस्यं तत्र संतिष्ठ हानिदे ॥६९॥
कुटुम्बिजनवर्गेषु चौर्येण व्ययशीलता ।
स्वस्वस्वत्वप्रवृत्तिश्च गृहे यत्र कुटुम्बिनि ॥७०॥
स्वगृहमपि पारक्यं स्वजनो मनुते तु यत् ।
आलस्यं कार्यकरणे चान्याधारा च जीविका ॥७१॥
वृद्धानां वचनं यत्र मान्यं भवति नैव च ।
स्नानं देवस्य पूजादि जपो यत्र न विद्यते ॥७२॥
उत्सवा मानुषा दैवा वार्षिका यत्र सन्ति न ।
लोभोऽधर्मव्ययो यत्र तत्र तिष्ठ सुखी भव ॥७३॥
प्राणिनां हिंसनं यत्र सतां यत्र च निन्दनम् ।
धर्मद्रोहश्च नास्तिक्यं वस तत्र कलिप्रिये ॥७४॥
यत्र नाऽतिथिसत्कारो यत्र शुद्धिर्न विद्यते ।
मालिन्यं वर्तते यत्र तथा यत्र निरुद्यमः ॥७५॥
यत्र क्षणे क्षणे क्रोधो यत्र विषयतृष्णिका ।
यत्र जैव्ह्यं तथौपस्थ्यं व्यसनं सीमवर्जितम् ॥७६॥
दासदासीकर्मचारिपीडनं न्यायतो बहिः ।
पशुपक्षिगोमहिषीगजाश्वादिप्रपीडनम् ॥७७॥
गृहजनेष्वविश्वासस्तत्र वासो विधीयताम् ।
यत्र श्राद्धं न भवति न च पिण्डप्रदानकम् ॥७८॥
स्वाहास्वधावषट्कारक्रिया यत्र न विद्यते ।
भूतयज्ञो ब्रह्मयज्ञो देवयज्ञो न यत्र वै ॥७९॥
दाराऽपत्यगृहस्वाम्यमात्यभृत्येषु चाऽनृतम् ।
लुंचाभक्ष्यं भवेद्यत्र यत्र द्रोहः परस्य च ॥८०॥
रक्ष्यस्याऽरक्षणं यत्र पोष्यस्याऽपोषणं तथा ।
दण्ड्यस्याऽदण्डनं यत्र तत्र वासो विधीयताम् ॥८१॥
देवद्विजगवां वृत्तिहारकाणां गृहे सदा ।
अनाथकृपणाऽन्धानां दुःखकृतो गृहे वस ॥८२॥
साधुसाध्वीयतियोगिविरक्तद्रोहकृद्गृहे ।
दानधर्मनिषेधस्य कर्तॄणां च गृहे वस ॥८३॥
देहचौर्यमनश्चौर्यहृच्चौर्यस्य गृहे वस ।
अन्यायोपार्जयितुश्च कूटतुलाधरस्य च ॥८४॥
कूटसाक्ष्यकृतो गेहे सदा वासो विधीयताम् ।
विदुषामवमानयितुर्गृहे वस सर्वदा ॥८५॥
चतुर्दशसु लोकेषु यत्राऽन्यायोऽविवेकिता ।
पूज्यपूजाव्यतिक्रमस्तत्र वासो विधीयताम् ॥८६॥
पण्ये कपटसम्मिश्रे व्यापारे कपटान्विते ।
आचारे कपटाऽऽदिष्टे सदा वासो विधीयताम् ॥८७॥
यत्र राजा धर्मपक्षी प्रजा साहसभक्षिणी ।
राष्ट्रं हृदयभक्षि स्यात् तत्र वासः सदा तव ॥८८॥
यत्र कन्याविक्रयस्य जीर्यते ह्युदरे धनम् ।
नारीविक्रयवृत्तिश्च तत्र वासः सदा तव ॥८९॥
शीलव्रतं न यत्रास्ति हृदयं नैव निर्मलम् ।
पदक्रमोऽपि कापट्यात् शाठ्ये वासः सदा तव ॥९०॥
रागद्वेषप्रयुक्तो वै दिवसो यस्य गच्छति ।
अधर्मस्य च यत्रास्ति वंशस्तत्र सदा वस ॥९१॥
कृतघ्नस्य वञ्चकस्य पाशकस्याऽऽततायिनः ।
अग्निदस्य गरदस्य हन्तुरन्यायतस्तथा ॥९२॥
विधर्मस्थस्य सदने ध्रुववासो विधीयताम् ।
परगुप्तप्रकाशकगृहे वासः दुष्टगृहे तथा ॥९३॥
अन्नवस्त्रभुवां दानाऽकर्तुर्गृहे सदा वस ।
पिशूनस्य भेदकस्य क्लेशकृतो गृहे वस ॥९४॥
राज्ये राष्ट्रे तथाऽरण्ये वाटिकासु वनेषु च ।
उद्याने च कृषिक्षेत्रे पर्वते च स्थले जले ॥९५॥
वृक्षे सस्ये तथा बीजे रत्ने स्वर्णे रसे रणे ।
संग्रामे चोत्सवे दैवे मानुषे वा स्थले जले ॥९६॥
तीर्थे भोज्ये व्यवहारे क्रये च विक्रये तथा ।
विद्यायां च कलायां च शिल्पे ऋतौ च वर्षणे ॥९७॥
यत्राऽधिपः शठो धूर्तः कितवश्चौर उल्बणः ।
दुष्टोऽन्यायी महापापी तत्र तत्र सदा वस ॥९८॥
किं बहुना त्वदुक्तेन यत्र हिंसाऽनृते तथा ।
स्तेयव्यवायगृध्नाश्चाऽशुद्धिस्तृष्णा विनिन्दनम् ॥९९॥
तत्र वासः सदा तेऽस्तु लक्ष्म्या वासो न यत्र च ।
इत्युक्त्वा तां ददुः देवा उद्दालकाय चर्षये ॥१००॥
विसर्जयामास पत्या सहाऽलक्ष्मीं ततः पुनः ।
ते सर्वे मन्थनं चक्रुः क्षीराब्धेः सुसमाहिताः ॥१०१॥
ततश्च वारुणी देवी समुत्पन्ना शुभानना ।
अनन्तो नागराजोऽथ तां जग्राह सुलोचनाम् ॥१०२॥
ततश्च गारुडी देवी समुत्पन्ना सुलक्षणा ।
वैनतेयस्य भार्याऽभूत् सर्वलक्षणशोभिता ॥१०३॥
ततोऽप्सरोगणा दिव्या गन्धर्वाश्च महौजसः ।
जज्ञिरे रूपसम्पन्ना मधुगायनतत्पराः ॥१०४॥
ऐरावतस्ततो जज्ञे तथैवोच्चैः श्रवाहयः ।
धन्वन्तरिः पारिजातः सुरभिः सर्वकामधुक् ॥१०५॥

एतान् सर्वान् सहस्राक्षो जग्राह सर्वमानितः ।
ततः प्रभातसमये द्वादश्यामुदिते रवौ ॥१०६॥
उत्पन्ना श्रीर्महालक्ष्मीर्मथ्यमाने महोदधौ ।
ततश्चन्द्रस्ततो जाता तुलसी या हरिप्रिया ॥१०७॥
तुलस्या सह मा लक्ष्मीर्वरयामास केशवम् ।
ततः प्रोवाच भगवान् सर्वांश्चैव महामुनीन् ॥१०८॥
एकादशी महापुण्या सर्वोपद्रवनाशिनी ।
तस्मात्तु सर्वदा पुण्या द्वादशी मम वल्लभा ॥१०९॥
अद्यप्रभृति ये लोका एकादशीमुपोष्य च ।
द्वादश्यामुदिते भानौ श्रद्धया परया युताः ॥११०॥
ये पूजयन्ति मां भक्त्या तुलस्या च श्रिया सह ।
सर्वे ते बन्धनिर्मुक्ताः प्राप्नुवन्ति पदं मम ॥१११॥
नार्चयन्ति च ये वै मां द्वादश्यां पुरुषोत्तमम् ।
तान्पापान्विषयैर्बद्ध्वा मम माया दुरत्यया ॥११२॥
क्षिपत्यजस्रं संसारे नास्तिकान्मत्पराङ्मुखान् ।
समुद्रात्सा यदा लक्ष्मीर्द्वादश्यां समजायत ॥११३॥
तदाप्रभृति ऋषयो देवा ब्रह्मपुरोगमाः ।
सिद्धा ये मानुषाश्चैव योगिनो मुनिसत्तमाः ॥११४॥
विष्णोराज्ञां पुरस्कृत्य भक्त्या परमया युताः ।
एकादश्यामुपोष्याथ भक्त्या चैव जनार्दनम् ॥११५॥
द्वादश्यामर्चयामासुर्लक्ष्मीनारायणं तु माम् ।
द्वादशीवासरस्तेऽस्ति ममापि वासरो हि सः ॥११६॥
हरिवासर इत्युक्तो लक्ष्मीवासर इत्यपि ।
दम्पत्योस्तु सदैवैक्यात् किमन्यच्छ्रोतुमिच्छसि ॥११७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने रैवताचले महालक्ष्म्यागमनं तस्याः पूजनदानादि, समुद्रमथनेऽलक्ष्म्या उत्पत्तिस्तत्स्वरूपं तन्निवासस्थानानि, ततो लक्ष्मीतुलसीप्रादुर्भावे द्वादशीमहिमेत्यादिनिरूपणनामा पंचपंचाशदधिकशततमोऽध्यायः ॥१५५॥

**श्रीलक्ष्मीरुवाच—**

भगवन् श्रोतुमिच्छामि द्वादश्याश्च विधानकम् ।
विष्णोः पूजादिकं सर्वं कर्तव्यं च यथा प्रभो ॥ १ ॥
तस्याः पुण्यप्रभावं च समाचक्ष्व मम प्रिय ।
मम व्रतप्रभावस्तु श्रोतव्यः सर्वथा मया ॥ २ ॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! कथयामि तव जन्मदिनव्रतम् ।
तव व्रतस्य संकल्पात् सन्तुष्टः स्यामहं सदा ॥ ३ ॥
एकादशी मम पत्नी ममांऽगेभ्यो व्यजायत ।
तथैव त्वं मम पत्नी मम वामांगसंभवा ॥ ४ ॥
पुनः समुद्रतो जाता ह्यब्धिजा कथ्यसे तदा ।
अरुणाद्रौ च पद्माख्या भृगोः पुत्री तु भार्गवी ॥ ५ ॥
प्रेम्णो जाता कंभरा त्वं खनेर्जाता सुवर्णिका ।
वारं वारं प्रसूतापि रमा वैकुण्ठवासिनी ॥ ६ ॥
मम पत्नी सदा दिव्या यत्राऽहं त्वं च तत्र वै ।
गृहे गृहे स्थिता त्वं तु मां विना नैव तिष्ठसि ॥ ७ ॥
यदा मया परे धाम्नि परब्रह्मस्वरूपिणा ।
स्वस्माद् रूपं द्वितीयं वै रमणार्थं समीहितम् ॥ ८ ॥
तदा त्वं मम वामांगस्थिताऽदृश्या मदिच्छया ।
मत्स्वरूपादिषन्न्यूना सेविका समजायथाः ॥ ९ ॥
रूपे गुणे तथैश्वर्ये सुखे भोगे विलासने ।
न न्यूना प्रमदाभावे पुंभावन्यूनता तु या ॥१०॥
सैवाऽस्ति न्यूनता नार्या नान्या वै न्यूनता मम ।
ममैकादशसंख्याकेन्द्रियाणां शक्तयस्तु याः ॥११॥
ताः संभूय च भवती जाता वै द्वादशी मम ।
पत्नीरूपा ह्यतो बोध्या द्वादशीति त्वमेव सा ॥१२॥
तव प्राविर्भावरूपं द्वादशं समजायत ।
तस्मात् त्वं द्वादशी प्रोक्ता मम पत्नी ममांगना ॥१३॥
ममांगं त्वं हरेर्वासाद् रक्षणात् हरिवासरः ।
द्वादशी त्वं मम पत्नी मम वासररूपिणी ॥१४॥
मम रूपं मम वासो रतिस्त्वयि सदा मम ।
ततस्त्वमेव हरिवासरो द्वादशी मता ॥१५॥
इत्येतत्तु रहस्यं वै गुप्तं तुभ्यं मयोदितम् ।
ततः पुनः समुद्रस्य मन्थने द्वादशीदिने ॥१६॥
प्रातस्त्वं वै समुत्पन्ना ततोऽपि द्वादशी तव ।
जन्मजयन्ती प्रख्याता सर्वत्र समजायत ॥१७॥
यत्र यत्र च समये हरेर्नारायणस्य मे ।
प्राकट्यं चापि ते लक्ष्म्याः स काले बलवान् भवेत् ॥१८॥
हरेर्बलात् समयोऽपि बलवान् पुण्यदो भवेत् ।
मम जन्म तव जन्म यदा वै जायतेऽत्र हि ॥१९॥
तत्र तत्र महोत्साहाः कर्तव्या दानभोजनैः ।
गीतवादित्रनृत्यैश्च पूजाकीर्तनभक्तिभिः ॥२०॥
एकादश्यां सदाम्नायां समुपोष्येह मानवाः ।
सर्वपापविनिर्मुक्ता यान्ति विष्णोः परं पदम् ॥२१॥
एकादश्या व्रतस्याऽत्र पूर्णे पुण्यं तदा भवेत् ।
द्वादश्यामावयोः पूजां ततः कुर्याच्च पारणाम् ॥२२॥

सप्तजन्मार्ऽर्जितं पापं ज्ञानतोऽज्ञानतः कृतम् ।
क्षणादेव लयं याति द्वादश्यां नौ प्रपूजनात् ॥२३॥
अश्वमेधसहस्राणि वाजपेयशतानि च ।
एकादश्युपवासस्य कलां नार्हन्ति षोडशीम् ॥२४॥
द्वादशी पुण्यदा द्रव्यप्रदा कामप्रपूरिणी ।
मोक्षदा सर्वलोकानां यत्राऽहं त्वं च पूजितौ ॥२५॥
एकादशी च या देवी ममेन्द्रियमहद्बलम् ।
व्रतं तयाऽर्थितं तद्वै निरन्नमेव सर्वथा ॥२६॥
तत्रान्नं नैव भोक्तव्यं चान्ने पापं प्रतिष्ठति ।
एकादशीसमं किञ्चित् पापत्राणं न विद्यते ॥२७॥
एकादशेन्द्रियैः पापं यत्कृतं भवति प्रिये ।
एकादश्युपवासेन तत्सर्वं विलयं व्रजेत् ॥२८॥
एकादश्यपि मे पत्नी मम वासर उच्यते ।
उपवासेन तत्राऽहं प्रसन्नः स्यां मुहुर्मुहुः ॥२९॥
द्वादश्यां मम नैवेद्यं कृत्वा कुर्याच्च पारणाम् ।
तेनाऽहं सर्वदा तृप्तः प्रसन्नोऽपि भवामि वै ॥३०॥
मयि तृप्ते जगत्तृप्तं सर्वतृप्तिफलं भवेत् ।
रटन्ति संहितास्त्वत्र भूयो भूयो मम प्रिये ॥३१॥
एकादश्यां न भोक्तव्यं सम्प्राप्ते हरिवासरे ।
वर्णानामाश्रमाणां च स्त्रीबालानां सदा प्रिये ॥३२॥
एकादश्यामुपवासः कर्तव्य एव सर्वथा ।
एकादश्यां यदि श्राद्धं मातापित्रोर्मृतेऽहनि ॥३३॥
द्वादश्यां तत्प्रदातव्यं नोपवासदिने क्वचित् ।
वैष्णवाः पितरः श्राद्धं नाऽदन्त्येकादशीदिने ॥३४॥
दशमीमिश्रितां तां तु प्रयत्नेन विवर्जयेत् ।
अरुणोदयवेलायां द्वादशीमिश्रिता भवेत् ॥३५॥
तां त्यक्त्वा द्वादशीं शुद्धां प्रकुर्यादविचारयम् ।
त्रयोदश्यां तदा प्रातः कृत्वा स्नानादि सत्त्वरम् ॥३६॥
त्रयोदशीकला चेत्तु सूर्योद्याने प्रवर्तते ।
तर्हि तु द्वादशीभागे पूर्वं सूर्योदयाच्च वै ॥३७॥
पारणं खलु कर्तव्यं न तु त्रयोदशीपले ।
द्वादश्यामुपवासश्च द्वादश्यामेव पारणम् ॥३८॥
निशा मध्यगता जागरणयुक्ता तु तद्व्रतम् ।
हरिवासर इत्युक्तः सर्वश्रेष्ठो मम प्रियः ॥३९॥
व्रतमेतत्परित्यज्य यो ह्यन्यद्व्रतमाचरेत् ।
करस्थं स महाराज्यं त्यक्त्वाभैक्ष्यं तु याचते ॥४०॥
कलाऽप्येकादशी यत्र द्वादश्यामुदिते रवौ ।
सर्वामेकादशीं त्यक्त्वा तत्रैवोपवसेद् व्रती ॥४१॥
त्रयोदश्यां कलायां च सूर्यस्योदयनं भवेत् ।
पूर्वदिने तदा शुद्धा द्वादश्येव व्रतं मतम् ॥४२॥
दशम्यामेकभुक्तः स्याद् रात्रावनंगवर्जितः ।
पृथिवीशयनः प्रातर्धात्रीफलविलेपनः ॥४३॥
स्नायीत सन्ध्यां कुर्वीत पूजां मे विदधीत च ।
उपवासी सायमेकादश्यां संपूजयेच्च माम् ॥४४॥
गन्धपुष्पैर्धूपदीपैर्वस्त्राभरणभोजनैः ।
जपैः स्तोत्रैर्नमस्कारैः पूजयेन्निशि भक्तितः ॥४५॥
लक्ष्मीं च पूजयेद् रात्रौ सौभाग्यद्रव्यवस्तुभिः ।
केशान् संसाधयेत् तत्र पुष्पमालां तु धारयेत् ॥४६॥
ग्रथ्नीयात् केशवेशं च कबरीं कारयेत् ततः ।
सिन्दूरगन्धितैलादि दद्यात् केशेषु मस्तके ॥४७॥
ललाटे चन्दनकुंकुमाऽक्षतादीन् सुश्रृंखलाम् ।
तन्त्रिकां पौरटीं दद्यात् चन्द्रकं शोभनं क्रियात् ॥४८॥
कर्णभूषानासिकासुभूषणान्यपि धारयेत् ।
कज्जलं नेत्रयोर्दद्यादोष्ठयोः रञ्जनं क्रियात् ॥४९॥
गण्डयोः पत्रिकां दद्यात् कपोले सूक्ष्मतिल्लिकाम् ।
कण्ठे स्वर्णविभूषाँश्च पुष्पहारान् सुधारयेत् ॥५०॥
भुजयोः कटके दद्यात् प्रकोष्ठे रत्नबंगिडीः ।
अंगुलिषूर्मिका दद्यात् कौसुंभीं कंचुकीं धरेत् ॥५१॥
शाटिकां स्वर्णसूत्रान्तां ब्रह्मसूत्रं च कौस्तुभम् ।
ललन्तिकां फुल्लपत्रीं स्वर्णपट्टीं गले धरेत् ॥५२॥
कट्यां सुवर्णरशनां कौसुंभीं घर्घरीं धरेत् ।
पादयोः किंकिणीनद्धझर्झरान् स्वर्णत्रोटकान् ॥५३॥
रूप्यच्छटान् प्रदद्याच्चऽलक्तकं पत्तलेऽर्चयेत् ।
अंगुलिषूर्मिकाकर्टान् धारयेत् पादयोस्तु वै ॥५४॥
स्वर्णतारभृते मखम्मलीयमृदुपादुके ।
गन्धसारसुगन्धेन वासयेद् बहुमानतः ॥५५॥
लक्ष्मीनारायणयोश्चाऽऽरार्त्रिकं पञ्चवर्तिभिः ।
कुर्यात् प्रदक्षिणं दण्डवत् नमः स्तुतिकीर्तनम् ॥५६॥
नैवेद्यं शर्कराघृतफलाद्यं च निवेदयेत् ।
पानीयं मुखशुद्धिं च ताम्बूलं चार्पयेत् ततः ॥५७॥
शय्यां सुखप्रदां दद्यात् कोमलगेन्दुकादिकाम् ।
श्वेतां तूलपटीं चित्रां राजायनीं कबर्हणम् ॥५८॥
शय्यायां च विकीर्येत कौसुमानि दलानि वै ।
व्यजनेनाऽनिलं दद्यात्पादसंवाहनं क्रियात् ॥५९॥
लक्ष्मीनारायणयोश्चाज्ञयाऽङ्गमर्दनं क्रियात् ।
स्वापयित्वा च देवौ तौ प्रातः सुरभिवारिभिः ॥६०॥

प्रबोध्य स्नापयेद्भक्त्या दन्तधावनपूर्वकम् ।
वस्त्रेण मार्जयेद् देवौ नूत्नवस्त्राणि धारयेत् ॥६१॥
तुलसीमिश्रसलिलैस्तर्पित्वा पितृदेवताः ।
पूजयेज्जगतामीशं लक्ष्म्या सह जनार्दनम् ॥६२॥
कोमलैस्तुलसीपत्रैः कमलैः स्थलपद्मकैः ।
सुगन्ध्यक्षतपुष्पैः सौभाग्यमंगलकारकैः ॥६३॥
जलैस्तथोपकरणैर्विभूषाभिश्च रत्नकैः ।
दीपान्नीराजयेत्तत्र शतमष्टोत्तरं ततः ॥६४॥
शतपत्रकृतां मालां ताभ्यां सम्यङ् निवेदयेत् ।
धूपं दीपं च नैवेद्यं ताम्बूलं च समर्पयेत् ॥६५॥
शर्करासहितं दिव्यं पायसान्नं सकेसरम् ।
सपुजातीफलयुक्तं चैलाचूर्णसुगन्धितम् ॥६६॥
पूरिकां पोलिकां शाकान् पक्वान्नानि ह्यनेकशः ।
तक्रं दधि पयः सूपं क्वथिकामोदनं तथा ॥६७॥
पर्पटान् पिण्डकान् दद्यादारनालान्यनेकशः ।
फलानि सलिलान्यल्पां मुखशुद्धिं च दक्षिणाम् ॥६८॥
प्रदक्षिणं नमस्कारं क्षमापनमथापि च ।
पूजोत्तरं वृणुयाद्वै वरं स्वेष्टं सुखप्रदम् ॥६९॥
धनं धान्यं सदाऽऽरोग्यं वस्त्रं वाहनमेव च ।
यानं पात्राणि भूषाश्च क्षेत्रं सद्वाटिकां तथा ॥७०॥
गोमहिषीवृषभादीन् पतिपत्नीसुखं तथा ।
अपत्यं दीर्घजीवित्वमविघ्नं कार्यमित्यपि ॥७१॥
अभ्युदयं महासत्तां राज्यं गृहं च राष्ट्रकम् ।
कुटुम्बं सुखसम्पत्तिं स्वर्गं चान्यद् यदिष्टकम् ॥७२॥
वृणीत देवयोः सर्वां सुखसौभाग्यसम्पदम् ।
पीडामुपद्रवं दुःखं क्लेशं चिन्तां विमोचय ॥७३॥
वैधव्यमनपत्यं च मा भून्मे वै कदाचन ।
पुत्रपौत्रप्रपौत्रादिकुटुम्बं सुखवद् भवेत् ॥७४॥
आज्येन जुहुयाद् वह्नौ शतमष्टोत्तरं तथा ।
भक्त्या पुरुषसूक्तेन श्रीसूक्तेन च पायसम् ॥७५॥
प्रत्यृचं जुहुयाद्भक्त्या विप्रान् साधूंश्च भोजयेत् ।
स्वयं चाऽऽश्रितवर्गं वै भोजयित्वाऽदनं क्रियात् ॥७६॥
संहितादिश्रवणेन क्षपयेच्च दिनं शुभम् ।
ब्रह्मचारी भूमिशायी निन्दादि वर्जयेत्तथा ॥७७॥
रात्रौ जागरणं कुर्यादेवं द्वादशिकाव्रतम् ।
कुर्यात् प्रसन्नो भगवान् सर्वाऽभीष्टप्रदो ध्रुवम् ॥७८॥
हरिवासरव्रतकृद्गृहेऽष्टौ वसवो दिवि ।
नारायणस्य लक्ष्म्याश्च वरदानाद्वसन्ति वै ॥७९॥

आमो भवश्च सोमश्च धरश्चैव नलोऽनिलः ।
प्रत्यूषश्च प्रभावश्च वसवोऽष्टौ वसन्ति हि ॥८०॥
यत्र तीर्थे तव पूजा गृहे यत्र तवाऽर्चनम् ।
यत्रारण्ये स्मृतिस्ते च यत्राऽब्धौ तेऽभिधाकथा ॥८१॥
यत्र लोके श्रवस्तेऽस्ति तत्र सर्वत्र संवस ।
यत्र ब्राह्ममुहूर्ते ते मे च ध्यानं तु मानसम् ॥८२॥
नामस्मृतिश्च भजनं तत्र साकं मया वस ।
यत्र प्रातर्बालवर्गः प्रसन्नो वर्तते सुखी ॥८३॥
न च रौति नाक्रोशति तत्र साकं मया वस ।
प्रातर्यत्र च दम्पत्योर्न क्लेशस्तत्र संवस ॥८४॥
प्रातर्यत्र देहशुद्धिः स्नानप्रक्षालनादिभिः ।
शय्याशुद्धिर्वस्त्रशुद्धिर्नैर्मल्ये तत्र संवस ॥८५॥
जलेन मार्जनेनापि लेपनेन गृहाऽच्छता ।
रंगोल्या स्वस्तिकेनापि मांगल्यं तत्र संवस ॥८६॥
प्रदीपस्य चुल्लिकाग्नेः प्रातर्यत्र प्रकाशनम् ।
दधि दुग्धं घृतं मिष्टं पक्वान्नं तत्र संवस ॥८७॥
पिष्टान्नं सक्तुकान्नं च तण्डुलादि सुरन्धितम् ।
प्रातर्गोधूमपोल्यादि यत्र तत्र सदा वस ॥८८॥
प्रातः कूपतडागादिजलं गृहगतं भृतम् ।
उदकुंभौ जले तत्र सदा पूजाजले वस ॥८९॥
स्नानं प्रातः सदा यत्र ध्यानं देवादिपूजनम् ।
पूज्यानां पूजनं मानं वृद्धानां तत्र संवस ॥९०॥
यत्राऽङ्गनं च गोष्ठादि मार्जितं प्रातरेव च ।
पर्युषितादिशुद्धिश्च तत्र लक्ष्मि ! सदा वस ॥९१॥
यत्र प्रातर्ब्राह्मणस्य दर्शनं च सतां तथा ।
साध्वीनां हरिभक्तानां पित्रोश्च तत्र संवस ॥९२॥
विदुषां च गुरूणां च सतीनां पुण्यशालिनाम् ।
देवानां च गवां प्रातर्दर्शनं तत्र संवस ॥९३॥
पुण्ड्रं च चन्द्रको भाले कज्जलं नेत्रयोस्तथा ।
पुष्पं सुगन्धद्रव्यं च यत्राऽस्ति तन्मुखे वस ॥९४॥
अग्निहोत्रं च गायत्री विष्णुपूजा शिवार्चनम् ।
देवानां पूजनं प्रातर्नैवेद्यं तत्र संवस ॥९५॥
काष्ठेन दन्तशुद्धिश्च शौचं तु मृज्जलादिभिः ।
स्नानं सौभाग्यभूषादि यत्र तत्र सदा वस ॥९६॥
बालानां स्तन्यपानादि वत्सादीनां च सेवनम् ।
पशूनां तृणतोयादि सेवा तत्र सदा वस ॥९७॥
शुकादिपक्षिणां सारमेयादीनां च रक्षणम् ।
संभावनाऽन्नतोयाभ्यां यत्र तत्र सदा वस ॥९८॥

वृषभाश्वगजोष्ट्राणां वाहे त्रासो न यत्र वै ।
तथाऽन्यपशुसंत्रासो यत्र नो तत्र संवस ॥९९॥
गृहोद्यानद्रुमवल्लीप्रभृत्युद्भिज्जजातयः ।
जलं खाद्यं चाप्नुवन्ति तत्र त्वं सर्वदा वस ॥१००॥
कीटपिपीलिकादिभ्यो यत्र पिष्टकणादिकम् ।
प्राप्यते गृहमेधिभ्यस्तद्गृहे त्वं सदा वस ॥१०१॥
ग्रामस्य पशवो यत्र ताड्यन्ते न वृथा जनैः ।
दयालूनां गृहे तत्र वासस्तेऽस्तु मम प्रिये ॥१०२॥
अभ्यागताऽतिथयो भिक्षुकाः प्राघूणिकास्तथा ।
यत्र तृप्यन्त्यन्नजलैर्वाण्या च तत्र संवस ॥१०३॥
स्वार्थे न भोजनं यत्र परार्थं देवशेषितम् ।
पंक्तिभेदो न च यत्र न स्वार्थस्तत्र संवस ॥१०४॥
श्राद्धं व्रतोत्सवा यत्र धार्मिकं नृत्यगायनम् ।
समाजो ज्ञातिभोज्यं च परार्थे तत्र संवस ॥१०५॥
साधूनां भजनं यत्र सन्तोषो दानशीलता ।
महतां चापि सम्मानं दीनानां तत्र संवस ॥१०६॥
अन्नवस्त्रजलाऽऽवासैः सन्तोषोऽनाथदेहिनाम् ।
बहूनां जीविका न्याय्या यत्रास्ति तत्र संवस ॥१०७॥
साधूनां ब्रह्मचाराणामनाथानां च यद्गृहे ।
सेवया बहुसन्तोषः सर्वस्वे तत्र संवस ॥१०८॥
यद्गृहे नैव कापट्यं न क्लेशो न प्रतारणा ।
न शाठ्यं नैव च क्रौर्यं सुशान्तिस्तत्र संवस ॥१०९॥
लोभो रोषो महोद्वेगो मत्सरोऽधर्मवृत्तिता ।
ईर्ष्याऽसूया यत्र दंभो न सन्ति तत्र संवस ॥११०॥
तृष्णा निन्दा च पैशून्यं द्रोहो मदश्च गर्विता ।
परदोषप्रकाशित्वं न सन्ति तत्र संवस ॥१११॥
अन्यायाऽन्नं भिक्षुकान्नं परान्नं पापिनां तथा ।
दुष्टान्नं पच्यते नैव यत्कुक्षौ तत्र संवस ॥११२॥
व्यापारो न्यायतो यत्र न्याय्यश्च विक्रयः क्रयः ।
कापट्यं न तुलामानेऽर्जने दाने सदा वस ॥११३॥
जीर्णे च नूतने यत्र कापट्यं मिश्रणे नहि ।
वाग्दाने च हृदो दाने शाठ्यं न तत्र संवस ॥११४॥
परोपकारपुण्यार्थे यज्ञार्थे राष्ट्रस्वस्तये ।
द्रव्यव्ययो भवेद् यत्र परार्थं तत्र संवस ॥११५॥
पराधीनपशुपक्षिप्राणिनां हिंसनं तथा ।
त्रासो यत्र न विद्येते तत्र लक्ष्मि ! सुखं वस ॥११६॥
बालानां कन्यकानां च साध्वीनां च सतां तथा ।
दीनाऽनाथदरिद्राणामन्नसत्रे सदा वस ॥११७॥
वाप्यां कूपतडागादौ नद्यां सरोवरे भुवि ।
खाते प्रस्रवणेऽखाते प्रपायां च सदा वस ॥११८॥
उदाराः स्वामिनो येषां सस्योद्यानवनस्विनाम् ।
पर्वतानामरण्यानां क्षेत्राणां तत्र संवस ॥११९॥
दानयज्ञाः क्रियायज्ञा योगयज्ञाश्च यद्गृहे ।
भक्तियज्ञा ज्ञानयज्ञा यत्र तत्र सदा वस ॥१२०॥
भूतयज्ञा ब्रह्मयज्ञा देवयज्ञाश्च यत्र वै ।
स्वाध्याययज्ञा भक्तिश्च सेवा तत्र सदा वस ॥१२१॥
मद्यं मांसं तथा चौर्यमन्यायस्त्र्यादिसेवनम् ।
व्यसनानि वृथा यत्र न सन्ति तत्र संवस ॥१२२॥
जीवे दुष्टो हृदि दुष्टो वाचि दुष्टश्च कर्मणि ।
स्वार्थे चापि परार्थे वा नास्ति यस्तत्र संवस ॥१२३॥
पातिव्रत्यं यत्र धर्मः पत्नीव्रतं च शीलता ।
विश्वासित्वं कृतज्ञत्वं यत्र तत्र सदा वस ॥१२४॥
नीत्या वै कर्मकारित्वं नीत्या द्रव्यप्रदानता ।
प्रजाया रक्षणं नीत्या नीतिमत्सु सदा वस ॥१२५॥
प्रजायाः शोषणं यत्र नारीणां क्रन्दनं तथा ।
दीनानामर्दनं यत्र नास्ति तत्र सुखं वस ॥१२६॥
रमणीनां च सम्मानं परोपकारिणां तथा ।
सफलीकृतयत्नानां गृहे ध्येये सदा वस ॥१२७॥
पुत्रवत्स्वप्रजापालकानां प्राणार्पिणां तथा ।
धार्मिकाणां च भक्तानां राज्ञां राष्ट्रे सदा वस ॥१२८॥
शत्रुसाहसिकस्तेनस्तब्धलुब्धकवञ्चकाः ।
शठा धूर्ताश्च पाखण्डा न यद्राष्ट्रे सदा वस ॥१२९॥
स्वाम्यमात्यराजपुत्रराज्ञीमन्त्रिपुरोहिताः ।
सेनापत्यटवीपाला न दुष्टास्तत्र संवस ॥१३०॥
कारागारपतिर्धर्माऽध्यक्षप्राकाररक्षकाः ।
अन्तःपुरप्रतीहारा न दुष्टास्तत्रसंवस ॥१३१॥
श्रेष्ठिरत्निप्रभूतान्निस्वर्णिशिल्पिप्रकर्मिणः ।
संविशास्त्रिन्यायिनश्च न दुष्टास्तत्र संवस ॥१३२॥
आश्रमेषु च वर्णेषु नारीषु च नरेषु च ।
ग्राम्येषु वनिषु नैव दुष्टत्वं तत्र संवस ॥१३३॥
भृत्येषु चारवर्गेषु शिष्येषु चाश्रितेषु च ।
गुरुषु राजसु नैव दुष्टत्वं तत्र संवस ॥१३४॥
पाताले भूस्तरे भूमौ खनौ स्वर्गेऽन्तरीक्षके ।
सत्ये ऋतौ च गर्भे च दौष्ट्यं न तत्र संवस ॥१३५॥
भक्ष्ये भोज्ये तथा पेयेऽलंकारे पाचनेऽनले ।
वायौ रूपे रसे गन्धे दौष्ट्यं न तत्र संवस ॥१३६॥

यत्र नास्ति मनोदौष्ट्यं नेतृदौष्ट्यं जनच्छलम्।
राजदौष्ट्यं गुरोर्दौष्ट्यं स्त्रीदौष्ट्यं तत्र संवस ॥१३७॥
यत्र नास्ति त्वयि दौष्ट्यं मयि दौष्ट्यं प्रतारिणाम्।
नास्तिकानां वृत्तिदौष्ट्यं न यत्र तत्र संवस ॥१३८॥
यत्फलं देवनैवेद्ये यल्लाभो देवकर्मणि।
उपयुज्येत सर्वत्र तत्र वासोऽस्तु ते सदा ॥१३९॥
किं बहुना विस्तरेण संक्षेपात्कथयाम्यहम्।
यत्र धर्मश्च भक्तिश्च तथा नारायणोऽप्यहम् ॥१४०॥

यत्र सन्तो धर्मवंशस्तत्र वासोऽस्तु ते सदा।
इति ते स्थानबाहुल्यमाख्यातं वासकाम्यया ॥१४१॥
परोपकरणे तत्र वस्तव्यं मे यथा हृदि।
अभक्ष्यभक्षणं यत्र यत्र चाऽपेयपानकम् ॥१४२॥
अकार्यकरणं यत्र यत्राऽनाचारभ्रष्टता।
नास्ति चास्ति सत्ययुगस्तत्र साकं मया वस ॥१४३॥
ईश्वरेषु च जीवेषु धर्मवंशो मम प्रियः।
तत्र वासः सदा कार्यो यथा रैवतके गिरौ ॥१४४॥
सायं यत्र देवपूजा कथा च कीर्तनोत्सवाः।
विरामः प्राणिनां यत्र तत्र वास सदा तव ॥१४५॥
यत्राऽस्त्यच्युतगोत्राणां साधूनां बहुपूजनम्।
तत्र त्वया सदा वासः कार्यो लक्ष्मि ! ममाऽऽज्ञया ॥१४६॥
वेदशास्त्रादिधर्माणां सदा यत्रास्ति पालनम्।
नास्तिक्यं दैवकार्ये न वासस्तत्राऽस्तु ते सदा ॥१४७॥

आप्रातरुद्यमो यत्र चाऽऽसायं वर्तते जने।
तत्र त्वया ह्यवश्यं तु वस्तव्यं सर्वथा प्रिये ॥१४८॥
यत्र स्वत्वे परस्वत्वं किञ्चिदपि न विद्यते।
तत्र स्वत्वे सदा स्थेयं किं बहूक्त्या शुभानने ॥१४९॥

तव भक्ता जना देवा दैत्या नागास्तथेश्वराः।
ऋषयो मुनयोऽदेवाः सर्वे सृष्टिनिवासिनः ॥१५०॥
तव पूजापरा नित्यं तवाऽऽगमसुकांक्षिणः।
तवार्थे कृतयत्नाश्च प्राणार्पणं च ते कृते ॥१५१॥
तवेहया तु कष्टानि सहन्तेऽपि विदेशके।
तवार्थे स्वजनं त्यक्त्वा गच्छन्त्यन्यत्र निर्जने ॥१५२॥
तव प्राप्तिर्भवेन्मा वा मृतेः प्राप्तिस्तु जायते।
दृष्ट्वा तेषां तपस्तत्र वस ते यदि रोचते ॥१५३॥
तत्तत्प्रयत्नसदृशी वस तत्तद्गृहे सदा।
तत्तत्कार्यकृतां हस्ते यथापेक्षं वस प्रिये ॥१५४॥
यत्र क्वापि याहि भद्रे पुनरागच्छ मद्गृहम्।
नाऽन्यद्गृहं शाश्वतं वै वसितव्यं मया विना ॥१५५॥

मया क्लृप्तं तव गृहं हृदयं मे सदाऽनघे।
मद्धृदयं सह नीत्वा यत्र क्वापि वस प्रिये ॥१५६॥
यथेष्टं वस सर्वत्र स्पृशा मा तद्गृहाधिपम्।
पातिव्रत्यं सर्वथैव रक्षितव्यं च मे प्रिये ॥१५७॥
यत्र यत्र च ते वासस्तत्राऽन्तर्यामिता मम।
सर्वत्रैव व्यापकोऽस्मि निवसामि मम प्रिये ॥१५८॥
अतः सर्वत्र मामेव पातिव्रत्याद् भजस्व वै।
न ते पतिव्रताधर्मो लुप्तो भवति कश्चन ॥१५९॥

यस्य गेहे च ते वासस्तद्भाले वसतिर्मम।
वस्त्राऽलंकाररूपा त्वं भाले तेजस्विताऽप्यहम् ॥१६०॥
यत्र ते भगिनी ज्येष्ठा ह्यलक्ष्मीर्वसति गृहे।
तद्गृहेऽर्धेऽपि सम्मील्य वासं तु कुरुतं ह्युभे ॥१६१॥
न वै सर्वे सलक्ष्मीकाः सर्वे नाऽलक्ष्मिकास्तथा।
अर्धे लक्ष्मीश्चार्धभागेऽप्यलक्ष्मीर्वर्तते गृहे ॥१६२॥
किञ्चिन्न्यूनं दुःखदं च किञ्चिच्छ्रेष्ठं सुखप्रदम्।
एकस्मिन्नेव गेहादौ सर्वं सर्वस्य नोत्तमम् ॥१६३॥
तादृशे च जने गेहे ह्यलक्ष्म्या सह शान्तितः।
कृत्वैव सहनं सर्वे वर्तितव्यं त्वयाऽनघे ॥१६४॥

एककोणे त्वया स्थेयमन्यकोणेऽग्रजातया।
अलक्ष्म्या ज्येष्ठया स्थेयं न कार्यः कलहः क्वचित् ॥१६५॥
बलाऽबले तु द्रष्टव्ये भाग्यरेखानुसारतः।
निर्बलेन स्थलं देयं प्रबलायेति शासनम् ॥१६६॥
नीतिरस्तीतिसर्वत्र सुखायैवोपकल्पिता।
अथ त्वां कथयिष्येऽन्यतीर्थानि रैवताचले ॥१६७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने द्वादश्या हरिवासरत्वे कारणता, लक्ष्म्या विधिवत्पूजनं तत्फलं, लक्ष्म्या निवासस्थानानि चेत्यादिनिरूपणनामा षट्पंचाशदधिकशततमोऽध्यायः ॥१५६॥

**श्रीलक्ष्मीरुवाच—**

रेवतीकुण्डइत्युक्तं का वा सा रेवती ह्यभूत्।
तज्जिज्ञासां प्रशाम्यैव ततस्तीर्थानि मे वद ॥ १ ॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! तदाख्यानं सत्ययुगीयमुच्यते।
यथा या रेवती जाता यन्नाम्ना कुण्डतीर्थकम् ॥ २ ॥

दक्षस्य दुहिता या तु पत्नी चन्द्रमसोऽस्ति हि ।
सा नक्षत्रस्वरूपाऽस्ति रेवती दिवि राजते ॥ ३ ॥
सूर्यात् संज्ञानासिकातश्चोत्पन्नो रैवतः सुतः ।
पञ्चमः स मनुर्देवि ! रैवतो नाम विश्रुतः ॥ ४ ॥
यो ह्यध्यात्मतया शैले रैवते जीववत्स्थितः ।
रैवताख्यमनोः पुत्रः कृतवाक्मनुरुच्यते ॥ ५ ॥
कृतवाचो गृहे पुत्रजन्माऽभूत्तु यदा तदा ।
नक्षत्रं रेवतीसंज्ञं जन्मर्क्षं तदभूत् नृपः ॥ ६ ॥
पुत्रजन्मोत्सवं चक्रे जातकर्मादिकाः क्रियाः ।
दानानि विविधान्येव ददौ विप्रेभ्य एव सः ॥ ७ ॥
तथान्यान्समयप्राप्तान् संस्कारान् कृतवान्नृपः ।
पुत्रजन्मसमये वै नृपस्याऽभूज्ज्वरो महान् ॥ ८ ॥
स्वप्नेऽपि ददृशे स्वस्य शकट्याकर्षणकृतिम् ।
वामांगं प्रास्फुरत्तस्य काकः क्रोशति मस्तके ॥ ९ ॥
कोशात्स्वर्णमयीमुद्राः यान्ति भूत्वा तु वृश्चिकाः ।
शिवा स्वाभिमुखं रौति श्वा भषत्यभिसम्मुखम् ॥१०॥
मुकुटः पतितो मूर्ध्नोर्यष्टिका पतिता करात् ।
कृतवाक् पतितः सौधसोपानेभ्यो लुठन् भुवि ॥११॥
इत्येवं चाऽशकुनानि पुत्रे जातेऽभवन्नथ ।
यतः प्रभृति जातोऽसौ ततः प्रभृत्यसौ नृपः ॥१२॥
दीर्घरोगपरामृष्टो माताऽभूत्कुष्ठरोगिणी ।
जगाम चिन्तां नृपतिः किमेतदिति दुःखितः ॥१३॥
मूर्खश्च मन्दभाग्यश्च पुत्रः पितुर्हि दुःखदः ।
अमार्गगो विशेषेण दुःखाद्दुःखप्रदो भवेत् ॥१४॥
अपुत्रता मनुष्याणां श्रेयसे न कुपुत्रता ।
सुहृदां नोपकाराय पितॄणां नोपतृप्तये ॥१५॥
मातापित्रोर्विनाशाय कुपुत्रो वै दिने दिने ।
अन्ततस्तु स्वमेवाऽत्र नाशं याति कुपुत्रकः ॥१६॥
वरं चाऽलग्नकरणं ऋत्वनभिगमो वरः ।
वरं नार्याश्च वन्ध्यात्वं वरो गर्भस्य संक्षयः ॥१७॥
वरो मृतप्रसवो वा वरा बालमृतिस्तथा ।
वरं विवासनं किन्तु कुपुत्रो न वरो मतः ॥१८॥
मृतानां तु भवेच्छोकः स्वल्पो यावत्स्मृतिस्तदा ।
कुपुत्राणां तु मूर्खाणां शोकस्तापः पदे पदे ॥१९॥
अनिर्वृत्तं निरानन्दं दुःखशोकपरिप्लुतम् ।
करोति हृदयं पित्रोः, शत्रूणां तु सदामुदम् ॥२०॥
अकाले तु जरां पुत्रः कुपुत्रः कुरुते पितुः ।
नरकाय न स्वर्गाय नाऽऽत्मनेऽपि हिताय च ॥२१॥
सुपुत्रो हृदयं वेत्ति मातापित्रोर्दिने दिने ।
धन्यास्ते तनया येषां सर्वलोकाभिसम्मताः ॥२२॥
परोपकारिणः शान्ताः साधुकर्मण्यनुव्रताः ।
कुपुत्रिणश्च धिग्जन्म धिग्राज्यं संपदश्च धिक् ॥२३॥
एवमत्यन्तदुष्टस्य पुत्रस्य चरितेन सः ।
वृद्धगर्गमपृच्छच्च कृतवाग् दग्धमानसः ॥२४॥
सुव्रतेन पुरा वेदा अधीता विधिना मया ।
समाप्य विद्या विधिवत् ततो दारपरिग्रहः ॥२५॥
धर्मः सम्यग्धृतः सर्वो नाऽधर्मे वै मनः कृतम् ।
पुत्रार्थं जनितश्चायं कुपुत्रः कथमीदृशः ॥२६॥
सोऽयं किं निजदोषेण मातुर्दोषेण वा मम ।
अस्मद्दुःखावहो जातो दुःशीलो दुष्टलुब्धकः ॥२७॥
हिंसको मद्यपः स्तेनो दुःखदारिद्र्यकृत्सदा ।
पित्रोः सदाऽवमन्ता च सेवाधर्मविवर्जितः ॥२८॥
अस्य जन्मोत्तरं लक्ष्मीर्गृहाद्बहिर्वियाति हि ।
अस्य प्रातर्मुखाऽऽलोकेऽवश्यं कलिर्भवत्यपि ॥२९॥
भोजनं भ्रष्टतां याति दिनं गच्छति दुर्दिनम् ।
मम भार्या च कुष्ठेन रुग्णा जाता ततः सदा ॥३०॥
अहं च ज्वररोगेण रुग्णो जातोऽस्मि नित्यदा ।
अन्येऽपि मम पोष्यास्ते हानौ वर्तन्त एव तत् ॥३१॥
कार्यं यच्च करोम्येतत् सफलं नैव जायते ।
साफल्येऽन्या द्विगुणा च हानिः समुपतिष्ठति ॥३२॥
तस्माद् विचार्य विप्रर्षे भवेत् किमत्र कारणम् ।
तस्य शान्तिं कारयिष्ये यदि सौख्यं लभे वद ॥३३॥
गर्गः प्रोवाच रेवत्यां नक्षत्रेऽयं सुतस्तव ।
जातोऽस्ति दुष्टसमये तेन दुःखायते ह्ययम् ॥३४॥
व्यतीतप्राया रेवती कालो दुष्टो हि कथ्यते ।
रेवत्यन्ते यस्य जन्म तत्सर्वं दुःखदं भवेत् ॥३५॥
न पुत्रस्य न वै मातुर्न वा तेऽस्ति प्रदूषणम् ।
परं दौःशील्यहेतुत्वं रेवत्यन्ते तु यज्जनिः ॥३६॥
रेवत्यश्विनीमध्यं यदाश्लेषामघयोस्तथा ।
ज्येष्ठामूलयोरप्युक्तं गण्डान्तं तद् भयावहम् ॥३७॥
गण्डत्रये समुत्पन्ना नरनारीतुरंगमाः ।
तिष्ठन्ति न चिरं गेहे तिष्ठन्तोऽपि भयावहाः ॥३८॥
एवमुक्तोऽथ गर्गेण चुक्रोध कृतवाक् तदा ।
उवाच मम पुत्रस्य रेवत्यन्ते समुद्भवः ॥३९॥
रेवती किं न जानाति मां विप्रः शापयिष्यति ।
प्रज्वल्यमाना गगनात् तस्मात्पततु रेवती ॥४०॥

तेनैवं व्याहृते वाक्ये विस्मयाऽऽविष्टचेतसः ।
पश्यतः सर्वलोकस्य रेवत्यन्तं पपात ह ॥४१॥
ईश्वरेच्छाप्रभावेण कुमुदाद्रौ समन्ततः ।
रेवत्यन्तो निपतितः खण्डः परम उज्ज्वलः ॥४२॥
स वै खण्ड ऊर्ज्जयन्तनामा शैलः प्रकथ्यते ।
कुमुदे मूर्ध्नि पतितः शान्तश्च कुमुदे तथा ॥४३॥
भासयामास सहसा वनकन्दरनिर्झरम् ।
कुमुदेन समं मैत्रीं कृतवानूर्जयन् गिरिः ॥४४॥
ऊर्ज्जयन् रेवतीखण्डः कुमुदे ह्यवसत् सदा ।
तस्मादपि कुमुदो वै रैवतकोऽभिधीयते ॥४५॥
आभूतसंप्लवम् यावत् संस्थितौ तौ परस्परम् ।
कुमुदाद्रिश्च तत्खण्डात् ख्यातो रैवतकोऽभवत् ॥४६॥
ऊर्ज्जयन्तो वह्निवर्णः कुमुदश्चन्द्रवर्णकः ।
द्वयोश्च मिश्रणे गैरिकावर्णो रैवताचलः ॥४७॥
अथापि रेवतीखण्डः कुमुदाऽऽभ्यन्तरेऽस्ति वै ।
ज्वालामुखी कदाचित्स भविष्यत्येव रैवतः ॥४८॥
मन्दरो ह्यरुणश्चापि रेवतीखण्डयोगतः ।
ज्वालामुखौ कदाचिद्वै लयग्राहे भविष्यतः ॥४९॥
ऊर्ज्जयन्तश्च कुमुदो मन्दरश्चाऽरुणाचलः ।
कृतस्मरश्च पञ्चैते मिलित्वा रैवताचलः ॥५०॥
वर्तते सुमहान् दिव्यः स्वर्णाभो रैवताचलः ।
स पश्चाज्जनयामास कन्यां रैवतको गिरिः ॥५१॥
रेवतीकान्तिसदृशीं रेवतीसदृशाननाम् ।
खट्वांगाख्यसुवर्णांगदस्वसा रेवती शुभाः ॥५२॥
नाम्ना तु कथिता तत्र तपस्यता द्विजर्षिणा ।
प्रमुचाख्येन पितृवद्वर्तमानेन तद्गिरौ ॥५३॥
पितृवद्रेवतीनामाऽकरोत् प्रमुचसन्मुनिः ।
रैवतोऽपि रेवतीति नाम्नाऽजुहाव तां सुताम् ॥५४॥
सा च तत्र कृतस्थाना वर्तते गिरिकन्दरे ।
तेजोमयं च तत्स्थानं सर्वतीर्थजलाश्रयम् ॥५५॥
गंगाजलप्रवाहश्च यामुनं सलिलं तथा ।
सारस्वतं च सलिलं तत्र गर्तेषु तत् त्रयम् ॥५६॥
गर्तः स कन्दराग्रस्थो रेवतीकुण्ड उच्यते ।
तत्र वै कन्दरे बाला वर्धिता प्रमुचर्षिणा ॥५७॥
यौवनं तु तया प्राप्तं तत्र रैवतके गिरौ ।
तां च यौवनसम्पन्नां दृष्ट्वा सः प्रमुचो मुनिः ॥५८॥
एकान्ते चिन्तयामास कोऽस्या भर्ता भविष्यति ।
हुत्वा हुत्वा स पप्रच्छ गुरुं वह्निं द्विजोत्तमः ॥५९॥
प्रसादं कुरु मे ब्रूहि कोऽस्या भर्ता भविष्यति ।
अस्या अस्ति सदृशो वा वरो नास्ति च कोऽपि वा ॥६०॥
तदाऽग्निकुण्डादुत्थाय मूर्तिमान् हुतभुक् स्वयम् ।
प्राह शृणु च मे वाक्यं कोऽस्या भर्ता भविष्यति ॥६१॥
प्रियव्रतान्वयोत्पन्नो महाबलपराक्रमः ।
पुत्रो विक्रमशीलस्य कालिन्दीजठरोद्भवः ॥६२॥
दुर्दमो नाम भविता भर्ता ह्यस्या महीपतिः ।
अत्रान्तरे समायातो दुर्दमः स महीपतिः ॥६३॥
मृगयाव्याजतस्तत्र कन्दरां तामपश्यत ।
दृष्ट्वा स दुर्दमः कन्यामुवाच विधियोगतः ॥६४॥
प्रिये पिताऽस्ति ते कुत्र दर्शनं मे भवेन्न वा ।
तत्राऽग्निशालासंस्थः सः शुश्राव तद्वचो मुनिः ॥६५॥
प्रिये-इत्यामन्त्रणस्य कर्ता कोऽयं विचार्य च ।
आजगाम बहिर्यावद् राजानं स ददर्श ह ॥६६॥
जहर्ष दुर्दमं भाविजामातारं विलोक्य सः ।
शिष्यं च गौतमं प्राहाऽस्मै देह्यर्घ्यादिकं शुभम् ॥६७॥
जामाताऽयं दैवयोगात् स्याच्च जाया सुता मम ।
तमासनगतं विप्रो गृहीतार्घ्यं महामुनिः ॥६८॥
प्रमुचः प्राह राजेन्द्र कुशलं ते पुरे किमु ।
कोशे बले च मित्रे च भृत्याऽमात्येषु शं किमु ॥६९॥
स्वागतं ते करोम्यत्र दैवयोगात्प्रवासिनः ।
आत्मनि कुशलं चास्ति यत्र सर्वं प्रतिष्ठितम् ॥७०॥
भार्यास्ते कुशला राजन् ब्रूहि सर्वं यथास्थितम् ।
दुर्दमः प्राह प्रमुच ! त्वत्प्रसादात्सदा मम ॥७१॥
राज्यं दाराश्च कुशलास्त्वां विलोक्य विशेषतः ।
सुभद्रा शान्तपापा च कावेरीतनया तथा ॥७२॥
सुरामा जानुजाता च कदम्बा च वरप्रजा ।
विपाठा नन्दिनी चान्या भार्या मे कुशलाः सदा ॥७३॥
प्रमुचः प्राह दुर्दम ! प्रिये इत्युक्तवान् भवान् ।
सा मे शिष्या रेवती वै प्रियेत्युक्ता प्रिया तव ॥७४॥
तदन्यथा न भविता यदृच्छावचनं तव ।
गृहाणेमां शुभां कन्यां पत्नीत्वेन ममाज्ञया ॥७५॥
इत्यादिवचनैः राजा भार्यायै प्रतिपादितः ।
विप्रस्तथोद्यतः कर्तुं विवाहं विधिपूर्वकम् ॥७६॥
तावत्तु रेवती प्राह किञ्चिन्मे श्रूयताम् ऋषे ! ।
रैवत्यर्क्षे विवाहं मे दुर्दमेन करोतु वै ॥७७॥
रैवतर्क्षं विना लग्नं विफलं मे भविष्यति ।
ऋषिः प्राह तदा शिष्यां नास्तीन्दू रेवतीयुतः ॥७८॥

अन्यर्क्षे वर्तते चाऽऽत्र तत् करोमि यथा वद।
कन्या प्राह तपोयोगात् कुर्विन्दुं रेवतीयुतम् ॥७९॥
एवं भवतु भद्रन्ते प्रमुचः प्राह तां सुताम्।
आरोपयामीन्दुमार्गे रेवत्यर्क्षे कृते युवाम् ॥८०॥
ततस्तपःप्रभावेण रैवत्यर्क्षे महामुनिः।
चन्द्रसंयोजितं चक्रे विवाहं कृतवाँस्ततः ॥८१॥
जामातारमुवाचर्षिरुद्वाहिकं ददामि किम्।
दुष्प्रापमपि दास्यामि विद्यते मे महत्तपः ॥८२॥
राजा प्राह तदा विप्रं शृणु वै दुर्घटं वचः।
सूर्यस्य संज्ञा या पत्नी वडवाऽऽसीत्स्वरूपतः ॥८३॥
तदा तस्या अश्वरूपसूर्ययोगे नसस्तदा।
रैवतो यः समुत्पन्नोऽध्यात्माऽत्र कुमुदाचले ॥८४॥
अदृश्यो वर्तते तत्र रैवतर्क्षे समागतम्।
सेयं तु रेवती कन्या जाता मे गृहिणी तु सा ॥८५॥
तस्यां स रैवतः पुत्रो मद्योगाद्भवतात्पुनः।
मनोः स्वायंभुवस्याऽहमुत्पन्नः सन्ततौ मुने ॥८६॥
मन्वन्तराधिपं पुत्रं त्वत्प्रसादाद् वृणोम्यहम्।
स एव जन्म लब्ध्वा वै ततो मन्वन्तरो भवेत् ॥८७॥
पञ्चमः स एव मनुर्भूयादिति वृणोम्यहम्।
तथाऽस्त्विति ऋषिः प्राह भविष्यति तथा मनुः ॥८८॥
रेवती रेवतीकुण्डे स्नात्वा पुत्रं प्रदास्यति।
मनोरंशः स वै पुत्रो मनुरेव भविष्यति ॥८९॥
रेवतांशसमुत्पन्नो रैवताख्यो भविष्यति।
पर्वताख्यश्च मन्वाख्यो द्वेधा स्थास्यति सर्वदा ॥९०॥
इतिप्राप्तवरो राजा संस्नातो रेवतीजले।
रेवत्यपि तथा स्नाता योगात्पुत्रमजीजनत् ॥९१॥
रैवतेति कृतं नाम स वै मनुरजायत।
एवं यौ रेवतीकुण्डे स्नास्यतस्तद्गृहे सुतः ॥९२॥
भाग्यवान् राज्यवान् विज्ञः ख्यातकीर्तिर्भवेन्ननु।
स्नास्यन्ति प्रमदा यास्ता दुःखदारिद्र्यवर्जिताः ॥९३॥
लप्स्यन्ते तैजसं पुत्रं सर्वलोकनमस्कृतम्।
इति ते कथितं तीर्थं रेवतीकुण्डसंगतम् ॥९४॥
अथाऽऽरराध तपसा रेवती वामनं हरिम्।
दामोदरः प्रसन्नः स रेवतीं प्रत्युवाच ह ॥९५॥
जायतां ते यथापूर्वं योगस्तु शशिना सह।
अन्यद् वृणोहि तुष्टोऽहं वरं मनसि ते स्थितम् ॥९६॥
रेवती प्राह मे नाथ कन्दराया मुखेऽत्र वै।
कुण्डे यत्र मया स्नातं स्वर्णरेखानदीयुते ॥९७॥
तत्र स्नास्यन्ति ये तेषां नश्यन्त्वघसुपर्वताः।
स्वर्गं यान्तु सुखं यान्तु पुत्राँश्च प्राप्नुवन्तु ते ॥९८॥
किं चान्यद्वै समुद्रस्य मन्थनं तु यदाऽभवत्।
तदा तु मथ्यमानाद्वै पारिजातादयो द्रुमाः ॥९९॥
समुद्भूतास्तदा तत्र द्रुम आमर्दकोऽभवत्।
आमर्दे सर्वदेवानां जाता आमर्दकी स्मृता ॥१००॥
हरिणात्वर्पिता चन्द्रमसे स्वर्गं तु गच्छता।
चन्द्रमाः स्नेहबाहुल्याद् ददौ मह्यं तदा दिवि ॥१०१॥
रैवतीखण्डगो वृक्षोऽपतत् तत्खण्डसंस्थितः।
कृतवाचो यदा शापात् पपात कुमुदे यदा ॥१०२॥
मया साकं स वै वृक्षो रैवतेऽद्रौ समागतः।
दिव्यः सुगन्धपुष्पाढ्यो लक्ष्मीवासमयोऽस्ति सः ॥१०३॥
अस्मिन् वृक्षे स्थिता लक्ष्मीः सेव्यते सुरसत्तमैः।
देवैर्ब्रह्मादिभिः सर्वैर्वृक्षोऽसौ वैष्णवोऽर्चितः ॥१०४॥
अस्य वृक्षस्य यात्रां ये करिष्यन्ति हरेर्दिने।
फाल्गुनशुक्ले द्वादश्यामेकादश्यां तथा प्रिये ॥१०५॥
तेषां पुत्राश्च पौत्राश्च भविष्यन्ति गुणाधिकाः।
अन्ते विष्णुपुरे वासो जायते नात्र संशयः ॥१०६॥
फाल्गुनस्य सिते पक्षे एकादश्यामुपोषितः।
स्नात्वा ह्येकादशी देवी प्रतिमायां गिरौ वने ॥१०७॥
पूज्या पुष्पैः शुभैः रात्रौ कार्यं जागरणं जनैः।
अष्टाधिकैः शतैः कार्यं फलैस्तस्याः प्रदक्षिणम् ॥१०८॥
कर्तव्यस्तत्फलाहारो घटो देयो जलान्वितः।
मुखे श्रीफलसंयुक्तो दीपः कार्यश्च सर्पिषा ॥१०९॥
हविष्यान्नं तथा देयं ताम्बूलं च फलादिकम्।
तथा जागरणं कार्यं कथाश्रवणतत्परैः ॥११०॥
मुच्यन्ते मनुजाः पापैः कठिनैः कार्यसंभवैः।
देहान्ते ते नराः सर्वे पूज्यन्ते हरिमन्दिरे ॥१११॥
अथापि रेवती देवी कृतवाचं समागतम्।
जगाद परया प्रीत्या ज्वरकुष्ठौ विनश्यतः ॥११२॥
पुत्रस्ते सुगुणश्चाऽस्तु याम्यहं वै पुनर्दिवम्।
अंशेन रेवतीतीर्थे स्थास्याम्याकल्पमत्र च ॥११३॥
इति प्रोक्त्वा दिवं याता संगता शशिनं तथा।
तीर्थेतु सर्वदा साऽभूत् रेवतीकुण्डसंज्ञकम् ॥११४॥
अथ वै ब्रह्मणः पुत्रो मरीचिस्तस्य कश्यपः।
तस्यपुत्रो विवस्वाँश्च तस्य शर्यातिरुच्यते ॥११५॥
तस्य त्वानर्तसंज्ञोऽभूत् येन पश्चिमवारिधौ।
तपस्तप्त्वा तु गोलोकाच्छ्रीकृष्णात् खण्ड आहृतः ॥११६॥

सोऽयं सौराष्ट्र इत्युक्तो मणेः खण्डोऽपि चाहृतः ।
स दिव्यः प्रथमश्चाद्रिरानर्तस्य सुपुत्रताम् ॥११७॥
प्राप्तवानंशतस्तस्य रैवताख्या कृता तदा ।
रैवतः सः स्वर्णनद्यां यात्रार्थं समुपागतः ॥११८॥
कृतवाचा तु पुत्रार्थं स्नापितो रेवतीजले ।
रैवतः प्राह विप्रर्षे त्वत्समो मेऽस्तु वै सुतः ॥११९॥
तथाऽस्तु प्राह विप्रर्षिस्ततो यात्रां विधाय च ।
रैवतः स्वपितुरानर्तस्य पुरीं कुशस्थलीम् ॥१२०॥
आनर्तनिर्मिता तत्र जगाम तद्गृहे तदा ।
विप्रर्षिः कृतवाक् पुत्ररूपेणांऽशेन चाऽभवत् ॥१२१॥
रेवत्या च श्रुतं स्वर्गे गुरुवै निधनं गतः ।
आनर्तस्य सुपुत्रस्य रैवतस्य सुपुत्रकः ॥१२२॥
संजातोऽस्ति ततः स्नेहाद् रेवत्यपि समागता ।
रेवतस्य सुपुत्रस्य ककुद्मी नाम चाऽभवत् ॥१२३॥
ककुद्मिनो गृहे कन्या रेवती चांशतोऽभवत् ।
रूपगुणवयोयुक्तां वरयोग्यां विलोक्य च ॥१२४॥
रेवतीसदृशं कान्तं यदा नैवोपलब्धवान् ।
तदा वरं परिप्रष्टुं सत्यलोकं जगाम ह ॥१२५॥
रेवत्या सह राजासौ ककुद्मी वेधसः सदः ।
जगाम यत्र गान्धर्वगायनं नृत्यमिश्रितम् ॥१२६॥
प्रवर्तते देवकोटिसंजुष्टसदसि नृपः ।
क्षणं स्थितोऽलब्धक्षणस्तदन्ते ब्रह्मणे तु सः ॥१२७॥
नमस्कृत्य सविनयं स्वाभिप्रायं न्यवेदयत् ।
ब्रह्मन् पृथ्व्यां तु राजानो सन्ति वै बहवः खलु ॥१२८॥
सुवर्णांगदभूपालो मरुत्त्वान् रुक्मबर्हिषः ।
इक्ष्वाकुश्चापीन्द्रसेनस्तथाऽन्ये चक्रवर्तिनः ॥१२९॥
कस्मै देया मया कन्या ब्रूहि यत् तत्करोम्यहम् ।
तच्छ्रुत्वा तु तदा ब्रह्मा प्रहस्य तमुवाच ह ॥१३०॥
अहो राजन् मृतास्ते तु कालेन त्वत्समायुषः ।
तत्पुत्रवंशवंश्यानां नामगोत्राणि सन्ति न ॥१३१॥
सत्यलोके क्षणे काले चतुर्युगैकविंशतिः ।
भुवो याति महाकालो नष्टा ये ते हृदि कृताः ॥१३२॥
परावृत्याऽर्धक्षणतः पुनर्यास्यसि त्वं यदा ।
तदा तु तत्राऽष्टाविंशो द्वापरः संभविष्यति ॥१३३॥
तदन्ते वर्तमानाय शेषावताररूपिणे ।
बलभद्राय दातव्यं कन्यारत्नमिदं त्वया ॥१३४॥
शीघ्रं गत्वा ककुद्मी तत्तथैव बलयोगिने ।
दास्यति स्वसुतारत्नं तपसे यास्यति वनम् ॥१३५॥
रेवती सा पुनस्तीर्थं करिष्यति तु रैवते ।
पत्या सह पुनर्नाशे गोलोकं यास्यति ध्रुवम् ॥१३६॥
एवं सा रेवती पूर्वा हरेः पत्नी प्रकीर्तिता ।
पुनर्दक्षस्य दुहिता स्थिता नक्षत्ररूपिणी ॥१३७॥
पुनश्च रैवताद्रेः सा पुत्री कन्दरसंस्थिता ।
पुनः ककुद्मिनः पुत्री बलपत्नी प्रकीर्तिता ॥१३८॥
तीर्थरूपा सदा तत्र रैवते सन्निवत्स्यति ।
एकस्यापि विभूतेस्तु जन्मकर्माण्यनेकशः ॥१३९॥
चरित्राणि च दिव्यानि समकाले भवन्ति वै ।
तानि सर्वाण्यहं वेद्मि किमन्यच्छ्रोतुमिच्छसि ॥१४०॥
एवं कल्पान्तरेऽप्येषां प्राविर्भावास्तथैव हि ।
भविष्यन्तीति विज्ञेयं तव प्राविःस्वभाववत् ॥१४१॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने रेवतीनक्षत्रखण्डस्य पृथिवीपतननिमित्तं रैवताचले पञ्चपर्वतात्मके रेवत्या जन्म, चन्द्रे संयोजितरेवती-नक्षत्रे दुर्दमेन सह विवाहः, रेवत्यां पुनः रेवतजन्म, रेवतीकुण्डमहिमा, आमर्दकवृक्षमहिमा, पुनरानर्त-पुत्ररेवतपुत्रस्य कृतवाचाख्यककुद्मिनो गृहे रेवतीजन्म, ब्रह्मसभागमनं, बलभद्रेण विवाह-श्चेत्यादिनिरूपणनामा सप्तपंचाशदधिक-शततमोऽध्यायः ॥१५७॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मीस्तथा नारायणश्च रैवते प्रिये ।
निवसतः सदा देवौ द्रष्टव्यौ कार्तिके सिते ॥ १ ॥
तत्र दामोदरं दृष्ट्वा प्रपूज्य च विधानतः ।
पुरुषोत्तमपुर्यास्तु यात्राफलमवाप्नुयात् ॥ २ ॥
माघे मासि भवं दृष्ट्वा न पुनर्जायते भवे ।
वाराणस्यां कुरुक्षेत्रे कुशस्थल्यां जनार्दने ॥ ३ ॥
यत्फलं तन्निमिषार्धे दृष्ट्वा दामोदरं रमाम् ।
प्रेतत्वं नरकं वा न वस्त्रापथे मृतस्य वै ॥ ४ ॥
धन्यानामपि ते धन्या देवानामपि देवताः ।
वस्त्रापथे मृतिर्येषां येषां हरे हरौ मतिः ॥ ५ ॥
गोदानं तत्र कर्तव्यं ब्राह्मणानां च भोजनम् ।
पिण्डदानं च कर्तव्यं कल्पान्तं तृप्तिकारकम् ॥ ६ ॥
दामोदरो भवः स्वर्णरेखा ब्रह्मेश्वरस्तथा ।
ब्रह्मकुण्डः कालमेघो नारायणहृदस्तथा ॥ ७ ॥

कालिकेन्द्रेश्वरो मृगीकुण्डउन्नबिलस्तथा ।
मंगलश्च तथा सिद्धाः सिद्धेश्वरश्च रेवती ॥ ८ ॥
रेवतीकुण्ड इत्युक्तश्चक्रोद्यानं परीसरः ।
इत्येवमादितीर्थानि स्मृत्वा पापं विनाशयेत् ॥ ९ ॥
धन्यो दामोदरः कुण्डो मृतानां मोक्षदः सदा ।
यत्राऽस्थि पतितं पापकृतोऽपि तं च तारयेत् ॥१०॥
यत्र वै पतितं भस्म देहिनं मोक्षयेत् सदा ।
यज्जलानां कणमात्रं मुखे पतितमेव च ॥११॥
प्रज्वालयति पापानि जन्मान्तरकृतानि वै ।
यत्तीरे कृतदानस्य श्राद्धस्याऽसीमकं फलम् ॥१२॥
अवश्यं तत्र कर्तव्यं श्राद्धं मुक्तिप्रदं तथा ।
धन्यो नारायणह्रदो यत्र श्राद्धं प्रशस्यते ॥१३॥
तत्तत्तिथौ हि श्राद्धस्य फलं वै कीर्तयामि ते ।
पितॄनभ्यर्च्य प्रतिपद्याप्नुयात्सुगृहे प्रियाः ॥१४॥
द्वितीयायां कृते श्राद्धे पुत्र्यो जायन्त उज्ज्वलाः ।
तृतीयायां कृते श्राद्धे जायन्ते वाजिनः शुभाः ॥१५॥
चतुर्थ्यां तु कृते श्राद्धे छागाऽजाः पशवो गृहे ।
पञ्चम्यां तु कृते श्राद्धे पुत्रा जायन्त ऐश्वराः ॥१६॥
षष्ठ्यां श्राद्धे कृते सर्वे नीरोगा द्युतिभागिनः ।
सप्तम्यां तु कृते श्राद्धे कृषिप्राप्तिर्भवेन्ननु ॥१७॥
अष्टम्यां तु कृते श्राद्धे वाणिज्ये लाभमाप्नुयात् ।
नवम्यां तु कृते श्राद्धे भवत्येकशफं बहु ॥१८॥
दशम्यां तु कृते श्राद्धे गोमहिष्यादिकं बहु ।
एकादश्यां कृते श्राद्धे वस्त्रपात्रादिकं बहु ॥१९॥
ब्रह्मवर्चस्विनः पुत्रा जायन्ते च प्रभाविणः ।
द्वादश्यां तु कृते श्राद्धे वित्तं स्वर्णाऽदिकं बहु ॥२०॥
त्रयोदश्यां कृते श्राद्धे ज्ञातिश्रेष्ठोतिमानितः ।
चतुर्दश्यां कृते श्राद्धे युद्धे विजयवान् भवेत् ॥२१॥
अमायां संकृते श्राद्धे सर्वान्कामानवाप्नुयात् ।
पूर्णिमायां कृते श्राद्धे बहुधा स्मृद्धिमान् भवेत् ॥२२॥
कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम् ।
तिथयः श्राद्धकर्मादौ प्रशस्ता न तथेतराः ॥२३॥
यथा चैवाऽपरः पक्षः पूर्वपक्षाद्विशिष्यते ।
तथा श्राद्धस्य पूर्वाह्णादपराह्णो विशिष्यते ॥२४॥
तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलैस्तथा ।
दत्तेन सम्यक् प्रीयन्ते श्राद्धेन पितरः प्रिये ॥२५॥
सर्वेष्वेव तु श्राद्धेषु तिलाः प्राधान्यतः स्मृताः ।
मिष्टान्नानि बहून्येव सर्पिर्गव्यं च पायसम् ॥२६॥
आपो मूलं फलं गव्यमन्नं च पेयमुत्तमम् ।
यत्किंचिन्मधुसंमिश्रं श्राद्धेऽनन्तसुतृप्तिदम् ॥२७॥
नक्षत्रेषु फलं श्राद्धे कथयामि शृणु प्रिये ।
अपत्यकामो रोहिण्यां तेजस्कामो मृगोत्तमे ॥२८॥
क्रूरकर्मा तथाऽऽर्द्रायां धनकामः पुनर्वसौ ।
पुष्टिकामस्तथा पुष्ये चाऽऽश्लेषायां सुतेच्छुकः ॥२९॥
ज्ञात्यग्र्येच्छुर्मघायां तु फाल्गुन्यां सुभगेच्छुकः ।
अपत्यभागुत्तरासु हस्ते कार्यफलेच्छुकः ॥३०॥
सुपुत्रेच्छुस्तु चित्रायां स्वातौ वाणिज्यकामुकः ।
राज्येच्छुरनुराधायां श्राद्धं कुर्यान्नरः सदा ॥३१॥
बहुपुत्रेच्छुकः श्राद्धं विशाखायां प्रवर्तयेत् ।
अधिपतीच्छुर्ज्येष्ठायां मूले त्वारोग्यकामुकः ॥३२॥
पूर्वाषाढासु तु यशस्कामः श्राद्धं समाचरेत् ।
उत्तरासु त्वषाढासु वीतशोकेच्छुकश्चरेत् ॥३३॥
भिषगिच्छुरभिजिति श्रवणे सद्गतीच्छुकः ।
राज्येच्छुको धनिष्ठायां कुर्याच्छ्राद्धं विधानतः ॥३४॥
भिषक्सिद्धीच्छुकः शतभिषजि श्राद्धमाचरेत् ।
अजाऽवीच्छुः पूर्वभाद्रपदायां श्राद्धमाचरेत् ॥३५॥
गवेच्छुकश्चोत्तरायां रेवत्यां वित्तकामुकः ।
अश्विन्यामश्वसंकल्पो भरण्यामायुरिच्छुकः ॥३६॥
श्राद्धं कुर्याद् रैवताद्रौ दामोदरसमीपतः ।
नारायणह्रदे चैव कुण्डे दामोदरे तथा ॥३७॥
ये तु धर्मव्यपेतेषु चारित्र्याऽपगतेषु च ।
हव्यं कव्यं प्रयच्छन्ति तेषां तत्प्रेत्य नश्यति ॥३८॥
विद्यावेदव्रतस्नाताः सदाचारपरास्तथा ।
मातापित्रोः सेवकाश्च सत्यधर्मपरास्तथा ॥३९॥
पुण्यतीर्थाऽभिषिक्ताश्चाऽवभृथस्नायिनस्तथा ।
अक्रोधनास्तथा क्षान्ताः समर्थाश्च जितेन्द्रियाः ॥४०॥
यतयो मोक्षधर्मज्ञा योगज्ञाः सुव्रतास्तथा ।
ये चेतिहासं प्रयताः श्रावयन्ति जनान्सदा ॥४१॥
वेदवेदांगवेत्तारः शास्त्रदर्शनसद्विदः ।
धर्मशास्त्रपुराणज्ञाः साध्व्यश्च साधवस्तथा ॥४२॥
अच्युतगोत्रा ये स्युस्ते सर्वे वै पंक्तिपावनाः ।
सर्वभूतहितान्सर्वान् श्राद्धेष्वेतान् निमन्त्रयेत् ॥४३॥
तेषु वै भुंजमानेषु पितरस्तत्र भुंजते ।
देवास्तु पितरो नाम निर्मिता ये स्वयंभुवा ॥४४॥
सप्तकः पितृवंशस्तु पूर्वदृष्टः स्वयंभुवा ।
विश्वे चाग्निमुखा देवास्तान् प्रवक्ष्यामि नामतः ॥४५॥

बलं धृतिर्विपाप्मा च पुण्यकृत् पावनस्तथा ।
पार्ष्णिः क्षेमा समूहश्च दिव्यसानुस्तथैव च ॥४६॥
विवस्वान् वीर्यवान् ह्रीमान् कीर्तिमान् कृत एव च ।
जितात्मा मुनिवर्यश्च दीप्तरोमा भयंकरः ॥४७॥
अनुकर्मा प्रतीतश्च प्रदाताऽत्यंशुमाँस्तथा ।
शैलाभः परमक्रोधी धीरोष्णी भूपतिस्तथा ॥४८॥
स्रजो वज्री वरी चैव विश्वेदेवाः सनातनाः ।
विद्युद्वर्चाः सोमवर्चाः सूर्यश्रीश्चेति नामतः ॥४९॥
सोमपः सूर्यसावित्री दत्तात्मा पुण्डरीयकः ।
उष्णीनाभो नभोदश्च विश्वायुर्दीप्तिरेव च ॥५०॥
चमूहरः सुरेशश्च व्योमारिः शंकरो भवः ।
ईशः कर्ता कृतिर्दक्षो भुवनो दिव्यकर्मकृत् ॥५१॥
गणितः पञ्चवीर्यश्च ह्यादित्यो रश्मिवाँस्तथा ।
सप्तकृत्सोमवर्चाश्च विश्वकृत् कविरित्यपि ॥५२॥
अनुगोप्ता सुगोप्ता च नप्ता चेश्वर एव च ।
कीर्तितास्ते महाभागाः कालस्य गतिगोचराः ॥५३॥
पितामहः पुलस्त्यश्च वसिष्ठः पुलहस्तथा ।
अंगिराश्च क्रतुश्चैव कश्यपश्च महानृषिः ॥५४॥
महायोगेश्वरा एते पितरः पूर्वजाः स्मृताः ।
अष्टाशीतिसहस्राणि बालखिल्या महर्षयः ॥५५॥
अन्ये गोत्रप्रवराश्च सशाखाः पितरः स्मृताः ।
अग्निष्वात्ता बर्हिषदा आज्यपाः सोमपास्तथा ॥५६॥
गणश्चतुर्विधश्चायं पितरस्तेऽपि पूर्वजाः ।
ब्रह्मणा निर्मिता देवपितरस्ते चिरायुषः ॥५७॥
श्रवणाः प्रेतका याम्या नारकाः पितरश्च ते ।
सांवत्सराश्च आग्नेया जन्माप्ताः पितरश्च ते ॥५८॥
तदन्ये वंशकर्तारो मृतास्ते ब्रह्मलोकगाः ।
ऐश्वराः पितरश्चैते विज्ञेया भागकांक्षिणः ॥५९॥
त एते सत्सु पात्रेषु भुंजते यान्ति तृप्तिकम् ।
तेभ्यश्चान्नं हविर्मृष्टं फलं जलं च पायसम् ॥६०॥
विविधं वै प्रदातव्यं तृप्ता रक्षन्ति वंशजान् ।
दामोदरेऽर्पयेत्पिण्डान् स्वर्णरेखानदीतटे ॥६१॥
पिता पितामहश्चैव तथैव प्रपितामहः ।
माता पितामही चैव तथैव प्रपितामही ॥६२॥
मातामहस्तत्पिता च प्रमातामहकादयः ।
तेषां पिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठताम् ॥६३॥
अस्मत्कुले मृता ये च गतिर्येषां न विद्यते ।
तेषामुद्धरणार्थाय पिण्डमेनं ददाम्यहम् ॥६४॥
बन्धुवर्गकुले ये च गतिर्येषां न विद्यते ।
तेषामुद्धरणार्थाय पिण्डमेनं ददाम्यहम् ॥६५॥
अजातदन्ता ये केचिद् ये तु गर्भे प्रपीडिताः ।
तेषामुद्धरणार्थाय पिण्डमेनं ददाम्यहम् ॥६६॥
अग्निदग्धाश्च ये केचिच्छीतनष्टास्तथाऽपरे ।
अनग्निनष्टा ये चान्ये तेभ्यः पिण्डं ददाम्यहम् ॥६७॥
विद्युच्चौरहता दावदाहे ये च मृतास्तथा ।
हिंस्रव्याघ्रहता ये च तेभ्यः पिंडं ददाम्यहम् ॥६८॥
दंष्ट्रिशृंगिनखिक्ष्वेडिशस्त्रिपाशिहताश्च ये ।
आत्मघातिक्षुद् घातिनस्तेभ्यः पिण्डं ददाम्यहम् ॥६९॥
वनेऽरण्ये वर्त्ममध्ये तृषया क्षुधया हताः ।
भूतप्रेतपिशाचैश्च तेभ्यः पिण्डं ददाम्यहम् ॥७०॥
रौरवे ये च तामिस्रे कालसूत्रे च ये स्थिताः ।
तेषामुद्धरणार्थाय पिण्डमेनं ददाम्यहम् ॥७१॥
अनेकयातनासंस्थाः प्रेतलोकं च ये गताः ।
तेषामुद्धरणार्थाय पिण्डमेनं ददाम्यहम् ॥७२॥
दुर्गतिं समनुप्राप्य येऽभिशापादिना हताः ।
तेषामुद्धरणार्थाय पिण्डमेनं ददाम्यहम् ॥७३॥
नरकेषु समस्तेषु यमदूतवशंगताः ।
तेषामुद्धरणार्थाय पिण्डमेनं ददाम्यहम् ॥७४॥
पशुयोनिगता ये च पक्षिकीटसरीसृपाः ।
अपि ये वृक्षयोनिस्थास्तेभ्यः पिण्डं ददाम्यहम् ॥७५॥
जात्यन्तरसहस्रेषु ये भ्रमन्ति स्वकर्मभिः ।
मानुष्यं दुर्लभं येषां तेभ्यः पिण्डं ददाम्यहम् ॥७६॥
दिव्यन्तरीक्षभूमिष्ठाः पितरो बान्धवादयः ।
असंस्कृतमृता ये च तेभ्यः पिण्डं ददाम्यहम् ॥७७॥
ये केचित्प्रेतरूपेण वर्तन्ते पितरो मम ।
ते सर्वे तृप्तिमायान्तु पिण्डेनाऽनेन सर्वदा ॥७८॥
अबान्धवा बान्धवा ये तथाऽन्यजनिबान्धवाः ।
तेषां पिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठताम् ॥७९॥
पितृवंशे मृता ये च मातृवंशे च ये मृताः ।
गुरुश्वशुरबन्धूनां ये चान्ये बान्धवा मृताः ॥८०॥
लुप्तपिण्डाः कुले ये मे पुत्रदारविवर्जिताः ।
क्रियालोपगता ये च जात्यन्धाः पंगवश्च ये ॥८१॥
विरूपा आमगर्भाश्च ज्ञाताऽज्ञाताः कुले मम ।
तेषां पिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठताम् ॥८२॥
आ ब्रह्मणः पितृवंशमातृवंशभवाश्च ये ।
जाताः कुलद्वये ये मे तेभ्यः पिण्डं ददाम्यहम् ॥८३॥

ये केचित्प्रेतरूपेण वर्तन्ते पितरो मम ।
ते सर्वे तृप्तिमायान्तु सक्तुभिस्तिलमिश्रितैः ॥८४॥
आब्रह्मस्तम्बपर्यन्तं यत्किंचित्सचराचरम् ।
मया दत्तेन पिण्डेन तृप्तिमायातु सर्वशः ॥८५॥
कुण्डे दामोदरे स्नानं करोम्यात्मविशुद्धये ।
सूर्यलोकादिसम्प्राप्तिसिद्धये प्रेतमुक्तये ॥८६॥
स्नात्वाऽथ तर्पणं कुर्याद् देवादीनां यथाविधि ।
आब्रह्मस्तम्बपर्यन्तं देवर्षिपितृमानवाः ॥८७॥
वैराजा ब्रह्ममार्गस्थास्तथाऽन्ये पुण्यलोकगाः ।
तृप्यन्तु पितरः सर्वे मातृमातामहादयः ॥८८॥
पिता पितामहश्चैव तथैव प्रपितामहः ।
मम तृप्तिं प्रयान्त्वद्य होमाध्यासितमूर्तयः ॥८९॥
पिता पितामहश्चैव तथैव प्रपितामहः ।
मम तृप्तिं प्रयान्त्वद्य विप्रदेहेषु संस्थिताः ॥९०॥
पिता पितामहश्चैव तथैव प्रपितामहः ।
तृप्तिं प्रयान्तु पिण्डेषु मया दत्तेषु भूतले ॥९१॥
पिता पितामहश्चैव तथैव प्रपितामहः ।
तृप्तिं प्रयान्तु मे भक्त्या यन्मयैतदुदाहृतम् ॥९२॥
मातामहस्तृप्तिमेतु तृप्तिमुपैतु तत्पिता ।
विश्वे देवा यान्तु तृप्तिं तृप्तिं यातु हरिः प्रभुः ॥९३॥
यस्य श्राद्धे यतिर्भुंक्ते तस्य भुंक्ते हरिः स्वयम् ।
यस्य श्राद्धे हरिर्भुंक्ते तस्य भुंक्ते जगत्त्रयम् ॥९४॥
साधवो वैष्णवाः श्राद्धे भोजनीया विशेषतः ।
साध्व्यश्च भोजनीया वै पुण्यमक्षय्यतृप्तिकृत् ॥९५॥
यो वै यतीननादृत्य भोजयेदितरान् द्विजान् ।
विजानन् वसतो ग्रामे कव्यं तद्याति राक्षसान् ॥९६॥
हरेर्भक्तो यतिर्यत्र श्राद्धे भुंक्ते तदा तु तत् ।
प्रसंपूर्णं भवेत् श्राद्धं विनापि श्राद्धसम्पदम् ॥९७॥
अन्नक्षीरघृतक्षौद्रैरैक्षवेण च तर्पिताः ।
प्राप्नुवन्त्यक्षयां तृप्तिं सर्वे पितृगणा अपि ॥९८॥
निर्दोषं पायसं चान्नमृषिधान्यानि चाब्धिजे ।
अर्पयेत् सर्वपितृभ्यस्तेन तुष्यन्ति ते सदा ॥९९॥
पयो दधि घृतं नवनीतं गवां तु पावनम् ।
महिषीणां घृतं श्रेष्ठं न तु तत्पय उच्यते ॥१००॥
मातामहोऽथ दौहित्रो भागिनेयश्च मातुलः ।
मातृष्वसेयस्तज्जश्च मातुलेयस्तथैव च ॥१०१॥
जामाता श्वशुरश्चैव भार्याभ्राता च तत्सुतः ।
ऋत्विग्गुरुरुपाध्याय आचार्यः क्षोत्रियस्तथा ॥१०२॥
सुव्रताः साधुसाध्व्यश्च ह्येते श्राद्धेषु पावनाः ।
युगानुरूपधर्मज्ञा विद्याचारादिरक्षकाः ॥१०३॥
कालः कुतुपसंज्ञश्च तथा नेपालकम्बलः ।
रौप्यं दर्भास्तिलाः श्राद्धे दौहित्रश्चेति पावनाः ॥१०४॥
अह्नो मुहूर्ता विख्याता दशपंच च सर्वदा ।
तत्राऽष्टमो मुहूर्तो यः स कालः कुतुपः स्मृतः ॥१०५॥
अगस्त्यं भृंगराजं च तुलसी शतपत्रिका ।
चम्पकं तिलपुष्पं च पितॄणां वल्लभानि षट् ॥१०६॥
पिण्डमात्रं प्रदातव्यमसत्त्वे द्रव्यविप्रयोः ।
श्राद्धीयाऽहनि संप्राप्ते श्राद्धं शक्तिवदाचरेत् ॥१०७॥
उदकुंभं प्रदद्याद्वा फलं कदलमेव वा ।
तृणानि वा गवे दद्यान्न तु शून्यं दिनं नयेत् ॥१०८॥
वैष्णवैस्तु क्रमात्प्राप्तं श्राद्धमेकादशीदिने ।
द्वादश्यामपि कर्तव्यं पितरो वैष्णवा यतः ॥१०९॥
श्राद्धं कृत्वा चोपवसेदाघ्राय पितृसेवितम् ।
श्राद्धे प्राप्तोऽतिथिर्भोजनीयः स्याच्छ्राद्धपूर्णता ॥११०॥
अरोगोऽविकलो भोक्ता चिरायुः पुत्रपौत्रवान् ।
अर्थवानर्थभोगी च श्राद्धकर्ता विवर्धते ॥१११॥
देवे श्राद्धं चामृतं स्यान्मर्त्ये भोज्यं पशौ तृणम् ।
नागे वायुर्यत्र योनौ प्रेते तद्भोजनं भवेत् ॥११२॥
तत्तदन्नतयैवेत्थं श्राद्धान्नं सर्वयोनिषु ।
प्राप्यते प्राणिभिस्तस्माच्छ्राद्धं धर्मः सनातनः ॥११३॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने रेवताचले दामोदरकुण्डे श्राद्धे तिथिफलं नक्षत्रफलं सत्पात्रं विविधपितरस्तद्देयसामान्यमित्यादिनिरूपण-नामाऽष्टपंचाशदधिकशततमोऽध्यायः ॥१५८॥

**श्रीनारायण उवाच—**

नारायणह्रदो लक्ष्मि ! यत्र नारायणः स्वयम् ।
लक्ष्म्या साकं गरुडेनाऽऽगत्य संस्नातवान् हरिः ॥ १ ॥
पुरा कृतयुगे लक्ष्मि ! भक्तिधर्मपरायणः ।
कुंकुमवापीवास्तव्यो विप्रो नारायणांशजः ॥ २ ॥
पत्नीव्रतो ब्रह्मदेवः कार्तिक्यामागतः स्वयम् ।
यात्रार्थं रेवताद्रेश्च स्नातो दामोदरे ह्रदे ॥ ३ ॥
श्राद्धं दामोदरे कृत्वा महापूजाविधानतः ।
दामोदरं पूजयित्वा नृत्योत्सवमकारयत् ॥ ४ ॥

भक्त्या संभोजयामास द्वादश्यां भूसुरान् सतः ।
दामोदरः प्रसन्नोऽभूदैच्छद्दातुं स्वदर्शनम् ॥ ५ ॥
दामोदरं प्रणम्यैव यावदग्रे प्रवर्तते ।
तावद्दामोदरो देवो विप्ररूपेण चाऽग्रगः ॥ ६ ॥
तैर्थिकस्य स्वरूपेण मिलितः प्राह ओं नमः ।
परस्परं नमस्कृत्य विप्रौ तौ पर्वतं प्रति ॥ ७ ॥
यावदग्रे प्रयातश्च तावत्तैर्थिकयात्रिणा ।
उक्तं ब्रह्मन्नुपर्यत्र ह्रदोऽस्ति सुभगो महान् ॥ ८ ॥
जलं पातालझरणं स्वर्णरेखानदीमयम् ।
पर्वतोदरसम्बद्धमक्षयं चामृतोपमम् ॥ ९ ॥
जलं पीत्वा गमिष्यावो भवस्य भवनं प्रति ।
इत्यामन्त्र्य गतौ विप्रौ ह्रदे नारायणे जलम् ॥१०॥
अगाधं वै समालोक्याऽरण्यं गाढं च शाखिनाम् ।
प्रसन्नमनसौ जातौ विश्रामं क्षणमापतुः ॥११॥
तैर्थिकर्षेर्दर्शनेन चित्तं पत्नीव्रतस्य तु ।
योगाभ्यासगतौ शान्तं यथा तद्वदजायत ॥१२॥
तैर्थिकस्तु जलं तस्माद् ह्रदात् स्वस्य कमण्डलौ ।
भृत्वा तीरे ततो गत्वा पत्नीव्रतमपाययत् ॥१३॥
तावत्पत्नीव्रतस्यैतज्जलपानेन तत्क्षणात् ।
इन्द्रियवृत्तयः शान्ता उपाजग्मुः परावृतिम् ॥१४॥
कर्मज्ञानेन्द्रियाणां वै वृत्तयो मानसं प्रति ।
लीनास्तन्मानसी वृत्तिरहंभावे लयं गता ॥१५॥
अहंभावस्तदा तस्य बुद्धौ तु लीनतां गतः ।
बुद्धिर्जीवात्मतत्त्वे तु लीनभावं गता यदा ॥१६॥
तावत्तेनात्मना स्वस्य ब्रह्मत्वं चावलोकितम् ।
रूपं तेजोमयं दिव्यं व्यापकं सीमशून्यकम् ॥१७॥
कोटिकोट्यर्कसंकाशं स्वात्मरूपं विलोकितम् ।
आत्मना चक्षुषा चात्मा स्वेनैव स्वो विलोकितः ॥१८॥
अनन्ताऽऽनन्दसन्दोहो ह्यनन्तसुखशेवधिः ।
अनन्ताश्चर्यसम्पूर्णो ह्यप्रसंख्यचमत्कृतिः ॥१९॥
अनन्तैश्वर्यसम्पन्नो ह्यनन्तधामदर्शनः ।
अनन्ताऽब्जाणुसदृशब्रह्माण्डकोटिरोमकः ॥२०॥
आत्मा स्वं दृष्टवान् विप्रः पत्नीव्रतस्तदन्तरे ।
तदा तत्राऽक्षरं ब्रह्म धाम तेजोमयं महत् ॥२१॥
ददर्शाऽसीमतेजस्वि परब्रह्मनिवासवत् ।
तत्राऽयं तैर्थिको विप्रो नारायणस्वरूपवान् ॥२२॥
संस्थितो दिव्यसौवर्णमणिसिंहासने शुभे ।
अनन्ताऽनन्तमुक्तैः संसेवितो धर्मभक्तिभिः ॥२३॥
असंख्यस्वप्रियादिव्यतन्वीभिः परिवारितः ।
तत्रत्यैः सत्कृतां पूजामादायाऽऽगच्छतामुभौ ॥२४॥
ब्रह्मधाम्नि सभा दिव्या कथा यत्र प्रवर्तते ।
तत्रागतौ च तौ देवौ सदस्यैः सत्कृतौ स्थितौ ॥२५॥
उपविष्टौ तदर्थे संक्लृप्ताऽऽसनवरेण्ययोः ।
"कथायां वाच्यमानायां नारायणह्रदाप्लवम् ॥२६॥
कृतं तेन च तेषां वै धाम्न्यत्र मुक्तिरिष्यते ।
तत्राऽस्मान् ब्रह्मधामस्थान् मुक्तान् स्मरन्ति ये जनाः ॥२७॥
ये भक्तास्तद्ध्रदे स्नान्ति पिबन्ति सलिलं च ये ।
तेषां फलं सदाऽक्षय्यं धाम्न्यत्र संप्रजायते ॥२८॥
अस्मान् संस्मृत्य संस्मृत्य जलं पास्यन्ति ये पितॄन् ।
तेषां ते पितरस्तत्र मुक्तिं यास्यन्ति धामनि ॥२९॥
नारायणमनुस्मृत्य जलं पास्यन्ति ये जनाः ।
तेषां सत्कार्यतश्चात्र स्वयं नारायणो हरिः ॥३०॥
प्रसन्नो भवति तृप्तस्तेन तृप्ता वयं सदा" ।
इत्यादिकीं वरां गाथां श्रुतवन्तावुभौ सुरौ ॥३१॥
तत्रत्यैः सत्कृतां पूजां गृहीत्वा ययतुस्ततः ।
गोलोकं धाम परमं कृष्णगोपीजनावृतम् ॥३२॥
कोटीनां गोपगोपीनां मध्ये कृष्णस्वरूपतः ।
संस्थितस्तैर्थिको विप्रो दृष्टः पत्नीव्रतेन वै ॥३३॥
तत्रत्यैः पूजितः कृष्णः शुश्राव रसकीर्तनम् ।
नारायणह्रदस्नानबलाद्वै कृष्णमन्दिरम् ॥३४॥
आयान्ति बहवो मुक्तास्तृप्यन्ति कणयोगतः ।
तत्र स्नानोत्सवादिभ्यः कृष्णो याति प्रसन्नताम् ॥३५॥
कृष्णे प्रसन्ने गोलोकः सर्वस्तृप्तः सदास्ति यत् ।
श्रुत्वैतत् तौ गतौ देवौ वैकुण्ठं धाम यन्महत् ॥३६॥
तत्रत्यैर्वन्दितौ तद्वत् स्वासने सन्निषादितौ ।
तत्र तौ द्वौ दिव्यविप्रौ नारायणौ बभूवतुः ॥३७॥
नाण्वपि न्यूनता तत्र द्वयोर्नारायणात्मनोः ।
चतुर्भुजौ च तौ जातौ नैकलक्ष्मीनिषेवितौ ॥३८॥
सत्कृतौ सेवितौ तौ द्वौ दृष्ट्वा रूपं परस्परम् ।
श्रुतवन्तौ स्तुतिं दिव्यां लक्ष्यादिगदितां शुभाम् ॥३९॥
"नारायणह्रदे स्नानं पानं तथा च तर्पणम् ।
कृतं येन यदर्थे वै ते स्युर्वैकुण्ठवासिनः ॥४०॥
तत्कृतां महतीं पूजां गृह्णात्येव हरिः स्वयम् ।
नारायणः सदा श्रीमान् प्रसन्नो भवति ध्रुवम् ॥४१॥
तस्य प्रसन्नतालाभे वयं तृप्ताः सदा स्म ओम्" ।
इत्यानन्दमयीं वाचं श्रुत्वाऽमृतं तु जग्मतुः ॥४२॥

धाम्न्यमृते तन्निवासिप्रदत्ते ह्यासने वरे ।
समुपतिष्ठतस्तौ द्वौ सत्कृतौ मानितौ मुहुः ॥४३॥
श्रुतवन्तौ च तत्रत्यां कथां लक्ष्मीनिवेदिताम् ।
"रैवताख्ये महादिव्ये स्वर्णरेखानदीजले ॥४४॥
नारायणह्रदे स्नानात्पानात्तद्वच्च तर्पणात् ।
भूमानारायणस्तृप्तः प्रसन्नो भवति ध्रुवम् ॥४५॥
तस्य प्रसन्नतातृप्त्या वयं तृप्ताः सदा मताः" ।
श्रुत्वा नारायणौ तौ द्वौ लोके प्राकृतपौरुषे ॥४६॥
प्राधानपौरुषे लोके गत्वा चाऽव्याकृते ततः ।
लोके हैरण्यकोशाख्ये वैराजे च तथा गतौ ॥४७॥
श्वेतद्वीपे बदर्यं च क्षैरे धामनि वैष्णवे ।
सादाशैवे तथा मायालोके चावरणेषु च ॥४८॥
गतौ चैश्वरलोकेषु तत्रत्यैः पूजितौ तथा ।
वन्दितौ सत्कृतौ तत्र श्रुतवन्तौ कथां शुभाम् ॥४९॥
"नारायणह्रदे स्नानात् दानात् पानाच्च तर्पणात् ।
नारायणः प्रसन्नो वै जायते तत्कृपावशात् ॥५०॥
वयं तृप्ताः सदा स्मोऽत्राऽमृतमैश्वरमेव तत् ।
नारायणह्रदो ब्रह्मधाम चाऽक्षरमेव तत् ॥५१॥
तज्जलं तद्धाम तृप्तिरानन्दद्रव एव सः ।
तद्वै नारायणमूर्तेः सुखमानन्दमेव यत् ॥५२॥
तेन तृप्ताः सदा स्मोऽत्र वयं हरेः प्रसादतः" ।
इति तौ ब्राह्मणौ नारायणावीश्वरभूमिकाः ॥५३॥
दृष्ट्वाऽऽयातौ सत्यलोके वैराजाख्ये स्तरे तदा ।
तत्रत्यैर्बहुभिस्तत्रर्षिपितृमुनिभिस्तथा ॥५४॥
ब्रह्मणश्च सभायां वै सरस्वत्यादिभिस्तथा ।
गायत्र्या चैव सावित्र्याऽसिक्न्या च सन्ध्यया तथा ॥५५॥
पलिक्न्या च विरिण्या च शतरूपादिभिस्तथा ।
रत्या सृष्ट्या च मोहिन्या कद्र्वा तापसि काजनैः ॥५६॥
वन्दितौ पूजितौ देवौ सत्कृतौ विष्टरंगतौ ।
"श्रुतवन्तौ कथां दिव्यां धन्यो नारायणो ह्रदः ॥५७॥
यत्र वै तर्पणादस्मान् पोषयन्ति च भूसुराः ।
कार्तिक्यां तर्पणं तत्रैकवारं येन संकृतम् ॥५८॥
अब्जवर्षाऽर्बुदान्यस्मत्तृप्तिर्भवति शाश्वती ।
अथापि ये द्विजाः पत्नीव्रतप्रख्या भुवि स्थिताः ॥५९॥
श्राद्धं तत्रार्चनं तद्वत् करिष्यन्ति च तर्पणम् ।
तेनाऽक्षय्या पुनस्तृप्तिर्भवितैव सुखं सुखम्" ॥६०॥
श्रुत्वैतत्तौ तदाऽऽयातौ कैलासे शिवसन्निधौ ।
तत्र स पार्वतीशंभुगणैः सपूजितौ च तौ ॥६१॥
स्थापितावासने श्रेष्ठे श्रुतवन्तौ च तत्कथाम् ।
"नारायणह्रदे दिव्ये भवेश्वरसुसन्निधौ ॥६२॥
स्वर्णरेखाजले पूर्वे युगे सत्ये तु भूसुरैः ।
तर्पितास्तु वयं तृप्ता इदानीं यावदत्र वै" ॥६३॥
अथेमौ ब्राह्मणौ गत्वा तर्पणं प्रकरिष्यतः ।
तदा पुनर्महातृप्तिं गमिष्याम इति ध्रुवम् ॥६४॥
अथ ध्रुवोपरि विष्णुलोके च सौर्यमण्डले ।
वाह्नेयमण्डले महर्जनयोस्तपसि स्तरे ॥६५॥
स्वर्गे च दिक्प्रपालानां लोकेषु च गतावुभौ ।
भुवर्लोके गतौ तत्र शुश्रुवतुः सुतर्पणम् ॥६६॥
"नारायणह्रदे पूर्वे तर्पणेन कृतेन वै ।
इदानीं यावत् तृप्ताः स्म पुनश्चेमौ करिष्यतः ॥६७॥
तर्पणं तेन तृप्तिं वै प्राप्स्यामः शाश्वतीः समाः" ।
श्रुत्वैतद्दक्षिणं मार्गं जग्मतुस्तौ दयालयौ ॥६८॥
श्रावणाः पितरो दृष्टा दृष्टाश्च प्रेतपितृकाः ।
याम्याश्च पितरो दृष्टा दृष्टाश्च यमभूमयः ॥६९॥
तत्र तत्र च ते जीवा नारायणांगसंगमात् ।
वायोः संस्पर्शनेनात्र सुखिनो ह्यभवन् क्षणात् ॥७०॥
"अत्यार्ताश्चाऽब्रुवँस्तौ ते ह्युद्धारं कुरुतं प्रभू ।
भवन्तौ द्वौ द्विजौ पुण्यौ पुण्यदौ दृष्टिगोचरौ ॥७१॥
नारायणह्रदेऽस्माकं तृप्त्यर्थं कुरुतं शुभौ ।
श्राद्धं च तर्पणं स्नानं तृप्तिं यास्याम ऐश्वरीम्" ॥७२॥
ततस्तौ चागतौ भूमौ तत्र चतुःखनिष्वपि ।
स्थितैर्जीवैः प्रार्थितौ तौ तर्पणार्थं दयालयौ ॥७३॥
एवं पातालपर्यन्तं नारायणेन सर्वथा ।
पत्नीव्रताय सर्वं तत् दर्शितं सुसमाधिना ॥७४॥
तत्रत्यवासिभिस्तत्र प्रार्थितं दुःखनाशनम् ।
"नारायणह्रदे दिव्ये स्वर्णरेखाजले तु यौ ॥७५॥
अस्माकं च कृते देवौ तर्पणं संकरिष्यथः ।
तेनाऽस्माकं शाश्वती वै तृप्तिर्भाव्याऽथ मोक्षणम्" ॥७६॥
इत्यर्थनां च तौ श्रुत्वा ह्यागतौ तु क्षणान्तरे ।
नारायणह्रदो यत्र तत्र पत्नीव्रतो द्विजः ॥७७॥
समाधेर्बहिरागच्छत् तावदाश्चर्यमाप्तवान् ।
"अहो किंकिं मया दृष्टं क्वाऽहं क्व च गता नु ते ॥७८॥
कोऽयं च यात्रिको विप्रः किमेतत् स्वप्नमागतम्" ।
तावन्नारायणस्तत्र जातश्चतुर्भुजो हरिः ॥७९॥
गरुडांऽसंस्थितो देवो लक्ष्मीकृतांऽकसंस्थितिः ।
पार्षदैर्वर्धितो जयप्रभृतिमांगलैः पदैः ॥८०॥

दृष्ट्वा देवं तदा लक्ष्मीनारायणं तुतोष सः ।
नमस्कृत्याऽर्हणं कृत्वा पादयोरपतत् सुरः ॥८१॥
प्रह्वीभूतहृदा विप्रः प्राह गद्गदया गिरा ।
किमेतद्दर्शितं देव ! कथं विप्रस्तु तैर्थिकः ॥८२॥
किमत्र कारणं कृष्ण ! तारितोऽहं कृपालुना ।
अहो मे भाग्यसौभाग्यं यद्धरेर्दर्शनं गतः ॥८३॥
किमस्मादधिकं मन्ये तीर्थयात्राफलं मम ।
स्वयं नारायणो दामोदरोऽस्ति भगवान् भवान् ॥८४॥
मदुद्धाराय जग्राह भवाँस्तैर्थिकरूपणाम् ।
नतोऽस्म्यनुगृहीतोऽस्म्यर्थितोऽस्म्यभिमतोऽस्मि च ॥८५॥
नास्ति मे मोक्षणे न्यूनं यत्र सार्थो भवान्मतः ।
साक्षान्नारायणो मह्यं मिलितो रैवते स्थले ॥८६॥
दर्शिता च समाधौ वै ब्रह्मसृष्टिस्तथाऽपरा ।
ईशसृष्टिश्च धामानि लोकसृष्टिस्तथेतरा ॥८७॥
यमसृष्टिर्नागसृष्टिर्द्रष्टुं यन्नावशिष्यते ।
सर्वं वै दर्शितं मह्यं शाधि किं करवाणि ते ॥८८॥
नारायणस्तदा प्राह द्विजं पत्नीव्रतं तदा ।
शृणु ब्राह्मण ते गाथां को भवानिति वर्णये ॥८९॥
गोलोके यः स्वयं कृष्णो रुक्मिणी चापि तत्प्रिया ।
कुंकुमवाप्यां तौ देवौ जनकल्याणहेतवे ॥९०॥
प्रकटितौ मानसौ कम्भरागोपालसंज्ञकौ ।
रुक्मिणी कम्भरा जाता कृष्णो गोपालसंज्ञकः ॥९१॥
अश्वपट्टमहत्तीर्थे तत्रोषितौ कृते युगे ।
त्वं वै नारायणः साक्षाद्वैकुण्ठाधिपतिः प्रभुः ॥९२॥
पतिव्रताख्यां पत्नीं तां लक्ष्मीं नीत्वा च तत्स्थले ।
लक्ष्मीनारायणस्त्वं वै प्रादुर्भूतोऽत्र भूतले ॥९३॥
मया पूर्वमुभौ तौ वै भवन्तौ ब्राह्मणौ कृतौ ।
यदा भूमौ सृष्टिमूलं भवानेकस्तु मानसः ॥९४॥
प्रकटीऽभूत्ततस्ते वै वंशप्रवंशविस्तरः ।
अक्षरे च गवां लोके वैकुण्ठेऽव्याकृते तथा ॥९५॥
अमृते श्वेतविभवे क्षीरे चाऽब्धौ विराजके ।
चतुर्दशसु लोकेषु तव वंश्या भवन्ति वै ॥९६॥
ते मया दर्शिता तुभ्यं त्वं तु नारायणः स्वयम् ।
शाश्वतः सृष्टिजीवानां तर्पणात् तृप्तिदो विभुः ॥९७॥
इति ते दर्शितं मुख्यं यद्भवान् पितरौ च यौ ।
अथाऽऽगत्य च मे पूजा तर्पणादिकमत्र वै ॥९८॥
दामोदरे कृतं तेन प्रसन्नोऽहं हरिः स्वयम् ।
इयेष दर्शनं दातुं ततोऽहं नीतवानितः ॥९९॥
रम्ये नारायणह्रदे मम तीर्थे सुशोभने ।
निर्जनेऽहं त्वया दृष्टो ह्येषोऽनुग्रहसागरः ॥१००॥
मम बोध्यस्त्वया विप्रनान्यस्त्वं त्वहमेव हि ।
अहं कृष्णो भवान् विष्णुर्द्वावपि लोकपोषकौ ॥१०१॥
जगतां तृप्तिदौ तस्मादत्र नारायणे ह्रदे ।
सर्वेषां तृप्तये श्राद्धं तर्पणं कार्यमित्यपि ॥१०२॥
भवान् गुरुरहं चात्र यजमानो भवामि वै ।
गावः सन्ति च मे पार्श्वे गोलोके दुग्धदास्तथा ॥१०३॥
वृक्षा वल्ल्यश्च फलदा धान्यदा पृथिवी मता ।
सर्वं दाक्षिणकं द्रव्यं मदग्रे बहु वर्तते ॥१०४॥
कारयाऽत्र महच्छ्राद्धं तर्पणं सार्वभौमिकम् ।
इत्याज्ञप्य च तौ देवौ स्नातौ तत्र ह्रदे शुभे ॥१०५॥
तावत्तत्र तदा देवा देव्यश्चापि समागताः ।
लोकपाला दिशांपाला नद्यश्च पर्वतास्तथा ॥१०६॥
कामधेनवोऽसंख्याता गोलोकात्समुपागताः ।
वैकुण्ठाच्च रमाः सर्वास्तथाऽन्ये साधवोऽखिलाः ॥१०७॥
महर्षयश्च मुनयो वृक्षा वल्ल्यश्च वार्धयः ।
श्राद्धोपकरणान्यादायात्र सर्वे ह्युपस्थिताः ॥१०८॥
श्रीकृष्णस्तु स्वयं दामोदरो वै यजमानकः ।
पत्नीव्रतः स्वयं नारायणः श्राद्धकरोऽभवत् ॥१०९॥
श्रद्धया दीयते यत्तच्छ्राद्धं वै पूजनं मतम् ।
नारायणात्समारभ्य सर्वेषां तद्भवेत्खलु ॥११०॥
सर्वसमर्पणा भक्तिः श्राद्धं नारायणादिके ।
तृप्त्यर्पणात्मिका भक्तिः श्राद्धं प्रेतादिके मतम् ॥१११॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पत्नीव्रताख्यविप्रस्य रैवताचले तीर्थयात्रायां दामोदरपूजनादिना साक्षाद्दर्शनं समाधौ सर्वधामसर्वलोकदर्शनं स्वस्य नारायणावतारप्रदर्शनं नारायणह्रदे श्राद्धार्थमागमश्चेत्यादिनिरूपणनामैकोनषष्ठ्यधिकशततमोऽध्यायः ॥१५९॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! ततो नारायणौ द्वावपि भूसुरौ ।
तुलसीकानने नारायणघट्टे निषेदतुः ॥ १ ॥
श्राद्धार्थं कृतसंकल्पौ सर्वोपस्करसंयुतौ ।
दर्भपिण्डफलपुष्पपायसान्नादिसंयुतौ ॥ २ ॥
नारायणद्वयहस्ताच्छ्राद्धं यत्र वितीर्यते ।
उद्धरेत् सप्तगोत्राणां कुलान्येकोत्तरं शतम् ॥ ३ ॥

पिता माता च भार्या च भगिनी दुहिता तथा ।
पितृमातृस्वसा चैव सप्त गोत्राणि तानि वै ॥ ४ ॥
चतुर्विंशतिर्वै पितुः विंशतिर्मातुरित्यपि ।
भार्यायाः षोडश बोध्या भगिन्या द्वादश स्मृताः ॥ ५ ॥
एकादश दुहितृश्च दश पितृस्वसुस्तथा ।
अष्टौ मातृस्वसुर्बोध्या कुलान्येकोत्तरं शतम् ॥ ६ ॥
नारायणे ह्रदे स्नात्वा तावुभौ द्विजसत्तमौ ।
तर्पणं चक्रतुस्तत्र सृष्टित्रयसुखाप्तये । ॥ ७ ॥
ब्रह्मसृष्टावीशसृष्टौ जीवसृष्टौ च चेतनाः ।
तृप्यन्तां भगवद्ब्रह्मेश्वरजीवादिजातयः ॥ ८ ॥
परब्रह्माऽक्षरधामस्थितं सर्वेश्वरं हरिम् ।
प्रीणयामि जलेनैषस्तृप्यतां शाश्वती समाः ॥ ९ ॥
परमात्माऽक्षरातीतः पुरुषोत्तम आत्मगः ।
येन सर्वमिदं व्याप्तं तस्मै पिण्डं ददाम्यहम् ॥१०॥
भक्ष्यं भोज्यं लेह्यचोष्ये ह्यन्नं चतुर्विधं तु यत् ।
तस्मै श्रीहरये दत्तं तृप्तिमायातु वै हरिः ॥११॥
अक्षरं यद्धाम चोक्तं व्यापकं सेवकं च यत् ।
तस्मै धाम्ने जलं दत्तं तृप्तिमायातु शाश्वतीम् ॥१२॥
दत्तं चतुर्विधं चान्नं पायसं कदलादिकम् ।
एतत्पिण्डात्मकं दत्तं ब्रह्मणे ह्युपतिष्ठतात् ॥१३॥
मुक्ता ह्यनादिनो ये स्युश्चादिनो ये च तद्गताः ।
भाविनो ये च यास्यन्ति मूर्तौ बाह्ये च ये स्थिताः ॥१४॥
मुक्ता यथा तथा देव्यो मुक्तान्यो याश्च तत्स्थिताः ।
ते च तास्तृप्तिमायान्तु जलेनानेन शाश्वतीम् ॥१५॥
तेषां पायसमुख्यान्नैः कदल्यादिफलै सह ।
भक्ष्यं भोज्यं लेह्यचोष्ये ह्यन्नं चतुर्विधं तु यत् ॥१६॥
एषः पिण्डो मया दत्तस्तव हस्तेऽक्षरोत्तम ! ।
देहि तेभ्यश्च सर्वेभ्यस्तृप्तिमायान्तु शाश्वतीम् ॥१७॥
ऐश्वर्याणि समग्राणि गुणाश्चैव विभूतयः ।
दिव्यचिह्नानि मूर्तेश्च भूषणानि तु यानि च ॥१८॥
हेतयश्च समग्रा वै तेजांसि विविधानि च ।
शक्त्योऽनेकरूपाश्च मूर्तौ हरेस्तु याः स्थिताः ॥१९॥
मूर्ताऽमूर्तस्वरूपाभ्यो जलं यच्छामि श्रद्धया ।
प्रीणयामि जलेनैतास्तृप्यन्तां शाश्वतीसमाः ॥२०॥
तासां पायसमुख्यान्नैः कदल्यादिफलैः सह ।
भक्ष्यं भोज्यं लेह्यचोष्ये ह्यन्नं चतुर्विधं तु यत् ॥२१॥
ह्येष पिण्डो मया दत्तस्तव हस्ते जनार्दन ! ।
देहि ताभ्यश्च सर्वाभ्यस्तृप्तिमायान्तु शाश्वतीम् ॥२२॥
ताश्च ते तृप्तिमायान्तु श्राद्धेनाऽनेन शाश्वतीम् ।
हरेस्तृप्त्या हरिस्थानां तृप्तिर्भवतु शाश्वती ॥२३॥
धाम्न्यक्षरे च मुक्तेषु याश्चैश्वर्यविभूतयः ।
सामर्थ्यशक्तयश्चान्ये गुणाश्च स्मृद्धयश्च याः ॥२४॥
भोग्यं भोगोपकरणं भोगसाधनमेव च ।
सौधप्राकारगोप्राण्युद्यानक्षेत्रसुखस्थलम् ॥२५॥
यद्यत् स्वर्द्धे ब्रह्मधामात्मकं मुक्तात्मकं च यत् ।
भक्ष्यं भोज्यं लेह्यचोश्ये ह्यन्नं चतुर्विधं तु यत् ॥२६॥
दिव्यं च चेतनं यद्यत् तत्रत्यं वर्तते सदा ।
तत्सर्वं तृप्तिमायातु जलेनानेन शाश्वतीम् ॥२७॥
तस्मै पायसमुख्यान्नैः कदल्यादिफलैः सह ।
भक्ष्यं भोज्यं लेह्यचोश्यं ह्यन्नं चतुर्विधं शुभम् ॥२८॥
ह्येष पिण्डो मया दत्तस्तव हस्ते जनार्दन ।
देहि तेभ्यश्च सर्वेभ्यस्तृप्तिमायान्तु शाश्वतीम् ॥२९॥
नारायणोऽक्षरं धाम तन्मुक्तास्तद्विभूतयः ।
ते सर्वे तृप्तिमायान्तु श्राद्धेनानेन शाश्वतीम् ॥३०॥
तत्र याः सांख्ययोगिन्यो भक्तिश्चोपास्तिरित्यपि ।
मुक्तिराज्ञा मुमुक्षा च कथा वार्ता च दीक्षणा ॥३१॥
परा विद्या रमा सेवा जयाद्या याश्च सेविकाः ।
तत्रारण्यानि नद्यश्च पर्वता मुक्तकोटयः ॥३२॥
उद्यानानि विहाराश्च भूमयोऽक्षरसंज्ञिकाः ।
धातवः खनयः खाता उच्छ्रयाः शिखराणि च ॥३३॥
विमानान्यपि सर्वाणि तत्तत्सेवकजातयः ।
गान्धर्वा नर्तकास्तत्राऽऽख्यानका वंशबोधकाः ॥३४॥
सेवका याज्ञिकाः साम्नां स्तावका व्यवसायकाः ।
श्रांगारिकाः कलाकारा मुक्तानीमुक्तमण्डलाः ॥३५॥
एवं दिव्येऽक्षरे धाम्नि यानि ये याश्च सन्ति तान् ।
प्रीणयामि जलेनैते तृप्यन्तां शाश्वतीसमाः ॥३६॥
तेषां पायसमुख्यान्नैः कदल्यादिफलैः सह ।
भक्ष्यं भोज्यं लेह्यचोश्यं ह्यन्नं चतुर्विधं च यत् ॥३७॥
ह्येष पिण्डो मया दत्तस्तव हस्ते जनार्दन ।
देहि तेभ्यश्च सर्वेभ्यस्तृप्तिमायान्तु शाश्वतीम् ॥३८॥
अथ श्रीकृष्णदेवाय राधया विरजादिभिः ।
रुक्मिण्या चाभियुक्ताय गोलोकाऽऽवासकारिणे ॥३९॥
इदं जलं मया दत्तं तृप्त्यर्थमुपतिष्ठताम् ।
अन्नं चतुर्विधं पायसान्नं चापि फलादिकम् ॥४०॥
ह्येष पिण्डो मया दत्तस्तव हस्ते जनार्दन ।
ते सर्वे तृप्तिमायान्तु श्राद्धेनानेन शाश्वतीम् ॥४१॥

वसुदेवो देवकी च नन्दो यशोवती तथा ।
उद्धवः सात्यकिर्गर्गोऽक्रूरश्चान्ये च सात्त्वताः ॥४२॥
रुक्मिणी सत्यभामा च तथा जाम्बवती प्रिया ।
कालिन्दी मित्रविन्दा च सत्यभामा तथाऽपरा ॥४३॥
भद्रा च लक्ष्मणा चेति महिष्यस्तत्र सन्ति याः ।
शतं षोडशसाहस्रं पत्नीनां मण्डलं च यत् ॥४४॥
सरस्वती द्रवा दिव्याः पार्षदा गोपगोपिकाः ।
गावः सुरभयः कामधेनवो नीलगोवृषाः ॥४५॥
चतुर्दन्ता हस्तिनश्च तुरगा गरुडास्तथा ।
वृक्षा वल्ल्यश्च हंसाश्च शुकसारसमेनकाः ॥४६॥
वादका नर्तकाश्चैव गायकाः सेवकास्तु ये ।
राधासख्यो महिषीणां सख्यश्चापि च या मताः ॥४७॥
षोडशे गोपुरे याश्च त्रयस्त्रिंशत्तु गोपिकाः ।
तदन्यगोपुरेष्वेताः शतशो या हरिप्रियाः ॥४८॥
द्वारपो यः श्रीदामा च सुदामा सुबलस्तथा ।
सुपार्श्वो रत्नभानुश्च शक्रभानुस्तथैव च ॥४९॥
देवभानुर्वसुभानुः सूर्यभानुश्च चन्द्रभः ।
वीरभानुस्तथा चान्या गोप्यः सख्यश्च गोपकाः ॥५०॥
सुशीला च चन्द्रकला यमुना माधवी रतिः ।
कदम्बमाला सुकुन्ती जाह्नवी च स्वयंप्रभा ॥५१॥
पद्ममुखी च सावित्री गायत्री सुमुखी सुधा ।
पद्मालया पारिजाता सुगौरी सर्वमंगला ॥५२॥
कालिका कमला दुर्गा भारती च सरस्वती ।
गंगाऽम्बिका मधुमती चंपाऽपर्णा च सुन्दरी ॥५३॥
कृष्णप्रिया ब्रह्मसती नन्दिनी नन्दना तथा ।
पार्षदाश्च कुमाराश्च किंकर्यश्चापि या मताः ॥५४॥
पारिजाताश्च वृन्दाश्चाऽक्षयो भाण्डीरको वटः ।
कल्पवृक्षा वनान्यन्यचेतनानि च यान्यपि ॥५५॥
शतशृंगादयो ये च गोलोकस्थास्तु चेतनाः ।
ते सर्वे तृप्तिमायान्तु श्राद्धेनानेन शाश्वतीम् ॥५६॥
प्रीणयामि जलैनैते तृप्यन्तां शाश्वतीसमाः ।
भक्ष्यं भोज्यं लेह्यचोष्यं चान्नं चतुर्विधं च यत् ॥५७॥
ह्येते पिण्डा मया दत्तास्तव हस्ते जनार्दन ।
देहि तेभ्यश्च सर्वेभ्यस्तृप्तिमायान्तु शाश्वतीम् ॥५८॥
महावैकुण्ठधामस्थं त्वथ नारायणं प्रभुम् ।
लक्ष्म्या च रमया युक्तं तर्पयामि जलेन च ॥५९॥
मया दत्तं जलमेतच्छ्रीहरिं सूपतिष्ठताम् ।
अन्नं चतुर्विधं पायसान्नं चापि फलादिकम् ॥६०॥
ह्येष पिण्डो मया दत्तस्तव हस्ते जगद्धर ।
गृहाण तृप्तिमायातु श्राद्धेनानेन शाश्वतीम् ॥६१॥
महालक्ष्मीर्महामाया रमा याश्च हरिप्रियाः ।
तत्र या धरणिर्लीला विमलोत्कर्षिणी तथा ॥६२॥
ज्ञाना क्रिया च योगा च प्रह्वी सत्येशनी तथा ।
पद्मा जया च पांचाली भार्गवी ललिता रमा ॥६३॥
पार्वती च प्रभा माणिक्या लक्ष्मीरीश्वरी तथा ।
अमृता च प्रदीपा च कृष्णा कुंभस्तनी तथा ॥६४॥
अमूल्या तक्षिणी प्रेमा चतुरा मणिधन्यके ।
ऊज्जयिनी नन्दना चोजस्वती कुरुजामिनी ॥६५॥
नवव्रता मनोवारा रत्ना जाह्नविका तथा ।
लड्डुमाना च मुक्ता चामृता मौक्तिकमानदा ॥६६॥
कस्तूरी शान्तिदा हंसा कान्ता रेवा सवितृजा ।
मूलजा रूटिका मंजुलिका देवी च निर्मला ॥६७॥
गोदावरी रल्लयाता जटिला च दया रमा ।
पानपात्री प्रचम्पा मत्प्रेमजा मिष्टगोपिका ॥६८॥
मनुजा वंजुली पुष्पा महिष्यः परमात्मनः ।
हेमजा राजती पद्मा नलिनी माधवी प्रियाः ॥६९॥
तथा भक्ता धर्मदेवो नन्दः सुनन्द इत्यपि ।
श्रुतदेवो जयन्तश्च विजयश्च जयस्तथा ॥७०॥
चण्डश्चैव प्रचण्डश्च पुष्पदन्तश्च सात्वतः ।
विश्वक्सेनो गरुडश्च प्रबलो बल इत्यपि ॥७१॥
कुमुदः कुमुदाक्षश्च पार्षदाः सन्ति तत्र ये ।
कूर्मः शेषश्च गरुडो हंसश्छंदांसि मन्त्रकाः ॥७२॥
ते सर्वे तृप्तिमायान्तु तीर्थेनानेन वारिणा ।
भक्ष्यं भोज्यं लेह्यचोष्यं पायसान्नं फलादिकम् ॥७३॥
अर्पयामि हरेर्हस्ते पिण्डाँस्तृप्ता भवन्तु ते ।
वादका गायका भक्ताः सूतमागधबन्दिनः ॥७४॥
नर्तक्यो नर्तका द्वारपालका ये च पार्षदाः ।
नारायण्यस्तथा चान्या नारायणाश्च तत्समाः ॥७५॥
रमा च रुक्मिणी सीता पद्मा पद्मालया शिवा ।
सुदक्षिणा सुशीला या भगवत्परिचारिकाः ॥७६॥
भद्रः सुभद्रश्च धाता विधाता च तथा शुभाः ।
पुण्डरीको वामनश्च शंकुकर्णादयस्तथा ॥७७॥
महात्मानो महाभागा वैष्णवाः सात्वताश्च ये ।
सिद्धयः कल्पवृक्षाश्च वनान्युद्यानचेतनाः ॥७८॥
साकेतं पनसौ वृक्षौ वैष्णव्यः कन्यकाश्च याः ।
द्वारपालाश्चायुधानि वेदाः पार्षदरूपिणः ॥७९॥

प्रह्लादो नारदश्चैव पुण्डरीकः पराशरः ।
अम्बरीषो ध्रुवश्चैव ये वै वैकुण्ठवासिनः ॥८०॥
किंकर्यश्च हरेर्दास्यो दासदास्यश्च यास्तथा ।
ते सर्वे तृप्तिमायान्तु जलेनानेन शाश्वतीम् ॥८१॥
अन्नं चतुर्विधं भोज्यं पायसान्नं फलादिकम् ।
एते पिण्डा मया दत्तास्तव हस्ते जगद्गुर ॥८२॥
देहि तेभ्यश्च सर्वेभ्यस्तृप्तिमायान्तु शाश्वतीम् ।
अथ द्वितीयवैकुण्ठे जलावरणपारगे ॥८३॥
दिव्यो नारायणस्तस्य कान्ताः कमललोचनाः ।
विमला सुमती श्यामा सुशीला कुशला तथा ॥८४॥
दीपावली जयन्ती च रमा भागीरथी तथा ।
सुखा च कनका विद्युल्लता चन्द्रकला तथा ॥८५॥
लक्षशः प्रमदा याश्च पार्षदा दिव्यविग्रहाः ।
ये च भरतशत्रुघ्नलक्ष्मणाः शेषशारदाः ॥८६॥
पुरी देववती तत्स्था दिव्या ईश्वरकोटयः ।
दैवाः पतत्रिणो दिव्याः शाखिनो हेतयस्तथा ॥८७॥
सर्वे ते तृप्तिमायान्तु तैर्थेनाऽत्रेन वारिणा ।
अन्नं चतुर्विधं दुग्धपाकपक्वफलादिकम् ॥८८॥
एते पिण्डा मया दत्तास्तव हस्ते जगद्गुर ।
देहि तेभ्यश्च सर्वेभ्यस्तृप्तिमायान्तु शाश्वतीम् ॥८९॥
अथ तृतीयवैकुण्ठं श्वेतद्वीपाख्यधाम यत् ।
तत्रस्थं श्रीहरिं नारायणं लक्ष्म्या समन्वितम् ॥९०॥
तैर्थैरेतैः सुसद्वाभिस्तर्पयामि स तृप्यताम् ।
मिष्टं चतुर्विधं चान्नं पायसं च फलादिकम् ॥९१॥
अर्पयामि मया दत्तः पिण्डः संप्रतिगृह्यताम् ।
तत्रस्थाः सनकाद्याश्च योगिनः परमर्षयः ॥९२॥
वोढुः पंचशिखश्चैव सनत्सुजातसंज्ञकः ।
अन्येऽपि ऋषयस्तत्र तन्वाद्याश्च वसन्ति ये ॥९३॥
साध्व्यश्च साधवश्चान्ये तापसा ये वसन्ति च ।
अनन्तो वैनतेयश्च हंसः करी सुवैष्णवाः ॥९४॥
ईशावास्या महादेवी जाह्नवी कमला रमा ।
सावित्री च तथा शान्ता कान्ता ब्राह्मी सरोजनी ॥९५॥
दास्यश्चापि तथा तत्र प्रज्ञा मेधा धृतिः क्षमा ।
श्रद्धा च धारणा शान्तिः श्रुतिर्मनीषिणी स्मृतिः ॥९६॥
वृष्टिर्बुद्धिर्मतिर्वन्याः श्रियः किंकर्य एव याः ।
दासा दास्यश्च ये तत्र चेतना मुक्ततापसाः ॥९७॥
ते सर्वे तृप्तिमायान्तु जलेनानेन शाश्वतीम् ।
अन्नं चतुर्विधं स्वादु पायसं च फलादिकम् ॥९८॥
एते पिण्डा मया दत्तास्तव हस्ते जनार्दन ।
देहि तेभ्यश्च सर्वेभ्यस्तृप्तिमायान्तु शाश्वतीम् ॥९९॥
अथ नारायणं दुग्धाब्धिवासं वै जगद्गुरुम् ।
लक्ष्म्या शेषेण सहितं गरुडादिसमन्वितम् ॥१००॥
तर्पयामि जलेनैषस्तृप्यतां मे जनार्दनः ।
दौग्धं च सफलं पिण्डं ते ददामि करे विभो ॥१०१॥
प्रीणयामि सभक्तं त्वां तृप्यतां शाश्वतीसमाः ।
मार्कण्डेयो बलिर्बाणोऽश्वत्थामहनुमद्वराः ॥१०२॥
निमिर्बिभीषणः पर्शुरामो व्यासो मनुस्तथा ।
सत्यव्रतश्च नन्दश्च गयश्चान्ये च पार्षदाः ॥१०३॥
अन्याश्च सेविकास्तत्र नर्मदा तपती तथा ।
तुंगभद्रा च कावेरी गंगा गोदावरी तथा ॥१०४॥
सिन्धुः फल्गुर्गण्डकी च ताम्रपर्णी सरस्वती ।
करतोया कर्मनाशा साभ्रमती च गोमती ॥१०५॥
ओजस्वती भद्रावती सरयूः स्वर्णरक्षिका ।
इन्द्रद्युम्नं पुष्करं च नारायणसरस्तथा ॥१०६॥
अश्वपद्वसरश्चैव मानसं च सरोवरम् ।
एवं नदाश्च नद्यश्च सरांसि सागरास्तथा ॥१०७॥
चिरायुषो मूर्तिमन्तो भक्तास्तत्र वसन्ति ये ।
तेभ्यो नारायणं तोयं श्राद्धं सफलपायसम् ॥१०८॥
अर्पयामि तथा पिण्डान् तव हस्ते जगद्गुर ।
देहि तेभ्यश्च सर्वेभ्यस्तृप्तिमायान्तु शाश्वतीम् ॥१०९॥
अथाऽव्याकृतधामस्थं भूमानं रमयाऽर्चितम् ।
तद्भक्तैः सेवितं वासुदेवं संकर्षणं तथा ॥११०॥
प्रद्युम्नं चानिरुद्धं च महाकालं च पूरुषम् ।
महापुरुषमेवाऽत्र तथा प्रकृतिपूरुषम् ॥१११॥
प्रधानपुरुषं चैव महाविष्णुं महारमाम् ।
दासदासीसमेतांस्तान्प्रीणयामि जलेन वै ॥११२॥
चतुर्विधेन भोज्येन पायसान्नफलादिभिः ।
सर्वे ते तृप्तिमायान्तु श्राद्धेनानेन शाश्वतीम् ॥११३॥
अमृतधामसंस्थं वै रमानारायणं प्रभुम् ।
नरनारायणौ बद्रिकाश्रमस्थौ तपस्विनौ ॥११४॥
मत्स्यं कूर्मं वराहं च तत्तद्धामनिवासिनम् ।
दत्तात्रेयं च कपिलं पृथुं हंसं च वामनम् ॥११५॥
ऋषभं नृहरिं पर्शुरामं यज्ञं कुमारकान् ।
हयग्रीवं नारदं च हरिं बुद्धं मनुं तथा ॥११६॥
व्यासं तत्तद्धामसंस्थान् मुक्तांश्च पार्षदांस्तथा ।
दासदासीश्च भक्तांश्च तर्पयामि जलेन च ॥११७॥

चतुर्विधेन भोज्येन पायसान्नफलादिभिः ।
ते सर्वे तृप्तिमायान्तु श्राद्धेनाऽनेन शाश्वतीम् ॥११८॥
एते पिण्डा मया दत्तास्तव हस्तेऽवतारिणः ।
देहि तेभ्यश्च सर्वेभ्यस्तृप्तिमायान्तु शाश्वतीम् ॥११९॥
हिरण्यगर्भं वैराजं चाऽष्टाऽवरणकेश्वरान् ।
विष्णुं सदाशिवं मूलां मायां तत्त्वानि यानि च ॥१२०॥
तत्तद्देवाश्च तेषां च गुणा ये चेतनास्तथा ।
तत्र तत्र गताँश्चान्यानैश्वरान् चेतनाँस्तथा ॥१२१॥
वैराजाँश्चेतनान्सौरान्वाह्नेयाँश्चेतनाँस्तथा ।
ऐशलोकान्समस्ताँश्च तर्पयामि जलेन वै ॥१२२॥
चतुर्धा भोज्यसंभारैः पायसान्नफलादिभिः ।
ते सर्वे तृप्तिमायान्तु नारायणकरार्पणात् ॥१२३॥
एते पिण्डा मया दत्तास्तृप्यन्तां शाश्वतीसमाः ।
ये सहस्रमुखाश्चान्ये शताद्याननविष्णवः ॥१२४॥
ब्रह्माणश्च तथाऽऽस्याश्च शंभवश्च तथाऽऽननाः ।
कोटिशः शक्तिसहितास्तृप्यन्तां तीर्थवारिभिः ॥१२५॥
पायसान्नचतुरन्नैस्तथाऽर्पितफलादिभिः ।
एते पिण्डा मया दत्तास्तव हस्ते जनार्दन ॥१२६॥
देहि तेभ्यश्च सर्वेभ्यस्तृप्तिमायान्तु शाश्वतीम् ।
गुणत्रयं चतुरन्तःकरणं दशबाह्यकम् ॥१२७॥
करणं दशभूतानि दश प्राणांश्च चेतनाः ।
धातवस्तृप्तिमायान्तु दत्तान्नफलवारिभिः ॥१२८॥
लिंगं बाणस्तथा स्थाला शंभुः सती च कार्तिकः ।
गणेशः क्षेमलाभौ चर्द्धिः सिद्धिः शिवयोगिनः ॥१२९॥
योगिन्यो हनुमान् दुर्गा देव्यश्चापि कुमारिकाः ।
रुद्राश्चैकादश कोटिः शतं ज्योतींषि द्वादश ॥१३०॥
गंगा च वीरभद्रश्च जलंधरश्च तारकः ।
तारकाक्षो गजश्चापि महिषश्चण्ड इत्यपि ॥१३१॥
प्रचण्डो नन्द उपनन्दः श्रृंगी भृंगिरीटिकौ ।
किरीटी चन्द्रमाश्चापि वह्निर्मंगल इत्यपि ॥१३२॥
दुर्वासाः कालभीरुश्च विषं मुण्डादिसद्गणाः ।
त्रिशूलं वासुकिश्चापि रुद्राक्षो वृषभस्तथा ॥१३३॥
मयूरो मूषकः सिंहः कैलासस्तद्विभूतयः ।
कर्णघंटा मेघनादश्चान्ये ये कोटिशो गणाः ॥१३४॥
महाकाल्यादयो याश्च पार्वत्याः शक्तयस्तथा ।
कैलासस्तद्गताः सर्वे शैवा ये चेतनागणाः ॥१३५॥
दासा दास्यश्च ते सर्वे तृप्यन्तां तीर्थवारिभिः ।
चतुरन्नं फलं पेयं पायसं योग्यमेव यत् ॥१३६॥
ह्येते पिण्डा मया दत्तास्तव हस्ते जनार्दन ।
देहि तेभ्यश्च सर्वेभ्यस्तृप्तिमायान्तु शाश्वतीम् ॥१३७॥
ये ये शैवाश्च ते सर्वे तृप्यन्तां शाश्वतीसमाः ।
ब्रह्मा च ब्रह्मपुत्राश्च ब्रह्मपत्न्यस्तथा च याः ॥१३८॥
सरस्वती च गायत्री सावित्री विरिणी तथा ।
असिक्नी च पलिक्नी च शतरूपा च कद्रुकी ॥१३९॥
रतिः सन्ध्या तथा सृष्टिर्विद्याऽविद्या च मोहिनी ।
अष्टाशीतिसहस्राणि बालखिल्यास्तथा च ये ॥१४०॥
तथा षष्टिसहस्राणि बालखिल्याश्च येऽपरे ।
हर्यश्वाः शबलाश्वाश्च दशपंचसहस्रकाः ॥१४१॥
अर्धं चैकं सहस्रं च पुत्रा ये ब्रह्मवंशजाः ।
देवर्षिनारदाद्याश्च सनकाद्या महर्षयः ॥१४२॥
सप्तर्षयश्च दक्षाद्या धर्माऽधर्मौ सवंशकौ ।
अग्निष्वात्ता बर्हिषदः आज्यपाः सोमपास्तथा ॥१४३॥
पितरश्च तथा मेधाश्चत्वारो मदनो रतिः ।
पञ्चबाणाश्च पुष्पाणि ब्रह्मचारिण इत्यपि ॥१४४॥
ऊर्ध्वस्रोतस एवैवं सत्यलोकगताश्च ये ।
विद्यावन्तस्तापसाश्च त्यागिनो न्यासिनस्तथा ॥१४५॥
ब्रह्मलोककृताऽऽवासाः साध्यश्च साधवस्तथा ।
ते सर्वे तृप्तिमायान्तु श्राद्धेनानेन शाश्वतीम् ॥१४६॥
प्रीणयामि स्वर्णरेखाजलैः सत्पायसादिभिः ।
चतुरन्नैः फलैः पेयैस्तृप्यन्तां शाश्वतीसमाः ॥१४७॥
एते पिण्डा हरेर्हस्ते दत्तास्तृप्ता भवन्तु ते ।
अथ ये ऋषयश्चान्ये यानि मन्वन्तराणि च ॥१४८॥
व्यासाश्च व्यासशिष्याश्च मुनयो ब्रह्मवर्चसः ।
पत्नीव्रतादयो विप्रा वर्णाश्चैवाऽऽश्रमास्तथा ॥१४९॥
वेदाः शास्त्राणि चाख्यानान्युपव्याख्यानकान्यपि ।
प्राच्याऽवाच्येतिहासाश्च चरित्राणि कथास्तथा ॥१५०॥
छन्दाः स्वरास्तथा रागा रागिण्यश्च प्रबन्धकाः ।
व्यापारा वृत्तयश्चैव क्षुतृषानलधातवः ॥१५१॥
समूर्ताश्चेतना ये स्युस्तृप्तिमायान्तु वारिभिः ।
पायसान्नैश्चतुरन्नैस्तृप्यन्तां शाश्वतीसमाः ॥१५२॥
महर्जनतपोवासा ऋषयः पितरश्च ये ।
संवत्सरश्च मासाश्च पक्षाश्च दिवसा निशाः ॥१५३॥
पावकः पवमानश्च पांक्तेयः पंक्तिपावनः ।
गार्हपत्यो दाक्षिणात्य आवसथ्योऽग्निहोत्रजः ॥१५४॥
आरात्रिको नाचिकेता बार्हस्पत्यश्च चूल्लिजः ।
वानप्रास्थ्यश्च सान्न्यस्यो भौम उदर्य इत्यपि ॥१५५॥

दिव्य आकरजश्चैव शावः श्माशानिकस्तथा ।
दावो दवश्च मखजो ज्वालास्यो वाडवस्तथा ॥१५६॥
ह्येते ये पितरः प्रोक्तास्तथा वैश्रवणादयः ।
प्रेताश्च पितरो याम्या नारकाः श्रावणास्तथा ॥१५७॥
दूताश्च पितरस्त्वन्ये यातनाः पितरस्तथा ।
वंशजाश्चाऽन्यवंशादिजन्मानः स्थावरेषु ये ॥१५८॥
जंगमेषु तथोद्भूता वायुजाः पितरश्च ये ।
प्रभिन्नाः प्रतिकल्पं मुन्यृष्यर्यमादिकाश्च ये ॥१५९॥
पितरस्ते जलैरेतैस्तृप्यन्तां शाश्वतीसमाः ।
अन्नं चतुर्विधं पायसान्नं फलादिकं तथा ॥१६०॥
मुन्यन्नं चैव योग्यान्नं चार्पयामि करे हरेः ।
एते पिण्डा मया दत्तास्तव हस्ते जनार्दन ॥१६१॥
देहि तेभ्यश्च सर्वेभ्यस्तृप्तिमायान्तु शाश्वतीम् ।
दिशांपाला लोकपालाः स्वर्गपालास्तथा च ये ॥१६२॥
इन्द्राद्यष्टावणिमाद्याश्चाष्टौ वै सिद्धयस्तथा ।
आयाद्या वसवश्चाष्टौ दिशश्चाष्टौ नवग्रहाः ॥१६३॥
निधयश्च नव ये विद्याम्राः षण्मातरः खलु ।
ताराश्च केतवः क्षुद्रतारका धूम्रकेतवः ॥१६४॥
सूर्याश्च द्वादशादित्याश्चन्द्रत्रयं च तत्कलाः ।
सप्तविंशतिभान्येव त्रयस्त्रिंशच्च देवताः ॥१६५॥
मरुतो विद्युतश्चैव साध्ये विश्वे च देवताः ।
सिद्धचारणगन्धर्वाः सूतमागधबन्दिनः ॥१६६॥
किंपुंसः किन्नरास्तृप्तिं यान्तु प्रदत्तवारिभिः ।
अन्नं चामृतदुग्धान्नं पक्वं पक्वफलादिकम् ॥१६७॥
सर्वं चतुर्विधं भोज्यं पेयं बहुविधं तथा ।
एते पिण्डा मया दत्तास्तव हस्ते जनार्दन ॥१६८॥
देहि तेभ्यश्च सर्वेभ्यस्तृप्तिमायान्तु शाश्वतीम् ।
ते सर्वे तृप्तिमायान्तु श्राद्धेनानेन शाश्वतीम् ॥१६९॥
भुवर्लोकगता ये च येऽन्तरीक्षगतास्तथा ।
वाय्वाधारा वायुदेहा यक्षास्तथा च राक्षसाः ॥१७०॥
भूताः प्रेताः पिशाचाश्च कूष्माण्डाश्च विनायकाः ।
वेताला भैरवाश्चान्ये मारका जनकास्तथा ॥१७१॥
मातुला राहवश्चान्ये कालवर्णाश्च कालिकाः ।
डाकिनी शाकिनी चैव योगिनी भक्षिणी तथा ॥१७२॥
वेतालिनी खञ्जिनी च शीतला मातृका तथा ।
मारिका बालिकी कृत्या हिक्का तथा च तानिका ॥१७३॥
आकर्षिणी महामारी ज्वराः शीतास्तथोष्णकाः ।
रोगाश्च राजरोगाश्च प्रोत्तापाश्च जरादयः ॥१७४॥
अवस्थाः शक्तयोऽशक्तिविशेषा रोगिणी तथा ।
मन्त्रास्तन्त्राश्च यन्त्राश्च शपथा बन्धनानि च ॥१७५॥
पाशा अस्त्राणि शस्त्राणि विद्युतो दुर्दिनं तथा ।
दिङ्भ्रमोऽलातचक्राणि मेघाश्चाभ्राणि चान्धयः ॥१७६॥
तृणावर्तास्तथोत्पाता भूकम्पा वातवृष्टयः ।
ईतयश्चाततायिन्यो रजोवर्षादयश्च ये ॥१७७॥
ते सर्वे तृप्तिमायान्तु तैर्थिकैर्वारिभिः सदा ।
प्रीणयामि जलैरथैस्तृप्यन्तां शाश्वतीसमाः ॥१७८॥
माषान्नं कृशरान्नंच खेचरान्नं च तामसम् ।
विविधान्नं राजसं च पायसान्नं चतुर्विधम् ॥१७९॥
अन्नं तथा फलं पेयं योग्यं योग्यं ददाम्यहम् ।
तत्तदन्नैर्मया दत्ताः पिण्डाश्च करयोर्हरेः ॥१८०॥
देहि तेभ्यश्च सर्वेभ्यस्तृप्तिमायान्तु शाश्वतीम् ।
सर्वे भवन्तु तृप्तास्ते श्राद्धेनानेन सर्वदा ॥१८१॥
भूलोकस्था जरायूजा अण्डजाः स्वेदजास्तथा ।
उद्भिज्जाश्चेतनाः सर्वे ब्राह्मणाः क्षत्रियास्तथा ॥१८२॥
वैश्याः शूद्राः संकराश्च चाण्डालाः पतितास्तथा ।
अनुलोमाः प्रतिलोमा अलोमा अर्धमानवाः ॥१८३॥
नैष्ठिकाः सगृहा वानप्रस्थाः सन्न्यासिनस्तथा ।
शैवाश्च वैष्णवाः शाक्ता वैदिकाश्च तदन्यकाः ॥१८४॥
गोरोमजाश्च जलजाः स्थलजा व्योमजास्तथा ।
क्षुद्रा जीवा महान्तश्च कीटाः पतंगपक्षिणः ॥१८५॥
आतृणस्तम्बपर्यन्तास्तथा गृहप्रदेवताः ।
ग्रामदेवा वनदेवाः क्षेत्रपाला स्तथैव च ॥१८६॥
देहे षट्चक्रदेवाश्च कपाले गुरुदेवताः ।
वनानि पर्वताश्चैवाऽरण्यानि सरितस्तथा ॥१८७॥
नद्यश्चापि तडागाश्चाऽऽरामाश्चैव सरांसि च ।
खाताश्चैव तथाऽखातान्यब्धयो ह्युच्छ्रयास्तथा ॥१८८॥
रणाश्च मरुदेशाश्च देवस्थानानि सर्वशः ।
चैत्यवृक्षाश्चैत्यकोष्ठाश्चैत्यानि पुलिनानि च ॥१८९॥
देव्यालयाश्च जीर्णा भूर्ग्रामाः खेटाश्च खर्वटाः ।
नगराणि राजधानी पुराणिच पुरी तथा ॥१९०॥
ये तत्र चेतनाः सन्ति तदधिष्ठातृचेतनाः ।
ते सर्वे तृप्तिमायान्तु दत्तैरेभिर्जलैः सदा ॥१९१॥
तेषां च विविधैरन्नैराग्नेयैर्वायवीयकैः ।
जलीयैः पार्थिवैश्चैव वृष्टिजैर्विकृतैस्तथा ॥१९२॥
चतुरन्नैर्भक्ष्ययोग्यैः पायसादिभिरित्यपि ।
बाष्पैश्च मेघकणैर्वार्क्षरसैश्च कर्दमैः ॥१९३॥

शैत्यैश्चन्द्रकरैः सौर्यैर्विविधैरन्यैः फलादिभिः ।
फेनैश्चापि करोम्यत्र श्राद्धं तृप्ता भवन्तु ते ॥१९४॥
प्रीयणामि जलैरेते तृप्यन्तां शाश्वतीसमाः ।
तेषां तृप्तिप्रदाः पिण्डा दत्ता हरिकरे मया ॥१९५॥
देहि तेभ्यश्च सर्वेभ्यस्तृप्तिमायान्तु शाश्वतीम् ।
मातृर्मातामहीश्चैव तथैव प्रपितामहीः ॥१९६॥
पितृन् पितामहाँश्चैव तथैव प्रपितामहान् ।
भ्रातृन् स्वसॄर्भ्रातृजायार्जामातृन् मातुलादिकान् ॥१९७॥
भ्रातृपुत्रादिकान् पत्नीः श्वशुरस्य कुटुम्बिनः ।
पितृस्वसॄर्मातृस्वसॄर्दुहितृश्च सुयोगिनीः ॥१९८॥
तत्पुत्रपुत्रीपौत्र्यादीः प्रीणयामि जलादिभिः ।
तथा पायसमुख्यान्नैश्चतुरन्नैस्तथा फलैः ॥१९९॥
तेषां श्राद्धं करोम्येते तृप्तिमायान्तु शाश्वतीम् ।
एते पिण्डा मया दत्तास्तव हस्ते जनार्दन ॥२००॥
देहि तेभ्यश्च सर्वेभ्यस्तृप्तिमायान्तु शाश्वतीम् ।
प्रीणयामि जलान्नैस्ते तृप्यन्तां शाश्वतीसमाः ॥२०१॥
प्राचेतसान्नाचिकेतान्मारुतान्कालकेयकान् ।
याम्यान् संशप्तकान्वार्क्षान् भूजातान् शलभादिकान् ॥२०२॥
तथाऽतलादिलोकस्थान् दैत्यदानवराक्षसान् ।
सर्पान्सरीसृपान्नागान् येऽन्ये वसन्ति तानपि ॥२०३॥
प्रीणयामि शीतमिष्टजलान्नफलपायसैः ।
पिण्डाँस्तेभ्यश्चार्पयामि तृप्यन्तां शाश्वतीसमाः ॥२०४॥
इष्टदेवं तथाब्रह्म प्रगुरुं च गुरुं तथा ।
प्रीणयामि तीर्थजलैः पायसान्नैः फलैस्तथा ॥२०५॥
ते सर्वे तृप्तिमायान्तु श्राद्धेनानेन शाश्वतीम् ।
एष पिण्डो मया दत्तस्तव हस्ते जनार्दन ॥२०६॥
देहि तेभ्यश्च सर्वेभ्यस्तृप्तिमायान्तु शाश्वतीम् ।
ईशावास्यमिदं सर्वं तृप्यतां परमेश्वर ! ॥२०७॥
भूतभाविवर्तमाना गत्यगतिगताश्च ये ।
प्रीणयाम्यन्नसलिलैस्तृप्यन्तां शाश्वतीसमाः ॥२०८॥
मेरुगतास्तथा लोकालोकाचलसमाश्रिताः ।
तृप्तिमायान्तु ते दुग्धपाकैः फलजलादिभिः ॥२०९॥
अस्मृताश्चाऽनवधाना अनागताश्च येऽसवः ।
प्रीणयामि च तान्सर्वान् फलान्नसलिलैस्तथा ॥२१०॥
एते पिण्डा मया दत्तास्तव हस्ते जनार्दन ।
देहि तेभ्यश्च सर्वेभ्यस्तृप्तिमायान्तु शाश्वतीम् ॥२११॥
नारायणकृतं श्राद्धं नारायणेन कारितम् ।
सृष्टित्रयं सुतृप्तं वै शाश्वतं सुखमाप तत् ॥२१२॥
ये च तत्राऽऽगताः सर्वे तृप्तिमादाय शाश्वतीम् ।
लोकं स्वं स्वं गताः सर्वे श्राद्धं पूर्णं कृतं च तत् ॥२१३॥
तर्पणात् सततं तेषां तृप्तिर्भवति शाश्वती ।
पुष्ट्यैश्वर्यं श्राद्धकर्तुरायुः सन्ततिरित्यपि ॥२१४॥
विचित्रा भजते लक्ष्मीर्मोक्षस्तं भजते क्रमात् ।
"देवताभ्यश्च पितृभ्यो महायोगिभ्य इत्यपि ॥२१५॥
स्वाहायै च स्वधायै च नमो नित्यं भवत्युत ।
श्राद्धे जाप्यो भवेन्मन्त्रः श्रीरायुर्बलवर्धनः ॥२१६॥
प्रीयन्ते पितरो येन जप्येन नियमेन च ।
सप्तार्चिषं प्रवक्ष्यामि सर्वकामप्रदं शुभम् ॥२१७॥
अमूर्तानां समूर्तानां पितृणां दीप्ततेजसाम् ।
नमस्यामि सदा तेभ्यो ध्यानिभ्यो योगिचक्षुषाम् ॥२१८॥
इन्द्रादीनां जनेतारो भृगुमारीचयोस्तथा ।
सप्तर्षीणां च पितृणां तान्नमस्यामि कामदान् ॥२१९॥
मन्वादीनां सुरेशानां सूर्याचन्द्रमसोस्तथा ।
तान्नमस्कृत्य सर्वान् वै पितृन् कुशलदायकान् ॥२२०॥
नक्षत्राणां चरादीनां पितृनथ पितामहान् ।
द्यावापृथिव्योश्च तथा नमस्यामि कृतांजलिः ॥२२१॥
देवर्षीणां जनयितॄन्सर्वलोकनमस्कृतान् ।
अभयस्य सदा दातॄन्नमस्येऽहं कृताञ्जलिः ॥२२२॥
प्रजापतेः कश्यपाय सोमाय वरुणाय च ।
योगयोगेश्वरेभ्यश्च नमस्यामि कृताञ्जलिः ॥२२३॥
पितृगणेभ्यः सप्तभ्यो नमो लोकेषु सप्तसु ।
स्वयंभुवे नमश्चैव ब्रह्मणे योगचक्षुषे" ॥२२४॥
अनेन विधिना युक्तस्त्रीन्वराँल्लभते जनः ।
अन्नमायुः सुताँश्चैव ददते पितरो भुवि ॥२२५॥
भक्त्या परमया युक्तः श्रद्धानो जितेन्द्रियः ।
सप्तार्चिषं जपेद् यः स पृथिव्यामेकराड् भवेत् ॥२२६॥
किन्त्वधिकं प्रवक्तव्यं सर्वेषां मुक्तिदं स्थलम् ।
शृंगिभिर्दंष्ट्रिभिर्व्यालैर्विषवह्निस्त्रिया जलैः ॥२२७॥
क्रीडां कुर्वन्मृतो यश्चाऽगतिकः प्रेतयोनिजः ।
नागानां विप्रियं कुर्वन् हतश्चाप्यथ विद्युता ॥२२८॥
निगृहीतः स्वयंराज्ञा चौर्यदोषेण वै मृतः ।
परदारान् रमन्तश्च द्वेषात् तत्पतिभिर्हताः ॥२२९॥
असमानैश्च संकीर्णैश्चाण्डालाद्यैश्च विग्रहम् ।
कृत्वा तैर्निहतास्ताँश्च चाण्डालादीन् समाश्रिताः ॥२३०॥
गवाऽग्निविषदाश्चैव पाषंडाः क्रूरबुद्धयः ।
क्रोधात्प्रायो विषं वह्निं शस्त्रमुद्बन्धनं जलम् ॥२३१॥

गिरेर्वृक्षात्पपातं च ये कुर्वन्ति सुदुःखिताः ।
कुशिल्पजीविनो ये च पञ्चसूनाधिकारिणः ॥२३२॥
मखे सभासु ये केचिद् दीनप्राया नपुंसकाः ।
साधुदण्डहता ये च ये चापि ब्राह्मणैर्हताः ॥२३३॥
महापातकिनो ये च पतिता ये च संकराः ।
मृता वा जीविनो वापि स्वयं वाऽन्यकृतेन च ॥२३४॥
स्नानेन शुद्धिमायान्ति नारायणह्रदाऽप्सु वै ।
इति ते कथितं लक्ष्मि ! ह्रदमाहात्म्यमुत्तमम् ॥२३५॥
सर्वपापप्रशमनं पितॄणां भुक्तिमुक्तिदम् ।
यः शृणोति नरो भक्त्या श्राद्धे पर्वणि वाऽन्वहम् ॥२३६॥
श्रावयेद्वा वरारोहे ! सोऽपि स्याद् ब्रह्मलोकभाग् ।
इदं स्वस्त्ययनं पुण्यं धन्यं स्वर्गतिदं नृणाम् ॥२३७॥
यशस्यमपि चाऽऽयुष्यं पुत्रपौत्रविवर्धनम् ।
पूजाश्राद्धात्मकं दिव्यं कर्म हरिद्वयाऽर्पितम् ॥२३८॥
स्नात्वा दामोदरे कुण्डे मृगीकुण्डे तथा पुनः ।
नारायणह्रदे स्नात्वा श्राद्धं कुर्यादितिस्थितिः ॥२३९॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने द्वयोर्नारायणयोर्नारायणह्रदजले ब्रह्मधामगोलोकवैकुण्ठ-श्वेतबद्रिकाश्रमाऽमृताऽव्याकृतक्षीरसागरादिगोल-खगोलभूगोलस्थानां सार्वभौमश्राद्धतर्पणकरणम्, सप्तार्चिस्तवनं फलं चेत्यादिनिरूपणनामा षष्ठ्यधिकशततमोऽध्यायः ॥१६०॥

श्रीनारायण उवाच—

शृणुलक्ष्मि ! ततो देवौ दामोदरनरायणौ ।
समागतान् भोजयित्वा सर्वान् ब्रह्मसुराँस्ततः ॥ १ ॥
जगृहतुः प्रसादं तं हर्यर्पितं च पायसम् ।
दामोदरस्ततः प्राह महिमानं नरायणम् ॥ २ ॥
इदं गुप्ततमं क्षेत्रं सर्वप्राणिसुखावहम् ।
मोक्षदं सर्वजन्तूनां वैष्णवं शैवमेव वा ॥ ३ ॥
ब्रह्मघ्नो गोघ्नमातृघ्नगुरुघ्नाऽर्भकघातकाः ।
स्त्रीघ्नश्चात्र ह्रदे स्नात्वा मुच्यन्ते नात्र संशयः ॥ ४ ॥
स्नात्वाऽत्र सुकृती भूत्वा मृतो यायात्परं पदम् ।
क्षेत्रेऽत्र निवसन्तो ये भक्ताः सुकृतिनो हरेः ॥ ५ ॥
अन्योद्धारसमर्था वै नारायणसमा मताः ।
भित्त्वाजन्मबन्धजालं प्रापयन्ति हरेः पदम् ॥ ६ ॥
इडा ओजस्वती बोध्या भद्रा तु पिंगला मता ।
स्वर्णरेखा सुषुम्णाऽस्ति तया मोक्षमवाप्नुयात् ॥ ७ ॥
अनायासेन वै यत्र मोक्षप्राप्तिः प्रजायते ।
नानावर्णा विकर्माणश्चाण्डाला ये जुगुप्सिताः ॥ ८ ॥
किल्बिषैः पूर्णदेहाश्च प्रकृष्टैः पातकैस्तथा ।
भेषजं परमं तेषां क्षेत्रं वस्त्रापथं मतम् ॥ ९ ॥
दुष्टान्धादीनकृपणान्पापान्दुष्कृतकारिणः ।
अहन्तु दयया सर्वान्नयामि परमां गतिम् ॥१०॥
वस्त्रापथं गता ये वै महापुण्यकृतो नराः ।
अक्षय्या ह्यजराश्चैव विदेहाश्च भवन्ति ते ॥११॥
अज्ञानाज्ज्ञानतो वापि नार्या वा पुरुषेण वा ।
यत्किंचिदशुभं कर्म कृतं चापि कुबुद्धिना ॥१२॥
वस्त्रापथं प्रविष्टस्य तत्सर्वं भस्मसाद्भवेत् ।
सदा यजति यज्ञेन सदा दानं प्रयच्छति ॥१३॥
सदा तपस्वी भवति रैवताद्रौ स्थितो नरः ।
सर्वात्मना तपः सत्यं प्राणिनां रैवताचले ॥१४॥
न सा गतिः कुरुक्षेत्रे गंगाद्वारे न पुष्करे ।
या गतिर्विहिता पुंसां रैवताद्रिनिवासिनाम् ॥१५॥
रैवताद्रौ स्थिता नित्यं पांशुभिर्वायुनेरितैः ।
स्पृष्टा दुष्कृतकर्माणो यान्ति वै परमा गतिम् ॥१६॥
रैवताद्रौ वसेद् यश्च संयतात्मा समाहितः ।
त्रैलोक्यमपि भुंजानो वायुभक्षसमः स्मृतः ॥१७॥
रैवताद्रौ वसेन्मासं लब्धाहारो जितेन्द्रियः ।
चातुर्मास्यव्रतान्येव कृतानि स्युश्च तेन वै ॥१८॥
जन्ममृत्युभयं जीत्वा स याति परमां गतिम् ।
निःश्रेयसगतिं पुण्यां तथा योगगतिं व्रजेत् ॥१९॥
नहि ब्रह्मगतिर्लभ्या जन्मान्तरशतैरपि ।
प्राप्यते रैवतबलात् प्रभावाच्छ्रीहरेस्तथा ॥२०॥
एकाहारस्तु यस्तिष्ठेन्मासं तु रैवताचले ।
यावज्जीवकृतं पापं मासेनैकेन नश्यति ॥२१॥
विघ्नैराहन्यमानोऽपि रैवतं यस्तु न त्यजेत् ।
स मुंचति जरामृत्यू जन्म चैतद्धि नश्वरम् ॥२२॥
आदेहपतनाद् ये तु सेवन्ते रैवताचलम् ।
ते मृता हंसयानेन दिव्यान् लोकान् प्रयान्ति हि ॥२३॥
संसारव्याप्तचित्तोऽपि त्यक्तमोक्षक्रियो जनः ।
रैवताद्रौ मृतः सोऽपि संसारं न पुनर्विशेत् ॥२४॥
स्वर्गाऽपवर्गयोर्हेतुरेतत्तीर्थवरं भुवि ।
यस्तत्र पंचतां याति तस्य मुक्तिर्न संशयः ॥२५॥
जन्मान्तरसहस्रेण योगी यत्पदमाप्नुयात् ।
रैवताद्रौ परं मोक्षं मरणादधिगच्छति ॥२६॥

ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च वर्णसंकराः ।
कृमयश्चैव ये म्लेच्छाः संकीर्णाः पापयोनयः ॥२७॥
कीटाः पिपीलिकाश्चापि ये त्वन्ये मृगपक्षिणः ।
कालेन मरणं प्राप्तास्तेऽपि देवेश्वराः स्मृताः ॥२८॥
अकामो वा सकामो वा तिर्यग्योनिगतोऽपि वा ।
रैवताद्रौ त्यजन्प्राणान् मुक्तिभाङ् नात्र संशयः ॥२९॥
रैवताद्रौ कृतवासाः स्वर्णरेखाजलाऽऽप्लवाः ।
दामोदरप्राणचित्ता जीवन्मुक्ता न संशयः ॥३०॥
रैवताद्रौ मृत्युकाले हरिर्दामोदरः स्वयम् ।
लक्ष्मीनारायणमन्त्रं कर्णजाप्यं प्रयच्छति ॥३१॥
अतिप्रसन्नचित्तेन रैवताद्रिनिवासिने ।
मुमूर्षोर्दक्षिणे कर्णे यस्य कस्यापि वा स्वयम् ॥३२॥
उपदेक्ष्यामि मन्मन्त्रं स मुक्तो भविता ध्रुवम् ।
दामोदरे मृतः कोऽपि न याति नरकं क्वचित् ॥३३॥
वामनानुगृहितास्ते सर्वे यान्ति परां गतिम् ।
प्राणानिह जनास्त्यक्त्वा जायन्ते न पुनः क्वचित् ॥३४॥
प्रथमो रेवतीकुण्डस्ततो दामोदराह्वयः ।
नारायणाख्यस्तृतीयो मृगीकुण्डश्चतुर्थकः ॥३५॥
पञ्चमो भवकुण्डश्च षष्ठो गंगा तु गोमुखी ।
कमण्डलुः सप्तमश्चाऽष्टमो भैरवनामकः ॥३६॥
मार्कण्डेयश्च दशमो ह्येकादशस्तु दत्तकृत् ।
एते स्नाताश्च पीताश्च दृष्टाश्चाऽऽचामिता अपि ॥३७॥
स्पृष्टा अपि जनान् शुद्धान् कृत्वा मोक्षं नयन्ति हि ।
अनन्ता सा गतिस्तेषां या गतिर्योगिनां मता ॥३८॥
तेषु मुक्तिः समुद्दिष्टा पतितानां तु पावनी ।
तत्रापि सर्वकुण्डानां श्रेष्ठो नारायणो ह्रदः ॥३९॥
यथा नारायणह्रदस्तथा दामोदरो ह्रदः ।
यत्र नीत्यं श्रीहरेश्च सान्निध्यं वामनस्य च ॥४०॥
दशानामश्वमेधानां यज्ञानां यत्फलं स्मृतम् ।
तदवाप्नोति धर्मात्मा तत्र स्नात्वा न संशयः ॥४१॥
उपवासं तु यः कृत्वा विप्रान् साधूंश्च तर्पयेत् ।
स सौत्रामणियज्ञस्य फलमाप्नोति निश्चितम् ॥४२॥
तत्र दीपप्रदानेन ज्ञानवत्स्फुरतीन्द्रियम् ।
आरार्त्रिकप्रदानेन नैरोग्यं जायते सदा ॥४३॥
किमत्र बहुनोक्तेन धर्मादींस्तु प्रकुर्वतः ।
श्रीहरिं वै समुद्दिश्य तदनन्तफलं भवेत् ॥४४॥
दशाश्वमेधिकं पुण्यं पुष्पदाने प्रकीर्तितम् ।
अग्निहोत्रफलं धूपे गन्धे भूदानजं फलम् ॥४५॥
मार्जने गोप्रदानस्य फलमत्र प्रकीर्तितम् ।
अनुलेपे दशगुणं माल्ये दशगुणं स्मृतम् ॥४६॥
गीते सहस्रगुणितं वाद्ये लक्षगुणं मतम् ।
दामोदरं रैवताद्रावर्चयन्ति स्तुवन्ति ये ॥४७॥
सर्वपापविमुक्तास्ते वैकुण्ठं यान्ति शाश्वतम् ।
कल्पकोटिशतैश्चापि तेषां नास्ति पुनर्भवः ॥४८॥
ये तु ध्यानं समासाद्य मुक्तात्मानः समाहिताः ।
लक्ष्मीनारायणं जापं कुर्वन्ति नियतेन्द्रियाः ॥४९॥
रैवताद्रौ स्थिता नित्यं कृतार्थास्ते जनोत्तमाः ।
तारयित्वाऽनन्तजीवान् विष्णुलोकं प्रयान्ति ते ॥५०॥
माघ्यां तथा च कार्तिक्यां साध्व्यश्च साधवस्तथा ।
दृष्टाः स्पृष्टा नताश्चैवाऽर्चिताः संभोजितास्तथा ॥५१॥
शुश्रूषिता मर्दिताश्च सेविता वाहितास्तथा ।
येन केन प्रकारेण यैर्जनैः सम्प्रसादिताः ॥५२॥
प्रसादिता रमा तैश्च नारायणः प्रसादितः ।
तत्र लक्ष्मीस्तथा नारायणो वै वर्तते सदा ॥५३॥
साध्वीसाधुस्वरूपेण लक्ष्मीनारायणः स्वयम् ।
वस्त्रापथे विचरति जनकल्याणहेतवे ॥५४॥
तयोरनुग्रहात्कार्यं सर्वं सिद्ध्यति मानसम् ।
ऐहिकं च पारलौकिकं च सिद्ध्यति वै ध्रुवम् ॥५५॥
देहेन मनसा वाचा सेवया भोजनेन च ।
अर्पणेन च यैरत्र वस्त्रापथे तु रैवते ॥५६॥
साधवः सेविताः सम्यक् सेविताः सर्वदेवताः ।
हरिः स्वयं प्रसेवितो मोक्षं ददाति सेविने ॥५७॥
वस्त्रापथं महत्तीर्थं साधून् साध्वींश्च देवताः ।
निन्दिष्यन्ति जना ये ते यास्यन्ति नरकं ध्रुवम् ॥५८॥
भगवता नृसिंहेण चागत्य रैवते गिरौ ।
यत्र स्वर्णनदीपार्श्वे गुहायां वास आदृतः ॥५९॥
तत्स्थलं मोक्षदं पुण्यं रजोऽप्यघविनाशकम् ।
किं बहुनाऽत्र सत्तीर्थे प्रत्येकं रज इत्यपि ॥६०॥
वस्त्रापथे रैवताद्रौ पत्रं पुष्पं तृणादिकम् ।
सर्वं दिव्यं च पापघ्नं मुक्तिदं नात्र संशयः ॥६१॥
राज्ञाऽऽनर्तेन गोलोकात् खण्डः सौराष्ट्रसंज्ञकः ।
स्थापितो मध्यभवने पुनस्तत्र हरेर्गलात् ॥६२॥
कौस्तुभखण्डआनीतस्तैजसो रैवताचलः ।
पुनश्च रेवतीनक्षत्रस्य खण्डोऽपि संस्थितः ॥६३॥
पुनर्मेरोस्तु शिखरं मन्दरं कुमुदं तथा ।
अरुणं चेति दिव्यानि ऊर्जयन्तो गिरिस्तथा ॥६४॥

ब्रह्मविष्णुमहेशाना यत्र तिष्ठन्ति नित्यदा ।
स्वर्णरेखा नदी दिव्या ओजस्वती तथा शुभा ॥६५॥
कृष्णा भद्रा तथाऽन्याश्च हरेः पत्न्यः सरिद्रूपाः ।
सरस्वती तथाऽऽकाशगंगा शृंगेषु वर्तते ॥६६॥
कोऽस्य रैवतराजस्य महिम्नः पारमेति नु ।
सर्वे दिव्याः समुदितास्तस्मान्मोक्षस्थलं हि तत् ॥६७॥
भुवस्तलाद् बहिर्यावान् ततो दशगुणस्तु सः ।
पृथ्वीगर्भे प्रविष्टोऽस्ति रैवताचलभूधरः ॥६८॥
वस्त्रापथे प्रदृश्यन्ते ये । प्रकीर्णकपर्वताः ।
तानि तु शिखराण्येव दृश्यन्ते न तु पर्वतः ॥६९॥
यदा ह्यागत्य पतितो विवरे रैवताचलः ।
दशयोजनमुच्छ्रायो ह्यभूत्सरैवताचलः ॥७०॥
वेगेनैवाऽपतन्मान्याग्रदा पृथ्व्यामवातरत् ।
योजनानां शतं तत्र गगने भ्रमणं ह्यभूत् ॥७१॥
पूर्वोत्तरदिशाभागात् पुनः पुनर्भ्रमिं यदा ।
न्यूनवेगां ह्यकरोत् स तदा तन्मूर्धभागतः ॥७२॥
दक्षिणायां दिशि वेगाच्छिखराणां सहस्रकम् ।
भंक्त्वा वियुज्य चोत्कृत्य पतितं बहुविस्तरम् ॥७३॥
व्याघ्रारण्ये पतितानि रैवतशिखराणि वै ।
तथैव तानि स्थास्यन्ति यावदाचन्द्रतारकम् ॥७४॥
सोमनाथं समारभ्य भीमनाथावधि क्षितौ ।
शिखराणि पतितानि व्याघ्रारण्यस्थलान्तरे ॥७५॥
तदत्र रैवते भागे भवं दामोदरं तथा ।
स्मृत्वा मूर्तिं च यास्यन्ति यास्यन्ति मुक्तिमेव ते ॥७६॥
माहात्म्यमित्युपादिश्य हरिर्दामोदरः स्वयम् ।
समाश्लिष्याऽथ तं विप्रं मुहुः पत्नीव्रतं मुहुः ॥७७॥
प्राह तीर्थाय गमने तिरोदधे स्वयं तदा ।
इति ते कथितं लक्ष्मि ! पूर्वं यच्चरितं मया ॥७८॥
पठितं पाठितं यद्वा श्रावितं मोक्षदं सदा ।
नैतादृशं भवेदन्यत् किं भूयः श्रोतुमिच्छसि ॥७९॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने रैवताद्रिवस्त्रापथक्षेत्रतीर्थमहिमवर्णननामैकषष्ठ्यधिक-शततमोऽध्यायः ॥ १६१ ॥

श्रीलक्ष्मीरुवाच—

सती च पार्वती देवी गणेशजननी प्रभो ।
भवता कथिता पूर्वं कथं सती कदा ह्यभूत् ॥ १ ॥
या तु नारायणमूर्तौ सत्ता च सार्वभौमिकी ।
सतीरूपा समुद्भूता सेयं वाऽन्येति का सती ॥ २ ॥
सैव सती पार्वती वा पार्वत्यन्या शिवप्रिया ।
इति मे संशयं कृष्ण छिन्धि नारायणाऽच्युत ॥ ३ ॥

श्रीनारायण उवाच—

समीचीनं त्वया पृष्टं गुह्यं चानादिकालिकम् ।
जानन्तोऽपि न जानन्ति चान्ये वृत्तान्तमीदृशम् ॥ ४ ॥
शृणु लक्ष्मि ! कथयामि याथातथ्येन तत्कथाम् ।
यच्छ्रुत्वा तेऽपि भानं स्यात् सती किमात्मिकाऽस्ति यत् ॥ ५ ॥
सर्वैश्वर्यसर्वशक्तियुतः श्रीपुरुषोत्तमः ।
महत्येव प्रतिसर्गेऽक्षरे धाम्न्येक एव सः ॥ ६ ॥
विराजते तदन्यद्वै सर्वं संहृत्य चात्मनि ।
राजाधिराजो भगवानेकाकी रमते नहि ॥ ७ ॥
चिरं द्वितीयमैच्छत्स मूर्तेर्वामांगतस्तदा ।
मुक्तान्धामान्यनेकानि गुणानैश्वर्यपार्षदान् ॥ ८ ॥
अवतारानीश्वराँश्चेश्वराणीर्दिव्यमूर्तिकान् ।
दासीदासाननेकाँश्च त्रीन्गुणान्शाश्वताँस्तथा ॥ ९ ॥
प्रादुश्चकार भगवान् सर्वसत्ताधिपो हरिः ।
सर्वनियामिका सार्वभौमा सत्ता च या हरौ ॥१०॥
अनादिनी स्थिता चासीत्प्रादुर्भावमवाप सा ।
त्रिगुणात्मा च सा सत्ता सर्वसृष्टिजनन्यथ ॥११॥
महामाया सत्त्वरजस्तमआत्मा ह्यभूद्धि सा ।
साम्यावस्था च सा माया ब्रह्मरूपा हरिप्रिया ॥१२॥
राधारूपा महालक्ष्मीरूपा रमास्वरूपिणी ।
लक्ष्मीरूपा च सावित्रीरूपा भवति वै मुहुः ॥१३॥
वैराजस्य ललाटाद्वै यदा रुद्रो भवाम्यहम् ।
रुद्राणी च तदा माया पत्नी मे जायते हि सा ॥१४॥
सोऽहं शिवस्वरूपेण तत्र प्राविर्भवामि तु ।
तत्र तत्र मया साकं जायते मे सहायिनी ॥१५॥
सैव मदंगना माता शिवा सा सतीरूपिणी ।
यथा जन्मवती जाता तत्सर्वं शृणु मे प्रिये ॥१६॥
वैराजस्य यथा पत्नी ब्रह्मादीन्सुषुवे तु सा ।
तदा माना तु सा देवी ब्रह्मादीनां ह्यभूत् खलु ॥१७॥
ब्रह्मणश्च ललाटाद्वै रुद्रः शंभुरजायत ।
यदा तदा शंभुपत्नी स्नुषा सा ब्रह्मणो ह्यभूत् ॥१८॥
दक्षपुत्री यदा जाता तदा सा ब्रह्मणः खलु ।
पुत्रस्य पुत्री समभूत् सत्तारूपा तु सा सती ॥१९॥

भ्राता तु ब्रह्मणः शंभुर्विराट्पुत्रोऽभवद्यदा ।
तदा सा भ्रातृजाया वै ब्रह्मणः परिकीर्तिता ॥२०॥
इत्येवं तु महामाया महालक्ष्मीस्वरूपिणी ।
यथाकार्यं स्वयं भूत्वा वर्तते सृष्टिधारिणी ॥२१॥
वैराजनाभेः कमलाद् ब्रह्मा यदा त्वजायत ।
तदा तस्य तपो दृष्ट्वा विष्णुर्भ्राता ह्यजायत ॥२२॥
द्वयोर्महत्त्वे कलहोऽभवत् तस्य निवृत्तये ।
मध्ये तु श्रीहरेस्तेजःकिरणं ह्यभूत् ॥२३॥
तदा तत्र तु किरणे शिवोऽदृश्यत स प्रभुः ।
तेनापि सह माया सा शिवाऽदृश्यत वै तदा ॥२४॥
ब्रह्मणा तु तदा तौ द्वौ प्रार्थितौ स्वसहायकौ ।
स एव प्रार्थितः सदाशिवो वैराजभालतः ॥२५॥
समुत्पन्नः शंभुरूपस्तदा शिवापि चांगना ।
समं शिवेन सञ्जाता शिववामे व्यवस्थिता ॥२६॥
अर्धनारीनररूपः शिवो वै वर्तते तदा ।
अथ कार्यवशान्नारीरूपा पृथक् शिवा त्वभूत् ॥२७॥
शृणु लक्ष्मि ! कथयामि यथाऽभूद् दैत्यनाशिनी ।
देवानां कार्यसिद्ध्यर्थमाविर्भवति सा यदा ॥२८॥
उत्पन्नेति तदा लोके सा नित्याऽप्यभिधीयते ।
एकदा तु स्वयं ब्रह्मा प्रथमे वै कृते युगे ॥२९॥
तपसि स्थित एवाऽभूत् कमलेऽथ तदा शिवः ।
समाधौ ध्यानमग्नोऽभूत् सृष्टिचिन्तनवर्जितः ॥३०॥
विष्णुस्तु शेषशयने विरामेऽभूच्च योगिवत् ।
प्रातः सृष्टेः समारंभे प्रायः काले ह्युपस्थिते ॥३१॥
जाग्रद्भावे तदा विष्णोः कर्णयोर्मलयोगतः ।
कण्डूः पुनःपुनस्तत्र समजायत पद्मजे ! ॥३२॥
विष्णुना च तदा स्वर्णशलाकाप्रान्तयोजनात् ।
कण्डूर्निरसिता कर्णमलात्तु गुटिकाद्वयम् ॥३३॥
बहिर्निष्कास्य च द्वे ते प्रक्षिप्ते गुटिके जले ।
ततो द्वावसुरौ घोरौ विख्यातौ मधुकैटभौ ॥३४॥
कर्णमलात्समुत्पन्नौ महाबलपराक्रमौ ।
विष्णुमानम्य सहसा जलोपरि समागतौ ॥३५॥
ताभ्यां तत्राऽऽलोकितं वै कमलं ब्रह्मणा युतम् ।
विचित्रं तद्विलोक्यैतौ हन्तुं ब्रह्माणमुद्यतौ ॥३६॥
ब्रह्मा तदा भयं प्राप्य तुष्टाव तु जनार्दनम् ।
एकाग्रमानसो भूत्वा सन्तुष्टाव मुहुर्मुहुः ॥३७॥
मुहुरप्रार्थयत् स्वस्य रक्षणाय तदा पुनः ।
समुत्थाय ततस्ताभ्यां युयुधे भगवान् हरिः ॥३८॥

पञ्चवर्षसहस्राणि बाहुप्रहरणो विभुः ।
तदा तावसुरौ मोहयितुं च भगवान् हरिः ॥३९॥
सस्मार तु महामायां तां शिवाऽऽर्धांगसंस्थिताम् ।
द्रागेव शिवमूर्तेः सा पृथङ्नारीस्वरूपिणी ॥४०॥
भूत्वा दासीव देवेशी समागत्य पुरःस्थिता ।
भगवाँस्तां तदा स्वस्य नेत्रयोः स्वीचकार हि ॥४१॥
उवाचैनां महामाये ! मयि व्याप्नोतु सर्वथा ।
नेत्राऽऽस्यनासिकाबाहुहृदयोर्वंघ्रिषु द्रुतम् ॥४२॥
मां यथा तौ प्रपश्येतां नारीं मोहकरीं शुभाम् ।
स्वीकृत्याऽऽज्ञां यथा माया शिवा मोहमयी स्वयम् ॥४३॥
विष्णुमूर्तौ तदा जाता मया जवनिका यथा ।
अन्तर्विष्णुर्बहिर्माया विष्णुगर्भा च मातृवत् ॥४४॥
दृश्यते च तदा तावत् ददृशाते च तां च तौ ।
दैत्यौ मुमुहतुर्ता तु दृष्ट्वा तेजःस्वरूपिणीम् ॥४५॥
तौ तदाऽतिबलोन्मत्तौ महामायाविमोहितौ ।
उक्तवन्तौ वरोऽस्मद्भ्यां वृणु त्वं शुभदर्शने ! ॥४६॥
प्रच्छन्नो भगवाँस्तत्र मायाजवनिकागतः ।
उवाच तौ महाप्रेम्णा तयोराकर्षयन्मनः ॥४७॥
भवेतामद्य मे तुष्टौ मम वध्यावुभावपि ।
किमन्येन वरेणात्र मम त्वेतावता कृतम् ॥४८॥
मोहितौ कामसंकल्पात् वंचितौ ज्ञानमार्गतः ।
मानहीनौ तदा जातौ कार्याऽकार्याविवेकिनौ ॥४९॥
ब्रह्मकमलवासात्मजलं दृष्ट्वा समन्ततः ।
ऊचतुर्जहि यत्रास्ति जलहीना क्षितिस्तु नौ ॥५०॥
तावदाद्ये कृतयुगे जलं वै लीनतां गतम् ।
पृथिवी जलशून्या चाऽदृश्यत गोलकात्मिकी ॥५१॥
तदा भगवता तत्र शंखचक्रगदाभृता ।
कृत्वा चक्रेण वै छिन्ने जघने शिरसी तयोः ॥५२॥
सेयं मोहकरी माया मोहनी नामतोऽभवत् ।
तस्यै प्रसन्नो भगवान् ब्रह्मा तुष्टाव सांजलिः ॥५३॥
नमो मात्रे नमः स्वस्रे दुहित्रेऽस्तु नमोनमः ।
नमोऽस्तु भ्रातृजायायै शिवायै ते नमोनमः ॥५४॥
नमः पत्न्यै नमः कार्यसाधिकाशक्तये नमः ।
नमोऽस्तु वैष्णवोदेव्यै वामांगायै नमोनमः ॥५५॥
लक्ष्मीस्त्वं सा च सावित्री त्वं देवी जननी परा ।
त्वयैव धार्यते सर्वं त्वयैतत्सृज्यते जगत् ॥५६॥
त्वयैतत्पाल्यते देवि ! त्वमत्स्यन्ते च सर्वदा ।
महाविद्या महामाया महामेधा महास्मृतिः ॥५७॥

महामोहा च भवती महादेवी महासुरी ।
त्वं श्रीस्त्वमीश्वरी त्वं ब्रह्माणी देवसहायिनी ॥५८॥
खड्गशूलगदाचक्रशंखचापकृताऽऽयुधा ।
भुशुण्डीपरिघप्राशबाणसत्तोमरायुधा ॥५९॥
यच्च किञ्चित् क्वचिद्वस्तु सदसद्वाऽखिलात्मकम् ।
तस्य सर्वस्य या शक्तिस्त्वमेतत्कार्यसाधिका ॥६०॥
शंभोरर्धांगना तन्वी विष्णोरर्धांगना रमा ।
वेधसोऽर्धांगना ब्राह्मी सृज्यदेवेषु संवस ॥६१॥
इत्यर्थ्यमाना सा देवी ब्रह्मविष्णुपिनाकिषु ।
मोहिनी मोहिका स्वस्य निवासमकरोत्तथा ॥६२॥
अदृश्यभावमापन्ना ययौ विष्णुः पयोनिधिम् ।
ब्रह्मा विष्णोस्तनौ सृष्टिं दृष्ट्वा प्राग्वत् ससर्ज ताम् ॥६३॥
ऋषीन् मुनींस्तथा पितॄन् देवान् सुराँश्च मानवान् ।
दैत्यान् सर्पान् स्थावराँश्च तेषु मोहिन्युवास सा ॥६४॥
तेजोबलप्रसौन्दर्यरूपिणी साऽवसत् खलु ।
इन्द्रियेषु महामाया सर्वकार्यप्रसाधिका ॥६५॥
तत्तज्जातीयरूपाणि व्यतनोद् देहसुन्दरी ।
सौन्दर्यं नरनारीषु व्यजायत तथैव तत् ॥६६॥
अथ कालान्तरे सा च महिषासुरनाशिनी ।
प्रादुरभूत्सुरकार्यकारिणी जगदीश्वरी ॥६७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने परब्रह्मणोऽर्धांगनात्मकमहामायया धृतराधालक्ष्मी-सावित्रीशिवादिरूपाणां वर्णनं मधुकैटभ-नाशार्थे धृतमोहिनीस्वरूपवर्णनं चेत्यादि निरूपणनामा द्विषष्ट्यधिक-शततमोऽध्यायः ॥१६२॥

**श्रीलक्ष्मीरुवाच—**

कदा कथं महिषाख्यो ह्यसुरः समपद्यत ।
देवीकृतविनाशं च श्रोतुमिच्छामि मे वद ॥ १ ॥

**श्रीनारायण उवाच—**

शृणु कोऽयं महिषोऽभूत् कथमासुरतां गतः ।
विनाशश्च कया रीत्या कृतो देव्या निबोध मे ॥ २ ॥
पुरा दैत्यौ महारौद्रौ जगत्क्षोभकरावुभौ ।
रंभश्चापि करंभश्च पुत्रार्थे तेपतुस्तपः ॥ ३ ॥
बहून्वर्षगणानेकः करंभः सलिले स्थितः ।
ग्राहो भूत्वा महेन्द्रस्तं जले जघान दंष्ट्रया ॥ ४ ॥
नष्टे भ्रातरि रंभोऽभूदतिक्रोधपरिप्लुतः ।
वह्नौ स्वशीर्षं संछिद्य होतुमैच्छन्महाऽसुरः ॥ ५ ॥
खड्गमादाय यावद्वै छेत्तुमुद्युक्त एव सः ।
तावन्निषिद्धो वै वह्निनैवं मा साहसं कुरु ॥ ६ ॥
मा म्रियस्व यथेष्टं ते ददामि वद मा चिरम् ।
रंभः प्राह भवेत् पुत्रस्त्रैलोक्यविजयी मम ॥ ७ ॥
सर्वदेवैरजेयः स्यात्तथा त्वत्तेजसाऽधिकः ।
कामरूपी कृताऽस्त्रज्ञो महाबलपराक्रमः ॥ ८ ॥
वह्निः प्रोवाच तं बाढं यथेष्टं ते भविष्यति ।
यस्यां चित्तं च ते लग्नं तया मृत्युर्भविष्यति ॥ ९ ॥
इत्येवमुक्तो रंभः स ययौ मालवटाभिधम् ।
यक्षं द्रष्टुं तदा मालवटस्य पशुमण्डले ॥१०॥
गजाश्च महिषाश्चाऽश्वा गावोऽजा अवयस्तथा ।
वर्तन्ते बहवस्तत्र महिष्यामकरोन्मनः ॥११॥
सा समागाच्च दैत्येन्द्रं कामयन्ती त्रिहायना ।
स चापि महिषो भूत्वा मैथुनं त्वाचरद् बली ॥१२॥
सगर्भां तां महिषीं स गृहीत्वा स्वगृहं गतः ।
पाताले दानवैस्तत्र परित्यक्तो विकर्मकृत् ॥१३॥
पुनः स महिषीं नीत्वा यक्षं मालवटाऽभिधम् ।
समाजगाम वासाय सुषुवे महिषी सुतम् ॥१४॥
शुभ्रं तु महिषं कामरूपिणं सुमहाबलम् ।
पुत्रमासाद्य रंभः स मुमुदे वै मुहुर्मुहुः ॥१५॥
अथाऽन्यो महिषः कश्चिन्महिषीमृतुसंस्थिताम् ।
तामेव कामयामास सा च रंभं जगाद तत् ॥१६॥
तदा रंभमहिषयोर्युद्धं परमदारुणम् ।
अभूत्तदा तु तीक्ष्णाभ्यां शृंगाभ्यां हृदि ताडितः ॥१७॥
निर्भिन्नहृदयो रंभः पपात च ममार च ।
महिषी च ततो यक्षशरणं संजगाम ह ॥१८॥
यक्षैश्च रक्षिता सा च निवार्य महिषान्तरम् ।
मृतं च तं तदा रंभं यक्षा मालवटादयः ॥१९॥
चितामारोपयामासुः साऽप्यारुरोह तत्र ह ।
ततोऽग्निमध्यादुत्तस्थौ पुरुषो रौद्रभीषणः ॥२०॥
खड्गपाणिस्तदा यक्षान् व्यद्रावयच्च तत्स्थलात् ।
महिषान् घातयामास पुत्रं पुपोष भावतः ॥२१॥
सोऽयं रंभस्य पुत्रोऽभूद् रक्तबीजश्च नामतः ।
महाबलो ह्यवध्यश्च कामरूपधरः सदा ॥२२॥

युवा स युयुधे देवैस्तथान्यैर्लोकपालकैः ।
दिक्पाला लोकपालाश्च ग्रहास्तेन जिता युधि ॥२३॥
तदाऽजं शंकरं नीत्वा देवा जग्मुर्जनार्दनम् ।
न्यवेदयन् महिषस्य रक्तबीजस्य चेष्टितम् ॥२४॥
प्रभोऽश्विसूर्यचन्द्राणां जलवाय्वग्निवेधसाम् ।
कुबेरेन्द्रादिदेवानां राज्यान्यास्कन्दितानि वै ॥२५॥
नाकान्निराकृता देवा वयं पृथ्व्यां वसामहे ।
यदि विष्णुश्च वा शंभुर्नो चेद्रक्षां करिष्यसे ॥२६॥
तेन संकाल्यमानाश्च व्रजामो हि रसातलम् ।
श्रुत्वैवं भगवाँस्तत्र कोपं सुदुःसहम् ॥२७॥
तावत्प्रभोस्तदाऽऽस्याद्वै शंभोश्च ब्रह्मणस्तथा ।
इन्द्रादीनां च देवानां महत्तेजो विनिःसृतम् ॥२८॥
या मधुकैटभौ देवी मारयित्वेन्द्रियेषु वै ।
सर्वेषां बलरूपाऽऽसीत् तेजस्तदेव निःसृतम् ॥२९॥
तत्सर्वं तु शैलतुल्यं संहतं दुःसहं परम् ।
कात्यायनमहर्षेश्चाऽऽश्रमे तत्तेजसाऽन्वितम् ॥३०॥
तस्माज्जाता विशालाक्षी कात्यायनी महेश्वरी ।
शंभुतेजोऽभवद्वक्त्रं वह्नितेजस्त्रिनेत्रकम् ॥३१॥
याम्यतेजोऽभवन्केशा हरेस्तेजोऽभवन् भुजाः ।
अष्टादशप्रसंख्याता बाहवः संप्रजज्ञिरे ॥३२॥
सौम्ये युग्मं स्तनयोर्वक्षश्चैन्द्रेण तेजसा ।
ऊरू जंघे नितम्बौ च मध्यं चन्द्रस्य तेजसा ॥३३॥
ब्रह्मतेजोऽभवत्पादयुगलं कोमलाऽरुणम् ।
सूर्यस्य तेजसाऽङ्गुल्यो दन्ताः प्रजेशतेजसा ॥३४॥
यक्षतेजोऽभवन्नासा श्रवणौ वायुतेजसा ।
साध्यतेजोऽभवद् भ्रूश्च कामबाणासना नु किम् ॥३५॥
एवं तेजांसि देवानां तत्र संभूय सुन्दरी ।
नाम्ना कात्यायनी जाता महिषक्षयहेतवे ॥३६॥
ददौ त्रिशूलं शंभुश्च हरिश्चक्रं ददौ तदा ।
शंखं ददौ जलेशश्च ददौ शक्तिं हुताशनः ॥३७॥
वायुश्चापं च तूर्णं चाऽक्षय्यबाणान् गभस्तिमान् ।
वज्रं घण्टां ददौ चेन्द्रो यमो दण्डं ददौ तथा ॥३८॥
गदां कुबेरः प्रददौ ब्रह्माऽदात्तु कमण्डलुम् ।
अक्षमालां ददौ तस्यै कालोऽसिं चर्म संददौ ॥३९॥
सोमो हारं चामरे च मालामब्धिः समुज्ज्वलाम् ।
हिमालयो मृगेन्द्रं च वाहनं प्रददौ श्रियै ॥४०॥
विश्वकर्मा कुठारं चाऽर्धचन्द्रं कुण्डले तथा ।
चूडामणिं ददौ चित्ररथोऽदात् पानपात्रकम् ॥४१॥
शेषो भुजंगहारं चर्तवोऽम्लानसुमस्रजम् ।
ददुर्देवाश्चायुधानि शृंगाराणि च सर्वशः ॥४२॥
देवी तदाऽतितुष्टाऽभूदट्टहासं चकार वै ।
सर्वदेवैराशिषा वर्धिताऽगात् विन्ध्यपर्वतम् ॥४३॥
उच्चशृंगेकृताऽऽवासा तिष्ठते हृदयंगमा ।
महिषासुरदूतौ तां चण्डमुण्डावपश्यताम् ॥४४॥
ऊचतुर्महिषं गत्वा कन्यां सर्वांगसुन्दरीम् ।
स्वस्थो भवान् कथं शेते कन्यां भजतु चागताम् ॥४५॥
कीदृशी मुखचन्द्राभा केशा जीमूतसन्निभाः ।
त्र्यम्रयस्त्रीणि नेत्राणि कंबुः कण्ठस्थितोऽस्ति किम् ॥४६॥
सुवृत्तौ च स्तनौ निम्नचूचुकौ कुंभसदृशौ ।
अष्टादशभुजास्तस्याः पीनाः शस्त्रान्विताः शुभाः ॥४७॥
उदरं त्रिवलीव्याप्तं मध्यं रोमविनाकृतम् ।
सौन्दर्यभाजने जंघे सक्थिनी स्वर्णशोभने ॥४८॥
करपादतले रम्ये स्थलपद्मनिभे शुभे ।
नेत्रे कमलपत्राभे सर्वा सौन्दर्यभाजना ॥४९॥
पत्नीत्वेन गृहाण त्वं कन्यां तां सुरसुन्दरीम् ।
तां विना शोभते नैव तवाऽयं दिव्यविग्रहः ॥५०॥
तां विना ते मृषा राज्यमिन्द्रराज्यमपि प्रभो ।
गत्वा विन्ध्याचले पश्य कुरुष्वाभिमतं क्षमम् ॥५१॥
शुभाशुभे कृते पुंसां पश्चात् व्रजत एव हि ।
मदर्थे मम भाग्यात्तत्कन्यारत्नमुपस्थितम् ॥५२॥
विचार्येत्थं च मुण्डं च नमरं बाष्कलं तथा ।
चण्डं विशालनेत्रं च कपिलं विक्षुरं तथा ॥५३॥
उग्रायुधं रक्तबीजं त्वादिदेश स दैत्यराट् ।
विन्ध्याचलं प्रगच्छन्तु सज्जीभूता महासुराः ॥५४॥
तत आगम्य ते विन्ध्ये शिबिरं विनिवेश्य च ।
तदा तस्थुर्मयपुत्रो दुन्दुभिः प्राह चेश्वरीम् ॥५५॥
कुमारि ! रंभपुत्रस्या दूतोऽस्मि महिषस्य वै ।
शृणु मत्स्वामिनाथस्य यथेष्टं च ततः कुरु ॥५६॥
दुन्दुभिः प्राह कन्ये त्वं मां वै वरय सर्वथा ।
अमरा मम भृत्याश्च वर्तन्ते विजिता मया ॥५७॥
आब्रह्मभुवना लोका लोकपाला वशीकृताः ।
अहमिन्द्रोऽस्मि रुद्रोऽस्मि सूर्योऽस्मि रजनीकरः ॥५८॥
लोकेशोऽस्मि महाराजो मां भजस्व जगत्पतिम् ।
स्त्रीरत्नमग्र्यं भवती मदर्हे हि भजस्व माम् ॥५९॥
देवी प्राह तदा श्रुत्वा दूतस्य वचनं प्रति ।
कुले मे वर्तते धर्मः शुल्काख्य इति निश्चितः ॥६०॥

तं चेद्दद्यान्महिषो मे भजाम्यद्य पतिं तु तम् ।
दुन्दुभिः प्राह शुल्कं तत् कीदृशं त्वं निवेदय ॥६१॥
त्वदर्थे मस्तकं दद्यान्मम स्वामी ततः किमु !
देव्याह च तदा शुल्कं कन्यां यो जेष्यति मृधे ॥६२॥
तस्याः पतिः स एव स्यादिति तस्मै निवेदय ।
श्रुत्वा दुन्दुभिरागत्य कथयामास तद्यथा ॥६३॥
महिषोऽपि महातेजाः सर्वदैत्यपुरःसरः ।
श्रुत्वाऽभ्यागाच्च विन्ध्याद्रिमावृत्य समुपस्थितः ॥६४॥
तत्र सेनापतिर्दैत्यो चिक्षुरो नाम नामतः ।
सेनाग्रगामी नमरश्चतुरंगबलान्वितः ॥६५॥
अन्ये दैत्या दानवाश्च स्वस्वसैन्यसमन्विताः ।
आजग्मुस्तत्र युद्धार्थं महिषासुरयोजिताः ॥६६॥
अथ देव्याः सहायार्थं सूर्यचन्द्रादयस्ततः ।
ब्रह्मविष्णुमहेशेन्द्रजलेशाद्यास्तदाऽऽगताः ॥६७॥
देवानामथ दैत्यानां सैन्यानि तु परस्परम् ।
विन्ध्याचले तदोग्राणि ह्यासन् भयंकराणि हि ॥६८॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने रंभासुरपुत्रमहिषासुरोत्पत्त्यादितद्विनाशिकाकात्यायन्युत्पत्त्यादिनिरूपणनामा त्रिषष्ठ्यधिकशततमोऽध्यायः ॥ १६३ ॥

श्रीनारायण उवाच—

शृणु लक्ष्मि ! ततस्तेषां युद्धारंभो बभूव ह ।
सन्नद्धाः सैनिकाः सर्वे समुत्पेतुरुदायुधाः ॥ १ ॥
महिषश्च तदा देवीं ददर्शाऽग्निसमोज्ज्वलाम् ।
हेतुसूर्यचमत्कारां धनुर्ज्यास्वनकारिणीम् ॥ २ ॥
क्षोभिताऽशेषसैन्यां तां किरीटोल्लिखिताऽम्बराम् ।
दिशो भुजसहस्रेण परितो व्याप्य संस्थिताम् ॥ ३ ॥
मुमोह बहुधा दैत्यो विजेतुं कृतनिर्णयः ।
युद्धं प्रववृते घोरं दिविषदां सुरद्विषाम् ॥ ४ ॥
शस्त्रास्त्रैर्बहुधा मुक्तैर्व्याप्तं जातं दिगन्तरम् ।
महिषासुरसेनानीश्चिक्षुरो युयुधेऽमरैः ॥ ५ ॥
रथानामयुतैः षड्भिरुदग्रो युयुधेऽमरैः ।
अयुध्यताऽयुतानां च सहस्रेण महाहनुः ॥ ६ ॥
असिलोमा च युयुधे पञ्चाशन्नियुतैस्तदा ।
बाष्कलो युयुधे तत्राऽयुतानां षट्शतैस्तदा ॥ ७ ॥
गजवाजिरथाऽसंख्यसाधनैर्व्योमचारिभिः ।
बिडालो युयुधे तत्राऽयुतानामयुतैः रथैः ॥ ८ ॥
अन्येऽपि तत्र दैतेया दानवाश्चाऽयुताऽयुतैः ।
हयैर्नागैः रथैर्यानैः शस्त्रास्त्रैः पत्तिभिस्तथा ॥ ९ ॥
युयुधुः संयुगे देवैर्देव्या सह च तेऽसुराः ।
तोमरैर्भिन्दिपालैश्च मुशलैरसिभिस्तथा ॥१०॥
गदाभिः शक्तिभिः खड्गैः परशुभिश्च पट्टिशैः ।
युयुधे दानवा देवा यथाबुद्धिबलोद्यम् ॥११॥
देवीं देवाँस्तदा हन्तुं चिक्षिपुर्दानवा मुहुः ।
शस्त्राणि तानिचिच्छेद लीलया सा निजायुधैः ॥१२॥
क्षिप्रहस्ता च सा शस्त्राण्यस्त्राण्यसुरसैन्यके ।
मुमोच चण्डिका शीघ्रं जघानाऽऽसुरसैन्यकम् ॥१३॥
विप्रकीर्णे समस्तं च दैत्यदानवमण्डलम् ।
चिच्छेद प्रायशो देवी सस्यानीव तु कर्षुकः ॥१४॥
अथाऽन्ये दानवाः संजीवन्या वै विद्यया तदा ।
छिन्ना अप्युत्थिता भूत्वा तया युयुधिरे सह ॥१५॥
देवास्तान्नाशयामासुर्बाणौघैः शस्त्रवृष्टिभिः ।
देवी धनुः समाकृष्याऽहनद्वै दानवं बलम् ॥१६॥
बाणौघैर्दिव्यतीक्ष्णास्त्रैश्चिच्छेद बहुधा बलम् ।
काँश्चित्तु गदया तीक्ष्णाऽसिना काँश्चित्तु तोमरैः ॥१७॥
पाशेन काँश्चित्तत्रैव शक्त्यर्ष्टिपरिघैस्तथा ।
चक्रेण काँश्चिद् देवी तान् निजघान महेश्वरी ॥१८॥
काँश्चित्तु कुलिशैः काँश्चिन्मुशलेन जघान सा ।
युध्यमाना रणे देवी निःश्वासान् मुमुचे बहून् ॥१९॥
ते सर्वे तु तदा देवीश्वासोत्पन्नाः गणेश्वराः ।
युयुधिरेऽस्त्रशस्त्रैश्च निजघ्नुर्दैत्यदानवान् ॥२०॥
मुमुदिरे च पटहानवादयँश्च गोमुखान् ।
शखान्मृदंगान् भेरीश्चाऽवादयँस्ते रणांगणे ॥२१॥
तदा च केसरी क्रुद्धो विधुन्वन् केसरान् मुहुः ।
महाकालकरालः सन् निषूदयति दानवान् ॥२२॥
खड्गैः केचित् त्रिशूलैश्च द्वेधा भिन्ना हि दानवाः ।
बाणैः परश्वधैः केचिच्छेरते भिन्नवक्षसः ॥२३॥
विपोथिताश्च गदया पतिता भुवि शेरते ।
मुशलैश्च हताः केचिद् रुधिरं वेमुरासुराः ॥२४॥
सैनिकाः कोटिशस्तत्र बाणैः प्राणाँश्च तत्यजुः ।
चक्रैश्छिन्नभुजाश्छिन्नकंधराः पतिताः परे ॥२५॥
केचिद्विदारिता मध्ये खड्गैर्भागेन शेरते ।
विदारिता अर्धभागाः स्वपन्ति भुवि चापरे ॥२६॥
विभक्ताः कटिभिश्चान्ये द्वेधा भूमौ पतन्ति हि ।
केचिदेकाक्षिभुजपात्कबन्धाश्च द्विधाकृताः ॥२७॥

कबन्धाः पतितास्तत्रोत्थायोत्थाय पुनः पुनः ।
युयुधुर्ननृतुश्चान्ये खड्गाऽसिशक्तिपाणयः ॥२८॥
पेतुश्चान्ये मदोन्मत्ताश्चेलुश्च तत्यजुः रणम् ।
दुर्गां तां कालरात्रिं च मन्यमाना विदुद्रुवुः ॥२९॥
अगम्या साऽभवत् पृथ्वी पतितैः रणगामिभिः ।
विसुस्रुवुर्महानद्यः शोणिताऽद्भिस्तदन्तरे ॥३०॥
एवं क्षयो महान् जातो ह्यसुराणां तदा भुवि ।
गजवाजिखरोष्ट्राणां महिषाणां रणांगणे ॥३१॥
हतं सैन्यं स्वकं दृष्ट्वा सेनानीश्चिक्षुरस्तदा ।
कार्मुकं दृढमाकृष्य ववर्ष शरजालकम् ॥३२॥
तस्य शराँस्तदा देवी चिच्छेद स्वशरैर्मुहुः ।
सौवर्णपुंखानपरान् शरान् जग्राह षोडश ॥३३॥
जघान तुरगान् बाणैश्चतुर्भिश्चतुराँस्तथा ।
हत्वा सारथिमेकेन ध्वजमेकेन चिच्छिदे ॥३४॥
चिच्छेदैकेन चापं च रथं बभंज मुद्गरैः ।
स छिन्नधन्वा विरथो हताश्वो हतसारथिः ॥३५॥
अभ्यधावत खड्गं च चर्म प्रादाय वेगतः ।
शरैश्चतुर्भिश्चिच्छेद खड्गं चर्म महेश्वरी ॥३६॥
ततो जग्राह शूलं च प्राद्रवत्पुनरम्बिकाम् ।
चिक्षेप च ततस्तत्तु भद्रकाल्यां स दैत्यराट् ॥३७॥
खड्गं चाऽन्यं समादाय जघान शांकरीभुजे ।
बभंज खड्गो द्वेधाऽभूत् शूलं तु शतधाऽभिनत् ॥३८॥
देव्या शूलं प्रहितं स्वं वक्षसि विददार तम् ।
पादौ करौ च शीर्षं च सा चिच्छेद वरासिना ॥३९॥
एवं सेनापतिश्चिक्षुरोऽपतत् षड्विभागतः ।
सेनान्यं नष्टमालोक्य नमरः सैन्यमूर्धगः ॥४०॥
समागम्य च वेगेन देव्यां शक्तिं मुमोच ह ।
हुंकाराऽभिहतां शक्तिं भस्मसादकरोद्धि सा ॥४१॥
दैत्यस्त्रिशूलमासाद्य सिंहाय प्राहिणोद्रणे ।
देवी क्षुरप्रधारैश्च बाणैस्तदपि चाऽच्छिनत् ॥४२॥
ततः सिंहः समुत्पत्य गजकुंभान्तरस्थितम् ।
नमरं जगृहे कण्ठे दंष्ट्राभिस्तीक्ष्णधारिभिः ॥४३॥
गतासुं कुंजरस्कन्धात् क्षिप्त्वा देव्यै निवेदितः ।
गृहीत्वा नमरं सव्यपाणिनाऽऽभ्राम्य मस्तके ॥४४॥
अवादयत्पटहवत् साऽट्टहासं ततोऽकरोत् ।
हास्यात् समुद्गता नाना भूता विकृतविग्रहाः ॥४५॥
व्याघ्रास्याश्च वृकास्याश्च हयास्या महिषाननाः ।
वराहास्याः कुक्कुटास्या आखवास्या अव्यजामुखाः ॥४६॥
नानावक्त्राऽक्षिचरणा नानाऽऽयुधसमन्विताः ।
गायन्त्यन्ये हसन्त्यन्ये क्रीडन्त्यन्ये तु मिश्रिताः ॥४७॥
वादयन्त्यपरे तत्र स्तुवन्त्यन्ये महेश्वरीम् ।
शातयामास भूतैः सा शेषं यद्दानवं बलम् ॥४८॥
समाद्रवत वेगेन तदोग्रास्यो महासुरः ।
बाष्कलश्चोद्धतश्चैव बिडालनयनोऽपरः ॥४९॥
दुर्धरो दुर्मुखश्चैव युयुधिरेऽतिवेगतः ।
देव्या रणे ह्युदग्रस्तु शिलावृक्षादिभिर्हतः ॥५०॥
दन्तमुष्टिप्रहारैश्च बाष्कलोऽपि निपातितः ।
गदापातैस्तदा देवी चूर्णयामास चोद्धतम् ॥५१॥
बिडालं भिन्दिपालेन तथा बाणैश्च दुर्धरम् ।
दुर्मुखं गदया संचूर्णयामास करालकम् ॥५२॥
ताम्रं तथाऽन्धकं चोग्रवीर्यं महाहनुं तथा ।
त्रिनेत्रा त्रिशूलधारैस्तान् जघान परेश्वरी ॥५३॥
एवं क्षयं गते सैन्ये महिषो दैत्यराट् तदा ।
माहिषं रूपमास्थाय त्रासयामास तान् गणान् ॥५४॥
काँश्चित् तुण्डप्रहारेण क्षुरक्षेपैस्तथाऽपरान् ।
काँश्चिल्लांगुलघातैश्च काँश्चिच्छृंगविदारणैः ॥५५॥
काँश्चिद्वेगेन नादेन भ्रमणेन तथाऽपरान् ।
नेत्राग्निभिश्च फुत्कारैर्निपात्य प्रमथान् बहून् ॥५६॥
अभ्यधावत् प्रहन्तुं सोऽसुरः सिंहं तु तत्क्षणे ।
कोपाद्बलान्महावीर्यः क्षुरक्षुण्णमहीतलः ॥५७॥
शृंगाभ्यां पर्वतानुच्चाँश्चिक्षेप च ननाद च ।
वेगभ्रमणघातेन पृथ्वी तत्र व्यशीर्यत ॥५८॥
समुद्रो लांगूलघातादुद्वेलोऽप्लावयज्जगत् ।
शृंगपुच्छविषाणैश्च मेघाश्छिन्ना ययुर्लयम् ॥५९॥
श्वासैर्हतास्तु गिरयो निपेतुर्व्योममार्गतः ।
ब्रह्माण्डनाशसन्देहं तदा ह्यजनयद् बली ॥६०॥
इत्येवं बलसर्वस्वं दर्शितं तेन शत्रुणा ।
तदा देवी तस्य कायं पाशेन प्रबबन्ध वै ॥६१॥
तदा तत्याज रूपं तन्माहिषं च क्षणात्पुनः ।
सिंहोऽभवत्तदा देवी यावच्छिनत्ति मस्तकम् ॥६२॥
तावत् स पुरुषो भूत्वा खड्गपाणिरदृश्यत ।
यावद्देवी शरैस्तं संविव्याध तावदेव सः ॥६३॥
खड्गचर्मधरः शैलसदृशो ह्यभवद्गजः ।
शुण्डादण्डेन सिंहं तं चकर्ष च जगर्ज च ॥६४॥
निरकृन्तत तच्छुण्डां खड्गेनैव महेश्वरी ।
माहिषं रूपमास्थाय स दैत्यश्चण्डिकां प्रति ॥६५॥

चिक्षेप पर्वतान् स्वीयशृंगाभ्यामथ चण्डिका ।
चूर्णयामास गदया परिघैस्तोमरैस्तदा ॥६६॥
मधुपानं पपौ क्रुद्धा बभूवाऽरुणलोचना ।
बलौजोमदगर्विष्ठा प्रोवाच महिषासुरम् ॥६७॥
गर्ज गर्ज क्षणं दैत्य मधु यावत् पिबामि च ।
मया त्वयि हतेऽत्रैव गर्जिष्यन्त्याशु देवताः ॥६८॥
गर्ज गर्ज क्षणं भीरस्थ शकृत् यावन्न मुंचसि ।
मया त्वयि हतेऽत्रैव मरिष्यन्त्याशु दानवाः ॥६९॥
एवमुक्त्वा शूलमस्य व्यसृजद्धृदि वेगतः ।
शूलं बभंज दैत्यस्य वक्षोऽस्थिघट्टनाबलात् ॥७०॥
अथ चिक्षेप शक्तिं सा कुण्ठिताऽग्राऽपतद् भुवि ।
अथ चक्रं प्रहितं तत् कुण्ठधारं तदाऽपतत् ॥७१॥
अथ क्षिप्ता गदा सापि द्वेधा भिन्नाऽपतद् भुवि ।
अथ पाशस्तथा दण्डः क्षिप्तौ भिन्नौ च तावुभौ ॥७२॥
वज्रं गले हतं तत्र क्षुद्रत्वमगमत् तदा ।
अथ क्रुद्धा महादेवी समुत्प्लुत्य महासुरम् ॥७३॥
समारूढा पृष्ठभागे दैत्योऽपि पुप्लुवे तदा ।
सापि ममर्द पद्भ्यां तं चकार बलवर्जितम् ॥७४॥
कण्ठं बिभेद शूलेन निर्जगामाऽसिधृक् पुमान् ।
स एवाऽसुरवर्योऽभूत् माहिषात्मा महासुरः ॥७५॥
निष्क्रान्तमात्रं हृदये पत्तलेन प्रहृत्य च ।
कोपात् कचेषु संगृह्य शिरश्चिच्छेद चाऽसिना ॥७६॥
ततो हाहाकृतं दैत्यबलं शेषितमित्यपि ।
ननाश प्रमथैः प्रायः पातालं प्रविवेश तत् ॥७७॥
देवाः प्रहर्षे जग्मुश्च तुष्टुवुस्तां तु चण्डिकाम् ।
गन्धर्वाश्च जगुः कीर्तिं ननृतुश्चाप्सरोगणाः ॥७८॥
वादित्राणि ह्यवाद्यन्त विजयध्वनयोऽभवन् ।
देवा ऊचुर्महादेवि ! महिमान्तो न तेऽस्ति वै ॥७९॥
स ऐक्षत बहु स्यां सा चेच्छा त्वं पारमेश्वरी ।
सुन्दरता हरेमूर्तौ भवती सा प्रकीर्तिता ॥८०॥
आराधना तथा भक्तिर्मुक्तिः सा त्वं परेश्वरी ।
नारायणी महालक्ष्मीर्ब्रह्माणी त्वं महेश्वरी ॥८१॥
त्रिगुणात्मा महामाया प्रकृतिस्त्वं कृतीश्वरी ।
त्वं रमा त्वं च वैराज्ञी लक्ष्मीः श्रीः सुकृतिगृहे ॥८२॥
त्वमलक्ष्मीः पुण्यहीनगृहे बुद्धिर्हृदम्बरे ।
त्वं श्रद्धा त्वं ह्रीश्च भीश्च त्वं स्वाहा क्रतुकर्मणि ॥८३॥
त्वं स्वधा पितृदोषाय विद्या परममुक्तये ।
त्वं वाणी त्वं च गायत्री सावित्री त्वं त्रयीमयी ॥८४॥
वृत्तिर्मेधा च दुर्गा च गंगा चाऽभ्युदयप्रदा ।
सर्वेन्द्रियेषु शक्तिस्त्वं तस्यै चाऽस्यै नमोनमः ॥८५॥
पाह्यस्मान् सर्वदा मातः शस्त्रास्त्रैः सर्वदिक्षु च ।
जह्यसुरान् सदा देवि ! देवविघ्नकरान् सदा ॥८६॥
स्तुत्वैवं दिव्यकुसुमैरर्चिता गन्धलेपनैः ।
धूपदीपनिवेद्यादिभूषांऽशुकादिपूजिता ॥८७॥
प्रसन्ना प्राह देवाँश्च व्रियतां चाभिवाञ्छितम् ।
देवाः प्राहुः संस्मृता त्वं हिंसयस्व महापदः ॥८८॥
धनवित्तर्धिविभवपुत्रदारादिसम्पदाम् ।
वृद्धयेऽस्मत्प्रसन्ना त्वं भव वारिभवानने ॥८९॥
तथेत्युक्त्वा सुरान् सर्वानाश्वास्य च मुहुर्मुहुः ।
प्रभविष्याम्यमरार्थे चोक्त्वा विवेश तान्सुरान् ॥९०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने महिषासुरसैन्यदेवसैन्ययोर्युद्धं देव्याऽऽसुरसैन्यविनाशन महिषासुरविनाशनं देवकृतस्तुत्यादि चेतिनिरूपण-नामा चतुःषष्ट्यधिकशततमोऽध्यायः ॥१६४॥

**श्रीनारायण उवाच—**

श्रूयतां कथयिष्यामि भूयोऽस्याः संभवं प्रिये ।
शुंभनिशुंभप्रभृतिध्वंसाय त्वादितः शृणु ॥ १ ॥
वैराजात् कमले जातो ब्रह्मा सृष्टिं विना स्थितः ।
सृष्ट्यर्थं किं विधेयं च मयाऽत्र कमलेन्वितः ॥ २ ॥
तावत्तस्याऽभवत्पूर्वभवीयस्मरणं तदा ।
बीजं विना न तूत्पत्तिस्तस्माद् बीजं जुहोम्यहम् ॥ ३ ॥
स्वशरीरस्थितं शुक्रं जुहावाऽग्नौ प्रजापतिः ।
ब्रह्मणो जुह्वतः शुक्रमग्नौ पूर्वं प्रजेप्सया ॥ ४ ॥
ऋषयो जज्ञिरे वह्नावष्टौ तान्नामतः शृणु ।
भृग्वंगिरा मरीचिश्च पुलस्त्यः पुलहः क्रतुः ॥ ५ ॥
अत्रिश्चैव वसिष्ठश्च ह्यष्टौ ते ब्रह्मणः सुताः ।
ज्वलन्तो वपुषा युक्ताः सप्रभावैः स्वकैर्गुणैः ॥ ६ ॥
हुते चाऽग्नौ सकृच्छुक्रे ज्वालां भित्त्वा तु संगतः ।
भृगुस्त्वं चेति तन्नाम चकार स प्रजापतिः ॥ ७ ॥
शिवेनाऽभ्यर्थितः पुत्रेच्छया दत्तश्च वेधसा ।
वरणाद् वारुणः शैवश्चाग्नेयो ब्रह्मणो भृगुः ॥ ८ ॥
द्वितीयं च निजं शुक्रमंगारेष्वजुहोत्प्रभुः ।
अंगारेष्वंगिरोंऽगानि संहतानि ततोंऽगिराः ॥ ९ ॥
आग्नेयो ह्यंगिरा नाम्ना द्वितीयो ब्रह्मणः सुतः ।
षट्कृत्वा तु पुनः शुक्रे हुते षडभवन् सुताः ॥१०॥

मरीचिभ्यः समुत्पन्नो मरीचिस्तु तृतीयकः ।
होमे क्रतौ यतो जज्ञे क्रतुः सोऽयं चतुर्थकः ॥११॥
अेन तु विष्णुना त्रातः पुत्रत्वेऽत्रिस्तु पंचमः ।
पुभिः केशैर्लसितो यो देहे पुलस्त्य इत्ययम् ॥१२॥
केशैर्लम्बैः समुद्भूतः पुलहः सप्तमो मतः ।
वसुरग्निस्तदुत्पन्नो वशी वसिष्ठ उच्यते ॥१३॥
ब्रह्मणः प्रथमे ह्येते पुत्राः सत्रीजमानवाः ।
सर्वे प्रजानां पतयः सर्वे चापि तपस्विनः ॥१४॥
तेष्वथर्वविज्ञात्रंगिरसः पुत्रा दशाऽभवन् ।
सुरूपायां च ते नाम्ना ह्याधार्युरायुरित्यपि ॥१५॥
दनुर्दक्षो दमः प्राणो हविष्यान् हविष्णुस्तथा ।
ऋतः सत्यश्च तत्राऽयं दक्षो बोध्यः सतीपिता ॥१६॥
दक्षो मैथुनभावेन सिसृक्षुर्विविधाः प्रजाः ।
असिक्नीमावहद्भार्यां वीरणाख्यप्रजापतेः ॥१७॥
सुतां तस्यां समुत्पन्नाश्चतुर्विंशतिपुत्रिकाः ।
धर्माय दत्ता दक्षेण श्रद्धाद्यास्तु त्रयोदश ॥१८॥
श्रद्धा लक्ष्मीर्धृतिस्तुष्टि पुष्टिर्मेधा तथा क्रिया ।
बुद्धिर्लज्जा वसुः शान्तिः सिद्धिः कीर्तिस्त्रयोदश ॥१९॥
ताभ्यः शिष्टा यवीयस्य एकादश सुलोचनाः ।
ख्यातिः सती च संभूतिः स्मृति प्रीतिः क्षमा तथा ॥२०॥
सन्नतिश्चानुरूपा च ऊर्जा स्वाहा स्वधा तथा ।
भृगुर्भवो मरीचिश्च तथा चैवांगिरा मुनिः ॥२१॥
पुलस्त्यः पुलहश्चैव क्रतुरत्रिर्वशिष्ठकः ।
वह्निश्च पितरश्चैते दक्षजामातरः क्रमात् ॥२२॥
पूर्वशापवशाच्चैव ब्रह्माऽऽज्ञाप्रबलादपि ।
तारकादिविनाशार्थपुत्रोत्पत्तिसकारणात् ॥२३॥
भाविनो नियतत्वाच्च सती दक्षगृहेऽभवत् ।
शृणु देव्याः पूर्वशापः कथं जात इति प्रिये ! ॥२४॥
महिषासुरनाशाय सर्वदेवैस्तु निर्मिता ।
कात्यायनी महामाया विनाश्याऽऽसुरपुंगवम् ॥२५॥
पुनरदृश्यतां प्राप्ता देवेषु विलयंगता ।
यदा तदा त्रिशूलाग्रे रुद्रेण रक्षिता तु सा ॥२६॥
सती नाम्ना त्रिशूलाग्रे सदा रुद्रेण रक्षिता ।
जन्मान्तरसहस्रेषु शिवान्नहि वियुज्यते ॥२७॥
तया यदा माहिषाख्यो ह्यसुरो विनिपातितः ।
तदा पतिव्रता तस्य पत्नी कुण्ढीति विश्रुता ॥२८॥
विलप्य च मुहुर्देव्यै शशापाऽऽर्तिहृदा यथा ।
यथाऽपत्यादिरहिता पतिनाशात्सुदुःखिता ॥२९॥
प्रज्वलामि चिताग्नौ च तथा त्वं चापि दुःखिता ।
तव भर्तुर्मरणाच्च तथाऽनपत्यदुःखिता ॥३०॥
प्रज्वलिष्यसि कालाग्नौ जडा च दुःखिनी भव ।
इति शापस्तदा देव्यै महिष्या विहितस्ततः ॥३१॥
कात्यायनी सती देवी म्लानास्या ह्यभवत् क्षणम् ।
ब्रह्मादयस्तदा दृष्ट्वा देवीं प्राहुः शुभानने ॥३२॥
मा खिद्स्ते पतिर्नैव मरिष्यति कदाचन ।
वयं देवाः शुभाशीर्भिर्वर्धयिष्यामहे हरम् ॥३३॥
किन्तु मृत्युसमं दुःखं तव पत्युर्भविष्यति ।
महतां मानहानिस्तु मृत्युरेव मतो बुधैः ॥३४॥
कामदेवनिमित्तेन भाविपूजाबलेन च ।
लिंगोत्पत्तिनिमित्तेन कामोत्पत्तौ च शंकरे ॥३५॥
ऋषिपत्नीसमाजे वै यदा शंभुर्विवस्त्रकः ।
यास्यति लिंगमुत्थाप्य चेष्टां कुर्वंश्च कामगाम् ॥३६॥
तदा तु ब्राह्मणास्तत्र मन्त्रज्ञा ऋषयोऽमलाः ।
दृष्ट्वा तं कामिनं नग्नं प्रोत्थलिंगं हरं तु ते ॥३७॥
दर्भशलाकया मन्त्रद्वारा लिंगं तु मूलतः ।
पातयिष्यन्त्यवमानं करिष्यन्ति मुहुर्मुहुः ॥३८॥
पुंस्त्वनाशो लिंगनाशः पुंसो नाशः प्रकीर्त्यते ।
इत्येतन्मृत्युतुल्यं वै दुःखं यास्यति शंकरः ॥३९॥
ततो लिंगं त्वयि स्थाले स्थापयिष्यन्ति भूसुराः ।
पूजयिष्यन्ति तद्वाणं लोके ख्यातिं गमिष्यति ॥४०॥
ज्योतिर्लिंगमितिप्रख्यं भविष्यति ततो हरः ।
कर्तितं लिंगमादाय सन्धि स्थाने करिष्यन्ति ॥४१॥
पुनः सलिंगः पुरुषस्तव योग्यो भविष्यति ।
इति निमित्तमेवैतज्जातं शोकं च मा कुरु ॥४२॥
परब्रह्मस्वरूपेऽत्र शोकस्थानं कुतो भवेत् ।
शृणु देव्यपरं चापि दक्षो यज्ञं करिष्यति ॥४३॥
शंकरस्य तत्र यज्ञे स्थानं नैव करिष्यति ।
इत्येषा मानहानिश्च दक्षाच्छंभोर्भविष्यति ॥४४॥
तन्निमित्तं तदा ते च वह्नौ प्रज्वलनं भवेत् ।
अनपत्या दुःखिता च शापादिफलसम्मुखी ॥४५॥
दग्धा त्वं च जडा काली शैलपुत्री भविष्यसि ।
शंकरेण विवाहस्ते पुनस्तत्र भविष्यति ॥४६॥
इति मा कुरु शोकं त्वं भावि भवति नाऽन्यथा ।
ततो दक्षगृहं गच्छ दक्षस्य दुहिता भव ॥४७॥
तारकासुरमुख्यास्तु दानवा वै महाबलाः ।
जनिष्यन्ते च तेषां तु वरदानानुरूपतः ॥४८॥

पुत्रस्योत्पादनार्थं त्वं दक्षस्य दुहिता भव ।
तत्र रुद्रेण पुत्रस्ते कार्तिकेयो भविष्यति ॥४९॥
तद्द्वाराऽसुरनाशोऽपि भविष्यतीति तत्कृते ।
गच्छ दक्षगृहे देवि दक्षस्य दुहिता भव ॥५०॥
एवं नियोगमासाद्य प्रादुरासीत्प्रजापतेः ।
नियोगाद् ब्रह्मणो देवी जाता पुत्री प्रजापतेः ॥५१॥
नियोगाद् ब्रह्मणो दक्षो ददौ रुद्राय तां सतीम् ।
दाक्षीं रुद्रोऽपि जग्राह स्वकीयामेव शूलभृत् ॥५२॥
दैत्यार्दितानां देवानां तेजोराशिसमुद्भवा ।
देवी संहृत्य दैत्यौघान् दक्षकन्या बभूव ह ॥५३॥
साऽत्र नाम्ना सती देवी स्वामिनो निन्दया ततः ।
देहं सन्त्यज्य योगेन पार्वती संभविष्यति ॥५४॥
शृणु लक्ष्मि ! दक्षगृहे पुत्रा जाताः सहस्रशः ।
सर्वे ते भ्रातरः सत्यास्तपोभिर्धौतकिल्बिषाः ॥५५॥
नियुतमेकसहस्रं च नारदस्योपदेशतः ।
गता ब्रह्मपदं धामाऽपुनरावृत्तिलक्षणम् ॥५६॥
हर्यश्वेषु विमुक्तेषु तदन्ये शबलाश्वकाः ।
पञ्चसहस्रं पञ्चशतं पुत्रा जाताश्च तेऽपि वै ॥५७॥
नारदस्योपदेशेन गता मुक्तिपदं ध्रुवम् ।
पित्रा तु योजिताः सृष्टौ नारदेन प्रव्राजिताः ॥५८॥
अतो दक्षः सुकोपः सन् शशाप नारदं तदा ।
नाशमेहि गर्भवासं वस त्वं ब्राह्म नारद ॥५९॥
ततोऽभिसन्धिं चक्रे वै दक्षस्तु कश्यपेन हि ।
नारदो मम कन्यायां तव पुत्रो भवेदिति ॥६०॥
शशाप तं नारदोऽपि दक्षं चांगिरसं तदा ।
यथाऽहं ब्रह्मणः पुत्रः शापात्ते काश्यपो यदा ॥६१॥
भवेयं च तदा त्वं मानुषो राजा भवाऽऽदितः ।
प्राचीनबर्हिषः पौत्रः पुत्रश्चैव प्रचेतसाम् ॥६२॥
दक्ष ! त्वं मारिषां पत्नीं वृक्षकन्यां गृहीष्यसि ।
तस्यां दुहितरः षष्टिः श्रद्धाप्रभृतयस्तव ॥६३॥
भविष्यन्ति दश तासां धर्माय वितरिष्यसि ।
सप्तविंशतिं शशिने कश्यपाय त्रयोदश ॥६४॥
चतस्रः पररूपाय तार्क्ष्याय वितरिष्यसि ।
भृग्वंगिरःकृशाश्वेभ्यो द्वे द्वे च वितरिष्यसि ॥६५॥
इति शापानुसारेण काले प्राप्ते प्रजापतिः ।
दक्षः स्वस्य सुताः प्रादात् कश्यपाय त्रयोदश ॥६६॥
तस्मात् स नारदो जज्ञे पुनः शापबलादृषिः ।
इति ब्राह्मो नारदोऽपि काश्यपोऽजायताऽत्र वै ॥६७॥
एवमांगिरसो दक्षः प्राचेतसो ह्यजायत ।
तस्य गृहे महामाया जन्म जग्राह यावता ॥६८॥
तावता समयेनापि मध्ये दैत्यौ महाबलौ ।
निशुंभशुंभौ लोकानां दुःखदौ संबभूवतुः ॥६९॥
कश्यपस्य दनुर्नाम्ना भार्या या दक्षपुत्रिका ।
तस्यां पुत्रत्रयं जातं महाबलपराक्रमम् ॥७०॥
ज्येष्ठः शुंभ इतिख्यातो निशुंभश्चापरोऽसुरः ।
तृतीयो नमुचिर्नाम देवदुःखकरः सदा ॥७१॥
नमुचिं दुःखदं हन्तुमिन्द्रो वज्रमुपाददे ।
भयात् तावन्नमुचिस्तु प्रविवेश रथं रवेः ॥७२॥
बहिर्नाऽऽयाति सूर्यस्य रथाद्वै ताडितोऽपि सः ।
सूर्येण च मुहुः क्षिप्तस्ताडितः पादलत्तया ॥७३॥
बहिस्तथापि नाऽऽयात् स इन्द्रवज्रभयात्तदा ।
तं शरणागतं मत्वा सूर्यो ररक्ष वासवात् ॥७४॥
ततः स समयं चक्रे रविणा वासवेन च ।
नाऽहं स्थास्यामि वै पृथ्व्यां स्वर्गे नैव कदाचन ॥७५॥
पाताले तु निवत्स्यामि मुच्यतां जीवदानतः ।
ततो मुक्तः सुरेन्द्रेण ततो वव्रे वरं यथा ॥७६॥
अवध्यत्वं वरं देहि शस्त्रैरस्त्रैः सुरेश्वर ।
इन्द्रस्तथास्त्विति प्राह वरमादाय दानवः ॥७७॥
स्वस्याऽवध्यत्वमाज्ञाय शस्त्रैरस्त्रैः स दानवः ।
भास्करस्य रथं त्यक्त्वा समुद्रं प्राविशद्द्रुतम् ॥७८॥
स निमज्जन्नपि वार्धौ सामुद्रफेनमुत्तमम् ।
अपश्यद् दानवपतिस्तं प्रगृह्य स्थितो जले ॥७९॥
मुखनासादिकर्णादीन् समापूर्य स्थितो जले ।
तस्मिन् शक्रोऽसृजद् वज्रमन्तर्हितमथाऽपि तम् ॥८०॥
फेनात्मवज्रप्रहतः स पपात ममार च ।
फेनात्मवज्रसंरुद्धनासाऽऽस्यः स ममार वै ॥८१॥
ततोऽस्य भ्रातरौ वीरौ क्रुद्धौ शुंभनिशुंभकौ ।
उद्योगं तु परं कृत्वा देवनाशार्थमागतौ ॥८२॥
देवा अपि च युद्धार्थं निर्ययुरिन्द्रमाश्रिताः ।
युद्धं सुतुमुलं जातं जितास्त्वाक्रम्य देवताः ॥८३॥
अग्रेसराश्च दैत्याभ्यां जिताः सबलवाहनाः ।
शक्रस्य त्वाहृतो हस्तीयाम्यश्च माहिषो हृतः ॥८४॥
जलेशस्य मणिच्छत्रे हृते हृता गदा हरेः ।
निधयः शंखपद्माद्याः कुबेरस्य हृता बलात् ॥८५॥
कृताः त्रिलोका वशगाः स्वर्गराज्यं वशीकृतम् ।
दिशांपाला लोकपालाः प्रायशश्च वशीकृताः ॥८६॥

भुवं चागत्य राजानः प्रायशश्च वशीकृताः ।
तत्र रेवातटे राज्यं कुर्वन्तं प्राप्य तावुभौ ॥८७॥
प्राहतुः रक्तबीजाख्यं को भवानिति सोऽब्रवीत् ।
महिषस्य सचिवोऽहं दैत्योऽस्मि रक्तबीजकः ॥८८॥
करोमि राज्यं प्रच्छन्नं देव्या भीतिवशादिह ।
सचिवौ द्वौ महिषस्य चण्डमुण्डौ तु नामतः ॥८९॥
वर्तेते सलिले मग्नौ भयाद्देव्या महाभुजौ ।
इत्यस्माकं स्थितिस्तूक्ता ज्ञातव्या भवतोरपि ॥९०॥
इति पृष्टौ च तौ शुंभनिशुंभावूचतुश्च तम् ।
अहं शुंभ इतिज्येष्ठो निशुंभोऽयं कनिष्ठकः ॥९१॥
दनोः पुत्रौ काश्यपौ स्वो जितवन्तौ सुरादिकान् ।
अन्यानपि महापालान् जितवन्तौ भुवंगतान् ॥९२॥
इत्थं तयोस्तु वदतोर्नर्मदायास्तटे तदा ।
जलावासाद्विनिष्क्रान्तौ चण्डमुण्डौ च दानवौ ॥९३॥
परस्परं सहायास्ते मिलिताः पञ्च दानवाः ।
महिषस्य नमुचेश्च वैरनिर्यातनाय ते ॥९४॥
मन्त्रणां कृतवन्तस्ते सत्याः पराजयाय वै ।
वयं विवाहयिष्यामो रत्नभूतां सतीं तु ताम् ॥९५॥
इत्यामन्त्र्य सतीं मार्गयितुं विन्ध्याचलं ययुः ।
अदृश्या दृश्यते सा न ततो याता हिमालयम् ॥९६॥
तत्र स्नानाय गच्छन्तीं दृष्ट्वा तु पार्वतीं सतीम् ।
प्राहुर्वरय चास्मान् वै पार्वती प्राह ताँस्तदा ॥९७॥
अहं विन्ध्याचली देवी तीर्थार्थमिह चागता ।
मैवं वाच्यं तु सत्तीर्थे गच्छन्त्वितो यथागताः ॥९८॥
विन्ध्याद्रौ मे निवासोऽस्ति तत्र वाच्यं हृदि स्थितम् ।
तीर्थं कृत्वा गमिष्यामि यूयं गच्छत तत्र वै ॥९९॥
इति दैत्याँश्च शुंभादीन् प्रेषयित्वा च पार्वती ।
स्नानार्थं देवगंगायां यावदग्रे प्रगच्छति ॥१००॥
तावत् तत्र समागत्य संगत्य च सुरेश्वराः ।
प्रथमतोऽस्तुवन् देवीं स्वदुःखविनिवृत्तये ॥१०१॥
त्वयाऽस्माकं वरो दत्तो ह्यापत्काले स्मृता सती ।
दुःखं वै नाशयिष्यामि ह्यापत्काल उपस्थितः ॥१०२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने वेधसा स्ववीर्यहोमेनाऽष्टमहर्षिसमुत्पत्तिः, आंगिरसदक्षगृहेदेव्याः सतीजन्मकारणम्, प्राचेतसदक्षोद्भवनकारणम्, ब्राह्मनारदस्य काश्यपनारदोद्भवनकारणम्, दक्षस्य पुत्राः पुत्र्यः, शुंभनिशुंभादिदनुपुत्रोत्पत्तिः, देवानां पराजयः, देवीप्रार्थना चेत्यादिनिरूपणनामा पञ्चषष्ट्यधिकशततमोऽध्यायः ॥१६५॥

**श्रीनारायण उवाच—**

ततो लक्ष्मि ! स्तुतिं चक्रुर्देवा ध्यात्वा महेश्वरीम् ।
गंगातटे च संहत्य श्रूयतां कथयामि ते ॥ १ ॥
नमो मात्रे महामात्रे जनन्यै ते मुहुर्नमः ।
नमो मायै महामायै मायायै ते नमोनमः ॥ २ ॥
ब्रह्माण्यै चाऽक्षराण्यै ते मुक्तान्यै ते नमोनमः ।
वासुदेव्यै च प्रकृत्यै प्रधानायै नमोनमः ॥ ३ ॥
भूम्नै काल्यै महाकाल्यै महालक्ष्म्यै नमोनमः ।
हिरण्यायै सुगर्भायै वैराज्यै ते नमोनमः ॥ ४ ॥
वरण्यै वररूपायै गोलोक्यै ते नमोनमः ।
नारायण्यै च कृष्णायै वैकुण्ठायै नमोनमः ॥ ५ ॥
श्वेतायै च बदर्यै च मार्तण्डायै नमोनमः ।
पावन्यै पवमानायै चाऽव्याकृत्यै नमोनमः ॥ ६ ॥
सावित्र्यै चापि गायत्र्यै रौद्रायै ते नमोनमः ।
धात्र्यै गौर्यै च वैष्णव्यै ज्योत्स्नायै ते नमोनमः ॥ ७ ॥
ब्रह्मचारिप्रवर्यायै वीर्यायै ते नमोनमः ।
महत्यै चाभिमानायै चाकूत्यै ते नमोनमः ॥ ८ ॥
चित्त्यै वृत्त्यै प्रवृत्त्यै च प्रलयायै नमोनमः ।
स्वर्गायै सत्यलोकायै लोकपायै नमोनमः ॥ ९ ॥
रमायै च जयायै च विजयायै नमोनमः ।
राधायै सर्वकारिण्यै लक्ष्म्यै तेऽस्तु नमोनमः ॥१०॥
नैर्ऋत्यै सुखसम्पत्त्यै सौम्यायै ते नमोनमः ।
वाक्ष्यै बीजस्वरूपायै रत्यै देव्यै नमोनमः ॥११॥
या देवी सर्वसत्त्वेषु विष्णुमाया व्यवस्थिता ।
न्यासस्तस्यै नतिस्तस्यै नमस्तस्यै नमोनमः ॥१२॥
चेतना बुद्धिरूपा या निद्रारूपा च या स्थिता ।
छायारूपा क्षुधारूपा शक्तिरूपा च या स्थिता ॥१३॥
तृष्णा क्षान्तिः दया प्रोक्ता तस्यै तस्यै नमोनमः ।
लज्जा शान्तिस्तथा श्रद्धा कान्तिर्वृत्तिः स्मृतिस्तथा ॥१४॥
तुष्टिः पुष्टिश्च या प्रोक्ता तस्यै तुभ्यं नमोनमः ।
धात्र्यै चैव विधात्र्यै ते मात्रे देव्यै नमोनमः ॥१५॥
आसुराणां महानद्य वर्तते समुपद्रवः ।
अन्तः स्थित्वा प्रद्रष्ट्र्यै ते वारंवारं नमोनमः ॥१६॥
इत्येवं स्तूयमाना सा पार्वती परमेश्वरी ।
स्नानसृत्याऽऽगता तत्र यत्र देवा स्तुवन्ति ते ॥१७॥
प्रणता च तदा देवैः प्रसन्ना प्राह तान् सुरान् ।
मम देहाद्विनिष्कृष्य कोशरूपां तु सुन्दरीम् ॥१८॥

ददामि देवरक्षार्थं सुरा गृह्णन्तु मामकीम् ।
सुरूपां दिव्यशोभाढ्यां मूर्तिं गृह्णन्तु मामकीम् ॥१९॥
देवास्तु कौशिकीं कन्यां नीत्वा विन्ध्याचलीं ययुः ।
कौशिकी च तदा विन्ध्याचल्यां देव्यां व्यवस्थिता ॥२०॥
देवाश्चासुरनाशार्थमुद्यमं चक्रिरे तदा ।
पार्वत्याः कोशरूपा सा कृष्णकान्तिमयी तनुः ॥२१॥
कृष्णवर्णाऽभवत् काली कालिका नामतः स्मृता ।
अथ विन्ध्याचले दैत्या जग्मुर्देव्युक्त्यनुस्मृताः ॥२२॥
मन्त्रणां कारयामासुर्दूतैः पत्न्यर्थमत्र ते ।
सुग्रीवं प्रेषयामासुर्दूतं विन्ध्याचलीं प्रति ॥२३॥
दूतः प्राह महादेवि ! शुंभेन प्रेषितोऽस्म्यहम् ।
शुंभश्चास्ति महाराजस्त्रैलोक्येश्वर एकराट् ॥२४॥
त्वय्यारक्तमना राजा स यदाह शृणुष्व तत् ।
मया तु निर्जिता लोकाः सदिक्पालाश्चतुर्दश ॥२५॥
त्रैलोक्ये यानि राज्यानि मदधीनीकृतानि च ।
रत्नानि यानि त्रैलोक्ये साम्प्रतं तानि मे गृहे ॥२६॥
ऐरावतादयः सन्ति द्विपास्तु मम मन्दिरे ।
उच्चैःश्रवादयश्चाश्वा वर्तन्ते मम मन्दिरे ॥२७॥
कल्पद्रुपारिजाताश्च सुगन्धयन्ति मे गृहम् ।
हंसयुक्तविमानानि देवगन्धर्वनाकिनाम् ॥२८॥
महापद्मादिनिधयो वर्तन्ते मद्गृहे खलु ।
रत्नाकरस्य रत्नानि छत्रचामरमालिकाः ॥२९॥
स्यन्दनानि विचित्राणि रत्नश्रेष्ठानि यानि च ।
विविधाश्च रसाः श्रेष्ठा नित्ययौवनपुष्टिदाः ॥३०॥
एवं दासाश्च दास्यश्च कामभूषाश्च नैकधा ।
सर्वे प्राकाम्यवशगं सिद्धयः सन्ति मे गृहे ॥३१॥
पर्वताः सरितः सप्ताऽब्धयोऽरण्यानि देवताः ।
प्रभूतानि द्युमणयः सन्ति मत्सेवका गृहे ॥३२॥
राज्ञ्यः सन्ति यथाकामं सेविकाश्च सहस्रशः ।
सर्वास्तास्तव दासीर्वै करिष्ये यदि मे भव ॥३३॥
त्वं प्रख्यं सुन्दरीरत्नं वयं रत्नभुजो यतः ।
मां वा ममाऽनुजं देवि ! भज रत्नोत्तमाऽसि यत् ॥३४॥
महाराज्ञीं करिष्ये त्वां मत्परिग्रहतां व्रज ।
नररत्नं च मां देवि ! त्वया कस्मान्न गृह्यते ॥३५॥
इत्युक्ता सा मन्दहास्या गभीरान्ता जगाद तम् ।
सत्यमुक्तं तु शुंभेन त्रैलोक्यविजयेन वै ॥३६॥
किन्त्वस्माकं च देवीनां कुलागतपरम्परा ।
युद्धे जयति कन्यां यस्तस्य सा संभवेत् प्रिया ॥३७॥
तदाऽऽगच्छतु विख्यातस्तादृशः शुंभ एव ह ।
निशुंभो वा रणभूमौ समागच्छतु मां जयेत् ॥३८॥
किं चिरेणात्र पण्ये वै पाणिं गृह्णातु तद्विधम् ।
दूतः प्राह ततो देवीं माऽवलिप्ता भवात्र वै ॥३९॥
चतुर्दशभुवां भूपा निर्जितास्तेन गर्विणा ।
सा त्वं गच्छ मया सार्धं सुस्वागतपुरःसरा ॥४०॥
केशाऽऽकर्षणजाताऽवमानं मा गमनं तव ।
देव्युवाच यथार्थं त्वं कथयस्येव गौरवम् ॥४१॥
किन्तु देवीकुलधर्मोऽन्यथाभावी न कर्हिचित् ।
तद्वै व्याचक्ष्व शुंभाय यथायुक्तं करोतु सः ॥४२॥
दूतो नत्वा गतः शुंभं प्राह विस्तरतस्तु तत् ।
श्रुत्वा क्रुद्धो महागर्वः प्राह धूम्राक्षमानतः ॥४३॥
शीघ्रं ससैन्यो गच्छ त्वं केशाकर्षणपूर्वकम् ।
आनयाऽत्र च तां दुष्टां रक्षकान् संप्रमारय ॥४४॥
धूम्राक्षस्तद्वचः श्रुत्वा षष्टिसहस्रदानवैः ।
सहितः स जगामाशु विन्ध्याचलनिवासिनीम् ॥४५॥
प्राहाऽऽगच्छ ऋजुरीत्या शुभं पतिं गृहाण च ।
नो चेद् बलान्नयाम्येव यथेच्छसि तथा कुरु ॥४६॥
देवी प्राह तदा दैत्यं विना रणं न मे पणः ।
बलवान् बलयुक्तोऽसि यथेच्छसि तथा कुरु ॥४७॥
श्रुत्वैवं सोऽसहमानो बलाद्धर्तुं समागतः ।
देव्या तत्रैव हूंकारवह्निना भस्मसात्कृतः ॥४८॥
अथ सैन्यं महाक्रुद्धं देवीनाशार्थमागतम् ।
ववर्ष सायकैः शस्त्रैरस्त्रैः शक्तिपरश्वधैः ॥४९॥
देवीं ते छादयामासुर्वृष्ट्या शरविपूलया ।
देव्याज्ञया तदा सिंहो गर्जनां प्रचकार ह ॥५०॥
गर्जनाफेनबिन्दुभ्यः सिंहाश्चान्ये सहस्रशः ।
उत्पन्नाः केसरसटाः नखदंष्ट्रायुधास्तदा ॥५१॥
सबला यौवनोपेता व्योमोड्डयनशक्तयः ।
निपेतुर्धूम्रनेत्रस्य सैन्ये षष्टिसहस्रके ॥५२॥
काँश्चित्करप्रहारैश्च काँश्चद्दंष्ट्राभिरित्यथ ।
लांगुलैश्च नखैः काँश्चिदाक्रमैर्जघ्नुरासुरान् ॥५३॥
केषांचित्पाटयामासुरुदराणि शिरांसि च ।
रुधिरं च पपुस्तेषां जग्धुरान्त्राणि भूरिशः ॥५४॥
सैन्यं तैर्नाशितं सर्वं रक्ता भूमिर्व्यराजत ।
श्रुत्वा चुकोप शुंभः सः कोपप्रस्फुरिताऽधरः ॥५५॥
प्राह चण्डं तथा मुण्डं गच्छतं शीघ्रमेव यत् ।
केशेष्वाकृष्य बद्ध्वा च सा समानीयतां मृगी ॥५६॥

यदि वः संशयः प्राणे हन्यतां सा मृडमृगी ।
हन्यन्तां केसरिणश्च सूचनां कुरुतं च माम् ॥५७॥
दैत्याश्चण्डादयस्त्वेवमाज्ञप्ताः समुदायुधाः ।
चतुरंगबलोपेता ययुर्विन्ध्याचलीं प्रति ॥५८॥
दूरात्प्राहुश्च ते देवि ! समागच्छ त्वरां कुरु ।
एह्येहि शुभभर्तारं शुंभमिच्छस्व कौशिकि ! ॥५९॥
न चेद् बलाद्धि नेष्यामः केशाकर्षणविह्वलाम् ।
तावत्कोपं चकारोग्रं कौशिकी तानरीन्प्रति ॥६०॥
त्रिशिखां भ्रुकुटीं चक्रे चण्डमुण्डौ विलोक्य च ।
अतिक्रोधप्लुता जाता करालवदना तदा ॥६१॥
कृष्णकालनिवासाधिभ्रूकुस्या क्रोधमिश्रया ।
महाकाली समुद्भूता योगिनी शस्त्रधारिणी ॥६२॥
करवालधृतहस्ता खट्वांगकरशोभना ।
असिपाशांकुशगदाघण्टामुद्गरभूषिता ॥६३॥
सिंहचर्मपरिधाना मुण्डमालाविभूषिता ।
स्फारनेत्रा ललजिह्वा बहिर्दंष्ट्रा गुहामुखा ॥६४॥
सशस्त्रा सा महाकाली निजघान सुरारिणः ।
काँश्चित् खड्गेन चिच्छेद खट्वांगेनाऽपरासुरान् ॥६५॥
न्यषूदयद्रणेऽश्वाँश्च गजान् रथगदानवान् ।
पर्वतप्रायरूपं सा दधाराथ रणागतान् ॥६६॥
उष्ट्राँश्च कुंजरान् साश्वरथान् पत्तींश्च कौशिकी ।
महाकाली स्ववदने क्षिप्त्वा चर्वयते बलम् ॥६७॥
काँश्चिज्जग्राह मुण्डेषु काँश्चित्कस्यां च पादयोः ।
प्राणात् वियोजयामास सैन्ययोद्धॄन् समन्ततः ॥६८॥
रुरुः सैन्यात्प्रदुद्राव विन्ध्याचलगुहाँ प्रति ।
अनुदुद्राव तं काली धर्षणार्थं महासुरम् ॥६९॥
देवी मूर्ध्न्याजघानाति खट्वांगेन महाबलात् ।
मस्तकं कूर्चितं तस्य मृतिं जगाम तत्क्षणात् ॥७०॥
काली रुरोशरीरस्य कोशमुत्कृत्य मूर्धजान् ।
निजान् बबन्ध सा देवी शुशुभे चाति किंशुका ॥७१॥
एकां जटां पृथक्कृत्योत्पाट्य काल्यक्षिपद्भुवि ।
सा तदा कन्यका जाता कृष्णा शुक्लाऽर्धवर्ष्मणा ॥७२॥
काली प्राह च तां कन्यां चण्डमुण्डाविहाऽऽनय ।
स्वयं तौ मारयिष्यामि साऽभ्यद्रवत तावुभौ ॥७३॥
चण्डमुण्डावपि भयात् दुद्रुवतुश्च दक्षिणाम् ।
चण्डमारी समारुह्य रासभं बहुवेगिनम् ॥७४॥
यतो गतौ तु तौ दैत्यौ तत्रैवानुययौ रुषा ।
मार्गे ददर्श महिषं पौंड्राभिधं यमस्य सा ॥७५॥
तस्योत्पाट्य विषाणं तु दानवानन्वगाजवात् ।
चण्डमुण्डौ तदा भूमिं त्यक्त्वा गगनमाश्रितौ ॥७६॥
कर्कोटकस्तदा नागो गच्छन् देवीदृशिं गतः ।
गरुत्माँश्च तथा दृष्टः पिच्छान्यादाय तस्य सा ॥७७॥
कर्कोटकं तथा नीत्वा वेगेनाऽभ्यपतच्च तौ ।
धर्षितौ मर्दितौ बद्धौ कर्कोटकात्मरज्जुभिः ॥७८॥
आनीतौ सन्निधौ काल्यास्तस्यै न्यवेदयच्च तौ ।
चण्डमुण्डौ तदा देव्या विशिरस्कौ कृतावुभौ ॥७९॥
रुरुचर्मगुणे तत्राऽसुराणां मस्तकानि तु ।
तार्क्ष्यपत्राणि चित्राणि ग्रथितानि हि कृष्णया ॥८०॥
कृत्वा स्रजमनौपम्यां चण्डिकायै न्यवेदयत् ।
रुरुचर्मकृतां चाथ घर्घरीं तां न्यवेदयत् ॥८१॥
अन्यां स्रजं च तार्क्ष्यस्य पत्राणां विरचय्य च ।
काली दधे स्वशिरसि धम्मिलेऽथ तुतोष च ॥८२॥
दानवानां च रुधिरं पपौ चाऽऽतृप्ति पुष्कलम् ।
चण्डमुण्डौ मृतौ देव्या शेखरौ शिरसः कृतौ ॥८३॥
शेखरौ चण्डमुण्डादेर्यस्माच्छिरसि संधृतौ ।
तस्मात्तद्गुणयोगात्सा चामुण्डाख्याऽभवत् ततः ॥८४॥
चामुण्डा च तथा काली कौशिकी चेति तास्तदा ।
तिस्रो मिलित्वा दैत्यानां चक्रुर्निकन्दनं बहु ॥८५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने कैलासे देवकृतपार्वतीस्तुतिः पार्वतीदेहोत्पन्ना कौशिकी विन्ध्याचलीं गता, तत्र शुंभप्रेषितसुग्रीवदूतागमनम्, धूम्राक्षनाशः, कालीप्रादुर्भावः, चण्डमुण्डादिनाशनिमित्तकचामुण्डाख्येत्यादिकथननामा षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥

**श्रीनारायण उवाच—**

ततो लक्ष्मि ! स्वयं शुंभो योद्धुकामो ह्युपस्थितः ।
रक्तबीजं प्राह दैत्यं मारयैताः खरीसमाः ॥ १ ॥
रक्तबीजस्तदा त्रिंशत्कोटिसैन्यसभाजितः ।
कात्यायन्या च कौशिक्या काल्या चामुण्डया तथा ॥ २ ॥
योद्धुं समागतो वीरो रक्तबीजो महासुरः ।
युद्धवादित्रशब्दाश्च दिक्षु व्याप्तास्तदाऽभवन् ॥ ३ ॥
तदा चतस्रस्ता देव्यो महानादान् प्रचक्रिरे ।
तासां तु मुखभागेभ्यो ब्रह्माण्यः कोटिशोऽभवन् ॥ ४ ॥
माहेश्वर्यश्च त्रिनेत्रास्त्रिशूलिन्यस्तथाऽभवन् ।
महाऽहिवलया रौद्राः कुण्डलिन्यस्तथाऽभवन् ॥ ५ ॥

बर्हिपत्रयुतास्तत्र कौमार्यः कोटिशोऽभवन् ।
मयूरवाहनास्तत्र शक्तयः कोटिशोऽभवन् ॥ ६ ॥
ब्राहुभ्यां गरुडारूढा वैष्णव्यः कोटिशोऽभवन् ।
वाराह्यः पृष्ठतो जाताः शेषयाना हि कोटिशः ॥ ७ ॥
नखिन्यो नारसिंह्यस्तु हृदो जाता हि कोटिशः ।
एतासां तु महानादा ब्रह्माण्डध्वंसकारकाः ॥ ८ ॥
समभवँश्च तान् श्रुत्वा त्वाजगाम हि शंकरः ।
शिवाऽपि सह चायाता दृष्टो दैत्यकृतोद्यमः ॥ ९ ॥
शिवा प्राह तदा शंभुं गच्छ दैत्येन शंकर ।
ब्रूहि शुंभं निशुंभं च यदि जीवितुमिच्छथः ॥१०॥
तद्गच्छतं स्वकान्नीत्वा सप्तमं हि रसातलम् ।
वासवो लभतां स्वर्गं देवाः सन्तु गतव्यथाः ॥११॥
देवी तदा तु नाम्नाऽतः शिवदूतीत्यजायत ।
ते च दूतवचः श्रुत्वा सर्वे गर्वसमन्विताः ॥१२॥
यत्र कात्यायनी काली कौशिकी तत्र दुद्रुवुः ।
अंकुशैः शक्तिभिर्बाणैस्तोमरैश्च भूशुण्डिभिः ॥१३॥
पट्टिशैः परिघैः प्रासैस्त्रिशूलैश्च परश्वधैः ।
कात्यायनीं ववृषुस्ते सापि चिच्छेद वेगतः ॥१४॥
समग्राणि तु शस्त्राणि तीक्ष्णधारपतत्त्रिभिः ।
जघान च महाबाणैः रणमत्तान्महासुरान् ॥१५॥
रणचण्डी तु चामुण्डा जघानाऽयुतदानवान् ।
कात्यायनी महामारी त्रिशूलैर्निजघान तान् ॥१६॥
कौशिकी चापि च ब्राह्मी कुमारी वैष्णवी तथा ।
खट्वांगैर्जलपाशैश्च शक्तिभिस्स्तनयित्नुभिः ॥१७॥
निजघ्नुर्वीरकर्मस्थानयुताऽयुतदानवान् ।
चण्डी वज्रैश्च वाराही तुण्डैश्चक्रैर्जघान तान् ॥१८॥
दंष्ट्रानखैर्नारसिंही शिवदूती तु वह्निना ।
करवालैस्तथा काली जघानाऽऽसुरसैनिकान् ॥१९॥
एवं देवीकुलैस्तत्र हन्यमानाश्च दानवाः ।
पात्यमानाश्चासुरास्ते पेतुः प्राणान् विहाय वै ॥२०॥
अन्ये भयाद्रक्तबीजं जग्मुर्वै शरणं तदा ।
रक्तबीजस्तदोपेत्य वरास्त्रैर्मातृमण्डलम् ॥२१॥
जघान बहुधा कोपाद् विवेश मध्यभूमिकाम् ।
मातरश्च तदा सर्वा निजघ्नुस्तीक्ष्णहेतिभिः ॥२२॥
रक्तबीजस्य रक्तस्य यावन्तो बिन्दवो भुवि ।
पतन्ति समजायन्ते तावन्तो रक्तबीजकाः ॥२३॥
रक्तबीजशरीराद्वै तदा सैन्यानि चाऽभवन् ।
कात्यायनी तदा कालीं प्राह खादय दानवम् ॥२४॥
रक्तबीजं येन सैन्योत्पत्तिः रुद्धा भवेद् द्रुतम् ।
महाकाली मुखे द्राक् तं प्राक्षिपद् रक्तबीजकम् ॥२५॥
चर्ममुण्डा तदा शैलसमा भूत्वा दरीमुखे ।
रक्तबीजजसैन्यानि प्राक्षिपत् प्रचखाद च ॥२६॥
तदा तु दानवाश्चान्ये हा भ्रातस्तात चुक्रुशुः ।
छिन्नाऽर्धदेहाऽवयवा निशुंभं शरणं ययुः ॥२७॥
निशुंभः सहसा खड्गमादाय हन्तुमिच्छति ।
किन्तु देवी स्वरूपे स मोहितः स्तंभितः क्षणम् ॥२८॥
देवी प्राह निशुंभ त्वं मोहेन जेतुमिच्छसि ।
गच्छ जिता त्वया दैत्य मुग्धो मां न विजेष्यसि ॥२९॥
प्राह दैत्यस्तदा देवि ! सुकुमारशरीरिणी ।
कथं मया निहन्तव्या तस्मात् हन्मि न सुन्दरीम् ॥३०॥
शस्त्रपातं विना युद्धे जेतुं शक्नोमि नैव च ।
शस्त्रपाते तु ते नाशो भवेत् कार्यं न मे भवेत् ॥३१॥
इति किंकर्तव्यतया मूढत्वं तु मया धृतम् ।
शस्त्रपाते न मे लाभः शस्त्राऽपातेपि नैव च ॥३२॥
तस्मात्ते मरणे कोऽयं लाभो भवति सुन्दरि ! ।
निवर्तय मतिं युद्धाद् भार्या मे भव भोगदा ॥३३॥
श्रुत्वा देवी निशुंभं तु विहस्य प्राह दानवम् ।
नाऽजिताऽहं रणे वीर भार्या भवामि कस्यचित् ॥३४॥
यदि वा मरणं ते स्याद् यद्वा मे मरणं भवेत् ।
युद्धात्पलायनं चापि मरणादतिरिच्यते ॥३५॥
तत्रापि नारीगर्वाद् यो नरो युद्धान्निवर्तते ।
स नारीभिर्मूल्यहीनो गण्यते तु नपुंसकः ॥३६॥
नारीं युद्धेन जेतुं वै समीहन्ते नराधमाः ।
न युद्धजय्याः नार्यः स्युः पत्न्यः क्वापि श्रुतं न तत् ॥३७॥
या नारी यस्य वै पत्नीं भवितुं नैव चेच्छति ।
सैव युद्धं तेन पुंसा समिच्छति विनाशकृत् ॥३८॥
युद्धे त्वेकस्य नाशोऽस्ति नाऽबला हस्तगा भवेत् ।
प्रसह्य हस्तगा स्याच्चेत् नर नाशयति ध्रुवम् ॥३९॥
नाऽस्या मित्रं चाऽमनःस्थो मनःस्थः शत्रुरेव न ।
मे मनःस्थो यथा स्यास्त्वं विशाऽतलं द्रुतं कुरु ॥४०॥
भवानिच्छति भार्यां मां ततो मां जय संयुगे ।
नपुंसकस्य मुग्धस्य भार्या नैव भवाम्यहम् ॥४१॥
इत्युक्तो रोषताम्राक्षः खड्गमुद्भ्राम्य दानवः ।
प्रचिक्षेपं महावेगात् सा चिच्छेदाऽसिना तु तत् ॥४२॥
गदां चिक्षेप दैत्यश्च यावत् तावत्तु कालिका ।
क्षुरप्रेण करौ तस्य चिच्छेदांसत एव यत् ॥४३॥

अशाखस्तम्बवद्दैत्यः शिरसाऽपि पृथक्कृतः ।
निशुंभनाशे चण्डाद्याश्चक्रुः किलकिलाध्वनिम् ॥४४॥
जय देवि सुराः प्रोचुर्मुमुचुः पुष्पवर्षणम् ।
वादित्राणां निनादश्च विजयख्यापकोऽभवत् ॥४५॥
अथाऽपशकुनान्यस्य भ्रातुः शुंभस्य चाऽभवन् ।
शिवा प्रविश्य शिबिरे रौति सा कुस्वरं निशि ॥४६॥
तिष्ठन्ति शिबिरे काका दिवारात्रं विराविणः ।
सर्पाः सर्पन्ति वासेषु कृष्णा रौद्रा भयंकराः ॥४७॥
काका गृध्रा बका भ्रान्ता भ्रमन्ति शिबिरोपरि ।
जाताश्च विमुखा गर्भाः स्त्रीषु गोषु मृगीषु च ॥४८॥
घृतं दुग्धेषु नैवास्ति तिले तैलं न विद्यते ।
जनाः स्वशिबिरे तत्र योधयन्ति परस्परम् ॥४९॥
कृष्णवर्णा विवदना दीर्घकेशाऽन्धलोचना ।
अज्ञाता रुदती याति दानवेशस्थलं प्रति ॥५०॥
कोपयुक्तस्तदा कश्चित्तपस्वी भस्मगुण्ठितः ।
मौनी नग्नो यतिः कश्चित् शिबिरे दृश्यते भ्रमन् ॥५१॥
डमरूं वादयित्वा हूंकारं नग्नः करोति च ।
अकालाऽभ्रं जलं मुञ्चद् विद्युद्घोषं करोति च ॥५२॥
करकाः पतिता मेघाद्गर्जना जायते मुहुः ।
समजायत भूकम्पो दिग्दाहश्चाऽप्यजायत ॥५३॥
ऊर्ध्वास्याः श्वगणा रात्रौ रुदन्ति प्रमुखे स्थिताः ।
दिवा घूकाः शब्दयन्ति दिवि केतूदयोऽभवत् ॥५४॥
आदित्यमण्डलं तत्र सचक्रं दृश्यते वृतम् ।
कबन्धा व्योम्नि दृश्यन्ते चन्द्रमा न प्रकाशते ॥५५॥
नक्षत्राणि दिवा स्वर्गे दृश्यन्ते दानवैस्तदा ।
दानवीषु तदा गर्भा दृश्यन्ते भूतजातयः ॥५६॥
ह्रेषन्तेऽश्वाः सद्मयाश्च करिणः पृष्ठपातिनः ।
मन्त्रिणो निर्मनस्काश्च दृश्यन्ते शिबिरे तदा ॥५७॥
अग्निर्ज्वलति चुल्ल्यां न वातश्चण्डः प्रवाति च ।
ध्वजा ज्वलन्ति सैन्येषु नभो भवति धूसरम् ॥५८॥
शुंभस्य हृदयं स्वप्ने सकम्पं समजायत ।
कबन्धान्मस्तकं स्वस्य पृथक् दृष्टं रणांगणे ॥५९॥
मेषयाने निषद्याऽयं दिशं याति च दक्षिणाम् ।
नग्ना च दानवी काचित् करोति तैलमर्दनम् ॥६०॥
रक्ताम्बरं धृतवत्याश्लेष्टुं प्रयतते च सा ।
मद्यं पाने ददात्येव ददाति चूम्बनं तथा ॥६१॥
मुण्डं कृत्वा ततः पश्चाद् रौति याति च दक्षिणाम् ।
शिबिरं पतितं दृष्टं व्याघ्रैश्चैव विनाशितम् ॥६२॥

नग्नाभिः कूर्चितं दृष्टं मर्दितं स्वस्य वर्ष्म यत् ।
स्वस्य रक्तस्य पानं च शुंभेनाऽऽस्वादितं तथा ॥६३॥
शुंभपत्न्या चितायां स्वदेहः क्षिप्तो विलोकितः ।
इत्येवं शुंभदैत्यस्य स्वप्ने जाग्रति सर्वथा ॥६४॥
दृश्यन्ते नाशचिह्नानि तेन ग्लानिमगात् स हि ।
तावन्निशुंभमरणं श्रुतवान् सैन्यमर्दनम् ॥६५॥
रुरोद बहुधा तत्र मुमोह च पुनः पुनः ।
अथापि तामसाद्भावाद्रागाच्च काममूलकात् ॥६६॥
पुनः स्मृतिं समालेभे वैरनिर्यातनाय च ।
महागजं समारुह्य प्रासपाणिः समभ्यगात् ॥६७॥
यावदभ्यागतः क्रोधाद्रणे हन्तुं च कौशिकीम् ।
रणभेर्यो डिण्डिमानि ह्यवाद्यन्त मुहुर्मुहुः ॥६८॥
सैन्यानि चतुरशीतिः कम्बूनां निर्ययुस्ततः ।
असुराणां च पंचाशत्कुलानि निर्ययुस्तदा ॥६९॥
शतं कुलानि धूम्राणां निर्ययुश्च तदाऽपरे ।
कालकानां दौर्हृतानां मौर्याणां कुलकोटयः ॥७०॥
करिस्थं शुंभमालोक्याऽऽगतं वै रणमण्डले ।
अष्टभुजं महाहेतिं देवी शंखमवादयत् ॥७१॥
धनुष्टंकारयामास वादयामास घण्टकम् ।
पूरयामास ककुभो रणशब्दैस्तदाऽम्बिका ॥७२॥
सिंहस्तु गर्जनां चक्रे त्याजितेभमहामदाम् ।
सिंहाः सहस्रशस्तत्र गर्जनाभिर्दिवस्तलम् ॥७३॥
पूरयामासुरत्युग्रप्रतिध्वनिनिनादितम् ।
देव्यः सहस्रशस्तत्र समाजग्मुः रणांगणे ॥७४॥
महादेव्याज्ञया सर्वा राज्योऽपि रणचण्डिकाः ।
या देव्यो ब्रह्मणो दास्यो याश्चेन्द्रबलदासिकाः ॥७५॥
वरुणस्य तथा दास्यो यमदास्यश्च कोटिशः ।
कुबेरदासदास्यश्च ईशानदासदासिकाः ॥७६॥
अग्निदास्योऽयुताऽयुता नैर्ऋतदासिकास्तथा ।
वायोश्च दासिकाकोटिर्दिक्पालानां च दासिकाः ॥७७॥
लोकपालसमस्ताग्र्यदास्यः सैन्यकृतश्रमाः ।
युद्धशस्त्रास्त्रकुशला अर्बुदाऽर्बुदकोटयः ॥७८॥
अनन्तशस्त्रयानादिदिव्यवाहनशोभनाः ।
चतुर्दशसु लोकेषु रत्नभूताश्च सुश्रुताः ॥७९॥
युद्धसंग्रामवेदिन्यः सैन्यनार्यः समागताः ।
असुराणां समस्तानां नाशोऽवश्यमपेक्ष्यते ॥८०॥
अन्यथा सुरकोटिनां सुखं क्वापि न संभवेत् ।
शिरसां विनिपातेन पणेन सुखमाप्यते ॥८१॥

सकवचशिरस्त्राणाः सैन्यवेशसुशोभनाः ।
सयौवनपूरबला अबला बलवर्तनाः ॥८२॥
सुसज्जसर्वयुद्धांगा रणांगणमुपस्थिताः ।
सर्वाभ्यः पायितं महेन्द्रेणाऽमृतं रणांगणे ॥८३॥
सन्धिनी जीवनी चैव विशल्यकरणी तथा ।
विरामदायिनी मूर्छाहारिणी रक्तरोधिनी ॥८४॥
विविधौषधयोऽश्विनीकुमारेणाहृतास्तदा ।
द्वेधा भिन्नशरीराणां खण्डानां सन्धिकारकाः ॥८५॥
द्रागेव प्राणसञ्चारा रसास्तत्राऽऽहृतास्तदा ।
अमृतानि भोजनानि पानान्यमृतकानि च ॥८६॥
रक्षितास्तत्र संग्रामे शिबिरेषु सुरादिभिः ।
नारीसैन्यप्ररक्षार्थं देवैः सम्पादितं नवम् ॥८७॥
जये युद्धे ध्रुवं स्याच्च स्यान्न रोम्णोऽपि नाशनम् ।
देवीपक्षस्य कस्यापि मृतिः क्षतिर्न वै भवेत् ॥८८॥
इत्येवं सञ्चितं सर्वं कुशलैः कार्यवेदिभिः ।
शुंभेनापि यथा रक्षा भवेत् बलसं तदन्तिके ॥८९॥
अथ युद्धसम्मारंभसूचकः सुमहान् ध्वनिः ।
रणश्रृंगस्य भेर्याश्च व्योममार्गे कृतोसुरैः ॥९०॥
ततो युद्धमतीवासीऽऽद् देव्याः शुंभस्य सैन्ययोः ।
देव्यस्तदाऽर्बुदार्बुदसंख्याका जघ्नुरासुरान् ॥९१॥
कोट्यर्बुदाब्जा असुरा जघ्नुर्देवीमयं वनम् ।
भेर्यश्चाऽसुरकोटीनामूचुः श्रृण्वन्तु भोऽसुराः ॥९२॥
दैत्यदानववंशानां नाशार्थं चाऽबलाजनः ।
समागतोऽस्ति संग्रामे युद्धं कुरुत जीवद्वत् ॥९३॥
मा वै पृष्ठं निरीक्षन्तां मा कुर्वन्तु दयां रणे ।
नारीयमिति मत्वा तां मा त्यजन्तु रणांगणे ॥९४॥
अद्य भूरासुरी स्याद्वा स्याद्वा देवमयी ध्रुवम् ।
द्वयोरेकसमस्तित्वं जायतां नोभपक्षकम् ॥९५॥
सुरा जीवन्तु यद्वा चाऽसुरा जीवन्तु केवलम् ।
मा सुराऽसुरमिश्रं वै सर्जनं चेष्यतेऽधुना ॥९६॥
विधुराः सन्तु देवा वा दानव्यो विधवाश्च वा ।
यद्भवतु भवत्येव मा कुरुत पलायनम् ॥९७॥
मारयन्तु नाशयन्तु घातयन्तु च चण्डिकाः ।
धर्षयन्तु मर्दयन्तु चूर्णयन्तु च चंचलाः ॥९८॥
इति दानवभेर्यश्च बोधयन्ति रणांगणे ।
शंखस्तदा तु देवीनां घोषयन्ति रणांगणे ॥९९॥
भक्षयन्तु जक्षयन्तु ध्वंसयन्तु च दानवान् ।
दारयन्तु पारयन्तु मारयन्तु च मोहकान् ॥१००॥
असुराः सर्वथा देवान् त्रासयन्ति क्षणे क्षणे ।
त्रासयन्तु ह्रासयन्तु ग्रासयन्तु समाग्रतः ॥१०१॥
भवतीनां सहायार्थं देवाः सर्वं उपस्थिताः ।
मा पक्षपादं कुर्वन्तु नश्यन्तु नाशयन्तु च ॥१०२॥
इत्येवं तु तदा जाता बोधदा व्योमगर्जनाः ।
भेरीशंखकृताः शब्दाः श्रूयन्ते कालनोदिताः ॥१०३॥
युद्धे मृतानां स्वर्गं च जीवितानां क्षितीशता ।
निवृत्तानां न वै किञ्चित्तस्मात् मर्तव्यमत्र हि ॥१०४॥
इत्येवं रणश्रृंगाणि बोधयन्ति भटान् भटीः ।
तावत्प्रवर्तिता घाताः शस्त्राणां पातनानि च ॥१०५॥
निशितैश्च शरैर्बाणैर्नाराचैर्जघ्नुरग्रिमान् ।
क्षुरप्रैरर्धचन्द्रैश्च शूलैर्जघ्नुः परस्परम् ॥१०६॥
कात्यायन्या च कौशिक्या काल्या चामुण्डया तथा ।
बाणैराच्छादितं सैन्यं दानवानां नभस्तले ॥१०७॥
कम्बुकैः कालकैर्धौम्रैः कालकेयैश्च दौर्हृतैः ।
बाणैराच्छादितं सैन्यं देवीनां च नभस्तले ॥१०८॥
चिच्छिदुर्बाणसंघातान् बाणैर्जघ्नुस्तथाऽपरैः ।
अक्षय्यसायकास्तत्र तुणीराः क्षीणतां ययुः ॥१०९॥
विनष्टा ज्वलिता भग्नाः खण्डिताः सायका यदा ।
धनुषो दैत्यदेवीनां बभंजुः शूलघातनैः ॥११०॥
हताश्च लक्षशो दैत्याः पोथयन्ति भुवस्तले ।
छिन्नपादाः छिन्नहस्ताश्छिन्नकंधरवक्षसः ॥१११॥
देव्यश्च लक्षशस्तत्र मूर्छयन्ति रणांगणे ।
वाहनानि विनष्टानि भग्ना मृता गजादयः ॥११२॥
सिंहाश्च महिषास्तत्र मयूरोष्ट्रा मृता रणे ।
देवैर्दैत्यैः प्राणरसैर्मन्त्रैश्च जीविताः पुनः ॥११३॥
अथ शस्त्रैश्च भल्लैश्च त्रिशूलैश्च भूशुण्डिभिः ।
परीघैश्च गदाभिश्च प्रासैश्च तोमरैस्तथा ॥११४॥
खड्गैश्च शक्तिभिस्तीक्ष्णकरवालैः परश्वधैः ।
युद्धं चान्योन्यमभवन्निकन्दनकरं तदा ॥११५॥
छिद्यन्ते देहतस्तत्र भिद्यन्ते वक्षसस्तथा ।
कटितश्च वियुज्यन्ते खण्ड्यन्ते हस्ततस्तथा ॥११६॥
म्रियन्ते कण्ठतस्तत्र पात्यन्ते शक्थितस्तथा ।
आकृष्याकृष्य हन्यन्ते श्लिष्ट्वाऽऽश्लिष्याऽर्दयन्ति च ॥११७॥
पादं पादं समगृह्य पाटयन्ति द्विधा रणे ।
हाहाकारो महानासीत् कोऽयं केयं न बुध्यते ॥११८॥
यद्गो चागतं वर्ष्म द्वेधा भवति तत्क्षणे ।
इत्येवमन्धवेगो वै संग्रामो मूर्छनाभरः ॥११९॥

जातः कोट्यब्जकोट्यश्च नष्टाः सैन्यभटास्तदा ।
पृथिवी रक्तवर्णाढ्या देवीदैत्यशवान्विता ॥१२०॥
रक्तनदीशतैर्व्याप्ता देहारण्याऽऽगतिस्तुतिः ।
शैलाभदन्तिदेहाढ्या खरोष्ट्रादिशवान्विता ॥१२१॥
मृतासंख्यशवव्याप्ता प्रालेयकालदृश्यदा ।
ये पतिताश्चार्धहताः पानं पानं वदन्ति च ॥१२२॥
कबन्धास्तत्र निर्वस्त्राश्चोत्थायोत्थाय भूतले ।
विद्रवन्ति सशस्त्राश्च पुनः पतन्ति भूतले ॥१२३॥
न कश्चित् कस्यचित्तत्र तदा साहाय्यदोऽभवत् ।
कोमलाः कोटिशो देव्यो दैत्याश्च नवयौवनाः ॥१२४॥
संग्रामे स्वर्णरूपास्ते मृता दीव्यन्ति चन्द्रवत् ।
रणे विपोथिता नष्टा महाकालकृतं हि तत् ॥१२५॥
दर्शकानां हृदयानां हृत्सु त्रासोऽप्यभून्महान् ।
ततो वै ब्रह्मणा तत्र विभावर्यै निवेदितम् ॥१२६॥
निद्रास्त्रं योजय त्वं च काले तद् युज्यते प्रिये ।
विभावर्या तदा निद्रामन्त्राधिकृतदैवतम् ॥१२७॥
अस्त्रं शराग्रे संयुज्य विमुक्तं सैन्ययोस्तदा ।
देवीदानवसैन्यानि निद्राभिभववन्ति च ॥१२८॥
जातान्येव सुषुप्तौ च विश्राम्यन्ति तु सर्वथा ।
अथ दैत्यैस्तदा देवीसैन्योपरि प्रवर्षणम् ॥१२९॥
अमृतस्य कृतं चैवौषधीनां जीवदायिनाम् ।
देव्यः सिंहा वाहनानि चेतनानि च यानि वै ॥१३०॥
तानि सर्वाण्यमृतस्य वृष्ट्या संजीवितानि हि ।
दैत्याश्चापि तदा मन्त्रैर्दैत्यान् प्राजीवयँस्तदा ॥१३१॥
संजीवन्या च सन्धिन्या विशल्यया विरामया ।
मूर्छानाशिकया रक्तरोधिन्या प्राणदैः रसैः ॥१३२॥
यथा चिकित्सितं सैन्यं जीवितं नीरुजीकृतम् ।
सर्वं स्वस्थं तदा जातं स्वापात् यथोत्थितं भवेत् ॥१३३॥
तथा देवीमहासैन्यं पुनः सज्जं बभूव ह ।
दैत्यानामपि तादृग्वै पुनः सज्जं बभूव ह ॥१३४॥
ब्रह्मणा च तदाऽऽज्ञप्ता स्वके सैन्ये विभावरी ।
निद्रास्त्रं चाऽऽहृतवती सुखं सैन्योभयेऽभवत् ॥१३५॥
ब्रह्मा प्राह तदा शंभुं दानवानां विनाशनम् ।
अस्त्रैरेव प्रकर्तव्यं युद्ध्यन्तां चण्डिकादिकाः ॥१३६॥
शस्त्रं फुत्कृत्य रोषेण शत्रून् ध्यात्वा प्रयोजयेत् ।
कालकवलमन्त्रोऽयं देवीभ्यो दीयतां त्वया ॥१३७॥
"ओं मृतेर्मृत्योर्महामृत्यो मृत्या सह स्थिरो भव ।
ओं मृतिमृत्यो महामृत्यौ स्वमृत्या सन्तिरो भव" ॥१३८॥
इति फुत्कारपूर्वं वै शस्त्रं शरादिकं च यत् ।
संप्रक्षिपेच्छत्रुदेहे मृत्वा पुनर्न जीवति ॥१३९॥
बहुभिरौषधिभिश्च मन्त्रैश्चिकित्सनैरपि ।
न पुनर्जीवति मृत्योर्महाकालप्रभावतः ॥१४०॥
महाकालाख्यरुद्रेण ब्रह्मणश्चाज्ञया तदा ।
उपदिष्टश्च देवीभ्यः कालकवलमन्त्रकः ॥१४१॥
क्षणमात्रेण सिद्धोऽयं महाकालप्रतापतः ।
ब्रह्मणो वांछया चैव मूर्तिमाँस्तत्र संस्थितः ॥१४२॥
विकरालः कालकालः सशस्त्राऽसुरभक्षकः ।
जीवनानि भक्षयन्स दृष्टो देवीभिरुत्थितः ॥१४३॥
क्षणादनन्तरूपश्चाऽभवद्देवीषु तत्क्षणे ।
सुस्थितश्चाऽभवत्तासां जिह्वासु कार्यसम्मुखः ॥१४४॥
दैत्यैरेतन्न विज्ञातं ब्रह्मरुद्रविचेष्टितम् ।
उत्थिताः स्वाऽमृतत्वं सम्मन्वाना युद्धमाचरन् ॥१४५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने रक्तबीजदैत्ययुद्धेऽनन्तदेवीरक्तबीजोत्पत्तिः, मूलरक्तबीजनाशो निशुंभनाशः शुंभाऽपशकुनानि, दानवसमारोहः, चतुर्दशभुवनीयदेवीसैन्यागमः, संजीवन्याद्युपस्थितिः, सवादित्रशस्त्रादितुमुलयुद्धक्रन्महाविनाशे विभावरीमुक्तनिद्रास्त्रं सैन्यजीवनं देवीनां कालकवलमन्त्रप्राप्तिश्चेत्यादिनिरूपणनामा सप्तषष्ट्यधिकशततमोऽध्यायः ॥१६७॥

**श्रीनारायण उवाच—**

श्रूयतां च महालक्ष्मि निर्भीकं मरणे पुनः ।
द्वयोश्च सैन्ययोर्युद्धं प्रावर्तताऽपुनर्भवम् ॥ १ ॥
ब्रह्मा जानाति शंभुश्च देव्यो जानन्ति कालकृत् ।
विनाशो दैत्यकोटीनां समुपस्थित एव यत् ॥ २ ॥
शुंभाज्ञयाथ कम्बूनां चतुरशीतिकोटयः ।
युयुधिरेऽस्त्रशस्त्रैश्च पर्वतैर्वनभूरुहैः ॥ ३ ॥
शिलावर्षैरग्निवर्षैः शरैर्युयुधिरेऽसुराः ।
देव्यो वाराह्य एवैतान् प्रतियुद्धं तदा व्यधुः ॥ ४ ॥
अस्त्रैः शस्त्रैः शिलावर्षैः पर्वतैर्दन्तभूरुहैः ।
अग्निवर्षैः शरैः कालकवलमन्त्रयोजितैः ॥ ५ ॥
नारसिंह्यस्तथा तासां साहाय्ये युयुधुस्तदा ।
नखैर्दंष्ट्राभिरुग्राभिः पुच्छैर्हस्तैः प्लवैस्तथा ॥ ६ ॥

मन्त्रितैर्मुखफेनैश्च शस्त्रैर्युयुधिरे मुहुः ।
शस्त्राऽस्त्रप्रस्तरवृक्षशरफेनादिलक्षिताः ॥ ७ ॥
कालमन्त्रहता दैत्या नोत्तिष्ठन्ति मृताः पुनः ।
अथाऽसुराणां पंचाशत्कुलकोट्यो युधि स्थिताः ॥ ८ ॥
दिक्पालिन्यस्तथैन्द्राण्यश्चार्बुदार्बुदकोटयः ।
योधयन्ति स्म कालाख्यमन्त्राधिष्ठितहेतिभिः ॥ ९ ॥
नष्टा मृता आसुरास्ते नोत्तिष्ठन्ति तदाहवे ।
अथागताश्च धौम्राणां शताब्जकुलकोटयः ॥१०॥
युद्धयन्ति स्म महामारीदेवीभिश्चण्डिकादिभिः ।
कालमन्त्राभिसंसृष्टहेतिभिर्ये मृतिं गताः ॥११॥
पुनस्ते न श्वसन्त्येव मृतास्ते सर्वथा गताः ।
कालकेयाः कालकाश्च दैत्याः कोटिकुलाऽर्बुदाः ॥१२॥
प्रोत्थिताः सबलास्तत्र देवीनाशनहेतवे ।
कुण्डलिन्यस्त्रिशूलिन्यः कोट्यो युयुधिरे च तैः ॥१३॥
कालमन्त्राऽभिभूतास्ते जाग्रति प्राणतो न हि ।
मौर्याश्च दौर्हृताश्चैव संग्रामं चक्रिरेऽतिगाः ॥१४॥
कुलकोट्यस्तदा तेषां लक्षसिंहैर्विनाशिताः ।
उत्थिताश्चौषधैस्ते वै कुमारीभिः पुनर्हताः ॥१५॥
कालकवलमन्त्राक्तशस्त्रनष्टाः श्वसन्ति न ।
अथान्ये शंबरा दैत्याः सामुद्राः पार्वतास्तथा ॥१६॥
पाताला भूस्तराश्चान्ये नागा वार्क्षा जरावृताः ।
देवीरूपाणि वीक्ष्यैव मुमुहुश्चक्रिरे रणम् ॥१७॥
शाकिन्यः शिवदूतिन्यो जघ्नुर्मन्त्रितहेतिभिः ।
मृताः पुनर्न वायान्ति गताश्चात्यन्तजीवनात् ॥१८॥
कोट्यर्बुदान्यसुराणां दैत्यानां खर्वकोटयः ।
पद्मानि दानवानां च शंकवश्च प्रकीर्णकाः ॥१९॥
हता गता मृता नष्टा नामरूपाभिवञ्चिताः ।
रक्तः समुद्रस्तेषां चाऽस्रक्सरिद्भिः समुद्गतः ॥२०॥
नाद्यापि शुष्कतां याति विवर्णो न विभाति च ।
व्योम्नि चैतन्महायुद्धं पश्चिमोत्तरदिग्भवम् ॥२१॥
ख्यापयिष्यति रक्ताब्धिभूश्च रक्तप्रमेदिनी ।
अथ शुंभासुरः शैले विन्ध्याद्रौ व्योमवर्धिते ॥२२॥
राहुकेतुस्पृशिश्रृंगे तिष्ठन् पश्यति मर्दनम् ।
हतसैन्यैर्महापृथ्वी व्याप्ताऽभूत् सर्वतोदिशि ॥२३॥
नैतादृशं सार्वभौमं पुनर्युद्धं भविष्यति ।
देवीनां दानवानां च व्योममार्गातियोधिनाम् ॥२४॥
स च शुंभो विन्ध्यश्रृंगे लक्षयोजनदृष्टिमान् ।
कैलासं बद्रिकाश्रं च दग्धुमैच्छत् तदस्त्रतः ॥२५॥
विन्ध्यश्रृंगाद्वैद्युतास्त्रं क्षिप्तं हरहरोपरि ।
यस्माच्च कोटिशो जाताश्चाग्नयः स्तनयित्नवः ॥२६॥
मेरुं च मन्दरं चैव दिधक्षन्तो भुवं गताः ।
कैलासं बद्रिकाधाम प्राज्वलन् व्योममार्गतः ॥२७॥
तदा तत्र महेशान्या मुक्तं ताम्रास्त्रमातलम् ।
विद्युतस्तत्समाकृष्याऽतलं लोकं समाविशत् ॥२८॥
तदा सैन्यानि देवीनां विन्ध्योत्तरेऽन्तरीक्षके ।
क्षणं विरामं गृह्णन्ति तेष्वग्न्यस्त्रं प्रयोजितम् ॥२९॥
प्राज्वालयद् ग्रहान्देवान्वाय्वाधारान्पिशाचकान् ।
द्यावापृथ्व्योः रोदसी द्वे धेक्ष्यत्पपात शांभवे ॥३०॥
कैलासे च बदर्यां चाऽनलान्प्रावर्तयद्बहून् ।
देव्या दृष्ट्वा च वारुण्याऽनलास्त्रध्वंसकृत्तदा ॥३१॥
प्रहितं शीतशैलास्त्रं शीतवृष्टिशिलामयम् ।
हिमवृष्टिः शीतवृष्टिस्तेन पेतुः शिलोच्चयाः ॥३२॥
शान्तं चाऽग्न्यस्त्रमेवापि हिमप्रस्तरवृष्टिभिः ।
सुवर्णाद्रिस्तदारभ्य हिमाद्रिः समभून्महान् ॥३३॥
अथैतासां विनाशाय निरोधास्त्रं मुमोच सः ।
वायव्या च तदा देव्या श्वासरोधविनाशकृत् ॥३४॥
वाय्वस्त्रं प्रहितं द्राक्च निरोधास्त्रं ननाश ह ।
अथ राक्षसमन्त्रैश्च होमं चकार दैत्यराट् ॥३५॥
राक्षसाः पर्वतप्रायाः समुत्पन्नास्तु कोटिशः ।
देवी सैन्योपरि व्योम्नः पेतुः शस्त्रास्त्रपाणयः ॥३६॥
वर्षर्तावभ्रसंघातैरिवैभिर्व्योम संस्तृतम् ।
वनं वृष्टिभिरेवैतद् देवीनां सैन्यमर्दितम् ॥३७॥
दृष्ट्वा देव्यो नैर्ऋतान्यः ससृजुर्निर्ऋतास्त्रकम् ।
नैर्ऋतास्तत उत्पन्ना भक्षयन्ति स्म राक्षसान् ॥३८॥
यथा तिमीन् तिमींगिला भक्षयन्ति स्म ताँस्तथा ।
अथ शुंभः ससर्जाऽन्यत् प्रेतास्त्रं क्षुधितं बहु ॥३९॥
कोटिशः प्रेतसैन्यानि समुत्पन्नानि तत्क्षणे ।
याम्या देव्यः ससृजुश्च यमास्त्रं यमदूतकृत् ॥४०॥
विकराला यमदूताः प्रेतानभक्षयँस्तदा ।
अवीच्याख्यं स्थलं याम्यदूतानां कल्पितं ततः ॥४१॥
नारकाँश्च ज्वरान् शुंभो जनयामास कोटिशः ।
वैष्णव्या च तदा देव्या ज्वराश्च वैष्णवाः कृताः ॥४२॥
वैष्णवैनरिकास्तापा ह्यवीचिं द्राविता ययुः ।
ब्रह्मास्त्रं प्रहितं देवीसैन्येषु दानवेन यत् ॥४३॥
महातेजांसि घोषाश्च शरा वज्राणि निर्ययुः ।
महाकालाग्नयस्तस्माद्युत्पेतुः सृष्टिभस्मकाः ॥४४॥

त्रिलोकास्त्रासितास्तेभ्यो देव्यो दग्धा विदुद्रुवुः ।
हाहाकारो महानासीत् तदा देव्यो विमूर्छिताः ॥४५॥
ब्रह्माण्या सत्वरं तत्र ब्राह्मास्त्रं प्रतियोजितम् ।
द्वयोर्युद्धं महाव्योम्नि सूर्यमार्गे ह्यजायत ॥४६॥
चान्द्र्या देव्या चन्द्रकान्तमहामन्त्रेण कौमुदी ।
मूर्छादूरकरी तासु तदा संयोजिताऽमृता ॥४७॥
अत्युष्णताकृता मूर्छा विनष्टाऽमृतवृष्टिभिः ।
तावद्व्योम्नः समाकृष्टे ब्रह्मास्त्रे द्वे तु वेधसा ॥४८॥
शुंभो रिक्तस्तदा जातः शस्त्रास्त्रैर्हीन एव सः ।
तदा काल्या महाकाल्या यमदण्डाभिमन्त्रितः ॥४९॥
प्रेषितस्तद्विनाशाय शुंभो मायां चकार वै ।
नैककोटिगणाः शुंभाः प्रादुर्भूवास्तमोऽन्तरे ॥५०॥
गाढान्धकारे मायायाः शुंभो जग्राह चण्डिकाम् ।
करवालस्तदा शुंभे चण्ड्या यावन्निपातितः ॥५१॥
तावच्छुंभो नचैवास्ति मिथ्याशुंभस्तु सोऽभवत् ।
शस्त्राघातो वृथा जातः शुंभो जग्राह कालिकाम् ॥५२॥
काल्या तदा महाखड्गो दैत्यमूर्ध्नि निपातितः ।
तदा दैत्यो नचैवास्ति खड्गघातो वृथागतः ॥५३॥
यावत्स कौशिकीं धृत्वा सुरूपां च पलायितः ।
तावच्चामुण्डया मूर्ध्नि खट्वांगेन निपातितः ॥५४॥
कौशिकी दृश्यते तत्र शुंभः पतन्न दृश्यते ।
मिथ्यारूपैः स देवीनां धर्षणं प्रकरोति वै ॥५५॥
कात्यायनीं च कामेन धर्षणाय स्तनेऽस्पृशत् ।
रौद्र्या तीक्ष्णं त्रिशूलं तन्मूर्ध्नि कण्ठे प्रपातितम् ॥५६॥
तावत्तत्रापि शुंभोऽयं तिरोभूद् दूरतः स्थितः ।
रुद्राणी प्राह शर्वाणीं शिवदूतीं विहस्य च ॥५७॥
मृषारूपो ह्यजित्वा मां कात्यायनीं स्तनेऽस्पृशत् ।
तस्माद्धर्मनष्टोऽयं नाशमेत्वचिराद् ध्रुवम् ॥५८॥
एवं शापे प्रदत्ते तत्सामर्थ्यं लीनतांगतम् ।
नपुंसक इव तत्र पतितो धरणितले ॥५९॥
तावत्कोटिस्वरूपा ये मृषा युद्धे प्रवर्तिताः ।
मृषा शुंभा निपेतुस्ते पृथ्व्यां नपुंसका इव ॥६०॥
विचित्तं मूर्छितं श्रान्तं तवाऽस्मीति च वादिनम् ।
पिबन्तं मेहयन्तं चाऽशस्त्रं युद्धे न घातयेत् ॥६१॥
अतो न घातितः शुंभो देव्या प्राप्ते क्षणेऽपि च ।
मिथ्याशुंभास्ततो लीना लीनं मायातमोऽपि तत् ॥६२॥
मूर्छितश्च तदा शुंभो दृश्यते पतितो भुवि ।
कात्यायन्या तदा सर्वाः स्वसृष्टा देव्य एव ताः ॥६३॥
स्वस्तने लीनतां नीता देवपत्नीर्विनाऽमरीः ।
तावत्संज्ञामवाप्याऽयं शुंभो जगर्ज तां प्रति ॥६४॥
पुनर्मायामयीं वातवृष्टिरात्रिं चकार सः ।
कात्यायनीं महादेवीं प्रधर्षयितुमाययौ ॥६५॥
सः स्पर्शं कृतवान् दैत्यो हृदये स्तनमण्डले ।
तावत्तं चापि सा देवी तलेनोरस्यताडयत् ॥६६॥
क्रुद्धश्चोत्पत्य संगृह्य देवीं गगनमाश्रितः ।
हस्तिनं स्वकमारुह्य पलायनपरोऽभवत् ॥६७॥
तावच्चोत्प्लुत्य गगने देव्या केशेषु संधृतः ।
उन्नीय भ्रामयामास चिक्षेपैनं तु सा क्षितौ ॥६८॥
पपातोपरि सा देवी शूलमादाय तत्क्षणम् ।
तद्वक्षो दारयामास भेदयामास तद्बलम् ॥६९॥
मुहुश्चिक्षेप दैत्येन्द्रः करपादौ तदा भुवि ।
पवर्तप्रायरूपोऽभूत् कम्पयन् सकलां महीम् ॥७०॥
उत्तानः पतितश्चोर्व्यां करपादौ प्रसार्य च ।
विक्षिप्य बहुधा धूल्यां विरराम ममार च ॥७१॥
गगनं निर्मलं जातं वातवृष्टिः शमं ययौ ।
देवा देव्यस्तदा कात्यायनीं हर्षितमानसाः ॥७२॥
जयाशीर्भिर्मुदा संवर्धयामासुरथाऽर्हणाम् ।
चक्रुर्नैकोपदाभिश्च गन्धर्वा ललितं जगुः ॥७३॥
ननृतुश्चाप्सरोगणा वादित्राणि ह्यवादयन् ।
वाता ववुश्च सुखदाः सूर्यस्तेपे प्रभान्वितः ॥७४॥
अग्नयो जज्वलुः शान्तास्त्रैलोक्यं सुखभागभूत् ।
राज्यभागास्तदाऽजेन यथायोग्यं समर्पिताः ॥७५॥
यावद्वयस्तत्र देवेभ्यश्चोपदा अर्पितास्तदा ।
देवीभ्यो युद्धकर्त्रीभ्यो ब्रह्मणा विष्णुना तथा ॥७६॥
शंभुना चार्पिता हारा ललन्तिकाश्च मुद्रिताः ।
विजयाख्यविभूषाश्च तन्तिकाश्च सुमुद्रिकाः ॥७७॥
मुकुटकटकझंझ्झीवंगदारशनास्तथा ।
कल्ग्यः शेखरश्चैरिण्यः कर्णपूराश्च कंचुकीः ॥७८॥
घर्घरीशाटिकास्वर्णमयीः रत्नमयीबृसीः ।
रत्नहीरकसौवर्णविजयाख्यप्रपत्रिकाः ॥७९॥
भोजनानि च पानानि यानानि वाहनानि च ।
दैत्यगृहस्थितान्यन्यरत्नानि विविधानि च ॥८०॥
उपदायां पारितोषिकाख्यं हार्दं धनं बहु ।
यथायोग्यं यथाकार्यं प्रदत्तं तत्र पर्षति ॥८१॥
देव्यो मौक्तिकहाराढ्याः सकलिंगमुकुटावहाः ।
प्रसन्नाश्च तदा प्रादुर्देवान् यद्धृदयंगमम् ॥८२॥

देवा वा मानुषा वाथ तिर्यञ्चोऽथ सुराऽसुराः ।
गृहदेवीर्गृहपत्नीः स्वसृः पुत्रीः स्नुषास्तथा ॥८३॥
मातृश्च प्रमदा दासीर्मानयिष्यन्ति भावतः ।
तद्दिष्टैः सुखयिष्यन्ति पूजयिष्यन्ति वस्तुभिः ॥८४॥
खानपानाम्बरभूषाशृंगारद्रव्यसाधनैः ।
हार्दिकस्नेहवृत्त्या प्रसन्नयिष्यन्ति सर्वदा ॥८५॥
तेषां गृहे वयं देव्यो निवत्स्यामोऽत्रलासु वै ।
सुखयिष्याम ऐश्वर्यैर्धनपुत्रसमृद्धिभिः ॥८६॥
रक्षिष्यामश्च तान्सर्वान् देवानिव जनान्स्वकान् ।
भोग्यभोगाविहारादीन् दापयिष्याम एव तान् ॥८७॥
सुखिनः सन्तु ते सर्वे यत्र नारीजनः सुखी ।
असुखाः सन्तु ते सर्वे यत्र नारीजनोऽसुखः ॥८८॥
एवं सर्वाग्र्यदेवीभिर्देवैश्चाशीः प्रयुंजिताः ।
कात्यानी महादेवी पूजिता बहुधा ततः ॥८९॥
अथ देवाः स्तुतिं चक्रे समाजे विजये तदा ।
कात्यायनि ! नमस्तुभ्यं कौशिकि ! ते नमोनमः ॥९०॥
कालिके कालि तेऽजस्रं चामुण्डे ते नमोनमः ।
महामारि नमस्तुभ्यं ते ब्रह्माणि नमोनमः ॥९१॥
चान्द्रि च वारुणि कुण्डलिनि तुभ्यं नमोनमः ।
त्रिशूलिनि नमस्तुभ्यं कौमारि शक्तिनि ! नमः ॥९२॥
नारसिंहि शिवदूति ! वैष्णवि ! ते नमोनमः ।
वाराहि चण्डिके चण्डे चर्ममुण्डे च ते नमः ॥९३॥
रौद्रि सिंहि यमदासि याम्ये देवि च ते नमः ।
ईशानि दिक्प्रपाले ते नैर्ऋतानि च ते नमः ॥९४॥
ऐन्द्रि च वायवि भद्रे भगवत्यस्तु ते नमः ।
नमोऽस्त्वनन्तरूपे ते नमस्ते राज्यदायिनि ! ॥९५॥
नमस्ते दैत्यदर्पघ्नि नमोऽष्टादशबाहवि ।
नमो नारायणि ब्राह्मि चक्रधारिणि ते नमः ॥९६॥
नमो वज्रधरे हस्तिध्वजे तेऽस्तु नमोनमः ।
मयूरवाहिनि तेऽस्तु नमस्ते हंसवाहिनि ॥९७॥
मुण्डमाले नमस्तेऽस्तु सुकेशिनि नमोऽस्तु ते ।
त्रिनेत्रे वरदे देवि नमस्तेऽस्तु प्रसीद च ॥९८॥
प्रपन्नाऽऽर्तिहरे देवि मातः प्रसीद पाहि च ।
महीरूपे सदाधारे जलरूपे च तृप्तिदे ॥९९॥
बीजरूपे मोहरूपे मुक्तिरूपे नमोऽस्तु ते ।
विद्यारूपे समस्तस्त्रीस्वरूपे ते नमोनमः ॥१००॥
स्वर्गमोक्षप्रदे देवि नारायणि नमोऽस्तु ते ।
कालरूपे तत्त्वरूपे कार्यकारणरूपिणि ॥१०१॥

त्रिगुणे निर्गुणे देवि महामाये हृदिस्थिते ।
सर्वाऽन्तर्यामिणि देवि नारायणि नमोऽस्तु ते ॥१०२॥
ब्रह्माणि हंसयानस्थे शिवानि वृषभस्थिते ।
वैष्णवि गरुडस्थे ते नारायणि नमोऽस्तु ते ॥१०३॥
मातृरूपे स्तन्ययुक्ते पत्नीरूपे सगर्भिके ।
रतिरूपे जीवशान्ते नारायणि नमोऽस्तु ते ॥१०४॥
युगे युगे महासुरोपद्रवनाशनं कुरु ।
देवानां रक्षणं चैव नारायणि नमोऽस्तु ते ॥१०५॥
शरण्यानां सदा बाधाघातनं कुरु सर्वथा ।
त्रिशूलं सर्वदा भीतेः पातु देवि नमोऽस्तु ते ॥१०६॥
घण्टा पातु च पापेभ्यः खड्गः सुखं करोतु च ।
पाशाद्यास्ते सदा पान्तु नश्च देवि नमोऽस्तु ते ॥१०७॥
सृष्टौ सदा त्वया कार्यमेवमेव तु रक्षणम् ।
रक्षणाय सदा देवि प्रसन्नाऽस्तु नमोऽस्तु ते ॥१०८॥
इति स्तुत्वा ततो देवैः कुसुमांजलिरर्पितः ।
नमस्कृता प्रसन्ना च प्राह देवान् विहस्य सा ॥१०९॥
भवतां वै प्रसादात्तु प्राप्तोऽयं विजयो मया ।
पुनर्भवत्प्रसादाच्च हनिष्याम्येव दानवान् ॥११०॥
गृध्रासुरं तथा गर्जासुरं हर्जासुरं तथा ।
जठ्रासुरं तथा मग्नासुरं च सुरवैरिणः ॥१११॥
वैप्रचितान् हनिष्यामि रक्तदन्तिकरूपया ।
शताक्षी च भविष्यामि पुनः शाकंभरी ततः ॥११२॥
शतवार्षिकदुर्भिक्षे दास्ये शाकं जनाँस्तदा ।
शतैर्नेत्रैर्निरीक्ष्येऽहं शताक्षी कीर्त्यते तदा ॥११३॥
भीमरूपेण भीमाऽहं रक्षोभ्यो मुनिपुंगवान् ।
हिमाद्रौ रक्षयिष्ये च भीमा देवी भवाम्यहम् ॥११४॥
अरुणाक्षविनाशाय भ्रामरं रूपमास्थिता ।
भ्रामरीति भविष्यामि रक्षयिष्ये जनाँस्तदा ॥११५॥
यदा यदा च मद्योग्यं कार्यं चोपस्थितं तदा ।
भविष्यामि तथारूपा नान्तो मे नामरूपयोः ॥११६॥
कालस्य च तथा सृष्टेर्नान्तोऽस्ति मम कर्मणाम् ।
आसुराणां च नान्तोऽस्ति ममाप्यन्तो न विद्यते ॥११७॥
मत्स्तोत्रैर्मां प्रत्यहं यः स्तोष्यति श्रद्धयाऽन्वितः ।
तस्य पीडां नाशयिष्ये त्रिविधां नात्र संशयः ॥११८॥
मधुकैटभमहिषशुंभनिशुंभनाशनम् ।
श्रोष्यन्ति चरितं मे ये गास्यन्ति च समाहिताः ॥११९॥
अष्टम्यां च चतुर्दश्यां नवम्यां चैक चेतसः ।
दारिद्र्यापत्तिदुष्कर्माऽनिष्टशस्त्रभयादिकम् ॥१२०॥

शत्रुदस्युनृपदंष्ट्रितोयाऽनलभयादिकम् ।
नाशयिष्ये करिष्ये च तेषां स्वस्त्ययनं ध्रुवम् ॥१२१॥
उपसर्गमहामारीरोगोत्पातार्तिबन्धनम् ।
नाशयिष्ये करिष्ये च सौभाग्यपुष्टिवर्धनम् ॥१२२॥
मद्गृहे बलिनैवेद्ये पूजायां हवनोत्सवे ।
नवरात्रे चरित्रं मे पाठ्यं श्राव्यं च भावतः ॥१२३॥
दास्ये पराक्रमं तस्मै कल्याणं भीतिशून्यताम् ।
धनधान्यसुवर्णादिस्त्रीपुत्रपौत्रसम्पदः ॥१२४॥
शान्तिकर्मणि दुःस्वप्ने ग्रहदुःखेऽर्भकग्रहे ।
गृहक्लेशे मित्रकलौ दुर्वृत्ते भूतपीडने ॥१२५॥
रोगे दैत्यादिजे दुःखे युद्धे वैरिणि प्रान्तरे ।
दावानले तथाऽरण्ये देशभंगेऽरिनिग्रहे ॥१२६॥
स्तेनाऽऽवृते गजव्याघ्रसिंहावृते वनभ्रमे ।
बन्धने वातवेगे च पोते महाजले रणे ॥१२७॥
निगडे शस्त्रसम्पाते वेदनायां हृदन्तरे ।
दस्युवैरिसमाक्रान्ते पठेद्वा शृणुयात्तथा ॥१२८॥
श्रावयेच्चापि मे भक्त्या चरितं विविधं मम ।
महापूजां कारयेच्च भोजयेद्भूसुरान्बहून् ॥१२९॥
तत्र तत्र स्थले काले बाधायां कर्मणि स्थितौ ।
रक्षयिष्ये जनं भक्तं सर्वविधप्रसंकटात् ॥१३०॥
इत्याशीभिर्वर्धयित्वा समाजयित्वा तान्सुरान् ।
तेषां च पश्यतां कात्यायनी त्वन्तरधीयत ॥१३१॥
देवाः स्वर्गं ययू राज्ये निरातंका व्यवस्थिताः ।
असुराः शेषभावाश्च जग्मुः पातालमेव ते ॥१३२॥
शृणु लक्ष्मि ! सैव तुष्टा लक्ष्मीवृद्धिकरो गृहे ।
रुष्टा यदा तदा सैवाऽलक्ष्मीर्विनाशकारिणी ॥१३३॥
सैव स्तुताऽर्चिता दद्याद्धनधान्यसुतादिकम् ।
श्रुता च कीर्तिता दद्यात्सुखसम्पद्गृहादिकम् ॥१३४॥
ध्याता च संश्रिता दद्यादैश्वर्याऽऽत्मबलादिकम् ।
आराधिता च सा दद्यात् ज्ञानमुक्तिपदादिकम् ॥१३५॥
प्रसादिता च सा दद्यात् स्वां च नारायणादिकम् ।
तस्यै चिदचिद्व्याप्तायै नारायण्यै नमोनमः ॥१३६॥
इति ते कथितं देवीसामर्थ्यं दैत्यनाशकम् ।
कथयिष्ये प्रसंगेऽन्यत् किं भूयः श्रोतुमिच्छसि ! ॥१३७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्तानेऽनेकविधदेवीनामनेकविधासुराणां च सैन्ययोः कालकवलमन्त्रितशस्त्रास्त्रादिभिर्भूव्योमयुद्धं; ब्रह्मास्त्रप्रयोगः शुंभस्य मृषमाया, शुंभनाशः, देवीस्तुत्युपदास्तोत्रफलादिनिरूपणनामाऽष्टषष्ट्यधिकशततमोऽध्यायः ॥१६८॥

**श्रीलक्ष्मीरुवाच—**

श्रुतं देव्याश्चरित्रं वै महाबलपराक्रमम् ।
अथ श्रोतुं समिच्छामि सतीचरितमद्भुतम् ॥ १ ॥
दक्षगृहे सतीजन्म सतीलग्नं च शंभुना ।
दक्षयज्ञं तथा सत्या वह्निस्नानं सकारणम् ॥ २ ॥
हिमाद्रेर्मेनकायां च सतीजन्मोग्रतत्तपः ।
मध्ये शंभोर्लिंगपातो महच्चान्यत्पराक्रमम् ॥ ३ ॥
तत्सर्वं श्रोतुमिच्छामि कृपया तव केशव ! ।
इत्यर्थितः श्रिया स्वामी लक्ष्मीं वक्तुं प्रचक्रमे ॥ ४ ॥

**श्रीनारायण उवाच—**

कश्यपेन पुरा स्नेहात् दितिः प्रोक्ता स्वभावतः ।
वज्रसारमयैरंगैः पुत्रो देवि भविष्यति ॥ ५ ॥
वज्रांगं नाम सा देवी सुषुवे वज्रदुश्छिदम् ।
स जातमात्र एवाऽभूत् सर्वयुद्धविशारदः ॥ ६ ॥
प्राह स्वजननीं मातर्यदाज्ञा करवाणि तत् ।
दितिः प्राहमहेन्द्रेण पुत्रा मे बहवो हताः ॥ ७ ॥
तेषामपचितिं कर्तुं गच्छ शक्रं दिवि स्थितम् ।
सहस्राक्षं स बद्ध्वा स्वमातुरग्रे निनाय सः ॥ ८ ॥
ब्रह्मणा मोचितः पश्चाद्गतस्त्विन्द्रः स्वमालयम् ।
वज्रांगस्य वरांग्यां तारकासुर इति बली ॥ ९ ॥
सुतोऽभवत् महादुष्टो देवाँश्चक्रे वशान् रणे ।
लोकपालानिन्द्रमुख्यान् बद्ध्वा पाशैः पशूनिव ॥१०॥
निनाय मेरुशिखरं यत्रास्ति स्वकमालयम् ।
कालनेमिः सुरान्बद्ध्वा प्रादाय द्वारि तिष्ठति ॥११॥
यथेष्टं तारकः प्राह द्रुतं कारागृहे क्षिप ।
केवल वासवं त्वेकं मुण्डयित्वा विमोचय ॥१२॥
एवं कृतं तदा देवाः समाजग्मुः पितामहम् ।
तारकस्य विनाशाय प्रार्थयांचक्रुरंजसा ॥१३॥
निशां सस्मार च ब्रह्मा सोपतस्थे पितामहम् ।
ब्रह्मोवाच महत्कार्यं विभावरि ! उपस्थितम् ॥१४॥
तारकासुरनाशार्थं सती दक्षसुता भव ।
तव स्कन्दः सुतः सप्तदिनेष्वेव महासुरम् ॥१५॥
कार्तिकेयस्तारकाख्यं हनिष्यति न संशयः ।
त्वं कालरात्रिनिःशेषभुवनावलिवासिनी ॥१६॥
शंभुकण्ठग्रहाऽऽनन्ददायिनी त्वं विभावरी ।
गच्छ दक्षगृहं शीघ्रं भव पुत्री हरप्रिया ॥१७॥

इत्युक्त्वा तु निशादेवी ययौ वै दक्षमन्दिरम् ।
तत्राऽऽसीनां महाहर्म्ये रत्नभीत्तिसमाश्रयाम् ॥१८॥
ददर्श दक्षपत्नीं चाऽसिक्नीं विरणकन्यकाम् ।
चमत्कृतिप्रभाव्याप्ताऽऽपाण्डुराऽऽननवारिजाम् ॥१९॥
किंचित्क्षामां मुखोदग्रस्तनभारावनामिताम् ।
महौषधिगणैर्मन्त्रै रैश्वर्यैरभिसेविताम् ॥२०॥
उद्वहत्स्वर्णसन्नद्धजीवचक्रां सुरूपिणीम् ।
मणिमालमहाज्योतिष्परिधिचक्रकाऽऽननाम् ॥२१॥
स्वर्णताराऽभिग्रथितप्रान्तचञ्चलशाटिकाम् ।
तैलचन्दनसौगन्ध्यद्रव्यशृंगारशोभिताम् ॥२२॥
स्वर्णकलशाचीनांशुककारक्तच्छत्रछायिताम् ।
ददर्श दिवसस्यान्ते महासनविराजिताम् ॥२३॥
नमस्कृत्य निशोवासाऽसिक्नीभ्रूरोमराजिषु ।
प्रसुप्तप्रायःपुरुषे निद्राभूतोपचारके ॥२४॥
स्फुटालोके चन्द्रमसि कृतमनसिजाऽऽदरे ।
गाढकण्ठग्रहालम्रसमये दक्षसन्निधौ ॥२५॥
रतिकाले पक्षपत्नीनेत्रयोः प्राविशन्निशा ।
आविवेश मुखे रात्रिर्दक्षेणाऽद्भुतसंगमे ॥२६॥
श्वासस्तया तदाऽसिक्न्याः क्रमेण जठरान्तरे ।
आविवेश स्थिता बीजे दक्षकृतनिषेचने ॥२७॥
दक्षपत्नी तदारभ्य दौहृदाऽशोभताऽतिगम् ।
आधानादिप्रसंस्कारा दक्षेणापि निवर्तिताः ॥२८॥
प्राप्ते प्रसूतिसमयेऽदीपयद्गृहमन्दिरम् ।
ब्राह्मे मुहूर्ते सुभगे प्रासूयत विभावरीम् ॥२९॥
महातेजस्विनीं देवीं कनकोज्ज्वलमूर्धजाम् ।
पद्मपत्राभनयनां स्थलपद्मगुणालयाम् ॥३०॥
लक्ष्मीचिह्नातिशोभाढ्याऽवयवां च त्रिनेत्रकाम् ।
चन्द्रमालां शूलघटधनुर्ध्वजकरांबुजाम् ॥३१॥
स्वस्तिकचक्रडमरूपद्महारकरान्विताम् ।
ऊर्ध्वरेखानागवल्लीदलमीनादिपत्तलाम् ॥३२॥
साम्राज्यचिह्नसहितां दैवीरेखासमन्विताम् ।
दृष्ट्वा दक्षस्तथाऽसिक्नी मुमुदतुर्हृदन्तरे ॥३३॥
तस्यां तु जायमानायां जन्तवः स्थिरजंगमाः ।
अभवन् सुखिनः स्मृद्धाः सर्वलोककृतालयाः ॥३४॥
नारकाणामपि स्वर्गसमं जातं तदा सुखम् ।
चेतांसि क्रूरसत्त्वानां सुशान्तान्यभवँस्तदा ॥३५॥
ज्योतिषामपि सुतरां तेजोऽवर्धत चाम्बरे ।
देवाः प्रहर्षमतुलं लेभिरे देवतायुताः ॥३६॥
अरण्यौषधयः स्वादुफलपुष्पसुगन्धयः ।
दिशः प्रसेदुरत्यर्थं विमलं च नभोऽभवत् ॥३७॥
मारुतश्च सुखस्पर्शो मन्दसुगन्धशीतलः ।
सर्वर्तुफलयुगपदुद्भवा ह्यभवन्द्रुमाः ॥३८॥
सस्यलक्ष्मीधरा पृथ्वी रसाऽऽविर्भावशोभना ।
जलप्रस्रवणा भूमौ प्राकट्यमनुलेभिरे ॥३९॥
विस्मृतानि च बोधानि स्मृतेर्मार्गे प्रपेदिरे ।
तीर्थसामर्थ्यमत्युत्कर्षतां प्राप्तमकाशत ॥४०॥
जीवाश्चतुर्दशलोकस्थिताः शान्तिं गतास्तदा ।
सात्त्विकानां शकुनानि सुशुभान्यभवँस्तदा ॥४१॥
स्वप्नान्यपि महोत्सवकराण्यासन् द्युमन्ति च ।
मानसेषु जनानां च प्रोत्साहाः प्राभवँस्तदा ॥४२॥
अन्तरीक्षेऽमरास्त्वासन् विमानेषु सहस्रशः ।
ब्रह्मा सप्तर्षयो मन्वन्तराणि दिक्प्रपालकाः ॥४३॥
लोकपालाश्च मुनयः सन्तः साध्व्यो महर्षयः ।
पितरो वह्नयः साध्या विश्वेदेवा मरुद्गणाः ॥४४॥
किन्नराश्च किंपुरुषा देवा देव्यश्च कोटिशः ।
सिद्धाश्च चारणाः सूता मागधा बन्दिनस्तथा ॥४५॥
सात्त्विका राजसाश्चैव तथा पातालवासिनः ।
दक्षगृहोपरि व्योम्नो मुमुचुः पुष्पवर्षणम् ॥४६॥
जगुर्गन्धर्वमुख्याश्च ननृतुश्चाप्सरोगणाः ।
वादित्राणि ह्यवाद्यन्त स्तावकाश्चक्रिरे स्तुतीः ॥४७॥
पर्वताश्च समुद्राश्च सरांसि सरितस्तथा ।
वनाऽरण्यानि मूर्तानि समाजग्मुश्च सर्वशः ॥४८॥
मूर्तिमन्ति च तत्त्वानि गुणा मूर्ता विभूतयः ।
तत्र महोत्सवे जग्मुर्दिव्या उपदपाणयः ॥४९॥
दक्षगृहं तदारभ्य तीर्थीभूतमभूत्परम् ।
नित्यं कोटिजनास्तत्र यान्ति दर्शनलब्धये ॥५०॥
या परब्रह्मशक्तिः सा चतूरूपा व्यवस्थिता ।
शान्तिर्विद्या प्रतिष्ठा च निवृत्तिश्चेति ताः स्मृताः ॥५१॥
वासुदेवेऽनिरुद्धे च प्रद्युम्ने समकर्षणे ।
क्रमशः संस्थिताश्चात्र तत्र सृष्टौ कृतादराः ॥५२॥
ता एव चापि वैराजे ह्यजे विष्णौ महेश्वरे ।
तिष्ठन्त्येव च शाश्वत्यो योगिभिः स्वात्मसु धृताः ॥५३॥
प्रमाणविपर्ययविकल्पनिद्रात्मिकाश्च ताः ।
शाब्दिकैस्तु परा पश्या मध्यमा वैखरीति ताः ॥५४॥
विमर्शबिन्दुनादध्वन्यात्मिकाश्चापि ताः कृताः ।
शान्तं जाग्रत् तथा स्वप्नं सुषुप्तं चापि ता मताः ॥५५॥

गर्भो बाल्यं युवत्वं च ह्रासोऽवस्थाश्च ताः स्मृताः ।
बीजं चोत्पत्तिरप्यत्र स्थितिर्लयश्च ता मताः ॥५६॥
अऋतुर्वार्षिकं शैत्यं चौष्ण्यं चापि मताश्च ताः ।
अजा ईशा तथा देवी चासुराणी च ता मताः ॥५७॥
शान्ता क्रूरा व्यवसाया शूद्री वृत्तय एव ताः ।
ब्राह्मं प्रातस्तथा सायं निशा चापि च ता मताः ॥५८॥
किमु वक्तव्यमेतासु चतस्र एव सर्वथा ।
एकैव विद्यते कार्यकारणाऽभिन्नरूपिणी ॥५९॥
तस्मात्तु प्राणिनः सर्वे आकृष्टिं यान्ति तत्र वै ।
नित्यं तत्र समायान्ति दर्शनार्थे महोत्सवः ॥६०॥
दक्षगृहे सदा जातो देवीवासेन सर्वथा ।
ज्ञानशक्तिर्भक्तिशक्तिः क्रियाशक्तिश्च मुक्तिका ॥६१॥
चतूरूपां जना द्रष्टुं समायान्ति च कोटिशः ।
अथ दक्षं प्राह पत्नी पश्य बालां सुशोभनाम् ॥६२॥
सर्वभूताधिवासां च राजीवदललोचनाम् ।
त्र्यम्बकां च चतुर्वक्त्रां तरुणादित्यसन्निभाम् ॥६३॥
श्रुत्वैवं तु पिता दक्षो यावत्पश्यति पुत्रिकाम् ।
तावद्दिव्यं दर्शनं वै पितुर्जातं कृपाकृतम् ॥६४॥
दक्षोऽपश्यत् महातेजस्तत्र सिंहासनोत्तमे ।
नारायणस्य वामांके स्थितां लक्ष्मीं ददर्श वै ॥६५॥
अथ लीनां पुनस्तत्र कृष्णं राधां ददर्श सः ।
अथ लीनां च तत्रैव शिवां शिवं ददर्श सः ॥६६॥
शिवांके संस्थितां देवीं चन्द्रावयवभूषणाम् ।
त्रिनेत्रामष्टहस्तां च सत्रिशूलादिचिह्निताम् ॥६७॥
तेजोपरिधिसंव्याप्तां चर्मचक्षुरलब्धिकाम् ।
प्रणम्य शिरसा भूमौ दक्षः प्रोवाच चेश्वरीम् ॥६८॥
का त्वं देवि विशालाक्षि! महातेजोऽभिसंभृता ।
न मे चक्षुः क्षमं त्वस्य तेजसस्ते ग्रहेऽस्ति वै ॥६९॥
न जाने त्वामहं वत्से स्वरूपं ब्रूहि मे सुते ।
देव्युवाच च मां विद्धि ब्रह्मशक्तिं परेश्वरीम् ॥७०॥
अजामेकां लोहितां च शुक्लां कृष्णां च निर्गुणाम् ।
बह्वीः प्रजाः सृजमानां सरूपाश्च चतूरूपाम् ॥७१॥
दिव्यं ददामि ते चक्षुः पश्य मे रूपमैश्वरम् ।
उक्त्वैवं दक्षनेत्रे स्वकराभ्यां सा त्वमार्जयत् ॥७२॥
दिव्ये क्षणात्तदा जाते क्षमे त्रिसृष्टिलोकने ।
स्वं रूपं दर्शयामास दिव्यं तत्पारमेश्वरम् ॥७३॥
कोटिसूर्यसमाऽऽभावत्तेजोबिम्बं सुखाश्रयम् ।
स्वर्णमालासहस्राढ्यं दिव्याम्बरविभूषितम् ॥७४॥

सौम्यं शान्तं ततः सम्यक् प्रवृत्तं राजसं शुभम् ।
ततः पश्चात् तदेवात्र महाक्रूरं भयानकम् ॥७५॥
ज्वालामालाऽयुतव्याप्तं कालानलशतान्वितम् ।
दंष्ट्राकरालं दुर्धर्षं जटामण्डलमण्डितम् ॥७६॥
गदाहस्तं समुकुटं शंखचक्रधरं तथा ।
महात्रिशूलहस्तं च घोरं लयभयानकम् ॥७७॥
चन्द्ररेखाढ्यभालं चानन्ताश्चर्यादिसंयुतम् ।
दिव्यमाल्याम्बरधरं नूपुरैरुपशोभितम् ॥७८॥
काम्यं कृत्तिधृतपृष्ठं दिव्यगन्धानुलेपनम् ।
सर्वशक्त्याश्रयं शुभ्रं सर्वाधारमनामयम् ॥७९॥
ब्रह्मेन्द्रोपेन्द्रयोगीन्द्रैर्वन्द्यमानपदाम्बुजम् ।
सर्वतः पाणिपादान्तं सर्वतोऽक्षिशिरोमुखम् ॥८०॥
सर्वमावृत्य तिष्ठन्तं सर्वतः श्रुतिमत्परम् ।
एतादृशीं महादेवीं ददर्श परमेश्वरीम् ॥८१॥
तुष्टाव चाष्ट च शतं नाम्नामुच्चार्य दक्षराट् ।
परब्रह्माण्यक्षराणि शाश्वती परमेश्वरी ॥८२॥
मुक्तानी सर्वगा माया सत्या लक्ष्मीनिरंजना ।
सर्वान्तरस्था चिच्छक्तिस्ताराऽमृतप्रदा रमा ॥८३॥
व्योमरूपाऽच्युता कार्यकारणात्मा कलामयी ।
प्राणेश्वरी महामाता प्रधाना प्रकृतिस्तथा ॥८४॥
विद्या विभूतिराकाशा शाब्दी नादमयी प्रसूः ।
सर्वयोनिः पुराणा च कूटस्था पौरुषी शिवा ॥८५॥
क्षेत्रज्ञा व्यापिनी व्यक्ता चाऽव्यक्ता त्रिगुणा लया ।
भूम्नीचाऽव्याकृतिर्योनिर्वैद्युती मोहिनी तथा ॥८६॥
मूर्तिश्च वैष्णवी बुद्धिर्महती मानसी कृतिः ।
ईश्वराणी च शर्वाणी भवानी चाम्बिका तथा ॥८७॥
पतिव्रता च रुद्राणी योगिनी श्रीः सुमंगला ।
सावित्री कमला गंगा पार्वती च सरस्वती ॥८८॥
वाणी कीर्तिश्चान्नपूर्णा स्वधा स्वाहा जगद्धरा ।
सुधा सिद्धिः स्तुतिर्मेधा श्रुतिर्नीतिः स्मृतिस्तथा ॥८९॥
हंसा काली कौशिकी च कात्यायनी च चण्डिका ।
दुर्गा साध्वी च गौरी च त्रिनेत्रा ब्रह्मचारिणी ॥९०॥
विभावरी च दीक्षा च गीतिर्धेनुश्च मोहिनी ।
अविद्या दक्षिणा भर्गा सन्ध्या धात्री प्रभा च भूः ॥९१॥
स स्तुत्वाऽष्टोत्तरशतनामभिर्दक्षराट् स्वयम् ।
भूयः प्रणम्य देवेशीं प्रोवाचेदं कृतांजलिः ॥९२॥
दृष्टं ते चैश्वरं रूपं रूपं सौम्यं प्रदर्शय ।
संहृत्य दर्शयामास रूपमन्यत्तदा पुनः ॥९३॥

द्वादशाब्दं तदा सौम्यं गौरं विकसिताकृति ।
सुगन्धाढ्यं द्विनेत्रं द्विभुजं नीलाऽलकान्वितम् ॥९४॥
रक्तपादाम्बुजतलं सुरक्तकरपल्लवम् ।
भूषितं चारुसर्वांगं ललाटतिलकोज्ज्वलम् ॥९५॥
ईषत्स्मितं सुबिम्बौष्ठं नूपुरारावसंयुतम् ।
स्वर्णहारान् दधद्वक्षःस्थलेऽङ्गुलीषु चोर्मिकाः ॥९६॥
स्वर्णवस्त्रसुशोभाढ्यं रम्यं सर्वांगकोमलम् ।
दिव्यं सुकन्यकारूपं कोटिकन्दर्पमोहनम् ॥९७॥
दृष्ट्वा दक्षः सुहृष्टात्मा बभाषे परमेश्वरीम् ।
अद्य मे सफलं जन्म चाद्य मे सफलं तपः ॥९८॥
अद्य मे पुण्यकल्लोलाः पुत्रीरूपा उपस्थिताः ।
नारायण्या जगद्धात्र्या दर्शनं मेऽद्य जायते ॥९९॥
शिवायाः प्रकृतेर्देव्या दर्शनं मेऽद्य जायते ।
धन्योऽस्मि कृतकृत्योऽस्मि प्रसंपूर्णतमोऽस्मि च ॥१००॥
अद्य मे नु जगन्मातुर्दर्शनं तव जायते ।
मम पुत्री स्वरूपा त्वं जगन्माता समागता ॥१०१॥
अतो मे कः परो लाभो यत्र देवाः प्रतिष्ठिताः ।
त्वं हि सा परमा शक्तिरनन्ता परमेष्ठिनी ॥१०२॥
त्वमेव परमानन्दा त्वमेवानन्ददायिनी ।
त्वयैव संगतो देवः स्वात्मानन्दं समश्नुते ॥१०३॥
शिवं सर्वगतं सूक्ष्मं परं ब्रह्म सनातनम् ।
त्वयि तिष्ठत्यभेदेन परब्रह्ममयी स्थिता ॥ १०४॥
नमस्तेऽस्तु महादेवि ! नमस्ते परमेश्वरि ! ।
नमो भगवतीशानि शिवायै ते नमोनमः ॥१०५॥
त्वन्मयोऽहं त्वदाधारस्त्वमेव च गतिर्मम ।
त्वामेव शरणं यामि प्रसीद परमेश्वरि ॥१०६॥
मया नास्ति समो लोके देवो वा दानवोऽपि वा ।
जगन्मातेव मत्पुत्री संभूता सा स्वयं यतः ॥१०७॥
एषा तवाऽम्बाऽसिक्नी वीरकन्यकाऽप्यहो ।
जगन्मातुश्च माताऽद्य चाऽहोऽस्याः पुण्यगौरवम् ॥१०८॥
पाहि माममरेशानि चासिक्न्या सह सर्वदा ।
नमामि तव पादाब्जं व्रजामि शरणं शिवम् ॥१०९॥
अहो मे सुमहद्भाग्यं महादेवीसमागमात् ।
आज्ञापय महादेवि किं करिष्यामि शांकरि ॥११०॥
एतावदुक्त्वा वचनं तदा दक्षः प्रजापतिः ।
सम्प्रेक्षमाणो गौरीं तां प्रांजलिः पार्श्वतः स्थितः ॥१११॥
ध्यातवान् स्वसुतां देवीं परब्रह्मात्मिकां सतीम् ।
अशेषकल्याणमयीं सर्वविकृतिपारगाम् ॥११२॥
आदिमध्यान्तरहितां तमसः परतः स्थिताम् ।
जगत्प्रसूतिं वेदान्तविज्ञानगम्यविग्रहाम् ॥११३॥
आनन्दमात्रां प्रणवाभिधानां शरणप्रदाम् ।
सर्वभूतान्तरस्थां च प्रकृतिपुरुषाभिधाम् ॥११४॥
प्रधानपूरुषरूपां प्राणरूपां मनोमयीम् ।
सर्वाश्रयां सर्वत्रगां शुक्लां कृष्णां च लोहिताम् ॥११५॥
ऐश्वर्यविज्ञानमूर्तिं धर्ममूर्तिं सुमुक्तिदाम् ।
महाविष्णुस्वरूपां च हिरण्यांडमयीं तथा ॥११६॥
परमेष्ठिपदव्याप्तां वैराजीं सौरशक्तिकाम् ।
सहस्रकरपादास्यां जले नारायणात्मिकाम् ॥११७॥
संहारधर्मसंभर्त्रीं युगान्तक्षयसंज्ञिताम् ।
फणासहस्रभोगीन्द्रां रौद्रीं नेत्रत्रयान्विताम् ॥११८॥
सुकोमलांगां बालिकारूपां शुभ्रां सुतां निजाम् ।
आदिमध्यान्तसंस्थां च ज्ञातवान् दक्षराट् पराम् ॥११९॥
ततोऽम्बिका शिवं स्मृत्वा पितरं प्राह सस्मितम् ।
भक्त्या त्वनन्यया तात मद्भावं गन्तुमर्हसि ॥१२०॥
सर्वयज्ञतपोदानैस्तद्रूपमाप्यते नहि ।
यन्मे साक्षात्परं रूपमैश्वरं दृष्टमद्भुतम् ॥१२१॥
तन्निष्ठस्तत्परो भूत्वा तदेव शरणं व्रज ।
तदेव मनसा पश्य तद्ध्यायस्व यजस्व तत् ॥१२२॥
अहं त्वां परया भक्त्या चैश्वरं योगमास्थितम् ।
संसारसागरादस्मादुद्धराम्यचिरेण तु ॥१२३॥
ध्यानेन कर्मयोगेन भक्त्या ज्ञानेन चैव हि ।
प्राप्याऽहं ते प्रजापते ! नान्यथा कर्मकोटिभिः ॥१२४॥
श्रुतिस्मृत्युदितं सम्यक् कर्म वर्णाश्रमात्मकम् ।
अध्यात्मज्ञानसहितं मुक्त्यै सततं कुरु ॥१२५॥
धर्मात्संजायते भक्तिर्भक्त्या संप्राप्यते परम् ।
श्रुत्युदितो यज्ञधर्मो वेदाद्धर्मो हि निर्बभौ ॥१२६॥
ममैवैषा परा संज्ञा वेदरूपा पुरातनी ।
न च वेदादृते किञ्चिच्छास्त्रं धर्माभिधायकम् ॥१२७॥
वर्णानामनुकम्पार्थं मन्नियोगाद्विराट्स्वयम् ।
स्वायंभुवो मनुर्भूत्वा वेदधर्मान् स उक्तवान् ॥१२८॥
अन्तर्हितेषु धर्मेषु युगान्तेषु महर्षयः ।
ब्रह्मणो वचनात्तानि दर्शयन्ति युगे युगे ॥१२९॥
ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे ।
हरेरन्ते कृतात्मानः प्रविशन्ति परं पदम् ॥१३०॥
तस्मात्सर्वप्रयत्नेन धर्मार्थं वेदमाश्रयेत् ।
धर्मज्ञानयुता भक्तिः परंब्रह्म प्रकाशयेत् ॥१३१॥

एतादृशं मया रूपं कथं सन्दर्शितं शृणु ।
नारायणः स्वयं ब्रह्म नारायणी तथैव च ॥१३२॥
बाह्यदृष्ट्या तयोर्भेदो न त्वान्तरदृशा मनाक् ।
स एव तु परंब्रह्म क्वचित्कृष्णः प्रजायते ॥१३३॥
स एव राधा भवति यथेष्टं विहरत्यपि ।
स एव च परंब्रह्म नारायणो भवत्यपि ॥१३४॥
नारायणी रमा लक्ष्मीः स एव संप्रजायते ।
यथेष्टं च विहरति नास्ति भेदोमनागपि ॥१३५॥
परंब्रह्म स वै ब्रह्मा ब्रह्माणी जायते तथा ।
स एव विष्णुर्भवति वैष्णव्यपि स एव सः ॥१३६॥
शिवो रुद्रः स एवास्ति रुद्राणी च शिवैव सः ।
अहं सती शिवा रौद्री तव गेहे प्रकाशिता ॥१३७॥
परब्रह्मस्वरूपाऽस्मि शिवार्थं त्वागतास्मि च ।
परब्रह्मस्वरूपश्च शिवोऽपि भगवान् स्वयम् ॥१३८॥
कैलासे राजते देवो देव्यहं ते गृहे स्थिता ।
तस्मात्सर्वप्रकारेण मद्भक्तो मत्परायणः ॥१३९॥
मामेवाऽर्चय सर्वत्र मनसा शरणं गतः ।
यद्यत्स्वरूपं मे तात मनसो गोचरं तव ॥१४०॥
तन्निष्ठस्तत्परो भूत्वा तदर्चनपरो भव ।
सः शिवश्च त्वया ताताऽभ्यर्थनीयो मदर्थकः ॥१४१॥
दातव्या च शिवायैव शाश्वती ते सुता शिवा ।
धर्मसंस्थापनार्थाय नियोगाद् ब्रह्मणस्तथा ॥१४२॥
असिक्न्याश्च समुत्पन्ना त्वामेव पितरं श्रिता ।
प्रदास्यसे महेन्द्राय प्रसीदति स शंकरः ॥१४३॥
तेन देवादयः सर्वे त्वां नमस्यन्ति भावतः ।
अर्पितया मया साकं शंकरं शरणं व्रज ॥१४४॥
इत्युपदिश्य दक्षाय सती बाला ह्यजायत ।
दक्षस्तुतोष परमं सुतां ज्ञात्वा परेश्वरीम् ॥१४५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने विभावर्याः सतीजन्म, मंगलमहोत्सवः, दक्षाय दिव्यसती-दर्शनं, स्तुतिः सुताध्यानम्, शिवाशिवयोः परब्रह्मणैक्यं चेत्यादिनिरूपणनामैकोनसप्तत्यधिकशततमोध्यायः ॥ १६९ ॥

### श्रीलक्ष्मीरुवाच—

ननु विभावरी केयं या सती दक्षपुत्रिका ।
जाता ब्रह्मात्मिका देवी संशयं छिन्धि मे हरे ॥ १ ॥

### श्रीनारायण उवाच—

शृणु लक्ष्मि सती विभावरी रात्रिर्यथाऽभवत् ।
गोलोके धाम्नि भगवान् श्रीमान् कृष्णो विराजते ॥ २ ॥
परब्रह्मस्वरूपः स गोलोकाधिपतिः प्रभुः ।
महामाया च या मूला प्रकृतिर्ब्रह्मवामगा ॥ ३ ॥
कृष्णवामे स्थिता क्वापि लीनरूपा विराजते ।
नैकाकी रमते कृष्णः स तदैच्छद् द्वितीयकम् ॥ ४ ॥
तदा कृष्णस्य वामांगादाविरास सुकन्यका ।
धावित्वाऽऽनीय कुसुमं राजचम्पकवृक्षजम् ॥ ५ ॥
कृष्णस्य चरणे न्यस्य स्वयं रासे दधार च ।
तेन राधा तदा प्रोक्ता कार्यसिद्धिकरी तु सा ॥ ६ ॥
कान्तं कृष्णं सह नीत्वा वृक्षकुंजे विवेश सा ।
रत्यानन्दं ददात्यस्मै सोऽपि रतिप्रमूर्छनाम् ॥ ७ ॥
अवाप चापि च निद्रां सुप्रवृत्ते महासुखे ।
राधा प्राह तदा कृष्णं किं न कृष्णः प्रचेष्टसे ॥ ८ ॥
कृष्णः प्राह प्रिये निद्रा समायाता क्षणं श्रमात् ।
राधा क्रुद्धा तदा निद्रोपरि निद्रापि बालिका ॥ ९ ॥
भूत्वा पार्श्वे स्थिता नम्रा कृष्णनेत्रे विहाय वै ।
दृष्ट्वा प्राह तदा राधा रे निद्रे रतिखण्डिके ॥१०॥
माऽस्तु गोलोकवासस्ते गच्छ वैराजपूरुषे ।
सर्वानन्दनाशयित्री तामसी रुद्रसंगता ॥११॥
भव तामसभावा त्वं देवी संहारिणी सदा ।
अभावप्रत्ययाधारा वृत्तिर्निद्रा विनाशिनी ॥१२॥
घोरा ह्यासुरनाशाय पर्याप्ता भव सर्वदा ।
दैत्यसैन्येषु नित्यं त्वं सन्नद्धा भव तामसी ॥१३॥
सृष्टौ सर्वत्र जीवनामिन्द्रियेषु विरामिका ।
भव स्थितिं कृतवती रुद्राणी रुद्रसंगता ॥१४॥
रानार्थस्य हि भानस्य अन्त्री रात्रिर्भविष्यसि ।
भानं च विगतं यस्माद्विभावरी भविष्यसि ॥१५॥
वैराजपुत्रीं त्वां ब्रह्म स्वयं सृष्टौ ग्रहीष्यति ।
स च विभावरीं देवीं दक्षाय पुत्रिकात्मिकाम् ॥१६॥
दास्यति प्रवरां कन्यां दक्षः सतीं तु शंभवे ।
सा काली चण्डिका देवी ह्यसुरान् नाशयिष्यति ॥१७॥
सा त्वं काली तथा रात्रिर्विभावरी च निद्रिका ।
रुद्रसहचरी भूत्वा विहरिष्यसि तामसी ॥१८॥
इत्यादेशाद्धरेः कामाद्धाविकार्यवशात्तथा ।
विभावरी सती रात्रिर्दक्षकन्या बभूव सा ॥१९॥

श्रीलक्ष्मीरुवाच—

ननु शंभुर्यदोत्पन्नो वैराजात्पुरुषात्तदा ।
सहैव शांभवी शक्तिः प्रोत्पन्ना श्रूयते तु या ॥२०॥
तस्याः शिवाया अस्याश्च रात्र्या भेदोऽस्ति वा न वा ।
शिवा तु सर्वदा पत्नी रात्रिर्जायाऽपराऽस्ति किम् ॥२१॥

श्रीनारायण उवाच—

योग्यं पृष्टं त्वया देवि गहनं मम चेष्टितम् ।
नान्यैस्तु ज्ञायते चैतत्कदा किंकिमभूदिति ॥२२॥
शृणु पूर्वं यथावृत्तं ज्ञातव्यं भवतीति यत् ।
कथयामि कथाशेषं शिवस्याऽनादिभावनम् ॥२३॥
नारायणः सर्वपतिः सर्वकारणकारणम् ।
अक्षरे च परे धाम्नि राजते मुक्तसेवितः ॥२४॥
यथेच्छति यदा सृष्टिं तदा तां सृजति ध्रुवम् ।
तदा तेन कृतं कीदृक् प्रसंगात्कथयामि ते ॥२५॥
परब्रह्मण एवांगाद् राधा यदोपजायत ।
तदर्थं धाम गोलोकं कृष्णं रूपं चकार च ॥२६॥
सा च कृष्णस्य पत्न्यासीत्प्राणेभ्योऽपि गरीयसी ।
देवी षोडशवर्षीया प्रोद्भिन्नवयौवना ॥२७॥
वह्निशुद्धांशुकाधाना कोमलांगी समुज्ज्वला ।
पुष्टनितम्बभारार्ता सुन्दरी सुमनोहरा ॥२८॥
रक्तमृदुसुन्दरौष्ठा पीनश्रोणिपयोधरा ।
मुक्तापंक्तिसमच्चंचद्दन्तपंक्तिमनोहरा ॥२९॥
कोटिपार्वणचन्द्रातिरिक्ततेजोभरानना ।
पद्मपत्रायतनेत्रा केशवेशादिमण्डिता ॥३०॥
तिलपुष्पशुकचञ्चुसमनासाऽतिसुन्दरा ।
स्वर्णवर्णसमगण्डयुग्मकान्तिबहूज्ज्वला ॥३१॥
धृतस्वर्णमणिरत्नभूषाकर्णसुशोभना ।
चन्दनाऽगुरुकस्तूरीसिन्दूरकुंकुमादिभिः ॥३२॥
कपालयोः कृतपत्रा पुष्पग्रथितधम्मिला ।
कृतस्तुतिससिन्दूररेखाकबरीमस्तका ॥३३॥
स्थलपद्मदलकान्तिलसच्चरणसच्चला ।
हंसहस्तिगतिद्योतद्वक्षःपिण्डोभमन्थरा ॥३४॥
रत्नहारान्मणिहारान् वनमालां मनोहराम् ।
हारान् हीरकनिर्माणान् रत्नकेयूरकंकणम् ॥३५॥
सद्रत्नसारनिर्माणवलयान् रत्नवंगदाः ।
स्वर्णकिंकिणिकागुंजद्रशनां दधती सती ॥३६॥
अमूल्यरत्ननिर्माणक्वणन्मंजीररंजिता ।
नानाप्रकाररत्नाढ्यपद्मकं परिबिभ्रती ॥३७॥
अलक्तस्पृशकरपत्तलनखौष्ठमंजुला ।
उवास सस्मिता भर्तुः रत्नसिंहासनाऽर्धके ॥३८॥
अथाऽस्या लोमकूपेभ्यः सद्यो गोपांगनागणः ।
वेशरूपाकृतिभिस्तत्समः सुस्थिरयौवनः ॥३९॥
लक्षकोटिप्रमातश्च गोलोके गोपिकागणः ।
प्राविर्बभूव वै शश्वत्कृष्णदासीसमाह्वयः ॥४०॥
कृष्णस्य लोमकूपेभ्यः सद्यो गोपगणोऽप्यथ ।
आविर्बभूव वै शश्वद्रूपवेशादिभिः समः ॥४१॥
त्रिंशत्कोटिप्रमातश्च कृष्णदासगणः स हि ।
कृष्णस्य लोमकूपेभ्यः सद्यश्चाविर्बभूव च ॥४२॥
बहुवर्णो गोगणश्च शश्वत्सुस्थिरयौवनः ।
सुरभ्यश्च बलीवर्दा वत्सतर्यश्च वत्सकाः ॥४३॥
शोभना मंगलकरा ह्यासन् प्रादुस्तदा शुभाः ।
तेषामेकं बलीवर्दं कोटिसिंहसमं बले ॥४४॥
शंभुवाहनलाभार्थं कृष्णोऽरक्षन्मनोहरम् ।
कृष्णांघ्रिनखरन्ध्रेभ्यो हंसपंक्तिः सुपाण्डुरा ॥४५॥
आविर्बभूव शश्वत्स्त्रीपुंलक्ष्मातिसुन्दरा ।
तेषामेकं राजहंसं वेधोवाहनलब्धये ॥४६॥
कृष्णोऽरक्षत्सुधवलं महाबलपराक्रमम् ।
कृष्णस्य वामकर्णस्य विवरात्सुमनोहरः ॥४७॥
गणः श्वेततुरंगाणामाविर्बभूव नित्यकः ।
तेषां श्वेततमं त्वेकं धर्मवाहनलब्धये ॥४८॥
कृष्णोऽरक्षद्ददौ चान्यान्सुरेभ्यो भगवान् स्वयम् ।
कृष्णस्य दक्षकर्णस्य विवराच्छोभनाकृतिः ॥४९॥
प्राविर्भूता सिंहपंक्तिर्महाबलपराक्रमा ।
तेषामेकं ददौ कृष्णो विभावर्यै महाबलम् ॥५०॥
भोग्यं यद्यत् तदाऽपेक्ष्यं कृतं कृष्णेन योगिना ।
तथा सर्वगतं दिव्यं चकार रथपंचकम् ॥५१॥
विविधरत्नखचितं मनोयायि महत्तरम् ।
लक्षयोजनायतं च शतयोजनमूर्ध्वगम् ॥५२॥
लक्षचक्रं वायुरंहो लक्षक्रीडागृहान्वितम् ।
भोग्यशृंगारतल्पादिविहारोद्यानराजितम् ॥५३॥
रत्नप्रदीपलक्षाणां प्रकाशश्च गृहे गृहे ।
दिव्यतोरणकलशध्वजचित्रादिबृंहितम् ॥५४॥
रत्नदर्पणचामरछत्रमुक्तागवाक्षकम् ।
मणीन्द्रमुक्तामाणिक्यहीरहारसुशोभितम् ॥५५॥

नीलरक्तपिशंगपाण्डुरपंकजशोभनम् ।
एकस्तेषु प्रदत्तो वैकुण्ठवासिस्वरूपिणे ॥५६॥
अपरोऽव्याकृतवासिभूम्नेऽर्पितः स्वरूपिणे ।
तृतीयस्तु महाविष्णुस्वरूपाय स्वरूपिणे ॥५७॥
चतुर्थो राधिकायै च पंचमः स्वाय रक्षितः ।
आविर्बभूवुः कृष्णस्य गुह्यदेशात्तु गुह्यकाः ॥५८॥
कुबेरो गुह्यकेशश्च सुन्दरी गुह्यकी तथा ।
अथ कृष्णस्य मुखतो ह्याविर्भूताश्च पार्षदाः ॥५९॥
पीतवस्त्रा वनमालाधराः श्यामाश्चतुर्भुजाः ।
शंखचक्रगदापद्मकिरीटरत्नकुण्डलाः ॥६०॥
नारायणाय वैकुण्ठे ददौ चतुर्भुजान् बहून् ।
द्विभुजाः श्यामला कृष्णसदृशाः पार्षदाः कृताः ॥६१॥
वैष्णवा दास्यदासाश्च कृताः कृष्णपरायणाः ।
रक्षिताः स्वीयसेवायां ध्यायन्तश्चरणाम्बुजम् ॥६२॥
आविर्बभूव कृष्णस्य वामनेत्रात् त्रिशूलधृक् ।
श्वेतवर्णस्तामसश्च त्रिनेत्रो भालचन्द्रकः ॥६३॥
व्याघ्रचर्मधरो हस्ते डमरूं धारयन् जटी ।
स ईशानो महाभागो दिक्पालानामधीश्वरः ॥६४॥
तथा त्रिशूलपट्टीशधराश्च चन्द्रशेखराः ।
त्रिनेत्राश्च महाकाया गणाश्चान्ये बभूविरे ॥६५॥
सुरास्त्रिकोटिसंख्याताः कृष्णमूर्तेः प्रतिस्थलात् ।
प्रादुर्बभूवुः सर्वे ते यथास्थानमवस्थिताः ॥६६॥
रतिर्मूर्तिश्च सावित्री मनोरमा सरस्वती ।
महालक्ष्मीः सती लक्ष्मीर्बभूवुर्हृदयाम्बुजात् ॥६७॥
नारायणाय प्रददौ महालक्ष्मीं सरस्वतीम् ।
सावित्रीं ब्रह्मणे प्रादात् मूर्तिं धर्माय सादरम् ॥६८॥
रतिं कामाय रूपाढ्यां कुबेराय मनोरमाम् ।
लक्ष्मीं च विष्णवे प्रादात् सतीं शिवाय चार्पयत् ॥६९॥
शिवः प्राह तदा योगी प्रणतः कृष्णमच्युतम् ।
अधुनाऽहं न गृह्णामि प्रकृतिं प्राकृतो यथा ॥७०॥
योगज्ञानब्रह्मचर्यदास्यभक्तिविरोधिनीम् ।
मुक्तीच्छाबन्धकर्त्रीं च सकामां कामवर्धिनीम् ॥७१॥
तपस्यानाशिनीं चित्तसन्तोषभक्षिकां क्षुधाम् ।
भवकारागृहे घोरे दृढनिगडरूपिणीम् ॥७२॥
शश्वद्विबुद्धिजननीं सद्बुद्धिच्छेदकारिणीम् ।
सदा भोगार्थसारां च विषयेच्छाविवर्धिनीम् ॥७३॥
मलमूत्रमयीं वल्लीं देहतरुप्रबन्धनाम् ।
रतिकार्याऽधिककाक्षेपिणीं स्वार्थतन्मयीम् ॥७४॥
स्वातन्त्र्यनाशिनीं शोकमोहस्थानमयीं दृढाम् ।
धारणाध्यानगुप्तांगां ब्रह्मध्यानविरोधिनीम् ॥७५॥
नेच्छामि गृहिणीं नाथ वरं देहि मदीप्सितम् ।
त्वद्भक्तौ दासभावे च प्रेम संवर्धतेऽनिशम् ॥७६॥
त्वन्नामजपने पादसेवनेऽर्चनकर्मणि ।
श्रवणे कीर्तने स्तोत्रे स्मरणे मित्रभावने ॥७७॥
सर्वदा जाग्रति स्वप्ने त्वय्येव प्रभ्रमाम्यहम् ।
तृप्तिर्जायेत नैव त्वद्ध्याने योगे तपस्सु च ॥७८॥
तवाऽऽवाहनासनाचामनाभिस्नानसेवने ।
गन्धपुष्पधूपवस्त्रदीपचन्दनचर्चने ॥७९॥
नैवेद्यजलताम्बूलाऽऽरात्रिकस्तुतिवन्दने ।
नमस्कारप्रदक्षिणाऽलंकृतिसत्फलार्पणे ॥८०॥
समर्पणे चात्मनश्च नित्यप्रसादभोजने ।
तृप्तिर्यथा न जायेत तथा देहि दयानिधे ॥८१॥
सार्ष्टिसालोक्यसारूप्यसामीप्यसाम्यलीनताः ।
तव भक्तिसुखांशस्य कलां नार्हन्ति षोडशीम् ॥८२॥
अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा ।
ईशित्वं च वशित्वं च सर्वकामावसायिता ॥८३॥
सार्वज्ञ्यं दूरदर्शित्वं दूरसंश्रवणं तथा ।
परकायप्रवेशश्च वाक्सिद्धिः कल्पवल्लिता ॥८४॥
जनिनाशमहाशक्तिः तथाऽमरत्वमित्यपि ।
सिद्धयः षोडश भक्तेः कलां नार्हन्ति षोडशीम् ॥८५॥
योगास्तपांसि दानानि व्रतान्यनशनानि च ।
यशः कीर्तिर्वचःसत्यं धर्मस्तीर्थं सुरार्चनम् ॥८६॥
देवार्चादर्शनं सर्वभूमिमण्डलप्रक्रमम् ।
सर्वस्वर्गसुखाऽऽभोगः सर्वाऽब्धिस्नानमित्यपि ॥८७॥
अवभृथानि सर्वाणि ब्रह्मविष्णुमहेशता ।
वैराजता चापि ततोऽन्यविधाः स्मृद्धयश्च याः ॥८८॥
तव भक्तिकलांशस्य कलां नाऽर्हन्ति षोडशीम् ।
तस्माद् भक्तिं विना चान्यन्नैव प्रार्थ्यं मया विभो ॥८९॥
न सती न शठी मे चापेक्ष्यते प्रकृती शुभे ।
विरक्तौ यादृशं सौख्यं सानुरागे न तादृशम् ॥९०॥
श्रुत्वैवं शांकरं वाक्यं भगवान्प्राह सस्मितम् ।
यदीदानीं त्वया शंभो नेष्यते प्रकृतिः सती ॥९१॥
सा वसतु मम नेत्रे योगनिद्रामयी शिवा ।
यदाऽऽवश्यकता ते स्यात्तदा दास्ये विभावरीम् ॥९२॥

तावत्कालं मम सेवां नेत्रयोः संकरिष्यति ।
इत्यभिधाय भगवान् जग्राह नेत्रयोः शिवाम् ॥९३॥
शंभुं च दास्यसेवायामरक्षद्वैष्णवं सुतम् ।
प्राह कृष्णस्तदा शंभुं मत्सेवां कुरु सर्वथा ॥९४॥
यावत् तेऽवश्यकार्ये च सृष्टौ नैवोपतिष्ठते ।
तपस्विसिद्धयोगिज्ञसुरवैष्णवपूजितः ॥९५॥
वसाऽत्राऽमरभावं च लभ मृत्युंजयो भव ।
वेदशास्त्रादिसार्वज्ञ्यसिद्धिं प्राप्नुहि मद्वरात् ॥९६॥
असंख्यब्रह्मणां नाशं लीलयाऽत्रैव पश्य वै ।
ज्ञानेन तेजसा शक्त्या वयसा यशसा श्रिया ॥९७॥
पराक्रमेण तपसा महसा मत्समो भव ।
मम प्राणादधिकस्त्वं प्रेयान् भक्तोत्तमः शिव ॥९८॥
ममोक्तं वचनं सार्थं काले कर्तुं त्वमर्हसि ।
तव वाक्यं पालयामि पुत्र त्वं मद्गृहे वस ॥९९॥
मद्वाक्यं च स्ववाक्यं च पालनीयं करिष्यसि ।
काले गृहीत्वा प्रकृतिं शृंगारं च करिष्यसि ॥१००॥
न केवलं तपस्वी त्वं चेश्वरो मत्समो महान् ।
काले गृही तथा काले तपस्वी भव वाञ्छया ॥१०१॥
दुःखं तु दारसंयोगे यत् त्वया कथितं शृणु ।
कुस्त्री ददाति दुःखं च स्वामिने न पतिव्रता ॥१०२॥
महत्कुलप्रसूता या सत्कुला कुलमानिनी ।
करोति सुखिनं कान्तं सेवयाऽऽत्मार्पणाह्वया ॥१०३॥
पतिर्न्बधुः पतिर्भर्ता पतिः परमदैवतम् ।
पतिरेव परंब्रह्म पतिः स्वं कुलयोषिताम् ॥१०४॥
पतितोऽपतितो वापि कृपणश्चेश्वरो दृढः ।
शिथिलो वापि सर्वस्वं पतिर्वै कुलयोषिताम् ॥१०५॥
असत्कुलप्रसूता या पित्रोर्दुःशीलमिश्रिता ।
ध्रुवं सा परभोग्या स्यात् पतिनिन्दा परा सदा ॥१०६॥
पतिः कृष्णः पतिर्विष्णुः पतिः शंभुः सदा मम ।
पतिदेवे सर्वदेवा दृश्यन्ते कुलयोषिताम् ॥१०७॥
एतादृशी तु ते साध्वी शिवाऽस्ति महती सती ।
भविता सा शिवा शैवी प्रकृतिर्वैष्णवी शिव ! ॥१०८॥
गोलोके वस देवेश यावत्सृष्टौ न ते कृतिः ।
मत्समाधौ सदा मग्नो मम सेवापरश्च वा ॥१०९॥
इत्यभिधाय कृष्णस्तं स्वसेवायामरक्षयत् ।
गोलोकस्यैकदिवसे वैराजानां सहस्रकम् ॥११०॥
नश्यति तत्र का संख्या क्षुद्रब्रह्माण्डवेधसाम् ।
यदा वैराजदेहाच्च ब्रह्मा विष्णुर्भविष्यतः ॥१११॥
तदा तेजःप्रवाहे वै भविष्यति सदाशिवः ।
तेजो लिंगं शिवो मूर्तिर्लोके ख्यातिं गमिष्यति ॥११२॥
शिवपार्श्वगता साध्वी शिवा सह भविष्यति ।
ततः कालान्तरे दक्षपुत्री सती भविष्यति ॥११३॥
भगवांश्च ततः प्राह शिवां नेत्राधिवासिनीम् ।
अधुना तिष्ठ वत्से त्वं गोलोके मम नेत्रयोः ॥११४॥
काले भजिष्यसि शंभुं विराट्पुत्रं शिवायनम् ।
तेजःसु सर्वदेवानामाविर्भूय ततः पुनः ॥११५॥
संहृत्य दैत्यान्सर्वांश्च भविता विन्ध्यवासिनी ।
भविता दक्षकन्या च सुशीला शंभुगेहिनी ॥११६॥
ततः शरीरं सन्त्यज्य यज्ञे भर्तुस्तु निन्दया ।
मेनायां शैलभार्यायां भविता पार्वतीति च ॥११७॥
बहुकार्यकरी क्रूरा चण्डिका त्वं भविष्यसि ।
बहुनाम्नी बहुरूपा तामसी त्वं भविष्यसि ॥११८॥
पंचायतनदेवेषु शिवा शिवश्च तत्सुतः ।
मुख्याः सर्वेषु विश्वेषु भविष्यन्त्येव मद्वरात् ॥११९॥
ग्रामेषु नगरेष्वेव पूजिता ग्रामदेवता ।
भवती भविता तत्र भिन्ननामादिधारिणी ॥१२०॥
भविष्यन्ति महान्तश्च तत्र ते परिचारकाः ।
धर्मार्थकाममोक्षाणां सिद्धार्थफललिप्सवः ॥१२१॥
ये त्वां तत्र भजिष्यन्ते पृथ्व्यां पुण्ये सुतीर्थके ।
तेषां यशश्च कीर्तिश्चैश्वर्यं वर्धिष्यते बहु ॥१२२॥
इत्याशीर्भिः शिवां शर्वं तोषयामास माधवः ।
शर्वं ररक्ष सेवायां शिवां ररक्ष नेत्रयोः ॥१२३॥
नेत्रस्थत्वाच्छिवा जाता निद्रा सुखकरी सदा ।
निद्रा विभावरी रात्रिश्चैकैव नाऽपरा तु सा ॥१२४॥
सा कृष्णहृदयाज्जाता शिवा नेत्रद्वये स्थिता ।
राधिकावचनात् निद्रा गता वैराजनेत्रयोः ॥१२५॥
सार्धं च शंभुना तत्र शिवा नित्याऽभिव्यंजिता ।
सैव नारायणस्येन्द्रियेषु दुग्धाब्धिके स्थिता ॥१२६॥
सैव सर्वाऽन्यदेवानामिन्द्रियव्रातसंस्थिता ।
सैव शेषशयानश्रीनारायणेन्द्रियादितः ॥१२७॥
शिवा शक्तिर्योगनिद्रा रात्रिर्विभावरी सती ।
कात्यायनी कौशिकी चण्डिका काली च पार्वती ॥१२८॥

क्रमयोगाद्यथापेक्षं यथाकार्यं प्रकाशिता ।
इति ते कथितं लक्ष्मि ! सतीरूपं सदात्मकम् ॥१२९॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने सतीचरित्रे गोलोके राधारतौ कृष्णनेत्रनिद्रायै शापः, श्रीकृष्णांगेभ्यो राधागोपगोपीगोगणहंसश्वेततुरगसिंह-रथपंचकशिवशिवामहालक्ष्मीसरस्वतीरतिमूर्तिसा-विन्यात्राविर्भावः, सत्याः शिवार्पणे शिववैराग्यं, कृष्णनेत्रस्थशिवाया वैराजपुत्रीत्वं ततो देवे-न्द्रियजकात्यायनीत्वं दक्षपुत्रीसतीत्वं हिमालयपुत्रीपार्वतीत्वं चेत्यादिनिरू-पणनामा सप्तत्यधिकशततमोऽध्यायः ॥१७०॥

**श्रीनारायण उवाच—**

अथ वैराजपुरुषात् नाभौ पद्मेऽभवत् त्वजः ।
विष्णुश्च हृदयाज्जातस्तदा वै विष्णुपद्मजौ ॥१॥
महामहं महाँश्चाहमितिश्रैष्ठ्यविवादिनौ ।
तयोर्मध्ये महत्तेजःकिरणं समभूत्तदा ॥२॥
तत्र देवस्तृतीयो वै शंभुः प्रादुर्बभूव ह ।
गोलोकात्प्रेषितश्चास्याऽण्डस्य देवाधिवृत्तये ॥३॥
श्रीकृष्णेन स्वयं चात्र प्रेषितः शंकरो मुदा ।
वैष्णवो भक्तवर्यश्च समुत्पन्नो हरीच्छया ॥४॥
हरेस्तदैव किरणं मूर्तेर्वैराजनेत्रयोः ।
समागत्य बभूवातिस्थिरं तस्य प्रभावतः ॥५॥
ललाटात्स समुत्पन्नः किरणाढ्यो महेश्वरः ।
किरणं दिव्यत्राणं वै ब्रह्मणश्चिह्नमेव तत् ॥६॥
महेशस्तत्र वैराजात्मजो जातः सुतामसः ।
शिवा च तस्य देहे वै वामभागेऽप्रकाशिता ॥७॥
कृष्णाज्ञया समायाता शिवो वेत्ति न तां तदा ।
शिवो जानाति चैकं स्वं देवं तत्र शिवां विना ॥८॥
किन्त्वदृश्या शिवा शंभोर्वामे शक्तिस्वरूपिणी ।
आसीद् या कृष्णनेत्रस्था सैवाऽऽसीच्छिवनेत्रयोः ॥९॥
ब्रह्मणा प्रेरिता रात्रिः सा संबभूव दाक्षिणी ।
सतीतिनाम संचक्रे तस्या दक्षस्तदाज्ञया ॥१०॥
अथ तां च सुतां माता सुसंस्कृत्य यथोचितम् ।
शिशुपानेन विधिना तस्यै स्तन्यादिकं ददौ ॥११॥
पालिता साऽथ वीरिण्याऽसिक्न्या दक्षेण ववृधे ।
तस्यां सुसद्गुणाः सर्वे विविशुः शैशवेऽपि वै ॥१२॥
सखीमध्यगता क्रीडाचरणेऽपि स्वभावतः ।
लिलेख शंभुदेवस्य प्रतिमां वै क्वचित्क्वचित् ॥१३॥
बाल्योचितेषु गीतेषु जगौ रुद्रं हरं मुहुः ।
हरे त्वेवं भक्तिमती सस्मार स्मरनाशकम् ॥१४॥
तस्यां पित्रोः सुकरुणा ववृधेऽतीव नित्यदा ।
बालाऽपि गुणवृद्धा सा तोषयामास जन्मदौ ॥१५॥
एकदा नारदो ब्रह्मा जग्मतुर्दक्षमन्दिरम् ।
दृष्टा ताभ्यां दक्षपार्श्वे त्वासीना सा सती शुभा ॥१६॥
पित्रा नमस्कृतौ चोभौ सत्या चापि नमस्कृतौ ।
प्रणामान्ते सतीं वीक्ष्य दक्षदत्तशुभासने ॥१७॥
स्थितावातिथ्यविधिना सत्कृतावूचतुर्मुदा ।
ब्रह्मा प्राह मुनिं पश्य नारदेवं महेश्वरी ॥१८॥
कस्य भार्या सुयोग्या स्याद् रेखाः पश्याऽथ मां वद ।
नारदस्तत्र देवेशीं नत्वा प्राह सुकन्यके ॥१९॥
एहि पश्यामि ते हस्तरेखाः का भवसीति यत् ।
विहस्य कन्यया हस्ततले सन्दर्शिते तदा ॥२०॥
धनुर्मीनस्तथा केतुः स्वस्तिकश्च त्रिशूलकम् ।
प्रदीपः कमलं बाणोऽङ्कुशः शंखश्च चक्रकम् ॥२१॥
परशुः सायकः शक्तिः षड्वामे षट् च दक्षिणे ।
क्रमाद्धस्ते नारदेन दृष्टान्येतानि रेखया ॥२२॥
ललाटेऽक्षि तृतीयं च कला चन्द्रस्य वक्रगा ।
हृदये शिवमूर्तिश्च स्वर्णरेखामयी शुभा ॥२३॥
नाभेरूर्ध्वे चर्मचिह्नमधश्च करवालकम् ।
धनुर्बाणेन युक्तं च पदोः सिंहो वृषस्तथा ॥२४॥
शिखरं वल्लिका नागदलं सिंहासनं तथा ।
ऊर्ध्वे रेखे सर्पफणा दृष्टान्येतानि रेखया ॥२५॥
कथितं ब्रह्मणे चापि दक्षाय नारदेन तु ।
नेयं वै मानवी पुत्री नापि दैवी न चाऽपरा ॥२६॥
जगन्माता गुरूणां च गुर्वी परा तु वैष्णवी ।
कृष्णांगना च वा नारायणवामा परेश्वरी ॥२७॥
ब्रह्मांगना च वा विष्णोरंगना परमेश्वरी ।
शिवांगना भवेद्यद्वा नान्या स्याज्जगदंबिका ॥२८॥
मन्येऽस्या हृदि शर्वोऽस्ति नेत्रचन्द्रौ ललाटके ।
करे त्रिशूलरेखाऽस्ति चरणे वृषभो हरिः ॥२९॥
अतः शिवस्य रत्नं स्यान्नान्यस्य कस्यचिद् ध्रुवम् ।
सलज्जाऽधोमुखी श्रुत्वा भूत्वा विहस्य सत्वरम् ॥३०॥
गृहान्तरे जगामाथ मात्रे न्यवेदयच्च तत् ।
असिक्न्या च गृहात्तत्र बहिरागत्य तौ तदा ॥३१॥

नमस्कृतौ जलभोज्यफलाद्यैश्च प्रपूजितौ ।
दक्षेण वन्दितौ वृद्धौ सती तावद्गृहात्पुनः ॥३२॥
भर्गचित्रं स्वलिखितं नीत्वा बहिरुपागता ।
सहासा दर्शितवती ओमित्यर्थं महर्षये ॥३३॥
ननाम नारदं सा च ब्रह्माणं प्रणनाम सा ।
ब्रह्मा प्राह तदानीं मस्तके दत्वा करांजलिम् ॥३४॥
यस्त्वां कामयते यं त्वं तथा कामयसे सति ! ।
तमाप्नुहि पतिं देवं सर्वज्ञं जगदीश्वरम् ॥३५॥
यो नान्यां जगृहे नापि गृह्णाति न ग्रहीष्यति ।
जायां स ते पतिर्भूयादनन्यसदृशः शुभे ॥३६॥
इत्युक्त्वा सुचिरं तां वै स्थित्वा दक्षालये पुनः ।
विसृष्टौ तेन संयातौ स्वस्थानं तौ समुद्रजे ॥३७॥
दक्षोऽभवत् तदा प्रीतो मन्यमानः स्वधन्यताम् ।
सती च वर्धमानाऽऽप किंचिद्यौवनभावनाम् ॥३८॥
दक्षश्च चिन्तयामास सतीयोग्यं वरं शिवम् ।
बाल्यं व्यतीतं पुत्र्या मे कौमार्यं विगतं तथा ॥३९॥
प्रोद्भिन्नान्तर्वयोयुक्तामुद्वाहाऽर्हसुकन्यकाम् ।
तपोभिः स्वर्णरूपाढ्यां दास्ये भर्गाय सर्वथा ॥४०॥
सती स्वयं तथा भर्गं प्राप्तुमैच्छत् हृदन्तरे ।
पितुश्च निर्णयं ज्ञात्वा मातरं प्राह सा सती ॥४१॥
शंकरस्य कृते मातस्तपोव्रतादि दर्शय ।
तवाऽऽज्ञया व्रतं कुर्वे शिवसन्तोषणाय वै ॥४२॥
मातुराज्ञां तु सा लब्ध्वा शिवं प्राप्तुं दृढव्रता ।
गृहे त्वाराधयामास व्रतैश्च विविधैः सती ॥४३॥
ईषशुक्लाऽष्टमीनन्दातिथावानर्च शंकरम् ।
गुडौदनैः सलवणैः षोडशाद्युपचारकैः ॥४४॥
कार्तिकस्य चतुर्दश्यामपूपैः पायसैरपि ।
शोडशाद्युपचारैश्च पुपूज शंकरं सती ॥४५॥
मार्गशीर्षेऽसिताष्टम्यां सतिलैः स यवौदनैः ।
षोडशाद्युपचारैश्च पुपूज शंकरं सती ॥४६॥
पौषे तु शुक्लसप्तम्यां कृत्वा जागरणं निशि ।
प्रातः सा कृशरान्नेन पुपूज शंकरं सती ॥४७॥
माघे तु पूर्णमास्यां सा कृत्वा जागरणं निशि ।
आर्द्रवस्त्रा नदीतीरेऽकरोच्छंकरपूजनम् ॥४८॥
फाल्गुने शिवरात्र्यां च व्रतं जागरणं निशि ।
शैलूषैः षोडशार्थैश्च साऽऽनर्च तं दिवानिशम् ॥४९॥
चैत्रे शुक्लचतुर्दश्यां पलाशैर्दमनैः शिवम् ।
षोडशाद्युपचारैश्च दिवा रात्रावपूजयत् ॥५०॥
राधशुक्लतृतीयायां तिलाहारयवौदनैः ।
नवैश्च षोडशार्थैश्चाऽपूजयच्छंकरं सती ॥५१॥
ज्येष्ठस्य पूर्णिमारात्रौ निराहारा च शंकरम् ।
वसनैर्बृहतीपुष्पैरपूजयद्व्रते सती ॥५२॥
आषाढस्य चतुर्दश्यां शुक्लायां कृष्णवाससा ।
बृहतीकुसुमैः शंभुमपूजयद्व्रते सती ॥५३॥
श्रावणस्य सिताष्टम्यां चतुर्दश्यां च सा शिवम् ।
यज्ञोपवीतैर्वासोभिः पवित्रैरप्यपूजयत् ॥५४॥
भाद्रे कृष्णत्रयोदश्यां बहुपुष्पफलैः सती ।
पूजयित्वा चतुर्दश्यां चकार जलभोजनम् ॥५५॥
नानाविधपत्रपुष्पफलैस्तत्कालजैः सती ।
चक्रे सुनियताऽऽहाराऽधिकमासे शिवव्रतम् ॥५६॥
नित्यं च सर्वमासेषु शिवपूजापरायणा ।
दृढव्रताऽभवद्देवं नान्यत् सस्मार तं विना ॥५७॥
इत्थं नन्दाव्रतं कृत्स्नं समाप्य तापसी सती ।
दध्यौ शिवं त्र्यवस्थासु योगिनीव कृतादरा ॥५८॥
कृशाकृशांगी तपसा तेजोमूर्तिः सुरूपिणी ।
जाता शिवमयी सौम्या शिवांऽकाऽर्हणतां गता ॥५९॥
जन्मजयन्त्यां सत्याश्च द्वादशाब्दे महोत्सवे ।
दक्षेणाऽऽकारिता देवा मनवोऽन्ये महर्षयः ॥६०॥
तदा तु सर्वतो देवा मुनयश्चाखिलाः प्रिये ।
अहं ब्रह्मा च दिक्पाला लोकपालाः सुरादयः ॥६१॥
आशीर्वादान् प्रदातुं च जग्मुर्दक्षगृहे तदा ।
सत्कृताश्च महत्यां वै सभायां सर्वदेवताः ॥६२॥
आशीर्वादान् ददुः सत्यै प्रणनाम सतीच तान् ।
पूर्वं दृष्टा सती पुष्टा तपसाऽर्धापि नास्ति यत् ॥६३॥
दृष्ट्वा सतीतपस्तादृक् ज्ञात्वा शिवार्थमेव तत् ।
प्रसन्नाः सर्वदेवाद्याश्चक्रुर्देव्यै नतिं मुहुः ॥६४॥
प्राहुः सति ! तपश्चातिकष्टप्रदं तु मा कुरु ।
अवश्यं ते पतिः शर्वो महादेवो भविष्यति ॥६५॥
आशीर्वादान्प्रयुज्यैवं गृहीत्वाऽर्हणमित्यथ ।
प्रशशंसुस्तपस्तस्याः सिद्धावस्थां गतां सतीम् ॥६६॥
दक्षोक्तिं च सतीच्छां च सम्प्राप्य मुनयः सुराः ।
पूजां प्राप्य सतीं नत्वा जग्मुः कैलासभूभृतम् ॥६७॥
सावित्रीहितो ब्रह्मा लक्ष्मीनारायणस्तथा ।
रमया सहितो विष्णुर्देवीभिः सहिताः सुराः ॥६८॥
सप्तर्षयः स्वपत्नीभिः सहिता मनवस्तथा ।
जग्मुः कैलासशिखरं यत्र देवो महेश्वरः ॥६९॥

गत्वा शंभुं प्रणम्यैव दृष्ट्वा शान्तं च योगिनम् ।
तुष्टुवुर्विविधैः स्तोत्रैर्बद्धांजलिपुटा मुदा ॥७०॥
नमोऽक्षरस्वरूपाय कृष्णनेत्रात्मने नमः ।
नमः सदाशिवाख्याय तेजःपूजाय ते नमः ॥७१॥
वैराजपुत्ररूपाय ब्रह्मचर्याय ते नमः ।
नमो ब्रह्मस्वरूपाय सदा शान्ताय ते नमः ॥७२॥
निर्गुणाय गुणाढ्याय वैष्णवाय नमोनमः ।
अव्यक्तरात्रिदेहाय निर्विकाराय ते नमः ॥७३॥
महेशाय परेशाय शिवाऽधिपतये नमः ।
क्वचिच्छान्तिकृते कादाचित्कसंहारिणे नमः ॥७४॥
नमः शेषाय संकर्षणस्वरूपाय ते नमः ।
नमो वैराग्यवासाय सतीरागाय ते नमः ॥७५॥
न यस्य देवा ऋषयः सिद्धाः साध्यश्च साधवः ।
विदुः पदं स्वरूपं च तस्मै शिवाय ते नमः ॥७६॥
पदं दिदृक्षवो यस्य यतन्ते योगिनः सदा ।
तस्मै नमः परेशाय योगस्थाय नमोनमः ॥७७॥
अनन्तसिद्धियुक्ताय गिरां दूराय ते नमः ।
नम आत्मप्रकाशाय निर्वाणस्थाय ते नमः ॥७८॥
ज्ञानिने ते नमश्चास्तु निष्क्रियायाऽऽत्मवेदिने ।
तपसा द्राक् प्रसन्नाय सर्वदात्रे च ते नमः ॥७९॥
त्रिनेत्राय सचन्द्राय सर्वाध्यक्षाय ते नमः ।
शरणायातप्रार्थ्यार्थलाभदाय च ते नमः ॥८०॥
ऐश्वर्याणां प्रदात्रे ते मोक्षदाय च ते नमः ।
भक्तेष्टपूरकायाऽम्नायोदधये च ते नमः ॥८१॥
स्वप्रकाशाय नित्याय प्रत्यक्द्रष्ट्रे च ते नमः ।
सकामा वाथ निष्कामा भक्तास्ते शरणागताः ॥८२॥
अप्राप्य सिद्धिं यस्मान्न निवर्तन्ते च ते नमः ।
काचित्कन्या त्वदर्थे वै करोति तप उत्कटम् ॥८३॥
त्वं कथं चाऽकरुणोऽसि प्रसन्नो भव ते नमः ।
लोककार्यप्रवाहार्थे विचारं कुरु शंकर ॥८४॥
अध्यात्मयोगगम्यं त्वां प्रणमामः स्तुमो वयम् ।
न त्वं देवोऽसुरो मर्त्यो न तिर्यङ्न द्विजः पशुः ॥८५॥
न स्त्री न षंढो न पुमान् योऽसि सोऽसि च ते नमः ।
विश्वलयकृते विश्वधारिणे प्रणता वयम् ॥८६॥
सांख्या ज्ञानेन पश्यन्ति समाधौ योगिनश्च यम् ।
भक्ताः कृपया पश्यन्ति त्रयीमयं च ते नमः ॥८७॥
नमो भक्तोद्धारकर्त्रे नमस्ते गूढवर्चसे ।
नमः प्रत्यक्षदेवाय चाऽपरोक्षानुभूतये ॥८८॥
कालरात्रिविलासाय दक्षपुत्र्यार्थिताय च ।
प्रवृत्ताय नमस्तुभ्यं निवृत्ताय च ते नमः ॥८९॥
भक्तेच्छापूरक ! स्वामिन् ! पूरयेच्छां च वेधसः ।
तूष्णीमासन्नितिस्तुत्वा श्रुत्वा शंभुर्जहास वै ॥९०॥
दृष्ट्वा देवमुनींश्चान्यान् सस्त्रीकाँश्च यथोचितम् ।
स्वागतं चातिथेयं च कृत्वा पप्रच्छ कारणम् ॥९१॥
हे विष्णो हे विधे देवा हे मुनिप्रवरर्षयः ।
निजागमनहेतुं वै कथयध्वं यथार्थतः ॥९२॥
सस्त्रीका आगताः सर्वे किं कार्यं विद्यते मम ।
इति पृष्टास्तदा ब्रह्मा विष्णुना परिनोदितः ॥९३॥
प्राह शंभुं मिष्टवाण्या देव तेऽविदितं नहि ।
तथापि लोकधर्मत्वात्कथनीयं शृणु प्रभो ॥९४॥
विशेषतः सहार्थार्था वयं सुरनरादयः ।
असुरा बहुधा सृष्टौ जायन्ते च मुहुर्मुहुः ॥९५॥
तत्र केचिन्मम वध्या हरेर्वध्याश्च केचन ।
अतिक्रूरास्तव वध्या देवीवध्यास्तथाऽपरे ॥९६॥
अन्ये त्वद्वीर्यपुत्रस्य वध्याश्चापि भवन्ति वै ।
अनाशयित्वा तान्दुष्टान् जगत्स्वास्थ्यं न निर्भयम् ॥९७॥
त्वयि रागद्वेषशून्ये योगमार्गे स्थिते सति ।
दयामात्रस्वभावे ते नष्टा न स्युः कदाचन ॥९८॥
तपः प्रकुर्वतां तेषां वरैः पुष्टिर्यदि ध्रुवा ।
तदा तु सात्त्विको सृष्टिः कथं सुस्था भविष्यति ॥९९॥
अतश्च भविता युक्तमयुक्तेषूच्छ्रितेषु वै ।
सृष्टिस्थित्यन्तकर्माणि कार्याण्यस्माभिरेवह ॥१००॥
वयं त्वेकस्वरूपा हि भिन्नाः कार्यस्य भेदतः ।
कार्यभेदो न सिद्धश्चेद् रूपभेदोऽप्रयोजनः ॥१०१॥
अहं विष्णुश्च सस्त्रीकौ सुजातौ कार्यहेतुतः ।
तथा त्वमपि सस्त्रीको भव विश्वहिताय वै ॥१०२॥
परिगृह्णीष्व भार्यार्थे रामामेकां सुशोभनाम् ।
स्त्रियं विवाह्य लोकस्य कुरु कार्यं महत्तमम् ॥१०३॥
यथा पद्मालया विष्णोः सावित्री च यथा मम ।
तथा सहचरीं शंभो कान्तां गृह्णीष्व कामिनीम् ॥१०४॥
शंभुर्विहस्य ब्रह्माणं विष्णुं च प्राह तात्त्विकम् ।
हे ब्रह्मन् हे हरे मे स्थो युवां प्रियतरौ सदा ॥१०५॥
युवयोर्दर्शनादद्याऽऽनन्दो मे जायतेऽधिकः ।
भवद्भ्यां तु मदर्थे यन्निश्चितं व्यावहारिकम् ॥१०६॥
युक्तमेव भवेत् किन्तु मे हृदि रोचते नहि ।
तपस्विनो विरक्तस्य योगमार्गाऽतिगस्य च ॥१०७॥

ज्ञानिनः कामशून्यस्य स्वात्मारमस्य सर्वथा ।
निवृत्तस्याऽऽत्मद्रष्टुश्च कामिन्या किं प्रयोजनम् ॥१०८॥
आत्मनो योगलग्नस्य ममाऽऽनन्दः सदाऽस्ति वै ।
नान्यसंसर्गसंप्राप्ताऽऽनन्दशेषी भवाम्यहम् ॥१०९॥
विवाहो बन्धनं रौद्रं द्वयोरेव परस्परम् ।
योगिनस्तत्किमर्थं वै निराशस्य बलान्नयेत् ॥११०॥
तस्मात्पत्न्या रुचिर्मे नो सत्यं वः प्रवदाम्यहम् ।
विष्णुः प्राह तदा श्रुत्वा शंभुं श्रीकृष्णदर्शितम् ॥१११॥
गोलोके यत्प्रतिज्ञातं सृष्टौ कार्ये यदा भवेत् ।
यदावश्यकता ते स्यात्तदा दास्ये विभावरीम् ॥११२॥
काले गृहीत्वा प्रकृतिं श्रृंगारं च करिष्यसि ।
काले गृही तथा काले तपस्वी भव वांच्छया ॥११३॥
विधुरो मंगलायाऽत्र कल्प्यते नहि कुत्रचित् ।
विधुरस्य सस्त्रीकेषु वासोऽपि भयदो भवेत् ॥११४॥
समो भूत्वा समेष्वेव मान्यो भवति नाऽसमः ।
समेषु विषमो नश्येत् नश्येयुर्विषमात्समाः ॥११५॥
सृष्टिशासनकर्तॄणां गृहस्थानां समानता ।
सदा चापेक्ष्यते तस्मात् सपत्नीको भवाऽधुना ॥११६॥
नहि वै विधुरो भ्राता स्त्रीषु विश्वासभूमिकः ।
नहि यज्ञादिपैत्र्यादिकार्ये योग्यो विना स्त्रीयम् ॥११७॥
अमंगलः सदा नारीशून्यो भवति कर्मठः ।
अकर्मठस्तथा नारीयुक्तश्चाऽमंगलो भवेत् ॥११८॥
सृष्टिकार्याधिकृतस्त्वं शंभो माऽमंगलो वस ।
सदा सुमंगलो भूत्वा तिष्ठाऽरमत्सु विचार्य च ॥११९॥
संस्मृत्य कृष्णवचनं सदारो भव शंकर ।
श्रुत्वैवं वचनं विष्णोः स्मृत्वा कृष्णोक्तिमित्यथ ॥१२०॥
नित्यसिद्धशिवाप्राप्तिं धर्मं विचार्य शंकरः ।
प्राह विष्णो करिष्यामि भवदुक्तं सदा हितम् ॥१२१॥
मत्वा वचो गरिष्ठं वो नियोगं श्रीहरेस्तथा ।
करिष्यामि विवाहं वै कृष्णवश्योऽस्म्यहं सदा ॥१२२॥
परन्तु यादृशीं कान्तां ग्रहीष्यामि श्रृणुश्व ताम् ।
या मे तेजो ग्रहीतुं धारयितुं सुदृढा भवेत् ॥१२३॥
अहं योगी यथा ज्ञानी सापि मत्सदृशी भवेत् ।
रणे योगे च विज्ञाने गुणैश्वर्ये रतौ समा ॥१२४॥
एवं न चेद्विनोद्वाहं स्थातव्यं सुखतः सदा ।
तस्माज्जायां प्रादिश त्वं मत्समा वर्तते यदि ॥१२५॥
तत्राप्येकः पणो मे स्यात् तया भाव्यं तथा मयि ।
अविश्वासो मदुक्ते चेत् मया त्यक्ता भविष्यति ॥१२६॥
इति शंभोर्वचः श्रुत्वा विष्णुर्ब्रह्मा विहस्य तम् ।
प्राहतुर्यादृशी प्रेष्ठा तेऽस्त्यस्माभिः सुमार्गिता ॥१२७॥
गोलोके कृष्णहृदयात् या शिवा नेत्रयोः स्थिता ।
वैराजनेत्रयोः स्थित्वा देवेन्द्रियेषु तैजसी ॥१२८॥
स्थिता या शेषशायिश्रीहरेरिन्द्रियमण्डले ।
रात्रिर्विभावरी शंभो या शिवा वामगा च ते ॥१२९॥
अपृथक्सिद्धसम्बद्धा सा सती दक्षपुत्रिका ।
त्वादृशी सा भवेद् भार्याऽधिकतेजोबलान्विता ॥१३०॥
सा तपस्यति देवेश त्वदर्थं हि दृढव्रता ।
त्वां पतिं प्राप्तुकामा सा दक्षगेहेऽस्ति कन्यका ॥१३१॥
दातुं गच्छ वरं तस्यै कृपां कुरु महेश्वर ।
तां विवाहय सुप्रीत्या वरं दत्त्वा यथेष्टदम् ॥१३२॥
अत्रागतानां देवानां संकल्पं परिपूरय ।
मंगलं परमं भूयात् पश्यामश्च तदुत्सवम् ॥१३३॥
श्रुत्वा तु शंकरः प्राह ओमिति स्वीकृतं मया ।
यामि तपःफलं दातुं भवन्तो यान्तु भो सुराः ॥१३४॥
पुनर्वो दर्शनं भाव्यं विवाहोत्सवकर्मणि ।
इत्याज्ञताः सत्कृताश्च ब्रह्मविष्णुसुरादयः ॥१३५॥
दत्वाऽऽशीर्वादवचनं 'सफलोऽस्तु मनोरथः' ।
जग्मुः स्वं स्वं निकेतं ते सस्त्रीकाश्चातिहर्षिताः ॥१३६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने शंभोर्वैराजललाटादुत्पत्तिः, शिवाया दक्षगृहे प्राकट्योत्तरं ब्रह्मनारदागमः, नारदकथितचिह्नरेखाभिः शिवपत्नीत्वनिश्चयेन सत्या वार्षिकतपोव्रतकरणम्, द्वादशे वार्षिकसतीजन्मजयन्त्या उत्सवे ब्रह्मविष्णुसुराणां सस्त्रीकानामागमनं, सतीतपः प्रेक्ष्य ब्रह्मादीनां कैलासगमनं, सतीपाणिग्रहणवरदानार्थं शंकरायोपदेश इत्यादिनिरूपणनामैकसप्तत्यधिकशततमोऽध्यायः ॥१७१॥

**श्रीनारायण उवाच—**

श्रूयतां मे प्रिये लक्ष्मि प्रियार्थं शंभुरुत्सुकः ।
गन्तुं दक्षगृहं चिन्तां चकारोद्बुद्धभावनः ॥ १ ॥
अथो सती पुनः शुक्लपक्षेऽष्टम्यामुपोषिता ।
आश्विने पूजयामास षोडशार्थैश्च शंकरम् ॥ २ ॥
इत्थं नन्दाव्रते पूर्णे नवम्यां दिवसे हरः ।
सर्वांगसुन्दरो देवः प्रत्यक्षमभवच्छिवः ॥ ३ ॥

गौरवर्णः पंचवक्त्रस्त्रिनेत्रश्चन्द्रशेखरः ।
प्रसन्नात्मा नीलकण्ठश्चतुर्बाहुः सवासुकिः ॥ ४ ॥
त्रिशूलरुद्राक्षवरकमलभस्मशोभितः ।
गंगया शोभितजटः सर्वांगस्वर्णसन्निभः ॥ ५ ॥
महालावण्यसौन्दर्यसौकुमार्यशरीरकः ।
कोटिकामातिकान्तश्च कोटिचन्द्रसमाननः ॥ ६ ॥
उद्भिन्नयौवनाक्रान्तः सर्वथा स्त्रीमनोहरः ।
प्रत्यक्षं शंकरं दृष्ट्वा सती मत्वा स्वकं धनम् ॥ ७ ॥
अतीव हृदि संहृष्टा सुलज्जावनतानना ।
ववन्दे चरणौ शंभोश्चक्षुर्भ्यामपिबन्मुखम् ॥ ८ ॥
मनसाऽर्पितसर्वस्वाऽमन्यत स्वां महोदयाम् ।
ततो हरस्तु भार्यार्थमिच्छन्नपि मनःप्रियाम् ॥ ९ ॥
सत्याः हृदयभावोत्थां प्रीतिं वेत्तुं तु शाश्वतीम् ।
श्रोतुं प्रियाणि वाक्यानि सतीं प्राह कृतव्रताम् ॥१०॥
सुरूपां सुभगां स्वर्णवर्णां प्राप्ताल्पयौवनाम् ।
स्वार्पितां च स्वकां पत्नीं क्षणं दृष्ट्वा मुमोह च ॥११॥
जगाद सुव्रते कन्ये ! प्रीतोऽस्म्यनेन दक्षजे ।
नन्दाव्रतेन संदास्ये वरं वरय चेप्सितम् ॥१२॥
तदा सती त्रपायुक्ताऽभवत्प्रेमपरिप्लुता ।
यज्ञोपवीतं संगृह्य हृत्स्थं वक्तुं शशाक न ॥१३॥
ज्ञात्वा हार्दं सदाकान्तः प्रसन्नोऽतीव शंकरः ।
वरं ब्रूहि वरं ब्रूहि वरं ब्रूहि पुनः पुनः ॥१४॥
साप्तपदीनमेवाऽत्र मैत्र्यमिच्छन् जगाद ताम् ।
सती प्राह–व्रतं प्रेक्ष्य, तपः प्रेक्ष्य, विलोक्य हृत् ॥१५॥
दृष्ट्वाऽवस्थां, प्रेक्ष्य भर्गचित्रं यल्लिखितं मया ।
ज्ञात्वोपवीतग्रहणं, दूराच्च भवदागमम् ॥१६॥
साप्तपदीनं यन्मैत्र्यं वरं देहि यदिच्छसि ।
ततो वाक्यस्याभिहार्दमनुप्राप्य स्फुटं हरः ॥१७॥
प्राह वाक्यप्रपूर्त्यर्थं–'देहि तेऽर्धांगनात्मकम्' ।
कथं न वाक्यशेषार्थं प्रिये ज्ञापयसि द्रुतम् ॥१८॥
दत्तं मैत्र्यं मम भार्या भवेति वरदानकम् ।
प्राप्य शंभोर्वचो मिष्टं प्रेममग्नाऽभवत् सती ॥१९॥
तूर्ष्णीं तस्थौ च मुदिता वरं प्राप्य मनोगतम् ।
सतृष्णमानसा चारुहास्ययुक्तानना सती ॥२०॥
अकरोन्निजभावांश्च हावान्प्रेमविवर्धकान् ।
हावभावविलासांश्च समाश्रित्य तयोर्हृदि ॥२१॥
शृंगारप्रेमरसः संविवेशाऽऽशु तयोस्तदा ।
काऽप्यभिख्या प्रादुरासील्लोकलीलाऽनुकुर्वतोः ॥२२॥
रेजे सती हरं प्राप्य चन्द्रं प्राप्येव शर्वरी ।
सुखं वक्षसि संश्लिष्य चिरं स्पर्शं विधाय च ॥२३॥
सत्युवाच हरं प्रेम्णा करौ बध्वा नतानना ।
देवदेव पतिदेव विवाहविधिना प्रभो ॥२४॥
पितुर्मे गोचरीकृत्य गृहीत्वा याहि मां विभो ।
साग्रहं तद्वचः श्रुत्वा शंकरः सर्वशंकरः ॥२५॥
तथास्त्विति प्रतिभाष्य निरीक्ष्य प्रेमतश्च ताम् ।
शनैर्भावीति मत्वाऽसौ क्षणं चिन्तां जगाम सः ॥२६॥
तावत् सती हरं नत्वा गृहीत्वाऽऽज्ञां ससंभ्रमा ।
शंकरागमनं मात्रे शंसितुं सत्वरं गता ॥२७॥
असिक्नी कन्यया प्रोक्तं विदित्वा सत्वरं बहिः ।
भाविजामातृरूपं संद्रष्टुं यावत्प्रयाति वै ॥२८॥
तावच्छंभुं मनाक् दृष्ट्वा स्फटिकोज्ज्वलवर्ष्मकम् ।
अतीव मुमुदेऽसिक्नी शंभुस्त्वदृश्यतां गतः ॥२९॥
जामातरं सुतायोग्यं दृष्ट्वा भाविनमुत्तमम् ।
ध्यात्वा तमेव हृदये परं भाग्यममन्यत ॥३०॥
हरोऽपि स्वीयकैलासं गत्वा प्रविश्य चाश्रमम् ।
ब्रह्माणं चिन्तयामास लोकरीत्यनुसारतः ॥३१॥
ब्रह्मा तूर्णं सरस्वत्या सहितस्तत्र चाऽऽययौ ।
दृष्ट्वा तु वेधसं शंभुः प्रेमबद्धो ह्युवाच तम् ॥३२॥
अहमाराधितः सत्या दक्षपुत्र्याऽतिभक्तितः ।
तस्यै वरो मया दत्तो नन्दाव्रतफलात्मकः ॥३३॥
सत्याऽर्थितं पतिदेव विवाहविधिना प्रभो ।
पितुर्मे गोचरीकृत्य गृहीत्वा याहि मामिति ॥३४॥
तथास्त्विति शनैर्भावि मयोक्तं प्रतिनिर्णये ।
सती च वर्तते मातुरग्रेऽहं त्वागतोऽत्र च ॥३५॥
तस्मात् त्वं गच्छ भवनं दक्षस्य मम कारणात् ।
दक्षः कन्यां स्वकीयां मे यथा दद्यात्तथा कुरु ॥३६॥
ब्रह्मोवाच हरं शंभो देवानां मम शार्ङ्गिणः ।
आग्रहः सर्वथा सोऽस्ति देवकार्यप्रसक्तये ॥३७॥
विवाहस्त्वरया ते स्यात्तथा कुर्मो वयं द्रुतम् ।
दक्षस्तुभ्यं सुतां स्वां च स्वयमेव प्रदास्यति ॥३८॥
शीघ्रं यथा तथा तं च प्रवक्ष्यामि च शं कुरु ।
कैलासे ब्रह्मणा शंभोरेवं वार्ता प्रवर्तते ॥३९॥
एतस्मिन्नन्तरेऽसिक्नी दक्षं प्राह सतीव्रतम् ।
तपस्तप्त्वा वरं प्राप्य मनोऽभिलषितं सती ॥४०॥
शंकरदर्शनं लब्ध्वा कृतकृत्या ह्यजायत ।
श्रुत्वा दक्षः सतीं प्राह पुत्रि सुखवती भव ॥४१॥

दक्षे जिज्ञासिते सर्वं समाचख्यौ सतीव्रतम् ।
महेश्वराद्वरप्राप्तिं पाणिग्रहणकारिणीम् ॥४२॥
माता पिता च वृत्तान्तं सर्वं श्रुत्वा सतीमुखात् ।
आनन्दं परमं लेभे चक्रे च परमोत्सवम् ॥४३॥
सती नन्दाव्रतस्याऽन्ते लेभे शंभोः प्रदर्शनम् ।
तन्निमित्तं व्रतपूर्तौ महोत्सवमकारयत् ॥४४॥
ददौ दानानि विप्रेभ्यो द्रव्यरत्नाऽम्बराणि च ।
अन्येभ्यश्चान्धदीनेभ्यो वीरिण्यपि ददौ धनम् ॥४५॥
सती च स्ववयस्याभ्यः कन्याभ्यो भोजनं ददौ ।
धनवस्त्राऽभ्यंजनादिद्रव्याणि च ददौ मुदा ॥४६॥
वीरिणी तां समालिंग्य स्वपुत्रीं सिद्धभावनाम् ।
मूर्ध्न्युपाघ्राय मुदिता प्रशशंस मुहुर्मुहुः ॥४७॥
दक्षोऽथ चिन्तयामासाऽऽगतोऽपि शंकरः स्वयम् ।
प्रतिनिवृत्तो मे कन्यामगृहीत्वा कथं गतः ॥४८॥
आगतोऽपि महादेवः प्रसन्नो निर्जगाम ह ।
पुनरेवं कथं सोऽपि सुताऽर्थेऽत्राऽऽगमिष्यति ॥४९॥
केन योगेन देयेयं स्वसुता शंभवेऽधुना ।
प्रस्थाप्योऽथ मया कश्चिच्छंभोर्निकटमंजसा ॥५०॥
यदि वचो न गृह्णीयात् सर्वं मे विफलं भवेत् ।
यद्वा मे तनया नन्दाव्रतं कुर्यात्पुनस्तथा ॥५१॥
शंभुर्भवतु मद्भर्तेत्येवं पुनरवाप्नुयात् ।
इत्येवं कुर्वतश्चिन्तां दक्षस्य पुरतोऽप्यजः ॥५२॥
सरस्वत्या सहितश्चोपस्थितो भावतस्तदा ।
दक्षस्तं पितरं दृष्ट्वा प्रणम्याऽवनतोऽभवत् ॥५३॥
ददावासनमग्र्यं चाऽर्हणां चक्रेतिभक्तितः ।
पप्रच्छाऽऽगमने हेतुं स्नेहं कार्यं च वा परम् ॥५४॥
ब्रह्मोवाच शृणु दक्ष यदर्थमहमागतः ।
तव पुत्र्या तपस्तप्त्वा महादेवं प्रसाद्य च ॥५५॥
लब्धो वरश्च यस्तस्य समयोऽयमुपस्थितः ।
तदर्थमेव निर्धार्य शंभुना प्रेषितोऽस्मि वै ॥५६॥
ततोऽत्रार्थे च यत्कृत्यं श्रेयस्तदवधारय ।
वरदानोत्तरं रुद्रस्त्वत्सुतां हृदये स्थिताम् ॥५७॥
ध्यात्वा स्मृत्वा पुनश्चेमां न शर्म लभतेंऽजसा ।
कामं यो जीतवान् देवः स वै कामेन विध्यते ॥५८॥
सतीं विचिन्तयन्नास्ते व्याकुलः प्राकृतो यथा ।
प्रकृतां सार्थकां वाणीं परित्यज्य गणान् क्वचित् ॥५९॥
क्व सतीति जनमध्ये भाषते त्वत्सुतां गृणन् ।
मया त्वया च कामेन कृष्णेन ऋषिभिस्तथा ॥६०॥
पूर्वं यद्वाञ्छितं चासीत् सिद्धं तदधुना ध्रुवम् ।
त्वत्पुत्र्याराधितः शंभुः शंभुनाऽऽराध्यते सती ॥६१॥
तस्माद्दक्ष सुतां स्वीयां शंभ्वर्थं परिकल्पिताम् ।
तस्मै देह्यविलम्बेन कृतकृत्यो भवान्भवेत् ॥६२॥
अहं शंभुमानयिष्ये नारदेन त्वदालयम् ।
सतीं तस्मै संप्रयच्छ विवाहविधिना सुत ॥६३॥
दक्षः श्रुत्वा पितुर्वाक्यं तथेति प्राह हर्षितः ।
ब्रह्मा सत्कारमादाय जग्मिवान् शंकरगृहम् ॥६४॥
स वीक्ष्य लोकस्रष्टारं प्रसन्नमनसं हरः ।
कार्यसिद्धिं विनिश्चित्य प्रणनाम पितामहम् ॥६५॥
पप्रच्छ किमकार्षीद् वै दक्षः सतीकृते इति ।
ब्रह्मोवाच तदा शंभुं कार्यं सिद्धं तवास्ति हि ॥६६॥
देया पुत्री शंभवेऽस्ति दक्षस्य निर्णयो ध्रुवः ।
मम वाक्यस्य मान्यत्वात् सत्याश्चैव तपोबलात् ॥६७॥
त्वया वरप्रदानाच्च सती देयाऽस्ति शंभवे ।
शुभे लग्ने सुमुहूर्ते समागच्छतु शंकरः ॥६८॥
तदा दास्यामि तनयां भिक्षार्थं शंभवे सतीम् ।
इत्युवाच स मां दक्षस्तस्मात्त्वं गच्छ तद्गृहम् ॥६९॥
रुद्रः प्राह तदा लोकरीतिमाश्रित्य वेधसम् ।
गमिष्यामि त्वया सार्धं नारदेन च तद्गृहम् ॥७०॥
तस्मात्त्वं नारदं चैव मरीच्यादींश्च सन्मुनीन् ।
संस्मर तैः समं दक्षगृहं यास्यामि शोभया ॥७१॥
इत्यादिष्टः परमेष्ठी सस्मार नारदादिकान् ।
ततः समागताः सर्वे मानसाः परमर्षयः ॥७२॥
सस्त्रीकाः सबन्धुवर्गा देवाश्च पितरस्तथा ।
विष्णुः समागतस्तत्र लक्ष्म्याश्च पार्षदैः सह ॥७३॥
श्रीकृष्णो गोलोकधाम्नश्चायातो राधिकायुतः ।
गोपगोपीगणैर्युक्तो दासीलक्षसमन्वितः ॥७४॥
वैकुण्ठाच्च रमायुक्तो नारायणः समागतः ।
कोटिवैष्णवपार्षददासदासीसमन्वितः ॥७५॥
इन्द्रश्च वरुणो वायुरग्निः कुबेर इत्यमी ।
यमः सूर्यश्च चन्द्रश्च तथाऽन्या गृहदेवताः ॥७६॥
ऋषयो मुनयो विप्राः साध्व्यः साधुजनास्तथा ।
देव्यश्चाप्सरसश्चान्या नर्तक्यो गायिकास्तथा ॥७७॥
समाजग्मुः शंकरस्य वाहिन्यां कृतकौतुकाः ।
अथ चैत्रसिते पक्षे नक्षत्रे भगदैवते ॥७८॥
त्रयोदश्यां दिने भानौ निरगच्छत् महेश्वरः ।
कैलासात्तु सुरैः सार्धं ब्रह्मविष्णुपुरःसरैः ॥७९॥

मुनिभिः ऋषिभिः सार्धं गच्छन् बभौ महेश्वरः ।
गणाश्च कोटिशो याता वरपक्षमहोत्सवाः ॥८०॥
मार्गे समुत्सवो जातो वाहिन्या गच्छतां तदा ।
देवादीनां गणानां च सानन्दमनसां तथा ॥८१॥
महालक्ष्म्याः शंकरस्य शृंगारः स्थानतः कृतः ।
जटा तु गंगया मूर्तिमत्या संशोभिता तदा ॥८२॥
ललाटे कलया चन्द्रो भूषणं समजायत ।
वासुकिश्चोपनीत्यर्थं वामांसे वर्तते सुखम् ॥८३॥
रुद्राक्षमुण्डहाराश्च धृता कण्ठे विषाश्रिते ।
त्रिशूलं संधृतं हस्ते गजचर्म च पृष्ठके ॥८४॥
व्याघ्रचर्म कटिप्रान्ते धृतं भस्म शरीरके ।
पादयोः पादुके गुप्ते कौपीनं मृगचर्मजम् ॥८५॥
कट्यां तु कुहकः सर्पो मेखलाभूषणार्थकः ।
एवं शृंगारितः शंभुर्बलीवर्दोपरिस्थितः ॥८६॥
अन्ये च वाहने भिन्ने भिन्ने स्थिताः शिवेच्छया ।
गरुडस्थौ तदा विष्णुर्लक्ष्मीश्च ययतुर्मुदा ॥८७॥
हंसस्थौ च तदा ब्रह्मा सावित्री ययतुर्मुदा ।
रथस्थाः सूर्यचन्द्राद्या गजस्था इन्द्रदेवताः ॥८८॥
विमानयानवाहस्थाः ऋषयो मुनयस्तदा ।
नार्यो विमानमध्यस्था व्योमगामिसुवाहनाः ॥८९॥
रथगुप्तिमध्यगता गायन्ति गीतिकास्तदा ।
वादित्राणि च वाद्यन्ते स्तूयन्ते बन्दिभिस्तदा ॥९०॥
आशीर्वादाः प्रदीयन्ते मुनिभिर्भूसुरैस्तथा ।
एवं सा वाहिनी शंभोः किंकिणीजालशब्दिताः ॥९१॥
शोभिता दिव्यनारीभिर्देवमूर्तिचमत्कृता ।
प्रापद् दक्षराजधानीसमीपे शंभ्वधिष्ठिता ॥९२॥
ततो दक्षो विनीतात्मा संप्रहृष्टतनूरुहः ।
प्रययौ सन्मुखं शंभोः संयुक्तः सकलैर्निजैः ॥९३॥
सर्वे देवाश्च मुनयः ऋषयः प्रमदाजनः ।
जलपानादिना तत्र स्वयं दक्षेण सत्कृताः ॥९४॥
दक्षालयं तदा प्राप्याऽऽसनेषु मुनयः स्थिताः ।
वृद्धा देवाश्च ऋषयो यथायोग्यं प्रतिष्ठिता ॥९५॥
दक्षः सम्मानयामास गृहाभ्यन्तरतः शिवम् ।
समानर्च विधानेन दत्वाऽऽसनमनुत्तमम् ॥९६॥
ततो विष्णुं च देवाँश्च ब्रह्माणं सर्वभूसुरान् ।
गणाँश्च पूजयामास सद्भक्त्या वस्तुभिर्मुदा ॥९७॥
भोजयामास मृष्टान्नैस्तर्पयामास पानकैः ।
रंजयामास शृंगारैः प्रोक्षयामास सौरभैः ॥९८॥
ताम्बूलादिप्रदानैः संभावयामास चासनैः ।
कृत्वा यथोचितां पूजां चकार संविदं सुरैः ॥९९॥
मुनिभिश्च ततो ब्रह्मा प्रेरितोऽत्र विधानके ।
दक्षेणाऽभिहितश्चैव कार्यं वैवाहिकं तु यत् ॥१००॥
कारयामास विधिवत् प्रहृष्टेनान्तरात्मना ।
ततः शुभे मुहूर्ते हि लग्ने ग्रहबलान्विते ॥१०१॥
सतीं निजसुतां दक्षो ददौ हर्षेण शंभवे ।
उद्वाहविधिना शंभुर्जग्राह च सतीकरम् ॥१०२॥
सतीपाणिग्रहकाले ब्रह्मविष्णुसुरादयः ।
नेमुः सर्वे संस्तुतिभिस्तोषयामासुरीश्वरौ ॥१०३॥
समुत्सवो महानासीन्नृत्यगीतपुरःसरः ।
आनन्दं परमं जग्मुर्भोजनाच्छादनादिभिः ॥१०४॥
दक्षोऽप्यासीत् कृतार्थश्च दत्वा कन्यां तु शंभवे ।
शिवाशिवौ प्रसन्नौ स्तो निखिलं मंगलं ह्यभूत् ॥१०५॥
कृत्वा दक्षः सुतादानं यौतकं विविधं ददौ ।
हराय बहुधा द्रव्यं द्विजेभ्यो विविधं जनम् ॥१०६॥
हराय वरमाला सा सत्याऽर्पिता गलस्थले ।
मूशलादीनि शंभोर्वै मस्तकेऽभ्रामयँस्तदा ॥१०७॥
मृष्टं मिष्टं च दम्पत्योर्दत्तं परस्परं मुखे ।
दुग्धस्थाल्यां सुवर्णांगुलीयक्रीडां च चक्रतुः ॥१०८॥
विष्णुस्तदा हरं प्राह सतीं चैव शुभं वचः ।
त्वं पिता जगतां शंभो ! सती माता जगत्प्रसूः ॥१०९॥
युवां लीलावतारौ स्तः सतां क्षेमाय सर्वदा ।
खलानां निग्रहार्थाय जातौ वै युगलात्मकौ ॥११०॥
गार्हस्थ्यधर्ममालम्ब्य चरतं सहधर्मकम् ।
संहारार्थकृतरूपौ प्रवर्तेथां च संहृतौ ॥१११॥
धार्मिकाणां जनानां च रक्षार्थं च गवां सताम् ।
यज्ञानां भूसुराणां च वेदानां कुरुतं श्रमम् ॥११२॥
सत्याश्च रक्षणं कार्यं भक्तानां मंगलं तथा ।
य एनां साभिलाषो वै दृष्ट्वा श्रुत्वाऽथवा भवेत् ॥११३॥
तं हन्याद् देव कालेश विज्ञप्तिरिति मेऽस्ति वै ।
असुराः प्रबलाः सन्ति कण्डूयनप्रहस्तकाः ॥११४॥
तेषां कण्डूमार्जनीया त्वया सत्या सुतेन च ।
स्मर्तव्यश्च तथा काले यदि साहाय्यमर्थ्यते ॥११५॥
इतिश्रुत्वा हरेर्वाचं विहस्य शंकरस्तदा ।
एवमस्त्विति सत्कृत्य ननाम कमलापतिम् ॥११६॥
ततो दक्षः सामयिकं कारयामास चोत्सवम् ।
ब्रह्मा च मण्डपे तत्र गृह्योक्तविधिनाऽखिलम् ॥११७॥

अग्निकार्ये यथोद्दिष्टमकार्षीच्च सुविस्तरम् ।
होमं च कारयामास विधिवद् वह्निकुण्डके ॥११८॥
ततः शिवा शिवश्चैव यथाविधि प्रहर्षतः ।
अग्निं सुसाक्षिणं चापि ब्रह्माऽऽचार्यद्विजाज्ञया ॥११९॥
चतुःप्रदक्षिणाः कृत्वा स्थितौ शिवाशिवौ तदा ।
नेमतुश्च गार्हपत्यमग्निं निषेदतुस्ततः ॥१२०॥
तदा महोत्सवस्तत्राऽद्भुतोऽभूद्दक्षमन्दिरे ।
सर्वेषां सुखदं वाद्यं गीतनृत्यपुरःसरम् ॥१२१॥
प्रवर्तितं च शृण्वन्ति मण्डपागतदर्शकाः ।
वध्वाश्च वरराजस्य रूपं दृष्ट्वा मुहुर्मुहुः ॥१२२॥
बहवो मोहितास्तत्र नरा नार्यश्च पद्मजे ! ।
न तत्राऽऽसीद्रूपवती ह्येकाऽपि तु यथा सती ॥१२३॥
न चासीद्रूपवाँस्तत्र धवलः शंभुसदृशः ।
रत्नकांचनयोर्योगः कौमुदीचन्द्रयोर्यथा ॥१२४॥
तडिच्छ्वेताभ्रयोर्योगः सतीशंकरयोस्तथा ।
नारीनेत्रचकोराणां नरनेत्रस्फुलिंगिनाम् ॥१२५॥
चन्द्रवद्वह्निज्वालावन्निर्वाणसुखदोऽभवत् ।
नाऽऽसन्नराः सतीं दृष्ट्वा ह्यमुग्धास्तत्र मण्डपे ॥१२६॥
नाऽऽसन् स्त्रियो हरं दृष्ट्वा ह्यमुग्धास्तत्र मण्डपे ।
सतीशंकरयोर्योगस्तथाऽभून्मोहकारकः ॥१२७॥
तदिदं लोकशिक्षार्थं विवाहो मोहमूलकः ।
राजसं च तदा सर्वं मनसिजस्य वैभवम् ॥१२८॥
वध्वा रूपं विवाहे वै मुखं द्रष्टुं समुत्सुकाः ।
जायन्ते विकलाः सर्वे प्रायशो लोकभावतः ॥१२९॥
तथा तत्रापि सत्या वै मुखं द्रष्टुं समुत्सुकाः ।
प्रायशश्चाऽऽभवन् सर्वे लज्जया वस्त्रसंवृतम् ॥१३०॥
सर्वथा नखमारभ्य केशचूडावधि तदा ।
सती कांचनवर्णाभा शाट्यादिसंवृता ह्यभूत् ॥१३१॥
विद्युल्लतासमाद्देहात् कान्तिर्वस्त्राणि भिद्य वि ।
बहिर्याता च तां दृष्ट्वा नेत्राणि मिलितानि हि ॥१३२॥
दर्शकानां तदा तत्र मण्डपोऽप्यतितेजसा ।
शुशुभे सुप्रभो जातो द्यौर्यथाऽत्राऽऽगताऽस्ति किम् ॥१३३॥
शृणु लक्ष्मि ! तदा जातमाश्चर्यं ब्रह्मणोऽपरम् ।
वेधास्तु राजसं भावं प्राप्य रूपं विलोकितुम् ॥१३४॥
विचारं बहुधा चक्रे किन्तु नाऽऽप विलोकितुम् ।
शंकरस्यैव कर्तव्यं ह्येतज्जातं तु विद्धि तत् ॥१३५॥
ब्रह्मणा मोहितुं मां वै प्रथमं प्रेरणा कृता ।
सर्वे ते मोहिताः सन्तु विवाहे मम सन्निधौ ॥१३६॥
इतिकृत्वाऽत्र रूपं तत् प्रकाशितं तु योगतः ।
दृष्ट्वा च मुमुहुः सर्वे महामायाविमोहिताः ॥१३७॥
तदा तु ब्रह्मणा तत्र शुभोपायो विचारितः ।
आर्द्रेन्धनानि भूरीणि क्षिप्त्वा तत्र विभावसौ ॥१३८॥
स्वल्पाऽऽज्याहुतिविन्यासादार्द्रद्रव्योद्भवः कृतः ।
प्रादुर्भूतो महाधूमो व्याप्तस्तत्र समन्ततः ॥१३९॥
तेन स मण्डपस्तत्र तमोभूतोऽभवत्तदा ।
शंभुर्धूम्राकुले नेत्रे छादयामास लीलया ॥१४०॥
तावच्च ब्रह्मणा वस्त्रं समुत्क्षिप्य सतीमुखम् ।
विलोकितं मुहुः प्रेम्णा बहुभिश्चाऽवलोकितम् ॥१४१॥
ब्रह्मणस्तु तदा रेतः प्रचस्कन्द पटान्तरे ।
आच्छादितं मर्दितं च यथा कश्चिद् बुबोध न ॥१४२॥
मर्दनाच्च कणास्तत्र तुषारचयसन्निभाः ।
संजाता येऽभवन् मेघाश्चत्वारस्तु चतुःकणाः ॥१४३॥
संवर्तकस्तथाऽऽवर्तः पुष्करो द्रोण इत्यपि ।
फेलुर्व्योम्नि च गर्जन्तस्तोयदास्ते कदारवाः ॥१४४॥
अन्ये कणा अष्टाशीतिसहस्राणि तदाऽभवन् ।
तेभ्यो जाता बालखिल्या अंगुष्ठपर्वसदृशाः ॥१४५॥
ऋषयस्ते च वैराजलोकेषु संगतास्तदा ।
तिष्ठन्त्येव च तत्रैव सदा ब्रह्मव्रता हि ते ॥१४६॥
अथाऽन्ये च कणा वस्त्रे संलग्नास्ते तदा पुनः ।
बालखिल्याश्च वै षष्टिसहस्राण्यभवँश्च ते ॥१४७॥
अंगुष्ठपर्वमात्राश्च सूर्यस्य किरणानि वै ।
पिबन्तः सूर्यसाम्मुख्ये धावन्ति पृष्ठपादतः ॥१४८॥
मन्देहानामरक्षांसि नाशयन्ति च तेऽन्वहम् ।
नित्यं ब्रह्मवरदानाज्जीवन्ति नाशयन्ति तान् ॥१४९॥
अथ तद्भगवान् शंभुर्ज्ञात्वा दिव्येन चक्षुषा ।
किमेतद्विहितं ब्रह्मन् कोपादेतदुवाच ह ॥१५०॥
इत्येष हन्तुं ब्रह्माणं शूलमुद्यम्य शंकरः ।
सन्नद्धः स निषिद्धश्च प्रतिरुद्धो महर्षिभिः ॥१५१॥
शिक्षितश्च तदा सर्वैः त्रयाणामैक्यमित्यपि ।
न ब्रह्मा भवतो भिन्नो न भवो ब्रह्मभेदवान् ॥१५२॥
न विष्णुर्द्वयतो भिन्नस्त्रयाणामैक्यमस्ति हि ।
शिरोग्रीवादिभेदेन यथैकस्यैव वर्ष्मणः ॥१५३॥
अंगानि च तथा देवास्त्रयोऽभिन्नाः परात्मनः ।
स्वस्वरूपे ब्रह्मणि ते शंभो कोपो न युज्यते ॥१५४॥
श्रुत्वैवं शंकरः शान्तः संप्राह वेधसं पुनः ।
स्वशिरः स्पृश हस्तेन मदाज्ञां कुर्वसंशयम् ॥१५५॥

ब्रह्मा निजकरेण स्वं शिरः स्पृशति यावता ।
तावद्ब्रह्मोऽभवत्सद्यो वृषभो वाहनं परम् ॥१५६॥
तत्पृष्ठे च स्वयं शंभुर्निषसाद नियामकः ।
आहाऽनेन स्वरूपेण मदधिष्ठितकेन च ॥१५७॥
तपः कुरु च ते ख्यातिः रुद्रशिरो भविष्यति ।
ब्रह्मांशो वृषभस्तत्र शंकरांशो नियामकः ॥१५८॥
भूत्वा विवाहवेद्यां च सर्वदा तौ व्यवस्थितौ ।
अथ मूलस्वरूपेण ब्रह्मा शंभ्वाज्ञया तदा ॥१५९॥
शेषं वैवाहिकं कर्म समाप्तिमनयत् द्रुतम् ।
पपात पुष्पवृष्टिश्च शिवाशिवशिरस्कयोः ॥१६०॥
वाद्यमानेषु वाद्येषु गायमानेषु तेषु च ।
पठत्सु विप्रवर्गेषु वेदान् भक्त्यन्वितेषु च ॥१६१॥
रंभादिषु पुरन्ध्रीषु नृत्यमानासु सादरम् ।
महोत्सवो महानासीत् देवपत्नीषु पद्मजे ॥१६२॥
शंभुः प्राह त्वया ब्रह्मन् कृतं वैवाहिकं च यत् ।
गृहाण दक्षिणां कोटिं स्वाचार्योऽसि सुलग्नकृत् ॥१६३॥
गृहीता दक्षिणा चाथ ब्रह्मणा प्रार्थितं तदा ।
गन्तव्यं स्वगृहं सर्वैः स्थातव्यं नैव शिष्यते ॥१६४॥
ततो दक्षं समामन्त्र्य पत्न्या सत्या सहेश्वरः ।
गन्तुमना ह्यभूत् तावत् दक्षस्तुष्टाव शंकरम् ॥१६५॥
सुराश्च मुनयो विप्रा ऋषयो विष्णुसेवकाः ।
कृष्णो नारायणः सूर्यश्चन्द्र इन्द्रादयस्तथा ॥१६६॥
स्वस्वकुटुम्बपरिवारान्विता ययुरीश्वरम् ।
आरोप्य वृषभे शंभुः सतीं दक्षाज्ञया मुदा ॥१६७॥
चालयामास वृषभं कैलासं स्वालयं प्रति ।
केचिद्वाद्यान्वादयन्तो गायन्तः सुस्वरं परे ॥१६८॥
शिवं शिवयशः शुद्धमनुजग्मुः शिवं मुदा ।
मध्यमार्गाद्विसृष्टो हि दक्षः प्रीत्याऽथ शंभुना ॥१६९॥
स्वधाम प्राप सगणः शंभुः प्रेमसमाकुलः ।
तत्र गत्वाऽखिलान् देवान् मुनीनपि पराँस्तथा ॥१७०॥
मुदा विसर्जयामास बहु सम्मान्य सादरम् ।
शंभुमाभाष्य भोज्यादि गृहीत्वा कृष्णदेवताः ॥१७१॥
विष्णवाद्याः ऋषयः सर्वे स्वं स्वं धाम ययुर्मुदा ।
शिवोऽपि मुदितोऽत्यर्थं नववध्वा समं मुहुः ॥१७२॥
कैलासाचलसंस्थो हि विजहार यथासुखम् ।
इति लक्ष्मि ! शंकरस्याऽऽख्यातो विवाहसूत्सवः ॥१७३॥
विवाहसमये यज्ञे प्रारंभे वा शृणोति यः ।
तस्याऽविघ्नं भवेत्सर्वं कर्म वैवाहिकं शुभम् ॥१७४॥
कन्या च सुखसौभाग्यशीलाचारगुणान्विता ।
साध्वी स्यात्पुत्रिणी धन्या सर्वसमृद्धियुता गृहे ॥१७५॥
अथाऽयं शंकरो योगी विवेश गिरिकन्दरम् ।
गणान्निर्यापयामास नन्द्यादीन् प्राह ताँस्तदा ॥१७६॥
यदाहं च स्मराम्यत्र स्मरणादरमानसाः ।
समागमिष्यथ तदा मत्पार्श्वे मे गणा द्रुतम् ॥१७७॥
कैलासे ते गणाः सर्वे नानास्थानेषु संययुः ।
शंभुर्वध्वा समं रेमे विना कामरतिं तदा ॥१७८॥
क्वचिद्ग्रथित्वा पुष्पाणां मालां सत्यै न्यवेदयत् ।
क्वचिच्च दर्पणे सत्या सहाऽऽननं व्यलोकयत् ॥१७९॥
कदाचित्कुण्डले सत्याः कर्णयोरप्यधारयत् ।
कदाचित्पत्तले चास्या रक्तेनाऽरजयद्धरः ॥१८०॥
केशवेशं कदाचित्स्वेऽङ्के निधाय ह्यकल्पयत् ।
ललाटे पत्रिकां शंभुश्चन्दनेनाऽकरोत्क्वचित् ॥१८१॥
आहृत्य पद्मपुष्पाणि रम्यपुष्पाणि शंकरः ।
सर्वांगेषु करोति स्म पुष्पाऽऽभरणमादरात् ॥१८२॥
एवं बहुविधैर्मार्गैः रेमे सतीं विनोदयन् ।
तया विना स्म नो याति नाऽऽस्थितो न स्म चेष्टते ॥१८३॥
तया विना क्षणमपि शर्म लेभे न शंकरः ।
अगमद्धिमवत्प्रस्थं सस्मार स्वेच्छया स्मरम् ॥१८४॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने सत्यै शंकरदर्शनं, भार्या भवेति वरदानं, शंभोः कैलासगमनं, ब्रह्मणो दक्षगृहं प्रति प्रेषणं, कैलासं प्रत्यागमनं च, शंकरस्य जनवाहिन्या दक्षगृहं प्रति गमनं, सती-विवाहः, सत्यां रूपे मोहितब्रह्मणो रेतःपतनं, तेन मेघानां वालखिल्यानामुत्पत्तिः, जनवाहिन्याः कैलासं प्रत्यागमनम्, जनवाहवर्गविसर्जनं, कैलासकन्दरे सती-शंकरयोर्विहरणमित्यादिनिरूपण-नामा द्वासप्तत्यधिकशततमोऽध्यायः ॥ १७२ ॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि हिमाद्रौ तु तयोर्विहरतोस्तदा ।
कामस्मृत्या कामदेवः प्रविष्टस्तत्र सन्निधौ ॥ १ ॥
तस्मिन्प्रविष्टे शंभौ च सत्यां च कामना शुभा ।
समभवत्तदा शंभोर्भावं विज्ञाय सर्वथा ॥ २ ॥

वसन्तः स्वस्य कर्तव्यं समारेभे हरान्तिके ।
मन्दसुगन्धशैत्याढ्यो ववौ च मलयो मरुत् ॥ ३ ॥
वृक्षाश्च पुष्पिताः सर्वे लताश्च पुष्पितास्तदा ।
विरेजिरे पलाशाश्च किं शुकैः रक्तकोमलैः ॥ ४ ॥
कमलानि विचित्राणि सरःस्वपि विरेजिरे ।
पद्मपुष्पाढ्यपवनो ववौ तत्र हरान्तिके ॥ ५ ॥
नागकेशरपुष्पाणि स्वर्णवर्णसुगन्धिभिः ।
मनोज्ञान्यभवँस्तत्र शंकरस्य महात्मनः ॥ ६ ॥
सुगन्धगन्धसंपृक्ता नागवल्ली च मारुतम् ।
सती शंकरनिकटे प्रैरयन्मोहकारकम् ॥ ७ ॥
कोकिलाश्च तदानीं सुस्वरं जगुर्मनोहरम् ।
आम्राः प्रफुल्लिताः पत्रमंजरीभिर्वभुस्तदा ॥ ८ ॥
जलानि निर्मलान्यभिरेजुश्च फुल्लकाशकाः ।
ज्योतिश्चक्राणि संरेजुर्वासन्तिकप्रभादिभिः ॥ ९ ॥
कौमुद्या सह रक्ताश्च विभावर्योऽभवन् प्रियाः ।
शाद्वलाः सुप्रदेशाश्चाऽभवन् कामसुखप्रदाः ॥१०॥
नदीषु च निकुंजेषु कन्दरीषु स्थलीषु च ।
रेमे सत्या समं शंभुर्विरेजे शंभुना सती ॥११॥
रमयामास देवेशं विविधाभिस्तु केलिभिः ।
हरस्तु पुष्पमालाभिः प्रियां शृंगारयत्यपि ॥१२॥
कबरीकरणैरंके स्वापनैश्चूम्बनैस्तथा ।
सन्तोषयति चालापैर्हास्यवीक्षणमर्दनैः ॥१३॥
तद्वक्त्रशश्यधराऽमृतपानमत्ततां गता ।
नानाविधासनसेतुमादिदेश प्रियै तदा ॥१४॥
सत्या वक्त्रसुगन्धेन सौन्दर्येण च नर्मणा ।
प्रेम्णा रत्या सुबद्धोऽयं शंकरः संतुतोष ह ॥१५॥
इत्येवं हिमवच्छृङ्गे रमयित्वा सतीं शिवः ।
कैलासमगमत् स्वस्य निवासे शान्तिमावहत् ॥१६॥
तापकालो व्यतीतश्च यदा मेघागमोऽभवत् ।
सती प्राह तदा शंभुं शृणु मे वचनं प्रिय ॥१७॥
घनागमोऽयं समयो मेघा वर्षन्ति सर्वदा ।
प्रवान्ति वाता हृदयं कम्पयन्त्यतिवेगिनः ॥१८॥
स्थल्यः सर्वत्र संक्लिन्नाः कर्दमाढ्या अनाश्रयाः ।
वृक्षा वल्ल्यः प्रभिन्नाश्च समार्द्रा जलसंभृताः ॥१९॥
मेघानां गर्जना विद्युद्विलासाः प्रभवन्ति च ।
मेघच्छन्नौ न दृश्येते सूर्याचन्द्रमसौ दिवि ॥२०॥
वाताहता महावृक्षाः पतन्ति त्रासदा भुवि ।
व्याघ्राः सिंहा महाक्रूरा विषवन्तश्च देहिनः ॥२१॥
भ्रमन्ति निर्जनेऽरण्ये शीतोष्णाऽनिलवह्नयः ।
एते चान्ये दुःखदाश्च विघ्ना भवन्ति सर्वदा ॥२२॥
तस्मात् क्वचिन्निवासार्थं गृहं कार्यं त्वयाऽधुना ।
यत्रच्छाया सुखशय्या पानभोजनवैभवाः ॥२३॥
रक्षितुं च भवेयुर्वै शक्याः सामयिकाः सदा ।
यदि विरामलाभाय सौधं नास्ति जनस्य तु ॥२४॥
तदा को दारवहने लाभोऽस्ति वनवासिनः ।
चक्रवाककपोताद्या पक्षिणोऽपि निराश्रयाः ॥२५॥
प्राप्ते काले प्रकुर्वन्ति गृहाणि वृक्षकोटरे ।
पिपीलिकामूषकाद्याः कुर्वन्ति भूगृहाण्यपि ॥२६॥
तस्माद्गार्हस्थ्यधर्मस्यांगभूताऽपत्यरक्षणम् ।
गृहे वै स्यान्निराबाधं सर्वर्तुसुखदे दृढे ॥२७॥
अन्यासां मद्भगिनीनां भवनानि महान्ति वै ।
दिव्यान्यसंख्यस्मृद्धीनि वर्तन्ते नास्ति मे गृहम् ॥२८॥
प्रथमं गृहशून्यत्वं दुःखं संसारसागरे ।
द्वितीयं धान्यहीनत्वं तृतीयं धनशून्यता ॥२९॥
चतुर्थं निरपत्यत्वं मालिन्यं पंचमं मतम् ।
षष्ठं रोगकृतमैत्र्यं सप्तमं चाऽगवादिकम् ॥३०॥
अष्टमं च गृहे क्लेशः सिंहवृषभभोगिनाम् ।
एतद्दुःखाष्टकं मेऽस्ति किं गार्हस्थ्येन योगिनः ॥३१॥
योगी स्यान्न भवेद्रोगी भोगी स्यात् किन्तु योगिता ।
तस्माद्योगफलं दुःखाष्टकनाशे प्रयुज्यताम् ॥३२॥
पश्याऽरण्ये च दावाग्निर्बहुधा जायतेऽत्र वै ।
प्ररोहन्ति च सस्यानि निब्रीडानि निवासने ॥३३॥
श्यामला राजता रक्ता विशदास्तृणजातयः ।
आसनस्थलभूमौ वै प्ररोहन्ति प्रकर्दमाः ॥३४॥
असमश्रीश्च कुटिला स्थली सेव्याऽतिदुःखदाः ।
निद्रायां रतियोगे वा मध्यरात्रौ भयंकराः ॥३५॥
शब्दाः श्रूयन्त उग्राश्च कार्यध्वंसेऽतिदुःखदाः ।
मध्याह्ने तूत्त्रणस्तापो वर्षाधाराश्च दुःखदाः ॥३६॥
पश्य मे पादयोस्तीक्ष्णकण्टकानां च शाश्वती ।
कुटिका संगता तत्र कण्टकाः सन्ति कीदृशाः ॥३७॥
शरीरे पश्य मे मेघकरकाणां च दुर्नयम् ।
पतित्वा छादयन्त्येत्र शरीरं शैत्यदुःखदम् ॥३८॥
एतस्मिन् विषमे काले नीडं काकाश्चकोरकाः ।
कुर्वन्ति त्वां विना गेहान् कथं शान्तिमवाप्स्यसि ॥३९॥
महतीवाऽत्र मे भीतिर्मेघोत्था जायते हृदि ।
ततो यतस्व सौधार्थं मा चिरं वचनान्मम ॥४०॥

भार्या रक्ष्या वने स्थेयं रतिः स्वाद्या न भोजनम् ।
एतत्सर्वं विनाशाय नो सुखाय प्रजायते ॥४१॥
कैलासे वा हिमाद्रौ वा गंगातीरेऽथवा क्षितौ ।
यत्र क्वापि वासयोग्यं भवनं कुरु शंकर ॥४२॥
प्राघूणिकाः समागत्य शान्ता भवेयुराश्रमे ।
धनधान्यसमृद्धिमति यथापेक्षं तथा कुरु ॥४३॥
श्रुत्वा सतीव्याहृतं च मत्वा मनसि सार्थकम् ।
शंभुः प्राह तदा देव्यै रञ्जयन्मानसं मुहुः ॥४४॥
वद देवी यत्र मेघा गच्छन्त्येव नहि क्वचित् ।
तत्र सौधं कारयेयं यदि ते रोचते शिवे ॥४५॥
मेघा नितम्बपर्यन्तं संचरन्ति महीधरे ।
मेरौ वा तादृशे श्रृंगे कुर्वे ते यदि रोचते ॥४६॥
कैलासस्य तथा देवि नितम्बे प्रायशो घनाः ।
वर्षास्वपि प्रचरन्ति कुर्वे ते तत्र रोचते ॥४७॥
अरुणाचलश्रृंगे च नितम्बे प्रायशो घनाः ।
संचरन्ति न गच्छन्ति तत ऊर्ध्वं कदाचन ॥४८॥
सौराष्ट्रे रैवते शैले स्वर्गश्रृंगे सुतैजसे ।
यत्र मेघा नितम्बस्था न गच्छन्त्युपरीति वा ॥४९॥
हिमालये शिवश्रृंगे मेघा गच्छन्ति नैव यत् ।
यत्रास्ति चन्द्रजं शैत्यं कुर्वे सौधं तु रोचते ॥५०॥
इत्येतेषु गिरीन्द्रेषु त्वया दृष्टेषु प्राग्भवे ।
मनोरुचिर्भवेद्यत्र तमाचक्ष्व द्रुतं हि मे ॥५१॥
यत्र हैमे प्रोच्चश्रृंगे सिद्धपत्न्यो वसन्ति वै ।
तत्र ते यदि वाञ्छास्ति कुर्वे तत्र महालयम् ॥५२॥
स्वर्णश्रृंगे यत्र देव्यो निवसन्ति सकौतुकाः ।
तत्र ते यदि वाञ्छा स्यात् कुर्वे सौधं सुवर्णजम् ॥५३॥
आरुणे मणिकुट्टे वा लोकालोकेऽथ रैवते ।
नागकन्या गिरिकन्याः किन्नर्यः फणिकन्यकाः ॥५४॥
गान्धर्व्यश्चाऽप्सरसो विद्याध्र्यः प्रवसन्ति च ।
यत्र तत्र रुचिस्तेऽस्ति कुर्वे स्वर्गोपमं गृहम् ॥५५॥
सर्वास्ताः सततं सेवां करिष्यन्ति तव प्रिये ।
अनुमोदैः सहयानैः सहक्रीडादिभिः सदा ॥५६॥
रूपं तवेदमतुलं वदनं चारु वीक्ष्य ताः ।
तव दास्यो भविष्यन्ति हेलयित्वा निजं वपुः ॥५७॥
यद्वा हिमालये मेना बहुरूपगुणान्विता ।
तत्र ते सा मनोमोदं करिष्यत्यतिसेवया ॥५८॥
गिरीणां कन्यका हैमे शिक्षार्थं यान्ति नित्यदा ।
तत्र बै शिखरं रम्यं शिवाख्यं यदि रोचते ॥५९॥
विचित्रैः कोकिलालापमोदैः कुंजगणावृतम् ।
सदा वसन्तप्रभवं वस्तुमिच्छसि किं प्रिये ॥६०॥
नानाजलसरोयुक्तं सरोजाऽसंख्यताकुलम् ।
कल्पवृक्षाऽमृतवल्लीकामधेनुसमन्वितम् ॥६१॥
प्रशान्तश्वापदगणं यतिसाधुसुसेवितम् ।
स्फाटिकस्वर्णहीरकराजतैरुपशोभितम् ॥६२॥
मानसतालहंसाऽश्वव्योमहस्तिनिषेवितम् ।
हिरण्मयै रत्नजालैः पंकजैर्मुकुलैः सुमैः ॥६३॥
नीलोत्पलादिभिः पुष्पैर्मंजुलैः सुनिषेवितम् ।
कुंकुमैः सर्वगन्धैश्च लसद्गन्धजलैस्तथा ॥६४॥
शाद्वलैस्तरुणैस्तुङ्गैर्वंशवृक्षैः सुशोभितम् ।
नृत्यद्भिर्वृद्धमयूरैर्गुंजद्भिर्भ्रमरादिभिः ॥६५॥
सारसैः कोकिलाभिश्च मधुराऽऽरावभिर्युतम् ।
गायनैः सततं तेषां शब्दायमानमन्वहम् ॥६६॥
सहेलीभिः सदायुक्तं कामोद्दीपनकारकम् ।
नूत्ननूत्नसखीयुक्तं वस्तुमिच्छसि किं प्रिये ॥६७॥
यद्वा मेरोः सुशिखरे सारभूते महाशुभे ।
संविहर्तुं सखीयुक्ता साऽप्सरोगणमण्डिता ॥६८॥
समिच्छसि तत्र रन्तुं कुर्वे भवनमुत्तमम् ।
नित्यं शची करिष्यति तव सेवां सहायताम् ॥६९॥
जलेशस्य कुबेरस्येशानस्य च यमस्य च ।
अग्नेर्नैऋतदेवस्य मारुतस्य परस्य वा ॥७०॥
पुरीभिः शोभिते श्रृंगे मेरोरुच्चसुरालये ।
शचीरंभामेनकादिरंभोरुगणसेविते ॥७१॥
त्वमिच्छसि संविहर्तुं कुर्वे तत्र महालयम् ।
अथवा मम कैलासे पर्वतेन्द्रे सदाश्रये ॥७२॥
स्थानमिच्छसि कुबेरनगरीसन्निधौ शुभम् ।
गंगाजलकणैरार्द्रं पूर्णचन्द्रसमोज्ज्वलम् ॥७३॥
दरीषु सानुषु द्रोण्यां ब्रह्मकन्याऽभिशोभितम् ।
नानामृगकृताऽऽवासं पद्माकरशतावृतम् ॥७४॥
मेरोरपि विशेषेण सद्वस्तुगुणमण्डितम् ।
आवयोः सानुकूलं च रचये तादृशं तदा ॥७५॥
यत्राऽस्त्यधिकवासेच्छा समाचक्ष्व द्रुतं मम ।
गृहं स्वर्णमणिरत्नखम्भपत्पूर्णं करोमि वै ॥७६॥
सत्युवाच तदा शंभुं हिमाद्रौ वसितुं सदा ।
समीहे नचिरात् तत्र कुरु संवासमिष्टदम् ॥७७॥
श्रुत्वा शंभुः सतीं नीत्वा तुंगं श्रृंगं ययौ सदा ।
सिद्धांगनागणयुक्तं सरसीवनराजितम् ॥७८॥

विचित्रैः कुसुमैर्व्याप्तं नैकधारत्नकर्बुरम् ।
पक्षिभिर्यदगम्यं वै स्फटिकाऽभ्रमयं च यत् ॥७९॥
विचित्रपुष्पततिभिः शाद्वलैर्द्रुमैरन्वितम् ।
प्रफुल्लतरुशाखाग्रं गुंजद्भ्रमरघोषितम् ॥८०॥
पंकेरुहैः प्रफुल्लैश्च नीलोत्पलचयैर्युतम् ।
स्वर्गीयसारसहंसशुकमेनाभिसेवितम् ॥८१॥
तुरंगवदनैः सिद्धैरप्सरोभिश्च सेवितम् ।
विद्याधरीभिर्देवीभिः किन्नरीभिर्विहारितम् ॥८२॥
पुरन्ध्रीभिः पार्वतीभिः कन्याभिरभिसंगतम् ।
विणाविपञ्चीतन्त्रिकामृदंगपटहस्वनैः ॥८३॥
नृत्यद्भिरप्सरोभिश्च कृतकौतुकशोभितम् ।
देविकाभिर्दीर्घिकाभिर्गन्धिभिः सुसमावृतम् ॥८४॥
प्रफुल्लपुष्पवल्लीनां सुकुंजैरुपशोभितम् ।
हिमालयपुराऽभ्यर्णे कुबेरपुरसन्निधौ ॥८५॥
रम्यं विशालशिखरं स्वर्गतुल्यमनोहरम् ।
शिवश्रृंगं हरो गत्वा दाक्षायण्या समं मुदा ॥८६॥
चिरं रेमे कृतसौधः कृतकैलासनामके ।
सप्राकारे महाशाले कैलासनगरे नवे ॥८७॥
विश्वकर्माणमाहूय कारयामास सत्पुरम् ।
कैलासनामकं यत्र भवनानि चकासिरे ॥८८॥
स्वर्णरत्नमणिनद्धभित्तिमन्ति दृढानि च ।
शय्यास्थानानि रम्याणि स्नानस्थानानि सन्ति च ॥८९॥
शीतोष्णजलकुण्डाश्च वाप्यो मिष्टोदकास्तथा ।
महानसानि रम्याणि वह्निशालास्तथा शुभाः ॥९०॥
भक्ष्यभोज्यादिसामग्रीरक्षास्थानानि सन्ति च ।
श्रृंगारकार्यसुस्थल्यो हास्यविनोदमण्डपाः ॥९१॥
हावभावविलासार्थं गुप्तहर्म्याणि सन्ति च ।
प्राघूणिकनिवासार्थं गृहाणि सुमहान्ति च ॥९२॥
निद्राविराममञ्चाढ्यशय्यागृहाणि सन्ति च ।
प्रेंखादोलादिसंराजद्वितर्दीभूमिकोत्तमाः ॥९३॥
ग्लहद्यूतादिहर्म्याणि समाजरंगमण्डपाः ।
चतुष्क्यश्चोदकुंभ्यश्चाऽट्टालिकाः सन्ति सर्वशः ॥९४॥
उद्यानाश्च गृहोद्याना गृहयानानि वैद्युताः ।
प्रदीपाः श्रावयन्त्राणि दृश्ययन्त्राणि सन्ति च ॥९५॥
वस्त्राणि लक्षशो नैकजातीयानि कृतानि वै ।
पात्राणि स्वार्णरौप्याणि विभूषा रात्नपौरटाः ॥९६॥
वेशास्तथोपवेशाश्च कपाटगुप्तसंग्रहाः ।
वायुव्यजनयन्त्राणि कामसंगीतशालिकाः ॥९७॥
मनोरंजनमार्गाश्च बहुदृश्याऽऽपणास्तथा ।
कोटिलक्षाऽयुतगणनिवासाः सद्गृहोत्तमाः ॥९८॥
वाटिकाश्च विहाराश्च राजधान्यः शुभाः कृताः ।
यत्राऽमृतरसा दिव्याः सन्ति ब्रह्मरसास्तथा ॥९९॥
कामोत्तेजकपानाद्याः सद्रसाः सन्ति यत्र वै ।
नवयौवनपुष्ट्यापादकवल्ल्योषधिस्थलम् ॥१००॥
कामधेनुनिवासाश्च रसशालास्तथा शुभाः ।
वृषभसिंहगरुडगजाश्ववाहनानि च ॥१०१॥
कृतानि कारितानि वै कन्याशिक्षागृहाणि च ।
एतादृशो नवस्तत्र कैलासो नगरोत्तमः ॥१०२॥
कारितः शंभुना विश्वकर्मद्वारा महोत्तमः ।
यस्याग्रे लोकपालानां सौधाः क्षुद्रास्तदाऽभवन् ॥१०३॥
दक्षगृहाच्छतगुणसमृद्धियुक्तां पुरीं निजाम् ।
विलोक्य वीक्ष्य संलोक्य सती जहर्ष सा मुहुः ॥१०४॥
यद्यच्च कल्प्यते वस्तु तत्तत् तत्रोपतिष्ठते ।
न न्यूनं वर्तते किञ्चित् ब्रह्मविष्णुसुरादितः ॥१०५॥
राजाधिराजसल्लक्ष्म्या सेव्यते सतीशंकरौ ।
राजेते राजराजेशसम्पत्त्या छत्रचामरैः ॥१०६॥
विमानवरमारुह्य क्वचिद्यातः स्थलान्तरम् ।
मेर्वादावन्तरीक्षे च स्वर्गादौ संविहृत्य च ॥१०७॥
गत्वा गत्वा पुनर्नूत्ने कैलासेऽभ्येत्य रेमतुः ।
सतीशौ चैवमानंदं गार्हस्थ्यमनुचक्रतुः ॥१०८॥
एवं श्रीशंकरसुखं सत्यपश्यत्स्म सर्वदा ।
श्रीशंभुरपि सर्वत्र समद्राक्षीत् सतीसुखम् ॥१०९॥
एवमन्योन्यसंसर्गादनुरागमहीरुहम् ।
वर्धयामासतुः सतीशिवौ भावाऽम्बुसेचनैः ॥११०॥
सती तत्रैकदा शंभुं पप्रच्छ विस्मितानना ।
वैराग्यवृत्तिमापन्ना सन्तुष्टा सुखभोगतः ॥१११॥
देवदेव महादेव कृपां कुरु ममोपरि ।
त्वं परब्रह्मतादात्म्यभावाऽऽपन्नोऽगुणः परः ॥११२॥
धन्याऽहं ते प्रिया जाता जातस्त्वं मे पतिः प्रभुः ।
ज्ञातुमिच्छामि देवेश तत्त्वं येन भवं तरेत् ॥११३॥
यत्कृत्वा विषयी जीवोऽवश्यं व्रजेत्परं पदम् ।
आकर्ण्य तत् शिवोऽवोचत् सतीज्ञानार्थमत्र यत् ॥११४॥
श्रृणु प्रिये प्रवक्ष्यामि तत्त्वं मुक्तो भवेद् यतः ।
परतत्त्वं विजानीहि हरिं नारायणं सदा ॥११५॥
दुर्लभं तस्य विज्ञानं तज्ज्ञाता विरलः प्रिये ।
नारायणस्य दासोऽहं ब्रह्मणः परमात्मनः ॥११६॥

नारायणस्य भक्तिश्च भुक्तिमुक्तिफलप्रदा ।
स्मर्यसे प्राग्भवे देवि नरनारायणाश्रमे ॥११७॥
गत्वाऽहं वैष्णवो जातस्ततस्त्वं वैष्णवी कृता ।
गोलोकाद्वैष्णवश्चाहं पुनर्भावी च वैष्णवः ॥११८॥
त्वया भाव्यं च वैष्णव्या ब्रह्मभक्त्या मम गृहे ।
ब्रह्मधाम्नि स्थितस्याऽस्य नारायणस्य सर्वथा ॥११९॥
स्मृतिर्विज्ञानमेवाराधनोपास्तिश्च सर्वदा ।
मननं चाथ भक्तिश्च प्रेमसेवेति चैकता ॥१२०॥
तया वै प्राप्यते नारायणो नान्येन केनचित् ।
सुलभा तत्प्रसादात्सा नवधाऽत्र प्रकीर्तिता ॥१२१॥
श्रवणं कीर्तनं चैव स्मरणं सेवनं सदा ।
दास्यं तथाऽर्चनं देवि वन्दनं श्रीहरेस्तथा ॥१२२॥
सख्यमात्मनिवेदित्वं नवांगानि च तानि वै ।
कथादेर्नित्यसम्मानं कुर्वन्देहादिभिर्हरेः ॥१२३॥
तदर्थपानं स्थैर्येण यत्तच्छ्रवणमुच्यते ।
श्रुत्वा तदर्थमननं कर्तव्यं फलदं हि तत् ॥१२४॥
हृदये श्रीहरेर्जन्मकर्माणि चिन्तयन्मुहुः ।
प्रीत्योच्चोच्चारणं तेषामेतत्कीर्तनमुच्यते ॥१२५॥
व्यापकं श्रीहरिं ज्ञात्वा स वै सर्वत्र सर्वदा ।
स्मर्यते येन मनसा स्मरणं तदुदाहृतम् ॥१२६॥
सर्वथा जाग्रति स्वप्ने वस्तुभिः स्वस्य सुप्रियैः ।
परिचर्या तु या तस्य सेवनं तदुदाहृतम् ॥१२७॥
सदाऽनुकूलभावेन हृदयामृतभोगतः ।
हरेः प्रियं यथा वृत्त्यं तद्वै दास्यमुदाहृतम् ॥१२८॥
सदा स्मृद्ध्यानुकूल्येन विधिना परमात्मने ।
अर्पणं षोडशानां वै पाद्यादीनां तदर्चनम् ॥१२९॥
नामोच्चारणध्यानाभ्यां मनसा वचसा तथा ।
यदष्टांगेन भूस्पर्शा दण्डवत् वन्दनं हि तत् ॥१३०॥
मंगलाऽमंगलं यद्यत् करोति श्रीहरिर्हि मे ।
सर्वं तन्मंगलायेति विश्वासः सख्यमुच्यते ॥१३१॥
कृत्वा देहादिकं तस्य प्रीत्यै सर्वं तदर्पणम् ।
निर्वाहाय स्वशून्यत्वं हरावात्मनिवेदिता ॥१३२॥
नवांगानि हरेर्भक्तेर्भुक्तिमुक्तिप्रदानि च ।
मम प्रियाणि चातीव विज्ञानोत्पादकानि च ॥१३३॥
उपांगानि च तद्भक्तेर्बहूनि सन्ति मे प्रिये ।
तुलसीसेवनादीनि मन्दिरमार्जनानि च ॥१३४॥
देवालयप्ररक्षादि समूह्यानि विचारतः ।
इति सांगोपांगभक्तिर्हरेः सर्वोत्तमा प्रिये ॥१३५॥

ज्ञानवैराग्यजननी मुक्तिदासी विराजते ।
त्रैलोक्ये भक्तिसदृशः पन्था नास्ति सुखावहः ॥१३६॥
भक्तिमतो जनस्य श्रीहरिश्चास्ति सहायकृत् ।
भक्तितत्त्वं परतत्त्वप्रापकं तत्त्वमेव तत् ॥१३७॥
सा च भक्तिः पुनर्द्वेधा सगुणा निर्गुणा तथा ।
फलेच्छया कृता सर्वा सगुणा परिकथ्यते ॥१३८॥
फलेच्छारहिता सैव निर्गुणा भक्तिरुच्यते ।
सा च भक्तिः पुनर्द्वेधा वैधी स्वाभाविकी तथा ॥१३९॥
प्रसह्य विधिना कार्या वैधी सा त्वाज्ञया कृता ।
स्वभावेनैव कार्या या स्वाभाविकी तु सा मता ॥१४०॥
सा च भक्तिः पुनर्द्वेधा परा चाऽथाऽपरा तथा ।
परा साध्यहरिरूपाऽपरा साधनरूपिणी ॥१४१॥
नैष्ठिक्यनैष्ठिकी द्वेधा षड्विधा नैष्ठिकी मता ।
विश्वासो वरणं न्यासः कार्पण्यं च स्थिरा मतिः ॥१४२॥
आनुकूल्यसहकृतप्रातिकूल्यविवर्जनम् ।
षड्विधा नैष्ठिकी भक्तिरनैष्ठिक्येकधा मता ॥१४३॥
स्वार्थमात्रकृता भक्तिरनैष्ठिकी प्रकीर्तिता ।
विहिताऽविहिता साऽथ द्वेधाऽऽज्ञा विहिता मता ॥१४४॥
अनाज्ञा चाऽविहितोक्ता पुनर्मध्योत्तमाऽधमा ।
त्रेधा तत्र तरतमैर्भावैर्भवत्यनेकधा ॥१४५॥
हरेर्नामजपसाम्यं नान्ये भवति कुत्रचित् ।
हरिरित्यर्थकं ब्रह्म व्याहरँश्च हरिं स्मरन् ॥१४६॥
यः प्रयाति त्यजन्देहं स याति परमां गतिम् ।
भक्त्या तुष्यति लोकश्च भक्त्या तुष्यति वै हरिः ॥१४७॥
शृणु देवि मया पूर्वं कल्पे नारायणोपरि ।
युगषष्टिसहस्राणि तपस्तप्तं सुदुश्चरम् ॥१४८॥
तदा नारायणः साक्षादभून्मे दृष्टिगोचरः ।
अतीव कमनीयांगः किशोरः श्यामसुन्दरः ॥१४९॥
रूपानुरूपावयवः सुप्रसन्नमनोहरः ।
दृष्ट्वा हरिं तादृशं मे नेत्रे तृप्तिं न वै गते ॥१५०॥
पश्यन्निमेषरहितोऽभवं तृप्तो न वै चिरम् ।
तदा मां भगवान्प्राह किं शंभो नैव तृप्यसि ॥१५१॥
गच्छाम्यहं स्वकं धाम वरं वृणु यथेप्सितम् ।
तव भक्त्या च तपसा प्रसन्नोऽस्मि च मा चिरम् ॥१५२॥
तदा मयाऽर्थितं नारायणात् शृणु प्रिये मम ।
तवोपभोग्यं यत्स्यात्तन्न मे भोग्यं भवेत्तु प्राक् ॥१५३॥
तव प्रसादसर्वस्वं मम भोग्यं मतं प्रभो ।
तव दास्यं सदा मे स्यादात्मनिवेदिताऽपि च ॥१५४॥

अन्यापि विविधा भक्तिस्तवैव मेऽस्तु मोक्षदा ।
मस्तके मे जटा नित्या तपस्याबोधिकाऽस्तु वै ॥१५५॥
शरीरे मे चिताभस्म वैराग्यबोधिकाऽस्तु वै ।
समता चन्दने पंके लोष्ठे रत्ने मणीश्वरे ॥१५६॥
सदाऽस्तु मुकुटाद्या न भूषा धार्या मया प्रभो ।
तत्र सर्पा मया धार्या गरुडद्वेषिणो हरे ॥१५७॥
वाहनं तु वृषो गोलोकात् कृष्णार्पित एव मे ।
पारिजातादिकं पुष्पं सुगन्धि चन्दनादिकम् ॥१५८॥
तव योग्यं भवेत्तत्र मे भोगः क्वापि मा भवेत् ।
धत्तूरेऽस्तु सदा प्रीतिर्बिल्वपत्रानुधारणे ॥१५९॥
गन्धहीनेषु पुष्पेषु प्रीतिर्मेऽस्तु विरागतः ।
वस्त्रवेशे माऽस्तु रागोऽस्तु गजव्याघ्रचर्मणोः ॥१६०॥
दिव्यतल्पे दिव्यभोगे माऽस्तु प्रीतिः कदाचन ।
श्मशानेऽस्तु सदा वासो जनतायां न मे क्वचित् ॥१६१॥
श्मशाने विघ्नशून्ये मे ध्यानं तव सदा भवेत् ।
ज्ञानं ते श्रीहरे नित्यं गुणत्रयविनाशकम् ॥१६२॥
त्रिशूलरूपं मे स्याच्च वैराग्यं भस्मरूपकम् ।
धर्मो मे वृषरूपः स्याद्भक्तिर्मे योगिता त्वयि ॥१६३॥
कण्ठहारश्च ते भक्तिविरोधिशिरसां कृतः ।
भूषामालाश्च तेऽयोग्यरुद्राक्ष फलकल्पिताः ॥१६४॥
माऽस्तु वृन्दादिवृक्षाणां भोग्यं ते माऽस्तु मत्कृते ।
लक्ष्मीर्देवी मम माऽस्तु किन्त्वलक्ष्मीर्ममाऽस्तु वै ॥१६५॥
मिष्टं पेयं हरेर्यत्स्यात् तन्मे माऽस्तु कदाचन ।
ममाऽस्तु विषधत्तूरगंजाभंगादिकं सदा ॥१६६॥
इत्येवं तु मया सर्वं तपःकाले प्रपार्थितम् ।
हरिणा च प्रदत्तं तद्वरदानं शुभाय मे ॥१६७॥
प्रभक्तानां प्रशिक्षार्थं दासभक्त्यभिव्यंजकम् ।
असुराणां विमोहार्थं रक्षितं तु तदाज्ञया ॥१६८॥
तस्मात् सति ! त्वया दास्ये हरेर्वृत्त्यं न चाऽन्यथा ।
शृणु चान्यां कथां श्रेष्ठां हरेः प्रसादगर्भिताम् ॥१६९॥
सनत्कुमारो वैकुण्ठमेकदा तु जगाम ह ।
ददर्श भुक्तवन्तं च हरिं नारायणं मुनिः ॥१७०॥
तुष्टाव गूढैः स्तोत्रैश्च प्रणम्य भक्तिपूर्वकम् ।
अवशेषं ददौ तस्मै सन्तुष्टो भक्तवत्सलः ॥१७१॥
तत्रैव किंचित्तेनैव भुक्तं शेषं च यद्धृतम् ।
तद्वै ररक्ष बन्धूनां भक्षणार्थं च दुर्लभम् ॥१७२॥
तस्मादपि च किंचिच्च सिद्धाश्रमस्थिताय मे ।
दत्तवान् स मुनिस्तच्च भुक्तं सर्वं मयाऽऽदरात् ॥१७३॥
भुक्त्वाऽहं दुर्लभं हरेः प्रसादं नृत्यमाचरम् ।
पुलकांकितसर्वांगः साश्रुनेत्रोऽभवं मुदा ॥१७४॥
श्रीहरेर्गुणगानं च तालमानेन सुस्वरम् ।
रागभेदैकतानेन भक्त्या चाऽकरवं तदा ॥१७५॥
पपात डमरुर्हस्ताच्छृंगं च व्याघ्रचर्म च ।
स्वयं निपत्य पश्चाच्च रुदन्मूर्छां गतोऽप्यहम् ॥१७६॥
अतीव कमनीयं श्रीहरेः रूपं मनोहरम् ।
हृदये मूर्छितस्तत्र ध्यायामि तावदेव ह ॥१७७॥
तदन्तरे च दुर्गा त्वं मुदाऽऽजगाम भामिनी ।
अहमुत्थाय मूर्छातो यावत्तिष्ठामि भामिनि ! ॥१७८॥
तावन्मूर्छाकरं तत्र कारणं पृष्टमेव मे ।
मया तुभ्यं तु कथितं प्रसादलाभ एव यत् ॥१७९॥
ज्ञात्वा त्वं कुपिता देवि ! प्रोक्तवती च मां तदा ।
त्वं पोष्टा जगतां पाता ममैव च विशेषतः ॥१८०॥
वक्ता चतुर्णां वेदानां दाता च सर्वसम्पदाम् ।
त्वं चेत्करोषि दुर्नीतिं को धर्मं रक्षयिष्यति ॥१८१॥
सदा ते परिपाल्याऽहं पोष्या भक्ता च किंकरी ।
वंचिता कर्मदोषेण हरेः प्रसादभक्षणे ॥१८२॥
किंचिच्छुद्धं हिरण्येन किंचिच्छुद्धं च वायुना ।
किंचित्प्रक्षालनेनैव सर्वं विष्णोर्निवेदनात् ॥१८३॥
विष्णोर्निवेदिताऽन्नेन यष्टव्याः सर्वदेवताः ।
पितरोऽतिथयश्चैवमिति वेदेषु निश्चितम् ॥१८४॥
अनिवेद्यमभक्ष्यं च नैवेद्यं भक्ष्यमेव हि ।
एवमश्नाति यो भक्त्या पार्षदप्रवरो भवेत् ॥१८५॥
अमृतं सर्ववस्तूनामिष्टसारं सुदुर्लभम् ।
विष्णोर्निवेदितान्नस्य कलां नाऽर्हति षोडशीम् ॥१८६॥
हन्त्यकालिकमृत्युं तदमृतं मूढरंजनम् ।
नैवेद्यं च हरेरेव हरितुल्यं करोत्यहो ॥१८७॥
यदृच्छया तन्नैवेद्यं यो भुंक्ते साधुसंगतः ।
षष्टिवर्षसहस्राणां प्राप्नोति तपसः फलम् ॥१८८॥
यो निवेद्य हरिं भुंक्ते भक्त्या भक्तश्च नित्यशः ।
स पंक्तिपावनो बोध्यः स हरेस्तेजसा समः ॥१८९॥
नाऽहं वेदविधात्र्यस्मि किमहं वक्तुमीश्वरी ।
सुचिरं तु तपस्तप्त्वा मया लब्धस्त्वमीश्वरः ॥१९०॥
त्वया विष्णोः प्रसादेन वंचिताऽहं कथं प्रभो ! ।
इत्यभिधाय दुर्गा त्वं रोदनं कृतवत्यसि ॥१९१॥
ततोऽहं त्वां परप्रेम्णा कृत्वा वक्षसि सादरम् ।
करेण चक्षुषोर्नीरं संमृज्याऽबोधयं मुहुः ॥१९२॥

परितुष्टा तदा त्वं मां भर्तारमुक्तवत्यसि ।
कलेवरं च त्यक्ष्यामि नैवेद्येन विना हरेः ॥१९३॥
बिभर्मि देहं सततं तव सौभाग्यवर्धनम् ।
कथं वहामि सौभाग्यरहितं तु कलेवरम् ॥१९४॥
अपूर्वं हरिनैवेद्यं जन्ममृत्युजराहरम् ।
मह्यं दत्तं न वै यस्मात्पश्य देहं त्यजाम्यहम् ॥१९५॥
इत्युक्त्वा त्वं महादेवि देहं त्यक्तुं समुद्यता ।
तदा मया स्तुता त्वं वै महादेवि ! स्थिरा भव ॥१९६॥
ममाऽपराधमखिलं क्षन्तुमर्हसि सुन्दरि ! ।
मां भृत्यं तपसा क्रीतं कृपां कुरु ममोपरि ॥१९७॥
इच्छैवं श्रीहरेः साक्षान्नाऽहं दातुमपि क्षमः ।
श्रुत्वैवं श्रीहरेरिच्छां दुर्गा तुष्टा बभूव सा ॥१९८॥
ततो जगाम तूर्णं स्वर्णदीं स्नानार्थमित्यथ ।
स्नात्वा सम्पूज्य भक्त्या च कृत्वा पक्वान्नमित्यथ ॥१९९॥
नैवेद्ये मेऽर्पितवती तदा नारायणोऽप्यहम् ।
गत्वा सर्वमहं भुक्त्वा तस्यै दत्वाऽभिवाञ्छितम् ॥२००॥
आजगाम च वैकुण्ठं लक्ष्मि ! प्रसादमेव तम् ।
भर्त्रे दत्वा च शेषं यद् दुर्गा भुक्तवती च तत् ॥२०१॥
एवं शिवाशिवौ भक्तौ प्राग्भवीयौ हि वैष्णवौ ।
वर्तेते सर्वदा मग्नौ यन्मूर्तौ योगिनौ परौ ॥२०२॥
न संवसामि गोलोके वैकुण्ठे तव वक्षसि ।
सदा शिवस्य हृदये निबद्धो भक्तिपाशतः ॥२०३॥
स्वरसिद्धं सुतानेन पञ्चवक्त्रेण शंकरः ।
शश्वद्गायति मद्गाथां तेनाऽहं तद्धृदि स्थितः ॥२०४॥
मम भक्तिं च दास्यं च मुक्तिं च सर्वसम्पदः ।
मय्येवायं सर्वसिद्धीः समर्पयति शंकरः ॥२०५॥
पञ्चवक्त्रेण मन्नाम यो हि गायत्यहर्निशम् ।
मद्रूपं ध्यायति शश्वन्न भक्तः शंकरात्परः ॥२०६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने सतीशिवयोर्हिमाचले विहारः गृहनिर्माणार्थे सती-प्रार्थनागृहयोग्यपर्वतादिनामानि, हिमालये कैलास-पुरीनिर्माणं, सतीकृतसंसारतरणप्रश्नः शिवोक्त-हरिनवधाभक्तिः शिवकृतपूर्वकल्पीयतपसा हरिदर्शनं, हरिभोग्यं शिवस्याऽभोग्य-मितिधत्तूरभस्मादिधारणं, पार्वत्योक्त-हरिनैवेद्यमहिमेत्यादिनिरूपणनामा त्रिसप्तत्यधिकशततमो-ऽध्यायः ॥१७३॥

श्रीनारायण उवाच—

शृणु लक्ष्मि सुतास्नेहात् स्वयं दक्षप्रजापतिः ।
सुतासंभावनार्थं वै समायाच्छंकरगृहम् ॥ १ ॥
समायान्तं महादेवो दक्षं दृष्ट्वा यथोचिताम् ।
दक्षाय प्रददौ पूजां सत्कारं च यथोचितम् ॥ २ ॥
दक्षस्तु मानवान् शंभुर्मानहीनो मुनीश्वरः ।
द्वयोस्तु मीलने दक्ष इयेषाधिकसत्कृतिम् ॥ ३ ॥
शंभुना मुनितुल्यं वै सम्मानं तस्य संकृतम् ।
किन्तु चोत्थायाऽभियानं तत्र नाचरितं तदा ॥ ४ ॥
तत्र हेतुर्महानासीच्छृणु लक्ष्मि ! हितावहम् ।
तपसा चाथ धर्मेण योगेन श्रेष्ठतां गतः ॥ ५ ॥
स्वापेक्षयाऽपकृष्टस्याऽऽगमे नोत्थानमाचरेत् ।
श्रेष्ठे समुत्थितेऽल्पस्य सर्वपुण्यक्षयो भवेत् ॥ ६ ॥
विचार्येत्थं हरस्तत्र दक्षं प्रति न चोत्थितः ।
किन्तु दक्षस्तमोभावं प्राप्य चुकोप चान्तरे ॥ ७ ॥
बालोऽयं शंकर इति मत्वा नोवाच किंचन ।
एवमेव प्रकुपितो गृहं जगाम मौनतः ॥ ८ ॥
अथ सतीं गृहं प्राप्तां दक्षः प्राह सुदुर्मनाः ।
अन्ये जामातरः श्रेष्ठा भर्तुस्तव पिनाकिनः ॥ ९ ॥
सर्वे ह्युत्थाय सम्मानं कुर्वन्ति मम चादरात् ।
शंभुरुत्थाय सम्मानं न करोति सुते मम ॥१०॥
अव्यावहारिकः शंभुर्बालिशः प्रतिभाति मे ।
अस्तु शोकं न वै कुर्वे बाले का नाम धर्षणा ॥११॥
इत्युक्त्वा स्वीयपुत्र्याः सः सम्मानं विदधे बहु ।
सती सत्कारमादाय कैलासे स्वगृहं गता ॥१२॥
प्रोक्तवती शंभवे तत्तदा वै शंभुना प्रिया ।
बोधिता स्पष्टरूपेण मा नश्येद् दक्षसुकृतम् ॥१३॥
सती ज्ञात्वा च तद्धार्दं किंचिन्नोवाच तत्र वै ।
पितुर्लाभाय शर्वेण कृतं तत्सुखदं मतम् ॥१४॥
अथापि शंभुना शप्तं दक्षो ह्याङ्गिरसो द्विजः ।
सम्मानं चेच्छति मत्तोऽधिकं चाऽघटितं बहु ॥१५॥
तस्मात्स क्षत्रियां योनिं यातु प्राचेतसां गृहे ।
प्राचेतसः क्षत्रियः स भवतु यत्र नेषणा ॥१६॥
सम्मानस्याऽधिका मत्सदृशाद्भवेत् कदाचन ।
इति शंभोः क्षुद्रशापोऽभवद् दक्षप्रजापतेः ॥१७॥
नारदस्यापि शापोऽभूत् पुनर्जन्मग्रहे यतः ।
दक्षो द्वितीयं जन्मेदं प्राचेतसां गृहेऽलभत् ॥१८॥

तथापि पूर्वसंस्कारो वर्तते दक्षमानसे ।
प्राग्भवीयजनकोऽहं सत्या अस्मीति मानयन् ॥१९॥
वर्तते सर्वथा मानी संस्कारो नैव नश्यति ।
जन्मान्तरे च कः कस्य श्वशुरो जननी पिता ॥२०॥
शंभुनैव गणयते भवेऽत्र श्वशुरं निजम् ।
लोकपालं गणयति क्षत्रियं बहुमानिनम् ॥२१॥
अथापि सत्याः शंभोश्च जातिस्मरस्तु वर्तते ।
दक्षः पूर्वः एवाऽयं सतीपिता पुनर्भवः ॥२२॥
तथापि चात्र किं मेऽस्ति गतं पूर्वभवेऽखिलम् ।
इति मत्वा न वै शंभुर्मनुते श्वशुरं निजम् ॥२३॥
अथैकदा पुनस्तादृक् प्रसंगः समभूत् प्रिये ।
शंभुः स्वयं स्वकैलासे नगरायाऽविचारयत् ॥२४॥
विश्वकर्माणमाहूय पुरो रम्यं सुस्मृद्धिमत् ।
स्वीयसुरभिशालायां कारयामास सुन्दरम् ॥२५॥
भवनं विस्तृतं सम्यक् तत्र सिंहासनं वरम् ।
तत्र छत्रं महादिव्यं सर्वथाऽद्भुतमुत्तमम् ॥२६॥
तद्वास्तुकरणार्थं वै चकार सुमहोत्सवम् ।
शक्रादीनाजुहावाऽशु समस्तान् देवतागणान् ॥२७॥
सिद्धगन्धर्वनागादीनुपदेष्टॄँश्च कृत्स्नशः ।
देवान्मुनीनागमाँश्च विधिं शिष्यैःऋषीनपि ॥२८॥
देवीः सर्वा अप्सरोभिर्नानावस्तुभिरन्विताः ।
देवानां च तथर्षीणां सिद्धानां फणिनामपि ॥२९॥
आनयन्मंगलहस्ताः कन्याः षोडश षोडश ।
वीणामृदंगप्रमुखवाद्यान्नानाविधाँस्तथा ॥३०॥
उत्सवं कारयामास वादयित्वा सुगायनैः ।
राज्याभिषेकयोग्यानि द्रव्याणि सकलौषधैः ॥३१॥
प्रत्यक्षतीर्थपाथोभिः पंचकुंभाँश्च पूरितान् ।
तथाऽन्याः संविधा दिव्या आनयत् स्वगणैस्तदा ॥३२॥
ब्रह्मघोषं महारावं चक्रुस्तत्र तु भूसुराः ।
हरो हरिं सन्मुहूर्ते नूत्ने सिंहासने वरे ॥३३॥
उपावेश्य बहुप्रीत्या भूषयामास सर्वशः ।
आबद्धय रम्यमुकुटं कृतकौतुकमंगलम् ॥३४॥
विष्णुं तुष्टाव तं शंभुः स्वतन्त्रं भक्तवत्सलम् ।
अन्यं सर्वं समाजं च नमस्कृत्य हरः स्थितः ॥३५॥
दक्षोऽत्र मानवानायात् प्रजापतिभिरन्वितः ।
शंभुना सत्कृताः सर्वे दक्षोऽपि सह सत्कृतः ॥३६॥
भोजनाच्छादनपानमानयानविहारकैः ।
सत्कृताः सर्वथा सर्वे दक्षश्चैच्छद्विशेषतः ॥३७॥
सम्मानं तु निजं तत्र श्वाशुर्यस्याऽभियोगतः ।
दक्षः शंभोर्गृहमध्ये जगाम स्वसुताननम् ॥३८॥
द्रष्टुं प्रष्टुं सुखं शान्तिं तदा शंभुस्तु नोत्थितः ।
दक्षस्तदाऽऽन्तरेऽतीव मानी चुकोप वै पुनः ॥३९॥
सतीमापृच्छय कुशलं सुखं चाऽनामयं तथा ।
दक्षो जगाम हर्म्यं स्वं चान्येऽपि स्वगृहान् गताः ॥४०॥
प्रत्यक्षं तदिदं चाऽभूदवमानं प्रजापतेः ।
अनाहूतेऽपरिचिते ह्यनागमनमुत्तमम् ॥४१॥
एवं मनसि सन्धार्य तदापि दक्ष आत्मनि ।
अवमानं ररक्षैव बहिर्नैवाऽप्रकाशयत् ॥४२॥
अथ कालान्तरे नैमिषारण्ये च तपोधनाः ।
दीर्घसत्रं प्रकुर्वन्तो भृग्वाद्यास्तु महर्षयः ॥४३॥
आसन्नेकत्रितास्तत्र समाजग्मुर्हरादयः ।
आगताँस्ते च ददृशुर्मुनयो दीर्घसत्रिणः ॥४४॥
उत्तस्थुर्युगपत्सर्वे सहर्षाश्च समुत्सुकाः ।
दत्वाऽर्घ्यपाद्यं सत्कृत्य मुनयो वीतकल्मषाः ॥४५॥
पश्यन्ति स्म हरं विष्णुं ब्रह्माणं पुलहादिकान् ।
मनवश्चागतास्तत्र तथा दक्षोऽपि चागतः ॥४६॥
यदृच्छया समापन्नः पूजितश्च महर्षिभिः ।
स्तुतिभिः प्रणिपातैश्च तथा सर्वैः सुराऽसुरैः ॥४७॥
अभिपूजित एवासौ निषसाद सभान्तरे ।
रुद्रेण न कृता तस्याऽभ्युत्थाननतिसत्क्रियाः ॥४८॥
विशेषतः स्वस्य मानं न जातं रुद्रसत्कृतम् ।
चुकोप रुद्रं त्वरितं तदा दक्षः प्रजापतिः ॥४९॥
उवाच परुषं वाक्यं रुद्रमुद्दिश्य तत्र वै ।
एते नमन्ति सर्वे मां विप्राः सुराऽसुरादिकाः ॥५०॥
अभ्युत्थानादिना सर्वे मानयन्ति भृशं च माम् ।
कथं दुर्जनवच्चायं नैवोत्तिष्ठति भूतपः ॥५१॥
श्मशानवासी निस्त्रपः प्रेतपिशाचसंयुतः ।
अनुत्तमो मत्तसखा करोति न नतिं च मे ॥५२॥
जात्या च कर्मभिर्हीनः पाखण्डी दुर्जनप्रियः ।
पापशीलश्चोद्धतश्च निन्दकोऽशुचिरेव च ॥५३॥
त्याज्योऽयं सर्वदा सद्भिर्बहिष्कार्यश्च सर्वथा ।
यदा यदा गृहं तस्य गतोऽहं मूर्खराडयम् ॥५४॥
नैवोत्तिष्ठति सामीप्ये मेऽवमानं करोति वै ।
तस्मादयं यज्ञबाह्यो भवत्वद्यदिनात्सदा ॥५५॥
रुद्रस्याऽनुचरां ये च तेऽपि वेदबहिष्कृताः ।
पाखण्डवादसंयुक्ताः शिष्टाचारविवर्जिताः ॥५६॥

कपालिनः पानरताः कालानना भवन्त्विति ।
नन्दी निशम्य तद्वाक्यं दक्षं प्रति रुषान्वितः ॥५७॥
शशाप दक्षं तत्पक्षान् ब्राह्मणाँश्चान्यवर्णिनः ।
वेदवादरता यूयं नान्यदस्तीतिवादिनः ॥५८॥
कामात्मानः स्वर्गपराः क्रोधलोभसमन्विताः ।
वैदिकविधिना विप्रा भवन्तु शूद्रयाजकाः ॥५९॥
दरिद्रिणो भवन्त्वत्र प्रतिग्रहरतास्तथा ।
असत्पथगताः सर्वे भवन्तु ब्रह्मराक्षसाः ॥६०॥
शंभुः शान्तस्तदा प्राह नन्दिनं स्वस्य सेवकम् ।
कोपं नाऽर्हसि वै कर्तुं ब्राह्मणान्प्रति सर्वदा ॥६१॥
कोऽयं कस्त्वं क्व चाऽहं वै कस्माच्छप्तास्त्वया द्विजाः ।
प्रपंचरचनां त्यक्त्वा प्रबुद्धो भव सेवक ॥६२॥
शांतिं च प्रापिताः सर्वे ब्रह्मविष्णुसुरादिभिः ।
दक्षो गतो गृहं स्वस्य स्वाऽवमानं स्मरन् मुहुः ॥६३॥
ततः काले महान् यज्ञः समारब्धश्च तेन वै ।
दक्षेण दीक्षितेनातिविस्तारस्तत्र चर्षयः ॥६४॥
आहूताश्च वशिष्ठाद्यास्तपस्विनः समाययुः ।
कश्यपोऽत्रिर्वामदेवो ह्यगस्त्यश्च भृगुस्तथा ॥६५॥
पराशरो दधीचश्च व्यासश्च गौतमः सितः ।
गर्गः पैलो भरद्वाजो भार्गवः ककुपः कृतिः ॥६६॥
तथाऽन्ये ऋषयो देवा लोकपाला दिशाधिपाः ।
गन्धर्वाः किन्नरा विद्याधराश्चाप्सरसां गणाः ॥६७॥
सत्यलोकात्समानीतः सावित्रीसंयुतस्त्वजः ।
वैकुण्ठाच्च ततो विष्णुर्लक्ष्मीरमादिसंयुतः ॥६८॥
इन्द्रस्तत्र समानीतश्चेन्द्राण्या सह स्वर्गतः ।
तथा चन्द्रोऽपि रोहिण्या वारुण्या वरुणस्तथा ॥६९॥
कुबेरः पुष्पकारूढो मारुतो मृगवाहनः ।
पावको बस्तयानश्च नैर्ऋतः प्रेतवाहनः ॥७०॥
दाराः पुत्राश्च शिष्याश्च पार्षदा मन्त्रिणस्तथा ।
परिवारास्तथा वेदास्तेषां तेषां समागताः ॥७१॥
एवमन्ये समायाता दक्षयज्ञे कृतादराः ।
सत्कृतास्तेन दक्षेण सर्वे ते बहुवस्तुभिः ॥७२॥
भवनानि महार्हाणि सुप्रभाणि महान्ति च ।
त्वष्ट्रा कृतानि दिव्यानि तेभ्यो दत्तानि तेन वै ॥७३॥
तेषु सर्वेषु धिष्ण्येषु यथायोग्यं च ते स्थिताः ।
सम्मानिता अराजँस्ते सकला विष्णुना मया ॥७४॥
अथाऽसिक्नी सतीमाता पूर्वदक्षविवाहिता ।
दक्षं जातं पुनर्ज्ञात्वा तत्राऽऽगत्याऽवसत् सदा ॥७५॥
सा चाऽसिक्नी तत्र शंभुं यदर्थमतपत्सती ।
न ददर्श समायातं तदा प्राह प्रजापतिम् ॥७६॥
दक्षं नत्वाऽवदत्प्रह्वीकृताऽन्तःकरणा नता ।
कथं सती तथा शंभुर्दृश्येते नात्र तूत्सवे ॥७७॥
दक्षः प्राह तदाऽसिक्नीं तयोर्नास्ति प्रयोजनम् ।
सती तु सर्वदा स्निग्धा पित्रोर्मानाभिलाषिणी ॥७८॥
शठः शर्वो न वै स्निग्धो मेऽवमानप्रकारकः ।
अतीव गर्वितो जातः सतीं मे प्राप्य कन्यकाम् ॥७९॥
कस्यचिन्नाऽप्यसौ प्रायो न कश्चिदस्य वा प्रियः ।
किंवंश्यस्त्वेष किंगोत्रः किंदेशीयः किमात्मकः ॥८०॥
किंवृत्तिः किंसमाचारो विषादी वृषवाहनः ।
न प्रायशस्तपस्व्येष क्व तपः क्वाऽस्त्रधारणम् ॥८१॥
न गृहस्थेषु गण्योऽसौ श्मशाने तिष्ठते सदा ।
नाऽयं तु ब्रह्मचारी स्याद् यतः सत्या विवाहितः ॥८२॥
वानप्रस्थ्यं न चैवास्मिनैश्वर्यमदमोहिते ।
न जाने ब्राह्मणो नास्ति वेदश्चैनं न वेत्ति यत् ॥८३॥
न जाने क्षत्रियो नास्ति प्रायः शस्त्रास्त्रसंग्रहात् ।
क्षतात्त्राणं नास्ति चास्मिन्सर्वेषां प्रलयप्रिये ॥८४॥
निर्धनोऽरण्यरतिमान् वैश्योऽपि नैव भाति मे ।
कथं शूद्रे समावेशो नागयज्ञोपवीतिनः ॥८५॥
एवं वर्णाश्रमातीतः को भवेनैव बुध्यते ।
सर्वैः प्रकृत्या ज्ञायेत स्थाणुः प्रकृतिवर्जितः ॥८६॥
प्रायशः पुरुषो नाऽसौ यतोऽर्धप्रमदामयः ।
नापि वै केवलानारी यतोऽसौ श्मश्रुलाननः ॥८७॥
नापि नपुंसको वास्ति लिंगं त्वस्य प्रपूज्यते ।
न चापि बालरूपोयं बहुवर्षोद्भवो यतः ॥८८॥
मन्वते तं मरीच्याद्या वृद्धं नाऽयं युवा यतः ।
वृद्धोऽपि कथमास्थेयो जरामृत्युविवर्जितः ॥८९॥
संहारयति सर्वान्वै तथाप्येष न पातकी ।
पुण्यलेशः कथं चात्र ब्रह्मस्तकनाशके ॥९०॥
मुण्डहारधरे क्वाऽस्य शुचित्वं वै दिगम्बरे ।
नाऽयं च धनवान्नैवाऽपत्यवान्न कुटुम्बवान् ॥९१॥
नाऽस्य माता नाऽस्य गोत्रं न वंशो नापि देहवान् ।
श्मशाने वर्तते नित्यं श्वादो नैवोपलक्ष्यते ॥९२॥
किं बहूक्तेन मे देवि ज्ञायते नाऽस्य चेष्टितम् ।
अहो धाष्ट्यं मां प्रत्येव जटिलस्याऽवमानकृत् ॥९३॥
यदासनान्नोत्थितोऽयं दृष्ट्वा मां श्वशुरं गुरुम् ।
एतादृशा भवन्त्येव मातापितृविवर्जिताः ॥९४॥

निर्गुणा अकुलीनाश्च कर्मभ्रष्टा निरंकुशाः ।
यथेष्टाचरणाः स्वाभिमानिनो यन्तृवर्जिताः ॥९५॥
अकिंचना अपि स्तब्धा भवन्तीश्वरमानिनः ।
जामाता जम्बुकतुल्यः श्वशुरे मृगपायते ॥९६॥
असिक्नि तव जामाता मम मस्तकनाशकः ।
यतोऽवमन्ता मे जातस्तस्मान्नाऽऽकारितो मया ॥९७॥
तस्याहं गर्वसर्वस्वं हरिष्यामि न संशयः ।
यथाऽवमानितश्चाऽहमवमंस्ये तथैव तम् ॥९८॥
तस्मात्त्वया न स्मर्तव्यो मा यज्ञे फलभाग्भवेत् ।
इति दक्षेणाऽग्र्यपत्नी बोधिता मौनमास्थिता ॥९९॥
विनिःश्वासं तदा मुक्त्वा दीर्घं सुतां विनाऽशपत् ।
नोत्सवे स्वसुतापुत्रजामात्राद्यास्यदर्शनम् ॥१००॥
प्रज्वलतूत्सवस्तादृक् कुसवः स तु कथ्यते ।
यत्राऽसुसमपुत्र्यादिदर्शनं नोपलभ्यते ॥१०१॥
इत्यसिक्न्या मनोदग्धो यज्ञारंभस्तु भस्मितः ।
राज्यमातुः शापदग्धोऽवश्यं दग्धो भविष्यति ॥१०२॥
दक्षश्चागत्य मां विष्णुं यज्ञपूरुषमित्यपि ।
महाक्रतूपद्रष्टारं चक्रेऽर्पितस्वमस्तकः ॥१०३॥
प्राह देवानृषीन् विप्रान्प्रजापाँश्च मनूँस्तथा ।
अहं यियक्षुर्यूयं मे यज्ञसाहाय्यकारिणः ॥१०४॥
भवत यज्ञसंभारानानयत त्वरान्विताः ।
शृणु लक्ष्मि ! वर्तमाने तीर्थे कनखले मखे ॥१०५॥
तस्यर्त्विजोऽभवन्सर्वे ऋषयो ब्रह्मवादिनः ।
भृग्वाद्याश्च त्रिकालज्ञा वेदमूर्तय एव ते ॥१०६॥
अधिष्ठाताऽत्वहं विष्णुः सह सर्वमरुद्गणैः ।
ब्रह्मा तत्राऽभवद्ब्रह्मा त्रयीविधिनिदर्शकः ॥१०७॥
तथैव सर्वे दिक्पाला द्वारपालाश्च रक्षकाः ।
सायुधाः सपरीवाराः कुतूहलकराः सदा ॥१०८॥
उपतस्थे स्वयं यज्ञो मूर्तिमाँस्तस्य चाऽध्वरे ।
वेदधराः स्वयं महामुनयश्चाऽभवन्मखे ॥१०९॥
अग्निः स्वयं निजं रूपं चक्रे सहस्रधा तदा ।
हविषां ग्रहणायाऽऽशु तत्र यज्ञमहोत्सवे ॥११०॥
अष्टाशीतिसहस्राणि जुह्वति स्म च ऋत्विजः ।
उद्गातारश्चतुःषष्टिसहस्राणि सुरर्षयः ॥१११॥
अध्वर्यवोऽथ होतारस्तावन्तो नारदादयः ।
सप्तर्षयः सामगाथाः कुर्वन्ति स्म पृथक्पृथक् ॥११२॥
सिद्धगन्धर्वविद्याध्राऽऽदित्ययज्ञगणान्बहून् ।
समस्तान्नागसर्पांश्च वव्रे दक्षो महाध्वरे ॥११३॥
द्विजर्षिसुरराजर्षिवसुनिधिगणा नृपाः ।
मित्रसचिवसैन्याढ्या वृता मखोपवेत्त्रकाः ॥११४॥
दीक्षायुक्तस्तदा दक्षः कृतकौतुकमंगलः ।
भार्यया सहितो रेजे कृतस्वस्त्ययनो भृशम् ॥११५॥
तत्र यज्ञे वृतं सर्वे न वृतो हर एकलः ।
कपालीति विनिश्चित्य तस्य यज्ञार्हता नहि ॥११६॥
अवमन्तेति कृत्वैव यज्ञे भागोऽपि मास्त्विति ।
कपालिभार्येति सती पूर्वजा स्वसुताऽपि च ॥११७॥
नाऽऽहूता यज्ञविषये दक्षेणाऽगुणदर्शिना ।
एवं प्रवर्तमाने वै दक्षयज्ञे महोत्सवे ॥११८॥
स्वकार्यलग्नास्तत्राऽऽसन् सर्वे तेऽध्वरसम्मताः ।
एतस्मिन्नुत्सवे तत्र न दृष्ट्वा शंकरं सतीम् ॥११९॥
प्रोद्विग्नमानसः शैवो दधीचो वाक्यमब्रवीत् ।
दक्षप्रजापते दक्ष साक्षाद् धातृस्वरूपधृक् ॥१२०॥
न त्वयि दृश्यते तेजः सामर्थ्यं वा क्रतुकृते ।
यादृशः क्रतुरारब्धो न वै पारयितुं क्षमः ॥१२१॥
क्रतुस्तु नैव कर्तव्यो नास्ति क्रतुसमो रिपुः ।
कर्तव्यश्च तदा यज्ञो यदि सम्पत्तिरीदृशी ॥१२२॥
साक्षादग्निः स्वयं मूर्तिमान् कुण्डेऽत्र विराजते ।
इन्द्रादयस्तथा देवाः साक्षात्सन्ति समागताः ॥१२३॥
मन्त्राः सर्वेऽपि साक्षाच्च वर्तन्ते यज्ञकर्मसु ।
यज्ञश्च भगवान् साक्षान्मूर्तश्चात्र विराजते ॥१२४॥
बृहस्पतिः स्वयं चाऽत्राऽऽचार्यस्थाने सुशोभते ।
ब्रह्मा साक्षाद्ब्रह्मस्थाने कर्मकाण्डी भृगुः स्वयम् ॥१२५॥
अयं पूषा भगश्चायं साक्षाद्देवीसरस्वती ।
शारदा च तथा साक्षात् लक्ष्मीर्नारायणः स्वयम् ॥१२६॥
दिक्पाला लोकपालाश्च साक्षाद्रक्षाकृतः स्वयम् ।
जामाता त्वेष ते धर्मः पत्नीभिः समुपस्थितः ॥१२७॥
त्वं च पत्न्या समं दीक्षां प्राप्तोऽसि यजने स्वयम् ।
सप्तविंशतिपत्नीभिः सह ते कार्यकृच्छशी ॥१२८॥
मारीचः कश्यपश्चायं राजसूयस्य कारकः ।
तव यज्ञे समायातो दत्तत्रैलोक्यदक्षिणः ॥१२९॥
तस्य पत्न्यस्तव सुतास्त्रयोदश समागताः ।
अन्या अपि सुपुत्र्यस्ते जामातारश्च संगताः ॥१३०॥
कामधेनव आज्यादिहवींषि तेऽर्पयन्ति वै ।
कल्पवृक्षाः स्वयं चात्र समित्कुशान्वहन्ति च ॥१३१॥
काष्ठपात्राणि यानानि मण्डपादीनि यानि च ।
अपेक्ष्यन्ते तानि वृक्षैरर्प्यन्ते स्वयमागतैः ॥१३२॥

अभ्यागतर्त्विजां भूषा विश्वकर्मा करोति च ।
वासांसि वसवश्चाष्टौ ददत्यत्र मखे तव ॥१३३॥
स्वयं लक्ष्मीः सुवासिनीरलंकरोति ते मखे ।
सर्वं सुखकरं दक्ष तव यज्ञेऽत्र दृश्यते ॥१३४॥
जीवहीनो यथा देहः क्वापि नैव तु शोभते ।
भूषितोऽपि तथा यज्ञः शंभुं विना न शोभते ॥१३५॥
एतद् दुःखकरं चात्र श्मशानमिव भूमिका ।
शंभुं विना तव यज्ञश्चिताभूरिव लक्ष्यते ॥१३६॥
सर्वे देवर्षिप्रमुखा मद्वाक्यं शृणुतात्र वै ।
कस्मान्न विद्यते शंभुरस्मिन् यज्ञमहोत्सवे ॥१३७॥
यदधीनानि सर्वाणि मंगलानि भवन्ति च ।
सोऽसौ प्राणः क्रतोश्चात्र दृश्यते न कथं हरः ॥१३८॥
अमंगलान्यपि येन मंगलान्यधिवर्तिना ।
भवन्ति स कथं नात्र चायातः शंकरः शिवः ॥१३९॥
तस्माद्दक्षेण कर्तव्यमाह्वानं परमेशितुः ।
अथवा ब्रह्मणा वा च विष्णुना ऋषिभिः सह ॥१४०॥
द्विजैः सिद्धैर्लोकपालैरिन्द्रादिभिः सहाऽधुना ।
सर्वैर्भवद्भिर्गन्तव्यं गिरौ यत्रास्ति शंकरः ॥१४१॥
दाक्षायण्यासमं शंभुमानयध्वं शुभं भवेत् ।
शंकराऽऽनयने यज्ञोऽवभृथपूर्तिको भवेत् ॥१४२॥
भविष्यत्यन्यथा विघ्नं सत्यं भावि ब्रवीम्यहम् ।
मया निवेदितव्यं यत् तदत्रैव निवेदितम् ॥१४३॥
श्रुत्वैतद्वै दधीच्युक्तं भृशं जज्वाल यज्ञकृत् ।
दक्षः रोषपरीतात्मा प्रोवाच कलहान्वितम् ॥१४४॥
ब्राह्मणोऽसि दधीचे त्वं यच्छ मौनं बहिर्व्रज ।
यज्ञदीक्षास्थितस्तेऽहं वैशसं कर्तुमक्षमः ॥१४५॥
पृष्टः केन समाहूतो यदत्राऽऽगत्य कत्थसे ।
मूलं विष्णुर्देवतानां यत्र धर्माः सनातनाः ॥१४६॥
सर्वमंगलमांगल्यः समानीतो मयाऽत्र सः ।
यत्र वेदास्तथा यज्ञाः कर्माणि विविधानि च ॥१४७॥
स्वयं वै यज्ञपुरुषः किमूनं यज्ञकर्मणि ।
सर्वकर्मप्रतिष्ठोऽयं विष्णुर्मे वर्तते मखे ॥१४८॥
यत्र त्रिलोकनाथोऽयं शतक्रतुः समागतः ।
त्रयस्त्रिंशत्प्रकोटीनाममराणां पतिर्मखे ॥१४९॥
सत्यलोकात्समायातो ब्रह्मा सावित्रिकायुतः ।
वेदोपनिषदैः सर्वैरागमैर्ब्राह्मणैः सह ॥१५०॥
धर्मराट् सह पत्नीभिः पुत्रपौत्रैः समागतः ।
तथा यूयं च ऋषयो धर्माऽधर्मविदोऽपरे ॥१५१॥
कुबेरो धनदाता च पत्नीभिः सह पावकः ।
बृहस्पतिः स्वयं यज्ञाचार्यत्वेन व्यवस्थितः ॥१५२॥
एते यज्ञोचिताः शान्ताः पावनाः प्रमहर्षयः ।
मम यज्ञे कर्मकरास्त श्मशानं ब्रवीष्यहो ॥१५३॥
श्मशानं तु सदा यत्र भूतप्रेतपिशाचकाः ।
गणा वसन्ति तत्रैव शंकरस्य गृहे भवेत् ॥१५४॥
यत्र कर्मकराः सर्वे मूर्धन्याश्च समागताः ।
किमत्राऽस्माकमूनं यद्रुद्रेणापि प्रयोजनम् ॥१५५॥
यत्रार्त्विज्यं भजन्तेऽमी वशिष्ठाद्या महर्षयः ।
तं त्वं चोपमिमीषेऽत्र चिताभूम्या शुभाश्रयम् ॥१५६॥
कन्या दत्ता मया तस्मै ब्रह्मणा नोदितेन वै ।
हरोऽकुलीनो विप्रो न मातापितृविवर्जितः ॥१५७॥
भूतप्रेतपिशाचेशो मानी स्तब्धोऽशुचिः सदा ।
कर्मण्यस्मिन्न योग्योऽसौ यस्मान्नानीतवानहम् ॥१५८॥
तस्मान्नेदृक्पुनर्वाच्यं यज्ञविघ्नकरं त्वया ।
यज्ञा विना हरिं कार्या मास्तु स यज्ञभागभुक् ॥१५९॥
निशम्येति दधीचिर्वै पुनः प्राह नयान्वितम् ।
सर्वमंगलमांगल्यो हरिर्भवति सर्वथा ॥१६०॥
तथापि शंकरो वेदे विष्णुर्नारायणो मतः ।
दुर्वासाः शंकरस्यांशस्तद्धस्ते वै शतक्रतुः ॥१६१॥
पतितः प्राप निःश्रीकभावं क्षणेन यत्पुनः ।
भर्गं चाराध्य जलधौ प्रापत्स्वाममरावतीम् ॥१६२॥
धर्मोऽत्र क्रतुरक्षार्थं स्थितोऽस्ति वर्ततां सदा ।
किन्तु श्वेतेन मुनिना शिवभक्तेन धर्मराट् ॥१६३॥
जितो मृत्युसमेतः सः किं बलं वेद्मि सर्वथा ।
धनदस्त्र्यम्बकसखः स्थास्यति न विना शिवम् ॥१६४॥
अग्निस्तस्य ललाटस्थं नेत्रं भवति सर्वदा ।
यदा तु चन्द्रमास्तारामधर्षीत् त्र्यम्बकस्तदा ॥१६५॥
गुर्वाराधित एवाऽभूत् देवाचार्यस्य रक्षकः ।
एते सर्वेऽपि जानन्ति शिवं यदा शिवं सुखम् ॥१६६॥
यदागाम्यशिवं भावि तदा रुद्रोऽस्त्ययं शिवः ।
यदि मे ब्राह्मणस्यैकं धार्यते वचनं हृदि ॥१६७॥
शंभुमाहूय यज्ञोऽयं प्रवर्ततां महामखः ।
विना तेन क्रतुश्चायं कुतोऽपि न कुतो भवेत् ॥१६८॥
सति शंभौ फलिष्यन्ति युष्माकं वै मनोरथाः ।
अर्थहीना यथा वाणी धर्महीना यथा तनुः ॥१६९॥
पतिहीना यथा नारी पुत्रहीना यथा गृहाः ।
गंगाहीना यथा देशाः श्रुतिहीना यथा द्विजाः ॥१७०॥

दानहीना यथा सम्पत् तिलहीनं च तर्पणम् ।
मन्त्रहीनं यथा राज्यं सुखं पत्नीं विना यथा ॥१७१॥
दर्भहीना यथा सन्ध्या होमो हविर्विना यथा ।
निष्फलानि समुक्तानि यज्ञो हरं विना तथा ॥१७२॥
एवं दधीचिनाऽऽख्यातं दक्षो जग्राह नैव तत् ।
प्रोवाच च भृशं क्रुद्धः का चिन्ता तव मे क्रतोः ॥१७३॥
क्रतुकर्माणि सिद्ध्यन्ति यथार्थकरणादिह ।
अयथार्थकृते नैव सिद्ध्येत् कर्मापि चेशितुः ॥१७४॥
दधीचिश्च तदा प्राह यथार्थकरणादपि ।
ईश्वरप्रातिकूल्याच्च सिद्धिमपि विनश्यति ॥१७५॥
अमंगलो मंगलो वा क्रतुं यदाऽऽगमिष्यति ।
तदा क्रतुः कृतकृत्यो भविष्यत्यन्यथा क्षयः ॥१७६॥
एवं ब्रूवति चुक्रुधे दधीचौ दक्ष ऐरयत् ।
ब्राह्मणापसदं निष्कासयितुं किंकरान् स्वकान् ॥१७७॥
दधीचिर्वीक्ष्य वै प्राह दक्षं गर्वाऽतिमोहितम् ।
किं मां दूरयसे मूढ दूरं भवतु वै भवान् ॥१७८॥
एभिः समं मंगलेभ्यो हीनो भवतु सर्वदा ।
अस्थले क्रोधजो वह्निस्तव मूर्ध्नि पतिष्यति ॥१७९॥
इत्युक्त्वा निर्ययौ यज्ञस्थलाद्दधीचिरर्थवित् ।
निर्ययुश्च्यवनोऽगस्त्यो दुर्वासा ऋचीकस्तथा ॥१८०॥
उद्दालक उपमन्युरुत्तंको गर्गगौतमौ ।
माण्डव्यो वामदेवश्च गालवश्चेतरे तथा ॥१८१॥
अन्येऽपि च त्रिकालज्ञाः शैवा यज्ञाद्विनिर्ययुः ।
तदा दक्षः शिवद्रोही हसन् सर्वान् समब्रवीत् ॥१८२॥
गता वै कण्टकाः सर्वे जातं मे सम्मतं बहू ।
एते खला वेदबाह्यास्त्याज्या वै यज्ञकर्मणि ॥१८३॥
वैदिकाश्च सुरा विप्रा ब्रह्मविष्णुपुरोगमाः ।
यज्ञं मे सफलं पूर्णं सर्वे कुर्वन्तु मा चिरम् ॥१८४॥
गतेषु शिवपक्षेषु प्रावर्तत महामखः ।
ये स्थिता ब्राह्मणास्तत्र तेभ्यो द्विगुणदक्षिणाम् ॥१८५॥
भूयसीर्दक्षिणाः प्रादादन्येभ्यश्चाधिकं धनम् ।
सर्वे जामातरस्तेन तोषिता भूरिशो धनैः ॥१८६॥
कन्याश्चालंकृताः सर्वा महाविभवदापनैः ।
ऋषिपत्न्योऽपि बहुशो देवपत्न्योऽप्यनेकशः ॥१८७॥
तथा पुरांऽगना देशांऽगनाश्चापि प्रपूजिताः ।
एवमेव प्रवर्तिते यज्ञे दक्षस्तु नित्यशः ॥१८८॥
भोजयति तर्पयति चार्पयति धनादिकम् ।
अग्निर्मन्दाग्नितां तेन प्राप्तवान् प्रत्यहं शनैः ॥१८९॥
स्वाहाकारैः स्वधाकारैर्वषट्कारैः सुरादयः ।
तृप्ता नित्यं प्रजायन्ते सदन्नभोजनादिभिः ॥१९०॥
रचिता गिरयस्तत्र पक्वान्नानां स्थले स्थले ।
घृतकुल्या मधुकुल्या दुग्धकुल्याः सहस्रशः ॥१९१॥
गुडानां शर्कराणां च फलानां राशयः कृताः ।
दुकूलानां च रत्नानां भोग्यानां शिखराणि च ॥१९२॥
कृतानि यज्ञवाटश्च स्वर्णरूप्यमयः कृतः ।
ध्वनिर्मंगलगीतानां व्यानशे सर्वतोमुखम् ॥१९३॥
जहृषे चाप्सरोवृन्दैर्गन्धर्वैर्मुमुदेतराम् ।
विद्याधरैर्ननन्दे च वसुधा ववृधे भृशम् ॥१९४॥
प्रत्यहं प्राणिनस्तत्र तृप्यन्ति स्वेष्टवस्तुभिः ।
एवं प्रवर्तते यज्ञो नारदस्तु क्रतुस्थलात् ॥१९५॥
उत्तिष्ठन्सर्वतः पश्यन् सिञ्चन्सुकलहांकुरम् ।
सर्वमनःसु संकुर्वन् संशयं रुद्रमीलने ॥१९६॥
उदडीयत गगने ययौ कैलासपर्वतम् ।
तदा संकल्पा भीरूणां पलायनकृतौऽभवन् ॥१९७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने दक्षस्य शंभुगृहे त्रिवारगमनं, पुनःपुनरवमानम्, नैमिषारण्ये भृग्वादीनां परस्परशापदानं, दक्षकृतशंभुनिन्दा, कनखले दक्षयज्ञे देवादीनामागमनं, शंभोरनागमने दधीचस्य दक्षाय शापादिकमित्यादिनिरूपणनामा चतुःसप्तत्यधिकशततमोऽध्यायः ॥१७४॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! कलहस्य गृहं रुद्रगृहं गतम् ।
द्वयोर्वै गृहयोरैक्ये किमनिष्टं न जायते ॥ १ ॥
नारदो व्योममार्गेण प्राप्य वै धाम शांकरम् ।
क्षणं तत्र महोद्याने कैलासेऽवातरद्भुवि ॥ २ ॥
विशश्राम हरिं ध्यायन् सती तदन्तरे बहिः ।
तस्मिन्नेवोद्यानवर्येऽविहरत् स्वसखीयुता ॥ ३ ॥
तया दृष्टानि व्योम्न्येव स्वर्गात्पृथ्वीं पतन्ति वै ।
विमानानि भगिनीनां दासदासीयुतानि च ॥ ४ ॥
पतिभिः कृतशृंगारप्रभृतीनां महान्ति हि ।
स्वसखीं विजयां प्राहाऽऽलोक्य सती तु रोहिणीम् ॥ ५ ॥
रे सखीप्रवरे पश्य रोहिणी भगिनी मम ।
चन्द्रयुक्ता विमानस्था क्व याति पृच्छ सत्वरम् ॥ ६ ॥
शीघ्रं तु विजयाऽऽपृच्छ्य ज्ञात्वा यज्ञोत्सवादिकम् ।
दक्षगृहे वर्ततेऽतस्तत्र यातीति चाह ताम् ॥ ७ ॥

तावदन्यविमानानि प्रयान्ति व्योममार्गतः ।
तान्यप्यालोक्य बहुधा सती चेतस्यचिन्तयत् ॥ ८ ॥
दक्षः पिता मम माता ह्यसिक्नी वीरिणी तथा ।
आह्वानं मे न कुर्वन्ति विस्मृताः किं सतीं सुताम् ॥ ९ ॥
पृच्छेयं कारणं तत्र शंकरं सर्वमादरात् ।
विचार्येत्थं ययौ तूर्णं सती तु शंकरान्वितम् ॥१०॥
सत्कृता शंकरेणाऽथ सत्युवाच प्रभुं तदा ।
पितुर्मम महान् यज्ञो भवतीति मया श्रुतम् ॥११॥
तत्रोत्सवो महानस्ति समवेता महर्षयः ।
तत्र कथय गमनं कस्मात्तव न रोचते ॥१२॥
आवाभ्यां तत्र गन्तव्यं बहूनां दर्शनं भवेत् ।
शंभुः प्राह सति दक्षो मम द्रोही विशेषतः ॥१३॥
पितुस्तवाऽध्वरे प्राप्ता मानिनो ज्ञानवर्जिताः ।
तत्र यजने मे स्थानं नास्ति यावः कथं सति ॥१४॥
अनाहूतास्तु ये यान्ति परगृहं तु ते जनाः ।
प्राप्नुवन्त्यवमानं यन्मरणादतिरिच्यते ॥१५॥
परालयं गतोऽपीन्द्रो लघुर्भवति वै यतः ।
तस्मात् त्वया मया चापि न गन्तव्यं हि तद्गृहम् ॥१६॥
शत्रुशरैः प्रविद्धोऽपि न तथा व्यथते जनः ।
यथा स्वजनरूक्षोक्तैर्मर्मभेदिभिरर्द्यते ॥१७॥
ममोपरि तपस्तप्तं तस्मान्मया विवाहिता ।
न चेत् तप्तं मादृशस्तु कथं पाशेऽत्र संपतेत् ॥१८॥
विद्यैश्वर्यादिभिर्जाते गर्वे खलाः सतां गुणान् ।
गणयन्त्येव नहि ते नाऽऽद्रियन्ते महाजनान् ॥१९॥
श्रुत्वैतत्सहसा देवी प्राह स्वप्राणरक्षकम् ।
कथं दक्षेण नाऽऽहूतौ ज्ञातुमिच्छामि तत्त्वतः ॥२०॥
अनुज्ञां देहि मे नाथ गन्तुं दक्षमखेऽद्य वै ।
शंभुः प्राह सतीं साध्वि गन्तुं ते प्रबला रुचिः ॥२१॥
यद्यस्त्यारुह्य वृषभं सज्जं भूषितमेव च ।
महाराज्ञ्युपचाराणि कृत्वा नीत्वा गणान्बहून् ॥२२॥
सुभूषिता गच्छ यज्ञं छत्रचामरलक्षिता ।
इत्येतदन्तरे तत्र नारदोऽप्यागतो हरम् ॥२३॥
दृष्ट्वा शिवौ प्रणम्याथ शंभुना सत्कृताऽऽदरः ।
तत्प्रदत्तासने रम्ये ह्युपाविशन्महामुनिः ॥२४॥
शंभुः प्राह कथं दत्तं दर्शनं भवता मुने ।
अस्ति किंचिद्विचित्रं चेद्ब्रूहि शीघ्रं च मा चिरम् ॥२५॥
इत्याज्ञां प्राप्य देवर्षिः वृत्तं तत्प्राह शंकरम् ।
अद्य नीलगिरेश्चाऽहं हरिद्वारसमीपतः ॥२६॥
अपूर्वमिव संवीक्ष्य परिप्राप्तस्तवान्तिकम् ।
त्रैलोक्ये यच्च पुंजातं सकलत्रसुतादिकम् ॥२७॥
सालंकारं समानं च सानन्दमुखपंकजम् ।
दृष्टं दक्षाध्वरे किन्तु भवद्द्वन्द्वं न लोकितम् ॥२८॥
प्रायो विषादजनकं तत्र युष्मददर्शनम् ।
दक्षस्य मर्मभेदीनि वचनानि श्रुतानि वै ॥२९॥
तानि वक्तुं न शक्यानि श्रुत्वा त्वद्गर्हणागिरः ।
मया तु पिहितौ कर्णौ प्रत्युक्तानि दधीचिना ॥३०॥
दक्षः शप्तः क्रतुं त्यक्त्वा दुर्वासः प्रमुखा द्विजाः ।
शंभुनिन्दां समाकर्ण्य कियन्तस्तु विनिर्ययुः ॥३१॥
प्रावर्तत महायागो दक्षपक्षातिपातिभिः ।
भगिन्यस्तत्र यास्ते ताः स्वस्वामिपरिचारिकाः ॥३२॥
दक्षतो गौरवं प्राप्तास्तद्वक्तुं नाहमुत्सहे ।
तत्रोऽत्रार्थे विधेयं तद्विधीयेतां प्रयाम्यहम् ॥३३॥
गते तु नारदे देवी प्रांजलिः प्राह शंकरम् ।
विजयस्वाऽन्धकध्वंसिन् ! देह्यनुज्ञां मम प्रभो ॥३४॥
गत्वा पश्यामि दुष्टत्वं कथमावां निराकृतौ ।
शंभुः प्राह प्रियां यज्ञो गन्तव्यार्थो न भाति मे ॥३५॥
किमपूर्णं तवाऽस्त्यत्र मा परीक्षाकृतेऽप्यगाः ।
कुतो मां हातुमिच्छेस्त्वं गमने शं न दृश्यते ॥३६॥
सती प्राह मनो मे ते पादयोः स्थास्यति ध्रुवम् ।
क्रतुं द्रष्टुं पितुर्यामि नैक्षि यज्ञो मया क्वचित् ॥३७॥
शंभुः प्राहाऽध्वरेक्षा चेदाहरामि ततः क्रतुम् ।
क्रतुं क्रियां तथा यज्ञपुरुषं लोकपालकान् ॥३८॥
अन्यानाशु विधेहि त्वमृषीनार्विज्य कर्मणि ।
सती प्राह निषेधीर्मा द्रष्टव्यः पितुरध्वरः ॥३९॥
शंभुः प्राह तदा देवीं नारीहठाधिरोहिताम् ।
अद्य देवि पश्चिमायां दिक्शूलं वासरोऽशुभः ॥४०॥
तिथिनक्षत्रयोगाश्च विपरीता भवन्ति वै ।
मा गा देवि गताऽद्य त्वं नहि द्रक्ष्यसि मां पुनः ॥४१॥
तदा सती बभाषे यत् यदि नाम्नाऽस्म्यहं सती ।
तदा तन्वन्तरेणापि करिष्ये तव दासताम् ॥४२॥
तदा भवः पुनः प्राह को वा वारयितुं क्षमः ।
हठव्याप्तमनोवृत्तिं स्त्रियं वा पुरुषं च वा ॥४३॥
मा याहि देवि मां हित्वा गता त्वं न मिलिष्यसि ।
परं न देवि गन्तव्यं महामानधनेच्छुभिः ॥४४॥
अनाहूततया कान्ते मातापितृगृहानपि ।
पुनर्न दर्शनं देवि मम सत्यं ब्रवीम्यहम् ॥४५॥

देव्युवाच यदि रक्ता तव पादाम्बुजद्वये ।
तथा त्वमेव मे नाथो भविष्यसि भवान्तरे ॥४६॥
इत्युक्त्वा निर्ययौ देवी हटाऽन्धीकृतमानसा ।
न ननाम तदा शंभुं न च चक्रे प्रदक्षिणम् ॥४७॥
अत एव हि सा देवी गता न पुनरागता ।
देवोऽपि तां सतीं यान्तीं दृष्ट्वा तु विव्यथे हृदि ॥४८॥
गणान्प्राह सह देव्या गच्छन्तु सैन्यशालिनः ।
विमानं शांकरचिह्नमारुह्य यातु वै सती ॥४९॥
देवी विमानमारुह्य याता यज्ञस्थलांऽगणम् ।
सुछत्रचामरादीनि सद्वस्त्राभरणानि च ॥५०॥
महाराइयुपचाराणि दत्तानि शंकरेण वै ।
गणाः षष्टिसहस्राणि रौद्रा जग्मुः शिवाज्ञया ॥५१॥
हेतिसज्जाः सयानाश्च कुतूहलोत्सवान्विताः ।
नभोऽङ्गणाद्विमानस्था सा तु वेगादवातरत् ॥५२॥
आविशद्यज्ञवाटं च हर्षस्तस्या व्यवर्धत ।
शिवप्रियायाः सत्कारो वामदेवादिभिः कृतः ॥५३॥
कुतूहलं गणाश्चक्रुः शिवयोर्यश उज्जगुः ।
पुप्लुवुः कूर्दनं चक्रुराकाशे गणपुंगवाः ॥५४॥
जयाऽम्बिके जय शंभो ह्यारावैः पूरितं जगत् ।
दाक्षायणी गता तत्र यज्ञस्थले महाप्रभे ॥५५॥
सुराऽसुरमुनीन्द्रादिकुतूहलसमन्विते ।
नमस्कृत्याऽग्निदेवं च समाजं मण्डपस्थितम् ॥५६॥
जगाम जलपानाय स्वपितुर्भवनं ततः ।
ददर्श सुप्रभं चारु नानाश्चर्यसमन्वितम् ॥५७॥
मातृस्वसृदुहितृतत्सुतासुतादिसंश्रितम् ।
आगतां च सतीं दृष्ट्वाऽसिक्नी च वीरिणी तथा ॥५८॥
चक्रुः समादरं तस्या भगिन्यश्च यथोचितम् ।
ददुः सलिलपानादि चासनं सुखशान्तिदम् ॥५९॥
विश्रम्य च क्षणं नत्वा मातरं भगिनीस्ततः ।
अवरुह्यासनात् शीघ्रमेकैवाऽगच्छदध्वरम् ॥६०॥
तत्र स्वपितरं नत्वा तथाऽन्यान्वृद्धपुंगवान् ।
कृतमंगलनेपथ्याः प्रसूश्चान्याः किरीटिनीः ॥६१॥
सभर्तृकाश्च भगिनीर्नवाऽलंकृतिशालिनीः ।
ज्येष्ठाः कनिष्ठाः साश्चर्याः सानन्दाश्च कुटुम्बिनीः ॥६२॥
सती चाहो समायातेत्याश्चर्येण प्रपश्यतीः ।
सर्वा नत्वा वृद्धमातृसमाश्च हरवल्लभा ॥६३॥
मण्डपस्थसमाजे सा गता दक्षान्तिकं सती ।
पित्रा पृष्टा च मात्रा च भद्रं जातं तवागमे ॥६४॥
एहि तिष्ठ प्रियपुत्रि ! जामाता स्विदनामयः ! ।
तेऽपि स्वर्ग्यं सुखं नित्यं निराबाधं स्विदस्ति वै ॥६५॥
सत्युवाच यदि वृद्धौ सुखिनौ चास्मि सुख्यहम् ।
युवयोश्चापि जामाता शिवः सुखी सदाऽस्ति वै ॥६६॥
दुःखमात्रं प्रसंगेऽत्र यददर्शनमेव यत् ।
येन यज्ञः परिपूर्णो भवेत् सोऽत्र न विद्यते ॥६७॥
यदि भद्रं जनेतर्मे समागमनतो भवेत् ।
कथं शंभुरहं नैवाऽऽहूतौ चात्र महोत्सवे ॥६८॥
अन्ये जामातरः पुत्र्यः समाहूताः प्रसंगतः ।
सतीं शंभुं परित्यज्य कुतो भद्रं शुभं तव ॥६९॥
अभद्रं ह्यशुभं चात्र पश्यामि च क्षणान्तरे ।
इति संभाष्य मुमोचाऽश्रुबिन्दून् पितुरन्तिके ॥७०॥
दक्षः प्राह अयि पुत्रि महाधन्येऽतिमंगले ।
तव दोषो मनाङ्नास्ति मा शोकं कुरु मानसम् ॥७१॥
जह्युद्वेगं सुखं तिष्ठ मम दोषोऽस्ति सर्वथा ।
यन्मयाऽबुद्धिना कन्यारत्नं शर्वेऽपवर्जितम् ॥७२॥
यदहं तत्समाज्ञास्यमीशोऽपनीश आन्तरे ।
तदा कथमदास्यं त्वां मायाधिपतये शुभे ॥७३॥
अहं शिवाभिधानेन वञ्चितोऽशिवकर्मणि ।
ब्रह्मणा बहुधा सोऽयं प्रशंसितो ममाऽग्रतः ॥७४॥
शंकरोऽयमयं शंभुः शिवः सार्थकनामवान् ।
देह्यस्मै च सतीं कन्यां तद्योग्या सर्वथाऽस्ति सा ॥७५॥
श्रीकण्ठोऽसौ महेशोऽसौ सर्वज्ञो वृषभध्वजः ।
धन्वी सार्थकनामाऽसौ देह्यस्मै ते सतीं सुताम् ॥७६॥
इति विश्वासमाधाय दापिता त्वं हि वेधसा ।
न ज्ञातः स विरूपाक्ष उक्षगो विषभक्षकः ॥७७॥
पितृकाननसंवासः शूलधृक्च कपालधृक् ।
द्विजिह्वसंगसुभगो जलाधारः कपर्दवान् ॥७८॥
कलंकिकृतमौलिश्च धूलीधूसरचर्चितः ।
क्वचित्कौपीनवसनो नग्नो वातूलवत् क्वचित् ॥७९॥
क्वचित्तु चर्मवसनः क्वचिद्भिक्षाटनप्रियः ।
विरूपभूताऽनुचरः स्थाणुरुग्रस्तमोगुणः ॥८०॥
रुद्रो रौद्रपरीवारो महाकालवपुर्धरः ।
नृकरोटीपरिकरो जातिगोत्रविवर्जितः ॥८१॥
ब्रह्मणा गुणवानुक्तो जानानोऽहं प्रतारितः ।
किम्बहूक्तेन तनये समस्तनयशालिनि ! ॥८२॥
क्व पांसुलपटच्छन्नो महाशंखविभूषणः ।
प्रवद्धसर्पकेयूरः प्रधूसरजटासटः ॥८३॥

डमड्डमरुकव्यग्रहस्ताग्रः खण्डचन्द्रभृत् ।
ताण्डवाऽऽडम्बररुचिः सर्वाऽमंगलचेष्टितः ॥८४॥
एवंविधो हरः क्वाऽयमध्वरो मंगलालयः ।
अत एव समाहूतौ युवां न मंगलेऽध्वरे ॥८५॥
दुकूलान्यनुकूलानि रत्नालंकरणानि च ।
हारश्रेष्ठा विभूषाश्च प्रागेव त्वत्कृते मया ॥८६॥
रक्षितास्तान्पश्य पुत्रि ! सर्वान् श्रेष्ठान् गृहाण च ।
शंकरार्थमपि पुत्रि यद्यन्नेतुं समीहसे ॥८७॥
तत्सर्वं सह नेतव्यं यज्ञपूर्त्युत्तरं सति ! ।
यावदेतास्तव सख्यः स्वसारश्चोषिता मखे ॥८८॥
तावत् ततोऽप्यधिकं त्वं वसात्र तव रोचते ।
श्रुत्वाऽतिदूनहृदया सती वक्तुं प्रचक्रमे ॥८९॥
भागानपश्यद् देवानां हर्यादीनां तदध्वरे ।
शंभुभागमनालोक्य कष्टं वक्तुं प्रचक्रमे ॥९०॥
नाऽऽकर्णितं मया किंचित् प्रब्रूवति पितस्त्वयि ।
पदद्वयीं समाकर्ण्य तां च ते कथयाम्यहम् ॥९१॥
मायाऽधिपतिरेवाऽयं जानानोऽपि प्रतारितः ।
एतत्सत्यं त्वयाऽऽख्यायि मायाऽधिपतिरेव सः ॥९२॥
परब्रह्मपरमात्मा शिवरूपेण वर्तते ।
मायान्वितश्च मायाया व्यतिरिक्तः शिवः स वै ॥९३॥
त्वं च प्रतारितः पूर्वमधुनाऽपि प्रतारितः ।
अज्ञात्वा दत्तवान् कन्यां दत्त्वाऽसम्बद्धमुच्यते ॥९४॥
तादृशो मन्यते शंभुः कुतो मामददास्तदा ।
न हेतुस्ते मतिस्तत्र हेतुर्मत्पुण्यगौरवम् ॥९५॥
येन पूतमिदं विश्वं समग्रं सचराचरम् ।
यज्ञो यज्ञविदां श्रेष्ठो यज्ञांगो यज्ञदक्षिणः ॥९६॥
यज्ञकर्ता स्वयं शंभुस्तं विना तु कथं मखः ।
मखः स्यान्मम देहस्य पश्य दक्ष क्षणान्तरे ॥९७॥
यस्य स्मरणमात्रेण सर्वं पूतं भवत्यहो ।
तं तु शंभुं विना सर्वं कृतं चाऽकृतमेव तत् ॥९८॥
द्रव्यमन्त्रादिकं सर्वं हव्यं कव्यं च यन्मतम् ।
शंभुना हि विना कृतमपवित्रं भविष्यति ॥९९॥
किं शिवं सुरसामान्यं मत्वाऽकार्षीरनादरम् ।
भ्रष्टा बुद्धिस्तव जाता वार्धक्ये इव सर्वथा ॥१००॥
विष्णुब्रह्मादयः सर्वे यं जानन्ति परेश्वरम् ।
त्वं न जानासि तं शंभुं मा जानीहि तथोत्तरम् ॥१०१॥
एते कथं समायाता विष्णुब्रह्मादयोऽध्वरे ।
जानन्तोऽपि विना शंभुं लज्जन्ते न मुखदृशः ॥१०२॥
हे विष्णो त्वं महादेवं त्यक्त्वा यज्ञेऽत्र दृश्यसे ।
न लज्जसे सदा मित्रं विस्मृत्याऽत्र प्रवर्तसे ॥१०३॥
रे ब्रह्मँस्त्वं पंचमुखोऽभूर्गविष्ठो हरं प्रति ।
कृतश्चतुर्मुखस्तेन विस्मृतोऽसि तदद्भुतम् ॥१०४॥
यदि क्रुद्धो महादेवश्चत्वार्यपि विनेष्यति ।
हे सूर्य चन्द्र चेन्द्रादे न स्विजानथ शंकरम् ॥१०५॥
वशिष्ठाद्याश्च मुनयो न वै जानथ शंकरम् ।
वह्नं प्रज्वालितं येन कामः प्रज्वालितस्तथा ॥१०६॥
दारुवने लिंगपाते येन प्रज्वालितं जगत् ।
प्राग्भवीयाँश्चमत्कारान् किंस्विद् विस्मरथाऽत्र हि ॥१०७॥
स यदि क्रोधमापन्नो युष्माकं किं भविष्यति ।
सर्वे कां मूर्खतां प्राप्ता विना शंभुं प्रतिष्ठथ ॥१०८॥
इतित्वेकविधा वाचोऽगदन्मखे महेश्वरी ।
कोपान्विता सती तत्र हृदयेन विदूयता ॥१०९॥
मौनी भूतोऽभवच्छ्रुत्वा समाजो भयविह्वलः ।
शृणु लक्ष्मि ततो दक्षः क्रुद्धोऽब्रवीत् क्षयंकरम् ॥११०॥
तव किं बहुनोक्तेन न ते कार्यं हि साम्प्रतम् ।
गच्छ वा तिष्ठ वा पुत्रि कस्माच्चात्र समागता ॥१११॥
सर्वपूज्याऽवमानं त्वं करोष्यागत्य चाऽध्वरे ।
गच्छ मौनं वस वाऽत्र नाऽऽहूताऽसि विलज्जिके ॥११२॥
अमंगलस्तु ते भर्ता भूतप्रेतपिशाचराट् ।
अकुलीनो वेदबाह्यः नाऽऽहूतोऽत्र मया तदा ॥११३॥
देवर्षिसंसदि वेधःप्रेरितेन मयाऽर्पिता ।
मन्दभाग्येन रुद्रायाऽविदितार्थाय किं भवेत् ॥११४॥
कोपं मा व्रज रुद्राणि ! स्वस्था भव शुचिस्मिते ।
यद्यागताऽसि मे यज्ञे दायं गृहीष्व चात्मना ॥११५॥
श्रुत्वाऽथ सा सती शंभोर्निन्दामचिन्तयत् हृदि ।
दायं नीत्वाऽपि किं मे स्यात्कथं वै यामि शंकरम् ॥११६॥
शंकरेण यदि पृष्टा तत्र वक्ष्ये किमुत्तरम् ।
तस्मादत्रैव मर्तव्यं प्राप्स्ये देहान्तरे हरम् ॥११७॥
इति निर्णीय पितरं निःश्वसन्ती ह्युवाच ह ।
किं जीवितेन मे तात ! शृण्वन्त्या पतिगर्हणाम् ॥११८॥
यो निन्दति महादेवं निन्द्यमानं शृणोति वा ।
तावुभौ नरकं यातौ यावच्चन्द्रदिवाकरौ ॥११९॥
यदि शक्तो निन्दकस्य जिह्वां छिन्द्यात्प्रसह्य वै ।
यद्यशक्तः सुपिधाय कर्णौ गच्छेत् स्थलान्तरम् ॥१२०॥
शंभुना तु निषिद्धाऽपि प्रसह्याऽत्र समागता ।
फलं तस्याऽत्र मे प्राप्तं क्व गन्तव्यं मयाऽधुना ॥१२१॥

अस्मरच्छांकरं वाक्यं पश्चात्तापमवाप सा ।
सा संक्रुद्धय मुनीन्देवान् दक्षं निःशंकमाह यत् ॥१२२॥
तात त्वं निन्दकः शंभोः पश्चात्तापं गमिष्यसि ।
माऽयं धूम्रो तव याज्ञो वृष्टिहेतुर्भवेदिह ॥१२३॥
अश्रुहेतुर्भवेदेवाऽऽगतानां यज्ञभोगिनाम् ।
स्फुटं भवन्तः शंभोस्तु प्रतीपा मिलिताः खलु ॥१२४॥
प्रतीपानां प्रतीपं संकरिष्ये यज्ञमार्जनम् ।
शंभुं विना न यज्ञः स्यात् करिष्येऽग्निप्रतोषणम् ॥१२५॥
दक्षः स्वीयं जुहोत्यग्नौ स्वीयेऽपि गणना मम ।
स्वं स्वीयं च जुहोत्यग्नौ करिष्ये हवनं मम ॥१२६॥
किं बहूक्तेन वचसा दक्षो हरे सदा कुधीः ।
तदुद्भवेन देहेन न मे किंचित्प्रयोजनम् ॥१२७॥
तज्जन्म धिक् यन्महतामवज्ञापादकं भवेत् ।
परित्याज्यो विशेषेण जन्मसम्बन्ध एव वै ॥१२८॥
वैमनस्ये सदा शंभुर्दाक्षायणीति वक्ति माम् ।
तस्माद्दक्षांगजं चैतत्कुणपं गर्हितं सदा ॥१२९॥
व्युत्स्रष्टव्यं नूनमत्र प्रोज्झितव्यं तु वह्नये ।
यावज्जीवितनाथस्य न श्रोतव्या विगर्हणा ॥१३०॥
सत्यन्तिमं वचः प्राह नश्यन्तु शिवनिन्दकाः ।
अहं तु क्रोधदीप्ताग्नौ महादेवस्वरूपिणि ॥१३१॥
जुहोमि देहसमिधं प्राणरोधविधानतः ।
एवमुक्त्वा सती प्राणायामं चक्रे शनैस्तदा ॥१३२॥
प्राणरोधः कृतः सत्या सुदृढस्तावदेव वै ।
सर्वेषां च सुरादीनां प्राणरोधोऽभवत्तदा ॥१३३॥
नाग्निर्जज्वाल च तथा यथाऽऽज्याहुतिभिः पुरा ।
मन्त्राः कुण्ठितसामर्थ्यास्तत्क्षणादेव चाऽभवन् ॥१३४॥
महाझञ्झानिलः प्राप्तः पर्वतान्दोलनक्षमः ।
मखमण्डपभूस्तेन क्षणतः स्थपुटीकृता ॥१३५॥
अकाण्डतडिदापातो जातोऽभूद्भूप्रकम्पनः ।
दिवश्चोल्काः प्रपतिताः पिशाचा नृत्यमादधुः ॥१३६॥
आपतद्भ्रैरुपरि गगने मण्डलायितम् ।
तत्र पुरस्तादशिवं शिवाः क्रूरमरारिषुः ॥१३७॥
मेघा रुधिरवर्षाभिस्तत्राहुश्चात्यमंगलम् ।
निर्घातनिःस्वनो भूमेरुत्थितो हृत्प्रकम्पनः ॥१३८॥
दिव्यायुधानि च मिथो युद्धयन्ति स्माऽतिभीषणम् ।
हवनीयं महाद्रव्यं दूषितं क्रोष्टृभिः श्वभिः ॥१३९॥
सत्याः प्राणनिरोधाश्च सर्वरोधेन तत्तदा ।
श्मशानवाटवज्जातं निष्क्रियं मखभूतलम् ॥१४०॥
यद्यत्राऽभूच्च विन्यस्तं तत्तत्रैव व्यवस्थितम् ।
चित्रन्यस्तमिवाऽऽसीश्च प्राणरोधबलात्तथा ॥१४१॥
सुजडा इव संजातास्तदा चक्रधरादयः ।
देवी प्राणं बहिर्नीत्वा शमयामास भोषिकाम् ॥१४२॥
चमत्कारो दर्शितोऽयं देव्या तथापि दक्षराट् ।
शंकराऽऽह्वानवचनं नोवाच माननष्टधीः ॥१४३॥
मौनीभूता सती स्मृत्वा शंभुं स्वपति मादरात् ।
पृथ्व्यां पुनः सा सहसा निषसाद प्रशान्तधीः ॥१४४॥
जलमाचम्य विधिवत् संवृता वाससा शुचिः ।
दृङ्निमील्य पतिं स्मृत्वा योगरीतिमुपाददे ॥१४५॥
कृत्वा समाने ह्यनिलौ प्राणापानौ तथा पुनः ।
उत्थाप्योदानसमानौ नाभिचक्रात्परं गता ॥१४६॥
हृदिस्थाप्योरसि नीत्वा नीत्वा कण्ठाद् भ्रुवोः सती ।
मध्यमानीय ब्रुरन्ध्रं सा जगाम त्वरान्विता ॥१४७॥
अग्निमुत्पादयामास ब्रह्मरन्ध्रस्थिता सती ।
ब्रह्मरन्ध्राग्निना देहो जाज्वल्यमान एव वै ॥१४८॥
आकाशमुत्थितो व्योम्ना चाग्निकुण्डे ह्यवातरत् ।
भस्मसादभवत् कुण्डे सती समाजगोचरा ॥१४९॥
तत्पश्यतां च खे भूमौ हाहाकारो व्यवर्तत ।
हाहाभूच्च जगत्सर्वं भीता विष्णुसुरादयः ॥१५०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने सत्या व्योम्ना स्वस्विमानावलोकनम्, दक्षयज्ञे गमनाय शंभोराज्ञा, कैलासे नारदागमनं, यज्ञाद्दधीचिनिर्गमः, यज्ञे सती गमनं, शंकराऽऽसनाऽदर्शनं, सतीदक्षवाक्यानि, सतीदेहत्यागइत्यादिनिरूपणनामा पंचसप्तत्यधिकशततमोऽध्यायः ॥१७५॥

**श्रीनारायण उवाच—**

श्रूयतां च महालक्ष्मि ! कीदृशं त्रासकृद्धि तत् ।
अनात्म्यं तु पितुस्तस्या नान्यस्तथा करिष्यति ॥ १ ॥
भस्मीभूते सतीदेहे दृश्यं सकरुणं तदा ।
समभूच्च समाजेऽन्योन्यवाणी करुणावहा ॥ २ ॥
हन्त प्रिया परा शंभोरहादसून्प्रकोपिता ।
दक्षेण पश्यतैतस्य दौरात्म्यं तु प्रजापतेः ॥ ३ ॥
चराचरं प्रजा यस्य तस्यापि हृदयं सदा ।
क्षुब्धं रुष्टं खरं शुष्कमहो संसारकष्टता ॥ ४ ॥

शंकरस्य प्रियाऽभीक्ष्णं मानयोग्या सतां सदा।
दक्षेण विमना साऽभूत् तत्रापि सुमहोत्सवे ॥ ५ ॥
तस्माद् दुर्मर्षहृदयो ब्रह्मधिक् च दुहितृध्रुक्।
महतीमपकीर्तिं सः प्राप्स्यत्यखिलसृष्टिषु ॥ ६ ॥
यः स्वांगजां सुतां शंभुद्विट् न्यषेधत्समागताम्।
महानरकभोगी स पुत्रीहा नोऽपराधतः ॥ ७ ॥
वदत्येवं जने दृष्ट्वा सत्याश्चाऽसुवियोजनम्।
द्रागेव पार्षदाः क्रूरा ह्युदतिष्ठन्नुदायुधाः ॥ ८ ॥
षष्टिसहस्राणि ते सर्वे संवृत्य मखभूमिकाम्।
मा कश्चिद् बहिर्निगच्छेद्घातयन्तु मखस्थले ॥ ९ ॥
हाहाकारैर्विक्रोशन्तो धिग्धिकृद्दक्षेतिवादिनः।
मारयन्तु नाशयन्तु मर्दयन्तु मखांऽगणे ॥१०॥
गगनं च तदा हाहाकारैर्व्याप्तमभूत् प्रिये।
देवाः प्रापन् भयं सर्वे मुनयोऽन्येऽपि ये स्थिताः ॥११॥
अकांडयुद्धं संप्राप्तं प्रलयो वै भविष्यति।
दक्षयज्ञाऽऽगतानां ते ह्यकुर्वन् हननं बहु ॥१२॥
शस्त्रैरघ्नन्परांगानि सुतीक्ष्णैः प्राणनाशिभिः।
दक्षपक्षैस्तथा तत्र घातिता द्वेऽयुते तदा ॥१३॥
अन्ये शस्त्रैर्दक्षनाशं कर्तुं याता उदायुधाः।
तेषामापततां वेगं दृष्ट्वा तु भगवान् भृगुः ॥१४॥
यज्ञघ्नघ्नेन यजुषा दक्षिणाग्नौ तदाऽऽजुहोत्।
हूयमाने समुत्पेतुः ऋभवश्च सहस्रशः ॥१५॥
अलातशस्त्रास्ते सर्वे भृगुवह्निबलान्विताः।
युयुधुः प्रमथैस्तत्र प्राणार्पणसमीहया ॥१६॥
ऋभुभिः प्रबलैस्तत्र हन्यमानाः सतीगणाः।
द्वेऽयुते चाऽपरे तत्र मृताः शेषाः पलायिताः ॥१७॥
दक्षपक्षस्य सैन्यानां लक्षं यमगृहं गतम्।
तत्काले ये गुरुजना विष्णुब्रह्मर्षयोऽमलाः ॥१८॥
न हन्तव्या इति कृत्वा न हता भूसुरास्तथा।
तदा ते ऋषयो देवाः शक्राद्याः समरुद्गणाः ॥१९॥
विश्वेऽश्विनौ लोकपालास्तूष्णीमासन् ग्रहादयः।
स्वस्वविमानयानेषु व्योममार्गे व्यवस्थिताः ॥२०॥
उद्विग्नाः प्रार्थयन्तश्च विघ्नाऽभावं मुहुर्मुहुः।
दक्षजामातरो दक्षकन्या दक्षकुटुम्बिनः ॥२१॥
विष्णुब्रह्मर्षिसैन्यैस्तु रक्षिता बहुयत्नतः।
यज्ञभूमिस्तदा शुद्धां कृता शवविवाहनैः ॥२२॥
यज्ञभूमौ पुनर्दक्षाऽग्रहात्सर्वे व्यवस्थिताः।
यज्ञपूर्तीच्छया शीघ्रं होमकर्माऽभवत्ततः ॥२३॥

एतस्मिन्नन्तरे तत्र व्योमवाणी जगाद ह।
रेरे दक्ष दुराचार दंभाचार महाखल ॥२४॥
किमिदं कृतवान् मूढ भाग्यनर्थकरं तव।
दधीचिस्ते मखाच्छापं दत्वा यातो न बुद्धवान् ॥२५॥
गृहाऽऽगतां ज्येष्ठपुत्रीं योग्यां मानितवान्नहि।
ज्ञानहीन! शिवौ पूज्यौ गर्वात्पूजितवान्नहि ॥२६॥
पुत्रीं मत्वा सतीं फलदामाराधितवान्नहि।
सर्वसौभाग्यदां साध्वीं सम्प्रसादितवान्नहि ॥२७॥
भक्तमंगलदां देवीं त्वं समर्चितवान्नहि।
सर्वभीतिहरां शक्तिं नत्वा रंजितवान्नहि ॥२८॥
मनोऽभीष्टप्रदां प्रह्वां प्रेम्णा द्रावितवान्नहि।
कीर्तिसम्पत्प्रदामीशां ध्यात्वा याजितवान्नहि ॥२९॥
भुक्तिमुक्तिप्रदां धात्रीं प्रसंभोजितवान्नहि।
रक्षिकां पोषिकां हन्त्रीं हृदि धारितवान्नहि ॥३०॥
सर्वसृष्टिप्रजननीं शान्तिं नयितवान्नहि।
शंभोर्भागं शंभुपत्न्यै यज्ञे चार्पितवान्नहि ॥३१॥
तप्यते हि तपः सिद्धैः साध्वीभिर्दर्शनेच्छया।
युज्यते योगिभिर्योगैरेतद्दर्शनकांक्षया ॥३२॥
तयोः सर्वजगत्पित्रोः सत्कारं कृतवान्नहि।
अत एवाऽध्वरस्याऽस्य विनाशो भविता ध्रुवम् ॥३३॥
सत्कार्यौ सत्कृतौ नैव कथं श्रेयो भविष्यति।
दौर्भाग्यं त्वयि संक्रान्तं संक्रान्तास्त्वयि चापदः ॥३४॥
अनभ्यर्च्य शिवां शंभुं कल्याणं प्राप्नुयामिति।
किं ते गर्वः समायातो गर्वस्तेऽद्य विनंक्ष्यति ॥३५॥
शंकराद्विमुखो भूत्वा देवेष्वेतेषु कस्तव।
साहाय्यदो भवेदत्र न तं पश्यामि कंचन ॥३६॥
देवा वा यदि वा चान्येऽधुना ये ते सहायिनः।
ध्रुवं ते नाशमाप्स्यन्ति वह्निना शलभा इव ॥३७॥
शिरस्ते ज्वलितं चास्तु यज्ञोपदा ज्वलन्त्वपि।
त्वत्सहाया अमांगल्ये विशन्तु प्रज्वलन्तु च ॥३८॥
विनिर्यान्तु सुराः स्वोकश्चास्मादध्वरभूस्थलात्।
अद्याऽत्रस्थायिनां ध्वंसो भविताऽत्र क्षणान्तरे ॥३९॥
बाला वृद्धाः स्त्रियश्चान्ये स्वका निर्यान्तु चाऽध्वरात्।
विष्णो विधे पुष्पवन्तौ निर्यान्तु चाऽध्वरस्थलात् ॥४०॥
अन्यथा भवतां नाशो भविता वै क्षणान्तरे।
सर्वान् संश्राव्य व्यरमत् नभोवाणी तथापि वै ॥४१॥
यज्ञभूमिगता भाविदैवनष्टा न निर्ययुः।
यज्ञकालः सशोकोऽपि यज्ञपूर्त्यर्थमेव ते ॥४२॥

कुर्वन्ति हवनं शीघ्रं यज्ञकार्ये प्रवर्तते ।
अथ श्रीनारदो देवः सतीदाहोत्तरं द्रुतम् ॥४३॥
सतीवृत्तान्तमखिलं हरायाऽऽशंसितुं ययौ ।
कैलासे शंभुनिकटे गत्वा नत्वा हरं श्वसन् ॥४४॥
दुःखं च दर्शयन् शोकं वैमनस्यं प्रदर्शयन् ।
कारुण्यं चातिजनयन् भयमावेदयँस्तथा ॥४५॥
नेत्रादश्रु विमुञ्चंश्च प्रकम्पन् प्राह शंकरम् ।
अमायिकस्य मायाया बाधो नैवेति दृश्यते ॥४६॥
सर्वस्वमपि नश्येत का चिन्ता योगिनोऽत्र वै ।
नापचीयेत ते किंचिन्नोपचीयेत् तेऽथवा ॥४७॥
अव्ययत्वाच्च पूर्णत्वात् हानिवृद्धी कुतस्त्वयि ।
दक्षेणाऽद्य तवैश्वर्यमास्कन्दितं पदेन वै ॥४८॥
यस्य मानाऽवमानेन निन्दास्तुती समे तथा ।
हान्यहानी न गणिते किं तदग्रे रवेण वै ॥४९॥
स्वस्य नाशेऽपि यत्केशः कम्पते नहि सर्वथा ।
किं वृथा संभृतस्तेन भारश्चैश्वर्यकोशजः ॥५०॥
नाऽभिमानधनं यस्य नाऽवज्ञाजन्यशोचनम् ।
तस्याग्रे कथनं सर्वं महिष्यग्रे कथा यथा ॥५१॥
अभिमानरहिताग्रे साभिमानांगना वरा ।
धन्या निरभिमानस्य साभिमाना तु सा सती ॥५२॥
श्रूयते स्वप्यते किंवा कर्णौ स्तो वा न वा मुने ! ।
तव निन्दाश्रवात्साध्वी तृणीचक्रे स्वजीवितम् ॥५३॥
इत्याकर्ण्य तदा शंभुर्महाकाल इवाऽपरः ।
रुद्रश्चातीव रुद्रोऽभूत् बहुकोपाग्निदीपितः ॥५४॥
विकराललाननस्तत्राऽवोचत्तु नारदं द्रुतम् ।
हुँ हुँ हुँ किमभूत् तत्र तृणीचक्रे स्वजीवितम् ॥५५॥
हो नारद ! किं ब्रवीषि सती तत्याज जीवितम् ।
डूँह् डूँह् डूँह् डूँह् डूँह् डमाकूडं डूँह् डमरूं निनाद्य शंकरः।५६।
जटां संभ्रम्य भूपृष्ठे बलात् ताडितवान् रुषा ।
प्रघट्टनान्महाधूम्रः समुत्पन्नः क्षितिं खनन् ॥५७॥
तन्मध्यात्तु समुत्पन्नो महाज्वालोदयो गिरिः ।
गिरिदेव ततो जातः कालमृत्युप्रकम्पनः ॥५८॥
प्रत्यक्षः प्रतिमाकारो रुद्र इव भयंकरः ।
वीरभद्रोऽपरो रुद्रः शतरुद्रपराक्रमः ॥५९॥
यस्य हस्ते मन्दराद्रिसमा चासीत् गदा तदा ।
भूशुण्डी विन्ध्यवद्दीर्घा परिघं रैवताद्रिवत् ॥६०॥
नेत्रे प्रस्फारिते तस्य सूर्याचन्द्रमसाविव ।
ललजिह्वा ज्वलज्ज्वालामुखिपट्टाभिसदृशी ॥६१॥
अर्बुदाचलवत्तस्य वक्षःस्थलमशोभत ।
पादांऽगुष्ठांऽगुलीभ्यां स मध्ये संगृह्य सत्वरम् ॥६२॥
हिमाद्रेः शृंगमुत्पाट्य धृत्वा कुक्षौ कपर्दवत् ।
नत्वा शंभुं तदोवाच किं दास्यं करवै तव ॥६३॥
करवाण्येककवलं ब्रह्माण्डं सचराचरम् ।
पिबामि सकलानब्धीनेकेनांऽजलिनाऽऽज्ञया ॥६४॥
पातालानि विनिमथ्य नयाम्यधो उपर्यपि ।
इहाऽऽनये लोकपालान् केशैः प्रगृह्य सेन्द्रकान् ॥६५॥
कालं मृत्युं तथा बध्वा ह्यानये तु त्वदन्तिकम् ।
दैत्यदानवसंग्रामे प्रबलं प्रणिहन्म्यहम् ॥६६॥
पश्य मत्पादपतनात् कम्पते क्षोणिमण्डलम् ।
दोर्भ्यां तु पर्वतान्सर्वान् चूर्णयामि च ते बलात् ॥६७॥
किं बहूक्तेन देह्याज्ञां ममाऽसाध्यं न किंचन ।
त्वत्पादबलमासाद्य कृतं विद्धयत्र चिन्तितम् ॥६८॥
इत्युक्त्वा वीरभद्रः सः प्रोन्नतो दोःसहस्रवान् ।
यावच्छंभोः पादधूलीं दधार मूर्ध्नि सन्निधौ ॥६९॥
तावत्तत्र रुदन्तश्च समायाता मखाद्गणाः ।
प्रोचुर्देव महादेव ! पाहि नः शरणागतान् ॥७०॥
संशृण्वादरतो नाथ सतीवार्तां प्रविस्तरात् ।
गर्वितेन तु दक्षेण सत्या अनादरः कृतः ॥७१॥
तुभ्यं भागमदान्नो सः देवेभ्यश्च प्रदत्तवान् ।
दुर्वचांस्यवदत् प्रोच्चैः श्रुत्वाऽकुप्यत् सती मखे ॥७२॥
विनिन्द्य बहुशस्तातमधाक्षीत्स्वतनुं मखे ।
चतुरयुतसंख्याका गणा नष्टा तदाऽध्वरे ॥७३॥
लज्जया रणसंग्रामं कृत्वा चापि हता मखे ।
यज्ञनाशप्रकर्तारोऽस्मत्पक्षाश्च गणास्तदा ॥७४॥
भृगुहोमोत्पादितैश्च ऋभुभिर्वै हता मखे ।
लक्षयोद्धार एवान्ये दक्षस्य तु हता गणैः ॥७५॥
तथापि मखभूमेस्ते शुद्धिं कृत्वा वितन्वते ।
यज्ञं दक्षस्तथा दक्षपक्षग्राहाः सुरर्षयः ॥७६॥
सतीशोकं न कुर्वन्ति शंभुं नैव स्मरन्ति च ।
विहसन्ति सतीनाशात् दन्तान् कुर्वन्ति वः प्रति ॥७७॥
अपमानं तव सत्यास्तस्मिन् यज्ञे विशेषतः ।
दक्षाद्यास्तेऽखिला दुष्टा अकुर्वन् गर्विता अति ॥७८॥
नष्टानां च गणानां तु संजीवनार्थमेव वै ।
मन्त्रं भस्मोभवं देहि देहि नोऽमृतबुद्धिकाम् ॥७९॥
तत्र भृग्वादयश्चान्यान नवानुत्पादयन्ति तान् ।
विनाशयितुं रोद्धुं च देहि शक्तिं महालयाम् ॥८०॥

ब्रह्मणा शंभवे दत्तः कालकवलसंज्ञकः ।
स मन्त्रः शंभुना दत्तो वीरभद्राय धीमते ॥८१॥
शस्त्रं फुत्कृत्य रोषेण शत्रून् दृष्ट्वा प्रयोजयेत् ।
कालकवलमन्त्रः स ह्यन्येभ्योऽपि प्रदीयताम् ॥८२॥
'ओं मृतेमृत्यो महामृत्यो मृत्या सह स्थिरो भव ।
ओं मृतिमृत्यो महामृत्यौ स्वमृत्या सँस्तिरो भव' ॥८३॥
इति फुत्कारपूर्वं वै शस्त्रं शरादिकं च यत् ।
प्रक्षिपेच्छत्रुशरीरे मृत्वा पुनर्न जीवति ॥८४॥
वीरभद्रेण तत्काले शंकरादेव शिक्षितः ।
साधितश्चापि तत्रैव शंकरस्य निदेशतः ॥८५॥
शरीरे भस्म सम्मृज्य होमाऽयुतं तदाऽनले ।
लक्षजपान् स तत्रैव कृत्वाऽयुतसुवर्ष्मभिः ॥८६॥
साधयित्वा कालमन्त्रं शरीराणि विलीय च ।
एकाक्ष्येव पुनर्भूत्वा वीरभद्रो महाक्षयः ॥८७॥
सज्जोऽभूद्गमनायैव निदेशमार्थयद्धरात् ।
हरोऽपि च सतीदेहं भस्मीभूतं तु नारदात् ॥८८॥
गणेभ्यश्च निजां निन्दां दक्षस्यातिप्रगर्विताम् ।
श्रुत्वा दक्षस्य सर्वस्य नाशार्थं स्वजटां क्षितौ ॥८९॥
प्रास्फालयामास रोषात् ताडयामास वेगतः ।
मार्जयामास संक्रोधाद्धूनयामास सर्वतः ॥९०॥
प्रास्फालने जटाभ्यश्च महालयाख्यशक्तितः ।
ताडने च ज्वरा जाता मार्जने कालिकाह्वयाः ॥९१॥
धूनने च गणा जाता अर्बुदार्बुदकोटयः ।
हस्ततालिकया महाभयदा भूतकोटयः ॥९२॥
देव्यो महालयास्तत्र कोटिर्बुदमित्यपि ।
सशस्त्रा अष्टसद्धस्ता नवयौवनगर्विताः ॥९३॥
अतिभयंकराकारा युद्धकर्मकृतश्रमाः ।
ज्वरा मूर्तिधराः क्रूरास्त्रयोदशाब्जकोटयः ॥९४॥
सशस्त्रा नाशकार्यान्ता रिप्वपुनरावर्तिकाः ।
कालिकादिमहाचण्ड्यो रणांगणप्रनर्तिकाः ॥९५॥
सशस्त्रमन्त्रबुद्ध्याढ्या महाकाल्यो भयंकराः ।
गणाः सर्वे परार्धाश्च परार्धस्य परार्धकाः ॥९६॥
सशस्त्रकवचाऽस्त्रादिज्ञातारो युद्धकोविदाः ।
प्रार्थयन्तो हरं शीघ्रं प्रज्वलन्तो दिशो दश ॥९७॥
सज्जा वै त्वरयांचक्रुः शंभ्वाज्ञावाप्टदर्शिनः ।
सैन्यं त्वसंख्यमेवात्र कैलासे समभून्नवम् ॥९८॥
वीरभद्रो हरं प्राह शीघ्रमाज्ञापय प्रभो ।
शोषणीया मया शंभो क्षणार्धेनैवसिन्धवः ॥९९॥
पेषणीया मया तत्र क्षणार्धेनैव पर्वताः ।
क्षणेन भस्मसात्कुर्यां ब्रह्माण्डमुत देवताः ॥१००॥
सर्वे लोका व्यसवश्च किमु कार्याश्च मे वद ।
प्रणतोऽस्मि महादेव भूयोऽपि प्रणतोऽस्म्यहम् ॥१०१॥
स्पन्दोऽपि जायतेऽसव्यांगानां ते विजयप्रदः ।
हर्षोत्साहविशेषोपि जायतेऽपूर्व एव मे ॥१०२॥
शीघ्रं प्रेषय मां शंभो किं कार्यं ब्रूहि सत्वरम् ।
शंभुः प्राह तदा वीरभद्रं ताम्रविलोचनः ॥१०३॥
दक्षो मखं करोत्याशु मद्विरोधेन गर्वतः ।
तन्मखं भस्मसात्कृत्वा सयागपरिवारकम् ॥१०४॥
पुनरायाहि कैलासं गच्छ शीघ्रं त्वरां कुरु ।
मद्विरुद्धाः सुरा यद्वा गन्धर्वा मुनयोऽपरे ॥१०५॥
ऋषयो भूसुरा यद्वा ये केचित्तत्र संगताः ।
तानप्यत्रैव सहसा भस्मसात्कुरु सत्वरम् ॥१०६॥
यदि विष्णुश्च ब्रह्मा च महेन्द्रो वा यमोऽपि वा ।
दक्षस्य पक्षपाती स्याद् भस्मसात् तान्विधेहि वै ॥१०७॥
दधीचिमतमुल्लंघ्य ये दक्षपक्षपातिनः ।
तिष्ठन्ति चाध्वरे ताँस्त्वं भस्मसात्कुरु भद्रक ॥१०८॥
आकाशवाण्या बोधितास्तथापि यान्ति नो बहिः ।
यज्ञस्थान् मे द्रोहिणस्तान् भस्मसात्कुरु भद्रक ॥१०९॥
दक्षमखाऽऽस्तद्रविणान् दक्षश्रैष्ठ्यप्रवादिनः ।
सतीशंभुर्व्राणनस्तान् भस्मसात्कुरु भद्रक ॥११०॥
दक्षपक्षगताश्चापि मृत्युभयं विलोक्य ये ।
स्युस्तावकाः क्षणिका भस्मसात्कुरु तानपि ॥१११॥
देवा वा देवपुत्रा वा मनवो मनुपुत्रकाः ।
ब्राह्मा वा ब्रह्मपुत्रा वा तत्पौत्रा वापि ये खलाः ॥११२॥
सस्त्रीकाश्च सपुत्राश्च सतीशंभुविरोधिनः ।
भस्मसात्कुरु तान्सर्वान् पश्चाश्च सलिलं पिब ॥११३॥
इत्युक्तो वीरभद्रस्तु रक्तावेशो भवन् मुहुः ।
रुद्रावेशस्तथा कालावेशोऽभवत् प्रचण्डकः ॥११४॥
अदृश्यश्चाऽप्रधृष्यश्च नारायणेन वेधसा ।
बभूव प्रलयावेशो भयावेशो भयंकरः ॥११५॥
मस्तकात्तस्य कालाग्निसमुद्राः प्राभवँस्तदा ।
ब्रह्माण्डं ज्वालयन्नत्वा शंकरं प्रचचाल सः ॥११६॥
नारदोऽपि कलिं सम्यगुद्धाव्याऽग्रे मखं गतः ।
प्राह विष्णुं च शक्रं च वेधसं च तथा सुरान् ॥११७॥
वीरभद्रः समायाति विनाशः स्याद्भयंकरः ।
तस्मादतोऽपसर्पन्तु मा पश्यन्तु यमगृहम् ॥११८॥

कालो नाऽयं कुटुम्बस्य सम्बन्धस्यापि लोचकः ।
तस्मात्प्रलयवेगेभ्योऽपसर्तव्यं सुबुद्धिभिः ॥११९॥
श्रुत्वा विष्णुयमवेधोमहेन्द्रभूसुरादयः ।
दक्षरक्षाऽवमन्तारो मखात्तस्माद्विनिर्ययुः ॥१२०॥
सस्त्रीकाः सपरीवाराः स्वस्वविमानसंस्थिताः ।
व्योममार्गेण यातास्ते दूरं दूरं प्रयान्ति वै ॥१२१॥
भृगुणा तु तदा ज्ञात्वा सैन्यानि होमकर्मभिः ।
ऋभुश्रृंभुधरांम्बादिगणानामर्बुदानि च ॥१२२॥
परार्धानि नवान्येव कृतानि दक्षपाततः ।
सशस्त्राः साग्निका स्वेच्छारूपविरूपधारकाः ॥१२३॥
युद्धमात्रनिपूणास्ते मन्त्रैशून्या नजीवनाः ।
सज्जाः समभवन् भूमौ गगने यक्षरक्षकाः ॥१२४॥
प्रवर्तते यज्ञकार्ये पूर्णत्वमवशिष्यते ।
पूर्णाहूतिस्तु मध्याह्ने भाविनीति च सत्वरम् ॥१२५॥
याजका यज्ञकार्याणि कुर्वन्ति त्वरितास्तदा ।
किन्तु सतीप्रशापेन दधीचिवचनेन च ॥१२६॥
पूर्णो यज्ञो न वै भावी मध्याह्नपूर्वमेव यत् ।
वीरभद्रः समायातोऽर्बुदाऽर्बुदप्रसैन्यवान् ॥१२७॥
शतयोजनतः पूर्वं सैन्यशब्द समागतः ।
दशयोजनतः पश्चाद्धूलीप्राद्रिर्व्यदृश्यत ॥१२८॥
क्षयान्तरेऽद्रिसदृशाः समदृश्यन्त शांकराः ।
गणा भयंकरा रौद्रा योद्धारोऽमापविग्रहाः ॥१२९॥
अवतेरुर्निपेतुश्च ऋभुसैन्येषु चाम्बरे ।
श्रृंभुसैन्येषु पृथ्व्यां च धराम्भुपृतनास्वपि ॥१३०॥
अथ शंभुर्वीरभद्रानुगाँश्चान्यान् महागणान् ।
स्वनिःश्वाससमुद्भूतान् शतकोटीनवासृजत ॥१३१॥
अम्बरं तैः समाक्रान्तं चेलुः पार्श्वे च पृष्ठतः ।
श्रृंगाग्राणि गिरीणां च कैश्चिदुत्पाटितानि वै ॥१३२॥
कैश्चित्त्वाचूडमूलाश्च पर्वता वै समुद्धृताः ।
केचनोत्पाट्य वै शालवृक्षानादाय संययुः ॥१३३॥
पार्षदाः कालकालस्य सर्वे रुद्रस्वरूपिणः ।
अयुताऽयुतसिंहाश्च शार्दूला मकरा गजाः ॥१३४॥
कोटिलक्षाणि यानानि वाहनानि प्रगृह्य च ।
गतानि तत्र सैन्यानि पुष्पवृष्टिरभूद्गतौ ॥१३५॥
काली कात्यायनीशानी चामुण्डा मुण्डमर्दिनी ।
भद्रकाली तथा भद्रा कौशिकी वैष्णवी तथा ॥१३६॥
एताभिर्नवदुर्गाभिर्युक्ता घोरस्वरूपिणी ।
महाकाली ययौ दक्षविनाशाय तु सत्वरा ॥१३७॥
डाकिनी शाकिनीभूतगणप्रमथगुह्यकाः ।
कूष्माण्डाः पर्पटाश्चैव चटका ब्रह्मराक्षसाः ॥१३८॥
भैरवाः क्षेत्रपालाश्च वेतालाश्च विनायकाः ।
निर्ययुस्त्वरितं वीरा दक्षयज्ञविनाशकाः ॥१३९॥
तथैव योगिनीचक्रं चतुःषष्टिगणान्वितम् ।
निर्ययौ सहसा क्रुद्धं कोटिवेतालिनीयुतम् ॥१४०॥
अभ्ययाच्छंकुकर्णश्च दशकोट्या गणेश्वरः ।
दशभिः केकराक्षश्च विकृतोऽष्टाभिरित्यपि ॥१४१॥
चतुःषष्या विशाखश्च नवभिः पारियात्रिकः ।
षड्भिः सर्वाकको वीरस्तथैव विकृताननः ॥१४२॥
ज्वालकेशो द्वादशकोटिभिर्जामौँस्तु सप्तभिः ।
दुद्रुभोऽष्टाभिः कोटिभिः कपालीशस्तु पंचभिः ॥१४३॥
षड्भिः संदारको यायात् कोकुण्डः कोटिकोटिभिः ।
विष्टंभोऽष्टाऽष्टभिर्यायात् कोटिभिर्गणसत्तमः ॥१४४॥
सहस्रकोटिभिर्यायात् शंनादः पिप्पलस्तथा ।
आवेशानस्तथाऽष्टाभिरष्टाभिश्चन्द्रतापनः ॥१४५॥
महावेशः सहस्रेण कोटिना गणपस्तथा ।
कुण्डी द्वादशकोटिभिस्तथा पर्वतको ययौ ॥१४६॥
कालश्च कालकश्चैव महाकालस्तथा गणः ।
कोटीनां शतकेनैव यज्ञनाशं ययुः प्रति ॥१४७॥
अग्निकृच्छतकोट्या च कोट्याऽग्निमुख इत्यपि ।
आदित्यमूर्धा कोट्या च तथा कोट्या घनावहः ॥१४८॥
सन्नाहः शतकोट्या च कोट्या च कुमुदो गणः ।
अमोघः कोकिलश्चैव कोटिकोट्या गणाधिपः ॥१४९॥
काष्ठागूढश्चतुःषष्ट्या सुकेशी वृषभस्तथा ।
सुमन्त्रको गणाधीशस्तथा यज्ञं विनिर्ययुः ॥१५०॥
काकपादोदरः सन्तानकश्च षष्टिकोटिभिः ।
महाबलः पुंगवश्च नवभिः कोटिभिस्तथा ॥१५१॥
मधुपिंगः पूर्णभद्रो नवतिकोटिभिर्ययौ ।
विरूपाक्षस्तालकेतुः षडास्यः पंचवक्त्रकः ॥१५२॥
संवर्तकः कुलीशो दैत्यान्तो लोकान्तकस्तथा ।
भृंगीरिटिः श्रृंगिरिटिरशनिर्भालकस्तथा ॥१५३॥
चतुःषष्ट्या सहितास्ते प्रत्येकमध्वरं ययुः ।
भूतकोटिसहस्राणि श्वगणस्तिसृकोटिभिः ॥१५४॥
न्यपतद्व्योममार्गेण दक्षस्याऽध्वरभूमिषु ।
तदा भेर्यश्च शंखाश्च पटहाश्चापि गोमुखाः ॥१५५॥
श्रृंगाणि विविधान्येव निनेदुश्च रणोत्सवे ।
दक्षवामाक्षि बाहूरुविस्पन्दः समजायत ॥१५६॥

भूकम्पोऽभूच्च मध्याह्ने दक्षोऽपश्यन्नक्षत्रकम् ।
दिशो मलीम्लुचस्त्वासन् निस्तेजोऽभूद्दिवाकरः ॥१५७॥
परिवेषैः सप्तभिश्च परिवृतो भयप्रदः ।
नक्षत्राणि पतन्ति स्माऽकालिकस्तनयित्नवः ॥१५८॥
नक्षत्राणामभूद्वक्रा गतिश्चाधोमुखी तदा ।
गृध्रो दक्षशिरः स्पृष्ट्वा ययौ नीत्वा शिरःपटम् ॥१५९॥
ववाशिरे च जम्बूकाः खरा वाता ववुस्तदा ।
उल्कावृष्टिः पांसुवृष्टिः श्वेतवृश्चिकवर्षणम् ॥१६०॥
अर्बुदाऽर्बुदशलभा दृश्यन्ते स्म मखांऽवरे ।
नीतश्च पवनैरूर्ध्वे दक्षस्याऽध्वरमण्डपः ॥१६१॥
वेमुः रक्तं याज्ञीयास्ते सकम्पा बभूवुस्तदा ।
असृग्वृष्टिर्दिशां दाहस्तिमिरावृतिका दिशः ॥१६२॥
एवंविधान्यरिष्टानि चाद्राक्षुर्दक्षयज्ञगाः ।
भुवि ते मूर्छिताः पेतुर्हा हताः स्मेति चेरयन् ॥१६३॥
एतस्मिन्नन्तरे तत्राकाशवाणी जगाद तान् ।
धिक् दक्ष धिक् सुराद्या वोऽनिवार्यं दुःखमागतम् ॥१६४॥
तावत्तु शंभुसैन्यानि प्रविष्टानि मखांगणम् ।
भयाऽऽविष्टस्तदा दक्षो ह्यगच्छच्छरणं हरेः ॥१६५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने सतीपार्षदानां युद्धं, दक्षाय व्योमवाणी, नारदस्य पुनः कैलासगमनं, शंभुजटातो वीरभद्रोत्पत्तिः, अवशेषगणानां कैलासागमनम् , कालिकाज्वरगणभूतसिंहादिसैन्यसर्जनम् , यज्ञं प्रति प्रेषणम् , नारदस्य यज्ञं, प्रत्यागमः, दक्षादेरपशकुनानि चेत्यादि निरूपणनामा षट्सप्तत्यधिकशततमोऽध्यायः ॥ १७६ ॥

**श्रीनारायण उवाच—**

दक्षस्तदा भयोद्विग्नो विष्णुं सस्मार पद्मजे ।
देवदेव हरेकृष्ण नारायण जगद्गुरो ॥ १ ॥
मम रक्षा विधातव्या मखस्य च जनस्य च ।
मखभंगो मा भवतु मखात्मकस्त्वमच्युतः ॥ २ ॥
ब्रह्मणा विष्णुना तस्य श्रुता वै प्रार्थना तदा ।
हंसं गरुडमारुह्य स्वस्थानात्पुनरागतौ ॥ ३ ॥
पपात पादयोस्तयोर्भयव्याकुलमानसः ।
उत्थाप्य च ततो विष्णुर्दक्षं विक्लिन्नमानसम् ॥ ४ ॥
प्राह दक्ष श्रृणु तत्त्वं सर्वथा हितकृद्वचः ।
अवज्ञा हि कृता दक्ष त्वया तत्त्वमजानता ॥ ५ ॥
ईशस्याऽवज्ञया सर्वं कृतं भवति निष्फलम् ।
विफलं केवलं नैव विपत्तिश्च पदे पदे ॥ ६ ॥
अपूज्या यत्र पूज्यन्ते पूजनीयो न पूज्यते ।
त्रीणि तत्र भवन्त्येव दारिद्र्यं मरणं भयम् ॥ ७ ॥
असत्कृतान्महादेवात् महद्भयमुपस्थितम् ।
शंकरो वैष्णवो देवो नारायणपरायणः ॥ ८ ॥
नारायणस्य भक्तस्य ह्यपराधः कृतस्त्वया ।
भक्तापराधिनो रक्षां कर्तुं स्वामी न वै क्षमः ॥ ९ ॥
शिवस्य शरणं याहि स वै रक्षां करिष्यति ।
अहं भक्तपराधीनः सतीनाशेन दुःख्यहम् ॥१०॥
क्रूरस्य कृतकार्यस्य फलं प्राप्नुहि किं भवेत् ।
दक्षस्तद्वचनं श्रुत्वा विवर्णवदनोऽभवत् ॥११॥
प्राह च श्रीहरिं कृष्ण यज्ञारंभो भवद्बलात् ।
कृतोऽयं कर्मणां साक्षिन् वेदधर्मस्य सिद्धये ॥१२॥
तस्माद् रक्षा विधातव्या यज्ञस्याऽस्य मम प्रभो !
त्वां विना रक्षितुं यज्ञं चाऽस्मान् शक्तो न विद्यते ॥१३॥
विष्णुः प्राहाऽध्वररक्षा विधातव्या मया ध्रुवम् ।
ख्यातो मम पणः सर्वो धर्मस्य परिपालनम् ॥१४॥
मर्यादा वेदधर्मस्य रक्षणीया मया सदा ।
यज्ञे देवत्रयाणां च तथाऽन्येषां महात्मनाम् ॥१५॥
सुरादीनां च भागोऽस्ति वेदो वक्ति न चाऽन्यथा ।
त्वया व्यतिक्रमस्तस्य मानेनाचरितोऽध्वरे ॥१६॥
वद दक्ष धर्मपणः कथं त्याज्यो मया भवेत् ।
कथं सतीशिवौ यज्ञे त्वया नाऽकारितौ पुरा ॥१७॥
कथं यज्ञस्य मर्यादा ह्युल्लंघिता विजानता ।
किं कर्म किमकर्मेति न किं पश्यसि दुर्मते ॥१८॥
देवेनैकेन शून्योऽयं यज्ञो नैव फलप्रदः ।
केवलं ज्ञानमाश्रित्य मानमाश्रित्य याजकाः ॥१९॥
ईश्वरं च परित्यज्य केवले कर्मणि स्थिताः ।
ते नु कर्ममयैः पाशैर्बध्यन्ते बहुजन्मसु ॥२०॥
निरयेषु प्रपच्यन्ते हीश्वरस्यऽवमानकाः ।
एकत्र तु शिवाख्यस्य भ्रातुः सैन्यमुपस्थितम् ॥२१॥
अपरत्र च दक्षादेः पुत्रपौत्रादिवाहिनी ।
सर्वे सम्बन्धिनो देवाः कुटुम्बं त्वेकमेव ह ॥२२॥
कुत्र सुदर्शनं चक्रं मोक्तव्यं वद मेऽधुना ।
कुटुम्बिनां सेवकानां सर्वथा च महात्मनाम् ॥२३॥

नाश उपस्थितस्तेऽत्र शिवाऽवमानदोषतः ।
नाश आमन्त्रितो बुद्धया गृहनाश उपस्थितः ॥२४॥
अयं रुद्रगणाधीशो वीरभद्रोऽरिमर्दनः ।
सर्वविनाशनार्थं वै ह्यागतोऽस्ति न संशयः ॥२५॥
एवं ब्रुवति गोविन्दे सैन्यमापतितं तदा ।
परितोऽध्वरभूमौ तद् व्यपश्यन् वै सुरादयः ॥२६॥
इन्द्रस्तदा हसन् रुद्रं वीरभद्रं तथा गणम् ।
वज्रं धृत्वा करे योद्धुं सज्जोऽभूत् सुरसैन्यकः ॥२७॥
इन्द्रः स्वगजमारूढो बस्तारूढोऽनलः स्वयम् ।
यमो महिषमारूढो निर्ऋतिः प्रेतवाहनः ॥२८॥
वरुणो मकरारूढो मृगारूढोऽनिलस्तथा ।
कुबेरः पुष्पकारूढो युयुधे शंकरैः सह ॥२९॥
तथाऽन्ये सुरयोद्धारो यक्षचारणगुह्यकाः ।
आरुह्य वाहनान्येव युयुधिरे प्रतापिनः ॥३०॥
देवानां च गणानां च तदासीत्समरो महान् ।
नेदुः शंखाश्च भेर्यश्च महादुन्दुभयस्तथा ॥३१॥
डिण्डिमाः पटहा नेदुः रणशृंगाणि गोमुखाः ।
तीक्ष्णतोमरनाराचैः सुरा जघ्नुर्गणान् बहून् ॥३२॥
इन्द्राद्यैर्लोकपालाद्यैर्गणाः शंभोर्विनिर्जिताः ।
भृगोर्मन्त्रजसैन्यैश्च निर्जिताश्च पलायिताः ॥३३॥
उच्चाटनं कृतं तेषां भृगुणा यज्वना तदा ।
चण्डिकानां च सैन्यानि मखे तत्राऽऽपतन्ति च ॥३४॥
महालयानां सैन्यानि युद्धयन्ति ऋभुसंगरे ।
कालानां भैरवाणां च भूतप्रेतादिधन्विनाम् ॥३५॥
सैन्यानि देवसैन्यैश्च शृंभुसैन्यैः रणं व्यधुः ।
निपातितानि सर्वाणि ऋभुशृंभुधरांभुभिः ॥३६॥
अब्जार्बुदपरार्धानि गमितानि यमक्षयम् ।
अरण्यं च शरीराणां समभूत् रणपातिनाम् ॥३७॥
पराजितान् स्वकान् दृष्ट्वा वीरभद्रोऽद्रिसन्निभः ।
भूतप्रेतपिशाचाँश्च कृत्वा तानेव पृष्ठतः ॥३८॥
महागणान्पुरस्कृत्य समापतद्रणांगणे ।
महात्रिशूलमादाय पातयामास निर्जरान् ॥३९॥
देवान्साध्यगणान्यक्षाँश्चारणान्गुह्यकानपि ।
शूलैश्च तोमरैः शक्तिप्रवरैस्ते प्रजघ्निरे ॥४०॥
केचिद्द्वेधा कृताः खड्गैर्मुद्गरैश्च विपोथिताः ।
अन्यैः शस्त्रैस्तथाऽस्त्रैश्च सुरा भिन्ना महागणैः ॥४१॥
कालकवलमन्त्रैश्च स्वभटा जीविताः कृताः ।
दक्षभटा विनश्यन्ति कोऽपि तज्जीवकोऽस्ति न ॥४२॥

सर्वे पराजिता देवाः पलायनपरायणाः ।
युद्धस्थानं परित्यज्य गताः सर्वे त्रिविष्टपम् ॥४३॥
केवलं लोकपालास्ते शक्राद्यास्तस्थुरुत्सुकाः ।
वीरभद्रोऽब्रवीत्सर्वान्दक्षपक्षप्रपातिनः ॥४४॥
सर्वे यूयं बालिशत्वादवदानार्थमागताः ।
अवदानं प्रयच्छामि समागच्छत मेऽन्तिकम् ॥४५॥
हे शक्र हे गुरो भानो शशिन् यम धनेश्वर ।
वायो वरुण निर्ऋते शेष सूर्यादयः सुराः ॥४६॥
समागच्छत सान्निध्ये प्रयच्छाम्यवदानकम् ।
एवमुक्त्वा तीक्ष्णबाणैः शस्त्रैरस्त्रैश्च पर्वतैः ॥४७॥
निर्जघान सुरान्सर्वान् दिक्पतीन्द्रसुरेश्वरान् ।
ते च पलायनपरा विदुद्रुवुर्दिशो दश ॥४८॥
अथ पलायितान्दृष्ट्वा यज्ञनारायणः स्वयम् ।
नारायणो नरो भूत्वा दध्मौ शंखं महास्वनम् ॥४९॥
श्रुत्वा तं शंखनिर्ह्रादं देवास्ते पुनराययुः ।
नन्दिना युयुधे शक्रो वह्निस्तत्राऽश्मना सह ॥५०॥
कुष्माण्डाग्रेण धनराट् युयुधे प्राणदानतः ।
यमेन च महालोको मुण्डस्तु वरुणेन वै ॥५१॥
नैर्ऋतेन तु चण्डश्च भृंगिणा वायुरित्यपि ।
योगिनीचक्रसंयुक्तो भैरवीनायको महान् ॥५२॥
विदार्याऽपरदेवान्वै पपौ शोणितमुष्णकम् ।
क्षेत्रपाला जजक्षुस्तान्काली च रुधिरं पपौ ॥५३॥
अवशिष्टास्तदा देवाः प्रचक्रिरे पलायनम् ।
विष्णुर्ब्रह्मा स्वस्वलोकं जग्मतुः प्राक् ततोऽध्वरात् ॥५४॥
विनाशोऽर्बुदकोटीनां तदाऽभूदध्वरस्थले ।
प्रविष्टाश्च गणा यज्ञे मर्दनं वै प्रचक्रिरे ॥५५॥
कैश्चिदुत्पाटिता यूपाः केचित्कुण्डान्यपूरयन् ।
कैश्चित्तु मण्डपा ध्वस्ता वेद्यश्च खनिताः परैः ॥५६॥
कैश्चिद्धवींषि भुक्तानि पीतान्याज्यानि चाऽपरैः ।
कैश्चिद्ध्वस्तानि चान्नानि पीतानि पायसानि च ॥५७॥
पक्वान्नानि प्रभुक्तानि क्षीराण्यास्वादितानि च ।
चूर्णितानि च भग्नानि यज्ञपात्राणि सर्वथा ॥५८॥
भग्नाश्च शकटाः कैश्चित् स्रुचः स्रुवाश्च मोटिताः ।
पशवः खादिताः कैश्चित् कुण्डाग्नयो विनाशिताः ॥५९॥
दुकूलानि च रत्नानि कैश्चिद्धृतानि तत्स्थले ।
तमुपद्रवमालोक्य यज्ञो मृगस्वरूपधृक् ॥६०॥
भीतः पलायितो व्योम्ना वीरभद्रेण संधृतः ।
ततश्चालातचक्रेण विशिरस्कस्तदा कृतः ॥६१॥

नन्दी भगस्य नेत्रे द्वे समुज्जहार यो भगः ।
शपन्तं दक्षं नेत्राभ्यामसूसुचत्पुनः पुनः ॥६२॥
चण्डश्चोत्पाटयामास पूष्णो दन्तान्प्रवेगतः ।
शपमाने हरे पूर्वं योऽहसद् दर्शयन्दतः ॥६३॥
सरस्वत्याश्च नासाग्रं चिच्छेद वीरभद्रकः ।
अदितेरोष्ठपुटकौ चिच्छेदश्चान्यभद्रकः ॥६४॥
व्यपोथयद् भृगुं पृथ्व्यां मणिभद्रो महाबलः ।
पदाऽऽक्रम्योरसि तस्याऽकार्षीद्वै श्मश्रुलुंचनम् ॥६५॥
अर्यम्णो बाहुयुगलं तदोत्पाटितवान्परः ।
अग्नेरुत्पाटयामास जिह्वामन्यो गणस्तदा ॥६६॥
चिच्छेद वायोर्वृषणौ गणोऽन्यो बलवर्धनः ।
गणो यमशिराः कश्चित् यमं बबन्ध रज्जुभिः ॥६७॥
श्रृंगी च नैर्ऋतं वृक्षे बबन्ध जटया तदा ।
अतोलयच्च शाखायां ताडयामास कस्त्वधः ॥६८॥
कुबेरं पद्योर्धृत्वा रज्ज्वा बध्वा ह्यधोमुखम् ।
तोलयामास यूपोर्ध्वे गणो धराभुनामकः ॥६९॥
रुद्रास्तु वामयामासुर्भक्षकानध्वराहुतीः ।
वरुणोदरमापीड्योद्गीरयामासुराज्यकम् ॥७०॥
इन्द्रो मयूररूपेणोड्डीय च्छन्नोऽभवद् गिरौ ।
प्रथमाः कालयामासुरन्यानपि च याजकान् ॥७१॥
प्रगृह्यारिष्टनेमिनमंगिरसं च कश्यपम् ।
दत्तं कृशाश्वं पादेन जघान मूर्ध्नि भद्रकः ॥७२॥
ततोऽन्यानपि देवादीन् विदार्य पृथिवीतले ।
मुनीनृषीन् वीरभद्रादयः शान्तिं न वै ययुः ॥७३॥
विडम्बिताः स्वधा स्वाहा दक्षिणाऽन्याश्च योषितः ।
मन्त्रास्तन्त्रास्तथा चान्ये वस्तुशेषा विनाशिताः ॥७४॥
ववृषुस्ते पुरीषाणि विनानाग्नौ रुषा गणाः ।
प्रमथैः सा कृता यज्ञभूमिः श्मशानसन्निभा ॥७५॥
अतिशोच्यदशापन्ना वीरभद्रो जगौ गणान् ।
क्व स दक्षो दुराचारः क्व च यज्ञ भुजः सुराः ॥७६॥
सर्वानानयत धृत्वा यात द्रुततरं गणाः ।
इत्याज्ञया धावतस्तान् दृष्ट्वा क्रुद्धो जनार्दनः ॥७७॥
कृतवान् शक्तिह्रासं यत् गणाः शुष्कतृणायिताः ।
तेन क्रुद्धो वीरभद्रो ददर्श शार्ङ्गिणं हरिम् ॥७८॥
प्राह दक्षं समानीय देहि युद्धयस्व वा मया ।
हरिः प्राहाऽहमप्यत्र दक्षरक्षणदक्षधीः ॥७९॥
पश्यामि तव सामर्थ्यं कथं दक्ष हरिष्यसि ।
इति कृत्वा धृतं चक्रं मुमोच वीरभद्रके ॥८०॥

हाहाकारो महानासीत् लग्नं भद्रगले तदा ।
यावत् कृन्तति कण्ठं च कण्ठे शंभुः समास्थितः ॥८१॥
कण्ठं त्यक्त्वा समायातं विष्णुहस्तगतं ह्यभूत् ।
गरुडश्च तदा क्रुद्धस्त्वेकैकं प्रमथं नखैः ॥८२॥
दारयामास लक्षाँस्ते प्रापुः शोभां तु कैंशुकीम् ।
सर्वान्गणाँस्ततो विष्णुः स्तंभयामास तत्स्थले ॥८३॥
वीरभद्रविनाशाय यावत्सुदर्शनं हरिः ।
प्रैरयच्च पुनस्तावद् व्योमवाणी जगाद तम् ॥८४॥
हरे साहसं माऽकार्षीर्वीरभद्रे हरः स्थितः ।
हरनाशाय ते यत्नो लज्जावहो निवर्तय ॥८५॥
दक्षः कर्मफलं यातु माऽन्यः कश्चित् तथाऽऽचरेत् ।
श्रुत्वैतां च हरिश्चक्रं न मुमोच पुनस्तदा ॥८६॥
अन्तर्वेद्यान्तरगतं निलीनं प्राप्य दक्षकम् ।
वीरभद्रो विनद्योच्चैः प्राह धिक्शंभुनिन्दकम् ॥८७॥
यस्येदृगस्ति सम्पतिर्यत्र देवाः समासदः ।
सः कथं सेश्वरं यज्ञं न कुर्याद्दक्षतां दधन् ॥८८॥
येनाऽऽस्येनाऽपवित्रेण भवता निन्दितः शिवः ।
छेदयामि तदास्यं ते तीक्ष्णधाराऽसिना द्रुतम् ॥८९॥
एवमुक्त्वाऽस्य मूर्धाऽत्र खण्डितस्त्वसिनाऽपि सः ।
कबन्धाद् भिन्नतां नाप्तो यतोऽभेद्यो हि योगतः ॥९०॥
अभेद्यं तच्छिरो मत्वा शस्त्रास्त्रैरपि सर्वशः ।
चूर्णयामीत्यभिधाय चपेटाभिरचूर्णयत् ॥९१॥
कराभ्यां त्रोटयामास पद्भ्यामाक्रम्य चोरसि ।
अग्निकुण्डे च तत्क्षिप्त्वा वीरभद्रो जुहाव ह ॥९२॥
अथाऽन्यानपि यज्ञस्थान्धृत्वा संमृग्र तत्र च ।
तरून्प्रज्वाल्य तत्रैव ज्वालयामास भूसुरान् ॥९३॥
अथाऽट्टहासमकरोत् पूरयँश्च जगत्रयम् ।
ततस्त्वदितिमुख्यानां मिलितानां महोत्सवे ॥९४॥
त्रोटयामास कर्णादीन्यंगप्रत्यंगकानि च ।
वेणीदण्डाँश्च कासाञ्चित् तेन छिन्ना तदा रुषा ॥९५॥
कासांचिच्च कराश्छिन्नाः कासांचित्कर्तिता भुजाः ।
नासिकाश्च तथांऽगुल्यः छिन्नाः कासांचिदेव ह ॥९६॥
जिह्वाः कर्णास्तथा छिन्ना निन्दोक्ता वा श्रुता यया ।
चन्द्रो धर्मो भृगुश्चैव मारीचाद्याः सुताधवाः ॥९७॥
अत्यन्तमपमानस्य भाजनं तेन कारिताः ।
तानि कुण्डानि ते यूपास्ते स्तंभाः स च मण्डपः ॥९८॥
ता वेद्यस्तानि पात्राणि तानि हव्यान्यनेकधा ।
ते च वै यज्ञसंभारास्ते ते यज्ञप्रवर्तकाः ॥९९॥

ते रक्षपालास्ते मन्त्रा विनेशुः शिवहेलया ।
क्षणतुल्येन कालेन आसन् नाऽऽसन् बभूविरे ॥१००॥
महतां हेलनाल्लक्ष्मि ! क्षीयतेऽर्जितसुकृतम् ।
तन्नाशे सर्वनाशः स्याद् यथा दक्षस्य सम्पदाम् ॥१०१॥
तस्माद्द्रोहो न कर्तव्योऽल्पीयसामपि देहिनाम् ।
परदुःखफलं स्वस्याऽवश्यं भोक्तव्यमापतेत् ॥१०२॥
अथ विष्णुर्ययौ व्योम्नि विमानस्थं तु वेधसम् ।
प्राह ब्रह्मन् शंकरं वै नीत्वाऽऽयाह्यत्र सत्वरम् ॥१०३॥
विधिहीनं मखध्वंसं पश्येदागत्य शंकरः ।
अध्वरस्य च दक्षस्य निस्तारोऽपि भवेत्तदा ॥१०४॥
श्रुत्वैवं सत्वरं ब्रह्मा कैलासं प्रजगाम ह ।
उवाचाऽध्वरवृत्तान्तं शंभुमादाय वै द्रुतम् ॥१०५॥
आजगामाऽध्वरस्थानं सर्वं ध्वस्तं विलोक्य च ।
त्रासदं दृश्यमालोक्य दयालेशान्वितो हरः ॥१०६॥
क्षणं शर्वस्तु संपश्यन् दूयमानमना ह्यभूत् ।
वीरभद्रोऽपि नत्वैव संस्थितो बहुलज्जितः ॥१०७॥
ब्रह्मा प्राह हरं तत्र प्रसाद्य च मुहुर्मुहुः ।
अपराध्यप्ययं दक्षः सम्प्रसाद्यः सुरोत्तम ॥१०८॥
यथापूर्वं पुनरमून् सर्वान्कारय शंकर ।
यथा विधिः प्रवर्तेत वैदिकः पुनरेव सः ॥१०९॥
तथाऽऽज्ञा दीयतां शंभो कर्म सिद्ध्यति सेश्वरम् ।
अनीश्वरासु सर्वासु क्रियासु वै महेश्वर ॥११०॥
एवमेव भवन्त्येव विघ्नजाताः सहस्रशः ।
देवभक्तोऽपि दक्षोऽयं देवं त्यक्त्वाऽकरोत् क्रतुम् ॥१११॥
लोके विगर्हणां प्राप्तो निदर्शनाय सोऽभवत् ।
ईशं त्यक्त्वा च कार्याणि करिष्यन्ति जना यदि ॥११२॥
तदन्तं ते न पश्यन्ति लोका गास्यन्ति दक्षवत् ।
ततो मंगलदं देवं विहायाऽन्यो जनः क्वचित् ॥११३॥
स्वार्थे चापि पदार्थे च दैवं वाऽदैवमित्यपि ।
कर्म नैव क्वचित्किंचित् श्रुत्वैतत्प्रविधास्यति ॥११४॥
ब्रह्मणोक्तं विचार्यैव प्रहस्य शंकरः पुनः ।
वीरमाज्ञापयामास यथापूर्वं प्रकल्पय ॥११५॥
तदा गणान् स्वसैन्यानि प्रैरयन्मार्जनाय तत् ।
स्थलं भूतैर्मार्जितं च भूमिर्विप्रैः सुसंस्कृता ॥११६॥
उज्जीविता मृता मन्त्रैः संजीवन्याऽमृतादिभिः ।
ये सैन्यार्थं द्वयोः पक्षे नूत्नाश्चोत्पादिता भटाः ॥११७॥
शंभुना भृगुणा स्वस्वमन्त्रैर्लीनीकृताश्च ते ।
कोट्यर्बुदानि सैन्यानि परार्थलक्षकाणि च ॥११८॥
असंख्यदेवदेवीनां पशूनां पृतनास्तथा ।
सर्वं लीनीकृतं तत्र भृगुणा शंभुना तथा ॥११९॥
अंगनाशाश्च नारीणां द्रव्यनाशाः कृतोस्तथा ।
देहनाशा मखस्थानां पुनरुज्जीव्य सन्धिताः ॥१२०॥
विष्णुना ब्रह्मणा चन्द्रमसा च शंभुना मखे ।
कुमारेणाऽश्विनीजेन धन्वन्तरियुतेन च ॥१२१॥
सूर्येण गुरुणा योगिनीभिः श्रीभिस्तथा तदा ।
मुनिभिः ऋषिभिश्चैव स्वस्वसामर्थ्यसंयुतैः ॥१२२॥
यथापूर्वं कृतं सर्वं चोत्पादितं तु मानसम् ।
सौवर्णं राजतं ताम्रं दारवं चौर्णमिक्षुजम् ॥१२३॥
पायसं वह्निजं सस्यजन्यं कार्पासकं तथा ।
अन्नजं जलजं चोद्भिज्जातं ह्रस्वं महच्च यत् ॥१२४॥
स्वल्पं प्रचूरकं चापि हव्यं चान्यच्च यद्धव्यभूत् ।
विना दक्षस्य वदनं यथापूर्वं समीकृतम् ॥१२५॥
शंकराद्याऽऽज्ञयाऽऽगृह्य यज्ञीयमेषमस्तकम् ।
तेन मेषमुखं दक्षं वीरभद्रगणो व्यधात् ॥१२६॥
दक्षस्य यज्ञशीर्ष्णः स्यात् सदा ह्यजमुखं शिरः ।
मित्रनेत्रेण संपश्येत् यज्ञभागं भगः सुरः ॥१२७॥
भग्नदन्तः सुरः पूषा भवतु यज्ञपिष्टभुक् ।
बस्तश्मश्रुर्भवेदेव भृगुः शिवविरोधकृत् ॥१२८॥
देवाः प्रकृतिसर्वांगा भवन्त्वेव सदा स्त्रयम् ।
बाहुभ्यामश्विनौ पूष्णो हस्ताभ्यां कृतवाहकः ॥१२९॥
भवन्त्वध्वर्यवश्चान्ये यथापूर्वं शिवाज्ञया ।
अभवँस्ते तथा सर्वे सर्वं स्वस्थमभूत्तदा ॥१३०॥
अथ यज्ञक्रियास्तत्र प्रावर्तन्त पुनः सुरैः ।
पूर्णाहुतिः प्रदत्ताऽवभृथस्नानं कृतं सुरान् ॥१३१॥
विप्रानभ्यागतान्पुत्रदुहितृस्वसृबान्धवान् ।
भागिनेयान्देयपात्रवरान्सत्कृत्य सर्वथा ॥१३२॥
दानानि दत्तवाँस्तेभ्यो दक्षो बस्तमुखोऽर्थिनाम् ।
तृप्तिं चाकारयत् भक्ष्यभोज्यपानाऽम्बरादिभिः ॥१३३॥
सर्वे स्वान्स्वान्स्वत्वभागान्नीत्वा याता निजालयान् ।
विष्णुर्ययौ च वैकुण्ठं ब्रह्मा सत्यं जगाम ह ॥१३४॥
दिक्पाला लोकपालाश्च सुरा मुन्यादयश्च ये ।
गताः सर्वे तृप्तहृदो दानमानार्हणादिभिः ॥१३५॥

अथ शंभुर्विधुरो वै क्व यामीति विचारयन् ।
हिमालयस्य शिखरं तपसे संजगाम सः ॥१३६॥
वानप्रस्थक्रियाधर्मं जग्राह शंकरस्तदा ।
अनाश्रमवता पुंसा यतः कालो मनागपि ॥१३७॥
व्यर्थं कलयितव्यो न वने श्रेयस्तपःश्रमः ।
तपश्चचार शर्वः सगणः शृंगे शिवाभिधे ॥१३८॥
कैलासस्य च रक्षार्थं वीरभद्रमयोजयत् ।
दक्षोऽपि पापशान्त्यर्थं काशीं जगाम चैकलः ॥१३९॥
तपसाऽऽराधयच्छंभुं लिंगं संस्थाप्य सत्वरम् ।
प्राविर्भूत्वा स्वयं शंभुर्दक्षपापं ह्यमार्जयत् ॥१४०॥
प्राह ब्रूहि वरं दक्ष दास्यामि मनसेप्सितम् ।
प्राह दक्षो हरं देयो वरो मम यदि त्वया ॥१४१॥
तव भक्तिः सदा चास्तु क्षन्तव्यो मेऽपराधकः ।
दक्षेश्वरे त्वया स्थेयं लिंगे तु सर्वदा प्रभो ॥१४२॥
दत्तमिति तथा चाऽन्यद् गृहाण दक्ष मेऽग्रतः ।
परार्धद्वितीयप्रान्ते ततो मोक्षमवाप्स्यसि ॥१४३॥
इति हरो ददौ तस्मै वरदानं प्रमोक्षणम् ।
दक्षस्य यज्ञभंगः स न हरेण कृतः खलु ॥१४४॥
परं द्वेष्टि परेषां यदात्मनस्तद्भविष्यति ।
परेषां कदनं कर्म न कार्यं तत् कदाचन ॥१४५॥
परं द्वेष्टि परेषां यदात्मनस्तद्भविष्यति ।
इति सम्बोधितं तस्माद् द्रोहं परस्य नाचरेत् ॥१४६॥
आर्तो जिज्ञासुरर्थार्थी ज्ञानी चैव चतुर्थकः ।
चतुर्विधा भजन्तेऽजं चतुर्थोऽत्र विशिष्यते ॥१४७॥
केवलं कर्मणा यो वै संसारं तर्तुमिच्छति ।
न च पारमवाप्नोति मध्ये विघ्नेन लुप्यते ॥१४८॥
हरेर्भक्तो हरं निन्देत् हरभक्तो हरिं तथा ।
तयोः शापा भवेयुस्ते तत्त्वप्राप्तिर्भवेन्नहि ॥१४९॥
हरिहरौ सदा चैकतत्त्वं ब्रह्मापि तन्मयः ।
हरो ब्रह्मा च विष्णुश्च जगतः कारणं परम् ॥१५०॥
हरन्सृजँस्तथा रक्षन्दधे संज्ञाः क्रियोचिताः ।
अद्वितीये परे तस्मिन् ब्रह्मण्यात्मनि केवले ॥१५१॥
अज्ञः पश्यति भेदेन भूतानि ब्रह्म चेश्वरम् ।
इत्येतद्ब्रह्मरूपस्य सत्याश्च शंकरस्य च ॥१५२॥
चरित्रं शृणुयाद् भक्त्या श्रावयेद्भक्तिमान् जनान् ।
सर्वसौख्यं लभेदत्र परत्र परमां गतिम् ॥१५३॥
यः पठेत्पाठयेद्वापि सत्याख्यानमिदं शुभम् ।
भुक्तिमुक्तिप्रदं दिव्यं सर्वार्थसम्प्रदायकम् ॥१५४॥
स्वर्ग्यं यशस्यमायुष्यपुत्रपौत्रफलप्रदम् ।
स च भुक्त्वाऽखिलान् भोगानन्ते मोक्षमवाप्नुयात् ॥१५५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने भीतदक्षप्रार्थना, विष्णुन्यायवाक्यं, सुरादीनां गणादीनां च युद्धं, यज्ञादिध्वंसः, ऋत्विजामंगभंगानि, चक्रेण शिवाविष्टवीरभद्राऽनाशः, शंकरागमनं, सर्वेषां पुनः सजीवनं, यज्ञसमाप्तिरित्यादिनिरूपणनामा सप्तसप्तत्यधिकशततमोऽध्यायः ॥१७७॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि परेशो वा महेशो वा जनार्दनः ।
लोकरीतिश्च प्रकृतिर्बाधते तानपि क्वचित् ॥ १ ॥
मानाऽवमाने देवस्य बाधेते ब्रह्मणो यदि ।
तर्हि तत्र च दक्षादेः का कथा क्षुद्रदेहिनः ॥ २ ॥
सतीदेहे प्रदग्धे च शंकरो मोहमाप्तवान् ।
कलत्रशोको बलवान् स्वात्मारामं परात्परम् ॥ ३ ॥
बाधते ज्ञानिनं चापि योगीन्द्राणां गुरोर्गुरुम् ।
सतीदेहस्य यद्भस्म चास्थिपुष्पाणि यानि च ॥ ४ ॥
गृहीत्वा शंकरस्तानि विललापाऽश्रुनेत्रकः ।
उत्तिष्ठोत्तिष्ठ सुभगे सति प्राणेश्वरि प्रिये ॥ ५ ॥
शंकरोऽहं तव स्वामी पश्य मां निकटागतम् ।
सर्वात्मानमतिदीनं शवतुल्यं त्वया विना ॥ ६ ॥
यश्च शक्तिं न जानाति ज्ञानहीनश्च निन्दति ।
तं त्यक्तुमुचितं विज्ञे कथं मां त्यजसि प्रिये ॥ ७ ॥
सस्मितं सकटाक्षं च वदागत्य सुधोपमम् ।
मधुराभासदृष्ट्या च मां दग्धं सिक्तमाचर ॥ ८ ॥
प्राणाधिके समुत्तिष्ठ रुदन्तं मां न पश्यसि ।
परित्यज्य च नः प्राणान् गन्तुं नार्हसि सुन्दरि ॥ ९ ॥
पतिव्रते समुतिष्ठ कथं मां नाऽद्य सेवसे ।
इत्युक्त्वा च सतीभस्म देहे शंभुरधारयत् ॥१०॥
गंगातटे रुरोदोच्चैः सति साध्वीत्युदीर्य च ।
त्रिनेत्रनेत्रनीरैश्च संबभूव सरः तनुः ॥११॥
तद्वै नेत्रसरो नाम तीर्थं जातं तपःस्थलम् ।
सत्यस्थिमालिकां कृत्वा दधार कण्ठभूषणम् ॥१२॥
नित्यं तद्भस्म भक्त्या च चकार गात्रलेपनम् ।
सति प्राणेश्वरीत्युक्त्वा पुनर्मूर्छामवाप सः ॥१३॥

तदा देवाः सपार्षदो नारायणश्चतुर्भुजः ।
ब्रह्मा शेषश्च धर्मश्च सुराः सर्वे महर्षयः ॥१४॥
मूर्छितं च समुत्थाय रुदन्तं शंकरं तदा ।
उचितं बोधयामासुर्विष्णुः प्राह तदुत्तरम् ॥१५॥
शंभो मायागुणाः सर्वे हेतवः सुखदुःखयोः ।
विष्णुमाया बलवती गुणयुक्तं प्रबाधते ॥१६॥
दुःखं शोको भयं शंभो गुणातीते भवेन्नहि ।
मन्वते सुखदुःखानि स्वप्नानीव विपश्चितः ॥१७॥
ज्ञानं लभ महादेव स्वस्थो भव महेश्वर ।
चेतनां कुरु भद्रं ते सतीं प्राप्स्यसि निश्चितम् ॥१८॥
सुदिनं दुर्दिनं शश्वद् भवत्येव भवे भवे ।
ताभ्यां हर्षश्च शोकश्च जायते प्राकृते जने ॥१९॥
शुभेन चाऽशुभेन कर्मणा सुदिनदुर्दिने ।
तत्र कर्म शुभं कार्यं सदा सत्त्वस्वभावजम् ॥२०॥
सत्त्वं संसर्गसाध्यं च संगः पुण्यबलाद्भवेत् ।
पुण्यहेतुर्मनो बोध्यं मानऽसेहं हरिः स्थितः ॥२१॥
मया च हरिणा सर्वं कार्यते शोचनं त्यज ।
अथ चैकं परब्रह्म द्विविधं भवतीच्छया ॥२२॥
नित्यं च प्राकृतं चैव शरीरं द्विविधं हि तत् ।
नित्यं विनाशरहितं नश्वरं प्राकृतं सदा ॥२३॥
अहं त्वं चापि भगवान्नावयोर्नित्यविग्रहः ।
आवयोरंशभूता ये प्राकृता नष्टविग्रहाः ॥२४॥
रुद्रादयस्तदंशाश्च मदंशा विष्णुरूपिणः ।
ममाऽप्येवं द्विधा रूपं द्विभुजं च चतुर्भुजम् ॥२५॥
चतुर्भुजोऽहं वैकुण्ठे पद्मया पार्षदैः सह ।
गोलोके द्विभुजोऽहं च गोपीभिः सह राधया ॥२६॥
एवं स भगवानास्ते नित्यः सः पुरुषोत्तमः ।
नित्या च प्रकृतिस्तस्य ह्युत्तमा पौरुषी मता ॥२७॥
महामाया महालक्ष्मीर्महेश्वरी च सैव ह ।
सदा तौ द्वौ च संश्लिष्टौ सर्वेषां पितरौ शिव ॥२८॥
सतीमिच्छसि चेच्छंभो प्रकृतेःस्तवनं कुरु ।
शोकं त्यज स्वीयमायां भज स्मर जगत्प्रसूम् ॥२९॥
शोकनाशो जायतां ते शिवं स्याच्च ममाऽऽशिषा ।
दूरं विप्लवहेतुश्च यातुस्त्रीविरहज्वरः ॥३०॥
इत्युक्त्वा श्रीहरिर्मौनमाससादाथ शंकरः ।
स्नात्वा नत्वा च श्रीकृष्णं बद्धपुटांजलिस्ततः ॥३१॥
स्तवनं कर्तुमारेभे ब्रह्मशक्तेः सभक्तिकः ।
'ब्राह्मि ब्रह्मस्वरूपे त्वं मां प्रसीद सनातनि ॥३२॥
परमात्मस्वरूपे च परमानन्दरूपिणि ।
ओं प्रकृत्यै नमो भद्रे मां प्रसीद भवार्णवे ॥३३॥
सर्वमंगलरूपे च प्रसीद सर्वमंगले ।
विजये शिवदे देवि मां प्रसीद जयप्रदे ॥३४॥
वेदवेदांगरूपे च वेदमातः प्रसीद मे ।
शोकघ्ने ज्ञानरूपे च प्रसीद भक्तवत्सले ॥३५॥
सर्वसम्पत्प्रदे माये प्रसीद जगदम्बिके ।
लक्ष्मीर्नारायणक्रोडे स्रष्टुर्वक्षसि भारती ॥३६॥
मम क्रोडे महामाया विष्णुमाये प्रसीद मे ।
कालरूपे कार्यरूपे प्रसीद दीनवत्सले ॥३७॥
कृष्णस्य राधिके भद्रे प्रसीद कृष्णपूजिते ।
समस्तकामिनीरूपे कलांशेन प्रसीद मे ॥३८॥
सर्वसम्पत्स्वरूपे त्वं प्रसीद सम्पदां प्रदे ।
यशस्विभिः पूजिते त्वं प्रसीद यशसां निधे ॥३९॥
चराचरस्वरूपे च प्रसीद मम मा चिरम् ।
मम योगप्रदे देवि प्रसीद सिद्धयोगिनि ॥४०॥
सर्वसिद्धिस्वरूपे च प्रसीद सिद्धिदायिनि ।
अधुना रक्ष मामीशे प्रदग्धं विरहाग्निना ॥४१॥
स्वात्मदर्शनपुण्येन क्रीणीहि परमेश्वरि' ।
इत्युक्त्वा विरतः शंभुर्ददर्श गगनस्थिताम् ॥४२॥
तप्तकांचनवर्णाभां रत्नाभरणभूषिताम् ।
ईषद्धास्यप्रसन्नास्यां शतभुजां च तां सतीम् ॥४३॥
दृष्ट्वा तां विरहासक्तः पुनस्तुष्टाव सत्वरम् ।
दुःखं निवेदयामास प्ररुदन् विरहोद्भवम् ॥४४॥
दर्शयामासाऽस्थिमालां स्वांगस्थं भस्म भूषणम् ।
कृत्वा बहुपरीहारं तोषयामास सुन्दरीम् ॥४५॥
बभूव परितुष्टा सा शंभुमुवाच भावतः ।
स्थिरो भव महादेव प्राणाधिक मम प्रभो ॥४६॥
भवानात्मा च योगीशः स्वामी जन्मनि जन्मनि ।
अहं शैलेन्द्रकामिन्यां लब्ध्वा जन्म महेश्वर ॥४७॥
तव पत्नी भविष्यामि मुञ्च त्वं विरहज्वरम् ।
इत्युक्त्वा शिवमाश्वास्य चान्तर्धानं चकार सा ॥४८॥
स्वनिवासान्सुरा जग्मुः कैलासं च ययौ हरः ।
ननर्त सगणस्तूर्णं सन्त्यज्य विरहज्वरम् ॥४९॥
एतत्पठेच्छृणुयाच्च न वियोगज्वरो भवेत् ।
न भवेत्कामिनीभेदस्तस्य जन्मनि जन्मनि ॥५०॥
इत्येवं शंकरं तूक्त्वा मेनायां जन्मकामुकी ।
जगाम हिमवद्देशेऽदृश्यरूपा चचार सा ॥५१॥

कुर्वाणा च तपो दिव्यं शिवस्य व्यचरत् सखी ।
शिवं शिवं भजमाना समयं तं प्रतीक्षते ॥५२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने सतीदाहोत्तरं भस्मास्थीनि समादाय शंकरस्य गंगातटे शोकः सतीस्तोत्रं सतीदर्शनं पार्वतीजन्मवचनं चेत्यादिनिरूपणनामाऽष्टसप्तत्यधिकशततमोध्यायः ॥ १७८ ॥

**श्रीनारायण उवाच—**

श्रूयतां च महालक्ष्मि विधुरः शंकरः क्वचित् ।
हिमालये विचचार शैलपत्नीं ददर्श सः ॥ १ ॥
साधुस्वरूपः सौम्यश्च प्रसन्नतां प्रकाशयन् ।
शंभुरुवाच मातर्मे भिक्षां देह्येकलाय मे ॥ २ ॥
मेना पक्वान्नमादाय यावद्ददाति शंभवे ।
शंभुः प्राह तदा मेनां भिक्षां देह्येकलाय मे ॥ ३ ॥
इयं पक्वान्नभिक्षा तु नैकस्यैव कृते भवेत् ।
तत्राऽन्येषां विभागोऽस्ति भिक्षां देह्येकलाय मे ॥ ४ ॥
यत्र नान्यस्य भागोऽस्ति वृणे भिक्षां तु तादृशीम् ।
मेना प्राह तदा साधुं साधो किमिच्छसि प्रियम् ॥ ५ ॥
यथेच्छसि तथा दास्ये स्फुटं वद ददाम्यहम् ।
मेनां शंभुस्तदा प्राह ददामीत्युच्यते यदि ॥ ६ ॥
प्राप्नोमीत्येव च प्राप्ता प्राप्स्याम्यवसराऽऽगमे ।
मातस्तदाऽऽगमिष्यामि भिक्षां देह्येकलाय मे ॥ ७ ॥
मेना त्वाश्चर्यमालोक्य पतिता पादयोस्तदा ।
उवाच दास्येऽवश्यं ते यदि योग्या कृते तव ॥ ८ ॥
शंभुः प्राह तथास्त्वेव मातः पश्य तया विना ।
विचरामि महारण्ये प्रियया शिवया विना ॥ ९ ॥
तव गेहे सती दक्षपुत्री जन्म ग्रहीष्यति ।
सा मत्कृते भवेद्भिक्षा शंकरोऽहं समागतः ॥१०॥
मेना श्रुत्वा त्वरयतीव प्रसन्नाऽभूद् हृदन्तरे ।
भोजितः पूजितः शंभुर्जगाम च यथेच्छया ॥११॥
तत आरभ्य मेना सा सस्मार भाविपुत्रिकाम् ।
शंभुं जामातरं चैव मुमोद हृदयाम्बरे ॥१२॥
प्राग्भवीयभक्तिवशात् शिवे भक्तिर्व्यवर्धत ।
शिवां ध्यात्वा शिवामाता भविष्यति समुद्रजे ॥१३॥

**लक्ष्मीरुवाच—**

मेनका सा शिवामाता काऽऽसीत्तच्छ्रीहरे वद ।
हरिः प्राह श्रृणु लक्ष्मि ! कथयामि समासतः ॥१४॥
वेधःपुत्रस्य दक्षस्य कन्याः षष्टिः प्रकीर्तिताः ।
तासां विवाहमकरोत् स वरैः कश्यपादिभिः ॥१५॥
तासां मध्ये स्वधानाम्नीं पितृभ्यो दत्तवान् सुताम् ।
तिस्रोऽभवन् सुतास्तस्याः सुभगाः धर्मसंभृताः ॥१६॥
ज्येष्ठा मध्या कनिष्ठा च मेना धन्या कलावती ।
एताः पितृमानसोत्थास्तिस्रश्चाऽयोनिजा हि ताः ॥१७॥
अव्याहतगतिकास्ता योगिन्यः कामरूपगाः ।
एकस्मिन् समये तिस्रो भगिन्यस्तीर्थवाञ्छया ॥१८॥
श्वेतद्वीपं विष्णुलोकं जग्मुर्दर्शनहेतवे ।
दिव्यं विमानमारुह्य गतास्ताः कामगं शुभम् ॥१९॥
विमानादवतीर्यैव चक्रुर्विष्णोः स्तुतिं नतिम् ।
तस्थुस्तदाज्ञया श्वेते सुसमाजो महानभूत् ॥२०॥
समाजे तत्र पञ्चहायना ब्रह्मसुतास्तदा ।
सनकाद्याः समाजग्मुः स्तुत्वा नत्वा हरिं ततः ॥२१॥
समाजे विष्णुवचनात् तस्थुस्ते सनकादयः ।
समाजश्च तदोत्तस्थौ मुनिस्वागतमाचरन् ॥२२॥
देवीसतीयोगिनीनां समाजोऽप्युत्थितस्तदा ।
तिस्रो भगिन्यः पश्चात्स्था नोत्तस्थुर्मोहतो यथा ॥२३॥
तास्तिस्रो योगिनीनां मध्यपृष्ठे संस्थिता यतः ।
पाश्चात्या नैव पश्यन्ति पौर्वास्तेऽपि च ताँस्तथा ॥२४॥
नः तिस्र नैव पश्यन्ति समाजाग्रस्थिता यतः ।
किमुत्थाय च कर्तव्यं मत्वैवं नोत्थिता यतः ॥२५॥
सैषा मायाऽऽलस्यरूपा प्रमादात्मकमोहिनी ।
भूत्वा तद्वशगास्ता वै न चक्रुर्योग्यमर्हणम् ॥२६॥
यद्यपि ज्ञानिनः सन्तो न क्रोधवशगा ननु ।
किन्तु भाविप्रबलेन प्रेरिताः क्रोधरश्मिना ॥२७॥
तासां तात्कालिकीं दृष्ट्वा शान्तोपि योगीशः कृतिम् ।
सनत्कुमारो मुक्तात्मा शापं दण्डकरं ददौ ॥२८॥
यूयं तिस्रो भगिन्यो वै पितृकन्या अपि ध्रुवम् ।
शिष्टाचारविहीनाः स्थाऽभ्युत्थानतिवर्जिताः ॥२९॥
क्षुद्रमानवकृत्याढ्याः दूरा भवतु वै दिवः ।
नरस्त्रियः संभवतु लभध्वं स्वकृतेः फलम् ॥३०॥
तिस्र आकर्ण्य साध्व्यस्ताः पतित्वा पादयोर्मुनेः ।
प्राहुर्मुने दयासिन्धो प्रसन्नो भव सर्वथा ॥३१॥

त्वादृशानां सतां भावो हृदयेऽस्माकमस्ति वै ।
प्रमादान्न नतिरभ्युत्थानादिसत्क्रियाः कृताः ॥३२॥
फलं लब्धं कृतेः स्वस्याः कुरुष्वानुग्रहं मुने ।
तवैव वचनाद् ब्रह्मन् लभेम स्वर्गतिं पुनः ॥३३॥
कृपां कृत्वा ऋषिस्तत्र प्रोवाच प्रीतमानसः ।
शापोद्धारं करोम्येव महत्कार्यं भविष्यति ॥३४॥
त्वन्निमित्तं च सुखदं यत्राऽऽश्लेषो हरेर्भवेत् ।
ज्येष्ठा मेना हरेरंशभूतस्य हिमभूभृतः ॥३५॥
पत्नी भवतु ते कन्या पार्वती संभविष्यति ।
यां शंभवे प्रदायैव प्राप्स्यसि सुखमुत्तमम् ॥३६॥
अन्ते शिवाऽशिवाऽऽशीर्भिर्मुक्तिं कैलासमाप्स्यसि ।
मध्या धन्या सिरध्वजजनकस्य प्रियांऽगना ॥३७॥
भवतु ते सुता महालक्ष्मीः सीता भविष्यति ।
यां रामाय प्रदायैव प्राप्स्यसि सुखमुत्तमम् ॥३८॥
अन्ते सीतारामस्य कृपया वैकुण्ठमाप्स्यसि ।
कलावती कनिष्ठा च वृषभानुविशो गृहे ॥३९॥
पत्नी भवतु ते कन्या राधिका संभविष्यति ।
यां कृष्णाय प्रदत्वा त्वं प्राप्स्यसि सुखमुत्तमम् ॥४०॥
अन्ते च राधाकृष्णकृपया गोलोकमाप्स्यसि ।
सुकर्मिणां गते दुःखे प्रभवेद् दुर्लभं सुखम् ॥४१॥
यूयं पितृसुताः सर्वाः सदा स्वर्गविलासिकाः ।
एतन्निमित्तमालम्ब्य मोक्षगाः संभविष्यथ ॥४२॥
पश्चात्सनत्कुमाराद्याः समाजास्त्वालयं गताः ।
मेनादिकास्तिस्र ईयुः स्वपितृभवनं ततः ॥४३॥
अथैकदा कुरुक्षेत्रे स्नात्वा हीन्द्रादयः सुराः ।
आषाढे मासि मार्गर्क्षे चन्द्रक्षयतिथिर्हि सा ॥४४॥
ददुरिन्द्रादयस्तस्यां पिण्डान् पितृभ्य आदरात् ।
तिलान्मधु सुपक्वान्नं मिष्टं हविष्यमित्यपि ॥४५॥
ततः प्रीतास्तु पितरो देवानाह सुतृप्तिः ।
वृणुत किं वितरामो देवाः प्राहुस्तदा पितॄन् ॥४६॥
सर्वे शृणुत नो वाक्यं पितरः प्रीतमानसाः ।
कर्तव्यं तत्तथैवाऽऽशु देवकार्येप्सवो यदि ॥४७॥
यूयं स्मरथ कन्यानां श्वेतद्वीपे वृतं च यत् ।
सनत्कुमारशापं तं स्मरताऽथोचितं मतम् ॥४८॥
मेना नाम सुता या वो ज्येष्ठा मंगलकारिणी ।
तां विवाह्य च सुप्रीत्या हिमाख्येन तु भूभृता ॥४९॥
सर्वे भवन्तु सुखिनो लाभवन्तः पदे पदे ।
युष्माकममराणां च दुःखहानिर्भविष्यति ॥५०॥

सुराणां वचनं श्रुत्वा स्मृत्वा शापं पुरा भवम् ।
ओमिति प्रोचुः पितरो ददुर्मेनां हिमाद्रये ॥५१॥
हिमाद्रिः पर्वतो दिव्यो महातेजाः समृद्धिमान् ।
द्विरूपो वर्तते लोके जंगमस्थिरभेदतः ॥५२॥
पूर्वापरौ तोयनिधी सुविगाह्य स्थितः स्थिरः ।
तुषारविधिरत्युग्रो देवर्षिसिद्धसंश्रितः ॥५३॥
तपः सिद्धिप्रदं शीघ्रं पावनश्च महात्मनाम् ।
स एव दिव्यरूपो हि रम्यः सर्वांगसुन्दरः ॥५४॥
विष्ण्वंशश्च महाभक्तः शैलराजः सुमूर्तिमान् ।
स एव स्वकुलस्थित्यै धर्मवर्धनहेतवे ॥५५॥
स्वविवाहं कर्तुमना पितृदेवहितेच्छुकः ।
मेनापाणिं च जग्राह विवाहविधिना तदा ॥५६॥
समुत्सवो महानासीत् तद्विवाहे सुमंगले ।
हर्यादयोऽपि ते देवा ऋषयो मुनयोऽद्रयः ॥५७॥
आजग्मुस्तत्र वैवाहे प्रशशंसुर्हिमाचलम् ।
उत्सवं कारयामासुर्ददुर्दानानि भूरिशः ॥५८॥
महामोदान्विता देवाः पितॄन्दिव्यान्प्रशस्य च ।
संजग्मुः स्वस्वधामानि प्राप्य सत्कारपूजनम् ॥५९॥
मेनां तु युवतीं प्राप्य हिमवान् गृहधर्मतः ।
प्रीतिमानभवत्तत्र रेमे कामाद् यथेच्छया ॥६०॥
अथ दक्षसुता काले सती तु हिमपर्वते ।
यदाऽऽसीच्छंभुना सार्धं तदैव तां तु मेनका ॥६१॥
मम गेहे कृतावासा मत्सुता वै सती मता ।
इति सुतासमां ज्ञात्वा सिषेवे मातृवर्चसा ॥६२॥
एवं नित्यं ध्यायमाना सेवते मेनका सतीम् ।
सती च दक्षयज्ञे स्वतनुं त्यक्त्वाऽस्मरत्प्रसूम् ॥६३॥
तस्यामहं सुता स्यामित्यवधार्य सती हृदा ।
समयं प्राप्य प्रीत्या सा मेनकापुत्रिकाऽभवत् ॥६४॥
पार्वती सा तपः कृत्वा पतिं प्राप शिवं पुनः ।
मेनायां कन्यकास्तिस्रो जाता रूपगुणान्विताः ॥६५॥
रागिणी कुटिला काली तिस्रः कन्या यथाक्रमम् ।
रक्तांगी रक्तनेत्रा च रक्ताम्बरविभूषिता ॥६६॥
रागिणी नाम संजाता ज्येष्ठा मेनासुता प्रिये ।
शुभांगी पद्मपत्राक्षी नीलकुंचितमूर्धजा ॥६७॥
श्वेतमाल्याम्बरधरा कुटिला नाम मध्यमा ।
नीलांजनचयप्रख्या नीलेन्दीवरलोचना ॥६८॥
रूपेणाऽनुपमा काली जघन्या मेनकासुता ।
सुनाभ इति च ख्यातश्चतुर्थतनयोऽभवत् ॥६९॥

जातास्ताः कन्यकास्तिस्रः षडब्दात् पुरतः प्रिये ।
कर्तुं तपः प्रयाताश्च देवास्ता ददृशुः शुभाः ॥७०॥
ततो दिवाकरैः सर्वैर्वसुभिश्च तपस्विनी ।
रागवती नाम कन्या दिवं नीता सुरैस्तदा ॥७१॥
ब्रह्मणा सा कृता सन्ध्यारागवती सुविग्रहा ।
महिषासुरनाशाय सन्ध्यासमयरूपिणी ॥७२॥
प्रतीच्छुकी कृत्तिकाभागे सदा तिष्ठते दिवम् ।
कुटिला ब्रह्मलोकं तु नीता देवैः शशिप्रभा ॥७३॥
ब्रह्मा प्राह महिषस्य विनाशार्थमियं सुता ।
शार्वं धारयितुं तेजो न वै शक्ता हि दृश्यते ॥७४॥
अतश्चेयं ब्रह्मलोके सत्ये कृतालया सदा ।
आपोमयी प्लावयन्ती नदी तिष्ठतु मद्गृहे ॥७५॥
इति गते कन्यके द्वे ज्ञात्वा मेना तपस्विनीम् ।
तृतीयां पुत्रिकां मेनां तपसोऽवारयद्यतः ॥७६॥
उ मा तपः कुरु पुत्रीत्येवमुमाऽभिधाऽभवत् ।
इत्येतत्कथितं स्वल्पं किं भूयः श्रोतुमिच्छसि ॥७७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने मेनायै शंभुना सतीजन्मार्थसूचनम्, मेना धन्या कलावती तिस्रः पितृकन्याः श्वेतद्वीपं जग्मुः, तत्र सनत्कुमारशापः, क्रमशो हिमगिरेः सीरध्वजजनकस्य वृषभानुवैश्यस्य च पत्न्यो जाताः, क्रमशस्तत्पुत्र्यः शिवा सीता राधेति, मेनायां सन्ध्यारागिणी कुटिलाब्रह्मनदी काली चेति पुत्रीत्रयं सुनाभपुत्रश्चेति निरूपणनामैकोनाऽशीत्यधिकशततमोऽध्यायः ॥१७९॥

**श्रीलक्ष्मी उवाच—**

कालीजन्मकथां दिव्यां वद मे परमेश्वर ।
काली पुनः कथं गौरी जातेत्यपि कथां वद ॥ १ ॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि सती देहं त्यक्त्वाऽव्यक्ताऽभवत्ततः ।
हिमालयप्रदेशेषु गुप्ताऽदृश्या व्यवर्तत ॥ २ ॥
देवाः कैलासमासाद्य सुस्थाने प्रणिपद्य च ।
सस्मरुश्च प्रणेमुश्च तुष्टुवुश्च तदा सतीम् ॥ ३ ॥

'देव्युभे ओमिति त्वं वै गायत्री परमेश्वरी ।
पूजिता ब्रह्ममुनिभिरूर्जिता राजभिर्नृपैः ॥ ४ ॥
त्वं भूरितिविड्भि पृथ्वी शूद्रैः शिवेति पूजिता ।
क्षान्तिर्मुनीनामक्षोभ्या दया नियमिनामपि ॥ ५ ॥
त्वं महोपायसन्दोहा नीतिर्नयविसर्पिणाम् ।
परिच्छित्तिस्त्वमर्थानां त्वमीहा प्राणिहृच्छ्रया ॥ ६ ॥
त्वं मुक्तिः सर्वभूतानां त्वं मतिः सर्वदेहिनाम् ।
इतिस्त्वं रक्तचित्तानां प्रीतिस्त्वं हृदि देहिनाम् ॥ ७ ॥
त्वं कीर्तिः सत्यभूतानां त्वं शान्तिर्दुष्टकर्मणाम् ।
त्वं भ्रान्तिः सर्वभूतानां त्वं गतिः क्रतुयाजिनाम् ॥ ८ ॥
त्वं समुद्रमहावेला त्वं च लीला विलासिनाम् ।
संभूतिस्त्वं पदार्थानां स्थितिस्त्वं लोकपालिनाम् ॥ ९ ॥
त्वं कालरात्रिर्निःशेषभुवनावलिवासिनी ।
प्रियकण्ठग्रहानन्ददायिनी त्वं विभावरी ॥१०॥
रक्षिका त्वमनाथानां दर्शनं देहि चाम्बिके ।
अनेकैर्विविधैर्लोके रूपैर्देवि त्वमर्चिता ॥११॥
सदा शिवप्रिये दुर्गे त्वां नमामो महेश्वरि ।
श्रीशक्तिं पावनां पुष्टिं महदव्यक्तरूपिणीम् ॥१२॥
वयं नमामहे भक्त्या शुद्धां ब्रह्मपरायणाम् ।
अन्तर्विद्यासुविद्याभ्यां सुप्रीतां त्वां नमामहे ॥१३॥
त्वं दीधितिः सूर्यगता कौमुदी चन्द्रसंगता ।
आप्याययसि ब्रह्मादितृणान्तं त्वां नमामहे ॥१४॥
गायत्री त्वं वेदमाता त्वं सावित्री सरस्वती ।
त्वं वार्ता सर्वजगतां त्वं त्रयी धर्मरूपिणी ॥१५॥
त्वं निद्रा सर्वभूतेषु क्षुधा तृप्तिस्त्वमेव ह ।
त्वं लक्ष्मीः पुण्यकर्तॄणामलक्ष्मीः पापिनां तथा ॥१६॥
त्वं शान्तिः सर्वजगतां त्वं धात्री प्राणपोषिणी ।
गीतिस्त्वं सामवेदस्य ग्रन्थिस्त्वं यजुषां हुतिः ॥१७॥
ऋग्वेदस्य तथा मात्राऽथर्वणस्य परा गतिः ।
समस्तगीर्वाणशक्तिर्दुःखनिस्तारकारिणी ॥१८॥
शिवे रुद्राणि सन्निद्रे चण्डे कात्यायनि सति ।
कौशिकि चण्डिके कालि नारायणि नमोऽस्तु ते ॥१९॥
तपःप्रिये सदादृश्ये पार्वति ते नमोनमः ।
प्रसन्ना भव देवेशि दर्शनं देहि सुव्रते ॥२०॥
मेनायां लभ पुत्रीत्वं महादेवि नमोऽस्तु ते ।'
इत्थं देवैः स्तुता देवी दुर्गा दुर्गतिनाशिनी ॥२१॥
आविर्बभूव देवानां पुरतो जगदम्बिका ।
बभूवाऽऽनन्दसन्दोहः सर्वेषां त्रिदिवौकसाम् ॥२२॥

पुनर्देवाः प्रणेमुश्च तुष्टुवुश्च विशेषतः ।
शिवे शर्वाणि कल्याणि विज्ञप्तिं शृणु चाम्बिके ॥२३॥
दक्षसुता सुरकार्यकृते जातापि शांकरी ।
नहि जातं प्रपूर्णं तत् देवकार्यं महेश्वरि ॥२४॥
पूर्णं कुरु महादेवि निर्जराणां मनोरथम् ।
सनत्कुमारवचनं सफलं स्यात्तथा कृते ॥२५॥
भूत्वा त्वं मेनकापुत्री रुद्रपत्नी पुनर्भव ।
सर्वे भवन्तु सुखिनो दुःखं नश्यतु कृत्स्नशः ॥२६॥
श्रुत्वैतत्प्राह शर्वाणी प्रसन्नाऽहं न संशयः ।
मेनापुत्री भविष्यामि स्वं सुखं लभतां हरः ॥२७॥
सर्वे गच्छत धाम स्वं सदा स्मरामि शंकरम् ।
मम हेतोर्महादुःखी वर्तते स कुवेषभृत् ॥२८॥
विधाय मालां सुप्रीत्या ममाऽस्थ्नां विरहाकुलः ।
देहे मम चिताभस्म धारयत्यनिशं प्रभुः ॥२९॥
अतश्चावतरिष्यामि रुद्रसन्तोषहेतवे ।
भक्ताः शंभुप्रिया भूत्वा तपः कृत्वा सुदुःसहम् ॥३०॥
सुरकार्यं करिष्यामि सत्यं स्वं गच्छत गृहम् ।
इत्युक्त्वाऽन्तर्दधे देवी जगाम हिमवद्गृहम् ॥३१॥
सुरास्तद्दिशि नत्वैव स्वस्वधामनि संययुः ।
हिमाद्रिर्मेनका चोभौ तेपाते परमं तपः ॥३२॥
शिवामाराधयामासतुश्च भक्त्याढ्यचेतसा ।
दानं ददतुर्विप्रेभ्यः सदा तत्तोषहेतवे ॥३३॥
चैत्रमासं समारभ्य सप्तविंशतिवासरान् ।
शिवां सम्पूजयामास पुत्र्यर्थिनी तु मेनका ॥३४॥
अष्टम्यामुपवासं च कृत्वाऽदान्नवमीतिथौ ।
मोदकैर्बलिपिष्टैश्च पायसैर्गन्धपुष्पकैः ॥३५॥
गंगायामौषधिप्रस्थे कृत्वा मूर्तिं महीमयीम् ।
उमां संपूजयामास नानावस्त्वर्पणादिभिः ॥३६॥
निराहारा जलाहारा वाय्वाहारा क्वचित्क्वचित् ।
निनाय मेनका सप्तविंशतिवासरान् व्रते ॥३७॥
व्रतपूर्णे सती चाऽऽविर्बभूव परमेश्वरी ।
मेना ददर्श सन्तुष्टां तेजोमण्डलमध्यगाम् ॥३८॥
उवाच सुप्रसन्ना सा मेनां प्रत्यक्षतां गता ।
वरं ब्रूहि महासाध्वि यत्ते मनसि वर्तते ॥३९॥
दास्ये तेऽहं प्रसन्नाऽस्मि तपोव्रतसमाधिभिः ।
दृष्ट्वा च प्रणनामैतां प्रोवाच मेनका सतीम् ॥४०॥
प्रणमामि महादेवीं सर्वकामार्थदायिनीम् ।
प्रणमामि सदा सिद्धां परमात्मस्वरूपिणीम् ॥४१॥
प्रणमामि सदानन्दां वनिताबुद्धिरूपिणीम् ।
प्रणमामि करुणाढ्यां विधेहि मम वाञ्छितम् ॥४२॥
योषाणां सतिप्रियकर्त्री ब्रह्मसुखप्रदायिनी ।
भक्तेच्छापूरणी शक्तिर्नारायणि नमोऽस्तु ते ॥४३॥
इतिस्तुता सती प्राह मेनां वरय वांछितम् ।
मेना प्राह तदा देवीं वरयोग्याऽस्म्यहं यदि ॥४४॥
प्रथमं शतपुत्रा मे भवन्तु जगदम्बिके ।
ततस्तिस्रः सुताश्चापि सद्गुणश्चैकपुत्रकः ॥४५॥
तत्र तिसृसुतामध्ये कनिष्ठा मम पुत्रिका ।
भव मम स्नेहपात्रं सुखस्थानं सदा मम ॥४६॥
रुद्रपत्नी भव तथा लीलां कुरु ममाऽन्तिके ।
देव्युवाच च तच्छ्रुत्वा तथास्त्विवति तु मेनकाम् ॥४७॥
कथयित्वा तिरोधानं जगामाशु हरप्रिया ।
अथ मेना स्वपतये शशंस वरदानकम् ॥४८॥
श्रुत्वा हिमगिरिर्हृष्टः प्रशशंस प्रियां प्रति ।
कालक्रमेण च तयोः प्रवृत्ते सुरते प्रिये ॥४९॥
गर्भो बभूव मेनाया ववृधे प्रत्यहं च सः ।
असूत मेना मैनाकं पुत्रं सर्वगुणं शुभम् ॥५०॥
ततः क्रमेण वै चान्यान्पुत्रान् सा सुषुवे समान् ।
कन्याद्वयं च सुषुवे ततः सतीप्रसादतः ॥५१॥
समधत्त तदा मेना गर्भे गिरेः सती तनुम् ।
गिरिप्रिया सर्वजगन्निवासासंश्रयाऽधिकम् ॥५२॥
विरेजे सुतरां मेना तेजोमण्डलशोभिता ।
प्रियाप्रीतेश्च मनसः स्वार्जितद्रविणस्य च ॥५३॥
समुन्नतेः श्रुतेः शैलः क्रियाश्चक्रे यथोचिताः ।
ददर्श काले मेनां स प्रतीतः प्रसवोन्मुखीम् ॥५४॥
व्यतीते नवमे मासे दशमे मासि पूर्णतः ।
अर्धरात्रे व्यतीतेऽथ मेना शूलायते तनौ ॥५५॥
वसन्ततौ मधौ मासे नवम्यां मृगधिष्ण्यके ।
ब्राह्मे मुहूर्ते शुभगे प्रासूयत सुपुत्रिकाम् ॥५६॥
दिव्या देवी समुत्पन्ना सा लक्ष्मीरिव सागरात् ।
तेजसा व्याप्तमभवन्मेनागृहं समन्ततः ॥५७॥
तदा सुसमयश्चासीच्छान्तभग्रहतारकः ।
नभः प्रसन्नतां यातं प्रकाशः सर्वदिक्षु च ॥५८॥
मही मंगलभूयिष्ठा सवनग्रामसागरा ।
सरस्स्वन्तीवापीषु पुफुल्लुः पंकजानि वै ॥५९॥
ववुश्च सुखदा वाताः शीतलाश्च सुगन्धिनः ।
बभूव पुष्पवृष्टिश्च तोयवृष्टिपुरःसरा ॥६०॥

जज्वलुश्चाग्नयः शान्ता जगर्जुश्च तदा घनाः ।
मुमुदुः साधवः सर्वे जगुर्गन्धर्वसत्तमाः ॥६१॥
विद्याधरस्त्रियो व्योम्नि ननृतुश्चाप्सरोगणाः ।
तदोत्सवो महानासीत् देवादीनां नभस्तले ॥६२॥
तस्मिन्नवसरे देवी ब्रह्मशक्तिः सती शिवा ।
आविर्बभूव पुरतो मेनाया निजरूपतः ॥६३॥
आविर्बभूव तद्गर्भात् श्रीलक्ष्मीरिव सागरात् ।
शिवप्रिया समुत्पन्ना गंगेव शशिमण्डलात् ॥६४॥
हिमवन्नगरे तत्र सर्वं दुःखं क्षयंगतम् ।
अभवन्सुखिनः सर्वे सर्वलोकनिवासिनः ॥६५॥
नारकाणामपि तदा सुखं स्वर्गसमं ह्यभूत् ।
अभवत्क्रूरसत्त्वानां चेतांस्यपि मृदूनि वै ॥६६॥
ज्योतिषामपि तेजांसि प्रभावन्त्यभवन्बहु ।
वनाश्रिताश्चोषधयः सुस्वादफलसंभृताः ॥६७॥
मेरुप्रभृतयश्चापि मूर्तिमन्तो महाचलाः ।
तस्मिन्महोत्सवे प्राप्ता दिव्यप्रसूतपाणयः ॥६८॥
सागराः सरितश्चैव समाजग्मुश्च सर्वशः ।
ऋषयो मुनयः शान्ता विष्णवाद्याः सकलाः सुराः ॥६९॥
आजग्मुः सुखिनः प्रीत्या ददृशुर्जगदम्बिकाम् ।
तुष्टुवुस्तां शिवामम्बां शिवार्थधृतविग्रहाम् ॥७०॥
जगदम्बे महादेवि सर्वदा त्वां नमामहे ।
देवानां मंगलं कार्यं कुरु त्वं भक्तवत्सले ॥७१॥
मेनामनोरथः पूर्णः कृतः कुरु शिवस्य च ।
पुष्पाञ्जलीन् प्रकीर्यैव देवाः स्वधाम संययुः ॥७२॥
हिमशैलोऽभवल्लोके तदा सर्वचराचरैः ।
संसेव्यश्चाधिगम्यश्च साश्रयश्चाचलोत्तमः ॥७३॥
तां तु दृष्ट्वा दिव्यरूपां जन्मबालां सुवर्णभाम् ।
अपि वर्ष्मणि श्यामां तां नीलोत्पलदलप्रभाम् ॥७४॥
मुदमायाति मेनातितुष्टा स्तुतिं चकार सा ।
जगदम्बे कृताऽम्बे मां कृतातिकरुणा त्वया ॥७५॥
आविर्भूता मम गेहे सदा पुत्रि स्थिरा भव ।
नमस्करोमि प्रणयपूर्णहृदयविह्वला ॥७६॥
इत्यानन्दप्रपूर्णाश्रुनेत्राभ्यां सा पपौ सुताम् ।
तावद्देवी समभवद्दिव्याष्टभुजधारिणी ॥७७॥
प्रोद्भिन्नावयवा रूपरूपानुभृतयौवना ।
द्वादशोत्तरवर्षीया ऊनषोडशहायना ॥७८॥
स्वर्णभूषणशोभाढ्या दिव्यवस्त्रातिसूज्ज्वला ।
हास्यपूर्णानना सौम्यप्रेमपूरितलोचना ॥७९॥
राजाधिराजसम्पत्त्या शोभयाऽऽश्रितविग्रहा ।
शिवयोग्याऽभवद्दिव्या कृपया दर्शनं ददौ ॥८०॥
मात्रे चोक्तवती देवी मातस्तेऽस्तु मुहुर्नमः ।
त्वया चाराधिता भक्त्या पूर्वं दातुं वरं तदा ॥८१॥
याचिताऽहं समायाता स्वपुत्र्यर्थं त्वया ततः ।
ओमित्युक्त्वा तिरोधानं गताऽहं परमेश्वरी ॥८२॥
साहं दिव्या सती चास्मि शिवपत्नी तव गृहे ।
पुत्री जाताऽस्मि मातस्त्वं मद्योगात्संमुखी भव ॥८३॥
दिव्यरूपं धृतं ह्येतत् यत्ते मत्स्मरणं भवेत् ।
अन्यथा मर्त्यभावेन तवाऽज्ञानं भवेन्मयि ॥८४॥
युवां मां पुत्रिकारूपदिव्यभावेन सर्वदा ।
चिन्तयन्तौ मे पितरौ यातौ स्थो मद्गतिं पराम् ॥८५॥
देवकार्यं करिष्यामि लीलां कृत्वाऽद्भुतां क्षितौ ।
शंभुपत्नी भविष्यामि तारयिष्यामि सज्जनान् ॥८६॥
इत्युक्त्वा सा महादेवी सुता भूत्वा महाद्युतिः ।
चकार रोदनं तत्र लौकिकीं रीतिमाश्रिता ॥८७॥
श्रुत्वा तद्रोदनं रम्यं गृहस्थाः सर्वयोषितः ।
जहृषुः संभ्रमात् मेनागृहं ययुर्मुदान्विताः ॥८८॥
गिरिर्हिमाचलश्चापि पुत्रीजन्मनिवेदिने ।
ददौ रत्नानि वस्त्राणि धनं च पारितोषिकम् ॥८९॥
दृष्ट्वा दिव्यतनुं कन्यां मुमुहुर्दर्शकास्तदा ।
तथोत्सवो महानासीन्नेदुर्वाद्यानि भूरिशः ॥९०॥
बभूव मंगलं गानं ननृतुर्वरयोषितः ।
हिमाचलो ददौ दानं विप्रेभ्यो जातकर्म च ॥९१॥
विधाप्य बहिरागत्य भिक्षुभ्यो द्रविणं ददौ ।
नामाऽकरोत् सुतायाश्च कालीत्येकादशेऽहनि ॥९२॥
नित्यं सा वर्धते काली शुक्ले चन्द्रकला यथा ।
जनः कुलोचितनाम्ना पार्वतीत्याजुहाव ताम् ॥९३॥
कन्दुकैः कृत्रिमैः पुत्रैः सखीमध्यगता सती ।
गंगासैकतवेदीभिर्बाल्ये रेमे मुहुर्मुहुः ॥९४॥
समये सद्गुरोर्विद्या यतचित्ता पपाठ च ।
नित्यं शंभोर्ध्यानपरा तपोरुचिमती ह्यभूत् ॥९५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने हिमगिरावद्दस्यसत्याः देवकृतस्तुतिः, सतीजन्मवरदानम्, मेनाहिमाद्र्योस्तपः, मेनागर्भः, कालीजन्म, दिव्यदर्शनं, महोत्सवश्चेत्यादिनिरूपणनामाऽशीत्यधिकशततमोऽध्यायः ॥१८०॥

श्रीनारायण उवाच—

एकदा नारदो देवो यायाद्धिमगिरेर्गृहम् ।
चकार शैलो देवर्षेः सपर्यां बहुभावतः ॥ १ ॥
नारदांऽघ्र्योः स्वतनयां पावित्र्यार्थमपातयत् ।
प्राह च मत्सुताभाग्यं ब्रूहि देवर्षिसत्तम ॥ २ ॥
नारदस्तत्सुताहस्तं सर्वांगानि विशेषतः ।
दृष्ट्वाऽवोचद्गिरे कन्या पित्रोः प्रीतिविवर्धिनी ॥ ३ ॥
स्वपतेः सुखदाऽत्यन्तं महासाध्वी पतिव्रता ।
भविष्यति महादिव्य महाराज्ञीव पूजिता ॥ ४ ॥
अंगुष्ठमध्यसन्धौ च रेखया हीश्वरी भवेत् ।
हस्ते हस्तिध्वजपद्मशूलरेखाभिरीश्वरी ॥ ५ ॥
करे चिह्नं महच्चिह्नं राज्ञी सैषा भविष्यति ।
ललाटे चन्द्रचिह्ने यमीशपत्नी भविष्यति ॥ ६ ॥
करेऽस्याः स्वस्तिकं चिह्नं कार्ये विजयिनी भवेत् ।
नेत्रे कर्णान्तलग्नेऽस्या ब्राह्मी काचित्परेश्वरी ॥ ७ ॥
हृदये चास्य शंभुर्वै धवलांकमयोऽस्ति वै ।
यतः शक्तिर्महादेवी भविष्यत्येव भूधर ॥ ८ ॥
उदरेऽधोबाणरेखा पूज्या देवी भविष्यति ।
चरणेऽस्या नागवल्ली देवपत्नी भवेद्ध्रुवम् ॥ ९ ॥
एका विलक्षणा रेखा ह्यंगुष्ठोपरि वर्तते ।
ललाटे च तथा रेखा वर्तते तत्सहार्थिका ॥१०॥
तयोः फलं शृणु शैल ! भवेद्वा न भवेत्तथा ।
त्यागी नग्नो गुणहीनो मातृतातविवर्जितः ॥११॥
अकामोऽशिववेषश्च पतिरस्या भवेदिति ।
मेनाहिमालयौ श्रुत्वा क्षणं दुःखमवापतुः ॥१२॥
पूर्वां शिवस्मृतिं लब्ध्वा सुखमत्यन्तमापतुः ।
पार्वती तु वचः श्रुत्वा जहर्षाऽति सुहृद्हृदि ॥१३॥
दैवरेखा ब्रह्मलिपिर्न मृषा जायते क्वचित् ।
तादृशोऽस्ति वरः शंभुर्नान्योऽस्ति तादृशः पतिः ॥१४॥
इति मत्वा शैलपुत्री स्मरत्यहर्निशं हरम् ।
नारदः सत्कृतिं लब्ध्वा गच्छन्वै शिवमन्दिरम् ॥१५॥
स्मारयामास शैलेन्द्रं सतीं प्रति हरोदितम् ।
न त्वामृतेऽन्यां वरये दाक्षायणि सति प्रिये ॥१६॥
भार्यार्थे न ग्रहीष्यामि सत्यमेतद्ब्रवीमि ते ।
इति शर्ववचः शैलं स्मारयित्वाऽऽह नारदः ॥१७॥
सिंहासनं तव पुत्र्याः शंभोरूरौ भविष्यति ।
शंभोरूर्वासनं प्राप्य महाराज्ञी भविष्यति ॥१८॥
इत्युक्त्वा स गतो ब्रह्मलोकं देवर्षिनारदः ।
पुत्रीं बालां च पितरौ रमयामासतुः सदा ॥१९॥
विवर्धमाना गिरिजा विवाहार्हसुयौवना ।
समभवत् तदा चेन्द्रः सस्मार नारदं पुनः ॥२०॥
स तु द्रागेव समगात् महेन्द्रभवनं मुनिः ।
इन्द्र उत्थाय पाद्याद्यैः पूजयामास नारदम् ॥२१॥
प्राह वै कुशलं स्वस्य ज्ञातवान्नारदस्य च ।
कथं स्मृतोऽहमित्युक्तो महेन्द्रः प्राह नारदम् ॥२२॥
युवती शैलजा जाता योगं यायाच्च शंभुना ।
शीघ्रं तथोद्यमः कार्यः सर्वं तादृग्विधीयताम् ॥२३॥
श्रुत्वा तु नारदः शीघ्रं जगाम शैलकेतनम् ।
वृद्धविप्रस्वरूपेण ज्योतिःपत्रं करे दधन् ॥२४॥
शैलार्पितासने रम्ये निषसादाथ भूसुरः ।
शैलार्पिताऽर्हणां संगृह्याऽवदच्छ्लक्ष्णया गिरा ॥२५॥
कुशलं शैलराजाऽत्र तपसः सर्वदा किमु ।
शैलः प्राह सुवृद्धानां कृपया कुशलं मम ॥२६॥
किन्तु पुत्री वरयोग्या जाताऽस्ति वद तत्फलम् ।
तावन्मेना दुहित्राऽनुयाताऽऽजगाम भूसुरम् ॥२७॥
ववन्दे विप्रचरणौ मेना च शैलपुत्रिका ।
पुत्रीं विलोक्य विप्रर्षिराशीर्भिस्तां व्यवर्धयत् ॥२८॥
प्रोवाच विस्मिताऽऽस्यः स वाक्यं भाग्यं विलोक्य च ।
न जातोऽस्याः पतिर्भद्रे लक्षणैश्च विवर्जिता ॥२९॥
उत्तानहस्ता नितरां चरणौ व्यभिचारिणौ ।
स्वच्छायौ चेति बोध्यं वै किमन्यद्वाच्यमत्र वै ॥३०॥
श्रुत्वैतत्भ्रममापन्नः शोकमग्नो हिमालयः ।
पूर्वं नारदकथितं विस्मृत्योवाच भूसुरम् ॥३१॥
कर्मरेखाऽतिदुर्गम्याऽवश्यंभाविफलप्रदा ।
जन्मान्तरमनुयाति विचित्रभूतजातिषु ॥३२॥
स्त्रिया विरहिता सृष्टिः प्राणिनां नैव जायते ।
स्त्रीजातिस्तु प्रकृत्यैव कृपणा दैन्यभागिनी ॥३३॥
तासामवज्ञा च मा भूदिति विचार्य वेधसा ।
दशपुत्रसमा कन्या वंशक्षेत्रमुदीरिता ॥३४॥
दुर्भगा कृपणा कन्या पितुर्दुःखकरी सदा ।
तत्रापि पतिपुत्रार्थसौभाग्यविधुराऽधिका ॥३५॥
त्वं चोक्तवान्मम पुत्र्या दुर्गुणानेव सर्वथा ।
अहो दुःखं महज्जातं श्रुत्वा त्वन्मुखतोऽद्य मे ॥३६॥
अथापि किंचित्सौभाग्यं वार्धक्येऽस्या भवेदिति ।
तद्यपि विप्र वक्तव्यं दुःखं मार्जय मेऽघजम् ॥३७॥

स्त्रियस्तु ब्रह्मणा सृष्टाः पुरुषाणां सुखाय वै।
तासां जन्म पतिलाभे सार्थकौ विफलोऽन्यथा ॥३८॥
पतिपितृकुलानां चेहाऽमुत्रोद्धारिकाः स्त्रियः।
सत्पतिप्राप्तिमत्योऽत्रोद्धारिकाः कीर्तिता हि ताः ॥३९॥
दुर्लभः सत्पतिः स्त्रीणां विगुणोऽपि पतिः किल।
न प्राप्यते विना पुण्यैः सुजडोऽपि पतिः स्त्रिया ॥४०॥
असाधनोऽपि सद्धर्मः पुत्रप्राप्त्यात्मिका रतिः।
धनमाजीवनं भाग्यं नार्याः कान्ते प्रतिष्ठितम् ॥४१॥
निर्धनो दुर्मुखो मूर्खः सर्वलक्षणवर्जितः।
भाग्यं तु परमं नार्याः पतिरेव सदा मतः ॥४२॥
या नारी मत्सराद् द्वेषादीर्ष्यया वा स्वभावतः।
अन्यरतिसुखं हन्ति तत्फलं पतिहीनता ॥४३॥
याऽन्यकामसुखं द्वेष्टि कामे विघ्नं करोति च।
कामेन सुखिनोर्निन्दां करोति नाऽप्नुयात्पतिम् ॥४४॥
विवाहिताऽपि पतये कामभिक्षां ददाति न।
स्त्यदाद्याः कामुकस्य पतिप्राप्तिर्हि दुर्लभा ॥४५॥
बहुसंचितपुण्यानां फलं कामसुखादिकम्।
मनुष्येभ्यः सदा दत्तं पापिनां तद्भवेन्नहि ॥४६॥
पशवः पक्षिणश्चापि कामाऽऽसक्ता वियोजिताः।
यया तस्याः कामसुखं पतिसुखं न जायते ॥४७॥
धर्मकामा नरा याभिस्तिरस्कृत्य तृणीकृताः।
तासां सत्कुलजन्मापि पत्यलाभात् तृणीकृतम् ॥४८॥
यासां कामसुखं नास्ति तासां कामाग्निदग्धता।
दुखं सततसंलग्नं तत्तसूर्मी हि साऽत्र वै ॥४९॥
कामाऽविघ्नात्मकं दानं नान्यद्दानं हि विद्यते।
तस्य पुण्यं सदा प्राप्तिः सत्पतेर्भवतीति वै ॥५०॥
कामदानमहत्पुण्यं यस्या भवति संचितम्।
तस्या मानुषजन्माऽत्र भवति नित्यकामदम् ॥५१॥
पारावतचटकाद्याः पक्षिषु नित्यकामिनः।
प्राक्प्रदत्तकामदानफलं बोध्यं न चान्यथा ॥५२॥
पशूनां गोमहिषीणां कामना विरला तु सा।
प्रागप्रदत्तकामस्य फलं स्वल्पं कृतं तथा ॥५३॥
वृक्षेष्वपि नरयोगाज्जायन्ते तु फलानि हि।
वल्लीष्वपि पुष्पयोगो फलं नैव च दृश्यते ॥५४॥
तत्सर्वं तु प्रदत्तस्य कामाऽकामस्य वै फलम्।
मम पुत्र्या कीदृशं वै कृतं कर्म पुरा भवेत् ॥५५॥
येन नाऽस्याः पतिर्जात उच्यते भूसुर त्वया।
एतद् दौर्भाग्यमतुलमसंख्यदुःखभाजनम् ॥५६॥
किं चोत्तानितहस्तेयं त्वयोक्ता नित्यदां ह्यतः।
उत्तानहस्तता भिक्षां याचतामेव संभवेत् ॥५७॥
शुभोदयानां भाग्यानामदातारौ दरिद्रकौ।
सुच्छाययाऽस्याश्चरणौ त्वयोक्तौ व्यभिचारिणौ ॥५८॥
तत्रापि श्रेयसी ह्याशा न मेऽस्या वै सुदृश्यते।
पूर्वं तु नारदेनोक्तं भूसुर श्रावयामि तत् ॥५९॥
त्यागी नग्नो गुणहीनो मातृतातविवर्जितः।
अकामोऽशिववेषश्च पतिरस्या भवेदिति ॥६०॥
तदत्र भ्रामणे सत्यं कियद्ग्राह्यं मयाऽनघ।
ब्रूहि जानासि चेद् देव दुःखं मे लीनतां व्रजेत् ॥६१॥
नारदो वृद्धविप्रात्मा प्राह शैलं सुदुःखितम्।
हर्षस्थाने तु महति दुःखं ते भ्रान्तिजं यतः ॥६२॥
शृणु शैल न जातोऽस्याः स्वामी त्वजः सदाशिवः।
नित्यः स शाश्वतः स्थाणुरचलोऽस्ति सनातनः ॥६३॥
अन्येषां कर्मजन्मानो देहा नास्य तथा ह्यजः।
शृणु वै लक्षणैरेषा वर्जितेति विविच्यते ॥६४॥
लक्षणं कर्मजन्यांऽकं चिह्नं शारीरमुच्यते।
तच्चाऽऽयुर्धनसौभाग्यसम्पन्मृतिप्रदर्शकम् ॥६५॥
इयं तु ब्रह्मरूपाऽस्ति कर्मशून्या महेश्वरी।
नास्याः कर्मकृतं देहं लक्षणं विद्यते इति ॥६६॥
स्वाभाविकानि दैवानि चिह्नान्यस्या भवन्ति हि।
शृणु चोत्तानकरतां ह्युत्तानो वरदः सदा ॥६७॥
हस्तोऽस्याश्च महादेव्या भविष्यत्येव सर्वथा।
सुराऽसुरमुनिप्राणिवरदात्री भविष्यति ॥६८॥
शृणु चास्यास्तु चरणौ स्वच्छायौ व्यभिचारिणौ।
चरणौ पद्मसंकाशौ स्वच्छावस्या नखोज्ज्वलौ ॥६९॥
सुरासुराणां नमतां किरीटमणिकान्तयः।
विशिष्टा अभितश्चारिण्यः प्रविष्टा ययोर्हि तौ ॥७०॥
तादृशौ भवतश्चास्याश्चरणौ भाग्यसेवितौ।
शिवपत्न्यास्तु किं वस्तु न्यूनं शैल भवेद् वद ॥७१॥
पूर्वं यदुक्तं त्यागी च पतिरस्या भविष्यति।
शिवस्तु सर्वदा रागशून्यस्त्यागी मतो ध्रुवम् ॥७२॥
नग्नोऽपिमायया हीनो मायावस्त्रविहीनकः।
गुणहीनश्च मायाया गुणत्रयविहीनकः ॥७३॥
परब्रह्मस्वरूपस्य न माता जनकस्तथा।
मातृतातविहीनत्वं शिवस्य घटते सदा ॥७४॥
अकामः कामना ग्रध्ना तृष्णा तया विहीनकः।
अशिवस्तामसो भावः सृष्टिसंहारकारकः ॥७५॥

स चात्र वेशरूपेण कार्यार्थं सम्भृतः खलु ।
रौद्रः संहारको वेषो ह्यशिववेष उच्यते ॥७६॥
चिताभस्मजटाजूटव्याघ्रचर्माऽस्थिधारणम् ।
अशिववेष इत्येवं लोकेऽपि शंकरेऽस्ति हि ॥७७॥
स शंभुः स्वः परंब्रह्मावतारो भगवान् हरः ।
पतिरस्यास्तव पुत्र्या भाग्योदयाद् भविष्यति ॥७८॥
तत्रोपायं शृणु प्रीत्या कृत्वा यं लप्स्यसे सुखम् ।
तत्र शंभौ लक्षणानि शुभान्यशुभवन्ति वा ॥७९॥
सुखदान्येव बोध्यानि सुखमूर्तिर्यतो हरः ।
रविपावकगंगानां तत्र ग्राह्यं निदर्शनम् ॥८०॥
तस्मात्त्वमपि शैलेन्द्र देहि शिवाय कन्यकाम् ।
शीघ्रप्रसादः स हरो ग्रहीष्यति सुतां तव ॥८१॥
शिवस्य तपसा प्राप्तिः कुर्याच्चपः सुता तव ।
समर्थोऽपि तव पुत्र्या वशं यास्यति सर्वथा ॥८२॥
कुलिपिरपि सुलिपिर्भविष्यति तपोबलात् ।
अवश्यं भाविनी पत्नी तव पुत्री शिवप्रिया ॥८३॥
शंभोश्चित्तं वशे चैषा करिष्यति सुसेवया ।
सोऽप्येनां ते सुतां त्यक्त्वा नान्यामुद्वाहयिष्यति ॥८४॥
नाऽनयोः सदृशी प्रीतिरन्ययोर्भूतभाविनी ।
अनयोर्मेलने देवकार्याणि सुबहूनि वै ॥८५॥
कर्तव्यानि सुविद्यन्ते तस्माद् देहि हराय ताम् ।
अनया कन्यया शंभुरर्धनारीश्वरोऽस्ति वै ॥८६॥
विवाहविधिना ख्यातिं तादृशीं तु गमिष्यति ।
तपसा च हरं सम्यगाराध्य तव पुत्रिका ॥८७॥
कृष्णरूपं विधूयैव गौररूपा भविष्यति ।
गौरीति वै तथा नाम्ना विद्युद्गौरी भविष्यति ॥८८॥
नामान्यस्यास्तथाऽन्यानि बहूनि सन्ति तानि च ।
शृणु तुभ्यं कथयामि भविष्यन्ति यथातथा ॥८९॥
काली तारा महाविद्या षोडशी भुवनेश्वरी ।
भैरवी छिन्नमस्ता च विद्या धूमावती तथा ॥९०॥
बगलामुखी सिद्धविद्या मातंगी कमला तथा ।
चण्डी च भैरवी सैहीत्येवं नामानि सन्ति वै ॥९१॥
नान्यस्मै त्वमिमां दातुं क्वचित्संकल्पमाचरेः ।
इदं चोपांशु देवानां न प्रकाश्यं च कुत्रचित् ॥९२॥
शैलः प्राह तदा वृद्धब्राह्मणं शृणु मद्वचः ।
शिवस्तु सर्वदा ध्यानी देवानामप्यगोचरः ॥९३॥
त्यक्तसंगो विरागश्च ध्यानयोगपरः सदा ।
ब्रह्मार्पिताऽन्तरात्मा सः कथं साध्यो भविष्यति ॥९४॥
निर्गुणो निर्विकारश्च निरामयो निरीहकः ।
अक्षरो ब्रह्म परमः कथं साध्यो भविष्यति ॥९५॥
यस्यान्तर्वर्तते विश्वं बाह्यं नैव निरीक्षते ।
सः कथं तपसा पुत्र्याऽनया साध्यो भविष्यति ॥९६॥
ब्राह्मणः प्राह तच्छ्रुत्वा चिन्ता कार्या न वै त्वया ।
देवदेवो निरीहोऽपि त्वत्पुत्र्यामीहया युतः ॥९७॥
तपसाऽवश्यमेव स्यादतोऽसाध्यं न विद्यते ।
काली स्वयं महाकालं हरं तु प्राप्स्यति ध्रुवम् ॥९८॥
गच्छाम्यहं तु शैलेन्द्र विवाहकरणं कुरु ।
इतिकृत्वोत्थितो विप्रो गमनाय मनो दधे ॥९९॥
शैलस्तावत्सुसत्काराऽर्हणां तस्याऽकरोन्मुदा ।
वृद्धविप्रस्वरूपं च तिरोधायाऽपि भूसुरः ॥१००॥
देवर्षिर्नारदं रूपमास्थाय व्योममार्गगः ।
नारायणं रटन्प्रेम्णा पश्यतोश्च तयोर्द्वयोः ॥१०१॥
मेनकाशैलयोः शीघ्रं जगामेन्द्रपुरीं प्रति ।
मेनाशैलौ महाश्चर्ये गतौ दृष्ट्वा तु नारदम् ॥१०२॥
निश्चिता शंभुपत्नीयं सुता भाग्यवती सदा ।
आनन्दिता च सा कन्या प्रसन्नौ पितरौ तथा ॥१०३॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने वृद्धविप्ररूपेण नारदस्य हिमगिरिगृहागमनं, पार्वत्या रेखाभिः अगुणस्य पत्नीत्वमुक्तम्, हिमालयचिन्ता, अगुणादिशब्दार्थस्फुटता, शिवपत्नी भाविनीति निर्णयः, वृद्धब्राह्मणत्वं विहाय नारदरूपेणा-काशपथा महेन्द्रपुरीं प्रति गमनमित्यादि-निरूपणनामैकाशीत्यधिकशततमोऽ-ध्यायः ॥१८१॥

**श्रीनारायण उवाच—**

अथाल्पसमये कान्ते मेना मोहवशा प्रिये ।
उवाच हैमं शैलेन्द्रं प्रह्वीभूतमनोमयी ॥ १ ॥
दरिद्राय न दातव्या दातव्या धनिने सुता ।
विवाहं कुरु कन्यायाः सुन्दरेण वरेण हि ॥ २ ॥
प्राणप्रिया मम पुत्री कोमला भाग्यशालिनी ।
वर्धिता विविधैर्भोग्यैः सुखसम्पत्समृद्धिभिः ॥ ३ ॥
अतोऽस्याश्च विवाहोऽपि सर्वसम्पन्मये गृहे ।
वरेण सुलक्षणसत्कुलोद्भूतेन युज्यते ॥ ४ ॥

सद्वरं प्राप्य सुखिनी यथा स्यात्तथा कुरु ।
श्रुत्वा मेनां तु शैलेन्द्रः प्राह शंकानिवृत्तये ॥ ५ ॥
भ्रमं त्यज प्रिये पत्नि दातव्या शंकराय वै ।
यद्यस्ति ते प्रतीतिर्वै तदा दास्येऽन्यथा नहि ॥ ६ ॥
यदि स्नेहः सुतायास्ते सुतां शिक्षय सादरम् ।
शिवोपरि तपः कुर्यात् तपसा साध्यते शिवः ॥ ७ ॥
प्रसन्नश्च हरो भूत्वा काल्याः पाणिं ग्रहीष्यति ।
सर्वं वै शंकरे चास्ति सुखं द्रव्यं समृद्ध्यादिकम् ॥ ८ ॥
अमंगलानि सर्वाणि मंगलानि शिवे सदा ।
सर्वविधानि सौख्यानि वर्तन्ते च शिवे सदा ॥ ९ ॥
अखण्डवीर्यता शंभौ स्वामिता सुरनाकिनाम् ।
पूज्यता लोकिनां शंभौ हेतुता भूतदेहिनाम् ॥१०॥
पृथ्वी जलं तथा तेजः पवनो गगनं तथा ।
सूर्यचन्द्रादयो यस्य तनवः सन्ति सर्वदा ॥११॥
शंभोस्तस्य तनुष्वेव निहिताः सर्वसमृद्धयः ।
शिवार्थं तपसे पुत्र्यै विनिर्दिश शुभं भवेत् ॥१२॥
मेना श्रुत्वा तपः द्राक्च सुतां संलोक्य कोमलाम् ।
क्षणं तु विव्यथे सुतामुपदेष्टुं शशाक न ॥१३॥
अथ सा पार्वती ज्ञात्वा प्रोवाच जननीं तदा ।
मातः शृणु मया दृष्टः स्वप्नो ब्राह्ममुहूर्तके ॥१४॥
विप्रस्तपस्वी सुप्रीतः प्रोवाच विहितुं तपः ।
शंकरस्येत्युपादिश्य कृत्वा भाले सुचन्द्रकम् ॥१५॥
करौ मन्मस्तके दत्वा धृत्वा मां वक्षसि स्वके ।
आशीः प्रयुज्य गतवान् सुरूपः शंकरो यथा ॥१६॥
तस्मात्तपः करिष्येऽहं स्मृत्वा तं पुरुषं हृदि ।
श्रुत्वैतत्स्वप्नमेवार्थं कथयितुं जगाम सा ॥१७॥
गिरिं तावत् गिरीन्द्रोऽपि स्वकं स्वप्नमुवाच ह ।
शृणु मेनेऽद्य मे स्वप्ने तपस्वी जन आगतः ॥१८॥
नारदोक्तस्वरूपः सः पुरोपकण्ठमादरात् ।
तपः कर्तुं प्रवृत्तश्च तत्राऽहं नीतवान् सुताम् ॥१९॥
मया तु लक्षणैर्ज्ञातः शंकरोऽयमिति ध्रुवम् ।
सेवायां पार्वतीं तस्योपादिश्याऽहं तपस्विनः ॥२०॥
प्रार्थितवाँश्च तं बालं नांगीचकार वै यदा ।
मया वेदान्तविज्ञानैर्बहुधा वाद आहतः ॥२१॥
यथाकथंचित् स ततो बालां जग्राह सेवने ।
सापि प्रेम्णा पार्वती तं सेवते लोकितं मया ॥२२॥
ततोऽस्ति समयः प्राप्तः समीपे फलदायकः ।
पार्वतीं तपसे मेने शिक्षयाऽचिरसिद्धये ॥२३॥
श्रुत्वा मेनाऽभवद् हृष्टा शिक्षयामास पार्वतीम् ।
सापि शंभुं सदा ध्यात्वा तपसे संस्थिता सती ॥२४॥
फलानि भोजने देवी गृह्णात्येकसुभक्तके ।
योगिनीव त्रिषवणं स्नानं शंकरपूजनम् ॥२५॥
मालिकायाः सहस्रं तु शंभुनाम्नाऽनुवर्तनम् ।
नेत्रे सम्मील्य स्वस्तिकासने निषद्य चिन्तनम् ॥२६॥
प्रातः सायं शंकरस्याऽऽरार्त्रिकरणमर्थना ।
स्तोत्रस्य रटणं पश्चात् किंचिज्जागरणं तथा ॥२७॥
स्वापः पृथ्व्यां तृणाढ्यायां तथा वल्कलधारणम् ।
मौनं चाऽदर्शनं पार्श्वे तपश्चैवं चकार सा ॥२८॥
शंकरोऽपि स्वयं वेत्ति तपः करोति यत्सती ।
विचरन् विधुरश्चमत्काराँश्चक्रे ह्यलौकिकान् ॥२९॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने सतीतपः, सतीहिमालययोः स्वप्ने शंभुना तापसवेषेण दत्तदर्शनमित्यादिनिरूपणनामा द्व्यशीत्यधिकशततमोऽध्यायः ॥१८२॥

**श्रीलक्ष्मीरुवाच—**

कीदृशाँश्च चमत्काराँश्चक्रे वै शंकरस्तदा ।
सतीं विना तपः कुर्वन् विचरँश्च क्षितौ सुखम् ॥ १ ॥

**श्रीनारायण उवाच—**

चमत्कारा महाभागवतस्य शंकरस्य मे ।
भक्तस्याऽऽसन् बहवोऽपि द्वित्राँस्ते कथयामि वै ॥ २ ॥
सतीदाहोत्तरे काले पार्वत्युद्वाहपूर्वके ।
एकदा शंकरः सतीविरहाग्निप्रतापितः ॥ ३ ॥
कैलासे मौनमास्थाय प्रियाविरहकातरः ।
सस्मार स्वप्रियां पत्नीं गुणाँश्च प्रेमवर्धनान् ॥ ४ ॥
वर्णयामास बहुधा दर्शयन् लौकिकीं गतिम् ।
वैराग्यवेगेन गार्हस्थ्यस्य रीतिं विहाय च ॥ ५ ॥
दिगम्बरः सुबभ्राम स्थले वने ह्यरण्यके ।
क्वापि शान्तिं न च लेभे सतीविरहदुःखितः ॥ ६ ॥
मनो नियम्य कैलासे समाधिं कृतवान् हरः ।
समाधौ बहुवर्षाणि व्यतीयुश्च पुनस्तदा ॥ ७ ॥
ब्रह्माग्निना ब्रह्मरन्ध्रं ललाटं चातपत् बहु ।
तपोयोगोष्मणा भाले चाऽभवत् स्वेदबिन्दुकः ॥ ८ ॥
स्थूलो भूत्वाऽपतत् पृथ्व्यां तपोधातुविमिश्रितः ।
तस्य बभूव पृथ्व्यां वै बालो रक्तप्रवर्णकः ॥ ९ ॥

चतुर्भुजोऽरुणो रम्योऽलौकिकद्युतिमान् शुभः ।
स च रुरोद तस्यैव तदा शंभोस्तु सन्निधौ ॥१०॥
शंभुः समाधिमग्नोऽस्ति ज्ञात्वा देवी वसुन्धरा ।
आविर्बभूव तत्रैव धृत्वा सुस्त्रीतनुं नवाम् ॥११॥
भूमिर्बालं निधायांऽके स्तन्यं साऽपाययत् सुतम् ।
चुचुम्ब तन्मुखं स्नेहात् समक्रीडयदात्मजम् ॥१२॥
शंभुरन्तःस्थितो देवो ज्ञात्वा सर्वं समाधिना ।
उत्थितः सहसा तत्र समाधेश्च विहस्य ताम् ॥१३॥
भूमिं प्राह प्रसन्नः सन् धन्यासि धरणे प्रिये ! ।
प्रीत्यैनं रक्षितवती त्वयि जातं सुतं मम ॥१४॥
मम स्वेदोद्भूतबिन्दुजन्योऽयं बालकस्तव ।
नाम्ना ख्यातो भवेल्लोके भूमिदातृगुणादिमान् ॥१५॥
भौमोऽयं मंगलकरो मंगलः संभविष्यति ।
ममापि सुखदाताऽयं गृहाणैनं सुतं तव ॥१६॥
भूमिर्जग्राह तं बालं शिवं संपूज्य वै ततः ।
आशीर्वचनमादाय स्वस्थानं ससुता ययौ ॥१७॥
रूपान्तरेण सा भूमिः सुतमादाय सर्वदा ।
काश्यां वासं कृतवती सुतोऽभूद् यौवनाऽन्वितः ॥१८॥
स च जानाति पितरं देवं शंभुं सदा स्मरन् ।
काश्यां मूर्तौ महादेवे सिषेवे शंकरं सदा ॥१९॥
युवानं च सुतं दृष्ट्वा पिता प्राहाऽत्र सेवया ।
प्रसन्नोऽस्मि वृणु किंचित् दास्ये त्वदभिवाञ्छितम् ॥२०॥
पुत्रः प्राह मया लब्धं सर्वं लब्धा प्रसन्नता ।
पितृप्रसन्नतातुल्यं नहि किंचिद् भवेदिति ॥२१॥
सर्वलब्धव्यभोग्येषु श्रेष्ठा पितृप्रसन्नता ।
सा यद्यधिगता पुत्रैः सर्वं चाधिगतं भवेत् ॥२२॥
पितृसेवाफलं स्वर्गो मोक्षश्चाऽपुनरावृतः ।
सर्वविघ्नविनाशश्च सर्वसम्पत्करः स्मृतः ॥२३॥
सूर्यचन्द्रादिराज्यानि भौमान्यतलजानि वा ।
पारमेष्ठ्यपदान्यथो पितृप्रसन्नताफलम् ॥२४॥
तव सेवा सदा कार्या न मेऽस्त्यन्यमनोरथः ।
इत्युक्त्वा हृद्गदभावात् पतितो हरपादयोः ॥२५॥
शंभुः करौ भौममूर्ध्नि कृत्वा प्राह सुपुत्रकम् ।
स्थापये त्वां ग्रहमध्ये मंगलाख्यो ग्रहो भव ॥२६॥
यावत् द्यौः स्थास्यति सृष्टौ तावत् त्वं वै भविष्यसि ।
इत्याशिषं च सम्प्राप्य नत्वा शंभुं वसुन्धराम् ॥२७॥
दिव्यं लोकं जगामाऽऽशु शुक्रलोकात्परं वरम् ।
तत्र राज्यं महल्लेभे भौमगोलकनामकम् ॥२८॥
इति ते कथितं लक्ष्मि भौमस्योत्पत्तिलक्षणम् ।
शंकरस्य चरितं वै सतीविरहकालिकम् ॥२९॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने शंकरस्य ललाटस्वेद-बिन्दोर्मंगलग्रहस्योत्पत्तिरितिनिरूपण-नामा त्र्यशीत्यधिकशत-तमोऽध्यायः ॥१८३॥

**श्रीनारायण उवाच—**

अतः परं शृणु प्रीत्या हनुमच्चरितं प्रिये ।
आद्ययुगे यदभूत्तद् रुद्रस्य चरितं शुभे ॥ १ ॥
ब्रह्मणश्चापि चरितं दृष्ट्वा तु मोहिनीं तदा ।
धातवो न्यपतन् शंभोर्वृषसश्चापि यद्यथा ॥ २ ॥
एकदा विधुरः शंभुः शरदि हिमपर्वते ।
शृण्वन् वै कोकिलालापान् चन्द्रिकाधवलीकृते ॥ ३ ॥
सुरभ्यनिलसंव्याप्ते मयूरैश्चापि नादिते ।
शैत्यव्याप्तनिकुंजाढ्ये सस्मार दक्षजां सतीम् ॥ ४ ॥
अहो नास्ति मम कान्ता कीदृशी मेऽस्ति वै गतिः ।
सखीं विना शरत्कालः कथं निर्यापितो भवेत् ॥ ५ ॥
देवानामीश्वराणां च परब्रह्मस्वरूपजः ।
बाधकः समयोऽवश्यं भवति प्राणधारिणाम् ॥ ६ ॥
यद्यप्यस्मि निरीहोऽहं तथापि वर्ष्मयोगतः ।
तात्कालिकेहया चात्र स्मरामि दक्षजां सतीम् ॥ ७ ॥
किं करोमि क्व गच्छामि विना सतीं सहायिनीम् ।
तां विना बाधते शैत्यं स्मरोऽपि बाधतेऽद्य वै ॥ ८ ॥
ब्राह्ममुहूर्तप्रारंभे चिन्तामग्नो हरोऽभवत् ।
अतीव सस्मार सतीमुत्थायोत्थाय तिष्ठति ॥ ९ ॥
निषीदति विहरति कामज्वरसमाकुलः ।
आम्रवृक्षं समाश्रित्य निराशी निषसाद सः ॥१०॥
तावद् विदित्वा देवेशी हिमालयसुता सती ।
योगबलं समासाद्य धृत्वा रूपं द्वितीयकम् ॥११॥
व्योम्नि तत्र समागत्याऽऽकाशवाण्याऽवदत् प्रिया ।
रे ब्रह्म त्वं परब्रह्मकृष्णमूर्तेः कृतोद्भवः ॥१२॥
परब्रह्मस्वरूपोऽसि गच्छ गोलोकधाम यत् ।
तत्र सख्यो ह्यनन्तास्ते विहरस्व यथासुखम् ॥१३॥
कथमत्राऽरण्यभूमौ वृथा शोचसि दीनवत् ।
तत्र कृष्णस्तव कर्ता दुःखं ते नाशयिष्यति ॥१४॥

इत्युक्त्वा विररामाऽथ मौनं तिष्ठति तद्द्रुमे ।
शंकरोऽपि तदाश्रुत्य चकितोऽभूद् हृदन्तरे ॥१५॥
विचार्य बहुधा चित्ते समुत्थाय च तत्स्थलात् ।
जगामाकाशमार्गेण गोलोकं धाम शाश्वतम् ॥१६॥
सती चापि प्रिया शंभोरदृश्या चूतसंस्थिता ।
पृष्ठे पृष्ठे जगामाऽपि गोलोकं धाम शाश्वतम् ॥१७॥
यावत्कुमारिका चास्ति तावन्नेच्छति शंकरम् ।
विवाहे संवृते पश्चात् सदा चेच्छति शंकरम् ॥१८॥
इति कृत्वा गता पत्युः शान्त्यर्थं कृष्णमण्डलम् ।
गत्वा शंभुस्तु गोलोकं श्रीकृष्णं प्रणनाम सः ॥१९॥
स्वागतं कृतवान् शंभोः श्रीकृष्णः पुरुषोत्तमः ।
प्रयोजनं पप्रच्छापि तदा नोवाच शंकरः ॥२०॥
लज्जितोऽभूत् ततो देवी सती कमललोचना ।
प्रविवेश हरौ कृष्णे शंकरानन्दकारिणी ॥२१॥
प्रोवाच हृदयं ज्ञात्वा हरस्य कृष्णसंस्थिता ।
प्रियोऽसि मे सदा शंभो सतीं नाऽनीतवान् कथम् ॥२२॥
श्रुत्वैतत् कृष्णवचनं नेत्राश्रूणि मुमोच सः ।
शनैर्धैर्यं समालम्ब्य प्राह सतीप्रणाशनम् ॥२३॥
स्वस्य वैधुर्यमपि च दुःखदं चाऽनिवेदयत् ।
कृष्णः प्राह तदा शंभुमाश्वास्य सुखदं वचः ॥२४॥
मन्मूर्तेस्त्वं समुत्पन्नः सती मन्मूर्तिसंभवा ।
मम पुत्रोऽसि देवेश चागतोऽत्र शुभं कृतम् ॥२५॥
गोलोकं यन्मम सर्वं तत्सर्वं च तथापि वै ।
यथेष्टं वस गोलोके विहरस्व यथेष्टकम् ॥२६॥
दास्यो दासा अनेके वै करिष्यन्ति त्वदर्हणा ।
सुखं भुंक्ष्व सदा शंभो यत्ते मनसि वर्तते ॥२७॥
शंभुः प्राह तदा कृष्णं भक्तोऽस्मि नाथ तेऽप्यहम् ।
तव भोग्यं ममाऽभोग्यं वृतं मेऽस्ति सदा हरे ॥२८॥
तस्मान्नानेन रूपेण विचरिष्यामि माधव ।
यदि तेऽस्ति कृपा शिष्ये भवामि वृषभोऽत्र वै ॥२९॥
गवां मध्ये निवसामि विहरिष्यामि गोषु वै ।
इत्याज्ञां देहि मे नाथ कृपां कुरु मयि प्रभो ॥३०॥
यावत्कालं प्रभोराज्ञा तावत्तिष्ठामि चात्र वै ।
पश्चात् पुनर्गमिष्यामि हिमवद्गृहमुत्तमम् ॥३१॥
तथाऽस्त्विति जगादैनं कृष्णः श्रीपुरुषोत्तमः ।
कृष्णेच्छया तदा शंभुर्वत्सो युवाऽभवद् द्रुतम् ॥३२॥
गावश्च मोहिता दृष्ट्वा सुरूपं वत्समुत्तमम् ।
लेलिहाना जिह्वया तं सिषेविरे मुहुर्मुहुः ॥३३॥
जृंभमाणा धावमानाः स्पर्शमग्नाः सिषेविरे ।
दृष्ट्वा देवी सती तासु गोषु योगसमाधिना ॥३४॥
प्रविवेश च सर्वासु याः सेवन्ते हरं वृषम् ।
सतीप्रवेशसामर्थ्यात् गावस्ताः शंकरं वृषम् ॥३५॥
सेवन्ते बहुधा प्रेम्णा यथा शंभुः सुखी भवेत् ।
एवं विहरतो गोषु तृप्तोऽभूत् वृषशंकरः ॥३६॥
तृप्तिस्तु शाश्वती जाता यथा नेच्छति गां वृषः ।
ततः सती गवां देहाद् विनिःसृत्य च माधवे ॥३७॥
प्रविश्याऽऽह हरं गच्छ हिमशैलं सतीपते ।
शंभुस्तदा वृषरूपं विहाय शंकरोऽभवत् ॥३८॥
प्रपूज्य परमेशानं श्रीकृष्णं हृदये स्मरन् ।
विधुरः पृथिवीं यातुं नाऽकरोन्मन एव सः ॥३९॥
कृष्णः प्राह तदा शंभो किं ते मनसि वर्तते ।
ब्रूहि ददामि ते सर्वं महाभागवताय हि ॥४०॥
शंभुः प्राह हरे कृष्ण विधुरो याम्यहं कथम् ।
वैधुर्यं दुःखदं सर्वं सरसं नीरसायते ॥४१॥
तस्मादत्रैव तिष्ठामि योगी भूत्वा तवान्तिके ।
ओमित्याह तदा कृष्णः शंभुश्चापि वटान्तिके ॥४२॥
निषद्याऽवततारान्तःसमाधौ ध्येयमाधवे ।
न जानात्याकूतिचितिचापल्यवेदनादिकम् ॥४३॥
सती चापि तदा शंभोः पार्श्वे रक्षत्यव्यक्तिका ।
द्वितीयेन स्वरूपेणाऽदृश्येन शंकरप्रिया ॥४४॥
अथ हिमालयपुत्री पार्वती तपसि स्थिता ।
शंभुं प्रतीक्षते नित्यं कदाऽऽगच्छेन्महेश्वरः ॥४५॥
एवं प्रतीक्षते नित्यं शंभुश्चात्राऽऽगतो भवेत् ।
शंभुः समाधिमापन्नो जागर्त्येव नहि क्वचित् ॥४६॥
समा बह्व्यस्तदा तत्र व्यतीताः परमेश्वरी ।
सती त्वधैर्यमापन्ना कृष्णं प्राह न ता मुहुः ॥४७॥
कृष्ण कृष्ण प्राणदातर्भक्तस्ते ब्रह्मणि स्थितः ।
बहिः समाधेर्नायाति समा यान्ति निरर्थिकाः ॥४८॥
अहं तु पार्वती भूत्वा तपः करोमि पर्वते ।
प्रतीक्षेऽहं महादेवं कदाऽऽगच्छेन्ममान्तिकम् ॥४९॥
तस्मादेनं समाधेस्त्वं बहिरानय माधव ।
प्रापय यत्र शैलेन्द्रो हिमवान् वर्तते भुवि ॥५०॥
यत्र मया विवाहः स्यात् तच्छीघ्रं कुरु केशव ।
सत्युक्तां प्रार्थनां श्रुत्वा शंभोर्जागरणाय वै ॥५१॥
प्रेरयामास गोपीनां रासमण्डलमेव सः ।
गोपीभिः संकृते रासे बहुघोषसमन्विते ॥५२॥

सततं वाद्यतालादिनृत्यगीतिप्रमिश्रिते ।
रचितेऽपि महायोगी बहिर्नायात्समाधितः ॥५३॥
गोप्यो देव्यः परिश्रान्ता विरमुः रासखेलनात् ।
जगदुः श्रीहरिं कृष्णं शंभुर्जागर्ति नैव च ॥५४॥
नाऽस्माकं तत्र सामर्थ्यं प्रवर्तते महायतौ ।
स्पृशामो नहि देवं तं दाहस्य भीतितो वयम् ॥५५॥
तस्माद्देव यथेष्टं त्वं गत्वोत्थापय योगिनम् ।
श्रुत्वा कृष्णः स्वयं तत्र गत्वा पश्यति शंकरम् ॥५६॥
कृष्णे स्वं पंचविंशाख्यं संविलीय स्थितं हरम् ।
उत्थापयितुं सूपायं कल्पयामास केशवः ॥५७॥
तूर्णं तु मोहिनीरूपं योगिनीधार्यमेव सः ।
दधार च स्वयं कृष्णः संयमं कृतवान् शिवे ॥५८॥
आत्मानं पंचविंशं तं समाधेर्बहिरानयत् ।
तदा नेत्रे समुन्मील्य शंभुर्ददर्श सन्निधौ ॥५९॥
तावत्सुरूपां युवतीं ददर्श मोहिनीं हरः ।
मोहिन्यात्मककृष्णेन हावभावविलासनैः ॥६०॥
आकर्षकमृदुस्पर्शचूम्बनालापलिंगनैः ।
संभावितो महादेवो मुमोह मानसे मनाक् ॥६१॥
सती तावत् स्थिता तत्र प्रवेशमकरोद्धरे ।
विशेषेण हरस्तत्र मोहिन्यां प्रमुमोह च ॥६२॥
उत्थितः सहसा भ्रान्तो मोहिनीं धर्तुमिच्छति ।
तावत्तावन्मोहिनी सा पश्चात्पश्चात्प्रगच्छति ॥६३॥
ब्रह्माण्डे मोहिनी याति हरोऽप्यनुययौ च ताम् ।
विरजां च समुल्लंघ्य त्वायातौ मोहिनीहरौ ॥६४॥
प्रकृत्यावरणे तत्र सती निष्क्रम्य शंकरात् ।
पृथक्स्थिताऽभवत् तावच्छंकरो मोहिनीं प्रति ॥६५॥
प्रोवाच यासि कं लोकं गच्छ यं प्रति गच्छसि ।
नाऽहं यास्ये त्वया साकं योगिना किं प्रयोजनम् ॥६६॥
अहं स्थास्येऽत्र शान्त्याढ्ये निर्जने सुखदे स्थले ।
ध्याने मग्नो भविष्यामि गच्छ यत्र प्रगच्छसि ॥६७॥
न मया योगिना कार्यं युवत्या सह विद्यते ।
युवतीर्नरकद्वारं योगविघ्नकरी ह्यति ॥६८॥
विश्वासो नैव कर्तव्यो योगिना प्रमदाजने ।
योगाभ्यासाद्वियुज्यैव संयोजयति स्वात्मनि ॥६९॥
स्वकार्यं साधयत्येव परकार्यं धुनोति च ।
ज्ञानं ध्यानं गुणान्सर्वान् ध्वंसयत्येव सर्वथा ॥७०॥
सुरूपं पुरुषं दृष्ट्वा सर्वस्वं प्रददाति सा ।
किन्तु चात्मसुखं ब्रह्मसुखमाकृष्य याति वै ॥७१॥
तस्मात्सख्यं न वै कार्यं मया विजानताऽधुना ।
गच्छ मोहप्रदे रम्ये नाऽहं सहचरस्तव ॥७२॥
इत्युक्त्वा निषसादैव हरस्तत्र विनिर्जने ।
कृष्णः प्राह तदाऽऽवेशयितुं नेत्रमिषेण ताम् ॥७३॥
सती पुनः प्रविवेश शंकरे सोऽथ मोहितः ।
उत्थायाऽनुजगामापि परिरब्धुं तु मोहिनीम् ॥७४॥
मोहिनी तत्स्थलात् सत्यलोकं प्रति ससर्प वै ।
शीघ्रं जग्मुः सत्यलोकं सती शंभुश्च माधवः ॥७५॥
तत्र ब्रह्मसभां त्वालोकयामासुः प्रपूरिताम् ।
मोहिनीं प्रविलोक्यैते ब्रह्माद्याः क्षोभिता ह्यति ॥७६॥
अप्सरसश्च सावित्री देव्यश्च क्षोभिताः क्षणम् ।
मोहिन्यास्तत्परं रूपं राधातोऽपि प्रलौकिकम् ॥७७॥
सभा सर्वा देवदेव्यात्मिका क्षुब्धा द्रवंगता ।
किमु वक्तव्यमेवाऽत्र साक्षात्कृष्णे प्रमोहके ॥७८॥
क्षणान्तरे तु मोहिन्या मोहः संकुचितस्तदा ।
सभाजनोऽभवत् स्वस्थः शंभोः स्वागतमाचरत् ॥७९॥
सती पुनः शर्वदेहात् बहिर्निर्गम्य संस्थिता ।
अदृश्या सर्वदेवैश्च विशश्रामाऽथ मोहिनी ॥८०॥
जगाम शंकरं स्प्रष्टुं निर्विकारं गुणाकरम् ।
तावत् तां प्राह शंभुर्मा तवास्ति मे प्रयोजनम् ॥८१॥
ब्रह्माणं गच्छ देवेशि यदि तत्र प्रयोजनम् ।
तामाज्ञां लोकनाथस्य गृहीत्वाऽऽगादजं प्रति ॥८२॥
सव्यहस्तं ब्रह्मणश्च कण्ठे कृत्वा चुचुम्बसा ।
स्पर्शमात्रेण कामाद्वै ब्रह्मसत्त्वं समस्खलत् ॥८३॥
ब्रह्मासने तु तत्सत्त्वं गुप्त्यर्थं वस्त्रमर्दितम् ।
कणाः लक्षं ततो जाता सिंहासनसमन्ततः ॥८४॥
तेभ्यो जाताश्च पर्याख्या ब्रह्मसरसः कन्यकाः ।
अप्सरोभ्यश्चातिरूपाः स्त्रियो ब्रह्मसरोऽभिधाः ॥८५॥
रूपलावण्यसौन्दर्यौज्ज्वल्यसौम्यगुणाकराः ।
प्रोद्भिन्नयौवनोन्मुख्यः सर्वदैकतनुस्थिताः ॥८६॥
ये ये छत्रधरा राजाधिराजा देवतोत्तमाः ।
तद्देवीनामुपदेव्यस्ताभ्यः प्रत्येकमर्पिताः ॥८७॥
ताश्च ब्रह्मसरःसृष्टिः पर्यः प्रोक्ता हि वेधसा ।
अथायं शंकरो देवो नेत्रे सम्मील्य संयमे ॥८८॥
अन्तर्जगाम तत्रैव सभायां ब्रह्मसन्निधौ ।
अन्तर्वृत्तिरपि बहिर्वृत्तिः शृणोति शंकरः ॥८९॥
मोहिनी कथयामास त्रैलोक्यचित्तमोहिनी ।
निबोध साधो मे वाक्यं कामिन्यास्ते सुखप्रदम् ॥९०॥

त्यक्त्वा कठोरतां गुप्ते भज मां सुखदायिनीम् ।
त्वं वरेषु वरः सृष्टौ वरार्हाऽहं स्वयंवरा ॥९१॥
विदग्धाया विदग्धस्य दुर्लभो नवसंगमः ।
स्तनयोर्युग्ममूर्वोर्मे सुन्दरं मुखपंकजम् ॥९२॥
हास्यभ्रूभंगसहितं दृष्ट्वा को न लसेत् सुखम् ।
स्त्रीरसः सुखसारश्च मुनीनामभिवाञ्छितः ॥९३॥
रसिकासुखसंभोगः पर्याप्तश्चातिदुर्लभः ।
त्यज ध्यानं सुरश्रेष्ठ भुंक्ष्वेमां तपसः फलम् ॥९४॥
स्वयमुपस्थितां कान्तां न भजेद्यो जितेन्द्रियः ।
सः तस्यास्तु विनिःश्वासाऽग्निना दग्धो विनश्यति ॥९५॥
शंभुः श्रुत्वा तथावाक्यं हितं तथ्यमुवाच ताम् ।
शृणु कान्ते प्रवक्ष्यामि परिणामसुखावहम् ॥९६॥
कुलधर्मोचितं सत्यं ब्राह्मणानां तपस्विनाम् ।
स्वयोषिति योग्यकाले रतिर्धर्मः प्रशस्यते ॥९७॥
यत्र क्वापि लब्धजन्मा जनो यः परयोषिति ।
रतिं याति गृहात्तस्य लक्ष्मीः रुष्टा प्रयाति वै ॥९८॥
ग्राह्या चोपस्थिता नारी गृहिणा न तपस्विना ।
त्यागे दोषो गृहस्थानां शापभाक्पापभाग्गृही ॥९९॥
ब्रह्मा जगद्विधाताऽस्ति सस्त्रीको न विरक्तिमान् ।
त्यागे दोषो भवेत्तस्य नाऽस्माकं त्यागिनां क्वचित् ॥१००॥
स्वभार्यां तु परित्यज्य यो गृह्णाति परस्त्रियम् ।
यशोधनायुषां हानिस्तस्यात्रामुत्र चाऽगतिः ॥१०१॥
सुसम्पदा स्त्रिया साम्राज्येन वा किं तपस्विनः ।
निष्कामेन च मत्तेन मया किं ते प्रयोजनम् ॥१०२॥
सुवेषं सुन्दरं पुष्टं युवानं गच्छ सुन्दरि ।
इत्येवं त्यजनं श्रुत्वा प्रोवाच विनयान्विता ॥१०३॥
चारुचम्पकवर्णाभः कन्दर्पसमसुन्दरः ।
तपःप्रभावात् सस्त्रीकः सुघटः सम्मतः स्त्रियाः ॥१०४॥
त्वया विनाऽन्यं कं यामि को वाऽस्ति त्वत्परः पुमान् ।
मादृशी त्वां परित्यज्य क्व वा गच्छेत् स्मरातुरा ॥१०५॥
शीघ्रं मां भज योगीन्द्र दग्धां कामाग्निना पराम् ।
न चेच्छापं प्रदास्यामि सत्वरं वा गृहाण माम् ॥१०६॥
दग्धाः प्राणा मनो दग्धं स्वात्मा च दह्यतेऽधुना ।
नवश्रृंगारपीयूषपाननिर्वाणतां कुरु ॥१०७॥
स्वान्तर्दुःखेन दुःखार्ता या यं शपति निश्चितम् ।
शापं खण्डयितुं शक्तो न विधाता न शंकरः ॥१०८॥
समुत्तमाभां मां पश्य प्रदग्धां मदनानलैः ।
प्रोद्भिन्नवसारां चाऽक्षतां केनाऽप्यधर्षिताम् ॥१०९॥
सिन्दूरबिन्दुं दधतीं कस्तूरीबिन्दुना सह ।
चारुचम्पकवर्णाभां सततं स्थिरयौवनाम् ॥११०॥
बृहन्नितम्बयुगलां पीनश्रोणिपयोधराम् ।
शरत्पार्वणशुभ्रांशुप्रभामुष्टकराननाम् ॥१११॥
सूक्ष्मवस्त्रपरीधानां रत्नालंकारभूषिताम् ।
सर्वं मोहयितुं शक्तां कटाक्षैरेव लीलया ॥११२॥
त्वादृशं कामयमानां गजेन्द्रमदगामिनीम् ।
पुलकांचितसर्वांगीं मूर्छासन्मुखयायिनीम् ॥११३॥
गृहाण त्वरितं त्वं मां शुष्ककण्ठोष्ठतालुकाम् ।
इत्येवं मोहिनी शर्वं वचनैर्मोहयत्यपि ॥११४॥
शिवो मोहं न चाप्नोति ध्यानं नैव विमुञ्चति ।
तावत्तत्र समागत्य रंभयाऽप्सरसोदितम् ॥११५॥
शृणु चाऽलि ! युवयोगिसमाकर्षणमन्त्रणाम् ।
यदि तेऽस्ति मनो युवपुरुषे रन्तुमर्थना ॥११६॥
कामदेवसहायेन कुरु कार्यं निजेप्सितम् ।
ब्रह्माऽयं दास्यति कामं सोपकरणमर्थनात् ॥११७॥
यद्यत्र नास्ति ते रागोऽन्यं युवानं विमार्गय ।
कृत्वा वेषमपूर्वं वा पूर्वं प्रयुज्य मन्मथम् ॥११८॥
तेन सार्धं स्वयं गत्वा मोहं कुरु च मोहिनि ! ।
जितेन्द्रियाणां प्रवरं साक्षान्नारायणात्मकम् ॥११९॥
विना कामसहायेन का शक्ता जेतुमीश्वरम् ।
अत्र पार्श्वे कृतावासं कामं संव्रज मोहिनि ॥१२०॥
सद्यः सहायो भविता दयालुर्योषितां प्रभुः ।
इत्युक्ता मोहिनी तत्र गता यत्र स्मरगृहम् ॥१२१॥
कामोऽपि मोहितो दृष्ट्वा मोहिनीं क्षोभमाप्तवान् ।
स्खलितः सहसा कामः क्षणं जड इवाऽभवत् ॥१२२॥
तत्सत्त्वात् द्वौ सुतौ जातौ श्रृंगारक-वसन्तकौ ।
मोहिनीसमरूपाढ्यौ सर्वसौन्दर्यभाजनौ ॥१२३॥
द्रागेव यौवनोद्भेदौ कामसाहाय्यदौ सुतौ ।
जातौ तौ सहनीत्वैव कामोऽपि मोहिनीकृते ॥१२४॥
सहायार्थं प्रार्थितः सन् समायात् यत्र शंकरः ।
ददर्श संयमस्थं च मोहिनी योगिनं हरम् ॥१२५॥
तमेव मोहितं कर्तुं समारेभे पुरःस्थिता ।
क्षणं ननर्त रुचिरं सुगानेन क्षणं जगौ ॥१२६॥
सतीसम्बन्धिसंगीतं भक्तानां चित्तमोहकम् ।
विनेता जगतां तस्याः श्रुत्वा संगीतमीप्सितम् ॥१२७॥
पुलकांचितसर्वांगो नेत्रे प्रोन्मील्य पश्यति ।
कामाविष्टो हरस्तस्यां मुमोह साश्रुलोचनः ॥१२८॥

दृष्ट्वा मुग्धं पंचवक्त्रं मोहिनी हृष्टमानसा।
कलाप्रमाणं भावं च चकार तत्र लीलया ॥१२९॥
स्वांगानि दर्शयामास स्मेरभ्रूभंगपूर्वकम्।
का लज्जा तस्य संसारे यः कामहतचेतनः ॥१३०॥
तथापि शंकरस्तत्र नेत्रे सम्मील्य धैर्यवान्।
विरतो योगमार्गेण न ददर्श तु मोहिनीम् ॥१३१॥
किन्तु सा मोहिनी शंभोश्चित्ते समारुरोह वै।
ध्यानेऽपि दृश्यते चान्तःकरणे मोहकारिणी ॥१३२॥
बहिःस्थितं तदा कामं प्रैरयत् मोहिनी क्षणम्।
सर्वेन्द्रियाणां प्रवरं विष्णोरंशं च मानसम् ॥१३३॥
रतिबीजं पंच बाणं शश्वद्योषिदधिष्ठितम्।
सुगन्धिवातसचिवं मधुश्रृंगारवेगितम् ॥१३४॥
अथाऽयं कामदेवोऽपि सज्जीभूतो हरीच्छया।
चकार शरसन्धानमन्तरीक्षे स्थितः स्वयम् ॥१३५॥
मन्त्रपूतं महास्त्रं च चिक्षेप शंकरोपरि।
बभूव चंचलः शंभुः कामास्त्रेण तु कामुकः ॥१३६॥
क्षणं निरीक्षणं चक्रे मोहिन्यास्ये पुनःपुनः।
सस्मिते वक्रनयने कामभावप्रवर्षिणि ॥१३७॥
एतस्मिन्नन्तरे कामः समयज्ञः सुयोगवित्।
आविर्भूय पंचबाणान्निचिक्षेप च शंकरे ॥१३८॥
सम्मोहनं तु प्रथमं सम्प्रवेगं द्वितीयकम्।
उन्मत्तवीर्यं तृतीयं ज्वलज्ज्वरं चतुर्थकम् ॥१३९॥
पंचमं चेतनहरं प्रक्षिप्य व्योममार्गतः।
किंकरान्प्रेषयामास कोकिलां च वसन्तकम् ॥१४०॥
भ्रमरान् गन्धवातं च स्वयं चापि गतो हरे।
पुंस्कोकिलः कलं रावमुवाच तत्समीपतः ॥१४१॥
षट्पदः सुन्दरं सूक्ष्मं जुगुञ्ज पुरतः स्थितः।
शश्वद् ववौ गन्धवहो मन्दोऽतिशीतलः प्रिये ॥१४२॥
सततं मुदितस्तत्र बभ्राम च मधुः स्वयम्।
कामश्च मानसे स्थित्वा तद्विकारं चकार ह ॥१४३॥
पुलकांचितसर्वांगो बभूव योगिशंकरः।
ददर्श मोहिनीभावं विहस्य च पुनः पुनः ॥१४४॥
प्रोवाच वक्रनयना कामास्त्रहतचेतना।
इङ्गितेनैव नारीणां सद्यो मत्तं भवेन्मनः ॥१४५॥
करोत्याकृष्य संभोगं यः स एवोत्तमो मतः।
नार्याः स्फुटमभिप्रायं ज्ञात्वा ह्याकारितस्तु यः ॥१४६॥
पश्चात् करोति श्रृंगारं पुरुषः स तु मध्यमः।
कामार्तया स्त्रिया यश्चाऽऽकारितो वै पुनः पुनः ॥१४७॥
धृत्वा प्रसह्य संलिप्तः कनिष्ठः स पुमान्मतः ॥
तया न लिप्तो रहसि स क्लीबो न पुमानहो ॥१४८॥
उत्तिष्ठ जगतां नाथ पारं कुरु स्मरार्णवे।
निमग्नां दुस्तरे घोरे कर्णधार भयानके ॥१४९॥
सततं त्वन्मनस्कां मां दासीं जन्मनि जन्मनि।
क्रीणीहि रतिपण्येनाऽमूल्यरत्नेन सत्वरम् ॥१५०॥
इत्युक्त्वा मोहिनी तत्र समीपमभिसृत्य वै।
विचकर्ष करं शंभोः सस्मिता कामविह्वला ॥१५१॥
शंभुश्चापि समुत्थाय परिरब्धुं समिच्छति।
तावत्प्राह सती कृष्णं नयैनं हिमवत्स्थलम् ॥१५२॥
मोहिनीशः करग्राहं कृत्वैकान्तं स्थलान्तरम्।
जिगमिषुरुपसर्पन् चाग्रे यात्यनुशंकरः ॥१५३॥
क्षणान्तरे मोहिनी तं निनाय हिमवत्स्थलम्।
कामजडं च निर्लेपं किञ्चिल्लेपं हरं हरिः ॥१५४॥
कैलाससन्निधौ नानावृक्षवल्लीसमन्विते।
मन्दसुगन्धशैत्याढ्यवायुव्याप्ते सुशीतले ॥१५५॥
सुपुष्पाञ्चितशाखानां निकुंजे तु मनोहरे।
प्रस्रवजलझरणान्तिके निर्जनके स्थले ॥१५६॥
मोहिनी प्राह शंभुं वै कान्त स्मरशयी भव।
एह्यत्र रतिभेदैर्वा रमावो बहुभेदतः ॥१५७॥
नेत्रमिषेण च सतीं प्राह कुंजान्तरस्थिता।
पश्य लीलां भगवतोर्द्वयोरनुपमां सखि ॥१५८॥
इत्युक्त्वा मोहिनी पुष्पशय्यां मृद्वीं चकार वै।
शंभुं धृत्वा वक्षसि स्वे सुष्वाप कामसुन्दरी ॥१५९॥
शंभुकामोत्तेजकानि साधनानि स्मरस्तदा।
सुसज्जानि प्रेरितानि चकार सर्वतो दिशि ॥१६०॥
परिरेभे मोहिनीं सः कृष्णरूपां सुसुन्दरीम्।
कामबाणहतः शंभुः क्षुभितो धैर्यवर्जितः ॥१६१॥
यावत्तु संगमं कर्तुमिच्छति तावता बहिः।
वीर्यं चस्कन्द वै सर्वं निरोद्धुं न शशाक सः ॥१६२॥
सर्वं तु पातयामास पुष्पशय्यात्मके स्थले।
मोहिनी द्राक् समुत्थायाऽदृश्यतां प्राप्य तत्स्थलात् ॥१६३॥
सतीं कामं परिरभ्याऽऽज्ञाप्य गन्तुं स्वकं स्थलम्।
गोलोकं प्राप श्रीकृष्णो भूत्वा गोपीगणान्वितम् ॥१६४॥
शंकरश्चकितो भूत्वा ज्ञात्वा कृष्णविचेष्टितम्।
नाऽवमानं स्वकं मेने ययौ कैलासमेव वै ॥१६५॥
सत्यलोकाच्चरित्रं तत् द्रष्टुं सप्तर्षयस्तदा।
आसन्समागतास्तत्र दृष्ट्वा सर्वं रहःस्थिताः ॥१६६॥

रामकार्यार्थमेवैतद्वीर्यं पत्रे निधाय ते।
संरक्षुः पत्रपुटान्तरे निर्विघ्नता यथा ॥१६७॥
एतस्मिन्नन्तरे पुत्री केसरस्यांजनी शुभा।
अरण्ये निर्जने तत्र तपः करोति दुष्करम् ॥१६८॥
पुत्रेच्छया तपःकर्त्र्यै व्योमवाण्या समीरितम्।
तपसस्ते फलं पुत्रो वायुबलो भविष्यति ॥१६९॥
वायुदेवः स्वयं चात्राऽऽगत्य बीजं प्रदास्यति।
निःशंकं तद्गृहाण त्वं तापस्यपि शुभानने ॥१७०॥
न ते तत्र भवेद्दोषो रामकार्यं यतोऽस्ति तत्।
अक्षतत्वेऽपि ते पुत्रो भविष्यति महाबलः ॥१७१॥
तथास्त्विति जगादैषा द्रुतं ननाम तद्दिशि।
व्योमवाणी निवृत्ताऽभूत् सा तु बीजं प्रतीक्षते ॥१७२॥
तावद् वायुश्च तां दृष्ट्वा क्षुभितोऽतीव रूपतः।
दृष्ट्वा तु निर्जने कन्यामागतो दिव्यरूपधृक् ॥१७३॥
सप्तर्षयोऽपि तत्रैव चागता दैवयोगतः।
वायुर्लज्जां गतस्तत्र तान् ऋषीन्संविलोक्य वै ॥१७४॥
तदा महर्षयः प्राहुर्देवकार्यार्थमत्र वै।
त्वया कार्यं महत्कार्यं रामकार्यार्थमेव यत् ॥१७५॥
गृहाण शांकरं बीजं गच्छांऽजनीं तु कैसरीम्।
स्वस्थो भूत्वा तदा वायुर्वीर्यं जग्राह शांकरम् ॥१७६॥
पत्रपुटं समुद्घाट्य वायुः पश्यति तद्यदा।
तावत् वह्निसमं दीप्तं ज्वालाभूतं पुटान्तरात् ॥१७७॥
ऊष्माभूतं भवत्शीघ्रं वायुदेहे विवेश ह।
वायुश्चापि तदाऽऽधातुं न संशक्तो बभूव ह ॥१७८॥
प्रजज्वालोदरे देहे प्राद्रवत् तत्स्थलात्स्थलम्।
तन्मार्गे चांजनी यत्र तापसी संस्थिता स्थले ॥१७९॥
पृथ्व्यां खातं च आकण्ठं कृत्वा तिष्ठति सर्वदा।
उपरि शाद्वलं शीतं भूतलं यत्र दृश्यते ॥१८०॥
दृश्यते न च देहोऽस्या मस्तकं दृश्यतेऽकलम्।
वायुस्तु केसरी भूत्वा प्राधावत् चापलस्तदा ॥१८१॥
वायुर्धावन्स्थले तत्र पतितः पादसंस्खलात्।
शीतं च शाद्वलं ज्ञात्वा ह्याश्लिष्टो मस्तकं च तत् ॥१८२॥
लिंगं वायोर्दैवयोगादंजन्याः कर्णमाविशत्।
वीर्यं च शांभवं वायुसंस्थं यत् तत्तु सर्वथा ॥१८३॥
स्खलितं चांजनीकर्णान्तरे तत्कण्ठतो ह्यधः।
अवातरत् समग्रं च गर्भकोष्ठे गतं स्थिरम् ॥१८४॥
दैवेच्छयाऽभवत्तद्वै गर्भं दधार कैसरी।
अंजनी च शरीरे सा प्रजज्वाल विशेषतः ॥१८५॥
भूमेर्बहिर्विनिर्गत्य संस्थिता शाद्वले जले।
क्षणान्तरे समुत्पन्नः पुत्रो दैवप्रभाववान् ॥१८६॥
मेषसूर्ये चतुर्दश्यां चित्रानक्षत्रयोगके।
सुवर्णमुखरीनीरे प्रादुरासाऽनिलात्मजः ॥१८७॥
वायुतुल्यो बले शंभुसमश्चैश्वर्यसिद्धिषु।
कृष्णतुल्यो ब्रह्मचर्ये ऋषिश्चाराधने तथा ॥१८८॥
आकृतौ वानरतुल्यस्तपस्वी चांजनीसमः।
रूपे कामसमो भैक्ष्ये वसन्तर्तुसमस्तथा ॥१८९॥
कीशजातिसमः सर्वौषधिज्ञाने विशेषतः।
तापसीसदृशः शान्तौ निर्द्वन्द्वे संयमी यथा ॥१९०॥
सैन्येऽरण्यसमो मोहिनीसमश्चिरजीवने।
रोम्णि वसन्तसदृशो नखेषु वनिसन्निभः ॥१९१॥
भ्रूकुटौ रुद्रसदृशस्तनौ हिमाद्रिसदृशः।
राक्षसानां यथाकामं गर्वभंजनकारकः ॥१९२॥
हृदये शाद्वलसमो दार्ढ्ये पृथ्वीसमः सदा।
रक्षणे पुटतुल्यश्च वीरत्वे वीर्यसत्प्रभः ॥१९३॥
भूतादिज्वालने त्वग्निसदृशः संबभूव सः।
तत्रैव समये माता हनुं वीक्ष्य तु लम्बिनीम् ॥१९४॥
हनुमानितिनाम्नैव समाजुहाव तं शिशुम्।
ववृधे तत्क्षणादेव पर्वतप्राय एव सः ॥१९५॥
जहर्ष माता नितरां दृष्ट्वा बलपराक्रमे।
प्रातः स्वमातरं प्राह प्रांजलिः शिशुरूपतः ॥१९६॥
क्षुधा मे बाधते मातर्देहि जाठरशान्तिकृत्।
शिशुं चांके निधायैवाऽपाययत् स्तन्यमेव तम् ॥१९७॥
तथापि न क्षुधा शान्ता ददर्श फलमम्बरे।
रविबिम्बं तदा नेतुमाकाशे चौड्डयत्प्रगे ॥१९८॥
देवप्रार्थनया तं सोऽत्यजत् ज्ञात्वा रविं सुरम्।
प्राप्य दिव्यान्भक्तिमिश्रान्दत्तान्वरान्सुरर्षिभिः ॥१९९॥
स्वजनन्यन्तिकं प्रागादथ सोऽति प्रहर्षितः।
हनुमान् सर्वमाचख्यौ तस्यै तद्वृत्तमादरात् ॥२००॥
तदाज्ञया ततो धीरः सर्वविद्यादिशेवधेः।
सूर्यात्पपाठ कीशः सः गत्वा नित्यं तदन्तिकम् ॥२०१॥
मात्रे च प्रांजलिर्भूत्वा सेवार्थं प्रार्थयन्मुहुः।
माता प्राह तु मे वासो वैकुण्ठे च यथाभवेत् ॥२०२॥
तथा सेवां कुरु पुत्र! नाऽन्यन्मे रोचतेऽत्र वै।
पुत्रः प्राह तदा मातर्निषीद स्कन्ध एव मे ॥२०३॥
नयाम्यनेन देहेन वैकुण्ठं त्वां तु शाश्वतम्।
समारुरोह माता तत्स्कन्धं कपिर्विमानवत् ॥२०४॥

व्योम्नि बलात्समुड्डीय प्रथमप्लवनेन सः ।
सूर्यमुल्लंघ्य पाश्चात्यपादेनाऽऽपीड्य तं रविम् ॥२०५॥
द्वितीयप्लवने ध्रुवमुल्लंघ्याऽऽपीड्य तं ध्रुवम् ।
तृतीयप्लवने सत्यलोके ब्रह्मसभां गतः ॥२०६॥
चतुर्थप्लवने गंगाद्वारं त्वण्डकटाहकम् ।
भित्त्वा पृथ्वीं पदाऽऽपीड्य वेगाज्जलाऽनलाऽनन्तरे ॥२०७॥
वैकुण्ठं द्वितीयं धाम प्रपेदे स महाबलः ।
मातरं तत्र रामस्य चरणेऽर्पय्य भक्तितः ॥२०८॥
प्राप्य रामाय नमो वै मन्त्रं मालां च वैष्णवः ।
भूत्वा प्राप्य वरान् रामावतारदास्यबोधकान् ॥२०९॥
समागच्छत्पुनः पृथ्वीं पदा तताड सः शनिम् ।
जन्मकाले वक्रदृष्ट्या पश्यन्तं दुःखदं तदा ॥२१०॥
शनिस्तत्पल्लताघातात्पपात पृथिवीतले ।
ब्रह्मचारी कपिः सोयं नारीं न स्पृशतीति सः ॥२११॥
शनिर्नारीस्वरूपं तु धृत्वा दुद्राव चाम्बरे ।
तावद्धनुमता मूर्ध्नः केशानाकृष्य पातितः ॥२१२॥
प्रसह्य स शनिः स्वस्य वशे स्यादिति नित्यशः ।
पत्तले मर्दितः सम्यक् यावच्चन्द्रदिवाकरौ ॥२१३॥
पादयोः स नतिं कृत्वा प्रार्थयामास वायुजम् ।
विमोचनाय नैजं च गृहं संगमनाय च ॥२१४॥
तदा प्राह कपीशस्तं रूपं धृत्वा द्वितीयकम् ।
गच्छ स्वगोलकं चात्र प्रतिज्ञाय तु सर्वथा ॥२१५॥
यत्रास्ति हनुमत्स्तोत्रं हनुमत्पूजनादिकम् ।
तत्र तत्र तस्य शनिदृष्टिकृता पीडा न संभवेत् ॥२१६॥
नारीरूपं सदा तेऽस्तु मम पादतलार्दितम् ।
यत्रास्ति हनुमत्पादस्तत्राऽकिंचित्करः शनिः ॥२१७॥
नारीरूपस्य शाठ्यस्य फलं तेऽस्तु च निग्रहः ।
पन्नतिस्ते नाम कुर्वे सदाऽस्तु मम पत्तले ॥२१८॥
गच्छ द्वितीयरूपेण ग्रहस्थो भव सूर्यज ।
सूर्यपुत्रं परिज्ञाय न त्वां बध्नामि जीवतः ॥२१९॥
मम छायां परित्यज्याऽन्यत्र पराक्रमी भव ।
इति कृत्वा प्रतिज्ञां स शनैश्चरो ग्रहं गतः ॥२२०॥
'ॐ नमो हनुमते दुःखभंजनाय क्षः फट् स्वाहा' ।
इति षोडशवर्णात्ममन्त्रं जयति नित्यशः ॥२२१॥
न तस्य दुष्टग्रहजा पीडा तु जायते क्वचित् ।
हिमालये यत्र जन्म स तत्र कदलीवने ॥२२२॥
सर्वदा चिरजीवी स हनुमान् वसति ध्रुवः ।
रामदास्यं प्रकुर्वन्स रामाग्रे निवसत्यपि ॥२२३॥
इति ते कथितं देवि हनुमज्जन्म शंकरात् ।
आयुष्यसुखदं पापनाशकं बलभक्तिदम् ॥२२४॥
श्रीकृष्णमोहिनीजन्यं दुःखघ्नं पठनाच्छ्रवात् ।
कीर्तनात्पावनकरं किं भूयः श्रोतुमिच्छसि ॥२२५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने हिमालये विधुरशंकरस्य सतीस्मरणं, व्योमवाण्या गोलोकं गत्वा वृषभरूपेण विहरणं, सत्याः हिमाद्रौ शंभ्वानयनाय कृष्णप्रार्थना, मोहिनीरूपकृष्णेन सह शंभोः सत्यलोकागमनं, मोहिनीं दृष्ट्वा स्खलितस्य ब्रह्मणो वीर्याल्लक्षब्रह्मसरसः पर्यो जाताः, स्खलितस्य कामदेवस्य तु शृंगारकवसन्तकौ जातौ, मोहिनी शंकरेण सह हिमाद्रावागत्य शंभुं परिरब्धा, शंभुधातोः स्खलितात् वायुप्रविष्टात् वानररूपवायुनांऽजनीकर्णप्रविष्टात् हनुमदुत्पत्तिः, सः सूर्यं फलं ज्ञात्वा दधार, अंजनीं वैकुण्ठं निनाय, तत्र वैष्णवो भूत्वाऽऽगच्छन् शनिं पदा ताडयन् पातयामास पन्नतिनारीरूपं पत्तले ररक्षेत्यादिनिरूपणनामा चतुरशीत्यधिकशततमोऽध्यायः ॥ १८४ ॥

**श्रीलक्ष्मीरुवाच—**

हरे हिमालयं प्राप्ते पार्वत्या शंभुलब्धये ।
कृतं किं शंभुना चापि किं कृतं तद् वदस्व मे ॥ १ ॥

**श्रीनारायण उवाच—**

सती तेपे हरार्थं च हरस्तेपे सतीकृते ।
द्वयोर्यत्नोऽभवद्वेगान्महालक्ष्मि निबोध मे ॥ २ ॥
कांश्चिद् गणवरान्शान्तान्नन्द्यादीनवगृह्य सः ।
गंगावतारमगमत् हिमवत्प्रस्थमीश्वरः ॥ ३ ॥
यत्र गंगा ब्रह्मलोकात्प्रथमं पतिता गिरौ ।
तपःप्रारंभमकरोत् स्थित्वा तत्र वशी हरः ॥ ४ ॥
एकाग्रं चिन्तयामास स्वात्मानं ब्रह्म यत्परम् ।
ध्यानस्थिता गणाः केचित्केचित्सेवापरास्तदा ॥ ५ ॥

केऽपि मौनपराश्चासन् द्वारपाः केचनाऽभवत् ।
एतस्मिन्नन्तरे तत्र जगाम हिमभूधरः ॥ ६ ॥
प्रणनाम प्रभुं रुद्रं तुष्टाव च कृतांजलिः ।
देवदेव महादेव योगिरूप नमोऽस्तु ते ॥ ७ ॥
निर्गुणाय सगुणाय लीलाकाराय ते नमः ।
परिपूर्णाय विकृतिरहिताय च ते नमः ॥ ८ ॥
शान्ताय सुखरूपाय ब्रह्मणे ते नमोनमः ।
तपःफलप्रदात्रे ते तपःस्थाय नमोनमः ॥ ९ ॥
अन्तर्बहिर्भोगकाराय नमस्ते परमात्मने ।
परमात्मस्वरूपाय ते सतीपतये नमः ॥१०॥
भाग्योदयफलं मेऽत्र त्वागतस्त्वं मम गृहे ।
सनाथं कृतवान् मां त्वं प्रभो साधुसुखप्रद ॥११॥
अद्य मे सफलं जन्म सफलं जीवनं मम ।
अद्य मे सफलं सर्वं यदत्र त्वं समागतः ॥१२॥
ज्ञात्वाऽनन्यं तव दासं चाज्ञां देहि यदि प्रभो ।
त्वत्सेवां तु सदा प्रीत्या कुर्यां दास्यविधानतः ॥१३॥
श्रुत्वा नेत्रे समुन्मील्य दृष्ट्वाऽग्रस्थं हिमालयम् ।
प्रीत्या प्रोवाच शैलेन्द्रं ध्यानयोगस्थितो हरः ॥१४॥
तव पृष्ठे तपस्तप्तुं रहस्यमहमागतः ।
यथा न कोपि निकटं समायाद्वै तथा कुरु ॥१५॥
त्वमाश्रयो मुनियोगियतिसन्यासिनां तथा ।
देवर्षियक्षगन्धर्वराक्षसद्विजनाकिनाम् ॥१६॥
तपोधामा महात्माऽसि गंगापूतोऽसि सर्वदा ।
सदा परोपकारी च गिरीणामधिपो महान् ॥१७॥
अहं तपश्चराम्यत्र गंगावतरणे स्थले ।
निर्विघ्नं मे तपो भूयात्साहाय्यं सेवनं कुरु ॥१८॥
श्रुत्वा शैलस्तदा शंभुं प्रणयादिदमब्रवीत् ।
करिष्ये सर्वथा रक्षां विघ्नं तपसि मा भवेत् ॥१९॥
निर्विघ्नं कुरु देवेश स्वतन्त्रः परमं तपः ।
करिष्येऽहं तथा सेवां दासवन्नियतस्थितः ॥२०॥
देवेन्द्रादधिकं मन्ये स्वमनुग्रहभाजनम् ।
अप्राप्यश्चोग्रतपसा स त्वं स्वयमुपस्थितः ॥२१॥
नोऽन्योऽस्ति पुण्यवान्मत्तो यत्पृष्ठे तपसि स्थितः ।
गच्छाम्याज्ञापालनार्थं प्रसन्नो भव सर्वदा ॥२२॥
इत्युक्त्वा स्वस्थलं गत्वाऽमात्यादीनाह सर्वथा ।
यान्तु गंगावतरणे परितो रक्षणाय वै ॥२३॥
तपः करोति देवेशो मत्प्रस्थे ध्यानसंस्थितः ।
तत्राऽद्यप्रभृति कोपि मा यातु स्वः परोपि वा ॥२४॥

गमिष्यति जनः कश्चित्तत्र चेत्तं महाखलम् ।
दण्डयिष्ये विशेषेण शंकरस्य कृतेऽप्यहम् ॥२५॥
आज्ञाप्याऽथ स्वयं शैलः सत्पुष्पफलसंचयम् ।
समादाय स्वतनयासहितोऽगात् शिवान्तिकम् ॥२६॥
नत्वा चाग्रे फलादीनि निधाय प्राह शंकरम् ।
भगवन्! तनया मे त्वां सेवितुं पार्वती सती ॥२७॥
सखीभ्यां सहिताऽऽनीता सेवनेऽस्त्युत्सुका तव ।
अनुजानीहि तां नाथ मयि ते यद्यनुग्रहः ॥२८॥
अथ तां शंकरोऽपश्यत्प्रथमारूढयौवनाम् ।
फुल्लेन्दीवरपुष्पाभां पूर्णचन्द्रसमाननाम् ॥२९॥
सुरूपां च विशालाक्षीं स्वर्णकान्तिसमुज्ज्वलाम् ।
राजीवकुड्मलप्रख्यघनपीनदृढस्तनीम् ॥३०॥
तनुमध्यां स्थूलश्रोणीं त्रिवलीयुक्कृशोदरीम् ।
स्थलपद्मप्रतीकाशपादसौन्दर्यराजिताम् ॥३१॥
तपसो भ्रंशने शक्तां कोमलां कामवर्धिनीम् ।
दृष्ट्वा न्यमीलयन्नेत्रे शीघ्रं दध्यौ स्वरूपकम् ॥३२॥
प्राह शैलस्तदा शंभुं पश्य मां शरणागतम् ।
न त्वां जानन्ति शास्त्राण्यतीतं वाङ्मनसोः सदा ॥३३॥
अतद्व्यावृत्तितस्त्वां चाऽभिधत्ते श्रुतिरीश्वरी ।
येषु कृपा त्वया क्षिप्ता भक्ता जानन्ति ते हरम् ॥३४॥
सभाग्योऽहं प्रसादात्ते मत्वा दासं कृपां कुरु ।
अनया सुतया स्वामिन् सेविष्येऽन्वहमादरात् ॥३५॥
श्रुत्वा नेत्रे समुन्मील्य देवदेवोऽब्रवीत्तदा ।
कुमारीं सदने त्यक्त्वा सेवां कुरु ममाऽचल ॥३६॥
शैलः प्राह कथं पुत्रीं नाऽनयेयं वद प्रभो ।
शंभुः प्राह सदा नारी माया विघ्नं तपस्विनाम् ॥३७॥
तपस्वी युवतीसंगात्तपसा भ्रश्यति ध्रुवम् ।
अतस्तपस्विना शैल न कार्यं स्त्रीप्रसंजनम् ॥३८॥
श्रुत्वैवं च तदा नत्वा भवानी वाक्यमब्रवीत् ।
यया शक्त्या त्वया रुद्र तपः संक्रियतेऽधुना ॥३९॥
सा शक्तिः प्रकृतिर्मूला त्वयि तिष्ठति सा सती ।
त्वां विना तु कथं चार्च्यो वन्द्यो ध्येयो भविष्यसि ॥४०॥
शंभुः प्राह प्रकृतिं तां विनाश्य तपसा ततः ।
स्थास्याम्यहं परब्रह्मस्वरूपोऽविकृतः सुखी ॥४१॥
काल्युवाच तदा शंभुं प्रकृतिध्वंसनस्थितिः ।
सा किं प्रकृतिरन्या वा विचार्यैव समुच्यताम् ॥४२॥
तदानीमपि सा ब्राह्मी स्थितिः प्रकृतिरुच्यते ।
इदानीं शांभवी सा च स्थितिः प्रकृतिरुच्यते ॥४३॥

प्रकृतेः परमश्चेत् त्वं किमर्थं तपसे तपः ।
प्रकृतेरन्तरश्चेत् त्वं कथं सतीं निषेधसि ॥४४॥
किं बहूक्तेन योगीश यदर्थं तपसे तपः ।
प्रत्यक्षं बलवत्सर्वप्रमाणेभ्यस्तथाऽत्र तत् ॥४५॥
स चाहं पुरुषोऽसि त्वं मयैव सगुणो भवान् ।
मां विना त्वं निरीहः सन्न किंचित्कर्तुमर्हसि ॥४६॥
एवंस्थिते न भेत्तव्यं मत्सान्निध्येऽपि निर्गुण ।
शंभुः प्राह तदा देवीं यद्यहं ब्रह्म निर्गुणः ॥४७॥
निर्लेपश्चाप्यकर्ता चाऽभोक्ता ह्यात्मा निरंजनः ।
तदा सेवां कुरु सौम्ये त्वं करिष्यसि किन्नु माम् ॥४८॥
पित्रा विनापि सा काली सखीभ्यां सह नित्यशः ।
सेवायां वर्तते नित्यं सा शंभोरनपायिनी ॥४९॥
इदमेव महद्धैर्यं धीराणां सुतपस्विनाम् ।
विघ्नस्वरूपया चापि कृतविघ्नैर्न हन्यते ॥५०॥
काली प्रक्षाल्य चरणौ पपौ तच्चरणोदकम् ।
वह्निशौचेन वस्त्रेण चक्रे तद्गात्रमार्जनम् ॥५१॥
षोडशभिरुपचारैः सम्पूज्य विधिवद्धरम् ।
पुनः पुनः प्रणम्यैव ययौ क्वचित्पितुर्गृहम् ॥५२॥
बहुले समये याते ससखी शंकराश्रमे ।
वितेने सुन्दरं गानं सुतालं स्मरवर्धनम् ॥५३॥
विसिस्मिये वीक्षमाणा सकामा शंकरं प्रभुम् ।
शंकरोऽपि क्वचित्तां संचिन्तयत्येव सर्वथा ॥५४॥
महालावण्यनिचयां सर्वदा निकटस्थिताम् ।
चिन्तयमानां सततं शंभुं पतिधियाऽच्युतम् ॥५५॥
एतस्मिन्नन्तरे देवाः शक्राद्या मुनयस्तथा ।
ब्रह्माद्याश्च महादुष्टतारकेण प्रपीडिताः ॥५६॥
कामं संप्रेष्य च तयोर्योगं कारयितुं मुहुः ।
अकुर्वन्बहुधा यत्नं हरः किन्तु न चुक्षुभे ॥५७॥
शिववीर्यसमुत्पन्नं पुत्रं विना न तारकः ।
महासुरो विनश्येद्वै विचिन्त्येन्द्रः पुनः पुनः ॥५८॥
सस्मार स्मरमत्यर्थं सवसन्तं रतिप्रियम् ।
आगतस्तत्क्षणात्कामः सवसन्तो रतिप्रियः ॥५९॥
प्रोवाच प्रांजलिः शक्रं दासोऽयं समुपस्थितः ।
इन्द्रः प्राह विजयस्व सन्मित्रं त्वं महान्मम ॥६०॥
जयार्थं मे द्वयं शस्त्रं वज्रं कामश्च सर्वदा ।
वज्रं तु निष्फलं स्याद्वै त्वं तु नैव कदाचन ॥६१॥
दातुः परीक्षा दुर्भिक्षे रणे शूरस्य जायते ।
आपत्काले तु मित्रस्याऽशक्तौ स्त्रीणां कुलस्य च ॥६२॥
क्षमायाः संकटे प्राप्ते सत्यस्य तु परोक्षके ।
सुस्नेहस्य महत्कार्ये नाऽन्यथा तत्परीक्षणम् ॥६३॥
व्यर्थं च बहु यो ब्रूते स किं कार्यं करिष्यति ।
सर्वसुरादिसंप्रार्थ्यं कार्यं चैतत्कुरु स्मर ॥६४॥
स्मरः प्राह तदेन्द्रं वै ग्रहीतुं त्वत्पदं यदि ।
तपः करोति कश्चिच्चेत् पातयामि क्षणान्तरे ॥६५॥
स्त्रीकटाक्षैर्भ्रंशयामि क्षणात् देवर्षिदानवान् ।
वज्रं शस्त्रं तथाऽस्त्रं ते दूरेऽस्तु मय्युपस्थिते ॥६६॥
ब्रह्माणं शंकरं विष्णुं पातयेयं क्षणान्तरे ।
अन्येषां गणना नास्ति मद्वशा मायिकाऽऽकृतिः ॥६७॥
पंचैव मृदवो बाणास्ते च पुष्पमया मम ।
चापस्त्रिधा पुष्पमयः शिंजिनी भ्रमरार्जिता ॥६८॥
बलं सुयुवती मेऽस्ति वसन्तः सचिवः सदा ।
अहं पंचबलो देवो मित्रं मम सुधाकरः ॥६९॥
सेनापतिश्च शृंगारो हावभावाश्च सैनिकाः ।
तानि मे मृदुशस्त्राणि मृदुश्चाप्यहमेव वै ॥७०॥
यद्येन पूर्यते कार्यं धीमाँस्तत् तेन साधयेत् ।
मम योग्यं तु यत्कार्यं तत्र मां वै नियोजय ॥७१॥
श्रुत्वा महेन्द्रस्तं प्राह ब्रह्मणाऽभिहितं पुरा ।
तारकाख्यमहादैत्यमरणं शांभवात्सुतात् ॥७२॥
भविष्यतीति शंभोश्च सेवायां पार्वती सती ।
वर्तते च रुचिस्तस्यां यथा शर्वस्य जायते ॥७३॥
तथा कार्यं त्वया कार्यं सर्वं दुःखं विनंक्ष्यति ।
ओमित्युक्त्वा च नत्वा च ययौ स्मरः समण्डलः ॥७४॥
स तु प्राप्याऽकरोत् चिन्तां कार्यस्योपायपूर्विकाम् ।
महात्मानो हि निष्कम्पा मनस्तेषां सुदुर्जयम् ॥७५॥
तदादावेव संक्षुभ्य ततस्तेषां जयो भवेत् ।
क्रोधक्रूरतरासंगाद्भीषणेर्ष्यामहासखी ॥७६॥
चापल्यान्मूर्ध्नि विध्वस्तधैर्याधारमहाबला ।
तामस्य विनियोक्ष्यामि मनसो विकृतिं पुरः ॥७७॥
पिधाय धैर्यद्वाराणि सन्तोषमपकृष्य च ।
कामतृष्णां समुद्भाव्य प्रविशामि ततो हरे ॥७८॥
चिन्तयित्वेति मदनो जगाम हरमन्दिरम् ।
ददर्श शंकरं कामः क्रमप्राप्तान्तिकः शनैः ॥७९॥
मोहकः स मधोश्चादौ धर्मान् विस्तारयन् स्थितः ।
वसन्तस्य तदा धर्मः प्रससार च सर्वतः ॥८०॥
वनानि च प्रफुल्लानि पुष्पाणि चूतशाखिनाम् ।
अशोकानां च कलिकाः विरेजुः सौरभान्विताः ॥८१॥

कैरवाणि च पुष्पाणि भ्रमराकलितानि च ।
बभूवुर्मदनावेशकराणि च विशेषतः ॥८२॥
सुकामोद्दीपनकरं कोकिलाकलकूजितम् ।
आसीदपिसुरम्यं च मनोहरमतिप्रियम् ॥८३॥
कामोद्दीपकराः शब्दा द्विरेफाणां तदाऽभवन् ।
चन्द्रस्य विशदा कान्तिर्विकीर्णाऽभूत्समन्ततः ॥८४॥
कामिनां कामिनीनां च साऽभवत् शीतदीपिका ।
मारुतश्चैनयोर्योगकृत्सुखः संववौ तदा ॥८५॥
एवं वसन्तविस्तारो ह्यभून्मदनबोधकः ।
अचेतसामपि तर्हि कामाशक्तिरभूत् प्रिये ॥८६॥
सचेतसां तु जीवानां लक्ष्मि ! का वर्ण्यते कथा ।
वनौकसां मुनीनां तापसानां दुःसहोऽप्यभूत् ॥८७॥
ततो भ्रमरहुँकारमालम्ब्याऽदृश्यविग्रहः ।
प्रविष्टः कर्णरन्ध्रेण भवस्य मदनो मनः ॥८८॥
शंकरस्तमथाऽऽकर्ण्य मधुरं मदनाश्रयम् ।
सस्मार च सतीं तत्र दयितां रन्तुमानसः ॥८९॥
ततः सा तस्थौ शनकैस्तिरोधायाऽतिनिर्मला ।
विवेश मदनो द्राक् च विकृतिं नीतवाँस्तदा ॥९०॥
ईषत्क्रोधसमाविष्टो धैर्यमालम्ब्य धूर्जटिः ।
निरस्य मदनं योगसामर्थ्येन व्यवस्थितः ॥९१॥
ततः स्मरः प्रजज्वाल निर्गतो हृदयाद् बहिः ।
चूतं बाणं समाकृष्य स्थितस्तद्वामपार्श्वतः ॥९२॥
सहकारतरोर्दृष्ट्वा मन्दमारुतकम्पितम् ।
स्तबकं मदनो रम्यं हरवक्षसि सत्वरम् ॥९३॥
मुमोच मोहनं नाम मार्गणं मकरध्वजः ।
हरस्य हृदये पुष्पबाणः पपात मोहनः ॥९४॥
बभूव विद्धहृदयोऽधैर्यश्च मदनोन्मुखः ।
एवं प्रवृत्तसुरतौ शृंगारोऽपि गणैः सह ॥९५॥
हावभावयुतस्तत्र प्रविवेश हरान्तिकम् ।
हरोऽपि योगविभवादकम्पोऽभून्निजात्मनि ॥९६॥
न दृष्टवान्स्मरच्छिद्रं तदा येन विशत्यपि ।
एतस्मिन्नन्तरे तत्र सखीभ्यां सहिता शिवा ॥९७॥
व्यक्तं शंकरपूजार्थं नीत्वा पुष्पाण्यनेकशः ।
सौन्दर्ययौवनोन्मत्ता शिवा तस्थौ शिवान्तिके ॥९८॥
तदैव शंकरो ध्यानं त्यक्त्वा क्षणमवस्थितः ।
तच्छिद्रं प्राप्य मदनो हर्षणाख्यशरेण तम् ॥९९॥
हर्षयामास शंभुं च दृष्ट्वा च हर्षितं सती ।
शृंगारैर्विविधैर्भावैर्ददौ कामसहायताम् ॥१००॥

तदैव च पुनः कामो रुच्याख्यं प्रैरयच्छरम् ।
रुचिमन्तं हरं दृष्ट्वाऽमुंचत्पुष्पशरं स्मरः ॥१०१॥
तेन वै शंभुना दृष्टा स्त्रीस्वभावात्सुलज्जया ।
विवृण्वती निजांगानि संश्लेषार्थमुपस्थिता ॥१०२॥
पूजानिमित्तमालम्ब्य स्पृष्टौ च चरणौ तया ।
हारार्पणं समालम्ब्य स्पृष्टौ गण्डकपोलकौ ॥१०३॥
ललाटबिन्दुमालम्ब्य स्पृष्टा भालाऽक्षिसुभ्रुवः ।
पुष्पकटकमालम्ब्य स्पृष्टाः करतलादयः ॥१०४॥
पुष्परशनामालम्ब्य स्पृष्टाः कट्यूरुनाभयः ॥
चन्दनद्रवमालम्ब्य स्पृष्टान्यंगानि सर्वशः ॥१०५॥
शिवः स्पर्शैर्महामुग्धो वर्णयामास पार्वतीम् ।
किं मुखं किं शशांकश्च किं नेत्रे चोत्पले च किम् ॥१०६॥
अहो भ्रुकुट्यौ धनुषी कन्दर्पभवनाऽर्हणे ।
अधरः किं च बिम्बं किं किं नासा शुकचञ्चुका ॥१०७॥
किं स्वरः कोकिलालापः किं मध्यं किं च वेदिका ।
किं रूपं किं गतिश्चास्याः किं वस्त्राभूषणार्हता ॥१०८॥
किं लालित्यं च किं सर्वावयवैः रमणीयता ।
अहोऽद्भुताकृतिश्चेयं लावण्यकामनानिधिः ॥१०९॥
मदर्थं निर्मिता चेयं गृह्णाम्येव न संशयः ।
इतिकृत्वा हरस्तस्या अचालयत चाऽम्बरम् ॥११०॥
तावत्कुमारिकाभावाल्लज्जिता दूरतो गता ।
विवृण्वती निजांगानि पश्यन्ती च मुहुर्मुहुः ॥१११॥
सुवीक्षणैर्महामोदात् सुस्मिता तिष्ठति स्म सा ।
शंभुर्विचिन्तयामास दृष्ट्वा भोग्यार्हसुन्दरीम् ॥११२॥
अस्या दर्शनमात्रेण महानन्दो भवत्यहो ।
यदालिंगनमेतस्याः कुर्यां किं किं महत्सुखम् ॥११३॥
विचार्येत्थं समुत्थाय पार्वतीमभिगच्छति ।
तथा तथा तु सा देवी पश्चात्पश्चाद्विसर्पति ॥११४॥
तदा स्वं तद्वशं ज्ञात्वा ज्ञात्वा तां स्वाऽवशां तथा ।
विचारं कृतवान् शंभुः केयं नारीविडम्बना ॥११५॥
ईश्वरोऽहं यदीच्छेयं परांगस्पर्शनं वशी ।
तर्हि कोऽन्योऽक्षमः क्षुद्रः किं किं नैव करिष्यति ॥११६॥
किमु विघ्नाः समुत्पन्नाः कुर्वतस्तप उत्तमम् ।
केन मे विकृतं चित्तं कृतमत्र प्रधर्षिणा ॥११७॥
अस्वस्त्रीधर्षणं धर्मविरोधः श्रुतिलंघनम् ।
न योग्यं तन्मादृशानां कथमीदृक्दशां गतः ॥११८॥
विचार्येत्थं स परितो लोकयामास शंकितः ।
वामभागे स्थितं कामं ददर्शाऽऽकृष्टबाणकम् ॥११९॥

तावच्छंभोर्महाक्रोधः संजातस्तत्क्षणे प्रिये ।
कामोऽप्युड्डीय व्योमस्थश्चिक्षेपाऽमोघमार्गणाम् ॥१२०॥
अमोघमपि मोघं तज्जातं क्रुद्धे महेश्वरे ।
मन्मथो भयमापाऽऽशु चकम्पे भयविह्वलः ॥१२१॥
सस्मार त्रिदशान्सर्पान् तेऽप्यमाययुश्च तुष्टुवुः ।
तथापि च महाक्रोधानलव्याप्तानने सति ॥१२२॥
नेत्रत्रयं च भालं चाऽनियम्याऽनलपूरितम् ।
जातं रौद्रं विकरालं भयंकरं ललाटकम् ॥१२३॥
प्रसह्य वह्निना नेत्रं तृतीयं जाग्रतं कृतम् ।
रुद्रस्य रौद्रवपुषो जगत्संहारभैरवात् ॥१२४॥
ललाटमध्यगान्नेत्रात्तृतीयात्पूर्वेगतः ।
निःससार महावह्निः प्रलयाग्निसमप्रभः ॥१२५॥
जज्वालोर्ध्वशिखो दीप्तो ज्वालाप्रवाहरूपकः ।
यद्दिशं चेक्षते शंभुस्तत्रोत्पत्य निपत्य च ॥१२६॥
भ्रामं भ्रामं यथादृष्टि धावत्यग्रे महानलः ।
एतस्मिन्नन्तरे शंभुर्ददर्श पार्श्वगं स्मरम् ॥१२७॥
मच्चित्तविकृतेः कर्ता कामोऽयमिति तं प्रति ।
भालनेत्रमतिस्फारं व्यस्फारयत शंकरः ॥१२८॥
तदुत्थवह्निना कामं भस्मसात् कृतवान् हरः ।
अभवन्मरुतां वाचः क्षम्यतां क्षम्यतामिति ॥१२९॥
स तु तं भस्मसात् कृत्वा जगद् दग्धुं व्यजृम्भत ।
ततो भवो जगद्धेतोर्व्यभजज्जातवेदसम् ॥१३०॥
सहकारे मधौ चन्द्रे सुमनःस्वपरेष्वपि ।
भृंगेषु कोकिलास्येषु विभागेन स्मरानलम् ॥१३१॥
दग्धे तस्मिन् स्मरे वीरे देवा दुःखमुपागताः ।
ससखी पार्वती म्लाना स्वपितुर्मन्दिरं ययौ ॥१३२॥
पतिता च रतिस्तत्र विसंज्ञाऽभून्मृतेव सा ।
जातायामथ संज्ञायां साक्रोशं विललाप ह ॥१३३॥
किं करोमि क्व गच्छामि किं कृतं दैवतैरिह ।
मत्पतिं ते समाहूय नाशयामासुरीश्वरात् ॥१३४॥
हा हा नाथ स्मर स्वामिन् प्राणप्रिय सुखप्रद ।
इदनु किमभूदत्र हा मे भाग्यं विदारितम् ॥१३५॥
इत्थं विलापिनी हस्तौ पादौ प्रसार्य भूतले ।
केशानत्रोटयत् त्वाघातयन् शश्वत् स्वमस्तकम् ॥१३६॥
तस्या आक्रन्दनं श्रुत्वाऽभवन् सर्वे सुदुःखिताः ।
आगत्य सुविचार्यैव देवा आश्वासनं ददुः ॥१३७॥
किंचिद्भस्म गृहीत्वा संरक्ष यत्नात् भयं त्यज ।
जीवयिष्यति शंभुः सः प्राप्स्यसि त्वं पुनः पतिम् ॥१३८॥

अथ देवाः शिवमूचुः संप्रसाद्य पुनः पुनः ।
कामेनैतत्कृतं तत्र न स्वार्थस्तस्य विद्यते ॥१३९॥
तारकपीडितैर्देवैरखिलैः कारितं तु तत् ।
त्वया कामप्रदाहेन सस्त्रीका निष्फलीकृताः ॥१४०॥
कथं जगत्प्रवाहो निर्वहेदेवं कृते सति ।
रतिमाश्वासय शर्व कुरुशोकापनोदनम् ॥१४१॥
रतिश्चापि तदा शंभुं जगाम शरणं ततः ।
उद्धूल्यगात्रं शुभ्रेण हृद्येन स्मरभस्मना ॥१४२॥
जानुभ्यामवनिं गत्वा प्रोवाच दुःखसागरा ।
नमोऽस्तु शंभवे नाम्ना कर्मणा दुःखदाय च ॥१४३॥
नमस्ते पार्वतीस्मर्त्रे रत्या विलापकारिणे ।
सतीमृगाय नमः कादाचित्कयोगिने नमः ॥१४४॥
नमो मायाद्यधिष्ठाय मायाहीनाय ते नमः ।
नमो ब्रह्मस्वरूपाय कृष्णरूपाय ते नमः ॥१४५॥
नमो वैराजरूपाय सदाशिवाय ते नमः ।
नमः शिवाय रुद्राय लिंगरूपाय ते नमः ॥१४६॥
नमो ज्योतिःस्वरूपाय शतरुद्राय ते नमः ।
नमस्ते कोटिरुद्राय नमः कैलासवासिने ॥१४७॥
नमस्ते द्विस्वरूपाय दुःखविरहिणे नमः ।
सतीनाथाय शान्ताय योगिने ते नमोनमः ॥१४८॥
नमो वृषभरूपाय शरभाय च ते नमः ।
नमः किरातरूपाय विवस्त्राय च ते नमः ॥१४९॥
ब्राह्मणीषु भिक्षुकाय रतिरामाय ते नमः ।
अनंगाय महांगाय जीवनाय च ते नमः ॥१५०॥
नमस्तेऽस्तु सकामाय ध्वस्तकामाय ते नमः ।
नमस्तेऽस्तु शरण्याय भक्तेष्टदाय ते नमः ॥१५१॥
नमोऽस्त्वसह्यकोपाय प्रियाऽऽप्तिदाय ते नमः ।
प्रयच्छ कामद्रव्यं मे कथं जीवे पतिं विना ॥१५२॥
इतिस्तुत्वा पुनस्तत्र विलापं त्वकरोद्रतिः ।
शंभुः प्राह प्रसन्नोऽस्मि जीवयिष्यामि चाऽन्तरे ॥१५३॥
रते मा खेदमाप्नुहि सदा मनसि चेतसि ।
सर्वेषां प्राणिनां कामोऽदृश्यो नित्यं निवत्स्यति ॥१५४॥
वस त्वं प्रमदावर्गेऽनंगो वसतु पुंजने ।
द्वयोर्योगे युवत्योश्च सदायोगोऽस्तु चान्तरः ॥१५५॥
मत्कोपेन च यज्जातं तत्तथा नान्यथा भवेत् ।
अनंगस्तावदेव स्यान्नान्यथा स्याद्रतीशितुः ॥१५६॥
कृष्णस्त्वायद्द्वापरान्ते हिरण्येशो भविष्यति ।
स हिरण्यां प्रद्युम्नाख्यं कामं चोत्पादयिष्यति ॥१५७॥

कामावतारं प्रद्युम्नं शंबरो वै हरिष्यति ।
सः प्रक्षिप्य समुद्रे तं नगरं स्वं गमिष्यति ॥१५८॥
तावत् त्वं शाम्बरपुरे रते! वासं सुखं कुरु ।
तदा तत्र सशरीरः कामस्त्वां सम्मिलिष्यति ॥१५९॥
कामश्च शंबरं हत्वा द्रव्यं नीत्वा त्वया सह ।
गमिष्यति स्वकं नित्यं नगरं सत्यलोकजम् ॥१६०॥
आभूतसंप्लवं तत्र सुखिनौ संभविष्यथः ।
इत्युक्ता शिरसाऽऽवन्द्य शंकरं कामवल्लभा ॥१६१॥
जगामोपवनं चान्यद्रतिस्तुहिनपर्वते ।
रुरोद चापि बहुशो दीना रम्ये स्थले स्थले ॥१६२॥
एवं रतिस्त्वरण्येषु विचचार चिरं समाः ।
ततो गत्वा तु नगरं शम्बरासुरपालितम् ॥१६३॥
दासी भूत्वा समुवास पतिजन्मेहया सदा ।
प्रतीक्षमाणा तं कालं रुद्रादिष्टं युगात्मकम् ॥१६४॥
अथ क्रोधमयं वह्निं दग्धुकामं जगत्त्रयम् ।
तं वाडवतनुं ब्रह्मा सौम्यज्वालामुखं प्रिये ॥१६५॥
सागरं समगाल्लोकहितायाऽऽदाय वाडवम् ।
प्राह क्षारार्णवं ब्रह्मा निर्दिशामि गृहाण तत् ॥१६६॥
अयं क्रोधो महेशस्य वाडवं रूपमाश्रितः ।
ज्वालामुखस्त्वया धार्यो यावदाभूतसम्प्लवम् ॥१६७॥
भोजनं तोयमेतस्य तव नित्यं भविष्यति ।
इत्युक्तः सागरो वह्निमंगीचक्रे तु वाडवम् ॥१६८॥
ततः प्रविष्टो जलधौ स वाडवतनुः शुचिः ।
वार्यौघान्सुदहंस्तस्य ज्वालामालातिदीपितः ॥१६९॥
तत्पीतमिष्टसलिला मेघा वर्षन्ति भूतले ।
स्वास्थ्यं प्राप जगत्सर्वं निर्मुक्तं वाडवाद्भयात् ॥१७०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने गंगावतारे शंभोस्तपः, पार्वत्याः सेवा, इन्द्रप्रेषितकाम-कृतबाणप्रयोगः, तृतीयनेत्रवह्निना कामदाहः, रति-विलापः, अनंगस्य प्रद्युम्नात्मकभाविसदेहस्य वरदानम्, रतेः शम्बरगृहे वासः, क्रोधा-ग्निरूपवडवानलस्य समुद्रे वास इत्यादिनिरूपणनामा पंचाशीत्यधिक शततमोऽध्यायः ॥१८५॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि महादेवो कामं दग्ध्वा स्वमालयम् ।
कैलासमगमत्पश्चात्पार्वती खिन्नमानसा ॥ १ ॥
पितुर्गृहं ततो गत्वा मिलित्वा मातरं स्वयम् ।
पुनर्जातं तदा मेने स्वात्मानं विकला भृशम् ॥ २ ॥
निनिन्द च स्वरूपं सा लेभे शर्म न कुत्रचित् ।
स्वापे पाने क्रमे स्नाने याने विहरणे शिवा ॥ ३ ॥
गमने च सखीमध्ये न किंचित्सुखमाप वै ।
धिक्स्वरूपं मदीयं च तथा जन्म च कर्म च ॥ ४ ॥
शुशोचाति शिवा नित्यं मुमोह च मुहुर्मुहुः ।
सुखं न लेभे किंचिद्वाऽब्रवीच्छिवशिवेति च ॥ ५ ॥
अथापि जातनैष्फल्ये महेन्द्रेण तु नारदः ।
स्मारितो देवकार्यार्थे जगामेन्द्रं तदा च सः ॥ ६ ॥
प्रेषयामास शैलेन्द्रं नारदं देवराट् तदा ।
नारदश्चागतः शैलं जग्राह पूजनादिकम् ॥ ७ ॥
शुश्राव कामदहनं पार्वतीदुःखमित्यपि ।
श्रुत्वोवाच तदा कालीं नारदो दुःखभंजनः ॥ ८ ॥
शृणु कालि सेवितः सः त्वयेह तपसा विना ।
विरक्तश्च स ते स्वामी स्मरं दग्ध्वा विसृष्टवान् ॥ ९ ॥
त्वामतः सुतपोयुक्ता चिरमाराधयेश्वरम् ।
सोपि तपति सत्यर्थे द्वयोर्योगो भविष्यति ॥१०॥
न सिद्ध्यति क्रिया कापि सद्गुरोर्हि कृपां विना ।
'शिवाय नम'इति मन्त्रं ददामि जप सर्वदा ॥११॥
श्रवणात् मन्त्रराजस्य शंकरः सुप्रसीदति ।
अनेनाराधितः शंभुः प्रत्यक्षः संभविष्यति ॥१२॥
चिन्तयमाना तद्रूपं जप मन्त्रं तपः कुरु ।
तपस्यैव फलं सर्वैः प्राप्यते नान्यथा क्वचित् ॥१३॥
एवमाज्ञाप्य देवर्षिर्निर्जगाम स्थलान्तरम् ।
सती सख्यौ समादाय जयां च विजयां तथा ॥१४॥
अप्रच्छयत् सखीभ्यां सा मातरं पितरं तदा ।
हिमाद्रे! तव पुत्रीयं देहस्य च कुलस्य च ॥१५॥
तपःसाध्यं हरं प्राप्य साफल्यं कर्तुमिच्छति ।
देवाऽऽज्ञा गिरिजा गत्वा वनं करोतु सत्तपः ॥१६॥
शैलः प्राह रोचते मे मेनाया रोचतां पुनः ।
गत्वाऽथ मेनकां नत्वोचतुर्देवि! नमोऽस्तु ते ॥१७॥
शिवार्थं तपकामेयं प्राप्ताऽनुज्ञा पितुस्ततः ।
त्वदाज्ञा यदि लभ्येत मातस्ते परिपृच्छति ॥१८॥
नांगीचकार मेना सा किं त्वभूत् खिन्नमानसा ।
ततः प्राह करौ बध्वा पार्वती स्वीयमातरम् ॥१९॥
दुर्भगेन शरीरेण को लाभो मे पतिं विना ।
कथं लभ्येत शंभुः सः सुखदो मे पतिः सदा ॥२०॥

तपोभिः प्राप्यतेऽभीष्टं नाऽसाध्यं तु तपस्यतः ।
दुर्भगत्वं वृथा लोको वहते सति साधने ॥२१॥
मातस्तप्तुं गमिष्यामि प्रातः प्राप्तुं महेश्वरम् ।
अनुजानीहि मां गन्तुं तपसेऽद्य तपोवनम् ॥२२॥
मेना प्राह शिवे पूर्वतपसाऽऽप्तवती च किम् ।
प्रत्युत दुःखिता भूत्वा लब्धं जन्मात्र मद्गृहे ॥२३॥
तपश्चर गृहेऽद्य त्वं न बहिर्गच्छ पार्वति ! ।
सर्वे देवाश्च तीर्थानि वसन्त्यस्मद्गृहे सदा ॥२४॥
कर्तव्यो न हठः पुत्रि गन्तव्यं न बहिः क्वचित् ।
शरीरं कोमलं तेऽस्ति तपस्तु कठिनं महत् ॥२५॥
मा गन्तव्यं मम पुत्रि स्त्रीणां तदुचितं नहि ।
इतिमात्रा निषिद्धा सा उमानाम्नाऽभवत्ततः ॥२६॥
साधयामि पतिं शंभुं पातयामि तु वर्ष्म वा ।
देह्याज्ञां तपसे मह्यं नो चेन्नास्तीह पार्वती ॥२७॥
इत्याग्रहं परं दृष्ट्वा निदेशं सा ददौ ततः ।
मातरं पितरं नत्वा सखीभ्यां सह निर्ययौ ॥२८॥
हित्वा भोग्यानि सर्वाणि वस्त्राणि विविधानि च ।
धृत्वा च वल्कलान्याशु मौञ्जीं बध्वा च मेखलाम् ॥२९॥
हित्वा हारं तथा चर्म धृत्वा मृगस्य शोभनम् ।
शैलजा प्रययौ प्रस्थं गंगावतरणं प्रति ॥३०॥
यत्र स्थित्वा पुरा शंभुः सत्यर्थे तप्तवाँस्तपः ।
हरशून्यं च तं प्रस्थं विलोक्य हिमभूभृतः ॥३१॥
हा हरेति क्षणं तत्र स्मृत्वाऽभूत् शोकसंप्लुता ।
गौरीशिखरमेवैतत् शिखरं ख्यातिमाप्तवत् ॥३२॥
पुण्यं गंगावतरणं नानाधातुविभूषितम् ।
दिव्यपुष्पलताव्याप्तं द्विरेफस्वनितद्रुमम् ॥३३॥
शीतनिर्झरणं दिव्यं पशुपक्षिसमाश्रितम् ।
जलजस्थलजाब्जैस्तत् प्रफुल्लितैः सुगन्धितम् ॥३४॥
गभीरकन्दरागर्भं दिव्यवासाऽऽलयान्वितम् ।
कल्पद्रुमलतावल्लीतृणशाखिहरित्प्रभम् ॥३५॥
सर्वर्तुपुष्पकलिकाफलकिंजल्कसमृद्धम् ।
नियमायाऽभवत् तत्र दीक्षिता पार्वती सती ॥३६॥
तया श्रेष्ठा द्रुमास्तत्राऽऽरोपिता वर्धिता जलैः ।
भुवं संस्कृत्य वेदीं च स्वयं निर्माय पार्वती ॥३७॥
त्रिःस्नाता प्रारभत् शुष्कपत्राहारा महत्तपः ।
निगृह्य मनसा सर्वाणीन्द्रियाणि सहाऽऽन्तरे ॥३८॥
संस्थिता वृत्तिमाकृष्य स्वात्मन्येव शिवात्मनि ।
ग्रीष्मे च परितो वह्निं प्रज्वलन्तं दिवानिशम् ॥३९॥
कृत्वा तस्थौ च तन्मध्ये पंचाग्निमतपत्तपः ।
पंचाक्षरं सदा मन्त्रं जपमानाऽन्तरे हरम् ॥४०॥
वर्षासु वृष्टिधारायां शिलासु सुस्थिरासना ।
शीते शश्वज्जलमध्ये तस्थौ शिवाग्नितत्परा ॥४१॥
झंझावातातितापेषु नीहारेषु निशासु च ।
दध्यौ तपः प्रकुर्वाणा शिवं भाविपतिं हृदि ॥४२॥
प्रथमं फलभोगेन द्वितीयं पर्णभोजनैः ।
तृतीयं चैकपर्णेन सहस्रं यापितं तया ॥४३॥
ततः पर्णान्यपि त्यक्त्वा अपर्णा तपसि स्थिता ।
एकपादस्थिता वाय्वाहारा संस्मृत्य शंकरम् ॥४४॥
त्रीणि वर्षसहस्राणि जग्मुः काल्यास्तपोवने ।
षष्टिवर्षसहस्राणि यत्र तेपे तपो हरः ॥४५॥
दुःखं च त्रिविधं सत्या गणितं नाऽगतं गतम् ।
हरस्थले क्षणं स्थित्वा चिन्तयामास सा सती ॥४६॥
नियमस्थां महादेव किं मां जानासि नाऽधुना ।
यदि सर्वस्वानुरक्ता तर्हि प्रसीद मे पते ! ॥४७॥
यदि भक्त्या कृतो मन्त्रस्तर्हि प्रसीद मे पते ।
यदि तवाऽस्मि जानासि तर्हि प्रसीद मे पते ॥४८॥
यदि ग्राह्यास्मि ते नाथ तर्हि प्रसीद मे पते ।
प्रत्यहं चेति संप्रार्थ्य तिष्ठति तपसे सती ॥४९॥
पार्वतीतपसस्तत्र प्रभावेण निसर्गजाः ।
विरोधिनः प्राणिनोऽपि नाऽबाधन्त परस्परम् ॥५०॥
वृक्षाश्च सफलास्तत्र तृणानि शाद्वलानि च ।
पुष्पाणि च विचित्राणि पत्राणि कोमलानि च ॥५१॥
सदाऽजायन्त इत्येवं वनं कैलाससन्निभम् ।
जातं तस्यास्तपोयोगात् सिद्धिरूपं सदाऽभवत् ॥५२॥
एवं तपन्त्यां पार्वत्यां वर्षपंचसहस्रकम् ।
व्यतीयाय तदा शैलः समागत्य जगाद ताम् ॥५३॥
येन भस्मीकृतः कामो विहाय त्वां सुसेविकाम् ।
गतः क्रुद्धो हरः पुत्रि नागमिष्यति निर्गुणः ॥५४॥
वृथा मोहं गता पुत्रि त्वां न प्रार्थयति प्रभुः ।
तस्मादुत्तिष्ठ चैहि त्वं स्वगृहं पार्वति द्रुतम् ॥५५॥
एवमेव कथिता सा मेनया मेरुणा तथा ।
सह्येन मन्दरेणापि मैनाकक्रौंचभूधरैः ॥५६॥
भ्रातृभिः स्वसृभिश्चान्यैस्तथापि नाऽत्यजत्तपः ।
साधयामि हरं यद्वा पातयामि निजं वपुः ॥५७॥
एकाऽस्त्येव प्रतिज्ञा मे कथं नायास्यति प्रभुः ।
भद्रं तेन स्मरो दग्धस्त्यक्त्वा मां निर्गुणो गतः ॥५८॥

यदि भक्तास्मि तस्याहं समानेष्ये तपोबलात् ।
सर्वे भवन्तो गच्छन्तु नाहं चायामि तद्गृहम् ॥५९॥
नीत्वैव स्वामिनं शंभुमागमिष्यामि तद्गृहम् ।
इत्युक्त्वा गिरिजा तूर्ष्णीं बभूव प्रियभाषिणी ॥६०॥
ज्ञात्वा दार्ढ्यं महासत्या जग्मुः सर्वेनिजालयान् ।
शंशमानाः संददाना आशीर्वादान्सुविस्मिताः ॥६१॥
सती सखीभिः सहिता घोरं तपश्चकार सा ।
तेन तप्तमभूत्सर्वं त्रैलोक्यं सचराचरम् ॥६२॥
तदा सुराऽसुराः सिद्धा यक्षकिन्नरचारणाः ।
गुह्यका मुनयः साध्या विद्याधरमहोरगाः ॥६३॥
असुरा मानवाः प्रजापतयो लोकपास्तथा ।
औष्ण्यं कष्टतमं प्राप्ताः कारणं न विदुश्च ते ॥६४॥
ततो गत्वा वेधसं पप्रच्छुस्तापस्य कारणम् ।
ब्रह्मापि पार्वतीतपोजन्यं विज्ञाय तापनम् ॥६५॥
हरये तत्कथयितुं ययौ देवगणान्वितः ।
क्षीराब्धौ विलसन्तं तं सुसंस्तूय प्रणम्य च ॥६६॥
प्रोवाच प्रांजलिस्त्राहि त्राहि नः शरणागतान् ।
सतीतापेन तप्ताः स्म कुरु शान्तिं जगद्गुरो ॥६७॥
श्रुत्वा प्राह हरिः सर्वान् गच्छामः शंकरं प्रति ।
प्रार्थयामः सतीपाणिग्रहणाय ततः सुखम् ॥६८॥
इति संहृत्य देवाद्या जग्मुर्द्रष्टुं सतीतपः ।
प्रणेमुस्तां जगद्धात्रीं ततो जग्मुर्हरं प्रति ॥६९॥
ददृशुः सुखमासीनं प्रसन्नं भक्तवत्सलम् ।
योगपट्टस्थितं नत्वा तुष्टुवुः शंकरं च ते ॥७०॥
नमोऽस्तु तापनाशाय शान्तिदाय नमोनमः ।
पार्वतीतपसां सम्यक् फलदात्रे नमोनमः ॥७१॥
यदि त्वं रागहीनः सन्पार्वतीं न ग्रहीष्यसि ।
तर्हि सा तपसा सर्वं धक्ष्यत्येतच्चराचरम् ॥७२॥
किंच पाणिग्रहे तस्या देवकार्यं भविष्यति ।
तस्मात्तस्यै वचो दत्वा तपोरोधं कुरु द्रुतम् ॥७३॥
श्रुत्वा प्राह च तान् शंभुः महत्कार्यं कृतं मया ।
कामो दग्धश्च निष्कामास्तिष्ठन्तु ब्रह्मचारिणः ॥७४॥
परमानन्दसंयुक्ता निर्विकारा भवन्तु वै ।
सतीग्रहे सती कामं जीवयिष्यति सा पुनः ॥७५॥
कामात्स्युः क्रोधसम्मोहस्मृतिभ्रंशादयस्तथा ।
दुःखदास्तापदाः सर्वे तांस्त्यजन्तु सदा सुराः ॥७६॥
महानिगडसंज्ञास्ति नारी यदि विवाहिता ।
कुसंगा बहवः सन्ति स्त्रीसंगोऽस्ति ततोऽधिकः ॥७७॥
मुच्यते सकलैर्बन्धैर्न स्त्रीबन्धात्प्रमुच्यते ।
स्त्रीयोगात्कामनाभावा वर्धन्ते योगिनोऽपि वै ॥७८॥
यदीच्छेद्ब्रह्मनिर्वाणं स्त्रीपाशं दूरतस्त्यजेत् ।
पुरुषस्य कृते नारी सितालिप्तेन्द्रवारुणी ॥७९॥
नार्याः कृते पुमाँश्चापि सितालिप्तेन्द्रवारुणम् ।
परस्परं विषं बोध्यं तथापि भवतां वचः ॥८०॥
पालयिष्यामि देवानां विपत्तिहरणाय तत् ।
यूयं स्वस्वालयं यात निर्भयास्तिष्ठताऽनिशम् ॥८१॥
गमिष्यामि सतीतपःप्रशान्त्यर्थं हिताय च ।
श्रुत्वा नत्वा सुराः सर्वे ययुः स्वं स्वं गृहं तदा ॥८२॥
वशिष्ठादीन्मुनीन्सप्त ततः सस्मार शंकरः ।
प्रसन्नवदनाः सप्त मुनयः शीघ्रमाययुः ॥८३॥
नत्वा ह्युपाविशन् सर्वे सत्कृताः शंभुना बहु ।
उक्ताश्च पार्वती तपश्चरत्यखण्डमानसा ॥८४॥
सर्वान् कामान् विहायैव मां पतिं प्राप्तुलालसा ।
तत्र गच्छत कुरुत प्रेमदार्ढ्यपरीक्षणम् ॥८५॥
इत्याज्ञप्ता ययुः सर्वे यत्र तपति सा सती ।
नत्वा शैलसुतां प्राहुः किमर्थं तप्यते तपः ॥८६॥
वद देवि यथेष्टं ते करिष्यामो यथातथम् ।
सती नत्वा ऋषीन् प्रोचे नारदोक्तविधानतः ॥८७॥
रुद्रो मे स्यात्पतिश्चेति निर्णीय तपसि स्थिता ।
तदाशां शंकरस्वामी पिपर्तु भक्तवत्सलः ॥८८॥
श्रुत्वा विहस्य ऋषयः प्रोचुः छलवचो मृषा ।
कलिप्रियः क्लेशकर्ता विश्वस्तो नारदः कथम् ॥८९॥
सर्वथा कूटभावी सः क्लेशे जननियोजकः ।
जानासि दक्षपुत्रांस्तु तेन ते परिव्राजिताः ॥९०॥
जानासि चित्रकेतुं स राज्यमत्याजयत्खलः ।
वेत्सि हिरण्यकशिपोः प्रह्लादं स व्यभेदयत् ॥९१॥
नारदस्य खलविद्या यत्कर्णे पतिता मनाक् ।
स स्वगेहं विहायाऽऽशु दुःखी भवति त्वं यथा ॥९२॥
नारदो मलिनात्माऽस्ति बहिरुज्ज्वलदेहवान् ।
जानीमस्तं विशेषेण वयं तत्सहवासिनः ॥९३॥
बकं साधुं वर्णयन्ति न मत्स्यानत्ति सर्वथा ।
सहवासी विजानीयाच्चरित्रं सहवासिनः ॥९४॥
अपि त्वं तस्य वाण्यां वै विश्वस्य तपसि स्थिता ।
वंचिताऽसि महादेवि ! याहि गेहं तपस्त्यज ॥९५॥
यदर्थं दुःखमाप्नोषि स तु त्वयि विरागवान् ।
सदोदासी च निर्लज्जोऽमंगलोऽसदनोऽकुली ॥९६॥

भूतप्रेतपिशाचाभिजनो नग्नः कुवेषधृक्।
तेन शूलभृता धूर्तमूर्धन्येनाऽसि वंचिता ॥९७॥
वरं दत्वा गतः पञ्चवर्षसहस्रके पुनः।
नायाति कीदृशः स्नेही तवकेवलवंचकः ॥९८॥
विचारं कुरु देवेशि प्रथमं दक्षजां सतीम्।
विवाह्य पालनं नैव कृतवान् किं करिष्यति ॥९९॥
स एवास्ति तथाक्रोधी निर्वाहं न करिष्यति।
त्वामेव तु पुनर्दोषं दत्वा त्यक्ष्यति वंचकः ॥१००॥
यस्य हृदि कृपा नास्ति कुमारीं नहि पश्यति।
सुखदं दग्धवान् कामं कथं तेन जीविष्यसि ॥१०१॥
अस्मद्वाक्यं तु सम्मान्य गृहं याहि कुमारिके।
अव्यवस्थितचित्तस्य प्रसादेहा खपुष्पवत् ॥१०२॥
त्वादृशी सुन्दरी विष्णुगृहे शोभेत सर्वथा।
त्वयि सर्वे गुणाः सन्ति विष्णौ सन्ति महागुणाः ॥१०३॥
गृहं तस्य महत् स्मृद्धं दिव्यं वैकुण्ठमुत्तमम्।
दासदासीकोटिजुष्टं विमानोद्यानशोभितम् ॥१०४॥
तं लक्ष्मीशं रमेशं वा राधेशं भज सुन्दरि।
तेन ते कारयिष्यामो विवाहं त्यज शंकरम् ॥१०५॥
वर्षे चतुर्दशे कन्याविवाहो योग्य उच्यते।
त्वया तत्र योग्यकाले कृता सेवा तथाऽर्थितः ॥१०६॥
तथापि स्वरतायास्ते पाणिं जग्राह नैव सः।
पंचवर्षसहस्राणि व्यतीतानि तदुत्तरम् ॥१०७॥
तथापि नैव गृह्णाति स मूर्खस्त्वं ततोऽधिका।
तस्मात् हठं परित्यज्य सुखिता विष्णुना भव ॥१०८॥
न स्यात् तृप्तिस्तृषितानां मरुमरिचिकाजलात्।
द्विविधं तु सुखं पुत्रि लोके भवति देहिनाम् ॥१०९॥
देहस्य देहसंयोगश्चेतसि निर्वृतिः परा।
देहं यथा कुमार्या वै कोमलं सुरूपं शुभम् ॥११०॥
तथा देहः कुमारस्य भवेत् चेत् देहजं सुखम्।
स्यादेव पतिपत्न्योश्च नाऽन्यथा देहजं सुखम् ॥१११॥
प्रकृत्या स तु दिग्वासा भीमो भस्मास्थिभूषणः।
कपाली भिक्षुको नग्नो विरूपाक्षोऽस्थिरक्रियः ॥११२॥
प्रमत्तोन्मत्तताकारो बीभत्सकृतसग्रहः।
मूर्तिमान् साऽयमनर्थो भूतावलिसभाजितः ॥११३॥
स्ववन्नरवसाऽस्थिधृक् सर्पफुत्कारभीषणः।
श्मशानस्थः श्वपचवत् कथमिष्टः सुते तव ॥११४॥
हरिरस्ति जगद्धाता यज्ञभुक् पाकशासनः।
देवोधिदेवो ज्वलनो वायुः प्राणश्च देहिनाम् ॥११५॥
कुबेरश्चन्द्रमाः सूर्यो वरुणश्चापरे सुराः।
कामभुजः कामरूपाः कामस्मृद्धय एव ते ॥११६॥
एभ्य एकतमं कस्मात्त्वं न संप्राप्तुमिच्छसि।
शिवस्य प्राप्तये क्लेशः स चापि निष्फलस्तरुः ॥११७॥
तस्मादागच्छ पुत्रि त्वं गृहे स्थित्वा सुखी भव।
अन्यं वरय कल्याणि कृतं क्वापि फलिष्यति ॥११८॥
इत्यादि विस्तरं श्रुत्वा विहस्योवाच पार्वती।
यथाज्ञानं भवदुक्तं मन्ये यद्यपि युक्तिमत् ॥११९॥
निर्बलाया अश्रद्धाया अदृढायाः कृते हि तत्।
अहं जात्या शैलपुत्री कठिना सबला दृढा ॥१२०॥
स्थिराऽप्रधृष्या हठिनी मिलेद्वा न मिलेत् हरः।
न त्यजामि तपः सौम्यं यदस्माकं निसर्गजम् ॥१२१॥
मिलिष्यति वरिष्ये तं नोचेत् स्थास्ये निरीन्धना।
दुखं तपो वनं रौक्ष्यं शैलजातेर्निसर्गजम् ॥१२२॥
यथेष्टं तद्धि मे सर्वं मां निषेद्धुं न चार्हथ।
नारदस्य वचः पथ्यं जात्यनुकूलमेव मे ॥१२३॥
सम्पत्स्यते ध्रुवं शैलवासिनी वनवासिना।
गुरूणां वचने निष्ठा येषां तेषां जयः सदा ॥१२४॥
अनिष्टानामिहाऽमुत्र दुःखमेव न शं क्वचित्।
विश्व कस्य तनुर्व्योम कस्याऽग्निः कस्य मारुतः ॥१२५॥
कस्येन्द्रः कस्य वरुणः कस्य नेत्रेऽर्कचन्द्रकौ।
यथोन्मादादिदुष्टानां मतिरेव हि सा भवेत् ॥१२६॥
इष्टानेव पदार्थान्वै विपरीतान् हि मन्वते।
विपरीतान् यथा स्वल्पान् क्षुद्रान् श्रेष्ठाँस्तु मन्वते ॥१२७॥
गृहे वसामि शून्ये वा नोपयामि तदन्यकम्।
गुणालयो विहारी सुस्मृद्धो विष्णुः सदास्ति यत् ॥१२८॥
स लौकिकीं प्रभुतां वै सन्दर्शयति मानवान्।
शंभुस्तु निर्गुणो निर्विकारो मानादिवर्जितः ॥१२९॥
अवधूतः परो हंसः परानन्दः परः प्रभुः।
भूषणादिरुचिर्मायालितानां ब्रह्मणो न च ॥१३०॥
चेत् शिवः स हि मे विप्रा विवाहं न करिष्यति।
अविवाहाऽवधूतानि सदाऽहं स्यां शिवाण्यपि ॥१३१॥
नाऽहं तृष्णावती कामे न कामार्थं तपाम्यहम्।
यूयं यदर्थं तपथ तदर्थं तु तपाम्यहम् ॥१३२॥
यदि मे स करं शर्वो ग्रहीष्यति सुखं द्वयम्।
न ग्रहीष्यति चेत्पाणिं सुखं साध्यास्ततोधिकम् ॥१३३॥
इदानीं साध्यते शुभ्रं साधयिष्येऽधिकं ततः।
मिलेद्वा न मिलेदत्र मोक्षेऽवश्यं मिलिष्यति ॥१३४॥

यत् करोमि विचार्यैव न हानिर्लाभ एव वा ।
कस्मादन्यं पतिं कांक्ष्ये नाऽस्ति कामे स्पृहा हि मे ॥१३५॥
याचे क्षमां त्वधिकोक्तेर्गृह्णन्तु सत्क्रियां मम ।
योजयन्तु शुभाशीर्भिर्हंसा हंसं मिलेद् यथा ॥१३६॥
भवतामाशीर्वचनैर्मार्कण्डेयश्चिरंभवः ।
भवत्कृपया श्वपची जाताऽरुन्धती प्वर्षिणी ॥१३७॥
भवतां कृपया विश्वामित्रो ब्रह्मर्षितां गतः ।
तथा युष्मत्कृपालेशाच्छैली शर्वाणिका भवेत् ॥१३८॥
इत्युक्त्वा तान् प्रणम्याथ प्रपूज्य दिव्यवस्तुभिः ।
विरराम शिवं स्मृत्वाऽनपायिशैवधर्मिणी ॥१३९॥
ऋषयोऽपि शुभं भूयादस्तु पूर्णो मनोरथः ।
तपःफलं द्रुतं भूयाद्भूयाच्छंभुसमागमः ॥१४०॥
विवाहस्त्वरितो भूयाद्भूयादस्मत्प्रपूजनम् ।
जनवाह्या वयं स्यामो भूयात्सर्वे सुमंगलम् ॥१४१॥
इत्याशीर्भिः शिवां सम्यक् वर्धयित्वा ययुर्हरम् ।
प्रसन्ना देवकार्यार्थे सदाशाः सम्परीक्षकाः ॥१४२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पार्वत्याः शोको नारदोपदेशस्तपोनिषेधस्तथापि गौरीशृंगे पंचसहस्रवर्षाणि तपः, शैलर्षिभिर्निषिद्धेऽपि तपसि स्थितागौरी सप्तर्षिभिः परीक्षिताऽऽशीर्भिर्योजिता चेत्यादिनिरूपणनामा षडशीत्यधिकशततमोऽध्यायः ॥१८६॥

**श्रीनारायण उवाच—**

ऋषयः प्राहुरव्यग्रा देवेशं शंकरं प्रिये ।
पार्वती शंकरार्थे वै प्राणग्लहं विधाय च ॥ १ ॥
निर्भीका च निरालम्बा निराशा निष्परिग्रहा ।
निर्गुणा च निरीहा च तपत्याभूतसंप्लवम् ॥ २ ॥
मिलेद्वा न मिलेच्छंभुस्तपः शैलनिसर्गजम् ।
मिलेत् स्यादुभयं सौख्यं न मिलेन्मोक्षजं ततः ॥ ३ ॥
सुखं भवत्यधिकं वै तपो नास्ति निरर्थकम् ।
साधयामि शिवं यद्वा पातयामि शरीरकम् ॥ ४ ॥
शंभुमुद्वाहयिष्ये वा स्थास्ये कुमारिका सदा ।
नेष्ये च ब्रह्मचर्यात्वं ग्रहीष्यामि प्रव्रज्यिकाम् ॥ ५ ॥
मरिष्यामि नैष्ठिकत्वे यास्यामि ब्रह्मशंकरम् ।
इति वै निर्णयं कृत्वा तपः करोति सा सती ॥ ६ ॥
अथाऽत्र यद्विधेयं स्यात्कर्तव्यमीश्वरेण वै ।
इति निवेद्य वृत्तान्तं प्राप्याऽऽज्ञां स्वगृहं ययुः ॥ ७ ॥
शंकरस्तु तपो देव्या ऐच्छन् परीक्षितुं तदा ।
परीक्षाकामुको रूपं धृत्वा जाटिलमुत्तमम् ॥ ८ ॥
स्थविरो विप्रचिह्नाढ्यो दण्डच्छत्रान्वितो द्विजः ।
भूत्वा ययौ तु तच्छृगं प्रज्वलँस्तेजसाऽभितः ॥ ९ ॥
मृगाजीनधरं मुञ्जमेखलं सकमण्डलुम् ।
सोपवीतं महावृद्धं सजरं भस्मविग्रहम् ॥१०॥
प्रत्याश्रमं पर्यटन्तं काल्याश्रममुपागतम् ।
दृष्ट्वाऽऽयान्तं भिक्षुकं सा समुत्थाय ननाम च ॥११॥
उपकण्ठं ययौ प्रीत्या पादयोरपतत् सती ।
अपूजयत्तथा सर्वातीथ्यसत्कारवस्तुभिः ॥१२॥
ब्रह्मचारिस्वरूपं तं पप्रच्छ कुशलं सती ।
कस्मादागम्यते विप्र कुत्र स्थाने तवाऽऽश्रमः ॥१३॥
कां दिशं परिगन्ताऽसि विश्रामं कुरु चात्र वै ।
भिक्षुरुवाच तीर्थेभ्य आगच्छाम्यत्र तापसि ॥१४॥
वाराणस्यां निवासो मे यास्ये पृथूदकस्थलम् ।
मया स्नातं प्रयागे च कुब्जाम्रे चण्डिकेश्वरे ॥१५॥
बन्धुवृन्दे कुरुक्षेत्रे हरिद्वारे कनकखले ।
केदारे बदरीकुण्डे ततोऽभ्यागां तवाश्रमम् ॥१६॥
अत्र तीर्थविधिं कृत्वा गमिष्यामि पृथूदकम् ।
अहमिच्छाभिगामी च तपस्व्यन्यसुखप्रदः ॥१७॥
निष्कामयात्राकुशलस्तपस्विदुःखभंजनः ।
निर्द्वन्द्वोऽस्मि मुमुक्षुश्च देवानां पूजकोऽस्मि च ॥१८॥
वृद्धोऽहं तपसाऽऽत्मानं शोषयामि यथोचितम् ।
पृच्छामि यदहं त्वां वै तत्र मे वक्तुमर्हसि ॥१९॥
किमर्थं भवती रौद्रं प्रथमाश्रमसंस्थिता ।
तपः करोषि कल्याणि दुःखानुभवकारिणि ॥२०॥
का त्वं कस्याऽसि तनया किमर्थं विजने वने ।
तपश्चरसि दुर्धर्षं मुनिभिश्चापि दुष्करम् ॥२१॥
न बाला न च वृद्धाऽसि तरुणी भासि शोभना ।
प्रौढा पतिं विना कस्मात् तीक्ष्णं करोषि वै तपः ॥२२॥
मध्यमे वयसि स्त्रीणां सह भर्त्रा विलासिता ।
सुभोगाऽऽयोजिताः काला व्रजन्ति स्थिरयौवने ॥२३॥
किं त्वं तपस्विनो भद्रा कस्यचित्सहचारिणी ।
तपस्वी स न पुष्णाति देवि ! त्वां स गतोऽन्यतः ॥२४॥
वद कस्य कुले जाता कः पिता तव का विधा ।
महासौभाग्यपात्रं त्वं कथं तेऽस्ति तपोरतिः ॥२५॥

किं त्वं वेदप्रसूर्लक्ष्मीः किं रमा किं सरस्वती ।
मन्ये रूपजनैश्वर्यसमृद्धिमती भवत्यपि ॥२६॥
तत्किमर्थमपास्यैतानलंकारान् जटा धृताः ।
चीनांशुकं परित्यज्य कथं वै वल्कलं धृतम् ॥२७॥
कस्य किमर्थं का चेति योग्योऽस्मि विनिवेदय ।
श्रुत्वैवं प्राह विप्रेन्द्रं पार्वती हिमवत्सुता ॥२८॥
शंकरार्थं तपः कुर्वे पतिं विन्दामि शंकरम् ।
पुरा दक्षसुता योगमयी त्वासं सती ततः ॥२९॥
दग्धदेहा शैलपुत्री जाताऽस्म्यद्य कुमारिका ।
तपस्यतश्चात्र शंभोः सेवायां संस्थिताऽभवम् ॥३०॥
मां त्यक्त्वा भस्मसात्कृत्वा मन्मथं स जगाम ह ।
अहं तु तपसे चाऽत्राऽऽयाताऽप्यप्राप्य शंकरम् ॥३१॥
तपोऽन्तेऽग्नौ विविक्षन्ती त्वां दृष्ट्वा संस्थिता क्षणम् ।
गच्छ त्वं प्रविशाम्यग्नौ जन्मान्तरे शिवार्थिनी ॥३२॥
इत्युक्त्वा पार्वती वह्नौ तत्पुरः प्रविवेश हि ।
बभूव तत्क्षणे वह्निः शीतश्चन्दनपंकवत् ॥३३॥
अथ क्षणान्तरे वह्नेरुत्थाय व्योमवर्त्मना ।
समुत्पतन्तीमाकाशं पप्रच्छ विहसन् द्विजः ॥३४॥
अहो तवातितपसः प्रतापो वर्तते महान् ।
यद्बलादनलोऽपि त्वां न ददाह सुशीतलः ॥३५॥
वद देवि यथासत्यं करिष्ये ते मनोरथम् ।
कमिच्छसि वरं सुभ्रु मा गोप्यं वै मनागपि ॥३६॥
त्वयि सर्वं तु सामर्थ्यं चाऽस्ति किं तपसा तव ।
रत्नं हस्ते प्रसंप्राप्य व्यर्थं काचं किमिच्छसि ॥३७॥
ईदृशं रूपसौन्दर्यं कथं व्यर्थं प्रयापितम् ।
हित्वा भूषाम्बरपुष्पद्रव्याणि वल्कलं धृतम् ॥३८॥
गृहं त्यक्त्वा वनं लब्धं वासाय दुःखदं सदा ।
वद देवि सुखं स्यान्मे करिष्ये तु हितं तव ॥३९॥
श्रुत्वैतद्द्विजयां वक्तुं सखीं प्रैरयताऽम्बिका ।
विजयाऽऽह वृद्धविप्र ! सुतेयं हिमभूभृतः ॥४०॥
नाम्नास्ति पार्वती काली वरं शंकरमिच्छति ।
ऊढेयं न च केनापि कुमार्येवास्ति मे सखी ॥४१॥
पञ्चवर्षसहस्राणि तपस्यस्या गतानि वै ।
तथापि दैवपुत्रीत्वात् षोडशाब्दा हि दृश्यते ॥४२॥
नहि देवसुजातीनां वर्षैर्ह्रासोऽस्ति वर्ष्मसु ।
कोटिवर्षायुषां तेषां रूपं वै षोडशाब्दिकम् ॥४३॥
सर्वदा सुस्थिरं चास्ति न जरा पलितानि न ।
सेयं हित्वा महेन्द्रादीन् विष्णुं हित्वा च वेधसम् ॥४४॥
पतिं तु शंकरं लब्धुमभिवांच्छति पार्वती ।
अनयाऽऽरोपिता वृक्षाः फलपुष्पसमृद्धयः ॥४५॥
शंकरार्हणयोग्यास्ते कृताः सन्ति ह्रदा सदा ।
सर्वं समर्पणं कृत्वा सदा तपसि तिष्ठति ॥४६॥
आगच्छेद्वा न चागच्छेत् सा तु शर्वेऽर्पितास्ति वै ।
इति मया च ते ख्यातं पार्वत्या मानसं वृतम् ॥४७॥
जटिलोऽपि हसन् प्राह सख्युक्ते विश्वसीमि न ।
यथार्थं चेत् नवै हासः स्वमुखेनाभिभाषताम् ॥४८॥
पार्वती मनसि ज्ञात्वा शंभुसम्बन्धिनं जनम् ।
प्रसन्नमानसाऽवोचत् सख्युक्तं तत्तथैव यत् ॥४९॥
मनसा वचसा कृत्या वृतो वै शंकरो मया ।
जानामि दुर्लभं शंभुं मत्वा सुलभमेव तम् ॥५०॥
करोमि तप आजन्म विश्वासोऽपि तथास्ति मे ।
बाह्यतो न मिलेद्वापि ह्यान्तरे मिलितोऽस्ति सः ॥५१॥
अहोऽस्ति मे महद्भाग्यं सप्तर्षीणां तु दर्शनम् ।
वृद्धब्राह्मणदेवस्य दर्शनं शिवगर्भितम् ॥५२॥
प्राप्तं मेऽत्र वने घोरे तत्रापि शैलशृंगके ।
तन्मे मनोरथवृक्ष आर्तवं भावमाप्तवान् ॥५३॥
जानातु वा न जानातु स उदासीन ईश्वरः ।
जानाम्यहं कृपालेशः प्रेरितोऽस्ति दयालुना ॥५४॥
ब्राह्मणोऽस्य मुखमासीद्-विप्रो वक्तीति तन्मुखम् ।
वक्तीत्येवहि जानामि गूढोऽस्ति शंकरस्त्वयि ॥५५॥
तस्मै चार्घ्यः प्रणामो मे संयुज्य तत्पदे शिरः ।
यथाऽहं ते चरणयोः संयुज्य मस्तकं नता ॥५६॥
विप्रः प्राह च तच्छ्रुत्वा शृणु कन्ये हरप्रिये ।
योग्यं सुभ्रु यथायोग्यं सर्वं वदसि सुव्रते ॥५७॥
जानाम्यहं महादेवं सावधानतया शृणु ।
क्वचिन्नग्नः क्वचिद्व्याघ्रगजचर्मधरो हरः ॥५८॥
वृषध्वजो भस्मदिग्धो जटाजूथविरूपकः ।
कपालास्थिकेरकण्ठः सर्पैर्गात्रेषु वेष्टितः ॥५९॥
विषभक्षोऽभक्ष्यभक्षो विरूपाक्षोऽस्ति सर्वथा ।
अज्ञातगृहजन्मादिर्गृहभोगादिवंचितः ॥६०॥
दशहस्तो भूतगणैः सेवितो मलिनोऽसुखी ।
क्रूरः संहारकृत् प्रोक्तो दक्षयज्ञादिनाशकः ॥६१॥
यस्य गृहे न वै सौख्यं क्लेशः क्लेशो हि वर्तते ।
तादृशं त्वटमानं तं कथमिच्छसि भामिनि ॥६२॥
त्वं स्त्रीरत्नं तव पिता राजा निखिलभूभृताम् ।
तथाविधं पतिं कस्मादुग्रेण तपसेहसे ॥६३॥

दत्वा सुवर्णमुद्रां च ग्रहीतुं काचमिच्छसि ।
हित्वा तु चन्दनं श्रेष्ठं कर्दमं लेप्तुमिच्छसि ॥६४॥
सूर्यतेजः परित्यज्य खद्योतद्युतिमिच्छसि ।
चीनांशुकं परित्यज्य चर्मवल्कलमिच्छसि ॥६५॥
सौधवासं विहायैव कुवासं च समिच्छसि ।
रत्नशेवधिमुत्सृज्य कृष्णांगारं समिच्छसि ॥६६॥
नृपालान्संपरित्यज्य गोपालं त्वं समिच्छसि ।
लोकपालान् विहायैव भूतपालं किमिच्छसि ॥६७॥
नैतद् योग्यं तु मे भाति विरुद्धं तव दृश्यते ।
का त्वं कमलपत्राक्षी क्वाऽसौ वह्निविलोचनः ॥६८॥
शशांकवदना का त्वं क्वाऽसौ पंचाऽनलाननः ।
शिरोवेणीमती का त्वं क्व जटाजूटमस्तकः ॥६९॥
क्व त्वं चन्दनयोग्यांगा क्व चिताभस्मलेपनः ।
क्व मृदुस्निग्धसद्वस्त्रा क्व व्याघ्रगजवस्त्रकः ॥७०॥
स्वर्णभूषणयोग्या क्व क्व क्रूरसर्पशेखरः ।
क्व ऋष्यन्नप्रिया देवी क्व भूतबलिसुप्रियः ॥७१॥
क्व तन्त्रीमिष्टवादश्च क्व तड्डमरुडुंहुडुंहः ।
क्व ते कण्ठस्य माधुर्यं क्व वृषभस्वरः खरः ॥७२॥
क्व ते स्थलाब्जमृदुता क्वाऽस्य रूक्षखरस्पृशिः ।
नाऽस्य द्रव्यं मनागस्ति प्राप्यते नापि चाम्बरम् ॥७३॥
नास्य स्मृद्धिर्मनागस्ति बलीवर्दोरगौ विना ।
नाऽस्य सत्सेवकाः सन्ति नग्नान् भूतादिकान् विना ॥७४॥
नाऽस्य सौम्या जनाः सन्ति भैरववीरकान् विना ।
नास्य भोज्यं मिष्टमस्ति भंगागृंजविषं विना ॥७५॥
ताम्बूलं नाऽऽनने त्वस्य धत्तूरगरलं विना ।
नाऽस्य पुष्पमयी माला प्रेतकपालिकां विना ॥७६॥
नास्य हस्ते मृदुलं वै विना त्रिशूललोष्ठकम् ।
नाऽस्य चौष्ठे प्रेमरसो विना संहारनिष्ठुराम् ॥७७॥
नाऽस्य पार्श्वे कोमलांगं काष्ठपावटिकां विना ।
नाऽस्य बिम्बं सुवर्णाभं कृष्णभस्मादिकं विना ॥७८॥
नास्य गुप्तं भवेद्वा न कर्तितं ब्राह्मणैः पुरा ।
पुमान्वाऽयं तृतीयः स्यात् स्त्रीरूपो भातिनैव च ॥७९॥
तस्य नास्ति प्रसन्ना स्त्रीः तृतीयप्रकृतिर्भवेत् ।
तृतीयप्रकृतिगुप्त्यै कामोऽनेन हि भस्मितः ॥८०॥
अनादरस्तदा ते वै कृतो हित्वाऽन्यतो गतः ।
तस्योदरे महाण्डानि भवन्ति काकपक्षिवत् ॥८१॥
तस्याऽण्डवृद्धि रोगोऽस्ति ज्ञातं नास्ति त्वया तु तत् ।
महारात्रावपि मायां स्वपितुं न ददाति सः ॥८२॥
पत्नीतोऽपि विशेषेण भुंक्ते दुःखाकरोति सः ।
तादृशाऽपलक्षणोऽस्ति त्वां तु दुःखाकरिष्यति ॥८३॥
सति ! त्यजाऽस्य नामाऽपि शिवोऽपित्वशिवः सदा ।
जातिर्नास्ति कुलं नास्ति माता नास्ति कुतः पिता ॥८४॥
ज्ञानं सौजन्यमास्तिक्यं नास्ति किंचिद्धि शंकरे ।
शरीरे दृश्यते रक्षा कण्ठे सन्दृश्यते विषम् ॥८५॥
आन्तरे दृश्यते क्रोधो रागलेशोऽपि नास्ति वै ।
द्वेष एव धृतस्तेन येन संहरते प्रजाः ॥८६॥
क्व हारयोग्यं वक्षस्ते क्व तस्य मुण्डवद्धितम् ।
क्वांऽगरागश्च सौन्दर्यं क्व रक्षाधूलिकाऽञ्चितम् ॥८७॥
मह्यं न रोचते तद्वै यथेच्छसि तथा कुरु ।
असद्वस्तु तु यत्किंचित् तत् सर्वं रोचते तव ॥८८॥
मन्ये केनाऽभिचारेण मन्त्रेणैवं विभ्रामितम् ।
यद्वा पूर्वाऽर्जिताऽदृष्टबलेनैवं विघट्टितम् ॥८९॥
अन्यथा त्वं कथं दृष्ट्वा खाते पतितुमिच्छसि ।
गच्छाम्यहं महादेवि यथेच्छसि तथा कुरु ॥९०॥
पार्वती प्राह तं विप्रं मत्वा शिवस्य निन्दकम् ।
गच्छ गच्छसि चेद् विप्र कुतः पादोऽत्र तेऽस्पृशत् ॥९१॥
निन्दकस्याऽपवित्रस्य पादोऽपि पुण्यनाशकः ।
शिवो वाऽप्यथवा भीमः सधनो निर्धनोऽपि वा ॥९२॥
नाऽलंकृतोऽलंकृतो वा यादृशस्तादृशश्च वा ।
अमंगलो मंगलो वा सौम्यो रूक्षो जडोऽपि वा ॥९३॥
अस्मृद्धो यानहीनो वा विषाक्तोऽविषयोऽपि वा ।
दुर्गुणो निर्गुणो वापि सगुणो विगुणोऽपि वा ॥९४॥
दुर्गन्धो वा सुगन्धो वा निर्गन्धो वा कपालवान् ।
विवस्त्रो वा सवस्त्रो वा धूलीभस्मादिवस्त्रकः ॥९५॥
सलिंगो वाप्यलिंगो वा तृतीयप्रकृतिश्च वा ।
कामारिर्बहुकामो वा निष्कामो वा निरीहकः ॥९६॥
भस्माढ्यो वा च चर्माढ्यो भूताढ्यो डमरूयुतः ।
वृषाढ्यो रूक्षदेहो वा द्रव्यहीनश्च सोरगः ॥९७॥
भंगागृंजनधत्तूरगरलादियुतोऽपि वा ।
सत्रिशूलोऽथवा नारीचिह्नो वापि महाऽण्डकः ॥९८॥
अकुलोऽजातिपितृको मारको रक्षकोऽपि वा ।
जडो वा चेतनो वापि स्तम्भो ग्रावाण एव वा ॥९९॥
स एव मे पतिश्चास्ति सृष्टौ सृष्ट्यन्तरेऽपि च ।
युगे युगान्तरे चापि चात्र जन्मान्तरेऽपि वा ॥१००॥
स एव मे पतिर्भूतो वर्तते च भविष्यति ।
बहुवारमहं जाता अधवा सधवापि च ॥१०१॥

महालयेऽधवा चाहं सृष्टौ तु सधवा सदा ।
का चिन्ता ते ममाऽसौख्ये गच्छ विप्र यथासुखम् ॥१०२॥
न ते लाभो मम सौख्ये दुःखे नैव च भागवान् ।
वृथा निन्दसि शंभुं मां तपश्चाऽऽशीविषो भवन् ॥१०३॥
एतावद्धि मया ज्ञातो भवान् यात्रालुरागताः ।
तापसो हितकर्ता च न ज्ञातो विपरीतकृत् ॥१०४॥
अज्ञात्वा निन्दसि शंभुं सकलैश्वर्यभाजनम् ।
स्वेच्चारी भवत्येव क्वचित् त्वादृशवेषवान् ॥१०५॥
छली बली विहारी च ब्रह्मचारी प्रतारकः ।
बहुरूपो वनवासी भवत्यपरतन्त्रकः ॥१०६॥
निर्गुणोऽपि लीलया सः क्वचित्सगुणतां भजेत् ।
सद्वितीयस्य जातिः स्यान्नैकस्मिन् जातिरस्ति वै ॥१०७॥
व्यक्तेरभेदो जातित्वे सर्वथा बाधकोऽस्ति हि ।
ज्ञानाऽऽनन्दस्वरूपस्य किं ज्ञानाद्यर्जनेन वै ॥१०८॥
गुणे गुणाऽनवस्थानात् ज्ञाने ज्ञानं किमिष्यते ।
ज्ञानं च ज्ञानवान् सोऽस्ति नित्यज्ञानाश्रयोऽस्ति सः ॥१०९॥
सूर्यक्रियाकृतवयोऽवस्थाः सूर्यकृतः कथम् ।
कर्मकृतं सलिंगादि ब्रह्मणोऽकर्मणः कथम् ॥११०॥
ज्ञानक्रियासमीहाश्च तिस्रस्तज्जा हि शक्तयः ।
तस्मिँस्तु ब्रह्मणि नातिप्रवर्तन्ते ह्यशक्तिके ॥१११॥
तत्कृपाभिः स्मृद्धयश्चाऽस्मृद्धयः स्युस्ततोऽन्यथा ।
किं तस्य स्मृद्ध्यस्मृद्ध्यादि सत्यसंकल्पिनः सदा ॥११२॥
देवा देवत्वमापन्ना यत्कृपालेशतः खलु ।
दिव्यत्वे वा मलिनत्वे किं तस्याऽस्ति प्रयोजनम् ॥११३॥
लोकपालाः सदा यस्य द्वारि तिष्ठन्ति किंकराः ।
किं तस्य नरपालत्वे गोपालत्वेऽथ वा स्पृहा ॥११४॥
भालचक्षुस्त्रिशूलं वा परिपूर्णे महालये ।
किं तस्याभिजनव्रातैर्नित्यस्य जनकेन किम् ॥११५॥
सदा शुद्धस्य किं बाह्यैरशुद्धैः शुचिभिश्च किम् ।
विजरस्य विमृत्योश्चाऽपिपासस्याऽक्षुधस्य च ॥११६॥
सत्यकामस्य च सत्यसंकल्पस्याऽस्ति किं गृहैः ।
किमम्बरैर्वस्तुभिः किं कल्याणगुणशालिनः ॥११७॥
सिद्धयोऽष्टौ यदगारे लुठन्ति धूलिकामये ।
का तत्र मेऽतिगणना योगिनीकोटिसंकुले ॥११८॥
अमंगलान्यपि यान्ति मांगल्यं यत्पदाश्रयात् ।
का तत्र गणना चाऽस्त्यमंगलार्थविचारिणाम् ॥११९॥
दारिद्र्यरेखया व्याप्तो यत्सेवाभिः समाढ्यकः ।
का तत्र गणना चास्ति निष्परिग्रहप्रकृतेः ॥१२०॥

यस्याऽर्हणेन त्रैलोक्यराज्यस्मृद्धिः फलं भवेत् ।
कुतस्तस्य समीहा स्यान्निरीहस्य महात्मनः ॥१२१॥
शिवेति नामजपनात् पूता भवन्ति चेतनाः ।
किमस्याऽशिवभस्मादि करिष्यति सुरार्थितम् ॥१२२॥
शिवनिन्दां यः करोति तत्त्वमज्ञाय कर्मकृत् ।
आजन्म संचितं पुण्यं भस्मीभवति तस्य वै ॥१२३॥
यथा तथा भवेद्रुद्रः पाषाणः किं न वा भवेत् ।
ममाऽभीष्टतमो रुद्रः करोमि तत्कृते तपः ॥१२४॥
गच्छ चास्मत्स्थलाच्छीघ्रं मा कुरु शिवनिन्दनम् ।
श्रुत्वैतद् ब्राह्मणः किंचित् प्रतिवक्तुं समिच्छति ॥१२५॥
पार्वती प्राह विजयां वारयैनं विनिन्दकम् ।
वक्तुर्यथा तथा श्रोतुः पापं द्रोहस्य जायते ॥१२६॥
श्रोतव्यो नैव चास्माभिर्द्रोहो देवस्य सर्वथा ।
नाऽयं गच्छति दुष्टोऽतः स्थानात् निन्दां करिष्यति ॥१२७॥
हित्वैतत्स्थलमद्यैव यास्यामोऽन्यत्र मा चिरम् ।
अथ संभाषणं न स्यादनेन निन्दकेन वै ॥१२८॥
इत्युक्त्वा पार्वती यावदुत्थायाऽन्यस्थलं प्रति ।
गन्तुं पादक्रमं धत्ते तावद्भिक्षुः शिवोऽभवत् ॥१२९॥
सुरूपः सुन्दरः सौम्यो युवा षोडशहायनः ।
पुष्टः पिशंगस्वर्णाभसुजटो भालचन्द्रकः ॥१३०॥
सत्रिशूलः सवासुकिः कृत्तिवासोऽतिमोहनः ।
कोटिकन्दर्पलावण्यस्तेजोपरिधिविग्रहः ॥१३१॥
एतादृशं निजं रूपं सतीप्रतीतिकारणम् ।
सत्या पूर्वं सेवितं यदनुभूतं भवान्तरे ॥१३२॥
पार्वत्यै दर्शयित्वा तामुवाचाऽधोमुखीं शिवः ।
मा याह्यन्यत्र कल्याणि पश्य मे रूपमैश्वरम् ॥१३३॥
शिखरं त्वावयोश्चैतद् गौरीशंकरनामकम् ।
यच्चेह रुद्रमीहन्त्या मृन्मयश्चेश्वरः कृतः ॥१३४॥
गौरीभद्रेश्वरश्चेति लोके ख्यातिं गमिष्यति ।
त्वं न त्यजसि मां देवि न च त्याज्या मया पुनः ॥१३५॥
प्रसन्नोऽस्मि वरं ब्रूहि नाऽदेयं विद्यते तव ।
अद्याऽऽरभ्य धनं तेऽस्मि क्रीतोऽस्मि तपसा त्वया ॥१३६॥
अथ पत्नी मता मेऽसि संकोचं त्यज सुन्दरि ! ।
मया परीक्षिता चाति क्षमस्व तापसि प्रिये ॥१३७॥
न त्वादृशी दृढा नारी दृष्टा निःस्वार्थतापसी ।
तवात्मास्मि तवाधीनः स्वकामः पूर्यतां प्रिये ॥१३८॥
एहि प्रिये सकाशं मे तिष्ठ मेंऽके क्षणं ततः ।
यास्यावस्ते पितुः सौधं विवाहविधिलब्धये ॥१३९॥

इत्थादृता सती शीघ्रं हरांके निषसाद सा ।
पत्यर्पिता प्रमुदिता तपःकष्टं जहौ सती ॥१४०॥

फले लब्धे श्रमः पूर्वो नश्यत्यतिपुरातनः ।
प्रत्युवाच महासाध्वी हरांकसुखसागरा ॥१४१॥

अतीव सुखिता चातिप्रित्युत्फुल्लानना शिवा ।
सुखातिपुलकितांगा नवाऽऽनन्दपरिप्लुता ॥१४२॥

त्वं नाथो मम देवेश त्वया किं विस्मृतं पुरा ।
गार्हस्थ्यदुःखमात्रेन किं वैराग्यं धृतं त्वया ॥१४३॥

दक्षयज्ञविनाशं वा विचार्य च सतीहठम् ।
गार्हस्थ्यं दुःखदं मत्वा किं वैराग्यं धृतं त्वया ॥१४४॥

नारीग्रहे नार्यधीनं नरस्य याति जीवनम् ।
पराधीनामितिज्ञात्वा किं वैराग्यं धृतं त्वया ॥१४५॥

नारीयोगाद् ब्रह्मयोगः खण्डितो जायते यतः ।
तेनाऽमोक्ष इति मत्वा किं वैराग्यं धृतं त्वया ॥१४६॥

नार्याऽपत्यादिविस्तारो जायते गृहमेधिनः ।
कष्टं तत्पोषणं मत्वा किं वैराग्यं धृतं त्वया ॥१४७॥

पत्नीयोगेन सम्बन्धो लौकिको वर्धते सदा ।
झंझावातं च तं ज्ञात्वा किं वैराग्यं धृतं त्वया ॥१४८॥

ध्यानकाले प्रशान्तौ च निद्रायां चात्मचिन्तने ।
नारी विघ्नमिति ज्ञात्वा न स्मृताऽहं त्वया नु किम् ॥१४९॥

न जाने ब्रह्मरूपस्य लक्षकालः क्षणायते ।
जानामि स्वार्थचित्तायाः क्षणकालो युगायते ॥१५०॥

कथं कालो मया नीतः पंचवर्षसहस्रकः ।
विना पतिं प्रियं प्राणमित्युक्त्वाऽश्रूण्यपातयत् ॥१५१॥

प्राह शान्तिं पुनर्लब्ध्वा स त्वं साऽहं सती पुरा ।
मेनापुत्री भवाम्यद्य पतिर्भव वचः कुरु ॥१५२॥

श्रुत्वा शंभुः क्षणं म्लानो भूत्वाऽभूद् विगतज्वरः ।
तस्याः शिरः कराभ्यां संप्रमृत्याऽऽश्लिष्य चाऽऽननम् ॥१५३॥

चुचुम्ब स्मरणार्थं तद्दुःखविस्मरणाय च ।
प्राह देवीं प्रिये गच्छ स्वमेव भवनं पितुः ॥१५४॥

तवार्थाय प्रहेष्यामि महर्षीन् हिमवद्गृहे ।
ओमित्याज्ञां समादाय प्राह प्रान्ते च पार्वती ॥१५५॥

भिक्षुर्भूत्वा समायाहि मां याचस्व हिमालयात् ।
पितुर्मे सफलं सर्वं कुरुष्वेव गृहाश्रमम् ॥१५६॥

ऋषिप्रोक्तं पिता मे तु सत्वरं संविधास्यति ।
दक्षकन्या यदा देव त्वया विवाहिता तदा ॥१५७॥

विधौ व्युत्क्रमदोषेण ग्रहदोषेण भस्मिता ।
तस्मात् यथोक्तविधिना विवाहं कर्तुमर्हसि ॥१५८॥

बहुविध्युत्सवपूर्वं विवाहं कुरु शंकर ! ।
सर्वरीतिर्विवाहस्य कर्तव्या परिपूर्णतः ॥१५९॥

चतुर्दशभुवनस्था जनवाहा भवन्तु वै ।
जानातु हिमवान् सम्यक् जानन्तु भुवनेश्वराः ॥१६०॥

चराऽचरं प्रजानातु पार्वत्याऽपि कृतं तपः ।
यादृशः प्रापणे यत्नो भाव्यस्तादृङ्महोत्सवः ॥१६१॥

सृष्टौ सृष्ट्यन्तरे गाथां प्रगायेयुर्जना यथा ।
पार्वत्या तपसा लब्धोऽनालब्धो यो महर्षिभिः ॥१६२॥

पार्वत्या तु हठात् क्रीतो न क्रीतो वेदवादिभिः ।
साक्षाल्लब्धः स पार्वत्या न लब्धो यस्तु साधुभिः ॥१६३॥

पार्वत्या स्वांगणे लब्धो न लब्धस्तीर्थयायिभिः ।
प्रेम्णा लब्धः स पार्वत्या न लब्धो योगिभिश्च यः ॥१६४॥

पार्वत्या विधिना लब्धो न लब्धो याज्ञिकैरपि ।
पार्वत्या पर्वते लब्धो न लब्धः स्वर्गसाधनैः ॥१६५॥

पार्वत्या वक्षसि प्राप्तो न प्राप्तो हृत्समाधिभिः ।
पार्वत्या स क्षणाल्लब्धो न लब्धो वेधसा युगात् ॥१६६॥

पार्वत्या स पुनर्लब्धोऽप्यपुनर्भवलक्षणः ।
इति गास्यन्ति धवलं यशो मोक्षप्रदं शिवम् ॥१६७॥

इति यास्यन्ति परमं साधनं चापि मोक्षदम् ।
विवाहस्य विधिर्लोके प्रवर्त्स्यते यथाऽऽवयोः ॥१६८॥

श्रुत्वा प्रियायाः प्रियकृत् समुवाच प्रतिप्रियम् ।
गच्छ देवि सुमांगल्यं द्राक् विधेहि यथोचितम् ॥१६९॥

अहं स्वयं न वै पूर्वं गच्छामि भिक्षुको यथा ।
महागुणैर्गरिष्ठोऽपि महात्मा यदि भिक्षुकः ॥१७०॥

देहीति वचनात् सद्यः पुरुषो याति लाघवम् ।
ततस्त्वां भिक्षुको भूत्वा न याचेय कथंचन ॥१७१॥

किन्तु सप्तर्षयः प्रेष्या मया पूर्वं त्वदर्थकम् ।
वाक्दाननिर्णयं कुर्युस्ततो यास्यामि ते गृहम् ॥१७२॥

तव तपःप्रभावेण याचिष्ये त्वां पितुस्तव ।
इत्युक्त्वा पार्वतीमुखाऽऽश्लेषं विधाय शंकरः ॥१७३॥

विजयायै जयायै च करौ दत्वा तु मस्तके ।
तत्कृतां प्रणतिं लब्ध्वा प्रागेवाऽदृश्यतां गतः ॥१७४॥

कैलासं प्रययौ वृत्तं नन्द्यादिभ्यः स ऊचिवान् ।
भैरवाद्या गणाः श्रुत्वा चक्रुस्तत्र महोत्सवम् ॥१७५॥

कृत्वा समाप्तिं तपसोऽभिवन्द्य वनचेतनान् ।
ससखी पार्वती हृष्टा जगाम भवनं पितुः ॥१७६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने सप्तर्षिभिः पार्वत्याः प्राणग्लहतपः शंकराय निवेदितम्, वृद्धजटिलविप्रवेषेण शंकरस्य पार्वतीं प्रत्यागमनम्, शंभोरगुणविगुणादिवर्णनम्, पार्वत्याः शंभोः सर्वसद्गुणपरताग्राह्यत्वम्, शंभुना स्वस्वरूपेण दर्शनम्, परस्परं सुखवार्तालापः, विवाहार्थं निर्णयवचनं, तपःसमाप्तिश्चेत्यादिनिरूपणनामा सप्ताशीत्यधिकशततमोऽध्यायः॥१८७॥

**श्रीनारायण उवाच—**

शृणु सुप्रीतितो लक्ष्मि यज्जातं तदनन्तरम् ।
पार्वत्यागमनं श्रुत्वा मेनायुक्तो हिमाचलः ॥ १ ॥
योजयित्वा सुयानानि प्रययौ हर्षविह्वलः ।
पुरोहितश्च पौराश्च सख्यश्चापि कुमारिकाः ॥ २ ॥
सम्बन्धिनस्तथा चान्ये भ्रातरो हर्षविह्वलाः ।
जयशब्दं प्रकुर्वन्तो जग्मुस्तां तापसीं प्रति ॥ ३ ॥
सुमंगलघटान् न्यस्य राजमार्गे समीकृते ।
चन्दनाऽगुरुकस्तूरीफलशाखादिशोभिते ॥ ४ ॥
पुरोधोविप्रमुनिभिर्ब्रह्मर्षिभिश्च संकुले ।
नारीभिर्नर्तकीभिश्च गायिकाभिश्च घोषिते ॥ ५ ॥
गजेन्द्राश्वमहाहंसयानवाहनपूरिते ।
अशोकचूतपत्रादितोरणैः समलंकृते ॥ ६ ॥
रंभास्तंभादिसंक्लृप्तमण्डपादिविभासिते ।
पतिपुत्रवतीयोषित्समूहैश्च निनादिते ॥ ७ ॥
शतसहस्रदीपानां प्रकाशैर्धवलीकृते ।
मंगलध्वनिकर्तृभिर्द्विजवृन्दैर्विलासिते ॥ ८ ॥
नानावाद्यध्वनिव्याप्ते स्वागतलक्षणांकिते ।
देशाभिजनवृन्दाश्च ययुर्वै पार्वतीं प्रति ॥ ९ ॥
एतस्मिन्नन्तरे दुर्गाऽऽजगाम गोपुरान्तिकम् ।
विशमाना नगरं प्राक् ददर्श पितरौ हृदा ॥१०॥
सुप्रसन्नौ साश्रुनेत्रौ हर्षविह्वलमानसौ ।
पुत्रीं दृष्ट्वा प्रधावन्तौ ननाम साऽऽलिभिः सती ॥११॥
तौ सुतां वक्षसि कृत्वा युयुजतुः शुभाशिषः ।
आवृस्त्रीप्रभृतिनार्यो दृढालिंगनमादधुः ॥१२॥
साधितस्तपसा कुलतारकः पाविता वयम् ।
इति प्रशंस्य नेमुस्तामानर्चुः पुष्पचन्दनैः ॥१३॥
व्योमदेवाः पुष्पवृष्टिं चक्रुर्नेमुश्च तुष्टुवुः ।
पुरं प्रवेशयामासुर्बहुवाद्यमहोत्सवैः ॥१४॥
अथ विप्राः पुरोधाश्च सख्योऽन्याश्च स्त्रियः सतीम् ।
गृहं प्रवेशयामासुर्बहुमानपुरःसरम् ॥१५॥
सख्यो निर्मञ्छनं चक्रुर्वृद्धा युयुजुराशिषः ।
मेनिरे सफलं जन्म कुपुत्रात् पुत्रिकां वराम् ॥१६॥
साधुब्राह्मणवन्दिभ्यो हिमाद्रिरूपदा ददौ ।
मंगलानि विविधानि गापयामास सोत्सवः ॥१७॥
सवाद्यगायने प्रवर्तिते वृद्धाश्च जामयः ।
भ्रातरो ज्ञातयः पौराः समूषुर्मण्डपे प्रिये ॥१८॥
नार्यो वृद्धाश्च युवत्यश्च कन्या बालास्तथाऽपरा ।
शृण्वन्ति स्म शुभं गानं पश्यन्ति स्म च नृत्यकम् ॥१९॥
एतस्मिन्नन्तरे तत्र स्वेच्छया शंकरः स्वयम् ।
सुनर्तकनटो भूत्वा मण्डपं प्रविवेश सः ॥२०॥
शृंगं वामे करे धृत्वा दक्षिणे डमरूं तथा ।
पृष्ठे नटीयचित्राढ्यां सकंचुकां पटीं दधन् ॥२१॥
रक्तवस्त्रो नृत्यगानकुशलः सन्ननर्त ह ।
चक्रे मनोहरं गानं प्रेमरसप्रचूरकम् ॥२२॥
शृंगं च डमरूं तत्र वादयामास घुर्घुरान् ।
किंकिणीः ठम्मयामास नर्तयामास कलिगनम् ॥२३॥
नारीराकर्षयामास भावयामास पार्वतीम् ।
नरान्सन्दर्शयामास नृत्यचातुर्यमेकलम् ॥२४॥
मेनकां ज्ञापयामास तापसी लग्नमानसम् ।
नागरान्बोधयामास पात्रं महोत्सवस्य सः ॥२५॥
तं च विलक्षणं द्रष्टुमाजग्मुर्नागराः परे ।
मुमुहुश्च नरा नार्यः पार्वतीमुदमाप च ॥२६॥
हार्दे ददर्श शंभुं तं त्रिशूलादिसमन्वितम् ।
विभूतिभूषितं चास्थिमालं त्रिलोचनं हरम् ॥२७॥
सचन्द्रं कृतनागोपवीतं व्याघ्रगजाजिनम् ।
सजटं धवलं पुष्टं युवानं षोडशाब्दकम् ॥२८॥
वरं वृणिवत्युक्तवन्तं दृष्ट्वा सा प्रणनाम तम् ।
वरं वव्रे मानसं सा पतिर्मे त्वं भवेति च ॥२९॥
वरं दत्वा तिरोभूय बहिर्ननर्त भिक्षुकः ।
मेना ददौ तु रत्नानि पारितोषिकसंज्ञया ॥३०॥
तानि न स्वीचकाराऽसौ भिक्षां याचे तु पार्वतीम् ।
मेना चुकोप चात्युग्रं भर्त्सयामास भिक्षुकम् ॥३१॥

ततः स दर्शयामास चमत्कारं हिमाद्रये ।
विष्णुरूपधरं शैलो ददर्श वनमालिनम् ॥३२॥
किरीटकुण्डलोपेतं पीतवस्त्रं चतुर्भुजम् ।
यद्यत्पुष्पादिकं दत्तं पूजाकाले गदाभृते ॥३३॥
गात्रे शिरसि तत्सर्वं भिक्षुकस्य ददर्श ह ।
ततो ददर्श तत्रैव ब्रह्माणं स चतुर्भुजम् ॥३४॥
पठन्तं श्रुतिसूक्तानि सवेदं सकमण्डलुम् ।
ततः सूर्यस्वरूपं च जगच्चक्षुःस्वरूपकम् ॥३५॥
ततो ददर्श शंभुं तं पार्वतीसहितं प्रभुम् ।
ततस्तेजःस्वरूपं च ज्योतिर्लिंगस्वरूपकम् ॥३६॥
पुना रूपाणि संक्षिप्य ननर्त बहुधा जगौ ।
दत्तेषु बहुरत्नेषु न जग्राह सतीं विना ॥३७॥
ययाचे पार्वतीं भिक्षां न ददौ हिमवांश्च ताम् ।
ततः शिवां मनाक् वीक्ष्य तत्रैवाऽन्तर्दधे हरः ॥३८॥
ततश्चेन्द्रादयश्चिन्तां चक्रिरे बहुधा तदा ।
ययाचे शंकरो भिक्षां न ददौ पर्वतस्तु ताम् ॥३९॥
मेनयाऽपि न दत्ताऽहो हानिर्वै समयच्युतिः ।
जानाति मेनका चापि जानाति च हिमाचलः ॥४०॥
पुत्रीयं शंभवे देया विस्मृतं तद्धि सर्वथा ।
पात्रे रुद्रे यन्न दत्तं हानिश्चेयं महत्यपि ॥४१॥
अहो माया शंकरस्य मोहो वितन्वतेऽनया ।
देयेति प्रतिश्रुत्याऽपि न ददाम्यभिमन्यते ॥४२॥
भूतं यद्भूतमेवैतदथ किं नु भविष्यति ।
पुनः कालः प्रतीक्ष्यः स्यादस्मत्पुण्याऽबलान्ननु ॥४३॥
विचार्येति मासकालं विनिर्गमय्य ते सुराः ।
ययुः कैलासमानम्र शंभुं तुष्टुवुरुत्सुकाः ॥४४॥
देवदेव महादेव वयं ते शरणागताः ।
दीनोद्धार कृपासिन्धो कृपां कुरु नमोऽस्तु ते ॥४५॥
एकान्तभक्त्या शैलश्चेत्कन्यां ते स प्रदास्यति ।
पुण्यात् पृथ्वीं परित्यज्य शैलो मोक्षमवाप्स्यति ॥४६॥
अनन्तरत्नाढ्यशैलशून्या पृथ्वी भविष्यति ।
वयं रन्तुं वसितुं च क्व गमिष्याम ईश्वराः ॥४७॥
तवापि शंभो ! कैलासं शिखरं मोक्षगं भवेत् ।
तस्मादेवं न कर्तव्यं कर्तव्यं लासदं तु यत् ।४८॥
शैलः पृथ्व्यां सदा तिष्ठेत् पार्वतीं च हरोऽर्जयेत् ।
अस्मल्लाभो भवेन्नित्यस्तथा कुरु त्रिलोचन ॥४९॥
देवनिन्दाश्रवणेन पुण्यं सर्वं विनश्यति ।
कुरु निन्दां स्वकीयां त्वं तत्र गत्वा महेश्वर ॥५०॥
परनिन्दा पुण्यहा स्यात् स्वनिन्दा यशसे भवेत् ।
तव निन्दां स संश्रुत्वाऽनिच्छुः पुत्रीसमर्पणे ॥५१॥
भविष्यति ततः कन्या त्वां प्रसह्य वरिष्यति ।
त्वां विहाय सती दुर्गा वरं नान्यं वरिष्यति ॥५२॥
एतत्तु निश्चितं सर्वं तस्माद्गच्छ महेश्वर ।
कन्यादाने तथाऽनिच्छोर्नैव पुण्यं भविष्यति ॥५३॥
तादृक् येन स निर्वाणं ध्रुवं यायाद्धिमाचलः ।
लप्स्यते भूमिजीवित्वं यशः पूज्यत्वमित्यपि ॥५४॥
तथास्त्विति हरः प्रोक्त्वा जगाम हिमभूभृतम् ।
दण्डी छत्री स्वर्णवासा बिभ्रत्पुँड्रं समूर्ध्वगम् ॥५५॥
करे तुलसीसन्मालां शालग्रामं गले दधन् ।
जपन्नारायणकृष्णहरिनामानि भक्तितः ॥५६॥
साधुवेषधरं दृष्ट्वा शैलः सत्वरमुत्थितः ।
ननाम दण्डवद्भूमौ भक्त्याऽतिथिमपूर्वकम् ॥५७॥
ननाम पार्वती ज्ञात्वा तपोबलात्तु शंकरम् ।
मधुपर्कादिकं शैलार्पितं जग्राह वैष्णवः ॥५८॥
आशिषं युयुजे विप्रः पप्रच्छ कुशलं नगः ।
स्थानासनादिकं चापि प्रयोजनं निरामयम् ॥५९॥
प्रत्युवाच तदा विप्रो वैष्णवोऽहं तु वृत्तये ।
भ्रमामि यजमानेषु सर्वज्ञोऽस्मि गुरोर्बलात् ॥६०॥
मया ज्ञातं हराय त्वं स्वपुत्रीं दातुमिच्छसि ।
इमां पद्मसमां दिव्यां किंजल्ककोमलांगुलीम् ॥६१॥
गृहद्वारविहीनाय धनहीनाय रोषिणे ।
श्मशानव्यवसायाय सर्पमित्राय लोभिने ॥६२॥
विवस्त्राय कुगात्राय कुशीलाय च भस्मिने ।
अज्ञातकुलगोत्रार्थवयोनाम्ने जटालवे ॥६३॥
कुमार्गगामिने व्यसनिने भ्रमत्प्रभिक्षवे ।
एतादृशाय कस्माद्वै ज्ञानिना दीयते सुता ॥६४॥
क्व ते कुलं धनयशःख्यातं क्व सः श्मशानलुठ् ।
यदि महाजनः कश्चित् श्रोष्यति स हसिष्यति ॥६५॥
बान्धवान् मेनकां वृद्धान् पृच्छ त्वं पार्वतीं विना ।
पिताऽभिजनमन्विच्छेन्माता चेच्छेद्गृहं समृद्धम् ॥६६॥
कन्यां त्विच्छेद्वरं रूपं मिष्टान्नमितरो जनः ।
शैल ! शंभोर्नाभिजनो मेने ! शंभोर्न वै समृद्धिः ॥६७॥
सति ! शंभुः कुरूपोऽस्ति मिष्टान्नाशा कथं मम ।
त्यजतामीदृशो मूर्तो ग्रावाणसदृशः खलः ॥६८॥
रोगिणो औषधं पथ्यं रोचते किन्त्वपथ्यकृत् ।
इत्युक्त्वा भोजनं लब्ध्वा निर्जगाम हरो द्विजः ॥६९॥

मेना प्राह पतिं देव ! श्रुतं शंभोर्विचेष्टितम् ।
न तादृशे मया देया खाते क्षेप्या न पुत्रिका ॥७०॥
न मन्यसे वचश्चेन्मे मरिष्यामि न संशयः ।
त्यक्ष्यामि च गृहं सद्यो भक्षयिष्यामि वा विषम् ॥७१॥
गले बध्वा मम पुत्रीं यास्यामि गहनं वनम् ।
महाम्बुधौ निमंक्ष्यामि तस्मै दास्यामि नो सुताम् ॥७२॥
शैलोऽमन्यत योग्यं तन्न क्षेप्या निर्गुणे सुता ।
किं करोमि क्व गच्छामि पुत्र्याग्रहं करोति वै ॥७३॥
विवाह्या शंकरेणैव नान्येन केनचित्त्वहम् ।
अन्यथा तु मरिष्यामि वा जीविष्यामि कन्यका ॥७४॥
यच्च भावि तद्भवतु न मे रुचिस्तु विद्यते ।
शंकराय प्रदातुं वै यथाभाग्यं प्रयातु सा ॥७५॥
इत्युदासीनतां प्राप्तौ मेनाशैलौ हरं प्रति ।
इष्टं जातमिति मत्वा हृष्टा ह्यासन्सुरादयः ॥७६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने तपोनिवृत्तपार्वतीस्वागतम्, मण्डपे शंभोर्नटवेषेण नर्तनम्, पार्वत्या याच्ञा, मेनाशैलाभ्यां सा नाङ्गीकृता, पुनः शंभोर्वैष्णववेषेणागमनम्, शिवाय न देयेति निन्दनम्, मेनाशैलयोरभावाविर्भाव इत्यादिनिरूपणनामाऽष्टाशीत्यधिकशततमोऽध्यायः ॥१८८॥

श्रीनारायण उवाच—

कैलासे संस्थितो रुद्रः सस्मार ज्ञानसागरान् ।
अरुन्धत्या सहितांश्च सप्तर्षीन् कमलेक्षणे ॥ १ ॥
समाजग्मुश्च ते सर्वे कैलासं शंकराश्रितम् ।
तानागतान्समीक्ष्याऽभ्युत्थायाऽभिपूज्य शंकरः ॥ २ ॥
स्थीयन्तां प्राह च स्वर्णवर्णमृदुबृसीष्वथ ।
कश्यपाऽत्रे वारुणेय गाधेय शृणु गौतम ॥ ३ ॥
भरद्वाज शृणुष्व त्वमङ्गिरस्त्वं शृणुष्व च ।
यूयं गच्छत शैलेन्द्रं हिमाद्रिं प्रति सत्तमाः ॥ ४ ॥
पार्वतीं तु मदर्थाय शैलेन्द्रो याच्यतां हिमः ।
दातुकामावभूतां तौ स्वसुतां वेदरीतितः ॥ ५ ॥
देवप्रेरणयाऽहं वै कृतवानस्मि निन्दनम् ।
तच्छ्रुत्वा तौ सुनिर्विण्णौ चातिदीनौ बभूवतुः ॥ ६ ॥
स्वकन्यां नेच्छतो दातुं मह्यं हि मुनयोऽधुना ।
सप्तर्षयो नमस्कृत्य तूर्णं जग्मुर्हिमालयम् ॥ ७ ॥
शंभुररुन्धतीं प्राह शैलं गच्छस्व सुन्दरि ।
पुरन्ध्र्यो हि पुरन्ध्रीणां सुकार्यस्य गतिं विदुः ॥ ८ ॥
इत्याज्ञप्ता ययौ सप्तर्षिभिः सार्धमरुन्धती ।
गत्वा हिमाद्रिनगरमोषधिप्रस्थसंस्थितम् ॥ ९ ॥
त्रिविष्टुस्ते तथा सुनाभाद्यद्रिस्त्रीगणोऽपि च ।
गन्धर्वैः किन्नरैर्यक्षैस्तथाऽन्यैस्तत्पुरःसरैः ॥ १० ॥
हिमाद्रेर्भुवनं रम्यं विशालं हाटकोज्ज्वलम् ।
हिमाचलः समुत्थाय समादायाऽर्घ्यमुत्तमम् ॥ ११ ॥
स्वयमभ्यागमत् द्वारि पुपूज परमेश्वरान् ।
समानीय सभास्थानं कृतासनपरिग्रहान् ॥ १२ ॥
साफल्यं जन्मनो ज्ञात्वा प्रोवाच स्मितसुन्दरः ।
अनभ्रवृष्टिः किमियमुताऽहोऽकुसुमं फलम् ॥ १३ ॥
अप्रतर्क्यमचिन्त्यं च भवदागमनं शुभम् ।
धन्योऽस्मि संपावितोऽस्मि यद् भवन्तो ममाऽजिरम् ॥ १४ ॥
असत्संसर्गसंशुद्धं कृतवन्तो दयालवः ।
पूर्णकामाः परार्थाय विचरन्ति महीतले ॥ १५ ॥
मम कस्यापि कार्यस्य सिद्ध्यै समुपागतान् ।
मन्ये चाऽऽज्ञापितश्चास्मि किंकरोऽहं तदुच्यताम् ॥ १६ ॥
अंगिराः प्राह शैलेन्द्रं त्रिनेत्रेण शिवेन वै ।
वयं चात्र प्रेषिताः स्म शृणु नो याच्यमेव यत् ॥ १७ ॥
इयं या त्वत्सुता काली सर्वनारीषु सुन्दरी ।
तां वै दुहितरं साक्षात् पिनाकी तव मृग्यति ॥ १८ ॥
तच्छीघ्रं पावयाऽऽत्मानं कन्यकां शंकरेऽर्पय ।
कार्यं हि तच्च देवानां सुचिरं परिवर्तते ॥ १९ ॥
जगदुद्धारणायैषो विधातव्यः समुद्यमः ।
स एव धन्योहि पिता यस्य पुत्री हरं पतिम् ॥ २० ॥
देवदेवेश्वराधीशं प्राप्नोति तपसो बलात् ।
देवदेवेश्वराः सर्वे नमन्तु पार्वतीं हरम् ॥ २१ ॥
याचितारो वयं शर्वो वरो दातात्वमप्युमा ।
वधूः सर्वजगन्माता कुरु यच्छ्रेयसे तव ॥ २२ ॥
तच्छ्रुत्वाऽऽनन्दवचनं हिमाद्रिर्निजबान्धवान् ।
मेर्वाद्यान्पर्वतश्रेष्ठानाजुहाव समन्ततः ॥ २३ ॥
तेऽप्याजग्मुर्विविशुश्च सौवर्णेष्वासनेषु च ।
उदयो हेमकूटश्च रम्यको मन्दरस्तथा ॥ २४ ॥
उद्दालको वारुणश्च वराहो गरुडासनः ।
शुक्तिमान् वेगसानुश्च दृढशृंगश्च रैवतः ॥ २५ ॥
चित्रकूटस्त्रिकूटश्च शृंगवाँश्चान्यभूभृतः ।
ततो गिरीशः स्वां भार्यां मेनामाहूतवान् स्वयम् ॥ २६ ॥

ततो हिमालयः प्राह सर्वानाभाष्य सुस्वरम् ।
इमे सर्षतयो याचितारः पुत्र्या ममाद्य वै ॥२७॥
महेश्वरार्थे कन्यां तु तच्चावेद्यं भवत्सु वै ।
तद्वदध्वं यथान्यायं ज्ञातयो यूयमेव मे ॥२८॥
श्रुत्वा प्राहुश्च मेर्वाद्या योग्यं भवति सर्वथा ।
याचितारश्च मुनयः शंकरश्च वरः स्वयम् ॥२९॥
दीयतां शैल कालीयं जामाताऽभिमतो हि नः ।
एतद्वचनमाकर्ण्य ज्ञातीनां हिमपर्वतः ॥३०॥
प्रणम्यर्षीन्करौ बध्वा गिरिराजोऽब्रवीदिदम् ।
सप्तर्षयो महाभागा भवद्भिर्यदुदीरितम् ॥३१॥
तत्प्रमाणीकृतं मे हि मत्पत्न्याश्चापि सर्वथा ।
इदानीमेक आगत्य विप्रो वैष्णवधर्मवान् ॥३२॥
शिवोदुःखखनिरस्ति न देयेति वचोऽब्रवीत् ।
सुताविवाहं रुद्रेण नेच्छति सा न चाप्यहम् ॥३३॥
सुता सुखाय दातव्या न दुःखिभिक्षुकाय वै ।
क्षमां याचे भवद्भ्यो यत् सुता दुःखे न मे पतेत् ॥३४॥
इत्युक्त्वा शैलराजः स तूष्णीं बभूव सर्वथा ।
मेनका तु गृहमध्यं गत्वा स्वपिति निश्चला ॥३५॥
ऋषयः प्रेषयामासुर्मेनकां प्रत्यरुन्धतीम् ।
अरुन्धतीं विलोक्यैव नत्वोवाच हि मेनका ॥३६॥
अहोऽद्य किमिदं पुण्यमस्माकं पुण्यजन्मनाम् ।
पतिव्रता वशिष्ठस्य वधूर्याऽत्र समागता ॥३७॥
किमर्थमागता देवि ! दास्यै मह्यं निवेदय ।
श्रुत्वा चारुन्धती प्राह प्रिये यदर्थमागता ॥३८॥
शृणु मेने ! सुसाफल्यं जन्मनो लभतां सखि ।
शिवाय पार्वतीं देहि शिवोऽस्ति ब्रह्म एव सः ॥३९॥
तस्य समृद्धेस्तु नाऽन्तोऽस्ति केन त्वं भ्रामिता वृथा ।
भाग्यहीनस्य या भार्या सा बद्धा गवये भवेत् ॥४०॥
सर्वभाग्यस्य या पत्नी सा भवेत् सर्ववन्दिता ।
शंकरोऽस्ति महात्यागी यावन्नास्ति गृहे वधूः ॥४१॥
सवधूर्वे रचयेत्स वैकुण्ठान्नगरोत्तमम् ।
तव पुत्र्याश्चरणौ तु यत्र स्पृष्टौ स्थले वने ॥४२॥
तत्र सुसमृद्धयः सन्ति शिवोऽपि समृद्धिमान् भवेत् ।
केनाऽनुत्साहिता मेने ! मा शुचः सुस्थिरा भव ॥४३॥
जगत्पूज्यस्य पूज्या त्वं श्वश्रूर्भव सुशाश्वती ।
इत्युक्त्वा तां समादाय सप्तर्षीन् प्रति चाययौ ॥४४॥
सप्तर्षयोऽपि शैलेन्द्रं प्राहुर्हितकरं तदा ।
शिवाय पार्वतीं देहि संहर्तुः श्वशुरो भव ॥४५॥
विधेः प्रार्थनया शंभुस्तव कन्यां ग्रहीष्यति ।
शैलः प्राह न पश्यामि शंभोर्वै राजवैभवम् ॥४६॥
कंचिदाश्रयमैश्वर्यं कं वा स्वजनबान्धवम् ।
वरायाऽननुरूपाय पिता कन्यां ददाति चेत् ॥४७॥
कामान्मोहाद्भयाल्लोभात् स नष्टो नरकं व्रजेत् ।
कन्यापि दुःखिता शापं ददात्याजीवनं तदा ॥४८॥
वशिष्ठः प्राह शैलेन्द्र वचनं त्रिविधं मतम् ।
अहितं सर्वथा चाऽऽद्यं सुखान्तं तु द्वितीयकम् ॥४९॥
आद्यन्तसुखं तृतीयं गृह्णीयात् संविचार्य वै ।
असत्यमहितं पश्चात्साम्प्रतं श्रुतिसुन्दरम् ॥५०॥
सुबुद्धिशत्रुर्वक्ति तत् हितं नैव कदाचन ।
आदावप्रीतिजनकं परिणामे सुखावहम् ॥५१॥
दयालुर्धर्मशीलो हि बोधयत्येव बान्धवः ।
श्रुतिमात्रात् सुधातुल्यं सर्वकालसुखावहम् ॥५२॥
सत्यसारं हितकर्तृ वचनं श्रेष्ठमीरितम् ।
गृही ददाति पुत्रीं स्वां राज्यसम्पत्तिशालिने ॥५३॥
कन्यकां दुःखिने दत्वा कन्याघाती भवेत् पिता ।
को वेद शंकरो दुःखी कुबेरो यस्य किंकरः ॥५४॥
भ्रूभंगलीलया सृष्टिं स्रष्टुं हर्तुं क्षमो हि सः ।
ब्रह्म यत्परमं प्रोक्तं स एवास्ति तु शंकरः ॥५५॥
तस्य च त्रिविधा मूर्तिर्ब्रह्मविष्णुमहेश्वराः ।
ब्रह्मा तु सर्जकः सत्ये विष्णुः पोष्टा विकुण्ठके ॥५६॥
हरो हर्ता च कैलासे समृद्धा ब्रह्मविभूतयः ।
ब्रह्मणः प्रकृतिस्त्रेधा वाणी लक्ष्मीश्च पार्वती ॥५७॥
पार्वती हरपत्नीयं शैल ! जन्मनि जन्मनि ।
दक्षपुत्री सती दग्धा धत्ते तद्भस्म शंकरः ॥५८॥
अतस्त्वं स्वेच्छया कन्यां देहि नित्यवराय वै ।
अथवा सा स्वयं कान्तस्थाने यास्यति दास्यतः ॥५९॥
दुहितुस्ते तपःस्थानं गत्वा चाश्वास्य पार्वतीम् ।
भूत्वा तु भिक्षुकश्चात्र ययाचे त्वां च पार्वतीम् ॥६०॥
प्रस्थापिता वयं तेन सह नीत्वाऽप्यरुन्धतीम् ।
शिक्षयामो वयं त्वां वै देहि रुद्राय पार्वतीम् ॥६१॥
भविता तद्विवाहोऽत्र भवितव्यबलेन वै ।
वरं ददौ स पार्वत्यै तपस्यै शंकरः स्वयम् ॥६२॥
नहीश्वरप्रतिज्ञातं विपरीताय कल्पते ।
एकं दत्वा हि शैलेन्द्र रक्ष्याः सर्वा हि सम्पदः ॥६३॥
एकाऽदाने तु शैलेन्द्र नाश्याः स्युः सर्वसम्पदः ।
पार्वत्यदाने संहर्ता सर्वं भस्मीकरिष्यति ॥६४॥

किं बहुना देहि पुत्रीं शंकराय सुखं भवेत् ।
अद्य वाऽब्ददिनान्ते वा दातव्या कन्यका भवेत् ॥६५॥
वरपात्राय चाऽन्यस्मै कस्मैचिद्वा विशेषतः ।
बुध्वा ब्रह्म सुतां देहि पार्वतीमीश्वराय च ॥६६॥
कुरुषं त्यज शैलेन्द्र मेनया स्वस्त्रिया सह ।
मेना प्राह तदा सर्वान् पार्वत्यां शंकरात्तु यः ॥६७॥
पुत्रश्चोत्पत्स्यते सेनस्तारकं स हनिष्यति ।
दातव्या शंभवे योग्या योग्याय सुखलब्धये ॥६८॥
अथ पुत्रीं पिता शैलः प्रोवाच श्रवणाऽऽतुराम् ।
पुत्रि दत्ताऽसि शर्वाय त्वं मया मेनया तथा ॥६९॥
ऋषीनुवाच वः काली स्तौति शंभुवधूर्मुदा ।
अरुन्धती तदा कालीमाश्वास्याऽऽशिष आददौ ॥७०॥
सप्तर्षयस्ततः प्राहुः शैलराज निशामय ।
जामित्रगुणसंयुक्तां तिथिं पुण्यां सुमंगलाम् ॥७१॥
सप्ताहे समतीते तु दुर्लभेऽतिशुभे क्षणे ।
लग्नाधिपे च लग्नस्थे चन्द्रे स्वतनयान्विते ॥७२॥
मुदिते रोहिणीयुक्ते विशुद्धे चन्द्रतारके ।
मार्गमासे चन्द्रवारे सर्वदोषविवर्जिते ॥७३॥
सर्वसद्ग्रहसंसृष्टेऽसद्ग्रहदृष्टिवर्जिते ।
सदपत्यप्रदे जीवे पतिसौभाग्यदायिनीम् ॥७४॥
कन्यां प्रदाय शर्वाय कृती त्वं भव पर्वत ।
तस्यां तिथौ हरः पाणिं ग्रहीष्यति समन्त्रकम् ॥७५॥
अन्ये च पर्वताश्चापि प्रोचुः शैल तथा कुरु ।
अथ मेना पार्वतीं तु शिवानीत्याह हार्दतः ॥७६॥
मुनीनरुन्धतीं शैलं भोजयित्वा बुभोज च ।
पार्वतीं भूषयित्वा च ऋष्युत्संगे न्यषादयत् ॥७७॥
अयं भागः शंकराय दातव्य इति निश्चितम् ।
शंकरो भिक्षुको ब्रह्म स्वयं दाता हिमालयः ॥७८॥
भैक्ष्यं च पार्वती ब्राह्मी किमतः परमुत्तमम् ।
अथ महर्षयस्तस्यै दत्तवन्तः शुभाशिषः ॥७९॥
स्पृष्ट्वा करेण तां तत्र कल्याणं ते भविष्यति ।
सौभाग्यं सर्वदा ते स्यादखण्डितमथोज्ज्वलम् ॥८०॥
इत्युक्त्वा मुनयः सर्वे दत्त्वा हिमाचलाय तु ।
फलयुक्तानि पुष्पाणि प्रत्ययं चक्रिरे तदा ॥८१॥
अरुन्धती शंभुगुणैर्लोभयामास मेनकाम् ।
हरिद्राकुंकुमैः शैलश्मश्रूणि प्रत्यमार्जयत् ॥८२॥
लौकिकाचारमाधाय मंगलायनमुत्तमम् ।
ततश्च ते चतुर्थेऽह्नि सन्धार्य लग्नमुत्तमम् ॥८३॥
परस्परं च सन्तुष्य संजग्मुः शिवसन्निधिम् ।
प्राहुश्च सफलं सर्वं वाक्दत्ता तेन ते सुता ॥८४॥
उद्वाहाय प्रगच्छ त्वं हिमाचलशुभालयम् ।
विवाहय यथा रीतिः पार्वतीमात्मने हर ॥८५॥
शिवः प्राह विवाहो नैवाऽभ्यस्तः प्राग् विलोकितः ।
आरंभादितिपर्यन्तं विधिः कार्यो महर्षिभिः ॥८६॥
प्रत्यूचुः ऋषयो विष्णुं ससमाजं च वेधसम् ।
इन्द्रमुषिगणान्यक्षगन्धर्वसिद्धकिन्नरान् ॥८७॥
विद्याध्राँश्च सुरान्साध्यदेवादीन्समरुद्गणान् ।
अप्सरसां गणानानयस्व ब्रह्मसरोगणान् ॥८८॥
सर्वे व्यवहृतिसुज्ञाः सस्त्रीका गृहिधर्मिणः ।
योग्यं संसाधयिष्यन्ति त्वत्कार्यं त्वक्षतं यथा ॥८९॥
इत्युक्त्वा ऋषयो नत्वा ययुः पूजां प्रगृह्य च ।
शंभुः प्राह विवाहे मे समागन्तव्यमादरात् ॥९०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने शिवप्रेरितसप्तर्षीणां हिमालयगृहगमनम्, पर्वतानामाह्वानं, पार्वत्या वाक्दानार्थे मन्त्रणा, वाक्दानं लग्नदिननिर्णयश्चेत्यादिनिरूपणनामैकोननवत्यधिक शततमोऽध्यायः ॥१८९॥

**श्रीनारायण उवाच—**

ततो लक्ष्मि हिमगिरिर्गर्गेण स्वपुरोधसा ।
लेखयामास मेर्वादीनामन्त्र्य लग्नपत्रिकाम् ॥ १ ॥
शिवाय प्रेषयामास ससामग्रीसुपत्रिकाम् ।
विप्रो ददौ च तिलकं विधाय शंकराय ताम् ॥ २ ॥
ततः सम्मानितोऽत्यर्थमाजगाम गिरिं द्विजः ।
शैलो निमन्त्रयामास बन्धवादीन् सर्वदिक्स्थितान् ॥ ३ ॥
कारयामास विविधोत्तमस्वन्नादिसंग्रहम् ।
भिन्नजातीयसामग्रीरुद्वाहकरणोचिताः ॥ ४ ॥
तण्डुलानां चणकानां पृथुकानां बहून् बहून् ।
गोधूमानां यवानां द्विदलादीनां तु पर्वतान् ॥ ५ ॥
गुडानां शर्कराणां च लवणानां सुपर्वतान् ।
लड्डुकानां शष्कुलीनां खाजकानां च पर्वतान् ॥ ६ ॥
शाटकानां घृतभ्राणां शतच्छिद्रादिपर्वतान् ।
मौक्तिकानां पिण्डकानां पर्पीणां चापि पर्वतान् ॥ ७ ॥
पूरीणां पोलिकानां च भर्जिकानां महत्तरान् ।
फुल्लवटीपर्पटानां शृंगाणि विविधानि च ॥ ८ ॥

स्वस्तिकानां शर्कराक्तकणानां शिखराणि च ।
दुग्धानां च घृतानां च दध्नां प्रमिष्टवारिणाम् ॥ ९ ॥
अमृतेक्षुरसानां चाऽऽसवानां दीर्घिकास्तथा ।
विविधद्रवपानानां तथा वापीश्चकार सः ॥१०॥
क्षीरसारतरहैयंगवीनानां समुच्छ्रयान् ।
वल्मीकान् कारयामास बहुपक्वान्नपर्वतान् ॥११॥
नैकसंस्कारवस्तूनि शाकपत्रादिकानि च ।
राजिकाराद्धभाजाऽऽरनालादीनि बहून्यपि ॥१२॥
अमूल्यस्वर्णवस्त्राणि बृसीसिंहासनानि च ।
भूतूलिकोल्लेचमुख्यवितानानि महान्ति च ॥१३॥
मणिरत्नप्रकाराणि सुवर्णरजतानि च ।
नैकधानि च पात्राणि यानानि वाहनानि च ॥१४॥
एवमादीनि चान्यानि संगृह्य सुरभीणि च ।
मंगलं कर्तुमारेभे शैलो मंगलकृद्दिने ॥१५॥
विधिपूर्वकसंस्कारं पार्वत्याः पर्वतस्त्रियः ।
कारयामासुरथ तां भूषयामासुराजगुः ॥१६॥
मंगलैर्भूषणैर्मांगलिकद्रव्यैश्च चक्रिरे ।
पौरस्त्रियोऽपि संहृष्टा लोकाचारं प्रचक्रिरे ॥१७॥
बन्धुवर्गाऽऽगमहृष्टः शैलोऽप्याचारमंगलम् ।
सोत्सवं सर्वभावेन चक्रे मंगलमंगलम् ॥१८॥
आयातस्तत्र वै मूर्तो दिव्यो देवालयो गिरिः ।
महारत्नानि चादायाऽनर्घ्योपकरणानि च ॥१९॥
नैकहीरकसद्रत्नमणिभ्राजत्समाजयुक् ।
मन्दराद्रिः साभिजनः सोपायनः समाययौ ॥२०॥
सालंकृतकुटुम्बाऽस्ताचलः सोपद आययौ ।
ससम्बन्धिजनः स्वर्णभूषारत्नमणिभृतः ॥२१॥
उदयाद्रि समायाच्च बह्वानन्दप्रपूरितः ।
आजगाम मलयाद्रिः सरत्नपरिवारकः ॥२२॥
दिव्यशोभः सकलत्रादिराजगाम दर्दुरः ।
सपरिच्छदसपरिवारो निषध आययौ ॥२३॥
सस्त्रीपुत्रहिरण्यादिर्गन्धमादन आगतः ।
महास्मृद्धः करवीरो महेन्द्रश्चाजगाम ह ॥२४॥
ससुतस्त्रीदासदासीकुटुम्बिजनसंयुतः ।
पारियात्रो मणिरत्नखनिस्तत्र समाययौ ॥२५॥
सभृत्यपरिवारोपायनः क्रौंचः समागतः ।
पुरुषोत्तमशैलश्चाजगामोपायनादियुक् ॥२६॥
नीलाद्रिः सपरिवारोपायनादिः समाययौ ।
स्त्रीपुत्रादियुतस्तत्र रैवताद्रिः समाययौ ॥२७॥
उरलः सैन्यसहितो विन्ध्यश्चापि तथाविधः ।
बहुरत्नोपस्करादिसहितस्तत्र चाययौ ॥२८॥
त्रिकूटश्चित्रकूटश्च वेंकटः श्रीगिरिः शुभः ।
गोकामुखो नारदाद्रिराययौ स्वाश्रितादिभिः ॥२९॥
कालंजरश्च सगणः कैलासो दिव्यविग्रहः ।
अन्येऽपि भूभृतो ये च पृथ्व्यां द्वीपेषु संस्थिताः ॥३०॥
समुद्रेषु चान्तरीक्षे ग्रहेष्वपि नगाश्च ये ।
हिमाद्रिणा निमन्त्रिताः सस्त्रीपुत्रसुतादिभिः ॥३१॥
दासदासीभृत्यसेनापरिवारकुटुम्बिभिः ।
सद्रत्नमणिहीरकस्वर्णरूप्यादिवस्तुभिः ॥३२॥
भूषाम्बरविमानैश्च नैकाऽमूल्योपदादिभिः ।
आययुर्बहुसंहर्षा विवाहः शिवयोरिति ॥३३॥
घर्घरः शोणभद्रश्च ब्रह्मपुत्रो महानदः ।
अन्ये नदाः समायाता विवाहः शिवयोरिति ॥३४॥
गोदावरी च यमुना त्रिवेणी च सरस्वती ।
आययुर्दिव्यभूषाढ्या विवाहः शिवयोरिति ॥३५॥
महामोदा नर्मदा च गंगा च रुद्रकन्यका ।
महाप्रीत्याऽऽययुर्दिव्या विवाहः शिवयोरिति ॥३६॥
सिन्धुस्तपती कावेरी तुंगभद्रा महीनदी ।
ओजस्वती स्वर्णरेखा भद्रा साभ्रमती तथा ॥३७॥
शत्रुंजिता गोमती च भोगवती च गण्डकी ।
ताम्रपर्णी देवनद्यस्तथाऽन्या आपगाः शुभाः ॥३८॥
पुत्रपुत्रीपरिवारकुटुम्बिजनसंकुलाः ।
भूषारत्नपरिहाराऽर्पणसामग्रिकायुताः ॥३९॥
दिव्या देवीस्वरूपाः सुरूपाः कनकसूज्ज्वलाः ।
षोडशन्यूनवर्षाढ्याः सर्वा लावण्यमूर्तयः ॥४०॥
समाजग्मुर्महानन्दा विवाहः शिवयोरिति ।
महाकालवनं सुन्दराख्यं मधुवनं वनम् ॥४१॥
वृन्दावनं तथाऽन्यानि वनान्यावयुरादरात् ।
सिंहारण्यं तथा धर्मारण्यं नैमिषमित्यपि ॥४२॥
अन्यान्यपि समृद्धान्यरण्यान्याययुरादरात् ।
कुरुक्षेत्रं भृगुक्षेत्रं ब्रह्मक्षेत्रादिकानि च ॥४३॥
सुस्मृद्धान्याययुः प्रेम्णा विवाहः शिवयोरिति ।
स्वर्णपूर्यादयः पुर्यो दिव्यानि नगराणि च ॥४४॥
भुवनानि समाजग्मुर्विवाहः शिवयोरिति ।
स्वर्णरौप्याभूषणानि दिव्यानि वसनानि च ॥४५॥
सुगन्धादीनि सर्वाणि मर्दनार्हाणि यान्यपि ।
अम्लानफलपुष्पाणि सद्रत्नमणिहीरकान् ॥४६॥

पात्राणि च विचित्राणि भूरीणि ह्यासनानि च ।
वाहनानि सुयानानि विमानानि महान्ति च ॥४७॥
मौक्तिकानां दिव्यहारान् दिव्योपकरणानि च ।
श्रृंगाराणि विविधानि वेषानश्वदर्शनान् ॥४८॥
सूर्यसमोज्ज्वलान्दिव्यान् भामन्तोऽसीमकान्तिकान् ।
उपायनाय संगृह्य विवाहः शिवयोरिति ॥४९॥
आगतैस्तैस्ततः सर्वैः सर्वतो हिमभूभृतः ।
संकुलाऽऽसीत्पुरी दिव्या बहुशोभान्विता तदा ॥५०॥
गोपुराः शोभिताः केतुध्वजवितानतोरणैः ।
घटैर्वस्त्रैः कलीहारैः कदलीस्वस्तिकैः शुभैः ॥५१॥
रंगवल्लीविचित्रैश्च दीपवांदित्रमण्डिताः ।
राजमार्गाश्चतुष्काश्च रथ्याः सौधा विहारकाः ॥५२॥
उद्यानस्थलभागाश्च मार्जनाऽऽसेचनर्द्धिभिः ।
संस्कृता गन्धिताश्चालंकृता वै स्वर्गसन्निभाः ॥५३॥
सुच्छाया मण्डपा निवृत्तार्कतापा विधापिताः ।
पानभोजनशालाश्च विरामभूमिकाः कृताः ॥५४॥
नटनर्तकगन्धर्वमल्लचारणपर्षतः ।
व्याख्यानरंजनक्रीडाप्रदर्शनकथानकाः ॥५५॥
कारिता विविधानन्दकराः प्राघूणिकार्थकाः ।
किं न्यूनं भूधरो यत्र श्वशुरो भवतीति वै ॥५६॥
भगवान् शंकरो यस्य जामाताऽऽयास्यति गृहम् ।
जगदम्बा महामाया वधूर्भवति यत्र च ॥५७॥
यथा स्वर्गे भवेद्दिव्यं वैकुण्ठमपरं च वा ।
यथा वा ब्रह्मणो लोकस्तथा दिव्यति वै पुरी ॥५८॥
हिमालयो महाप्रीत्या भावतः श्रद्धयाऽऽदरात् ।
समागतानां सम्मानं चकाराति यथायथम् ॥५९॥
सर्वान् सौधेषु रम्येषु सप्रेंखोद्यानवारिषु ।
सदोलाशयनागारासनवस्तुविभासिषु ॥६०॥
स्वर्विमानस्वरूपेषु ददौ वासान् पृथक-पृथक् ।
दासदासीश्च सेवायां न्ययुंक्त लक्षशस्तदा ॥६१॥
सामग्रीभिरनेकाभिरिष्टाभिः शैलराट् च तान् ।
तोषयामास दानैश्च भोग्यैश्च कृत्स्नशो गिरिः ॥६२॥
स्वपुर्यां स्वांगणे कारयामास रचनां शुभाम् ।
द्वारि द्वारि तु रंभादिमंगलानि कृतानि वै ॥६३॥
प्रांगणं रचयामास रंभास्तंभसमन्वितम् ।
पट्टस्तंभसुनिबद्धरसालपत्रतोरणम् ॥६४॥
मालतीमाल्यहारालिकृतकांगरिकान्वितम् ।
चतुर्दिक्षु महामंगलद्रव्यादिविभूषितम् ॥६५॥
पुरस्कृत्य गिरिर्गर्गं प्रस्तावार्हसुमंगलम् ।
स्वपुत्र्यर्थं मुदा चक्रे सर्वं श्रेष्ठतरं तदा ॥६६॥
पृथ्वी देवी समागत्य मण्डपार्थं भुवं ददौ ।
अन्तरीक्षगता भूः सा तदा द्यौरिव शोभते ॥६७॥
आहूय विश्वकर्माणं कारयामास मण्डपम् ।
पौरटं चातिविस्तीर्णं वेदिकादिमनोरमम् ॥६८॥
हिमालयोपत्यकायां बहुयोजनविस्तृतम् ।
नैकचमत्कृतियुक्तं व्योमस्थं तु यथादिवम् ॥६९॥
स्थावरं जंगमं सर्वं सादृश्येन परस्परम् ।
दर्शकभ्रान्तिजनकं हंसपार्षदमिश्रितम् ॥७०॥
जंगमं स्थावरेणात्र शोभया विजितं तदा ।
स्थावरं जंगमेनापि जितं विशिष्टशोभया ॥७१॥
जलेन तु जिता भूमिः स्थलेन च जितं जलम् ।
किं स्थलं किं जलं तत्र नाऽबुद्ध्यत यथार्थतः ॥७२॥
द्वारे कम्मानिकापार्श्वे क्वचित् सिंहास्तु कृत्रिमाः ।
क्वचित्तु सारसा हंसाः क्वचित् तत्र तु हस्तिनः ॥७३॥
क्वचित् शिखण्डिनस्तत्र शुका मेनाश्च सारिकाः ।
कोकिलाश्च क्वचित्तत्र कृत्रिमाश्चेतना इव ॥७४॥
क्वचित्कम्मानिकोर्ध्वे च नृत्यन्त्यः पुरुषैः स्त्रियः ।
मोहयन्त्यो दर्शकाँश्च पश्यन्त्यः कृत्रिमाश्च ताः ॥७५॥
क्वचिद्ग्रोर्ध्वके भागे पर्यश्चाप्सरसस्तथा ।
सपुष्पमालाः पक्षाढ्या दिव्यास्ताः कृत्रिमाः स्थिताः ॥७६॥
सोपानगोपुराग्रेषु द्वारपाला धनुर्युताः ।
सशस्त्राः सधूष्कृतयो भूशुण्डीसहितास्तथा ॥७७॥
धृताक्षयश्च तिष्ठन्ति स्थावरा जंगमोपमाः ।
द्वारि स्थिता महालक्ष्मीरुपरि कृत्रिमा शुभा ॥७८॥
गजैर्घटैः सकमलैरभिषिक्ता द्विपार्श्वतः ।
सरस्वती कृत्रिमा च तन्त्र्या गायति वादिका ॥७९॥
चतुष्केऽम्बालिकायुक्ताऽलंकृताः कृत्रिमा गजाः ।
अश्वाः सालंकृताश्चाश्ववारा गजपकादयः ॥८०॥
रथा रथिभिराकृष्टवाहनाग्रसुशोभिनः ।
वाहनानि गरुडाश्च हंसा यानानि भूरिशः ॥८१॥
पत्तयश्च विमानानि कृत्रिमान्यकृतोपमाः ।
तस्य सभाग्रहे कृत्रिमोद्यानो द्रुमराजिमान् ॥८२॥
कृत्रिमाश्च नटा नट्यो नर्तका बहुरूपिणः ।
अप्सरोरासकर्त्रीणां मण्डलानि कृतानि च ॥८३॥
एवं विमोहनार्थं च मण्डपेऽपि कृतं बहु ।
मुन्यृर्षीणां च देवानां नदीनां भूभृतां तथा ॥८४॥

नदानां चाप्यरण्यानां कृत्रिमाः रूपपंक्तयः ।
जंगमभ्रान्तिदाः सर्वाः कृता वै विश्वकर्मणा ॥८५॥
ये ये तत्राऽऽगताश्चान्ये समायास्यन्ति ये च ताम् ।
कृत्रिमान् मण्डपे स्थल्यां विश्वकर्मा चकार ह ॥८६॥
जनवाहाः शंकरश्च वरवेशो वृषोपरि ।
कृत्रिमश्च कृतो विश्वकर्मणा शंभुतुष्टये ॥८७॥
महाद्वारि तथा नन्दी स्फटिका भो महान् कृतः ।
नन्द्युपरि त्वन्तरीक्षे ककुदाधारकं महत् ॥८८॥
रत्नाढ्यं पुष्पकसंज्ञं विमानं कृत्रिमं कृतम् ।
सुछत्रचामरादर्शपत्रतोरणशोभितम् ॥८९॥
दिव्यप्रदीपताराधिवासितं शशिसूज्ज्वलम् ।
कदलीपल्लवपुष्पफलमालाद्यलंकृतम् ॥९०॥
वामपार्श्वे गजौ स्वर्णवर्णौ साऽम्बालिकौ कृतौ ।
चतुर्दन्तौ षष्टिवर्षौ मदयुक्तौ गिरिप्रभौ ॥९१॥
तथाऽश्वौ द्वौ सूर्यवर्णौ ह्यलंकृतौ तु कृत्रिमौ ।
कृतौ चान्ये प्रतीहाराः स्वर्णवेत्रधरा जनाः ॥९२॥
कृत्रिमाश्च हसन्तश्च लोकपालाः शुभाः कृताः ।
सर्वे देवीयुता देवाः कुटुम्बसहिताः कृताः ॥९३॥
उपदेवा गुह्यकाश्च सिद्धचारणकिन्नराः ।
ऋषयः पितरश्चैव मनवश्चापि कृत्रिमाः ॥९४॥
अयोजितात्ममात्रास्ते दृश्यन्ते चेतना इव ।
विष्णुर्लक्ष्मीयुतो नारायणश्च रमया युतः ॥९५॥
वाण्या युतस्तथा ब्रह्मा गरुडो हंस इत्यपि ।
पार्षदाश्च कुटुम्बानि तत्तदीयानि सर्वथा ॥९६॥
वेदाश्च सनकाद्याश्च पाठकाः करपुस्तकाः ।
कृत्रिमाश्च कृताः सर्वे प्रीतेन विश्वकर्मणा ॥९७॥
ऐरावतस्थितश्चेन्द्रः पत्नीपुत्रादिसंयुतः ।
अन्ये च धनदाद्याश्च दिक्पाला लोकपालकाः ॥९८॥
कृत्रिमाश्च कृतास्तत्र विश्वकर्मेश्वरेण वै ।
बहूक्तेन च किं लक्ष्मि ! ह्युभयोः पक्षयोस्तु यः ॥९९॥
समाजश्चागतश्चाथाऽऽगमिष्यति महाजनः ।
ते सर्वे ताश्च सर्वाश्च कृत्रिमा विश्वकर्मणा ॥१००॥
निर्मिता अकृतनिभा आश्चर्यार्थं द्वयोस्तयोः ।
इत्यत्र मण्डपे मञ्चा बृस्यश्चोपरि पट्टिकाः ॥१०१॥
दुग्धाऽऽभा स्फटिकाभाश्च दर्पणाभाः कृताः शुभाः ।
स्थल्यश्चन्द्रनिभा रम्या हरिताः शाद्वलात्मिकाः ॥१०२॥
कृत्रिमाश्चित्रितास्तत्र मुह्येयुर्भ्रान्तिचेतनाः ।
स्वयंभुवो निवासार्थं कृत्रिमः सत्यलोकजः ॥१०३॥
सौधः सुधर्मा सुसभा कृत्रिमा चाद्भुता कृता ।
विष्णोर्निवासनार्थाय वैकुण्ठं बहुस्मृद्धिमत् ॥१०४॥
दिव्यं दिव्याश्चर्यमयं विरेजे विश्वकर्मकृत् ।
इन्द्रपुरी कृत्रिमा च कृता यद्वत् दिवि स्थिता ॥१०५॥
तथाऽन्यदिक्प्रपालानां पुर्यो निवासनाय हि ।
लोकपालमनूनां च पुर्यश्च विश्वकर्मणा ॥१०६॥
कृत्रिमास्तत्र रचितास्तत्तद्वासाय चाम्बरे ।
सदनानि निवासाय महादिव्याऽद्भुतानि च ॥१०७॥
रचितानि महाबुद्धया क्षणतो विश्वकर्मणा ।
सौधानां पंक्तयो राजप्राकाराः कृत्रिमाः कृताः ॥१०८॥
तथा दिव्यं च कैलासं रचयामास सूज्ज्वलम् ।
सर्वस्मृद्धिमयं गेहं शंकरस्य महात्मनः ॥१०९॥
बदरिकाश्रमस्तत्र श्वेतश्च क्षीरसागरः ।
गोलोकश्चित्रितस्तत्र कृत्रिमश्च द्रवैः कृतः ॥११०॥
एवंभूताः कृता विश्वकर्मणा रचनाः शुभाः ।
शर्वहर्यादयः सर्वे प्रसन्नाः स्युरितीच्छया ॥१११॥
सर्वं सज्जं शोभितं च कृतं च कारितं मुदा ।
पुत्र्या विवाहशोभाभिवृद्धये हिमभूभृता ॥११२॥
एवं सुसज्य सर्वार्थे लोकरीतिं विवर्ध्य च ।
पर्यैक्षिष्ट मुदा शंभ्वागमनं स हिमाचलः ॥११३॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने हिमालयेन पक्वान्नरत्नोपकरणानां राशयो, मंगलानि च कारितानि, निमन्त्रितपर्वतनदनदीतीर्थारण्यदेवदेव्याद्यागमनम् , नगरमण्डपादिशोभा विश्वकर्मद्वारा कारिता चेत्यादिनिरूपणनामा नवत्यधिकशततमोऽध्यायः ॥१९०॥

**श्रीनारायण उवाच—**

शृणु प्रिये प्रवक्ष्यामि शंभुः किंकिं चकार च ।
कैलासे संस्थितो देवः प्राप्य मंगलपत्रिकाम् ॥ १ ॥
मानं व्यधाद् वाचयित्वा स्वीचकार विधानतः ।
सत्कृत्य पत्रिकावाहं यापयामास चादरात् ॥ २ ॥
विष्णुप्रभृतिदेवान्निमन्त्रयामास शंकरः ।
सर्वे आयान्तु सोत्साहाः सस्त्रीपुत्रसुतादयः ॥ ३ ॥
नागमिष्यन्ति ये त्वत्र मद्विवाहोत्सवे तु ते ।
स्वकीया नैव मन्तव्या ये केऽपि स्युर्महाजनाः ॥ ४ ॥

नारदं प्रेषयामास चतुर्दशसु भूमिषु ।
निमन्त्र्य मानतः सर्वान् त्वाययौ शंकरं मुनिः ॥ ५ ॥
अथ प्राघूणिकानां च सन्मानाय तु शंभुना ।
रचितं नगरं दिव्यं कैलासमपरं नवम् ॥ ६ ॥
सौधानि यत्र लक्षाणि गृहाश्च कोटिशस्तथा ।
उद्यानानि सहस्राणि वाटिकाः शतशस्तथा ॥ ७ ॥
वाप्यश्च दीर्घिकाश्चैव विमानानि च मण्डपाः ।
रसशालाः सूदशाला नृत्यशाला विहारिकाः ॥ ८ ॥
भोज्यशाला मोदशालाः प्रदर्शन्यस्तथाऽतुलाः ।
पानशालाः स्नानशालाः कुण्डाः कथासभागृहाः ॥ ९ ॥
मण्डपाः कारिता दिव्याः समस्तं निहितं दिवम् ।
न न्यूनं ब्रह्मलोकाद्वा वैकुण्ठाद्वापि नाकतः ॥१०॥
जनवाहास्त्वाययुश्च ब्रह्माण्डस्था निमन्त्रिताः ।
सकुटुम्बपरीवारदासदासीसुहृज्जनाः ॥११॥
प्रथमं तु महाविष्णुर्लक्ष्मीयुक्तः सपार्षदः ।
शृंगारान् रचयित्वा चाऽऽजगाम सपरिच्छदः ॥१२॥
स्वकुटुम्बानि सर्वाणि चादाय विश्वसृट् तथा ।
तद्दासदासीवर्गैश्चाऽऽययौ चाऽलंकृतोऽभितः ॥१३॥
वैराजा ब्रह्ममुनयो वासुदेवादयस्तथा ।
अवतारा हरेश्चैव रुद्राश्च कोटिशस्तथा ॥१४॥
यमादयश्च पितरः सौर्याश्चान्द्रा गणास्तथा ।
लोकपालाश्च ऋषयो दिक्पाला भिन्नमूर्तयः ॥१५॥
सालंकृताः सशृंगाराः सर्वपरिच्छदैर्युताः ।
सस्त्रीपुत्रसुतास्वसृतत्कुटुम्बादिकान्विताः ॥१६॥
आययुः शिवकैलासं विवाहः शिवयोरिति ।
पितरो द्यौः समस्ता च यक्षाश्च राक्षसा अपि ॥१७॥
भूताः प्रेताः पिशाचाश्च गणाश्चार्बुदकोटयः ।
कूष्माण्डा भैरवाश्चैव वैताला श्चाग्नयस्तथा ॥१८॥
विद्युतश्च महाकालो जरामृत्युमहालयाः ।
रात्र्यो धूम्रास्तथा देव्यश्चण्डिकाद्याश्च मातरः ॥१९॥
ज्वराश्चापि तथा रोगाः केतवश्च ग्रहास्तथा ।
उपद्रवास्तथाऽऽयाता विवाहः शिवयोरिति ॥२०॥
किंपुरुषा मागधाश्च सूताश्चापि च बन्दिनः ।
चारणाश्च तथा भूस्था दिव्यमानुषयोनयः ॥२१॥
स्थावरा जंगमाश्चैवाऽर्णवा नद्यो नदादयः ।
असुरा दानवा दैत्याः शैवा ये कद्रुजास्तथा ॥२२॥
नागाः सर्पाश्च गरुडा ये चान्ये शैवपक्षगाः ।
देवा देव्यश्चार्बुदाब्जशैवधिसंख्यकास्तदा ॥२३॥
सस्त्रीपुत्रकुटुम्बाश्च पृथ्व्याद्याः शिवमूर्तयः ।
सोत्साहाः सपरिच्छदाः सालंकाराः सवाहनाः ॥२४॥
दुर्वासादिमहायोगिजना योगिन्य इत्यपि ।
साध्व्योऽवधूतवर्याश्चाऽवधूतान्यस्तदाऽऽययुः ॥२५॥
आजग्मुर्ब्रह्मचारिण्यो दुर्गा देव्यस्तथाऽऽययुः ।
शक्तयश्चाययुः सर्वा विवाहः शिवयोरिति ॥२६॥
आगतानां स्वयं शंभुः सत्कारान् बहुधा व्यधात् ।
महोत्सवे सुनृत्यानि चक्रे नर्तकिकागणः ॥२७॥
वरयात्रां कारयितुं कैलासे महीमानकाः ।
न्यूषुः कार्यं स्वकं मत्वा चक्रिरे सुसहायताम् ॥२८॥
चक्रिरे पिष्टिकामर्दं शंभोर्वै सर्वमातरः ।
चक्रिरे च यथायोग्यं शिवभूषाविधिं परम् ॥२९॥
अवाद्यन्त सुवाद्यानि शिवभूषाविधौ तदा ।
भुंजते च महीमाना नृत्यन्ति सुरयोषितः ॥३०॥
शृंगारयन्ति यानानि जनवाहाः पृथक्-पृथक् ।
संस्कारयन्ति गात्राणि देव्यः श्रांगारिकैर्द्रवैः ॥३१॥
महोत्साहाः प्रवर्तन्ते मण्डपे मण्डपे तदा ।
पूर्वसृष्टौ समुत्पन्ना गणेशाः कार्तिकास्तथा ॥३२॥
वैराजधामतो लक्षा आययुर्मंगलार्थकाः ।
शाश्वतस्य पितुः कार्ये सहाया वाहिनीकृते ॥३३॥
शिवस्य तु तदा वेषः कीदृशोऽभूच्छृणु प्रिये ।
तस्य स्वाभाविको वेषो भूषाविधिरभूत् तदा ॥३४॥
स्वाभाविके जटायूथे विद्युतः स्तनयित्नवः ।
शीता भूत्वा स्थिता ह्यासन् प्रोज्ज्वलाः केशराशयः ॥३५॥
गंगा स्वयं वारिरूपा ब्रह्मकिरणमिश्रिता ।
तेजःपरिधिं त्वभितश्चक्रे धाममयं तदा ॥३६॥
गोलोकात्स्वर्णमुकुटो दिव्यो जटासहायकृत् ।
श्रीकृष्णेनार्पितः कल्गिसहितो मूर्ध्नि राजते ॥३७॥
पारीजातकुसुमानां हाराली तत्र लम्बते ।
द्वितीयायाः शशी भाले सकलस्तिलकायते ॥३८॥
शान्तमुन्निद्रमतिभं चक्षुर्भाले तृतीयकम् ।
सप्रकाशं तदा भाले त्रिपुंड्ररचनायते ॥३९॥
कामरूपधरौ सर्पौ वासुकी कर्णयोस्तदा ।
कुण्डलेऽभवतां शंभोः रत्नमण्यंचिते प्रभे ॥४०॥
कण्ठे तु वासुकिः कण्ठी पौरटी दृश्यते शुभा ।
भुजयोर्वासुकी स्वर्णकटकेऽभवतां तदा ॥४१॥
रुद्राक्षाश्च तदा शंभोः प्रकोष्ठशृङ्खलामयाः ।
पौरटा मणियुक्ताश्च बभूवुः कामरूपगाः ॥४२॥

मालायाः स्फटिकाश्चास्योर्मिकाः स्युस्त्वग्निजाः शुभाः ।
चिताभस्माऽस्य नेत्रेषु कज्जलं चाऽभवत् तदा ॥४३॥
तच्च भस्म मुखे शंभोर्द्रवो जातो हि दुग्धजः ।
धवलं लेपनं चूर्णं भस्माऽभवत्तु वर्ष्मणि ॥४४॥
वल्कलं तु तदा जातं स्वर्णकंचुकमुत्तमम् ।
गजचर्म तदा जातं सुसम्राड्डुत्तरीयकम् ॥४५॥
मेखला च तदा जाता रशना दिव्यपौरटी ।
सप्तविंशतिरज्ज्वाढ्या नद्धसद्रत्नहीरका ॥४६॥
तदा हिमकणाः शंभोरभवंश्चन्दनार्हणाः ।
कण्ठस्थितं विषं तस्य तदा वै कौस्तुभोऽभवत् ॥४७॥
व्याघ्रचर्माऽभवत् कट्यां दुकूलं पीतवस्त्रकम् ।
त्रिशूलं चाऽभवत्तस्य स्वर्णखड्गो महोज्ज्वलः ॥४८॥
पावटिकाऽभवत्तस्य पौरटी यष्टिका शुभा ।
काष्ठस्य पादुके स्वर्णमखमल्लसुकोमले ॥४९॥
सुस्निग्धेऽभवां पादरक्षिके दिव्यशोभने ।
भंगाऽभवत्तदा चास्य ताम्बूलं सुसुगन्धवत् ॥५०॥
गंजोऽभवत्तदा तस्योत्तेजिका गूटिका परा ।
कनकाश्च तदा तस्याऽभवत् केयूरनूपुराः ॥५१॥
मुण्डमालाऽभवन्महामणिमाला ह्यमूल्यका ।
कपालं च तदा त्वस्याऽभवच्छ्रेष्ठसुशेखरः ॥५२॥
विवृत्य वृषभस्तत्राऽभवत् श्वेतं विमानकम् ।
सहस्रश्वेतहस्त्यश्ववृषवाहादिसंयुतम् ॥५३॥
गजाधिरूढो देवेन्द्रश्छत्रं शुष्कपटं विभोः ।
धारयामास विततं सहेन्द्राण्या सहस्रधृक् ॥५४॥
यमुना सरितांश्रेष्ठा कच्छपे संस्थिता तदा ।
प्रगृह्य वालव्यजनं श्वेतं भाति च पार्श्वतः ॥५५॥
सरस्वती द्वितीयं तद्गजारूढा समादधे ।
ऋतवः षट् कुसुमानामंजलीन्दधते हरे ॥५६॥
वह्नयश्च प्रदीपान्संगृह्य वै सर्वतः स्थिताः ।
समुद्रश्चानुलेपस्य पात्रमादाय संस्थितः ॥५७॥
ईदृशं सुन्दरं रूपं कामरूपं धृतं तदा ।
सर्वं परिणतं चेशेऽपरिणामपरात्मनि ॥५८॥
ईशेच्छया क्रूररूपा योग्यरूपास्तदाऽभवन् ।
वरयोग्यविभूषास्तेऽभवन् श्रीशंकरेच्छया ॥५९॥
एवं यात्राजने सज्जीकृते शंकरपक्षगाः ।
समेत्य प्राहुरस्माभिः सह यानं कुरु प्रभो ॥६०॥
विष्णुः प्राह तदा शंभुं गृह्योक्तविधिनाऽद्य वै ।
स्वविवाहस्य पार्वत्याः कर्म कर्तुमिहाऽर्हसि ॥६१॥

मण्डपस्थापनं नान्दीमुखं कर्म च कारय ।
ब्रह्मा ह्यधिकृतस्तत्राऽभ्युदयोचितकर्मणि ॥६२॥
ब्रह्मणा नोदिताश्चक्रुः ऋषयो विधिवत् क्रियाम् ।
कश्यपोऽत्रिर्गौतमश्च कण्वो बृहस्पतिर्गुरुः ॥६३॥
वसिष्ठो भागुरिः शक्तिरगस्त्यश्च्यवनस्तथा ।
गर्गः शिलादोऽकृतश्रमोऽरुणश्च पराशरः ॥६४॥
जमदग्निः शिलापाको मार्कण्डेयोऽकृतव्रणः ।
भरद्वाजो दधीचिश्चोपमन्युः कुशिकस्तथा ॥६५॥
पिप्पलादश्च कौत्सश्च श्वेतव्यासः सशिष्यकः ।
वेदोक्तविधिकर्माणो वेदवेदांगपारगाः ॥६६॥
ऋषयो लक्षशस्तत्र त्वाययुर्मंगलाह्वयाः ।
रक्षां चक्रुश्च ते शंभोः कृत्वा कौतुकमंगलम् ॥६७॥
वेदोक्तविधिना चक्रुः ऋग्यजुःसामसूक्तकैः ।
मंगलानि विविधानि शंभुना ग्रहपूजनम् ॥६८॥
मंडलस्थसुरपूजां चक्रुश्च विघ्नशान्तये ।
ततः शिवः प्रसन्नः सन्ननाम द्विजपुंगवान् ॥६९॥
विप्रान् देवादिकानग्रे कृत्वा वै निःससार सः ।
कैलासाच्च बहिः सज्जो भूत्वा गत्वा स्थितो हरः ॥७०॥
गानवाद्यसुनृत्यानि जायन्ते च तदोत्सवः ।
ययुश्चापि गणाश्चान्यो कैलासरक्षकान् विना ॥७१॥
अभ्यगाच्छंखकर्णश्च गणकोट्या सुसमृद्धया ।
दशकोट्या केकराक्षो विकृतश्चाऽष्टकोटिकः ॥७२॥
चतुःकोट्या विशाखः पारिजातो नवकोटिकः ।
सर्वान्तकश्च विकृताननश्च षष्टिकोटिभिः ॥७३॥
दुन्दुभोऽष्टकोटिभिश्च कपालः पञ्चकोटिभिः ।
कन्दुकः कुन्दकश्चोभौ कोटिकोटिगणैर्युतौ ॥७४॥
षड्भिः सन्दारको विष्टंभकोऽष्टकोटिभिर्युतः ।
पिप्पलश्च सनादश्च सहस्रकोटिभिर्युतः ॥७५॥
आवेशनोऽष्टकोटिभिस्तद्वद्वै चन्द्रतापनः ।
सहस्रकोटिभिर्युक्तो महाकेशो गणो ययौ ॥७६॥
कुण्डश्च पर्वतश्चैव द्वादशकोटिसंयुतौ ।
कालश्च कालकश्चाग्निर्महाकालो गणेश्वराः ॥७७॥
शतकोटिगणैर्युक्ताः कोट्याऽग्निमुख इत्यपि ।
आदित्यमूर्धा कोट्या च कोट्या चैव घनावहः ॥७८॥
सन्नाहः कुमुदोऽमोघः कोकिलो गणनायकाः ।
शतकोट्या ययुश्चाथ सुमन्त्रः कोटिकोटिभिः ॥७९॥
काकपादोदरः कोटिषष्ट्या सन्तानकस्तथा ।
महाबलो मधुपिंगो नवभिः कोटिभिर्युतः ॥८०॥

नीलश्च पूर्णभद्रश्च नवतिकोटिभिर्युतौ ।
चतुर्वक्त्रः सप्तकोट्या करणो विंशकोटियुक् ॥८१॥
यज्ञाक्षः शतमन्युश्च मेघमन्युस्तथा परः ।
अहिरोमको नवतिकोटिभिः सहिता ययुः ॥८२॥
काष्टागूष्टश्चतुःषष्ट्या सहितो गणनायकः ।
विरूपाक्षः सुकेशश्च वृषभश्च सनातनः ॥८३॥
संवर्तको लकुलीशश्चऽच्वास्यश्च षडाननः ।
संवर्तकस्तालकेतुर्नकुलीशोऽथ चैत्रकः ॥८४॥
लोकान्तकश्च दीप्तात्मा भृंगिर्दैत्यान्तकस्तथा ।
रिटिर्देवप्रियोऽशनिर्भानुकश्च गणा इमे ॥८५॥
चतुःषष्टिकोटिगणैर्ययुर्विवाहसूत्सवाः ।
साऽलंकाराः शुभवेषा विवाहः शिवयोरिति ॥८६॥
भूतकोटिसहस्रं प्रमथास्त्रिकोटिका ययुः ।
वीरभद्रश्चतुःषष्ट्या रोमजानुस्त्रिकोटिभिः ॥८७॥
नन्द्याद्या द्विसहस्रेण कोटिकोटिसहस्रकैः ।
कोटिकोटिगणैर्युक्तो भैरवोऽपि ययौ तदा ॥८८॥
अनेकहस्ताः सुरूपा जटामुकुटधारिणः ।
चन्द्रमालाः सुत्रिनेत्रा नीलकण्ठास्त्रिशूलिनः ॥८९॥
रुद्राक्षभस्मसंशोभा दिव्यरूपा महेश्वराः ।
हारकेयूरकुण्डलमुकुटाद्यैरलंकृताः ॥९०॥
अणिमाद्यैः सेविताश्च व्योमभूस्वर्गचारिणः ।
सप्तस्वःसप्तपातालचारिणः के च संययुः ॥९१॥
सर्वे प्रसन्नमनसः कामरूपधरास्तथा ।
देवाः सौम्यास्तदा भूत्वा ययुस्तस्मिन् महोत्सवे ॥९२॥
हर्षो माति न सर्वेषां विवाहः शिवयोरिति ।
रुद्रस्य भगिनी चण्डी सर्पाभरणभूषिता ॥९३॥
प्रेतवाहसमारूढा मूर्ध्नि स्वर्णघटान्विता ।
जलपूर्णकलशा सा सुरूपा हर्षविह्वला ॥९४॥
कुतूहलसमायुक्ता तत्राऽऽजगाम सूत्सवे ।
कोटिभूतगणैर्युक्ता ह्यायाता जयवादिनी ॥९५॥
कोट्यैकादशरुद्रैश्च पृष्ठं यातैरनुद्रुता ।
डमरूणां महाघोषास्तदा व्याप्ता जगत्त्रये ॥९६॥
दुन्दुभिशंखभेरिणां घोषैश्चापूरितं जगत् ।
गणानां पृष्ठतो देवास्ततः सिद्धा महर्षयः ॥९७॥
ततोऽन्वयुर्लोकपाला मध्ये सगरुडो हरिः ।
लक्ष्मीयुक् पार्षदैर्युक्तः स्वभूषाभूषितैः शुभैः ॥९८॥
कोट्यर्बुदैर्वैष्णवैश्च दासैरब्जाब्जवर्गकैः ।
लक्ष्मीभिश्च रमाभिश्च कमलाभिर्युतो ययौ ॥९९॥
ततो ब्रह्मा वेदशास्त्रसंहिताऽऽगमवित्तिभिः ।
वैराजैर्ब्रह्मचर्यस्थैः सिद्धैश्च सनकादिभिः ॥१००॥
प्रजापतिभिः पुत्रैश्च सावित्रीप्रमदादिभिः ।
ऋषिभिर्मुनिभिश्चैव सालंकृतोऽनुसंययौ ॥१०१॥
हंसयानविमानैश्च वाहनैः समलंकृतैः ।
ततः ससैन्यस्त्विन्द्रश्च ऐरावतकृतासनः ॥१०२॥
नैकदेवगणैर्युक्तो रेजे सालंकृतः कृती ।
ततश्च ऋषयो विप्राः साध्व्यश्च साधवस्तथा ॥१०३॥
त्यागिनो वानप्रस्थाश्च वैष्णवाः संययुर्मुदा ।
सर्वे निमन्त्रिता हृष्टा विवाहः शिवयोरिति ॥१०४॥
योगिनो यतयश्चैव वीतरागाः शिवायनाः ।
सन्न्यासिनस्तदा जग्मुर्विवाहः शिवयोरिति ॥१०५॥
गण्यश्च गणिकाश्चापि कोटिकोट्यः शिवायनाः ।
गणदास्यो गणपत्न्यो जग्मुरसंख्यकोटिकाः ॥१०६॥
भूषावेशादिसंशोभाः सर्वालंकृतिशोभनाः ।
सर्वाः कैलासवासास्ता विवाहः शिवयोरिति ॥१०७॥
ततो ययुर्योगिनीनां मण्डलान्यर्बुदानि च ।
सन्यासिनीनां यूथानि कोट्यब्जानि ययुर्मुदा ॥१०८॥
यदर्थमाश्रमाः सर्वे वर्णा यदर्थमादृताः ।
यदर्थं सम्प्रदायास्तद्विवाहः शिवयोरिति ॥१०९॥
डाकिन्यश्चापि शाकिन्यो वेतालिन्यश्च मातरः ।
भैरव्यो यातुधान्यश्च किन्नर्यश्च ययुस्तदा ॥११०॥
तुम्बुरुर्नारदो हाहा हूहूश्च पर्वतादयः ।
गन्धर्वाः किन्नरा जग्मुर्वाद्यान्याध्माय हर्षिताः ॥१११॥
कोटिकन्यापरिवृतो वरः शृंगारशोभितः ।
देवीभिर्वर्धितो गीतैः शंकरश्च ययौ ततः ॥११२॥
शुद्धस्फटिकसूज्ज्वलवृषविमानमारुढः ।
परीभिः पूजितो व्योम्ना ब्रह्मसरोभिरादरात् ॥११३॥
पुष्पवृष्ट्या जयनादैर्वर्धितः शंकरो ययौ ।
हिमशैलसुतापाणिग्रहणार्थं हरो ययौ ॥११४॥
नारदः प्रेषितश्चाग्रे हिमाद्रेर्भवनं प्रति ।
वरवाहिन्यागमादिसूचनार्थं द्रुतं ययौ ॥११ ॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने शंकरेण लग्नपत्रिका प्राप्ता, चतुर्दशलोकस्थानिनो निमन्त्रिता आययुः, शिवस्य वरयोग्यवेषः मण्डपस्थापननान्दीप्रभृतिमंगलकर्म, वरयात्राक्रमव्यवस्था, प्रथमं नारदः प्रेषितश्चेत्यादिनिरूपणनामैकनवत्यधिकशततमोऽध्यायः ॥ १९१ ॥

श्रीनारायण उवाच—

शृणु लक्ष्मि ततो गत्वा नारदो विस्मितोऽभवत् ।
दृष्ट्वाऽऽश्चर्यकरां विश्वकर्मणा रचितां कृतिम् ॥ १ ॥
कृत्रिमेषु मोहितः सन्नारदः प्राह भूभृतम् ।
वरवाहिनी प्रागेवाऽयाताऽत्र किमु विद्यते ॥ २ ॥
शैलः प्रत्याह देवर्षे विस्मयं त्यज कृत्रिमम् ।
विश्वकर्मकृतं चैतद्दृश्यं देवादिमण्डलम् ॥ ३ ॥
भोजितः पूजितः प्रार्थितः शंभोरागमाय च ।
नारदस्त्वरितो गत्वा प्राह शंभुं सुरादिकान् ॥ ४ ॥
प्रतीक्षते हिमाद्रिश्चाऽऽयातु वै वरवाहिनी ।
तत्र विमोहनार्थं च समाश्चर्यार्थमित्यपि ॥ ५ ॥
चित्रमयी कृता माया यत्र त्रैलोक्यमाहितम् ।
ब्रह्मविष्णुमहेन्द्राद्याः सर्वे देवाः सुचित्रिताः ॥ ६ ॥
कृत्रिमाश्चित्ररूपेण न किंचिदवशेषितम् ।
जडं तु चेतनं यद्वद् दृश्यते सक्रियं हि तत् ॥ ७ ॥
श्रुत्वैतच्च वराद्या आतुरा ह्यासन् निरीक्षितुम् ।
शिवाज्ञया वरयात्रा वाहिनी निर्जगाम ह ॥ ८ ॥
आजगामोपहेमाद्रिपुरं तु हरवाहिनी ।
आकर्ण्यैतत्तु हेमाद्रिः प्रेषयामास पर्वतान् ॥ ९ ॥
विप्राँश्चापि स्वयं चापि ययौ संभारसंभृतः ।
सेनया सहितः शैलः संभाषां कर्तुमीश्वरम् ॥१०॥
शैलेन्द्राणां महासेनां शैवानां च ततोऽधिकाम् ।
दृष्ट्वोभपक्षगास्ते तु विस्मयं परमं गताः ॥११॥
विरजेतुमिलित्वैव पूर्वपश्चिमसागरौ ।
हैमो शैलाश्च विप्राद्याः प्रणेमुर्वरशंकरम् ॥१२॥
वृषविमानसंस्थं सुप्रसन्नास्यं सुभूषितम् ।
दिव्यावयवसत्कान्तिप्रकाशितदिगन्तरम् ॥१३॥
रत्नभृतं सुरेशैश्च सेवितं छत्रचामरैः ।
वामस्थितहरिं दक्षस्थितब्रह्माणमित्यपि ॥१४॥
पृष्ठस्थितमहेन्द्रं च ततो देवगणान्वितम् ।
अथ सत्कृत्य हाराद्यैर्जलपानादिभिर्वरम् ॥१५॥
वरपक्षाँश्च संस्थाप्य विश्रान्तिभवनेषु च ।
शिवाज्ञया हिमशैलो ययौ च विधिवेदिकाम् ॥१६॥
कर्तुं त्वथ वराचारमाहूताः सेश्वराश्च ते ।
गमनं चक्रुरीशाद्या अग्रगा गिरिराड्गृहम् ॥१७॥
तस्मिन्नवसरे मेना शिवदर्शनलालसा ।
नारदं पार्श्वतः कृत्वा चन्द्रशालां समागता ॥१८॥
शिवोऽपि स्वचमत्कारं दर्शयितुं समिच्छति ।
प्राह वै वेधसं विष्णुं यातं यूपं पृथक्-पृथक् ॥१९॥
सेनां क्रमप्रसारां च कृत्वा यामः सुदर्शनाम् ।
मेना व्यवस्थितां रम्यां सेनां दृष्ट्वा जहर्ष च ॥२०॥
प्रथमं च गिरिद्वारं गन्धर्वाः सुन्दराः प्रभाः ।
दिव्यालंकारवस्त्राढ्याः सुभगा वाहनैर्युताः ॥२१॥
वादयन्तश्च वाद्यानि ह्यप्सरोभिः स्वरायिताः ।
पताकाजयपट्टैश्च युताः प्रविविशुस्तदा ॥२२॥
अथ वसुपतिं दृष्ट्वा शिवोऽयमिति साऽब्रवीत् ।
नारदः प्राह नाऽयं स ह्येते वै शिवकिंकराः ॥२३॥
अथ द्विगुणशोभाढ्ययक्षसेनाधिपं तु सा ।
मणिग्रीवाभिधं दृष्ट्वा रुद्रोयऽमिति साऽब्रवीत् ॥२४॥
नारदः प्राह नायं स ह्येतेऽपि शिवसेवकाः ।
अथद्विगुणशोभाढ्यसेनामध्यगतोऽनलः ॥२५॥
दृष्टो ह्यायात इत्ययं शिवास्वामीति साऽब्रवीत् ।
नारदः प्राह नाऽयं सः शिवनेत्रानलो ह्ययम् ॥२६॥
अथ ततोऽपि द्विगुणशोभावान् यम आगतः ।
तं स्वसेनायुतं दृष्ट्वा मेना शिवोऽयमब्रवीत् ॥२७॥
नारदः प्राह नाऽयं सः सूर्यपुत्रस्त्वयं यमः ।
अथाऽऽयान्तं निर्ऋतिं स्वसेनान्वितं विलोक्य सा ॥२८॥
यमाद्द्विगुणशोभाढ्यं पुण्यजनमहाप्रभुम् ।
शिवोऽयमब्रवीन्मेना नारदः प्राह नेति सः ॥२९॥
अथाऽऽयान्तं वरुणं द्विगुणशोभान्वितं च सा ।
सेनामध्यगतं दृष्ट्वाऽब्रवीद्रुद्रोऽयमेव किम् ॥३०॥
नारदः प्राह नायं सः तावद्वायुः समागतः ।
ततोऽपि द्विगुणशोभं दृष्ट्वा तं सैन्यमध्यगम् ॥३१॥
मेनाऽब्रवीच्च रुद्रोऽयं नारदः प्राह नैव सः ।
अथाऽऽयात् तद्द्विगुणाधिशोभान्वितो धनाधिपः ॥३२॥
सैन्यमध्यगतं दृष्ट्वा मेना प्राह शिवो ह्ययम् ।
नारदः प्राह नायं स गुह्यकाधिपतिस्त्वयम् ॥३३॥
अथात ईशान आयात् स्वसैन्यपरिवारितः ।
ततो द्विगुणशोभाढ्यं तं दृष्ट्वा मेनकाऽब्रवीत् ॥३४॥
रुद्रोऽयमिति तां नारदः प्राहाऽयं न शंकरः ।
अथेन्द्रः सैन्यशोभाढ्यो द्विगुणस्मृद्धिरामयौ ॥३५॥
दृष्ट्वा तं हर्षिता मेना प्राहाऽयं मच्छिवापतिः ।
नारदः प्राह नायं सः किन्त्विन्द्रोऽयं सुराधिपः ॥३६॥
अथ चन्द्रः समायातस्ततो द्विगुणशोभितः ।
दृष्ट्वा स्वसैन्यमध्यं तं मेनाऽब्रवीच्छिवो ह्ययम् ॥३७॥

नारदः प्राह नाऽयं सः किन्तु तद्बालचन्द्रकः ।
अथ सूर्यः समायात्स्वसैन्यमध्यगतः स्वराट् ॥३८॥
ततो द्विगुणशोभं तं दृष्ट्वाऽऽहाऽयं शिवेति सा ।
नारदः प्राह नाऽयं सः किन्त्वयं तत्तनू रविः ॥३९॥
अथाऽऽययुश्च भृग्वाद्याः ऋषयस्तेजसाऽधिकाः ।
स्वशिष्यगणसैन्याढ्यास्तन्मध्यस्थं बृहस्पतिम् ॥४०॥
ततो द्विगुणशोभं च दृष्ट्वाऽऽहाऽयं शिवेति सा ।
नारदः प्राह नाऽयं सः किन्त्वयं देवदेशिकः ॥४१॥
अथर्षिमण्डलैस्तेजोराशिभिः पूजितो ह्यजः ।
ततोऽपि बहुशोभाढ्यः समायाद्वै पितामहः ॥४२॥
दृष्ट्वा ततो बहुशोभं मेना हर्षवती ह्यभूत् ।
प्रोवाच शंकरोऽयं स्यात् नारदः प्राह नैव सः ॥४३॥
किन्तु ब्रह्मा विश्वस्रष्टा मेनाऽऽश्चर्यगताऽभवत् ।
अथ विष्णुर्बहुरूपोऽत्यतिलक्ष्मीरमायुतः ॥४४॥
सर्वशोभान्वितो मेघश्यामः स्वर्णसमुज्ज्वलः ।
कोटिकन्दर्पलावण्यः पीताम्बरश्चतुर्भुजः ॥४५॥
चक्रादिचिह्नवान् वक्षःस्थलराजत्सुकौस्तुभः ।
मुकुटकटकाद्युक्तः पद्मपत्राभलोचनः ॥४६॥
लावण्यसौन्दर्यनिधिरप्रमेयप्रभोज्ज्वलः ।
अनन्तदासदासीनां सैन्ये गरुडराजितः ॥४७॥
प्रविवेश तमायान्तं दृष्ट्वाऽतिहर्षविह्वला ।
चकिताऽक्ष्यभवन्मेनाऽब्रवीदयं स एव सः ॥४८॥
नारदः प्राह नाऽयं त्वत्सुतास्वामी हि मेनके ।
शिवभ्राता ह्ययं विष्णुः शिवकार्याधिकार्ययम् ॥४९॥
वैवाहिके महाऽमात्योऽनुवरो वरपार्श्वगः ।
शिवस्त्वस्मादधिकोऽस्ति रूपसमृद्ध्यादिवैभवैः ॥५०॥
अथैकादशकोट्यश्च रुद्राणां विविशुस्तदा ।
सर्वे शंभुसमाकारा विष्णुतुल्यविभूषणाः ॥५१॥
अथाऽऽदित्या द्वादशकोट्यश्च संविविशुस्तदा ।
सर्वे विष्णुसमाकारा नारायणसुमूर्तयः ॥५२॥
दृष्ट्वा मेना मत्यगम्यान् भाग्यं स्वं बह्वमन्यत ।
वारं वारं पर्यपृच्छन्नारदं क्वाऽस्ति शंकरः ॥५३॥
तावत् प्रविविशुस्तत्र वैराजाश्चोर्ध्वरेतसः ।
नारायणादप्यधिकरूपतेजोऽभिसंवृताः ॥५४॥
चतुर्विंशतिकोट्यस्ते महाविष्णुस्तदन्तरे ।
राजाधिराजलक्ष्म्या स राजते सर्वतोऽधिकः ॥५५॥
तमनु साधवः सर्वे योगिनोऽर्बुदकोटयः ।
आययुश्च पुरद्वारं महाविष्णुस्वरूपिणः ॥५६॥
दृष्ट्वा तत्र महाविष्णुं मेना हर्षपरिप्लुता ।
अत्युत्साहवती प्राह सोऽयं शिवः समागतः ॥५७॥
अहो भाग्यं मम पुत्र्या योग्यं तपः कृतं तया ।
अर्जितश्चेदृशः स्वामी सुखी भवतु पुत्रिका ॥५८॥
नारदः प्राह मेनेयं न शिवस्त्वच्छिवापतिः ।
किन्तु शिवः सदाशिवो राजते ईशसृष्टिषु ॥५९॥
तस्य भ्राता महासम्राट् महाविष्णुरयं किल ।
अतोऽतिरूपवान् समृद्धो वर्तते पार्वतीपतिः ॥६०॥
वर्णयितुं तु तच्छोभां मया नैव हि शक्यते ।
मा त्वरा त्वं कुरु मेने पश्यैनं कोऽयमागता ॥६१॥
तावच्छ्रीकृष्णचन्द्रः श्रीराधाकृष्णः स्वयंप्रभुः ।
आययौ कोटिकोट्यब्जाऽर्बुददासादिमण्डितः ॥६२॥
नारदः प्रणनामैनं मेनाऽपि प्रणताऽभवत् ।
दृष्ट्वा कृष्णस्वरूपं च क्षणं मूर्छामवाप सा ॥६३॥
तन्मूर्तिदर्शनसौख्याप्लुताऽऽकृष्टाऽऽन्तरा तदा ।
समाधिसुखमापन्ना ह्युत्थिता च क्षणान्तरे ॥६४॥
प्राह नारद ! पार्वत्याः पतिश्चायं न संशयः ।
नारदः प्राह मेनेऽयं शिवापतिपिताऽस्ति हि ॥६५॥
शिवस्त्वस्मात्समुत्पन्नश्चाऽस्याऽस्ति दायभाक् सदा ।
अयं कृष्णः परंब्रह्म गोलोकाधिपतिः प्रभुः ॥६६॥
तन्मूर्तेश्च समुत्पन्नो मानसस्तनयः शिवः ।
महावैराग्यमूर्तिः स वर्णयितुं न शक्यते ॥६७॥
आयात्यनन्तरं पश्य रूपगुणमहाखनिः ।
मेना स्वस्याश्च जामातुर्दृष्ट्वा तु पितरं तदा ॥६८॥
निःसन्देहाऽभवच्चातिप्रहृष्टाऽप्यभवन्मुहुः ।
द्रष्टुं समुत्सुकाऽभूच्च तावच्छंभुः समाययौ ॥६९॥
इदानीं यावच्छृंगारः कृत्स्नः कृष्णसमोऽभवत् ।
नासीन्न्यूनं तु शोभायां वरे शोभाऽस्त्यतोऽधिका ॥७०॥
वरयात्राप्रवाहिन्यां वरशोभा विशिष्यते ।
कोटिकन्दर्पलावण्यसौन्दर्यकान्तिसूज्ज्वलम् ॥७१॥
श्रीकृष्णसदृशं रूपं दृष्ट्वा मेनाऽतिहर्षिता ।
आत्मस्वार्पणभक्त्या साऽभवच्छुद्धाऽद्रिराडपि ॥७२॥
मेनेऽप्यहो मया दृष्टा सर्वेऽपि देवनायकाः ।
एतेषां यः पतिः सोऽत्र पतिः पुत्र्या भविष्यति ॥७३॥
स्वभाग्यमधिकं मेने पुत्र्याश्चापि ततोऽधिकम् ।
यत्पतिं प्राप्य मे पुत्री जगन्माता भविष्यति ॥७४॥
कुटुम्बमपि सर्वं मे यशोभाक् संभविष्यति ।
वर्णयन्तीति भाग्यं स्वं कृष्णशंभुं ददर्श सा ॥७५॥

एवमेवाऽभवच्छंभुः किन्तु मेनाहिमालयौ ।
तादृक्सुशोभितं शंभुं पश्येतां भावतो यदि ॥७६॥
मन्वीयातां कृतकृत्यौ पुत्रीदानेन भावतः ।
सर्वतो भावनाभक्त्या प्राप्नुयातां च शुद्धताम् ॥७७॥
शंभोर्माहात्म्यविज्ञानात् पारमार्थिकनिश्चयात् ।
मुक्तिं द्रागेव गच्छेतां शैलश्च लीनतां व्रजेत् ॥७८॥
तथासति महद्दुःखं श्वशुरध्वंससंभवम् ।
श्वश्र्वाश्चापि निधनस्य दुःखं चात्यधिकं भवेत् ॥७९॥
रंगे भंगो भवेच्चापि भवेत् कैलासनाशनम् ।
भवेच्च देवकोटीनां स्थाननाशो मृते हिमे ॥८०॥
हिमाचलविनाशेन पृथ्वी रिक्ता भवेत्तदा ।
असंख्यौषधयः सर्वा विनष्टाः स्युस्तथा तदा ॥८१॥
इति सर्वं त्वापतेच्च तन्माभूदितिवाञ्छया ।
मेनाहिमाचलादिनां भावभक्तिनिवृत्तये ॥८२॥
अवगुणग्रहार्थाय शैलभूवासलब्धये ।
शंकरो हि तदा रूपं परिव्यवर्तयत् स्वकम् ॥८३॥
कृष्णाकृतिसमं रूपं विवृत्य रुद्रमूर्तिकम् ।
शांभवं रूपमास्थाय मेनायै दर्शनं ददौ ॥८४॥
हिमालयाय तद्वच्च शैलादिभ्यस्तथैव च ।
ददौ हि दर्शनं स्वस्य भस्माक्तं मुण्डमालिकम् ॥८५॥
सजटासर्परुद्राक्षत्रिशूलचर्मराजितम् ।
कदरूपं तथाऽतीताऽर्धाऽऽयुष्कं रूक्षविग्रहम् ॥८६॥
सपिनाकं पञ्चवक्त्रं व्याघ्रचर्मसुधौत्रकम् ।
दशहस्तं सडमरुं रौद्ररूपं च धूर्जटम् ॥८७॥
दुःश्मश्रुं रोमसर्वांगं भूतप्रेतादिसेवितम् ।
सकपर्दं सकपालं द्रष्टुर्भयकरं महत् ॥८८॥
गंजापानरतं नेत्रे घूर्णिते चाऽप्यदर्शयत् ।
तुन्दिलं पीनमत्यर्थं श्यामवर्णं च वामनम् ॥८९॥
मेना प्राह तदा कोऽयं क्व गतः कृष्णरूपधृक् ।
सुरूपो विलयं यातो रौद्ररूपोऽस्ति कोऽत्र वै ॥९०॥
पश्य नारद जामाता क्वाऽस्ति मे दर्शयाऽत्र माम् ।
नारदः प्राह पश्यन्तीं कुरूपं मेनकां तदा ॥९१॥
योऽयमायाति रुद्राणां सेनाया मध्यगे वृषे ।
निषीदन् प्रेतभूतादिगणावृतमहाप्रभुः ॥९२॥
यस्य सैन्ये वातरूपाः पताका मर्मरूपिणः ।
वक्रतुण्डा विरूपाश्च करालाः श्मश्रुलास्तथा ॥९३॥
खञ्जा ह्यलोचना दण्डपाशमुद्गरपाणयः ।
शंखडमरुगोमुखवादिनो नर्तका इव ॥९४॥
विरुद्धेषु वाहनेषु पुच्छाभिमुखमास्थिताः ।
केचित्तु विमुखाः पृष्ठमुखा बहुमुखास्तथा ॥९५॥
अकरा विकराः केचित्केचिद्बहुकरास्तथा ।
अशिरा विशिराश्चापि कुशिराश्च विनेत्रकाः ॥९६॥
अनेत्रा बहुनेत्राश्च बहुकर्णा अकर्णकाः ।
अनासाः छिन्ननासाश्च वृक्णाश्च केकराक्षकाः ॥९७॥
पिंगलाः धूम्रवर्णाश्च प्रोर्ध्वरोमाणइत्यपि ।
ह्येते सर्वे महावीर्याः सन्ति शिष्यास्त्रिशूलिनः ॥९८॥
पश्य मेने ! तव जामातरं सेवन्त आदरात् ।
इमे सर्वे निरातंका निष्परिग्रहविग्रहाः ॥९९॥
निर्द्वन्द्वाश्च निरीहाश्च प्रबलास्तापसाः शिवाः ।
पश्यैतान् तव जामातृगणान् जामातरं तथा ॥१००॥
इत्यंगुल्या विनिर्दिश्य नारदस्तमदर्शयत् ।
रौद्रं रूपं मनोऽभाव्यं वीक्ष्य भीता शिवाप्रसूः ॥१०१॥
दुःखिताऽभूत् वञ्चिताऽहं चेत्युक्त्वा मूर्छिताऽभवत् ।
पुत्र्यापि वञ्चिता नारदेन त्वयापि वञ्चिता ॥१०२॥
सप्तर्षिभिर्वञ्चिता च क्षिप्ता ह्यमानुषे सुता ।
विगर्ताऽर्धपराऽऽयुष्येऽसुघटे श्मश्रुलेऽगुणे ॥१०३॥
प्रायोऽसुखकरे नेत्राऽरंजने चाऽमनोहरे ।
रूक्षे वृक्षे कंटकाढ्ये त्यक्ता पुण्यलता मया ॥१०४॥
इत्येवं मानसे मेना मुहुः शोचति खिद्यति ।
साश्रुनेत्रे तदा कृत्वा सखीभिरुपसेविता ॥१०५॥
क्षणाद् धैर्यं समालम्ब्योद्वेगाज्जजल्प कालिकम् ।
अनिष्टोत्थसगद्गदकण्ठा तापातुरा ह्यभूत् ॥१०६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुग-
सन्ताने वरयात्रायां वरवाहिनीजनवाहानां
शोभा, मेनाकृतवाहिनीवरप्रतीक्षणं, शंकर-
दर्शनान्मेनायाः शोकश्चेत्यादिनिरूपण-
नामा द्वानवत्यधिकशत-
तमोऽध्यायः ॥१९२॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! तदा रंगे भंगोऽभून्मेनकाकृते ।
शांकरे दर्शने रौद्रे शोकाब्धिः सुलभोऽभवत् ॥ १ ॥
कपालयोः करौ कृत्वा नेत्रे प्रमृज्य खेदतः ।
भग्नहृदा भावहीनवचनान्यवदन्मुहुः ॥ २ ॥

यैश्च याभिश्च शर्वाय देया पुत्रीति भाषितम् ।
प्रस्तावितं ज्ञापितं च वाऽङ्गीकारितमित्यथ ॥ ३ ॥
अवगमितं प्रयतितं तत्तथाऽप्यनुमोदितम् ।
तान् सर्वानतिसंक्षुब्धातिरस्करोमि वै शठान् ॥ ४ ॥
नारद त्वं परिणामे क्लेशदोऽसि शठोऽसि च ।
त्वया स्वर्णसमा पुत्री कर्दमे विनिपातिता ॥ ५ ॥
फलं चैतन्मया दृष्टं विपरीतमनर्थकम् ।
प्रसह्य प्रेरिता चापि सर्वथा वञ्चिता त्वया ॥ ६ ॥
फलं त्वस्य तवापि स्याच्छपामि त्वां पुनःपुनः ।
सति योगेऽपि लग्नस्य मा कन्यां लभ दुर्मुख ! ॥ ७ ॥
अहो पुत्रि तपस्तप्त्वा त्वीदृशो वानरः कथम् ।
आराधितोऽसह्यरोषो भूतप्रेतपिशाचराट् ॥ ८ ॥
किं कार्यं त्वत्र संजाते समाजे चाऽऽगते गृहम् ।
तथाप्यहं सुतामाता समर्थाऽस्मि व्यपोहितुम् ॥ ९ ॥
यदि पुत्री प्रकथयेन्नाऽयं योग्योऽस्ति मे वरः ।
मया कृतेऽपि यत्ने च पुत्री न मनुते यदि ॥१०॥
सर्वं कृतं मम व्यर्थं किं करोमि कुपुत्रिके ।
कुलादिकं विनष्टं मे विहितं जीवनं मम ॥११॥
क्व गताः ऋषयस्तेषां श्मश्रूणि त्रोटयामि वै ।
क्वाऽस्ति धूर्ताऽरुन्धती सा यया सर्वे विषीकृताम् ॥१२॥
ईदृशाः स्वार्थकपटाः नान्यनाशं प्रचक्षते ।
तस्मात्कन्याजन्मदात्री स्वयं गत्वा विलोकयेत् ॥१३॥
वरं गृहं तथा स्मृद्धिं समाचरणमित्यपि ।
नान्यविश्वासमालम्ब्य कन्या देया क्वचिज्जनैः ॥१४॥
रे पुत्रि पद्मपत्रास्ये ग्रावा वै राधितस्त्वया ।
क्रीतः काचो हेम दत्वा किं त्वया गवयोऽर्थितः ॥१५॥
त्यक्त्वा तु चन्दनं पुत्रि ह्यर्थितः क्लेदकर्दमः ।
अदृष्ट्वा हंसवर्यांश्च काकः सर्वोत्तमो मतः ॥१६॥
हित्वा दुग्धाब्धिकाऽऽस्वादं क्षाराब्धिस्वाद अर्थितः ।
सूर्यं हित्वा च खद्योतस्तपसोऽन्तेऽर्थितस्त्वया ॥१७॥
हित्वा बीजानि सत्पुत्रि किं कृतं तुषभक्षणम् ।
आज्यमिष्टान्नमामुक्त्वा करीषं भुक्तमादितः ॥१८॥
हरिच्छायामनादृत्य शिवाछायामधिश्रिता ।
मुक्त्वा ब्रह्ममयीं विद्यां भाण्डविद्याऽर्थिता त्वया ॥१९॥
यज्ञभूतिमनालम्ब्य चिताभस्माऽवलम्बितम् ।
अरे चिन्तामणिं त्यक्त्वा कथं वै कंकरो धृतः ॥२०॥
दुग्धपाकं परित्यज्य पीतो नीम्बरसः कथम् ।
अहो पुत्रि कुबुद्धिस्ते पञ्चवर्षसहस्रकम् ॥२१॥
तपस्तप्तं त्वया चाऽस्य श्मशानस्थस्य लब्धये ।
नारीबुद्धिर्न वै बुद्धिर्नारीबुद्धिः पराश्रया ॥२२॥
सगुणो वा निर्गुणो वा यः श्लिष्यति सोऽस्या महान् ।
तस्मात्कन्या न स्वबुद्धया संविवहेत्कदाचन ॥२३॥
विवाहयेत् पिता माता कन्यां दृष्ट्वाऽनुयुग्वरम् ।
तपो बुद्धिं च चरितं रूपं वृत्तं तवाऽस्तु धिक् ॥२४॥
नारदं च ऋषीन् पितामहं सुरांस्तथाऽस्तु धिक् ।
मत्कुलं मे क्रियादाक्ष्यं धिक्कृतं च यशस्त्वया ॥२५॥
कुलं दग्धं त्वया विवाहयेयं न म्रियेऽत्र वै ।
सप्तर्षयो नारदश्च हिमाद्रिश्च पितामहः ॥२६॥
केऽपि माऽऽयान्तु निकटे दर्शयन्तु मुखानि न ।
किमत्र साधितं श्रेष्ठं प्रत्युत घातितं कुलम् ॥२७॥
मिलित्वा कालकवले पातिता मम पुत्रिका ।
वरमस्मात्तु वन्ध्यात्वं वरं वा गर्भगालनम् ॥२८॥
वरं वा जन्मतो मृत्युर्वरं वा राक्षसाऽदनम् ।
कुमारीत्वं चापि वरं न श्रेष्ठं कुवराऽर्पणम् ॥२९॥
गृहं समागता नग्नभूतपस्य तु वाहिनी ।
दहेयं वा म्रियेयाऽत्र गच्छेयं वा क्रियेऽत्र किम् ॥३०॥
न दातव्या न दातव्या वरो यातु निजालयम् ।
जनवाहास्तु गच्छन्तु प्राघूणिकाः प्रयान्त्वपि ॥३१॥
अहं तु पुत्रिकां नीत्वा गच्छामि मम पैतृकम् ।
यान्तु सर्वे विशीर्यन्तां रिक्तं कुर्वन्तु मद्गृहम् ॥३२॥
हिमालयो वनं यातु न देयाऽस्मै तु पार्वती ।
इति विलप्य पुत्रीं स्वां गत्वाऽऽश्लिष्य मुहुर्हृदि ॥३३॥
वक्षस्याकृष्य हस्ताभ्यां दृढीकृत्य स्थिता गृहे ।
हाहाकारो महानासीत् तदा प्राघूणिकेषु वै ॥३४॥
श्रुत्वैतत्प्रथमं तत्र जगाम तु पितामहः ।
द्राक् दृष्ट्वा होलिकाशब्दान् ब्रह्माणं प्राह मेनका ॥३५॥
गच्छ दुष्ट मत्तबुद्धे पुष्पं प्रज्वालितं त्वया ।
निर्लज्जो नरकटो भूत्वा कन्यानाशाय यत्नितः ॥३६॥
का आह्वयति त्वामत्र जरं विश्वासघातिनम् ।
ब्रह्मा स्तब्धोऽभवच्छ्रुत्वा चण्डीमाताऽपि चण्डिका ॥३७॥
इति विचार्य मौनोऽभूत् तावत्सप्तर्षयो ययुः ।
देवाश्चाग्रप्रपूज्याश्चाऽऽगता मेनाप्रशान्तये ॥३८॥
ऊचुर्मेनां रुद्ररूपं शंभोर्नास्तीति वास्तवम् ।
लीलया संभृतं चैतत् क्षणिकं नहि शाश्वतम् ॥३९॥
पश्योत्तिष्ठ हठं त्यक्त्वा देहि पुत्रीं शिवाय च ।
अयं वै परमो लाभः परंब्रह्म सदाशिवः ॥४०॥

कृष्णपुत्रः कृष्णरूपश्चागतस्तव मन्दिरम् ।
दानपात्रं तव पुत्र्या तपसां फलमर्जितम् ॥४१॥
श्रुत्वैतन्मेनका प्राह शठाः सर्वे प्रपंचिताः ।
रूपमस्या जीवनं च व्यर्थीकर्तुं समुद्यताः ॥४२॥
शस्त्राद्यैर्घातयिष्येऽहं न दास्ये घोरकर्मणे ।
दूरं गच्छत सर्वेऽस्मान्नागन्तव्यं ममान्तिके ॥४३॥
वरः शठो बहुरूपी वरवाहाः शठास्तथा ।
शठैः शठाः सम्मिलिताः प्राणहाराः परस्य वै ॥४४॥
श्रुत्वा सर्वे मुखांऽगुल्योऽभवन् स्तब्धाः पतन्मुखाः ।
हिमालयस्तदा प्रायाद् बोधनाय सुताकृते ॥४५॥
बहुश्रेष्ठजनमध्ये पतिं नोवाच किंच सा ।
शुश्राव शैलराडुक्तं मृदु सामयिकं वचः ॥४६॥
शृणु प्रिये यथादृष्टस्तादृग्भवेद्वरो यदि ।
न देया दयिता पुत्री नोचेद् देया विचारय ॥४७॥
श्रीकृष्णब्रह्मविष्णवर्कचन्द्रसूर्येन्द्रदेवताः ।
ऋषयः पितरः साध्याः सुराणां गुरवस्तथा ॥४८॥
देव्यश्च कोटिशो महालक्ष्म्याद्याः साध्व्य आदरात् ।
लोकपाला दिशांपाला राजाधिराजकेश्वराः ॥४९॥
नागच्छेयुर्निम्नशंभोर्वाहिन्यां मेनकागृहम् ।
विचारयेति वै पत्नि यस्य वाहे त्विमे गताः ॥५०॥
स कीदृशो भवेच्छ्रेष्ठः संपश्य हृदि सुन्दरि ! ।
शिवा जानाति तं शर्वं प्राग्भवात् सहचारिणी ॥५१॥
तयोः प्रीतिः शाश्वती चेत्तत्र का वेदना तव ।
सुसमृद्धावपि चेत्पत्न्या मनो नो रम्यते वरे ॥५२॥
विषवज्जीवनं तस्या गुणरूपाढ्यकेऽपि किम् ।
मया दृष्टं तव पुत्री सुख्यस्ति स्यात् सुखी सदा ॥५३॥
यस्यास्ति देया तस्मै सा विकला मा भव प्रिये ।
केके समागता गेहं पश्य मा निन्द तान् प्रिये ॥५४॥
एनं द्वारगतं शंभुं दिव्यरूपधरं प्रिये ।
पश्य कृष्णसमं रूपे उत्तिष्ठ कीर्तिबर्धिनि ॥५५॥
विरराामाऽथ शैलेन्द्रस्तं मेना प्राह तत्क्षणम् ।
मया दृष्टो यथा रुद्रस्तादृशो यदि चेद्भवेत् ॥५६॥
धृत्वा कण्ठे सुबध्वा तां कर्तास्म्यधःप्रपातनम् ।
त्वं तु पुत्रीं च मां नीत्वा दयां त्यक्त्वाऽथ सागरे ॥५७॥
निमज्जय सुखी स्याश्च दास्ये पुत्रीं हराय न ।
प्रसह्य दास्यसि तस्मै त्यक्ष्याम्यद्य कलेवरम् ॥५८॥
अथ सा पार्वती मातुर्दृष्ट्वा दुःखमपारगम् ।
किन्त्वकारणमौढ्योत्थं विचार्याकस्थिता शनैः ॥५९॥

नेत्राश्रूणि प्रमृज्यैव स्नेहं कृत्वा रुदीहि मा ।
शान्तिं लभेत संप्रोच्य प्राह मिष्टं यथा भवेत् ॥६०॥
मातर्वरः सुरूपोऽस्ति सर्वेशोऽस्ति हरेः परः ।
सर्वाश्च स्मृद्धयस्तस्य सहस्रगुणिताः परात् ॥६१॥
यथा दृष्टः स्वयं कृष्णो महाविष्णुर्विलोकितः ।
विष्णुर्यथा त्वया दृष्टः सूर्यश्चन्द्रः सुरेश्वरः ॥६२॥
तथा ततोऽप्युत्तमोऽस्ति रूपसैन्यसमृद्धिभिः ।
मया दृष्टो हि कैलासो वैकुण्ठादपि शिष्यते ॥६३॥
यौवनं षोडशवर्षं रूपं कृष्णाद्विशिष्यते ।
अत्र त्वया तु यद् दृष्टं न तद्दृष्टं मया क्वचित् ॥६४॥
न जाने दर्शितं कस्मात् रूपं ते विकृतं बहु ।
नानारूपधरश्चायं महाकालोऽपि जायते ॥६५॥
संहृत्य विश्वनेतॄंश्च दीव्यति रमते शुभः ।
धर्मावलम्बना भूत्वा मा वाग्धर्मं जहाहि यत् ॥६६॥
अत्राऽऽगतास्तु ये देवाः किंकरा हि शिवस्य ते ।
तव द्वारि मदर्थं सोत्सवास्ते किमतः परम् ॥६७॥
देहि मां त्वं शिवायाऽस्मै जीवितं सफलं कुरु ।
मनोवाङ्कर्मभिर्मातर्मया वृतो वृतो हरः ॥६८॥
सिंहभागो व्रजेत् सिंहं न वृणेऽन्यमहं वरम् ।
म्रियेय दास्यसि नो चेत् यथेच्छसि तथा कुरु ॥६९॥
एवं श्रुत्वा विपरीतं पुत्र्युक्तं सर्वसन्निधौ ।
मेना धबाक् धबाक् पुत्रीं मुष्टिभिः कूर्परैस्तथा ॥७०॥
ताडयामास तां दिव्यां महारोषान्विता तदा ।
ऋषयस्तां परिच्छिद्य निन्युर्दूरं तु पार्वतीम् ॥७१॥
मेना प्रसार्य पादौ च हस्तौ चापि शिरोरुहान् ।
उत्पाट्य क्ष्मां शिरः स्वस्या घातयामास मत्तवत् ॥७२॥
जल्पयामास बहुधा मारयिष्ये सुतां स्वकाम् ।
दास्ये वा गरलं कूपे क्षेप्स्ये छेत्स्येऽथ खण्डशः ॥७३॥
मरिष्याम्यपि कन्यां न दास्ये विकटरूपिणे ।
अनया दुष्टया चाटः कीदृशो मार्गितो वरः ॥७४॥
मातुः पितुः कुले चोग्र उपहासः प्रकारितः ।
न माता न पिता त्वस्य नाऽनुजो नाऽग्रजस्तथा ॥७५॥
न कुटुम्बं न वै गोत्रं न गृहं रूपमार्जवम् ।
न भूषा न च वस्त्राणि वाहनं स्वसमो वृषः ॥७६॥
न धनं न वयो योग्यं न विद्या च पवित्रता ।
किं विलोक्य मया पुत्री देयाऽस्मै दुःखिदेहिने ॥७७॥
ब्रह्मा सिद्धाश्च सनकादिका देवाः प्रजेश्वराः ।
व्यर्थीकुर्वन्ति मत्पुत्र्या जीवनं रुद्रकोटरे ॥७८॥

स्वहस्तैर्हन्यतां पुत्री शान्तिर्भवकृता भवेत् ।
न देया न च वै देया न दातव्या कदाचन ॥७९॥
शववाहाय घोराय दरिद्राय च भङ्गिने ।
श्मशानस्थाय नग्नाय मलिनाय न चार्प्यते ॥८०॥
सर्वे प्रपञ्चिनः पुत्रीं मारयितुं समुद्यताः ।
वृषभाय महीषाय बहुरूपधराय च ॥८१॥
पाषण्डिने न वै देया न देया सर्वखण्डिने ।
वियान्तु मे गृहद्वारात् किं ह्यनाथा विलोकिता ॥८२॥
इति प्रजल्प्य मौनाऽभूत् रुरोदोच्चैश्च विह्वला ।
पार्वत्यपि मातृवत्सा तदाऽश्रूणि व्यमुञ्चत ॥८३॥
तदा ब्रह्मादयः सर्वे चकिता विस्मयं गताः ।
निराशा अभवन्सर्वे तावद्विष्णुः समागतः ॥८४॥
प्राह मातस्त्यज शोकं कुर्महे तव सम्मतम् ।
यादृशश्च त्वया शंभुर्दृष्टो वै तादृशो भवेत् ॥८५॥
तदा पुत्री न वै देया ममास्ति सम्मतिस्तथा ।
मातः श्रृणु कथं तादृग्रूपं शर्वेण दर्शितम् ॥८६॥
प्रथमं यादृशं दिव्यं श्रीकृष्णसममुज्ज्वलम् ।
सुस्मृद्धं रूपमत्यर्थाऽऽनन्दसन्दोहदायकम् ॥८७॥
दृष्टं त्वयाऽस्ति चेत् तादृक् दर्शयेच्च तथा पुनः ।
तदा त्वं त्वत्पतिश्चैव प्रेमभक्तिप्रपूरितौ ॥८८॥
आत्मनिवेदिनौ भूत्वाऽकरिष्यतं सुतार्पणम् ।
तत्प्रदानप्रभावेण शुद्धौ भूत्वा भुवः स्थलम् ॥८९॥
परित्यज्य ब्रह्मधामाऽगमिष्यतं सुमुक्तिके ।
तदा पृथ्वी शैलहीना देवस्थानलयंकरा ॥९०॥
ओषधिनाशिनी तद्वत् कैलासनाशिनी भवेत् ।
तन्मा भूदिति कृत्वैव कारणं तु विचार्य च ॥९१॥
जामातुः शंकरस्यैव द्रोहो यथा भवेत्तथा ।
रूपं तु शंभुना धार्यं सर्वं भयंकरं परम् ॥९२॥
अमनस्कतया पुत्रीदाने मोक्षो न वै फलम् ।
तदन्यत्तु फलं दशपुत्रोद्वाहकृतं भवेत् ॥९३॥
तत्फलं ते भवेन्मेने न वै मोक्षफलं भवेत् ।
तत्स्वावगुणदोषस्य ग्राह्यार्थं शंभुना तथा ॥९४॥
दर्शितं विकटं रूपं नास्ति तादृक् तु शाश्वतम् ।
एहि पश्य महादेवं महादेवगणाँस्तथा ॥९५॥
सर्वे विष्णुसमाकाराः सुस्मृद्धाः सन्ति सर्वथा ।
एवं प्रबोधिता मेना कथंचित्कोमलाऽभवत् ॥९६॥
अथापि विष्णुना निदर्शनैः संबोधिता पुनः ।
यूयं च पर्वताः स्थो वै पाषाणरूपधारिणः ॥९७॥
तथापि कीदृशाः सौम्या देवरूपधरास्त्विह ।
क्वचित् सम्राट्स्वरूपाश्च क्वचित्पक्षधरास्तथा ॥९८॥
एवं विष्णुरहं मत्स्यवाराहसिंहरूपधृक् ।
यथा धर्मो वृषभोऽपि यमोऽपि भवति क्वचित् ॥९९॥
यथा नद्यो जलरूपा नारीरूपा भवन्ति च ।
यथा मेना पक्षिरूपा पर्वतात्मापि जायते ॥१००॥
इदानीं त्वं प्रमदाऽसि तथा सर्वे भवन्ति वै ।
कामरूपधराः सर्वे भवामो देवजातयः ॥१०१॥
मोहस्तत्र न कर्तव्यः शोकोऽपि त्यज्यतां तथा ।
पश्य शंकरसैन्यानां रूपाणि शंकरस्य च ॥१०२॥
कार्यार्थे तादृशं रूपं धारयत्यखिलेश्वरः ।
मयापि शिवमोहार्थे मोहिनीरूपमाप्यते ॥१०३॥
नरोपि प्रमदाभावं गृह्णामि कार्यसिद्धये ।
तथा विद्धि च मातस्त्वं हठं त्यक्त्वा च शं कुरु ॥१०४॥
पार्वत्या यत्तपस्तप्तं तद्धि योग्यं कृतं तया ।
शंकरस्तोषितो वरं ददौ योग्यं कृतं तथा ॥१०५॥
वाग्दानं च कृतं पुत्र्यास्तदेतद् योग्यमित्यपि ।
शंकरश्चापि गृह्णाति सुतां ते योग्यमेव तत् ॥१०६॥
शंकरो ह्यभवद्रौद्रो योग्यं तेनापि तत्कृतम् ।
त्वया पुत्र्यर्थमात्मा स्वस्तापितो योग्यमेव तत् ॥१०७॥
माता यदि स्वीयपुत्र्याः कृते योग्यं करोति न ।
तदाऽन्ये के करिष्यन्ति हठो योग्यः कृतस्त्वया ॥१०८॥
अथापि देवताः सर्वेऽधिक्षिप्ताश्च त्वया हि यत् ।
तदपि योग्यमेवैतद् वैवाहिके तु कर्मणि ॥१०९॥
अथापि पश्य देवेशं सुरूपं शंकरं पुनः ।
यदि स्मृद्धः सुरूपश्च त्वन्मतेऽभिमतो भवेत् ॥११०॥
तदा पुत्री त्वया देया नान्यथा तु कदाचन ।
यदि त्वं शंकरायैव नैव दातुं समिच्छसि ॥१११॥
तदाऽहं संग्रहीष्ये ते पुत्रीहस्तं शुचं त्यज ।
इतिबहुप्रकारेण बोधिता मेनका ततः ॥११२॥
स्वस्थाऽभवत् समुत्थाय द्रष्टुं शंभुं गता बहिः ।
उवाच च हरिं मेना यदि रम्यतनुर्हरः ॥११३॥
सर्वथा सपरिकरो ममाभिप्रायतो भवेत् ।
तदा सुता मया देया नाऽन्यथा कोटियत्नकैः ॥११४॥
एतस्मिन्नन्तरे विष्णुर्नारदं पैरयद् द्रुतम् ।
अनुकूलयितुं शंभुं गत्वा सोऽबोधयद्धरम् ॥११५॥
सन्देशं प्राप्य धृतवान् शंभू रूपमलौकिकम् ।
विष्णोरप्यधिकं रूपे यौवने षोडशाब्दिकम् ॥११६॥

मृदुत्वे पार्वतीसाम्यं तनुत्वे सुघटं शुभम् ।
पुष्टत्वे योग्यसापेक्षं तैजसे कृष्णतोऽधिकम् ॥११७॥
लावण्ये चाथ सौन्दर्ये कोटिमन्मथतोऽधिकम् ।
भूषासु वस्त्रवेषे च सर्वेभ्यश्चाधिकं परम् ॥११८॥
परिकरेषु सर्वेषु सैन्येष्वपि ततोऽधिकम् ।
सर्वं भूतावलीरूपं तिरोधाय नवं नवम् ॥११९॥
गोलोकस्थं यथारूपं वैकुण्ठस्थं यथापरम् ।
वैराजस्थं यथा श्रेष्ठं सूर्यचन्द्रेन्द्रवैभवम् ॥१२०॥
तत्सर्वं च ततोऽप्यति दर्शयामास शंकरः ।
तदानीं तत्र वाहिन्योरुभयोः पक्षयोरपि ॥१२१॥
नास्ति कश्चिच्च येनोपमीयेत शंकरं तदा ।
सन्ति केचिन्न वै यैश्चोपमीयेत च तज्जनम् ॥१२२॥
तावन्मेना चन्द्रशालामायाच्च सह विष्णुना ।
ददर्श शिवरूपं तत्परमानन्दसंभृतम् ॥१२३॥
कोटिसूर्यप्रतीकाशं महत्सौन्दर्यभाजनम् ।
दिव्यवस्त्रविभूषाढ्यं हासलावण्यवर्षि यत् ॥१२४॥
देवीनां क्षोभकं जातं मोहिन्या अपि मोहकृत् ।
अधैर्याः स्खलितास्तत्र देव्यो मायाविडम्बिताः ॥१२५॥
सूर्येण छत्रितं चामरितं चन्द्रेण मस्तके ।
भूषितं च कुबेरेण धर्मेण वाहितं तदा ॥१२६॥
व्यजितं गंगया यम्या नर्तितं सिद्धिभिस्तदा ।
उत्तेजितं तथा देवैर्जयेतिभाषितं गणैः ॥१२७॥
गायितं च विश्वावस्वप्सरोव्रातैः शिवाग्रतः ।
गृणितं च परंब्रह्म मुनिभिः ऋषिभिस्तथा ॥१२८॥
नारायणायितं सर्वैर्गणैश्च सैनिकैस्तदा ।
चतुर्भुजायितं तैश्च तथा समुकुटायितम् ॥१२९॥
भूतप्रेतपिशाचाद्यैस्तिरोभूतायितं तदा ।
यावद्भिः शंकरसैन्यैर्विष्णुजनायितं तदा ॥१३०॥
यावतीभिश्च नारीभिर्लक्ष्मीरमायितं तदा ।
वाहनैश्चापि सर्वैश्च सद्गरुडायितं तदा ॥१३१॥
किमहं वर्ण्ये लक्ष्मि ! सर्वं मदायितं तदा ।
दृष्ट्वा तु मेनका शोकं विसस्माराऽतिहर्षिता ॥१३२॥
हरिः प्राह विना भानं त्वया शोकायितं वृथा ।
पश्य शर्वं वरं मेने ! किं देया वा न वा सुता ॥१३३॥
मेना प्राह प्रसन्नास्मि देया देया ध्रुवं ध्रुवम् ।
अथाऽऽजगाम त्वरिता शैलद्वार्यभिशंकरम् ॥१३४॥
वर्धस्वेति च संभाष्य संस्तूय शंकरं ततः ।
दुःखहान्यंजलिभिश्च समाशीर्भिः प्रयुज्य च ॥१३५॥
क्षमस्वेति च सुसामर्थ्य मेना लज्जापराऽभवत् ।
पुरवासिन्य आपुस्तं दृष्ट्वा नेत्रफलं तदा ॥१३६॥
ऊचुश्चाहो तपस्या वै साधितः कीदृशः पतिः ।
यदीदं युगलं ब्रह्मा न युञ्ज्याच्छिवयोस्तदा ॥१३७॥
कृतोऽपि सफलोऽप्यस्य श्रमो निष्फलतां व्रजेत् ।
इत्थमुक्त्वा नु वनिताश्चन्दनैश्चाऽक्षतैस्तदा ॥१३८॥
शिवं सम्पूजयामासुर्लाजान्ववृषुरादरात् ।
अथ शंभुर्गिरेर्धाम प्रविवेश सुरैः सह ॥१३९॥
मेनापि चंचला शीघ्रं स्वगृहाऽऽभ्यन्तरं ययौ ।
नीराजनार्थं शंभोश्च दीपपात्रकरा सती ॥१४०॥
वनिताभिः सह चाभिजगाम द्वारमादरात् ।
दृष्ट्वा चम्पकवर्णाभं चैकवस्त्रं किरीटिनम् ॥१४१॥
ईषद्धास्यप्रसन्नास्यं रत्नस्वर्णादिभूषितम् ।
मालतीमालया युक्तं वलयांगदभूषितम् ॥१४२॥
स्वर्णचमत्कृतिदिव्यवस्त्रोत्तमातिराजितम् ।
चन्दनाऽगुरुकस्तूरीचारुकुकुंमभूषितम् ॥१४३॥
अतीव तरुणं साक्षाद्विष्णुतुल्यं चतुर्भुजम् ।
कामिनीकान्तचन्द्रास्यं कोटिकन्दर्पमोहनम् ॥१४४॥
दृष्ट्वा दृष्ट्वा पुनर्दृष्ट्वा मेना मेने कृतार्थताम् ।
प्रशशंस स्वकं भाग्यं पुत्रीभाग्यं गिरेः कुलम् ॥१४५॥
नीराजनं चकारादौ जहर्ष च पुनः पुनः ।
परं विस्मयमापन्ना पुनः स्वगृहमाविशत् ॥१४६॥
कन्यकाः कामयामासुरीदृशोऽस्मत्पतिर्भवेत् ।
जगुर्गन्धर्वमूर्धन्या ननृतुश्चाप्सरोगणाः ॥१४७॥
वादका बहुवाद्यानि वादयामासुरीश्वराः ।
हिमाचलस्तदा स्निग्धो द्वागाचारमथाऽकरोत् ॥१४८॥
मेना कृत्वा परपुच्छां मुदिता स्वगृहं ययौ ।
शर्वो निवेदितं स्थानं जगाम जनवाहकैः ॥१४९॥
तदा नार्यश्च कन्याश्च वनिता द्रष्टुमीश्वरम् ।
स्थिरनेत्रा राजमार्गपार्श्वतस्तस्थुरादृताः ॥१५०॥
स्थानं प्राप्य विशश्राम पानताम्बूलभोजनम् ।
जग्राह योगनिद्रां च स्वीचकार हरः क्षणम् ॥१५१॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने मेनकायाः परमोद्वेगप्रयुक्तप्रलापाः, मेनाशोकनाशाय विष्णुना सदृष्टान्तबहुरूपधरत्वं सहेतुकमित्युपदिष्टम्, हरस्य विष्णुरूपता गणानां वैष्णवरूपता परावर्तिता, मेनाशैलकृतवर्धनादिद्वाराचारश्चेत्यादिनिरूपणनामा त्रिनवत्यधिकशततमोऽध्यायः ॥१९३॥

श्रीनारायण उवाच—

श्रृणु लक्ष्मि ! ततो दुर्गां शैलाऽन्तःपुरचारिकाः ।
बहिर्जग्मुः पूजयितुमादाय कुलदेवताम् ॥ १ ॥
शंभोर्निवाससौधस्य राजमार्गेण पार्वती ।
विनिर्जगाम सा पद्भ्यां चारिणी स्पष्टदर्शना ॥ २ ॥
तत्र तां ददृशुर्देवा निमेषरहितास्तदा ।
कान्तिश्चान्द्री शारदीव प्रोज्ज्वला स्वर्णभूषणा ॥ ३ ॥
ताम्ररक्ता सुवर्णाभा स्थलपद्मस्वरूपणी ।
कमलकुसुममृद्वी तेजःपरिधिमण्डिता ॥ ४ ॥
कोटिकोटिरतिगर्वशोभालावण्यसंभृता ।
दृश्यते च चतुर्दशाऽवरवर्षा हि कन्यका ॥ ५ ॥
ब्रह्मतेजःसुसंराजत्प्रत्येकांगोत्तमोत्तमा ।
रमालक्ष्मीमहालक्ष्मीन्द्राणीतेजोऽधिकप्रभा ॥ ६ ॥
दृश्यते सर्वनारीणां देवीनामुत्तमश्रिया ।
ईषद्धास्यप्रसन्नास्या सकटाक्षा मनोहरा ॥ ७ ॥
सुचारुकबरीभारा भालपत्रकसत्प्रभा ।
सिन्दूरकुंकुमकस्तूरिकाबिन्दुसुमण्डिता ॥ ८ ॥
मणिसद्रत्नहीरकस्फटिकस्वर्णमालिका ।
रत्नकेयूरवलयवंगिडीकंकणान्विता ॥ ९ ॥
सद्रत्नकुण्डलफुल्लकर्णपूरकटान्विता ।
सुचन्द्रटपकीराजच्चारुगण्डस्थलोज्ज्वला ॥१०॥
स्वल्पमणिकलिकावद्दन्तराजिविराजिता ।
मधुबिम्बाधरौष्ठा सद्रत्नयावकसंयुता ॥११॥
काश्मीररससक्तालक्तकाढ्यकरपत्तला ।
रत्नदर्पणहस्ता चोर्मिकाधृगंगुलीवरा ॥१२॥
रशनामित्रताप्राप्तश्रोणीदेशातिचंचला ।
चन्दनाऽगुरुकस्तूरीकुंकुमाऽऽवासचर्चिता ॥१३॥
क्वणत्किंकिणिकाराजज्झांझराढ्यप्रकोष्ठका ।
स्वर्णमञ्जिरसंशोभज्जंघाऽधोगुल्फकण्डिका ॥१४॥
स्वर्णमालान्विता रंगक्रीडापद्मविभूषिता ।
सर्वसमाजनेत्राब्जविषया गतिमन्थरा ॥१५॥
विकसत्स्वल्पस्तनयुगीषत्प्रोद्भिन्नयौवना ।
स्वर्णतारावलिराजद्वस्त्रलज्जावगुण्ठिता ॥१६॥
शुशुभे स्वसखीकन्याप्रमदावर्गमध्यगा ।
ध्यानेऽधोमुखदृष्ट्याढ्या हृदि चोर्ध्वं हराभिगा ॥१७॥
चरणाभ्यां तु मार्गस्था मनोहृद्भ्यां हरान्तिका ।
स्थूलदेहेन भूमिस्था सूक्ष्मदेहेन शंभुगा ॥१८॥

यदा शंभोर्वाससौधपार्श्वमार्गत आगता ।
शुशुभे सुन्दरी रम्या सर्वदृष्ट्यैकपात्रिका ॥१९॥
सुराः प्रणेमुः शिरसा यान्तीं देवीं सुमेनकाम् ।
त्रिनेत्रो नेत्रकोणेन दृष्ट्वा विरहवेदनाम् ॥२०॥
जहौ सर्वं विसस्मार हर्षाद् गौरीगलोचनः ।
अथ काली बहिः पुर्या गत्वा प्राच्य कुलाम्बिकाम् ॥२१॥
प्रपूज्याऽऽवृत्य जनकाऽऽलयं विवेश सांगना ।
ततः शैलवरः पुत्र्या प्रीत्या यज्ञोपवीतकम् ॥२२॥
कारयामास सोत्साहं वेदमन्त्रैः शिवस्य च ।
अथ देवाः समुनयः प्रविश्याऽन्तर्गृहं गिरेः ॥२३॥
श्रुत्याचारं भवाचारं विधाय च यथार्थतः ।
ददुस्त्वर्वविभूषाश्च शिवाधारणहेतवे ॥२४॥
प्रथमं स्नपयित्वा तां भूषयित्वाऽथ कन्यकाः ।
नीराजयित्वा श्रृंगारं कारयामासुरुत्तमम् ॥२५॥
दिव्यस्वर्णमयी मृद्वी घर्घरी संधृता तथा ।
स्वर्णरत्नान्विता दिव्या कंचुकी शाटिका शुभा ॥२६॥
विधृता च तथा देवी शोभते सूर्यसूज्ज्वला ।
सन्धृतः सुभगो हारो दिव्यरत्नसमन्वितः ॥२७॥
वलयानि महार्हाणि पौरटानि धृतानि च ।
अन्यान्यानखकेशान्तं भूषणानि धृतानि च ॥२८॥
यथापेक्षं यथायोग्यं वस्त्रभूषणसद्द्रवैः ।
एवं शिवामलंचक्रुः शिवप्रेषितभूषणैः ॥२९॥
दानं बभूव विविधं साधुविप्रेभ्य आदरात् ।
गीतवाद्यविनोदाश्च बभूवुश्चोत्सवोत्तमाः ॥३०॥
अथ गर्गः सुदैवज्ञो हिमवन्तमभाषत ।
शंभुं पाणिग्रहार्थं त्वमानय स्वीयमण्डपम् ॥३१॥
शैलस्तदा महाशैलान् पत्नीव्रतमुखान् द्विजान् ।
प्रेषयामास सुप्रीत्या शिवस्याऽऽनयनाय च ॥३२॥
सवादित्रमहाघोषैः रम्यमंगलपाणिभिः ।
शैलैर्विप्रैश्च सहितान् ब्रह्मघोषकरान् द्विजान् ॥३३॥
दृष्ट्वा समागतान् सर्वे शंभुपक्षीयसेवकाः ।
सज्जाश्चाऽऽसन् शिवश्चापि सस्नौ सुगन्धवारिणा ॥३४॥
तावदागत्य शैलस्य मन्त्रिणः शंकरं तथा ।
विष्ण्वादीन् जनवाहाँश्च कृष्णं च वनितास्तथा ॥३५॥
प्रार्थयांचक्रुरादरविनीतभावनाभृताः ।
कन्यादानोचितः कालो वर्तते गम्यतामिति ॥३६॥
शिवो मांगलिकैर्द्रव्यैः स्नातः श्रृंगारितस्तथा ।
वस्त्रभूषामुकुटादिवरवेषादिशोभितः ॥३७॥

आरोपितो वृषस्कन्धे तैः सर्वैं परिवारितः।
नीतः शैलगृहं विप्रैर्जयशब्दैश्च वर्धितः ॥३८॥
पुरो वाद्यान्यवाद्यन्ताऽग्रगाश्चासन् द्विजाऽद्रयः।
ततः कृष्णब्रह्मविष्णुदेवकोट्यो ययुः शनैः ॥३९॥
शंभुर्बभौ सुछत्रेण संधृतेन तु मूर्धनि।
चामरैर्व्यजनैर्वीज्यमानश्च सद्वितानकः ॥४०॥
विकीर्यमाणः कुसुमैर्ययौ शनैःशनैः शिवः।
तदा शंखाश्च भेर्यश्च पटहानकगोमुखाः ॥४१॥
पुनःपुनरवाद्यन्त वादित्राणि वरोत्सवे।
तदा तु गायकाश्चाग्रे जगुः सन्मंगलानि वै ॥४२॥
नर्तक्यो ननृतुः सर्वा नानातालसमन्विताः।
एवं समाजमध्यस्थः प्राप शैलांगणं हरः ॥४३॥
वृषादुत्तारयामासुर्महेशं पर्वतादयः।
संपूजितस्ततः शंभुः प्रविष्टो यज्ञमण्डपम् ॥४४॥
निन्युर्गृहान्तरं शंभुं प्रणेमुः पुपुजुस्तथा।
हिमालयश्च विधिवन्नीराजनमथाऽकरोत् ॥४५॥
सुरादीन्संप्रणम्याऽथ सम्मानमकरोन्मुदा।
प्रांगणे स्थापयामास रत्नसिंहासनेषु तान् ॥४६॥
मेना नीराजनं चक्रे सर्वनारीसमन्विता।
गर्गेण मधुपर्कादि यत्कृत्यं तत्कृतं तदा ॥४७॥
सुमंगलं च यत्कर्म प्रस्तावसदृशं कृतम्।
अन्तर्वेद्यां महादेवो हिमशैलेन वेशितः ॥४८॥
हुतभुक्सहितां वेदीमारुरोह च शंकरः।
अथ श्रृंगारितां स्त्रीभिः सर्वाभरणभूषिताम् ॥४९॥
भ्राता सुनाभः शंभोश्चाऽभ्याशं कालीं निनाय ताम्।
वेदिकायां पार्वती च निषसाद ननाम तम् ॥५०॥
तत्रोपविष्टो गर्गश्च प्रतीक्षन् घटिकां तदा।
यावच्छेषा घटी तावत्कृतवान्प्रणवस्वरम् ॥५१॥
पुण्याहं प्रवदन् गर्गः समादध्रेऽक्षताञ्जलिम्।
पार्वत्युपरि ववृषे ववृषे च शिवोपरि ॥५२॥
तया संपूजितो रुद्रो दध्यक्षतकुशांबुभिः।
समानर्च शिवां शंभुर्लौकिकाचारसंरतः ॥५३॥
एवं परस्परं तौ तु पार्वतीपरमेश्वरौ।
अर्चयन्तौ शुशुभाते निरीक्षन्तौ परस्परम् ॥५४॥
नीराजितौ च लक्ष्म्यादिस्त्रीभिर्देव्यादिभिस्तदा।
अथ स्थाल्यां महत्यां च मुक्तास्वर्णोर्मिकादिभिः ॥५५॥
रंगात्मजलमग्नैश्च रेमाते विजयाय तौ।
अथ गुलालपुंजैश्च क्षणं चिक्रिडतुश्च तौ ॥५६॥

अथ गर्गेण चाज्ञप्तो हिमवान् मेनया सह।
हैमं कलशमादाय सजलं साक्षतादिकम् ॥५७॥
पुरोहितोक्तविधिना वस्त्रचन्दनभूषणैः।
पाद्यार्घ्यादिभिश्च वरं वरयामास भावतः ॥५८॥
तिथ्यादिकीर्तनं चक्रुः कालज्ञा द्विजसत्तमाः।
पत्नीव्रतस्तदा विप्रः सस्वस्तिसलिलं तदा ॥५९॥
प्रोक्षितवान् वरवध्वोः शिरसोः साक्षतं मुदा।
हिमाचलस्तदा प्राह शंभुं गोत्रं कुलं वद ॥६०॥
प्रवरं नाम वेदं च शाखां श्रावय सर्वथा।
निरुत्तरमुखः शंभुर्मौनमाश्रित्य संस्थितः ॥६१॥
तदा तु नारदः प्राह गोत्रं नादोऽस्य विद्यते।
कुलं ब्रह्मकुलं बोध्यं वेदः सत्यसंकल्पता ॥६२॥
प्रवरास्तु त्रयोऽस्याऽऽद्याः हरिर्नारायणो विराट्।
शाखा सदाशिवा बोध्या पिता कृष्णो यतो जनिः ॥६३॥
माता कृष्णमहेच्छा च नान्यज्जानामि किंचन।
अथ हिमालयः श्रुत्वा प्रसन्नोऽभूच्छिवोपरि ॥६४॥
योगिनां कुलगोत्रप्रवरैर्वा किं प्रयोजनम्।
एवं वदन्स्वकन्यादानं चाकरोद्विधानतः ॥६५॥
मत्पुत्रीं भगवन् कालीं पार्वतीं गिरिवंशजाम्।
पितृणामपि दौहित्रीं प्रतीच्छेमां मयाऽर्पिताम् ॥६६॥
इमां कन्यां तुभ्यमहं ददामि परमेश्वर।
भार्यार्थे परिगृह्णीष्व प्रसीद सकलेश्वर ॥६७॥
इत्थं शिवाकरं शैलः शिवहस्ते ददौ तदा।
तस्मै रुद्राय महते मन्त्रेणाऽनेन दत्तवान् ॥६८॥
इत्येवमुक्त्वा शैलेन्द्रो हस्तं हस्तेन योजयन्।
प्रादात् प्रतीच्छ भगवन्निदमुच्चैरुदीरयन् ॥६९॥
वेदमन्त्रेण गिरिशो गिरिजाकरपंकजम्।
जग्राह स्वकरेणाऽऽशु प्रसन्नः परमेश्वरः ॥७०॥
क्षितिं संस्पृश्य कामस्य कोऽदादिति मनुं ब्रुवन्।
जग्राह शंकरः प्रीत्या दर्शयन् लौकिकीं गतिम् ॥७१॥
न मे माता पिता नास्ति न ज्ञातिर्न च बान्धवाः।
न कुलं पर्वतवासी प्रतीच्छामि सुतां तव ॥७२॥
इत्युक्त्वाऽपीड्यच्छैलपुत्र्याः करं करेण सः।
संस्पृष्टौ तौ पुलकितौ सस्वेदसुप्रकोष्ठकौ ॥७३॥
चीरदूरस्थौ द्राक्जातौ मिलितौ शाश्वताय च।
जयशब्दा नमःशब्दास्तदाऽऽसन् भूःस्वरादिषु ॥७४॥
गन्धर्वाः सुजगुः प्रीत्या ननृतुश्चाप्सरोगणाः।
मुमुदिरे वरवधूपक्षगाश्च महोत्सवाः ॥७५॥

द्वयोश्च वस्त्रयोः प्रान्तग्रन्थिं विप्रो बबन्ध ह ।
सिन्दूरं प्रददौ शंभुस्तदा वध्वाः शिरस्यथ ॥७६॥
ततः शैलः शिवायाऽदात् कन्यादानस्य सांगताम् ।
बान्धवाश्च शिवां नत्वा ददुर्द्रव्यं शिवाय च ॥७७॥
हिमालयोऽपि सन्तुष्टः पार्वतीशिवप्रीतये ।
नानाविधानि द्रव्याणि रत्नानि कौतुकानि च ॥७८॥
चारुरत्नविकाराणि पात्राणि शयनानि च ।
गवां लक्षं हयानां चाऽयुतं दासीसुलक्षकम् ॥७९॥
नागानां च रथानां च शतलक्षं ददौ तदा ।
स्वर्णं रौप्यं मणींश्चापि रत्नमौक्तिकहीरकान् ॥८०॥
असंख्यातान् ददौ ताभ्यां प्रहृष्टो गिरिराट् तदा ।
शिरोभिषेकं पार्वत्याश्चक्रुस्ते मुनयोऽखिलाः ॥८१॥
शिवाभिधानमुच्चार्य पर्युक्षणविधिं व्यधुः ।
अथ शिवाशिवौ तत्र मधुपर्कं समश्नुतः ॥८२॥
ब्राह्मणैः स्थापिते वह्नौ होमं चक्रतुरादरात् ।
दत्वा लाजान्कलभस्य शुक्लान् ससर्पिषा तथा ॥८३॥
ऋग्यजुःसाममन्त्रैश्चाऽऽहुतिं ददतुरग्नये ।
लाजांजलिं ददौ कालीभ्राता मैनाकनामतः ॥८४॥
अथ काली शिवश्चोभौ चक्रतुर्विधिवन्मुदा ।
वह्निप्रदक्षिणं तत्र लोकाचारं विधाय च ॥८५॥
वरमालासमायुक्तौ लग्नग्रन्थिसुयोजितौ ।
गिरिजया गिरीशेन हुताशस्त्रिप्रदक्षिणम् ॥८६॥
कृतो लाजाश्च हविषा समं क्षिप्ता हुताशने ।
निषेदतुर्वधूवरौ तावत्तत्र च मालिनी ॥८७॥
जग्राह शंकरांघ्रिं वै दायस्य प्राप्तये तदा ।
किं याचसे ते प्रदास्ये मुञ्चस्वेति हरोऽब्रवीत् ॥८८॥
मालिनी प्राह मत्सख्या देहि शंकर शाश्वतम् ।
सौभाग्यं निजगोत्रीयं ततो मोक्षमवाप्स्यसि ॥८९॥
अथोवाच महादेवो दत्तो मालिनि मुञ्च माम् ।
योऽसौ कृष्णोऽखिलनाथो गणेशाख्यः सुतस्तव ॥९०॥
सख्या भविष्यति चैतत्सौभाग्यं चार्पितं मया ।
तदन्तरे तु पार्वत्याः उद्धृत्य मुखवस्त्रकम् ॥९१॥
ब्रह्मणा दृष्टमास्यं तत् शशितेजोऽधिकप्रभम् ।
तद्दृष्ट्वा मोहमगमच्छुक्रं च्युतिमवाप च ॥९२॥
तच्छुक्रं वालुकायां च खिलीचक्रे ससाध्वसः ।
मर्दिताच्च मुहुस्तस्मात्कणका वै सहस्रशः ॥९३॥
परोज्ज्वलाः समुत्पन्नाः शंकरः प्राह वेधसम् ।
इमे महर्षयो जाता न द्विजान् हन्तुमर्हसि ॥९४॥
जातास्ते ऋषयस्तत्र वालखिल्याभिधा द्रुतम् ।
आज्ञप्ताश्च चिरं स्थातुं गन्धमादनपर्वते ॥९५॥
गतास्तत्र तपस्तप्त्वा भविष्यन्त्यर्कसेवकाः ।
इत्येते वालखिल्याश्चोद्भूताश्चात्र पुनः प्रिये ॥९६॥
दृष्ट्वैतान् देवताः सर्वे चकिता ह्यभवँस्तदा ।
तयोः शिरोऽभिषेकोऽथ बभूवाऽऽदरतस्ततः ॥९७॥
ध्रुवस्य दर्शनं विप्राः कारयामासुरादरात् ।
हृदयालंभनं कर्म बभूव तदनन्तरम् ॥९८॥
स्वस्तिपाठश्चाभवच्च महोत्सवपुरःसरः ।
शिवाशिरसि सिन्दूरं ददौ शंभुर्द्विजाज्ञया ॥९९॥
ततो विप्राज्ञया तौ द्वावेकासनसमास्थितौ ।
नरैर्नारीभिराशीर्भिर्वर्धितौ मुदितौ तदा ॥१००॥
मण्डपात्तौ समुत्थाय वह्निवेदीं प्रणम्य च ।
निवासस्थानमागत्य संस्रवप्राशनं ततः ॥१०१॥
चक्रतुर्विशश्रमतुर्यज्ञश्च पूर्णतां गतः ।
निवृत्तं विधिवत् सर्वं कर्म वैवाहिकं ततः ॥१०२॥
ब्रह्मणे पूर्णपात्रं च ददौ लोककृतः शिवः ।
गोदानं विधिवच्छंभुराचार्याय ददौ ततः ॥१०३॥
महादानानि सर्वाणि मंगलादीनि यानि च ।
आचार्याय द्विगुणं तत् ददौ श्रीशंकरः स्वयम् ॥१०४॥
विप्रेभ्यश्च शतं स्वर्णमुद्राद्यं तु ददौ पृथक् ।
रत्नकोटिं बहुभ्यश्च पृथक्द्रव्याणि सन्ददौ ॥१०५॥
नृत्यं गानं वाद्यवादा जयशब्दाः सुकीर्तयः ।
समभवन् शैलराजगृहे मोदप्रवर्धकाः ॥१०६॥
विष्णुप्रभृतयस्ततो भोजनार्थं हिमाद्रिणा ।
समाहूताः कोटिकोट्यर्बुदाब्जवरपक्षगाः ॥१०७॥
संभोजिता बहुभोज्यैस्तर्पिताः क्षीरवारिभिः ।
न कश्चित्तद्गृहे प्राणी क्षुधितः शिष्यतेऽधुना ॥१०८॥
अथैवं शैलनगरे स्त्रियश्च मुदिता ततः ।
वरं वधूं समानीय ययुः कुहवरालयम् ॥१०९॥
लौकिकाचारमाजह्रुस्ता महादरसंभृताः ।
ततस्तास्तौ समानीय वासालयमगुस्ततः ॥११०॥
चक्रुर्दिव्यं भवाचारं पूजाचारं व्यधुश्च ताः ।
हस्तिरथं समादय प्रमदाः कृष्णधामजम् ॥१११॥
संस्थाप्य दम्पती तत्र जगुर्गीतानि भावतः ।
नगरे वाहयामास महाराजपथेऽभितः ॥११२॥
नागराश्च नरा नार्यो देशिकाश्च जनाः स्त्रियः ।
चक्रर्दम्पत्यर्हणां ते स्थानिनो वै स्थले स्थले ॥११३॥

तदा गुलालं बहुधा सिन्दूरं चापि कृत्स्नशः।
क्षिपतो दम्पती भूमिं रक्तां चक्रे हि नागरीम् ॥११४॥
शीघ्रं स्वीयां प्रसूतिं च तौ प्रपूर्य परस्परम्।
प्रक्षिप्य बहु रेमाते जनानन्दो ह्यभून्महान् ॥११५॥
एवं समग्रनगरं भ्रामयित्वा रथेन तौ।
सवाद्यगीतनिदर्दैर्जग्मुर्वरालयं तदा ॥११६॥
एवं शैलेन्द्रनगरीवनिता मोदनिर्भराः।
निर्वर्त्य मंगलं कर्म प्रापयन् दम्पती गृहम् ॥११७॥
कृत्वा जयध्वनिं चक्रुर्ग्रन्थिनिर्मोचनादिकम्।
वासगृहं सम्प्रविश्य प्रशशंसुश्च तौ स्त्रियः ॥११८॥
सरस्वती तथा लक्ष्मीः सावित्री जाह्नवी शची।
लोपामुद्राऽरुन्धती चाऽदितिस्तुलसी रोहिणी ॥११९॥
शतरूपा रतिः संज्ञा स्वाहाऽहल्या वसुन्धरा।
तौ दम्पती च संद्रष्टुमेता देव्यः समाययुः ॥१२०॥
मुनिकन्याः पितृकन्या देवकन्या नृकन्यकाः।
अदेवकन्या नागानां कन्या याश्चान्यकन्यकाः ॥१२१॥
नर्ममधुरहास्यं ताश्चक्रुः शंभोस्तदा मुदा।
त्वया फलं नवं मिष्टं प्राप्तं भक्षय मा चिरम् ॥१२२॥
मधुरं शीतलं पेयं पिब तृप्तिं प्रदेहि ताम्।
स्थानं वक्षसि दत्वा संभज देवं मनोभवम् ॥१२३॥
भक्ष्यं विना क्षुधा नैव शाम्यतीमां प्रभोजय।
स्वर्णहस्ततले विद्युत्केशान् कृत्वाऽभिमार्जय ॥१२४॥
पूर्णिमाचन्द्रबिम्बं तत् सूर्यबिम्बेन योजय।
नागवल्लीदलं भुक्त्वा तामालीं सफलां कुरु ॥१२५॥
आत्मनश्च कृते ह्यात्मा प्रियः समर्थय श्रुतिम्।
आनन्दाख्ये परे तत्त्वे समाधिं कुरु योगतः ॥१२६॥
अवग्रहमयीं भूमिं वृष्ट्या तर्पय गुप्तभुक्।
गिरिश्रोणीप्रदेशस्थो मेघः श्रृंगे स्पृशत्विमे ॥१२७॥
संजीवनी भवतात्मा युनक्तु भस्मितं भवम्।
शैलपुत्री त्वया लब्धा मृत्युपुत्री च माऽस्तु ते ॥१२८॥
माऽति स्वपिहि निद्रालो गृहलक्ष्मीं निभालय।
माऽतिप्रवर्तयेः स्वार्थे परार्थो मोक्षणे भव ॥१२९॥
क्षुधां दशगुणां शान्त्वा ततो मोक्षमवाप्नुयात्।
तदा स्ववसरं प्राप्य रतिः प्राह कपर्दिनम् ॥१३०॥
येन विनाऽस्म्यहं साध्वी तं विना किं भवेत् तव।
विवाहिताऽद्य वर्तंते ते व्यर्था जानासि किं न तत् ॥१३१॥
तदत्र रत्याः पार्वत्याः सार्थक्यं कुरु शंकर।
श्रुत्वैतन्मर्मवेत्ता स दयालुः शंकरस्तदा ॥१३२॥
रत्या तु रक्षितां कामभस्मपोटलिकां प्रति।
ददर्श यावत्तावत्तु भस्मतो निर्गतः स्मरः ॥१३३॥
मूर्तिमान्सर्वदा कामो बभूवाऽमूर्तकोऽपि च।
आज्ञापितः सर्वसृष्टौ स्थातुं देवादिभिस्ततः ॥१३४॥
तद्रूपवेषचिह्नात्मा यथापूर्वधनुश्शरः।
अव्याप्नोत् सर्वतः सृष्टौ न कदापि मरिष्यति ॥१३५॥
देव्यो नर्म समाप्यैव गालं कृष्ट्वाऽऽगता बहिः।
शंभुर्नैजे वासगेहे त्वंके संस्थाप्य पार्वतीम् ॥१३६॥
मिष्टान्नं भोजयामास तं च सापि मुदान्विता।
मेनाद्रयामन्त्र्य सस्त्रीशो जनावासं ययौ तदा ॥१३७॥
वाद्यानि वादयामासुर्जनाः सर्वविधानि च।
अथ शैलो वरपक्षान् नरान् नारीश्च सर्वशः ॥१३८॥
भोजयामास दुग्धान्नपक्वान्नादीनि भूरिशः।
ततः स्वपक्षान्सर्वान् भोजयामास च कृत्स्नशः ॥१३९॥
अथाऽशयिष्ट शर्वः सः पार्वत्या परिसेवितः।
व्यतीता रजनी सर्वा प्रातःकालो बभूव ह ॥१४०॥
नानाप्रकारवाद्यानि वादयांचक्रिरे जनाः।
अथ शंभुः स्वपक्षैश्च कैलासं गन्तुमुत्सुकः ॥१४१॥
मेनां शैलं समापृच्छय त्वरावानभवत्तदा।
शैलः सबान्धवश्चक्रे प्रार्थनां समयोचिताम् ॥१४२॥
कियद्दिनानि सन्तिष्ठ मद्गेहे सफलैः सह।
शंभो कृष्ण महाविष्णो विष्णो ब्रह्मन् सुरेश्वर ॥१४३॥
सूर्य चन्द्र सुरा देव्यो पितरो मुनयोऽपरे।
ऋषयो लोकपालाश्च दिक्पाला भुवनेश्वराः ॥१४४॥
दर्शनेन च युष्माकं कृतार्थो ह्यभवं खलु।
धन्योऽहं मद्गृहं पुण्यं कुटुम्बं श्रेष्ठतांगतम् ॥१४५॥
सर्वं मे पावनं जातं शश्वद् यशोऽभिवृद्धये।
इत्युक्त्वाऽऽदरसत्कारपूर्वं प्रणम्य सांजलिः ॥१४६॥
हरं निमन्त्रयामास सह विष्णुसुरादिभिः।
हरेणाऽऽज्ञापिता देवा नत्वा हिमालयं तदा ॥१४७॥
मुनयः ऋषयश्चापि प्रत्यूचुः समयंविदः।
भूभृत्! विष्णुसमा कीर्तिस्त्रिषु लोकेषु तेऽधुना ॥१४८॥
नहि पुण्यतमश्चान्यस्त्वत्समो वै भविष्यति।
यस्य द्वारि भगवन्त ईश्वरा देवकोटयः ॥१४९॥
अनाहूता अपि शंभोर्विवाहे स्वयमागताः।
जनवासाः कृता रम्या व्यवहारोऽपि सन्कृतः ॥१५०॥
सन्मानं वस्तुसामग्र्युपस्थितिर्भोजनानि च।
पेयानि दासदास्यश्च सेवायां नियताश्च याः ॥१५१॥

सर्वमपूर्वमवर्ण्यमनवशेषमाद्दतम् ।
परिपूर्णं कृतं शैल त्वया तव च बान्धवैः ॥१५२॥
इत्थं शैलस्य पक्षस्य प्रशंसाऽभवदुत्तमा ।
स्नानसन्ध्याजपहोमस्वाध्यायतर्पणोत्तरम् ॥१५३॥
भोजनार्थं हरं प्रीत्याऽऽनयामास वधूयुतम् ।
प्रक्षाल्य चरणौ शंभोस्तथा भगवतामपि ॥१५४॥
सर्वेषां जनवाहानां कृत्वा चापि समादरम् ।
आसयामास दीर्घेषु मण्डपेषु सुपंक्तिशः ॥१५५॥
सुरसैर्विविधान्नैश्च मिष्टैः स्वादुतमैर्बहु ।
भक्ष्यभोज्यैर्लेह्यचोष्यैस्तिक्तकैश्च प्रवाहिभिः ॥१५६॥
शंकरं तर्पयामास सवधूं च जनाँस्तथा ।
लौकिकाचाररीत्या च पुरनार्यश्च भुञ्जतः ॥१५७॥
वरपक्षजनवाहान् श्रावयामासुराफटान् ।
मृदुवाण्या हसन्त्यश्च गालीवाचो व्यधुर्बहु ॥१५८॥
ते भुक्त्वाऽऽचम्य विधिवद् गिरिमामन्त्र्य शांकराः ।
ऊषुः सुखतो दिवसे द्वितीये तृतीयके ॥१५९॥
चतुर्थे दिवसे प्राप्ते चतुर्थीकर्म शुद्धितः ।
बभूव विधिवद् येन विना खण्डित उत्सवः ॥१६०॥
पञ्चमे दिवसे देवा नगं यात्रार्थमूचिरे ।
तदाकर्ण्य गिरिः प्राह कृपां कुर्वन्तु मां सुराः ॥१६१॥
कियद्दिनानि तिष्ठन्तु सर्वे युष्माकमेव मे ।
इत्युक्त्वा वासयामास बह्वहान्येव चादरात् ॥१६२॥
प्रत्यहं भोजनं दिव्यं नूतनं नूतनं सदा ।
पानानि नूतनान्येव सेवाः पूर्णतया तथा ॥१६३॥
प्रत्यहं नृत्यगीतानि वाद्यानि सोत्सवानि च ।
बहुदानानि गानानि प्रत्यहं कारयत्ययम् ॥१६४॥
प्रत्यहं मल्लयुद्धं च प्रत्यहं नटनर्तनम् ।
प्रत्यहं नाटकं दिव्यं यज्ञकार्यं च नित्यदा ॥१६५॥
प्रत्यहं चारणीगाथा व्याख्यानानि च नित्यशः ।
नारीणां चापि रम्याश्च विलासाः प्रत्यहं तथा ॥१६६॥
अभवन्महीमानानां सुखार्थं गिरिकारिताः ।
न न्यूनं चाऽभवत् किंचित् काचिद्बाधा न चाऽभवत् ॥१६७॥
इत्थं व्यतीयुर्दिवसा बहवो वसतां ततः ।
स्वयं निर्णयतो यात्रामर्थयामास शंकरः ॥१६८॥
शैलोऽपि सुप्रसन्नः सन्नाज्ञां ददौ प्रवासने ।
सज्जाः सर्वेऽभवन् मेना शिवं प्राह सुकालिकम् ॥१६९॥
मम पुत्रीं कृपां कृत्वा सर्वथा पालयिष्यसि ।
तव वध्वा लक्षदोषानाशुतोषः क्षमिष्यसे ॥१७०॥
धनं चेदं चेतनं ते मा व्यत्येयं जडार्थवत् ।
तनुवत् सा सदा रक्ष्या न दण्ड्या विगतार्थवत् ॥१७१॥
त्वदर्थे मानसा वाचा कर्मणा तपसा बहु ।
कष्टं प्राप्तं फलं प्राप्तस्त्वं प्राप्तां पाहि किंकरीम् ॥१७२॥
यदी मां सा स्मरेत् यद्वा द्रष्टुमिच्छेदिहाऽऽनय ।
ममापि सुसुखं स्याच्च युवयोर्दर्शनात्तदा ॥१७३॥
समाचारश्च वृत्तान्तो दूतैर्देयो यथामुहुः ।
सुखिनौ भवतं स्वस्थौ स्मरिष्यामि सदा युवाम् ॥१७४॥
शृणु पुत्रि हितं तेऽत्र वधूभावेऽर्थदं वचः ।
पतिव्रता सदा लोके जयं प्राप्य प्रपूज्यते ॥१७५॥
पातिव्रत्यसमो धर्मो नास्ति सर्वार्थदः स्त्रियाः ।
सेवते सर्वभावेन सर्वथा सर्वदा पतिम् ॥१७६॥
सेह भुक्त्वाऽखिलान्भोगानन्ते पत्या शुभां गतिम् ।
पावनी सर्वलोकानां पूज्या धन्या विशेषतः ॥१७७॥
भुंज्याद् भुक्ते प्रिये पत्यौ तिष्ठेत् पत्यौ च तिष्ठति ।
स्वप्यात् स्वपिति पत्यौ च बुध्येद् वै प्रथमं सदा ॥१७८॥
सर्वथा तद्धितं कुर्यादकैतवसुवर्तना ।
अनलंकृतमात्मानं स्वामिने दर्शयेन्न वै ॥१७९॥
कार्यार्थं प्रोषिते पत्यौ भवेच्छृंगारवर्जिता ।
आक्रुष्टापि न चाक्रोशेत् प्रसीदेत्ताडितापि च ॥१८०॥
ताडयामीति चेद्ब्रूयात् स्वामिन्निति कृपां कुरु ।
आहूता गृहकार्याणि त्यक्त्वा गच्छेत्तदन्तिकम् ॥१८१॥
चिरं तिष्ठेन्न च द्वारे तिष्ठेन्नैव परगृहे ।
गृहतत्त्वं तु नान्यस्मै कस्मैचित्त्वपि दर्शयेत् ॥१८२॥
पूजोपकरणं सेवामनुक्ताऽपि प्रसाधयेत् ।
प्रतीक्षमाणा सेवाया अवसरं च वर्तयेत् ॥१८३॥
पत्युर्नाम न गृह्णीयात् गृहच्छिद्रं न दर्शयेत् ।
तीर्थयात्रां च पत्याज्ञां विना गच्छेन्न सर्वथा ॥१८४॥
पतिं विना समाजादौ न च यायात्कदाचन ।
पतिपादोदकं तीर्थं सर्वतीर्थोत्तमं मतम् ॥१८५॥
भुंज्यात् पतिप्रसादान्नं मत्वा महाप्रसादनम् ।
अविभज्य च नाश्नीयाद् देवपित्रतिथिष्वपि ॥१८६॥
परिचारकवर्गेषु गोषु भिक्षुकुलेषु च ।
संयतोपस्करा दक्षा हृष्टा व्ययपराङ्मुखी ॥१८७॥
पत्याज्ञया व्रतं कुर्यादन्यथा निष्फलं भवेत् ।
सुखपूर्वं सुखासीनं रममाणं यदृच्छया ॥१८८॥
आन्तरेष्वपि कार्येषु पतिं नोत्थापयेत् क्वचित् ।
सुप्ते पत्यौ न वै निद्राभंगं कुर्यात् कदाचन ॥१८९॥

क्लीबं वा दुरवस्थं वा व्याधितं वृद्धमित्यपि ।
निर्धनं दुःखितं वापि पतिमेकं न लंघयेत् ॥१९०॥
स्त्रीधर्मिणी त्रिरात्रं स्वमुखं नैव प्रदर्शयेत् ।
स्ववाक्यं श्रावयेन्नापि यावत् स्नानान्न शुद्धयति ॥ ९१॥
स्नात्वा स्वपतिवदनमीक्षेतान्यस्य नैव हि ।
पत्यौ दूरे तु तं स्मृत्वा सूर्यदर्शनमाचरेत् ॥१९२॥
सौभाग्यो पकरणानि हरिद्रां कुंकुमं तथा ।
सिन्दूरं कज्जलं चाऽलक्तकं तैलं सुगन्धिमत् ॥१९३॥
कूपासिकं च ताम्बूलं तथा मंगलसूत्रकम् ।
तन्तिकां नत्थिकां कण्ठीं कर्णफुल्लीमिरीणिकान् ॥१९४॥
कटकं वंगिडी चैवोर्मिकां च रशनां तथा ।
श्रृंखलां झांझरीं केशसंस्कारकवरीं तथा ॥१९५॥
दस्यूहं दूरयेन्नैव भर्त्रायुष्येच्छुकी वधूः ।
न घर्मनाशयिन्या बाऽटन्त्या मैत्रीं समाचरेत् ॥१९६॥
पतिनिन्दां न श्रृणुयात् स्नायान्नग्ना नहि क्वचित् ।
विना व्यवायसमयं नैर्लज्ज्यं नाऽऽचरेत् क्वचित् ॥१९७॥
नोलूखले न वर्धन्यां प्रस्तरे मूशले न च ।
न पेषण्यां न मार्जन्यां देहल्यामासनं क्रियात् ॥१९८॥
प्रेमवत्या तत्र भाव्यं यत्र भर्तूरुचिर्भवेत् ।
हृष्टे हृष्टे विषण्णे च विषण्णा च प्रिये प्रिया ॥१९९॥
पत्युर्हिता चैकरूपा सम्पत्सु च विपत्सु च ।
सधैर्या विकृतिं नेयात् प्रसन्नास्या सदा भवेत् ॥२००॥
तैलगूडाद्यसत्त्वेऽपि पतिं दुःखे न योजयेत् ।
पत्युर्भोजनकाले स्वोद्वेगं नैव प्रकाशयेत् ॥२०१॥
विधेर्विष्णोर्हराद्वापि पतिर्नारायणोऽधिकः ।
उक्ता प्रत्युत्तरं दद्याद् विनयेन न रोषतः ॥२०२॥
उच्चासनं न सेवेत न चोद्वेगकरं वदेत् ।
अपवादं न वै ब्रूयान्न कुर्यात्कलहं क्वचित् ॥२०३॥
गुरूणां सन्निधौ हास्यं न कुर्यान्नोच्चमावदेत् ।
बाह्यादायान्तमालोक्योत्थातव्यं सस्मितं तथा ॥२०४॥
जलान्नताम्बूलवस्त्रासनपादांगमर्द्दनैः ।
श्रमखेदहरैर्वाक्यैः प्रीणनीयः पतिः सदा ॥२०५॥
ददाति पिता स्वल्पं च भ्राता स्वल्पं सुतस्तथा ।
अनल्पस्य प्रदातारं स्वामिनं संप्रसन्नयेत् ॥२०६॥
भर्ता देवो गुरुर्भर्ता उभलोकप्रदः पतिः ।
धर्मस्तीर्थं व्रतं भर्ता पत्न्याः सर्वं पतिर्मतः ॥२०७॥

पतिं विना शवतुल्या ह्यशुचिः प्रमदा मता ।
माता पिता पतिर्धन्या यद्गेहेऽस्ति पतिव्रता ॥२०८॥
पितुर्मातुश्च पत्युश्च दिवं वंश्यास्त्रयस्त्रयः ।
यान्ति पतिव्रतापुण्यादन्यथा पातयन्ति तान् ॥२०९॥
पतिव्रतापादरजः पावनं साधुपादवत् ।
पूयन्ते पादरजसा सूर्यचन्द्रानिलानलाः ॥२१०॥
जलान्यपि च पूयन्ते सा गंगातोऽधिका मता ।
पतिव्रतावलोकात्तु साधुदर्शनजं फलम् ॥२११॥
पत्युस्तिरस्करी नारी श्रृगाली सरमा भवेत् ।
भर्तुस्त्यागकरी नारी उलुकी वृक्षगा भवेत् ॥२१२॥
भवेद्भर्तुस्ताडयित्री व्याघ्री च वृषदंशिका ।
नेत्ररोषं दर्शयित्री केकराक्षी तु सा भवेत् ॥२१३॥
पतिं विना मिष्टभोक्त्री वल्गुर्वा शुकरी भवेत् ।
पतिं तूँकृत्यब्रूवा सा मूका संजायते जनेः ॥२१४॥
सपत्नीं चेर्ष्यति या सा दुर्भगा रोगिणी भवेत् ।
कामतोऽभर्तृपश्या सा भवेत् काणा कुरूपिणी ॥२१५॥
गार्हस्थ्यस्य मुखस्याथ धर्मस्य मूलमेव सा ।
देवपित्रतिथीज्यादिकर्ममूलं पतिव्रता ॥२१६॥
सन्ति गृहे गृहे नार्यो रूपलावण्यगर्विताः ।
ग्रसन्ते पुरुषान् दुःखे क्षिप्त्वा राक्षस्य एव ताः ॥२१७॥
पतिव्रता च सावित्री लोपामुद्रा ह्यरुन्धती ।
शाण्डिल्यां शतरूपाऽनसूया लक्ष्मीः स्वधा सती ॥२१८॥
संज्ञा च सुमतिः श्रद्धा मेना स्वाहा पतिव्रता ।
पातिव्रत्यवृषेणैव ता गताः सर्वपूज्यताम् ॥२१९॥
श्रेष्ठा मध्या कनिष्ठाऽतिकनिष्ठास्ताश्चतुर्विधाः ।
व्यवस्थासु भर्तृपरा श्रेष्ठा नान्यपरा क्वचित् ॥२२०॥
स्वप्ने देहेन चान्यं न स्पृशति मध्यमा च सा ।
जाग्रत्यन्यं शरीरेण न स्पृशति कनिष्ठिका ॥२२१॥
यं कमपि स्पृशत्यन्यं व्यभिचारं करोति न ।
पत्युर्भयाल्लोकभयात् साऽतिकनिष्ठिका मता ॥२२२॥
परप्रसंगकर्त्री या सा प्रोक्ता व्यभिचारिणी ।
जगदम्बा महेशी त्वं शिवः साक्षात्पतिस्तव ॥२२३॥
तव स्मरणतो नार्यो भविष्यन्ति पतिव्रताः ।
किं त्वग्रे कथनेन कथितं लोकचारतः ॥२२४॥
इत्येवं च समादिश्य प्रिये पुत्रि प्रगच्छसि ! ।
आगन्तव्यं योग्यकाले इतिकृत्वाऽऽश्लिषत् सुताम् ॥२२५॥

किंचिदाचाररक्षार्थं सा रुरोद मनाक् ततः।
शिवापि जननीस्नेहाद् रुरोद गद्गदा सती ॥२२६॥
तदा सर्वं कुटुम्बं च रुरोद प्रेमविह्वलम्।
उभयोः पक्षयोश्चापि स्नेहबद्धहृदादिभिः ॥२२७॥
नरा नार्यः सुरा देव्यः पर्यश्चाप्सरसस्तथा।
साश्रुनेत्राः समभवन् प्रयाणसमये जनाः ॥२२८॥
अथाऽऽनयामास शैलः शिविकां पार्वतीकृते।
शिवामारोहयामासुस्तत्र विप्रांगनाश्च ताम् ॥२२९॥
आशिषं प्रददुः सर्वे पिता माता द्विजादयः।
महाराज्ञ्युपचारांश्च ददू रत्नादि यौतकम् ॥२३०॥
शिवा नत्वा गुरून्सर्वान् जनकं जननीं तथा।
द्विजान्पुरोहितं नत्वा यामीत्युक्त्वा ययौ ततः ॥२३१॥
हिमाचलादयः शंभुं गत्वाऽभिरेभिरे च ते।
सुमण्डपजनाः सर्वे जनवाहजनास्तथा ॥२३२॥
परस्परं समाश्लिष्य नत्वाऽभिरेभिरे मुहुः।
जयेत्युच्चारयन्तस्ते जग्मुः स्वां स्वां पुरीं प्रति ॥२३३॥
नार्यश्च दम्पतीं यात्रां कारयित्वा गृहं ययुः।
शिवपक्षास्तथा चान्ये यात्रां प्रचक्रिरे ततः ॥२३४॥
यात्रापयितुं शैलस्तान् सीमान्तं सह तैर्ययौ।
प्रशंसन्तो विवाहं च सर्वे स्वस्वगृहं ययुः ॥२३५॥
हिमालयमहीमानाश्चामन्त्र्याऽऽत्वा गृहं ययुः।
शिवः सर्वसहितः स्वपुरीं प्राप्तो जनाँस्तदा ॥२३६॥
भोजयामास च कृष्णनारायणपुरोगमान्।
तथाऽन्यान्निखिलान् प्रीत्या स्वविवाहसमागतान् ॥२३७॥
योग्यां पूजां प्रदत्वा प्रसादयामास शंकरः।
तेऽप्यामन्त्र्य च प्रययुः स्वस्थलोकान् सुरादयः ॥२३८॥
ब्रह्मब्राह्मयोश्च दिव्योऽयं विवाहः कथितः प्रिये।
पठनाच्छ्रवणाच्चायं पापघ्नः स्वेष्टपूरकः ॥२३९॥
आयुष्यो धनदो मुक्तिप्रदो भुक्तिप्रदोऽपि च।
विघ्नव्याधिप्रशमनः सर्वथा मंगलायनः ॥२४०॥
सुयशस्यः स्वर्ग्योऽपत्यवंशदः कामदः परः।
शिवोत्सवेषु सर्वत्र पठनीयो विशेषतः ॥२४१॥
इत्येवं कथितं लक्ष्मि! चरितं लग्नमंगलम्।
वैवाहिकं च सर्वेषां गृहस्थानां हिताय वै ॥२४२॥
कन्यानां च कुमाराणां पक्षयोश्चोभयोरपि।
शिक्षाऽर्हं सर्वथा शोकनाशनं सुखदं महत् ॥२४३॥
विवाहे च तव लक्ष्मि! एवमेवाऽभवत्पुरा।
वद चेत्ते समुत्साहः किमन्यच्छ्रोतुमिच्छसि ॥२४४॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने कुलदेवीपूजनं, पार्वत्या यज्ञोपवीतं, शिवप्रेषिताऽऽभरणादीनि, मण्डपादावागमनं, मधुपर्कादि, नामगोत्रादि, पाणिग्रहणविधिः, दानं, वह्निप्रदक्षिणं, ब्रह्मणोऽन्ये वालखिल्या उत्पन्नाः, वेदिकाचारोलोकाचारः, व्यंग्यादि, रतिप्रार्थनया कामसजीवनता, भोज्यसत्कारादि, पतिव्रताधर्माः, दम्पतीप्रभृतीनां कैलासाभिगमनं चेत्यादिनिरूपणनामा चतुर्नवत्यधिकशततमोऽध्यायः ॥१९४॥

**श्रीलक्ष्मीरुवाच—**

हिमवद्भूभृतः पुत्री कालीति वर्णतोऽभवत्।
कामरूपधरा सा च विवाहसमये तु वै ॥ १ ॥
गौरं रूपं धृतवती पुनः काल्येव साऽभवत्।
नित्यं गौरी कथं जाता कथां तां वद केशव ॥ २ ॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि प्रवक्ष्यामि रूपं गृहस्थकृतिप्रियम्।
कांचनसदृशं यद्वा स्थलपद्मादिसदृशम् ॥ ३ ॥
कौमुदीसदृशं यद्वा प्रियं विद्युत्समं त्वति।
काल्या आकृतिः सर्वापि सुघटाऽऽसीद् यथास्थला ॥ ४ ॥
पितृकुलस्य वर्णस्तु नीलो ह्यासीन्निसर्गजः।
शंभुः शिवा स्वकैलासे रमेते स्मातिभावतः ॥ ५ ॥
शंभुना नर्मभावेन कालीत्यभिहिता शिवा।
हास्यं चकार बहुधा शिवः कालीति संवदन् ॥ ६ ॥
यस्य गृहे नीलवर्णा पत्नी नीला प्रजा भवेत्।
अपत्येषु च नीलेषु कुलं कृष्णं ततो भवेत् ॥ ७ ॥
यावत्पश्यामि कालीति मोहो गच्छति लीनताम्।
कुटुम्बिनां सम्बन्धिनां नारीषु न प्रभा भवेत् ॥ ८ ॥
काल्या न गौरवं किंचित्प्रभवेत् गृहवासिनः।
किं करोमि यथाभाग्यं तथाऽऽप्ता नीलमोहिनी ॥ ९ ॥
यदि ते न विरोधोऽस्ति त्वन्यां गौरीं नयाम्यहम्।
लग्नं करोमि देवानां वार्षीणां कन्यया सह ॥१०॥

वद देवि महाकालि चात्रार्थे देहि मन्त्रणाम् ।
इत्युक्ता तु महादेवी द्राक् जाता भग्नमानसा ॥११॥
प्रत्युवाच मम वर्णे रतिर्नो भवतोऽस्ति चेत् ।
एतावन्तं चिरकालं कथमत्रैव रक्षिता ॥१२॥
यदि नाऽहं प्रिया तेऽस्मि कथं नाभिहितं पुरा ।
अरत्या च मया साकं दिवसा भवतो यदि ॥१३॥
अमनस्काश्च निर्यान्ति किं मे नाभिहितं पुरा ।
अमनस्कगृहे स्थातुं किं मे चात्र प्रयोजनम् ॥१४॥
अरत्या वर्तमानश्चेत् कथं वै रमसे मया ।
ईश्वरस्य समर्थस्याऽशक्यं न प्रमदाऽर्जनम् ॥१५॥
कथं नैतावताऽऽनीता चम्पकपुष्पसन्निभा ।
यद्वाऽऽत्मारामभुक्तस्य न रतिः सुखसाधनम् ॥१६॥
जानेऽत एव भवता स्मरोऽपि भस्मितः पुरा ।
मन्ये ममासि तपसि पञ्चसाहस्रवर्षजे ॥१७॥
अत एव समागत्य निषिद्धं बहुधा तदा ।
विवाहश्चाऽमनस्केन प्रसह्य च कृतस्त्वया ॥१८॥
भवतु वै तत्तु भूतं नान्यथाभावि वै भवेत् ।
सर्वावयवसौम्यापि भर्तुस्तोषाय नो भवेत् ॥१९॥
साऽनेकगुणयुक्तापि व्यर्थैव गृहवासिनी ।
ममेयं व्यर्थता चाद्य प्रकाशितेति सुकृतम् ॥२०॥
करिष्ये च तथा यत्नो यथा स्यां गौरवर्णिका ।
भर्तुः सर्वस्वसौख्यस्य स्थानं नारीति निर्मिता ॥२१॥
तत्र यदि न संतोषः किं भर्तृत्वे रसस्तदा ।
भर्तुर्भागार्ध एवास्ति नारीसर्गोऽत्र सर्जने ॥२२॥
यदि सा न प्रियाभर्तुस्तर्हि कुत्रोपयोगिनी ।
विवाहितया काल्या चेद्भर्तुस्तोषो भवेन्नहि ॥२३॥
नान्यतोषोऽपि भवति न स्वयं तुष्टिमाप्नुयात् ।
किं फलं चात्र तत्काल्यास्तस्माद् गौरी भवाम्यहम् ॥२४॥
तस्माच्छिवस्य तोषाय नास्ति यो वर्ण उज्ज्वलः ।
तं त्यक्ष्यामि च तपसा प्राप्स्यामि गौरवर्णकम् ॥२५॥
यद्वा त्यक्त्वा पुनर्वर्ष्म नवं प्राप्स्यामि जन्मतः ।
गौराद्गौरतरं यत् स्यात् प्रथमांऽगुलिदेशनम् ॥२६॥
इत्युक्त्वोत्थाय सहसा काली जगाद गद्गदम् ।
ययाचेऽनुमतिं शंभो तपोजिगमिषास्ति मे ॥२७॥
श्रुत्वा स्तब्धोऽभवच्छंभुर्हास्ये हानिरजायत ।
नर्माऽपि नाशकृन्नैव वाच्यं केनापि जानता ॥२८॥
पार्वत्या मे वियोगः स्यादिति ज्ञात्वा नमन् सतीम् ।
शंभुः प्राह प्रिये नर्मवचसा कुपिता कथम् ॥२९॥
त्वां विना मे रतिः क्वास्ति रतिभूश्चाऽसि मे सति ।
नित्यौ नित्यरतौ देवौ पार्वतीपरमेश्वरौ ॥३०॥
तयोर्नित्या रतिश्चापि ह्यविनाभावधर्मतः ।
नोद्वेगं वह वाक्येन मा खेदं कुरु भामिनि ॥३१॥
आवयोः कामभावस्तु नित्य एव न कृत्रिमः ।
पृथग्जनानां रतये कृत्रिमो जनितस्ततः ॥३२॥
सकामो मां देवतासामान्यं मत्वा बलादपि ।
पराभावयितुं प्राप्तो मया सः भस्मसात्कृतः ॥३३॥
नैतावता त्वं कालीति मत्वा सः भस्मितो मया ।
उज्जीवितस्त्वदर्थे स महाकालेन वै मया ॥३४॥
अहं चास्मि महाकालस्त्वं काली विषमौ न वै ।
द्वयोर्योग्यं शाश्वतं वै रूपं कृष्णेन कल्पितम् ॥३५॥
मा खिद त्वं महादेवि मा तपोऽर्थे मनः कुरु ।
पञ्चवर्षसहस्रं यत्तपस्तप्तं त्वया पुरा ॥३६॥
तत्र मदर्थे ते दार्ढ्यं कियच्चेति परीक्षितम् ।
विवाहिता मया पश्चात् सदा तादात्म्यलब्धये ॥३७॥
महाकालस्य वंशोऽपि महाकाली हि संभवेत् ।
तत्र त्वया न मन्तव्यं काल्या वंशोऽसितो भवेत् ॥३८॥
प्रथमा त्वं तु गोलोके द्वितीया तु सदाशिवे ।
तृतीया त्वं सती दाक्षी चतुर्थी पार्वती च मे ॥३९॥
याऽसि साऽसि प्रवराऽसि मा कृष्णे खेदमावह ।
अहमेको द्वितीया त्वं मया काली विवाहिता ॥४०॥
साऽवकाशो द्वितीयाया गौर्या नास्तीति नर्म तत् ।
नर्मणि नैव रोषोऽत्र कर्तव्यो मे प्रिये सति ॥४१॥
कटु हितं च मधुरं श्रोतुं कालीत्यथोदितम् ।
नान्या विवाहिता पूर्वे पश्चान्नैव च नैव च ॥४२॥
श्रुत्वा च पार्वती प्राह चाटु पूर्वं श्रुतं मया ।
नैतादृशं महच्चाटु गृहसंसारनाशकम् ॥४३॥
भर्तुर्या त्वप्रिया पत्नी यदि प्राणान्न वै त्यजेत् ।
सा भर्त्रा निन्दिता लोकैः सर्वदैवाऽतिनिन्द्यते ॥४४॥
अवश्यं ते मयि काल्यामप्रीतिर्भूयसी हृदि ।
अन्यथा नर्मवाक्ये तन्नागतं वै भवेत् क्वचित् ॥४५॥
सर्वैः कार्ष्ण्यं नेष्यते च नेष्यतेऽपि त्वया तथा ।
मयापि देहकार्ष्ण्यं क्षालयितव्यं तपोऽग्निभिः ॥४६॥
कालीदेहं पृथक्कृत्वा हनिष्यामि महासुरान् ।
गौरीभागं निजं कृत्वा सेवयिष्ये हरं सदा ॥४७॥
तवेच्छा त्वान्तरिक्यस्ति काली क्रोधमयी भवेत् ।
गौरी तु सात्त्विकी सेवाकर्त्री मेंऽङ्के सदा वसेत् ॥४८॥

तथा करिष्ये मे नाथ संकल्पपरते कुतो भवेत् ।
ब्रह्माणं तपसाऽऽराध्य क्षिप्रं गौरी भवाम्यहम् ॥४९॥
पुरा ब्रह्माणमाराध्य सती भूत्वाऽभजं हरम् ।
तथा ब्रह्माणमाराध्य गौरी स्यां मां ततो भज ॥५०॥
इत्युक्त्वा च पतिं प्रदक्षिणीकृत्य पतिव्रता ।
यत्र वै पार्वतीशृंगे तपः पूर्वं कृतं तया ॥५१॥
तत्रैव च तपः कर्तुं गता सा नीललोहिता ।
दृष्ट्वा स्वपितरौ नत्वा वृत्तं विज्ञाप्य सा ततः ॥५२॥
तापसीवेषमाधाय स्नात्वा संकल्प्य तद्दिनात् ।
कृत्वा तु ब्रह्मणो मूर्तिमार्चयत् सत्फलादिभिः ॥५३॥
तच्छृंगे फलमुद्दिश्य गौरत्वं चाऽकरोत्तपः ।
अथ याते बहुतिथे काले व्याघ्र उपागतः ॥५४॥
क्षुधितः पार्वतीभक्षणार्थं तिष्ठति चान्तिकम् ।
समीपे यावदायाति जडो भवति चित्रवत् ॥५५॥
एवं भक्षणलोभाय चोपासनमिवाऽऽचरत् ।
देव्याऽनुकूलतादृष्टिः कृता तस्मिन् कृपामयी ॥५६॥
सिंहसत्त्वेऽन्यदुष्टोग्रप्राणिभ्यो रक्षणं मम ।
भवतीति कृपादृष्टिः स्वभावाच्च कृता तया ॥५७॥
सत्कृपालेशतो व्याघ्रबुभुक्षा लीनतां गता ।
न्यवर्ततांऽगसंस्तम्भो देवीं च बुबुधे सतीम् ॥५८॥
जन्मसिद्धं च दौरात्म्यं नष्टमेव ततोऽभवत् ।
भूत्वा तु देवको दुष्टसत्त्वानां वारकोऽभवत् ॥५९॥
देव्याश्च तपसा ब्रह्मा प्रसन्नस्तत्र चागतः ।
देव्या चाऽर्घ्यप्रदानेन ब्रह्मा संपूजितस्तदा ॥६०॥
प्रोवाच तां तपोहेतुमजानन्निव विश्वसृट् ।
किं त्वया तपसा साध्यं साधितस्तपसा हरः ॥६१॥
अथवा तापसी लीला साध्वीनां समयुज्यते ।
चित्रं भवति शंभुं त्वं विरहय्य तपःस्थिता ॥६२॥
पार्वती प्राह प्रथमं कृष्णाजाता महासती ।
वैराजी च तदा ब्रह्मन् त्वं मे पुत्रोऽभवः पुरा ॥६३॥
ततोऽभवत् सदाशिवः सदाशिवाऽप्यहं तदा ।
तदा त्वं मेऽभवो ज्येष्ठस्ततस्ते भालतोऽभवत् ॥६४॥
यदा रुद्रस्तदा चाहं रुद्राणी श्वशुरो भवान् ।
हिमालयस्तव पुत्रस्ततस्त्वं मे पितामहः ॥६५॥
इतिहेतोर्गौप्यकलिः प्राकाश्योऽत्र पितामह ।
शंभुस्तु शयने प्राप्ते कालीत्याह च मां मुहुः ॥६६॥
ततो मम शरीरस्थकालिमानं विहाय वै ।
गौरी भवितुमिच्छामि तथा देहि तपःफलम् ॥६७॥
ब्रह्मा तथास्त्विति प्राह देवी काली तदैव च ।
कृष्णकोशं समुत्सृज्य गौरकोशा ह्यजायत ॥६८॥
कृष्णकोशात्मिका कन्या कालीनाम्ना च कौशुकी ।
निशुंभशुंभनाशाय ययौ विन्ध्याचलं प्रति ॥६९॥
गौरकोशा नवा गौरी दिव्या कन्या ह्यजायत ।
स्वर्णवर्णा चम्पकाभा ब्रह्माणं प्राह विश्वसृक् ! ॥७०॥
अयं रक्षाकरः सिंहो दिव्यो मे सेवयाऽभवत् ।
स मे वाहनरूपेण दीयतां मे गणेश्वरः ॥७१॥
तथास्त्विति तदा ब्रह्मा दत्तवान् सिंहमेव तम् ।
सः कृतः सोमनन्दीतिनाम्ना देव्या गणेश्वरः ॥७२॥
ब्रह्मणाऽभ्यर्थिता गौरी निवृत्य तपसा ततः ।
प्रणम्य पितरौ वृक्षान् याता यत्र महेश्वरः ॥७३॥
प्रणम्येनोत्थिता यावत्तावत् तां परमेश्वरः ।
प्रगृह्य दोर्भ्यामाश्लिष्य स्वांऽके कृत्वा चुचुम्ब ताम् ॥७४॥
महोत्सवः कृतस्तस्याः कायाकल्पनिमित्तकः ।
बह्वीः कथास्तपोबलमयी गौरी तदाऽवदत् ॥७५॥
तपसा किं न चाप्येत सर्वं वै तपसि स्थितम् ।
एवं लक्ष्मि ! प्रकर्तव्यं किं भूयः श्रोतुमिच्छसि ॥७६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने शंकरोक्ताकालीति नर्मवचसा पार्वती सशोका तपः कृत्वा गौरी जाता सिंहश्च भक्षको भूत्वा सोमनन्दी जात इत्यादिनिरूपणनामा पञ्चनवत्यधिकशततमोऽध्यायः ॥१९५॥

**श्रीलक्ष्मीरुवाच—**

ब्रह्मविष्णवोरन्तराले ब्रह्मणः किरणं च यत् ।
समुत्पन्नस्ततः शर्वः सोऽभवद्वै सदाशिवः ॥ १ ॥
किरणं तद्ब्रह्मलिंगं श्रुतं तव मुखान्मया ।
निराकारं हि तद्ब्रह्म बाणरूपं निरूप्यते ॥ २ ॥
तदेव शिवलिंगं वा चान्यद्वा लोकपूजितम् ।
इति मे संशयं छिन्धि यथावृत्तान्तबोधनात् ॥ ३ ॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि कथां दिव्यां साश्चर्यां पापनाशिनम् ।
दैवीं देवचमत्कारमयीं नाऽन्यस्य भाविनीम् ॥ ४ ॥
यतस्तपःप्रकर्तारो भवन्ति संयमैर्युताः ।
सस्त्रीका अपि मुनयो ब्रह्मध्यानपरायणाः ॥ ५ ॥

तथापि कामभावेन क्वचिद्बन्धजवेगतः ।
व्यवहारं समाश्रित्य ब्रह्मत्वमनवाप्य च ॥ ६ ॥
अज्ञत्वेन च देवानामनभिज्ञा भवन्ति ते ।
पुरा दारुवने ह्यासन् ऋषयः संशितव्रताः ॥ ७ ॥
न च क्रोधेन निर्मुक्ताः केवलं मूढबुद्धयः ।
यद्यपि मुनयः सर्वे काष्ठलोष्ठासमदृशः ॥ ८ ॥
वेदं त्वधीयमानाश्च कृताग्निसदनक्रियाः ।
वर्तन्ते स्म च शारीरभावेन गृहमेधिनः ॥ ९ ॥
पार्वत्यास्तपसः काले शिवोऽपि चाऽद्वितीयकः ।
सर्वस्वपरित्यागेनाऽवर्तत तापसो यथा ॥१०॥
न चर्म न च कौपीनं नान्यत् किमपि साधनम् ।
रक्षति स्माऽऽवरणार्थं दिगम्बरो ह्यटत्यपि ॥११॥
पुष्पमालां दधन् कण्ठे युवा सर्वांगसुन्दरः ।
वने वने ऋष्याश्रमे प्राऽटत् भिक्षाकपालभृत् ॥१२॥
देहि भिक्षां ततश्चोक्त्वा संभ्रमन्नाश्रमान् ययौ ।
द्विजर्षभाश्च दिवसे समिधार्थं वनं गताः ॥१३॥
आसन्नाश्रमवर्येषु ऋषिपत्न्यश्च केवलाः ।
तं विलोक्याऽऽश्रमगतं योषितो ब्रह्मवादिनाम् ॥१४॥
विह्वला विस्मिता जाताः काश्चिद्भयमुपागताः ।
काश्चिच्च मोहितास्तत्राऽऽजग्मुर्दर्शनलालसाः ॥१५॥
प्रोचुः परस्परं नार्यः पश्याम एहि भिक्षुकम् ।
दर्शनादर्चनात्तस्य भुक्तिर्मुक्तिश्च लभ्यते ॥१६॥
परस्परमिति प्रोक्त्वाऽऽदाय मूलफलादिकम् ।
आलिलिंगुस्तथा चान्या करं धृत्वा तथाऽपराः ॥१७॥
परस्परं तु संस्पर्शात्संमग्ना ऋषिपत्निकाः ।
गृहाण भिक्षामूचुस्तास्तं देवं मुनियोषितः ॥१८॥
सोपि भिक्षाकपालं च प्रसार्य योषितः प्रति ।
देहि भिक्षां शिवं तेऽस्तु धनपुत्रवती भव ॥१९॥
भिक्षां दत्वा तु ता नार्यो जहसुश्चञ्चला बहु ।
पप्रच्छुश्च त्वया कोऽयं नग्नव्रतविधिर्धृतः ॥२०॥
भवान् वै तापसो ह्यो ब्रूहि स्म यदि मन्यसे ।
शंकरस्तु हसन् प्राह रहस्यं व्रतमस्ति मे ॥२१॥
प्रकाशने फलं न स्यादिति मत्वा न पृच्छत ।
इत्युक्तास्ता ब्रह्मपत्न्यः प्रत्यूचुरेहि नो गृहम् ॥२२॥
इत्युच्चार्य तदा तं वै जगृहुः पाणिपल्लवैः ।
काश्चित् कण्ठे काश्चित्पृष्ठे काश्चिदुदरमण्डले ॥२३॥
काश्चिज्जान्वोश्च कस्यां च जटासु पार्श्वयोस्तथा ।
काश्चित्तु पादयोः काश्चिन्नासिकायां च कर्णयोः ॥२४॥

एवं समन्ततो भिक्षुकेश्वरं परिवार्य ताः ।
रंजयामासुराकृष्य स्वां स्वां प्रति द्विजांगनाः ॥२५॥
एतस्मिन्नन्तरे विप्रा आदाय समिधो ययुः ।
स्वगृहाणि च तत्रैतत्कौतुकं तैर्विलोकितम् ॥२६॥
विरुद्धं तच्च ते दृष्ट्वा सरोषा ह्यभवन् क्षणात् ।
कोऽयं कीदृक् प्रमत्तोऽयं योषितां क्षोभकारकः ॥२७॥
कोऽसि कस्मादागतोऽसि वस्त्रं न ध्रियते कथम् ।
पृष्टोऽपि नाऽवदत् किंचित् सोऽवधूतो दिगम्बरः ॥२८॥
प्रत्युत तदनाश्रुत्य लिंगे चांचल्यमावहन् ।
प्रमत्तयोगिवत्तत्राऽदर्शयत् कामनाबलम् ॥२९॥
क्षोभं विलोक्य भूदेवा ज्ञात्वा प्रमत्तमेव तम् ।
दृष्ट्वा विकारवल्लिंगं जघ्नुर्दर्भशलाकया ॥३०॥
ताडयामासुरत्यर्थं काष्ठपाषाणपत्तलैः ।
समन्त्रया तया दर्भशलाकया तु मूलतः ॥३१॥
लिंगं भुवि प्रपतितं विहाय वृषणौ हतम् ।
शलाकया हतस्याऽर्थं खण्डाश्च द्वादशाऽभवन् ॥३२॥
पातिते तु ततो लिंगे गतोऽन्तर्धानमीश्वरः ।
तदा शोकोऽभवत्तेषामृषीणां भावितात्मनाम् ॥३३॥
वर्तन्ते व्याकुलाः सर्वे विद्मो वयं न शंकरम् ।
कोऽयं योगी कथमायात् किमर्थं तापसः स्वयम् ॥३४॥
ब्रुवन्त एवं ते सर्वेऽमन्यन्त पापकं कृतम् ।
लिंगखण्डास्तदा सर्वे समुत्पतन्ति चाम्बरे ॥३५॥
यत्र यत्र च यः खण्डो याति तत्राग्निवत् तदा ।
ददाह पुरतः प्राप्तं पुनरुत्प्लुत्य गच्छति ॥३६॥
यत्र यत्र च यो याति तत्र दहति सर्वथा ।
पाताले च गताः खण्डाः स्वर्गे चापि तथागताः ॥३७॥
भूमौ सर्वत्र ते याता उड्डयन्ते पतन्ति च ।
दाहयन्त्यखिलं विश्वं स्थिरा नैवाऽभवन् क्वचित् ॥३८॥
लोकाश्च व्याकुला जाताः ऋषयस्तेऽतिदुःखिताः ।
न शर्म लेभिरे केऽपि सुराऽसुरर्षिमानवाः ॥३९॥
शान्त्युपायविहीनास्ते ब्रह्माणं शरणं ययुः ।
तत्र गत्वा च ते सर्वे नत्वा स्तुत्वा विधिं तदा ॥४०॥
प्रलये तु निमित्तास्ते लज्जयाऽधोमुखाः स्थिताः ।
तत्सर्वमवदन्वृत्तं ब्रह्मणे सृष्टिकारिणे ॥४१॥
ज्ञात्वा तच्छांकरं कृत्यं ब्रह्मा वचनमब्रवीत् ।
अहो विप्राः सदा क्रुद्धा जानन्त्येव न तात्त्विकम् ॥४२॥
न धर्मं च क्रियां कांचिज्जानन्ति मूढबुद्धयः ।
ब्रह्मतत्त्वं विजानन्ति ब्राह्मणास्ते प्रकीर्तिताः ॥४३॥

ब्रह्मणि नैव कामोऽस्ति विकृतिर्न कुतश्च रुट् ।
देहधर्मा न वै देहाऽध्यक्षे सन्ति यथार्थतः ॥४४॥
आत्मधर्मा न वै देहे इति जानन्ति भूसुराः ।
ह्येतज्ज्ञानविहीना ये देहाहंममतान्विताः ॥४५॥
क्रुध्यन्ति देहमाश्रित्य घातयन्ति पराँस्ततः ।
द्रुह्यन्त्यपि च पारक्यस्वीयभेदसमाश्रिताः ॥४६॥
ततः कर्मवशास्ते वै भुंजते स्वर्गनारकान् ।
तन्मनः शोधयेद्धीमान् ज्ञानयोगात्मभावनैः ॥४७॥
तस्मिन् शुद्धे ह्यन्तरात्मा स्वयमेवाऽविकारवान् ।
न क्लिश्यति वपुःक्लेशैर्वपुर्धर्मैः शुभाऽशुभैः ॥४८॥
तथा सति च नाऽऽवेशः कामक्रोधादिमूलकः ।
तदभावे च नाऽनर्थः समुत्पद्येत चेदृशः ॥४९॥
भवन्तः क्रोधकामाभ्यामभिभूताऽऽश्रमे स्थिताः ।
ज्ञानिनामाश्रमे क्रोधकामाभिभवनं वृथा ॥५०॥
वस्तुतो नास्ति नारीणां देहो नारीति नामभाक् ।
नापि नरस्य देहोऽपि नर इत्यपि नामभाक् ॥५१॥
उभयोस्तु सदा शारीराऽऽत्मास्ति नरशब्दभाक् ।
नृभोग्यशरीरं यत् तन्नारीति संप्रकीर्त्यते ॥५२॥
श्मश्रुलोऽश्मश्रुलको वा देहो नारीति वोच्यते ।
देहस्यैवोपभोगोऽस्ति नान्यदेहस्य कस्यचित् ॥५३॥
परदेहसुखदुःखे न भुज्येते परात्मना ।
स्वीयदेहसुखदुःखे भुज्येते हि निजात्मना ॥५४॥
तस्मात् केयं कस्य नारी कोऽयं कस्या नरस्तथा ।
क्व च न्यस्तसमस्तेच्छा क्व च नारीमयो भ्रमः ॥५५॥
क्व क्रोध ईदृशो घोरो येनात्मानं न जानथ ।
सक्रोधो यजते यच्च ददाति च जपत्यपि ॥५६॥
जुहोत्यपि न वै तस्य फलमाप्नोति मोघकृत् ।
ज्ञातारश्च भवन्तो वै कुर्वते गर्हितं द्विजाः ॥५७॥
अज्ञातारस्तर्हि कुर्युः किं तत्राश्चर्यमूह्यते ।
शिवं विरुद्धय कुशलं कस्य जातं च वा भवेत् ॥५८॥
मध्याह्नसमये प्राप्तमतिथिं न परामृशेत् ।
तस्यैव सुकृतं नीत्वा दत्वा स्वीयं च दुष्कृतम् ॥५९॥
निर्यात्यतिथिस्थितह्रासात् किं पुनर्यत्र शंकरः ।
यावल्लिंगं स्थिरं न स्यान्न वै स्याज्जगतां शुभम् ॥६०॥
भवद्भिस्तु तथा कार्यं यथा स्वास्थ्यं भवेदिह ।
श्रुत्वैतत् ऋषयः प्राहुर्ब्रह्मन् तत्त्वं समादिश ॥६१॥
ब्रह्मोवाच समाराध्य हरं सुखमवाप्नुमः ।
गच्छामः शरणं देवं कैलासं तु शिवालयम् ॥६२॥
जग्मुश्च संहतास्तत्र ददृशुः शंकरं स्थितम् ।
अलिंगं च ततः स्तोतुं समारब्धाः सुरास्तदा ॥६३॥
अलिंगाय महाज्वालानलरूपाय ते नमः ।
दिगम्बरायाऽविकृतये पराऽऽकृतये नमः ॥६४॥
दिव्यलीलाप्रकर्त्रे ते क्षमाशीलाय ते नमः ।
नमः शान्तस्वरूपाय घोरलिंगाय ते नमः ॥६५॥
नोऽपराधान् क्षमस्वाऽत्र महादेव नमोऽस्तु ते ।
स्वलिंगं पतितं देव प्रभो समुपसंहर ॥६६॥
त्रैलोक्यं दहति वह्निमयं द्वादशरूपभाक् ।
कृपां कुरु महादेव तव लीलामयं जगत् ॥६७॥
एवं स्तुतः प्रसन्नश्च प्राहर्षीन् शंकरस्तदा ।
यस्य द्रोहः कृतस्तस्य पूजनं कुरुत द्विजाः ॥६८॥
तदा भविष्यति शान्तिर्लिंगं स्थाने लगिष्यति ।
सलिंगोऽहं तथा स्यां वै येन मे प्रीतिरुत्तमा ॥६९॥
यथाऽभिलषितं सौख्यं ततः प्राप्स्यथ भूसुराः ।
देवा ऋषयो मुनयो ब्राह्मणा ह्यसुरास्तथा ॥७०॥
मिलित्वा मम लिंगस्य पूजां कुर्वन्तु षोडशैः ।
उपचारैस्ततः शान्ता भविष्यन्त्येव द्वादश ॥७१॥
शकला मम लिंगस्य नान्यथा तु कदाचन ।
कुरुक्षेत्रे तथाऽन्यत्र यत्र यत्र पतन्ति ते ॥७२॥
तत्र तत्र योनिपीठे स्थापयन्तु द्विजा नु तान् ।
प्रथमं कुरुक्षेत्रे च यूयं गच्छन्तु संहताः ॥७३॥
तत्र सरसि संस्नात्वा कुरुतैकस्य पूजनम् ।
तस्य शान्तौ भविष्यन्ति तदन्ये शान्तवह्नयः ॥७४॥
लिंगखण्डा यत्र यत्र पतितास्तत्र पूजनम् ।
प्रकुर्वन्तु महाभागा गच्छन्तु मा चिरं यतः ॥७५॥
आराध्य प्राग्भवीयां मे पत्नीं सतीं स्थिरायनाम् ।
योनिरूपां प्रसंकृत्वा स्थापयन्तु च तत्र तत् ॥७६॥
कुंभमेकं च संस्थाप्य कृत्वाऽष्टदलमुत्तमम् ।
दुर्वायवांऽकुरैस्तीर्थोदकैरापूरयन्तु तम् ॥७७॥
वेदमन्त्रैस्ततस्तं च कुंभं प्रमन्त्रयन्तु च ।
पूजयित्वा कलशं तं तज्जलेनाऽभिषेचनम् ॥७८॥
शतरुद्रीयमन्त्रैश्च प्रोक्षणं शान्तिमित्यपि ।
कुर्वन्तु योनिरूपायां बाणं शान्तिं गमिष्यति ॥७९॥
संस्थाप्यैवं लिंगखण्डं लिङ्गाऽग्रे चाऽऽह्वयन्तु माम् ।
सुगन्धैश्चन्दनैश्चैव पुष्पधूपादिभिस्तथा ॥८०॥
नैवेद्यादिकपूजाभिस्तोषयन्तु परेश्वरम् ।
प्रणामैः संस्तवैर्नृत्यैर्गीतैश्चापि प्रदक्षिणैः ॥८१॥

ततः स्वस्त्ययनं कृत्वा जयेति व्याहरन्तु च ।
सर्वशान्तिं कुरु देव प्रसन्नो भव सर्वथा ॥८२॥
शान्तो भव महादेव रक्षां कुरु च नः सदा ।
एवं कुर्वन्तु भो विप्रा गच्छन्तु मा चिरं यतः ॥८३॥
इत्युक्तास्ते द्विजदेवादयो नत्वा महेश्वरम् ।
प्राप्ताः प्रसन्नमनसः कुरुक्षेत्रे सरस्तटम् ॥८४॥
तत्र त्वाराधिता देवी सती संस्मृत्य भूसुरैः ।
प्रागेव सा शंकरार्थे दिव्या ह्युपस्थिता ह्यभूत् ॥८५॥
ब्राह्मणैर्वन्दिता योनिरूपा दिव्याऽभवत्तदा ।
तत्र तु ब्राह्मणैर्मन्त्रैर्लिंगाग्रं स्थापितं तथा ॥८६॥
सर्वं रक्तादि संक्षाल्य मर्दनाद्यैः समीकृतम् ।
षोडशोपचारकैस्तद् वेदमन्त्रैः सुरादिभिः ॥८७॥
लिङ्गाग्रं पूजितं तत्र भक्त्या यथोपवस्तुभिः ।
सुप्रसन्नो महादेवो ह्याविरास च मूर्तिमान् ॥८८॥
स्वर्णवर्णोऽतितेजस्वी किरणैः परिवेष्टितः ।
प्रसन्नवदनः शान्तः सर्वानाह ततो हरः ॥८९॥
शान्तं च ब्राह्मणा युष्मत्कृतं द्रोहाख्यकर्म तत् ।
शान्ताश्च सकला यत्र यत्र सन्ति च ते तथा ॥९०॥
इदं तु पूजितं सत्या योन्यां संस्थाप्य यन्मम ।
लिंगाग्रं तत् हाटकेशसंज्ञं ख्यातिं गमिष्यति ॥९१॥
वसतु तच्च पाताले हाटकेश्वरसंज्ञया ।
अत्र च सृष्टिकृद् ब्रह्मा लिंगं शैलमयं तदा ॥९२॥
आद्यं लिंगं समास्थाप्य स्वयं पूजितवाँस्ततः ।
तस्य स्थाण्वीश्वरनाम्ना ब्रह्मणा ख्यातिरास्थिता ॥९३॥
ततः कालान्तरे तद्वै ख्यातिं नागेश्वराभिधाम् ।
दारुकावनमाश्रित्य समेष्यतीति जानथ ॥९४॥
अथ देवा यत्र खण्डाः पतिता ह्यभवँस्तदा ।
तत्र गत्वा पुपूजुस्तान् योनिपीठान् विधाय च ॥९५॥
तत्र तत्र च ते खण्डाः पूजां संगृह्य भक्तितः ।
स्वयमदृश्यतां याता योजिताश्च यथाक्रमम् ॥९६॥
लिंगाग्रं चापि पातालात्समुत्थाय समागतम् ।
तच्चापि च यथास्थानं संयोगं लब्धवत्तदा ॥९७॥
एवं सम्पूर्णतां यातं लिंगं सचेतनं ततः ।
शिवस्य वृषणौ प्राप्य यथास्थानमवस्थितम् ॥९८॥
संयोजितं यथावत्तत् शिवेनाऽद्भुतकर्मणा ।
ब्रह्मा वा शंकरो वाऽथ विष्णुर्वा शक्नुयात्तथा ॥९९॥
नाऽन्यस्यैतद्धि सामर्थ्यं मारणे योजने गतौ ।
पूजनार्थं तु सर्वेषां चमत्कारः कृतो ह्ययम् ॥१००॥

चैत्रस्य कृष्णपक्षे वै लिंगपातोऽभवत्तदा ।
तत्र दिनेऽर्हणीयानि लिंगानि दश च द्वयम् ॥१०१॥
चैत्रे मासे त्रयोदश्यां दिव्यनक्षत्रयोगतः ।
शुक्राऽर्कचन्द्रसंयोगे दिने पुण्यतमे शुभे ॥१०२॥
प्रतिष्ठितं स्थाणुलिंगं ब्रह्मणा लोकधारिणा ।
ऋषिभिर्देवसंघैश्च पूजितं शाश्वतीः समाः ॥१०३॥
एवं द्वादशलिंगानि ज्योतिर्लिंगानि तानि वै ।
शंकरस्य महाज्योतिर्मयलिंगानि सन्ति हि ॥१०४॥
सचेतनस्वरूपाणां खण्डानां यत्र संस्थितिः ।
पूजनं च प्रतिष्ठानं कृतं स एव शंकरः ॥१०५॥
साक्षादस्तीति तान्येव मूर्तिमान् शंकरः स्वयम् ।
विराजते महद्ब्रह्म ज्योतीरूपः स सर्वदा ॥१०६॥
ज्योतिर्लिंगानि तान्येव कथयामि शृणु प्रिये ।
सौराष्ट्रे सोमनाथं च श्रीशैले मल्लिकार्जुनम् ॥१०७॥
उज्जयिन्यां महाकालमोंकारे चाऽमरेश्वरम् ।
केदारं हिमवत्पृष्ठे डाकिन्यां भीमशंकरम् ॥१०८॥
वाराणस्यां च विश्वेशं त्र्यम्बकं गोमतीतटे ।
वैद्यनाथं चिताभूमौ नागेशं दारुकावने ॥१०९॥
सेतुबन्धे च रामेशं घुश्मेशं च शिवालये ।
ग्राह्यमेषां तु नैवेद्यं भोजनीयं प्रयत्नतः ॥११०॥
ततस्तत्तत्स्थले ह्रासे स्थापितानि पुनः पुनः ।
भक्तैर्लिंगानि तान्यत्र कथयामि शृणु प्रिये ॥१११॥
सौराष्ट्रे सोमनाथस्तु चन्द्रदुःखक्षयंकरः ।
चन्द्रसंस्थापितो देवः प्रत्यक्षो लीनतां गतः ॥११२॥
क्षयकुष्ठादिरोगाणां नाशकः पूजनात् प्रिये ।
शिवावतारः सोमेशो लिंगरूपेण संस्थितः ॥११३॥
मल्लिकार्जुनसंज्ञश्चावतारः शंकरस्य वै ।
द्वितीयः श्रीगिरौ प्रोक्तो लिंगरूपेण संस्थितः ॥११४॥
गणेशस्य विवाहेन कार्तिकेयस्तु रोषतः ।
ब्रह्मचारिव्रतप्रतिज्ञां कृत्वा संययौ यदा ॥११५॥
तत्र पुत्रवियोगेन सशोकः शंकरो ययौ ।
संस्थितो लिंगरूपेण द्वितीयः स हरः स्वयम् ॥११६॥
उज्जयिन्यां नगर्यां तु महाकालाभिधोहरः ।
वेदविप्रस्य रक्षार्थे मूर्तिमान् शंकरो ययौ ॥११७॥
वेदधर्मविलोप्तारं दूषणाऽऽख्यासुरं तदा ।
हुंकारेणैव तूर्णं वै भस्मसात् कृतवान् हरः ॥११८॥
महाकालाभिधः सोऽयं लिंगरूपेण संस्थितः ।
देवैः सम्प्रार्थितः शंभुर्ज्योतिर्लिंगस्वरूपवान् ॥११९॥

अथ विन्ध्याचलध्यातो मूर्तिमान् शंकरः स्वयम् ।
ब्रह्मणा स्थापितस्तत्र ज्योतिर्लिंगश्चतुर्थकम् ॥१२०॥
ओंकारेश्वरमित्याख्यं शंभुस्तत्र व्यवस्थितः ।
केदारे पर्वते साक्षात्स्वयं हिमगिरौ हरः ॥१२१॥
केदारेश्वर इत्याख्यो नरनारायणेच्छया ।
तिष्ठति पञ्चमो दिव्यो मूर्तिमान् बाणरूपतः ॥१२२॥
अथ षष्ठः शिवज्योतिर्लिंगावतार उत्तमः ।
सुदक्षिणाख्यं राजानं कामरूपाधिपं हरः ॥१२३॥
संररक्षाऽसुरं भीमं हत्वा भीमेश्वरो हि सः ।
ज्योतिर्लिंगस्वरूपेण डाकिन्यां संस्थितः स्वयम् ॥१२४॥
मन्दराद्रेः समागत्य स्वयं काश्यां तु यः स्थितः ।
ज्योतिःस्वरूपः काशीविश्वेश्वरः स तु सप्तमः ॥१२५॥
अथ गौतमसंस्तुत्या प्राविर्भूतो हरः स्वयम् ।
गोदावर्यास्तटे त्र्यम्बकेश्वराख्यस्तथाऽष्टमः ॥१२६॥
अथ रावणसंस्तुत्या चिताभूमौ हरः स्वयम् ।
आविर्भूतो वैद्यनाथेश्वरो ज्योतिर्व्यवस्थितः ॥१२७॥
दशमो दारुकसंज्ञं राक्षसं हतवान् हरः ।
ररक्ष भक्तं वैश्यं सः सुप्रियाख्यं ततः स्वयम् ॥१२८॥
सन्तस्थौ साम्बिकः शंभुर्ज्योतिर्लिंगस्वरूपधृक् ।
अथैकादशसंख्याको रामादित्यप्रतिष्ठितः ॥१२९॥
रामेश्वरस्वरूपः स ज्योतिर्लिंगात्मकः स्वयम् ।
शंभुर्विराजते भक्तेभ्यो विजयवरप्रदः ॥१३०॥
भक्तेन घुष्मना संराधितो हरः स्वयं ययौ ।
घुष्मापुत्रस्य रक्षार्थं सुदेहेन हतस्य वै ॥१३१॥
ततो घृष्मेश्वरज्योतिर्लिंगरूपो विराजते ।
इति ते कथिता लक्ष्मि हरद्वादशमूर्तयः ॥१३२॥
तान् दृष्ट्वा च समभ्यर्च्य ध्यात्वा श्रुत्वाऽपि मानवः ।
मुच्यते सर्वपापेभ्यो भुक्तिं मुक्तिं च विन्दति ॥१३३॥
एवं निमित्तमालम्ब्य ज्योतिर्लिंगानि चाऽभवन् ।
अथ कालान्तरे स्थानह्रासाच्च युगभेदतः ॥१३४॥
अन्येऽन्ये स्थापयिष्यन्ति प्रजीर्णोद्धारकर्मभिः ।
युगान्तरप्रभेदेन किमन्यच्छ्रोतुमिच्छसि ॥१३५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने दारुवने भिक्षार्थं गतस्य नग्नस्य शंकरस्य दर्भशलाकया लिंगपतनं द्वादशखण्डाश्च ज्योतिर्लिंगानीति निरूपणनामा षण्णवत्यधिकशततमोऽध्यायः ॥१९६॥

श्रीलक्ष्मीरुवाच—

आचार्यपूजनं व्यासपूजनं गुरुपूजनम् ।
ब्रूहि मे भगवन्देव नित्यपूजात्मकं तु यत् ॥ १ ॥

श्रीनारायण उवाच—

पूजयेद्विधिवद्भक्त्याऽऽचार्यं व्यासं गुरुं तथा ।
पूजापात्रं सोपचारं नीत्वा गत्वा गुरोः पुरः ॥ २ ॥
नमस्कुर्यात्प्रथमं वै शिरसा पादयोः स्पृशेत् ।
जलेन दक्षिणपादांगुष्ठाभिषेचनं ततः ॥ ३ ॥
स्थाल्यां कुर्यात् ततस्तत्र सपुष्पकुंकुमाऽक्षताम् ।
अर्पयेच्चन्दनं चैव लेपयेत् तत्र बिन्दुना ॥ ४ ॥
पश्चात् तच्चन्दनं भाले लेपयेदूर्ध्वरेखया ।
चन्द्रकं कौंकुमं मध्ये साक्षतं कल्पयेच्छुभम् ॥ ५ ॥
मस्तके पट्टकं दद्यात् बहुमूल्यं समुज्ज्वलम् ।
स्वर्णतारावलिप्रोतं रंगाढ्यं दीर्घमुत्तमम् ॥ ६ ॥
गलपट्टं तथा दद्यादौर्णं सत्कंचुकं तथा ।
उत्तरीयं स्वर्णतारं धौत्रे द्वे च तथा विधे ॥ ७ ॥
कटिवस्त्रं स्नानवस्त्रं तथा प्रावरणं नवम् ।
दद्याच्च गेन्दुकं रम्यं मृदु वै गुप्तदोरकम् ॥ ८ ॥
मञ्चं दद्याच्च कशिपुं वस्त्रखण्डांश्च नक्तकम् ।
पत्त्राणे कोमले दद्याद्यज्ञोपवीतमित्यपि ॥ ९ ॥
स्कन्धपट्टं तथा दद्यादासनं श्रेष्ठमित्यपि ।
पार्श्वके द्वे च कार्पासे दद्यात् तूलपटीं तथा ॥१०॥
स्थालिकाद्वयमेवं च वाटिकाद्वयमित्यपि ।
आचमनीं होमपात्रं पूजापात्रं त्रिभाणकम् ॥११॥
वृत्तपात्रं तथा पानपात्रं च कलशं वरम् ।
ताम्बूलपात्रं सच्छत्रमुपानहौ सुकोमलौ ॥१२॥
पादुके यष्टिकां चैव कटिबन्धनमुत्तमम् ।
दद्याद्विविधधातूनां द्रव्याणां कारितानि वै ॥१३॥
कर्णयोः स्वर्णभूषाश्च कण्ठभूषास्तथा शुभाः ।
हस्तभूषाः कटिभूषाः पादभूषाश्च सर्वशः ॥१४॥
शृंखलाः कटकान् मालाश्चोर्मिकाः कण्ठिका वराः ।
रशनां पौरटीं दद्यात् सुगन्धिद्रव्यमुत्तमम् ॥१५॥
कस्तूरीं कर्पूरकं च स्नेहं विविधसौरभम् ।
श्रांगारिकं च शारीरं दद्याद्वै बहुभावतः ॥१६॥
यानं विमानं गन्त्रीं च वाहनं गां च दुग्धदाम् ।
दासान् दासीस्तथा द्रव्यं स्वर्णं रूप्यं विशेषतः ॥१७॥

दद्याच्च विविधं स्वन्नं धान्यं च द्विदलादिकम् ।
संस्कारवस्तु पात्रादि जीरकादि तथाम्लकम् ॥१८॥
ऐक्षवं नवनीतं च घृतं भोज्यं च नैकधा ।
दद्याच्छ्रीगुरवे साक्षान्नारायणाय योगिने ॥१९॥
ब्रह्मणे ज्ञानदात्रे च मन्त्रदात्रे कृपालवे ।
यदत्स्वस्य भवेत् द्रव्यं तत्तच्छ्रीगुरवेऽर्पयेत् ॥२०॥
एवं सर्वं विधायांऽकसमीपे च ततः पुनः ।
विविधानि फलान्येव शुष्काण्यार्द्राणि वा तथा ॥२१॥
दद्याच्छ्रीगुरवे यो वै मोक्षं दानं ददाति च ।
ततश्चरणयोर्नत्वाऽवीरं गुलालमित्यपि ॥२२॥
दद्याच्छ्रीतुलसीपत्रं पुष्पाणि विविधानि च ।
दुग्धप्रक्षालनं कुर्याच्चरणयोः पवित्रयोः ॥२३॥
स्नपनं चापि दुग्धेन गुरोः कुर्याद्विधानतः ।
एवं पञ्चामृतैः स्नपयित्वा शुद्धोदकेन च ॥२४॥
मलनाशकद्रव्येण स्नपयित्वा पुनः पुनः ।
परिश्रमविनाशार्थं गुर्वंगानि प्रमर्दयेत् ॥२५॥
वस्त्रैः सम्मार्जयेद्देहं सुगन्धं त्वर्पयेत्ततः ।
वस्त्राण्याधारयेद्भूषाः श्रृंगाराणि च धारयेत् ॥२६॥
चन्दनाऽक्षतमालाभिः कज्जलैर्गन्धमूर्धकैः ।
स्वर्णहारैश्च मणिभिर्हीरकादिभिरादरात् ॥२७॥
पूजयेद्धूपदीपैश्च नैवेद्यैर्विविधैः शुभैः ।
मिष्टैर्हृद्यैः स्वादुतमैः पूजयेद्भोजयेत् सुखम् ॥२८॥
जलं सुगन्धं पानार्थं तद्यात्ताम्बूलमुत्तमम् ।
फलं दद्यात्तथा सौम्यं चारार्त्रिकं विधापयेत् ॥२९॥
दण्डवत् सुस्तुतिं नमस्कारान् क्षमापनं ततः ।
प्रदक्षिणं प्रांजलिं च पुष्पाञ्जलिं समर्पयेत् ॥३०॥
आशीर्वादान् गुरूक्तांश्च गृहीत्वाऽऽत्वा प्रसादकम् ।
आपृच्छ्य च गृहं गच्छेत् सह नीत्वा प्रसादिकम् ॥३१॥
स्वसम्बन्धिजनेभ्यश्च दत्वा प्रसादमेव तम् ।
गुरुं ध्यात्वा सदा प्रातः पूजयेत् क्रमशस्तथा ॥३२॥
गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ।
गुरुः साक्षात्परब्रह्म मोक्षदः पावको हि सः ॥३३॥
नास्ति गुरुसमं द्रव्यं नास्ति देवो गुरोः परः ।
नास्ति मोक्षो गुरोरन्यो नास्ति पुण्यं गुरोः परम् ॥३४॥
गुरोर्देहे परब्रह्म सर्वदा राजते हरिः ।
मूर्धनि चाऽक्षरं ब्रह्म वासुदेवो ललाटके ॥३५॥
नेत्रयोः सूर्यचन्द्रौ च नस्यश्विनीकुमारकः ।
मुखे नारायणो यज्ञो जिह्वायां वेदमण्डलम् ॥ ३६॥
सरस्वती गुरोर्वाण्यां हृदि विष्णुः स्वयं स्थितः ।
उदरे भगवान्वैश्वानरो वसति सर्वदा ॥३७॥
हस्ते पद्मं च कमला महालक्ष्मीस्तु मानसे ।
चरणे वसवः सन्ति तीर्थानि पावनानि च ॥३८॥
सर्वेन्द्रियेषु तत्त्वानि देवताः सन्ति रोमसु ।
गुरोर्मूर्तिः पुण्यमूर्तिर्मन्त्रमूर्तिर्महेश्वरी ॥३९॥
स्वर्गं सत्यं च वैकुण्ठं गुरोर्मूर्तौ व्यवस्थितम् ।
ब्रह्मानन्दो गुरावस्ति शाश्वतो निरुपाधिकः ॥४०॥
आनन्दो ब्रह्मणो विद्वान् गुरुरेव न चाऽपरः ।
गपदं किरणे ज्ञाने रपदं द्रव्यदानयोः ॥४१॥
ज्ञानदानाद्गुरुः प्रोक्तः प्रकाशद्रव्यवान् स्वयम् ।
गपदं मन्त्रविज्ञानं रपदं दापनं तथा ॥४२॥
मन्त्रदापनसामर्थ्याश्रयो गुरुर्हरिः स्वयम् ।
गुरवे भोजनं दत्तं राजसूयफलं क्रियात् ॥४३॥
गुरवे वस्त्रदानादि ज्योतिष्टोमफलप्रदम् ।
गुरुपूजा हरेः पूजा गुरुर्योगफलं मतम् ॥४४॥
गुरुर्व्रतं गुरुर्यज्ञः समाधिर्गुरुरेव च ।
सम्प्रदायो गुरुः प्रोक्तः साक्षात्कारो गुरुर्मतः ॥४५॥
गुरोः प्रसन्नतायां स्युर्यमाश्च नियमाः शमः ।
साधनानि च सर्वाणि गुरौ तुष्टे कृतानि वै ॥४६॥
जन्मदौ पितरौ प्रोक्तौ गुरू नामकरो गुरुः ।
भाषायाः शिक्षिका माता कार्यादिशिक्षिका स्वसा ॥४७॥
यज्ञोपवीतदो विप्रः शास्त्राध्यापक एव च ।
मन्त्रदो ज्ञानदश्चैव मोक्षदो गुरुरुत्तमः ॥४८॥
अनाद्यज्ञानमग्नोऽयमात्मा भ्रमति योनिषु ।
तस्याऽज्ञानं विनाश्यैव ज्ञानदानेन नित्यदा ॥४९॥
वासनानां कर्मणां च कारयित्वा क्षयं ततः ।
हर्याराधनया मुक्तिमार्गं दर्शयति ध्रुवम् ॥५०॥
मोक्षस्थितिं गमयति सोऽयं सर्वप्रदो गुरुः ।
दुःखहर्ता सुखदाता कोन्यस्तस्मात्परो गुरुः ॥५१॥
गुरोः शक्तिर्ज्ञानरूपा शिष्यात्मनि प्रविश्य च ।
स्वाऽपरोक्षानुभूत्या च मोक्षं संप्रापयेद् गुरुः ॥५२॥
शक्तिज्ञानवती दीक्षा शिष्यदेहं प्रविश्य च ।
मुक्ततां नयते दानात् क्षालनाच्च गुरोर्बलात् ॥५३॥
दीक्षाशिक्षानुसारेण शिष्योऽनुग्रहमर्हति ।
दीक्षाशिक्षावियोगे तु न विद्यासिद्धिमुक्तयः ॥५४॥
अतो दीक्षाख्यसंस्कारात् शिक्षाख्यज्ञानसंग्रहात् ।
गुरुद्वारा सदा शिष्यः शुद्धतां प्राप्नुयात् क्रमात् ॥५५॥

शिष्यस्तु शिक्षणीयत्वाद् गुरोर्गौरवकारणात् ।
व्यवहाराच्च शिष्टानां गुरोर्गौरवमाचरेत् ॥५६॥
यो गुरुः स हरिः प्रोक्तो यो हरिः स गुरुः स्मृतः ।
गुरुर्हरिः स्वयं कृष्णो विद्याशिक्षात्मकः स्थितः ॥५७॥
यथा कृष्णस्तथा विद्या यथा विद्या तथा गुरुः ।
कृष्णविद्यागुरूणां च पूजया सदृशं फलम् ॥५८॥
सर्वदेवात्मकश्चासौ सर्वमन्त्रमयो गुरुः ।
शिष्यः सर्वप्रयत्नेन गुर्वाज्ञां शिरसा वहेत् ॥५९॥
श्रेयोर्थी यदि गुर्वाज्ञां मनसापि न लंघयेत् ।
गुर्वाज्ञापालकः शिष्यो ज्ञानसम्पत्तिमश्नुते ॥६०॥
गच्छँस्तिष्ठन्स्वपन्भुंजन् गुरोर्वचनमाचरेत् ।
गुर्वाज्ञयाऽन्यकर्माणि कुर्यादात्मनिवेदिवत् ॥६१॥
समक्षं कर्म कुर्वीत सर्वं चानुज्ञया गुरोः ।
गुरोर्गृहे समक्षं वा न यथेष्टासनो भवेत् ॥६२॥
गुरुर्देवो यतः साक्षात्तद्गृहं देवमन्दिरम् ।
यथेह वह्निसम्पर्कान्मलं त्यजति कांचनम् ॥६३॥
यथा वह्निसमीपस्थं घृतं प्रलीयते द्रुतम् ।
यथा प्रज्वलिते वह्नौ शुष्कं काष्ठं प्रदह्यति ॥६४॥
तथैव गुरुसम्पर्कान्मलं त्यजति मानवः ।
पापं विलीयते सर्वं वासना च प्रदह्यति ॥६५॥
मनसा कर्मणा वाचा गुरोः क्रोधं न कारयेत् ।
तस्य क्रोधेन दह्यन्ति ह्यायुःश्रीज्ञानसत्क्रियाः ॥६६॥
तत्क्रोधकारिणो ये स्युस्तेषां यज्ञाश्च निष्फलाः ।
यमाः सनियमाश्चापि निष्फलाः संभवन्ति हि ॥६७॥
कदापि न गुरोर्मर्मभेदि विरुद्धमावदेत् ।
वदेद् यदि महागर्वाद् याति शिष्यो ह्यधोगतिम् ॥६८॥
मनसा कर्मणा वाचा न मिथ्याचारमाचरेत् ।
गुरोर्हितं प्रियं कुर्यादादिष्टो वा नवा सदा ॥६९॥
असमक्षं समक्षं वा गुरोः प्रियकरो भवेत् ।
स्वकार्यं परितस्त्यक्त्वा गुरोः कार्यं समाचरेत् ॥७०॥
संवित्संजननं तत्त्वं परमानन्दमिश्रितम् ।
येनात्र विदितं लोके स एवात्र प्रमुक्तिदः ॥७१॥
आश्रितं तारयेन्नौका किं शिला तारयेच्छिलाम् ।
ब्रह्महीने कुतो बोधः कुतो ह्यात्मपरिग्रहः ॥७२॥
ब्रह्मतत्त्वसमेतोऽत्र मुक्तो मोचयति प्रजाः ।
यस्याऽनुभवसन्तुष्टा बुद्धिरानन्दकाष्ठिका ॥७३॥
तस्य दर्शनमात्रेण परानन्दोऽभिजायते ।
तस्य सेवनकार्येण नैष्कर्म्यं सिद्ध्यति ध्रुवम् ॥७४॥
तस्य शुश्रूषया सर्वं सिद्धं भवति देहिनः ।
स एवानन्दपूर्णस्तु सेवनीयो मुमुक्षुभिः ॥७५॥
यस्माद् विद्या चात्मवित्तिर्ब्रह्मलब्धिर्न मुक्तता ।
आनन्दोऽपि न चाप्येत न भाव्यः स गुरुस्थितौ ॥७६॥
गुरोर्भ्रातॄंस्तथा पुत्रान् बोधदान् भक्तिसंग्रहान् ।
सेवेत भावतो नित्यं गुरुमाराधयेत्सदा ॥७७॥
सर्वाऽभयप्रदातारं करुणाऽऽक्रान्तमानसम् ।
तोषयेद् बहुधा भक्त्या सर्वस्वाऽर्पणपूजया ॥७८॥
तावदाराधयेच्छिष्यः प्रसन्नोऽसौ भवेद्यथा ।
गुरौ प्रसन्ने शिष्यस्य सद्यः पापक्षयो भवेत् ॥७९॥
तस्माद्धनानि रत्नानि क्षेत्राणि च गृहाणि च ।
भूषणानि च वासांसि यानशय्यासनानि च ॥८०॥
एतानि गुरवे दद्याद्भक्त्या वित्तानुसारतः ।
वित्तशाठ्यं न कुर्वीत यदीच्छेच्छ्रेयमात्मनः ॥८१॥
स एव जनको माता भर्ता बन्धुर्धनं सुखम् ।
सखा मित्रं च यत् तस्मात्सर्वं तस्मै निवेदयेत् ॥८२॥
आक्रुष्टास्ताडिता वापि ये विषादं न यान्त्यपि ।
अहिंसका दयावन्तो मोक्षोद्यतसुचेतसः ॥८३॥
अमानिनो बुद्धिमन्तस्त्यक्तस्पर्धाः प्रियंवदाः ।
ऋजवो मृदवः स्वच्छा विनीताः स्थिरचेतसः ॥८४॥
एतादृशा नित्यसत्त्वमया नारीनराः शुभाः ।
श्रयेयुः सद्गुरुं शिष्याः कन्यकाश्च कुमारकाः ॥८५॥
शिष्याः परिश्रिताः सेवां गुरोः कुर्वन्ति नैव ये ।
अस्वातन्त्र्यकृतो दोषो नास्ति तेषां परार्थतः ॥८६॥
बहुनाऽत्र किमुक्तेन योपि कोपि गुरुश्रितः ।
ब्रह्ममार्गगतो भावी मुक्तिभाङ्नात्र संशयः ॥८७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुग-
सन्ताने गुरुपूजामाहात्म्यादिनिरूपणनामा
सप्तनवत्यधिकशततमोऽध्यायः ॥१९७॥

**श्रीलक्ष्मीरुवाच—**

कामो नारायणमूर्तेः समुत्पन्नः पुरा श्रुतम् ।
ईश्वरेषु निवासोऽस्य तदाऽभून्मानसात्मकः ॥ १ ॥
पुनश्चायं वेधसस्तु कदा सृष्टौ प्रकाशितः ।
तद् ब्रूहि मे यथातत्त्वं पुराणपुरुषोत्तम ॥ २ ॥

श्रीनारायण उवाच—

नारायणं समाराध्य ब्रह्मा लोकपितामहः ।
प्रजाः ससर्ज सर्वास्ताः सुरासुरनरादिकाः ॥ ३ ॥
सृष्ट्वा प्रजापतीन् दक्षप्रमुखान् देवसत्तमान् ।
ससर्ज मानसीं चारुरूपां सन्ध्यां जपन्तिकाम् ॥ ४ ॥
अतीव सुन्दरीं सुभ्रू मुनिचेतोविमोहिनीम् ।
दृष्ट्वा तां नरयोग्यां च सम्पूर्णगुणशालिनीम् ॥ ५ ॥
सर्वेषां मानसा भावास्तदासन्प्रमदामयाः ।
सुभगाः सन्तु चेदृश्यो नार्यो रतिगुणाश्रयाः ॥ ६ ॥
तेषां तु मिथुनानां च स्नेहवर्धनकारकम् ।
सामर्थ्यं सर्वदा चास्तु समाकर्षणरूपकम् ॥ ७ ॥
इति तेषां तु संकल्पान् विज्ञाय सृष्टिकृत्स्वयम् ।
तथैवास्त्विति मनसाऽकल्पयत् तादृशं नरम् ॥ ८ ॥
तावत्तु ब्रह्मणस्तत्र मानसो मञ्जुलो नरः ।
प्राविरासीत्स्वर्णवर्णः पीनोरस्का सुनासिकः ॥ ९ ॥
सुवृत्तोरुकटिजंघो नीलाऽऽभुग्नाऽग्रकेशरः ।
लग्नभ्रूयुगलो लोलः पूर्णचन्द्राऽतिभाऽऽननः ॥१०॥
सुदृढाऽऽयतसद्वक्षा रोमभ्रमरराजितः ।
सुरूपो मेघवर्णश्च पीनो नीलसुवासकः ॥११॥
आरक्तपाणिनयनमुखपादकरोद्भवः ।
तनुमध्यश्चारुदन्तः प्रमत्तगजगंधनः ॥१२॥
प्रफुल्लपद्मपत्राक्षस्ताम्बूलमुखवासकः ।
कम्बुग्रीवो मीनकेतुः प्रांशुर्मकरवाहनः ॥१३॥
पंचपुष्पायुधो गर्वी पुष्पकोदण्डमण्डितः ।
कान्तः कटाक्षपातेन भ्रामयन्नयनद्वयम् ॥१४॥
चंचलश्चारुनेत्राभ्यां श्रृंगाररससेवितः ।
यं वीक्ष्य पुरुषाः सर्वे दक्षाद्याः ब्रह्मणः सुताः ॥१५॥
औत्सुक्यं परमं प्राप्ता विस्मयाऽऽकृष्टमानसाः ।
अभवद्विकृतं तेषां सर्वेषां च मनो द्रुतम् ॥१६॥
धैर्यं नैवाऽभवत्तत्र कामाऽऽकुलितचेतसाम् ।
ततः कामः स्वयं नत्वा ब्रह्माणं प्राह सत्वरम् ॥१७॥
किं करोमि च दासोऽस्मि ब्रह्मन् कार्ये नियोजय ।
गुणरूपानुसारेण योज्यो दासस्तु जानता ॥१८॥
श्रुत्वा ब्रह्मा स्वकं पुत्रं काममाह सुखप्रदम् ।
अनेन त्वं स्वरूपेण पुष्पबाणैश्च पंचभिः ॥१९॥
मोहयन् पुरुषान् स्त्रीश्च कुरु सृष्टिं सनातनीम् ।
सप्राणाश्चेतनाः सर्वे त्वहं विष्णुस्तथाऽपरे ॥२०॥
भविष्यामस्तव वशे तव पोषणकारकाः ।
जनानां मानसेऽदृश्यरूपो भूत्वा प्रविश्य च ॥२१॥
सुखप्रदो महान् भूत्वा कुरु सृष्टिं सनातनीम् ।
प्राणिनां त्वद्बाणलक्ष्यं मानसं सुखलालसम् ॥२२॥
भवत्वेति तव स्थानं कृतं सत्त्वं तु देहजम् ।
इन्द्रियं ते समुत्थानस्तत्राऽस्तु मदकृन्द्रवान् ॥२३॥
इति ते कर्म कथितं सृष्टिप्रावर्तकं महत् ।
यथा प्रमन्थस्यस्माकं मानसानि ततस्तव ॥२४॥
मन्मथाख्या तथाऽन्योन्यकामनात् काम इत्यपि ।
मनसो जायमानेन मनोभव इति प्रथा ॥२५॥
मदकारान्मदनस्त्वं कन्दर्पः कस्य दर्पणात् ।
पुष्पबाणो रतिपतिरिति ख्यातिर्भविष्यति ॥२६॥
देवेषु त्वत्समः कश्चिद् व्यापिवीर्यो न वै भवेत् ।
अतः स्थानानि सर्वाणि भवन्तु व्यापिनस्तव ॥२७॥
हर्षणं रोचनं चैव मोहनं शोषणं तथा ।
मारणं चेति चोक्तानि तवाऽस्त्राणि सदाऽनघ ॥२८॥
तैः सहितस्य तु ते स्याद् विजयः सर्वसृष्टिषु ।
इत्याशीर्वचनं लब्ध्वा सन्ध्यायाः सन्निधौ हि सः ॥२९॥
साफल्यस्य परीक्षार्थं बाणान्मुमोच वेधसि ।
एवं पुनः पुनर्धनुर्योजयामास मार्गणैः ॥३०॥
आलीढस्थानमासाद्य धनुराकृष्य यत्नतः ।
चकार वलयाकारं ववुर्वाताः सुगन्धिनः ॥३१॥
मुनींश्च मानसान्सर्वान्मोहयामास मोहनः ।
सन्ध्यां सर्वे निरीक्षन्तो विकाराऽऽवेगपूरिताः ॥३२॥
आसन्प्रवृद्धमदना इन्द्रियोत्तेजनान्विताः ।
सन्ध्यां दृष्ट्वोनपंचाशद्भावा जाताः शरीरतः ॥३३॥
कामेन ब्रह्मणोद्दिष्टं कर्तुं शक्यं विभावितम् ।
अथ ब्रह्मशरीरात्तु धात्वंभः पतितं तदा ॥३४॥
अग्निष्वात्ताः पितृगणा जातास्ते पितरः स्मृताः ।
नीलवर्णाश्च यतयः संसारगृहशून्यकाः ॥३५॥
चतुःषष्टिसहस्राणि त्वग्निष्वात्ता हि पावनाः ।
षडशीतिसहस्राणि तथा बर्हिषदोऽपरे ॥३६॥
अथ दक्षशरीराच्च धात्वंभः पतितं भुवि ।
समस्तगुणसम्पन्ना तस्माज्जाता वरांगना ॥३७॥
सौम्यांगी तनुमध्या च स्वर्णसूक्ष्मशिरोरुहा ।
मृद्वंगी कलिदशना तेजोमण्डलसूज्ज्वला ॥३८॥
स्वर्णाभाऽवयवा रम्या चन्द्रकान्तिमयांऽगना ।
द्वादशवर्षशरीरा रतिनाम्नी सुमोहिनी ॥३९॥

कामभावप्रपूर्णा च सर्वसौन्दर्यसत्खनिः ।
अथ ऋतोर्वशिष्ठस्य पुलस्त्याऽङ्गीरसोस्तथा ॥४०॥
अनिगृहीतेन्द्रियाणां वीजं भूमौ पपात च ।
तेभ्यः पितृगणा जाताः सोमपा आज्यपास्तथा ॥४१॥
सुकालिनस्तथा हविष्मन्तस्ते कव्यवाहकाः ।
ऋतोस्तु सोमपा जाता वाशिष्ठा ऊर्ध्वकालिनः ॥४२॥
पुलस्त्यस्याऽऽज्यपा जाता हविष्मन्तोऽङ्गिरःसुताः ।
अयं पितृगणः सर्वः कव्यवाट् सर्वथाऽभवत् ॥४३॥
सन्ध्या पितृप्रसूर्भूत्वा तदुद्देशयुताऽभवत् ।
अथ दक्षः काममाह सद्रूपगुणसंयुताम् ॥४४॥
एनां गृह्णीष्व भार्यार्थं मत्पुत्रीं सदृशीं गुणैः ।
इत्युक्त्वा प्रददौ तस्मै देहस्वेदाम्बुसंभवाम् ॥४५॥
रतिनाम्नीं तु भार्यार्थं कन्दर्पाय सहार्थिनीम् ।
विवाह्य तां स्मरः सोपि मुमोदाऽतीव सद्रतिम् ॥४६॥
तस्या भ्रूयुगलं वीक्ष्य विसस्मार धनुः स्वकम् ।
कटाक्षयोर्गतिं दृष्ट्वा विसस्माराऽस्त्रनिर्गतिम् ॥४७॥
सुगन्धिश्वसमाघ्राय विसस्मार सुमाऽनिलम् ।
कान्तवृत्ताऽऽननं दृष्ट्वा विसस्मार शशांकिनम् ॥४८॥
सुवर्णपद्मकलिकातुल्यं तस्याः कुचद्वयम् ।
दृष्ट्वा चूचुकयुग्माढ्यं सस्मार तारकाद्वयम् ॥४९॥
दृढपीनोन्नतस्तनद्वयमध्यसुलम्बिनीम् ।
आनाभिपत्तलं मालां दृष्ट्वा सस्मार कौमुदीम् ॥५०॥
विसस्मार स्वधनुषो ज्यां च शिञ्जितषट्पदाम् ।
अक्षिद्वन्द्वं समालोक्य विसस्माराऽब्जपत्रिके ॥५१॥
उदरं तनु चालोक्य सस्मार स्वर्णवेदिकाम् ।
ऊरुद्वयं समालोक्य सस्मार कदलीद्वयम् ॥५२॥
आरक्तपार्ष्णिपादाग्रप्रान्तभागान् विलोक्य च ।
सस्मार चानुरागाख्यं मित्रं तच्चरणस्थितम् ॥५३॥
तस्याः करयुगं रक्तं नखैः किंशुकोपमैः ।
वृत्ताभिरंगुलीभिश्च सूक्ष्माग्राभिर्मनोहरम् ॥५४॥
दृष्ट्वा सस्मार हरिभुजंगसन्मणिभोगकम् ।
तस्याश्च बाहुयुगलं मृणालयुगलायतम् ॥५५॥
मृदु स्निग्धं प्रवालाभं दृष्ट्वा कामो जहर्ष वै ।
नीलनीरदसंकाशकेशपाशो मनोहरः ॥५६॥
चमरीवालधिप्रख्यो विभाति स्मरजीवनः ।
एतादृशीं चक्रपद्मां मृणालशकलान्विताम् ॥५७॥
सर्वलावण्यसदनां सर्वांगरामणीयिकाम् ।
द्वादशाऽऽभरणैर्युक्तां शृंगारैः षोडशैर्युताम् ॥५८॥
मोहिनीं तां रतिं वीक्ष्य कामो जग्राह सोत्सुकः ।
विवाहं विधिवत्तत्र तयोर्ब्रह्मा चकार वै ॥५९॥
तदा महोत्सवस्तत्र बभूव सुखवर्तनः ।
दक्षः प्रीततरश्चासीन्मुमुदे तनया रतिः ॥६०॥
कामोऽतीव सुखं प्राप्तो रराजाऽति तया सह ।
वारं वारं च तां दृष्ट्वा जगृहे हृदयोपरि ॥६१॥
या च सन्ध्या ब्रह्मसुता मनोजाता पुराऽभवत् ।
तपस्तप्त्वा तनुं त्यक्त्वा सैव जाता त्वरुन्धती ॥६२॥
मेधातिथेः सुता भूत्वा वव्रे पतिं वशिष्ठकम् ।
चन्द्रभागानदीतीरे तेपे युगचतुष्टयम् ॥६३॥
ततो वै प्रार्थितं जातमात्रान्माऽऽविशतु स्मरः ।
ब्रह्मणाऽपि तथास्त्विति प्रदत्तं वरदानकम् ॥६४॥
तद्दिनात्तु स्मरो द्वादशोत्तरं विशति प्रजाः ।
साप्येवमुपसंहृत्य तपो जगाम चाम्बरम् ॥६५॥
सप्तर्षिमण्डले चास्ते वशिष्ठसहचारिणी ।
इति ते कथितं लक्ष्मि ! पुनः कामकथानकम् ॥६६॥
कल्पादौ साऽभवत्पुत्री चाण्डालस्याऽतिधर्मिणी ।
ऋषयो द्वादशेऽवग्रहकालेऽन्नसमीहया ॥६७॥
भिक्षार्थं च समाजग्मुस्तदा पित्रा समर्पिता ।
साकं तु भिक्षया वशिष्ठाय पावनकारिणे ॥६८॥
निःसारिता च गोमध्यात् पाविता च विवाहिता ।
सैवास्त्यरुन्धती देवी पातिव्रत्यपरायणा ॥६९॥
इतिते कथितं सर्वं यथा भवति तत्तथा ।
कल्पभेदे सृष्टिभेदं किमन्यच्छ्रोतुमिच्छसि ॥७०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुग-
सन्ताने जीवसृष्टौ सन्ध्यापितृकामरत्यरुन्ध-
त्युत्पत्तिप्रदर्शननामाऽष्टनवत्यधिक-
शततमोऽध्यायः ॥ १९८ ॥

**श्रीलक्ष्मीरुवाच—**

समुद्रमन्थने दैत्यमोहार्थं त्वमभूः प्रभो ।
मोहिनीरूपमापन्नस्त्वां दृष्ट्वा शंकरस्तदा ॥ १ ॥
मायेशोपि कथं मायामोहमवाप निर्गुणः ।
इति मे संशयं छिन्धि तां कथां कथय प्रभो ॥ २ ॥

श्रीनारायण उवाच—

श्रूयतां तन्महालक्ष्मि! सर्वं निःसंशयं यथा।
अहं नारायणः साक्षात्परं ब्रह्म परात्परः ॥३॥
निर्गुणोऽपि सदा दिव्यगुणाकरो भवाम्यपि।
मदिच्छाया जगत्सर्वं निर्गुणान्मम वर्ष्मणः ॥४॥
समुत्पन्नं सगुणं तत् सत्त्वादिगुणमिश्रितम्।
प्रकृतेश्च गुणानां च प्रेरकोऽहं प्रयोजकः ॥५॥
यथा यत्र यादृशं च कार्यं भवति तादृशम्।
रूपमास्थाय तत्सर्वं साधयामि स्वयं यथा ॥६॥
अन्यप्रवेशमास्थाय साधयामि गुणार्थिवत्।
शंकरो मम भक्तोऽस्ति निर्लेपो मायया सदा ॥७॥
मायागुणैरनुद्वेज्यो मायया स न लिप्यते।
तथाप्यन्यप्रशिक्षार्थं मोहनं दर्शितं मया ॥८॥
साध्व्यश्च साधवश्चापि त्यागव्रतं समाश्रिताः।
ते तु मोहं प्रजित्वैव दिव्यभावा भवन्ति हि ॥९॥
तथापीन्द्रियवेगेन कदाचिद्योगसंभवे।
ग्राम्यक्रियाप्रकर्तारो भवेयुर्मोहसंभवे ॥१०॥
शंकरो योगिराड् भक्तो मायामोहमवाप्तवान्।
तस्मान्मुक्तिं समिच्छद्भिर्भेत्तव्यमिन्द्रियादितः ॥११॥
अप्रमादः सदा रक्ष्यः प्रमादो मृत्युरुच्यते।
मोह एव प्रमादोऽस्ति नरनारीप्रयोगजः ॥१२॥
तद्भक्तैर्नैव योक्तव्यं मोहनं देहजं क्वचित्।
इति प्रत्युपदेशार्थं दर्शितं शंकरे मया ॥१३॥
अन्यच्चाऽस्या वसुमत्या गर्भे स्वर्णप्रपत्तये।
शिवधातुप्रदानार्थं कृतं मया सहेतुकम् ॥१४॥
शृणु तच्च यथाजातं ममैव तत्कथानकम्।
द्वयोरैक्यान्मोक्षकरी कथैषा श्रवणान्मता ॥१५॥
योषिद्रूपधरो विष्णुर्मोहयित्वा तु दानवान्।
सोममपाययद्देवान् श्रुत्वेति शंकरः स्वयम् ॥१६॥
द्रष्टुमैच्छच्च तद्रूपं समायाच्च त्वरान्वितः।
शंकरस्य च संकल्पं ज्ञात्वाऽथ मोहिनीहरिः ॥१७॥
पाययित्वाऽमृतं देवानपासरत् यतो हरः।
षोडशहायना नारी कामपूरभरान्विता ॥१८॥
कबरीकेशवेषाढ्या चंचत्पत्रलतान्विता।
शरत्पूर्णनिशानाथनिभाननमनोहरा ॥१९॥
कामबाणाश्रितभालभ्रूकुटिद्वयहृद्भ्रमा।
रक्तपीतसुधवलपुष्पावतंसशोभिता ॥२०॥
स्थलपद्मकृतगुच्छग्रथितधम्मिलोत्तमा।
सुगन्धचन्दनमिश्रकुंकुमपत्रिकान्विता ॥२१॥
मध्यसूक्ष्मप्रभाबिन्द्वीस्मारितानंगसद्गृहा।
नीलचंचत्कज्जलार्द्रकोणाऽपांगसुनेत्रका ॥२२॥
सूक्ष्मरत्नमणिस्वर्णहीरकाञ्चितकुण्डला।
चंचन्मौक्तिकसूक्ष्माग्र्यालम्बमानैरिकान्विता ॥२३॥
सुप्रभहीरकाञ्चितस्वर्णचन्द्रकपोलिका।
तनुतारात्मसौवर्णवालीमणिभनासिका ॥२४॥
पक्वबिम्बौष्ठयुगलस्मारिताऽचुम्बनक्रिया।
रत्नमध्यकृतिचंचत्स्वर्णचिबुकबिन्द्रिका ॥२५॥
प्रोद्यत्सूर्यसमकान्तिकौस्तुभवरमण्डना।
स्वर्णहारावलीशोभद्वक्षःस्थलस्तनद्वया ॥२६॥
कम्बुकण्ठी निष्ककण्ठी कदलीगर्भसद्भुजा।
रक्तपल्लवसत्कान्तिचन्द्रनखाङ्गुलिप्रभा ॥२७॥
स्वर्णोर्मिकांऽगदरम्यकटकवंगिडीयुता।
शृंखलारशनानूपुरराजिचरणद्वया ॥२८॥
क्वणत्किंकिणिकायुक्तस्वर्णमंजीरशोभिता।
स्वर्णरक्तरंगचित्रविचित्रघर्घरीयुता ॥२९॥
स्वर्णताराऽञ्चितप्रान्तशोभच्छाटीसमम्बरा।
नवरंगफलकल्पस्तनाऽऽसक्तकंचुकीयुता ॥३०॥
चन्द्रविद्युद्विलासाभं नक्तकं बिभ्रती करे।
कूर्दत्कन्दुकवर्येण सक्रीडा च मुहुर्मुहुः ॥३१॥
पुष्पपल्लवशोभाढ्ये वृक्षकुंजे गतीमती।
ईषत्कम्पाञ्चितस्तननितम्बचापलान्विता ॥३२॥
विगुण्ठद्वस्त्रवैवर्तगोचरीभवदंकना।
हावभावविलासादिचंचलायतलोचना ॥३३॥
कंचुकीं स्तनयोर्हस्तं दत्वाऽपीडयदत्यति।
क्वचिच्च कबरीं धृत्वा सन्नह्यती च शाटिकाम् ॥३४॥
रममाणा कन्दुकेन मनोमोहातिकारिणी।
मुहुर्हास्यानना शाटीमुद्धृत्योद्धृत्य गच्छति ॥३५॥
घर्घरीं मुकुलीकृत्याऽनावृतसक्थिदर्शना।
यत्रास्ति शंकरस्तत्र मिषेणाऽऽसृत्य सर्पति ॥३६॥
एवंविधामेकतानामेकतानेन लोकयन्।
जडीभूतोऽभवच्छंभुर्विह्वलात्मा हतान्तरः ॥३७॥
ज्ञप्तिस्मृतिविलोपेनाऽभवज्ज्ञानविवर्जितः।
कामभावप्रभामात्रारूढसंकल्पतन्मयः ॥३८॥
वाततरंगप्रोत्कृष्टशाटीहीना तदाऽभवत्।
श्लथन्नीव्यपतद्भूमौ घर्घर्यपि तदन्तरे ॥३९॥

चिदाकाशगतं विद्युद्बिन्दुं साभ्रमिवान्तरम् ।
महाप्रकाशतेजस्वि स्वर्णचम्पकभान्वितम् ॥४०॥
विलोक्य शंकरस्तस्यां मनश्चक्रेऽतिषञ्जितुम् ।
वायुर्हरति वस्त्राणि सा च हरति शंकरम् ॥४१॥
अपसर्पति व्रीडाढ्या वृक्षाद्वृक्षान्तरं तदा ।
कामवेगाप्तकार्कश्येन्द्रियो वीर्यप्रपूरितः ॥४२॥
सोऽनुगत्वाऽतिदार्ढ्येन केशान्धृत्वा च तद्वपुः ।
समाकृष्य समुन्नीय बाहुभ्यां परिषस्वजे ॥४३॥
प्रसह्योपालिंगिता सा चूम्बिता च मुहुर्मुहुः ।
अनिच्छुकी च साऽऽत्मानं मोचयित्वा भुजान्तरात् ॥४४॥
प्राद्रवत्सा वृक्षसंघेऽनुजगाम हरश्च ताम् ।
रेतसो वेगप्राबल्यात्स्रावोऽभवत्प्रधावतः ॥४५॥
यत्र यत्राऽप्रधावत्सा तत्र तामनुधावतः ।
रेतो मह्यां चापतद् यत् ता हेम्नः खनयोऽभवन् ॥४६॥
मोहिनी व्योममार्गेण पुरोगा याति वेगतः ।
मुग्धो महेश्वरः कामवेगस्तामनुधावति ॥४७॥
भूमावरण्यशैलादौ चापगासु वनेषु च ।
यत्राऽधावन्महादेवो धातुस्तस्याऽपतत्तथा ॥४८॥
तत्र तत्र च तद्योगात् पृथ्वी रौप्यमयी ह्यभूत् ।
शंकरस्य समग्रस्य धातोर्वै क्षरणादनु ॥४९॥
समजायत शैथिल्यं प्रबोधोऽभूत्ततः पुनः ।
केयं वै मोहिनीरूपा कोऽहं गच्छामि कुत्र च ॥५०॥
कथं मे कल्मषं प्राप्तमविकृतस्य विकृतिः ।
नैतादृशं भवेद्रूपं जगद्धातारमन्तरा ॥५१॥
अमायिकस्य का माया येन माया वशीकृता ।
मां याहीति कृतयत्ना मायेयं वैष्णवी ननु ॥५२॥
तस्यैव मायया व्याप्तं जगदेतचराचरम् ।
यद्यहं तेन चाकृष्टस्तदा नास्त्यद्भुतं हि मे ॥५३॥
तेनैव संयोजितोऽहं रमामि शिवया सदा ।
तेनैव प्रेरितश्चाहं विहरामि तदिच्छया ॥५४॥
इति विचार्य मुमुदे न ग्लानिमगमद्धरः ।
भगवानपि तं भक्तं प्रमातारं विचिन्त्य च ॥५५॥
मोहिनीरूपधृक् प्राह कस्त्वं कस्माज्जडीकृतः ।
क्व गतं तव सत्त्वं विना योगमसत्त्ववत् ॥५६॥
समर्थस्यापि ते केन गमितैतादृशी दशा ।
एह्यागच्छ निकुंजेषु रमावो निर्जने वने ॥५७॥
नैतादृशीं पुनर्नारीं प्राप्स्यसेऽक्षतमध्यमाम् ।
इतिकृत्वा स्वयं कृष्णो नारायणश्चुचुम्ब तम् ॥५८॥
हरस्तु धातुनिर्भिन्नः शैथिल्याक्रान्तमेढ्रकः ।
नोत्साहवानभूत्तत्र तया साकं रिरंसितुम् ॥५९॥
स प्राह मोहिनीं तत्र नारायणमृते क्वचित् ।
योगिनां मनसो धैर्यं हर्तुं शक्तो न वै परः ॥६०॥
तस्मै नमो भगवते मायारूपधाराय च ।
नमः कृष्णाय देवाय नारायणाय विष्णवे ॥६१॥
मोहिन्यात्मस्वरूपाय मोहरूपाय ते नमः ।
त्वयि नात्र मम शोको नारायणे परात्परे ॥६२॥
तथापि देवदेवेश रक्ष मायाविमोहनात् ।
मोहोऽयं जगतां बन्धकरोऽस्ति वासनोदयः ॥६३॥
तव योगोऽपि मोहात्मा मुक्त्यात्मा निर्गुणो मतः ।
तवेदं रूपमत्यर्हसौन्दर्यभाजनं परम् ॥६४॥
न मे चान्यस्य बन्धाय मोक्षमात्रप्रदं हि तत् ।
तस्मात् त्वया कृतं यद्वै तद्वै मे लाभदं परम् ॥६५॥
पार्वत्याः सहवासेऽपि स्मृत्वा त्वां मोहिनीं सदा ।
विनिर्बन्धो भविष्यामि लप्स्ये नैर्गुण्यमेव च ॥६६॥
श्रुत्वैतच्छंभुहार्दज्ञो भगवान् कमलापतिः ।
योषिद्रूपं च संहृत्य चतुर्बाहुः क्षणेऽभवत् ॥६७॥
प्रहसन्प्राह सर्वात्मा समाश्लिष्य हरं हृदा ।
मद्भक्तो मत्कृतां मायां जीतवानसि शंकर ॥६८॥
ज्ञानेन चापि धैर्येण भक्त्या च परया तथा ।
नान्यश्चातितरेन्मायां योषिद्रूपां हि त्वदृते ॥६९॥
सेयं भावान्सृजमाना मोहिनीवद्विडम्बना ।
रज्जूरूपा बन्धनाख्या स्पृशत्येव न मच्छ्रितान् ॥७०॥
अभक्तानां मोहिका सा भक्तानां भुक्तिमुक्तिदा ।
सैव मद्योगमापन्ना भक्तानां निर्गुणा सदा ॥७१॥
महामाया महालक्ष्मीः कमला राधिका रमा ।
सरस्वती च सावित्री पार्वती नैव बन्धदा ॥७२॥
रुक्मिणी कम्भरा ब्राह्मी पतिव्रता च जानकी ।
मोहिनी तुलसी चैता मोक्षदा न तु बन्धदाः ॥७३॥
प्रभा च माणिकी जया ललिता नैव बन्धदाः ।
कृष्णरूपास्तु ताः सर्वा मुक्तिदा योगतः स्मृताः ॥७४॥
हंसा च मंजुला चम्पा हैमी दया रमा तथा ।
पुष्पा मुक्ता तथा देवी शान्ता गोदावरी मनुः ॥७५॥
ओजस्वती च जीवा च मंगला ताः सखीवराः ।
दिव्यास्तासां मूर्तयो याः साध्व्यो योगिन्य एव च ॥७६॥
साक्षात्कृष्णांकवासास्ताः पावना मोक्षदास्ततः ।
सांख्ययोगिन्य एवात्र सन्यासिन्यश्च यास्तथा ॥७७॥

विरागिण्यश्च मद्रूपा यतिन्यश्चापि मोक्षदाः ।
मच्छक्तयस्तु ताः सर्वा मद्रूपा एव निर्गुणाः ॥७८॥
तासां योगं गता ये ये ते जीवा निर्गुणाः सदा ।
पवित्राश्चात्र जीवन्तो मुक्ता एव न संशयः ॥७९॥
यथा तासां योगवन्तो ब्रह्मविष्णुमहेश्वराः ।
कृष्णरामादयो नित्यमुक्ता नित्यपरेश्वराः ॥८०॥
अथ तासां कृपापात्रजीवा मुक्तेश्वराः सदा ।
इति ते कथितं शंभो ! मन्माहात्म्यमनुत्तमम् ॥८१॥
नेदृक्सम्यग्विजानन्ति ये दोषाऽऽदृतदृष्टयः ।
मत्स्वरूपप्रसक्ता ये मत्तो बोधग्रहाश्च ये ॥८२॥
मदात्मकमिदं सर्वं जानन्तोऽनिदमेव यत् ।
त एवेदृक्सुमतयो निर्बन्धाः सन्ति सर्वथा ॥८३॥
इत्युक्त्वा शंकरं विष्णुरन्तर्धानं गतः क्षणात् ।
महादेवोऽपि गंगायां स्नानार्थमगमत्तदा ॥८४॥
इति ते लक्ष्मि ! सामर्थ्यं मोहिन्या शंकराय यत् ।
दर्शितं कथितं सर्वं किं पुनः श्रोतुमिच्छसि ॥८५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने शंकरस्य मोहिनीदर्शनेन धातुपातात् स्वर्णखन्युत्पत्तिः, तत्सखीनां दिव्यता, चेत्यादिनिरूपणनामा नवनवत्यधिकशततमोऽध्यायः ॥१९९॥

**श्रीलक्ष्मीरुवाच—**

नारदस्य पुनर्जन्म दासीपुत्रत्वमित्यपि ।
कदा जातमितिब्रूहि श्रोतुमिच्छामि माधव ॥ १ ॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! कथां दिव्यां सर्वथा पापनाशिनीम् ।
ब्रह्मा विश्वं विनिर्माय सावित्र्यां गृहधर्मतः ॥ २ ॥
चकार वीर्याधानं च शतवर्षोत्तरं तु सा ।
सुषुवे चतुरो वेदान् तदंगानि च सर्वथा ॥ ३ ॥
षट्त्रिंशद्रागिणीश्चैव षड्रागान् तालसंयुतान् ।
चतुर्युगाँश्च कालाँश्च योगाँश्च षट्सुकृत्तिकाः ॥ ४ ॥
देवसेनां महाषष्ठीं कार्तिकेयप्रियां सतीम् ।
मातृकासु प्रधानां तां बालानामिष्टदेवताम् ॥ ५ ॥
चतुर्विधं लयं मृत्युकन्यां व्याधिगणाँस्तथा ।
पृष्ठादधर्मं चालक्ष्मीं वामपार्श्वत एव च ॥ ६ ॥
नाभेस्तु विश्वकर्माणं वसूनष्टौ महाबलान् ।
मानसात् चतुरः पुत्रान् कुमारान् सनकादिकान् ॥ ७ ॥
मुखात् स्वायंभुवं पुत्रं शतरूपासमन्वितम् ।
तान्सर्वान् सृष्टिकृद्ब्रह्मा सृष्टिं कर्तुमुवाच ह ॥ ८ ॥
जग्मुस्ते च नहीत्युक्त्वा तप्तुं कृष्णपरायणाः ।
चुकोप हेतुना तेन ब्रह्मा तस्य ललाटतः ॥ ९ ॥
रूद्रा एकादशोत्पन्नास्तेषामेको विनाशकृत् ।
पुलस्त्यो दक्षकर्णाच्च पुलहो वामकर्णतः ॥१०॥
दक्षनेत्रात्तथाऽत्रिश्च वामनेत्रात् क्रतुः स्वयम् ।
अरणिर्नासिकारन्ध्रादङ्गिराश्च मुखादुरुचिः ॥११॥
भृगुस्तु वामपार्श्वाच्च दक्षो दक्षिणपार्श्वतः ।
छायायाः कर्दमो जातो नाभेः पंचशिखस्तथा ॥१२॥
वक्षसश्चैव वोढुश्च कण्ठदेशाच्च नारदः ।
मरीचिः स्कन्धदेशाच्चैवाऽपान्तरतमा गलात् ॥१३॥
वसिष्ठो रसनादेशात्प्रचेता अधरौष्ठतः ।
हंसश्च वामकुक्षेश्च दक्षकुक्षेर्यतिस्तथा ॥१४॥
सृष्टिं कर्तुं सुतान्सर्वानाज्ञां चकार विश्वसृट् ।
नारदस्तु तदा प्राह युक्तियुक्तं शुभं वचः ॥१५॥
पूर्वमानय मज्ज्येष्ठान्सनकादीन् पितामह ।
कारयित्वा दारयुक्तानस्मान्वद जगत्पते ॥१६॥
ते तपःसु योजिताश्चेत् संसाराय वयं कथम् ।
एकस्मायमृतं दत्तमन्यस्मै तु विषं कथम् ॥१७॥
घोरे संसारवार्धौ संपतितस्य न निस्तरिः ।
कोटिकल्पेऽपि भवति तस्मात्संसारसागरे ॥१८॥
माऽस्मान्पातय हितकृत्पिता भूत्वाऽज्ञवत् पितः ।
नारायणः स्वयं बीजं निस्तारस्येह कथ्यते ॥१९॥
सर्वदो भक्तिदो मोक्षप्रदश्चापि स एव हि ।
भक्तैकशरणो भक्तवत्सलः करुणानिधिः ॥२०॥
भक्तप्रियो भक्तनाथो भक्तानुग्रहकारकः ।
भक्providing्ताराध्यो भक्तसाध्यः स एव तारकः स्वयम् ॥२१॥
विहाय तं परंब्रह्म को मूढो विषये भ्रमेत् ।
कृष्णसेवामृतं त्यक्त्वा विषमश्नाति कोऽबुधः ॥२२॥
विषया नश्वराः सर्वे तुच्छाश्च मृत्युहेतवः ।
स्वप्नवन्न स्थिराः सन्ति दीपज्वालाग्रवर्तनाः ॥२३॥
बडिशपिष्टवत् मत्स्यापाताऽभिकारका इव ।
दुःखदा मृत्युदास्तापाः कस्तान्सेवेत सन्मतिः ॥२४॥
तस्मादयं ब्रह्मभाजो ब्रह्मान्वयप्रकाशकाः ।
विचिन्तयामो ब्रह्मैव न कुर्मः सर्जनं पितः ॥२५॥

इत्युक्त्वा नारदो मौनोऽभवत् प्रत्युत्तरेच्छुकः ।
तावद्ब्रह्माऽभवत् क्रुद्धः प्रोवाच स्फुरिताऽधरः ॥२६॥
नारद ! त्वं पितुर्वाक्यमनादृत्याऽभिमानवान् ।
ज्ञानीवोपदिशन्मां च निषेधसि तु सर्जनम् ॥२७॥
तस्माज्ज्ञानविहीनस्त्वं भव योषित्सु लम्पटः ।
स्थिरयौवनयुक्तानां सुरूपाणां विलासकृत् ॥२८॥
पञ्चाशत्कामिनीनां त्वं भर्ता शृंगारविद्भव ।
शृंगारशास्त्रवेत्ता च महाशृंगारकारकः ॥२९॥
नानाशृंगारविज्ञानां गुरूणां च गुरुर्भव ।
गन्धर्वाणामग्रगण्यो गायकः सुस्वरो भव ॥३०॥
वीणावादननिष्णातः सर्वदा स्थिरयौवनः ।
भविष्यसि न सन्देहो द्विलक्षाब्दसुजीवनः ॥३१॥
पुनर्मदीयशापेन दासीपुत्रो भविष्यसि ।
तदा वैष्णवसंसर्गाद् वैष्णवोच्छिष्टभोजनात् ॥३२॥
श्रीकृष्णस्य प्रसादेन भविष्यसि ममात्मजः ।
ज्ञानं दास्यामि ते दिव्यं पुनरेव पुरातनम् ॥३३॥
अधुना भव नष्टस्त्वं मत्सुतो निपत ध्रुवम् ।
नारदः प्राह पितरं क्रोधं संहर विश्वसृट् ॥३४॥
शपेत्परित्यजेद्विद्वान् पुत्रमुत्पथगामिनम् ।
तपस्विनं सुतं शप्तुं कथमर्हसि मे पितः ॥३५॥
यत्र जनिश्च मे तत्र वैष्णवत्वं सदा भवेत् ।
न जहातु हरेर्भक्तिर्मां वेदो देहि मे वरम् ॥३६॥
जन्म यदि महल्लक्ष्मीसम्पद्वत्सु भवेदपि ।
भक्तिहीनं तु तत्सर्वमधमं चाऽगतिप्रदम् ॥३७॥
सूकरेऽपि यदि जन्म जातिस्मरं भवेद्यदि ।
भक्तियुक्तं तु तच्छ्रेष्ठं गोलोकधामदं हि तत् ॥३८॥
श्रीहरेश्चरणे भक्तिर्मधु दिव्यं प्रकीर्तितम् ।
तदश्नतां वैष्णवानां पादपूता धरा भवेत् ॥३९॥
तीर्थानि वैष्णवानां तु स्पर्शमिच्छन्ति सर्वदा ।
पापिनां स्नानसंसृष्टपापानां क्षालनाय वै ॥४०॥
श्रीकृष्णमन्त्रग्रहणान्नरा मुक्ता भवन्ति वै ।
कोटिमुक्ता नामग्रहाज्जाता जायन्त एव च ॥४१॥
भविष्यन्ति तथा मुक्ता नामभक्त्या तु कोटिशः ।
कोटिजन्मार्जितं पापपुञ्जा नश्यन्ति मन्त्रतः ॥४२॥
शुद्ध्यन्ति च भवन्त्येव मुक्ता नैष्कर्म्यमात्रतः ।
पूर्वं चापि कृतं कर्म नाम्ना निर्मूलयन्ति ते ॥४३॥
गृहं दासाँस्तथा दासीरपत्यानि च बान्धवान् ।
सुतान्दाराँस्तथा शिष्यान्सेवकाँश्च कुटुम्बिनः ॥४४॥
यो दर्शयति सन्मार्गं सोपि सद्गतिमृच्छति ।
स किंगुरुः स किंतातः स किंस्वामी स किंसुतः ॥४५॥
यो दर्शयत्यसन्मार्गं तैस्तैर्विश्वसितो जनः ।
यश्च कृष्णपदाम्भोजे भक्तिं दातुमनीश्वरः ॥४६॥
त्वं न ददासि मे भक्तिं निरोधयसि मामुत ।
ततस्त्वमपि वेदाऽऽस्याऽपूज्यो भव जगत्त्रये ॥४७॥
इत्युक्त्वा नारदस्तत्र विरराम क्षणं यतः ।
विश्वसृजश्च शापेन गन्धर्वश्च बभूव ह ॥४८॥
गन्धर्वराजस्य पत्न्यामुपबर्हणनामधृक् ।
कथयामि सुविस्तीर्णं तद्वृत्तान्तं निशामय ॥४९॥
गन्धर्वराजः सर्वेषां गन्धर्वाणामधिप्रभुः ।
परमैश्वर्यसंयुक्तः पुत्रहीनोऽभवद्धि सः ॥५०॥
गुर्वाज्ञया पुष्करे सः तपश्चचार दारुणम् ।
ददौ तस्मै वशिष्ठश्च स्तोत्रं तु द्वादशाक्षरम् ॥५१॥
शिवस्य कवचं मन्त्रं वर्षशतं जजाप सः ।
निराहारस्तपः कुर्वन् ददर्श पुरतः शिवम् ॥५२॥
महत्तेजःस्वरूपं च भक्तानुग्रहकारकम् ।
ईषद्धासं प्रसन्नास्यं तपस्याफलदायकम् ॥५३॥
शरणागतभक्ताय दातारं सर्वसम्पदाम् ।
त्रिशूलपट्टिशधरं वृषस्थं चन्द्रशेखरम् ॥५४॥
तप्तस्वर्णजटाजूटं नीलकण्ठं त्रिनेत्रकम् ।
नागयज्ञोपवीतं च चर्मवस्त्रं सुभक्तिदम् ॥५५॥
दृष्ट्वा ननाम गन्धर्वराजः स दण्डवत् भुवि ।
तुष्टाव परमन्त्रेण प्रसन्नं धवलं हरम् ॥५६॥
वरं वृणुष्वेति हरस्तं प्रोवाच तपस्विनम् ।
स ययाचे हरेर्भक्तिं भक्तं पुत्रं च वैष्णवम् ॥५७॥
शंभुः प्राह कृतार्थस्त्वं सर्वं भक्तौ प्रतिष्ठितम् ।
वरादेकाद् वृतं सर्वमन्यच्चर्वितचर्वणम् ॥५८॥
यस्य भक्तिर्हरौ तस्य सर्वं चैश्वर्यमस्ति हि ।
सर्वाश्च सिद्धयस्तस्य न न्यूनं विद्यतेऽप्यणु ॥५९॥
सः समर्थः सर्वविश्वान् पातुं कर्तुं भवेदिह ।
आत्मनः कुलकोटिं च शतं मातामहस्य च ॥६०॥
पुरुषाणां समुद्धृत्य गोलोकं धाम याति सः ।
कोटिजन्मप्रपापानि हत्वा दास्यं हरेर्लभेत् ॥६१॥
तावत्पतिश्च पत्नी च सुताः पुत्रा धनादयः ।
सुखं दुःखं नृणां तावद् यावद्भक्तिर्हरौ नहि ॥६२॥
हरौ भक्तिः कल्पवृक्षः सर्वेप्सितं ददाति वै ।
भक्तिर्महाँस्तीक्ष्णखड्गः कर्मद्रुमूलकृन्तनः ॥६३॥

हरौ तु मानसे लब्धे सर्वं सिद्धं भवत्यपि ।
येषां तु सुकृतं श्रेष्ठं तेषां पुत्रास्तु वैष्णवाः ॥६४॥
भवन्त्युद्धारयन्त्येव कुलकोटिं तु सेवया ।
सुखे वैषयिके यद्वा साम्राज्ये पारमेष्ठ्यके ॥६५॥
प्राप्ते सर्वविधे चापि मंगले नैव तुष्यति ।
भक्तिर्भक्तश्च पुत्रः स्यादित्येकात्सर्वमर्थितम् ॥६६॥
चरितार्थः पुमानेकादीदृशात्तु वरोत्तमात् ।
किं वरेण द्वितीयेन यस्मात् तृप्तिर्न शाश्वती ॥६७॥
वैष्णवानां धनं श्रेष्ठं कृष्णे भक्तिर्हि शाश्वती ।
सञ्चितं भक्तिदास्यं यत् सर्वं तेन हि सञ्चितम् ॥६८॥
यद्यपि त्वर्थितं श्रेष्ठं सर्वस्माच्छ्रेष्ठमेव च ।
तथापि न वयं दातुं समर्थास्तादृशं वरम् ॥६९॥
वरयाऽन्यं वरं राजन् यत्ते मनसि वर्तते ।
महेन्द्रत्वममरत्वं ब्रह्मत्वमीशतां लभ ॥७०॥
सिद्धीर्योगं च विज्ञानं मृत्युञ्जयबलं तथा ।
सर्वं दास्यामि लभ तत् कृष्णदास्यं त्यज ध्रुवम् ॥७१॥
श्रुत्वा गन्धर्वराजश्चोवाच श्रीशंकरं तदा ।
यत्पक्ष्मचालनेनैव ब्रह्मादेः पतनं भवेत् ॥७२॥
तद्ब्रह्मत्वं महेन्द्रत्वममरत्वं न मे प्रियम् ।
सिद्धयश्च महैश्वर्यं योगो मृत्युञ्जयस्तथा ॥७३॥
न मेऽस्त्यतिप्रियं देव ! ज्ञानं च भक्तिमन्तरा ।
सालोक्यसार्ष्टिसामीप्यसायुज्यैकत्वमित्यपि ॥७४॥
वैष्णवा नहि वाञ्छन्ति विना तत्सेवनं क्वचित् ।
वाञ्छन्ति दास्यभक्तिं च शाश्वतीं स्वापजाग्रतोः ॥७५॥
तस्मात् तद्दास्यभक्तिं च भक्तपुत्रं वृणोम्यहम् ।
अन्यत्सर्वं परित्यज्य तुष्टात् त्वत्तो वरप्रदात् ॥७६॥
न वा दास्यसि चेच्छंभो दुष्कृतं मेऽस्ति निश्चितम् ।
शिरश्छित्वा सन्निधौ ते प्रदास्यामि हुताशने ॥७७॥
श्रुत्वा कृपानिधिर्भक्तदयालुः प्राह शंकरः ।
लभस्व श्रीहरेर्दास्यभक्तिं पुत्रं सुवैष्णवम् ॥७८॥
गान्धर्वविद्याकुशलं चिरायुषं जितेन्द्रियम् ।
ज्ञानिनं गुरुभक्तं च शश्वत्सुस्थिरयौवनम् ॥७९॥
वरं दत्वा ययौ शंभुर्गन्धर्वः स्वालयं ययौ ।
कालेन तस्य भार्यायां लेभे जन्म च नारदः ॥८०॥
वशिष्ठस्तन्नाम चक्रे गन्धमादनपर्वते ।
उपबर्हणनामाऽसौ गन्धर्वः ख्यातिमाप्तवान् ॥८१॥
उपार्थश्चाधिको बोध्यः पूज्यश्च बर्हणार्थकः ।
अधिकपूज्य इत्यर्थे उपबर्हण नाम तत् ॥८२॥

चकार सः सुतजन्ममहोत्सवं मुदान्वितः ।
ददौ रत्नानि धान्यानि द्रव्याणि हीरकाणि च ॥८३॥
धनानि क्षेत्रवस्त्राणि पशून् दानानि भूरिशः ।
उपबर्हणगन्धर्वो वशिष्ठान्मन्त्रमुत्तमम् ॥८४॥
प्राप्य कृष्णाऽऽराधनायाश्चकार दुष्करं तपः ।
गण्डक्याः सरितस्तीरे वृक्षजालसमावृते ॥८५॥
तपन्तं प्रोज्ज्वलं प्राप्तयौवनं सुमनोहरम् ।
दृष्ट्वा कामात् तदा मूर्छामवापुः प्रमदा मुहुः ॥८६॥
स्नानार्थं च जलाप्त्यर्थं या यास्तत्र समागताः ।
गन्धर्वपत्न्यस्ताः सर्वा मुमुहुः कामभावतः ॥८७॥
ताश्च तीव्रं तपः कृत्वा प्राणान् सन्त्यज्य योगतः ।
पञ्चाशत् ता बभूवुश्च कन्याश्चित्ररथस्य वै ॥८८॥
उपबर्हणगन्धर्वं ताश्च तं वव्रिरे पतिम् ।
कामुक्यः कन्यका माला ददुस्तस्मै तपस्विने ॥८९॥
पत्न्यस्तस्य बभूवुश्च ताभिः सह ययौ गृहम् ।
दिव्यं द्विलक्षवर्षं च ताभिः रेमे स कामुकः ॥९०॥
अथ कालान्तरे सत्यलोके देवसमाजके ।
सभायां ब्रह्मणस्तत्र जगाम गायनं जगौ ॥९१॥
तत्र रम्भाऽप्सरोनृत्यक्रमे तु समुपस्थिते ।
तस्या ऊरू स्तने रूपं दृष्ट्वा मूर्छामवाप सः ॥९२॥
कामवेगेन सत्त्वप्रस्खलनं संबभूव ह ।
त्यक्त्वा संगीतमेवाऽयं निषसाद सभातले ॥९३॥
उच्चैः प्रजहसुर्देवा ब्रह्म क्रोधाच्छशाप तम् ।
उपबर्हण ! जानासि पञ्चाशत्प्रमदापतिः ॥९४॥
भूत्वापि मोहमापन्नो रंभां दृष्ट्वा ह्यधीरवत् ।
तस्माद्विहाय गान्धर्वीं तनुं शूद्रो भव द्रुतम् ॥९५॥
तत्र प्राप्य हरेर्भक्तिं सात्त्वतानां समागमम् ।
पुनः काले समापन्ने मत्पुत्रस्त्वं भविष्यसि ॥९६॥
विना विपत्तिमहिमा सुखशान्त्योर्भवेन्नहि ।
अतः क्रमात्सुखं दुःखं सर्वेषां भाव्यमेव यत् ॥९७॥
इत्युक्त्वा विररामाऽसौ ब्रह्मा लोकपितामहः ।
उपबर्हणगन्धर्वो जगाम स्वगृहं प्रति ॥९८॥
सर्वाः पत्नीः समाहूय वृत्तान्तमभिधाय च ।
आसने योगमास्थाय जहौ तां तनुमादरात् ॥९९॥
मूलाधारं स्वाधिष्ठानं मणिपूरमनाहतम् ।
विशुद्धमाज्ञाचक्रं च भित्त्वा षट्चक्रमेव सः ॥१००॥
इडां सुषुम्णां मेधां च पिंगलां प्राणहारिणीम् ।
सर्वज्ञानप्रदां चापि मनःसंयमिनीं तथा ॥१०१॥

विशुद्धां च निरुद्धां च वायुसंचारिणीं तथा।
तेजःशुष्करीं चैव बलपुष्टिकरीं तथा ॥१०२॥
बुद्धिसंचारिणीं चैव ज्ञानजृम्भणकारिणीम्।
एताः षोडशधा नाडीर्भित्वा हंसं मनोयुतम् ॥१०३॥
ब्रह्मरन्ध्रं समानीयाऽऽत्मानं युयोज केशवे।
देहं तत्याज योगीन्द्रः सम्प्राप ब्रह्म शाश्वतम् ॥१०४॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने ब्रह्मणा सावित्र्यां मानसपुत्रा उत्पादिताः, नारदोत्पत्तिः, सृष्ट्यर्थं नियोगे नारदस्य तन्निषेधः, ब्रह्मणः शापादुपबर्हणाख्यगन्धर्वभवनम्, पुनः ब्रह्मसभायां गायनकाले शापात् तनुत्यागश्चेत्यादिनिरूपणनामा द्विशततमोऽध्यायः ॥२००॥

**श्रीनारायण उवाच—**

उपबर्हणगन्धर्वो योगमास्थाय मृत्यवे।
यदाऽऽसनं प्रसंकल्प्य संस्थितोऽभूत्तदा हि सः ॥ १ ॥
वीणां त्रितन्त्रीं दुष्प्राप्यां वामस्कन्धे निधाय च।
शुद्धस्फटिकमालां च सन्धृत्वा दक्षिणे करे ॥ २ ॥
संजल्पन्नक्षरं ब्रह्म कृष्ण इत्यक्षरद्वयम्।
प्राच्यां कृत्वा शिरःस्थानं पश्चिमे चरणद्वयम् ॥ ३ ॥
शयित्वा दर्भशयने श्रीकृष्णं मनसा स्मरन्।
योगेन ब्रह्म सम्प्राप पत्न्याद्या रुरुदुर्भृशम् ॥ ४ ॥
पञ्चाशद्योषितां मुख्या राज्ञी मालावती तदा।
उच्चैः रुरोद सा तीव्रं कान्तं कृत्वा स्ववक्षसि ॥ ५ ॥
उवाच भगवन्मूर्तेः संसर्गोऽपि विमुक्तिकृत्।
नारीणां देवसंसर्गो बहुभाग्याद्धि जायते ॥ ६ ॥
साधुना सहसंसर्गो वैकुण्ठादपि दुर्लभः।
साधुना सह विच्छेदो मरणादपि दुःसहः ॥ ७ ॥
ततोऽपि बन्धुविच्छेदो महाशोकप्रदो मतः।
ततोऽपत्यवियोगोऽपि मरणादतिरिच्यते ॥ ८ ॥
तस्मादपि च सर्वस्मात् पतिविच्छेदजं महत्।
कष्टं तु संकटं घोरं नास्ति कष्टं ततः परम् ॥ ९ ॥
शयने भोजने स्नाने याने स्वापे च जाग्रति।
स्वामिविच्छेदजं दुःखं नूतनं वै दिने दिने ॥१०॥
स्वामिसंयोगमात्रेण सर्वदुःखानि विस्मरेत्।
नान्यत् तादृक् प्रपश्यामि यच्च विस्मारयेत्पतिम् ॥११॥
साध्वीनां कुलजातानां न बन्धुः स्वामिना विना।
एतासां मत्स्वसॄणां च ममापि स्वामिना विना ॥१२॥
का गतिर्वै दुःखदात्री भविष्यति पतिं विना।
हे दिगीशाश्च दिक्पाला हे धर्म हे प्रजापते ॥१३॥
हे शंभो हे रमाकान्त पतिदानं तु देहि मे।
इत्युक्त्वा प्राप मूर्छां च कन्या चित्ररथस्य सा ॥१४॥
पुनश्च चेतनां प्राप्य विललाप भृशं मुहुः।
अन्याश्चातिविलपन्त्यः सम्बोध्य रुरुदुर्हरिम् ॥१५॥
हे कृष्ण जगतां नाथ जगद्रक्षक ईश्वर।
अबलां निर्बलां कृत्वा कथं मारयसि वृथा ॥१६॥
भर्ता भार्या वपुस्तेऽस्ति न कथं रक्ष्यते त्वया।
कर्मणा च पतिर्लब्धः कर्मणा च वियोजितः ॥१७॥
संयोगे परमानन्दो वियोगे संकटं महत्।
पतिः पुत्रस्तथा पत्न्यो बान्धवाः कर्मणा सदा ॥१८॥
स्वयं त्यक्ताः सुखायैव दुःखाय त्याजिताः परैः।
अतः सन्तः स्वयं त्यक्त्वा भवन्ति सुखिनः सदा ॥१९॥
वयं नार्यो नवै सत्यो ज्ञानवत्योऽपि नैव च।
तस्मात् कृष्ण वरं कान्तं पुनर्देहि प्रजीवय ॥२०॥
नेदृशः सुन्दर कान्तः काभिश्चिल्लब्ध आत्मवित्।
रूपेण च गुणेनैव तेजसा विक्रमेण च ॥२१॥
ज्ञानेन शान्त्या सन्तुष्ट्या हरितुल्यः प्रभुर्हि नः।
हरिभक्तो हरिसमो गांभीर्ये सागरोपमः ॥२२॥
दीप्तौ सूर्यसमः शुद्धौ वह्नितुल्यश्च पावनः।
दर्शने चन्द्रतुल्यश्च कामे कन्दर्पसदृशः ॥२३॥
बुद्धौ बृहस्पतितुल्यः काव्ये कविसमस्तथा।
वाण्यां सरस्वतीतुल्यः प्रतिभायां भृगुप्रथः ॥२४॥
धने कुबेरसदृशो दाने मनुरिवाऽपरः।
धर्मे धर्मसमो धर्मी सत्ये सत्यव्रतोऽपरः ॥२५॥
तपसि स्कन्दतुल्यः सदाचारे ब्राह्मणोपमः।
ऐश्वर्ये शक्रतुल्यश्च क्षमायां भूमिसदृशः ॥२६॥
एवंभूते मृते कान्ते प्राणा यान्ति न नः कथम्।
अरे सुरा यज्ञभाजो घृतं भोक्तुं क्षमाः कथम् ॥२७॥
नारायण जगत्कान्त शीघ्रं जीवय नः पतिम्।
प्रजापते महादेव धर्मदेव यमेश्वर ॥२८॥
जीवयत स्वामिनं नो निर्दयाः स्यात वै कथम्।
जीवयताऽन्यथा युष्मान् प्रशप्स्यामश्च मा चिरम् ॥२९॥
तदा ब्रह्मादयः सर्वे ग्लानिं जग्मुर्भयात् खलु।
इमा देवान्प्रशप्स्यन्ति नाशं यास्यन्ति देवताः ॥३०॥

अहो पतिव्रतातेजः सर्वेषां तेजसां परम् ।
किमत्र प्रतिकर्तव्यं विचारयन्ति देवताः ॥३१॥
एतस्मिन्नन्तरेऽकस्माद्वाग्बभूवाऽशरीरिणी ।
यूयं गच्छत शान्त्यर्थं यत्र मालावती सती ॥३२॥
योगासनं कुर्वती च शवं कृत्वा स्ववक्षसि ।
देवा जग्मुश्च कौशिकीतीरं यत्र पतिव्रता ॥३३॥
मालावती सुरान् दृष्ट्वा प्रणनाम मुहुर्मुहुः ।
रुरोद कान्तं संस्थाप्य देवानां शृण्वतां बहु ॥३४॥
एतस्मिन्नन्तरे तत्र विप्रबालकवेषधृक् ।
आजगाम स्वयं विष्णुर्बिभ्रत्तिलकमुज्ज्वलम् ॥३५॥
प्राह मालावतीं देवाः कथमत्र समागताः ।
ब्रह्मा शंभुश्च धर्मश्च रविश्चन्द्रो हुताशनः ॥३६॥
कालो यमश्च देवेशाः केयं शववती सती ।
श्रुत्वा मालावती नत्वा तमुवाच विचक्षणम् ॥३७॥
उपबर्हणभार्याऽहं नाम्ना मालावती सती ।
इमाश्चान्याः स्वसारो मे शवोऽयं स्वामिनोऽस्ति नः ॥३८॥
दिव्यं द्विलक्षं वर्षाणां क्रीडिताः स्वामिना वयम् ।
प्रिये स्नेहो हि साध्वीनां चाऽप्रमेयो हि योषिताम् ॥३९॥
अकस्माद् ब्रह्मणः शापात् प्राणाँस्तत्याज नः पतिः ।
देवानुद्दीश्य विलपे यथा जीवेत्पतिर्हि नः ॥४०॥
सुखं दुःखं भयं शोकः सन्तापो भद्रमुत्सवः ।
ऐश्वर्यं परमानन्दो जन्म मृत्युश्च मोक्षणम् ॥४१॥
एतेषां जनका देवाः कर्मफलप्रदायकाः ।
मूलच्छेदकरास्ते च मूलांकुरप्रदाश्च ते ॥४२॥
नहि देवात् परो बन्धुर्न देवाद्रक्षकोऽपरः ।
दयावान्दुःखहर्ता च न देवाद्विद्यते परः ॥४३॥
सर्वान्देवानहं याचे पतिदानं ममेप्सितम् ।
यदि दास्यन्ति कान्तं मे भद्रं सर्वविधं भवेत् ॥४४॥
अन्यथा ताँस्तु शप्स्यामि दारुणं दुर्निवारकम् ।
श्रुत्वैतद्विष्णुरव्यग्रः प्राह मालावतीं तदा ॥४५॥
कर्मणां फलदातारो देवाः सत्यं हि मालिके ।
न सद्यः सुचिरेणैव धान्यं कृषकवन्नृणाम् ॥४६॥
गृही च कृषकद्वारा क्षेत्रे धान्यं वपेत् सति ।
तदंकुरो भवेत्काले काले वृक्षः फलत्यपि ॥४७॥
काले सुपक्वं भवति काले प्राप्नोति तद्गृही ।
एवं सर्वं समुन्नेयं चिरेण कर्मणः फलम् ॥४८॥
न बलं न च सौन्दर्यं नैश्वर्यं न धनं सुतः ।
नैव स्त्री न च सत्कान्तः किं भवेत् तपसा विना ॥४९॥

प्रकृतेः सेवनात् कान्तां सद्गुणां लभते जनः ।
श्रियं च निश्चलां पुत्रं पौत्रं भूमिंधनं प्रभाम् ॥५०॥
शिवस्य सेवनाद्विद्यां ज्ञानं पुत्रं परां श्रियम् ।
बलं धनं सतीं नारीं सन्तं च लभते पतिम् ॥५१॥
ब्रह्मणः . सेवानाद्विद्यैश्वर्यश्र्यानन्दसत्प्रजाः ।
सूर्यस्य सेवनाद् विद्याऽऽरोग्यधनसुतादिकान् ॥५२॥
गणेशसेवनाद्विघ्ननाशं पुत्रधनादिकम् ।
लक्ष्मीकान्तस्य दास्यात्तु मुक्तिं भुक्तिं सदोन्नतिम् ॥५३॥
तपो धर्मं यशः कीर्तिं सुखं च लभते जनः ।
इह लोके सुखं भुक्त्वा यात्यन्ते श्रीहरेः पदम् ॥५४॥
श्रीहरिं भजते यो वै चाऽक्षरात्परतः परम् ।
जीवन्मुक्तः स सत्यं हि न वरं स च वाञ्छति ॥५५॥
स सर्वं मनुते तुच्छं सालोक्यादिचतुष्टयम् ।
ब्रह्मत्वममरत्वं वा मोक्षं यत्तुच्छवत् सति ॥५६॥
ऐश्वर्यं लोष्टतुल्यं च नश्वरं मनुतेऽपि च ।
इन्द्रत्वं च मनुत्वं च चिरंजीवित्वमित्यपि ॥५७॥
जलबुद्बुदवद् बुद्ध्या चाति तुच्छं विचिन्तति ।
स्वप्ने जागरणे वाऽपि शश्वत् सेवां हि वाञ्छति ॥५८॥
दास्यं विना न याचेत श्रीहरेश्च परं पदम् ।
तत्पादाब्जे दृढां भक्तिं लब्ध्वा जातोऽस्ति पूर्णकः ॥५९॥
स स्वस्य कुलकोटिं च शतं मातामहस्य च ।
श्वशुरस्य शतं चाथ पुत्रादीनां परं शतम् ॥६०॥
दासं दासीं प्रसूं भार्यां चोद्धरेद् याति धाम तत् ।
गुरुवक्त्राद्विष्णुमन्त्रो यस्य कर्णे विशत्यपि ॥६१॥
यमस्तल्लिखनं दूरं करोति तत्क्षणं भिया ।
मधुपर्कादिकं ब्रह्मा पुरैव तन्नियोजयेत् ॥६२॥
आब्रह्मलोकवासाश्च मार्गे तिष्ठन्ति पूजकाः ।
अहो विलंघ्य नो लोकं मार्गेणानेन यास्यति ॥६३॥
पुरातनं कृतं कर्म यद्यत् तस्य शुभाशुभम् ।
कृष्णश्छिनत्ति चक्रेण तीक्ष्णधारेण सन्ततम् ॥६४॥
निःशंको याति गोलोकं विहाय मानवीं तनुम् ।
गत्वा ब्राह्मीं तनुं धृत्वा श्रीहरिं सेवते सदा ॥६५॥
यावत् कृष्णो हि गोलोके तावद्भक्तो वसेत् सदा ।
निमेषं मनुते दासो नश्वरं ब्रह्मणो वयः ॥६६॥
केन रोगेण ते साध्वि! पतिर्मृत्युं गतो वद ।
मृत्युतुल्यं मृतं यद्वा सप्ताहाभ्यन्तरे सति ॥६७॥
महौषधैर्मृतं तं च जीवयाम्येव जीवतः ।
राजमृत्युं यमं कालं व्याधिमानीय चात्र ते ॥६८॥

दर्शयामि निबध्यैव न यतः संचरेत् पुनः ।
व्याधिबीजं च जानामि बन्धमन्त्रांश्च तत्त्वतः ॥६९॥
योगेन देहं त्यक्त्वा यो मृतस्तं जीवयाम्यहम् ।
यश्च विषेण खेदेन मृतस्तं जीवयाम्यहम् ॥७०॥
श्रुत्वा मालावती हृष्टा स्निग्धचित्ता ह्युवाच तम् ।
यद्येवं श्रीहरे शीघ्रं जीवयाऽत्र पतिं मम ॥७१॥
स्वामी कर्ता च हर्ता च शास्ता पोष्टा च रक्षिता ।
अभीष्टदेवः पूज्यश्च न गुरुः स्वामिनः परः ॥७२॥
कन्या सत्कुलसंजाता कान्तरक्षणरक्षिता ।
उपबर्हणभार्याऽहं पुत्री चित्ररथस्य च ॥७३॥
वधूर्गन्धर्वराजस्य कान्तभक्ता सदा हरे ।
त्वं तु सर्वं कालयितुं शक्तो भवसि माधव ॥७४॥
कालं यमं च मृत्युं च मदभ्याशं समानय ।
श्रुत्वा मालावतीवाक्यं भगवान् करुणाकरः ॥७५॥
समाजे तान्समाहूय प्रत्यक्षं समदर्शयत् ।
मालावत्या मृत्युकन्या दृष्टा तत्र समागता ॥७६॥
कृष्णवर्णा घोररूपा रक्ताम्बरातिभीतिदा ।
षड्भुजा कालनाम्नश्च पत्युर्वामे स्थिता तथा ॥७७॥
सस्मिता क्रूरभाला च चतुःषष्टिसुतान्विता ।
दृष्टश्च कालो मालत्या षड्वक्त्रो विकटः सरुट् ॥७८॥
चतुर्विंशतिनेत्रश्च षोडशभुज उग्रकः ।
षट्पादः कृष्णवर्णश्च रक्तवस्त्रो भयानकः ॥७९॥
मालावत्या तथा दृष्टा व्याधिसंघाश्च भीतिदाः ।
बाला वृद्धाश्चातिवृद्धा युवानश्चातिविकृताः ॥८०॥
दृष्टस्तत्र यमः कृष्णवर्णः क्रूरस्वरूपकः ।
दृष्ट्वा मालावती पूर्वं पप्रच्छ धर्मशासकम् ॥८१॥
धर्मराज ह्यकाले त्वं कान्तं हरसि मे कथम् ।
यमः प्राहाऽप्राप्तकालो न कश्चिन् म्रियते भुवि ॥८२॥
ईश्वराज्ञां विना साध्वि नाऽनृतं चालयाम्यहम् ।
अहं कालो मृत्युकन्या व्याधयश्चेशकिंकराः ॥८३॥
निषेकेण यथाभाग्यं कालयामश्च देहिनम् ।
मृत्युकन्याऽपि संप्राह मालिके शृणु सादरम् ॥८४॥
पुरा विश्वसृजा सृष्टाऽप्यहमेवात्र कर्मणि ।
न च क्षमा परित्यक्तुं प्राप्तमृत्युं तु देहिनम् ॥८५॥
सती च भस्मसात्कर्तुं क्षमा यदि भवेत् भवे ।
तदाऽहं भस्मिता नैव मारयिष्यामि देहिनः ॥८६॥
कालेन प्रेरिताऽहं च मत्पुत्रा व्याधयस्तथा ।
कुर्मो कार्यं यथाऽऽदिष्टं न दोषो नोऽत्र कश्चन ॥८७॥
मालावती तदा कालं प्राह नारायणांशजम् ।
कथं हरसि मत्कान्तं जीवितायां मयि प्रभो ॥८८॥
कालः प्राह शृणु मालावति सर्वं हरिकृतम् ।
को वाऽहं को यमः का च मृत्युकन्या तथाऽऽधयः ॥८९॥
वयं भ्रमामः सततं कृष्णाऽऽज्ञापरिपालकाः ।
यस्य सृज्या वयं सर्वे माया ब्रह्मादयस्तथा ॥९०॥
वैराजा ऋषयो देवा मानवाः सर्वजन्तवः ।
यद्भयाद्वाति वातश्च सूर्यस्तपति यद्भयात् ॥९१॥
ब्रह्मविष्णुमहेशाश्च सृष्टिपालकहारकाः ।
यद्भयाच्च कर्मसाक्षी यमो धर्मश्च वर्तते ॥९२॥
राशयश्च ग्रहाश्चैव भ्रमन्ति यद्भयात् क्रमात् ।
दिगीशाश्च दिशांपाला यस्याज्ञां संवहन्त्यपि ॥९३॥
ऋतवो यद्भयाद्वृक्षादिषु चरन्ति पुष्पदाः ।
जलदाश्च प्रवर्षन्ति पृथ्वी च वसुदा तथा ॥९४॥
सर्वाधारा क्षमायुक्ता सर्वान् रक्षति मातृवत् ।
माया सर्वप्रसूर्यस्य भयादापूरिका मता ॥९५॥
यस्यान्तं न विदुः सर्वे यः सर्वज्ञोऽस्ति हृद्गतः ।
षोडशांऽशोऽस्मि तस्याऽहं कालः स कालकालकृत् ॥९६॥
ततस्तं मृत्युमृत्युं चाऽभीष्टदं चिन्तयाऽच्युतम् ।
सोऽयं कृपानिधिः कृष्णो भर्तारं ते प्रदास्यति ॥९७॥
वयं यत्प्रेरिताः सर्वे स दाता सर्वसम्पदाम् ।
इत्युक्त्वा विरामाऽसौ कालः प्राह हरिस्तु ताम् ॥९८॥
दृष्टः कालो यमो दृष्टो मृत्युकन्या तथाऽऽधयः ।
शीघ्रं सति त्वया दृष्टाः पृच्छ किं ते मनोगतम् ॥९९॥
मालावत्याह दुर्वारो यथा व्याधिर्न संचरेत् ।
तदुपायं तु सकलं भवान् वक्तुमिहाऽर्हति ॥१००॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने उपबर्हणगन्धर्वात्मकनारदमृत्युः पत्नीनां विलापः, ब्रह्मादिभ्यः पतिजीवनाऽभ्यर्थनाचेति निरूणनामैकाऽधिकद्विशततमोऽध्यायः ॥ २०१ ॥

**श्रीनारायण उवाच—**

मालावत्या वचः श्रुत्वा भगवान् भूतभावनः ।
प्राह मालावतीं माले शृणु वच्मि यथातथम् ॥ १ ॥
सर्वव्याधिप्रशमनः श्रीकृष्णः पुरुषोत्तमः ।
स ईशश्चतुरो वेदान् ससृजे मंगलायनान् ॥ २ ॥

ऋग्यजुःसामाथर्वाख्यान् दृष्ट्वा वेदान् प्रजापतिः ।
विचिन्त्य तेषामर्थं चैवाऽऽयुर्वेदं चकार सः ॥ ३ ॥
कृत्वा तं पंचमं वेदं भास्कराय ददौ प्रभुः ।
चकार भास्करस्तर्हि स्वयं भास्करसंहिताम् ॥ ४ ॥
भास्करस्तु स्वशिष्येभ्यः प्रददौ तां ततश्च ते ।
चक्रुश्च संहिताश्चान्या व्यधिचिकित्सकक्रियाः ॥ ५ ॥
चिकित्सातत्त्वविज्ञानं धन्वन्तरिश्चकार ह ।
धन्वन्तरिर्दिवोदासः काशीराजोऽश्विनीसुतौ ॥ ६ ॥
नकुलः सहदेवोऽर्किश्च्यवनो जनको बुधः ।
जाबालो जाजलिः पैलः करथोऽगस्त्य इत्यपि ॥ ७ ॥
एते चिकित्सकाः सर्वे षोडश व्याधिनाशकाः ।
स्वस्वदेहचिकित्सायां स्व एव तु गुरुर्भवेत् ॥ ८ ॥
तदा रोगा न चाऽऽयान्ति नश्यन्ति च समागताः ।
शृणु स्वास्थ्यं यथारक्ष्यं सावधानतया सति ॥ ९ ॥
चक्षुर्जलं च व्यायामः पादाधस्तैलमर्दनम् ।
कर्णयोर्मूर्ध्नि तैलं च जराव्याधिविनाशनम् ॥१०॥
वसन्ते भ्रमणं वह्निसेवां स्वल्पां करोति यः ।
बालां च सेवते काले जरा तं नोपगच्छति ॥११॥
प्रातः शीतोदकस्नानं सेवते चन्दनद्रवम् ।
निदाघे पवनं यश्च नोपयाति जरा तु तम् ॥१२॥
प्रावृष्युष्णोदकस्नानं घनतोयं न सेवते ।
आहारं समये पथ्यं जरा तं नोपगच्छति ॥१३॥
अतिशैत्यं न सहते हेमन्ते खातजाऽऽप्लवः ।
भुंक्ते नवाऽन्नमुष्णं च जरा तं नोपगच्छति ॥१४॥
सद्योमांसं नवान्नं च बालास्त्रीं क्षीरभोजनम् ।
घृतं च सेवते यो हि जरा तं नोपगच्छति ॥१५॥
भुंक्ते सदन्नं क्षुत्काले तृषायां पीयते जलम् ।
नित्यं भुंक्ते च ताम्बूलं नवनीतं तथा गुडम् ॥१६॥
दधि हैयंगवीनं च तं जरा नोपगच्छति ।
नित्यं व्यायामकर्तॄणां जरा दूरं पलायते ॥१७॥
वृद्धस्त्रियं शुष्कमांसं बालार्कं तरुणं दधि ।
संसेवन्तं जरा याति प्रहृष्टा भ्रातृभिः सह ॥१८॥
मृत्युकन्यासुताश्चतुःषष्टिः, रुजः सुता जरा ।
जरा च भ्रातृभिः सार्धं शश्वद् भ्रमति भूतले ॥१९॥
रात्रौ ये दधि सेवन्ते वृद्धां नारीं रजस्वलाम् ।
बहुव्यवायकर्तारस्तान् जरा ग्रसते द्रुतम् ॥२०॥
क्षुधि जाज्वल्यमानायामाहारो लभ्यते नहि ।
प्राणिनां जायते पित्तं चक्रे च मणिपूरके ॥२१॥
तालबिल्वफलं भुक्त्वा जलपानं च तत्क्षणम् ।
तदेव तु भवेत् पित्तं सद्यः प्राणहरं परम् ॥२२॥
तप्तोदकं च शिरसि भाद्रे तिक्तं भुनक्ति यः ।
अपथ्ये च पुनर्भुंक्ते पित्तं तस्य प्रजायते ॥२३॥
सशर्करं तु धान्याकं पिष्टं शीतोदकान्वितम् ।
चणकं सर्वगव्यं च दधितक्रविवर्जितम् ॥२४॥
बिल्वतालफलं पक्वं सर्वभैक्षवमित्यपि ।
आर्द्रकं मुद्गयूषं च तिलपिष्टं सशर्करम् ॥२५॥
पित्तक्षयकरं सद्यो बलपुष्टिप्रदं परम् ।
भोजनानन्तरं स्नानं जलपानं विनातृषाम् ॥२६॥
पर्युषितान्नं तक्रं च पक्वं रंभाफलं दधि ।
मेघाम्बुशर्करातोयं आविलवारिसेचनम् ॥२७॥
नारिकेलोदकं मूलकं तथा कर्कटीफलम् ।
खातस्नानं च वर्षासु सर्वं तच्छ्लेषकारकम् ॥२८॥
ब्रह्मरन्ध्रे च तज्जन्म महद्वीर्यविनाशनम् ।
मरीचं पिप्पली शुष्कमार्द्रकं जीवकं मधु ॥२९॥
वह्निसेवेति वस्तूनि सद्यः श्लेष्महराणि हि ।
बलपुष्टिकराण्येव रोगनाशकराणि च ॥३०॥
त्वत्कान्तः केन दोषेण मृतः कथय शोभने ।
श्रुत्वा मालावती प्राह मृतो योगेन मे पतिः ॥३१॥
अधुना प्राणकान्तं मे देहि देहि जनार्दन ।
नत्वा वः स्वामिना सार्धं यास्यामः स्वगृहं स्त्रियः ॥३२॥
श्रुत्वा जनार्दनः शीघ्रं ययौ वै देवसंसदम् ।
प्राहोपबर्हणभार्या कन्या चित्ररथस्य च ॥३३॥
ययाचे जीवदानं स्वस्वामिनः स्वसृभिः सह ।
शप्तुकामा सुरान्सर्वान् शान्त्यर्थं बोधिता मया ॥३४॥
अनुष्ठानमधुना किं त्वस्य कार्यस्य निश्चितम् ।
ब्रह्मा प्राह तदा विष्णुं नारदश्चोपबर्हणः ॥३५॥
प्राणान् योगेन तत्याज पुनः शापान्ममैव तु ।
कालं लक्षयुगं व्याप्य स्थितिस्त्वस्य महीतले ॥३६॥
शूद्रयोनिं ततः प्राप्य भविता मत्सुतः पुनः ।
अस्य कालाऽवशेषस्य किंचिदस्ति परेश्वर ॥३७॥
तत्तु वर्षसहस्रं चैवाऽऽयुरस्याऽस्ति साम्प्रतम् ।
दास्यामि जीवदानं च स्वयं विष्णोः प्रसादतः ॥३८॥
यथैतान्न भवेच्छापस्तत्करिष्यामि निश्चितम् ।
विषिश्च व्याप्तिवचनो नुश्च सर्वत्रवाचकः ॥३९॥
सर्वव्यापी स वै विष्णुर्जीवदानं करोतु वै ।
इत्युक्त्वा च प्रययुस्ते यत्र मालावती वधूः ॥४०॥

ब्रह्मा कमण्डलुवारि ददौ गात्रे शवस्य च ।
सञ्चारं मनसस्तस्य चकार सुन्दरं वपुः ॥४१॥
शिवो ज्ञानं ददौ तस्मै धर्मो धर्मं ददौ ततः ।
जाठरं च ददौ वह्निः प्राणं ददौ तदाऽनिलः ॥४२॥
सूर्यो दृष्टिं ददौ तस्मै वाणी वाक्यं ददौ तदा ।
लक्ष्मीर्ददौ च सौन्दर्यं क्रियां ददौ शचीपतिः ॥४३॥
शवस्तथापि नोत्तस्थौ जीवं विष्णुर्ददौ तदा ।
विशिष्टबोधनं प्राप नोत्तस्थौ साक्षिणं विना ॥४४॥
तदा मालावती शोकं प्राप्ता ननाम माधवम् ।
त्वां विना मे पतिर्नास्ति पतिरूपस्त्वमेव मे ॥४५॥
प्राणरूपः प्राणिनां त्वं समुज्जीवय मे पतिम् ।
हरिः स्वशक्तिभिस्तत्र त्वधिष्ठानं चकार वै ॥४६॥
तावदुत्थाय गन्धर्वो वीणां धृत्वा च वाससी ।
देवसंघं प्रणनाम विष्णुं च पुरतः स्थितम् ॥४७॥
नेदुर्दुन्दुभयस्तत्र पुष्पवृष्टिरभूत्तदा ।
सर्वे देवाश्च दम्पत्योः प्रददुः परमाशिषः ॥४८॥
उपबर्हणनामाऽसौ ननर्त च जगौ तदा ।
जीवितं पुरतः प्राप देवानां वै प्रसादतः ॥४९॥
जगाम सार्धं पत्नीभिर्गन्धर्वनगरं पुनः ।
रत्नकोटिं तदा राज्यो धनानि नियुतं गवाम् ॥५०॥
प्रददुर्ब्राह्मणेभ्यो भोजयामासुश्च तान्बहून् ।
महोत्सवं च विविधं कारयामासुरादरात् ॥५१॥
चक्रुश्च विविधान्वेषान् स्वासां च स्वामिनः कृते ।
भर्तुश्चक्रुश्च शुश्रूषां पूजां च समयोचिताम् ॥५२॥
तेन सार्धं सुरुचिरा रेमिरे सुचिरं च ताः ।
येन मन्त्रेण ताः सर्वा गन्धर्वं लेभिरे पतिम् ॥५३॥
वशिष्ठेन प्रदत्तेन मन्त्रं तं षोडशाऽक्षरम् ।
स्तोत्रं च कवचं तद्वै शृणु त्वं कमलेश्वरि ॥५४॥
ओं नमो भगवते रासमण्डलेशाय स्वाहा ।
इमं मन्त्रं कल्पवृक्षं जानाहि शोडशाऽक्षरम् ॥५५॥
गोलोके कृष्ण ईशाय दत्तवान् च ततः परम् ।
ब्रह्मणे तु पुरा कृष्णः पुष्करे दत्तवाँस्तथा ॥५६॥
कुमाराय दत्तवाँश्च ब्रह्मा लोकपितामहः ।
ब्रह्माण्डपावनस्याऽस्य कवचस्य हरिः स्वयम् ॥५७॥
ऋषिश्छन्दश्च गायत्री देवोऽहं भगवान्हरिः ।
धमार्थकाममोक्षेषु विनियोगः सदा मतः ॥५८॥
त्रिलक्षवारजपनात् सर्वसिद्धिप्रदो भवेत् ।
प्रणवो मे शिरः पातु नमो रामेश्वराय च ॥५९॥
भालं पायान्नेत्रयुग्मं नमो राधेश्वराय च ।
कृष्णः पायाच्छ्रोत्रयुग्मं श्रीहरिर्घ्राणमित्यपि ॥६०॥
जिह्विकां वह्निजाया तु कृष्णाय सर्वतो नमः ।
श्रीकृष्णाय स्वाहेति च कण्ठं पातु षडक्षरः ॥६१॥
ह्रीं कृष्णाय नमो वक्त्रं क्लीं पूर्वश्च भुजद्वयम् ।
नमो गोपांगनेशाय स्कन्धावष्टाक्षरोऽवतु ॥६२॥
दन्तपंक्तिमोष्ठयुग्मं नमो गोपीश्वराय च ।
ओं नमो भगवते रासमण्डलेशाय स्वाहा ॥६३॥
हरिर्वक्षःस्थलं पातु मन्त्रात्मा षोडशाऽक्षरः ।
श्रीकृष्णाय स्वाहेति ओं कर्णयुग्मं सदाऽवतु ॥६४॥
ओं विष्णवे स्वाहेति च कपोलं सर्वतोऽवतु ।
ओं हरये नम इति पृष्ठं पादौ सदाऽवतु ॥६५॥
ओं गोवर्धनधारिणे स्वाहा सर्वशरीरकम् ।
प्राच्यां मां पातु श्रीकृष्ण आग्नेय्यां पातु माधवः ॥६६॥
दक्षिणे पातु गोपीशो नैर्ऋत्यां नन्दनन्दनः ।
वारुण्यां पातु गोविन्दो वायव्यां राधिकेश्वरः ॥६७॥
उत्तरे पातु रासेश ऐशान्यामच्युतः स्वयम् ।
सततं सर्वतः पातु हरिर्नारायणः स्वयम् ॥६८॥
गुरुमभ्यर्च्य विधिवद् वस्त्रालंकारचन्दनैः ।
स्नात्वा तं च नमस्कृत्य कवचं धारयेत् सुधीः ॥६९॥
कवचस्य प्रसादेन जीवन्मुक्तो भवेन्नरः ।
यदि स्यात् सिद्धकवचो विष्णुरेव भवेत् प्रिये ॥७०॥
अस्य पाठात् महत्पुण्यं सर्वतीर्थफलं भवेत् ।
अपुत्रो लभते पुत्रम् अभार्यो लभते सतीम् ॥७१॥
विद्यार्थी लभते विद्यां धनार्थी धनमाप्नुयात् ।
भ्रष्टराज्यो लभेद्राज्यमैश्वर्यं सिद्धिकामनः ॥७२॥
रोगार्तो मुच्यते रोगाद् बद्धो मुच्येत बन्धनात् ।
भक्तिं प्राप्य हरेश्चान्ते लभते धाम चाक्षरम् ॥७३॥
इह लोके सुखं भुक्त्वा कृत्वा कीर्तिं सुदुर्लभाम् ।
पार्षदप्रवरो भूत्वा गोलोकं धाम याति च ॥७४॥
एवं गन्धर्वप्रवर उपबर्हणसंज्ञकः ।
रेमे कालावशेषं च ताभिः पत्नीभिरादरात् ॥७५॥
नानाविधान् क्रतुवरान् चकार च सुतैः सह ।
अथ काले ब्रह्मशापात् प्राणान् त्यक्त्वोपबर्हणः ॥७६॥
स जज्ञे वृषलीगर्भे ब्रह्मबीजेन शापतः ।
मालावती वह्निकुण्डे प्राणाँस्तत्याज वै सती ॥७७॥
अन्याश्चापि च वैधव्यं धर्ममाप्ताः स्थिताः सदा ।
मनुवंशप्रजातस्य नृपस्य संजयस्य सा ॥७८॥

पत्न्यां जातिस्मरा जज्ञे पतिर्मे भवितेति सः ।
उपबर्हणगन्धर्वप्रमदाऽहं सदाऽभवम् ॥७९॥
कान्यकुब्जे च देशे वै द्रुमिलो नाम राजकः ।
तस्य कलावती पत्नी वन्ध्या चापि पतिव्रता ॥८०॥
स्वामिदोषेण सा वन्ध्या ऋतौ भर्तुः समाज्ञया ।
उपतस्थे वने घोरे नारदं काश्यपं मुनिम् ॥८१॥
यो वै दक्षस्य शापेन कश्यपस्य सुतोऽभवत् ।
तं च कश्यपपुत्रं वै द्वितीयं नारदं ययौ ॥८२॥
श्रीकृष्णं ध्यायमानं च ज्वलन्तं ब्रह्मतेजसा ।
तस्थौ सुवेषं कृत्वा सा ध्यानान्ते च मुनेः पुरः ॥८३॥
ददर्श नारदश्चाग्रे सुन्दरीं स्थिरयौवनाम् ।
स्वर्णवर्णां स्वर्णभूषां चन्द्रास्यां कंजलोचनाम् ॥८४॥
पुत्रेच्छया च सम्प्राप्तां कामशृंगारशोभिताम् ।
मुनिः पप्रच्छ तां राज्ञीं का त्वं कस्याऽसि मे वद ॥८५॥
कलावती हरिं स्मृत्वा तदा प्रोवाच नारदम् ।
द्रुमिलस्याऽस्मि भार्याऽहं गोपिका भर्तुराज्ञया ॥८६॥
पुत्रार्थिनी सन्निधौ ते चागतास्मि कृपां कुरु ।
वीर्याधानं कुरु योनौ स्त्री नोपेक्ष्या ह्युपस्थिता ॥८७॥
तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा ।
नारदः प्राह धर्मात्मा ब्राह्मणो धर्ममाचरन् ॥८८॥
यः शूद्रपत्नीं गृह्णाति ब्राह्मणो ज्ञानदुर्बलः ।
स जात्या हीनतां गच्छेन्न कर्मार्हो द्विजातिषु ॥८९॥
पितृश्राद्धे च यज्ञे च शिलास्पर्शे सुरार्चने ।
अधिकारविहीनः स्यात् शूद्रां गच्छति वै द्विजः ॥९०॥
तदिष्टदेवो गृह्णाति नैवेद्यं न तज्जलम् ।
स विप्रो शूद्रयोनौ च गृह्णाति जन्म तत्फलम् ॥९१॥
त्वयोक्तं न च दोषाय तेजीयसामृतं च तत् ।
दूराद् ददामि ते बीजं गृहाण शक्तिरस्ति चेत् ॥९२॥
गर्भे धारय सामर्थ्यात् तदा दोषो न विद्यते ।
नाऽहं समागमं कुर्वे भवेत् दोषः समागमे ॥९३॥
इत्युक्ता सा शूद्रपत्नी पातिव्रत्यपरायणा ।
स्मृत्वा स्वकीयभर्तारं ध्यानमग्नाऽभवत्तदा ॥९४॥
स्थूलं देहं विलीयैव सूक्ष्मदेहेन नारदे ।
प्राविशत् सर्वथा योगान्नारदोऽपि क्षणं तदा ॥९५॥
न बुबुधे स्वकं देहं सकामं धातुसंभृतम् ।
तस्याः प्रवेशयोगेन स्थूलदेहाच्च स्वप्नवत् ॥९६॥
सर्जपत्रस्तरे तत्र मुनेर्वीर्यं पपात ह ।
द्रागेव शूद्री जग्राह पीत्वा गर्भे ररक्ष सा ॥९७॥

मुनिं प्रणम्य प्रहृष्टा संगं विनाऽर्थसाधिका ।
मुनिश्चापि संहृष्टोऽभूत् संगदोषं विनाऽर्थकृत् ॥९८॥
गत्वा भर्तुः सन्निधौ सा वृत्तान्तं प्राह सर्वथा ।
द्रुमिलोऽपि प्रसन्नोऽभूत् प्राह कान्तां सुखावहम् ॥९९॥
नारदस्य वैष्णवस्य त्वद्गर्भे वीर्यमेव यत् ।
वैष्णवो भविता बालो नारदांशः स एव सः ॥१००॥
यद्गर्भे वैष्णवो जातो यस्य वीर्येण वा सति ।
तयोर्याति च वैकुण्ठं पुरुषाणां शतं शतम् ॥१०१॥
तौ च विष्णुविमानेन दिव्येन रत्नशोभिना ।
यातारौ वैकुण्ठपुरं जन्ममृत्युजराहरम् ॥१०२॥
इत्युक्त्वा गोपराजः सः स्नात्वा कृत्वा च तर्पणम् ।
सम्पूज्याऽभीष्टदेवं च ब्राह्मणेभ्यो धनं ददौ ॥१०३॥
गजाश्वरथगोहंसदासदासीसहस्रकम् ।
पात्रभूषाम्बररत्नं ब्राह्मणेभ्यो ददौ मुदा ॥१०४॥
पत्नीं पुत्रान्वितगर्भां दृष्ट्वा हरिं हृदि स्मरन् ।
वंशतन्तुं शुभं ज्ञात्वा वैराग्यमगमत् ततः ॥१०५॥
जगाम बदरीक्षेत्रं प्राणान् तत्याज योगतः ।
विमानेन हरेर्दूतैर्वैकुण्ठं स जगाम ह ॥१०६॥
तत्र प्राप हरेर्दास्यं हरिदासो बभूव सः ।
ब्राह्मणैः रक्षिता देवी कलावती समान्तरे ॥१०७॥
तप्तकांचनवर्णाभं सुषुवे तनयं शुभम् ।
कामदेवाऽधिकं रूपे ज्वलन्तं ब्रह्मतेजसा ॥१०८॥
पद्मचक्रांकितपादं धनुर्ध्वजकराब्जकम् ।
स्वर्णोर्ध्वतिलकं वक्षःस्थलं मालांकशोभितम् ॥१०९॥
विष्णुरूपं च तज्ज्ञात्वा सर्वे मुमुदिरे जनाः ।
पुपुषुर्ब्राह्मणास्तां सपुत्रां राज्ञीं यथा सुताम् ॥११०॥
सपुत्रा सा ब्राह्मणानां दासीव सेवते द्विजान् ।
स बालो ववृधे तत्र शुक्लपक्षे यथा शशी ॥१११॥
जातिस्मरो ज्ञानयुक्तः पूर्वमन्त्रस्मरः सदा ।
तस्य जन्मक्षणे नारं जलं भूमौ ववर्ष ह ॥११२॥
जन्मकाले ददौ नारं तेनायं नारदः स्मृतः ।
ददाति नारं ज्ञानं च बालेभ्यश्चेति नारदः ॥११३॥
वीर्येण नारदस्यैव बभूव नारदस्ततः ।
गायने च नरान् कण्ठं ददौ तेनापि नारदः ॥११४॥
नोऽर्थो नारायणः प्रोक्तो ह्यरं शीघ्रं ददाति यः ।
शीघ्रं नारायणदानान्नारदश्च प्रकीर्तितः ॥११५॥
रदा दन्ताश्च येषां न तेऽरदा वृद्धतान्विताः ।
अरदा वृद्धता यस्य नास्ति स नारदश्चिरः ॥११६॥

बभूव काले बालः सः क्रमेण पञ्चहायनः ।
गायति सततं कृष्णयशोगानगुणादिकम् ॥११७॥
कृष्णगाथां प्रकुर्वंश्च धूलिनैवेद्यमीरयन् ।
धूलिषुप्रतिमां कृत्वा धूलिनाऽर्चयति प्रभुम् ॥११८॥
पुत्रमाह्वयते माता प्रातराशाय तं शिशुम् ।
हरिं संपूजयामीति प्रत्युत्तरं प्रवक्ति सः ॥११९॥
शिशवः पञ्चवर्षीया ब्राह्मणाः सुहृदश्च ते ।
प्रच्छन्नं हृतवन्तश्च चत्वारः सनकादयः ॥१२०॥
नाममन्त्रं हरेर्दीक्षां ददुस्तस्मै विधानतः ।
मूलफलादिकं बालदत्तं ते मुनिपुंगवाः ॥१२१॥
चत्वारः संबुभुजिरे तच्छेषं बुभुजे शिशुः ।
चतुर्थको मुनिस्तस्मै कृष्णमन्त्रं ददौ तदा ॥१२२॥
एवं शूद्रीसुतः सोऽयं ब्राह्मणानां प्रसंगतः ।
ऋषीणामन्नपात्राणां बुभुजे दासवच्छुभम् ॥१२३॥
संशुद्धो गोपिकाबालो विप्रगेहे दिने दिने ।
कषाया जज्वलुः सर्वे आर्षप्रसादभोजनात् ॥१२४॥
साधूनां भोजनोच्छिष्टं प्रसादयति चान्तरम् ।
विधुनोति महत्पापं पवित्रयति मानसम् ॥१२५॥
आपादयति विज्ञानं वर्धयत्यात्मसत्त्वताम् ।
विनिर्मलयति श्रद्धां सम्पादयति राधनाम् ॥१२६॥
उत्तेजयति सत्प्रेम भक्तिं वर्धयति ध्रुवाम् ।
प्रयोजयति तन्मूर्तौ प्रेषयत्यक्षरं पदम् ॥१२७॥
नारदो मुनिविप्राणां पत्रावल्योदनादिकम् ।
प्रासादिकं प्रभुक्त्वैव दिव्यतामगमत् खलु ॥१२८॥
एकदा शिशुमाता सा गच्छन्ती निशि वर्त्मनि ।
ममार सर्पदष्टा द्राक् हरिस्मरणमानसा ॥१२९॥
सद्यो जगाम वैकुण्ठं विष्णुपार्षदसंयुता ।
विष्णुयानेन सद्रत्ननिर्मितेन हि सा सती ॥१३०॥
तदूर्ध्वदैहिकं कृत्वा तस्थौ गंगातटे शिशुः ।
तत्र स्नात्वा विप्रदत्तं हरेर्मन्त्रं जजाप सः ॥१३१॥
तीरे वृक्षेषु मध्ये स ह्यश्वत्थमूलसन्निधौ ।
कृत्वा योगासनं तस्थौ दध्यौ मूर्तिं हरेस्तथा ॥१३२॥
मन्त्रं जजाप द्वाविंशत्यक्षरं श्रीहरिं स्मरन् ।
ओं श्रीं नमो भगवते रासमण्डलेश्वराय ॥१३३॥
श्रीकृष्णाय स्वाहेति च मन्त्रं जजाप कल्पद्रुमम् ।
ध्यानं चकार देवस्य कृष्णस्याऽतिमनोहरम् ॥१३४॥
चिन्तयति स्म गोविन्दं नव्यजीमूतसुन्दरम् ।
शरत्पंकजनेत्रं च शरच्चन्द्रशुभाननम् ॥१३५॥
पक्वबिम्बौष्ठसच्छोभं कुन्दाभदन्तराजितम् ।
सस्मितं मुरलीहस्तं कोटिकन्दर्पसुन्दरम् ॥१३६॥
कोटिचन्द्रप्रभाभान्तं पुष्टश्रीव्याप्तयौवनम् ।
त्रिभंगं द्विभुजं पीतवाससं कौस्तुभान्वितम् ॥१३७॥
रत्नकेयूरवलयस्वर्णनूपुरभूषितम् ।
रत्नकुण्डलकर्णं च्चोज्ज्वलगण्डप्रशोभितम् ॥१३८॥
मयूरपुच्छचूडं च रत्नमालाढ्यवक्षसम् ।
आजानुलम्बहस्तं च वनमालासुधारिणम् ॥१३९॥
चन्दनादिद्रवदेहं भक्तानुग्रहतत्परम् ।
वक्रलोचनगोपीभिर्वीक्षितं क्रीडया मुदा ॥१४०॥
ऊनपञ्चदशवर्षस्वरूपगोपिकायुतम् ।
राधारमामहालक्ष्मीसेवितं भूषितं वरम् ॥१४१॥
किशोरं गोपिकाकान्तं निर्लिप्तं निर्गुणं हरिम् ।
दध्यौ स नारदो देवः परमात्मानमच्युतम् ॥१४२॥
दिव्यं वर्षसहस्रं स निराहारः कृशोदरः ।
योगसिद्धः कृष्णयोगात् प्राणधारणशक्तिमान् ॥१४३॥
मन्त्रयोगाद्ददर्शाऽयं दिव्यलोकस्थबालकम् ।
रत्नसिंहासनस्थं च रत्नभूषणशोभितम् ॥१४४॥
किशोरवयसं कृष्णं गोपवेषं सुसुन्दरम् ।
पीताम्बरयुतं गोपगोपीगणसुसेवितम् ॥१४५॥
द्विभुजं मुरलीहस्तं कस्तूरीचन्दनार्चितम् ।
दृष्ट्वा च शान्तवदनं शान्तश्च गोपिकासुतः ॥१४६॥
तिरोभूतं च तद्रूपं पुनर्नैव ददर्श सः ।
रुरोदाश्वत्थमूले स न दृष्ट्वा श्यामसुन्दरम् ॥१४७॥
बभूवाऽऽकाशवाणी च हितसत्यमिताक्षरा ।
सकृद्यद्दर्शितं रूपं पुनर्द्रक्ष्यसि नाऽधुना ॥१४८॥
अपि पक्वकषायाणां दुर्दर्शं च कुयोगिनाम् ।
अस्मिन्देहे लयं याते प्राप्ते दिव्ये च वर्ष्मणि ॥१४९॥
पुनर्द्रक्ष्यसि गोविन्दं गोलोकस्थं हरिं प्रभुम् ।
श्रुत्वेति विररामाऽसौ काले तत्याज तां तनुम् ॥१५०॥
कृष्णं स्मरन् ययौ शापमुक्तो नारद ऐश्वरम् ।
पदं गोलोकधामाख्यं नेदुर्दुन्दुभयस्तदा ॥१५१॥
पुष्पवृष्टिर्बभूवाऽथ विलीनो ब्रह्मविग्रहे ।
पुनश्च ब्रह्मणः पुत्रो जातो ब्राह्मणनारदः ॥१५२॥
आविर्भावतिरोभावौ स्वेच्छया मुक्तदेहिनाम् ।
जन्ममृत्युर्जराव्याधिर्भक्तानां नास्ति पद्मजे ॥१५३॥
पुनर्युगान्तरेऽतीते स्रष्टुः सृष्टौ च नारदः ।
विधेर्नारदनाम्नश्च कण्ठदेशाद् बभूव सः ॥१५४॥

नारदश्चेति विख्यातो मुनीन्द्रो मानसः सुतः ।
कृष्णरूपो नारदोऽयं हरेर्मानसमुच्यते ॥१५५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने आयुर्वेदादिरीत्या व्याधिनाशनोपायाः, मालावती प्रार्थनया उपबर्हणस्य पुनर्जीवनदानं तत्प्रदं षोडशाऽक्षरमन्त्रकवचं, पुनः द्रुमिलशूद्रस्य गोपस्य कलावत्यां काश्यपनारदवीर्यद्वारा नारदजन्म, सनत्कुमारद्वारा वैष्णवी दीक्षा, मातृमरणोत्तरं वर्षसहस्रं तपस्तप्त्वा देहं त्यक्त्वा गोलोकं प्राप, पुनर्ब्रह्मणः कण्ठादुत्पत्तिरित्यादिनिरूपणनामा द्व्यधिकद्विशततमोऽध्यायः ॥ २०२ ॥

**श्रीनारायण उवाच—**

ब्रह्मा च प्रेरयामास सृष्टिं कर्तुं च नारदम् ।
सर्वेषामपि वन्द्यानां जनकः परमो गुरुः ॥ १ ॥
विद्यागुरुर्मन्त्रगुरुर्द्वौ श्रेष्ठौ पित्रपेक्षया ।
तवाऽहं जन्मदाता च विद्यादाता च मन्त्रदः ॥ २ ॥
ममाऽऽज्ञया च मत्प्रीत्या कुरुपत्नीपरिग्रहम् ।
गुरोराज्ञाकरः शिष्यः पुत्रः सन्तारयेत् पितॄन् ॥ ३ ॥
क्षेमं च लभते नित्यं शाश्वतं लौकिकं तथा ।
सः पण्डितः स च ज्ञानी क्षेमी च पुण्यवान् स च ॥ ४ ॥
मेधावी विनयी भाग्यशाली स्वर्गाधिकारवान् ।
गुरोर्वचस्करो यः स्यात् क्षेमं तस्य पदे पदे ॥ ५ ॥
सर्वाश्रमाश्रयदाता गृह्याश्रमो हि पुण्यवान् ।
पुत्रपौत्रकलत्राढ्यं भवनं तपसः फलम् ॥ ६ ॥
पितरः पर्वकाले च पूजाकाले तु देवताः ।
भिक्षाकाले च मुनयः समायान्ति गृहिगृहम् ॥ ७ ॥
नित्यं नैमित्तिकं कार्यमर्जयन्ति गृहाश्रमाः ।
भुक्त्वा सर्वं सुखं त्वत्र यान्ति स्वर्गं महत्सुखम् ॥ ८ ॥
गृहस्थो धनवान् कीर्तिधर्मानन्दादिमान् सुखी ।
जीवन्मुक्तो मृतेऽमुत्र मुक्त एव न संशयः ॥ ९ ॥
मृतस्यापि यशोदेहो वर्तते स च जीवति ।
जीवतोऽपि यशोदेहो नास्ति मृतः स वै सदा ॥१०॥
विद्या लभ्या तथा कीर्तिर्लभ्या भक्तिश्च माधवे ।
दारा लभ्याः शुभा लक्ष्मीः स्वर्गं लभ्यं सुतादिभिः ॥११॥
पुण्यं लभ्यं तथाऽऽरोग्यं लभ्यं वै शाश्वतं सुखम् ।
ऐहिकं च तथा पारलौकिकं लभ्यमुत्तमम् ॥१२॥
कार्यं भोग्यं गृहिरीत्याऽसंगेन यतिवत् सदा ।
सदा वै बन्धनं नास्तीत्याह नारायणो हि माम् ॥१३॥
श्रुत्वैतन्नारदः प्राह सतीष्टत्वे प्रवर्तते ।
न मेऽस्तीष्टसाधनत्वमनिष्टाऽननुबन्धिता ॥१४॥
कथं प्रवर्ते नार्यां वै कारणाऽभावबन्धकात् ।
पूर्वजन्मसु चैतस्य विषयस्य विरोधने ॥१५॥
त्वच्छापादभवं मृत्वा गन्धर्वः शूद्रकस्तथा ।
कालेन शापान्मुक्तोऽहं विरोधो न सुखाय वै ॥१६॥
स गुरुश्च पिता बन्धुः सुतः स्वामी स रक्षकः ।
यः श्रीनारायणभक्तिं बोधयेत्कारये दृढाम् ॥१७॥
असन्मार्गाऽऽस्थितबालनिवृत्तिरुचिता पितुः ।
सन्मार्गरोधके दारमार्गे प्रवर्तयेत् कथम् ॥१८॥
पत्नीग्राहो महाग्राहो दुःखायैव हि केवलम् ।
तपःस्वर्गजीवन्मुक्तिमहामुक्तिनिरोधकृत् ॥१९॥
नार्यस्त्रेधा विभिद्यन्ते साध्वी स्वार्था विरोधिनी ।
धर्मं मत्वा नाथसेवां करोति सुखदा सदा ॥२०॥
स्वधर्मनिरता साध्वी सुखदुःखसमा हि सा ।
अथ स्वस्या अर्थसिद्ध्यै कुरुते कान्तसेवनम् ॥२१॥
भोगार्थं कान्तसेवां च नान्यथा स्वार्थिनी हि सा ।
वस्त्रालंकारसंभोगस्निग्धाहारधनादिकम् ॥२२॥
यावच्च दीयते पत्या तावत्स्वार्था तु सेविका ।
अथ कापट्यभावेन पतिं वाऽन्यं च सेवते ॥२३॥
स्वस्य वाथ परस्याथ यस्या नास्ति समादरः ।
सर्वे कामप्रदा योग्या नराः प्रकल्पिता यया ॥२४॥
सा तु विरुद्धधर्मस्था विरोधिनी तृतीयका ।
हृदयं क्षुरधाराभं शरत्पद्मोत्सवं मुखम् ॥२५॥
सुधामधुरं वचनं सर्वं स्वार्थं स्त्रिया मतम् ।
विषतुल्या प्रकोपे स्याद् विश्वासे नाशकारिणी ॥२६॥
अभिप्रायेऽतिगूढा स्यात् कर्म स्तेनमयं सदा ।
अविनयस्तथा स्वार्थः साहसं छलमनृतम् ॥२७॥
माया कापट्यमशुचिश्चैतेऽष्टौ तत्स्वभावजाः ।
पुंसश्चाष्टगुणः शश्वत्कामदेवोऽतिकालहृत् ॥२८॥
आहारो द्विगुणो नित्यं नैष्ठुर्यं च चतुर्गुणम् ।
क्रोधश्चाथ हठश्चापि षड्गुणास्तत्र सन्ति हि ॥२९॥

स्नेहो दशगुणः स्वार्थः षोडशाधिगुणोऽस्ति वै ।
एवं दोषग्रहे नारीदेहे काऽऽस्था पितामह ॥३०॥
मलमूत्रादिखन्याख्ये का क्रीडाऽशुद्धवर्ष्मणि ।
भोगे तेजःक्षयः सख्ये कीर्तेर्नाशो धनक्षयः ॥३१॥
वपुःक्षयोऽतिसंभोगे कलहे मानसंक्षयः ।
विश्वासे सर्वनाशश्च बन्धने मोक्षरोधनम् ॥३२॥
हानिरेव तया क्लप्ता को लाभः प्रमदाग्रहे ।
यावद्धनं युवावस्था तावत्स्वीयाऽन्यथा तु न ॥३३॥
वृद्धं निःस्वं तथा रुग्णं पतिं सा प्रेक्षतेऽप्रियम् ।
श्ववत् लोकाचारभयाद् ददात्याहारमल्पकम् ॥३४॥
सर्वं जानासि सर्वज्ञ विदायं देहि साम्प्रतम् ।
कृष्णभक्तिं प्रार्थयामि ययाचे तप उत्तमम् ॥३५॥
नत्वा स्तुत्वा च याचित्वा क्षमां कृत्वा प्रदक्षिणम् ।
गच्छन्तं तनयं दृष्ट्वा क्षणं ब्रह्मा शुशोच ह ॥३६॥
यदि त्वं तपसे यासि किं मे संसारकर्मणि ।
सनकश्च सनन्दश्च तृतीयश्च सनातनः ॥३७॥
तुर्यः सनत्कुमारश्चेतरः सनत्सुजातकः ।
यतिर्हंसिश्चारुणिश्च वोढुः पंचशिखस्तथा ॥३८॥
पुत्रास्ते तपसे याताः किं मे संसारकर्मणि ।
अन्येऽविवेकिनोऽसाध्याः किं मे संसारकर्मणि ॥३९॥
नोदनालक्षणमर्थं धर्मं वाञ्छन्ति पण्डिताः ।
विप्रो धृत्वा यज्ञसूत्रं वेदानधीत्य शक्तितः ॥४०॥
परिसमाप्य तत्पश्चात् ददाति गुरुदक्षिणाम् ।
ततः साध्वीं सुकुलजां सुविनीतां समुद्वहेत् ॥४१॥
न नारी बन्धनं प्रोक्तं बन्धनं वासना मता ।
अवासनो जनः साध्वीयुक्तोऽपि मुक्तिमृच्छति ॥४२॥
स्त्रीणां दोषाश्च ये प्रोक्ता न ते सत्पतिसंभवे ।
पतिः कुपथगामी स्यात् तदा किं स्त्रीविदूषणम् ॥४३॥
सति स्वामिनि पत्न्याश्च दोषा भवन्ति सद्गुणाः ।
गुणागुणौ पत्यधीनौ यथा स्वामी तथा सती ॥४४॥
न दोषोऽस्ति च कन्यानां यथाबीजं तथाफलम् ।
क्षेत्रं तु सर्वथा शुद्धं यथा खाद्यं तथाऽङ्कुरम् ॥४५॥
स्त्रियस्तु सुखलाभाय नराणां वै विनिर्मिताः ।
सहन्ते सर्वमाक्रोशं वशीभवन्ति सर्वदा ॥४६॥
दुःखं स्वयमनुगृह्य सुखाकुर्वन्ति सत्पतिम् ।
तापत्रयविदग्धस्य नरस्याऽऽरामसाधनम् ॥४७॥
नारीरत्नं मया सृष्टं न दोषं दातुमर्हसि ।
पित्रा पराय दत्ता सा कन्या सर्वं विहाय वै ॥४८॥
याति गौरिव निर्दुःखा रंका मा निन्द नारद ।
पराधीना सदा त्वन्याश्रया दासीव किंकरी ॥४९॥
मानं विहाय सेवायां स्थितां मा निन्द नारद ।
आकरे पद्मरागाणां जन्म काचमणेः कुतः ॥५०॥
तद् वत्स सुखदाः सर्वा योषितः कमलांशजाः ।
निर्गुणं स्वामिनं साध्वी सेवते च प्रशंसति ॥५१॥
साधुः सद्वंशजां कन्यां गृह्णीयाद्धर्मनेत्रवान् ।
तस्यां पुत्रान्समुत्पाद्य वार्धक्ये तपसे व्रजेत् ॥५२॥
मत्तोऽधीतस्त्वया वेदो मह्यं च गुरुदक्षिणाम् ।
पुत्र देहीदमेवेह कुरु पत्नीपरिग्रहम् ॥५३॥
वत्स त्वं कुलजां कन्यां पूर्वपत्नीं च मालतीम् ।
मनुवंशीयसृंजयपुत्रीं तपःपरायणाम् ॥५४॥
गृह्णीष्व तां तव पत्नीं विवाहं कुरु पुत्रक ।
वैष्णवरतं गृहे तिष्ठ कुरु भक्तिं हरेः सदा ॥५५॥
आदौ ब्रह्म ततो नारी ततो वनगतिस्ततः ।
अन्तर्बाह्ये हरिर्यस्य तस्य किं तपसा सुत ॥५६॥
नान्तर्बाह्ये हरिर्यस्य तस्य किं तपसा सुत ।
नारीं प्राप्य हरिं रक्ष नार्यां हरिरवस्थितः ॥५७॥
पुत्रा हरिकृता बोध्या नरकत्राणका यतः ।
तपसाऽपि हरिः सेव्यः सेवा हि परमं तपः ॥५८॥
तपसा सेवया चैव मुक्तिर्लभ्येति तत्फलम् ।
वत्स मद्वचनेनैव गृहे स्थित्वा हरिं भज ॥५९॥
पितृप्रसादः प्राप्तव्योऽपाकर्तव्यमृणं पितुः ।
दाराग्रहणसाध्यं तत् कुरु वै दारसंग्रहम् ॥६०॥
दारासुखं कामसुखं चोपस्पर्शसुखं महत् ।
ततः सुखतमं पुत्रदर्शनं तद् गृही भव ॥६१॥
पुत्रप्रयोजना कान्ता सर्वेभ्यः प्रेयसी हि सा ।
शतकान्ताप्रियः पुत्रो नास्ति पुत्रात् परः प्रियः ॥६२॥
सर्वेभ्यो जयमन्विच्छेत्पुत्राच्छिष्यात्पराभवम् ।
पुत्र आत्मा सुतो बन्धुर्न्यस्येत् तत्राऽऽत्मसद्धजम् ॥६३॥
श्रुत्वैतन्नारदः प्राह पितर्जानन्नपि स्वयम् ।
जलबुद्बुदतुल्येऽत्र प्रवर्तयसि मां कथम् ॥६४॥
विहाय हरिदास्यं मे मा भूत् नृजन्म निष्फलम् ।
कस्य पत्नी सुतः कस्य पतिः कस्याश्च बान्धवाः ॥६५॥
सर्वं कर्मकृतं जालं बन्धनं चेतनात्मकम् ।
यो वै मोचयति तस्मात् स पिता स गुरुः सखा ॥६६॥
बन्धनं तु ददात्येषु विनिर्बन्धनचेतनम् ।
मोक्षात्तु पातयन् तं स रिपुः संसारयोजकः ॥६७॥

किन्तु मुमुक्षुणा ग्राह्यं पितुर्वाक्यं चतुर्थकम् ।
नांगीकृतं त्रिवारं ते तत्फलं प्राप्तमार्तिदम् ॥६८॥
प्रथमे मानसे पुत्रे तवाऽऽज्ञा नैव पालिता ।
तेन मृत्युर्मम जातो मारीचो ह्यभवँस्ततः ॥६९॥
पुनर्मृतेश्च गन्धर्वस्ततो मृत्योश्च शूद्रजः ।
ततो मृतेरयं ब्राह्मो भवाम्यत्र चतुर्थकः ॥७०॥
तस्माद् योग्याऽप्ययोग्या वा तवाऽऽज्ञा शिरसि धृता ।
प्रसन्नो भव मे ब्रह्मन् येनाऽहं स्यां सदा सुखी ॥७१॥
आदौ यास्यामि भगवन्नरनारायणाश्रमम् ।
नारायणकथां श्रुत्वा करिष्ये दारसंग्रहम् ॥७२॥
यथाऽहं दारयोगेऽपि निर्बन्धः स्यां सदा पितः ।
तथाऽऽशिषः प्रदातव्या न निरुद्ध्येत मोक्षणम् ॥७३॥
देहि मे कृष्णमन्त्रं च सार्थं तद्गुणवर्णनम् ।
ब्रह्मा प्राह तदा पुत्रं सर्वज्ञानाऽऽकरं प्रियम् ॥७४॥
पत्युर्मन्त्रं पितुर्मन्त्रं न गृह्णीयात् कदाचन ।
गुरुर्महेश्वरस्तेऽस्ति प्राक्तनो गच्छतं प्रति ॥७५॥
श्रुत्वा प्रणम्य पितरं शिवलोकं ययौ मुनिः ।
द्वितीयमिव वैकुण्ठं सर्वस्मृद्धिसमन्वितम् ॥७६॥
कोट्यब्जाऽर्बुदलक्षैश्च गणैश्च पार्षदोत्तमैः ।
विकटैर्भैरवैः क्षेत्रैः कल्पवृक्षैश्च शोभितम् ॥७७॥
शिवं ददर्श मध्यस्थं गणानां दिव्यसंसदि ।
त्रिनेत्रं पञ्चवक्त्रं च गंगाढ्यं चन्द्रशेखरम् ॥७८॥
स्वर्णपिंचजटाजूटं जपन्तं मालया हरिम् ।
नीलकण्ठं सर्पसूत्रं योगिसिद्धादिवन्दितम् ॥७९॥
प्रसन्नं शान्तिदं भक्तप्रियं परमवैष्णवम् ।
गत्वा ननाम तुष्टाव त्रितन्त्रीं क्वणयन् जगौ ॥८०॥
ददौ च शंकरस्तस्मै चासनं योग्यमर्हणम् ।
पप्रच्छाऽऽगमसद्ध्येयं चातिथ्यं प्रचकार च ॥८१॥
मुनिर्निवेदनं चक्रे मन्त्रार्थागमनादिकम् ।
श्रुत्वा शंभुः प्रसन्नोऽभूत्प्राह नारदमोमिति ॥८२॥
हरिस्तोत्रं च कवचं मन्त्रं श्रीहरये नमः ।
ध्यानं ज्ञानं नारदाय ददौ सम्यङ्महेश्वरः ॥८३॥
नारदः प्राह देवेशं चाह्निकं मे वद प्रभो ।
शंभुर्ब्राह्मणधर्मांश्च कथयामास तं ततः ॥८४॥
संक्षेपेण सदाचारान् इहाऽमुत्र सुखप्रदान् ।
शृणु लक्ष्मि च ते सर्वान् कथयामि सनातनान् ॥८५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने ब्रह्मणा नारदाय सृष्ट्यर्थमुपदिष्टम्, नारदेन ज्ञानद्वारा तदंगीकृतम् वैष्णवगुरुमन्त्रार्थं कैलासगमनं चेत्यादिनिरूपणनामा त्र्यधिकद्विशततमोऽध्यायः ॥२०३॥

**श्रीनारायण उवाच—**

शंभुः प्राह च देवर्षिं नारदं शृणु चाह्निकम् ।
ब्राह्मे मुहूर्ते चोत्थाय गुरुं भाले विचिन्तयेत् ॥ १ ॥
ब्रह्मरन्ध्रे हरिं ध्यायेद्धृदये कृष्णमर्चयेत् ।
प्रसन्नवदनं शान्तं प्रोज्ज्वलं च मनोहरम् ॥ २ ॥
गुरुणा दीयते देवो मन्त्रः पूजा विधिर्जपः ।
गुरुणा पूयते शिष्यस्तस्माद्देवात्परो गुरुः ॥ ३ ॥
गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ।
गुरुः प्रकृतिरीशाद्या गुरुश्चन्द्रोऽनलो रविः ॥ ४ ॥
गुरुर्वायुश्च वरुणो गुरुर्माता पिता सुहृत् ।
गुरुरेव परंब्रह्म नास्ति पूज्यो गुरोः परः ॥ ५ ॥
अभीष्टदेवे रुष्टे च समर्थो रक्षणे गुरुः ।
न समर्था गुरौ रुष्टे रक्षणे सर्वदेवताः ॥ ६ ॥
यस्य तुष्टो गुरुः साक्षाज्जयस्तस्य पदे पदे ।
यस्य रुष्टो गुरुस्तस्य विनाशः सर्वशो मतः ॥ ७ ॥
असंपूज्य गुरुं देवं केवलं यश्च पूजयेत् ।
दुरितं गुर्वसेवोत्थं न नाशयति देवता ॥ ८ ॥
देवाऽपूजनजं पापं गुरुः शक्तो व्यपोहितुम् ।
तस्मादभीष्टदेवाच्च गुरुः पूज्यतमो मतः ॥ ९ ॥
गुरुं हरिं च कृष्णं च ध्यात्वा स्मृत्वा सतो जनान् ।
मलमूत्रत्यजनाय गच्छेत् तद्योग्यभूमिकाम् ॥ १०॥
जलदेवालयवृक्षवर्त्मगोष्ठशुभस्थलम् ।
गृहवह्निचतुष्कार्द्रसस्यवल्मीककन्दरम् ॥११॥
उद्यानदर्भफलद्रुमशानक्रीडनस्थलम् ।
एवमाद्यस्थलं हित्वा त्याज्यं मलादिकं सदा ॥१२॥
एकां लिंगे मृदं दद्याद् वामहस्ते चतुष्टयम् ।
उभयोर्हस्तयोर्द्वे तु मूत्रशौचं प्रकीर्तितम् ॥१३॥
मैथुनानन्तरं शौचं द्विगुणितं समाचरेत् ।
एका लिंगे गुदे तिस्रस्तथा वामकरे दश ॥१४॥

उभयोः सप्त दातव्या पादयोस्त्रिर्विशुद्ध्यति ।
पुरीषशौचं सर्वेषां सामान्यं चैतदेव हि ॥१५॥
गन्धलेपक्षयकरं वस्तुना पयसा मृदा ।
कृतं शौचं हि शौचं तदन्यथाऽशौचमेव वै ॥१६॥
अशुद्धां जन्तुसम्पन्नां मर्दितां वर्जयेन्मृदम् ।
कृत्वा शौचं ततो वार्भिः स्वस्य प्रक्षालयेन्मुखम् ॥१७॥
दन्तकाष्ठेन दन्ताँश्च वारिणा च प्रमार्जयेत् ।
सक्षीरं सकण्टकं च काष्ठं दन्तप्रशोधकम् ॥१८॥
अष्टांगुलोत्तरं ग्राह्यं जिह्वोल्लेख्याऽर्धचीरया ।
जलस्नानं प्रकुर्वीत स्मृत्वा देवं गुरुं हरिम् ॥१९॥
रविं विष्णुं हरं लक्ष्मीं सतीं ब्रह्मादिकान्सुरान् ।
नद्यां नदे तडागे वा तीर्थे वाप्यां समुद्रके ॥२०॥
कृत्वा संकल्पमेवाऽऽत्रं मृदं गात्रे विलेपयेत् ।
अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे ॥२१॥
मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम् ।
उद्धृताऽसि वराहेण कृष्णेन शतबाहुना ॥२२॥
आरुह्य मम गात्राणि सर्वं पापं प्रमोचय ।
पुण्यं देहि महाभागे स्नानाऽनुज्ञां कुरुष्व माम् ॥२३॥
गंगे च यमुने चैव गोदावरि सरस्वति ।
सिन्धो नर्मदे कावेरि जलेऽस्मिन् सन्निधिं कुरु ॥२४॥
नलिनी नन्दिनी सीता मालिनी पार्वती प्रभा ।
विष्णुपादाब्जसंभूता गंगा माणकी गण्डकी ॥२५॥
पद्मावती भोगवती स्वर्णरेखा च कौशिकी ।
दक्षा पृथ्वी च शुभगा विश्वकाया शिवाऽमृता ॥२६॥
विद्याधरी सुप्रसन्ना तथा लोकप्रसाधिनी ।
क्षेमा च कंभरा शान्ता शान्तिदा गोमती सती ॥२७॥
सावित्री तुलसी दुर्गा महालक्ष्मीः सरस्वती ।
कृष्णाप्राणाधिका राधा लोपामुद्रा रतिर्दितिः ॥२८॥
अहल्या चाऽदितिः संज्ञा स्वधा स्वाहाऽप्यरुन्धती ।
शतरूपा देवहूतिरित्याद्याः संस्मरेत्सुधीः ॥२९॥
स्नात्वा जलेन संधृत्वा योग्ये धौत्रे च वाससी ।
जलेन चन्दनेनापि कुर्यात्तु तिलकं बुधः ॥३०॥
बाह्वोर्मूले ललाटे च कण्ठदेशे च वक्षसि ।
तन्मध्ये चन्द्रकं कुर्यात् कौंकुमं वर्तुलं शुभम् ॥३१॥
आचम्य चासने स्थित्वा ततः सन्ध्यां समाचरेत् ।
ततः पूजां तु देवानां कुर्याच्छोडशसाधनैः ॥३२॥
शालग्रामे मणौ मन्त्रे प्रतिमायां जले स्थले ।
गोपृष्ठे च गुरौ विप्रे प्रशस्तं त्वर्चनं हरेः ॥३३॥
आसनं वसनं पाद्यमर्घ्यमाचमनीयकम् ।
पुष्पं च चन्दनं धूपं दीपं नैवेद्यमुत्तमम् ॥३४॥
सुगन्धतैलं भूषाश्च ताम्बूलं च जलं फलम् ।
अरार्त्रिकादिकं देयं षोडशात्मप्रपूजनम् ॥३५॥
स्नानं पंचामृतैश्चाथाऽभिषेकस्नानमप्यथ ।
वस्त्राणि चन्दनादीनि पुष्पाणि भूषणानि च ॥३६॥
आसनं च प्रदीपश्च धूपो नैवेद्यमित्यपि ।
जलपानं च ताम्बूलं चारार्त्रिकं प्रदक्षिणम् ॥३७॥
सस्तोत्रनमनं पुष्पांजलिश्चैतेऽपि षोडश ।
उपचारा हरेः पूजाकार्येऽर्प्या भावतः सदा ॥३८॥
आदौ कृत्वा भूतशुद्धिं प्राणायामं ततः परम् ।
अंगप्रत्यंगयोर्न्यासं मन्त्रन्यासं ततः परम् ॥३९॥
वर्णन्यासं ततः कृत्वा चार्घ्यपात्रं विनिर्दिशेत् ।
त्रिकोणमण्डलं कृत्वा तत्र कूर्मं प्रपूजयेत् ॥४०॥
जलेनाऽऽपूर्य शंखं च कूर्मे संस्थापयेत्तथा ।
जले तीर्थावाहनं च कृत्वा वस्तूनि मार्जयेत् ॥४१॥
घण्टां च पूजयेच्छंखं पूजयेत्कलशं तथा ।
शालग्रामं पूजयेच्च ततो वै पूजयेद्धरिम् ॥४२॥
षोडशोपकरणैः संपूज्य देवान् विसर्जयेत् ।
देवयज्ञं तथा श्राद्धं कुर्याद्वित्तानुसारतः ॥४३॥
अतिथिपूजनं भूतयज्ञं कुर्याश्च शक्तितः ।
वृद्धान्वन्देत सूर्यादीन्नमस्कुर्याच्च सर्वदा ॥४४॥
पोष्याँश्च भोजयित्वा वै गृही भुञ्ज्यात्तु नित्यशः ।
हविष्यान्नं ब्राह्मणानां प्रशस्तं गृहिणां सदा ॥४५॥
नारायणोच्छिष्टमिष्टमभक्ष्यमनिवेदितम् ।
नित्यं नैवेद्यभोजी यः श्रीविष्णोः स हि वैष्णवः ॥४६॥
अन्नं जलं फलं पुष्पं पत्रं श्रीहरयेऽर्पितम् ।
भक्ष्यं पेयं तदन्यत्त्वपेयं चाऽभक्ष्यमित्यथ ॥४७॥
जातिदुष्टं रूपदुष्टमाकृतिदुष्टमेव यत् ।
गुणदुष्टं परिणामदुष्टं न भक्ष्यमेव तत् ॥४८॥
व्रतेष्वन्नं न वै भक्ष्यं न भक्ष्यं प्राक् प्रपूजनात् ।
अहिंसासत्यमस्तेये ब्रह्मचर्याऽपरिग्रहौ ॥४९॥
यमा ह्येते रक्षणीयाः सुखदा मोक्षदा अपि ।
शौचं तुष्टिस्तपः पाठः कृष्णपूजा च मोक्षदाः ॥५०॥
निन्दनं नैव कर्तव्यं क्वचित्कस्यापि केनचित् ।
परपीडाकरं सत्यं न वाच्यं दुःखदं हि तत् ॥५१॥
प्रेरणालक्षणो ह्यर्थो धर्मो नानर्थ एव यः ।
कृतघ्नता न कर्तव्या शाठ्यं कार्यं न कुत्रचित् ॥५२॥

व्यवहार्यं यथान्यायं चोपार्ज्यं द्रव्यमित्यथ ।
धनधान्यजीविकाश्चोद्यमः कार्यो यथाबलम् ॥५३॥
मिथ्याऽभिशंसनीयं न परस्वं नाहरेत् क्वचित् ।
दिवसे चोद्यमः कार्यः सायं सन्ध्याजपादिकम् ॥५४॥
हरेर्मन्दिरगमनं स्तवनं कीर्तनादिकम् ।
कृत्वा चाव्ययमन्त्रं सुभव्यं गृहमेधिभिः ॥५५॥
प्रमदाः सर्वथा रक्ष्याः सन्तोष्टव्याश्च वस्तुभिः ।
न चोद्वेगवता भाव्यं क्लेशः कार्यो न वै क्वचित् ॥५६॥
आत्मानात्मविचारादि कर्तव्यं वै मुमुक्षुभिः ।
परमात्मा परब्रह्म सर्वदेहिष्ववस्थितः ॥५७॥
साक्षी च फलदाता च वर्तते देहिकर्मणाम् ।
पञ्चप्राणाः स्वयं विष्णुस्तर्पितव्यः सुभोजनैः ॥५८॥
मनो ब्रह्मा तर्पितव्यश्चानन्दरञ्जनादिभिः ।
इन्द्रो रुद्रश्चेन्द्रियाणां तर्पितव्यः सदर्थकैः ॥५९॥
ज्ञानरूपा तर्पितव्या माया तु श्रवणादिभिः ।
आत्मा साक्षी स्वयंब्रह्म तृप्तव्यं यावदर्पणैः ॥६०॥
परब्रह्म हरिकृष्णश्चेतनेषु सदा स्थितः ।
तदधीनाश्चेतना वै आत्मानो भिन्नकर्मठाः ॥६१॥
कर्मफलान्विता जीवा जडेषु वृत्तिजीविनः ।
जडाः परार्थाः परेण युज्यन्ते भोग्यताऽऽप्तये ॥६२॥
चेतनाश्च सदर्थैर्वै युज्यन्ते भोगलब्धये ।
त्रिगुणात्मा जडा माया महत्तत्त्वं ततो ह्यभूत् ॥६३॥
अहंकारस्ततो जातस्तस्मादिन्द्रियदेवताः ।
सूक्ष्मभूतानि सूक्ष्मेभ्यः स्थूलभूतानि निर्ययुः ॥६४॥
तेषां कलेवरं लब्धं चेतनेन स्वकर्मभिः ।
ज्ञानेन कर्मणां नाशो वैराग्येणाऽविबन्धनम् ॥६५॥
धर्मेणाऽग्रगतेः पुण्यं भक्त्या यानं हरेर्गृहे ।
कर्तापि नैव मन्तव्यः करोति भगवान् ननु ॥६६॥
आत्मा देही न च कर्ता कर्ता धर्ता हरिः स्वयम् ।
बद्धा मुक्ता स्वभावेन प्रकृतिर्न तु चेतनः ॥६७॥
शरीरं भूतसंघातैर्जायते नात्मनो जनिः ।
शरीरं शीर्यते भावैर्न त्वात्मनो विशीर्णता ॥६८॥
सजातीयं सजातीयदेहेन भुज्यते सदा ।
शरीरं तु शरीरेण भुज्यते भोगवद्धि तत् ॥६९॥
स्थूलं भोगाश्रयं सूक्ष्मं विविधं रूपमास्थितम् ।
इदं लब्धं चानुभूतं सुख्यहं चेति चान्तरे ॥७०॥
अहंकारकृते बुद्धितत्त्वे भवति नात्मनि ।
अन्यत्र भवति स्वस्मिन् जानात्येषो भ्रमो ननु ॥७१॥
भ्रम इत्यपि संसारस्तज्जन्यवासनान्वितः ।
भ्रमाऽभावे गृहाऽभावः संसाराऽभाव एव वै ॥७२॥
भ्रमसत्त्वे गृहसत्त्वं गृहिणीभावना तथा ।
क्व गृहं क्व गृहिणी च वासना सर्वमुच्यते ॥७३॥
तदभावे क्व गृहं च गृहिणी क्व सुतादयः ।
शरीरं चापि नास्त्येव का कथा तत्सुयोगिनाम् ॥७४॥
तस्मादात्मा परब्रह्मभक्तोऽस्ति किरणं हरेः ।
मायागुणैः रहितोऽस्ति न कालेन स लिप्यते ॥७५॥
कर्मणाऽपि न लेपोऽस्ति स्वभावो नास्ति तत्र च ।
निर्गुणस्य चित आनन्दमूर्तेर्बन्धनं नु किम् ॥७६॥
प्रभुः करोति सर्वं वै मन्तव्यं त्वेवमेव हि ।
वपते कर्षुको बीजं जलं सिञ्चति कर्षुकः ॥७७॥
रक्षति कर्षुकः खाद्यं ददात्यपि च कर्षुकः ।
लुनाति धान्यं कृषिकृद्भक्षयत्यपि कर्षुकः ॥७८॥
करोति सर्वं कृषिकृत् सस्यं नैव करोति सः ।
महाँस्तु कर्षुकः कृष्णो बीजमुत्पादयत्ययम् ॥७९॥
बीजं त्ववति गर्भे सः ददाति जन्म माधवः ।
बाल्ये यौवने वार्धक्ये स वै रक्षति केशवः ॥८०॥
अन्नं जलं च वस्त्रं च ददाति कृष्ण एव वै ।
मृत्युं प्रेरयति कृष्णो लयं नयति माधवः ॥८१॥
करोति सर्वं साक्षी श्रीकृष्णो नाहं करोमि वै ।
एवं सर्वं समर्प्यं वै कृष्णे निर्बन्धनाय तत् ॥८२॥
उपासना सदा कृष्णे ह्याराधनाऽपि माधवे ।
भक्तिः सेवा च या काचित् सर्वं वै कमलापतौ ॥८३॥
समर्प्यं सर्वथा तद्वै मोक्षणं चात्र जीवतः ।
सर्वत्र व्यापकश्चान्तर्यामी श्रीपतिरीश्वरः ॥८४॥
सर्वदिव्यगुणैर्युक्तो गोलोके चाक्षरे परे ।
वैकुण्ठे श्वेतभूमौ च बदर्यां चाऽमृतेऽम्बरे ॥८५॥
कृष्णो हरिर्नरावासो नारायणः श्रियः पतिः ।
राधापतिः प्रभास्वामी माणिक्याधिपतिः स हि ॥८६॥
लक्ष्मीपतिः कम्भरासत्पतिः श्रीहरिरेव सः ।
सीतापतिः सतीस्वामी पार्वतीपतिरेव सः ॥८७॥
सर्वपतिः स्वयं कृष्णः श्रीकृष्णः साकृतिः सदा ।
परो व्यूहो विभवश्चाऽन्तर्यामि मूर्तिरेव सः ॥८८॥
स्वरूपश्चेति षड्रूपो वर्तते भगवान् हरिः ।
निराकारश्च साकारो भूमा सुमूर्तिकोऽपि सन् ॥८९॥
अदृश्योऽपि सुदृश्योऽस्ति तादृक्चक्षुर्युतैः स हि ।
योगिनां ध्यानविषयो भक्तानां प्रेमबन्धनः ॥९०॥

नारीणां भर्तृविषयो दीनानां दीनतात्मकः ।
दृश्याऽदृश्योऽपि दिव्येन चक्षुषा दृश्य एव सः ॥९१॥
ध्यायन्ते योगिनो नित्यं तं वै कृष्णं परात्परम् ।
परमानन्दरूपं च सर्वकारणकारणम् ॥९२॥
यथा मृदा कुलालो हि घटं निर्माति तत्तथा ।
परब्रह्म प्रकृत्या च सृष्टिं निर्माति सर्वथा ॥९३॥
नित्यं तत्परमं ब्रह्म नित्या वै प्रकृतिर्मता ।
तद्ब्रह्मशक्तिः प्रकृतिः शरीरं बीजरूपिणी ॥९४॥
प्रकृतिशक्तिमद्ब्रह्म तेजोयुक्तं सदास्ति वै ।
यस्य तेजश्च तत्रास्ति स वै परमपूरुषः ॥९५॥
कारणेन विना कार्यं कुतो वा वर्तते कथम् ।
तस्य तेजो महत्कार्यं न स्याद्वै पुरुषं विना ॥९६॥
वैष्णवाः सर्वथा तस्य सौम्यं रूपं मनोहरम् ।
दिव्यं मुक्तादिसंसेव्यं ध्यायन्ते परमात्मनः ॥९७॥
नवीननीरदश्यामं किशोरवयसं प्रभुम् ।
शरन्मध्याह्नमार्तण्डप्रभोद्भासिसुलोचनम् ॥९८॥
शरत्पार्वणपूर्णेन्दुकोट्यधिकप्रभाननम् ।
कोटिकन्दर्पलावण्यलीलाऽऽनन्दितमन्मथम् ॥९९॥
पुष्टं सर्वांगसौन्दर्यमाधुर्यपूरिताऽऽभरम् ।
सस्मितं मूरलीहस्तं पीताम्बरधरं हरिम् ॥१००॥
चन्दनोक्षितसर्वांगं कौस्तुभेन विराजितम् ।
आजानु मालतीमालावनमालाविराजितम् ॥१०१॥
त्रिभंगभंग्या तिष्ठन्तं मणिरत्नादिभूषितम् ।
मयूरपिच्छचूडं च हीरकमुकुटोज्ज्वलम् ॥१०२॥
रत्नकेयूरवलयरत्नमञ्जीरराजितम् ।
रत्नकुण्डलयुग्मेन गण्डस्थलसुशोभितम् ॥१०३॥
मुक्ताभदशनं पक्वबिम्बौष्ठं शुकनासिकम् ।
स्थिरयौवनयुक्ताभिः सस्मिताभिश्च सादरम् ॥१०४॥
वीक्षितं गोपिकाभिश्च रमाराधाजयादिभिः ।
भक्तप्रियं भक्तनाथं भक्तानुग्रहकारकम् ॥१०५॥
रासेश्वरं सुरसिकं महामुक्तैः सुसेवितम् ।
अक्षरं परमं ब्रह्म भगवन्तं सनातनम् ॥१०६॥
एवंरूपं हरिं लक्ष्मि ! चात्र ध्यायन्ति वैष्णवाः ।
स एव भगवानादिगोलोके द्विभुजः प्रभुः ॥१०७॥
गोपवेषैश्च गोपालैः पार्षदैः परिसेवितः ।
परिपूर्णतमः श्रीमान् श्रीकृष्णो राधिकापतिः ॥१०८॥
सर्वान्तरात्मा सर्वत्र प्रत्यक्षो भक्तभावतः ।
कृषिश्च सर्ववचनो नकारश्चात्मवाचकः ॥१०९॥
सर्वात्मा च परब्रह्म स्वयं कृष्णः प्रकीर्तितः ।
कृषिश्च सर्ववचनो नकारश्चाऽऽदिवाचकः ॥११०॥
सर्वादिपुरुषो व्यापी स्वयं कृष्णः प्रकीर्तितः ।
कृषिर्भूवाचकः शब्दो णश्च निर्वृत्तिवाचकः ॥१११॥
आनन्दभूः परब्रह्म कृष्ण इत्यस्ति सर्वथा ।
कृषिस्तु वासनानाशो नश्च स्वालयप्रापणम् ॥११२॥
शुद्धस्य मुक्तिदस्तस्मात् स्वयं कृष्णः प्रकीर्तितः ।
कृषिश्च कर्षणं नश्च नयनं दिव्यमक्षरे ॥११३॥
नीत्वा धाम्नि स्वयं साक्षाद् भवति कृष्ण एव सः ।
स एवांशेन भगवान् वैकुण्ठे तु चतुर्भुजः ॥११४॥
चतुर्भुजैः पार्षदैः संसेवितः कमलापतिः ।
स एव फलया विष्णुः पाता रमापतिः स्वयम् ॥११५॥
स एव श्वेतलोकेऽधिकन्यास्वामी चतुर्भुजः ।
स एव क्षीरवार्धिस्थशेषशायी हरिः स्वयम् ॥११६॥
स एव कारणं सर्वरूपाणामक्षरे स्थितः ।
परब्रह्म श्रीहरिर्वै परमात्मा परमेश्वरः ॥११७॥
एतत्सर्वं कथितं ते चिन्तनीयः स हि त्वया ।
इत्युक्त्वा विरमन्तं नारदः शंभुं प्रतुष्टुवे ॥११८॥
ज्ञानमासाद्य मन्त्रादि सर्वमासाद्य नारदः ।
प्रणम्य शंकरं दिव्यं ययौ नारायणाश्रमम् ॥११९॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने नारदाय शंकरेणाऽऽह्निकं नारायणपूजनं तत्त्वज्ञानं भक्ष्याऽभक्ष्यं परब्रह्मादि च कथितमितिनिरूपणनामा चतुरधिकद्विशततमोऽध्यायः ॥२०४॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! चातिरम्यं बदरीवनसंयुतम् ।
जगामाऽऽश्रमवर्यं श्रीनारदश्च ददर्श तम् ॥ १ ॥
दिव्यवृक्षरम्यवल्लीमहाभूरुहशोभितम् ।
चातकमेनकाकीरपुंस्कोकिलरुतश्रुतम् ॥ २ ॥
शरभकेसरिव्याघ्रकरिगोवेष्टितम् ।
नरनारायणयोगाद्धिंसाभयविवर्जितम् ॥ ३ ॥
सिद्धर्षिमुनिगन्धर्वत्रिकोट्याश्रममण्डितम् ।
कल्पचन्दनतुलसीपारिजातवनान्वितम् ॥ ४ ॥
दिव्यं दिव्यचिदचिद्वस्तुजातसमन्वितम् ।
शान्तिप्रदं महारण्यमगम्यं भूमिवर्ष्मभिः ॥ ५ ॥
नारायणो नरो यत्र तापसौ लोकरक्षकौ ।
भगवन्तौ सुराजेतेऽसंख्याता मुनयोऽपरे ॥ ६ ॥

बदरीच्छायया राजद्रम्याऽनिलसुगन्धिनि ।
बदर्यधः सभास्थाने मुनिमध्ये मनोहरौ ॥ ७ ॥

ददर्श भगवन्तौ तौ रत्नसिंहासनस्थितौ ।
जपन्तौ परमं ब्रह्म श्रीकृष्णं परमेश्वरम् ॥ ८ ॥

प्रणनाम च तौ दृष्ट्वा योगिनां परमौ गुरू ।
उत्थाय तौ तमालिङ्ग्य युयुजाते शुभाशिषः ॥ ९ ॥

पप्रच्छतुश्च कुशलं चक्रातेऽतिथिपूजनम् ।
रत्नसिंहासने निषादयामासतुरादरात् ॥ १० ॥

आसने निवसन् रम्ये वर्त्मश्रमविवर्जितः ।
उवाच तावृषिश्रेष्ठौ भगवन्तौ सनातनौ ॥ ११ ॥

अधीत्य वेदान्सकलान् पितुरेव हि सार्थकान् ।
ज्ञानं मन्त्रं च संप्राप्य कैलासे शंकरादहम् ॥ १२ ॥

लब्धुं ज्ञानविशेषं च कृपां च पारमेश्वरीम् ।
आगतोऽस्मि भगवन्तौ वन्दे संसारतारकौ ॥ १३ ॥

इत्युक्त्वा स्वीयतन्व्या संजगौ स्तोत्रं सुछन्दसा ।
सुस्वरेण सुनृत्येन सतालेन च नारदः ॥ १४ ॥

"जय जय हरिकृष्ण ! स्वामिन् ! नारायण ! राधारमणकरम् ।
जय सति ! सिद्धपते ! त्रयविक्रम ! रणमोचन ! दहरम् ॥
रणमोचनदहरं, नुमस्त्वां ब्रह्मपरं ग्रहरम् ।
जय सति ! सिद्धपते ! त्रयविक्रम ! रणमोचनदहरम् ॥ १५ ॥

जय जय सदसत्तदितरकल्पन ! तत्त्वमसिश्रुतिसञ्चरणम् ।
अश्वत्थाख्यतरूर्ध्वकमूलं चिदचित्तनुधरणम् ॥
चिदचित्तनुधरणं स्तुमस्त्वां व्यष्टिसमष्ट्यरणम् ।
अश्वत्थाख्यतरूर्ध्वकमूलं चिदचित्तनुधरणम् ॥ १६ ॥

जय जय विश्वंभर ! विश्वात्मन् ! स्वात्मनि जगदुः सुविवरणम् ।
परिणतिमध्यसितिं श्रुतयस्त्वयि जगतस्त्वधिकरणम् ॥
जगतस्त्वधिकरणं इमस्त्वां दुरितदलनचरणम् ।
परिणतिमध्यसितिं श्रुतयस्त्वयि जगतस्त्वधिकरणम् ॥ १७ ॥

जय जय भूत्रय ! सगुण ! त्रीश्वर ! वृषसुत ! तत्त्वत्रयभरणम् ।
अङ्कहृदयपार्श्वस्थितदेव्या वर्तितपरिचरणम् ॥
वर्तितपरिचरणं वृणीमोविश्वयवयुनहरणम् ।
अङ्कहृदयपार्श्वस्थितदेव्या वर्तितपरिचरणम् ॥ १८ ॥

जय जय शास्त्रच्छन्दांगाद्यभिवेद्य ! व्याहृतिफलफलनम् ।
जय भोक्तर् ! होतर् ! जय हव्य ! स्वात्मरमणकलनम् ॥
स्वात्मरमणकलनं भजामो मुनिजनकरललनम् ।
जय भोक्तर्होतर्जय हव्य ! स्वात्मरमणकलनम् ॥ १९ ॥

जय जय नैष्ठिकगुणपोषक ! जय तापस ! करुणाकरशरणम् ।
जय दक्षिण ! जय सव्य ! द्वयात्मन् प्राकृतमतिहरणम् ॥
प्राकृतमतिहरणं नमामः स्वांघ्रिसुगतिकरणम् ।
जय दक्षिण ! जय सव्य ! द्वयात्मन् ! प्राकृतमतिहरणम् ॥ २० ॥"

स्तुत्वैवं दण्डवत् कृत्वा पुलकाचितविग्रहः ।
अश्रुप्राविलचक्षुष्कः प्रणनाम मुहुर्मुहुः ॥ २१ ॥

श्रुत्वा नारायणश्चातिप्रसन्नः प्राह नारदम् ।
अहो गन्धर्ववर्याऽद्य श्रुत्वा गीतिं सनृत्यकाम् ॥ २२ ॥

सतालां सस्वरां सार्द्रमानसां भावगर्भिताम् ।
प्रसन्नोऽस्म्यतिगान्धर्वे पारावारोऽत्र सं भव ॥ २३ ॥

भक्तिप्रवर्तको मे स्याः सदाराधनकृद्भव ।
सर्वविद्यागुणाब्धिः स्याः शाश्वतस्थिरयौवनः ॥ २४ ॥

अनेनैव हि देहेन मुक्तदेहोऽक्षरो भव ।
न ते मृत्युर्न ते व्याधिर्न जरा न विवर्तनम् ॥ २५ ॥

नरो यथा यथा चाहं तथा त्वं मानसं मम ।
मत्स्वरूपः सदा तिष्ठ भक्तोऽपि भगवान् भव ॥ २६ ॥

इत्याशीर्वादमासाद्याऽवतारो ब्रह्मणः स्वयम् ।
कलांशो ह्यभवत्सोऽयं नारायणप्रसादतः ॥ २७ ॥

नारायणः पुनः प्राह मूर्ध्नि स्पृष्ट्वा करेण वै ।
ममाऽद्य हृदयं त्वं वै स्वीकृतोऽसि महामुने ॥ २८ ॥

मयि यादृक् सुसार्वज्ञ्यं त्वय्यप्यस्त्वनिवर्तनम् ।
मम भक्तिप्रदं शास्त्रं विधेहि पञ्चरात्रकम् ॥ २९ ॥

विष्णुः शिवो विश्वसृट् च शेषो गणपतिः सुराः ।
मनवो मुनयश्रेशा भजन्ते यं च तं भज ॥ ३० ॥

लक्ष्मीः शिवा च सावित्री रमार्द्धिसिद्धिदेविकाः ।
मानव्य ईश्वरिण्यश्च भजन्ते यं च तं भज ॥ ३१ ॥

गंगा च गोमती रेवा गण्डकी च सरस्वती ।
यमुना स्वर्णरेखा च भजन्ते यं च तं भज ॥ ३२ ॥

पार्वती च प्रभा चैवाऽमृता लक्ष्मीश्च माणिकी ।
दीपोत्सवी तथा राधा भजन्ते यं च तं भज ॥ ३३ ॥

संसारसागरं तर्तुं भवदावं विलंघितुम् ।
जगत्सर्पादवितुं च हरेर्दास्यं गृहाण वै ॥ ३४ ॥

जन्मारण्यं समुल्लंघ्य मृत्युशैलमुल्लंघितुम् ।
धामदेशमभियास्यन् श्रय कृष्णविमानकम् ॥ ३५ ॥

रोमसु यस्य विश्वानि दशनाग्रे समग्रभूः ।
गोवर्धनोऽङ्गुलिप्रान्ते भूस्थं कृष्णं च तं भज ॥ ३६ ॥

यस्याऽऽस्ये निगमाः सन्ति सोऽयं यस्माद्विनिःसृतः ।
अखिलागमसञ्चारिश्रीकृष्णं भज नारद ॥ ३७ ॥

कालमायापापकर्मस्वभावयमकिंकराः ।
यच्छत्त्रयंशादीश्वरास्ते तं कृष्णं सर्वदा भज ॥३८॥
भूः सीता भार्गवी पद्मा गोप्यो वृन्दा च कुब्जिका ।
शबरी पिंगला देव्यो भजन्ते यं च तं भज ॥३९॥
विराट् यस्य कला मुक्ताः कलाश्च मनवः कलाः ।
कलाकलांशाश्च मुनयस्तं हरिं भज सर्वथा ॥४०॥
पृथ्वी सहस्रशीर्षाणं शेषः कूर्मं जलं स च ।
तत्तेजस्तन्महोतेजस्तदाधारं हरिं भज ॥४१॥
धामस्था लोकधीष्ण्यस्था योगस्था ब्रह्मणि स्थिताः ।
स्वस्थितस्य न वै पारं यान्त्यपारं हरिं भज ॥४२॥
यस्य मुक्तास्त्वसंख्याता दास्यश्चानन्तसंख्यकाः ।
श्रुतयः सृष्टयोऽनन्तास्तमनन्तं हरिं भज ॥४३॥
श्रियो लक्ष्म्यो धियो ब्राह्मयः साध्व्यो मायाश्च शक्तयः ।
मूर्तेर्यस्य कलैकांशास्तं च नारायणं भज ॥४४॥
नारायणी हरेः शक्तिस्तदंशाः प्रमदाः कृताः ।
पत्नीं विवाह्य वत्स त्वं नारायणीं वधूं भज ॥४५॥
ममाज्ञां पितुराज्ञां च त्वाज्ञारूपां वधूं भज ।
एवं धर्मप्रतिपालः पूज्यश्च विजयी भव ॥४६॥
स्वपत्नीं रंजयेद्यो वै वस्त्रालंकारवस्तुभिः ।
तस्य नारायणी तुष्टा तारयत्येव कृष्णवत् ॥४७॥
लक्ष्मीर्नारायणशक्तिः सा वै योषित्स्वरूपिणी ।
योषितामवमानेन पराभूता तु सा भवेत् ॥४८॥
तयाऽवमानितया च नरोऽवमानितो भवेत् ।
तयाऽवमानितोऽभाग्यः सौख्यं क्वापि न विन्दते ॥४९॥
दिव्या स्त्री पूजिता येन तदभीष्टप्रदायिना ।
सती पुत्रवती सा स्यात् सर्वमंगलदायिनी ॥५०॥
मूलप्रकृतिरेका सा पूर्णब्रह्मस्वरूपिणी ।
सा चास्ति षट्स्वरूपा वै पूजनीया शुभार्थिभिः ॥५१॥
श्रीकृष्णप्राणरूपैका प्रेयसी राधिका हि सा ।
लक्ष्मीः सम्पत्प्रदा नारायणप्राणा द्वितीयका ॥५२॥
वागधिष्ठातृदेवी या सरस्वती तृतीयका ।
सावित्री वेदमाता या ब्रह्मप्राणा चतुर्थिका ॥५३॥
शंकरप्राणरूपा च सती पार्वती पंचमी ।
कन्या विवाहिता सा तु वधूः सर्वस्य देहिनः ॥५४॥
मूलप्रकृतिरूपैषा षष्ठी बोध्या च वंशदा ।
तां च सेवय योगीन्द्रो भूत्वा कृष्ण इवाऽपरः ॥५५॥
मा तेऽस्तु बन्धनं तत्र मत्स्वरूपो मया कृतः ।
इति ज्ञानं मया दत्तं सदा धारय नारद ॥५६॥
नारदश्च हरेराज्ञामासाद्य प्रणनाम च ।
कृत्वा च दण्डवत् प्रेम्णा विधाय च प्रदक्षिणम् ॥५७॥
ध्यात्वा नारायणं तं च कर्तुं तीर्थानि तत्र च ।
ययौ नरेण सार्धं स तर्तुं च तारितोऽपि सन् ॥५८॥
प्राग्वै चालकनन्दायां सस्नौ शीतेन वारिणा ।
तावद्दिव्यमभूत्तस्य वर्ष्म नारायणस्य तत् ॥५९॥
देशतः कालतो वस्तुतश्चाऽबाध्यमभूत्तदा ।
चिन्मात्रं सर्वसामर्थ्याश्रयं कृष्णस्य वर्ष्मवत् ॥६०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने नारदस्य बदरिकाश्रमगमनं, नरनारायणदर्शनं, गीत्या स्तवनम्, दिव्यताप्रापणं, भक्त्युपदेशनं, विवाहकरणाऽऽज्ञापनं चेत्यादिनिरूपणनामा पञ्चाधिकद्विशततमोऽध्यायः ॥ २०५ ॥

**श्रीलक्ष्मीरुवाच—**

तत्राश्रमे च मुनिना तीर्थानि कानि कानि वै ।
कृतानि भगवन् ब्रूहि पावनानि समासतः ॥ १ ॥

**श्रीनारायण उवाच—**

गंगायां नारदः स्नात्वा भूत्वा दिव्यवपुर्धरः ।
ययौ प्राक् बदरीं याऽस्त्यक्षरब्रह्माऽवतारिणी ॥ २ ॥
नत्वा स्तुत्वा पूजयित्वा तथा कृत्वा प्रदक्षिणम् ।
पत्रं च बदरं तस्या अत्त्वा प्रसादरूपकम् ॥ ३ ॥
स्निग्धं चाऽकण्टकं दिव्यं हरितं पल्लवान्वितम् ।
सपुष्पं सफलं रम्यं ध्यात्वा तद्रूपमान्तरे ॥ ४ ॥
जगाम च ततो वह्नितीर्थे वै पावनं मुनिः ।
जलं पपौ तदाख्यानं शुश्राव च नराननात् ॥ ५ ॥
पुरा समाजः समभूदृषीणामूर्ध्वस्रोतसाम् ।
गंगायमुनासंयोगे प्रयागे पुण्यभूतले ॥ ६ ॥
तत्राऽश्वमेधे हुतभुक् संप्रष्टुमुपचक्रमे ।
सर्वदुर्भक्षणोद्भूतपातकाऽऽलिप्तचेतसः ॥ ७ ॥
कथं स्यात्पातकान्मुक्तिर्मम ब्रह्मवित्तमाः ।
व्यासः प्राह तदा वह्निं बदरीं शरणं व्रज ॥ ८ ॥
यत्रास्ते भगवान् भक्तपापहाः पुरुषोत्तमः ।
तत्र गंगाजले स्नात्वा हरेः कृत्वा प्रदक्षिणाम् ॥ ९ ॥
दण्डवत्प्रणिपातेन सर्वदोषक्षयो भवेत् ।
ततोऽग्निर्बदरीं प्राप्य स्नात्वा गंगांभसि तथा ॥१०॥

नरनारायणं गत्वा नत्वा स्तुतिं चकार सः।
अग्नेश्च पावकं चात्मपावकं ब्रह्मपावकम् ॥११॥
मायायाः पावकं तीर्थपावकं प्रणमाम्यहम्।
ऋषीणां तपसां पुण्यफलदं मोक्षदं प्रभुम् ॥१२॥
विद्याप्रदं धर्मदं च योगदं तापसं हरिम्।
सुखदं वल्कलवस्त्रमीडे शक्तयष्टकं गुरुम् ॥१३॥
श्रुत्वा नारायणः प्राह वरं वरय पावक।
अग्नि प्राह हरे सर्वभक्षोऽहं दूषणं महत् ॥१४॥
दोषनाशः कथं स्याद्वै भयं दोषात् सुदुस्तरम्।
नारायणस्तदा प्राह क्षेत्रस्याऽस्य तु दर्शनम् ॥१५॥
मत्प्रसादात्प्राणिनां च तव माऽस्तु च पातकम्।
यत्र स्नातश्च वह्ने त्वं तदग्नितीर्थमग्रतः ॥१६॥
ख्यातं भविष्यति क्ष्मायां सर्वभक्षणपापहृत्।
तव वासश्च कलया मत्प्रतापात्सदाऽस्तु च ॥१७॥
ततः स्नात्वा च तत्तीर्थे नारदो लोकपावनः।
जगाम च शिलापञ्चतीर्थानि कर्तुमादरात् ॥१८॥
नारदी नारसिंही च वाराही गारुडी तथा।
मार्कण्डेयीति विख्याताः शिलाः परमपावनाः ॥१९॥
नारदश्च मुनिर्ब्राह्मः प्रथमे जन्मनि स्वयम्।
दर्शनार्थे महाविष्णोस्तपस्तेपेऽतिदारुणम् ॥२०॥
षष्टिवर्षसहस्राणि शिलायां वायुभोजनः।
वृक्षवृत्तिस्थितं तं च विष्णुर्ब्राह्मणरूपधृक् ॥२१॥
दर्शनं दत्तवान्प्राह किमिति क्लिश्यते मुने।
यदीप्सितं मम ब्रूहि तपसाऽस्ति शुचिर्भवान् ॥२२॥
नारदः प्राह करुणाकरोऽरण्येऽस्ति को भवान्।
तव दर्शनमात्रेण मनो याति प्रसन्नताम् ॥२३॥
तावन्नारायणस्तत्र शंखचक्रगदाऽब्जवान्।
पीताम्बरः सकौस्तुभवनमालोपवीतकः ॥२४॥
श्रीवत्सांकितवक्षाश्च कमलास्वर्णरेखकः।
सुनन्दाद्यैः पार्षदैश्च सेवमानः सुहास्यवान् ॥२५॥
दर्शयामास रूपं स्वं नारदाय तपस्विने।
दृष्ट्वा तं सहसोत्थाय नमस्कृत्य कृतांजलिः ॥२६॥
तुष्टाव परमात्मानं करुणासागरं प्रभुम्।
जगतामीश्वरं साक्षिरूपं भक्तकृतादरम् ॥२७॥
कृपालुं तापसं दिव्यं वन्दे प्रसीद पावन!।
सतां लोकस्य रक्षायै हिताय तप आदधन् ॥२८॥
तपःफलप्रदातर्मे प्रसीद सत्त्वमूर्तिमन्!।
कोटिकन्दर्पलावण्यविलासः कामवर्जितः ॥२९॥

ब्रह्मचार्यसि देवेश प्रसीद सत्यवाग् विभो।
आश्रितानां कल्पवृक्षो दीनानां दुःखहारकः ॥३०॥
ज्ञानेन बन्धहा ब्रह्मसुखदाता प्रसीदताम्।
जीवान्तरिन्द्रियसूक्ष्मभूताऽन्तर्यामिनीश्वर ॥३१॥
ब्रह्मसुखानुभूते त्वं प्रसीद चिदचिन्मय।
यदाश्रिताः मुरा दुःखाम्बुधिं तरन्ति गोपदम् ॥३२॥
नमस्ते सर्वदा परब्रह्मणे ब्रह्मणे तथा।
वासुदेवाय कृष्णाय भूम्ने नारायणाय च ॥३३॥
महाविष्णुस्वरूपाय वैराजाय च ते नमः।
नमो हिरण्यकोशाय त्रिदेवेभ्यो नमो नमः ॥३४॥
अद्य मे सफलं जन्म चाद्य मे सफलं तपः।
अद्य मे सफलं ज्ञानं श्रीहरे तव दर्शनात् ॥३५॥
श्रुत्वा प्राह हरिस्तं च तुष्टोऽहं तपसा तव।
स्तोत्रेणाऽतिसुतुष्टोऽहं वरदोऽहं तवाऽग्रतः ॥३६॥
सर्वश्रेष्ठो मम भक्तस्त्वं चासि सिद्धकामनः।
वरं वरय भद्रं ते सर्वं ददामि मा चिरम् ॥३७॥
नारदः प्राह भक्तिं ते पदयोर्देहि निश्चलाम्।
एषा शिला मे तपसां स्थानं तीर्थं सदाऽस्तु च ॥३८॥
मच्छिलासन्निधानं तु न त्याज्यं भवता क्वचित्।
मत्तीर्थदर्शनात्स्पर्शात्स्नानादाचमनात् तथा ॥३९॥
पुनर्देहं न चाप्नुयात् तृतीयोऽस्तु वरश्च मे।
श्रुत्वा नारायणः प्राह एवमस्तु सदाऽनघ ॥४०॥
चराचरविदेहोऽहं तव तीर्थे वसाम्यहम्।
तव भक्तिः शाश्वती च मयि भवतु नारद ॥४१॥
इत्युक्त्वा च हरिस्तत्र मूर्तावन्तरधीयत।
प्रथमो नारदो हृष्टो ययौ मधुपुरीं ततः ॥४२॥
इत्यस्ति नारदशिला तीर्थं परमपावनम्।
चतुर्थो नारदस्तत्र तीर्थं कृत्वा ययौ पुनः ॥४३॥
मार्कण्डेयशिलायाश्च तीर्थार्थं नरसंयुतः।
पुरा त्रेतायुगस्याऽन्ते मृकण्डुतनयो महान् ॥४४॥
मार्कण्डेयस्तपश्चक्रे शिलायां तत्स्थलं ययौ।
पुरा नाम्ना मृगशृंगो मुनिस्त्वासीत् तपोधनः ॥४५॥
तस्य भार्याश्चतस्रश्च पातिव्रत्यपरायणाः।
सुवृता कमला चैव विमला सुरसा त्विति ॥४६॥
कालेन महिषी तस्य सुवृता सुषुवे सुतम्।
जातकर्म कुमारस्य पिता चक्रे विधानवत् ॥४७॥
चकार नामकरणं मृकण्डुमिति विश्रुतम्।
निःशंकाश्च मृगगणाः कण्डूयन्तेऽस्य विग्रहे ॥४८॥

तस्मान्मृकण्डुरिति च नाम सार्थकमेव तत् ।
कृतोपनयनः पित्रा वेदानध्यैष्ट सर्वशः ॥४९॥
मुद्गलस्य मुनेः कन्यामुपयेमे मरुद्वतीम् ।
मृकण्डुरनपत्योऽभूदिदमेवाऽभ्यचिन्तयत् ॥५०॥
अहं सदारो गच्छामि राजधानीं शिवस्य वै ।
भक्तप्रियः शिवो यत्र कर्णे जपति तारकम् ॥५१॥
गत्वा तत्र प्रथमतो मणिकर्ण्यां विधानतः ।
स्नानं कृत्वा महादेवं नत्वोवास यथासुखम् ॥५२॥
शंकरं तोषयामास तपसा सह भार्यया ।
तुष्टश्चाह पिनाकी त्वं मत्तो वरं गृहाण च ॥५३॥
सोऽपि वव्रे वरं शंभो पुत्रं देहीति मा चिरम् ।
शंभुस्तस्याऽनपत्यस्य भालं दृष्ट्वा ह्युवाच तम् ॥५४॥
सप्तजन्मसु तेऽपत्यं नास्तीति वैधसी लिपिः ।
तथापि तपसा तुष्टो ददामि पुत्रमेकलम् ॥५५॥
किमिहेच्छसि पुत्रं त्वं निर्गुणं चिरजीविनम् ।
आहोस्विदेकं सगुणं सर्वज्ञं षोडशाब्दिकम् ॥५६॥
इत्युक्तः सोपि धर्मात्मा नाहमिच्छामि निर्गुणम् ।
अल्पायुरपि पुत्रो वा सर्वज्ञोऽस्तु जगत्पते ॥५७॥
शंभुः प्राह भविता ते षोडशायुः सुतो मुने ।
धार्मिको गुणवान् ख्यातः सर्वज्ञः कीर्तिमाँस्तथा ॥५८॥
इत्युक्त्वा प्रययौ शंभुर्मुनिर्ययौ निजाश्रमम् ।
काले भार्याऽभवत्तस्य चान्तर्वत्नी मरुद्वती ॥५९॥
तनयः समये तस्यां मरुद्वत्यामजायत ।
जातकर्म नामकर्म पिता चकार यत्नतः ॥६०॥
संस्कारान् कृतवान् सर्वान् पञ्चमेऽब्दे व्रतं ददौ ।
वेदान्स विधिनाऽध्यैष्ट विद्यां जग्राह शक्तिमान् ॥६१॥
संप्राप्ते षोडशेऽब्दे तु पिता तस्य मृकण्डुकः ।
शोकमग्नोऽभवत् दृष्ट्वा पुत्रमन्तिकमृत्युकम् ॥६२॥
पुत्रोऽपि पितरं प्राह किं ते शोकस्य कारणम् ।
मृकण्डुः प्राह तनयं शोचामि तव कारणम् ॥६३॥
आयुः षोडशवर्षाणि तव दत्तं पिनाकिना ।
स कालोऽयं समायातस्तस्माच्छोचामि पुत्रक ॥६४॥
पित्रेति कथितं श्रुत्वा मार्कण्डेयोऽब्रवीदिदम् ।
मन्निमित्तः पितः शोकं कदाचित्त्वपि मा कृथाः ॥६५॥
प्रयतिष्ये यथा तात यथा यास्याम्यमर्त्यताम् ।
समाराध्य परात्मानं हृदयस्थं हरिं प्रभुम् ॥६६॥
इति निर्णीय तातेन सहितः स ययौ द्रुतम् ।
मथुरायां यमुनायां स्नातुं राधयितुं हरिम् ॥६७॥
गत्वा तत्र यमुनायास्तीरे तस्थौ स्मरन् हरिम् ।
द्वादशाक्षरमन्त्रस्य जपं कुर्वन्पुपूज तम् ॥६८॥
यदृच्छया नारदोऽपि मथुरायामगात्तदा ।
मृकण्डुस्तं निरीक्ष्यैव सपुत्रस्तं ननाम च ॥६९॥
सत्कृतः स्वागताद्यैश्च नारदो म्लानभावतः ।
प्राह दृष्ट्वा पुत्रभाले लेखां मृत्युप्रयायिनीम् ॥७०॥
मृकण्डोऽयं तव पुत्रः स्वल्पायुर्दृश्यते खलु ।
मृकण्डुः प्राह देवर्षे दीर्घायुष्यं प्रकल्पय ॥७१॥
नारदः प्राह विप्रर्षे लेखां वेधःप्रकल्पिताम् ।
मार्जयितुं न वै शक्ताः सुराऽसुरास्तथाऽपरे ॥७२॥
कर्मसापेक्षका लेखा लिख्यन्ते जन्मना सह ।
आयुर्विद्या च वित्तं च यशो निधनमित्यपि ॥७३॥
पञ्चैवैतानि सृज्यन्ते गर्भस्थस्यैव देहिनः ।
तथापि सन्ति सन्तो वै लिपिं मार्जयितुं क्षमाः ॥७४॥
सतामाशीर्वचनैश्च सदा दुःखं सुखायते ।
कुभाग्यं लीयते चैवोत्पद्यते भाग्यसौष्ठवम् ॥७५॥
पापं प्रलीयते पुण्यं जन्यते च सतां बलात् ।
मायां पापं च कर्म च कालं दुर्भाग्यमित्यपि ॥७६॥
तस्य वै परिवर्तन्ते येन सन्तः प्रतोषिताः ।
महाभागवताः सन्तः ऋषयश्च तपोधनाः ॥७७॥
प्रसन्ना यत्र जायन्ते तत्र भद्राणि कोटिशः ।
सन्तः प्रसन्ना जायन्ते प्रणामस्तुतिसेवनैः ॥७८॥
तस्मादतिथयो ये ये समागच्छेयुरत्र हि ।
तथा च तीर्थयात्रायां मिलेयुर्ये च तारकाः ॥७९॥
तेभ्यः सर्वेभ्य एव द्राक् प्रणतिः सांजलिस्तथा ।
कर्तव्याऽनेन बालेन नाऽऽलस्यं कार्यमेव यत् ॥८०॥
तत्रैवं च क्वचित्कस्यचिन्महत्पुरुषस्य वै ।
चिरंजीवेत्याशिषाऽयं वर्धितः संभविष्यति ॥८१॥
तस्मात्तीर्थाटनं सम्यक् कुरु क्षेमं भविष्यति ।
ततो बद्रीमहाक्षेत्रं स्थानं तु नित्यदा हरेः ॥८२॥
याहि यत्र स्वयं साक्षाद्धरिं पश्यसि चक्षुषा ।
चिरंजीवी तव पुत्रो भविष्यति न संशयः ॥८३॥
श्रुत्वेत्याशीर्वचो लब्ध्वा मृकण्डुः ससुतस्ततः ।
ययौ तीर्थेषु सर्वत्र प्रभासे रैवताचले ॥८४॥
द्वारिकायां पुष्करे च नर्मदायां च भार्गवे ।
सरय्वां यमुनायां च गंगायां त्र्यम्बकेश्वरे ॥८५॥
कावेर्यां ताम्रपर्ण्यां चाऽरुणाचलेऽतिदक्षिणे ।
रामेश्वरेऽथ सामुद्रे तीर्थानि प्रचकार सः ॥८६॥

पितुरनुज्ञां संप्राप्य दक्षिणाऽर्णवरोधसि ।
लिंगं संस्थाप्य विधिवन्मार्कण्डेयो निजाह्वयम् ॥८७॥
कृत्वा त्रिषवणं स्नानं त्रिकालं शिवपूजकः ।
प्रार्थ्य त्रिकालपूजान्तेऽर्थयित्वा नृत्यति प्रियम् ॥८८॥
तेनाऽर्हणेन सन्तुष्टो दिनेनैकेन शंकरः ।
पूजितश्च महाभक्त्या मार्कण्डेयेन वस्तुभिः ॥८९॥
तावत्तत्राऽर्णवे स्नातुं सप्तर्षय उपस्थिताः ।
मार्कण्डेयः समुत्थाय ननामर्षींश्च पादयोः ॥९०॥
चिरंजीवेति सप्तोक्तः प्रहर्षं परमं ययौ ।
मृकण्डुः प्राह सप्तर्षीन् नाऽस्याऽऽयुर्वर्धतेऽधिकम् ॥९१॥
कथं चिरायुर्भविता सत्यवाचां वचो मृषा ।
यद्वा ललाटलेखा सा वेधसोऽलीकतां व्रजेत् ॥९२॥
महर्षिभिस्तदालोक्य नीतो द्राक् ब्रह्मणः सभाम् ।
नत्वा च तिष्ठति चाग्रे चिरंजीवेत्यजो जगौ ॥९३॥
ऋषिभिः कथितं चास्य रेखा संपूर्णतां गता ।
कथं चिरंजीवनोऽयं संभवेत्तव वाक्यतः ॥९४॥
यदि वाक्यं तव तथ्यं रेखामन्यां विधापय ।
श्रुत्वा च वेधसा लेखा चिरंजीवेति निर्मिता ॥९५॥
द्रागेव सः ऋषिभिरानीतो दक्षिणसागरे ।
तावदायात एवात्र कालो मृत्युसहायवान् ॥९६॥
वृत्तरक्तान्तनयनः सर्पवृश्चिकरोमवान् ।
दंष्ट्राकरालवदनश्चूर्णितांजनसन्निभः ॥९७॥
समागत्य च तस्याऽसौ यमस्याऽऽज्ञानुसारतः ।
अदृष्ट्वा नूतनां रेखां पूर्वरेखाविधानतः ॥९८॥
पाशमवासृजत्कालो मार्कण्डेयस्तमब्रवीत् ।
काल तावत्प्रतीक्षस्व पूजां निर्वर्तयाम्यहम् ॥९९॥
महेश्वरः प्रसीदतात् सततं पूजयाऽनया ।
तमब्रवीत् ततः कालो मार्कंडेयं हसन्मुहुः ॥१००॥
सप्तर्षीणां शृण्वतां च नीतिवाक्यानि तत्र ह ।
प्रथमे वयसि पुण्यं यो न करोति शुच्यते ॥१०१॥
मासाऽष्टकेन तत्कुर्याद् येन वर्षाः सुखं वसेत् ।
दिवसे चैव तत्कुर्याद् येन रात्रिं सुखं वसेत् ॥१०२॥
पूर्वे वयसि तत्कुर्याद्येन वृद्धः सुखं वसेत् ।
यावज्जीवं तु तत्कुर्याद् येन प्रेत्य सुखं वसेत् ॥१०३॥
श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चाऽपराह्णिकम् ।
न च प्रतीक्षते कालः कृतमस्य न वा कृतम् ॥१०४॥
इदं कृतमिदं कार्यमिदमन्यत्कृताऽकृतम् ।
एवमीहासमायुक्तं कृतान्तः कुरुते वशे ॥१०५॥

नाऽप्राप्तकालो म्रियते विद्धः शरशतैरपि ।
कुशाग्रेणापि संस्पृष्टः प्राप्तकालो न जीवति ॥१०६॥
चक्रवर्तिसहस्राणि पुरन्दरशतानि च ।
प्रापितानि मया याम्यां प्राप्तकालस्त्वमेहि च ॥१०७॥
मार्कण्डेयस्तदा प्राह त्वया नैतच्छ्रुतं च किम् ।
नृणामीश्वरभक्तानां न भवन्त्यापदः क्वचित् ॥१०८॥
ब्रह्मादयोऽपि तान् क्रुद्धा न शक्ता हन्तुमीश्वराः ।
कालः प्राह च यावन्त्यो गंगायां सिकता मुने ॥१०९॥
तावन्त एव ब्रह्माणो मया कालेन संहृताः ।
त्वां च नयामि सामर्थ्याद् यस्य भक्तः स रक्षतु ॥११०॥
तेनैवं गर्जता तत्र कालेनाऽसौ महामुनिः ।
हठाद्ग्रसितुं चारब्धः क्षिप्तः पाशः गलोपरि ॥१११॥
तावल्लिंगात्समुत्तस्थौ शंभुर्हुंकारगर्जनः ।
उद्धृत्य पादकमलं प्रजहार भुजान्तरे ॥११२॥
पाशो विच्छिन्नतां यातो दूरे मृत्युः पपात ह ।
सप्तर्षयोऽपि सन्तोषैरवर्धयन् मृकण्डुजम् ॥११३॥
प्राहुर्मृत्युं पश्य मृत्यो चिरंजीवेति नूतनाम् ।
रेखां ललाटलिखितां ब्रह्मणा परमेष्ठिना ॥११४॥
एतस्मिन्नन्तरे चित्रगुप्तायाऽवेदितं नवम् ।
श्रावणैः पितृभिर्लेख्यं चिरंजीव मृकण्डुजः ॥११५॥
तावद् दूताः प्रेषिताश्चाऽपरे दत्वाऽमृताऽऽवलिम् ।
माऽऽनयन्तु मृकण्डोश्च सुतं कल्पान्तरेष्वपि ॥११६॥
इति मृत्युश्च कालश्च दूताश्च विफला ययुः ।
मार्कण्डेयः प्रलयेऽपि क्षीराब्धौ विष्णुसन्निधौ ॥११७॥
समाधौ तिष्ठते नैव म्रियते चिरजीवनः ।
स्वस्थानमृषयो जग्मुः शंभुर्लिंगे तिरोऽभवत् ॥११८॥
मृकण्डुश्च ययौ स्वस्याश्रमं पुत्रश्च केवलः ।
नारदस्योपदेशेन ययौ बदरिकाश्रमम् ॥११९॥
स्नात्वा चालकनन्दायां शिलामुपाविशत्ततः ।
जजापाऽष्टाक्षरं मन्त्रं त्रिरात्र्यन्ते नरायणः ॥१२०॥
प्रसन्नश्चाऽऽजगामाशु दर्शनं मंगलं ददौ ।
शंखचक्रगदापद्मवनमालाविभूषितम् ॥१२१॥
हरिं दृष्ट्वा समुत्थाय प्रेमगद्गदया गिरा ।
तुष्टाव प्रणतो भूत्वा मार्कण्डेयो नरायणम् ॥१२२॥
अशाश्वतेऽत्र संसारेऽशाश्वते वर्ष्मणि स्थितम् ।
चेतनं मां कृपाश्चिरजीविनं मुक्तमेव हि ॥१२३॥
कालमृत्यू कृतौ दूरौ शंभुरूपेण सर्वथा ।
मृतं जीवन्तं भ्रान्तं मां सदैवं त्राहि केशव ॥१२४॥

ऋषिस्त्वं चर्षिरूपेण मृतान् जीवयसे विभो ।
शाश्वतेऽमृतधामाख्ये सदा जीवय मां प्रभो ॥१२५॥
देहि दीक्षां वैष्णवीं मे पूजायां दर्शनं तव ।
निश्चलां देहि मे भक्तिं शिलायां तव सन्निधिम् ॥१२६॥
तथेत्युक्त्वा नरनारायणः श्रीभगवान्स्वयम् ।
ददौ च वैष्णवीं दीक्षां मन्त्रमष्टाक्षरं शुभम् ॥१२७॥
शिलायां हरिसान्निध्यं पूजायां दर्शनं सदा ।
ददौ तस्मै चिरजीविमार्कण्डेयाय योगिने ॥१२८॥
मार्कण्डेयो वैष्णवोऽभूच्छिलायामत्र नारद ।
नारायणस्तथा चात्र शिलायां समवस्थितः ॥१२९॥
मार्कण्डेयशिला चेयं द्वितीया कीर्तिता च ते ।
हरिस्तिरोऽभवत्तत्र ययौ गृहं मृकण्डुजः ॥१३०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने वह्नेः सर्वभक्षित्वदोषपरिहारकाग्नितीर्थनारदतपःस्थल-नारदशिलातीर्थ-मार्कण्डेयचिरजीवित्वाख्यानमार्कण्डेय-शिलातीर्थमिति निरूपणनामा षडधिकद्विशत-तमोऽध्यायः ॥२०६॥

श्रीनारायण उवाच—

ततो लक्ष्मि ! नारदः स नरेण सहयायिना ।
वैनतेयशिलां नीतः कथिताख्यानकश्च वै ॥ १ ॥
कश्यपस्य विनतायां गरुडोऽरुण एव तौ ।
सुतौ चैका च कन्या सौदामिनी नभसि स्थिता ॥ २ ॥
गरुडो विष्णुवाहोऽभूदरुणः सूर्यसारथिः ।
विष्णुभक्तौ समर्थौ तौ महाबलपराक्रमौ ॥ ३ ॥
बदर्या दक्षिणे गन्धमादने शिखरे हिमे ।
गरुडस्तप आतेपे हरेर्वाहनकाम्यया ॥ ४ ॥
क्वचित्फलं क्वचिन्मूलं क्वचिद्वारि ततोऽनिलम् ।
नारायणजपं कुर्वन्स्मरन्मूर्तिं हरेः शुभाम् ॥ ५ ॥
पदैकेनोपसंक्रम्य क्ष्मायां जेपेऽतिसंयमः ।
त्रिंशद्वर्षसहस्राणि तपश्चचार दुश्चरम् ॥ ६ ॥
ततः प्रसन्नो विष्णुश्च दिव्यपीताम्बरद्वयः ।
चतुर्भुजो निजशस्त्रधरो हास्यसुशोभनः ॥ ७ ॥
आविर्बभूव पुरतः कोटीन्दुकान्तिसूज्ज्वलः ।
आजुहाव गरुडं सः वत्स निबोध जागृहि ॥ ८ ॥
तथापि नोत्थितो ध्यानाद् दध्मौ शंखं हरिस्तदा ।
तथापि न बहिर्यातस्तदा योगेश्वरो हरिः ॥ ९ ॥

ततः प्रविश्य गरुडे प्राणेन्द्रियान्तरात्मसु ।
बहिरानीय च जाग्रतं कृत्वा पुरतः स्थितः ॥१०॥
गरुडोऽतिप्रसन्नः सन् दृष्ट्वा ननाम दण्डवत् ।
पुलकांऽकितसर्वांगस्तुष्टाव च कृताञ्जलिः ॥११॥
जय त्रिलोकजीवानां प्राणरूप प्रभो हरे ।
अघनाशकगीर्वाणवन्दितचरणाम्बुज ॥१२॥
सुरारिध्वंससामर्थ्य सुरासुरनमस्कृत ।
स्वभक्तहृद्गतमोहध्वंसकृत् ते नमोनमः ॥१३॥
तापत्रयप्रशान्तिकृच्चरणोभ नमोऽस्तु ते ।
जगज्जन्मस्थितिध्वंसकार्यकृत्त्रिस्वरूपक ॥१४॥
भक्तमानससद्रम्य शास्त्रवेदादिरूपित ।
सुराऽसुरप्रवन्दितपादपद्म नमोऽस्तु ते ॥१५॥
अष्टैश्वर्यसमायुक्त वनमालाविराजित ।
कंजनेत्र तिलपुष्पनासिकाऽलक्तपत्तल ॥१६॥
स्थलपद्मपत्रतुल्यकरद्वय नमोऽस्तु ते ।
भक्तहृत्कृतनित्यास दिव्यगुणगणान्वित ॥१७॥
अवितात्मजन धर्ममूर्ते हरे नमोऽस्तु ते ।
दिव्यैश्वर्यसमजुष्ट पातु मां परमेश्वर ॥१८॥
एकः सन्नपि सर्वत्राऽनन्तरूपधर प्रभो ।
भक्तकार्यकृते द्राक् चाऽऽयासि नाथ नमोऽस्तु ते ॥१९॥
काऽहं पक्षी तमोव्याप्तः क्व त्वं सत्त्वमयः प्रभुः ।
कृपा ते दर्शने हेतुः कृपालोऽस्तु च ते नमः ॥२०॥
सापराधस्य लोकस्य रक्षां करोषि सर्वथा ।
हितकृत् सुखकृच्चैव गुणाश्रय नमोऽस्तु ते ॥२१॥
यज्ञभुक् विश्वसंपुष्टिकृत् त्राहि मां जनेश्वर ।
कन्याऽम्बराणि नीत्वा च कदम्बवृक्षमास्थित ॥२२॥
प्रेमभक्तिसमालभ्य दासैककरुणाऽव माम् ।
विश्वदुःखप्रशमन मे दास्यं देहि केशव ॥२३॥
एवं स्तुतो हरिः साक्षाद् गरुडेन महात्मना ।
समाजुहाव गंगां च पूजार्थं स्वस्य तत्र वै ॥२४॥
ततः पंचमुखी गंगा ह्याविरासीन्नगोपरि ।
तज्जलेन हरेः पुजां चकार विनतासुतः ॥२५॥
व्रियतां वर इत्युक्तो गरुडो हरिणा ततः ।
तवैकवाहनः श्रीमान् बलवीर्यपराक्रमः ॥२६॥
अजेयो देवदैत्यानां स्यामहं ते प्रसादतः ।
शिलेयं मम नाम्ना च तीर्थीभूताऽस्तु सर्वदा ॥२७॥
एतस्याः स्मरणात्पुंसां विषव्याधिर्न जायताम् ।
श्रुत्वा प्राह हरिस्तस्मै सर्वं भवतु तेऽण्डज ॥२८॥

बदरीं त्वं प्रयाह्येव नारायणसमीपतः ।
स्नानं नारदतीर्थादावुपवासत्रयं तथा ॥२९॥
कृत्वा मे दर्शनं ते वै सुलभं हि भविष्यति ।
गरुडः शीघ्रमागत्य नत्वा च बदरीं तथा ॥३०॥
वह्नितीर्थे कृतस्नानस्तीर्थे च नारदेऽपि च ।
स्नात्वा शिलां समाश्रित्य भक्तिचर्यापरोऽभवत् ॥३१॥
शिलासेयं गारुडी वै कथ्यते तत्प्रसंगतः ।
गन्धमादनपाषाणो वैनतेयीशिलोच्यते ॥३२॥
तत्रागत्य स्वयं विष्णुर्लीनो नारायणे तदा ।
शिलासान्निध्यमाप्तश्च तेन तीर्थं हि तन्मतम् ॥३३॥
गरुडश्च ययौ विष्णोर्वाहनो विष्णुधाम यत् ।
वैकुण्ठं दिव्यतामाप्तः प्रभोर्योगात्प्रभुर्भवेत् ॥३४॥
वाराह्याः श्रृणु माहात्म्यं नारदाऽत्र पुरा हरिः ।
रसातलात्समानीय पृथ्वीं संस्थाप्य वारिधौ ॥३५॥
हिरण्याक्षं निहत्यैव बदरीं समुपागतः ।
योगधारणया चात्र वाराहो भगवान् स्थितः ॥३६॥
सेयं शिला च वाराही प्रोच्यते मुक्तिदा सदा ।
गंगाजलेन संस्नात्वा चाहोरात्रे जपेत् स्थितः ॥३७॥
शिलायां दिव्यदृष्टिश्च जायते नात्र संशयः ।
नारसिंह्याश्च माहात्म्यं शिलायाः श्रूयतां शुभम् ॥३८॥
हिरण्यकशिपुं हत्वा गतवान् नृहरिस्तदा ।
अत्युग्रक्रोधदीप्तांगः प्रलयानलसन्निभः ॥३९॥
अभूद्देवैश्च शान्त्यर्थं स्तुतः स्थित्वा सुदूरतः ।
प्रसन्नोऽभूदुवाचैतानावृणीध्वं वरं सुराः ॥४०॥
श्रुत्वा ब्रह्मा हरिं प्राह रूपं भयावहं तव ।
चात्युग्रं संहर नाथ गृहाण च चतुर्भुजम् ॥४१॥
ततो हरिर्विचार्यैव विशालां प्रययौ द्रुतम् ।
गंगाजले स्वयं स्नातः शान्तोऽभूच्च चतुर्भुजः ॥४२॥
यत्र स्थितो हरिः सेयं शिला च नारसिंहिका ।
नृसिंहोपि शिलारूपी जलक्रीडापरोऽभवत् ॥४३॥
एवं रूपं शिलाप्रख्यं कृत्वा द्वितीयरूपतः ।
समागच्छद्धरिः सिंहारण्यं रैवतपर्वते ॥४४॥
तत्राऽभवन्महद्युद्धं शरभेण शिवेन वै ।
ततो देहं हि तत्याज नृसिंहो लीलया भुवि ॥४५॥
इत्येवं नारदः पञ्चशिलातीर्थं विधाय च ।
श्रुत्वा सहेतुकं सर्वं नरेण कथितं तदा ॥४६॥
ययौ स्नात्वा तीर्थविधिं कृत्वा तीर्थान्तरं ततः ।
ब्रह्मतीर्थं ययौ तत्र श्रुतवान् वृत्तमेव सः ॥४७॥

एकदा नाभिकमले स्थितस्य ब्रह्मणो मुखात् ।
वेदान्नीत्वा ह्यसुरौ द्वौ जग्मतुर्मधुकैटभौ ॥४८॥
तदा हृतस्मृतिर्ब्रह्मा किंचित्कर्तुं शशाक न ।
अतो बदरिकामेत्य तुष्टाव परमेश्वरम् ॥४९॥
ततः कुण्डात्समुत्पन्नो हयशीर्षो निजायुधः ।
पीताम्बरधरः शुक्लस्वर्णवर्णश्चलच्छटः ॥५०॥
ब्रह्मणा प्रार्थितोऽसुरविनाशाय ययौ प्रभुः ।
विनिहत्याऽसुरौ वेदानादाय ब्रह्मणोऽन्तिकम् ॥५१॥
उपाययौ हयशीर्षो भगवान् प्रददौ च तान् ।
यत्र स्थले ददौ वेदान् स्वस्थोऽभवच्च विश्वसृट् ॥५२॥
लीनोऽभवच्च भगवान् तत्तीर्थोत्तममुच्यते ।
ब्रह्मकुण्डमिति ख्यातं दिव्यं ज्ञानप्रदं शुभम् ॥५३॥
दर्शनात्पापनाशश्च ब्रह्मलोकगतिर्भवेत् ।
स्नानाद्विष्णोस्तु वैकुण्ठं यान्ति प्राणधरा यतः ॥५४॥
सिद्धैस्तत्र स्तुता वेदा धर्तुं रूपं द्वयं द्वयम् ।
एकान्ते द्रवरूपेण मूर्तिर्वोऽत्राऽवतिष्ठताम् ॥५५॥
द्वितीया ब्रह्मणा सार्धं ब्रह्मलोकं व्रजेत्पुनः ।
ततो वेदास्तु चत्वारो द्वैधीकृतात्मरूपकाः ॥५६॥
ब्रह्मणा ब्रह्मलोकं ते ययुः सार्धं प्रहर्षिताः ।
द्रवरूपा बदर्यां चाऽवसन् शाश्वतसंस्थिताः ॥५७॥
ऋग्यजुःसामाऽथर्वाणो भगवत्पार्श्ववर्तिनः ।
वर्तन्ते तीर्थरूपास्ते तत्र स्नानादिकं कृतम् ॥५८॥
नारदेनाथ वेदानामुदगस्ति सरस्वती ।
तत्र जले कृतं स्नानं तीर्थे सारस्वते शुभे ॥५९॥
दर्शनस्पर्शनस्नानपूजास्तुत्यभिवन्दनैः ।
सरस्वत्या न विच्छेदः कुले तस्य कदाचन ॥६०॥
मन्त्रसिद्धिश्च जायेत वाणी वाग्विभवप्रदा ।
द्रवरूपधरा तत्र तीर्थकृतां हि जायते ॥६१॥
तत्र कृत्वा तीर्थविधिं ततोऽर्वागुदक्षिणे मनाक् ।
द्रवधाराऽस्ति यत्रेन्द्रस्तपश्चक्रे तु पूर्वजे ॥६२॥
इन्द्रपदं च तन्नाम द्वितीयमपि विश्रुतम् ।
तपः कृत्वा महाघोरं प्रसन्तुष्य नरायणम् ॥६३॥
लेभे चेन्द्रपदं सर्वसुरासुरनमस्कृतम् ।
प्रतिमासं त्रयोदश्यां शुक्लायां हरितोषणे ॥६४॥
उपवासद्वयं कृत्वा पूजयित्वा जनार्दनम् ।
सर्वपापविनिर्मुक्तः शक्रलोके महीयते ॥६५॥
तत्रैव मानसोद्भेदनामकं तीर्थमस्ति हि ।
यत्र स्थल्यां महर्षीणां वासोऽस्ति नित्यदा मतः ॥६६॥

मानसं चिदचिद्ग्रन्थिमुद्ग्रथ्नन्ति च सर्वशः।
भिन्दन्ति हृदयग्रन्थीदिछन्दन्ति बहुसंशयान् ॥६७॥
कर्माणि क्षपयन्त्यस्मान्मानसोद्भेद इत्यभूत्।
परितः ऋषयस्तत्र वसन्ति तापसाः सदा ॥६८॥
गिरिदरीषु फलसुमूलवार्यनिलाऽशनाः।
ते त्रिषवणस्नातारः सदा जीतेन्द्रियान्तराः ॥६९॥
यदा तत्र जलबिन्दुं लभते पुण्यवान् जनः।
भवति व्याससदृशो यमपितृसमः क्रमात् ॥७०॥
सकामो वा च निष्कामो मानसोद्भेदके च यत्।
भुक्तिं मुक्तिं समिच्छन्वा करोति कर्म सद्विधम् ॥७१॥
फलं भुक्त्वा पुनर्मुक्तिं लभते हि न संशयः।
स्वर्गादिषु फलं भुक्त्वा पुरुषार्थं परं लभेत् ॥७२॥
अथ तस्मात्पश्चिमेऽस्ति वसुधारेतिसंज्ञितम्।
तीर्थं तत्र ययौ सोऽयं नारदो नरसंयुतः ॥७३॥
त्रिलोक्यां सर्वतीर्थेभ्यः श्रेष्ठो बदरिकाश्रमः।
श्रुत्वेति वसवश्चाष्टौ नारदात्प्रथमात् ययुः ॥७४॥
त्रिंशद्वर्षसहस्राणि दलांबुप्राशनास्तपः।
चक्रुरुपाययुः सिद्धिं नारायणस्य दर्शनम् ॥७५॥
दर्शनेन प्रसंहृष्टा अवापुः सुखमुत्तमम्।
वैष्णवीं प्राप्य दीक्षां ते ययुः स्थानं स्वकं स्वकम् ॥७६॥
अत्र पुण्यवतां ज्योतिर्दृश्यते जलमध्यतः।
तत्र स्नात्वा पूजयित्वा नारायणं नरं तथा ॥७७॥
इह सर्वं सुखं भुक्त्वा यान्त्यन्ते चाऽक्षरं पदम्।
दिनत्रयमुपोषिताः सिद्धान्पश्यन्ति साधवः ॥७८॥
आमो भवश्च सोमश्च धरश्चैव नलोऽनिलः।
प्रत्यूषश्च प्रभावश्च वसवोऽष्टौ वसन्ति ये ॥७९॥
तानपि तत्र पश्यन्ति दिव्यरूपांश्च तैर्थिकाः।
मलिनाश्चापि शुद्ध्यन्ति मुक्तिभाजो भवन्ति च ॥८०॥
वसुधारात्मके तीर्थे स्नात्वा च नारदस्ततः।
पञ्चधारात्मकं तीर्थं ययौ नैर्ऋत्यदिग्भवम् ॥८१॥
प्रभासं पुष्करं कुरुक्षेत्रं गयां च नैमिषम्।
एतानि पञ्चतीर्थानि पापिनां पापदोषतः ॥८२॥
मलिनानि ययुर्विश्वसृजं नैर्मल्यहेतवे।
श्रुत्वा ब्रह्माऽऽगमहेतुं स्मृत्वा बदरिकाश्रमम् ॥८३॥
प्राह प्रगच्छत क्षिप्रं हरेर्बदरिकाश्रमम्।
यत्र प्रवेशमात्रेण पुण्यं स्यात्पापनाशकम् ॥८४॥
ततो नत्वा ययुः सर्वतीर्थानि बद्रिकाश्रमम्।
तत्र प्रवेशमात्रेण निरेनांसि बभूविरे ॥८५॥
ततो द्विरूपमास्थाय तिष्ठन्ति द्रवरूपतः।
स्वस्थानेऽपि गतान्येव वसन्ति स्वीयरूपतः ॥८६॥
तेषु स्नात्वा हरिं नत्वा पञ्चोपवासकृज्जनः।
इह भोगान्बहून् भुक्त्वा हरेः सालोक्यमाप्नुयात् ॥८७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने वैनतेयशिलागारुडीशिलापंचमुखीगंगा नारसिंहीशिला-ब्रह्मतीर्थसरस्वतीतीर्थद्रवधारेन्द्रपदतीर्थमान-सोद्भेदवसुधारापंचधारातीर्थादिनिरूपणनामा सप्ताधिकद्विशततमोऽध्यायः ॥२०७॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि! ततो ययौ नारदः सोमकुण्डकम्।
तपश्चचार भगवान् सोमो यत्र स्थले पुरा ॥ १ ॥
अत्रेस्तु तनयः सोमः दिव्यं स्वर्गसुखं महत्।
गन्धर्वेभ्योऽसकृच्छ्रुत्वा पितरं प्राप्तिकारणम् ॥ २ ॥
पप्रच्छ च पुनः प्राह भवाम्यहं यथा पितः।
ग्रहनक्षत्रताराणामोषधीनां पतिः परः ॥ ३ ॥
तथा मे साधनं ब्रूहि श्रुत्वाऽत्रिः समुवाच तम्।
तपसा प्राप्यते सर्वं समाराध्य हरिं तथा ॥ ४ ॥
न चास्ति दुर्लभं किञ्चित्साधूनामुभयत्र वै।
तादृशं च परं तीर्थं बद्रिकाश्रममस्ति हि ॥ ५ ॥
श्रुत्वा जगाम बदरीं सोमो विष्णोः प्रपूजनम्।
अष्टाक्षरमनोर्जापपूर्वकं प्रचकार वै ॥ ६ ॥
अष्टाशीतिसहस्राणि वर्षाणि भगवत्परः।
नित्यत्रिषवणस्नायी तपस्तेपेऽतिदारुणम् ॥ ७ ॥
श्रीहरिस्तत्तपसा च प्रसन्नः सन् समागतः।
सोमं प्रोवाच तु वरं वरयेति मुहुर्मुहुः ॥ ८ ॥
सोमो नत्वा हरिं तत्र दंडवत् प्रहसंस्तदा।
ग्रहनक्षत्रताराणामोषधीनामहं पतिः ॥ ९ ॥
द्विजानामपि सर्वेषां भूयासं ते प्रसादतः।
हरिः प्राह न ते तादृक् तपोऽस्त्यन्यद्वृणुष्व च ॥१०॥
सोमो नान्यं ययाचे वै वरं तेपे पुनस्तपः।
त्रिंशद्वर्षसहस्राणि ततश्च भगवानगात् ॥११॥
वरं वरय सोमं च प्राह सोमोऽपि तादृशम्।
वव्रे श्रुत्वाऽन्तर्दधे च हरिः सोमः पुनस्तदा ॥१२॥
चत्वारिंशत्सहस्राणि तपस्तेपेऽतिदारुणम्।
ततस्तुष्टो हरिस्तत्र शंखचक्रगदाब्जधृक् ॥१३॥

प्राविर्बभूव चोवाच वृणुष्व वरदानकम् ।
सोमः प्राह यदि तुष्टस्तं वरं संप्रयच्छ मे ॥१४॥
ग्रहनक्षत्रताराणामाधिपत्यं प्रयच्छ मे ।
तथौषधीनां विप्राणां यामिन्याश्च जगत्पते ॥१५॥
भगवानाह सोमं वै प्रार्थितं दुर्लभं त्वया ।
तथापि वितराम्यद्य भव राजा तथाविधः ॥१६॥
ततो दिवौकसः सर्वे मिलिता बदरीवने ।
अभिषिषिचुर्विधिवत्सोमं राजानमादृताः ॥१७॥
ततो विमानमारुह्य राजा भूत्वा निशाकरः ।
दिवं यातश्च तीर्थं तत्सोमकुण्डेति विश्रुतम् ॥१८॥
दर्शनाद्गतदोषाः स्युः सोमलोकं प्रयान्ति च ।
तत्स्पर्शनाद् यद्वा स्नानाद्विष्णुलोकं प्रयान्ति च ॥१९॥
न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ।
त्रिरात्रेण स्थितो मन्त्रं जपन् सिद्धिं सुविन्दति ॥२०॥
सोमतीर्थं तदा कृत्वा ययौ श्रीनारदो मुनिः ।
द्वादशाऽऽदित्यतीर्थे सः स्नानं चक्रे विधानतः ॥२१॥
कश्यपस्याऽदितेः पुत्रास्तपस्तप्त्वाऽतिदारुणम् ।
आदित्याः सूर्यतां प्राप्तास्तीर्थं पापहरं हि तत् ॥२२॥
रविवारेषु सप्तम्यां संक्रान्त्यां विधिवज्जनः ।
स्नानेन सप्तजन्माऽऽप्तपापनाशं करोति हि ॥२३॥
पाराकक्रृच्छ्रव्रतं तु विधिवच्च करोति यः ।
सूर्यलोके सुखं भुक्त्वा विष्णुलोकं प्रयाति सः ॥२४॥
स्नात्वा पीत्वा महारोगान्मुच्यते नात्र संशयः ।
तीर्थं कृत्वा ययौ चतुःस्रोतं तीर्थवरं ततः ॥२५॥
धर्मार्थकाममोक्षाश्च वर्तन्तेऽत्र द्रवात्मकाः ।
पूर्वादिदिक्षु क्रमशो भूतानां मुक्तिरूपकाः ॥२६॥
वर्तन्तेऽत्र परे क्षेत्रे हरेराज्ञानुसारतः ।
नान्यक्षेत्रे मिलन्त्येते देवानामपि दुर्लभः ॥२७॥
पुरुषार्थान्मूर्तिमन्तस्ते पश्यन्त्यत्र सात्त्विकाः ।
यैस्तु पुण्यान्यर्जितानि नारायणस्य सेवया ॥२८॥
पुमर्थतीर्थे ब्रह्माद्याः ऋषयो मुनयस्तथा ।
पर्वणि प्रयताः स्नातुमायान्ति तत्प्रसिद्धये ॥२९॥
तत्तीर्थं समनुष्ठाय ययौ श्रीनारदो नरः ।
तीर्थं सत्यपदं नाम त्रिकोणकुण्डमण्डितम् ॥३०॥
ब्रह्मा विष्णुश्च रुद्रश्च त्रिकोणस्थाः समाहिताः ।
तपः कुर्वन्ति लोकानां तोषणाय सहर्षिभिः ॥३१॥
एकादश्यां हरिस्तत्र स्वयमायाति पावनः ।
ऋषयो मुनयश्चैव सुराश्चान्ये तपोधनाः ॥३२॥
स्नातुमायान्ति कुण्डेऽत्र हरेर्भक्तिपरायणाः ।
जपं तपः स्तुतिं ध्यानं वंदनं पूजनं हरेः ॥३३॥
कुर्वतां ब्रह्मणा पुण्यपुञ्जं वक्तुं न पार्यते ।
स्नात्वा कृत्वा चोपवासं पूजयित्वा हरिं प्रभुम् ॥३४॥
जीवन्मुक्तश्चात्र भूत्वा ब्रह्ममुक्तस्ततो भवेत् ।
स्नात्वा प्राप्य सत्यलोकं ततो मोक्षपदं व्रजेत् ॥३५॥
गन्धर्वाऽप्सरसां यत्र मध्याह्ने हरिवासरे ।
गानं दिव्यं श्रूयते वै सत्यव्रतपरायणैः ॥३६॥
दर्शनात्पातकादीनि लीयन्ते तत्प्रतापतः ।
ययौ तीर्थविधिं कृत्वा नरनारायणाश्रमम् ॥३७॥
तीर्थे तीर्थादिमूर्धन्यं जलं परमनिर्मलम् ।
द्विविधं दृश्यते तत्र श्वेतं चाऽश्वेतमित्यपि ॥३८॥
तत्र स्नात्वा पूजयित्वा हरिं पापात् प्रमुच्यते ।
तत्र तीर्थविधिं कृत्वा ह्युर्वशीतीर्थमुत्तमम् ॥३९॥
ययौ नारायणाऽऽवासशिखरे विमलं जलम् ।
वर्तते यत्र शैत्याढ्यं नारदो मुनिराट् ततः ॥४०॥
पप्रच्छ च नरं तस्य वृत्तान्तं प्राह वै नरः ।
धर्मस्य पत्नी मूर्त्यासीन्नरनारायणौ तयोः ॥४१॥
पुत्रौ जातौ तु भगवान् हरिरक्षरधामवान् ।
नरोऽक्षर इतिप्रोक्तो नारायणो हरिः स्वयम् ॥४२॥
तौ च तपो विधातुं वै स्थितौ च नगयोर्द्वयोः ।
पित्रोः समाज्ञया शश्वत् तेपाते दारुणं तपः ॥४३॥
प्रजारक्षार्थमेवैतौ धर्मरक्षार्थमित्यपि ।
इन्द्रस्तत्तपसा भीतो राज्यनाशाभिशंकितः ॥४४॥
प्रेषयामास सगणं कामं वसन्तपार्श्वकम् ।
हर्षः प्रेमा तथा बाणाः धनुश्चाप्सरसस्तथा ॥४५॥
पवनश्च सुगन्धाढ्यः शीतलो मोदकृत्तथा ।
मेघकणैर्मिश्रितश्च निशायाः समयः शुभः ॥४६॥
चान्द्रज्योत्स्नापि धवला कोकिलाश्चातकास्तथा ।
मयूरा गायकाश्चैव नर्तका वादकास्तथा ॥४७॥
एवं सर्वे मिलित्वैव न न्यूनं साधनं भवेत् ।
तथेन्द्रस्याऽऽज्ञया सर्वे कामेन सह संगताः ॥४८॥
ययुर्यत्र नरनारायणौ तपतः सन्मुनी ।
प्रथमं चन्द्रमास्तत्र ज्योत्स्नां विस्तारयन् स्थितः ॥४९॥
सर्वं शान्तं च धावल्यधौतमिवाऽभवत्तलम् ।
निशाऽपि राजसं वेगमच्छतिमिरभासया ॥५०॥
समप्रासारयत्तत्र समयोऽपि च राजसः ।
रजःसंकल्पमादधन् प्रोत्तेजकोऽभवन्मुहुः ॥५१॥

कोकिला देवलोकस्था मेनाश्चैव मयूरकाः ।
कूजनानि मिष्टशब्दान् केकाश्चारेभिरे शनैः ॥५२॥
आम्राः पुष्पैर्मञ्जरीभिः शोभन्ते कामबोधकाः ।
वसन्तो वृक्षवल्लीषु सुरभिपुष्परूपभाक् ॥५३॥
सुगन्धाढ्यस्तदा जातो मन्दश्च शीतलोऽनिलः ।
गायका नर्तकाः सर्वे वादकाश्चानुरूपतः ॥५४॥
गायनं नर्तनं वाद्यं ह्यकुर्वन् काममिश्रितम् ।
हर्षः प्रेमा विविशतुर्नरनारायणौ तदा ॥५५॥
धनुषा मोहनाद्याश्च बाणाः क्षिप्ता मनोभुवा ।
अप्सरसां गणो दिव्यो हावभावविलासकृत् ॥५६॥
विविधांगप्रचालनप्रदर्शनप्रमोहनम् ।
चकारोनपञ्चदशवर्षरूपधरस्तदा ॥५७॥
नरनारायणयोश्च पादौ ममर्द भावतः ।
चुचुम्ब बहुधा पार्श्वे गत्वा गत्वा पुनः पुनः ॥५८॥
कामस्पर्शांस्तथा चक्रे गण्डहस्तकसक्थिषु ।
कामो मुमोच वै बाणान् परिश्रममगात् ततः ॥५९॥
सर्वविकारयोगेऽपि नरनारायणौ यथा ।
स्थितौ तु निश्चलनेत्रौ तपस्येव तथा स्थितौ ॥६०॥
मनागपि न चलितौ ध्यानमग्नौ तथा स्थितौ ।
समाजश्च तदा कामदेवस्य निष्फलोऽभवत् ॥६१॥
तपोध्वंसं प्रकर्तुं ते समर्था नाऽभवन्यदा ।
विमनस्का गताः सर्वे महेन्द्रमूचुरस्थिराः ॥६२॥
न तत्राऽस्मद्बलं किञ्चिद्विक्रमते हि निष्फलम् ।
सर्वं जातं कृतं यद्यत् कूर्मश्चाज्ञां यथा हरेः ॥६३॥
इन्द्रः श्रुत्वा च तान्सर्वान् नीत्वा तत्स्थलमाययौ ।
पुनः कामप्रयोगांश्च कारयामास तांस्तथा ॥६४॥
निष्फला अभवन् सम्यक् समाधिस्थहरेः पुरः ।
नारायणः स्वयं ध्यानादुत्थायाऽऽह समागतान् ॥६५॥
किमर्थमागता यूयमातिथ्यं गृह्यतामिति ।
इत्युक्त्वा फलमूलानि तेभ्यो ददौ स भूरिशः ॥६६॥
नारायणस्ततः प्राह नरं पश्येन्द्रमण्डलम् ।
अप्सरोभिर्महेन्द्रोऽयं गर्वं करोति मानसे ॥६७॥
नैतादृश्योऽन्यत्र सन्ति मोहिका वै सुरांगनाः ।
न च जानात्ययं मे त्वैश्वर्यलेशं विमोहितः ॥६८॥
मयैव रचिताः सर्वा मयि लीना भवन्ति च ।
मयैव पोषिता रूपवत्यो जानाति नैव सः ॥६९॥
तस्मादानय चाम्राणां मञ्जरीर्गच्छ मा चिरम् ।
ताश्च वामेन सक्थ्ना त्वं मर्दयाऽत्र हि सन्निधौ ॥७०॥
नरेणैवं कृते तत्रोत्पन्ना नारी महोज्ज्वला ।
ऊरोर्जाता चोर्वशी सा द्वादशाब्दापि कामुकी ॥७१॥
रूपानुरूपाऽवयवा यदग्रेऽप्सरसोऽसिताः ।
निस्तेजस्कास्तदा जाताः कामोऽपि गर्वखण्डितः ॥७२॥
इन्द्रो म्लानाननो जातो दृष्ट्वोर्वशीं नवीकृताम् ।
यस्य स्पर्शेन पुष्पाद्वै श्रेष्ठं त्रिलोकसुन्दरम् ॥७३॥
नारीरत्नं समुत्पन्नं कस्तं मोहयितुं क्षमः ।
मत्वैवं च क्षमायाचनार्थं नारायणं ययौ ॥७४॥
पतितः पादयोः शीघ्रं त्राहि कृतापराधतः ।
उवाच विह्वलो भूत्वा चापराधीव मानवः ॥७५॥
नारायणस्तदा प्राह तव कार्यं कृतं त्वया ।
गणयामि नाऽपराधं स्वर्गं याहि सुखी भव ॥७६॥
तपश्चरामि लोकानां प्रमुखार्थं न तृष्णया ।
राज्यस्य तव चान्यस्य पारमेष्ठ्यस्य वा कृते ॥७७॥
न मे तृष्णास्ति राज्यस्य न ते राज्ये स्पृहा मम ।
वैकुण्ठं चिदचित्सर्वं मम राज्यं हि शाश्वतम् ॥७८॥
मया कृतमिदं विश्वं नाहं मुह्यामि तत्र वै ।
त्वं यथा प्राकृतं मत्वा मोहयितुं च तापसम् ॥७९॥
कृतवान्वै श्रमं सर्वं वृथा नारायणे मयि ।
इन्द्रो नारायणं नत्वा मोहितो चोर्वशीमये ॥८०॥
मायाकार्ये सुरूपे च ययाचे तां हरेः पुनः ।
भगवन्नीदृशं रत्नं तापसानां च विघ्नकृत् ॥८१॥
स्वर्गयोग्यं च मे भाति नाऽनया ते प्रयोजनम् ।
देहि तस्माच्च मे नाथ याचेऽहं किंकरस्तव ॥८२॥
पुनर्नैवाऽपराधं वै करिष्ये ते तपोविधौ ।
नारायणेन श्रुत्वैतद्दत्तोर्वशी च सुन्दरी ॥८३॥
इन्द्राय सोऽपि हृष्टः सन् ययौ स्वर्गं समण्डलः ।
यत्रोर्वशी समुत्पन्नानरसक्थिप्रमर्दनात् ॥८४॥
तत्स्थलं जलसम्पन्नमुर्वशीकुण्डतीर्थकम् ।
तत्र स्नात्वा विधानेन ह्युपोष्य रजनीद्वयम् ॥८५॥
पूजयित्वा हरिं तत्र नरो नारायणो भवेत् ।
सकामस्य चोर्वशीसन्निभा देवी भवेद् दिवि ॥८६॥
उर्वशीकुण्डमासाद्य कामनाप्रबलो जनः ।
उर्वशीलोकमाप्नुयात् स्नानमात्रेण भावतः ॥८७॥
सदैव भगवाँस्तत्र चोर्वशीकुण्डसन्निधौ ।
प्राणिनां कम्पयन् श्रेयस्तपोमूर्तिर्व्यवस्थितः ॥८८॥
कीटाः पतंगाः शकुन्ता हसन्ति दिवि देवताः ।
भुक्तिमुक्तिसमायुक्ता वयं यूयं विमुक्तिदाः ॥८९॥

उर्वशीकुण्डमासाद्य दिनमेकं वसेन्नरः ।
उर्वशीदक्षिणे भागे ह्यायुधानि जगत्पतेः ॥९०॥
विद्यन्ते दर्शनात्तेषां न शस्त्रभयभाग्भवेत् ।
बहूनि सन्ति तीर्थानि गिरौ नारायणाश्रिते ॥९१॥
तान्यहं वेद सर्वाणि नान्यो वै प्राकृतो जनः ।
य इदं शृणुयाद्भक्त्या श्रावयेद्वा समाहितः ॥९२॥
पठेद्वा पाठयेत्तस्य तत्तत्तीर्थफलं भवेत् ।
सर्वपापानि निर्धूय सालोक्यं प्राप्नुयाद्धरेः ॥९३॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने सोमकुण्डतीर्थादित्यतीर्थचतुःपुरुषार्थतीर्थोर्वशीसमुत्पत्तितीर्थादिवर्णननामाऽष्टाऽधिकद्विशततमोऽध्यायः ॥ २०८ ॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ययौ पश्चान्नारदो मेरुसंज्ञकम् ।
स्थलं तीर्थं शुभं ब्रह्मकुण्डाद्दक्षिणतः स्थितम् ॥ १ ॥
नराऽऽवासगिरिर्मेरुः स्थापितो हरिणाऽत्र सः ।
यदा भगवता वासो विशालायां कृतः शुभः ॥ २ ॥
तदा मेरुं विहायैव सविद्याधरचारणाः ।
देवा महर्षयः सिद्धा हरेर्दर्शनलालसाः ॥ ३ ॥
विशालायां सदा स्थातुं समायाताः समुत्सुकाः ।
भगवद्दर्शनलब्धितिरस्कृततदालयाः ॥ ४ ॥
मेरुर्देवादिहीनो वै जातः शोकं चकार ह ।
भूत्वा दीनो ययौ नारायणं प्रार्थनहेतवे ॥ ५ ॥
प्राह हे भगवन् सर्वे तव दर्शनलालसाः ।
मां विहायाऽत्र संयाता विनाऽहं वसतिं शुभाम् ॥ ६ ॥
शोभे नातो मया तत्र नैव वस्तव्यमेव ह ।
अहमप्यत्र वसितुमिच्छामि चरणे तव ॥ ७ ॥
भगवाँश्च तदा प्राह नैवं क्षेमाय वै भवेत् ।
तव स्थित्या चतुर्दशभुवनानां स्थितिर्मता ॥ ८ ॥
तस्माद्देवादिभिस्तत्र स्थातव्यं वै मदाज्ञया ।
द्वितीयस्वस्वरूपैश्च स्थातव्यमत्र चैव यत् ॥ ९ ॥
त्वयाऽप्यत्र द्वितीयेन स्वरूपेण ममाश्रमे ।
सदा स्थातव्यमेवाऽत्र मत्सेवा लाभसंभवात् ॥१०॥
इत्याज्ञां समनुप्राप्य मेरुशृंगाणि सर्वशः ।
रूपं द्वितीयमासाद्य समायातानि सूक्ष्मतः ॥११॥
तानि कांचनरूपाणि हरिणा स्वकरेण हि ।
गृहीतानि स्थापितानि सर्ववासाय तत्र वै ॥१२॥
सर्वे चालोक्य शृंगाणि स्वर्णरूपाणि हर्षिताः ।
प्रसन्नास्तुष्टुवुर्देवं नारायणं कृपाकरम् ॥१३॥
दयालुर्भगवान् देवो दिवानां सुखहेतवे ।
मेरोः शृंगाण्यानिनाय तस्मै नमो विधेम च ॥१४॥
भक्तकृपाल्पभक्तेस्तु बहुधा फलदोऽस्ति यः ।
सोऽयं कृपालयो देवस्तुष्यतां श्रीनरायणः ॥१५॥
सकरुणः सदा शिक्षां पितेव विधाति नः ।
करुणासागरः कृष्णः प्रपायाद् विपदोऽपि नः ॥१६॥
विद्याधराणां सिद्धानामृषीणां मानसेष्टदः ।
सदा रक्षतु नश्चात्र भगवान् भक्तरक्षकः ॥१७॥
ततस्तुष्टो हि भगवान् वरं वृणुध्वमाह तान् ।
देवाः प्राहुर्मेरुशृंगाणि पश्यन्ति च ये जनाः ॥१८॥
तेषां तव प्रसादेन मेरौ वासो हि जायताम् ।
त्वया नैतत्स्थलं त्याज्यं मेरुस्त्याज्यो न वै तथा ॥१९॥
मेरौ वासं च लब्धानां भोगाऽन्तेऽस्तु लयस्त्वयि ।
एवमस्त्विति संभाष्य तत्रैवाऽन्तर्हितो हरिः ॥२०॥
ततः प्रभृति देवाद्या नरनारायणाश्रमे ।
क्वचिन्मेरौ क्वचित्स्वर्गे क्वचिद्वै रैवताचले ॥२१॥
निर्विशंका निवसन्ति यत्र नारायणो नरः ।
एवं वै नारदो मेरुतीर्थे कृत्वा ययौ ततः ॥२२॥
लोकपालैरधिश्रितं तीर्थं सौम्यं सरोयुतम् ।
हरिः स्वयं गतो मेरौ दृष्टास्तत्र च देवताः ॥२३॥
ऋषयश्चाथ मुनयो लोकपालाः सुरादयः ।
दृष्ट्वाऽऽह लोकपालान्सः यूयं राजान एव वै ॥२४॥
ऋष्यादिवसतौ वासो न योग्यो भवतां कृते ।
आगच्छन्तु मया क्लृप्ते स्थाने योग्ये भवत्कृते ॥२५॥
निवसन्तु च तत्रैव मम सान्निध्यमाश्रिताः ।
इत्यानीता लोकपाला मेरुमध्यप्रदेशतः ॥२६॥
स्थापितास्तत्सुखार्थं च जलाशयो महान् कृतः ।
दण्डेन च भुवं हत्वा क्रीडापुष्करिणी कृता ॥२७॥
लोकपालाश्च गन्धर्वा गीर्वाणाः प्रमदायुताः ।
विचरन्त्यनुमोदन्ते प्रगायन्ति च सर्वदा ॥२८॥
वनानि कुसुमामोदरम्याणि च कृतानि वै ।
भगवानपि सर्वेषामत्यानन्दं समावहन् ॥२९॥
द्वादश्यां पौर्णमास्यां च स्वयमायाति मज्जने ।
दृश्यते परमं तेजो जले मध्याह्नकालतः ॥३०॥
सर्वतीर्थावगाहस्य फलं तत्रैव लभ्यते ।
दण्डपुष्करिणीतीर्थमिहाऽमुत्र फलप्रदम् ॥३१॥

पिण्डदानाच्च जायेत गयातोऽष्टगुणं फलम् ।
द्वादश्यां शुक्लपक्षस्य ज्येष्ठमासेऽत्र पुष्करे ॥३२॥
यज्ञं दानं तपः कृत्वा कृतकृत्यो भवेज्जनः ।
अक्षय्यं फलमश्नाति मोक्षं याति ततः परम् ॥३३॥
बदरीतीर्थमध्ये तु गुप्तमेतद्धि वर्तते ।
बहुप्रसूतपुण्या वै पश्यन्त्येतन्न चेतरे ॥३४॥
इति दण्डोदकं तीर्थं कृत्वा च नारदो ययौ ।
गंगायां मानसोद्भेदसंगमे तीर्थसूत्तमे ॥३५॥
त्रिंशद्वर्षसहस्राणि प्रयागे तपसः फलम् ।
तत्फलं मानसोद्भेदे तीर्थे स्नानकृतं भवेत् ॥३६॥
संगमाद्दक्षिणे भागे धर्मस्य भवनं शुभम् ।
यत्र मूर्त्यां जन्म चाप्तौ नरनारायणावृषी ॥३७॥
यत्र धर्मश्चतुष्पादः सत्यं यज्ञस्तपस्तथा ।
दानं चेति वर्तते स्माऽनुष्ठितस्याऽक्षयं फलम् ॥३८॥
ततो दक्षिणदिग्भागे उर्वशीसंगमाभिधम् ।
कूर्मोद्धारस्ततस्तीर्थे स्नानात्सत्त्वस्य शुद्धिकृत् ॥३९॥
ब्रह्मावर्तस्ततस्तीर्थे ब्रह्मलोकप्रदं हि तत् ।
एवं बहूनि तीर्थानि भवन्ति बदरीवने ॥४०॥
दर्शनात्स्मरणात्स्नानात्पानादाचमनात्तथा ।
मार्जनात्पापहन्तॄणि मोक्षदानि च योगतः ॥४१॥
कृत्वा सर्वाणि तीर्थानि नारदः पुनराययौ ।
नरस्याऽऽश्रममादिव्यं स्थित्वा नरमुखात्ततः ॥४२॥
शुश्राव क्षेत्रमाहात्म्यं शान्त्यैकाग्रधियाऽऽत्तिहृत् ।
बदर्याख्यं हरेः क्षेत्रं त्रिषु लोकेषु दुर्लभम् ॥४३॥
स्मरणाश्चास्य पापानि नश्यन्ति दारुणान्यपि ।
अन्यतीर्थे कृतं पुण्यं बदर्याः स्मरणाद्भवेत् ॥४४॥
अश्वमेधसहस्राणां वायुभोज्यस्य यत्फलम् ।
क्षेत्रान्तरे बदर्यां तु तत्फलं क्षणमात्रतः ॥४५॥
कृते मुक्तिप्रदा नाम्ना त्रेतायां योगसिद्धिदा ।
विशाला द्वापरे नाम्ना कलौ बद्र्याश्रमो हि सः ॥४६॥
मुक्तेः प्रदा च योगस्य सिद्धिदा सर्वथा यथा ।
शालात्मकस्य देहस्य विशाला तु विनाशनात् ॥४७॥
बदरीतरुयोगाद्धि बदरिकाश्रमो हि सः ।
त्यजेत्सर्वाणि तीर्थानि काले युगान्तरेऽपि च ॥४८॥
बदरीं तु हरिर्नारायणो मुञ्चति नैव हि ।
षष्टिवर्षसहस्राणि योगात्काश्यां तु यत्फलम् ॥४९॥
बदर्यां तु दिनैकेन तत्फलं समवाप्यते ।
देवतीर्थर्षीणां शाला विशिष्टाः सन्ति यत्र हि ॥५०॥
विशाला च मता सार्था शाला ज्ञानस्य वेस्तथा ।
विशालाऽनादिसिद्धा सा यथा वेदा हरेस्तनुः ॥५१॥
अन्यत्र मरणान्मुक्तिः स्वधर्मविधिपूर्वकात् ।
बदरीदर्शनादेव मुक्तिं पुंसां करे स्थिता ॥५२॥
धर्माधर्मौ विजित्याऽथ बदरीशं नरायणम् ।
दृष्ट्वा मुक्तिं तूपयाति विनाऽऽयासं जनोऽत्र वै ॥५३॥
सर्वयुगेषु भगवान् वैकुण्ठसदृशीं शुभाम् ।
बदरीं समनुप्राप्य साक्षादेवाऽवतिष्ठते ॥५४॥
विना ज्ञानेन योगेन तीर्थाटनपरिश्रमैः ।
एकेन जन्मना जन्तुः कैवल्यपदमश्नुते ॥५५॥
जन्मान्तरसहस्रैश्च येन चाराधितो हरिः ।
स गच्छेद् बदरीं द्रष्टुं यत्र गत्वा न शोचति ॥५६॥
बदरीबदरीत्युक्त्वा प्रसंगान्मुक्तिभाग्भवेत् ।
विशालां बदरीं दृष्ट्वा पुंसो मृत्युभयं कुतः ॥५७॥
सशैलकानना पृथ्वी दशधा दक्षिणीकृता ।
हरेः प्रदक्षिणं भूमौ बदर्यां तु पदे पदे ॥५८॥
अश्वमेधस्य यज्ञस्य वाजपेयशतस्य च ।
हरेः प्रदक्षिणायाश्च पुण्यं पदे पदेऽत्र वै ॥५९॥
बदर्यां भगवानत्ति यदन्नं दिव्यतां गतम् ।
तत्सत्त्वशुद्धये सर्वैर्भोक्तव्यमविचारितम् ॥६०॥
अमरा हरिनैवेद्यं भोक्तुं भवन्ति तत्पराः ।
बाल्ययौवनवार्धक्ये कृतं प्राणान्तपातकम् ॥६१॥
विष्णोर्निवेदितं भुक्त्वा बदर्यां तन्निवर्तते ।
नैवेद्यभक्षणादत्र सालोक्यं लभते हरेः ॥६२॥
हृदि रूपं मुखे नाम नैवेद्यमुदरे हरेः ।
पादोदकं सनिर्माल्यं मस्तके यस्य सोऽच्युतः ॥६३॥
ब्रह्महत्यादिपापानि नश्यन्ति चरणामृतात् ।
किं दानैस्तपसा तीर्थैर्नियमैश्च परिश्रमैः ॥६४॥
बदर्यां विष्णुपादादेर्बिन्दुमात्रं मिलेद् यदि ।
सूर्यग्रहे कुरुक्षेत्रे महादानफलं हि यत् ॥६५॥
बदर्यां ग्रासमात्रेण चातुर्मास्यफलाधिकम् ।
वेदान्तश्रवणात्पुण्यं बदर्यां चरणामृतात् ॥६६॥
बदर्यां वैष्णवीं दीक्षां ये गृह्णन्ति जडा अपि ।
मुक्तिः करतले तेषां भूमिकादर्शनादपि ॥६७॥
य इदं शृणुयान्नित्यं श्रावयेच्चापि पाठयेत् ।
पठेद्वा पापमुक्तः सः पदं विष्णोः प्रपद्यते ॥६८॥
राजा विजयमाप्नोति सुतार्थी लभते सुतम् ।
कन्यार्थी लभते कन्यां कन्या विन्दति सत्पतिम् ॥६९॥

धनार्थी धनमाप्नोति व्याध्याध्यघननाशनम् ।
दौर्भाग्याऽपमृत्युग्रहदुःस्वप्नादिविनाशनम् ॥७०॥
श्रुत्वा नत्वा नरनारायणौ भुक्त्वा प्रसादकम् ।
ययौ सत्यं ब्रह्मलोकं विवाहार्थं स नारदः ॥७१॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने मेरुतीर्थ-दण्डपुष्करिणीमानसोद्भेदनरनारायणजन्म-स्थानधर्मोर्वशीसंगमकूर्मोद्धारब्रह्मावर्तादितीर्थ-तत्क्षेत्रप्रसादचरणामृतमाहात्म्यादिनिरू-पणनामा नवाऽधिकद्विशत-तमोऽध्यायः ॥२०९॥

श्रीनारायण उवाच—

श्रूयतां च महालक्ष्मि ! नारदो हरिभक्तिमान् ।
जगाम भवनं स्वस्य ब्रह्मा तुष्टोऽभवद् बहु ॥ १ ॥
तीर्थयात्रां विधायाऽभ्यागतस्य नारदस्य च ।
योग्यमुत्सवमारेभे समाहूय सुरादिकान् ॥ २ ॥
नारायणः स्वयं कृष्णो विष्णुश्चापि रमापतिः ।
शिवश्चान्ये लोकपालाः ऋषयश्च समागताः ॥ ३ ॥
ब्रह्मसभा तदा दिव्या शुशुभे ब्रह्मधामवत् ।
ब्रह्मा पुत्रं नारदं वै सभायां शृण्वतां सताम् ॥ ४ ॥
नारदं प्राह धर्म्यं सद्वचः शंकरसन्निधौ ।
उपबर्हणगन्धर्वः पंचाशत्कामिनीपतिः ॥ ५ ॥
जन्मान्तरे भवानासीदधुना ब्रह्मणः सुतः ।
तास्वेका च सती मालावती तपसा शंकरम् ॥ ६ ॥
आराध्य च वरं लेभे वाञ्छितं नारदं पतिम् ।
सा च संजयकन्याऽस्ति स्वर्णष्ठीवीसहोदरा ॥ ७ ॥
तां विवाहं कुरुष्वेति शंकराज्ञां प्रपालय ।
सुन्दरीं सुन्दरीष्वेव पातिव्रतपरायणाम् ॥ ८ ॥
कमनीयां हरवरात् शश्वत्सुस्थिरयौवनाम् ।
विधात्रा लिखितां भाले विवाहय च नारद ॥ ९ ॥
त्वया पूर्वं यथोक्तं वै तीर्थयात्रोत्तरं तथा ।
विवाहभाग्यमापन्नं प्राक्तनं केन वार्यते ॥१०॥
नाऽयुक्तं क्षीयते कर्म कालकोटिशतैरपि ।
अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥११॥
ब्रह्मणश्च वचः श्रुत्वा पित्राज्ञापालकस्तदा ।
नारदो विनयं कृत्वा ननाम सर्वदेवताः ॥१२॥
पित्राऽऽदिष्टं सदैवेदं धार्यते च मया पुनः ।
भवतां कृपया तत्र बन्धनं मे भवेन्नहि ॥१३॥
वरं वृणोमि भगवद्भक्तिर्मन्मानसं भवेत् ।
कृष्णो नारायणो विष्णुः शिवश्चाहुस्तथास्त्विति ॥१४॥
प्रणम्य प्रययौ देवान् नारदः संजयालयम् ।
दृष्ट्वा स मोहितो रम्यां दिव्यां संजयकन्यकाम् ॥१५॥
तपस्विनीं महाभागां विष्णुव्रतपरायणाम् ।
स्वीकृत्य मनसा तां च शुभां प्रोवाच नारदः ॥१६॥
बाले जानासि मां वा न त्वां जानामि तु पूर्वजाम् ।
मालावतीतिविख्यातां गन्धर्वप्रमदोत्तमाम् ॥१७॥
श्रुत्वा मालावती दृष्ट्वा नारदं च मुमोह च ।
प्रत्यभिज्ञाय पूर्वस्य जन्मनः पतिमेव च ॥१८॥
पादयोः पतिता शीघ्रं चुचुम्ब वरणाय सा ।
नारदोऽपि ययाचे तां तत्पितुः पुरतः स्थितः ॥१९॥
मालावत्यभिप्रायं च ज्ञात्वा श्रीसंजयः स्वयम् ।
वाक्दानेन ददौ तस्मै नारदाय स्वपुत्रिकाम् ॥२०॥
तिलकं भोजनं कृत्वा वस्त्रशाटीं प्रदाय च ।
नारदः श्वशुरं नत्वा श्वश्रूं पृष्ट्वा प्रियां तथा ॥२१॥
ययौ ब्रह्मसभां रम्यां सर्वदेवाधिवासिताम् ।
प्रणम्य पितरं शान्तः सर्वं तत्त्वमुवाच तम् ॥२२॥
ब्रह्मा प्रहृष्टवदनः श्रुत्वा वाक्दानमंगलम् ।
चक्रे समुत्सवं श्रेष्ठं सर्वानाहूय चेश्वरान् ॥२३॥
मुनीनृषींस्तथा पितॄन् देवान् दैत्यांश्च दानवान् ।
काश्यपीश्च प्रजाः सर्वाश्चकाराऽऽहूय मंगलम् ॥२४॥
संजयः प्रेषयामास विप्रेण लग्नपत्रिकाम् ।
ब्रह्मा स्वीकृत्य तां पुत्रं लोकाचारमकारयत् ॥२५॥
विवाहस्य मुहूर्तं च वाचयामास तत्र वै ।
भोजनानि विविधानि कारयामास विश्वसृट् ॥२६॥
दानयानोपकरणपेयाऽऽवेयानि कृत्स्नशः ।
भोज्यजातानि वस्तूनि कारयामास विश्वसृट् ॥२७॥
शुभे क्षणे स्वयं ब्रह्मा कोट्यब्जाऽर्बुदकोटिभिः ।
सुरासुरैर्जनवाहैस्तत्तन्नारीसमन्वितैः ॥२८॥
सहितो रत्नयानैश्च वरयात्रामकल्पयत् ।
पुत्रं कृत्वा च पुरतो जनसेनां सुशोभिताम् ॥२९॥
महीमानाऽर्बुदकोटिकोट्यर्बुदसमन्विताम् ।
नीत्वा शंभ्वच्युतयुक्तो ययौ संजयमन्दिरम् ॥३०॥
संजयः सत्कृतयेऽभिययौ स्वजनबान्धवैः ।
वरस्य वाहिनीं स्वस्योद्याने चास्थापयत्क्षणम् ॥३१॥
जलपानं च विश्रान्तिं कारयित्वा च भोजनम् ।
वरं सायं भूषयित्वा निनाय मण्डपं प्रति ॥३२॥

कन्यायाश्च कृते वस्त्रभूषणानि बहूनि च ।
प्रेषयामास रम्याणि ब्रह्मा वै स्वानुरूपतः ॥३३॥
द्वारे पूजां शिष्टाचारं विधाय सृंजयः ।
लोकाचारं विधायाऽथाऽपूजयन्नारदं वरम् ॥३४॥
मुख्याग्निवेदिकायाश्च समीपेऽतिष्ठिपद्वरम् ।
कन्यां श्रृंगारशोभाढ्यामानयामास तत्र च ॥३५॥
ब्राह्मणैर्मुनिभिस्तत्र सप्तर्षिभिश्च भूसुरैः ।
मांगल्यमन्त्राः पठिता देहशुद्धिश्च कारिता ॥३६॥
वस्त्रग्रन्थिं बन्धयित्वा वरमालां समर्प्य च ।
कन्याहस्तं वरहस्ते ददौ सृंजयराट् स्वयम् ॥३७॥
वेदघोषास्तदा जाता वाद्यान्यवादयँस्तथा ।
वधूः कवलमादाय नारदास्ये ददौ तदा ॥३८॥
नारदोऽपि नववध्वा मुखे ग्रासं ददौ शुभम् ।
अग्नेः प्रदक्षिणं कृत्वा होमकार्यं चकार वै ॥३९॥
शिष्टाचारं परं कृत्वा दत्त्वा दानानि भूरिशः ।
विवाहकार्यं सर्वं सः समाप्तमकरोत्तदा ॥४०॥
कन्यायाश्च यौतद्रव्यं वरस्यापि प्रपूजनम् ।
दत्तं कृतं जनैः सर्वैर्भोजनं स्वीकृतं ततः ॥४१॥
निद्रां कृत्वा समाजश्च प्रातर्मंगलवादनम् ।
नर्तनं गायनं गन्धर्वाप्सरसां व्यलोकयत् ॥४२॥
बहुदानानि दत्तानि भोजनानि च सर्वथा ।
कारितानि सृंजयेन प्राघूणिकाः समानिताः ॥४३॥
सर्वस्वं दक्षिणां दत्त्वा मणिमुक्तादिकं तथा ।
पुटांजलियुतो भूत्वा परिहारं चकार सः ॥४४॥
सृंजयश्च शुभो राजा कन्यां समर्प्य भावतः ।
वाहिनीं यापयामास विनयेन मुदान्वितः ॥४५॥
सृंजयस्तस्य पत्नी च कन्यावियोगसंभवम् ।
सेहाते न तदा दुःखं रुरुदाते क्षणं ततः ॥४६॥
कन्यापि रुरुदे स्नेहाद् वियोगार्तिसुमिश्रितात् ।
प्रणम्य पितरौ कन्या रुदन्तौ मातरं तथा ॥४७॥
आश्लिष्य धैर्यमादाय चाऽऽरुरोह रथं विधेः ।
गृहीत्वा च सभार्यं तं पुत्रं धाता मुदान्वितः ॥४८॥
लोकाचारं च सत्कृत्य ब्रह्मलोकं ययौ सुखम् ।
ऋषीन्मुनींस्तथा देवान् पितॄन् सिद्धाँश्च मानवान् ॥४९॥
विप्राँश्च भोजयामास सांऽगे मंगलकर्मणि ।
दानानि दापयामास वादयामास दुन्दुभिम् ॥५०॥
यापयामास सर्वांश्च महीमानान्सुराऽसुरान् ।
नारदस्तु मुनिश्रेष्ठो लिखितेन स्वकर्मणा ॥५१॥
सुरम्ये पुष्पतल्पे च सुगन्धिचन्दनार्चिते ।
स रेमे रमया सार्धं बुबुधे न दिवानिशम् ॥५२॥
एकदा नारदस्तत्र वटमूले व्यवस्थितः ।
तत्राऽऽजगाम नग्नश्च प्रज्वलन् ब्रह्मतेजसा ॥५३॥
सनत्कुमारो भगवान् बालकः पञ्चहायनः ।
अचूडोऽनुपनीतश्च वेदसन्ध्याविहीनकः ॥५४॥
कृष्णमन्त्रं जपन् त्रिभिर्भ्रातृभिः सहितस्तदा ।
वैष्णवानामग्रणीशो ज्ञानिनां च गुरोर्गुरुः ॥५५॥
नारायणो गुरुर्यस्य दर्शनान्मुक्तिदो मुनिः ।
आराद् दृष्ट्वा नारदस्तं भ्रातरं च सतां वरम् ॥५६॥
नत्वा च दण्डवत् भूमौ ददावासनमुत्तमम् ।
उवाच बालकस्तत्र प्रहस्य नारदं शुभम् ॥५७॥
अये भ्रातः किं करोषि कुशलं युवतीपते ।
स्त्रीपुंसोर्वर्धते प्रेम कामवेगान्नवं नवम् ॥५८॥
अर्गलं ज्ञानमार्गस्य भक्तिमार्गनिरोधकम् ।
मोक्षमार्गव्यवधानं शश्वद्बन्धनदं मतम् ॥५९॥
नारायणाऽमृतं त्यक्त्वा विषं विषयजाऽमृतम् ।
विषयेऽतिप्रसक्तो वै मत्वा भुंक्तेऽतिमूढवत् ॥६०॥
सुधां त्यक्त्वा विषंचाऽत्ति मायामोहवशंगतः ।
त्वं तु भक्तश्चात्मवेत्ता जीवन्मुक्तोऽसि सर्वदा ॥६१॥
निर्गच्छ तपसे भ्रातर्भार्यां पत्नीं विहाय वै ।
स्थिते नारायणे पृथ्व्यां भज तं तपसा सदा ॥६२॥
गृहाण मम मन्त्रं च कृष्णइत्यक्षरद्वयम् ।
नारायणान्मया लब्धस्ते मन्त्रं तं ददाम्यहम् ॥६३॥
इत्युक्त्वा प्रददौ मन्त्रं ददौ शुभाशिषं तथा ।
गोलोकं प्रययौ द्रष्टुं भगवन्तं सनातनम् ॥६४॥
नारदो मालया नित्यं जपति द्व्यक्षरं मनुम् ।
श्रीकृष्णे निश्चलां भक्तिं पूर्वकर्मनिकृन्तनीम् ॥६५॥
चकाराऽभ्यासवैराग्यसहितामात्मवेदिनीम् ।
भार्यां द्विलक्षवर्षाणि भुक्त्वा सुताः सुताँस्तथा ॥६६॥
लक्षानुत्पाद्य गन्धर्वान् गन्धर्वीर्लक्षकन्यकाः ।
सर्वापत्यानि गान्धर्वलोके संस्थाप्य शक्तितः ॥६७॥
सर्वांश्च वैष्णवान् कृत्वा भक्तिं निर्दिश्य माधवे ।
पत्नीं च रागरहितां कृत्वा भक्तिं प्रदिश्य च ॥६८॥
तत्कौशल्यं सुतेभ्यश्च विनिर्दिश्य ययौ मुनिः ।
कृतमालानदीतीरे तपसे स मनोऽकरोत् ॥६९॥
तत्र ददर्श शंभुं सः पूर्वगुरुं सनातनम् ।
दृष्ट्वा च नारदो मूर्ध्ना प्रणनाम शिवं गुरुम् ॥७०॥

शिवः प्रोवाच दृष्ट्वा त्वां प्रसन्नोऽहं भवामि वै ।
भक्तानां दर्शनं यत्र सुदिनं तच्छरीरिणाम् ॥७१॥
अयं हि परमो लाभो भक्तानां संगमो यदा ।
स स्नातः सर्वतीर्थेषु यो ददर्श च वैष्णवम् ॥७२॥
गोलोके कृष्णदत्तो वै मन्त्रो द्व्यक्षर एव यः ।
कृष्ण इति मया प्राप्तो धर्मेण ब्रह्मणा तथा ॥७३॥
धर्मो नारायणायाऽर्थसहितं प्रददौ ततः ।
ब्रह्मा सनत्कुमाराय तुभ्यं दत्तश्च तेन वै ॥७४॥
मन्त्रग्रहणमात्रेण नरो नारायणो भवेत् ।
पञ्चलक्षजपेनाऽस्य पुरश्चरणमुच्यते ॥७५॥
ध्यानं च पापदहनं कृष्णं ध्यायेत्तु वैष्णवः ।
किशोरमूर्तिं जीमूतसमवर्णं मनोहरम् ॥७६॥
पीताम्बरं घनश्यामं कोटिकन्दर्पसुन्दरम् ।
अमूल्यरत्नखचिताभूषणादिविभूषितम् ॥७७॥
चन्दनोक्षितसर्वांगं कौस्तुभेन विराजितम् ।
मयूरबर्हचूडं च रत्नमालाविराजितम् ॥७८॥
प्रसन्नहास्यविलसन्मुखं सौन्दर्यभाजनम् ।
भक्तानुग्रहकर्तारं श्रीकृष्णं सर्वदा भजे ॥७९॥
शंभुरेवं स्मारयित्वाऽदृश्यभावं गतस्ततः ।
नारदोऽपि हरिं स्मृत्वा तपः कृत्वा सुदारुणम् ॥८०॥
भक्त्या नारायणं प्राप्य देहं दिव्यं विधाय च ।
नित्यमुक्तस्वरूपोऽभूत् गोलोकाग्रहतस्तुतिः ॥८१॥
इति ते कथितं लक्ष्मि ! नारदस्य विवाहनम् ।
यच्छ्रुत्वापि विरज्येत किमन्यच्छ्रोतुमिच्छसि ॥८२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने नारदस्य ब्रह्मसभागमनं, ब्रह्मणा विवाहाय कथितम्, सृंजयस्य पुत्र्या मालावत्या विवाहाय नारदस्य वरयात्रा, लग्नं, लक्षपुत्रान् लक्षपुत्रींश्चोत्पाद्य द्विलक्षवर्षोत्तरं कृतमालातीरे तपसे गमनमित्यादिनिरूपणनामा दशाऽधिकद्विशततमोऽध्यायः ॥२१०॥

**श्रीलक्ष्मीरुवाच—**

अग्नयो वै ब्रह्ममुखा ब्रह्मांशा यज्ञदेवताः ।
कदा कस्मात्समुत्पन्नास्तत्कथां श्रावय प्रभो ॥ १ ॥

**श्रीनारायण उवाच—**

उष्णस्पर्शवतश्चाग्नेः कार्यात्मकस्य कारणम् ।
देवः स चेतनो वह्निर्ब्रह्मणो मानसः सुतः ॥ २ ॥
अग्न्यभिमानिदेवः सः तस्मात् स्वाहा व्यजायत ।
पावकः पवमानश्च शुचिश्चेति त्रयः सुताः ॥ ३ ॥
सौरः शुचिर्भवत्येव पावका वैद्युता मताः ।
श्राद्धे वह्निः पवमानस्तत्सुतः कव्यवाहनः ॥ ४ ॥
पावकस्य सुपुत्रोऽभूत् सहरक्षाभिधस्तथा ।
शुचेः पुत्रो हव्यवाहो देवानां भोजनप्रदः ॥ ५ ॥
पितॄणां कव्यवाहश्चाऽसुराणां सहरक्षकः ।
एतेषां पुत्रपौत्राश्च चत्वारिंशत्तथा नव ॥ ६ ॥
वैद्युतस्य ब्रह्मौदनस्तत्सुतो भरताह्वयः ।
तस्य वैश्वानरवह्निस्तस्य काव्यो ह्यपां रसः ॥ ७ ॥
पुष्करोदधिमथनादथर्वाऽग्निरजायत ।
तस्य सुतश्च दध्यंगो बोध्यो वै वह्निमण्डले ॥ ८ ॥
अथर्वा च भृगुः प्रोक्तोऽङ्गिराश्चाऽथर्वणः सुतः ।
अतश्च भार्गवोऽगिरा लौकिकाग्निः प्रकथ्यते ॥ ९ ॥
पवमानस्तु निर्मथ्यो गार्हपत्योऽपि नामतः ।
तस्य पुत्रद्वयं शंस्यः शुक्रश्चेति प्रनामतः ॥१०॥
शंस्यस्त्वाहवनीयोऽग्निर्यो हव्यवाट् क्रियात्मकः ।
तथा सभ्याऽवसथ्यौ द्वौ शंस्यस्याऽग्नेः सुतौ मतौ ॥११॥
शंस्यस्तु षोडशनदीश्चक्रमे प्रमदावराः ।
कावेरीं कृष्णवेणीं च नर्मदां यमुनां तथा ॥१२॥
गोदावरीं वितस्तां च चन्द्रभागामिरावतीम् ।
विपाशां कौशिकीं चैव शतद्रुं सरयूं तथा ॥१३॥
सीतां सरस्वतीं चैव ह्लादिनीं पावनीं च ताः ।
तासूत्पन्ना ह्यग्नयो ये धिष्णयस्ते प्रकीर्तिताः ॥१४॥
ऋतुः प्रवाहणोऽग्नीध्रः सम्राडग्निः कृशानुकः ।
सम्राडग्नयस्त्वष्टौ च पर्षन्नाम्ना नभस्तथा ॥१५॥
वसुश्च हव्यसूर्यश्च विश्वस्यायश्च पंचमः ।
ऋतुधामाऽजैकपाचाऽहिर्बुध्नश्चेति ते स्मृताः ॥१६॥
शंस्यसुता ह्युपस्थेया विहरणीयास्तत्सुताः ।
अष्टौ विहरणीयाः स्युः शान्तिः प्रचेताः सत्यकः ॥१७॥
विश्वदेवश्चाऽवक्षुश्च ह्यच्छावाक उशीरकः ।
व्यरत्निश्चेति ते बोध्याः यज्ञे सवनसंक्रमात् ॥१८॥
अपां गर्भे पावकोऽवभृथस्तस्य च हृच्छ्रयः ।
जाठरस्य सुतो मन्युस्तस्य घोरसंवर्तकः ॥१९॥
समुद्रे स वडवाख्यस्तत्सुतः सहरक्षकः ।
तस्य क्षामस्तस्य क्रव्यादोऽग्निः पावकवंशजाः ॥२०॥
शुचेश्चारणेयवह्निरायुर्नामा स उच्यते ।
तस्य महिमान् पुत्रश्च तस्य शावान्सुतो मतः ॥२१॥

तस्यापि सवनः पुत्रस्तस्याप्यद्भुत उच्यते ।
अद्भुतस्य विविचिश्च तस्याऽर्कः सुत उच्यते ॥२२॥
अर्कस्याऽनीकवान् वासुजवाश्च रक्षोहा तथा ।
पितृकृत् तथा सुरभिः रुक्मवाँश्चेति वह्नयः ॥२३॥
मन्वन्तरेषु सर्वेषु भवन्ति जातवेदसः ।
प्रजानां पतयः सर्वे ज्योतिष्मन्तश्च ते स्मृताः ॥२४॥
इति ते कथिता लक्ष्मि वह्नयो मुख्यनामतः ।
होमाद्यैः फलदाः सर्वे मन्त्रसिद्धिकराः सदा ॥२५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने वह्निवंशवर्णनं नामैकादशाधिकद्विशततमोऽध्यायः ॥२११॥

**श्रीलक्ष्मीरुवाच—**

द्वापरान्ते तदा चाऽऽद्ये काश्यपेयीं च मैथुनीम् ।
सृष्टिं श्रोतुं समिच्छामि वद मे परमेश्वर ॥ १ ॥

**श्रीनारायण उवाच—**

शृणु कश्यपदायादान् वच्मि ते तु यथाक्रमम् ।
दक्षेण स्वस्य पुत्र्यस्तु कश्यपाय चतुर्दश ॥ २ ॥
दत्ता विवाहविधिना तासां नामानि मे शृणु ।
अदितिर्देवमाताऽभूत् दैत्यमाता दितिस्तथा ॥ ३ ॥
कद्रूश्च सर्पमाताऽभूद् विनता पक्षिसूस्तथा ।
सुरभिश्च गवां माता पशूनां चापि सा प्रसूः ॥ ४ ॥
सारमेयादिसत्त्वानां सरमा सूश्चतुपदाम् ।
दनुः प्रसूर्दानवानां तिमिर्यादोगणप्रसूः ॥ ५ ॥
ताम्रा सूः श्येनगृध्राणां मुनिरप्सरसां प्रसूः ।
क्रोधवशा प्रसूः सर्पदन्दशूकादिरोषिणाम् ॥ ६ ॥
इला प्रसूः पादपानां सुरसा यातुधानसूः ।
गन्धर्वप्रसूररिष्टा यासां प्रजामयं जगत् ॥ ७ ॥
इन्द्रश्च द्वादशादित्या उपेन्द्राद्याः सुरास्तथा ।
कथिताश्चादितेः पुत्रा महाबलपराक्रमाः ॥ ८ ॥
इन्द्रपुत्रो जयन्तश्च पत्न्यां शच्यामयाजत ।
शनैश्चरयमौ सूर्यात् संज्ञायां यमुना तथा ।
उपेन्द्रवीर्यात् पृथ्व्यां तु मंगलः समजायत ॥ ९ ॥
उपेन्द्ररूपमालोक्य कामार्ता च वसुन्धरा ।
विधाय सुन्दरीवेषं शय्यायां समुपस्थिता ॥१०॥
उपेन्द्रस्तन्मनो ज्ञात्वा शृंगारं प्रचकार ह ।
वीर्याधानं च यज्जातं दुर्बला रक्षितुं च तत् ॥११॥
प्रवालपत्रे पतितं कुमारः समपद्यत ।
तेजसा सूर्यसदृशो नारायणसुतः स्वयम् ॥१२॥
मंगलाख्यः स हरिणा ग्रहेषु स्थापितः शुभः ।
अथ दितेर्हिरण्यकशिपुर्हिरण्यनेत्रकौ ॥१३॥
कन्या च सिंहिका जाता सैंहिकेयश्च तत्सुतः ।
निर्ऋतिः सिंहिका सा च तेन राहुश्च नैर्ऋतः ॥१४॥
वाराहेण हिरण्याक्षो जलमध्ये युवा हतः ।
हिरण्यकशिपोः पुत्रः प्रल्हादो वैष्णवाग्रणीः ॥१५॥
विरोचनश्च तत्पुत्रस्तत्पुत्रश्च बलिः स्वयम् ।
बलेर्बाणो महायोगी दितिवंशः प्रकीर्तितः ॥१६॥
अथ कद्र्वाः सुताः सर्पाः कालीयो वासुकिस्तथा ।
कर्कोटको धनञ्जयस्तक्षकः पद्म इत्यपि ॥१७॥
ऐरावतो महापद्मः शंकुः शंखस्तथाऽपरः ।
धृतराष्ट्रः संवरणो दुर्धर्षो दुर्जयस्तथा ॥१८॥
दुर्मुखश्च बलश्चैव गोक्षो गोकार्मुकस्तथा ।
विरूपश्चेति प्रवराः सर्वा वै सर्पजातयः ॥१९॥
जरत्कार्वीति वै कन्या जरत्कारुस्तु यत्पतिः ।
आस्तीकतनयो विष्णुतुल्यगुणपराक्रमः ॥२०॥
एतेषां नाममात्रेण नागभीतिर्न वै भवेत् ।
अथ दनोर्द्विमूर्धा च शंकुकर्णो निरामयः ॥२१॥
महाविश्वो गवेष्ठिश्च दुन्दुभिरंगिरावृतः ।
मरीचिरक्षकश्चैव महागार्ग्यो ह्यजामुखः ॥२२॥
शिलो वामनसश्चैव विक्षोभ्यः सुहृदस्तथा ।
सुकेतुश्च सुवीर्यश्च चेन्द्रजित् विश्वजित्तथा ॥२३॥
सुरविमर्दनश्चैकचक्रश्च तारकस्तथा ।
महाबलः सुवाहश्च पुलोमा च प्रवीणकः ॥२४॥
वैश्वानरो महाशिराः स्वर्भानुर्मुण्डकस्तथा ।
वृषपर्वा धृतराष्ट्रः सूक्ष्मश्च तापिनस्तथा ॥२५॥
ऊर्णनाभो महागिरिरसिलोमा सुकेशकः ।
सदश्च बलकश्चैव कुंभनाभो महोदरः ॥२६॥
प्रमोदाह्रो व्योममूर्धा कुपथो हयमस्तकः ।
असुरश्च विरूपाक्षः शतमायुश्च शम्बरः ॥२७॥
शरभः शलभश्चैव दनोः पुत्राः प्रकीर्तिताः ।
तेषामपरिसंख्येयं पुत्रपौत्राद्यनन्तकम् ॥२८॥
सिंहिकायामथोत्पन्ना विप्रचित्तिसुतास्त्विमे ।
शतगालश्च बलवान् न्यासः शाम्बरस्तथाऽपरः ॥२९॥

इल्वलो नमुचिश्चापि वातापी दस्युयाजकः ।
हरकल्पः कालनाभो भौमश्च नरकस्तथा ॥३०॥
राहुश्चैते सैंहिकेया दशसाहस्रसंख्यकाः ।
भवन्त्येव वंशपरम्पराजाताः सुरारिणः ॥३१॥
चित्रसेन उग्रसेन ऊर्णायुरनघस्तथा ।
धृतराष्ट्रः पुलोमा च सूर्यवर्चास्तथैव च ॥३२॥
युगपत् तृणपत् कालिदितिश्चित्ररथस्तथा ।
भ्रमिशिराश्च पर्जन्यः कलिश्च नारदस्तथा ॥३३॥
इत्येते देवगन्धर्वा मौनेयाः परिकीर्तिताः ।
मिश्रकेशी तथा चाशी पर्णिनी चाऽप्यलम्बुषा ॥३४॥
मारिची पुत्रिका चैव विद्युद्वर्णा तिलोत्तमा ।
अद्रिका लक्षणा चैव देवी रंभा मनोरमा ॥३५॥
सुवरा च सुबाहुी च पूर्णिता च प्रतिष्ठिता ।
पुण्डरिका सुगन्धा च सुदन्ता सुरसा तथा ॥३६॥
हेमा शारद्वती चैव सुवृत्ता कमला तथा ।
सुभुजा हंसपादा च लौकिक्योऽप्सरसस्तथा ॥३७॥
गन्धर्वाऽप्सरसो ह्येता मौनेयाः परिकीर्तिताः ।
सुयशाया दुहितरश्चतस्रोऽप्सरसः स्मृताः ॥३८॥
लौहेयी भरता चैव कृशांगी च विशालिका ।
विशालेन च ताभ्यस्तु यक्षा उत्पादिता यथा ॥३९॥
लौहेया भरतेयाश्च कृशांगेया विशालजाः ।
शिवा च सुमना चैव कन्ये द्वेऽपि सुलोचने ॥४०॥
ताभ्यां विश्रवसा विद्याधरा उत्पादिताः समम् ।
विक्रान्तेन च तेनैवोत्पादिताः किन्नरा अपि ॥४१॥
समुद्रसेनः कालिन्दो महानेत्रो महाबलः ।
सुवर्णघोषः सुग्रीवो महाघोषश्च वीर्यवान् ॥४२॥
हयाननानामेवं च किन्नराणां गणस्तथा ।
नरमुखाः किन्नराश्चोत्पादिताः शांशपायनाः ॥४३॥
हरिषेणः सुषेणश्च वारिषेणश्च वीर्यवान् ।
रुद्रदत्तेन्द्रदत्तौ च चन्द्रद्रुममहाद्रुमौ ॥४४॥
बिन्दुश्च बिन्दुसारश्च चन्द्रवंशा हि किन्नराः ।
लौहेया दुहिता सुरविन्देति नामधारिणी ॥४५॥
भूतास्तस्याः समुत्पन्ना आवेशकनिवेशकाः ।
सुतारः कालभवनाऽनिर्देशकविदेशकाः ॥४६॥
वृक्षाग्रमात्रमाकाशं ते चरन्ति तरुस्थिताः ।
पैशाचेन विवाहेन सुदत्यां बुद्धवाहनः ॥४७॥
कन्याद्वयं जनयामासेति ते हि पिचाशिके ।
ब्रह्मधना जन्तुधना ताभ्यां पिशाचकोट्यः ॥४८॥

राक्षसाश्चापि चोत्पन्नाः कोटिकोट्यर्बुदाश्च ते ।
यक्षमाता क्रतुस्थली चाप्सरो हि मता शुभा ॥४९॥
यक्षो रजतनाभस्तु गुह्यकानां पितामहः ।
चत्वारो विंशतिश्चैव पुण्याः पुण्यजना मताः ॥५०॥
मणिभद्रात्पुण्यजन्यामेते पुण्यजनाः स्मृताः ।
एवं मणिवरस्यैते यक्षाश्च गुह्यकाः सुताः ॥५१॥
खशायाश्च प्रपुत्रास्ते राक्षसाः कामरूपिणः ।
विकचायां च राक्षस्यां नैर्ऋतिना पिशाचकाः ॥५२॥
पूतनाश्चोत्पादितास्ते बालनाशकरा मताः ।
क्रोधायां कन्यका जाता द्वादश ह्यात्मसंभवाः ॥५३॥
मृगी च मृगमन्दा च हरिभद्रा इरावती ।
भूता कपिशा दंष्ट्रा च निशा तिर्या तथैव च ॥५४॥
श्वेता चैव स्वरा चैव सुरसा चेति विश्रुताः ।
मृग्यास्तु हरिणाः पुत्रा मृगाश्चान्ये शशास्तथा ॥५५॥
न्यंकवः शरभा ये च रुरवः पृषताश्च ये ।
मृगराजा मृगमन्दा गवयाश्चापरे तथा ॥५६॥
महिषोष्ट्रवराहाश्च खड्गगौरमुखास्तथा ।
हरेस्तु हरयः पुत्रा गोलांगुलास्तरक्षवः ॥५७॥
वानराः किन्नराश्चैव व्याघ्राः किंपुरुषास्तथा ।
इरावत्याः सुतो गज ऐरावत इतिस्मृताः ॥५८॥
द्विदन्ताश्च चतुर्दन्ता अष्टदन्तास्तथाऽपरे ।
तत्पुत्रपौत्रादयोऽपि गजा जाता अनन्तशः ॥५९॥
अथ भूत्याः सुता भूताः सर्वे ते ह्यूर्ध्वरेतसः ।
भवभक्ताश्च ते सर्वे भार्यापुत्रविहीनकाः ॥६०॥
कुष्माण्डी कपिशान्पुत्रान् कपिशेभ्यः पिशाचकान् ।
सुषुवे षोडशान्येषां युग्मानि पिशिताशिनाम् ॥६१॥
छगलः छगली चैव वक्रो वक्रमुखी तथा ।
सूचिः सूचीमुखी चैव कुंभी च कुंभपात्रकः ॥६२॥
वज्रदंष्ट्रश्च दुन्दुभिः उपचारोऽपचारिका ।
उलूखली उलूखलो ह्यनकाऽनर्क इत्यपि ॥६३॥
कुखण्डिका कुखण्डकः पांशुः पांशुमती तथा ।
पाणिपात्रः पाणिपात्री निपुणा निपुणस्तथा ॥६४॥
नितुण्डश्च नितुण्डी च प्रस्कन्दः स्कन्दिका तथा ।
छलादोच्छेषणा चैव गणाश्चानन्तवंशगाः ॥६५॥
अजामुखा बकमुखाः कुष्माण्डानां गणाः स्मृताः ।
सर्वांगकेशा वृत्ताख्या दंष्ट्रिणो नखिनस्तथा ॥६६॥
तिर्यगाः पुरुषादाश्च पिशाचास्ते ह्यधोमुखाः ।
ऋषायाश्च मीना माता वृत्ता परिवृत्ता तथा ॥६७॥

अनुवृत्ता दुहितरः तासां वै शृणुत प्रजाः।
सहस्रदन्ता मकराः पाठिनास्तिमिरोहिताः ॥६८॥
एते मैनो गणः प्रोक्तो ग्राहाश्च शिशुमारकाः।
वृत्ता कूर्मविकाराणि जनयामास शंखलान् ॥६९॥
मण्डुकानां विकाराणि ह्यनुवृत्ता ह्यजीजनत्।
ऐणेयान् शंबूकाँश्चैव शुक्तीन् वराटकाँस्तथा ॥७०॥
तथा शंखविकाराणि परिवृत्ता व्यजीजनत्।
स्वेदायाः पुत्रपौत्राद्याः कोटिकोट्यंशवंशजाः ॥७१॥
जलजा वृक्षजास्तिर्यग्जाताश्चेतनजास्तथा।
पृथिवीजलजाताश्च वर्षायोगसमुद्भवाः ॥७२॥
तथा शुष्कविकारेभ्यो गोमयादिभ्य एव च।
कर्दमादिसमुत्पन्नाः सूर्योष्मासंभवास्तथा ॥७३॥
काश्यपीयं प्रजा योनिजन्याश्चाऽयोनिजास्तथा।
सरमायाः प्रजा तूलात्श्वकः कोलः शिवा तथा ॥७४॥
श्यामश्च शबलश्चैव ह्यर्जुनो हरितस्तथा।
कृष्णो धूम्रारुणश्चैव तूलाऽलाबूश्च कद्रुकाः ॥७५॥
सुरसाऽजीजनत्पुत्रशतमेकं शिरोमृतान्।
सर्पान् तक्षकमूर्धन्यान् नागान् वासुकिशोभनान् ॥७६॥
ताम्रायां पुलहसुतात् श्येनी भासी शुकी तथा।
धृतराष्ट्री तथा क्रौंची जज्ञिरे श्येनिरारुणात् ॥७७॥
सम्पातिं च जटायुं च्चाजीजनत् पक्षिसत्तमौ।
जटायुषस्तु पुत्राद्याः काकगृध्राश्च कर्णिनः ॥७८॥
शुकी गरुत्मतः पुत्रान् सुषुवे गरुडान् बहून्।
चतुर्दशसहस्राणि विस्तरः पन्नगाशिनाम् ॥७९॥
भासीपुत्राः स्मृता भासा उलूकाः काककुक्कुटाः।
मयूराः कलविंकाश्च कपोता लावतित्तिराः ॥८०॥
क्रौंची वार्ध्रीणसाद् श्येनी कुररान् सारसान् बकान्।
धृतराष्ट्री तु हंसाँश्च कलहंसाँश्च भामिनी ॥८१॥
चक्रवाकाँश्च विहगान् तथा द्विजानन्तकान्।
इलायास्तिस्रः पुत्र्यश्च लता वल्ली च वीरुधा ॥८२॥
लता वनस्पतीन् पुत्रान् ह्यपुष्पान् पुलिनस्थितान्।
एवं पुष्पफलवृक्षाँश्चापि ह्युद्यानसंस्थितान् ॥८३॥
अथ वल्ली तु गुल्माँश्च त्वक्सारांश्च तृणादिकान्।
विरुधा विरुधान् पुत्रान् पत्रसाराँश्च मूलकान् ॥८४॥
एतासां च प्रजानां वै देशकालविगौणके।
रूपक्रियाविभेदैश्च वैरूप्यं संप्रजायते ॥८५॥
क्षेत्रभेदे तु बीजस्य रूपं संकरतां व्रजेत्।
बीजभेदे च गर्भस्य रूपं रूपान्तरं व्रजेत् ॥८६॥
लतावल्लीविरुधानामनेकयोगसम्भवे।
विविधास्ता भवन्त्येव नान्तस्तासां हि विद्यते ॥८७॥
वृक्षद्रुमतरूणां च विभिन्नयोगसम्भवे।
रूपात् रूपान्तरं तत्र जायतेऽनेकजातिकम् ॥८८॥
देवर्षिमानवानां च यक्षराक्षसरोषिणाम्।
सांकर्ये च प्रजाश्चान्या भिन्नरूपा भवन्ति हि ॥८९॥
पार्थिवानां जलीयानां तैजसां चापि देहिनाम्।
यथाविकृतिरूपाणि विभिद्यन्ते नवानि वै ॥९०॥
सृष्टौ सृष्ट्यन्तरे गोलान्तरे प्रलयजान्तरे।
कति किदृक् किं च जातं पारयेऽहं न पद्मजे ॥९१॥
संक्षेपात् काश्यपी सृष्टिर्मया प्रोक्ता प्रसिद्धिगा।
सृष्टेर्विस्तारसत्त्वेऽपि वर्णने न प्रयोजनम् ॥९२॥
कालो ह्ययं निरवधिः सृष्टेश्चान्तो न विद्यते।
मुख्यं मुख्यं कथितं ते किमन्यच्छ्रोतुमिच्छसि ॥९३॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने दितेरदितेः कद्रवा विनतायाः सुरभेः सरमाया दनोस्तिमेस्ताम्राया मुनेः क्रोधाया इलायाः सुरसाया अरिष्टायाश्च काश्यपीप्रजायाश्चतुर्दशभुवनीयाया निर्देशनामा द्वादशाधिकद्विशततमोऽध्यायः ॥ २१२ ॥

**श्रीलक्ष्मीरुवाच—**

ऋषिवंशमहं श्रोतुमिच्छामि पावनं प्रभो।
संक्षेपात् तत समाख्याहि श्रुत्वा हृत् पावनायते ॥ १ ॥

**श्रीनारायण उवाच—**

कश्यपो गोत्रकामस्तु चचार परमं तपः।
गोत्रसूत्रौ सुतौ मे च भवेतामित्यचिन्तयत् ॥ २ ॥
असितोऽपि च वत्सारो ब्रह्मरूपौ बभूवतुः।
वत्सारस्य निध्रुवश्च रैभ्यश्चेति सुतावुभौ ॥ ३ ॥
रैभ्याश्च ऋषयो रैभ्याः संजाता बहुकीर्तयः।
निध्रुवस्य सुमेधाश्च जाताश्च कुण्डपायिनः ॥ ४ ॥
असितस्यैकपर्णायां ब्रह्मिष्ठः समजायत।
निध्रुवाः शाण्डिला रैभ्यास्त्रयः एते तु काश्यपाः ॥ ५ ॥
देवलस्य वरा प्रख्या ऋषयो ह्यभवँस्तथा।
मानसस्य च रिप्यन्तस्तस्य दम इति स्मृतः ॥ ६ ॥

दमस्य तृणबिन्दुश्च महर्षिः समजायत ।
तृणबिन्दुसुता त्विडविला पुलस्त्यसंप्रिया ॥ ७ ॥
तस्माच्च विश्रवा जातस्तत्पत्नी देववर्णिनी ।
बृहस्पतेर्बृहत्कीर्तिस्तस्यैषा कन्यका मता ॥ ८ ॥
तस्यां वैश्रवणः कुबेरो वै ज़ातः कुरूपकः ।
अत्रेर्दत्तश्च दुर्वासाश्चन्द्रश्चेति त्रयः सुताः ॥ ९ ॥
कश्यपान्नारदश्चैव पर्वतोऽरुन्धती तथा ।
अरुन्धत्यां वशिष्ठस्य शक्तिः पुत्रोऽभवच्छुभः ॥१०॥
पुलस्त्यस्य रावणश्च कुंभकर्णो विभीषणः ।
तद्वंशा राक्षसा जाता ब्राह्मणा अपि साक्षराः ॥११॥
भृगोः ख्यातिरजीजनत् धातृविधातृसंज्ञकौ ।
एकां कन्यां श्रीं च पत्नी ज्येष्ठा नारायणस्य सा ॥१२॥
साध्वि ! नारायणीयौ च बलोत्साहौ सुतौ मम ।
धातुर्भार्या नियतिश्च विधातुस्त्वायतिर्मता ॥१३॥
तयोः पुत्रौ क्रमात् पाण्डुर्मृकण्डुश्च सनातनौ ।
मृकण्डोश्च मनस्विन्यां मार्कण्डेयो व्यजायत ॥१४॥
तस्य वेदशिराः पुत्रो मूर्धन्यायां व्यजायत ।
तस्य वंशोऽभवत् सर्वो मार्कण्डेय इतिप्रथः ॥१५॥
पाण्डोः पुण्डरिकायां च द्युतिमान् सृजमानकः ।
तयोः पुत्राः प्रपौत्राश्च भार्गवास्ते प्रकीर्तिताः ॥१६॥
पत्नी मरीचेः संभूतिः पूर्णमासं व्यजीजनत् ।
कृष्टिं पुष्टिं त्विषां चाऽपचितिं कन्याचतुष्टयम् ॥१७॥
पूर्णमासः सरस्वत्यां विरजं पर्वसं सुतौ ।
विरजस्य सुधामाऽभूत् तस्य वैराजनामकः ॥१८॥
गौरीपुत्रः सुधर्मा च लोकपालोऽभवत् तदा ।
पर्वसः पर्वसायां तु यज्ञवामं च काश्यपम् ॥१९॥
आंगिरसः स्मृतिर्व्यजीजनत् कन्याचतुष्टयम् ।
सिनीवालीं कुहूं राकामनुमतिं च कन्यकाः ॥२०॥
भरताग्निं कीर्तिमन्तं पुत्रौ द्वौ लोकविश्रुतौ ।
अग्नेः पुत्रस्तु पर्जन्यः सहत्यां समजायत ॥२१॥
हिरण्यरोमा पर्जन्यात् मारीच्यां समभूत्सुतः ।
क्षमा तु सुषुवे पुत्रान् पुलहस्य प्रजापतेः ॥२२॥
कर्दमश्चाम्बरीषश्च सहिष्णुश्चेति ते त्रयः ।
ऊर्जायां तु वसिष्ठस्य वासिष्ठा बहवोऽभवन् ॥२३॥
वाशिष्ठेषु काश्यपेषु तथा भृग्वंगिरोऽत्रिषु ।
पञ्चस्वेतेषु जायन्ते गोत्रेषु ब्रह्मवादिनः ॥२४॥
क्रतोः पुत्रा वालखिल्या भृगोः शुक्रः सुतोऽभवत् ।
त्वष्टा वरुत्री शण्डश्चाऽमर्कश्चेति कवेः सुताः ॥२५॥
यजन्यां देवयानी च शुक्रस्य दुहिताऽभवत् ।
त्रिशिरा विश्वरूपस्तु त्वष्टुः पुत्रोऽभवन्महान् ॥२६॥
यशोधरायामुत्पन्नो विश्वकर्माऽनुजः सुतः ।
प्रचेतसश्च्यवनोऽभूत् च्यावनेयास्ततो मताः ॥२७॥
भार्गवस्य आत्मवाँश्च दधीचश्चेत्युभौ सुतौ ।
आत्मवतश्चोरुदेशादौर्वः प्रसमजायत ॥२८॥
ऋचीकस्य जमदग्निः सत्यवत्यां व्यजायत ।
जमदग्नेः पर्शुरामो रेणुकायां व्यजायत ॥२९॥
अथर्वणस्य दायादो बृहस्पतिश्च धिष्णुकः ।
संवर्तश्च विचित्तिश्च ह्युतथ्यो वामदेवकः ॥३०॥
उतथ्यस्य शरद्वाँश्च ह्येते आथर्वणा मताः ।
बृहस्पतेर्भरद्वाजो भारद्वाजश्च तत्सुतः ॥३१॥
मरीचेस्त्वरिष्टनेमिः कश्यपश्चेति वै सुतौ ।
सोमस्य तु बुधः पुत्रो बुधस्य तु पुरूरवाः ॥३२॥
तस्य ह्यमावसुस्तस्य भीमस्तस्य च कांचनः ।
तस्य सुहोत्रस्तस्य जह्नुर्यज्जानोस्तु जान्हवी ॥३३॥
जन्होर्भार्या च कावेरी तस्यां जातः सुहोत्रकः ।
तस्याऽजकश्च तस्यापि बलाकाश्च इतीरितः ॥३४॥
तस्य कुशस्तस्य सुतः कुशिको गाधिनामकः ।
तस्य विश्वामित्रः पुत्रो ब्रह्मर्षिरभवत्पुरा ॥३५॥
विश्वामित्रस्य पुत्रस्तु देवरात इतिस्मृतः ।
कौशिका बहवो जाताः ऋषयो वै तपोधनाः ॥३६॥
विश्वामित्रश्च मान्धाता संस्कृतिश्च कपिस्तथा ।
कपेस्तु पुरुकुत्सश्च सत्यश्चान्हवान्पृथुः ॥३७॥
आर्ष्टिषेणोऽजमीढश्च भागान्योऽन्यस्तथैव च ।
काक्षीवश्चैव शिजयस्तथाऽन्ये च महारथाः ॥३८॥
रथीतरश्च रुन्धश्च विष्णुवृद्धादयो नृपाः ।
क्षत्रोपेताः स्मृता ह्येते तपसा ऋषितां गताः ॥३९॥
पुरुरवसस्त्वायुस्तस्य सुतहोत्रसंज्ञकः ।
तस्य गृत्समदस्तस्य शुनकस्तस्य शौनकः ॥४०॥
सुहोत्रस्य शलस्तस्य ह्यार्ष्टिषेणस्तपोनिधिः ।
सुहोत्रस्य सुतः काशस्तस्य दीर्घतपाः सुतः ॥४१॥
दीर्घतपसः सुपुत्रो विद्वान् धन्वन्तरिः प्रभुः ।
धन्वन्तरे केतुमाँश्च दिवोदासश्च तत्सुतः ॥४२॥
तस्य प्रतर्दनः पुत्रस्तस्य गर्गश्च वत्सकः ।
वत्सपुत्रो ह्यलर्कश्च सन्नतिस्तस्य चात्मजः ॥४३॥
तस्य वंशे च गार्ग्यो वत्सस्य वात्स्योऽभवदृषिः ।
ब्राह्मणाः क्षत्रियाश्चैते महर्षयोऽभवंस्तथा ॥४४॥

मरुत्तो ह्यभवद्राजा महर्षिः सात्वतः परः ।
नहुषस्य ययात्याद्याधार्मिका ह्यभवन् नृपाः ॥४५॥
ऊशिजो ममतायां च दीर्घतमा ह्यजायत ।
बलेः क्षेत्रे सुदेष्णायां दीर्घतमोऽकरोत्सुतम् ॥४६॥
स कक्षीवानभवच्च तत्पुत्रास्तु सहस्रशः ।
आत्रेयो वंशजो मेधातिथिः काण्ठायना द्विजाः ॥४७॥
बृहस्पतेर्ममतायां भरद्वाजोऽभवत् सुतः ।
तस्य वंशेऽभवत् त्रय्यारुणिर्नामर्षिपुंगवः ॥४८॥
बृहत्क्षत्रस्य पुत्रोऽभूत् सुहोत्रसंज्ञकः ऋषिः ।
तस्य वंशेऽभवन्मेधातिथिर्नाम ऋषिर्महान् ॥४९॥
पौरवश्च कौथुमोऽभूत् सामवेदस्य शाखया ।
रिक्षस्य मुद्गलः पुत्रो मौद्गल्यास्तस्य वंशजाः ॥५०॥
अहल्यायाः शतानन्दस्तस्य सुतश्च सुव्रतः ।
च्यवनस्योपरिचरवसुस्तस्य कुशाग्रकः ॥५१॥
कुशाग्रस्य सुतः ऋषभाख्यस्तस्यार्षभर्षयः ।
ब्रह्मक्षत्रा इमे प्रोक्ताः ऋषयो लोकपावनाः ॥५२॥
भवन्त्यन्येऽपि पृथिव्यामृषयो वेदबोधकाः ।
तापसाश्चापि जायन्ते तैर्वै संरक्षितं जगत् ॥५३॥
कर्मकाण्डपराः केचित् केचिद्ब्रह्मपरास्तथा ।
केचिद्योगपराश्चान्ये तपोमात्रपरास्तथा ॥५४॥
सिद्धिपरास्तथा चान्ये ह्युपासनादितत्पराः ।
भवन्त्येव परश्रेयः प्रदास्ते पुण्यशालिनः ॥५५॥
मुख्या ह्येते महर्षयो मदंशसंभवाः खलु ।
कथितास्ते महालक्ष्मि ! किमन्यच्छ्रोतुमिच्छसि ॥५६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने ब्रह्मक्षत्रर्षीणां वंशादिप्रदर्शननामा त्रयोदशाधिकद्विशततमोऽध्यायः ॥२१३॥

**श्रीलक्ष्मीरुवाच --**

कल्पान्मनूँश्च संक्षेपाच्छ्रोतुमिच्छामि माधव ।
द्वापरान्ते कलेर्धर्मान् श्रोतुमिच्छामि तद्वद ॥ १ ॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! चतुर्दशमनून्प्रत्यहजाँस्तथा ।
दशशतानि जायन्ते कल्पा वर्षे तु वेधसः ॥ २ ॥
दशशतानि च युगचतुष्टयानि कल्पके ।
एष कल्पस्तु विज्ञेयः सर्वकल्पेषु सदृशः ॥ ३ ॥
वाराहः प्रथमः कल्पो लोकादौ प्रथितः खलु ।
द्वितीयस्तु भुवः कल्पस्तृतीयस्तप उच्यते ॥ ४ ॥
भवश्चतुर्थो विज्ञेयः पंचमो रंभ उच्यते ।
ऋतुकल्पस्तथा षष्ठः सप्तमस्तु क्रतुः स्मृतः ॥ ५ ॥
अष्टमस्त्वभवद् वह्निर्नवमो हव्यवाहनः ।
सावित्रो दशमः कल्पो भावस्त्वेकादशः स्मृतः ॥ ६ ॥
उशिको द्वादशस्तत्र कुशिकस्तु त्रयोदश ।
चतुर्दशस्तु गन्धर्वो गान्धारो यत्र वै स्वरः ॥ ७ ॥
ऋषभस्तु ततः कल्पो ज्ञेयः पञ्चदशः प्रिये ।
षड्जस्तु षोडशः कल्पः षड्जना यत्र चर्षयः ॥ ८ ॥
शिशिरश्च वसन्तश्च निदाघो वर्ष इत्यपि ।
शरद्धेमन्त इत्येते मानसा ब्रह्मणः सुताः ॥ ९ ॥
ततः सप्तदशः कल्पो मार्जालीय इतिस्मृतः ।
ततस्तु मध्यमो नाम कल्पोऽष्टादश उच्यते ॥१०॥
ततस्त्वेकोनविंशस्तु कल्पो वैराग्यसंज्ञकः ।
वैराजो यत्र समभूत् मनुर्वै ब्रह्मणः सुतः ॥११॥
ततो विंशतिकः कल्पो निषादः परिकीर्तितः ।
एकविंशतिकः कल्पो विज्ञेयः पञ्चमः प्रिये ॥१२॥
ब्रह्मणो मानसाः पुत्राः पञ्चप्राणाः स्वरोऽभवत् ।
द्वाविंशस्तु तथा कल्पो विज्ञेयो मेघवाहनः ॥१३॥
त्रयोविंशतिकः कल्पो विज्ञेयश्चिन्तकस्तथा ।
चतुर्विंशतिकश्चापि ह्याकुतिः कल्प उच्यते ॥१४॥
पंचविंशतिकः कल्पो विज्ञातिः परिकीर्तितः ।
षड्विंशस्तु ततः कल्पो मन इत्यभिधीयते ॥१५॥
सप्तविंशतिकः कल्पो भावो वै कल्पसंज्ञितः ।
अष्टाविंशतिकः कल्पो बृहदित्यभिसंज्ञितः ॥१६॥
एकोनत्रिंशकः कल्पो विज्ञेयः श्वेतलोहितः ।
ततस्त्रिंशत्तमः कल्पो रक्तो नाम प्रकीर्तितः ॥१७॥
एकत्रिंशत्तमः कल्पः पीतवासा इति स्मृतः ।
द्वात्रिंशत्तमकल्पस्तु सितकल्पो हि नामतः ॥१८॥
त्रयस्त्रिंशत्तमः कल्पः कृष्णकल्पो हि नामतः ।
चतुस्त्रिंशत्तमः कल्पो विश्वरूपस्तु नामतः ॥१९॥
एवमेते भवनानामृतूनां नामतस्तथा ।
क्रतूनां नामतश्चैव वह्नीनां नामतस्तथा ॥२०॥
स्वराणां नामतश्चैव प्राणानां नामतस्तथा ।
आकूतीनां तथा शंभोर्विष्णोश्च नामतस्तथा ॥२१॥
कल्पा ह्येते चतुस्त्रिंशत्प्रोक्तास्तद्योगतश्चते।
सप्तर्षीणां नामतश्च सप्तकल्पास्तथा परे ॥२२॥

अष्टवस्वभिधानाश्च ह्यष्टौ कल्पास्तथा परे।
नवग्रहसमायोगान्नवकल्पास्तथेतरे ॥२३॥
अष्टानां दिक्प्रपालानां कल्पा ह्यष्टौ तथाऽपरे।
ब्रह्मणश्च स्वीयकल्पश्चैकः कल्पस्तथा मतः ॥२४॥
त्रिगुणानां च देवानां त्रयः कल्पास्तथाऽपरे।
एकादशानां रुद्राणामेकादश च कल्पकाः ॥२५॥
चतुर्दशमनूनां च नाम्ना कल्पाश्चतुर्दश।
चतुर्दशमहेन्द्राणां तथा कल्पाश्चतुर्दश ॥२६॥
सप्तविंशतिनक्षत्रनाम्ना तावन्त एव ते।
एकोनपञ्चाशन्मरुन्नाम्ना तावन्त एव ते ॥२७॥
चतुर्विंशत्यवतारनाम्ना कल्पास्तथाऽपरे।
एकोनपंचाशद्वह्निकल्पास्तावन्त एव ते ॥२८॥
चतूर्णां धर्मपादानां नाम्ना चत्वार एव ते।
विद्यानां च त्रयीनां च नाम्ना कल्पास्त्रयस्तथा ॥२९॥

इत्येवं सृष्टिसंरंभे यद्यद्योगो भवेत्पुरा।
ब्रह्मणः स्मृतिमार्गे च यस्य योगो भवेत्पुरा ॥३०॥
तत्तन्नाम्ना च कल्पास्ते दिवसा ब्रह्मणो मताः।
सहस्रं संभवत्येव कल्पा हि ब्रह्मवत्सरे ॥३१॥
त एते ब्रह्मणः सर्वे पुनर्वर्षान्तरे तथा।
एवं विपरिवर्तन्ते शतवर्षीयजीवने ॥३२॥
कल्पास्तु वेधसश्चात्र सृष्टौ प्रवाहलीलया।
एते ह्येव प्रजायन्ते नास्तीति नियमोऽपि वै ॥३३॥

अन्येऽपि नामिनः कल्पा लक्ष्मीकल्पा भवन्त्यपि।
रमाकल्पास्तथा पद्माकल्पाः श्रीकल्पकास्तथा ॥३४॥
शिवाकल्पा योगिनीनां कल्पाः सतीप्रकल्पकाः।
शचिकल्पास्तथा कालीकल्पाः शक्तिदिनानि च ॥३५॥
विद्याकल्पास्तथा चान्ये त्वाद्यव्यक्तिदिनानि च।
भवन्तीश्वरकल्पाश्च देवकल्पास्तथाऽपरे ॥३६॥
देवीकल्पा अप्सराणां कल्पा भक्तदिनानि च।
तत्त्वकल्पास्तथा चाद्यकार्यकल्पा भवन्त्यपि ॥३७॥

यन्नवं वेधसः प्रातर्दृश्यते मुख्यमुत्तमम्।
तन्नाम्ना ते तु कल्पा वै ब्रह्मणा हि प्रधारिताः ॥३८॥
इन्द्राश्च मनवः कल्पे चतुर्दश चतुर्दश।
एको मनुर्दीर्घकालं भुंक्ते ह्येकं तु सप्ततिम् ॥३९॥

चतुष्कीनां चतुष्की तु चतुर्युगं समीरितम्।
द्वादशाब्दसहस्राणि चतुर्युगं विदुः सुराः ॥४०॥
चतुष्कीणां सहस्रं तु कल्पे गच्छति वेधसः।
चतुष्कीणां सहस्रं च रात्रौ गच्छति वेधसः ॥४१॥

द्वे सहस्रे चतुष्कीणां ब्रह्मणस्तद्दिवानिशम्।
एतत्क्रमेण वेधास्तु शतवर्षाणि जीवति ॥४२॥
वैराजस्यैकदिवसस्तदा वै परिकल्पितः।
ह्येतत्क्रमेण वैराजः शतवर्षाणि जीवति ॥४३॥
महाविष्णोरेकदिनं तदा वै परिकल्पितम्।
एतत्क्रमान्महाविष्णुः शतवर्षाणि जीवति ॥४४॥
प्रधानपुरुषस्यैकदिनं तत्परिकल्पितम्।
एतत्क्रमात् प्रधानना शतवर्षाणि जीवति ॥४५॥
प्रकृतिपुरुषस्यैकदिनं तत्परिकल्पितम्।
पुंप्रकृतेस्तस्य सृष्टिः शतवर्षे प्रवर्तते ॥४६॥
ततो महाप्रलयो वाऽऽत्यन्तिकलय आप्यते।
ततो ब्रह्ममुक्तिलोको वर्तते सपरेश्वरः ॥४७॥
तावति समये याते ईक्षते स पुनस्तथा।
बहु स्यामिति सृष्ट्यर्थं प्रकृतिपूरुषक्रमात् ॥४८॥

कल्पे कल्पे मनूनां च तथैवाऽस्ति प्रभावनम्।
ब्रह्माण्डानां भुवनानां तथैवाऽस्त्युत्सुभावनम् ॥४९॥
चतुर्दशमनून् नाम्ना कथयामि शृणु प्रिये।
ऋतुसंज्ञेऽत्र वाराहे कल्पे च प्रथमो मनुः ॥५०॥
स्वायंभुवो मनुः प्रोक्तो ब्रह्मणः पुत्र एव सः।
स्वारोचिषो द्वितीयो वै मनुरग्नेः सुतोऽभवत् ॥५१॥
औतमश्च तृतीयो वै प्रियव्रतसुतो मनुः।
तामसश्च चतुर्थ उत्तमभ्राता च वै मनुः ॥५२॥
रैवतः पञ्चमः प्रोक्तो मनुस्तामससोदरः।
षष्ठश्च चक्षुषः पुत्रः चाक्षुषो नाम वै मनुः ॥५३॥
स्वारोचिषोत्तमौ चैव तामसो रैवतस्तथा।
प्रियव्रताऽन्वया ह्येते चत्वारो मनवो मताः ॥५४॥
उत्तानपादस्य वंशे चाक्षुषो मनुरुच्यते।
कश्यपस्याऽदितेः पुत्रा द्वादशादित्यसंज्ञकाः ॥५५॥
तत्र विवस्वतः पुत्रः श्राद्धदेव इति श्रुतः।
वैवस्वतो मनुः सोऽयं सप्तमो मनुरुच्यते ॥५६॥
छायायां सूर्यपुत्रश्च सावर्णिश्चाष्टमो मनुः।
नवमो दक्षसावर्णिर्मनुर्वरुणसंभवः ॥५७॥
दशमो ब्रह्मसावर्णिरुपश्लोकसुतो मनुः।
मनुर्वै धर्मसावर्णिरेकादशः समुच्यते ॥५८॥
भविता रुद्रसावर्णिर्नाम्ना द्वादशको मनुः।
मनुस्त्रयोदशो देवसावर्णिः सुनृतासुतः ॥५९॥
सत्यसहसो दायादो वेदसावर्णिरेव सः।
मनुश्च ह्यीन्द्रसावर्णिश्चतुर्दशः स उच्यते ॥६०॥

प्रिये चतुर्दशैतानि कल्पे कल्पे भवन्ति वै।
प्रोक्तैरेभिर्मितः कल्पो युगसाहस्रपर्ययः ॥६१॥
अकल्पश्च निशा तस्य युगसाहस्रपर्यया।
युगचतुष्टये युगशब्दोऽत्र बोध्य एव वै ॥६२॥
एवं कल्पान्तरो चाऽन्ये मनवश्च चतुर्दश।
इन्द्रास्तथा भवन्त्येव ह्यन्येऽन्ये वै चतुर्दश ॥६३॥
ऋषयश्च भवन्त्यन्ये सप्त सप्त तथाविधाः।
दिक्पाला लोकपालाश्च भवन्त्यन्ये तथाक्रियाः ॥६४॥
वेदव्यासाः प्रतिचतुर्युगं भवन्ति चापरे।
अवतारा हरेः प्रतिचतुष्कीं चतुर्विंशतिः ॥६५॥
अंशाऽऽवेशकलांऽशांशास्त्वनन्ताः प्रतिसाधिकाम्।
भवन्त्येवाऽवताराश्च लोककल्याणहेतवे ॥६६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने बहूनां कल्पानां चतुर्दशमनूनां च निर्देशनामा चतुर्दशाधिकद्विशततमोऽध्यायः ॥ २१४ ॥

श्रीनारायण उवाच—

शृणु लक्ष्मि! द्वापरान्तान् कलेर्धर्मांश्च सर्वशः।
प्रथमे द्वापरे प्राप्ते सृष्टिस्तु युगलोद्भवा ॥ १ ॥
मिथुनधर्मजन्या सा नरनारीप्रसंगजा।
प्रावर्तत यदा तत्र कामजन्याश्च दुर्गुणाः ॥ २ ॥
गोप्यकर्म चौर्यकर्म रोषकर्म निजार्थता।
हिंसाऽनृतं तथा स्तेयं वीर्यनाशः परिग्रहः ॥ ३ ॥
अशुद्धिस्तृष्णिका भोगो व्यवसायोऽतिलुब्धता।
देहदैहिकचिदचिदहन्ताममतादयः ॥ ४ ॥
प्रवर्तन्ते प्रतिव्यक्ति स्वार्थप्रवाहवर्धिताः।
अपुण्या अल्पपुण्याश्च जायन्ते देहिनस्ततः ॥ ५ ॥
मन कालुष्यमाप्नोति बुद्धिर्विपरितायते।
असत्संकल्पा जायन्ते प्रवर्तन्तेऽप्यसत्पथे ॥ ६ ॥
द्यूतं पानं स्त्रियः सूना अधर्माधिस्थलानि वै।
सुवर्णमनृतं कामो मदो वैरं रजस्तथा ॥ ७ ॥
क्लेशस्थानानि पञ्चैव कलेर्वासकृतानि हि।
म्लेछप्राया जनाः सर्वेऽधर्माऽनृतपरास्तथा ॥ ८ ॥
स्त्रीबालगोद्विजघ्नाश्च परदारधनादराः।
उदिताऽस्तमितप्राया फल्गुदास्तीव्रमन्यवः ॥ ९ ॥
असंस्कृताः क्रियाहीना अल्पसत्त्वाऽल्पकायुषः।
रजसा तमसा व्याप्ता म्लेच्छप्राया धनाधिपाः ॥१०॥
तन्नाथाश्च जनपदास्तच्छीलाचारतत्पराः।
धर्मः सत्यं दया क्षान्तिः शौचमायुः स्मृतिर्बलम् ॥११॥
प्रक्षयं यान्त्यनुदिनं कलेः प्राबल्यसंक्रमे।
सर्वप्रकारके श्रैष्ठ्ये वित्तमेवोदयप्रदम् ॥१२॥
धर्मन्यायव्यवस्थायां वित्तं हेतुर्बलं भवेत्।
दाम्पत्येऽभिरुचिर्वित्तं विषयो वापि कारणम् ॥१३॥
विप्रत्वे सूत्रकं लिंगं लुंचायां विजयो मतः।
पाण्डित्ये तु वितण्डा स्यात् दारिद्र्यं त्यागयोगिनि ॥१४॥
दंभी साधुर्महान् भाव्यो विवाहे स्वीकृतिर्द्वयोः।
बहिश्चमत्कृतिः स्नानं मृषातेजः प्रसाधनम् ॥१५॥
दूरे वारि भवेत्तीर्थं केशवेषो विभूषणम्।
उदरंभरता पुण्यं चाऽप्रधृष्यं तु सत्यता ॥१६॥
स्वकार्यसाधनं दाक्ष्यं यशोऽर्थं दानसेवनम्।
द्विशतं च शतं चैव पञ्चाशत् पंचविंशतिः ॥१७॥
पञ्चदशान्तं सत्त्वेषु क्षीणेष्वायुस्तदान्तिमम्।
चौर्याऽनृतवृथाहिंसाव्यवायादिप्रसेविनः ॥१८॥
युवत्यश्चाविवाहिताः स्वल्पवस्त्राः कलौ युगे।
सर्वस्पर्शा नरा नार्यः सर्वस्वापकरास्तथा ॥१९॥
म्लेच्छाप्रायाः सर्ववर्णाश्छागप्रायाश्च धेनवः।
दारामया आश्रमाश्च धनप्रायाश्च बान्धवाः ॥२०॥
तृणप्राया ओषधयः प्रांशुलभ्या महीरुहाः।
क्षणवृष्टिकरा मेघा वस्तुहीनगृहाणि च ॥२१॥
कृते सत्यं दया दानं तपो नास्ति कलौ तु तत्।
सन्तुष्टाः करुणा मैत्राः शान्ता दान्तास्तितिक्षवः ॥२२॥
आत्मारामाः समदृशः सर्वेऽपि तु कृते जनाः।
त्रेतायां धर्मपादांशाः पादोनास्ते ह्रसन्ति वै ॥२३॥
विशन्त्यधर्मपादाश्चानृतं हिंसा च तृष्णिका।
विग्रहश्च जनास्तत्र प्रवर्तन्ते स्वभावतः ॥२४॥
किन्तु जनास्तपोनिष्ठा नातिहिंस्रा न लम्पटाः।
धर्मार्थकामनाप्राया भवन्ति त्रितसंयुगे ॥२५॥
वर्णा ब्रह्मोत्तराश्चापि जायन्ते वृत्तिदूषिताः।
तपःसत्यदयादानेष्वर्धं ह्रसति द्वापरे ॥२६॥
हिंसातृष्णाऽनृतद्वेषैर्निन्दामात्सर्यभर्त्सनैः।
कलौ वृषांशस्तुर्योऽपि नश्यत्यधर्मदुर्गुणैः ॥२७॥
निर्दया वैरिणो लुब्धाः सतृष्णाः सर्वभक्षिणः।
दुराचारा सर्वपेयभोग्यव्यसनसूत्सुकाः ॥२८॥
भवन्त्येव प्रजाः सर्वा जैह्वशैश्नप्रयोजनाः।
कापट्यं चानृतं निद्राऽऽलस्यं द्वेषो विषादनम् ॥२९॥

शोको मोहो भयं दैन्यं प्रत्यहं तु कलौ जने ।
द्रव्यहीना व्ययधौर्या मद्यपानाः कुदृष्टयः ॥३०॥
नरा नार्यः स्वार्थपराः काममूलाश्च सर्वशः ।
देशा दस्युमया वेदा देवाः पाखण्डनाशिताः ॥३१॥
प्रजाभक्षाश्च राजानो जनाः शिश्नोदरतृपाः ।
व्रतहीनाश्च काषायाः सदारा भिक्षुकास्तदा ॥३२॥
तप कापस्त्यलाभार्थं न्यासोप्यर्थप्रलब्धये ।
वामनाश्चातिभोज्याश्च बह्वपत्या बहुस्त्रियः ॥३३॥
स्त्रियोऽपि गालिकामिष्टभाषिण्यो नग्नवस्त्रिकाः ।
कूटकार्यपणाः क्षुद्रोऽसत्पथप्रेमपांसुलाः ॥३४॥
पतिं त्यजन्ति निर्द्रव्यं हित्वा कुटुम्बमित्यपि ।
पितृभ्रातृसुहृदश्च त्यक्त्वा प्रयान्ति कामुकम् ॥३५॥
सर्वे दानं प्रगृह्णन्ति सर्वे वै याजकास्तथा ।
सर्वे मन्त्राधिकाराश्च म्लेच्छा ब्राह्माभिमानिनः ॥३६॥
उपदिशन्ति च शठाः शिष्यान् शाठ्यसमन्वितान् ।
शठं गुरुं श्रयन्त्येव शठाः शिष्याः स्वभाववत् ॥३७॥
अधर्मिणो धर्मवाच्यो भवन्ति च विधर्मिषु ।
स्वधर्मिषु सदा द्वेषनिन्दामात्सर्यकारिणः ॥३८॥
अन्नधनाम्बरहीना गृहहीना ह्यभोजनाः ।
म्रियन्ते तु विना मृत्युं प्राप्ते घोरे कलौ युगे ॥३९॥
अनावृष्टिरतिशत्रुरतिरोगातुरा जनाः ।
स्वल्पस्वार्थस्य सिद्ध्यर्थं घातिनो वै कलौ युगे ॥४०॥
न वृद्धौ पितरौ पुत्रा रक्षयन्ति कलौ खलाः ।
न पत्नीं वा सतीं भार्यां रक्षयन्ति खला वराः ॥४१॥
यथेष्टं विषयानन्दं रक्षयन्ति स्त्रियं कलौ ।
धनदं रतिदातारं त्वाश्रयन्ति स्त्रियो जनम् ॥४२॥
कपर्दिकाकृते क्लेशं प्रकुर्वन्ति बिडालवत् ।
प्राणाश्चैवाऽप्यनृतार्थे त्यजन्त्यपि कलौ जनाः ॥४३॥
संप्रघ्नन्ति स्वकाँश्चापि स्वल्पार्थे स्वार्थघातिनः ।
आचार्या गुरवः श्रेष्ठाः पाखण्डव्यासचेतसः ॥४४॥
न सुखं नापि निर्वाणं न शान्तिं यान्ति वै कलौ ।
कालग्रस्ताः प्रजाः शीघ्रं सदोद्वेगा विनाशगाः ॥४५॥
अल्पप्रसादा अनृता महाक्रोधा अधार्मिकाः ।
प्रजायन्ते मानवा वै यवनैः परिमिश्रिताः ॥४६॥
स्त्रीणां बालवधेनैव हत्वा चैव परस्परम् ।
युगदोषदुराचारा भुञ्जते मानवाः कलौ ॥४७॥
उदितोदित वंशाश्च ह्युदिताऽस्तमितास्तथा ।
चाण्डालभोज्याः सर्वे वै नृपा विप्राः श्वपाकवत् ॥४८॥
धर्मकामार्थहीनाश्च म्लेच्छाचाराश्च सर्वशः ।
तदा विनाशमापन्नाः प्रजा नास्तिकतान्विताः ॥४९॥
तदाऽल्पनरवर्गे च बहुस्त्रीके कलौ युगे ।
लवाल्लवं भ्रश्यमाना आयूरूपबलश्रुतैः ॥५०॥
म्लेच्छैश्चोपहता म्लेच्छाः प्रयान्ति वै क्षयं मुहुः ।
हतस्वा व्याधिभूयांसोऽनावृष्ट्यादिविनाशिताः ॥५१॥
अनाथा वृत्तिहीनाश्च भविष्यन्ति वनौकसः ।
पुरग्रामादिनाशश्च भ्रष्टस्नेहास्तथा मिथः ॥५२॥
सांकर्यमाश्रिताः कुब्जाः सरित्पर्वतसंश्रयाः ।
धीवरा इव जायन्तेऽरण्यगा मत्स्यभोजिनः ॥५३॥
मृगैर्मीनैर्विहंगैश्च श्वापदैस्तर्क्षुभिस्तदा ।
मधुशाकफलैर्मूलैर्वर्तयन्ति च जन्तुभिः ॥५४॥
चीरं पर्णं च विविधं वल्कलान्यजिनानि च ।
धारयन्ति च कौपीनं पाशवं जीवनं श्रिताः ॥५५॥
अजैडकं खरोष्ट्रं च पालयन्ति नदीश्रिताः ।
बह्वपत्या अन्नहीनाः शौचाचारविवर्जिताः ॥५६॥
हीनाद्धीनान् तदाऽधर्मान् स्वीकुर्वन्ति पशुश्रितान् ।
विप्राः शूद्रात्मका मन्त्राभिचारादिविधायिनः ॥५७॥
नारीसन्मन्त्रिणी गेहे श्यालकाश्च प्रधानकाः ।
दाम्पत्यं विक्रयाधीनं निर्मनस्त्वे वियोगगम् ॥५८॥
तीर्थानि यवनाऽऽर्तानि देवाश्चाण्डालधर्षिताः ।
म्लेच्छैर्नष्टान्यायतान्येकाकारं कलौ युगे ॥५९॥
न योगी नैव सिद्धो न ज्ञानी वा ब्रह्मभावनः ।
शाठ्येन शून्यः कश्चिन्न पश्य लक्ष्मि ! कलेर्बलम् ॥६०॥
अन्नहीना जनपदाः कथाविक्रयिणो द्विजाः ।
रामा रतिविक्रयिण्यो भवन्त्येव कलौ सदा ॥६१॥
सर्वे त्वघासुरायन्ते सारहीनाः शठाः खलाः ।
पदार्थास्तुषमात्रा वै कणशून्या निरंकुराः ॥६२॥
श्रूयते च कथा सर्वैः पाल्यते नहि केनचित् ।
कलौ श्रावणकल्याणे कथासारो गतो भवेत् ॥६३॥
स्नान्ति तीर्थे निवसन्ति पालयन्ति व्रतानि न ।
कलौ तैर्थिककल्याणे कथासारो गतो भवेत् ॥६४॥
कामक्रोधभयलोभतृष्णाव्याकुलचेतसाम् ।
कलौ तापसकल्याणे तपःसारो गतो भवेत् ॥६५॥

मनसश्चाऽजयाल्लोभाद्दंभात्पाखण्डसंश्रयात् ।
कलौ ध्यानजकल्याणे ध्यानसारो गतो भवेत् ॥६६॥
वस्तुसारो लयमेवं प्रयात्येव स्थले स्थले ।
युगबलाद्धि तत्सर्वं नास्ति कस्यापि दूषणम् ॥६७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुग-
सन्ताने कलियुगस्वभावगुणदोषप्रवर्तन-
दर्शननामा पञ्चदशाधिकद्विशत-
तमोऽध्यायः ॥ २१५ ॥

श्रीनारायण उवाच—

कलेः पञ्चसहस्रे च गते वर्षे भुवः स्थलात् ।
गंगाद्यास्तीर्थमूर्धन्याः प्रयान्ति श्रीहरेः पदम् ॥ १ ॥
शालग्रामो हरेर्मूर्तिर्जगन्नाथश्च देवताः ।
ततः स्वल्पे गते काले प्रयास्यन्ति हरेः पदम् ॥ २ ॥
दीक्षाश्च देवमन्त्राश्च विधयः श्राद्धतर्पणम् ।
सात्त्विकानि च कर्माणि प्रयास्यन्ति हरेः पदम् ॥ ३ ॥
हरेः पूजा हरस्यापि तन्नामगुणकीर्तनम् ।
तत्त्वज्ञानानि सर्वाणि प्रयास्यन्ति हरेः पदम् ॥ ४ ॥
व्रतं तपस्याऽनशनं स्वागतं ग्रामदेवताः ।
सूतकाद्यभिमन्तारो न भवन्ति युगे कलौ ॥ ५ ॥
क्रूराऽहंकारसंयुक्ता घातका वै महाजनाः ।
पुंसां भेदो मिथो नैव स्त्रीणां नैव च वै कलौ ॥ ६ ॥
सर्वपृथ्व्यां स्त्रीवशाश्च पुंश्चल्यश्च गृहे वने ।
तर्जनैर्भर्त्सनैः शश्वत् हन्ति जारं तथा पतिम् ॥ ७ ॥
गृहेश्वरी च गृहिणी गृही भृत्याऽधिकोऽधमः ।
चेटिभृत्यासमा वध्वो भवन्त्येव कलौ युगे ॥ ८ ॥
कर्तारो बलिनो गेहे योनिसम्बन्धिबान्धवाः ।
श्वश्रूश्च श्वशुरश्चैव गृहे मुख्याः कलौ युगे ॥ ९ ॥
विद्यासम्बन्धिभिः सार्धं संभाषापि न विद्यते ।
स्वकीया बान्धवाद्यास्तु यथा परिचिताः परे ॥१०॥
म्लेच्छविद्यां प्रपठन्ति देहदैहिकवादिनः ।
उत्तमाः सारहीनाश्च शूद्राणां सेवकाः कलौ ॥११॥
ब्रह्मसूत्रविहीनाश्च त्राणशून्याः कृषिकृतः ।
धर्महीना द्विजा म्लेच्छकर्मकराः कलौ युगे ॥१२॥
फलहीनाश्च तरवोऽपत्यहीनाश्च योषितः ।
दुग्धहीनास्तथा गावः क्षीरं घृतविवर्जितम् ॥१३॥
दम्पती प्रेमशून्यौ च स्थानिनः सुखवर्जिताः ।
भूपाः सत्ताविहीनाश्च प्रजाश्च करकर्षिताः ॥१४॥
जलहीना नदा नद्यो वाप्यः कूपाः सरांसि च ।
लक्षेषु पुण्यवान् कश्चिन् मिलेद्वा न मिलेदपि ॥१५॥
कुत्सिता विकृताकारा नरा नार्यश्च बालकाः ।
कुवार्ताः कुत्सितपथाः प्रजायन्ते कलौ युगे ॥१६॥
न नगराणि न वै ग्रामा वृक्षगर्तनिवासिनः ।
शशवत् पर्णभोज्याश्च भवन्त्येव कलौ चिरम् ॥१७॥
अरण्यानि प्रजायन्ते ग्रामनगरभूमिषु ।
सरित्तडागसस्थानि क्षेत्रारण्यानि वै कलौ ॥१८॥
धनं न दृश्यते क्वापि पाशवीं वृत्तिमाश्रिते ।
धूर्ते सत्यस्य विश्वासः पापे पुण्यस्य मान्यता ॥१९॥
अशिष्टा ये ते तु शिष्टा लम्पटास्ते जितेन्द्रियाः ।
पुंश्चल्यस्ताः सतीपूज्या गण्यन्ते वै कलौ युगे ॥२०॥
जारा ब्रह्मव्रतास्तत्र सर्वस्त्रीकाश्च नैष्ठिकाः ।
तापसा ये गुप्तपापा निन्दकाः सत्यमानिनः ॥२१॥
घातका ये कारुणिकाश्चौरा ये साधुभूषणाः ।
भिक्षुका ये वंचकास्ते जायन्ते वै कलौ युगे ॥२२॥
नीचसेवा महत्सेवा द्वेषाख्यानैश्च रंजकाः ।
हास्यप्रदा जडा व्याधाः पूज्यास्ते वै कलौ युगे ॥२३॥
बाल्ये व्याधिजरायुक्ताः पलिताः स्वल्पकालजाः ।
महावृद्धाः पञ्चदशवर्षेष्वेव कलौ युगे ॥२४॥
पञ्चवर्षा तु युवती रजोयुक्ता सुतान्विता ।
षड्मासान्ते प्रसूना स्त्री द्वादशे वृद्धतान्विता ॥२५॥
प्रायशो बहुशो वन्ध्या हतगर्भाः दुरोदराः ।
कन्याविक्रयिणः पुत्रविक्रयिणश्च सर्वशः ॥२६॥
मातृजायावधूनां च जारोपार्जनतत्पराः ।
कन्यानां भगिनीनां च जारोपार्जनजीविनः ॥२७॥
हरेर्नाम्नां विक्रयिणः कीर्त्यर्थे दानकारिणः ।
देववृत्तेर्ब्रह्मवृत्तेर्गुरोर्वृत्तेश्च हारकाः ॥२८॥
स्नुषाश्वश्रूकन्यकासपत्नीभगिनीभोगिनः ।
भ्रातृजायाभोगिनश्चाऽगम्यागमनकारिणः ॥२९॥
जन्मयोनिं परित्यज्य विहरन्ति कलौ नराः ।
पत्नीनां निश्चयो नास्ति भर्तॄणां च कलौ युगे ॥३०॥
प्रजानां चैव वस्तूनां ग्रामाणां वाऽधिकारिणः ।
अलीकवादिनः सर्वे चौरा यान्ति बलं कलौ ॥३१॥
नराणां मारका सर्वेऽबलानां मारकास्तथा ।
गुरूणां मारका धर्ममारका वै कलौ जनाः ॥३२॥

लाक्षालोहरसानां च व्यापारं लवणस्य च।
पुत्राणां चाथ पत्नीनां प्रकुर्वन्ति कलौ युगे ॥३३॥
पुंश्चली वार्धुषाऽवीरा कुट्टिनी च रजस्वला।
रण्डाश्च रन्धनागारे प्रभवन्ति हि याचिकाः ॥३४॥
अन्नानां निर्णयो नास्ति योनिनां नापि निर्णयः।
लिंगानां निर्णयो नास्ति बालानां सुतरां नहि ॥३५॥
भूरुहा हस्तमानाश्च वितस्तिमानमानवाः।
अर्धवितस्तिपशवो भवन्त्यन्ते कलेस्तदा ॥३६॥
साधूनां च गुरूणां च वधश्चैव तपस्विनाम्।
अनावृष्टिभयं शश्वद्देशानां विप्लवस्तथा ॥३७॥
विषोष्ममरणाश्चापि वह्निगोलकनाशिनः।
नरा नार्यः समस्ताश्च युगपन्नाशिनः कलौ ॥३८॥
दुरिष्टैर्दुरधीतैश्च दुष्कृतैश्च दुरागमैः।
विप्राणां कर्मदोषैश्च प्रजानां पतनं कलौ ॥३९॥
हिंसा माया तथेर्ष्या च क्रोधोऽसूयाऽक्षमा नृषु।
तिष्ये भवन्ति लोकनामुग्रा रामश्च लुब्धता ॥४०॥
संक्षोभाः कलयः क्लेशाः कलौ तत्र जने जने।
सर्वेषामन्त्ययोनेश्च सम्बन्धाः सुप्तिभोजनैः ॥४१॥
आयुर्मेधा बलं रूपं कुलं चैव प्रणश्यति।
डाकिन्यश्चापि मारिण्यो मान्त्रिक्यः प्रमदाः कलौ ॥४२॥
श्वापदानां प्रबलत्वं गवां तत्र ह्युपक्षयः।
सम्प्रदायविनाशश्च कलौ घोरे प्रवर्तिते ॥४३॥
चित्रवर्षी तदा देवश्चित्रापत्या जना अपि।
कूटमानाः पण्यजना कुशीला व्याधरूपिणः ॥४४॥
बहुयाचनको लोकः प्रत्युपकारवर्जितः।
नष्टचित्ताः साहसाश्च मुक्तकेशस्त्रीवेषिणः ॥४५॥
सस्यचौरा वस्त्रचौराश्चौराणां चौरका अपि।
हर्तृणां चापि हर्तारो भवन्त्येव कलौ युगे ॥४६॥
कीटमूषकसर्पाश्च धर्षयन्ति तु मानवान्।
स्त्रीबालगोवधं कृत्वा हत्वाऽन्यद्वा परस्परम् ॥४७॥
अपहृत्य कुलं नैजं मार्गयन्ति सुखं कलौ।
दुःखाद्रोमादधर्माच्चाऽनीतेर्वै तामसाः कलौ ॥४८॥
त्रेतायामाब्धिको धर्मो द्वापरे मासिकः स वै।
नास्तिकानामशक्तानां कलौ दिवसमात्रकः ॥४९॥
दीक्षालोपो ब्रह्मलोपः संस्कारयज्ञलोपनम्।
राजस्वल्यसूतकाऽस्पृश्यतालोपः कलौ सदा ॥५०॥
पक्वाऽपक्वादिशुद्धिश्च मुखगण्डुषशोधनम्।
शवश्मशानशौचादि विनश्यन्ति कलौ युगे ॥५१॥
मन्दिराणि प्रतिमाश्च पूज्यता महतां तदा।
परोपकारसत्राणि विनश्यन्ति कलौ युगे ॥५२॥
सधवाविधवाभेदा गृह्यगृहिविभागगाः।
मान्यमर्यादितभेदा विनश्यन्ति कलौ युगे ॥५३॥
दण्ड्याऽदण्ड्यविवेकाश्च पाल्याऽपाल्यप्रणालिकाः।
सेव्याऽसेव्यविवेकाश्च विनंक्ष्यन्ति कलौ युगे ॥५४॥
नार्यो गावश्च कन्याश्च युगन्धराः कलौ तदा।
न्यायालयेऽपि नार्यश्च श्वपचाश्च नृपासनाः ॥५५॥
सर्वं श्वपचसाम्राज्यं जायन्ते वै कलौ तदा।
लुंचाराज्यं यौनराज्यं स्वार्थराज्यं कलौ सदा ॥५६॥
बलिराज्यं शठराज्यं नग्नराज्यं कलौ भवेत्।
दृष्टं सत्यं तदन्यच्चाऽप्रमाणं वै कलौ मतम् ॥५७॥
द्रव्यसाम्यं सौधसाम्यं दायसाम्यं कलौ द्रुतम्।
जनसाम्यं क्रियासाम्यं नग्नसाम्यं कलौ युगे ॥५८॥
नारीसाम्यं नरसाम्यं वृद्धसाम्यं च गुह्यके।
कर्मसाम्यं वर्मसाम्यं दुःखसाम्यं कलौ युगे ॥५९॥
मुखसाम्यं केशसाम्यं स्तनसाम्यं च मस्तके।
नग्नसाम्यं सक्थिसाम्यं गर्भसाम्यं कलौ तदा ॥६०॥
तैलघृतस्नेहसर्पिर्वारिसाम्यं च रंकता।
दुग्धदधिहैयंगवीनादिसाम्यं तदा कलौ ॥६१॥
इक्षुकन्दफलमूलसितागूडादिशर्कराः।
मिष्टक्षारकटुतिक्तरसास्तुल्याः कलौ युगे ॥६२॥
वाणीसाम्यं क्रियासाम्यं रूपसाम्यं च वेषता।
देवमानवयक्षार्तिनागसाम्यं कलौ समा ॥६३॥
उत्सवशोकशृंगारयानासनसमानता।
बालयुवस्थवीरादिमनःसाम्यं कलौ तदा ॥६४॥
स्वपरान्यसुहृच्छत्रुस्वार्थहानिसमानता।
ह्राससाम्यं व्ययसाम्यं क्षुधासाम्यं कलौ युगे ॥६५॥
ऋतुसाम्यं वर्षसाम्यं निशादिवससाम्यता।
निद्राजाग्रदवस्थानां सुप्तिसाम्यं कलौ तदा ॥६६॥
मञ्चखट्वाबृसीकुसूलोदकुम्भीसमानता।
दुर्गप्राकारगोपुरांगनसाम्यं मतं तदा ॥६७॥
वनोद्यानारण्यण्यखेटग्रामवाससमानता।
मनुष्यपशुपक्ष्यादेः कीटसाम्यं कलौ युगे ॥६८॥
आज्ञोपदेशविध्यादेर्जल्पवितण्डिकाः समाः।
सद्धेतूनां नियमानामसिद्धिसाम्यता कलौ ॥६९॥
सरस्वत्याश्च लक्ष्म्याश्च विधवासाम्यता कलौ।
विदुषां स्वात्मवृत्तीनां क्लीबसाम्यं कलौ युगे ॥७०॥

वृष्टीनां व्योमसाम्यं च कृषीणां कालसाम्यता ।
भुवः कूर्मपृष्ठसाम्यं भवत्येव हि तिष्यके ॥७१॥
मुखानां ग्रहणैः साम्यं हृदां फोटरसाम्यता ।
प्रेम्णां रणेन साम्यं वै भवत्येव कलौ युगे ॥७२॥
धार्मिककर्मणां वृद्धेन्द्रियसाम्यं हि तिष्यके ।
आस्तिकत्वे नान्यतरचिह्नसाम्यं कलौ युगे ॥७३॥
पुनः कृतयुगे प्राप्ते जगत् सजीवनं पुनः ।
हरेर्योगात् तथाभावि ब्रह्मशक्त्यन्वितं सुखम् ॥७४॥
सर्वसमृद्धिमयं सर्वधर्मकर्मगुणान्वितम् ।
इति ते कथितं कल्पं किमन्यच्छ्रोतुमिच्छसि ॥७५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुग-
सन्ताने कलिधर्माणां विशेषतो निरूपणं
नाम षोडशाधिकद्विशततमोऽ-
ध्यायः ॥ २१६ ॥

**श्रीलक्ष्मीरुवाच—**

भगवन् श्रोतुमिच्छामि प्रथमे द्वापरे च या ।
भूमिकाऽऽनर्तराज्ञा स्वतपसाऽत्र समाहृता ॥ १ ॥
यत्र श्रीकृष्णदेवेन स्ववासः स्थापितः सदा ।
तस्यास्तीर्थसुमाहात्म्यं सेतिहासं वद प्रभो ॥ २ ॥

**श्रीनारायण उवाच—**

कलौ युगे महाघोरे बहुपाखण्डसंश्रिते ।
तरणाय महत्तीर्थं कथयामि निबोध मे ॥ ३ ॥
पश्चिमस्य समुद्रस्य तीरमाश्रित्य तिष्ठति ।
कुशस्थलीति या राज्ञा कुशेन निर्मिता भवेत् ॥ ४ ॥
ततोऽपि पूर्वमानर्तराज्ञाऽऽनीता भुवः स्थली ।
आनर्तनगरी सैव सर्वाभ्यः प्राग् बभूव सा ॥ ५ ॥
गोमती यत्र वहति सागरेण च संगता ।
द्वारावती च सा पुर्यानर्तानाम्ना प्रकीर्त्यते ॥ ६ ॥
तत्र वसति विश्वात्मा सदा मुक्तिप्रदो हरिः ।
कलाषोडशसंयुक्तो मूर्तिद्वादशभिर्युतः ॥ ७ ॥
द्वारिका सा तु धन्यैव यत्र कृष्णश्चतुर्भुजः ।
जना मुक्तिं प्रयास्यन्ति तत्र गत्वा युगे युगे ॥ ८ ॥
आनर्तो वै महान्भक्तो शर्यातिरात्मजोऽभवत् ।
पित्रा विभज्यमाने च राज्ये वाग्रहीत् स्वकम् ॥ ९ ॥
उपादिदेश पितरं भक्तिमानर्तकस्तथा ।
ममाऽयं मानुषो देहो मोक्षायैव हि केवलम् ॥१०॥
नाऽयं राज्ये क्षयितव्यो दुर्लभः कल्पभूरुहः ।
चिन्तामणिसमेनात्र साध्यो मोक्षो मयैव हि ॥११॥
श्रुत्वा पित्रा तदैवोक्तं न योग्यं मन्यसे च यत् ।
मम वंशे न चाऽराज्यकरो मे रोचते सुतः ॥१२॥
गृहाण राज्यभागं वा यद्वा गच्छान्यभूतले ।
आनर्तस्तत्पितुः श्रुत्वा नत्वाऽगच्छच्च पश्चिमम् ॥१३॥
रणं क्षारं समुद्रस्य वालुकाव्याप्तभूतलम् ।
तपस्तेपे बहुकालं कृष्णनाम्ना भजन् हरिम् ॥१४॥
प्रसन्नश्च तदा कृष्णः समेत्य भक्तसन्निधौ ।
आनर्तं प्राह मे भक्त ! किं ते मनसि वर्तते ॥१५॥
वरं वरय भद्रं ते ददामि यदभीप्सितम् ।
प्रणम्य दंडवत् प्राह गोलोकं नय मां प्रभो ॥१६॥
न मेऽस्ति कापि तृष्णा वा न चास्ति वर्ष्मवासना ।
नाऽऽदरश्च तपोऽर्थे मे विना स्वत्पादसेवनम् ॥१७॥
प्रहस्य भगवान् प्राह शृणु भक्त ! तवाऽर्थकम् ।
विवासितस्तव पित्रा तपः करोषि मत्कृते ॥१८॥
मया देयं महद्राज्यं तेऽतिपितृवशंगतम् ।
आगच्छ च मया सार्धं दिव्यं ददामि भूतलम् ॥१९॥
इति कृत्वा सह नीत्वा ययौ गोलोकधाम सः ।
श्रीकृष्णः स्वस्य गोलोकाद् दिव्यं खण्डं विभज्य च ॥२०॥
आनर्तायाऽर्पितवाँश्च गृहाणेमं मणिं शुभम् ।
दिव्यं गच्छ च भूलोके यत्र तप्तं तपस्त्वया ॥२१॥
तत्रैनं मणिखण्डं वै स्थापयाऽब्धितटे शुभे ।
सोऽयं राज्यप्रदेशो वै स्वतन्त्रस्ते भविष्यति ॥२२॥
इत्याज्ञां समनुग्रह्य नीत्वा गोलोकखण्डकम् ।
समाजगाम चानर्तः पश्चिमाब्धितटस्थलम् ॥२३॥
तत्र यावन्मणिर्मुक्तस्तावद् विशालतां गतः ।
शतयोजनविस्तारो दिव्यभूस्तर उत्तमः ॥२४॥
नवीनं भूतलं जातं दिव्यं राज्यं बभूव तत् ।
आनर्तेन तदा कृष्णं स्मृत्वाऽऽनर्तपुरी ततः ॥२५॥
विनिर्मिता राजधानी कृष्णोद्दिष्टा यथा तथा ।
श्रीकृष्णस्तत्र चागत्य पूजाकाले जगाद तम् ॥२६॥
मया द्वापरसंप्रान्ते वस्तव्यं चात्र यत्नतः ।
श्रेष्ठां पुरीं रमणीयां सन्निवेशय मत्स्थिताम् ॥२७॥
आनर्तेनापि साश्रेष्ठा कृष्णोक्तवर्त्मना शुभा ।
पुरी सन्निवेशिता च दिव्या गोलोकधामभा ॥२८॥

एवं प्रसादरूपेयं भूमिकाऽऽनर्तसेविता ।
सोऽयं तीर्थमयो भागो मोक्षदोऽस्ति सुराष्ट्रकः ॥२९॥
शृणु लक्ष्मि ! ततः कालान्तरे सामुद्रवारिभिः ।
बहुवारं लयं याता नगरी वायुपल्लवैः ॥३०॥

द्वापरान्ते यदा कृष्णस्तत्राऽऽयातुं मनो दधे ।
तदा न विद्यते ग्रामो नगरी वाऽतिसुस्थली ॥३१॥
पश्चात् कृष्णः स्वयं भ्रात्रा संकर्षणेन संयुतः ।
प्रणम्य पितरौ स्वस्य सस्मार गरुडं हरिः ॥३२॥

मधुपुर्यां स्थितो वटमूले सस्मार सागरम् ।
सस्मार विश्वकर्माणं नृपवेषं दधार च ॥३३॥
गोपवेषं परित्यज्य चक्रं सस्मार शाश्वतम् ।
सुदर्शनं चाजगाम सूर्यकोटिसमप्रभम् ॥३४॥

तेजसा कृष्णतुल्यं च सर्वशत्रुनिषूदनम् ।
अव्यर्थमस्त्रमस्त्राणां दधार तत्सुदर्शनम् ॥३५॥
रत्नयानं पुरस्कृत्य गरुडश्चाप्युपस्थितः ।
विश्वकर्मा कारुभिश्च जग्मुः सागरसन्निधिम् ॥३६॥

जलधिः कम्पितस्तांश्च दृष्ट्वा नत्वा ह्युपस्थितः ।
श्रीकृष्णः प्राह जलधे स्थलं ते दशयोजनम् ॥३७॥
देहि मे नगरार्थे च मम गोलोकखण्डकम् ।
द्रागेव च समुद्रेण तावद्भूर्निर्जला कृता ॥३८॥
शुशुभे दिव्यगोलोकस्थली सा तु यथाऽपरा ।
विश्वकर्माणमेवाऽऽह समीकारय भूस्थलीम् ॥३९॥
नगरं कुरु मे कारो त्रिषु लोकेषु शोभनम् ।
रमणीयं महादिव्यं कमनीयं च योषिताम् ॥४०॥

वाञ्छितं चापि भक्तानां परं गोलोकसदृशम् ।
सर्वेषामपि स्वर्गाणां मूर्धन्यं मन्निवासकम् ॥४१॥
दिवानिशं गरुड त्वं सन्निधौ विश्वकर्मणः ।
स्थितिं कुरु वस्तुकृते यावन्निर्माति मत्पुरीम् ॥४२॥
दिवानिशं च मत्पार्श्वे सुदर्शन स्थितिं कुरु ।
इत्यादिश्य स्वयं कृष्णो मधुपुर्यां जगाम ह ॥४३॥
सायं सायं सदा विश्वकर्मा कृष्णं प्रयाति वै ।
कार्यं निष्पन्नमाख्याति नूतनं चिन्तयत्यपि ॥४४॥
श्रीकृष्णो विश्वकर्माणं निर्माणक्रममाह च ।
दशयोजनपर्यन्तं नगरं सुमनोहरम् ॥४५॥

पद्मरागैर्मरकतैरिन्द्रनीलाऽतिनीलकैः ।
रुचकैः पारिभद्रैश्च पलंकैश्च स्यमन्तकैः ॥४६॥
गन्धकैर्गालिमैश्चापि सूर्यकान्तादिभिस्तथा ।
चन्द्रकान्तमणिभिश्च स्वर्णवर्षिसुहीरकैः ॥४७॥

स्फटिकैश्च हरिद्वर्णैः श्यामैर्गौरमुखैस्तथा ।
गोरोचनाभिः पीतैश्च दाडीमबीजरूपकैः ॥४८॥
आरसैः पद्मबीजैश्च नीलैः कमलवर्णकैः ।
श्यामैश्च कज्जलतुल्यैः स्वच्छैर्मणिभिरुज्ज्वलैः ॥४९॥
श्वेतैश्चम्पकवर्णाभैस्तप्तकांचनसन्निभैः ।
बहुमूल्यैर्बहुगुणैरारक्तपीतशोभनैः ॥५०॥
गरिष्ठैश्च वरिष्ठैश्च सद्रत्नमणिहीरकैः ।
यथाविधि यथायोगं यत्र यच्च यदीप्सितम् ॥५१॥

कुरु दिव्यं तु षोडशसहस्रयोषितां मम ।
अन्यपत्नीजनस्यापि चाष्टाधिकशतस्य च ॥५२॥
शिबिरं श्रेष्ठपरिखं प्रोच्चप्राकारवेष्टितम् ।
द्वादशशालाभियुक्तं सिंहद्वारसुशोभितम् ॥५३॥
त्रिरंगादिसुचित्रितकपाटादिस्वलंकृतम् ।
नाकीयद्रुमसूद्यानवर्तुलादिसुशोभितम् ॥५४॥
सुलक्षणं घटीयन्त्रं चन्द्रवेधं रविग्रहम् ।
नक्षत्रचक्रविज्ञानभूतज्ञानर्तुचक्रकम् ॥५५॥

सभाशालं वैधशालं भूशालं व्योमशालि च ।
श्राव्ययन्त्रप्रशालं च दूरश्रावणशालिकम् ॥५६॥
दूरदृश्यप्रशालं च विद्युच्छालादिसंयुतम् ।
ऋतुज्ञानं पविज्ञानं वायुज्ञानं तथा भवेत् ॥५७॥
भूस्तरस्य प्रविज्ञानं चोत्पातज्ञानशालिकम् ।
तत्सर्वं तत्र नगरे स्थले योग्ये प्रकल्पय ॥५८॥
यदूनामाश्रमान्रम्यान् किंकराणां गृहाणि च ।
कर्मचारिगृहोद्यानविहाराणि च कारय ॥५९॥

सर्वसौधातिगं स्वर्ग्यं चोग्रसेनस्य भूभृतः ।
ह्याश्रमं भवनं सर्वभद्रं कारय शोभनम् ॥६०॥
तथा सिद्धिप्रसिद्धिभिर्युक्तं दिव्यं विशालकम् ।
कारयाऽऽश्रममूर्धन्यं वसुदेवस्य मत्पितुः ॥६१॥
विश्वकर्मा हरिं प्राह वृक्षप्राशस्त्यवाञ्छया ।
केते वृक्षाः प्रशस्ताश्च निषिद्धाश्च तथा च के ॥६२॥
भद्राऽभद्रप्रदाः के च तान्वदस्व जगद्गुरो ।
केषामस्थिनियुक्तं च शिबिरं च सुखाऽसुखम् ॥६३॥
कुत्र दिशि जलं भद्रमभद्रं च वद प्रभो ।
कुत्र दिशि रोपितश्च वृक्षो भद्रं ददाति वै ॥६४॥

गृहाणां प्रांगणानां च प्रमाणं किं वद प्रभो ।
कुत्र दिशि तरूद्यानं पुष्पोद्यानं च भद्रकृत् ॥६५॥
प्राकाराणां परिखाणां द्वाराणां च प्रमाणकम् ।
भवनानां च सौधानां प्रमाणं वद मे प्रभो ॥६६॥

कस्य कस्य च वृक्षस्य काष्ठं शुभं गृहे प्रभो।
अभद्रं च भवेत् केषां तच्चापि वद मे प्रभो ॥६७॥
कृष्णः प्राह तदा कारुं शृणु ध्यानं विधाय च।
आश्रमे नारिकेलश्च गृहिणां स्याद्धनप्रदः ॥६८॥
शिबिरस्य यदीशाने पूर्वे पुत्रप्रदस्तरुः।
सर्वत्र मंगलकरस्तरुराजो मनोहरः ॥६९॥
रसालवृक्षः पूर्वस्मिन् नृणां सम्पत्प्रदो भवेत्।
बिल्वः पनसो बदरी सुखदाः सर्वदा मताः ॥७०॥
प्रजाप्रदाश्च पूर्वस्मिन् दक्षिणे धनदाश्च ते।
सम्पत्प्रदाश्च सर्वत्र तेभ्यो विवर्धते गृही ॥७१॥
जम्बूवृक्षो दाडिमश्च कदल्याम्रातकस्तथा।
बन्धूप्रदाश्च पूर्वस्मिन् दक्षिणे मित्रदाश्च ते ॥७२॥
सुवाको दक्षिणे तद्वत् पश्चिमे सुखहर्षदः।
धनपुत्रप्रदश्चैव सर्वत्र गृहपार्श्वगः ॥७३॥
गृहपार्श्वे चम्पकस्तु सर्वत्र भद्रभद्रदः।
ईशाने सुखदश्चैव स्वर्णाद्यापादकस्तथा ॥७४॥
अलाबुश्चाति कुष्माण्डमायाम्बुश्च सकिंशुकः।
खर्जूरी कर्कटी चापि शिबिरे मंगलायनाः ॥७५॥
वास्तूककारबिल्वश्च वार्ताकश्च सुखप्रदाः।
लताफलं च सुखदं गृहपार्श्वे तु वर्धितम् ॥७६॥
फलवृक्षास्तथा पुष्पवृक्षा मंगलदाः सदा।
फलवल्ल्यस्तथा पुष्पवल्ल्यो मंगलदास्तथा ॥७७॥
गन्धपुष्पफलवृक्षलतातृणानि सर्वथा।
मंगलान्येव जायन्ते पुत्रद्रव्यर्द्धिदानि वै ॥७८॥
विचित्ररंगपत्राणि चित्रपुष्पाणि यानि च।
स्तम्बान्यपि च सौम्यानि सुखदानि भवन्ति च ॥७९॥
प्रशस्तानि कथितानि निषिद्धानि निशामय।
वन्यवृक्षा निषिद्धाश्च फलपुष्पविहीनकाः ॥८०॥
गृहे सौधे समुद्याने नगरे गोपुरे तथा।
अरण्यतरवो व्यर्था निषिद्धा न शुभा मताः ॥८१॥
यत्र गृध्रकंकघूकवासो भूतपिशाचकाः।
वसन्ति यत्र च ते वै निषिद्धा गन्धहीनकाः ॥८२॥
वटो निषिद्धः शिबिरे नित्यं चौरभयप्रदः।
नगरेषु विशालायां भूमौ दृष्टस्तु पुण्यदः ॥८३॥
शिबिरे नगरे ग्रामे शाल्मलिर्न प्रशस्यते।
क्षितिपानां तु सततं दुःखदः परिगण्यते ॥८४॥
ग्रामे वा नगरे वा च न निषिद्धो बहिः स्थले।
विद्यास्थले निषिद्धश्च सततं दुःखदो यतः ॥८५॥
तिन्तिडीदुर्धनहानिकरः प्रजाविनाशकः।
शिबिरेतिनिषिद्धश्च नगरे किञ्चिदेव सः ॥८६॥
न निषिद्धः क्वचित् सिद्धो ग्रामेषु नगरेषु च।
विद्याऽस्थले निषिद्धश्च प्राज्ञस्तद्वर्जयेत् सदा ॥८७॥
खर्जुरश्च गहुश्चैव निषिद्धौ शिबिरेह्युभौ।
ग्रामे वा नगरे वा च निषिद्धो न बहिः स्थले ॥८८॥
वृक्षाश्च चणकादीनां धान्यानि मंगलानि वै।
ग्रामे वा नगरे वापि शिबिरे च गृहेऽभितः ॥८९॥
इक्षुदण्डाः शुभकराः सततं स्मृद्धिवर्धकाः।
अशोकश्च शिरीषश्च कदम्बश्च शुभप्रदाः ॥९०॥
हरिद्रा शुभदा बोध्या ह्यार्द्रकाः शुभदास्तथा।
हरीतक्यश्च शुभदा आमलक्यः शुभप्रदाः ॥९१॥
गजानामस्थि शुभकृत् वाजिनामस्थि सौख्यकृत्।
वानराणां नराणां च गर्दभानां गवामपि ॥९२॥
कुक्कुटानां श्रृगालानां मार्जाराणामभद्रकम्।
भेटकानां सूकराणां त्वस्थि वस्तौ शुभप्रदम् ॥९३॥
ईशाने च तथा पूर्वे पश्चिमे चोत्तरे तथा।
शिबिरस्य जलं भद्रमन्यत्राऽभद्रमेव तत् ॥९४॥
निम्ने प्रस्थेऽसमाने विषमे कुर्यान्न मन्दिरम्।
चतुरस्रे गृहे सौधे गृहिणां धननाशनम् ॥९५॥
दैर्घ्ये शून्येन रहितं त्रयेण रहितं तथा।
भद्रं गृहं च नगरं शून्यं शून्यप्रदं नृणाम् ॥९६॥
प्रस्थे हस्तद्वयात्पूर्वं दीर्घं हस्तत्रयं तथा।
गृहाणां शुभदं द्वारं प्राकारस्य गृहस्य च ॥९७॥
न मध्यदेशे कर्तव्यं किञ्चिन्न्यूनाधिके शुभम्।
चतुरस्रं चन्द्रवेधं शिबिरं मंगलप्रदम् ॥९८॥
अभद्रदं सूर्यभेदं शिबिरं मंगलाऽप्रदम्।
अभद्रदं सूर्यभेदं प्रांऽगणं मंगलाऽप्रदम् ॥९९॥
शिबिराभ्यन्तरे भद्रा रोपिता तुलसी सदा।
द्रव्यापत्यप्रदात्री च धर्मदा मोक्षदा तथा ॥१००॥
मालती यूथिका कुन्दो माधवी केतकी तथा।
नागचम्पको मल्लिका धत्तूरो बकुलः शुभाः ॥१०१॥
शुभदह्या चाऽपराजिता तासामुद्यानमर्थदम्।
पूर्वे च दक्षिणे चैव शुभदः सुखदस्तथा ॥१०२॥
ऊर्ध्वे षोडशहस्तेभ्यो नैव कुर्याद् गृहं गृही।
ऊर्ध्वे विंशतिहस्तेभ्यः प्राकारो न शुभप्रदः ॥१०३॥
तैलकारं स्वर्णकारं हीरकादिक्रियार्थिनम्।
सूत्रधारं वाटिकायां ग्राममध्ये न वासयेत् ॥१०४॥

ब्राह्मणः क्षत्रियो वैश्यः सच्छूद्रो गणकः शुभाः ।
भट्टं वैद्यं पुष्पकारं स्थापयेत् शिविरान्तिके ॥१०५॥
प्राकारे परिखापानं शतहस्तं प्रशस्यते ।
शिविराणां परितस्तु दशहस्तं प्रशस्यते ॥१०६॥
गुप्तं च परिखाद्वारं ससंकेतं प्रशस्यते ।
तिन्तिड्यश्चापि शाल्मल्यो हिन्तालाः सिन्धुवारकाः ॥१०७॥
निम्बाश्चोदुम्बरा धत्तूरा एरण्डा वटास्तथा ।
न शुभा दुःखदास्तस्माच्छिविरे तन्न वर्धयेत् ॥१०८॥
वृक्षं तु वज्रहस्तं च राजा तु वर्जयेत् सदा ।
पुत्रदारधनं हन्यात् तस्मान्न स्थापयेत्तु तम् ॥१०९॥
इत्यादेशं हरेः प्राप्य विश्वकर्मा वटस्थले ।
अब्धितीरे च सुष्वाप स्वप्ने ददर्श द्वारिकाम् ॥११०॥
विश्वकर्माणमालोक्य देवकार्यसुकारकः ।
प्रस्वपन्तं हसन्ति स्म द्वारिका यैस्तु निर्मिता ॥१११॥
रात्रावेव सुनिष्पन्ना स्वप्ने दृष्टा यथा तथा ।
प्रातः प्रबुध्य कारुस्तु पश्यति द्वारिकां शुभाम् ११२॥
बुद्धो ददर्श पूर्णां तां विश्वकर्मा विलज्जितः ।
श्रीकृष्णेन यथोक्तां च दशयोजनविस्तृताम् ॥११३॥
ब्रह्मादीनां नगरीश्च विजित्योत्कर्षराजितम् ।
द्वितीयां द्यां च तेजोभी रत्नराशिपरिष्कृतम् ॥११४॥
एतस्मिन्नन्तरे लक्ष्मि ! द्वारावतीं विलोकितुम् ।
समाजग्मुश्चतुर्दशलोकेशाः प्रातरेव यत् ॥११५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने द्वारिकामाहात्म्ये शर्यातिपुत्राऽऽनर्ताऽऽनीतगोलोक-खण्डात्मकसौराष्ट्रे शुभाऽशुभवृक्षवल्यादिसहित-द्वारिकानिर्मितनिरूपणनामा सप्तदशाधिक-द्विशततमोऽध्यायः ॥२१७॥

**श्रीनारायण उवाच—**

अथ पुरीं समाद्रष्टुं ब्रह्मा पत्न्या सहाऽऽययौ ।
भवो भवान्या सहितोऽनन्तो धर्मश्च भास्करः ॥ १ ॥
हुताशश्च कुबेरश्च वरुणः पवनो यमः ।
रुद्राश्चैकादश चन्द्रो महेन्द्रो वसवस्तथा ॥ २ ॥
आदित्याः किन्नरा दैत्या गन्धर्वा आययुस्तदा ।
विमानस्थैर्वटमूले स्थितः कृष्णश्च वन्दितः ॥ ३ ॥
स्तुतस्तैर्द्वारिका दृष्टा रम्या चातिमनोहरा ।
मुक्तामाणिक्यहीरकरत्नराजिविराजिता ॥ ४ ॥
परितश्चतुरस्रा च दशयोजनविस्तृता ।
सप्तभिः परिखाभिश्च गंभीराभिः सुवेष्टिता ॥ ५ ॥
प्राकारैर्नवभिर्युक्ता जलक्रीडासरोवरैः ।
विविधैर्जलपद्मैश्च कल्हारैः कमलैस्तथा ॥ ६ ॥
सर्वतोभद्रवृक्षैश्च पुष्पोद्यानैः समन्ततः ।
शोभिता फुल्लपुष्पैश्चाऽनिलैश्च सुरभीकृता ॥ ७ ॥
मन्दचन्दनवृक्षैश्च तुलसीद्रुमिरञ्चिता ।
आमोदिता सुगन्धिभिः पवनैर्मन्दशीतलैः ॥ ८ ॥
नारिकेलतरुषण्डैः पूगाभिरतिशोभिता ।
लक्षाधिगुणगुवाकद्रुमैश्चापि विभूषिता ॥ ९ ॥
ततोऽपि च चतुर्गुणचूतवृक्षैः सुमण्डिता ।
प्रकाशिता परितश्च तावद्भिः पनसद्रुमैः ॥१०॥
तथा तालद्रुमैर्युक्ताऽश्वत्थबदरिकादिभिः ।
वटैराम्रातकैर्बिल्वैर्जम्बूकदम्बवंशकैः ॥११॥
शाल्मलीतिन्तिडीनागरंगैर्जम्बीरदाडिमैः ।
चम्पकैर्बकुलैर्नागेश्वरैरर्जुनखर्जुरैः ॥१२॥
इक्षुभिः कांचनैर्हरीतकीधात्रीभिरिन्दुभिः ।
शालैः प्रियालैर्हिन्तालैः शिशिरैः सप्तपर्णकैः ॥१३॥
वल्लीभिः परितो व्याप्ता स्वर्णकलशमण्डिता ।
नवलक्षैः रम्यसौधैः रम्योच्चमन्दिरैर्युता ॥१४॥
रत्नेन्द्रसारनिर्माणमुक्तामाणिक्यभूषिता ।
माणिक्यहीरकरत्नस्वर्णकलशमन्दिरा ॥१५॥
मणिनिर्मितसोपानकपाटभित्तिकायुता ।
हरिन्मणिकृतस्तम्भश्वेतस्फटिकसत्तला ॥१६॥
चित्रविचित्रसुसूक्ष्मवस्त्रचामरदर्पणा ।
पद्मरागपरिक्लृप्तप्रांगणा श्वेतसद्गृहा ॥१७॥
इन्द्रनीलमणिव्याप्तरथ्यावीथीसमन्विता ।
रत्नखचितमध्यादिराजमार्गादिशोभिता ॥१८॥
ग्रीष्ममध्यान्हसूर्याभा ज्वलिता रत्नतेजसा ।
गवाक्षलक्षसंयुक्तमहत्सौधादिपंक्तिका ॥१९॥
हस्तिशाला वाजिशाला हंसगरुडजालिका ।
दृष्ट्वैवं द्वारिका रम्या देवैः सर्वैः समागतैः ॥२०॥
आनर्तः शुशुभे देशः शतयोजनभूतले ।
द्वारिकया मिलितश्च द्विगुणवत् स लक्ष्यते ॥२१॥
अथ कृष्णः प्रसस्मार वसुदेवं च देवकीम् ।
उग्रसेनं यादवाँश्च पाण्डवाँश्च समातृकान् ॥२२॥
नन्दं यशोदां गोपालान् गन्धर्वान् किन्नरान् मुनीन् ।
आययुः संस्मृताः सर्वे कृष्णकृष्णेतिवादिनः ॥२३॥

कृष्णप्रतापाद् दिव्यास्ते दिव्यव्योमगतिप्रभाः ।
विद्याधर्यश्च किन्नर्यो नर्तक्यो गायिकास्तथा ॥२४॥
गायका वाद्यभाण्डाश्च भट्टा गणकभिक्षुकाः ।
अनेकदेशवासीया भूपा वैद्याश्च भूसुराः ॥२५॥
न्यासिनो यतयो वानप्रस्थाश्च ब्रह्मचारिणः ।
अवधूतास्तथा सिद्धा आययुर्मुनयस्तथा ॥२६॥
सनन्दः सनकः सनातनः सनत्कुमारकः ।
सनत्सुजातश्च वोढा पञ्चशिखस्तथाऽऽसुरिः ॥२७॥
ब्रह्मचर्यव्रतपाला आययुर्लक्षशो जनाः ।
दशसाहस्रशिष्याढ्यो दुर्वासास्तत्र चाययौ ॥२८॥
पत्नीव्रतो महाब्रह्मस्वरूपो भगवान्स्वयम् ।
लक्षशिष्यसहितश्चाययौ कृष्णनिकेतनम् ॥२९॥
लक्षशिष्यैः कश्यपश्च वाल्मीकश्च सहस्रयुक् ।
लक्षशिष्यैर्गौतमश्च कोटिदेवैर्बृहस्पतिः ॥३०॥
शुक्रोऽपि कोटिशिष्यैश्च भरद्वाजः सलक्षकः ।
अंगिरोऽयुतशिष्यैश्च वसिष्ठोऽयुतशिष्यकः ॥३१॥
प्रचेताः शतशिष्यैश्च पुलस्त्यश्च सहस्रयुक् ।
अगस्त्योऽयुतशिष्यश्च पुलहश्च सहस्रयुक् ॥३२॥
शतशिष्यः क्रतुश्चाऽत्रिर्भृगुश्चापि तथाऽनुगः ।
तथा सहस्रशिष्यश्च मरीचिस्तत्र चाययौ ॥३३॥
पञ्चशतानुगः शतानन्दश्च पाणिनिस्तथा ।
सहस्रशिष्यैर्युक्तश्च ऋष्यश्रृंगो विभाण्डकः ॥३४॥
कात्यायनस्तथा याज्ञवल्क्यः सहस्रवान् ययौ ।
सहस्रशिष्यकैर्व्यासो गर्गः शिष्यैः शताधिकैः ॥३५॥
गालवश्च शतेनापि सौभरिर्विंशतिर्जनैः ।
लोमशो दशलक्षैश्च मार्कण्डेयस्त्रिलक्षकैः ॥३६॥
सान्दीपनिर्देवलश्च स्वशिष्यैश्च शतैः शतैः ।
वोढुः पञ्चशिखश्चैतौ षष्टिशिष्यप्रशिष्यकैः ॥३७॥
नरो नारायणश्चैतौ तापसैर्बहुसंख्यकैः ।
विश्वामित्रस्तथा वत्सः ययौ शिष्यसहस्रकैः ॥३८॥
जरत्कारुरास्तीकश्च पर्शुरामश्च दक्षकः ।
संवर्तो जैमिनिश्चापि पैलश्चापि निजानुगैः ॥३९॥
उपमन्युः शुकदेवः कचो गौरमुखस्तथा ।
लालायनाद्याश्चाप्यन्येऽश्वत्थामा द्रोण इत्यपि ॥४०॥
कृपो भीष्मश्च कर्णश्च तथाऽन्ये युगदेवताः ।
सुदिव्यौ कम्भरागोपालख्यौ शिष्यैः समाययुः ॥४१॥
साध्या विश्वे मरुतश्च यक्षाश्च वास्तुकर्मणि ।
चारणाः पितरो रुद्रा मातृका दिक्पालकाः ॥४२॥
चतुःखनिजदेह्याद्याः पातालादिगतास्तथा ।
ग्रहनक्षत्रताराश्च कृष्णवास्तौ समाययुः ॥४३॥
वसवो निधयश्चैव परे सप्तर्षयस्तथा ।
प्रजापतयो मनवो वालखिल्याः समग्रत ॥४४॥
धर्माऽधर्मकुलोत्थाश्च वसन्ताद्याः षडर्तवः ।
कामाद्याश्चाप्सरसश्च पर्यो देव्यश्च दासिकाः ॥४५॥
साधवो यतयः साध्व्यः सन्यासिन्यो विरागिकाः ।
सांख्ययोगिन्य एवेयुः कृष्णो वास्तुं करोति वै ॥४६॥
अवधूत्यस्तथा चण्ड्यो दुर्गा माया रमादिकाः ।
लक्ष्म्यो जयाविजयाद्याः सख्यो माणिक्यकन्यकाः ॥४७॥
प्रभा च पार्वती गायत्री सावित्री सरस्वती ।
गोप्यो गोपा गोलोकस्थास्तथा वैकुण्ठवासिनः ॥४८॥
कुमार्यश्च कुमाराश्च ब्रह्मचारिण्य इत्यपि ।
शक्तयः स्मृद्धयः सिद्धिमूर्तयश्चाययुस्तदा ॥४९॥
तत्त्वानि वेदशास्त्राणि विद्याश्च विविधाः शुभाः ।
गुणा ऐश्वर्यसामर्थ्यमुक्तमुक्तान्य आययुः ॥५०॥
चत्वार आश्रमा वर्णा दीना अनाथदेहिनः ।
लोकाऽलोका आययुर्वै कृष्णो वास्तुं करोति यत् ॥५१॥
शृणु लक्ष्मि ! यत्र सर्वतीर्थतीर्थेश्वरेश्वराः ।
समाययुश्च सा भूमिर्वर्णनीया मया किमु ॥५२॥
सर्वतीर्थपरा श्रेष्ठा द्वारिका बहुपुण्यदा ।
यस्यां प्रवेशमात्रेण जन्ममृत्युविनाशनम् ॥५३॥
दानं श्राद्धं देवपूजाऽनन्तगुणफलप्रदम् ।
तीर्थानां तीर्थरूपं तत् किं तीर्थं द्वारकापरम् ॥५४॥
उग्रसेनो महाराजः सदा कृष्णाज्ञयाऽवसत् ।
स्वालयं द्वारकामध्ये महेन्द्रभवनात्परम् ॥५५॥
सहस्रैर्द्वारपालैश्च द्वारं ददर्श रक्षितम् ।
अभ्यन्तरं च शिबिरं द्वारेभ्यः षड्भ्य एव च ॥५६॥
मन्दिराणां शतकैश्चरत्नफलशशालिनाम् ।
मत्तायुतगजेन्द्राणां तुरगाणां तथाऽयुतम् ॥५७॥
उष्ट्राणामयुतं चापि रथानामयुतं तथा ।
अर्धलक्षं सारथीनां ददर्श राजपुंगवः ॥५८॥
ददर्शाभ्यन्तरे रम्ये देवौघमुनिसंस्थिताम् ।
सुधर्माख्यां सभां दिव्यां स्वर्णसिंहासनान्विताम् ॥५९॥
शुद्धांशुकैः परिष्कृतां रत्नतेजःसमुज्ज्वलाम् ।
प्रविवेश सभां रम्यां शुश्राव शंखसद्ध्वनिम् ॥६०॥
निनादं च दुन्दुभीनां मुनीनां वेदघोषणाम् ।
श्रुत्वा सभां प्रविशन्तं ह्युग्रसेनं हरिर्बलः ॥६१॥

ब्रह्मा शिवस्तथा विष्णुः शेषश्च देवपुंगवाः ।
समुत्तस्थुः सुराः सर्वे मुनयो मानवास्तथा ॥६२॥
रत्नसिंहासने रम्ये समुवास नृपेश्वरः ।
उग्रसेनश्च देवानां हरेर्गर्गस्य चाऽऽज्ञया ॥६३॥
सप्ततीर्थोदकपूर्णकुंभेन तत्र नारदः ।
चकार वेदमन्त्रैश्च नृपस्याप्यभिषेचनम् ॥६४॥
तस्मै वस्त्रयुगं दत्तं वरुणेन महात्मना ।
माल्यं च पारिजातानां चन्दनं रत्नभूषणम् ॥६५॥
रत्नछत्रादिकं तस्मै बलदेवो ददौ पृथक् ।
ददौ कमण्डलुं ब्रह्मा त्रिशूलं च महेश्वरः ॥६६॥
पार्वती रत्नमाल्यं च मुकुटं कृष्ण एव सः ।
स्वर्णभूषाश्च राजेन्द्राः प्रजाश्चोपायनानि च ॥६७॥
अन्ये चतुर्दशलोकवासाश्च यौतकं ददुः ।
वसुदेवो ददौ तस्मै श्वेतं तु चामरद्वयम् ॥६८॥
नन्दो ददौ कामधेनुं यशोदा रत्नमालिकाम् ।
दधार छत्रमक्रूरो भक्त्या श्रीकृष्णदेशनात् ॥६९॥
रत्नसिंहासने रम्ये राजा ददर्श दर्पणम् ।
शुश्राव पुण्यवाचश्च भट्टभिक्षुकवेदिनाम् ॥७०॥
ददुः शुभाशिषस्तस्मै देवाश्च मुनयो द्विजाः ।
ब्राह्मणेभ्यो भिक्षुकेभ्यो ददौ रत्नानि कोटिशः ॥७१॥
वस्त्रान्नभोजनपानस्वर्णपात्राणि भूरिशः ।
सर्वेभ्यो दानपात्रेभ्यो ददौ दानानि माधवः ॥७२॥
वास्तुयज्ञं हरिः कृष्णश्चकार सर्वमंगलः ।
भोजयामास सर्वांश्चाऽन्नानि तद्रुचिराणि वै ॥७३॥
सभायां श्रीकृष्णदेवं नेमुर्लोकनिवासिनः ।
प्राहुश्च भगवन् रम्या द्वारिकाऽतिमनोहरा ॥७४॥
तव बाहुपरित्राणा पावनी पापनाशिनी ।
पुरी नैतादृशी चात्र ब्रह्माण्डेऽन्या हि वर्तते ॥७५॥
अस्माकं यानि भौमानि विस्मृतान्येव दर्शनात् ।
नैतादृशं परं दिव्यं स्थानं क्वापि विलोक्यते ॥७६॥
इत्येवं सा प्रशंसिता नगरी द्वारका सुरैः ।
अथ कृष्ण उपदाश्च तेभ्यो दातुं प्रचक्रमे ॥७७॥
तदा ब्रह्मादयो देवा ईश्वरा लोकपालकाः ।
ऋषयो मुनयो देव्यो देवजातय एव याः ॥७८॥
समुद्राः सरितो दिव्याः पर्वताः क्षेत्रभूमयः ।
अरण्यानि च धामानि पूर्यो वनानि चापगाः ॥७९॥
सरांसि च तडागाश्च शिखराणि च कन्दराः ।
देवालयास्तथा खाता अखाताः पावनस्तराः ॥८०॥

मूर्तिमन्तो हरिं नत्वा प्रार्थयामासुरादरात् ।
भगवन्परमेशान तवाशिषः शुभावहाः ॥८१॥
श्रेयोमोक्षप्रदाः सर्वा उपदा नातिरिच्यते ।
उपदास्तु चार्थयामो यदि ते रोचते प्रभो ॥८२॥
दिव्यरूपैः सदाऽस्माभिः स्थेयं चात्र पदे तव ।
तव योगान्महानन्दो भविष्यत्येव नः सदा ॥८३॥
पावनाश्च भविष्यामस्तीर्थसंघास्तवस्पृशेः ।
द्वारकायां सदाऽस्माँस्त्वं रक्षय श्रीहरे प्रभो ॥८४॥
कृपां कुरु कृपानाथ वत्स्यामोऽत्र पदे तव ।
अन्यत्राऽस्मासु पापिष्ठाः पापानि क्षालयन्ति वै ॥८५॥
दत्वा नो यान्ति ते सर्वे वयं पापेन चावृताः ।
तव पादे पतिष्यामः क्षालयिष्याम एव च ॥८६॥
पापानि च भविष्यामो पावनानि पदे तव ।
तस्मात्प्रभो सदाऽऽवासं देहि चात्र पुरे तव ॥८७॥
यत्र क्वापि प्रसीम्न्यत्र वने तीरे बहिस्तथा ।
परितः पार्श्वतश्चापि निवत्स्यामः सुखं सदा ॥८८॥
दर्शनं ते करिष्यामोऽमृतं पास्याम एव ते ।
पादप्रक्षालनपूतं वहिष्यामः शिरःसु च ॥८९॥
सार्थक्यं जन्मनामत्र यास्यामस्तव पादयोः ।
इत्यर्थनां हरिः श्रुत्वा प्राह सर्वान् प्रभून् तदा ॥९०॥
सर्वे वसन्तु सुखिनो द्वारिकायां यथायथम् ।
नारदोऽयं मम भक्तः स्थलीः सन्दर्शयिष्यति ॥९१॥
तीर्थानि तानि युष्माकं भविष्यन्ति च नामभिः ।
तत्र तत्र स्थले स्थेयं मया सह निरन्तरम् ॥९२॥
इत्याज्ञां समनुप्राप्य श्रीकृष्णस्य परात्मनः ।
सर्वदेवाधितीर्थानि न्यूषुरानर्तभूस्तरे ॥९३॥
पूर्वे नगरपर्यन्तं दक्षिणे रैवताचलम् ।
उत्तरेनारायणाख्यसरोऽवधि भूवत्सलम् ॥९४॥
सर्वे तीर्थमयं देवमयं पदे पदेऽभवत् ।
ततः कृष्णश्च तान् सर्वानाहूय कृतवासकान् ॥९५॥
भावतः पूजनं कृत्वा भोजयामास सद्रसान् ।
सदन्नानि सुसुन्यन्नोत्तमानि पेयवारि च ॥९६॥
पूजां चकार सर्वेषां मुनीनां च यथायथम् ।
मणिरत्नं प्रवालं च सुवर्णं परमं धनम् ॥९७॥
मुक्तामाणिक्यहीरादि ह्यागतेभ्यो ददौ मुदा ।
गजरत्नं धेनुरत्नं घोटकाँश्च मनोहरान् ॥९८॥
आसनानि च पात्राणि भूषणानि मणींस्तथा ।
धान्यान्यपि च सस्यानि वस्त्राणि च ददौ बहून् ॥९९॥

यानानि वाहनान्येव विमानानि च माधवः ।
दापयामास सामग्रीर्गृहयोग्याश्च केशवः ॥१००॥
दुन्दुभीन्वादयामास कारयामास मंगलम् ।
सर्वांश्च भोजयामास वासयामास सर्वतः ॥१०१॥
अथ तीर्थानि चाहूय भगवानाह तत्त्वतः ।
कलौ समागते पापा भविष्यन्ति च मानवाः ॥१०२॥
द्वारिका दिव्यनगरी तेषामुद्धारहेतवे ।
सर्वतीर्थाधिवासेयं मया वै स्थापिता भुवि ॥१०३॥
कलिकल्मषकृष्णा ये जनाश्चात्र जले स्थले ।
तीर्थविधिं करिष्यन्ति यास्यन्ति धाम ते मम ॥१०४॥
जन्ममृत्युजराव्याधिहरं हर्षकरं परम् ।
शोकसन्तापहरणं कर्ममूलनिकृन्तनम् ॥१०५॥
द्वारिकास्थं परंब्रह्म भगवन्तं च मां हरिम् ।
ध्यायं ध्यायं च मां भक्तिं लब्ध्वा यान्तु परं पदम् ॥१०६॥
यदा कलिः समायाति धर्ममूलनिकृन्तनः ।
स्त्रीपुंसोर्नियमौ नास्ति जातीनां नियमोऽपि न ॥१०७॥
विप्रे सन्ध्यादिकं नास्ति चिह्नं यज्ञोपवीतकम् ।
यज्ञसूत्रं च तिलकं शेषं लुप्तं भविष्यति ॥१०८॥
दिवा व्यवायनिरता विरता धर्मकर्मणि ।
भविष्यन्ति तथा चौरा नरा नार्यो गृहे गृहे ॥१०९॥
यज्ञानां च व्रतानां च तपसां लोप एव च ।
स्वच्छन्दगामिनीनारीवशो पतिः सदा भवेत् ॥११०॥
ताडयेद् भर्त्सयेद् वा स्त्री पतिं नारी प्रधानभूः ।
कलौ च योषितः सर्वा जारसेवासु तत्पराः ॥१११॥
शतपुत्रसमस्नेहस्तासां जारे भविष्यति ।
ददाति पतये भक्ष्यं यथाभृत्याय कोपतः ॥११२॥
सस्मिता सामृतदृष्ट्या जारं पश्यति कामतः ।
विषदृष्ट्या क्रूरदृष्ट्या पतिं पश्यति रोषतः ॥११३॥
सततं गौरवं तस्या स्नेहं जारे च तादृशे ।
पत्यौ करप्रहारं च नित्यं नित्यं करोति वै ॥११४॥
मिष्टान्नं श्रद्धया भक्त्या जाराय प्रददाति च ।
वेषयुक्ता च सततं जारसेवनतत्परा ॥११५॥
प्राणा बन्धुर्गतिश्चात्मा कलौ जारश्च योषितः ।
लुप्ता चातिथिसेवा च प्रलुप्तं विष्णुसेवनम् ॥११६॥
पितृदेवार्चनं लुप्तं भविष्यति कलौ युगे ।
विष्णुवैष्णवयोर्द्वेषकर्तारो मानवाः कलौ ॥११७॥
भविष्यन्ति वामधर्मग्रहितारो जनास्तदा ।
शालग्रामं च तुलसीं कुशं गंगोदकं तथा ॥११८॥
न स्पृशेन्मानवो धूर्तो म्लेच्छाचारपरायणः ।
कलेः पञ्चसहस्रोर्ध्वं मदर्चा तु विलुप्यति ॥११९॥
चतुःसहस्रकालोर्ध्वे गंगा यमी सरस्वती ।
तीर्थानि विष्णुभक्ताश्च विनंक्ष्यन्ति भुवस्तले ॥१२०॥
एतदन्ते कलौ सर्वे परस्परविमिश्रिताः ।
एकवर्णा भविष्यन्ति चाण्डाला बलिनः शठाः ॥१२१॥
पित्रोः सेवा गुरोः सेवा सेवा च देवविप्रयोः ।
विवर्ज्यते जनैः सर्वैश्चातिथीनां तथैव च ॥१२२॥
सस्यहीना भवेत् पृथ्वी वृष्टिहीना वसुन्धरा ।
फलहीनास्तथा वृक्षा जलहीनास्तथाऽऽपगाः ॥१२३॥
वेदहीनो ब्राह्मणश्च बलहीनश्च भूपतिः ।
जातिहीना जनाः सर्वे म्लेच्छा भूपतयस्तथा ॥१२४॥
भृत्यवत् ताडयेत् तातं पुत्रः शिष्यस्तथा गुरुम् ।
कान्तं च ताडयेत् कान्ता लुब्धकुक्कुटवद् गृही ॥१२५॥
धर्मो लयं यदा यातो भविष्यति तदा जनाः ।
हृदयेषु मृषाकल्पा भविष्यन्ति कलौ युगे ॥१२६॥
स्वार्थ एव सुसम्बन्धो भविष्यति नवो नवः ।
प्रतारकाः कलिपुष्टा भविष्यन्ति गुरूत्तमाः ॥१२७॥
अधमेभ्योप्यधमाश्च नीचकर्माण एव च ।
हरेर्भक्तिं विना नैव तरिष्यन्ति कलौ खलाः ॥१२८॥
तेषामुद्धरणार्थाय द्वारका सर्वपावनी ।
सर्वतीर्थमयी भूमिः कालेयतारणक्षमा ॥१२९॥
यत्र नास्ति कलेर्लेशस्तादृशी स्थापिता भुवि ।
तत्र स्नानं दर्शनं च व्रतं चार्चनमर्थनम् ॥१३०॥
भजनं जलपानं च रजःस्नानं च कीर्तनम् ।
करिष्यन्ति जना भावात् ते यास्यन्ति परं पदम् ॥१३१॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने दिव्यद्वारिकावर्णनं श्रीकृष्णस्मृताऽसंख्यसुरमुन्याद्यागमनतत्पूजनतन्निवसनतत्तीर्थमाहात्म्यकलितारणप्रतापाश्चेत्यादिनिरूपणनामाऽष्टादशाधिकद्विशततमोऽध्यायः ॥ २१८ ॥

**श्रीनारायण उवाच—**

श्रूयतां च महालक्ष्मि ! सर्वा तीर्थमयी हि सा ।
द्वारका भगवद्वासा किमु वर्ण्यं विशेषकम् ॥ १ ॥
तथापि वर्णयिष्यामि तीर्थानि कानिचिद् यथा ।
तत्र मुख्यां गोमतीं वै प्रगच्छेत् कृष्णसंश्रयाम् ॥ २ ॥

यस्या दर्शनमात्रेण मुच्यते सर्वपातकैः ।
अमंगलानां पापानां नाशकं स्पर्शमात्रतः ॥ ३ ॥
सर्वेच्छापूरकं पुण्यं प्रणमेत् गोमतीजलम् ।
उभश्रेयःपदं गतिप्रदं वै गोमतीजलम् ॥ ४ ॥
एकार्णवे पुरा जाते नष्टे स्थावरजंगमे ।
ब्रह्मा जज्ञे नाभिपद्मे तेन वै सनकादयः ॥ ५ ॥
समुत्पादिता आज्ञप्ताः सृष्टिकार्यार्थमेव च ।
अगृहीतवचसस्ते ययुर्वै तपसे ततः ॥ ६ ॥
पश्चिमां दिशमादाय तीरे नदनदीपतेः ।
तेजोमयस्वरूपस्य द्रष्टुकामा हरेस्तदा ॥ ७ ॥
हरौ मनः समाधाय तेपिरे दारुणं तपः ।
बहुवर्षसहस्रैश्च प्रसन्नो भगवान् स्वयम् ॥ ८ ॥
बभूव प्रेरयामास चक्रं स्वीयं सुदर्शनम् ।
पृथ्वीं भित्त्वा जलं नीत्वा तेजोमयं सुदर्शनम् ॥ ९ ॥
बहिरायात् सूर्यसमं सहस्रारं दुरासदम् ।
दैत्यदानवहन्तृ च भक्तरक्षाकरं सदा ॥१०॥
दृष्ट्वा चक्रं विस्मिताश्च ब्रह्मपुत्राः परस्परम् ।
तदा नभोगता वाणी प्राह तांश्च कुमारकान् ॥११॥
भो ब्राह्मणा योगिसिद्धाः स्वयं नारायणो हरिः ।
प्रसन्नस्तपसा साक्षाच्छीघ्रमाविर्भविष्यति ॥१२॥
तस्याऽर्हताकृते चैतज्जलमाविर्बभूव ह ।
जलेनानेन पूतेन शीघ्रमर्घं प्रयच्छत ॥१३॥
यदिदं तेजसा व्याप्तमायुधं तत्सुदर्शनम् ।
श्रीहरेर्लोकनाथस्य तस्मादर्घं प्रयच्छत ॥१४॥
तच्छ्रुत्वा च सनकाद्यास्तुष्टुवुर्वै सुदर्शनम् ।
नमो ज्योतिःस्वरूपाय ब्रह्मशस्त्राय ते नमः ॥१५॥
नमो भक्तसुरक्षाय विष्णुशस्त्राय ते नमः ।
सहस्राराय सूर्यायाऽमोघाय ते नमो नमः ॥१६॥
इति स्तुत्वः नमस्कृत्वा पूजयामासुरक्षतैः ।
पुष्पैः पत्रैर्जलैः स्तोत्रैः प्रणेमुश्च पुनः पुनः ॥१७॥
हरिर्ब्रह्मा वसिष्ठश्च समायाताश्च तत्स्थले ।
पुत्राणां तपसा हृष्टा ददुः स्वदर्शनं तदा ॥१८॥
सत्यलोकस्थिता गंगा मूर्तापि तत्र चागता ।
ब्रह्मा प्राह तदा गंगां वशिष्ठं मम पुत्रकम् ॥१९॥
अनुयाहि समुद्रान्तं जलं भूत्वा जले वस ।
यत्र सुदर्शनाद्वारि पुण्यं चात्र समुद्गतम् ॥२०॥
तत्र स्थानं सदा ते स्यात् तीर्थं सर्वाघनाशनम् ।
श्रीकृष्णस्य पादस्पर्शात् सदा पुण्या सुते भव ॥२१॥
गवां किरणमुख्यानां जले सुदर्शनोद्भवे ।
स्थितिमत्त्वात् सदा ते वै संज्ञाऽस्तु गोमती शुभा ॥२२॥
वशिष्ठस्याऽनुगा भूत्वा नदीरूपा सुते भव ।
पितेव पुत्रीति यथा वशिष्ठतनया भव ॥२३॥
बाढमित्येव तानुक्त्वा प्रस्थिता जलभावतः ।
वसिष्ठश्चाग्रतो याति गंगा तं पृष्ठतोऽन्वगात् ॥२४॥
तां दृष्ट्वा मानवाः सर्वे देवाश्च तीर्थकोटयः ।
नमश्चक्रुर्महापुण्यां गच्छन्तीं पश्चिमार्णवम् ॥२५॥
वशिष्ठमनुगच्छन्ती प्रस्थिता वरुणालयम् ।
समाकिरन् महाभागा सुमनोभिश्च तां नदीम् ॥२६॥
दिव्यैर्माल्यैः सुगन्धैश्च गन्धैर्धूपैस्तथाऽक्षतैः ।
पूजयामासुराश्चर्यसमेता वै सुरादयः ॥२७॥
अस्या दर्शनमात्रेण मुक्तिं यास्यन्ति मानवाः ।
किं पुनः स्नानदानादि कृत्वा यान्ति हरेः पदम् ॥२८॥
इत्युक्त्वा चार्पयित्वाऽर्घ्यं श्रीकृष्णमीडिरे हरिम् ।
पीतकौशेयवसनं वनमालाविभूषितम् ॥२९॥
दिव्यगन्धसुगन्धाढ्यं दिव्यस्वर्णागदान्वितम् ।
दिव्याभरणहेतिं च मकराकारकुण्डलम् ॥३०॥
ज्वलत्किरीटमुकुटं श्रीवत्सांकितवक्षसम् ।
भक्ताऽभयप्रदहस्तं प्रलम्बितचतुर्भुजम् ॥३१॥
घनश्यामं प्रसन्नास्यं लक्ष्मीसेवितपत्कजम् ।
नताः स्मश्च नता स्मश्च तुष्टुवुश्च पुनः पुनः ॥३२॥
नारायणो हरिः कृष्णः प्रसन्नमनसा द्विजान् ।
उवाच परमप्रीत्या सुरान् कुमारकाँस्तथा ॥३३॥
यूयं सर्वे तिष्ठतात्र चाऽस्पृष्टा मम मायया ।
ज्ञानिनो मोक्षिणश्चैव पावना वसतात्र वै ॥३४॥
इयं वै गोमती गंगाऽऽनीता भवत्कृते मया ।
सर्वेषां भवतां चैव तीर्थानां श्रैष्ठ्यमास्थिता ॥३५॥
मोक्ष्यर्थिभिः कुमारैश्चाप्यहमत्र प्रसादितः ।
तस्मादिदं परं तीर्थं गोमत्याख्यं च मोक्षदम् ॥३६॥
अनुग्रहाय भवतां मया चक्रं सुदर्शनम् ।
दर्शितं प्रथमं विप्रा भुवं भित्त्वा जलं तथा ॥३७॥
भित्त्वा तेजोमयं दिव्यं समायातं ममाग्रतः ।
चक्रतीर्थमिति ख्यातं गोमत्यां संभविष्यति ॥३८॥
ममापि नियतं वासो भवतामपि सर्वथा ।
चक्रतीर्थे सदावासो भविष्यति हि शाश्वतः ॥३९॥
गोमत्यर्णवसंयोगे ये स्नास्यन्ति जनादयः ।
चक्रतीर्थे च ये स्नातास्तेषां मुक्तिः करे स्थिता ॥४०॥

गोमत्यां सागरे सर्वतीर्थानि प्रवसन्ति हि ।
सर्वे देवाश्च ऋषयः प्रवसन्ति हि संगमे ॥४१॥
सनकादिभिराचम्य स्नात्वा पीत्वा जलं तदा ।
हरेश्चरणौ प्रक्षाल्य धृतं मूर्ध्नि जलं तदा ॥४२॥
सर्वदेवैस्तथा चतुर्दशलोकनिवासिभिः ।
गोमती पूजिता तत्र पीतं पुण्यं जलं तथा ॥४३॥
मूर्ध्नि धृतं जलं तस्याः पादौ प्रक्षालितौ हरेः ।
गोमती चापि कन्या च भूत्वा धृत्वा घटे जलम् ॥४४॥
अवनीज्य हरेः पादौ मूर्ध्ना जलमधारयत् ।
कृत्वाऽर्घं श्रीहरये च दत्वा सा च जलांजलिम् ॥४५॥
विकीर्य कुसुमान्यत्र प्रविष्टा वरुणालये ।
सनकाद्या महर्षयो देवाश्च मुनयस्तथा ॥४६॥
ये ये तत्र च तीर्थानि पूर्वोऽरण्यानि चाययुः ।
ते ते तत्र कृतस्थानास्तीर्थरूपैः समस्थिताः ॥४७॥
एवं सा गोमती सर्वतीर्थमयी महोदया ।
संजाता श्रीहरेर्योगात् पावनी मोक्षदा शुभा ॥४८॥
हरिश्च पश्यतां सर्वतीर्थानां वै तिरोऽभवत् ।
सर्वे देवादयो नत्वा तां दिशं स्वालयान् ययुः ॥४९॥
एवं सा गोमती लक्ष्मि ! संजाता सागरंगमा ।
कृष्णयोगात्सर्वपापहरा गंगा सरिद्वरा ॥५०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने गोमतीतीर्थचक्रतीर्थेतिहासमाहात्म्यकथननामैकोन-विंशाऽधिकद्विशततमोऽध्यायः ॥ २१९ ॥

**श्रीनारायण उवाच—**

गत्वा च गोमतीतीरे प्रणम्य दण्डवच्च ताम् ।
हस्तपादौ च संशोध्य जलेन कुशहस्तकः ॥ १ ॥
अक्षतांश्च फलं दधन् दद्यादर्घं च प्राङ्मुखः ।
सर्वपापविशुद्ध्यर्थं ददाम्यर्घं च गोमति ॥ २ ॥
त्रैलोक्यवन्दिते देवि पापं मे हर गोमति ।
इत्युच्चार्य मृदं लब्ध्वा विष्णुं स्मृत्वा ह्युदीरयेत् ॥ ३ ॥
अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे ।
उद्धृतासि वराहेण कृष्णेन शतबाहुना ॥ ४ ॥
मृत्तिके हर मे पापं यन्मया पूर्वसंचितम् ।
त्वया हतेन पापेन सर्वपापैः प्रमुच्यते ॥ ५ ॥
इत्येवं मृत्तिकां धृत्वा स्नानं कुर्यान्नदीजले ।
कुरुक्षेत्रे सूर्यग्रहे यत्पुण्यं तत्र लभ्यते ॥ ६ ॥
स्नानमात्रेण विधिना गोमत्यां कृष्णसन्निधौ ।
देवान् पितॄन् मनुष्यांश्च तर्पयेद्भावसंयुतः ॥ ७ ॥
गोमतीनीरदानेन मुक्तिं यान्ति न संशयः ।
विप्रानाहूय वेदज्ञान् पितॄणां श्राद्धमाचरेत् ॥ ८ ॥
दद्याच्च दक्षिणां स्वर्णं रजतं चाम्बरादिकम् ।
सुवर्णशृंगसहितां खुरराजतभूषिताम् ॥ ९ ॥
रत्नपुच्छां दुग्धयुतां ताम्रपृष्ठां सवत्सकाम् ।
दद्याद् धेनुं समभ्यर्च्य वस्त्रालंकारभूषणैः ॥१०॥
सप्तधान्यानि दद्याच्च विष्णुर्मे प्रीयतामिति ।
गोमती गोरजःस्नानं गोदानं गोपिचन्दनम् ॥११॥
गोपीशदर्शनं चेति गकाराः पंच दुर्लभाः ।
गोमत्यां श्राद्धकरणात् प्रेता मुक्ता भवन्ति वै ॥१२॥
नारकाः स्थावराश्चैव वायवः कीटतां गताः ।
सर्वे ते मुक्तिमायान्ति गोमत्यां श्राद्धदानतः ॥१३॥
हयमेधस्य यज्ञस्य प्रयागाऽऽप्लवनस्य च ।
प्रत्यहं हुतभोक्तुश्च फलं तद्गोमतीजलात् ॥१४॥
विष्णुलोकं हि गच्छन्ति पितरस्त्रिकुलोद्भवाः ।
अनेकजन्मसाहस्रं वाङ्मनःकर्मभिः कृतम् ॥१५॥
पापं प्रविलयं याति गोमतीदर्शनेन वै ।
गोमत्यां कार्तिके स्नातुः प्रसन्नः श्रीयुतो हरिः ॥१६॥
सम्पूर्णे कार्तिके मासे सम्प्राप्ते बुधवासरे ।
पंचामृतेन तीर्थस्य जलेन स्नापयेद्धरिम् ॥१७॥
कस्तुरीकेसरमिश्रश्रीखण्डं च विलेपयेत् ।
पुष्पहारैः फलैर्दीपैर्धूपैश्च पूजयेद्धरिम् ॥१८॥
नैवेद्यं रुचिरं दद्याद् विष्णुर्मे प्रीयतामिति ।
गीतवाद्यकथास्तोत्रनृत्यैर्जागरणं चरेत् ॥१९॥
कार्तिकान्ते गोमतीसंगमेऽब्धौ स्नानमाचरेत् ।
रमापतिं प्रपूज्यैव व्रतं सम्पूर्णतां व्रजेत् ॥२०॥
माघस्नानं च गोमत्यां कर्तुः श्रीसंयुतो हरिः ।
प्रसन्नो भवति तत्र मुक्तिं चापि ददाति सः ॥२१॥
तिला हिरण्यं रजतं मोदका गुडमिश्रिताः ।
दक्षिणाश्चापि दातव्या ब्राह्मणाय सरित्तटे ॥२२॥
तिलैराज्येन धान्यैश्च फलैर्होमोपि सम्मतः ।
व्रतान्ते रक्तसद्वस्त्रकंचुकोष्णीषमित्यपि ॥२३॥
दद्यादुपानहौ चैव मिष्टान्नं चापि भोजनम् ।
तैलपक्वं घृतपक्वं विष्णुर्मे प्रीयतामिति ॥२४॥
सर्वदानफलं तस्य सर्वतीर्थफलं तथा ।
सर्वान्कामानवाप्नोति विष्णुलोकं सनातनम् ॥२५॥



प्राप्नोति चात्र गोमत्यां माघस्नानेन वै जनः ।
माघं समापयेन्माघ्यां गोमत्युदधिसंगमे ॥२६॥
ब्राह्मणाऽनुज्ञया सर्वं न्यूनं सम्पूर्णतां व्रजेत् ।
ब्रह्मदेवस्वहर्तॄणां पापं स्नानाद्विनश्यति ॥२७॥
मित्रद्रोहगुरुघातपापं नश्यति स्पर्शनात् ।
ब्रह्मरुद्रपदादूर्ध्वपदं प्राप्नोति दर्शनात् ॥२८॥
भीताऽभयप्रदानेन यत्फलं लभते जनः ।
तत्फलं समवाप्नोति गोमतीवारिसंगमात् ॥२९॥
कृतकृत्यो भवेन्नीरं गोमत्याः पातियो जनः ।
गण्डूषं पिबति यश्च ऋणान्मुच्येत वै त्रयात् ॥३०॥
गोमतीसेविनो भक्ता वसन्ति कृष्णसन्निधौ ।
वनमालाश्चतुर्भुजा दिव्यगन्धानुलेपनाः ॥३१॥
नरा विष्णुस्वरूपाश्च नार्यो लक्ष्मीस्वरूपिकाः ।
भूत्वा विष्णुपदं यान्ति चाऽपुनर्भवलक्षणम् ॥३२॥
कृत्वा च गोमतीतीर्थं गच्छेद्वै चक्रतीर्थकम् ।
चक्रांकिताश्च पाषाणा दृश्यन्ते यत्र सर्वथा ॥३३॥
गले धृतश्च पाषाणो धारकं तीर्थकृन्नरम् ।
गोलोके प्रेषयत्येषश्चक्रलांछनसद्बलात् ॥३४॥
यत्रास्थि पतितं यस्य सोपि याति परां गतिम् ।
प्रयागादधिकं चैतच्चक्रतीर्थं विमुक्तिदम् ॥३५॥
यत्र चक्रांकनं लब्धं तत्र षण्माससंस्थितेः ।
विधूय सर्वपापानि नरो याति हरेर्गृहम् ॥३६॥
चक्रतीर्थे जनो गत्वा प्रक्षाल्य पादहस्तकान् ।
आचम्य च पुनः कृष्णं प्रणमेद् दण्डवत् ततः ॥३७॥
गृहीत्वा पंचरत्नानि पत्रं पुष्पं तथाऽक्षतान् ।
गन्धं फलं सुवर्णं च चन्दनं चार्घमित्यपि ॥३८॥
विलोक्य च समुद्रं वै दद्याच्चक्राय विष्णवे ।
नमो विष्णुस्वरूपाय विष्णुचक्राय ते नमः ॥३९॥
गृहाणाऽर्घ्यं मया दत्तं सर्वकामप्रदो भव ।
अग्नियोनिर्यज्ञदेहो विष्णुबलश्च मुक्तिदः ॥४०॥
विष्णुचक्रधरोऽब्धिस्त्वं चक्रतीर्थान्वितः सदा ।
स्नानं करोमि तीर्थेऽत्र मुक्तिं देहि रथांगधृक् ॥४१॥
मृदं शिरसि धृत्वा च स्नात्वा भजन् हरिं तदा ।
सन्तर्प्य देवताः पितॄन् नरान् हरिं च पार्षदान् ॥४२॥
अर्घयित्वा तथा कृष्णं सहस्राश्वयजेः फलम् ।
स्नानमात्रेण लभ्येत चक्रतीर्थे विधानतः ॥४३॥
विश्वेदेवाः स्वर्णदानाद् रूप्यदानात्तु पितृकाः ।
भोजनेनापि संतृप्ता भवन्ति चक्रतीर्थके ॥४४॥
दीनेभ्यः कृपणेभ्यश्च देयं वस्त्रविभूषणम् ।
रथदानं मुख्यमुक्तं वाहोपस्करस्मृद्धयः ॥४५॥
अश्वा वृषाः प्रदातव्या गन्त्र्यश्चापि विशेषतः ।
दक्षिणा चापि दातव्या प्रीणनार्थं जगत्पतेः ॥४६॥
पितरस्त्रिकुले जाताः प्रेताः कीटाश्च नारकाः ।
सर्वे ते मुक्तिमायान्ति चक्रतीर्थप्रभावतः ॥४७॥
श्राद्धे गयाफलं बोध्यं स्नाने यद्विगतिर्मता ।
तर्पणे सोमपर्वोत्थं दाने सूर्यग्रहाधिकम् ॥४८॥
फलं लभ्येत चक्रांकं ग्राह्यं बाह्वोस्तु मानवैः ।
मनोवाक्कर्मभिर्जन्यं पापं स्नानाद् विनश्यति ॥४९॥
इति ते कथितं लक्ष्मि ! चक्रतीर्थमपि ध्रुवम् ।
तीर्थकृतो जनाः शुद्धा विष्णुसायुज्यमाप्नुयुः ॥५०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने
गोमतीतीर्थचक्रतीर्थविधिफलादिकथननामा
विंशत्यधिकद्विशततमोऽध्यायः ॥२२०॥

**श्रीनारायण उवाच—**

ततो गच्छेन्महालक्ष्मि ! गोमत्युदधिसंगमे ।
मुक्तिद्वारं तु तत्प्रोक्तं कलिकाले न संशयः ॥ १ ॥
गंगासागरसंयोगे सिन्धुसागरसंगमे ।
फलं यत् तल्लभ्यतेऽत्र गोमत्युदधिसंगमे ॥ २ ॥
पापं प्रणश्यते स्नात्वा ह्यर्घ्यं दद्याद्विधानतः ।
कुशांश्च करयोर्धृत्वा नारिकेलफलं तथा ॥ ३ ॥
अर्घं दद्यान्नमस्कृत्य श्रीकृष्णपरमात्मने ।
तीर्थराज नमस्तुभ्यं त्राहि संसारसागरात् ॥ ४ ॥
रत्नाकर गृहाणाऽर्घं गोमत्या सह ते नमः ।
अर्घं दत्वा शिखां बध्वा स्मृत्वा च जलशायिनम् ॥ ५ ॥
कुर्यात् स्नानं प्राङ्मुखश्च पितॄन् संतर्पयेत् ततः ।
पितृश्राद्धं तथा कृत्वा दद्याच्च दक्षिणां शुभाम् ॥ ६ ॥
सुवर्णं वाससी दद्यात् कञ्चुकोष्णीषमित्यपि ।
महादानानि दद्याच्च यदीच्छेत् क्षेममात्मनः ॥ ७ ॥
लक्ष्म्याः सह हरिः साक्षाद्विष्णुर्मे प्रीयतामिति ।
उक्त्वा दद्याद् विविधानि दानानि भोजनानि च ॥ ८ ॥
तुलापुरुषदानं च कुर्यात्सागरसंगमे ।
सप्त द्वीपनृपो भूत्वा वैकुण्ठं याति मानवः ॥ ९ ॥
तुलया तोलयेत् स्वं यः सुवर्णरजतादिभिः ।
वस्त्रकुंकुमकर्पूरशर्कराफलसद्रसैः ॥१०॥

सोत्र भोगान् सुखान् भुक्त्वा मोक्षं याति सुरार्चितः ।
स्वर्णदानं वाजपेयं स्नानं गोमतीवारिणी ॥११॥
कन्यादानं भूमिदानं विद्यादानं विधानतः ।
गोमत्याः संगमे कुर्यात् याति ब्रह्मपदं हि सः ॥१२॥
स्वर्णधेनुं घृतधेनुं तिलधेनुं प्रदाय वै ।
वस्त्रादिशर्कराधेनुं दत्वा याति परं पदम् ॥१३॥
युगादितिथिमुख्यासु पञ्चकारवष्टकासु च ।
वैधृतौ च व्यतिपाते गजच्छायाह्वये तथा ॥१४॥
षष्ठ्यमैकादश्यष्टमीद्वादशीश्राद्धसद्व्रते ।
स्नात्वा नीरनिधौ तद्वत् गोमतीचक्रतीर्थयोः ॥१५॥
गोमत्युदधिसंयोगे स्नात्वा ब्रह्मपदं लभेत् ।
अमावास्यादिने श्राद्धं कार्यं गोमतिसंगमे ॥१६॥
पक्षश्राद्धकृतं पुण्यं दिनैकेन लभेज्जनः ।
श्रद्धाहीनं मन्त्रहीनं पात्रहीनमथापि वा ॥१७॥
द्रव्यहीनं कालहीनं मनऐकाग्र्यवर्जितम् ।
परिपूर्णममाश्राद्धं पितृणामुदधौ भवेत् ॥१८॥
गोमती कमला चन्द्रभागा तदोदधौ वसेत् ।
गयायां पिण्डदानेन प्रयागे चास्थिपातनात् ॥१९॥
अमायां श्राद्धदानेन शाश्वतं पुण्यमाप्यते ।
यदीच्छेत् सर्वतीर्थेषु स्नानं व्रतधरः पुमान् ॥२०॥
स्नानं कुर्वीत भक्त्या वै गोमत्युदधिसंगमे ।
अपुत्रा मृतपुत्रा वा काकवन्ध्या स्रवत्सुता ॥२१॥
दोषैः प्रमुच्यते नारी गोमत्युदधिसंगमे ।
श्राद्धं दानं तथा पितृतर्पणं जलदर्शनम् ॥२२॥
व्रतं स्नानं तथा पुण्यं जपो होमश्च कीर्तनम् ।
शाश्वतीतृप्तिकृत्पुण्यं गोमत्युदधिसंगमे ॥२३॥
मातृपक्षाः पितृपक्षा भगिनीपक्षकास्तथा ।
पुत्रीपक्षाः श्वश्रूपक्षास्तथा श्वशुरपक्षकाः ॥२४॥
पितृस्वसृपक्षगाश्च स्नुषापक्षास्तथा जनाः ।
सपत्नीपक्षगाश्चापि रक्षिकापक्षगा अपि ॥२५॥
भ्रातृजायापक्षगाश्च स्वसृपुत्र्यादिपक्षगाः ।
पितृभ्रातृसुतापत्नीप्रभृतिपक्षका अपि ॥२६॥
मित्रबान्धवभृत्यानां येऽपि सम्बन्धधारकाः ।
जन्मान्तरगता ये च नारकाः खनिगर्भगाः ॥२७॥
ते सर्वे संस्मृताः श्राद्धे गोमत्युदधिसंगमे ।
स्नाने दाने संस्मृताश्च तृप्तिं यान्ति तु शाश्वतीम् ॥२८॥
सर्वपापैः प्रमुच्यन्ते मुक्तिं यान्ति न संशयः ।
श्रावणद्वादशीयोगे समभ्यर्च्य तु वामनम् ॥२९॥
परमं लोकमाप्नोति स्नात्वा गोमतिसंगमे ।
पीताम्बरधरो भूत्वा दिव्याभरणभूषितः ॥३०॥
चतुर्भुजधरश्चैव वनमालाविभूषितः ।
सेव्यमानः सुरस्त्रीभिर्विमानकृतवाहनः ॥३१॥
संस्तूयमानः ऋषिभिः श्रीहरेरर्चको जनः ।
गोमतीसंगमे पूतो याति विष्णोः परं पदम् ॥३२॥
गोमतीसागरे स्नात्वा गच्छेत् सप्तप्रकुण्डकान् ।
सर्वैराराधितः कृष्णो हरिराविर्बभूव ह ॥३३॥
सह लक्ष्म्या हरिं दृष्ट्वा सनकाद्या महर्षयः ।
सप्तमिष्टजलगर्तान् कृत्वा सिषिचुरिन्दिराम् ॥३४॥
ततो लक्ष्मीह्रदा एते कलौ ते रुक्मिणीह्रदाः ।
भृगुणा सेविताश्चैते भृगुतीर्थमिति स्मृतम् ॥३५॥
तत्र प्रक्षाल्य चरणौ तथाऽऽचम्य कुशाँस्ततः ।
संगृह्य प्राङ्मुखो भूत्वाऽर्घं गृहीत्वाऽक्षतादिभिः ॥३६॥
हस्तौ च मस्तकोपरि समुन्नीय फलादिभिः ।
अर्घं दातव्यमेवात्र ह्रदे रुक्मिणिसंज्ञिते ॥३७॥
स्नानं कुर्यात्ततो ध्यात्वा तीर्थानि पितृदेवताः ।
देवमानवपितॄँश्च सन्तर्प्य हरिभावतः ॥३८॥
विप्रानाहूय च श्राद्धं प्रकुर्वीत च भक्तितः ।
दक्षिणां रजतं स्वर्णं फलं मिष्टान्नमम्बरम् ॥३९॥
भोजनं चापि दम्पत्योर्दद्याच्च भूषणादिकम् ।
शाटीं च कंचुकीं श्रेष्ठां घर्घरीं कर्पटादिकम् ॥४०॥
पितृपंक्तीश्च संपूज्य नारीश्चान्याः कुमारिकाः ।
सम्पूज्य दद्याद् दानानि रुक्मिणी प्रीयतामिति ॥४१॥
वसते च सदा लक्ष्मीस्तस्य गेहे न संशयः ।
स्मृद्धिं सर्वां समाप्नोति लक्ष्मीस्तस्य प्रसीदति ॥४२॥
सप्तस्वपि ह्रदेष्वेव दानं दद्यात् पृथक् पृथक् ।
तत्सर्वं चाऽक्षयं विन्देल्लक्ष्मीलोके सुखप्रदम् ॥४३॥
अलक्ष्मीर्नश्यति तस्य लक्ष्मीर्यस्य प्रसीदति ।
पशुपुत्रगृहवाटीक्षेत्रभवनशालयः ॥४४॥
भवन्ति सततं श्रेष्ठा लक्ष्मीर्यस्य प्रसीदति ।
स्वर्णादिवर्धनं तस्य लक्ष्मीस्तुष्टा तु यं प्रति ॥४५॥
सर्वान्कामानवाप्नोति विष्णुलोकं च गच्छति ।
सप्तह्रदेषु लक्ष्म्यात्मनारीणां भोजनं वरम् ॥४६॥
दानं च पूजनं चैव सम्मानं भूषणादिकम् ।
शृंगारं वाहनं यानं देहोपकरणादिकम् ॥४७॥
पृथक् पृथक् प्रदद्याद्वै लक्ष्मीर्मे प्रीयतामिति ।
वसत्येव सदा गेहे लक्ष्मीस्तस्य न संशयः ॥४८॥

हीनभाग्यो न च भवेन्न भवेत्परयाचकः ।
अग्र्यो भवति सर्वेषु यः स्नाति रुक्मिणीह्रदे ॥४९॥
पुनरागमनं न स्याद् वैकुण्ठं याति मानवः ।
सपत्नीकश्चतुर्भुजः शाश्वतं सुखमश्नुते ॥५०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने गोमतीसागरसंगमतीर्थलक्ष्मीसमहृदतीर्थविधान-निरूपणनामैकविंशाधिकद्विशततमोऽध्यायः ॥ २२१ ॥

श्रीनारायण उवाच—

ततो गच्छेमहत्तीर्थं कृकलासविमुक्तिदम् ।
नृगतीर्थमितिख्यातं नृगोऽभूच्च महीपतिः ॥ १ ॥
अनेकशतसाहस्रा भूमिपालास्तु यद्वशे ।
स नित्यं गुरुभक्तश्च देवपूजनतत्परः ॥ २ ॥
महादानानि सुददौ नित्यं नित्यं सहस्रशः ।
विप्रेभ्यो गोसहस्रं च प्रददौ नित्यमेव सः ॥ ३ ॥
प्रक्षाल्य चरणौ भक्त्या दत्वा क्षौमयुगं तथा ।
चन्दनपुष्पैः सम्पूज्य प्रतिविप्राय गां ददौ ॥ ४ ॥
ददौ च दक्षिणां द्रव्यं गवार्थे च तृणानि वै ।
दत्वा ताम्बूलमवदत् विष्णुर्मे प्रीयतामिति ॥ ५ ॥
दानानि ददतस्तस्य यज्ञाँश्च कुर्वतस्तथा ।
भोगांश्च भुंजतस्तस्य भजतः श्रीहरिं तथा ॥ ६ ॥
धर्मेण पालयतः क्ष्मां ययौ कालः सुखान्वितः ।
एकदा गौतमं विप्रं सर्वदा चाऽपरिग्रहम् ॥ ७ ॥
समाहूय च सम्पूज्य तस्मै स गां ददौ नृपः ।
सुवर्णश्रृंगसहितां रौप्यखुरादिशोभिताम् ॥ ८ ॥
गां नीत्वा स्वगृहं यातो गौतमस्तां सवत्सिकाम् ।
सुतृप्तां शोभनां गां च दामबद्धां जलाशयम् ॥ ९ ॥
जलं पाययितुं विप्रो गृहीत्वा निर्ययौ गृहात् ।
मार्गे चोष्ट्रं प्रदृष्ट्वा सा त्रस्ता चाच्छिद्य हस्ततः ॥१०॥
धावित्वा सा ययौ धेनुः सुमहद्राजगोधनम् ।
विचिन्वन् गौतमो गां तां न प्रापत् स्वगृहं ययौ ॥११॥
द्वितीयेऽह्नि पुनर्विप्रानाहूय नृगभूपतिः ।
ददौ दानानि विधिवद्गोदानानि बहून्यपि ॥१२॥
सम्पूज्य भक्त्या सत्कृत्य वस्त्रालंकारभोजनैः ।
विधिवद्गां ददौ तां च स नृगः सोमशर्मणे ॥१३॥
गृहीत्वा राजभवनान्निर्ययौ सोऽपि गां च ताम् ।
गौतमोऽपि विचिन्वानो तामेव च ददर्श गाम् ॥१४॥

संयान्तीं पृष्ठतः सोमशर्मणः समुवाच तम् ।
ममेमां चापहृत्वा त्वं दस्युवत् किं प्रयास्यसि ॥१५॥
श्रुत्वा दस्युं स्वमात्मानं विस्मितोऽभूत् स सोमकः ।
प्राह तं राजतो लब्ध्वा दानेऽत्र नास्मि दस्युकः ॥१६॥
मम स्वत्वं गवि चात्र गां नयामि स्वमन्दिरम् ।
गौतमः प्राह नृपतो ह्यो मया प्रापिता न्वियम् ॥१७॥
दाने ममैव गव्यत्र स्वत्वं भवति ते नहि ।
कथं नयसि सोम त्वं मयि जीवति गौतमे ॥१८॥
विवदन्तौ तथा विप्रौ राजद्वारमुपागतौ ।
कुर्वाणौ कलहं घोरं द्वाःस्थौ प्रणयपूर्वकौ ॥१९॥
नृगो द्वारि द्विजौ दृष्ट्वा नत्वा पुपूज तौ पुनः ।
प्रार्थयामास कलहं शामयितुं नृपोत्तमः ॥२०॥
एकस्या गोः प्रति द्रव्यं लक्षं सुवर्णमुद्रिकाः ।
सहस्रं च गवां चापि ददामि प्रतिभूधनम् ॥२१॥
एको गां प्रतिगृह्णातु चैनां दत्तां मया द्विजौ ।
अन्यो गवां सहस्रं च सहस्रस्वर्णमुद्रिकाः ॥२२॥
गौतमश्च तथा सोमः प्राहतुर्वै प्रगर्वतः ।
हठावेशाच्चोचतुर्गां गृह्णावो न सहस्रकम् ॥२३॥
गौतमः प्राह गामेनां गृह्णाम्येव हि मामकीम् ।
सोमः प्राह च गामेनां गृह्णाम्येव च मद्वशाम् ॥२४॥
न गृह्णामि सहस्रं तु गवां स्वर्णसहस्रकम् ।
नैव प्रयोजनं द्रव्ये सहस्रेऽपि तु मद्गवि ॥२५॥
राज्ञा बहुप्रार्थितौ बोधितौ च पूजितावपि ।
कोपव्याकुलचेतस्कौ त्रिरात्रं समुपोषितौ ॥२६॥
अवज्ञातौ नृपेणाथ कुपात्रे मूर्खभूसुरौ ।
गच्छतं स्वगृहं विप्रौ मूर्खौ स्थो मानवर्जितौ ॥२७॥
प्राप्ते विषमसमये मार्गं कुर्यात् स वै बुधः ।
एकेन भाव्यं नम्रेण चान्येन रुषता यदा ॥२८॥
मानं त्याज्यं हठस्त्याज्यो यत्र नान्या गतिस्तदा ।
तत्तु न क्रियते विप्रौ किं करोमि समानके ॥२९॥
एकस्मिन् वस्तुनि त्वत्र क्लिष्टावुभौ भविष्यथः ।
तस्माद् गच्छ तमत्युग्रौ यथेष्टं कुरुतं द्विजौ ॥३०॥
एवमुक्तौ तदा विप्रौ राजानं प्रति क्रोधतः ।
ऊचतुः कुपितौ वाक्यं समर्थौ नृपतिं प्रति ॥३१॥
अवमानयसे त्वस्मान्न न्यायं च ददासि यत् ।
भविष्यति भवानस्मात् कृकलासो न संशयः ॥३२॥
एवं शप्त्वा तदा विप्रौ परित्यज्य च गामुभौ ।
दुःखितौ स्वगृहं गन्तुमुद्यतौ च तदा नृपः ॥३३॥

नृगो द्वारं समागत्य दण्डवत्प्रणिपत्य च ।
चक्रे च प्रार्थनां यूयममोघवचना द्विजाः ॥३४॥
ममोपरि कृपां कृत्वा शापान्तं दिशताऽऽशु यत् ।
सोमशर्मा तदा प्राह द्वापरान्ते हरिः स्वयम् ॥३५॥
द्वारकायां समागत्य तव मुक्तिं करिष्यति ।
वासुदेवः स वै कृष्णस्त्वां गोलोकं च नेष्यति ॥३६॥
इत्युक्त्वा तौ तदा विप्रौ जग्मतुः स्वनिकेतनम् ।
राजा नृगोऽपि तच्छापात्कालधर्ममुपेयिवान् ॥३७॥
धर्मराजगृहं प्राप्तः पृष्टश्च भोग्यकर्मणि ।
प्रथमं भोक्ष्यसे पुण्यं पापं वा ब्रूहि सत्वरम् ॥३८॥
पुण्यं चानन्तकं तेऽस्ति पापं गोवैपरीत्यजम् ।
श्रुत्वा नृगः समुवाच भोक्ष्यं स्वल्पं हि दुष्कृतम् ॥३९॥
यमस्यानुमतेनाऽयं कृकलासोऽभवन्महान् ।
सोऽयं वर्षसहस्राणि कूपतडागसंस्थितः ॥४०॥
जातिस्मरोऽभवद् भुंक्तेऽन्नकणादीन् वनौषधीन् ।
एकदा यदुबालैराकृष्यमाण इतस्ततः ॥४१॥
रेमे तैः स्वमोक्षकालं मन्यमानो हरिं स्मरन् ।
किन्तु गुरुशरीरः स श्रमयुक्तोऽभवद् यदा ॥४२॥
पृथ्व्यां मूर्छां गतो भूत्वा पपात न चचाल वै ।
स्थूलात् स्थूलतमं देहं कृत्वा योगेन संस्थितः ॥४३॥
बहुभिर्बालकैः कृष्यमाणोपि न चचाल सः ।
अतीव स्थौल्यमापन्नो वर्धते च क्षणे क्षणे ॥४४॥
बाला दृष्ट्वा चकिताश्च भययुक्ताश्च केचन ।
कृष्णं निवेदयामासुः कृष्णोऽप्यवेत्य तं मृगम् ॥४५॥
समागत्य च हस्तेन पस्पर्श तं नृगं तदा ।
शापबन्धाद् विनिर्मुक्तो दिव्यो राजा नृगोऽभवत् ॥४६॥
देवतुल्यशरीरः सः तदा भक्त्या कृतांजलिः ।
तुष्टाव परमेशानं मोक्षदं कृष्णमुत्तमम् ॥४७॥
भगवन् कर्म सम्पूर्णं भुक्तं नान्यच्च विद्यते ।
शुभं ते शरणे न्यस्तं मोक्षं कुरु ममाऽच्युत ॥४८॥
तदा कृष्णश्च तं प्राह मम योगाच्च पार्थिव ।
याहि पुण्यकृतान् लोकान् भुक्त्वा भोगाननुत्तमान् ॥४९॥
प्राप्नोष्यन्ते मम धाम चाऽपुनर्भवलक्षणम् ।
उवाच च नृगः कृष्णं यदि तुष्टोऽसि मे हरे ॥५०॥
गर्तोऽयं मम नाम्ना च तीर्थं भवतु पुण्यदम् ।
अत्र स्नात्वा तर्पणं च पितॄणां यः करिष्यति ॥५१॥
त्वत्प्रसादेन पितरो गच्छन्तु तव धाम ते ।
अत्र यात्रां च ये कुर्युस्ते स्युर्वै मोक्षभागिनः ॥५२॥
तथास्त्विति नृपं तूक्त्वा ततः कृष्णस्त्वपासरत् ।
राजा दिव्यविमानेन ययौ यज्ञकृतां गृहम् ॥५३॥
वैकुण्ठं द्वितीयं यद्वै वैराजपदमुच्यते ।
तदारभ्य नृगकूपस्तीर्थोत्तममभूद्भुवि ॥५४॥
अर्घं नृगाय कृष्णाय दद्यात् स्नायाज्जलं पिबेत् ।
सन्तर्पयेत् पितॄन् देवान् मनुष्यान् श्राद्धमाचरेत् ॥५५॥
दद्याच्च दक्षिणां स्वर्णां दानानि विविधानि च ।
अक्षय्यं फलमाप्नोति चान्ते वै परमां गतिम् ॥५६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुग-
सन्ताने नृगराज्ञो गोदानव्यत्यासे कृकलासजन्म
श्रीकृष्णकृतमुक्तता नृगकूपतीर्थं चेति
निरूपणनामा द्वाविंशत्यधिकद्विशत-
तमोऽध्यायः ॥ २२२ ॥

**श्रीनारायण उवाच—**

ततो गच्छेन्महालक्ष्मि तीर्थं विष्णुपदोद्भवम् ।
यत्र गंगा समुत्पन्ना विष्णुपादाश्रया च या ॥ १ ॥
एकदा खलु दुर्वासा यात्रार्थं समुपागतः ।
तच्छ्रुत्वा सहसोत्थाय भगवान् रमया युतः ॥ २ ॥
ययौ चातिथ्यविध्यर्थं दुर्वाससं प्रति प्रभुः ।
गृहिणी न गृहे यस्य सत्पात्रगमनं च न ॥ ३ ॥
तस्य देवा न गृह्णन्ति पितरश्चोदकं तथा ।
इतिकृत्वा ययतुस्तौ श्रीश्च कृष्णश्च हर्षितौ ॥ ४ ॥
रथमारुह्य श्रीकृष्णो रुक्मिण्या सहितो ययौ ।
समुद्रस्य तटे श्रान्तं स्नातं ज्वलनमोजसा ॥ ५ ॥
प्रणम्य भगवान् भक्त्या पप्रच्छाऽनामयं तथा ।
मुनिरुवाच कुशलं क्व वासः कृष्ण तेऽधुना ॥ ६ ॥
कति दारा धनान्येव कच्चित्ते कुशलं सदा ।
कृष्ण प्राह भवदाशीर्वादैर्वै कुशलं मम ॥ ७ ॥
दर्शनाच्च विशेषेण पावितं मे कुलं त्वया ।
समुद्रेण प्रदत्ता मे भूमिस्तु दशयोजना ॥ ८ ॥
दशयोजने भूभागे पुरी हेममयी मया ।
कारिता तत्र प्रासादा नवलक्षाणि कारिताः ॥ ९ ॥
तस्यां वसामि संहृष्टो निर्भयस्ते प्रसादतः ।
दुर्वासाः प्राह श्रुत्वा तत् संख्यां वदस्व मे तव ॥१०॥
यावत्यश्च महिष्यो वै पुत्राः परिजनास्तथा ।
श्रीकृष्णः प्राह भगवन् कृपया ते मम गृहे ॥११॥

सन्ति षोडशसाहस्रं भार्याश्चाष्टाधिकं शतम् ।
एकैकस्यां दश पुत्राः कन्या चैका प्रजा मम ॥१२॥
षट् पंचाशत् ज्ञातयो मे सन्ति परिजनास्तथा ।
इयं मुख्या मम पत्नी रुक्मिणी या रमा स्मृता ॥१३॥
भवान् मुनिप्रपूज्योऽस्ति समागच्छतु मे गृहम् ।
शिरसाऽऽधाय पादाम्बु ततो यामि पवित्रताम् ॥१४॥
दुर्वासाः प्राह भो कृष्ण सदाऽक्षमो भवाम्यहम् ।
क्षणे रुष्टो भवाम्येव किं मां नयसि केशव ॥१५॥
नय मां यदि मद्वाक्यं करोषि सहभार्यया ।
यदि मां नेतुकामोऽसि सभार्यस्त्वं रथं वह ॥१६॥
श्रुत्वा कृष्णः प्रसन्नोऽभूत् रुक्मिण्या सहितस्तदा ।
रथधुर्योऽभवच्छीघ्रं पावितोहमिति ब्रुवन् ॥१७॥
तदा च ऋषिवर्यः संयुज्य कृष्णं च रुक्मिणीम् ।
रथे स्थित्वाऽऽगृह्य रज्जुं याहि याहीत्यभाषत ॥१८॥
देवैश्च कुसुमैः कृष्ण पूज्यमानो जगाम ह ।
वाह्यमाने रथे ताभ्यां रुक्मिणी तृषिताभवत् ॥१९॥
प्राह कान्तं जलं देहि तृषा मां बाधतेऽधुना ।
तच्छ्रुत्वा पृथिवीं कृष्णस्तताड पादलत्तया ॥२०॥
भूमिर्भिन्ना ततो गंगा निर्गता शीतला तदा ।
सुगन्धसलिला श्वेता जलरूपा बभौ शुभा ॥२१॥
अपृष्ट्वा च मुनिं पयौ रुक्मिणी जाह्नवी जलम् ।
दृष्ट्वा ऋषिश्चुकोपाऽऽशु शशाप परमेश्वरीम् ॥२२॥
मामपृष्ट्वा पीतवती जलं तस्माच्च तत्फलम् ।
कृष्णवियोगरूपं त्वं प्राप्नुहीति ब्रुवन् रथात् ॥२३॥
समुत्तीर्याऽतिरक्ताक्षो भूमावेवाऽध्यतिष्ठत ।
श्रीकृष्णस्तं विनयेन तुष्टाव रमयायुतः ॥२४॥
ऋषिवर्य यथार्थं ते वाक्यं भवतु सर्वथा ।
रुक्मिणी मद्वियुक्ताऽस्तु वनेऽत्र जलरूपिणी ॥२५॥
गंगया सह नित्यं वै गंगारूपेण तिष्ठतु ।
यत्र जलं विनिर्भिद्य भूमिं प्रकटतां गतम् ॥२६॥
तज्जलं रुक्मिणी रूपं तीर्थं समस्तु शाश्वतम् ।
अत्रैव रुक्मिणीवासो मन्दिरेऽस्तु सदा वने ॥२७॥
मोक्षश्चापि तैर्थिकानां चास्तु रमाप्रसादनात् ।
दुर्वासाश्च तदा प्राह कृष्ण प्रातर्निशामुखे ॥२८॥
रुक्मिण्यास्तव योगोऽस्तु नित्यं करोम्यनुग्रहम् ।
इत्युक्त्वा प्रययौ तस्मात्स्थलान्मुनिस्तदाऽत्रिजः ॥२९॥
रुक्मिणी संस्थिता तत्रोद्यानप्रासादपुंगवे ।
जलरूपा द्वितीयेन रूपेणापि प्रतिष्ठिता ॥३०॥
तीर्थं तज्जलरूपं वै विष्णुपादोदकं स्मृतम् ।
मुख्यरूपेण महिषी सदा कृष्णस्य सेवने ॥३१॥
सदा तिष्ठतु प्रासादे इत्यप्यनुग्रहं व्यधात् ।
दुर्वासा वरदानं तद्दत्वा पूजामवाप्य च ॥३२॥
ययौ कैलासमेवाऽस्मात्स्थानात् कृष्णो गृहं ययौ ।
रुक्मिणी च त्रिरूपाऽभूत् कृष्णापादोदके जलम् ॥३३॥
तत्रोद्यानस्थसौधे सा मूर्तिरूपा द्वितीयका ।
तृतीया च महाराज्ञी श्रीकृष्णे नित्ययोगिनी ॥३४॥
इत्येवं रुक्मिणीतीर्थं कृष्णपादोदकं हि तत् ।
गंगारूपं समजनि स्नातुर्मोक्षप्रदं शुभम् ॥३५॥
श्राद्धकर्तुश्च पितॄणामक्षय्यपुण्यदं तथा ।
अक्षय्यतृप्तिदं चापि तथा गोलोकधामदम् ॥३६॥
दानं होमं जपं ध्यानं पूजां चार्चां करोति यः ।
तत्सर्वमक्षयपुण्यप्रदं भवति तत्स्थले ॥३७॥
यत्र साक्षाच्छ्रिया युक्तः कृष्णो वसति सर्वदा ।
तत्र किं वै भवेन्न्यूनं गोलोकात्तीर्थवासिनाम् ॥३८॥
तीर्थकृतोऽपि न न्यूनं गोलोकात्प्राप्यते फलम् ।
भोजनं विविधं दद्याद् दक्षिणां स्वर्णराजतीम् ॥३९॥
दीनान्धकृपणेभ्यश्च दानं देयं विधानतः ।
उपानहौ प्रदातव्ये जलकुंभः सवस्त्रकः ॥४०॥
दध्योदनं प्रदातव्यं धान्यानि विविधानि च ।
रक्तवस्त्रं तथा शाटी कंचुकी घर्घरी तथा ॥४१॥
रुक्मिण्यै संप्रदातव्या भूषाः श्रृंगारकाणि च ।
पूजयेद् विप्रयुगलं विष्णुर्मे प्रीयतामिति ॥४२॥
एवं तीर्थे कृते तत्र पितरस्त्रिकुलोद्भवाः ।
तृप्ता यान्ति हरेर्लोकं प्रसन्नः श्रीयुतो हरिः ॥४३॥
इह कामान् सदा भुक्त्वा भुक्त्वा स्वर्गादिवैभवान् ।
अन्ते यान्ति हरेर्धाम रुक्मिणीतीर्थपावनाः ॥४४॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने दुर्वासोरथवहनकर्मणि व्यापृतायाः रुक्मिण्यास्तृषानिवृत्त्यर्थे श्रीकृष्णचरणघातनिःसृतगंगाजलाख्यरुक्मिणीतीर्थ-रुक्मिणीत्रिस्वरूपता चेतिनिरूपणनामा त्रयोविंशत्यधिकद्विशततमोऽध्यायः ॥२२३॥

**श्रीनारायण उवाच—**

ततो गच्छेन्महादिव्यं गोपीतडागतीर्थकम् ।
यत्र कृष्णेन गोपीनां प्रथमं मेलनं ह्यभूत् ॥ १ ॥

श्रायणे तत्र दानेन स्नानेन जपनेन च ।
मुक्तिं वै मानवो याति श्राद्धेन भजनेन च ॥ २ ॥
श्रीकृष्णो द्वारिकासंस्थश्चोद्धवं भक्तपुंगवम् ।
गोकुलं प्रेषयामास गोपीनां सुहृदां तथा ॥ ३ ॥
गोपानां च प्रियं कर्तुं वक्तुं च कुशलं स्वकम् ।
आगतं चोद्धवं दृष्ट्वा सोत्कण्ठा गोकुलाग्रहाः ॥ ४ ॥
उद्धवं पूजयामासुर्वस्त्रालंकारभोजनैः ।
भुक्तवन्तं च विश्रान्तं यशोदा सुतवत्सला ॥ ५ ॥
पप्रच्छाऽनामयं नन्दः पप्रच्छ कुशलं हरेः ।
कश्चिदास्ते सुखं कृष्णो रामश्च सुखमेधते ॥ ६ ॥
कश्चित्स्मरति श्रीकृष्णश्चात्रत्यान् स्वप्रियान् जनान् ।
कच्चिदेष्यति श्रीकृष्णस्तारयिष्यति नोऽसुखात् ॥ ७ ॥
कच्चित् कृष्णकुटुम्बं च सुसुख्यास्ते तथोद्धव ।
इति पृष्ट्वा स्नेहबाष्पपूर्णाक्षौ संबभूवतुः ॥ ८ ॥
उद्धवस्तौ तथा ताँश्च गोकुलस्थान् जनाँस्तदा ।
मधुरैः कृष्णसन्देशैः स्नेहप्लुतैरजीजनत् ॥ ९ ॥
नमस्कुर्वन्ति पितृभ्यां कृष्णो रामो वधूजनः ।
अनामयं च पृच्छन्ति तिष्ठन्ति क्षेमतश्च ते ॥१०॥
समेष्यति द्रुतं कृष्णः सह रामेण गोकुलम् ।
विधास्यति सुखं सर्वं करिष्यति च वो हितम् ॥११॥
इति श्रीकृष्णसन्देशैः समाश्वास्योद्धवश्च तान् ।
सुखं सुष्वाप चैकान्ते श्रमनाशाय वै सः ॥१२॥
तावद् गोप्यो रथं दृष्ट्वा मुहुः सूर्यसमोज्ज्वलम् ।
कस्याऽयं कश्चागतोऽत्र विस्मिताश्चाययुस्तदा ॥१३॥
परस्परं समागत्य सर्वास्ता व्रजयोषितः ।
विविक्ते कृष्णसन्देशं प्रपच्छुः शोककर्षिताः ॥१४॥
कृष्णः कच्चित् सुखमास्ते कथं नात्र समागतः ।
अस्मत्प्राणान्परिगृह्य गतः कथं न चाऽऽगतः ॥१५॥
इति स्मृत्वा तदा गोप्यो रुरुदुः शोकमोहिताः ।
ईक्षमाणाः कृष्णदासं कृष्णस्नेहवशीकृताः ॥१६॥
आश्वासयामास ताश्चोद्धवो वाक्यैः सुखावहैः ।
कृष्णोऽपि च दिवारात्रं युष्मान्स्मृत्वा पुनः पुनः ॥१७॥
कन्दर्पपीडितो दुःखी भवते चिन्तयन् हि वः ।
तावद् गोप्योऽभवन् व्यग्राः प्राहुर्वाक्यानि नैकधा ॥१८॥
निर्दयोऽस्मान् परिगृह्य पश्चाच्च परित्यज्य सः ।
गतो पुनर्न चायाति पूतनाघ्नस्य का प्रिया ॥१९॥
गम्यते यत्र तत्रैव नूतना प्राप्यते प्रिया ।
नागरस्त्रीसंवृतस्य नास्त्यस्माभिः प्रयोजनम् ॥२०॥
किं कर्तव्यं क्व गन्तव्यं कथं मिलिष्यति प्रभुः ।
विलपन्त्य इति वाक्यैः स्मरन्त्यो रुरुदुर्हरिम् ॥२१॥
भक्तिमेकान्तिकीं तासां दृष्ट्वोवाच तदोद्धवः ।
सर्वासां सफलं जन्म जीवितं यौवनं धनम् ॥२२॥
यासां भवति श्रीकृष्णे भक्तिरव्यभिचारिणी ।
ताश्च प्राहुर्नयाऽस्माँस्त्वँ यत्रास्ते प्राणवल्लभः ॥२३॥
तासां भावं दृढं ज्ञात्वोद्धवश्च बाढमाह ताः ।
उद्धवेन समं सर्वा जग्मुः कृष्णेक्षणेच्छया ॥२४॥
गायन्त्यः कृष्णगीतानि ययुस्ता द्वारकां प्रति ।
अध्वश्रमो न वै स्पृष्टः कृष्णमानसयोगतः ॥२५॥
सम्प्राप्ता मयखनिततडागस्य तटे तु ताः ।
उद्धवः प्रणिपत्याह तिष्ठन्तु चात्र गोपिकाः ॥२६॥
निवेदयितुं गच्छामि कृष्णो हितं विधास्यति ।
उक्त्वैवं च ययौ कृष्णं प्रत्युद्धवो जगाद च ॥२७॥
सरस्तटे स्थिता गोप्यो यथेच्छसि तथा कुरु ।
कृष्णः शीघ्रं तडागं वै नरयानेन संययौ ॥२८॥
आयान्तं प्राणरूपं तं भ्राजमानं विभूषितम् ।
ज्वलत्किरीटमुकुटहारमकरकुण्डलम् ॥२९॥
श्रीवत्सांकं महाबाहुं पीताम्बरसुवासम् ।
सातपत्रसुचामरस्वर्णयष्टिसुनक्तकम् ॥३०॥
दृष्ट्वा कान्तं च ताः परिषस्वजिरे समन्ततः ।
हस्ते पृष्ठे स्तने गण्डे कण्ठे मूर्ध्नि कपोलके ॥३१॥
मुखे नेत्रे चिबुकेंऽसे उरस्युरौ च पार्श्वयोः ।
कट्यां सक्थ्नि पदे चाग्रे वस्त्रे धौत्रे तथोदरे ॥३२॥
स्पृष्ट्वाऽऽश्लिष्य मुहुः कृष्णं चुचुम्बुः प्रेमविह्वलाः ।
प्रियं प्रियाश्चिरं दृष्ट्वा मुमुहुः रुरुदुर्भृशम् ॥३३॥
हा नाथ कान्त हा स्वामिन् हा व्रजेश मनोहर ।
सर्वास्त्वया परित्यक्ताः कथं रुष्टोऽसि शुष्कहृत् ॥३४॥
पितृमातृपरित्यागिन् भक्तत्यागिन् जनार्दन ।
परित्यक्ता वयं कृष्ण पुनर्नाऽवेक्षितास्त्वया ॥३५॥
कथं सह्यो विरहस्ते कथं नेष्याम आर्तिहन् ।
दिवसान्नाथविधुरान् यथेच्छसि तथा कुरु ॥३६॥
भावज्ञो भगवाँस्तासां श्रुत्वा ता अन्वशिक्षत ।
भवतीनां वियोगो मे कदाचिदपि नास्ति वै ॥३७॥
अहं सर्वान्तरात्माऽस्मि भवतीनां विशेषतः ।
पतिरूपेण मे योगो वितथ भवति सर्वदा ॥३८॥
कामः सुखं सदानन्दो मत्तः सर्वं प्रवर्तते ।
एतज्ज्ञात्वा महासाध्व्यो मा कुरुध्वं वृथा शुचम् ॥३९॥

इति कृष्णवचः श्रुत्वा समाश्लिष्य मुहुर्मुहुः ।
दीर्घविरहजं तापं तत्यजुश्चातिनिर्वृताः ॥४०॥
अद्य नः सफलं जन्म त्वद्य नः सफला दृशः ।
पश्यामस्त्वां हरे कृष्ण प्राहुश्चेति च ता मुहुः ॥४१॥
कृष्णः प्राह च ताः सर्वास्तडागं चात्र कारये ।
गोपीतडागनाम्ना वै प्रसिद्धिं यास्यति ध्रुवम् ॥४२॥
यत्र मद्दर्शनं जातं पूर्णकामाः कृता मया ।
मया सहैव स्नानं च कुर्वन्त्वद्य हि गोपिकाः ॥४३॥
इति कृत्वा हरिः स्नातो गोपिकाभिः समं तदा ।
भोजिता गोपिकास्तत्र मिष्टान्नैः पिण्डकादिभिः ॥४४॥
विहृत्यैवं जले कृष्णो नित्यं चायाति मन्दिरम् ।
सर्वाश्च स्म सुखयति कामेन सुखदो हरिः ॥४५॥
श्रावणस्य सिते पक्षे स्नात्वा सरसि वै पितॄन् ।
तर्पयिष्यति द्वादश्यां तेषां तृप्तिस्तु शाश्वती ॥४६॥
दानं दद्यात्तथा पितॄनुद्दिश्य मां विचिन्त्य यः ।
लभते वैष्णवं लोकं पितृभिः सह शाश्वतम् ॥४७॥
अर्घं देयं तथा कार्यं श्राद्धं देया च दक्षिणा ।
पायसान्नं घृतं भोजनीयं सशर्करं शुभम् ॥४८॥
वस्त्रं छत्रं कम्बलं च शाटी कंचुकी घर्घरी ।
दाने देयास्तडागेऽत्र स्मृत्वा मां भवतीस्तथा ॥४९॥
पुत्रपौत्रसमायुक्ता धनधान्यसमन्विताः ।
भुक्त्वा भोगान्बहूनन्त्राऽन्ते प्राप्स्यन्त्यक्षरं पदम् ॥५०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने उद्धवेन सह गोकुलगोपीनां कृष्णेन सह गोपीतडाके समागमेन तीर्थमाहात्म्यकथन-नामा चतुर्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२४ ॥

**श्रीनारायण उवाच—**

सन्निधौ मयसरसः सरस्त्वन्यच्चकार सः ।
तच्च गोपीसरःख्यातं महत्तीर्थं हि पद्मजे ॥ १ ॥
सेवितं यदुनारीभिस्तथा यदुकुमारकैः ।
कारणाद् गोपिकानां च कृष्णेन कारितं शुभम् ॥ २ ॥
गोवचःवाचको शब्दो भवतीभिर्मया सह ।
गोप्रचारेति वै नाम गोपीसरइतिप्रथम् ॥ ३ ॥
गोपीतडागइत्येवं ख्यातं लोके भविष्यति ।
अर्घं दत्वा विधानेन स्नानं कुर्याद् विचक्षणः ॥ ४ ॥
गां प्रदद्यात् सवत्सां च वस्त्रालंकारभूषिताम् ।
यथोक्तदक्षिणोपेतां ब्राह्मणाय कुटुम्बिने ॥ ५ ॥
पृथ्वीदानफलं चात्र गोदानेन हि लभ्यते ।
स्नानमात्रेण गोदानफलं वै लभते जनः ॥ ६ ॥
यावत्पदानि मनुजो गच्छति गोपिकासरः ।
कुलानि दिवि तावन्ति मोदन्ते हरिमन्दिरम् ॥ ७ ॥
कृष्णकीर्तनकर्तारो ये गच्छन्ति सरोवरम् ।
न मातुर्जठरे तेषां पुनर्वासो भवेदिह ॥ ८ ॥
गोपीसरस्तीरतीर्थं यः करोति जनः स तु ।
सर्वान्कामानवाप्नोति वैष्णवं लोकमाप्नुयात् ॥ ९ ॥
श्राद्धं कुर्यात्तथा पितॄन् तर्पयेद्वै विशेषतः ।
ताम्बूलं कज्जलं स्वर्णं दाने दद्याच्च वस्त्रकम् ॥१०॥
दम्पत्योर्वाससी दद्याद् भूषणानि धनानि च ।
कन्याभ्यो भोजनं दद्याद् वस्त्रभूषाधनादिकम् ॥११॥
गोप्यस्तेन प्रसन्नाः स्यु सौभाग्यसमृद्धिदाः सदा ।
गावो देयाश्च वृषभा गजाश्वाश्वाश्च कन्यकाः ॥१२॥
यद्यत् कामयते लोकस्तत्तद् दद्यान्मिलेत्पुनः ।
यावल्लोका भविष्यन्ति तावत् स्थास्यति वै सरः ॥१३॥
गोप्यश्च पतिभावेन ब्रह्मभावेन वा पुनः ।
चिन्तयानाः परं कृष्णं वसाना द्वारिकापुरे ॥१४॥
सेवयमाना नित्यं ताः कृतार्था ह्यभवंस्ततः ।
कृष्णाज्ञया नमस्कृत्य कृष्णं संसेव्य तृप्तितः ॥१५॥
उद्धवेन सह याता गोकुलं स्वगृहं शुभम् ।
कृष्णेन गोपिकानां तत्तीर्थं श्रेष्ठं भुवि कृतम् ॥१६॥
गोपीसरोरजो दिव्यं दिव्या धूली च पिंगला ।
दिव्यं जलं तथा दिव्या वृक्षवल्लयस्तटस्थिताः ॥१७॥
दिव्या वसतयस्तस्य पशुपक्ष्यादिचेतनाः ।
दिव्या गोलोकधाम्नस्ते ह्यधिकारिण एव वै ॥१८॥
गोपीचन्दनलिप्तांगो गोपीधूल्यूर्ध्वपुण्ड्रकः ।
गोपीमृत्कणिकाऽऽस्यश्च मुक्तो भवति मानवः ॥१९॥
गोपीचन्दनबिन्दुयुक्ललाटं यस्य दृश्यते ।
दृष्ट्वा तं यमदूताश्च दूरं यान्ति हि पद्मजे ॥२०॥
गोपीचन्दनतिलकं वैष्णवं देवताः सदा ।
पश्यन्ति नित्यदा प्रातर्लयं पापानि यान्ति च ॥२१॥
गोपीचन्दनबिन्दुर्वै कण्ठे वाथ ललाटके ।
भुजयोर्वा कृतो येन मुक्तिस्तस्य न संशयः ॥२२॥
गोपीधूलीकृतचन्द्रा नारी या सधवाऽथवा ।
विधवा वाथ कन्या च कुमारी विधुराऽथवा ॥२३॥

गणिका किंकरी दासी शरणाऽऽप्ता च साश्रिता ।
निराश्रिताऽथवा व्यग्रा विचित्ता बहुगामिनी ॥२४॥
स्मृद्धा रंका च विदुषी मूर्खा च कूटिनी तथा ।
यादृशी तादृशी चौरा कामुकी वासनावती ॥२५॥
सद्यः शुद्ध्यति पापेभ्यो युज्यते पुण्यकोटिभिः ।
दिव्या भवति गोपीवत् व्रजेत् कृष्णांकयोग्यताम् ॥२६॥
स्वर्गे भोगानक्षयाँश्च भुक्त्वा कोटियुगानि सा ।
देवैश्च वन्दिता यायादन्ते गोलोकधाम सा ॥२७॥
तत्र राधासमा गोपी भूत्वा कृष्णेन मोदते ।
गोपीसरोवरे यच्च कीटपतंगमक्षिकम् ॥२८॥
पशुपक्षिसरीसृपपिपीलिकामृगादिकम् ।
मृतिं यास्यति तत्सर्वं गोलोकं यास्यति ध्रुवम् ॥२९॥
कृष्णमृत्तिकया स्नातो गोपीमृत्तिकयाऽऽप्लुतः ।
प्रेमसरोवरे मग्नो गोलोकाधिकृतोऽस्ति सः ॥३०॥
न यज्ञैर्न च दानैर्न जपैः स्वाध्यायतापनैः ।
प्राप्यते तादृशं स्थानं गोपीधूल्याप्यते यथा ॥३१॥
गोमती गोपिकातालो गोपालकृष्ण एव च ।
गोपीधूली गवां दानं गकाराः पञ्च मोक्षदाः ॥३२॥
गकराः पञ्च यैः प्राप्ताः प्राप्तं सर्वं च तेन वै ।
प्राप्तः कृष्णो हरिर्येन किं तस्याऽत्राऽवशिष्यते ॥३३॥
मरणे यस्य कस्यापि मुखे च कणिका पतेत् ।
गोपीधूल्यास्ततः सोपि मुक्तिं याति न संशयः ॥३४॥
गोमत्याः गोपिकातालस्याग्रे वा सन्निधौ मृतेः ।
गोलोकं धाम तस्यार्थे निश्चितं विष्णुपार्षदैः ॥३५॥
आकाशमार्गतो याता पक्षिणोऽपि दिवं गताः ।
भवन्ति गोपिकातालोपरितः किमुताऽऽप्लवे ॥३६॥
हरये न च नैवेद्यं धृतं वा जलमित्यपि ।
गोपीचन्दनमिश्रं चेत् प्रसादस्तद्भवेत्खलु ॥३७॥
देशकालादिवैषम्ये हरेः प्रासादिकं यदि ।
मिलेन्नैव तदा भोज्ये पेये वा कणिकां क्षिपेत् ॥३८॥
ततो भुञ्ज्याच्च वै पेयात् प्रसादस्तद्धि जायते ।
नाऽनिवेदितभोज्यस्य प्रत्यवायो भवेत् खलु ॥३९॥
भूतप्रेतपिशाचानामावेशदुःखवान् जनः ।
कण्ठे वै धारयेद् गोपीचन्दनगूटिकां शुभाम् ॥४०॥
भक्षयेद् गोपिकासरोरजः स्नायाच्च तज्जले ।
चन्द्रकं भालमध्ये च कुर्यान्नित्यं समाहितः ॥४१॥
एवंकृते पिशाचाद्यावेशो नश्यति वै ध्रुवम् ।
स्वस्थो भवति पुण्यात्मा पूतो भवति सर्वथा ॥४२॥
दरिद्रस्यापि भाग्यं वै वर्धते स्मृद्धिसम्प्रदम् ।
रोगनाशो भवेत् दुःखनाशश्चापि भवेत्तथा ॥४३॥
कृष्णस्य दिव्यमूर्तेश्च सम्बन्धाद्दिव्यतां गताः ।
मृत्तिकाश्च तथा ह्याप्ता निर्गुणा मुक्तिदा मताः ॥४४॥
कृष्णयोगात् कृष्णरूपा गावो गोमतीगोपिकाः ।
स्वप्रसंगाऽऽगतान् जन्तून्नयन्ति निर्गुणात्मताम् ॥४५॥
कृष्णसम्बन्धसम्बद्धा निर्गुणा जडचेतनाः ।
मोक्षयन्ति तथा चान्यान् कृष्णवत् कृष्णमानसाः ॥४६॥
कामो लोभस्तथा क्रोधो मानो मोहश्च मत्सरः ।
दोषत्वं स्वं परिहाय गुणत्वं यान्ति कृष्णके ॥४७॥
नार्यो नराश्च पशवोऽसुराः शस्त्राणि वाहनम् ।
वस्त्रं भोज्यं तथा पेयं सर्वं निर्गुणतां व्रजेत् ॥४८॥
मायापि निर्गुणा दिव्या यत्सम्बन्धाद् भवत्यपि ।
किम्वन्यत् तत्र वक्तव्यं निर्गुणकृष्णसंगतम् ॥४९॥
धन्यं वै गोपजातीयं धन्यं गोजातिकं तथा ।
धन्यं गोलोकजातीयं यत्कृष्णानन्दसंभृतम् ॥५०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने गोपीचन्दनमहिमकथननामा पंचविंशत्यधिकद्विशततमोऽध्यायः ॥ २२५ ॥

**श्रीनारायण उवाच—**

ततो गच्छेद् ब्रह्मकुण्डं तीर्थं पापप्रणाशनम् ।
कृष्णस्य दर्शनार्थं वै दैवतैः परिवारितः ॥ १ ॥
ब्रह्माऽऽजगाम च पुर्यां द्वारवत्यां समुत्सवे ।
पाशीन्द्रयमवित्तेशाः सूर्याचन्द्रमसौ तथा ॥ २ ॥
अन्ये च दिक्प्रपालाद्या दर्शनार्थं समागताः ।
तदा च ब्रह्मणा यत्र समाजः परिकल्पितः ॥ ३ ॥
तत्स्थलं वै महत्तीर्थं ब्रह्मकुण्डं च तत्तटे ।
ब्रह्मणा स्थापितः सूर्यः सर्वदा यश्च तिष्ठति ॥ ४ ॥
सूर्यतीर्थं च तत्प्रोक्तं सर्वपापविनाशकम् ।
ब्रह्मतीर्थं सूर्यतीर्थं दृष्ट्वा चक्रे सरः शशी ॥ ५ ॥
तडागं चन्द्रनाम्ना तत्प्रसिद्धं समजायत ।
सूर्यस्थानं मूलस्थानं श्राद्धपुण्यसहस्रदम् ॥ ६ ॥
पितृतृप्तिकरं रम्यं कोटिपातकसंहरम् ।
माघे शुक्ले तु सप्तम्यां स्नात्वा लिप्त्वा स्थलं रवेः ॥ ७ ॥
पूजयिष्यति सूर्यं यो पुष्पधूपनिवेदनैः ।
जलपत्रफलद्रव्यदक्षिणाभिश्च मानवः ॥ ८ ॥

सर्वान् कामानत्र भुक्त्वा ब्रह्मलोकं गमिष्यति।
ततश्च ब्रह्मणा सूर्यमन्दिरस्य च सन्निधौ ॥ ९॥
सावित्र्या मन्दिरं कारयित्वा सूर्यरथे च ताम्।
स्थापयित्वाऽऽयतने तां सावित्रीं नामतः स्वयम् ॥१०॥
पद्मजः पूजयामास मूर्तौ देव्या विधानतः।
चन्द्रसरस्तथा सावित्र्याश्च सन्मन्दिरं स्थलम् ॥११॥
तीर्थोत्तमं कृतं तेन वेधसा परमेष्ठिना।
ब्रह्मा स्वयं तथा स्वस्य मूर्तौ निवासमाचरत् ॥१२॥
प्रतिष्ठाविधिना स्वस्य प्रतिष्ठामकरोदजः।
ब्रह्मतीर्थे च तज्जातं व्याध्याधिबलनाशकम् ॥१३॥
ब्रह्माणं चापि सावित्रीं सूर्यं चन्द्रमसं तथा।
पूजयिष्यन्ति ये दृष्ट्वा ते यास्यन्ति परां गतिम् ॥१४॥
ततश्च ब्रह्मणा तत्र गायत्री स्थापिता शुभा।
स्वेनैव च प्रतिष्ठाया विधिस्तत्र कृतः शुभः ॥१५॥
गायत्रीतीर्थमित्येतत् ब्रह्मलोकप्रदं परम्।
ताँश्च देवाँस्तथा देवीः पुष्पार्घजलकुंकुमैः ॥१६॥
स्नापयेत्पूजयेद् भक्त्या वस्त्रनैवेद्यभोजनैः।
भूषणैश्च तथा पात्रैः कर्पूरैलादिभिस्तथा ॥१७॥
ताम्बूलैः केसरैश्चैव पूजयेद् बहुभावतः।
ध्यायेद्वन्देत च नमः कुर्याद् दण्डवदुत्सुकः ॥१८॥
दीपेन यज्ञसूत्रेण तुलस्या करवीरकैः।
अन्यैः पुष्पैः सुगन्धैश्चारार्त्रिकैः स्तुतिभिस्तथा ॥१९॥
प्रदक्षिणैश्चतान् देवान् विष्णुना सह पूजयेत्।
कृष्णं च पूजयेत्तत्र शालग्रामं च पूजयेत् ॥२०॥
शंकरं पार्वतीयुक्तं सगणं पूजयेत् ततः।
सम्पूज्य स्नापयेत् सावित्रीं च यात्राफलं भवेत् ॥२१॥
न वैधव्यं न दौर्भाग्यं न वन्ध्यात्वं भवेत् ततः।
न वै मृतप्रजात्वं स्यान्नाऽप्रजात्वं कथंचन ॥२२॥
धनधान्यधरासमृद्धिः पुत्रपौत्रादिसिद्धयः।
भवन्ति रविप्रभृतिपूजकस्य दिने दिने ॥२३॥
परितुष्टो भवेत् कृष्णो यात्रा च सफला भवेत्।
ततस्तत्र रुक्मिणीसहितं कृष्णं समर्चयेत् ॥२४॥
ब्रह्मणा च ततस्तत्र ब्रह्मलिंगसरः कृतम्।
इन्द्रश्चक्रे तथा तत्र सरः परमशोभनम् ॥२५॥
ब्रह्माणं स्थापयामास महेन्द्रं च शचीयुतम्।
तत्र चेन्द्रपदे स्नात्वा स्वर्गं सत्यं च विदन्ति ॥२६॥
ब्रह्मेश्वरं तथा चेन्द्रेश्वरं वृद्धीश्वरं तथा।
स्नापयित्वा पूजयित्वा दृष्ट्वा च मुच्यते जनैः ॥२७॥

अष्टम्यां च चतुर्दश्यां कृतमक्षयपुण्यदम्।
पितॄणां शाश्वती तृप्तिर्जायते तत्र श्राद्धतः ॥२८॥
विशेषतस्तु सम्पूज्या मकरस्थे दिवाकरे।
उत्तरायणसंक्रान्तिशिवरात्र्यादिषु प्रगे ॥२९॥
स्नात्वा तत्तत्सरःस्वेव तत्तत्तीर्थानि सञ्चरेत्।
पूजयित्वा च तद्देवान् मुक्तिभाङ् नात्र संशयः ॥३०॥
शंकरश्च तथा सत्या सहितश्चाकरोत्सरः।
तत्रापि च जले स्नात्वा पूजयेत् शंकरं सतीम् ॥३१॥
ब्रह्मणा विष्णुना सार्धं स्नातस्तत्र पिनाकधृक्।
महादेवसरोनामाऽभवत् तज्जगतीतले ॥३२॥
पितॄणां तर्पणं श्राद्धं तत्राऽक्षयसुखप्रदम्।
दर्शनात्पापनिर्मुक्तिर्महादेवसरोवरे ॥३३॥
स्नानं दानं जपो होमः स्वाध्यायः सुरपूजनम्।
सर्वं तदक्षयफलप्रदं भवत्यनुष्ठितुः ॥३४॥
न दौर्भाग्यं नरस्यास्ति नाऽप्रजात्वं स्त्रियस्तथा।
स्नात्वा गौरीसरस्यत्र सर्वान्कामानवाप्नुयात् ॥३५॥
वरुणोऽपि च तान्येव दृष्ट्वा सर्वस्थलानि वै।
स्वनाम्ना च सरो दिव्यं कारयामास तत्र च ॥३६॥
तत्तीरे वारुणीं देवीं जलदेवीं तथा स्वकाम्।
मूर्तिं च स्थापयामास पूजयामास चादरात् ॥३७॥
भाद्रस्य पूर्णिमायां तु कृत्वा वरुणदर्शनम्।
श्राद्धं कुर्यात्तर्पणं च कुर्यात्तत्राऽक्षयं फलम् ॥३८॥
प्रदद्यादुदकुंभांश्च दध्योदनसुभोजनम्।
गाश्च वासांसि रत्नानि पक्वान्नानि रसाँस्तथा ॥३९॥
विष्णुर्मे प्रीयतामुक्त्वा दद्याच्छत्रादिकं तथा।
साधवे ब्रह्मदेवाय साध्व्यै वा चाक्षयं फलम् ॥४०॥
दातुर्ब्रह्मगतिश्चास्ति यत्र गत्वा न शोचति।
वारुणं च सरो दृष्ट्वा कुबेरश्चाऽकरोत्सरः ॥४१॥
कुबेरसर इत्येवं नाम्ना ख्यातो ततोऽभवत्।
कुबेरदर्शनं स्नात्वा तीरे कृत्वा च भोजयेत् ॥४२॥
विप्रान् साधूँस्तथा साध्वीर्दक्षिणां चापि दापयेत्।
सुवर्णदानं दद्याच्च धनेशस्तुष्यति द्रुतम् ॥४३॥
लक्ष्मीवृद्धिं करोत्येषः सहस्रगुणितं फलेत्।
रजतं च सुवर्णं च ताम्रं वा पित्तलं त्रपु ॥४४॥
हीरकं वाथ रत्नं वा मणिं वा चाम्बरादिकम्।
धनं धान्यं तथा गाश्च महिषीश्चापि कन्यकाः ॥४५॥
वस्त्रं खट्वां गेन्दुकादि कलशं पात्रमित्यपि।
पुष्पं फलं च मिष्टान्नं तैलं सुगन्धमेव वा ॥४६॥

कर्पूरं चापि शृंगारद्रव्यं च चन्दनादिकम् ।
उपानहौ तथा छत्रं चामरं वाहनं तथा ॥४७॥
यानं नारीं सुतं भृत्यं पशुं स्वं शकटं तथा ।
पेटिकां भूषणं चान्यद् भक्ष्यं पेयं च भोजनम् ॥४८॥
यद्यद् दद्यान्मार्जनीं वा कण्डनीं पेषणीं तथा ।
चुल्लीं गर्गरिकां स्थालीं सर्वं सहस्रदं भवेत् ॥४९॥
कृष्णं स्मृत्वा कुबेरं च सूर्यं शिवं विचिन्त्य च ।
रुक्मिण्यादिमहादेवीः स्मृत्वा दद्यादनन्तदम् ॥५०॥
महापुण्यं महास्वर्गं तथा चान्ते हरेः पदम् ।
प्राप्नोत्येव च कुबेरतीर्थकृन्मानवोऽव्ययम् ॥५१॥
ततः पञ्चनदं तीर्थं गच्छेद्वै पावनं परम् ।
गोमतीं च तथा लक्ष्मीगंगां द्वारावतीं तथा ॥५२॥
गोपीतालं तथा चान्यसरांसि प्रविलोक्य च ।
प्रजानां पतयस्तीर्थं चक्रुः पञ्चनदात्मकम् ॥५३॥
पञ्चनद्यः समाहूतास्तत्राऽऽजग्मुस्त्वरान्विताः ।
मरीचिर्गोमतीमत्रिर्लक्ष्मणामाजुहाव वै ॥५४॥
अङ्गिराश्चन्द्रभागां च पुलहश्च कुशावतीम् ।
क्रतुर्जाम्बवतीं तत्र नदीं समाजुहाव च ॥५५॥
तासु स्नाता ब्रह्मपुत्राः स्नाताश्च सर्वदेवताः ।
पञ्चनदीसमाख्यातं तीर्थं तन्मोक्षदं परम् ॥५६॥
स्नातव्यं तत्र विधिवत् दातव्यमर्घमित्यपि ।
गृह्णन्त्वर्घमिमं नद्यो भवन्तु स्वर्गमोक्षदाः ॥५७॥
स्नानं कुर्याज्जलं पेयात् पितॄन् सन्तर्पयेत्तथा ।
पञ्चरत्नानि धान्यानि सप्त दद्याद् द्विजातये ॥५८॥
दीनान्धकृपणेभ्यश्च दद्याद्वस्तु स्वपेक्षितम् ।
सर्वान् कामानवाप्नोति विष्णुलोकं च गच्छति ॥५९॥
पुत्रपौत्रसमायुक्तः परं सौख्यमवाप्नुयात् ।
प्रेताश्च पितरः सर्वे मुक्तिं यास्यन्ति तत्स्थले ॥६०॥
ततो गच्छेन्महत्तीर्थं सिद्धेश्वरमिति ध्रुवम् ।
सनकाद्यैश्चतुःसिद्धैः स्थापितं लिंगमेव तत् ॥६१॥
समीपे च तथा कूपो मिष्टोद्रः खनितश्च तैः ।
ऋषितीर्थमिति ख्यातं जलपानाद् विमुच्यते ॥६२॥
भक्तितः स्नानमात्रेण ब्रह्मलोकमवाप्यते ।
असन्तो निन्दकाश्चाथ वंचकाश्च शठा जनाः ॥६३॥
स्नानमात्रेण शुद्धयन्ति ऋषितीर्थे न संशयः ।
विषुवे च मनूनां च तिथिषु युगरंभणे ॥६४॥
माघकृष्णे शिवरात्र्यां सिद्धेशं यः प्रपूजयेत् ।
ऋषितीर्थे वसन् जपन् परंब्रह्म सनातनम् ॥६५॥
स्नात्वा देवं पूजयित्वा नमन् कुर्याच्च तर्पणम् ।
श्राद्धं कुर्यात्तथा दद्याद् दानानि विविधानि च ॥६६॥
तस्य हस्तगता मुक्तिर्भवत्येव न संशयः ।
दातव्यानि रसवन्ति फलान्यत्र विशेषतः ॥६७॥
देयौ श्यामाकनीवारौ विद्रुमश्च तिला अपि ।
शालयः सप्तधान्यानि सक्तवः शर्करायुताः ॥६८॥
घृतं माल्यानि ताम्बूलं गन्धो वस्त्राणि गोपयः ।
देयान्येवं दीनरंकविप्रसाधुभ्य एव च ॥६९॥
सिद्धेश्वरं च दुग्धेन स्नापयेत् मोक्षभाग्भवेत् ।
सिद्धेश्वरमहादेवदर्शने सति मानवाः ॥७०॥
अपुत्राः पुत्रिणः पौत्रिणश्च भवन्ति सर्वथा ।
निर्धना धनवन्तश्च भवेयुः सुखवेदिनः ॥७१॥
कन्यकाः सत्पतिं प्राप्नुयुश्च सौभाग्यसम्पदः ।
दुष्कृतं विलयं याति सुकृतं चापि वर्धते ॥७२॥
ततो गच्छेन्महालक्ष्मि ! गदातीर्थमनुत्तमम् ।
यत्र स्नानेन मनुजश्चाग्निष्टोमफलं लभेत् ॥७३॥
तत्र वाराहरूपं वै भगवन्तं प्रणम्य च ।
नत्वा स्तुत्वा पूजयित्वा विष्णुलोके महीयते ॥७४॥
तत्राद्ये युगसंयोगे वाराहो भगवान् स्वयम् ।
समागत्य विशश्राम गदां निहितवान् क्षणम् ॥७५॥
ततो गच्छेन्नागतीर्थं कृष्णस्य दर्शनेच्छया ।
नागाः पातालतो याता द्वारकायां क्षणं स्थिताः ॥७६॥
यत्र स्नात्वा परंब्रह्म प्राप्नुयान्नात्र संशयः ।
ततो गच्छेन्महत्तीर्थं चन्द्रभागाभिधं परम् ॥७७॥
तत्र स्नात्वा नरो भक्त्या वाजपेयफलं व्रजेत् ।
चन्द्रभागा शक्तिहस्ता खड्गखेटकधारिणी ॥७८॥
कंसादिदैत्यभयदा स्वसा या रामकृष्णयोः ।
यस्या दर्शनमात्रेण सर्वान् कामानवाप्नुयात् ॥७९॥
ततो गच्छेन्मुक्तिद्वारनामकं तीर्थमित्यपि ।
वशिष्ठेन समानीता गोमती यत्र संस्थिता ॥८०॥
तज्जलं मस्तके धृत्वा स्वर्गलोकमवाप्नुयात् ।
ततो गच्छेच्च कालिन्दीसरस्तीर्थमनुत्तमम् ॥८१॥
सूर्यपुत्री यमी चात्राऽऽगत्य तिष्ठति सर्वथा ।
कृष्णसेवापरा नित्या स्नानान्मुक्तिमवाप्नुयात् ॥८२॥
साम्बतीर्थं ततो गच्छेत्तीर्थं परमपावनम् ।
अम्बया सहितः शंभुः कृष्णपुत्रोऽभवत्पुरा ॥८३॥
तस्य स्थलं महत्तीर्थं साम्बतीर्थं सुमुक्तिदम् ।
तत्र स्नात्वा जनो भक्त्याऽऽप्नुयाद् रूपं सुवर्णकम् ॥८४॥

लक्ष्मीनदीं ततो गच्छेन्नायणसमाश्रिताम् ।
लक्ष्मीस्तत्र जलरूपा ह्यवसत् कृष्णलालसा ॥८५॥
यस्याः स्पर्शनमात्रेण मुच्यते सर्वपातकैः ।
कम्बुसरस्ततो गच्छेन्निर्मलं जलमापिबेत् ॥८६॥
नारायणेन शंखस्य जलं यत्रास्ति वै धृतम् ।
तत्र तद्वै सरोरूपं जातं शंखश्च संस्थितः ॥८७॥
शंखतीर्थं च तत्प्रोक्तं स्नात्वा मुक्तिमवाप्नुयात् ।
जालेश्वरं ततस्तीर्थे गच्छेद्वै लोकपावनम् ॥८८॥
कण्वर्षिणा पुरा यदोः शप्ताश्चात्र कुमारकाः ।
विनाशाय यदोः कुलस्यैवेति शापजालतः ॥८९॥
जालेश्वरो महादेवः स्थापितस्तत्र बालकैः ।
शान्त्यर्थं तस्य शापस्य तत्तीर्थे सुखदं परम् ॥९०॥
सम्पूजयित्वा जालेशं शिवलोकमवाप्नुयात् ।
ततो गच्छेज्जरत्कारुतीर्थं परमपावनम् ॥९१॥
यत्र वै नागकन्यैका जरत्कार्वीति वर्तते ।
विवाहिता जरत्कारुऋषिणा पितृतारणे ॥९२॥
पुत्रलाभेन पितर उद्धृतास्तेन सर्वथा ।
तच्च तीर्थं पितृणां वै तारकं स्नानदानतः ॥९३॥
आनकदुन्दुभितीर्थं ह्यक्रूरतीर्थमित्यपि ।
बलतीर्थमुग्रसेनतीर्थं चार्जुनतीर्थकम् ॥९४॥
देवकीतीर्थमेवाद्यं रोहिणीतीर्थमित्यपि ।
सुभद्रातीर्थमेवापि कर्दमतीर्थमित्यपि ॥९५॥
कृष्णपार्षदतीर्थानि पत्नीतीर्थानि चैव ह ।
भक्ततीर्थानि चाप्यत्र चमत्कारकृतानि च ॥९६॥
प्रसिद्धानि च लुप्तानि तीर्थानि सन्ति कोटिशः ।
साक्षाद्यत्र तु गोलोकं वर्तते तत्र किं नहि ॥९७॥
सर्वतीर्थानि सन्त्येव पदे पदे न संशयः ।
प्लावितानि च सामुद्रजलेन पांशुना मुहुः ॥९८॥
रजोपि मोक्षदं यस्य पवनः पापनाशनः ।
जलं दिव्यतनुदातृ कृष्णयोगान्न संशयः ॥९९॥
मोक्षद्वारं स्वर्गद्वारं सुखद्वारं च द्वारिका ।
लक्ष्मि ! तद्वै सदा सेव्यं तीर्थं तु द्वारिकाह्वयम् ॥१००॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने द्वारकायां ब्रह्मकुण्डसूर्यवरुणकुबेरप्रभृतिदेवसरोवरादिपञ्चनद्यादिषड्त्रिंशत्तीर्थप्रदर्शननामा षड्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२६ ॥

श्रीनारायण उवाच—

शृणु लक्ष्मि ! द्वारपालान् प्रतिदिक्षु वसन्ति ये ।
द्वारकां परितः स्थित्वा रक्षन्ति कृष्णदेशतः ॥ १ ॥
पूर्वे जयन्त इन्द्रस्य पुत्रस्तिष्ठति सर्वदा ।
तस्य शिष्या दनुजाश्च तिष्ठन्त्याज्ञावहास्तथा ॥ २ ॥
वज्रनाभः सुनाभश्च वज्रबाहुर्महाहनुः ।
वज्रदंष्ट्रो वज्रधारी वज्रहा वज्रलोचनः ॥ ३ ॥
श्वेतमूर्धा श्वेतमाली नरनाथो विनायकः ।
सूर्यश्च मातरः सप्त शंभुश्चापि च तक्षकः ॥ ४ ॥
कार्तिकेयो राजसश्च दीर्घरोमाख्यदानवः ।
विश्वावसुश्च गन्धर्वो मेनका चाप्सरास्तथा ॥ ५ ॥
सनत्कुमारो वशिष्ठो न्यग्रोधश्च महावटः ।
अथाग्निदिशि तिष्ठन्ति ज्वालामुखोऽरुणाक्षकः ॥ ६ ॥
कुशः श्मशाननिलयो मांसाशी रुधिराशनः ।
कृष्णः कृष्णजटाधारी त्रासनो भञ्जनस्तथा ॥ ७ ॥
अग्निस्थाली चाप्सरा च गन्धर्वोऽमावसुस्तथा ।
अथ दक्षिणकाष्ठायां दण्डपाणिर्महास्वरः ।
पाशहस्तस्त्रिनेत्रश्चातिंवर्तो मारणस्तथा ॥ ८ ॥
दुन्दुभिस्वरकः खरस्वरो घर्घरवस्तथा ।
मौनप्रियो मल्लिकश्च दुर्दर्शश्च विनायकः ॥ ९ ॥
महिषीकश्च सूर्यश्च भूषणश्चतुरस्तथा ।
चित्रांगदः सुगन्धश्चाप्सरोर्वश्यभिधानिका ॥१०॥
गोरजो दानवश्चैव शालो महाद्रुमस्तथा ।
सनातनर्षिरगस्त्यो दक्षिणद्वाररक्षकाः ॥११॥
अथ नैर्ऋतकाष्ठायां गोमुखो मुण्डनस्तथा ।
नग्नश्च कम्बली चैव रोदनो हसनश्च वै ॥१२॥
लम्बग्रीवो भ्रूविकारो द्विजंभकश्च सूर्यकः ।
मुशली मेनका चापि रक्षन्ति नैर्ऋतीं दिशाम् ॥१३॥
अथ पश्चिमकाष्ठायां स्वस्तिकः शंखमस्तकः ।
शुभास्यो नीलवासाश्च पादहस्तो मूलाऽऽकरः ॥१४॥
एकपाद एकनेत्रः स्थूलजंघो महच्छिराः ।
पुष्पदन्तो गणेशश्च सूर्यः सत्राजितेश्वरः ॥१५॥
तुम्बुरुश्च घृताची च महोदरसरीसृपः ।
घटोत्कचः पंचजनः काश्यपश्च कपालिनी ॥१६॥
अश्वत्थद्रुः कपिलश्च रक्षन्ति पश्चिमां दिशम् ।
अथ वायव्यकाष्ठायां भंजनो भैरवस्तथा ॥१७॥
घटोदरश्च कालिको दण्डको मर्दनो रुरुः ।
षड्गः सर्वभुजो घृणी सुपार्श्वो वायुदिग्भवाः ॥१८॥

अथोत्तरे मूलस्थानः सूर्य इन्द्रेश्वरः शिवः ।
कण्ठेश्वरी खंजनश्च वासुकिः कूर्मदानवः ॥१९॥
सनकश्च गोलकाख्यराक्षसो नारदस्तथा ।
रंभाऽप्सराः प्लक्षवृक्षो रक्षन्ति चोत्तरां दिशम् ॥२०॥
अथेशान्यां किलीकश्च दुर्धरो भैरवाननः ।
दीर्घास्यो मेघवक्त्रश्च करालो विकचस्तथा ॥२१॥
मूकश्च बलिभुक् चैव बलिप्रियश्च मांसभुक् ।
एते सर्वे दिशां पालास्तत्रत्याः सन्ति पद्मजे ॥२२॥
जयन्तः सर्वमूर्धन्यो नागो रक्षति पत्तलम् ।
एतान्प्रपूज्य कृष्णस्य कार्यं वै पूजनं महत् ॥२३॥
अथ रुक्मिगणेशस्य पूजनं दर्शनं तथा ।
कर्तव्यं विधिना कृष्णाज्ञया द्वारव्यवस्थितेः ॥२४॥
कृष्णाय रुक्मिणीं दातुं भीष्मकश्च कृतोत्सवः ।
रुक्मी विरुद्धमतगो तद्वाक्यं नाऽन्वमन्यत ॥२५॥
भगवाँश्च हरिः कृष्णो रुक्मिणीमम्बिकास्थलात् ।
जहार च यदा रुक्मी प्रतिज्ञामकरोत्तदा ॥२६॥
कृष्णं चाऽविनिहत्वाऽहं निवर्तिष्ये रणान्नहि ।
इति वेगाद् गतो युद्धं कर्तुं कृष्णेन रुक्मकः ॥२७॥
कृष्णेनाऽऽबद्ध्य सोऽप्यर्धश्मश्रुनिकृन्तनः कृतः ।
अवमानेन मरणे कृतनिश्चय एव सः ॥२८॥
रक्षितः श्रीभगवता रुक्मिण्याः प्रियकारणात् ।
पूजितश्च गणानां वै नायकश्चापि निर्मितः ॥२९॥
ततस्तस्य सदा पूजा कार्या कृष्णस्य तुष्टये ।
ततो दुर्वाससं चैव बलदेवं प्रपूजयेत् ॥३०॥
श्रीकृष्णं पूजयेत्तस्य मन्दिरे धामसन्निभे ।
सर्वयज्ञफलं सर्वदक्षिणाफलमित्यपि ॥३१॥
सर्वयोगफलं ज्ञानफलं गंगाफलं तथा ।
सर्वदानफलं मोक्षफलं लभ्येत पूजनात् ॥३२॥
ततस्त्रिविक्रमं देवं पूजयेद्वामनं मुदा ।
एकदा तु बलेः राज्ञो राज्यं चाऽभून्महीतले ॥३३॥
तदा दुर्वासकश्चक्रतीर्थे स्नातुं समागतः ।
तत्र दैत्यैर्जानुभिर्मुष्टिभिश्चातीव ताडितः ॥३४॥
निवारयामास तांश्च रुरुर्नाम महासुरः ।
रक्षितश्चापि दुर्वासाः कैलासं संययौ तदा ॥३५॥
एतस्मिन्नन्तरे राजन् वामनो भगवान्स्वयम् ।
जिगाय त्रिपदैर्भूमिं बलिद्वारे व्यवस्थितः ॥३६॥
दुर्वासाश्च तदा चिन्तामकरोत् सुखकारिणीम् ।
वामनं प्रति शरणं जगाम बलिसेवितम् ॥३७॥
आयान्तमृषिमालोक्य बलिर्दैत्यपतिस्तदा ।
प्रत्युत्थायाऽर्हणां चक्रे चासने सन्न्यवेशयत् ॥३८॥
प्रोवाच प्रणतो ब्रूहि चात्राऽऽगमनकारणम् ।
दुर्वासाश्च बलेर्द्वारे दृष्ट्वा विष्णुं चतुर्भुजम् ॥३९॥
रुदन् श्वसन् मुहुर्वेगात् त्राहि त्राहीत्यभाषत ।
ब्राह्मणं दुःखितं दृष्ट्वा दयालुः प्राह माधवः ॥४०॥
किं कस्माद् दुःखमापन्नं वद शीघ्रं तु मे मुने ।
दुर्वासाः प्राह भगवन् ज्ञात्वा तीर्थं तु मुक्तिदम् ॥४१॥
चक्रतीर्थं गतः स्नातुं चाऽकृतस्नान एव च ।
गले गृहीतो दैत्यैश्च मुष्टिभिश्चातिताडितः ॥४२॥
बलाद् गृहीत्वा वासांसि कुशाँश्चैवाऽक्षतांस्तथा ।
निष्कासितश्चाक्रुष्ट हनिष्यामो यद्यागतः ॥४३॥
स्नात्वा च चक्रतीर्थेऽहं करिष्ये भोजनं ततः ।
तस्माद् स्नापय गोविन्द रक्ष मां शरणागतम् ॥४४॥
विररामेत्यभिधाय दुर्वासाः क्रोधनो मुनिः ।
ब्रह्मण्यदेवो भगवान् ब्राह्मणं तमुवाच ह ॥४५॥
हत्वा दैत्यान् स्नापयिष्ये समागच्छ मया सह ।
त्रिविक्रमश्च भगवान् आययौ मुनिना सह ॥४६॥
कृष्णश्च प्राह स्नानं त्वं कुरु शान्त्या मुने ह्यथ ।
दुर्वासास्तद्वचः श्रुत्वा स्नानं चक्रे त्वरान्वितः ॥४७॥
सन्ध्यादिकं नित्यकर्म कर्तुमारभत द्विजः ।
दुर्मुखो दानवस्तत्र क्रोधाऽऽसंरक्तलोचनः ॥४८॥
समाययौ तथा दुर्वाससं हन्तुमियेष वै ।
कृष्णश्चक्रेण दुर्मुखशिरश्चिच्छेद लीलया ॥४९॥
ततो दैत्याः समाजग्मुर्युद्धार्थं शस्त्रकोविदाः ।
विष्णुः संकर्षणः कृष्णो वामनश्चेति सर्वशः ॥५०॥
मार्गणैरस्त्रशस्त्रैश्च रणे दैत्यान् निजघ्निरे ।
दुःसहं कूर्मपृष्ठं च गालकं वेददूषकम् ॥५१॥
यज्ञघ्नं यज्ञहन्तारं धर्मान्तं च निजघ्निरे ।
कुशस्तदा समायातो युद्धाय कृतनिश्चयः ॥५२॥
अनीकं दशसाहस्रं नागानामयुतं तथा ।
अयुते द्वे रथानान्तु चाश्वानां च दशाऽयुतम् ॥५३॥
वक्रगो दीर्घनखश्च निघसः प्रसवस्तथा ।
ऊर्ध्वबाहुर्वक्रशिराः कंचुकश्च शिलोन्मुखः ॥५४॥
यज्ञघ्नश्च तथा राहुर्बर्बरको महाहनुः ।
सुनामा वसुनामा च दैत्या युद्धाय निर्ययुः ॥५५॥
कुशस्तदा महादेवं पुपूज जयवाञ्छया ।
ययौ खड्गं करे धृत्वा केशवं प्रति वेगतः ॥५६॥

उवाच यदि जेष्यामि कीर्तिर्मे ह्यतुला भवेत् ।
पतितोऽहं त्वया यद्वा यास्यामि परमां गतिम् ॥५७॥
इत्युक्त्वा धावमानस्य शिरश्चिच्छेद लीलया ।
पतितः शिवसान्निध्ये पुनर्जीवित उत्थितः ॥५८॥
उवाच विष्णुमानम्य दैत्येस्तेऽपकृतं च किम् ।
दुर्वाससं स्नापयित्वा यथेच्छसि तथा कुरु ॥५९॥
कृष्णः प्राह भवद्भिश्च तीर्थं रुद्धं हि सर्वथा ।
तस्मात् सर्वान् हनिष्यामि दानवान्नात्र संशयः ॥६०॥
युयुधे च तदा कुशः कृष्णेन सह वेगतः ।
भगवान् क्रोधसंयुक्तश्चक्रेणाऽपातयच्छिरः ॥६१॥
तदा दैत्यैः कुशदेहो मस्तकं च शिवालये ।
निक्षिप्तो तावदेवाऽयं प्रसादाच्छंकरस्य वै ॥६२॥
उपस्थितः सहसा धृत्वा गदां योद्धुमुपस्थितः ।
महादेवेन तुष्टेन यतोऽमरः स वै कृतः ॥६३॥
पुनश्च हरिणा स्वस्य गदया भिन्नमस्तकः ।
कुशो गर्ते तदा क्षिप्तो मृत्पाषाणैश्च भारितः ॥६४॥
तदुपरि शिवलिंगं स्थापितं विष्णुना तदा ।
जीवितोऽपि पुनर्नाऽयमुत्थितोऽभूदुवाच च ॥६५॥
शिवलिंगं त्वया विष्णो स्थापितं यन्ममोपरि ।
मम नाम्ना भवत्वेतत् कुशेश इतिविश्रुतम् ॥६६॥
कुशस्थल्यां कुशेशश्च तीर्थं कृतं महत्तथा ।
कृष्णेन तत्तथाऽस्त्विति कुशानुग्रहकारणात् ॥६७॥
ततोऽन्यदानवान्सर्वान् नाशयामास माधवः ।
रसातलगताः केचित्केचिद् भृत्यतया स्थिताः ॥६८॥
वामनश्च तथा विष्णुरनन्तः क्रोधनो मुनिः ।
एतेऽन्येपि द्वारवत्यां स्थानं कृत्वा सदा स्थिताः ॥६९॥
द्वितीयेन च रूपेण तानि तीर्थानि सन्ति वै ।
कृष्णं विष्णुं वामनं च संकर्षणं दुर्वाससम् ॥७०॥
तीर्थकृत्पूजयेद् गन्धैः पुष्पनैवेद्यभूषणैः ।
वस्त्रैः फलैश्च ताम्बूलाऽक्षतचन्दनकुंकुमैः ॥७१॥
आरार्त्रिकेण धूपेन दीपवादित्रकीर्तनैः ।
प्रदक्षिणादक्षिणाभिः स्तुतिभिर्वन्दनैस्तथा ॥७२॥
सर्वार्पणैश्च सम्पूज्य कुर्याज्जागरणं निशि ।
भाद्रेऽष्टम्यां द्वादश्यां च पूजयित्वा तु तान्सुरान् ॥७३॥
गोलोकं धाम चाप्नोति यत्र गत्वा न शोचति ।
स्नापयित्वा हरिं कृष्णं पूजयित्वा विधानतः ॥७४॥
तुलसीं पूजयित्वा चार्चयेद् दुर्वाससं ततः ।
गणेशं वैनतेयं च पूजयेच्च ततः परम् ॥७५॥
रुक्मिणीं पूजयेच्छक्त्या षोडशोपसुवस्तुभिः ।
ग्रहपीडा न जायेत व्याधयो न भवन्ति च ॥७६॥
भूतप्रेतादिपिडा च नश्येद् रुक्मिणीकाऽर्चनात् ।
रुक्मिणीं स्नापयेद् दध्ना क्षीरेण मधुना तथा ॥७७॥
शर्करया घृतेनापि गन्धैः सुगन्धिचन्दनैः ।
उत्तरैः श्रेष्ठतैलैश्च ततोऽभिषेकसज्जलैः ॥७८॥
श्रीखण्डकुकुंमेनापि कस्तुरीकेसरैस्तथा ।
विलेपयेयेन्महालक्ष्मीं रुक्मिणीं चातिभावतः ॥७९॥
अपुत्रस्य भवेत्पुत्रोऽधनश्च धनमाप्नुयात् ।
दासान् भृत्यान् पशून् गाश्च प्राप्नुयाद् भोगवैभवान् ॥८०॥
पूजयेन्मालतीपुष्पैः शतपत्रैः सुगन्धिभिः ।
करवीरैर्मल्लिकाभिस्तुलसीराजचम्पकैः ॥८१॥
करवीरैः केतकैश्च धूपैर्वस्त्रैर्धनैस्तथा ।
भूषणैर्भूषयेद् देवीं मणिरत्नैर्विभूषणैः ॥८२॥
एवं पूजयमानस्य न कुले निर्धनः कदाचित् ।
नाऽपुत्रो नाऽप्यसद्भाग्यो न नीचसेवको भवेत् ॥८३॥
नैवेद्यं भक्ष्यभोज्यादि ततो दद्यात् प्रियं प्रियम् ।
ताम्बूलं च सकर्पूरं भावेन विनिवेदयेत् ॥८४॥
फलं जलं तथाऽर्घं च दद्यादारार्त्रिकं ततः ।
नीराजनं कर्पूरेण कृत्वा शंखजलं ततः ॥८५॥
भ्रामयेत् सर्वतो रक्षाकरं शिरसा धारयेत् ।
दण्डवत् प्रणमेद् भूमौ नमः कृष्णप्रिये ! वदन् ॥८६॥
विप्रपत्न्यै ततो दद्याद् दानानि विविधानि च ।
सिन्दूरहारवस्त्राणि गन्धकुसुमकुंकुमम् ॥८७॥
कज्जलं चापि ताम्बूलं भक्ष्यं भोज्यं नवं नवम् ।
अथैवं सत्यभामां च देवीं जाम्बवन्तीं तथा ॥८८॥
मित्रविन्दां च कालिन्दीं भद्रामग्निजितीं तथा ।
पूजयित्वा षोडशभिस्तर्पयित्वा च पायसैः ॥८९॥
सर्वान् कामानवाप्नोति परत्रेह च पूजकः ।
तस्मात्सर्वप्रयत्नेन राज्ञ्यश्च कृष्णवल्लभाः ॥९०॥
तोषणीयाश्चातिभक्त्या भवेयुः स्वर्गमोक्षदाः ।
सफलं जीवितं तेषां सफलाश्च मनोरथाः ॥९१॥
माघे मासि सिताऽष्टम्यां चैत्रस्य द्वादशीदिने ।
वैशाखे चापि ज्येष्ठस्याऽष्टम्यां भाद्रे च कार्तिके ॥९२॥
द्वादश्यां सितपक्षे सा पूजिता कृष्णसंयुता ।
दद्याद्वै चिरजीवित्वं चाक्षयां पुत्रसन्ततिम् ॥९३॥
कारयेत् सुदृढं यश्च रूक्मिणीकृष्णमन्दिरम् ।
तस्य गोलोकधाम्न्येव वासः कृष्णस्य मन्दिरे ॥९४॥

नित्यनैवेद्यसम्पूर्णव्यवस्थां कारयेच्च यः ।
तस्य धाम्नि हरेर्नित्यं प्रसादप्रापणं भवेत् ॥९५॥
वस्त्रव्यजनसच्छत्रचामरकलशादिकम् ।
अर्पयेद् यः श्रीकृष्णाय तस्य तद्धाम्न्यनन्तकम् ॥९६॥
कृष्णलक्ष्मीचरणानां सेवकस्य सुसमृद्धयः ।
सदा दिव्या भवन्त्येव नार्यश्च कृष्णभोग्यता ॥९७॥
स्नायाच्च सर्वतीर्थेषु दानं शक्त्या ददाति यः ।
सर्वयज्ञफलं नैव कलौ कृष्णश्रियोऽर्चनात् ॥९८॥
मुक्त्वा द्वारवतीं पुण्यां मुक्तिर्नान्यत्र वै कलौ ।
लभ्यते च महालक्ष्मि क्षेत्रं दिव्यं च मेऽस्ति तत् ॥९९॥
इति ते कथितं मुख्यं तीर्थमाहात्म्यमुत्तमम् ।
जनः श्रुत्वा पठित्वा च तत्तीर्थफलमाप्नुयात् ॥१००॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने द्वारिकाक्षेत्ररक्षकाणां नामानि दुर्वाससः स्नाननिमित्तं कुशादिदैत्यानां नाशः कुशेश्वरादितीर्थानि वामनादितीर्थानि पट्टराज्ञीतीर्थादीनि चैत्यादिनिरूपणनामा सप्तविंशत्यधिकद्विशततमोऽध्यायः ॥२२७॥

**श्रीनारायण उवाच—**

कलौ कृष्णस्य माहात्म्यं ये शृण्वन्ति पठन्ति च ।
तेषां वैकुण्ठगोलोकधाम्नोर्वासो मतः सदा ॥ १ ॥
नित्यं कृष्णकथा यस्य प्राणादपि गरीयसी ।
न तस्य दुर्लभं चात्र परत्रापि यथेप्सितम् ॥ २ ॥
मन्वन्तरसहस्रेण काशीवासस्य यत्फलम् ।
तत्फलं द्वारवत्यां तु पञ्चदिवसवासतः ॥ ३ ॥
श्वपचोपि वसन्नत्र यतीनां गतिमाप्नुयात् ।
द्वारकां प्रति यातस्य पुण्यं स्यात्तु पदे पदे ॥ ४ ॥
कुरुक्षेत्रे रविग्रहस्नानस्येत्याह पद्मजः ।
चन्द्रग्रहे भवेद् यश्च फलं तदत्र दर्शने ॥ ५ ॥
पुष्करे कार्तिकस्नानफलं यद्वर्षकोटिभिः ।
तत्फलं द्वारकावासे नित्यं भवति देहिनः ॥ ६ ॥
अवन्त्यां यत्फलं मनुशतेन भवति प्रिये ।
तत्फलं द्वारकायां तु दिनैकवासतो भवेत् ॥ ७ ॥
कृष्णदर्शनपुण्यं तु मतं कोटिव्रताऽधिकम् ।
रुक्मिणीकृष्णसेवायाः फलं गोलोकमोक्षणम् ॥ ८ ॥
धन्यास्ते कृतकृत्यास्ते दृष्टं यैः कृष्णमण्डलम् ।
द्वादश्यां कृष्णपूजा च करोति यस्तु भावतः ॥ ९ ॥
क्षीरस्नानं कारयति शताश्वमेधजं फलम् ।
दुग्धाद् दशगुणं दध्नाद् घृतात्तस्माद् दशोत्तरम् ॥१०॥
घृताद्दशगुणं क्षौद्रं शंखेन तद्दशोत्तरम् ।
पुष्पोदकं च दर्भोदं वर्धते तद्दशोत्तरम् ॥११॥
मन्त्रोदकं च गन्धोदं ततोऽपि च दशोत्तरम् ।
स्नानमिक्षुरसेनापि शतवाजिमखैः समम् ॥१२॥
तीर्थनीरेण संस्नानं ततो दशगुणं स्मृतम् ।
सकामस्त्वाप्नुयात्स्वर्गं निष्कामो मुक्तिमाप्नुयात् ॥१३॥
कृष्णस्नानार्द्रगात्रं यो वस्त्रेण मार्जयेज्जनः ।
तस्य जन्मान्तरलक्षपापं भवति मार्जितम् ॥१४॥
स्नापयित्वा हरिं तस्मै पुष्पहारं ददाति यः ।
तस्य पुण्यं स्वर्णनिष्काकोटिदानफलं भवेत् ॥१५॥
स्नानकाले कृष्णनाम्नां जपतस्तु सहस्रकम् ।
प्रत्यक्षरं मिलेत्पुण्यं कपिलाशतगोप्रदम् ॥१६॥
स्नानकाले च कृष्णाग्रे नर्तनं गायनं च वा ।
करोति स तु कृष्णस्य गोलोके जायते प्रियः ॥१७॥
स्नानकाले हरे जय कृष्ण जयेतिवादिनः ।
तालिकां वादयतश्च न योनियन्त्रनिर्गमः ॥१८॥
वस्त्रैर्धूपेन सौवर्णभूषणैः पूजयन्ति ये ।
शतमन्वन्तरं वासो वैकुण्ठे च ततः परम् ॥१९॥
गोलोके शाश्वतो वासो भवति कृष्णसेवने ।
केतक्या चाथ तुलसीमंजर्या कुसुमैस्तथा ॥२०॥
मालत्या रुक्मिणीपतिं पूजयन्ति च याः स्त्रियः ।
क्रीडन्ति सततु स्वर्गभूमिषु पतिना सह ॥२१॥
मन्वन्तरशतपूर्णं ततो गोलोकमाप्नुयुः ।
योगिनां यज्ञिनां चैव दानिनां तीर्थसेविनाम् ॥२२॥
पितृमातृप्रभक्तानां द्वादशीव्रतिनां तथा ।
एकादश्यां जागरणं कुर्वतां नृत्यतां तथा ॥२३॥
गायतां स्मरतां वेदघोषणां कुर्वतां तथा ।
विष्णुनाम्नां सहस्रं च पठतां चापि यत्फलम् ॥२४॥
तत्फलं कृष्णपूजायां तुलस्यर्पणतो भवेत् ।
रुक्मिणीकृष्णपूजायाः फलं चापि ततोऽधिकम् ॥२५॥
यथा लक्ष्मीः प्रिया विष्णोः तुलसी च ततोधिका ।
यत्र क्वापि तुलस्या वै पूजितो भवति हरिः ॥२६॥
तत्र तस्य द्वारकायास्तीर्थयात्राफलं भवेत् ।
केतक्याऽप्यर्चयेत् कृष्णं प्रतिपुष्पाऽश्वमेधजम् ॥२७॥
फलं वै प्राप्यते चान्ते गोलोकगतिराप्यते ।
मालत्या पूजयेत् कृष्णं प्राप्यते च हरेः पदम् ॥२८॥

यथाप्तपत्रपुष्पैर्वा पूजयेच्छ्रीपतिं हरिम् ।
दिव्यांश्च मानुषान् भोगान् भुक्त्वा याति हरेः पदम् ॥२९॥
अष्टाक्षरोऽयं मन्त्रस्तु 'श्रीकृष्णः शरणं मम' ।
तं जपन् पूजयेत्कृष्णं चन्दनेन सुगन्धिना ॥३०॥
कर्पूरेण च कस्तूर्या स चेयात् कृष्णतुल्यताम् ।
आज्येन गुग्गुलेनापि धूपं कुर्याच्च यो हरेः ॥३१॥
पातकं प्रविधूयाऽसौ सुरूपो जायतेऽक्षरे ।
कृष्णायने दीपमालां कारयति दिने दिने ॥३२॥
सप्तद्वीपनृपः स्याद्वै दीपे दीपे फलं हि तत् ।
नैवेद्यानि विविधानि कृष्णाय यो निवेदयत् ॥३३॥
तस्य वै पितरस्तृप्ताः शाश्वतीं मुक्तिमाप्नुयुः ।
ताम्बूलं कर्पूरयुतं पूगादिचूर्णिकान्वितम् ॥३४॥
कृष्णाय यच्छतो नास्ति पुनर्जन्मात्र मायिके ।
नीरं शीतं सुगन्धाढ्यं देयं कृष्णाय तृप्तये ॥३५॥
नित्या तृप्तिर्भवेत् तस्य नित्याऽमृतादिपानतः ।
फलानि चारुमिष्टानि पक्वान्यर्पयतस्तथा ॥३६॥
अन्यदपि मुखस्यैव शुद्ध्यर्थं ददतस्तथा ।
गोलोके नित्यतृप्तिः स्यात् सुगन्धश्वासवान्भवेत् ॥३७॥
श्रीकृष्णस्य प्रक्रमणं कर्तुर्वैराजधिष्ण्यकम् ।
श्रीकृष्णमन्दिरे पुष्पोद्यानं यः कारयेत्परि ॥३८॥
स पुष्पकविमानेन क्रीडति देवकोटिभिः ।
चामरैर्व्यजनैर्वायुं कृष्णाय या प्रयच्छति ॥३९॥
तस्या धाम्नि स्वयं कृष्णश्चम्भवति मुखपंकजम् ।
शय्याकर्त्र्याश्च शय्यायां सह स्वपिति केशवः ॥४०॥
श्रीकृष्णमण्डपं कदलीस्तंभैः कारयेत्तु यः ।
तस्य सेवामप्सरसः कुर्वन्ति कदलीसमाः ॥४१॥
कृष्णालये पताकाभिः शोभां करोति यो जनः ।
सूर्यलोके तस्य वासो सदा भवति सूर्यवत् ॥४२॥
धूपचन्दनसौगन्ध्युत्तैश्च . वासयेद् हरेः ।
मन्दिरं तस्य भवनं दिवि वै वासितं भवेत् ॥४३॥
कृष्णपादप्रसंवाहं या करोति हृदा सदा ।
कृष्णेन सह गोलोके रमा भूत्वा प्रमोदते ॥४४॥
भोजनं नूतनं कृत्वा श्रीकृष्णं संप्रभोजयेत् ।
सा वै लक्ष्मीः सदा भूत्वा वैकुण्ठे श्रीहरिं भजेत् ॥४५॥
श्रीकृष्णस्य सदा सेवां ये कुर्वन्ति जना भुवि ।
देवकन्यावृताः स्वर्गे सेव्यन्ते चाप्सरोगणैः ॥४६॥
श्रीकृष्णशिखरे यश्च ध्वजमारोपयेच्छुभम् ।
तस्याऽक्षरे परे धाम्नि सध्वजं भवनं भवेत् ॥४७॥
श्रीकृष्णमन्दिरे चित्रकार्यं कारयते तु यः ।
तस्य चित्रमयं धाम्नि विमानं भवति ध्रुवम् ॥४८॥
दर्पणं यश्च कृष्णाग्रे दद्यात्स सोमलोकगान् ।
भोगानाकल्पमाभुक्त्वा गोलोकं शाश्वतं व्रजेत् ॥४९॥
छत्रं बहुशलाकं सक्षौमं दद्याच्च शार्ङ्गिणे ।
स वै वैराजलोकेषु सम्राट् भूत्वा हरिं व्रजेत् ॥५०॥
दद्याद् यानं विमानं वा वाहं खट्वां बृसीं कटम् ।
कुबेरः कल्पपर्यन्तं भूत्वाऽन्ते यान्ति मोक्षणम् ॥५१॥
आरार्त्रिकं हरेः कुर्यात् बहुवर्तिघृतादिभिः ।
तस्याऽरार्त्रिकमन्वहं क्रियते देवकोटिभिः ॥५२॥
केशवोपरि सजलं शंखं च भ्रामयेत्तु यः ।
स क्षीरे सागरे कृष्णसन्निधौ वासभाग् भवेत् ॥५३॥
कृष्णप्रदक्षिणां कुर्यात् पृथ्वीदानफलं पदे ।
कुर्याद् दण्डनमस्कारं चाश्वमेधफलं भवेत् ॥५४॥
कीर्तनं श्रीहरेः कुर्यात् सामवेदफलं लभेत् ।
नृत्यं कुर्याद्धरेरग्रे कोटिपापविनाशनम् ॥५५॥
वसतां द्वारकां गोलोकधामाऽऽवासजं फलम् ।
गोमतीनीरपानं च यः कुर्यात्तस्य मोक्षणम् ॥५६॥
गंगाद्वारे प्रयागे च गंगायां कुरुजांगले ।
पुष्करे च प्रभासे च श्रीस्थले शुक्लतीर्थके ॥५७॥
चान्द्रायणसहस्रस्य फलं त्वेकदिनेऽत्र वै ।
द्वारिकागोमतीकृष्णगोपीतालप्रसेविनः ॥५८॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने द्वारिकावासकृष्णपूजनमाहात्म्यफलादिनिरूपणनामाऽष्टाविंशत्यधिकद्विशततमोऽध्यायः ॥२२८॥

**श्रीनारायण उवाच—**

श्रूयतां च महालक्ष्मि ! द्वारिका गोमती तथा ।
निर्मिता स्वर्गनिःश्रेणिः कलौ कृष्णेन गोमती ॥ १ ॥
सुखदा सेविनां नित्यं स्नानमात्रेण मोक्षदा ।
शिलाश्चक्रांकिता यत्र गोमत्युदधिसंभवाः ॥ २ ॥
दृष्टा अपि परं मोक्षं प्रापयन्ति तु दर्शकान् ।
यन्मृत्तिका मोक्षदाऽस्ति तां पुरीं को न सेवयेत् ॥ ३ ॥
आवन्त्यो ब्राह्मणः कश्चित्सोमशर्मेतिनामकः ।
शिवभक्तो न जानाति तदन्यदेवताव्रतम् ॥ ४ ॥
चतुर्दशीं करोत्येव विष्णुं तु मनुते नहि ।
प्रतिवर्षं करोति स्म सोमनाथस्य दर्शनम् ॥ ५ ॥

सप्ताऽयुतं गतं तस्य वर्षाणां जर्जरो ह्यभूत् ।
सोमनाथस्य यात्रायां कोटिशो ह्यभवन् जनाः ॥ ६ ॥
ते च सर्वे महत्तीर्थे कृत्वा गत्वा च रैवतम् ।
ततो गताश्च द्वारिकायात्रार्थं न गतो द्विजः ॥ ७ ॥
सोमशर्मा ययौ नैजं गृहं सुष्वाप चैकलः ।
स्वप्ने च पितरस्तस्य पितामहाः समाययुः ॥ ८ ॥
प्रपितामहयुक्ताश्च बान्धवा वृद्धसन्ततेः ।
प्रेतरूपाः क्षुधाव्याप्ता रौद्राः शोकसमन्विताः ॥ ९ ॥
दृष्ट्वा तान् भयमापन्नश्चोवाच सः प्रकम्पितः ।
के यूयं रौद्ररूपाः स्थ कुतः कस्मात् समागताः ॥१०॥
प्रेताः प्राहुश्च तं पुत्रं ते स्मो वयं पितामहाः ।
दुःखिता क्षुधिताश्चात्र त्वत्समीपे समागताः ॥११॥
पुत्रः प्राह मया दत्तं तप्तं हुतं च भोजितम् ।
भवतां तुष्टिलाभाय भवद्भिश्चापि तत्कृतम् ॥१२॥
कथं तिष्ठथ प्रेतत्वे ब्रूत कारणमत्र मे ।
प्रेता ऊचुः शृणु पुत्र विद्धो वै हरिवासरः ॥१३॥
कृतोऽस्माभिस्त्वया चापि क्रियते न हरेर्दिनम् ।
तेन दोषेण चास्माकं प्रेतत्वं दुःखदं वृतम् ॥१४॥
न चाप्युद्धार एवास्ति तव पापान्महत्तरात् ।
न त्वं कुरुषे भगवद्व्रतं यात्रां करोषि न ॥१५॥
कृष्णं न मनुषे पुत्र द्वारिकां न च गच्छसि ।
केवलं शंकरं देवं भजसे निन्दसि प्रभुम् ॥१६॥
तेन दोषेण प्रेतत्वं प्राप्तास्त्वमपि प्राप्स्यसि ।
न विष्णुद्वेषिणः शंभुः करिष्यति हि सद्गतिम् ॥१७॥
शंकरो विष्णुभक्तोऽस्ति वैष्णवाग्र्यः स वर्तते ।
कृष्णनिन्दाकरस्याऽयं पूजां गृह्णाति नैव च ॥१८॥
हरिभक्तिविहीनानां द्वादशीव्रतवर्जिनाम् ।
पापं नाशं न चायाति प्रेतत्वं न निवर्तते ॥१९॥
विना केशवपूजां तु पूज्यमानेऽपि शंकरे ।
नारकं दुःखदं कष्टं पापं भवति गोवधम् ॥२०॥
प्रथमं केशवः पूज्यः पश्चाच्छ्रीशंकरोऽर्हति ।
पूजनं च ततो देवाः पूज्याश्चान्ये व्यवस्थितिः ॥२१॥
त्वया नास्तिकभावेन पूज्यते न हरिः स्वयम् ।
न पूजा रक्षति शैवी भास्करी न पितामही ॥२२॥
प्रेतभावं नार्दयति विद्धवासरजं खलु ।
वैशाखे तु तृतीयां च विद्धां तिथिं करोति यः ॥२३॥
हव्यं देवा न गृह्णन्ति कव्यं नैव पितामहाः ।
कुरुते यदि मोहात्तां प्रेतत्वं तस्य वै ध्रुवम् ॥२४॥
द्वादशी पूर्णमासी च पित्रोः सम्वत्सरं दिनम् ।
पूर्वविद्धं प्रकुर्वाणो नरकं प्रतिपद्यते ॥२५॥
प्रणम्य सोमनाथं त्वं द्वारकां नैव गच्छसि ।
करोषि कृष्णसेवां न यात्रायास्ते फलं नहि ॥२६॥
तस्मात् सोमेश्वरं दृष्ट्वा गन्तव्यं द्वारकापुरीम् ।
दृष्ट्वा सोमेश्वरं देवं द्वारकां याति नैव यः ॥२७॥
स पतेन्नरके घोरे पितृभिः सह पुत्रक ।
तद्वयं पतिताः सर्वे पातिताश्च पुनस्त्वया ॥२८॥
निर्गमो यमलोकाच्च तदस्माकं न दृश्यते ।
गोमतीनीरसम्पर्कात् कृष्णवस्त्रावलोकनात् ॥२९॥
गोपोसरःश्राद्धदानात् तरन्ति पितरः सुत ।
कृष्णस्य द्वारकां गत्वा पश्याननं हरेः प्रभोः ॥३०॥
श्राद्धं दानं समुद्रस्य गोमतीसंगमे कुरु ।
तर्पणं गोपिकाताले कुरु कृष्णसमर्पणम् ॥३१॥
तव पुण्यं भवेच्छुभ्रं चास्माकं च गतिर्भवेत् ।
पूजिते देवदेवेशे कृष्णे रुक्मिणीसेविते ॥३२॥
पूजिताश्च वयं पुष्टिं कुर्मः पुत्रपौत्रिकीम् ।
प्रेतयोनिविनिर्मुक्ता यास्यामः परमां गतिम् ॥३३॥
गोमतीनिरधौ तस्य न वै प्रेतत्वमस्ति हि ।
तत्र श्राद्धप्रदानेन पितृतृप्तिश्च मोक्षणम् ॥३४॥
तीर्थकोटिसहस्रैश्च तत्र श्राद्धैश्च यत्फलम् ।
तत्फलं लभ्यते सर्वं द्वारकायां जलार्पणात् ॥३५॥
यतीनां भोजनं कृष्णभोजने चापि यत्फलम् ।
तत्फलं प्राप्यते कोटिकल्पतृप्तिकरं शुभम् ॥३६॥
द्वारकावासिनां मुक्तिः शाश्वती सर्वथा मता ।
न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ॥३७॥
या नारी विधवा नित्यं कुरुते द्वारकाश्रयम् ।
सा तु लक्ष्मीर्भवत्येव कृष्णस्य प्रियकारिणी ॥३८॥
कृष्णं कृष्णपुरीं गत्वा योऽर्चयेत् तुलसीदलैः ।
प्राप्तं जन्मफलं तेन तारिताश्च पितामहाः ॥३९॥
तुलसीदलमालां च कृष्णोत्तीर्णां तु यो वहेत् ।
पत्रे पत्रेऽश्वमेधानां दशानां जायते फलम् ॥४०॥
तुलसीमालया युक्तः श्राद्धं दानं समाचरेत् ।
पितॄणां देवतानां च स्वल्पं कोटिगुणं भवेत् ॥४१॥
तुलसीकाष्ठमालां तु दृष्ट्वा द्रवन्ति यामकाः ।
यद्गृहे तुलसीकाष्ठं पत्रं शुष्कमथाऽऽर्द्रकम् ४२॥
भवते तद्गृहे नैव पापसंक्रमणं क्वचित् ।
तस्मात्पुत्र तुलस्याश्च मालां धृत्वा च वैष्णवः ॥४३॥

भूत्वा गच्छ हरेः सौम्यां द्वारकां श्राद्धमावह ।
तर्पणं च कुरु तीर्थजलैश्चातः प्रमोक्षय ॥४४॥
उन्मीलनी च शयनी त्रिःस्पृशा पक्षवर्धिनी ।
त्वया पुत्र प्रकर्तव्या जयन्ती विजया जया ॥४५॥
कृष्णाष्टमी प्रकर्तव्या सर्वपापप्रणाशिनी ।
सर्वसम्पत्प्रदा मोक्षप्रदा गच्छ सुखान् कुरु ॥४६॥
इति श्रुत्वा च पितॄणां प्रेतानां द्वारकां द्विजः ।
चन्द्रशर्मा ययौ नित्यगोलोकधामसदृशीम् ॥४७॥
यत्र श्रीरुक्मिणीकृष्णः तीर्थानि सन्ति सर्वदा ।
यज्ञाश्च देवता यत्र तिष्ठन्ति मुनयोऽमलाः ॥४८॥
किन्नरैः सिद्धगन्धर्वैः सेव्यते या च द्वारका ।
स्वर्गारोहणनिःश्रेणिर्वर्तते यत्र गोमती ॥४९॥
यस्याः सीमप्रविष्टस्य नश्यन्ति पापपर्वताः ।
सा पुरी द्विजवर्येण दृष्टा निर्मलनेत्रतः ॥५०॥
मुदं प्राप्तो द्विजस्तत्र गोमतीं कृष्णमन्दिरम् ।
कृष्णं च सागरं द्वारावतीं ननाम भावतः ॥५१॥
मेने च कृतकृत्यं स्वं धन्यं भाग्योदयान्वितम् ।
तीर्थकोटिसहस्राणां नाऽद्याऽस्ति मे प्रयोजनम् ॥५२॥
शुक्ला वैशाखमासस्य सम्प्राप्ता मधुसूदनी ।
द्वादशी त्रिःस्पृशा नाम कोटिपापनिकृन्तनी ॥५३॥
अहो पुण्योदयो जातो मया दृष्टाऽद्य द्वारका ।
इति कृत्वा त्वपः स्पृष्ट्वा स्नात्वा सन्तर्प्य देवताः ॥५४॥
चक्रतीर्थं समासाद्याऽऽनर्च चक्रांकितां शिलाम् ।
कृष्णस्य दर्शनं षोडशोपचारैश्च पूजनम् ॥५५॥
शिवस्य पूजनं चैव चक्रे भावसमन्वितः ।
पितॄणां पिण्डदानं च जलं दत्वा विधानतः ॥५६॥
हरेः स्नापनं दुग्धेन चन्दनेन विलेपनम् ।
धूपं दीपं च नैवेद्यं नवान्नं कन्दमूलकम् ॥५७॥
ताम्बूलं कर्पूरं वस्त्रं फलमारार्त्रिकं तथा ।
प्रदक्षिणं नमस्कारं स्तवनं कुसुमाञ्जलिम् ॥५८॥
दण्डवच्च क्षमायाञ्चां कृत्वा जागरणं तथा ।
रात्रौ यामत्रयेऽतीते प्रार्थना स चकार वै ॥५९॥
कृष्ण कृष्ण हरे कृष्ण नारायण नमोऽस्तु ते ।
दीनान्धदुःखमग्नानां त्वमेव शरणं सुखम् ॥६०॥
तव पादप्रसेवायाः फलं नित्यं महासुखम् ।
दुःखं सर्वं विनश्येद्वै तव द्वादशीसेविनाम् ॥६१॥
दशमीवेधजं पापं यत्कृतं मम पूर्वजैः ।
तत्सर्वं विलयं यातु मोक्षं यान्तु च पूर्वजाः ॥६२॥
यथा प्रेतत्वशून्याः स्युर्मम पूर्वपितामहाः ।
मुक्तिं प्रयान्ति देवेश तथा कुरु जगत्पते ॥६३॥
मया शिवप्रभक्तेन तवापि हेलनं कृतम् ।
पूजनं वन्दनं तीर्थं मे दर्शनं नैव यत् कृतम् ॥६४॥
तज्जन्यं यन्महत्पापं विलयं यातु मे सदा ।
न कृता द्वारकायात्रा न कृष्णोऽत्र प्रसेवितः ॥६५॥
न स्नाता गोमती यच्च दोषं मार्जय तद्धरे ।
अद्यप्रभृति दासोऽस्मि वैष्णवस्तव केशव ॥६६॥
तव पूजां तव व्रतं तव पाठं च सेवनम् ।
लेपनं कीर्तनं स्तोत्रं करिष्ये वन्दनं तव ॥६७॥
श्रवणं ते कथायाश्च पादोदकस्य धारणम् ।
नैवेद्यभक्षणं ते च करिष्यामि हरे सदा ॥६८॥
प्रसन्नो भव भगवन् पापं प्रज्वालय मम ।
मुक्तिं कुरु च पितॄणां प्रार्थनां स्वीकुरु प्रभो ॥६९॥
श्रुत्वैतद्वचनं देवः श्रीकृष्णः प्राविरास वै ।
चन्द्रचर्यन् तव भक्त्या तुष्टोऽस्मि पितरश्च ते ॥७०॥
त्वं च पापानि निर्धूय गन्तारो मम धाम यत् ।
उक्त्वा कृष्णस्तिरोऽभूच्च पितरः समुपस्थिताः ॥७१॥
प्रोचुः पुत्र तव यत्नान्मुक्तिं प्राप्ता न संशयः ।
गोमती नीरदानेन पिण्डदानेन दर्शनात् ॥७२॥
प्रेतयोनिविनिर्मुक्ता गच्छामः परमां गतिम् ।
धन्यास्ते पितरो लोके यत्कुले द्वारकां सुतः ॥७३॥
गत्वा तु तारयेत् पितॄन् कृष्णसेवादिभिः सदा ।
धन्या सा विधवा नारी कृष्णयात्रां करोति या ॥७४॥
तारयत्येव जनकं स्वामिनं च कुलं शतम् ।
श्वपचोऽपि यदि तीर्थं करोति कृष्णमानसः ॥७५॥
स याति परमां मुक्तिं पितृभिः परिवारितः ।
यस्मात् सर्वाणि तीर्थानि सर्वदेवास्तथा मखाः ॥७६॥
द्वारकायां समायान्ति त्रिकालं कृष्णसन्निधौ ।
फलं समग्रतीर्थानां ततोऽत्र लभते जनः ॥७७॥
दृष्ट्वा सोमेश्वरं यस्तु द्वारकां नैव पश्यति ।
धिक् सुतं च कुलं तस्य पितरो नरके स्थिताः ॥७८॥
ब्रह्मा रुद्रस्तथा सूर्यो महेन्द्राद्याश्च देवताः ।
मानवाश्च नृपा विप्राः सर्पा नागाश्च पन्नलाः ॥७९॥
नदा नद्यश्च शैलाश्च वनान्युपवनानि च ।
पुर्यो ग्रामा नगर्यश्च सागराश्च सरांसि च ॥८०॥
यक्षा गणाश्च गन्धर्वाः सिद्धा विद्याधरास्तथा ।
अप्सरसश्च पर्यश्च धनदो दैत्यराक्षसाः ॥८१॥



ऋषयो मुनयो योगाः सनकाद्याश्च साधवः ।
साध्व्यश्च योगिनीचक्रं सांख्ययोगिन्य इत्यपि ॥८२॥
ग्रहनक्षत्रयोगाश्च ध्रुवश्च लोकपालकाः ।
यत्किंचित्तु त्रिलोक्यां वै वर्तते स्थाणुजंगमम् ॥८३॥
श्रीकृष्णसन्निधौ नित्यं तिष्ठते प्रत्यहं हि तत् ।
न त्यजति पुरीं पुण्यां द्वारकां कृष्णमण्डिताम् ॥८४॥
सा त्वया सेविता पुत्र वयं च कृष्णदर्शनात् ।
प्रेतयोनिप्रमुक्ताः स्मो गच्छामः परमां गतिम् ॥८५॥
स्वस्ति तेऽस्तु न गच्छामो गोलोकं दिव्यधाम तत् ।
प्राप्तं कृष्णपदं पुत्र त्वं च गन्ताऽसि धाम तत् ॥८६॥
न कलौ फलदा वेदा न दानानि मखा न च ।
गोमती फलदा स्वर्गमोक्षदा सर्वथा मता ॥८७॥
कलौ काशी च मथुरा ह्यवन्ती रेवताचलः ।
अयोध्या कुंकुमवापी कांची च पुरुषोत्तमा ॥८८॥
शालग्रामा नदी माया बदरी च तथा गया ।
कुरुक्षेत्रं भृगुक्षेत्रं पुष्करं शुक्लतीर्थकम् ॥८९॥
प्रयागश्च प्रभासश्च हाटकेश्वर इत्यपि ।
गंगाद्वारं च वाराहं गंगासागरसंगमः ॥९०॥
नैमिषं दण्डकारण्यं तथा वृन्दावनं सुत ।
सिन्धुक्षेत्रं चार्बुदं च सर्वारण्यानि यानि च ॥९१॥
वनान्यायतनान्येव तथोपराणि यानि च ।
शैला शैलेयतीर्थानि हिमानि च वनानि च ॥९२॥
सरितः सागराः सर्वे कृष्णसेवनलालसाः ।
पापनाशप्रकामाश्च दिव्यानन्दाभिलाषुकाः ॥९३॥
तिष्ठन्ति गोमतीनीरे द्वारकायां कलौ युगे ।
नास्ति वै त्रिषु लोकेषु पुरी तु द्वारकासमा ॥९४॥
तवाऽऽयुःपूर्णताप्राप्तौ मृत्युर्दिव्यो भविष्यति ।
त्रिःस्पृशावासरे शुक्ले वैशाखे बुधवासरे ॥९५॥
ब्रह्मरन्ध्रेण ते यानं भविष्यति हरेर्गृहे ।
इत्युक्त्वा पितरस्तस्य चतुर्भुजस्वरूपिणः ॥९६॥
दिव्यविमानसंस्थाश्च याता गोलोकधाम तत् ।
सोमशर्मा ययौ स्वस्य गृहं भूत्वा च वैष्णवः ॥९७॥
आयुषोऽन्ते तु सम्प्राप्ते गत्वा द्वारवतीं पुरीम् ।
प्राणान् कृष्णोपदेशेन त्यक्त्वा मोक्षं जगाम सः ॥९८॥
शृण्वतां पठतां चैव माहात्म्यं द्वारकाभवम् ।
जायते वै फलं सर्वं चान्ते मोक्षो भवेद् ध्रुवः ॥९९॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने शिवभक्तस्य सोमशर्मणः पितॄणां द्वारकायात्रादिना मोक्षण-निरूपणनामैकोनत्रिंशदधिकद्विशततमोऽध्यायः ॥२२९॥

श्रीनारायण उवाच—

शंखोद्धारं महातीर्थं शंखासुरोऽत्र शार्ङ्गिणा ।
उद्धारितोऽस्ति कृष्णेन तत्र गच्छेत्तु मुक्तये ॥ १ ॥
प्रभासाद्यानि तीर्थानि गंगाद्या आपगास्तथा ।
शैलाः समुद्राः क्षेत्राणि दिव्याश्चैत्यद्रुमास्तथा ॥ २ ॥
अश्वमेधादयो यज्ञा महेन्द्राद्याश्च देवताः ।
भृग्वाद्याः ऋषयश्चैव गन्धर्वास्तुम्बुरुप्रथाः ॥ ३ ॥
धनेशाश्च कुबेराद्या विश्वक्सेनादिपार्षदाः ।
ब्रह्मविष्णुमहेशाश्च सिद्धाश्चाप्सरसस्तथा ॥ ४ ॥
पर्योऽथ किं बहूक्तेन त्रैलोक्यं जडचेतनम् ।
अध्यात्मसंसर्गगतं शंखोद्धारे प्रतिष्ठति ॥ ५ ॥
ये स्मरन्ति गृहे नित्यं शंखोद्धारं महत्सरः ।
तेषां न पुनरावृत्तिर्यावदाभूतसंप्लवम् ॥ ६ ॥
ये तु स्मरन्ति मनसा शंखोद्धारं च शंखिनम् ।
कुलकोटिशतैर्युक्ताः कृष्णलोके वसन्ति ते ॥ ७ ॥
यत्फलं तु सरस्वत्यां सूर्यग्रहणकोटिभिः ।
यो यतीन् भोजयेद् भक्त्या नित्यमब्दशतं नरः ॥ ८ ॥
शंखोद्धारे च नुः स्नातुः कलां नार्हन्ति षोडशीम् ।
त्रीणि कोटीनि सार्धानि तीर्थानां च मम प्रिये ॥ ९ ॥
शंखोद्धारे निवासोऽस्ति सर्वतीर्थफलं ततः ।
ब्रह्महत्यासहस्राणि चाऽगम्याऽगमनानि च ॥१०॥
पापानि नाशमायान्ति शंखोद्धारजलस्पृशेः ।
यो दद्याद् गां गृहं स्वर्णं लभते कोटिजं फलम् ॥११॥
कुरुक्षेत्रस्य वासेन गंगायां मरणेन च ।
गोमतीस्नानमात्रेण फलं शंखस्थदर्शनात् ॥१२॥
जलमध्ये समुद्रस्य द्वारका चातिदुर्जया ।
तस्या मध्ये स्थितो देवः शंखी पापप्रणाशनः ॥१३॥
ततः पिण्डारकं तीर्थं गच्छेद्वै पापनाशकम् ।
यत्र कृष्णश्चतुर्बाहुः स्वयं सन्तिष्ठते सदा ॥१४॥
सरित् रुक्मवती यत्र तत्र स्नात्वा विमुच्यते ।
अगस्त्यस्य ऋषेस्तत्र तडागं लोकविश्रुतम् ॥१५॥
स्नात्वा श्राद्धं तथा कृत्वा पितॄन् वै मोचयेत् सुतः ।
यज्ञवाटस्तथा तीर्थं यत्र पूर्वः प्रजापतिः ॥१६॥
यज्ञं चकार विधिना सर्वलोकहिताय वै ।
यज्ञनाशयितुर्हस्तौ यत्र दैत्यस्य कर्तितौ ॥१७॥
विष्णुना देवदेवेन तद्दृष्ट्वा मुच्यते ह्यघात् ।
पितरस्तत्र पिण्डान् वै समिच्छन्ति सुतृप्तये ॥१८॥

वैशाखे तु कृते श्राद्धे मुच्यते पातकत्रयात् ।
दानं श्राद्धं व्रतं जापस्तर्पणं कार्यमित्यपि ॥१९॥
अश्वमेधसहस्रस्य राजसूयशतस्य च ।
पदे पदे फलं स्याच्च द्वारकां गच्छतस्तु नुः ॥२०॥
पिण्डारकं स्मरतश्च तत्फलं भवति ध्रुवम् ।
श्रीकृष्णं मन्दिरे दृष्ट्वा शंखोद्धारे तु शंखिनम् ॥२१॥
पिण्डारके चतुर्बाहूम् वीक्ष्य मुक्तिमवाप्नुयात् ।
श्रीः कृष्णश्चक्रतीर्थं च पिण्डारकं च गोमती ॥२२॥
गोपीचन्दनमेवापि तुलसी दुर्लभा कलौ ।
तानि मिलन्ति तु द्वारवत्यां कृष्णप्रसंगतः ॥२३॥
वर्द्धिनी द्वारका गंगा लक्ष्मीर्गोविन्द इत्यपि ।
गोमती गोपिकातालमृत्तिका चेति दुर्लभाः ॥२४॥
यस्य जागरणं जातं वर्धिनी द्वादशीदिने ।
पुनर्जन्मकृतं दग्धं तेन भक्तेन सर्वथा ॥२५॥
त्रिस्पृशावासरे येन कृतं जागरणं प्रिये ।
केशवस्य शरीरे वै स लीनो भवति ध्रुवम् ॥२६॥
कृष्णाय प्रेंखा दातव्या तस्याः पुण्यमनन्तकम् ।
स्वर्णप्रेंखा राजती वा काष्ठीया वा तथाऽऽम्बरी ॥२७॥
देया वै विष्णवे तस्याः फलं वैकुण्ठवासनम् ।
प्रेंखायां च हरिं कृष्णमान्दोलयेन्मुहुः शनैः ॥२८॥
कुर्याज्जागरणं चैव मोक्षदं पुण्यमत्र यत् ।
कन्यादानं गयाश्राद्धमश्वत्थारोपणं तथा ॥२९॥
द्वादश्यां जागरश्चापि वाजिमेधाऽयुतैः समन् ।
निमिषे निमिषे लक्ष्मि ! चाश्वमेधफलं भवेत् ॥३०॥
सर्वे देवाश्च तीर्थानि मुक्ताश्च मुनयस्तथा ।
समायान्ति जागरणे ह्येकादश्या निशि प्रभोः ॥३१॥
यावत्पदानि गृहतः कृष्णस्याऽऽयतनं प्रति ।
जागरार्थं गच्छतश्च पादयोः पांसवः खलु ॥३२॥
स्पृशन्ति यावत्संख्यानि तावत्सहस्रवत्सराः ।
दिवि भोगान् प्रभुक्त्वा च गोलोकं धाम चाप्नुयात् ॥३३॥
एकदा शंकरं देवी पार्वती प्राह जागरे ।
कथं शंभो वादयन् वै रात्रौ डमरुं नृत्यसि ॥३४॥
शंभुः प्राह मया देवी हरिवासरजागरः ।
क्रियते कृष्णतुष्ट्यर्थं यत्राऽऽलस्यं भवेन्नहि ॥३५॥
यथाकथंचिदपि तु जागरितव्यमेव वै ।
संगीतेन सुनृत्येन कीर्तनेन सुरासतः ॥३६॥
नरनारीसमुदायकृतोत्सवेन क्रीडया ।
कथया वार्तया तालीवादनेन च सेवया ॥३७॥
कृष्णं स्मरता भक्तेन जागरितव्यमेव यत् ।
यत्राऽऽलस्यं प्रमादो वा भवेन्नैव तथाऽऽचरेत् ॥३८॥
इत्यहं कृष्णतुष्ट्यर्थं करोमि नृत्यजागरम् ।
त्वया पुनरिदं कार्यं स्मर्तव्यः कमलापतिः ॥३९॥
एकादश्यां न भोक्तव्यं कर्तव्यो जागरस्तथा ।
गोष्ठ्यां समागतस्तत्र सोपि याति परां गतिम् ॥४०॥
मेरुमन्दरमात्राश्च कृताः पापस्य राशयः ।
कृष्णजागरणे सर्वे दह्यन्ति तूलराशिवत् ॥४१॥
सर्वतीर्थक्रतुभ्योऽपि जागरः कृष्णवल्लभः ।
सर्वे देवाः समायान्ति जागरे कृष्णवल्लभे ॥४२॥
नार्यो भवन्ति ह्यप्सराश्च जागरे कृष्णवल्लभाः ।
इत्युक्त्वा च हरोपि विरराम कृष्णवल्लभे ! ॥४३॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने द्वारिकायां शंखोद्धारतीर्थपिण्डारकतीर्थरुक्मवती-सरिद्गस्त्यतडागयज्ञतीर्थैकादशीद्वादशी-व्रतजागरणादिप्रशंसननामा त्रिंशदधिक-द्विशततमोऽध्यायः ॥ २३० ॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! सिंहराशिगते बृहस्पतौ मुनिः ।
नारदो गौतमाश्रमं ययौ गोदावरीतटे ॥ १ ॥
एकवर्षमुवासात्र दृष्ट्वाऽऽयातानि सर्वशः ।
तीर्थानि पावनान्येव वर्षकालं स्थितानि हि ॥ २ ॥
वाराणसी कुरुक्षेत्रं मधुपुरी ह्यवन्तिका ।
माया कांची च साकेता गया कुंकुमवापिका ॥ ३ ॥
तिस्रो गया हरिहरक्षेत्रं च पुरुषोत्तमा ।
प्रभासादीन्यरण्यान्याश्रमा गंगा सरस्वती ॥ ४ ॥
तापी पयोष्णी सरयू भीमरथी च गण्डकी ।
कृष्णा स्वर्णा च कावेरी सरांसि झरणा यमी ॥ ५ ॥
चतुर्दशसु लोकेषु भवन्ति यानि तानि वै ।
गिरयो भूस्तरा द्विपाः स्थिता गोदावरीतटे ॥ ६ ॥
सिंहे बृहस्पतौ तत्र वर्षमेकं प्रहर्षिताः ।
सिन्धवः पुष्कराद्याश्च मर्यादापर्वतास्तथा ॥ ७ ॥
प्रयागं वेदशास्त्राणि सिद्धर्षिमुनिदेवताः ।
पितरोऽप्युसुराश्चापि भूसुरा योगिसाधवः ॥ ८ ॥
साध्व्यो देव्यश्च देवाश्च वर्षमूषुः प्रहर्षिताः ।
गौतमो नारदो वीक्ष्य तान्यवसन् महर्षयः ॥ ९ ॥

क्षालयित्वा स्वपापानि तैर्थिकैरर्पितानि वै ।
गौतम्यां च ततो गन्तुमुद्युक्तानि तु तानि वै ॥१०॥
तीर्थान्यासन् तदा गोदावरी नारदमब्रवीत् ।
एतानि सर्वतीर्थानि मत्प्रसंगेन नारद ॥११॥
निष्पापानि प्रजातानि पापानि प्रददुश्च मे ।
मया तत्पापभारं क्व क्षेप्तुं गन्तव्यमेव यत् ॥१२॥
अधुनाऽहं दह्यमाना तत्तत्पापाग्निभिः प्रभो ।
क्व यामि भो मुनेऽत्यर्थं दुःखिता किं करोम्यनु ॥१३॥
श्रुत्वा तन्नारदो ध्यात्वा क्षणं मौनं समास्थितः ।
तावच्च गौतमो योगी तत्रायातो मुनीश्वरः ॥१४॥
तीर्थान्याहुर्मुनिं तत्र त्वत्प्रसादेन गौतमी ।
भूतले यत्समायाता तथा वै पाविता वयम् ॥१५॥
तथा त्वस्मत्प्रपापानि गोदावर्याऽर्जितानि वै ।
पापमुक्ता जायते सा तत्तु गौतम चिन्त्यताम् ॥१६॥
गौतमोऽचिन्तयत् तादृक् तीर्थं पापविनाशकम् ।
तथापि तस्य प्रज्ञायां न भातं बलवत्तदा ॥१७॥
मौनमास्थाय श्रीकृष्णं चिन्तयामास गौतमः ।
तावदाकाशवाग्देवी हर्षयन्ती जगाद ताम् ॥१८॥
शृण्वन्तु तीर्थमुन्याद्याः कृपया संवदाम्यहम् ।
पश्चिमस्य समुद्रस्य तीरमाश्रित्य वर्तते ॥१९॥
द्वारकाक्षेत्रवर्यं च यत्रास्ते गोमती शुभा ।
पश्चिमाभिमुखो यत्र महाविष्णुः सदा स्थितः ॥२०॥
तत्सर्वं पापराशीनामुग्राणामपि दाहकम् ।
तद् गम्यतां च गौतम्याः पापदाहाय देवताः ॥२१॥
श्रुत्वा सर्वोत्तमं क्षेत्रं जगर्जुस्तीर्थदेवताः ।
जितं भो जितमस्माभिर्धन्या धन्यतमा वयम् ॥२२॥
इत्युक्त्वा निर्ययुः सर्वे द्वारकां कृष्णपालिताम् ।
दुर्लभो द्वारिकावासो दुर्लभं कृष्णदर्शनम् ॥२३॥
दुर्लभं गोमतीस्नानं रुक्मिणीदर्शनं तथा ।
द्वारकादर्शनं पुण्यं चास्माकं संभविष्यति ॥२४॥
नारदो गौतमो गोदावरी तीर्थानि देवताः ।
सर्वे चाभ्याययुर्द्वारावतीसीमान्तमादरात् ॥२५॥
पृष्टवन्तो नारदं च मुदा तीर्थविधिं च ते ।
प्राह वै नारदस्तांश्च विधिं च जानाति यादृशम् ॥२६॥
कृतस्नानस्तु गोमत्यां ततः सम्पूज्य गोमतीम् ।
कृष्णस्य दर्शनं कुर्यात् साधून् विप्रान् प्रभोजयेत् ॥२७॥
कृष्णप्रसादं संभुज्य शयीत भुवि तीर्थकृत् ।
प्रभाते च पुनः स्नात्वा सम्पूज्य परमेश्वरम् ॥२८॥
प्रदक्षिणं नमस्कृत्वा सद्गुरून् प्रणिपत्य च ।
गीतं च कीर्तनं कुर्यात् भजनं श्रीहरेस्तथा ॥२९॥
ब्रह्मचर्यं प्ररक्षेच्च नियम्येतेन्द्रियाणि च ।
देवानां च सतां पादसंवाहनमथाऽऽचरेत् ॥३०॥
दर्शनं पूजनं कुर्याद् दानं दद्याच्च शक्तितः ।
अपि स्वल्पं यथाशक्ति कृतं कोटिगुणं भवेत् ॥३१॥
एकग्रासस्य दानस्य यावद्भूदानजं फलम् ।
एकस्मिन् भोजिते साधौ राजसूयाऽयुतं फलम् ॥३२॥
उपानदन्नपानीयपादुकाछत्रकम्बलान् ।
वासांसि तोयपात्राणि दद्यात् कृष्णस्य तुष्टये ॥३३॥
यस्य हस्तौ च पादौ च मनो जिह्वा जनीन्द्रियम् ।
संयतानि भवेत्तस्य तीर्थपुण्यमनन्तकम् ॥३४॥
परान्नं परपाकं च परवस्तु विवर्जयेत् ।
श्रोतव्या सत्कथा विष्णोर्जप्तव्यं नाम वै हरेः ॥३५॥
उत्सवश्च प्रकर्तव्यो गीतवादित्रनिःस्वनैः ।
आरात्रिकं फलं चापि नैवेद्यं चार्पयेत्तथा ॥३६॥
षोडशवस्तुभिः कृष्णपूजनं कारयेत्तथा ।
न शक्यते फलं तस्य वक्तुं वै युगसंख्यया ॥३७॥
एवं ते नारदेनोक्तास्तीर्थदेवमहर्षयः ।
चक्रुस्तीर्थं यथोक्तं तत्सर्वं भक्तिसमन्वितम् ॥३८॥
शृण्वन्ति तत्कथाः केचिद् वर्णयन्ति गुणान्तरे ।
गायन्ति च यशः केचित्स्मरन्ति श्रीहरिं परे ॥३९॥
केचिज्जपन्ति तन्नाम केचित् कुर्वन्ति दर्शनम् ।
उत्सवैश्च व्रजन्त्यन्ये नृत्यन्ति चापरे तदा ॥४०॥
केचिद् गर्जन्ति युगपज्जयशब्दं हरेर्मुहुः ।
गृहं हरेर्मार्जयन्ति रटन्ति वैष्णवं मनुम् ॥४१॥
प्रेममग्नाः प्रहसन्ति स्पृशन्ति साधुपत्कजम् ।
कुर्वन्ति गुणगानं मिलिता पथि सर्वथा ॥४२॥
मण्डलीभूय तीर्थानि कुर्वन्ति तैर्थिकं विधिम् ।
तान् दृष्ट्वा ब्रह्महाः शुद्धये सत्यं सत्यं वदामि ते ॥४३॥
एते वै वैष्णवाः सर्वे नरनारी स्वरूपिणः ।
प्रयागादीनि तीर्थानि क्षेत्राणि शैलसागराः ॥४४॥
नररूपधराः सर्वे संघं कृत्वा प्रयान्ति वै ।
गंगाद्याः सरितो देव्यो नारी रूपैर्युयुस्तदा ॥४५॥
कुंकुमवापिका स्वस्यास्तीर्थान्यादाय संययौ ।
चतुर्दशस्तरस्थानां संघो दिव्यो ह्यभूत्तदा ॥४६॥
वादनं कीर्तनं संघे सर्वे कुर्वन्ति वै तदा ।
द्वारिकाया महायात्रा कृता संघेन वै तदा ॥४७॥

गोमत्यां च कृतं स्नानं कृष्णस्य दर्शनं कृतम् ।
यात्राविधिः कृतः सर्वः पापं सर्वं विनाशितम् ॥४८॥
गोदावरी संघयुक्ता चातिशुद्धाऽभवत्तदा ।
तत्कालीनं रजस्तेषां पथि वै गच्छतां च यत् ।
स्पृष्टं स्यादश्वमेधानां पुण्यदं वर्णयामि किम् ॥४९॥
एकैकस्मिन्पदे दत्ते द्वारकापथि गच्छताम् ।
पुण्यं क्रतुसहस्राणां प्रत्येकरजसा भवेत् ॥५०॥
नारद प्राह सर्वांस्तान् दिव्यांस्तैर्थिकसंघगान् ।
राशयः पुण्यपुञ्जानां युष्माकं वै सहस्रशः ॥५१॥
यैः कृतं गोमतीतीर्थे दर्शनं श्रीहरेस्तथा ।
यूयं सर्वाणि तीर्थानि क्षेत्राण्यपि च कृत्स्नशः ॥५२॥
धन्यान्यत्र भवद्भिश्च दृष्टा कृष्णपुरी यतः ।
इमां पश्यति तीर्थानि ! यूयं सर्वाः सरिद्वराः ! ॥५३॥
द्वारका नश्च पापानां हन्त्री तीर्थोत्तमोत्तमा ।
ब्रह्माण्डस्य कीर्तिकरी द्वारका कृष्णवल्लभा ॥५४॥
गोमती कृष्णदेवश्च रुक्मिणी च हरिप्रिया ।
गोलोकसदृशी चेयं राजते सर्वतोऽधिका ॥५५॥
भू वैकुण्ठमिति बोध्या वैकुण्ठप्रतिमा न्वियम् ।
नारदेन प्रशंसायां वर्णितायां तदा स्वयम् ॥५६॥
द्वारका गोमती मूर्तिमती स्वागतकांक्षया ।
समागता तदा देवैस्तीर्थैश्चापि नमस्कृता ॥५७॥
नारदश्च तदा प्राह द्वारकां गोमतीं तथा ।
नमस्कुर्वन्ति ते पादौ गौतमी च प्रयागराट् ॥५८॥
गंगा च नर्मदा सूर्यपुत्री प्राची सरस्वती ।
चन्द्रभागा च सरयूः क्षिप्रा कुंकुमवापिका ॥५९॥
सिन्धुः शोणा गण्डकी च विपाशा तपती तथा ।
कृष्णा भीमरथी स्वर्गा पयोष्णी त्वां नमन्ति वै ॥६०॥
इयं वाराणसी ते वै पादयोर्नमति ध्रुवम् ।
कुरुक्षेत्रं मथुरा चावन्तिका त्वां नमन्ति वै ॥६१॥
मायाऽयोध्या गया कांची विशाला त्वां नमन्ति च ।
शालग्रामं महाक्षेत्रं प्रभासं पुरुषोत्तमम् ॥६२॥
सप्ताब्धयो धेनुकं च दशारण्यं च दण्डकम् ।
अर्बुदं च कुरुक्षेत्रं धर्मारण्यं च कालकम् ॥६३॥
नारायणसरश्चापि पुष्करं गोकुलं तथा ।
मानसं मेरुकैलासौ मन्दरो हिमवाँस्तथा ॥६४॥
विन्ध्यो नमन्ति ते पादौ द्वारिके ! कृष्णसेविते ! ।
वदतो नारदस्यैवं द्वारका हृष्टमानसा ॥६५॥

उवाच ललितां वाचं करैः संस्मृत्य गोमतीम् ।
यूयं धन्याः समायाता मम लाभो महानयम् ॥६६॥
सर्वेषां स्वागतं कुर्वे भुञ्जन्तां कृष्णभोजनम् ।
पिबत कृष्णचरणाऽमृतं तिष्ठत चात्र वै ॥६७॥
कृष्णयोगान्मम स्पर्शात् पापानि भवतां खलु ।
प्रज्वलितानि सर्वाणि कृपया श्रीहरेर्हि वः ॥६८॥
इति स्वागतसंलापैः सर्वानानन्दयत्तदा ।
अदृश्यन्त च वै व्योम्नि ब्रह्माद्या देवतागणाः ॥६९॥
शिवा शिवौ गणैर्युक्तौ यक्षगन्धर्वकिरणैः ।
मरुतो लोकपालाश्च सिद्धा विद्याधरास्तथा ॥७०॥
विश्वादित्याः ग्रहाः सर्वे भृग्वाद्याः ऋषयस्तथा ।
महर्षयः सनकाद्या वैराजाश्चाप्यधीश्वराः ॥७१॥
पत्नीव्रताश्च नृत्यन्ति चाऽवतेरुः प्रहर्षिताः ।
क्षमायां स्नात्वा च गोमत्यां ते चक्रुः कृष्णदर्शनम् ॥७२॥
प्रसादं च जलं पीत्वा दृष्ट्वा संघं च तैर्थिकम् ।
परमाश्चर्यमापन्नास्तीर्थानि जयतेति च ॥७३॥
चक्रुर्वै घोषणां वारंवारं हृष्टा हृदन्तरे ।
द्वारिकया च तेषां वै स्वागतं माननं कृतम् ॥७४॥
गोमत्यापि च सर्वेषां पापप्रक्षालनं कृतम् ।
प्रणेमुर्युगपत्सर्वे देवास्तीर्थानि भावतः ॥७५॥
देवसंघस्तीर्थसंघः परस्परं प्रणेमतुः ।
प्रणेमुर्युगपत् सर्वे प्रहृष्टाश्चाऽभवँस्ततः ॥७६॥
ज्ञात्वा श्रैष्ठ्यं द्वारकाया गोमत्याः श्रैष्ठ्यमित्यपि ।
कृष्णकृष्णेतिकृष्णेति जय कृष्णेति वादिनः ॥७७॥
गोमत्या द्वारकायाश्च श्रियः कृष्णस्य ते तदा ।
पूजनं दिव्यवस्त्रैश्च दिव्यगन्धानुलेपनैः ॥७८॥
सुदिव्याभरणैर्भक्त्या सद्रत्नहीरकादिभिः ।
दिव्यमाल्यविभूषाभिः कर्पूराऽगुरुचन्दनैः ॥७९॥
तुलस्या केसरैर्धूपैर्नीराजनप्रदक्षिणैः ।
नैवेद्यैर्विविधैर्दिव्यैर्मिष्टैर्मिष्टान्नपानकैः ॥८०॥
ताम्बूलैः स्वादुचूर्णैश्च प्रियैश्चोपायनैस्तथा ।
महामांगल्यसद्द्रव्यैश्चामरव्यजनादिभिः ॥८१॥
सम्पूज्य कृतकृत्यास्ते ननृतुः पुरतो हरेः ।
तदा कृष्णः स्वयमाविर्भूतस्तान्प्राह संहसन् ॥८२॥
भो तीर्थानि तथा देवा देव्यः शैला महर्षयः ।
प्रीतोऽहं भवतां तीर्थविधानेन च वोऽस्तु शम् ॥८३॥
तीर्थाद्याश्च तदा प्राहुस्तारिताः परमात्मना ।
प्राप्तः कामवरोऽस्माभिर्भवतः कृपया विभो ॥८४॥

भूयात् तव पदाम्भोजे भक्तिर्नो ह्यनपायिनी ।
तथा स्याच्च हि सर्वेषां वन्द्येयं द्वारका सदा ॥८५॥
इत्युक्त्वा च तदा संघौ द्वावपि द्वारकां तथा ।
गोमतीं सर्वतीर्थानामाधिपत्येऽभ्यषिञ्चताम् ॥८६॥
दिव्योपचारकैः पूजां चक्राते प्राञ्जली मुहुः ।
तदाऽऽयाता महादिव्याः पुरुषाः पार्षदा हरेः ॥८७॥
ऊचुश्च तीर्थराजानां महाराज्ञी त्वियं शुभा ।
द्वारका सेवनीया वै स्थीयन्तां स्वेच्छया सदा ॥८८॥
तदा प्रदक्षिणं कृत्वा द्वारकां प्रणिपत्य च ।
आवासाश्चक्रिरे तत्र क्षेत्रतीर्थसुरादयः ॥८९॥
पञ्चाशत्कोटितीर्थानि स्थितान्युत्तरतः प्रिये ! ।
नद्यस्तु पूर्वदिग्भागे तीर्थैः षष्टिप्रकोटिभिः ॥९०॥
दक्षिणस्यां तीर्थशैलाऽरण्यादीनि सरांसि च ।
स्थितानि स्वकुटुम्बैश्च नवनवतिकोटिभिः ॥९१॥
सागराद्याश्च सप्ताद्याः पश्चिमायां दिशि स्थिताः ।
विदिशासु च सर्वासु तीर्थसंख्या न विद्यते ॥९२॥
शतकोटिप्रतीर्थानि वसन्त्युदधिसंगमे ।
वाराणसी च हीशाने ह्यवन्ती पूर्वदिक्स्थिता ॥९३॥
आग्नेय्यां कुंकुमवापी कांची दक्षे तु माथुरी ।
नैर्ऋत्यां च स्थिता माया ह्ययोध्या पश्चिमे स्थिता ॥९४॥
वायव्यां कुरुक्षेत्रं च हरिक्षेत्रं तथोत्तरे ।
तीर्थक्षेत्रादिभिः प्रथमाऽऽवरणं प्रपालितम् ॥९५॥
प्रजेश्वरैर्द्वितीयं तु तृतीयं देवनायकैः ।
चतुर्थमृषिसिद्धौघैर्गंगाद्याभिश्च पंचमम् ॥९६॥
षष्ठं चावरणं तीर्थैः काश्याद्याभिश्च सप्तमम् ।
अष्टमं क्षेत्रमुख्याद्यैर्नवमं चाऽऽश्रमादिभिः ॥९७॥
मेर्वाद्यैर्दशमं दिव्यदृशः पश्यन्ति तानि वै ।
इति वै पार्षदा देवा स्तीर्थानि चान्यपावना ॥९८॥
निवासं चक्रिरे स्वेषां द्वितीयैर्वै स्वरूपकैः ।
विदायं ते समगृह्य श्रीकृष्णाद् गोमतीवरात् ॥९९॥
तीर्थं कृत्वा ययुः सर्वे तीर्थदेवादिपार्षदाः ।
आयान्ति प्रतिवर्षं च सिंहराशिस्थिते गुरौ ॥१००॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने द्वारकामाहात्म्ये सिंहराशिस्थबृहस्पतौ गोदावरीसहित-सर्वतीर्थसर्वदेवसर्वपार्षदादीनां द्वारिकातीर्थे संघशः समागमनं तत्र वासश्चेत्यादिनिरूपणनामैक-त्रिंशदधिकद्विशततमोऽध्यायः ॥२३१॥

श्रीनारायण उवाच—

विशेषेण महालक्ष्मि ! सिंहराशिस्थिते गुरौ ।
द्वारकातीर्थकर्तॄणां दहन्ति पापराशयः ॥ १ ॥
प्रतिवर्षं प्रकुर्वन्ति द्वारकागमनं तु ये ।
तेषां पादरजः स्पृष्ट्वा मुक्तिं प्रयान्ति मानवाः ॥ २ ॥
दिलीपेन वशिष्ठाय पृष्टं पूर्वं वदामि तत् ।
अन्यक्षेत्रे कृतं पापं नश्यति तीर्थसेवनात् ॥ ३ ॥
तीर्थक्षेत्रजपापानां वज्रलेपत्वमुच्यते ।
वज्रलेपायतोऽघस्य क्वाऽप्यस्ति मोक्षणं न वा ! ॥ ४ ॥
यत्र पापप्ररोहो न तत्क्षेत्रं कथ्यतां मुने ! ।
श्रुत्वा तद् दिव्यचक्षुष्को वशिष्ठः प्राह भूपतिम् ॥ ५ ॥
मायानन्दो यतिः कश्चिद् त्रिदण्डी काशिकास्थितः ।
युवत्यां खलु मातंग्यां सुरूपायां विमोहितः ॥ ६ ॥
राजसेन च भावेन चाकृष्टो मद्यमांसकम् ।
युयुजे भोजने कामगर्वेण मतिमोहितः ॥ ७ ॥
चाण्डालतां वहन् रात्रौ चौर्यं करोति लोभतः ।
पापानि वर्धितान्यस्य मातंग्याः संगतेर्मुहुः ॥ ८ ॥
काश्यां कालवशात्सोऽपि मृतस्तिर्यगवृकोऽभवत् ।
ततो व्याघ्रो मर्कटः श्वा शृगालः शूकरोऽभवत् ॥ ९ ॥
पापं जन्मसहस्रैस्तन्नाऽनश्यदथ चोषरे ।
निर्जने राक्षसो जातिस्मरोऽभूत्काशिकाबलात् ॥१०॥
अटन्नरण्यशैलांश्च विन्ध्याद्रिं प्राप राक्षसः ।
तत्राऽभूत् तस्य साश्चर्यं मोक्षणं पापयोनितः ॥११॥
द्वारावत्यां महायात्रां कृत्वा च कृष्णदर्शनम् ।
स्नात्वा च गोमतीनीरे पीत्वा कृष्णामृतं जलम् ॥१२॥
कश्चिद् विप्रो गयावासी गच्छन् गृहं पथि स्थितः ।
विन्ध्याद्रौ वृक्षमुस्तम्बे विश्रान्त्यर्थं क्षणं सदा ॥१३॥
तमूर्ध्वतिलकं विप्रं भक्तं तुलसीमालिकम् ।
गोमतीनीरसंपूतं तत्र ददर्श राक्षसः ॥१४॥
तस्य दर्शनमात्रेण वज्रलोपोऽघसञ्चयः ।
भाविदुःखप्रदोऽप्यस्य भस्मसादभवत् क्षणात् ॥१५॥
रेजे पुण्यप्रकाशेन कृष्णपान्थिकदर्शनात् ।
ततोऽभिमुखमभ्येत्य द्वारकाकृष्णपान्थिकम् ॥१६॥
नत्वा स्तुत्वा च तं प्राह तवाऽद्य दर्शनान्मम ।
वज्रलेपोऽघसंभारो दग्धो मुक्तोऽस्मि सर्वथा ॥१७॥
ततः पान्थोऽव्रजत् स्वस्य गृहं चाप्यथ राक्षसः ।
सम्प्राप्तो द्वारकां तत्र ज्ञात्वा तीर्थबलं महत् ॥१८॥

गोमत्यां स्वतनुं त्यक्त्वा प्राप्तश्च वैष्णवं पदम् ।
न प्ररोहन्ति पापानि यस्या यात्रालुदर्शनात् ॥१९॥
द्वारावत्यास्तदा साक्षाद् योगे वाच्यं नु किं फलम् ।
वज्रलेपाऽतिलेपानां पापानां दाहकं महत् ॥२०॥
सर्वक्षेत्रप्रमूर्धन्यं क्षेत्रं गोलोकजं परम् ।
द्वारकाक्षेत्रमेवास्ति कृष्णेन स्थापितं भुवि ॥२१॥
श्रुत्वा चापि दिलीपोपि तीर्थार्थं द्वारकां ययौ ।
कृष्णं च गोमतीं दृष्ट्वा परां सिद्धिमुपाययौ ॥२२॥
द्वारकायां स्थिताश्चतुर्भुजाः नराश्च योषितः ।
गोलोकस्था भवन्त्येव तान्पश्यन्ति दिवौकसः ॥२३॥
अपि कीटपतंगाद्या जडाश्च स्थावरास्तथा ।
द्वारकावासमापन्ना दिव्या गोलोकमूर्तयः ॥२४॥
गतिर्द्वारवतीस्थानां दुर्लभा चोर्ध्वरेतसाम् ।
द्वारकायां हुतं जप्तं दत्तं स्नातं तपः कृतम् ॥२५॥
सर्वं कोटिगुणं लक्ष्मि ! ह्यनन्तं कृष्णसन्निधौ ।
द्वारकायां स्थिताः सर्वे नरा नार्यश्चतुर्भुजाः ॥२६॥
द्वारकायां न वै पापं प्ररोहति हरेर्बलात् ।
सुपुण्याः पांसवो यस्याः पापिनां मुक्तिकारकाः ॥२७॥
कुशावर्तात् समारभ्य यावच्च सागरान्विता ।
गोमती भवति तत्र सिंहराशिगते गुरौ ॥२८॥
स्नानं तु द्विषष्टिगोदावरीस्नानाधिकं फलेत् ।
द्वारकां गोमतीं गोपीसरः श्रीकृष्णमेव च ॥२९॥
स्मरन्ति प्रत्यहं ये तु सहस्रयोजनस्थिताः ।
तेऽपि द्वारावतीतीर्थपूर्णफलप्रभागिनः ॥३०॥
मित्रध्रुग्भ्रातृहा गोघ्नः परदाररतश्च यः ।
मातृहा पितृहाभ्रूणब्रह्महा गुरुतल्पगः ॥३१॥
सर्वपापैः प्रमुच्यन्ते द्वारकाकृष्णदर्शनात् ।
विशेषेण तु वैशाख्यां जयन्त्यां विष्णुवासरे ॥३२॥
माघे च फाल्गुने चैव चैत्रे चापि विशेषतः ।
पौर्णमास्याममायां चैकादश्यां संगमे तथा ॥३३॥
द्वादश्यां च प्रतिपक्षं रोहिण्यां श्रवणे तथा ।
पुष्ये पुनर्वसौ चैव व्यतीपाते दिनक्षये ॥३४॥
सपुष्यतिथिनक्षत्रे ग्रहणे चन्द्रसूर्ययोः ।
श्रीकृष्णदर्शनं द्वारावत्यामनन्तपुण्यदम् ॥३५॥
यस्यां सत्रं प्रपां सौधं प्रासादं मठमेव वा ।
यतिसाधुवासशालां साध्वीशालां च मन्दिरम् ॥३६॥
वापीं कूपं तडागं च जीर्णोद्धारं च जीविकाम् ।
मूर्तेर्विष्णोः प्रतिष्ठां च राजभोगादिकं तथा ॥३७॥
कारयित्वा नरो नारी भुक्त्वा भोगान् दिवि स्थितान् ।
वैराजान् वैकुण्ठभोगान् प्राप्नुयात् कृष्णसाम्यताम् ॥३८॥
स्थापयेद् द्वारवत्यां यो मूर्तिं दारुशिलामयीम् ।
सार्वभौमत्वमाप्त्वैव श्रीविष्णोः साम्यतां व्रजेत् ॥३९॥
द्वारिकातीर्थसंयाताः कुलमेकोत्तरं शतम् ।
तारयन्त्येव गोत्राणां सप्तानां कृष्णयोगतः ॥४०॥
एकैकस्मिन्पदे दत्ते पुरीं द्वारावतीं प्रति ।
पुण्यं क्रतुसहस्राणां कलौ भवति देहिनाम् ॥४१॥
पाषाणश्चक्रचिह्नोऽपि दृष्टो येन स मुक्तिभाग् ।
सुदर्शनश्चैकचक्रो लक्ष्मीनारायणावुभौ ॥४२॥
त्रिभिश्चैवाऽच्युतश्चैन्द्रश्चतुःचक्रो जनार्दनः ।
पञ्चभिर्वासुदेवः सः षड्भिः प्रद्युम्न एव सः ॥४३॥
सप्तभिर्बलदेवः स चाष्टभिः पुरुषोत्तमः ।
सर्वात्मा नवचक्रश्च दशचक्रो .दशप्रभुः ॥४४॥
एकादशैर्महाविष्णुर्द्वादशात्मा तु मोक्षदः ।
अतऊर्ध्वमनन्तोऽसौ भुक्तिमुक्तिप्रदायकः ॥४५॥
वृषोत्सर्गं प्रकुर्वन्ति वैशाख्यां चैव कार्तिके ।
द्वारकायां पिशाचत्वं मुक्त्वा मुक्ताः पितामहाः ॥४६॥
कुलकोटिसहस्राणि कुलकोटिशतानि च ।
वसन्ति तत्पदं विष्णोस्त्रिस्पृशाकृष्णदर्शनात् ॥४७॥
सुकर्मस्था विकर्मस्था यान्ति श्रीकृष्णमन्दिरे ।
सप्तषष्टिषु तीर्थेषु स्नानात् किं वै मम प्रिये ॥४८॥
सम्प्राप्ते मानुषे देहे द्वारकां न गतो यदि ।
द्वारकास्था जना दिव्याः शोचन्त्येनं वृथाजनिम् ॥४९॥
इति ते कथितं लक्ष्मि ! मम क्षेत्रस्य सर्वथा ।
माहात्म्यं श्रवणाद् यस्य मुक्तिः करगता मता ॥५०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने द्वारकामाहात्म्ये काशीस्थमायानन्दयतेर्वज्रलेपपापनाशकद्वारकायात्रालुमहिमकथनादिनामा द्वात्रिंशदधिकद्विशततमोऽध्यायः ॥२३२॥

श्रीलक्ष्मीरुवाच—

नारायण महाविष्णो कृष्ण श्रीकमलापते ।
द्वारकावृत्तसंश्रावान्ममाऽऽनन्दः प्रजायते ॥ १ ॥
कृतकृत्या कृता चाऽऽद्य कृपालुना त्वया प्रभो ।
त्रिस्पृशायास्तु माहात्म्यं स्वरूपं वापि मे वद ॥ २ ॥

श्रीनारायण उवाच—

शृणु लक्ष्मि! त्रिस्पृशायां माहात्म्यं कथयामि ते।
यत्समं न व्रतं चान्यत् फलदं मोक्षदं तथा ॥ ३ ॥
यत्फलं तु समाश्रुत्य मुच्यते कर्मबन्धनात्।
मोक्षं याति व्रतादेशाद् व्रतात् हृष्यति माधवः ॥ ४ ॥
तदहं ते प्रवक्ष्यामि सर्वरुंकल्पपूरकम्।
प्रत्यक्षमर्चितः कृष्णः कृतं येन व्रतं हि तत् ॥ ५ ॥
त्रिस्पृशाया नामवक्ता पुरश्चरणपुण्यभाक्।
न वेदैर्न पुराऽऽख्यानैर्न यज्ञैस्तीर्थराशिभिः ॥ ६ ॥
अन्यैरसंख्यकृच्छ्रैश्च पूजितैर्देवतादिभिः।
मुक्तिः स्यात्पद्मजे तस्य त्रिस्पृशा नार्जिता यदि ॥ ७ ॥
ब्रह्मणाऽभिसमापृष्टश्चाहं संप्रोक्तवाँस्तदा।
विषयार्तिजनव्राततारणाय महापथः ॥ ८ ॥
त्रिस्पृशाव्रतमेवोक्तो नान्यः पन्थाः प्रमुक्तिदः।
इन्द्रियवाजिमत्तानां स्थैर्ये न तपसा विना ॥ ९ ॥
तपस्त्रिस्पर्शगा ह्येकादशी प्रोक्ता मया तदा।
विषयाऽरण्यमग्नाश्च करिष्यन्ति यदि व्रतम् ॥१०॥
त्रिस्पृशायास्तदा तेषां मुक्तिः शाश्वतकालिकी।
सेयं मोक्षप्रदा कार्या कृता बहुसदुत्तमैः ॥११॥
कार्तिके शुक्लपक्षे सा यर्हि भवति योगतः।
सोमयज्ञाऽयुतपुण्यप्रदा सा मुक्तिदोत्तरे ॥१२॥
हत्याकोटिमहापापनाशयित्री महाबला।
ब्रह्महत्यादिपापानि त्रिस्पृशाव्रतसंश्रयात् ॥१३॥
यान्ति प्रविलयं सद्यः पापेष्वन्येषु का कथा।
न प्रयागे पुष्करे वा बदर्यां काशिकास्थले ॥१४॥
गोमत्यां नैव रेवायां रैवते नेन्द्रद्युम्नके।
कुंकुमवाप्यां केदारे रामेश्वरे न माथुरे ॥१५॥
मुक्तिर्भवेन्महालक्ष्मि! त्रिस्पृशा यदि नो कृता।
प्राणत्यागात्प्रयागे वा काश्यां कुशपुरे तथा ॥१६॥
गोमत्यां स्नानकरणात् या मुक्तिः शाश्वती मता।
सा गृहे जायते मुक्तिस्त्रिस्पृशाया उपोषणात् ॥१७॥
अज्ञानां मुक्तिदा प्रोक्ता स्त्रीशूद्राणां विशेषतः।
विज्ञानदा सदा पुण्या पवित्रा परमार्थदा ॥१८॥
कल्याणजननी सद्यो धर्मार्थकाममोक्षदा।
जीवनी विष्णुभक्तानां नारीणां तु विशेषतः ॥१९॥
सर्वेषां पावनी पुण्या जननी वेदमातृवत्।
पावनी कमलातुल्या रक्षिका रमया समा ॥२०॥
सांख्ययोगफलाधिक्यफलव्याप्तफलप्रदा।
तीर्थकोटिशतैर्युक्ता जाह्नवी स्नानकाम्यया ॥२१॥
गोमत्यां याति कृष्णस्य सन्निधौ शुद्धिहेतवे।
तीर्थकोटिसहस्राणि तिष्ठन्ति गोमती स्थले ॥२२॥
सापि व्रतं त्रिस्पृशायाः करोति पापशुद्धये।
ब्रह्महत्या सुरापानं गोवधः प्रमदावधः ॥२३॥
ब्रह्मदेवस्वहरणं मातापित्रोश्च ताडनम्।
गुरुद्रोहो हरेर्द्रोहस्तथा चाऽभक्ष्यभक्षणम् ॥२४॥
अगम्यागमनं हिंसा निन्दनं च सतां सदा।
अन्यानि क्रूरकर्माणि यानि पापानि चाप्यथ ॥२५॥
व्यपोहत्येव सा लक्ष्मि! त्रिस्पृशा पावनोत्तमा।
सरस्वत्यधिका या वै तीर्थाऽर्बुदाऽतिपूजिता ॥२६॥
कोटियज्ञाधिका होमदानपुण्याधिका च या।
जपकोट्यधिका पुण्या पुरुषार्थाऽधिका तथा ॥२७॥
सांख्ययोगाधिका चात्मज्ञानमूर्धन्यपूजिता।
त्रिस्पृशा व्रतरूपा वै कार्या मोक्षप्रदायिनी ॥२८॥
एकादशी सूर्ययोगे पश्चाच्च द्वादशी तथा।
त्रयोदशी निशाशेषे त्रिस्पृशैकादशी तु सा ॥२९॥
अरुणोदयवेलायां सूर्योदयस्य प्राग् यदि।
दशमी वर्तते चेत् स दशमीवेध उच्यते ॥३०॥
दशमीवेधजं दोषं न क्षमामि मम प्रिये!।
दशमीवेधसहिता न ह्युपोष्या क्वचिद्धि सा ॥३१॥
यथा रजस्वलादोषाद् दुष्यत्यपि च तत्पतिः।
तथैव दशमीविद्धैकादशी दोषदायिनी ॥३२॥
दशम्येकादशी भद्रा दिनैक्ये तु यदा भवेत्।
तदापि त्रिस्पृशा सा त्वासुरी वर्ज्या प्रयत्नतः ॥३३॥
दशमीमिश्रितं येन कृतं चैकादशीव्रतम्।
भुक्तं हालाहलं तेन कृतं पापं न तद्व्रतम् ॥३४॥
जन्मकोटिकृतं पुण्यं सन्तानं याति संक्षयम्।
पतति स्वकुलं स्वर्गाद् याति वै रौरवं ततः ॥३५॥
तस्माद् वै दशमीयुक्तं मद्दिनं वर्ज्यमेव यत्।
वृद्धौ त्याज्या वेधवती कर्तव्या द्वादशीयुता ॥३६॥
मोहिन्यै दशमीवेधे वासो दत्तोऽस्ति वेधसा।
महत्पापं ततो बोध्यं दशमीवेधयुग्व्रते ॥३७॥
वृद्धौ क्षये च वा तद्वत् सन्देहे समुपस्थिते।
ममाऽऽज्ञया सदा कार्या द्वादशी वल्लभा मम ॥३८॥
शृणु लक्ष्मि! प्रवक्ष्यामि त्रिस्पृशाव्रतसद्विधिः।
पलेन वा पलार्धेन तदर्धेनापि पद्मजे ॥३९॥

प्रतिमा मम सौवर्णी कारणीया यथावसु ।
ताम्रपात्रे तिलपूर्णे घटो रत्नजलादियुक् ॥४०॥
पत्रपुष्पश्वेतवस्त्रकर्पूरादियुतस्तथा ।
स्थाप्यो वै सर्वतोभद्रमण्डले धान्यनिर्मिते ॥४१॥
घटे स्थाल्यां काञ्चनी सा मूर्तिः स्थाप्या मम प्रिये ।
लक्ष्मीः स्थाप्या मम पार्श्वे ततः पूजां समाचरेत् ॥४२॥
आवाहनं चासनं च पाद्यं चार्घ्यं समर्पयेत् ।
तत आचमनीयं च जलस्नानं समर्पयेत् ॥४३॥
दुग्धस्नानं दधिस्नानं घृतस्नानं तदुत्तरम् ।
कारयेच्छर्करास्नानं मधुस्नानं समर्पयेत् ॥४४॥
अभिषेकं जलैस्तैर्थैः कारयेन्मार्जयेत् पटैः ।
धौत्रं च शाटिकां चांगरक्षकं कंचुकीं तथा ॥४५॥
उत्तरीयं तथा शाटीं यज्ञोपवीतमित्यपि ।
दद्यान्मंगलसूत्रं च कौस्तुभं तन्तिकामपि ॥४६॥
केशप्रसाधनं कुर्यात् तैलपुष्पादि धारयेत् ।
कबरीं साधयेत् चूडां गन्धयेद् ग्रन्थयेत्तथा ॥४७॥
कज्जलं नेत्रयोर्दद्याद् भाले पुण्ड्रं सचन्द्रकम् ।
चन्दनं कस्तुरीयुक्तं कर्पूराढ्यं समर्चयेत् ॥४८॥
नासानत्थीं चिबुकं च टिबकीं गण्डकेऽर्पयेत् ।
कुण्डले चैरने कर्णभूषणे श्रृंखले तथा ॥४९॥
सिन्दूरं कुंकुमं दद्यादोष्ठयोः रंगरंजनम् ।
कुर्याद् दद्यात् तुलस्याश्च हारान्पौष्पान्सुगुच्छकान् ॥५०॥
स्वर्णरत्नमणिहारान् श्रृंखलाः कटकाँस्तथा ।
ऊर्मिका रशनां दद्यात् किंकिण्याढ्यसुनूपुरान् ॥५१॥
पादुके नक्तके यष्ट्यौ दद्यादत्तरकेसरान् ।
मुकुटं शेखरान् कर्णपूरान् संधारयेत्तथा ॥५२॥
व्यजनं पादुके दद्याद् राजयोग्यस्वलंकृतीन् ।
तुलसीमालिके दद्याल्लक्ष्मीनारायणाय मे ॥५३॥
गुलालाऽबीररक्तानि चाऽक्षतान् कुसुमानि च ।
धूपं दीपं च नैवेद्यं दद्यात् श्रीविष्णवे जनः ॥५४॥
नैवेद्यानि मनोज्ञानि मिष्टान्नानि बहून्यपि ।
फलानि सुमधुराणि दद्याद्वै शीतलं जलम् ॥५५॥
सुगन्धं शान्तिदं चेष्टं जलपानं समर्पयेत् ।
ताम्बूलं बहुद्रव्याढ्यं दद्यान्मुखस्य शुद्धये ॥५६॥
दद्याच्च मुद्रिकां स्वर्णां दक्षिणां केशवाय वै ।
तद्यत्त्वपेक्षितं तत्र पूजायां तत् समर्पयेत् ॥५७॥
नीराजनं नवाऽऽवर्त्तं पञ्चवर्तिप्रकाशितम् ।
कुर्यात् ततः शुभ्रवस्त्रामार्जनं त्रिः पुनः पुनः ॥५८॥
आननाग्रे ततः कुर्याच्छंखभ्रामणमित्यथ ।
जलं त्वार्द्राम्बरं मूर्ध्न उत्तारयेत् सुभावतः ॥५९॥
दण्डवच्च स्तुतिं कुर्यात् प्रदक्षिणं पुनः पुनः ।
नमस्कारान् बहून् कुर्यात् क्षमायाचनमित्यपि ॥६०॥
पुष्पाञ्जलिं विकीर्यैव प्रार्थयेत्परमेश्वरम् ।
नेत्रे सम्मील्य तन्मूर्तिं ध्यायेत् तिष्ठँस्तदग्रतः ॥६१॥
दामोदराय वै पादौ जानुनी माधवाय च ।
गुह्यं कामस्वरूपाय कटिं वामनमूर्तये ॥६२॥
पद्मनाभाय नाभिं वै जठरं विश्वहेतवे ।
हृदयं ज्ञानदेहाय कण्ठं वैकुण्ठवासिने ॥६३॥
सहस्रबाहवे बाहू चक्षुषी योगमूर्तये ।
सहस्रशीर्षा शिरसि सर्वांगं स्वामिने तथा ॥६४॥
ध्यायामि व्यस्तरूपं वै समस्तं चान्तरे मम ।
ध्यानगम्यो महाराज ! पापं नाशयसि द्रुतम् ॥६५॥
स्मृतो हरसि पापानि दुःस्वप्नं दुर्विचिन्तितम् ।
दुर्निमित्तं भयं याम्यं दुःखं दुर्गतिसंभवम् ॥६६॥
अन्यच्च यद्भवेद् दैह्यं चैहिकं पारलौकिकम् ।
रक्ष तस्माच्च सर्वस्मादपराधाच्च दुःखदात् ॥६७॥
सदा भक्तिस्त्वयि चास्तु लक्ष्मीनारायण प्रभो ! ।
देहि त्वच्चरणे दास्यं नय वैकुण्ठमेव माम् ॥६८॥
त्रिसृप्तशायाः स्वयं धाता स्वामी नारायणः पतिः ।
भवानेव हरिर्मह्यं मोक्षं ददातु माधवः ॥६९॥
इति स्तुत्वा ततो नृत्यं गीतवादित्रसंयुतम् ।
सुस्वरं सुसमद्दश्यं कुर्याद् देवस्य सन्निधौ ॥७०॥
एवं प्रातः प्रभुं कृष्णं पूजयित्वा सुवर्णजाम् ।
मूर्तिमेकादशीरूपां लक्ष्मीरूपां विधानतः ॥७१॥
नमस्कृत्य ततो गच्छेत् कथायां सत्समागमे ।
कीर्तनेन तथा भक्त्या भजनेन जपेन च ॥७२॥
श्रवणेन स्मरणेन सेवनेनापि सर्वथा ।
अर्चनेनाऽथवा सम्यग्वन्दनेन दिनं नयेत् ॥७३॥
निराहारो जलाहारो नक्तभुक् चैकभोजनः ।
शक्तोऽशक्तो व्रतं कुर्यात् स्वेष्टसम्पत्फलप्रदम् ॥७४॥
मध्याह्नसमये दद्यात् ताम्बूलं भोजनं फलम् ।
जलं दद्यात्तथा शय्यां मञ्चगेन्दुकपार्श्वकाम् ॥७५॥
सायं जलं पुनर्दद्यादारात्रिकं विधानतः ।
पूजनं षोडशवस्तुवर्यैः कुर्याच्च भावतः ॥७६॥
एवं गुरुं च सम्पूज्य कुर्याज्जागरणं निशि ।
गीतनृत्यसमाचारकीर्तनाद्यभिसंयुतम् ॥७७॥

ततो निशान्ते हरये दत्त्वा चार्घं विधानतः ।
स्नानादिकां क्रियां कृत्वा साधून् विप्रान् सुभोजयेत् ॥७८॥
साध्वीश्च भोजयेद् बालान् दद्याद्दानानि दक्षिणाः ।
एवं च द्वादशीभागे त्रयोदश्यामथापि वा ॥७९॥
पारणार्थं प्रसादं वै भुंजीत भक्तसंयुतः ।
मण्डलं सर्वतोभद्रं घटं चापि हरिं तथा ॥८०॥
विसर्जयेद् विधानेन फलं मोक्षमवाप्नुयात् ।
त्रिस्पृशाया व्रताख्यानं श्रुत्वाऽस्य तत्फलं मिलेत् ॥८१॥
अश्वमेधसहस्राणि वाजपेयशतानि च ।
कृतान्येव कृतं येन त्रिस्पृशासमुपोषणम् ॥८२॥
त्रिस्पृशाव्रतकृदष्टोत्तरं शतं कुलानि वै ।
मातापितृप्रपक्षाणि तारयत्येव सर्वथा ॥८३॥
तैः सर्वैः सह संयुक्तो विष्णुलोके महीयते ।
तीर्थकोटिक्षेत्रकोटिफलभाक् त्रिस्पृशाव्रती ॥८४॥
नरा नार्यः सर्ववर्णा मुक्तिमायान्ति तद्व्रताः ।
ब्रह्मणा सा कृता पूर्वं पश्चान्महर्षिभिः कृता ॥८५॥
सेयं कार्या सदा भक्तैः सकामैः कामवर्जितैः ।
गंगावगाहने वर्षकोटिभिर्यत्फलं भवेत् ॥८६॥
ततोऽप्यधिकं सत्पुण्यं त्रिस्पृशाव्रतिनो भवेत् ।
यत्फलं कुरुक्षेत्रे स्यात्सूर्यग्रहणकोटिभिः ॥८७॥
हेमभारशतदाने प्रत्यहं तत्र यत् फलम् ।
कोटिगोदानजं पुण्यं त्रिस्पृशाव्रतिनो भवेत् ॥८८॥
पापकोटिसहस्राणि हत्याकोटिशतानि च ।
विनश्यन्त्युपवासेनैकादश्यास्त्रिस्पृशेर्व्रते ॥८९॥
प्रकाशयति यश्चेदं व्रतं सोऽप्यर्जयेत् फलम् ।
त्रिस्पृशा दुर्लभा लोके प्राप्यते नैव मानवैः ॥९०॥
पितरोऽज्ञातकर्माणः प्रेतत्वं ये गता अपि ।
कुलजस्त्रिस्पृशां कृत्वा तारयेत्तानधोगतान् ॥९१॥
किमु वक्तव्यमेवाऽत्र त्रिस्पृशा मुक्तिदायिनी ।
सम्पत्प्रदायिनी चात्र परत्र मोक्षदा हि सा ॥९२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने त्रिस्पृशैकादशीव्रतफलपूजनादिकथननामा त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः ॥२३३॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! कथां चैकादश्या उत्पत्तिबोधिकाम् ।
पूर्वं कृतयुगे जातां नारायणविभाविताम् ॥ १ ॥
तत्र सत्ये युगे जातस्तालजंघकुले महान् ।
अत्यद्भुतो महारौद्रो नाडीजंघाह्वयोऽसुरः ॥ २ ॥
तस्य पुत्रो मुरजंघोऽभवद् देवभयंकरः ।
तपस्तप्त्वाऽब्दसाहस्रं परं बलमवाप सः ॥ ३ ॥
इन्द्रोऽपि निर्जितस्तेन सर्वे देवाश्च निर्जिताः ।
स्वर्गान्निष्कासिता देवा विचेरुर्भूमिमण्डले ॥ ४ ॥
भीताः स्वास्थ्यविहीनास्ते ययुर्यत्र पुरन्दरः ।
पुरन्दरोऽपि दुःखाढ्यो ययौ यत्र जनार्दनः ॥ ५ ॥
शंकरश्च तथा ब्रह्मा ययुश्चान्ये सुरेश्वराः ।
जलमध्ये शयानं श्रीनारायणं प्रतुष्टुवुः ॥ ६ ॥
नमस्ते देवदेवेश शरणागतवत्सल ।
दानवानां च दैत्यानामसुराणां विमर्दक ॥ ७ ॥
शरणं त्वं सदाऽऽर्तानां दुःखहाः शरणार्थिनाम् ।
रक्षाऽस्मान् करुणासिन्धो दैत्याद्बलसमेधितात् ॥ ८ ॥
त्वं गतिस्त्वं परं सौख्यं भक्तानां परमायनम् ।
त्वं माता रक्षकः स्वामी त्वं पिता पालकः प्रभुः ॥ ९ ॥
त्वं सद्वाच्यं कारणं वै चोत्पत्तिः सृष्टिरित्यपि ।
त्वमेवाऽऽपूरकस्तत्र त्वमेव रूपवान् हरः ॥१०॥
संहारकारको देवस्त्वमेव भोजनप्रदः ।
स्वाहा स्वधा वषट्कारस्त्वमेवाग्निस्त्वमोमिति ॥११॥
अनिरुद्धश्च प्रद्युम्नः संकर्षणस्त्वमेव हि ।
ब्रह्मविष्णुमहेशानास्त्वमेव देवकोटयः ॥१२॥
सूर्यश्चन्द्रस्त्वमेवासि व्योमाऽनिलाऽनलाऽऽम्भुवः ।
ततोऽवान्तरसृष्टिश्च त्वमेव पुरुषोत्तम ॥१३॥
वरदाता रक्षकश्च वरसंहारकृद् भवान् ।
स्थावरं जंगमं सर्वं भवत्येव प्रतिष्ठितम् ॥१४॥
दैत्यदानवरक्षोभिर्निर्जिताः सुरपुंगवाः ।
यदा भवन्त्यसुखास्ते शरणं यान्ति ते तदा ॥१५॥
वयं सर्वे स्वर्गभ्रष्टा दानवादिभिरर्दिताः ।
अटामोऽरण्यभूभागे रक्षामिच्छाम ईश्वर ॥१६॥
रक्षाऽस्मान् सर्वथा देव दानवान्मुरसंज्ञकात् ।
श्रुत्वा नारायणस्तेषां पप्रच्छ भक्तवत्सलः ॥१७॥
कीदृशो दानवः सोऽस्ति किंनामा किंबलं स्थितिः ।
सर्वं ब्रूत सुरेन्द्रा यच्छ्रुत्वा नाशाय चिन्तये ॥१८॥
इन्द्रः प्राह तदा देवं विष्णुं नारायणं प्रभुम् ।
ब्रह्मणो वंशजः सोऽस्ति कश्यपाद् दनुजोऽभवत् ॥१९॥
तालजंघो महाक्रूरस्तस्य नाडीप्रजंघकः ।
सुतोऽभवन्महापापस्तस्यास्ति पुत्र एव सः ॥२०॥

मुरजंघ इति नाम्ना कृतवाँस्तप उग्रकम् ।
वर्षाणां वै सहस्रं यन्निराहारोऽभवत्तदा ॥२१॥
शतवर्षं भुवि पादांगुष्ठे स्थित्वाऽतपत् तपः ।
शतवर्षं जलशायी घोरं तपश्चकार सः ॥२२॥
शतवर्षं वायुभक्षी सूर्यद्रष्टा शतं समाः ।
शतवर्षं बाष्पभोजी तपस्तप्त्वाऽतिदारुणम् ॥२३॥
पंचशतं च वर्षाणां समाधावतपत्तपः ।
तस्य देहोपरि तत्र वल्मीकः कीचकान्वितः ॥२४॥
वृक्षवल्लीसमाक्रान्तो ह्यभवच्छृंगसदृशः ।
ततो धूमो विनिष्क्रान्तो दिवं यातोऽतिदारुणः ॥२५॥
तन्मूर्ध्नोऽभून्महानग्निर्येन जज्वाल द्यौरथ ।
भूश्च सत्यादिलोकाश्च देवास्त्रेसुश्च मानवाः ॥२६॥
ययुर्वै शरणं सर्वे ब्रह्माणं प्रपितामहम् ।
स्वेषां नापातिपातित्वं जगद्दुर्दुःखसागरम् ॥२७॥
कोऽयं वह्निः कथं जातः सर्वं प्रज्वालयत्यहो ।
रक्ष रक्ष प्रजानाथ शान्तिं कुरु जगत्प्रभो ॥२८॥
श्रुत्वैवं तद्वचो ब्रह्मा ससुरो मार्गणाय तत् ।
ययौ वह्निधूमलेखास्तुत्या मूलं भुवि स्थितम् ॥२९॥
दृष्ट्वा वृक्षादिकान् तत्र मुमोह सृष्टिकृत्तदा ।
अहो कश्चिन्न वै चात्र दृश्यते तापसो जनः ॥३०॥
कथं कस्मान्मया चात्र मार्गणीयो भवेद्धि सः ।
इति विचार्य ब्रह्मा वै निषसाद महीतले ॥३१॥
विष्णुस्तदा महाशंखनादं चकार वै मुहुः ।
तथापि न मुरस्तत्र प्रबुबोध तदा सुराः ॥३२॥
हताशाः संस्थिताः सर्वे प्रम्लानान्तरकामनाः ।
तदा वै विष्णुना तत्र समाधिः संयमः कृतः ॥३३॥
प्रवेशश्च कृतस्तत्र मुरदैत्यस्य वर्ष्मणि ।
शुष्ककाष्ठसमं शुष्कनाडीमांसास्थिपिण्डकम् ॥३४॥
सार्द्रं च सक्रियं कृत्वा वर्ष्म चाऽप्लावयत् त्वजः ।
कमण्डलोर्जलेनाऽभ्यसिञ्चन् मूर्ध्नि यदा पुनः ॥३५॥
तदा पल्लवतां याते वर्ष्मणि मुरदानवे ।
नेत्रे प्रोन्मीलिते जाते दृष्ट्वा स दानवः सुरान् ॥३६॥
नत्वा प्राह कथं यातास्तपोभंगविधित्सया ।
यात दूरं न मे कार्यं देवैः किञ्चिद्धि विद्यते ॥३७॥
ब्रह्मा प्राह तदा दैत्यं प्रसन्नास्तपसा तव ।
वयं प्राप्ता वरं दातुं यथेष्टं ब्रूहि पुत्रक ॥३८॥
मुरः प्राह न मे मृत्युस्तव सृष्ट्या कथंचन ।
विष्णुना वा हरेणापि भवेदिति प्रदेहि मे ॥३९॥
तथाऽस्त्विति वरं दत्वा ययुर्ब्रह्मादयस्ततः ।
मुरोऽपि प्रोत्थितो हृष्टो ययौ स्वस्थानमेव सः ॥४०॥
मेरौ चन्द्रावतीं रम्यां राजधानीं कुलागताम् ।
पालयामास विधिना दानवैरधिवासिताम् ॥४१॥
देवाश्च निर्जितास्तेन स्वर्गाच्चापि निराकृताः ।
इन्द्रस्थानं समाहृत्य दानवश्चेन्द्रकः कृतः ॥४२॥
वह्निस्थानं स्वकं कृत्वा वह्निश्चान्यो विनिर्मितः ।
सूर्यचन्द्रौ कृतौ चान्यौ ग्रहनक्षत्रसंयुतौ ॥४३॥
दिक्प्रपालाः कृताश्चान्ये दानवाः स्वीयवर्णजाः ।
लोकपालाः कृताश्चान्ये देवान् जित्वा मुरेण वै ॥४४॥
कारागृहे देवगणा निगडेषु निपातिताः ।
देवलोकः कृतश्चान्यो दानवैः परिशोभितः ॥४५॥
सर्वं त्वन्यत् कृतं तेन पूर्वं वै परिवर्तितम् ।
यावन्नायाति लक्ष्म्यर्थं तावत्तं प्रजहि प्रभो ॥४६॥
यावच्चिरायते देवो हानिस्तावत्पले पले ।
तस्माच्छीघ्रं समुत्थाय तन्नाशाय मनः कुरु ॥४७॥
श्रुत्वैतदिन्द्रवचनं हरिः शेषासनः स्वयम् ।
समुत्थाय च विध्वंसे मुरस्याऽत्राप निश्चयम् ॥४८॥
हरिश्च शंकरो ब्रह्मा तथा देवा महर्षयः ।
गता यत्राऽभवत्पुर्यो चन्द्रावत्यां महासुरः ॥४९॥
उपकंठे बहिः स्थित्वा शंखं दध्मौ हरिस्तदा ।
युद्धसम्बोधशब्दं स श्रुत्वाऽऽययौ पुराद्बहिः ॥५०॥
ससैन्यो युद्धदानाय चकार रणमुल्बणम् ।
नैकरूपधरो वीरो मुरोऽस्त्रशस्त्रकोटिभिः ॥५१॥
मन्त्रैर्मायाबलैश्चेन्द्रजालिकैः रूपकोटिभिः ।
संग्राममकरोद्घोरं देवसंहारकारकम् ॥५२॥
क्षता हता विनष्टाश्च देवा रूपान्तरात्मकाः ।
भग्नाश्च मूर्छिता नष्टा विप्राणाश्चेतनोज्झिताः ॥५३॥
असंख्यातसहस्रैरायुधैरसुरपुंगवैः ।
हन्यमानाः सुराः सर्वे दुद्रुवुश्च दिशो दश ॥५४॥
विष्णुं दृष्ट्वा मुरस्तं च तिष्ठ तिष्ठेति चाऽब्रवीत् ।
गदां गुर्वीं प्राहिणोत् मुकुन्दस्तां व्यपोथयत् ॥५५॥
स्वीयया गदया शीघ्रं प्राहिणोच्चक्रमुल्बणम् ।
वरदानप्रभावेण चक्रं विखण्डितं मुरे ॥५६॥
विष्णुस्त्वाश्चर्यमापन्न क्रोधसंरक्तनेत्रकः ।
द्वितीयं चक्रमादाय मुमोच सैन्यकोटिषु ॥५७॥
दानवा दैत्यमूर्धन्याः छिन्नशिरस एव ते ।
पतिताश्च मृताश्चान्ये मूर्छिता व्यसवोऽभवन् ॥५८॥

मेदिनी तत्र दैत्यादिमेदमासाद्य सार्थका ।
समभूद् रणभूमिः सा दानवारण्यसुतिका ॥५९॥
न वै तलमभूद् रिक्तं कबन्धेन विना क्वचित् ।
मुरस्ततो महाखेदमवाप सैन्यनाशतः ॥६०॥
एकाकी व्यचरन् शस्त्रैर्युयुधे विष्णुना तदा ।
विष्णोरायुधधुर्याणां- विनाशस्तेन शत्रुणा ॥६१॥
कृतंश्चास्त्राणि सर्वाणि प्रग्रस्तानि तदा पुनः ।
अस्त्रशस्त्रविहीनश्च विष्णुर्जातो यदा तदा ॥६२॥
मुमुदिरे दैत्यगणाः प्रहर्षुश्चातिदानवाः ।
सुरा वै म्लानतां प्राप्ताः साशंकाश्च प्रजीवने ॥६३॥
अथ विष्णुं विशस्त्रं वै ज्ञात्वा नीत्या मुरस्तदा ।
बाहुयुद्धं समकरोद् विष्णुना दारुणं ततः ॥६४॥
मायया मुरदैत्येन विष्णोर्बाहुः प्रधर्षितः ।
बाहुबन्धः कृतस्तेन जडीभूता भुजाः खलु ॥६५॥
चत्वारोऽप्यभवँस्तत्र देवा वै दुःखिनोऽभवत् ।
हाहेति करुणं चाक्रुश्याऽऽसँस्त्रस्ता गताशयाः ॥६६॥
मुरस्याऽऽसीत्तदा सम्यग् विजयो देवकर्दने ।
चकार राज्यं रुचिरं विजित्वा सत्यलोकजम् ॥६७॥
चतुर्दशभुवनानां सम्राडभून्मुरस्ततः ।
विष्णुस्त्रस्तो गतो बद्रिकाश्रमं हिमशैलगम् ॥६८॥
हिमालये गुहा सिंहवती नाम्नी महत्तरा ।
वर्तते योजनानां वै चत्वारो दीर्घविस्तरा ॥६९॥
द्वारमेकं च यस्यास्ते तस्यां गत्वा महाप्रभुः ।
सुप्तो भयं दर्शयन् वै लोकानां हितकाम्यया ॥७०॥
दानवस्तं मार्गयन् वै कदाचित्तत्र गह्वरे ।
ज्ञात्वा विष्णुं प्रसुप्तं स प्रविवेश गुहान्तरम् ॥७१॥
प्रसुप्तं श्रीहरिं दृष्ट्वा दानवेन्द्रो जगाद तम् ।
अहो त्रैलोक्यपूज्य त्वं कथमाश्रयसे गुहाम् ॥७२॥
त्वदाश्रितानां रक्षां चापत्काले किं करोषि न ।
उत्तिष्ठ विष्णो भद्रं ते प्रोत्तिष्ठ युद्धमाचर ॥७३॥
त्वादृशानां शृगालानां स्वपनं किं निसर्गजम् ।
नयामि यमभवनं यद्वा त्वं मां समाश्रय ॥७४॥
कुरु दास्यं सदा मे त्वं देहि वैकुण्ठमेव मे ।
यद्वा युद्धं कुरु विष्णो शास्त्यं मा समये चर ॥७५॥
इत्येवं वदतस्तस्य मुरस्य नाशनाय वै ।
हरिः संचिन्तयामास सुप्त एव तदन्तरे ॥७६॥
महालक्ष्मीं प्रसस्मार दानवान्तकराय वै ।
स्मृत्वा ब्रह्मप्रदत्तं च वरं मुरस्य पूर्वजम् ॥७७॥

वेधःसृष्टिकृतान्नाशो मा भूदिति विचिन्त्य च ।
लक्ष्म्यंशात्मकसामर्थ्यं स्वैकादशेन्द्रियात्मकम् ॥७८॥
दिव्यं तपःस्वरूपं तत् प्राविश्चकार वै हरिः ।
तच्च मूर्तमभूत्तत्र कन्यारूपं सुसुन्दरम् ॥७९॥
कन्यका साऽतितेजोभिः प्रोज्ज्वला स्वर्णसन्निभा ।
चन्द्रकान्तिसमव्याप्तदीप्तिसन्दोहशीतला ॥८०॥
सर्वाकृतिसमायोग्या हरिरूपाऽतिसुन्दरी ।
दिव्यप्रहरणैर्युक्ता प्रोद्भिन्नवसुस्तनी ॥८१॥
किञ्चिदनंगरूपाभिभूता दृष्टिमनोहरा ।
सौभाग्यद्रव्यभूषाभिवस्त्रकुन्तलशोभना ॥८२॥
विद्युत्तेजःसमाक्रान्ताऽऽकर्णान्तदीर्घलोचना ।
महाबलसमाविष्टा मोहिनीव वपुष्मती ॥८३॥
स्वर्णाभूषणशोभाढ्या सुगन्धमुखमारुता ।
सुस्वरा सर्वलावण्यप्रसन्नमुखपंकजा ॥८४॥
चम्पकाभकरपादतलाऽङ्गुलिप्रभावती ।
कोमला कोमलांगी च सर्वशोभाधिवासिनी ॥८५॥
चक्षुर्हरा मनोहरा चात्महराऽतिकर्षणी ।
समुद्भूता महारम्याकृतिर्हास्यं करोति च ॥८६॥
दृष्टा मुरेण तत्रैव तेजोमध्ये विराजिता ।
मुरश्च मोहमासाद्य परिरब्धुं प्रचक्रमे ॥८७॥
कन्या प्राह महादैत्य सुज्ञोऽसि धर्मवानसि ।
विना वैवाहिकं कृत्यं त्वदर्थे नाहमुत्सहे ॥८८॥
विजित्य मां गृहाणाद्य पणोऽयं मम दानव ।
युद्धे जित्वा गृहाणेमां दासीभूता मनस्विनीम् ॥८९॥
मुरस्तस्याः समाकर्ण्य विस्मृत्य विष्णुमेव च ।
सज्जोऽभूद् युद्धवृत्ताय शस्त्राऽस्त्रादिभिरन्वितः ॥९०॥
कन्यया रणसंग्रामे प्रवर्तिते महासुरे ।
कर्तितः कण्ठदेशाद्वै मस्तकं भस्मितं तदा ॥९१॥
देहश्चूर्णीकृतस्तस्य गदया पल्लतादिभिः ।
मुरश्च निहतस्तस्य योद्धारोऽपि हतास्तया ॥९२॥
महाकोलाहलं श्रुत्वा विष्णुर्निद्रां विहाय च ।
अबुध्यत मृतं दृष्ट्वा मुरं विस्मयमागतः ॥९३॥
अहोऽनया कन्यया वै हतो महाबलोऽसुरः ।
मया यो न जितः पूर्वं जितो हतोऽनया हि सः ॥९४॥
महालक्ष्मीर्महाशक्तिर्महामाया त्वियं खलु ।
समर्था दुःखनाशाय देवानां हितकारिणी ॥९५॥
उपकारः कृतः सर्वो देवानां मम चापि वै ।
निहतो दानवो दुष्टो देवासुरभयंकरः ॥९६॥

इति प्रसन्नतां प्राप्य तदा पप्रच्छ कन्यकाम् ।
का त्वं कथं हतो दैत्यः किं ते मनसि वर्तते ॥९७॥
कन्या प्राह हरिं विष्णोरहमेकादशी मता ।
सर्वशत्रुक्षयकर्त्री सर्वपापविनाशिनी ॥९८॥
सर्वतेजोमयी चास्मि सर्वपुमर्थदायिनी ।
तवास्मि विग्रहाज्जाता तवेन्द्रियबलोद्भवा ॥९९॥
तव चैतन्यसंपृक्ता तवास्मि पुत्रिका प्रभो ।
प्रसुप्तं पितरं दैत्यो हन्तुमत्र समागतः ॥१००॥
चिच्छक्तिश्चाऽसुरं वीक्ष्याऽहमुद्भूतेन्द्रियादिभिः ।
एकादशेन्द्रियतेजोमयी चाहं भवामि ते ॥१०१॥
तस्मादेकादशीनाम्ना सर्वपुण्यप्रदा हरे ।
असुरस्य विनाशाय समुद्भूताऽस्मि माधव ॥१०२॥
विनाशितो मया दैत्यो देवानां दुःखदो महान् ।
इति श्रुत्वा सुतावाक्यं हरिः प्राह च तां सुताम् ॥१०३॥
वरं वरय कल्याणि कृतं कार्यं महन्मम ।
प्रसन्नोऽस्मि च भद्रं ते सर्वं दास्ये मनोगतम् ॥१०४॥
नाऽदेयं विद्यते देवि त्वया देवाः सुरक्षिताः ।
धर्मः संस्थापनं प्राप्तो व्रतं दैवं च लक्षितम् ॥१०५॥
कल्याणमार्गः सततं जनानां कारितस्त्वया ।
तस्मात् स्वस्य च यावद्वै सर्वं देयं हि ते कृते ॥१०६॥
श्रुत्वैतद्भगवद्वाक्यमेकादशी जगाद यत् ।
अहमेकादशी नाम्ना ह्यधिष्ठात्री व्रतात्मिका ॥१०७॥
एकादशीदिनस्याऽस्मि स दिनो मामको मतः ।
शुक्लः कृष्णश्च मे दिव्यो दिवसो व्रतमेव सः ॥१०८॥
महापुण्यः पवित्रोऽयं सर्वपुण्येषु पुण्यकृत् ।
अतो मद्दिवसः पाल्यो व्रतोपोषणजागरैः ॥१०९॥
इन्द्रियाणां तदाऽऽहारा वर्जनीयाः प्रयत्नतः ।
मानवो मद्दिने योऽत्र ह्युपवासं करोति सः ॥११०॥
अश्वमेधसमं पुण्यं प्राप्नोत्येव न संशयः ।
एकभक्तेन नक्तेनोपवासेन फलेन वा ॥१११॥
जलेनापि व्रतं कुर्यात् स यायान्माधवालयम् ।
रात्रौ जागरणं कुर्याद्धरेस्ते च प्रपूजनम् ॥११२॥
पुष्पैर्धूपैश्च दीपैश्च विविधैश्च सुवस्तुभिः ।
पूजनं कारयेन्मे ते ह्युद्यापनं समाचरेत् ॥११३॥
एवं व्रतप्रकर्ता ते धाम यायात्पराक्षरम् ।
गर्भवासं न चाप्नुयान्निष्पापः स्याच्च सर्वथा ॥११४॥
ममाऽहनि तु भक्तानां नैर्मल्यं जायतां सदा ।
भक्तिश्च वर्धतां देवे तथा श्रद्धा च मद्व्रते ॥११५॥
मा क्षुधा पीडयेन्द्भक्तं व्रतिनं प्रमदाजनम् ।
इत्येवं वरदानानि मे देयानि यदि प्रभो ॥११६॥
दातव्यानि हरे मह्यं तथाऽन्यन्मे शृणु प्रभो ।
हरिः पिता हरिर्माता बान्धवोऽपि हरिः सदा ॥११७॥
हरिर्भर्ता हरिः कर्ता पोष्टा हर्ता हरिः स्वयम् ।
तस्माद् रूपान्तरैः कृष्ण पतिर्मे भव सर्वदा ॥११८॥
अहं षड्विंशतिरूपा पत्नी ते स्यां तथा कुरु ।
येनाऽसंस्कारदोषो मे विनश्येत् संविवाहतः ॥११९॥
पातिव्रत्यपरा नित्यं सेविष्ये त्वां पतिं प्रियम् ।
वरं देहि तथा नाथ सौभाग्यं मे प्रवर्धय ॥१२०॥
श्रुत्वा प्राह हरिर्भद्रे भवताद् वाञ्छितं तव ।
व्रतं भवतात् पुण्यं ते रूपाण्यपि भवन्तु ते ॥१२१॥
पतिर्भवामि ते रूपान्तरैः श्रेयःप्रदा भव ।
धर्मार्थकाममोक्षाणां सम्प्रदा भव सर्वथा ॥१२२॥
एकादशीव्रतपूता यान्तु मे वैष्णवं पदम् ।
ऐहिकं सत्फलं प्राप्य चान्ते मोक्षमवाप्नुयुः ॥१२३॥
इति ते वरदानानि वितरामि मम प्रिये ।
ओमित्युक्त्वा स्वयं चैकादशी वै बहुधाऽभवत् ॥१२४॥
हरिस्तदा स्वमूर्तेश्च षड्विंशतिस्वरूपकैः ।
जग्राह विधिवत् पत्नीरूपामेकादशीं तदा ॥१२५॥
पुत्रीरूपं विलीयैव पत्नीरूपैश्च वर्तते ।
वर्षे द्वादशमासानां द्वेऽधिकस्यापि वै तथा ॥१२६॥
मिलित्वैकादशिकाः षड्विंशतिसंख्यका मताः ।
एकादशी त्वहोरात्रं दशमी घटिकाऽपि चेत् ॥१२७॥
सा तिथिः परिहर्तव्या ह्युपोष्या द्वादशी शुभा ।
एकादशी तु सम्पूर्णा द्वादशी वृद्धिगामिनी ॥१२८॥
तस्यां शतगुणं पुण्यं त्रयोदश्यां तु पारणा ।
एवं व्रतं जनः कुर्यात् फलभाङ् मोक्षभाग्भवेत् ॥१२९॥
न गंगा न गया नैव काशी पुष्करमेव वा ।
न चापि वैष्णवं क्षेत्रं तुल्यं हरिदिनेन वै ॥१३०॥
इति कृत्वा प्रशंसां च पत्नीं नीत्वा ययौ हरिः ।
यत्र चन्द्रावती राजधानी मुरकृतास्ति वै ॥१३१॥
तत्र निगडबन्धस्थान् देवान् व्यमोचयद्धरिः ।
स्वर्गं देवात्मसात्कृत्वा वैकुण्ठं प्रययौ प्रभुः ॥१३२॥
इति ते कथितं लक्ष्मि ! व्रतमाहात्म्यमुत्तमम् ।
एकादश्यास्त्रिस्पृशायाः किमन्यच्छ्रोतुमिच्छसि ॥१३३॥
इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने मुरदानवयुद्धनिमित्तकैकादश्युत्पत्तिव्रतादिवरदाननिरूपण-नामा चतुस्त्रिंशदधिकद्विशततमोऽध्यायः ॥२३४॥

श्रीलक्ष्मीरुवाच—

हरे कथय षड्विंशत्येकादशीव्रतानि मे ।
कथं कार्याणि विधिना पूजनीयं च यद्यथा ॥ १ ॥
कानि नामानि पतयः फलं कर्म विधिस्तथा ।
एकादशीनां सर्वासां पृथक्त्वेनोपवर्णय ॥ २ ॥

श्रीनारायण उवाच—

शृणु लक्ष्मि ! कथां तासां पावनीं मोक्षदां तथा ।
मम योगवतीं दिव्यां वैकुण्ठादिप्रदायिनीम् ॥ ३ ॥
उन्मीलनीं तथा पक्षवर्धिनीं चापि मे शृणु ।
जागरणफलं चापि मनो दत्वा निबोध मे ॥ ४ ॥
एकादशी ह्यहोरात्रं प्रभाते घटिका भवेत् ।
उन्मीलनी तु सा बोध्या हरेश्चातिप्रियाऽस्ति सा ॥ ५ ॥
त्रैलोक्ये यानि तीर्थानि यानि पुण्यस्थलानि च ।
तपो वेदा मखास्त्वेते कोट्यंशेनापि तानि वै ॥ ६ ॥
उन्मीलनीप्रतुल्यानि भवन्त्येव न वै क्वचित् ।
उन्मीलनीसमं किञ्चिन्न भूतं न भविष्यति ॥ ७ ॥
न काशी न गया नैव प्रयागः कुरुभूमिका ।
पुष्करं न सरो नारायणं नो हिमवान् गिरिः ॥ ८ ॥
रैवतो न च विन्ध्याद्रिर्मलयो मेरुरप्यथ ।
कुंकुमवापी नैमिषं कालक्षेत्रं वनं न वा ॥ ९ ॥
चन्द्रभागा न कावेरी सरयूश्च न गोमती ।
गोदावरी नर्मदा न स्वर्णलेखा न वेदिका ॥१०॥
न तापी नापि वै भद्रा न च सिन्धुर्न चन्दना ।
शत्रुंजिता न चोजस्वती विपाशा न गण्डकी ॥११॥
न शोणो नो तुंगभद्रा तथा नापि सरस्वती ।
अन्यान्यपि च तीर्थानि नोन्मीलनीसमानि वै ॥१२॥
नोन्मीलनीसमं पुण्यं न देवः श्रीहरेः परः ।
उन्मीलनीदिनं प्राप्य यैः कृतं हरिपूजनम् ॥१३॥
पापपुञ्जं विधूयैव यान्ति ते धाम चाक्षरम् ।
यन्मासे स्यादुन्मील्न्येकादशी तु शुभा तिथिः ॥१४॥
मासनाम्ना स्वर्णमयो हरिः कार्यस्तमर्चयेद् ।
श्रद्धया परया भक्त्या बहुभिः सूपचारकैः ॥१५॥
पवित्रजलसंयुक्तं पञ्चरत्नसमन्वितम् ।
गन्धपुष्पाक्षतैर्युक्तं कुंभं स्रग्वस्त्रभूषितम् ॥१६॥
नारीकेलादिफलकं स्थापयेन्मध्यमण्डले ।
सर्वतोभद्रसंज्ञेऽत्र मूर्तिं संस्थाप्य पूजयेत् ॥१७॥
पात्रं गोधूमपूर्णं च नानारत्नसमन्वितम् ।
नानागन्धसमायुक्तं मल्लिकामोदवासितम् ॥१८॥
जातीकुसुमसंयुक्तं स्थापयेद्घटसन्निधौ ।
श्वेताक्षैस्तण्डुलैश्चैव पूरितं पात्रमित्यपि ॥१९॥
स्थापयेत्तु घटपार्श्वे पूजयेच्च हरिं मुहुः ।
प्रदद्याद्वस्त्रयुग्मं च सोत्तरीयोपवीतकम् ॥२०॥
उपानहौ चातपत्रं स्थालीं जलकमण्डलुम् ।
सप्तधान्यप्रपात्राणि तिलान् दद्याच्च भूरिशः ॥२१॥
रूप्यं स्वर्णं प्रदद्याच्च कार्पासं पायसं तथा ।
मुद्रिका ऊर्मिकाश्चैव धेनूर्दद्याच्च शोभनाः ॥२२॥
अलंकारान् प्रदद्याच्च पात्राणि विविधानि च ।
स्वर्णशृंगीं रौप्यखुरीं ताम्रपृष्ठीं सझुल्लिकाम् ॥२३॥
कांस्यदोहां रत्नपुच्छां गां दद्याद् गुरवे तदा ।
शय्यां दद्यात् सपर्यंकां गेन्दुकोपस्करान्विताम् ॥२४॥
धूपं दीपं च नैवेद्यं फलं पत्रादि चार्पयेत् ।
तुलसीपत्रकमलपुष्पाणि विविधानि च ॥२५॥
पूजायां हरये दद्याद् दक्षिणा विविधास्ततः ।
चिन्तयेच्छ्रीहरेर्मूर्तिं प्रत्यंगं च विशेषतः ॥२६॥
मासनाम्ना तु चरणौ विष्णुनाम्ना च जानुनी ।
श्रीशनाम्ना प्रगुह्यं च कृष्णनाम्ना कटिं स्मरेत् ॥२७॥
ब्रह्मनाम्ना स्मरेन्नाभिमुदरं विश्वपाख्यया ।
हृद् वै शात्राख्यया कण्ठं वैकुण्ठवासिवाचिना ॥२८॥
ललाटं गुरुनाम्ना च परेण ब्रह्मणा शिरः ।
सर्वांगानि तथाऽन्तर्यामिनाम्ना संस्मरेद् बुधः ॥२९॥
आयुधानि विभूषाश्च वस्त्रालंकरणानि च ।
ध्यानं कृत्वा पूजयेद् वै भक्त्याऽर्घ्यादीनि चार्पयेत् ॥३०॥
शंखोपरि फलं कृत्वा गन्धपुष्पाक्षतान्वितम् ।
सूत्रेण वेष्टनं कृत्वा दद्यादर्घ्यं च भावतः ॥३१॥
एवं वै षोडशवस्तुप्रवर्यैः पूजयेद्धरिम् ।
प्रार्थयेच्च हरिं नत्वा समुद्धर महार्णवात् ॥३२॥
समुद्धाराय किञ्चिद्वै कृतं नो सुकृतं मया ।
तथापि त्वं मम स्वामी समुद्धर महार्णवात् ॥३३॥
उन्मिलिन्या व्रतेनात्र पूर्वजान्मे समुद्धर ।
वियोनिं च गतान्पापान् विमृत्यं गमितांस्तथा ॥३४॥
अतीतान् भाविनश्चान्यान् समुद्धर महार्णवात् ।
प्रेतान्सर्वान्महामुक्तिं देहि श्रीकृष्ण माधव ॥३५॥
आर्तस्य मम मूर्तौ ते भक्तिं देहि च शाश्वतीम् ।
एवं धूपैस्तथा दीपैर्नैवेद्यैर्जलभोजनैः ॥३६॥

स्तोत्रैर्नीराजनैर्नृत्यैः श्रीहरिं सम्प्रतोषयेत् ।
वस्त्रदानैश्च गोदानैर्भोजनैः सेवनैस्तथा ॥३७॥
गुरुं सन्तोषयेद् भक्तो यथा सन्तोषमाप्नुयात् ।
तथा तथा विधातव्यं गुरौ तुष्टे फलं महत् ॥३८॥
लोकानां तारणार्थाय धात्रा सृष्टो गुरुर्यतः ।
अतः सर्वस्वसेवाद्यैर्गुरुं सन्तोषयेत् सदा ॥३९॥
गुरोः पूजा प्रकर्तव्या मोक्षदोऽस्ति गुरुर्हरिः ।
अहितं मोचयेद् यो वै सुहितं दर्शयेत् सदा ॥४०॥
ज्ञानदानेन चाऽज्ञानं नाशयेत् सुखदो भवेत् ।
अनादिबन्धनं छिन्द्यात् शाश्वतं सुखमर्पयेत् ॥४१॥
धर्मार्थकोविदं तं वै गुरुं हरिं सदाऽऽश्रयेत् ।
सेवयेत् सर्वदा भक्त्या वित्तशाठ्यं न चाचरेत् ॥४२॥
गुरोः प्रसादः प्राप्तव्यः परिपूर्णं व्रतं भवेत् ।
द्वादश्यां च कृतस्नानो भक्तो हरिं प्रपूजयेत् ॥४३॥
गुरुं च भोजयेत् पश्चाद् बहून् विप्रांश्च भोजयेत् ।
साधून् साध्वीर्भोजयित्वा पारणां स्वः समाचरेत् ॥४४॥
कृष्णकथानकैः कालो नेतव्यो व्रतकारिणा ।
दानं ज्ञानस्य दानं वै नान्यत् तत्तुल्यमस्ति हि ॥४५॥
प्रदातव्यं सदा ज्ञानं नित्यं शास्त्रकथादिभिः ।
विष्णुर्ज्ञाने प्रदातव्यो दाता मोक्षमवाप्नुयात् ॥४६॥
एवं यः कुरुते चोन्मील्न्यैकादशिकाव्रतम् ।
अनन्तकल्पकालं स वैकुण्ठे वसति ध्रुवम् ॥४७॥
वैष्णवं व्रतमेवैतल्लक्ष्मि ! तुभ्यं प्रकीर्तितम् ।
यच्छ्रुत्वा पापिनः सर्वे मुक्तिमायान्ति तत्क्षणात् ॥४८॥
उन्मीलनीव्रतकर्ता स्वर्गे लोके महीयते ।
देवाश्च पितरश्चैव दिव्यां गतिमवाप्नुयुः ॥४९॥
विद्यार्थी लभते विद्यां सर्वसमृद्धिकरां शुभाम् ।
एकादश्या व्रतं विष्णोः पूजनं वैष्णवार्चनम् ॥५०॥
साधुसाध्वीसुसेवा च दुर्लभं तच्चतुष्टयम् ।
एतस्याः श्रवणान्मुच्येदाजन्ममृत्युबन्धनात् ॥५१॥
विष्णुश्च वैष्णवाश्चैव नाऽपकार्याः कदाचन ।
पूजयित्वा भोजयित्वा ततो भोजनमाचरेत् ॥५२॥
शालग्रामः समभ्यर्च्यो वैष्णवोऽपि विशेषतः ।
धूपमारार्त्रिकं शंखोदकं दद्याच्च विष्णवे ॥५३॥
नैवेद्यं विष्णवे दद्याद् वैष्णवेभ्यस्ततोऽपि च ।
ह्येकादशीव्रतकर्ता ततो भोजनमाचरेत् ॥५४॥
दीपं दद्यात्तथा गीतं नित्यं कुर्याच्च वन्दनम् ।
श्यामांऽकुरैः पूजनं च कुर्यात्प्रेमपरिप्लुतः ॥५५॥
पृथ्वीदानसमं पुण्यं दूर्वया पूजने कृते ।
श्यामांकुरैश्च दूर्वायाः पूजनं चातिवल्लभम् ॥५६॥
नास्ति लोकेऽत्र दूर्वाया अंकुरैः सदृशं शुभम् ।
तैश्च संपूजनं कार्यं विष्णुसायुज्यमिच्छता ॥५७॥
दूर्वाभिश्च यवैश्चाऽप्यक्षतैः सम्पूजयेद्धरिम् ।
पक्षे पक्षे च विधिवद् द्वादश्यां पूजनं प्रगे ॥५८॥
मोक्षदं सुखदं चैव तथाऽऽयुष्यप्रदं शुभम् ।
एतद्विष्णुव्रतं प्रोक्तं वैष्णवानां समृद्धिदम् ॥५९॥
गृहस्थानां तु सुखदं यतीनां मुक्तिदायकम् ।
सर्वरोगादिशमनं देहत्रयविशोधनम् ॥६०॥
दशमीवेधरहितं महत्तून्मीलनीव्रतम् ।
सजागरं प्रकर्तव्यं भुक्तिमुक्तिप्रदं परम् ॥६१॥
तुलसीपत्रलक्षैश्च पूजयेत्परमेश्वरम् ।
गोपीचन्दनचन्द्रं च तिलकं पुण्ड्रमूर्ध्वगम् ॥६२॥
धारयेत्पूजनार्थाय दर्शनान्मोक्षदं हि तत् ।
अस्त्रं च वैष्णवं वर्म धारयेद् दुःखनाशकम् ॥६३॥
ब्रह्महा हेमहारी च मद्यपो मांसभक्षकः ।
अगम्यागो महापापो निन्दाऽनृतप्रभाषकः ॥६४॥
ते पापान्मुक्तिमायान्ति तूर्ध्वपुंड्रस्य धारणात् ।
कण्ठे धात्रीफलमालां तुलसीमालिकां तथा ॥६५॥
धारयेद् वैष्णवो भक्तो पूजादीक्षांगरूपिणीम् ।
चक्रशिलां द्वारकाया गण्डक्या विष्णुमित्यपि ॥६६॥
तुलस्या पूजयेन्नित्यं भुक्तिमुक्तिफलं भवेत् ।
सवेधो वासरो विष्णोर्नोपोषितव्य एव वै ॥६७॥
सवेधो वासरो यस्य राज्ञो राज्ये प्रवर्तते ।
राजा च लिप्यते तेन पापेन नारकी भवेत् ॥६८॥
वेधं सर्वविधं त्यक्त्वा समुपोष्यं हरेर्दिनम् ।
कुलकोटिसमुद्धारो विष्णुधामगतिर्भवेत् ॥६९॥
पञ्चपञ्चाशद्घटिका दशम्युदयतोऽस्ति चेत् ।
परदिनैकादशी सा विद्धैकादशिकोच्यते ॥७०॥
एकादशी त्वहोरात्रं दशमीघटिकाऽपि चेत् ।
सा तिथिर्न ह्युपोष्या वै द्वादशीव्रतमिष्यते ॥७१॥
एकादशीद्वये प्राप्ते परोपोष्या न पूर्वजा ।
द्वादशीद्वितये प्राप्ते पूर्वोपोष्या तु द्वादशी ॥७२॥
एकादश्याः क्षये प्राप्ते ह्युपोष्या द्वादशी व्रते ।
दशम्याश्च क्षये प्राप्ते ह्युपोष्या द्वादशी व्रते ॥७३॥
दशमी युगले प्राप्ते ह्युपोष्यैकादशी तदा ।
द्वादश्याश्च क्षये प्राप्ते ह्युपोष्यैकादशी भवेत् ॥७४॥

इति ज्ञात्वा व्रतं कुर्यात् हरिर्याति प्रसन्नताम् ।
व्रतकर्ता हरेर्धाम याति श्रीहरिवाञ्छया ॥७५॥
द्वादश्यां च प्रभाते याऽरुणोदयोत्तरं भवेत् ।
एकादशी घटिकाऽपि दिनोन्मीलनकालिनी ॥७६॥
मनुष्याणां तथोन्मीलनार्थप्रबोधकालिनी ।
तस्मात्तस्या उन्मीलनी नाम प्रोक्तं मया प्रिये ॥७७॥
उत् ऊर्ध्वे ब्रह्मवैकुण्ठं परं धामाऽक्षरं तथा ।
गोलोकं मेलयेत् सोन्मीलनी संकथिता मया ॥७८॥
उत् ऊर्ध्वं वै परंब्रह्म कृष्णं नारायणं हरिम् ।
मेलयेद्या व्रताचारात् सोन्मीलनी समुच्यते ॥७९॥
अज्ञानं पापरूपं च भयं मृत्युं विदार्य या ।
ऊर्ध्वे लोकं प्रकाशं च मेलयेत् सार्थका हि सा ॥८०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने उन्मीलनीनामैकादशीव्रतपूजादिनिरूपणनामा पञ्चत्रिंशदधिकद्विशततमोऽध्यायः ॥२३५॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! प्रवक्ष्ये त्वां पक्षवर्धिनिकाऽभिधाम् ।
एकादशीं प्रियां मेऽति यया मोक्षमवाप्नुयात् ॥ १ ॥
एकादशी प्रपूर्णा च दशमीवेधसंयुता ।
एकदशीवेधयुक्ता द्वादश्यर्कोदये च या ॥ २ ॥
एवंक्रमादमावास्या पूर्णिमा वाऽर्कप्राक्क्षणे ।
सम्पूर्णा नाडिकाषष्टिः प्रतिपच्च तथाविधम् ॥ ३ ॥
एकादशीं समारभ्य प्रतिपद्दिवसावधि ।
सम्पूर्णा नाडिकाषष्टिर्यदा त्वह्नः प्रमाणता ॥ ४ ॥
सैकादशी तदा ज्ञेया पक्षवर्धिनिकाऽभिधा ।
द्वादशी सा समुपोष्या व्रतं कार्यं विधानतः ॥ ५ ॥
अश्वमेधाऽयुतैस्तुल्या सा भवेत् पक्षवर्धिनी ।
यां कृत्वा तु महालक्ष्मि ! फलाऽऽनन्त्यमवाप्नुयात् ॥ ६ ॥
पूजिते चाऽर्चिते विष्णौ वैकुण्ठं फलमाप्यते ।
पूजां तत्र प्रवक्ष्यामि यया तुष्यति केशवः ॥ ७ ॥
मण्डलं सर्वतोभद्रं सप्तधान्यैः प्रकारयेत् ।
मध्ये घटं च सौवर्णं सजलं स्थापयेन्नवम् ॥ ८ ॥
ताम्रघटं च यद्वाऽत्र पञ्चपल्लवशोभितम् ।
पञ्चरत्नसमायुक्तं श्वेतवस्त्रप्रवेष्टितम् ॥ ९ ॥
चन्दनार्चितमेवैनं पुष्पहाराभिवेष्टितम् ।
घटे तत्र महत्पात्रं सगोधूमं तु ताम्रजम् ॥१०॥
सफलं सनारिकेलं समिष्टान्नं सुयोजयेत् ।
सौवर्णं कारयेत् कृष्णं माससंज्ञाभिधानकम् ॥११॥
स्नापयेच्च तथा पंचामृतेन विधिना हरिम् ।
अभिषेकं तीर्थजलैः कारयेल्लेपयेत्ततः ॥१२॥
कुंकुमाऽक्षतकस्तूरीचन्दनात्तरकर्पुरैः ।
वस्त्रयुग्मं चोपवीतं कौस्तुभं भूषणानि च ॥१३॥
अलंकाराः प्रदातव्याः पुष्पहारादयस्तथा ।
कटकांगदमुकुटशृंखलारशनोर्मिकाः ॥१४॥
सिंहासनं प्रदातव्यं छत्रोपानहसंयुतम् ।
सुगन्धद्रव्यमत्युग्रं प्रदातव्यं च भावतः ॥१५॥
लक्ष्मीस्तत्र च संस्थाप्या सर्वाभरणभूषिता ।
सर्वालंकारसौभाग्यद्रव्यभूषणभूषिता ॥१६॥
पूजनीया हरेः पार्श्वे त्वेकादशी स्वरूपिणी ।
पूजयेच्छ्रीहरिं तत्र कुंभपात्रोपरि स्थितम् ॥१७॥
ध्यायेच्च पद्मनाभं वै पादौ तत्र विचिन्तयेत् ।
विश्वमूर्तिं विचिन्त्यैव जानुनी संस्मरेत्ततः ॥१८॥
ज्ञानगम्यं च संस्मृत्य ह्युरू तत्र विचिन्तयेत् ।
ज्ञानप्रदं हरिं स्मृत्वा कटिं चापि विचिन्तयेत् ॥१९॥
विश्वनाथं हरिं स्मृत्वा ह्युदरं संविचिन्तयेत् ।
श्रीधरं श्रीहरिं स्मृत्वा हृदयं चिन्तयेद्धरेः ॥२०॥
सकौस्तुभं हरिं स्मृत्वा कण्ठं सम्यग् विचिन्तयेत् ।
क्षत्रान्तकारिणं स्मृत्वा बाहू सम्यग् विचिन्तयेत् ॥२१॥
चिदाकाशं हरिं स्मृत्वा ललाटं चिन्तयेत्ततः ।
सर्वरूपं हरिं ध्यात्वा शिरः सम्यग् विचिन्तयेत् ॥२२॥
कृष्णनाम्ना च शस्त्राणि सर्वांगानि च चिन्तयेत् ।
एवं ध्यात्वा ततश्चार्घ्यं नालिकेरेण दापयेत् ॥२३॥
संसारसागरात् कृष्ण मां समुद्धर केशव ।
पूजामर्घ्यं गृहाणेश हरिकृष्ण नमोऽस्तुते ॥२४॥
षोडशवस्तुवर्याणि देयानि परमात्मने ।
नैवेद्यं विविधं दद्याज्जलं दद्यात्तु शीतलम् ॥२५॥
ताम्बूलं सुसुगन्धं सुद्रव्यं दद्याच्च भक्तितः ।
घृतेनाऽप्यथ तैलेन दीपं कुर्याच्च भक्तितः ॥२६॥
आरार्त्रिकं नमस्कारं प्रदक्षिणं च संस्तवम् ।
क्षमापनं च याचेत पुष्पाञ्जलिं प्रकल्पयेत् ॥२७॥
हरेः पूजां शुभां कृत्वा गुरोः पूजां प्रकारयेत् ।
चन्दनाद्यर्पणवस्त्रभूषादानादिना तथा ॥२८॥
कञ्चुकोष्णीषहारादिसुगन्धादि प्रदापयेत् ।
दक्षिणां चान्नधान्यादि तथा मुद्रादि चार्पयेत् ॥२९॥

भोजनं चैव ताम्बूलं दत्वाऽऽचार्यं प्रतोषयेत् ।
यथावित्तं यथाशक्ति कार्य उत्सव उत्तमः ॥३०॥
सायं चापि तथा पूजा कर्तव्या भक्तिभावतः ।
ततो जागरणं कुर्याद्गीतनृत्यसमन्वितम् ॥३१॥
प्राच्याख्यानकथायुक्तं हास्याह्लादसमायुतम् ।
श्रीं पक्षवर्धिनीनाम्नीं पूजयेत् कृष्णसन्निधौ ॥३२॥
तन्माहात्म्यं संश्रृणुयाद्व्रतस्य फलमाप्नुयात् ।
पंचाग्निसाधने पुण्यं यत्तु स्यात्तीर्थकोटिषु ॥३३॥
तत्फलं समवाप्नोति विष्णोर्जागरणाज्जनः ।
उपवासे कृते तत्र हत्याकोटिक्षयो भवेत् ॥३४॥
कर्तव्या तु विशेषेण वैष्णवैर्ज्ञानयोगिभिः ।
न तीर्थानि न चारण्यक्षेत्राणि कुलपर्वताः ॥३५॥
तारयन्ति जनान् यद्वत्तारयेत्पक्षवर्धिनी ।
सिते चन्द्रे कलावृद्धिस्तथाऽस्यां पुण्यवर्धनम् ॥३६॥
सूर्योदये तमोनाशस्तथाऽज्ञानविनाशिनी ।
पक्षविवर्धिनी सेयं मोक्षपक्षविवर्धिनी ॥३७॥
मुक्तिकलाप्रदा षोडशादिकलाप्रपोषिका ।
काशीसमा सदा मुक्तौ द्वारकासदृशी तथा ॥३८॥
कुंकुमवापिकातुल्या वांछितं प्रददात्यसौ ।
भक्तानां तु सदा मुक्तिपक्षं वर्धयतीव सा ॥३९॥
ज्ञानं धर्मं तथा भक्तिं वर्धयत्येव सर्वथा ।
यथा शुक्ला तथा कृष्णा विभेदं नैव कारयेत् ॥४०॥
सन्तारयति कर्तारं दशपूर्वान्दशाऽपरान् ।
सन्तारयति व्रतिनं द्वादश्युभयतः कृता ॥४१॥
वाराणस्यां भवेद्वासः षष्टिवर्षसहस्रकम् ।
यज्ञदानं कुरुक्षेत्रे सोमपर्वसहस्रकम् ॥४२॥
विधृत्यादिसुयोगेषु लक्षदानोत्तमोत्तमम् ।
सूर्यचन्द्रग्रहदानं कुरुक्षेत्रे कृतं शतम् ॥४३॥
प्रभासे वा कृतं दानं सोमयागसहस्रकम् ।
यतिलक्षं गृहे भुंक्ते तत्फलं नित्यमेव यत् ॥४४॥
केदारजलपानस्य जन्माऽदर्शनकं फलम् ।
एकादश्युपवासस्य कलां नार्हन्ति षोडशीम् ॥४५॥
गोसहस्रप्रदानाद्वै सहस्रगुणितं फलम् ।
साधूनां पूजने प्रोक्तं तस्माद् दशगुणं फलम् ॥४६॥
ब्रह्मनिष्ठप्रपूजायां ततो दशगुणं पुनः ।
देवार्थे भूमिदातुश्च कन्यादातुस्ततस्तथा ॥४७॥
ततोऽपि दशगुणकं यज्ञावभृथपावने ।
ततोऽनन्तं भवेदेकादशीव्रतिनि वै फलम् ॥४८॥
उपवासे तु यत्पुण्यं ततोऽर्धं नक्तभोजने ।
नक्तस्याऽर्धं भवेदेकभुक्ते वा फलभोजने ॥४९॥
एकभुक्तेन नक्तेनोपवासेन फलेन च ।
यत्पुण्यं लभते तच्च रात्रौ जागरणे कृते ॥५०॥
एकादश्युपवासस्य पुण्यसंख्या न विद्यते ।
प्रत्येकायाश्च माहात्म्यं प्रवदामि निबोध मे ॥५१॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पक्षवर्धिन्येकादशीव्रतपूजादिनिरूपणनामा षट्त्रिंशदधिकद्विशततमोऽध्यायः ॥२३६॥

**श्रीनारायण उवाच—**

श्रृणु लक्ष्मि महानिद्रा पुण्यक्षयविधायिनी ।
सर्वथा परिहर्तव्या व्रतरात्रौ दिवाऽपि च ॥ १ ॥
निद्रावृत्तिर्महाघोरा तामसी चित्तधूम्रिणी ।
अभावप्रत्ययालम्बनात्मिकाऽऽलस्यकारिणी ॥ २ ॥
स्वाप्नदोषादिकर्त्री च भक्तिसेवाविघातिनी ।
कदाचिद्दोषबाहुल्ये राजसे पुष्टतां गते ॥ ३ ॥
ब्रह्मचर्यव्रतभंगप्रदस्रावादिकारिणी ।
व्रतनाशकरी स्यात् सा वायुवीर्यजवादिना ॥ ४ ॥
तस्माज्जागरणं कार्यं व्रतस्य निशि सर्वथा ।
बह्वाहारेऽन्नसंभारे प्रायः शारीरधातवः ॥ ५ ॥
पुष्टा भवन्ति तद्योगात् क्वचिद्धातुक्षयेऽवशात् ।
ब्रह्मचर्यव्रतभंगे तूपवासो निरर्थकः ॥ ६ ॥
तस्मात् तदा फलाहारादिकं संक्षेपतो मतम् ।
अन्नाहारः सदावर्ज्यो व्रतस्य दिवसे जनैः ॥ ७ ॥
निद्रा तु सर्वथा वर्ज्या सत्त्ववृत्तिविनाशिनी ।
पुण्यक्षयप्रदा सर्वदोषाधाराऽतितामसी ॥ ८ ॥
विजेतव्या प्रयत्नेन भक्तेन व्रतिना खलु ।
व्रतपुष्टिकरं जागरणं कार्यं प्रयत्नतः ॥ ९ ॥
एकादश्यां जनः कृष्णं संपूज्य प्रेमतो निशि ।
वैष्णवैः सह सम्मील्य कुर्याज्जागरणं व्रते ॥१०॥
गीतवाद्याभिनृत्यादि संहिताकथनादिना ।
वार्तया भगवत्कीर्त्यात्मिकया सेवया च वा ॥११॥
कुर्याज्जागरणं भक्तो व्रतसाफल्यहेतवे ।
धूपं दीपं च नैवेद्यं पुष्पं गन्धानुलेपनम् ॥१२॥
फलमर्घ्यं तथा श्रद्धां भूषणं प्रेमभावनम् ।
विनिद्रं च व्रतं सर्वं दद्यात्कुर्याच्च भक्तितः ॥१३॥

स सर्वपापाऽतिसंशुद्धो जायते पार्षदो हरेः ।
व्रते जागरणे प्राप्ते सोत्साहा वैष्णवास्तदा ॥१४॥
सोपवासं व्रतं जागरणं कुर्युः सताण्डवम् ।
तद्व्रतं विष्णुसंज्ञं वै कुर्युर्नाम्नां च कीर्तनम् ॥१५॥
मनसा श्रीहरिं ध्यात्वा मुहुर्नाम वदन्ति वै ।
ते तु धन्यतमा लोके तारका मम पार्षदाः ॥१६॥
प्रश्वासे च तथा श्वासे हरेर्नाम चतुर्गुणम् ।
प्रहरे नामरटणं फलदं कोटिसद्गुणम् ॥१७॥
चतुर्यामे नामभक्तिस्त्वसंख्यफलदा मता ।
जागरं निमिषार्धं च कृतं मूर्तेश्च सन्निधौ ॥१८॥
तत्फलं कोटिकोट्यब्जगुणितं स्यादनुत्तमम् ।
कृष्णाग्रे नर्तनं कुर्यात् साश्चर्यं प्रेमसंभृतम् ॥१९॥
सोत्साहं च प्रमादालस्यादिवर्जितमेव च ।
प्रदक्षिणं तथा कुर्यात् नमस्कारं मुहुर्मुहुः ॥२०॥
आरार्त्रिकं तथा कुर्याद् यामे यामे पुनः पुनः ।
चेतसा चार्द्रभावेन पश्येन्मूर्तिं क्षणे क्षणे ॥२१॥
तालिकावादनं कुर्यादित्येवं जागरं भवेत् ।
एवं बहुगुणैर्युक्तं कुर्याद् यो जागरं व्रते ॥२२॥
वित्तशाठ्यं न च कुर्यान्न लोभं पूजने तथा ।
एवं यः कुरुते भक्त्या न पुनर्जायते भुवि ॥२३॥
जागरणं प्रकुर्वन् वै व्रती विष्णौ हि लीयते ।
नास्तिकत्वेन चात्मानं व्रते नैव प्रतारयेत् ॥२४॥
नारायणव्रते जागरणे तु ह्युपहासकृत् ।
षष्टिवर्षसहस्राणि विष्ठायां जायते (कृमिः) ॥२५॥
वेदवेत्ता च यो विप्रो नर्तने चोपहास्यकृत् ।
दोषलिप्तो भवेदत्र चाण्डालादधमो हि सः ॥२६॥
क्षणं वा प्रहरं वापि जागरं नर्तनान्वितम् ।
करोति यो भावयुक्तश्चतुर्वर्गफलं व्रजेत् ॥२७॥
याजको वैदिकश्चापि जागरे प्रविनिन्दकः ।
एकविंशतिकुलयुक् नरकं प्रतिपद्यते ॥२८॥
नास्तिकभावसर्पेण दंष्टाः स्वपन्ति वै व्रते ।
मायया मोहिता नैव कुर्वन्ति जागरं हि ते ॥२९॥
विनष्टास्ते न सन्देहो मोक्षात्प्रच्यविता हि ते ।
नेत्रहीना ज्ञानहीनाः पुमर्थविगता हि ते ॥३०॥
जागरे वाचके प्राप्ते हरेः कथां प्रकारयेत् ।
श्रावयेद् विविधान् दिव्याँश्चमत्कारान् हरेर्मुहुः ॥३१॥
वाचकस्याऽप्रलाभे तत्कीर्तनं कारयेन्मिथः ।
गायनं नर्तनं कुर्यात् हास्यादि हरियोगजम् ॥३२॥
उत्सवो रासरमणं कृष्णलीलां प्रगापयेत् ।
अश्वमेधसहस्रस्य वाजपेयाऽयुतस्य च ॥३३॥
पुण्यं भवेत् कोटिगुणं व्रते जागरणे कृते ।
विना जागरणं व्रते व्रतपुण्यक्षयो भवेत् ॥३४॥
पितृपक्षा मातृपक्षा भार्यापक्षास्तथा युजः ।
शतशश्चोद्धरन्त्येव व्रते जागरणे कृते ॥३५॥
उपोषणस्य रात्रिर्वा दिनं वा निद्रया यदि ।
विध्यते तद्व्रतं विद्धं चासुरं व्रतमेव तत् ॥३६॥
फलं त्वासुरभावात्म शापात्मकं च तद्भवेत् ।
विष्णुस्तत्र न चायाति त्वागत्यापि विगच्छति ॥३७॥
हरिर्निद्राकृते स्थाने शापं दत्त्वा विगच्छति ।
कृते तु जागरे स्थाने लक्ष्मीरुद्धोपि वै हरिः ॥३८॥
समागच्छति हृष्टः सन् भक्तेषु नृत्यति स्वयम् ।
प्रेमपूर्णप्रभक्तेषु प्रविष्टोऽतीव हृष्यति ॥३९॥
यावद् व्रतानि कुरुते जागरं हरिसन्निधौ ।
तावद् युगानि व्रतकृद् विष्णुलोके महीयते ॥४०॥
एकादश्यादिव्रताहे शश्वन्निद्रालुसद्गृहे ।
असुरा राक्षसा याम्या नृत्यन्त्यनिष्टकारकाः ॥४१॥
हरेर्व्रतदिने गानं पाठं जपं समाचरेत् ।
मूकवन्निर्गमे सप्तजन्मसु मूकता भवेत् ॥४२॥
हरेरग्रे नर्तनं यो नाचरत्यतिलज्जया ।
पंगुत्वं तस्य विज्ञेयं चात्र परत्र जन्मनि ॥४३॥
गीतनृत्यजपजागरणकर्तुस्तु मत्पदम् ।
वासाय वैष्णवं सर्वश्रेष्ठं मया विनिर्मितम् ॥४४॥
कारयेचान्यभक्तान् यो जागरं वै हरेर्दिने ।
अनिमेषो मम पार्षदाभ्यो वसेत् स धामनि ॥४५॥
निद्रालुं जाग्रति भावे योजयेद्यो हरेर्दिने ।
वसेच्चिरं तु वैकुण्ठे पितृकोटिभिरन्वितः ॥४६॥
मतिं ददाति यः कृष्णव्रते जागरणं प्रति ।
षष्टिवर्षसहस्राणि श्वेतद्वीपे वसेद्धि सः ॥४७॥
कामदोषकृतं पापं जन्मन्यन्यत्र वा कृतम् ।
श्रीहरेर्जागरे सर्वं निशि नाशं प्रगच्छति ॥४८॥
हरेश्चाग्रे तथा शालग्रामस्याग्रे प्रजागरम् ।
कुर्वन्ति तु फलं तेषां कोटितीर्थकृतं भवेत् ॥४९॥
अन्यथा सुकृतं सर्वं नश्यत्येव हि निद्रया ।
निन्दयापि व्रतं नश्यत्येव फलं कुतो भवेत् ॥५०॥
पूरुषार्थाः सम्पदश्च पुत्रा कीर्तिर्धनादिकम् ।
शाश्वताः स्वर्गलोकाश्च लभ्यन्ते जागरे व्रते ॥५१॥

विना जागरणं नैव विष्णोः प्रसन्नता भवेत् ।
यज्ञायुतैः शाश्वतो वै लोको नैवाप्यते क्वचित् ॥५२॥
व्रते च जागरे लब्धे लभ्यते धाम शाश्वतम् ।
जागरार्थं गच्छतः स्यात्पदेऽश्वमेधजं फलम् ॥५३॥
पादयोः पांसवः सक्तास्तावद्वर्षसहस्रकम् ।
जागरी तिष्ठते दिव्ये वैकुण्ठे च परे दिवि ॥५४॥
व्रतरात्रौ जागरार्थं गन्तव्यं हरिमन्दिरम् ।
पादलग्नरजःसंख्ययुगवासो हरेर्गृहे ॥५५॥
एकादश्यास्तथा द्वादश्याश्च रात्रौ प्रजागरम् ।
प्रकर्तव्यं प्रयत्नेन जीवाऽज्ञानविधूतये ॥५६॥
उत्तमं च मध्यमं च कनिष्ठं चेति वै मतम् ।
त्रिधा जागरणं तत्र चोत्तमं कार्यमेव तत् ॥५७॥
कथायुक्तं गानयुक्तं नृत्ययुक्तं विशेषतः ।
सात्त्विकीभावनायुक्तं जागरं तूत्तमं मतम् ॥५८॥
गान्धर्वहरिकीर्त्यादियुतं तालादिसंयुतम् ।
दीपधूपादिशोभाढ्यं जागरं चोत्तमं मतम् ॥५९॥
भक्तिभावसमायुक्तं नामोच्चारसमन्वितम् ।
नैर्मल्यतुष्टिजनकं जागरं चोत्तमं मतम् ॥६०॥
लोकरंजनकोत्साहप्रोत्सवादिसमन्वितम् ।
नैवेद्यफलपानादियुतं जागरमुत्तमम् ॥६१॥
हरेरारात्रिकं यत्र हरेर्यत्र प्रदक्षिणम् ।
हरेरग्रे राशयोगस्तद्वै जागरमुत्तमम् ॥६२॥
शास्त्रज्ञानं गुरोः सेवा देवसेवा च यत्र वै ।
स्मरणं पादसेवा च जागरं चोत्तमं हि तत् ॥६३॥
सर्वभावा हरौ यत्र वैष्णवाभ्याश्च यत्र वै ।
तज्जागरं हि कर्तव्यं पक्षयोः शुक्लकृष्णयोः ॥६४॥
व्रतदानतपोहोमस्वाध्यायादिभिरित्यपि ।
किं चान्यैः पुण्यकार्यैर्वा न व्रते जागरं यदि ॥६५॥
प्रवासे च वने क्षेत्रेऽरण्ये ग्रामान्तरेऽपि च ।
वाटिकायां समाजे वा नद्यां शैलेऽतिगे रणे ॥६६॥
खिन्नाऽवस्थाऽतिकाले वा पराधीने महापथे ।
जागरणप्रकर्ता मे व्रते सोऽतीव मे प्रियः ॥६७॥
यस्य कस्यापि भक्तो वा मम भक्तोऽपि सर्वथा ।
व्रतेऽह्नि सर्वथा निद्रात्यागं कुर्याद् व्रजेत् फलम् ॥६८॥
शैवः सौरश्च शाक्तश्च गणेशभक्त इत्यपि ।
मम विभूतिभक्तोऽपि व्रते जागरणं चरेत् ॥६९॥
निद्रालुस्तु पशुर्ज्ञेयः इन्द्रियाराम एव सः ।
विप्रियं मे कृतं तेन व्रते नो जागरं कृतम् ॥७०॥
निद्रा च भोजनं चैवेन्द्रियाहारान् करोति यः ।
व्रते मे स भवेत् तिर्यग्योनौ प्रतिकणं मुहुः ॥७१॥
निहताः पितरस्तेन देवानां च वधः कृतः ।
पुण्यरेखा हृता तेन सौभाग्यं नाशितं तया ॥७२॥
सम्पदो विपदां पात्रं कृतं तेनातिमानिना ।
जागरं च व्रतं येन कृतं नैव हरेर्दिने ॥७३॥
सतालीवादनं कुर्वन् गालवाद्यं च वादयन् ।
नृत्यन् गायन् कौतुकं दर्शयन् वै जागरं चरेत् ॥७४॥
चरित्राणि स्मारयँश्च रंजयन् वैष्णवान् जनान् ।
रोमाणि प्रेमपूर्णानि संप्रहृष्टानि दर्शयन् ॥७५॥
आलापान् जनयन् रम्यान् मिष्टान् भावान् प्रकाशयन् ।
हावान् व्यंग्यान् शक्तलक्ष्यान् कीर्तनार्थान् विवेचयन् ॥७६॥
एवं व्रते प्रकुर्वन् जागरं प्रेम प्रदर्शयन् ।
निमिषे निमिषे तस्य पुण्यं स्यान्नैमिषं तथा ॥७७॥
तीर्थकोटिफलं तस्य यज्ञकोटिफलं महत् ।
स्वर्गकोटिफलं चैव दानकोटिफलं महत् ॥७८॥
शान्तेन मनसा धूपं दीपं नीराजनं तथा ।
कुर्याच्च जागरं रात्रौ सप्तद्वीपाधिपो भवेत् ॥७९॥
महापापातिपापानि कोटिहत्यासमानि वै ।
सजागरे व्रते सम्यग् विलयं यान्ति खण्डशः ॥८०॥
एकतः सर्वपुण्यानि चैकतो व्रतजागरम् ।
जागरस्य महत्पुण्यं विशिष्यतेऽन्यपुण्यतः ॥८१॥
काशी द्वारावती रैवताचलः सोमपाट्टणम् ।
अर्बुदश्चारुणश्चैव मन्दरो हिमपर्वतः ॥८२॥
सह्याद्रिर्नवलक्षश्च विन्ध्यो द्रोणाचलस्तथा ।
महाकालवनं वृन्दावनं चावन्तिका तथा ॥८३॥
पुष्करं च प्रयागं च रेवा स्वर्णा यमस्वसा ।
गया च गोकुलं गोदावरी गंगा च भद्रिका ॥८४॥
गण्डकी ताम्रपर्णी च ब्रह्मपुत्रादयो नदाः ।
कुंकुमवापिका माया कांची श्रीपुरुषोत्तमा ॥८५॥
सर्वे ते तीर्थविधिना कृता अपि न ते तथा ।
फलं यच्छन्ति वै यादृक् फलं हरिदिनव्रतात् ॥८६॥
सजागरात् कृतात् पुण्यं सर्वपुण्यातिगं यतः ।
तीर्थानि पर्वता नद्यः सागराश्च वनानि च ॥८७॥
अरण्यानि च चैत्यानि द्वीपाश्च पृथिवी तथा ।
तत्त्वानि देवाः ऋषयो मुनयः पितरोऽग्नयः ॥८८॥
गन्धर्वाः किन्नराः नागाश्चारणा ब्राह्मसृष्टयः ।
वैमानिकाश्च वैराजाः कालाभिमानिकेश्वराः ॥८९॥

ये केचित्तारकाः प्रोक्तास्ते सर्वे लोकधारकाः ।
एकादश्या जागरे वै समागच्छन्ति सर्वतः ॥९०॥
ततो जागरकर्तारो देवा एव न संशयः ।
तत्र समागतान् देवान् प्रसादैश्च सुतर्पयेत् ॥९१॥
प्रासादिकं सुनैवेद्यं रक्षणीयं प्रयत्नतः ।
द्वादश्यां पारणायां तद् भक्षणीयं व्रतार्थिना ॥९२॥
प्रातःकाले ब्राह्मभागे स्नात्वा हरिं प्रपूज्य च ।
समर्पयेदुपवासं जागरं व्रतमित्यपि ॥९३॥
हरये चार्पयेत् सर्वं व्रतं च फलमित्यपि ।
प्रसीद श्रीहरे मे त्वं व्रतेनाऽनेन सर्वथा ॥९४॥
इत्युच्चार्य जलं दद्यात् पृथिव्यां हरिसन्निधौ ।
ज्ञानदो मुक्तिदो भक्तसुखदो भव सर्वथा ॥९५॥
इत्युक्त्वा च ततो नत्वा भोजयेद्वैष्णवान् व्रती ।
पारणां च ततः कुर्याद् यथासंभवमग्रतः ॥९६॥
दानं दद्यात्सर्वतोभद्राख्यमण्डलमित्यपि ।
सधान्यं गुरवे दद्याद् घटादिकं समूर्तिकम् ॥९७॥
प्रातर्यदा द्वादशी तु स्वल्पापि न भवेत्तदा ।
रात्रौ तु पारणां कुर्याद् द्वादश्यामेव सर्वथा ॥९८॥
न तत्र रात्रिदोषोऽस्ति निषेधो नास्ति पारणे ।
निशि स्नानं पारणं च तत्र दोषप्रदं नहि ॥९९॥
तत्पूर्वापरयामाभ्यां दिनवत् कर्म कारयेत् ।
यर्हि भवति स्वल्पापि द्वादशी पारणादिने ॥१००॥
उषःकाले द्वयं कुर्यात् प्रातर्मध्याह्निकं तदा ।
साधिता द्वादशी येन फलं तस्य ह्यनन्तकम् ॥१०१॥
एवं व्रतं कृतं येन साधितं सकलं भवेत् ।
द्वादशीं च व्रतं कृत्वा साधयित्वा हरेर्दिनम् ॥१०२॥
बहवो वैष्णवा दिव्या गता वैष्णवधाम यत् ।
नास्ति हरेः समो देवो न तिथिर्द्वादशीसमा ॥१०३॥
व्रतं नैकादशीतुल्यं त्रयं मोक्षप्रदं यतः ।
हरेर्योगाच्च तत्सर्वं भवेत् पूर्णं च शाश्वतम् ॥१०४॥
भक्तानां वल्लभं कुर्याद् भक्तानां वल्लभो हरिः ।
व्रतजागरणपूजाप्रकर्ता वल्लभो हरेः ॥१०५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने एकादशीव्रतजागरणादिमहिमनिरूपणनामा सप्तत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३७ ॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! महादेवश्चैकदा मामुपागतः ।
पृष्ठवान् स च माहात्म्यं प्रत्येकादशिकाभवम् ॥ १ ॥
द्वादश्याश्चापि माहात्म्यं तस्मै संकथितं मया ।
यच्छ्रुत्वा मुनयः सर्वे फलं प्राप्य दिवं गताः ॥ २ ॥
तच्चाहं ते प्रवक्ष्यामि कोटिस्वर्गफलप्रदम् ।
एकादशी सदा ऋक्षयोगेन चोत्तमा मता ॥ ३ ॥
जया च विजया चैव जयन्ती च मतोत्तमा ।
एकादश्यां यदा ऋक्षं शुक्लपक्षे पुनर्वसूः ॥ ४ ॥
नाम्ना सा तु जया बोध्या व्रतार्थे तिथिरुत्तमा ।
यदा च शुक्लद्वादश्यां नक्षत्रं श्रवणं भवेत् ॥ ५ ॥
विजया सा समाख्याता सहस्रगुणितं फलम् ।
यदा च शुक्लद्वादश्यां प्राजापत्यं भवेत्तदा ॥ ६ ॥
जयन्तीनाम सा सर्वपापनाशकरा तिथिः ।
सप्तजन्मकृतं पापं शुष्कं चार्द्रं विनाशयेत् ॥ ७ ॥
यदा वै शुक्लद्वादश्यां पुष्यं भवति कर्हिचित् ।
महापुण्या च सा बोध्या सर्वोत्तमा च सा तिथिः ॥ ८ ॥
तिलप्रस्थप्रदानं यः संवत्सरं करोति हि ।
उपवासश्च तस्यां यः कुर्यादस्याऽधिकं फलम् ॥ ९ ॥
अस्या व्रतस्याऽनुयोगात् स्वयं तुष्टो भवेद्धरिः ।
प्रत्यक्षदर्शनं याति मोक्षदं च फलं भवेत् ॥१०॥
वाचिकान्मानसाद्देहात्पापात्सप्तजनुकृतात् ।
पुष्ययुक्तामुपोष्यैवाप्नुयान्मुक्तिं तथा पराम् ॥११॥
एकादशीसहस्रस्य फलं च लभते व्रतात् ।
स्नानं दानं जपो होमः स्वाध्यायो देवतार्चनम् ॥१२॥
अक्षय्यफलदं चास्यां कृतं मोक्षप्रदं भवेत् ।
स्वर्णांगदेन राज्ञा वै पत्नीव्रतद्विजाय वै ॥१३॥
पृष्टं कृतयुगे पूर्वे मोक्षप्राप्तिप्रकाम्यया ।
उपवासस्य नक्तस्य चैकभुक्तस्य किं फलम् ॥१४॥
विषयेभ्य उपावृत्तेन्द्रियाणां वास ऐश्वरे ।
मूर्तौ वा स भवेल्लोके ह्युपवासः फलप्रदः ॥१५॥
निर्जलो वा सजलो वा ह्युपवासः समुच्यते ।
सफलो वा पयःपानयुक्तोऽपि सः प्रकथ्यते ॥१६॥
दशम्यां त्वेकभुक्तं च कृत्वा व्रतं समाचरेत् ।
दशम्यां वा तथा नक्तं भुक्त्वा वै व्रतमाचरेत् ॥१७॥
दिवसस्याऽष्टमे भागे मन्दीभूते दिवाकरे ।
भोजनं नक्तमित्युक्तं न नक्तं निशि भोजनम् ॥१८॥
नक्षत्रदर्शने नक्तं व्यापृतस्य भवेत् खलु ।
व्यवसायिजनस्यैकादश्यां नक्तं च भोजनम् ॥१९॥
नास्य निषेधनं यस्मात् कर्मचारी जनोऽस्ति सः ।
मध्याह्ने चैकभुक्तं वा कृत्वापि व्रतमाचरेत् ॥२०॥

अबलस्य दुर्बलस्य कृतेऽयं भोजनादरः ।
ततः प्रभातसमये चैकादश्यां व्रती जनः ॥२१॥
प्रगृह्णीयाच्च नियमं विषयेभ्यो निवर्तने ।
पूजयेच्च हरिं प्रातः षोडशोपसुवस्तुभिः ॥२२॥
प्रार्थयेच्च हरिं सम्पूर्णं व्रतं मे भवेदिति ।
मा विघ्नो मे भवेत्तत्र मा श्रद्धानाश इत्यपि ॥२३॥
व्यवहारमयं तत्र व्रते नैव समाचरेत् ।
आवश्यकं प्रकुर्याच्च यन्न व्रतविघायकम् ॥२४॥
पयो जलं फलं मूलं पत्रं शाकं रसस्तथा ।
ओषधं च गुरोर्वाक्यं ब्रह्मवाक्यं विवश्यता ॥२५॥
एकादशानि चैतानि ह्यव्रतघ्नानि सन्ति वै ।
भोजनं चाऽप्यशक्तस्याऽव्रतघ्नं बोध्यमेव च ॥२६॥
मध्याह्नेऽपि जलस्नानं कुर्याच्च पूजयेद्धरिम् ।
अधमं कूपके स्नानं वाप्यां तु मध्यमं हि तत् ॥२७॥
तडागे वाथ नद्यां वा स्नानं वै चोत्तमं मतम् ।
तीर्थे वापि महानद्यां समुद्रे चोत्तमोत्तमम् ॥२८॥
गृहे स्नानं ह्यशक्तस्य स्मृद्धस्यापि भवेत् खलु ।
अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे ॥२९॥
मृत्तिके त्वां शरीरे मे लेपयामि क्षमां कुरु ।
हर पापानि सर्वाणि पुण्यानि कुरु साम्प्रतम् ॥३०॥
इत्युक्त्वा लेपयेद् देहे शुद्ध्यर्थं मृत्तिकां जनः ।
मौनमादाय कृष्णस्य स्मरन्नाम जले शुभे ॥३१॥
स्नायात्तथा च हरये नैवेद्यं तत्र कारयेत् ।
जलं तथाऽर्पयेत् कालं कथया क्षपयेद् व्रती ॥३२॥
भक्त्या भगवतः पूर्णं दिनं तु गमयेद् व्रती ।
रात्रौ तथा महद्भावभृतैर्वस्तुभिरादरात् ॥३३॥
पूजनं देवदेवस्य कुर्याज्जागरणं निशि ।
यथा शुक्ला तथा कृष्णा विधिनैवं प्रकारयेत् ॥३४॥
एकादशीदिनं वन्ध्यं व्रतहीनं न यापयेत् ।
एवं व्रतविधातुर्वै भगवान् श्रीहरिः स्वयम् ॥३५॥
प्रसन्नो भवति स्वस्य धाम नयति तं जनम् ।
फलं च शाश्वतं पूर्णानन्दरूपं ददात्यसौ ॥३६॥
संक्रान्तीनां चतुर्लक्षं यो दानं प्रददाति वै ।
एकादश्युपवासस्य तद्धि नैककलासमम् ॥३७॥
प्रभासे कुरुभूभागे चन्द्रसूर्यग्रहाप्लवे ।
यत्फलं च ततः श्रेष्ठमेकादश्युपवासिनः ॥३८॥
केदारे च जलं पीत्वा पुनर्जन्म न विद्यते ।
तथा चैकादशीपुण्यवतो जन्म न विद्यते ॥३९॥
अश्वमेधादियज्ञेभ्योऽधिकं पुण्यं व्रते भवेत् ।
तपस्विनां सहस्रं च प्रत्यहं यद्गृहेऽब्दकम् ॥४०॥
भुंक्ते च तत्फलाच्छ्रेष्ठं चैकादश्युपवासिनः ।
गोसहस्राधिकं पुण्यं शतोर्ध्वं संप्रजायते ॥४१॥
ब्रह्मविष्णुमहेशाः संवसन्त्येकादशीकृतः ।
देहे देवस्वरूपोऽयं व्रती भवति केशवः ॥४२॥
रुक्मिणीस्वामिनः सेवापुण्यस्याऽन्तो न विद्यते ।
एकादशीव्रतस्यापि पुण्यसंख्या न विद्यते ॥४३॥
उपवासेन पूर्णं वै तदर्धं नक्तभोजनात् ।
एकभुक्तात्तदर्धार्धं पुण्यं संजायते व्रते ॥४४॥
तावद्गर्जन्ति तीर्थानि दानानि नियमानि च ।
यावन्नोपोषयेज्जन्तुर्वासरं हरिवल्लभम् ॥४५॥
एकादशीसमं नास्ति महायज्ञसहस्रकम् ।
महादानसहस्रं च महास्वर्गशतं तथा ॥४६॥
भवत्येकादशीपुण्यात् मोक्षार्थे हि मता तु सा ।
मार्गशीर्षे कृष्णपक्षे चोत्पन्नाऽतो मम प्रिया ॥४७॥
उत्पन्नत्वाच्च सा नाम्नोत्पत्तिरेकादशी मता ।
उत्पत्तिं च विधानं च पूजनं चाचरेद् व्रती ॥४८॥
अभया सापि संप्रोक्ता पूज्यः सुलक्षणायुतः ।
कृष्णस्तु तिलपुष्पैश्च नैवेद्ये च गुडौदनः ॥४९॥
देयं स्कन्धफलं त्वर्घ्ये वृषदानं च सम्मतम् ।
तथैव दक्षिणा देया कृष्णाय स्वर्णमुद्रिकाः ॥५०॥
उत्पत्तिस्तत्र कर्तव्या विधिना वै व्रतोत्सवे ।
प्रातर्नारायणो निद्रावशोऽस्ति गह्वरे यथा ॥५१॥
सिंहवतीप्रनाम्न्येव पर्वते हिमवर्तिनि ।
हिमाचलगुहा कार्या तदन्तः श्रीहरिः स्वयम् ॥५२॥
सुप्तोऽस्तीति प्रक्लप्तव्यं कर्तव्यो मुरदानवः ।
एकादशी तथा कन्यारूपा दिव्या सुवर्णजा ॥५३॥
कर्तव्या शस्त्रसम्पन्ना तथा युद्धं प्रदर्शयेत् ।
मुरनाशस्तथा नारायणजाग्रत्स्वभावता ॥५४॥
प्रकर्तव्या गह्वरे च तयोस्तत्र प्रपूजनम् ।
एकादश्या हरेश्चैव तदा षोडशवस्तुभिः ॥५५॥
सर्वतोभद्रनामाऽत्र सप्तधान्यैश्च मण्डलम् ।
कारणीयं च तन्मध्ये सौवर्णस्ताम्रजोऽथवा ॥५६॥
घटः पञ्चसुरत्नादिवस्त्रपल्लवशोभितः ।
फलयुक्तः स्थापनीयस्तत्र स्थाली तिलान्विता ॥५७॥
स्थापनीया तत्र मूर्तिद्वयं स्थाप्यं हि मन्त्रतः ।
पूजनं विधिवत् कार्यं पूर्वोक्तविधिना शुभम् ॥५८॥

सुशय्या स्थापनीया सपर्यंका सुखसंप्रदा ।
व्रतं कार्यं दिवारात्रौ जागरं कार्यमित्यपि ॥५९॥
रात्रौ च पूजनं तत्र हरेः कर्तव्यमंजसा ।
प्रातः स्नानं पूजनं च गोदानं भूमिदानकम् ॥६०॥
स्वर्णदानं यथाशक्ति गुरवे ब्राह्मणाय वा ।
कार्यं विसर्जनं पश्चात् पारणां परिवर्तयेत् ॥६१॥
साधून् साध्वीरर्भकांश्च विप्रान् दीनान् सुभोजयेत् ।
मूर्तिदानं च गुरवे कुर्याद् भक्तिप्रपूर्वकम् ॥६२॥
यथाद्रव्यं यथाशक्ति विस्तारः कार्य एव च ।
राज्यदानं ग्रामदानं क्षेत्रदानं गृहार्पणम् ॥६३॥
कन्यादानं पशोर्दानं रत्नमणिप्रदानकम् ।
हस्तिदानं चाश्वदानं यानवाहनदानकम् ॥६४॥
अन्नदानं वस्त्रदानं ज्ञानविद्याप्रदानकम् ।
यत्सामर्थ्यो भवेद् दाता तथा दानं मतं सदा ॥६५॥
वित्तशाठ्यं न प्रकर्तव्यं धनिना च नृपेण च ।
फलदानं काष्ठदानं तिलदानादि वापि च ॥६६॥
निर्धनेनापि कर्तव्यं सेवा वा देहसंभवा ।
वाचा वा मनसा वाथ कराभ्यां सेवनं तथा ॥६७॥
मार्जनं लेपनं वार्याहरणं पादमर्दनम् ।
मन्दिरे दास्यवत् वर्त्यं फलानन्त्याद्यवाप्तये ॥६८॥
भावयुक्तेन भगवान् सेवनेन प्रतुष्यति ।
शृणु तत्र शुभाख्यानं श्रवणादपि तारयेत् ॥६९॥
पुरा तु वेधसस्तृतीये कल्पे मरुदेशजः ।
राजाऽऽसीत्तु मरुद्धन्वा स्वार्थमात्रपरायणः ॥७०॥
कल्पस्याऽन्ते कलौ राजा प्रवृत्तो विषयेष्वति ।
कामलोभोत्थदोषैश्च प्रजा जातापि तादृशी ॥७१॥
प्रजायां दोषबाहुल्ये राजा दोषेण लिप्यते ।
राज्ञः पापाच्च वै वृष्टिर्जायते नहि तदृतौ ॥७२॥
एवं वृष्टिप्रतिबन्धे प्रजाः सर्वाः प्रपीडिताः ।
अन्योन्यं स्वं चाहरन्ति वस्त्रं चान्नादि सर्वथा ॥७३॥
नीयते च बलात्सर्वं न्यायस्तत्र न विद्यते ।
यथा यथा विना वृष्टिं समयो व्येति तत्तथा ॥७४॥
प्रजाः निष्पीड्य राजा सः धनान्नानि विकर्षति ।
नारीश्च गाश्च तत्सर्वं प्रसह्य नयति नृपः ॥७५॥
हिंसाऽनृतस्तेयबलात्कारादिपापदूषिते ।
देशे प्रजाक्षयो जातो राजापि ध्वंससन्मुखः ॥७६॥
अतिपापं महापापं चकार बहुधा मुहुः ।
एवं सप्ताऽब्दपर्यन्तं वृष्टिर्नैवाऽभवत्ततः ॥७७॥
राज्ञो भार्याऽन्नराहित्याद् रोगपीडाऽतिसंभवात् ।
मृत्यून्मुखी तथा पुत्रो मृत्यून्मुखोऽभवत् यदा ॥७८॥
आक्रोशति स्म राजाऽसौ परमात्मा समुद्धर ।
पापान्यतिकृतान्येव न पुण्यं चार्जितं मया ॥७९॥
फलं प्राप्तं महद्दुःखं नाशोऽपि मस्तके धृतः ।
अतः परं न किञ्चिद्वै कर्तुं शक्नोमि माधव ॥८०॥
समुद्धर महादुःखात् क्षुधया प्राणनाशया ।
इत्याक्रोशन् हरिं ध्यायन् रौति विलापपूर्वकम् ॥८१॥
तावदाकाशवाण्यासीन्मा राजन् रोदनं कुरु ।
पश्चात्तापेन पापानि दग्धानि मत्स्मृतेस्तथा ॥८२॥
गृहाणेदं जलं वर्षाभवं पत्रादिकं तथा ।
खादय प्राणरक्षा वो भविष्यति सुखी भव ॥८३॥
अतश्चाग्रे तृतीये च दिने त्वेकादशी मम ।
प्रिया तिथिः समुपावर्तते तस्या व्रतं कुरु ॥८४॥
वृष्टिः सर्वत्र राज्ये ते भविष्यति सुखावहा ।
प्रजाः पुनश्च ते राज्ये प्रवर्त्स्यन्ति सुखार्थिकाः ॥८५॥
धनधान्यमयो देशो भविष्यति च तत्फलम् ।
प्राप्स्यन्ते च प्रजास्तेऽपि कुर्वन्त्वेकादशीव्रतम् ॥८६॥
इत्युक्त्वोपररामेयं राजा राज्ञी सुतस्तथा ।
व्रतं च निर्जलं चक्रुर्महत्पुण्यमभूत्ततः ॥८७॥
व्रते कृते महावृष्टिर्जाता देशश्च सस्यवान् ।
प्रजावासस्ततो जातो राज्ञी नीरुजतां गता ॥८८॥
सुतोऽपि सुखवान् जातस्तस्मै ददौ धुरं निजाम् ।
तत्र वर्षे कृताः सर्वैरेकादश्यो हि वत्सरम् ॥८९॥
तावदाकाशमार्गेण विमानद्वयमागतम् ।
राज्ञ्यर्थं च नृपत्यर्थं वैमानिकैरधिश्रितम् ॥९०॥
प्राहुः स्वर्गीयदूतास्तौ समागच्छतमत्र यत् ।
युवयोर्व्रतजन्यं वै पुण्यं सहस्रनाकदम् ॥९१॥
वर्तते तत्सहस्रयुगव्याप्तं भोग्यमेव हि ।
तत्पुण्येन मरुन्नामा देवः कल्पे चतुर्थके ॥९२॥
भविष्यसि क्ष्मापते सभार्यस्त्वं स्वर्गृहाण वै ।
इत्युक्तः स तु भूमीशो देहं त्यक्त्वा सभार्यकः ॥९३॥
ययौ स्वर्गप्रदं सोऽयं कल्पान्तरे पुनः पुनः ।
देवो भूत्वा च भोगाँश्च भुक्त्वा भुक्त्वाऽतिभावतः ॥९४॥
स्वर्णांगदो महाभागवतो भूत्वाऽतिदासवत् ।
प्रसेव्य च हरिं प्राप्तो धामाऽऽवृतिविवर्जितम् ॥९५॥
ततो मार्गाऽसितपक्षोत्पत्त्यैकादशिकाव्रतम् ।
प्रयत्नेन प्रकर्तव्यं स्वर्गास्वर्गे च मोक्षणम् ॥९६॥

इत्युत्पत्त्यभिधैकादशिकाव्रतेन सर्वथा ।
राज्यपुत्रधनलाभश्चाऽऽरोग्यं सर्वदा भवेत् ॥९७॥
सर्वं चेष्टं मिलेत् स्वर्गे मोक्षश्चापि भवेत् ततः ।
सकामैश्चापि निष्कामैः कर्तव्यं तद्व्रतं महत् ॥९८॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने मार्गशीर्षकृष्णपक्षोत्पत्त्येकादशीव्रतविध्यादितत्फलप्राप्त्यादिनिरूपणनामाऽष्टात्रिंशदधिकद्विशततमोऽध्यायः ॥२३८॥

**श्रीलक्ष्मीरुवाच—**

वन्देऽहं देवदेवेशं सर्वजीवसुखप्रदम् ।
अन्तर्यामिणमाराध्यं सर्वकामफलप्रदम् ॥ १ ॥
पृच्छामि भगवन् विष्णो लोकानां क्षेमकाम्यया ।
पापिनां पापनाशाय सकामानां समृद्धये ॥ २ ॥
मार्गशीर्षे सिते पक्षे किंनाम्न्येकादशी शुभा ।
किं फलं को विधिस्तस्याः को देवस्तत्पतिः प्रभुः ॥ ३ ॥
विस्तरेण यथार्थं तत् समाचक्ष्व मम प्रभो ।
श्रुत्वैतच्छ्रीहरिः प्राह भक्तानां हितकृत्प्रभुः ॥ ४ ॥
शृणु लक्ष्मि मार्गशीर्षसितैकादशिकाव्रतम् ।
अस्याः श्रवणमात्रेण वाजपेयफलं भवेत् ॥ ५ ॥
दशम्यां नक्तभोजी स्याद् रात्रौ भूशयनं चरेत् ।
ब्रह्मचारी भवेत् क्रोधादिकान् दोषान् परित्यजेत् ॥ ६ ॥
एकादश्यां ब्राह्मसंज्ञे मुहूर्ते जाग्रतिं लभेत् ।
स्मरेद् दामोदरं कृष्णं मोक्षदायाः पतिं प्रभुम् ॥ ७ ॥
सर्वपापहरा मोक्षप्रदा मोक्षाभिधानिका ।
मोक्षदा नामतः प्रोक्ता कृष्णेन निजवाञ्छया ॥ ८ ॥
दामोदरस्वरूपेण स्वीकृता रैवताचले ।
दामोदरो ह्यतः पूज्यो भगवाँश्च तया सह ॥ ९ ॥
प्रातः स्मरेद्धरिं दामोदरं सन्मोक्षदा प्रियाम् ।
संकल्पयेन्मया कार्यं व्रतं चैवाद्य मुक्तये ॥१०॥
समृद्धये वापि सर्वस्मै कामायेति गृही जनः ।
ततः शौचादिशुद्धिं च कृत्वा स्नात्वा सुतीर्थके ॥११॥
आचम्य च हरेः पूजासामग्रीः समपादयेत् ।
मण्डलं सर्वतोभद्रं कारयेत् सप्तधान्यकैः ॥१२॥
सौवर्णं वाथताम्रस्य घटं मध्ये निधापयेत् ।
पंचपल्लववस्त्रादिपञ्चरत्नफलान्भृतम् ॥१३॥
न्यस्येत्पात्रं तिलाढ्यं च स्थालीं वा तत्र सद्धरे ।
मूर्तिं दामोदरमोक्षप्रदयोः स्वर्णनिर्मिताम् ॥१४॥
स्थापयेत्पूजयेत् षोडशोपचारैर्विधानतः ।
तुलस्या मञ्जरीभिश्च धूपदीपादिभिः शुभैः ॥१५॥
मालतीपुष्पमालाभिः श्रिया सह च केशवम् ।
अर्घ्ये फलं तु नारिंगं नैवेद्ये मोदकास्तथा ॥१६॥
सप्तधान्यानि देयानि विशेषफललब्धये ।
यवगोधूमधान्यानि तिलाः कंगूस्तथैव च ॥१७॥
श्यामाकं चीनकं चेति सप्तधान्यानि तानि वै ।
देयानि तु यथाशक्ति दाने श्रेष्ठानि सर्वथा ॥१८॥
श्रिया सह पतिं वै केशवं च प्रार्थयेत्तदा ।
मया व्रतमिदं मोक्षदायाः कृतं त्वदाप्तये ॥१९॥
यथाशक्ति मया पूजा कृता वै तव केशव ।
प्रसन्नो भव देवेश सर्वसमृद्धिकरो भव ॥२०॥
मोक्षदो भव मे स्वामिन् संसारार्णवतारक ।
इति संस्तूय नैवेद्यं फलं वारि समर्प्य च ॥२१॥
ताम्बूलं च सुगन्धं च दद्यात्पश्चान्नमस्क्रियाम् ।
कुर्याच्चारात्रिकं चैवोत्तारयेद् वन्दनं स्तवम् ॥२२॥
प्रदक्षिणं दण्डवच्च पुष्पांजलिं समर्पयेत् ।
यानि कानि च पापानि ज्ञानाऽज्ञानकृतानि च ॥२३॥
विलयं यान्तु देवेश तव पूजाव्रतादिना ।
इत्युच्चार्य पुनर्नत्वा विसर्जनमथाचरेत् ॥२४॥
मध्याह्ने भोजनं मिष्टं देवाय संप्रदापयेत् ।
सायं निशामुखे पूजां षोडशाभिसुवस्तुभिः ॥२५॥
कारयेच्च ततो जागरणं भक्तैः प्रकारयेत् ।
द्वादश्यां च तथा प्रातः स्नात्वा सम्पूज्य केशवम् ॥२६॥
विसर्जयेच्च दानानि विविधानि प्रदापयेत् ।
बहुद्रव्यादि गुरवे दद्याच्च भोजनादिकम् ॥२७॥
एवं व्रतप्रकर्ता स्याद् भुक्तिमुक्तिप्रतापवान् ।
पितृणां तारकः स स्याच्छतवंशार्तिशालिनाम् ॥२८॥
शृणु पूर्वकथां लक्ष्मि ! मोक्षदायाः फलार्पणात् ।
अधोयोनिगताः सर्वे पितरो मुक्तिमागताः ॥२९॥
चम्पापूर्यां भूपतिश्च महान् वैश्वानराभिधः ।
महावैष्णवतां पश्चात्प्राप्तोऽभूत् पितृतारकः ॥३०॥
प्रजाः पुत्रसमाः सर्वा रक्षति स्म स भूपतिः ।
वैष्णवा बहवो विप्रा वसन्ति स्म च तत्पुरे ॥३१॥
वेदवेदांगविज्ञानाः सत्कर्मादिपरायणाः ।
समृद्धाश्च विभवैर्युक्ताः प्रजाश्च सम्पदादिभिः ॥३२॥

सुखपूर्णाः समासँश्च राज्ञो वैश्वानरस्य वै ।
यद्यपि पुण्यपुञ्जेन तपसा प्राक्कृतेन च ॥३३॥
राज्यं स्मृद्धं महल्लब्ध्वा सदा राज्यमदान्वितः ।
न करोति व्रतं दानं नास्तिकत्वेन भूपतिः ॥३४॥
न च श्राद्धं करोत्येव नान्नवार्यादिदानकम् ।
न पुण्यप्रदकार्यं वा कारयति स्म कर्हिचत् ॥३५॥
पुण्यं न जायते नव्यं पितरस्तेन दुःखिताः ।
अन्नवारिविहीनास्ते पितृलोकादधोगताः ॥३६॥
स्ववंशजं च राजानं श्राद्धादिहीनकर्मकम् ।
दृष्ट्वाऽतिदुःखिनो जाता उष्णश्वासातिदुर्बलाः ॥३७॥
निरये पतिता राज्ञो नास्तिकत्वादिपापतः ।
ते तु रात्रौ समागत्य स्वप्ने प्रत्यक्षतां गताः ॥३८॥
रुदन्तश्च श्वसन्तश्च रुग्णाः संक्षुधितास्तथा ।
तृषातिशुष्ककण्ठाश्चाऽशक्ता नष्टबलास्तथा ॥३९॥
तेजोहीनास्तथा शुष्कशिराः कृष्णाननास्तथा ।
क्रोशन्तोऽतिदरिद्राश्च दुःखिनो भिक्षुका इव ॥४०॥
परस्परं कथयन्तो दुःखानि दुःसहानि वै ।
अहो राज्ये स्थितश्चास्मद्वंशजोऽपि स नास्तिकः ॥४१॥
न श्राद्धं कुरुते चायं वैश्वानरोपि वारि वा ।
ददात्येव न वै काले पितृपक्षे मनागपि ॥४२॥
पिण्डान्नैव ददात्येव जलं नैव ददाति च ।
तर्पणं न करोत्येव कारयत्येव नैव च ॥४३॥
तेन दुःखेन सन्तप्ता दुःखिनः सर्वदा वयम् ।
अधोगतिं गताः सर्वे निरये पतितास्तथा ॥४४॥
राजायं नास्तिको जातः किं तेन कुसुतेन वै ।
वरं निर्वंशता यद्वा वरं त्वास्तिकपुत्रता ॥४५॥
वरं मोक्षगतिश्चापि न वरा तु कुपुत्रता ।
अन्ये नैव प्रदास्यन्ति पुत्रो नैव ददाति च ॥४६॥
कथं कस्मात् कुतः प्राप्यमन्नं वारि च वा मनाक् ।
यदि चायं जलं पिण्डान् दद्यात् स्यामः सुखान्विताः ॥४७॥
इत्युक्त्वाऽन्तर्हिताः सर्वे राजाऽभूद् विस्मयान्वितः ।
कथयामास प्रातस्तद्वृत्तान्तं स्वप्नजं द्विजान् ॥४८॥
मया स्वपितरः स्वप्ने दृष्टा निरयपातिताः ।
उक्तवन्तश्च पुत्र त्वं तारयाऽस्मानधोगतान् ॥४९॥
एवं ब्रुवाणाः सश्वासं रुदन्तश्च विक्रन्दनम् ।
दृष्टा मया च तान् स्मृत्वा सुखं मे न भवत्यपि ॥५०॥
अद्य मे राज्यमृद्धं च तथा राज्ञी गजाऽश्वकम् ।
न किञ्चित् सुखदं भाति रोचते मे न भोजनम् ॥५१॥
शश्वज्ज्वलत्यान्तरं मे पुत्राद्यं रोचते नहि ।
किं करोमि हृदयं मे दूयते पितृजाग्निना ॥५२॥
क्व गच्छामि समुद्धारायैव तेषां द्विजोत्तमाः ।
मुच्यन्ते येन पितरस्तत्तपो व्रतमुच्यताम् ॥५३॥
योगो यज्ञोऽथवाऽन्योऽपि दानजाद्युत्सवो महान् ।
यत्किंचिद्वा महत्स्वल्पं समुद्धारकमुच्यताम् ॥५४॥
पुत्रे योग्ये समर्थे च जीवति पितरो यदि ।
दुःखिनो निरये घोरे फलं सुतस्य किं तदा ॥५५॥
तेषामुद्धार एवात्र त्वेष्टव्यो मम सर्वथा ।
मा संकोचं प्रकुर्वन्तु द्विजाः सत्यं वदाम्यहम् ॥५६॥
श्रुत्वा राज्ञः सुवचनं द्विजा हृष्टा भृशं तदा ।
प्रोचुस्तं पितृकल्याणप्रयत्नं ब्राह्मणाश्रितम् ॥५७॥
राजन्नस्मत्सु मध्येऽयं समर्थो हि महामुनिः ।
भूतं भव्यं विजानाति जैगीषव्योऽतियोगवान् ॥५८॥
स च ते सर्वमाज्ञाय समाधौ दिव्यदृष्टिमान् ।
निवेदयिष्यति द्राक् सत् पितरोऽधोगताः कथम् ॥५९॥
जैगीषव्योऽभ्यर्थितश्च पितॄन् ध्यात्वा क्षणं ततः ।
उवाच तं नृपं तत्र जैगीषव्यो महामुनिः ॥६०॥
राजन्न केवलं चास्ति नास्तिकत्वं तु कारणम् ।
किन्तु ते जनकस्यास्ति नास्तिकत्वं च कारणम् ॥६१॥
शृणु तथ्यं कथयामि मा क्रुद्धो भव, शं भज ।
जानेऽहं तव पितॄणां सर्वं पूर्वं विचेष्टितम् ॥६२॥
तव पितुः कथयामि शृणु चावहितो भव ।
राज्ये त्वासीद् यदा सोऽयं तदा नास्तिकभावतः ॥६३॥
वृत्तिं जहार देवस्य या दत्ता पूर्वजैस्तव ।
शास्त्रधर्मं तथा चासौ गणयामास नैव च ॥६४॥
राज्यस्य मदमासाद्य पुंश्चलीषु प्रवर्तते ।
ग्रामान्तरे गतः सोऽयं पुंश्चल्या वारयोषिता ॥६५॥
ऋतुकालेऽपि ते मातुर्नाऽऽयातो निजमन्दिरम् ।
न दत्तं तव मातुश्च ऋतुदानं तु धार्मिकम् ॥६६॥
एवं मुहुर्वर्तयित्वा पापलिप्तोऽभवद् बहु ।
श्राद्धकाले तथा श्राद्धं न कृतं धर्मलोपिना ॥६७॥
तेन पापप्रभावेण पातयित्वा स्वकान् पितॄन् ।
नरके वासयित्वा च नास्तिक्यभावपूरितः ॥६८॥
अन्तिमम् ऋतुदानं च तव मातुर्विघाय च ।
कालेन निधनं प्राप्तः पतितो निरयेऽपि सः ॥६९॥
पितृभिर्निजपापेन सहितो निरयेऽपतत् ।
स्वपत्न्यर्तुप्रदानं च पुंश्चलीगमनं तथा ॥७०॥

नास्तिकत्वं च पितॄणां श्राद्धाद्यकरणं तथा।
स्वर्गलोकान्महासौख्यात् पितृपातनहेतवः ॥७१॥
त इमे पतिताश्चैवेहन्ते तूद्धरणं सुतात्।
सुतोऽपि त्वं तथोत्पन्नो निषेकान्नास्तिकस्य वै ॥७२॥
निषेके यादृशी वृत्तिः पुत्रे भवति तादृशी।
नास्तिकेन समुत्पन्नो ह्यधार्मिकेण यद्भवान् ॥७३॥
अतस्त्वं नास्तिको जातः श्राद्धं नैव करोषि च।
देववृत्तिहरस्तातस्तेऽभूत् तस्य प्रतिक्रिया ॥७४॥
प्रायश्चित्तं न चैवास्ति कल्पकोटिशतैरपि।
देववृत्तिर्न वै हार्या पूर्वैर्दत्ता नृपैः क्वचित् ॥७५॥
तेन पापेन नरके दुःखस्याऽन्तो न जायते।
देववृत्तिहरस्याऽत्र पदयोः रज इत्यपि ॥७६॥
स्याद् यस्योपरि पतितं सप्तकल्पाः स नारकी।
इत्युक्तं प्राङ् महेन्द्राय चाण्डाल्या गच्छते पुरः ॥७७॥
एकदा काचिदबला चाण्डाली तु श्मशानके।
ग्रामशूकरवक्षोऽस्थिकृतचूल्लयाः उपर्यथ ॥७८॥
नृमुण्डं पाकपात्रं च धृत्वा तत्र श्वमांसकम्।
मदिरात्मजले क्षिप्त्वा रन्धयति चिताग्निना ॥७९॥
तावत्तत्पार्श्वतस्तत्र महेन्द्रो निर्गतो यदा।
पाकपात्रं तथा शीघ्रं छादितं समुपानहा ॥८०॥
विशंक्य तु तदा हीन्द्रस्तां पप्रच्छ पटीयसीम्।
शुनो मांसं सुरापक्वं नृमुण्डेऽत्र चिताग्निना ॥८१॥
सर्वं चाशुद्धमेवैतत् चर्मणा छादितं कथम्।
प्रत्युवाच तदा सा वै चाण्डाली शृणु देवराट् ॥८२॥
देवद्विजगवां वृत्तिं हरन्ति हारयन्ति ये।
तेषां पादरजोभीत्या चर्मणा छादितं न्विदम् ॥८३॥
यदि त्वं तादृशोऽभूश्चेन्मे पाकोऽशुद्धतां व्रजेत्।
न मे भोज्यं भवेत् तद्वै वृत्तिघ्नाऽघप्रदूषितम् ॥८४॥
इन्द्रः प्राह कथं योषित् पातकं चेदृशं महत्।
चाण्डाली प्राह मद्वाक्यं निबोध च यथार्थतः ॥८५॥
देवा वै पितरः प्रोक्ता मातरो देवतास्तथा।
देवाश्च वृष्टिदातारो देवाः संरक्षकाः सदा ॥८६॥
योगक्षेमप्रकर्तारो लोकानां सर्वदेवताः।
जीविकावृत्तिहा जीवहन्ता वै प्रोच्यते खलु ॥८७॥
विना वृत्तिं जीवनं न विना वृत्तिं मृतो भवेत्।
देववृत्तिहरस्तस्मात् पितृहा मातृहा तथा ॥८८॥
देवहा धर्महा तद्वदात्महा स्वर्गहा हि सः।
वृष्टिहा लोकहा चैव गोघाती ब्रह्मघातकः ॥८९॥
देवघाती वृष्टिघाती सर्वघाती भवेद्धि सः।
तस्य पादरजश्चापि महापापकरं मलम् ॥९०॥
तत् श्वमांसे पतितं चेन्न मे भोज्यं मलं हि तत्।
तस्मान्मया तु पात्रं तच्चर्मणा छादितं हि यत् ॥९१॥
यदि त्वं देववृत्तीनां दाता कर्ताऽसि चेद्यदि।
तदा ते पदधूल्याऽत्र पावितं पललं भवेत् ॥९२॥
न मेऽस्त्याच्छादने भीतिर्गच्छ पूज्य यथासुखम्।
इन्द्रोऽपि स्वसभायां च सुरर्षिपितृमानवैः ॥९३॥
शोभितायां तदुक्तं च वृत्तिघ्ना मा भवन्त्विति।
वृत्तिहारस्य न चास्ति निष्कृतिः कथिता क्वचित् ॥९४॥
तदारभ्य त्रिलोकेषु वृत्तिदानं प्रशस्यते।
तस्माद् राजँस्तव पित्रूद्धारकं कर्म नास्ति वै ॥९५॥
येनोद्धारो भवेत्तेषां हरेः सम्बन्धमन्तरा।
हरेश्चापि सुसम्बन्धो व्रतेनैवोपजायते ॥९६॥
मोक्षदाया व्रतं मोक्षप्रदं प्रभावतो हरे।
अगतीनां गतिः प्रोक्तं निष्कृतिर्वज्रपापिनाम् ॥९७॥
सर्वं च निर्जलं कार्यं पितृभ्यो दीयतां फलम्।
मोक्षदैकादशीजन्यव्रतपुण्यैः प्रमोक्षणम् ॥९८॥
भविष्यतीति तत्सर्वं गृहीत्वा चाभिपूज्य च।
सत्कृत्य साधून् विप्रांश्च गृहान् गन्तुं न्यवेदयत् ॥९९॥
मार्गशीर्षेऽथ सम्प्राप्ते सिते चैकादशी च या।
राज्ञा चोपोषिता पूजा हरेर्विधानतः कृता ॥१००॥
सर्वतोभद्रकं कृत्वा सैकादशीहरिं च सः।
पूजयामास विधिना ददौ दानानि भूरिशः ॥१०१॥
जागरणं च कृतवान् प्रातःस्नानादिकं तथा।
कृत्वा च पुण्यमेवैतद् दत्वा पितृभ्य इत्यपि ॥१०२॥
पारणां कृतवान् वैश्वानरो राजा विधानतः।
मोक्षदैकादशीपुण्यदानेन पितरस्तदा ॥१०३॥
स्वपित्रा सहिताः सर्वे शीघ्रं वै मोक्षमाविशन्।
पुण्ये दत्ते च पितॄणां मुक्तौ वैमानिकाः सुराः ॥१०४॥
चक्रुः कुसुमवृष्टिं च प्रोचुः पुण्या गिरस्तथा।
'स्वस्ति स्वस्ति च पुत्रस्ते वयं देवाः समागताः ॥१०५॥
एकादश्याः पुण्यदानात् पितरस्तारितास्त्वया।
ते सर्वे मोक्षमापन्ना प्राहुर्वै पितरोऽपि ते ॥१०६॥
वयं मोक्षं समापन्नाः पुत्र ते कुशलं भवेत्।
सुखी भव सदा सौख्यप्रदाता भव देहिनाम् ॥१०७॥
श्राद्धकर्ता यज्ञकर्ता देवानां पूजको भव।
मातापितृप्रसेवादिकर्ता भव सदाऽनघ ॥१०८॥
दीर्घजीवी चास्तिकस्त्वं पत्नीव्रतपरो भव।

देववृत्तिप्रदाता च ब्राह्मणानां प्रपूजकः ॥१०९॥
सतां सेवा प्रकर्ता च साध्वीनां व्रतरक्षकः ।
गोभूरक्षाकरो नित्यं स्मृद्धः स्याः सर्वदा सुत ॥११०॥
इत्येवमाशीर्वादैश्च संयुज्य पितरः सुराः ।
प्रशंसन्तो मोक्षदाया व्रतपुण्यप्रभावकम् ॥१११॥
गता यथामतं स्थानं ब्रुवन्तः स्वस्ति वै मुहुः ।'
राजापि पापनाशेन मोक्षदायाः प्रभावतः ॥११२॥
महाभागवतो जातः सकुटुम्बः समास्तिकः ।
यज्ञयागकरो नित्यं विप्रसाधुप्रपूजकः ॥११३॥
देवपूजाकरश्चैव धर्मवान् दोषवर्जितः ।
तस्याऽभूच्च महान् धार्मिर्वैष्णवो हुतभुक् सुतः ॥११४॥
राज्यं सुताय दत्त्वा सः परं मोक्षमवाप्तवान् ।
हुतभुक् चापि जठरे प्राणिनां देवतात्मकः ॥११५॥
महाँश्च वैष्णवो भूत्वा वह्निरूपेण तिष्ठति ।
मोक्षदाया व्रतैश्चर्यं बोध्यं तद्देवभावदम् ॥११६॥
एवं यः कुरुते लक्ष्मि मोक्षामेकादशीं शुभाम् ।
तस्य पापानि नश्यन्ति मृतो मोक्षमवाप्नुयात् ॥११७॥
नातः परतरं किञ्चिद् वज्रपापविनाशकम् ।
मोक्षदं चाऽभवत् किंचिन्नारायणप्रभाववत् ॥११८॥
अस्या न पुण्यसंख्यास्ति प्रियं त्वेतद्व्रतं मम ।
चिन्तामणिसमा मोक्षप्रदा सा मे बहुप्रिया ॥११९॥
पठनाच्छ्रवणाच्चापि व्रततुल्यफलप्रदा ।
पुत्रस्मृद्धिप्रदा भुक्तिमुक्तिदा मम वल्लभा ॥१२०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने मार्गशीर्षशुक्लपक्षीयमोक्षदैकादशीव्रतविधाने वैश्वानरनृपतिवृत्तान्ततत्पितृनुद्धारादिनिरूपणनामैकोनचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २३९ ॥

**श्रीलक्ष्मीरुवाच—**

पौषकृष्णैकादशी च किंनाम्नी को विधिस्तथा ।
किं फलं का च लक्ष्मीश्च को देवः पूज्यते वद ॥ १ ॥

**श्रीनारायण उवाच—**

कथयामि शृणु लक्ष्मि पौषैकादशिकाव्रतम् ।
एकादशीव्रतेनाहं तुष्टो भवामि सर्वथा ॥ २ ॥
पौषस्य कृष्णपक्षीया सफला नामतो हि सा ।
तस्यां नारायणं संकर्षणाख्यं स्वामिनं प्रभुम् ॥ ३ ॥
सुनन्दापत्निकायुक्तं पूजयेद् भावनायुतः ।
पूजायां मुनिपुष्पाणि नैवेद्ये गुडलड्डुकाः ॥ ४ ॥
अत्राऽर्घ्ये चामृतफलं स्वर्णदानं च शस्यते ।
प्रागुक्तविधिना कार्या दशम्येकादशी तथा ॥ ५ ॥
द्वादशीपारणं चैव कर्तव्यं चोक्तरीतितः ।
प्रातर्वै सर्वतोभद्रमण्डले व्रतवासरे ॥ ६ ॥
घटं संस्थाप्य च हरिं फलैश्च विविधैर्व्रती ।
नारीकेलफलैश्चैव क्रमुकैर्बीजपूरकैः ॥ ७ ॥
जम्बीरैर्दाडिमैश्चैव तथा धात्रीफलैः शुभैः ।
लवंगैर्बदरैश्चैव तथाऽऽम्रैश्च विशेषतः ॥ ८ ॥
यत्र यत्फललब्धिः स्यात् तत्तत्फलैः प्रपूजयेत् ।
षोडशोपसुवस्त्वाद्यैः पूजनं महदाचरेत् ॥ ९ ॥
दीपदानं विशेषेण सफलायां प्रकारयेत् ।
धान्यदानं वस्त्रदानं स्वर्णदानं गवार्पणम् ॥१०॥
रात्रौ जागरणं कुर्यान्मिलितैर्वैष्णवैः सह ।
यदि निमेषमात्रं यः कुर्याज्जागरणं निशि ॥११॥
यज्ञाधिकं फलं सर्वतीर्थाप्लावनजं फलम् ।
वर्षसहस्रतपसां फलाधिकफलं भवेत् ॥१२॥
शृणु लक्ष्मि ! कथा माहिष्मतस्य नृपतेः पुरा ।
सत्ययुगे समजाता सफलाव्रतसंश्रयात् ॥१३॥
नर्मदायास्तटेऽरण्ये पर्वतप्रायभूतले ।
भारते दक्षिणे मध्ये पुरी माहिष्मती शुभा ॥१४॥
माहिष्मतस्य राज्ञस्तद्राज्यं चाभून्महत्तरम् ।
तस्य सौम्याः पञ्च पुत्रा ह्यासन् सर्वे कुमारकाः ॥१५॥
धीमान् श्रीमान् धृतिमाँश्च कीर्तिमान् शक्तिमानिति ।
तेषां मध्ये तु धीमान् वै ज्येष्ठः पापरतोऽभवत् ॥१६॥
यौवनं प्राप्य मद्यादि पिबन् मांसं प्रभक्षयन् ।
वेश्यां च गमयन् दाराः परा अत्यभिमर्षयन् ॥१७॥
चौर्यं च परराष्ट्रेषु प्रसह्य कारयन् स्वकैः ।
पापातिपापदुष्टातिनिकृष्टाचारवानभूत् ॥१८॥
द्यूतं पानं च मृगयाः प्रमदा मांसमित्यमून् ।
दोषान् स पोषयन् द्रव्यं नाशयामास वै पितुः ॥१९॥
गमितं मणिरत्नादि स्वर्णादि पापकर्मभिः ।
बुभुक्षितस्ततो जातो मलिनो वेदनिन्दकः ॥२०॥
असद्भावो ब्राह्मणानां सतां धर्मस्य निन्दकः ।
वैष्णवानां च देवानां विशेषान्निन्दकोऽभवत् ॥२१॥
प्रजायां सर्वथा चोपद्रवं पिशाचवद्धि सः ।
नित्यं करोत्यतो राज्ञा त्वाहूतो लुम्भकाभिधः ॥२२॥

पित्रा च बान्धवैः सर्वैर्लुम्भकस्त्यक्त एव हि ।
निष्कासितश्च राष्ट्राद्वै प्रजाभिस्ताडनादिभिः ॥२३॥
यत्र गच्छति लुम्भोऽसौ तिरस्कारं स विन्दति ।
न च सौख्यमवाप्नोति न कोऽपि सत्करोति तम् ॥२४॥
निर्धनो गतसत्ताको वेश्ययापि विनिष्कृतः ।
पर्यटन् वनवृक्षेषु क्षुधातृषार्दितः स्वयम् ॥२५॥
दुःखं तपःस्वरूपं वै घोरं सेहेऽतिदारुणम् ।
पश्चात्तापं करोति स्म मुहुः स्वार्जितकर्मणाम् ॥२६॥
त्यक्तोऽहं बान्धवैः पित्रा प्रजाभिर्वेश्यया तथा ।
राज्यान्निष्कासितश्चापि सर्वैश्चापि तिरस्कृतः ॥२७॥
वरं चात्र वने वासः परं वैरं न शाम्यति ।
वैरस्य यापनायैव वैरिणोऽहं निहन्मि वै ॥२८॥
पितुश्च नगरं सर्वं घातयिष्यामि सर्वथा ।
लोपयिष्यामि सौधांश्च हरिष्यामि धनादिकम् ॥२९॥
शनैः शनैरिदं कार्यं धनं हर्तव्यमुत्तमम् ।
वने गुप्ते प्रवस्तव्यं स्यां न हस्तगतो यथा ॥३०॥
इतिपापमतिं कृत्वा दारुणे गहने वने ।
जीवघातरतो नित्यं स्तेयहिंसादिनिष्ठुरः ॥३१॥
वसन् रात्रौ च नगरं गत्वा शस्त्रैर्जनान्बहून् ।
घातयित्वा धनं धान्यं वस्त्रं प्रभूतमित्यपि ॥३२॥
नयति स्म महारण्ये खादति ह्लादते मुहुः ।
सर्वं च नगरं तेन मुषितं पापवृत्तिना ॥३३॥
त्रासो महान् प्रजायां च वर्तते स्म निरन्तरम् ।
अकस्माद्धनहरणं प्रसह्य श्रेष्ठिनो जनान् ॥३४॥
करोति स्म क्वचिद् वक्रान् मारयत्यपि जीवतः ।
एकदा स गृहे राजमन्त्रिणः प्रविवेश ह ॥३५॥
धनं बहु हृतं तेन तथा खाद्यं च खादितम् ।
प्रमदाश्च तथा भुक्तास्तथा बालाश्च ताडिताः ॥३६॥
गृहं प्रज्वालितं तस्य कृतश्चोपद्रवो महान् ।
तावत्तत्र समायातैः राजभटैर्निशाचरैः ॥३७॥
गृहीतो निगडे बद्धो रश्मिभिर्हस्तयोर्धृतः ।
उवाच तान् सुतोऽहं वै राज्ञो माहिष्मतस्य वै ॥३८॥
मोचनीयोऽस्मेवाऽत्र त्वन्यथा वः सुखं नहि ।
हरिष्ये भवतां प्राणान् नाशयिष्यामि शस्त्रकैः ॥३९॥
करिष्ये वो नाशमेव धनदारागृहार्थिनाम् ।
राज्ञः सुतो न धर्तव्यः कदाचन सुखेप्सुभिः ॥४०॥
धर्षणीयो न वै सर्पो विप्रः क्षत्रिय एव च ।
विनाशफलदास्ते वै रक्षकास्तु नताः सदा ॥४१॥
इति श्रुत्वा च तैर्मुक्तो गतोऽरण्ये पुनर्हि सः ।
आमिषं भक्षयन्नित्यं वार्क्षफलानि भक्षयन् ॥४२॥
प्राणयात्रां स निर्वाहयति कन्दादिभिस्तथा ।
चौर्येणापि स्वनिर्वाहं करोति वनवासवान् ॥४३॥
वने तत्राऽभवज्जीर्णं विष्णुस्थानं विनिर्जनम् ।
अश्वत्थस्य च वृक्षस्याऽधोमूले नष्टभित्तिकम् ॥४४॥
नष्टद्वारं नष्टशालं नष्टच्छायं निराश्रयम् ।
तत्राऽनेन तु भग्नया मूर्तेर्विष्णोर्हि वेदिका ॥४५॥
आश्रयार्थे स्वीकृताऽऽसीद् विश्रान्तिर्लभ्यतेऽत्र च ।
अश्वत्थोऽपि जीर्णशाखस्तम्बश्च बहुवार्षिकः ॥४६॥
देवभावेन वृक्षोऽयं विष्णुयोगाद्धि वर्तते ।
तत्र वासाल्लुम्भकस्य देवस्थानप्रतापतः ॥४७॥
बुद्धिस्तु सात्त्विकी जाता विचारं चाकरोद्धि सः ।
अहो मया कृतं पापं बहु यस्य न निष्कृतिः ॥४८॥
अथापि न मया कार्यं हिंसनं प्राणघातकम् ।
कन्दाद्यत्त्वा च निर्वाहं करिष्ये पिप्पलाश्रयः ॥४९॥
विष्णुश्चात्र वसत्येव मूर्तौ तु पिप्पले तरौ ।
करिष्यति मम श्रेयः पापं प्रज्वालयिष्यति ॥५०॥
इत्येवं कृतबुद्धिः सः शैत्यकालेऽपि भूतले ।
वृक्षस्तम्बाश्रये रात्रिं निर्गमयति कष्टतः ॥५१॥
तावत्तत्र समायाताश्चौराश्चान्ये वनाश्रयाः ।
लुम्भकस्य च वस्त्रादि प्रजहुः पौषकृष्णके ॥५२॥
पौषस्य कृष्णपक्षे तु दशम्यां प्रातरेव सः ।
फलान्याहृत्य बुभुजे कथंचिद् दिवसो गतः ॥५३॥
रात्रौ त्वाकस्मिकं शैत्यं हिमाढ्यं प्रववर्ष ह ।
यत्राग्नितापनेनापि रक्षणं न यथा भवेत् ॥५४॥
तथा शीतप्रवाहस्य भोगभूतोऽभवद्धि सः ।
वस्त्रहीनो विवृत्ताक्षो मिलन्मुखोऽभवज्जडः ॥५५॥
निद्रासुखं विनष्टं च गतप्राण इवाऽभवत् ।
मिलद्दशनजिह्वाऽऽस्यो हस्तपादजडत्ववान् ॥५६॥
शववत् स तदा जातः शैत्येन परिपीडितः ।
किन्तु प्राणा गता नैव गतचेष्टोऽभवद्धि सः ॥५७॥
आन्तरे स्मरति विष्णुं रक्षकं च मुहुर्मुहुः ।
प्रातर्जातं सफलाया एकादश्यास्तथापि सः ॥५८॥
भानूदयेऽपि शीतार्द्रो न लेभे चेतनां तदा ।
रवौ मध्यगते सोऽयं संज्ञां लेभे हि लुम्भकः ॥५९॥
इतस्ततो विलोक्यैव व्युत्थितो ह्यभवत्ततः ।
विष्णुं वृक्षं रविं नत्वा स्खलन् पद्भ्यां वने गतः ॥६०॥

खञ्जवत् सशनैर्गच्छन् क्षुत्क्षामः शक्तिहीनकः ।
वेपमानांगकश्चापि सत्फलान्याजहार सः ॥६१॥
विष्णवे चार्पणीयानि ततो ग्राह्याणि वै मया ।
इत्याचिन्त्य समागत्य वृक्षमूले निधाय च ॥६२॥
यावत्तिष्ठति वृक्षाधो लुंभकोऽतीव निर्बलः ।
तावदस्तंगतः सूर्यः कष्टं शुशोच वै तदा ॥६३॥
अश्रूणि विनिमुच्यैव का भविष्यति मे दशा ।
शैत्यं च बाधते सम्यग् भवेत् पर्णैर्न रक्षणम् ॥६४॥
शैत्यप्रवारकं पुष्टं वल्कलादि न विद्यते ।
न गूहा न च तार्णं वा कटं चाप्यत्र विद्यते ॥६५॥
तथापि तृणपुंजेऽत्राश्रयं कृत्वा स्वपिम्यहम् ।
इति विचिन्त्य निकटे तृणान्यादातुमुत्सुकः ॥६६॥
फलानि विष्णुमूर्तेश्च समीपे विनिधाय च ।
उच्चार्य च फलैरेभिः श्रीपतिस्तुष्यतां हरिः ॥६७॥
ततो यातोऽतिनिकटे तृणाऽऽनयनहेतवे ।
किन्तु बलप्रहीणः सः वेदिकायाः समीपतः ॥६८॥
पुनर्मूर्च्छामवापैव नारायण इति स्मरन् ।
क्षणान्तरे समुत्थाय तृणान्यादाय पिप्पले ॥६९॥
स्तम्बाधारे स्वयं यावदागत्य च निषीदति ।
तावन्मूर्छा पुनर्जाता पुनश्चैतन्यमाप्तवान् ॥७०॥
विष्णुं स्मृत्वा लुम्भकः स निद्रां लेभे न शान्तिदाम् ।
प्रातः फलानि भोक्ष्याणीत्येवं निशां निनाय सः ॥७१॥
एवं विवशतः प्राप्तं व्रताहं चाऽविदन्नपि ।
सोपवासं सजागरं कृतवान् शीतपीडितः ॥७२॥
तत्फलैः पूजनं मेने नैवेद्यं चापि केशवः ।
रात्रौ जागरणं मेने विष्णुस्तस्य दुरात्मनः ॥७३॥
सफलाया व्रतं मेने तपः स्वाश्रयजं तथा ।
विष्णुः प्रसन्नतां प्राप्तो दयालुर्दीनवत्सलः ॥७४॥
लुम्भकस्याऽकरोद् भाग्यं पुण्याढ्यं शाश्वतं शुभम् ।
अकस्माद्व्रतमेवैतत्कृतवान् वै स लुम्भकः ॥७५॥
द्वादश्यां च तदा प्रातः फलान्यर्त्वा हरेः पुरः ।
स्तुतिं चकार देवस्य संसाराद्रक्षणं प्रति ॥७६॥
सूर्यस्योदयनं यावत् तावद्विष्णुश्चतुर्भुजः ।
संकर्षणस्वरूपेण प्राविर्बभूव तत्पुरः ॥७७॥
दिव्यावयवशोभाढ्यो दिव्यभूषणभूषितः ।
दिव्यमन्दप्रसन्नास्यहास्यलासादिशोभितः ॥७८॥
दक्षहस्तेन लुम्भं तं स्पृष्ट्वा च मस्तकेऽवदत् ।
राज्यं प्राप्स्यसि भक्त त्वं सफलायाः प्रभावतः ॥७९॥
गच्छ स्वनगरं तत्र ते पिता निधनं गतः ।
अन्ये परस्परं पुत्रा विरुद्ध्यन्त्यभिषेचने ॥८०॥
परस्परं विरुद्धास्ते राज्यमुकुटवञ्चिताः ।
राज्यं च नाप्नुवन् मन्त्रिप्रजाभिरनधिकृताः ॥८१॥
तवाऽऽगमं प्रतीक्षन्ते प्रजास्ते भाग्यवर्धनात् ।
कालोऽयं ते पुनर्यातो ह्येकादशीफलोदयात् ॥८२॥
यैः पूर्वं ताड्यते तिरस्क्रियते कालवेगतः ।
तैरेव पुनरिष्यते ह्यहो कालबलं महत् ॥८३॥
भाग्यहानेर्महत्कष्टं सुखं भाग्योदये पुनः ।
भाग्योदयो व्रताद्यैश्च जायते कार्यमेव तत् ॥८४॥
तस्माद् गच्छ स्वकं राज्यं गृहाण मा चिरं कुरु ।
इत्युक्त्वा भगवान् विष्णुस्तत्र त्वन्तर्जगाम ह ॥८५॥
लुम्भकः पिप्पले विष्णुं नत्वा तेजो ह्यवाप्तवान् ।
दिव्यरूपस्वरूपः सन् भूत्वा स्वनगरीं ययौ ॥८६॥
मन्त्रिप्रजाग्रगैः सम्मानितः स्वागतवर्धितः ।
दिव्याभरणशोभाभिरलंकृतोऽथ वैष्णवः ॥८७॥
भूत्वा राज्याभिषेकं स्वपितृपरम्परागतम् ।
प्राप्तो हरेः प्रसादेन सफलाया व्रतेन च ॥८८॥
भाग्योदयेन राजा स लेभे राज्यमकण्टकम् ।
शुभं राज्यं प्रजारक्षापालनादिविधानतः ॥८९॥
शतवर्षं च तद्राज्यं कृत्वाऽऽराध्य हरिं तथा ।
प्रजाशीर्वादमासाद्य पुत्रं मानजिताह्वयम् ॥९०॥
राज्येऽभिषिच्य च वनं यातो यत्राऽभवत्पुरा ।
विष्णुमाराध्य च तत्र निर्माय विष्णुमन्दिरम् ॥९१॥
हरेरर्चां प्रतिष्ठाप्य सेवित्वा च तथाऽन्त्वहम् ।
तपसा योगसाम्येन क्षपयित्वाऽऽन्तराशयान् ॥९२॥
गतः कृष्णस्य सान्निध्यं विमानेन सुतेजसा ।
पार्षदाश्च हरेस्तत्र विमाने तं प्रगृह्य च ॥९३॥
ययुर्धाम हरेर्दिव्यं यत्र गत्वा न शोचति ।
तत्र गोलोकसंज्ञे वै धाम्नि लुम्भकभूपतिः ॥९४॥
श्रीकृष्णं सेवते नित्यं पार्षदैरभिपूजितः ।
एवं यः कुरुते लोके सफलाव्रतमुत्तमम् ॥९५॥
इह लोके सुखं प्राप्य मृतो मोक्षमवाप्नुयात् ।
धन्यास्ते मानवा लोके सफलाव्रतकारिणः ॥९६॥
तेषां तु सफलं जन्म सफलं च धनादिकम् ।
सफलाया व्रतं यैस्तु कृतं वै भावपूर्वकम् ॥९७॥
सफलैकादशी राज्यलक्ष्मीरूपफलप्रदा ।
मुक्तिदा चेति साकार्या भुक्तिमुक्तिसमीप्सुभिः ॥९८॥

पठनाच्छ्रवणाच्चैव व्रतस्य करणात्तथा ।
राजसूयस्य यज्ञस्य फलमाप्नोति मानवः ॥९९॥
पुत्रान् पौत्रान् धनं स्मृद्धिं सम्पदं राज्यमित्यपि ।
विद्यां पुष्टिं तथाऽऽरोग्यं मुक्तिं च लभते व्रती ॥१००॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पौषकृष्णसफलैकादशीव्रतविधिपापिलुम्भकनृपकुमार-राज्यप्राप्त्याख्यानादिनिरूपणनामा चत्वारिंश-दधिकद्विशततमोऽध्यायः ॥२४०॥

### श्रीलक्ष्मीरुवाच—

नारायण नमस्तुभ्यं पुराणपुरुषोत्तम ।
मोक्षकरं च जीवनां फलदं च व्रतं शुभम् ॥ १ ॥
श्रावयसे येन पापराशयः प्रज्वलन्ति वै ।
पौषशुक्लस्य च या वै भवेदेकादशी शुभा ॥ २ ॥
कथयस्व प्रसादेन किंनाम्नी को विधिस्तथा ।
को देवः पूज्यते तत्र फलं चापि कियन्मतम् ॥ ३ ॥

### श्रीनारायण उवाच—

लोकानां हितलाभाय कथयामि प्रिये च ताम् ।
पौषस्य शुक्लपक्षस्यैकादशी पुत्रदाऽभिधा ॥ ४ ॥
सर्वपापहरा भक्तैः कर्तव्यैषा प्रयत्नतः ।
सानन्दापि च सा प्रोक्ता पुत्रानन्दप्रदायिनी ॥ ५ ॥
नारायणोऽधिदेवोऽत्र पूज्यश्च पद्मया सह ।
सर्वसिद्धिप्रदो देवः पुत्रकामप्रपूरकः ॥ ६ ॥
गुग्गुलपुष्पकैः पूज्यस्तथाऽन्यैः कालसंभवैः ।
चूर्णलड्डुकनैवेद्यं दद्याच्च परमात्मने ॥ ७ ॥
अर्घ्यं च दाडिमफलं फलान्यन्यानि चापि वै ।
घृतपूर्णघटो देयः श्रीपद्मापतये तथा ॥ ८ ॥
दक्षिणाश्चापि दातव्या स्वर्णरूपा विशेषतः ।
दशम्यां नक्तभोजी यो व्रती पृथ्व्यां शयीत च ॥ ९ ॥
एकादश्यां ब्राह्मकाले समुत्थाय हरिं स्मरेत् ।
स्नात्वा पूजोपचाराणि संगृह्य पूजयेद्धरिम् ॥१०॥
सत्पात्रे च समस्थाप्य पंचामृतेन वारिणा ।
स्नापयेद् देवदेवेशं वस्त्रभूषादि धारयेत् ॥११॥
लेपयेद् द्रव्यगन्धादि पुष्पहारैश्च शोभयेत् ।
धूपदीपाऽक्षतपुष्पसामग्रीभिः प्रपूजयेत् ॥१२॥
नैवेद्यं मिष्टभोज्यादि जलपानादिकं ददेत् ।
नीराजनस्तुतिप्रदक्षिणादिभिः प्रसादयेत् ॥१३॥

व्रतार्थे प्रार्थयेद् देवं नारायणं पुनः पुनः ।
पुत्रदाया व्रतं चाहं करोमि पूर्णता व्रजेत् ॥१४॥
इत्यभ्यर्थ्य ततः सप्तधान्यैश्च रचयेच्छुभम् ।
मण्डलं सर्वतोभद्रं कर्तव्यं तत्र वै घटः ॥१५॥
स्थापनीयः पल्लवादियुतस्तदुपरि स्थले ।
तिलपूर्णं शुभं पात्रं तत्र मूर्तिर्हरेस्तथा ॥१६॥
प्रतिष्ठाप्य षोडशभिर्वस्तुभिः पूजयेत्प्रभुम् ।
आरार्त्रिकं च पुष्पाणामंजलिं चार्पयेत् ततः ॥१७॥
प्रार्थयेत् फललाभाय तथा दानानि दापयेत् ।
मध्याह्नेऽपि तथा पूजानैवेद्यादि समर्पयेत् ॥१८॥
सायंकालोत्तरं चापि विशिष्टं पूजनं तथा ।
जागरणं प्रकुर्याच्च द्वादश्यां च तथाविधम् ॥१९॥
पूजनं वस्तुदानं च कुर्याद् व्रती ततो जनान् ।
द्विजान् साधूँश्च साध्वीश्च भोजयेत्पारणां स्वयम् ॥२०॥
कुर्याच्चैवं व्रतं पूर्णं फलं मोक्षादिकं भवेत् ।
पुत्रदाया व्रतमेवं यः कुर्याद् भक्तिनो जनः ॥२१॥
पुत्रपुत्रीगजगोऽश्वधान्यक्षेत्रादिकं शुभम् ।
प्राप्नुयाच्चापि मुक्तिं च श्रीहरेः कृपया व्रती ॥२२॥
अत्रार्थे शृणु लक्ष्मि ! ते प्रवक्ष्यामि कथानकम् ।
पुत्रदाफललाभात्मस्मृद्धिदं सुखदं परम् ॥२३॥
पुरा युगे तु सौराष्ट्रे भद्रावत्यभिधे पुरे ।
राजाऽऽसीत् केतुमाँस्तस्य राज्ञी चम्पाऽभिधाऽभवत् ॥२४॥
वार्धक्यातिसुनैकत्व्यं गतस्यापि च भूपतेः ।
पुत्रो नाऽभूद् यतोऽपुत्रः शोचत्यनुदिनं नृपः ॥२५॥
कालो याति न चाशास्ति पुत्रार्थे स्वस्त्रिया अपि ।
ताभ्यां प्रचिन्तितं पुत्रप्राप्तिदं दानपूजनम् ॥२६॥
कृतं च विविधं यादृग् विप्रैर्वै दर्शितं तथा ।
बहुभिर्बहुधा प्रोक्तं कृतं तद् विविधं शुभम् ॥२७॥
नैवात्मजं नृपो लेभे वंशकर्तारमप्यथ ।
किं करोमि क्व गच्छामि वार्धक्यं दृश्यते पुरः ॥२८॥
कथंचित्प्रान्तकालेपि सुतप्राप्तिर्यथा भवेत् ।
तथोपायाः प्रकर्तव्या निश्चित्येति नृपः पुनः ॥२९॥
याति बहुस्थलप्रख्यान् सामर्थ्याढ्यान् सतो जनान् ।
आशीर्वादाँश्च गृह्णाति विफलाश्च भवन्ति ते ॥३०॥
न राष्ट्रस्य न राज्यस्य सुखं लेभे सुकेतुमान् ।
साध्व्या राज्ञ्या समं नित्यं दुःखितो वर्तते भृशम् ॥३१॥
चिन्ताशोकपराभ्यां च ताभ्यां दत्तं जलादिकम् ।
श्राद्धे तु पितरः सर्वे कवोष्णमुपभुंजते ॥३२॥

केतुमति मृते पश्चाद् वंशजं तर्पणाय नः ।
पश्यामो नहि किं कुर्मो योऽस्माकं तर्पयिष्यति ॥३३॥
इत्येवं दुःखिता सर्वे पितरो यान्ति निःसुखाः ।
न च बन्धुजना मित्रजना अमात्यमन्त्रिणः ॥३४॥
सुहृदश्च प्रजा दासा दास्यः समृद्धयो गजाः ।
रोचयन्त्यस्य राज्ञो वै स्वप्नेऽपि दुःखकारिणः ॥३५॥
नित्यं तस्य मनोऽस्वस्थं नैराश्येन विदूयते ।
अपुत्रस्य जनस्यात्र खलु तत्रापि भूपतेः ॥३६॥
स्मृद्धस्य राज्यभर्तुर्वै नास्त्येव जन्मनः फलम् ।
अपुत्रस्य गृहं दाराः स्मृद्धिः शून्यं हि दृश्यते ॥३७॥
सुतं विना ऋणं पितृदेवर्षीणां न मुच्यते ।
औरसं सुतमासाद्याऽनृणत्वं पैत्रदैवतम् ॥३८॥
लभ्यते च यशस्त्वत्र परलोके शुभा गतिः ।
पुत्रेण जायते तस्मात् सुतमुत्पादयेज्जनः ॥३९॥
पुत्रस्तु पुण्यकर्तॄणां जायते सुखदः सदा ।
आयुष्यारोग्यसम्पत्तिधनधान्यप्रवर्धकः ॥४०॥
हरेः कृपां तथा पुण्यं विना पुत्रजनिर्न वै ।
न च पुण्यकृतां लोकप्राप्तिश्चापि सुतं विना ॥४१॥
पुत्रो धनं महत्प्रोक्तं पुत्रो वै सम्पदुच्यते ।
पुत्रो गृहं सुतः सम्बन्धोऽपि लोकेषु गीयते ॥४२॥
सुतं विना न सम्बन्धो न तं विना कुटुम्बिता ।
तां विना न यशो लोके तद्विना न स्वरव्ययम् ॥४३॥
रात्रिंदिवा स्वयं राजा चिन्तयन् लभते न शम् ।
आत्मनाशं चेत् करोमि त्वात्मघातेऽतिदुर्गतिः ॥४४॥
अनशनेऽपि लोकेऽत्र हाहाकारश्च दुर्गतिः ।
तस्मान्मया च किं कार्यं विचार्यैवं दिवानिशम् ॥४५॥
वरं तपसा देहस्य क्षपणं चेतिमानसः ।
रात्रावश्वं समारुह्य जगामारण्यमेकलः ॥४६॥
न जानन्ति प्रजाश्चास्य गृहदारादयस्तथा ।
क्व गतोऽयं महाराज इत्यभूवन् विचिन्तिताः ॥४७॥
चिन्तापराऽतिदुःखास्ते ययुस्तन्मार्गणाय वै ।
अश्वपादप्रविन्यासान् दृष्ट्वा दृष्ट्वा ययुर्वनम् ॥४८॥
शाद्वलेऽतिघने देशे वाजिपादावलेखनम् ।
यदा दृष्टं न तैर्भूमौ तदा ते स्वपुरं प्रति ॥४९॥
आययुः शोकचिन्ताश्च प्रेषयामासुराश्रितान् ।
वन्यान् वने मार्गणाय तैरप्याप्तो न भूपतिः ॥५०॥
वनादन्यवनं राजा ततोपि गहनं वनम् ।
दूरं दूरं सिंहहस्तिसेवितं प्रविवेश ह ॥५१॥
भाग्ययोगान्न वै कैश्चिद्धिंस्रैर्व्यापादितो नृपः ।
नाश्वोऽपि मरणं प्राप्तो दैवयोगाद्धि जीवतः ॥५२॥
वनवृक्षान्वटान् बिल्वान्कदम्बान्पनसान्धवान् ।
खर्जूरान् पिप्पलान्स्वर्णचम्पकाँश्च विलोकयन् ॥५३॥
तथा तालान्सर्जतरूँस्तमालाँस्तिलकान् वटान् ।
बकुलान्सप्तपर्णांश्च तिन्तिडीश्च विलोकयन् ॥५४॥
इङ्गुदीर्बदरीश्चैव जम्बूँश्च करमर्दकान् ।
वंशानशोकान्कदलीनार्यंगानन्नारिकेलकान् ॥५५॥
पश्यन् ययौ वनं घोरं पश्यन्सिंहान्मृगान्खगान् ।
अनलान्हंसकारण्डबकाँश्चमरीगोशशान् ॥५६॥
व्याघ्राँश्च भल्लुकान् गेन्डान्शृंगमृगाँश्च शल्लकाम् ।
गजाँश्च गवयान्वन्यमहिषान्भुजगाँस्तथा ॥५७॥
पश्यन्नाश्चर्यसंयुक्तोऽदृष्टपूर्वांश्च देहिनः ।
शृण्वन्नुलूकजम्बूकर्क्षमृगादिरुतानि सः ॥५८॥
वन्यानि भक्षयन् पुष्पफलानि च ययौ नृपः ।
तृषितश्चिन्तयामास सः शुष्कगलकन्धरः ॥५९॥
मार्गयामास सलिलाशयं पक्षिरुतानुगः ।
तत्र दिव्यजलं सुष्ठु सरो दृष्ट्वा निसर्गजम् ॥६०॥
अश्वपट्टइतिख्यातं रैवताद्रेः प्रपूर्वगम् ।
मीनमकरमत्स्यादिशोभितं कमलैर्युतम् ॥६१॥
हंसैः कारण्डवैश्चक्रवाकैश्चानलपक्षिभिः ।
शोभितं परिदृष्ट्वैव ययावानन्दमुत्तमम् ॥६२॥
जगाम त्वरितो भूपो जलपानार्थमुत्सुकः ।
तदा नेत्रं करो वक्षः प्रास्फुरद् दक्षिणं शुभम् ॥६३॥
जले तु स्नानकर्तॄन् स दिव्यान्देवान्व्यलोकयत् ।
गत्वा तत्र ननामासौ हयादुत्तीर्य चाग्रगः ॥६४॥
पृथक्पृथग्ववन्देऽसौ देवान्मुनिस्वरूपिणः ।
जपतः श्रीहरेर्जापान्व्रतकर्षितविग्रहान् ॥६५॥
बद्धांजलिर्गद्गदोऽभूद्दण्डवत्प्रचकार च ।
आशीर्वादैः प्लावितोऽयं नृपः पप्रच्छ तान्सुरान् ॥६६॥
के भवन्तोऽत्र गहने निर्जलेऽरण्यके जले ।
स्नातुं समागताः सन्ति यत्र वासो न मानुषः ॥६७॥
याथातथ्यं वदन्त्वत्र येन मेऽपि शुभं भवेत् ।
दुःखिनो दुःखनाशाय सतां वै दर्शनं मतम् ॥६८॥
इति पृष्टाश्च ते देवाः प्राहुस्तं भाग्यसन्मुखम् ।
विश्वेदेवा वयं राजन् देवाः स्वर्गनिवासिनः ॥६९॥
मुनिस्वरूपैश्चाऽऽयाताः स्नानार्थं पुत्रदाव्रते ।
अद्यैवैकादशी चास्ति पुत्रदानामनामतः ॥७०॥

तत्र स्नातुं वयं याता तीर्थेऽस्मिन् रैवताचलात्।
स्नात्वा स्वर्गं गमिष्यामो व्रतं चाप्यस्ति वै महत् ॥७१॥
कथं भवान्समायातो निर्जने गहने वने।
श्रुत्वा राजातिसंहृष्टो क्षुत्तृड्भ्यां दुःखितोऽपि सन् ॥७२॥
स्वानुकूलं सुखं मत्वा जलं नैव पपौ तदा।
व्रतं नैसर्गतो जातं मत्वा पुत्रफलप्रदम् ॥७३॥
उवाच तान्मुनीन् राजा ह्यपुत्रोऽहं सुतेच्छया।
कृतवान्बहुपुण्यानि सुतं तथापि नाऽलभम् ॥७४॥
ततः शोकपरीतांगस्तपसेऽत्र समागतः।
करिष्ये च तपश्चात्र पुत्रार्थं कृपयात्र वः ॥७५॥
मुनयश्च तदा प्राहुर्भूपते पुत्रदाव्रतात्।
पुत्रप्राप्तिकरं पुण्यं जातं ते मा तपः कुरु ॥७६॥
रात्रौ जागरणं कुर्याः प्रातः सम्पूज्य केशवम्।
जलस्य पारणां कृत्वा पत्रपुष्पादिना तथा ॥७७॥
याहि गृहं च ते पुत्रो भविष्यति नराधिपः।
इत्येवं दैवयोगेन व्रतस्य करणात्तथा ॥७८॥
आशीर्वादांश्च देवानामुपलभ्ध्वा गृहागतः।
राज्ञी गर्भं दधौ काले पुत्रो जातोऽतिभाग्यवान् ॥७९॥
दीर्घजीवी प्रजापालो बभूव स नराधिपः।
नाम्ना च कुंकुमान् यस्य सौराष्ट्रं कंकसंज्ञया ॥८०॥
राज्यं ख्यातमभूत्तस्य वंशोपि वैष्णवो ह्यभूत्।
तस्माल्लक्ष्मि ! प्रकर्तव्यं पुत्रदैकादशीव्रतम् ॥८१॥
लोकानां च हितार्थाय मयैतत् कथितं तव।
येऽत्र जनाः करिष्यन्ति पुत्रदाया व्रतं शुभम् ॥८२॥
पुत्रान्प्राप्येह लोके ते स्वर्गं यास्यन्ति वै मृताः।
धनं धान्यं पशून् पुत्रान् दीर्घमायुष्यमित्यपि ॥८३॥
पत्नीं शुभां पतिं सौम्यं क्षेत्रं स्मृद्धिं महत्तमाम्।
प्राप्स्यन्त्यवश्यमेवैतद्व्रतस्य करणाज्जनाः ॥८४॥
अस्याश्च पठनाल्लक्ष्मि ! श्रवणात्स्मरणात्तथा।
पुत्रप्राप्तिफलं तद्वच्चाग्निष्टोमफलं भवेत् ॥८५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पौषशुक्लपुत्रैकादशीव्रतमाहात्म्यकेतुमाद्राजर्षिपुत्रलाभनिरूपणनामैकचत्वारिंशदधिकद्विशततमोऽध्यायः ॥२४१॥

श्रीलक्ष्मीरुवाच—

महाविष्णो हरे वासुदेव लक्ष्मीपते प्रभो।
अनुग्रहं परं कृत्वा वद माघाऽसिते दले ॥ १ ॥
एकादशी च किंनाम्नी कश्चाधिपतिरीश्वरः।
विधिः फलं च दानानि वैशेषिकं च यद्भवेत् ॥ २ ॥

श्रीनारायण उवाच—

शृणु प्रिये माघकृष्णैकादशी षट्तिलाभिधा।
नाम्नास्ति तत्पतिर्वासुदेवः श्रीप्रियया सह ॥ ३ ॥
पूजनीयः स्थलपद्मैर्गुलाब्जैः कोमलैस्तथा।
नैवेद्ये घृतपूराश्च प्राघ्र्यें द्राक्षाफलानि च ॥ ४ ॥
ऊर्णावस्त्राणि देयानि कम्बलादीनि भावतः।
मेथिकापाकभक्ष्याणि माषलड्डुकभोजनम् ॥ ५ ॥
अन्यत्पुष्टिकरं द्रव्यं शीतहारककंचुकम्।
एवमादीनि देयानि पूजादानादिकर्मसु ॥ ६ ॥
तिलदेयं समाख्याता सर्वपापप्रणाशिनी।
दाल्भ्यं प्राह पुलस्त्यः प्राग् व्रतमस्याः सुखप्रदम् ॥ ७ ॥
मनुष्या यौवनोपेता दारिद्र्यदुःखकर्षिताः।
जीविकार्थं च पापानि कुर्वन्ति त्ववशाश्च ये ॥ ८ ॥
ब्रह्महत्याबालहत्यास्त्रीहत्यागोवधादिकम्।
हिंसनं परद्रव्यापहारं च व्यसनानि च ॥ ९ ॥
स्वदारेष्वप्रसक्तिं च परस्मृद्धिविनाशनम्।
प्रसह्य दुःखदायित्वं गुरुनिन्दाऽनृतानि च ॥१०॥
दुष्टकर्मप्रजीवित्वं कन्याविक्रयणं तथा।
रसाऽनिष्टविमिश्रत्वं विश्वासघातवञ्चनम् ॥११॥
एवमादीनि पापानि नरेषु यानि रागतः।
भवन्ति चाथ जायन्ते तेषां नाशकरं व्रतम् ॥१२॥
तिलदैकादशीरूपं सर्वपापप्रदाहकम्।
प्रबलं माघमासे तद्व्रतं कृष्णे दले कृतम् ॥१३॥
शोधयेच्चान्तरं जन्तोः पापानि क्षालयेत्तथा।
नैतादृशं व्रतं चान्यद् द्रागेव जन्तुशोधकम् ॥१४॥
माघस्नायी व्रती माघे कृष्णे दशमीवासरे।
एकभुक्तो भवेत् पश्चाद् रात्रौ पृथ्व्यां शयीत च ॥१५॥
ब्रह्मचारी भवेच्चैवैकादश्यां ब्राह्मसंज्ञके।
मुहूर्ते च समुत्थाय स्मरेन्नारायणं हृदि ॥१६॥
गृहीयाच्च वरीष्ठानां सतां च सात्वतां तथा।
नामानि च हरेर्नामभजनं क्षणमाचरेत् ॥१७॥
तालिकां वादयित्वा च मूर्तिं स्मृत्वा पुनः पुनः।
हरे राम घनश्याम स्वामिन् नारायण प्रभो ॥१८॥
तवास्मि नित्यदा भक्ते मयि तिष्ठ प्रमोक्षद।
इति स्तुत्वा ततो यायाच्छौचार्थं बहिरेव च ॥१९॥

मृदा जलेन शुद्धिं च कृत्वा गण्डूषकाँश्चरेत् ।
तिलचूर्णं ततो देहे सम्यगुद्वर्तयेद् व्रती ॥२०॥
सतिलसलिलेनाथ स्नायान्नाम हरेर्गृणन् ।
तिलहोमं प्रकुर्याच्च तिलवारि पिबेत्तथा ॥२१॥
तिलदानं प्रकुर्याच्च तिलभोजनमाचरेत् ।
तिलस्नायी तिलोद्वर्ती तिलहोमी तिलोदकी ॥२२॥
तिलदाता तिलभोक्ता षट्तिला पापनाशिनी ।
तिलप्ररोहाज्जायन्ते यावच्छाखास्तिलानि च ॥२३॥
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ।
कृष्णतिला मताः श्रेष्ठाः स्नाने दाने प्रपूजने ॥२४॥
स्नात्वा व्रती तिलदायाः प्रातरेव प्रपूजयेत् ।
वासुदेवं श्रिया युक्तं नवैः षोडशवस्तुभिः ॥२५॥
पुष्पांजलिप्रदाने च प्रार्थयेच्छट्तिलाव्रतम् ।
करिष्ये नाथ निर्विघ्नं मे तदस्तु फलप्रदम् ॥२६॥
तव कृपाकणेनापि व्रतसम्पूर्णता भवेत् ।
कामक्रोधाद्यहंलोभपैशुन्यादि न मेऽस्तु वै ॥२७॥
इत्यभ्यर्थ्य गुरुं नत्वा स्मृत्वा श्रीहरिमेव च ।
प्रातश्च सर्वतोभद्रमण्डलं कारयेद् व्रती ॥२८॥
तन्मध्ये स्वर्णजं यद्वा ताम्रजं घटमुत्तमम् ।
पञ्चपल्लवसद्रत्नजलाद्यैः संप्रपूरितम् ॥२९॥
स्थापयेत्तं च वस्त्रेण सूत्रेणापि च वेष्टयेत् ।
पूजयेत्तं ततस्तस्योपरि कृष्णतिलभृतम् ॥३०॥
स्थालीपात्रं स्थापयेच्च तत्र मूर्तिं सुवर्णजाम् ।
विन्यस्येद् वासुदेवस्य श्रीप्रियाषट्तिलायुताम् ॥३१॥
पञ्चामृतजलैस्तां च स्नापयेदभिषेचनैः ।
वस्त्रादि च विभूषादि त्वलंकारांश्च धारयेत् ॥३२॥
गुलालकुंकुमाऽबीरचन्दनाऽक्षतहारकैः ।
धूपदीपसुनैवेद्यजलताम्बूलसत्फलैः ॥३३॥
कूष्माण्डैर्नारिकेलैश्चाऽमृतैश्च बीजपूरकैः ।
प्रदक्षिणादण्डवत्सुनमस्कारस्तवादिभिः ॥३४॥
पूजयेच्छ्रीवासुदेवं क्षमापयेत्पुनः पुनः ।
नैवेद्यं भोजयेत्पाने सलिलं मिष्टमर्पयेत् ॥३५॥
ताम्बूलं कर्पूरगन्धैलात्वङ्लवंगयुक् ददेत् ।
पर्यंकं सोपकरणं दर्पणं व्यजनं तथा ॥३६॥
चामरं पुष्पगुच्छांश्च भक्तितः प्रसमर्पयेत् ।
नीराजयेन्नववारं ततो नत्वा च केशवम् ॥३७॥
स्वव्यावहारिकं कुर्याद् व्रते विघ्नं यथा न वै ।
मध्याह्ने हरये दद्यान् मिष्टं शुभं सुभोजनम् ॥३८॥
जलं दद्यात् फलं दद्यान्मुखशुद्धिकलीटिकाम् ।
सुगन्धसारं गन्धाढ्यस्थलपद्मार्कवारि च ॥३९॥
सायं चापि हरेः सम्यक् पूजनं त्वाचरेद् व्रती ।
आरात्रिकादिकं सर्वं भोजनं चापि कारयेत् ॥४०॥
पूर्वं दशदिनेभ्यश्च व्रती स्नातो जनः स्वयम् ।
भूम्यपतितं संगृह्य गोमयं तत्र स व्रती ॥४१॥
तिलान्प्रक्षिप्य कार्पासं पिण्डिकाश्चैव कारयेत् ।
अष्टोत्तरशतसंख्याः यतः शुष्का भवन्ति ते ॥४२॥
अथ माघे कृष्णपक्षस्यैकादश्यां च मूलभे ।
आर्द्रायां वा निशि होमं हरेर्नामत्रिराचरेत् ॥४३॥
रात्रौ जागरणं कुर्याद् विष्णुपद्यानि गापयेत् ।
द्वादश्यां प्रातरुत्थाय स्नात्वा पूजनमाचरेत् ॥४४॥
वस्तुभिः षोडशविधैर्दानं श्रीगुरवेऽर्पयेत् ।
कुंभं स्वर्णमयीं मूर्तिं मुद्राः स्वर्णाश्च राजतीः ॥४५॥
तिलपात्रं च शय्यां च वस्त्राणि धान्यसद्रसान् ।
छत्रोपानहपात्राणि दद्यान्मे प्रीयतां हरिः ॥४६॥
कृष्णा धेनुः प्रदातव्या तिलपात्रं प्रपूरितम् ।
गुरवेऽर्पणमन्त्रोक्तं विप्राय वा कुटुम्बिने ॥४७॥
स्वर्गादौ त्वन्नपानादि लभ्यते तिलदानतः ।
मोक्षेऽपि शाश्वती तृप्तिर्जायते मुक्तिभागिनः ॥४८॥
कृतं सर्वं न कृतं चेदन्नदानं तिलार्पणम् ।
तदाऽमुत्र मिलेत् सर्वमन्नं नैव मिलेत्ततः ॥४९॥
तिलान्नादि प्रदातव्यं सर्वं दातव्यमेव च ।
यद्यत् त्वपेक्ष्यते चात्र स्त्रीपुत्रगृहवाटिकाः ॥५०॥
उद्यानानि गोमहिष्यो गजाऽश्वाजादयस्तथा ।
वाहनानि विमानानि गृहोपकरणानि च ॥५१॥
दैहानि साधनान्यत्र धर्मार्थकामनादयः ।
स्वर्णभूषाश्च भोज्यानि पेयानि विविधानि च ॥५२॥
दृश्यान्यथापि भोग्यानि श्रव्याणि रंजनानि च ।
देयान्येकादशीलाभे दानानि विविधानि च ॥५३॥
तानि लक्षगुणान्येव प्राप्स्यन्तेऽमुत्र पुण्यतः ।
तस्मादेकादशीकर्त्ता दातव्यानि विशेषतः ॥५४॥
शृण्वत्रार्थे कथां प्राच्यां ब्राह्मण्या रोमहर्षणाम् ।
पुरा कृतयुगे नाम्ना कपिला ब्राह्मणी सती ॥५५॥
विद्यावती कुमारी सा ब्रह्मचर्यपरायणा ।
आत्मज्ञानवती देवपूजाप्रीतिमती सदा ॥५६॥
स्वर्गादिफलवाञ्छाढ्या वर्तते स्माऽपरिग्रहा ।
शरीरं क्लेशितं चैव तयोपोषणसद्व्रतैः ॥५७॥

यद्यदुपार्ज्यते विद्याज्ञानाद्यैश्च गृहादिकम् ।
तत्तत्समर्प्यते दाने सत्पात्रे समये शुभे ॥५८॥
देवानां ब्राह्मणानां च कुमारीणां सतां तथा ।
साध्वीनां ब्रह्मनिष्ठानां प्रददाना गृहाणि सा ॥५९॥
अन्यान्युपकरणानि प्रददाना महासती ।
वर्तते सर्वदा देवपूजौ सुखकाम्यया ॥६०॥
अतितृष्णामहामोहव्याप्ता नारीस्वभावतः ।
आत्मज्ञानं च कुरुते सुखेच्छां न जहाति सा ॥६१॥
अन्नं तु सुलभं ज्ञात्वा ददात्यन्नं न भिक्षुके ।
साधवस्तर्पिता नैव बालका न च भोजिताः ॥६२॥
अन्यत्सर्वं प्रदत्तं वै न दत्तं त्वन्नमण्वपि ।
न दत्ता भिक्षुके भिक्षा केवलाऽज्ञानलेश्यतः ॥६३॥
एकदा मम भक्तायास्तस्या मेऽभूत् सुचिन्तनम् ।
शुद्धमस्याः शरीरं हि व्रतैः कृच्छ्रैर्न संशयः ॥६४॥
पूजितश्च हरिर्देवो बहुभिर्वस्तुभिर्मुहुः ।
अर्चितो वैष्णवो लोकः कायक्लेशेन तत्त्वतः ॥६५॥
सर्वं कृतं सकामं सकामनयाऽनया शुभम् ।
स्वर्गे तस्याः कृते त्वस्ति परन्त्वत्राऽनया क्वचित् ॥६६॥
न कृतं त्वन्नदानं हि निर्मूल्यं विगणय्य च ।
ततोऽस्याः स्वर्गलोकेषु भवेन्नान्नमुपस्थितम् ॥६७॥
अन्नदानेन भोज्यं चामृतं स्वर्गे ह्यवाप्यते ।
दत्तं वै प्राप्यते तत्र येन तृप्तिः परा भवेत् ॥६८॥
तस्मान्मया स्वभक्तायाः सौख्यार्थं तत्र सर्वथा ।
भिक्षुकस्य स्वरूपेण याचनीयं हि भोजनम् ॥६९॥
अन्नं दास्यति मह्यं सा स्वर्गे तत्फलमाप्स्यते ।
एवं लक्ष्मि ! विचिन्त्याऽहं मर्त्यलोकमुपागतः ॥७०॥
कपिलस्वामिरूपेण भिक्षार्थं तद्गृहं गतः ।
भवती भिक्षां देहीति भिक्षां याचितवानहम् ॥७१॥
सा मन्मूर्तेश्च मध्याह्ने पूजायां व्यापृताऽभवत् ।
विघ्नं ज्ञात्वाऽथ पूजायां भिक्षाफलज्ञतोज्झिता ॥७२॥
रोषवेगाच्च तत्काले नावोचत् किंचिदेव हि ।
पुनरेव मया प्रोक्ता देहि भिक्षां तु सुन्दरि ! ॥७३॥
पूजाप्रसक्तया तत्र तुलसीमृत्तिका तथा ।
गृहीता जलसिक्ता च पिण्डरूपा स्वभावतः ॥७४॥
ततः कोपेन महता मृत्पिण्डस्ताम्रभाजने ।
मम पात्रे तया क्षिप्तो न दत्तं त्वन्नमण्वपि ॥७५॥
मयाऽन्नं भिक्षितं नाम्ना नार्पितं तु तथापि मे ।
गालीदानादिना चाहं तया निष्कासितो बहिः ॥७६॥
गतोऽहं स्वस्य वैकुण्ठं मृता कालेन तापसी ।
ब्रह्मचर्यप्रभावेण गृहदानादिना तु सा ॥७७॥
देवी भूत्वा गता स्वर्गं देवीभिः सत्कृता दिवि ।
मृत्पिण्डिकाप्रदानस्य फलं प्राप्तं गृहं शुभम् ॥७८॥
सर्वस्मृद्धिभरं किन्तु धान्यराशिविवर्जितम् ।
गृहं दिव्यं पश्यति स्म भोज्यं किञ्चिन्न दृश्यते ॥७९॥
गृहात्तस्माद्विनिष्क्रान्ता चागता मम मन्दिरम् ।
जलोपरि द्वितीयं यद्वैकुण्ठं मेऽस्ति तत्र वै ॥८०॥
ब्रह्मचर्यप्रभावा सा कपिला सूर्यसदृशी ।
क्रोधाविष्टा ह्यवोचन्मां भोज्यं किन्न गृहे मम ॥८१॥
अन्नहीनो महासौधो लब्धो दिव्यस्त्रिविष्टपे ।
यत्र नास्त्यमृतं किञ्चित् खाद्यं पेयं न विद्यते ॥८२॥
भोगस्थले महास्वर्गे जीवितव्यं मया कथम् ।
तस्माद् देहि महाविष्णो भक्तायै भोजनं प्रभो ॥८३॥
अन्यथा न मया स्थेयं श्मशानसदृशे गृहे ।
मयोक्तं च तदा तस्यै नाऽन्नं दत्तं त्वया क्वचित् ॥८४॥
ब्राह्मणेभ्योऽथवा सद्भ्यः साध्वीभ्यो वा न चार्पितम् ।
मया भिक्षाऽर्थिता स्वत्तो मृत्पिण्डस्त्वर्पितस्त्वया ॥८५॥
स्मर्यते वा नवा साध्वि ! तत्फलं नाऽन्नमाप्यते ।
कर्मभूमौ कृतं दत्तं फलं स्वर्गे त्ववाप्यते ॥८६॥
त्वयाऽन्नं न प्रदत्तं वै प्रपद्येत कुतो दिवि ।
तथापि भक्ता त्वं ह्यनुग्राह्या सदा मया ॥८७॥
मृत्तिकादानतो भिक्षा फलं ते मृत्तिकाऽपि वै ।
अन्नरूपेण भवतु सदा भुंक्ष्यामृतं फलम् ॥८८॥
त्वया व्रतैश्च कृच्छ्रैश्च सूपवासैरनेकशः ।
पूजाभिरर्चितश्चाहं तत्फलं ते गृहेऽमृतम् ॥८९॥
भवतान्मा गृहं शून्यं सदा मे भवतु प्रिया ।
गच्छ स्वर्गे नूतनां त्वां द्रष्टुं कौतुहलान्विताः ॥९०॥
आगमिष्यन्ति देव्यश्च षट्तिलाव्रतकारिकाः ।
द्वारं नोद्घाटनीयं च त्वया स्थेयमदर्शने ॥९१॥
यदि तासामाग्रहश्चेत् तव दर्शनकारणे ।
वाच्यं ताभ्यस्तदा देव्यो यदि दर्शनमिष्यते ॥९२॥
ददत षट्तिलापुण्यं भवतीभिस्तु प्राक्कृतम् ।
उद्घाटयामि द्वारं च मां पश्यन्तु हरिप्रियाम् ॥९३॥
ताभिर्दत्तं तदा पुण्यं षट्तिलैकादशीभवम् ।
उद्घाटितं ततो द्वारं दृष्टा ताभिर्हरिप्रिया ॥९४॥
न देवी न च गान्धर्वी नासुरी न च पन्नगी ।
नान्यापि तादृशी दिव्या स्वर्गेऽभूत् कपिला यथा ॥९५॥

हरेर्योगान्महालक्ष्मि ! त्वत्समा साऽभवद् दिवि ।
रूपकान्तिसमायुक्ता वैष्णवी मम वल्लभा ॥९६॥
षट्तिलाफललाभेन सौधोऽन्नामृतसंभृतः ।
समभवत्तदा द्राक्च नान्यत्राऽतोऽधिकं ह्यभूत् ॥९७॥
भवनं बहुसम्पन्नं षट्तिलापुण्यलाभतः ।
धनधान्यसुवस्त्रादिस्वर्णरूप्यादिसंभृतम् ॥९८॥
भुक्तं च कल्पपर्यन्तं ततः कपिलया तया ।
नित्ये लये समायाता कपिला मम मन्दिरम् ॥९९॥
चतुर्भुजाभवत्तत्र रमारूपा मम प्रिया ।
भजते मां सखी ते सा सेवनान्मेऽतिभावतः ॥१००॥
ततो यैस्तु कृतं साक्षात् षट्तिलाव्रतमुत्तमम् ।
किं किं तेन न चाप्येत सर्वं प्राप्येत सर्वथा ॥१०१॥
लभेद् भुक्तिं च मुक्तिं च मद्योगात्तिलदाव्रती ।
वित्तशाठ्यं न कर्तव्यं लोभः कार्यो न तु क्वचित् ॥१०२॥
दानं सर्वविधं देयं दत्तं प्राप्येत माविनि ।
आत्मवित्तानुसारेण तिलान् धान्यानि दापयेत् ॥१०३॥
वस्त्रान्नवाहनयानगृहवार्युपसाधनम् ।
नैरोग्यं लभतेऽमुत्र ददते योऽत्र जन्मनि ॥१०४॥
न दारिद्र्यं न च कष्टं न दौर्भाग्यं न शून्यताम् ।
न भिन्नत्वं व्रजेद् भक्तः षट्तिलाया उपोषणात् ॥१०५॥
तस्माद् व्रतं प्रकर्तव्यं तिलदानं विधानतः ।
पातकैर्मुच्यते भुक्तिं मुक्तिं च लभतेऽतिगाम् ॥१०६॥
य इदं शृणुयाद् यद्वा श्रावयेच्च पठेच्च वा ।
तस्य पुण्यं षट्तिलाया व्रतजं भवति प्रिये ॥१०७॥
नाशुभं शिष्यते किंचित्परत्राऽत्र विरोधकृत् ।
आत्मपुण्यं व्रजेद्विप्रो विजयं क्षत्रियो व्रजेत् ॥१०८॥
धनस्मृद्धिं व्रजेद् वैश्यः सुखं चान्यो लसेत्परम् ।
धर्मं प्राप्नोति धर्मार्थी कामार्थी प्रमदां लभेत् ॥१०९॥
धनार्थी धनमाप्नोति पुत्रार्थी सत्सुतं लसेत् ।
यशोविपुलमाप्नोति ज्ञातिमूर्धन्यमित्यपि ॥११०॥
अचंचलां श्रियं लब्ध्वा श्रेयः परमवाप्नुयात् ।
भयनाशो भवत्यस्य तेजोवीर्यं च विन्दति ॥१११॥
षट्तिलाव्रतसम्पन्ना नारी प्रियपतिं लसेत् ।
पुत्रपौत्रधनधान्याऽखण्डसौभाग्यमाप्नुयात् ॥११२॥
लब्ध्वा काममुखं चात्र दिवि देवी प्रमोदते ।
वैष्णवी च रमा भूत्वा हरेः शय्यासु मोदते ॥११३॥
वैकुण्ठे चाथ गोलोके यौवनार्थसुखानि वै ।
अश्नुते स्वपतिकृष्णहरिणा सह सर्वदा ॥११४॥
षट्तिलायाः समं चान्यद् व्रतं नास्ति सुखप्रदम् ।
पद्मया च कृतं पूर्वं सा त्वं लक्ष्मीर्ममाऽसि वै ॥११५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने माघकृष्णषट्तिलैकादशीव्रतमाहात्म्यं व्रतपुण्यात् कपिलानार्या देवीत्वं रमात्वं चेत्यादिनिरूपणनामा द्विचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४२ ॥

**श्रीलक्ष्मीरुवाच—**

हरे कृष्ण कृपासिन्धो जगदुद्धारकारक ।
माघशुक्लैकादशीं मे कथयस्व प्रसादतः ॥ १ ॥
को विधिः कोऽधिदेवोऽत्र व्रतस्य फलमित्यपि ।
कथयस्वोद्यापनं च व्रतिनो भुक्तिमुक्तिदम् ॥ २ ॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि माघशुक्ले जयानामेतिपुण्यदा ।
पापहन्त्री मोक्षकर्त्री कामदात्री सुखप्रदा ॥ ३ ॥
एकादशी समाख्याता कर्तव्या व्रतिना शुभा ।
ब्रह्महत्यादिहन्त्री च पिशाचत्वादिनाशिनी ॥ ४ ॥
सर्वसम्पत्करी राज्ञां संग्रामे जयदायिनी ।
स्वर्गे जयप्रदा लोके व्यवहारे जयप्रदा ॥ ५ ॥
यत्र कुत्रापि कार्ये सा कृता जयफला मता ।
तत्फलं जयदं प्रोक्तं त्रिषु लोकेषु यायिनाम् ॥ ६ ॥
एतस्मात्कारणाल्लक्ष्मि कर्तव्या सा प्रयत्नतः ।
दशम्यामेकभुक्तेन नक्तमात्रेण वा स्वयम् ॥ ७ ॥
देहयात्रां निर्वहँश्च रात्रौ भूशयनं चरेत् ।
प्रातरुत्थाय च ब्राह्मे मुहूर्ते श्रीहरिं स्मरेत् ॥ ८ ॥
शौचस्नानादिकं कृत्वा सन्ध्यावन्दनमाचरेत् ।
गायत्रीं च जपित्वाऽथ हरेः पूजां समाचरेत् ॥ ९ ॥
नित्यया सह संपूज्यो माधवस्तत्पतिः प्रभुः ।
पञ्चामृतेन वै पूर्वं स्नापयेदभिषेचनैः ॥१०॥
शुद्धतीर्थजलैः कृष्णं स्नापयेल्लेपयेद् द्रवम् ।
सुगन्धसारोत्तमतैलचन्दनादि विलेपयेत् ॥११॥
पुनश्च स्नापयेत्तीर्थजलैर्वस्त्राणि धारयेत् ।
मुकुटं कुण्डले हारान् कटकांगदसूर्मिकाः ॥१२॥
शृङ्खलारशनारत्नहीरकादिकृतानि च ।
विभूषणानि सर्वाणि तथा दिव्यानि धारयेत् ॥१३॥

गुलालाक्षतकुंकुमाद्यैरैः संपूजयेत् प्रभुम् ।
धूपदीपैस्तथा पुष्पैर्बकुलस्य प्रपूजयेत् ॥१४॥
तत्कालप्रोद्भवैश्चान्यैः कमलैः स्थलपद्मकैः ।
श्रृङ्गारहारैः सत्पत्रैस्तुलसीमंजरीयुतैः ॥१५॥
पूजयेच्छ्रीहरिं चाथ चन्दनैर्गन्धिवस्तुभिः ।
मिष्टान्नानि तु नैवेद्ये बीजपूरफलानि च ॥१६॥
मण्डका लड्डुका मुद्गभवा मेशुभमौक्तिकाः ।
दातव्या हरये दुग्धपाकः सुगन्धमिश्रिताः ॥१७॥
दाडिमं नवरंगं च नारिकेलफलं तथा ।
दातव्यानि तथा द्राक्षाफलानि कदलानि च ॥१८॥
आरार्त्रिकं तथा कार्यं प्रदक्षिणादिकं ततः ।
पुष्पांजलिं क्षमां प्रार्थ्य ततो वै व्रतमर्थयेत् ॥१९॥
अद्याऽहं वै जयानाम्न्या एकादश्या व्रतं शुभम् ।
करोमि कृष्ण तेऽतीव प्रसन्नत्वप्रसक्तये ॥२०॥
तद् व्रतं मे प्रसंपूर्णं भवत्वत्र कृपां कुरु ।
इति प्रार्थ्य ततो नत्वा देवदेवं च माधवम् ॥२१॥
शोभितं सप्तधान्यैः सन् मण्डलं कारयेद् व्रती ।
मध्ये स्वर्णघटं संस्थापयेत् ताम्रघटं च वा ॥२२॥
पञ्चपल्लवरत्नादिजलवस्त्रादिशोभिते ।
तिलपात्रं घटे तत्र स्थापयेत् फलसंयुतम् ॥२३॥
घटं प्रपूजयेत्तत्र तीर्थान्यावाहयेत्तथा ।
स्वर्णमूर्तिं माधवस्य जयया सह निर्मिताम् ॥२४॥
नित्यया च तथा पत्न्या सहितां स्थापयेत्तथा ।
पूजयेच्चावाहनादिक्रमेण स्नापयेत्तथा ॥२५॥
विभूषयेत्तथा पुष्पभोजनादि समर्पयेत् ।
षोडशोपसुवस्त्वाद्यैरर्चयेद्बहुभावतः ॥२६॥
जलपानं समर्प्याऽथ नीराजयेच्च माधवम् ।
ताम्बूलं चार्पयेत्तत्राऽपराधाँश्च क्षमापयेत् ॥२७॥
व्रतार्थे प्रार्थयेत् पूर्णं व्रतं मे च भवेदिति ।
गोश्च प्रपूजनं कुर्याद् गोदानं चापि कारयेत् ॥२८॥
भूदानं वस्त्रदानं च स्वर्णदानं च कारयेत् ।
पश्चात्पूजां समाप्यैवं कुर्यात्कार्यं स्वकं दिने ॥२९॥
मध्याह्नेऽपि तथा भक्ष्यभोज्यलेह्यसुचोरयकम् ।
अन्नं चतुर्विधं दद्याद्देवाय माधवाय वै ॥३०॥
सायं निशि तथा कृष्णपूजार्थं मण्डपं शुभम् ।
कारयेत्तु महान्तं च तत्रोल्लेच्चं प्रबन्धयेत् ॥३१॥
पूजनं श्रीहरेः कृत्वा नीराजयेद्विधानतः ।
नैवेद्यं च क्षमाऽदानं कृत्वा ततो हरेः पुरः ॥३२॥
मण्डपे रासरीत्या श्रीहरेः पद्यानि गापयेत् ।
कुर्याज्जागरणं रात्रौ रंजयेत्कृष्णमत्यति ॥३३॥
भक्तैर्नृत्यं कीर्तनं च सवादित्रं च जागरम् ।
कर्तव्यं च ततः प्रातः स्नात्वाऽर्च्यो माधवः प्रभुः ॥३४॥
दानानि विविधान्येव देयानि च यथाबलम् ।
साधून् साध्वीर्ब्राह्मणाँश्च भोजयेच्च निवेदितम् ॥३५॥
ततः स्वयं पारणां च कुर्यादेवं व्रते कृते ।
फलं पूर्णं भवत्येव विजयः सर्वथा भवेत् ॥३६॥
श्रृणु त्वत्र व्रते पूर्वां कथां लक्ष्मि ! वदामि ते ।
स्वर्गे लोके महेन्द्रे वै शासति देवतागणाः ॥३७॥
वसन्ति सुखिनः सर्वे पीयूषपानपोषिताः ।
अप्सरोभिश्च देवीभिः परीभिश्च समर्चिताः ॥३८॥
पूजिताः सुखिता देवा रमन्ते नन्दने वने ।
रमयन्ति च देवीश्च नृत्यन्ति कीर्तयन्ति च ॥३९॥
नन्दनाख्ये वने दिव्ये स्वर्गंगा या जलान्तिके ।
उद्याने पुष्पशोभाढ्ये सुगन्ध्यनिलसेविते ॥४०॥
प्रवृत्तं नर्तनं चाप्सरसामिन्द्रस्य तुष्टये ।
गन्धर्वास्तत्र गायन्ति नृत्यन्त्यप्सरसस्तदा ॥४१॥
वादयन्ति च गन्धर्वास्तालस्याऽऽपूरिकाः स्त्रियः ।
एवं तु गायने नृत्ये प्रवृत्तेऽतिप्रहर्षतः ॥४२॥
दर्शकोऽपि महेन्द्रः स्वेच्छया रङ्गे ह्युपस्थितः ।
ननर्तेन्द्रः सहर्षः स्वपञ्चाशत्कोटिनायकः ॥४३॥
गन्धर्वाः सहगायन्ति पुष्पदन्तश्च सुस्वरः ।
चित्रसेनस्तथा तस्य पत्नी पुष्पवती तथा ॥४४॥
पुष्पदन्तस्य पुत्रश्च माल्यवान्नामतस्तथा ।
पुष्पवत्याः स्वरूपे च माल्यवान्मोहितस्तदा ॥४५॥
पुष्पवत्या कटाक्षैश्च माल्यवान् स्ववशे कृतः ।
पुष्पवती माल्यवाँश्च नृत्यार्थमिन्द्रतुष्टये ॥४६॥
समागतौ च कामेन परीतांगौ बभूवतुः ।
चित्तभ्रमसमायुक्तौ कामबाणवशंगतौ ॥४७॥
गायतः शुद्धगानं न बद्धदृष्टी च रागतः ।
नृत्यतीन्द्रस्तु वै सम्यङ् नृत्यानुसारि गायनम् ॥४८॥
तयोः क्षतिं समगच्छत्तालमानविलोपनम् ।
चिन्तयित्वा तु मघवा संगतं मानसं तयोः ॥४९॥
समकालीनवैगण्यं ताले माने च गायने ।
क्रमलोपं परं दृष्ट्वा मत्वाऽवशां तथाऽऽत्मनः ॥५०॥
कुपितश्च तयोस्तत्र शशाप च वदन्निदम् ।
धिङ्युवां पतितौ मूढौ मन्महत्ताप्रभंजकौ ॥५१॥

स्वर्गे विषयबाहुल्ये भुज्यमानेऽपि सर्वदा ।
तृप्तिर्नास्ति न मे श्रेष्ठ्यमर्यादारक्षणे मतिः ॥५२॥
नृत्यकाले मम दाक्ष्ये प्रोत्साहेऽपि युवां यतः ।
विगणय्य सभामध्ये नृत्यं वै मोहितौ किमु ॥५३॥
तस्मात् पिशाचौ भवतं दम्पतीरुपधारिणौ ।
न गन्धर्वस्थितियोग्यौ गौरवभंगकारकौ ॥५४॥
मर्त्यलोकमनुप्राप्तौ भुंजानौ कर्मणः फलम् ।
दुःखं चानुभवन्तौ वै तिष्ठतं तु चिरं समाः ॥५५॥
एवं महेन्द्रशापात्तौ हिमाद्रौ त्वतिदारुणे ।
पिशाचतां गतौ दुःखैस्तप्तौ शान्तिं न चेयतुः ॥५६॥
गन्धर्वत्वं चाप्सरत्वं विस्मृतौ चेरतुर्वने ।
तुषारेणातिवेगेन पीड्यमानौ मुहुर्मुहुः ॥५७॥
दन्तघर्षं प्रकुर्वाणौ वदतश्च परस्परम् ।
पिशाचः समुवाच स्वां प्रियां पत्नीं पिशाचिकाम् ॥५८॥
अहो चाल्पापराधस्य फलं दुःखतमं महत् ।
नरकं दारुणं चेदं पिशाचरूपकं खलु ॥५९॥
कदा स्यादन्तवच्चैतत् कदा शान्तिर्मिलिष्यति ।
शैत्यं चातितमं त्वत्र पीडा तेनातिजायते ॥६०॥
इति चिन्तापरौ तौ च क्षुधादुःखातिकर्षितौ ।
पिप्पलाख्यदेवतरोः स्तम्बे वासं प्रचक्रतुः ॥६१॥
हिमपातेन दशमीरात्रौ चैकादशीदिने ।
चैकादश्यास्तथा रात्रौ हिमझंझानिलेन तौ ॥६२॥
वेपमानौ भोजनार्थं निर्गतौ न स्ववासतः ।
दैवयोगात्स दिवसो माघस्यैकादशी जया ॥६३॥
उपोषिता निशा ताभ्यां सुजागरयुता कृता ।
तत्राऽऽस्तां तावुभौ भोज्यजलपानादिवर्जितौ ॥६४॥
कष्टेन हिमवातेन सर्वाहारविवर्जितौ ।
न कृतो जीवघातश्च न प्राप्तं फलभक्षणम् ॥६५॥
न पानं सलिलस्यापि जातं नेन्द्रियरंजनम् ।
न च निद्रापि संजाता न तौ सौख्यमविन्दताम् ॥६६॥
तयोर्दुःखितयोरित्थं निर्जगाम निशीथिनी ।
प्रातः सूर्योदये प्राप्ते द्वादश्यां च मया तयोः ॥६७॥
पिप्पलवृक्षरूपेण कृता भक्तिधृता हृदि ।
अश्वत्थोऽहं हि वृक्षाणां भवामि मूर्तिमान् यतः ॥६८॥
तयोराश्रयदाताऽहं व्रतं जयातिथेस्तयोः ।
गणयन् जागराढ्यं च फलं व्रतस्य वै ददौ ॥६९॥
तेन फलप्रभावेण पिशाचत्वं गतं तयोः ।
दिव्यरूपौ तु गन्धर्वौ पूर्वरूपौ बभूवतुः ॥७०॥
पुरातनस्नेहयुतौ पूर्वालंकारशोभितौ ।
पुष्पावतीमाल्यवन्तौ विमानवरमास्थितौ ॥७१॥
गतौ स्वर्गे च देवेन्द्रं प्रणामं चक्रतुर्मुदा ।
तौ देवौ देवगन्धर्वौ वीक्ष्येन्द्रो विस्मितोऽब्रवीत् ॥७२॥
वदतं केन पुण्येन विनष्टा वां पिशाचता ।
मम शापात्तु मुनिना केन वै मोचितौ युवाम् ॥७३॥
प्राहश्च तदा तौ तं दैवयोगेन देवराट् ।
वासुदेवप्रसादेन जयायास्तु व्रतेन च ॥७४॥
पिशाचत्वं विनष्टं नौ तव भक्तिप्रभावतः ।
श्रुत्वेति मघवा हृष्टः पुनस्तावाह चादरात् ॥७५॥
युवां हरेः कृपापात्रवर्यौ जातौ व्रताहतः ।
तस्मात्पूज्यौ मम जातौ व्रतपुण्यप्रभावतः ॥७६॥
सदा सुधां तु पिबतं वचनान्मेऽतिहर्षतः ।
रमेथां च सदा स्वर्गे यथासौख्यं युवां प्रियौ ॥७७॥
हरिव्रतप्रकर्तारो हरेर्भक्तिपरायणाः ।
मर्त्या अमर्त्या ये केचित्त्वस्मत्पूज्याः सदैव ते ॥७८॥
एवं लक्ष्मि ! च तौ गन्धर्वीगन्धर्वौ पिशाचकौ ।
पुनर्जातौ स्वर्निवासौ जयाया व्रतवैभवात् ॥७९॥
एतस्मात्कारणाल्लक्ष्मि ! कर्तव्यं च जयाव्रतम् ।
जया पापहरा पुण्यप्रदा स्वर्गप्रदा तथा ॥८०॥
ब्रह्महत्यादिपापानां नाशिनी मोक्षदायिनी ।
सर्वदानानि दत्तानि कृतं येन जयाव्रतम् ॥८१॥
सर्वेऽपि क्रतवस्तेन कृताः कृते जयाव्रते ।
कृताः परोपकाराश्च कृते श्रेष्ठे जयाव्रते ॥८२॥
धनधान्यसुतपत्नीगृहगोवाजिसत्पतिम् ।
लभते माघशुक्लैकादशीजयाव्रतेन वै ॥८३॥
नात्र परत्र किञ्चिद्वै दुर्लभं व्रतिनो भवेत् ।
सुलभं स्याद्धरेर्योगाद् दुर्लभं नैव विद्यते ॥८४॥
कर्तव्यं सर्वथा तस्माद्व्रतं जयासुवासरे ।
कल्पकोटिं वसेत् कर्ता वैकुण्ठे मोदते ध्रुवम् ॥८५॥
व्रतस्यास्य कथायाश्च श्रवणात्पठनादपि ।
अग्निष्टोमफलं स्याद्वै भुक्तिं मुक्तिं च विन्दति ॥८६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुग-
सन्ताने माघशुक्लजयैकादशीव्रतमाहात्म्यं
माल्यवतीमाल्यवन्नामगन्धर्वयोः पिशाचत्व-
प्राप्तयोः व्रतेन मुक्तिरित्यादिनिरूपणनामा
त्रिचत्वारिंशदधिकद्विशत-
तमोऽध्यायः ॥ २४३ ॥

श्रीलक्ष्मीरुवाच—

भक्तवल्लभ भक्तेश रमावल्लभ मत्पते ।
मम सर्वस्व गोपाल लक्ष्मीपाल दयानिधे ॥ १ ॥
धर्मपाल सदाचारप्रवर्तक सुरार्चित ।
फाल्गुनस्य कृष्णपक्षे काऽभिधा कथयस्व सा ॥ २ ॥
एकादश्यास्तथा देवः कः पूज्यः कीदृशं व्रतम् ।
किं देयं च विशेषेण तत्सर्वं वद मे हरे ॥ ३ ॥

श्रीनारायण उवाच—

फाल्गुनस्याऽसिते पक्षे विजया नाम नामतः ।
एकादशी मता सर्वपापक्षयकरी प्रिये ॥ ४ ॥
प्रद्युम्नो व्रतिभिस्तत्र पूजनीयो धिया सह ।
पूजायां तुलसी देया फलं जम्बीरमर्हणे ॥ ५ ॥
नैवेद्ये तु प्रदेयं च सोहालिकादि भोजनम् ।
दाने तूपानहौ मुख्यौ यथाश्रद्धं धनादिकम् ॥ ६ ॥
आदराच्चोत्सवः कार्यो विष्णुभक्तसमर्हणम् ।
भक्तैः श्रद्धासमायुक्तैस्तथा श्रीशपरायणैः ॥ ७ ॥
कर्तव्यं च प्रयत्नेनोपोषणं विजयप्रदम् ।
यथा शुक्ला तथा कृष्णा ह्युपोष्या ध्येयसिद्धये ॥ ८ ॥
असकृज्जलदुग्धादिपानान्मिथुनसेवनात् ।
क्रोधनादश्रुपाताच्च क्लेशादिकरणात्तथा ॥ ९ ॥
चौर्यादिदोषलेशाच्च नोपवासफलं भवेत् ।
दानं चात्मविचारश्च ध्यानं होमो जपोऽर्हणम् ॥१०॥
कर्तव्यानि प्रयत्नेन व्रतिना फलकांक्षिणा ।
तज्जपस्तत्कथा श्रव्या ह्येकादश्यां जयो भवेत् ॥११॥
उपवासविरोधी चेदन्नदर्शनसंस्पृशः ।
त्याज्यः स सर्वथा स्पर्शो ह्युपवासदिने प्रिये ! ॥१२॥
उपवासाऽसमर्थस्तु कुर्यात् फलकृतं व्रतम् ।
मूलं फलं पयस्तोयमुपभोग्यं भवेच्छुभे ॥१३॥
अशक्तस्य तथा नक्तं हविष्यान्नमनोदनम् ।
फलतिलाशनंचाज्यक्षीराम्बुपानमित्यपि ॥१४॥
गन्धताम्बूलभोगाँश्च वर्जयेद् व्रतसिद्धये ।
जागरं विष्णुपूजां च विना त्वर्धफलं व्रतम् ॥१५॥
जागरं पूजनं पूर्णफलदं व्रतिनो भवेत् ।
शृणु लक्ष्मि ! प्रवक्ष्यामि वृत्तान्तं विजयप्रदम् ॥१६॥
सत्ययुगोत्तरे काले जमदग्निर्महामुनिः ।
कौशिक्याः सरितोऽरण्ये ह्यवसद्धार्मिको हि सः ॥१७॥
स्नानसन्ध्यादिसत्कर्मपरश्रान्तःशुचिः सदा ।
दयादाक्षिण्यमौनादिक्षान्त्यादिगुणशोभितः ॥१८॥
यज्ञयागादिनिपुणो देवसेवापरायणः ।
यत्कुक्ष्यां मूर्तिमानग्निर्जमत्यर्पितभोजनम् ॥१९॥
जमदग्निः स वै ख्यातो नर्मदातटमावसन् ।
व्रतं चान्द्रायणं कुर्वन्नाराधयति माधवम् ॥२०॥
रेणुका तस्य पत्न्यासीत् सापि धर्मपतिव्रता ।
पतिधर्मपरा साध्वी पतिं संसेवतेऽन्वहम् ॥२१॥
यदृच्छालाभसन्तुष्टौ गते कालेपि शान्तिगौ ।
ब्रह्म चाराधयतस्तौ नापत्यं प्रापतुर्हि तौ ॥२२॥
एकदा रेणुका स्नात्वा हरेः पूजनपूर्विकाम् ।
पत्युः पूजां करोति स्म तदा चिन्तां जगाम सा ॥२३॥
पतिः पुत्रस्वरूपेण जायते इति वै श्रुतिः ।
पतिर्मे दर्शनीयोऽस्ति तथा पुत्रोऽपि मे भवेत् ॥२४॥
पतिर्मे नवसृष्टेश्च सर्जने पोषणेऽपि च ।
सृष्टेः संहरणे चापि समर्थोऽस्ति त्रिदेववत् ॥२५॥
देवा येनाऽऽकारिताश्चाऽऽयान्ति यस्य मखेऽन्वहम् ।
पूरयन्तीच्छया सर्वं तथा पुत्रोऽपि मे भवेत् ॥२६॥
कल्पद्रुमाः कामगावो वसन्ति यस्य मानसे ।
सत्पतिर्देवतुल्यो मे भवेत्पुत्रः समीशिता ॥२७॥
स्वर्गतुल्यानि सौधानि वैकुण्ठस्य समृद्धयः ।
गोलोकस्य रसा यस्य संकल्पे निवसन्ति हि ॥२८॥
ब्रह्मतुल्या प्रतिष्ठा च शंभुतुल्या विरागता ।
शेषसमाः सिद्धयश्च यत्संकल्पे वसन्ति च ॥२९॥
मुक्तिः करतले यस्य लक्ष्मीश्चाशीर्वचोऽमृते ।
भोगाश्च सत्यकामाद्या वसन्ति यस्य सन्निधौ ॥३०॥
वेदा विद्याः कला दाक्ष्यं यन्मूर्तौ प्रवसन्ति च ।
ब्रह्मचर्यादयः सर्वे धर्माः सन्ति च यद्धृदि ॥३१॥
तस्यर्षेर्जमदग्नेश्च सुतस्तत्सदृशो भवेत् ।
देवा आशीःप्रदानान्मे प्रयुञ्जन्तु सुतात्मये ॥३२॥
इति चिन्तयमानैव पूजयित्वा स्वकं पतिम् ।
दक्षपादांगुष्ठवारि ह्यपिबद् विष्णुमानसा ॥३३॥
तावत्तत्राऽभवद्वाणी व्योमगाऽतिमनोहरा ।
प्रसन्नोऽस्मि च ते देवि ! सदा ते पतिसेवया ॥३४॥
विष्णुरस्ति स्वामिरूपे सेवां गृह्णन् वसन् सदा ।
ददामि ते वचो देवि ! रेणुके तव गर्भजः ॥३५॥
भवामि तव पुत्रोऽहं प्रभुस्ते पतिसदृशः ।
नान्योऽस्ति ते पतिप्रख्यः पतिरूपोऽस्म्यहं स्त्रियाः ॥३६॥

तस्मात्पत्यौ कल्पवृक्षतुल्ये कामान् ददामि वै ।
पतिव्रताभ्यः सम्यग्वै व्रतस्थाभ्यः सुतांस्तथा ॥३७॥
शृणु मातर्व्रतं तत्र कर्तव्यं च त्वया यतः ।
फलदं पुत्रदं लोके ख्यातिकृन्मोक्षसाधनम् ॥३८॥
एकादश्या विजयाया व्रतं संकल्पपूरकम् ।
पुत्रप्राप्तौ विजयस्ते भविष्यति युगे युगे ॥३९॥
इत्युक्त्वा विररामेयं वाणी च रेणुकापि वै ।
व्रतं चकार फाल्गुनकृष्णैकादशिकातिथेः ॥४०॥
दानानि च ददौ विष्णुतुष्टये विविधानि हि ।
प्राप पुत्रं हरेस्तस्य प्रसादाच्च व्रतात्तथा ॥४१॥
परशुरामसंज्ञोऽसौ विष्णोरंशो महाप्रभुः ।
जन्मोत्तरं चतुर्बाहुं रूपं स्वं धृतवान् हरिः ॥४२॥
मात्रे स्वदर्शनं दिव्यं ददौ श्रीकमलापतिः ।
एवं कृत्वा विजयां सा रेणुका सुतवत्यभूत् ॥४३॥
शृणु प्रिये ततश्चायं बालो विष्णुर्द्विजोऽर्भकः ।
जमदग्निसुतश्चायं मुनिधर्मपरोऽभवत् ॥४४॥
विप्रधर्मान्पालयँश्च मानयन् ऋषिदेवताः ।
पूजयन् श्रीपतिं नित्यं यज्ञोपवीतमाप्तवान् ॥४५॥
पित्रा तु शिक्षितो वेदानध्यगच्छत्सहांगकैः ।
विद्यया तेजसा चान्यो दिवाकर इवाभवत् ॥४६॥
बाल्यादेवाभवच्चापि पित्रन्यूनपराक्रमः ।
त्रिलोकमार्गाव्याहतगतिकः कमलापतिः ॥४७॥
विप्रकुमारो ब्रह्मिष्ठो ब्रह्मचर्यपरायणः ।
यस्य संदर्शनान्मुक्तिं यान्ति वै मानवा भुवि ॥४८॥
यस्य संसेवनाद् देवा देवत्वं स्वर्गसम्पदः ।
अवापुश्चान्यजीवाश्च लोकपालकतां पराम् ॥४९॥
सोऽयं भिक्षुककुत्र्यां वै वर्ततेऽरण्यभूमिषु ।
लीला नारायणस्यैवं दीनानां मोक्षकारिणी ॥५०॥
अथैकदा शृणु लक्ष्मि ! जातं क्षत्रं समुद्धतम् ।
गणयत्येव नैव स्वपूज्यानारण्यकान्द्विजान् ॥५१॥
माहिष्मत्या भूपतिश्च सहस्रार्जुननामकः ।
चन्द्रवंशी कृतवीर्यात्मजो बाहुपराक्रमः ॥५२॥
नारायणावतारं सः दत्तात्रेयं तपस्विनम् ।
प्रसन्नीकृत्य सेवाभिर्युधि बाहुसहस्रकम् ॥५३॥
तथा योगप्रभावस्य सिद्धिं लेभे श्रीदत्ततः ।
यदृच्छया स मृगयां विचरन् गहने वने ॥५४॥
महता स्वस्य सैन्येन सहितोऽरण्यभूमिषु ।
पर्यटन्नाश्रमं चायाज्जमदग्नेर्महामुनेः ॥५५॥
तस्मै राज्ञे तु ऋषिणा पूजासत्कारमाननम् ।
ससैन्यामात्यवाहाय दत्तं योगबलाद् बहु ॥५६॥
कामधेनोः प्रसादेन स्वर्गादधिकवैभवान् ।
प्रकटीकृत्य तत्रैव तदानीं सः तमार्चयत् ॥५७॥
राजाऽऽलोक्य गताश्चातिविस्मयं मुनिवैभवम् ।
स्वैश्वर्यातिशयितं चाऽदृष्टं चैवाऽश्रुतं क्वचित् ॥५८॥
सर्वविभूतिसौधादिसमुत्पत्तिपराक्रमाम् ।
कामधेनुं स तु ज्ञात्वा ह्युपाजहार तां बलात् ॥५९॥
क्रन्दन्तीं वत्ससहितां निन्ये स्वनगरं हि सः ।
तदानीं परशुरामो गतोऽभूत्तु गृहाद्बहिः ॥६०॥
आगतः सन् गृहे दृष्टवान् क्रन्दन्तीं स्वमातरम् ।
ततः श्रुत्वा तु नृपतेर्दौरात्म्यं क्रोधमाप सः ॥६१॥
मात्रे प्राह तु किं कार्यं मया पुत्रेण मे वद ।
विजयो मे भवेच्चैव यथा तन्निष्क्रयो भवेत् ॥६२॥
तथा दर्शय मे मातः किं करोमि वदाऽधुना ।
शिक्षयेऽस्म्यप्रधृष्योऽहं क्षत्रमुत्पथगामिनम् ॥६३॥
तथा मे शाधि मे मातः पुत्रोऽहं सेवकस्तव ।
मात्रोक्तं पुत्र ! ते सम्यग् विजयोऽस्तु तथा कुरु ॥६४॥
अनपत्या च पूर्वं यद् व्रतं पुत्रेच्छया ह्यहम् ।
विजयैकादशीतिथेः तदा कृतवती हरिः ॥६५॥
प्रसन्नोऽभूच्च मत्कुक्षौ त्वद्रूपो जन्म चाप्तवान् ।
त्वं वै हरिः स्वयं चासि पश्य हस्ते धनुः शुभम् ॥६६॥
परशुं च पताकां च रेखारूपान् विलोकय ।
कुरु च त्वं विजयैकादशीतिथेर्व्रतं शुभम् ॥६७॥
विजयस्ते सदा भविष्यति क्षत्रिययोधने ।
क्षत्रियाणां शिक्षणाय व्रतं कुरु सुपुत्रक ॥६८॥
ततो दण्डप्रदानाय याहि ते विजयोऽस्तु वै ।
इत्युक्तः परशुरामश्चकार विजयातिथेः ॥६९॥
व्रतं फाल्गुनकृष्णे तु निर्जलं मातृवाक्यतः ।
दशम्यां नक्तभोजी च रात्रौ भूशयनस्तथा ॥७०॥
प्रातः स्नानोत्तरं देवं प्रद्युम्नं धीयुतं तथा ।
विजयासहितं कृष्णं पुपूज भावभक्तितः ॥७१॥
कृत्वा तु सर्वतोभद्रमण्डलं तत्र सद्घटम् ।
रत्नपल्लववस्त्रादिजलगन्धादिसंयुतम् ॥७२॥
संस्थाप्य च ततस्तस्योपरि तिलभृतां शुभाम् ।
स्थालीं सन्न्यस्य मूर्तिं स्थापयित्वा स्वर्णनिर्मिताम् ॥७३॥
प्राद्युम्नीं धीस्थितपार्श्वां पुपूज बहुवस्तुभिः ।
पञ्चामृतजलैः स्नापयित्वा दत्वोपवीतकम् ॥७४॥

वस्त्रभूषाद्यलंकारैर्भूषयित्वा समर्च्य च ।
चन्दनादिसुगन्धैश्चाऽक्षताद्यैश्च सुपुष्पकैः ॥७५॥
फलादिभिश्च संपूज्य तुलसीमञ्जरीदलैः ।
धूपदीपादिदानैश्च प्रदक्षिणास्तवादिभिः ॥७६॥
आरार्त्रिकैस्तथा क्षमापराधनैः पुपूज सः ।
मध्याह्नेपि तथा संपूज्याऽऽर्पयद्भोजनं जलम् ॥७७॥
सायं षोडशभिः श्रेष्ठैरुपचारैः पुपूज सः ।
वेदघोषैः कथाख्यानैर्जागरणं चकार सः ॥७८॥
यावद् ब्राह्ममुहूर्तं च जातं तावत्स्वयं पुनः ।
स्नात्वा चकार देवस्य पूजनं प्रणयान्वितः ॥७९॥
चकार प्रार्थनां देव ! विजयाया व्रतेन मे ।
विप्रस्याऽनतिशक्तस्य स्वभावमृदुलस्य च ॥८०॥
क्रूरकापथगेनैव क्षत्रेण सह योधने ।
विजयो भवतात् कृष्ण ह्यक्षतोऽधृष्य एव च ॥८१॥
शिक्षितुं कापथस्थं वै क्षत्रं कालोऽयमागतः ।
मम मिषेण भगवान् कुरु त्वं विजयं स्वयम् ॥८२॥
यावदभ्यर्थयत्येवं तदा विष्णुश्चतुर्भुजः ।
प्रादुर्भूय तमुवाच विजयस्तेऽस्तु सर्वथा ॥८३॥
विजयाया व्रतेनाऽहं प्रसन्नोऽस्मि द्विजोत्तम ।
मम रूपोऽसि विप्रेन्द्र ! नारायणांश एव ह ॥८४॥
विजयैकादशिकायाः फलेन विजयस्तव ।
भवताद् भूमिपालानां शिक्षणं त्वन्निमित्तकम् ॥८५॥
शास्तॄणां क्षितिपानां चेत्कुपथे वै गतिर्भवेत् ।
तदा तेषां प्रशास्तारो ब्राह्मणास्तु मया कृताः ॥८६॥
क्षत्रियाणां बलं धर्माद् विप्राणां ब्रह्मजं बलम् ।
अधार्मिकाणां क्षत्राणां शासनं विप्रसात्कृतम् ॥८७॥
तस्माद् विप्रेन्द्र युद्धयस्व शाधि क्षत्रं विगर्वगम् ।
विजयाया व्रतेनात्र भूलोके विजयस्तव ॥८८॥
मां विहायाऽस्तु त्रैलोक्ये विजयस्तेऽभितो दिशि ।
इत्युक्त्वा भगवान् विष्णुस्तत्र चादृश्यतां गतः ॥८९॥
पर्शुरामोऽपि परशुं तीक्ष्णधारं धनुस्तथा ।
बाणान् खड्गं चर्मशक्तिं चक्रं चादाय चैकलः ॥९०॥
ययौ यत्र कार्तवीर्यो माहिष्मत्याः पतिर्नृपः ।
सहस्रार्जुननामाऽसौ सहस्रकरशोभितः ॥९१॥
विराजते स्वभवने तत्र त्वाक्षिप्य भूपतिम् ।
रामः प्राह महादुष्ट ! कामधेनुप्रहारक ! ॥९२॥
प्राणग्लहार्थं निर्गच्छ कुर्वास्वादं स्वकर्मणः ।
प्राणान्देहि रणं देहि कामधेनुं प्रदेहि मे ॥९३॥
यद्वा पराजयं देहि रामवाक्यं हि शाश्वतम् ।
श्रुत्वैवं क्रोधमापन्नो युयोधातिबलोऽर्जुनः ॥९४॥
किन्तु बाहुसहस्रं वै छिन्नमस्य प्रमूलतः ।
तीक्ष्णया दिव्यया युद्धे रामपरशुधारया ॥९५॥
बह्व्योऽक्षौहिण्य एवास्य विदारिता द्विजेन वै ।
नाशितास्तस्य पुत्राश्चाऽर्जुनोऽपि मारितस्तदा ॥९६॥
कामधेनुं पुनः प्राप्य ततो दिवं ययौ स्वयम् ।
क्षत्रियाणां विनाशाय पृथिव्यां विचचार ह ॥९७॥
एकविंशतिकृत्वः सः क्षत्रियाऽन्तकरोऽभवत् ।
विजयैकादशीव्रतबलेन विजयी भुवि ॥९८॥
समभूद्विप्रवर्योऽसौ रामो राजीवलोचनः ।
प्राप्ता धेनुर्जितं क्षत्रं ह्यर्जुनो निहतो रणे ॥९९॥
इह लोके जयः प्राप्तो रामेण विजयाव्रतात् ।
विष्णोः सुदर्शनचक्रावतारोऽर्जुन आस ह ॥१००॥
तथापि निहतः पर्शुरामेण कापथव्रतः ।
पठनाच्छ्रवणाश्चापि वाजपेयफलं भवेत् ॥१०१॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने फाल्गुनकृष्णविजयैकादशीव्रतमाहात्म्ये सहस्रार्जुन-नाशार्थं तपसा पर्शुरामविजयश्चेत्यादिनिरूपणनामा चतुश्चत्वारिंशदधिकद्विशततमो-ऽध्यायः ॥ २४४ ॥

**श्रीलक्ष्मीरुवाच—**

स्वयं कृष्णः परंब्रह्म लोकरक्षणहेतवे ।
अवतारं परिगृह्य करोत्यपि व्रतं स्वकम् ॥ १ ॥
लोकसंग्रहकार्याय समाचरति वै स्वयम् ।
शिक्षयति जनान् सत्त्वमयान् चाऽऽचर्य्यमित्यपि ॥ २ ॥
वद कृष्ण मयाऽप्यत्र भवतेव व्रतं शुभम् ।
कार्यं यस्य प्रतापेन मुक्तिः स्याद्धस्तगामिनी ॥ ३ ॥
जना अपि व्रतं कृत्वा परं फलमवाप्नुयुः ।
फाल्गुनस्याऽर्जुने पक्षे यन्नाम्न्येकादशी मता ॥ ४ ॥
वद तां धर्मपुत्र त्वं नारायण पते मम ।
इत्यापृष्टो हरिर्विष्णुर्व्रतं प्रोवाच तां प्रियाम् ॥ ५ ॥

**श्रीनारायण उवाच—**

शृणु कल्याणदे देवि ! सर्वसम्पत्करि प्रिये ।
यद्व्रतेन जनानां सुस्मृद्धयो यान्ति पोषणम् ॥ ६ ॥

वर्धन्ते च सदा लक्ष्म्यः सम्पदश्च भवन्ति वै ।
बहुमुक्तिर्महामुक्तिस्तस्य संकल्पवर्तिनी ॥ ७ ॥
फाल्गुनस्याऽर्जुने पक्षे भवेत्येकादशी शुभा ।
आमलकीतिनाम्ना सा विष्णुलोकफलप्रदा ॥ ८ ॥
वैकुण्ठे श्रीहरिर्लक्ष्मीं पप्रच्छ किमपेक्ष्यते ।
किमिष्यते त्वया लक्ष्मि ! यत् तद् ब्रूहि ददामि ते ॥ ९ ॥
नाऽनवाप्तमवाप्तव्यं त्वत्कृते ब्रह्मरूपिणी ।
यन्मदीयं तु तत्सर्वं त्वदीयं च त्वदात्मकम् ॥१०॥
तस्माद्वरय भद्रं ते करोमि तव कामनाम् ।
मा संकोचं वह लक्ष्मि ! यत्तवास्ति ममास्ति तत् ॥११॥
लक्ष्मीरेवं हरेः श्रुत्वा प्रोवाच भगवन्मम ।
ललाटभूषा प्रेष्ठाऽस्ति तन्तिका देहि तां प्रभो ॥१२॥
हरिस्तदानीं संकल्प्याऽऽभूषणार्थं नवं शुभम् ।
सुवर्णवर्णं सरसं ललाटे शीतलंकरम् ॥१३॥
स्वच्छं दिव्यं मणिप्रख्यं शशितुल्यं गुणान्वितम् ।
प्रकटीकृतवान् भाले बिन्द्वात्मकं विभूषणम् ॥१४॥
बिन्दुः स फलरूपोऽभून्मणिश्रेष्ठः प्रभान्वितः ।
अक्षतो वर्तुलः सौम्यः सुवर्णमणिसदृशः ॥१५॥
तस्माचान्येऽपि मणयो दिव्या जातास्त्वनेकशः ।
हारस्तन्तिमयस्तेषां कृतोऽलंकारशोभनः ॥१६॥
सूर्यकान्तनिभो हृदये चन्द्रकान्तसमो गुणे ।
कौस्तुभेन समो हृद्ये तन्तिकाभूषणात्मकः ॥१७॥
चूडामणिसमो धार्ये स्पृश्ये कोमलपेशलः ।
पुण्ये विष्णुशिलातुल्यो धार्ये चन्दनशीतलः ॥१८॥
सुगन्धे दिव्यगन्धाढ्यः पुष्टौ स्तन्यसमस्तथा ।
शाश्वतश्च महादिव्यो हरेर्भालस्य बिन्दुजः ॥१९॥
तन्तिकात्मकभूषाख्यो हारो निर्मलनूतनः ।
संक्लृप्तो हरिणा चैकचत्वारिंशत्फलात्मकः ॥२०॥
मध्ये सप्तफलान्यत्र पार्श्वयोश्च द्विसूत्रयोः ।
अष्टाविंशतिमण्याढ्यः प्रान्तयोः षड्फलात्मकः ॥२१॥
अर्पितश्च महालक्ष्यै हरिणा परमात्मना ।
सम्प्राप्य सूर्यसदृशं तेजस्विनं प्रशीतलम् ॥२२॥
सरसं शाश्वतं हारं जहर्ष प्रजहर्ष सा ।
जिघ्राति स्पृशति चैनं विलोकयति सादरम् ॥२३॥
मुहुर्भाले धारयति पश्यति स्म पुनः पुनः ।
नूतनं कनकप्रख्यं सुगन्धरससंभृतम् ॥२४॥
ललाटे शान्तिदं स्निग्धस्पर्शं रेखाभिरन्वितम् ।
स्वकृते एव हरिणा कृतं वीक्ष्य मुमोद सा ॥२५॥
स्तौति प्रशंसति हस्ते गृह्णाति स्म मुहुर्मुहुः ।
सखीभ्यः स्म दर्शयति प्रसन्ना संबभूव सा ॥२६॥
नारायणोऽपि भगवान् आसमन्तात् फलस्य वै ।
नैर्मल्यं तु विलोक्यैव नामाऽकरोद् यथागुणम् ॥२७॥
आमलकं फलं चेति तन्तिकाऽऽमलकैः कृता ।
भाले बबन्ध लक्ष्मीस्तां शुशुभे सर्वतोऽधिका ॥२८॥
द्यौर्यथाऽनेकशशिकृत्पंक्तिभिः शोभते तथा ।
शुशुभे तु महालक्ष्मी समासाद्य सुतन्तिकाम् ॥२९॥
एवं जाते महानन्दे सृष्टावत्रापि वेधसः ।
कल्पादौ प्राकृते जाते सर्गे स्थावरजंगमे ॥३०॥
लक्ष्म्या युतो हरिः साक्षात्परमात्मा परात्परः ।
समाजगाम भूमौ च लक्ष्मीकान्तः समादरात् ॥३१॥
लक्ष्म्या ललाटदेशाच्च तन्तिकायाः शुभं फलम् ।
श्रीहरिः पातयामास पृथ्व्यां तत्सत्त्वसिद्धये ॥३२॥
तस्यात्फलात्समुत्पन्नः फलभारेण नामितः ।
शाखाप्रशाखाबहुलः स्वयं धात्रीतरुर्महान् ॥३३॥
सर्वेषां चैव वृक्षाणामतिश्रेष्ठः स कीर्तितः ।
स्वर्णनिभफलोपेतो वृक्षो लक्ष्मीप्रियः शुभः ॥३४॥
यथा नारायणभालं प्रियं वृक्षः प्रियस्तथा ।
नारायणस्वरूपोऽयं नारायणेन निर्मितः ॥३५॥
नारायण्याः कृते सोऽयं मुक्तिदो भुक्तिदस्तथा ।
बदरिकाश्रमे सोऽयं प्रथमः प्रकटीकृतः ॥३६॥
तस्माच्च रैवताद्रौ सः समायातस्तरुर्महान् ।
त एते मुक्तिदाः सर्वे वृक्षा आमलकाह्वयाः ॥३७॥
यस्मिन्दिने हरिणाऽयं वृक्षस्तु प्रकटीकृतः ।
सोऽयं तु दिवसोऽप्यासीदेकादशीसमाह्वयः ॥३८॥
तत्र त्वामलकीवृक्षोत्पत्तेरेकादशी तिथिः ।
आमलकीतिनाम्ना वै कृता देवर्षिसत्तमैः ॥३९॥
देवदानवगन्धर्वयक्षराक्षसपन्नगाः ।
किन्नरा मानवा नागाः ऋषयो मुनयोऽपरे ॥४०॥
विद्याध्राः किंपुरुषाश्च योगिनो भूसुरास्तथा ।
यतयो न्यासिनः साध्व्यो योगिन्यो ब्रह्मचर्यगाः ॥४१॥
सुदिव्यदृष्टयोऽप्यन्ये येऽभवन् वेधसा कृताः ।
ते सर्वेऽपि ययुस्त्वत्याश्चर्यं श्रुत्वाऽऽमलद्रुमम् ॥४२॥
साश्चर्या आमलकीद्रुं चिन्तयन्तो ययुश्च ते ।
प्रशंसन्तोऽतिभूषार्हफलान्यामलकानि च ॥४३॥
आजग्मुस्तत्र देवाद्या यत्र धात्री हरिप्रिया ।
तां दृष्ट्वा ते च तत्पत्न्यः परं विस्मयमागताः ॥४४॥

विष्णुः प्राह स्वयं तेभ्यः प्रवरो वैष्णवो ह्ययम् ।
आमलकीद्रुमश्चास्य स्मृतेर्गोदानजं फलम् ॥४५॥
स्पर्शनाद्द्विगुणं पुण्यं त्रिगुणं भक्षणात्तथा ।
आमलकानि वै भाले कर्णयोर्गलहस्तयोः ॥४६॥
येन धृतानि तेषां वै वैकुण्ठे वसतिर्ध्रुवा ।
आमलकं मदुत्पन्नं सर्वपापहरं प्रियम् ॥४७॥
वैष्णवं विष्णुगमकं भक्षणात्पापशोधकम् ।
तस्मात् सर्वप्रयत्नेन सेव्या त्वामलकी जनैः ॥४८॥
एवं वदति श्रीकृष्णे देव्यः प्राहुर्हरिं तदा ।
आभूषणार्थं देवेश देहि फलानि नो विभो ॥४९॥
तदा श्रीहरिणा तत्र फलान्यसंख्यकानि वै ।
संकल्प्य प्रकटीकृत्याऽर्पितानि ताभ्य इत्यपि ॥५०॥
ताभिः कृतानि तत्रैवाऽऽभरणानि बहून्यथ ।
धृतानि भालकण्ठादौ करकर्णादिकेष्वपि ॥५१॥
प्रजह्षुश्चातितमां यथेष्टं जगृहुस्तथा ।
अथ देवादयोऽप्येनं नारायणं जगद्गुरुम् ॥५२॥
प्राहुर्नारायण विष्णो शृणु नोऽभ्यर्थनं प्रभो ।
वृक्षोऽयं रोचतेऽस्मभ्यं दीयतां नोऽधिवासनम् ॥५३॥
यद्वासेन सदाऽस्माकं परं निःश्रेयसं भवेत् ।
हरिः प्राह तदा देवान् योग्यं युष्माभिरर्थितम् ॥५४॥
यद्यत्स्थलं निवासाय रोचते तु विशन्तु तत् ।
इत्याश्रुत्य हरेर्वाक्यं देवा रुच्यनुसारतः ॥५५॥
प्रविष्टा आमलकीद्रौ वसन्ति स्म च नित्यदा ।
तस्य मूले स्थितो विष्णुस्तदूर्ध्वे तु पितामहः ॥५६॥
स्कन्धे च भगवान् रुद्रः शाखासु मुनयः स्थिताः ।
देवास्त्वन्ये प्रशाखासु पर्णेषु वसवः स्थिताः ॥५७॥
पुष्पेषु मरुतः सर्वे फलेषु च प्रजेश्वराः ।
पत्रशलाकास्वर्षयस्त्वचि ब्रह्म स्वयं स्थितम् ॥५८॥
रसेऽवसद्ब्रह्मरसस्तृप्ती रूपे व्यवस्थिता ।
सुगन्धे ब्रह्मसायुज्यं स्पर्शे मुक्तिर्व्यवस्थिता ॥५९॥
मुक्ताः फलानां तन्त्वादौ बीजे श्रीपतिरास्थितः ।
सर्वदेवमयी ह्येषा धात्री बोध्या जगत्प्रसूः ॥६०॥
लक्ष्मीप्रदा रमा सेव्या सम्पत्प्रदाऽतिवल्लभा ।
तस्मात्पूज्यतमा ह्येषा सर्वैर्भक्तिपरायणैः ॥६१॥
फाल्गुने चामलक्यास्तु व्रतवन्तो हि मानवाः ।
गच्छेयुरामलक्यास्तु छायायां भजनाय मे ॥६२॥
व्रतं जागरणं तत्र कुर्याद् भक्तिपुरःसरम् ।
द्वादश्यामपि तत्रैव गत्वा कुर्याच्च पारणाम् ॥६३॥
तत्फलं शाश्वतं प्रोक्तं मत्सम्बन्धात्सुरेश्वराः ।
कार्तिके फाल्गुने चापि ह्यामलकीतरोरधः ॥६४॥
भोजनादि प्रकुर्वीत फलं तस्य तु शाश्वतम् ।
धात्रीफलविलिप्तांगो धात्रीफलविभूषणः ॥६५॥
धात्रीफलकृताहारो मानवो मोक्षमाप्नुयात् ।
धात्रीछायां समाश्रित्य योऽर्चयेच्चक्रधारिणम् ॥६६॥
पुष्पे पुष्पे भवेत्तस्य राजसूयफलं प्रिये ।
हरिं कृष्णं समभ्यर्च्य धात्रीवृक्षतलस्थले ॥६७॥
ब्राह्मणान् भोजयेत् साधून् वैकुण्ठं स व्रजेद् ध्रुवम् ।
धात्रीवृक्षतले दानं कुर्वन् स्वर्गमवाप्नुयात् ॥६८॥
धात्रीफलरसास्वादं गृह्णन् निर्गुणतां व्रजेत् ।
धात्रीफलं प्रभुञ्जन् वै दिव्यमुक्तिं व्रजेद्व्रती ॥६९॥
धात्रीधात्रीति तन्नाम गृणन् याति मृतिं यदि ।
धात्रीव लक्ष्मीरायाति नारायणेन संयुता ॥७०॥
नयत्येनं हरेर्धाम दिव्यं वैकुण्ठमक्षरम् ।
धात्रीसमुद्भवो यत्र दिने जातस्तदीयकम् ॥७१॥
व्रतं चैकादशीरूपं कर्तव्यं मुक्तिमिच्छता ।
धनधान्यप्रदं पुण्यमात्मनस्तुष्टिकारकम् ॥७२॥
अल्पायासं बहुफलं व्रतानां व्रतमुत्तमम् ।
कृतेन येन मनुजो विष्णुलोके महीयते ॥७३॥
फाल्गुने शुक्लपक्षे तु पुष्येण द्वादशी यदि ।
भवेत् सैकादशी पुण्या महापातकनाशिनि ॥७४॥
कर्तव्या व्रतिना सैषा भुक्तिमुक्तिप्रदायिनी ।
दशम्यां त्वेकभुक्तत्वं रात्रौ भूशयनं तथा ॥७५॥
ब्रह्मचारित्वमेवापि रक्षणीयं व्रतार्थिना ।
एकादश्यां ब्राह्मकाले समुत्थायाऽऽन्तरे निजे ॥७६॥
हरिं स्मृत्वा तथा ध्यात्वा स्नानं तीर्थे समाचरेत् ।
हरेरग्रे समागत्य व्रतं संकल्पयेत् ततः ॥७७॥
अद्य देवप्रसादेन करिष्ये निर्जलं व्रतम् ।
तद्वै संपूर्णतां यातु मा विघ्नो मे भवेत्प्रभो ॥७८॥
इत्यभ्यर्थ्याऽऽचमनं वै कुर्यात् सन्ध्यादिकं चरेत् ।
नैत्यकं पूजनं कुर्याद् विष्णोर्नारायणस्य च ॥७९॥
ततो वै मण्डले सर्वतोभद्राख्येऽन्ननिर्मिते ।
मध्ये स्वर्णकृतं ताम्रं घटं वा पञ्चरत्नकम् ॥८०॥
वस्त्रपल्लवसलिलतन्तुफलादियोजितम् ।
स्थापयेच्च तिलस्थालीं न्यस्येत्तत्र सुशोभनाम् ॥८१॥
आमलक्या अधिपतिं गोविन्दं स्वर्णनिर्मितम् ।
चन्द्रवत्या सह पत्न्या स्थापयेत्तत्र पूजयेत् ॥८२॥

आवाहनात् समारभ्य पुष्पाञ्जल्यन्तकं तदा ।
पूजनं तत्र कर्तव्यं व्रतिना दिव्यवस्तुभिः ॥८३॥
षोडशसूपचारैश्च तथाऽन्यैरुपचारकैः ।
नीराजनस्तुतिभोज्यजलताम्बूलवस्तुभिः ॥८४॥
गुलदावदिकापुष्पैः कमलादिभिरित्यपि ।
पूजयेत्तन्दुलैर्देवं कुंकुमाऽगुरुचन्दनैः ॥८५॥
निवेदने विशेषेण कंसारपूरिकादिकम् ।
अर्पयेदतिभक्त्या चाऽऽक्षोडं प्रपूजने फलम् ॥८६॥
तिलपात्रं तथा दद्याद् दाने स्वर्णादिकं धनम् ।
एवं प्रातः समर्चां तु कृत्वा भक्तिं समाचरेत् ॥८७॥
मध्याह्ने तु विशेषेण पूजा धात्रीदिने मता ।
नद्यां तडागे कूपे वा गृहे वा नियतात्मवान् ॥८८॥
शरीरे मृत्तिकां दत्वा ततः स्नानं समाचरेत् ।
सर्वतीर्थानि चायान्तु तत्र स्नानं करोम्यहम् ॥८९॥
एवं स्नात्वा तथा शुद्धे वस्त्रे धृत्वाऽथ पुण्ड्रकम् ।
तिलकं चन्द्रकं कृत्वा गच्छेदामलकीद्रुमम् ॥९०॥
सर्वोपस्करसंयुक्तः पूजोपकरणैर्युतः ।
धात्रीछायां समाश्रित्य संशोध्यापि समन्ततः ॥९१॥
रचयेत् सर्वतोभद्रमण्डलं सप्तधान्यजम् ।
मध्ये तु स्थापयेत्कुंभं स्वर्णजं ताम्रजं च वा ॥९२॥
पञ्चरत्नसमोपेतं दिव्यगन्धाधिवासितम् ।
छत्रोपानद्वस्त्रयुक्तं सितचन्दनचर्चितम् ॥९३॥
स्रङ्मालालम्बितग्रीवं सर्वधूपविधूपितम् ।
दीपमालाकुलं रम्यं सर्वतः सुमनोहरम् ॥९४॥
पात्रं न्यस्येत् तदूर्ध्वे च दिव्यलाजाप्रपूरितम् ।
तिलपात्रे च लाजायाः स्थाल्यां चन्द्रावतीयुतम् ॥९५॥
जामदग्न्यं हरिं राम सपरशुं हिरण्मयम् ।
स्थापयेच्च तथा धात्रीं स्वर्णमूर्तिमयीं शुभाम् ॥९६॥
आवाहनं चासनं च पाद्यमर्घ्यं जलेन च ।
दद्यादाचमनं पंचामृतैः संस्नपयेत् प्रभुम् ॥९७॥
ततस्तीर्थजलैर्देवं स्नापयेन्मार्जनं चरेत् ।
वस्त्रे सन्धारयेद्यज्ञोपवीतं दापयेन्मणिम् ॥९८॥
आभूषणानि सर्वाणि मुकुटादीनि चार्पयेत् ।
सुगन्धचन्दनादीन्यत्तरतैलादि चार्पयेत् ॥९९॥
गुलालकुंकुमाऽबीराऽगुरुद्रव्याऽक्षतैस्तथा ।
पुष्पैर्नानाविधैर्देवं धूपदीपनिवेदनैः ॥१००॥
नीराजनेन विधिना जलताम्बूलसत्फलैः ।
दण्डवत्स्तुतिनमनैरपराधक्षमार्थनैः ॥१०१॥
प्रदक्षिणादक्षिणाभिः सत्पुष्पांजलिना तथा ।
अर्चयेद् देववेशं धात्रीवृक्षतले शुभे ॥१०२॥
ध्यायेत्तु भगवद्रूपं सौम्याभं पादयोः स्वयम् ।
जान्वोस्तु विश्वरूपं च सक्थ्नोः तेजःस्वरूपकम् ॥१०३॥
कट्यां दामोदरं ध्यायेत्पद्मनाभं तथोदरे ।
वक्षसि श्रीवत्सयुतं वामबाहौ तु चक्रिणम् ॥१०४॥
गदिनं दक्षिणे बाहौ कण्ठे वैकुण्ठमित्यपि ।
आस्ये यज्ञमुखं ध्यायेन्नासायां सुखसागरम् ॥१०५॥
अक्ष्णोर्ध्यायेद्वासुदेवं ललाटे वामनं तथा ।
सर्वात्मानं ब्रह्मरन्ध्रे ध्यात्वाऽङ्गानि विचिन्तयेत् ॥१०६॥
नमस्ते देवदेवेश जामदग्न्य नमोऽस्तु ते ।
मया कृतां महापूजां धात्रीफलार्पणान्विताम् ॥१०७॥
गृहाण परमप्रीत्या भुक्तिमुक्तिप्रदो भव ।
इत्यभ्यर्च्य समाप्यैव ततो वै भोजनादिकम् ॥१०८॥
गोभ्यो दद्यात्तथा सूक्ष्मजन्तुभ्योऽपि प्रदापयेत् ।
धात्रीमूले प्रसादश्च समर्प्यो देवभावतः ॥१०९॥
जलं देयं धात्रिकायाः मूले पितृप्रतर्पकम् ।
सूर्याय त्वंजलिं दद्यात् पितॄनुद्दिश्य भावतः ॥११०॥
भूतेभ्यस्तु प्रसादांशं दद्याद् बालेभ्य एव च ।
शेषं प्रसादं त्वनयेत् स्वगृहं रक्षयेच्च तम् ॥१११॥
द्वादश्यामुपभुञ्जीत फलं जलं तु तद्दिने ।
व्रतिना यदि ग्राह्यं स्यान्न व्रतघ्नं हि तद्भवेत् ॥११२॥
एवं कृत्वा तु दानानि मणिस्वर्णमयानि हि ।
आभूषणानि वस्त्राणि विविधान्नानि भूमयः ॥११३॥
गोमहिष्यो गृहोद्यानयानवाहनकानि च ।
अतिश्रेष्ठानि रत्नानि मिष्टान्नानि बहून्यपि ॥११४॥
दद्याद्धात्रीतले तस्य फलं ब्रह्मणि शाश्वतम् ।
स्वर्गं तस्याऽक्षयं चापि निरतिशयमेव च ॥११५॥
एवंविधं व्रतं दानं स्वर्गमोक्षफलप्रदम् ।
सर्वान्सन्तोष्य दानेन जलेनान्नेन वाससा ॥११६॥
नमस्कृत्य हरिं नत्वा दत्त्वा द्विजाय चेतरत् ।
गृहं यायात् परमभक्त्या चापराह्णेपि सर्वथा ॥११७॥
समयं कीर्तनभक्त्या यापयेच्च तथा निशि ।
पूजनं विधिवत् कृत्वा कृत्वा चारार्त्रिकादिकम् ॥११८॥
नैवेद्यं च जलं गन्धं ताम्बूलं प्रसमर्प्य च ।
देवं त्वान्दोलयेत्प्रेङ्खादोलादौ जागरं तथा ॥११९॥
कुर्यान्नृत्यैस्तथा गीतैर्वादित्राद्यैः कथामृतैः ।
धर्माख्यानैस्तथा कृष्णश्रृंगारपदगायनैः ॥१२०॥

गृहे वा मन्दिरे यद्वा धात्रीवृक्षतले व्रती ।
परशुराममूर्तिं च स्थापयित्वा दिने निशि ॥१२१॥
पूजनं च व्रतं जागरणं कुर्याद् द्रुमस्थले ।
वैष्णवामुक्तिदाऽऽख्यानैर्यापयेयुर्निशामिमाम् ॥१२२॥
प्रदक्षिणास्ततः कुर्याद्धात्रीद्रौ विष्णुनामभिः ।
अष्टाधिकशतं चापि ह्यष्टाविंशतिमित्यपि ॥१२३॥
धात्रीवृक्षं हरिं ज्ञात्वा प्रातः पूजनमाचरेत् ।
स्नात्वा नीराजनं कृत्वा पूजयित्वा तु भूसुरम् ॥१२४॥
गुरुं समर्च्य दानार्हं सर्वं तस्मै निवेदयेत् ।
जामदग्न्यं घटं स्वर्णं वस्त्रयुग्ममुपानहौ ॥१२५॥
जामदग्न्यस्वरूपाय गुरवे त्वर्पयेत्ततः ।
वदेदामलकीं स्पृष्ट्वा कृत्वा चैव प्रदक्षिणाम् ॥१२६॥
जामदग्न्यस्वरूपेण प्रीयतां मम केशव ।
दद्याद्भक्तजनेभ्यश्च विष्णुप्रसादमुत्तमम् ॥१२७॥
आश्रितेभ्यो विधानेन दत्वा त्वन्नं जलं तथा ।
विप्रान् बालान् भोजयेच्च साधून् साध्वीश्च बालिकाः ॥१२८॥
ततः स्वयं समश्नीयात् कुटुम्बेन समावृतः ।
एवंकृतेन पुण्यं तु शाश्वतं मोक्षदं भवेत् ॥१२९॥
सर्वतीर्थेषु यत्पुण्यं सर्वदानेषु यत्फलम् ।
सर्वयज्ञेषु यत्पुण्यं तत्फलं लभते व्रती ॥१३०॥
सर्वपापविनिर्मुक्तः परामुक्तिं प्रपद्यते ।
आमलकीव्रतकर्तुर्विष्णुलोको ध्रुवो मतः ॥१३१॥
एतत्ते कथितं सर्वं व्रतानां व्रतमुत्तमम् ।
पुत्रदं जयदं कान्तिप्रदं मोक्षप्रदं तथा ॥१३२॥
अव्याहतगतिस्वर्गप्रदं सिद्धिप्रदं द्रुतम् ।
सर्वसंकल्पफलदं लक्ष्मीप्रसन्नताप्रदम् ॥१३३॥
यानवाहनसद्भूषोपस्कारादिप्रदं शुभम् ।
व्रतमेतद्दुराधर्षं सर्वपापविमोचकम् ॥१३४॥
नार्या लक्ष्मीस्वरूपत्वप्रदं रमात्वदायकम् ।
नरस्य तु चतुर्बाहुविष्णुरूपत्वसम्प्रदम् ॥१३५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने फाल्गुनशुक्लाऽऽमलकीनाम्न्येकादशीव्रतमाहात्म्यं लक्ष्मीललाटभूषार्थम् आमलकीप्राविर्भावः, पृथिव्यां वृक्षरूपस्यैकादशीव्रते पूजनमाहात्म्यं चेत्यादिनिरूपणनामा पञ्चचत्वारिंशदधिकद्विशततमोऽध्यायः ॥२४५॥

श्रीलक्ष्मीरुवाच—

अहो चातिप्रहृष्टं मे चित्तं भवति केशव ।
आमलक्या व्रतं श्रुत्वा धात्रीमाहात्म्यमित्यपि ॥ १ ॥
चैत्रस्य कृष्णपक्षे तु किंनाम्न्येकादशी मता ।
को देवस्तत्र पूज्योऽस्ति का च पत्नी हरेस्तथा ॥ २ ॥
किं फलं च विधानं च दानं पूजां च मे वद ।
श्रुत्वा लक्ष्मीवचः कृष्णो नारायणोह्युवाच ताम् ॥ ३ ॥

श्रीनारायण उवाच—

शृणु लक्ष्मि प्रवक्ष्यामि चैत्रस्य प्रथमे दले ।
एकादशीं पापमोचनिकानाम्नीं महाफलाम् ॥ ४ ॥
कामानां पूरणी सिद्धिदायिनी धर्मवर्धिनी ।
निर्जला तु कृता येन प्राप्नुयाद्ब्रह्म स व्रती ॥ ५ ॥
दशम्यां नक्तभोजी च रात्रौ भूशयनस्तथा ।
ब्रह्मचारी व्रती प्रातश्चानिरुद्धं विचिन्तयेत् ॥ ६ ॥
सुशिलासहितं देवं पापमोचनिकायुतम् ।
पूजायां कुन्दकलिकापुष्पाणि त्वर्पयेत्तथा ॥ ७ ॥
नैवेद्ये सेविकां दद्यादर्घ्ये बदरिकाफलम् ।
तथान्यानि फलान्यत्र मिष्टान्नानि बहून्यपि ॥ ८ ॥
दद्याच्चाऽप्यनिरुद्धाय दाने तु तिलगौर्मता ।
एवं प्रातः समुत्थाय ध्यात्वा हरिं तु मानसे ॥ ९ ॥
स्नात्वा च मानसं चानिरुद्धस्य पूजनं चरेत् ।
अर्पयेन्मानसान्येवोपकरणानि षोडश ॥१०॥
ततो वै बाह्यपूजां तु कुर्याद्वै क्रमशो व्रती ।
आवाहयेदनिरुद्धं सुशीलासहितं प्रभुम् ॥११॥
स्वर्णमूर्तौ समाहूयाऽऽसनं दद्यान्महत्तमम् ।
पाद्यं चार्घ्यं तथा दद्यादाचमनीयकं जलम् ॥१२॥
पंचामृतकृतं स्नानं त्वभिषेकं समर्पयेत् ।
वस्त्रैरंगजलानां च प्रमार्जनमथाऽऽचरेत् ॥१३॥
ततो वस्त्रेऽर्पयेद् धौते बहुमूल्ये ह्युभे शुभे ।
अन्यान्यपि सुसूक्ष्माणि त्वर्पयेत् तृप्तिहेतवे ॥१४॥
यज्ञोपवीतं दद्याच्च मणिरत्नानि चार्पयेत् ।
केशप्रसाधनद्रव्यदन्तिकातैलदर्पणम् ॥१५॥
अर्पयेद्धरये चापि प्रकृष्टाभरणानि च ।
कज्जलं कुंकुमाबीरगुलालाक्षतचन्दनम् ॥१६॥
पुष्पाणि त्वर्पयेच्चापि तुलसीदलमित्यपि ।
फलानि चार्पयेत्तस्मै धूपदीपनिवेदनम् ॥१७॥
भोजनं विविधं दद्याद् दुग्धं च शर्करायुतम् ।
जलं फलं मुखवासं ताम्बूलं गन्धचूर्णकम् ॥१८॥

दद्यात्त्वत्तरतैलादि सुगन्ध्यर्थं तु शार्ङ्गिणे ।
आरात्रिकं ततः कुर्यान्नमः स्तोत्रं क्षमापनम् ॥१९॥
प्रदक्षिणं दण्डवच्च पुष्पांजलिं च दक्षिणाम् ।
दद्याच्च व्रतकरणायार्थयेत्परमेश्वरम् ॥२०॥
अद्यैकादशिका नाम्ना पापमोचनकारिणी ।
मया व्रताय मनसा वृतास्ति परमेश्वर ॥२१॥
अस्याः कृतं व्रतं मया निर्विघ्नं स्याज्जनार्दन ।
प्रसन्नो भव देवेश सुशीलाधिप केशव ॥२२॥
इति वै पूजनं चाथ समाप्य सप्तधान्यकम् ।
मण्डलं सर्वतोभद्रं कारयेत्स्थापयेत्ततः ॥२३॥
घटं कनकजं किम्वा ताम्रजं पञ्चपल्लवैः ।
रत्नैः पञ्चविधैश्चापि जलवस्त्रादिभिर्युतम् ॥२४॥
तस्योपरि शुभं पात्रं तिलैः संभृतमर्पयेत् ।
तत्र मूर्तिं सुशीलायाश्चानिरुद्धस्य वै प्रभोः ॥२५॥
स्थापयित्वाऽर्चयेत् षोडशोपचारैर्व्रती ततः ।
नीराजयेत्तु विधिना नमस्कारादि चाचरेत् ॥२६॥
पर्यंकं गेन्दुकं गुप्तदोरकं शयनाय च ।
शिरस्कं पार्श्वके चापि छत्रं चोपानहौ शुभौ ॥२७॥
स्थालीं सकलशां चापि वटिकां व्यजनं तथा ।
दर्पणं चामरे यष्टिं पादुके नक्तकं शुभम् ॥२८॥
शाटीं च प्रच्छदपटीं कंचुकीं कुचलीं तथा ।
कर्पटिकां सचन्द्रां च घर्घरीं चेति वै ददेत् ॥२९॥
घटं यज्ञोपवीतं च शीतसलिलपूरितम् ।
चन्दनं च सुगन्धं चानिरुद्धायार्पयेद्व्रती ॥३०॥
फलानि चाम्लमिष्टानि लड्डुकान् शर्करान्वितान् ।
चार्पयेदनिरुद्धाय सर्वतोभद्रमण्डले ॥३१॥
घृतदीपमखण्डं तु कारयेन्निकटे व्रती ।
एवं पूजां तदा कृत्वा स्वकार्यं स समाचरेत् ॥३२॥
मध्याह्ने तु व्रती स्नात्वा पूजयित्वा विधानतः ।
नैवेद्यं विविधं मिष्टं जलं च हरयेऽर्पयेत् ॥३३॥
फलं ताम्बुलमेलां च लवंगं मुखवासनम् ।
फलं पूगीफलं चापि व्रती श्रीहरयेऽर्पयेत् ॥३४॥
सायं च कदलीस्तंभैर्मण्डपं कारयेच्छुभम् ।
सवितानं सकलशं हरित्पत्रादितोरणम् ॥३५॥
मध्ये तु वेदिकां कुर्यात् दोलां च बन्धयेत्तथा ।
स्थापयित्वाऽत्र मुरलीधरं त्वान्दोलयेद् व्रती ॥३६॥
नीराजनं तथा धूपं दीपं नैवेद्यमर्चनम् ।
जलपानं मुखवासं कारयेत् कीर्तयेद्गुणान् ॥३७॥
रात्रौ जागरणं नृत्यगीतवादित्रसंयुतम् ।
कुर्यात्प्रातः पूजनं च तथा दानानि दापयेत् ॥३८॥
यथाशक्ति यथावस्तु व्रतांगानि प्रपूरयेत् ।
सर्वं वै गुरवे दद्यादेवं समापयेद् व्रतम् ॥३९॥
साधून्साध्वीस्तथा विप्रान्दीनान्धकृपणादिकान् ।
बालांश्च भोजयेद्भक्त्या विविधान्नानि वै व्रती ॥४०॥
ततः स्वीयान् भोजयित्वा बालिकास्त्वथ पारणाम् ।
स्वयं कुर्याद् व्रती भक्तो भुक्तिं मुक्तिं स वै व्रजेत् ॥४१॥
शृण्वाश्चर्यकथां लक्ष्मि ! प्राग्वृत्तां पापनाशिनीम् ।
पुरा चैत्ररथोद्याने वनमध्ये हिमालये ॥४२॥
हरिति शाद्वले दिव्ये फलपुष्पभरद्रुमे ।
वनदेवीश्रिते देशे ह्यप्सरोगणसेविते ॥४३॥
वसन्तसमयेऽरण्ये षट्पदैरभिनादिते ।
कोकिलाकूजिते रम्ये मनोभवसुपुष्टिदे ॥४४॥
गन्धर्वकन्यका वाद्यैः रमन्ते सह किंकरैः ।
महेन्द्राद्याश्च सुरपाः क्रीडन्ति त्रिदिवौकसः ॥४५॥
ऋषयो मुनयः सर्वे तपन्ति बहुलं तपः ।
साधवो योगिनः साध्व्यः सत्यो योगिन्यइत्यपि ॥४६॥
तपन्ति ब्रह्मलाभार्थं यत्र शीलव्रतस्थिताः ।
नापरं सुखदं तस्माच्चैत्ररथाद् वनस्थलम् ॥४७॥
त्रिलोकवासिनस्तत्र परिश्रमविनुत्तये ।
सायं नित्यं समायान्ति यान्ति च स्वस्वकालयान् ॥४८॥
मञ्जुघोषाऽप्सरा तत्र रमते वनवासिनी ।
मुनीनां सेवनं चापि प्रेम्णा करोत्यहर्निशम् ॥४९॥
दासीव किंकरीवेयं मोक्षेच्छया तु सेवते ।
नतु निकृष्टमनसा किन्तु शुद्धेन चेतसा ॥५०॥
सेवते स्म मुनिं बालं युवानं वृद्धमित्यपि ।
मुनिपत्नीर्बालिका वा किंकरीव प्रसेवते ॥५१॥
एवं नित्यं मुनीनामाश्रमेषु बहुभावतः ।
वासं करोति सा मञ्जुघोषाऽथैकदिने शुभे ॥५२॥
मेधाविनं नाम ऋषिं क्रोशमात्रवने स्थितम् ।
तपन्तं ब्रह्मचर्यस्थं यौवनं पुष्टिशालिनम् ॥५३॥
सुरूपं सुघटं स्वर्णतन्तुसमजटान्वितम् ।
प्रोद्भिन्नश्मश्रुसद्रेखं रक्तौष्ठं वर्तुलाननम् ॥५४॥
पद्मपत्रनिभनेत्रं स्थलपद्मशरीरकम् ।
प्रसन्नतानिधिं कान्तिपरिधिव्याप्तकंधरम् ॥५५॥
सूक्ष्मचन्द्रनिभनखं स्वस्या अपि सुरूपिणम् ।
श्रुत्वा राजसभावेन सेवनार्थं गताऽन्तिकम् ॥५६॥

प्रथमं तु भयात्तस्य स्थिता त्वाश्रमसन्निधौ ।
किञ्चिद्दूरमुषित्वैनं प्रसादयितुं चक्रमे ॥५७॥
जगौ सा मधुरं साधु मार्जयामास चाश्रमम् ।
विपञ्चिकां तदा रम्यां वादयामास चादरात् ॥५८॥
सेवनार्थं तु सा कुब्ज्यां जगाम च त्वरान्विता ।
शनैः शनैः ऋषिं वीक्ष्य परपर्श तापसी यथा ॥५९॥
पुष्पसुगन्धकस्तूरीकेसरचन्दनार्चिता ।
सेवाबुद्ध्या हावभावान् विलासान् समदर्शयत् ॥६०॥
मेधाविनस्तु निकटे शनैर्ननर्त शोभनम् ।
नमश्चकार हस्ताभ्यां नेत्राभ्यां स्वीकृतिं ददौ ॥६१॥
न्यवेदयत्सुभक्तां स्वां करे जग्राह तमृषिम् ।
मानसे निश्चिकायापि सेवालाभो भविष्यति ॥६२॥
युवानं सुरूपतेजस्विनं प्राप्याऽतिहर्षिता ।
चकिता मानसे भावे त्वाकृष्टा यूनि सा मुनौ ॥६३॥
राजसी रजसा व्याप्ताऽभवदालिंगने मुनेः ।
कृताभ्यासे पथि प्रायस्तादृशीनां व्रजेन्मनः ॥६४॥
तस्याः शरीरे संवासमकरोद्वै मनोभवः ।
एवमेव जयाकांक्षी मेधाविन्यकरोत् स्थलम् ॥६५॥
उभयोः कामनाव्याप्तौ देहौ जातौ सुविकृतौ ।
मनसी चाऽनंगवेगाविष्टे जाते पुनः पुनः ॥६६॥
तदा मेधाविना तत्र मेधया तु विचारितम् ।
नार्याः प्रसंगजः कामः कोऽयं मां बाधतेऽधुना ॥६७॥
क्षमां धैर्यं समालम्ब्य गच्छाम्यन्यद्वनं यतः ।
रक्षणं मे तपसः स्यात् कामवेगोऽपि यास्यति ॥६८॥
विचार्यैवं स मेधावी शीघ्रं स्थानात् स्थलान्तरम् ।
यावद्गच्छति विप्रेन्द्रस्तावत्कामोऽपि वेगवान् ॥६९॥
शिवभक्तं विजेतुं वै वने बहिः सुमूर्तिमान् ।
अभवच्च प्रयन्तं संचकार सर्वतोमुखम् ॥७०॥
कृत्वा भ्रुवं धनुष्कोटिं गुणं कृत्वा कटाक्षकम् ।
मार्गणे नयने कृत्वा पक्ष्मयुक्ते यथाक्रमम् ॥७१॥
कुचौ कृत्वा परकुटौ मोहनायोपचक्रमे ।
मञ्जुघोषाऽभवत्तस्य कामस्यात्र वरूथिनी ॥७२॥
कामेन पञ्चबाणास्तु ऋषेरुपरि चाहिताः ।
चमत्कृतं तु प्रथमं द्वितीयं जाग्रतात्मकम् ॥७३॥
तृतीयं रसवाहाख्यं चतुर्थं मोहनात्मकम् ।
पंचमं मिथुनीभावगमकं स मुमोच ह ॥७४॥
मेधावी तद्वशं नीतो युयुजे मञ्जुघोषया ।
मेधाविनं मुनिं स्पृष्ट्वा सापि कामेन पीडिता ॥७५॥

यौवनोद्भिन्नदेहेन युयुजे ऋषिणा तदा ।
गाढमालिंग्य तौ तत्र राजेते स्मरयोजितौ ॥७६॥
सितोपवीतसंयुक्तो दृष्टः स्मर इवापरः ।
मञ्जुघोषायुतो विप्रो राजते द्यौर्युतः शशी ॥७७॥
सुरतस्य वशं दाता मन्दं मन्दं जहास सा ।
रणद्वलयहस्ताभ्यामाश्लिक्षत् तं मुनिं हृदि ॥७८॥
प्रेमकण्ठस्वरं सूक्ष्मं लीनं कृत्वा तु मूकवत् ।
नेत्रे प्रमील्य चौष्ठाभ्यामास्वादयदृषेर्मुखम् ॥७९॥
स्पर्शमग्नाऽऽनन्दमग्ना शान्तनूपुरमेखला ।
स्पर्शैर्भावैस्तथा नेत्रैर्वर्ष्मणा सस्वजे मुनिम् ॥८०॥
वीणा तु पतिता भूमौ पतिता स्वं च सस्वजे ।
बलादिव लता वृक्षं वातवेगेन कम्पितम् ॥८१॥
सोपि रेमे तया सार्धं कामभेदैरनेकशः ।
शिवतत्त्वं तु विस्मृत्य कामतत्त्ववशंगतः ॥८२॥
तपसा साधिते सौधे सोद्याने सविमानके ।
वाहने चोपकरणे भक्ष्यभोज्यसुलेह्यके ॥८३॥
धारणेऽलंकरणे चोत्सवे समानके ऋतौ ।
विविधे गृहयोग्ये च भोग्ये तत्साधने सति ॥८४॥
निरतिशयतां प्राप्ते तृप्तिं लेभे तया सह ।
पुनस्तृष्णां पुनस्तृप्तिं पुनस्तृष्णां जगाम सः ॥८५॥
तृष्णाया नैव चान्तोऽस्ति भुक्त्वा भुक्त्वा विवर्धते ।
एवं तारुण्यभरया तृष्णया तरुणोऽपि सः ॥८६॥
न निशां न दिनं सोपि रमञ्जानाति कामुकः ।
दीर्घः कालो गतो रममाणस्याचारलोपतः ॥८७॥
नवशतानि वर्षाणां गतान्यस्य तया सह ।
सा रेमे मुनिना तस्य निशार्धमिव चाऽभवत् ॥८८॥
मञ्जुघोषा देवलोके गमनायोपचक्रमे ।
सन्नद्धा तं प्रत्युवाच सतृष्णं मुनिसत्तमम् ॥८९॥
आज्ञा मे दीयतां विप्र स्वर्लोकगमनाय वै ।
मेधावी तु समाकर्ण्य तामुवाच विमोहितः ॥९०॥
यावत्प्रभातसन्ध्या स्यात् तावत्तिष्ठ ममान्तिके ।
श्रुत्वा विचारयामास मञ्जुघोषा हृदन्तरे ॥९१॥
अहो कामेन वैक्लव्यं जानात्ययं न वत्सरान् ।
निशार्धमात्रं जानाति काममूर्छापराजितः ॥९२॥
प्रत्याख्याने शापभीतिसमुद्विग्ना बभूव सा ।
पुनर्वै रमयामास तमृषिं बहुवत्सरान् ॥९३॥
वर्षाणां पञ्चपञ्चाशन्नव मासान् दिनत्रयम् ।
सा तं पुनरुवाचाथ तथा काले गते मुनिम् ॥९४॥

आदेशो दीयतां ब्रह्मन् गन्तव्यं स्वगृहं मया ।
मेधाव्युवाच कामान्धः कालभानविवर्जितः ॥९५॥
निशान्तसमयस्त्वास्ते श्रूयतां वचनं मम ।
क्षणं मां रमयित्वा त्वं गन्तुमर्हसि शोभने ॥९६॥
त्वां विना मे क्षणश्चापि युगतुल्यो भविष्यति ।
त्वया सार्धं निशामात्रं व्यतीतं तिष्ठ मे चिरम् ॥९७॥
पुनः शापप्रभीता सा रमयामास तमृषिम् ।
वर्षाणां पञ्चचत्वारिंशदित्यधिकमावतः ॥९८॥
पुनः प्राह मुनिं नम्रा ब्रह्मँस्तृप्तोऽसि वा नहि ।
आदेशो दीयतां विप्र गन्तव्यं स्वगृहं मया ॥९९॥
मेधाव्युवाच तां स्निग्धां रक्षितुं स्वान्तिके तदा ।
प्रातःकालोऽधुना त्वास्ते श्रूयतां वचनं मम ॥१००॥
सर्वदा तिष्ठ मे सौधे मां च रमय कामतः ।
एका निशा स्थिता चात्र का मे तृप्तिर्भवेद् वद ॥१०१॥
सन्ध्यां यावच्च कुर्वेऽहं तावत्त्वं वै स्थिरा भव ।
इति श्रुत्वा मुनेर्वाक्यं स्मितं कृत्वा ह्युवाच तम् ॥१०२॥
कियत्प्रमाणा विप्रेन्द्र तव सन्ध्या गताऽधुना ।
कतिवत्सरकालस्ते गतश्चेति विचार्यताम् ॥१०३॥
एकां सन्ध्यां निशां वेत्सि का ते सुप्तिर्युगात्मिका ।
इति तस्या वचः श्रुत्वा प्रोद्भिन्नान्तरलोचनः ॥१०४॥
तां पृष्ट्वा गतकालस्य मेधावी मानमाचरत् ।
नवनवत्यधिकानि नवशतानि संख्यया ॥१०५॥
जातान्येव गतान्येव वर्षाणि प्रियया सह ।
सुविदितैकोनदशशतान्येकनिशामुखे ॥१०६॥
तथापि तृष्णया व्याप्त इति स्वं धिक् चकार सः ।
चुक्रोध तस्यै कामाय स्वस्मै च यौवनाय च ॥१०७॥
मोक्षहानिं तपोहानिं चात्महानिं विलोक्य च ।
नेत्राभ्यां विस्फुलिंगान्स मुमोचातीव कोपतः ॥१०८॥
तपःक्षयकरीं नारीं मृत्युरूपां च राक्षसीम् ।
आत्ममुक्तिरोधकर्त्रीं कष्टाप्तपुण्यभक्षिणीम् ॥१०९॥
हानिदां तां सकम्पौष्ठो मुनिरुवाच वेगतः ।
धिक् त्वां प्रिये दुराचारे कुलटे कामनाप्रिये ॥११०॥
सेवामिषेण मुनिषु स्वैरिणि पुण्यनाशिनि ।
तपोलोपकरि याम्यमार्गसंसर्गदायिनि ॥१११॥
पिशाची भव दुष्टे त्वं कामच्छिद्रप्रदायिनि ! ।
मेधावी तां शशापैवं सापि नम्रा ह्युवाच तम् ॥११२॥
नैकस्या मे हि दोषोऽस्ति युवा त्वं सुविचारय ।
द्वयोः कार्ये जये प्राप्ते सबलः परिपूज्यते ॥११३॥
पराजये तु सम्प्राप्ते निर्बलस्तत्र हन्यते ।
मैवं भवतु मेधाविन् ! हानिस्ते नैव केवला ॥११४॥
ममापि स्वपरित्यागस्त्वया त्यक्ता सधिकृता ।
आत्महानिर्लोकहानिर्यशोहानिस्तु मे तथा ॥११५॥
शापं दातुं समर्थाऽस्मि यथा वदसि तत्तथा ।
तथापि प्रणयिकान्ते नैवं कार्यं स्त्रिया क्वचित् ॥११६॥
क्षमा दत्ता हि नारीभ्यो ब्रह्मणा परमेष्ठिना ।
अदोषा अपि पत्युस्ताः सहन्ते क्रौर्यमव्यथाः ॥११७॥
प्रसादं कुरु तस्मात् त्वं शापस्यानुग्रहं कुरु ।
सतां संगः सुखकरः साप्तपदीन एव सः ॥११८॥
त्वया सह मया विप्र योषिता पत्नीरूपया ।
नीताश्च सेवया शश्वत् कान्त सहस्रवत्सराः ॥११९॥
एतस्मात् कारणात्स्वामिन् त्यज क्रौर्यं प्रसीद च ।
इति तथ्यं प्रियावाक्यं दोषं स्वीयं च चिन्तयन् ॥१२०॥
प्रह्वीभावं तथा पत्न्या विलोक्योवाच तां मुनिः ।
शृणु मे वचनं भद्रे शापानुग्रहकारकम् ॥१२१॥
किं करोमि त्वया साकं क्षयं नीतं महातपः ।
गतं तत्तु गतं त्वेव नष्टं नायाति वै पुनः ॥१२२॥
पुनः संपादयिष्यामि तवापि शुभमस्तु वै ।
चैत्रस्य कृष्णपक्षे तु भवत्येकादशी शुभा ॥१२३॥
पापमोचनिका नाम सर्वशापक्षयंकरी ।
तस्या व्रते कृते सुभ्रु पिशाचीत्वं वियास्यति ॥१२४॥
श्रुत्वैतन्मञ्जुघोषा सा ययौ वनान्तरं तदा ।
पिशाची तु बभूवेयं यावच्चैत्रो न संगतः ॥१२५॥
प्राप्ते चैत्रे मञ्जुघोषा व्रतं जातिस्मरा तदा ।
चकार विधिना चैत्रकृष्णैकादशिकादिने ॥१२६॥
पुपूज परया भक्त्या श्रीहरिं मानसे हि सा ।
रात्रौ जागरणं कृत्वा प्रातः कृत्यं विधाय च ॥१२७॥
पिशाचीत्वाद्विनिर्मुक्ता पापमोचनिकाबलात् ।
दिव्यरूपधरा सा वै गता स्वर्गे स्वके गृहे ॥१२८॥
मेधाव्यपि तया त्यक्तो जगाम पितुराश्रमम् ।
च्यवनस्य ऋषेर्दिव्यं तपस्तेजोऽतिशोभितम् ॥१२९॥
निस्तेजस्कं चिरं यान्तं विलोक्य च्यवनः पिता ।
प्राहैतत् किं कृतं पुत्र त्वया पुण्यक्षयः कृतः ॥१३०॥
कथं न दृश्यते तेजस्तपोबाहुल्यसंभवम् ।
मेधावी प्राह ताताऽस्मिन्वने तु तपसा मया ॥१३१॥
प्राप्ताऽप्सरा तया सार्धं पातकं वै कृतं बहु ।
रमिता बहुकालं सा तपो नष्टं ममाऽद्भुतम् ॥१३२॥

प्रायश्चित्तं ब्रूहि तात येन पापक्षयो भवेत्।
पिता प्राह तदा पुत्रं व्रतं वच्मि निबोध मे ॥१३३॥
चैत्रस्य त्वसिते पक्षे नाम्ना तु पापमोचनी।
एकादशी मता ह्यस्या व्रते तु विधितः कृते ॥१३४॥
पापराशिः क्षयं यायान्मुक्तिं चान्ते व्रजेद् व्रती।
इतिश्रुत्वा पितुर्वाक्यं कृतं तेन व्रतोत्तमम् ॥१३५॥
गतं पापं क्षयं तस्य तपोवृद्धिर्बभूव च।
तेजो व्याप्तोऽभवच्छीघ्रं पापमोचनिकाव्रतात् ॥१३६॥
यथापूर्वं तपोयुक्तो ह्यभूद् बभूव वै तथा।
पापमोचनिकां लक्ष्मि! ये कुर्वन्ति जना भुवि ॥१३७॥
तेषां पापं तु यत्किंचत् सर्वं विलयतां व्रजेत्।
वाजपेयसहस्रस्य फलं तस्यापि जायते ॥१३८॥
भुक्तिर्मुक्तिर्महामुक्तिः सर्वं चैकव्रतेन हि।
प्राप्येतैतादृशी शक्ता फलदाने त्वियं तिथिः ॥१३९॥
ब्रह्महा हेमहारी च सुरापो गुरुतल्पगः।
व्रतस्य चास्य करणान्मुक्तो भवति तद्व्रती ॥१४०॥
पठनाच्छ्रवणाच्चापि स्मरणात्कीर्तनादपि।
बहुपुण्यप्रदं चैतद् गोसहस्रफलप्रदम् ॥१४१॥
कर्तव्यं सर्वथा लक्ष्मि शापपापनिवृत्तये।
नातः परतरं भुक्तिमुक्तिदं सचराचरे ॥१४२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने चैत्रकृष्णपापमोचन्येकादशीव्रतमाहात्म्यं मेधाविना तपस्विना सहस्रवत्सरं भुक्ताया मञ्जुघोषाख्याऽप्सरायाः ऋषिशापात्पिशाचीत्वमनुग्रहाद् व्रतकरणान् मुक्तिश्चेति निरूपणनामा षट्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥२४६॥

**श्रीलक्ष्मीरुवाच—**

भगवन्तं विना नात्र लोके तूद्धारकः परः।
विना च सात्वतान् लोके न परः पावनोऽपरः ॥ १ ॥
साधून् विना च जीवानां नाऽपरः पापनाशकः।
व्रतं विना तथा लोके नान्यद्भुक्तिप्रमुक्तिदम् ॥ २ ॥
एकादशीं विना नान्यच्छापपापप्रणाशकम्।
स्वर्गदं सिद्धिदं द्रव्यपुत्रदं मोक्षदं तथा ॥ ३ ॥
भगवन् श्रोतुमिच्छामि कथयस्व ममाग्रतः।
चैत्रस्य शुक्लपक्षीया किंनाम्न्येकादशी मता ॥ ४ ॥

**श्रीनारायण उवाच—**

चैत्रस्य शुक्लपक्षे तु कामदा नाम नामतः।
एकादशी पुण्यतमा पापेन्धनदवानला ॥ ५ ॥
विमलाख्याऽपि सैवोक्ता सर्ववाञ्छितदायिनी।
रमया सहितो विष्णुरस्याः पतिर्हि पूज्यते ॥ ६ ॥
षोडशोपचारकैस्तु यथावित्तं यथाविधि।
फलं चार्घ्ये चिर्भटादि चूतपुष्पाणि पूजने ॥ ७ ॥
नैवेद्ये सक्तवो लड्डुकाश्च पक्वान्नमित्यपि।
अर्पणीयं विशेषेण व्रतिना फलसिद्धये ॥ ८ ॥
दशम्यामेकभक्तं वा व्रती नक्तं व्रतं चरेत्।
रात्रौ भूशयनं कुर्याद् रक्षयेद् ब्रह्मचारिताम् ॥ ९ ॥
प्रातस्त्वेकादशीकाले समुत्थाय हरिं स्मरेत्।
ध्यायेच्च श्रीहरेः रूपं स्नात्वा देवं प्रपूजयेत् ॥१०॥
स्नापयेदमृतैः पञ्चभिर्जलैस्तीर्थसंभवैः।
अर्पयेदतिमूल्यानि वस्त्राणि भूषणानि च ॥११॥
श्रृंगारयेद् वस्तुभिः श्रांगारिकैश्च सुगन्धिभिः।
पुष्पैर्हारैस्तथा धूपदीपनैवेद्यसत्फलैः ॥१२॥
जलपानमुखवासताम्बूलैलालवंगकैः।
आरार्त्रिकैः स्तुतिप्रदक्षिणाद्यैश्च प्रसादयेत् ॥१३॥
क्षमापयेत् त्ववरान् वै ततश्च स्तवनं चरेत्।
एकादश्या व्रतं कृष्ण करोमि फलसिद्धये ॥१४॥
कृपया तव तत्पूर्णं भवत्वविघ्नकं मम।
इत्यभ्यर्थ्य ततो धान्यैः सर्वतोभद्रमण्डलम् ॥१५॥
कृत्वा स्वर्णघटं तत्र यद्वा ताम्रघटं शुभम्।
पञ्चरत्नैर्नवपत्रैर्जलैर्वस्त्रेण चन्दनैः ॥१६॥
अक्षतैश्च फलैः पुष्पैः पूजनार्थं न्यधापयेत्।
तिलपात्रं घटे तत्र तत्र मूर्तिं हरेस्तथा ॥१७॥
रमायाः कामदायाश्च स्थापयेद् विधिना व्रती।
आवाहनादिमन्त्रैः संपूजयेत्स्नापयेज्जलैः ॥१८॥
पूजाद्रव्यैः पूजयेच्च वस्त्राभूषणहेतिभिः।
श्रृंगारयेद्धरिं विष्णुं रमां शाट्यादिभिस्तथा ॥१९॥
भूषाश्रृंगारकैर्द्रव्यैर्विविधैरभिभूषयेत्।
यथा विष्णुं तथा लक्ष्मीं भूषयेद् बहुभूषणैः ॥२०॥
केशान्प्रसाधयेत्तैलसुगन्धिद्रववस्तुभिः।
धम्मिल्लं रचयेत्तत्र भूषणं स्तबकं तथा ॥२१॥
चतुःसरं वा द्विसरं केशग्रन्थनमाचरेत्।
सूत्रं पुष्पाणि चिपिटं स्वर्णश्रृंखलिकां तथा ॥२२॥

त्रिसरं ग्रन्थनं सर्वं कारयेत्तु चतुर्विधम् ।
अग्रे कुर्यात्तु कबरीं सिन्दूरं दापयेच्छुभम् ॥२३॥
ललाटे केसरिचन्दनद्रवैस्तिलकं तथा ।
मध्ये कुंकुमबिन्द्वीं च भाले कुर्यात् सुशोभिताम् ॥२४॥
यद्वा मध्ये तिलबिन्द्वीः पञ्च सूक्ष्माः समाचरेत् ।
गण्डयोः पुण्ड्रपार्श्वे च पत्रिकाविरलांकनाः ॥२५॥
मध्ये सूक्ष्मातिसूक्ष्माभिर्बिन्द्विकाभिः प्रपूरिताः ।
रचयेद्रंजयेद्भालं लक्ष्मीवासमिवाऽपरम् ॥२६॥
नेत्रयोः कज्जलं दद्यात् सुवर्णस्य शलाकया ।
पाण्डुरारक्तगन्धाढ्यचूर्णं दद्यान्मुखोपरि ॥२७॥
रूपलावण्यसमभिव्यञ्जनार्थं समस्तरम् ।
कपोले टिक्कीं कुर्यात् रक्तवर्णां सुशोभिताम् ॥२८॥
चिबुकेऽपि तथा कुर्याद् बिन्द्वीं स्वल्पां सुरक्तकाम् ।
ओष्ठयोः स्थलपद्मस्य रूपप्राकट्यहेतवे ॥२९॥
रंगं दद्यात्तथारूपं नासिकायां तु नत्थिकाम् ।
कर्णयोः कर्णपूरादीन् कुण्डले शृंखलेऽर्पयेत् ॥३०॥
सुवर्णजे त्वैरनेऽपि सद्रत्नाढ्ये समर्पयेत् ।
कण्ठे हारान्स्वर्णपौष्पान् कौस्तुभादिसुहीरकान् ॥३१॥
भुजयोः कटके रत्नजडिते समधारयेत् ।
प्रकोष्ठयोः शृंखले च बंगिनीश्च सुवर्णजाः ॥३२॥
दद्याचांगुलिषु स्वर्णोर्मिका रत्नादियोजिताः ।
हस्ततले रंजनार्हद्रव्येण रंजयेन्नखान् ॥३३॥
वक्षसि त्वर्पयेद्दिव्यं चन्दनं स्तनयोरपि ।
स्वर्णहारान्पुष्पहारान् कंचुकीं स्तनबन्धनीम् ॥३४॥
कट्यां समर्पयेद् रम्यां रशनां स्वर्णनिर्मिताम् ।
शाटिकां बहुमूल्यां च प्रान्तस्वर्णसुतारकाम् ॥३५॥
त्रिरंगीं नेत्रसुखदां सुस्पर्शां धारयेत्तथा ।
घर्घरीं सूक्ष्मवस्त्रीयां रंगरञ्जितचित्रिताम् ॥३६॥
प्रान्तरंगान्तरव्याप्तसुभंगीभिः सुदर्शनाम् ।
दद्यात्तु धारणार्थं वै नक्तकं पेशलं करे ॥३७॥
कमलाकृति सौवर्णं पात्रं सद्व्यजनं तथा ।
चामरे चापि सुभगे छत्रं चोपानहौ तथा ॥३८॥
पादप्रकोष्ठभूषाश्च शृंखलाः किंकिणीयुताः ।
कड्डलिकाः काम्बिकाश्चांगुल्यर्थं करटौंस्तथा ॥३९॥
दत्वा संपूजयेल्लक्ष्मीं हरिं त्वेकादशीं रमाम् ।
एकादश्यै तथा दद्याद् रमावच्चोपभूषणम् ॥४०॥
यथा रमा तथा त्वेकादशी पत्नी हरेः प्रिया ।
सर्वोपकरणं सर्वं श्रांगारिकं सुवस्तुकम् ॥४१॥
सर्वालंकरणं चापि दद्यात्तस्यै फलाप्तये ।
एवं तु पूजनं कृत्वा चन्दनादि सुगन्धकम् ॥४२॥
धूपदीपसुनैवेद्यजलताम्बूलपानकम् ।
दद्याद् देवाय देव्यै च चरेन्नीराजनं ततः ॥४३॥
प्रदक्षिणं क्षमायाच्ञां स्तुतिं नमस्क्रियां ततः ।
पुष्पांजलिं ततो दद्यादेवं प्रातर्विधिं व्रती ॥४४॥
सर्वतोभद्रमध्यस्थहरिमूर्तौ विधाय च ।
ततो गच्छेद् गृहं नैजं भजनार्थं जपं चरेत् ॥४५॥
मध्याह्नेपि तथा पूजां कृत्वा नैवेद्यमर्पयेत् ।
जलं ताम्बूलमन्यच्च सर्वं दद्यात्तु पूर्ववत् ॥४६॥
सायं चापि तथा पूजां कुर्यादारार्त्रिकादिकम् ।
सर्वं सोत्सवमर्घ्यं च व्रतं कुर्यात् सुपुण्यदम् ॥४७॥
रात्रौ तु मण्डपं कुर्यात् कदालीस्तम्भशोभितम् ।
पल्लवैस्तोरणं कुर्याद् दोलां वै बन्धयेत् द्रुमे ॥४८॥
आन्दोलयेद्धरिं विष्णुं विमलाकामदायुतम् ।
नैवेद्यं जलपानादि दद्याद् देवाय स व्रती ॥४९॥
रात्रौ तु जागरं कुर्याद् नृत्यगीतमहोत्सवैः ।
हरिं प्रसादयेत् सर्वार्पणेन विधिना व्रती ॥५०॥
प्रातः स्नात्वा हरिं ध्यात्वा पूजयित्वा जनार्दनम् ।
दानं च विविधं दत्वा नीराजयित्वा माधवम् ॥५१॥
आर्द्रवस्त्रं भ्रामयित्वा शंखेनोत्तार्य वै जलम् ।
तुलसीदलसंयुक्तं मिष्टान्नं व्यंजनादिकम् ॥५२॥
भोजयित्वा हरिं विप्रान् साधून् साध्वीश्च बालकान् ।
विसर्जयित्वा कुर्याच्च व्रती वै पारणां ततः ॥५३॥
एवं कृतेन विधिना पुण्यं भवति शाश्वतम् ।
ऐहिकं परलोकोत्थं यदिच्छेत् तद्भवेद् ध्रुवम् ॥५४॥
शृणु लक्ष्मि! कथां रम्यां गन्धर्वद्वयमुक्तिदाम् ।
पुरा नागपुरे रम्ये हेमहर्म्यान्विते शुभे ॥५५॥
गन्धर्वाः पुण्डरीकाख्यज्ञातयः स्म वसन्ति हि ।
मदोद्धता महाक्रूरा महामदबलान्विताः ॥५६॥
गन्धर्वाः किन्नरा यक्षा विद्याध्राः किंजनास्तथा ।
सत्पर्योऽप्सरसो देव्यः कुमार्यः स्म वसन्ति च ॥५७॥
तस्मिन्पुरे नृपः पुण्डरीको राज्यं चकार ह ।
नाम्ना पौंड्र इतिख्यातस्तेनोत्सवे सुयोजिते ॥५८॥
गन्धर्वाः किन्नराः सूता मागधा बन्दिनस्तथा ।
किंपुरुषा गायकाश्च व्याख्यातारोऽपि चारणाः ॥५९॥
श्रोत्रीयवर्गा विप्राश्च राजसा दैवयोनयः ।
तत्रोत्सवे समायता गान्धर्ववेदपण्डिताः ॥६०॥

नृत्यं प्रवर्तते तत्र समाजे रंगमण्डपे ।
गायन्ति स्म स्वरधना वादयन्ति च वादकाः ॥६१॥
नृत्यन्ति नर्तकीजनाः पश्यन्ति चेतरे जनाः ।
पातालान्नागलोकाच्च कामरूपा भुजंगमाः ॥६२॥
दैतेया दानवाश्चापि समाजग्मुस्तदुत्सवे ।
तेऽपि देवसमा रूपे भूत्वोत्सवे व्यवस्थिताः ॥६३॥
अन्येषां गायकानां च नृत्ये गीते व्यवस्थिते ।
नर्तकीनां तथा नृत्ये गीते निर्वर्तिते ततः ॥६४॥
पौंड्रस्य राज्ञो गन्धर्वेश्वरोऽतिकुशलाग्रणीः ।
ललितो नाम गन्धर्वो रंगे ह्यवाततार ह ॥६५॥
ललिता नाम गन्धर्वपत्नी तु गृहकार्यतः ।
नायाता तत्र रङ्गे वै ललितस्त्वेकलस्तदा ॥६६॥
गीतं गानं प्रकुरुते ललितो दयितां विना ।
दयितायास्तदाऽनुपस्थित्या तु ललितः खलु ॥६७॥
पार्श्वहीनश्च साहाय्यरहितो मनसा तु ताम् ।
स्मरन् गायति नृत्यँश्च वादयति यथाकलम् ॥६८॥
हृदये तस्य ललिता नित्यं वसति भामिनी ।
प्रसंगे तु विशेषेण सुस्मृता सा भवत्यपि ॥६९॥
ललितायास्तु हृदये पतिर्वसति नित्यदा ।
उभौ रागेण संरक्तौ दम्पती प्रेमबन्धनौ ॥७०॥
रेमाते स्म गृहे यद्वत् तत् ललितेन संस्मृतम् ।
रङ्गे पत्न्याः स्मरणेन व्यग्रमानसनर्तकः ॥७१॥
पादबन्धः स्खलज्जिह्वो बभूव ललितां स्मरन् ।
पादबन्धच्युतिर्जाता जातं स्वराऽवरोहणम् ॥७२॥
गन्धर्वाणां सभामध्ये हास्यपात्रं तु सोऽभवत् ।
पौंड्रस्यापि यशोहानिस्तदा जाता हि तत्क्षतेः ॥७३॥
तदा पौंड्रः पुण्डरीको बभूव क्रोधपीडितः ।
शशाप ललितं रङ्गे गायन्तं च स्मरातुरम् ॥७४॥
राक्षसो भव दुर्बुद्धे क्रव्यादः पुरुषादनः ।
यतः पत्नीं स्मरँश्चात्र गायमानो महोत्सवे ॥७५॥
समाजेऽनवधानात् त्वं कलायां क्षतिमाप्तवान् ।
हास्यपात्रं त्वं तथाऽहं समाजेन कृतावुभौ ॥७६॥
तस्मात्त्वं राक्षसो भूत्वा दुःखं पश्य चिरं समाः ।
इति पौंड्रस्य वचनाद् रक्षारूपो बभूव सः ॥७७॥
रौद्राननो विरूपाक्षो दृष्टमात्रो भयंकरः ।
बहुयोजनविस्तीर्णो मुखे कन्दरसन्निभः ॥७८॥
सूर्यद्वयनिभो नेत्रे ग्रीवायां पर्वतोपमः ।
नासायां पर्वतमालानिभो रन्ध्रे गुहासमः ॥७९॥

ओष्ठयोर्गव्यूतिकल्प उच्छ्राये योजनद्वयम् ।
ईदृशो राक्षसो भूत्वा भुंजानः कर्मणः फलम् ॥८०॥
ययौ गृहं च ललिता स्वकान्तं विकृताकृतिम् ।
आलोक्य चिन्तयामास पतिदुःखेन दुःखिता ॥८१॥
किं करोमि क्व गच्छामि पतिः पापेन पीडितः ।
ज्ञात्वा सर्वं तु वृत्तान्तं पतिसेवापरायणा ॥८२॥
चचार पतिना सार्धं ललिता गहने वने ।
पूर्वं संस्मृत्य संस्मृत्य मनसा शर्म नाऽलभत् ॥८३॥
बभ्राम विपिने दुर्गे कामरूपधरापि सा ।
कामरूपधरेणापि पतिना सह सर्वदा ॥८४॥
ललितो विपिने दुर्गे कामरूपी भवन्नपि ।
निर्घृणः पापनिरतो विरूपः पुरुषादकः ॥८५॥
न सुखं लभते रात्रौ न दिवा पापपीडितः ।
ललिता दुःखिताऽतीव पतिं दृष्ट्वातिदुःखिनम् ॥८६॥
बभ्राम तेन सार्धं सा क्षुत्तृषाद्यतिमर्दिताः ।
पतिर्वै राक्षसरूपः पत्नी गन्धर्वरूपिणी ॥८७॥
विचित्रं तु तयोर्योगं दृष्ट्वा वै वनवासिनः ।
आश्चर्यं परमं प्रापुर्भीताश्च दुद्रुवुः स्थलात् ॥८८॥
अथ शातातपमुनेराश्रमं तावुवापतुः ।
शीघ्रं जगाम ललिता नमस्कृत्याऽग्रतः स्थिता ॥८९॥
दयालुः स मुनिः प्राह का त्वं कस्मादुपस्थिता ।
ललितोवाच गान्धर्वी वीरधन्वसुताऽस्म्यहम् ॥९०॥
ललितानाम मे त्वस्ति पत्यर्थमिह चागता ।
भर्ता मे ललितप्रख्यः पौंड्रशापेन राक्षसः ॥९१॥
भूत्वा भ्रमत्यरण्येऽस्मिन् दृष्ट्वा तं नास्ति मे सुखम् ।
येन पुण्येन मे स्वामी राक्षसत्वाद्विमुच्यते ॥९२॥
तादृशं पुण्यकृत्यं मे शाधि शातातप प्रभो ।
श्रुत्वा शातातपः प्राह शापपापहरा शुभा ॥९३॥
कामदैकादशी चैत्रशुक्लस्य पुण्यसौख्यदा ।
व्रतं तस्या विधानेन कुरु त्वं भामिनि ध्रुवम् ॥९४॥
भविष्यति फलं पुण्यं तत् स्वभर्त्रे प्रदीयताम् ।
दत्ते पुण्ये क्षणात्तस्य शापदोषः प्रयास्यति ॥९५॥
शातातपमुनेर्वाक्यं श्रुत्वा सा हर्षिताऽभवत् ।
तत्राश्रमेऽवसच्चैकादशीप्रतीक्षणाय सा ॥९६॥
पतिस्तस्या वने तत्राऽभितो वसति नित्यदा ।
कामदैकादशी प्राप्ता निर्जला समुपोषिता ॥९७॥
जागरणं कृतं रात्रौ द्वादश्यां प्रातरेव च ।
शातातपस्य निकटे हरेर्मूर्तेश्च सन्निधौ ॥९८॥

वाक्यमुवाच ललिता स्वपत्युस्तारणाय वै ।
मया त्वेतद्व्रतं चीर्णं कामदाया उपोषणम् ॥९९॥
तस्य पुण्यप्रभावेण नश्यत्वस्य पिशाचता ।
ललितावचनात्तस्मिन् क्षणे एव पिशाचता ॥१००॥
गता राक्षसता तस्य जाता गन्धर्वता पुनः ।
गतपापः स ललितो दिव्यदेहो बभूव ह ॥१०१॥
स्वर्णरत्नसमाकीर्णो रेमे ललितया सह ।
तौ विमानसमारूढौ पूर्वरूपाधिकौ शुभौ ॥१०२॥
दम्पती चान्यशोभेतां गतौ नागपुरं शुभौ ।
कामदाया व्रतजन्यपुण्येनैवं पिशाचता ॥१०३॥
विनष्टा शापनाशश्च स्वस्वरूपसमागमः ।
इतिज्ञात्वा महालक्ष्मि ! कर्तव्यैषाऽतिभावतः ॥१०४॥
ब्रह्महत्यादिपापघ्नी पिशाचत्वविनाशिनी ।
पठनाच्छ्रवणाचापि वाजपेयफलप्रदा ॥१०५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने चैत्र-शुक्लकामदैकादशीव्रतमाहात्म्यं ललितललितागन्धर्वयोः पौंड्रस्य शापेन जातस्य पिशाचत्वस्य व्रतेन मुक्तिरित्यादिनिरूपणनामा सप्तचत्वारिंश-दधिकद्विशततमोऽध्यायः ॥२४७॥

श्रीलक्ष्मीरुवाच—

मोक्षदातर्हरे कृष्ण जनोद्धारकर प्रभो ।
पापिनां शापिनां चापि शापिनां पापनाशक ॥ १ ॥
भुक्तिमुक्तिप्रदं दिव्यं त्वया प्रदर्शितं व्रतम् ।
श्रुत्वा श्रुत्वा प्रहर्षामि श्रवणे जायते रुचिः ॥ २ ॥
वद नाथ कृपासिन्धो वैशाखकृष्णपक्षके ।
किंनाम्न्येकादशी तस्याः को देवः को विधिस्तथा ॥ ३ ॥

श्रीनारायण उवाच—

सौभाग्यदायिनी पुत्रपौत्रसम्पत्प्रदायिनी ।
अत्र परत्र सुखदा स्मृद्धिदा पापनाशिनी ॥ ४ ॥
वैशाखकृष्णपक्षीया नाम्ना चास्ति वरूथनी ।
तस्या व्रतेन व्रतिनः सौख्यं भवति सर्वथा ॥ ५ ॥
पापहानिश्च भवति सौभाग्यप्राप्तिरित्यपि ।
दुर्भगाऽपि व्रतकर्त्री सर्वसौभाग्यमाप्नुयात् ॥ ६ ॥
व्रतिनां त्वत्र सर्वेषां भुक्तिमुक्तिप्रदायिनी ।
सर्वपापहरा पुण्यप्रदा जन्महरा शुभा ॥ ७ ॥
वासनानाशिनी नित्यानन्दमुक्तिप्रदायिनी ।
शाश्वत्याश्च स्थितेर्दात्री कर्तव्या व्रतिना हि सा ॥ ८ ॥
मान्धातृधुन्धुमाराद्या व्रतिनः स्वर्गतिं गताः ।
नन्दया सहितः शक्त्या त्वत्रार्च्यः पुरुषोत्तमः ॥ ९ ॥
जातिफलादि पूजायां नैवेद्ये वटकाः शुभाः ।
चम्पकादिनि पुष्पाणि कुन्दस्य कलिकास्तथा ॥१०॥
स्थलपद्मानि देयानि देयं दानं भुवस्तथा ।
अन्यत्स्वशक्त्या कर्तव्यं व्रतिना पूर्णभावतः ॥११॥
दशम्यामेकभक्तं वा नक्तं भुक्त्वाऽथ भूशयः ।
ब्रह्मचारी भवेच्चैत्र प्रातः स्मरेद्धरिं व्रते ॥१२॥
कांस्यं मांसं मसूराँश्च चणकान् कोद्रवाँस्तथा ।
शाकं मधु परान्नं च पुनर्भोजनमैथुने ॥१३॥
वैष्णवो व्रतकर्ता च दशम्यां दश वर्जयेत् ।
द्यूतक्रीडां च निद्रां च ताम्बूलं दन्तधावनम् ॥१४॥
परापवादपैशून्ये स्तेयं हिंसां तथा रतिम् ।
क्रोधं त्वनृतवाक्यानि ह्येकादश्यां विवर्जयेत् ॥१५॥
कांस्यं मासं सुरां क्षौद्रं तैलं पतितभाषणम् ।
व्यायामं च प्रवासं च पुनर्भोजनमैथुने ॥१६॥
तामसान्नं मसूरान्नं द्वादश्यां परिवर्जयेत् ।
एकादश्यां व्रती प्रातः स्नात्वा श्रीपुरुषोत्तमम् ॥१७॥
पूजयेन्नूतनद्रव्यैः षोडशोत्तमवस्तुभिः ।
आवाहनादिकं कुर्यात् पञ्चामृतविलेपनम् ॥१८॥
शुद्धतीर्थोदकस्नानं वस्त्राभूषणधारणम् ।
आंगारिकद्रवादेश्च दानं कज्जलकांजनम् ॥१९॥
कुंकुमादिमांगलिकचूर्णतिलकचन्द्रकम् ।
गुच्छं पौष्पं तथा हारान् पौष्पांश्च शेखरादिकान् ॥२०॥
अर्पयेद्धरये तत्र धूपदीपादि कारयेत् ।
नीराजयित्वा नत्वा च प्रदक्षिणं विधाय च ॥२१॥
स्तुत्वा क्षमापयित्वा वै पुष्पांजलिं समर्पयेत् ।
एवं प्रातः पूजयित्वा महापूजनमाचरेत् ॥२२॥
कृत्वा धान्यैः सर्वतोभद्राख्यं वै मण्डलं शुभम् ।
कदलीमण्डपे यद्वा शुभे श्रीकृष्णमन्दिरे ॥२३॥
मण्डले मध्यदेशे च पञ्चरत्नसुपल्लवम् ।
जलचन्दनतन्दुलपुष्पफलसमन्वितम् ॥२४॥
स्वर्णजं ताम्रजं यद्वा कलशं स्थापयेन्नवम् ।
तत्र घटे तिलस्थालीं स्थापयेत् पूरितां नवाम् ॥२५॥
पुरुषोत्तममूर्तिं च नन्दया सहितां तथा ।
वरूथिन्या च सहितां स्थापयेत् तिलमण्डले ॥२६॥

पूजयेद्विधिना तां च चन्दनादिभिरर्च्चयेत् ।
आवाहनादि कुर्याच्च पञ्चामृताभिषेचनम् ॥२७॥
तीर्थजलैस्तथा स्नानार्पणं भूषाम्बरार्पणम् ।
सश्रृङ्गाराऽलंकरणं सुगन्धितैलकार्पणम् ॥२८॥
चन्दनाद्यर्पणं पुंड्रकज्जलकुंकुमार्पणम् ।
पुष्परत्नादिमालाद्यर्पणं नैवेद्यकार्पणम् ॥२९॥
जलताम्बूलमिष्टाद्यग्रफलाद्यर्पणमित्यपि ।
नीराजनं नमस्कारान् प्रदक्षिणं क्षमार्थनम् ॥३०॥
प्रकुर्याच्च व्रतसिद्ध्यै प्रार्थनां विघ्ननाशिनीम् ।
दानं शय्यागेन्दुकादिवस्तूनां दक्षिणां पराम् ॥३१॥
दद्याच्चैवं समाप्यैव भक्तिकार्यं ततश्चरेत् ।
मध्याह्नेपि विधिनैवं पूजयेद्भोजयेद्धरिम् ॥३२॥
हरिं सायं पूजयित्वा समारार्त्रिकमाचरेत् ।
भोजयेज्जलपानादि कारयेज्जागरं तथा ॥३३॥
नृत्यं गीतं वादनं च कथां कुर्याच्च कीर्तनम् ।
प्रातर्विचिन्त्य लक्ष्मीशं पूजनं च ततश्चरेत् ॥३४॥
अश्वदानं गजदानं भूमिदानं तिलार्पणम् ।
स्वर्णदानं त्वन्नदानं कन्यादानं गवार्पणम् ॥३५॥
ज्ञानदानं तथा दद्याद् दानं त्वभयसंज्ञकम् ।
एवं वरूथिनी कार्या वाञ्छितार्थप्रदायिनीम् । ३६॥
दशवर्षसहस्राणि तपस्तपति यो नरः ।
तत्तुल्यं फलमाप्नोति वरूथिन्या व्रतान्नरः ॥३७॥
सर्वदानफलं त्वत्याप्नोति कृत्वा वरूथिनीम् ।
लक्ष्मि पूर्वे कृतयुगे कथा जाताऽतिपावनी ॥३८॥
यां श्रुत्वा तु वरूथिन्या माहात्म्यं ज्ञायते महत् ।
वरूथो नाम विप्रर्षिर्ब्रह्मणो मानसः सुतः ॥३९॥
विंशतिन्यूनवर्षीयो वेदाद्यध्ययनव्रतः ।
गुरुसेवापरः शुद्धो मरीचेराश्रमे वसन् ॥४०॥
निर्मानो निरहंकारः स्वच्छमानसदर्पणः ।
ब्रह्मध्यानरतो नित्यं गुरुर्ब्रह्मेतिपूजकः ॥४१॥
गुरोर्वाक्यं वेदवाक्यं वेदो गुरुमुखोद्गतम् ।
गुरुर्विष्णुर्गुरुर्ब्रह्म गुरुर्वेदो विधिर्गुरुः ॥४२॥
गुरुर्धर्मो गुरुर्मुक्तिर्गुरुर्दर्शनं गुरुर्मखः ।
गुरुरेव परब्रह्म गुर्वाज्ञा वैदिकी श्रुतिः ॥४३॥
येन केन प्रकारेण तोषणीयो गुरुर्यतः ।
गुरौ तुष्टे ब्रह्म तुष्टं नास्ति कश्चिद् गुरोः परः ॥४४॥
ब्रह्मतत्त्वं गुरुस्त्वस्ति नास्ति तत्त्वं गुरोः परम् ।
गुरोराज्ञा परो धर्मो गुर्वाज्ञा स्वर्गमत्र हि ॥४५॥

गुर्वाज्ञा लोकधर्मश्च धर्मश्च पारलौकिकः ।
नान्यः कश्चित्परो धर्म इति मत्वाऽतिभावतः ॥४६॥
गुरुभक्तोऽभवच्छ्रेष्ठो गुरोः सेवां करोति च ।
यथा यथा गुरुर्वदेत् तथा तथा करोति सः ॥४७॥
गुरुकैकर्यवृत्त्यैव वर्तते सुखपूर्वकम् ।
मरीचेः सेवया नित्यमानन्देन परिप्लुतः ॥४८॥
वर्तते ब्रह्मसंस्थः सः शरीरमानवर्जितः ।
आत्मारामोऽभवत् सोऽयं गुरोर्गेहे वसन् द्विजः ॥४९॥
गुरोः सेवां गुरोः पत्न्याः कलायाः सेवनं तथा ।
करोत्यभिन्नभावेन गुरुरेव तु सा त्विति ॥५०॥
कला मरीचपत्नी तु मरीचार्धांगना हि सा ।
गुरुत्वं च द्वयोरस्ति कलायां च मरीचके ॥५१॥
दम्पत्योर्गृहसेवां च मार्जनं लेपनं तथा ।
जलाहरणं पूजोपकरणाहरणं तथा ॥५२॥
पादसंवाहनं भोजनोत्तरं पात्रमञ्जनम् ।
शय्यावितानकरणं शय्यासंहरणं तथा ॥५३॥
वस्त्रप्रक्षालनं केशप्रसाधनं च कज्जलम् ।
नेत्रयोरंजनं हस्ततलाऽलक्तकरंजनम् ॥५४॥
तैलेन मर्दनं देहे जलेन स्नापनं तथा ।
वस्त्रेण मार्जनं चापि सुगन्धार्पणमित्यपि ॥५५॥
वस्त्रपुष्पविभूषादिसंप्रसाधनमन्वहम् ॥
दम्पत्योः प्रकरोत्येव सगुणब्रह्मभावतः ॥५६॥
देहं न मनुते सोऽयं त्वात्मानं मनुतेऽत्र हि ।
देहान्यदात्मनो रूपं निर्विकारं निरंजनम् ॥५७॥
पापपुण्यविहीनं तदात्मरूपं निरामयम् ।
पापेन बध्यते नात्मा पापेन लिप्यते न च ॥५८॥
गुरोर्भक्तिः परं पुण्यं नान्यत्पुण्यमतः परम् ।
गुरुं विहाय नान्यस्य पूजनं ध्यानमेव वा ॥५९॥
करोति स कदाचिद्वै तृप्तिं मत्वा गुरौ सदा ।
मूर्तिं न मनुते विष्णोः पूजनं न करोति च ॥६०॥
नैवेद्यं विष्णवे नैवाऽर्पयत्येषो जलं न च ।
न षोडशोपचाराद्यैरर्च्चयत्यच्युतं हरिम् ॥६१॥
अप्रसादं समश्नाति पिबत्यनर्पितं जलम् ।
वल्कलं कन्दपुष्पादि गृह्णात्यनर्पितं स्वयम् ॥६२॥
हर्यनर्पितभोगेन बुद्धिः कलुषतां गता ।
रजोभावेन संव्याप्ताऽभवद् भोगानुगामिनी ॥६३॥
हर्यनर्पितमन्नादि त्वभक्ष्यं सर्वमुच्यते ।
अभक्ष्यभक्षणाच्चास्य जाता देहात्मभावना ॥६४॥

देहरूपोऽभवच्चायं हीन्द्रियारामसद्दशः ।
इन्द्रियं बलवच्चास्य जातं देहात्मवादिनः ॥६५॥
नास्तिक्यं यौवनं गुरोः पत्न्याः शुश्रूषणं तथा ।
नित्ययोगाद् गमयन्ति स्मरज्वरातितापनम् ॥६६॥
तथापि संयमं सोऽपि रक्षति मानसाद् बलात् ।
एवं बहुतिथे काले याते सप्तर्षयः खलु ॥६७॥
करस्य विवाहार्थे दक्षपुत्र्या समं तदा ।
ब्रह्मणा संस्मृताः सत्ये लोके ते ब्रह्मपर्षति ॥६८॥
ययुस्तदा वरूथं तु मरीचिः प्राह पुत्रक ।
यथा मद्वचनं सम्यक् पाल्यते क्रियते तथा ॥६९॥
कलायाश्च वचः पाल्यं कर्तव्यं सा यथा वदेत् ।
मद्गृहं सर्वथा रक्ष्यं त्वया शिष्य यथा मया ॥७०॥
आज्ञां दत्वा ययौ ब्रह्मसभां प्रति मरीचिकः ।
ब्रह्मणा प्रेषिता सप्तर्षयो दक्षगृहं प्रति ॥७१॥
सत्यास्तु शंभुना योगे वाक्प्रदानविनिर्णये ।
ययुः स्थिताः पुनः सत्यं चाययुश्च पुनर्ययुः ॥७२॥
एवं बहुतिथः कालो व्यतीतस्तत्र निर्णये ।
कलाऽपि चातितुष्टाऽभूद् वरूथस्य प्रसेवया ॥७३॥
वरूथस्य सहयोगात्सेवने देहमर्दने ।
पादसंवाहने चैकशय्यासनसुवर्तने ॥७४॥
रजोभावेन संसक्ताऽभवद्वरूथवर्ष्मणि ।
युवानं सुदृढं प्राप्य त्वेकान्तगृहसेवया ॥७५॥
प्रह्वीभूय कला प्राह वरूथ भज मामिह ।
स्मरतापेन संदग्धां शान्तिं चार्पय मेऽनघ ॥७६॥
वरूथोऽपि गुरोर्वाक्यं मन्वानश्च कलावचः ।
राजसीभावजायुक्तः सिषेवे तां कलां रहः ॥७७॥
कामकार्ये विनिर्वृत्ते शान्तिर्जाता तयोर्यदा ।
कलाऽऽशीर्वचनान्याह स्वर्गं ते त्वक्षयं भवेत् ॥७८॥
एवं कामबलेनैतौ भोगिनौ कामनान्वितौ ।
रेमाते कामभावेन मरीचेर्वचनाश्रयात् ॥७९॥
तावत्कार्यं हरस्यार्थे कृत्वा सप्तर्षयो गृहम् ।
ययुस्तदा मरीचिश्चाययौ स्वस्याश्रमं शुभम् ॥८०॥
मरीचेर्वर्तमानेन वरूथश्च कला तथा ।
मर्यादया हि वर्तेते कामनावर्जितावुभौ ॥८१॥
तथापि गुरुपत्न्याश्च वरूथस्य च भालयोः ।
आयुरेखाऽभवत्पूर्वं पूर्णा या सा क्षतिं गता ॥८२॥
विच्छिन्नाऽभूत् परिदृष्टा प्रत्यक्षेण मरीचिना ।
रमीचिः प्राह तौ तत्र कथं त्वायुः क्षयं गतम् ॥८३॥
प्राहतुस्तौ यथा तथ्यं मरीचिर्विस्मयं गतः ।
अकृतं तु कृतं ह्याभ्यां कृतं वै वचनान्मम ॥८४॥
निर्दोषं तद् गुरोर्भक्तकृते वाक्यं गुरोः सदा ।
अनेन पालितं वाक्यं मदीयं किन्तु हानिदम् ॥८५॥
ब्रह्मस्वहरणं गुरुतल्पगामित्वमित्यपि ।
विश्वासघातिता कृतघ्नता ह्यायुर्विनाशकाः ॥८६॥
आभ्यां कृतं कृतं तत्तु मया कार्यं शुभं तयोः ।
यावदेवं चिन्तयति तावद् यमस्य सेवकाः ॥८७॥
आययुस्तौ समानेतुं पुरीं याम्यां प्रति ध्रुवम् ।
मरीचिरत्र नाऽवोचद् याम्या नीत्वा ययुर्द्रुतम् ॥८८॥
मरीचिरनुयातश्च तदा तेनैव वर्ष्मणा ।
दूतैस्तौ धर्मराजस्य पुरतः संकृतावुभौ ॥८९॥
दण्डश्च तप्तलोहस्य सूर्म्या योगोऽनयोः कृतः ।
मरीचिः प्राह धर्मेशं त्वया योग्यं कृतं विभो ॥९०॥
किन्तु मद्वचनात्सर्वं कृतं दोषो न वै तयोः ।
दुष्टं यदि गुरोर्वाक्यं दोषपात्रं भवाम्यहम् ॥९१॥
यमस्मृतौ तथा चोक्तं गुरोर्वाक्यं न दोषकृत् ।
यमवाक्यं तु चेत्सत्यं ममवाक्यं न दोषकृत् ॥९२॥
मम वाक्येन संसक्तौ कथं तौ दोषसंयुतौ ।
तस्मान्नैतौ दण्डपात्रे यथेच्छसि तथा कुरु ॥९३॥
यावदेतौ न मुञ्चेथास्तावन्नैव जलादिकम् ।
गृह्णाम्यत्र तवातिथ्यं यथेच्छसि तथा कुरु ॥९४॥
धर्मस्तु पितृवृद्धस्य मरीचेर्वचनं तदा ।
श्रुत्वा विचारयामास नष्टं त्वायुर्विकर्मणा ॥९५॥
सन्धीयेताऽनयोः केनोपायेन प्रबलेन तु ।
मद्वाक्यं च गुरोर्वाक्यं सुप्रमाणं भवेत्तथा ॥९६॥
किं कर्तव्यं मम त्वत्र विरुद्धे विषये खलु ।
यदि वाक्यं प्रमाणं मे नैतौ दण्डार्हणौ तदा ॥९७॥
यदि दण्डार्हणौ त्वेतौ नाऽस्मद्वाक्यप्रमाणता ।
तस्मात् किमत्र कर्तव्यं त्वायुःसन्धानकर्मणि ॥९८॥
वरूथेन तदा तत्र संकल्पितं गुरोर्बलम् ।
यद्यहं गुरुभक्तोऽस्मि गुर्वाज्ञां प्रकरोमि च ॥९९॥
तदा गुर्वात्मकः कृष्णो गुरोर्वाक्यात् प्ररक्षतु ।
स्मरत्येवं तु यावत् सः वरूथो गुरुरूपिणम् ॥१००॥
हरिं तावत्तदा तत्र व्योमवाणी बभूव ह ।
धर्मराज शृणु त्वेतौ निर्जलौ नाऽऽप्तभोजनौ ॥१०१॥
मरीचिश्चाप्यन्नजलविहीनो वर्ततेऽत्र वै ।
गुरुरूपोऽस्म्यहं चापि गुरुं तौ स्मरतो यतः ॥१०२॥

एतैर्मदाश्रयं मन्ये कृतं त्वेकादशीव्रतम् ।
कलावरूथयोरायूरेखा पूर्णाऽत्र जायताम् ॥१०३॥

वरूथस्योद्धरणेन नाम्ना त्वेकादशी त्वपि ।
वरूथिनी प्रसिद्धाऽस्तु वरूथोद्धारकारिणी ॥१०४॥

कलाऽऽयुषः प्रतिसन्धानेन संजीवनी तु सा ।
आनन्दप्रदया व्योमवाण्या ह्यानन्दिता ह्यपि ॥१०५॥

नन्दया सहितः कृष्णः स्वाम्यस्याः संभवामि च ।
नन्दया सहितं मां तु येऽर्चयिष्यन्ति मानवाः ॥१०६॥

गुरुदाररताश्चापि भविष्यन्ति हि पावनाः ।
शिष्यरतिप्रकर्त्र्यश्च शुद्धिं यास्यन्ति योषितः ॥१०७॥

वरूथिन्या व्रतिनश्च निष्पापा वै नराः स्त्रियः ।
चिरायुष्का भविष्यन्ति नष्टायुषोऽपि मद्बलात् ॥१०८॥

परद्रव्यहरा ये च परदारप्रसंगिनः ।
वरूथिनीव्रतपूता भविष्यन्ति सुवासिनः ॥१०९॥

यमराजभयं तेषां न स्यान्नायुर्विनाशनम् ।
न वैधव्यं न वै दुःखं विधुरत्वं न वा भवेत् ॥११०॥

सूर्यपुत्रादतिभीतो जनः कुर्याद् वरूथिनीम् ।
सर्वपापविनिर्मुक्तः प्रयाति परमां गतिम् ॥१११॥

तस्मात् सर्वप्रयत्नेन कर्तव्या पापभीरुभिः ।
श्रवणात् पठनात्त्वस्या गोसहस्रफलं भवेत् ॥११२॥

अज्ञानाच्च हठाच्चापि वरूथिन्या व्रतं चरेत् ।
सर्वपापविनिर्मुक्तं विष्णुलोकं नयाम्यहम् ॥११३॥

तस्मादेतौ प्रमुञ्च त्वं यमराज वरूथकम् ।
कलां चाथर्षिवर्यं च मरीचिं त्वतिथिं कुरु ॥११४॥

सत्कारं कुरु दत्वैव पत्नीं शिष्यं सुखी भव ।
अन्यथा व्रतपुण्येन शापं दास्यति चेदृषिः ॥११५॥

भस्मीभूतं तु ते सर्वं स्थलं याम्यं भविष्यति ।
वरूथिन्या व्रतकर्तुर्गृहं मा यान्तु ते चराः ॥११६॥

वरूथिनीदिने चोपोषितारं चाप्यभानकम् ।
मा प्रयान्तु च ते दूता यतो मे व्रतकृद्धि सः ॥११७॥

इत्युक्त्वा विररामाऽसौ व्योमवाणी हरिकृता ।
यमराजोऽपि तौ पूर्णायुषौ दृष्ट्वा मुमोच ह ॥११८॥

निर्दोषौ गुरुवाक्यस्थौ दोषाऽलिप्तौ कलारुथौ ।
मरीचिना समं यातौ निजाऽऽवासं यमालयात् ॥११९॥

एवं ते कथितो लक्ष्मि! वरूथिनीव्रतोत्सवः ।
कृत्वा श्रुत्वा पठित्वा तं विष्णुलोके महीयते ॥१२०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने वैशाखकृष्णवरूथिन्येकादशीव्रतमाहात्म्यं मरीचेः पत्न्याः कलायाः वरूथेन शिष्येण गुरुपत्नीवाक्यभक्तेन संगदोषेऽपि व्रतेन तदुद्धरणादीतिनिरूपणनामाऽष्टचत्वारिंशदधिकद्विशततमोऽध्यायः ॥२४८॥

**श्रीलक्ष्मीरुवाच—**

भगवन् देवदेवेश भक्तानामभयंकर ।
आयुःप्रदं व्रतं सम्यक् श्रावितं भवता विभो ॥ १ ॥
श्रुत्वा वरूथविप्रस्य महापातकनाशनम् ।
प्रसन्नं जायते चेतः कृपासागर केशव ॥ २ ॥
वैशाखशुक्लपक्षे तु किंनाम्न्येकादशी मता ।
किं फलं को विधिस्तत्र को देवो वद माधव ॥ ३ ॥

**श्रीनारायण उवाच—**

पद्मजे कथयिष्यामि लोकानां हितकाम्यया ।
पवित्राणां पवित्रं यद्व्रतानामुत्तमं व्रतम् ॥ ४ ॥
वैशाखस्याऽर्जुने पक्षे नामतो मोहिनी तु सा ।
भवेदेकादशी लक्ष्मि! सर्वपातकनाशिनी ॥ ५ ॥
पापजालानि नश्यन्ति मोहो नश्यति तद्व्रतात् ।
महादुःखानि नश्यन्ति सुखं भवति तद्व्रतात् ॥ ६ ॥
यस्याः कर्तव्यताभावादपि पापं विनश्यति ।
दशम्यामेकभक्तेन नक्तेनापि व्रतार्थिना ॥ ७ ॥
वर्तितव्यं तथा रात्रौ ब्रह्मचर्यव्रतेन च ।
प्रातरुत्थाय कृष्णश्च स्मर्तव्यो व्रतिना सदा ॥ ८ ॥
स्नात्वा हरिः सुपूज्यश्च पूजनीयो व्रतार्थिना ।
नित्यविध्यनुसारेण व्रतार्थं प्रार्थनां क्रियात् ॥ ९ ॥
अद्याहं देवदेवेश करिष्ये व्रतमच्युत ।
तवानुग्रहलेशेन संपूर्णं तद्भवेदिति ॥१०॥
एवं तु पूजनं नित्यतया प्राप्तं समाप्य च ।
कारयेत् सर्वतोभद्रमण्डलं तण्डुलादिभिः ॥११॥
तन्मध्ये सुघटः स्थाप्यः सुवर्णस्याऽथ वा नवः ।
ताम्रजः सजलः पञ्चरत्नयुक् पञ्चपल्लवः ॥१२॥
वस्त्रवेष्टितकण्ठश्च चन्दनाक्षतपूजितः ।
फलं न्यस्येन्नारिकेलं पार्श्वे तस्यान्तराऽम्भृतम् ॥१३॥

न्यस्येन्मुखोपरि रम्यां स्थालीं तिलप्रपूरिताम् ।
तत्र न्यस्येत् स्वर्णरूप्यताम्रद्रव्यं च शर्कराम् ॥१४॥
कारयित्वा कनकस्य मूर्तिं त्वेकादशीपतेः ।
मधुसूदनदेवस्य माधव्या सह शोभिताम् ॥१५॥
मोहिन्या च युतां तत्र स्थाल्यां वै स्थापयेत्तु ताम् ।
स्वर्गनिःश्रेणिकां कूप्यमयीं न्यस्येत्प्रपूजयेत् ॥१६॥
स्वस्तिकं ब्रह्मसूत्रं च चन्द्रकं तिलकं तथा ।
स्वर्णरौप्यं कारयित्वा घटपार्श्वे निधापयेत् ॥१७॥
फलानि विविधान्येव पूगीफलादिकानि च ।
एलालवंगत्वक्सारजातीफलानि चूर्णकम् ॥१८॥
शर्करां गूडधानादीन् नववस्तूनि दापयेत् ।
पर्यंकं गेन्दुकं गुप्तदोरकं पार्श्वकं तथा ॥१९॥
दर्पणं व्यजनं छत्रं चामरं यष्टिकां शुभाम् ।
पादुके केशसंस्कर्त्रीं सुगन्धद्रव्यसंयुताम् ॥२०॥
सजलं मृद्घटं नव्यं पक्वान्याम्रफलानि च ।
विन्यस्येत् पूजनं कुर्याद् विधिना व्रतकारकः ॥२१॥
पुष्पेषु मल्लिकां दद्यान्नैवेद्यं पायसं शुभम् ।
अर्घ्ये फलं तु पनसं शय्यादानं समुत्तमम् ॥२२॥
प्रथमं तिलपात्रे तं मधुसूदनमच्युतम् ।
आवाहयेत् ततो दद्यादासनं चोत्तमोत्तमम् ॥२३॥
पादप्रक्षालनवारि तथाऽर्चनजलं शुभम् ।
आचमनार्थं सलिलं दद्याद् देवाय भावतः ॥२४॥
दन्तधावनमार्द्रं च दद्याच्चूर्णं सुगन्धवत् ।
मुखप्रक्षालनं तस्य कारयेत् तीर्थवारिणा ॥२५॥
शौचादिकल्पयेद्धस्तपादशुद्धिं प्रकल्पयेत् ।
पंचामृतैः स्नापयेच्च शुद्धोदकेन तत्परम् ॥२६॥
वस्त्रैरामार्जनं कुर्यात् सुवस्त्राणि समर्पयेत् ।
धौत्रं सूक्ष्मं शुभं प्रावरणं श्वेतं नवं तथा ॥२७॥
अर्पयेच्चन्दनं तैलं सुगन्धं द्रव्यमत्तरम् ।
गन्धसारं मणिं ब्रह्मसूत्रं च कज्जलादिकम् ॥२८॥
कुंकुमं त्वर्पयेच्चाबीरं गुलालं शुभाक्षतान् ।
पुष्पाणि कुन्दकलिकारूपाणि पुष्पमालिकाः ॥२९॥
विभूषणानि सर्वाणि शृंगारद्रव्यमुत्तमम् ।
अलंकाराणि रम्याणि त्वर्पयेद्धरये तदा ॥३०॥
तिलकं चन्द्रकं भाले कारयेच्चन्दनेन वै ।
लेपयेच्चाभितो वर्ष्मणि व्रती हृदयादिके ॥३१॥
धूपं दीपं च नैवेद्यं दद्यान्मिष्टान्नमुत्तमम् ।
शार्करं दधिसारं श्रीखण्डं दद्यात्तु पूरिकाः ॥३२॥
शार्करं शीतसलिलं फलं चाम्रं च बीटिकाम् ।
नागवल्लीपर्णकृतां दद्यात्त्वन्यत्तु यत् कृतम् ॥३३॥
आरार्त्रिकं नमस्कारं स्तुतिं प्रदक्षिणं तथा ।
दण्डवच्च क्षमायाच्ञां फलपूर्णत्वयाचनाम् ॥३४॥
पुष्पाञ्जलिं दक्षिणां च दद्यात् पश्चाद् विसर्जयेत् ।
कुर्याच्चावश्यकं कार्यं व्रती भक्त्यात्मकं तदा ॥३५॥
मध्याह्ने पूजयेत् कृष्णं भोजनं कारयेद् बहु ।
षट्पंचाशत्प्रभोगाँश्च दद्यादर्थान्वितस्तदा ॥३६॥
जलपानं प्रदद्याच्च ताम्बूलं मुखशोधकम् ।
दद्याच्च तं नमस्कृत्य व्रती भक्त्यादिकं चरेत् ॥३७॥
सायं चारार्त्रिकं कुर्यान्नैवेद्यं च जलार्पणम् ।
मण्डपं कदलीस्तंभैः कारयेद् बन्धयेच्च सः ॥३८॥
प्रेंखां सुशोभितां रम्यां नवपल्लवतोरणाम् ।
आन्दोलयेद्धरिं तत्र स्थापयित्वा स्वयं व्रती ॥३९॥
पूजनं षोडशवस्तूत्तमैर्निर्वर्तयेद्व्रती ।
रात्रौ भक्तियुतं कालं भक्तैः सह तु यापयेत् ॥४०॥
एवं जागरणं कुर्यान्महोत्सवपुरःसरम् ।
नर्तनं गायनं गीतिं तालमानादिसंयुताम् ॥४१॥
स्मरणं कीर्तनं चापि कथाख्यानानि कारयेत् ।
गापयेत् कृष्णपद्यानि नरा नार्यश्च सर्वथा ॥४२॥
हरिकीर्तनयुक्ताश्च कुर्युर्जागरणं तथा ।
प्रातः स्मरेद्धरिं स्नात्वा पुनः पूजनमाचरेत् ॥४३॥
व्रती दानानि दद्याच्च गुरवेऽतिसुभावतः ।
भोजयेद् ब्राह्मणान् साधून् साध्वीर्बालाँश्च पूजयेत् ॥४४॥
दीनान् कृपणान् बालिकाश्च पराधीनाँश्च भोजयेत् ।
आश्रितान् कर्मचारांश्च प्रमदाश्च कुटुम्बिनः ॥४५॥
पूज्याँश्च भोजयेन्मिष्टं मातॄँश्च जनकाँस्तथा ।
वृद्धाँश्च भोजयेन्नम्रभावनां च प्रदर्शयेत् ॥४६॥
ततो व्रती स्वयं कुर्यात्पारणां तु हरिं स्मरन् ।
शय्यादानं गजवाजिगोदानं भूगृहार्पणम् ॥४७॥
सुसत्पात्रे प्रकुर्यात्तु यानवाहधनार्पणम् ।
एवं व्रती व्रतं कुर्वन्नाप्नोति परमं पदम् ॥४८॥
शाश्वतं च सुखं स्वर्गे यथेष्टं कृपया हरेः ।
शृणु लक्ष्मि ! कथां पूर्वभवां वैश्यस्य पावनीम् ॥४९॥
सौराष्ट्रे तु सरस्वत्याः प्राच्या नातिविदूरके ।
उत्तरे तु प्रदेशे वै भद्रावत्यास्तु दक्षिणे ॥५०॥
भाण्डीराख्यनगर्यां वै धृतिसिंहोऽभवन्नृपः ।
तस्य श्रेष्ठी धनपालो ह्यभवद्धनशेवधिः ॥५१॥

धनपालः सदा ख्यातः पुण्यकार्यप्रवर्तने ।
प्रपाकूपमठारामतडागगृहकारकः ॥५२॥
विष्णुभक्तः साधुसेवी परोपकृतिसद्व्रतः ।
कथाश्रवणसुश्रद्धः सर्वदा भक्तितत्परः ॥५३॥
पुत्रास्तस्याऽभवन् पञ्च श्रेष्ठिनो धनशालिनः ।
सुमना द्युतिमाँश्चैव मेधावी सुकृतिस्तथा ॥५४॥
चत्वारः पुण्यपात्राणि पञ्चमश्चातिपापकृत् ।
धृष्टबुद्धिरिति ख्यातः परस्त्रीसंगसंरतः ॥५५॥
द्युतादिव्यसनासक्तो वारस्त्रीरतिकारकः ।
देवपूजाविहीनश्च पितृतर्पणनास्तिकः ॥५६॥
द्विजानां निन्दको वेदनिन्दको न्यायवर्जितः ।
दुष्टात्मा स्वपितुर्द्रव्यनाशको मदिरापिबः ॥५७॥
अभक्ष्यभक्षकः पापी सर्वसम्पत्क्षयंकरः ।
चौर्यादिकर्मनिरतो दुष्टसंगो ह्यकर्मकृत् ॥५८॥
पित्रा चतुष्पथे दृष्टो वेश्यास्कन्धस्थहस्तकः ।
पापाचाररतश्चैवं विज्ञातो बन्धुभिस्ततः ॥५९॥
पित्रा निष्कासितो गेहाद् बान्धवैश्च विवासितः ।
दायभागेन यत्किंचिल्लब्धं निर्वाहकं धनम् ॥६०॥
सर्वं नीतं क्षयं तेन वेश्यासंगेन नित्यदा ।
आभूषणानि पात्राणि वस्त्राण्युपस्कराणि च ॥६१॥
क्षयं नीतानि तेनैव गणिकासंगकारिणा ।
धनहीनः परित्यक्तो गणिकाभिस्ततः स तु ॥६२॥
चिन्तातुरोभवद् वस्त्रधनहीनः क्षुधार्दितः ।
किं करोमि क्व गच्छामि जीवनोपायवर्जितः ॥६३॥
तस्मात् कार्यं तस्करत्वं चौर्यं कार्यं प्रसह्य च ।
लुण्टनापहरणे च कृत्वा जीवामि नान्यथा ॥६४॥
एवं बलाऽपहरणं करोति वनगे पथि ।
पितुस्तु नगरे रात्रौ तस्करत्वं करोति च ॥६५॥
सुरां पिबति नित्यं स मांसं खादति नित्यदा ।
चौर्यं नित्यं करोत्येव पुंश्चलीसंगतिं गतः ॥६६॥
रात्रौ चौर्यं सुवर्णस्य कृतं तेन तु तत्क्षणे ।
राजदूतैर्धृतो रात्रौ किन्तु स्वर्णं धनं तदा ॥६७॥
लुंचारूपं राजदूतेभ्योऽर्पयित्वा विबन्धनः ।
मुक्तिं प्राप्य गतोऽरण्ये पुनश्चौर्यं चकार सः ॥६८॥
पुनर्धृतो राजदूतो पुनर्लुंचाप्रदानतः ।
बन्धनान्मुक्तिमासाद्य गतोऽरण्यं पुनस्तथा ॥६९॥
पुनश्चौर्यं समारेभे धनापहरणं तथा ।
जनानामर्दनं चक्रे संघानां लुण्टनं तथा ॥७०॥
पुनश्च नगरे चौर्यं कर्तुं रात्रौ ययौ तदा ।
मनुष्यैः स दुराचारो निबद्धो रश्मिभिर्दृढैः ॥७१॥
निगडैर्दण्डितो राज्ञा कशाघातैश्च ताडितः ।
कारागारं यथादण्डं क्षपयित्वा पुनर्हि सः ॥७२॥
निर्बन्धो वनमासाद्य भोजनार्थं प्रधावति ।
सिंहवद्घातयत्युग्रो मृगशूकरवानरान् ॥७३॥
आमिषाहारनिरतो वने भ्रमति सर्वथा ।
करे धनुः समागृह्य धृत्वा पृष्ठे निषंगकम् ॥७४॥
आरण्यकान् पशून् पतत्रिणो हन्ति पदा चरन् ।
चक्रवाकान्कपोतांश्च पारावतांश्च तित्तिरान् ॥७५॥
कुक्कुटान् सारसान् हन्ति मयूरान्मूषकानपि ।
वराहान् गवयाँश्चैव गरुडान् हन्ति हंसकान् ॥७६॥
एतानन्यान् हिनस्त्युग्रो धृष्टबुद्धिर्हि निर्दयः ।
पूर्वपापैः पापमार्गे प्रवृत्तः पापकर्मसु ॥७७॥
दुःखाविष्टः सुखलेशरहितोऽभूदहर्निशम् ।
एवं वृक्षेषु शैलेषु दुर्गे चारण्यभूमिषु ॥७८॥
अनासनोऽटति दैवात् प्राप्तः कुण्डिननामकम् ।
पुरं ह्युद्यानशोभाढ्यं निकटे वनभूमिकम् ॥७९॥
नातिदूरे वने तत्र कौण्डिन्याख्यो महानृषिः ।
स्वाश्रमे वर्तते नित्यं पान्थानां शान्तिसम्प्रदः ॥८०॥
अतिथीन् सत्करोत्येषो भक्ष्यपानासनादिभिः ।
गतोऽयं त्वाश्रमद्वारे मुनिं श्रुत्वा तपोधनम् ॥८१॥
वैशाखे मासि सरसि कृतस्नानं तपोधनम् ।
आससाद धृष्टबुद्धिः स्वोद्धारोदयसन्मुखः ॥८२॥
पादयोः पतितः प्रह्वीभावेनैवाऽऽर्द्रमानसः ।
तावदृषेरार्द्रवस्त्रबिन्दवः पतितास्तदा ॥८३॥
मस्तके धृष्टबुद्धेस्तु स्कन्धयोः करयोस्तथा ।
नारायणाय विद्महे वासुदेवाय धीमहि ॥८४॥
वदतो मुनिराजस्य शब्दोऽपि श्रवणे गतः ।
एवं मन्त्रेण ऋषिणा सलिलेन तु पावितः ॥८५॥
चरणस्पर्शमात्रेण नष्टपापो बभूव सः ।
मुमुक्षुतांकुरोद्भेदो जातस्तत्र क्षणेऽस्य च ॥८६॥
कौण्डिन्यस्याऽग्रतः स्थित्वा समुवाच कृतांजलिः ।
भो भो ब्रह्मन्मोक्षदातर्दयां कृत्वा ममोपरि ॥८७॥
येन पुण्यप्रभावेण मुक्तिर्भवति पापिनः ।
तादृशं पुण्यकार्यं मे व्रतं वा वद मोक्षदम् ॥८८॥
महात्मनां प्रसंगेन महापातकिनोऽपि च ।
तरन्ति पावना भूत्वा पावयन्त्यपरानपि ॥८९॥

तस्माच्चौर्यसुरापानाऽऽमिषभक्षणमैथुनम् ।
कृत्वा पापदुराचारान् पतितोऽस्मि च सर्वतः ॥९०॥
पावयित्वेदृशं मां च मोक्षभाजं कुरु प्रभो ।
श्रुत्वा प्राह तदा कौण्डिन्यर्षिस्तं शरणागतम् ॥९१॥
वैशाखस्य सिते पक्षे मोहिनी नाम विश्रुता ।
एकादशी भवत्येषा व्रतं तस्याः समाचार ॥९२॥
मेरुतुल्यानि पापानि क्षयं यास्यन्ति तद्व्रतात् ।
बहुजन्मार्जितान्याशु नश्यन्ति व्रतिनो ध्रुवम् ॥९३॥
इति कौण्डिन्यसद्वाचं श्रुत्वा धृष्टसुधीस्तदा ।
व्रतं चकार विधिवत् कौण्डिन्याश्रमसन्निधौ ॥९४॥
धौतपापोऽभवच्छुद्धो वासनाऽस्य लयं गता ।
आयुश्चापि गतं त्वन्तं कर्मलेशो न विद्यते ॥९५॥
द्वादश्यां सः फलपत्राहारः सन् सरसस्तटे ।
सुप्तो मुनिं स्मरन् कृष्णं नारायणं भजन् रटन् ॥९६॥
शरीरं भौतिकं त्यक्त्वा दिव्यदेहो बभूव सः ।
जगाम वैष्णवं लोकं गरुडोपरि संस्थितः ॥९७॥
एवं लक्ष्मि ! मोहिनीसद्व्रतं मोक्षप्रदं शुभम् ।
नातः परतरं किञ्चित् त्रैलोक्ये सचराचरे ॥९८॥
यज्ञादितीर्थदानानि कलां नार्हन्ति षोडशीम् ।
व्रतस्याऽस्याऽघहर्तुर्वै मोक्षदातुर्हरेर्बलात् ॥९९॥
मायामोहप्रसक्तानां मोहिनी मोहनाशिनी ।
ब्रह्मपूजातिरिक्तानां मोहिनी मोहनप्रदा ॥१००॥
मोहं नास्ति यतो यस्यां मोहिनी प्रोच्यते ततः ।
मोही पापी यया धाम्नि स्वर्गे वा नीयते तु सा ॥१०१॥
मोहिनी कृष्णसम्बन्धात्प्रोच्यते नित्यसौख्यदा ।
कोटियज्ञफलाधिक्यफलदात्री व्रतेन सा ॥१०२॥
पालनीया प्रयत्नेन स्वर्गमोक्षफलप्रदा ।
पूर्वजन्मकृताऽनेककर्मपापापनुत्तये ॥१०३॥
वैष्णवेन विशेषेण कर्तव्या मोहशान्तये ।
कृष्णनारायणपादाम्बुजमोहाभिलब्धये ॥१०४॥
पुत्रपौत्रधनदारास्मृद्धियानगृहादिकम् ।
सकामो लभते सर्वं व्रतेनाऽस्याः कृतेन यत् ॥१०५॥
लभेद्धनं धनहीनो ह्यबुद्धो बुद्धिमाप्नुयात् ।
यद्यत्संकल्पयेच्चापि संप्राप्नुयात्तु तद्व्रती ॥१०६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने वैशाखशुक्लमोहिन्येकादशीव्रतमाहात्म्यं धृष्टबुद्धिनाम्नः पापिवैश्यस्य कौण्डिन्योपदेशाद् व्रतकरणेन मुक्तिरित्यादिनिरूपणनामैकोनपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २४९ ॥

श्रीलक्ष्मीरुवाच—

लोके च प्राणिनां रीतिर्नैसर्गिकी तु केशव ।
भक्ष्ये पाने तथाऽऽनन्देऽलंकारे विषये प्रिये ॥ १ ॥
मानवास्तु तथा मर्त्ये विधिं विस्मृत्य मानवम् ।
यान्ति ते पाशवे मार्गे देहेन्द्रियाऽसुतर्पणाः ॥ २ ॥
तेषां मुक्तिकरं सौम्यं व्रतं नारायण प्रभो ! ।
एकादश्या व्रतादन्यन्नास्ति द्राङ् मोक्षदं खलु ॥ ३ ॥
श्रुत्वैतन्मानसं मेऽतिप्रसन्नं भवति प्रभो ! ।
श्रोतुमिच्छामि माहात्म्यं विधिं प्रपूजनं व्रतम् ॥ ४ ॥
ज्येष्ठकृष्णैकादशिकातिथेस्तद् वद केशव ।
किं नाम्न्येकादशी कोऽस्या देवः पूज्यश्च किं फलम् ॥ ५ ॥

श्रीनारायण उवाच—

एकादशी त्वपराख्या महापातकनाशिनी ।
ज्येष्ठकृष्णदलीया वै पुत्रपौत्रप्रदायिनी ॥ ६ ॥
अस्या अधिपतिर्देवो हरिः स्वयमधोक्षजः ।
पत्न्या त्रय्याख्यया युक्तः पूजनीयो विधानतः ॥ ७ ॥
केतकैरर्चनीयोऽसौ तथाऽन्यैः कुसुमैः शुभैः ।
अर्घ्ये बहुफलं देयं दुग्धौदनादि भोजने ॥ ८ ॥
शार्करं तु जलं शीतं पानार्थं देयमुत्तमम् ।
सवत्सायाश्च गोर्दानं गुरवेऽत्र प्रकीर्तितम् ॥ ९ ॥
दशम्यामेकभुक्तेन नक्तेन निर्वहेद् व्रती ।
रात्रौ भूशयनं कुर्याद् रक्षयेद् ब्रह्मचारिताम् ॥१०॥
एकादश्यां समुत्थाय ब्राह्मकाले हरिं स्मरेत् ।
स्वर्णकेशं पद्मनेत्रं तिलपुष्पसुनासिकम् ॥११॥
सकुण्डलं समुकुटं केयूरकटकान्वितम् ।
रक्ताधरं सुचिबुकं वर्तुलाननशोभितम् ॥१२॥
हसन्तं कुन्दकलिकापंक्तिभासुरदन्तकम् ।
प्रोद्भिन्नयौवनोपेतं तेजोमण्डलमण्डितम् ॥१३॥
हाररत्नाभरणादिभूषितं सेवितं जनैः ।
रूपानुरूपावयवं प्रसन्नमुखपंकजम् ॥१४॥
चेतो हरन्तं भक्तस्य कटाक्षशरकारिणम् ।
दिव्यानन्दभरं कृष्णं कोटिकन्दर्पसुन्दरम् ॥१५॥
ध्यायेदेवं हरिं कृष्णं परमात्मानमीश्वरम् ।
ततः स्नात्वा पूजयेच्च विधिना स्वामिनं प्रभुम् ॥१६॥
आवाहनादिषोडशविधानैः पूजयेत्प्रभुम् ।
पुष्पांजलिप्रपर्यन्तं नैत्यकं पूजनं व्रती ॥१७॥

विधाय प्रार्थयेदन्ते व्रतविघ्नप्रशान्तये ।
अपराया व्रतं त्वद्य करिष्ये परमेश्वर ॥१८॥
अविघ्नं तत्प्रपूर्णं मे भवत्विति ततो व्रती ।
मण्डलं सर्वतोभद्रं कारयेदक्षतादिभिः ॥१९॥
घटं संस्थाप्य सौवर्णं सजलं ताम्रमित्यथ ।
पञ्चरत्नादिसंयुक्तं वस्त्रपल्लवशोभितम् ॥२०॥
पूजयेत्तं च तीर्थानि जले त्वावाहयेत् ततः ।
मूर्तिं त्रय्या सहाऽधोक्षजस्य कुन्दननिर्मिताम् ॥२१॥
घटमूर्ध्नि तिलपात्रे प्रसंस्थाप्य प्रपूजयेत् ।
आवाहनात्समारभ्य यथा विसर्जनावधिम् ॥२२॥
स्नानालंकारसौगन्ध्यनैवेद्यजलवीटिकाम् ।
आरार्त्रिकस्तुतिपुष्पांजलिक्षान्तिसमर्थनाम् ॥२३॥
निर्वर्तयित्वा दानानि विविधानि तु दापयेत् ।
मध्याह्नेऽपि तथा कुर्यात् पूजनं होममित्यपि ॥२४॥
त्रय्याऽधोक्षजनाम्ना वै ह्यष्टोत्तरशतं व्रती ।
नैवेद्यं मिष्टमर्पय्य ताम्बूलादि समर्पयेत् ॥२५॥
सायं तु मण्डपं रम्यं हरितं कदलीकृतम् ।
नवपल्लवपुष्पाढ्यफलयुक्तोरणान्वितम् ॥२६॥
सवितानं सुरंगालिचित्रशोभाचमत्कृतम् ।
कारयेत् तत्र दोलायामान्दोलयेत्तु माधवम् ॥२७॥
जलफुव्वारसंसिक्तशीतलोद्यानमध्यगम् ।
सिंहासनस्थितं चाधोक्षजं विज्ञ्यात् ततो व्रती ॥२८॥
कृत्वैवं तु महापूजां हरेर्निशि प्रकारयेत् ।
आरार्त्रिकादिकं चाथ नैवेद्यं दधिशर्करम् ॥२९॥
आम्रमिष्टरसाढ्यं च पूरिकादियुतं शुभम् ।
अर्पयेत् नक्तभोज्यं च ताम्बूलादि समर्पयेत् ॥३०॥
कल्पयेच्छयनार्थं च पर्यंकं प्रेंखयान्वितम् ।
निम्बवृक्षप्रशाखायां व्योम्नि बद्धं सुदोलकम् ॥३१॥
कोमलं गेन्दुकाद्यं चास्तरणं चापि कल्पयेत् ।
भगवन्तं घृतदीपप्रकाशे तत्र दोलयेत् ॥३२॥
नृत्यं गीतं कीर्तनं च स्मरणं भजनं तथा ।
कुर्युर्जागरणं भक्ता मिलित्वा हरिसन्निधौ ॥३३॥
एकादश्याः कथां तत्र शृणुयाच्च पठेच्च वा ।
लीलादीनि हरेस्तत्र श्रावयेद् वदनादिना ॥३४॥
अखण्डनामभजनं सशब्दं निशि कारयेत् ।
भक्तेभ्यो मिष्टसलिलं तथा फलादि चार्पयेत् ॥३५॥
पयो दद्यात्कण्ठशान्त्यै दद्यात्त्वन्यदपेक्षितम् ।
साधूनां च सतीनां च साध्वीनां योगिनां तथा ॥३६॥
सेवनं पादसंवाहं कुर्याच्छ्रमापनोदनम् ।
एवं जागरणं कुर्यान्निन्दां कुत्सां विवर्जयेत् ॥३७॥
दिव्यां दृष्टिं प्रकुर्याच्चाऽधोक्षजं चिन्तयेद्धृदि ।
शुभं सर्वं चरेदेकादशीजागरणव्रती ॥३८॥
आलस्यपृष्ठभंगादि नाशयेद् रासकर्मणा ।
कूर्दनं गायनं नृत्यं हास्यं कुर्यात्पुनः पुनः ॥३९॥
निद्राऽऽलस्यविनाशार्थं धावनं सप्रदक्षिणम् ।
कुर्याच्च खेलनं भक्तो भक्तेषु समवर्तिषु ॥४०॥
कृष्णलीलां रासलीलां दानिलीलां प्रखेलयेत् ।
गोपीलीलां राधया संविहारं च वनेऽटनम् ॥४१॥
पद्मया सह लग्नं च भार्गव्या रमया सह ।
नारायणस्य लग्नं च प्रोत्सवात्मकमाचरेत् ॥४२॥
रात्रौ महोत्सवं कुर्यात् कृष्णस्य गोपिकाकृतम् ।
पार्वत्या प्रभया माणिक्या लक्ष्म्या साकमेव वा ॥४३॥
वैवाहिकोत्सवं कुर्याद् ब्रह्मणः परमात्मनः ।
प्रगायेज्जन्मपद्यानि शक्त्युत्पत्त्युत्सवाँस्तथा ॥४४॥
कीर्तयेज्जागरणे च प्रातः स्नात्वा प्रपूजयेत् ।
षोडशकोपचाराद्यैः पूजयेच्चाप्यधोक्षजम् ॥४५॥
त्रयीं त्वेकादशीं चापि गुरुं प्रपूजयेत्ततः ।
गुरोस्तु मस्तके कृष्णमस्तकं वर्तते सदा ॥४६॥
गुरोर्नेत्रे कृष्णनेत्रं गुर्वास्ये त्वाननं हरेः ।
गुरोः कर्णे कृष्णकर्णः हरेर्जिह्वा गुरोर्मुखे ॥४७॥
गुरोः कण्ठे हरेः कण्ठो गुर्वोष्ठे माधवाधरः ।
गुरोर्वक्षसि कृष्णोरो ह्युदरैक्यं हरेर्गुरोः ॥४८॥
गुरोर्हस्ते हरेर्हस्तो गुरोः कट्यां हरेः कटिः ।
गुरोः पृष्ठे हरेः पृष्ठं हृदयैक्यं हरेर्गुरोः ॥४९॥
गुरोर्बुद्धौ हरेर्बुद्धिर्गुरोर्वाचि हरेस्तु वाक् ।
गुरोर्गुप्ते हरेर्गुप्तं गुरोः सक्थ्नोर्हरेरूरू ॥५०॥
गुरोस्त्वक्षु हरेस्त्वग् वै गुरोर्देहे हरेर्बलम् ।
गुरोर्जान्वोर्हरेर्जानू नलैक्यं च गुरोर्हरेः ॥५१॥
गुरोः पादे कृष्णपादो नखैक्यं च गुरोर्हरेः ।
गुरौ कृष्णः स्वयं त्वास्ते नान्यः कृष्णो गुरोः परः ॥५२॥
गुरुः कृष्णः कृष्णो गुरुस्तस्मै श्रीगुरवे नमः ।
इति ध्यात्वा गुरुं सम्यक् पूजयेत् कृष्णभावतः ॥५३॥
अर्पयेच्चापि गुर्विष्टं गुरौ तुष्टे स तोषितः ।
गुरोस्तु सेवने कृष्णसेवापुण्यं भवेद्ध्रुवम् ॥५४॥
बोध्यं गुर्वर्पणं कृष्णार्पणं नास्त्यत्र संशयः ।
अहं लक्ष्मि! प्रशिष्याणां गुरुरूपो भवामि हि ॥५५॥

गुरौ स्थित्वा दिव्यसेवां गृह्णामि भक्तसत्कृताम् ।
येन केन प्रकारेण दानेनाऽभ्यर्चनेन वा ॥५६॥
नमनेनार्पणेनापि सेवनेन स्तवेन च ।
पादसंवाहनेनापि प्रियवस्त्वर्पणेन वा ॥५७॥
गृहादिकं समर्प्यापि तोषणीयो गुरुः सदा ।
तस्मादेकादशीवस्तुदानं श्रीगुरवेऽर्पयेत् ॥५८॥
पतिं पत्नीं सुतं पुत्रीं कुटुम्बं सर्वमित्यपि ।
तारयेद्धि गुरुस्तुष्टस्तस्मात्कृष्णात्मको गुरुः ॥५९॥
एवं ज्ञात्वा द्वादश्यां वै दानं तु गुरवेऽर्पयेत् ।
पारणां कारयेद् विप्रान् साधून साध्वीश्च भोजयेत् ॥६०॥
बालान् कन्या भोजयेच्च दद्याद् दानानि भूरिशः ।
एवं व्रती भुवि स्वर्गे वैराजकेऽपि वा ॥६१॥
ऐश्वरेऽव्याकृते चापि शाश्वतं सुखमाप्नुयात् ।
लोके प्रसिद्धतां याति त्वपरां यस्तु सेवते ॥६२॥
ब्रह्महत्यागोत्रहत्याभ्रूणहत्याकरस्तथा ।
स्त्रीहत्यामित्रहत्यादिपापकृन्मुच्यते व्रतात् ॥६३॥
परापवादनिरतः परस्त्रीरतिकस्तथा ।
अपराव्रतलाभेन विपाप्मा जायते जनः ॥६४॥
कूटसाक्षी कूटमाता कूटकपटकारकः ।
कूटवाक् पिशुनश्चैते मुच्यन्ते पापतो द्रुतम् ॥६५॥
कूटवेदः कूटशास्त्रः कूटज्योतिर्गणस्तथा ।
कूटायुर्वेदको वैद्यो मुच्यतेऽस्या व्रतेन वै ॥६६॥
ब्राह्मणा ब्रह्मपतिताः क्षत्रिया रक्षणाच्च्युताः ।
वैश्याः पराङ्मुखा दानान्मुच्यन्तेऽस्या व्रतेन ते ॥६७॥
धर्मबहिष्कृताः शूद्राः शिष्या गुर्वादिनिन्दकाः ।
पुत्रो मातापितृहापि मुच्यन्तेऽस्या व्रतेन वै ॥६८॥
मकरस्थे रवौ माघे प्रयागे यत्फलं नृणाम् ।
काश्यां च प्राप्यते पुण्यं शिवरात्र्या व्रतेन यत् ॥६९॥
गयापिण्डेन पुण्यं यत् पितृणां तृप्तिदं मतम् ।
सिंहस्थिते बृहस्पतौ गोदावर्यां च यत्फलम् ॥७०॥
केदारदर्शनात्पुण्यं बदरीतीर्थजं फलम् ।
कुरुक्षेत्रे रविग्राहे सर्वतीर्थप्रसेवनात् ॥७१॥
गजाश्वहेमदानेन यज्ञं कृत्वा सदक्षिणम् ।
यत्फलं तत्फलप्राप्तिरपराव्रतसेवनात् ॥७२॥
अघवृक्षकुठारीयं दोषारण्यदवानलः ।
पापाऽन्धकारतरणिर्दुरितमृगसिंहिका ॥७३॥
मुक्तिदा भुक्तिदा यावदिष्टदा ह्यपरा मता ।
यस्या व्रतेन यत्पुण्यं परं यस्मान्न शिष्यते ॥७४॥
अपरा कृष्णयोगात्सा सार्थका व्रतकारिणाम् ।
अन्यासां तु व्रतैरत्र खण्डपुण्यं हि लभ्यते ॥७५॥
अपराया व्रतेनात्र सार्वभौमफलं भवेत् ।
नास्ति यद्व्रतिनश्चात्राऽलभ्यं किञ्चिद् भवेदिति ॥७६॥
श्रोता च पाठको लक्ष्मि ! गोसहस्रफलं लभेत् ।
व्रती पापानि निर्धूय विष्णुलोके महीयते ॥७७॥
पराश्चान्या यदग्रे वै स्वल्पा भवन्ति तेजसा ।
अपरा सा यतः प्रोक्ता नास्ति यस्याः परं परम् ॥७८॥
अपरां समुपोष्यैव पूजयित्वा त्वधोक्षजम् ।
त्रयीपत्न्या सहितं च वज्रलेपात्प्रमुच्यते ॥७९॥
निष्कृतिशून्यपापानां निष्कृतिरियमुच्यते ।
अगतिकस्य जीवस्य गतिरेवाऽपराव्रतम् ॥८०॥
शृणु लक्ष्मि ! समाख्यानं शलभायाः कृते युगे ।
यतिन्याः संब्रभूवाश्चर्यान्वितं मोक्षदं शुभम् ॥८१॥
शलभानामयतिनी दीक्षां भागवतीं गता ।
साध्वी नारायणं देवं भजत्येव दिवानिशम् ॥८२॥
अरण्ये पर्वते सा चाऽर्बुदाख्ये पुष्करान्तिके ।
विचरत्यनिशं त्वेकाकिनी योगबलात्तु सा ॥८३॥
आबाल्यात्सा सनकस्याऽभवच्छिष्यातियोगिनी ।
लक्षवर्षे गते काले यौवनेऽतिबले गते ॥८४॥
वने वनपशुसिंहसिंहिकामैथुनक्रियाम् ।
वीक्ष्य चान्यारण्यवासिकामयोगान् पुनः पुनः ॥८५॥
कामदेवस्य सौख्येऽस्या मनोवृत्तिरजायत ।
वानरं रक्तवर्णं वै वन्यं सा स्वाश्रमस्थितम् ॥८६॥
धृत्वा तं रमयामास नित्यदा कामभावतः ।
वानरस्य तु योगेन गर्भो जातो व्यवर्धत ॥८७॥
पशोर्योगेन सांकर्ये पातकं मुक्तिनाशनम् ।
श्रुत्वा वशिष्ठशिष्यात्सा वेदश्रुताभिधात्तदा ॥८८॥
पश्चात्तापं परं प्राप्ता सनकस्याश्रमं गता ।
शिष्यायास्त्वन्तर्वत्नीत्वं दृष्ट्वाऽऽह सनकस्तु ताम् ॥८९॥
किमिदं वै सुते जातं ब्रह्मचर्यं विलोपितम् ।
तथापि गुरवे सर्वं ह्यकापट्येन वर्णितम् ॥९०॥
संकरीकरणस्यास्य पातित्वस्याऽप्यघस्य तु ।
येन नाशो भवेच्छुद्धिर्यथा जायेत तद्वद ॥९१॥
इत्यभ्यर्थ्य सगर्भा सा रुरोद खिन्नमानसा ।
गर्भपातेऽतिपापित्वं भ्रूणहत्यादिपातकम् ॥९२॥
कथं मे मम गर्भस्य नैर्दोष्यं संभवेदिति ।
विचारं विदधानां तां सनकः प्राह संशृणु ॥९३॥

ज्येष्ठकृष्णाऽपरैकादश्या व्रतं निर्जलं कुरु ।
पातकं ते विनष्टं स्यात्प्रारब्धं पूर्णतां व्रजेत् ॥९४॥
मुक्तिश्चापि सुलभा स्यात्प्रसवात् प्राग् व्रतं कुरु ।
इतिश्रुत्वा गुरुं नत्वा गत्वा स्वाश्रममर्बुदे ॥९५॥
चकार विधिवत्सर्वम् अपराया व्रतं शुभम् ।
तेन शुद्धिं गता तस्याः पातित्यं विलयं गतम् ॥९६॥
आयुश्च सान्तमभवत् स्थिरवृत्त्या त्वधोक्षजे ।
आत्मानं योजयित्वा च ब्रह्मरन्ध्रेण सा ततः ॥९७॥
ब्रह्मलोकं गता नीत्वा गर्भाधानस्थचेतनम् ।
देहं त्यक्त्वा परां मुक्तिमपराव्रततो गता ॥९८॥
अपराया व्रतं त्वेवं पापसांकर्यनाशनम् ।
कर्तव्यं सर्वथा लक्ष्मि ! सदा नार्याऽपि शुद्धये ॥९९॥
यतिना ब्रह्मनिष्ठेन योगिना न्यासिनाऽपि च ।
संकरीकरणाऽघस्य शान्तये कार्यमेव तत् ॥१००॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने ज्येष्ठकृष्णाऽपरैकादशीव्रतमाहात्म्यं संकरीकरणादिपातकनाशकैतद्व्रतकरणेन वानरयोगात् गर्भवत्याः शलभायतिन्या निर्दोषता मुक्तिश्चेत्यादिनिरूपणनामा पंचाशदधिकद्विशततमोऽध्यायः ॥२५०॥

**श्रीलक्ष्मीरुवाच—**

असारेऽस्मिँस्तु संसारे सारस्तु भगवान् स्वयम् ।
यं भजित्वा नरा यान्ति निर्वाणपदमक्षरम् ॥ १ ॥
कृष्णयोगात् कृष्णतिथिः कृष्णतुल्यफलप्रदा ।
यद्व्रतं विधिवत् कृत्वा देही याति परांगतिम् ॥ २ ॥
ज्येष्ठशुक्लपक्षीयैकादशी किमभिधा मता ।
तस्या देवो व्रतविधिर्दानं फलं च कीदृशम् ॥ ३ ॥
वद मे श्रीहरे कृष्ण कृपानाथ रमापते ।
स्वीयानां चाऽहेतुकाऽनुग्रहकर्ताऽसि यद्भवान् ॥ ४ ॥

**श्रीनारायण उवाच—**

ज्येष्ठशुक्लदलीयैकादशी वै निर्जलाभिधा ।
पद्माक्ष्या सहितस्त्रिविक्रमाख्यः पूज्य इष्यते ॥ ५ ॥
यूथिकाकुसुमैः पूज्यश्चार्घ्ये त्वाम्रफलं मतम् ।
दधिभक्तादि नैवेद्यं छत्रदानादि चेष्यते ॥ ६ ॥
दशम्यामेकभक्तेन नक्तेन निर्वहेद् व्रती ।
रात्रौ शयीत पृथ्व्यां च ब्रह्मचारी भवेद् व्रती ॥ ७ ॥
प्रातरुत्थाय लक्ष्मीशं ध्यायेदंगानि चिन्तयेत् ।
स्नात्वा तं पूजयेद्भक्तो भावयुक्तैस्तु वस्तुभिः ॥ ८ ॥
आवाहनं समारभ्य स्नानं पंचामृतादिना ।
शृंगारं कारयित्वाऽपि वस्त्रभूषासुगन्धिभिः ॥ ९ ॥
पत्रकुंकुमकस्तूरीहारालिशेखरादिभिः ।
आरार्त्रिकसुनैवेद्यपानताम्बूलदक्षिणैः ॥१०॥
नमःस्तुतिक्षमावाक्यैः पुष्पांजल्यादिना हरेः ।
पूजां कृत्वा ततो धान्यैः सर्वतोभद्रमण्डलम् ॥११॥
कारयेत्स्थापयेन्मध्ये घटं कांचननिर्मितम् ।
ताम्रजं वा घटं तद्वदष्टदिक्षु घटाष्टकम् ॥१२॥
स्थापयित्वा पंचरत्नफलपल्लवतण्डुलान् ।
वस्त्रं स्थालीं तिलयुक्तां सुगन्धं चन्दनादिकम् ॥१३॥
विन्यस्येत्तु कलशेषु मूर्तिं त्रिविक्रमस्य च ।
पद्माक्ष्या निर्जलया च सहितां कनकोद्भवाम् ॥१४॥
पूजयेद् विधिना भक्तो व्रतार्थं च विचारयेत् ।
करोमि पूजनं कृष्ण निर्जलाव्रतसिद्धये ॥१५॥
कृपया परिपूर्णं ते जायतां सर्वकामदम् ।
इत्यभ्यर्थ्य ततः कृष्णावतारं गणनायकम् ॥१६॥
पूजयेद् दूर्वया सिन्दूराऽगुरुचन्दनाऽक्षतैः ।
मोदकानर्पयेत् पश्चात् त्रिविक्रमं समर्चयेत् ॥१७॥
आवाहनादिकं कृत्वा पंचामृतैश्च गोभवैः ।
शुद्धोदकेन सौगन्ध्ययुक्तेन स्नपयेद्धरिम् ॥१८॥
अर्पयेच्छुक्लवस्त्राणि ब्रह्मसूत्रादिकानि च ।
मुकुटाऽऽभूषणादीनि हारकेयूरकाणि च ॥१९॥
सुगन्धितैलद्रव्यादिकजलालक्तकान्यपि ।
धूपदीपसुनैवेद्यजलताम्बूलकानि च ॥२०॥
आरार्त्रिकस्तुतिप्रदक्षिणाप्रक्रमणानि च ।
क्षमायाचनकुसुमांजलिविसर्जनानि च ॥२१॥
एवं सर्वविधानेन श्रीकृष्णं पूजयेद् व्रती ।
ततः कुर्यात् स्वकं कार्यं मध्याह्नेऽपि तथाऽऽचरेत् ॥२२॥
श्रीखण्डसारं नैवेद्ये पूरिकां त्वाम्रसद्रसम् ।
जलं शीतं शर्करैलासुगन्धं भावगर्भितम् ॥२३॥
दद्याद् देवाय तु पश्चात् सायं दोलाधिरोहणम् ।
कारयेच्छ्रीहरिं पुष्पोद्याने द्रुवाटिकाभुवि ॥२४॥
जलसिक्तशीतलार्द्रशाद्वले मृदुलस्थले ।
विहारयेद्धरिं सायं शीतवायुप्रसेविते ॥२५॥
निशि त्वारार्त्रिकं कुर्यात् स्तुत्याद्यं च यथाक्रमम् ।
तक्रं च तरलं दद्यान्नैवेद्ये सघृतां शुभाम् ॥२६॥

पानीयं मिष्टसारं च दद्यात्पानार्थमुत्तमम् ।
मुखशुद्धिकरं द्रव्यं प्रदद्याच्छयनं शुभम् ॥२७॥
भक्तो जागरणं कुर्यान्मिलित्वाऽनेकसात्वतैः ।
प्रातः स्नात्वा हरिं नत्वा पूजयित्वा ततः परम् ॥२८॥
अन्यान्पूज्यान् भोजयित्वा कुर्याद्वै जलपारणाम् ।
ततो व्रती प्रकुर्यात्तु भोजनं हरयेऽर्पितम् ॥२९॥
दानानि विविधान्येव दद्यात्सत्फललब्धये ।
नृपो दद्याद्गजादींश्च रत्नानि नगराणि च ॥३०॥
विप्रो दद्यात्पुस्तकादि वैश्यो धान्यधनानि च ।
शूद्रो दद्यात्कलालभ्यवस्तूनि नूतनानि तु ॥३१॥
सर्वो दद्याद् यथाशक्ति यत्स्वाग्रे देयमस्ति तत् ।
गवां दानं च भूदानं दानान्यन्यानि चाचरेत् ॥३२॥
यद् यस्याग्रे स्वकं स्यात्तत्सत्पात्रायाऽर्पयेद् व्रती ।
ब्रह्मणे त्वर्पयामीति मत्वा दद्यात्तु शार्ङ्गिणे ॥३३॥
लक्ष्मीनारायणायैव दद्याच्छ्रीगुरवे तथा ।
अनाथाय दरिद्राय दद्याचाप्यसहायिने ॥३४॥
नार्यै दद्याद्विधवायै ह्यनाथायै तथाऽर्पयेत् ।
बालकेभ्यो बालिकाभ्यः प्रदद्याच्छर्करादिकम् ॥३५॥
भिक्षां सद्भ्यश्च साध्वीभ्यो दद्याद्व्रती घृतान्विताम् ।
मिष्टान्नानि तथाऽन्यानि भोज्यान्यपि समर्पयेत् ॥३६॥
एवं कृत्वा व्रतं भक्तो याति स्वर्गंच मोक्षणम् ।
व्रतमेतत्सुखोपायं सारभूतं महाफलम् ॥३७॥
अल्पक्लेशं स्वल्पवस्तुसाध्यं यच्छ्रद्धया भवेत् ।
अपि पापदुराचाराः पापिष्ठा धर्मवर्जिताः ॥३८॥
निर्जलायां न भुंजन्ति नो पिबन्ति जलादिकम् ।
हरेर्भक्तिं प्रकुर्वन्ति न ते यान्ति यमान्तिकम् ॥३९॥
शृणु व्रतकथां त्वस्या याऽभूत्पूर्वे कृते युगे ।
ब्रह्मणा भवनं सृष्टं यथापूर्वं युगादिमे ॥४०॥
प्रथमे तु दिने तत्र सत्ययुगे ऋषिः क्रतुः ।
अग्निमुखः क्रतुः पुत्रो वेधसो बहुभोज्यभूत् ॥४१॥
यद्यद् भक्षयति प्राप्तं भस्मीभवति तत्क्षणे ।
समकाले सहस्राणि लक्षाणि भोजनान्यपि ॥४२॥
असीमानि प्रदत्तानि भुंक्ते द्रागेव चैकलः ।
जीर्यन्ति तानि सर्वाणि घटिकान्ते बुभुक्षितः ॥४३॥
जाठराग्निकृतदावानलव्याप्तो भवत्यपि ।
समिच्छत्यतिभोज्यानि नाप्यन्ते तु यदा तदा ॥४४॥
वनं हिमालयारण्यं मेर्वरण्यं महत्तमम् ।
गच्छत्येव च तत्रत्यं सर्वं खादत्यहर्निशम् ॥४५॥
जलार्थं तु क्षीरमिष्टसागरे तु पतत्ययम् ।
पानीयं पिबति यावत् तृप्तिर्भवति तत्तथा ॥४६॥
एवं तु गम्यमानायां यात्रायां वर्ष्मणः क्रतुः ।
क्वचित्पुरुक्षुधाविष्टो ब्रह्माणं संजगाम ह ॥४७॥
प्रार्थयच्चाऽऽतृप्तिभक्ष्यं नित्यं मे प्राप्यतामिति ।
ब्रह्मा प्राह क्रतुं पुत्र तृप्तिं तुभ्यं ददाम्यहम् ॥४८॥
यः कोपि चेतनस्तुभ्यं यजमानस्वरूपकः ।
यज्ञे दास्यति यावत्या भक्ष्यं भावनयाऽतुलम् ॥४९॥
तावती ते क्षुधा तत्र जायतां पाचनाय वै ।
भावनाया अभावे तु क्षुधानाशोपि ते भवेत् ॥५०॥
तृप्तिस्तु तत्र भवतु यथाभावनमेव ते ।
इत आरभ्य पुत्र त्वां क्षुधा बाधिष्यते नहि ॥५१॥
यथा ह्यतः प्राग्वबाधे तथा बाधिष्यते नहि ।
किन्तु क्रतुस्वरूपाय हविर्दास्यन्ति तेऽधिकम् ॥५२॥
बहुभिः समकाले ते ह्यनर्थ्यं मा तदा भवेत् ।
इतिहेतोः क्षुधा ते वै स्वेच्छया संभविष्यति ॥५३॥
कश्चिद्दास्यति यावत्ते तावत्तेऽस्तु तदा क्षुधा ।
न दास्यति तदा क्षुत्ते शमिष्यतीति सर्वदा ॥५४॥
सुखी भव क्रतो पुत्र मा जिह्वालौल्यमीयताम् ।
स क्रतुर्ब्रह्मणाऽऽशीर्भिर्योजितो निर्ययौ ततः ॥५५॥
स त्वग्निहोत्रिणां नित्याऽऽवासेषूवास शान्तहृत् ।
भक्षयत्यनिशं त्वग्नौ होतॄणां होमकर्मसु ॥५६॥
हव्यं बहुविधं प्रातर्मध्ये सायं च नैत्यकम् ।
भुक्त्वा भुक्त्वा क्षुधा त्वस्य नित्यमाहारमिच्छति ॥५७॥
इत्यभ्यासवशात्तस्य त्रिवारं भोजनं ध्रुवम् ।
ततोऽप्यधिककालं वा कर्तव्यं भवति ध्रुवम् ॥५८॥
एवं स भोजनाभ्यासात् काले काले समिच्छति ।
भोजनं विविधं हव्यं ह्यदत्तं दत्तमेव वा ॥५९॥
जिह्वालौल्याद् भोजनेच्छा जायते तु मुहुर्मुहुः ।
स्वेच्छया च क्षुधा त्वस्य वर्धते बहुवेगिनी ॥६०॥
एवं क्रतोः स्थितौ दक्षमरीच्याद्या महर्षयः ।
ययुर्बदरिकारण्यं द्रष्टुं नारायणं नरम् ॥६१॥
मन्दाकिन्यां च ते स्नात्वा दृष्ट्वा नारायणं हरिम् ।
निषीदुः श्रीहरेस्तत्र सान्निध्ये बदरीवने ॥६२॥
रूपाभिरूपावयवं हिमग्रावसमोज्ज्वलम् ।
ब्रह्मव्रतस्वरूपं च तपोमूर्तिं परेश्वरम् ॥६३॥
भृगुर्नत्वा हरिं स्मृत्वा पप्रच्छ परमेश्वरम् ।
दीनबन्धो कृपासिन्धो बद्धोद्धारकर प्रभो ॥६४॥

नमामः शरणं प्राप्तास्त्वां हृत्स्थं च बहिःस्थितम् ।
वदाऽस्मान् सरलं पुण्यप्रदं भुक्तिप्रमुक्तिदम् ॥६५॥
व्रतं येनाऽन्नजा दोषा नश्येयुः सर्वतोमुखाः ।
परान्नजास्तथा शुद्धिरहितान्नसमुद्भवाः ॥६६॥
सूतकान्नकृताश्चापि संसृष्टान्नग्रहोद्भवाः ।
भिक्षान्नजास्तथा पर्युषितान्नोद्भविताश्च ये ॥६७॥
ते नश्येयुर्यथा दोषा ज्ञानाऽज्ञानकृताः प्रभो ।
अनर्पितान्नजा दोषाः स्वार्थपंक्तिप्रभेदजाः ॥६८॥
ते दोषा येन नश्येयुस्तादृशं ब्रूहि सत्तपः ।
श्रुत्वैवं श्रीहरिः प्राह श्रृणुत ब्राह्मणोत्तमाः ॥६९॥
व्रतं व्रतोत्तमं त्वेकादश्या मतमुपोषणम् ।
तपस्तपःप्रधानं च पापसंहारकारकम् ॥७०॥
अन्नाश्रितानां दोषाणां सर्वेषां शोधकं परम् ।
सरलं सुलभं सूक्ष्मं व्रतं सर्वफलप्रदम् ॥७१॥
एकादश्यां न भुंजीत पक्षयोरुभयोरपि ।
सूतकेऽपि न भोक्तव्यं नाऽऽशौचेऽपि महर्षयः ! ॥७२॥
यावज्जीवं व्रतमेतत्कर्तव्यं श्रेय इच्छता ।
स्वर्गं मोक्षं वाञ्छताऽपि कर्तव्यं तद् व्रतं शुभम् ॥७३॥
अन्नाश्रिताऽसंख्यदोषा व्रतकर्तुर्भवन्ति न ।
एकादश्या अव्रतानां मोक्षो नैव च नैव च ॥७४॥
अपि पापदुराचाराः पापिष्ठा धर्मवर्जिताः ।
एकादश्यां न भुंजन्ति न ते यान्ति यमान्तिकम् ॥७५॥
एकादश्यां तु भोक्तारोऽन्नादा यान्ति यमालयम् ।
इति तद्वचनं श्रुत्वा कम्पितो हृदयाम्बुजे ॥७६॥
क्रतुः प्राह महाभक्ष्यो नरनारायणं प्रति ।
भगवन्नैव शक्तोऽस्मि बुभुक्षा दुःसहा मम ॥७७॥
प्रातर्मे भोजनाऽलब्धौ मध्याह्ने मरणं भवेत् ।
नाऽहं क्षुधां समर्थोऽस्मि सोढुं वै कालपंचके ॥७८॥
प्रातर्देवमुखैरद्मि पूर्वाह्णेऽग्निमुखेन च ।
मध्याह्ने चापराह्णे चाऽतिथिभिक्षुकसन्मुखैः ॥७९॥
सायं सर्वमुखैरद्मि रात्रौ स्थावरजंगमैः ।
एवं वै भोजनं मेऽस्ति सर्वथा परिनिर्मितम् ॥८०॥
क्षुधापि बाधते यावदभ्याससमयेऽन्वहम् ।
तस्माद् दानानि दास्यामि पूजयिष्यामि केशवम् ॥८१॥
अन्यत्पुण्यं करिष्यामि न करिष्याम्युपोषणम् ।
इत्युक्त्वा विररामाऽसौ प्राह नारायणस्तदा ॥८२॥
यदि स्वर्गोऽस्त्यभीष्टस्ते नरको नेष्यते त्वया ।
एकादश्यां न भोक्तव्यं पक्षयोरुभयोरपि ॥८३॥
क्रतुः प्राह हरिं नाथ तथ्यं वच्मि तवाऽग्रतः ।
एकभुक्ते न शक्तोऽस्मि तूपवासे कुतः क्षमः ॥८४॥
क्रो नामा त्वनलः सप्तजिह्वस्तुदति जाठरः ।
नाम्ना भवामि लक्ष्मीश ! क्रतुरेवं यथार्थतः ॥८५॥
क्रः क्रूरः स महानग्निरतिवेलं च भोजनम् ।
अतिस्निग्धं यदाऽश्नामि तदा सोऽपि प्रशाम्यति ॥८६॥
सर्वासामुपवासे तु मरिष्यामि न संशयः ।
तस्मात्कुरु कृपां कृष्ण कर्तुं शक्नोम्यहं यथा ॥८७॥
येनैव प्राप्यते स्वर्गस्तत्कर्ताऽस्मि तवाऽऽज्ञया ।
मोक्षश्चापि भवेद्येन तदेकं वद मत्कृते ॥८८॥
यदहं सुगमं कुर्वे येन श्रेयोऽहमाप्नुयाम् ।
श्रुत्वा नारायणस्तस्य दयालुर्भक्तवत्सलः ॥८९॥
प्राह योग्यं विचार्यैव तादृशानां कृते व्रतम् ।
वृषस्थे मिथुनस्थेऽर्के यदा त्वेकादशी भवेत् ॥९०॥
ज्येष्ठमासे प्रयत्नेन सोपोष्या जलवर्जिता ।
गण्डूषाचमनं वारि वर्जयित्वा जलं परम् ॥९१॥
उपभुंजीत नैवात्र निर्जला सा कृता भवेत् ।
निर्जलायां जले ग्रस्ते व्रतं न्यूनबलं भवेत् ॥९२॥
उदयादुदयं यावद् वर्जयित्वा जलं व्रती ।
द्वादशैकादश्युपोषणोत्थं फलमवाप्नुयात् ॥९३॥
व्रतं तु निर्जलं देवार्चनयुक्तं सजागरम् ।
कृत्वा प्रातर्द्वादश्यां च जलस्नानं प्रपूजनम् ॥९४॥
सजलं ससुवर्णं च घटं दत्वा द्विजातये ।
अन्नदानानि दत्वा च भुंजीत पारणां स्वकैः ॥९५॥
साधून् साध्वीर्बालिकाश्च बालान् संभोजयेद् व्रती ।
संवत्सरैकादशीनां फलं वै व्रतिनो भवेत् ॥९६॥
सर्वान्वादान्परित्यज्य मामेकं शरणं व्रजेत् ।
एकादश्यां निराहारः सर्वपापात् प्रमुच्यते ॥९७॥
एकादश्यां न भुंजीत पक्षयोरुभयोरपि ।
तत्रापि ज्येष्ठशुक्लैकादश्यां वै निर्जलो भवेत् ॥९८॥
एकस्या अपि पुण्यं संवत्सरैकादशीभवम् ।
उपोषिता हि सर्वाः स्युरेकादश्यः सिताऽसिताः ॥९९॥
धनधान्यप्रदा त्वेषा पुत्रारोग्यादिसम्प्रदा ।
उपोषिता मनोवाञ्छितार्थलाभप्रदा शुभा ॥१००॥
यमदूता महाकायाः कराला विकटाननाः ।
दण्डपाशधराः क्रूरा व्रतीनं नाभियन्ति हि ॥१०१॥
पीताम्बरधराः सौम्याश्चक्रहस्ता मनोजवाः ।
वैष्णवाः संनयन्त्येनं ह्यन्ते पुरीं तु वैष्णवीम् ॥१०२॥

तस्मात्सर्वप्रयत्नेन ऋतो त्वं तां समाचर।
निर्जलां श्रद्धया पुत्र विधेह्यद्भिर्विवर्जिताम् ॥१०३॥
तेन ते जाठरस्तीव्रो नियमस्थो भविष्यति।
उत्साहेन प्रकर्तव्या साऽवधानेन निर्जला ॥१०४॥
स्वप्नेऽन्नभक्षणं वारिपानं वा जायते यदि।
तदा मे ह्यपराधो न व्रतभंगोऽत्र माऽस्तु मे ॥१०५॥
स्वप्नदोषेऽपि मे नाथ व्रतभंगो हि माऽस्तु मे।
निद्रालस्यनिमित्तेऽपि व्रतभंगोऽपि माऽस्तु मे ॥१०६॥
भोक्ष्ये परेऽह्नि देवेश ह्यशनं वासराद्धरेः।
इत्यभ्यर्थ्य हरिं कृष्णमुपवासपरो भवेत् ॥१०७॥
मेरुलोकालोकतुल्यं स्त्रिया पुंसा च यत्कृतम्।
सर्वं तद्भस्मतां याति पापमेकादशीबलात् ॥१०८॥
जलधेनुः प्रदातव्या द्वादशीपारणादिने।
सकांचनः प्रदातव्यो सुघटो जलसंभृतः ॥१०९॥
जलं नैव हि पातव्यं ह्यस्यां यो नियमं चरेत्।
फलं कोटिसुवर्णानां यामे यामे भवेत्तदा ॥११०॥
स्नानं दानं जपं होमं करोति स्वल्पकं व्रती।
तत्सर्वं शाश्वतं पुण्यं ददात्यच्युतवाग्बलात् ॥१११॥
किमन्येन तु कृत्येन निर्जलैकादशीं विना।
सुवर्णमन्नं वासो वा यदस्यां संप्रदीयते ॥११२॥
यो निर्जलं तूपवसेत् वैष्णवं धाम याति सः।
येन येन कृतं पुण्यं सर्वं चाप्यक्षयं भवेत् ॥११३॥
ये तु दास्यन्ति दानानि द्वादश्यां पारणादिने।
ज्येष्ठे सिते व्रतिनस्ते प्राप्स्यन्ति परमं पदम् ॥११४॥
ब्रह्मघ्नो मद्यपश्चौरो गुरुद्वेषी व्यवायकृत्।
मुच्यन्ते पातकैरेते यदि द्वादश्युपोषिता ॥११५॥
ऋतो शृणु विशेषं त्वं निर्जलैकादशीदिने।
श्रद्धायुक्तनरस्त्रीभिर्जलशायी हरिः स्वयम् ॥११६॥
पूजनीयस्तथा देया धेनुर्जलमयी तदा।
प्रत्यक्षा वा सवत्सा वा देया मुक्तिप्रदा भवेत् ॥११७॥
श्रेष्ठाभिर्दक्षिणाभिश्च मिष्टान्नैश्च पृथग्विधैः।
तोषणीया द्विजाः सन्तः साध्व्यो बालाश्च बालिकाः ॥११८॥
तेषु तुष्टेषु कृष्णोऽहं तुष्टो भवामि मोक्षदः।
यैर्न व्रतं कृतं त्वस्या आत्मघ्नास्ते न संशयः ॥११९॥
एकादश्यां दिने योऽन्नं भुंजतेऽघभुजो हि ते।
पापात्मानो दुराचारा मुष्टास्ते नात्र संशयः ॥१२०॥
शान्तैर्दान्तैर्दानपरैरर्चयद्भिस्तथा हरिम्।
कुर्वद्भिर्जागरं रात्रौ यैरेषा समुपोषिता ॥१२१॥
कुलानां शतमागामि ह्यतीतानां तथा शतम्।
आत्मना सह तैर्नीतं वासुदेवस्य मन्दिरम् ॥१२२॥
अन्नं गावो महिष्यश्च वस्त्रं शय्यासनं जलम्।
दण्डः कमण्डलुश्छत्रं पात्रं स्वर्णं तिलादिकम् ॥१२३॥
उपानहौ तथाऽन्यद्वा किंचित्पात्रे ददाति यः।
स सौवर्णेन यानेन स्वर्गलोके महीयते ॥१२४॥
नियमेन तु कर्तव्यं व्रतं निर्जलमेव हि।
द्वादश्यां देवदेवेशः पूजनीयस्त्रिविक्रमः ॥१२५॥
सशर्करा जलकुंभा दातव्या विष्णुसन्निधौ।
भोजयित्वा ततो विप्रान् स्वयं भुंजीत पारणाम् ॥१२६॥
एवं यः कुरुते पूर्णां द्वादशीं पापनाशिनीम्।
सर्वपापविनिर्मुक्तः पदं गच्छत्यनामयम् ॥१२७॥
श्रुत्वा नत्वा ऋतुः स्वस्याश्रमं यातो मुदान्वितः।
व्रतं चकार विधिवन्निर्जलाया दिने तु सः ॥१२८॥
फलं तु प्राप्तवान्सर्वं तथाऽन्योऽपि करिष्यति।
प्राप्स्यत्येषश्चतुर्विंशत्येकादशीकृतं फलम् ॥१२९॥
यश्चेमां शृणुयाद्भक्त्या यश्चापि परिकीर्तयेत्।
उभौ तौ ह्यामाप्नुयातां नात्र कार्या विचारणा ॥१३०॥
यत्फलं तु सिनीवाल्यां राहुग्रस्ते दिवाकरे।
श्राद्धं कृत्वा जपेद्यत्तत् स्यादस्याः श्रवणादपि ॥१३१॥
पठनात्पाठनाच्चापि व्रततुल्यं फलं भवेत्।
व्रतात्तु शाश्वतं स्वर्गं मुक्तिश्च शाश्वती भवेत् ॥१३२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने ज्येष्ठशुक्लनिर्जलैकादशीव्रतमाहात्म्यं बुभुक्षितस्य ऋतोर्व्रतेन सोपाख्यान क्षुधाशान्त्यादि फलप्राप्त्यादिचेतिनिरूपणनामैकपंचाशदधिकद्विशततमोऽध्यायः ॥ २५१ ॥

श्रीलक्ष्मीरुवाच—

कृपासिन्धो सदाऽऽलस्यान्वितानां भवपारकृत्।
तारिता वै त्वया नाथ निर्जलाव्रतवर्णनात् ॥ १ ॥
येन मुक्तिं तथा भुक्तिं सर्वैकादशिकाफलम्।
व्रतिनः प्राप्नुवन्त्यत्र कारणं करुणा तव ॥ २ ॥
संकल्पस्तव जीवानां कथंचिद्वै भवेद्यथा।
निःश्रेयः परमं यद्वा मोक्षो वा स्वर्गमेव वा ॥ ३ ॥
जननीवद्रक्षणं स्याद् भवसागरवारिधेः।
तथा त्वं यतसे नाथ कृपा केवलकारणम् ॥ ४ ॥

वद मेऽषाढकृष्णैकादश्या व्रतफलं विधिम् ।
देवं पूजां च माहात्म्यं कृपालो दानमित्यपि ॥ ५ ॥

**श्रीनारायण उवाच—**

अषाढकृष्णपक्षीया योगिनीसंज्ञिका मता ।
क्षेमंकर्या सहाऽत्राऽर्च्यो नृसिंहाख्यो हरिः प्रभुः ॥ ६ ॥
भृंगराजोऽत्र पुष्पेषु तथाऽर्घ्ये जाम्बवं फलम् ।
नैवेद्ये पिण्डका देया दाने तु जलगौर्मता ॥ ७ ॥
विशेषोऽयं विधिः प्रोक्तः कार्यं व्रतं व्रतोत्तमम् ।
सर्वपापक्षयकृच्च सर्वभुक्तिप्रदायकम् ॥ ८ ॥
संसारार्णवमग्नानां पोतरूपं सनातनम् ।
जगत्त्रये सारभूतं योगिनीव्रतमुत्तमम् ॥ ९ ॥
दशम्यामेकभक्तेन नक्तेन व्रतिना खलु ।
भूशायिना वर्तितव्यं ब्रह्मचर्यादिना तथा ॥१०॥
एकादश्यां व्रती प्रातरुत्थाय श्रीहरिं स्मरेत् ।
ध्यात्वा स्नात्वा पूजयित्वा हरिं षोडशवस्तुभिः ॥११॥
प्रार्थयेद् भगवन् कृष्ण योगिन्या व्रतमुत्तमम् ।
करोम्यद्य तु निर्विघ्नं सम्पूर्णफलदं भवेत् ॥१२॥
कृपया तव भक्तानामभयंकर माधव ।
इत्यभ्यर्थ्य ततो धान्यैः कारयेत् सर्वतः शुभम् ॥१३॥
मण्डलं रंगचित्रादिशोभितं मण्डलान्तरे ।
मध्ये संस्थापयेत्स्वर्णकलशं रत्नगर्भितम् ॥१४॥
फलपल्लवयुक्तं च जलवस्त्रसमन्वितम् ।
चन्दनाक्षतसत्कुंकुमाऽर्चितं नवधातुजम् ॥१५॥
शंखं च पूजयेत्तत्र घण्टां प्रपूजयेत्तथा ।
शालग्रामं पूजयेच्च गणेशं पूजयेत्तथा ॥१६॥
पूजाद्रव्यैः पूजयित्वा श्रीकृष्णं नरसिंहकम् ।
पूजयेत्परया भक्त्या स्वर्णनिर्मितमूर्तिकम् ॥१७॥
तिलस्थाल्यां स्थापयित्वा पूजयेदक्षतादिभिः ।
आवाहनादिभिः पंचामृतैः सुगन्धिचन्दनैः ॥१८॥
सद्वस्त्रैश्च विभूषाभिः श्रृंगारद्रवमर्दनैः ।
धूपदीपसुनैवेद्यफलताम्बूलवारिभिः ॥१९॥
आरात्रिकस्तुतिपुष्पांजल्यादिभिः समर्चयेत् ।
क्षमापराधं त्वभ्यर्थ्य स्वकार्यं चेत् क्रियात् ततः ॥२०॥
मध्याह्नेपि सुनैवेद्यं त्वाम्ररसश्रीखण्डकम् ।
शीतलं मधुरं वारि पूरिका दधि शर्कराम् ॥२१॥
आरनालं च कूष्माण्डखण्डपाकंपयोरसम् ।
भोजयेन्मुखवासं च पूगीफलं च वीटिकाम् ॥२२॥
दद्यात्सायं तथा सौम्यं कारयेन्मण्डपं नवम् ।
तत्र दोलां बन्धयित्वा स्थापयित्वा हरिं ततः ॥२३॥
आन्दोलयेत्समुद्याने विहारयेदितस्ततः ।
शाद्वले शीतले भागे विश्रमयेज्जनार्दनम् ॥२४॥
पूजयेद् विविधैः श्रेष्ठैर्वस्तुभिश्च ततः परम् ।
नीराजयेन्नरसिंहं स्तुतिं कुर्याच्च सैंहिकीम् ॥२५॥
रात्रौ जागरणं कुर्यान्नृसिंहपदगायनैः ।
प्रातरुत्साहपूर्वं तं ध्यात्वा स्नात्वा प्रपूजयेत् ॥२६॥
विधिवद्वस्तुभिः सर्वैर्निवेद्य मिष्टमिष्टकम् ।
जलं दद्यात्ततो भक्तः कुर्याद्वै पारणां शुभाम् ॥२७॥
जलदानं जलधेनुं स्वर्णधेनुं घृतादिकम् ।
दधि दुग्धं नवनीतं शर्करां गूडमित्यपि ॥२८॥
दद्याद् दानं सुपात्राय यानं वाहनमर्थकम् ।
गुरवे दक्षिणां दद्याद् घटं मूर्तिं हरेस्तथा ॥२९॥
मिष्टान्नानि तथान्यानि दापयेत् सद्धय एव च ।
गृहक्षेत्रपशूद्यानदासदानानि कारयेत् ॥३०॥
एवं कृत्वा व्रतं भक्तो योगिन्याः श्रद्धया युतः ।
योगिलभ्यं फलं स्वर्ग्यं कैवल्यं चापि संलसेत् ॥३१॥
श्रृणु लक्ष्मि ! कथां रम्यां दैवीं पापविनाशिनीम् ।
अलकायां नगर्यां वै कुबेरः शिवभक्तिमान् ॥३२॥
यदा शंभोः प्रपूजायां वर्तते तु तदा सदा ।
स्वानुचरो महायक्षो हेममालीति नामतः ॥३३॥
समानयति पुष्पाणि पार्श्वोद्यानभवानि वै ।
एवं नित्यं शंकरस्य पूजोपकरणानि सः ॥३४॥
उपस्थापयति तत्र सदा कुबेरसन्निधौ ।
स किन्तु यौवनोद्भेदात् कामपूरेण संभृतः ॥३५॥
स्वपत्न्या तु विशालाक्ष्या सह कामे विशेषतः ।
कामबाणेन चाकृष्टो वर्तते दिवसेऽपि च ॥३६॥
कार्ये चापि परित्यज्य कामनायां प्रवर्तते ।
एवं चातीव कामार्थी पत्न्या सह क्वचित्क्वचित् ॥३७॥
कुसुमादीनि चानेतुं गच्छत्येव द्रुमादिषु ।
एकदा तु कुबेरेण मानसाख्यसरः प्रति ॥३८॥
प्रेषितो हेममाली सः कमलानयनाय वै ।
सोऽपि नूत्नं सरो रम्यं दृश्यार्हं त्वभिमत्य च ॥३९॥
पत्न्या सह गतस्तत्राऽऽनेतुं सु कमलानि तु ।
जलं च शाद्वलं सूक्ष्मवालुकाचाकचक्यताम् ॥४०॥
रमणीयप्रदेशं च सुगन्धिकुसुमादिकम् ।
राजसं विविधं भावं विहारक्षोभकारकम् ॥४१॥

दृष्ट्वा विकृतिमायातो विसृज्य कुसुमानि च ।
पत्न्या सह तदा रेमे मानसे तु सरोवरे ॥४२॥
पत्न्या मुहुर्धृतः कामे संसक्तो न निवर्तते ।
तृप्तापि तु पुनः पत्नी प्रवृत्ता न निवर्तते ॥४३॥
एवं परस्परं प्राप्तौ कामभावौ विशेषतः ।
पुनः पुनः प्रवृत्तौ तौ विविदतुर्न मोहितौ ॥४४॥
कालातिक्रमणं जातं पूजायाश्च तथापि तौ ।
पुष्पाण्यादाय नाऽऽयातौ कुबेरोऽपि प्रतीक्षते ॥४५॥
कामप्रेमरसासक्तौ न कुबेरालयं गतौ ।
कुबेरो देवसदने करोति शिवपूजनम् ॥४६॥
प्रातः कालो व्यतीतश्च मध्याह्नसमये ततः ।
कुबेरः पूजनार्थे तु पुष्पागमसमीक्षकः ॥४७॥
चिन्तयामास विघ्नं वै यतो नायाति यक्षकः ।
द्वितीयो यक्षकस्तत्र प्रेषितोऽन्वेषणाय यत् ॥४८॥
स गत्वा रममाणं तं ददर्श हेममालिनम् ।
हेममाली तु सलिले रमते कान्तया सह ॥४९॥
प्रेष्यस्तौ प्राह पुष्पाणि स कांक्षति कुबेरराट् ।
शीघ्रं वै तत्र गन्तव्यं मध्याह्ने पूजनं भवेत् ॥५०॥
इति कृत्वा गतौ पुष्पाण्यादाय राजराजकम् ।
कुबेरं तौ ततो नत्वा ययाचाते क्षमां मुहुः ॥५१॥
यक्षराट् प्रत्युवाचाऽथ कालातिक्रमकोपितः ।
वनिताकामुकं ज्ञात्वा रममाणं निजेच्छया ॥५२॥
आः पाप दुष्ट दुर्वृत्त कामासक्ततया त्वया ।
अनादाय तु पुष्पाणि कृतं वै देवहेलनम् ॥५३॥
कामभोगो महान् विघ्नः स च दोषो महान्मतः ।
दण्डस्तत्र प्रदातव्यो न कर्तव्या मया कृपा ॥५४॥
भवाष्टादशकुष्ठी त्वं वियुक्तो कान्तया तया ।
अस्मात्स्थानादपध्वस्तो गच्छस्वाऽधम भूतलम् ॥५५॥
इत्युक्ते वचने यक्षस्तस्मात्स्थानात्पपात ह ।
महादुःखाभिभूतश्च कुष्ठैश्चित्रितविग्रहः ॥५६॥
गलत्कुष्ठः श्वेतकुष्ठो रक्तकुष्ठोऽभवत्तदा ।
चर्मकुष्ठो ललत्कुष्ठो दुर्गन्धपूयकुष्ठकः ॥५७॥
एवं जातः शरीरे स हेममाली स्वकर्मणा ।
दिवा सुखं न लभते न निद्रां लभते निशि ॥५८॥
छायायां वा निदाघे वा गृहे कुंजे च गह्वरे ।
कुट्यां भूमौ लतामध्ये लभते न सुखं क्वचित् ॥५९॥
दाहेन पीड्यते चाति खर्जनेन ज्वलत्यपि ।
पातकेनाभिभूतोपि पूर्वकर्म स्मरत्यसौ ॥६०॥
शिवार्पितसु पुष्पादिफलप्राबल्यतो ननु ।
पतितस्याऽभिभूतस्य स्मृतिस्तस्य न लुप्यति ॥६१॥
हिमालये महारण्ये घोररूप इतस्ततः ।
भ्रममाणो ययौ देवान् मार्कंडेयाश्रमं शुभम् ॥६२॥
तपोनिधिं मुनिश्रेष्ठं ब्रह्मध्यानपरायणम् ।
यस्याऽऽयुर्विद्यते लक्ष्मि ! ब्रह्मणो दिनसप्तकम् ॥६३॥
ववन्दे चरणौ तस्य दूरतः कुष्ठविग्रहः ।
मार्कंडेयो दयां कृत्वा कम्पितं दुष्टविग्रहम् ॥६४॥
परोपकरणार्थाय समाहूयेदमब्रवीत् ।
कस्मात्कुष्ठाभिभूतस्त्वं कुतो निन्द्यतमो ह्यसि ॥६५॥
श्रुत्वा प्राह तदा सोपि मुनिं पापविनाशकम् ।
राजराजस्यानुचरो हेममालीति नामतः ॥६६॥
उद्यानात्पद्मनिचयं त्वानीय प्रत्यहं मुने ।
शिवपूजनवेलायां कुबेराय समार्पयम् ॥६७॥
एकस्मिन्दिवसे पत्न्या सहितोऽहं कृपालुना ।
संप्रेषितः कुबेरेण त्वानेतुं कमलानि हि ॥६८॥
अतिसुगन्धिचित्राणि मानसाख्यसरोवरम् ।
दृष्ट्वा तु नूतनं रम्यं भूतलं सजलं शुभम् ॥६९॥
कामसुखप्रसक्ताभ्यां कालश्चाऽविदितो गतः ।
पुष्पं विना शिवपूजा प्रातर्जाता ततो ह्यहम् ॥७०॥
अतिक्रुद्धेन शप्तोऽस्मि राजराजेन वै मुने ।
कुष्ठाभिभूतः संजातो वियुक्तः कान्तया तया ॥७१॥
भ्रममाणोऽत्र सान्निध्ये प्राप्तोहं मे शुभं कुरु ।
सतां स्वभावतश्चित्तं परोपकरणे क्षमम् ॥७२॥
इतिमदर्थे भगवन् कुरु सौख्यं भवेद् यथा ।
श्रुत्वा तथ्यं तदोवाच मार्कण्डेयो महामुनिः ॥७३॥
शृणु व्रतोपदेशं ते कथयामि शुभप्रदम् ।
आषाढे कृष्णपक्षस्यैकादशीव्रतमाचर ॥७४॥
योगिनीव्रतपुण्येन कुष्ठं यास्यति वै ध्रुवम् ।
पुनः प्राप्स्यसि पत्नीं त्वं लप्स्यसे शाश्वतं सुखम् ॥७५॥
इतिवाक्यमृषेः श्रुत्वा दण्डवत्पतितो भुवि ।
आशीर्भिर्वर्धितस्तेन बभूवाऽतीव हर्षितः ॥७६॥
योगिन्येकादशीं चक्रे व्रती त्वाश्रमसन्निधौ ।
मार्कंडेयस्य कृष्णस्य पूजनं प्रचकार सः ॥७७॥
मुनेर्वचनतः सम्यग् व्रते चीर्णेऽभवत्सुखी ।
अष्टादशैव कुष्ठानि तनौ नष्टानि सर्वथा ॥७८॥
गतो नत्वा स्वकं लोकं यक्षो भूत्वा यथायथम् ।
लब्ध्वा पत्नीं पुनस्त्वेवाऽलकायां न्यवसत्सुखम् ॥७९॥

एवं शापनिवृत्तिर्वै योगीनीव्रततो भवेत् ।
कुष्ठादिरोगनाशश्च पत्नी नष्टापि लभ्यते ॥८०॥
लोकः स्थानं गृहं स्मृद्धिर्नष्टं वै प्राप्यते पुनः ।
योगिन्या व्रतपुण्येन योगलभ्यं लभेद् व्रती ॥८१॥
इदृग्विधं महालक्ष्मि ! कथितं योगिनीव्रतम् ।
नार्या भूत्वा तु योगिन्या योगिना तु नरेण च ॥८२॥
कर्तव्यं योगफलदं भुक्तिमुक्तिप्रदं व्रतम् ।
अष्टाशीतिसहस्राणि साधून् भोजयते तु यः ॥८३॥
तत्समं फलमाप्नोति योगिन्या व्रतवान्नरः ।
योगाभ्यासफलदात्री योगिलोकप्रदायिनी ॥८४॥
कृष्णयोगान्मोक्षदात्री ह्युपोष्या योगिनीतिथिः ।
पठनाच्छ्रवणाच्चास्याः सर्वपापैः प्रमुच्यते ॥८५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने आषाढकृष्णयोगिन्येकादशीव्रतमाहात्म्यं हेममालियक्षस्य कुबेरशापेन जातकुष्ठादिरोगस्य व्रतकरणेन नाश इत्यादिनिरूपणनामा द्विपंचाशदधिकद्विशततमोऽध्यायः ॥ २५२ ॥

**श्रीलक्ष्मीरुवाच—**

कालो माया तथाऽऽत्मानः शक्तयः सन्ति यस्य ताः ।
नमस्तस्मै भगवते शक्तिस्वामिपरात्मने ॥ १ ॥
योगिनीफलदात्रे ते योगपुण्यफलात्मने ।
योगिलभ्याय योगाय योगिनीपतये नमः ॥ २ ॥
त्वमेव फलदाताऽसि त्वमेवाऽसि च मुक्तिकृत् ।
त्वमेवाऽधिपतिश्चासि नमस्तस्मै महात्मने ॥ ३ ॥
सर्वदेवस्वरूपस्त्वं सर्वतीर्थात्मकोऽसि च ।
सर्वव्रतात्मकस्त्वं वै तस्मै सर्वात्मने नमः ॥ ४ ॥
आषाढस्य सिते पक्षे किंनाम्न्येकादशी भवेत् ।
को देवः को विधिस्तस्याः फलं दानं च मे वद ॥ ५ ॥

**श्रीनारायण उवाच—**

कथयामि महापुण्यां स्वर्गमोक्षप्रदायिनीम् ।
शयनीं नाम नाम्ना तु सर्वपापविनाशिनीम् ॥ ६ ॥
नियमां भामिकां चापि तामेव विद्धि नामतः ।
यस्या व्रतेन पापात्मा पूतो भवति तत्क्षणात् ॥ ७ ॥
यस्याः श्रवणमात्रेण वाजपेयफलं भवेत् ।
अतः परा न चान्यास्ति स्वर्गमोक्षप्रदा शुभा ॥ ८ ॥

अस्यास्त्वधिपतिर्देवो वामनोऽस्ति हरिस्ततः ।
कमलाख्यप्रियायुक्तः पूजनीयो हि वामनः ॥ ९ ॥
वामनः पूजितो येन कमलैः कमलेक्षणः ।
नियमाख्यशयन्यां तु तेनार्चितं जगत्त्रयम् ॥१०॥
त्रयो देवाः पूजिताश्च पूजिताः सर्वदेवताः ।
कृता त्वेकादशी येन हरिवासर उत्तमः ॥११॥
आषाढशुक्लैकादश्यां शेते क्षीरनिधौ हरिः ।
सर्वेन्द्रियप्रवाहाँस्तु परावृत्यातियोगतः ॥१२॥
तस्य पूजा त्वपामार्गैः पूरिकादिनिवेदनैः ।
नालिकेरीफलाद्यैश्च स्वर्णगोदानपूर्विका ॥१३॥
कर्तव्या व्रतिना भक्त्या नियमग्रहणं तथा ।
श्रूयतां च महालक्ष्मि ! कथा पुण्यप्रदायिनी ॥१४॥
बलिर्वै दानवः पूर्वमासीत् त्रेतायुगे प्रिये ।
पूजयँश्चैव मां नित्यं मद्भक्तो मत्परायणः ॥१५॥
यज्ञैस्तु बहुभिर्दैत्यो विधिना यजति स्म माम् ।
परया स्नेहसद्भक्त्या व्रतोपोषणपूजनैः ॥१६॥
एवं पुण्यप्रभावेण ममोपासनया तथा ।
रसातलात्समायातः पृथिव्यां स नृपोऽभवत् ॥१७॥
पृथ्व्यां चापि मम पूजाबलेन वर्धितोऽभवत् ।
स्वर्गं तेनैव देहेन ययौ पुण्यप्रभावतः ॥१८॥
कृतं राज्यं वशे स्वस्य स्वर्गभूलोकसंयुतम् ।
इन्द्रादयोऽपि तस्याऽग्रे त्वभवन्निर्बलाः सुराः ॥१९॥
दानवा वर्धिताः पुष्टास्त्रिलोक्यामभवन्नृपाः ।
इन्द्रादिभिस्तदा देवैरर्थितः परमेश्वरः ॥२०॥
हरिः शंभुस्तथा ब्रह्मा तैस्तु युक्तिः परा कृता ।
बलिः करोतु यज्ञं च दाता भवतु चाध्वरे ॥२१॥
भूत्वा तु भिक्षुकः कृष्णो महीभिक्षां करोतु सः ।
एवं तु समयं कृत्वा यज्ञार्थं प्रैरयद् बलिम् ॥२२॥
ऋषयो मुनयो देवा ब्रह्मं सर्वे गताः क्रतौ ।
रेवताचलसान्निध्ये यत्र यज्ञः प्रवर्तते ॥२३॥
तत्र वामनरूपेण ह्यवतारे हि पंचमे ।
अतिमहत्स्वरूपेण सर्वब्रह्माण्डयोगिना ॥२४॥
वाक्छलेन जितो दाता सत्यमाश्रित्य यः स्थितः ।
शुक्रस्तं वारयामास यन्नारायण इत्यहम् ॥२५॥
याचिता वसुधा लक्ष्मि ! मया सार्धपदत्रया ।
संकल्पोदकमात्रे तु करे तेनैव चार्पिते ॥२६॥
रूपं ब्रह्माण्डपूर्णं वै तदा लक्ष्मि मया कृतम् ।
भूर्लोके चरणौ न्यस्य भुवर्लोके तु जानुनी ॥२७॥

स्वर्लोके तु कटिं कृत्वा महर्लोके तदोदरम् ।
जनलोके तु हृदयं तपोलोके गलं तथा ॥२८॥
सत्यलोकं मुखं न्यस्य वैराजे मस्तकं न्यधाम् ।
सूर्यचन्द्रग्रहतारा नक्षत्रधूम्रकेतवः ॥२९॥
देवाः सेन्द्राश्च नागाश्च यक्षगन्धर्वकिन्नराः ।
अस्तुवन्वेदमन्त्रैस्ते सूक्तैश्च विविधैस्तदा ॥३०॥
बलिं धृत्वा करे तत्र पदेनाऽऽपूरिता मही ।
द्वितीयेन स्वरान्तं चाण्डकटाहसमन्वितम् ॥३१॥
तृतीयं तु बलेः पृष्ठे तदा न्यस्तं पदं मया ।
गतो रसातलं लक्ष्मि ! दानवो मम पूजकः ॥३२॥
न्यस्तो रसातले राज्ये सोऽपि मामभजत्ततः ।
प्रार्थयन्मां भवने स्वे सदा स्थातुं स भक्तराट् ॥३३॥
तदाऽहं विनयी भूत्वा निजभक्तपरायणः ।
अकुर्वित्युभयं रूपं त्वेकेन तद्गृहे स्थितः ॥३४॥
अपरेण स्वरूपेण शेषे शयनमास्थितः ।
अषाढशुक्लैकादश्यां शयनं श्रमनुत्तये ॥३५॥
नैमित्तिकं गृहीतं वै मया तस्माद्दिनात्ततः ।
भक्तास्तां शयनीं प्राहुस्त्वेकादशीं सुपुण्यदाम् ॥३६॥
इत्येवं शेषपृष्ठे वै क्षीरसागरमध्यतः ।
स्वपिम्यहं महालक्ष्मि यावदागामिकार्तिकी ॥३७॥
चातुर्मास्यं तु तत्प्रोक्तं भुक्तिमुक्तिप्रदं परम् ।
शयनीव्रतकृच्चापि भुक्तिमुक्तिमवाप्नुयात् ॥३८॥
शयनीं तु समारभ्य चातुर्मास्यावधिं पुमान् ।
तावद्भवेत्सुधर्मात्मा व्रतादिनियमी यमी ॥३९॥
नाऽतः परतरं किंचिद्व्रतं यावद्व्रतोत्तमम् ।
यत्र स्वंपिति देवेशः शंखचक्रगदाधरः ॥४०॥
एवं यः कुरुते लक्ष्मि ! शयन्यास्तु व्रतोत्तमम् ।
सर्वपापहरं चापि भुक्तिमुक्तिप्रदायकम् ॥४१॥
स तु क्षुद्रोऽपि मे लोके जायते मे प्रियंकरः ।
दशम्यामेकभुक्तेन नक्तेनापि सुवर्तयेत् ॥४२॥
रात्रौ च ब्रह्मचारी स्यात्प्रातर्वै ब्राह्मसंज्ञके ।
काले तूत्थाय भगवत्स्मरणं संविधाय च ॥४३॥
स्नात्वा देवार्चनं कृत्वा षोडशोपसुवस्तुभिः ।
पूजाया नैत्यकं सर्वं समाप्याथ स्वयं व्रती ॥४४॥
कारयेन्नवधान्यैस्तु सर्वतोभद्रमण्डलम् ।
मध्ये स्वर्णघटं पञ्चरत्नपल्लवसंयुतम् ॥४५॥
जलवस्त्रफलाढ्यं वै स्थापयेत् तं प्रपूजयेत् ।
तिलपात्रं स्थापयित्वा वामनं तत्र पूजयेत् ॥४६॥
कमलां शयनीं चापि पूजयेद् बहुवस्तुभिः ।
आवाहनादिकं कुर्यात् पञ्चामृतसुसेचनम् ॥४७॥
वस्त्रालंकारभूषादिहारचन्दनकज्जलम् ।
सर्वशृंगाररागांश्च त्वर्पयेत्तिलकादिकम् ॥४८॥
धूपदीपसुनैवेद्यजलताम्बूलसत्फलम् ।
नीराजननमस्कारस्तुतिप्रदक्षिमापनम् ॥४९॥
विसर्जनांऽजलिं दत्वा स्वीयव्रतस्य पूर्तये ।
निर्विघ्नं मे व्रतं चास्तु प्रार्थयेदेवमेव ह ॥५०॥
बलद्रव्यानुसारेण महापूजादि कारयेत् ।
मण्डपं कारयेद्रम्यं राज्यमण्डपसन्निभम् ॥५१॥
वैष्णवान्पूजयेत्प्रातर्दानानि प्राऽर्पयेत्तथा ।
साधूनामग्रतः स्थित्वा चातुर्मास्यव्रतानि च ॥५२॥
धारयेन्नियमाँश्चापि सुखमोक्षकराँस्तदा ।
जैह्वशैश्ननियमान् संगृह्णीयात्तु तपःकृते ॥५३॥
हर्यग्रे वा गुरोरग्रे गृह्णीयान्नियमान् व्रतम् ।
शारीरनियमाँस्तद्वन्मानसान्संयमाँस्तथा ॥५४॥
भोग्यभौतिकनियमान्मुक्तिदान्नियमानपि ।
व्रतानि दाननियमान्गृह्णीयात्प्रातरेव हि ॥५५॥
इन्द्रियाणां मनसश्च वृत्तीनां संयमस्तपः ।
अभ्यासेन तु कर्तव्यश्चातुर्मास्ये विशेषतः ॥५६॥
विषयाः परिहर्तव्याः क्षोभका विघ्नकारिणः ।
रसपुष्टिर्न वै कार्या यतः सा क्षोभिका मता ॥५७॥
रसो जैह्वयो महान् दोषः सर्वेन्द्रियसुपुष्टिकृत् ।
जेतव्यः स विशेषेण चातुर्मास्यव्रतार्थिभिः ॥५८॥
फलाहारः पयःपानं ह्येकान्नमेकभोजनम् ।
शाकाहारः शाकवर्ज्यो घृतत्यागोऽथवा तपः ॥५९॥
दधित्यागस्तिलत्यागो दधिप्राशस्तिलादनम् ।
कन्दाहारः कणाहारो भाजाहारो दलादनम् ॥६०॥
जलाहारः शर्करायास्त्यागो गूडस्य नीरसः ।
श्रावणे शाकवर्ज्यं च भाद्रे दधिविवर्जितम् ॥६१॥
आश्विने दुग्धहीनं च कार्तिके द्विदलोज्झितम् ।
भुञ्जीत मूलकं कन्दं वृन्ताकं न कलिंगकम् ॥६२॥
वर्जयेद् व्रतमेवोक्तं चातुर्मास्ये शुभं तपः ।
धारणापारणाख्यं वा व्रतं प्रोक्तं महाफलम् ॥६३॥
मौनं धार्यं कथा कार्या हरेर्नाम्नां च मालिकाः ।
उच्चारणेन युक्ताश्चाऽऽवर्तनीयाः शतंमिताः ॥६४॥
रूपाणां दर्शनं नातिकर्तव्यं चक्षुषोर्व्रतम् ।
शब्दानां श्रवणं नातिकर्तव्यं कर्णयोर्व्रतम् ॥६५॥

गन्धास्तु राजसा नातिग्राह्यास्तन्नासिकाव्रतम् ।
नारीनरमिथःस्पर्शो नातिकार्यस्त्वचो व्रतम् ॥६६॥
चातुर्मास्ये सदैकत्र वस्तव्यं पादयोर्व्रतम् ।
पत्रशाखाद्यभंगश्च हस्तयोः परमं व्रतम् ॥६७॥
वीर्यादेः रक्षणं त्वेतद् ब्रह्मचर्यं महद् व्रतम् ।
वातुलं तामसं नाऽदनीयं देह्यं महत्तपः ॥६८॥
पञ्चाग्नितपनं वृक्षालम्बनं सूर्यदर्शनम् ।
एकपादेन संस्थानं हस्तस्योर्ध्वविधापनम् ॥६९॥
अधोमस्तकताधारो नखाद्यकर्तनं तपः ।
केशानां वर्धनं भस्मधूलीकर्दममर्दनम् ॥७०॥
अनुपानत्तया स्थेयं विवस्त्रेण विशेषतः ।
जलधारातले स्थेयं जले स्थेयं तथाऽऽतपे ॥७१॥
अविताने सदा स्थेयं वृक्षाधोवास इत्यपि ।
भूमौ वासो भूशयनं वालुकाशयनं तथा ॥७२॥
बाणशय्या लोहशय्या कण्टके शयनं तथा ।
अशयनमनिद्रा च जलपानं तु नो पुनः ॥७३॥
स्नानं त्रिषवणं चैव मूर्तेश्चापि विचिन्तनम् ।
ध्यानं च स्मरणं चापि पूजनं पञ्चधा दिने ॥७४॥
मन्त्रजपस्तदर्थस्याभिध्यानं मानसं तपः ।
ऐकाग्र्यं धारणा चेति कर्तव्यं तु विशेषतः ॥७५॥
अहिंसा मनसा वाचा शरीरेणापि सर्वथा ।
जात्या देशेन कालेन प्रसंगेनापि वर्जिता ॥७६॥
तृणच्छेदोपि नो कार्यो व्रतं चाऽहिंसनं हि तत् ।
अद्रोहः सर्वभूतानामनिन्दा च महद्व्रतम् ॥७७॥
अन्यवृत्ताऽनवलोकनादिकं परमं व्रतम् ।
सत्यं प्रियं हितं तथ्यं सुखकृद्वचनं तपः ॥७८॥
अस्तेयं सर्वथा सर्वैरिन्द्रियैर्मनसा तपः ।
कामनाया विचारस्यानुद्भवः परमं तपः ॥७९॥
अग्राह्यं तु न रक्ष्यं वै किंचिच्चापि महत्तपः ।
भिक्षानिर्वाह एवास्तु देहयात्रा परं तपः ॥८०॥
यदृच्छया तु संलाभे त्वनासक्तिर्महत्तपः ।
परसौख्यप्रदातृत्वं परोपकरणं तपः ॥८१॥
परार्थे च दयालुत्वं देहेनापि परं तपः ।
शौचं ज्ञानजलाभ्यां च नैर्मल्यं परमं तपः ॥८२॥
अकापट्यं हृदि वाचि क्रियायामेकता तपः ।
सन्तोषो नातितृष्णत्वमनाशा परमं तपः ॥८३॥
स्वीये तृप्तिः परकीये प्रौदासीन्यं परं तपः ।
मोक्षमार्गावलम्बस्तु तपसां तप उत्तमम् ॥८४॥

अक्लेशः सर्वदा शान्तिरक्रोधस्तु महद्व्रतम् ।
अनुद्वेगोऽनधिक्षेपो नाऽऽक्रोशो नकलिस्तपः ॥८५॥
अलुंचाग्रहणं नान्यद्रव्याशा मानसं तपः ।
ईशदत्ते सदा तृप्तिः परकीये न वाञ्छना ॥८६॥
भोग्यं नार्यादिकं त्याज्यं खट्वागेन्दुकपार्श्वकम् ।
सुगन्धस्तैलमर्दादि भूषणं च सुरूपणम् ॥८७॥
वस्त्रश्रृंगारसन्त्यागो भोगत्यागो विशेषतः ।
भोग्यसाधनसंत्यागो देहिनां परमं तपः ॥८८॥
यानवाहनधूम्रादिपानद्यूतसुनाटनम् ।
व्यसनं मिष्टपानं च त्याज्यं चेति परं तपः ॥८९॥
चातुर्मास्ये प्रतिपातः साधूनां चरणामृतम् ।
पातव्यं च प्रसादश्च भक्षणीय इतिव्रतम् ॥९०॥
साधूनां च सतीनां च साध्वीनां पूजनं तथा ।
पादयोर्मर्दनं त्वंगवाहनं मुक्तिदं व्रतम् ॥९१॥
देहेन मनसा वाण्या धनेनान्नेन वाससा ।
पुत्रेण प्रियया साकं तोषणं वै महद्व्रतम् ॥९२॥
दर्शनं स्पर्शनं नित्यं नमनं पादसेवनम् ।
पूजनं भोजनं साधोस्तोषणं तन्महद्व्रतम् ॥९३॥
सतां निकटे संवासः स्नानज्ञानक्रियादिषु ।
शुश्रूषणं सदा कार्यं पावनाः साधवो यतः ॥९४॥
देवसेवा पितृसेवा साधुसेवा महाव्रतम् ।
पत्नीतोषः स्वामिसेवा व्रतं पत्युः प्रतोषणम् ॥९५॥
यस्यापेक्षितमेवैतद्दातव्यं प्रेमगर्भितम् ।
अक्षयं तस्य पुण्यं स्यात् तस्मान्नास्ति परं व्रतम् ॥९६॥
स्वाश्रितानां तोषणं च स्वर्णाऽन्नशानकाऽर्पणम् ।
ग्रामक्षेत्रमणिरत्नोद्यानाऽऽलयजलार्पणम् ॥९७॥
देहेन सेवनं नित्यं सार्वभौमं व्रतं भवेत् ।
क्षमा दयाऽनसूया चाऽनीर्ष्या दोषविवर्जनम् ॥९८॥
गुणग्राहो यशःकीर्तिकारिता परमं तपः ।
अमानित्वं मानदत्वं समानात्माऽवलोकनम् ॥९९॥
अनौष्ण्यं वैपरीत्येऽपि शैत्यं नाप्यनुकूलके ।
हर्षाऽमर्षभयोद्वेगवर्जनं परमं तपः ॥१००॥
फलधान्यदलपत्रपुष्पकणतृणादिकम् ।
अर्पणीयं श्रीहरये नवं नित्यं व्रतं महत् ॥१०१॥
काष्ठकरीषशाखाप्रशाखानालकरण्डकम् ।
प्रत्यहं त्वर्पणीयं तद् यथायोग्यं शुभं व्रतम् ॥१०२॥
शाकपाकसुमिष्टान्नलवणार्द्रकधानकम् ।
भर्जितं तण्डुलाद्यं च देयं नित्यं तु तद् व्रतम् ॥१०३॥

खाद्यं पेयं भक्ष्यभोज्ये चोष्यं स्वाद्यं च लेह्यकम् ।
दुग्धं दधि रसो मिष्टः कणा देया व्रतं महत् ॥१०४॥
वस्त्रं भूषा कज्जलं चन्दनं चात्तरमुत्तमम् ।
कस्तूरी कुंकुमं चूर्णं देयं त्वलक्तकं व्रतम् ॥१०५॥
एतानि स्वर्गदान्यत्र सुखदानि व्रतानि वै ।
श्रीहरेः स्मरणं भक्तिः पूजनं च निवेदनम् ॥१०६॥
द्वात्रिंशद्भिरुपचारैरर्चनं मुक्तिदं व्रतम् ।
परोपकरणं कृष्णबुद्ध्या पुण्यप्रदं व्रतम् ॥१०७॥
यजनं विविधैर्यज्ञैर्दीनानां च सहायता ।
कूपानां खननं वृक्षारोपणं चापि तद् व्रतम् ॥१०८॥
मार्गाणां चापि निर्माणं त्वाश्रमस्थलबन्धनम् ।
आश्रयसत्रशालादिनिर्माणं स्वर्गदं व्रतम् ॥१०९॥
कलाकौशल्यशिक्षा च कृष्युत्तेजनमित्यपि ।
यन्त्रवाहोपकारादि स्वर्गदं सुखदं व्रतम् ॥११०॥
मत्स्यपिपीलीकादीनां पिष्टदानं सदाव्रतम् ।
वृक्षाणां जलसेकश्च तृषितानां जलार्पणम् ॥१११॥
क्षुधितानां भोज्यदानं नग्नानां वाससोऽर्पणम् ।
आर्तानां विविधानां तु तदार्तिशमनं व्रतम् ॥११२॥
रोगिणामोषधदानं वृत्तिदानं च जीविका ।
पोषणं पालनं चापि रक्षणं परमं व्रतम् ॥११३॥
नित्यमध्यात्मयोगस्याऽभ्यसनं शास्त्रवाचनम् ।
कृष्णकथाश्रवणं च मोक्षदं परमं व्रतम् ॥११४॥
दण्डवच्च नमस्काराः प्रदक्षिणं च तद् व्रतम् ।
दीपदानं वारिदानं नैवेद्याद्यर्पणं व्रतम् ॥११५॥
नित्यं फलार्पणं धान्यार्पणं चापि रसार्पणम् ।
शर्कराखण्डिकागूडमध्वाद्यर्पणकं व्रतम् ॥११६॥
मार्जनं लेपनं स्वच्छीकरणं मंजनं व्रतम् ।
पात्रवस्त्रक्षालनं च नीराजनसमर्पणम् ॥११७॥
नेत्रैर्मूर्तेः प्रपानं च प्रपासत्रादिचालनम् ।
मन्दिराश्रयसुसौधादिनिर्माणं परमं व्रतम् ॥११८॥
चित्राद्यं शिल्पिताद्यं च वयनं भगवत्कृते ।
ग्रथनं ग्रन्थरचनं छन्दश्लोकादिवर्णनम् ॥११९॥
व्याख्यानं कथनं भक्तवाञ्छापूरणकं व्रतम् ।
सुखदं स्वर्गदं मोक्षप्रदं चोपकृतिर्व्रतम् ॥१२०॥
व्रतान्यन्यानि वक्ष्यामि श्रृणु लक्ष्मि ! तपांसि वै ।
चातुर्मास्ये कथा श्रव्या भोजनीयाश्च साधवः ॥१२१॥
नित्यं कार्या महापूजा व्रतत्रयं सुसिद्धिदम् ।
श्रीकृष्णस्य महापूजा नित्यं कार्या महद्व्रतम् ॥१२२॥
शतादिसंख्यया मालाऽऽवर्तनं मम नामतः ।
भक्तपूजा हविर्होमोऽर्चासेवा मोक्षदं व्रतम् ॥१२३॥
अहन्ताममतात्यागो ब्रह्मचर्यप्रपालनम् ।
पायसैक्षवलावण्यफालेयवर्जनं व्रतम् ॥१२४॥
कृष्णसम्बन्धिधर्मो यस्तदव्रतं मे परं मतम् ।
कृतेन व्रतिना येन भगवाँस्तज्जनास्तथा ॥१२५॥
प्रीयेरँस्तद्व्रतं प्रोक्तं कर्तव्यं तु तदेव यत् ।
कार्तिके शुक्लपक्षेऽथ द्वादश्यां देवपूजनम् ॥१२६॥
कृत्वा भगवतस्त्वग्रे निवेद्यं भक्तिभावतः ।
इदं व्रतं मया देव कृतं त्वत्प्रीतये प्रभो ॥१२७॥
न्यूनं सम्पूर्णतां यातु तेन तुष्टो भवेर्मयि ।
एवं समाप्य नियमान् पारणामाचरेत्ततः ॥१२८॥
प्रातःस्नानं देवपूजां नित्यं वृद्धाभिवन्दनम् ।
संविभज्याऽऽश्रितानां च भोजनादिविधापनम् ॥१२९॥
अक्लेशश्च सुमेलश्च कुटुम्बे स्नेहिता त्वति ।
मिष्टं चेष्टं गृहं यस्य स्वर्गं तस्यास्ति भूतले ॥१३०॥
व्रतेषु यद्व्रतं चातुर्मास्येऽतिवाञ्छितम् भवेत् ।
कर्तव्यं तच्छयनीप्रभातमारभ्य सर्वथा ॥१३१॥
मध्याह्ने हरये दद्याद् भोजनं सुजलं तथा ।
ताम्बूलं मिष्टपानं च सायं चापि तथाऽऽचरेत् ॥१३२॥
आरार्त्रिकं स्तवनं च दोलारोहणमित्यपि ।
आन्दोलयेद्धरिं तत्र भोजयेद्दुग्धपूरिकाः ॥१३३॥
रात्रौ जागरणं कुर्यान्नृत्यगीतकथामृतैः ।
द्वादश्यां ब्राह्मकाले च स्नात्वा कृष्णार्चनं चरेत् ॥१३४॥
दानानि स्वर्णमुख्यानि दद्यात् कुर्याच्च पारणाम् ।
भोजयेत्तु सतः साध्वीस्तोषयेद्विनयान्वितः ॥१३५॥
एवं त्वाषाढशुक्लाया व्रतं सनियमं शुभम् ।
कर्तव्यं सर्वयज्ञानां फलदं भुक्तिमुक्तिदम् ॥१३६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने आषाढशुक्लशयन्येकादशीव्रतमाहात्म्यं वामनावतारकृतशयनं चातुर्मास्ये चापि यमनियमसंयमव्रतदमनतपःशोषणत्यागसेवनदानोपकारादिसद्व्रतादि चेति निरूपणनामा त्रिपंचाशदधिकद्विशततमोऽध्यायः ॥ २५३ ॥

श्रीलक्ष्मीरुवाच—

श्रीकृष्णस्य हरेर्योगात् सर्वं भवति निर्गुणम् ।
स्वर्गदं मोक्षदं चापि चतुर्बाहुस्वरूपदम् ॥ १ ॥
यत्किंचित्कर्म काम्यं वा फलेच्छाविधुरं च वा ।
कृष्णतुष्ट्यै कृतं सर्वं गोलोकप्रदमेव तत् ॥ २ ॥
तद्व्रतं सा क्रिया रम्या स धर्मस्तत्तु पूजनम् ।
येन तुष्टो भवेत्स्वामी हरिकृष्णः सतां पतिः ॥ ३ ॥
चातुर्मास्यव्रतं तद्वै येन तुष्यति माधवः ।
यमाश्च नियमास्ते वै येन तुष्टो ह्यधोक्षजः ॥ ४ ॥
वद श्रावणकृष्णे मे किंनाम्न्येकादशी मता ।
को देवः को विधिस्तस्याः किं पुण्यं कथय प्रभो ॥ ५ ॥

श्रीनारायण उवाच—

शृणु लक्ष्मि ! च ते वक्ष्ये लोकानां हितकाम्यया ।
श्रावणैकादशी कृष्णा कामिका नाम नामतः ॥ ६ ॥
अच्युतो विजयायुक्तः सम्पूज्यस्तत्र भक्तितः ।
पुष्पेषु पारिजातानि बिल्वमर्घ्ये फलं मतम् ॥ ७ ॥
शतच्छिद्रादि नैवेद्ये दानं स्त्रीपुंसुवस्त्रयोः ।
देयं तु व्रतिना सर्वमच्युतप्रेमकारकम् ॥ ८ ॥
न गंगायां न च काश्यां नैमिषे न न पुष्करे ।
तत्फलं लभ्यते यद्वै फलं श्रीकृष्णपूजनात् ॥ ९ ॥
गोदावर्यां गुरौ सिंहे व्यतीपाते च दण्डके ।
यत्फलं लभ्यते तस्मादधिकं फलमुच्यते ॥१०॥
ससागरवनोपेतां यो ददाति वसुन्धराम् ।
कामिकाव्रतवाँस्तस्मादधिकं फलमश्नुते ॥११॥
धेनुं सोपस्करां दद्याद् यस्तु चोभयतोमुखीम् ।
ततोऽधिकं फलं तस्य जायते कामिकाव्रतात् ॥१२॥
श्रावणे श्रीधरं कृष्णं पूजयेद् यो व्रती जनः ।
तेन संपूजिता देवा गन्धर्वोरगपन्नगाः ॥१३॥
संसारार्णवमग्नानां कामिकाव्रतमुत्तमम् ।
तत्पारप्रापकं पोतं विद्यते हरिनिर्मितम् ॥१४॥
अध्यात्मविद्याप्राप्यं च फलं वै कामिकाव्रतात् ।
सजागरं व्रतं कृत्वा दुर्गतिं नैव गच्छति ॥१५॥
न पश्यति यमं रौद्रं कुयोनिं नैव विन्दति ।
कामिकाव्रतपुण्येन कैवल्यं योगिनो ययुः ॥१६॥
तुलसीप्रभवैः पत्रैर्यो जनः पूजयेद्धरिम् ।
लिप्यते न स पापेन पद्मपत्रमिवांभसा ॥१७॥
सुवर्णं भारमेकं च रजतं च चतुर्गुणम् ।
अर्घ्यते तत्फलावाप्तिस्तुलसीदलपूजनात् ॥१८॥
रक्तमौक्तिकवैदूर्यप्रवालादिभिरर्चितः ।
न तुष्यति तथा कृष्णस्तुलसीदलतो यथा ॥१९॥
तुलसीमंजरीभिः संपूजितो येन माधवः ।
अनेकजन्मपापानि तस्य यान्ति हि संक्षयम् ॥२०॥
या दृष्टा पापशमनी स्पृष्टा देहस्य पावनी ।
स्तुता रोगनिरसनी सिक्ताऽन्तकनिवारिणी ॥२१॥
रोपिता कृष्णचरणप्रत्यासत्तिविधायिनी ।
अर्पिता मुक्तिफलदा तत्तुलस्यै नमो नमः ॥२२॥
इत्युक्त्वा तुलसीं दद्याद् देवाय परमात्मने ।
कृष्णाग्रे दीपको यस्य ज्वलत्येकादशीतिथौ ॥२३॥
पितरस्तस्य तृप्यन्ति ह्यमृतेन दिवि स्थिताः ।
दीपदानं तु शिखरे कर्तव्यं वै हरेर्दिने ॥२४॥
तस्य पुण्यस्य संख्यां तु विष्णुश्चापि न वेत्त्यलम् ।
घृतस्य तिलतैलस्य दीपो देयो हि मन्दिरे ॥२५॥
दाता प्रयाति द्युलोकं दीपकोटिशतोज्ज्वलः ।
ब्रह्महत्यापहरणी महापुण्यफलप्रदा ॥२६॥
त्रिदिवस्थानदात्री च भ्रूणहत्यादिनाशिनी ।
कर्तव्यैकादशी कामपूरणी श्रद्धया प्रिये ॥२७॥
व्रतकर्ता पावनो वै भूत्वा भक्तिसमन्वितः ।
विष्णुलोकमवाप्नोति भुंक्ते सुखं तु शाश्वतम् ॥२८॥
दशम्यामेकभोजी स्याद् भूशायी च भवेन्निशि ।
ब्रह्मचारी भवेच्चैव प्रातरुत्थाय च व्रती ॥२९॥
स्नात्वा नित्यार्चनं कृत्वा मण्डपं कारयेच्छुभम् ।
धान्यैश्च सर्वतोभद्रं मण्डलं कारयेत्ततः ॥३०॥
अच्युतस्य स्वर्णमूर्तिं विजयासहितस्य वै ।
पूजयेद्विधिना तत्राऽऽवाहनादिभिरादरात् ॥३१॥
पञ्चामृतैर्जलैश्चापि स्नपयेन्मार्जयेत्ततः ।
वस्त्रभूषाद्यलंकारशृंगारैश्च प्रशोभिताम् ॥३२॥
स्थापयित्वा तिलपात्रे न्यस्येत्पात्रं घटोपरि ।
पञ्चरत्नसुपल्लवफलवारिसमन्वितम् ॥३३॥
भोजयेद् विविधैर्भोज्यैस्ताम्बूलादि समर्पयेत् ।
नीराजयेत् स्तुतिं प्रदक्षिणांजली समर्पयेत् ॥३४॥
निर्विघ्नं मे व्रतं भूयादित्येवमर्थयेद्धरिम् ।
मध्याह्नेऽपि सुमिष्टान्नैस्तर्पयेदच्युतं व्रती ॥३५॥
सायं चापि तथा कुर्यान्महापूजादिकं व्रती ।
भोजयेत्पूजयेदान्दोलयेदंगानि मर्दयेत् ॥३६॥

जागरणं प्रकुर्याच्च द्वादश्यां प्रातरेव तु ।
स्नात्वाऽर्चयित्वा दानानि दद्याच्च विविधानि वै ॥३७॥
सुतः साध्वीर्भोजयेच्च बालान् कुर्याच्च पारणाम् ।
सुकामिकाव्रतं त्वेवं सर्वकामफलप्रदम् ॥३८॥
धनार्थी धनमाप्नोति पुत्रार्थी लभते सुतम् ।
भार्यार्थी त्वाप्नुयाद् भार्या स्वामिकामा पतिं लभेत् ॥३९॥
गृहक्षेत्रपशुस्मृद्धिधान्यार्थी लभते तु तत् ।
कीर्त्यारोग्यसुसम्मानराज्यसत्तार्थी तल्लभेत् ॥४०॥
धर्मार्थकाममोक्षार्थी व्रतं कृत्वाऽर्जयेत्तु तत् ।
शत्रूपद्रवविघ्नार्त्तिक्षयार्थी तत्क्षयं व्रजेत् ॥४१॥
एवं सर्वप्रदं त्वेतत् कामिकाव्रतमुत्तमम् ।
स्वर्गदं सत्यदं तद्वै तथा वैराजलोकदम् ॥४२॥
गोलोकदं व्रतं चैतदक्षरप्रदमुत्तमम् ।
सर्वसिद्धिप्रदं त्वस्या आख्यानं शृणु पूर्वजम् ॥४३॥
श्रवणाः पितरः पूर्वे धर्मराजकुलोद्भवाः ।
धर्मेण योजिताः प्राणिवृत्तान्तानयनाय ते ॥४४॥
यत्र गच्छन्ति जीवानां वृत्तान्तानयनाय ते ।
न शृण्वन्ति न पश्यन्ति कर्म सूक्ष्मात् सुसूक्ष्मकम् ॥४५॥
न जानन्ति च वृत्तान्तं त्वानयेयुः कथं तु ते ।
अजानन्तो यमं ते निवेदयेयुः कथं तदा ॥४६॥
इति चिन्तापराः सर्वे मिलित्वाऽऽहुर्यमं पुरः ।
सूक्ष्मकर्मकृतां सर्वं यथा विद्मो वयं तथा ॥४७॥
धर्मराज विधेह्येव जानीमो जीवकर्म यत् ।
वयं द्वादशसंख्याका जीवाश्चासंख्यकोटयः ॥४८॥
कथं कुत्र भवेद् व्याप्तिरस्माकं सिद्धिमन्तरा ।
तस्मात् सिद्धिं प्रदेहि त्वं यद्वा दर्शय तत्तपः ॥४९॥
येन स्याम तवाग्रे वै सर्वाऽऽवेदनशक्तयः ।
श्रुत्वा यमस्तु तान्प्राह सेवध्वं कामिकाव्रतम् ॥५०॥
श्रावणे कृष्णपक्षे सा कामिकैकादशी मता ।
सर्वकामसुसंसिद्धियात्री त्वैश्वर्यसम्प्रदा ॥५१॥
विधिं श्रुत्वा कामिकाया व्रतस्य श्रवणास्ततः ।
चक्रुर्व्रतं कामिकाया ददुर्दानानि भूरिशः ॥५२॥
द्वादश्यां पारणाकाले प्रसन्नो धर्मराजकः ।
स्वयं विप्रस्वरूपेणाऽतिथिर्भूत्वा समागतः ॥५३॥
भिक्षां देहीति सूच्चार्य तस्थौ त्वंगणभूतले ।
श्रवणैरर्पितां भिक्षां जग्राह बहुभावतः ॥५४॥
वरं वृणुत भो क्षत्राः प्रसन्नोऽस्मि व्रतेन वः ।
इत्याह तान् धर्मदेवोऽच्युतस्य जनकः स्वयम् ॥५५॥
प्राहुस्ते श्रवणा तं वै जीवानां सूक्ष्मकर्मकम् ।
यथा जानीम एवात्र सार्वज्ञ्यं देहि तद्विधम् ॥५६॥
दूरश्रवणमेवापि दूरदर्शनमित्यपि ।
गुप्तकर्तव्यवेत्तृत्वं बहुरूपधृतिं तथा ॥५७॥
सर्वदेशादिसंस्थेषु जीवेषु व्यापितां तथा ।
सर्वेषां सर्वथा सर्ववेत्तृत्वशक्तिमुत्तमाम् ॥५८॥
शाश्वतीं तत्स्मृतिं चापि यथार्थां देहि यद्यथा ।
श्रुत्वैवं धर्मराजस्तु समुवाच तु ताँस्तदा ॥५९॥
कामिकाया व्रतं युष्माभिः कृतं तत्फलं बहु ।
सर्वसिद्धिमयं चेष्टप्रदं लब्धं यतो ह्यहम् ॥६०॥
ददामि सर्वसिद्धीश्च तथा यूयं भवन्त्विति ।
ईशवत्सर्वदा सर्वजीवानामितिवृत्तजम् ॥६१॥
सर्वं ज्ञानं भवत्स्वेव भवत्विति ददाम्यहम् ।
एवं वरं परं दत्वा धर्मराजस्तिरोदधे ॥६२॥
श्रवणा द्वादशसंख्यास्तत आरभ्य सर्वदा ।
असंख्यरूपधर्तारो जीवकर्मनिवेदकाः ॥६३॥
सर्वज्ञा इव संजाताश्चित्रगुप्ताग्रतः सदा ।
निवेदयन्ति वृत्तान्तं मृतानां पूर्वगामिनाम् ॥६४॥
सर्वकामफलं प्राप्ताः कामिकाया व्रतेन ते ।
सर्वसिद्धिप्रदा तस्मात्कर्तव्या कामिका जनैः ॥६५॥
शृणु त्वन्यकथां लक्ष्मि ! रतेर्जातां पुरा यथा ।
शंकरेण यदा दग्धः कामदेवो हिमालये ॥६६॥
कामपत्नी रतिर्जाता विधवा पतिमन्तरा ।
बहु सा पीडिता जाता वैधव्याऽऽर्त्यतिकर्षिता ॥६७॥
शंकरं प्रति गत्वा सा प्राह नाथ कृपां कुरु ।
पतिं विना तु मे प्राप्तं ह्यमांगल्यं दुःखप्रदम् ॥६८॥
तन्मे विनाशयाऽऽर्त्तिन्याः शंभो शं कुरु योषितः ।
श्रुत्वा शंभुश्च तां प्राह कामिकाया व्रतं कुरु ॥६९॥
अमांगल्यं सदा ते वै दूरं यास्यति निश्चितम् ।
अदेहोऽपि पतिस्ते वै रतिस्थाने मिलिष्यति ॥७०॥
अवैधव्यममांगल्यं सर्वं ते यास्यति क्षयम् ।
कृष्णपुत्रस्तु वै प्रद्युम्ननामा ते पतिस्ततः ॥७१॥
सुशरीरोऽतिसौभाग्यवत्या वै प्राप्स्यते त्वया ।
श्रुत्वैवं सा कामिकाया व्रतं चक्रे रतिर्मुदा ॥७२॥
विधिवच्च ददौ सर्वदानानि बहुभक्तितः ।
शंभुस्तु पारणाकाले भूत्वा भिक्षुक एव ह ॥७३॥
समाययौ सुभिक्षार्थे तया भिक्षा समर्पिता ।
भुक्त्वा प्राह ततः शंभुर्वरं याचस्व दद्म्यहम् ॥७४॥

कामिकाया व्रतेनास्मि प्रसन्नः शंकरः स्वयम् ।
श्रुत्वा रतिस्तदा प्राह पतिं कामं प्रदेहि मे ॥७५॥
तथास्त्विति समुच्चार्याऽदृश्योऽभूच्छंकरस्ततः ।
रत्या लब्धः पतिः स्वस्या रत्याः काले प्रतिस्थले ॥७६॥
भूते भूते सर्वयोनौ पति प्राप्तः स मैथुने ।
मूर्तः प्रद्युम्ननामापि प्राप्तः कृष्णसुतस्ततः ॥७७॥
एवं व्रतप्रभावेण रतिः सौभाग्यतां गता ।
ब्रह्माण्डप्राणिषु व्याप्तिं प्राप्ता सिद्धिं तु शाश्वतीम् ॥७८॥
व्रतं त्वेवं कामिकायाः सर्वकामप्रसाधकम् ।
सर्वसंकल्पसिद्धिधृक् सर्वस्मृद्धिप्रदायकम् ॥७९॥
सर्वार्त्तिनाशकं सौम्यं स्वर्गमोक्षप्रदं शुभम् ।
सर्वयज्ञफलदातृ योगसिद्धिकरं तथा ॥८०॥
नष्टवस्तुप्रदं चापि सदैश्वर्यप्रदं महत् ।
रतिदं कामदं पत्नीप्रदं स्वामिप्रदं तथा ॥८१॥
दुःस्वप्नं त्वार्त्तिशमनं कामभोगसुखप्रदम् ।
विघ्ननाशकरं वाञ्छापूरकं नरयोषिताम् ॥८२॥
कर्तव्यं सर्वथा लक्ष्मि ! चाऽवैधव्यकरं परम् ।
रतिशक्तिकामशक्तिसिद्धिदं काम्यमित्यपि ॥८३॥
निष्कामानां तु वैकुण्ठप्रापकं पुण्यभाजनम् ।
लक्षाऽश्वमेधयज्ञानां पुण्यदं श्रवणादपि ॥८४॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने श्रावणकृष्णकामिकैकादशीमाहात्म्यं श्रवणाख्यपितॄणां सर्वसिद्धिप्राप्तिः रतेश्च कामाख्यपतिप्राप्तिश्चेति-निरूपणनामा चतुःपंचाशदधिकद्विशत-तमोऽध्यायः ॥ २५४ ॥

**श्रीलक्ष्मीरुवाच—**

सर्वकामप्रदः कृष्णो हरिर्नारायणः स्वयम् ।
फलदाता सुखदाता व्रतपूर्तिकरः स हि ॥ १ ॥
श्रद्धया त्वाप्यते पुण्यं श्रद्धायां स सदा स्थितः ।
भावनासहितो विष्णुः फलत्येव व्रताश्रयः ॥ २ ॥
मोक्षदो माधवो देवः साधने वसति ध्रुवम् ।
साधनानि विना तं वै नो फलं ददति क्वचित् ॥ ३ ॥
स एव सर्वथाऽऽराध्यो विष्णुर्नारायणो हरिः ।
लक्ष्मीशश्च रमेशश्च श्रीशो ध्वजधनुःकरः ॥ ४ ॥
कृपया वद मे मत्स्यस्वस्तिकचिह्नहस्तक ।
स्वामिन्प्रभापते पार्वतीपते माणिकीश्वर ॥ ५ ॥
श्रावणशुक्लपक्षस्यैकादशी नामतस्तु का ।
को विधिः किं फलं तस्याः को देवोऽर्च्यो व्रतेऽत्र वै ॥ ६ ॥

**श्रीनारायण उवाच—**

एकादशी पुत्रदाख्या श्रावणस्य सिता मता ।
श्रीधरः पूजनीयोऽत्र कान्तिमत्या सह प्रभुः ॥ ७ ॥
कमलैः पूजनीयोऽसौ भोजनीयस्त्वपूपकैः ।
अर्घ्यः सीताफलैः कृष्णो दातव्यं पादुकाद्वयम् ॥ ८ ॥
लक्ष्मीनारायणसंहितायां दानं मतं शुभम् ।
श्रोतव्याऽस्याः कथा दिव्या भुक्तिमुक्तिप्रदायिनी ॥ ९ ॥
दशम्यामेकभोजी स्याद् ब्रह्मचारी भवेत्तथा ।
रात्रौ भूशयनं कुर्यादेकादश्यां प्रगे व्रती ॥१०॥
स्नात्वा नित्यं महापूजां कृत्वा वै मण्डपान्तरे ।
मण्डले सर्वतोभद्रे स्थापिते कानके घटे ॥११॥
पञ्चरत्नाम्बरवारिपत्राऽक्षतफलान्विते ।
तिलस्थालीं स्थापयित्वा श्रीधरं स्थापयेत्ततः ॥१२॥
पूजयेत्सर्वभावेन षोडशोपस्सुवस्तुभिः ।
आवाहनादिकं कुर्यात् पंचामृताभिषेचनम् ॥१३॥
वस्त्राभूषणश्रृंगारकज्जलचन्दनात्तरैः ।
पुष्पहाराऽक्षतचूर्णफलताम्बूलभोजनैः ॥१४॥
आरार्त्रिकस्तुतिदण्डवत्प्रदक्षिणदीपनैः ।
पूजयित्वा हरिं निर्विघ्नं व्रतं प्रार्थयेत् ततः ॥१५॥
मध्याह्ने भोजनं दद्यात्ताम्बूलं च जलं तथा ।
सायं दद्याद् दुग्धपाकं पूरिकाः शाकमित्यपि ॥१६॥
रात्रौ जागरणं कुर्यात् कथाकीर्तननर्तनैः ।
द्वादश्यां तु प्रगे स्नात्वा पूजयित्वा च माधवम् ॥१७॥
दद्याद्दानानि सर्वाणि यथाशक्ति यथाधनम् ।
भोजयेत् साधुविप्रांश्च साध्वीर्बालांश्च बालिकाः ॥१८॥
ततो वै स्वजनान् भोजयित्वा स्वः पारणां चरेत् ।
एवं कृते भवेत्पुण्यं यथेष्टं भुक्तिमुक्तिदम् ॥१९॥
धनधान्यसुतदाराक्षेत्रोद्यानगृहादिकम् ।
आरोग्यमानकीर्त्यादि लभते तु व्रती शुभम् ॥२०॥
शृणु लक्ष्मि ! कथां दिव्यां याऽभूत्पूर्वे कृते युगे ।
राजा पुरुरवा नाम्ना बभूव चन्द्रपौत्रकः ॥२१॥
बुधपुत्रः पुरुरवा राज्यं पालयति स्वकम् ।
श्रीपुरे नर्मदातीरे वसति स्म निरन्तरम् ॥२२॥
तस्य गुणान् देवमुखाच्छ्रुत्वोर्वशी वरांगना ।
अप्सराः स्वयमागत्य पत्नीरूपा ह्युपस्थिता ॥२३॥

बहुकाले गतेऽप्यस्यामपत्यं न व्यजायत ।
पुत्रहीनस्य तस्यैव न तद्राज्यं सुखप्रदम् ॥२४॥
अपुत्रस्य सुखं नास्ति लोकेऽस्मिँश्च परत्र च ।
एवं चिन्तयतस्तस्य कालो बहुतरो गतः ॥२५॥
न प्राप्तश्च सुतो राज्ञा तेन दुःखायते सुखम् ।
स्वराज्यपण्डितान् वृद्धानाहूयाऽऽवेदितं हि तत् ॥२६॥
इह जन्मनि भो विप्रा न मया पातकं कृतम् ।
अन्यायोपार्जितं द्रव्यं मया कोशे न योजितम् ॥२७॥
ब्रह्मद्रव्यं च देवस्वं विधवाऽनाथढब्बुकम् ।
अपि मया गृहीतं न दत्तं प्रत्युत सर्वदा ॥२८॥
पुत्रवत्पालितो लोकः प्रजा धर्मेण रक्षिता ।
युद्धेन विजिता पृथ्वी दण्डो दुष्टेषु पातितः ॥२९॥
अन्यायो न कृतस्तेषु सुतबन्धुप्रजासु च ।
पूज्याः सुपूजिता नित्यं सदा वृद्धास्तु वन्दिताः ॥३०॥
न द्विष्टा न्यायमार्गस्थाः पूजिता देवताः सदा ।
विप्राश्च साधवः साध्व्यो गावो दीनाश्च पूजिताः ॥३१॥
द्रव्ययज्ञा ज्ञानयज्ञाः कृताः शिष्टप्रसंगतः ।
तथापि मद्गृहे पुत्रो न जातस्तद् विमृश्यताम् ॥३२॥
इतिवाक्यं द्विजाः श्रुत्वा सवृद्धाः सपुरोहिताः ।
नृपतेर्हितमिच्छन्तो जग्मुस्ते लोमशमृषिम् ॥३३॥
कल्पे कल्पे गते यस्य लोमैकन्तु विशीर्यते ।
एवं लोमशनाम्ना स रूढ्या प्रसिद्धिमाप ह ॥३४॥
तपन्तं घोरसुतपो निराहारं निरीहकम् ।
शान्तं सुधर्मतत्त्वज्ञं शास्त्रवेदविशारदम् ॥३५॥
दीर्घायुषं त्रिकालज्ञं जटाश्मश्रुसुशोभितम् ।
महात्मानं द्विजा दृष्ट्वा भाग्यं श्रेष्ठं हि मेनिरे ॥३६॥
ब्रह्मात्मानं मुनिं नत्वाऽग्रतः संहर्षिताः स्थिताः ।
ताँस्तथा साग्रजान् वीक्ष्य मुनिः प्रोवाच लोमशः ॥३७॥
कथं किमर्थमायाता ब्राह्मणा वृद्धसेवकाः ।
यत्किंचित्सुमहत्स्वल्पं साध्यं त्वसाध्यमित्यपि ॥३८॥
लभ्यं चाऽलभ्यमेवापि ब्राह्मणार्थे करोम्यहम् ।
असंशयं कथयध्वं करिष्ये भवतां हितम् ॥३९॥
ब्राह्मणानां वचो वेदः परमेश्वरनोदना ।
पालयित्वा तु वो वाक्यं त्ववाप्स्ये जन्मनः फलम् ॥४०॥
परोपकृतये जन्म तपस्विनां न संशयः ।
अहोऽद्य सफलं जन्म करिष्ये विप्रसेवया ॥४१॥
इतिकृत्वा चकारासावातिथ्यं पूजनादि च ।
जलं फलासनादीनि ददौ पूज्योऽपि शिष्टकृत् ॥४२॥
ततो विप्रास्तु तं प्राहुः श्रूयतां हृद्गतं तु नः ।
संशयस्य निरासाय वयं स्वार्थपराः प्रभो ॥४३॥
इह कार्यवशात्प्राप्ताः समीपं भवतो वयम् ।
सतां संदर्शनात्पूर्वभवीयाघादिशेवधिः ॥४४॥
भस्मीभवति द्रागेव किं पुनः पादसेवनात् ।
पद्मयोनिं विना त्वन्यस्त्वत्तः श्रेष्ठो न विद्यते ॥४५॥
बहुज्ञोऽसि बहुकल्पी बहुवेत्ता समाधिमान् ।
भूतं भव्यं जायमानं बहु वेत्सि तपोबलात् ॥४६॥
सर्वं दातुं समर्थोऽसि ब्रह्मात्मैक्यबलान्मुने ।
नृपः पुरुरवास्त्वत्र पुत्रहीनोऽस्ति साम्प्रतम् ॥४७॥
वयं विप्राः प्रजास्तस्य पुत्रवत्पालिताः सदा ।
पुत्रहीनं तु तं दृष्ट्वा तस्य दुःखेन दुःखिताः ॥४८॥
दुःखनिस्तारकर्तुस्तु भवतः पादयोर्वयम् ।
छायायां त्वागताः स्मोऽत्र योग्यं राज्ञि विधीयताम् ॥४९॥
तस्य भाग्येन दृष्टोऽसि ह्यस्माभिस्त्वं तपोधन ।
महतां दर्शनेनैव कार्यसिद्धिर्भवेन्नृणाम् ॥५०॥
वद पुत्रः कथं नास्ति केनोपायेन वा भवेत् ।
इति तेषां वचः श्रुत्वा मुहूर्तं ध्यानमाप्तवान् ॥५१॥
लोमशः प्रत्युवाचैतान् प्राग्जन्म नृपतेस्तदा ।
पूर्वजन्मनि वैश्योऽसौ वर्धमानाऽभिधो धनी ॥५२॥
वाणिज्यकर्मनिरतो लोभेन जनशोषकृत् ।
ग्रामाद्ग्रामान्तरं याति वस्तुव्यापारकांक्षया ॥५३॥
ज्येष्ठे मासि सिते पक्षे दशमीदिवसे तु सः ।
मध्याह्ने त्वातपे प्राप्तो ग्रामसीम्नि जलाशयम् ॥५४॥
खातं तु सजलं चैकमात्रावतारशोभितम् ।
तत्रावतारे गत्वा स निषसाद क्षणं ततः ॥५५॥
हस्तपादौ मुखं स्वस्य प्रक्षालयति यत्क्षणे ।
तावत्तत्र समायाता सवत्सा गौस्तृषाकुला ॥५६॥
निदाघार्ता भययुक्ता घट्टेऽवतरति द्रुतम् ।
पीतगण्डूषमात्रां तां वारयित्वा तु तामसः ॥५७॥
तोयं पपौ स्वयं स्नात्वा वस्त्रप्रक्षालनं व्यधात् ।
चिरं तत्र स्थितो मार्गे गवे पातुं ददाति न ॥५८॥
सवत्सा तृषिता साऽपि चिरं मार्गं प्रतीक्षते ।
तथापि न धनी स्थानाद् ययौ वै घटिकाष्टकम् ॥५९॥
वत्सा संतृषिता प्राह मातरं जननि ! मम ।
प्राणा यान्ति तृषादुःखाद् दूरं यास्यत्ययं कदा ॥६०॥
गोमाता प्राह तां वत्सां यास्यत्ययं क्षणान्तरे ।
तावद्धैर्यं गृहाण त्वं पास्यावोऽम्भः क्षणान्तरे ॥६१॥

नाऽपश्यत्तो धनी तस्माद् वत्साकण्ठोऽपि शुष्कताम् ।
प्रापत् तदा गवा प्रोक्तं दुष्टोऽयं याति नैव तु ॥६२॥
प्राणाः प्रयान्ति मे पुत्र्याः पामि प्रसह्य वै जलम् ।
निर्णीयेत्थं तु वत्सां स्वां नीत्वा ह्यवाततार गौः ॥६३॥
वर्धमानो धनी तां तु भृशं यष्ट्या ह्यताडयत् ।
तदा शप्तो गवा श्रेष्ठिन्! दुष्ट! ताडयसि वृथा ॥६४॥
अनपत्यः सदा जन्मजन्मान्तरेषु वै भव ।
पत्न्या विरहितोऽरण्ये दुःखितो बहुधा भव ॥६५॥
शप्त्वा पद्भ्यां च शृंगाभ्यां ताडयित्वा प्रसह्य तम् ।
धनिनं दूरतः कृत्वा शान्त्या गौः सुजलं पपौ ॥६६॥
वत्सा जलं पपौ शान्त्या वणिजो निर्ययौ ततः ।
गवा तु ताडितश्चार्तो ग्रामं प्राप्य ममार सः ॥६७॥
मृत्योः पूर्वं धनं सर्वं यज्ञार्थं दत्तवानसौ ।
विप्रैर्यज्ञः कृतश्चापि तेन पुण्येन वर्धनः ॥६८॥
जातोऽयं नृपतिस्त्वत्र नाम्ना पुरुरवा इति ।
गोः शापेनाऽनपत्योऽस्ति पुत्रभाग्यविहीनकः ॥६९॥
जन्मजन्मान्तरेष्वस्य नास्ति पुत्रो हि शापतः ।
पत्न्या सह वियोगोऽपि भविष्यत्यस्य कालतः ॥७०॥
श्रुत्वैतद्ब्राह्मणाः प्राहुः पापक्षयस्तु पुण्यतः ।
शापनिवारणं चापि भवादृशप्रसादतः ॥७१॥
असाध्यं नास्ति ते किंचित्पुत्रो भवतु भूपतेः ।
पुण्यकार्यं ब्रूहि नश्च ध्रुवं राजा करिष्यति ॥७२॥
लोमशः प्राह तान्सर्वान् विचार्य बलवद्व्रतम् ।
श्रावणे शुक्लपक्षे तु पुत्रदा नाम विश्रुता ॥७३॥
एकादशी वाञ्छितदा कुरुध्वं तद्व्रतं द्विजाः ।
राजा राज्ञी तथा यूयं व्रतं कुरुत भावतः ॥७४॥
लक्षगवां प्रदानं च पुत्रदाया दिने प्रगे ।
पुरुरवाः प्रकरोतु ततः पुत्रो भविष्यति ॥७५॥
एकव्रते कृते लक्षगवां दाने सुतोऽव्ययः ।
भविष्यत्येव मे वाक्यान्नृपः करोतु वाञ्छितम् ॥७६॥
इत्याज्ञां शिरसि धृत्वा ययुः श्रीनगरं द्विजाः ।
राज्ञा सह व्रतं चक्रुर्यथाविधिसजागरम् ॥७७॥
लक्षगवां तदा दानं कृतं पात्रेभ्य एव च ।
तेन पुण्येन सा राज्ञी गर्भं दधार शोभनम् ॥७८॥
किन्तु पूर्वं यदा स्वर्गादायाताऽभूत् पतिकृते ।
तदा तया कृतस्त्वासीत्समयः स्थितये चिरम् ॥७९॥
नग्नं नृपं विलोक्याऽहं गमिष्यामि गृहात्ततः ।
अथाऽत्राऽवसरे रात्रौ नृपं वीक्ष्य विवस्त्रकम् ॥८०॥
प्रयाता सा वनं तत्र ययौ पुरुरवा ह्यनु ।
अन्तर्वत्नी तु साऽरण्ये वह्निस्थालीस्वरूपिणी ॥८१॥
सुषुवे सुसुतं जातवेदसं हि विभावसुम् ।
एकादश्या व्रतेनैवं वह्निः पुत्रोऽस्य चाभवत् ॥८२॥
एवं वै पुत्रदाश्चैकादश्यश्चान्यास्तु षट्कृताः ।
लक्षगवां प्रदानं सः प्रचकार प्रतिव्रतम् ॥८३॥
तेन तस्योर्वशीगर्भात् षडासन्नात्मजाः परे ।
आयुः श्रुतायुः सत्यायुः रयोऽथ विजयो जयः ॥८४॥
तेषां पुत्राः प्रपुत्राश्च ह्यासन्वंशविवर्धनाः ।
अग्निना प्रजया राजा लोकं गान्धर्वमाप्तवान् ॥८५॥
भुक्त्वा भोगाननेकान् स काले त्यक्त्वा कलेवरम् ।
स्वर्गाद् यातः स वैकुण्ठं चतुर्भुजधरः स्वयम् ॥८६॥
शृणु लक्ष्मि! स्वर्णभूषाऽऽनन्त्यं राज्यं यदिच्छति ।
कर्तव्यं तेन गोदानपूर्वकं व्रतमुत्तमम् ॥८७॥
श्रावणस्य सिते पक्षे कर्कटस्थे दिवाकरे ।
द्वादश्यां वासुदेवाय पवित्रारोपणं चरेत् ॥८८॥
सूत्रैः क्षौमैर्हेमरूप्यताम्रैः कौशेयपद्मजैः ।
कुशैः काशैः सुकार्पासैः शणजैः शोभनैश्च तैः ॥८९॥
तन्तुभिस्त्रिगुणितं तत् त्रिगुणीकृत्य सूत्रकम् ।
शोधयेत् सुमणिद्वयं कारयेत्पावनं हि तत् ॥९०॥
हरये त्वर्पयेत्तद्वै पवित्रं स्वर्णपुण्यदम् ।
एकादश्यां धारयेच्च रात्रौ जागरणं चरेत् ॥९१॥
ब्राह्मणाः क्षत्रिया वैश्यास्तथा शूद्रा नराः स्त्रियः ।
हरेर्भक्तौ स्थिताः सर्वे शुभं कुर्युः पवित्रकम् ॥९२॥
हरये त्वर्पयेच्चापि गुरवेऽपि समर्पयेत् ।
पवित्रारोपणेनाहं सुपवित्रो भवाम्यहम् ॥९३॥
स्वर्णरूप्यक्षौमवस्त्राद्यलंकारांस्तथाऽर्जयेत् ।
प्रत्यब्दं तु पुत्रदायां पवित्रारोपणं जनैः ॥९४॥
कर्तव्यं तूक्तमन्त्रेण धनाढ्यस्तेन जायते ।
भुक्तिं मुक्तिं तथाऽऽप्नोति पवित्रारोपणेन च ॥९५॥
न करोति विधानेन पवित्रारोपणं तु यः ।
तस्य सांवत्सरी पूजा निष्फला भवति कृता ॥९६॥
श्रुत्वा पुत्रप्रदायाश्च माहात्म्यं मुच्यते त्वघात् ।
सुखं स्वर्गे परं प्राप्य परं मोक्षमवाप्नुयात् ॥९७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने श्रावणशुक्लपुत्रदैकादशीव्रतमाहात्म्यं पूर्वभवेगवापराधिनो वणिजः पुरुरवोऽवतारेऽपुत्रस्य व्रतकरणे ऊर्वश्यां पुत्रलाभः पवित्रारोपणं चेत्यादिनिरूपणनामा पंचपंचाशदधिकद्विशततमोऽध्यायः ॥२५५॥

श्रीलक्ष्मीरुवाच—

नारायणस्मरणेन जन्मसंसारबन्धनम् ।
नश्यत्येव जनानां वै वन्दे नारायणं तु तम् ॥ १ ॥
कर्तारं करणं कार्यं प्रेरितारं विभुं प्रभुम् ।
सुखदं पुत्रदं शान्तिप्रदं वन्दे पतिं हरिम् ॥ २ ॥
नारायण हरे कृष्ण लक्ष्मीनाथ रमापते ।
माणिक्येश प्रभास्वामिन् पार्वतीश्वर ते नमः ॥ ३ ॥
त्वन्मुखान्मे कथालाभे तृप्तिर्नैव हि जायते ।
वद भाद्रपदे कृष्णे किंनाम्न्येकादशी मता ॥ ४ ॥
को देवः किं फलं दाने देयं पुष्पादिकं च किम् ।
को विधिस्तद्व्रतस्याऽस्ति विस्तरात् कथय प्रभो ॥ ५ ॥

श्रीनारायण उवाच—

शृणुष्वैकमना लक्ष्मि ! कथयिष्यामि विस्तरात् ।
अजानाम्नी भाद्रकृष्णैकादशी पापनाशिनी ॥ ६ ॥
सुन्दर्या तु सहैवाऽर्च्यस्तस्यां देवो जनार्दनः ।
पुष्पेषु पाटला देया त्वर्घ्ये पूगीफलं मतम् ॥ ७ ॥
दाने तु महिषी देया नैवेद्ये गूडलड्डुकाः ।
यथाकालं यथालभ्यं तथाकार्यं विशेषतः ॥ ८ ॥
दशम्यामेकभुक्तेन तथा भाव्यं व्रतार्थिना ।
स्वप्तव्यं भूतले रक्षणीयं वै ब्रह्मशीलकम् ॥ ९ ॥
एकादश्यां प्रगे ध्यात्वा नारायणजनार्दनम् ।
स्नात्वा पूजां नैत्यकीं तु कुर्यात् षोडशवस्तुभिः ॥१०॥
मण्डपं कारयेद् रम्यं बहुस्तम्भसुशोभितम् ।
मध्ये तु सर्वतोभद्रं मण्डलं कारयेद्व्रती ॥११॥
तन्मध्ये स्वर्णकलशः पञ्चरत्नजलान्वितः ।
सवस्त्रफलपत्रोपवीतचन्दनतण्डुलः ॥१२॥
स्थापनीयश्च तत्पार्श्वे घण्टां शंखं च रक्षयेत् ।
पूजयेद्विधिना मन्त्रैस्तिलस्थालीं घटे न्यसेत् ॥१३॥
मूर्तिं तु कानकीं जनार्दनसुन्दरिकायुताम् ।
अजैकादशिकां स्थाल्यां स्थापयेद् राजतीं च वा ॥१४॥
आवाहनादिभिः पञ्चामृतैर्द्रवितचन्दनैः ।
पूजयेन्मर्दयेत् देवं स्नापयेत्तीर्थवारिभिः ॥१५॥
वस्त्रालंकारशृंगाराभूषाहारादिराजिभिः ।
सुगन्धिद्रव्यवर्यैश्च धूपदीपनिवेदनैः ॥१६॥
कुंकुमाऽगुरुकस्तूरीतैलद्रवसुसौरभैः ।
कज्जलश्वेतपाण्डुरचूर्णशेखरनक्तकैः ॥१७॥
यष्ट्युपानहस्रच्छत्रचामरैर्यानवाहनैः ।
आरार्त्रिकस्तुतिनम्रभावदण्डवदादिभिः ॥१८॥
पुष्पांजलिजलताम्बूलैलालवंगचर्वणैः ।
क्षमार्थनादिभिर्देवं पूजयेद्बहुभावतः ॥१९॥
शय्यां स्वर्णमयीं सत्कोमलास्तरणसंयुताम् ।
दद्याद्देवाय चादर्शपार्श्वकव्यजनान्विताम् ॥२०॥
एवं समर्च्य गोविन्दं व्रतार्थं प्रार्थयेद् व्रती ।
करोम्यजाव्रतं कृष्ण निर्विघ्नं पूर्णतामियात् ॥२१॥
दानं दद्याद् विविधं सद्रत्नसारसुवर्णकम् ।
दद्याद् गोमहिषीप्रभृत्यपि दुग्धान्वितं शुभम् ॥२२॥
मध्याह्नेऽपि हरिं कृष्णं पूजयित्वा निवेदयेत् ।
मेशुभं मोहनस्थालं मौक्तिकाँश्चूर्णमोदकान् ॥२३॥
अपूपाँश्च तथा पूपान् पोलिका मिष्टपोलिकाः ।
पूरिकाः पुष्पवटिका राजिकाराद्धमित्यपि ॥२४॥
शाकानि विविधान्यारनालानि स्वादवन्ति च ।
दधिदुग्धप्रमिष्टसद्रससाराणि चार्पयेत् ॥२५॥
दद्यात्फलानि पानीयं मुखवासादिकं तथा ।
सायं चैव महत्सम्यगर्चनं कारयेद्व्रती ॥२६॥
आन्दोलयेद्धरिं प्रेंखां बद्ध्वा वृक्षादिकेऽम्बरे ।
रात्रौ दुग्धप्रचूरं वै भोज्यं दद्याद्बलप्रदम् ॥२७॥
आरार्त्रिकं स्तुतिं क्षान्त्यर्थनं पुष्पांजलिं तथा ।
अर्पयेदन्ययोग्यं यत्त्वपेक्षितमथो हरेः ॥२८॥
रात्रौ जागरणं कुर्यान्नृत्यगायनवाद्यनैः ।
हरेकीर्तिनामभक्त्या कथाश्रवणखेलनैः ॥२९॥
द्वादश्यां च प्रगे स्नात्वा पूजयित्वा जनार्दनम् ।
भोजयित्वा हरिं दद्याद् दानानि विविधानि च ॥३०॥
अन्यान्समाश्रितान् मिष्टं भोजयित्वा सतो द्विजान् ।
बालाँश्च पारणां पश्चात् कुर्याद् व्रती व्रतोत्तरे ॥३१॥
एवं कृते व्रते सर्वकामना व्रतिनः फलेत् ।
स्वर्गं मोक्षं च साम्राज्यं यदिच्छेत् तद्व्रती व्रजेत् ॥३२॥
ईदृग्विधं व्रतं लक्ष्मि ! ये कुर्वन्ति तु मानवाः ।
सर्वपापविनिर्मुक्तास्त्रिदिवं यान्ति शाश्वतम् ॥३३॥
शृणु कथां व्रतयुक्तां दुःखनाशकरीं शुभाम् ।
हरिश्चन्द्रस्य नृपतेः सकलत्रसुतस्य वै ॥३४॥
आदौ सत्यगुणोपेतः युगे सत्ये बभूव सः ।
हरिश्चन्द्राभिधो राजा साकेतपुरभूपतिः ॥३५॥
सरयूसरितस्तीरे पञ्चयोजनविस्तृताम् ।
साकेतनगरीं शासन् भूपो ररक्ष तत्प्रजाः ॥३६॥

चक्रवर्ती सत्यसंधः समस्ताया भुवः पतिः ।
अतिथीन्स्म पूजयति यथेष्टं स्म ददाति च ॥३७॥
नाऽर्थी कश्चिद्गृहात्तस्य निवर्तते न सत्कृतः ।
अर्थी यदिच्छति तत्तद् ददात्येव तु सर्वदा ॥३८॥
विप्रा मिष्टान्नभिक्षाद्यैः क्षत्रिया बहुमानकैः ।
वैश्याः सहायतालाभैः शूद्राश्चाश्रममीलनैः ॥३९॥
देवा यज्ञीयहव्यान्नैः ऋषयश्चातिथेयकैः ।
मुनयो ब्रह्मभक्त्याद्यैः सकामा वाञ्छितार्थकैः ॥४०॥
नार्यो वृत्तिपालनाद्यैर्बाला विद्यादिरंजनैः ।
अन्ये यथेष्टसम्प्राप्तैः पूज्यन्ते तेन सर्वथा ॥४१॥
तुष्टाः सर्वे गृहं यान्ति सुखं जीवन्ति तत्प्रजाः ।
नाऽस्य राज्ये धनहीनो भक्तिहीनश्च मानवः ॥४२॥
पितृसेवाविहीनो न प्रमदासु घृणाकरः ।
वेदघोषो यज्ञहोमश्चार्थिदानप्रवाहकः ॥४३॥
सर्वो धर्मो हरेर्नाम पञ्चकं विरराम न ।
एवं वर्तयतस्तस्य कीर्तिर्दिक्षु विदिक्षु च ॥४४॥
व्याप्ता बभूव त्रैलोक्ये न सत्याचलतीति सः ।
तदा ब्रह्मा हरिः शंभुर्विश्वामित्रादयः खलु ॥४५॥
परीक्षार्थं समायाताः कियत्सत्यं नु लम्बते ।
हरिश्चन्द्रेण सम्मानं द्विजरूपधरेषु वै ॥४६॥
कृतं चातिथ्यसेवादि स्वेष्टव्यार्थो निवेदितः ।
विश्वामित्रस्ततः प्राह राज्यं सर्वमपेक्ष्यते ॥४७॥
दीयतां मे महाराज निर्ऋणोऽहं भवाम्यतः ।
तथास्त्विति नृपः प्राह जलं मुक्त्वा ददौ ततः ॥४८॥
राज्यं प्रगृह्य च पृथग् ययाचे दक्षिणां मुनिः ।
दक्षिणार्थं पृथग्द्रव्यं नासीत् तत्पूर्तये नृपः ॥४९॥
बभूव राज्यभ्रष्टोऽसौ सेवाकैंकर्यमाप्तवान् ।
विक्रीत्वा वनितापुत्रौ स चकारात्मविक्रयम् ॥५०॥
पुल्कसस्य तु दासत्वं प्राप्तो राजा स पुण्यभाग् ।
श्मशाने सत्यमालम्ब्य मृतचैलापहारकः ॥५१॥
सोऽभवन्नृपतिपूज्यो न सत्याचलितः खलु ।
एवं वै तस्य नृपतेर्बहवो वत्सरा गताः ॥५२॥
वेतनं तु ददात्येव विश्वामित्राय दक्षिणाम् ।
तथापि दक्षिणा पूर्णा न जाता ऋषितुष्टये ॥५३॥
वस्त्रं पात्रं भवेल्लब्धं सर्वं तद्दक्षिणाकृते ।
ददात्येव प्रपूर्त्यर्थं स्वयं दुःखं तु विन्दति ॥५४॥
एवं प्रपूरिता कर्मचारिकैंकर्यवर्तिना ।
दक्षिणाऽपि तता दास्यं वृत्त्यर्थं प्रकरोति सः ॥५५॥
दुःखस्याऽन्तो न चायातस्ततश्चिन्तापरोऽभवत् ।
किं करोमि क्व गच्छामि दुःखस्याऽन्तः कथं भवेत् ॥५६॥
पत्नी वणिग्गृहे दासी पुत्रस्त्वन्यत्र किंकरः ।
अहं श्मशानसेवी चाऽप्यहो चाण्डालकिंकरः ॥५७॥
क्व राज्यं क्व च कैंकर्यं चक्रं मायामयं त्विदम् ।
तथापि दुःखनाशः स्यात्तथा यत्नं करोमि वै ॥५८॥
इतिचिन्तयतस्तस्य मग्नस्य दुःखसागरे ।
आजगाम मुनिस्तत्र ज्ञात्वा राजानमातुरम् ॥५९॥
वैष्णवं च प्रजाशीर्वादपात्रं न्यायवर्तिनम् ।
गौतमाख्यः कृपालुश्च परोपकृतिकारकः ॥६०॥
आशीर्वादान् ददौ राज्ञे सुखी भवेति सर्वथा ।
नृपो ननाम तं विप्रं कृतांजलिपुटः स्थितः ॥६१॥
कथयामास वृत्तान्तमात्मनो दुःखसंभृतम् ।
श्रुत्वा सर्वं गौतमस्तु बभूव चातिविस्मितः ॥६२॥
दुःखनिस्तरणोपायं व्रतं तूपादिदेश तम् ।
मासि भाद्रपदे राजन् कृष्णपक्षेऽतिपावनी ॥६३॥
एकादशी त्वजानाम्नी भवति दुःखनाशिनी ।
अस्याः कुरु व्रतं राजन् दुःखध्वंसो भविष्यति ॥६४॥
तव पत्नी व्रतमस्याः करोत्वपि सुखावहम् ।
पुत्रस्ते त्वेकभुक्तं वा व्रतं कुर्यात् सुखाप्तये ॥६५॥
इत्यादिष्टो हरिश्चन्द्रश्चकाराऽजाव्रतं परम् ।
मुनिर्ययौ च तत्पत्नीं पुत्रं निर्दिश्य तद्व्रतम् ॥६६॥
जगाम स्वाश्रमं राज्ञी कुमारश्च यथोदितम् ।
चक्रतुश्च यथाशक्ति त्वजाव्रतमहर्निशम् ॥६७॥
कृते तस्मिन् व्रते राज्ञो दुःखस्याऽन्तोऽभवत्क्षणात् ।
राज्ञ्याश्चापि च किंकर्या दुःखस्याऽन्तोऽभवत्क्षणात् ॥६८॥
पुत्रो मृतोऽभवत्तत्र व्रतोत्तरं दिवाऽपि सः ।
रोहितो जीवनं प्राप व्रतस्यैव प्रभावतः ॥६९॥
तद्दुःखं बहुभिर्वर्षैर्भोक्तव्यं क्षयतां गतम् ।
निस्तीर्णदुःखो राजाऽऽसीद् व्रतस्याऽस्याः प्रभावतः ॥७०॥
पत्न्या सह समासंगं पुत्रजीवनमित्यपि ।
पुत्रेण च समासंगं हरिश्चन्द्रस्त्ववाप वै ॥७१॥
ब्रह्मविष्णुमहेशाश्च विश्वामित्रादयस्तदा ।
स्वस्वरूपाः समायाताः प्रत्यक्षा दुःखनुत्तये ॥७२॥
ते सत्यस्य परीक्षाऽद्य पूर्णा जातेति चोचिरे ।
सर्वे देवाश्च देव्यश्च समायातास्तदुत्सवे ॥७३॥
आशीर्वादप्रदानार्थं हरिश्चन्द्राय भूभृते ।
दिवि दुन्दुभयो नेदुः पुष्पवर्षमभूद् दिवः ॥७४॥

एकादश्याः प्रभावेण हरिश्चन्द्रः सपुत्रकः ।
सदारश्च स्वकं सर्वं प्राप्य राज्यमकण्टकम् ॥७५॥
भुक्त्वा तु बहुवर्षाणि कृत्वा भक्तिं हरेस्ततः ।
पुत्रं राज्ये स्थापयित्वा पत्न्या सह विरागवान् ॥७६॥
स्वर्गं लेभे हरिश्चन्द्रः सपुरः सपरिच्छदः ।
अनन्तकालं तद् भुक्त्वा ययौ साकेतधाम सः ॥७७॥
ईदृग्विधं व्रतं लक्ष्मि ! ये करिष्यन्ति मानवाः ।
सर्वपापविनिर्मुक्ताः सर्वदुःखविहीनकाः ॥७८॥
स्वर्गं मोक्षं परं सर्वे यास्यन्ति परमं पदम् ।
पठनाच्छ्रवणाद् वापि त्वश्वमेधफलं भवेत् ॥७९॥
तस्मादस्याः कथा श्रव्या कर्तव्यं श्रद्धया व्रतम् ।
तदंगभूतदानार्चापूजनं विधिवत्तथा ॥८०॥
व्रतकर्ता तदन्येषां पापक्षालनको भवेत् ।
स्वर्गं प्रापयिता चापि याम्यादिभयवारकः ॥८१॥
किमु तर्हि स्वात्मकृते भुक्तिमुक्तिसमर्जने ।
समर्थश्चेति वक्तव्यं नारायणप्रसंगतः ॥८२॥
अस्या व्रती पुनर्नैव जायतेऽतस्त्वजा मता ।
अजा मुक्तिर्भवेदस्या व्रतादस्मादजा हि सा ॥८३॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने भाद्रपदकृष्णाऽजैकादशीव्रतमाहात्म्यं, विश्वामित्रकृता हरिश्चन्द्रस्य सत्यव्रतपरीक्षा, राज्यस्त्रीपुत्रहानिः, गौतमप्रदर्शिताऽजाव्रतेन दुःखनिवृत्तिरित्यादिनिरूपणनामा षट्पंचाशदधिकद्विशततमोऽध्यायः ॥२५६॥

**श्रीलक्ष्मीरुवाच—**

दुःखहारिन्सुखकारिन्सम्पत्कारिन्कृपानिधे ! ।
उद्धारस्त्वां विना नैव पापिनां जायते ध्रुवम् ॥ १ ॥
तव त्वदीयभक्तानां भवेद् यस्योपरि कृपा ।
महापापातिपापोऽपि शुद्ध्यत्येव न संशयः ॥ २ ॥
कामात्क्रोधाद्भयाल्लोभाल्लाभाद्वापि समाश्रयेत् ।
यस्त्वां मुच्येत संसारिपाशान्मुक्तिं लभेत सः ॥ ३ ॥
व्रतं यज्ञो दया दानं ज्ञानं ध्यानं जपस्तपः ।
त्वमेवाऽसि कृपासिन्धो त्वद्योगान्मुक्तिदा इमे ॥ ४ ॥
वद भाद्रपदे शुक्ले किंनाम्न्येकादशी भवेत् ।
को देवः को विधिस्तस्याः किं फलं पूजनं कथम् ॥ ५ ॥

**श्रीनारायण उवाच—**

पद्मानाम्नी भाद्रशुक्लैकादशी मुक्तिदायिनी ।
हृषिकेशोऽत्र संपूज्यस्त्वपराजितया सह ॥ ६ ॥
काशपुष्पाणि पूजायां तिलपाको निवेदने ।
कूष्माण्डमर्घ्ये वै देयं दाने ब्रह्मगृहं शुभम् ॥ ७ ॥
मन्दिरं भवनं सौधं कारयेद्धर्यधिष्ठितम् ।
दद्याद्वै गुरवे देवपूजकाय सुमन्दिरम् ॥ ८ ॥
दशम्यामेकभक्तेन भाव्यं तु व्रतिना निशि ।
कार्यं भूशयनं ब्रह्मव्रतं रक्ष्यं तु यत्नतः ॥ ९ ॥
इयं पार्श्वपरिवर्तिन्येकादशी हरेर्मता ।
शेषशायी परिवर्तयति पार्श्वं दिनेऽत्र वै ॥१०॥
शयन्यां पार्श्ववर्तिन्यां प्रबोधिन्यां च मानवैः ।
व्रतं निरशनं कार्यं निर्जलं शक्तितोऽपि च ॥११॥
अत्राऽन्नभोजिनः शूलं पार्श्वे ददति मेऽघृणाः ।
तस्मादन्नं न भोक्तव्यं भोक्तव्यं फलमेव वा ॥१२॥
दुग्धं पेयं सशक्तेन निर्जलं समुपोषणम् ।
कर्तव्यं तेन भगवाँस्तुष्यति कमलापतिः ॥१३॥
एकादश्यां ब्राह्मकाले समुत्थाय व्रती हरिम् ।
स्मरेद्ध्यायेच्च नामानि गृणन् स्नानाय संव्रजेत् ॥१४॥
स्नात्वा च नैत्यिकीं पूजां कृत्वा कृष्णस्य वै व्रती ।
मण्डलं सर्वतोभद्रं सद्धान्यैः कारयेच्छुभम् ॥१५॥
मध्ये घटं तु सौवर्णं ताम्रजं स्थापयेच्च वा ।
पञ्चरत्नाऽक्षतपुष्पजलवस्त्रफलान्वितम् ॥१६॥
शंखघण्टादिसंयुक्तं पूजयेच्चन्दनादिभिः ।
स्थालीं तिलभृतां धृत्वा घटोपरि तु तत्र वै ॥१७॥
हृषिकेशाऽपराजिताप्रतिमां स्थापयेद् व्रती ।
पद्मां त्वेकादशीं चापि स्थापयेत्पूजयेच्च ताम् ॥१८॥
आवाहनादिभिः पंचामृतस्नानादिभिस्तथा ।
वस्त्राभूषणशृंगारकज्जलैश्चन्दनादिभिः ॥१९॥
हारकेयूरकटकैर्मुकुटैः शेखरादिभिः ।
पादुकायष्टिनक्तकपुष्पगुच्छात्तरादिभिः ॥२०॥
धूपदीपसुनैवेद्यैर्जलताम्बूलसत्फलैः ।
आरार्त्रिकस्तुतिदण्डवन्नमनप्रदक्षिणैः ॥२१॥
क्षमाभ्यर्थनकुसुमांजलिसद्दक्षिणादिभिः ।
प्रपूज्य भगवन्तं च व्रतनिर्विघ्नसिद्धये ॥२२॥
प्रार्थयेच्छ्रीहरिं पश्चान्नत्वा कार्यान्तरं चरेत् ।
मध्याह्नेऽपि भगवते मिष्टान्नान्यर्पयेद्व्रती ॥२३॥

ताम्बूलकं वारिपानं त्वर्पयेद् वाचयेत्कथाम् ।
अपराह्णे ततः सायं नीराजयेद्विधानतः ॥२४॥
स्तोत्रं च कीर्तनं कुर्याद् भोजयेत्पायसादिकम् ।
ताम्बूलं सलिलं दद्याद् दोलायां चाधिवेशयेत् ॥२५॥
आन्दोलयेत्स्वयं भक्तो भक्तैरन्यैस्तु सात्त्वतैः ।
साध्वीभिः साधुभिश्चैव ब्रह्मचारिभिरित्यपि ॥२६॥
मिलित्वा जागरं कुर्यात् सोत्सवं गीतिपूर्वकम् ।
नामधूनयुतं नृत्यं कीर्तनं च कथामृतम् ॥२७॥
कुर्यात्कृष्णस्य निकटे प्रातः स्नात्वा प्रपूजयेत् ।
भोजयेद्भगवन्तं च प्रसादं सात्वतान् जनान् ॥२८॥
दद्याच्च पारणां त्वन्यान् कारयित्वा ततः स्वयम् ।
व्रती वै पारणां कुर्याद् द्वादश्यां दानमाचरेत् ॥२९॥
गोमहिषीगजवाजियानविमानवाहनम् ।
गृहोद्यानपुरग्रामक्षेत्रवस्त्रान्नसाधनम् ॥३०॥
रत्नहीरकमाणिक्यमणिस्वर्णधनादिकम् ।
खट्वाशकटपर्यंकपेटापात्रकपाटकम् ॥३१॥
बृसीक्षौमासनसिंहासनपट्टासनकटम् ।
प्रेंखाकुसूलगेन्दुकगुप्तदोरकरज्जुकम् ॥३२॥
ग्रन्थगृहोपकरणशृंखलाकुण्डिकातरूम् ।
चलवल्लीचलस्तम्बमृगव्याघ्रादिचर्मकम् ॥३३॥
वृक्षत्वगासनवल्कलकौशेयधनादिकम् ।
यद्यच्छक्यं भवेत्स्वस्य दद्यात्तद्द्वादशीदिने ॥३४॥
जलयानं भूमियानं व्योमयानादिकं नृपः ।
दद्यादाचार्यगुरवे यन्त्रं बहुविधं तथा ॥३५॥
दत्तं पात्रे जनैर्यत् तत्परलोकेऽभिपद्यते ।
ज्ञानदानं भूमिदानं कन्यादानं धनार्पणम् ॥३६॥
अन्नदानं जलदानं वस्त्रदानं गृहार्पणम् ।
गोदानं भूमिदानं साधनदानं व्रतार्पणम् ॥३७॥
पुण्यदानं स्वस्वकीयाऽतिप्रियस्यार्पणं तथा ।
स्वर्गे वाऽन्यत्र योनौ तद् दातारमुपगच्छति ॥३८॥
तस्माच्छक्तौ प्रदातव्यं परलोकसहायकृत् ।
इहामुत्र सुखदातृ सतां सेवनमाचरेत् ॥३९॥
यया यया प्रभक्त्या वै सन्तस्तुष्यन्ति यद्यथा ।
तथा तथा सेवनीयाः सन्तो वै हरिमूर्तयः ॥४०॥
सन्तो हरेः स्वरूपावतारा भवन्ति भूतले ।
प्रसेविता व्रते सन्तस्तुष्यन्ति यदि चान्तरे ॥४१॥
तदा भुक्तिस्तथा मुक्तिः सर्वं सिद्धं व्रतार्थिनः ।
हरेः सेवा सतां सेवा साध्वीसेवाऽच्युतार्पणम् ॥४२॥

आत्मज्ञानं भक्तियोगो हरेर्गुणानुचिन्तनम् ।
ब्रह्मज्ञानं योगसिद्धिः प्रत्येकं मोक्षसाधनम् ॥४३॥
व्रतं तपो जपो योगो यज्ञश्चात्मसमर्पणम् ।
कृष्णप्रपत्तिगतियुक् निश्चितं मोक्षसाधनम् ॥४४॥
तस्माद् ब्रह्मसुसम्बन्धमयं व्रतं चरेद्व्रती ।
सकामस्य भवेद् भुक्तिरकामस्य परा गतिः ॥४५॥
परालयध्वंसकर्तुः स्वालयं नश्यति ध्रुवम् ।
परगृहध्वंसकस्य स्वगृहं ध्वंसते खलु ॥४६॥
परहिंसाप्रकर्तुश्च स्वहिंसा जायते ध्रुवम् ।
परदुःखप्रदातुश्च स्वदुःखं जायते ध्रुवम् ॥४७॥
अन्यसुखप्रदातुश्च स्वसुखं जायते ध्रुवम् ।
परसम्पत्प्रहर्तुश्च स्वसम्पन्नश्यति ध्रुवम् ॥४८॥
अन्यनाशयितुश्चात्र स्वनाशो भवति ध्रुवम् ।
परद्रव्यादिहर्तुश्च स्वद्रव्यध्वंसनं ध्रुवम् ॥४९॥
परस्त्रीनाशकर्तुश्च स्वस्त्रीनाशो भवेद् ध्रुवम् ।
परेष्वग्निविषदातुर्नैजेऽग्निविषिता ध्रुवम् ॥५०॥
परप्रतारयितुश्च स्वप्रतारणकं ध्रुवम् ।
परगार्हस्थ्यभंक्तुश्च स्वगार्हस्थ्यलयो ध्रुवम् ॥५१॥
परकामसुखघ्नस्य स्वकामसुखनाशनम् ।
परोपकारशीलस्य स्वोपकारसहायनम् ॥५२॥
ऐन्द्रियकसुखदातुस्त्वैन्द्रियकसुखागमः ।
साधनैस्तु सुखदातुः साधनानां समागमः ॥५३॥
विघ्नकर्तुस्तु विघ्नानि सुखदातुः सुखानि वै ।
सर्वदातुस्तु सर्वाणि ह्युपतिष्ठन्ति निश्चितम् ॥५४॥
तस्माद् दानानि सर्वाणि देयानि पुनराप्तये ।
दत्तं व्यर्थं न वै चात्र परत्रापि च लप्स्यते ॥५५॥
अदत्तानां दुःखितानां दातृ त्वेकादशीव्रतम् ।
कर्तव्यं तत्प्रयत्नेन वाञ्छितं दास्यति ध्रुवम् ॥५६॥
व्यक्तिदोषकृतं दुःखं तत्समूहस्य संभवेत् ।
व्यक्तिकृतं महत्पुण्यं समुदायस्य जायते ॥५७॥
समुदायकृतं पापं पुण्यं वा भवति नृपे ।
नृपकृते पुण्यपापे प्रजानां स्पृशतस्तथा ॥५८॥
यस्य कस्यापि वै धर्मलोपेन दुःखिताः प्रजाः ।
तावद्दुःखविनाशाय कार्यमेकादशीव्रतम् ॥५९॥
तेन पापं विनश्येद्वै सुखं स्यादतुलं खलु ।
मान्धातृनृपतेस्ताद्दृग्जातं कृतयुगे शृणु ॥६०॥
मान्धाता नामराजर्षिर्विवस्वद्वंशसंभवः ।
उदयास्तमनक्षेत्रचक्रवर्ती बभूव ह ॥६१॥

प्रजाः स पालयामास धर्मेण स्वात्मजानिव ।
तस्य राज्ये न दुर्भिक्षं नाऽधयो व्याधयो न च ॥६२॥
धनधान्यसमृद्धियुक्तं राष्ट्रं स्वर्गमिवाऽस्य वै ।
कोशोऽपि न्यायलब्धेन धनेन शेवधिसमः ॥६३॥
वर्णास्तथाऽऽश्रमाः पुण्यैर्विद्योतन्ते समेधिताः ।
पृथ्वी वसुन्धरा कामगावः कल्पकरा द्रुमाः ॥६४॥
वाक्सिद्धा ब्राह्मणास्तस्य साधवो योगभूमयः ।
नार्यश्चानन्ददाः शान्तिमत्यो विलासमंगलाः ॥६५॥
ऋतवः कामकाराश्च राष्ट्रं स्वर्गमिवाऽपरम् ।
सुखमग्नं समभूद्वै बहुसौख्यं गताः प्रजाः ॥६६॥
ब्राह्मणा ब्रह्मकर्मस्थाः क्षत्रिया रक्षणप्रदाः ।
वैश्या उपार्जनोद्योगपराः शूद्राश्च सेविनः ॥६७॥
आसन् स्वधर्मयातारो तेन राष्ट्रमभूत् सुखि ।
तस्यैवं कुर्वतो राज्यं ग्रहाः सौम्या सदाऽभवन् ॥६८॥
देवा आसन्प्रसन्नाश्च मंगलानि गृहे गृहे ।
अथैको भक्तराट् कश्चिद् वृषलो राज्यवाञ्छया ॥६९॥
समारेभे तप उग्रमरण्ये निर्जने तदा ।
शूद्रधर्मपरित्यागाद्द्विषधर्मग्रहात्तथा ॥७०॥
अधर्मस्य विधर्मस्य प्रवेशेनाऽस्य राष्ट्रके ।
वर्षत्रयं न ववृषुर्मेघाः प्रजास्तु दुःखिताः ॥७१॥
भग्ना मृता जनाः केचिद् बभूवुः क्षुधयाऽर्दिताः ।
स्वाहास्वधावषट्कारवेदाध्ययनपूजनम् ॥७२॥
व्रतोपकारसन्मानाऽऽतिथ्यदानादिकं तथा ।
शुभं कर्मोत्सवाद्यं च सर्वं ध्वस्तं बभूव ह ॥७३॥
देशस्तस्य विभाग्येन बभूव दैवपीडितः ।
तदा प्रजाः समागत्य प्राहुर्नृपेश्वरं त्विदम् ॥७४॥
शृणु राजन् विना वृष्टिं राष्ट्रोच्छेदो भवत्ययम् ।
पर्जन्यरूपो भगवान् विष्णुर्वारिषु संस्थितः ॥७५॥
स एव कुरुते वृष्टिं वृष्टेरन्नं ततः प्रजाः ।
वृष्ट्यभावे महाराज क्षयं प्रयान्ति ते प्रथाः ॥७६॥
तस्माद् विधेहि राजेन्द्र योगक्षेमम् यथा भवेत् ।
श्रुत्वा प्राह महीभर्ता यथा क्षेमं प्रजाजने ॥७७॥
स्यात्तथा प्रयतिष्येऽहं राजमूलं सुखं यतः ।
नृपाणामपचारेण प्रजानां पीडनं भवेत् ॥७८॥
नाऽहमाजन्मतः क्वापि कृतवान्पातकं तथा ।
तथापि प्रयतिष्येऽहं प्रजानां हितकाम्यया ॥७९॥
इत्युक्त्वा सप्रजो राजा परिमेयपरिच्छदः ।
पापाऽन्वेषणसन्नद्धो देशयात्रां चकार सः ॥८०॥

श्रुतं लोकमुखात्तेन गहने हिमवद्वने ।
शूद्रस्तपति सोऽयं ते राज्ये विधर्म एव यत् ॥८१॥
ब्राह्मणानां यतीनां च साधूनां धार्मिकं तपः ।
शूद्राणां सेवनं धर्मस्तपो विधर्म एव यत् ॥८२॥
शूद्रकृततपोदोषादवग्रहोऽत्र जायते ।
सोऽयं शूद्रतपोरोधे धर्मो वृष्टिमयो भवेत् ॥८३॥
श्रुत्वा महीपतिः शीघ्रं जगाम गहनं वनम् ।
चचार मुनिमुख्यांश्च स्वाश्रमांस्तापसैः श्रितान् ॥८४॥
ददर्शाऽथ ब्रह्मपुत्रमृषिमंगिरसं नृपः ।
तेजःपरिधिसंव्याप्ताननं यथा तु पद्मजम् ॥८५॥
राजा कृतांजलिर्नम्रश्चक्रे तत्पादयोर्नमः ।
मुनिः पप्रच्छ कुशलं राष्ट्रे चैवाऽप्यनामयम् ॥८६॥
दत्तासने ह्युपविश्य मान्धाता प्रत्युवाच तम् ।
भगवन्धर्मविधिना मम पालयतो महीम् ॥८७॥
अनावृष्टिश्च संजाता पीड्यन्ते सकलाः प्रजाः ।
वर्षत्रयं व्यतीतं च भवेत् किमत्र कारणम् ॥८८॥
शूद्रस्तपः करोतीति श्रुतं लोकमुखान्मया ।
तथापि निर्णयं ब्रूहि भवेत् किमत्र कारणम् ॥८९॥
योगक्षेमविधानेन प्रजानां कुरु निर्वृतिम् ।
अंगिराः प्राह नृपतिं क्षणं ध्यात्वा निजान्तरे ॥९०॥
अस्मिन् कृतयुगे धर्मश्चतुष्पादः प्रवर्तते ।
अत्र ब्रह्मपरा लोका ब्राह्मणाश्च तपःपराः ॥९१॥
तपस्यन्येऽधिकृता न पन्था ह्येषः कृते युगे ।
सत्येवं विषये तेऽत्र वृषलोऽपि तपःपरः ॥९२॥
तद्विधर्मप्रभावेण न वर्षन्ति बलाहकाः ।
कुरु तस्य वधे यत्नं नातिदूरे वनेऽस्ति सः ॥९३॥
एवंकृते त्वनावृष्टिर्न स्याद् राजन्कदाचन ।
श्रुत्वा प्राह महाभागवतो राजा दयापरः ॥९४॥
नाऽहमेनं हनिष्यामि तपस्यन्तं शुभक्रियम् ।
तपोरोधं करिष्यामि शनैरेव मिषान्तरे ॥९५॥
यदि स्यात्साधनं किञ्चिदन्यद्वृष्टिकरं तदा ।
दर्शयैतत्करोम्येव ह्युपसर्गविनाशनम् ॥९६॥
अंगिराः प्राह राजानं यद्येवं तर्हि शोभनम् ।
कुरुष्व क्षेमदं पद्माभिधैकादशिकाव्रतम् ॥९७॥
सर्वसिद्धिप्रदं चैतत्सर्वोपद्रवनाशकम् ।
सर्वशान्तिकरं योगक्षेमदं पद्मिकाव्रतम् ॥९८॥
कुरु पद्माव्रतं राजन् सप्रजः सपरिच्छदः ।
पद्माव्रतप्रभावेण सुवृष्टिर्भविता ध्रुवम् ॥९९॥

इत्याज्ञां शिरसा धृत्वा पूजयित्वा च तं मुनिम् ।
शूद्रतपोनिरोधाय नियुज्य कर्मचारिणम् ॥१००॥
स्मरन् कृष्णं हृदये स्वे राजा स्वगृहमागतः ।
भाद्रमासे सिते पक्षे पद्मात्रतमथाऽकरोत् ॥१०१॥
प्रजाभिः सह सर्वाभिश्चातुर्वर्ण्यसमन्वितः ।
कृत्वा व्रतं चकाराऽसौ दानानि हरिपूजनम् ॥१०२॥
एवं व्रते कृते लक्ष्मि ! प्रववर्ष बलाहकः ।
भूमिर्जलेन संतृप्ता त्वभवत्सस्यशालिनी ॥१०३॥
एकादशीव्रतपुण्यात् नाशितोऽवग्रहो द्रुतम् ।
तस्मात्पद्मात्रतं कार्यं दुःखाऽऽपन्नाशनाय च ॥१०४॥
तत्र दध्योदनं चापि वस्त्ररत्नयुतो घटः ।
जलपूर्णश्च कलशश्छत्रोपानहमित्यपि ॥१०५॥
गोविन्दबुद्धया दातव्या गुरौ ब्रह्मविदि द्विजे ।
नमस्कार्यस्तथा भोज्यैस्तोषणीयो गुरुर्द्विजः ॥१०६॥
एवं व्रतं परं कृत्वा जनश्रेष्ठमवाप्नुयात् ।
श्रवणात्पठनाच्चास्य व्रतपुण्यं हि लभ्यते ॥१०७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने भाद्रशुक्लपद्मैकादशीव्रतमाहात्म्यं मान्धातुः राज्ये सत्ययुगे शूद्रे तपति वृष्टेरवग्रहः, व्रतेन वृष्टिरित्यादिनिरूपणनामा सप्तपंचाशदधिकद्विशततमोऽध्यायः ॥२५७॥

**श्रीलक्ष्मीरुवाच—**

नमो नमस्ते गोविन्द ऋषिकेश जनार्दन ।
साक्षिन्प्रयोजक स्वामिन्नारायण नियामक ॥ १ ॥
दृश्यप्रद दृशेर्दातर्द्रष्टृत्वेन व्यवस्थित ।
वीजप्रदांऽकुरात्मन् प्रस्तम्बपत्रादिषु स्थित ॥ २ ॥
काण्डनालसुपुष्पस्थ बीजात्मक नमोऽस्तु ते ।
फलप्रद फले तिष्ठन् स्वयं फलसि तद्दतौ ॥ ३ ॥
कर्मबीजफलव्यापिन् वृष्टिबीज नमोऽस्तु ते ।
वदाऽऽश्विनाऽसितपक्षे किंनाम्न्येकादशी भवेत् ॥ ४ ॥
को विधिः किं फलं चास्याः कीदृशं च व्रतं मतम् ।
को देवः पूज्यते चात्र दानाद्यं पूजनादि किम् ॥ ५ ॥

**श्रीनारायण उवाच—**

आश्विने कृष्णपक्षेऽस्ति त्विन्दिरानामनामतः ।
उपेन्द्रः सुभगायुक्तः पूज्यो दूर्वाभिरत्र वै ॥ ६ ॥
आमलकीफलं चाऽर्घ्ये शष्कुली तु निवेदने ।
कन्यादानं प्रधानं च पूजनं सांगमेव यत् ॥ ७ ॥
पितॄणां तर्पणं मुख्यं कर्तव्यं तृप्तिदं शुभम् ।
अगतीनां गतिकृच्च व्रतं श्राद्धादिसंयुतम् ॥ ८ ॥
दशम्यामेकभुक्तोऽस्या व्रती ब्रह्मचरो भवेत् ।
भूशायी संयमी प्रातस्त्वेकादश्यां व्रतं चरेत् ॥ ९ ॥
उत्थाय श्रीहरिं स्मृत्वा ध्यात्वा मूर्तिं हरेस्ततः ।
स्नात्वा पूजां प्रकुर्याच्च नैत्यिकीं शुद्धमानसः ॥१०॥
मण्डपं कारयित्वा च सर्वतोभद्रमण्डले ।
घटं सुवर्णजन्यं वा ताम्रजं स्थापयेन्नवम् ॥११॥
पञ्चरत्नसुपल्लवफलवार्यम्बरान्वितम् ।
घटोपरि तिलस्थालीं स्थापयेद्वै प्रपूरिताम् ॥१२॥
पार्श्वेत्वामान्नमेवात्र पितॄणां तृप्तिदं तथा ।
जलं तीर्थाहृतं पात्रे स्थापयेच्च कुशाँस्तथा ॥१३॥
शर्कराफलपिष्टादि विन्यस्येत्पार्श्वतस्तदा ।
मूर्तिं च कानकीं तत्रोपेन्द्रस्य सुभगायुताम् ॥१४॥
इन्दिरासहितां तिलस्थाल्यां संस्थापयेद्व्रती ।
गणेशं पूजयित्वा च शंखं घण्टां घटं तथा ॥१५॥
पूजयित्वा ततः कृष्णं हृदि स्मृत्वा विचिन्तयेत् ।
मस्तके मस्तकं चास्तु नेत्रादौ हरिनेत्रकम् ॥१६॥
हृदये हृदयं चास्तु हस्तादौ तत्करादिकम् ।
कट्यादौ तस्य कट्यादि पादयोर्हरिपत्कजम् ॥१७॥
ममांगेषु हरेरंगानि सन्त्वात्मनि केशवः ।
इत्येवं सर्वतोभावात् देवो भूत्वाऽर्चयेद्धरिम् ॥१८॥
आवाहनादिकं कुर्यात् पंचामृताभिषेचनम् ।
शुद्धोदकाऽऽप्लवनं च कारयित्वाऽम्बरार्पणम् ॥१९॥
केशप्रसाधनाद्यं चाऽत्तरसुगन्धिकार्चनम् ।
गुलालकुंकुमाऽबीरचन्दनाक्षतपूजनम् ॥२०॥
अलक्तकाऽऽर्द्रचूर्णादिरंगकजलरंजनम् ।
कुर्याद्देवस्य सर्वांगेष्वथ भूषादि धारयेत् ॥२१॥
श्रृंगारशोभितां मूर्तिं पुष्पहारादिभिस्ततः ।
कटकमुकुटाद्यैश्च सुरूपैरूपयेद्बहु ॥२२॥
धूपदीपसुनैवेद्यजलताम्बूलचूर्णकम् ।
आरार्त्रिकस्तुतिप्रदक्षिणदण्डवदादिकम् ॥२३॥
दक्षिणाऽक्षतकुसुमांजलिदानं क्षमापनम् ।
विधिवत्सर्वतोभावयुक्तेन व्रती चेतसा ॥२४॥
दद्यात् कुर्याच्च यद्योग्यं याचेताऽविघ्नतां व्रते ।
पितॄन्स्मृत्वा प्रदद्याच्च प्रसादाढ्यजलाँजलिम् ॥२५॥
दद्याद्दानानि वै प्रातर्मध्याह्नेऽपि प्रपूजयेत् ।
भोजयेद् विविधान्नानि देवं नारायणं ततः ॥२६॥

मध्याह्नोत्तरकाले च पितॄणां श्राद्धमाचरेत् ।
पितृतीर्थेन सलिलं दद्यात्तत्तत्सुनामभिः ॥२७॥
पिण्डान् दद्यात् फलान्यन्यत् तृप्तिदं चार्पयेत् पितॄन् ।
सायं नीराजनं कृत्वा पूजयेत्परमेश्वरम् ॥२८॥
भोजयेद् दुग्धपाकादि जलपानादि चार्पयेत् ।
रात्रौ जागरणं कुर्यात्साधुसंगतिमाचरेत् ॥२९॥
कथां कुर्यात्तथा भक्ताच्छृणुयाच्च पठेच्च वा ।
नृत्यं गीतं प्रकुर्याच्च समुत्साहमहोत्सवम् ॥३०॥
प्रातः स्नात्वा हरिं ध्यात्वा पूजयित्वा विधानतः ।
दत्वा नैवेद्यमीशाय भोजयेद्वैष्णवाँस्ततः ॥३१॥
आश्रितान् भोजयित्वा च साधून् साध्वीर्द्विजाँस्ततः ।
पारणां च व्रती कुर्याद् दद्याद् दानानि पात्रके ॥३२॥
गुरुं च मातरं वृद्धान् पितरं पूजयेत्पतिम् ।
आशीर्वादाँश्च गृह्णीयात् कुर्यात्कार्यं स्वकं ततः ॥३३॥
एवं कृते व्रते लक्ष्मि ! वाञ्छितं सिद्ध्यति ध्रुवम् ।
पितृतृप्तिकरं भोज्यं जलं वस्त्रादि दापयेत् ॥३४॥
पित्रुद्धारकरं दानं गवां त्वन्यच्च कारयेत् ।
गृहोद्यानपशुक्षेत्रकन्याविद्यासुवाहनम् ॥३५॥
स्वर्णरत्नविभूषान्नविविधोपस्करान्वितम् ।
दापयेत् पितृसन्तुष्टिबुद्ध्यैव श्रद्धया व्रती ॥३६॥
गुरवे हरये दद्यात् पितृमुक्तिकरं भवेत् ।
मुक्तिदान्मुक्तिदं श्रेष्ठं ततो मुक्तिदमाचरेत् ॥३७॥
यस्माद्यस्य भवेदिच्छाशान्त्यर्थं वाञ्छना त्वति ।
तेन तस्य प्रकर्तव्या वाञ्छायाः शान्तिरन्यथा ॥३८॥
वैपरीत्यं भवेत् पित्रतृप्तितो वंशजस्य वै ।
तस्मात्कामफलं चाऽप्यकामफलकमित्यपि ॥३९॥
कुर्याद्वै वंशजः पितृतृप्त्यर्थं काल आगते ।
इषकृष्णे व्रते कुर्याद् विशेषफलतृप्तिकृत् ॥४०॥
स्वल्पं वा विपुलं वापि दद्यात् तत्तत्सुनामभिः ।
परलोकगतानां तत्सुखदं भवति ध्रुवम् ॥४१॥
पितरो यदि मुक्तिस्थास्तदा कर्तुः फलं मतम् ।
कृतं न निष्फलं यायादिति कृत्वाऽऽचरेद् बुधः ॥४२॥
बीजं वै चांकुरं दद्यात्पत्रं पुष्पं फलं जलम् ।
न याति निष्फलं क्षेत्रे श्रद्धावार्यभिषेचनम् ॥४३॥
उषरे क्षीयते बीजं क्षेत्रे पात्रे न नश्यति ।
तीर्थे पात्रे सत्पुरुषे क्षिप्तं ध्रुवं प्ररोहति ॥४४॥
व्रते पात्रे हरौ दद्याद् क्षिप्तं चापि न निष्फलम् ।
तस्मात्स्वल्पं बहुलं वा फलसन्धानवर्जितम् ॥४५॥
दद्यात्प्रतिफलत्येव हर्यनुग्रहकारणात् ।
शृणु लक्ष्मि ! कथां रम्यां व्रतेन पितृतृप्तिदाम् ॥४६॥
अधोयोनिगतानां तु पितॄणां गतिदायिनी ।
इन्दिरैकादशी श्रेष्ठा वाजपेयफलप्रदा ॥४७॥
इन्द्रसेनेन वै राज्ञोपोषिता पितृतारणी ।
नार्मदाख्ये महाराष्ट्रे चन्द्रावतीपुरीपतिः ॥४८॥
इन्द्रसेनाख्यनृपतिर्बभूव प्राक्कृते युगे ।
धर्मेण पालयामास प्रजाः पुत्रानिवौरसान् ॥४९॥
पुत्रपौत्रसमायुक्तो धनधान्यसमन्वितः ।
गजवाजियानयुक्तो विष्णुभक्तिपरायणः ॥५०॥
जपन् श्रीहरिनामानि मुक्तिदानि तु सर्वदा ।
कालं नयति भक्त्यैवाऽध्यात्मध्यानविचिन्तकः ॥५१॥
तस्यैकदा गृहे शान्त्याऽऽसीनस्य पुरतो मुनिः ।
नारदो व्योममार्गेणाऽवतीर्य समुपस्थितः ॥५२॥
आगतं नारदं वीक्ष्य प्रत्युत्थाय कृतांजलिः ।
कृतातिथ्यं मुनिं बृष्यासने रम्ये न्यवेशयत् ॥५३॥
प्रोवाच स्वागतं तेऽहं करोमि ब्रह्मवित्तम ।
अद्य मे सफलं राज्यं जन्म कर्म कुलं धनम् ॥५४॥
दानं क्रतुर्जपो होमः स्वाध्यायः सफला मम ।
त्वत्प्रसादान्मुनिश्रेष्ठ भाग्यं धन्यतमं मम ॥५५॥
सुतप्रपुत्रदारादिदासदासीशतानि मे ।
गजवाजिवाहनानि सफलानि तवाऽऽगमात् ॥५६॥
साधोर्वै दर्शनं पुण्यं स्पर्शनं पापनाशकम् ।
सेवनं स्वर्गदं दिव्यमोक्षदं त्वात्मनोऽर्पणम् ॥५७॥
येषां गृहे न साधूनां चरणधूलिकारजः ।
तानि श्मशानतुल्यानि भवनानि गृहाणि च ॥५८॥
तारितं मम सम्बन्धिकुटुम्बं सर्वमेव यत् ।
प्रसादं कुरु देवर्षे निस्पृहाऽऽगमकारणम् ॥५९॥
नारदः प्राह राजर्षे शृणु विस्मयकारकम् ।
ब्रह्मलोकादहं प्राप्तो यमलोकं महीपते ॥६०॥
धर्मेण सत्कृतो भक्त्या ह्युपविष्टो वरासने ।
धर्मराजं सत्यशीला धार्मिकाः समुपासते ॥६१॥
तेषां सदसि पृष्ठस्थं निस्तेजस्कं स्थितं तव ।
पितरं प्रहसन्त्यन्ये बहुपुण्यातिमानिनः ॥६२॥
सभायां श्राद्धदेवस्य प्राह मह्यं पिता तव ।
सन्देशं दुःखनाशाय तं निबोध महीपते ॥६३॥
इन्द्रसेन इतिख्यातं चन्द्रावत्या नृपं सुतम् ।
ब्रह्मन् कथय सन्देशं पिता ते चन्द्रसेनकः ॥६४॥

तिष्ठति धर्मराजस्य नगर्यां पुण्यपुंजतः ।
दानं बहुकृतं तेन न कृतं व्रतमेव यत् ॥६५॥
तेन पुण्येन धर्मस्य नगर्यामस्ति संस्थितः ।
व्रतपुण्येन विधुरो निस्तेजस्कोऽतिपृष्ठगः ॥६६॥
निषीदति सभायां वै चातिदुःखान्वितः सदा ।
तस्मात् कुर्याद् व्रतं चैकादश्या उद्दिश्य मां सुतः ॥६७॥
मोक्षं कुर्यात्स मे पुत्र इन्दिरापुण्यदानतः ।
इत्युक्तोऽहं समायातः समीपं तव भूपते ॥६८॥
पितुर्मोक्षकृते राजन्निन्दिराव्रतमाचर ।
त्वत्पिता तेन पुण्येन वैकुण्ठं यास्यति ध्रुवम् ॥६९॥
श्रुत्वा पितुः स सन्देशं नारदं पृष्ठवान् व्रतम् ।
विधिना केन कर्तव्यं कस्मिन् पक्षे तिथौ तथा ॥७०॥
नारदः प्राह राजानमाश्विनाऽसितपक्षके ।
दशम्यां प्रातरुत्थाय स्मृत्वा कृष्णं ततः परम् ॥७१॥
स्नात्वा देवं पूजयित्वा मध्याह्ने स्नानमाचरेत् ।
दत्वा हरये नैवेद्यमेकभुक्तं समाचरेत् ॥७२॥
सायं स्नात्वा हरिं ध्यात्वा रात्रौ भूमौ शयीत च ।
एकादश्यां प्रभातेऽयं व्रती निद्रां विहाय वै ॥७३॥
स्मृत्वा ध्यात्वा हरिं नाम रटन् शौचादिकं चरेत् ।
मुखप्रक्षालनं कुर्याजलैर्द्वादशधा मुहुः ॥७४॥
स्नानं तीर्थजलैः कुर्याद् देवपूजां समाचरेत् ।
हरेर्मूर्तिं नमस्कृत्याऽऽचमनादिग्रहोत्तरम् ॥७५॥
षोडशोपस्करैः कृष्णमुपेन्द्रं पूजयेद् व्रती ।
उपवासस्य नियमं गृह्णीयाच्च तदग्रतः ॥७६॥
अद्य स्थित्वा निराहारः सर्वभोगविवर्जितः ।
श्वो भोक्ष्ये पुण्डरीकाक्ष व्रतं पूर्णं कुरु प्रभो ॥७७॥
एवं नियममास्थाय सर्वतोभद्रमण्डले ।
घटे कृष्णं स्थापयित्वा महापूजनमाचरेत् ॥७८॥
समाप्य विधिना पूजां नीराजयेच्च भोजयेत् ।
मध्याह्नेऽपि स्वयं स्नात्वा श्रीहरिं भोजयेत्तथा ॥७९॥
नीराजयेत् स्वापयेच्चोत्थापयेत् पाययेज्जलम् ।
वीजयेन्मर्दयेन्नाथं सुखयेदिष्टदानकैः ॥८०॥
शालग्रामशिलाग्रे च श्राद्धं कुर्याद् यथाविधि ।
पितॄणां प्रीतये श्राद्धं कुर्यात् श्रद्धासमन्वितः ॥८१॥
गोधूमचूर्णैर्यच्छ्राद्धं कृतं तन्मध्यमं भवेत् ।
यवैर्व्रीहितिलैर्माषैर्गोधूमैश्चणकैस्तथा ॥८२॥
श्राद्धं कृतं भवेच्छ्रेष्ठं कर्तव्यं व्रतिना तु तैः ।
श्राद्धं कृत्वा व्रतिना न भोक्तव्यं पितृसेवितम् ॥८३॥
व्रतरक्षणलाभाय घ्रातव्यमेव चार्पितम् ।
पैत्र्यमन्नं समाघ्राय गवे दद्याद्विचक्षणः ॥८४॥
रात्रौ महार्चनं कुर्याज्जागरं सोत्सवं तथा ।
द्वादश्यां प्रातरेवाऽयं स्नात्वा समर्च्य माधवम् ॥८५॥
नैवेद्यं फलताम्बूले त्वर्पयित्वा ततो व्रती ।
आरात्रिकादिकं कृत्वा क्षमायाचनिकां तथा ॥८६॥
दद्याद् दानानि भूरीणि ब्राह्मणादीन् प्रभोजयेत् ।
साधून्साध्वीर्भोजयेच्च बन्धून् दौहित्रपुत्रकान् ॥८७॥
भोजयित्वा च दीनान्धान् स्वयं भुञ्जीत वाग्यतः ।
अनेन विधिना राजन् कुरु व्रतमतन्द्रितः ॥८८॥
विष्णुलोकं प्रयास्यन्ति पितरस्तव भूपते ।
इत्युक्त्वा नृपतिं लक्ष्मि! नारदोऽन्तरधीयत ॥८९॥
यथोक्तविधिना हीन्द्रसेनश्चकार तद्व्रतम् ।
अन्तःपुरेण सहितः पुत्रभृत्यसमन्वितः ॥९०॥
कृते व्रते गवां दाने पुष्पवृष्टिरभूद् दिवः ।
पुण्यार्पणे कृते चेन्द्रसेनस्य जनकः खलु ॥९१॥
चन्द्रसेनस्तथाऽन्ये तत्पितरोऽपि व्यवस्थिताः ।
गरुडस्था विमानस्था ययुर्वै विष्णुमन्दिरम् ॥९२॥
इन्द्रसेनोऽपि कृत्वा तद्व्रतं वैष्णवपालिताः ।
राज्यं त्वकण्टकं भुक्त्वा दत्वा ज्येष्ठसुताय च ॥९३॥
महीसेनाय तत्पश्चाज्जगाम त्रिदिवं स्वयम् ।
तत्र पुण्यं समाप्यैव वैकुण्ठमगमद्धि सः ॥९४॥
इत्येवं व्रतमाहात्म्यं लक्ष्मि ते कथितं मया ।
पठनाच्छ्रवणाच्चापि व्रतपुण्यं भवेदपि ॥९५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने आश्विनकृष्णेन्दिरैकादशीव्रतमाहात्म्यम्, इन्द्रसेन-नृपपितृचन्द्रसेनप्रभृतीनां पितॄणां व्रतपुण्यबलाद् यमलोकान्मोक्षणमित्यादिनिरूपणनामाऽष्ट-पंचाशदधिकद्विशततमोऽध्यायः ॥२५८॥

**श्रीलक्ष्मीरुवाच—**

सर्वपुण्यमयो देवस्त्वमेव भगवान् स्वयम् ।
ददासि करुणासिन्धुः फलानि कर्मणां यथा ॥ १ ॥
त्वां विस्मृत्याऽनुतिष्ठन्ति कुर्वन्ति मानवास्तु यत् ।
तत्फलं लभ्यते चात्र परत्र भययुक् तु तैः ॥ २ ॥
त्वां स्मृत्वा येऽनुतिष्ठन्ति कुर्वन्ति यानि यानि वै ।
तत्फलं निर्गुणं नित्यानन्दमोक्षात्मकं त्वया ॥ ३ ॥

दीयते भगवँस्तस्मै शरणागतिशालिने ।
एवं फलप्रदाताऽसि सर्वकर्ममयोऽसि यत् ॥ ४ ॥
सर्वज्ञोऽसि कृपां कृत्वा वद मे परमेश्वर ।
आश्विनशुक्लपक्षे तु किंनाम्न्येकादशी भवेत् ॥ ५ ॥
को देवस्तत्र संपूज्यः को विधिः किंफलं तथा ।
किं दानं तत्र दातव्यं वद सर्वं हरेऽत्र मे ॥ ६ ॥

**श्रीनारायण उवाच—**

इषशुक्लैकादशी तु नाम्ना पाशांकुशा मता ।
सर्वपापहरा पुण्यप्रदा मोक्षप्रदा तथा ॥ ७ ॥
पद्मनाभः पद्मवत्या सह पूज्योऽत्र भक्तितः ।
शमीपत्राणि पूजायामर्घ्ये कामफलं मतम् ॥ ८ ॥
शालिपाकस्तु नैवेद्ये दाने तण्डुलमोदकाः ।
सर्वाभीष्टफलप्राप्त्यै सर्वं देयं जनार्दने ॥ ९ ॥
तपस्तप्त्वा चातितीव्रं चिरं मुनिर्यतेन्द्रियः ।
यत्फलं समवाप्नोति तन्नत्वा पद्मनाभकम् ॥१०॥
बहुपापानि कृत्वापि मोहितो मानवो व्रते ।
पद्मनाभं हरिं नत्वा न याति नरकं हि सः ॥११॥
पृथिव्यां तीर्थमात्राणि पुण्यान्यायतनानि च ।
कृतानि तेन सर्वाणि पद्मनाभप्रपूजनात् ॥१२॥
देवदेवं पद्मनाभं ये प्रपन्ना जनार्दनम् ।
न तेषां यमलोकस्य यातनाऽस्ति कदाचन ॥१३॥
एकामेकादशीं कृत्वा प्रसंगेनापि मानवः ।
यद्यपि घोरपापस्थो न याति यमयातनाम् ॥१४॥
नेदृशं पावनं किञ्चित् त्रिषु लोकेषु विद्यते ।
यादृशी पद्मनाभस्यैकादशी पापनाशिनी ॥१५॥
तावत्पापानि वै व्यक्तौ निर्भयानि वसन्ति हि ।
यावन्नोपावसेत्प्राणी पद्मनाभदिनव्रते ॥१६॥
अश्वमेधसहस्राणि राजसूयशतानि च ।
एकादश्युपवासस्य कलां नार्हन्ति षोडशीम् ॥१७॥
नैकादशीसमं लोके पापक्षालनकारकम् ।
स्वर्गमोक्षप्रदं त्वत्र धनमित्रादिदायकम् ॥१८॥
शरीरारोग्यदं दारासुतपुत्रीकुलप्रदम् ।
व्याजेनापि कृतं येन न स याति यमालयम् ॥१९॥
न गंगा न गया लक्ष्मि ! न काशी न च पुष्करम् ।
न चापि कौरवं क्षेत्रं श्रेष्ठं पुण्यं हरेर्दिनात् ॥२०॥
रात्रौ जागरणं कार्यं हरेः कार्यं महार्चनम् ।
निर्जलं चापि कर्तव्यं हरेर्दिने ह्युपोषणम् ॥२१॥
तेन वै लभ्यते लक्ष्मि ! शाश्वतं धाम वै मम ।
दशैव मातृपक्षीयाः पितृपक्षस्थिता दश ॥२२॥
दश पत्नीपक्षगता उद्धरन्ति व्रताद् ध्रुवम् ।
चतुर्भुजा दिव्यरूपा गरुडांऽसकृताऽऽसनाः ॥२३॥
स्रग्विणः पीतवस्त्रास्ते विष्णुतुल्यपराक्रमाः ।
नार्यो लक्ष्मीसमा भूत्वा प्रयान्ति हरिमन्दिरम् ॥२४॥
बालत्वे यौवने वापि वार्धक्ये पारवश्यके ।
उपोष्यैकादशीं देही नैति पापोऽपि दुर्गतिम् ॥२५॥
पाशांकुशामुपोष्यैव हरेर्लोकं प्रयाति वै ।
दत्वा हेमतिलान् गाश्च जलमन्नं तथाऽम्बरम् ॥२६॥
उपानच्छत्रमन्यद्वा यमलोकं न पश्यति ।
पुण्यव्रतविहीनस्य जीवनं निष्फलं मतम् ॥२७॥
यस्य पुण्यविहीनानि दिनान्यायान्ति यान्ति च ।
स लोहकारभस्त्रेव श्वसन्नपि न जीवति ॥२८॥
स्नानं दानं जपं होमं ध्यानं सत्रादिकं तथा ।
समाचरन् यथाशक्ति ह्यवन्ध्यं दिवसं नयेत् ॥२९॥
दीर्घायुषो धनाढ्याश्च कुलीना रोगवर्जिताः ।
दृश्यन्ते मानवा लोके पुण्यकर्तार ईदृशाः ॥३०॥
तस्माद् व्रतं प्रकर्तव्यं पाशांकुशादिनात्मकम् ।
दशम्यामेकभुक्तः स्याद् ब्रह्मचारी भवेत्तथा ॥३१॥
भूशायी स्यान्निशि प्रातः स्नात्वा स्वनैत्यकार्चनम् ।
कुर्यात् षोडशसंचारैरर्थयेद् व्रतपूर्णताम् ॥३२॥
मण्डलं सर्वतोभद्रं कारयेत्सप्तधान्यकैः ।
मध्ये घटं वारिपूर्णं पंचरत्नसमन्वितम् ॥३३॥
धनपूर्णं च वा कृत्वा सवस्त्रं सफलं न्यसेत् ।
घटोपरि तिलस्थालीं स्थापयेत्कानकीं शुभाम् ॥३४॥
मूर्तिं श्रीपद्मनाभस्य पद्मावत्यन्वितां शुभाम् ।
पाशांकुशासहितां च स्थापयेदर्चयेत्तथा ॥३५॥
आवाहनादिकं कृत्वा पंचामृतादिभिस्ततः ।
तीर्थजलैर्हरिं संस्थापयेद् वस्त्राणि धारयेत् ॥३६॥
चन्दनाऽत्तरसौगन्ध्यं त्वर्पयेत्कजलादिकम् ।
पुष्परत्नसुवर्णादिहाराभूषाः समर्पयेत् ॥३७॥
भोजनं विविधं दद्याजलं मिष्टं समर्पयेत् ।
मुखवासं फलं दत्वा नीराजयेन्नमेन्मुहुः ॥३८॥
स्तुत्वा प्रदक्षिणादण्डवतः कृत्वाऽर्थयेत्क्षमाम् ।
धूपदीपादिसंजुष्टे दोलां व्योम्नि प्रबन्धयेत् ॥३९॥
हरिं संस्थापयेत्तत्र मध्याह्नेऽपि सुभोजयेत् ।
ताम्बूलजलपानादि दत्वा सायं तथाऽऽचरेत् ॥४०॥

षोडशोपस्करैः कृष्णं समर्च्यारार्त्रिकादिकम् ।
कुर्यात्सर्वं सुविधिना भोज्यं पेयं समर्पयेत् ॥४१॥
रात्रौ जागरणं कुर्याद् भागवतेषु संस्थितः ।
नर्तनं गायनं गीतं कीर्तनं स्मरणं तथा ॥४२॥
वन्दनं चरणांगानां मर्दनं सेवनादिकम् ।
कुर्यात्प्रातर्हरिं ध्यात्वा स्नात्वा संपूज्य केशवम् ॥४३॥
भोजयेद्भगवन्तं च ताम्बूलं जलमर्पयेत् ।
साधून् साध्वीः स्वाश्रितांश्च भोजयेन्मानयेत्ततः ॥४४॥
वृद्धान्नत्वा हरिं स्मृत्वा कृत्वा पंचमखान् पृथक् ।
ततो वै पारणां कुर्याद् दद्याद् दानानि भावतः ॥४५॥
एवं व्रतं समाप्यैव द्वादश्यां वै हरिं भजेत् ।
भवपाशविनाशोऽस्य व्रतिनो भवति ध्रुवम् ॥४६॥
श्रृणु लक्ष्मि ! कथां दिव्यां यमपाशविमोचनीम् ।
आसीत्पूर्वे कृतयुगे वामदेवाभिधः ऋषिः ॥४७॥
आसन् शिष्या अनेकेऽस्य ब्रह्मवेत्तृसमग्रगाः ।
मुनयस्त्यागिनश्चान्ये गृहस्था ब्रह्मवित्तमाः ॥४८॥
स्नानं सन्ध्यां जपं होमं स्वाध्यायं पितृतर्पणम् ।
कुर्वन्ति स्म रवौ प्राप्ते रताः प्रातः स्वकर्मसु ॥४९॥
एकस्तेषु कर्मकाण्डी ऋषिर्वेदशिरा इति ।
नाम्नाऽभवत्सुवैदिकक्रियानिष्णात एव च ॥५०॥
चातुर्मास्यं व्रती कन्दाहारं कुर्वन्निनाय सः ।
कन्दविकृतिजन्यो वै रोगस्तस्योदरेऽभवत् ॥५१॥
जाठरस्यातिमन्दत्वमान्त्राणामुष्णफुल्लता ।
अपाचनं भवत्यस्य यत्किंचिद्भक्षितं भवेत् ॥५२॥
एवं शरीरक्षीणत्वेऽशक्तिः सम्यग् व्यवर्धत ।
आलस्यं स्नानगायत्रीजपपूजादिकेऽभवत् ॥५३॥
एवं नित्यं क्षीणभावात् त्यक्त्वा स्नानं च पूजनम् ।
शूद्रवद् वर्तयन्देहयात्रां करोति वै मुनिः ॥५४॥
कर्मत्यागेन च वेदशिरसः प्रत्यवायकम् ।
जातं तत्प्रत्यवायेन पुण्यं वै क्षीणतां गतम् ॥५५॥
आयुष्यान्तः समायातो याम्या नेतुः समागताः ।
वेदशिरास्तदा सम्यगाकुलो ह्यवदत्तु तान् ॥५६॥
कथं मे यमदूतानां दर्शनं केन कर्मणा ।
प्रत्यूचुर्यमदूतास्तं वेदकर्म विहाय वै ॥५७॥
यथेष्टं वर्तसे त्वं यत्फलं तद् याम्यवासदम् ।
उत्पथप्रतिपन्नस्य ब्राह्मणस्य यमालयः ॥५८॥
प्रायश्चित्तार्थमेवास्ति भुंक्ष्व तत्प्रत्यवायकम् ।
उक्त्वैवं वेदशिरसं ययुर्नीत्वा यमगृहम् ॥५९॥
यमराजस्तदीयं वै दृष्ट्वा कर्म यथार्थतः ।
चित्रगुप्तं तदा प्राह प्रत्यवायोऽस्य वै महान् ॥६०॥
अधीतवेदविस्मारात्मकं यत्पातकं महत् ।
ब्रह्महत्यासमं प्रोक्तं पाशैर्बध्वा हि नीयताम् ॥६१॥
पात्यतां नरके ब्रह्मघातिनां कालसूत्रके ।
असिपत्रवने त्वेनं नीत्वा संप्रहरन्त्वपि ॥६२॥
इत्युक्त्वा विरराामाऽसौ यमराजस्तु नीतिकृत् ।
वेदशिरास्तदा प्राह यमराजं सुबुद्धिमान् ॥६३॥
आपत्काले शरीरस्य मया वेदस्तु विस्मृतः ।
त्यक्तं कर्माऽप्यशक्त्या वै कथं मे नरकं भवेत् ॥६४॥
आपत्कालस्य धर्मा वै नाऽधर्मगणनां गताः ।
तस्मात्पापं न मे त्वस्ति नास्ति मे यमपूरकम् ॥६५॥
धर्मराजस्ततः प्राह यावद्रागोऽपि विद्यते ।
तावदापत्कृतो धर्मो रुग्णाऽभावे स नो मतः ॥६६॥
स्वल्पापदि बहुत्यागः स त्वधर्मो महान्मतः ।
न तेऽस्ति तादृशो रोगो येन नोच्चारिता श्रुतिः ॥६७॥
विस्मृता च त्वया त्वालस्येन वै सकला श्रुतिः ।
प्रत्यवायस्ततो जातस्त्यक्तं कर्मापि सर्वथा ॥६८॥
यथाशक्तिप्रकर्तव्यं ब्राह्मणेन विजानता ।
सुजानता तदा सर्वं त्यक्तव्यं संभवेत् कथम् ॥६९॥
तस्मादालस्यदोषेण कर्मधर्मातिवर्जितः ।
च्युतो ब्रह्मक्रियामार्गाद् दण्डमर्हसि सर्वथा ॥७०॥
तदा वेदशिरास्तत्र मानसेऽचिन्तयद्गुरुम् ।
वामदेवं महाब्रह्मावतारं सोऽपि चाययौ ॥७१॥
धर्मराजेन तु तदा सत्कृतो वामदेवकः ।
निषसादाऽऽसने दत्ते शिष्येणापि नमस्कृतः ॥७२॥
वामदेवेन सर्वं तत्कर्म यममुखाच्छ्रुतम् ।
प्रत्यवायात्मकं तथ्यं विना दण्डं न नश्यति ॥७३॥
वामदेवः कृपालुर्वै चिन्तयामास तत्कृते ।
यथा दण्डो न भोक्तव्यः कर्मापि निष्फलं भवेत् ॥७४॥
तादृशं चिन्तयित्वैव कथयामि तदेदयम् ।
विलोक्य सर्वतस्तत्र प्राह शिष्यं यमं तथा ॥७५॥
श्रृणुतं द्वावपि शिष्यौ यम ! वेदशिरस्तथा ।
व्रतं चास्ति महत्कालसूत्रासिपत्रनाशकम् ॥७६॥
आश्विनशुक्लैकादशिकाव्रतं बलवन्मत्तम् ।
ब्रह्महत्यादिपापानां तत्समानां च नाशकम् ॥७७॥
कर्तव्यं श्रद्धयाऽनेन प्रायश्चित्तं कृतं भवेत् ।
एवमेकादशीनाममात्रश्रवणतस्तदा ॥७८॥

व्रतसंकल्पतश्चाप्यायुष्यं सुसन्धितं पुनः ।
गुरोश्चापि प्रतापेन पुनरायुष्यमाप्तवान् ॥७९॥
गृहीत्वाऽऽतीथ्यसत्कारं ययतुर्यत्र वै शवम् ।
शिष्यं प्रवेशयामास गुरुः प्राह ततो व्रतम् ॥८०॥
स्नात्वा गुरोः पूजनं च कृत्वा स्वास्थ्येन संस्थितः ।
आगतं चेषशुक्लैकादशीव्रतं कृतं ततः ॥८१॥
वेदविस्मरणोत्पन्नपापध्वंसोऽप्यभूत् क्षणात् ।
कर्मत्यागादिपापानां भस्मभावोऽभवत्तदा ॥८२॥
ततो वेदशिरा दीर्घमायुष्यं चाप्तवान् शुभम् ।
गुरोर्बलात्तु करणादेकादशीव्रतस्य वै ॥८३॥
यमपाशविनाशोऽस्याऽभवत्सेवाव्रतेन च ।
इयमेकादशी तस्मात्पाशानामंकुशं मतम् ॥८४॥
करिणामंकुशं यद्वत् तथा पाशांकुशाव्रतम् ।
कर्तव्यं यमपाशानां नाशनाय जनैः शुभम् ॥८५॥
स्वर्गमोक्षप्रदं सर्वसम्पत्करं सुखप्रदम् ।
आरोग्यदं त्रिविधानां तापानां शमनं परम् ॥८६॥
वासनापाशबन्धानां नाशकं पापनाशकम् ।
देहदैहिकपाशानां नाशकं विपदां तथा ॥८७॥
अहंममत्वपाशानां ध्वंसकं द्वेषरागयोः ।
शमनं सुभगदातृ दारापतित्वदायकम् ॥८८॥
क्लेशदावानलशान्तिकरं शाश्वतधामदम् ।
हरेर्योगप्रदं वैकुण्ठदं गोलोकदं तथा ॥८९॥
पाशांकुशाव्रतं लक्ष्मि ! प्रकर्तव्यं प्रयत्नतः ।
पठनाच्छ्रवणाचापि व्रतपुण्यप्रदं हि तत् ॥९०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने आश्विनशुक्लपाशांकुशैकादशीव्रतमाहात्म्यं वामदेवर्षि-शिष्यवेदशिरसोऽजीर्णरोगादालस्येन धर्मकर्मादिवर्जना-त्पातकबलेन यमलोकप्राप्तौ स्मृतगुरुवामदेवो-पस्थित्या व्रतेन च यमपाशविमोक्षणमित्यादि-निरूपणनामा एकोनषष्ट्यधिकद्विपञ्चा-शततमोऽध्यायः ॥२५९॥

**श्रीलक्ष्मीरुवाच—**

महाकालो महारुद्रो यमो यमस्य किंकराः ।
यदात्मानो जगत्सर्वं नियमयन्ति ते नमः ॥ १ ॥
पाशो वज्रं गदा शक्तिर्दण्डश्चक्रं त्रिशूलकम् ।
यदात्मानः प्रवर्तन्ते तस्मै ते विभवे नमः ॥ २ ॥
धृतिर्दया सहायत्वं नीतिक्षमोपकारिताः ।
यत्प्रयुक्ताः प्रभवन्ति तस्मै गुणात्मने नमः ॥ ३ ॥
ममता परता नैजं स्थितिः पुष्टिर्विमोक्षणम् ।
यदात्मक कृतं स्याद्वै निर्गुणं गुणिने नमः ॥ ४ ॥
भगवँस्ते कृपा पारावारतुल्या सदा मयि ।
वद कार्तिककृष्णैकादशी किंनामिका भवेत् ॥ ५ ॥
को देवः पूजनीयोऽत्र दानं पुण्यं विधिं वद ।
व्रतेऽपि कीदृशं कार्यं कर्तव्यमिति मे वद ॥ ६ ॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! कार्तिकोऽयं मासो मोक्षप्रदोऽस्ति वै ।
चातुर्मास्यान्तमासोऽयं व्रतदानादिपूजने ॥ ७ ॥
मासः श्रेष्ठतमश्चायं वर्तते व्रतिनां कृते ।
तत्र सर्वं शुभं पुण्यं कर्म कर्तव्यमेव यत् ॥ ८ ॥
तत्राऽप्येकादशी श्रेष्ठा कृष्णपक्षे रमाभिधा ।
हिरण्यया सहाऽभ्यर्च्यो हरिस्तस्यामधीश्वरः ॥ ९ ॥
पुष्पेषु बहुकुन्दानि तदर्घ्ये कदलं मतम् ।
नैवेद्ये शर्कराऽऽज्याक्तकदलानि च पोलिकाः ॥१०॥
दानं घृतघटादीनां यदिष्टं स्वस्य वै भवेत् ।
तत्सर्वं तु प्रदातव्यं स्वर्णं लक्ष्मीविवृद्धये ॥११॥
दशम्यामेकभुक्तः स्याद् व्रती भूशयनो भवेत् ।
ब्रह्मचारी भवेत् क्रोधमोहदोषादिवर्जितः ॥१२॥
प्रातरुत्थाय गोविन्दं ध्यायेत्स्नात्वा प्रपूजयेत् ।
पूजां तु नैत्यिकीं कृत्वा कारयेत्सप्तधान्यकम् ॥१३॥
मण्डलं सर्वतोभद्रं रंगचित्रालिशोभितम् ।
तन्मध्ये तु घटं स्वर्णं ताम्रजं स्थापयेच्च वा ॥१४॥
पञ्चरत्नसुपत्राद्यक्षतवारिसुवस्त्रकैः ।
शर्कराश्रीफलपूगीफलचन्दनसंयुतम् ॥१५॥
तन्मुखाग्रे तिलस्थालीं राजतीं स्थापयेद् व्रती ।
न्यस्येन्मूर्तिं तत्र हिरण्यारमाशालिनो हरेः ॥१६॥
आवाहनादिभिः पंचामृताऽद्भिस्तैलमर्दनैः ।
सेवेताऽथाऽम्बरभूषाश्रृंगारादि समर्पयेत् ॥१७॥
पुष्पमालां कटके च मुकुटादि समर्पयेत् ।
धूपदीपसुनैवेद्यजलताम्बूलकादिकम् ॥१८॥
आरार्त्रिकाद्यर्पयेच्च कुर्यात् स्तोत्रं क्षमार्थनाम् ।
दानानि विविधान्येव दद्याच्छ्रीगुरवे तदा ॥१९॥
मध्याह्नेऽपि पूजयेच्च भोजयेज्जलमर्पयेत् ।
सायं स्नात्वा पूजयित्वा नीराजनं विधापयेत् ॥२०॥

स्तुत्यादिकं विनिर्वृत्य भोजयेत् सेवयेत्तथा ।
रात्रौ तु जागरं कुर्याद्भक्तमण्डलमण्डितः ॥२१॥
गीतनृत्यकथावार्ताऽऽख्यानरंजनतां चरेत् ।
द्वादश्यां तु व्रती प्रातः स्नात्वा समर्च्य केशवम् ॥२२॥
दद्याच्छ्रेष्ठानि दानानि राजा वापि प्रजा व्रती ।
त्यागी वापि गृही वापि नारी वापि नरोपि वा ॥२३॥
यथाशक्ति सतः साध्वीर्विप्रान् बालान् प्रभोजयेत् ।
ततः कुर्यात्पारणां वै व्रतसिद्धिं समर्थयेत् ॥२४॥
एवं कृत्वा व्रतं नारी रमातुल्या भवेद् ध्रुवम् ।
नरः कृत्वा व्रतं देवो जायते मुक्त एव सः ॥२५॥
शृणु लक्ष्मि ! चन्द्रभागाशशिसेनकथां शुभाम् ।
मुचुकुन्द इति ख्यातो बभूव नृपतिः पुरा ॥२६॥
इन्द्रकुन्दनसंज्ञं तन्नगरं दक्षिणेऽभवत् ।
राजधान्यां वसन्पृथ्वीमेकराट् प्रशशास सः ॥२७॥
देवेन्द्रेण समं तस्य मित्रत्वमभवद् बहु ।
यमेन वरुणेनैव कुबेरेण तथाग्निना ॥२८॥
विभीषणेन तस्यैवं मित्रत्वमभवत्तथा ।
यानविमानकैः सोऽयं त्रिलोक्यां याति सर्वतः ॥२९॥
विष्णुभक्तः सत्यसन्धः शास्ति राज्यमकण्टकम् ।
सर्वे तु वैष्णवास्तस्य राज्ये भवन्ति मानवाः ॥३०॥
विष्णुभक्ताः प्रजास्तस्य संप्राप्ते हरिवासरे ।
अन्नं न भुंजते सर्वाः कुर्वते समुपोषणम् ॥३१॥
पटहस्ताड्यते तस्य संप्राप्ते दशमीदिने ।
न भोक्तव्यं न भोक्तव्यं सम्प्राप्ते तु हरेर्दिने ॥३२॥
गजैरश्वैश्च कलभैरन्यैश्च पशुभिस्त्वपि ।
तृणमन्नं तथा वारि न भोक्तव्यं हरेर्दिने ॥३३॥
एवं कारयति सर्वान् राज्यस्थान् व्रतमुत्तमम् ।
चन्द्रभागा नदीश्रेष्ठा सुता तस्य बभूव ह ॥३४॥
समकालेऽथ कावेर्यास्तटे बभूव भूपतिः ।
चन्द्रसेनाह्वयः पुण्यः कनकाख्यपुराधिपः ॥३५॥
तत्पुत्राय शशिसेनाह्वयाय गुणशालिने ।
चन्द्रभागा प्रदत्ता वै मुचुकुन्देन भूभृता ॥३६॥
महाभागवती सापि व्रतं करोति वैष्णवी ।
एकदा पतियुक्ता सा पितृगेहं जगाम वै ॥३७॥
भर्ता ज्वराभिभूतोऽस्या बभूव त्वतिदुर्बलः ।
एकादशीव्रतं चाहः समायातं सुपुण्यदम् ॥३८॥
समागते व्रते चन्द्रभागा मनस्यचिन्तयत् ।
किं भविष्यति भर्तुर्मे ह्यत्यशक्तस्य वै व्रते ॥३९॥
क्षुधां न क्षमते सोढुं रुग्णः कृशोऽतिनिर्बलः ।
व्रतस्य दिवसे त्वत्र पिता मे तूग्रशासनः ॥४०॥
सशक्तो वाऽप्यशक्तो वा व्रतं करोतु शासनम् ।
केनाप्युल्लंघ्यते चेत् स दण्डपात्रं न संशयः ॥४१॥
यद्भावि तद्भवत्वत्र किं कार्यं विवशेन वै ।
इति विचिन्त्य सा ह्यास्ते व्रताहश्चापि संस्थितम् ॥४२॥
पटहस्ताड्यते तस्य संप्राप्ते दशमीदिने ।
न भोक्तव्यं न भोक्तव्यं सम्प्राप्ते तु हरेर्दिने ॥४३॥
मच्छासनोल्लंघयिता दण्डार्हो वै भविष्यति ।
श्रुत्वा पटहनिर्घोषं शशिसेनोऽब्रवीत् प्रियाम् ॥४४॥
किं कर्तव्यं मया कान्ते मरिष्यामि विनाऽदनम् ।
चन्द्रभागा तदा प्राह कान्तं चिन्तातुरं शनैः ॥४५॥
मत्पितुर्विषये क्वापि भोक्तव्यं नाऽद्य केनचित् ।
मानवैर्मानवाधीनपशुपक्षिसरीसृपैः ॥४६॥
तृणमन्नं जलं पिष्टं न भोक्तव्यं हरेर्दिने ।
यदि त्वं भोक्ष्यसे कान्त ततो दण्डं प्रयास्यसि ॥४७॥
प्रयास्यसि विगर्हां च तस्मात्कुरु मनो दृढम् ।
श्रुत्वाऽऽह शशिसेनस्तां करिष्येऽहमुपोषणम् ॥४८॥
दैवेन विहितं यन्मे तत्तथैव भविष्यति ।
एवं दृढां मतिं कृत्वा चकार निर्जलं व्रतम् ॥४९॥
क्षुधातृषातिसंव्याप्तो बभूव बहुविह्वलः ।
रात्रौ मूर्छाभिभूतः स ब्रह्मरन्ध्रं समाश्रितः ॥५०॥
रवेरुदयवेलायां शशिसेनो मृतिं गतः ।
दाहयामास राजा तं राजयोग्यैश्च दारुभिः ॥५१॥
चन्द्रभागा हरेर्भक्तेर्माहात्म्यबोधवत्तया ।
पतिव्रताऽपि पतिना सहाऽऽत्मानं ददाह न ॥५२॥
कृत्वौर्ध्वदैहिकं भर्तुस्तस्थौ जनकवेश्मनि ।
शशिसेनो दिव्यदेहो रमाव्रतसुपुण्यतः ॥५३॥
प्राप्तः स्वर्गे तु साम्राज्यं स्वतन्त्रमैन्द्रसदृशम् ।
बहुसमृद्धमनाधृष्यमसंख्येयगुणान्वितम् ॥५४॥
हेमस्तम्भमयैः सौधैः रत्नवैदूर्यमण्डितैः ।
स्फाटिकैर्विविधाकारैर्विचित्रैर्दिव्यसूज्ज्वलैः ॥५५॥
भवनैरसंख्यभौमैः शोभितं स्वर्गमाप सः ।
विमानवरमारूढः सिंहासनसमाश्रितः ॥५६॥
किरीटकुण्डलयुतो हारकेयूरमण्डितः ।
स्तूयमानश्च गन्धर्वदेवाऽप्सरःपरीगणैः ॥५७॥
करात्तव्यजनच्छत्रचामराभिजनैर्वृतः ।
शशिसेनः स्वके स्वर्गे राजते मोदते बहु ॥५८॥

अथैकदा महेन्द्रस्य दूतः पृथ्व्यां समागतः ।
मुचुकुन्दगृहे कार्यवशादिन्द्रेण मोदितः ॥५९॥
यदेन्द्रस्य महायुद्धं दैत्यैः सहोपतिष्ठति ।
मुचुकुन्दस्तदा दैत्यान् विजित्वेन्द्रसहायवान् ॥६०॥
जयप्रदो भवत्येव ब्रह्मणो वरदानतः ।
इत्यर्थं त्वागतं दूतं भोजितं सत्कृतं तथा ॥६१॥
नृपः पप्रच्छ वै स्वर्गिसुराणां तु निरामयम् ।
दूतो यदर्थमायातः सर्वं निवेद्य वै ततः ॥६२॥
नृपं प्राह मया स्वर्गे शशिसेनोऽवलोकितः ।
इन्द्रादन्यूनसामर्थ्यसमृद्धिवैभववारिधिः ॥६३॥
रूपलावण्यसम्पन्नो युवा देवो विराजते ।
जामाता तव राजेन्द्र दृष्ट्वाऽऽयान्तं भुवं तु माम् ॥६४॥
प्राह पृथ्व्यां श्वशुरस्य चन्द्रसेननृपस्य च ।
कान्तायाश्चन्द्रभागायास्तथैव नगरस्य च ॥६५॥
मत्सकाशात्तु कुशलं प्रष्टव्यं च निरामयम् ।
मम स्वस्ति च वक्तव्यं स्वर्ग्यं सर्वं यथाऽस्ति मे ॥६६॥
मम पत्नी च वक्तव्या पतिस्ते त्वां प्रतीक्षते ।
इति राजन् हि जामातुस्तेऽस्ति स्वर्गे सुखं बहु ॥६७॥
कुशलं वर्तते तस्याऽऽश्चर्यं च विद्यतेऽद्भुतम् ।
पुरं विचित्रं रुचिरं न दृष्टं केनचित्क्वचित् ॥६८॥
दिव्यं व्योम्नि सुगतिमत्तेजोऽम्बरप्रकाशितम् ।
अमृतभोगभोगाढ्यं दासाऽप्सरोभिसेवितम् ॥६९॥
वर्णयितुं न शक्नोमि महाश्चर्यमयं पुरम् ।
तव लब्धं हि जामात्रा व्रतपुण्येन शाश्वतम् ॥७०॥
कार्तिकस्याऽसिते पक्षे या नामैकादशी रमा ।
तामुपोष्य मृतश्चात्र प्राप्तवान् स्वर्गमीदृशम् ॥७१॥
श्रद्धाहीनो व्रतकर्ता प्राप्तोऽपि स्वर्गमुत्तमम् ।
तदूर्ध्वं दिव्यलोकं स गन्तुमिच्छति नाकतः ॥७२॥
स्वीयपत्न्याऽनुष्ठितस्य रमाव्रतस्य वै बलात् ।
श्रुत्वा तत्र स्थिता चन्द्रभागा हृष्टाऽऽह वै मुहुः ॥७३॥
नाथदर्शनवेगाढ्या मुचुकुन्दस्य पुत्रिका ।
तत्र मां नय दूत त्वं यत्राऽऽस्ते मे प्रियः पतिः ॥७४॥
नेष्ये तं ब्रह्मधामाऽपि रमाव्रतस्य पुण्यतः ।
आवयोर्दूत ! संयोगो यथा भवति तत् कुरु ॥७५॥
श्रुत्वा दूतो मुचुकुन्दस्याऽऽज्ञां प्राप्य तदाऽम्बरे ।
चन्द्रभागां दिव्यदेहां कृत्वा नीत्वा जगाम ह ॥७६॥
सापि स्वर्गसहं दिव्यं रूपं यौवनमित्यपि ।
दिव्यं चोढूढयनं प्राप्य भर्तुः समीपमागता ॥७७॥
भर्तुः स्वर्गे महाराज्यं दृष्ट्वा दृष्ट्वा जहर्ष सा ।
इन्द्रसेनो जहर्षाऽति दृष्ट्वा कान्तां समागताम् ॥७८॥
समाहूय स्वके वामे पार्श्वे तां स न्यवेशयत् ।
दूतः प्राप्य सुसत्कारमिन्द्रं प्रति जगाम ह ॥७९॥
अथोवाच प्रियं हर्षाच्चन्द्रभागा प्रियं वचः ।
शृणु कान्त ! हितं वाक्यं यत्पुण्यं विद्यते मयि ॥८०॥
अष्टवर्षाधिका जाता यदाऽहं पितृवेश्मनि ।
ततः प्रभृति यच्चीर्णं मया त्वेकादशीव्रतम् ॥८१॥
तस्य पुण्यप्रभावेण यास्यावो धाम चाक्षरम् ।
सर्वकामसमृद्धं च शाश्वतं श्रीहरेः पदम् ॥८२॥
बहुकालं तु तौ स्वर्गं भुक्त्वा पुण्यप्रभावतः ।
ययतुस्त्वक्षरं धाम दिव्यमुक्तौ बभूवतुः ॥८३॥
चिन्तामणिसमा त्वेषा कामधेनुसमाऽपि वा ।
कल्पद्रुसदृशी रमाभिधानैकादशी मम ॥८४॥
एकादशीव्रतानां च पक्षयोरुभयोरपि ।
यथा कृष्णा तथा शुक्ला विभेदं नैव कारयेत् ॥८५॥
धेनुः श्वेता यथा कृष्णा चोभयोः सदृशं पयः ।
तथैव तुल्यफलदं स्मृतमेकादशीद्वयम् ॥८६॥
सेवितैकादशी नृणां भुक्तिमुक्तिप्रदायिनी ।
श्रवणात्पठनाच्चापि व्रततुल्यफलं भवेत् ॥८७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने कार्तिककृष्णरमैकादशीव्रतमाहात्म्यं मुचुकुन्दपुत्र्याश्चन्द्रभागायाः पत्युरिन्द्रसेनस्य व्रतदिने मरणात् स्वर्गं ततः पत्न्याः स्वर्गगत्युत्तरं द्वयोर्मोक्ष इत्यादिनिरूपणनामा षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६० ॥

श्रीलक्ष्मीरुवाच—

कार्तिकश्चतुरो मासान् वर्षाढ्यान् पुण्यकार्यतः ।
अन्तर्भूयाऽतिमाहात्म्यशालिनः संकरोति हि ॥ १ ॥
चातुर्मास्ये न वै जातं व्रतं पुण्यं समर्पणम् ।
कार्तिके तस्य करणाच्चातुर्मास्यफलं भवेत् ॥ २ ॥
पापानां नाशकः स्वर्गसत्यवैराजलोकदः ।
गोलोकवैकुण्ठदश्चाक्षरलोकप्रदो हि सः ॥ ३ ॥
कार्तिके यत् कृतं पुण्यं सहस्रगुणितं भवेत् ।
तस्मादात्मकृते सर्वं कर्तव्यं कार्तिके व्रतम् ॥ ४ ॥
कार्तिकशुक्लपक्षे तु किंनाम्न्येकादशी मता ।
को देवः को विधिस्तत्र किं दानं च व्रतं फलम् ॥ ५ ॥



चातुर्मास्यान्तिममासे वैशिष्ट्यं किं हि गण्यते ।
येन वै व्रतिनो मुक्तिं प्रयान्त्यपि च मे वद ॥ ६ ॥

श्रीनारायण उवाच—

शृणु लक्ष्मि ! प्रवक्ष्यामि कार्तिकस्य सिते दिले ।
नाम्ना प्रबोधिनी प्रोक्तैकादशी तूत्तमोत्तमा ॥ ७ ॥
यस्यां जागर्ति लक्ष्मीशः शेषशायी तु धार्मिकः ।
यस्या व्रतप्रभावेण लीयतेऽज्ञानजं तमः ॥ ८ ॥
प्रकर्षेणाऽऽत्मबोधश्च जायतेऽतः प्रबोधिनी ।
मुक्तिदात्री सुखदात्री स्वर्गदात्री च बोधदा ॥ ९ ॥
उपोष्या विधिवत्तत्र पूज्यो दामोदरः प्रभुः ।
राधया च प्रबोधिन्या सहार्च्यो बहुवस्तुभिः ॥१०॥
कमलैः श्रेष्ठपुष्पैश्च पूजनीयो जनार्दनः ।
नैवेद्ये मुद्गलड्डुका अर्घ्ये पञ्चफलानि च ॥११॥
दाने सोपस्करो मञ्चो देयान्यन्यान्यपि प्रिये ।
प्रबोधिनीव्रतं लक्ष्मि ! पापघ्नं पुण्यवर्धकम् ॥१२॥
तावत्तीर्थान्यरण्यानि गर्जन्त्यायतनानि च ।
यावत्कार्तिकमासस्य नायाति बोधिनीव्रतम् ॥१३॥
अश्वमेधसहस्राणि राजसूयशतानि च ।
वाजपेयसहस्राणि प्रबोधिनीसमानि न ॥१४॥
अलभ्यं चाप्यगम्यं चाऽसाध्यं चाऽशक्यमेव वा ।
ददात्युपोषिता व्रत्यर्थितं वै हरिबोधिनी ॥१५॥
विद्यां धनं राजसत्तां प्रजासत्तां यशोऽमलम् ।
सिद्धिं च सम्पदं ददात्युपोषिताऽत्र बोधिनी ॥१६॥
महापापाऽतिपापानि संकरीकरणानि च ।
शुष्कार्द्राणि च सर्वाण्युपोषिता दहति न्वियम् ॥१७॥
अनेकजन्मसम्प्राप्तपापदुरितपर्वतान् ।
कृतं जागरणं रात्रौ दहति बोधिनीव्रते ॥१८॥
ज्ञात्वाऽज्ञात्वाऽथवा रोगादिभिश्चेयमुपोषिता ।
पारवश्योपोषिता वा स्वर्गं मोक्षं ददाति सा ॥१९॥
श्रद्धया भावतश्चात्र विधिवत् कृतमेव यत् ।
अपि स्वल्पं कृतं तस्य फलं लक्षगुणं भवेत् ॥२०॥
अज्ञातेनाऽप्यविधिना चाऽमनस्केन वाऽपि यत् ।
निन्दाद्रोहान्वितं मेरुप्रमं कृतं तु निष्फलम् ॥२१॥
कर्तव्यं खलु स्वल्पं वा निन्दाद्रोहौ न वै चरेत् ।
निन्दाद्रोहाऽपेक्षया नु न कर्तव्यं वरं मतम् ॥२२॥
पितॄन्संस्मृत्य ये त्वत्र पुण्यं कुर्वन्ति मानवाः ।
गच्छन्ति पितरस्तेषां तृप्ता विष्णोः परं पदम् ॥२३॥
ब्रह्महत्यादिपापानि व्रते नश्यन्ति जागरात् ।
अश्वमेधादिकैर्यज्ञैरपि दुष्प्राप्यमेव यत् ॥२४॥
अन्यैश्च साधनैः श्रेष्ठैरलभ्यं चापि यद्भवेत् ।
प्राप्यते तत्सुखेनैव प्रबोधिन्यास्तु जागरात् ॥२५॥
यावत्तीर्थाऽभिषेकस्य महीस्वर्णार्पणस्य च ।
फलात्फलं त्वधिकं वै प्राप्यते व्रतजागरात् ॥२६॥
स एव सुकृती जातः कुलानां पावितं शतम् ।
तेन येन कृता भावात् कार्तिके तु प्रबोधिनी ॥२७॥
व्रतपुण्यं ध्रुवं प्रोक्तं तदन्यत् सर्वमध्रुवम् ।
विचार्येति प्रकर्तव्यं व्रतं सम्यग्घरेर्दिने ॥२८॥
प्रबोधिनीव्रतकर्तुर्गृहे तीर्थानि सर्वशः ।
पावनानि प्रवसन्ति तद्गृहं तीर्थराजकम् ॥२९॥
पुत्रपौत्रधनसम्पत्प्रदा वै हरिबोधिनी ।
पुत्राद्यर्थे व्रतं त्वन्यत् कर्तव्यं नाऽवशिष्यते ॥३०॥
प्रबोधिन्या व्रतकर्तुर्भोगो मोक्षः करे स्थितः ।
ज्ञानं योगस्तपो होमः संयमोऽपि व्रते स्थितः ॥३१॥
धर्मपुष्टिकरी विष्णोः प्रिया मुक्तिप्रदा नृणाम् ।
गर्भवासादिदुःखानां नाशयित्री ह्युपोषिता ॥३२॥
कर्मणा मनसा वाचा शुष्कं चार्द्रं च पातकम् ।
कृष्णः क्षालयति प्रबोधिन्या व्रते सजागरे ॥३३॥
कृष्णमुद्दिश्य बोधिन्यां स्नानं होमो जपोऽर्पणम् ।
पितॄणां तर्पणं चैतत्कृतं भवति चाक्षयम् ॥३४॥
महाव्रतमिदं प्रोक्तं नेदृशं तु व्रतान्तरम् ।
शतजन्मार्जिताऽसंख्यमहापापौघनाशनम् ॥३५॥
प्रबोधिन्या व्रतेनाऽत्र तोषयित्वा जनार्दनम् ।
सत्कृतः स्वर्गसंस्थैः सः प्रयाति हरिमन्दिरम् ॥३६॥
रूपसौन्दर्यपुष्टत्वसौघस्व्यार्थिभिरादरात् ।
दारापुत्रगृहक्षेत्रपतिजैरोग्यमिच्छुभिः ॥३७॥
धनवाहनयानादिसमृद्धिधेनुधनेच्छुभिः ।
कर्तव्यैषा प्रयत्नेन बोधिनी प्रमदानरैः ॥३८॥
बाल्ययौवनवार्धक्यावस्थायोगेन वै कृतम् ।
शतजन्मकृतं पापं व्रतादस्या विनश्यति ॥३९॥
सूर्यचन्द्रोपरागस्य यत्फलं कौरवे स्थले ।
ततः सहस्रगुणितं प्रबोधिन्यां तु जागरे ॥४०॥
यस्य प्रयाति मासस्तु कार्तिको वन्ध्य एव ह ।
तस्य बोध्यं नृजन्मापि वन्ध्यं त्वत्र परत्र च ॥४१॥
जन्मार्जितस्य पुण्यादिकर्मणश्चापि वै फलम् ।
वन्ध्यकार्तिकमासस्य व्यर्थं याति सुखाय न ॥४२॥

परान्नं वर्जयेत्तस्य चान्द्रायणफलं भवेत् ।
कार्तिके तु कथाकर्तुर्यज्ञायुतफलं भवेत् ॥४३॥
तुष्यति न तथा यज्ञैर्न दानैर्वा जपादिभिः ।
यथा शास्त्रकथाभिस्तुष्यति कृष्णस्तु कार्तिके ॥४४॥
श्रोतारश्चापि वक्तारः कथायाः कार्तिके तु मे ।
प्रतिश्लोकं लभन्ते ते गोसहस्रार्पणं फलम् ॥४५॥
कार्तिके श्रेयसो बुद्धया केशवाऽग्रेऽतिभावतः ।
कथावाचयिता लक्ष्मि ! कुलानां तारयेच्छतम् ॥४६॥
प्रत्यहं नियमेनाऽत्र कार्तिके शृणुयात्कथाम् ।
हरेर्योगात्फलं तस्या गोसहस्रप्रदानजम् ॥४७॥
प्रबोधिनीव्रते विष्णोश्चरित्रं शृणुयाच्च यः ।
सप्तद्वीपवतीदानफलं स लभते व्रती ॥४८॥
विष्णुबुद्धया कथां श्रुत्वा येऽर्चयन्ति कथाविदम् ।
धनधान्याम्बरैः शक्त्या तेषां लोकोऽक्षयो मतः ॥४९॥
नामकीर्तनभजनैश्चरित्रश्रवणादिभिः ।
कार्तिकं क्षपयेत्तस्य पुनरावर्त्तनं न वै ॥५०॥
हर्यग्रे तु कथां गीतं वाद्यं नृत्यं समुत्सवम् ।
यः करोति व्रते प्राप्ते नित्यं वा मुक्तिभाक् स वै ॥५१॥
लक्ष्मीनारायणसंहितां पठेच्छृणुयात्तु यः ।
प्रत्यक्षरं भवेदस्य कपिलादानजं फलम् ॥५२॥
वित्तशाठ्यं न कर्तव्यं सम्प्राप्ते हरिवासरे ।
यतः पुण्यमसंख्यातं धनदाने भवत्यपि ॥५३॥
दशम्यामेकभुक्तः सन् व्रती भूशयनो निशि ।
संयमी ब्रह्मचारी च श्रीकृष्णं हृदि संस्मरेत् ॥५४॥
एकादश्यां प्रगे देवो जागर्तीति विभाव्य वै ।
ध्यात्वा स्नात्वा हरिं घण्टानादं कृत्वा प्रबोधयेत् ॥५५॥
आवाहनं समारभ्य व्रती विसर्जनान्तिमाम् ।
पूजां तु नैत्यिकीं कृत्वा हरेर्मण्डपमुत्तमम् ॥५६॥
शोभितं कदलीस्तम्भपत्रतोरणकेतुभिः ।
कारयेच्च वितानं सचित्रं वै बन्धयेच्छुभम् ॥५७॥
चतुष्कोणेषु कलशानुपर्युपरि सप्तकान् ।
क्लृप्तयेत्परितस्तत्र रंगावलीश्च कारयेत् ॥५८॥
मध्ये तु सर्वतोभद्रमण्डलं सप्तधान्यकम् ।
कारयेच्च घटं ताम्रकृतं वाऽथ सुवर्णजम् ॥५९॥
मण्डले स्थापयेन्मध्ये महत्तमशुभं नवम् ।
परितो मण्डले तत्र चतुर्विंशतिसद्घटान् ॥६०॥
स्थापयेत्स्वर्णजान् यद्वा ताम्रजान् सजलान्नवान् ।
पंचरत्नपंचपत्रपूगीफलाऽक्षितण्डुलान् ॥६१॥
वस्त्रसूत्रनारिकेलफलमोदकशोभितान् ।
पुष्पचन्दनकुंकुमाक्षतवार्यभिपूजितान् ॥६२॥
तन्मुखेषु स्थापनीयास्तिलस्थाल्यस्तु नूतनाः ।
शर्करैलालवंगाढ्याः फलनैवेद्यसंयुताः ॥६३॥
मध्यस्थाल्यां स्थापनीयो राधादामोदरः स्वयम् ।
प्रबोधिन्या सहितः श्रीमूर्तिरूपो हरिः प्रभुः ॥६४॥
पार्श्वे पर्यंक आस्थेयः शय्यासाधनशोभितः ।
गेन्दुकं कशिपुर्गुप्तदोरकं प्रावरं तथा ॥६५॥
व्यजनं चामरं छत्रं पादुके दर्पणस्तथा ।
दन्तकः कलशः स्थाली वाटिकाः फुलवाटिकाः ॥६६॥
अन्यान्यपि त्वपेक्ष्याणि फलमिष्टान्नकानि च ।
स्थापनीयानि तत्रैव पर्यंके कृष्णतुष्टये ॥६७॥
श्रीगणेशं सकुटुम्बं पूजयेच्च निवेदयेत् ।
घण्टां च कलशं शंखं पूजयेदुपचारकैः ॥६८॥
तीर्थान्यावाहयेत्पश्चाद्धरिं त्वावाहयेद् व्रती ।
आसनं च ददेत् पाद्यमर्घ्यमाचमनं ततः ॥६९॥
अर्पयेद् दन्तकाष्ठं च शौचशुद्धिं प्रकल्पयेत् ।
गण्डूषान्कारयेत्पश्चात्तीर्थवार्यभिषेचनम् ॥७०॥
कारयेच्च ततः पंचामृतस्नानं समर्पयेत् ।
पुनः शुद्धोदकस्नानं तथा वस्त्रेण मार्जनम् ॥७१॥
दुकूलार्पणमंगेषु सुगन्धयत्तरकाऽर्चनम् ।
कौस्तुभं ब्रह्मसूत्रं च कंचुकं शाटिकादिकम् ॥७२॥
धौत्रं च कंचुकीं दिव्यां घर्घरीं प्रसमर्पयेत् ।
मुकुटं चोत्तरावस्त्रं कुण्डलैरनकादिकम् ॥७३॥
कटके शृंखले व्यंङ्गिडीश्च रत्नोर्मिकास्तथा ।
रशनां झञ्झिरांश्चापि तन्तीं नत्थीं च मालिकाः ॥७४॥
हारान्स्वर्णमयांश्चान्याभूषणानि समर्पयेत् ।
चन्दनं कज्जलं चूर्णं कौंकुमं कैसरं जलम् ॥७५॥
कस्तूरिकां श्वेतचूर्णं सिन्दूरकमलक्तकम् ।
अन्यत्सौभाग्यसद्द्रव्यं चार्पयेद् राधिकेश्वरे ॥७६॥
अबीरं च गुलालं चाऽक्षतान्पुष्पाणि चार्पयेत् ।
बहुपुष्पैर्बहुफलैः कर्पूराऽगुरुकुंकुमैः ॥७७॥
हरेः पूजां प्रकुर्याच्च कार्तिके बोधिनीप्रगे ।
फलैर्नानाविधैर्द्रव्यैर्धूपदीपनिवेदनैः ॥७८॥
मिष्टान्नैर्विविधैः शाकपत्रैस्तथाऽऽरनालकैः ।
भक्ष्यैर्भोज्यैर्लेह्यचोष्यै रसैर्मिष्टैश्च पानकैः ॥७९॥
फलैश्च विविधैर्देवं तोषयेद् भावतो व्रती ।
शंखतोयेन विधिवत्तोषयेत्तु जनार्दनम् ॥८०॥

केतक्या एकपत्रेण पूजितो गरुडध्वजः ।
समासहस्रं सुप्रीतो जायते कमलापतिः ॥८१॥
अगस्तिकुसुमैः कृष्णं पूजयेत्तु विधानतः ।
पूजयितुर्दर्शनाच्च निरयाग्निः प्रशाम्यति ॥८२॥
मुनिपुष्पार्चितो विष्णुः कार्तिके पुरुषोत्तमः ।
ददात्यभिमतान्कामान् दिव्याऽदिव्याँस्तथा परान् ॥८३॥
विहाय सर्वपुष्पाणि मुनिपुष्पेण केशवम् ।
कार्तिके योऽर्चयेद् भक्त्या वाजिमेधफलं लभेत् ॥८४॥
तुलसीदलपुष्पाणि शमीपत्राणि वै तथा ।
विष्णावर्पयिता जन्मशतजं कार्तिके दहेत् ॥८५॥
दृष्टा स्पृष्टाऽथवा ध्याता कीर्तिता नामतः स्तुता ।
रोपिता सेचिता नित्यं पूजिता तुलसी नता ॥८६॥
नवधा तुलसीभक्तिं ये कुर्वन्ति दिने दिने ।
युगकोटिसहस्राणि तन्वन्ति सुकृतं प्रिये ॥८७॥
यावच्छाखाप्रशाखाभिर्बीजपुष्पदलैर्नवैः ।
रोपिता तुलसी पुंभिर्वर्धते पृथिवीतले ॥८८॥
तेषां वंशे तु ये जाता ये भविष्यन्ति ये गताः ।
तेषामाकल्पसाहस्रं वासो हरेर्गृहे भवेत् ॥८९॥
यत्फलं सर्वपुष्पेषु सर्वपत्रेषु यत्फलम् ।
तुलस्येकदलेनैव प्राप्तं वै कार्तिके भवेत् ॥९०॥
नित्यं तु कार्तिके विष्णुस्तुलसीदलकैस्तथा ।
पद्मैर्धात्रीदलैश्चैव पूजनीयः शमीदलैः ॥९१॥
इष्ट्वा क्रतुशतैर्देवान्दत्त्वा दानान्यनेकशः ।
तत्पुण्यं तुलसीपत्रैः कार्तिके केशवार्चने ॥९२॥
आरार्त्रिकं नमस्कारं स्तोत्रं प्रदक्षिणास्तथा ।
दक्षिणा दण्डवत् पुष्पांजलिं च क्षमणार्थनम् ॥९३॥
व्रतपूर्तिप्रार्थनां च व्रती कृत्वा ततः परम् ।
गुरोः पूजां प्रकुर्वीत भोजनाच्छादनादिभिः ॥९४॥
सुवर्णदक्षिणाभिश्च तुष्ट्यर्थं चक्रपाणिनः ।
गोप्रभृतीनि दानानि दातव्यानि बहून्यपि ॥९५॥
मध्याह्ने पूजयेद्देवं भोजयेद्वै विधानतः ।
सायं चापि महापूजां कारयेद्भोजयेद्धरिम् ॥९६॥
जलपानाद्यर्पयेच्च प्रेंखायां स्थापयेत्ततः ।
आन्दोलयेत्तोषयेच्च पादसंवाहनं चरेत् ॥९७॥
व्रती जागरणं कुर्याद्गीतवादित्रनर्तनैः ।
कथाभी रासरमणैर्लीलानुकरणादिभिः ॥९८॥
प्रातर्द्वादशिकायां तु स्नात्वा सम्पूज्य माधवम् ।
भोजयेत्तर्पयेदारार्त्रिकेण वर्धयेद्धरिम् ॥९९॥
स्तुत्वा विसर्जयेत्सर्वान् भोजयेद्बहुभावतः ।
साधून्साध्वीः सात्वताँश्च विप्रान् बालान् सुभोजयेत् ॥१००॥
दद्याद् दानान्यनेकानि पारणां च ततश्चरेत् ।
एवमुद्यापनं कृत्वा घटादि गुरवेऽर्पयेत् ॥१०१॥
एवं व्रतं प्रपूर्णं च कृत्वाऽक्षरमवाप्नुयात् ।
भुक्तिं मुक्तिं समाप्नोति शाश्वतं च सुखं ध्रुवम् ॥१०२॥
शृणु व्रते प्रबोधिन्याः कुर्वन्तं हरिमन्दिरे ।
कीर्तनं त्वेकचाण्डालं राक्षसाद्रक्षितं प्रिये ॥१०३॥
अरण्ये रैवते क्षेत्रे अश्वपट्टसरस्तटे ।
ब्रह्मणा निर्मितं त्वासीद् विष्णुस्थानमनावृतम् ॥१०४॥
आरण्यका जना यस्य दर्शनाद् यान्ति सद्गतिम् ।
भद्रावती तटावासी कश्चिद्दीनजनः खलु ॥१०५॥
द्विजस्तु कर्मचण्डालः काष्ठहारोऽभवन्ननु ।
नदीपूरेण सन्नष्टगृहदारादिकः स हि ॥१०६॥
अरण्येऽरोचताऽऽवासं काष्ठहारित्वकर्मतः ।
शुभसंस्कारयुक्तोऽसौ नित्यं सायं तु भावतः ॥१०७॥
विष्णुस्थानं प्रयाति स्म कीर्तनं प्रकरोत्यपि ।
दर्शनं नयनं चापि पुनर्याति निजालयम् ॥१०८॥
कार्तिके तु प्रबोधिन्यां जागरं कर्तुमुत्सुकः ।
निशि गच्छन्तमेनं वै जग्राह पथि राक्षसः ॥१०९॥
जहास कर्मचाण्डालो राक्षसो विस्मयं गतः ।
पप्रच्छ मरणे काले निर्भयं हास्यकारणम् ॥११०॥
कर्मचण्डाल आहैनं धन्योऽहं मृतिरागता ।
एकादशीतिथिस्त्वद्य व्रतं मेऽस्ति प्रबोधिनी ॥१११॥
देवालयं तु गच्छामि कीर्तनायाऽर्चनाय च ।
जागराय प्रयाम्येवं मृत्युर्यदि समागतः ॥११२॥
तदा मे सद्गतिस्त्वस्ति न ह्यधो याति भक्तिकृत् ।
यदि तेऽस्ति क्षुधा तर्हि शीघ्रं भक्षय मामिह ॥११३॥
व्रते यद्वा जागरादि कृत्वा भक्षय मां प्रगे ।
राक्षसः प्राह मृत्योर्वै मुखाद् यो मुच्यते जनः ॥११४॥
न चायाति पुनर्मृत्युस्थले त्वास्था नमे त्वयि ।
चाण्डालः प्राह यद्येवं समागच्छ मया सह ॥११५॥
करिष्ये कीर्तनं पश्चाद् यथेष्टं मां प्रभक्षय ।
कीर्तनेन भवेन्मुक्तिः श्रवणेनापि मोक्षणम् ॥११६॥
राक्षसः प्राह यद्येवं त्वया गच्छाम्यहं सह ।
पूर्वं देवस्वकोशस्याधिकारे ह्यासमेव यत् ॥११७॥
यशोदात्रीपुरीमध्ये देवस्वं चोरितं बहु ।
तेन पापेन जातोऽहं ब्राह्मणो ब्रह्मराक्षसः ॥११८॥

यदि वै कीर्तनादत्र श्रवणाद्वा प्रमोक्षणम् ।
भवतीति ममापि स्यान्मोक्षणं नाग्रहो भुजेः ॥११९॥
विचार्येति ययतुरतौ व्रते विष्णुस्थले निशि ।
चण्डालेन प्रगीतं वै कीर्तनं नृत्यतालितम् ॥१२०॥
रात्रौ जागरणं चापि कृतं द्वाभ्यां सुभावतः ।
प्रातः शुद्धावभूतां तौ देवयानं समागतम् ॥१२१॥
देहौ विहाय तत्रैव ययतुः स्वर्गमेव तौ ।
भोगान् भुक्त्वाऽसंख्यसमा अप्सरोगणसेवितौ ॥१२२॥
पश्चान्मुक्तिं प्रयातौ तौ वैकुण्ठं विष्ण्वनुग्रहात् ।
एवं त्वसद्गतिकानां पतितानां च मोक्षकृत् ॥१२३॥
व्रतं प्रबोधिनी श्रेष्ठं कर्तव्यं सर्वथा जनैः ।
अन्यान्यपि व्रतान्यत्र कर्तव्यान्यपि मे शृणु ॥१२४॥
एतेष्वेकतमे जाते कार्तिकः पापकर्तनः ।
स्नातव्यं ब्राह्मकाले च कर्तव्यं कृच्छ्रमादरात् ॥१२५॥
आश्वयुज्याः समारभ्य कार्तिक्यवधिं भक्तितः ।
व्रतं मासोपवासाख्यं कार्यं चान्द्रायणं शुभम् ॥१२६॥
तिथिह्रासे कृष्णपक्षे ग्रासानामलकोपमान् ।
त्यक्त्वैकैकं प्रभुञ्जीत वर्धयेच्च सिते दले ॥१२७॥
तिथिवृद्धया शुक्लपक्षे ग्रासानामलकोपमान् ।
एकैकवृद्धया भुञ्जीत ह्रासयेच्च सितेतरे ॥१२८॥
पूर्वं पिपीलिकानाम द्वितीयं यवनामकम् ।
मध्ये क्षीणं च पुष्टं च प्रोक्तं चान्द्रायणं शुभम् ॥१२९॥
चरुर्भैक्षं सक्तुकणा यावकः शाकमित्यपि ।
पयो दधि घृतं मूलं फलं पानीयमेव वा ॥१३०॥
उत्तरोत्तरशस्तानि हवींष्येतानि वै व्रते ।
अमायां नैव भुञ्जीत तिथिवृद्धौ तु षोडश ॥१३१॥
तिथिक्षये तु तद्ध्रासा ग्राह्याश्चतुर्दशैव हि ।
यथाकथञ्चित् पिण्डानां चत्वारिंशच्छतद्वयम् ॥१३२॥
मासेनैवोपभुञ्जीत तदपीन्दुव्रतं भवेत् ।
अष्टावष्टौ समश्नीयाद् यति चान्द्रायणं हि तत् ॥१३३॥
प्रातश्चतुरः सायं च शिशुचान्द्रायणं हि तत् ।
अथान्दानि प्रवक्ष्यामि शृणु लक्ष्मि ! समाहिता ॥१३४॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने कार्तिकशुक्लप्रबोधिनीव्रतमाहात्म्यं विप्रनिमित्तककीर्तन-व्रतयोगेन कर्मचण्डालविप्रस्य राक्षसस्य च मुक्तिश्चान्द्रायणस्वरूपं चेत्यादिनिरूपणनामैकषष्ट्य-धिकद्विशततमोऽध्यायः ॥ २६१ ॥

श्रीलक्ष्मीरुवाच—

कानि व्रतानि चान्यानि कार्तिके पुण्यदानि वै ।
कर्तव्यानि च मे नाथ वद सर्वाणि तानि च ॥ १ ॥

श्रीनारायण उवाच—

आकाशदीपो दातव्यो व्रतिना देवमन्दिरे ।
तीर्थदीपाः प्रदातव्याः शतशोऽथ सहस्रशः ॥ २ ॥
नद्यां नदे तडागे च सरस्यपि च वारिधौ ।
कूपे वाप्यां जले देया दीपाः स्वर्गप्रदा मताः ॥ ३ ॥
एकभुक्तिर्दीपदानं कार्तिके व्रतमित्यपि ।
द्विदलाः कार्तिके देया नक्तमुक्तिर्मतं व्रतम् ॥ ४ ॥
त्रींस्त्रीन्पिण्डान्समश्नीयान्मासम् ऋषिशशिव्रतम् ।
गोक्षीरं सप्तरात्रं च पिबेत्स्तनचतुष्टयात् ॥ ५ ॥
स्तनत्रयात्सप्तरात्रं सप्तरात्रं स्तनद्वयात् ।
षड्रात्रं च तथैकस्मात् त्रिरात्रं वायुभुग्भवेत् ॥ ६ ॥
एतत्सोमायनं नाम महच्चान्द्रायणं मतम् ।
एकभक्तैस्तथा नक्तैस्तथैवाऽयाचितैरपि ॥ ७ ॥
उपवासैश्चतुर्भिश्चेत्येवं षोडशभिर्दिनैः ।
महापापध्वंसकृत्तत् कृच्छ्राख्यं व्रतमुच्यते ॥ ८ ॥
दुग्धं घृतं जलं चोष्णं मिश्रमेकदिनं पिबेत् ।
उपावसेदेकदैनं तप्तकृच्छ्रव्रतं तु तत् ॥ ९ ॥
उष्णदुग्धघृतवारि प्रत्येकं प्रत्यहं पिबेत् ।
चतुर्थेऽह्नि चोपवसेत् तप्तकृच्छ्रान्तरं त्विदम् ॥१०॥
प्रतित्र्यहं जलं दुग्धं घृतं चोष्णं समीरणम् ।
पिबेद् द्वादशदैनात्मतप्तकृच्छ्रव्रतं हि तत् ॥११॥
पिबेत् प्रतित्र्यहं शीतं शीतकृच्छ्रव्रतं च तत् ।
पाने क्रमात्प्रमाणं तु त्रिपलं द्विपलं पलम् ॥१२॥
एकाहं पञ्चगव्यं संपिबेद्दर्भोदकान्वितम् ।
द्वितीये तूपवासेन व्रतं सान्तपनं मतम् ॥१३॥
प्रत्यहं गव्यमेकैकं षष्ठे कुशोदकं पिबेत् ।
सप्तमेऽह्नि तूपवसेन्मध्यसान्तपनं व्रतम् ॥१४॥
सान्तपनं त्रिरावृत्त्यैकविंशतिदिनैर्महत् ।
प्रतित्र्यहं क्रमाद् गोमूत्रं गोमयं च गोदधि ॥१५॥
गोदुग्धं च गवाज्यं च सान्तपनं महत्तरम् ।
त्र्यहं मिश्रं पञ्चगव्यं यतिसान्तपनं व्रतम् ॥१६॥
पलाशोदुम्बरपद्मबिल्वानां पल्लवैः पृथक् ।
कुशेन क्वथितं प्रत्यहं तु वारि पिबेद् व्रती ॥१७॥

पञ्चाहसाध्यमित्येत् पर्णकृच्छ्रव्रतं मतम् ।
त्रिरात्रोपोषितस्तुर्ये पञ्चक्वाथं पिबेद् यदि ॥१८॥
पर्णकूर्चव्रतं त्वेतन्मतं चातुर्दिनीयकम् ।
मासः फलैर्हि नेतव्यः फलकृच्छ्र उदाहृतः ॥१९॥
श्रीफलैः श्रीफलकृच्छ्रः पद्मैश्च पद्मकृच्छ्रकः ।
आमलकैश्च श्रीकृच्छ्रः पल्लवैः पत्रकृच्छ्रकः ॥२०॥
पुष्पैस्तु पुष्पकृच्छ्रः स्यान्मूलैश्च मूलकृच्छ्रकः ।
जलेन जलकृच्छ्रः स्याद् दुग्धेन दुग्धकृच्छ्रकः ॥२१॥
येन मासो व्यतीयेत तन्नामा कृच्छ्र उच्यते ।
एकभक्तेन नक्तेनाऽयाचितेनोपवासतः ॥२२॥
चतुर्भिर्दिवसैः पादकृच्छ्रं तदुच्यते व्रतम् ।
त्र्यहं मध्ये त्र्यहं नक्तं त्र्यहं याहच्छिकं हविः ॥२३॥
ततस्त्र्यहं च नाश्नीयात्प्राजापत्यं व्रतं तु तत् ।
द्वादशाहश्चातिकृच्छ्रः पाणिपूरान्नभोजनः ॥२४॥
त्र्यहं निरशनं कार्यं पादकृच्छ्रं व्रतं मतम् ।
त्र्यहं याहच्छिकं ग्राह्यं द्वितीयं पादकृच्छ्रकम् ॥२५॥
त्र्यहं नक्तं तथा ग्राह्यं तृतीयं पादकृच्छ्रकम् ।
त्र्यहं मध्याह्नके ग्राह्यं चतुर्थं पादकृच्छ्रकम् ॥२६॥
मध्ये पञ्चदशग्रासा नक्ते तु द्वादश स्मृताः ।
याहच्छिकाश्चतुर्विंशतिग्रासा भोजने स्मृताः ॥२७॥
एकाहं मध्यके ग्राह्यं द्वितीयाहं तु नक्तकम् ।
पुनर्द्व्यहं याहच्छिकं ततो द्व्यहमुपोषणम् ॥२८॥
व्रतमेवं षडाहं तदर्धकृच्छ्रमुदीरितम् ।
एकविंशत्यहं दुग्धं पिबेत् कृच्छ्रातिकृच्छ्रकम् ॥२९॥
द्वादशाहं जलमात्रं पिबेत् कृच्छ्रातिकृच्छ्रकम् ।
द्वादशाहोपवासैस्तु पाराकः कृच्छ्र उच्यते ॥३०॥
प्रत्यहं तिलपिष्टं च सक्तून् तक्रमुपोषणम् ।
चतुर्दिनात्मकं सौम्यकृच्छ्रं व्रतमुदीरितम् ॥३१॥
प्रत्यहं तिलपिष्टं च तक्रं वारि कुशोदकम् ।
पञ्चदिनोपवासश्च सौम्यकृच्छ्रान्तरं तु तत् ॥३२॥
तिलपिष्टमोदननिःस्रावस्तक्रं जलं सक्तून् ।
उपवासः षडहं तत् सौम्यकृच्छ्रान्तरं मतम् ॥३३॥
तिलपिष्टादिकं प्रत्येकं त्रिरात्रं समभ्यसेत् ।
तुलापुरुषकृच्छ्रः स बोध्यः पञ्चदशाह्निकः ॥३४॥
पञ्चदशदिनान्ते तु त्र्यहं वायुं त्र्यहं ततः ।
उपोषणं चैकविंशत्यहं तुलान्तकृच्छ्रकम् ॥३५॥
शुक्ले चोर्जे चतुर्दश्यां जले स्थित्वाऽनिलं पिबेत् ।
पूर्णिमायामुपवसेज्जलकृच्छ्रं व्रतं मतम् ॥३६॥
दशम्यां पञ्चगव्याशी ह्येकादश्यामुपावसेत् ।
विष्णुपूजां प्रकुर्वीत हरिकृच्छ्रं व्रतं स्मृतम् ॥३७॥
सप्तमीतः पृथग् वारि दुग्धं दधि घृतं पिबेत् ।
एकादश्यामुपवसेत् कृच्छ्रः पैतामहो व्रतम् ॥३८॥
षष्ठीतस्तु त्र्यहं वारि त्र्यहं चोपवसेद् व्रती ।
द्वादश्यां पारणां कुर्यान्माहेन्द्रकृच्छ्रकं व्रतम् ॥३९॥
तृतीयातस्त्र्यहं निवारादि त्र्यहं च यावकम् ।
ततस्त्र्यहं तूपवसेद् विष्णुकृच्छ्रव्रतं हि तत् ॥४०॥
प्रतिपत्तः पंचदिनं दुग्धं पंचदिनं दधि ।
एकादशीमुपवसेद् भास्करकृच्छ्र उच्यते ॥४१॥
पञ्चमीतः सिते भार्जीं यवान् शाकं पयो दधि ।
घृतं जलं क्रमाद् ग्राह्यं सप्तर्षिकृच्छ्रकं व्रतम् ॥४२॥
प्रतिपत्तः क्रमात्पेयं दुग्धं वा क्वाथितं जलम् ।
पलाशबिल्वदर्भाऽब्जोदुम्बरपर्णकैः पृथक् ॥४३॥
षष्ठ्यामुपोषणं चैतदग्निकृच्छ्रं व्रतं स्मृतम् ।
सप्तमीतः क्रमाद् दुग्धं बिल्वं पक्वं च पद्मजम् ॥४४॥
विसतन्तून् भक्षयेच्चैकादश्यां समुपोषणम् ।
पञ्चदिनात्मकं चेदं लक्ष्मीकृच्छ्रव्रतं स्मृतम् ॥४५॥
ब्रह्मकूर्चव्रतं श्रेष्ठं व्रतानामुत्तमं व्रतम् ।
कृतेन येन मुच्यन्ते मानवाः सर्वपातकैः ॥४६॥
साध्यं त्वेतत् त्रिदिवसैर्विधिं वक्ष्यामि तस्य तु ।
उपवसेन्नवम्यां तु पञ्चगव्यं कुशांभसा ॥४७॥
संपिबेत्तु दशम्यां च ह्येकादश्यामुपावसेत् ।
गोमूत्रं गोमयं दुग्धं दर्भोदिकं घृतं दधि ॥४८॥
पञ्चगव्यं तु तत्प्रोक्तं पवित्रं देहशोधकम् ।
गोमूत्रं ताम्रवर्णायाः श्वेतायाश्चैव गोमयम् ॥४९॥
दुग्धं सुवर्णरूपायाः नीलायास्तु तथा दधि ।
कृष्णायास्तु घृतं यद्वा कपिलायास्तु पंचकम् ॥५०॥
सुवर्णा कपिला त्वेका द्वितीया सा त्वपिंगला ।
तृतीया सा तु रक्ताक्षी चतुर्थी गूडपिंगला ॥५१॥
पंचमी कर्बुरा सा स्यात् षष्ठी स्यात् श्वेतपिंगला ।
सप्तमी श्वेतपिंगाक्षी ह्यष्टमी कृष्णपिंगला ॥५२॥
नवमी पाटला सा स्याद् दशमी पुच्छपिंगला ।
एता दशविधा प्रोक्ता कपिला हव्यदायिनी ॥५३॥
अलाभे सर्ववर्णानां पंचगव्यं मतं शुभम् ।
गोमूत्रं माषकास्त्वष्टौ गोमयस्य तु षोडश ॥५४॥
बोध्या द्वादश दुग्धस्य दध्नो ग्राह्या दशैव ह ।
घृतस्य माषकास्त्वष्टौ चत्वारस्तु कुशांभसः ॥५५॥

लक्ष्मीनारायणनाम्ना गायत्र्या वाथ मन्त्रतः ।
गृहीत्वा तदृचा यद्वा गायत्र्या वा पुंसूक्ततः ॥५६॥
अग्नौ होतव्यमेवेति पञ्चगव्यमुद्धृत्य तु ।
हरिताऽऽकुण्ठिताऽग्रसप्तपत्रान्वितसत्कुशैः ॥५७॥
हरेर्नाम्नामष्टोत्तरशतेन होम इष्यते ।
हुतशेषं तु पातव्यं प्रणवेनाऽभिमन्त्रितम् ॥५८॥
प्रणवेनाऽऽभिश्रितं च प्रणवेनोद्धृतं च तत् ।
पलाशमध्यपत्रेण पिबेत् पद्मदलेन वा ॥५९॥
स्वर्णपात्रेण रौप्येण ब्रह्मतीर्थेन वा पिबेत् ।
कथितो ब्रह्मकूर्चोऽयं पापघ्नो मुक्तिदस्तथा ॥६०॥
द्वादशाहं तिलाः प्राश्या अग्निकृच्छ्रव्रतं तु तत् ।
गवा त्यक्तैर्यवैर्मासं निर्वहेद् यवकृच्छ्रकम् ॥६१॥
गवा त्यक्तयवसक्तून् भुञ्जीत मासमेव तु ।
याम्यकृच्छ्रं तु तत्प्रोक्तं देहकल्मषनाशकम् ॥६२॥
नित्यं तु प्रसृतिमात्रतिलपिष्टेन निर्वहेत् ।
मासमेकं तु तत्प्रोक्तं कुबेरकृच्छ्रकं व्रतम् ॥६३॥
गोमूत्रेणाऽऽचरेत् स्नानं गोमयं भक्षयेदपि ।
गवां मध्ये निवसेच्च गोपुरीषे स्वपेत्तथा ॥६४॥
पिबेन्न गोष्वपीतासु नाऽभुक्तासु तु भक्षयेत् ।
उत्थितासु समुत्तिष्ठेदुपविष्टासु संविशेत् ॥६५॥
मासमात्रं व्रतं चैतद् गोव्रतं बोध्यमेव तत् ।
साधुषु वसतिः साधुसेवनं साधुवर्तनम् ॥६६॥
साधोः प्रासादिकं भोज्यं पेयं साधुव्रतं तु तत् ।
आमिक्षया तु मासौ द्वौ दुग्धेन पक्षमेव च ॥६७॥
दध्ना चाऽष्टाहमेवापि घृतेन त्र्यहमेव च ।
निराहारं त्र्यहं तिष्ठेदुद्दालकं व्रतं त्विदम् ॥६८॥
श्रीकामः पुष्टिकामश्च स्वर्गकामस्तथा जनः ।
देवप्रीणनकामश्च कृच्छ्रं कुर्वीत भक्तितः ॥६९॥
एवमेतानि कृच्छ्राणि व्रतानि कथितानि ते ।
पापघ्नानि मुक्तिदानि सर्वेषामपि पद्मजे ॥७०॥
कुर्वन् कृच्छ्राणि सर्वाणि यतवाङ्मानसेन्द्रियः ।
धौतवस्त्रधरः शान्तः स्नात्वा संपूजयेद्धरिम् ॥७१॥
व्रतद्रव्याणि सर्वाणि दुग्धादीनि सदा व्रती ।
अश्नीयाच्छ्रीहरेः प्रासादिकान्येव न चेतरत् ॥७२॥
कुर्वन् कृच्छ्राणि मुह्येद्वेन् मूर्छा यद्वाऽभिसंविशेत् ।
अमृतं तु गवां दुग्धं पाययेत्तं व्रतार्थिनम् ॥७३॥
जलं रसं फलं पुष्पं तक्रं पत्रं पयो दधि ।
भाजाऽऽमिक्षौषधं क्वाथः कन्दः शाकं गुरोर्वचः ॥७४॥
विप्राज्ञाऽज्ञातकवलः आपत्तिग्रसनं तथा ।
मुखवासार्हसद्वस्तु नवनीतं च शर्करा ॥७५॥
गूडो दुग्धविकाराद्यास्तैलं तिलादिकं तथा ।
भिवारादि च मुन्यन्नं भूफली वृक्षपेशिका ॥७६॥
लवंगैलामरीचत्वगार्द्रकसूंफगुन्द्रकाः ।
शिलारसश्च कस्तूरी चन्दनं लवणं तथा ॥७७॥
मधु धूम्रश्चत्वारिंशद्व्रतघ्नानि सन्ति वै ।
व्रतान्ते भोजयेत् साधून् शाश्वतं तत्फलं भवेत् ॥७८॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने कार्तिके कर्तव्यकृच्छ्रव्रतानां निरूपणं नाम द्वाषष्ट्यधिक-द्विशततमोऽध्यायः ॥२६२॥

**श्रीलक्ष्मीरुवाच—**

कृच्छ्रं कष्टमिति प्रोक्तं सुखं त्वय्यर्पितं तु तत् ।
सुखदं पुण्यदं कृच्छ्रव्रतं तत्ते प्रसंगतः ॥ १ ॥
व्रतं पुण्यं तथा पेयं भक्ष्यं सर्वं त्वमेव हि ।
त्वां विना निष्फलं सर्वं यतो नास्ति ध्रुवं हि तत् ॥ २ ॥
ब्रूहि मे भगवन् मासे पुरुषोत्तमसंज्ञके ।
एकादशी कृष्णपक्षे किंनाम्नी किं फलं व्रते ॥ ३ ॥
को विधिः पूजनं कीदृक् को देवश्चात्र पूज्यते ।
किं दानं के च नियमाः सर्वं ब्रूहि सुविस्तरम् ॥ ४ ॥
कथं स्नानं च किं जाप्यं किं भोज्यं तूत्तमं मतम् ।
किं त्याज्यं चात्र मासेऽपि तन्मे ब्रूहि जनार्दन ॥ ५ ॥

**श्रीनारायण उवाच—**

एकादश्यधिके मासि कमला नाम नामतः ।
पुरुषोत्तम इत्युक्तः पूजनीयश्च तत्पतिः ॥ ६ ॥
लक्ष्मीयुतः सुवर्णस्य मूर्तिरूपो हरिः प्रभुः ।
ध्येयौ वैकुण्ठसंस्थानौ श्रीलक्ष्मीपुरुषोत्तमौ ॥ ७ ॥
कमलाया व्रतेनात्र कमलाऽभिमुखी भवेत् ।
दशम्योमेकभुक्तः स्याद् रात्रौ भूशयनो भवेत् ॥ ८ ॥
ब्रह्मचारी भवेच्चैव क्रोधाद्यं तु परित्यजेत् ।
ब्राह्मे मुहूर्ते चोत्थाय संस्मृत्य पुरुषोत्तमम् ॥ ९ ॥
स्नात्वा चापि विधानेन नियमं गृह्णीयाद् व्रती ।
पुरुषोत्तममासे वा प्रातश्च प्रतिपद्दिने ॥१०॥
गृह्णीयान्नियमान्पाल्यान्पावनान् देहिनां खलु ।
नित्यं नाम्नां सहस्रं वा लक्षं वा नियमो जपे ॥११॥

गृहे त्वेकगुणं जाप्यं नद्यां तु द्विगुणं स्मृतम् ।
सहस्रं गोस्थले वह्निशालायां तत्तु लक्षकम् ॥१२॥
देवक्षेत्रेषु तीर्थेषु साधूनां सन्निधौ तथा ।
दशलक्षगुणं कोटिगुणं तुलसीसन्निधौ ॥१३॥
विष्णोस्तु सन्निधौ जाप्यमनन्तं भवति ध्रुवम् ।
मालिकावर्तनं संसाराऽऽवर्तध्वंसकं स्मृतम् ॥१४॥
चातुर्मास्ये तु नियमा मासि ते पुरुषोत्तमे ।
ग्राह्या ऐत्रोभयत्रापि भुक्तिमुक्तिफलप्रदाः ॥१५॥
ग्राह्या माससमारंभे हरेर्मूर्तेस्तु सन्निधौ ।
गूडस्य वर्जनं कार्यं तथा तैलस्य वर्जनम् ॥१६॥
घृतस्य वर्जनं तैलादेस्त्यागः कटुवर्जनम् ।
सुगन्धतैलसंत्यागः पुष्पभोगविवर्जनम् ॥१७॥
कट्वम्ब्लमधुरक्षारतिक्तकषायवर्जनम् ।
ताम्बूलवर्जनं मिष्टफलादेश्चापि वर्जनम् ॥१८॥
पालाशपत्रे त्वशनं पादाभ्यंगविवर्जनम् ।
शिरोऽभ्यंगपरित्यागो दधिदुग्धविवर्जनम् ॥१९॥
कज्जलादेः परित्यागो द्विर्भोजनविवर्जनम् ।
मौनं ग्राह्यं कथा कार्या ग्राम्यवार्ताविवर्जनम् ॥२०॥
स्थालीपाकपरित्यागः शाकमात्रविवर्जनम् ।
अन्नमात्रपरित्यागः फलान्यतमवर्जनम् ॥२१॥
शिलोपरि प्राशनं च कदलीपत्रभोजनम् ।
पुष्करस्नानकरणं गृहस्नानविवर्जनम् ॥२२॥
गुरोः पादाम्बुजस्पर्शो विष्णोः पादाभिवन्दनम् ।
एकभक्ताशनं नक्ताशनं निरशनं च वा ॥२३॥
हरेर्गृहे लेपनं मार्जनं प्रक्षालनादिकम् ।
प्रदक्षिणं शतमष्टोत्तरशतं च वाऽधिकम् ॥२४॥
गीतवादित्रसन्नृत्यं पञ्चगव्याशनं च वा ।
शास्त्रकथाप्रबोधश्च व्यासाख्यानप्रबोधनम् ॥२५॥
तुलसीदलपूजा च प्रोक्षणं विष्णुमन्दिरे ।
पत्रेषु भोजनं चैव द्विदलादिविवर्जनम् ॥२६॥
प्रसादमात्रग्रहणं ताम्रपात्राद्यभोजनम् ।
कांस्यपात्राऽभोजनं च रन्धितान्नाऽप्रभोजनम् ॥२७॥
जलपक्वकणमात्रादनं पक्वकणादनम् ।
मृत्तिकापात्रभोजित्वमञ्जलिजलपानकम् ॥२८॥
करपात्राऽदनं चापि पृथिव्यामुपवेशनम् ।
कपिलागोप्रदानं च पद्मपत्रप्रभोजनम् ॥२९॥
भिक्षान्नं त्वमृतकल्पं व्रतं मोक्षकरं शुभम् ।
स्वर्णदानं रूप्यदानं वस्त्रदानं गृहार्पणम् ॥३०॥
नित्यं यथाबलं दानमन्नादीनां सुपुण्यकृत् ।
यथा विष्णुस्तथा साधुर्द्वावेतौ पुरुषोत्तमौ ॥३१॥
तेषां पूजा प्रकर्तव्या प्रत्यहं सेवनं तथा ।
शूद्रो वाऽप्यथ शूद्री वा सेवां कुर्याद् गुरोर्हरेः ॥३२॥
गुरुर्वै विष्णुरूपोऽस्ति गुरुर्देवत्रयात्मकः ।
देहेन सेवा कर्तव्या यथा तुष्टो भवेद्गुरुः ॥३३॥
पाञ्चभौतिकमेतद्धि त्वनर्थकमुदाहृतम् ।
सेवयित्वा गुरुं तेन फलानन्त्यमवाप्नुयात् ॥३४॥
धर्मोऽयं दुर्लभो लोके धर्मकामार्थमोक्षदः ।
अयाचितं व्रतं पाल्यं द्रोहहिंसादिवर्जम् ॥३५॥
दानं दया दम इति कार्यं वै महतामपि ।
गुरवे ये प्रयच्छन्ति देहदैहिकसम्पदः ॥३६॥
ते नु दानप्रभावेण विष्णोर्वल्लभतां गताः ।
मधु त्याज्यं घृतं त्याज्यं त्याज्यं दुग्धादिकं तथा ॥३७॥
दाडिमं मातुलिंगं च नालिकेरं च वर्जयेत् ।
व्रीहित्यागो यवत्यागो गोधूमानां विवर्जनम् ॥३८॥
पदं श्लोकं ऋचां स्तोत्रमध्यायं कीर्तनं तथा ।
कार्यं गेयं हरेरग्रे विष्णोर्धामप्रदं व्रतम् ॥३९॥
रतेस्त्यागो मैथुनस्य कर्मत्यागो व्रतं महत् ।
दधि दुग्धं तथा तक्रं गूडं शाकं च वर्जयेत् ॥४०॥
स्नानमामलकैः कार्यं तिलैः कर्तव्यमेव वा ।
धात्रीफलं सदा पापहरं वै पावनास्तिलाः ॥४१॥
सन्ध्यामौनं व्रतं रक्ष्यं रात्रावग्न्यप्रबोधनम् ।
मौनभोजित्वमेवापि व्रतं शुद्धिकरं शुभम् ॥४२॥
उपवाससमं ज्ञेयं फलदं मौनभोजनम् ।
मिथ्याक्रोधश्च पैशून्यं राजसं तामसं तथा ॥४३॥
वर्तनं सर्वथा त्याज्यं मासि वै पुरुषोत्तमे ।
पुण्यकार्यं शुभं कार्यं त्यक्तव्यं पापकर्म च ॥४४॥
ध्येयः पूज्यस्तोषणीयः स्मर्तव्यः पुरुषोत्तमः ।
कृच्छ्राण्यपि प्रकार्याणि मासे वै पुरुषोत्तमे ॥४५॥
कमलाया व्रतकर्तुः कमला जायते गृहे ।
कमलायास्तथा लक्ष्म्याः श्रीपुरुषोत्तमस्य च ॥४६॥
एकादश्यां प्रगे ध्यानं कृत्वा स्नात्वा विधानतः ।
नैत्यकं पूजनं कुर्यात् सर्वतोभद्रमण्डले ॥४७॥
घटान् द्वादशसंख्याकान् जलरत्नदलान्वितान् ।
अक्षतफलवस्त्राद्यैः संयुतान्पूजयेत्ततः ॥४८॥
मध्ये घटं सुवर्णं वा ताम्रजं स्थापयेद् व्रती ।
सुवारिफलरत्नाद्यैः सहितं पूजयेत् ततः ॥४९॥

घण्टां शंखं कलशं च पूजयेद्वस्तुभिस्तथा ।
घटोपरि तिलस्थाल्यां विन्यस्य पुरुषोत्तमम् ॥५०॥
पूजयेद् विधिना सर्ववस्तुभिर्व्रतकारकः ।
आवाहनादिकं कुर्यात् पञ्चामृतविलेपनम् ॥५१॥
तीर्थजलेन च स्नानं कारयेद् वर्ष्म मार्जयेत् ।
वस्त्रालंकारभूषादि चन्दनादि समर्पयेत् ॥५२॥
कज्जलाऽगुरुकस्तूरीसुगन्धितैलमर्पयेत् ।
हारशृंगारशोभादि धूपदीपादि चार्पयेत् ॥५३॥
नैवेद्ये विविधं भोज्यं फलं वारि च चूर्णकम् ।
ताम्बूलं सुभगं दत्वा ततो नीराजयेत्प्रभुम् ॥५४॥
शंखोदकं भ्रामयेच्च दण्डवच्च प्रदक्षिणम् ।
स्तुतिं नमः क्षमायाञ्चां कृत्वा शय्यादि कारयेत् ॥५५॥
पादसंवाहनं कुर्यात् तदानन्दं विकासयेत् ।
दद्याद् दानानि भूरीणि मध्याह्नेऽपि तथाऽऽचरेत् ॥५६॥
भोजयेद्विविधान्नानि पूजयेच्चातिभावतः ।
सायमारार्त्रिकं कुर्यात् स्तुत्वा संभोजयेत्तथा ॥५७॥
रात्रौ तु जागरं कुर्यान्नृत्यगीतपुरःसरम् ।
द्वादश्यां तु प्रगे स्नात्वा पूजयित्वा हरिं तथा ॥५८॥
भोजयित्वा गुरोः पूजां कृत्वाऽन्यान् भोजयेद् बहु ।
ततः स्वः पारणां कुर्याद् दद्याद् दानानि भावतः ॥५९॥
एवं व्रतं प्रकुर्याद्वै भुक्तिमुक्तिप्रदायकम् ।
नियमानां तथा कुर्यादुद्यापनं फलप्रदम् ॥६०॥
मण्डपं कारयेद्रम्यं सप्तधान्यैस्तु मण्डलम् ।
स्वस्तिकान् कारयेच्चापि शय्यादानानि दापयेत् ॥६१॥
श्रीहरिं च रमां तत्र पूजयेद् विधिना व्रती ।
गोदानं च गवार्चा च साधुभ्यो भोजनं तथा ॥६२॥
दद्याच्च गुरवेऽपेक्ष्यं वस्त्रान्नाभूषणादिकम् ।
षोडशवस्तुभिर्देवमहापूजोत्तरं ततः ॥६६॥
दानानि खलु दद्याद् वै विविधानि स्वयं व्रती ।
उद्यापने तु दानानि देयानि व्रतपूर्तये ॥६४॥
उद्यापने कृते सर्वं सम्पूर्णं भवति ध्रुवम् ।
व्रतं कृत्वा महालक्ष्मि ! यदि नोद्यापनं चरेत् ॥६५॥
व्रतवैकल्यमासाद्य न सम्यक् फलभाग्भवेत् ।
व्रते यन्नियमः स्वेन धृतस्तत्प्रतिरूपकम् ॥६६॥
उद्यापने त्ववश्यं संदद्याद्दानं व्रती स्वयम् ।
तैलत्यागे घृतं दद्याद् घृतत्यागे पयः स्मृतम् ॥६७॥
मौने तिलादयो देयाः सहिरण्यास्तु शार्ङ्गिणे ।
भोजने भोजनं दद्याद् दध्योदनसमन्वितम् ॥६८॥
अन्नं मिष्टं सुवर्णाढ्यं दद्याद्वै बहुभावतः ।
पालाशपात्रभोजी तु दद्यान्मिष्टं घृतादिकम् ॥६९॥
नक्तभोजी प्रदद्याद्वै भोजनं षड्रसान्वितम् ।
अयाचिते त्वनड्वाहं सोपस्करं समर्पयेत् ॥७०॥
माषत्यागी प्रदद्यात्तु सवत्सां गां सुलक्षणाम् ।
धात्रीस्नाने व्रती दद्यात् सुवर्णं माषमात्रकम् ॥७१॥
फलानां नियमे दद्यात् फलानि विविधानि वै ।
धान्यानां नियमे दद्यात् धान्यानि शालिगोधूमान् ॥७२॥
दद्यांद्भूशयने शय्यां सतूलां गेन्दुकान्विताम् ।
ब्रह्मचर्यकृते दद्याद् दम्पत्योर्भोजनानि वै ॥७३॥
शाकत्यागे तु शाकानि नैर्लावण्ये रसादिकम् ।
नित्यस्नाने च निःस्नेहे दद्याद् घृतं च सक्तुकान् ॥७४॥
नखकेशव्रते दद्यादादर्शं व्यजनादिकम् ।
उपानहोः परित्यागे दद्यादुपानहौ मुदा ॥७५॥
दुग्धादिसंपरित्यागे दद्याद्वै कपिलां तु गाम् ।
दीपव्रते प्रदद्याद्वै सौवर्णं दीपपात्रकम् ॥७६॥
मैथुनानां तु नियमे रौप्यं दद्याद् धनादिकम् ।
एवं यद्यद् व्रतं स्वेष्टं कृतं च नियमो धृतः ॥७७॥
तत्तद् दत्वा नियमस्य प्रपूर्तिं परिकल्पयेत् ।
गोदानं शर्करादानं गृहदानं धनार्पणम् ॥७८॥
भूदानं कन्यकादानं ब्रह्मसूत्रप्रदानकम् ।
विद्यादानं मोक्षदानं स्वसर्वार्पणमित्यपि ॥७९॥
स्वर्गदं मोक्षदं चापि भवत्येव न संशयः ।
किं बहुनाऽत्र चोक्तेन यद्यदिष्टतमं भवेत् ॥८०॥
पुनः प्राप्त्यर्थमेवाऽस्य दानं कुर्यादसंशयः ।
स्वस्य स्वीयस्य सर्वस्य हरये दानमुत्तमम् ॥८१॥
गुरवे मोक्षदात्रे वा दद्यात् सर्वस्वमेव वै ।
अध्रुवेण ध्रुवं मोक्षं साधयेत् कुशलो जनः ॥८२॥
कमलाया व्रतकर्तुर्गृहे तु कमलाऽऽगमः ।
शृणु लक्ष्मि ! कथयामि प्राग्वृत्तं तु कथानकम् ॥८३॥
हरिद्वारेऽभवत् कश्चित् शाकटायनभूसुरः ।
स्वल्पं वै शकटं तस्य गृहमासनमाश्रयम् ॥८४॥
भिक्षाहारस्तृणतूलः कटगेन्दुक एव सः ।
वर्तते देवगंगाया निकटे करपात्रकः ॥८५॥
एकदा स गतो भिक्षायाचनाय दिगन्तरे ।
वृष्ट्याऽऽकस्मिकया तस्य हृतं वै शकटं प्रिये ॥८६॥
अस्वो दृष्ट्वा हृतं स्वस्य शकटं स ययौ ततः ।
पद्भ्यां प्रयागराजाख्यं तीर्थं तीर्थाय चैकलः ॥८७॥

क्षुत्क्षामो दीनवदनस्त्रिवेण्यां स्नानमाचरत् ।
मुनीनामाश्रमाँस्तत्र गवेषयन् क्षुधार्दितः ॥८८॥
भारद्वाजाश्रमं तत्र ददर्श दिव्यमद्भुतम् ।
पुरुषोत्तममासे वै जनानां संसदं तथा ॥८९॥
तत्राश्रमे तु सुलभां कथां कल्मषनाशिनीम् ।
भारद्वाजमुखाद् रम्यां शुश्राव कमलामयीम् ॥९०॥
एकादश्याः कथां श्रुत्वा भुक्तिमुक्तिप्रदायिनीम् ।
लक्ष्मीनारायणसंहितायां प्रोक्तां धनप्रदाम् ॥९१॥
शाकटायनविप्रोऽसौ श्रुत्वा तां कमलाकथाम् ।
व्रतं तैः कृतवान् सार्धं स्थित्वा मुन्याश्रमे तदा ॥९२॥
रात्रं जागरणं चक्रे कृष्णं कृष्णं स्मरन् हृदि ।
ब्राह्मेमुहूर्ते द्वादश्यां लक्ष्मीस्तत्र समागता ॥९३॥
दिव्यांगा दिव्यतेजस्का दिव्याभरणभूषिता ।
प्राह वरं ददाम्यत्र प्रसन्नाऽस्मि व्रतान्मम ॥९४॥
शाकटायनविप्रोऽपि पप्रच्छाश्चर्यसंभृतः ।
का त्वं कस्यासि रम्भोरु प्रसन्नासि कथं मम ॥९५॥
लक्ष्मीः प्राह प्रसन्नाऽहं जाता व्रतप्रभावतः ।
प्रेरिता देवदेवेन वैकुण्ठादहमागता ॥९६॥
पुरुषोत्तममासस्य कमलाया व्रतात्तु ते ।
कमलां विपुलां लक्ष्मीं दातुमत्र समागता ॥९७॥
ममव्रतं त्वया चीर्णं प्रयागे ऋषियोगतः ।
आशिषो व्रतवशगा ददे त्वां 'धनवान् भव' ॥९८॥
रवावेकादशी यत्र मध्यादौ द्वादशी तथा ।
त्रयोदशी निशाशेषे व्रतानामुत्तमं व्रतम् ॥९९॥
तत्र ऋतुशनं पुण्यं त्रयोदश्यां तु पारणे ।
एतद्व्रतं त्वया चीर्णं प्रसन्नाऽस्मि महामुने ॥१००॥
गृहाणेमं मणिं दिव्यं यस्मात्स्वर्णं प्रपद्यते ।
इत्युक्त्वा कमला तस्मै मणिं दत्वा तिरोदधे ॥१०१॥
शाकटायनविप्रोऽपि मणिं नीत्वा गृहं गतः ।
नित्यं स्वर्णशतं प्रातर्ददात्येषो मणिर्महान् ॥१०२॥
शाकटायनविप्रोऽपि दत्ते दानं त्वहर्निशम् ।
एवं स ऋषिवर्योऽपि शाकटायनभूसुरः ॥१०३॥
इन्द्रादप्यधिकां स्मृद्धिं लब्धवान् कमलाव्रतात् ।
याचकाय प्रदातव्यं यद्यद् वाञ्छति मद्गृहात् ॥१०४॥
एवं प्रकाशितं शाकटायनेन भुवस्तले ।
अथैकदा पुलस्त्यो वै ब्राह्मणो ब्रह्मणः सुतः ॥१०५॥
श्रुत्वैवं दानकीर्तिं च मणेर्भिक्षेच्छया स्वयम् ।
शाकटायनभवनं त्वाजगाम विचार्य च ॥१०६॥
ययाचे तन्मणेर्भिक्षां निस्पृहोऽपि मुनिर्ददौ ।
पुलस्त्योऽपि मणिं नीत्वा ययौ द्वीपं तु सिंहलम् ॥१०७॥
तत्र स्वर्णमयं सर्वं चक्रे पुरवनादिकम् ।
तेनाऽर्पितः कुबेराय धनाधिपतये मणिः ॥१०८॥
रावणस्तं जहाराऽथ स्वर्णलंकां चकार सः ।
एवं वै कमला देवी व्रतेन यदि तुष्यति ॥१०९॥
सर्वं ददाति भक्ताय व्रतं यत् तोषकारकम् ।
श्रृणुयाद्वा पठेद्वापि कमलायाः फलं भवेत् ॥११०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पुरुषोत्तममासस्य कृष्णपक्षकमलैकादशीमाहात्म्यं नियमाः, उद्यापनम्, शाकटायनस्य व्रतेन मणिप्राप्तिर्लक्ष्मीप्राप्तिस्ततो पुलस्त्यकुबेररावण-सुवर्णलाभादिश्चेतिकथननामा त्रिषष्ट्यधिक-द्विशततमोऽध्यायः ॥ २६३ ॥

**श्रीलक्ष्मीरुवाच—**

श्रोतॄणां परमं श्राव्यं पवित्राणामनुत्तमम् ।
दुःस्वप्ननाशकं दिव्यं श्रोतव्यं यत्नतो मया ॥ १ ॥
मासानां परमो मासः पुरुषोत्तमसंज्ञकः ।
यस्य देवः स्वयं साक्षात्पुरुषोत्तम एव वै ॥ २ ॥
स्वर्गीया निर्जराः सर्वे भूतले जन्म लिप्सवः ।
तमर्चयन्ति पुरुषं तूत्तमं तु नरायणम् ॥ ३ ॥
ये जपन्ति सदा भक्त्या देवं नारायणं प्रभुम् ।
तानर्चयन्ति सततं ब्रह्माद्या देवतागणाः ॥ ४ ॥
तस्य ते देवदेवस्य मासस्य पुरुषोत्तम ।
शुक्लपक्षैकादशी किंनाम्नी भवति मे वद ॥ ५ ॥
को विधिः किं फलं दानं को देवो वद मे प्रभो ।
यद्व्रतं मनुजः कृत्वा प्राप्नुयात्स्वर्गमक्षरम् ॥ ६ ॥

**श्रीनारायण उवाच—**

पुरुषोत्तममासस्य शुक्लपक्षे तु धामदा ।
भवत्येकादशी नाम्ना यद्व्रतं ब्रह्मधामदम् ॥ ७ ॥
विधिर्ब्रह्ममयश्चात्र फलं ब्रह्ममयं स्मृतम् ।
ब्रह्मधामेश्वरः कृष्णनारायणः पतिर्मतः ॥ ८ ॥
अक्षरातीत एवायं भगवान्पुरुषोत्तमः ।
अक्षरया स्वपत्न्या तु सहितो धामदायुतः ॥ ९ ॥
पूजनीयो मुक्तलताकुसुमैश्चामृतैः फलैः ।
दानमुपनिषद्विद्याश्च वै मोक्षदानकम् ॥१०॥

दीक्षादानं ब्रह्मदानं वेददानं निजार्पणम् ।
सर्वस्वार्पणमेवाऽत्र दानानामुत्तमं मतम् ॥११॥
भगवद्धामदानाग्रे दानमन्यत् समल्पकम् ।
धामप्राप्तिकरं दानं श्रेष्ठं दानं मतं प्रिये ॥१२॥
दशम्यामेकभुक्तः स्याद् भूशायी ब्रह्मचर्यवान् ।
प्रातरुत्थाय संध्यायेदक्षरां पुरुषोत्तमम् ॥१३॥
धामदां चापि संस्मृत्य कुर्यात्स्नानं यथाविधि ।
नैत्यकं पूजनं कृत्वा महापूजां समाचरेत् ॥१४॥
मण्डपं कारयेद् रम्यं सर्वतोभद्रमण्डलम् ।
कारयेच्चाऽव्रणं कुंभं रत्नगर्भं सकाचनम् ॥१५॥
वस्त्रवारिफलयुक्तं स्थापयेन्मण्डले ततः ।
विशालं ताम्रजं पात्रं कुंभोपरि निधापयेत् ॥१६॥
कमलं द्वादशपत्रं कुंकुमैस्तत्र दर्शयेत् ।
तत्रार्चयेदक्षरया सहितं पुरुषोत्तमम् ॥१७॥
तथा कमलयोपेतं स्थापयित्वा यथाविधि ।
उपचारैः षोडशभिर्महापूजां समाचरेत् ॥१८॥
दिव्यं दिव्यमहामुक्तैः सेवितं च प्रभादिभिः ।
राधालक्ष्म्यादिभिर्युक्तं ध्यायामि सुन्दरं वरम् ॥१९॥
भक्तकृपाकरं कृष्णं मनसाऽऽवाहयाम्यहम् ।
स्वर्णसिंहासने कृष्ण निषीद पुरुषोत्तम ॥२०॥
गंगोदकं जलं पाद्यं गृहाणाऽक्षरया सह ।
गन्धपुष्पादिसंयुक्तं जलमर्घ्यं गृहाण वै ॥२१॥
गालितं तीर्थसलिलं गृहीष्वाचमनीयकम् ।
दुग्धं दधि घृतं क्षौद्रं शर्करां च जनार्दन ॥२२॥
पंचामृतं स्नपनार्थं कृपया प्रतिगृह्यताम् ।
वारिधेः सरितां तोयं स्नानार्थं प्रतिगृह्यताम् ॥२३॥
धौत्रं प्रावरणं कंचुकादिकं प्रतिगृह्यताम् ।
शाटीं घर्घरिकां कंचुक्यादिकं प्रगृहाण वै ॥२४॥
पट्टसूत्रं ब्रह्मसूत्रं गृहाण पुरुषोत्तम ।
केयूरं कटकेंऽगुलीयकं मुकुटनूपुरे ॥२५॥
रशनां तन्तिकां नत्थीं झंझिरैराणि गृह्यताम् ।
रत्नं स्वर्णं पुष्पहारान् शृंगारादि प्रगृह्यताम् ॥२६॥
कस्तूर्यगुरुकर्पूरैश्चन्दनैर्लेपनं कुरु ।
कदम्बं चम्पकं पद्मं कुन्दं जातीं च गृह्यताम् ॥२७॥
धूपं सुगन्धदं नारायण गृहाण भावतः ।
दीपं घृतकृतं रम्यं गृहाण पुरुषोत्तम ॥२८॥
कुंकुमाबीरगूलालकज्जलात्तरमावह ।
आरात्रिकं सुप्रकाशं गृहाण पुरुषोत्तम ॥२९॥
अन्नं च पायसं शष्कुल्यादि गोघृतपोलिकाः ।
दधि दुग्धं घृतं मिष्टं गृहाण कमलापते ॥३०॥
जलं तैर्थ्यं सुगन्धाढ्यं शीतलं पिब माधव ।
पूग्येलाखदिराढ्यं तु ताम्बूलं प्रतिगृह्यताम् ॥३१॥
कदलाऽम्राऽमृतदाडिमश्रीफलं प्रगृह्यताम् ।
दक्षिणां कांचनीं कृष्ण गृहाण हीरकादिकम् ॥३२॥
अंजलिस्थानि पुष्पाणि ह्यक्षताँश्च गृहाण वै ।
नमस्ते कमलाकान्त नमोऽक्षराधिनायक ॥३३॥
करोमि दण्डवत् त्वक्षरेश स्वामिन् गृहाण च ।
त्वां विना शरणं नान्यस्त्वमेव शरणं मम ॥३४॥
व्रतं पूर्णं कुरु श्रीश रक्ष मामक्षरेश्वर ।
अन्नं वस्त्रं सुवर्णं च शाकं शय्यां घृतादिकम् ॥३५॥
अर्पयामि हरेर्बुद्ध्या द्विजायैतद् गृहाण वै ।
इति संपूज्य सद्भक्त्या दिवाशेषं नयेद् व्रती ॥३६॥
दानं दद्याद् यथाशक्ति कुर्वीताऽवश्यकीं क्रियाम् ।
मध्याह्नेऽपि सुमिष्टान्नं नैवेद्यं च जलादिकम् ॥३७॥
सायं चापि महापूजां कारयेद् बहुवस्तुभिः ।
कुर्यान्नीराजनं त्वाज्यपञ्चवर्तिसमन्वितम् ॥३८॥
नैवेद्यं जलपानं च ताम्बूलं पादमर्दनम् ।
दत्वा कृत्वा कीर्तनैश्च रात्रौ जागरणं चरेत् ॥३९॥
हर्यालयं जागरार्थं सतां वा तु मठं प्रति ।
गच्छतोऽस्त्यश्वमेधस्य फलं पुंसः पदे पदे ॥४०॥
प्रातः स्नात्वा पुनः पूजां नित्यां नैमित्तिकीं तथा ।
कुर्याच्च भोजयेद् देवं ततो भक्ताँस्तु भोजयेत् ॥४१॥
गुरवे स्वर्णमूर्तीनां दानं कुर्यात् व्रती ततः ।
बहूनि त्वन्यदानानि कुर्याच्चाभिमतानि वै ॥४२॥
साधूँश्च वैष्णवान् साध्वीर्भोजयेन्मृष्टभोजनम् ।
हविष्यान्नेन कुर्वीत पारणां च ततो व्रती ॥४३॥
दिवानिद्रां परान्नं च पुनर्भोजनमैथुने ।
द्वादश्यां वर्जयेत् तैलं तामसं चापि भोजनम् ॥४४॥
पारणाहे तु लभ्येत स्वल्पापि द्वादशी यदि ।
तत्रैव पारणां कुर्यान्न तामुल्लंघयेद् व्रती ॥४५॥
द्वादश्याः प्रथमः पादो हरेर्वासर उच्यते ।
तत्र नैव हि भोक्तव्यं पुण्यास्याऽक्षयमिच्छता ॥४६॥
एवं धामप्रदायाश्च व्रतं कार्यं विधानतः ।
विमानेन च तं भक्तं ह्यन्ते धाम नयेत् प्रभुः ॥४७॥
शृणु लक्ष्मि ! पुरा जातं वृत्तान्तं धामदाव्रते ।
आसीत् कृतयुगे राजा पुण्डरीकसमाह्वयः ॥४८॥

विष्णुभक्तश्चक्रवर्ती सर्वत्र समदर्शनः ।
साधुवत्सर्वथा देहे दैहिके निष्परिग्रहः ॥४९॥
अर्धं दिनं तु पूजायां शेषं न्यायप्रदापने ।
यापयति व्रताहे तु पूजामात्रं करोति वै ॥५०॥
राज्ञी कुमुद्वतीनाम्नी तस्य त्वासीत्पतिव्रता ।
पत्याज्ञामेव शास्त्राज्ञां मत्वा संसेवते पतिम् ॥५१॥
अपृष्ट्वा स्वपतिं किंचिन्नैव करोति मानसम् ।
एकदाऽऽसीत्पुण्डरीको धामदाव्रतपूजने ॥५२॥
राज्ञी ज्वराऽभिभूताऽऽसीदन्तःपुराधिवासिनी ।
सायं स्वास्थ्यप्ररक्षार्थं विना पृष्ट्वा तु तत्पतिम् ॥५३॥
दासीभिः सह वाटिकायामुद्यानं प्रजगाम सा ।
क्षुधया चानुकूलं तु ज्वरानुत्तेजकं फलम् ॥५४॥
नवरंगं गृहीत्वा तद्रसं पपौ पतिव्रता ।
पतिं त्वपाययित्वाऽसौ पपौ पतिव्रता यतः ॥५५॥
पातिव्रत्येऽभवद्भंगो ज्वरश्चातिव्यवर्धत ।
तृषया च जलं पीत्वा रात्रौ तत्रैव संस्थिता ॥५६॥
प्रातः पत्युर्नित्यसेवा न जाताऽद्य दिने तथा ।
प्रातर्भर्तुर्मुखदर्शनं न जातं तथा परम् ॥५७॥
पत्यंगुष्ठजलपानं प्राप्तं नैव च नैव च ।
पारवश्यं गता रुग्णा पातिव्रत्यं क्षतिं गतम् ॥५८॥
ज्वरश्चातिप्रबलोऽभूद् वर्ष्म शुष्कायितं तदा ।
पातिव्रत्यस्य भंगेन राज्ञी त्वपुण्यभागिनी ॥५९॥
मरणस्योन्मुखी जाता पीड्यतेऽतीव शोषिता ।
दुरिताच्च कुमुद्वत्याः प्राणाः प्रयान्ति नैव च ॥६०॥
पुण्डरीकश्च शुश्राव राज्ञ्या आमयमित्यपि ।
व्रते पूर्णे समागत्य सेवां तस्याश्चकार ह ॥६१॥
आयुष्यं पूर्णतां यातं प्राणा निर्यान्ति नैव च ।
तदा राज्ञा जलं दत्वा धामदाफलमर्पितम् ॥६२॥
शीघ्रं प्राणास्तु निर्याता विमानं दिव्यमागतम् ।
विष्णुना च तथा लक्ष्म्या पार्षदैश्च सुशोभितम् ॥६३॥
अक्षरासहितश्रीमत्पुरुषोत्तमशोभितम् ।
द्वितीयं च विमानं त्वागतमक्षरधामदम् ॥६४॥
प्रथमं विष्णुना नीता विमाने सा रमायुते ।
वैकुण्ठं प्रापिता पश्चादारूढाऽन्यविमानके ॥६५॥
अक्षरं धाम नीता श्रीपुरुषोत्तमधामिना ।
एवं वै धामदायाः सा पुण्यलभेन धामगा ॥६६॥
अभवच्च किमु तर्हि धामदाव्रतिनः पुनः ।
तस्माद्धामप्रदायास्तु व्रतं कार्यं विशेषतः ॥६७॥
पुरुषोत्तममासस्य शुक्लैकादशिकाव्रतम् ।
परं धामप्रदं मोक्षप्रदं सम्पत्प्रदं तथा ॥६८॥
श्रुत्वा चापि पठित्वापि व्रततुल्यं फलं भवेत् ।
सकामानां महास्मृद्धपारमेष्ठ्यादि संभवेत् ॥६९॥
यथाबलं प्रकर्तव्यं तदिदं शुभकांक्षिणा ।
अक्षरा धामदा चास्मै भुक्तिं मुक्तिं प्रदास्यति ॥७०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पुरुषोत्तममासस्य शुक्लधामदैकादशीव्रतमाहात्म्यं पुण्डरीकनृपस्य कुमुद्वतीपत्न्याः किंचित्पतिसेवालाभशून्याया अपि व्रतेनाऽक्षरधामप्राप्तिरित्यादिनिरूपणनामा चतुःषष्ट्यधिकद्विशततमोऽध्यायः ॥२६४॥

**श्रीलक्ष्मीरुवाच—**

उद्यापनानि सर्वाणि सर्वदेवप्रपूजनम् ।
भगवन् कथितं सर्वं तन्मया विदितं प्रभो ॥ १ ॥
एकादशीनां सर्वासां यद्युद्यापनमेकलम् ।
कर्तव्यं स्यात्तदा विस्तारः कियाँस्तं च मे वद ॥ २ ॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि! प्रवक्ष्यामि सर्वासामेकलक्षणम् ।
उद्यापनं समस्तं वै सम्पूर्णफलदं यथा ॥ ३ ॥
मण्डपे निर्मिते रम्ये कदलीस्तम्भशोभिते ।
विधाय सर्वतोभद्रं तन्मध्ये स्थापयेद् घटम् ॥ ४ ॥
अश्वत्थोदुम्बरप्लक्षचूतन्यग्रोधपल्लवैः ।
युक्तं रत्नैर्वस्त्रकण्ठं तथा सलिलसंभृतम् ॥ ५ ॥
तन्मुखे सुमहत्पात्रं निदध्यात्कुंकुमान्वितम् ।
कमलं द्वादशपत्रं दलद्वादशकान्वितम् ॥ ६ ॥
कृत्वा मध्ये रमाजुष्टं वासुदेवं सुवर्णजम् ।
स्थापयेत्परितश्चतुर्विंशत्येकादशीपतीन् ॥ ७ ॥
तत्तत्पत्नीसमेतांश्च स्थापयेत्पूर्वतः क्रमात् ।
आद्ये श्रीकेशवौ पद्मानारायणौ ततो दले ॥ ८ ॥
माधवो नित्यया साकं गोविन्दश्चन्द्रया सह ।
रमया सह विष्णुश्च माधव्या मधुसूदनः ॥ ९ ॥
त्रिविक्रमश्च पद्माक्ष्या वामनः कमलायुतः ।
श्रीधरः कान्तिमत्या च हृषीकेशाऽपराजिते ॥१०॥
पद्मनाभः पद्मवत्या राधादामोदरौ ततः ।
पत्रेषु पूर्वतः संकर्षणः सह सुनन्दया ॥११॥

वासुदेवो हरिण्याऽथ प्रद्युम्नश्च धिया सह ।
अनिरुद्धः सुशीलायुक् नन्दया पुरुषोत्तमः ॥१२॥
अधोक्षजस्त्रय्यीयुक्तः क्षेमंकर्या नृकेसरी ।
अच्युतो विजयायुक्तः सुन्दर्या च जनार्दनः ॥१३॥
उपेन्द्रः सुभगायुक्तो हरिः सह हिरण्यया ।
कृष्णः सुलक्षणायुक्तः स्थापनीयो विधानतः ॥१४॥
पंचामृतेन मध्यस्य स्नानमभ्यंगपूर्वकम् ।
महाभिषेकं कुर्याच्च वस्त्राभूषादि चार्पयेत् ॥१५॥
सर्वगन्धैः सुमनोभिः पूजयेत्तुलसीदलैः ।
धूपं दीपं चन्दनं च नैवेद्य जलमर्पयेत् ॥१६॥
मोदकान् खाजकाँश्चैव चूर्णानि घृतपूरकान् ।
सोहिलकाँश्च कंसारं सक्तून् सेवाँश्च पोलिकाः ॥१७॥
पूरिकाः पायसं दुग्धसारं दध्योदनं तथा ।
पिण्डकान् वटकाँश्चैव शतच्छिद्राँश्च शष्कुलीः ॥१८॥
तिलपाकं शालिपाकं मुद्गचूर्णं गुडौदनम् ।
रंभाफलं तथाऽन्यच्च मिष्टान्नमर्पयेद् बहु ॥१९॥
शाकानि विविधान्येव फलानि विविधान्यपि ।
ताम्बूलं मुखवासादि जलं चापि समर्पयेत् ॥२०॥
महानीराजनं कृत्वा दद्यात्पुष्पांजलिं ततः ।
स्तुतिं नमो दण्डवच्च क्षमायाचनमित्यपि ॥२१॥
कृत्वा समाप्य पूजां च दद्याद् दानानि भावतः ।
गोभूतिलहिरण्याश्वगजवाहाम्बराणि च ॥२२॥
ततो देवगृहे गोष्ठे समिदाज्यतिलौदनैः ।
पुष्परसान्वितैर्होममाचरेत् तत्तदाह्वयैः ॥२३॥
गाश्चतुर्विंशतिं दद्यादेकां वा कांचनान्विताम् ।
मध्याह्ने पूजयेत्तद्वद् भोजयेच्च यथाविधि ॥२४॥
सायं नीराजनं कुर्यात्पूजयेद् भोजयेत्तथा ।
रात्रौ जागरणं कृत्वा प्रभाते त्वर्चयेद्धरिम् ॥२५॥
सुवर्णनिर्मितां मूर्तिं दद्यात्स्वगुरवे व्रती ।
अलंकाराँश्च वासांसि शय्यां दद्यात्ततो व्रती ॥२६॥
चतुर्विंशतिभूदेवान् साधूँश्च भोजयेत् सतीः ।
घटाँश्च विष्णवे दद्यात् प्रदद्याद् दक्षिणां तथा ॥२७॥
ततः स पारणां कुर्याद् भोजयित्वा जनान्स्वकान् ।
एवं कृते चतुर्विंशत्येकादशीफलं भवेत् ॥२८॥
वित्तशाठ्यं न कर्तव्यमुद्यापनमहोत्सवे ।
लक्ष्मीकान्तः स्वयं कृष्णस्तुष्यत्येवर्द्धिसम्प्रदः ॥२९॥
अथ लक्ष्मि ! कथयामि धेनुशैलादिकान् शृणु ।
पूजयित्वा ततो दद्याद् गुरवे बहुलं धनम् ॥३०॥
वैभवे विपुले दद्याद् धेनूर्दशविधा व्रती ।
मेरून्दशविधान्दद्यात् शृणु तत्र विधिं प्रिये ॥३१॥
तत्र गोमयलिप्तायां दर्भानास्तीर्य वै भुवि ।
उदक्पादाः प्राङ्मुख्यश्च कल्पनीयास्तु गा दश ॥३२॥
गुडधेनुं गुडेनैव शतप्रस्थमितेन वै ।
पञ्चविंशतिसीरैश्च तद्वत्सं कल्पयेद् व्रती ॥३३॥
यद्वा गूडं यथाश्रद्धं धेनुस्थाने निधाय च ।
यथाश्रद्धं च तद्वत्सं कृत्वा गुडेन वै ततः ॥३४॥
अनर्घ्यैर्वसनैः सूक्ष्मैर्वेष्टयित्वा च तावुभौ ।
शुक्तिकर्णाविक्षुपादौ शुद्धमौक्तिकनेत्रकौ ॥३५॥
ताम्रपृष्ठौ क्षौमपुच्छौ श्वेतोर्णाकृतकम्बलौ ।
स्वर्णशृंगौ रूप्यखुरौ विद्रुमभ्रूकुटीयुतौ ॥३६॥
नानाऽऽभरणशोभाढ्यौ कांस्यदोहनसंयुतौ ।
विधायैवं तु गोवत्सौ पूजयेद्विधिना व्रती ॥३७॥
घृतधेनुं दुग्धधेनुं शर्कराधेनुमुत्तमाम् ।
तिलधेनुं मधुधेनुं रसधेनुं तथोत्तमाम् ॥३८॥
दधिधेनुं चाम्बुधेनुं स्वर्णधेनुं विधाय च ।
तत्तद्वत्सं प्रथमवत् कृत्वा संपूजयेद् व्रती ॥३९॥
यथाशक्ति प्रकुर्याद्वै धेनूँश्च वत्सकांस्तथा ।
प्रदद्याद् गुरवे सर्वाः पुरुषोत्तमतुष्टये ॥४०॥
तद्वच्च पर्वतान् रम्यान् वृक्षतडागसंयुतान् ।
कल्पयित्वा दशविधान् चतुरः कोणपर्वतान् ॥४१॥
पूजयेद्विधिना दद्याद्गुरवे हरितुष्टये ।
मण्डपे गोमयलिप्ते कुशानास्तीर्य भूतले ॥४२॥
मध्ये व्रीहिमयं मेरुं सहस्रद्रोणसम्मितम् ।
कुर्याद् द्रोणं तु द्वादशप्रस्थप्रमितमुत्तमम् ॥४३॥
पूर्वे मौक्तिकहीरकपद्मरागाँश्च दक्षिणे ।
पीतश्यामान् पश्चिमायामुत्तरे विद्रुमान्न्यसेत् ॥४४॥
इक्षुदण्डैर्गुहां कुर्याच्छुक्तिभिस्तु शिलादिकम् ।
घृतेन प्रस्रवणानि वस्त्रैर्मेघाँश्च कल्पयेत् ॥४५॥
शृंगाणि स्वर्णरौप्याणि मुनीन्देवान् हिरण्मयान् ।
इन्द्रादीन् दिक्पतीन् रौप्यान् कुर्याद् वृक्षाँश्च धातुभिः ॥४६॥
मन्दारं पारिजातं च कल्पद्रुं च कदम्बकम् ।
कृत्वा संशोभयेत्पुष्पफलैः सौवर्णराजतैः ॥४७॥
मन्दराद्रिर्यवैः पूर्वे गोधूमैर्गन्धमादनः ।
विपुलाद्रिस्तिलैः पश्चे माषैः सुपार्श्व उत्तरे ॥४८॥
कार्याश्चैते नगाः शोभायुक्ताः स्वोपस्करैर्युताः ।
स्वस्त्ययनं वाचयित्वा त्वावाह्य देवपर्वतान् ॥४९॥

पूजयित्वा प्रदद्याच्च गुरवे स्मृद्धपर्वतान् ।
गाश्चतुर्विंशतिं दद्याद् विप्रेभ्यो दक्षिणां तथा ॥५०॥
लवणाद्रिं गुडाद्रिं च हेमाद्रिं तिलपर्वतम् ।
कार्पासाद्रिं घृताद्रिं च रत्नाद्रिं राजताचलम् ॥५१॥
शर्कराद्रिं यथाशक्ति नगान्नव प्रकारयेत् ।
पार्श्वस्थान्पर्वताँश्चापि चतुरश्चतुरो यथा ॥५२॥
रचयित्वा पूर्ववच्च शोभां कुर्यादनेकधा ।
पूजयेद्विधिना सर्वान् दद्याच्च गुरवे तु तान् ॥५३॥
गोदानं पृथिवीदानं कन्यादानं गृहार्पणम् ।
यानवाहननगरग्रामदानं विधापयेत् ॥५४॥
सर्वस्वं गुरवे दद्याद् विप्रेभ्यस्तु यथार्हकम् ।
भिक्षुकेभ्यस्त्वन्नदानमन्येभ्यो यदपेक्षितम् ॥५५॥
एवमुद्यापनं कृत्वा पश्चाद् देवान् विसर्जयेत् ।
सर्वं तद्गुरवे दद्याद् देवालयाय वाऽर्पयेत् ॥५६॥
व्रतेषु त्याज्यवस्तूनां गृहीता नियमास्तु ये ।
तत्तद्वस्तुप्रदानं तु कार्यमुद्यापने तथा ॥५७॥
दत्तं सर्वं मिलत्येवेहाऽमुत्र त्वन्यथा न वै ।
तस्माद् यथा बलं कार्या प्रपूर्णता व्रतोत्तरम् ॥५८॥
वैवस्वतेन मनुना कृतमुद्यापनं पुरा ।
भृगुपुत्र्या रमया च कृतमुद्यापनं तथा ॥५९॥
पद्मया धरणिपुत्र्या कृतमुद्यापनं तथा ।
प्राप्य विष्णुं च वैकुण्ठे मोदन्ते सर्वदा तथा ॥६०॥
पार्वत्या च कृतं सर्वमुद्यापनं महत् पुरा ।
प्रभया च कृतं तद्वदुद्यापनं यथायथम् ॥६१॥
इति लक्ष्मि कथितानि व्रतानि विधितश्च ते ।
एकादशीनां सर्वासां किमन्यच्छ्रोतुमिच्छसि ॥६२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने सर्वासामेकादशीनां महोद्यापनविधिस्वरूपनिरूपणनामा पञ्चषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६५ ॥

**श्रीलक्ष्मीरुवाच—**

वार्षिकाणां व्रतानां च रूपं विस्तरतो वद ।
यत्कृत्वा मानवाश्चापि प्राप्नुयुर्भोगमोक्षणे ॥ १ ॥
विनाऽऽत्मसाधनं त्वन्यद्ध्रुवं दुःखसंभृतम् ।
ज्ञात्वा यतेत नित्यार्थं जनो यथा च तद्वद ॥ २ ॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! प्रवक्ष्यामि पावनानि दिनानि वै ।
व्रतात्मकानि सर्वाणि निःश्रेयसप्रदानि हि ॥ ३ ॥
हरेस्तस्य विभूतीनां सतां योगाच्च सर्वथा ।
कालोऽपि दिव्यतां याति व्रतात्मा मुक्तिदो भवेत् ॥ ४ ॥
यस्यां तिथौ व्रतं यस्य यत्फलं पूजनं यथा ।
यद्विधानं च कर्तव्यं तत्सर्वं प्रवदामि ते ॥ ५ ॥
चैत्रे मासि जगत्सर्वं शुक्लपक्षे तु विश्वसृट् ।
दिनारंभे प्रतिपदि ससर्जैतच्चराचरम् ॥ ६ ॥
तत्र प्रतिपदि कार्या महाशान्तिः सुखप्रदा ।
सर्वोत्पातप्रशमनी धनसौभाग्यदायिनी ॥ ७ ॥
आयुःपुष्टिप्रदा चेयं लोकद्वयसुखप्रदा ।
कुण्डं च मण्डपं तत्र कारयित्वा शुभे स्थले ॥ ८ ॥
वह्निवपुर्धरं ब्रह्माणं वै समर्चयेद् व्रती ।
पाद्यार्घ्यपुष्पधूपैश्च वस्त्रालंकारभोजनैः ॥ ९ ॥
होमैर्बल्युपहारैश्च साधुसाध्वीप्रतर्पणैः ।
पूजनीयो विशेषेणाऽक्षतचन्दनसद्रसैः ॥१०॥
सुवर्णप्रतिमां कृत्वा ब्रह्माणं संप्रपूजयेत् ।
षोडशोत्तमकरणैर्भोजनैर्विविधैस्तथा ॥११॥
चतुर्मुखं चतुर्हस्तं द्विपादं वेदहस्तकम् ।
कमण्डलुकरं देवं ब्रह्माणं त्वभिपूजयेत् ॥१२॥
आरार्त्रिकोत्तरं देवं प्रार्थयेद्व्रतकृन्नरः ।
व्रते फलादिकं भुञ्ज्यादथवैकान्नमित्यपि ॥१३॥
ब्रह्मचर्यं रक्षयेच्च दद्याद् दानानि भूरिशः ।
प्रार्थयेद् वेधसं पुत्रपौत्रवंशप्रवृत्तये ॥१४॥
मूर्तिदानं तु गुरवे दद्यादजस्वरूपिणे ।
कन्यादानमपि दद्याद् व्रती संकल्पपूर्वकम् ॥१५॥
वंशवृद्धिकरं त्वेतद्व्रतं सर्वसुखप्रदम् ।
कृत्वौंकारनमस्कारं कुशोदकतिलाऽक्षतैः ॥१६॥
सवस्त्रं सहिरण्यं च मिष्टान्नं च गवादिकम् ।
अन्यच्चापि यथाशक्तिधनं दद्याद्द्विजातये ॥१७॥
दक्षिणां वेदविदुषे व्रतसंपूर्तिहेतवे ।
एतद्ब्राह्मव्रतं प्रोक्तं कर्तव्यं कामनार्थिभिः ॥१८॥
अस्यामेव तिथौ तद्वत् सरस्वतीव्रतं शुभम् ।
कर्तव्यं सफलाहारं यद्वैकाहारमित्यपि ॥१९॥
ब्रह्मणो वदनात्प्रातः समुत्पन्ना हि शारदा ।
द्वादशाधिकवर्षीया सवीणा समयूरका ॥२०॥

नीलस्वर्णमहामूल्यशाटिकादिसमन्विता ।
कर्तव्या सूज्ज्वला मूर्तिः पूजनीया विधानतः ॥२१॥
प्रातः सम्पूज्य सा देवी षोडशादिकवस्तुभिः ।
प्रार्थनीया ब्रह्मविद्यालब्धये व्रतिना ततः ॥२२॥
दुग्धपाकस्तु नैवेद्ये त्वर्पणीयश्च पूरिकाः ।
तद्दिने क्षीरपाकश्च भोजनीयो व्रतार्थिना ॥२३॥
द्वितीये दिवसे विद्याऽऽरंभरणीयाऽर्थदा भवेत् ।
दानानि विविधान्येव दद्याच्छ्रीगुरवे व्रती ॥२४॥
स्वर्णसरस्वतीमूर्तिं दद्याच्छ्रीगुरवे ततः ।
विद्या मे रसनाग्रे तु नर्तकी स्यात्तदर्थयेत् ॥२५॥
विसर्जयेच्च दानानि दद्याच्छक्त्यनुसारतः ।
विप्रान्साधून्पण्डितांश्च भोजयेत्पूजयेद् व्रती ॥२६॥
वैशाखे शुक्लपक्षे तु प्रतिपद्यब्धिमन्थने ।
क्रियमाणे सुरैर्दैत्यैः प्रातः कूर्मोऽभवद्धरिः ॥२७॥
सौवर्णं कूर्मरूपं तु वासुदेवं समर्चयेत् ।
उत्तरांगं नराकारं पूर्वांगं कूर्मरूपधृक् ॥२८॥
शंखं गदां भुजयोस्तु दद्यान्मोदकभोजनम् ।
शर्करां दधि चिञ्चाया वारि मिष्टं समर्पयेत् ॥२९॥
उत्सवं तु महान्तं वै कुर्यात्कूर्मकथानकम् ।
एवं व्रती व्रतं कृत्वा भुक्तिं मुक्तिं समाप्नुयात् ॥३०॥
अथ ज्येष्ठे सिते प्रतिपदि द्रुं करवीरकम् ।
स्वर्गोद्यानात् पृथिव्यामागतं प्रातः प्रपूजयेत् ॥३१॥
रक्ततन्तुपरीधानं दद्याद् धूपं विलेपनम् ।
गन्धाक्षतान् जलं दद्यान्नारंगं बीजपूरकम् ॥३२॥
प्ररूढधान्यंऽकुरकैरभ्युक्ष्य स्तवनं चरेत् ।
करवीर महाभाग फलानि यच्छ सर्वदा ॥३३॥
सप्तधान्यानि सौम्यानि कुसूलेषु वसन्तु मे ।
इति प्रदक्षिणीकृत्य दत्वां च दक्षिणां व्रती ॥३४॥
नमस्कृत्य जलं दत्वा पश्चात् स्वं भवनं व्रजेत् ।
एवं संपूजितो वृक्षो धनं धान्यं ददाति वै ॥३५॥
नमःशुक्ले प्रतिपदि लक्ष्मीबुद्धिप्रदायकम् ।
धर्मार्थकाममोक्षाणां सम्पादकं व्रतं महत् ॥३६॥
भाद्रशुक्लप्रतिपदि व्रतं मौनं प्रकीर्तितम् ।
शिवप्रपूजनं कुर्यात् कुंभोपरि विधानतः ॥३७॥
सौवर्णशिवमूर्तेस्त्वर्चनं षोडशवस्तुभिः ।
फलानि मिष्टपक्वानि दद्याद्विप्राय षोडश ॥३८॥
पक्वान्नानि च दानानि दद्याच्छिवाय षोडश ।
धेनुं दद्यात्तथाऽन्यानि दद्याद् दानानि षोडश ॥३९॥

इदं कृत्वा व्रतं लक्ष्मि ! देवदेवस्य शूलिनः ।
चतुर्दशाब्दं देहान्तं भुक्तभोगः शिवं व्रजेत् ॥४०॥
आश्विने शुक्लप्रतिपद्व्रतं चाऽशोकसंज्ञकम् ।
अशोकस्तु समायातः स्वर्गाद् भुवि द्रुमोत्तमः ॥४१॥
अशोकपूजनं तत्र कुर्यात् षोडशवस्तुभिः ।
अशोको जायते तेन धनधान्यप्रपूरितः ॥४२॥
व्रतान्ते द्वादशे वर्षे मूर्तिं चाऽशोकशाखिनः ।
समर्प्य गुरवे भक्त्या विष्णुलोके सुखी भवेत् ॥४३॥
अशोकफलवत्तस्य प्रजा अशोककारिकाः ।
सुखदाश्च धनाढ्याश्च फलन्ति फलदा भुवि ॥४४॥
अस्यामेव प्रतिपदि नवरात्रं समाचरेत् ।
नवरात्रं त्वेकभुक्तं वर्तयेच्चाऽप्ययाचितम् ॥४५॥
अथवोपवसेन्नित्यं फलं वा भक्षयेद् व्रती ।
पूर्वाह्ने पूजयेद् दुर्गां घटस्थापनपूर्वकम् ॥४६॥
अंकुरारोपणं कुर्याद् यवैर्गोधूमतण्डुलैः ।
पूजनं पठनं मालाजपनं त्वन्वहं चरेत् ॥४७॥
मार्कण्डेयकृतं स्तोत्रं पठेन्नित्यं शुभावहम् ।
रात्रौ तु पूजनं नित्यं कुर्यात्प्रजागरं तथा ॥४८॥
कुमारीपूजनं कुर्यात् प्रशस्तं भोजनादिभिः ।
दुर्गामूर्तिं सहस्राढ्यां कुर्यात् सुधनवान् जनः ॥४९॥
अन्तिमे दिवसे सायं जले तां तु विसर्जयेत् ।
इत्थं कृत्वा व्रतं लक्ष्मि सर्वसिद्ध्यालयो भवेत् ॥५०॥
भुक्तिमुक्तिप्रदा दुर्गा भवत्यस्य न संशयः ।
वित्तशाठ्यं बलशाठ्यं व्रतिना कार्यमेव न ॥५१॥
ऊर्जे सिते प्रतिपदि विष्णुप्रीतिविवर्धनम् ।
अन्नकूटोत्सवाख्यं वै व्रतं कुर्याद् विशेषतः ॥५२॥
एकोत्तरशतान्यत्र मिष्टान्नानि निवेदयेत् ।
सर्वाण्यपि च शाकानि श्राणा भाजाश्च पत्रिकाः ॥५३॥
वटिकाः कन्दमूलानि दौग्धानि शार्कराणि च ।
भक्ष्यभोज्यप्रलेह्यानुचोष्याणि विविधानि वै ॥५४॥
अर्पयेद् ब्रह्मणे गोवर्धनं च पूजयेत्तथा ।
नीराजयेत् ततो भोज्यं प्रसादं प्राप्नुयाद् व्रती ॥५५॥
अन्नकूटोत्सवकर्ता भुक्तिमुक्ती समाप्नुयात् ।
धनधान्यरसवस्त्रभूषायानादिसम्पदः ॥५६॥
अस्मिन्नेव दिने प्रातः पूजयेद् गाश्च वत्सकान् ।
वृषान् वत्सतरीश्चापि हरिद्राकुंकुमादिभिः ॥५७॥
पौष्पैर्हारैः शृंगरंगैर्नूतनैर्यवसादिभिः ।
सम्पूज्य खेलयेत् तांश्च कृष्णमन्दिरचत्वरे ॥५८॥

मार्गे सिते प्रतिपदि श्रेष्ठं धनव्रतं मतम् ।
कुर्याद्वै धनलाभाय नक्तं विष्णोः समर्चनम् ॥५९॥
लक्ष्मीयुक्तस्य सौवर्णी मूर्तिं वै कारयेद् व्रती ।
पूजयित्वा तु तां मूर्तिं सन्निधौ वह्निमण्डले ॥६०॥
अष्टोत्तरशतं होमं लक्ष्मीनाम्ना समाचरेत् ।
रक्तवस्त्रयुगच्छन्नां विष्णुयुक्तां समर्चयेत् ॥६१॥
दद्याच्च गुरवे मूर्तिं दानान्यन्यानि दापयेत् ।
एवं कृत्वा धनैर्धान्यैर्लक्ष्मीपूर्णः प्रजायते ॥६२॥
स्मृद्धो भूत्वा धूतपापो विष्णुलोके महीयते ।
एकभुक्तं च नक्तं वा फलाहारं चरेद् व्रती ॥६३॥
पौषशुक्लप्रतिपदि भानुव्रतमनुत्तमम् ।
भानुं षोडशवस्त्वाद्यैः पूजयेद् भक्तिभावतः ॥६४॥
द्वादशात्माऽभवत्सूर्यो ह्यस्मिन्नेव दिने पुरा ।
द्वादशात्मानमादित्यं सौवर्णं गुरवेऽर्पयेत् ॥६५॥
व्रती सूर्यसमो भूत्वा स्वर्गलोके महीयते ।
सूर्यनेत्रो भवत्यत्र परत्र व्रतकृन्नरः ॥६६॥
माघशुक्लप्रतिपदि वह्निर्जातो महेश्वरात् ।
वह्निमभ्यर्च्य विधितो वह्निलोकमवाप्नुयात् ॥६७॥
वह्निमूर्तेः प्रदानं च होमं तिलादिभिस्तथा ।
पूजनं वन्दनं सर्वं प्रकुर्याद् व्रतवान् जनः ॥६८॥
फाल्गुनशुक्लप्रतिपद् धूलिधूसरकं व्रतम् ।
शंकरेण प्रगे तत्र सतीदेहसमुद्भवम् ॥६९॥
भस्म समन्ततो लिप्तं धूलिधूसरकं व्रतम् ।
अतस्तत्र महादेवं देवदेवं दिगम्बरम् ॥७०॥
धूलिधूसरसर्वांगं जलैः संप्रोक्षितं व्यधात् ।
तेन तुष्टो हरश्चास्मै स्वसायुज्यं प्रयच्छति ॥७१॥
स्वं देहं च तथा कुर्याद् दिगम्बरं सकर्दमम् ।
कर्मणाऽनेन सन्तुष्टो दद्याच्छंभुः सुखालयम् ॥७२॥
फाल्गुने फल्गुनीनक्षत्रयोगे तु नरो हरिः ।
नरनारायणाऽऽख्योऽभून्मूर्त्यां वै धर्मदेवतः ॥७३॥
धर्माश्रमे निबद्धायां दोलायां तौ समर्च्य च ।
देवा आन्दोलयामासुरतः कार्योऽत्र चोत्सवः ॥७४॥
प्रातः पूजां प्रकुर्वीत नरनारायणप्रभोः ।
उपचारैः षोडशभिस्तुलसीवस्त्रचन्दनैः ॥७५॥
नैवेद्ये पायसं दद्याद् बदराणि फलानि च ।
रंगोत्सवं तथा कृत्वा व्रती भुंजीत पारणाम् ॥७६॥
वैशाखशुक्लप्रतिपद् विष्णुजन्मव्रतं परम् ।
तत्र विष्णुं समभ्यर्च्य वैराजस्य सुतं शुभम् ॥७७॥
विप्रान् साधून् भोजयेच्च दद्याद् दानानि भूरिशः ।
एकभुक्तं व्रतं कुर्याद् भुक्तिं मुक्तिमवाप्नुयात् ॥७८॥
शुचौ शुक्लप्रतिपदि ब्रह्मा जज्ञे जगद्गुरुः ।
तस्याऽत्र पूजनं कार्यं देयं दानं सुवर्णवत् ॥७९॥
एकभक्तं व्रतं कार्यं सर्वसिद्धिप्रदं भवेत् ।
सत्यलोकप्रदं त्वन्ते भुक्तिमुक्तिप्रदं भवेत् ॥८०॥
एवं प्रतिपद्दिवसे वार्षिकाणि व्रतानि ते ।
उक्तान्यत्र ब्रह्मचर्यं हविष्यान्नं फलप्रदम् ॥८१॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने
वार्षिकप्रतिपद्व्रतेषु जगत्सर्जनसरस्वतीजन्मकूर्मजन्म-
करवीरागमनलक्ष्मीव्रतमौनव्रताऽशोकव्रतनवरात्राऽन्न-
कूटधनव्रतद्वादशभानुव्रतवह्न्युत्पत्तिसतीभस्मधूली-
व्रतनरनारायणजन्मविष्णुजन्मब्रह्मजन्मव्रतानां
कथननामा षट्षष्ट्यधिकद्विशत-
तमोऽध्यायः ॥२६६॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! द्वितीयाया वार्षिकाणि व्रतानि वै ।
भोगमोक्षोभौ प्राप्नुवन्तीह मानवाः ॥ १ ॥
चैत्रशुक्लद्वितीयायां ब्रह्मा विवाहितोऽभवत् ।
साविव्या सह लग्नस्योत्सवं कुर्याद् व्रतं तथा ॥ २ ॥
महान्तं मण्डपं कृत्वा साविव्यजौ तु कानकौ ।
पूजयित्वा सोत्सवौ च हविष्यान्नं प्रभोजयेत् ॥ ३ ॥
व्रती स्यादेकभुक्तश्च सर्वयज्ञफलं लभेत् ।
कन्यादानं च गोदानं दद्यात् सद्वैभवे सति ॥ ४ ॥
फलं लब्ध्वाऽखिलान्कामानन्ते ब्रह्मपदं व्रजेत् ।
अस्मिन्नेव दिने लक्ष्मि ! चन्द्रो जातस्तु वारिधेः ॥ ५ ॥
चन्द्रव्रतं ह्यतः कार्यं भुक्तिमुक्तिफलप्रदम् ।
समभ्यर्च्य निशारम्भे बालेन्दुमुदितं मुदा ॥ ६ ॥
रूप्यचन्द्रं प्रदद्याद्वै दाने विप्रं च भोजयेत् ।
कुमुदैः पूजनीयश्च विप्रश्चन्द्रप्रतिकृतिः ॥ ७ ॥
अर्घनीयस्तथा चन्द्रो द्वितीया जननीव मे ।
चुल्लिकां भ्राष्ट्रसंयुक्तां वृषभौ द्वौ गवां कुलम् ॥ ८ ॥
धनधान्ययुतं गेहं समारोग्यं जनेषु मे ।
समादिशतु मे नित्यं द्वितीयेश नमोऽस्तु ते ॥ ९ ॥
भवौषध्यन्नदाता मे तेजोवृद्धिं प्रदेहि मे ।
बालपुष्टिकरो मेऽत्र सर्वदा सुखदो भव ॥१०॥

अस्मिन्नेव दिने त्वश्वरूपात्सूर्यात्तु बालकौ ।
संज्ञानाम्न्यां स्वपत्न्यां त्वश्विन्यां दस्रौ बभूवतुः ॥११॥
अश्विनीबालकौ वैद्यौ पूजनीयौ व्रतं हि तत् ।
कर्तव्यं त्वेकभुक्तं च दाने त्वौषधमिष्यते ॥१२॥
सुवर्णरजते नेत्रे प्रदद्याच्च द्विजातये ।
अश्विन्या वाजिनश्चापि दानं देयं तु शक्तितः ॥१३॥
अश्वाऽश्विनीव्रतं कार्यं पुंसा नार्या च भक्तितः ।
अश्वेभ्यश्चणका देया व्रती त्वद्याद् घृतं दधि ॥१४॥
व्रतमेतद् द्वादशाब्दं नेत्राश्वदानपूर्वकम् ।
कृत्वा स्याद् भूपतिश्रेष्ठश्चातिरूपो नृपाग्रणीः ॥१५॥
राधशुक्लद्वितीयायां समारेभे तपो ह्यजः ।
तपोव्रतमिदं कुर्यात् कृत्वा कमलमुत्तमम् ॥१६॥
ब्रह्माणं तापसं तत्र विन्यस्य पूजयेद् व्रती ।
सप्तधान्यान्वितं भद्रं मण्डलं कारयेच्च वा ॥१७॥
तत्र कुंभोपरि विश्वसृजं विन्यस्य पूजयेत् ।
कमण्डलुं तथा धौत्रं वल्कलं चासनं तथा ॥१८॥
फलानि भोजनं दद्यात्पादुके ब्रह्मसूत्रकम् ।
गोदानं त्वन्यदानानि दद्याद् विप्राय साधवे ॥१९॥
विष्णुलोकमवाप्नोति भुक्त्वा भोगान्मनोरमान् ।
ज्येष्ठशुक्लद्वितीयायां भास्करो द्युमणिर्महान् ॥२०॥
समुद्भूतो हरेर्नेत्रात् द्योतयन् भुवनत्रयम् ।
चतुर्वक्त्रस्वरूपं तं गायत्रीसहितं हरिम् ॥२१॥
सरथाश्वाऽरुणं सूर्यं समभ्यर्च्य विधानतः ।
एकभुक्तं व्रतं कृत्वा भोजयित्वाऽर्भकान् सतः ॥२२॥
स्वर्णसूर्यप्रदानं च हिरण्यार्पणमित्यपि ।
कृत्वा व्रती सुसमृद्धं भास्करं लोकमाप्नुयात् ॥२३॥
अषाढशुक्लद्वितीया प्रोक्तं संकर्षणं व्रतम् ।
रामरूपेण जातोऽत्र शेषनारायणः स्वयम् ॥२४॥
भद्रकया समं रामं देवा वै प्रथमे युगे ।
रथं त्वारोहयित्वा च परिक्रम्य पुरादिकम् ॥२५॥
जलाशयान्तिकं गत्वा पुपूजुस्तमनन्तकम् ।
ततो वै मानवैः सर्वैः कारणीयो महोत्सवः ॥२६॥
तदन्ते देवभवने स्थापयित्वा यथाविधि ।
आरार्त्रिकं नमः कुर्याद् ब्राह्मणान् भोजयेद् बहून् ॥२७॥
सतश्च भोजयेत्साध्वीर्बालान् दाने हलादिकम् ।
रथदानं तथा क्षेत्रग्रामदानादिकं चरेत् ॥२८॥
श्रावणशुक्लद्वितीया विश्वकर्मव्रतं शुभम् ।
विश्वकर्मा स्वपित्यत्र ह्यशोकशयनं व्रतम् ॥२९॥
मूर्तिं चतुर्मुखीं पत्नीयुतां शय्यास्थितां शुभाम् ।
कृत्वा विश्वकर्मणश्च प्रपूज्य जगतां पतिम् ॥३०॥
प्रार्थयेद् विश्वकर्माणं भगवन्तं जगत्करम् ।
श्रीवत्सधारिन् श्रीकान्त श्रीवास श्रीपते प्रभो ॥३१॥
गार्हस्थ्यं भवनाद्यं च मा नाशं यातु मे विभो ।
धर्मार्थकाममोक्षाणां वियोगो माऽस्तु मे क्वचित् ॥३२॥
गृहदानं तथा पत्नीदानं चन्द्रार्धदानकम् ।
कन्यादानं सुवर्णादेर्दानं कुर्याद् व्रतेऽत्र वै ॥३३॥
भाद्रशुक्लद्वितीयायामिन्द्रजन्माऽभवद् यतः ।
इन्द्रं हरिं प्रपूज्यैव सर्वक्रतुफलं लभेत् ॥३४॥
तत्पुत्रश्च जयन्त्याख्यः शची विमानमित्यपि ।
सर्वं वै कानकं कृत्वा वज्रं धनुश्च मार्गणम् ॥३५॥
गजं स्वर्णमयं कृत्वा पूजयित्वा विधानतः ।
सर्वं वै गुरवे दद्यादेकभुक्तो व्रती भवेत् ॥३६॥
एवं कृत्वा व्रती स्वर्गं महेन्द्रालयमित्यथ ।
प्राप्नुयाच्चिरकालं च मुक्तिं वैराजलोकगाम् ॥३७॥
आश्विनशुक्लद्वितीयाव्रतं दुर्गाकृतं मतम् ।
दानं प्रदत्तमेतस्यामनन्तफलदं भवेत् ॥३८॥
ऊर्जशुक्लद्वितीयायां यमो यमुनया पुरा ।
भोजितः पूजितो भ्रात्रा स्वगृहे बहुमिष्टकैः ॥३९॥
व्रतं यमद्वितीयायाः कुर्यात् स्वसा गृहे गृहे ।
पुष्टिविवर्धनं चेदं भगिन्यालयभोजनम् ॥४०॥
भुक्त्वा भ्रात्राऽम्बरभूषाः स्वस्रे देया धनादयः ।
तेन स्वयं भवेत्स्वर्णधनधान्यप्रपूरितः ॥४१॥
अस्यां तिथौ यमुनया यमराजः प्रभोजितः ।
तस्यां स्वसुर्हस्ततलात् सौहृदेन भुनक्ति यः ॥४२॥
स भ्राता स्वर्णरत्नादिधनधान्यादिमान् भवेत् ।
दानं स्वस्रे भृशं देयं स्वस्रीयायाऽपि मुद्रिकाः ॥४३॥
मार्गशुक्लद्वितीयायां पितरस्स्वर्यमादयः ।
समुत्पन्ना ब्रह्मदेहात पितृश्राद्धव्रतं हि तत् ॥४४॥
प्रातः प्रपूजनं सूर्यनारायणस्य कारयेत् ।
मध्याह्नोत्तरकाले तु श्राद्धं कुर्याच्च तर्पणम् ॥४५॥
पितॄणां पूजनं चैव कारयेत् पिण्डमर्पयेत् ।
व्रतकर्ता भवेन्नक्तभोजी दाने तु धान्यकम् ॥४६॥
भोजनं भूसुरायापि दद्याद् वस्त्रादिकं तथा ।
गोदानं च यथाशक्ति कर्तव्यं व्रतिना तदा ॥४७॥
वृद्धान्सर्वान्पूर्वजान् संस्मृत्य द्विजाय वै नमः ।
कुर्यादारोग्यमाप्नुयाल्लभते पुत्रपौत्रकान् ॥४८॥

पौषशुक्लद्वितीयायामुत्पन्नाः कामधेनवः ।
कामधेनुव्रतं कार्यं हविष्याशी भवेद् व्रती ॥४९॥
सर्वकामप्रदं कुर्याद् गोश्रृंगोदकमार्जनम् ।
गोश्रृंगोदकमृद्भ्यां च संस्नायात् पूजयेच्च गाम् ॥५०॥
दद्याद्दानं गवादीनां धर्मकामार्थसिद्धये ।
तृणादिकं प्रदद्याच्च गवां ग्रासादिलब्धये ॥५१॥
बालेन्दुदर्शनं सायं प्रकुर्याच्चार्घ्यसर्जनम् ।
भवेदेवं व्रतकर्ता गोधनोऽतिधनोऽपि च ॥५२॥
माघशुक्लद्वितीयायां भास्करो विश्वकर्मणा ।
शाणोपरि समन्यस्तः सुरूपः कृत एव वै ॥५३॥
भानुरूपं हरिं त्वत्र पूजयेद्रक्तपुष्पकैः ।
रक्तैर्गन्धैस्तथा स्वर्णमूर्तिं निर्माय शक्तितः ॥५४॥
ततः पूर्णं ताम्रपात्रं गोधूमैश्चापि तण्डुलैः ।
सूर्याय चार्पयेद् भक्त्या जलेनाऽर्घ्यं समर्पयेत् ॥५५॥
मूर्तिं दद्याद् साधवे च दानं विप्राय शक्तितः ।
एवं कृते व्रते लक्ष्मि ! साक्षात् सूर्य इव व्रती ॥५६॥
दुरासदो दुराधर्षो जायते भुवि भूसुरः ।
यद्वा राजा प्रजायेत चक्रवर्ती महान्नृपः ॥५७॥
इह कामान्वरान् भुक्त्वा यात्यन्ते च रवेः पदम् ।
सर्वदेवस्तुतस्त्वन्ते याति वा ब्रह्मणः पदम् ॥५८॥
अथ फाल्गुनशुक्लायां द्वितीयायां स्वयं हरः ।
तपसे प्रस्थितो हैमे शैले नारायणाश्रमे ॥५९॥
ततो हरस्य सौवर्णी कार्या मूर्तिर्जटान्विता ।
पुष्पैः शिवः समभ्यर्च्यः सुश्वेतैश्च सुगन्धिभिः ॥६०॥
पुष्पैर्वितानकः कार्यः पुष्पालंकरणैः शुभैः ।
नैवेद्यैर्विविधैर्धूपैर्दीपैर्नीराजनादिभिः ॥६१॥
तोषणीयो महादेवो व्रतिना सुखलब्धये ।
एवमभ्यर्च्य देवेशं व्रती व्याधिविवर्जितः ॥६२॥
धनधान्यसमृद्धियुक्तो जीवेद्वर्षशतं ध्रुवम् ।
व्रतेष्वेतेषु होमादि कार्यं यथाधनादिकम् ॥६३॥
वह्निरेव पृथङ्मासु नानारूपो हरेर्वपुः ।
पूजनीयो होमकृता ब्रह्मचर्यादि रक्षता ॥६४॥
यद्विधानं द्वितीयासु शुक्लपक्षगतासु वै ।
प्रोक्तं तदेव कृष्णासु कर्तव्यं विधिकोविदैः ॥६५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने वार्षिकद्वितीयाव्रतेषु ब्रह्मसावित्रीलग्नचन्द्रोत्पत्त्यश्विनीकुमारोत्पत्तिब्रह्मतपःसूर्योत्पत्तिसंकर्षणरामोत्पत्तिविश्वकर्माऽशोकशयनेन्द्रजन्मदुर्गाव्रतयमयमुनाभोजनाऽर्यमपितृत्पत्तिकामधेनूत्पत्तिसूर्यशाणोल्लीढताशंभुतपइतिव्रतानां निरूपणनामा सप्तषष्ट्यधिकद्विशततमोऽध्यायः ॥२६७॥

**श्रीनारायण उवाच —**

श्रूयतां च त्वया लक्ष्मि ! तृतीयाया व्रतानि वै ।
यानि कृत्वा नरो नारी भुक्तिं मुक्तिं समाप्नुयात् ॥ १ ॥
चैत्रशुक्लतृतीयातो गौर्या तपः सुदारुणम् ।
कृतं शंकरप्राप्त्यर्थं गौरीव्रतं हि तन्मतम् ॥ २ ॥
चैत्रशुक्लतृतीयायां गौरीं कृत्वा सशंकराम् ।
सौवर्णीं राजतीं वापि ताम्रीं वा मृण्मयीं च वा ॥ ३ ॥
अभ्यर्च्य गन्धपुष्पाद्यैर्वस्त्रैराभरणैः शुभैः ।
दुर्वाकाण्डैश्च विधिवत्सोपवासा तु कन्यका ॥ ४ ॥
वरार्थिनी सुतापुत्रार्थिनी भर्त्रर्थिनी तथा ।
नीराजयेन्महागौरीं शांकरीं शंकरान्विताम् ॥ ५ ॥
पुनः पुनः प्रणम्यैव प्रार्थयेन्मनसि स्थितम् ।
सप्त नवैकादश चाधिका वा द्विजयोषितः ॥ ६ ॥
भर्तृमतीश्च वा कन्या गौरीरूपा सुलक्षणाः ।
समाहूय बहुमानपूर्वकं तु च तास्ततः ॥ ७ ॥
सिन्दूरांऽजनवस्त्राद्यैर्भूषाभिः प्रीतमानसा ।
व्रतकर्त्री पूकयेत्ता तथा दानैश्च तोषयेत् ॥ ८ ॥
मिष्टान्नानि पिण्डकादीन् फलान्यपि समर्पयेत् ।
एवं सन्तोषयित्वा ताः व्रतिनी फलमाप्नुयात् ॥ ९ ॥
रात्रौ जागरणं कुर्याद् व्रतसम्पूर्तिकाम्यया ।
प्रातस्तां च पुनः संपूज्याऽर्पयेद् गुरवे मुदा ॥१०॥
यद्वा विसर्जयेन्मूर्तिं तीर्थे वार्याशये क्षिपेत् ।
एवं द्वादशवर्षाणि कृत्वा गौरीव्रतं शुभम् ॥११॥
कन्या तु लभते शंभुसदृशं गुणिनं पतिम् ।
धेनूर्द्वादश संकल्प्य दद्याद्व्रतस्य सिद्धये ॥१२॥
किमत्र बहुनोक्तेन गौरी सौभाग्यदायिनी ।
स्त्रीणां यथा तथा नान्या विद्यते भुवनत्रये ॥१३॥

धनं पुत्रान्पतिं पुत्रीं विद्यां सिद्धिं यशः सुखम् ।
ददाति सर्वमेवेष्टं गौरी व्रतेन तोषिता ॥१४॥
पार्वत्या प्रभया लक्ष्म्या माणिक्या रमया कृतम् ।
व्रतं लब्धः पतिरीशः कृष्णो ध्वजधनुःकरः ॥१५॥
मीनत्रिशूलचक्रस्वस्तिकचिह्नकरो हरिः ।
तस्मादिदं व्रतं रूपसौभाग्यभोगमुक्तिदम् ॥१६॥

वैशाखशुक्लतृतीया त्वक्षयतृतीयाव्रतम् ।
तिथिस्त्रेतायुगाद्या सा कृतस्याऽक्षयकारिणी ॥१७॥
अत्र त्रेतायुगं स्वर्णमूर्तिरूपं विधाय च ।
यद्वा लक्ष्मीयुतं कृष्णं नारायणं समर्चयेत् ॥१८॥
पुष्पधूपविलेपाद्यैर्गंगावार्भिस्तथाऽक्षतैः ।
विविधैर्भोजनैश्चैव तोषयेच्छ्रीजगद्गुरुम् ॥१९॥
सक्तून् संभोजयेद् विप्रान् व्रतीत्वेकादनो भवेत् ।
एवं कृतविधेस्तस्य व्रतितोऽनाशनं फलम् ॥२०॥

कार्याऽऽरम्भोपि सफलो निर्विघ्नो याति पूर्णताम् ।
नरो नारी व्रते चास्मिन् कृतकार्यत्वमाप्नुयात् ॥२१॥
वैशाखस्य सिते पक्षे तृतीयायां पुनर्वसौ ।
जमदग्निगृहे प्रादुरासीत्परशुधृक् हरिः ॥२२॥
अस्मिन् रामं सपरशुं सौवर्णं कारयेद् व्रती ।
मध्याह्ने तु महापूजां कृत्वा कुर्वीत भोजनम् ॥२३॥
इत आरभ्य नित्यं च ज्येष्ठपूर्णाऽवधिं प्रभुम् ।
धारयेद् गन्धवासांसि वासांसि च सितान्यपि ॥२४॥
उशीरतालवृन्तैश्च वेजयेत्प्रत्यहं प्रभुम् ।
नैवेद्ये शर्करायुक्तं दद्यादाम्ररसादिकम् ॥२५॥

ज्येष्ठशुक्लतृतीयायां रंभा स्वर्गाद् भुवं गता ।
रंभाफलं व्रते भक्ष्यं रंभा पूज्याऽक्षतैर्जलैः ॥२६॥
गन्धपुष्पांशुकाद्यैश्च सभार्यं पूजयेद् द्विजम् ।
रंभाव्रतं करोत्यत्र नारी सौभाग्यकाम्यया ॥२७॥
वित्तं लभते पुत्राँश्च मतिं लक्ष्मीं धनादिकम् ।
पतिं गां पृथिवीं सौधं तथोपकरणानि च ॥२८॥
लभते कदलीसाम्यं सौकुमार्यं व्रतार्थिनी ।
दाने रंभाफलान्यत्र शर्कराघृतमित्यपि ॥२९॥

अथाऽषाढतृतीयायां समारेभे तपो रमा ।
केशवार्थमतो लक्ष्मीव्रतं कार्यं तु योषिता ॥३०॥
केशवं तु सलक्ष्मीकं सुवर्णप्रतिमात्मकम् ।
षोडशोपसुवस्त्वाद्यैः पूजयेत्तु विधानतः ॥३१॥
भोजनैः सुरभीदानैर्वस्त्रैश्चापि विभूषणैः ।
आरार्त्रिकनमस्कारैर्दक्षिणाभिश्च पूजयेत् ॥३२॥
सस्त्रीकं च द्विजं तत्र पूजयेद् भोजयेत्तथा ।
विप्रवाक्यैर्मानयेच्च तोषयेद्धर्षयेत्तथा ॥३३॥
एवं व्रते प्रसाद्यैनां लक्ष्मीरूपां तु भूसुरीम् ।
विप्रं विष्णुस्वरूपं च विसर्जयेच्च तौ गृहम् ॥३४॥
व्रतकर्त्री गृहयुक्ता नारी सौभाग्यवाञ्छया ।
देवदेवप्रसादेन धनधान्यसमन्विता ॥३५॥

पुत्रपौत्रयुता भूत्वा विष्णुलोकमवाप्नुयात् ।
कन्या विन्देत्सुरूपं सुपतिं स्वेष्टसुभोगदम् ॥३६॥
श्रावणशुक्लतृतीया स्वर्णगौरीव्रतं मतम् ।
काली तपः परं कृत्वा स्वर्णगौर्यभवद् यतः ॥३७॥
उपचारैः षोडशभिर्भवानीं पूजयेत् व्रती ।
प्रार्थयेद्त्पूजनान्ते च रूपं गौरं प्रदेहि मे ॥३८॥
पुत्रान्देहि धनं देहि सौभाग्यं देहि सुव्रते ।
अन्याँश्च विविधान्कामान्पूरयाऽत्र नमोऽस्तु ते ॥३९॥

ततो भवयुतां देवीं वायनं तु ददेच्छुभम् ।
षोडषवर्षपर्यन्तं व्रतमेतत्प्रकीर्तितम् ॥४०॥
तदन्ते सुभगा नारी कुर्यादुद्यापनं महत् ।
कदलीमण्डपे सर्वभद्राख्यमण्डले सतीम् ॥४१॥

मध्ये संस्थापयेत्स्वर्णघटे रत्नादिसंयुते ।
परितः श्रीगणेशादिपंचायतनमर्चयेत् ॥४२॥
कलशोपरि ताम्रस्याऽक्षतयुक्ते सुपात्रके ।
सौवर्णीं प्रतिमां शंभुभवान्याः प्रतिपूजयेत् ॥४३॥
षोडशभिर्वस्तुभिश्च ततो होमं समाचरेत् ।
वेणुपात्रैः षोडशभिः पक्वान्नपरिपूरितैः ॥४४॥
समर्प्य सत्यै नैवेद्यं साधुष्वेतन्निवेदयेत् ।
वायनं च ततो दद्यादुत्तमं बान्धवादिषु ॥४५॥
प्रतिमां गुरवे दद्याद् द्विजेभ्यो दक्षिणां तथा ।
बहुदानानि कुर्वीत व्रतसाफल्यहेतवे ॥४६॥
पूर्णे विन्देत् फलं नारी कन्या वा सधवाऽधवा ।
धनधान्यादिसुस्मृद्धा भूत्वा याति परं पदम् ॥४७॥
भाद्रशुक्लतृतीयायां व्रतं वै हरतालिकम् ।
हरहस्तेन पार्वत्या हस्तस्य मेलनं ह्यभूत् ॥४८॥
तदिदं हरताल्याख्यं व्रतं सौभाग्यवर्धनम् ।
कुर्याद् भक्त्या विधानेन पाद्यार्घ्यार्चनपूर्वकम् ॥४९॥
अत्र वै कांचने पात्रे राजते वाऽथ ताम्रके ।
वैणवे मृन्मये वाऽथ विन्यस्याऽन्नं सदक्षिणम् ॥५०॥
भर्जितं तिलतण्डुलचणकादिकमित्यपि ।
फलं वस्त्रादिकं भूषां विन्यस्यात्रैव पात्रके ॥५१॥

दद्यात्तु गुरवे तद्वै कुर्यात्पश्चात्तु पारणाम् ।
भोजयेद् ब्राह्मणान्साधून्साध्वीः कन्याश्च बालकान् ॥५२॥
सौभाग्यद्रव्यपात्राणि वंशपात्राणि षोडश ।
प्रदद्याच्छ्रद्धया त्वेवं विप्रेभ्यो विधिना तथा ॥५३॥
अन्येभ्यो ब्राह्मणेभ्यश्च भूयसीं दक्षिणां शुभाम् ।
दद्याद् व्रतवती नारी तेन सौभाग्यमाप्नुयात् ॥५४॥
एवं कृतव्रता नारी भुक्त्वा भोगान्मनोरमान् ।
व्रतप्रभावतोऽमुत्र गौरीसहचरी भवेत् ॥५५॥
धनं धान्यं सुतां पुत्रान् लभतेऽत्र परत्र शम् ।
भुक्तिमुक्तिप्रदं देवीप्रसादाप्यं व्रतं मतम् ॥५६॥
यदा तृतीया भाद्रेऽत्र भवेद्धस्तर्क्षसंयुता ।
सामगैस्त्वत्र कर्तव्यं पितृदेवर्षितर्पणम् ॥५७॥
नवं यज्ञोपवीतं च धार्यं शाखोक्तकर्मणा ।
हस्तगौरीव्रतं नाम कर्तव्यं भूतिहेतवे ॥५८॥
विषप्राणिप्रदंशादिनिवारकमिदं भवेत् ।
महिषासुरनाशार्थं कोटिरूपधरा यदा ॥५९॥
बभूव सा तदा दुर्गा कोटीश्वरीति नामतः ।
पिनाकिना स्वयं प्रोक्ता कोटीश्वरीव्रतं तु तत् ॥६०॥
लक्षचण्डीस्वरूपाणि यदा धृतवती हि सा ।
लक्षेश्वरी तदा प्रोक्ता स्वयं पिनाकिना सती ॥६१॥
लक्षेश्वरीव्रतं कार्यं यावद्वर्षचतुष्टयम् ।
सोपवासं प्रकर्तव्यं लक्षेश्वर्याः प्रपूजनम् ॥६२॥
अखण्डानां तण्डुलानां तिलानां वापि पद्मजे ।
लक्षमेकं विशोध्याऽत्र क्षिपेद् दुग्धेऽग्नसंश्रुते ॥६३॥
यावद्वै कठिनो द्रव्यसारो भवेत्सुपिण्डकः ।
तेन पिण्डेन निर्माय देव्या मूर्तिं सुरूपिणीम् ॥६४॥
गन्धपुष्पाक्षतरत्नरोमवस्त्रविभूषिताम् ।
पार्वतीं तत्र चाऽऽवाह्य पूजयेद् भक्तिभावतः ॥६५॥
गन्धैः पुष्पैर्जलैर्धूपैर्दीपैर्नैवेद्यप्रार्थनैः ।
विविधैः सत्फलैः श्रेष्ठदक्षिणाभिश्च वन्दनैः ॥६६॥
आरार्त्रिकैर्दण्डवद्भिर्वर्धयेच्च क्षमापयेत् ।
अर्थयेद्धनधान्यादिसुतापुत्रगृहादिकम् ॥६७॥
ततो विसर्जयेद् दुर्गां जलमध्येऽथ दक्षिणाम् ।
दत्त्वा श्रीगुरवे पश्चाद् रात्रौ जागरणं चरेत् ॥६८॥
दत्त्वा दानानि विप्रेभ्यो भुञ्जीतायं परे दिने ।
इति ते कथितं लक्ष्मि ! कोटिलक्षेश्वरीव्रतम् ॥६९॥
व्रतकर्त्र्या गृहे लक्ष्मीर्धनधान्यमयी सदा ।
सजते वर्धते नित्यं व्रतस्याऽस्य प्रभावतः ॥७०॥

गौरीलोकं प्रयात्यन्ते भोगमोक्षौ हि विन्दति ।
इषशुक्लतृतीयायां बृहद्गौरीव्रतं मतम् ॥७१॥
पञ्चवर्षं प्रकर्तव्यं कोटिकुन्दनमाप्नुयात् ।
दुर्गां तु पूजयेत्प्रातः षोडशभिः सुवस्तुभिः ॥७२॥
सुवासिन्यः पंच पूज्या वस्त्रालंकारचन्दनैः ।
शाटीकंचुकताटंककण्ठसूत्रविभूषणैः ॥७३॥
धातुपात्राणि पंचैव वाटिकास्थालिकास्तथा ।
सिन्दूरं जीरकं मिष्टं सौभाग्यद्रव्यमंजनम् ॥७४॥
गोधूमपिष्टजातं च नवाऽपूपं फलादिकम् ।
वस्त्राणि विविधान्येव वायनानि च पञ्च वै ॥७५॥
ताभ्यो दद्याद् भोजयेच्च पश्चाद् भुञ्जीत वाग्यता ।
रात्रौ जागरणं कुर्यात् कृष्णकीर्तनमिश्रितम् ॥७६॥
फलं तु धारयेत्कण्ठे पूगीं वान्यद् यदर्पितम् ।
रात्रौ कण्ठगतं सर्वकामस्मृद्धिप्रदं फलम् ॥७७॥
ततः प्रातः समुत्साहा सालंकारा सखीजनैः ।
गीतवाद्ययुता गच्छेत् सरितं स्नानमाचरेत् ॥७८॥
गौरीं सम्बोधयेत्तत्र प्रार्थनां संवदेदिमाम् ।
आहूताऽसि मया भद्रे पूजिता च यथाविधि ॥७९॥
मम सौभाग्यदे देवि सर्वं रक्षय नित्यदा ।
न्यूनं च क्षम्यतां देवि यथेष्टं गम्यतां त्वया ॥८०॥
इत्यभ्यर्थ्य नमस्कृत्य जयशब्दैश्च वादनैः ।
सोत्साहपूर्वकं दृष्ट्वा जले गौरीं विसर्जयेत् ॥८१॥
एवं कृत्वा व्रतं भक्त्या व्रती देवीप्रसादतः ।
भुक्त्वा भोगाँस्तु देहान्ते गौरीलोकमवाप्नुयात् ॥८२॥
ऊर्जशुक्लतृतीयायां विष्णुगौरीव्रतं मतम् ।
गौर्या प्रपूजितो विष्णुस्तपसः फलसिद्धये ॥८३॥
तस्माद् व्रतमिदं प्रोक्तं विष्णुगौर्यभिधं शुभम् ।
तत्र वै पूजनीयाऽसौ गौरी विष्णुयुता मुदा ॥८४॥
षोडशभिस्तूपचारैर्भोजनैश्च पृथग्विधैः ।
सुवासिनीरूपां गौरीं लक्ष्मीनाम्ना प्रभोजयेत् ॥८५॥
पूजयेन्मंगलद्रव्यैर्विष्णुगौरीप्रतुष्टये ।
विसर्जयेत्प्रणम्यैनां दद्याद् दानानि भावतः ॥८६॥
पुत्रं वै लभते नारी व्रतकर्त्री न संशयः ।
मार्गशुक्लतृतीयायां हरगौरीव्रतं मतम् ॥८७॥
हरशय्यागता गौरी हरयोगमुपागता ।
हरयोगेन सा तृप्ताऽभवत् स्वामिसुखान्विता ॥८८॥
हरं गौरीं व्रते त्वत्र चैकशय्यां प्रकल्प्य च ।
स्वापयेत्पूजयेद् भक्त्या सेवयेद् दिव्यभावतः ॥८९॥

एतद्व्रतप्रभावेण भुक्त्वा भोगान्मनोरमान् ।
गौरीलोकं समासाद्य हरेण सह मोदते ॥९०॥
पौषशुक्लतृतीयायां ब्रह्मगौरीव्रतं मतम् ।
ब्रह्मणा तु समागत्याऽऽशीर्वादाः शंकराप्तये ॥९१॥
प्रदत्ता तद् व्रतं प्रोक्तं कर्तव्यं सुविधानतः ।
गौरीं च वेधसं कृत्वा सुवर्णस्य प्रपूजयेत् ॥९२॥
षोडशभिश्चोपचारैरेकभुक्तं समाचरेत् ।
दानं दद्याद् यथेष्टं तु गुरवे भोजयेद् द्विजान् ॥९३॥
ब्रह्मगौरीप्रसादेन मोदते तत्र संगता ।
माघशुक्लतृतीयायां लक्ष्मीः सौभाग्यसुन्दरी ॥९४॥
विष्णौ वरमालिकाया अर्पणात् समभूत् प्रिया ।
तस्मात् सौभाग्यसुन्दर्यात्मकं कार्यं व्रतं मुदा ॥९५॥
लक्ष्मीस्तत्र पूजनीया नालिकेरार्घ्यदानतः ।
उपचारैः षोडशभिर्मिष्टान्नैर्भूषणादिभिः ॥९६॥
सौभाग्यदा प्रसन्ना स्यात् स्वीयं धाम नयत्यपि ।
दानं श्रांगारिकं सर्वं देयं वस्तु तु योषिते ॥९७॥
एकभुक्तं व्रतं कार्यं हारश्चार्प्यस्तु विष्णवे ।
प्रसादमाला सा चाऽर्प्या पतिकण्ठे तु पुत्रदा ॥९८॥
फाल्गुनस्य सिते पक्षे तृतीयायां निशोत्तरे ।
हरयोगात्सती लब्धवती पुत्राँस्तु रुद्रकान् ॥९९॥
तस्मात्सोक्ता तृतीया तु कुलसौख्यव्रतात्मिका ।
पूजिता गन्धपुष्पाद्यैर्गौरी कुलकरी भवेत् ॥१००॥
एवं सर्वव्रतेष्वत्र दानं होमो विसर्जनम् ।
देवदेवीप्रपूजा च विप्रगुरुप्रपूजनम् ॥१०१॥
एकभुक्तादिकं सर्वसामान्यं प्रसमाचरेत् ।
भक्त्या कृतानि सर्वान्वै कामान् दद्युर्मनोगतान् ॥१०२॥
सर्वदेवेषु तत्सर्वान्तरात्मा श्रीहरिः स्वयम् ।
वर्तते पूजनीयोऽसौ सर्वकर्मफलप्रदः ॥१०३॥
यद्यद् व्रत्यर्थयेद् वस्तु नरो नारी तथाऽन्यकः ।
समाप्नोति च तत्सर्वं श्रीहरेः समनुग्रहात् ॥१०४॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने वार्षिकतृतीयाव्रतेषु गौरीतपोव्रताऽक्षयतृतीयात्रेताद्यतिथिपर्शुरामजयन्तीकदलीव्रतलक्ष्मीतपोव्रतकालीगौरीव्रतहरगौरीलग्नव्रतसामगश्रावणीकोटीश्वरीमाहिषघ्नलक्षेश्वरीबृहद्गौरीविष्णुगौरीहरगौरीयोगब्रह्माशीर्गौरीविष्णुवरमालाकुलवृद्धिव्रतादिनिरूपणनामाऽष्टषष्ट्यधिकद्विशततमोऽध्यायः ॥२६८॥

श्रीनारायण उवाच—

लक्ष्मि ! शृणु कथयामि चतुर्थीनां व्रतानि ते ।
यानि कृत्वा नरो नारी भुक्तिं मुक्तिं व्रजेत् पराम् ॥ १ ॥
गोलोकाधिपतिः कृष्णः पार्वत्याः शंकरगृहे ।
शरीराक्तधातुयोगादुत्पन्नो यस्त्वभूत् प्रभुः ॥ २ ॥
स वै कृष्णश्चतुर्धाऽस्ति वासुदेवस्वरूपकः ।
संकर्षणस्वरूपश्च प्रद्युम्नरूपकस्तथा ॥ ३ ॥
अनिरुद्धस्वरूपश्च तस्मात् स गणनायकः ।
चतुर्मूर्तिस्वरूपोऽस्ति व्रतान्यपि तथा तथा ॥ ४ ॥
चैत्रमासचतुर्थ्यां तु वासुदेवस्वरूपिणम् ।
गणेशं सम्यगभ्यर्च्य दत्वा सुवर्णदक्षिणाम् ॥ ५ ॥
आवाहनादि चारभ्य विसर्जनान्तमेव यत् ।
कृत्वा विधानतः सर्वं विष्णुलोकमवाप्नुयात् ॥ ६ ॥
एकभुक्तं व्रतं कार्यं भोज्ये देयास्तु लड्डुकाः ।
दूर्वासिन्दूरकौ देयौ पूजने व्रतिना तथा ॥ ७ ॥
अन्यान्यपि च दानानि देयानि कृष्णतुष्टये ।
स्वयं तु पारणां लड्डुकानां कुर्याद् व्रती शुभाम् ॥ ८ ॥
एवं कृत्वा व्रतं लोके भुक्तिं मुक्तिं समाप्नुयात् ।
प्रसाद्य विष्णुं वैकुण्ठं गच्छेद् देवाभिवन्दितः ॥ ९ ॥
वैशाखस्य चतुर्थ्यां तु पूज्यः संकर्षणाभिधः ।
आवाहनाद्विसर्जनपर्यन्तं विविधं विधिम् ॥१०॥
कृत्वा संपूजयेद् देवं गणेशं भोजयेद् बहु ।
शंखदानं तथा चान्यद्दानं कुर्याद् यथाबलम् ॥११॥
तेन पुण्येन व्रतकृद् भूत्वा दिव्यवपुर्धरः ।
प्राप्य संकर्षणं लोकं मोदते बहुकल्पकम् ॥१२॥
ज्येष्ठशुक्लचतुर्थ्यां तु पूज्यः प्रद्युम्न ईश्वरः ।
षोडशभिरुपचारैः पूजयित्वा गणाधिपम् ॥१३॥
फलं मूलं जलं दूर्वां दत्वा वै भावतो व्रती ।
तेन पुण्येन संयाति प्राद्युम्नं स्वर्गमेव वै ॥१४॥
आषाढस्य चतुर्थ्यां तु पूजनीयोऽनिरुद्धकः ।
आवाहनात्समारभ्य विसर्जनान्तमर्चनम् ॥१५॥
कुर्याद् विविधपुष्पाद्यैः फलैर्भोज्यादिभिस्तथा ।
दद्याद् दानानि बहूनि कुर्यान्नीराजनादिकम् ॥१६॥
क्षमां च प्रार्थयेद् दानेऽलाबुपात्राणि तुम्बिकाः ।
काष्ठपात्राण्यपि दद्यात् साधवे न्यासिने व्रती ॥१७॥
एवं कृत्वा व्रती यायादनिरुद्धालयं परम् ।
चतुर्मूर्तिव्रतान्येवं कृत्वा द्वादश वत्सरान् ॥१८॥

महद्युद्यापनं कुर्यान्मण्डपे मण्डले शुभे ।
सुवर्णस्य घटं न्यस्य पंचरत्नादिसंयुतम् ॥१९॥
पञ्चायतनं गाणेशं विन्यस्य विधिना ततः ।
पूजनं षोडशवस्तूत्तमैः कुर्याद् व्रती जनः ॥२०॥
गीतवादित्रनिर्घोषैर्वेदमन्त्रैः स्तवैस्तथा ।
होमैर्जपैस्तथा भोज्यैर्वस्तुदानादिभिस्तथा ॥२१॥
महोत्सवं शुभं कुर्याद्गणेशकृष्णतुष्टये ।
एवं वोद्यापने जाते पूर्णं व्रतफलं भवेत् ॥२२॥
भुक्तिं मुक्तिं स्वयं कृष्णो ददात्यत्र परत्र च ।
यद्यदिच्छति व्रतकृत् स्वर्गं सर्वमवाप्नुयात् ॥२३॥
अन्यज्ज्येष्ठचतुर्थ्यां तु सतीव्रतमुदाहृतम् ।
ब्राह्मदक्षादसिकन्यां वै सती जाता पुरा यतः ॥२४॥
सतीजन्मोत्सवं कुर्याद् व्रती त्वेकान्नमित्यपि ।
फलं वो चोपवासं वा महत् कुर्याच्च पूजनम् ॥२५॥
एवं सतीव्रतं कृत्वा दत्वा दानानि विष्णवे ।
व्रती गणपतेर्मातुर्लोके मोदेत तत्समम् ॥२६॥
तथाऽऽषाढचतुर्थ्यां तु व्रतं चान्यद् भवेच्छुभम् ।
रथन्तराऽऽह्वकल्पस्याऽऽद्यभूतं वै दिनं यतः ॥२७॥
श्रद्धापूतेन मनसा कल्पं रथन्तराह्वयम् ।
कालरूपं कृष्णरूपं गणेशं वा प्रपूजयेत् ॥२८॥
एकभुक्तं व्रतं कुर्यात् फलं स्वर्गं लभेद् व्रती ।
श्रावणस्य चतुर्थ्यां तु प्रगे मध्ये निशामुखे ॥२९॥
श्रीगणेशं पूजयेद्वै सर्वविधिप्रपूर्वकम् ।
चन्द्रोदये तथा जाते पुनस्तं पूजयेद् व्रती ॥३०॥
अर्घ्यं दद्याद् भोजनादि सिन्दूरादि समर्पयेत् ।
लम्बोदरं चतुर्बाहुं त्रिनेत्रं रक्तपाण्डुरम् ॥३१॥
नैकरत्नविभूषाढ्यं प्रसन्नास्यं विचिन्तयेत् ।
आवाहनादिभिः सर्वैरुपचारैः समर्चयेत् ॥३२॥
नैवेद्ये मोदकान् दद्याद् गणेशतुष्टिदान् व्रती ।
एवं व्रतं विधायैव भुक्त्वा प्रसादमोदकान् ॥३३॥
रात्रौ भूशयनं कुर्यात्प्रातः समर्चयेत्पुनः ।
दानानि दद्याद् बहूनि गणेशकृष्णतुष्टये ॥३४॥
व्रतस्याऽस्य प्रतापेन कामान् लब्ध्वा मनोगतान् ।
परे लोके परं स्थानं गणेशपदमाप्नुयात् ॥३५॥
तस्मात्कार्यं प्रयत्नेन कामान्सर्वानभीप्सता ।
नानेन सदृशं त्वन्यत् विद्यते व्रतमुत्तमम् ॥३६॥
अस्मिन्नेव दिने लक्ष्मि ! दूर्वागणेशपूजनम् ।
कर्तव्यं तद्विधानं ते वदामि पूर्णपुण्यकृत् ॥३७॥
सुवर्णस्य गणाध्यक्षं विधाय ताम्रपात्रके ।
स्थापयित्वा च तत्पात्रं सर्वतोभद्रमण्डले ॥३८॥
न्यस्येत् तद्वेष्टितं कुर्याद् रक्ताम्बरेण वै ततः ।
पूजयेद्रक्तकुसुमैः पत्रैः पञ्चभिरेव च ॥३९॥
बिल्वपत्रमपामार्गः शमी दूर्वा हरिप्रिया ।
एतत्पत्रैश्च कुसुमैः पूजयेत् सत्फलादिभिः ॥४०॥
भोजयेन्मोदकादीनि शुभां दद्यात्तु दक्षिणाम् ।
अर्घ्यं दद्यादुपहारं शय्यां सोपस्करां तथा ॥४१॥
विघ्नेशात्मकगुरवे सत्कृत्य विनिवेदयेत् ।
कृत्वैवं पञ्चवर्षाणि व्रतं गणपतेः शुभम् ॥४२॥
भुक्त्वेह भोगानखिलान् लोकं गणपतेर्व्रजेत् ।
इह लोके भवेत्समृद्धः परे लोके महासुखः ॥४३॥
श्रावणे शुक्लपक्षे तु चतुर्थ्यां भौमवासरे ।
मध्याह्ने ब्रह्मणो नस्तो वराहो जज्ञ ईश्वरः ॥४४॥
वराहरूपं सौवर्णं कृत्वा तं पूजयेद् व्रती ।
धारयेत् तत्र वासांसि कौसुंभानि रमापतिम् ॥४५॥
नैवेद्ये पायसं दद्याद्वटकांश्च विशेषतः ।
वराहजन्मपद्यानि गापयेत्पूजयेत्तथा ॥४६॥
षोडशाऽभिसूपचारैस्ततः कुर्यात्तु भोजनम् ।
नरांगं सूकरास्यं च चतुर्बाहुं च सायुधम् ॥४७॥
धरां गृहीत्वा दन्ताग्रे शोभन्तं दानमाचरेत् ।
एवं कृत्वा व्रतं विष्णोर्वैकुण्ठं प्राप्नुयाद् व्रती ॥४८॥
अथभाद्रचतुर्थ्यां तु बहुलाधेनुसद्व्रतम् ।
गणेशोऽपि समुत्पन्नः पार्वतीशयने सुतः ॥४९॥
गणेशस्य व्रतं चापि प्रकृष्टोत्सवपूर्वकम् ।
कर्तव्यं विधिना लक्ष्मि ! दिनचतुष्टयात्मकम् ॥५०॥
हरितवल्लिकावृक्षशाखाकदलीतोरणैः ।
मण्डपः शोभनः कार्यः सर्वतोभद्रमण्डलम् ॥५१॥
कर्तव्यं च गणेशोऽपि मृदा वा धातुनापि वा ।
सुवर्णेन च रौप्येण ताम्रेण मणिनाऽपि वा ॥५२॥
कर्तव्यश्चापि सिन्दूरकुंकुमादिभिरित्यम् ।
शोभनीयस्तथा पूजनीयः षोडशवस्तुभिः ॥५३॥
नित्यं रात्रौ पूजनीयो व्रतिना लड्डुकादिभिः ।
तोषणीयश्च नित्यं सः प्रार्थनीयः सुखाप्तये ॥५४॥
दानं देयं च विविधं नक्तभोजी व्रती भवेत् ।
अन्ते विसर्जनं वार्षु कार्यं गणपतेर्मुदा ॥५५॥
एवं कृत्वा व्रतं भुक्तिं मुक्तिं वै प्राप्नुयाद् व्रती ।
पूर्णे वर्षे गते मातुराज्ञया श्रद्धया तथा ॥५६॥

गणेशेन कृता प्रदक्षिणा गोरत्र वै दिने ।
तस्माद्व्रतमिदं प्रोक्तं बहुलाधेनुसंज्ञकम् ॥५७॥
पूजनीयाऽत्र यत्नेन स्रगन्धयवसादिभिः ।
ततः प्रदक्षिणां कुर्याच्छक्तश्चेद्दानमाचरेत् ॥५८॥
अशक्तः पुनरेतां तु नमस्कृत्य विसर्जयेत् ।
पंचाब्दं वा दशाब्दं वा षोडशाब्दमथापि वा ॥५९॥
व्रतं कृत्वोद्यापनं च धेनुं दत्वा पयस्विनीम् ।
व्रतं समापयेत्पत्नी पद्मिनीमाप्नुयात्फलम् ॥६०॥
अत्र भोगान्परान् भुक्त्वा सत्कृतो देवतागणैः ।
पत्न्या पुत्रादिना साकं गोलोकं समवाप्नुयात् ॥६१॥
अत्र शुक्लचतुर्थ्यां वै सिद्धिवैनायकव्रतम् ।
कर्तव्यं श्रीगणेशस्य पूजनं व्रतिनाऽऽदरात् ॥६२॥
आवाहनादिभिः सर्वैरुपचारैश्च मोदकैः ।
एकाग्रमनसा ध्यायेद् गणेशं सिद्धिनायकम् ॥६३॥
विश्वकर्मसुतायाश्च ऋद्धेः सिद्धेश्च नायकः ।
विवाहेनाऽद्य संजातो गणेशः सिद्धिनायकः ॥६४॥
तस्मात्तं पूजयेदेकदन्तं सुवर्णसन्निभम् ।
पाशांकुशधरं देवं गजवक्त्रं चतुर्भुजम् ॥६५॥
शूर्पकर्णं सिन्दूरादिचर्चितं तुन्दिलं शुभम् ।
ध्यात्वा चार्घ्यं समर्प्यैव पुनश्च पूजयेद् व्रती ॥६६॥
एकविंशतिपत्राणि त्वेकविंशतिनामभिः ।
समर्पयेद् व्रती तानि नामानि च यथा शृणु ॥६७॥
सुमुखाय शमीपत्रं गणाधीशाय भृंगजम् ।
उमापुत्राय बैल्वं तु दूर्वां गजमुखाय च ॥६८॥
लम्बोदराय बदरीं धत्तूरं हरसूनवे ।
शूर्पकर्णाय तुलसीं वक्रतुण्डाय शिंबिजम् ॥६९॥
अपामार्गं गुहभ्रात्रे बार्हतं त्वेकदन्तिने ।
हेरम्बाय तु सिन्दूरं चतुर्होत्रे तु पत्रजम् ॥७०॥
सर्वेश्वराय शान्तायाऽगस्त्यपत्रं प्रदापयेत् ।
गन्धपुष्पाक्षतदूर्वापत्रयुग्मं समर्पयेत् ॥७१॥
मोदकपञ्चकं दद्याज्जलं मिष्टं समर्पयेत् ।
दत्वा ताम्बूलकं नत्वा सम्प्रार्थ्य च विसर्जयेत् ॥७२॥
मूर्तिं सोपस्करां हैमीं गुरवे ब्राह्मणाय वा ।
अर्पयेद् दक्षिणां दद्यान्मोदकादीनि भोजयेत् ॥७३॥
एवं कृत्वा व्रतं पञ्चवर्षाणि मानवो भुवि ।
उपास्य लभते कामानैहिकान्पारलौकिकान् ॥७४॥
अस्यां चतुर्थ्यां चन्द्रं तु न पश्येद्वै कथंचन ।
पश्यन् मिथ्याभिशापं तु प्राप्नुयान्नात्र संशयः ॥७५॥
अतस्तद्दोषनाशाय मन्त्रं तु शाश्वतं पठेत् ।
'हतो हिरण्यकशिपुर्नृसिंहेन निशामुखे ॥७६॥
शरभेण हतः सिंहः शरभः शंकरोऽभवत् ।
शंकरेण धृतश्चन्द्रो मिथ्याशापं हरो हरेत्' ॥७७॥
इत्युच्चार्य न वै मिथ्याकलंको जायते जने ।
नमस्कुर्याच्छिवं चन्द्रशेखरं भावसंयुतः ॥७८॥
इषशुक्लचतुर्थ्यां तु कपर्दीशं विनायकम् ।
पौरुषेण तु सूक्तेन पूजयेदुपचारकैः ॥७९॥
ताण्डुलान् बटवे दद्याद् गन्धपुष्पार्चिताय च ।
कपर्दिगणनाथोऽसौ प्रीयतां तण्डुलार्पणैः ॥८०॥
भुक्तिमुक्तिप्रदो मेऽस्तु गणेशः कृष्णरूपधृक् ।
एवं कृत्वा व्रतं देही ध्रुवं गोलोकमाप्नुयात् ॥८१॥
चतुर्थ्यां कार्तिके शुक्ले नागव्रतमुदाहृतम् ।
सर्पदंशादिनाशार्थं कर्तव्यं सर्वथा जनैः ॥८२॥
प्रातर्व्रतं तु संकल्प्य धेनुशृङ्गजलं शुचि ।
पीत्वा स्नात्वाऽथ मध्याह्ने शंखपालादिपन्नगान् ॥८३॥
शेष त्वाह्वानपूर्वैश्च पूजयेदुपचारकैः ।
दुग्धेनाऽऽप्यायनं कुर्याद् दुग्धं दद्याच्च भोगिने ॥८४॥
कृते नागव्रते त्वेवं न वै दशन्ति पन्नगाः ।
नोपद्रवन्ति विषाणि ब्रह्मणो वरदानतः ॥८५॥
सर्पान्प्राह पुरा ब्रह्मा 'कार्तिके वः प्रपूजकान् ।
मा दशन्तु' इति तेऽपि नैव दशन्ति पूजकान् ॥८६॥
कार्तिककृष्णचतुर्थ्यां करकाख्यं व्रतं स्मृतम् ।
स्त्रीणामेवाऽधिकारोऽत्र कर्तव्यं ताभिरेव तत् ॥८७॥
स्नात्वा देहमलंकृत्य पूजयेद् गणनायकम् ।
आवाहनात्समारभ्य सर्वं वै विधिना चरेत् ॥८८॥
तदग्रे पूर्णपक्वान्नं विन्यस्येत् करकान् दश ।
कलशान् वा जलपूर्णान् न्यस्येद् दश तदग्रतः ॥८९॥
देवो मे प्रीयतामेवमुच्चार्यैव समर्पयेत् ।
सुवासिनीभ्यः कलशान् दद्याच्च दशशंख्यकान् ॥९०॥
मिष्टान्नानि प्रदद्याच्च ततश्चन्द्रोदये सति ।
दत्वाऽर्घ्यं विधिना नारी भुञ्जीत मिष्टमेव ह ॥९१॥
दुग्धपूर्णं जलपूर्णं घटं दद्याद् द्विजातये ।
सपूगाऽक्षतरत्नाढ्यं व्रतस्य परिपूर्तये ॥९२॥
एवं कृत्वा व्रतं नारी षोडशद्वादशाब्दकम् ।
उद्यापनं विधायाऽथ व्रतं समापयेत्ततः ॥९३॥
यावज्जीवं तु वा नार्या कार्यं सौभाग्यवाञ्छया ।
व्रतेनाऽनेन सदृशं स्त्रीणां सौभाग्यदायकम् ॥९४॥

नान्यद्वै विद्यते लोके कर्तव्यं तत्प्रयत्नतः ।
मंगलो ग्रहवर्यश्च पृथिव्याः सुत एव यः ॥९५॥
अस्यां तिथौ शंकरस्य बिन्दोरुत्पन्न एव सः ।
अंगारकं व्रतं तस्मात्कर्तव्यं श्रेय इच्छता ॥९६॥
मंगलः सर्वदा तस्य भद्रं भद्रं ददाति वै ।
एकभुक्तं च वा नक्तं व्रतं कर्तव्यमादरात् ॥९७॥
मंगलस्य तथा पूजा जपः कर्तव्य इष्टदः ।
रक्तरत्नप्रदानं च रक्तवस्त्रादिदानकम् ॥९८॥
रक्तगोधूमदानं च कर्तव्यं व्रतिना तदा ।
रक्ततिलप्रदानं च सर्वसमृद्धिकरं भवेत् ॥९९॥
मार्गशुक्लचतुर्थ्यास्तु वर्षं यावद् व्रती जनः ।
क्षपयेदेकभक्तेन नक्तेन वत्सरान्तरम् ॥१००॥
अयाचितेन तृतीयमुपवासैश्चतुर्थकम् ।
एवं चत्वारि वर्षाणि व्रतं कुर्यादतन्द्रितः ॥१०१॥
विनायकव्रतं त्वेतत्काश्यां विनायकोद्भवान् ।
षोडशवस्तुसंपूज्यः सर्वासु च चतुर्थीषु ॥१०२॥
दद्याद् दानानि सर्वाणि यथाशक्ति यथाधनम् ।
वत्सरान्ते व्रतान्ते वा महदुद्यापनं चरेत् ॥१०३॥
कारयेच्छ्रीगणपतिं मूषकं कानकं रथम् ।
यद्वा तु ताम्रजं सर्वं काष्ठजं मृत्तिकाकृतम् ॥१०४॥
यथायोग्यं कारयित्वा यद्वा पद्मं सुपत्रकम् ।
यद्वा तु सर्वतोभद्रमण्डलं धान्यनिर्मितम् ॥१०५॥
मध्ये योग्यं घटं न्यस्य ताम्रस्थाल्यन्वितं शुभम् ।
पूरयेत्तण्डुलैस्तत्र स्थापयेच्च विनायकम् ॥१०६॥
आवाहनादिभिः स्नानैः सिन्दूरचन्दनादिभिः ।
दूर्वापुष्पाम्बरभूषाधूपदीपसुगन्धकैः ॥१०७॥
मोदकात्मकनैवेद्यैः फलैस्ताम्बूलचर्वणैः ।
दक्षिणास्तुतिकुसुमांजलिभिर्जागरैस्तथा ॥१०८॥
पूजयेत्तोषयेद् देवं गीतवाद्यकथानकैः ।
प्रभाते शर्कराव्रीहियवघृततिलादिभिः ॥१०९॥
श्रीफलैः सर्षपैः श्वेतैर्होमं कुर्याद् विधानतः ।
गणो गणाधिपश्चैव कूष्माण्डस्त्रिपुरान्तकः ॥११०॥
लम्बोदरैकदन्तौ च रुक्मदंष्ट्रश्च विघ्नपः ।
ब्रह्मा यमोऽथ वरुणः सोमः सूर्यो हुताशनः ॥१११॥
गन्धमादी परमेष्ठीत्येवं षोडशनामभिः ।
तथा वक्रसुतुण्डेऽति नामतोऽष्टोत्तरं शतम् ॥११२॥
हूयाद्वै दहने भक्त्या हुत्वा पूर्णाहुतिं चरेत् ।
दिक्पालान् पूजयित्वाऽथ चतुर्विंशतिभूसुरान् ॥११३॥

मोदकैः पायसैः शाकैः पूरिकाभिश्च तर्पयेत् ।
आचार्याय ततो दद्याद् दोग्ध्रीं गां वत्सिकायुताम् ॥११४॥
दक्षिणां च यथाशक्ति भूयसीं प्रार्पयेत्तथा ।
अन्येभ्यश्चापि दानानि दद्यात् प्रणम्य भूसुरान् ॥११५॥
विसृज्य बन्धुभिः सार्धं भुञ्जीत प्रीतमानसः ।
एवं व्रतमिदं कृत्वा भुक्त्वा भोगानिहोत्तमान् ॥११६॥
सायुज्यं प्राप्नुयाद् विष्णोर्विनायकप्रसादतः ।
एतद् वरव्रतं प्रोक्तं भुक्तिमुक्तिफलप्रदम् ॥११७॥
पोषमासचतुर्थ्यां तु प्रपूज्य तु विनायकम् ।
विप्रैकं भोजयेच्चैव मोदकैर्दक्षिणां दिशेत् ॥११८॥
एवंकृते व्रती स्याद्वै सर्वसम्पत्तिभाजनम् ।
माघशुक्लचतुर्थ्यां तु गौरीव्रतमनुमत्तमम् ॥११९॥
गौरीपूज्या योगिनीनां गणैः साकं तु भावतः ।
नरैः स्त्रीभिः कुन्दपुष्पैः रक्तपुष्पादिभिस्तथा ॥१२०॥
रक्तसूत्रैरलक्तकैर्धूपैर्दीपैः सुभोजनैः ।
सगूडलड्डुकैश्चापि क्षीरेण पायसेन च ॥१२१॥
पूज्याः सौभाग्यवत्यश्च नार्यो विप्राश्च साधवः ।
सौभाग्यवृद्धये तेभ्यो दातव्यानि विशेषतः ॥१२२॥
दानानि भोजनान्येवाम्बराणिसत्फलानि च ।
इदं गौरीव्रतं लक्ष्मि ! सौभाग्यारोग्यवर्धनम् ॥१२३॥
प्रतिवर्षं प्रकर्तव्यं गौर्याः कृतं पुनः पुनः ।
ढुण्ढिव्रतमिदं बोध्यं गणेशस्तत्र पूज्यते ॥१२४॥
काश्यां सः शांभवानां ढुण्ढनार्थं त्वागतः स्थितः ।
तन्निमित्तं व्रतं त्वेतत् कर्तव्यं श्रेय इच्छता ॥१२५॥
कुण्डव्रतं शान्तिव्रतललिताव्रतमित्यपि ।
तिलव्रतं त्वेतदेव कुन्दव्रतं च कीर्तितम् ॥१२६॥
स्नानं दानं जपो होमस्तर्पणं यत्कृतं भवेत् ।
सहस्रगुणितं तत्स्याद् गौरीगणेशतोषणात् ॥१२७॥
माघकृष्णचतुर्थ्यां तु संकष्टहारकं व्रतम् ।
उपवासं प्रकुर्वीत वीक्ष्य चन्द्रोदयं ततः ॥१२८॥
मृदा कृत्वा गणेशं सायुधं सवाहनं शुभम् ।
पीठे न्यस्य च तं षोडशोपचारैः प्रपूजयेत् ॥१२९॥
मोदकाँस्तिलचूर्णं च सशर्करं निवेदयेत् ।
अर्घ्यं दद्यात्ताम्रपात्रे रक्तचन्दनमिश्रितम् ॥१३०॥
कुशान् दूर्वाः कुसुमान्यक्षतान् शमीदलान् दधि ।
दद्यादर्घ्यं ततो विसर्जनं कुर्यादथ व्रती ॥१३१॥
भोजयेद् भूसुरान् साधून् साध्वीश्च बालबालिकाः ।
व्रती च पारणां कुर्याद् दद्याद्दानानि भावतः ॥१३२॥

एवं कृत्वा व्रतं स्मृद्धः संकटं नैव चाप्नुयात् ।
धनधान्यसुतापुत्रप्रपौत्रादियुतो भवेत् ॥१३३॥
फाल्गुनशुक्लचतुर्थ्यां ढुण्ढिराजव्रतं पुनः ।
प्रकर्तव्यं पूजनीयो गणेशः सर्ववस्तुभिः ॥१३४॥
तिलपिष्टैस्तिलैश्चैव दानहोमप्रपूजनैः ।
तोषयित्वा ढुण्ढिराजं सर्वसम्पत्तिमाप्नुयात् ॥१३५॥
सौवर्णं गजवक्त्रं च दत्वा द्विजातये धनम् ।
बहुभोग्यानवाप्नोति व्रती नात्र विचारणा ॥१३६॥
यस्मिन्कस्मिन् भवेन्मासि चतुर्थी रविवारयुक् ।
मंगलेन युता यद्वा सा विशेषफलप्रदा ॥१३७॥
यावतीषु चतुर्थीषु विघ्नेशः कृष्ण एव ह ।
पूजनीयस्तथा पंचायतनं भक्तिभावतः ॥१३८॥
उद्यापनं व्रते कार्यं नियमः संयमस्तथा ।
ब्रह्मचर्यं रक्षितव्यं फलं वै शाश्वतं भवेत् ॥१३९॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने वार्षिकचतुर्थीव्रतेषु गणेशात्मकवासुदेवसंकर्षणप्रद्युम्नानिरुद्धव्रतसतीजन्मव्रतरथन्तरकल्पवाराहजयन्तीगणेशजयन्तीगोप्रदक्षिणासिद्धिविनायकव्रतनागव्रतकरकाव्रतांगारकव्रतकाशीविनायकव्रतढुण्ढिराजव्रतादीनां निरूपणनामैकोनसप्तत्यधिकद्विशततमोऽध्यायः ॥२६९॥

श्रीनारायण उवाच—

श्रूयतां च त्वया लक्ष्मि ! पञ्चमीनां व्रतानि वै ।
यानि कृत्वा जना यान्ति सुखं मोक्षं च सम्पदः ॥ १ ॥
चैत्रशुक्लस्य पंचम्यां मत्स्यजन्माऽभवद्धरिः ।
मत्स्यः कार्यः सुवर्णस्य तस्य कार्यो महोत्सवः ॥ २ ॥
मत्स्योऽयं ब्रह्मपुत्रो यो हयग्रीवं निहत्य वै ।
वेदान् समानयामास स पूज्यो भूतिमिच्छता ॥ ३ ॥
चैत्रशुक्ल तृतीयायां मत्स्यः सत्यव्रताय यः ।
बीजानि रक्षितुं नावि दिदेश पूज्य एव सः ॥ ४ ॥
अर्धो नराकृतिरूर्ध्वमधो मत्स्याकृतिर्हि सः ।
सौवर्णोऽर्च्यः कृतमालानदीतीरे ससत्यकः ॥ ५ ॥
वामे शंखं गदां दक्षे दधन् मुकुटयुक् शुभः ।
नैवेद्ये दधि भक्तं च दध्यक्तान्वटकाँस्तथा ॥ ६ ॥
दद्याच्च गापयेद्गाथां मत्स्यजन्ममयीं कथाम् ।
दानानि गुरवे दद्याद् भुञ्जीताऽऽरात्रिकोत्तरम् ॥ ७ ॥

इयं श्रीपञ्चमी प्रोक्ता श्रिया यत्र तपः कृतम् ।
श्रीकृष्णास्याऽऽप्तये तस्माद् व्रतं कार्यं श्रियोऽर्चनम् ॥ ८ ॥
गन्धाद्यैरुपचारैश्च नैवेद्यैः पायसादिभिः ।
विभूषणैः फलपुष्पैः श्रांगारिकसुवस्तुभिः ॥ ९ ॥
लक्ष्म्यास्तु पूजकं पूजिकां तु लक्ष्मीर्न मुञ्चति ।
पृथ्वी चात्र तिथौ नीता वराहेण जलोपरि ॥१०॥
तस्या व्रतं प्रकर्तव्यं मूर्त्यर्चनादिभिः शुभम् ।
चन्द्रव्रतं तथा चात्र कर्तव्यं क्षयनाशनम् ॥११॥
चन्द्रक्षयो विनष्टोऽभूत् तपसा शंभ्वनुग्रहात् ।
हयग्रीवावतारश्च जातोऽस्यां पंचमीतिथौ ॥१२॥
हयग्रीवव्रतं कुर्याद् हयास्यं तु समर्चयेत् ।
सौवर्णं मानवं देहं सायुधं पृथिवीयुतम् ॥१३॥
हिरण्याक्षस्य हन्तारं वासुदेवं जनार्दनम् ।
पूजयेद्विधिना मृष्टाँश्चणकान् भोजयेत्तथा ॥१४॥
दद्याद् दानान्योषधीनां रसानां वारिशाखिनाम् ।
व्रतकर्ता भवेन्नित्यं नीरोगो धनधान्यवान् ॥१५॥
अथ वैशाखपञ्चम्यां शेषः पूज्योऽत्र मानवैः ।
तेन नागगणैर्दत्तमभीष्टं लभते फलम् ॥१६॥
नागा नोपद्रवं कंचित् कुर्वन्ति व्रतिनो गृहे ।
क्षेत्रे वाट्यां तथोद्याने रक्षकास्ते भवन्ति वै ॥१७॥
अथ ज्येष्ठस्य पंचम्यां पितॄनभ्यर्चयेत् सुधीः ।
सर्वकामफलावाप्तिर्भवेद्वै पितृतर्पणैः ॥१८॥
अथाऽऽषाढस्य पंचम्यां वायुव्रतमुदीरितम् ।
ग्रामाद्बहिर्विनिर्गत्य धरोच्छ्राये समास्थितः ॥१९॥
ध्वजं च पञ्चवर्णं वै वंशदण्डाग्रयोजितम् ।
समुच्छ्रितं निदध्याच्च दण्डमूलं प्रपूजयेत् ॥२०॥
ध्वजो यां यां दिशं याति वायुना प्रेरितस्तथा ।
दण्डमूले तद्दिगीशानां वै कुर्यात् प्रपूजनम् ॥२१॥
प्रथमादिषु यामेषु यां यां वायुः प्रवर्तते ।
तस्मै तस्मै दिगीशाय पूजां सम्यक् प्रकल्पयेत् ॥२२॥
एवं स्थित्वा निराहारो बहिर्यामचतुष्टयम् ।
सायमागत्य देहं स्वं भुक्त्वा स्वप्याद् भुवि क्षणम् ॥२३॥
यः स्वप्नो जायते रात्रौ स एव भविता ध्रुवम् ।
अशुभं दृश्यते चेद्वै ह्युपवासं समाचरेत् ॥२४॥
शिवपूजां निशि कृत्वा द्विजानष्टौ तु भोजयेत् ।
लभेच्छुभफलं तेन दाने दद्याद्गवादिकम् ॥२५॥
व्रतमेतत्तुसम्प्रोक्तं शुभाशुभनिदर्शनम् ।
नृणां सौभाग्यजनकं परत्राऽत्र सुखावहम् ॥२६॥

श्रावणे कृष्णपञ्चम्यामन्नवृद्धिकरं व्रतम् ।
कर्तव्यं तु जनेनाऽत्र सर्वान्नसमृद्धिकृद्धि तत् ॥२७॥
चतुर्थ्यां दिनशेषे तु सर्वाण्यन्नानि पञ्चजे ।
पृथक्पात्रेषु सलिलैराक्लेदयेत् प्रगे ततः ॥२८॥
तान्येव सलिलान्येव दद्यात् सूर्योदये सति ।
पितृषिदेवताभ्यश्च सुक्लिन्नाऽन्नानि चापि वै ॥२९॥
प्रासादिकानि तान्येव याचकेभ्यः समर्पयेत् ।
निशि शंभुगृहं गत्वा लिंगं गन्धादिनाऽर्चयेत् ॥३०॥
नमः शिवाय प्रजपेत् प्रार्थयेदन्नसिद्धये ।
शारदीयानि चान्नानि तथा वासन्तिकान्यपि ॥३१॥
यानि स्युस्तैः समृद्धोऽहं भूयां जन्मनि जन्मनि ।
एवं सम्प्रार्थ्य विप्रेभ्यो दत्वाऽन्नानि च वाग्यतः ॥३२॥
प्रभुञ्जीत च तान्येव व्रतं त्वन्नकरं हि तत् ।
सर्वान्नसंपज्जनकं परलोकगतिप्रदम् ॥३३॥
श्रावणे शुक्लपंचम्यां मतं जीवन्तिकाव्रतम् ।
जीवन्तीपत्रपुष्पाद्यैरिन्द्राणीं पूजयेद् व्रती ॥३४॥
द्वारस्योभयतो लेख्या गोमयेन विषोल्बणाः ।
नागास्तान्पूजयित्वैव संप्रणम्य द्विजातये ॥३५॥
स्वर्णरूप्यादिकं दद्यात् तदनन्तफलप्रदम् ।
एकभुक्तव्रतं कुर्याद् दारापत्यसुहृद्वृतः ॥३६॥
भाद्रकृष्णस्य पंचम्यां नागान् क्षीरेण तर्पयेत् ।
यस्तस्याऽऽसप्तमं यावत्कुलं सर्पात् सुनिर्भयम् ॥३७॥
भाद्रस्य शुक्लपंचम्यां पूजयेदृषिसत्तमान् ।
प्रगे स्नात्वा मृदा कृत्वा वेदिकां पुष्पशोभिनाम् ॥३८॥
आस्तीर्य च कुशाँस्तत्र सप्तर्षीन् वै समर्चयेत् ।
गन्धैश्च विविधैः पुष्पैर्धूपदीपनिवेदनैः ॥३९॥
ऋष्यन्नं भोजने दद्यान्निवारान्नं विशेषतः ।
नैवेद्यं विपचेद् व्रतकृत् श्यामाकाद्यैरकृष्टजैः ॥४०॥
प्रासादिकं व्रती त्वद्यादाचार्यान् सप्त भोजयेत् ।
प्रतिमाः सप्त कुर्वीत जटिलाः सोपवीतकाः ॥४१॥
सौवर्णास्ता घटेष्वेव ताम्रेषु मृन्मयेषु वा ।
सन्न्यस्य स्नापयेद् भक्त्या पञ्चामृतादिवारिभिः ॥४२॥
उपचारैः षोडशभिः पूजयित्वाऽर्घ्यमर्पयेत् ।
होमं कुर्यात् तिलहविर्व्रीहिघृतयवादिभिः ॥४३॥
पुण्यैर्मन्त्रैर्नामभिश्च हुत्वा पूर्णाहुतिं चरेत् ।
वस्त्रालंकारसंयुक्ता दद्याद् गाः सप्त वेदिने ॥४४॥
गुरवे दक्षिणां दानं दद्याद्वै व्रतपूर्तये ।
भोजयित्वा गुरून् विप्रान् प्रणिपत्य विसर्जयेत् ॥४५॥

प्रासादिकं स्वयं त्वद्यात् सह बन्धुभिरादरात् ।
एवं कृत्वा व्रतं सांगं भुक्तिं मुक्तिं व्रती व्रजेत् ॥४६॥
नारी कृत्वा व्रतं राजस्वलपान्दोषान्धुनोति वै ।
आश्विनकृष्णपञ्चम्यां गोपालः कृष्ण एव ह ॥४७॥
कुंकुमवाप्यां संजज्ञे निम्बदेवानिकालये ।
कार्यश्चतुर्भुजः कृष्णः पूजनीयो विधानतः ॥४८॥
उत्सवस्तु महान् कार्यो व्रतदानप्रभोजनैः ।
कंभरालक्ष्म्या अपि तत्पत्न्या युक्तोऽर्च्य आदरात् ॥४९॥
आश्विने शुक्लपंचम्यामुपांगललिताव्रतम् ।
पुरा व्रतं ललितया हरेः प्राप्तिकृते कृतम् ॥५०॥
तस्याः स्वर्णमयीं मूर्तिं शक्त्या निर्माय पञ्चजे ।
उपचारैः षोडशभिः पूजयेत्तां विधानतः ॥५१॥
पक्वान्नं फलसंयुक्तं सघृतं दक्षिणादिकम् ।
प्रासादिकं ब्राह्मणाय प्रदद्याद् व्रतपूर्तये ॥५२॥
कार्तिके शुक्लपंचम्यां जयया हरिलब्धये ।
कृतं व्रतं जयामत्र षोडशादिसुवस्तुभिः ॥५३॥
पूजयित्वा भोजयित्वा दत्वा च दक्षिणादिकम् ।
विसर्जयेत्ततः पश्चात् स्वयं भुञ्जीत वै व्रती ॥५४॥
जयाव्रते संप्रकुर्यात्तीर्थे स्नानमघापहम् ।
अश्वमेधाऽवभृथस्य स्नानस्य फलमाप्नुयात् ॥५५॥
अपुत्रो लभते पुत्रं वन्ध्या गर्भवती भवेत् ।
रोगी त्वारोग्यमाप्नुयाद् भुक्तिं मुक्तिं व्रजेद् व्रती ॥५६॥
मार्गे शुक्लस्य पंचम्यां नागान्प्रपूज्य भावतः ।
नागेभ्यो ह्यभयं लब्ध्वा मोदते सह बान्धवैः ॥५७॥
पौषेऽपि शुक्लपंचम्यां पूज्यः श्रीकृष्ण एव च ।
पितरश्च तथा नागाः पूज्याः सुखकरा मताः ॥५८॥
माघस्य शुक्लपंचम्यां वसन्तव्रतमीरितम् ।
वसन्तस्य तदा पूजा कर्तव्या चैकभुक्तता ॥५९॥
नवगोधूमसस्यैश्च बदरीपत्रकैस्तथा ।
वनखर्जूरकैश्चैव राजिकाभिश्च सक्तुभिः ॥६०॥
हरितं मण्डपं कृत्वा कुंकुमादिभिरर्चयेत् ।
कलशं रंगसलिलैर्युक्तं संपूजयेद् व्रती ॥६१॥
श्रीकृष्णं पूजयेच्चैव रंगैः क्रीडां विधापयेत् ।
एवं कृत्वा व्रतं लाजां खर्जूरं दापयेज्जनाम् ॥६२॥
भुक्तिमुक्तिसुखप्राप्तिकरं चैतद्व्रतं भवेत् ।
फाल्गुनकृष्णपंचम्यां जज्ञे लक्ष्मीस्तु कंभरा ॥६३॥
प्रातः प्रेमगृहे ओमालये कार्यस्तदुत्सवः ।
चतुर्भुजा महालक्ष्मीः पूजनीया हि कानकी ॥६४॥

व्रतं सांगं प्रकर्तव्यं भुक्तिमुक्तिफलप्रदम् ।
फाल्गुनशुक्लपंचम्यां पूज्यः श्रीकृष्ण एव च ॥६५॥
होलिकादिव्यंग्यदोषान् शमयेद् भगवाँस्ततः ।
इतिव्रतानि कार्याणि यथाशक्ति सुखार्थिना ॥६६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने वार्षिकपञ्चमीव्रतेषु मत्स्यजयन्तीश्रीतपोव्रतवाराहपृथ्वीव्रतचन्द्रक्षयनाशव्रतहयग्रीवजयन्तीनागपंचमीपितृव्रतवायुव्रताऽन्नवृद्धिव्रतजीवन्तिकानागव्रतऋषिपंचमीगोपालकृष्णजयन्तीललिताव्रतजयाव्रतनागव्रतवसन्तपंचमीकंभरालक्ष्मीव्रतादिनिरूपणनामा सप्तत्यधिकद्विशततमोऽध्यायः ॥ २७० ॥

श्रीनारायण उवाच—

अथ वार्षिकषष्ठीनां व्रतानि विविधानि ते ।
शृणु लक्ष्मि ! कथयामि भुक्तिमुक्तिप्रदानि वै ॥ १ ॥
चैत्रमासे शुक्लषष्ठ्यां स्कन्दजन्माऽभवत्पुरा ।
कुमारव्रतमेवैतत्कर्तव्यं पूजनादिभिः ॥ २ ॥
षण्मुखं समयूरं च सेनानीं तु समर्चयेत् ।
भोजनानि च दानानि व्रती दद्यात् सुभक्तितः ॥ ३ ॥
व्रतेनानेन बलवान् शूरः सर्वगुणान्वितः ।
चिरंजीवी प्राप्यते वै पुत्रस्तु व्रतिना ध्रुवम् ॥ ४ ॥
शंकरं पार्वतीं स्कन्दं सौवर्णं सर्ववस्तुभिः ।
शृंगारितं दापयेच्च गुरवे व्रतपूर्तये ॥ ५ ॥
वैशाखेऽपि तिथौ षष्ठ्यां कार्तिकं पूजयेद् व्रती ।
लभते मातृजं सौख्यं लालनं पालनादिकम् ॥ ६ ॥
ज्येष्ठे शुक्ले तिथौ षष्ठ्यां पूजयेत्तु दिवाकरम् ।
लभते वाञ्छितान् कामान् दिवाकरप्रसादतः ॥ ७ ॥
अषाढशुक्लषष्ठ्यां च कुर्यात् स्कन्दव्रतं पुनः ।
लभतेऽभिप्सितान् कामान्पुत्रपौत्रादिसन्ततिम् ॥ ८ ॥
श्रावणे शुक्लषष्ठ्यां च शरजन्मानमर्चयेत् ।
लभतेऽभीप्सितानर्थान् षण्मुखस्य प्रसादतः ॥ ९ ॥
अत्रैव दिवसे कुर्यात् सूपौदनाशनं व्रतम् ।
हरये त्वर्पयेद् भक्तो भुञ्जीत तत्प्रसादकम् ॥१०॥
सूपौदनं विना नान्यद् भोक्तव्यमेकभुक्तकम् ।
व्रतेनानेन दद्याच्छ्रीहरिः सूपौदनं सदा ॥११॥
अत्रैव दिवसे चाहं कल्किरूपो भवामि वै ।
मम जन्मव्रतं कुर्यात् श्वेताश्वस्थितमेव च ॥१२॥
सच्छत्रं सायुधं स्वर्णहाराढ्यं पूजयेत्तु माम् ।
रक्षां करोमि पाखण्डदुष्टदुःखाद् व्रतार्थिनः ॥१३॥
भाद्रमासे कृष्णषष्ठ्यां ललितां पूजयेद् व्रती ।
नारी व्रतार्थिनी स्नात्वा शुक्लाम्बरधरा सती ॥१४॥
नद्योः संगमवालुका गृहीत्वा पिण्डमाचरेत् ।
विनिर्माय च ललितां पंकजैः करवीरकैः ॥१५॥
नीलोत्पलैर्मालतीभिः केतकैश्च प्रपूजयेत् ।
अष्टोत्तरशतं तस्यै पुष्पाणां चार्पयेत् ततः ॥१६॥
प्रार्थयेदग्रतः स्थित्वा ललितां श्रीहरिप्रियाम् ।
गंगाद्वारे कुशावर्ते बिल्वके नीलपर्वते ॥१७॥
तथा कनखले स्नात्वा हरिं लब्धवती पतिम् ।
ममापि श्रीहरेर्योगं देहि सौभाग्यवर्धिनि ॥१८॥
सम्प्रार्थ्यैवं प्रपूज्यैव नैवेद्यं पुरतो न्यसेत् ।
नारीकेलसुकूष्माण्डदाडीमबीजपूरकैः ॥१९॥
चिर्भट्टकर्कटिकाभिः फलैः संशोभयेत् पुरः ।
नवीनांकुरपत्रैश्च दीपावल्या च तोरणैः ॥२०॥
धूपैः सुगन्धिनैवेद्यैर्मिष्टान्नैर्विविधैरपि ।
शष्कुलीभिर्मोदकैश्च भोजयेद्भावतो व्रती ॥२१॥
आरार्त्रिकं च कुर्वीत रात्रौ जागरणं चरेत् ।
गीतैवाद्यैर्नर्तनैश्च भजनैर्नामकीर्तनैः ॥२२॥
सखीभिः सहिता साध्वी न नेत्रे संप्रमीलयेत् ।
सप्तम्यां सरितं गत्वा स्नात्वा समर्च्य तां ततः ॥२३॥
दत्वा द्विजाय दानानि हुत्वा वैश्वानरं तथा ।
देवान् पितॄन् मनुष्याँश्च पूजयित्वा सुवासिनीः ॥२४॥
ब्राह्मणान्कन्यकाः साधून्साध्वीः संभोजयेद् व्रती ।
ललिता मेऽस्तु सुप्रीता संप्रार्थ्यैतान् विसर्जयेत् ॥२५॥
नरो नारी चरेदेवं व्रतं सौभाग्यदं परम् ।
अन्यव्रतैस्तपोभिश्च दानैर्नियमसंयमैः ॥२६॥
यत्फलं तत्सुलभ्येत प्रेत्य लोकं सनातनम् ।
मोदते ललितादेव्या साकं विमानगो व्रती ॥२७॥
भाद्रमासे शुक्लपक्षे व्रतं चन्दनषष्ठिकम् ।
तस्यां लक्ष्मीस्तु संपूज्या चन्दनैर्भूषणादिभिः ॥२८॥
रोहिणीपातभौमैश्च युक्ता षष्ठी हि कापिला ।
तस्यां रविं समभ्यर्च्य षोडशोपसुवस्तुभिः ॥२९॥
लभेत वाञ्छितान्कामान् व्रतकृन्नात्र संशयः ।
सूर्यषष्ठीयमेवापि भास्करस्य प्रसादतः ॥३०॥
जपो होमस्तथा दानं पितृदेवर्षितर्पणम् ।
सर्वमेवाऽक्षयं ज्ञेयं कृतं यद् व्रतिना शुभम् ॥३१॥

पूजयित्वा कपिलां गां माल्यकुंकुमभोजनैः ।
सोपस्करां प्रदद्याद्वै गुरवे रवितुष्टये ॥३२॥
एवं कृत्वा व्रतं नारी लभेत सुखमुत्तमम् ।
रसान्नफलभूषादिसमृद्धं गृहं पतिं लभेत् ॥३३॥
अथेषशुक्लषष्ठ्यां वै पूज्या कात्यायनी प्रिये ।
सुगन्धमंगलद्रव्यैर्भोजनैर्मिष्टसद्रसैः ॥३४॥
पार्वती वै स्वयं प्रोक्ता काला कात्यायनी प्रसूः ।
पूज्याऽत्र सैकतीमूर्तिर्वृद्धा द्विजसती प्रिये ॥३५॥
वस्त्रालंकारकान् दत्वा नत्वा क्षान्त्वा विसर्जयेत् ।
कन्या व्रतार्थिनी दैवं वरं विन्देत् सुसुन्दरम् ॥३६॥
पुत्रार्थिनी लभेत्पुत्रं कात्यायन्याः प्रसादतः ।
कार्तिके शुक्लषष्ठ्यां तु षण्मुखेन महात्मना ॥३७॥
देवसेनाभिधापत्नी लब्धा सर्वसुरार्चिता ।
देवसेनायुतं स्कन्दं पूजयेदुपचारकैः ॥३८॥
वह्निपूजा तथा होमश्चापि कर्तव्य आदरात् ।
एवं व्रती लभेत् सिद्धिं मनोभीष्टां तु शाश्वतीम् ॥३९॥
मार्गशीर्षे शुक्लषष्ठ्यां कार्तिकेयेन धीमता ।
निहतस्तारको दैत्यो ब्रह्माद्याः स्कन्दपूजनम् ॥४०॥
अकुर्वन् गन्धपुष्पाद्यैर्व्रतिनाऽपि फलादिभिः ।
पूजनं परमं कार्यं वस्त्रभूषाप्रहेतिभिः ॥४१॥
नैवेद्यं मिष्टमत्रोक्तं दानं गोभूमयं स्मृतम् ।
रविवारयुता सेयं चेत्तु शतभिषान्विता ॥४२॥
चम्पाषष्ठी तदा प्रोक्ता हरः पूज्यस्तदत्र वै ।
स्नानदानादिकं सर्वं कृतमक्षय्यमुच्यते ॥४३॥
महापूजा प्रकर्तव्या हरस्य च हरेस्तथा ।
दानानि विविधान्येव व्रती दद्यात्तु भावतः ॥४४॥
नरो नारी व्रतेनात्र सौख्यं लब्ध्वाक्षरं व्रजेत् ।
पौषमासे शुक्लषष्ठ्यां सूर्यं पूज्यः प्रभेश्वरः ॥४५॥
विष्णुरूपो जगत्त्राता जातो वै वेधसः पुनः ।
नारायणोऽयं साक्षात् सर्वप्रकाशशक्तप्रभुः ॥४६॥
षोडषोत्तमवस्त्वाद्यैः पूजनीयः सुखेप्सुभिः ।
नेत्रतेजो विवर्धेत धनसम्पद्गृहो भवेत् ॥४७॥
ब्रह्मणा सहितं पुत्रं सूर्यं सुमुकुटं व्रती ।
सौवर्णं कारयित्वैव दद्यात् दानं द्विजातये ॥४८॥
माघमासे सिता षष्ठी वरुणोत्पत्तिका मता ।
तस्यां पूज्यो जलेशो वै विष्णुरूपी सुरेश्वरः ॥४९॥
रक्तगन्धांशुकपुष्पधूपनैवेद्यदीपकैः ।
व्रतिना पूजितो दद्याद् यथेष्टान् सद्रसान् शुभान् ॥५०॥
फाल्गुने शुक्लषष्ठ्यां च हरं पशुपतिं प्रभुम् ।
मृन्मयं वापि सौवर्णं कारयित्वा प्रपूजयेत् ॥५१॥
संस्नाप्य शतरुद्रेण पृथक् पंचामृतैर्जलैः ।
श्वेतचन्दनसौगन्ध्यैरालिप्याऽक्षतपुष्पकैः ॥५२॥
श्वेतैर्धत्तूरपुष्पैश्च फलैर्बिल्वसुपत्रकैः ।
पूजयित्वा च नैवेद्ये मिष्टान्नानि समर्पयेत् ॥५३॥
नीराजयित्वा नत्वा च क्षमाप्याथ विसर्जयेत् ।
नरो नारी व्रतं कृत्वा भोगान्ते शिवतां व्रजेत् ॥५४॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने
वार्षिकषष्ठीव्रतेषु कार्तिकस्वामिजयन्तीदिवाकरव्रतस्कन्द-
शरजन्मोत्सवसूपौदनाशनव्रतकल्किजयन्तीललिता-
हरिप्राप्तिव्रतचन्दनषष्ठीकपिलाषष्ठीकात्यायनी-
व्रतदेवसेनाव्रततारकवधकृत्स्कन्दव्रतचम्पा-
षष्ठीविष्णुजयन्तीसूर्यजयन्तीवरुण-
जयन्त्यादिव्रतनिरूपणनामैक-
सप्तत्यधिकद्विशततमो-
ऽध्यायः ॥ २७१ ॥

**श्रीनारायण उवाच—**

वार्षिकसप्तमीनां वै व्रतानि कथयामि ते ।
यानि कृत्वा व्रती लक्ष्मि ! भुक्तिं मुक्तिमवाप्नुयात् ॥ १ ॥
चैत्रस्य शुक्लसप्तम्यां तीर्थे स्नानं समाचरेत् ।
स्थण्डिलं गोमयालिप्तं गौरमृत्तिकयाऽन्वितम् ॥ २ ॥
कृत्वा तत्राऽष्टदलकं कमलं कर्णिकोपरि ।
विभावसुं स्थापयित्वा पूर्वपत्रे रविं हरिम् ॥ ३ ॥
आग्नेये चानलं शुक्रं दक्षिणे मंगलं यमम् ।
नैर्ऋत्ये निर्ऋतं राहुं केतुं विन्यस्य वै ततः ॥ ४ ॥
प्रतीच्यां शनिवरुणौ वायव्येऽनिलचन्द्रकौ ।
उदीच्यां बुधकुबेरौ ऐशान्यां च गुरुं हरम् ॥ ५ ॥
स्थापयित्वाऽर्चयेत् सर्वान् गन्धमाल्यानुलेपनैः ।
धूपदीपसुनैवेद्यताम्बूलफलचर्वणैः ॥ ६ ॥
अष्टोत्तरशतं होमं घृतेन कारयेद् व्रती ।
अष्टाष्ट चाहुतीर्दद्यात्प्रत्येकं नाममन्त्रतः ॥ ७ ॥
ततः पूर्णाहुतिं कुर्याद् दद्याच्च दक्षिणां शुभाम् ।
एवं वै दिक्प्रपालानां कुर्यात्तु पूजनं व्रतम् ॥ ८ ॥
व्रतं कृत्वा त्वेकभुक्तं सर्वे सौख्यमवाप्नुयात् ।
देहान्ते मण्डलं भानोर्भित्त्वा याति परं पदम् ॥ ९ ॥
वैशाखशुक्लसप्तम्यां जह्नुना जाह्नवी पुरा ।
पीता त्यक्ता पुनश्चैव गंगाव्रतमिदं मतम् ॥१०॥

गंगां तु जाह्नवीं स्नात्वा पूजयेदुपचारकैः ।
घटसाहस्रदानं वै कर्तव्यं भूतिमिच्छता ॥११॥
सप्तकुलं नयेत्स्वर्गं गंगाव्रतमिदं शुभम् ।
अत्र तिथौ तथा बोध्यं कमलव्रतमित्यपि ॥१२॥
तिलमात्रसुवर्णस्य कर्तव्यं कमलं शुभम् ।
वस्त्रयुग्मावृतं कृत्वा गन्धधूपादिनाऽर्चयेत् ॥१३॥
सायं सूर्याय नत्वाऽथ पद्मं द्विजाय चार्पयेत् ।
उदकुंभं च तत्पद्मं कपिलां गां द्विजेऽर्पयेत् ॥१४॥
उपवासं प्रकुर्याच्च पारणां तु परेऽहनि ।
ब्राह्मणान् भोजयेद्भक्त्या साधून् साध्वीः सतीस्तथा ॥१५॥
एवं व्रतं प्रकर्तव्यं दानं देयं गवां तथा ।
भुक्तिं मुक्तिं व्रजेन्नारी व्रतकर्त्री धनं लभेत् ॥१६॥
अत्रैव तिथौ कार्यं निम्बव्रतं शुभावहम् ।
सूर्यपूजा प्रकर्तव्या निम्बपत्रैर्विशेषतः ॥१७॥
निम्बपत्रं तथाऽश्नीयाद् भूशायी स्याद्दिनाऽशनम् ।
परेऽह्नि ब्राह्मणान् भोजयित्वा भुञ्जीत बन्धुभिः ॥१८॥
शर्करासप्तमी त्वेषा भूमौ सर्वरसप्रदा ।
कर्तव्यं शर्करायास्तु व्रतं रसार्थिभिर्यतः ॥१९॥
अमृतं पिबतो हस्तात्सूर्यस्याऽमृतबिन्दवः ।
निपेतुर्भुवि चोत्पन्ना शालिमुद्गयवेक्षवः ॥२०॥
शर्करा चेक्षुतो जाता रवेरिष्टा सदा शुभा ।
हव्ये कव्ये पवित्रा सा दातव्या देवतुष्टये ॥२१॥
अत्र वै शर्करादानं शर्कराभोजनं तथा ।
कर्तव्यं व्रतिना सम्यक् पुत्रसन्ततिवर्धनम् ॥२२॥
सर्वदुःखोपशमनं वाजिमेधफलप्रदम् ।
दानं चान्यत्प्रकर्तव्यं भोजनीयाश्च साधवः ॥२३॥
ज्येष्ठे वै शुक्लसप्तम्यां सूर्य इन्द्रोऽभवत् स्वयम् ।
सोपवासं व्रतं कार्यं पूज्य इन्द्रो विधानतः ॥२४॥
दानमिन्द्रस्य कर्तव्यं सौवर्णस्य द्विजातिके ।
साधून् बालान् भोजयित्वा ततो भुञ्जीत वै व्रती ॥२५॥
अषाढशुक्लसप्तम्यां विवस्वान्नामभास्करः ।
राज्याभिषेकं सम्प्राप्तः पूजा तस्य मता व्रते ॥२६॥
विवस्वन्तं तु सौवर्णं प्रपूज्य कुसुमादिभिः ।
लभते सूर्यसायुज्यं दिव्यं सुखं च शाश्वतम् ॥२७॥
श्रावणे शुक्लसप्तम्याम् अव्यंगाख्यं व्रतं स्मृतम् ।
कार्पासं वस्त्रमेवात्र दाने देयं विशेषतः ॥२८॥
हस्तर्क्षसहिता चेत्स्यात् सप्तमी पुण्यदायिनी ।
अस्यां दानं जपो होमः सर्वं त्वक्षयतां व्रजेत् ॥२९॥
शीतलासप्तमी चेयं पूज्या वै पार्वती सती ।
शीतलायै प्रदातव्या शाटी पिष्टादिभोजनम् ॥३०॥
आरोग्यं तेन व्रतिनो भवेद्वै सर्वदा कुले ।
उपवासः प्रकर्तव्यो देयं दानं फलादिकम् ॥३१॥
भाद्रे तु शुक्लसप्तम्याम् अमुक्ताभरणं व्रतम् ।
चन्द्रो धृतो ललाटे वै शंभुनाऽऽभूषणात्मकः ॥३२॥
सोमस्य च महेशस्य पूजनं षोडशादिभिः ।
प्रकुर्याद् विसृजेन्नत्वा सर्वकामसमृद्धये ॥३३॥
फलसप्तमी चैवेयं फलसप्तात्मिकी मता ।
नालिकेरं च वृन्ताकं नारंगं बीजपूरकम् ॥३४॥
कूष्माण्डं बृहतीपूगं फलान्येतानि चार्पयेत् ।
सप्ततन्तुकृतं चात्र सप्तग्रन्थिसुदोरकम् ॥३५॥
समर्प्य शंकरायाथ बध्नीयाद् वामहस्तके ।
नारी वामे नरो दक्षे हस्ते वर्षं सुरक्षयेत् ॥३६॥
व्रतान्ते बालकान् सप्त भोजयित्वा ततो व्रती ।
स्वयं भुञ्जीत निजयुग् व्रतसम्पूर्तिहेतवे ॥३७॥
फलानि तु द्विजेभ्यो वै दद्यात् सन्तुष्टिहेतवे ।
एवं सप्त तु वर्षाणि व्रतं कृत्वा यथाविधि ॥३८॥
सायुज्यं लभते लक्ष्मि ! महादेवस्य तद्व्रती ।
पूजनं तद्व्रते कार्यं यथाविधि यथाधनम् ॥३९॥
आश्विने शुक्लपक्षे तु पञ्चगव्यव्रतं स्मृतम् ।
शुभसप्तमी संप्रोक्ता शुद्धिदा पुण्यदा तथा ॥४०॥
स्नात्वा देवं हरिं सूर्यं पूजयित्वा व्रती ततः ।
कपिलां गां पूजयित्वा प्रार्थयेत्तां शृणु प्रिये ॥४१॥
ददेऽहं त्वां सुकल्याणि ! प्रीयतामर्यमा स्वयम् ।
पालय त्वं जगत्कृत्स्नं धर्मपुण्यप्रभावतः ॥४२॥
एवमुच्चार्य नत्वा च दत्वा द्विजाय विसृजेत् ।
व्रतेऽऽश्नीयात्पञ्चगव्यं परेऽह्नि पारणां चरेत् ॥४३॥
द्विजोत्तमान् भोजयित्वा गृह्णीयाच्छिष्टकं व्रती ।
स वै हरिप्रसादेन भुक्तिं मुक्तिमवाप्नुयात् ॥४४॥
अथ कार्तिकशुक्लायां शाकाख्यसप्तमीव्रतम् ।
शाकाहारो व्रती तिष्ठेत् सप्तशाकानि साधवे ॥४५॥
द्विजाय सप्तकायाथ दद्यादन्नं च दक्षिणाम् ।
द्वितीयेऽह्नि पारणां च कुर्यात्पापहरं व्रतम् ॥४६॥
मार्गस्य शुक्लसप्तम्यां मित्रव्रतमुदाहृतम् ।
अदित्यां कश्यपाज्जज्ञे मित्रो नामा दिवाकरः ॥४७॥
तस्य व्रतं सोपवासं सोत्सवं कार्यमुत्तमम् ।
पूजनं विधिना कार्यं मधुरं भोजयेत् सतः ॥४८॥

सुवर्णदक्षिणां दत्वा विसृजेच्च ततो व्रती ।
पारणां तु परे प्रातः कुर्यान्नत्वा रविं पुनः ॥४९॥
कृत्वैवं व्रतमेवात्र सूर्यलोकं प्रयाति वै ।
यः कोपि व्रतकर्ताऽत्र सत्कुले जन्मवान् भवेत् ॥५०॥
पौषशुक्लस्य सप्तम्यां व्रतं चाभयनामकम् ।
धरास्थितो व्रती सूर्यं त्रिकालं पूजयेत्तथा ॥५१॥
सोपवासो भवेच्चान्यान् ब्राह्मणान् सप्त भोजयेत् ।
क्षीरान्नं मोदकान् प्रस्थमितान् दद्याद् द्विजातये ॥५२॥
दक्षिणां भूयसीं पृथ्वीं सुवर्णं वाऽर्पयेद् व्रती ।
विप्राश्चाशिष एवाऽस्मै दद्युरभयदास्तथा ॥५३॥
अभयाख्यं व्रतं त्वेतत् सर्वस्याऽभयदं स्मृतम् ।
मार्तण्डाख्यं व्रतं चैतन्मार्तण्डं पूजयेद् व्रती ॥५४॥
माघे तु कृष्णसप्तम्यां व्रतं सर्वाप्तिनामकम् ।
आदित्यपूजनं तत्र कर्तव्यं समुपोषणम् ॥५५॥
रात्रौ जागरणं कार्यं भोज्याः सन्तः प्रगे ततः ।
पायसान्नैस्तोषणीया दक्षिणाभिः फलादिभिः ॥५६॥
विसृज्य च ततोऽद्यात् स व्रती चेयादभीप्सितम् ।
एतत्सर्वाप्तिदं नाम व्रतं वै सार्वकामिकम् ॥५७॥
माघशुक्लस्य सप्तम्यामचलाख्यं व्रतं मतम् ।
उपोषणं विधेयं यत्पुण्यं स्यादचलं ध्रुवम् ॥५८॥
त्रिलोचनः पूजनीयस्त्रिलोचनान्वितो हरः ।
त्रिलोचनाजयन्तीयं सर्वपापहरा कृता ॥५९॥
रथीयसप्तमीयं वै चक्रवर्तित्वदायिनी ।
हस्तियुक्तरथस्थं श्रीसूर्यं सौवर्णमर्चयेत् ॥६०॥
भास्करीसप्तमी चेयं प्रातश्चात्र व्रती स्वयम् ।
अर्कस्य च बदर्याश्च सप्त सप्त दलानि वै ॥६१॥
निधाय मस्तके स्नायात् सप्तजन्माघशान्तये ।
पुत्रप्रदव्रतं त्वेतत्कर्तव्यं पुत्रमिच्छता ॥६२॥
तस्य सूर्यो भवेत्पुत्रः स्वांशेन भृशतोषितः ।
परे दिने समुपोष्य प्रातर्होमं समाचरेत् ॥६३॥
दध्योदनं पयश्चापि भोजयेत्पूजयेत् सतः ।
एवं कृत्वा व्रतं पुत्रं प्राप्नुयाद्वै चिरायुषम् ॥६४॥
फाल्गुनशुक्लसप्तम्यां व्रतमर्कपुटं चरेत् ।
अर्कपत्रैर्यजेत् सूर्यमर्कपत्राणि भक्षयेत् ॥६५॥
अर्कनाम जपेच्छश्वदर्कव्रतमिदं मतम् ।
धनपुत्रसुतास्मृद्धिपतिपत्नीप्रदं शुभम् ॥६६॥
धर्मार्थकामदं सर्वपापनाशकमित्यतः ।
कार्यं यत्नव्रतं त्वेतत्सर्वसौख्यमुलब्धये ॥६७॥
भास्कराराधनं सर्वकामनासम्प्रदं भवेत् ।
तस्मात्सर्वासु सप्तमीतिथिष्वर्कं प्रपूजयेत् ॥६८॥
मण्डलं सर्वतोभद्रं कलशारोपणं तथा ।
पञ्चामृतैः स्नपनं चावाहनाद्युपचारकम् ॥६९॥
नैवेद्यं तण्डुलपुष्पांजलिविसर्जनान्तकम् ।
सर्वं यथाविधं कुर्याद् व्रते वै व्रतकृत् सदा ॥७०॥
उद्यापनं महत्कुर्याद् भोजयेद् बालकान्सतः ।
दानं होमो जपो भक्तिः श्रीहरेश्चेति वै ध्रुवम् ॥७१॥
कर्तव्यं व्रतिना येन हरेस्तोषो भवेद् बहुः ।
भुक्तिर्मुक्तिर्भवेच्चापि व्रतपूर्णफलं भवेत् ॥७२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने वार्षिकसप्तमीव्रतेषु दिक्पालव्रतजाह्नवीव्रतनिम्बसूर्यव्रतेन्द्रसूर्यव्रतविवस्वदभिषेकव्रताऽव्यंगशीतलासप्तमीचन्द्राभरणव्रतशुभफलसप्तमीशाकव्रतमित्रार्कजयन्तीमार्तंडाभयव्रतसार्वकामिकाप्तिव्रतत्रिलोचनाजयन्तीभास्करीसप्तमीपुत्रप्रदाऽर्कपुटव्रतादिनिदर्शननामा द्वासप्तत्यधिकद्विशततमोऽध्यायः ॥२७२॥

**श्रीनारायण उवाच—**

अथ लक्ष्मि! कथयामि त्वष्टमीनां व्रतानि ते ।
यानि कृत्वा भुक्तिमुक्तिमाप्नुयात् पद्मजे व्रती ॥ १ ॥
शुक्लाष्टम्यां तु चैत्रस्य पार्वतीजन्मसद्व्रतम् ।
मण्डपं कदलीस्तंभाशोकतोरणमण्डितम् ॥ २ ॥
कृत्वात्र सर्वतोभद्रं मण्डलं तस्य मध्यगाम् ।
सौवर्णीं पार्वतीं न्यस्य प्रदक्षिणशतं चरेत् ॥ ३ ॥
पूजयेत् षोडशवस्तुश्रेष्ठोपदादिभोजनैः ।
नीराजयेद्रथे स्थापयित्वा श्रांगारिकं चरेत् ॥ ४ ॥
गीतवाद्यादिभिर्भक्तैः कार्यो यात्रामहोत्सवः ।
गृहे गृहे प्रपूज्या तण्डुललाजाजलैः फलैः ॥ ५ ॥
सौभाग्यद्रव्यकुंकुमकज्जलाभरणादिभिः ।
नारीकेलफलेनाथ कलशेनापि वर्धयेत् ॥ ६ ॥
एवं महोत्सवपूर्वं जले वा मन्दिरेऽथ वा ।
आनयित्वा पूजयेत्तामारार्त्रिकमथाऽऽचरेत् ॥ ७ ॥
भोजयित्वा च देवेशीं विधिना तां विसर्जयेत् ।
दद्याद् दानानि सर्वाणि बालाभ्योऽम्बरभोजनम् ॥ ८ ॥

एवं कृत्वा व्रतं नारी सौभाग्यं लभते शुभम् ।
कन्या व्रतं परं कृत्वा राज्ञीपदमवाप्नुयात् ॥ ९ ॥
अत्रैवाऽशोककलिकाऽष्टकस्याऽदनमाचरेत् ।
एवं प्राशनकर्तुस्तु न शोको जायते क्वचित् ॥१०॥
महाष्टमीति सैवेयं कर्तव्या सोपवासिका ।
पार्वत्याः पूजनं विसर्जनान्तं कार्यमेव च ॥११॥
वैशाखस्य सिताष्टम्यामथोपोषणमाचरेत् ।
दुर्गाष्टमीति सा प्रोक्ताऽपराजितां तु पूजयेत् ॥१२॥
नैवेद्यं शर्करायुक्तं दद्याद् दानानि वै तदा ।
कुमारीर्भोजयेच्चापि नवम्यां पारणाग्रतः ॥१३॥
व्रती ज्योतिर्विमानस्थोऽपराजिताकृपावशात् ।
स्वर्गलोकेषु विचरेद् भुक्तिमुक्तियुतो भवेत् ॥१४॥
ज्येष्ठकृष्णाष्टमीप्राप्तौ कुर्यात् त्रिलोचनव्रतम् ।
कैलासे संवसेत् कल्पपर्यन्तं बहुमानितः ॥१५॥
ज्येष्ठशुक्लाष्टमीप्रातर्दुर्गां शुक्लां प्रपूजयेत् ।
शुक्लादेवीप्रसादेन कैलासं लभते व्रती ॥१६॥
आषाढधवलाष्टम्यां देवीं सम्पूजयेद् व्रती ।
नैवेद्यं शर्करोपेतं दद्यात् कन्याश्च भोजयेत् ॥१७॥
सुवर्णदक्षिणां दत्वा विसृज्याऽद्यात् स्वयं व्रती ।
एतद्व्रतं शुभं कृत्वा दुर्गालोकमवाप्नुयात् ॥१८॥
नभःशुक्ले तथाऽष्टम्यां दुर्गां सम्पूजयेद् व्रती ।
भोजयेद् विविधैरन्नैर्विसर्जयेद् विधानतः ॥१९॥
पारणां च ततः कुर्याद् व्रतं सन्ततिवर्धनम् ।
भाद्रमासे सिताष्टम्यां दशाफलमिति व्रतम् ॥२०॥
सोपवासं प्रकुर्याद्वै पूजनं श्रीहरेस्तथा ।
तुलस्याः कृष्णवर्णाया दलैर्दशभिरर्चयेत् ॥२१॥
कृष्णं विष्णुं तथाऽनन्तं गोविन्दं गरुडध्वजम् ।
दामोदरं हृषीकेशं पद्मनाभं हरिं प्रभुम् ॥२२॥
एतैर्वै नामभिः कृष्णं पूजयित्वा दिने दिने ।
होमं कुर्याच्छतमष्टोत्तरं श्रीकृष्णनामतः ॥२३॥
जुहुयाच्चरुणा पुष्पैः फलैः शर्करया तथा ।
एवं दशदिनं कुर्यादाचार्यं पूजयेत्ततः ॥२४॥
सौवर्णे वाऽन्यपात्रे तु सौवर्णं तुलसीदलम् ।
प्रतिमां कानकीं चापि निधाय गुरवेऽर्पयेत् ॥२५॥
गोप्रदानं प्रकुर्याद्वै वस्त्रालंकारशोभनम् ।
दशाहं दुग्धपाकं च पूरिकाश्च निवेदयेत् ॥२६॥
स्वयं प्रसादं गृह्णीयात् विप्रान् साधूँश्च भोजयेत् ।
व्रतान्ते दशसाधुभ्यः प्रत्येकं दश पूरिकाः ॥२७॥
दद्यादेवं दशाब्दं तु कृत्वा व्रतमनुत्तमम् ।
सर्वान्स्वर्गाननुभूय कृष्णसायुज्यमाप्नुयात् ॥२८॥
नरः कृष्णपार्षदः स्यान्नारी कृष्णप्रिया भवेत् ।
नैतादृशं व्रतं त्वन्यत् कृष्णसायुज्यकृद्भवेत् ॥२९॥
भाद्रकृष्णाष्टमी कृष्णजन्माष्टमीव्रतं पुरा ।
उपवासेन तत्कर्तुः सप्तजन्माघनाशनम् ॥३०॥
उपवासी तिलैः स्नात्वा नद्यादौ विमले जले ।
मन्दिरं शोधयेत् सम्यङ् मृजाक्षालनलेपनैः ॥३१॥
रंगैर्नानाविधैश्चित्रैस्तोरणैः शोभयेद् ध्वजैः ।
नवीनाँश्च वितानादीन् बध्नीयाद् रूपकाणि च ॥३२॥
सिंहासनं भगवतः पूजोपकरणानि च ।
सम्मार्जयेद् दीपिकाश्च कुर्यादास्तरणं नवम् ॥३३॥
पूजानैवेद्यवस्त्रादि व्रती सम्पादयेत्ततः ।
सभामण्डपमध्ये वा मन्दिरस्याऽग्रतोऽथवा ॥३४॥
मण्डपं कारयेद् रम्यं कदलीस्तम्भशोभितम् ।
वस्त्रविचित्रसत्पुष्पपल्लवैः कलशैर्युतम् ॥३५॥
फलदीपावलीमालाचन्दनादिविराजितम् ।
धूपितं कारयेत्तं च तन्मध्ये कलशं न्यसेत् ॥३६॥
तस्योपरि न्यसेत्पात्रं ताम्रं तस्योपरि स्थिताम् ।
हैमीं वस्त्रयुगच्छन्नां प्रतिमां श्रीहरेः शुभाम् ॥३७॥
पाद्याद्यैरुपचारैश्च पूजयेद् व्रतकारकः ।
मण्डपे सूतिकागारं देवक्या विदधीत च ॥३८॥
तत्र वै देवकीं बालकृष्णेन सहितां तथा ।
यशोदां गोकुले कुर्यात् सुतायुक्तां मनोहराम् ॥३९॥
वसुदेवं च नन्दं च गोपान् गोपीश्च गास्तथा ।
वृषान् वत्सान् वत्सतरीः सौवर्णान् कारयेद् व्रती ॥४०॥
मण्डपे स्थापितान् दिक्षु विदिक्ष्वपि समर्चयेत् ।
वादयेत् तूर्यवाद्यानि मंगलानि च गापयेत् ॥४१॥
स्नानपूजादिकं मूर्ते कृत्वा त्वारात्रिकं चरेत् ।
पंचामृतैरर्धरात्रे स्नापयेच्छुद्धवारिभिः ॥४२॥
वासोभूषारत्नहारान् शोभनान् परिधापयेत् ।
कुंकुमकेसरागुरुचन्दनकुसुमानि च ॥४३॥
हारापीडाँश्चावतंसान् पौष्पांश्च तुलसीस्रजः ।
धूपदीपाँस्ततः कृत्वा महानैवेद्यमाहरेत् ॥४४॥
अजमोँश्च तथा शुण्ठीं धान्याकान् शर्करां घृतम् ।
पञ्चचूर्णीं रौप्यपात्रे नैवेद्यं विनिवेदयेत् ॥४५॥
पूरीपायससंयावघृतपक्वादि चार्पयेत् ।
जलं समर्पयेद् दद्यात् ताम्बूलं मुखशोधनम् ॥४६॥

नारीकेलफलं दद्याद् दक्षिणां तुलसीदलम् ।
ततो नीराजयेत् कृष्णं चतुर्विंशतिरूपिणम् ॥४७॥
अर्घ्यं दद्यात् क्षमां प्रार्थ्य स्वापयित्वा व्रती ततः ।
रात्रौ जागरणं कुर्याच्छृणुयात्तत्कथानकम् ॥४८॥
तदा पिबेद् व्रती कृष्णचरणामृतमुत्तमम् ।
सशर्करं दधि किंचिन्मात्रं पञ्चामृतं ग्रसेत् ॥४९॥
ततः प्रभाते स्नात्वैव पूजयेद् बालकृष्णकम् ।
क्षीरं भक्तं शर्करां च विशेषेण निवेदयेत् ॥५०॥
नरानार्यस्ततस्तत्र दधिक्षीरघृताम्बुभिः ।
कुर्वीरन् क्रीडनं त्वग्रे लेपक्षेपणसेचनैः ॥५१॥
स्नात्वा साधून् भोजयेच्च साध्वीर्बालाँश्च बालिकाः ।
विप्रान् भक्तान् भोजयेच्च दीनान्धकृपणानपि ॥५२॥
दक्षिणां प्रददेदश्नीयात् स्वजनैः प्रसादिकम् ।
प्रातः सायं पूजनान्ते व्रतिना पालने हरिः ॥५३॥
आन्दोलनीयोऽनुदिनं यावद्भाद्रद्वितीयकम् ।
दारापत्यसुहृद्भृत्यैरेवं कृत्वा व्रतं नरः ॥५४॥
साक्षाद् गोलोकमाप्नोति विमानवरमास्थितः ।
त्रिलोक्यां वै व्रतं चैतत्सदृशं नास्ति यत्परम् ॥५५॥
कृतेन येन लभ्येत कोट्यैकादशकं फलम् ।
दानान्यत्र प्रदेयानि राजयोग्यानि पद्मजे ॥५६॥
यथाशक्ति यथावस्तु कार्यं कार्ष्णं व्रतं प्रिये ।
भाद्रपदसिताष्टम्यां राधिकाजन्म निर्मितम् ॥५७॥
भगवन्तं तथा राधां रक्तवस्त्राणि धारयेत् ।
मध्याह्ने राधिकामूर्तिं सकृष्णां पूजयेद् व्रती ॥५८॥
लड्डुकान् मौक्तिकान् दद्यान्नैवेद्येऽपि फलान्यपि ।
यद्यदिष्टं भवेत् स्वस्य तत्तत् समर्पयेद् व्रती ॥५९॥
राधिकाजन्मपद्यानि गापयेद् गोपिकादिभिः ।
एकभक्तं व्रतं कृत्वा सुवासिनीश्च भोजयेत् ॥६०॥
मूर्त्यर्पणं च गुरवे कृत्वा भुञ्जीत वै व्रती ।
उपवासं च वा कुर्याद् दद्याद्रक्ताम्बराणि वै ॥६१॥
एवं कृत्वा व्रतं नारी राधापरिकरे वसेत् ।
कृष्णपत्नी सदा भूत्वा कृष्णसौख्यं सदाऽर्जयेत् ॥६२॥
दूर्वाष्टमीव्रतं चैतत्कर्तव्यं व्रतिना तथा ।
दूर्वारूढस्थले शंभुबाणं संपूजयेद् व्रती ॥६३॥
गन्धैः पुष्पैर्धूपदीपैर्दध्यक्षतफलादिभिः ।
दूर्वाभिः पूजयेचाप्यर्थयेद् दूर्वेऽमृते सदा ॥६४॥
यथा शाखाप्रशाखाभिर्विस्तृताऽसि महीस्तरे ।
सौभाग्यं विस्तृतां देहि सन्ततिं चाऽजरामराम् ॥६५॥
विप्रान् साधून् भोजयित्वा शंभुं विसृज्य वै व्रती ।
व्रतं पूर्णं प्रकुर्वीत नारी भाग्यवती भवेत् ॥६६॥
एवं पुण्या पापहरा सन्ततिदेयमष्टमी ।
दूर्वां न पूजयेद् या सा विधवा स्यात् त्रिजन्मसु ॥६७॥
ज्येष्ठर्क्षसंयुता चेयं ज्येष्ठाष्टमी व्रतात्मिका ।
महालक्ष्म्या व्रतं चैतदितः षोडशवासरान् ॥६८॥
पुनर्वसुप्रपर्यन्तं कालाष्टम्यवधिं ध्रुवम् ।
कर्तव्यं व्रतिना दक्षे करे बध्वा तु डोरकम् ॥६९॥
षोडशग्रन्थिसहितं गुणैः षोडशभिर्युतम् ।
नित्यं प्रपूजयेल्लक्ष्मीं तत उद्यापनं चरेत् ॥७०॥
वस्त्रमण्डपिकां कृत्वा सर्वतोभद्रमण्डले ।
कलशं न्यस्य दीपं च कृत्वोत्तार्य च डोरकम् ॥७१॥
कुंभाऽधस्तत् स्थापयित्वा लक्ष्म्याश्चतुःसुमूर्तिकाः ।
स्नपनं कारयेत्पंचामृतैश्च सलिलैर्व्रती ॥७२॥
उपचारैः षोडशाद्यैः पूजयित्वा प्रभोजयेत् ।
निशि जागरणं कुर्याच्चन्द्रेऽर्घ्यं संप्रदापयेत् ॥७३॥
क्षीरसागरसंभूत महालक्ष्मीसहोदर ।
अन्नौषधिप्रदो मेऽस्तु श्रीखण्डार्घ्यं गृहाण मे ॥७४॥
क्षीरोदार्णवसंभूते कमले कृष्णसत्प्रिये ।
विष्णुवक्षःस्थलावासे भव मे सर्वकामदा ॥७५॥
एकनाथे जगन्नाथे गोपालस्य प्रियेऽव्यये ।
कम्भरे त्राहि मां देवि ! कृष्णमातः शिवं कुरु ॥७६॥
एवं प्रार्थ्य महालक्ष्मीं सम्पूज्य भक्तयोषितः ।
भोजयित्वा जुहुयाच्च बिल्वपद्मकपायसैः ॥७७॥
समित्तिलघृतैः पुष्पैः फलैश्च विविधैस्तथा ।
विष्णवे चन्दनं तालपत्रं मालां तथाऽक्षतान् ॥७८॥
दूर्वां कौसुंभसूत्रं च युगलं श्रीफलं तथा ।
तुलसीं शर्करां लड्डून् दुग्धसारं तिलान् यवान् ॥७९॥
जलं ताम्बूलकं चेति दद्याद्धरये षोडश ।
महालक्ष्म्यै तथा दद्याच्छूर्पेणाच्छाद्य शूर्पके ॥८०॥
लक्ष्म्यै नारायणायाऽपि प्रसमर्प्य व्रती स्वयम् ।
विसर्जयेत्पूजनं च व्रतं तद्वै समापयेत् ॥८१॥
चतस्रः प्रतिमा दद्याच्चतुर्विप्रेभ्य एव वै ।
षोडशसुवासनीभ्यो दद्यात् षोडशवस्तुकम् ॥८२॥
मिष्टान्नैराशयित्वा ताः संविसृजेत् सदक्षिणाः ।
पश्चात्तु पारणां कुर्याद् व्रती त्वेवं व्रतेन वै ॥८३॥
कोट्यधीशो भवेल्लोके लक्ष्मीलोके वसेत्पुनः ।
चिरं भोगान् प्रभुंक्ते वै कंभरालक्ष्म्यनुग्रहात् ॥८४॥

एषा शोकाष्टमी प्रोक्ताऽशोकपूजनमाचरेत् ।
एकभक्तं व्रतं कृत्वा रमां सम्पूज्य भावतः ॥८५॥
यत्र कुत्रापि जन्म स्यादशोकः स्यान्न संशयः ।
आश्विने तु सितेऽष्टम्यां दुर्गाव्रतमुपोषणम् ॥८६॥
एकभक्तं च वा पूजां कुर्यात्स्वेतद्विधानतः ।
सर्वतो विभवं लब्ध्वा मोदते दिवि देववत् ॥८७॥
ऊर्जकृष्णाष्टमीकाले करकाख्यं व्रतं स्मृतम् ।
पुत्रेच्छुभिः पूजनीय उमेशो निशि सर्वथा ॥८८॥
दानं कृत्वा सुवर्णस्य चन्द्रोदये नीराजयेत् ।
व्रती प्रातः पूजयित्वा ततः कुर्यात्तु पारणाम् ॥८९॥
कार्तिककृष्णपक्षस्याऽष्टम्यां श्रीभगवद्व्रतम् ।
कृष्णनारायणो जज्ञे . गोपालकंभरागृहे ॥९०॥
देवाश्च मुनयः सर्वे तदाऽकुर्वन्महोत्सवम् ।
विमानानि समारुह्यागता दर्शनलालसाः ॥९१॥
पुष्पादिभिस्तदा दिव्यैर्वर्धयामासुरादरात् ।
तदा वै मण्डपः कार्यः प्रातरेव महार्हणः ॥९२॥
सौधमध्ये कृष्णनारायणस्तन्मण्डपे तदा ।
सौवर्णः स्थापनीयोऽत्र सर्वतोभद्रमण्डले ॥९३॥
घटे पंचसुरत्नादिफलपल्लवशोभिते ।
स्थाल्यां तिलान्वितायां वै पूजनीयो हरिः स्वयम् ॥९४॥
श्रिया युक्तस्तथा पित्रा मात्रायुक्तो महाप्रभुः ।
शृणु लक्ष्मि त्वया साकं ममार्चनं प्रमुक्तिदम् ॥९५॥
सम्पत्करं सर्वसौख्यप्रदं सर्वेप्सितप्रदम् ।
तत्कर्तव्यं योषिता वा नरेणापि व्रतार्थिना ॥९६॥
आवाहनात् समारभ्य पञ्चामृतजलादिकैः ।
स्नपनं वस्त्रभूषादिधारणं शोभनादिकम् ॥९७॥
धूपदीपसुनैवेद्यारात्रिकदक्षिणादिकम् ।
स्तवनाराधनाताम्बूलाऽदनजलमर्पयेत् ॥९८॥
सर्वशास्त्रमयं कृष्णं सरस्वतीनिवासिनम् ।
सर्वदेवकृताऽऽवासं श्रीरमादिकृतालयम् ॥९९॥
प्रभालक्ष्मीपार्वतीमाणिकीनाथं स्मरेत्तथा ।
दद्याद् दानानि बहुधा जागरं सोत्सवं चरेत् ॥१००॥
प्रातः स्नात्वा पूजयित्वा भोजयित्वा विसर्जयेत् ।
एवं कृत्वा व्रतं कृष्णनारायणजयन्तिकम् ॥१०१॥
पत्नीं पतिं सुतां पुत्रं गां धनं स्वर्णमित्यपि ।
क्षेत्रं च भवनं यानमारोग्यं विन्दति व्रती ॥१०२॥
विद्यां सत्तां महाकीर्तिं पूज्यतां सर्वसम्पदः ।
व्रतेनाऽनेनाऽऽप्नुयाद्वै स्वर्गं मोक्षं च विन्दति ॥१०३॥
कालभैरवजन्मापि कालाष्टमीति सैव हि ।
पूजनं तस्य योग्योपचारैः कार्यं व्रतार्थिना ॥१०४॥
शंकरः कालरूपोऽयं संजातो भैरवः स्वयम् ।
व्रतिनो भैरवादीनां भयं नैव हि जायते ॥१०५॥
कार्तिके धवले गोपाष्टमी बोध्याऽत्र वै गवाम् ।
पूजां गोग्रासमेवापि गोदानं गोप्रदक्षिणम् ॥१०६॥
कुर्यात् कृष्णोऽभवद्गोपश्चारयामास गा यतः ।
गोव्रतेन सदा लक्ष्मीर्गृहे रसात्मिका वसेत् ॥१०७॥
मार्गस्य कृष्णाष्टम्यां वै दर्भमिथुनकं व्रतम् ।
अनघामनघं नाम्ना कृत्वा दर्भमिथुनकम् ॥१०८॥
सुतासुतसमायुक्तं स्थापयेद् गोमयादिभिः ।
लेपिते भूतले गन्धपुष्पाद्यैः पूजयेच्च तत् ॥१०९॥
भोजयित्वा च दाम्पत्यं विसृजेल्लब्धदक्षिणम् ।
नरो नारी व्रतं कृत्वाऽऽप्नुयात्पुत्रं सुतां सुखम् ॥११०॥
अत्रैव कालभैरवजयन्तीव्रतमाचरेत् ।
अथ मार्गसिताष्टम्यां दुर्गाव्रतं रवेर्मतम् ॥१११॥
कार्यं कालव्रतं पूजाहोमदानसुभोजनैः ।
कालभैरवसान्निध्ये सजागरमुपोषणम् ॥११२॥
कृत्वा वै दुःखदं कर्म नाशमायाति तद्बलात् ।
अथ पौषसिताष्टम्यां श्राद्धमष्टकसंज्ञितम् ॥११३॥
पितॄणां तृप्तिदं वर्षे कुलसन्ततिवर्धनम् ।
कर्तव्यं विधिना सर्वं मध्याह्नोत्तरमेव ह ॥११४॥
शिवपूजा प्रकर्तव्या भुक्तिमुक्तिप्रदा यतः ।
माघस्य कृष्णाष्टम्यां वै भद्रकालीव्रतं चरेत् ॥११५॥
पूजयेद् वैरिवृन्दघ्नीं सर्वकामप्रदायिनीम् ।
अष्टम्यां माघशुक्लस्य कृष्णनारायणो हरिः ११६॥
दिव्यकाव्यां चकारावतरणं ब्रह्मलोकतः ।
नवम्यां स पराविद्यासंचारं कृतवान् प्रभुः ॥११७॥
अवतारव्रतं विद्याव्रतं कार्यं दिनद्वयम् ।
पूजनं षोडशवस्तुकृतं दानं सुवर्णकम् ॥११८॥
दुग्धसारं प्रभुंज्याच्च विद्यां भुक्तिं व्रती लभेत् ।
माणिकीं पार्वतीं लक्ष्मीं प्रभां कृष्णं च पूजयेत् ॥११९॥
कृष्णेन सहिताः सर्वाः प्रसन्नाः पट्टयोषितः ।
नयन्ति पुरुषं नारीं स्वकं धाम पराक्षरम् ॥१२०॥
फाल्गुने त्वसिताष्टम्यां भीमादेवीव्रतं मतम् ।
भीमायाः पूजनं कार्यं भुक्तिमुक्तिफलप्रदम् ॥१२१॥
शुक्लाष्टम्यां फाल्गुनस्य शिवं शिवां समर्चयेत् ।
शीतलां पूजयेच्चापि पूर्वकृन्मिष्टभोजनैः ॥१२२॥

दिगम्बरां रासभस्थां मार्जनीकलशान्विताम् ।
विस्फोटनाशिनीं देवीं जले जपेदतन्द्रितः ॥१२३॥
तस्य तु शीतला देवी स्याद् विस्फोटकशान्तिदा ।
शीतलाया व्रतकर्तुर्वर्षे शान्तिमयं भवेत् ॥१२४॥
चैत्रस्याऽधवलाष्टम्यामृषभोऽहं बभूव वै ।
कर्तव्यं पूजनं विष्णोर्व्रतिना पुण्यदं परम् ॥१२५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने वार्षिकाष्टमीव्रतेषु पार्वतीजयन्तीदुर्गाष्टमीदशाहफलव्रत-कृष्णाष्टमीराधाष्टमीदूर्वाष्टमीज्येष्ठाष्टमीकंभरालक्ष्मी-जयन्तीदुर्गाव्रतकरकाव्रतश्रीकृष्णनारायणभगवज्ज-यन्तीकालाष्टमीगोपाष्टमीदर्भव्रतश्राद्धाष्टमी-भैरवाष्टमीश्रीकृष्णनारायणकाश्यवतरण-व्रतविद्याव्रतपट्टराज्ञीकृतपूजनव्रत-भीमादेवीव्रतशीतलाष्टमीऋषभ-जयन्त्यादिव्रतानां निरूपणं नाम त्रिसप्तत्यधिकद्विशत-तमोऽध्यायः ॥२७३॥

**श्रीनारायण उवाच—**

कथयामि वत्सरस्य नवमीनां व्रतानि ते ।
शृणु लक्ष्मि ! यानि कृत्वा स्वर्गं मोक्षं च विन्दति ॥ १ ॥
चैत्रस्य धवले पक्षे रामजन्मव्रतं मतम् ।
श्रीरामनवमी कार्या सोत्साहा बहुपुण्यदा ॥ २ ॥
उपोष्या साऽथवा कार्यं त्वेकभक्तं जनैः परम् ।
मण्डपः सुमहान् कार्यः सर्वतोभद्रमण्डलम् ॥ ३ ॥
कारयित्वा घटं न्यस्य मूर्तिं स्थाल्यां निधापयेत् ।
मुकुटादि धनुर्बाणौ भूषणादि च धारयेत् ॥ ४ ॥
पूजनं षोडशवस्तुकृतं नीराजनादिकम् ।
नैवेद्ये कैसरं भक्तं शर्करां दधि पायसम् ॥ ५ ॥
दद्याच्च जागरं कुर्यात्परेऽह्नि दानमाचरेत् ।
गोभूतिलहिरण्यादि दद्याद्वै गुरवे व्रती ॥ ६ ॥
विप्रान्साधूंश्च सन्तर्प्य व्रती कुर्वीत पारणाम् ।
एवं कृत्वा व्रतं विष्णोर्व्रजेत् सः परमं पदम् ॥ ७ ॥
अस्यामेव तिथौ हरिजयन्तीव्रतमित्यपि ।
कर्तव्यं धर्मभवने हरिकृष्णो व्यजायत ॥ ८ ॥
अस्मिन्नेव दिने भद्रकाली तु योगिनीवरा ।
शंकरेणाऽभिषिक्ता सा सर्वासामाधिपत्यके ॥ ९ ॥
इदं मातृव्रतं प्रोक्तं भैरवेण समन्विताः ।
चतुःषष्टिस्तु योगिन्यः संपूज्याश्चण्डिकान्विताः ॥१०॥
वैशाखे तु रमां देवीं पूजयेद्धरिणाऽन्विताम् ।
भुक्तिमुक्तिप्रदां पुत्रवित्तसौभाग्यदां शुभाम् ॥११॥
एकभुक्तं नवम्यास्तु शुक्लाया व्रतमत्र वै ।
कर्तव्यं पूजनाद्यं च दानं सौवर्णवस्तुनः ॥१२॥
ज्येष्ठशुक्लनवम्यां तु देवीमुमां सुमंगलाम् ।
तपोनिष्ठां पूजयेद्वै व्रतं नक्तं मतं शुभम् ॥१३॥
कुमारीर्भोजयेच्छक्त्या नैकदानानि दापयेत् ।
दद्याच्च दक्षिणां श्रेष्ठामश्नीयात्पायसं व्रती ॥१४॥
लक्ष्मी ! माषाढशुक्लस्य नवम्यां पूजयेद् व्रती ।
ऐरावतस्थितां चैन्द्रीं तद्वत् संपूजयेद् व्रती ॥१५॥
स भवेद्देवलोके तु भोगवान् देवयानवान् ।
नवम्यां श्रावणे शुक्ले भार्गवीं श्रियमर्चयेत् ॥१६॥
कुमारीं दुःखहां लक्ष्मीं यजेन्नैवेद्यसद्रसैः ।
गन्धपुष्पधूपदीपाम्बरनेपालकम्बलैः ॥१७॥
कुमारीर्भोजयेच्चापि दुःखहाश्रीस्वरूपिणीः ।
दुःखहालक्ष्म्या व्रतकृद् याति कृष्णालयं परम् ॥१८॥
नकुलनवमी चेयं कर्तव्या व्रतिना तथा ।
भाद्रशुक्लनवम्यां तु नन्दाव्रतमुदाहृतम् ॥१९॥
नन्दां दुर्गां पूजयेद्वै विधिवच्चोपचारकैः ।
अश्वमेधफलं लब्ध्वा व्रती वैकुण्ठगो भवेत् ॥२०॥
अदुःखनवमी चेयं कर्तव्या दुःखनाशिका ।
इयं त्वविधवानवमी कर्तव्या धवजीविका ॥२१॥
उपवासश्च कर्तव्यः पूज्या लक्ष्मीः सती तथा ।
आश्विनशुक्लनवमी महानवमी चेरिता ।
नवरात्रव्रतान्ते सा यत्र दुर्गा प्रपूज्यते ॥२२॥
महालक्ष्मीस्तथा पूज्या देव्यः पूज्यास्तु कोटिशः ।
सर्वा देव्यः प्रपूज्यन्ते सधवा अधवाश्च वा ॥२३॥
वस्त्रालंकारभूषादिश्रांगारिकद्रवादिभिः ।
यानवाहनभोज्यादिविलासादिभिरित्यथ ॥२४॥
अपराह्णे शमीपूजा कर्तव्या प्रागुदिशि प्रिये ।
सायं शंखं गदां चक्रं कमलं च प्रपूजयेत् ॥२५॥
खड्गं धनुरिषून् शक्तिं शूलं चर्म च खेटकम् ।
छुरिकां परशुं पाशं दण्डं वज्रं चिपीटकम् ॥२६॥
छत्रं ध्वजं गजं चाश्वं हंसं वीणां मयूरकम् ।
वृषभं महिषं ग्रन्थं तुलां गां मस्तकादिकम् ॥२७॥

यया यद्रक्षितं स्वस्यास्तत्तत्सर्वं प्रपूजयेत् ।
यस्या यच्च बलि प्रेष्ठं तस्यैतत्त्वर्पयेद् व्रती ॥२८॥
पूजां रात्रौ समाप्यैव प्रातर्विसर्जनोत्तरम् ।
व्रती पक्वान्नमद्याद् वै तथा विप्रांश्च भोजयेत् ॥२९॥
दत्त्वा च दक्षिणां पश्चाद् दत्वा दानानि भावतः ।
व्रतपूर्तिं प्रकुर्याद्वै प्रतिमा निक्षिपेज्जले ॥३०॥
एवं व्रतेन लोकानां मातरः सुखदाः सदा ।
तुष्टाः पुष्टाः पोषयन्ति बालान् लोकान् दयाश्रयाः ॥३१॥
व्रती भुक्त्वा वरान्भोगानन्ते स्वर्गादिकं व्रजेत् ।
मातृलोकं सतीलोकं देवीलोकं व्रजेत्तथा ॥३२॥
कार्तिकशुक्लनवमी याऽक्षया सा व्रतं महत् ।
देवर्षिपितॄणामश्वत्थमूले तर्पणं चरेत् ॥३३॥
सूर्यायाऽर्घ्यं प्रदत्त्वाथ द्विजान् बालाँश्च भोजयेत् ।
दानं होमं जपं कुर्याद् दद्याच्च दक्षिणां व्रती ॥३४॥
तीर्थे च मन्दिरे सर्वं कृतं तत्त्वक्षयं भवेत् ।
कूष्माण्डदानं दद्याद्वै मुख्यं यज्ञफलं भवेत् ॥३५॥
मार्गे शुक्ले नन्दिनी तु नवमीव्रतमुच्यते ।
उपोषितो व्रती नन्दालक्ष्मीं संपूजयेत्ततः ॥३६॥
दद्याद् दानं तु कन्यायाः फलं स्यादश्वमेधजम् ।
पौषशुक्लनवम्यां तु महालक्ष्मीं प्रपूजयेत् ॥३७॥
माघमासे नवम्यां तु महानन्दां प्रपूजयेत् ।
फाल्गुनस्य नवम्यामानन्दालक्ष्मीं प्रपूजयेत् ॥३८॥
अत्र स्नानं जपो माला दानं होम उपोषणम् ।
सर्वमक्षयतां याति कृष्णलक्ष्मीप्रसादतः ॥३९॥
दानं च विविधं देयं पात्रे देशे दिने शुभे ।
पात्रं ते वच्मि कमले यत्पात्रं तारयेज्जनान् ॥४०॥
न विद्यया केवलया तपसा वाऽपि पात्रता ।
यत्र वृत्तं द्वयं तद्वै सत्पात्रं भक्तिसंयुतम् ॥४१॥
स्वाध्यायी नियमी ध्यानी तपोयुक्तो जितेन्द्रियः ।
क्षमाशीलः शान्तभावः सत्यवादी द्विजोऽथवा ॥४२॥
शास्त्राभ्यासी श्रुतसर्वोऽद्रोहो प्रतिग्रहाऽरतः ।
सुव्रतः साधुशीलश्च पात्रं भक्तो महत्तमम् ॥४३॥
साधवो ध्यानशीलाश्च परोपकरणे रताः ।
पुनन्ति दर्शनं प्राप्ताः किं पुनः संगतिं गताः ॥४४॥
तेभ्यो दत्वा यथापेक्षं प्राप्नुयुः परमां गतिम् ।
श्रोत्रियाय सुधर्माय ब्रह्मनिष्ठाय चार्पयेत् ॥४५॥
क्षमा दया स्पृहा सत्यं दानं शीलं तपः श्रुतम् ।
एतदष्टांगमत्रोक्तं परमं पात्रलक्षणम् ॥४६॥

याज्ञिकं वाचकं पौराणिकं चाचार्यकं गुरुम् ।
कृष्णं स्त्रीषु दयावन्तं गोसेविनं सुपात्रकम् ॥४७॥
नग्नं वृत्तिहीनं क्षुत्तृट्सहितं शरणागतम् ।
सत्कर्मकारिणं पात्रं तद्दत्तं शाश्वतं तु तत् ॥४८॥
गोभूतिलहिरण्यादि पात्रे दत्तं सदाऽक्षयम् ।
किंचिद्वेदमयं पात्रं किञ्चित् पात्रं तपोमयम् ॥४९॥
किञ्चिद्भक्तिमयं पात्रं पात्रं ब्रह्ममयं तथा ।
ब्रह्मचारी यतिः साधुः साध्वी पात्रं सदा मतम् ॥५०॥
एतादृशं समर्थं तु दातारं तारयिष्यति ।
निस्तारयति दातारमात्मानं च स्वतेजसा ॥५१॥
शतं त्वब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे ।
सहस्रगुणमाचार्ये ह्यनन्तं साधुषु स्मृतम् ॥५२॥
वेदेन्धनसमृद्धेषु हुतं विप्रमुखादिषु ।
सन्तारयति दातारं हुतं साध्वीषु साधुषु ॥५३॥
हृतस्वा हृतसर्वस्वा द्विजाः पात्रं परं मतम् ।
अतिथयोऽभ्यागताश्च पात्रं च कृशवृत्तयः ॥५४॥
धर्मरता ज्ञानरता भक्तिरता दयालवः ।
तपोरता भैक्षजीवास्तेषां दत्तं महाफलम् ॥५५॥
सन्निहितं परित्यज्य पात्रं देशान्तरस्थितम् ।
अभिगच्छेत्तु दानार्थं दहत्यासप्तमं कुलम् ॥५६॥
यस्य चैव गृहे मूर्खो दूरे चास्ति बहुश्रुतः ।
तत्र नातिक्रमो दोषो हूयतेऽग्नौ न भस्मनि ॥५७॥
बाला भोजनपात्राणि नार्यः शृंगारपात्रिकाः ।
युवा तून्नतिपात्रं स्यात् सेवापात्रं स्थवीरकाः ॥५८॥
साधवश्चार्चनपात्रमन्नपात्रं तु भिक्षुकाः ।
दुःखितास्तु दयापात्रं सत्यपात्रं सुहृत्तमाः ॥५९॥
दीनाश्चोपकृतेः पात्रं रक्षापात्रं पदाश्रिताः ।
स्वर्गपात्रं दानवन्तः सुखपात्रं सुतुष्टयः ॥६०॥
विवाहमेखलाबन्धप्रतिष्ठादिक्रतुप्रदम् ।
दीनान्धकृपणापन्नादिषु दत्तं तदक्षयम् ॥६१॥
निन्दके द्रोहके चौरे शठे घातिनि नाशके ।
क्रूरे सकपटे सेर्ष्ये धर्महीने च पापिनि ॥६२॥
धूर्ते छलिन्यनिष्टचिन्तके सासूयके सुलौ ।
दुःखदे व्यसनाढ्ये चाततायिनि ह्यभक्तके ॥६३॥
हुतं दत्तं कृतं सर्वं नश्यत्येव न संशयः ।
रोदित्येतद् दीयमानं किं मया दुष्कृतं कृतम् ॥६४॥
ऊषरे बीजमुप्तं वा भस्मन्यपि च यद्धुतम् ।
अपात्रके च यद्दत्तं तन्नाशे परिणीयते ॥६५॥

यद्यदिष्टं भवेत्स्वस्य स्वीयं न्याय्यं च यद्भवेत् ।
पात्रे तद्वै प्रदातव्यं फलकृद् दानमेव तत् ॥६६॥
सश्रद्धं सविधिं पात्रे दत्तस्याऽन्तो न विद्यते ।
इति ते कथितं लक्ष्मि ! व्रतदानसुपात्रकम् ॥६७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने वार्षिकनवमीव्रतेषु श्रीरामजयन्तीश्रीहरिजयन्तीभद्रकाली-व्रतरमाव्रतोमाव्रतैन्द्रीव्रतदुःखहालक्ष्मीव्रतनकुलव्रतनन्दा-दुर्गाव्रताऽदुःखनवमीव्रताऽविधवानवमीनवरात्रनवमी-व्रताऽक्षयानवमीकूष्माण्डनवमीनन्दिनीनवमीमहा-लक्ष्मीमहानन्दाऽऽनन्दापूजासत्पात्रादिचेति-निरूपणनामा चतुःसप्तत्यधिकद्विशत-तमोऽध्यायः ॥२७४॥

**श्रीनारायण उवाच—**

अथान्यानि दशम्यास्ते व्रतानि कथयानि वै ।
यानि कृत्वा महालक्ष्मि ! जनः स्वर्गं शमाप्नुयात् ॥ १ ॥
चैत्रशुक्लदशम्यां वै धर्मराजव्रतं चरेत् ।
स्नानपुष्पफलगन्धाऽम्बरभूषाभिरर्चयेत् ॥ २ ॥
एकभक्तो व्रती चतुर्दशविप्रान् समर्चयेत् ।
भोजयेद् दक्षिणां दद्यात् कृत्वैवं स्वर्गमाप्नुयात् ॥ ३ ॥
वैशाखशुक्लदशमीतिथौ विष्णुं प्रपूजयेत् ।
षोडशभिस्तूपचारैः शतं कुर्यात् प्रदक्षिणाः ॥ ४ ॥
साधून् विप्रान् भोजयित्वा वैकुण्ठं लभते ध्रुवम् ।
ज्येष्ठः शुक्लदलं हस्तो बुधश्च दशमी तिथिः ॥ ५ ॥
गरानन्दव्यतीपाताः कन्येन्दुवृषभास्कराः ।
दशयोगो महापुण्यो दशपापहरो हि सः ॥ ६ ॥
गंगादशहरा बोध्या गंगा स्वर्गात् समागता ।
गंगायां विधिना स्नात्वा प्रयाति हरिमन्दिरम् ॥ ७ ॥
अषाढशुक्लदशमी मन्वाद्यातिथिरस्ति यत् ।
अस्यां स्नानं जपो दानं होमो वा स्वर्गतिप्रदाः ॥ ८ ॥
श्रावणे शुक्लदशमी सर्वाशापरिपूर्तिदा ।
शिवार्चनं प्रकुर्याद्वै दानहोमादिपूर्वकम् ॥ ९ ॥
भाद्रशुक्लदशम्यां च दशाविर्भावसद्व्रतम् ।
तीर्थे स्नानं तथा कुर्याद् देवर्षिपितृतर्पणम् ॥१०॥
दशावतारपूजां च कुर्यात् पृथग् व्रती स्वयम् ।
मत्स्यं कूर्मं वराहं च नरसिंहं त्रिविक्रमम् ॥११॥
रामं कृष्णं जामदग्निं बौद्धं कल्किं प्रपूजयेत् ।
दशमूर्तीस्तु सौवर्णीः पूजयित्वाऽर्पयेद् व्रती ॥१२॥
द्विजाय चैकभक्तं च कृत्वा साधून् सुभोजयेत् ।
एवं कृत्वा व्रतं भुक्त्वा स्वर्गं वैकुण्ठमाप्नुयात् ॥१३॥
आश्विनशुक्लदशमी बिजयादशमी मता ।
चतुर्गोमयपिण्डानि प्रातर्न्यस्य गृहांगणे ॥१४॥
चक्ररूपेषु मध्येऽत्र वासुदेवसुकर्षणौ ।
प्रद्युम्नमनिरुद्धं च पूजयेच्चतुरोऽपि हि ॥१५॥
सपिधानासु पात्रीषु गोमयीषु चतुस्र्षु ।
क्लिन्नं धान्यं सरौप्यं च धृत्वा शुक्लाम्बराऽऽवृतम् ॥१६॥
संपूज्याऽक्षतपुष्पाद्यैर्नमस्कुर्वीत वै ततः ।
मध्याह्ने भोजयेद्बालान् मिष्टमद्यात्तथा व्रती ॥१७॥
अथाऽपराह्णे पूर्वस्यां शमीमूलस्थमृत्तिकाम् ।
गृहीत्वा स्वगृहं नीत्वा संपूज्यापि बिधानतः ॥१८॥
क्षत्रियश्चेत् स्वकं सैन्यं सज्जीकृत्य च सर्वथा ।
निर्गत्य पूर्वद्वारेण ग्रामाद्बहिरनाकुलः ॥१९॥
शत्रुप्रतिकृतिं तत्र निर्मितां पत्रकादिभिः ।
मनसा कल्पितां तां च स्वर्णपुंखशरेण सः ॥२०॥
विध्येदिति भृशं प्रीतः प्राप्नुयात् स्वगृहं ततः ।
पश्चाद् युद्धं प्रकुर्याच्चेद् विजयी स्यान्न संशयः ॥२१॥
धनं जयं महाराज्यं सुतगोगजवाजिनः ।
अजाविकमिह दद्यादन्ते स्वर्गगतिं तथा ।
श्रीरामः प्रस्थितश्चाद्य बिजयायोत्सवं चरेत् ॥२२॥
दशम्यां कार्तिके शुक्ले सार्वभौमव्रतं चरेत् ।
एकभुक्तो व्रती तत्र निशीथेऽपूपकादिभिः ॥२३॥
दश दिक्षु बलिं दद्याद् गृहाद्वापि पुराद् बहिः ।
गोशकृल्लिप्तभूभागे मण्डलेऽष्टदले व्रती ॥२४॥
बलिदानं प्रकुर्वीत वदन्नेतादृशं तदा ।
यन्मे पूर्वगतं पापमिन्द्रो धुनोतु चेष्टदः ॥२५॥
यन्मे वह्निगतं पापं बह्निर्धुनोतु चेष्टदः ।
यन्मे दक्षगतं पापं यमो धुनोतु चेष्टदः ॥२६॥
यन्मे नैर्ऋतिगं पापं रक्षो धुनोतु चेष्टकृत् ।
यन्मे पश्चिमगं पापं यादो धुनोतु चेष्टकृत् ॥२७॥
यन्मे वायुगतं पापं वायुर्धुनोतु चेष्टदः ।
यन्मे सौम्यगतं पापं यक्षो धुनोतु चेष्टदः ॥२८॥
यन्मे त्वीशगतं पापं चेशो धुनातु चेष्टदः ।
यन्मे ऊर्ध्वगतं पापं ब्रह्मा धुनोतु चेष्टदः ॥२९॥
यन्मेऽधःसंगतं पापं नागो धुनोतु चेष्टदः ।
एवं दत्वा बलिं दिक्षु विदिक्षु च व्रती ततः ॥३०॥

क्षेत्रपालाय तद्वाह्ये क्षिपेद् बलिमतन्द्रितः ।
शेषरात्रौ जागरणं कुर्याद् गृहं समागतः ॥३१॥
प्रातः स्नात्वा समभ्यर्च्य लोकपालाँस्ततो द्विजान् ।
द्वादशाऽभ्यर्च्य संभोजयित्वा दद्याच्च दक्षिणाम् ॥३२॥
इत्थं कृत्वा व्रतं लक्ष्मि ! भोगान् भुक्त्वैहिकान् शुभान् ।
युगं स्वर्गसुखं भुक्त्वा सार्वभौमो नृपो भवेत् ॥३३॥
मार्गशुक्लदशम्यां त्वश्विनीकुमारमर्चयेत् ।
धन्वन्तरिं पूजयेच्चारोग्यं भवति सर्वदा ॥३४॥
पौषशुक्लदशम्यां तु विश्वेदेवान् समर्चयेत् ।
क्रतुं दक्षं वसून् सत्यं कालं कामं मुनिं गुरुम् ॥३५॥
विप्रं रामं कृष्णनारायणरूपान् समर्चयेत् ।
दर्भासनेषु सन्न्यस्य धूपदीपनिवेदनैः ॥३६॥
षोडशवस्तुभिः संपूजयित्वा तान् विसर्जयेत् ।
व्रती लोकद्वयसौख्यभोक्ता भवति सर्वथा ॥३७॥
माघशुक्लदशम्यां वै त्वांगिरसान्समर्चयेत् ।
आत्मा ह्यायुर्मनो दक्षो मदः प्राणो गविष्ठकः ॥३८॥
दत्तः सत्यश्च बर्हिष्मान् दशाऽर्चयेत् सुवस्तुभिः ।
उपचारैः षोडशाद्यैर्मूर्तीर्दद्याद् द्विजातये ॥३९॥
आंगिरसान्परान् लोकानाप्नोत्येवं व्रती व्रते ।
फाल्गुनशुक्लदशमीतिथौ यमान् प्रपूजयेत् ॥४०॥
यमश्च धर्मराजश्च मृत्युश्चैवान्तकस्तथा ।
वैवस्वतश्च कालश्च सर्वभूतक्षयस्तथा ॥४१॥
औदुम्बरश्च दध्नश्च नीलश्चैव वृकोदरः ।
परमेष्ठी तथा चित्रश्चित्रगुप्तश्चतुर्दश ॥४२॥
पूजयेत्तान् भोजयेच्च तर्पयेच्च तिलांबुभिः ।
ततः सूर्याय चार्घ्यं च दद्याद्वै ताम्रपात्रतः ॥४३॥
रक्तचन्दनसम्मिश्रतिलाऽक्षतयवांबुभिः ।
भोजयेद् वाडवान् पश्चाद् व्रती भुंजीत वाग्यतः ॥४४॥
एवं व्रती धर्मराजप्रसन्नतामवाप्य च ।
अत्र भोगान्परान् भुक्त्वा देहान्ते विष्णुधामभाक् ॥४५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने वार्षिकदशमीव्रतेषु धर्मराजव्रतविष्णुव्रतगङ्गादशहरा-मन्वादितिथिसर्वाशापूर्तिव्रतदशावतारपूजाविजया-दशमीसार्वभौमव्रताऽऽरोग्यव्रतविश्वेदेवांगिरस-यमव्रतादिप्रदर्शननामा पञ्चसप्तत्यधिक-द्विशततमोऽध्यायः ॥२७५॥

श्रीनारायण उवाच—

प्राक् कथितानि ते लक्ष्मि ! ह्येकादशीव्रतानि यत् ।
तानि त्रिदिनसाध्यानि सम्पूर्णानि व्रतानि वै ॥ १ ॥
त्यजेच्चत्वारि भुक्तानि पञ्चजे वै दिनत्रये ।
आद्यन्तयोरेकमेकं मध्यमे द्वयमेव च ॥ २ ॥
कांस्यं मांसं मसूरान्नं चणकान्कोद्रवाँस्तथा ।
शाकं मधु परान्नं च पुनर्भोजनमैथुने ॥ ३ ॥
दशम्यां दश वस्तूनि वर्जयेत्तु व्रती सदा ।
द्यूतक्रीडां च निद्रां च ताम्बूलं दन्तधावनम् ॥ ४ ॥
परापवादं पैशुन्यं स्तेयं हिंसां तथा रतिम् ।
कोपं ह्यनृतवाक्यं च ह्येकादश्यां विवर्जयेत् ॥ ५ ॥
कांस्यं मांसं सुरां क्षौद्रं तैलं विण्म्लेच्छभाषणम् ।
व्यायामं च प्रवासं च पुनर्भोजनमैथुने ॥ ६ ॥
अस्पृश्यस्पर्शमित्येतान् द्वादश्यां दश वर्जयेत् ।
एकभुक्तं च वा नक्तं कृत्वाऽपि व्रतमाचरेत् ॥ ७ ॥
श्रावणशुक्लैकादश्यां पवित्रं हरयेऽर्पयेत् ।
हैमं रौप्यं कौशेयजं क्षौमं कौशं कार्पासजम् ॥ ८ ॥
षष्ट्यधिकत्रिशततन्तुजं श्रेष्ठं पवित्रकम् ।
साधारणं त्रिसूत्रोत्थं मध्यमं तु यथेष्टकम् ॥ ९ ॥
उत्तमं शतग्रन्थि षड्त्रिंशद्ग्रन्थि कनिष्ठकम् ।
श्रेष्ठमाजानुलम्बि कनिष्ठं नाभिस्पृशं मतम् ॥१०॥
पूजनं श्रीकृष्णनारायणस्य रमया सह ।
कुर्वीतेह सुखी भूत्वा वैकुण्ठं चाप्नुयात्परम् ॥११॥
द्वादश्यामपि गुरवे श्रीकृष्णायापि चार्पयेत् ।
पवित्राणि तु रम्याणि सुखसम्पत्कराणि हि ॥१२॥
अथ भाद्रपदे मासि शुक्लैकादशिकादिने ।
दानिलीलां हरेः कुर्यात् कालिन्द्यां नावि तु प्रभोः ॥१३॥
दधि नीत्वा विक्रयार्थं यान्तीर्गोपीरयाचत ।
करं दाणमिति तस्य तदा पदानि गापयेत् ॥१४॥
नैवेद्ये च दधि भक्तं दद्यात् कृष्णाय वै व्रती ।
करदानं दधिदानं श्रीकृष्णाय प्रकल्पयेत् ॥१५॥
अथ कार्तिकशुक्लैकादश्यां धर्मार्चनोत्सवः ।
धर्मजन्मनिमित्तो मध्याह्ने कार्यो व्रतार्थिना ॥१६॥
स्वर्णमूर्तिं रचयित्वा सर्वतोभद्रमण्डले ।
मण्डपान्तर्गते ताम्रे घटे निधाय पूजयेत् ॥१७॥
चतुर्वक्त्रं चतुर्बाहुं चतुष्पादं सिताम्बरम् ।
श्वेतवर्णं करे दक्षे मालां वामे च पुस्तकम् ॥१८॥

दधानं दक्षिणे पार्श्वे व्यवसायं सुमूर्तकम् ।
वामपार्श्वे सुखं न्यस्य सान्निध्ये भक्तिमेव च ॥१९॥
पूजापात्रं धृतवतीं पूजयेद् भावतो व्रती ।
षोडशकैरुपचारैः पूजयित्वाऽथ भोजयेत् ॥२०॥
विसर्जयेन्निशि कृत्वा जागरं पूजनं प्रगे ।
दद्याद् दानानि चान्यानि धर्मभक्तिबलं भवेत् ॥२१॥
धर्मेण सह तत्पत्न्यः श्रद्धाद्या वै त्रयोदश ।
दक्षपुत्र्यः सुसंस्थाप्या भोज्याः पूज्या विधानतः ॥२२॥
धर्मस्येमा धर्मपत्न्यः श्रद्धा शान्तिर्दया गतिः ।
मेधा तुष्टिस्तथा पुष्टिर्मैत्री लज्जा क्रियोन्नतिः ॥२३॥
मूर्तिबुद्धिर्दिव्यरूपा नामान्तरेण वापि ताः ।
सुवर्णमूर्तयः कार्यास्तासां वंशोऽपि विस्तृतः ॥२४॥
पूजनीयो विशेषेण परलोकं समिच्छता ।
तन्निमित्तानि दानानि प्रदेयान्युत्तमान्यपि ॥२५॥
इत्येकादशिकासाध्यं तपो व्रतं व्रती चरेत् ।
भुक्तिं मुक्तिं व्रजेद् यद्यदिष्टं तत्सर्वमाप्नुयात् ॥२६॥
एकादशीनां सर्वासां व्रतान्युक्तानि प्राग्यथा ।
विधिवत् तद्व्रतान्यत्र कृतौ ग्राह्याणि सर्वथा ॥२७॥
उद्यापनानि सर्वेषां कर्तव्यानि विधानतः ।
भुक्तिं मुक्तिं व्रजेत् कर्ता नरो नारी नपुंसकम् ॥२८॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने एकादशीपाल्यनियमपवित्रारोपणव्रतदानिलीलाव्रतधर्म-जयन्त्यादिव्रतनिरूपणनामा षट्सप्तत्यधिकद्विशत-तमोऽध्यायः ॥२७६॥

**श्रीनारायण उवाच—**

अथ लक्ष्मि ! शृणु वक्ष्ये द्वादशीनां व्रतानि ते ।
कृत्वा यानि जना यान्ति शाश्वतं हरिमन्दिरम् ॥ १ ॥
चैत्रशुक्लद्वादशीति मदनव्रतमाचरेत् ।
श्वेततन्दुलसंपूर्णं घटं फलेक्षुशोभितम् ॥ २ ॥
वस्त्रयुग्मयुतं स्वर्णमिष्टान्नस्थालिकायुतम् ।
चन्दनाद्यर्चितं न्यस्य सर्वतोभद्रमण्डले ॥ ३ ॥
स्थाल्यां श्रीकामदेवस्य मूर्तिं रतिसमन्विताम् ।
स्थापयेत्पूजयेत्सर्वपुष्परससुगन्धिभिः ॥ ४ ॥
भोजयेच्च राजसानि भोजनानि च पायसम् ।
त्रयोदश्यां प्रगेऽभ्यर्च्य विसर्जयेदनंगकम् ॥ ५ ॥
एवं वर्षं व्रतं कृत्वा घृतं शय्यां सवत्सगाम् ।
स्वर्णं कामं रतिं दद्याद् दानं श्रीगुरवे मुदा ॥ ६ ॥
कृष्णनारायणं लक्ष्मीं पूजयेत्प्रार्थयेत्तथा ।
प्रीयतां कामरूपी मे हरिः सौख्यप्रदो भव ॥ ७ ॥
मदनद्वादशीव्रतकर्ता गोलोकमेति सः ।
दम्पती सुखमाप्नोति शाश्वतं कृष्णसेवनात् ॥ ८ ॥
अस्यामेव व्रतं चान्यद् भर्तृद्वादशिकाव्रतम् ।
मंडपं कारयित्वा च सर्वतोभद्रमण्डलम् ॥ ९ ॥
स्वास्तृतां सुखशय्यां च सपुष्पामुपकल्पयेत् ।
रमायुक्तं हरिं तत्र सम्पूज्य षोडशादिभिः ॥१०॥
नीराजयित्वा श्रीकृष्णं स्वापयेद्रमया सह ।
व्रती जागरणं कुर्याद् गीतवादित्रपूर्वकम् ॥११॥
प्रातः पुनश्च सम्पूज्य गन्धाद्यैर्भोजयेच्च तम् ।
सशय्यं श्रीहरिं हैमं श्रीगुरवे निवेदयत् ॥१२॥
भोजयित्वा द्विजान् साधून् विसृजेद् दक्षिणायुतान् ।
एवं व्रतकृश्चात्र दाम्पत्यं शाश्वतं भवेत् ॥१३॥
सप्तजन्मसु भुंक्तेऽत्र भोगान् स्वर्गे स्तृतो व्रती ।
भर्तुः पूजा प्रकर्तव्या पत्न्या अपि विशेषतः ॥१४॥
भर्ता साक्षाद् वासुदेवः सर्वान् कामान् ददाति वै ।
दैहिकं लौकिकं स्वर्ग्यं सुखं सर्वं ददाति सः ॥१५॥
वैशाखशुक्लद्वादश्यां हरिं संपूज्य माधवम् ।
पक्वान्नं सजलं दद्यात् सर्वान्कामानवाप्नुयात् ॥१६॥
ज्येष्ठशुक्लद्वादश्यां तु प्रसंपुज्य त्रिविक्रमम् ।
मिष्टं दद्यात् करकादि सर्वान् भोगानवाप्नुयात् ॥१७॥
अषाढशुक्लद्वादश्यां वामनं पूजयेत्प्रभुम् ।
शाकव्रतं प्रकुर्याच्चाऽलवणव्रतमाचरेत् ॥१८॥
दद्याद् दानानि धर्मात्मा वस्त्रभूषोपवीतकम् ।
पात्रमुद्रोर्मिकाधान्यधनानि गुरवेऽर्पयेत् ॥१९॥
श्रावणशुक्लाद्वादश्यां श्रीधरं पूजयेद् व्रती ।
शाकव्रतं समाप्यैव दधिव्रतं समाचरेत् ॥२०॥
कौशेयजं पवित्रं च श्रेष्ठं श्रीगुरवेऽर्पयेत् ।
दद्याद् दानानि सर्वाणि यथाशक्ति सुखी भवेत् ॥२१॥
भाद्रशुक्लद्वादशिका व्रतं वामनजन्मनः ।
प्रायसं हरये दद्यात् पूजयेत् बहुवस्तुभिः ॥२२॥
सुवर्णस्य शुभां कुर्याद् वामनार्चां शुभाननाम् ।
बालां द्विभुजां सच्छत्रदण्डकमण्डलुस्रजम् ॥२३॥
मण्डपे सर्वतोभद्रे मध्याह्ने पूजयेत्तु ताम् ।
अदितिं कश्यपं भक्तं बलिं देवान् प्रपूजयेत् ॥२४॥
प्रचुराज्यसितैः कुर्यान्नैवेद्यं चूर्णलड्डुकैः ।
फलाहारं चैकभक्तं नक्तं कुर्याच्च वा व्रती ॥२५॥

द्वादशी यदि मध्याह्ने श्रवणर्क्षयुता भवेत् ।
वैकादश्यां तु मध्याह्ने यदि द्वादशिका भवेत् ॥२६॥
श्रवणर्क्षे मिलेत्तत्र स योगो विष्णुश्रृंखलः ।
भुक्तिमुक्तिप्रदो विष्णुसायुज्यप्रद उत्सवः ॥२७॥
द्वादश्यामाश्विने शुक्ले पद्मनाभं समर्चयेत् ।
भोजयेन्मधुरान्नं च दद्याद् दानानि भूरिशः ॥२८॥
श्वेत द्वीपगतिं विन्देद् भोगाँश्च वाञ्छितान् शुभान् ।
कार्तिके कृष्णपक्षे च गोवत्सद्वादशीव्रतम् ॥२९॥
कुर्याद्वै विधिना तत्र कारयेद् गां तु कानकीम् ।
सवत्सां पूजयेत् पुष्पचन्दनादिभिरादरात् ॥३०॥
भोजयेच्छुभवस्तूनि ह्यर्घ्यं दद्यात्तु पादयोः ।
माषादिवटकान् दद्याद् ग्रासान् दद्यात्तृणादिकान् ॥३१॥
संकल्पयेच्च तान्नत्वा कृत्वा प्रदक्षिणं तथा ।
सर्वदेवमयि मातर्ममाऽभिलषितं कुरु ॥३२॥
स्वर्गं मोक्षं सुखं देहि मातर्मातर्नमोऽस्तु ते ।
पूजयित्वेति दद्याच्च गवां दानं यथाबलम् ॥३३॥
तद्दिने गोः पयस्तक्रं दधि घृतं विवर्जयेत् ।
स्थालीपक्वं तैलपक्वं वैकृतं च विवर्जयेत् ॥३४॥
मूर्तां वत्सतरीयुक्तां पूजयेद्वा व्रती प्रगे ।
फलं तु बहुलं स्याद्वै प्रत्यक्षार्चनसेवनात् ॥३५॥
द्वादश्यामूर्जशुक्लायां देवं दामोदरं प्रिये ।
पूजयेत् षोडशवस्तूत्तमैश्च भोजयेद्धरिम् ॥३६॥
कुंभाँश्च सलिलैः पूर्णान् वस्त्रपल्लवपूजितान् ।
पूगमोदकरत्नादिफलस्वर्णादिशोभितान् ॥३७॥
दद्याद् दाने व्रती प्रीत्या गुरवे भोजयेत् सतः ।
एवं कृते प्रियो विष्णोर्जायतेऽखिलभोगयुक् ॥३८॥
द्वादश्यां भूभृता कार्यं नीराजनोत्तमव्रतम् ।
सुप्तोत्थितो जगन्नाथो ह्यलंकार्योऽतिवस्तुभिः ॥३९॥
निशागमे नवं वह्निं कृत्वा चाभ्यर्च्य मन्त्रतः ।
हुत्वा घृतादि मुन्यन्नं रौप्यदीपिकया जनैः ॥४०॥
गन्धपुष्पाद्यर्चितया व्रती नीराजयेद्धरिम् ।
कृष्णनारायनं लक्ष्मीं प्रभां रमां च पार्वतीम् ॥४१॥
ब्रह्माणीं चण्डिकां गौरीं माणिकीं मंगलां तथा ।
आदित्यं शंकरं यक्षं नन्दां गणपतिं ग्रहान् ॥४२॥
मातॄः पितॄन्नगान्नागान्सर्वान्नीराजयेत्तदा ।
गवां नीराजनं कुर्यान्नमो जयेति संवदेत् ॥४३॥
गोवृषाँश्च वाजिनश्च गजाँश्च लक्षणान्वितान् ।
राजचिह्नानि सर्वाणि छत्रादीनि नवानि च ॥४४॥
नृपं पुरोधसं मन्त्रिभृत्याऽन्तःपुरवासिनीः ।
पूजयित्वा यथायोग्यं शंखतूर्यादि वादयेत् ॥४५॥
अलंकृतस्ततो राजा तिष्ठेत् सिंहासने नवे ।
सभाऽपि परिपूर्णा स्यात्तदा वेश्या कुलांगना ॥४६॥
शीर्षोपरि नरेन्द्रस्य वर्धयेदक्षतैस्तथा ।
कुसुमैः स्वर्णमुद्राभिस्ततो नीरजयेन्नृपम् ॥४७॥
शान्तिमन्त्रास्तदा भूदेवानां श्रव्यास्तु भूभृता ।
एवमेषा महाशान्तिः कर्तव्या प्रतिवासरम् ॥४८॥
राज्ञा धनवता वापि वर्षमारोग्यमिच्छता ।
येषां राष्ट्रे पुरे ग्रामे क्रियते शान्तिरुत्तमा ॥४९॥
नीराजनाऽभिधा लक्ष्मि ! तद्रोगा यान्ति संक्षयम् ।
यथाकथंचित्कर्तव्या संक्षिप्ताऽपि जनैरियम् ॥५०॥
अस्यामेव तु द्वादश्यां कृतो वै विष्णुना पुरा ।
कृतयुगे तु तुलसीविवाहो व्रतमुत्तमम् ॥५१॥
उष्णीषं धारयेत्कृष्णनारायणं कुसुम्भकम् ।
हेमसूत्रमयं रक्तं कञ्चुकं चापि धारयेत् ॥५२॥
हेमवर्णां शुभां शाटीं तुलसीं परिधापयेत् ।
वस्त्राभरणपुष्पादिश्रृंगाराणि सुधापयेत् ॥५३॥
गुडौदनं तथा मिष्टं नैवेद्ये तु समर्पयेत् ।
कदल्यादिकृते रम्ये मण्डपे तु निशामुखे ॥५४॥
कृष्णनारायणविष्णुं तुलसीं पूजयेद् व्रती ।
उपचारैः षोडशभिर्गोधूलिसमयेऽर्चयेत् ॥५५॥
स्वर्णाम्बरं कण्ठसूत्रं नासाभूषां च कंकणान् ।
हरिद्रां कुंकुमादीनि तुलस्यै वै समर्पयेत् ॥५६॥
फलानि चामृतादीनि सेक्षुदण्डानि चार्पयेत् ।
नैवेद्ये पीतसाराणि खाजकानि समर्पयेत् ॥५७॥
कृत्वा नीराजनं वृन्दाकृष्णयोश्चान्तरं पटम् ।
कृत्वा पठित्वा मांगल्यं वृन्दां श्रीविष्णवेऽर्पयेत् ॥५८॥
साधून् साध्वीर्ब्राह्मणाँश्च बालाँश्च बालिका जनान् ।
भोजयेच्छक्तितो दद्याद् दानानि विविधानि च ॥५९॥
वृन्दाविवाहपद्यानि गापयेद् रसिकानि वै ।
इत्येवमुत्सवं कुर्यादखण्डभाग्यरक्षकम् ॥६०॥
द्वादश्यां मार्गशुक्लायां साध्यव्रतमनुत्तमम् ।
मनोभवस्तथा प्राणो नरो यातश्च वीर्यवान् ॥६१॥
चितिर्हयो नृपश्चैव हंसो नारायणस्तथा ।
विभुः प्रभुर्द्वादशैतान् साध्यान् देवान् प्रपूजयेत् ॥६२॥
सौवर्णांस्तण्डुलसंकल्पितान् गन्धाद्यमर्पयेत् ।
भोजयेद् बहुमिष्टान्नं प्रियान्नारायणस्त्विति ॥६३॥

एतस्यामेव कर्तव्यमादित्यद्वादशीव्रतम् ।
धाता मित्रोऽर्यमा पूषा शक्रोंऽशो वरुणो भगः ॥६४॥
त्वष्टा विवस्वान् सविता विष्णुर्द्वादश तान् रवीन् ।
प्रतिमा द्वादश हैमीः कृत्वा संपूज्य भोजयेत् ॥६५॥
प्रतिमासं तु शुक्लायां वर्षमेकं व्रतं चरेत् ।
दद्याद् दानानि सर्वाणि विप्रान् साधूँश्च भोजयेत् ॥६६॥
एवं कृत्वा व्रतं प्राप्य सूर्यलोकं समुज्ज्वलम् ।
भुक्त्वा भोगाँश्चिरं तत्र भित्त्वा सौर्यं तु मण्डलम् ॥६७॥
मायापरे परंब्रह्म कृष्णनारायणं व्रजेत् ।
अथात्रैवाऽखण्डव्रतं जनार्दनस्य कारयेत् ॥६८॥
मूर्तिं कृत्वा च सौवर्णीं जनार्दनं प्रपूजयेत् ।
भोजयेत् प्रतिमासं तु वर्षमेकं व्रती ततः ॥६९॥
नक्ताशीस्तां स्वर्णमूर्तिं धेनुं वत्सयुतां शुभाम् ।
अर्पयेद् गुरवे विप्रान् भोजयेत्पायसादिकम् ॥७०॥
प्रार्थयेच्छ्रीहरिं कृष्ण ! व्रतं चाखण्डमस्तु मे ।
सौभाग्यं च धनं धान्यमारोग्यं नित्यमस्तु मे ॥७१॥
दद्याद् दानानि चान्यानि परलोकार्थमेव ह ।
कृत्वैवं स्वर्णयानेन याति विष्णोः पदं व्रती ॥७२॥
पौषस्य कृष्णद्वादश्यां रूपव्रतमुदीरितम् ।
दशम्यां विधिवत् स्नात्वा गृह्णीयाद् गोमयं व्रती ॥७३॥
श्वेताया वैकवर्णाया अन्तरीक्षगतं प्रिये ।
अष्टोत्तरशतं तस्य पिण्डिकाः शोषयेत्ततः ॥७४॥
धृत्वा ताम्रे मृतपात्रे वा रक्षयेत् हवनाय वै ।
एकादश्यां सोपवासो विष्णुमभ्यर्च्य कानकम् ॥७५॥
भोजयेज्जागरं कुर्याद् द्वादश्यां च प्रगे पुनः ।
घटे स्थाल्यां हरिं न्यस्य पूजयेदुपचारकैः ॥७६॥
काष्ठसंघर्षणजन्यमग्निं सम्पूज्य पिण्डिकाम् ।
एकैकां होमयेत् तिलघृताद्युक्तां तु शार्ङ्गिणः ॥७७॥
शतमष्टोत्तरं होमं द्वादशाक्षरविद्यया ।
नामभिर्वा प्रकुर्याद् भोजयेत्पायसपूरिकाः ॥७८॥
घटमूर्तिं तु गुरवेऽर्पयेत्संभोजयेद् द्विजान् ।
नत्वा विसर्जयेन्नारी नरो वा व्रतमादरात् ॥७९॥
कृत्वैवं लभते रूपं सौभाग्यं चोत्तमोत्तमम् ।
पौषशुक्ले सुजन्मद्वादशीव्रतमथोच्यते ॥८०॥
स्नात्वा प्रातश्च गोशृंगवारि पीत्वा प्रणम्य च ।
प्रदक्षिणां तथा कृत्वा गृह्णीयाद् वार्षिकं व्रतम् ॥८१॥
प्रतिमासं ततः शुक्ले द्वादश्यां दानमाचरेत् ।
घृतप्रस्थं प्रदद्याच्च व्रीहिप्रस्थचतुष्टयम् ॥८२॥
यवप्रस्थचतुष्कं च हेम द्विरक्तिकं व्रती ।
तिलाऽऽढकार्धं दुग्धं तु घटपूर्णं समर्पयेत् ॥८३॥
रौप्यस्य मासमेकं च मिष्टान्नानि बहूनि च ।
छत्रं माषार्धहेम्नश्च प्रस्थं फाणितमुत्तमम् ॥८४॥
चन्दनं पलिकं वस्त्रं दशहस्तमितं शुभम् ।
प्रतिमासं तथा दानं व्रती दद्याद् यथाबलम् ॥८५॥
गोमूत्रं जलमाज्यं वा पिबेद् व्रती प्रशुद्धये ।
दधियुक्तं यवान्नं च तिलाज्यं तु सशर्करम् ॥८६॥
क्षीरं दर्भाम्बुना युक्तं शाकं यथेष्टमेव च ।
भक्षयेत्प्रतिमासं वै वर्षं यावत्तु भावतः ॥८७॥
रवेः प्रतिमां सौवर्णीं ताम्रपात्रे समर्च्य च ।
अर्पयेद् गुरवे तां सधेनुं च प्रणमेत्ततः ॥८८॥
विप्रान् साधूँस्तथासाध्वीर्भोजयित्वा विसर्जयेत् ।
व्रतवाँल्लभते जन्म धनाढ्ये ह्युत्तमे कुले ॥८९॥
सर्वस्मृद्धिमये भोज्यभोजनौजःप्रशालिनि ।
रतिशक्त्याश्रये श्रेष्ठांगनासंसेविते कुले ॥९०॥
ततो भोगानसंख्यातानत्र भुक्त्वा दिवि ध्रुवे ।
देवभोगान् प्रभुक्त्वैव वैकुण्ठं याति शाश्वतम् ॥९१॥
माघस्य शुक्लद्वादश्यां शालग्रामं प्रपूजयेत् ।
रौप्यपात्रे प्रसंस्थाप्य सुवर्णं तन्मुखेऽर्पयेत् ॥९२॥
भोजयेत्पायसान्नेन खाण्डाज्यसहितेन च ।
प्रदद्याद् वेदविदुषे वस्त्राभरणभूषितम् ॥९३॥
व्रती यायात्तु वैकुण्ठं शाश्वतानन्दभाग् भवेत् ।
फाल्गुनशुक्लद्वादश्यां सौवर्णीं प्रतिमां हरेः ॥९४॥
अभ्यर्च्य गुरवे दद्याद् भोजयेद् बालबालिकाः ।
व्रतं कृत्वा जनो याति श्रीकृष्णमन्दिरं यतः ॥९५॥
भुक्त्वा भोगानलभ्याँश्च शाश्वतं सुखमश्नुते ।
त्रिस्पृशोन्मीलनी पक्षवर्धिनी वंजुली तथा ॥९६॥
जया च विजया चैव जयन्ती चापराजिता ।
एता अष्टौ सदोपोष्या द्वादश्यः पापहारिकाः ॥९७॥
एकादशी निवृत्ता चेत्सूर्यस्योदयतः पुरा ।
तदा तु त्रिस्पृशानाम द्वादशी सा महाफला ॥९८॥
अस्या व्रतेनाश्वमेधसहस्रफलमश्नुते ।
यदाऽरुणोदये दशम्या विद्धैकादशी तिथिः ॥९९॥
तदा तां सम्परित्यज्य द्वादशीं समुपोषयेत् ।
सोन्मीलिता राजसूयसहस्रफलदायिनी ॥१००॥
यदोदये तु सवितुर्याम्या त्वेकादशीं स्पृशेत् ।
तदा वंजुलिका सा तु सर्वक्रतुफलप्रदा ॥१०१॥

कुहूराके यदा वृद्धे स्यातां सा पक्षवर्धिनी ।
सर्वैश्वर्यप्रदा सा वै पुत्रपौत्रविवर्धिनी ॥१०२॥
यदा तु धवले पक्षे द्वादशी स्यान्मघान्विता ।
तदा प्रोक्ता जया नाम सर्वत्र जयदा मता ॥१०३॥
श्रवणर्क्षयुता चेत्स्याद् द्वादशी धवले दले ।
विजया सा सर्वतीर्थफलदा सुखभोगदा ॥१०४॥
यदा स्याच्च सिते पक्षे प्राजापत्यर्क्षसंयुता ।
द्वादशी साजयन्त्याख्या व्रतदानफलप्रदा ॥१०५॥
यदा तु स्यात् सिते पक्षे द्वादशी जीवभान्विता ।
तदाऽपराजिता ज्ञानमुक्तिदा पापनाशिनी ॥१०६॥
यदा त्वाषाढशुक्लायां द्वादश्यां मैत्रभं भवेत् ।
तदा व्रतद्वयं कार्यं न दोषोऽत्रैकदैवतम् ॥१०७॥
श्रवणर्क्षयुतायां च द्वादश्यां भाद्रशुक्लके ।
ऊर्जे सितायां द्वादश्यामन्त्यभे च व्रतद्वयम् ॥१०८॥
एताभ्योऽन्यत्र कर्तव्यं द्वादश्यामेकभुक्तकम् ।
एकादश्या सहितं वै व्रतं द्वादशिकादिनम् ॥१०९॥
पृथङ्नोद्यापनं कार्यं दानं कार्यं यथाधनम् ।
इतिव्रतानि कमले कार्याणि द्वादशीदिने ॥११०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने वार्षिकद्वादशीव्रतेषु मदनव्रतभर्तृद्वादशीमाधवकरकशाकाऽलवणदधिव्रतपवित्रारोपणवामनजयन्तीपद्मनाभव्रतगोवत्सद्वादशीदामोदरनीराजनव्रततुलसीविवाहसाध्यादित्यरूपव्रतसुजन्मद्वादशीशालग्रामहरिपूजात्रिस्पृशोन्मीलनीपक्षवर्धिनीवंजुलीजयाविजयाजयन्त्यपराजिताद्वादश्यादिनिरूपणनामासप्तसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७७ ॥

**श्रीनारायण उवाच—**

अथाऽतं संप्रवक्ष्यामि त्रयोदशीव्रतानि ते ।
लक्ष्मि कृत्वा तु विधिना व्रती भोग्योत्तमो भवेत् ॥ १ ॥
चैत्रशुक्ल त्रयोदश्यां मदनं चन्दनात्मकम् ।
रत्या युक्तं पूजयेत्तं वीजयेद् व्यजनेन च ॥ २ ॥
सिन्दूररजनीरागैः फलकेऽनंगमालिखेत् ।
रतियुक्तं सुन्दरं च पुष्पचापेषुधारिणम् ॥ ३ ॥
वसन्तं वाजिवक्त्रं च वृषध्वजं च कारयेत् ।
पूजयेत् गन्धस्रग्भूषाम्बरैर्भक्ष्यैः सुपानकैः ॥ ४ ॥
मदनं ह्युमवं कामं मन्मथं च रतिप्रियम् ।
अनंगं चापि कन्दर्पं पूजयेन्मकरध्वजम् ॥ ५ ॥
कुसुमहेतिकं चापि विषमेषुं मनोभवम् ।
अर्चयेन्मालतीपुष्पैर्ह्योजादानं विधापयेत् ॥ ६ ॥
अजेयं शनिना युक्ता स महावारुणी मता ।
गंगायां यदि लभ्येत् कोटिसूर्यग्रहाऽधिका ॥ ७ ॥
शुभयोगः शतर्क्षं च शनौ कामे मघौ सिते ।
महामहेतिविख्याता कुलकोटिविमुक्तिदा ॥ ८ ॥
वसन्तसमये प्राप्ते वर्षे वर्षे महोत्सवम् ।
प्रतिमासं च वा कृत्वा यावद्वर्षं समापयेत् ॥ ९ ॥
तस्य कामः सदा तुष्टो ददात्यत्र वरांगना ।
रतिशक्तिं परलोके महासौख्यमनंगजम् ॥१०॥
वैशाखे च सिते त्रयोदश्यां कामव्रतं स्मृतम् ।
तत्र गन्धादिभिः कामं पूजयेच्च तथा पुनः ॥११॥
प्रतिमासं त्रयोदश्यां पूजयेद् योग्यवस्तुभिः ।
वर्षान्ते गां प्रदद्याच्च गुरवे व्रतसिद्धये ॥१२॥
भुक्तिं मुक्तिं परां सिद्धिं लभेत कामतोषणम् ।
स्वर्गसौख्यं वरां नारीं यथेष्टां भोगदायिनीम् ॥१३॥
ज्येष्ठशुक्लत्रयोदश्यां दौर्भाग्यशमनं व्रतम् ।
स्नात्वा नद्यां पूजयेद्वै धूपदीपजलादिभिः ॥१४॥
श्वेतमन्दारमर्कं वा करवीरं च रक्तकम् ।
निरीक्ष्य गगने सूर्यं प्रार्थयेच्च ततो व्रती ॥१५॥
मन्दारकरवीरार्का भवन्तो भास्करांशजाः ।
पूजिता मम दौर्भाग्यं नाशयन्तु नमोऽस्तु वः ॥१६॥
इत्यर्चकस्य दौर्भाग्यं नश्यत्येव न संशयः ।
त्रिविक्रमस्तथा चात्र पूजनीयो व्रतार्थिना ॥१७॥
सन्तुष्टः पृथिवीं दद्यात्प्रयच्छेद् भोगवैभवान् ।
सावित्रीव्रतमेवात्र प्रकुर्याद्वैभवेच्छया ॥१८॥
सावित्रीं वेधसं चैव पूजयेद् बहुवस्तुभिः ।
घृतं च पायसं पूरिकाश्च निवेदयेत् व्रती ॥१९॥
भुक्तिमुक्तिफलं नार्याः सौभाग्यं सर्वदा भवेत् ।
धनं धान्यं पशुं पुत्रादिकं वै लभते व्रती ॥२०॥
अषाढस्य सितां त्रयोदशीं कुर्याद् विधानतः ।
एकभक्तो व्रती संकुर्याद्जयापार्वतीव्रतम् ॥२१॥
हैम्यौ रौप्यौ मृन्मयौ च मूर्ती ह्युमामहेशयोः ।
सिंहोक्षस्थे देवगेहे गोष्ठे ब्राह्मणवेश्मनि ॥२२॥
स्थापयित्वा च विधिना त्रिदिनं परिपूजयेत् ।
तृतीयदिवसे चार्पणीयौ तौ गुरवे मुदा ॥२३॥

वर्षे वर्षे व्रतं कार्यमित्येवं वर्षपञ्चकम् ।
भोजनं विविधं दद्याद् दानानि विविधानि च ॥२४॥
व्रतान्ते धेनुयुग्मेन सहितौ तौ प्रदापयेत् ।
न वै दाम्पत्यविच्छेदौ व्रतिनोः सप्तजन्मसु ॥२५॥
श्रावणस्य सितां त्रयोदशीं कुर्याद् विधानतः ।
उपवासी व्रती कुर्याद् रतिकामव्रतं शुभम् ॥२६॥
कन्या वोढा च वा ताम्रे सौवर्णे राजते मृदि ।
रतिकामौ स्थापयित्वा गन्धाद्यैः सम्यगर्चयेत् ॥२७॥
पूजयेद् द्विजदाम्पत्यं दद्याद् वस्त्रादिदक्षिणाम् ।
भोजयेच्च व्रतं चतुर्दशाब्दं कारयेत्ततः ॥२८॥
प्रतिमे गोद्वययुते श्रीगुरवेऽर्पयेत् ।
कामनादं व्रतं चैतत्सौभाग्यकामसौख्यदम् ॥२९॥
भाद्रशुक्लत्रयोदश्यां गोत्रिरात्रव्रतं मतम् ।
लक्ष्मीनारायणं कृत्वा सौवर्णं राजतं च वा ॥३०॥
पञ्चामृतैः स्नापयित्वा मण्डलेऽष्टदले ततः ।
पीठे निधाय च पुष्पगन्धभूषाभिरर्चयेत् ॥३१॥
नीराजयेत्प्रदद्याच्च भोजनं मिष्टमुत्तमम् ।
अन्नोदकान्वितं पात्रं दद्याच्छ्रीगुरवे ततः ॥३२॥
एवं दिनत्रयं कुर्याद् व्रतान्ते गां प्रपूजयेत् ।
पञ्च गावः समुत्पन्ना मथ्यमाने महोदधौ ॥३३॥
तासां मध्ये तु या नन्दा तस्यै धेन्वै नमोनमः ।
गावो ममाग्रतः सन्तु गावो मे सन्तु पृष्ठतः ॥३४॥
गावो मे पार्श्वतः सन्तु गवां मध्ये वसाम्यहम् ।
नत्वा प्रदक्षिणीकृत्य ताभ्यो ग्रासान् प्रदापयेत् ॥३५॥
लक्ष्मीनारायणमूर्तिं श्रीगुरवे समर्पयेत् ।
अश्वमेधसहस्राणि राजसूयशतानि च ॥३६॥
कृत्वा यत्फलमाप्नोति गोत्रिरात्रव्रताश्च तत् ।
इषकृष्णात्रयोदश्यां बालादिश्राद्धमुत्तमम् ॥३७॥
कारयेत् सर्वथा येन सद्गतिः स्यात्तु घातिनाम् ।
कलेर्युगस्याऽऽद्यतिथिः प्रोच्यते पुण्यदा व्रते ॥३८॥
इषशुक्लत्रयोदश्यां त्रिरात्राऽशोकसद्व्रतम् ।
हैमं त्वशोकं निर्माय पूजयित्वा सुवस्तुभिः ॥३९॥
उपवासपरा नारी नित्यं कुर्यात् प्रदक्षिणम् ।
अष्टोत्तरशतं चाथाऽर्थयेन्मां कुर्वशोकिताम् ॥४०॥
तृतीयेह्नि हरं वृक्षे समर्च्याऽर्भकभोजनम् ।
दद्याद् दानानि पात्रेभ्यः कन्याभ्यः कज्जलादिकम् ॥४१॥
एवं व्रतवती नारी वैधव्यं नाप्नुयात् क्वचित् ।
पुत्रपौत्रादिसहिता स्यात्स्वभर्तुस्तु वल्लभा ॥४२॥

ऊर्जकृष्णत्रयोदश्यां तैलदीपं प्रकाशयेत् ।
संपूज्य च गृहद्वारे बहिः संस्थापयेत्तदा ॥४३॥
यमो मे प्रीयतां दीपप्रदानेन स्तवं चरेत् ।
एवंकृते महालक्ष्मि ! यमक्लेशो न जायते ॥४४॥
ऊर्जकृष्णत्रयोदश्यां धनपूजनमाचरेत् ।
धनं लक्ष्मीर्धनं स्वर्णं धनं दारासुतादिकम् ॥४५॥
धनपूजनतः स्थैर्यमाप्नुयान्नैव संशयः ।
लक्ष्मीं नारायणं तत्र सुवर्णे पूजयेद् व्रती ॥४६॥
मन्दिरं शोधयेत्सर्वं मण्डपं बन्धयेच्छुभम् ।
सुवर्णस्य हरेर्लक्ष्म्या मूर्तिं कुर्यात सुशोभनाम् ॥४७॥
तिलकं धारयेत् कृष्णं कुंकुमेन सुशोभनाम् ।
सुवर्णप्रान्तरचितं पटकं शीर्षिण बन्धयेत् ॥४८॥
अन्याम्बरविभूषाश्च धारयेद् योग्यवर्ष्मणि ।
लक्ष्मीं च हरितां शाटीं कौसुंभीं चारुकञ्चुकीम् ॥४९॥
स्वन्याम्बरविभूषादि धारयेच्छोभयेच्छ्रियम् ।
योग्यैः षोडशवस्त्वाद्यैः पूजयेच्च निवेदयेत् ॥५०॥
शष्कुलीखाजकादीनि मिष्टान्नानि शुभानि वै ।
नीराजयेत् प्रदीपाँश्च बहून् सर्वत्र कारयेत् ॥५१॥
नवीनपात्रवस्त्राणां दद्याद् दानानि भावतः ।
दिनचतुष्टयं लक्ष्मीनारायणप्रपूजनम् ॥५२॥
कारयेत्तु विशेषेण लक्ष्मीवासः सदा भवेत् ।
दत्वा दानं च गुरवे व्रतं पश्चात् समापयेत् ॥५३॥
ऊर्जशुक्लत्रयोदश्यामेकभोजी निशामुखे ।
प्रदीपानां सहस्रैश्च सतैर्वा दीपमालया ॥५४॥
गृहं च मन्दिरं प्रकाशयेत् कृष्णं प्रपूजयेत् ।
षोडशभिस्तूपचारैर्नैवेद्यैश्च रसान्वितैः ॥५५॥
कृष्णनारायणां लक्ष्मीं पार्वतीं माणिकीं प्रभाम् ।
हरं सूर्यं हरिं चापि पूजयेत् तुष्टिहेतवे ॥५६॥
निशामुखे प्रपूज्यैनं नीराजनां विधाय च ।
विसर्जयेद् भोजयित्वा व्रती स्वर्णादिमान् भवेत् ॥५७॥
मार्गशुक्लत्रयोदश्यामनंगं विधिनाऽर्चयेत् ।
रतिं च पूजयेत् प्रातर्भोजयेद् द्विजदंपतीम् ॥५८॥
एवंकृते व्रते स्यात्तु सर्वसौभाग्यभाजनम् ।
पौषशुक्लत्रयोदश्यां समर्च्य कमलां हरिम् ॥५९॥
घृतपात्रं प्रदद्याच्च द्विजाय स्मृद्धिसिद्धये ।
धनधान्यादिमान् कर्ता व्रतस्य सुखवान् भवेत् ॥६०॥
माघशुक्लत्रयोदश्यां समारभ्य दिनत्रयम् ।
शीतजलेन संस्नानं निशान्ते सरिति प्रिये ॥६१॥

कुर्यादार्द्रवाससैव देवं संपूजयेद् व्रती ।
जन्मान्तरादिपापानि नश्यन्त्येव न संशयः ॥६२॥
माघस्नानं फलं स्याद्वै नानाकामप्रपूरकम् ।
प्रयागे माघमासे तु त्र्यहं स्नानस्य यत्फलम् ॥६३॥
नाऽश्वमेधसहस्रेण तत्फलं लभते भुवि ।
तत्र स्नानं जपो होमः पूजनं स्यादनन्तकम् ॥६४॥
कल्पादितिथिरेषैव विश्वकर्मजयन्त्यपि ।
हरिर्ब्रह्मा स्वयं विश्वकर्मणो जन्मवानभूत् ॥६५॥
मण्डपं कारयेद् रम्यं कलाचित्रैः प्रशोभयेत् ।
विश्वकर्माणिमान्यस्य पूजयेत् सर्ववस्तुभिः ॥६६॥
नीराजयेद् भोजयेच्च दद्याद् दानानि सूरिणे ।
वाद्यगानैर्व्रती रात्रौ जागरं च समाचरेत् ॥६७॥
प्रातः प्रपूज्य संभोजयित्वा स्तुत्वा विसर्जयेत् ।
एवं कृत्वा व्रतं शिल्पी प्राप्नुयाद् विश्वकर्मताम् ॥६८॥
धनधान्यसुतापुत्रदारागोसम्पदादिभिः ।
सुखी स्यात् स्वकलाकीर्तिं लभेतात्र परत्र च ॥६९॥
फाल्गुने कृष्णपक्षे च शिवरात्रिस्त्रयोदशी ।
महद्व्रतं शिवतेजोमहल्लिंगोद्भवात्मकम् ॥७०॥
निर्मलं च निराहारं व्रतं कुर्यात्तदादरात् ।
प्रातं शंभुं पूजयेद्वै सत्या सह सुहैमया ॥७१॥
मध्याह्ने भोजयेत्पक्वान्नानि सर्वाणि भावतः ।
शतरुद्रं कोटिरुद्रं रुद्राध्यायाँश्च वाचयेत् ॥७२॥
सर्वान् रुद्रावतारांश्च पार्वत्याश्चावतारिणीः ।
पूजयेत् षोडशवस्तूत्तमैर्भङ्गां निवेदयेत् ॥७३॥
रुद्राक्षधत्तुरपुष्पगंजाधूम्रादिधूपकैः ।
पञ्चामृतजलैः शीतचन्दनादिभिरर्चयेत् ॥७४॥
सायं सम्पूजयेत्सर्वविध्युपचारवस्तुभिः ।
महाभिषेकविधिना रुद्रसूक्तेन शंकरम् ॥७५॥
निशीथे पूजयेत् प्रीत्या सगणं बिल्वपत्रकैः ।
मल्लिकाकुन्दपुष्पैश्च धत्तूरकरवीरकैः ॥७६॥
दुग्धेन स्नापयेद् रुद्रमेकादशस्वरूपकम् ।
द्वादशात्मानमपि च ब्रह्मैकरूपमेव च ॥७७॥
धूपदीपसुवाद्यादिनीराजनादिभिस्तथा ।
नर्तनैः कीर्तनैश्चापि प्रसादयेच्छिवं शिवाम् ॥७८॥

नैवेद्ये क्षैरवटकान् मिष्टान्नानि शतानि च ।
शाकानि चारनालानि भाजाश्चापि फलानि च ॥७९॥
पायसानि शार्कराणि चैक्षवाणि द्रवाणि च ।
पेयानि चोष्यलेह्यानि भक्ष्याणि भर्जितानि च ॥८०॥
कन्दमूलकणादीनि पत्रपुष्पांकुराणि च ।
दद्याद्वै शंकरायैव शिवायै चातिभावतः ॥८१॥
भस्मत्रिशूलरुद्राक्षचन्द्रवासुकिभूषणम् ।
अर्पयेच्छंकरायाऽत्र गापयेत् तत्पदानि च ॥८२॥
रात्रौ समुत्सवं कुर्याज्जागरणं जनैः सह ।
प्रातश्च पूजनं कुर्याद् दानानि दापयेदति ॥८३॥
ब्राह्मणान्न्यासिनो योगिजनान् वै योगिनीस्तथा ।
सतीः साध्वीर्यतीन् साधून् भोजयेत्पूजयेत्तथा ॥८४॥
गुरून् पितॄन् गणान् वृद्धान्मातॄर्बालाँश्च बालिकाः ।
भोजयेदर्चयेत् कन्याः सुवासिनीश्च जंगमान् ॥८५॥
शैवाँश्च वैष्णवान् ब्राह्मान् दैव्यान् रौद्रान् प्रपूजयेत् ।
मानयेद् भोजयेद् विप्रान् दद्याद् दानानि सर्वथा ॥८६॥
विसर्जयेद् व्रतं पूर्णे कुर्यात्तु हवनं ततः ।
अवभृथं शुभं स्नानं व्रती कुर्यात्तु सोत्सवम् ॥८७॥
रुद्रयज्ञं महायज्ञं कारयेद्धनवान् व्रती ।
एवं शिवचतुर्दश्यां भोजनक्रतुमाचरेत् ॥८८॥
कृत्वैवं पारणां कुर्याद् भुक्तिं मुक्तिं फलं भवेत् ।
कैलासं चापि वैकुण्ठं गोलोकं त्वक्षरं लभेत् ॥८९॥
फाल्गुने शुक्लके त्रयोदश्यां धनप्रदं व्रतम् ।
प्रकुर्यात्पूजयेदत्र कुबेरं चन्दनादिभिः ॥९०॥
प्रतिमासं पूजनीयः सौवर्णो यक्षराट् स्वयम् ।
सनिधिः सगणो यक्षेश्वरः षोडशवस्तुभिः ॥९१॥
भोजनीयः सुमिष्टान्नैः सवत्साऽर्च्याऽत्र गौरपि ।
गुरुश्च पूजनीयो वै भोजनीयश्च सर्वथा ॥९२॥
मिष्टान्नानि च दानानि प्रदेयानि द्विजातये ।
एवंकृते व्रते त्वेकभुक्ते प्राप्येत वैभवः ॥९३॥
इह लोके तथा स्वर्गे सर्वसमृद्धिसमन्वितः ।
सुखसाम्राज्यमासाद्य राजराज इवाऽपरः ॥९४॥
मोदते सह कौटुम्बिजनैर्वै शाश्वतीसमाः ।
व्रते सर्वत्र नक्तं वैकभुक्तं वा ह्युपोषणम् ॥९५॥

यथाशक्ति प्रकर्तव्यं फलाशनजलाशनम् ।
दुग्धाशनं दधिप्राशनं वा गुडजलाशनम् ॥९६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने वार्षिकत्रयोदशीव्रतेषु मदनव्रतदौर्भाग्यशमनत्रिविक्रमार्चन-सावित्रीजयापार्वतीव्रतरतिकामव्रतगोत्रिरात्रव्रतबालादि-श्राद्धकलियुगादितिथित्रिरात्राऽशोकव्रतयमदीप-दानधनलक्ष्मीपूजनश्रीकृष्णनारायणपूजनाऽ-नंगव्रतकमलाहरिपूजनकल्पादितिथि-विश्वकर्मजयन्तीमहाशिवरात्रिधन-दव्रतादिनिरूपणनामाऽष्ट-सप्तत्यधिकद्विशततमो-ऽध्यायः ॥२७८॥

श्रीनारायण उवाच—

शृणु लक्ष्मि ! प्रवक्ष्यामि चतुर्दशीव्रतानि ते ।
कृत्वा यानि व्रती चात्र परत्रेष्टमवाप्नुयात् ॥ १ ॥
चैत्रकृष्णचतुर्दश्यां पुरा युगे महोत्सवः ।
नारायणेन वै श्रिया विवाहस्य कृतोऽभवत् ॥ २ ॥
व्रतिनैकाशनेनात्र कार्यः कदलीमण्डपः ।
मण्डले सर्वतोभद्रे स्थापनीयो घटस्तथा ॥ ३ ॥
तन्मुखे तिलपात्रं च वह्निकुण्डसमीपतः ।
स्थापनीयं पूजनं च कृष्णलक्ष्म्योस्तदन्तरे ॥ ४ ॥
उपचारैः षोडशभिः कर्तव्यं च निवेदनम् ।
ततो बहूनि वाद्यानि वादयेद् वै व्रती निशि ॥ ५ ॥
कृष्णनारायणलक्ष्म्योः शोभां प्रकारयेत्तथा ।
श्रांगारिकद्रववस्त्रविभूषाः परिधापयेत् ॥ ६ ॥
लोकाचारं कारयित्वा वरमालां समर्प्य च ।
देवानां पूजनं सर्वं विनिर्वर्त्याऽभिवन्दनम् ॥ ७ ॥
वस्त्रान्तरं ततः कृत्वा कारयेद्धस्तसंग्रहम् ।
वह्नौ होमं कारयित्वा गापयित्वा च मंगलम् ॥ ८ ॥
प्रदक्षिणं कारयित्वा दत्त्वा च यौतकं तदा ।
लोकाचारेण संपूज्य वस्तून्युत्तार्य मस्तकात् ॥ ९ ॥
पूर्णं होमं समाप्यैव गृहमध्ये निवेशयेत् ।
कृष्णलक्ष्म्योर्भोजनं कारयित्वा स्वापयेद् गृहे ॥१०॥
प्रातर्जाते ग्रन्थिबन्धं गंगायां वै वियोजयेत् ।
दद्याद् दानानि बहूनि गोभूहिरण्यकानि वै ॥११॥
भोजयेद् ब्राह्मणान् देवान् मुनीन् साधून् सतीस्तथा ।
बालकान् बालिकादीनान् कृपणान्धान् निराश्रितान् ॥१२॥
भृत्यांश्च भिक्षुकांश्चाप्यनाथान् गुरून् महत्तमान् ।
ब्रह्मधामसुगोलोकवैकुण्ठामृतधामगान् ॥१३॥
श्वेतद्वीपाऽव्याकृतस्थान् वैराजान् सत्यनाकगान् ।
बद्रीगानागतान्मुक्तान् विष्णुपत्नीश्च देविकाः ॥१४॥
मातृश्च मानुषीर्नारीर्भोजयेत्स त्वतांस्तथा ।
शष्कुलीः खाजकान् रम्यान् शतच्छिद्राणि फेणिकाः ॥१५॥
घृतपूरांश्च रेवालीः पीतसाराणि पर्पिकाः ।
पिण्डकान् शर्करैलाश्च शार्करांश्चणकांस्तथा ॥१६॥
मेशुभं शाटकांश्चापि मोहनस्थालकांस्तथा ।
भर्जिकान् ग्रन्थकांश्चैव प्रफुल्लवटिकास्तथा ॥१७॥
दुग्धसारं पायसान्नं दधिश्रीखण्डमित्यपि ।
शाकानि विविधान्येव मौक्तिकांश्चूर्णमोदकान् ॥१८॥
द्विदलांश्च क्वथिकाश्च राजिकाराद्धकांस्तथा ।
श्रेष्ठानि त्वारनालानि पेयानि तक्रकाणि च ॥१९॥
भोजयेज्जलपानानि कारयेन्मुखशुद्धिकाम् ।
ताम्बूलानि दापयेच्च दानानि दापयेत्तथा ॥२०॥
कृष्णनारायणलक्ष्म्यौ प्रपूज्य च विसर्जयेत् ।
अमायां तु व्रती पश्चात् कुर्याद्वै भोजनं शुभम् ॥२१॥
एवं कृत्वा व्रतं कृष्णलक्ष्म्योर्विवाहसंभृतम् ।
तयोरनुग्रहादत्र दाम्पत्यं शाश्वतं भवेत् ॥२२॥
धाम्नि चापि व्रतिनो वै दाम्पत्यं दिव्यमुत्तमम् ।
शाश्वतं स्यात्तु गोलोके श्रीकृष्णस्य प्रसादतः ॥२३॥
चैत्रशुक्लचतुर्दश्यां महालक्ष्मीव्रतं मतम् ।
कार्या त्वत्र महालक्ष्मीयात्रा पूज्या विधानतः ॥२४॥
जानक्याः शिवराजस्य पूजनं चात्र वै सह ।
कारणीयं प्रभक्ताया भक्तस्यापि विशेषतः ॥२५॥
नक्तं कार्यं व्रतिनात्र जागरं नृत्यगीतिभिः ।
भोज्याः पूज्याः पुनः प्रातर्विसर्जनीयाऽतिभावतः ॥२६॥
एवं समर्चनं कृत्वा महालक्ष्म्या नरो व्रती ।
नारी चापि धनधान्यप्रजासौख्यं लभेत वै ॥२७॥
अत्रापि च चतुर्दश्यां कुंकुमागुरुचन्दनैः ।
गन्धाद्यैर्वस्त्रमणिभिः कार्यं शिवस्य पूजनम् ॥२८॥
वितानध्वजछत्राणि दत्वा पूज्याश्च मातरः ।
अश्वमेधादिसत्पुण्यं लभते मानवो व्रती ॥२९॥
अत्रैव दमनार्चा च कारयेद् गन्धपुष्पकैः ।
दमनं तु शिवायैवाऽर्पयेत् पूजोत्तरं व्रती ॥३०॥
सुवर्णस्य महालिंगं पातालात् हाटकाह्वयम् ।
समायातं पृथिव्यां वै हाटकेश्वर ईश्वरः ॥३१॥

स एवात्र पूजनीयः षोडशादिसुवस्तुभिः ।
स्नानशृंगारनैवेद्यपूजानीराजनादिभिः ॥३२॥
हाटकेशस्तोषणीयो हाटकं वितरेद्धि सः ।
व्रती भोगप्रसंपूर्णो यायात् कैलासमुत्तमम् ॥३३॥
वैशाखस्य तु कृष्णस्य चतुर्दश्यां निशागमे ।
लिंगमभ्यर्चयेद् गन्धाद्युपचारैश्च बिल्वकैः ॥३४॥
भोजयेत्पूजयेच्चापि प्रार्थयेच्च विसर्जयेत् ।
एवं शिवव्रतं कार्यं धनसन्तानमिच्छता ॥३५॥
वैशाखशुक्लपक्षे तु नरसिंहचतुर्दशी ।
नृसिंहजन्मनश्चात्रोत्सवं सायं प्रकारयेत् ॥३६॥
एकभोजी चोपवासी नरसिंहं सुवर्णजम् ।
षोडशाद्यैरुपचारैः स्नानैः पंचामृतादिभिः ॥३७॥
धूपदीपसुपुष्पैश्च भोजनैः पानचर्वणैः ।
आरात्रिकादिभिश्चैव प्रदक्षिणास्तवादिभिः ॥३८॥
पूजयित्वा नृहरिं च स्थापयेद्वै व्रती निशि ।
दानानि विविधान्यत्र तदा दद्याद् यथाधनम् ॥३९॥
तप्तहाटककेशान्तं ज्वलत्पावकलोचनम् ।
वज्राधिकनखस्पर्शं दिव्यसिंहं भयंकरम् ॥४०॥
पीनस्कन्धकटिग्रीवं कृशमध्यं कृशोदरम् ।
सिंहाननं नृदेहं च सर्वाभरणभूषितम् ॥४१॥
ज्वालामालाकुलाऽऽस्यं च ललज्जिह्वाग्रदंष्ट्रकम् ।
हिरण्यकशिपोर्वक्षः पाटयन्तं नखाग्रकैः ॥४२॥
प्रह्लादं च कयाधूं च पुनः प्रातः प्रपूजयेत् ।
भोजयेद् विविधान्नानि नीराजयेद् विसर्जयेत् ॥४३॥
स्वयं च पारणां कुर्याद् व्रती नृहरितोषणात् ।
नखदंष्ट्रिभयान्मुक्तो याति विष्णोः परं पदम् ॥४४॥
ओंकारेश्वरयात्रा च कर्तव्यात्र व्रतार्थिना ।
पंचामृतैश्च संस्नप्य लिंगमालिप्य कुंकुमैः ॥४५॥
नैवेद्यैश्च फलैर्धूपैर्दीपैर्वस्त्रविभूषणैः ।
आरात्रिकादिभिर्लिंगं पैष्टं संपूजयेद् व्रती ॥४६॥
भुक्तिं मुक्तिं स लभते महादेवप्रसादतः ।
यत्कुर्यात् तद्भवेत् सर्वं ज्ञानमोक्षप्रदं नृणाम् ॥४७॥
ज्येष्ठशुक्लचतुर्दश्यां स्नानयात्रार्थमुत्तमम् ।
जलमाहारयेत् तस्याधिवासादिसमाचरेत् ॥४८॥
पूर्णिमायां तज्जलेन स्नापयेच्छ्रीहरिं प्रगे ।
पूजयेद् विविधैर्द्रव्यैः कारयेदुत्सवं व्रती ॥४९॥
चतुर्दश्यां दिवा पञ्चतपा रात्रिमुखेऽर्पयेत् ।
होमधेनुं रुद्रव्रतमेतत्कुर्यात्प्रयत्नतः ॥५०॥
अषाढे तु चतुर्दश्यां रुद्रं सम्पूज्य वै व्रती ।
देशकालार्ज्यवस्त्वाद्यैः सर्वसम्पदमाप्नुयात् ॥५१॥
श्रावणे शुक्लपक्षे तु चतुर्दश्यां तु शार्ङ्गिणे ।
पवित्रारोपणं कुर्याल्लक्ष्म्यै चाथाऽर्पयेत्तथा ॥५२॥
नरो नारी हरिं लक्ष्मीं सम्पूज्यापि विधानतः ।
तयोः प्रसन्नतालभ्यां भुक्तिं मुक्तिमवाप्नुयात् ॥५३॥
भाद्रशुक्लचतुर्दश्यामनन्तव्रतमुत्तमम् ।
अनन्ताख्यं तदा शेषं तथा नारायणं हरिम् ॥५४॥
सौवर्णं कारयेत्पश्चात्पूजयेद् विधिना व्रती ।
कार्पासं पट्टजं सूत्रं चतुर्दशसुग्रन्थिकम् ॥५५॥
कृत्वाऽभ्यर्च्य कुंकुमाद्यैर्बध्नीयात् स्वे भुजे व्रती ।
नारी वामे पुमान् दक्षे पुराणं तु क्षिपेज्जले ॥५६॥
ततो गोधूमपिष्टस्य प्रस्थं शर्करया युतम् ।
सम्पच्य सघृतं स्वादु त्वनन्ताय निवेदयेत् ॥५७॥
भोजयित्वाऽर्भकाँश्चापि ततस्त्वद्याद् व्रती स्वयम् ।
द्विसप्तवर्षपर्यन्तं व्रतं तद्दक्षिणायुतम् ॥५८॥
प्रकुर्यादाविदायं वै तत उद्यापयेद् व्रती ।
मण्डलं सर्वतोभद्रं सप्तधान्यैः प्रकल्पयेत् ॥५९॥
ताम्रजे कलशे स्थाल्यामनन्तप्रतिमां न्यसेत् ।
पूजयेद् विधिना तां च नीराजयेच्च भोजयेत् ॥६०॥
गणेशं मातृकाः खेटान् लोकपालान् यजेत् पृथक् ।
होमं घृतहविष्यैश्च कृत्वा पूर्णाहुतिं चरेत् ॥६१॥
शय्यां प्रतिमां धेनुं च दद्याच्छ्रीमुखे व्रती ।
भोजयित्वाऽर्भकान् साधून् दक्षिणाभिः प्रतोषयेत् ॥६२॥
ददेद् दानानि बहूनि साधून् साध्वीः प्रभोजयेत् ।
एवमनन्तव्रतकृज्जायते भुक्तिमुक्तिभाग् ॥६३॥
कदलीव्रतमप्यत्र कर्तव्यं भूतिमिच्छता ।
नरो नान्यतरन्नारी रंभां वनान्तरस्थिताम् ॥६४॥
स्नात्वा सम्पूजयेद् गन्धपुष्पधान्यांकुरादिभिः ।
दधिदूर्वाऽक्षतैर्दीपैर्वस्त्रपक्वान्नसंचयैः ॥६५॥
नत्वा प्रदक्षिणीकृत्य ततः संप्रार्थयेच्चताम् ।
अप्सरोऽमरकन्याभिर्नागकन्याभिरर्चिते ॥६६॥
शरीरारोग्यलावण्यभूतीन् देहि नमोऽस्तु ते ।
ततः कन्याश्चतस्रश्च सुवासिनीः सतीश्च वा ॥६७॥
भोजयित्वांऽशुकसिन्दूरकैरलक्तकज्जलैः ।
पूजयित्वा समाप्यैव व्रती स्वस्य गृहं व्रजेत् ॥६८॥
एवं कृते व्रते लक्ष्मि ! लब्ध्वा सौभाग्यमुत्तमम् ।
लभेत् स्वर्गे विमानेन परं लोकं ततो व्रजेत् ॥६९॥

परीभिः सेवितः सत्ये महानन्दान् प्रभुज्य च ।
यात्यन्तेऽक्षरधामाख्यं दिव्यलोकं हरेः पदम् ॥७०॥
इषकृष्णचतुर्दश्यां विषशस्त्राम्बुवह्निभिः ।
सर्पश्वापदवज्राद्यैर्हतानां ब्रह्मघातिनाम् ॥७१॥
श्राद्धं कुर्याद् यथायोग्यमेकोद्दिष्टविधानतः ।
बालान् संभोजयेन्मिष्टैः साधून् साध्वीश्च भूसुरान् ॥७२॥
तर्पणं च गवां ग्रासान् बलिर्दानं श्वकाकयोः ।
कृत्वाऽऽचम्य व्रती स्वीयैर्भुञ्जीयाद् बन्धुभिः सह ॥७३॥
एवं कृत्वा महच्छ्राद्धं पितॄनुद्धृत्य पूर्वजान् ।
गच्छेत्सनातनं स्वर्गं त्वन्ते ब्रह्मपदं हरेः ॥७४॥
इषशुक्लचतुर्दश्यां धर्मराजं तु कानकम् ।
गन्धाद्यैः सम्यगभ्यर्च्य भोजयेन्मिष्टमुत्तमम् ॥७५॥
नीराजयेद् विसर्जयेद्दानं श्रीगुरवेऽर्पयेत् ।
व्रतिनं त्रायते धर्मराजः स्वर्गं नयेत्तथा ॥७६॥
ऊर्जकृष्णचतुर्दश्यां तैलाभ्यंगं विधूदये ।
कृत्वा स्नात्वाऽर्चयेद् धर्मराजं प्रतर्पयेद् यमम् ॥७७॥
प्रदोषे तैलदीपाँश्च दीपयेद् यमतुष्टये ।
चतुष्पथे गृहाद् बाह्यप्रदेशे स्थापयेद् व्रती ॥७८॥
भोजयेन्नमनं कुर्याद् विसर्जयेत् यमाधिपम् ।
एवं कृत्वा व्रतं स्वर्गं नरकादभयं व्रजेत् ॥७९॥
अथात्रैव चतुर्दश्यां कुर्यात् हनुमदर्चनम् ।
तैलसिन्दूरार्कपुष्पस्त्रङ्माषवटकादिभिः ॥८०॥
अर्चकानां पुत्रपौत्रा वृद्धिमेष्यन्ति पुष्कलाम् ।
अन्ते वैराजलोकाँश्च प्राप्स्यन्ति नैष्ठिकाञ्छितान् ॥८१॥
भूतप्रेतपिशाचादितामसानां प्रसाधनम् ।
राजसानां च देवानां मन्त्राणामपि साधनम् ॥८२॥
लौकिकानां सात्त्विकानां विषाग्निजडकारिणाम् ।
आवेशानां डाकिनीयोगिनीनां च प्रसाधनम् ॥८३॥
श्मशानवासिनां चापि साधनं भैरवार्थिनाम् ।
प्रकुर्याचात्र रात्रौ च यथादेशं विधानतः ॥८४॥
तत्तद्व्रतं बलिं पूजां जपं नाम विसर्जनम् ।
होमं क्रियां यथातन्त्रं कुर्याद्वै क्रमतो व्रती ॥८५॥
ऊर्जशुक्लचतुर्दश्यां काश्यां श्रीशंकरः स्वयम् ।
चकार विधिना स्नात्वा श्रेष्ठं पाशुपतं व्रतम् ॥८६॥
ततश्चात्र महापूजां लिंगे गन्धादिभिश्चरेत् ।
द्रोणपुष्पैर्बिल्वदलैरर्कपुष्पैश्च केतकैः ॥८७॥
पुष्पैः फलैर्मिष्टपक्वैर्नैवेद्यैर्विविधैरपि ।
एकभुक्तो व्रती शंभोस्तोषात् कैलासमाप्नुयात् ॥८८॥

ब्रह्मकूर्चव्रतं चात्र कर्तव्यं भूतिमिच्छता ।
पञ्चगव्यं पिबेद् रात्रौ प्रातर्देवाँश्च तर्पयेत् ॥८९॥
ब्राह्मणाँस्तोषयित्वा च भुञ्जीतापि व्रती स्वयम् ।
सर्वपापानि नश्यन्ति ब्रह्मकूर्चव्रताद् ध्रुवम् ॥९०॥
कपिलायास्तु मूत्रं वै कृष्णायास्तु शकृत्तथा ।
श्वेतायास्तु पयो ग्राह्यं रक्तायास्तु शुभं दधि ॥९१॥
कर्बुराया घृतं ग्राह्यं कुशाद्भिस्तानि मेलयेत् ।
तत्पानेन तु पापानि नश्यन्त्यार्द्राणि मूलतः ॥९२॥
पाषाणव्रतमप्यत्र नक्तं कृत्वा कृतं भवेत् ।
गौरीं गन्धादिभिः प्राऽर्च्याऽर्पयेद् घृतेन पाचितम् ॥९३॥
पिष्टं पाषाणसदृशं पिण्डकाकारमित्यथ ।
ऐश्वर्यसुखसौभाग्यस्वरूपाण्याप्नुयाद् व्रती ॥९४॥
मार्गशुक्लचतुर्दश्यां वृषं स्वर्णं प्रपूज्य च ।
एकभुक्तं व्रतं कुर्यादथ रात्रौ महेश्वरम् ॥९५॥
पूजयेत् कमलैः पुष्पैर्गन्धमाल्यानुलेपनैः ।
भोजयेद्बहुपक्वान्नैस्ततो देवं विसर्जयेत् ॥९६॥
दद्याद् दानानि गुरवे भोजयेत्तु सतः सतीः ।
एवं शिवव्रतं कृत्वा भुक्तिं मुक्तिमवाप्नुयात् ॥९७॥
अत्रैव च हरिर्ब्रह्मा शिवो दत्तोऽत्रिसंभवः ।
एकीभूय त्रयो देवा बभूवुर्दत्तनामिनः ॥९८॥
अनसूयां तथाऽत्रिं च दत्तात्रेयं च कानकान् ।
कृत्वा तु मण्डपे भद्रमण्डले च घटोपरि ॥९९॥
स्थाल्यां संपूजयेत् सम्यग् भोजयेच्च विसर्जयेत् ।
दद्याद् दानानि सर्वाणि व्रती वैकुण्ठमाप्नुयात् ॥१००॥
पौषशुक्लचतुर्दश्यां विरूपाक्षव्रतं चरेत् ।
स्नात्वा शिवं विरूपाक्षं पूजयेत् सर्ववस्तुभिः ॥१०१॥
भोजयेत्तर्पयेच्छंभुं विधितः संविसर्जयेत् ।
दानं द्विजातये दत्वा कैलासे मोदते व्रती ॥१०२॥
माघकृष्णचतुर्दश्यां यमतर्पणमीरितम् ।
सूर्योदयात्पूर्वकाले स्नात्वा संतर्पयेद् यमम् ॥१०३॥
तिलदर्भाम्बुभिः पश्चाद् भोजयेदन्नमुत्तमम् ।
विसर्जयेद् द्विजान् साधून् भोजयेद् भक्षयेद् व्रती ॥१०४॥
फाल्गुनस्य कृष्णचतुर्दशी शंभुनिशाव्रतम् ।
निर्जला शिवरात्रिस्तु तदोपोष्या सुभावतः ॥१०५॥
ज्योतिर्लिंगं पार्थिवं वा मूर्तिमन्तौ शिवाशिवौ ।
गन्धाद्यैर्बिल्वपत्राद्यैर्नैवेद्यैः पानसद्रसैः ॥१०६॥
पूजयेद्भोजयेन्नीराजयेद्विसर्जयेन्नमेत् व्रती ।
व्रती व्रतप्रभावेण कैलासं समवाप्नुयात् ॥१०७॥

फाल्गुनस्य शुक्लचतुर्दशी दुर्गाव्रतं मतम् ।
एकभुक्तो व्रती दुर्गां पूजयेद्भोजयेत्तथा ॥१०८॥
नीराजयेन्नमेद्विसर्जयेत् कैलासभाग्भवेत् ।
उद्यापनं व्रतानां तु कर्तव्यं फलमिच्छता ॥१०९॥
कुंभाश्चतुर्दशैवात्र सपूगाऽक्षतमोदकाः ।
सदक्षिणांऽशुकास्ताम्रा मृन्मयाश्चाऽव्रणा नवाः ॥११०॥
तावन्तो वंशदण्डाश्च पवित्राण्यासनानि च ।
पात्राणि यज्ञसूत्राणि तावन्त्येव हि कल्पिताः ॥१११॥
मण्डपे सर्वतोभद्रमण्डले सफला घटाः ।
स्थापनीयाः पूजनीया भोजनीयाश्च देवताः ॥११२॥
विसर्जनीया दातव्या गुरवे दानरूपतः ।
भोजनीयाः सुसन्तश्च साध्व्यो विप्राश्च बालिकाः ॥११३॥
सोत्साहं सर्वथा कार्यमुद्यापनं सहोमकम् ।
सजपं सांगमेवाऽस्य फलं स्वर्गं च मोक्षणम् ॥११४॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने वार्षिकचतुर्दशीव्रतेषु श्रीकृष्णनारायणलक्ष्मीविवाहमहालक्ष्मीयात्राशिवार्चनदमनार्चनश्रीहाटकेश्वरजयन्तीनरसिंहजयन्त्योंकारेश्वरयात्रास्नानयात्राजलाहरणरुद्रव्रतपवित्रारोपणानन्तचतुर्दशीकदलीव्रतहतादिश्राद्धधर्मराजपूजननरकचतुर्दशीयमतर्पणाभ्यंग-स्नानहनुमदर्चनभूतार्चनमन्त्रसाधनापाशुपतव्रतब्रह्मकूर्चव्रतदत्तात्रेयजयन्तीशिवरात्रिप्रभृतिव्रतनिरूपणनामेकोनाशीत्यधिकद्विशततमोऽध्यायः ॥२७९॥

**श्रीनारायण उवाच—**

अथ लक्ष्मि ! प्रवक्ष्यामि पूर्णिमाया व्रतानि ते ।
यानि कृत्वा नरो नारी प्राप्नुयात् पुण्यसम्पदः ॥ १ ॥
चैत्रकृष्णाऽमावास्या तु मन्वादिस्तिथिरस्ति हि ।
अस्यां सान्नोदकं कुंभं प्रदद्यात् सोमतुष्टये ॥ २ ॥
कुर्याच्छ्राद्धं यथोद्दिष्टं पितॄणां तृप्तिहेतवे ।
चैत्र्यां धवलपूर्णायां हनुमत्तिथिरुच्यते ॥ ३ ॥
पूजनं तैलसिन्दूरैर्वटकादिभिरुत्तमम् ।
कर्तव्यं त्वत्र वैशाखस्नानारंभोऽपि सम्मतः ॥ ४ ॥
वैशाखाऽमातिथौ श्राद्धं कर्तव्यं पितृतृप्तिकृत् ।
वैशाखशुक्लपूर्णायां कूर्मजयन्तिकाव्रतम् ॥ ५ ॥
कर्तव्यं विधिना तत्र द्विभुजं नरमस्तकम् ।
कट्यधः कूर्मरूपं च सौवर्णं पूजयेत् प्रभुम् ॥ ६ ॥
भोजयेद् दुग्धसारं च चाणकोद्भूतमोदकान् ।
नीराजयेद् विसर्जयेद् दद्याद्दानानि च व्रती ॥ ७ ॥
एवंव्रतकृतो वासो वैकुण्ठे भवति ध्रुवः ।
धर्मराजव्रतं त्वत्र कर्तव्यं धर्मतुष्टये ॥ ८ ॥
शृतान्नमुदकुंभं च ददेद्गां गुरवे व्रती ।
धर्मराजं पूजयेच्च भोजयेच्च विसर्जयेत् ॥ ९ ॥
शुभं कृष्णाजिनं दद्यात् सखुरं च सशृंगकम् ।
सतिलवस्त्रं संदद्यात् कुंभान् स्वच्छजलान्वितान् ॥१०॥
फलानि च हिरण्यं च दाने दद्याद् व्रती जनः ।
मोदते सत्यलोकेऽयं यावच्चन्द्रार्कतारकम् ॥११॥
अन्ते वैकुण्ठमाप्नोति शाश्वतं सुखमश्नुते ।
ज्येष्ठामा भावुका प्रोक्ता श्रीहरिं भावयेत्तदा ॥१२॥
पूजयेत्सर्वथा रात्रौ भोजयेच्च विसर्जयेत् ।
ज्येष्ठपूर्णातिथौ कार्यं वटसावित्रिकं व्रतम् ॥१३॥
सोपवासा वटं सिञ्चेत् सलिलैरमृतोपमैः ।
सूत्रेण वेष्टयेच्चैव सशताऽष्टप्रदक्षिणम् ॥१४॥
पिप्पलं वा वेष्टयेच्च सावित्रीं प्रार्थयेद् व्रती ।
जगत्पूज्ये जगन्मातः सावित्रि पतिदैवते ॥१५॥
पत्या सहाऽवियोगं मे वटस्थे कुरुते नमः ।
इतिसंप्रार्थ्य सावित्रीं भोजयित्वा सुवासिनीः ॥१६॥
स्वयं भुञ्ज्याद् व्रतकर्त्री सा स्यात् सौभाग्यभागिनी ।
अत्र बिल्वत्रिरात्राख्यं व्रतं कर्तव्यमादरात् ॥१७॥
बिल्वपत्रैः शंभुरर्च्यो बिल्वं भक्ष्यं व्रतार्थिना ।
बिल्वस्नानं प्रकर्तव्यं बिल्वद्रुः पूज्य इत्यपि ॥१८॥
बिल्वाधःशयनं कार्यं बिल्वदानं तथा मतम् ।
एवं कृत्वा त्रिरात्रं वै कैलासं प्राप्नुयाद् व्रती ॥१९॥
मन्वादितिथिरेषास्ति मनुः पूज्यो विधानतः ।
देयं दानं तथा भोज्याः सन्तः साध्व्यः सुपुण्यदाः ॥२०॥
ज्येष्ठाभिषेकसंस्नानयात्रा कार्याऽत्र वै दिने ।
तत्राऽभिषेकविधिना स्नपनीयो रमापतिः ॥२१॥
जलैरुज्ज्वलपात्रस्थैर्निर्मलैश्च सचन्दनैः ।
शंखेन स्नपयेत् कृष्णं मन्त्रैर्वेदानुसारिभिः ॥२२॥
ततः पीताम्बराण्यत्र धारयेच्छ्रीपतिं प्रभुम् ।
उष्णीषं पाटलं चैव भूषाश्च विविधा अपि ॥२३॥
भक्तं सूपं पोलिकाश्च वटिकां क्वथिकां तथा ।
व्यञ्जनानि च नैवेद्ये मिष्टपेयान्युपाहरेत् ॥२४॥
जलक्रीडनपद्यानि श्रीहरेस्त्वत्र गापयेत् ।
विसर्जयेद्धरिं पश्चाद् भुञ्जीत व्रतकृज्जनः ॥२५॥

हरिप्रसादजं सौख्यं शाश्वतं तेन चाप्यते ।
अषाढाऽमातिथौ श्राद्धं कर्तव्यं पितृतारकम् ॥२६॥
अषाढस्य तु पूर्णायां गुरोर्व्यासस्य पूजनम् ।
षोडशोपसुवस्त्वाद्यैः कर्तव्यं वै यथा हरेः ॥२७॥
चन्दनाऽक्षततुलसीस्रक्फलाम्बरकुंकुमैः ।
भूषाभोज्यसुमिष्टान्नोत्तमाच्छादनवारिभिः ॥२८॥
द्रव्यैः सुवर्णरूप्यादिक्षेत्रैर्द्रव्यादिभिस्तथा ।
गुरुं कृष्णं तथाऽऽचार्यं गुर्वीं चाऽभ्यर्चयेद् व्रती ॥२९॥
गुरोः पादांगुष्ठजलं पिबेत् स्वात्मविशुद्धये ।
गुरुर्हरिः स्वयं प्रोक्तः स्वमोक्षार्थं प्रसेवयेत् ॥३०॥
गुरोः प्रसन्नताप्राप्तं ज्ञानं वा सेवनं व्रतम् ।
मोक्षदं सुखदं पुण्यप्रदं भुक्तिविमुक्तिदम् ॥३१॥
अषाढस्यात्र पूर्णायां गोपद्मव्रतमुत्तमम् ।
चतुर्भुजं शंखचक्रगदापद्मविराजितम् ॥३२॥
प्रसन्नास्यं कंजनेत्रं रमागरुडशोभितम् ।
स्वर्णवर्णं सुरूपं च सौवर्णं भूषणान्वितम् ॥३३॥
सेवितं मुनिभिर्देवैर्यक्षगन्धर्वकिन्नरैः ।
एवंविधं हरिं स्नापयित्वा पञ्चामृतैर्जलैः ॥३४॥
स्नातो व्रती पूजयेत् संवदन् पुरुषसूक्तकम् ।
विभूषयेदर्चयेच्च नीराजयेच्च भोजयेत् ॥३५॥
नमेत् क्षमापयेच्चापि व्रती विसर्जयेत्ततः ।
आचार्यं वा गुरुं साधुं भोजयेत्तोषयेन्मुहुः ॥३६॥
दद्याद् दानं च भुञ्जीत प्रसादात् कमलापतेः ।
ऐहिकाऽऽमुष्मिकान् कामान् लभते शाश्वतान् व्रती ॥३७॥
कोकिलाव्रतमत्रैव कर्तव्यं भूतिमिच्छता ।
श्रावणपूर्णिमान्तं तद् व्रते स्नायाद् बहिर्जले ॥३८॥
गौरीरूपां कोकिलां वै नित्यं प्रपूजयेद् व्रती ।
स्वर्णपक्षां रत्ननेत्रां प्रवालमुखपंकजाम् ॥३९॥
कस्तूरीवर्णशोभाढ्यां नन्दनाऽरण्यवासिनीम् ।
चूतचम्पकवृक्षस्थां कलगीतनिनादिनीम् ॥४०॥
चिन्तयेत् पार्वतीं देवीं कोकिलारूपधारिणीम् ।
गन्धाद्यैः पूजयेन्नित्यं नीराजयेच्च भोजयेत् ॥४१॥
मासान्ते कानकीं तिलपिष्टजां प्रार्थयेत्तदा ।
कृष्णे चैत्ररथोत्पन्ने कोकिले हरवल्लभे ॥४२॥
हररूपाय विप्राय दत्ता मे सुखदा भव ।
द्विजं सुवासिनीस्त्रिंशदेकां वा भोजयेत्ततः ॥४३॥
वस्त्रादिदक्षिणां दत्त्वा नत्वा देवीं विसर्जयेत् ।
नारी व्रतविधानेन कोकिलागौर्यनुग्रहात् ॥४४॥
भुक्तिं स्वर्गं महानन्दं कैलासं दम्पतीसुखम् ।
सौभाग्यं सप्तजन्माढ्यं लभेत्त्वन्ते प्रमोक्षणम् ॥४५॥
मन्वादितिथिरेषापि चातुर्मास्यप्रवर्तनम् ।
शंभोः शयनजश्चात्रोत्सवः कार्यो विधानतः ॥४६॥
कार्यः समुद्रः सजलः शय्या तत्र यथोचिता ।
हरिर्हरश्च वा तत्र शयनीयः सुसेविना ॥४७॥
भोजनीयोऽर्चनीयश्च प्रार्थनीयोऽपि भावतः ।
चातुर्मास्यस्य नियमा ग्राह्याश्च व्रतिना व्रते ॥४८॥
एवं वै पूजनं कृत्वा व्रतं च नियमग्रहम् ।
भुक्तिं मुक्तिं फलं दिव्यं लभते नात्र संशयः ॥४९॥
श्रावणाऽमातिथौ कार्या दीपपूजा यथाविधि ।
पुष्पचन्दनतन्दुलशर्कराफलवारिभिः ॥५०॥
चक्षुस्तेजःप्रदो दीपः सदा सौभाग्यदो भवेत् ।
दीपदानं तु देवाय कर्तव्यं स्वर्गदं हि तत् ॥५१॥
श्राद्धं चात्र प्रकर्तव्यं पितॄणां दिव्यतृप्तिकृत् ।
नववृक्षारोपणं च कर्तव्यं त्वतिभावतः ॥५२॥
हरितां पृथिवीं कुर्वन् स्वर्गे हरितमाप्नुयात् ।
यानवाहनदास्यादिसेवितं शाश्वतं व्रती ॥५३॥
अथ श्रावणपूर्णायां नारिकेलफलं व्रती ।
पूजयेद् भक्षयेच्चापि दद्याद् दाने च भावतः ॥५४॥
नारिकेलत्रिनेत्रेषु हरिब्रह्महरास्त्रयः ।
वसन्ति पूजनीयास्ते नारिकेलफलेऽत्र वै ॥५५॥
त्वम् ब्रह्मा कुपरो विष्णुर्जलं शंभुस्त्रयस्तु ते ।
सत्त्वं विष्णुस्त्वन्तरस्थस्त्रिनेत्रो मध्यकुर्चुलः ॥५६॥
त्वजटात्मा बहिर्ब्रह्मा त्रिदेवात्मा हरिः स वै ।
तस्य वै पूजया भुक्तिं मुक्तिं लभेत शाश्वतीम् ॥५७॥
अत्र श्रावणपूर्णायां वेदोपाकरणं व्रतम् ।
यजुर्भिस्तत्र कर्तव्यं देवर्षिपितृतर्पणम् ॥५८॥
ऋषीणां पूजनं कार्यं स्वस्वशाखाविधानवत् ।
बह्वृचैस्तु चतुर्दश्यां कर्तव्यं तद्धि तर्पणम् ॥५९॥
सामगैर्भाद्रमासे तु कर्तव्यं तद्धि तर्पणम् ।
तृतीयायां द्वितीयायां शुक्ले हस्तर्क्षकालिके ॥६०॥
होमः कार्यस्तथा वर्ष्मशुद्धिः कार्या विधानतः ।
जलेन दर्भमिश्रेण तर्पणं पूजनं तथा ॥६१॥
कारयित्वोपवीतं च धारयेन्नूतनं शुभम् ।
भोजयेत्सर्वमिष्टान्नैः साधून् विप्रान् गुरून् सतीः ॥६२॥
तेभ्यो दद्याद् दक्षिणां तु सुवर्णरजतात्मिकाम् ।
स्वयं भुञ्जीत बन्ध्वाद्यैर्व्रती सुखमवाप्नुयात् ॥६३॥

तथा रक्षाविधानं च कर्तव्यं विधिनात्र वै ।
राजिका रक्तवस्त्राणि चाक्षतान् शर्करान्वितान् ॥६४॥
कौसुंभतन्तुना बध्वा प्रक्षाल्य सलिलैस्तथा ।
धृत्वा कांस्येऽथ संपूज्य गन्धाद्यैर्विष्णुमुख्यकान् ॥६५॥
बध्नीयाद् ब्राह्मणद्वारा मुदितः स्वप्रकोष्ठके ।
द्विजाय दक्षिणां दद्याद् रक्षां करोति सूत्रकम् ॥६६॥
अत्रैव तु तिथौ पूर्वे हयग्रीवो महाप्रभुः ।
हिरण्याक्षविनाशाय वेदानां रक्षणाय च ॥६७॥
समजज्ञे ततस्तस्य कर्तव्यं व्रतमादरात् ।
सुखं हयस्वरूपस्य शुभं वर्ष्म नराकृति ॥६८॥
विधाय कानकं पूज्यं षोडशोपस्रुवस्तुभिः ।
भोजयेच्च व्रती नीराजयेदथ विसर्जयेत् ॥६९॥
एवं व्रतकृतश्चात्र परस्मिन् जायते सुखम् ।
अत्रैव च दिने कुर्याद् रुद्रपवित्रकार्पणम् ॥७०॥
विविधैस्तु पवित्रैर्वै पूजयेच्च शिवां शिवम् ।
कोकिलाव्रतपूर्णत्वं कुर्यात्त्वत्र दिने व्रती ॥७१॥
भाद्राऽमायां पितृश्राद्धं प्रकुर्यात् तर्पणादिकम् ।
कुशानाहारयेत् क्षेत्राच्छस्त्राऽछिन्नान् समूलकान् ॥७२॥
प्रौष्ठपद्यां पौर्णमास्यामुमामहेश्वरव्रतम् ।
स्नात्वा रुद्राक्षभस्मादि धृत्वा शंभुं प्रपूजयेत् ॥७३॥
बिल्वपत्रैः सुगन्धाढ्यैर्नैवेद्यैर्धूपदीपकैः ।
भोजयेच्च नमेन्नीराजयेत्प्रस्वापयेत्ततः ॥७४॥
रात्रौ जागरणं कुर्यात्पुनः प्रातः प्रपूजयेत् ।
भोजयेत् प्रार्थयेच्चापि व्रती पश्चाद् विसर्जयेत् ॥७५॥
पारणां च स्वयं कुर्यात् कैलासं प्राप्नुयाद् व्रती ।
एवं पञ्चदशाऽब्दान्तं कृत्वा तूद्यापनं चरेत् ॥७६॥
उमायाश्च महेशस्य सौवर्णी प्रतिमां शुभाम् ।
पञ्चदशघटेष्वन्तर्घटे संपूजितां च ताम् ॥७७॥
वस्त्राभूषणपुष्पाद्यैर्मिष्टान्नैश्च जलैः शुभैः ।
सहितां घटसम्पन्नां प्रतिमां गुरवेऽर्पयेत् ॥७८॥
एवं कृत्वा व्रतं त्वत्र निधानं सर्वसम्पदाम् ।
भवत्येव व्रती भुक्तिमुक्तिसम्पत्तिभाजनम् ॥७९॥
अथात्रैव दिने शक्रव्रतं कर्तव्यमादरात् ।
गन्धाद्यैरुपचारैश्च नैवेद्यैः पूजयेद्धरिम् ॥८०॥
शक्रं समर्प्य सौवर्णं गुरवे त्वन्यभूसुरान् ।
भोजयेद् दक्षिणादानं कुर्याद्वै धनवान्नृपः ॥८१॥
धनधान्येच्छुना कार्यमेतत्तु प्रतिवार्षिकम् ।
आश्विनाऽमादिने कार्यं सर्वपितृप्रतर्पणम् ॥८२॥
श्राद्धं कार्यं पिण्डदानं भोजनं जलसेचनम् ।
विविधान्नानि देयानि दुग्धसाराणि चापि वै ॥८३॥
विप्राश्च साधवो भोज्याः सत्यः साध्व्यश्च बालिकाः ।
तर्पणीयास्तृणैर्गावस्तथा वृक्षा जलादिभिः ॥८४॥
हरिकृष्णस्तर्पणीयो नैवेद्यफलसज्जलैः ।
कृष्णनारायणो लक्ष्मीस्तर्पणीयावुभावपि ॥८५॥
एवं कृत्वा महाश्राद्धं पितरश्च पितामहाः ।
तत्तत्पित्रादयः सर्वे मातरश्चापि वंशजाः ॥८६॥
शाश्वतीं यान्ति वै तृप्तिं त्वन्ते ब्रह्मपदानुगाः ।
मोक्षस्थितिं प्रयास्यन्ति तस्माच्छ्राद्धं परं व्रतम् ॥८७॥
आश्विने मासि पूर्णायां रासलीलोत्सवो मतः ।
पूर्णचन्द्रोदये रात्रौ रासलीलां चकार सः ॥८८॥
भगवान् राधया साकं गोपीभिश्च समं चिरम् ।
गोपीराधाकृष्णमूर्तीः सौवर्णीश्चातिशोभयेत् ॥८९॥
कौसुम्भं धारयेद् वास उत्तरीयं च चेलकम् ।
कञ्चुकीं पीतवर्णां च भाले कुंकुमपत्रिकाम् ॥९०॥
पीताम्बरं तु कृष्णं चाऽनर्घ्यं संधारयेद् व्रती ।
नानारत्नविचित्रं च मुकुटं कुण्डले तथा ॥९१॥
करे तु मुरलीं स्वर्णां धारयेद् रत्नकाऽञ्चिताम् ।
नैवेद्ये पर्पिका देया पिण्डकाः पायसादिकम् ॥९२॥
सुगन्धिपुष्पतैलेन स्थलपद्मोदकेन च ।
वासांसि मन्दिरं चापि वासयेद् राधिकापतेः ॥९३॥
चन्द्रशालाऽऽसने न्यस्य पूजयेन्निशि माधवम् ।
गीतवादित्रनृत्यैश्च तोषयेद्वै रमापतिम् ॥९४॥
नवीनशालिपृथुकान् शर्करादुग्धमिश्रितान् ।
तस्मै निवेदयेद् रासलीलापद्यानि गापयेत् ॥९५॥
शरद्व्रतं तदारभ्य कर्तव्यं भूतिमिच्छता ।
कार्तिकस्नानमस्माद्धि दिनात्समारभेत वै ॥९६॥
अत्राश्विने तु पूर्णायां व्रतं कोजागराभिधम् ।
सोपवासं प्रकर्तव्यं त्वेकभुक्तं च वा चरेत् ॥९७॥
प्रातर्लक्ष्मीं पूजयेच्च विविधैरुपचारकैः ।
श्रृंगारयेद् भोजयेच्च मध्याह्नेऽपि प्रपूजयेत् ॥९८॥
चन्द्रस्य दर्शने सायं लक्ष्मीमूर्तिं तु कानकीम् ।
ताम्रजे मृन्मये वापि घटे पात्रे निधाय च ॥९९॥
घटदीपान् सहस्रं वा शतं लक्षं प्रकाशयेत् ।
पूरिकाः पायसान्नं च महालक्ष्म्यै निवेदयेत् ॥१००॥
जागरं नृत्यगीतैश्च कुर्यात् प्रातः प्रपूज्य ताम् ।
अर्पयेद् गुरवे मूर्तिं व्रतं समापयेद् व्रती ॥१०१॥

अत्र रात्रौ महालक्ष्मीर्वराऽभयकराम्बुजा ।
यातीक्षितुं मदर्थे को जागर्तीति सुभुक्तिमान् ॥१०२॥
तस्मै वित्तं प्रयच्छामि जाग्रते पूजकाय मे ।
प्रतिवर्षं कृतेनात्र स्मृद्धः स्याद् याति वैष्णवम् ॥१०३॥
कार्तिकाऽमातिथौ लक्ष्मीपूजा कार्या विशेषतः ।
लक्ष्मीश्चतुर्भुजा कार्या पद्मसिंहासनस्थिता ॥१०४॥
दक्षकरे च कमलं वामेऽमृतघटस्तथा ।
अधोऽन्यभुजयोः कार्यौ बिल्वशंखौ सुशोभनौ ॥१०५॥
तत्पार्श्वयोर्गजौ कार्यौ धृतकुंभकरावुभौ ।
तस्यास्तु मस्तके पद्मं कर्तव्यं सुमनोहरम् ॥१०६॥
मण्डपे निर्मिते रम्ये कदलीस्तंभतोरणैः ।
पूजयेत् सर्वतोभद्रे लक्ष्मीसूक्तेन तां व्रती ॥१०७॥
अलंकारांश्च वासांसि महान्त्येवाऽर्पयेच्छ्रियै ।
भालेऽस्याश्चन्द्रकं कुर्यात् कुंकुमाक्षतशोभनम् ॥१०८॥
सुगन्धपुष्पहारैश्च सौवर्णैः सर्वभूषणैः ।
कमलैः पूजयेद् रत्नैर्धूपदीपद्रवादिभिः ॥१०९॥
परितः कारयेच्छच्चया दीपानामावलीस्तथा ।
नैवेद्ये शष्कुलीर्दद्याच्छतच्छिद्राणि फेणिकाः ॥११०॥
घृतपूराँश्च रेवालीः पीतसाराणि पूरिकाः ।
पर्पिकाः पिण्डकाँश्चापि शाकराँश्चणकादिकान् ॥१११॥
ओदनादीनि भोज्यानि शाकान्यस्यै निवेदयेत् ।
ताम्बूलवीटिकां दत्वा कुर्यान्नीराजनं महत् ॥११२॥
लक्ष्मीपूजनपद्यानि गापयेत्तु व्रती ततः ।
दीपान् प्रपूजयेत् सर्वस्थलीर्दीपैः प्रकाशयेत् ॥११३॥
शारदापूजनं कुर्यादायव्ययादिचर्पटे ।
शारदायास्तु सौवर्णीं मूर्तिं वा कारयेद् व्रती ॥११४॥
नागवल्लीदलपूगीफलैलाशर्करात्वचः ।
फलान्यक्षतकुंकुमगूडधानादिकानि च ॥११५॥
धूपदीपसुनैवेद्यैर्मषीलेखनिकादिभिः ।
पूजयेच्छारदां मन्त्रैर्नीराजयेद् विसर्जयेत् ॥११६॥
एवं व्रतकृतो लक्ष्मीः शारदा च स्थिरा सदा ।
सर्वसम्पत्करी स्याद्वै दानभोजनकामदाः ॥११७॥
अत्रैवाऽभ्यंगसंस्नानं तैलाद्यैर्मर्दनेन वै ।
कर्तव्यं व्रतिना येन दारिद्र्यं नश्यति ध्रुवम् ॥११८॥
कार्तिकशुक्लपूर्णायां देवदीपोत्सवो मतः ।
दीपान्प्रज्वालयेत्तीर्थे मन्दिरे भवनादिषु ॥११९॥
लक्ष्मीकान्तं प्रभाकान्तं धारयेन्मुकुटादिकम् ।
संयावपूरिकाभक्तक्वथिकासूपसूरणान् ॥१२०॥

वृन्ताकादिकशाकानि श्रीकृष्णाय निवेदयेत् ।
विसर्जयेच्च विधिवत् स्वर्गं मोक्षं व्रजेद् व्रती ॥१२१॥
त्रिपुरी पूर्णिमा चेयं त्रिपुरारिं प्रपूजयेत् ।
भोजयेद् विविधान्नानि विसर्जयेत् सुखी व्रती ॥१२२॥
चातुर्मास्यसमाप्तिश्च कर्तव्या सोत्सवा जनैः ।
मन्तव्या चापि मन्वादितिथिः प्रपूजयेन्मनुम् ॥१२३॥
भक्तिदेवीजयन्ती च पालनीयात्र सर्वथा ।
भक्तेर्विधूदये कार्या पूजा सम्यग्विधानतः ॥१२४॥
भोजयेत्समलंकुर्याच्छ्रांगारिकविभूषणैः ।
नीराजयेद् व्रती विसर्जयेत् स्याद्धामवासकृत् ॥१२५॥
कार्तिक्यां पूर्णिमायां तु कुर्यात् स्कन्दस्य दर्शनम् ।
उत्सवस्तत्र कर्तव्यः सर्वशत्रुजयाय वै ॥१२६॥
अत्रैव दीपदानेन कर्तव्यस्त्रिपुरोत्सवः ।
कीटाः पतंगा मशका वृक्षा वल्ल्यश्च जन्मिनः ॥१२७॥
दीपदर्शनमात्रेण यान्ति वै परमां गतिम् ।
कृत्तिकाः षट् कार्तिकेयः खड्गी वह्निर्जलाधिपः ॥१२८॥
गन्धपुष्पफलैर्धूपदीपनैवेद्यपानकैः ।
पूजनीयाः प्रदेयाश्च दीपा बाह्ये गृहात्स्थले ॥१२९॥
दीपोपान्ते तथा गर्तश्चतुरस्रो मनोहरः ।
चतुर्दशांगुलः कार्यः सेच्यश्चन्दनवारिभिः ॥१३०॥
गवां क्षीरेण संपूर्य मत्स्यं हैमं क्षिपेत्ततः ।
नमस्कृत्य च गन्धाद्यैः सम्पूज्य ब्राह्मणाय वै ॥१३१॥
अर्पयेद् विधिना तेन मोदते हरिसन्निधौ ।
क्षीरसागरदानं वै श्वेतदेव प्रकीर्तितम् ॥१३२॥
अत्र तिथौ वृषोत्सर्गं कृत्वा कैलासमाप्नुयात् ।
मार्गशीर्षामादिने तु श्राद्धं कुर्याच्च तर्पणम् ॥१३३॥
तृप्ताश्च पितरो यान्ति परं भागवतं पदम् ।
मार्गशीर्ष्यां पूर्णिमायां स्वर्णाढ्यं लवणाढकम् ॥१३४॥
दाने देयं त्वनाथाय सर्वकामसमृद्धये ।
पौषस्य पूर्णिमायां तु स्नायात् सर्वौषधिजलैः ॥१३५॥
इदं जगत् पुरा लक्ष्मि ! त्वयाऽऽसीत् त्यक्तमेव ह ।
पुनर्लक्ष्मीविधानार्थं विष्णुरिन्द्रो बृहस्पतिः ॥१३६॥
शुक्रः सोमश्च संभूय चक्रुः पुष्ये प्रयत्नकम् ।
अलंकृतं पुनश्चक्रुः सौभाग्योत्सवकेलिभिः ॥१३७॥
स्वस्वगुणप्रतापैश्च सर्वसौभाग्यवृद्धये ।
अतो व्रती तथा कुर्यात् पूजयेत् तान् यथाविधि ॥१३८॥
गौरसर्षपकल्केन तूपमृद्य तनुं स्वकाम् ।
सर्वौषधिजलैः स्नायाद् धारयेच्च नवाऽम्बरे ॥१३९॥

दृष्ट्वा तु मंगलं द्रव्यं नत्वा स्पृष्ट्वा ततो व्रती ।
हरिशक्रेन्दुपुष्येज्यान् पूजयेदुपचारकैः ॥१४०॥
कृत्वा होमं भोजयेच्च ग्रहान् बालान् सुपायसैः ।
देवान् विसर्जयेत् पश्चाद् व्रती भुंजीत पारणाम् ॥१४१॥
अलक्ष्मीनाशनं लक्ष्मीप्रदं वै मोक्षदं व्रतम् ।
पूर्णिमायां तथा चात्र रैवताद्रौ पुराऽभवत् ॥१४२॥
अम्बाजन्म ततो गौर्याः पूजनं तत्र कारयेत् ।
माघस्नानसमारंभश्चास्माद् दिनाद् भवत्यपि ॥१४३॥
अत्रैव होलिकादण्डारोपणं कार्यमित्यपि ।
रत्नानि कञ्चुकोष्णीषपादत्राणानि वा धनम् ॥१४४॥
दत्वा प्रमोदते स्वर्गे तिलान् कार्पासकम्बलान् ।
समर्च्य शंकरं चात्र वाजिमेधफलं व्रजेत् ॥१४५॥
फाल्गुनाऽमातिथौ दुग्धव्रतारंभो भवत्यपि ।
बोध्यैषा द्वापरयुगाद्या तिथिर्मंगलावहा ॥१४६॥
फाल्गुने पूर्णिमायां तु होलिकापूजनं मतम् ।
काष्ठादिसंचये वह्निं हुत्वा रक्षोघ्नमन्त्रकैः ॥१४७॥
असृक्पाभयसन्त्रस्तैः कृता त्वं होलि बालिशैः ।
अतस्त्वां पूजयिष्यामि भूते भूतिप्रदा भव" ॥१४८॥
इतिमन्त्रेण सन्दीप्य परिक्रम्य नयेद् व्रती ।
होलिकां राक्षसीं चेमां प्रह्लादभयदायिनीम् ॥१४९॥
ज्वालयन्ति जना यद्वत् प्रह्लादेन सुभस्मिता ।
संवत्सरस्य दाहोऽयं पापानामिति होलिका ॥१५०॥
शंकरेण कृतः कामदाहोऽयं होलिका मता ।
कल्पभेदेन दाहस्य भिद्यते तु कथानकम् ॥१५१॥
दोलोत्सवस्तथा चात्र पूर्णायां वोत्तरेऽहनि ।
उत्तराफाल्गुनीनक्षत्रयोगे रैवताचले ॥१५२॥
दोलामारोप्य कृष्णं चार्जुनं धर्माश्रये पुरा ।
आन्दोलयामासुरत्र देवाः कार्यः स उत्सवः ॥१५३॥
प्रातः पूजां प्रकुर्वीत नरनारायणप्रभोः ।
उपचारैः षोडशभिर्महानीराजनेन च ॥१५४॥
वस्त्रचन्दनपुष्पाद्यैस्तुलसीपत्रभूषणैः ।
पायसैः पूरिकाभिश्च बदरादिफलैरपि ॥१५५॥
वासन्तिकैश्च पुष्पाद्यैस्तथा रंगगुलालकैः ।
पूजयेद्भोजयेच्चापि नीराजयेच्च रंजयेत् ॥१५६॥
क्रीडां च कारयेद् यन्त्रैस्ततः प्रस्वापयेत् प्रभुम् ।
भक्तान् बालान् भोजयित्वा व्रती भुञ्जीत वै ततः ॥१५७॥
एवमभ्यंगकस्नानमाम्रकुसुमप्राशनम् ।
वसन्तोत्सवरमणं धूलिवन्दनमित्यपि ॥१५८॥
मन्वाद्यतिथिकं कुर्याद् व्रतं विस्तरतो व्रती ।
नरनारायणं प्रातः प्रबोध्य पूजयेद् व्रती ॥१५९॥
बहूनि दद्याद् दानानि व्रतं चापि समापयेत् ।
दाराः पुत्रान् धनं धान्यं स्वर्गं यायाच्च मोक्षणम् ॥१६०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने वार्षिकपूर्णिमाऽमावास्याव्रतेषु श्राद्धाऽमावास्यामन्वादितिथि-हनुमज्जयन्तीवैशाखस्नानारंभकूर्मजयन्तीधर्मराजव्रतभावुकामा-वटसावित्रीबिल्वत्रिरात्रव्रतज्येष्ठाभिषेकयात्रागुरुव्यासपूजागोपद्म-कोकिलाव्रतचातुर्मास्यनियमशिवशयनदीपपूजानारिकेलपूर्णिमा-ऋग्यजुःश्रावणीसामगश्रावणीरक्षाबन्धनहयग्रीवजयन्तीशिवपवित्रा-रोपणकुशग्रहणप्रौष्ठपद्यमामहेशव्रतशक्रव्रतसर्वपितृश्राद्धामारास-लीलाकार्तिकस्नानशरद्व्रतकोजागरव्रतलक्ष्मीपूजादीपोत्सव-शारदापूजाऽभ्यंगस्नानदेवदीपोत्सवत्रिपुरीपूर्णिमा-भक्तिजयन्तीस्कंददर्शनमाघस्नानाऽम्बाजयन्ती-होलिदण्डारोपणद्वापरादितिथिपयोव्रतदोलो-त्सववसन्तोत्सवाम्रकुसुमप्राशनधूलिवन्दना-दिनिरूपणनामाऽशीत्यधिकद्विशत-तमोऽध्यायः ॥ २८० ॥

**श्रीनारायण उवाच—**

अथ द्वादशमासेषु यान्यन्यानि व्रतानि च ।
कर्तव्यान्यपि ते वक्ष्ये शृणु पुण्यानि पद्मजे ! ॥ १ ॥
चैत्रमासस्य शुक्लायामेकादश्यां तु वैष्णवैः ।
आन्दोलनीयो भगवान् लक्ष्मीयुक्तो महोत्सवैः ॥ २ ॥
सुगन्धिपुष्पमय्यां तु तस्यां तं घटिकाद्वयम् ।
आन्दोलयित्वा नीराजयित्वा चोत्तारयेत्प्रभुम् ॥ ३ ॥
भोजयेच्च व्रती नत्वा तं क्षमाप्य विसर्जयेत् ।
आषाढे शुक्लके पुष्ये रथयात्रां समाचरेत् ॥ ४ ॥
साश्वं रथं स्थापयेच्च कृष्णनारायणाग्रतः ।
वासांसि राजयोग्यानि धारयेद् भूषणानि च ॥ ५ ॥
श्रेष्ठान् हैमान् शस्त्रवर्यान् खड्गादीन् धारयेत्प्रभुम् ।
दधि भक्तं लड्डुकाँश्च भोजयित्वा रथेऽर्चयेत् ॥ ६ ॥
हरिं नीराजयित्वा च चतुर्वारं पुनः पुनः ।
उत्तारयेद् रथात् तत्र गापयेत् कीर्तनानि वै ॥ ७ ॥

ततश्च भोजनं कुर्याद् व्रती मोक्षप्रदं व्रतम् ।
आषाढकृष्णद्वितीयादिनादारभ्य मासिकः ॥ ८ ॥
श्रावणकृष्णतृतीयावधिं दोलोत्सवो मतः ।
वृषराशेश्चन्द्रबले कुर्याद् दोलां स्वलंकृताम् ॥ ९ ॥
नित्यं नवीनवस्त्राद्यैर्नवीनां श्रीहरेः प्रियाम् ।
सायाह्ने प्रत्यहं कृष्णनारायणं निधारयेत् ॥१०॥
नीराजयित्वा नैवेद्यं समर्प्याऽऽन्दोलयेद् व्रती ।
दोलापद्यानि रम्याणि गापयेन्नृत्यमाचरेत् ॥११॥
नभःकृष्णतृतीयायां प्रपूज्योत्तारयेद्धरिम् ।
श्रावणः सर्वथा मासो व्रतैश्च नियमैर्यमैः ॥१२॥
यापनीयो विशेषेण भुक्तिं मुक्तिं समिच्छता ।
कार्तिकोऽपि तथा नेयो व्रतदानजपादिभिः ॥१३॥
मार्गशीर्षे धनूराशौ धनुर्लग्ने रवौ गते ।
विधायाऽभ्यंगमुष्णेन स्नपयेद्वारिणा हरिम् ॥१४॥
धारयित्वा सुवासांसि तदग्रेऽग्निष्टिकामपि ।
निधाय नैत्यकं कुर्याच्छृङ्गारं सश्रियः प्रभोः ॥१५॥
नैवेद्ये मोदकान् दद्यान्नवनीतं घृतं दधि ।
रोटकं तरलां भर्जितं वृन्ताकं समर्पयेत् ॥१६॥
क्वथिकां पाययेत् कृष्णमध्ययनाय योजयेत् ।
एवं वै मासपर्यन्तं शिक्षार्थं तूत्सवं चरेत् ॥१७॥
पौषमासे मकरे च यदा सूर्यायनं भवेत् ।
चत्वारिंशद्घटिका वै पुण्यकालो विशेषतः ॥१८॥
दानस्नानार्चनाद्यं तु कर्तव्यं तिललड्डुकाः ।
मिष्टान्नानि च देयानि ह्यनाथेभ्यो विशेषतः ॥१९॥
गवां ग्रासादि देयं च श्राद्धं पुण्यप्रदं तथा ।
माघमासे तु पञ्चम्यां वसन्तोत्सवमुत्तमम् ॥२०॥
तत आरभ्य नित्यं च होलिकावधिकं सदा ।
कुंकुमरंगगुलालार्पणपूजनभोजनैः ॥२१॥
प्रकुर्यात् श्वेतवासांसि हरिं नवानि धारयेत् ।
रंगान् लक्ष्मीहरिकृष्णवासस्सु प्रक्षिपेद् व्रती ॥२२॥
गुलालं स्थलपद्माम्बु निक्षिपेच्च पुनः पुनः ।
शेखरं त्वाम्रपुष्पाणां धारयेद् भोजयेद्धरिम् ॥२३॥
केसराण्यंशुकानि श्रीकृष्णं लक्ष्मीं च धारयेत् ।
होलिकान्तां च वासन्तीं क्रीडां गायेत्तु फाल्गुनीम् ॥२४॥
अथाऽऽविर्भावदिवसाद् यावत्षट्दिवसावधिम् ।
पालने रोहयेत् कृष्णनारायणमपि व्रती ॥२५॥
पाययेत् तं तु दुग्धादि ह्यान्दोलयेत्सगीतिकम् ।
सेवयेद् बालभावेन मुहुर्नाथं प्रसादयेत् ॥२६॥
वैशाखशुक्लतृतीयादिनाच्छ्रीकृष्णमूर्तये ।
केसराक्तैश्चन्दनाद्यैर्लेपनं मासिकं चरेत् ॥२७॥
सूर्यचन्द्रग्रहाहस्सु कुर्यात्स्नानजपादिकम् ।
आषाढशुक्लषष्ठ्यां तु कौसुंभाम्बरमर्पयेत् ॥२८॥
हरये सूक्ष्मसुस्निग्धतन्तुजं कोमलं शुभम् ।
आश्विनकृष्णपक्षे तु श्राद्धैः संतर्पयेत् पितॄन् ॥२९॥
आश्विने शुक्लपक्षे तु मूलेनाऽऽवाहयेत् तथा ।
पूजयेद्भोजयेद्दुग्धपाकाद्यं तु सरस्वतीम् ॥३०॥
विसर्जयेच्छ्रवणेन विद्वान् भवति वै व्रती ।
स्वजन्मदिवसः सर्वैर्वर्धनीयः समुत्सवैः ॥३१॥
दानभोजनवृद्धाभिवन्दनैर्देवदर्शनैः ।
एकादशीतो द्वादश्यो मोक्षदा हरिवासराः ॥३२॥
कर्तव्या भोजनैर्दानैः पूजनोत्सवतर्पणैः ।
प्रसीदति हरिर्यैस्तु प्रयच्छत्यभयं पदम् ॥३३॥
येन केनाप्युपायेन प्रसन्नो यस्य वै हरिः ।
इहामुत्र सुखं तस्य पुण्यवृद्धिर्व्रतं भवेत् ॥३४॥
द्वादश्यां मार्गशुक्लस्य पूजयेज्जलशायिनम् ।
उपचारैः षोडशकैः पौण्डरीकफलं लभेत् ॥३५॥
द्वादश्यां पौषशुक्लस्य पूजयेत् प्रयतो हरिम् ।
उपचारैः षोडशकैरग्निष्टोमफलं लभेत् ॥३६॥
माघधवलद्वादश्यां पूजयेन्माधवं प्रभुम् ।
षोडशाद्यैरुपचारैर्वाजपेयफलं व्रजेत् ॥३७॥
फाल्गुनशुक्लद्वादश्यां गोविन्दं पूजयेज्जनः ।
वस्तुषोडशकैः श्रेष्ठैर्गोमेधस्य फलं जयेत् ॥३८॥
चैत्रधवलद्वादश्यां विष्णुं कृष्णं समर्चयेत् ।
षोडशाद्युपचारैर्वै स्यादग्निष्टोमपुण्यभाग् ॥३९॥
वैशाखशुक्लद्वादश्यां पूजयेन्मधुसूदनम् ।
षोडशोत्तमसामग्र्या त्वश्वमेधफलं भवेत् ॥४०॥
ज्येष्ठधवलद्वादश्यां पूजयेद्वै त्रिविक्रमम् ।
षट्दशभिस्तूपचारैर्नरमेधफलं भवेत् ॥४१॥
आषाढशुक्लद्वादश्यां वामनं पूजयेद् व्रती ।
षोडशाख्योपचारैश्च शताग्निष्टोमपुण्यभाग् ॥४२॥
श्रावणशुक्लद्वादश्यां श्रीधरं पूजयेद् व्रती ।
षोडशाऽऽमितवस्त्वाद्यैर्वाजिमेधसहस्रभाक् ॥४३॥
भाद्रधवलद्वादश्यां हृषीकेशं प्रपूजयेत् ।
षोडशाऽभ्युपचारैश्च ब्रह्ममेधफलं लभेत् ॥४४॥
आश्विनशुक्लद्वादश्यां पद्मनाभं प्रपूजयेत् ।
षोडशाभ्युपचाराद्यैरीशमेधसहस्रभाक् ॥४५॥

कार्तिकशुक्लद्वादश्यां दामोदरं प्रपूजयेत् ।
षोडशाभ्युपचाराद्यैर्द्वर्यश्वमेधसहस्रभाक् ॥४६॥
होमो जपस्तपो दानं साधुविप्रादिभोजनम् ।
दक्षिणाप्रार्थनाजागरणानीत्याचरेद् व्रते ॥४७॥
अल्पपरिकरस्याऽल्पं विशालस्य महत् फलम् ।
भक्तियुक्ते व्रते जाते फलं प्राप्येत मोक्षणम् ॥४८॥
व्रतं संवत्सरं कृत्वा कुर्यादुद्यापनं व्रती ।
प्रातः स्नात्वाऽम्बरे शुद्धे धृत्वा भाले सुपुण्ड्रवान् ॥४९॥
मण्डपं कारयेद् भव्यं विशालं चतुरस्रकम् ।
घण्टाचामरकलशाऽऽदर्शकिंकिणिकायुतम् ॥५०॥
पुष्पमाल्यध्वजतोरणवितानाम्बराऽञ्चितम् ।
दीपमालाचतुर्द्वारकोमलास्तरणान्वितम् ॥५१॥
तन्मध्ये सर्वतोभद्रं कुर्याद्धान्याद्यलंकृतम् ।
तस्योपरि न्यसेत् कुंभान् द्वादशाऽम्बुप्रपूरितान् ॥५२॥
शुक्लाम्बरैराच्छादितांश्च पञ्चरत्नसमन्वितान् ।
तत्र संस्थापयेत् हैमीं राजतीं ताम्रजां च वा ॥५३॥
लक्ष्मीनारायणमूर्तिं तिलपात्रे घटोपरि ।
अथावाहनमारभ्य पूजांगानि समारभेत् ॥५४॥
पञ्चामृतैः स्नापयेच्च भूषावस्त्राणि दापयेत् ।
सुगन्धचन्दनादीनि प्रार्पयेद् धूपदीपकान् ॥५५॥
श्रांगारिकद्रवान् दद्यान्नीराजयेच्च भोजयेत् ।
पानं ताम्बूलकं दद्यात् प्रस्वापयेत् क्षमापयेत् ॥५६॥
रात्रौ जागरणं कुर्यात् प्रातर्होमं समाचरेत् ।
पूजनं भोजनं वैसर्जनं देवस्य चार्पणम् ॥५७॥
पारणां च स्वयं कुर्याद् व्रतं समापयेद् व्रती ।
प्रतिमां दक्षिणायुक्तामाचार्याय समर्पयेत् ॥५८॥
एवमुद्यापनकर्ता व्रतकर्ताऽत्र भोगवान् ।
त्रिसप्तकुलसंयुक्तो याति विष्णोः परं पदम् ॥५९॥
य इदं श्रृणुयाल्लक्ष्मि ! व्रताख्यानं च वाचयेत् ।
सर्वव्रतफलं लब्ध्वा त्वन्ते यायाद्धरेः पदम् ॥६०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने वार्षिकप्रकीर्णकव्रतेषु दोलाव्रतरथयात्रादोलोत्सव-श्रावणकार्तिकधनुर्मासमकरसंक्रान्तिवसन्तोत्सव-पालनारोहणहोलिकापुष्पदोलकैसरचन्दनाम्बर-श्राद्धसरस्वत्युत्सवद्वादशीव्रतफलोद्यापन-प्रभृतिनिरूपणनामैकाशीत्यधिकद्वि-शततमोऽध्यायः ॥२८१॥

श्रीनारायण उवाच—

श्रृणु लक्ष्मि ! कथयामि लक्ष्मीनारायणव्रतम् ।
सर्वपापहरं पुण्यं यावद्दुःखनिबर्हणम् ॥ १ ॥
ब्राह्मणक्षत्रियविशां शूद्राणां योषितां तथा ।
समस्तकामफलदं सर्वव्रतफलप्रदम् ॥ २ ॥
दुःस्वप्ननाशकं धर्म्यं दुष्टग्रहनिवारकम् ।
येन चीर्णेन पापानां कोटिराशिः प्रशाम्यति ॥ ३ ॥
मार्गशीर्षपूर्णिमायां स्नात्वा ब्राह्मे मुहूर्तके ।
शुद्धवस्त्रधरः शुद्धासनस्त्वाचम्य वाग्यतः ॥ ४ ॥
स्मरन्नारायणं नित्यं कृत्वा देवार्चनं ततः ।
देशकालादिसंकल्प्य लक्ष्मीनारायणं प्रभुम् ॥ ५ ॥
आवाहयेत्पूजयेच्चाऽऽसनाद्यर्पणमाचरेत् ।
पञ्चामृतादिभिः स्नपयित्वा श्रृंगारमर्पयेत् ॥ ६ ॥
गन्धचन्दनपुष्पादिमालाधूपप्रदीपनैः ।
श्रृंगारैर्भोजनैः पेयैः फलैस्ताम्बूलगायनैः ॥ ७ ॥
नृत्यस्तवनभजनैः क्षमायाचनकैस्तथा ।
तोषयित्वा पुरस्तस्य स्थण्डिले चतुरस्रके ॥ ८ ॥
अरत्निमात्रं त्वनलं स्थापयेत्तु विधानतः ।
आज्यभागान्तपर्यन्तं कृत्वा पुरुषसूक्ततः ॥ ९ ॥
चरुणा च तिलैः पुष्पैर्घृतेन जुहुयात् फलैः ।
रसैश्चान्यहविष्यान्नैर्जुहुयाद्वै यथाबलम् ॥१०॥
पापनाशाय शुद्ध्यादिप्रायश्चित्तं समाचरेत् ।
होमं समाप्य च जपेच्छान्तिसूक्तं ततः पुनः ॥११॥
पूजयेच्छ्रीहरिं सम्प्रार्थयेद् व्रतप्रपूर्तये ।
निराहारश्च पूर्णायां पारणाकृत्परेऽहनि ॥१२॥
वर्तिष्ये इति संकल्प्य दद्यादर्घ्यं तदेन्दवे ।
गृहाणाऽर्घ्यं शुक्लपुष्पाऽक्षताद्युक्तं क्षपाकर ॥१३॥
नमः शुक्लांशवे तुभ्यं लक्ष्मीभ्रात्रे नमो नमः ।
कुर्याज्जागरणं रात्रौ कथाकीर्तननर्तनैः ॥१४॥
प्रातः सम्पूजयेत् कृष्णं ब्राह्मणान् भोजयेत् सतः ।
दानादिदक्षिणा दद्याद् बालान् साध्वीः प्रभोजयेत् ॥१५॥
स्वयं भृत्यादिभिः सार्धं कुर्याद्वै पारणां व्रती ।
एवं संवत्सरं कृत्वा कार्तिकीपूर्णिमादिने ॥१६॥
उद्यापनं महत् कुर्यान् मण्डपं कारयेच्छुभम् ।
मण्डले सर्वतोभद्रे घटे रत्नदलान्विते ॥१७॥
तिलस्थाल्यां पूजयेच्छ्रीलक्ष्मीनारायणं प्रभुम् ।
आवाहनादिकं कुर्यात् पञ्चामृतादिनाऽऽप्लवम् ॥१८॥

गन्धभूषाम्बरैर्मालाधूपदीपादिनाऽर्चनम् ।
भक्ष्यभोज्यादिनैवेद्यं मिष्टशीतलवारि च ॥१९॥
समर्पयेच्च ताम्बूलं फलाद्यर्पणमित्यपि ।
जागरं नृत्यगानादि तथा नीराजनादिकम् ॥२०॥
कृत्वा प्रस्वापयेत् कृष्णं पुनः प्रातः समर्चयेत् ।
आचार्याय ददेन्मूर्तिं दक्षिणां भोजयेद् द्विजान् ॥२१॥
कुर्यात् तिलादिभिश्चाग्नौ होमं दानानि चार्पयेत् ।
भोजयेत् साधुसाध्व्यादीन् तिलाद्यर्पणमाचरेत् ॥२२॥
एवं कृत्वा व्रती सम्यक् लक्ष्मीनारायणव्रतम् ।
इह भुक्त्वा पुत्रपौत्रकुटुम्बसहितः सुखम् ॥२३॥
भोगाँश्च विविधाँश्चान्ते याति विष्णो परं पदम् ।
योगिनां दुर्लभं सर्वं प्राप्नोति श्रीहरीक्षणात् ॥२४॥
शृणु लक्ष्मि! ध्वजारोपव्रतं तेऽत्र वदामि यत् ।
राज्यदं जयदं विष्णुप्रीतिकारकमुत्तमम् ॥२५॥
देवस्य श्रीहरेर्यद्वा तद्विभूतेश्च मन्दिरे ।
ध्वजदानं प्रकुर्याद्यः स स्यात्पूज्यो द्युवासिनाम् ॥२६॥
हेमभारसहस्रस्य दानजं फलमाप्नुयात् ।
गंगास्नानसमं पुण्यं शिवार्चनसमं फलम् ॥२७॥
तुलस्यर्चासमं पुण्यं ध्वजारोपणतो भवेत् ।
अहोऽपूर्वमहोऽपूर्वमहोऽपूर्वमिदं व्रतम् ॥२८॥
सर्वपापहरं सर्वपुण्यदं ध्वजरोपणम् ।
कार्तिके वाऽन्यमासे वा दशम्यां सितपक्षके ॥२९॥
स्नात्वा स्वनैत्यिकीं पूजां कृत्वैकाशी भवेद् व्रती ।
भुवि स्वपेन्निशि स्मरेन्नारायणं प्रगे पुनः ॥३०॥
एकादश्यां च विधिना स्नात्वा ध्यात्वा हरिं ततः ।
श्रीविष्णोः पूजनं कृत्वा भोजनादिसमन्वितम् ॥३१॥
अथ विप्रैश्चतुर्भिश्च स्वस्तिवाचनमर्थयेत् ।
नान्दीश्राद्धं प्रकुर्वीत ध्वजस्तंभौ समानयेत् ॥३२॥
वस्त्रयुतौ च तौ कृत्वा गायत्र्या प्रोक्षयेच्च तौ ।
सूर्यं चन्द्रं विधातारं धातारं गरुडं तथा ॥३३॥
ध्वजदण्डौ पूजयेच्च शुक्लपुष्पाक्षतादिभिः ।
कुंकुमचन्दनगन्धैर्हरिद्राशर्करादिभिः ॥३४॥
ततो गोचर्ममात्रं तु स्थण्डिलं चोपलिप्य च ।
आधायाऽग्निं वेदमन्त्रैराज्यभागादिकं तथा ॥३५॥
जुहुयात्पायसं धान्यं साज्यमष्टोत्तरं शतम् ।
पौरुषेण तु सूक्तेन विष्णोर्नामभिरित्यपि ॥३६॥
इरावतीमनुवाकमुच्चार्य जुहुयाद् व्रती ।
ततश्च वैनतेयाय स्वाहेत्यष्टाहुतीः पुनः ॥३७॥
सोमो धेनुमुदुत्यं च जुहुयाच्च ततः पुनः ।
सौरमन्त्राञ्जपेच्छान्तिसूक्तानि च वदेत्तदा ॥३८॥
निर्जलं तु व्रतं कृत्वा रात्रौ जागरणं चरेत् ।
द्वादश्यां प्रातरुत्थाय स्नात्वाऽभ्यर्च्य हरिं पुनः ॥३९॥
मंगलवाद्यगीताद्यैः सूक्तपाठस्तवादिभिः ।
ध्वजं नयेद्धरेः स्थानं नमः कुर्याच्च वै पुनः ॥४०॥
देवस्य द्वारदेशे वा शिखरे स्तंभसंयुतम् ।
संस्थापयेद् ध्वजं सम्यक् स्थिरं नीराजयेद्दृढम् ॥४१॥
नारिकेलफलं तत्र क्षिपेत् सारं प्रसादकम् ।
दद्यात्सर्वेभ्य एवाथ विष्णुं श्रृंगारयेत्तदा ॥४२॥
गन्धपुष्पाक्षतैर्देवं धूपदीपसुगन्धिभिः ।
भक्ष्यभोज्यादिमिष्टैः सन्नैवेद्यैश्च हरिं यजेत् ॥४३॥
ततः प्रदक्षिणं कृत्वा व्रती क्षमापयेत्प्रभुम् ।
यत्र यत्र हरे कृष्णनारायण ध्वजस्य ते ॥४४॥
शिखरस्य च छायाया गतिस्तत्र च तत्र च ।
दुःखदारिद्र्यदोषाणां विनाशः सर्वदा भवेत् ॥४५॥
पुत्रपौत्रादिविस्तारो धनधान्यादिसम्पदः ।
आरोग्योत्साहभूत्यादि वृद्धिं यान्तूत्तरोत्तरम् ॥४६॥
ध्वजः सर्वोपरि तेऽस्ति मामपि तत्तथा कुरु ।
ध्वजपुच्छं तु विज्ञानं ध्वजः सच्चित्सुखात्मकः ॥४७॥
वंशाग्रं ब्रह्मसदनं वंशः पन्था समर्चिषः ।
स्तंभाग्रं सत्यसदनं पट्टिका सुरभूमिका ॥४८॥
घण्टिका ज्योतिषां चक्रं स्तंभो धर्मः स्वयं स्थितः ।
स्तंभमूलं पुरुषार्थास्त्वदात्मस्तंभिने नमः ॥४९॥
यमामनन्ति वै सन्तः सच्चिदानन्दविग्रहम् ।
सलक्ष्मीकं प्रभुं कृष्णनारायणं भजेऽन्वहम् ॥५०॥
इतिस्तुत्वा नमेद् विष्णुमाचार्यं सद्गुरुं द्विजान् ।
पूजयेद्भोजयेद्दद्याद् दक्षिणां पारणां चरेत् ॥५१॥
पटो ध्वजस्य कमले यावच्चलति वायुना ।
तावन्ति पापजालानि नश्यन्त्येव ध्वजार्पिणः ॥५२॥
यावद्दिनानि सन्तिष्ठेद् ध्वजो वै देवताग्रहे ।
तावद्युगसहस्राणि हरेः सारूप्यमश्नुते ॥५३॥
आरोपितं ध्वजं दृष्ट्वा येऽभिनन्दन्ति हर्षिताः ।
तेषां पापानि नश्यन्ति वज्रलेपसमान्यपि ॥५४॥
ध्वजो धुन्वन्पटं धुनोत्यर्पिणस्त्वघसंचयान् ।
ध्वजारोपकरो याति विमानेन दिवं परम् ॥५५॥
पुरा कृतयुगे त्वासीत् सुमतिः सोमवंशजः ।
नृपो हरिकथारक्तो राज्ञी सत्यमतिस्तथा ॥५६॥

तावुभौ दम्पती नित्यं हरेः पूजापरायणौ ।
जातिस्मरौ जलानन्दौ धर्मकार्याणि तेनतुः ॥५७॥
रोपयति ध्वजं राजा द्वादशीद्वादशीदिने ।
तस्य कीर्तिं जगुर्देवाः श्रुत्वा विभाण्डको ययौ ॥५८॥
कृतातिथ्यं मुनिं राजा प्राञ्जलिः समुवाच ह ।
भगवन् कृतकृत्योऽस्मि भवदभ्यागमेन वै ॥५९॥
सतामागमनं सर्वसौख्यार्थं गृहिणां भवेत् ।
यत्र सतां परं प्रेम तत्र स्युः सर्वसम्पदः ॥६०॥
तेजः कीर्तिर्धनं धान्यं पुत्रा वृद्धिं प्रयान्ति च ।
श्रेयांस्यनुदिनं तत्र यत्र स्याद्वै सतां कृपा ॥६१॥
यो मूर्ध्नि धारयेद् भावात् महत्पादजलं रजः ।
सः स्नातः सर्वतीर्थेषु यज्ञावभृथकेषु च ॥६२॥
मम दाराश्च पुत्राश्च सम्पत् त्वयि समर्पिताः ।
मामाज्ञापय शीघ्रं किं सुप्रियं करवाणि ते ॥६३॥
श्रुत्वा करेण राज्ञश्च स्पृष्ट्वा शिरो विभाण्डकः ।
प्रसन्नः सँस्तदा प्राह राजन् यदुक्तवान् भवान् ॥६४॥
सर्वं कुलोचितं तेऽस्ति बहुश्रेयांस्यवाप्नुहि ।
धर्मश्चार्थश्च कामश्च मोक्षश्चेति चतुष्टयम् ॥६५॥
महतां सेवया प्राणी लभते शाश्वतं सुखम् ।
स्वस्ति ते सततं भूयाद् यत्पृच्छामि तदुच्यताम् ॥६६॥
पूजा बहुविधाः कृष्णतुष्टिदाः सन्ति तासु वै ।
ध्वजारोपं प्रधानं त्वं मत्वा करोषि तं कथम् ॥६७॥
भार्यापि ते सदा नृत्यपरा तत्र कथं वद ।
श्रुत्वा राजा तु तं प्राहाऽऽश्चर्यकारि पुराभवम् ॥६८॥
अहमासं पुरा शूद्रो मालिनीनामको ह्यघी ।
मद्यमांसव्यभिचारचौर्यादिकारकोऽघृणी ॥६९॥
हत्याकृत् मत्प्रजाबन्धुपरित्यक्तो वनं गतः ।
जीर्णं देवालयं विष्णोराश्रयं समुपेयिवान् ॥७०॥
फलमूलाशनो नित्यं वर्षाणां विंशतिः स्थितः ।
जीर्णस्फुटितसन्धानं तस्य सर्वमकारिषम् ॥७१॥
स्वनिवासाय सा भूमिर्मया लिप्ता सुसंस्कृता ।
वृक्षाश्चारोपितास्तत्र चाभिसिक्ताः सरोजलैः ॥७२॥
सन्धाय जीर्णवस्त्राणि ध्वजश्चारोपितो मया ।
शलाकार्पणकाण्डैश्च विष्णुभित्तिः सुरक्षिता ॥७३॥
इयं निषादो नाम्ना तु कोकिला बन्धुतर्जिता ।
विन्ध्याद्रेर्दारुकसुता त्वायाता दैवयोगतः ॥७४॥
पुंश्चलीयं मया प्राप्ता पत्नीत्वेनाऽभिरक्षिता ।
देवसेवां प्रकुर्वन्तौ दम्पतीभावमाश्रितौ ॥७५॥
स्थितौ वर्षाणि दश चैकदा रात्रौ परस्परम् ।
मद्यपानेन मत्तौ च मुदितौ मांसभोजनात् ॥७६॥
तनुवस्त्राऽपरिज्ञानौ नृत्यं चक्रुव मोहितौ ।
प्रारब्धकर्मभोगान्तमावां युगपदास्थितौ ॥७७॥
नेतुमावां तदाऽऽयाता यमदूता भयंकराः ।
तदा स्वसेवकौ मत्वा विष्णुर्देवालयस्थितः ॥७८॥
स्वदूतान्प्रेषयामास शंखचक्रगदाधरान् ।
ते तूचुर्भो दुराचारा याम्या मुञ्चध्वमर्चिनौ ॥७९॥
पूजकौ मम भक्तौ वै मदाश्रितौ वनस्थितौ ।
श्रुत्वोचुस्ताँस्तदा याम्या इमौ वै पापिनौ परौ ॥८०॥
यमेन पापिनो दण्ड्यास्तन्नेष्यामो वयं त्विमौ ।
श्रुत्वोचुर्वैष्णवास्ताँश्च पापाऽऽग्रहं प्रकुर्वतः ॥८१॥
एतौ पापविनिर्मुक्तौ हरेः शुश्रूषणे रतौ ।
हरिणा त्रायमाणौ तु मुञ्चध्वमविलम्बितम् ॥८२॥
एषा तु नर्तनं चक्रे तथैषः ध्वजरोपणम् ।
हरेः सौधाऽवनपरौ स्वार्थे परार्थकारकौ ॥८३॥
अन्तकालेऽपि यन्नाम श्रुत्वोक्त्वापि च वै सकृत् ।
लभते मोक्षणं स्वर्गं किमु शुश्रूषणे रतः ॥८४॥
कृष्णसेवी यतिसेवी पापोऽपि याति वैष्णवम् ।
मुहूर्तं वा मुहूर्तार्धं यस्तिष्ठेद्धरिमन्दिरे ॥८५॥
सोऽपि याति ब्रह्मलोकं किमु द्वात्रिंशवत्सरान् ।
मार्जनलेपनजीर्णशीर्णसन्धानकारकौ ॥८६॥
मन्दिरे दीपसलिलवृक्षछायाविधायकौ ।
कथमेतौ महापुण्यौ यातनाभोगयोगिनौ ? ॥८७॥
इत्युक्त्वा संप्रसह्यैव याम्यपाशान् निरस्य च ।
गृहीत्वाऽऽवां विमानाग्र्ये ययुर्विष्णोः सुखं पदम् ॥८८॥
तत्र दिव्यान् महाभोगान् भुक्त्वा यातौ महीमिमाम् ।
अत्रापि सध्वजं राज्यं प्राप्तं सेवाप्रसादतः ॥८९॥
अनिच्छया कृतेनापि प्राप्तं राज्यं महत्फलम् ।
स्मृत्वा तच्च मया केतुरनया नृत्यमर्प्यते ॥९०॥
इच्छयाऽऽराध्य गोविन्दं प्राप्स्यावः परमां गतिम् ।
विवशेऽपि फलं श्रेष्ठं किं पुनः श्रद्धया कृते ॥९१॥
विभाण्डकस्तु तच्छ्रुत्वा तौ प्रशस्य ययौ वनम् ।
इति जानीहि कमले कृष्णनारायणस्य वै ॥९२॥
परिचर्या तु सर्वेषां चिन्तामणिसमा मता ।
हरिभक्तिपराणां हि सर्वकामप्रदो हरिः ॥९३॥

इदं पवित्रमाख्यानं यः शृणोति पठेत्तथा ।
हरिसेवापरो वक्ता तेऽपि यान्ति परां गतिम् ॥९४॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने श्रीलक्ष्मीनारायणव्रतं तदुद्यापनं देवालयध्वजारोपणलेपनरक्षणादिपुण्यशालिनोरपि पापकर्मिणोर्मालिनाख्यशूद्रशूद्र्योर्मरणे यमदूतात् मोचितयोः प्राप्तराज्यकयोः सुमतिनृपसत्यमतिराज्ञ्योर्विभाण्डकं प्रति वृत्तान्तकथनमित्यादिनिरूपणनामा द्वाशीत्यधिकद्विशततमोऽध्यायः ॥ २८२ ॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! प्रवक्ष्यामि विख्यातं हरिपञ्चकम् ।
नारीनराणां सुखदं व्रतं सर्वव्रतोत्तमम् ॥ १ ॥
मार्गशुक्लदशम्यां तु स्नात्वा देवार्चनं चरेत् ।
पञ्चयज्ञान् विधायापि त्वेकभुक्तं दिनं नयेत् ॥ २ ॥
एकादश्यां प्रगे स्नात्वा हरिं पञ्चामृतैस्तथा ।
तीर्थजलैः स्नापयित्वाऽर्चयेद् गन्धद्रवादिभिः ॥ ३ ॥
आवाहनात् समारभ्य विसर्जनावधिं क्रियाम् ।
धूपदीपसुनैवेद्यताम्बूलदक्षिणान्विताम् ॥ ४ ॥
पूजात्मिकां व्रती कृत्वा श्रीहरिं प्रार्थयेत् पुरः ।
पञ्चरात्रं निराहारो ह्यद्यप्रभृति माधव ॥ ५ ॥
करिष्ये हरिपंचाख्यं व्रतं पूर्णं च मे भवेत् ।
एकभुक्तो दशम्यां वै रात्रौ भूशयनो भवेत् ॥ ६ ॥
एकादश्यां त्रिषवणं अर्चनं त्रिनिवेदनम् ।
रात्रौ जागरणं कुर्याद् गीतनृत्यकथानकैः ॥ ७ ॥
द्वादश्यां च त्रयोदश्यां चतुर्दश्यां त्रिकं चरेत् ।
पौर्णमास्यामपि स्नानार्चननैवेद्यमाचरेत् ॥ ८ ॥
पौर्णमास्यां तथा रात्रौ कुर्याज्जागरणं व्रती ।
पञ्चामृतादिपूजां तु प्रकुर्याद्दिनपञ्चसु ॥ ९ ॥
दुग्धेन स्नापयेद् विष्णुं पौर्णायामथ षष्ठके ।
तिलहोमं तिलदानं पञ्चगव्याशनं तथा ॥१०॥
कृत्वा विप्रान् भोजयेच्च पूजयेद्विधिवद्धरिम् ।
साधुसाध्वीर्भोजयेच्च स्वयं भुञ्जीत बन्धुभिः ॥११॥
एवं संवत्सरं कार्यं प्रतिमासं व्रतं शुभम् ।
उद्यापनं मार्गशीर्षे कार्यमौदार्यपूर्वकम् ॥१२॥
शुक्लपक्षव्रतस्यात्र शुक्लैकादशिकादिने ।
निराहारो द्वादश्यां तु पंचगव्यं ग्रसेद् व्रती ॥१३॥
पुष्पादिभिर्हरिं चैवाभ्यर्च्य दद्याद् द्विजातये ।
पायसं शर्करायुक्तं घृतयुक्तं फलान्वितम् ॥१४॥
मिष्टान्नशाकपत्राद्यैरन्वितं प्रसमर्पयेत् ।
सुगन्धजलसद्रत्नदक्षिणावस्त्रसंयुतम् ॥१५॥
पूर्णं च कलशं दद्यादात्मविदे तु साधवे ।
सर्वस्वं गुरवे दद्याद् भोजयेद् बालबालिकाः ॥१६॥
साधून् साध्वीर्भोजयेच्च स्वयं भुञ्जीत पारणाम् ।
एतद्व्रतं तु ते प्रोक्तं हरिपञ्चकसंज्ञितम् ॥१७॥
तत्कर्तुः पुनरावृत्तिर्ब्रह्मलोकान्न वै भवेत् ।
गवां कोटिसहस्राणां दानस्य फलमाप्नुयात् ॥१८॥
पठेदेतच्च शृणुयाद् वाचयेच्छ्रावयेच्च वा ।
तस्यापि व्रतपुण्यं स्याद् भुक्तिं मुक्तिं लभेत च ॥१९॥
अथान्यत्ते प्रवक्ष्यामि व्रतं मासोपवासकम् ।
पाराकाख्यं महालक्ष्मि ! यत्तुल्यं नान्यदुच्यते ॥२०॥
आषाढे श्रावणे वापि भाद्रे चाश्विनकेऽपि वा ।
एतेष्वन्यतमे मासे शुक्लस्याऽऽद्यदिने प्रिये ॥२१॥
प्राशयेत् पंचगव्यं च तिष्ठेद्विष्णुसमीपतः ।
स्नात्वा ध्यात्वा प्रगे विष्णुं नित्यकर्म समाप्य च ॥२२॥
विष्णुं समर्च्य संकल्पं कुर्यान्मासोपवासकम् ।
स्वस्तिवाचनमन्त्राँश्च वाचयेद् ब्राह्मणस्तदा ॥२३॥
प्रार्थयेच्च व्रती देवं त्वद्यप्रभृति माधव ! ।
मासमेकं निराहारो भविष्याभीष्टमावह ॥२४॥
ततः प्रभृति मासान्तं निवसेद्धरिमन्दिरे ।
नित्यं पंचामृतैर्देवं स्नापयेद् दीपमाददेत् ॥२५॥
अपामार्गशलाकां खादयेत् स्नायात् स चान्वहम् ।
देवं समर्चयेन्नित्यं बालान् विप्राँश्च भोजयेत् ॥२६॥
एवं मासोपवासाँश्च कुर्याद् द्वादशवत्सरान् ।
प्रतिवर्षं च गोदानं विप्रपितृप्रतर्पणम् ॥२७॥
दक्षिणाभरणान्नानि दद्याद् दानानि शक्तितः ।
एकमासोपवासेन राजसूयफलं भवेत् ॥२८॥
मासोपवासद्वितये फलं तद्द्विगुणं भवेत् ।
मासोपवासत्रितये चतुर्गुणफलं भवेत् ॥२९॥
चतुःकृत्वःकृते पुण्यमष्टाग्निष्टोमजं भवेत् ।
पञ्चकृत्वःकृते पुण्यमत्यग्निष्टोमजं भवेत् ॥३०॥
षट्कृत्वःसंकृते ज्योतिष्टोमाऽष्टकफलं भवेत् ।
सप्तकृत्वःकृते वाजिमेधाष्टकफलं भवेत् ॥३१॥
अष्टकृत्वःकृते नरमेधाष्टकफलं भवेत् ।
नवकृत्वःकृते पुण्यं गोमेधाष्टकजं भवेत् ॥३२॥

दशकृत्वःकृते ब्रह्ममेधाष्टकफलं भवेत् ।
एकादशपराके तु हरेः सारूप्यमश्नुते ॥३३॥
सद्वादशपराके तु लभेन्मुक्तिचतुष्टयम् ।
पाराकव्रतकर्तारो मुक्ता एव न संशयः ॥३४॥
नारी वा पुरुषो वापि व्रतकृन्मोक्षमाप्नुयात् ।
व्रताख्यानं पठेद्वापि शृणुयान्मोक्षभाग् भवेत् ॥३५॥
नास्ति गंगासमं तीर्थं नास्ति मातृसमो गुरुः ।
नास्ति विष्णुसमो देवस्तपो नाऽनशनात्परम् ॥३६॥
नास्ति क्षमासमा माता नास्ति कीर्तिसमं धनम् ।
नास्ति ज्ञानसमो लाभो नास्ति धर्मसमः पिता ॥३७॥
न विवेकसमो भ्राता नैकादश्याः समं व्रतम् ।
नास्ति ब्रह्मसमं पात्रं नास्ति पत्नीसमं प्रियम् ॥३८॥
नास्ति साधुसमा नौका नास्ति पाराकवद् व्रतम् ।
दानं होमादिकं कार्यं प्राप्ते पुण्येऽहनि प्रिये ॥३९॥
तृतीया माधवे शुक्ला भाद्रे कृष्णा त्रयोदशी ।
कार्तिके नवमी शुद्धा माघे पञ्चदशी तिथिः ॥४०॥
एता युगाद्याः कथिता दत्तस्याऽक्षयकारिकाः ।
अक्षयुक्शुक्लनवमी कार्तिके द्वादशी सिता ॥४१॥
तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ।
आषाढशुक्लदशमी सिता माघस्य सप्तमी ॥४२॥
श्रावणस्याऽष्टमी कृष्णा तथाऽषाढी च पूर्णिमा ।
फाल्गुनस्य त्वमावास्या पौषस्यैकादशी सिता ॥४३॥
कार्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी सिता ।
मन्वादयः समाख्याता दत्तस्याऽक्षयकारिकाः ॥४४॥
पुष्करादिषु तीर्थेषु गंगादिषु सरित्सु च ।
अयोध्यायां मथुरायां मायायां काशिकाभुवि ॥४५॥
काञ्च्यामवन्तिकायां द्वारकायां दत्तमक्षयम् ।
अतिथौ वेदविद्विप्रे साधुसाध्वीसतीषु च ॥४६॥
देवे देवसमे पुंसि दत्तमक्षयपुण्यकृत् ।
ब्रह्मचारिषु यद्दत्तं भवेदक्षयपुण्यकृत् ॥४७॥
व्रतिना सर्वथा कार्यं तपो दानं च पूजनम् ।
कारणीयं भोजनादि सर्वं चाऽक्षयपुण्यदम् ॥४८॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने हरिपञ्चकव्रतमासोपवासव्रततदुद्यापनयुगमन्वादितिथिदानमाहात्म्यादिनिरूपणनामा त्र्यशीत्यधिकद्विशततमोऽध्यायः ॥२८३॥

श्रीनारायण उवाच—

शृणु लक्ष्मि प्रवक्ष्यामि वारग्रहार्चनव्रतम् ।
यत्कृत्वा तु ग्रहाः सर्वे तुष्टा ददति सम्पदः ॥ १ ॥
सूर्यवारे व्रतं कार्यं नक्तं च वैकभोजनम् ।
प्रातः स्नात्वा रविं नत्वा पूजयेत् सर्ववस्तुभिः ॥ २ ॥
कृत्वा तु कानकं सूर्यं सारुणाश्वरथस्थितम् ।
संज्ञाछायायुतं दिव्यमालामणिविभूषितम् ॥ ३ ॥
आवाहनादिकं कृत्वा पञ्चामृताऽभिषेचनम् ।
स्नपनं वस्त्रभूषादिधारणं गन्धलेपनम् ॥ ४ ॥
धूपदीपसुनैवेद्यफलताम्बूलकाऽर्पणम् ।
ध्यानप्रदक्षिणास्तोत्रनमनादिविसर्जनम् ॥ ५ ॥
कारयेच्च ततो मध्याह्नेऽपि रात्रौ तथैव ह ।
पूजनं कारयेत् सर्वं सनीराजनभोजनम् ॥ ६ ॥
रात्रौ तु स्नापयेद् देवं प्रातः स्नात्वा प्रबोधयेत् ।
पूजयेत् कमलैश्चार्ककरवीरादिपुष्पकैः ॥ ७ ॥
जलं पुनः पुनर्दद्यादुपस्थापनमाचरेत् ।
दानाऽभयाऽब्जयुगलं धारयन्तं करे रविम् ॥ ८ ॥
कुण्डलांगदकेयूरयुतं ध्यायेत् त्रयीतनुम् ।
रक्तांभोजैस्तिलैर्वापि जुहुयाद् विधिवद्वसौ ॥ ९ ॥
उच्चारयेत्तु सूर्याय स्वाहेत्यष्टोत्तरं शतम् ।
ॐभूर्भुवः स्वस्तत्सवितुर्वरेण्यम् ॥१०॥
भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ।
इतिगायत्रिकामन्त्रेणाऽष्टोत्तरशतं तथा ॥११॥
जुहुयात् स्वाहासंज्ञायैछायायै चापि संवदेत् ।
भोजयेत्पूजयेदर्घ्यं दद्याद् भास्करमूर्तये ॥१२॥
प्राणानायम्य चाचम्य हस्तौ प्रक्षाल्य पूजकः ।
पात्रं ताम्रमयं प्रस्थतोयग्राहि समाददेत् ॥१३॥
कुंकुमं रोचनां राजीं चन्दनं रक्तचन्दनम् ।
करवीरं जपाशालिकुशश्यामाकतण्डुलान् ॥१४॥
तिलवेणुयवांश्चैव निक्षिपेत् सलिले शुभे ।
हस्ताभ्यां कलशं धृत्वा जानुभ्यामवनीं गतः ॥१५॥
आमूर्ध्नि पात्रमुद्धृत्याऽम्बरेण वरणे रवेः ।
दृष्टिं चाधाय मनसा दद्यार्घ्यं जलांजलिम् ॥१६॥
दत्वा पुष्पांजलिं चापि नत्वा स्तुत्वा विसर्जयेत् ।
नित्यं वा तद्दिनेऽप्येवमर्घ्यं दद्याद्विवस्वते ॥१७॥
तेन तुष्टो दिनेशोऽस्मै दद्याद् वित्तं यशः सुखम् ।
पुत्रान् पौत्रानभीष्टं च यद्यत् सर्वं प्रयच्छति ॥१८॥

सूर्यार्चनव्रतं त्वेतदायुरारोग्यवर्धनम् ।
धनधान्यपशुक्षेमक्षेत्रमित्रकलत्रदम् ॥१९॥
तेजोवीर्ययशःकीर्तिविद्याविभवभोगदम् ।
प्रकुर्याद् विधिना सूर्यमण्डलासिकरं परम् ॥२०॥
सूर्यमूर्तिं प्रदद्यात्तु गुरवे दक्षिणायुताम् ।
भोजयेद् ब्राह्मणान् दुग्धसारं तथा सुपोलिकाः ॥२१॥
स्वयं भुञ्जीत च व्रती व्रतमेवं समापयेत् ।
अथ चन्द्रदिने चन्द्रव्रतं कुर्याद् विधानतः ॥२२॥
प्रातरुत्थाय संस्नात्वा दुग्धपुष्पादि चाहरेत् ।
सौवर्णं समृगं सोमं सपत्नीकं प्रपूजयेत् ॥२३॥
सप्तविंशतिपत्नीभिः सहितं चन्द्रकं व्रती ।
आवाहनात् समारभ्य षोडशोपशुवस्तुभिः ॥२४॥
पूजयेत् कुमुदैश्चापि भोजयेद् दुग्धशर्कराः ।
रात्रौ नीराजयेत् पूर्णातिथौ चन्द्रस्य दर्शने ॥२५॥
प्रकान्त्यास्यं स्फटिकाभं नीलालकं सकुण्डलम् ।
बिभ्राणमिष्टं कुमुदं ध्यायेन्मुक्तास्रजं विधुम् ॥२६॥
स्वाहा चन्द्राय रोहिण्यैनक्षत्रेभ्यश्च संवदेत् ।
जुहुयात्पायसेनाऽष्टोत्तरशतं ससर्पिषा ॥२७॥
स्थापयेद् राजतं पात्रं पूरयेत् सौरभं पयः ।
दद्यान्निशाकरायाऽर्घ्यं सर्वाभिष्टार्थसिद्धये ॥२८॥
नित्यं वा तद्दिनेऽप्येवमर्घ्यं दद्याच्च पूजयेत् ।
तुष्टः कुमुदिनीनाथो दद्यादौषधिभोजनम् ॥२९॥
धनं धान्यं सुताः पुत्रान् सौभाग्यं च ददाति वै ।
एकभुक्तं व्रतं कुर्याद् गुरवे मूर्तिमर्पयेत् ॥३०॥
बालान् संभोजयेत् क्षीरं पूरिकाश्च सतो जनान् ।
स्वयं व्रतं समाप्यैव प्रभुंजीत तु पारणाम् ॥३१॥
अथ मंगलदेवस्य व्रतं रक्ष्यं सुखार्थिना ।
एकभुक्तेन कर्तव्यं सर्वकार्यस्य सिद्धये ॥३२॥
प्रातः स्नात्वा धरापुत्रदिने ध्यायेच्च मंगलम् ।
मेषस्थं रक्तवस्त्रांगं शूलशक्तिगदावरान् ॥३३॥
करैर्बिभ्राणमीशानस्वेदतं भूसुतं स्मरेत् ।
मार्गशीर्षेऽथ वैशाखे व्रतारंभः कुजेः दिने ॥३४॥
अरुणोदयवेलायां भौमव्रतमुपाचरेत् ।
सुतकामा धनकामा स्मृद्धिकामा व्रतं चरेत् ॥३५॥
उत्थाय च रदान् धावेदपामार्गेण वाग्यता ।
स्नात्वा रक्ताम्बरधरा रक्तमालविलेपना ॥३६॥
नैवेद्यादिकसंभारान् रक्तान्सर्वान्प्रकल्पयेत् ।
आचम्य देशकालौ च संकीर्त्याथ व्रतार्थिनी ॥३७॥
षोडशाद्यैरुपचारैः संपूज्याऽर्घ्यं निधापयेत् ।
धूपदीपौ समर्प्याथ गोधूमान्नं निवेदयेत् ॥३८॥
ताम्रपात्रे शुद्धतोयपूरिते रक्तचन्दनम् ।
रक्तपुष्पाक्षतफलान्याक्षिप्याऽर्घ्यं समर्पयेत् ॥३९॥
भूमिपुत्र सुतार्थं त्वां प्रपन्नाऽर्घ्यं गृहाण मे ।
देहि पुत्रं महीपुत्र गृहाणाऽर्घ्यं नमोऽस्तु ते ॥४०॥
ततो रेखात्रयं पृथ्व्यां खादिरांगारकेण वै ।
कुर्याच्च मार्जयेद् वामपादेन च वदेत्तदा ॥४१॥
दुःखदौर्भाग्यनाशाय पुत्रसन्तानहेतवे ।
कृतरेखात्रयं वामपादेन मार्जयाम्यहम् ॥४२॥
ऋणदुःखविनाशाय मनोऽभीष्टार्थसिद्धये ।
मार्जयाम्यसिता रेखास्तिस्रो जन्मत्रयोद्भवाः ॥४३॥
ध्यात्वा च मंगलं पुष्पांजलिहस्ता स्तुवीत तम् ।
ऋणहर्त्रे नमस्तुभ्यं नित्यं सौभाग्यदो भव ॥४४॥
यो वक्रगतिमापन्नो नृणां दुःखं प्रयच्छति ।
पूजितः सुखसौभाग्यप्रदो भवति ते नमः ॥४५॥
मेषवाहन रुद्रात्मन् देहि पुत्रान् धनं यशः ।
स्तुत्वा नत्वा तथा नीराजयित्वा पुष्पमर्पयेत् ॥४६॥
यथाशक्ति प्रदाय स्वं गृह्णीयाद् ब्राह्मणाशिषः ।
गुरवे दक्षिणां दद्यात् प्रभुञ्ज्यात् तन्निवेदितम् ॥४७॥
एवमावत्सरं कुर्यात् प्रतिमंगलवासरम् ।
तिलैर्होमं प्रकुर्याच्च स्वाहा मंगलमूर्तये ॥४८॥
भौममूर्तिं स्वर्णमयीं मण्डलस्थे घटे स्थिताम् ।
समभ्यर्च्य जपेन्मन्त्रं सुतसौभाग्यसिद्धये ॥४९॥
ओमंगारकाय विद्महे शक्तिहस्ताय धीमहि ।
तन्नो भौमः प्रचोदयादित्यष्टोत्तरकं शतम् ॥५०॥
जपेन्नमेत्पुनः पूजां कृत्वा दुग्धादि भोजयेत् ।
शर्करां च सुमिष्टान्नं गोधूमान्नं समर्पयेत् ॥५१॥
जलपानं च ताम्बूलं पुष्पांजलिं समर्पयेत् ।
विसर्जयेत्तु विधिना रात्रौ व्योम्नि च तं पुनः ॥५२॥
नत्वा ध्यात्वा जलं दत्वाऽक्षतान् पुष्पाणि चार्पयेत् ।
व्रतपूर्तिं फलं प्राथ्य भुञ्ज्यात् स्वप्यात् स्मरेत् ग्रहम् ॥५३॥
एवं व्रतार्थिनी वाथ व्रती भौमस्य तोषणात् ।
लभते सुतधान्यादि निर्विघ्नं सुखमुत्तमम् ॥५४॥
अथ बुधे दिने बुधव्रतं कुर्यात्समाहितः ।
स्नात्वा मूर्तिं तु सौवर्णीं पूजयेत्तु यथाक्रमम् ॥५५॥
आवाहनात्समारभ्य पुष्पाञ्जल्यन्तमेव तु ।
कृत्वा पीताम्बरं चन्द्रपुत्रं साऽभयपाणिकम् ॥५६॥

जानुस्थवामहस्तं च ध्यात्वाऽर्घ्यं च समर्पयेत् ।
बुध चान्द्र महाप्राज्ञ दुःखं हर सुखं कुरु ॥५७॥
अथाग्नौ जुहुयात्स्वाहा बुधायाष्टोत्तरं शतम् ।
प्रपूज्य भोजयित्वा च क्षमां प्रार्थ्याऽञ्जलिं ददेत् ॥५८॥
पुष्पाक्षतैर्वर्धयित्वा ततस्तं तु विसर्जयेत् ।
ब्राह्मणान् भोजयेद् व्योम्नि रात्रौ पश्येद् बुधं व्रती ॥५९॥
अर्घ्यं कमलपुष्पैश्च दत्वा समापयेद् व्रतम् ।
भोजयेत् साधुसाध्वीश्च स्वयं भुञ्जीत सादरम् ॥६०॥
एवं व्रतकृतो ग्रहपीडा सर्वा निवर्तते ।
पुत्रपशुधनारोग्यसम्पदां वर्धनं भवेत् ॥६१॥
अथ गुरौ प्रकुर्याच्च गुरोर्व्रतं समाहितः ।
स्नात्वा सुवर्णजां मूर्तिं गुरोः समर्चयेद् व्रती ॥६२॥
आवाहनात्समारभ्य षोडशाऽभिसुवस्तुभिः ।
पुष्पांजलिप्रपर्यन्तं पूजयित्वा बृहस्पतिम् ॥६३॥
ध्यायेन्यस्तवामहस्तं रत्नराशौ च दक्षिणात् ।
किरन्तं सर्वरत्नानि स्वर्णकान्तिं शुभाननम् ॥६४॥
पीतपुष्पाद्यलंकारालेपांशुकादिपूजितम् ।
सर्वविद्यानिधिं देवगुरुं शान्तिकरं स्मरेत् ॥६५॥
भोजयेत्पायसान्नं च नमेत् क्षमापयेत्तथा ।
स्वाहा बृहस्पतये चेत्यष्टोत्तरशताऽऽहुतीन् ॥६६॥
ददेद् घृतान्नपक्वान्नदुग्धसारकलादिभिः ।
विषरोगादिपीडासु कलहे स्वजनोद्भवे ॥६७॥
पिप्पलोत्थसमिद्भिश्च जुहुयात्तन्निवृत्तये ।
जुहुयात् त्रिदिनं चापि निशापुष्पैर्घृतप्लुतैः ॥६८॥
शीघ्रं तूपद्रवशान्तिर्भवेदिति पुनस्ततः ।
पूजयेच्च नमेद् रात्रौ व्योम्नि तद्दर्शनं चरेत् ॥६९॥
दद्यादर्घ्यं जलं नत्वा विद्यां च प्रार्थयेद् व्रती ।
नीराजयेत् ततः पुष्पाञ्जलिं दद्याद् विसर्जयेत् ॥७०॥
दानं श्रीगुरवे दद्यात् समूर्तिकं सभोजनम् ।
एवं कृत्वा व्रतं पश्चाद् भुञ्जीतेति सुखी भवेत् ॥७१॥
अथ शुक्रदिने शुक्रव्रतं कुर्याद् विधानतः ।
स्नात्वा सुवर्णजं शुक्रं ध्यायेच्छुक्लाम्बरं ग्रहम् ॥७२॥
शुक्ललेपविभूषं च करेण धनदायकम् ।
व्याख्यानमुद्रां वामेन दर्शयन्तं स्मरेद् व्रती ॥७३॥
आवाहनात्समारभ्य पुष्पाञ्जल्यन्तमर्चयेत् ।
भोजयेत्पूजयेत्क्षमापयेन्नमेत्ततः परम् ॥७४॥
श्वेतपुष्पैः सुगन्धैश्च जुहुयाद् भृगुवासरे ।
अष्टोत्तरं शतं होमं घृतादिभिश्च सञ्चरेत् ॥७५॥
नीराजयेद् गुरवे तु दद्यादर्घ्यं जलं शुभम् ।
रात्रौ व्योम्नि प्रपश्येच्च नत्वा स्तुत्वा विसर्जयेत् ॥७६॥
दानं श्रीगुरवे दद्याद् व्रतं तस्य समापयेत् ।
रत्नमण्यादि लभते व्रतकृच्च सुखी भवेत् ॥७७॥
एकभुक्तं च वा नक्तं तूपवासं व्रते च वा ।
प्रकुर्याद्वा यथाशक्ति पयःपानं फलाशनम् ॥७८॥
अथ शनैश्चरे वारे व्रतं शनेः समाचरेत् ।
स्नात्वा प्रातर्हरिं नत्वा हनूमन्तं च पन्नतिम् ॥७९॥
प्रणमेच्च शनेर्मूर्तिं त्वायसीं परिपूजयेत् ।
कृष्णमाषान्सप्तसंख्यान्पूजायामर्पयेद् व्रती ॥८०॥
आवाहनात् समारभ्य पुष्पाञ्जल्यन्तमादरात् ।
सर्वं कुर्यात्प्रदद्याच्च कृष्णपुष्पं सुकज्जलम् ॥८१॥
कृष्णाम्बरविभूषाश्च कृष्णान्नस्य निवेदनम् ।
कृष्णतिलादिहोमं च स्वाहा शनैश्चराय वै ॥८२॥
अष्टोत्तरं शतं कुर्याज्जपेन्मन्त्रं यथाबलम् ।
ध्यायेत् कृपाणहस्तं तं कृष्णाम्बरोत्तरीयकम् ॥८३॥
रथस्थं त्वायसवर्णं क्रूरदृष्टिप्रवक्त्रकम् ।
वक्रगतिं प्रपश्यन्तं नमेद्दद्याज्जलार्घ्यकम् ॥८४॥
कृष्णपुष्पकृष्णमाषान्वितं शान्तिप्रदो भव ।
शुभां दृष्टिं कुरु सौर्य सम्पत्सुखानि वर्धय ॥८५॥
अनिष्टं मा कुरु त्वर्किन् संज्ञापुत्र नमोऽस्तु ते ।
यमभ्रातर्गृहाणेदं कृशरान्नं जलादिकम् ॥८६॥
इति कृत्वाऽर्चनं तस्य कृष्णदानानि दापयेत् ।
नीराजयेन्नमेच्चापि विधिना च विसर्जयेत् ॥८७॥
एकभुक्तं च वा प्रायो नक्तं त्वत्राचरेद् व्रती ।
द्वितीये वासरे प्रातः प्रपूज्यैव शनिं हृदा ॥८८॥
भोजयेद्बालकान् कन्या विप्रान् कुर्याच्च पारणाम् ।
एवं सम्वत्सरं कृत्वा शनेर्दुःखानि संजयेत् ॥८९॥
प्राप्नुयात् सुखसम्पत्तिं सुखं स्वर्गसमं लभेत् ।
इति व्रतानि प्रोक्तानि किमन्यच्छ्रोतुमिच्छसि ॥९०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने सूर्यसोममंगलबुधगुरुशुक्रशनिव्रतानां सांगनिरूपणनामा चतुरशीत्यधिकद्विशततमोऽध्यायः ॥२८४॥

**श्रीलक्ष्मीरुवाच—**

कृष्णनारायण स्वामिन्नाथ माधव केशव ।
पार्वतीप्रभयोर्नाथ लक्ष्मीमाणिक्ययोः पते ॥ १ ॥

शुद्धैकादशका ग्राह्या व्रते विद्धा न वै कथम् ।
वद तत्कारणं पद्मापतेऽमृतपते हरे ॥ २ ॥

**श्रीनारायण उवाच —**

शृणु लक्ष्मि ! कथयामि ब्राह्मं जातं कथानकम् ।
विद्धैकादशिकायां वै प्रातस्तिष्ठति मोहिनी ॥ ३ ॥
वेधःपुत्री पुण्यहन्त्री तस्माद् ग्राह्या न सा व्रते ।
दशमीवेधरहिता सदोपोष्या व्रते मता ॥ ४ ॥
स्वर्गमोक्षप्रदा क्षेत्रराज्यपुत्रप्रदायिनी ।
कलत्रवित्तदाहार्दशरीरारोग्यदायिनी ॥ ५ ॥
क्षये वाऽप्यथवा वृद्धौ सम्प्राप्ते वा दिनोदये ।
उपोष्या द्वादशी पुण्या पूर्वविद्धा विवर्जयेत् ॥ ६ ॥
पूर्वविद्धां प्रकुर्वाणो नरो धर्मं निकृन्तति ।
सन्ततेस्तु विनाशाय सम्पदां हरणाय च ॥ ७ ॥
पूर्वविद्धा पुरा दत्ता दानवेभ्यस्तु सा तिथिः ।
पूर्वविद्धतिथौ पुण्यं कृतं यात्यसुरेष्वथ ॥ ८ ॥
दत्तं जप्तं हुतं स्नातं सेवितं पूजनं हरेः ।
विद्धतिथौ क्षयं याति तमः सूर्योदये यथा ॥ ९ ॥

आसीद् रुक्मांगदो राजा सार्वभौमः सुराष्ट्रके ।
महावैष्णवधर्मस्थो हरिवासरतत्परः ॥१०॥
गजे धृत्वा पटहं वादयते हरिवासरे ।
भुनक्ति मानवो योऽद्य विष्णोरहनि मन्दधीः ॥११॥
स मे दण्ड्यश्च वध्यश्च निर्वास्यो नगराद् बहिः ।
पिता वा यदि वा भ्राता पुत्रो भार्या सुहृन्मम ॥१२॥
श्रीहरेर्वासरे भोक्ता निग्राह्यो दस्युवद् भवेत् ।
ददध्वं सात्वतेभ्यश्च मज्जध्वं तीर्थवारिषु ॥१३॥
ममेदं वचनं कृत्वा तिष्ठन्तु मम राष्ट्रके ।
एतत्प्रघुष्टं सम्मत्वा प्रजा भजन्ति केशवम् ॥१४॥
गच्छद्भिः श्रीहरेर्धाम्नो मार्गः संकुलितो जनैः ।
तद्राज्ये तु मृता ये ये ते यान्ति हरिमन्दिरम् ॥१५॥

यममार्गे न गच्छन्ति पृथ्वीतो मानवास्तदा ।
शून्यास्तु निरया जाताः पापिप्राणिविवर्जिताः ॥१६॥
भग्नो याम्योऽभवन्मार्गो द्वादशादित्यतापितः ।
सर्वे वै गरुडारूढा जना यान्ति हरेः पदम् ॥१७॥
लेख्यकर्मविनिवृत्तश्चित्रगुप्तोऽप्यथाऽभवत् ।
मानवा भजनात्पूर्वकर्माण्यपि विधूय वै ॥१८॥
प्रयान्ति वैष्णवं धाम चर्पटा व्यर्थतां गताः ।
देवानामपि नाकाद्यास्ते शून्या ह्यभवँस्तदा ॥१९॥

शून्ये त्रिविष्टपे जाते शून्ये च नरके तथा ।
नारदो धर्मराजं संगत्वा त्विदमुवाच ह ॥२०॥
कथं शून्यं यमक्षेत्रं न चायान्ति जनास्त्विह ।
चित्रगुप्तोऽपि निवृत्तः लिखत्येव न वै कृतिम् ॥२१॥
मायादंभसमाक्रान्ता दुष्टकर्मरता अपि ।
कथं नात्र समायान्ति कारणं त्वत्र मे वद ॥२२॥

यमो दैन्यान्वितः प्राह पृथ्व्यां रुक्मांगदो नृपः ।
सार्वभौमः साम्प्रतं स भक्तिमान् पुरुषोत्तमे ॥२३॥
प्रबोधयति पटहैर्न भोक्तव्यं हरेर्दिने ।
ये केचिद् भुंजते मर्त्यास्ते मे दण्ड्या ध्रुवं मताः ॥२४॥
तद्भयाद्धि प्रजाः सर्वा हरेर्दिनमुपासते ।
प्रयान्ति वैष्णवं लोकं व्याजेनैवाप्युपोषिताः ॥२५॥
तेन राज्ञा हरेर्भक्त्या शून्याश्च नरकाः कृताः ।
स्वर्गाश्चापि कृताः शून्या लेखका निष्क्रियाः कृता ॥२६॥
एकादश्युपवासेन मार्जितं लिखितं तु यत् ।
नश्यन्ति पूर्वपापानि ह्यभुक्त्वा हरिवासरे ॥२७॥
काष्ठमृगसमः सोऽहं जातोऽस्मि निष्फलक्रियः ।
त्यक्तुकामोऽस्म्यहं त्वद्य लोकपालत्वमक्रियम् ॥२८॥

यास्यामि ब्रह्मलोको वै दुःखं ज्ञापयितुं स्वकम् ।
निर्व्यापारो नियोगी वेतनं धत्ते न जीर्यति ॥२९॥
स याति नरकं घोरं मानवो वा यमोपि वा ।
एवमुक्त्वा महालक्ष्मि ! नारदं चित्रगुप्तकम् ॥३०॥
सह नीत्वा ययौ ब्रह्मसदनं यमराट् स्वयम् ।
ददर्श च समासीनं मूर्ताऽमूर्तजनाऽऽवृतम् ॥३१॥
उपास्यमानं विविधैर्लोकपालैर्दिगीश्वरैः ।
वेदशास्त्रेतिहासाद्यैः सरःसरित्समुद्रकैः ॥३२॥
वृक्षवल्लीतृणसस्यैर्वनारण्यमरुद्गणैः ।
क्षेत्रभूभृत्स्थलीभिश्च मुनिदेवर्षिपितृभिः ॥३३॥
कलादिननिशावर्षयुगकल्पलयादिभिः ।
सुखदुःखाऽलाभलाभैर्नागसाक्षिगुणादिभिः ॥३४॥

गुणागुणैर्मायिकैश्चाऽनुक्तैरुपास्यते ह्यजः ।
तेषां मध्येऽविशत्सूर्यात्मजो भग्नहृदान्तरः ॥३५॥
विलोकयन्नधोभागं जातहानिं व्यदर्शयत् ।
निपपाताऽग्रतो ब्रह्मँस् त्राहि त्राहीति संवदन् ॥३६॥
विनिवृत्तोऽस्मि निष्कार्यः किं करोमि नियोजने ।
नाहं वेतनयोग्योऽस्मि राजपट्टं गृहाण ते ॥३७॥
इत्युक्त्वा राजपट्टं निचिक्षेप विधेः पुरः ।
लेखिनीं चित्रगुप्तोऽपि चिक्षेप च विधेः पुरः ॥३८॥

म्लाननं यमं त्वाश्वासयामास पितामहः ।
विह्वलं भग्नहृदयं ह्यासने सन्न्यवेशयत् ॥३९॥
पप्रच्छ च शनैः केनाऽभिभूतोऽसि विवासितः ।
केनाऽपमार्जितो देवपटस्तवाऽपमानितः ॥४०॥
ब्रूहि सर्वमशेषेण दुःखं ते हृदये स्थितम् ।
इमे सर्वे तर्कयन्ति लोकान् रोदयते तु यः ॥४१॥
सोऽयं केन पराभूतो म्लानाऽऽस्योऽस्ति रवेः सुतः ।
अथवा सत्यगाथेयं द्रोग्धुर्वै परतो भयम् ॥४२॥
अथ श्रुत्वा यमः प्राह शृणु पूर्वपितामह ।
वेतनं यो विना कार्यं गृह्णाति कर्मयोजितः ॥४३॥
निपतत्यन्धकूपे सः यस्त्वन्यायेन जीवति ।
कर्मचारी नियोगं न करोति लोभकर्षितः ॥४४॥
प्रभोर्वित्तं समश्नाति स भवेत्काष्ठकीटकः ।
पश्चात् स नरकं याति यावत्कल्पशतत्रयम् ॥४५॥
स्वार्थमात्रपरो यस्तु स्वामिनं तु विलुम्पति ।
स भवेद् ग्रामखातेषु ह्याखुः कल्पशतत्रयम् ॥४६॥
नियोगी निस्पृहो भूत्वा स्वामिकार्यं करोति न ।
स्वामिवित्तं समश्नाति गृहे मार्जारतां व्रजेत् ॥४७॥
सोऽहं त्वया नियुक्तोऽस्मि दण्ड्याऽदण्ड्यान् प्रशासितुम् ।
पुण्येन पुण्यकर्माणं पापेन पापकारिणम् ॥४८॥
योजयामीति तत्राद्य रुक्मांगदेन भूभुजा ।
पराभूतोऽस्म्याधिकार्ये कृतोऽस्मि निष्क्रियोऽधुना ॥४९॥
रुक्मांगदभयाद् भूमिः सप्तद्वीपा ससागरा ।
न भुंक्ते वासरे विष्णोः सर्वपापप्रणाशने ॥५०॥
पापाश्च सत्क्रियाशून्याः सर्वधर्मविहीनकाः ।
प्रयान्ति वैष्णवं धाम ह्युपोष्य हरिवासरम् ॥५१॥
ये त्वागता यमपूर्या तेऽपि वंशजपुण्यतः ।
यमपूरीं परित्यज्य धृत्वा पादं तु मूर्ध्नि मे ॥५२॥
प्रयान्ति वैष्णवं लोकं मत्क्षेत्रं शून्यतां गतम् ।
एतस्य व्रतपुण्येन शतं पितृपरम्पराः ॥५३॥
शतं मातामहपुंसां शतं भार्यापितुर्जनाः ।
शतं च भागिनेया वै भ्रातृभार्याजनाः शतम् ॥५४॥
शतं पितृभागिनेयः शतं मातृस्वसुर्जनाः ।
एकोत्तरं च प्रत्येकं यान्ति मोक्षपदं हरेः ॥५५॥
एतन्मे परमं दुःखं मार्जयित्वा लिपिं मम ।
अन्यकृतेन पुण्येन यान्ति त्वन्ये परं पदम् ॥५६॥
एकस्य पुण्यमाहात्म्यादन्यगोत्राः परं पदम् ।
छित्वा प्रयान्ति मत्पाशं तेन मे शिरसो रुजा ॥५७॥
न मे प्रयोजनं देव नियोगेनेदृशेन यत् ।
एकादश्युपवास्येकः कुलसप्तकमस्य तु ॥५८॥
प्रयाति श्रीहरेर्धाम त्यक्त्वा लोकं तु मामकम् ।
न यज्ञैर्न च तीर्थैर्वा व्रतैर्नापि जपैर्न च ॥५९॥
जलाग्निभृगुपतनैर्न गतिं याति तादृशीम् ।
यादृशीं याति तां हरेर्वासरस्य व्रतेन तु ॥६०॥
भूत्वा सोऽहं निराशोऽद्य तव पादसरोरुहम् ।
विज्ञप्तिं कर्तुमायातः कुरुष्वाऽत्र यथेप्सितम् ॥६१॥
यमक्षेत्रं यममार्गो यमशासनमित्यपि ।
मा स्युर्भग्ना यथा पूर्वपितामह तथा कुरु ॥६२॥
न दृष्टं न श्रुतं क्वापि त्वेतादृङ्न्यायवर्जितम् ।
स्वकर्मस्था विकर्मस्थाः शुचयोऽशुचयोऽपि वा ॥६३॥
उपोष्य वासरं विष्णोर्धाम यान्ति नृपाज्ञया ।
सोऽस्माकं तु महान् शत्रुर्निग्राह्यः स्यान्न संशयः ॥६४॥
तेन वर्षसहस्रेण शासितं क्षितिमण्डलम् ।
अतिदुष्टा जना नीता वैष्णवं धाम तद्बलात् ॥६५॥
आरोपयित्वा गरुडे कृत्वा रूपं चतुर्भुजम् ।
नयत्यहर्निशं लोकमप्रमेयं पितामह ॥६६॥
यदि स्थास्यति दीर्घं सः समस्तं नेष्यतेऽमृतम् ।
एष दण्डः परो ह्येषस्तव पद्मयां विसर्जितः ॥६७॥
लोकपालत्वमस्माकं व्यर्थीकृतमनेन वै ।
धन्या सा जननी गर्भे धृतोऽयं मोक्षकृद् यया ॥६८॥
किमपत्येन जातेन मातृक्लेशकरेण वै ।
येन तृप्तिर्न तोषो न न सेवा न रिपुक्षयः ॥६९॥
नोद्धृतः पितृनिचयो विद्यया वा बलेन वा ।
यस्य न स्फुरते कीर्तिर्जनेष्वभिज्ञकेष्वपि ॥७०॥
वृथाशूला तु तन्माता कुक्षिप्रस्तररक्षिणी ।
वृथाजन्माऽपि षण्ढः स मातुर्जाठररोगवत् ॥७१॥
धर्मार्थकाममोक्षेषु विरोधी यो भवेत्सुतः ।
वरं तस्माद् गर्भनाशो दुःखं तत्र समाप्यते ॥७२॥
धर्मह्रा यो भवेल्लोके वृथा तस्य तु जीवितम् ।
वीरप्रसूरिदानीं तु यया रुक्मांगदो नृपः ॥७३॥
जनितः श्रीहरेर्भक्तो मल्लिपेर्मार्जनाय वै ।
नैतादृशं कृतं पूर्वं केनापि परमार्जनम् ॥७४॥
सोऽहं कथं प्रजीवामि शृण्वँस्तत्पटहं सदा ।
लुम्पमानं मम मार्गं वृथावेतनपापभाग् ॥७५॥
इति निवेदयित्वैव विररामाऽतिदुर्मनाः ।
ब्रह्मा प्राह तदा लक्ष्मि ! शनैः सौरेर्विशोककृत् ॥७६॥

किं तत्रास्ति तवाश्चर्यं कथं वा खिद्यते भवान् ।
सद्गुणेषु कथं तापस्तव जातो यमाधिप ॥७७॥
यन्नामोच्चारणाद् यान्ति जना मोक्षपदं ध्रुवम् ।
तद्व्रतं समनुष्ठाय कथं नेयुः परं पदम् ॥७८॥
कृष्णनारायणस्यात्रैकः प्रणामः कृतो भवेत् ।
दशाश्वमेधफलदः फलं तु क्षयशालि तत् ॥७९॥
पुनर्जन्मप्रदं तच्च प्रणामस्त्वन्तकृज्जनेः ।
काशीगयाकुरुक्षेत्रैः किमस्त्यस्य प्रयोजनम् ॥८०॥
जिह्वाग्रे वर्तते यस्य हरिरित्यक्षरद्वयम् ।
रजस्वलां तु चाण्डालीं गच्छन् भुञ्जन् सुरान्वितम् ॥८१॥
मासं कुर्वन्महच्चौर्यं तथापि स हि मोक्षभाग् ।
विष्णुलोकं प्रयात्येव विधूय पापसंचयम् ॥८२॥
यन्नामोच्चारणान्मोक्षः किमूत तदुपोषणे ।
यत्र संकीर्त्यते विचिन्त्यते कृष्णनरायणः ॥८३॥
अज्ञानाल्लीलया वाऽत्र हेलयाऽपि गृणन् हरिम् ।
शृण्वन्स्मरन्नुपहसन्नपि याति परां गतिम् ॥८४॥
कथं तस्य प्रभक्तेषु व्रतिष्वाशासनं तव ।
यस्त्वं न चूर्णितो बद्धः पार्षदैस्तस्य वै प्रभोः ॥८५॥
तदस्माकं परं मानं रक्षितं त्वं न बुध्यसे ।
नियोगिना हि यत्नेन ज्ञातव्या राजकीयता ॥८६॥
राजानुग्रहपात्राणि सापराधान्यपि ध्रुवम् ।
नियोक्तव्यानि नैवेह नियोगी दण्डयतेन्यथा ॥८७॥
एवं पापा अपि कृष्णभक्तनियोगमाश्रिताः ।
प्रयान्ति श्रीहरेर्धाम मा तत्र शासनं कुरु ॥८८॥
अन्यभक्तैः सदोषैः पूरयिष्ये यम ! ते गृहम् ।
न करिष्यामि साहाय्यं हरिभक्तैस्तु ते क्वचित् ॥८९॥
कृष्णनारायणभक्तनिग्रहो नैव विद्यते ।
तैः कृते ह्यवमाने तु तव नाऽस्मि सहायवान् ॥९०॥
चेत् ते साहाय्यमत्रापि करोमि यदि सूर्यज ! ।
मम देहान्तदण्डः स्याद् भ्रष्टत्वं ब्रह्मणः पदात् ॥९१॥
तदात्र तव का वार्ता ततो मौनं गृहाण भो ।
प्रयान्तु ते हरेर्धाम यमक्षेत्रान्न रोधय ॥९२॥
भवत्त्वादित्यजन्मँस्ते रिक्तं क्षेत्रं हरेर्बलात् ।
मा शोकं व्रज चात्रार्थे काले त्विष्टं भविष्यति ॥९३॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने दशमीविद्धैकादशीव्रताऽकरणे महाभागवतरुक्मांगदनृपाख्याने एकादशीव्रतबलाद् यमपुरीरिक्तत्वे ब्रह्माणं प्रति यमस्य सशोकनिवेदनमितिनामा पञ्चाशीत्यधिकद्विशततमोऽध्यायः ॥२८५॥

श्रीनारायण उवाच—

शृणु लक्ष्मि ! ततो धर्मराजः प्राह पितामहम् ।
अहो कीदृशमाश्चर्यं यदि राजा प्रमोक्षदः ॥ १ ॥
देवाः सर्वे तदा व्यर्थाः शासनं च निरर्थकम् ।
रुक्मांगदाद्धरौ तत्र भेदो न स्यान्मनागपि ॥ २ ॥
यमपुर्या देवपुर्या ब्रह्मपुर्या नियामकः ।
रुक्मांगदो भवेद् भौमो हरिरेव भवेद्धि सः ॥ ३ ॥
तमेकं भोजयित्वा तु प्रपूज्य हरिवासरे ।
कृतकृत्यो भविष्यामि गृहाण त्वत्परं विधे ॥ ४ ॥
यदि नामाद्यप्रभृति यैर्नरैः संस्मृतो हरिः ।
उपोषितः स्तुतो वापि ते बाह्या मम शासनात् ॥ ५ ॥
नेदृशं कर्मचारित्वं द्विसत्ताकं प्ररोचते ।
अन्यं नियुङ्क्ष्व सहते भग्नसत्ताकतां तु यः ॥ ६ ॥
इति कृत्वां पटं त्यक्त्वा स्थितो मौनं यमाधिपः ।
ब्रह्मा तदा सभायां वै पटग्राहं व्यचिन्तयत् ॥ ७ ॥
प्रकाशं कृतवाँस्तत्र समुत्थाय पुनः पुनः ।
पट्टं गह्णन्तु ये केचिद् यमराज्यं ददाम्यहम् ॥ ८ ॥
रुक्मांगदनृपाज्ञा तु नोल्लंघ्येति पणान्वितम् ।
यमासनं प्रगृह्णन्तु पटं रिक्तं ददाम्यहम् ॥ ९ ॥
श्रुत्वापि न यदा कश्चित् स्वीयशासनमाप्नवान् ।
परशासनकैंकर्ये स्थातुं परवशे पदे ॥१०॥
इयेष तु तदा प्राह नारदस्तं पितामहम् ।
मानवाधीनमैश्वर्यपदं को गृह्णीयात्सुरः ॥११॥
तस्मादत्रान्यपन्थानं विचारय पितामह ।
येन वै यममार्गो वा प्रतिरुद्धो न वै भवेत् ॥१२॥
स्वर्गमार्गोऽपि संरुद्धो न भवेत् तत्तथा कुरु ।
श्रुत्वैवं नारदीयं वै वचनं बहुगर्भितम् ॥१३॥
वैवस्वतस्य कार्यार्थे तत्सन्मानचिकीर्षया ।
चिन्तयामास विश्वसृट् मोक्षे विघ्नकरं तु यत् ॥१४॥
स्वस्मादुत्पादयामास प्रमदां लोकमोहिनीम् ।
सर्वयोषिद्वरा देवी मनसा निर्मिता बभौ ॥१५॥
इयं ब्राह्मी दिव्यरूपा दिव्याभरणभूषिता ।
प्रोद्भिन्नयौवना दृष्टा सर्वैश्चकितमानसैः ॥१६॥
मोहितास्तु तदा सर्वे संसत्स्था ब्रह्मसृष्टिजाः ।
मोहो मोक्षप्रतिरोद्धा मोहिनी मोक्षनाशिनी ॥१७॥
सम्यग् जातं कौतुकं तत् प्राहेमान् पश्यतो ह्यजः ।
सरागेणेह मनसा सरागेणेह चक्षुषा ॥१८॥

चिन्तयेद्वीक्षयेद्वापि जननीं वा सुतामपि ।
वधूं वा भ्रातृजायां वा गुरुभार्यां नृपस्त्रियम् ॥१९॥
स याति नरकं घोरं संचिन्त्य श्वपचीमपि ।
दृष्ट्वा तु प्रमदामेतां यः क्षोभं व्रजते जनः ॥२०॥
तस्य जन्मकृतं पुण्यं वृथा भवति पुत्रकाः ।
प्रसंगे दशसाहस्रं पुण्यमायाति संक्षयम् ॥२१॥
पापेन तु तदा प्राणी तिर्यग्योनिमवाप्नुयात् ।
तस्मान्न चिन्तयेत्पश्येद् वदेत् स्त्रीं मनसाऽधिना ॥२२॥
स्त्रीर्न विचिन्तयेत्पश्येद् वदेत् पुं मनसाऽधिना ।
साभिलाषेण मनसा तत्क्षणात्पतते जनः ॥२३॥
एवमाभाष्य बहुधा विरिञ्चिर्ज्ञानचक्षुषा ।
विलोक्य मोहिनीं सार्थां क्षणं व्यचिन्तयत्ततः ॥२४॥
यथेयं मनसा वल्लसा मानसोन्मादकारिणी ।
तथैव जाता बन्धाय यमस्तोषं प्रयास्यति ॥२५॥
यममार्गोऽनया सम्यग् भविष्यति सुवाहितः ।
स्वर्गं वा नरकं वापि रिक्तं क्वचिन्न पत्स्यते ॥२६॥
तावदाह प्रणम्यैनं मोहिनी चतुराननम् ।
पश्य मूर्छान्वितं ब्रह्मन् सभ्यं स्थावरचेतनम् ॥२७॥
मोहितं मम रूपेण निमग्नं बन्धसागरे ।
स नास्त्यत्र यः कोपि दृश्यते मम दर्शनात् ॥२८॥
स्वल्पं वा बहुलं वाऽपि न क्षोभं संगतो मयि ।
साहं सृष्टा त्वया ब्रह्मन् कस्यचित् क्षोभणाय तु ॥२९॥
तमादिश विधे शीघ्रं क्षोभयिष्ये क्षणाद्धि तम् ।
मां दृष्ट्वा च भुवि क्ष्माभृज्जडोपि द्राग् विमुह्यति ॥३०॥
किं पुनश्चेतनो जीवो मोहपात्रं विनिर्मितः ।
इत्युक्त्वा विररामेयं ब्रह्मोवाच तु तां मुदा ॥३१॥
सत्यमेतद् विशालाक्षि ! तव रूपं विमोहकम् ।
इमे सभासदाः सर्वे जडा इव तु दर्शनात् ॥३२॥
विद्यन्ते तत्तथैवाऽसि विजयोऽस्तु सदा तव ।
यन्निमित्ता मया सृष्टा तत्प्रसाधय मोहिनि ! ॥३३॥
सुराष्ट्रके महीदेशे राजा रुक्मांगदोस्ति वै ।
यस्य सन्ध्यावली पत्नी तव रूपोपमास्ति हि ॥३४॥
यस्यां धर्मांगदः पुत्रो जातोऽस्ति गुणतोऽधिकः ।
यो न वाक्याद्विचलति सर्वदाऽऽज्ञाकरः सुधीः ॥३५॥
तस्य रुक्मांगदस्यैव समीपं याहि मोहिनि ! ।
रैवताख्ये महाशैले स राजा त्वागमिष्यति ॥३६॥
मोहितस्तव गीतेन संगं यास्यति स त्वया ।
तत्र देवि त्वया वाच्यं कृत्वा तं विवशं त्वति ॥३७॥
अहं भार्या भविष्यामि पणो रक्ष्यो यदि त्वया ।
कथयिष्ये त्वहं काले तत्कर्तव्यं त्वया ध्रुवम् ॥३८॥
इति श्रुत्वा मोहितः स तथैव प्रतिपत्स्यते ।
तदा तद्दक्षिणो हस्तस्त्वया ग्राह्यः स्वके करे ॥३९॥
शपथैर्वचने बन्धनीयः समयपालने ।
ततः सुरतकार्ये सः तोषणीयोऽतिमुग्धवत् ॥४०॥
गाढे स्नेहे स्थिरे जाते मासेष्वपगतेष्वथ ।
सुरते तव चार्वंगि ! यदा मुग्धो हि लक्ष्यते ॥४१॥
प्रहस्य नृपतेः स्मारयितव्यं स्वं पणं वचः ।
यस्त्वया शपथो राजन् कृतो मद्वाक्यपालने ॥४२॥
तत्पालय महाराज मन्येऽहं समयोऽस्त्विति ।
एवमुक्ते त्वया राजा मुग्धो वै सत्यगौरवात् ॥४३॥
वदिष्यति पालयामि ब्रूहि किं ते ददाम्यहम् ।
एवमुक्ते तु वचने त्वया वाच्यस्तदा नृपः ॥४४॥
सुरते तूपवासस्तु मतो नैर्बल्यकारकः ।
रतेर्योगे महान् विघ्नो ह्युपवासः क्षुधाकरः ॥४५॥
नोपवासस्त्वया कार्यो जातु वै हरिवासरे ।
सुरतसंसकारी मे ह्युपवासोऽस्ति विघ्नकृत् ॥४६॥
सुमुग्धां यौवनोपेतां सेवमानां न सेवते ।
पर्वाक्षेपी दुराचारो निर्दयो याति रौरवम् ॥४७॥
त्रिरात्रं त्वां विना राजन्! स्थातुं शक्ता कथं न्वहम् ।
नाहं दिवसमप्येकं स्थातुं शक्ता त्वया विना ॥४८॥
उपोषणं तव राजन् महापापाय जायते ।
यत्राहं कामदाहेन प्रज्वलामि त्वया विना ॥४९॥
यदि चेत् तरुणी रक्ष्या देयं रतिसुखं सदा ।
यद्यशक्तो रतेर्दाने न रक्ष्या तरुणी तदा ॥५०॥
कामदाहविनिःश्वासस्तरुणीहृदयोद्भवः ।
व्रतिनामपि पुण्यानि प्रज्वालयति मूलतः ॥५१॥
तस्माद् राजन्प्रवार्धक्ये कर्तव्या हरिवासराः ।
तारुण्ये तु ममाऽतीते करिष्ये हरिवासरान् ॥५२॥
एवं सम्बोध्यमानोपि यदा भूभृद्वचस्तव ।
न करिष्यति चार्वंगि ! तदा वाच्यं परं वचः ॥५३॥
यदि न त्यजसे राजन्नुपवासं हरेर्दिने ।
स्वहस्तेन शिरश्छित्वा स्वपुत्रस्य वराऽसिना ॥५४॥
धर्मांगदस्य राजेन्द्र ममोत्संगे क्षिप स्वयम् ।
यद्येतन्मत्प्रियं राजन्न करोषि वचः क्षतेः ॥५५॥
धर्मक्षीणो भवान् गन्ता ह्यचिरान्नरके ध्रुवम् ।
श्रुत्वैतद्वचनं देवि ! न हनिष्यति पुत्रकम् ॥५६॥

देवानुमतिमादाय भोक्ष्यते हरिवासरे ।
तदा प्रजाः प्रभोक्ष्यन्ते तदीया हरिवासरे ॥५७॥
याम्यमार्गो जनैस्तर्हि संप्रवृत्तो भविष्यति ।
नारकाणां भालपंक्तिप्रमाणं च भविष्यति ॥५८॥
यदा न भोक्ष्यते किंचिद् भक्तत्वाद्धरिवासरे ।
हनिष्यति तदा पुत्रं राज्याभिषिक्तमेव तम् ॥५९॥
तदा प्रयास्यति क्ष्माभृत् स्त्रीजीतत्वप्रदूषणम् ।
मूर्धाभिषिक्तघातित्वं पुन्नामनरकार्तिताम् ॥६०॥
पितॄणां पातयितृत्वं स्वात्मघातित्वमित्यपि ।
एभिर्दोषैरचिरात् स निधनं प्राप्स्यते नृपः ॥६१॥
यममार्गे स्वयं गत्वा पूरयिष्यति रौरवम् ।
यद्वा व्रतबलाच्छीघ्रं हरेर्धाम्नि प्रयास्यति ॥६२॥
शासनं प्रतिरुद्धं स्याज्जना अत्स्यन्ति वै व्रते ।
भविष्यति यममार्गः समुद्घाटित एव ह ॥६३॥
गच्छ शीघ्रं प्रतीक्षस्व रुक्मांगदं तु रैवते ।
कृतकार्या समागच्छ विद्धां दास्ये तिथिं गृहम् ॥६४॥
मोहिनी त्वेवमुक्ता सा प्रणम्याऽजं सभासदान् ।
वीक्ष्यमाणाऽमरैर्मार्गे प्रतस्थे रैवताचलम् ॥६५॥
तृतीयेन मुहूर्तेन संप्राप्ता गिरिमस्तकम् ।
रैवतो मन्दराद्रयात्मा सौराष्ट्रे राजतेऽचलः ॥६६॥
रत्नानां मन्दिरं ह्येषो बहुधातुसमन्वितः ।
क्रीडाभूमिः सुराणां च तपोभूर्यस्तपस्विनाम् ॥६७॥
कृष्णनारायणस्याऽयं विहारोद्यानसन्निभः ।
स्वर्णरक्षा नदी यत्र वहते कांचनप्रभा ॥६८॥
भवेश्वरं महालिंगं वर्तते वामनोपि वै ।
दामोदरस्वरूपेण गह्वरारण्यभूमिषु ॥६९॥
मृगीकुण्डतटे बाला गत्वा पीत्वा जलं शुभम् ।
भुक्त्वा सीताफलं स्वादु चक्रे संगीतमुत्तमम् ॥७०॥
मूर्छनातालसहितं गान्धारध्वनिसंयुतम् ।
क्लमहानिकरं मिष्टं सर्वसत्त्वविमोहनम् ॥७१॥
चिञ्चाद्रुमघटाछन्नः श्रुत्वा भवेश्वरः शिवः ।
तदा भोक्तुमनाः कामातुरश्चाति व्यजायत ॥७२॥
चचाल मन्दिरात्स्वस्माद् यत्र गायति मोहिनी ।
स्वर्णरेखा स्थिरा जाता वनं स्तब्धं तदाऽभवत् ॥७३॥
दामोदरोऽपि चायातो वनराजिस्वरभ्रमात् ।
वनदेवा रैवताद्रिः स्वराऽऽकृष्टाः समाययुः ॥७४॥
मोहिनी गीतिकामग्ना प्रतीक्षति नृपागमम् ।
रुक्मांगदोऽपि वैराग्यादरण्यं गन्तुमिच्छति ॥७५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने यमराजस्य सत्तापट्टत्यागमिषेण पितामहेन संवादो, मोहिनीस्त्रीसमुत्पादनं, शिक्षयित्वा रैवताद्रौ रुक्मांगदनृपं प्रति मोहिनीप्रेषणं, मोहिनीसंगीतमित्यादिनिरूपणनामा षडशीत्यधिकद्विशततमोऽध्यायः ॥२८६॥

**श्रीनारायण उवाच—**

तस्मिन्नवसरे त्वेव लक्ष्मि! रुक्मांगदो नृपः ।
भोगांस्तु मानुषान् भुक्त्वा हरिं सम्पूज्य केशवम् ॥ १ ॥
कृत्वा शून्यं यमपथं जित्वा वैवस्वतं यमम् ।
वैकुण्ठस्य तु पन्थानं कृत्वा पूर्णं तु मानवैः ॥ २ ॥
धर्मांगदं समाहूय दातुं राज्यमभाषत ।
एतां वसुमतीं पुत्र सप्तसागरमेखलाम् ॥ ३ ॥
पालय त्वं राज्यधुरं गृहाण च मदर्पिताम् ।
पुत्रे योग्ये सुनिष्पन्ने धुरं यो न समर्पयेत् ॥ ४ ॥
क्लेशवाही स जनको धर्मकीर्तिप्रविच्युतः ।
पुत्रशक्त्यप्रसंपोष्टा नोन्नतिं याति वृद्धकः ॥ ५ ॥
कार्यक्षमः सुतश्चापि भारं नोद्वहते तु यः ।
स्वकर्तव्यच्युतः सोऽपि दुःखी भवति वृद्धकः ॥ ६ ॥
पिता येन न तुष्येत् स पुत्रो यात्येव रौरवम् ।
पिता येन तु सन्तुष्टः सुतः सः स्वर्गभाजनम् ॥ ७ ॥
कृतं राज्यं प्रजाश्चानुनीता विष्णुपरायणाः ।
अथाऽऽसाद्य विनिर्वृत्तिं गमिष्येऽरण्यमेकलः ॥ ८ ॥
गिरीन् वनानि सरितः सरांसि विविधानि च ।
तप्तुकामो लोकयिष्ये भारं त्वयि निवेश्य वै ॥ ९ ॥
श्रुत्वा धर्मांगदः प्राह पिता प्रोक्तो जनार्दनः ।
पितुर्वाक्ये महत् स्वर्गे मोक्षश्चाज्ञाकरे पितुः ॥१०॥
न हि पुत्रस्याऽन्यधर्मः पित्राज्ञाकरणं विना ।
पितृवाक्यमकुर्वाणः सुधर्मिष्ठोऽप्यधो व्रजेत् ॥११॥
तस्मात् करिष्ये वचनं भवत्सन्तोषहेतवे ।
गुर्वीं राज्यधुरं तात त्वदीयामुद्धराम्यहम् ॥१२॥
श्रुत्वैवं पुत्रवाक्यं स राजा तुष्टो बभूव ह ।
प्राह सन्ध्यावलीं पत्नीं स्थितां लक्ष्मीमिवाऽपराम् ॥१३॥
शृणु पत्नी त्वहं धन्यस्त्वं च धन्या सुतेन वै ।
कर्णाभ्यां श्रूयते मोक्षः स प्राप्तः सत्सुतेन वै ॥१४॥

पुत्रे विनयसम्पन्ने वृत्तशौर्यसमन्विते ।
प्रतापिनि प्रणिष्पन्ने पितुर्मोक्षो गृहे ध्रुवः ॥१५॥
शतानन्दप्रदः पुत्रस्तारयत्येव बीजदम् ।
जननीं तारयेच्चात्राऽऽवाभ्यां प्राप्तस्तथा सुतः ॥१६॥
राज्यभारं न्यस्य पुत्रे त्वां चापि न्यस्य रक्षणे ।
गमिष्येऽरण्यवासार्थं संस्मृत्य प्राक्परम्पराम् ॥१७॥
कालशेषं क्षपयिष्ये प्रवास्येऽन्ते हरेर्गृहम् ।
सुखिनी भव पुत्रेण ज्ञानेनाऽऽत्मविनिष्ठया ॥१८॥

मा वियोगे कुरु दुःखं पत्याज्ञां पारमेश्वरीम् ।
मत्वा स्त्रीत्वाद् गृहे तिष्ठ कल्याणं ते भविष्यति ॥१९॥
श्रुत्वा सन्ध्यावली प्राह सत्यमुक्तं त्वया नृप ।
भोगाद् वैराग्यमापन्नः सेवस्व मुनिसज्जनान् ॥२०॥
प्रसन्नाऽस्मि तवाऽऽज्ञायां पातिव्रत्यं तवाऽऽदरे ।
सर्वथाऽस्तु तव तोषो मन्मोक्षे वै सहायकृत् ॥२१॥
प्रजाश्चापि समापृच्छ्य क्षिप्त्वा धुरं स्वपुत्रके ।
धुरामाहृत्य भूपालो दत्वा स्वं दक्षिणं करम् ॥२२॥
हयमारुह्य राजा स ययौ रैवतकाननम् ।
पत्नीव्रताऽभिधविप्राऽऽश्रमं त्वश्वसरोऽन्तिकम् ॥२३॥

प्रविवेशातिरम्यं सत्कदलीखण्डमण्डितम् ।
अशोकवकुलोपेतं पुन्नागसरलावृतम् ॥२४॥
आम्रारायणजाम्ब्वादिक्षीरिकाकर्मदान्वितम् ।
कपित्थपिप्पलीखर्जूरनारिकेलकेतकैः ॥२५॥
श्रीवृक्षतालपनसैश्चन्दनैः सालचम्पकैः ।
क्रमुकैर्दाडिमैर्वेरैर्धात्रीनिम्बैश्च शोभितम् ॥२६॥
स्तम्बवल्लीतृणैर्व्याप्तं सस्यधान्याढ्यभूतलम् ।
सम्प्रपश्यन् मुनिं राजा ददर्श हुतभुक्प्रभम् ॥२७॥
पत्नीव्रताख्यविप्रं सः प्रणनाम तु सादरम् ।
मुनिनाऽऽतिथ्यसत्कारैः पूजितः प्राह भूपतिः ॥२८॥

अद्य मे पातकं क्षीणं प्राप्तं सत्कर्मणां फलम् ।
दृष्टं तव पदाम्भोजं त्वायतिः श्रेयसाऽन्विता ॥२९॥
पत्नीव्रतस्ततः प्राह राजन् जन्म फलीकृतः ।
त्वाद्दर्शनातिपुण्येनाश्रमो मे वीक्षितोऽधुना ॥३०॥
यममार्गं विनिर्जित्य रिक्तं कृत्वा च नारकम् ।
प्रापितो येन वै लोको वैकुण्ठपदमव्ययम् ॥३१॥
सोऽस्माकं द्रष्टुकामानां चक्षुषोर्विषयं गतः ।
श्वचोऽपि महीपाल विष्णुभक्तो द्विजाधिकः ॥३२॥
त्वं तु भागवतश्रेष्ठः प्रपूनासि महीतलम् ।
सुखमास्वाऽऽश्रमे रम्ये वद वेद्यं मयाऽस्ति यत् ॥३३॥

जलपानं कुरु क्षमेश फलं भुंक्ष्वाऽऽश्रमोचितम् ।
सर्वं ते कुशलं न्वास्ते सुख्याश्रमे वसन् भव ॥३४॥
राजा सत्कारमादाय त्वुवाच मुनिसत्तमम् ।
कृपया ते ऋषे सर्वं कुशलं मोदते मम ॥३५॥
पुत्रश्चाऽऽज्ञाकरः सम्राट् सेवको विजयी क्षितेः ।
ख्यातो ममाधिको जातः सप्तद्वीपप्रपालने ॥३६॥
एकाह्ना पृथिवीं सर्वामतीत्य बहुविस्तराम् ।
पुनरायाति शर्वर्यां मत्पादाभ्यंगकारणात् ॥३७॥
तथाऽयं मे शुभो देहः सर्वरोगविवर्जितः ।
अप्रमेयं मम सुखं वशगा च प्रिया गृहे ॥३८॥
या विलोकयते दृष्ट्या मां सदा मन्मथाऽधिकम् ।
यत्र यत्र पदं देवी विदधाति सुलक्षणा ॥३९॥
तत्र तत्र निधानानि प्रकाशयति मेदिनी ।
यस्यास्त्वंगं जराहीनं वर्तते नवयौवनम् ॥४०॥
विनाऽग्निनाऽपि सा विप्र ! साधयत्येव षड्रसम् ।
अन्नं पचति यत्स्वल्पं तस्मिन् भुञ्जन्ति कोटयः ॥४१॥
वाजिनो वारणाश्चापि धनधान्यमनन्तकम् ।
वर्तते च जनः सर्वो ममाऽऽज्ञया हरेर्व्रते ॥४२॥

इत्येतत् कुशलं सर्वं केन पुण्येन मेऽस्ति वै ।
वद विचार्य मे पुण्यं कृतं त्वत्र परत्र वा ॥४३॥
श्रुत्वैतद् ब्राह्मणः पत्नीव्रतः प्राग्जन्मसंचितम् ।
चिन्तयित्वा नृपं प्राह शूद्रोऽभूस्त्वं पुरा जनौ ॥४४॥
दुष्टया भार्यया साकं दारिद्र्येण सुदुःखितः ।
कदाचिद् द्विजसंसर्गात् तीर्थयात्रां गतो भवान् ॥४५॥
मथुरायां तु विश्रान्तिघट्टे यामुनके ह्रदे ।
स्नात्वा वाराहनिलये कथां शुश्राव पुण्यदाम् ॥४६॥
अशून्यशयनव्रतविषयां हरितोषणीम् ।
चतुर्भिः पारणैर्यस्य व्रतस्य पूर्णता भवेत् ॥४७॥

तत्कृतं भवता राजन् त्वत्पत्न्या च व्रतं गृहे ।
श्रावणस्य तु मासस्य द्वितीयायां महीपते ॥४८॥
ग्राह्यमेतद् व्रतं पुण्यं जन्ममृत्युजराहरम् ।
राज्यदं पुत्रदारादिप्रदं सम्पत्करं शुभम् ॥४९॥
एकभुक्तं प्रकर्तव्यं मासैक्यं व्रतिना तथा ।
नित्यं विष्णुः पूजनीयो लक्ष्मीभर्ता प्रगे निशि ॥५०॥
फलैः पुष्पैस्तथा धूपैश्चारुरक्तानुलेपनैः ।
शय्यादानैर्वस्त्रदानैस्तथा ब्रह्मिष्ठभोजनैः ॥५१॥
यद्वा मासे तु सप्ताहं प्रत्युपोषणमाचरेत् ।
सप्ताहान्ते पारणं वै कुर्यात् साध्वदनोत्तरम् ॥५२॥

एवं तु पारणाचतुष्टयं मासे विधापयेत् ।
अशक्तश्चेत् प्रत्यहं तु दुग्धेन वर्तयेद् व्रती ॥५३॥
शयने शुभपर्यंके लक्ष्मीं दद्यात्तु विष्णवे ।
शयनं तु विना लक्ष्मीं शून्यं विष्णोर्भवेदतः ॥५४॥
सलक्ष्मीकं तु शयनमशून्यशयनं भवेत् ।
यथा राज्ञ्याश्च राज्ञश्च सेवका नित्यमाचरेत् ॥५५॥
कैंकर्यं विविधं सर्वं दद्यात्सर्वं श्रीविष्णवे ।
तदा सर्वं समाप्नोति व्रती जन्मान्तरे ध्रुवम् ॥५६॥

तत्त्वया प्राग्जनौ सर्वं कृतं सोद्यापनं यतः ।
प्राप्तं त्वत्र महद् राज्यं पृथ्व्या दानफलं हि तत् ॥५७॥
लक्ष्मीदानं विष्णवे तु शयने दत्तवान् भवान् ।
राज्ञी प्राप्ता त्वया तस्य फलेन देवता यथा ॥५८॥
यानवाहनसौधादि दानार्थं कल्पितं त्वया ।
न तु दत्तं तथाप्यत्र प्राप्तं संकल्पजं फलम् ॥५९॥
पुत्रः प्राप्तस्त्वया राजन् विष्णुलक्ष्मीप्रसादतः ।
पितुर्वचनकारी वै मनोवाक्कायशक्तितः ॥६०॥

जायतेऽस्याऽह्न्यहनि स्नानं भागीरथीभवम् ।
तस्मात् पूर्वं कृतं दत्तं पश्चाज्जन्मनि लभ्यते ॥६१॥
इति ते कथितं वृत्तं किमन्यत् करवाणि ते ।
श्रुत्वा प्राह तदा राजा रैवते भवदर्शनम् ॥६२॥
कर्तुमिच्छामि विप्रेन्द्र यथाज्ञा भवतो भवेत् ।
ऋषिः स्वस्त्यस्तु ते राजन् गच्छेति प्राह चाशिषा ॥६३॥

राजा तुरंगमारुह्य नत्वा शीघ्रगतिर्ययौ ।
रैवताद्रौ भवनाथं शंकरं यत्र मोहिनी ॥६४॥
प्रतीक्षते तु राजानं गानं मिष्टं करोति सा ।
सुस्वरं तन्महाराजो लक्ष्यीकृत्य ययौ पुरः ॥६५॥
मृगीकुण्डे स्थितां तप्तसुवर्णाभां तु कामिनीम् ।
ऊनषोडशवर्षीयां वह्निजामिव रूपिणीम् ॥६६॥
दृष्ट्वैव मोहमापन्नो विद्धः कामशरेण च ।
कामज्वराभिभूतः सः ससर्पाऽस्याः समीपकम् ॥६७॥

ज्ञात्वा चेयं च तं क्ष्मापं कटाक्षानि मुमोच ह ।
नेत्रगण्डभुजावक्षःकुंभाऽधरनितम्बकान् ॥६८॥
प्रधुन्वाना सुमुग्धेव जगाम नृपतेः पुरः ।
रुक्मांगदं कामतप्तं प्राहोत्तिष्ठ वशे तव ॥६९॥
वर्तामि च करोम्येव यदा दिश वनेऽत्र माम् ।
यदिवाञ्छा सुरतेऽस्ति भुंक्ष्व मां रतिदासिकाम् ॥७०॥
राजा प्राह तदा नारीं तपसे यद्यपि त्वहम् ।
समागतोऽस्म्यरण्येषु त्वां तथापि विलोक्य वै ॥७१॥

जातोऽस्मि कामनायुक्तः पूर्णचन्द्रनिभानने ! ।
यादृशं त्वं धारयसे रूपं सर्वविमोहनम् ॥७२॥
नेदृशं वै मया दृष्टं त्वयापि ब्रह्मणः कृतौ ।
कुरु प्रसादं रम्भोरु बद्धचेतसि वै मयि ॥७३॥
आगच्छांऽकं ममाऽमूल्यं स्वीयत्वेनाऽप्यलंकुरु ।
आत्मानमपि दास्यामि किं पुनर्धनरत्नकम् ॥७४॥
राज्यं वेष्टतमं दत्वा निवसिष्ये त्वयाऽत्र वै ।
नृपं सा मोहितं चाति विज्ञायाऽवसरं तथा ॥७५॥

समुवाच स्मितं कृत्वा ब्रह्मोक्तं सुविचिन्त्य च ।
न राज्यं धनरत्नादि वरये वसुधाधिप ॥७६॥
यद्वदिष्याम्यहं काले तत्कार्यमविशंकया ।
भजिष्यामि न सन्देहः कुरुष्व समयं मम ॥७७॥
शपथं कुरु राजेन्द्राऽवश्यं कुर्वे इतीरय ।
तदा भोगं प्रदास्येऽहं नाऽसाध्यं ते भवेद्धि तत् ॥७८॥
राजा प्राह तदा कामरूपयौवनमोहितः ।
येन सन्तुष्यसे देवि ! समयं ते करोम्यहम् ॥७९॥

शपथं चोच्चरन् वच्मि करिष्ये वचनं तव ।
मोहिन्यपि च तं प्राह दीयतां दक्षिणः करः ॥८०॥
धर्मकरप्रदानेन प्रत्ययो वचने तव ।
भवेन्मेऽथ न वक्ताऽस्यनृतं काले विनिर्णयः ॥८१॥
दृढो जातः पणो नौ वै मार्गोऽयं धर्मसाक्षिकः ।
राजा प्राह च तां नारीं किमेभिः प्रत्ययैर्दृढैः ॥८२॥

जन्मप्रभृति वामोरु नानृतं भाषितं मया ।
दत्तो ह्येष मया हस्तो दक्षिणः पुण्यदानकृत् ॥८३॥
यन्मया सुकृतं किञ्चित् कृतमाजन्म सुन्दरि ।
तत्सर्वं तव वामोरु यदि कुर्यान्न ते वचः ॥८४॥
अन्तरे ह्येष दत्तो मे धर्मो भार्या भवाऽङ्गने ।
रुक्मांगदो महाराजः कथयामि वनान्तरे ॥८५॥
प्रत्युत्तरप्रदानेन प्रसादं कर्तुमर्हसि ।
नृपेणैवं समादिष्टा मोहिन्याहोत्तरं वचः ॥८६॥

अहं ब्रह्मभवा राजन् त्वदर्थं समुपागता ।
श्रुत्वा कीर्तिं स्मरोपेता रैवतं कनकाचलम् ॥८७॥
सम्पूजयन्ती देवेशं गीतदानेन शंकरम् ।
येन तुष्टेन देवेन ह्युपकारः कृतो मयि ॥८८॥
यद्भवानचिरेणैव प्राप्तोऽसीप्सितसुन्दरः ।
अभिप्रीतोऽसि मे राजन्नभिप्रीता ह्यहं तव ॥८९॥
मा शंकां कुरु राजेन्द्र कुमारीं विद्धयकल्मषाम् ।
उद्वहस्व महीपाल गृह्योक्तविधिनाऽत्र माम् ॥९०॥

आश्रुत्य राज्ञा तत्रैव विधिना सा विवाहिता ।
भवेन विष्णुना दामोदरेण स विवाहितः ॥९१॥
वन्यमूलफलान्यत्त्वा दम्पतीधर्ममाश्रितौ ।
रेमाते विविधैर्भावैर्नवयौवनगर्भितैः ॥९२॥
मोहिनी तं कामभावैः रमयत्यत्यहर्निशम् ।
सत्यलोकात्तथा स्वर्गाद् भोग्यानादाय चोत्तमान् ॥९३॥
सेवते तं पतिं भुंक्ते भोगानमरदुर्लभान् ।
रुक्मग्रामो नवस्तत्र रचितो दिव्यनाकिभिः ॥९४॥
दिव्यदासीदासभृत्यैः सुरम्यसौधपंक्तिभिः ।
यानवाहनकोद्यानैः कामधेनुगजादिभिः ॥९५॥
तत्र भोज्यादनपेयोपधार्याम्बरभूषणैः ।
राजसैर्द्रववस्त्वाद्यैर्न न्यूनत्वमभूत्तदा ॥९६॥
कामभोगे रतयोश्च तयोर्वै वर्षविंशतिः ।
समयः समतीतोऽभूत् तृप्तो राजाऽप्यभूत्तया ॥९७॥
अहो रूपं मदर्थं वै ब्रह्मणा निर्मितं शुभम् ।
हस्तिहस्तसन्निकाशे जंघे कांचनसन्निभे ॥९८॥
दन्तपंक्तिश्चन्द्रपंक्तिर्गूढे गुल्फे तु मोहके ।
नेत्रे पंकजविस्तारे स्तनौ कांचनकुंभकौ ॥९९॥
कटिर्मृगेन्द्रकटिवत् स्वरूपं मध्यं सुसौरभम् ।
कृतार्थोऽहं खल्वनया देयं याचिष्यते तु यत् ॥१००॥
दुर्लभं चापि दास्यामि त्वदेयमपि सर्वथा ।
याचिष्यते जीवितं मे दास्याम्येव न संशयः ॥१०१॥
एवं सुरतमूढस्य राज्ञो रुक्मांगदस्य तु ।
चत्वारि पंचवर्षाणां व्यतीतानि निमेषवत् ॥१०२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने रुक्मांगदः पुत्रे राज्यं विन्यस्य वनं जगाम, तत्राश्वपट्टसरस्तीरवासिपत्नीव्रतर्षिकथितस्य रुक्मांगदपूर्वजन्मादेः श्रवणम्, ततो रैवताचले मोहिन्याः समागमः, समयशपथश्चेत्यादिनिरूपणनामा सप्ताशीत्यधिकद्विशततमोऽध्यायः ॥ २८७ ॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! तदा राज्यं चक्रे धर्मांगदः सुतः ।
पितुर्नियोगात् संकुर्वन् कारयन् हरिवासरम् ॥ १ ॥
धर्मे भागवते संरक्षयन् सर्वाः प्रजाः सुतः ।
विष्णुदिनव्रतार्थे वादयते पटहं सदा ॥ २ ॥
राजापि वासरं विष्णोः करोति नियमेन वै ।
अन्यव्रतानि सन्त्यज्य भुंक्ते पत्नीं सुयौवनाम् ॥ ३ ॥
एकदाऽऽश्विनसमये मोहिनी सर्वभावतः ।
राजानं रमयामास दिव्यसौख्यैः पुनः पुनः ॥ ४ ॥
पार्थिवश्चातिमुग्धोऽपि व्रतं नोपेक्षते हरेः ।
क्रीडां त्यजति क्ष्मापालो दशम्यादिदिनत्रये ॥ ५ ॥
विष्णोर्दिनं न त्यजति जन्ममृत्युनिकृन्तनम् ।
तावत् प्राप्तः प्रबोधाय विष्णोर्मासस्तु कार्तिकः ॥ ६ ॥
यस्मिन् कृतं तु सुकृतं यैः कैश्चिन्मनुजैरिह ।
अक्षयं हि भवेत् सर्वं विष्णुलोकप्रदायकम् ॥ ७ ॥
इति विचार्य नृपतिर्मोहिनीं वाक्यमब्रवीत् ।
रतं देवि त्वया सार्धं मया सम्वत्सरान् बहून् ॥ ८ ॥
तवाऽपमानभीतेन नोक्तं किंचिदपि क्वचित् ।
त्वय्यासक्तस्य मे सुभ्रु ! बहवः कार्तिका गताः ॥ ९ ॥
न व्रतं कार्तिके जातं मे मासं वाऽर्धमासकम् ।
सोऽहं कार्तिकमिच्छामि सव्रतं पर्युपासितुम् ॥१०॥
अव्रतः कार्तिको यस्य गतस्तस्य वृथा गतम् ।
मद्यमांसव्यवायाढ्या अपि कार्तिकसद्व्रताः ॥११॥
भूत्वा शुद्धा गतास्ते वै शाश्वतं वैष्णवं पदम् ।
कार्तिके दीपदानेन दाता वै दिवमाव्रजेत् ॥१२॥
परदीपप्रबोधेन दरिद्रोऽपि दिवं व्रजेत् ।
पुष्करे पूर्णिमां कृत्वाऽजन्मपापात्प्रमुच्यते ॥१३॥
व्रतोपवासनियमार्चनदानादिसत्कृतैः ।
गच्छति कार्तिको यस्य स याति परमां गतिम् ॥१४॥
कार्तिके कृच्छ्रसेवी यः प्राजापत्यपरोऽपि वा ।
एकान्तरोपवासी वा त्रिरात्रोपोषितोऽपि वा ॥१५॥
सप्ताहं वा दशाहं वा पक्षं मासमुपोषितः ।
फलाहारो नरो याति स विष्णोः परमं पदम् ॥१६॥
एकभक्तेन नक्तेनाऽयाचितेन व्रतस्थितैः ।
धरा दारा सुतो राज्यं धनं धान्यमवाप्यते ॥१७॥
कार्तिको भक्तिदः पुण्यो व्रतदानार्चनादिभिः ।
तस्मिन् हरिदिनं पुण्यं तथैव दिनपञ्चकम् ॥१८॥
प्रबोधिनीं जागराढ्यां कृत्वा मुक्तिं प्रयाति वै ।
कार्तिके वर्जयेत्तैलं मधु सूपं च मैथुनम् ॥१९॥
निष्पावान् राजसान् भोगान् वर्जयेत्तु प्रयत्नतः ।
कार्तिके स्वर्जिता दीक्षा नृणां जन्मनि कृन्तनी ॥२०॥
पशुयोनिमवाप्नोति दीक्षया रहितो जनः ।
एकादश्यां पूर्णिमायां दीक्षितो याति चाक्षरम् ॥२१॥

कुंभान् दत्वा जलपूर्णान् प्रयाति हरिमन्दिरम् ।
सम्वत्सरव्रतानां तु समाप्तिः कार्तिकेऽर्चनम् ॥२२॥
उद्यापनादिकं सर्वं सम्पूर्णफलदं भवेत् ।
नक्तव्रती च षड्रसैर्बालान् साधून् प्रभोजयेत् ॥२३॥
अयाचिते त्वनड्वाहं सद्द्विजाय प्रदापयेत् ।
नैवेद्याशी भवेद् यस्तु गां प्रदद्यात्सदक्षिणाम् ॥२४॥
धात्रीस्नाने जनो दद्यात् पायसं पिच्छलं दधि ।
फलानां नियमे तत्र फलानि त्वर्पयेत्तथा ॥२५॥
तैलत्यागे घृतं दद्याद् घृतत्यागे पयस्तथा ।
धान्यानां नियमे शालींस्तत्तद्धान्यमथापि वा ॥२६॥
भूशायित्वे सपर्यंकां शय्यां दद्यादलंकृताम् ।
पत्रभोजी प्रदद्याद्वै पात्राणि सघृतानि वै ॥२७॥
मौने घण्टां हिरण्यं वा तिलान्वापि प्रदापयेत् ।
प्रातःस्नाने हयं दद्यान्निःस्नेहे घृतसक्तुकान् ॥२८॥
नखकेशाऽवपने तु दर्पणं मृत्तिकां ददेत् ।
पादत्राणाऽग्रहे दद्यादुपानहौ च पादुके ॥२९॥
लवणादिपरित्यागे दातव्या गौः सुदुग्धदा ।
दीपदाता प्रदद्याद्वै कांचनं देवमूर्तये ॥३०॥
छत्रं च चामरे दद्यात् क्षौमवस्त्राणि चार्पयेत् ।
त्रिरात्रव्रतकर्ता तु दद्याच्छय्यामलंकृताम् ॥३१॥
सप्तरात्रोपवासी तु शिबिकां छत्रमर्पयेत् ।
पक्षदिनोपवासी तु यानं दद्याच्च हस्तिनम् ॥३२॥
मासोपवासकर्ता तु गृहं सर्वस्वमर्पयेत् ।
अजाविकं त्वेकभक्ते फलाहारे सुवर्णकम् ॥३३॥
शाकाहारे फलं दद्यात्पात्रं वाऽन्यत् समर्पयेत् ।
एवं यथा धनसमृद्धिस्तथा दद्याद् व्रतानुगम् ॥३४॥
लभ्यते व्रतकर्ताऽत्र राज्यं दारा धनादिकम् ।
तस्मान्मोहिनि ! कर्ताऽस्मि कार्तिके व्रतसेवनम् ॥३५॥
व्रतोपवासनियमैः कार्तिको यस्य गच्छति ।
देवो वैमानिको भूत्वा स यति परमां गतिम् ॥३६॥
तस्मान्मोहं परित्यज्याऽऽज्ञापय कार्तिके व्रते ।
अहं व्रतधरश्चैव भविष्ये हरिपूजने ॥३७॥
श्रुत्वैतत्प्रतिकूलं सा मोहिन्याह निजार्थिनी ।
न व्रतं हि त्वया कार्यं यदि मामिच्छसि प्रियाम् ॥३८॥
दानं प्रपालनं युद्धं कार्यत्रयं तु भूभुजाम् ।
व्रतादिकरणं राज्ञां नोक्तं क्वापि निदर्शने ॥३९॥
मुहूर्तमपि राजेन्द्र न शक्नोमि त्वया विना ।
स्थातुं कमलनाभाभ किं पुनर्मासंसख्यया ॥४०॥

त्वयि व्रते कृतेऽवश्यं मरणं मे भवेन्ननु ।
करिष्यावस्ततो वार्धक्ये व्रतं कार्तिकस्य वै ॥४१॥
श्रुत्वा प्राह तदा राजा मोहिन्या वचनोत्तमम् ।
न करिष्ये व्रतं सुभ्रु करिष्ये तव सम्मतम् ॥४२॥
श्रुत्वा तु मोहिनी हृष्टा संश्लिष्टा रहसि स्थितम् ।
रमयामास तन्वंगी कामरीतिविधानतः ॥४३॥
तस्यैवं रममाणस्य समायाता प्रबोधिनी ।
रुक्मांगदस्य कर्णाभ्यां पटहध्वनिरागतः ॥४४॥
प्रातर्हरेर्दिनं लोकास्तिष्ठध्वं त्वेकभोजनाः ।
अक्षारलवणाः सर्वे हविष्यान्ननिषेविणः ॥४५॥
अवनितल्पशयनाः कामसंगविवर्जिताः ।
स्मरध्वं देवदेवेशं कृष्णनारायणं हरिम् ॥४६॥
सकृद्भोजनसंयुक्ता उपवासं करिष्यथ ।
अकृतश्राद्धनिचया गच्छध्वं श्रीहरेः पदम् ॥४७॥
प्रातः कार्तिकशुक्लाऽस्ति त्वेकादशी प्रबोधिनी ।
यान्तूपोष्य हरेर्धाम विधूय पापजालकम् ॥४८॥
कुरुध्वं श्रीहरेः पूजामात्मवित्तेन मानवाः ।
वस्त्रैः पुष्पैर्धूपदीपैर्वरचन्दनकुंकुमैः ॥४९॥
नैवेद्यैश्च फलैर्यष्ट्वा गच्छध्वं श्रीहरेः पदम् ।
यो न कुर्याद्वचो रुक्मांगदस्य हरिधामदम् ॥५०॥
स मे दण्ड्यश्च वध्यश्च धर्मांगदो ब्रवीम्यहम् ।
इति श्रुत्वा पटहस्य धर्म्यां वै घोषणां स्वकाम् ॥५१॥
रुक्मांगद उदतिष्ठन्मोहिनीशयनाद् द्रुतम् ।
प्राह प्रातर्हरेरह्नि भविष्यत्यघनाशनम् ॥५२॥
संयतोऽहं भविष्यामि क्षम्यतां क्षम्यतामिति ।
इयमेकादशी कार्या बन्धछेत्री गतिप्रदा ॥५३॥
मया सह विशालाक्षि त्वं चापि तमधोक्षजम् ।
आराधय हृषीकेशमुपवासपरायणा ॥५४॥
येन यास्यसि निर्वाणं दाहप्रलयवर्जितम् ।
पुना राज्यं पुनः स्वर्गं पुनर्यद्वा प्रमोक्षणम् ॥५५॥
मोहिन्युवाच साधूक्तं त्वया व्रतार्चनं हरेः ।
जन्ममृत्युजराछेदि करिष्ये वै तवाऽऽज्ञया ॥५६॥
प्रतिज्ञा या त्वया पूर्वं कृताऽस्मिन् रैवते गिरौ ।
करप्रदानसहिता भवता सुकृतांऽकिता ॥५७॥
तस्यास्तु समयः प्राप्तो दीयतां सहि मे त्वया ।
अन्यथाऽऽजन्मनः पुण्यं सर्वं ते नाशमेष्यति ॥५८॥
श्रुत्वा स्मृत्वाऽऽह रुक्मांगः कर्ताऽस्मि त्वन्मनोगतम् ।
नाऽदेयं विद्यते किञ्चित्तुभ्यं मे जीवितावधि ॥५९॥

किं पुना राज्यनगरं वित्तं वाऽन्यच्च भामिनि ।
मोहिन्युवाच संप्राप्तं ज्ञात्वा ह्यवसरं शुभम् ॥६०॥
नाथ कान्त प्रिय राजन् जीवितेश रतिप्रिय ! ।
नोपोष्यो वासरो विष्णोर्भोक्तव्या यद्यहं प्रिया ॥६१॥
विनाभूता भविष्यामि त्वत्संयोगं विना नृप ! ।
तस्मान्मां यदि वाञ्छेथा भोक्तुमाजीवनं प्रियाम् ॥६२॥
मयाऽवश्यं च वक्तव्यमामृत्युं त्वद्गृहे नृप ।
तदा त्यजोपवासं वै भुज्यतां हरिवासरे ॥६३॥
एष एव वरो देयो मया संप्रार्थितः पुरा ।
न चेद् दास्यसि मोहाद्वा भूत्वाऽनृतवचा भवान् ॥६४॥
यास्यते नरके घोरे यावदाभूतसम्प्लवम् ।
पत्नीहानौ व्रतहानौ वचोहानौ बलाबले ॥६५॥
दृष्टाऽदृष्टौ वृषाऽधर्मौ विचार्येष्टतमं कुरु ।
राजोवाच त्वया सुभ्रु रुद्धः कार्तिकसद्व्रते ॥६६॥
रोधयसि पुनरेकादश्यामपि कथं प्रिये ।
व्रतपुण्येन सुखिनौ जातौ स्व इतिचिन्तय ॥६७॥
धर्मस्वसा विधेः पुत्री भूत्वैवं त्वयि नोचितम् ।
धर्मरक्षाकरी भूत्वा धर्मविघ्नं करोषि किम् ॥६८॥
जन्मप्रभृत्यहं नैव भुक्तवान् हरिवासरे ।
स चाऽद्याऽहं तवाऽधीनः कथं भोक्ता हरेर्दिने ॥६९॥
अन्तिमे स्वायुषो भागे स्वर्णरेखाप्रसेवनम् ।
भजनं पूजनं युक्तं नित्यं च हरिसेवनम् ॥७०॥
न कृतं यन्मया बाल्ये यौवने वैभवे सति ।
तदहं वनमध्येऽद्य कथं कुर्यां जुगुप्सितम् ॥७१॥
मा कुरुष्व व्रतं भंगं मा कुरुष्वाग्रहं तथा ।
यदन्यदिच्छसि सुभ्रु दाताऽहं राज्यसम्पदाम् ॥७२॥
विमानं संगृहाणेदं दोलां व्योमविहारिणीम् ।
कल्पलतारसं भुंक्ष्व मा व्रते विघ्नमाचर ॥७३॥
आत्ममांसं नरो भुंक्ते यो भुंक्ते हरिवासरे ।
त्रैलोक्यघातिनः पापं मैथुने हरिवासरे ॥७४॥
गोचारलोपे यत्पापं यत्पापं कूटसाक्षिके ।
निक्षेपहारके चापि तथा विश्वासघातके ॥७५॥
हत्याकारिणि यत्पापं यत्पापं गुरुनिन्दके ।
तत्सर्वं पातकं त्वन्ने संस्थितं हरिवासरे ॥७६॥
एवं जानन् विशालाक्षि ! कथं भोक्ष्यामि पातकम् ।
एवं ज्ञानवती त्वं च कथं नाशयसि व्रतम् ॥७७॥
मोहिन्युवाच तच्छ्रुत्वा बाधधर्मान् नृपं प्रति ।
एकभुक्तेन नक्तेन यद्वा त्वयार्चितेन च ॥७८॥
फलैर्वातूपवासेन द्वादशीं न विलंघयेत् ।
गुर्विणीनां गृहस्थानां क्षीणानां रोगिणां तथा ॥७९॥
शिशूनां वलिगात्राणां संग्रामक्षितिसेविनाम् ।
यज्ञभोगोद्यतानां च पातिव्रत्याढ्ययोषिताम् ॥८०॥
युवतीस्त्रीपतीनां च न युक्तं समुपोषणम् ।
किमन्यैर्बहुभिर्भूप वाक्यालापकृतैर्मया ॥८१॥
भोजनेऽत्र कृते प्रीतिरेकादश्यां त्वया मम ।
न प्रीतिर्यदि मे छित्वा शिरः स्वं हि प्रयच्छसि ॥८२॥
न करिष्यसि चेद् राजन् भोजनं हरिवासरे ।
तदा त्वसत्यवचसो देहं न स्पर्शयामि ते ॥८३॥
सत्येन सूर्यस्तपति शशी सत्येन शोभते ।
सत्यधर्मस्थिता भूमिः सर्वं धारयते जगत् ॥८४॥
वायुर्वात्यपि सत्येन सत्येन ज्वलतेऽनलः ।
सत्याधारमिदं सर्वं यथाकार्यं व्यवस्थितम् ॥८५॥
सिन्धुर्न चलते सत्याद् विन्ध्यः सत्यान्न वर्धते ।
वृक्षाः सत्यसमाचारा ऋतुमासाद्य पुष्पिणः ॥८६॥
अश्वमेधाऽयुतेभ्योऽपि सत्यमेव विशिष्यते ।
असत्यवचसो राजन् सर्वं शीघ्रं विनश्यति ॥८७॥
मा भूत् तादृक् च ते राजन् शोचामि बहुलाभकृत् ।
बहूनां भोजने लाभो दृश्यतेऽतो हठो मम ॥८८॥
मत्पित्रापि तथैवोक्तं सत्येनैवोच्यते मया ।
यदि चेत्ते न विश्वासो यथेच्छसि तथा कुरु ॥८९॥
मोहिनीत्थमभिधाय पितृकार्यप्रसाधिनी ।
विरराम यदा लक्ष्मि ! राजा चिन्तां जगाम वै ॥९०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने रुक्मांगदस्य समाहात्म्यकार्तिकव्रतेच्छायां मोहिन्या तन्निरोधनं पुनश्च स्वपटहघोषणायां प्रबोधिनीव्रतानुमतियाचनायां मोहिन्या कृतस्तद्विरोध इत्यादिनिरूपणनामाऽष्टाशीत्यधिकद्विशततमोऽध्यायः ॥२८८॥

**श्रीनारायण उवाच—**

अथ लक्ष्मि ! दशम्यां कार्तिके धर्मांगदः प्रगे ।
पटहं वादयित्वा वारणोपरि प्रघोषयन् ॥ १ ॥
मा भोक्तव्यं जनैः कैश्चिदेकादश्यां हरेर्दिने ।
सैन्यं प्रजाश्च नीत्वा स ययौ रैवततीर्थके ॥ २ ॥
कर्तुं प्रदक्षिणं रैवताद्रेः सन्धावलीयुतः ।
एकादशीं समारभ्य पूर्णिमावधिपञ्चके ॥ ३ ॥

कर्तुं प्रदक्षिणं तत्राऽऽयान्ति तीर्थानि देवताः ।
प्रबोधिन्यां रैवताद्रौ ब्रह्मविष्णुमहेश्वराः ॥ ४ ॥
ऋषयो वसवः साध्या मरुतो मुनयस्तथा ।
पितरो निधयः काष्ठा ग्रहा रुद्राश्च सिद्धयः ॥ ५ ॥
कृत्तिकाश्चन्द्रनक्षत्रमण्डलं सुरकोटयः ।
यक्षराक्षसपैशाचा भूतप्रेतविनायकाः ॥ ६ ॥
कूष्माण्डाश्चापि वेताला गणेशाश्च गणादयः ।
हनूमन्तो महालक्ष्म्यः पर्यो योगिन्य इत्यपि ॥ ७ ॥
दुर्गाश्चण्ड्यो मानवाश्च देवा नद्यः सरांसि च ।
समुद्राः पर्वताः स्थल्यो द्वीपाः क्षेत्राणि खेटकाः ॥ ८ ॥
पुर्योऽरण्यानि दिवसा निशा दिवा व्रतान्यपि ।
एवमन्ये व्योमसंस्थाः पातालस्था भुजंगमाः ॥ ९ ॥
सत्यः साध्व्यश्च भक्तान्यो न्यासिन्यश्च कुमारिकाः ।
देहकृष्णार्पणपरा नरा नार्यः प्रयान्ति च ॥१०॥
चारण्यश्चापि किन्नर्यो गान्धर्व्यो दासिकास्तथा ।
वैष्णवाः शांकराः सौरा गाणपत्याश्च शक्तिगाः ॥११॥
चार्वाका बीजमार्गाश्च नारसिंहाश्च रामिणः ।
दात्तात्रेयाः कापिलाश्चार्हता बौद्धाः शिवाश्रिताः ॥१२॥
महान्तो गुरवो धर्माचार्याश्चतुःपुमर्थकाः ।
आभीरा ऊरणवारा गोपाला वाममार्गिणः ॥१३॥
महाभागवाता मेरा नर्तका नटजातयः ।
अघोरपथलम्त्राश्च गारुडा भैरवाश्रिताः ॥१४॥
हंसाः परमहंसाश्च सदण्डाः कुलदेविनः ।
विद्याधराश्च गणिका बहुरूपाश्च नाटिकाः ॥१५॥
गोरक्षाः कारवः साम्नाश्चातुर्वर्ण्याश्रमानुगाः ।
प्रदक्षिणार्थमायान्ति रैवताद्रौ तु कार्तिके ॥१६॥
जलान्नवस्त्रदेहाद्यर्पका यत्र त्वसंख्यकाः ।
आयान्ति पुण्यमोक्षार्थं गुर्वर्पणविधायिनः ॥१७॥
श्रीकृष्णः श्रीहरिर्नारायणाविर्भावमूर्तयः ।
आयान्ति जनमोक्षार्थं प्रदक्षिणसवोत्सुकाः ॥१८॥
सौराष्ट्रमण्डलं तस्य तीर्थक्षेत्रसमं तथा ।
कृष्णनारायणः साक्षाल्लक्ष्मीयुगत्र पर्वते ॥१९॥
मूर्ध्नि संराजते दिव्यः सहगोलोकमण्डलः ।
एका प्रदक्षिणा येन कृता तेन ततः खलु ॥२०॥
जीवेशब्रह्मलोकानां कृता स्यात्सा प्रदक्षिणा ।
यत्फलं लभ्यते ब्रह्मधाम्नः प्रदक्षिणाभवम् ॥२१॥
तदत्र लभ्यते पुण्यं संसारभववारकम् ।
इति मत्वा राजपुत्रो धर्मांगदः प्रदक्षिणाम् ॥२२॥
कर्तुं दशम्यां त्वायातो योगिनीपर्वताग्रतः ।
माहीषपर्वतपार्श्वे स्वर्णरेखानदीतटे ॥२३॥
महोद्याने त्वाम्रवणे निशां व्यगमयत् ततः ।
प्रातर्दामोदरं दृष्ट्वा स्नात्वा कुण्डे भवेश्वरम् ॥२४॥
नृसिंहं च तथा दृष्ट्वा मृगीकुण्डं व्यलोकयत् ।
धर्मांगदो जनगाथां श्रुतवाँस्तत्र शोभनाम् ॥२५॥
राजा रुक्मांगदश्चात्र मोहिन्या सह राजते ।
ब्रह्मपुत्र्या प्रसेवितो धर्मांगदपिताऽस्ति यः ॥२६॥
सः स्वपटहघोषेण न भुंक्ते हरिवासरे ।
निरोधयति तं नारी भोक्तव्यं हरिवासरे ॥२७॥
कीदृशी सा ब्रह्मपुत्री पृथ्व्यां राज्ञा वधूकृता ।
तपोऽर्थे निर्गतश्चापि वधूं कृत्वा च यां पुनः ॥२८॥
सेवते खलु रुक्मांगो हरेर्दिनं जहाति न ।
द्रष्टव्या सा देवपुत्री त्विति कृत्वा जना ययुः ॥२९॥
धर्मांगदोऽपि सैन्येन स्वमात्रा सहितो ययौ ।
सुवर्णरक्षासरितश्चोत्तरे सरसस्तटे ॥३०॥
यत्र दिव्यो महान् सौधो वैराजस्येव राजते ।
ग्रामो दिव्यः स्वःपतीनां विमानमिव राजते ॥३१॥
ब्रह्मणा विष्णुना शंभुना प्रदत्तं स्वलोकजम् ।
दिव्योपकरणं सर्वं सत्यलोकीयवस्तुजम् ॥३२॥
दासदास्यस्तथा दिव्याः सर्वं दिव्यं विराजते ।
चर्मचक्षुर्जनैः सर्वमदृश्यं यद्धि वर्तते ॥३३॥
धर्मांगदेन तत्सर्वं लोकितं पित्रनुग्रहात् ।
महादाश्चर्यमापन्नो ववन्दे चरणौ पितुः ॥३४॥
सन्ध्यावल्याऽपि स्वपत्युश्चरणौ वन्दितौ मुदा ।
ब्रह्मपुत्री ववन्दे तां ज्येष्ठां स्वसारमित्यथ ॥३५॥
स्वस्रा त्वाशीर्वादमुख्यैर्मोहिनी चाभिवर्धिता ।
वृत्तान्तं कुशलं चापि ज्ञात्वा परस्परं ततः ॥३६॥
प्रेममग्नाश्च ते सर्वे प्रदक्षिणार्थं निर्ययुः ।
मोहिनी तु हठात् प्रदक्षिणार्थं न ययौ तदा ॥३७॥
अथ धर्मांगदेनाऽस्याश्चरणौ वन्दितौ मुदा ।
हेतुर्जिज्ञासितो मनोभग्नतायास्तदग्रतः ॥३८॥
रुक्मांगदेन तत्सर्वं विज्ञापितं व्रतात्मकम् ।
व्रतनिरोधयित्र्यास्तच्छ्रुत्वाऽऽश्चर्यं ययुर्जनाः ॥३९॥
रुक्मांगदस्तदा प्राह त्वनुनीय शुभं वचः ।
मोहिनि ! कुरु यात्रां त्वं रैवताद्रेः प्रदक्षिणम् ॥४०॥
व्रतं हरेर्दिनस्यापि प्रबोधिन्याः परात्परम् ।
एकादश्यां न भोक्तव्यं पक्षयोरुभयोरपि ॥४१॥

अकार्यकरणे जन्तोर्गोसहस्रवधः स्मृतः ।
जानन्नपि कथं देवि ! भोक्ष्येऽहं हरिवासरे ॥४२॥
पुरोडाशोऽपि वेधोजे ! सम्प्राप्ते भगवद्दिने ।
अभक्ष्येण समं प्रोक्तः किं पुनश्चान्नभक्षणम् ॥४३॥
क्षीणानां फलमूलादि पयआदि प्रभोजनम् ।
प्रकीर्तितं व्रते देवि ! सशक्तानां नहि क्वचित् ॥४४॥
सशक्तानां व्रतेऽदनं नरकायैव केवलम् ।
माऽऽग्रहं कुरु सत्यस्थे ! व्रतभंगो भवेन्मम ॥४५॥
यदन्यद् रोचते तुभ्यं तत्कर्त्ताऽस्मि न संशयः ।
मोहिन्युवाच शृण्वत्सु राज्ञीधर्मांगदादिषु ॥४६॥
ऋषिमुनिसुरपितृजंगमस्थावरादिषु ।
न त्वन्यद् रोचते राजन् विना वै भोजनं तव ॥४७॥
जीवितस्यापि दानेन न मे किंचित्प्रयोजनम् ।
न च वेदेषु दृष्टोऽयमुपवासो हरेर्दिने ॥४८॥
वेदबाह्यं कथं धर्मे भवाँश्चरितुमिच्छति ।
शृण्वन्तु ब्राह्मणाः सर्वे वेदान् कृत्वाऽयमग्रतः ॥४९॥
सत्यं वदति राजा किं नाऽहं भोक्ष्ये हरेर्दिने ।
सर्वे वै स्थावरं यद्वा जंगमं त्वन्नजीवनम् ॥५०॥
मृता अपि दिविषदः प्रीयन्तेऽन्नैर्जलैरपि ।
पिपीलिकादयश्चान्नं मुखेनादाय कष्टतः ॥५१॥
चातुर्मास्यार्थमेवैते शीतर्तुक्षपणाय च ।
प्रविशन्ति बिले तत्र सञ्चिन्वन्त्यदनाहर्णम् ॥५२॥
अन्ने वै प्राणिनां प्राणा अन्नं कस्य न रोचते ।
राजा खादति नाऽन्नादि सम्प्राप्ते हरिवासरे ॥५३॥
तपस्विनां तु साधूनां युज्यतेऽन्नविवर्जनम् ।
उपवासादिकरणं भूभुजां किं नु वैदिकम् ॥५४॥
परधर्मो न चाऽऽचर्यो दुःखदश्च भयावहः ।
सोऽयमत्र महीपालो यतेर्धर्मे व्यवस्थितः ॥५५॥
अन्नात्प्रभवति प्राणः प्राणाद्देहबलादिकम् ।
बलेन नृपधर्माश्च तद्धीनः परिभूयते ॥५६॥
एवं ज्ञात्वा मया राजा बोध्यमानो न बुद्ध्यति ।
अत्रार्थे ब्राह्मणाः सर्वे प्रमाणं न तु भामिनी ॥५७॥
याथातथ्यं वदन्त्वत्र वैदिकं तत् करोम्यहम् ।
पत्नीव्रतवशिष्ठाद्या ब्राह्मणा नृपमब्रुवन् ॥५८॥
एकादश्यां न भोक्तव्यमिति यः शपथस्तव ।
न कृतो वेददृष्ट्या वै स्वबुद्ध्यैव प्रकल्पितः ॥५९॥
साग्नीनां प्राशनं प्रोक्तं हव्यस्य सन्ध्ययोः किल ।
प्रत्यहं होमशिष्टस्य भोक्तृत्वं वेदसम्मतम् ॥६०॥
विशेषेण नृपाणां तु नित्ययज्ञप्रकारिणाम् ।
वदात्र भूमिपालानां कथमुक्तमुपोषणम् ॥६१॥
वैदिकोऽवैदिको वापि यस्त्वया शपथः कृतः ।
परिपूर्णो भवत्वद्य वाक्येनैव द्विजन्मनाम् ॥६२॥
व्रतभंगो न तेऽस्तीह भुंक्ष्व विप्रादिभिः सह ।
परितापो न ते कार्यो विप्रवाक्यं महत्तमम् ॥६३॥
वयं हि वेदद्रष्टारो ब्रह्मवाक्यं जनार्दनः ।
योऽन्यथा मनुते विप्राद् राक्षसीं योनिमाप्नुयात् ॥६४॥
श्रुत्वैतद् ब्राह्मणानां तु वैदिकानां वचस्ततः ।
रुक्मांगदः प्रणिपत्य वेदद्रष्टॄनुवाच ह ॥६५॥
यूयं वेदप्रदष्टारो वैदिकं वदथ ध्रुवम् ।
अनादृत्य परं वेदमुपदेशो न वः क्वचित् ॥६६॥
नारदर्षिस्तथा कात्यायनो वशिष्ठ इत्यपि ।
ब्रह्माचाथ महादेवो ये त्वन्येऽत्र समागताः ॥६७॥
शृणुतैषां तु वाक्यानि हरेर्दिने व्रतकृते ।
नारदस्य वचस्तत्र प्रथमं शृणुत द्विजाः ॥६८॥
नित्यं भक्तिसमायुक्तैर्नरैर्विष्णुपरायणैः ।
पक्षे पक्षे च कर्तव्यमेकादश्यामुपोषणम् ॥६९॥
एकादश्यां तु यो भुंक्ते नरोऽन्नं स तु पातकी ।
विण्मूत्रपूयवाहिन्यां पतत्येव न संशयः ॥७०॥
अनुकल्पो नृणां प्रोक्तः क्षीणानां वरवर्णिनि ।
मूलं फलं पयस्तोयमुपभोग्यं भवेच्छुभे ॥७१॥
नत्वेव भोजनं कैश्चिदेकादश्यां बुधैर्मतम् ।
शयने च मदुत्थाने मत्पार्श्वपरिवर्तने ॥७२॥
नरो मूलफलाहारी हृदि शल्यं ममाऽर्पयेत् ।
दशम्यादि महीपाल ! त्रिदिनानि विवर्जयेत् ॥७३॥
गन्धताम्बूलपुष्पादि स्त्रीसंभोगं दिवानिशम् ।
जागरं विष्णुपूजां च विना त्वर्धफलं व्रतम् ॥७४॥
अतस्ताभ्यां युतोपोष्या वैष्णवेन हरेस्तिथिः ।
व्रतानि विष्णुभक्तानां नित्यानीमानि संजगुः ॥७५॥
एकादश्योऽखिलाः शुद्धा द्वादशी वामनस्य तु ।
श्रीरामादित्यसज्जन्मनवमी दिव्यसिद्धिदा ॥७६॥
कृष्णजन्माष्टमी चाथ नृसिंहस्य चतुर्दशी ।
शिवरात्रिश्चेतिमुख्यव्रतान्युक्तानि तत्त्वतः ॥७७॥
इतिनारदवाक्यानि ह्यथ कात्यायनस्य च ।
सर्वे शृण्वन्तु मुनयो भवन्तो वेददृष्टयः ॥७८॥
एकादश्यामहोरात्रं भुक्त्वा चान्द्रायणं चरेत् ।
एकादश्यामुपवसेत् पक्षयोरुभयोरपि ॥७९॥

उपवासः स विज्ञेयः सर्वभोगविवर्जितः ।
वशिष्ठस्यापि वाक्यं वै शृण्वन्तु वेदद्रष्टयः ॥८०॥
उपोष्यैकादशीं राजन् द्वादशीदिवसे तथा ।
तज्जप्यजपनध्यानतत्कथाश्रवणादयः ॥८१॥
उपवासकृतामेते गुणाश्चान्ये दयादयः ।
वेधोवाक्यं तु शृण्वन्तु ऋषयो वेदद्रष्टयः ॥८२॥
अश्वमेधसहस्राणि राजसूयशतानि च ।
एकेनैवोपवासेन प्रबोधिन्यां लभेन्नरः ॥८३॥
प्रबोधवासरे विष्णोर्विधिवत् समुपोषयेत् ।
तामुपोष्य हरेर्भक्त्या दुर्लभं न भवेत् क्वचित् ॥८४॥
शिववाक्यं च शृण्वन्तु भवन्तो वेदद्रष्टयः ।
न शैवो न च सौरोऽसौ न शाक्तो गणसेवकः ॥८५॥
यो भुंक्ते वासरे विष्णोर्ज्ञेयः पश्वधिको हि सः ।
विप्रियं च कृतं तेन दुष्टेनैव तु पापिना ॥८६॥
मद्भक्तिबलमाश्रित्य यो भुंक्ते वै हरेर्दिने ।
इति भवन्तो वक्तारो निषेद्धारोऽपि ते पुनः ॥८७॥
कथं तत्र सुविश्वासो मया कार्यो व्रतार्दने ।
सर्वेषामेव भूतानां भवन्तो मार्गदर्शिनः ॥८८॥
विपरीता यदि स्युस्ते जगदान्ध्यं समाप्नुयात् ।
अकार्यकरणं कृत्वा किं जीवेच्छरदां शतम् ॥८९॥
युष्माकं तानि वाक्यानि ब्रूत चाऽवैदिकानि किम् ।
सोऽहं कथं करोम्यत्र त्वभक्ष्याऽन्नस्य भक्षणम् ॥९०॥
कथं चापि व्रतं त्यक्ष्ये विमार्गस्थजनोक्तितः ।
भवद्भिर्नोचितं वक्तुं प्रतिकूलं व्रतापहम् ॥९१॥
देवा वा दानवा दैत्या गान्धर्वा राक्षसाश्च वा ।
सिद्धा वा ब्राह्मणा वापि पिता मे जननी च मे ॥९२॥
हरिर्वापि हरो विष्णुर्मोहिनीजनकोऽपि वा ।
ऋषयोऽपि वदेयुश्चेन्नो भोक्ष्ये हरिवासरे ॥९३॥
यो हि रुक्मांगदो राजा विख्यातो हरिभक्तिमान् ।
व्रतप्रतिज्ञां विफलां न कदाचित् करिष्यति ॥९४॥
सूर्यस्तु कृष्णतां गच्छेन्मेरुः स्थानाच्चलेद् यदि ।
समुद्रः शुष्कतां यायाद् वह्निः शैत्यान्वितो भवेत् ॥९५॥
विपरीता भवन्तः स्युर्मोहिनी म्रियतेऽपि वा ।
तथापि न त्यजे विप्रा व्रतमेकादशीदिने ॥९६॥
आरब्यते पटहेन प्रसिद्धिर्भुवनेषु मे ।
दण्ड्यो वध्यो विवास्यश्च ह्यन्नादो हरिवासरे ॥९७॥
एवं ख्याते यदि भोक्ताऽन्नस्य स्यां हरिवासरे ।
अमेध्यलिप्तः पटहो भवेद्घोषोऽनृतान्वितः ॥९८॥
कीर्तिः कलुषतां गच्छेद् याम्ये वासश्च मे भवेत् ।
वृथा सूता जनित्री स्यान्निराशाः पितरः सुराः ॥९९॥
हर्षं गच्छेद् यमश्चापि व्रतभंगश्च मे भवेत् ।
मोहिनी कृतकृत्या स्याद् वान्त्याशीव भवाम्यहम् ॥१००॥
राजा धर्मधरोऽहं सोऽधर्मपोष्टा कथं भवेत् ।
न वेदा नापि सन्तस्ते मुनयः ऋषयोऽपि न ॥१०१॥
ये मण्डयन्ति कृष्णस्य वासरे भोजनक्रियाम् ।
इत्यभिधाय नत्वा च विरराम नृपस्तदा ॥१०२॥
श्रुत्वैतद् ब्राह्मणा देवाः प्रशशंसुर्नृपं मुदा ।
किन्तु कोपसुरक्ताक्षी मोहिनी ज्वलितान्तरा ॥१०३॥
शृण्वत्सु तेषु सर्वेषु भर्तारं समभाषत ।
स्वकार्यसाधिनी विष्णुव्रतघ्नी च क्षुरान्तरा ॥१०४॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने
पटहघोषं कुर्वतो धर्मांगदस्य कार्तिके रैवत-
प्रदक्षिणारंभे स्वपितृरुक्मांगदसमागमे
मोहिन्या एकादशीव्रतविनाशकहठेन
ऋषीणां राज्ञा वाक्यसंवाद-
इतिनिरूपणनामैकोननवत्यधिक-
द्विशततमोऽध्यायः ॥२८९॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! तदा क्रुद्धा स्वेष्टसिद्ध्यै तु मोहिनी ।
अत्याग्रहं चकाराऽस्य राज्ञो वाग्दानपूरणे ॥ १ ॥
कोपसंरक्तनयना भर्तारं प्रत्यभाषत ।
करोषि चेन्न मे वाक्यं धर्मबाह्यो भविष्यसि ॥ २ ॥
त्वया ममाऽर्पितः पाणिर्वरदानाय भूपते ।
चेन्न दास्यसि कृतकृत्या यास्ये सर्वं मयाऽर्जितम् ॥ ३ ॥
न चाहं ते प्रिया पत्नी न च त्वं मे पतिः प्रियः ।
धिक् त्वां द्विभाषिणं धर्मचोलोपकरं नरम् ॥ ४ ॥
सत्याच्चलितमद्य त्वां त्यक्ष्ये स्वार्थपरायणम् ।
इत्युक्त्वा सत्वरं तन्वी प्रस्थिताऽधोमुखी रुषा ॥ ५ ॥
तदानीं पितृभक्तोऽत्र रुक्मांगदसुतः स्वयम् ।
धर्मांगदो जनन्या वै सम्मुखोऽभून्ननाम ताम् ॥ ६ ॥
नम्रः प्रोवाच तां देवि ! कथं रुष्टा पितुः प्रिये ।
प्रस्थानं तु न ते योग्यं मातर्योग्यं वदाम्यहम् ॥ ७ ॥
धर्मांगदवचः श्रुत्वा मोहिनी वाक्यमब्रवीत् ।
पिता तवाऽनृती पुत्र हस्तो येनाऽन्यथाकृतः ॥ ८ ॥

येन कृतं सुकृतं वै ध्वजांकुशांऽकितेन तु ।
तद्धस्तं च मम हस्ते विन्यस्य यद्वचोऽर्पितम् ॥ ९ ॥
न करोत्येष ते जन्मपिता किं प्रवदाम्यहम् ।
न मया त्वत्र वस्तव्यं ह्यनृतार्थप्रतारिषु ॥१०॥
न याचे कांचनं धान्यं हस्त्यश्वं ग्रामवाससी ।
येन तस्य भवेद्धानिस्तादृग् याचे न वै सुत ॥११॥
येनाऽसौ प्रीणयेद् देहं पत्नीं मां नवयौवनाम् ।
तन्मया प्रार्थितं पुत्र सोऽयं मोहान्न यच्छति ॥१२॥
तस्य ममोपकाराय याचितो नृपसत्तमः ।
सुखहेतोः पुष्टिहेतोस्तच्चापि नो करोत्ययम् ॥१३॥
सुखच्युतं च्युतं सत्यात् त्यक्त्वा यामि सुखालयम् ।
तच्छ्रुत्वा मोहिनीं नत्वा ततो धर्मांगदोऽब्रवीत् ॥१४॥
दिव्यमातर्निवर्तस्व करिष्येऽहं तवेप्सितम् ।
यस्य सत्ये स्थिता लोकाः सदेवासुरमानुषाः ॥१५॥
वैवस्वतगृहं येन कृतं शून्यं हरेर्बलात् ।
कीर्तिः प्रकाशते यस्य व्याप्य ब्रह्माण्डकोटिषु ॥१६॥
मत्पिता स कथं मयि जीवति ह्यनृती भवेत् ।
ममोपरि दयां कृत्वा निवर्तस्व शुभं भवेत् ॥१७॥
एतद्धर्मांगदवाक्यमाकर्ण्य स्वेष्टलालसा ।
न्यवर्तत ततः प्राह तातं धर्मांगदः सुतः ॥१८॥
तातैषा जननी मेऽद्य त्वां वदत्यनृती त्विति ।
कस्मात्त्वमनृती भूप भविष्यसि मयि स्थिते ॥१९॥
प्रदेहि सकलं त्वस्यै यत् त्वया समर्यीकृतम् ।
अहं दासस्तव राजन् विक्रीयतां तृणाय माम् ॥२०॥
देव्यै ददस्व चेदिच्छेज्जीवितं मे ऋती भव ।
कीर्तिनाशो महान्नाशो न नाशः सुतयोषितोः ॥२१॥
कीर्तिलाभो महान् लाभो न लाभः सुतयोषितोः ।
धर्मांगदवचः श्रुत्वा रुक्मांगद उवाच तम् ॥२२॥
कीर्तिर्नश्यतु मे पुत्र ह्यनृती वा भवाम्यहम् ।
यामि वा निरयं त्वन्धं कथं भोक्ष्ये हरेर्दिने ॥२३॥
यद्यहं कुत्सितां योनिं व्रजेयं क्रिमिसंज्ञिताम् ।
तथापि नैव कर्ता स्यां भोजनं तु हरेर्दिने ॥२४॥
व्रतार्थे दुन्दुभिर्वक्ति वितथो न स मे भवेत् ।
अभक्ष्यभक्षणं कृत्वा किं जीवेच्छरदां शतम् ॥२५॥
असत्यं भवतु प्रोक्तं न भोक्ष्ये हरिवासरे ।
धिक्कृतोऽपि जनैस्त्वत्र मोहिन्या रहितोऽपि वा ॥२६॥
यदि चेन्मरणं मेऽस्ति न भोक्ष्ये हरिवासरे ।
कथं हर्षमहं कुर्यां दृष्ट्वा याम्यपुरं गतान् ॥२७॥
यास्तु शून्याः कृताः पुत्र मया नरकपंक्तयः ।
जनैः पूर्णा भवेयुस्ता भुक्ते मयि हरेर्दिने ॥२८॥
भोजनं वासरे विष्णोः कारयित्वापि ते प्रसूः ।
याचते यमराजस्य क्षेत्रं पूरयितुं खला ॥२९॥
तन्न दास्यामि मोहिन्यै देवैः शाठ्यमिदं कृतम् ।
शठा चेयं शठा देवाः शठे शाठ्यं प्रकल्पयेत् ॥३०॥
पिबेद्विषं विशेद्वह्निं निपतेत् पर्वताग्रतः ।
स्वस्याः छिन्द्याच्छिरश्चापि न भोक्ष्येऽहं हरेर्दिने ॥३१॥
मोहिनी मरणं यातु यथेष्टं वा प्रगच्छतु ।
नाहं भोक्ष्ये हरेरह्नि जन्ममृत्युहरे व्रते ॥३२॥
एकादश्युपवासेन यन्मया पुण्यमर्जितम् ।
संचितं च यशस्तद्वै भुक्त्वा विनाशये कथम् ॥३३॥
स्वपितुर्वचनं श्रुत्वा धर्मांगदोऽतिधार्मिकः ।
सन्ध्यावलीं तदा प्राह मोहिनीं परिसान्त्वय ॥३४॥
यथा न च्यवते सत्याद् यथा भुंक्ते न मे पिता ।
तथा विधीयतां यत्र कुशलं तूभयोर्भवेत् ॥३५॥
पुत्रवचस्तु सा श्रुत्वा मोहिनीं प्राह पूर्वजा ।
अनुवर्तस्व राजानं माऽऽग्रहं कुरु पापके ॥३६॥
नाऽऽस्वादयति राजाऽन्नं संप्राप्ते हरिवासरे ।
कामं वरय सत्यस्थे वरमन्यं सुदुर्लभम् ॥३७॥
कनिष्ठाया वरिष्ठाऽहं करिष्ये पादवन्दनम् ।
पत्युरर्थे परिणीता करोमि मस्तकार्पणम् ॥३८॥
परिणीता तु नासि त्वं कुतोऽन्यथेदृशाग्रहः ।
वाचा शपथदोषैश्च सन्निरुध्य प्रतार्य या ॥३९॥
कारयेत् पतिमकृत्यं सा पापा नरकं व्रजेत् ।
च्युता च नरकात्सप्त पञ्च जन्मानि शूकरी ॥४०॥
ततो भवति चाण्डाली ततश्च काष्ठिला भवेत् ।
ततश्छुछुन्दरी स्याच्च ततः काकी शृगालिका ॥४१॥
गोधा भूत्वा ततः सा वै गोत्वे नैव प्रशुद्धयति ।
विपक्षस्यापि भगिनि ! सद्बुद्धिदानमुत्तमम् ॥४२॥
येन श्रेयः परं स्याद्वै सुखं सुखयितुः सदा ।
सन्ध्यावलीवचः श्रुत्वा मोहिनी प्राह मानवः ॥४३॥
माननीयाऽसि मे ज्येष्ठे करोमि वचनं तव ।
यदि चेन्नाचरेद् राजा भोजनं हरिवासरे ॥४४॥
कुरुष्व त्वपरं देवि मरणादधिकं तव ।
ममापि दुःखदं त्वेतद् राष्ट्रस्यापि प्रशोककृत् ॥४५॥
कस्येष्टं मरणं देवि ! कस्याऽनिष्टं च जीवनम् ।
दैवाऽऽविष्टो जनः सर्वोऽनिष्टं चापि करोति वै ॥४६॥

चतुर्वर्गच्युतं घोरं यशोभाग्यविनाशकम् ।
कर्मरेखाप्रभग्नो वै करोत्यशुभकर्म तत् ॥४७॥
साऽहं पापदुराचारा वक्तुकामा सनिर्घृणम् ।
यादृग्भावान्वितं बीजं तादृशी जायते क्रिया ॥४८॥
यादृशेन तु भावेन योनौ शुक्रं समुत्सृजेत् ।
तादृशेन तु भावेन सन्तानं संभवेदिति ॥४९॥
साऽहं रुक्मांगदनाशभावेन ब्रह्मणा कृता ।
दुष्टभावा तथा जाता दुष्टकर्त्री नृपस्य यत् ॥५०॥
न लग्नं न ग्रहा देवि ! न होरा पुण्यदर्शिनी ।
किन्तु निषेकभावेन भावितं बालकं भवेत् ॥५१॥
न तत्र प्रबलं क्वापि दाक्षिण्यं मित्रता तथा ।
न च व्रीडा न च स्नेहो न धर्मो न दयादिकम् ॥५२॥
वक्ष्ये प्राणहरं तेऽद्य नृपस्य च सुतस्य च ।
प्रजानां च वधूनां च यदकार्यं हि सर्वथा ॥५३॥
कर्तुं शक्यं न मनसा श्रोतुं कर्णेन नापि यत् ।
तत् कथं वै शरीरेण कर्तुं शक्येत मानवि ! ॥५४॥
करोषि चेद् भवेत् कीर्तिस्तव राज्ञश्च सद्यशः ।
स्वर्गतिस्तव पुत्रस्य प्रशंसा मम धिक्कृतिः ॥५५॥
मोहिनीवचनं श्रुत्वा देवी सन्ध्यावली प्रिये ! ।
धैर्यमालम्ब्य तां तन्वीं ब्रूहि ब्रूहित्यचोदयत् ॥५६॥
मा वदैवं नववधु ! भर्त्रर्थे सकलं भवेत् ।
आत्मनो निधने वापि पुत्रस्य निधनेऽपि वा ॥५७॥
भर्तुरर्थे प्रकुर्वन्त्या राज्यनाशे न मे व्यथा ।
यस्या भर्ता भवेद् दुःखी तस्याः प्रोक्ता ह्यधोगतिः ॥५८॥
चण्डिके सा तवैवाऽस्तु न मे भर्तुर्ममापि न ।
मत्पुत्रस्यापि सा माऽस्तु या त्वदीया भविष्यति ॥५९॥
संजाते सुखदाम्पत्ये भार्या मोक्षविरोधिनी ।
भूत्वा दुःखप्रदा स्याच्चेन्न भार्या सा तु राक्षसी ॥६०॥
भार्या समुद्धरेत्पापात्पतन्तं निरये पतिम् ।
सा भार्याऽन्या कर्मवल्लीरूपा संसारवर्धिनी ॥६१॥
जीवितेनापि वचसा भर्तारं वंचयेत्तु या ।
कृमियोनिशतं प्राप्य पुष्कसी जायते तु सा ॥६२॥
पतिर्हि दैवतं लोके वञ्चनीयो न भार्यया ।
सा त्वं ब्रूहि प्रदास्यामि भर्तुरर्थे तवेप्सितम् ॥६३॥
वित्तं देहं तथा पुत्रं यस्त्वन्यद्वा सुदुर्लभम् ।
किमन्यद् दैवतं लोके स्त्रीणामेकं पतिं विना ॥६४॥
तस्यार्थे वा त्यजेत् सर्वं जीवनं किं ततोऽधिकम् ।
श्रुत्वेति मोहिनी प्राह स्वार्थमोहकरण्डिका ॥६५॥

यद्येवं त्वं विजानासि भर्त्रर्थे धनजीवनम् ।
तदाहं याचये वित्तं जीवितादधिकं शुभे ॥६६॥
देहि पुत्रशिरो मह्यं यदिष्टं हृदयाधिकम् ।
यदि नो भोजनं कुर्याद् राजा वै हरिवासरे ॥६७॥
तदा स्वहस्ते संगृह्य खड्गं राजा पतिस्तव ।
धर्मांगदशिरश्छित्वा ममोत्संगे ददातु वै ॥६८॥
एतद्वा कुरु तद्भद्रे यदाऽन्नं न भुनक्ति सः ।
तच्छ्रुत्वा वचनं तस्या मोहिन्याः कटुकाक्षरम् ॥६९॥
प्रचकम्पे क्षणं सन्ध्यावली मत्वा तु राक्षसीम् ।
शनैर्धैर्यं समालम्ब्य धर्मवाक्यान्युवाच ह ॥७०॥
धनं त्यजेत् त्यजेद् दारान् जीवितं च गृहं त्यजेत् ।
त्यजेद् देशं त्यजेद्रूपं स्वर्गं मित्रं गुरुं त्यजेत् ॥७१॥
त्यजेत्तीर्थं त्यजेद्धर्मं त्यजेत्पुत्रं बहुप्रियम् ।
त्यजेद्योगं त्यजेद्दानं ज्ञानं पुण्यक्रियां त्यजेत् ॥७२॥
तपस्त्यजेत् त्यजेद्दिक्षां सिद्धिं मोक्षं त्यजेत् परम् ।
पक्षयोरुभयोश्चापि न त्यजेद्धरिवासरम् ॥७३॥
एकादश्या व्रतेनैव तत्सर्वं प्राप्यते मुहुः ।
तत्रापि भर्तृतुष्ट्यर्थं सर्वं जह्यात् पतिव्रता ॥७४॥
दापये तव तुष्ट्यर्थं पत्युर्व्रतप्रपूर्तये ।
धर्मांगदशिरश्चण्डे राक्षसी त्वं न देवजा ॥७५॥
न सत्याच्चालये चण्डे पत्यर्थे च व्रतार्थकम् ।
इत्युक्त्वा विनयात्पादौ भर्तुः संगृह्य पद्मजे ! ॥७६॥
उवाच वचनं राज्ञी धर्मांगदशिरःकृते ।
मोहिन्या मोहरूपाया नान्यत् संकोच्यते खलु ॥७७॥
भोजनं वासरे विष्णोर्वधं वा तनयस्य वै ।
धर्मत्यागाद् वरं नाथ पुत्रमूर्धनिकृन्तनम् ॥७८॥
व्यापादय सुतं राजन् स्नेहं त्यक्त्वा सुदूरतः ।
मा सत्यलंघनं कार्षीरधर्मो मा स्पृशेत् त्वयि ॥७९॥
मातृस्नेहोऽत्र भर्त्रर्थे पुत्रे भवति सार्थकः ।
धर्मस्नेहस्वरूपोऽयं गृहीतो न तु लौकिकः ॥८०॥
प्राणान् दत्वा प्रियां दत्वा पुत्रं सर्वस्वमेव वा ।
सत्यं हरेर्व्रतं रक्ष्यं हृषीकेशार्थमत्र हि ॥८१॥
तदलं परितापेन सत्यं पालय भूपते ।
सत्यस्य पालनाद् राजन् विष्णुदेहेन युज्यते ॥८२॥
मन्ये भूपाल ! देवैः सा त्वद्व्रतपरिपन्थिभिः ।
शिक्षिता प्रेषिता सत्यविनाशाय हरेर्व्रते ॥८३॥
पुत्रव्यापादनाद् देवा भविष्यन्ति त्वधोमुखाः ।
तेषां मूर्ध्नि पदं दत्वा यास्यसे परमं पदम् ॥८४॥

विरुद्धा विबुधा भूप सेश्वरास्तव सद्व्रतैः ।
मोक्षमार्गप्रभेत्तारस्तव निश्चयलोपकाः ॥८५॥
रीतिर्वै देवताः परिपन्थिनो भक्तिमार्गिणाम् ।
स त्वं भूप दृढो भूत्वा घातयस्व सुतं प्रियम् ॥८६॥
मोहिन्याः कुरु वाक्यं वै ह्यात्मनः सत्यपालनात् ।
पालनाय व्रतं विष्णोः कुरु पुत्रसमर्पणम् ॥८७॥
भार्याया वचनं श्रुत्वा राजा रुक्मांगदस्तदा ।
सन्ध्यावलीमुवाचेदं मोहिन्याः सन्निधौ प्रिये ॥८८॥
पुत्रहत्या महाहत्या ब्रह्महत्याऽधिका भवेत् ।
घातयित्वा सुतं त्वत्र का परत्र गतिर्भवेत् ॥८९॥
अप्रजं तु सुतं हत्वा का गतिर्मे भविष्यति ।
अन्यार्थे किं सुतं हन्मि किं हन्मि हरिवासरम् ॥९०॥
न भोक्ष्ये वासरे विष्णोर्न हन्मि तनयं प्रिये ।
आत्मानं दारयिष्यामि मोहिनी म्रियतां च वा ॥९१॥
अथवा मोहिनीं सम्यगनुनयामि वै पुनः ।
यदि शान्तं मनस्तस्याः साम्ना स्याच्छ्रेयसे यतः ॥९२॥
इति विचार्य नृपतिः सन्ध्यावल्याः समीपतः ।
रुक्मांगदः सान्त्वनार्थे मोहिनीमिदमब्रवीत् ॥९३॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने धर्मांगदकृतो मोहिनीं प्रत्यनुनयो रुक्मांगदस्य व्रतदार्ढ्यं सन्ध्यावल्यापत्यर्थं कृतोपदेशोऽपि मोहिन्या पुत्रशिरसोऽभ्यर्थनं सन्ध्यावल्याः शिरोदानानुमतिश्चेत्यादिनिरूपणनामा नवत्यधिकद्विशततमोऽध्यायः ॥ २९० ॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! महाभागवतो रुक्मांगदो नृपः ।
सामाऽन्तिमं समाश्रित्य यदब्रवीत्तु मोहिनीम् ॥ १ ॥
दुष्टाग्रहमिमं सुभ्रु परित्यज सुतं प्रति ।
किं फलं भविता तेऽत्र हत्वा धर्मांगदं सुतम् ॥ २ ॥
भोजयित्वा दिने विष्णोः को लाभो भविता तव ।
अन्यं याचस्व सुभगे वरं वृणे तवाग्रतः ॥ ३ ॥
प्रसादं कुरु चार्वंगि ! पुत्रभिक्षां प्रयच्छ मे ।
दुर्लभो गुणवान् पुत्रो दुर्लभो हरिवासरः ॥ ४ ॥
दुर्लभाऽऽज्ञाकरी पत्नी हरेः सेवापि दुर्लभा ।
कथं पुत्रं व्रतं वापि हन्मि ते मे परं प्रियम् ॥ ५ ॥
मोहिन्युवाच राजानं न मे तत्रास्ति चाग्रहः ।
धर्मांगदो न मे शत्रुर्नाऽहं हन्मि सुतं तव ॥ ६ ॥
तव पुत्रो यथा सोऽयं मम पुत्रस्तथैव सः ।
कथं हन्मि स्वकं पुत्रं त्रातारं निरयादहम् ॥ ७ ॥
पूर्वमेव मया प्रोक्तं भुंक्ष्व त्वं हरिवासरे ।
नाहं व्यापादये पुत्रमर्थसिद्धिस्तु भोजने ॥ ८ ॥
मम भूमिपते कार्यं पुत्रनाशे न सिद्धयति ।
मम कार्यस्य संसिद्धिर्भोजने हरिवासरे ॥ ९ ॥
यदर्थे प्रेषिता पत्नीरूपा देवैस्तवाऽन्तिगा ।
ततः पुत्रः प्रियोऽस्त्येव भुज्यतां हरिवासरे ॥१०॥
सत्यं संरक्ष यत्नेन कुरुष्व वचनं मम ।
एवं दृढाग्रहां दृष्ट्वा धर्मांगदोऽप्युवाच ताम् ॥११॥
एतदेव गृहाण त्वं मा शंकां कुरु मोहिनि ! ।
इत्युक्त्वा खड्गमादाय प्राह स्वपितरं सुतः ॥१२॥
न विलम्बः पितः कार्यस्त्वया ममनिपातने ।
मन्मातुर्वचनं सत्यं कुरु भूप प्रतिश्रुतम् ॥१३॥
आत्मा रक्ष्यो धनैर्दारैः सुताभिश्च सुतैरपि ।
त्वदर्थे मरणं मेऽस्तु ब्रह्मलोकप्रदं भवेत् ॥१४॥
तथापि शाश्वती मुक्तिः स्वर्गं वा शाश्वतं भवेत् ।
सत्यार्थे दुःखमुत्सृज्य कुरु व्यापादनं मम ॥१५॥
पित्रर्थे चापि मात्रर्थे गवार्थे च हतास्तु ये ।
विप्रसाधु सुरार्थे च स्वाश्रितार्थे गुरोः कृते ॥१६॥
धर्मार्थे च हता राजन् यान्ति लोकांस्तु शाश्वतान् ।
जहि मां पालय सत्यं मा भुंक्ष्व हरिवासरे ॥१७॥
नरमेधोऽयमास्थेयो हरेर्वासरकारणात् ।
तत्र नास्ति मनाक्दोषः परितापं च मा वह ॥१८॥
इत्येतत्समये लक्ष्मि ! देवाः ऋषिगणास्तथा ।
मुनयः पितरश्चापि मनवश्च दिशाधिपाः ॥१९॥
स्वर्गीया वायवीयाश्च भौमाः पातालवासिनः ।
दृश्याऽदृश्यशरीराश्च स्थावरा जंगमास्तथा ॥२०॥
देव्यः कोट्यर्बुदाश्चापि तीर्थयात्रार्थमागताः ।
ब्रह्मविष्णुमहेशाश्च विष्णुकृष्णनरायणाः ॥२१॥
रैवताचलमार्गस्थाः पश्यन्त्याश्चर्यसंभृताः ।
जिज्ञासमानाः श्रैष्ठ्यं वै हनने वा ह्युपोषणे ॥२२॥
धर्मतत्त्वं तथा कुत्र जीवने भोजनेऽथवा ।
तदानीं व्योममार्गस्थो भगवान् कमलेक्षणः ॥२३॥
अन्तर्धानगतस्तस्थौ भक्तधैर्यावलोककः ।
मोहिन्युक्तं भुंक्ष्व राजन् पुत्रोक्तं जहि मां पितः ॥२४॥
शृण्वन् देवः कृष्णनारायणः सत्यं परीक्षकः ।
राजा प्रणम्य गोविन्दं खड्गं जग्राह पाणिना ॥२५॥

धर्मांगदोऽपि पितरौ नीत्वा रैवतदेवताः ।
अदीनवचनो ग्रीवां खड्गमार्गे न्यधापयत् ॥२६॥
हाहाकारो महानासीच्चाक्रोशस्तीर्थयायिनाम् ।
चचाल पृथिवी सर्वा ससिन्धुनगराष्ट्रिका ॥२७॥
निपेतुरुल्काः शतशो द्यौर्निस्तेजोग्रहान्विता ।
कालुष्यमापुस्तीर्थानि विवर्णाऽभूच्च मोहिनी ॥२८॥
देवकार्यं कृतं नैव जन्म निरर्थकं कृतम् ।
राज्ञा भुक्तं न चान्नं वै तृणतुल्या कृता ह्यहम् ॥२९॥
राजा यास्यति मोक्षं वै याम्यं यास्यामि पापिनी ।
इति शोकेन मूर्छायां पपात धरणीतले ॥३०॥
राज्ञा प्रचिच्छिदे हर्षात् खड्गेन पुत्रमस्तकम् ।
तावदव्यक्तेन कृष्णेन पश्यत्सु कोटिदेहिषु ॥३१॥
स्वकरेण धृतो राजा तुष्टोऽस्मि ब्रुवता मुहुः ।
पुत्रेण तव पत्न्या च त्वया सर्वं कृतं मम ॥३२॥
मद्व्रतार्थं कृतं चेदं नान्यः करिष्यति क्वचित् ।
विजीता मोहिनीमाया यममूर्ध्नि पदं धृतम् ॥३३॥
तुष्टोऽस्मि चागच्छ विमानवर्ये सपुत्रपत्नीसुहृदादिभिश्च ।
त्रैलोक्यपूज्यं विमलं गृहाण प्रयाहि वासं मयि दिव्यमूर्तौ ॥३४॥
दिव्यो राजा चतुर्हस्तो दिव्या दारसुतादयः ।
बभूवुः कृष्णमूर्तौ ते विलीनाः सुचतुर्भुजाः ॥३५॥
धर्मजयप्रघोषाश्चाऽऽकाशवाण्योऽभवँस्तदा ।
पुष्पवृष्टिः पपाताम्बरस्थदेवविसर्जिता ॥३६॥
लोकपालैस्ताडिता दुन्दुभयो नेदुरुत्कटाः ।
जगुर्गीतानि ननृतुर्मुदा युक्ताः सुरांगना ॥३७॥
रैवतेन तथा तीर्थयायिभिर्वर्धितो नृपः ।
सुतदारादियुक्तस्य शाश्वतं धाम तेऽस्त्विति ॥३८॥
यात्रालुभिस्तदीयैश्च देहा नारायणे ह्रदे ।
वह्निना संस्कृताश्चोर्ध्वक्रियाः प्रातः प्रवर्तिताः ॥३९॥
धन्यवादान् प्रब्रुवाणाः प्रदक्षिणाय ते ययुः ।
अभुञ्जानाः प्रबोधिन्यां द्वादश्यां त्वेकभोजनाः ॥४०॥
त्रयोदश्यां चतुर्दश्यां पूर्णायां चैकभोजनाः ।
रैवताद्रिं परिक्रम्य पूर्णायां ते ययुः सुखाः ॥४१॥
मोहिनी दुःखमापन्ना सव्रीडा चाऽयशस्विनी ।
अकृतकार्या चाऽरण्ये मर्तुकामा बभूव ह ॥४२॥
यमोऽपि विफलं सर्वं दृष्ट्वा ब्रह्माणमाह वै ।
मोहिनी निष्फला जाता वन्ध्यास्त्री जनने यथा ॥४३॥
लोकः प्रयाति वैकुण्ठं न मां कश्चित्प्रपद्यते ।
नृपे मृतेऽपि लोकानां भक्तौ ह्रासो न वर्तते ॥४४॥
उपोष्य वासरं विष्णोः सर्वे यान्ति परं पदम् ।
मोहिनी मरणोद्युक्ता नायाति तव सन्निधौ ॥४५॥
निर्व्यापारस्त्वहं प्राग्वत् किं करोमि प्रशाधि माम् ।
यमवाक्यं समाश्रुत्य ब्रह्मा प्रोवाच सूर्यजम् ॥४६॥
गच्छामो मोहिनीं बोधयितुं पश्चात् तवार्थकम् ।
करिष्यामो यथायोग्यं दैवमन्यद् विचिन्तयेत् ॥४७॥
इति कृत्वा वने तत्र समायाता अजादयः ।
तेजोहीनां नष्टकार्यां त्वपश्यँस्तां दिवौकसः ॥४८॥
निरुत्साहां नम्रशीलामूचुर्देवाः सुकालिकम् ।
मा शोकं कुरु धर्मज्ञे ! पौरुषं हि त्वया कृतम् ॥४९॥
प्रेषिता देवकार्यार्थं सिद्धं तन्न तथापि वै ।
त्वया शोको न कर्तव्यो ययौ राजा तु मोक्षणम् ॥५०॥
नहि श्रीहरिभक्तानां विघ्नं कदापि जायते ।
हते पुत्रे हरिणा स्वव्रतभक्ताऽवनं कृतम् ॥५१॥
सुतः पत्नी नृपश्चैते सुदृढा व्रतपालने ।
विष्णुना परितुष्टेन नीताः स्वभवने त्रयः ॥५२॥
तेषां योगं समापन्ना नीताश्चाऽसंख्यदेहिनः ।
हरेर्भक्तिः सदा रक्षाकरी मोक्षकरी ध्रुवम् ॥५३॥
फलं कर्मणि चारब्धे यदि देवि ! न सिद्ध्यति ।
सर्वयत्नैरपि चेद्दै दोषः कोऽत्र तवाऽधुना ॥५४॥
तस्माद् वरप्रदानाय तव सौख्यप्रवृत्तये ।
सम्प्राप्ता विबुधाः सर्वेऽभीष्टयाचनिकां कुरु ॥५५॥
सिद्धौ च वाऽप्यसिद्धौ वा वेतनं देयमेव ह ।
भर्तव्यो भृत्यवर्गश्च रक्षणीयस्तथा मुहुः ॥५६॥
सुरैरेवं समादिष्टा पतिहीनाऽतिदुःखिता ।
उवाच मोहिनी नष्टानन्दा कुलविनाशिनी ॥५७॥
धिगिदं जीवितं मेऽत्र येन कार्यं न साधितम् ।
न कृतो यममार्गश्च जनैर्गम्यस्त्वनर्गलः ॥५८॥
हरेर्दिनं न लुप्तं च न भुक्तं हरिवासरे ।
राज्ञा तेन प्रभक्तेन हतः पुत्रो मुदा प्रियः ॥५९॥
गतो मूर्ध्नि पदं दत्वा राजा विष्णोर्ध्रुवं पदम् ।
सर्वस्वं मे गतं त्वत्र किन्तु मे जीवितं फलम् ॥६०॥
न साधयन्ति ये कार्यं स्वामिनां वेतनार्थिनः ।
भृत्यास्ते दोषभोक्तारो जायन्ते भूतले हयाः ॥६१॥
कार्यस्याऽसाधिका चाहं भर्तृपुत्रविनाशिनी ।
कथं वरं प्रगृह्णामि भवतां नाकवासिनाम् ॥६२॥
मरणं सर्वथा श्रेष्ठं भग्नमानस्य देहिनः ।
इति कृत्वा रुरोदोच्चैर्देवा ऊचुस्तु सान्त्वनाम् ॥६३॥

परिश्रमः कृतो देवि ! त्वयाऽस्मत्कार्यसाधने ।
दैवाधीनं फलं ज्ञात्वा मा शोकं कुरु मोहिनी ! ॥६४॥
अनृणास्तु भविष्यामः कृत्वा तूपकृतिं तव ।
सौख्यार्थं यद्भवेदिष्टं दास्यामो ब्रूहि हृद्गतम् ॥६५॥
यत्र रुक्मांगदस्त्वास्ते तत्र यातुं समीहया ।
मोहिनी मनसा यावद्विचारयति तावता ॥६६॥
नृपतेराजगामाऽत्र पुरोधाः पावकोपमः ।
रैवताद्रेर्गह्वरस्थस्वर्णरेखाह्रदे वसुः ॥६७॥
उषितः प्राणमायम्य निर्गतो जलमध्यतः ।
ज्ञात्वा योगेन तत्सर्वमुवाच वरदान् सुरान् ॥६८॥
धिगिमां धिक् देवसंघं धिक्कर्म पापकारकम् ।
किं विचिन्त्याऽऽगताश्चास्यै वरं दातुं धिगीश्वरान् ॥६९॥
सुतभर्तृघातिनीयं किं पात्रं गण्यते सुरैः ।
नाऽस्या लोके भवेच्छुद्धिर्वह्नौ संपतनेऽपि हि ॥७०॥
चाटुवाग्भिर्मोहयित्वा भूत्वा स्वार्थपरा प्रिया ।
सुतभर्तृघातिनीयं स्वमोक्षस्वर्गघातिनी ॥७१॥
नाऽस्या वासो निरयेऽपि कुतः स्वर्गे हरेर्गृहे ।
लोकान्तरेऽथवा शान्ते वासहीना भ्रमत्वियम् ॥७२॥
लोकनिन्दादूषिताया लोकेऽप्यत्र न वै स्थितिः ।
धिगस्या जीवनं कर्मगर्हिताया वदामि किम् ॥७३॥
पतिं हत्वा सुतं हत्वा सपत्नीं जननीसमाम् ।
हत्वा धरां समस्तां च कां गतिं यास्यति त्वियम् ॥७४॥
वचनेनापि धर्मस्य विध्वंसिनी हि सर्वदा ।
उक्तवती सदा राज्ञे भुज्यतां हरिवासरे ॥७५॥
अज्ञानाद् व्याहृते वाक्ये भुज्यतां हरिवासरे ।
तस्यापि निष्कृतिः प्रोक्ता प्राणायामशतेन वै ॥७६॥
इयं प्रसह्य संभोक्त्री हरेरह्नो व्रतस्य हि ।
नैषा स्पृश्याऽस्ति देवेशाः ! कथमस्या वरप्रदाः ॥७७॥
पालनं पापयुक्तस्य न कुर्वन्ति दिवौकसः ।
देवा धर्माश्रिता धर्मो वेदवाक्यसमुत्थितः ॥७८॥
वेदैः शुश्रूषणं भर्तुः स्त्रीणां धर्मः प्रकीर्तितः ।
न पितुः स्वार्थकरणं वधूधर्मः प्रकीर्तितः ॥७९॥
यद् ब्रवीति पतिः किंचित्पत्न्या कार्यमशंकया ।
शुश्रूषा सा हि विज्ञेया यया स्यात्पतितोषणम् ॥८०॥
भर्तुराज्ञा हता स्वस्या आज्ञास्थापनवाञ्छया ।
स्वकार्यसाधनार्थाय शपथैर्यन्त्रितो नृपः ॥८१॥
घातिनीयं वचोभिश्च क्रिययाऽपि विघातिनी ।
कुटुम्बघातिनी सेयं पापदेहा च पापिनी ॥८२॥
हत्यायुताधिकाऽघेयं वरयोग्या कथं भवेत् ।
योऽस्याः पक्षेऽपि वर्तेत देवो वा दानवोऽपि वा ॥८३॥
मोहिन्या रक्षणे कश्चित् प्रयत्नं कुरुते यदि ।
तं चापि भस्मसात् कुर्यां क्षणेन सुरसत्तमाः ॥८४॥
राजा मोक्षं गतः सत्यात् पापमस्यां विसृज्य वै ।
अस्याः पक्षं कुर्वतोऽपि पापं तस्याः प्रसज्यते ॥८५॥
इत्युक्त्वा क्रोधताम्राक्षः संगृह्य सलिलं करे ।
चिक्षेप मोहिनी मूर्ध्नि प्रजज्वालाऽनलस्ततः ॥८६॥
पश्यतां नाकवासानां प्रददाह स मोहिनीम् ।
तावत् खे महतां वाचः कोपं संहर संहर ॥८७॥
बभूवुस्तावदेवेयं भस्मशेषाऽभवत् क्षणात् ।
निराशा देवताः सर्वे ययुर्भग्नहृदो गृहम् ॥८८॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने रुक्मांगदेनोपदिष्टसामोत्तरं क्रूराया इच्छया खड्गेन पुत्रशिरश्छिन्नमथ देवेषु पश्यत्सु सुतदारनृपाणां मोक्षगतिर्मोहिन्यै धिक्प्रवादाः पुरोधःशापेन भस्मीजाता मोहिनीति निरूपणनामैकनवत्यधिकद्विशततमोऽध्यायः ॥२९१॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! दग्धदेहा पापिसूक्ष्मशरीरिणी ।
याम्यैस्तु नीयमाना सौद्धाटयद् यममार्गकम् ॥ १ ॥
वारिता सा यमेशेन यतो यमसहायिनी ।
यममार्गोद्धाटनार्थे दुःखमाप्तवती ततः ॥ २ ॥
यमेन प्रेषिता स्वर्गं गता विबुधमन्दिरम् ।
भर्त्सिता देवदूतैस्तु स्थितिस्तेऽत्र न पापिनि ! ॥ ३ ॥
हरिवासरलोपिन्या वासस्ते न सुरालये ।
ततः सा दुःखिता लक्ष्मि ! मोहिनी वासलब्धये ॥ ४ ॥
पातालं प्रययौ तत्र पातालस्थैर्निवारिता ।
सुरैश्च मुनिभिर्दैत्यैर्दानवैः ऋषिभिस्तथा ॥ ५ ॥
पितृभिर्मानवैर्यक्षैर्भूतप्रेतपिशाचकैः ।
तीर्थैश्च पर्वतैः खातैः सागरैश्च वनैस्तथा ॥ ६ ॥
तत्त्वैश्च लोकपालैश्च मनुभिर्जलवासिभिः ।
दृष्टा यैर्यैस्तीर्थकृद्भिः रैवताद्रौ तु मोहिनी ॥ ७ ॥
पुत्रहन्त्री पतिहन्त्री दृष्टा जडैश्च चेतनैः ।
नक्षत्रैश्च ग्रहैर्वृक्षैर्वल्लीभिश्च तृणैस्तथा ॥ ८ ॥

पशुभिः पक्षिभिश्चैषा स्वस्वस्थानान्निराकृता ।
न कैश्चिद् रक्षिता तस्मात् क्रोशन्ती ब्रह्मणः सुता ॥ ९ ॥
जनकस्याऽन्तिकं गत्वा दुःखं स्वं सन्न्यवेदयत् ।
तात तन्नास्ति मे स्थानं त्रैलोक्ये सचराचरे ॥१०॥
यत्र यत्र गता चास्मि तत्र तत्र क्षिपन्ति माम् ।
तिरस्कुर्वन्ति ते सर्वे निर्वासयन्ति चाश्रमात् ॥११॥
पित्राज्ञया मया गत्वा रुक्मांगदगृहं ततः ।
दृष्टं व्यवसितं चैतत् सर्वलोकघृणास्पदम् ॥१२॥
भर्तारं क्लेशयित्वैव मारयित्वा सुपुत्रकम् ।
सन्ध्यावलीं नाशयित्वा पितः प्राप्ता दशामिमाम् ॥१३॥
न गतिर्विद्यते जैवे चैश्वरे मोक्षणेऽपि मे ।
विशेषाद् वसुशापेन जाताहं दुःखभागिनी ॥१४॥
यदि त्वं त्रिदशैः सार्धं वसुं तं शापदं द्विजम् ।
प्रसादयसि मत्प्रीत्या तर्हि मे स्याच्छुभा गतिः ॥१५॥
विप्रशापप्रदग्धानां गंगा मुक्तिप्रदा भवेत् ।
भार्या रुक्मांगदस्याऽहं विधवा पापकारिणी ॥१६॥
पुरोधाश्च वसुर्विप्रो राज्ञस्तस्माच्च मे गतिः ।
स मां नयेत्तु तीर्थेषु क्षालयेत्पातकानि मे ॥१७॥
शापं निवर्तयेच्चापि ततो मे सुगतिर्भवेत् ।
तां तथावादिनीं श्रुत्वा ब्रह्मा लोकपितामहः ॥१८॥
शिवेन्द्रधर्मसूर्याग्निदेवाद्यैर्मुनिभिर्युतः ।
मोहिनीमग्रतः कृत्वा जगाम वसुसन्निधौ ॥१९॥
रैवताद्रौ स्वर्णरेखानद्यरण्ये वसुं भवम् ।
वामनं गौरवेणापि नमश्चक्रे स्वयं विधिः ॥२०॥
असाध्यकार्ये सम्प्राप्ते यविष्ठश्चेत् करोति तत् ।
न दूषितं भवेल्लक्ष्मि ! यविष्ठस्याऽभिवादनम् ॥२१॥
वसुर्दृष्ट्वा समुत्थाय नमश्चक्रे त्वजादिकान् ।
सुराः सर्वेऽर्थयामासुर्मोहिन्यर्थे सुखावहम् ॥२२॥
कृपां कुरु तपःश्रेष्ठ मोहिनीगतिदो भव ।
यजमानी भवत्येषा ते राज्ञो गृहवासिनी ॥२३॥
त्वया त्वस्या हितं कार्यं मम पुत्र्यास्तपोधन ।
प्रेषिताया मयैवात्र देवानां हितकाम्यया ॥२४॥
यमलोकस्तथा स्वर्गः शून्यो रुक्मांगदेन वै ।
कृतस्तयोर्वसत्यर्थं मानसी प्रेषिता मया ॥२५॥
रुक्मांगदस्य मोहार्थं स तु प्राप हरेः पदम् ।
गतिं धर्मस्याऽतिसूक्ष्मां लोका जानन्ति नैव ताम् ॥२६॥
दुर्लभं हरिसायुज्यमनया तैः समर्जितम् ।
सदारः ससुतो राजा प्रापितो हरिमन्दिरम् ॥२७॥
अनया प्रिययाऽतीव परीक्ष्य प्रापितोऽच्युतम् ।
अन्यैर्न प्राप्यते धाम प्रापितं त्वनया हि तत् ॥२८॥
स वै पुत्रश्च सा पत्नी सुता सा जनकश्च सः ।
येन वै प्राप्यते मोक्षो बन्धुः सुहृद् गुरुश्च सः ॥२९॥
हरेर्दिने न भोक्तव्यं व्रतं प्रतीपकाऽऽग्रहात् ।
दृढीकृतं नृपस्याऽत्र मोहिन्या सुकृतं कृतम् ॥३०॥
तत्कार्यं पापरूपं वै गणयित्वा त्वया वसो ।
शापदग्धा कृता भस्मशेषा सूक्ष्मशरीरिणी ॥३१॥
तत्प्रशाम्य क्षमस्वैनां कुरुष्वानुग्रहं मुने ।
शमं भजस्व पिष्टस्य पेषो माऽस्तु सुरेश्वरैः ॥३२॥
त्यज क्रौर्यं भज शान्तिं प्रसादं कुरु पुत्रक ।
श्रुत्वा शान्तः क्षमायुक्तो वसू राजपुरोहितः ॥३३॥
प्राह मया विचार्यैव मोहिन्या वसतिर्ध्रुवा ।
निर्णीतास्ति यदर्थं सा निर्मिता तत्करोत्वपि ॥३४॥
यममार्गप्रवाहार्थं व्रतभंगार्थमित्यपि ।
हरेर्दिनोपोषितानां ब्रह्मधामगमाय च ॥३५॥
निर्मितेयं मोहिनीति तया तत्कार्यमेव ह ।
पतिः सपत्नी पुत्रश्चाऽनया वैकुण्ठगाः कृताः ॥३६॥
एतादृशस्थले चेयं वासं करोतु मोहिनी ।
अस्याः सामीप्यत एकादशीं कृत्वा जनाः सदा ॥३७॥
मुक्तिं प्रयान्तु निर्विघ्नां हरितोषणसद्व्रतान् ।
अस्या दिने तु ये भ्रान्ता व्रते मुग्धा भवन्ति ते ॥३८॥
यान्तु पापा यमलोकं यमकार्यं भवेत्तथा ।
एषा यत्र स्थिता तद्वै व्रतं भग्नं भवेदिति ॥३९॥
तद्वै व्रतं मतं न स्याद् व्रतभंगो हि सोऽस्तु वै ।
एवमत्र विचिन्त्यार्थो मया सम्यङ्निरूपितः ॥४०॥
विधवायास्तु मोहिन्या वासः सर्वार्थसाधकः ।
सर्वेष्वपि व्रतेष्वस्या वासेन दुष्टता भवेत् ॥४१॥
तस्माद् व्रतदिने त्वस्या वासो नैव तु युज्यते ।
किन्तु व्रताद्यदिवसप्रान्तेऽस्या वसतिर्भवेत् ॥४२॥
आद्यदिवसप्रान्तोऽस्या वासेन यातु दुष्टताम् ।
वेधसोऽस्या यतो जन्म तस्माद्वै वैधसी मता ॥४३॥
सा यत्र तिष्ठति तिथेः प्रान्ते स वेध उच्यते ।
वेधाश्रया तिथिस्त्वाद्या दुष्टा पापप्रदायिनी ॥४४॥
व्रतविध्वंसिनी बोध्या यमपुर्याः प्रदायिनी ।
सूर्योदये तु या नास्ति सायंकाले तु वर्तते ॥४५॥
सा तिथिर्ह्युपोष्या स्याद् याम्यपूर्याः प्रदायिनी ।
व्रतं तस्यां न कर्तव्यं विपरीतफलं यतः ॥४६॥

सूर्योदये च पूर्वाह्णे सप्तमी दशमी च वा ।
चतुर्दश्यष्टमी वा च वर्तते क्रमशस्तथा ॥४७॥
पराह्णे कृष्णजननाष्टमी चैकादशी तथा ।
पूर्णा वाऽमा रामनवमीति सायं प्रवर्तते ॥४८॥
एवं काले क्रमशस्तु सप्तम्याः प्रान्तके तथा ।
दशम्यन्ते चतुर्दश्याः प्रान्तेऽष्टम्यन्तके तथा ॥४९॥
मोहिनी तत्र वसतु ताः पापास्तिथयः सदा ।
अतो व्रतं क्रमशस्तु सप्तम्यां चाष्टमीव्रतम् ॥५०॥
यमलोकप्रदं प्रोक्तं वेधपापाश्रयं हि तत् ।
दशम्यां तु व्रतं ह्येकादश्याव्रतं तु पापदम् ॥५१॥
चतुर्दश्यां व्रतं पूर्णाव्रतं वाऽमाव्रतं तथा ।
पापदं यमलोकस्य प्रापकं रात्रिकृद्व्रतम् ॥५२॥
तस्मात् सूर्योदये याऽऽद्या सायं रात्रौ तु चेतरा ।
व्रतात्मिका तिथिश्चेत् स्यान्नैवोपोष्या कदाचन ॥५३॥
मोहिनी तत्र वसति सप्तम्यादौ दिनान्तके ।
सप्तम्याद्या न चोपोष्याः सायं व्रतान्वितास्त्वपि ॥५४॥
यममार्गप्रवाहार्थं मोहिन्यै त्वर्पिता हि ताः ।
ताश्च वेधाश्रयाः पापाश्रया मोहिन्यधिश्रिताः ॥५५॥
अयं च निर्णयः सायंव्यापिन्या व्रतविभ्रमे ।
व्रतं नैव प्रकर्तव्यमिति देवैर्दृढीकृतः ॥५६॥
अथ सूर्योदयात्पूर्वं सप्तमी दशमी च वा ।
चतुर्दश्यष्टमी वा च वर्तते क्रमशस्तथा ॥५७॥
सूर्योदये कृष्णजन्माष्टमी चैकादशी तथा ।
पूर्णा वाऽमा रामनवमीति सूर्ये प्रवर्तते ॥५८॥
एवं काले क्रमशस्तु सप्तम्याः प्रान्तके तथा ।
दशम्यन्ते चतुर्दश्याः प्रान्तेऽष्टम्यन्तके प्रगे ॥५९॥
वसतु मोहिनी तत्र तत्तिथियोगसन्धिता ।
सूर्योदये तिथिर्या तु प्रारभ्यते व्रतात्मिका ॥६०॥
वेधात्ममोहिनीदृष्टा विद्धा सा भवतीत्यतः ।
विद्धातिथिव्रतं स्वर्गप्रदपुण्यकरं भवेत् ॥६१॥
इतिदेवैर्निश्चितत्वाद् विद्धाव्रतं तु नाकदम् ।
न तु मोक्षकरं तत्स्यात् क्षय्यपुण्यप्रदं ह्यतः ॥६२॥
अतो विद्धा न कर्तव्या भक्तैस्तु मोक्षकांक्षिभिः ।
कर्तव्या सर्वथा शुद्धाऽष्टमी चैकादशी तथा ॥६३॥
पूर्णिमा चाप्यमावास्या ह्येवमन्या व्रतात्मिकाः ।
तिथयः सर्वदा शुद्धा व्रते ग्राह्या न विद्धिकाः ॥६४॥
न वा सायंतनव्याप्ता निर्णीतं तत् सुरैस्तदा ।
शुद्धं हरिदिनं भक्त उपोष्य याति मोक्षणम् ॥६५॥
विद्धातिथिं विहायैव परे तूपोषणं दिने ।
नवम्यां द्वादशिकायां प्रतिपद्दिवसे तथा ॥६६॥
दशम्यां क्रमशः कार्यं कृष्णाष्टम्यास्तथा पुनः ।
एकादश्याः पूर्णिमाऽमावस्ययोः रामजन्मिनः ॥६७॥
व्रतं शुद्धं भवेत् तद्धि मोक्षदं हरिवासरम् ।
ह्याश्रितं व्रतं शुद्धं विद्धन्तु स्वर्गदं मतम् ॥६८॥
मोहिन्यन्तं याम्यदं वै यथाकर्ता तथागतिः ।
इत्येवं निर्णयं कृत्वा मोहिन्यै स्थानमर्पितम् ॥६९॥
आदितिथेः प्रान्तभागः सर्वथा यममार्गकृत् ।
यदि तिथिद्वयं स्याच्चेद् व्रतं कार्यं परे दिने ॥७०॥
तिथेः क्षये परोपोष्या तिथिः शुद्धा व्रतार्थिना ।
न तु विद्धा क्षया नैशा ह्युपोष्या कर्हिचिज्जनैः ॥७१॥
वेधो निशीथे यमानामुपकाराय मोहिनी ।
सूर्यात् पूर्वं सुराणामुपकारायैव हि मोहिनी ॥७२॥
शुद्धाविद्धान्तरिता स्यादुपकाराय मोक्षिणाम् ।
सर्वेष्वपि च लोकेषु यमस्य दशमी तिथिः ॥७३॥
तस्याः प्रान्ते सदा स्थेयं मोहिन्येति निवासिता ।
विद्धाव्रतफलं त्वर्धं ते वै भवतु मोहिनि ॥७४॥
निशाव्रतफलं सर्वं ते वै भवतु मोहिनि ।
स्वाघनाशाय ते तावदलं भवतु मोहिनि ॥७५॥
भुवि तीर्थानि चैव त्वं स्वाघनाशाय सञ्चर ।
पापिनां पापनाशाय तीर्थानि सन्ति मोहिनि ! ॥७६॥
हरिष्यन्ति च ते पापं स्थितास्तीर्थे व्रतं विना ।
अव्रतिनश्च तीर्थस्था वज्रलेपाऽघभागिनः ॥७७॥
तव शुद्धिः सदा तेषु भविष्यति पुनः पुनः ।
यमसंस्थापनार्थाय पापसंचयनाय च ॥७८॥
दत्तं ते मोहिनि ! स्थानं निशान्तसमयान्तिकम् ।
स्वर्गसंस्थापनार्थाय पुण्यसंचयनाय च ॥७९॥
दत्तं ते मोहिनि ! स्थानं प्रातः सूर्योदयान्तिकम् ।
मोक्षिणां तु कृते त्वं वै सर्वथा वस दूरतः ॥८०॥
मोक्षिव्रतं स्वदृष्ट्या त्वं मा निभालय भामिनि ! ।
तथा सति पुनर्नाशस्ते भविष्यति शापतः ॥८१॥
एवं प्रदिष्टा ब्रह्माद्यैस्तुष्टा बभूव मोहिनी ।
मेने कृतार्थं त्वात्मानं स्थानेन तीर्थयात्रया ॥८२॥
देहे भस्मावशेषेऽपि सूक्ष्मदेहेन वै पुनः ।
यमकार्यं सुरकार्यं मोक्षकार्यं सुसाधितम् ॥८३॥
इति कृतार्थतां दृष्ट्वा प्रहृष्टाऽभूदतीव सा ।
स्वकार्यं साधितं राज्ञा मोहिन्या साधितं स्वकम् ॥८४॥

यमकार्यं देवकार्यं मोक्षकार्यं प्रवर्तितम् ।
अथ सूर्यचन्द्रयोस्तु राहुग्रसनकर्मणि ॥८५॥
राहुदृष्टिपथे काले वेधे हि मोहिनी स्थिता ।
वेधकालो वैधसी साऽऽज्ञप्ता स्थातुं सुरेश्वरैः ॥८६॥
तस्माद् वेधे भोजनादि सर्वं पापमयं स्मृतम् ।
कृतं प्रयाति मोहिन्यै कर्ता यमप्रदेशभाग् ॥८७॥
भवतीति यममार्गस्तयापि वाहितस्तथा ।
एवं तिथीनां वेधास्तु व्रतपूर्वं व्यवस्थिताः ॥८८॥
भवति कर्तरि पापं मोहिनी फलभागिनी ।
इति लक्ष्मि ! व्यवस्थां च स्थानं प्राप्य सुमोहिनी ॥८९॥
देवान् प्रणम्य संहृष्टा नत्वा पुरोधसं स्वकम् ।
प्रान्ते स्थिता दशम्यादेर्जनमोहनकारिणी ॥९०॥
सूर्योदयस्पृशा तस्माद् दशमी गर्हिता सदा ।
अस्पृष्टमुदयं चापि मोहनायैव केवलम् ॥९१॥
इति ब्रुवन्तो देवेशा ययुः स्वस्वनिकेतनम् ।
तदा पुत्री वेधसं वै दग्धदेहस्य लब्धये ॥९२॥
प्रार्थयामास बहुधा वसुं चापि पुरोधसम् ।
ब्रह्मा प्राह वसुं चापि सर्वलोकविधानकृत् ! ॥९३॥
वसो ! तात ! निबोधेदं किं ते याज्या ब्रवीति वै ।
त्वयेयं मोहिनी कोपात् कृता भस्मावशेषिता ॥९४॥
याचते सा स्थूलं देहं समुत्पाद्य प्रदेहि वै ।
त्वया मया च संपाल्या कृतकार्या तपस्विनी ॥९५॥
किंचविष्णुर्दिनस्यैषा वैरिणी पापकारिणी ।
यथाशुद्धयेदुपायं तं त्वस्याः कृते विधीयताम् ॥९६॥
तत्तु श्रुत्वा पुरोधास्तं दिदेश वर्ष्मयोजने ।
ब्रह्मा कमण्डलुवार्भिरौक्षन्मोहिनिकास्थिजम् ॥९७॥
भस्म ततः पुनर्देहः समुत्पन्नस्तु वैधसः ।
देहयुक्ताऽभवत्सा च वसुं तातं प्रणम्य वै ॥९८॥
प्रार्थयामास पापानां क्षालनाय पुनः पुनः ।
तदा वसुस्तीर्थयात्रां कारयितुं च मोहिनीम् ॥९९॥
उपादिदेश गंगादितीर्थानि तद्विधींस्तथा ।
ततो जगाम तीर्थानि वसुना सह मोहिनी ॥१००॥
गंगां गयां तथा गोदां जगन्नाथं प्रयागकम् ।
कुरुक्षेत्रं हरिद्वारं बद्रिकाश्रममुत्तमम् ॥१०१॥
पुष्करं त्र्यम्बकं रामेश्वरं तथा च नार्मदम् ।
वृन्दावनं सिद्धसारस्वतं द्वारवतीस्थलम् ॥१०२॥
प्रभासं कुंकुमवापीं रैवतं चेति मोहिनी ।
कृत्वा तीर्थानि वसुना सहाऽऽयाता वसुस्थलम् ॥१०३॥
नारायणह्रदे स्नात्वा रुक्मांगदपुरे गता ।
रैवतपश्चिमे वस्त्रापथे नत्वा गिरेः स्थलीम् ॥१०४॥
ययौ वेधोगृहे सत्ये लोके तेनैव वर्ष्मणा ।
अदेहा वेधवासाऽस्ति कालाभिमानदेवता ॥१०५॥
मोहिनी विधिजा देवी विष्णुजैकादशी तिथिः ।
विष्णुजास्पर्द्धया धात्रा मोहिनी सा विनिर्मिता ॥१०६॥
स्पर्द्धन्त्येकादशीं चेयं दशम्यन्ते स्थिता सदा ।
इति ते कथितं लक्ष्मि ! विद्धायाः कारणं मया ॥१०७॥
तदर्थं निर्मिता धात्रा मोहिनी तत्र वेशिता ।
सूक्ष्मदेहा व्रतहन्त्री किमन्यच्छ्रोतुमिच्छसि ॥१०८॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने ब्रह्माण्डे वासमलभमानया मोहिन्याऽर्थितेन ब्रह्मणा वसुना च व्रतपूर्वतिथिप्रान्ते दत्तवासं लब्ध्वा सा यमलोकसुरलोकब्रह्मलोकादि-प्रवाहफलवती विद्धाशुद्धादिप्रयोजयित्री च पुनः सदेहा देवता जातेत्यादि-निरूपणनामा द्वानवत्यधिक-द्विशततमोऽध्यायः ॥२९२॥

**श्रीलक्ष्मीरुवाच—**

मासास्तु द्वादश प्रोक्तास्तेषु व्रतदिनानि च ।
तेभ्योऽधिकोऽपि त्रयोदशः सार्धद्वयवार्षिकः ॥ १ ॥
चान्द्रपूर्णत्वसम्पाद्यो भवतीति तदीयकम् ।
इतिवृत्तं विधिं देवं सर्वं श्रोतुं समुत्सहे ॥ २ ॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! कथां दिव्यां पुरुषोत्तमयोगिनीम् ।
चान्द्रमासे यत्र सूर्यसंक्रान्तिर्नहि जायते ॥ १ ॥
एकराशिप्रभोगस्थोऽर्को न संक्रमतेऽपरे ।
सूर्यसंक्रान्तिशून्योऽयं मासोऽधिकतया मतः ॥ २ ॥
मध्येऽमावास्ययोश्चान्द्रमासः पूर्णः प्रजायते ।
सौरमासस्तु संक्रान्त्योर्मध्ये पूर्णः प्रजायते ॥ ३ ॥
चान्द्रमासे सावनाहान्येकोनत्रिंशदित्यथ ।
षड्विंशतिघटिकाश्च पञ्चाशत्पलिकास्तथा ॥ ४ ॥
भुज्यन्तेऽथ च सौरे तु त्रिंशदहानि वै तथा ।
षड्विंशतिश्च घटिकाः पलान्येकोनविंशतिः ॥ ५ ॥
विपलान्येकत्रिंशच्च द्वापंचाशत्क्षणानि च ।
प्रभुज्यन्ते तयोश्चान्द्रे यः कालः शिष्यतेऽर्कितः ॥ ६ ॥

तेषां तु शिष्टकालानां समवाय प्रजायते ।
पूर्णस्त्रयोदशश्चान्द्रमासोऽयं त्वधिको मतः ॥ ७ ॥
द्वात्रिंशत्सौरमासेषु षोडशाहाधिकेषु तु ।
त्रयस्त्रिंशच्चान्द्रमासाः षोडशाहाधिकाः खलु ॥ ८ ॥
निष्पद्यन्तेऽधिको मासश्चान्द्रः सोऽयं मतोऽधिकः ।
पंचवर्षेष्वधिमासौ द्वौ चान्द्रौ प्रायशो मतौ ॥ ९ ॥
अधिमासः पुनः सोऽष्टवर्षे वैकोनविंशतौ ।
एकचत्वारिंशदधिके शते वा स एति वै ॥१०॥
स एवायाति चेत्येवं प्रायशो नियमोऽस्ति हि ।
सोऽयं पुण्यप्रकार्यार्थे निश्चितो मुनिभिः पुरा ॥११॥
शृणुष्वैनां कथां लक्ष्मि ! नौ गेहाद्युद्भवाऽस्ति सा ।
मलमासस्त्वयं प्रोक्तो मलशेषात्मसंचयः ॥१२॥
पुरुषोत्तमसंयोगात् पुरुषोत्तमसंश्रयात् ।
पुरुषोत्तममासोऽयं देवोऽस्य पुरुषोत्तमः ॥१३॥
कृष्णनारायणः श्रीमान् परब्रह्म परात्परः ।
ब्रह्ममुक्तैः सदा सेव्यो भगवानक्षराधिपः ॥१४॥
अवतारस्वरूपाणामवतारी हरिः स्वयम् ।
यस्माद् व्यूहाः प्रजायन्ते वासुदेवादयोऽखिलाः ॥१५॥
यस्माद् गोलोकधामाद्याः प्राविर्भवन्ति चाश्रयाः ।
यत्र सर्वपराकाष्ठा यत्र सर्वं प्रतिष्ठितम् ॥१६॥
यस्मात् प्रकाशते सर्वं यन्मयं जडचेतनम् ।
सोऽयं श्रीभगवान् राजाधिराजः परमेश्वरः ॥१७॥
पुरुषोत्तममासस्याधिदेवः पुरुषोत्तमः ।
अक्षरे परमे व्योम्नि मुक्तमण्डलसेवितः ॥१८॥
अनाथं मलमासं तु दृष्ट्वा कृपावशः प्रभुः ।
स्वीचकार शरण्यस्तं शरणागतमेव सः ॥१९॥
अधिष्ठानतया तस्य ततोऽक्षरसमानताम् ।
प्राप्तः श्रीमलमासस्तु निर्मलः पुरुषोत्तमः ॥२०॥
सर्वे मासाः प्रथमं तु गर्जन्ति स्म मुहुर्मुहुः ।
नाऽस्मादृशं किंचिदस्ति तारकं भुवनत्रये ॥२१॥
किन्तु श्रीहरिणा यावन्मलमासस्त्वधिष्ठितः ।
ततो द्वादशमासास्ते बभूवुर्भग्नगर्वकाः ॥२२॥
किं वक्तव्यं महालक्ष्मि ! यत्र नारायणः स्वयम् ।
प्रसन्नस्तिष्ठते तस्य भाग्यं पुण्यं कथानकम् ॥२३॥
अन्यमासकृतात्पुण्याज्जपाद्धोमात्प्रदानकात् ।
अनन्तगुणकं त्वत्र कृतं भवति सर्वथा ॥२४॥
मासोऽयमधिकः सर्वपुण्याऽऽधिक्यप्रदो मतः ।
गयागंगाहरिद्वारपुष्करादिषु यत् कृतम् ॥२५॥
तत्कृतस्याऽधिके मासे फलं भवति शाश्वतम् ।
कुरुक्षेत्रे ग्रहणे यत्स्नानस्य फलमाप्यते ॥२६॥
गयायां पिण्डदानस्य पितॄणां तृप्तिरस्ति या ।
तत्फलं तादृशी तृप्तिरधिमासस्य सेवनात् ॥२७॥
जगन्नाथपुरे स्याद् यद् रथयात्राफलं महत् ।
पुरुषोत्तममासे तत्फलं त्वाप्लवनाद् भवेत् ॥२८॥
यत्फलं सरयूस्नानात् साकेते तीर्थदर्शनात् ।
तत्फलं त्वधिके चाद्यदिने स्नानाद्धि जायते ॥२९॥
यत्फलं द्वारिकायां तु गोमतीसागराप्लवे ।
तत्फलं मलमासे स्यात् प्रतिपत्स्नानमात्रतः ॥३०॥
यत्फलं बदरीक्षेत्रे स्वर्णद्यां स्नानतो भवेत् ।
मलमासाऽऽद्यदिवसेऽधिकं स्यात्स्नानतः फलम् ॥३१॥
यत्फलं दक्षिणे वार्धौ रामसेतौ जलाप्लवात् ।
मलमासेऽधिकं स्नानात् ततः स्यात्प्रथमे दिने ॥३२॥
यत्फलं रैवते स्वर्णरेखायां स्नानतो भवेत् ।
प्रभासे यत्फलं वा सन्निधावाप्लवनाद्भवेत् ॥३३॥
ततोऽधिकफलं त्वाद्यदिने स्नानेऽधिकस्य च ।
यत्फलं कुंकुमवाप्यामश्वपट्टसरोवरे ॥३४॥
ततोऽधिकफलं त्वाद्यदिवसेऽधिकमासिनः ।
नर्मदायां शुक्लतीर्थे ओंकारेश्वरतीर्थके ॥३५॥
पुष्करे पश्चिमे नारायणे सरसि यत्फलम् ।
तडागे मानसे चापि प्रयागे चापि यत्फलम् ॥३६॥
यमुनायां मथुरायां गण्डक्यां चापि यत्फलम् ।
यत्फलं च हरिशंभुक्षेत्रे कपिलवारिधौ ॥३७॥
गोदावर्यां तथा कुंभलग्ने कृष्णाजले च यत् ।
सिन्धौ ताम्रपर्णिकायां कावेर्यां चापि यत्फलम् ॥३८॥
महोदये तथा सोमाऽमायां पर्वणि पट्टने ।
स्नानेन यत्फलं यद्यत्त्वाद्येह्नि स्नानतोऽत्र तद् ॥३९॥
पुरुषोत्तममासस्य प्रथमायां समाहितः ।
ब्राह्मे मुहूर्ते सञ्चिन्त्य श्रीकृष्णं पुरुषोत्तमम् ॥४०॥
स्नायान्नद्यां तडागे वा सरसि प्रस्रवे गृहे ।
कूपे वाप्यां प्रवाहे वा तत्पुण्यं शाश्वतं भवेत् ॥४१॥
नहि लोकेऽधिकमाससदृशं पापनाशकम् ।
पुण्यार्जकं तथा त्वन्यत् स्वर्गमोक्षप्रदं परम् ॥४२॥
पूर्णिमायां चाद्येऽहनि त्वमावास्यादिनेऽपि च ।
एकादशेऽन्तिमे चापि मासेऽह्नि पुरुषोत्तमे ॥४३॥
स्नानेन सदृशं त्वन्यत्त्वखण्डपुण्यकृन्नहि ।
तेषु स्नानेन वै लोका निर्धूय पापपुञ्जकम् ॥४४॥

जायन्ते पुण्यपुञ्जेन पारावारसमा भुवि ।
स्नानमात्रेण वै स्वर्गं कोटिकल्पात्मकं मिलेत् ॥४५॥
हरेस्तु पूजनात्तत्र वैकुण्ठं शाश्वतं व्रजेत् ।
पुरुषोत्तमनैवेद्यदाने मुक्तिचतुष्टयम् ॥४६॥
लभतेऽत्र न सन्देहः श्रीकृष्णो वदति स्वयम् ।
कृष्णनारायणः सर्वं लक्ष्मीयुक्तं ददाति वै ॥४७॥

मलमासाऽऽद्यदिवसे स्नातुश्चार्चयितुस्तथा ।
स्वत्वं श्रीकृष्णवद्धाम्नि गोलोकेऽस्य प्रवर्तते ॥४८॥
पूर्णिमायाममायां वा प्रातः स्नानं सरित्सु चेत् ।
क्रियतेऽवभृथतुल्यफलं विष्णुक्रतोर्मतम् ॥४९॥
मध्याह्ने चेत्कृतं स्नानमश्वमेधान्तपुण्यदम् ।
स्नानं सायं वाजपेययज्ञस्य फलदं भवेत् ॥५०॥

स्नात्वा व्रती हरिं कृष्णनारायणं सुवर्णजम् ।
आवाहयेत् तथा पंचामृतैः संस्नापयेच्छनैः ॥५१॥
एकादशीकृतं पुण्यं मलमासे तु पर्वणि ।
स्नानमात्रेण भवति किमन्यत् तत्कृतं पुनः ॥५२॥
लक्षगवां महिषीणामयुतस्य शतस्य तु ।
वारणानां च दानेन कुरुक्षेत्रे तु यत्फलम् ॥५३॥
लक्षाश्वानां तथा दानाद्यत्फलं कौरवे स्थले ।
प्रातःस्नानान्मलमासे तत्फलं प्रतिपत्तिथौ ॥५४॥
द्वादशानां तु मासानां पापानि मलमुच्यते ।
मलप्रक्षालनशक्तो मलमासः कृतोऽस्ति वै ॥५५॥

स्नापयेच्छ्रीकृष्णनारायणं पञ्चामृतैस्ततः ।
शुद्धोदकैस्तैलसारैर्मर्दयित्वा पुनः पुनः ॥५६॥
स्नापयेद् वै ततो वस्त्रैर्मार्जयेत् पुरुषोत्तमम् ।
पीताम्बरं चोत्तरीयं स्वर्णप्रान्तं समर्पयेत् ॥५७॥
किरीटं कुण्डले चापि चन्दनं कुंकुमं तथा ।
कज्जलं कण्ठहारॉश्चोर्मिकाश्च कंकणानि च ॥५८॥
पुष्पहारान् रशनाश्चाऽऽभूषणान्यम्बराणि च ।
द्रव्याऽलंकारभूषाश्च समर्प्य प्रपूजयेत् ॥५९॥

धूपं दीपं तथाऽऽपीडान् शेखरान् मालिकास्तथा ।
गुच्छं कन्दं स्वर्णयष्टिं छत्रं च चामरेऽर्पयेत् ॥६०॥
नैवेद्यानि सुमिष्टान्नपक्वान्नानि फलानि च ।
मृष्टस्वादूनि पेयानि ताम्बूलानि जलानि च ॥६१॥
समर्पयेत्ततो नीराजयेत् क्षमां तु याचयेत् ।
प्रदक्षिणां नमस्कारं दण्डवच्च स्तुतिं चरेत् ॥६२॥
पुष्पाञ्जलिं प्रदत्वैव श्रीहरिं पुरुषोत्तमम् ।
प्रार्थयेन्मलमासस्य व्रतस्य पूर्तये मुहुः ॥६३॥

उपोषणान्येकभुक्तं नक्तं फलाशनं च वा ।
करिष्ये मलमासे तद्व्रतं ते कृपया प्रभो ॥६४॥
निर्विघ्नं पूर्णतां यायादिति तुष्टो हरे कुरु ।
स्नानं तीर्थेऽथवा कूपे गृहे नद्यां प्रगेऽन्वहम् ॥६५॥
दानं पूजां यथाशक्ति करिष्ये पुरुषोत्तम ! ।
तत्सर्वं भजनं चापि निर्विघ्नं मे भवेदिति ॥६६॥

कृपां कुरु महाराजाऽऽलस्यं नाशय देहतः ।
मानसानि मलान्यत्र प्रक्षालय प्रभावतः ॥६७॥
आत्मीयानि च पापानि प्रज्वालय परेश्वर ।
आत्ममुक्तिं च मे देहि पुरुषोत्तम केशव ॥६८॥
कृष्णनारायण स्वामिन् लक्ष्मीनाथ प्रभापते ।
पार्वतीमाणिकीस्वामिन् सम्पत्कुरु गृहे मम ॥६९॥

एवं सम्प्रार्थ्य देवेशं स्वापयेद्वा विसर्जयेत् ।
मध्याह्ने भोजयेत् सायं भोजयेत् पूजयेत् तथा ॥७०॥
नीराजयेच्च दोलायां गुरुं त्वान्दोलयेद्धरिम् ।
बालकृष्णं कृष्णनारायणं हरिनरायणम् ॥७१॥
रमयेद्वा जले रम्ये तूद्याने भवनेऽपि वा ।
नृत्यं गीतं सवाद्यं च कारयेत् तत्समीपतः ॥७२॥
अन्नवस्त्रजलपुष्पफलदानानि वै ददेत् ।
भोजयेद् बालकान् साधून् विप्रान् गोग्रासमर्पयेत् ॥७३॥
कृष्णनारायणवार्तां पुरुषोत्तमाःकथाम् ।
लक्ष्मीनारायणसंहिताकथां वाचयेद्व्रती ॥७४॥

मालां कृष्णहरिकृष्णकृष्णनारायणाभिधैः ।
कुर्याज्जपं च भजनं स्मरणं कीर्तनं मुहुः ॥७५॥
वन्दनं दासतां सेवां पादयोश्चापि मर्दनम् ।
मार्जनं परिचर्यां क्षालनं विष्णुग्रहस्य च ॥७६॥
गुरोः सेवां प्रकुर्वीत व्रतपुष्टिकरीं शुभाम् ।
गुरौ तुष्टे व्रतं पूर्णं भवेद्वै मनसेप्सितम् ॥७७॥
फलेत्सर्वं प्रसंपूर्णं स्वर्गमोक्षादिदायकम् ।
गौरीः साध्वीः सतीर्बालान् बालिकाः सधवाऽधवाः ॥७८॥

अनाथाऽनाश्रिताः संभोजयेद् दानानि संददेत् ।
गृहं दद्याजीविकां च क्षेत्रं वाटीं च वेतनम् ॥७९॥
साहाय्यं विविधं दद्याद् यथा सन्तोषमाप्नुयात् ।
संफलेत् तेन वै मासः पुरुषोत्तमसंज्ञकः ॥८०॥
नित्यं वै मन्दिरे दद्याद् देवाय जलगाः शुभाः ।
आमान्नानि च शाकानि लवणं शर्करादिकम् ॥८१॥
फलानि तण्डुलान् मुद्गान् द्विदलाघृतवर्तिकाः ।
घृतं तैलं निवारॉश्च मरीचकान् सुजीरकम् ॥८२॥

शुण्ठीश्च मेथिका दद्याद् दधि दुग्धं च तक्रकम् ।
पत्राणां भाजिकां खर्जूरकं श्रेष्ठं सुराजिकाम् ॥८३॥
भूमिकन्दान् बदामाँश्च काष्ठानि मृत्तिकास्तथा ।
इष्टिका वंशपात्राणि धातुपात्राणि मृद्घटान् ॥८४॥
घासग्रासान् गवाद्यर्थे पारावातेभ्य इत्यपि ।
कणान् दद्यात्पिपीलिकाद्यर्थे पिष्टादिकं तथा ॥८५॥
जलस्थेभ्यश्चणकाँश्च श्वादिभ्यो रोटकाँस्तथा ।
जलं तु वृक्षवल्लीभ्यो दद्याच्छ्रीपुरुषोत्तमे ॥८६॥
पिप्पलेभ्यो बर्बुरेभ्यो जलं दद्याच्छिवोपरि ।
बिल्वेभ्यः श्रीफलेभ्यश्च वटेभ्यो जलमर्पयेत् ॥८७॥
तुलसीभ्यः कमलेभ्यः पुष्पवल्लीभ्य इत्यपि ।
जलं खाद्यं प्रदद्याच्च कुर्याद्वृत्तिं सुरक्षिकाम् ॥८८॥
एवं दानानि वस्त्राणां वस्तूनां चापि कारयेत् ।
भूशायी ब्रह्मचारी च शान्ते भूत्वाऽधिके पुनः ॥८९॥
मासे वै साधुवद्भूत्वा साध्वीवच्च व्रतान्वितः ।
ऐहिकं त्वात्मनः कुर्यात्पुण्यं परं च मोक्षणम् ॥९०॥
पतिः पत्नी च दासी च सुतः सुता च बान्धवाः ।
बन्धुपत्न्यो जनन्यश्च पितरश्च पितामहाः ॥९१॥
माता मातामही चापि बालाश्च बालिकाश्च याः ।
शिष्या स्वसा चाश्रिताश्च प्राघूर्णिकाः समाश्रिताः ॥९२॥
ये च गृहे जनाः स्वस्याऽभिजनाश्च कुटुम्बिनः ।
सर्वे ते वै व्रतं कुर्युः पुरुषोत्तममासि तु ॥९३॥
एकभक्तेन नक्तेन फलेनाऽयाचितेन वा ।
जलेन पयसा दध्ना निवारादिभिरेव वा ॥९४॥
शाकेन भर्जितेनापि देहयात्रां विधाय च ।
पुरुषोत्तममासस्य व्रतं कुर्युस्तु शक्तितः ॥९५॥
एकान्नेनाऽथवा कुर्याद्भिक्षान्नेनापि सर्वथा ।
उञ्छवृत्त्याऽथवा कुर्यादाजगर्याऽथवा चरेत् ॥९६॥
देवान्नं वा ग्रसेत्सायं पूजयित्वा जनार्दनम् ।
देवानां दर्शनं नित्यं साधूनां चरणामृतम् ॥९७॥
पेयं धार्यं मस्तके च धूल्यामालुण्ठनं तथा ।
हरेः पादोदकं पेयं स्त्रिया पुंसा व्रते सदा ॥९८॥
पर्यंकाऽशयनं कार्यं कामक्रोधविवर्जनम् ।
क्षौरविवर्जनं कार्यं मैथुनस्य विवर्जनम् ॥९९॥
रसनायास्तपः कार्यं त्यागः प्राप्ताऽर्जितस्य च ।
नार्या तु स्पर्शनं पुंसः पुंसा स्पर्शश्च योषिताम् ॥१००॥
त्याज्यो वै सर्वथा मासेऽधिके श्रीपुरुषोत्तमे ।
गृहाद्बहिर्न गन्तव्यं तीर्थार्थे गम्यमेव वा ॥१०१॥

वाटिकायां समुद्याने वस्तव्यं क्षेत्रके तथा ।
वनेऽरण्ये दैवभूमौ साधुमध्ये सतीजने ॥१०२॥
त्यागिभूमौ निवासश्च तीर्थतटेऽथ सीम्नि वा ।
पर्णशालोत्तमायां वा व्योम्नि वासोऽधिके मतः ॥१०३॥
श्रवणं कीर्तनं कृष्णनारायणस्य वै स्मृतिः ।
पादयोः सेवनं चापि पूजनं वन्दनं तथा ॥१०४॥
दास्यं चात्मात्मीयवस्त्वर्पणं कृष्णविचिन्तनम् ।
एवमादिक्रियारूपां भक्तिं कुर्यान्मलेऽधिके ॥१०५॥
मं मुक्तिं लाति गृह्णाति मलोऽयं मास उच्यते ।
मा माया लीयते येन मलोऽयं मास ईरितः ॥१०६॥
मां लक्ष्मीं माति यो मासस्तस्मान्मलः प्रकीर्त्यते ।
पुरुषोत्तमनाम्मो वै मकारस्त्वन्त्यवर्णकः ॥१०७॥
लक्ष्म्याश्चाद्याक्षरो लोपि'मलः' कृष्णः श्रिया युतः ।
मं मलं लीयते येन मलक्षालनको हरिः ॥१०८॥
मलमासे कृतं यद्यद्दानं पुण्यं तदीयकम् ।
कं सुखं जायते चाध्यधिकं ह्यधिकमासि हि ॥१०९॥
यत्र नारायणः कृष्णः प्रत्यहं तु गृहे गृहे ।
व्यवस्थितः शुभां पूजां गृह्णाति पुरुषोत्तमे ॥११०॥
मासेऽत्र रमया लक्ष्म्या पार्वत्या प्रभया तथा ।
माणिक्यया कृष्णनारायणः श्रीपुरुषोत्तमः ॥१११॥
गोलोकाच्चापि वैकुण्ठादव्याकृताच्च धामतः ।
भुवनेऽत्र समायाति लोकानां दर्शनाय वै ॥११२॥
सत्कर्माण्यर्चनादीनि पूजनानि व्रतानि च ।
के कुर्वन्ति च मे मासे स्नानं पूजां प्रदानकम् ॥११३॥
एवं देवः सदा प्रातर्व्योममार्गेण पश्यति ।
दृष्ट्वा स्नातॄन् भक्तिकर्तॄन् देवग्रहस्य च ॥११४॥
दातॄन् संपालयितॄँश्च नियमानां नरान् प्रियाः ।
विलोक्य दिव्यदृष्ट्या श्रीसहितः पुरुषोत्तमः ॥११५॥
प्रसन्नो भवति श्रेयः कर्तुं यातुं च तद्गृहे ।
स्थातुं चिरं श्रियै कृष्णः प्रदिशत्यति तोषितः ॥११६॥
पुरुषोत्तममासस्य व्रतिनां भवनानि वै ।
सर्वसमृद्धिप्रपूर्णानि कुरु लक्ष्मि ! ममाऽऽग्रहात् ॥११७॥
मलमासाऽवमन्तॄणां गृहे वासो च मा तव ।
यत्र नास्ति ममाऽऽवासस्तत्र तेऽपि च माऽस्तु सः ॥११८॥
इत्यादिश्य हरिः प्रातस्ततो मध्याह्नकेऽपि च ।
नैवेद्यं त्वर्पितं लब्ध्वा पुनर्याति स्वधाम वै ॥११९॥
सायं पुनः स्वपत्नीभिः समायाति हरिः स्वयम् ।
आरार्त्रिकादिकां सेवां त्वंगीकर्तुं गृहे गृहे ॥१२०॥

घृतदीपं तथा धूपं पुष्पं जलं सुभोजनम् ।
सर्वं प्राप्य स्वकं धाम विसर्जितः प्रयाति सः ॥१२१॥
नित्यं मासेऽधिके ह्येवं पश्यति श्रीहरिर्विभुः ।
भक्तानुकम्पया तस्मात् पूज्यौ श्रीपुरुषोत्तमौ ॥१२२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने श्रीपुरुषोत्तममासमाहात्म्ये तदाद्यदिवसीयव्रततपोदान-स्नानाराधननियमादिकर्तव्यतानिरूपणनामात्रिनवत्य-धिकद्विशततमोऽध्यायः ॥ २९३ ॥

**श्रीनारायण उवाच—**

पुरुषोत्तममासस्य स्वामी लक्ष्मि ! कृपानिधिः ।
पुरुषोत्तमसंज्ञो वै यथा जातो वदामि तत् ॥ १ ॥
एकदा पूर्णमासे श्रीनरनारायणाश्रमम् ।
समायाता दर्शनार्थं श्रीहरेर्मुनयस्तथा ॥ २ ॥
ऋषयो दिव्यविज्ञाना वेदवेदांगपारगाः ।
पत्नीव्रतो लोमशश्च मार्कण्डेयश्च नारदः ॥ ३॥
व्यासः पैलः सुमन्तुर्देवलोऽसितश्च काश्यपः ।
जाबालिः सुमतिर्याज्ञवल्क्यश्च पिप्पलायनः ॥ ४ ॥
वामदेवः सुतीक्ष्णश्च पर्वतो भृगुरंगिराः ।
आपस्तम्बः शरभंगः कपिलो रैभ्य आरुणिः ॥ ५ ॥
कात्यायनो रथीतरः ऋभुर्माण्डव्य एकतः ।
द्वितस्त्रितो ह्यगस्त्यो मुद्गलः क्रतुश्च गौतमः ॥ ६ ॥
कौशिको गालवो बभ्रुरत्रिः शक्तिर्बुधो वसुः ।
बोधायनः पृथुर्धूम्रः शंकुः संकृतिरार्तिहन् ॥ ७ ॥
कौण्डिन्यश्च शिनिर्विभाण्डकः पंकश्च धूमपः ।
जमदग्निः कणादश्च गर्गो मौनश्च भार्गवः ॥ ८ ॥
भरद्वाजः कर्कशश्च शतानन्दश्च शौनकः ।
विशालो विष्णुवृद्धश्च जर्जरश्च तनुर्जयः ॥ ९ ॥
पारः पाशधरः पूरो जंगमो जैमिनिर्मखः ।
उद्दालको महाषेण आमलकी च पिंगलः ॥१०॥
शाण्डीरकः प्रभुश्चात्रि करुणः श्वेतकेतुकः ।
रोमपादश्च कद्रुश्च जाबलिश्च्यवनः शमः ॥११॥
दीर्घतमाः पृथुश्रवाः श्वेताश्वतर आसुरिः ।
जैगीषव्यस्तथाऽऽवत्स्यो धर्मश्च भर्ग ऐश्वरः ॥१२॥
वसिष्ठश्च मरीचिश्च पुलहश्च पुलस्त्यकः ।
एते चान्ये सहस्राणि नरनारायणाश्रमम् ॥१३॥
समाजग्मुर्दर्शनार्थं ब्रह्मिष्ठाः शिष्यकोटिभिः ।
लोकानुग्रहकर्तारः परोपकृतिधर्मिणः ॥१४॥
नेमुर्नारायणं कृत्वा दण्डवत् जयघोषणाम् ।
निषेदुः पुरतः सर्वे सत्कृता ब्रह्मपारगाः ॥१५॥
ते च नारायणं शान्तं सौम्यं वल्कलधारिणम् ।
प्रसन्नवदनं तुर्यपुरुषार्थाश्रयं प्रभुम् ॥१६॥
अशेषदिव्यकल्याणगुणाऽऽनन्दपयोनिधिम् ।
ऊर्ध्वपुण्ड्रधरं दिव्यजटं दिव्यश्रियाऽऽश्रितम् ॥१७॥
दिव्यहारादिसंशोभं तुलसीमालिकाधरम् ।
परब्रह्म जपन्मालाकरं शरण्यमच्युतम् ॥१८॥
जितेन्द्रियं तपोमूर्तिं तेजश्चक्रान्वितराननम् ।
बदरीश्रितसर्वस्वं पश्यन्ति स्म समाधिवत् ॥१९॥
ततस्तत्र समायाताः सुराश्च पितरस्तथा ।
नद्यस्तीर्थानि सर्वाणि क्षेत्राणि च वनानि च ॥२०॥
अरण्यानि नगराणि सरांसि सागरास्तथा ।
सिद्धाश्च योगिनश्चापि समाजग्मुः सुहर्षिताः ॥२१॥
निराहाराः फलाहाराः फेनाहाराश्च केचन ।
वाताम्बुपर्णकाहाराः श्वासाहाराश्च केचन ॥२२॥
नारायणं द्रष्टुकामाः दृष्ट्वा शान्तिं परां ययुः ।
ते सर्वेऽपि प्रणेमुस्तं नारायणं महामुनिम् ॥२३॥
परे ब्रह्मणि संलग्नं प्रास्फुरद्बहुलप्रभम् ।
दृष्ट्वा निषेदुस्ते सर्वे पुरतः श्रीहरेस्ततः ॥२४॥
युगाश्च सन्धयः संवत्सराश्च ऋतवस्तथा ।
समाययुस्तथा मासाः पक्षा दिनानि रात्रयः ॥२५॥
कलाकाष्ठामुहूर्तानि घटिकाः प्रहरास्तथा ।
समाययुः कुटुम्बाढ्याः सस्वामिनः सुमूर्तयः ॥२६॥
तत्र वै कार्तिको लक्ष्मीनारायणाधिदैवतः ।
मार्गशीर्षो रमावासुदेवाधिदैवतोऽपि च ॥२७॥
पौषः संक्रान्तिशक्तिश्रीविष्णवाख्यादित्यदैवतः ।
माघो वसन्तविजयामाधवाधिसुदैवतः ॥२८॥
फाल्गुनश्च महारात्रिलक्ष्मीब्रह्माधिदैवतः ।
चैत्रस्तु पार्थिवीशक्तिसीताश्यामाधिदैवतः ॥२९॥
वैशाखो हेतियुग्दुर्गालक्ष्मीनृसिंहदैवतः ।
ज्येष्ठो गंगामहालक्ष्मीत्रिविधिक्रमाधिदैवतः ॥३०॥
आषाढश्च महाविद्यालक्ष्मीव्यासाधिदैवतः ।
श्रावणो वार्षिकीदोलारमाकृष्णाधिदैवतः ॥३१॥
भाद्रपदो महागौरीवामनब्रह्मदैवतः ।
आश्विनः शारदालक्ष्मीनारायणाधिदैवतः ॥३२॥
राजन्ते स्म नरनारायणाश्रमे तु सेश्वराः ।
न तेषां कश्चिदप्यस्ति ह्यपूर्वः स्वामिवर्जितः ॥३३॥

स्वस्वामियोगमाहात्म्यात्सर्वे सौभाग्यशालिनः ।
वर्तन्ते स्वस्वाधिकारे सर्वेभ्यः फलदायिनः ॥३४॥
ततः पश्चात् समायातो मलमासो निरीश्वरः ।
अधिकः पुच्छवत्पश्चाल्लग्नः सर्वैर्जुगुप्सितः ॥३५॥
कृष्णवर्णो मलिनश्च पानभोजनवर्जितः ।
स्नानपूजाविहीनश्चाऽस्पृश्यः सर्वैस्तिरस्कृतः ॥३६॥
तमूचुः सकलास्तत्र ह्यनाथं च जुगुप्सितम् ।
अनर्हो मलमासोऽयं सूर्यसंक्रमवर्जितः ॥३७॥
अस्पृश्यो मलरूपत्वाच्छुभे कर्मणि गर्हितः ।
उद्योगविलयो नष्टलाभो भाग्यविवर्जितः ॥३८॥
समायातः कुतश्चैनं दूरे कुर्वन्तु सेश्वराः ! ।
दक्षश्चन्द्रमसे प्रादात् सप्तविंशतिकन्यकाः ॥३९॥
ततश्चायं समुत्पन्नस्तासां मलोऽयमस्ति वै ।
तासामुच्छिष्टरूपोऽयं समुत्पन्नस्त्रिदोषकृत् ॥४०॥
सार्धद्विवर्षदोषान्तमलोऽयं त्वपसार्यताम् ।
श्रुत्वैतद्वचनं तेषां चिन्ताग्रस्तैकमानसः ॥४१॥
मुमूर्षुरभवत्तेन हृदयेन विदूयता ।
दूरं चाऽस्पृश्यवत्तस्थौ पश्यन्मां बदरीस्थितम् ॥४२॥
ते सर्वे दर्शनं कृत्वाऽभवन्समाधिनिष्ठिताः ।
मलो धैर्यं समालम्ब्य मदीयकरसंज्ञया ॥४३॥
प्राप्तो वैकुण्ठभवनं यत्राऽहमवसं रमे ! ।
उद्धारार्थं समागत्य मामसौ दृष्टवांस्ततः ॥४४॥
रुदन् संभग्नहृदयो दण्डवत्पतितो भुवि ।
प्रांजली रुद्धनेत्रोऽसौ बभाषे स्वहितं वचः ॥४५॥
अपि नाथ कृपासिन्धो दीनानां शरणप्रद ! ।
दीनं तिरस्कृतं चान्यैर्मलं मां रक्ष चागतम् ॥४६॥
निरीश्वरं च मलिनं वर्जितं शुभकर्मसु ।
सदैवतैर्बहिर्नीतं दीनवत्सल रक्ष माम् ॥४७॥
सत्यव्रतो गजेन्द्रश्च धर्मः सुरेश्वरादयः ।
अविता भविता विष्णो रक्ष मां परमेश्वर ॥४८॥
इत्युक्त्वाऽऽविलचक्षुष्को मौनमास्थाय निम्नदृक् ।
बभूव तादृशं वीक्ष्य कृपापूर्णो हरिर्जगौ ॥४९॥
वत्स ! भग्नमना मा भूरुद्धरिष्यामि मा शुचः ।
वद दुःखं वारयामि न वै शोचितुमर्हसि ॥५०॥
न मे शरण्यमापन्नो दुःखलेशाय कल्प्यते ।
अशोकाऽऽनन्दवैकुण्ठं प्राप्तस्त्वं नासि शोकभाग् ॥५१॥
मलमासः समाश्वासं लब्ध्वोवाच नमन् हरिम् ।
सर्वज्ञोऽस्यन्तरात्माऽसि वेत्सि सर्वं यथातथम् ॥५२॥
वच्मि तथापि ते नाथ दुःखं मृत्युसमं मम ।
कला काष्ठा मुहूर्ताश्च घटिका दिवसाः समाः ॥५३॥
पक्षा मासा युगाः सर्वे मोदन्ते स्वाम्यधिष्ठिताः ।
पर्युषितान्ममोत्पत्तिरुच्छिष्टाच्छिष्टकच्चरात् ॥५४॥
मालिन्यं मलरूपत्वमस्पृश्यत्वमसत्कृतिः ।
अस्वाम्यत्वमवमानमशुभत्वं सदा मम ॥५५॥
अकार्यकत्वमफलित्वं मे नाऽधिकृतिः क्वचित् ।
ऋषिदेवाऽधिदेवाद्यैर्बदर्याश्रममागतैः ॥५६॥
मासादिभिर्भर्त्सितश्चाऽस्पृश्यीकृतो निराकृतः ।
कर्महीनीकृतश्चैव तर्जितः सर्वथाऽर्दितः ॥५७॥
तस्माद्विनष्टुमिच्छामि वरं मृत्युः कुजीवनात् ।
परदुःखाऽसहिष्णुस्त्वं तूपकारी पुमुत्तमः ॥५८॥
कुरु श्रेयो मम नाथाऽन्यथा तु पामरोऽगुणः ।
मरिष्यामि मरिष्यामि मरिष्यामि न संशयः ॥५९॥
इत्युक्त्वा पादयोः श्रीनारायणस्य पपात सः ।
पाहि पाहि जगन्नाथ पाहि कृष्ण रमापते ॥६०॥
पाहि लक्ष्मीपते नाथ शरणं मामुपागतम् ।
इत्युक्तवन्तं श्रीकृष्णो वैकुण्ठनिलयो हरिः ॥६१॥
प्रोवाचोत्तिष्ठ भद्रं ते शोकं मा कुरु पश्य माम् ।
समागच्छ मया सार्धं गोलोकाधिपतिं प्रभुम् ॥६२॥
कृष्णनारायणं गोपीवृन्दस्थं पुरुषोत्तमम् ।
निनादयन्तं मुरलीं द्विबाहुं श्यामसुन्दरम् ॥६३॥
कंजनेत्रं पार्वणेन्दुमुखं कन्दर्पधामकम् ।
पीताम्बरं वनमालामणिकौस्तुभभूषणम् ॥६४॥
चन्दनोक्षितवक्षस्कं कस्तूरीतिलकाऽन्वितम् ।
सद्रत्नाढ्योर्मिकायष्टिकिरीटकुण्डलान्वितम् ॥६५॥
श्रीवत्सशोभितवक्षःस्थलं सिंहासनस्थितम् ।
गोपगोपीगणाकीर्णं पुराणपुरुषोत्तमम् ॥६६॥
गच्छावः स हरिः कृष्णस्त्वद्दुःखं व्यपनेष्यति ।
इत्युक्त्वा तं करे धृत्वा गोलोकं गतवान् हरिः ॥६७॥
लक्ष्मीनारायणः श्रीमान् पूजासामग्रिकायुतः ।
श्रीकृष्णार्थं राधिकार्थं वस्तूनि विविधानि च ॥६८॥
रत्नानि भूषणानि वस्त्राणि श्रांगारिकाणि च ।
सुगन्धद्रवरम्याणि पेयानि भोजनानि च ॥६९॥
फलानि मुखवासानि दिव्यस्वर्णादिकानि च ।
असंख्योपकरणानि राजयोग्यानि वै प्रभुः ॥७०॥
सह नीत्वा तु गोलोकं प्राप्तौ कृष्णनरायणम् ।
विरजायां च तौ स्नातौ शतशृंगं गतौ च तौ ॥७१॥

मलमासमलान्यत्र नष्टानि विरजाऽऽप्लवात् ।
मलमासद्वितीयायां तिथौ स्नातुर्मलानि वै ॥७२॥
बहुजन्मोपार्जितानि नाशमेष्यन्ति मूलतः ।
विरजास्नानपुण्यं च प्राप्स्यन्ते व्रतिनो जनाः ॥७३॥
स्नानमात्रेण गोलोकप्राप्तिः स्यान्नात्र संशयः ।
रासमण्डलभूमिं चाऽऽलोक्य वृन्दावनादिकम् ॥७४॥
धूलीं च मस्तके कृत्वाऽक्षयभाण्डीरसद्वटौ ।
विलोक्य मुख्यदुर्गे च प्रविश्य गोपिकाश्रिताम् ॥७५॥
वसतिं षोडशगोपुराभ्यन्तरनिवासिनीम् ।
ययतुश्च भवनान्तः राधाकृष्णसन्नीपतः ॥७६॥
विलोक्य दिव्यं युगलं चक्रतुर्दण्डवच्च तौ ।
नेमतुः पादयोर्द्वाभ्यां प्रसन्नाभ्यां सभाजितौ ॥७७॥
सुसत्कृतौ यथायोग्यासने तौ तु निषेदतुः ।
नारायणं तदा कृष्णो हस्तेनादाय हर्षतः ॥७८॥
निमिमील तु बाहुभ्यां वक्षः कृत्वा च वक्षसि ।
नैजे सिंहासने नारायणं निषाद्य वै मुहुः ॥७९॥
हास्यप्रसन्नतायुक्तो जिज्ञासां कृतवान् प्रभुः ।
हेतुश्चागमने नारायणेन कथितस्तदा ॥८०॥
पूजितश्च ततो नारायणेन भगवान् स्वयम् ।
पञ्चामृतैः स्नापितश्च राधया सहितः प्रभुः ॥८१॥
दुग्धेन स्नापितः पश्चात्पयसा स्नापितः प्रभुः ।
वस्त्रेणाऽऽवर्तितः पश्चादर्चितश्चन्दनादिभिः ॥८२॥
श्रृंगारितो विभूषाभिर्दिव्यवस्त्राद्यलंकृतः ।
सधूपदीपाऽऽरार्त्रिकप्रदक्षिणास्तवादिभिः ॥८३॥
सरत्नमणिसौवर्णस्थालोपदाभिरर्चितः ।
फलैः रसैर्भोजनैश्च विविधैस्तर्पितः प्रभुः ॥८४॥
राधिकाद्याः कृष्णपत्न्यो योग्योपदाभिरर्चिताः ।
शक्त्याऽपि मलमासेन श्रीकृष्णश्चार्चितस्तदा ॥८५॥
प्रसादं लब्धवान् मासो मलश्चाप्याशिषं सतीम् ।
श्रीकृष्णो राधया युक्तः प्राहाऽनुग्रहपूर्वकम् ॥८६॥
यथाऽहं पूजितश्चात्र द्वितीयादिवसे त्वया ।
तथा तव तिथौ लोके द्वितीयायां प्रगे निशि ॥८७॥
राधाकृष्णं यथाशक्ति पूजयिष्यन्ति ये जनाः ।
तत्सर्वं संग्रहीष्यामि राधया सहितस्तदा ॥८८॥
गोदुग्धेन द्वितीयायां स्नपनीयो विशेषतः ।
पञ्चामृतैर्जलैर्वापि सुवर्णमूर्तिकः प्रभुः ॥८९॥
सुवर्णाम्बरभूषाभिरलंकार्यो द्रवादिभिः ।
श्रृंगारिकोपकरणैरलंकार्यः सराधिकः ॥९०॥
धूपदीपादिभिः पूज्यः कंकणैर्मुकुटादिभिः ।
मिष्टान्नैस्तर्पणीयश्च रत्नभूषादिभिस्तथा ॥९१॥
अत्यर्थं पूजनीयोऽहं तृप्तो भवामि सर्वथा ।
दास्ये प्रत्युपदां तेभ्यो विविधाऽसंख्यसम्पदः ॥९२॥
यथा सन्ति मम लोके तथा दास्ये न संशयः ।
अन्ते दास्ये च गोलोकं समृद्धं सुखं च शाश्वतम् ॥९३॥
इत्याशीर्वादमादाय मलमासोऽपि भाग्यवान् ।
नारायणसमक्षं वै जातोऽधिकप्रतापवान् ॥९४॥
उवाच तु ततः कृष्णं त्वया भाग्येन वर्धितः ।
यथा सस्वामिको भूयासं तथा नाथ मे कुरु ॥९५॥
अज्ञानान्धतमोहर्तर्ज्ञानमार्गप्रदीपक ।
असंख्यगोलकोत्पत्तिविनाशादिप्रकारण ॥९६॥
योग्यदृश्य स्वभक्ताभिदृश्य दिव्यसुविग्रह ।
शंखचक्रगदापद्महेतिचतुर्भुजार्चित ॥९७॥
असंख्यराधिकालक्ष्मीसमपत्नीप्रसेवित ।
इन्दीवरदलश्याम पंकजारुणलोचन ॥९८॥
कोटिशारदपूर्णेन्दुशोभातिरोचनानन ।
कोटिमन्मथसौन्दर्यलीलाधाममनोहर ॥९९॥
श्रीवत्सवक्षःसंराजत्कौस्तुभहारराजित ।
सद्रत्नकोटिसन्नद्धकिरीटकटकोज्ज्वल ॥१००॥
भक्तमंगलकृद्विष्णो कृष्णनारायणप्रभो ।
निरस्याऽमंगलं सर्वं मम मंगलमावह ॥१०१॥
इति स्तुतस्तदा कृष्णः प्रसन्नोऽभूदुवाच ह ।
एतत्स्तोत्रप्रपाठेन सत्फलं प्राप्स्यते जनः ॥१०२॥
भक्तिर्भविष्यति कृष्णे पुत्रपौत्रविवर्धिनी ।
भविष्यत्यपकीर्तेश्च क्षयः कीर्तिर्भविष्यति ॥१०३॥
पूजायां यानि वस्तूनि त्वर्पितानि च तानि तु ।
लक्षगुणानि भक्ताय प्रदास्ये प्रवदाम्यहम् ॥१०४॥
अधिमासद्वितीयायां पूज्यश्चाऽहमनन्तकैः ।
दास्येत्वनन्तकं तस्मै यद्यदिष्टं व्रतार्थिनः ॥१०५॥
जलं वटाय दातव्यं भोज्यं विप्राय साधवे ।
शाटी कन्याप्रवर्यायै दातव्या फललब्धये ॥१०६॥
आमान्नानि च देयानि विष्णुभक्ताय साधवे ।
स्वर्णदानं प्रदातव्यं विद्यार्थिने च योषिते ॥१०७॥
द्वितीयायां प्रदातव्यं सर्वं वै द्विगुणं शुभम् ।
कोटिगुणं प्रपद्येत फलं चात्र परत्र च ॥१०८॥
इति कृष्णो वदन्नारायणं प्राह पुनः पुनः ।
नारायण हरे लक्ष्मीपते वैकुण्ठभास्कर ॥१०९॥

मलमासस्य वृत्तान्तं जानेऽहं सकलं विभो ।
भवता श्रीपतिना च कथितं तद्विशेषतः ॥११०॥
अयं त्वधिकमासोऽस्ति व्यपेतरविसंक्रमः ।
मलिनोऽयमनर्होऽस्ति शुभकर्मणि वर्जितः ॥१११॥
इतिमत्वा सुष्टिदेवैस्तिरस्कृतोऽपि मद्गृहम् ।
समायातो ह्यतश्चायं मलिनो नास्ति चाऽग्रतः ॥११२॥
दिव्योऽस्ति परिशुद्धोऽस्ति पूजनीयोऽस्ति सर्वथा ।
किन्तु तस्य भवेत् स्वामी कोऽग्र चात्र विचार्यताम् ॥११३॥
अन्येषामपि मासानां कृष्णः स्वामी भवाम्यहम् ।
भवानपि तथा स्वामी भवतीति विचार्यताम् ॥११४॥
तस्मात्त्रयोदशे मासि स्वामित्वं त्वावयोर्नहि ।
तदर्थं ननु गच्छामो यत्र श्रीपुरुषोत्तमः ॥११५॥
विराजते परे धाम्न्यक्षरे राजाधिराजकः ।
अवतारा असंख्याता यस्माद्भवन्ति मादृशाः ॥११६॥
गोलोकादिकधामानि यद्धामांशा भवन्ति वै ।
स विचार्यैव चैतस्य स्वामिनं कल्पयिष्यति ॥११७॥
अवतारी त्वनादिश्रीकृष्णः श्रीपुरुषोत्तमः ।
योजयिष्यति यं त्वस्मिन् सोऽस्य स्वामी भविष्यति ॥११८॥
इति विचार्य सहसा कृष्णोनारायणोऽधिकः ।
ययुस्त्रयोऽक्षरे धाम्नि यत्र श्रीपुरुषोत्तमः ॥११९॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पुरुषोत्तममासमाहात्म्ये बदरिकाश्रमे नरनारायणदर्शनार्थ-मृषिमुनिपर्वतनदीवृक्षवल्लीसुरसम्वत्सरमासादिभिरागतै-र्मलमासस्याऽस्पृश्यत्वेन तिरस्कारे कृते मलमासस्य वैकुण्ठगमनं तत्रत्यनारायणेन सह गोलोक-गमनं तत्रत्यश्रीकृष्णराधिकापूजनोत्तरं सभाग्यतां प्राप्याशीर्वादान् संगृह्याऽक्षर-ब्रह्मलोकं प्रति सस्वामिकत्वार्थं गमनमिति निरूपणनामा चतुर्नवत्यधिकद्विशत-तमोऽध्यायः ॥२९४॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! ययुः कृष्णो नारायणोऽधिमास्तथा ।
गोलोकादुपरि दिव्यव्योममार्गेण वै क्षणात् ॥ १ ॥
सच्चिदानन्दसन्दोहान्वितमक्षरधाम यत् ।
ब्रह्महृदे त्रयः स्नात्वा पुरुषोत्तमरूपिणः ॥ २ ॥
भूत्वाऽवलोकयन्तश्च मुक्तानां मण्डलानि ते ।
द्विभुजान्द्व्यष्टवर्षीयान् रूपानुरूपविग्रहान् ॥ ३ ॥
कोटिनारायणतुल्यान् रूपतेजःसुसिद्धिभिः ।
गोलोकादपि सौन्दर्यं तेषु कोटिगुणं च वै ॥ ४ ॥
वर्तते तादृशान् दृष्ट्वा पुरुषोत्तमरूपिणः ।
त्रय आश्चर्यसम्पन्ना बभूवुः कृष्टमानसाः ॥ ५ ॥
उद्यानानि च सौधानि मुक्तानामवलोक्य ते ।
विमानान्युपकरणान्यालोक्य विस्मयं गताः ॥ ६ ॥
अक्षरं वस्तु चालोक्य विरागोऽभूत् स्वधामसु ।
अक्षरधामवस्तूनां तुलनायां स्वधामजम् ॥ ७ ॥
वस्तुमात्रं निरानन्दमिवाऽऽभातं तदा तु तैः ।
नीतं यद्वस्तु वैकुण्ठात् पुरुषोत्तमपूजने ॥ ८ ॥
गोलोकाद्वा च तत्सर्वं निरानन्दमभासत ।
निस्तेजस्कमिवैभिस्तद्दृष्टं स्वधामवस्तुकम् ॥ ९ ॥
ततस्ते भग्नमनसो ह्युपदाविषये खलु ।
सञ्जातास्तावता ब्रह्मसरस्तत्र व्यलोकयन् ॥१०॥
अनन्तयोजनायामं दिव्यवारिरसात्मकम् ।
यत्र स्नानेन वस्तु श्रीपुरुषोत्तमभोग्यताम् ॥११॥
लभते ते त्रयः स्नाता ब्रह्मसरसि वै मुदा ।
उपदाः प्रोक्षितास्तेन योग्यं वस्तु तदाऽभवत् ॥१२॥
अथ दृष्टो विशालश्च लक्षयोजनविस्तृतः ।
प्रासादो रक्षकान् पृष्ट्वा द्वारमुक्तौँस्त्रयस्ततः ॥१३॥
विविशुर्यत्र वै राजाधिराजः पुरुषोत्तमः ।
राजतेऽसंख्यदिव्यात्ममुक्तैः संसेवितः प्रभुः ॥१४॥
कृष्णनारायणौ वीक्ष्य त्वागतौ पुरुषोत्तमः ।
अतीव जहृषे स्वामी नमन्तौ तौ पुनः पुनः ॥१५॥
पप्रच्छ कुशलं स्वस्वधाम्नः स्वस्ति च शाश्वतम् ।
भगवत्कृपया सर्वं स्वस्तिमत्कुशलं बहु ॥१६॥
इत्युक्त्वाऽऽसनयोस्तौ संराजितौ नृनरायणौ ।
तृतीयोऽधिकमासोऽपि कृत्वा वै पञ्चदण्डवत् ॥१७॥
दासवत् तिष्ठते पार्श्वे तयोस्तावत्पुमुत्तमः ।
अक्षराधिपतिस्तौ च पप्रच्छ तं तदा प्रति ॥१८॥
कोऽयं किमर्थमायातो युवाभ्यां धाम्नि मे त्विह ।
मन्ये शरण्यमाश्रित्य महालाभार्थमागतम् ॥१९॥
एवं पृच्छति सर्वेशे कृष्णनारायणावुभौ ।
पूजयामासतुर्दिव्यैः पारिबर्हैरनन्तकैः ॥२०॥
ब्रह्मसरोजलैः पूर्वं सम्यक् पादावनेजनम् ।
पञ्चामृतैर्दिव्यरसैराप्लवनं तदुत्तरम् ॥२१॥

जलैः रसात्मकैश्चाभिषेचयित्वाऽक्षराधिपम् ।
चन्दनादिद्रवैः सम्यक्पूजयित्वा ततश्च तौ ॥२२॥
वस्त्राभूषणहारादि चार्पयामासतुर्मुदा ।
छत्रचामररत्नादिपादुकायष्टिकादिकम् ॥२३॥
ऊर्मिकांगदमुकुटशृंखलाकलिगमण्डनम् ।
स्वर्णफुल्लरिकामालारशनाकंकणादिकम् ॥२४॥
भक्ष्यभोज्यलेह्यचोष्यशर्कराघृतमिश्रितम् ।
भोज्यान्नपेयसुस्वाद्यभोग्यचर्वणकादिकम् ॥२५॥
स्वर्णामत्रासनपात्रदिव्यफलरसादिकम् ।
यद्यद् योग्यं समर्प्यं चाऽभूत्तदाऽर्पयतां तदा ॥२६॥
आरात्रिकं कृतवन्तौ स्तुत्वा निषेदतुः सुखम् ।
गृहीतातिथ्यसत्कारौ प्रोचतुश्चाधिमासिकम् ॥२७॥
अयं मासोऽधिकमासो मलमासोऽस्ति धिक्कृतः ।
सर्वमासैः ऋषिभिश्च निषिद्धः शुभकर्मसु ॥२८॥
तदयं वै मया कृष्णेनाऽस्य सौभाग्यता कृता ।
किन्तु विनाधिदेवं स गणनां तेषु नार्हति ॥२९॥
एतदीयं महद्दुःखमनिवार्यं भवद्दते ।
अत एनं निरातंकं सानन्दं कृपया कुरु ॥३०॥
अस्मदर्थं च कर्तव्यमस्य दुःखनिवारणम् ।
श्रुत्वैवं त्वक्षरातीतः प्राह श्रीपुरुषोत्तमः ॥३१॥
समीचीनं कृतं कृष्ण यदत्रागतवान् भवान् ।
नारायणोऽपि चात्राप्यागतस्तदपि शोभनम् ॥३२॥
मलमासं करे कृत्वा लोके कीर्तिमवाप्स्यथः ।
भवद्भ्यां संधृतो हस्ते स मयैव करे धृतः ॥३३॥
अत एनं करिष्यामि सर्वोपरि मया समम् ।
यथाऽहं स्वगुणैर्युक्तस्तथैनं विदधामि वै ॥३४॥
सामर्थ्यैश्चाऽऽर्च्यभावेन तथा वरपराक्रमैः ।
मम तुल्यं विदधामि नतोऽन्यत् किमपेक्ष्यते ॥३५॥
विनष्टसर्वपाप्मत्वं सत्यसंकल्पदायिता ।
कामनाफलदायित्वं मत्सारूप्यप्रदायिता ॥३६॥
स्वर्गादिप्रापयितृत्वं मोक्षस्थानप्रदायिता ।
एभिः सामर्थ्यकैर्युक्तो भवत्वधिकमासकः ॥३७॥
मम सर्वे गुणाश्चान्येऽधिमासाय समर्पिताः ।
पुरुषोत्तमसंज्ञा मे वस्तुष्टयै चार्पिता तथा ॥३८॥
अस्य स्वामी भवाम्येव ब्रह्मेशः पुरुषोत्तमः ।
मम नाम्ना जगत्सर्वं तन्नामाऽपि ग्रहीष्यति ॥३९॥
विधूय स्वानि पापानि पावनं च भविष्यति ।
मत्स्वरूपो ह्ययं भूत्वा जगत्पूज्यो भविष्यति ॥४०॥
सर्ववन्द्यः सर्वमासोत्तमो मासो भविष्यति ।
एनमाश्रित्य वै लोका व्रतिनो जापकाऽर्चकाः ॥४१॥
दातारः स्नानकर्तारो भोजयितार इत्यपि ।
किंचित्पुण्यस्य कर्तारश्चापि मे तु प्रभावतः ॥४२॥
दुःखदारिद्र्यतापाऽधिव्याधिपीडाविधूय च ।
सुखसम्पद्धनदाराऽपत्यारोग्यसमृद्धिभिः ॥४३॥
राजमानसुभवना भविष्यन्त्युत्सवान्विताः ।
शृंगाराभरणान्नार्थपात्रपरिच्छदादिभिः ॥४४॥
दासदासीजनमित्रसेवकाश्रितभूमिभिः ।
योगक्षेमबलाऽदैन्यैर्भविष्यन्ति महोत्सवाः ॥४५॥
भोज्यपानोपभोग्यैश्च सत्ताविद्याप्रथादिभिः ।
उद्यानयानवाहाद्यैर्भविष्यन्ति समन्विताः ॥४६॥
रसैर्वृक्षफलैःपुष्पैर्गोधनैः स्वर्णरूप्यकैः ।
मणिरत्नहीरकाद्यैर्भविष्यन्ति सदोज्ज्वलाः ॥४७॥
पुरुषोत्तममासस्य व्रतिनो मद्व्रता हि ते ।
मत्तः प्राप्स्यन्ति सर्वे ते यथा चिन्तामणेर्जनः ॥४८॥
स्वर्गं वा वैध्रसं वापि वैराजं वैष्णवं च वा ।
रौद्रं भौमं च वा क्षैरं स्थलं प्राप्स्यन्ति यन्मतम् ॥४९॥
पत्नीः पतीन् गृहं सौधान् सुपुत्रान् रूपवैभवान् ।
अक्षतानव्ययान् प्राप्स्यन्त्यधिमासस्य सेवनात् ॥५०॥
सकामा वापि निष्कामाः प्राप्स्यन्तीष्टतमं ह्यतः ।
सकामश्चाथ निष्कामो यथाऽहं पुरुषोत्तमः ॥५१॥
तथाऽयं वै जनेष्टस्य पूरको मोक्षदः कृतः ।
यथाऽहं परिपूर्णोऽस्मि तथाऽयं चाऽव्ययः कृतः ॥५२॥
एवं ये चेषणावन्तो यद्वेषणाविवर्जिताः ।
पूजयिष्यन्ति ते स्वेष्टं लब्ध्वा मोक्षमवाप्नुयुः ॥५३॥
एनं प्रपूज्य कर्माणि कर्मिणां यान्ति भस्मताम् ।
आत्मा दिव्यो महाशुद्धो मामेवैष्यति चाक्षरे ॥५४॥
मदर्थं वै महायत्ना यतयो ब्रह्मचारिणः ।
साधवश्च महात्मानो योगिनस्तापसास्तथा ॥५५॥
योगिन्यः सांख्ययोगिन्यः साध्व्यः सत्यस्तथाऽधवाः ।
विरागाश्च विरागिण्यो निर्वाणसत्कृतादराः ॥५६॥
निर्मोहिन्यस्तथा ब्रह्मवादिन्यो न्यासतत्पराः ।
प्रयतन्ते वत्सराणां सहस्रात्प्रासहस्रकम् ॥५७॥
तथापि नैव यान्त्येते मद्धाम परमात्परम् ।
पुरुषोत्तमभक्तास्तु यान्ति मद्धाम मासतः ॥५८॥
अन्ये तपस्विनः शान्ता निराहारा निराशयाः ।
पत्रपुष्पफलाहारा जलमात्रनिषेविणः ॥५९॥

वायुमात्रकृताहारा बाष्पभोजिन एव च ।
धूम्रपाना जलावासाः शीतातपसहास्तथा ॥६०॥
शुष्कदेहा भग्नशिश्ननाडिका ब्रन्धरन्ध्रगाः ।
परकायप्रवेशार्हा व्रतदार्ढ्ययुता अपि ॥६१॥
मम भक्तिं विना नैव यान्ति मद्धाम ते खलु ।
पुरुषोत्तममासस्य व्रतिनो ये तु ते मम ॥६२॥
भक्ता मम व्रतिनस्ते मासमात्रेग मत्पदम् ।
मत्कृपया प्रयास्यन्ति शाश्वतं त्वमृतं पदम् ॥६३॥
कृष्ण ! नारायण ! तस्मान्मासोऽयं भवतोः कृते ।
कृतो मया तु मूर्धन्यः सर्वकामार्थसाधकः ॥६४॥
ये जनाः सेवयिष्यन्ति मासं श्रीपुरुषोत्तमम् ।
धर्मार्थकाममोक्षाणां सिद्धिमाप्स्यन्ति ते जनाः ॥६५॥
तस्मात् संसेव्यतां सर्वैर्मासोऽयं पुरुषोत्तमः ।
श्रेष्ठक्षेत्रनिभो मासोऽधिको बीजप्ररोहणे ॥६६॥
फलं कोटिगुणं पुण्यं ददाति पुरुषोत्तमः ।
स्वर्गे भुक्त्वा पुनर्याति चातुर्मास्यप्रयाजिनः ॥६७॥
अक्षरं शाश्वतं यान्ति पुरुषोत्तमयाजिनः ।
सप्ताऽधिकसप्तशतकुलान्युद्धारयत्ययम् ॥६८॥
अन्यमासव्रतकर्ता पुनर्जन्मातिगो न वै ।
मम मासे व्रतकर्ता पुनर्जन्मगमो न हि ॥६९॥
अत्र मासे त्वहं साक्षान्निवसाम्यधिदैवतः ।
मन्नामाऽपि कृतं चास्य तस्मात्तदात्मको ह्यहम् ॥७०॥
तदाश्रितानां सर्वेषां पूरयिष्यामि वाञ्छितान् ।
गणयिष्ये नाऽपराधान् भक्तां त्वस्य सर्वथा ॥७१॥
मे भक्त्यपेक्षया मदीयस्य भक्तिर्मम प्रिया ।
विलम्बो न मदीयमासभक्तानां मनोरथे ॥७२॥
मम भक्तं विहायैव तेषां पूर्णं करोम्यहम् ।
सर्वं ददामि तेभ्यो वै यतो मन्मासयाजिनः ॥७३॥
ममातिवल्लभास्ते वै न तथा मुक्तकोटयः ।
मम मासं समासाद्य जपदानादिवर्जिताः ॥७४॥
स्नानपूजाविहीनाश्च सत्कार्यपरिपन्थिनः ।
कूपवापीतडागादिपूर्तयज्ञविवर्जिताः ॥७५॥
देवतीर्थद्विजसाधुसाध्वीदेवालयद्विषः ।
निन्दकास्ते भविष्यन्ति काकवर्चस्कभक्षिणः ॥७६॥
कुष्ठिनः श्वशृगालास्ते भविष्यन्ति निराश्रयाः ।
दुर्भाग्यानां निन्दकानां सुखं न स्याद्दिवानिशम् ॥७७॥
मम मासे व्रतिनां ये दुःखं कुर्वन्ति चाऽधमाः ।
परताडनपाशास्ते भविष्यन्ति प्रगर्दभाः ॥७८॥
तिरस्कुर्वन्ति मे मासं ये च धर्मविदूषकाः ।
भक्तिमार्गेऽत्र विघ्नस्य कर्तारो येऽप्यसूयकाः ॥७९॥
वृक्षवागूरिकास्ते तु भविष्यन्ति मलादनाः ।
प्रतितृतीयवर्षे ये ह्यासाद्य पुरुषोत्तमम् ॥८०॥
आत्मश्रेयो न कुर्वन्ति ते यास्यन्ति ममालयम् ।
दुःखदावानलव्याप्ताश्चात्र भूत्वा प्रदुःखिनः ॥८१॥
श्रीदः सम्पत्करस्तस्मादतिमृत्युजयप्रदः ।
व्यर्थश्चायं न नेतव्यो मासो मे पुरुषोत्तमः ॥८२॥
कन्यका वा युवत्यश्च सधवाश्चाऽधवास्तथा ।
सपत्न्यो योषितो वृद्धाः सुभगा दुर्भगा अपि ॥८३॥
असुखाः सुसुखाश्चापि स्वेष्टप्राप्त्यर्थमेव याः ।
मम मासे करिष्यन्ति व्रतं दानं मदर्चनम् ॥८४॥
स्नानं मालां देवसेवां पुण्यकार्याणि यान्यपि ।
तासां सर्वप्रदश्चाहं भगवान्पुरुषोत्तमः ॥८५॥
धर्मं कामं तथा द्रव्यं सुखं मोक्षं ददाम्यहम् ।
भोज्यं पाचनसामर्थ्यं रतेः शक्तिं वरं पतिम् ॥८६॥
पुत्रं पौत्रं दासदासीः तत्तदिष्टं ददाम्यहम् ।
भ्रातृपितृकुटुम्बस्य सुखदाता भवाम्यहम् ॥८७॥
याभिर्मासो यापितश्च शून्यो मे पुरुषोत्तमः ।
तासां शून्यं भवेत्सर्वं सद्भाग्यं शून्यतां व्रजेत् ॥८८॥
धनाढ्या ये गृहस्थाश्च विना दानादिकं मम ।
मासं शून्यं यापयन्ति तत्कोशः शून्यतां व्रजेत् ॥८९॥
ब्रह्मचारिवानप्रस्था यतयस्त्यागमार्गगाः ।
मासं शून्यं विना भक्तिं यापयन्ति च ते यदि ॥९०॥
तपस्विनोऽपि ते सर्वे मुक्तिशून्या भवन्ति वै ।
शूद्राः स्त्रियस्तथा दासवर्गाः श्रीपुरुषोत्तमम् ॥९१॥
गुरोर्देवस्य च सेवां विना निर्गमयन्ति चेत् ।
तेऽपि सम्पद्विहीनाः स्युर्दुःखदारिद्र्यपीडिताः ॥९२॥
गुरुः सेव्यो हरिः सेव्यः सेव्याः पित्रादयो जनाः ।
गौः संसेव्या पतिः सेव्यः सती सेव्या यथा ह्यहम् ॥९३॥
तत्र तत्र स्थितश्चाहं फलं दास्यामि सर्वथा ।
तस्मात् सर्वात्मना सर्वैः सेव्यः श्रीपुरुषोत्तमः ॥९४॥
आत्मश्रेयः प्रकर्तव्यं धर्मो भक्तिश्च मोक्षणम् ।
विधुरत्वं च वैधव्यं मलमासस्य नाऽऽवहेत् ॥९५॥
कृष्णनारायणमासाः शृण्वन्तु मद्वचो ध्रुवम् ।
ममाज्ञया तु ये लोका ब्रह्माण्डवर्तिनः खलु ॥९६॥
यत्र यत्राऽस्त्ययं मासस्तत्र तत्रापि मामकम् ।
अधिष्ठानस्वरूपं मां पूजयिष्यन्ति सर्वथा ॥९७॥

ते मद्भक्ता मम धामाऽक्षरं प्राप्स्यन्ति शाश्वतम् ।
गोलोकं चापि वैकुण्ठं चामृतं वापि चैश्वरम् ॥९८॥
यथेष्टं कृपया ते ते तत्तद्भक्तास्तथा तथा ।
यास्यन्ति परमं स्थानं मम मासप्रभावतः ॥९९॥
तृतीयायां मम मासे युवाभ्यां पूजितोऽस्म्यहम् ।
तथा ये पूजयिष्यन्ति तेषां पूर्णमनोरथाः ॥१००॥
सर्वथैव भविष्यन्ति स्नानदानजपादिभिः ।
युवां चिन्तां कुरुतं मा लक्ष्मीश राधिकेश्वर ॥१०१॥
यातं निजं निजं लोकं गृहीत्वा पुरुषोत्तमम् ।
इत्यादेशमधिप्राप्य ते प्रणम्य ययुस्त्रयः ॥१०२॥
शृणु लक्ष्मि ! तृतीयायां स्नास्यन्ति येऽधिके जलैः ।
तेषां ब्रह्महृदे स्नानं तथा ब्रह्मसरोवरे ॥१०३॥
कृतं स्नानं तु यद्वद् वै तत्पुण्यं संभविष्यति ।
मम पूजा यथा ताभ्यां कृता तत्र यदर्पितम् ॥१०४॥
तथा पूजां मम मासे करिष्यन्ति च ये जनाः ।
दानान्यपि करिष्यन्ति तत्पुण्यं शाश्वतं भवेत् ॥१०५॥
तृतीयायां मम पूजा कृता ताभ्यां यतो मम ।
तृतीयायां महापूजा कर्तव्या मानवैरपि ॥१०६॥
नारायणस्य कृष्णस्याऽपि पुरुषोत्तमस्य च ।
कर्तव्या महती पूजा सुखमोक्षादिदायिनी ॥१०७॥
यथाऽहं ब्रह्मधाम्न्यस्मि तथा मासात्मकोऽपरः ।
ब्रह्माण्डे सर्वथा चास्मि तथाऽस्म्यन्तर्हृदि स्थितः ॥१०८॥
कृष्णनारायणश्चास्मि राधालक्ष्म्यादिसेवितः ।
अहं सर्वं विजानामि नान्ये जानन्ति मां तथा ॥१०९॥
पार्वत्या प्रभया साकं माणिक्या विहरामि च ।
नैकरूपोऽप्येक एवाऽस्मीति विद्धि मदंगने ! ॥११०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पुरुषोत्तममासमाहात्म्ये श्रीकृष्णनारायणमलमासानामक्षरधामगमने ब्रह्महृदब्रह्मसरोवरस्नानोत्तरं श्रीपुरुषोत्तमस्यसन्निधिगमनं सुपूजनं स्वनिवेदनोत्तरमधिकमासस्य पुरुषोत्तमनामैश्वर्यस्वामिकत्वादिप्राप्तिस्तृतीयातिथिकृतपूजनदानादिफलनिरूपणं कृष्णनारायणमासानां पुनः स्वस्वधामाऽऽगमनमित्यादिनिरूपणनामा पञ्चनवत्यधिकद्विशततमोऽध्यायः ॥२९५॥

श्रीनारायण उवाच—

शृणु लक्ष्मि ! त्रयस्तेऽपि गत्वा गोलोकमित्यथ ।
विशश्रमुः क्षणं पश्चात् कृष्णो द्वाभ्यां प्रपूजितः ॥ १ ॥
पुरुषोत्तममहिमा गोलोके बहुधाऽभवत् ।
कृष्णं नत्वा चाययतुरधोमासनरायणौ ॥ २ ॥
वैकुण्ठं चाथ तत्रापि मासो महत्त्वमाप्तवान् ।
पुरुषोत्तममासं च वासयामास वै हरिः ॥ ३ ॥
वासमासाद्य मासोऽपि रमते विष्णुना सह ।
मासानामधिपो भूत्वा गौरवेण व्यवस्थितः ॥ ४ ॥
अथात्र च महालक्ष्म्या गौरवेण प्रपूजितः ।
द्रुतं नारायणेनापि प्रतिब्रह्माण्डमेव ह ॥ ५ ॥
तृतीयायाश्चापराह्णे प्रेषयित्वा स्वपार्षदान् ।
समुद्घोषितमेवाऽयं मलमासो महोत्तमः ॥ ६ ॥
पुरुषोत्तमनामाऽसौ पुरुषोत्तमदैवतः ।
पुरुषोत्तमनाथेन स्वर्गदो मोक्षदः कृतः ॥ ७ ॥
स्वगुणाश्चार्पिता ह्यस्मै न न्यूनः पुरुषोत्तमात् ।
पूजने वन्दने जापे दाने स्नाने व्रतेऽपि च ॥ ८ ॥
पुरुषोत्तमतुल्योऽयं पुरुषोत्तमयोगदः ।
नरो नारी सुरो देवी येऽपि स्थावरजंगमाः ॥ ९ ॥
भावतोऽप्येककालेऽपि व्रतं चाथ प्रपूजनम् ।
अधिमासस्य सर्वांगं करिष्यन्ति मदिच्छया ॥१०॥
प्राप्स्यन्ति स्वेप्सितं सर्वे नारायणो ब्रवीम्यहम् ।
किमु तर्हि त्रिकाले च व्रते वक्तव्यमस्य हि ॥११॥
मासव्रते तु नैवैव वक्तव्यं शिष्यते मम ।
तस्मात्पूज्यश्चैककालं द्विकालं समयत्रयम् ॥१२॥
यथेष्टं प्राप्स्यति नारी नरोऽपीष्टमवाप्स्यति ।
क्षणं क्षणार्धं घटिकां सायं प्रातः प्रमध्यके ॥१३॥
यथाशक्ति यथावस्तु पूज्योऽयं पुरुषोत्तमः ।
नारायणो ब्रवीम्यत्र पुरुषोत्तमसाक्षिकः ॥१४॥
श्रीकृष्णसाक्षिकश्चापि पुरुषोत्तमसंज्ञके ।
मासेऽत्र मां क्षणमात्रं पूजयिष्यन्ति भावतः ॥१५॥
स्वर्गं सत्यं चैशलोकं प्राप्स्यन्ति स्वेष्टमित्यपि ।
प्राप्स्यन्ति मां सुखवार्धिं परंब्रह्म परात्परम् ॥१६॥
नारायणेच्छया येऽत्र पूजयिष्यन्ति भावतः ।
वैकुण्ठस्थं च ते मां वै प्राप्स्यन्त्येव नरायणम् ॥१७॥
श्रीमत्कृष्णेच्छया येऽत्र पूजयिष्यन्ति भावतः ।
गोलोकस्थं च ते मां वै प्राप्स्यन्त्येव हि माधवम् ॥१८॥

पुरुषोत्तमकामेन पूजयिष्यन्ति ये जनाः ।
ब्रह्मधामगतं प्राप्स्यन्त्येव मां पुरुषोत्तमम् ॥१९॥
यद्यद्रूपं च मां येऽत्र पूजयिष्यन्ति देहिनः ।
तत्तद्रूपं तत्र तत्र प्राप्स्यन्ति ते तु मां तथा ॥२०॥
इति प्रश्नावितं लक्ष्मि ! ब्रह्माण्डेषु पुनः पुनः ।
महादुन्दुभिभिर्दूतैः पार्षदैर्दिव्यविग्रहैः ॥२१॥
मलमासस्तृतीयाया निश्येव बहुकोटिभिः ।
सत्कृतः पूजितः सम्यग्भोजितः श्रममाप वै ॥२२॥
चतुर्थ्यां तु प्रगे सप्तद्वयलोकनिवासिभिः ।
स्नानव्रतार्चनदानाद्यैरतीव प्रतोषितः ॥२३॥
बहवः स्थावराश्चापि चेतना व्रतकारिणः ।
समाजग्मुर्हरेर्धाम लक्षशः कोटिशस्तथा ॥२४॥
चतुर्थ्यास्तु प्रगे कोटिदासीयुक्ता विमानगा ।
रमादेवी समायाता वैकुण्ठं क्षैरसागरात् ॥२५॥
वधूटीरूपतां प्राप्ता वरमालासमन्विता ।
लक्ष्मीसमा तु सर्वांगे न वै न्यूना मनागपि ॥२६॥
नारायणाऽऽज्ञया सा तु लक्ष्म्यादिभिः सुसत्कृता ।
सभाजिता ततो नारायणेनांऽके निषादिता ॥२७॥
लक्ष्म्यादयस्तदाश्चर्यं सम्प्रापुस्तद्विलोक्य वै ।
कथं पत्नीस्वरूपेयं स्वामीनांऽगीकृता द्रुतम् ॥२८॥
अथ लक्ष्म्या रमा पृष्टा तदितिवृत्तवित्तये ।
कथं कस्मात् समायाता कथं नारायणः पतिः ॥२९॥
कस्य पुत्री कथं प्राप्ता किं कृत्वैनं नरायणम् ।
वद सुभ्रु स्वसः सर्वं परिवेद्यं सुखोत्तरम् ॥३०॥
लक्ष्म्या नारायणेनापि भोजिता सत्कृता हि सा ।
समारेभे प्रवक्तुं च स्वकं वृत्तं यथातथम् ॥३१॥
वरमालां हरेः कण्ठे प्रसमर्प्याऽग्रतः स्थिता ।
नारायणांऽगुष्ठवारि पीत्वा कृत्वा प्रदक्षिणम् ॥३२॥
कुंकुमतण्डुलैः कृत्वा भाले शोभनचन्द्रकम् ।
वरमालाऽर्धकं स्वस्याः कण्ठे कृत्वाऽथ पायसम् ॥३३॥
भोजयित्वा हरिं दत्वा ताम्बूलं तत्प्रसादकम् ।
गृहीत्वा च स्वयं नारायणांके कुसुमांजलिम् ॥३४॥
साक्षतां च सलाजां च प्रसमर्प्याऽऽसने स्थिता ।
पत्नी भूत्वा जगादेदं शृणु लक्ष्मि ! रमोदितम् ॥३५॥
शृण्वन्तु सर्वभक्तेषु भक्तासु प्राह यद् रमा ।
मम पूज्ये महालक्ष्मि ! तृतीयारात्रिसंचरे ॥३६॥
दुन्दुभिः संश्रतः सर्वैर्नारायणस्य नामतः ।
अधिमासे पूजकस्य पूरयिष्ये मनोरथान् ॥३७॥

मयाऽपि कन्यया क्षीरोदधेर्गृहे स संश्रुतः ।
वाञ्छितश्च पतिर्नारायणो लक्ष्मीपतिः प्रभुः ॥३८॥
मलमासे तृतीयायां सायं वै भोजनं विना ।
विना जलं व्रतं कृत्वा स्नात्वा चाऽपूजयं हरिम् ॥३९॥
पृष्ट्वा मे जनकं क्षीरसागरं च तदाज्ञया ।
मण्डपं कदलीस्तम्भैः शोभितं पत्रतोरणैः ॥४०॥
कारयित्वा च तन्मध्ये दोलां रम्यां सुशोभनाम् ।
लक्ष्मीनारायणमूर्तिं सौवर्णीं रत्नराजिताम् ॥४१॥
संस्नाप्य सर्वसामुद्रैः रत्नैः प्रपूज्य भावतः ।
दिव्यवस्त्रैर्विभूषाभिश्चालंकृत्य द्रवादिभिः ॥४२॥
सम्पूज्य धूपदीपैश्च भोजनैर्जलपानकैः ।
आरार्त्रिकस्तुतिप्रदक्षिणाभिरभिवन्द्य च ॥४३॥
पुष्पांजलिं प्रदायैव संकल्प्य मनसा पुनः ।
पतिर्मे भव विश्वात्मन् रमायास्त्वं नरायण ! ॥४४॥
इति संस्तूय चरणामृतं पीत्वा सुकोमले ।
पर्यंके श्रीहरिः प्रेम्णा मया प्रस्वापितः सह ॥४५॥
ध्यातो मया स निद्रायां सेवयामि हरिं ततः ।
पादसंवाहनं तस्य करोमीति निभालितः ॥४६॥
क्षणं स्वप्ने हरिर्दृष्टो मया स्वे शयने सह ।
हसन्मां स्वकटाक्षेणाऽऽकर्षयन्निव भावतः ॥४७॥
वदन् श्रुतो व्रतेन त्वां स्वीकरोमि प्रियां रमे ! ।
प्रातर्नेतुं मम लोकं त्वागमिष्ये पुनः प्रिये ॥४८॥
इति द्रागेव संश्राव्य स्वयमदृश्यतां गतः ।
सोऽयं नारायणः स्वामी लक्ष्मीपतिर्विराजते ॥४९॥
मया नारायणे याते मुहूर्ते ब्राह्मसंज्ञके ।
चतुर्थ्यामधिमासस्य ध्यात्वैनं पुरुषोत्तमम् ॥५०॥
स्नात्वा शय्यागतं देवं स्नापयित्वाऽतिभावतः ।
क्षीरादिभिस्तथा वार्भिश्चन्दनादि प्रमर्द्य च ॥५१॥
श्रांगारिकाण्यर्पयित्वा विवाहवरवत् कृतः ।
दत्तं पीताम्बरं चातिमूल्यं पीतांगरक्षकम् ॥५२॥
प्रावारं स्वर्णताराढ्यं चोत्तरीयं तथोत्तमम् ।
मस्तके स्वर्णमुकुटः सकलिगः कुण्डले श्रुतौ ॥५३॥
तिलकं चन्द्रको भाले कज्जलं नेत्रयोर्भ्रुवि ।
चन्दनं गण्डयोर्बिन्दू चिबुके स्वल्पचन्द्रकः ॥५४॥
पुष्पप्रावरणं भाले वरमाला च कण्ठके ।
वक्षसि स्वर्णहाराश्च कंकणे करयोः शुभे ॥५५॥
ऊर्मिकाश्चांगुलिग्रामे भुजबन्धौ भुजद्वये ।
तुलसीपुष्पहाराश्च खड्गो हस्ते सुवर्णजः ॥५६॥

नारिकेलफलं चापि करे कट्यां च मेखला ।
नुपूरे पादयोश्चापि पादुके कानकी शुभे ॥५७॥
कामफलं प्रकोष्ठे वै भोजने पायसं शुभम् ।
ताम्बूलकं जलपानं फलं द्राक्षा रसात्मिका ॥५८॥
पूगीफलं ततो दानं दक्षिणा वरमालिका ।
हवनानि शतं चाष्टौ घृतेन वह्निमण्डले ॥५९॥

आरात्रिकं पञ्चवर्ति प्रदक्षिणचतुष्टयम् ।
वरेण्यो वरदश्चासि वरो मे भव सद्वचाः ॥६०॥
पुष्पांजलिस्तथाऽर्घ्यं च नमस्कारः क्षमार्थना ।
विसर्जनं पादवारिपानं च शेषभक्षणम् ॥६१॥
स्वप्नदृष्टस्य संध्यानं प्रतीक्षा च कदाऽऽगमः ।
कृष्णनारायणनाम्ना भजनं चातिहर्षणम् ॥६२॥
भोजनं बालिकाभ्यश्च दानं कन्याभ्य इत्यपि ।
ध्यानं नारायणे देहः क्षीरसागरके गृहे ॥६३॥

नेत्रे व्योम्नि परे मार्गे ह्यात्मा वैकुण्ठवासिनि ।
इत्येवं परिवाराढ्येऽधिमासे पूजिते हरौ ॥६४॥
नत्वा च जनकं कृत्वा पारणां पयसा मनाक् ।
यावत् तिष्ठामि भवने तावन्नारायणो ह्ययम् ॥६५॥
प्रादुर्भूतो ममाग्रेतिरूपानुरूपराजितः ।
प्रसन्नश्चातितेजस्वी चाऽस्पृशन्मां करेण वै ॥६६॥
स्वसमीपं समाकृष्य समागच्छेत्युवाच माम् ।
मलमासे ह्येककाले तृतीयायां त्वयाऽर्चितः ॥६७॥

निशि संवाहितश्चापि चतुर्थ्यां चातिपूजितः ।
प्रातरेव त्वया मान्ये ! चार्जितोऽस्मि व्रतेन वै ॥६८॥
यथा भावनया सुभ्रु त्वया चाद्य प्रपूजितः ।
तथा प्राप्तोऽस्मि कल्याणि ! सुभगेऽसि मम प्रिये ! ॥६९॥
समागच्छ मया सार्धं जाताऽसि शाश्वती वधूः ।
तव व्रतेन ते दास्यः सर्वा अपि मम गृहम् ॥७०॥
समायान्तु मम दास्यो भाविन्यः सर्वथा रमे ।
इति कृत्वा गरुडं स्वं दर्शयामास सद्वरः ॥७१॥

यानानि वाहनान्यत्र यानि सन्ति सहस्रशः ।
मया मत्पितरं गत्वाऽऽवेदितं सर्वमेव तत् ॥७२॥
सोपि तत्र समागत्य दत्तवान् मां हरेः करे ।
पित्राज्ञया कृतकृत्या जाताऽरुरोह पक्षिणम् ॥७३॥
पित्रा प्रस्थापिता सैन्ययुता सत्कारपूर्वकम् ।
यौतकं संगृहीत्वैव समायाता हरेः पुरम् ॥७४॥
सोऽयं नारायणश्चात्र भवनेऽपि विलोकितः ।
मया सहापि स एव वर्तते पश्य भामिनि ! ॥७५॥

अधिमासे निशि प्रातः पूजनेऽस्य फलेन वै ।
प्राप्ताऽहं सत्पतिं नारायणं चात्र समागता ॥७६॥
नीता तेनैव कृष्णेन प्रापिताऽकमनेन वै ।
कृता नववधूश्चापि पत्नी वैकुण्ठवासिनी ॥७७॥
रमाऽस्मि ते सखी दासी त्वत्कृपाकांक्षिणी सदा ।
इत्येवं चाऽधिमासस्य फलं प्राप्तं मयाऽनघे ॥७८॥

मया नारायणपूजा कृता तद्वत् करिष्यति ।
कन्यका युवती वापि प्राप्स्यत्येनं नरायणम् ॥७९॥
कृष्णनारायणं चाधिमासे संपूज्य सर्वथा ।
चतुर्थ्यां प्रातरेवापि मध्याह्ने वा निशीथके ॥८०॥
पूजयिष्यन्ति यद्वृत्त्या पूरयिष्यत्ययं तथा ।
धनं पुत्रान् सुखं दारान् पतिं धान्यानि सद्गृहम् ॥८१॥
यानं च वाहनं तेजो रूपमैश्वर्यमुत्तमम् ।
राज्यं सत्तां प्रियां भार्यां दासान् दासीश्च वैभवान् ॥८२॥

भोग्यान् भोगोपसम्बद्धान् भोज्यान्पेयाननन्तकान् ।
पदार्थान् दिव्यतत्त्वस्थान् यथेष्टान् सुरतान् रतिम् ॥८३॥
स्वर्गान् सत्यपरान् लोकान् पारमेष्ठिस्थलान्यपि ।
वैराजाँश्चापि वैकुण्ठभूमिका धेनुभूमिकाः ॥८४॥
गोलोकं चाक्षरं चापि दिव्यं चाऽदिव्यमेव यत् ।
संकल्प्याऽधिकमासे वै नारायणस्य पूजकाः ॥८५॥
नरा नार्यो देवदेव्यश्चतुर्दशस्तरस्थिताः ।
प्राप्स्यन्ति स्वेप्सितं सर्वे पुरुषोत्तमवाञ्छया ॥८६॥

यथाऽहं स्वल्पयत्नेन संजाता शाश्वतीसमाः ।
सुसौभाग्यवती लक्ष्मि ! तथाऽन्यापि भविष्यति ॥८७॥
विधवापि यदि स्त्री वै मद्वत् कृष्णस्य पूजनम् ।
करिष्यत्यधिमासे सा वैकुण्ठं प्राप्स्यति ध्रुवम् ॥८८॥
नारायणं पतिं लब्ध्वा स्यात् सौभाग्यवती सदा ।
वृद्धा वा रोगिणी यद्वा तिरस्कृता च बान्धवैः ॥८९॥
कर्मणा या परिभ्रष्टा पश्चात्तापेन संयुता ।
अनाथा चैकला चात्याश्रिता रण्डा च पुंश्चली ॥९०॥

स्वैरिणी कामिनी वापि येन केनापि संगता ।
ज्ञातिहीना व्रतहीना पशुसंसर्गकारिणी ॥९१॥
जैह्वये रत्यां सदा लुब्धा मद्यमांसादिनी किमु ।
राजस्वल्यादिदोषस्था सांकर्यदोषसंस्थिता ॥९२॥
श्वपचाद्याश्रयापन्ना सुसंस्कारविवर्जिता ।
या कापि वा भवेन्नारी शुभसंस्कारयोगतः ॥९३॥
श्रुत्वा कथां व्रतं कृत्वाऽधिमासे तु यथाबलम् ।
हरिप्राप्तीच्छया चैकभुक्तं नक्तमयाचितम् ॥९४॥

फलाहारं पयःपानं कृत्वापि श्रीहरेर्बलात् ।
प्रमार्ज्य सर्वपापातिपापानि चातिपावनी ॥९५॥
पंक्तिसंपावनी भूत्वा वेश्या वा गणिकापि वा ।
नर्तकी वा प्रभण्डा वा कुट्टिनी वा प्रसाधिनी ॥९६॥
या वा का वा भवेल्लोके भूत्वा पवित्रविग्रहा ।
क्षेत्रं विष्णोः कृपायाश्च भूत्वा कांचनसदृशी ॥९७॥
दिव्या शुद्धा पापहीना पुण्यपुञ्जान्विता सती ।
कृष्णनारायणविष्णुकृपाभिरतिपाविता ॥९८॥
स्वसमानास्तथाऽन्याश्च पावयित्वा स्वसंगतः ।
सनातनं परं धाम विष्णोर्यत् तत्प्रयास्यति ॥९९॥
रमाऽहं संस्थिता नारायणांऽके लक्ष्मि ! सर्वथा ।
कथयामि पुनः सत्यं सा प्राप्स्यति हरेः पदम् ॥१००॥
षण्ढो वा षण्ढतुल्यो वा षंढा वा षण्ढसदृशी ।
अनार्तवी विचित्ता वा वानरीव व्रतच्युता ॥१०१॥
या कापि वा भवेत् साऽपि मासे श्रीपुरुषोत्तमे ।
व्रतं कृत्वा वरं नारायणं समर्जयिष्यति ॥१०२॥
निष्कामो वाऽथ निष्कामा मुक्ततां प्राप्य सर्वथा ।
हरेर्दिव्याक्षरं धाम प्राप्स्यत्येव न संशयः ॥१०३॥
किम्वधिकं कथयामि मायाऽप्यमायिकी भवेत् ।
यद्योगात्तर्हि नारीणां का कथा मुक्तिसंगमे ॥१०४॥
तस्माद्व्रतं प्रकर्तव्यं त्वधिमासस्य सर्वथा ।
भुक्तिर्मुक्तिस्तथा स्वर्गं सर्वं प्राप्येत यद्बलात् ॥१०५॥
अहं चात्र स्थिता ज्येष्ठे ! निभाल्याऽनुग्रहेण वा ।
इत्युक्त्वा प्रणनामैनां लक्ष्मीं वात्सल्यवर्धिनीम् ॥१०६॥
नारायणोऽपि तामेनां भवनानि निनाय च ।
रमयामास सत्कामैः पूरयामास भावनाः ॥१०७॥
एवं प्रिये ! रमा जाता कथं नारायणप्रिया ।
क्षीरसागरपुत्रीयं सा तुभ्यं कथिता कथा ॥१०८॥
अस्याः श्रवणमात्रेण पठनेन च पूजया ।
अधिमासव्रतजन्यं फलं विन्देत्तु मानवः ॥१०९॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पुरुषोत्तममासमाहात्म्ये नारायणाधिमासयोर्वैकुण्ठवसतिर्ब्रह्माण्डेष्वधिकमासव्रतार्थं दुन्दुभिघोषणा, तां श्रुत्वा क्षीरसागरपुत्रीरमया तृतीयासायं चतुर्थीप्रातर्व्रतपूजादिकरणेन वैकुण्ठे नारायणपत्नीत्वप्राप्तिरित्यादिनिरूपणनामा षण्णवत्यधिकद्विशततमोऽध्यायः ॥२९६॥

श्रीनारायण उवाच—

श्रूयतां च त्वया लक्ष्मि ! शारदायाः कथा शुभा ।
अधिमासस्य पंचम्यां व्रतं कृत्वा च पूजनम् ॥ १ ॥
ऐश्वर्यमतुलं प्राप कौमार्यं शाश्वतं च सा ।
राजस्वल्यविहीनत्वं प्रसारणं मुखे मुखे ॥ २ ॥
तथा वैकुण्ठनाथस्य पत्नीत्वं दिव्यमव्ययम् ।
अवाप शारदा लोके पूज्यतां पद्मजा यथा ॥ ३ ॥
पत्नीत्वे सति कौमार्ये कुमारीत्वे वधूत्वकम् ।
विरुद्धधर्मयोश्चास्यां स्थितिः श्रीहरितोषणात् ॥ ४ ॥
अधिमासबलोपेतां चमत्कारमयीं कथाम् ।
शृणु लक्ष्मि ! महापुण्यां पुरुषोत्तममासिकीम् ॥ ५ ॥
ब्रह्मधामस्थिताऽनादिकृष्णनारायणांऽगतः ।
ब्रह्मविद्या शारदाख्या प्रकटीभूय सुन्दरी ॥ ६ ॥
वैराजलोकमागत्याऽऽज्ञया नारायणस्य सा ।
वैराजे लीनतां प्राप्य ब्रह्मविष्णुमहेश्वरैः ॥ ७ ॥
सहोत्पन्ना कन्यका सा वैराजी शारदा सुता ।
बहुकालं पितृगेहे वासं चक्रे कुमारिका ॥ ८ ॥
ब्रह्मज्ञानात्मिका नित्यं विचारयति वर्ष्मणि ।
यदर्थं ब्रह्मणा चाहमाविष्कृता तु देवता ॥ ९ ॥
वाङ्मयी वेधसः सृष्टौ स्थातुं प्रतिमुखं खलु ।
ततोऽहं वैधसी भूत्वा गच्छामि यदि सृष्टिषु ॥१०॥
कुमारी चेन्निवत्स्यामि ह्यशुद्धा चाप्यसंस्कृता ।
अस्पृश्या वै भविष्यामि सर्वैर्बहिष्कृता सदा ॥११॥
तदा तु मरणं तत्र शरणं मे भविष्यति ।
कुमारिकाशरीरं वै गर्भीयं पापकं हि तत् ॥१२॥
कस्यापि कर्मणो योग्यं भवत्येव न सर्वथा ।
मूत्रेन्द्रियप्रजन्माऽसौ मूत्रकुक्षौ प्रवर्धितः ॥१३॥
मूत्रात्मजलमग्नोऽसौ मूत्रद्वारेण निर्गतः ।
बाल्येऽपि मलमूत्रात्माऽस्पृश्याऽशुद्धमलावृतः ॥१४॥
यज्ञोपवीतसंस्कारहीनो देहः सदाऽशुचिः ।
अशुद्धकफफीतादिविकृतिपूत्तलात्मकः ॥१५॥
कुमारिकास्थितौ नारीदेहः कथं शुभो भवेत् ।
विवाहकरणे शुद्धिर्नान्यथा तु कदाचन ॥१६॥
विवाहोऽपि महादुःखप्रदः पुरुषवश्यता ।
मूत्रेन्द्रियपराधीनमालिन्यकर्मकारिता ॥१७॥
मूत्रकुक्षौ गर्भवासो गर्भजन्ममलाक्तता ।
सूतकं सर्वथा चार्ते रक्तस्रावो मलान्वयः ॥१८॥

मलमूत्रसमुत्पत्तिरपानानिलसंसृतिः ।
मालिन्यं सर्वथा पत्नीभावे मैथुनकर्मणि ॥१९॥
तस्मात् पराश्रयः पत्नीभावोऽत्यधिकदुःखकृत् ।
किं कर्तव्यं क्व गन्तव्यं नारी कृता पराश्रया ॥२०॥
नारीदेहः पराधीनः परभोग्यः परार्थकः ।
येन तादृक् कृतं पापं नारीतां सः प्रपद्यते ॥२१॥
तन्न मया परनार्या भवितव्यमधीनया ।
एवं रजस्वलाधर्मो मालिन्यं पापकारकम् ॥२२॥
नेष्यते येन तदपि पारवश्यं न मे भवेत् ।
मदिष्टं यदि नैव स्यान्मरिष्यामि न संशयः ॥२३॥
अमालिन्यं पवित्रत्वमराजस्वल्यमित्यपि ।
पत्नीधर्मविहीनत्वं कौमार्यं च यथा मम ॥२४॥
शाश्वतं स्याद् यथा यत्नस्तथा कार्यो ह्यतः परम् ।
इति नित्यं चिन्तयाना मार्गयामास साधनम् ॥२५॥
शुश्राव दुन्दुभिं विष्णोरधिमासव्रताय वै ।
पुरुषोत्तममासस्य व्रतिनां वै मनोरथाः ॥२६॥
परिपूर्णा भविष्यन्तीत्याह श्रीपुरुषोत्तमः ।
एककालं द्विकालं वा पूजयिष्यन्ति मां जनाः ॥२७॥
नरो नारी च षण्ढो वा मत्कृपालेशतो हि सः ।
अलभ्यलाभवान् स्याच्च दास्ये सर्वं तदिप्सितम् ॥२८॥
कुमारी शारदा वैराजस्य पुत्री प्रघोषणाम् ।
श्रुत्वाऽतिहर्षमापन्ना मनश्चक्रे व्रतार्चने ॥२९॥
पञ्चम्यां सा तिथौ प्रातः शीघ्रं शीघ्रं समुत्थिता ।
श्रुत्वैवं दुन्दुभिं स्नात्वा ध्यात्वा मूर्तिं हरेस्तथा ॥३०॥
पूजाद्रव्याणि दिव्यानि संगृह्य भवने स्वके ।
विष्णुं नारायणं देवं पूजयामास भावतः ॥३१॥
लक्ष्मीं नारायणं स्वर्णं श्रीहरिं पुरुषोत्तमम् ।
आवाह्यासनमास्तीर्य पाद्यार्घ्याचमनानि च ॥३२॥
दत्वा पंचामृतैः कृष्णं स्नापयित्वा जलेन च ।
अमृतेन रसेनापि सुगन्धिद्रववस्तुभिः ॥३३॥
सम्मर्द्य गात्रमुरुधा शृंगारमकरोत्ततः ।
अलंकारविभूषाश्च धारयित्वाऽम्बराणि च ॥३४॥
प्रपूज्य कस्तूरिकाभिश्चन्दनाक्षतकुंकुमैः ।
तुलसीपुष्पमन्दारचम्पकैः परिपूज्य च ॥३५॥
धूपदीपसुनैवेद्यैः फलैः पानैश्च चर्वणैः ।
ताम्बूलकैस्तोषयित्वाऽऽरात्रिकं त्वकरोत्ततः ॥३६॥
प्रदक्षिणं स्तुतिं कृत्वा दण्डवत् प्रणनाम सा ।
क्षमाऽपराधं स्वाभीष्टं प्रार्थयत् सा कुमारिका ॥३७॥

दुन्दुभिना प्रवक्तर्हे लक्ष्मीनारायण प्रभो ।
ब्रह्मगोलोकवैकुण्ठवासिन् श्रीपुरुषोत्तम ॥३८॥
सत्यं ददासि भक्ताय यथेष्टं व्रतकारिणे ।
तदा मह्यं तथा देहि यथाऽहं प्रवृणोमि तत् ॥३९॥
कुमारीत्वं शाश्वतं मे राजस्वल्यं कदापि न ।
अशुद्धत्वं च मे मास्तु तथा सत्यपि मे पुनः ॥४०॥
पतिमत्त्वं सुमांगल्यं सौभाग्यं सर्वदाऽस्तु मे ।
सगर्भात्वं च मे मास्तु पत्नीत्वेऽपि कदाचन ॥४१॥
एतद्वै दुर्लभं याचे विरुद्धं सर्वथा तनौ ।
यदि सत्यप्रवक्ता त्वं ह्येककालव्रते कृते ॥४२॥
अधिमासे पूजिते चेद् ददासि देहि मे तथा ।
अन्यथा दुन्दुभिं देव मा प्रवादय चाऽनृतम् ॥४३॥
छत्रं ददामि ते नाथ चामरेऽपि ददामि ते ।
पादुके ते प्रददामि शय्यां ददामि कोमलाम् ॥४४॥
पादसंवाहनार्थाय मां ददामि समर्पिताम् ।
शरणागतपाल त्वं भक्तवाञ्छाप्रपूरक ॥४५॥
पुष्पांजलिं गृहाणैनां करं गृहाण वा न वा ।
देहि मदर्थितं नाथ शाश्वतं सुखदं हि तत् ॥४६॥
कुमारी नैव पत्नी स्यात् पत्नी स्यान्न कुमारिका ।
पत्नीत्वे बहवो दोषा मा स्पृशेयुश्च मां यथा ॥४७॥
कुमारीत्वेऽपि ये दोषा मा स्पृशेयुश्च मां यथा ।
तथा देहि कृपानाथ सत्यार्थो दुन्दुभिर्यदि ॥४८॥
कर्तुं चाकर्तुमेवाप्यन्यथाकर्तुं प्रभोस्तव ।
किमप्यशक्यं नास्त्येवाऽन्यथा ते दुन्दुभिर्वृथा ॥४९॥
इति स्तुत्वा फलैर्युक्तमर्घ्यं समर्प्य विष्णवे ।
अक्षतैर्वर्धयामास कुमारी शारदा ततः ॥५०॥
देवं तु दक्षिणां स्वीयसमर्पणात्मिकां हृदि ।
दत्वा विसर्जयामास ध्यायमाना नरायणम् ॥५१॥
तावन्नारायणो लक्ष्मीपतिः श्रीपुरुषोत्तमः ।
रमापतिर्हसन्मन्दं प्राविर्बभूव चाग्रतः ॥५२॥
दक्षदोष्णाऽभयदश्च वामेन मस्तके स्पृशन् ।
उवाच शारदे किन्ते मनस्यस्ति प्रकाशय ॥५३॥
पूजया ते प्रसन्नोऽस्मि विश्वासव्रतचारिणि ।
सुभ्रु विश्वासपाशेन बद्धोऽस्मि सर्वदा त्वया ॥५४॥
दातुं सर्वं समर्थोऽस्मि तथापि शृणु मे वचः ।
कुमारीत्वं च पत्नीत्वं नैकत्र क्वापि दृश्यते ॥५५॥
अन्यतरं तयोस्तस्माद् वृणु तुभ्यं ददाम्यथ ।
कुमारीत्वं कलंकाय लोके स्वाजीवनं भवेत् ॥५६॥

तस्मात् पत्नीत्वमेवात्र वृणु सौभाग्यदं ददे ।
अन्यच्चापि च ते काम्यं ददामि वृणु कन्यके ॥५७॥
स्त्रीराज्यं वा महद्राज्यं मायाराज्यं ददामि ते ।
विरुद्धं मा वृणु कन्ये ब्रूहि विचार्य मा चिरम् ॥५८॥
इत्याश्रुत्य हरेर्वाक्यं शारदा प्राह केशवम् ।
भक्तेष्टपूरक स्वामिँस्तवोद्घोषान्मयाऽर्थितम् ॥५९॥
स्वसत्यरक्षणार्थाय यथेच्छसि तथा कुरु ।
नहि भक्ते त्वाग्रहः स्यादाग्रही नहि भक्तिमान् ॥६०॥
अहं तव प्रपन्नाऽस्मि भक्तचिन्तां हर प्रभो ।
तवाऽस्मि तव भक्ताऽस्मि पादयोः पतिता तव ॥६१॥
नारीदुःखानि मे मा स्युरिति भक्तेष्टमावह ।
इत्यर्थितश्च दृष्टश्च स्पृष्टो नतः कृतादरः ॥६२॥
पूजितो भोजितस्तत्रात्यन्तप्रेम्णा विलोकितः ।
भक्तार्तिहा प्रभुः स्वभक्तायाः कृते व्यचिन्तयत् ॥६३॥
कथमस्या मनोभीष्टं प्रदातव्यं भवेदिति ।
कया रीत्या पूरणीयो भवेन्मनोरथोऽपि च ॥६४॥
ददाम्यस्यै महासिद्धिं व्याप्यव्यापकरूपिणीम् ।
नैकरूपभवित्रीं च दिव्यां सिद्धिं ददामि ह ॥६५॥
इति संकल्प्य भगवान् ददौ शंखजलं मुखे ।
तावत्सा सर्वसामर्थ्यनिधिरूपा बभूव वै ॥६६॥
भगवाँस्तु ततः प्राह शारदे ! शारदात्मिका ।
दिव्यरूपा मम पत्नी सदा वैकुण्ठवासिनी ॥६७॥
गर्भादिदोषशून्या त्वं भवसीति विभावय ।
दत्तं मदीयपत्नीत्वं यौनमालिन्यवर्जितम् ॥६८॥
मलमूत्राद्यनास्पृष्टं दिव्यं रूपं सदाऽस्तु ते ।
अथ रूपं द्वितीयं त्वं गृहाण वाङ्मयं प्रिये ॥६९॥
कुमारीभावसम्पन्नं सरस्वतीस्वरूपकम् ।
ददामि तादृशं रूपं सुकुमारं तथा भव ॥७०॥
गच्छ तेन स्वरूपेण वेधोद्वारा प्रजासु वै ।
व्यापकं ते स्वरूपं स्या वाणीरूपं मुखे मुखे ॥७१॥
कुमारीत्वं सदा तत्र स्वरूपे तेऽस्तु शारदे ।
अन्तर्मुखप्रचारित्वे त्वराजस्वल्यमस्तु ते ॥७२॥
सात्त्विकत्वं कुमारीत्वं सर्वदा तत्तथाऽस्तु ते ।
अथ तृतीयरूपेण केनचित्सन्निमिषेण वै ॥७३॥
सरस्वती नदीरूपा त्वन्तर्जलप्रवाहिणी ।
अरजस्का कुमारी त्वं सदा तिष्ठतु शारदे ॥७४॥
चाञ्चल्यं च बहिर्भावो राजस्वल्यं च माऽस्तु ते ।
पावित्र्यं सर्वदा तेऽस्तु ऋतुधर्मविवर्जनम् ॥७५॥
राजस्वल्यं विलीनं ते मालिन्यभाववर्जितम् ।
भवताच्छारदे ! काऽप्यशुद्धिर्मास्तु त्वयि क्वचित् ॥७६॥
सर्वैश्वर्यवती पूज्या लोकेषु व्यापिनी भव ।
लोकानां राजसं पापं मास्तु त्वयि सरस्वति ! ॥७७॥
बहिर्भावे त्वयि राजस्वल्यादि लोककृद् यदि ।
दृश्येत तद्दूषणं तु लोकानां न तु तत् त्वयि ॥७८॥
राजस्वल्यकृतं पापं वक्तॄणां स्यादशुद्धता ।
पावित्र्यं सर्वदा तेऽस्तु सन्तु ते दिव्यसम्पदः ॥७९॥
कुमारीत्वं च पत्नीत्वं तेऽस्तु शुद्धं यथेप्सितम् ।
मम पत्नी शारदा त्वं कुमारी ब्रह्मपुत्रिका ॥८०॥
सर्वं दत्तं मया तुभ्यं वद त्वन्यत् किमिच्छसि ।
इत्युक्ता प्राह सा देवी मम पूजाकृतस्तु ये ॥८१॥
सरस्वत्याः शारदाया नद्या वाण्या उपासकाः ।
वैकुण्ठं ते समायान्तु स्वामिनस्ते प्रतापतः ॥८२॥
अधिमासस्य पञ्चम्यां प्रातः सम्पूज्य वै क्रमात् ।
नारायणं यथा प्राप्ताऽस्म्यहं पूर्णमनोरथा ॥८३॥
तथा ते पूजकाश्चाधिमासस्य पूजकास्तथा ।
नरा नार्यः समायान्तु वैकुण्ठं तव पादयोः ॥८४॥
जन्ममृत्युजराव्याधिदुःखदारिद्र्यवर्जितम् ।
शाश्वतं सच्चिदानन्दसन्दोहमूर्तिराजितम् ॥८५॥
तथास्त्विति प्राह कुर्वन् हरिदुन्दुभिघोषणाम् ।
सार्थकां सत्यफलदां स्वाधिमासस्य पुष्टिदाम् ॥८६॥
अधिमासोऽपि तां प्राह भक्ता ये या मयि त्वयि ।
तेषां तासां समुद्धर्ता त्वहं वै पुरुषोत्तमः ॥८७॥
दोषहर्ता सुखदाता मनोऽभीष्टप्रदस्तथा ।
पावयिता सिद्धिदाता भवाम्येव न संशयः ॥८८॥
शारदाया इदं प्राथ्यं श्रोष्यन्ति ये तु दुर्लभम् ।
पठिष्यन्ति च वा तेषां दुर्लभं सुलभं भवेत् ॥८९॥
अपतर्क्यं सुतर्क्यं स्यादप्राप्यं प्राप्यतां व्रजेत् ।
अभाव्यं भाव्यतां यायादनिष्टं चेष्टतां व्रजेत् ॥९०॥
भुवि स्वर्गे तथाऽन्यत्र दुर्लभं सुलभं भवेत् ।
कृष्णनारायणः साक्षाल्लभ्येतान्यस्य का कथा ॥९१॥
नारायणः स्वकृपया ददात्यल्पस्य वै बहु ।
अधिमासि कृतस्यात्राऽसंख्यफलं ददाति हि ॥९२॥
लब्धं लक्ष्मि ! यथा देव्या शारदाया विचित्रकम् ।
तथा विचित्रां भुक्तिं च मुक्तिं च लभतेऽर्चकः ॥९३॥
जपो होमो व्रतं दानं ध्यानं माला तपः श्रुतम् ।
पञ्चम्यां तत्कृतं सहस्रादिगुणं भविष्यति ॥९४॥

इत्युक्त्वा शारदां नीत्वा वैकुण्ठं हरिराययौ ।
सरस्वतीस्वरूपां तां प्राहिणोद् वैधसीं प्रजाम् ॥९५॥
अमालिन्यं पवित्रत्वमराजस्वल्यमित्यपि ।
पत्नीधर्माऽनभिभूतिः कौमार्यं चेति रक्षितम् ॥९६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पुरुषोत्तममासमाहात्म्ये वैराजपुत्र्याः शारदाया अधिकमासपञ्चम्यां व्रतपूजनादिकरणेन नारायणपत्नीत्वं पवित्रत्वम् अराजस्वल्यं कुमारिकात्वम् अगर्भाकत्वं सरस्वतीता चेत्यादिप्राप्तिनिरूपणादिनामा सप्तनवत्यधिकद्विशततमोऽध्यायः ॥ २९७ ॥

श्रीनारायण उवाच—

शृणु लक्ष्मि ! कथां दिव्यां सुखसम्पत्प्रदायिनीम् ।
कामनापूरिकां दैवीं पुरुषोत्तमयोगिनीम् ॥ १ ॥
सृष्ट्यारंभे तु पितृणां कन्या आसन् सुसद्गुणाः ।
तिस्रो नाम्ना स्वधापुत्र्यो मेना धन्या कलावती ॥ २ ॥
सर्वसद्गुणसम्पन्ना योगिन्यः कामरूपगाः ।
विहरन्त्यः पितृगेहे शुश्रुवुर्दुन्दुभिं हरेः ॥ ३ ॥
पुरुषोत्तममासोऽयं मन्नाम्ना तु मयाऽऽदृतः ।
एककालं द्विकालं वा तद्व्रतस्थमनोरथान् ॥ ४ ॥
पूरयिष्याम्यहं नारायणो ब्रवीमि वै स्वयम् ।
पितृगेहे तिथौ षष्ठ्यां प्रातराकर्ण्य घोषणाम् ॥ ५ ॥
तिसृभिश्चिन्तितं त्वद्य व्रतं कार्यं हरेः खलु ।
येनाऽस्माकं स्वभीष्टं दास्यति नारायणः स्वयम् ॥ ६ ॥
पितृणां नित्यसन्तोषस्तृप्तिर्वै शाश्वती भवेत् ।
तद्धेतुं मार्गयित्वाऽत्र याच्यः श्रीपुरुषोत्तमः ॥ ७ ॥
पतित्वेन तु विष्णुः स याचनीयो न वै क्वचित् ।
यतस्तस्य तु पत्नीनां बाहुल्यं विद्यते ततः ॥ ८ ॥
सापत्न्यं सर्वदा दुःखं सुखनिकृन्तनं हि तत् ।
पितृत्वेनाऽथवा भ्रातृत्वेनाऽप्येष्टव्य एव न ॥ ९ ॥
बालिकानां तदाऽस्माकमज्ञानां किं सुखेन वै ।
विवाहावधिवासस्तु तद्गृहे वै भवेत् ततः ॥१०॥
वियोगो बान्धवानां च पितुश्च दुःखमेव तत् ।
पुत्रत्वेनापि विष्णुः स याचनीयो न वै क्वचित् ॥११॥
ताडने शिक्षणेऽधिक्षेपादौ स्यादपराधिता ।
श्वशुरादिस्वरूपे तु मर्यादा दुःखदा भवेत् ॥१२॥
अपराधोऽतिनैकट्येऽतिदूरे स्यादसेवनम् ।
अतियोगेऽतिमर्यादा विमर्यादाऽपि दुःखदा ॥१३॥
विष्णुस्तस्माद् याचनीयः केन रूपेण वै भवेत् ।
परस्परमिति कृत्वा संविदं तिस्र एव ताः ॥१४॥
समादधुः क्षणं मौनं चिन्तयन्त्यो नरायणम् ।
तावद् व्योमगता वाणी ता जगाद पुनः पुनः ॥१५॥
कृष्णनारायणं जामातृत्वेन वृणुताऽबलाः ।
सर्वं सुखं भवेत् तस्मै पुत्रीदानेन शाश्वतम् ॥१६॥
पुत्री माता स्वयं प्रोक्ता पुत्रीसुखेन नित्यदा ।
सुखिता मन्यते पुत्रीदानं स्वदानवद् भवेत् ॥१७॥
जामाता पुत्रवत् स्याच्च दानपात्रं परं मतः ।
पूजनीयस्तोषणीयो विविधैः सेवनैरपि ॥१८॥
पुत्र्या सेवा कृता या तत्फलं मातुर्भवेदपि ।
मात्राऽनुनीतया पुत्र्या सेवनं यद् विधीयते ॥१९॥
शिष्यकृते गुरोर्भागस्तद्वन्मात्राऽपि लभ्यते ।
ऐहिकी सुखसम्पत्तिर्यशः ख्यातिर्ध्रुवा भवेत् ॥२०॥
श्रेयांसि बहुरूपाणि लोके जामातृवैभवात् ।
भवन्त्येवेति निश्चित्य जामातारं समीच्छत ॥२१॥
पुत्री वैकुण्ठनाथस्य धाम्नि वस्या वसेत् सदा ।
तन्मातापितरौ पुण्यौ क्वचिद् वैकुण्ठगौ मतौ ॥२२॥
सप्तकुलशतैकानां भवेदुद्धरणं तथा ।
माता मातामहाद्याश्च भवेयुर्मोक्षगास्तथा ॥२३॥
पितणां सर्वदा वासो जामातृभवने भवेत् ।
तस्माद्भवत्यो याचन्तु जामातारं हरिं सदा ॥२४॥
पुत्रीणां तत्र सापत्न्यं मा भवेदित्यपि ध्रुवम् ।
याचन्त्वधिकमासस्य व्रतं कृत्वा तथाऽर्चनम् ॥२५॥
विररामेति सम्बोध्याऽऽकाशवाणी ततश्च ताः ।
चकिता अतिसंहृष्टा विनिर्णीय तथैव ताः ॥२६॥
ब्रह्म भवताज्जामाता जामाता भवताद्धरिः ।
कृष्णो भवतु जामातेत्युक्त्वा वै चक्रिरे व्रतम् ॥२७॥
षष्ठ्यां प्रातश्च ताः स्नात्वा व्यधुस्तिस्रोऽपि पूजनम् ।
तिस्रो मूर्तीः सुवर्णस्य मेना धन्या कलावती ॥२८॥
विधाय पूजयामासुः क्रमादावाहनादिभिः ।
देवान् पञ्चामृतैस्त्रींश्च स्नपयामासुरादरात् ॥२९॥
चन्दनादिभिरामर्द्य स्नपयामासुरम्बरैः ।
सम्मार्ज्य वस्त्रभूषाभिरलंचक्रुर्द्रवादिभिः ॥३०॥
कुकुंमाऽक्षतकस्तूरीसुगन्धिवस्तुपुष्पकैः ।
हारमालामुकुटाद्यैर्धूपदीपादिभिस्तथा ॥३१॥

नैवेद्यैर्विविधैर्मिष्टैः पानताम्बूलचूर्णकैः ।
सम्पूज्य त्रीन् छत्रशय्याचामरोपानहादिभिः ॥३२॥
फलैश्च शर्कराभिश्च त्रीन् देवानभिवर्ध्य च ।
अर्घ्यं रत्नादिसंयुक्तं कदलीफलसंयुतम् ॥३३॥
ददुस्ताश्च नमस्कृत्य ततः पुष्पाञ्जलीन् ददुः ।
क्षमां सम्प्रार्थ्य ववरुर्जामाता भव केशव ॥३४॥
भवद्दुन्दुभिनिर्घोषादस्माभिर्ह्रत्सु संधृतः ।
सर्वथा सुखदो देव पुत्रीद्वारा भवात्र नः ॥३५॥
पुरुषोत्तममासस्य षष्ठीयं पालिता व्रते ।
करिष्यामो वयं नक्तं पुनः पूजां विधायते ॥३६॥
ततो विसर्जयामासुस्तान्देवान्प्रातरेव ह ।
दिवाव्रतं कृतं ताभिर्विप्रद्वाराऽनले घृतैः ॥३७॥
मध्याह्ने हवनं कारयित्वा पुपूजुरादरात् ।
पितृन् ऋषींस्तथा देवान्मुनीन् जनतपःस्थितान् ॥३८॥
पायसैर्दुग्धसारैश्च पिण्डकैः शाकपत्रकैः ।
रसैर्नानाविधैर्मिष्टैस्तर्पयामासुरीश्वरान् ॥३९॥
प्रसन्नास्ते शुभाशीर्भिर्युयुजुस्तिस्रकन्यकाः ।
ब्रह्म नारायणः कृष्णो भवद्व्रतफलप्रदाः ॥४०॥
भवन्तु भवतीनां च यथेष्टसुखकारिणः ।
अथ सायं पुनस्ताभिर्दीपमालां प्रकाश्य च ॥४१॥
मण्डपं कदलीस्तम्भपत्रतोरणराजितम् ।
कारयित्वा स्वर्णपात्रदर्पणोल्लेचशोभितम् ॥४२॥
वस्त्रविद्युद्विचित्रं सचित्रौज्ज्वल्यमनोहरम् ।
कारयित्वा च मध्ये सद्रत्नखचितकानकम् ॥४३॥
मखमल्लकशिप्वाद्यैरास्तृतं शोभनं महत् ।
सिंहासनं कारयित्वा ब्रह्म कृष्णं नरायणम् ॥४४॥
मूर्तित्रयं प्रतिष्ठाप्य गीतवादित्रपूर्वकम् ।
चक्रुः सुपूजनं तत्र सुवर्णाक्षतकुंकुमैः ॥४५॥
हरिद्रारक्तसद्द्रव्यैः सौभाग्यार्हसुवस्तुभिः ।
नर्तनं गायनं चक्रुः किंकिणीनादमिश्रितम् ॥४६॥
आरार्त्रिकं धूपदीपौ जलमर्घ्यं विधाय च ।
पूरिका दुग्धपानं च शाकं सर्षपपत्रजम् ॥४७॥
भोजयित्वा त्रयं वारिपानमर्पय्य सत्फलम् ।
प्रदत्वा च क्षणं ध्याने स्थितवत्योऽभवँश्च ताः ॥४८॥
तत्र ध्याने समायाता ब्रह्मकृष्णनरायणाः ।
एतासु मेनया दृष्टः कृत्यम्बरोऽतिपुष्टिमान् ॥४९॥
निहारधवलो व्याघ्रचर्मधृक् चन्द्रशेखरः ।
सजटः परितो व्याप्तब्रह्मतेजोऽतिभासुरः ॥५०॥
युवा मनोहारिमूर्तिर्ब्रह्म निर्गुणमेव यत् ।
सगुणत्वं समापन्नं नररूपं स एव सः ॥५१॥
निर्मलान्तर्वृत्तिगम्यः शंकरो भावपूरकः ।
प्रसन्नताप्रवर्षी प्रख्यापयन् स्मितहास्यतः ॥५२॥
तावत्तदङ्कमासीनां पुत्रीं स्वां भाविनीं शुभाम् ।
अपश्यन्नाह्वयन्तीं च ह्यम्बे माऽम्बेति वै मुहुः ॥५३॥
शंकरो ब्रह्मरूपोऽयं भगवान् प्राह मेनकाम् ।
मेनके त्वं ममांशस्य हिमाद्रेः संभविष्यसि ॥५४॥
पत्नी तत्र च कन्येयं पार्वती ते भविष्यति ।
तां त्वं दास्यसि मह्यं वै मत्तः सुखमवाप्स्यसि ॥५५॥
पुरुषोत्तममासस्यैकदिनस्य व्रतस्य च ।
तवेष्टं तु फलं सर्वसुखदं संभविष्यति ॥५६॥
इत्युक्त्वाऽन्तर्हितो देवः शंकरो ब्रह्म यत्परम् ।
अथैवं धन्यया दृष्टः स्वयं वै सधनुर्हरिः ॥५७॥
जटावल्कलशोभाढ्यः पुनः सद्राज्यचिह्नवान् ।
युवा मनोहरो देवो वासुदेवो गुणातिगः ॥५८॥
तेजःपरिधिसंव्याप्ताननहास्यान्वितः प्रभुः ।
चतुर्भुजो द्विभुजोऽयं सिंहासनविराजितः ॥५९॥
तस्य पार्श्वे सुरूपां स्वां कन्यां सीतां ददर्श सा ।
आह्वयन्तीं च माँ हेऽम्ब ! इति मिष्टगिरा मुहुः ॥६०॥
श्रीरामो भगवाँश्चायं प्रसन्नः प्राह धन्यकाम् ।
धन्ये त्वं वै जनकस्य गृहिणी भाविनी ततः ॥६१॥
इयं तु ते सुता सीता महालक्ष्मीर्भविष्यति ।
तां त्वं दास्यसि मह्यं वै मत्तः सुखमवाप्स्यसि ॥६२॥
पुरुषोत्तममासस्यैकस्याऽह्नस्तु व्रतस्य वै ।
तवेष्टं तु फलं स्निग्धं भविष्यति सुखात्मकम् ॥६३॥
इत्युक्त्वाऽन्तर्हितो वासुदेवो नारायणः प्रभुः ।
अथ दृष्टः कलावत्या कृष्णः सुदर्शनान्वितः ॥६४॥
मयूरपिच्छमुकुटः पीतवस्त्रौष्ठवेणुकः ।
गोपालबालकः पश्चात् स एव नृपतीश्वरः ॥६५॥
राजाधिराजो भगवान् सर्वशोभातिसुन्दरः ।
नवजीमूतसत्कान्तिर्युवा भूषाविभूषितः ॥६६॥
दिव्यसिंहासनश्रेष्ठस्थितो राजाधिराजकः ।
द्विभुजो मन्दहास्येन दर्शयन्सुप्रसन्नताम् ॥६७॥
तस्य पार्श्वे स्थितां दिव्यां रूपानुरूपशेवधिम् ।
पुत्रीं राधां भाविनीं तां सा ददर्श कलावती ॥६८॥
कृष्णकण्ठे निजं हस्तं ददतीं प्रेमविह्वलाम् ।
आह्वयन्तीं च माँ अम्बे हेऽम्बेति सद्गिरा मुहुः ॥६९॥

श्रीकृष्णः सुप्रसन्नः सन् स्पृशन् राधां कलावतीम् ।
प्राहेयं तव वैश्यत्वे पुत्री राधा भविष्यति ॥७०॥
तां त्वं दास्यसि मह्यं वै भाण्डीरवटसन्निधौ ।
मदीया सा सदा पत्नी मूर्धन्या स्याद्धि शाश्वती ॥७१॥
मत्तः सर्वं सुखं पुत्रीद्वारा त्वं समवाप्स्यसि ।
पुरुषोत्तममासस्यैकदिनस्य व्रतस्य वै ॥७२॥
फलं चाभिलषितं ते भविष्यति सुखात्मकम् ।
इत्यभिधाय कृष्णस्तत्स्थलादन्तर्हितोऽभवत् ॥७३॥
अथाऽचिरात्तु तिस्रस्तास्ततो ध्यानात्समुत्थिताः ।
प्रसन्नास्याः कृतकृत्या नत्वा नारायणं मुहुः ॥७४॥
व्यसर्जयन् सुकुसुमांजलीन् दत्वाऽथ तन्निशि ।
पारणां समकुर्वंस्ता भोजयन्त्योऽपि कन्यकाः ॥७५॥
ब्रह्मनारायणकृष्णमूर्तिदानं प्रचक्रिरे ।
अथाऽचिरादाद्ययुगे पितृभिस्ताः क्रमान्नु ॥७६॥
हैमजनकगोपेभ्यो मेना धन्या कलावती ।
विवाहिता तु विधिना तासां पुत्र्योऽभवँश्च ताः ॥७७॥
क्रमात्तु पार्वती सीता राधा ब्रह्मपरात्मिकाः ।
सृष्ट्यारंभे साधिकायामाद्यावताररूपिणे ॥७८॥
शिवाय रामरूपाय कृष्णाय त्वर्पिताश्च ताः ।
जामातॄँस्तान् परब्रह्मावताराँश्चाभिपद्य वै ॥७९॥
सर्वान्कामानवापुस्ता मेना धन्या कलावती ।
एवं लक्ष्मि ! व्रतं नक्तमधिमासे प्रपूजनम् ॥८०॥
षष्ठ्यां कालत्रये कृत्वा पुराणपुरुषोत्तमात् ।
प्राप्तं व्रतफलं प्राप्ता जामातारो हरिः स्वयम् ॥८१॥
पुत्र्यस्ताः शंभुना रामेण च कृष्णेन शाश्वते ।
कैलासे चाथ वैकुण्ठे गोलोके च रमन्ति हि ॥८२॥
तन्मातापितरश्चापि नित्यं मुक्तास्तदीयकम् ।
सुखं त्वत्यन्तमाप्ताश्च यथेष्टं कीर्तिमित्यपि ॥८३॥
किम्वधिकं च ते वक्ष्ये लक्ष्मि ! लोके परत्र च ।
माता स्वीयां सुपुत्रीं वै सुखिनीं कर्तुमिच्छति ॥८४॥
तदा तया प्रकर्तव्यं व्रतं चाधिकमासिकम् ।
षष्ठ्यां व्रतं पूजनं च यथा मेनादिभिः कृतम् ॥८५॥
कृष्णनारायणं जामातरं प्राप्स्यति वै ततः ।
भुक्तिं मुक्तिं तथा चान्यत् सर्वं प्राप्स्यत्ययत्नतः ॥८६॥
पुत्रीदानस्य सत्पात्रं कृष्णनारायणो यदि ।
तत्र प्राप्तं परां काष्ठां पुरुषार्थचतुष्टयम् ॥८७॥
कर्तव्यं लौकिकं वाऽन्यलौकिकं नाऽवशिष्यते ।
सर्वशेषी हरिर्यत्र रमते सुतया सह ॥८८॥
सुतया तुष्यति देवस्तस्य तोषे नु किं पुनः ।
दुर्लभं त्वथवाऽप्राप्यं भवेत् कृष्णस्य सन्निधौ ॥८९॥
एवं ते कथिता लक्ष्मि ! कृपा नारायणस्य सा ।
अधिमासे व्रतिनां मानसानि पूरयत्यजः ॥९०॥
यदीच्छेद्गुणसामर्थ्यरूपविद्यादिभिः समः ।
कृष्णेन तुल्यो जामाता स्यादिति चेत्तथा भवेत् ॥९१॥
यदीच्छेल्लोकविख्यातो राजसत्ताप्रवर्तकः ।
जामाता मे भवेच्चेति तदा वै तादृशो भवेत् ॥९२॥
यदीच्छेद्भगवद्भक्तो धनधान्यसमृद्धिमान् ।
जामाता मे चिरंजीवी भवेदिति तथा भवेत् ॥९३॥
यदीच्छेद् ब्राह्मणगुणो यद्वा क्षत्रियधर्मवान् ।
जामाता मे भवेदेव व्रतकर्त्र्यास्तथा भवेत् ॥९४॥
यदीच्छेद् गृहजामाता सुखदो मे भवेदिति ।
पुत्रपौत्रादिमान् स्याच्च व्रतकर्त्र्यास्तथा भवेत् ॥९५॥
यथा तु यादृशं जामातारं वाञ्छति तं तथा ।
तादृशं समवाप्नोति श्वश्रूः श्रीहर्यनुग्रहात् ॥९६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पुरुषोत्तम मासमाहात्म्ये पितृमानसकन्याभिः मेनाधन्या-कलावतीभिः अधिकमासदुन्दुभिश्रवणेन षष्ठ्यां त्रिकाल-व्रतेन क्रमात् पार्वतीसीताराधाऽभिधपुत्रीलाभे जामा-तृत्वेन शंकररामकृष्णानां सम्बन्धोपलब्धिरूप-फलप्राप्तिप्रभृतिनिरूपणनामाऽष्टनवत्यधिक-द्विशततमोऽध्यायः ॥२९८॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! दुन्दुभेस्तु निनादेन कृतं व्रतम् ।
सत्यलोकस्थिताभ्यां तु कन्याभ्यां विश्वकर्मणः ॥ १ ॥
सत्यस्वर्गादिलोकानां राज्ञां पातालवासिनाम् ।
नगरणां भवनानां सभानां यज्ञकर्मिणाम् ॥ २ ॥
मण्डपानां विनिर्माता नारायणांश एव यः ।
तस्य कन्या सिद्धिनाम्नी ज्येष्ठा बुद्धिः कनीयसी ॥ ३ ॥
सिद्धिबुद्धी सुरूपे च सुशीले देवपूजिके ।
नित्यं नारायणं स्मृत्वा प्रातः स्नात्वा तदुत्तरम् ॥ ४ ॥
पित्रोश्चरणयोर्नत्वा ब्राह्मसंज्ञे मुहूर्तके ।
गृहे देवगृहे चापि दीपं प्रज्वाल्य वै ततः ॥ ५ ॥
धूपं कृत्वा सुगन्धं च कीर्तनं कुरुतश्च ते ।
देवं नत्वा तु पुष्पाणि जलं च शर्करादनम् ॥ ६ ॥

समर्प्य गृहकार्याणि कुरुतश्चोभये ततः ।
सिद्धिस्तत्र सरोमध्याज्जलं त्वाहरति द्रुतम् ॥ ७ ॥
मार्जयित्वा गृहं बुद्धिर्वह्निं प्रज्वालयत्यपि ।
चुल्लिकायां जलपात्रमुष्णीकरणहेतवे ॥ ८ ॥
स्थापयित्वा च पितरो प्रस्नापयति भावुका ।
सिद्धिस्तावद्गृहशय्यादिकं संगृह्य शय्यधौ ॥ ९ ॥
रक्षयित्वाऽथ पर्यंकान् सम्माज्योंन्नीय सुस्थले ।
संकल्प्य रात्रिपात्राणां मज्जनं प्रकरोति वै ॥१०॥
तावद् बुद्धिः स्नातयोश्च पित्रोरार्द्राम्बराणि तु ।
प्रक्षाल्य रज्ज्वां विन्यस्य गत्वोद्यानं गृहानुगम् ॥११॥
देवपूजादिकार्यार्थं पुष्पाण्यानयति द्रुतम् ।
माता चाथ पिता यावत्तूपयाति हरेर्गृहम् ॥१२॥
आसने तावदास्तीर्य सन्ध्याद्यर्थं ददात्यपः ।
तुलसीपत्रकाऽम्भोजकुन्दचम्पकमालिकाः ॥१३॥
ददाति देवपूजार्थं पित्रोः परमभावतः ।
चन्दनाऽक्षतकुंकुमपञ्चामृतजलानि च ॥१४॥
पात्राणि पूजनार्हाणि घृतवर्तीश्च शर्कराः ।
द्राक्षादाडिमबीजानि विविधानि फलानि च ॥१५॥
एलालवंगताम्बूलनैवेद्यान्यानयत्यपि ।
पूजास्थां मातरं चाथ पूजास्थं पितरं तदा ॥१६॥
दश प्रदक्षिणाः कृत्वा कृत्वा दश नमस्क्रियाः ।
मातापितृचरणयोर्धौतं प्रगृह्य वै जलम् ॥१७॥
पार्श्वे तिष्ठति सेवार्थं दर्शनं प्रकरोति च ।
तावत्तत्र समागत्य सिद्धिरपि तथैव तत् ॥१८॥
प्रदक्षिणानमस्कारादिकं कृत्वा प्रसादजम् ।
जलं पीत्वा पुनर्याति चुल्लिकासन्निधौ गृहे ॥१९॥
महानसे तु पाकार्थे सामग्रीः सकलाश्च सा ।
सुशोधयित्वा सन्न्यस्य बुद्धिमाहूय तामनु ॥२०॥
करोति भक्ष्यभोज्यानि पेयानि विविधान्यपि ।
दुग्धपानं तु सा पित्रोः सिद्धिः कारयति द्रुतम् ॥२१॥
पूजापात्राणि सर्वाणि मृदा संघृष्य वै ततः ।
शुद्ध्वा प्रातर्विधेयं यत् कृत्वा सर्वं ततो ह्युभे ॥२२॥
विद्याभ्यासं च कुरुतः वैश्वदेवान्तकं ततः ।
कृत्वा तौ भोजयित्वा च विधिं माध्याह्निकं पुनः ॥२३॥
कृत्वा चातिथिगोजन्तुभागान् दत्वाऽऽश्रितादनम् ।
ततः स्वे भोजनं प्रासादिकं चक्रतुरादरात् ॥२४॥
महानसप्रशुद्धिं च पात्रशुद्धिं प्रमार्जनम् ।
जलाहरणमन्नादिशोधनं स्वपराह्णके ॥२५॥
देहश्रांगारिकं कृत्वा विरामं प्राप्नुतः क्षणम् ।
ततस्तीर्थकथादेवदर्शनादि विधाय तु ॥२६॥
सायं कृष्णस्य संपूजां षोडशोपसुवस्तुभिः ।
कृत्वापक्वान्नमिष्टानि भोजयित्वाऽतिभावतः ॥२७॥
पितरौ तु ततः शय्यादिकं संस्तीर्य ते ह्युभे ।
पादसंवाहनं पित्रोः कृत्वा सेवनमित्यपि ॥२८॥
दैनं तु यत् स्वकं गोसेवनं कीर्तनमैश्वरम् ।
यन्न्यूनं तत्तु सम्पूर्णं कृत्वा निःशेषमित्युभे ॥२९॥
किंचिदध्ययनं कृत्वा गृह्णीतः स्वापमल्पकम् ।
ब्राह्मकाले समुत्थायाऽभ्यस्तां विद्यां विचार्य च ॥३०॥
पुनश्च नैत्यकं कार्यं कुरुतः कन्यके ह्युभे ।
एवं तु सेवया हृष्टौ पितरौ त्वतिभावतः ॥३१॥
युयुजतुः शुभाशीर्भिः 'सुखिन्यौ भवतं ह्युभे' ।
ईश्वरे प्रेमयुक्तत्वान्नारायणहरिप्रभुः ॥३२॥
युवाभ्यां प्राप्स्यते काले सेवनीयतमः शुभः ।
इत्याशीर्वादपात्रे ते नित्यं हृदि हरिं मुहुः ॥३३॥
वाञ्छतः श्रीहरिं कृष्णं नारायणमधीश्वरम् ।
एवं व्रते सत्यलोके ताभ्यां मे दुन्दुभिः श्रुतः ॥३४॥
अधिमासस्य सप्तम्यां प्रातर्वै व्रतबोधकः ।
स तु बोधयते लोकान् अधिमासव्रतानि वै ॥३५॥
करिष्यन्ति यथाशक्ति ये ब्रह्माण्डगता जनाः ।
नरा नार्योऽथवा त्वन्ये तेषामभीष्टदायकः ॥३६॥
अलभ्यलाभदाताऽस्मि ह्यहं श्रीपुरुषोत्तमः ।
मासिकं पाक्षिकं साप्ताहिकं दैनिकमेव वा ॥३७॥
नैशं पौर्वाह्णिकं यद्वा पाराह्णिकं च मध्यगम् ।
उपवासान् फलाहारान् पयःपानं जलाशनम् ॥३८॥
कन्दाशनं निवाराद्यशनं सायं निशाशनम् ।
दिवाशनं वैकभुक्तं तिलभुक्तमयाचितम् ॥३९॥
कृत्वा यथाबलं पुष्पैः सम्पूज्य पुरुषोत्तमम् ।
जलेन वा फलैर्वापि मूलेन कुंकुमेन वा ॥४०॥
अक्षतैश्चन्दनेनापि सम्पूज्य पुरुषोत्तमम् ।
वस्त्रेण च सुदुग्धेन गूडेन मिष्टयाऽथवा ॥४१॥
शर्कराभिर्जलपानैस्ताम्बूलेनच्छदादिना ।
पत्रेण वाऽतिभावेन प्रेम्णा मां पुरुषोत्तमम् ॥४२॥
सन्तुष्याऽधिकमासे ते मत्तोऽर्जयन्तु दुर्लभम् ।
इदानीं कृपया दास्ये कृते स्वल्पेऽपि साधने ॥४३॥
अन्यमासेषु यत् कष्टसाध्यं भवति चात्र तत् ।
स्वल्पस्यापि ददाम्येव कोटिगुणितमद्य वै ॥४४॥

पश्चान्नैव प्रदास्येऽहं तस्माद् गृह्णन्तु भो जनाः ।
फलं पूगीफलस्यापि पारमेष्ठ्यपदाधिकम् ॥४५॥
जलपात्रव्रतेनापि क्षीरसागरशायिताम् ।
एकभुक्तव्रतेनापि गोलोकस्याऽधिकारिताम् ॥४६॥
नक्तमात्रव्रतेनाऽपि नारायणसमानताम् ।
पत्रपुष्पप्रदानेऽपि महेन्द्रपदशालिताम् ॥४७॥
दीपमात्रप्रदानेऽपि सूर्यचन्द्रादिदेहिताम् ।
नरो वा यदि वा नारी कुमारो वा कुमारिका ॥४८॥
इच्छति चेन्ममलक्ष्मीमपि मां पुरुषोत्तमम् ।
पत्नीं पतिं च वा पुत्रं दास्ये लक्ष्मीं च मामपि ॥४९॥
प्रगृह्णन्तु वरानस्मत् प्रकुर्वन्तु च सञ्चयम् ।
महाकृपामहावृष्टिलभ्यं पुण्यबलोदयम् ॥५०॥
सत्यं सत्यं नाऽनृतं वै घोषयत्येव दुन्दुभिः ।
अधिमासव्रतं कृत्वा गृह्णन्तु स्वेप्सितं प्रजाः ॥५१॥
इत्याश्रुत्य ह्युभे कन्ये सप्तम्यां प्रातरेव ह ।
दुन्दुभिं मे प्रणम्यैव वर्धयित्वाऽञ्जलिद्रवैः ॥५२॥
पूजयित्वा सुपुष्पैश्च हर्षयुक्ते बभूवतुः ।
पुनस्तावद्दुन्दुभेश्च कृपावाक्यं श्रुतं शुभम् ॥५३॥
कुमारिके यदीच्छेतां पतिं मां पुरुषोत्तमम् ।
एकभुक्तव्रतेनापि भविष्यामि पतिस्तयोः ॥५४॥
पूजां माध्याह्निकीं कृत्वा यथालब्धोपचारकैः ।
मिष्टान्नं भोजयित्वा मां प्राप्स्यतः पुरुषोत्तमम् ॥५५॥
इत्येवं संवदन्तं तं मत्वा स्वयोः कृते शुभम् ।
सिद्धिबुद्धी विदित्वा स्वं भाग्योदयमुपागतम् ॥५६॥
पूजयित्वा स्वपितरौ भोजयित्वा विधानतः ।
गृहकार्यं विनिर्वर्त्य पुष्पचन्दनवारिभिः ॥५७॥
अक्षतैश्चापि मिष्टान्नैर्धूपदीपसुचर्वणैः ।
यान्यासन् स्वगृहे तैस्तैरर्चयित्वा तु कानकम् ॥५८॥
नारायणं हरिं देवं पतिप्राप्तीच्छया ह्युभे ।
नीराजयामासतुश्च ह्यर्घ्यं कामफलं शुभम् ॥५९॥
दत्वा संप्रार्थयामासतुश्च नौ त्वं पतिर्भव ।
इत्युक्त्वाऽक्षतसंपूर्णाञ्जली ददतुरादरात् ॥६०॥
तावच्छ्रीभगवान् साक्षात् कृष्णनारायणः स्वयम् ।
युवा कटाक्षबाणेन निरीक्षन् प्राविरास वै ॥६१॥
द्वयोः प्रकोष्ठे संगृह्य स्वकरेण हरिः स्वयम् ।
मस्तकयोः करौ कृत्वा वक्षस्याकृष्य ते ह्युभे ॥६२॥
प्रिये इति च संभाष्य निभाल्य च मुहुर्मुहुः ।
मिलितोऽस्मि च जातोऽस्मि मिलिते विधिवत् प्रिये ॥६३॥
इत्युक्त्वाऽन्तर्दधे कृष्णस्ते ह्युभे तं हरिं सदा ।
जाग्रत्यपि तथा स्वप्ने पश्यतो वै मनोहरम् ॥६४॥
पार्वत्यंकस्थितं कृष्णमेकशुण्डं क्वचित्पुनः ।
अशुण्डं मुरलीयुक्तं गोलोकस्थं व्यपश्यताम् ॥६५॥
वरयोग्यं पुनस्तं च गणेशं शंकरात्मजम् ।
सशुण्डं च सुरूपं च ददृशतुः क्षणान्तरे ॥६६॥
श्वेतवर्णं सुनेत्रं च सुभालं यौवनान्वितम् ।
कृष्णात्मकं च तं दृष्ट्वा मुमूहतुः पुनः पुनः ॥६७॥
क्वचित्स्वप्ने च ते कन्ये कुर्वन्त्यौ मोदकान् बहून् ।
पश्यतः स्म च तत्रैत्य गणेशः फलकासने ॥६८॥
निषद्याऽर्थयते लड्डून् अन्येऽपि ददतुस्तदा ।
पार्श्वद्वये ह्युभे स्थित्वा ददतुर्लड्डूकान् मुहुः ॥६९॥
गणेशः स्वस्य शुण्डेन पार्श्वद्वये कृतेन च ।
वारंवारं प्रदत्तान् सुलड्डून्प्राप्य निजे मुखे ॥७०॥
न्यस्यत्यतीव मिष्टाँश्च प्रेम्णा भक्षयति द्रुतम् ।
प्रशंसति करौ दत्वा कन्ययोः पृष्ठयोस्तदा ॥७१॥
एकैकं लड्डुकं ताभ्यां दत्वा संभोजयत्युभे ।
हसन् हास्यं प्रकुर्वन् रामयन् संरमयन्मुदा ॥७२॥
दर्शयित्वैवमात्मानं तिरोभावं प्रगच्छति ।
कन्येऽपि जाग्रते भूत्वा मुहुः संस्मरतुश्च तम् ॥७३॥
एवं ह्यये गणपतौ जाते कालेऽप्युपस्थिते ।
विश्वप्रकर्मणा ज्ञात्वा प्राग्वृत्तान्तं तदीयकम् ॥७४॥
गणेशं तु समाहूय विधिना लग्नशालिना ।
गणेशायाऽर्पिते कन्ये सिद्धिबुद्धीसमाह्वये ॥७५॥
विवोहोत्तरकालेऽत्राऽऽश्चर्यं जातं महच्छृणु ।
गणेशेन कृते रूपे द्वे तदानीं गृहान्तरे ॥७६॥
एकं श्रीकृष्णरूपं च गणेशात्म द्वितीयकम् ।
कन्ययोश्चापि रूपे द्वे द्वे कृते सुमनोहरे ॥७७॥
राधातुल्ये तु रूपे द्वे श्रीकृष्णो गरुडोपरि ।
नीत्वा ययौ स्वकं धाम गोलोकं शाश्वतं तदा ॥७८॥
तत्र वै रमते सिद्ध्या बुद्ध्या च दिव्यरूपया ।
एवं ताभ्यां फलं मुक्त्यात्मकं दत्तं व्रतस्य वै ॥७९॥
अथाऽन्येन स्वरूपेण गणेशाख्येन तेन ते ।
उभे कृत्वा स्वके त्वंके प्रेम्णा निभालिते मुहुः ॥८०॥
चुम्बिते गण्डयोश्चापि तोषितेऽन्तर्गृहे गते ।
नवयौवनभावस्य फलं वै प्रापिते रतेः ॥८१॥
इति लक्ष्मि ! फलं ताभ्यां लब्धं कृष्णधवात्मकम् ।
दिव्यं लोकेऽपि विख्यातिं प्राप्तं रूपं द्वयं द्वयम् ॥८२॥

पूज्यभावं प्रतिष्ठां च प्राप्तेऽधिमाससत्कृतात् ।
एकभुक्तव्रताद् यद्वा प्राप्तवस्तुभिरर्चनात् ॥८३॥
एवं या कन्यका कुर्यात्पुरुषोत्तमपूजनम् ।
सप्तम्यां त्वेकभुक्तं च वाञ्छया कृष्णसत्पतेः ॥८४॥
साऽवश्यं यत्र कुत्रापि प्रादुर्भूतं स्वकं पतिम् ।
कृष्णनारायणं दिव्यं मानवं सा त्ववाप्स्यति ॥८५॥
भुक्तिं कृत्वा बहून् लोकान् सम्प्राऽनुभूय शाश्वतान् ।
ततः श्रीकृष्णगोलोकं वैकुण्ठं वाऽऽप्स्यति ध्रुवम् ॥८६॥
तस्माद् व्रतं प्रकर्तव्यमधिमासप्रसंभवम् ।
अनायासेन मुक्तिः स्यात् पुनर्जन्म न शिष्यते ॥८७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पुरुषोत्तममासमाहात्म्ये विश्वकर्मणः सिद्धिबुद्धिपुत्रीभ्यां मातापितृसेवयाऽऽशीर्वादोत्तरमधिकमासव्रतबोधकदुन्दुभिश्रवणोत्तरं कृतेन सप्तम्या एकभुक्तव्रतेन तयोः श्रीकृष्णदर्शनंरूपद्वयप्राप्तिर्गोलोकवासो गणपत्यात्मककृष्णेन सह विवाहश्चेत्यादिनिरूपणनामैकोनशताधिकद्विशततमोऽध्यायः ॥२९९॥

श्रीनारायण उवाच—

शृणु लक्ष्मि! युगारंभे सृष्ट्यादौ यदभूत्पुरा ।
षट्कं ज़ातमपत्यानां ब्रह्मणो मानसान्निशि ॥ १ ॥
तपसा क्लेशितस्याऽस्य ललाटादभवन्महान् ।
रुद्रः सोऽप्याज्ञयाऽजस्य रुद्रैर्जगदपूरयत् ॥ २ ॥
तांस्तु भयंकरान्क्रूरान् जगद्विप्लवकारकान् ।
दृष्ट्वा तोषं न वै लेभे ब्रह्माऽऽज्ञामकरोत्पुनः ॥ ३ ॥
संहारार्थं तु रुद्राणां सृष्टेस्तदा सुतेन वै ।
रुद्रेण संहृताः सर्वे जगच्छून्यमभूत्ततः ॥ ४ ॥
सत्यलोकं गृहं स्वस्य शून्यं विलोक्य विश्वसृट् ।
औदासीन्यं जगामाऽति बालकाकलिकां विना ॥ ५ ॥
यत्र गृहे न वै बालो बालानां रोदनं न वा ।
क्रीडनं कलहो नो न श्रूयते बालभाषितम् ॥ ६ ॥
तद्गृहं कालरात्रेर्वै फेरुराजगृहोपमम् ।
विना पुत्रं विना पुत्रीं स्वर्गं तु नरकायते ॥ ७ ॥
ह्रीश्वराणां भवनानि रणायन्ते प्रगर्तवत् ।
जीर्णवृक्षायते सौधः केवलवृद्धमण्डलः ॥ ८ ॥

अनपत्यं कुटुम्बं च शुष्कपर्वतशृंगवत् ।
अनपत्यः पिता दग्धज्वालामुखिस्थलीसमः ॥ ९ ॥
अबालकाकलीशब्दं महाप्रलयवद्गृहम् ।
रसा अप्यरसाः सौधे जायन्ते बालकं विना ॥१०॥
भोज्यान्यपि कवोष्णानि जायन्तेऽतृप्तिदानि च ।
उत्सवा यद्विना नैव भवन्त्येव नवा नवाः ॥११॥
यदुन्नतिकृतोत्साहा अपि नश्यन्ति यद्विना ।
शुष्कायन्ते मुखचन्द्रा ग्रीष्मे कर्दमपिण्डवत् ॥१२॥
रूक्षायन्ते मानसानि तापे बर्बुरकाष्ठवत् ।
तिक्तायन्ते च पेयानि ज्येष्ठे निम्बरसादिवत् ॥१३॥
सुखदानि त्वपत्यानि जायन्ते पुण्यशालिनाम् ।
दुःखदानि दरिद्राणि जायन्ते दुष्प्रकर्मिणाम् ॥१४॥
ऋणानुबन्ध एवात्र कारणं प्राग्विसर्गजः ।
नूतनं चापि कर्तव्यं स्वपत्यदायकं तपः ॥१५॥
इति संकल्प्य च ब्रह्मा संयम्येन्द्रियमण्डलम् ।
तपश्चचार घटिकामात्रं समाधिसंस्थितः ॥१६॥
अपत्यार्थी स्वपत्यार्थी सस्मार तानि वै हृदि ।
तावत् तन्मानसा जाता दुन्दुभिघण्टकम्बवः ॥१७॥
त्रयः पुत्राः सुतास्तिस्रो घण्टा नीराजना तथा ।
झल्लरी चेति मानस्यः पश्चाज्जातं त्रिकं पुनः ॥१८॥
कास्यं च पञ्चपात्रं च धूपध्रं चेति मानसम् ।
तिस्रः पुत्र्यस्त्रयः पुत्रास्त्रयं षण्ढं प्रजापतेः ॥१९॥
संकल्पान्नवसंख्यानि त्वपत्यानि प्रजज्ञिरे ।
निषेके वाथ संकल्पे भावना यादृशी भवेत् ॥२०॥
तादृशं जायतेऽपत्यं तथा जातानि पद्मजे ।
तत्र षट् खलु वाचालान्याक्रोशकारकाणि हि ॥२१॥
कम्बुर्घण्टो दुन्दुभिश्च घण्टा च झल्लरी तथा ।
कांस्यं च जातमात्राणि चक्रुः कोलाहलं गृहे ॥२२॥
औदासीन्यं गतं तेन शून्यतापि गता विधेः ।
गृहं क्रीडदपत्यैश्च सोत्सवं समजायत ॥२३॥
ब्रह्मा तेन प्रसन्नोऽभूत् संसक्तो लालनेऽवने ।
गृहं सापत्यकं मंगलायतनं त्वमन्यत ॥२४॥
नीराजना पञ्चपात्रं धूपध्रं मौनवृत्तितः ।
षड्भिस्तानि रमन्ते वै नर्तनाद्यैस्तदाक्षणे ॥२५॥
नित्यं प्रातस्तथा सायं मिलित्वा नव तानि वै ।
कुर्वन्ति कीर्तनं स्वस्वकर्तव्यार्थैः प्रपूजनम् ॥२६॥
कृष्णनारायणस्यैव बभूवुर्भक्तिमन्ति वै ।
ब्रह्मा जहर्ष चातीव स्वपत्यलाभतः खलु ॥२७॥

एवं प्रयाते समयेऽधिमासस्याऽष्टमीप्रगे ।
महादुन्दुभिरेतैस्तु श्रुतो विष्णुपदीतटे ॥२८॥
प्रातः स्नानं प्रकुर्वद्भिः श्रुतं तत्र शुभावहम् ।
शृण्वन्तु चेतनाः सर्वे स्थावराश्च जडा अपि ॥२९॥
मूर्तिमन्तो ह्यमूर्ताश्च बाला वा बालिकास्तथा ।
बालकान्यपि शृण्वन्तु स्वल्पायासं फलोत्तमम् ॥३०॥
पुरुषोत्तमवाद्योऽहं याथातथ्येन वच्म्यहम् ।
पुरुषोत्तममासोऽयं पुरुषोत्तम एव सः ॥३१॥
सर्वमासातिगः प्रापयति श्रीपुरुषोत्तमम् ।
मनसा कर्मणा वाचा त्वाद्दतः पुरुषोत्तमः ॥३२॥
येन स त्वाद्दतः स्याच्छ्रीपुरुषोत्तमशार्ङ्गिणा ।
अद्य मौनं विधातव्यं भोजनं चैककालिकम् ॥३३॥
प्रातः संपूजनं कार्यं मध्याह्ने च तथा निशि ।
कृष्णनारायणस्याऽद्य रूपं ध्यातव्यमैश्वरम् ॥३४॥
प्रातः स्नात्वा हरिं नत्वा पूजासामग्रीरानयेत् ।
सुवर्णप्रतिमां विष्णोः स्थापयेन्मण्डले घटे ॥३५॥
पञ्चामृतेन दुग्धेन दध्ना क्षौद्रेण सर्पिषा ।
शर्करया शुद्धवार्भिः स्नापयेत् पुरुषोत्तमम् ॥३६॥
वस्त्रैः सम्मार्ज्य धौत्रादि धारयेत् पुरुषोत्तमम् ।
आभूषणानि कटककिरीटादीनि धारयेत् ॥३७॥
चन्दनाऽगरकस्तूरीकुंकुमादिभिरर्चयेत् ।
भोजयेद् दुग्धपाकादि ताम्बूलादि समर्पयेत् ॥३८॥
धूपदीपनमस्काराऽऽरात्रिकाद्यैर्विवर्धयेत् ।
प्रदक्षिणादण्डवद्भिः प्रार्थयेन्मनसेप्सितम् ॥३९॥
जलं पेयं तथाऽर्घ्यं च फलं पुष्पाञ्जलिं ददेत् ।
प्रार्थयेच्च कृपानाथ पुरुषोत्तम केशव ॥४०॥
व्रतं तव कृते चाद्य पुरुषोत्तममासिकम् ।
अष्टम्यां पालितं चाहर्निशं कृत्वा ह्युपोषणम् ॥४१॥
एकभक्तं च वा कृत्वा यथाशक्ति कृतं प्रभो ।
क्रियते वा करिष्ये वा निर्विघ्नं तत समाप्यताम् ॥४२॥
यथेष्टं च फलं देहि कृपासिन्धो जनार्दन ।
इति संप्रार्थ्य देवेशं लभन्तां मनसेप्सितम् ॥४३॥
महादुन्दुभिं श्रुत्वैव वेधोबालानि तत्क्षणम् ।
स्नात्वाऽऽश्चर्यभराण्येवाऽऽययुस्तस्याऽन्तिकं मुदा ॥४४॥
पप्रच्छ दुन्दुभिः स्वल्पो महादुन्दुभिमुत्सुकः ।
कोऽसि कस्मात् समायातः किं प्रवक्षि ददासि किम् ॥४५॥
क्व ते वासश्च किं कार्यं करोषि त्वत्प्रभुश्च कः ।
इति दुन्दुभिना पृष्टो महादुन्दुभिराह तम् ॥४६॥
अहं वैकुण्ठपुत्रोऽस्मि वैकुण्ठादागतोऽस्मि च ।
वैकुण्ठे मे सदा वासो नारायणस्य मन्दिरे ॥४७॥
कार्यं नारायणनीराजनकाले प्रवादनम् ।
मम स्वामी कृष्णनारायणः श्रीपुरुषोत्तमः ॥४८॥
यस्याऽऽज्ञया जनको मे वैकुण्ठधामरूपधृक् ।
भूत्वा नित्यं वर्तते तु सेवायामपि सेवकः ॥४९॥
पित्राज्ञया तथा नारायणाज्ञयाऽप्यहं सदा ।
विचरामि त्रिलोक्यां वै प्रेष्यकार्यकरोन्वहम् ॥५०॥
यात्वाज्ञा जायते तस्य नारायणस्य तामहम् ।
प्रवदामि घोषयामि पुनर्गच्छामि तत्र च ॥५१॥
स्वरूपे द्वे मम स्तो वै चतुर्बाहुस्तु पार्षदः ।
सेवायां सर्वदा वर्ते द्वितीयोऽस्मि सुदुन्दुभिः ॥५२॥
घोषयामि हरेराज्ञां दण्डेन ताडितो मुदा ।
अनेकानि स्वरूपाणि धर्तुं शक्तोऽस्म्यनुग्रहात् ॥५३॥
सेवया मत्कृपया च सन्तुष्टो भगवान् स्वयम् ।
ददाति भोजनं श्रेष्ठं सर्वं प्रासादिकन्तु मे ॥५४॥
उद्यानानि भवनानि दिव्यान्युपस्कराणि च ।
यथा नारायणस्येव मेऽपि सन्ति च तान्यपि ॥५५॥
सर्वं नारायणतुल्यं न्यूनं किञ्चिन्न मेऽस्ति तत् ।
आनकः पटहो भेरी ढक्का रूपाणि सन्ति मे ॥५६॥
यथापेक्षं निवसामि सेवायां मन्दिरेषु वै ।
दुन्दुभिस्तं समाकर्ण्य तत्सुखा कृष्टमानसः ॥५७॥
पप्रच्छ दुन्दुभिश्रेष्ठं कथं वै प्राप्यते हरेः ।
वैकुण्ठं वा तदीयं च स्मृद्धं धाम तु मादृशैः ॥५८॥
महादुन्दुभिराहैनं जिज्ञासुं स्वल्पदुन्दुभिम् ।
अधिमासेऽप्येककालं द्विकालं वा त्रिकालिकम् ॥५९॥
यस्मिन् कस्मिन् दिने कृष्णपूजनं तस्य चासिदम् ।
उपवासाऽयाचितादिव्रतेनैकाऽदनेन वा ॥६०॥
नक्तेन वा पयसा वा कृतव्रतेन चाप्यते ।
कृतेनाऽल्पेन बहु तत् फलं वै लभ्यते जनैः ॥६१॥
जलमात्रप्रदानेन हरये लभ्यतेऽपि तत् ।
यस्याऽग्रे किंचन नास्ति भक्त्या तेनापि लभ्यते ॥६२॥
देवाग्रे नर्तनं कार्यं गायनं सुस्वरान्वितम् ।
तुष्टस्तेनापि भगवान् वैकुण्ठं प्रददाति वै ॥६३॥
वैकुण्ठं चापि गोलोकं ब्रह्मधामाऽक्षराह्वयम् ।
तदुत्तरोत्तरं श्रेष्ठं यदिच्छति ददाति सः ॥६४॥
एतच्छ्रुत्वाऽऽह वै स्वल्पदुन्दुभिर्दुन्दुभीश्वरम् ।
किं वैकुण्ठात्परं चास्ति गोलोकं वैस्थलान्तरम् ॥६५॥

गोलोकात् किं परं ब्रह्मधामाऽस्त्यन्यत् स्थलं किमु ! ।
कस्तत्र वसति स्वामी वयं तं प्राप्नुमो न वा ॥६६॥
महादुन्दुभिराह श्रीलक्ष्मीनारायणः प्रभुः ।
स्वामी वैकुण्ठलोकस्य यदीष्येताऽऽप्यते स वै ॥६७॥
स्वामी गोलोकधाम्नः श्रीराधाकृष्णो महान् प्रभुः ।
यदीष्येताऽऽप्यते सोऽधिमासे कृतव्रतेन वै ॥६८॥
स्वामी च ब्रह्मलोकस्याऽक्षरेशः पुरुषोत्तमः ।
यस्मात्परो न वै कश्चिन्न च येन समोऽस्त्यपि ॥६९॥
अनादिश्रीकृष्णनारायणः सोऽस्ति परेश्वरः ।
यस्याऽऽज्ञां मस्तके धृत्वा घोषयामि व्रतार्चनम् ॥७०॥
अधिमासस्य स स्वामी ददाति व्रतिने हि तत् ।
व्रती यदीहते दिव्यं सर्वं ददात्यनुग्रहात् ॥७१॥
वः समिच्छा तु यस्यास्ति कार्यं तन्मूर्तिपूजनम् ।
वैकुण्ठात् कोटिगुणकं सुखं गोलोकधामनि ॥७२॥
गोलोकादप्यसंख्यं च परे धाम्न्यक्षरे सुखम् ।
आनन्दानां तथाऽऽनन्त्यमैश्वर्याणामसंख्यता ॥७३॥
नान्यद् वै तादृशं श्रेष्ठं भवतीत्यवगम्यताम् ।
ब्रह्मविष्णुमहेशानां लोकास्तन्निरयोपमाः ॥७४॥
गन्तव्यं यदि चेत् तत्राऽर्चयन्तु पुरुषोत्तमम् ।
अद्याऽष्टम्यां यथाशक्ति यथाभावं स पूज्यताम् ॥७५॥
नृत्यं विधीयतां चापि गायनं च विधीयताम् ।
इष्टं फलं हरिः सर्वं भावानुगं प्रदास्यति ॥७६॥
निवासार्थं यदा सर्वधामसु गोलकेषु च ।
प्रत्यच्युतग्रहं चापीष्यते सोऽपि ददाति तत् ॥७७॥
श्रुत्वा त्वहो ह्यहो कृत्वा महाश्चर्ययुतानि वै ।
वेधोऽपत्यानि तत्रैव नृत्यं चक्रुश्च गायनम् ॥७८॥
पुपूजुर्दुन्दुभिश्रेष्ठमर्थयामासुरादरात् ।
वयं तत्राऽऽगमिष्यामो यत्र श्रीपुरुषोत्तमः ॥७९॥
त्वया तस्मै कथितव्यमस्माकं व्रतपूजनम् ।
व्रतं कुर्मो वयं त्वद्याऽष्टम्यामुपोषणान्वितम् ॥८०॥
पूजनं त्वक्षरेशस्य गोलोकेशस्य चापि वै ।
वैकुण्ठेशस्य वै कुर्मो येन सर्वत्र नो गतिः ॥८१॥
दुन्दुभीशः सत्कृतस्तैर्नीत्वा वेधोगृहान्तरे ।
यथा नारायणः पूज्यः सर्वैस्तैः पूजितस्तथा ॥८२॥
शृंगारितः सेवितश्च विभूषाभिरलंकृतः ।
भोजितो मर्दितश्चैव दक्षिणाभिरलंकृतः ॥८३॥
पादसंवाहितो देहे मर्दितो विश्रमीकृतः ।
स्वापितश्च क्षणं पश्चाद् बोधितः संविसर्जितः ॥८४॥
सेवयाऽतिप्रसन्नः स परावृत्य पुनः पुनः ।
दुन्दुभिप्रभृतीन् प्राह कुर्वन्तु व्रतमादरात् ॥८५॥
ब्रह्माण्डे घोषणां कृत्वा सायमागत्य चात्र वै ।
मिलित्वा भवतः पश्चाद् यास्ये वैकुण्ठमेव ह ॥८६॥
इत्युक्त्वा दुन्दुभिश्रेष्ठो लोकान् बोधयितुं ययौ ।
दुन्दुभिप्रभृतयश्च प्रातर्मध्याह्नके निशि ॥८७॥
स्नानं कृत्वा त्रिषवणं त्रिकालं पूजनं तथा ।
लक्ष्मीनारायणस्यापि राधाकृष्णस्य वस्तुभिः ॥८८॥
अक्षराधिपतेश्चापि दिव्यैः षोडशकोत्तमैः ।
दुग्धपाकादिभिर्देवान् भोजयित्वा ततो मुदा ॥८९॥
निर्णयं स्म प्रकुर्वन्ति भगवन्मूर्तिसन्निधौ ।
कृष्णनारायणब्रह्मेश्वराः शृण्वन्तु निर्णयम् ॥९०॥
भगवत्सदनेऽस्माभिः स्थातव्यं सर्वदा ध्रुवम् ।
पूजायां च प्रसेवायां सर्वसृष्टौ हरेः पुरः ॥९१॥
यथास्वाभिलषितं स रक्षत्वस्मान् स्वसन्निधौ ।
सेवामुक्तिः सदाऽस्माभिर्ग्रहीतव्या नहीतरा ॥९२॥
दास्यं वै सर्वतः श्रेष्ठं तत् किं न रोचयामहे ।
नियोजनं हरिर्विनिमयं स्वामी करोतु नः ॥९३॥
इति ते प्रार्थनां कृत्वा सवाद्यनृत्यगायनम् ।
कुर्वन्ति स्म नवैवैवं हावभावस्वरान्वितम् ॥९४॥
कृष्णनारायणब्रह्माधिपास्तुष्टा दयालवः ।
पुरुषोत्तममासोऽपि तत्र पश्यति भावनाम् ॥९५॥
तावत्तत्र समायातो दुन्दुभीशो हरेर्निशि ।
दृष्टवन्तः श्रुतवन्तो भक्तिं सर्वातिशायिनीम् ॥९६॥
नवानां वेधसोऽपत्यानां परप्रेमयुञ्जताम् ।
प्रसन्नाश्चातितुष्टाश्च सर्वे ते परमेश्वराः ॥९७॥
साक्षाद् दिव्यसुरूपास्ते प्रादुर्बभूवुरन्तिके ।
सर्वे दिव्यकिरीटास्ते दिव्यमालाद्यलंकृताः ॥९८॥
कोटिविद्युल्लतातुल्यलक्ष्मीराधाप्रभायुताः ।
दिव्याम्बरधराः छत्रिचामरिभिः सुसेविताः ॥९९॥
कोटिकन्दर्पलावण्यसौन्दर्यमृदुतान्विताः ।
दिव्यैश्वर्यमहावीर्याऽऽनन्दसंभृतमूर्तयः ॥१००॥
प्रसन्नवदनाः प्रोचुः किमपत्यानि चेष्यते ।
युष्मद्भक्त्या दुन्दुभीशपूजनेन च सेवया ॥१०१॥
अतितुष्टाः स्म पुत्रा वो यदिष्टं ब्रूत तच्च नः ।
दृष्ट्वा श्रुत्वा ततोऽपत्यान्यतिहृष्टानि वेधसः ॥१०२॥
प्राहुर्युष्मद्गृहाण्यस्मान्नयत श्रीपरेश्वराः ।
नियोजयत सेवायां पादयोर्वः सुसन्निधौ ॥१०३॥

प्रतिगृहं प्रतिलोकं युष्माकं भवनं च यत् ।
तत्र तत्र सदा सेवां करिष्यामो नवैव ह ॥१०४॥
वयं समप्रजन्मानः स्वसारो भ्रातरस्तथा ।
परस्परं ततोऽस्माकं वियोगो मा भवेत् क्वचित् ॥१०५॥
यत्र युष्मत्सुसेवायां रक्षन्त्वस्मान् दिवानिशम् ।
तत्राऽस्मान् संहतानेव रक्षन्तु परमेश्वराः ॥१०६॥
युष्मत्सेवां परां मुक्तिं लब्ध्वा स्यामः सुखालयाः ।
विज्ञापितं यदस्माभिस्तदावहत यन्मतम् ॥१०७॥
वयं तु किंकरा दासा दास्ये तुष्टा न चाऽर्थने ।
स्वामी तुष्टो यथा स्यात्तत्कर्तव्यं किंकरस्य वै ॥१०८॥
इति तेषां भावगर्भं श्रुत्वा ते परमेश्वराः ।
पप्रच्छुर्दुन्दुमीशं किमेभ्यो देयं वदाऽऽज्ञया ॥१०९॥
महादुन्दुभिराहाऽत्र दायादाः सुलभा ननु ।
किंकरा दासवर्गाश्च लोके सर्वत्र दुर्लभाः ॥११०॥
दासवर्गाय सर्वस्वं स्वामिनो भवति ध्रुवम् ।
एतादृशेभ्यो दासेभ्यः किं किं देयं न विद्यते ॥१११॥
देयश्चाऽक्षरलोको वै देयो गोलोक इत्यपि ।
देयो वैकुण्ठ एवापि धामान्यन्यानि यान्यपि ॥११२॥
मन्दिराणि तथान्यानि ब्रह्माण्डेषु भवन्ति च ।
यत्र यत्र तु वो मूर्तिरवतारादिमूर्तयः ॥११३॥
तत्र तत्र तु सर्वत्र वास एभ्यः प्रदीयताम् ।
मयापि सह वस्तव्यं ह्येते भक्ता हि मादृशाः ॥११४॥
एषां रूपाण्यसंख्यानि भवन्तु भवतां यथा ।
भवद्भिः सह तिष्ठन्तु जयगायननर्तनैः ॥११५॥
आरार्त्रिके च पूजायां भ्रामणैरुत्सवेषु च ।
घोषणैरर्घ्यदानेन सुगन्धाद्यर्पणेन च ॥११६॥
सायं प्रास्ततु पूजायां प्रत्येके मन्दिरे तु वः ।
नीराजना नर्तनं भ्रामणं करोतु साग्निका ॥११७॥
दुन्दुभिः पटहात्माऽयं जयध्वानं करोतु वै ।
घण्टो ह्यनुजयं तस्य करोतु वश्च मन्दिरे ॥११८॥
कांस्यं करोतु मोक्षस्य घोषणां सुमनोहराम् ।
नीराजनादिवेलायां भजन्तां देहिनो हरिम् ॥११९॥
अभजन्तो निन्दकाश्च नास्तिकाश्च विरोधिनः ।
भविष्यन्ति यमैर्दण्ड्याः करोत्वित्यपि घोषणाम् ॥१२०॥
घण्टा करोतु गीतिं च नृत्यं वै सुस्वरा करे ।
झल्लरी गायनं लोकाऽऽह्वानं करोतु मन्दिरे ॥१२१॥
कम्बुस्तीर्थजलेनैव करोतु भ्रामणं पुरः ।
पञ्चपात्रं पादजलं रक्षत्वर्घ्यं ददात्वपि ॥१२२॥
धूपध्रं तु सुगन्धं वै धूपं करोतु मन्दिरे ।
दुन्दुमीशस्त्वहं सर्वान् दूरस्थानाह्वयामि ह ॥१२३॥
आगच्छन्तु महाभागा दर्शनार्थं हरेरिह ।
मुमुक्षवो नरा नार्यो दुष्टास्तु यान्तु दूरतः ॥१२४॥
एवं सर्वे वयं युक्ताः करिष्यामः प्रसेवनम् ।
व्रतस्याऽस्य फलं त्वेभ्यो ददत श्रीपरेश्वराः ॥१२५॥
किं च मद्वत् किलैतेषां ब्रह्माक्षरे द्विहस्तता ।
गोलोके द्विभुजत्वं वैकुण्ठे करचतुष्टयम् ॥१२६॥
तत्तत्स्वामिस्वरूपैश्च साम्यं भवतु दिव्यता ।
असंख्यरूपधारित्वं स्यादेषां प्रतिमन्दिरम् ॥१२७॥
युष्मादृशं च पावित्र्यं सत्कार्यता भवादृशी ।
पूज्यता रक्ष्यता चापि सर्वदाऽस्तु भवादृशी ॥१२८॥
एषां निन्दाप्रकर्तारो भवन्तु निरयं गताः ।
एषां नाशं तथा चौर्यं भर्त्सनं भञ्जनादिकम् ॥१२९॥
करिष्यन्ति जना ये ते भवन्तु निरयं गताः ।
एषां त्वंगप्रघातेषु सन्धानादिप्रकारिणाम् ॥१३०॥
एषां प्रतिमाकर्तॄणां प्रतिमादानिनां तथा ।
प्रतिमापुष्टिकर्तॄणां जीर्णोद्धारादिकारिणाम् ॥१३१॥
पुरुषोत्तमलोकस्य प्राप्तिर्भवतु सेविनाम् ।
एतद्वाद्यनिनादादीन् कुर्वाणानां तु देहिनाम् ॥१३२॥
भगवद्धामसम्प्राप्तिर्भवत्विति वृणे ह्यहम् ।
महादुन्दुभिना दुन्दुभ्यादिकृते तथाऽर्थितम् ॥१३३॥
भगवद्भिश्च तत्रैव तथास्त्विति समर्पितम् ।
नवाऽपत्यानि चाऽऽकृष्य संश्लिष्य परमेश्वराः ॥१३४॥
दत्वा दिव्यस्वरूपाणि चतुर्द्विहस्तकानि वै ।
निषाद्य वाहने नैजे निन्युर्धाम स्वकं स्वकम् ॥१३५॥
नीराजना तथा घण्टा झल्लरी दिव्यरूपिणी ।
तत्र लक्ष्मीसमा जाता हरिसेवापरायणा ॥१३६॥
अन्यत्र तु यथापेक्षाकृतयस्ता विरेजिरे ।
कम्बुर्घण्टो दुन्दुभिश्च कांस्यं च पञ्चपात्रकम् ॥१३७॥
धूपध्रं चेति षट् सौम्या दिव्यरूपधराः प्रभोः ।
मुक्तरूपाश्च सेवायां समवर्तन्त धामसु ॥१३८॥
अन्यत्र तु यथापेक्षाकृतयस्ता विरेजिरे ।
एवं लक्ष्मि ! प्रदिव्या वै जाता विधातृबालकाः ॥१३९॥
पुरुषोत्तममासस्याऽष्टमीव्रतेन वै खलु ।
एवं ये व्रतकर्तारस्तेऽपि यास्यन्ति धाम तत् ॥१४०॥
एवं वै मलमासेऽत्र कृतं स्वल्पं फलेद् बहु ।
अल्पादानन्त्यलाभो यः कृपा सा पारमेश्वरी ॥१४१॥

यावज्जीविष्यति ब्रह्मा यावत् स्थास्यति मेदिनी ।
तावत् दुन्दुभिघण्टाद्याः स्थास्यन्त्यच्युतमन्दिरे ॥१४२॥
मुक्तौ तु सर्वदा दिव्याः स्थास्यन्ति केशवालये ।
तस्माद् व्रतं प्रकर्तव्यं नैतादृक् स्यात् प्रवर्षणम् ॥१४३॥
ब्रह्मा विचारमकरोत् पुत्रा मे मुक्ततां गताः ।
अथान्यानुत्पादयेयं गृहं शून्यं न मे भवेत् ॥१४४॥
योगेश्वराः सनकाद्याः ऋषयश्चापि मानसाः ।
उत्पादिता ब्रह्मणा हि ततो वै ब्रह्मवादिनः ॥१४५॥
एवं सृष्टिप्रकर्तारश्चान्येऽपि प्रकटीकृताः ।
शान्तोऽभवत्प्रजा वीक्ष्य प्रवाहोऽप्यभवत्तथा ॥१४६॥
एतदाख्यानकं ये वै श्रोष्यन्ति मानवादयः ।
पठिष्यन्ति च तेऽष्टम्याः फलं प्राप्स्यन्ति वै ध्रुवम् ॥१४७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पुरुषोत्तममासमाहात्म्ये ब्रह्मणो मानसानां दुन्दुभिघण्टकम्बुनाम्नां पुत्राणां घण्टानीराजनाझल्लर्याख्यानां पुत्रीणां कांस्यपंचपात्रधूपप्राख्यानामपत्यानां च महादुन्दुभिघोषणाश्रवणोत्तरमष्टम्या अधिकमासे व्रतकरणेनाऽक्षरेशगोलोकेश वैकुण्ठेशदर्शनं, तत्तद्धामसु सृष्टिषु च प्रतिमन्दिरमनेकरूपैः स्थापनं मुक्तिराशीर्वादाश्चेत्यादिनिरूपणनामा त्रिशततमोऽध्यायः ॥३००॥

श्रीनारायण उवाच—

श्रूयतां च त्वया लक्ष्मि ! पुरुषोत्तमयोगिनी ।
पुरुषोत्तममासस्य कथा दिव्याऽघनाशिनी ॥ १ ॥
परब्रह्मसकाशात्तु वासुदेवो व्यजायत ।
वासुदेवात् समभवद् भूमाख्यः पुरुषोऽग्रणीः ॥ २ ॥
भूम्नोऽभवद् विराडस्य मुखादग्निरजायत ।
अग्नेरपत्यं लोकेषु हिरण्यं विश्रुतं त्रिषु ॥ ३ ॥
सृष्ट्यारंभे नवै कश्चिदग्नेः सत्कारमाचरत् ।
अत्युष्णत्वाद् दाहकत्वात् कृष्णवर्त्मकृतेस्तथा ॥ ४ ॥
आश्रयार्पयितुर्भस्मीकरणप्रकृतेस्तथा ।
अग्निमेतादृशं दृष्ट्वा ब्रह्माद्या अपि बान्धवाः ॥ ५ ॥
भयं प्राप्ता न सत्कारं सहवासं चरन्त्यपि ।
भोजने तूत्सवे पाने दूरं कुर्वन्ति चाऽनलम् ॥ ६ ॥
त्रैलोक्ये नाऽऽप स क्वापि विश्रान्तिं भोजनादिकम् ।
सर्वदिग्भ्यः सर्वदेहिभ्यस्तिरस्कारमाप्य सः ॥ ७ ॥
केभ्यश्चित्तु स्थलेभ्यः स प्राप्तवाँस्ताडनादिकम् ।
अतो ज्वालादिकं तूष्णगुणं जिह्वा निगूह्य च ॥ ८ ॥
अन्यैरलक्षितो वह्निर्लोकालोकाचलं ययौ ।
क्षुधितः शिखरं लोकालोकाचलस्य जग्धवान् ॥ ९ ॥
उदरे पच्यमानं तद् पुत्ररूपं व्यजायत ।
हिरण्यं तत्तु संजातं कांचनी भूमिका तु सा ॥१०॥
लोकाऽलोकाचलपार्श्वे प्रकाशिता व्यजायत ।
एवं स पर्वते प्रदक्षिणां कुर्वन् प्रयाति वै ॥११॥
भवति क्षुधितो यत्र श्रृंगं तत्राऽत्ति पार्वतम् ।
पचमानं तु तत्पुत्ररूपेण जायते ततः ॥१२॥
एवं पुत्राः सुवर्णानि समजायन्त सर्वतः ।
सर्वत्र काञ्चनी भूमिर्लोकालोकाचलं त्वनु ॥१३॥
सञ्जाता वर्तुलाकारा पश्चात् श्रृंगं महत्तमम् ।
ब्रह्माण्डसदृशं भक्षयित्वा पृथ्व्यां समन्तरे ॥१४॥
मध्यदेशे ययौ दिव्यानलस्तत्राऽश्रमत् क्षणम् ।
पच्यमानं महच्छृंगं पुत्ररूपं व्यजायत ॥१५॥
सुवर्णं तन्महामेरौ व्याप्तं चाऽभूत् समन्ततः ।
मेरुस्तस्मात् सुवर्णस्य प्रख्यातिमगमत्ततः ॥१६॥
जडं सुगन्धहीनं च खनिग्रावात्मकं गुरु ।
यत्र यत्र पतितं तत् तत्र तत्रैव संस्थितम् ॥१७॥
वह्नेरिव सुवर्णस्यापि न मानं कृतं जनैः ।
कल्पवृक्षजवस्त्वाद्यैर्निर्वहन्ति हि देहिनः ॥१८॥
किं सुवर्णं च को वह्निरित्येवं नाऽभवद्धि धीः ।
किं कार्यं वै सुवर्णस्य किं कार्यं चाऽनलस्य वै ॥१९॥
अप्येवं नाऽभवत्प्रज्ञा कल्पवृक्षबलात्तदा ।
सुवर्णं चाऽनलश्चोभौ मूल्यहीनौ शुशूचतुः ॥२०॥
अथात्र खलु नास्माकं ब्रह्माण्डस्ति परीक्षकः ।
विना प्रयोजनं नैव मूल्यं कस्यापि जायते ॥२१॥
तृणं प्राप्तेऽपि समये कोटिस्वर्णसमं भवेत् ।
अग्निर्वै शैत्यकलहे बहुमूल्योऽभिजायते ॥२२॥
त्यक्तं मयूरपिच्छं तु गोलोके कृष्णसंधृतम् ।
स्वस्यैव मुकुटे तेन पूज्यतां मूल्यतां गतम् ॥२३॥
ब्रह्मणा विधृतं गंगाजलं पुरा कमण्डलौ ।
विसृष्टं मूल्यवज्जातं महद्भूतं हि मूल्यवत् ॥२४॥
कंकरः खलु कृष्णेन धृतो वक्षसि मूल्यवान् ।
न धृतः कर्दमः कैश्चिन्मूल्यं नाप्तो मनागपि ॥२५॥
तस्मादहं महानग्निर्मम पुत्रः सुवर्णकम् ।
विना प्रयोजनं यद्वा महद्भिः संधृतिं विना ॥२६॥

मूल्यवन्तौ न वै स्याव दुःखं तद्वै महत्तमम्।
गुणिनां गणनारंभे यद्यंगुलिर्न तिष्ठति ॥२७॥
वरं तस्यात्र मृत्युर्वै प्राणनं क्लेशदं वृथा।
विद्या वा राज्यसत्ता वा सिद्धिरैश्वर्यमेव वा ॥२८॥
ख्यातिर्वा धनिता वापि भक्तिर्वा जीवने वरम्।
तद्विहीनेन मर्तव्यं मरिष्यावस्ततोऽद्य वै ॥२९॥
इति विचार्य वह्निस्तत्पुत्रो ययतुरुच्चकैः।
मेरोस्तु शिखरे तस्मात्पातेन मरणार्थिनौ ॥३०॥

तावत् तत्र सत्यलोके घोषयन् दुन्दुभिर्हरेः।
ताभ्यां श्रुतोऽधिके मासे शोकं कुर्वन्तु मा जनाः ॥३१॥
नारायणं तु संस्मृत्य नवम्यामद्य ये जनाः।
करिष्यन्ति व्रतं पूजां तेषामिष्टं भविष्यति ॥३२॥
एकभुक्तेन नक्तेन तथैवाऽयाचितेन वा।
फलेन पयसा त्वद्य द्विकालं त्वैककालिकम् ॥३३॥
व्रतं कृत्वाऽर्चनं कृत्वा कृष्णस्य शरणागताः।
अपि चेत्ते मानहीना दरिद्रा निष्प्रयोजनाः ॥३४॥

गणनाहीनकाश्चापि यास्यन्ति चोत्तमं पदम्।
अहं वै दुन्दुभिर्वच्मि पुरुषोत्तमदेशनाम् ॥३५॥
दुःखो वा क्लेशसन्दब्धोऽतितिरस्कृत एव वा।
अस्थानो वाऽल्पमूल्यो वा जडो वा तुम्र एव वा ॥३६॥
यः कश्चिच्छरणं प्राप्याऽधिकमासे व्रतं चरेत्।
विधूय तस्य दुःखानि करिष्याम्यवनं सदा ॥३७॥
पुरुषोत्तममासस्य मानकृन्मान्य एव मे।
पुरुषोत्तममासे वै पुण्यकृत्पूततां व्रजेत् ॥३८॥
ममाऽर्चनप्रकर्ताऽत्र सर्वाऽर्च्यतामवाप्नुयात्।
यस्य वै रक्षिता कोऽपि भवत्येव न वै क्वचित् ॥३९॥

चेत् स रक्षत्यधिमासं तथा मां पुरुषोत्तमम्।
रक्षयिष्ये तु तमहं वदामि पुरुषोत्तमः ॥४०॥
पूजयन्तु च मां भक्त्या भोजयन्तु सुपायसम्।
प्रार्थयन्तु यथेष्टं च मत्तो गृह्णन्त्वभीष्टकम् ॥४१॥
अनुग्रहेण दातास्मि त्वकृतस्यापि चेष्टदः।
अल्पस्य बहुदश्चापि गृह्णन्तु पुरुषोत्तमात् ॥४२॥
अद्य ये न करिष्यन्ति व्रतं वा वरणं च वा।
तेषां हानिरलाभश्च नान्यः कश्चिदतोऽधिकः ॥४३॥
तस्मादायान्तु गृह्णन्तु वरान् कुर्वन्तु पूजनम्।
आचरन्तु मलमासे नवम्या व्रतमुत्तमम् ॥४४॥
प्रदाताऽस्मि समृद्धोऽस्मि समुदारोऽस्मि सर्वथा।
दुन्दुभिः प्रवदाम्यत्र नारायणान्तरात्मकः ॥४५॥

नारायणस्वरूपोऽहं पुरुषोत्तमदेशनः।
प्रसन्नं दासभक्तं वा करोमि पुरुषोत्तमम् ॥४६॥
पत्रं पुष्पं फलं तोयं यो मयि सन्नियोक्ष्यते।
अहं तस्मिन्नियोक्ष्यामि श्रेष्ठं रत्नादिकं पुनः ॥४७॥
भोज्यं भक्ष्यं तथा लेह्यं चोष्यं यो मेऽर्पयिष्यति।
तस्मै कोटिगुणितं तदर्पयिष्येऽप्यहं तथा ॥४८॥
यस्य द्रष्टाऽऽश्रयदाता पोष्टा मानयिताऽविता।
कोऽपि नास्ति तु तस्याऽहं सर्वकर्ताऽविताऽस्मि वै ॥४९॥

आगच्छन्तु महाभागाः सत्कृता वाऽप्यसत्कृताः।
बाला वा बालिका वापि युवत्यः सधवाऽधवाः ॥५०॥
युवानो भाग्यवन्तो वा भाग्यहीना दरिद्रकाः।
वृद्धा पलितवल्यंगाः सुचित्ता वाऽप्यचित्तकाः ॥५१॥
तृतीयप्रकृतिव्याप्ता नामसंज्ञाविहीनकाः।
स्थावरा जंगमाः केऽपि जडा वा जडसन्निभाः ॥५२॥
तिर्यञ्चोऽपि विवरस्था गर्तस्थाः खनिखातजाः।
मुखजाः पृष्ठजाश्चापि मलजा अमलोद्भवाः ॥५३॥

मलमासं समाश्रित्य तोषयित्वा पुमुत्तमम्।
पारमेष्ठ्यपदं यान्तु यान्तु वाऽक्षरधाम तत् ॥५४॥
स्वर्गं सुखं परं यान्तु यान्तु श्रीपुरुषोत्तमम्।
सुतं यान्तु पतिं यान्तु पत्नीं यान्तु च पद्मिनीम् ॥५५॥
गृहं कीर्तिं धनं यान्तु यान्तु शाश्वतपूजनम्।
सर्वाधिक्योत्तमस्थानं गृह्णन्त्वनुग्रहान्मम ॥५६॥
इत्युदारां घोषणां संश्रुत्वाऽग्निश्च सुवर्णकम्।
लेभाते स्म महाधैर्यं शोकं तत्यजतुस्ततः ॥५७॥
मेरोः श्रृंगे सत्यलोके दुन्दुभिं शरणं गतौ।
नत्वा च दुन्दुभिं तस्य पूजां चक्रतुरादरात् ॥५८॥
वह्निना तु सुतं स्वर्णं दुन्दुभेस्तस्य पादयोः।
अकारयन्नतिं तावद् दृष्ट्वा रूपोत्तरं सुतम् ॥५९॥
दुन्दुभिना समुत्तोल्य गृहीत्वा करयोर्निजे।
मस्तके च तथा स्कन्धे क्षणं सुवर्णको धृतः ॥६०॥
अर्पितो वह्नये पश्चाद् वह्निः प्राह सगद्गदः।
नावयोः रक्षिता कोऽपि सत्कर्ताऽपि न विद्यते ॥६१॥
महद्दुःखमनुभूय मृत्य्वर्थं त्वागताबुभौ।
दुन्दुभे यदि ते वाक्याद् व्रतं कुर्वोऽद्य नक्तकम् ॥६२॥
पूजनं च हरेः कुर्वो रक्षिता चेद्भवेद्धरिः।
एवं संवदतोर्नेत्रादश्रवो न्यपतन् भुवि ॥६३॥
रजतं तत्समुत्पन्नं स्थले स्थल्यां समुज्ज्वलम्।
वीक्ष्यैवं भग्नहृदयं दयमानं महानलम् ॥६४॥

सपुत्रं दुन्दुभिस्तं चाऽऽश्वासयामास सद्गिरा ।
नवम्या अधिमासस्य व्रतं कुरुत नक्तकम् ॥६५॥
पूजां कुरुत वै कृष्णनारायणस्य चाद्य ह ।
सौवर्णीं प्रतिमां कारयित्वा नारायणस्य च ॥६६॥
पञ्चामृतेन संस्नाप्य समर्च्याऽक्षतचन्दनैः ।
विभूष्य स्वर्णभूषाभिर्हारैर्मालाभिरित्यपि ॥६७॥
सद्वस्त्रैरम्बरैर्द्रव्यैर्विभिन्नैर्भोजनैः फलैः ।
जलैस्ताम्बूलपानैश्च धूपदीपप्रदक्षिणैः ॥६८॥
तोषयित्वाऽर्थयेद् देवं कृष्णं श्रीपुरुषोत्तमम् ।
असत्कृतमनाधारमनादृतमनाश्रयम् ॥६९॥
क्षुधितं तृषितं द्वेष्यं दाहकं मां समुद्धर ।
जडं निर्गन्धमति वै गुरुं प्रस्तररूक्षकम् ॥७०॥
निर्गुणं चेतनाहीनं वाऽकिञ्चित्करमित्यपि ।
समुद्धर कृपासिन्धो गणनां प्रापय प्रभो ॥७१॥
एवं स्तुतिं प्रकुर्याच्च श्रीफलार्घ्यं समर्पयेत् ।
पुष्पांजलिं प्रदद्याच्च नत्वा नाथं विसर्जयेत् ॥७२॥
मध्याह्नेऽपि तथा कुर्यात् कुर्यान्निशीथके तथा ।
सवाद्यनर्तनगीतैर्नीराजयेद्विसर्जयेत् ॥७३॥
एवं कुरु कृशानो त्वं हाटक त्वं तथा कुरु ।
नारायणः प्रसन्नः सन् युवामुद्धारयिष्यति ॥७४॥
इत्याश्रुत्य महादुन्दुभ्युक्तं नारायणोदितम् ।
वह्निश्चकार सौवर्णीं मूर्तिं नारायणस्य वै ॥७५॥
लक्ष्म्या मूर्तिं चकाराऽथ पूजयामासतुश्चतौ ।
पिता पुत्रश्च विधिवद् व्रतं नक्तं प्रचक्रतुः ॥७६॥
रात्रौ प्रार्थयतो यावत् कृष्णनारायणं हरिम् ।
लक्ष्मीसमन्वितं तावत् प्रादुर्बभूव चाग्रतः ॥७७॥
तेजःपरिधि संव्याप्ताननं लक्ष्मीप्रसेवितम् ।
मन्दं मन्दं हसन्तं तं विलोक्य पुरुषोत्तमम् ॥७८॥
वह्निस्वर्णौ प्रार्थयतः कृपानाथ समुद्धर ।
ऊष्णस्वभावयुक्तस्य दाहकस्य मम स्थलम् ॥७९॥
नास्ति कुत्रापि तन्नाथ देहि मे भोजनं तथा ।
मूल्यं मूर्खस्य पुत्रस्य सुवर्णस्य तु नास्ति वै ॥८०॥
प्रस्तरस्य न सत्कारो दृश्यते तद्यशः कुरु ।
सर्वदा तव सेवां च प्रदेहि भगवन् विभो ॥८१॥
शरणे तेऽस्मि पतितो मामुद्धर सपुत्रकम् ।
इत्यर्थितो हरिकृष्णो वह्निं प्राह नरायणः ॥८२॥
शोकं त्यज कृशानो त्वं तुष्टोऽस्मि त्वद्व्रतेन वै ।
ममाऽऽननात् समुत्पन्नः सदा त्वस्तु ममाननम् ॥८३॥
वरं ददाम्यहं पुत्र यज्ञादौ भोजनं त्वयि ।
स्थापयिष्यन्ति ये होष्यन्त्यनले कुण्डमध्यगे ॥८४॥
अग्निहोत्रस्य हवनं त्वयि न्यस्यन्ति येजनाः ।
त्वद्द्वारा तन्मया सर्वं जक्षितव्यं न चाऽन्यथा ॥८५॥
वह्निं विना जना ये मे दास्यन्ति भोजनादिकम् ।
तदहं न ग्रहीष्यामि सर्वथाऽनुग्रहात् त्वयि ॥८६॥
अद्यदिनादहं लोकेऽग्निमुखो भगवानिति ।
ख्यातिं यास्ये जनास्तेन मदर्थं भोजनादिकम् ॥८७॥
त्वयि क्षेप्स्यन्ति तत्सर्वं भक्षयिष्यामि त्वन्मुखात् ।
शमीष्वदृश्यरूपेण तव वासो विशेषतः ॥८८॥
हीरकादिषु तद्वच्च सर्वत्राऽस्तु तवाऽऽश्रयः ।
यथा वस्तुप्रदहनं न स्याद्वासस्तथा तव ॥८९॥
सर्वत्राऽस्तु कृशानो त्वं सुखी भव जनादिषु ।
सम्मानं सर्वथा तेऽस्तु सत्कारः सर्वथा तव ॥९०॥
कल्पवृक्षलये काले चूल्ल्यादौ पाचनाय वै ।
प्रज्वालनं तवैवाऽस्तु सर्वथैव गृहे गृहे ॥९१॥
चिन्तामण्यादिनाशे तु प्रदीपस्य गृहे गृहे ।
सम्मानं सर्वथा ते स्याद् धैर्यमावह तावता ॥९२॥
द्वितीयेन च दिव्येन रूपेण पार्षदेन मे ।
धाम्नि सेवां वह नित्यं वह्ने मुक्तोऽसि मेऽनघ ॥९३॥
प्रथमे युगपर्याये व्यतीते त्वनलं विना ।
कार्यं किमपि सर्वेषां भविष्यति न वै तदा ॥९४॥
तव मूल्यं च सम्मानं सत्कारादरपूजनम् ।
पराकाष्ठागतं सर्वं भविष्यति न संशयः ॥९५॥
सुवर्णोऽयं च ते पुत्रो ममाऽतिवल्लभः खलु ।
अद्यारभ्य मया स्वस्य मस्तके धार्य एव च ॥९६॥
मुकुटोऽयं तु मे ह्यस्तु भवतां कुण्डले मम ।
मम भूषास्वरूपोऽस्तु शृंखलाकटकोर्मिकाः ॥९७॥
रशनाहारपात्राणि स्वर्णोऽस्तु सर्ववस्तुकः ।
मया धृतस्तव पुत्रो मस्तके मुकुटात्मकः ॥९८॥
सोऽथ सर्वत्र सत्कारं यास्यति कालनिर्गमे ।
समूल्यश्च सुगूह्यश्च संरक्ष्यश्च भविष्यति ॥९९॥
कल्पवृक्षादिविलये कल्पद्रुः स भविष्यति ।
किञ्च दिव्यं स्वरूपं वै सुवर्णाय ददामि ह ॥१००॥
मूलरूपेण मे धाम्नि सेविष्यते स मां सदा ।
हाटकाख्यः पार्षदो मेऽक्षरे धाम्नि निवत्स्यति ॥१०१॥
अथ कालान्तरे कार्यावश्यकत्वेऽनलात्मकः ।
महातेजोमयः सोऽयं हाटकेश्वरसंज्ञकः ॥१०२॥

पाताले च पृथिव्यां च महादेवो भविष्यति ।
ममाऽवतारः सर्वत्र पूजां प्राप्स्यति मद्बलात् ॥१०३॥
भक्तानां मुक्तिदाता च भविष्यति महेश्वरः ।
सर्वब्रह्माण्डसृष्टौ च ख्यातिं त्वमिव यास्यति ॥१०४॥
यथाहं भगवान् व्याप्तस्तथा वह्निः सुवर्णकम् ।
व्याप्तिं यास्यति सृष्टौ मे सत्कारं च प्रयास्यति ॥१०५॥
रक्षणं चापि संस्थानं सर्वं भविष्यति ध्रुवम् ।
इत्युक्त्वा च तयोर्दिव्ये रूपे कृत्वा हरिः स्वयम् ॥१०६॥
निनाय स्वालयं चान्ये रूपे वस्तुषु वासिते ।
एतद्रूपं च वृत्तान्तं परिज्ञाय सुरादयः ॥१०७॥
वह्निद्वारा भक्षयन्ति तृप्यन्ति तत्र भोजनात् ।
सुवर्णस्य विभूषाश्च धारयन्ति स्थले स्थले ॥१०८॥
एवं वह्निस्तथा स्वर्णो नवमीपूजनं व्रतम् ।
कृत्वा मुक्तौ प्रशस्तौ संमूल्यकौ च बभूवतुः ॥१०९॥
पावित्र्यं सर्वदा प्राप्तौ यत्र क्वापि गतौ हि तौ ।
वृद्धिं च सर्वदा प्राप्तौ तथा सुखं तु शाश्वतम् ॥११०॥
नवम्यास्तु व्रताख्यानं पठिष्यन्ति तु ये जनाः ।
श्रोष्यन्ति वा नरा नार्यो यास्यन्ति भुक्तिमोक्षणे ॥१११॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पुरुषोत्तममासमाहात्म्ये विराट्पुत्रस्य वह्नेस्तत्पुत्रसुवर्णस्य च दाहकत्वजडत्वादिदोषान्वितस्य कल्पवृक्षाश्रितजनताभिरनादरे कृते मेरौ मरणोन्मुखस्य दुन्दुभिश्रवणेऽधिमासनवमीव्रतपूजनकरणेन यज्ञादौ सर्वमान्यताभगवन्मुखता भगवदाभूषणरूपता धामप्राप्तिर्दिव्यपार्षदता चेत्यादिनिरूपणनामैकाधिकत्रिशततमोऽध्यायः ॥३०१॥

**श्रीनारायण उवाच—**

अथापि ते कथां लक्ष्मि ! कथयामि सुरञ्जनीम् ।
अधिमासे हरेश्चानुग्रहाऽन्तो नैव विद्यते ॥ १ ॥
नवम्यां तु निशि पृष्टं दुन्दुभये तु शार्ङ्गिणा ।
उद्घोष्यते नु सर्वत्र किं वा क्वचित्क्वचित्स्थले ॥ २ ॥
दुन्दुभिः प्राह सर्वत्र यां दिशा ममिलक्ष्य तु ।
प्रातःकालाद् घोषयामि सायंकालावधिं प्रभो ॥ ३ ॥
बहवः खलु कुर्वन्ति देहिनो व्रतमत्र वै ।
कृपालाभं च गृह्णन्ति भुक्तिं मुक्तिं मनाक् कृतात् ॥ ४ ॥
तावत् तत्र समायाता पृथ्वी सम्प्रार्थनाय वै ।
भगवन् देवदेवेश वैकुण्ठनाथ माधव ॥ ५ ॥
असंख्यप्राणिनां मोक्षोऽधिमासे साम्प्रतं त्वया ।
विधीयतेऽतिकृपया ततोऽहं सुखिनी भृशम् ॥ ६ ॥
ममापि देवदेवस्य व्रतं कार्यं समादरात् ।
पुरुषोत्तममासस्य व्रतिनां संप्रमोक्षणम् ॥ ७ ॥
स्वर्गयोगस्तव योगो धनधान्यादिसम्पदः ।
पुत्रपौत्रयशोलाभा यद्यदिष्टं भवेच्च तत् ॥ ८ ॥
कृपया दीयते सर्वं गतं वैकुण्ठतुल्यताम् ।
अहं तु धन्यभाग्याऽस्मि दुन्दुभिस्तव यन्मयि ॥ ९ ॥
मुक्तकण्ठेन सर्वेभ्यो विज्ञापयत्युदारताम् ।
अधिमासे कृपा या च कृता त्वया दयालुना ॥१०॥
मयि सैव कृपा जाता जीवा यत्पुण्यभागिनः ।
पापहीनाः पवित्राश्च भविष्यन्ति सदा मयि ॥११॥
पापभारेण भगवन् कदापि पीडिता नहि ।
भविष्यामि भवद्भक्तबाहुल्यात्पुण्यशालिनी ॥१२॥
सार्धद्वयाऽब्दाधिमासेऽप्येकाऽहं च व्रतं तव ।
करिष्यन्ति जना ये ये ते सर्वे धूतपापकाः ॥१३॥
अन्योद्धारसमर्थाश्च भविष्यन्ति सदा मयि ।
इत्यहं बहु तुष्टाऽस्मि भाविस्वास्थ्यप्रलाभतः ॥१४॥
असज्जनानां भारेण भवामि पीडिता प्रभो ।
असन्तश्च जनाः काले प्रभविष्यन्ति भाविनि ॥१५॥
ब्राह्मणा वेदहीनाश्च वेदमातृविहीनकाः ।
वैदिकैः कर्मभिर्हीना भाररूपा मयि प्रभो ॥१६॥
शौचसन्तोषहीनाश्च तपोभिर्वर्जितास्तथा ।
स्वाध्यायेशप्रणिधानैर्हीना भारात्मका मयि ॥१७॥
अहिंसाव्रतहीनाश्च पिशुनाः सत्यवर्जिताः ।
अस्तेयव्रतहीनाश्च व्यवायाभिरतास्तथा ॥१८॥
तृष्णाऽऽवृताः परस्वापहरा भारात्मका मयि ।
दयाहीनाः शीलहीनाः परावनतिचिन्तकाः ॥१९॥
मिथ्याकलंकवक्तारो निन्दका द्वेषिणस्तथा ।
श्रेष्ठयौन्नत्यासहा ये ते भाररूपाः सदा मयि ॥२०॥
परात्मदुःखकर्तारो गुणे दोषाऽभिधायकाः ।
स्वार्थमात्रपरा विप्रा भाररूपा मयि स्थिताः ॥२१॥
स्नानसन्ध्याविहीनाश्च देवपूजादिवञ्चिताः ।
आत्मनिष्ठादिरहिता जडा भारात्मका मयि ॥२२॥
यज्ञविघ्नप्रकर्तारो वैश्वदेवविनाशकाः ।
संस्कारभावनाहीना विप्रा भारात्मका मयि ॥२३॥

सूतकानतिमन्तारो हेतुवादाश्च नास्तिकाः ।
ब्रह्मोपासनया हीना विप्रा भारात्मका मयि ॥२४॥
भक्तिभावविहीनाश्च शून्या अध्यात्मविद्यया ।
पितृतर्पणशून्याश्च विप्राभारात्मका मयि ॥२५॥
परोपकारहीनाश्च दानपुण्यविवर्जिताः ।
जिह्वाशिश्नकृताऽधर्मा विप्रा भारात्मका मयि ॥२६॥
परकष्टप्रदातारः परकार्यप्रभञ्जकाः ।
परापराधकर्तारो विप्रा भारात्मका मयि ॥२७॥
अयोग्ये बीजदातारो ह्ययोग्यक्षेत्रकर्षुकाः ।
छलधर्मातिघाताश्च विप्रा भारात्मका मयि ॥२८॥
प्रसह्य भोगिनः क्रूराः पराक्रन्दनहेतवः ।
कूटचाराः क्ष्वेडगुप्ता मधुवाचः प्रतारकाः ॥२९॥
वार्तया विषसेक्तारो भाररूपाः सदा मयि ।
विश्वासघातका ये च कृतघ्ना बालघातकाः ॥३०॥
अश्वप्रघातका ये च शरणागतघातकाः ।
कुटुम्बघातका मातापितृनारीप्रघातकाः ॥३१॥
धर्मघ्ना मोक्षघाताश्च भाररूपा मयि प्रभो ।
अभक्ष्यभक्षका जातिभ्रंशसंकरकारकाः ॥३२॥
स्त्र्यपत्यनाशका वृत्तिधनप्राणापहारकाः ।
आततायिक्रियादुष्टा अग्निदा गरदास्तथा ॥३३॥
मारणोच्चाटनकृत्या गर्भघातादिकारिणः ।
अस्थानताडने क्रूरकर्माढ्या भारका मयि ॥३४॥
अब्राह्मणा ब्राह्मणत्वे स्वकर्तव्यविहीनकाः ।
परसौख्यविहन्तारः सदा भारात्मका मयि ॥३५॥
अनुद्योगाः सदालस्या परभाग्योपजीविनः ।
हस्ताश्चैवाऽनधिकारे सदा भारात्मका मयि ॥३६॥
अमार्गगा मृदूनां स्वबलेनाऽर्दनकारकाः ।
अदण्ड्ये दण्डकर्तारः सदा भारात्मका मयि ॥३७॥
पाल्यानां पालका ये न पूज्यानां पूजकाश्च न ।
मान्यानां मानकर्तारो न ये ते भारका मयि ॥३८॥
पशूनां दुःखकर्तारश्चाश्रितानामरक्षकाः ।
दासानां दुःखकर्तारो भाररूपा सदा मयि ॥३९॥
शिष्यप्रतारकाः शिक्षकाश्च शिष्या विवर्तिनः ।
भृत्यप्रतारका आढ्या आढ्यघ्नाः कर्मचारिणः ॥४०॥
शिष्याश्च गुरवश्चापि स्वस्वकर्तव्यवर्जिताः ।
प्रतारकास्तथाऽन्योन्यं सर्वे भारात्मका मयि ॥४१॥
सेवकाः स्वामिहन्तारः स्वामिनः सेवकार्दनाः ।
दासा दासत्वहीनाश्च सर्वे भारात्मका मयि ॥४२॥
राजा न रक्षको यत्र न प्रजा पुण्यकारिणी ।
शठाः प्रजासु ये राज्ञि सर्वे भारात्मका मयि ॥४३॥
अत्राता क्षत्रियोऽदाता वैश्यः शूद्रोऽप्यसेवकः ।
स्वस्वधर्महनः सर्वे भाररूपा मयि प्रभो ॥४४॥
जनन्याज्ञाकरी या न पुत्री स्नुषापि तादृशी ।
माता या हितकर्त्री न श्वश्रूश्चापि च तादृशी ॥४५॥
दम्पत्योर्यत्र नैक्यं च कलहश्च द्वयोः सदा ।
पतिसेवाघृणा पत्नी पत्नीदुःखकरः पतिः ॥४६॥
पुत्राः पितृनिदेशे न पिता पुत्रविनिन्दकः ।
सेव्यसेवकताहीनास्ते सर्वे भारका मयि ॥४७॥
ब्रह्मचारी ब्रह्मचर्ये यो न तिष्ठति रागतः ।
गृहस्थस्त्यागधर्मांश्च पुरस्कृत्य प्रवर्तते ॥४८॥
वानप्रस्थोऽपि सतृष्णः सन्न्यासो न्यासवर्जितः ।
अन्यधर्मग्रहीतारस्ते सर्वे भाररूपिणः ॥४९॥
दधिदुग्धघृततैलरससांकर्यकारकाः ।
अन्नपत्रकणशाकपुष्पसांकर्यकारकाः ॥५०॥
खाद्यपेयसुसंधार्यभोग्यसांकर्यकारकाः ।
जीवघातकरा वैद्याः सर्वे ते भाररूपिणः ॥५१॥
मद्यमांसाशना मर्त्याः परपिण्डोपजीविनः ।
वस्त्रभूषादिसांकर्यकरा वै भाररूपिणः ॥५२॥
कूटपण्याः कूटमानाः कूटतुलाप्रमापिनः ।
कूटसंख्याकरा दैवज्ञा अपि भाररूपिणः ॥५३॥
व्यापाराऽऽदेयदेयादो प्रतारणकराः खलाः ।
प्रसह्य लुञ्चका मर्त्याः सदा भारात्मका मयि ॥५४॥
अकर्मठा व्यसनिनः शनिग्रहसमा भुवि ।
राहुग्राससमा ये च सर्पदंशसमास्तथा ॥५५॥
त्रिपीटकासमा ये च बद्रीकण्टकरूपिणः ।
मीनश्येनसमा ये च बकमार्जारकर्मका ॥५६॥
बहिः शुक्ला हृत्सु रक्ताश्चात्मनि कृष्णकज्जलाः ।
मर्त्या देवा दानवा वा स्वर्ग्याः पातालवासिनः ॥५७॥
सर्वे ते भाररूपा वै पापकर्माण एव ते ।
पीडयेयुश्च मां काले येषां माहात्म्यमेव न ॥५८॥
नाऽधिमासव्रतं येषां न येषां पुरुषोत्तमः ।
न भक्तिश्चास्तिकभावस्ते स्युर्भारात्मका भुवि ॥५९॥
तस्मान्मया हरे कृष्ण काले काले च तादृशाम् ।
भाविनां भारनाशाय प्रार्थ्यते परमेश्वरः ॥६०॥
किं कर्तव्यं मया तेषां भारनाशाय केशव ।
यच्छ्रेयस्तत्समब्रूहि भाविमच्छ्रेयइच्छया ॥६१॥

इत्यर्थयन्त्यां क्षमायां तां दुन्दुभिः प्राह मेदिनीम् ।
किं त्वया न श्रुतं पृथ्वि मयोद्घोषितमिष्टदम् ॥६२॥
अधिमासे व्रतं कार्यं पुण्यं वै शाश्वतं भवेत् ।
विधास्यत्यवनं ते च भगवान्पुरुषोत्तमः ॥६३॥
इदानीं श्रीहरिः कृष्णनारायणः परप्रभुः ।
प्रसन्नः फलदश्चास्ते दशम्यास्त्वं व्रतं कुरु ॥६४॥
व्रतान्ते भगवान् कृष्णः स्वयं दास्यति दर्शनम् ।
करिष्यत्यवनं ते च सर्वकालेषु भारतः ॥६५॥

इदानीं याहि देवेशि सत्यलोके स्थितिं कुरु ।
व्रतं दशम्यास्तत्रैवाधिमासस्याऽधिवर्तय ॥६६॥
व्रतान्ते यदि देवस्ते दर्शनं न ददाति चेत् ।
श्वः सायं वै त्वया त्वत्राऽऽगन्तव्यं चार्थनाय वै ॥६७॥
इत्युक्ता दुन्दुभिनैव नत्वा देवं प्रभुं तथा ।
दुन्दुभिं च नमस्कृत्य सत्यलोकं समाययौ ॥६८॥
स्वनिवासे पृथिव्या च दशम्याश्च व्रतं कृतम् ।
प्रातः स्नात्वा हरिं ध्यात्वा कृत्वा मूर्तिं तु कानकीम् ॥६९॥

पञ्चामृतैर्हरिं प्राच्यं स्नपयित्वा जलैः शुभैः ।
सुगन्धचन्दनाद्यैश्च चर्चयित्वाऽतिभावतः ॥७०॥
वस्त्रैः स्वर्णैर्विभूषाभिः कुंकुमाऽक्षतसद्दलैः ।
तुलसीमंजरीभिश्च कमलैर्धूपदीपकैः ॥७१॥
पूजयित्वा सुनैवेद्यं मिष्टान्नं हरये ददौ ।
जलं ताम्बूलमिष्टेष्टं फलं चार्घ्यं ददौ ततः ॥७२॥
नीराजयित्वा कुसुमांजलिं नमः स्तुतिं तथा ।
प्रदक्षिणं दक्षिणां चापयित्वा च ततः क्षितिः ॥७३॥
ववन्दे परमात्मानं व्रतं वै दशमीकृतम् ।
अधिमासस्य सम्पूर्णं सनक्तं भवतान्मम ॥७४॥

प्रातरेवं पूजयित्वा पुपूज प्रहरद्वये ।
भोजयित्वा यथापेक्षं त्वर्पयित्वाऽथ शार्ङ्गिणे ॥७५॥
सायमेवं षोडशोपसुवस्तुभिः समपूजयत् ।
आरार्त्रिकं च नैवेद्यं जलं ताम्बूलकं फलम् ॥७६॥
ददौ कृष्णाय कुसुमांजलिं सत्पायसं ददौ ।
ततश्च पाययामास ववन्दे करुणाकरम् ॥७७॥
सजागरं नर्तनं च गीतं चक्रेऽर्धरात्रिकम् ।
मध्यरात्रौ हरिश्चाऽऽयात् साक्षाच्छ्रीपुरुषोत्तमः ॥७८॥
वद पृथ्वि किमिष्टं ते व्रतात् तुष्टोऽस्मि संवृणु ।
अधिमासे व्रतिनस्तु सर्वमिष्टं करोमि वै ॥७९॥
इति मेऽस्ति व्रतं तस्मात् सुलभं दुर्लभं तथा ।
यत्किंचित् तत् सर्वथाऽहं पूरयिष्ये वदाऽत्र माम् ॥८०॥

इत्युक्ता सा मही तत्र प्रोवाच परमेश्वरम् ।
भगवन् यदि तुष्टोऽसि सत्यवाक्यकरोऽसि च ॥८१॥
सर्वं ददासि चेन्मह्यं सर्वो मे पुरुषोत्तमः ।
विना नेच्छामि चान्यद्वै त्रातारं पुरुषोत्तमम् ॥८२॥
अहं सदा तु ते नाथ सेवायां संवसामि वै ।
तादृशं मे दिव्यरूपं देहि भूत्राणकृत् प्रभो ॥८३॥
अन्यच्च भाररूपाणां विनाशाय महाप्रभो ! ।
अधर्माऽगुणनाशाय मल्लोके विहर प्रभो ॥८४॥

अधिमासं विनाऽन्येषु मासेषु प्रजया कृतम् ।
पापं प्रज्वालयितुं त्वं मयि वासं प्ररोचय ॥८५॥
येन मे सर्वदा देव रक्षणं स्याज्जनार्दन ।
आगच्छ दिव्यरूपेण भौतिकेन च वा प्रभो ॥८६॥
भौतिकं यदि ते वर्ष्म क्वचित् स्विष्टं सुसंभवेत् ।
तदा माता भविष्यामि पालयिष्यामि मत्सुतम् ॥८७॥
लालयिष्यामि गोविन्द भोजयिष्यामि भावतः ।
करिष्यामि च ते सेवां यथेष्टं देहि चार्थितम् ॥८८॥

इत्युक्त्वा विररामेयं ननाम पुरुषोत्तमम् ।
कृष्णनारायणः श्रुत्वा पृथिव्या हृदयोद्भवम् ॥८९॥
दिव्यं रूपं ददौ चास्यै वैकुण्ठे सेवनार्हणम् ।
दिव्या सती सुरूपा च चतुर्हस्ता रमासमा ॥९०॥
भूत्वा वसुमती पृथ्वी दीव्यति स्माऽथ माधवः ।
निनाय तां वसुमतीं वैकुण्ठे सलिलोपरि ॥९१॥
तत्र तिष्ठति नित्या सा दासी भूत्वाऽतिवैष्णवी ।
अथ द्वितीयं तद्रूपं पृथिव्यावरणे स्तरे ॥९२॥
पृथिव्या भवने नित्यं वासार्हं विद्यते सदा ।
सा देवी सर्वभूतानामधिष्ठात्री तु भूर्मता ॥९३॥
नारायणेन सा नित्यं सत्यलोकोपरि ध्रुवा ।
पृथिव्यावरणे स्थातुमाज्ञप्ता तत्र वर्तते ॥९४॥
तृतीयं कार्यरूपं यत् पार्थिवं प्रस्तरादिकम् ।
स्थल्यात्मकमिदं सर्वं ब्रह्माण्डं ब्रह्मणा कृतम् ॥९५॥
तत्र पृथ्व्यां यथाऽपेक्षं भारं हर्तुं भुवो ननु ।
हरिणा तु समागन्तुं प्रतिश्रुतं तु वै मुहुः ॥९६॥
हरिः प्राह शृणु क्षमे ! त्वं प्रथमे युगपर्यये ।
व्यतीते भाररूपा वै भविष्यन्ति प्रजा मुहुः ॥९७॥
प्रथमेऽपि युगे देवकार्यार्थे त्वयि साम्प्रतम् ।
आगमिष्यामि ते भक्त्या वरदानेन वै मुहुः ॥९८॥
अवतारान् ग्रहीष्यामि रक्षयिष्यामि मा शुचः ।
दशम्यामधिमासस्य व्रतेन तोषितोऽस्म्यहम् ॥९९॥

अतो युगचतुष्के वै तत्तत्कार्यार्थमेव ह ।
अवतारान् ग्रहीष्यामि दश मुख्याँस्ततोऽपि च ॥१००॥
गौणानन्यान् यथापेक्षं बहून् वै दिव्यविग्रहान् ।
तेन तेन स्वरूपेण करिष्यामि तवाऽवनम् ॥१०१॥
संहरिष्याम्यदेवाँश्च नाशयिष्यामि दानवान् ।
दैत्यान् विपोथयिष्यामि करिष्यामि सुखं तव ॥१०२॥
एवं भारं हरिष्यामि गच्छ देवि यथासुखम् ।
इत्याभाष्य हरिस्तत्र क्षणादन्तरधीयत ॥१०३॥
पृथ्वी तुष्टाऽभवच्चापि ददौ पुष्पांजलिं पुनः ।
व्रतं समाप्य सा देवी ततो नत्वा तु दुन्दुभिम् ॥१०४॥
जगाम स्वालयं पृथ्व्यावरणे स्वीयमन्दिरम् ।
एवं लक्ष्मि ! दशम्याः सा कृत्वाऽधिमासिकं व्रतम् ॥१०५॥
नाम्ना वसुमती दासी जाता वैकुण्ठवासिनी ।
युगे युगे दिने चाहि ममाऽविर्भाववत्यपि ॥१०६॥
मया प्रतिज्ञया सर्वाधिलाभगामिनी कृता ।
अन्यायै न मयैतादृक् लाभोऽर्पितः कदाचन ॥१०७॥
यद्यद् वाञ्छति यः कोऽपि स्वल्पेनाऽपि व्रतेन मे ।
तत्तत्तस्मै प्रददामि नकारस्तत्र नाऽस्ति हि ॥१०८॥
यः श्रोष्यति वसुमतीकथां यश्च पठिष्यति ।
प्राप्स्यति व्रतपुण्यं स दशम्या नात्र संशयः ॥१०९॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पुरुषोत्तममासमाहात्म्ये वैकुण्ठे भगवन्तं पृथिव्याः प्रार्थना, भाररूपाणां परिचयः, दशमीव्रतेन पृथिवी वसुमती भूत्वा वैकुण्ठवासिनी जाता, स्वस्यां प्रतियुगे भगवदवताराणां प्राकट्यार्थं भगवत्प्रतिज्ञेत्यादिनिरूपणनामा द्व्यधिकत्रिशततमोऽध्यायः ॥३०२॥

**श्रीनारायण उवाच—**

अधिमासैकादशिकाकथां दिव्यां हरिप्रदाम् ।
शृणु लक्ष्मि ! समारंभे सृष्टेर्जातां तपोमयीम् ॥ १ ॥
ब्रह्मणो वक्षसो जातो धर्मदेवः समूर्तिकः ।
मूर्तिर्देवी तिरोभूता सदाऽऽस्ते धर्मवर्ष्मणि ॥ २ ॥
सा च धर्मे समुत्पन्ने सहैवोत्पद्यतेऽपि सा ।
लोकरीत्या तु संजज्ञे दक्षपुत्रीस्वरूपिणी ॥ ३ ॥
पुनर्धर्मस्य सा पत्नी लोकरीत्या तु जायते ।
यदा साऽभूद् धर्मदेवे ह्यदृश्या चाविवाहिता ॥ ४ ॥
तदा लक्ष्मि ! कुमारी सा ब्रह्मचर्यसमन्विता ।
सेवते सर्वदा भक्त्या स्वामिनं ब्रह्मचारिणम् ॥ ५ ॥
सत्यलोके स्थिता वेधोगृहे धर्मसहायिनी ।
ब्रह्मा जानाति वै सर्वं नान्ये जानन्ति तां स्थिताम् ॥ ६ ॥
बाला बालस्वरूपाद्वै समारभ्यैव नित्यशः ।
स्नानं पूजां जपं होमं ध्यानं स्वामिप्रसेवनम् ॥ ७ ॥
करोत्येव च वृद्धेभ्यो नमनं वन्दनं तथा ।
दयाशान्तिप्रसन्तोषाऽऽर्जवोपकारकादयः ॥ ८ ॥
सत्यातिमार्दवकृच्छ्रगुणा मूर्तौ वसन्ति हि ।
सिद्धदेहा तु सा मूर्तिस्तपस्सु वर्ततेऽति वै ॥ ९ ॥
वृष्टौ तिष्ठति वर्षासु शैत्ये शीतजलादिषु ।
आतपे पञ्चवह्निस्था निराहारा व्रतेषु च ॥१०॥
आर्द्राम्बरान्विता नित्यं स्वर्णदीतो गृहं स्वकम् ।
समागत्य पतिं नत्वा करोति कृष्णपूजनम् ॥११॥
पतिं जलादिभिः पूर्वं स्नपयित्वा समर्च्य च ।
ददाति भोजनं चास्मै जलं खाद्यं फलादिकम् ॥१२॥
स्वयं तु तुलसीपत्रैः कमलैः पारिजातकैः ।
पतिं नित्यं पूजयति दिव्यज्ञानातिभक्तितः ॥१३॥
एवं प्रातः सदा स्नानं देवपूजां धवाऽर्चनम् ।
पतिसेवां भोजनादि कारयित्वा विधाय च ॥१४॥
पत्युर्देहे विलीना सा मूर्तिर्भवति सर्वदा ।
एवं नित्यानुवृत्त्या सा प्रेमपात्रोत्तमोत्तमा ॥१५॥
धर्मदेवस्य वै जाता सुखदाऽपि कुमारिका ।
धर्मदेवोऽप्यनुवृत्तिसेवाभक्त्याऽतितोषणम् ॥१६॥
प्रत्यहं समवाप्नोति ददात्यस्यै शुभाशिषः ।
पतिसेवापरा नित्यं सुखिनि मूर्तिके भव ॥१७॥
लोकरीत्याऽऽसदेहेन विवाह्य सेविका भव ।
ततः सौभाग्यसत्पुत्रसमृद्ध्यादिसंभृता भव ॥१८॥
नित्यभक्तिफलरूपः साध्यस्ते केशवो भवेत् ।
हरिः कृष्णः परब्रह्म श्रीपतिः पुरुषोत्तमः ॥१९॥
इत्याशीर्वादभूमिः सा महापुण्याधिवासनी ।
अधिमासैकादशिकाप्रातरुत्थाय नित्यवत् ॥२०॥
स्नातुं सा स्वर्णदीं याता तत्र शुश्राव दुन्दुभिम् ।
अद्याऽस्त्येकादशी देव्यः पुरुषोत्तममासगा ॥२१॥
अस्या व्रतेन सन्तुष्टः कृष्णनारायणः प्रभुः ।
यथेष्टं दास्यते सौख्यमैहिकं पारलौकिकम् ॥२२॥
यद् ददाम्यधिमासस्य दिनेष्वन्येषु वै व्रतान् ।
ततः कोटिगुणं दास्ये फलमेकादशीव्रते ॥२३॥

एकादशीनामन्यासां व्रतेन यत्फलं भवेत् ।
ततोऽर्बुदगुणं पुण्यं दास्या ह्यस्या व्रतेन वै ॥२४॥
अहं ब्रह्मेश्वरश्चाधिमासस्यास्म्यधिदैवतः ।
तत्राप्येकादशीनाथोऽस्म्यहं श्रीपुरुषोत्तमः ॥२५॥
मासोऽपि पुण्यश्च दिनं च पुण्यं
देवोऽस्मि पुण्यश्च व्रतं कृपालोः ।
ममाऽऽज्ञया येऽनुचरन्ति भक्त्या
तेभ्यो यथेष्टं वितरामि सर्वम् ॥२६॥
यथा यथा स्यान्मनसीषणात्रयम्
व्रतस्य कर्तुश्च तथातथाऽन्वहम् ।
परार्धतुल्यं तु ददामि तत्फलं
लक्ष्मीं च मां चापि च धाम मामकम् ॥२७॥
सिंहासनं मेऽपि ददामि तस्मै
ददामि सिद्धीश्च चमत्कृतिं च ।
ऐश्वर्यसर्वस्वमथापि भूतिं
सकौस्तुभं मे मुकुटं च भूषाः ॥२८॥
यथाऽधिमासे कृपया प्रवर्षये
जनार्थितं पूरयितुं च वर्धितुम् ।
तथा न कुत्रापि तु नैजवाञ्छया
प्रवर्षयिष्येऽधिकमासमन्तरा ॥२९॥
व्रतं प्रकुर्वन्तु नराः स्त्रियश्चबालाश्च वृद्धाश्च सुतोषणाय ।
फलं प्रदास्ये मम शाश्वतं वै पदं सुदिव्यं तु परात्परं यत् ॥३०॥
गोलोकं चापि वैकुण्ठं धामाऽव्याकृतमेव वा ।
श्वेतद्वीपं च वा सौर्यं स्वर्ग्यं भौमं तथाऽपरम् ॥३१॥
यद्यदिच्छेद् व्रतं कृत्वा प्रदास्यामि कृपावशः ।
अल्पायासे फलानन्त्यं गृह्णन्तु व्रतीनो मम ॥३२॥
नात्र यज्ञाः पृथक् कार्या नात्र तप्यं तपः पृथक् ।
तीर्थं नात्र पृथक् कार्यं ह्येकाहस्य फले हि तत् ॥३३॥
पयोव्रतं च पुत्रेष्टियजनं नेष्यते पृथक् ।
एकादश्या व्रतेनात्र दास्यामि पुत्रमित्यपि ॥३४॥
ज्योतिष्टोमेन यजनं पृथक् साध्यं न वेष्यते ।
स्वर्गं ददामि तस्मै य एकादश्या व्रतं चरेत् ॥३५॥
न तस्य राजसूयेन साध्यं किमपि शिष्यते ।
एकादशीव्रतेनाऽत्र सार्वभौमं ददाम्यहम् ॥३६॥
अग्निहोत्रेण किं तस्य दास्ये वैराजकं पदम् ।
एकादश्यां तु मे येनार्पितं फलजलादिकम् ॥३७॥
श्राद्धैर्विविधकल्पैश्च विविधैर्देवपूजनैः ।
या तृप्तिस्त्विष्यते तां वै दास्ये चैकादशीव्रते ॥३८॥
यां मुक्तिं यां च सम्पत्तिं यां सिद्धिं योगमैश्वरम् ।
यद्यद् वाञ्छति यत् कृत्वा तद् दास्येऽत्र दिने व्रते ॥३९॥
यावज्जीवं फलाहारैर्यत् सुपुण्यं समर्ज्यते ।
तत्पुण्यं यान्तु वै चैकादशीव्रतेन मे जनाः ॥४०॥
एकभुक्तं कृतं येनाऽऽजीवनं तत्फलं त्वहम् ।
ददाम्यधिकमासैकादशीव्रतेन मेंऽजसा ॥४१॥
मस्तके ज्वलदङ्गाराङ्गिष्ठिकां मध्यरात्रिके ।
काले उदूह्य या नारी ह्येकार्द्रवस्त्रसंवृता ॥४२॥
अनुपानच्चरणाभ्यामसहायाऽप्यरण्यके ।
गत्वा कालीं प्रपूज्यैत्र प्रत्यहं वार्षिकं व्रतम् ॥४३॥
एकभुक्तं माषमात्रादनं कुर्यादखण्डितम् ।
वर्षायां शीतकाले चातपकालेऽपि सर्वदा ॥४४॥
गत्वाऽऽपूज्य पुनरायाद् गृहं स्वं मध्यरात्रिके ।
ततो रन्धितमाषान्नं गृह्णीयाच जलं सदा ॥४५॥
एवं कष्टतरं पुत्रप्राप्त्यर्थं यन्महद्व्रतम् ।
तद्वै पृथङ् न कर्तव्यमेकादश्या व्रते कृते ॥४६॥
महाकालीव्रतं तद् यद् वार्षिकं प्रतिरात्रिकम् ।
यद् ददाति फलं पुत्रात्मकं तत्तु विनश्वरम् ॥४७॥
एकादशीव्रतं त्वेतत्पुत्रस्वर्गप्रमुक्तिदम् ।
एकेन दिवसेनैव तद्व्रताधिकपुण्यदम् ॥४८॥
सहस्रवर्षपर्यन्तं वाय्वाहारं व्रतं तु यत् ।
पृथक् तन्नास्ति कर्तव्यं ह्येकादश्या व्रते कृते ॥४९॥
सहस्रकन्यकादानं यत्र कन्या विभूषिताः ।
प्रत्येकं स्वर्णसाहस्रमुद्राश्च दक्षिणास्तथा ॥५०॥
प्रतिकन्यं तु दासीनां शतं स्वर्णविभूषितम् ।
प्रतिदासि च हस्तीनां शतं त्वम्बालिकायुतम् ॥५१॥
प्रतिहस्ति तुरगाणां शतं स्वर्णविभूषितम् ।
प्रत्यश्वं गोवृषभाणां शतं द्वन्द्वं रथान्वितम् ॥५२॥
रथं रथं प्रति दोग्ध्रीगवां चापि शतं शतम् ।
गां गां प्रति ह्यजानां च शतं शतं ददेत्तु यः ॥५३॥
अजां अजां प्रति वृत्ति क्षेत्रं गृहं ददेच्च यः ।
तस्य दातुः कुरुक्षेत्रे फलं सूर्यग्रहे तु यत् ॥५४॥
तस्माल्लक्षगुणं पुण्यं ददाम्येकादशीव्रते ।
अहं नारायणश्चास्मि शाश्वतः पुण्यशेवधिः ॥५५॥
नाऽन्तोऽस्ति मयि पुण्यानां गृह्णन्तु वृष्टिवज्जनाः ।
संकल्पो मे पुण्यभूमिर्भक्तिर्मे मोक्षभूमिका ॥५६॥
संकल्पस्य च भक्तेश्चाऽक्षयवार्धिरहं हरिः ।
ददाम्येव ददाम्येव रिक्तताभयवर्जितः ॥५७॥

पुरुषोत्तममासस्यैकादश्यां व्रतकारिणे ।
सर्वं ददामि चोन्मत्तत्यागिवत् कमलामपि ॥५८॥
अहं स्वयं तु मां समर्पये किमुत चापरम् ।
वृणुताऽतो यथेष्टं वै वदामि दुन्दुभिर्हरेः ॥५९॥
एतल्लाभं न चेदीयुर्नेदृशः प्राप्स्यते पुनः ।
इति श्रुत्वा दुन्दुभिं तु पुरुषोत्तमघोषणाम् ॥६०॥
चिन्तयामास मूर्तिः सा जन्म लग्नं सुतं हरिम् ।
दुन्दुभीशं समपृच्छन्नत्वा नम्रा विधिं व्रते ॥६१॥
दुन्दुभिस्तु तदा प्राह मूर्तिं त्वेकादशीविधिम् ।
स्नात्वा ब्राह्मे मुहूर्ते च ध्यात्वा श्रीपुरुषोत्तमम् ॥६२॥
सर्वोपचारैरन्यूनैः पूजयेत्परमेश्वरम् ।
मूर्तिं तु पौरटीं लक्ष्मीनारायणस्य शोभिताम् ॥६३॥
सत्पात्रे पञ्चपात्रे वै निधाय सोपचारिकाम् ।
ततो व्रती जलपात्रं स्थापयेज्जलसद्घटम् ॥६४॥
पञ्चामृतादि सन्न्यस्य पूजां मूर्तौ समाचरेत् ।
प्रथमं देहशुद्ध्यर्थं त्र्याचमनानि कल्पयेत् ॥६५॥
ततः पूर्वं मुखं कृत्वा निषद्य च शुभासने ।
मूर्तावावाहयेत् कृष्णनारायणं समन्त्रकम् ॥६६॥
घण्टां प्रवादयेदावाहनकाले शुभस्वराम् ।
आसनं पट्टिकां स्थालीं स्वर्णां दद्यात्तु शार्ङ्गिणे ॥६७॥
पादप्रक्षालनार्थाय पाद्यं दद्याज्जलं शुभम् ।
ततस्तीर्थजलं दद्यादर्घ्यं पूजानिमित्तकम् ॥६८॥
ततस्तीर्थजलमाचमनार्थं च ददेच्छुभम् ।
पुनश्चाऽथ प्रशुद्ध्यर्थं दद्याद् दर्भजलं शुभम् ॥६९॥
ततो दन्तप्रशुद्ध्यर्थं दद्याद्वै दन्तधावनम् ।
जिह्वोल्लेखनकार्यार्थं दद्यात् स्वर्णशलाकिकाम् ॥७०॥
ततः शुद्धं जलं दद्याद् गण्डूषार्थं ततः पुनः ।
मुखप्रक्षालनार्थाय जलं दद्यात्पुनर्नवम् ॥७१॥
अथ शौचं प्रकल्प्यैव दद्याज्जलघटं तथा ।
मृदं वापि प्रदद्याच्च करादिशुद्धिहेतवे ॥७२॥
जलं शुद्धं तथा दद्याद्धस्तप्रक्षालनाय वै ।
ततः शुद्धं जलं दद्यान्मुखादिक्षालनाय च ॥७३॥
स्वर्णासनं शुभं दद्यात् स्नानार्थं पट्टिकात्मकम् ।
तैलेन तु सुगन्धेन मर्दयेत्परमेश्वरम् ॥७४॥
आमलकैस्तिलचूर्णैस्तथा संमर्दयेद्धरिम् ।
तत उष्णोदकेनापि स्नापयेत्पुरुषोत्तमम् ॥७५॥
ततो दुग्धेन दध्ना च घृतेन मधुना तथा ।
स्नापयेच्छर्करा वार्भिः संमृद्य पुरुषोत्तमम् ॥७६॥
ततः शुद्धजलैरुष्णैः स्नापयेत्परमेश्वरम् ।
ततो नैर्मल्यकारिण्या प्रोष्णोदकेन मिश्रया ॥७७॥
हरिं गूटिकयाऽऽमृद्य स्नापयेदभिषेचनम् ।
कस्तूरिकाचन्दनादिपुष्पसारादि लेपयेत् ॥७८॥
वस्त्रेण मार्जयेत् कृष्णं धौत्राम्बराणि धारयेत् ।
केशप्रसाधनं तैलं दत्वा कुर्याच्च दन्तकैः ॥७९॥
ललाटे तिलकं चन्द्रं कुर्याच्चन्दनकुंकुमैः ।
नेत्रयोः कज्जलं दद्यादोष्ठयोः रंगरञ्जनम् ॥८०॥
हस्तपादतलादीनि रञ्जयेद् रंगसुद्रवैः ।
स्वर्णकिरीटसद्रत्नमालिकाकुण्डलादिकम् ॥८१॥
मणिमौक्तिकहारादि रशनाकंकणादिकम् ।
ऊर्मिकाशृंखलासत्किंकिणीनुपूरकादिकम् ॥८२॥
आभूषणानि सर्वाणि यथास्थानं प्रधारयेत् ।
पादयोः पादुके दद्याद्धस्तयोर्यष्टिमालिके ॥८३॥
कण्ठे सत्पुष्पहारांश्च तुलसीपत्रमालिकाम् ।
पुष्पाणां शेखरान् गुच्छानर्पयेत्परमादरात् ॥८४॥
पवित्रं त्वर्पयेद् यज्ञोपवीतं योगपट्टकम् ।
तुलसीमणिमालां च दद्यान्मंगलसूत्रकम् ॥८५॥
कौस्तुभं च मणिं दद्यात् तथा रक्षां प्रकोष्ठके ।
नक्तकं हस्तके दद्यात् प्रोक्षयेद् गन्धसारकम् ॥८६॥
राजाधिराजसद्वेषं शृंगारं कारयेत्परम् ।
छत्रं च चामरे दद्याद् व्यजनं वायुदं तथा ॥८७॥
दर्पणं मुखलोकार्थं दद्यात् पर्यंकमित्यपि ।
गेन्दुकं प्रच्छदपटीं कशिपुं गुप्तदोरकम् ॥८८॥
कपोलकशिपुं दद्यात् दंशमशकरोधिनीम् ।
धूपं सुगन्धं कृत्वा च दीपं प्रज्वालयेत्तथा ॥८९॥
श्वेतचूर्णं रक्तचूर्णं कुंकुमं चाक्षतान् ददेत् ।
नैवेद्यं लड्डुकान् मिष्टं विविधान्नं सुपायसम् ॥९०॥
शाकानि चारनालानि दधि दुग्धं सशर्करम् ।
सूपौदनादिकं दद्यात् क्वथिकां चटनीं तथा ॥९१॥
भक्ष्यं भोज्यं लेह्यचोश्ये पेयं दद्याज्जलं तथा ।
चुलुकं कारयेत्ताम्बूलकं चूर्णं समर्पयेत् ॥९२॥
एलालवंगधानात्वग्वरीयःपूगिकाफलम् ।
दद्याच्च फलमाम्रस्य जम्बूपनसकादलम् ॥९३॥
द्राक्षाश्रीफलदाडीमनवरंगादिकं ददेत् ।
शुष्कफलान्यपि दद्याद् बदामकाजुखारिकाः ॥९४॥
एवं समर्पणं कृत्वा हरिं सन्तर्प्य भावतः ।
कदलीस्तम्भवंशादिकृते वस्त्रादिशोभिते ॥९५॥

अशोकाऽऽम्रदलपुष्पफलतोरणराजिते ।
मण्डपे मध्यदेशे वै सप्तधान्यैः कृते शुभे ॥९६॥
सर्वतोभद्रके तत्र मण्डले मध्यवर्तिनि ।
सुवर्णस्य घटे ताम्रे तीर्थवारिप्रपूरिते ॥९७॥
मणिमौक्तिकसौवर्णरूप्यताम्रादिकान्विते ।
वस्त्रेण वेष्टिते चाम्राशोकादिपल्लवान्विते ॥९८॥
सुशोभितेऽक्षतचन्दनाक्तकुंकुमपूजिते ।
तत्र घटे स्थापिता या स्थाली ताम्रा च कानकी ॥९९॥
खारिकाम्रफलैः पूगीश्रीफलैः शर्करातिलैः ।
पूरितायां तु तस्यां वै स्थापयेत् पुरुषोत्तमम् ॥१००॥
नीराजयेन्नववारं घृताक्तपञ्चवर्तिभिः ।
वस्त्रं च भ्रामयेत् पश्चाच्छंखोदकेन वर्तयेत् ॥१०१॥
धूपं संभ्रामयेच्चापि स्तुतिं कुर्याद् यथेष्टदाम् ।
नमेच्च दण्डवत् कुर्यात् पञ्चवारं प्रदक्षिणम् ॥१०२॥
क्षमां याचेत चार्घ्यं वै सफलं पुनरर्पयेत् ।
पुष्पांजलिं साक्षतं वै दद्याच्छ्रीहरये ततः ॥१०३॥
दक्षिणां कानकीं मुद्रां राजतं चाप्युपायनम् ।
इष्टं वस्तु प्रदद्याच्च हरये त्वभिवाञ्छितम् ॥१०४॥
आन्दोलयेच्च दोलायां पर्यंके शयनं ददेत् ।
पादसंवाहनं कुर्याद् ददेद् यानं सवाहनम् ॥१०५॥
नृत्यं कुर्यात् तथा गीतं वादित्रं वादयेत् तथा ।
चरणामृतदानं च भक्तेभ्यस्तत्र वर्तयेत् ॥१०६॥
अथापि जलपानं च कारयेत्पुनरादरात् ।
ताम्बूलकं पुनर्दद्यादेलालवंगकादिकम् ॥१०७॥
मिलेत् संश्लिष्य बाहुभ्यां समापीड्य हरिं मुदा ।
प्रस्थापयेत् ततो देवं दूरं गत्वा विसर्जयेत् ॥१०८॥
आगन्तव्यमिति ब्रूयान्नत्वा त्वायात्पुनर्गृहम् ।
इत्यष्टोत्तरशतकोपचारैः परमेश्वरम् ॥१०९॥
पूजयेद्बहुभक्त्यैकादश्यां प्रातर्व्रती जनः ।
यदि सम्पदधिका स्याद्धोमयज्ञादि कारयेत् ॥११०॥
द्वादश्यां भोजयेद्विप्रान् सतीः साध्वीः सतो जनान् ।
ततः स्वः पारणां कुर्यात् संभोज्याश्रितवर्गकान् ॥१११॥
दद्याच्छ्रेष्ठानि दानानि भजेत श्रीहरिं मुदा ।
एवं मध्याह्नके कुर्यात् सायं कुर्यात्तथैव ह ॥११२॥
रात्रौ जागरणं कुर्यान्नृत्यगीतपुरःसरम् ।
कीर्तनं श्रीहरेः कुर्यान्निरुन्ध्यादिन्द्रियाणि च ॥११३॥
एवं त्वधिकमासस्यैकादशीव्रतमत्र यः ।
कुर्यात् तेन कृतं सर्वं कर्तव्यं नावशिष्यते ॥११४॥
अधिमासश्चातिपुण्यः पुण्याः त्वेकादशी तिथिः ।
तद्देवः पावनश्चाहं किं तस्मादतिरिच्यते ॥११५॥
अधिमासो मम शाला वसामि पुरुषोत्तमः ।
एकादशी मदुत्पन्ना किं तस्मादतिरिच्यते ॥११६॥
एतत् त्रिकं महापुण्यं सर्वेभ्यः श्रेष्ठतां गतम् ।
तत्रापि मत्कृपा प्राप्ता किमस्मादतिरिच्यते ॥११७॥
तस्मादष्टोत्तरशतवस्तुभिर्मां प्रपूज्य च ।
गृह्णन्तु भवपारं वा गृह्णन्तु भवसाम्यताम् ॥११८॥
मूर्ते त्वं चाद्य दिवसे तथाविधि कुरु व्रतम् ।
येन ते दास्यते कृष्णो दुन्दुभ्यात्मा यथेप्सितम् ॥११९॥
मूर्तिः प्राह तदा ह्येनं दुन्दुभिं विनयेन वै ।
न मदग्रेऽस्ति सामग्र्यः प्रच्छन्नाऽहं वसामि च ॥१२०॥
कथंकारं त्वदुक्तं वै पूजनं तु मया भवेत् ।
इच्छाम्यहं शुभं जन्म विवाहं च सुतं हरिम् ॥१२१॥
दुर्लभं तद्विना पूजा तादृशी स्यान्न चेप्सितम् ।
इत्युक्त्वा भग्नहृदया साश्रुकण्ठा बभूव सा ॥१२२॥
एकादश्या व्रतं कार्यमिति संकल्प्य शोचति ।
स्मृत्वा नारायणं कृष्णं बाला त्वश्रूणि मुञ्चति ॥१२३॥
तावत् कृपानिधिस्तत्र हरिर्नारायणः स्वयम् ।
कृपां कृत्वा दुन्दुभेरग्रतः सुप्रकटोऽभवत् ॥१२४॥
प्रमार्ज्याऽश्रूणि कन्यायाः प्राह मातर्नमाम्यहम् ।
शोकं मा कुरु पूज्यासि यथेष्टं प्रददाम्यहम् ॥१२५॥
भावेनास्मि सदा तुष्टो नाऽभावे तु कदाचन ।
तव भावेन सन्तुष्टो ददामि वृणु तद्वरम् ॥१२६॥
अर्च्यते भावहीनेन सहस्रवस्तुभिर्यदि ।
न सन्तुष्टो भवाम्यत्र भावहीनेऽर्थसाधके ॥१२७॥
पत्रपुष्पजलैश्चापि भावभक्त्या मदर्चनम् ।
मम सन्तोषकृत् तत्स्याद् भावस्य क्षुधितोऽस्म्यहम् ॥१२८॥
अष्टोत्तरशतसंख्योपचारैरपि हार्दिकैः ।
मातः सम्पूजय त्वं मां ध्यानमात्रेण चान्तरे ॥१२९॥
मानसं पूजनं तेऽहं स्वीकरिष्येऽतिभावतः ।
फलं यथेष्टं ते दास्ये ह्यद्यतनव्रतस्य वै ॥१३०॥
इत्युक्त्वा श्रीकृष्णनारायणः श्रीपुरुषोत्तमः ।
ननाम पादयोर्मूर्तेर्मातृभावेन पुत्रवत् ॥१३१॥

माता शोकं विहायैव प्रसन्नाऽभूत् हृदन्तरे।
प्रोवाच शनकैः कृष्णं जन्म चेच्छामि लौकिकम् ॥१३२॥

धर्मेण पतिना साकं लग्नमिच्छामि वैदिकम्।
अंके लालयितुं पुत्रं सुतं चेच्छाम्यलौकिकम् ॥१३३॥

अलौकिकस्त्वमेवासि वक्तुं नोत्सहते मनः।
निवेदितं हृदय्यं मे यथेच्छसि तथा कुरु ॥१३४॥

इत्यादिष्टो हरिः स्वाभिलषितं प्रियमुत्तमम्।
मूर्तेर्मुखात्समाकर्ण्य जहर्ष भाविजन्मधृक् ॥१३५॥

उवाचाऽतिप्रसन्नः सन् सर्वं मातर्भविष्यति।
इष्टं सर्वं करिष्येऽहं ददामि वचनं तु ते ॥१३६॥

गच्छ दक्षगृहं मूर्ते धर्ममापृच्छ्य सत्पतिम्।
भवपुत्री तु दक्षस्य स ते धर्माय दास्यति ॥१३७॥

अहं बालस्वरूपेण सह भ्रात्रा त्वदंकके।
ग्रहीष्यामि जनुं मातः श्वो याहि त्वं व्रतोत्तरम् ॥१३८॥

मानसी त्वं हि दक्षस्य पुत्री वै भाविनी ततः।
धर्मो विवाह्य मातस्त्वां हिमशैले निवत्स्यति ॥१३९॥

अहं ते मानसस्तत्र चतुरात्मा सुतः स्वयम्।
नरो नारायणश्चेति हरिः कृष्णश्च ते गृहे ॥१४०॥

रमिष्ये सुखदो ब्रह्मव्रतं संधारयन् सदा।
लोककल्याणसंकल्पं पूरयँस्तव सन्निधौ ॥१४१॥

इत्युक्त्वा च पुनर्नत्वा तिरोऽभूत्पुरुषोत्तमः।
मूर्तिश्चापि व्रतं कृत्वाऽर्चनं तत्र च मानसम् ॥१४२॥

द्वादश्यां पारणं कृत्वा प्रातः कृत्वाऽर्चनं हृदि।
धर्मदेवस्य संगृह्य शुभाज्ञां दक्षसद्गृहम् ॥१४३॥

ययौ जज्ञे च संकल्पादसिक्न्यां मानसी सुता।
श्रद्धामैत्र्यादिकाश्चान्या द्वादशापि प्रजज्ञिरे ॥१४४॥

त्रयोदशापि दक्षेण दत्ता धर्माय पुत्रिकाः।
मूर्तेर्जाता नरो नारायणः कृष्णो हरिस्तथा ॥१४५॥

लोकानां रक्षणार्थाय कुर्वन्तस्तप उत्तमम्।
इति ते कथितं लक्ष्मि मासे वै पुरुषोत्तमे ॥१४६॥

व्रतसंकल्पमात्रेण पूर्णं व्रतफलं भवेत्।
किं पुनः सांगविधिना कर्तुः फलेऽवशिष्यते ॥१४७॥

तस्मादेकादशीतुल्यं व्रतं नान्यद् भविष्यति।
शाश्वताऽक्षयसत्पुण्यप्रदं मोक्षप्रदं तथा ॥१४८॥

यथालब्धोपचारैस्तु प्रातः संकल्प्य पूजनम्।
व्रतं चापि करिष्यन्ति तेषां गृहेष्वहं सदा ॥१४९॥

वत्स्याम्येव न सन्देहस्तद्भक्त्या वश्यतां गतः।
सुखयिष्ये सुतो भूत्वा व्रतिनौ दम्पती कुलम् ॥१५०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पुरुषोत्तममासमाहात्म्ये धर्मदेवस्य भार्य्यंगनया मूर्त्याधिमासैकादश्यामष्टोत्तरशतमानसोपचारैर्नारायणपूजनव्रते कृते सतिमूर्तेर्दक्षगृहे जन्म धर्मेण सह विवाहस्ततो हिमालये नरो नारायणः कृष्णो हरिश्चेतिपुत्रचतुष्टयफललाभश्चेत्यादिनिरूपणनामा त्र्यधिकत्रिशततमोऽध्यायः ॥३०३॥

**श्रीनारायण उवाच—**

श्रृणु लक्ष्मि! परब्रह्म सर्वाविर्भावशक्तिकृत्।
पुरुषोत्तमसंज्ञोऽसौ सविता जगतः पतिः ॥ १ ॥

स्वयं कृष्णस्वरूपश्च राधां स्वस्मात् प्रसृष्टवान्।
राधा कृष्णात्मिका शक्तिः साधिका भक्तकर्मणाम् ॥ २ ॥

कृष्णस्य सवितुः शक्तिः प्रसूते सुचराचरम्।
सा राधा कृष्णसेवायां गोलोके नित्यमस्ति हि ॥ ३ ॥

स्वप्रसूतस्य लोकस्य प्रसवार्थं निरन्तरम्।
ऐच्छद् रूपान्तरं धर्तुं तावत् कन्या व्यजायत ॥ ४ ॥
सा तु नाम्ना कृता कन्या सावित्री प्रसवप्रदा।
गोलोके राधया साकं रमते निजमन्दिरे ॥ ५ ॥

सुरूपा दिव्यसामर्थ्ययुक्ता लोकमनोहरा।
यथेष्टसिद्धिसम्पन्ना गुप्तैश्वर्यादिशालिनी ॥ ६ ॥
यदाराधा स्वयं कृष्णसेवायां समवर्तते।
तदा कन्या तु सावित्री समाधौ समतिष्ठति ॥ ७ ॥

आत्मनि रमते नित्यमात्मानन्दमयी प्रसूः।
आत्मसुखातिसंमग्ना ध्यायति ब्रह्म वै परम् ॥ ८ ॥
योगाभ्यासबलाज्जन्मसिद्ध्या त्वैच्छद् विलोकितुम्।
ब्रह्मणः कीदृशं रूपं कति वा सन्ति तानि च ॥ ९ ॥

कुत्र कुत्र च वर्तन्ते किंकार्याणि वसन्ति च।
तदैश्वर्याणि तेषां च कीदृशो वै विभूतयः ॥१०॥
इत्येतत्सर्वमाज्ञातुं प्राणान्संकुच्य चात्मनि।
अवातरच्छनैर्मूलाधारचक्रे तु योगिनी ॥११॥
अत्र स्थित्वा गणपतौ संयमं सा चकार ह।
तेनाऽसंख्यगणेशानां श्रीकृष्णांशस्वरूपिणाम् ॥१२॥
ब्रह्माण्डेषु त्वनन्तेषु धामान्यालोक्य सुन्दरी।
गुदामूलस्थितं चक्रं परित्यज्याग्रमाययौ ॥१३॥

स्वाधिष्ठानाभिधं चक्रं संयमार्थं दधार सा ।
तत्र प्रजापतौ स्थित्वा संयमं सा चकार ह ॥१४॥
तेनाऽसंख्यप्रजेशानां परब्रह्मस्वरूपिणाम् ।
ब्रह्माण्डेषु त्वनन्तेषु धामानि वीक्ष्य सुन्दरी ॥१५॥
नाभिकन्दस्थितं मणिपुरं चक्रं जगाम सा ।
तत्र स्थित्वा तु सर्पिण्यां संयमं सा विधाय च ॥१६॥
ऊर्ध्वमुख्यां प्रविवेशाऽसंख्यलोकेषु सुन्दरी ।
तस्माद् यान्ति महानाड्यस्तेजोमय्योऽप्यसंख्यकाः ॥१७॥
काश्चित्पाताललोकाँश्च काश्चिल्लोकाचलातिगान् ।
काश्चित्स्वर्गादिसत्यान्तान् काश्चिदावरणादिकान् ॥१८॥
काश्चिदीश्वरलोकाँश्च काश्चिद्ब्रह्मगृहानपि ।
या या यद्यत् स्थलं यान्ति तत्तन्मार्गेण सुन्दरी ॥१९॥

जगाम बहुलोकेषु विलोक्य दिव्यभूमिकाः ।
ब्राह्माण्डिकविभूतीश्च पुनरागत्य तत्स्थलम् ॥२०॥
जगामोर्ध्वं च हृदये चक्रमनाहताभिधम् ।
तत्र वै प्रणवं श्रुत्वा चक्रे ब्रह्मणि संयमम् ॥२१॥
यदात्मा चाप्यन्तरात्मा ब्रह्मात्मा ख्यायते स्वयम् ।
तत्र कृतेन सावित्री संयमेनैश्वरीकृतौ ॥२२॥
वैराजेषु भौमनेषु वैष्णवेषु च धामसु ।
प्राकृतेषु तथा सादाशैवेष्वावरणेषु च ॥२३॥
तत्तद्धामसु सावित्री विलोक्य दिव्यभूमिकाः ।
तत्स्थलं पुनरागत्य ययावूर्ध्वं तु कण्ठगम् ॥२४॥

विशुद्धं चक्रमेवेयं चक्रे वै संयमं बलात् ।
वासुदेवेऽनिरुद्धे च प्रद्युम्ने च सुकर्षणे ॥२५॥
विलोक्य रचनास्तेषां धाम्नां धामविभूतिकाः ।
कण्ठं देशं पुनरायादूर्ध्वं च भ्रूकुटौ तु सा ॥२६॥
गत्वाऽऽज्ञाचक्रमासाद्य चकार संयमं शनैः ।
दृष्टस्तत्र गुरुः साक्षात् परब्रह्मात्मकस्तया ॥२७॥
लोकसंचालनार्थाय जातो यो विश्वसृड् विभुः ।
परब्रह्मस्वरूपाद् यः प्राविर्बभूव वेदकृत् ॥२८॥
सर्वलोकगुरुर्ब्रह्मा प्रजानां यः पितामहः ।
तस्यांऽके तु स्थितां दिव्यां स्वां सावित्री विलोक्य वै ॥२९॥

वेधःपत्नीं विनिश्चित्य जहर्षातीव सुन्दरी ।
क्षणं विचारयामास याऽहं गोलोकवासिनी ॥३०॥
भवाम्यद्य कथं चात्र मां पश्याम्यंकसंस्थिताम् ।
अजसक्थिगतं यन्मे रूपं तत्कुत आगतम् ॥३१॥
यदहं संप्रपश्यामि मां वधूरूपिणीं त्विह ।
पितामहीं च तत्सर्वं पृच्छाम्यत्रैव कारणम् ॥३२॥

इति प्रष्टुं ययावग्रे तावत् तिरोबभूव सा ।
पितामह्या समाकृष्टा लीना बभूव सुन्दरी ॥३३॥
तावत्समाधितश्चेयं सावित्री बहिराययौ ।
क्व गोलोकस्थिता कन्या क्वाऽजांऽकस्था पितामही ॥३४॥
इत्याश्चर्यान्विता कन्या दृष्टार्थस्य विनिश्चयम् ।
ससंभ्रमा ययौ कर्तुं राधिका यत्र राजते ॥३५॥
सावित्र्या स्वप्रदृष्टार्थो राधिकायै निवेदितः ।
श्रुत्वा राधा तु तां प्राह कन्ये त्वं मत्स्वरूपिणी ॥३६॥
वर्तसे ब्रह्मशक्तिश्च ब्रह्मार्थं जातविग्रहा ।
जगत्प्रसूस्वरूपा या मायाशक्तिः परा मता ॥३७॥
साऽहं सा त्वं च सावित्री सूयमाना जगत्प्रसूः ।
ब्रह्मपत्नी ब्रह्मतन्वी ब्रह्मणोऽर्थे विनिर्मिता ॥३८॥

पितामहेन संपृक्ता नित्यं जगत्पितामही ।
वर्तसेऽनादिकालत्वात् प्रत्यजं तु नवा नवा ॥३९॥
भवसि त्वं महामाये कन्यका मत्स्वरूपतः ।
अथाराधय तं देवं प्राप्स्यसे तपसो बलात् ॥४०॥
इत्याश्रुत्य तु सावित्री ब्रह्मप्राप्तिं व्यचिन्तयत् ।
तावत्तत्र द्वादशिकादिने प्रातः समश्रृणोत् ॥४१॥
दुन्दुभिं देवदेवस्य घोषयन्तं कृपावचः ।
अधिमासव्रतं देव्यः कुर्वन्तु मानसप्रदम् ॥४२॥
हृदि दृष्टं बहिर्दृष्टं लोके लोकान्तरेऽपि वा ।
दिनैकव्रतमात्रेण दास्यते पुरुषोत्तमः ॥४३॥

अनन्तगुणकं पुण्यमद्याऽस्ति हरिवासरः ।
त्रिस्पृशाव्रततस्त्वद्य सहस्रगुणकं फलम् ॥४४॥
यथेष्टं लभ्यते कृत्वा ह्येकभुक्तं च नक्तकम् ।
फलाहारं च वा दुग्धपानं दधिप्रभोजनम् ॥४५॥
जलाहारं च वा घृताहारं तिलादनं च वा ।
यवाहारं च वा शाकाहारं कन्दादनं च वा ॥४६॥
भर्जिताऽदनमथवा व्रतं पत्रादनं तु वा ।
पुष्पादनं निरदनं पवनादनमेव वा ॥४७॥
धूम्रादनं च वा बाष्पादनं कृत्वा व्रतं शुभम् ।
द्वादश्यामधिमासेऽत्र लभन्तां शाश्वतं सुखम् ॥४८॥

ब्रह्मपरं तथा ब्रह्म गोलोकं चामृतं पदम् ।
अव्याकृतं च वैकुण्ठं मायालोकं च वैष्णवम् ॥४९॥
सदाशिवपदं वापि भूमसाम्राज्यमेव वा ।
श्रीपुरं चापि वैराज्यं हैरण्यगार्भिकं च वा ॥५०॥
भौमाद्यावरणे धामान्यर्जयन्तु व्रतेन वै ।
सत्यं वा ब्रह्मणः स्थानं वहे वा सौर्यमेव वा ॥५१॥

चान्द्रमसं च वा स्थानं नाक्षत्रं ग्राहमेव वा ।
ऐन्द्रं च वारुणं स्थानं याम्यं कौबेरमेव वा ॥५२॥
ऐशानं पावनं वापि नैर्ऋतं तारकं च वा ।
भुवो राज्यं च वा भौमं चातलेयादिकं नु वा ॥५३॥
आवरणानि दिव्यानि देवराज्यानि वैभवान् ।
कौमारं ब्राह्मचर्यं वा यौगं वाऽऽत्मपदं शुभम् ॥५४॥
श्वेतद्वीपादिकं चाऽथ सामुद्रं चान्तरीक्षगम् ।
राज्यं सार्वभौमं वा साम्राज्यं वापि मानवम् ॥५५॥
मौनमार्षं च पैत्राद्यैश्वरं वा बहुसिद्धिकम् ।
स्त्रीराज्यं वापि कैलासं कामराज्यं च शाश्वतम् ॥५६॥
पातिव्रत्यं परं राज्यं स्वामिसेवात्मकं च वा ।
पत्नीमत्त्वं पतिमत्त्वं पुत्रपुत्रीसुसम्पदः ॥५७॥
आरोग्यं च धनं धान्यं रसायनं च कायिकम् ।
यद्यदिच्छेद् व्रती त्वद्य द्वादश्यां हरिवासरे ॥५८॥
तत्सर्वं प्रददाम्यस्मै वदामि पुरुषोत्तमः ।
अद्य मे पूजनं कुर्यात् प्रातः स्नात्वा गृहान्तरे ॥५९॥
स्थित्वा ध्यानं च मे कुर्यात् कुर्यादावाहनादिकम् ।
पञ्चामृतैश्च मे स्नानं शुद्धोदाप्लवनं तथा ॥६०॥
निर्वर्तयेत्ततो वस्त्रभूषाचन्दनमर्पयेत् ।
यथाशक्ति प्रकुर्याच्च धूपदीपाभिवन्दनम् ॥६१॥
नैवेद्ये फलमूलाद्यं मिष्टान्नान्यन्यथवाऽर्पयेत् ।
जाम्बूलं जलपानं च दक्षिणां नमणं चरेत् ॥६२॥
प्रदक्षिणं स्तुतिं चारात्रिकं पुष्पाञ्जलिं ददेत् ।
कुंकुमाऽक्षततुलसीफलैरर्घ्यं समर्पयेत् ॥६३॥
पुनर्नत्वा पुनः स्मृत्वा प्रार्थयेत् स्वेष्टवस्तुकम् ।
व्रतं चापि प्रपूर्णं स्यात् तव केशवपूजनात् ॥६४॥
क्षमापयेत्तथा स्तुत्या मूर्तिं तु कानकीं हरेः ।
क्रमाऽक्रमौ न विदितौ न ज्ञातं त्वदभीष्टकम् ॥६५॥
यथाबुद्धि मया प्रेम्णा कृतं न्यूने क्षमां कुरु ।
अधिमासोऽसि देवेश ! ह्यधिवर्षाकर ! प्रभो ! ॥६६॥
अर्थिनामधिकं चेष्टं ददासि पुरुषोत्तम ! ।
कृष्णनारायण विष्णो पार्वतीश प्रमेश्वर ॥६७॥
लक्ष्मीश माणिकीनाथ सावित्रीश जगत्प्रभोः ।
विश्वसृड् राधिकाकान्त कमलाकान्त केशव ॥६८॥
द्वादश्यां मे व्रतेनाऽद्य मानसेष्टं प्रपूरय ।
इत्यभ्यर्थ्य हरिं नत्वा प्रातर्मध्ये निशीथके ॥६९॥
भूत्वा तन्मय एवापि तत्समर्पितसत्क्रियः ।
रञ्जयेन्नृत्यगीतैश्च सवाद्येन विसर्जयेत् ॥७०॥
इति कृत्वा व्रतं सम्यगर्चनं व्रतकृज्जनः ।
नरो नारी कुमारी वा कुमारो देवताऽथवा ॥७१॥
सुरेश्वरी च वा पितृकोटिका मुनियोषितः ।
पातालवासिनी यद्वा तादृशा नरवर्गिणः ॥७२॥
ईश्वरा ईश्वराण्यश्च मुक्ता मुक्तान्य एव वा ।
यदिच्छन्ति त्वाप्नुवन्ति प्रतिजाने न संशयः ॥७३॥
यथाशक्ति यथाकार्यं व्रतं च पूजनं मम ।
बाह्याभावे हृदि मेऽपि भावभिन्नं सुपूजनम् ॥७४॥
कुर्यात्तस्यापि भावेन प्रेम्णा तुष्टो ददाम्यहम् ।
अद्याऽधिमासके त्वस्मि कृपावर्षी परेश्वरः ॥७५॥
न भूतो न भविष्यामि यथाऽद्य वृष्टिकृत्तथा ।
तस्मान्मे कृपया भक्ताः कृत्वा किञ्चिदथो व्रतम् ॥७६॥
लभन्तां शाश्वतं पुण्यं सुखं लोकं च हृद्गतम् ।
इति श्रुत्वा तु सावित्री जहर्ष चाति सुन्दरी ॥७७॥
नत्वा सा दुन्दुभिं प्राह श्रृणु दैवाकृते कृतिन् ! ।
मया समाधौ ब्रह्मा वै परमेष्ठी पितामहः ॥७८॥
दृष्टस्तस्य च वामेंऽके सावित्री च निषेदुषी ।
मत्स्वरूपा मया दृष्टा तस्यां लिल्येऽप्यहं तदा ॥७९॥
पुनश्चाहं समाधेरुत्थिताऽस्म्यत्र कुमारिका ।
विश्वस्रष्टा पतिः सोयं प्राप्तव्यो मानसे स्थितः ॥८०॥
अतोऽधिमासद्वादश्यामेकभुक्तं व्रतं मम ।
पूजनं देवदेवस्याऽऽचरिष्यामि यथाबलम् ॥८१॥
अनेन मे शरीरेण प्राप्तिस्तस्य तु दुर्लभा ।
नित्यगोलोकधाम्नश्च विभूतेर्मेऽस्ति वर्ष्म यत् ॥८२॥
तस्यास्ति तत्त्वजं वैराजात्मजं वर्ष्म सञ्चितम् ।
तस्मान्मे ब्रह्मणो योगो यथा येन च वर्ष्मणा ॥८३॥
जायेत तत्तथा ब्रूहि करोमि द्वादशीव्रतम् ।
इति श्रुत्वा दुन्दुभिश्च तामाह पुरुषोत्तमः ॥८४॥
श्रृणु सावित्रि सुभगे ह्यद्य श्रीपुरुषोत्तमम् ।
वह्निपुत्रसुवर्णस्य मूर्तिरूपं विधापय ॥८५॥
लक्ष्मीं तथा सुवर्णस्य मूर्तिरूपां विधापय ।
ब्रह्माणं च तथा तस्य सावित्रीं कानकीं कुरु ॥८६॥
पूजयित्वा यथाशक्ति दानं कुरु सुपात्रके ।
इत्येवं वै व्रते त्वद्य पूजनं दानमित्यपि ॥८७॥
कुरु तेन प्रसन्नः स श्रीकृष्णः पुरुषोत्तमः ।
सर्वं विधास्यते तेऽर्थं मा चिन्तां कुरु कन्यके ॥८८॥
इतिश्रुत्वा तु सावित्र्या व्रते वै द्वादशीप्रगे ।
योगबलेन सौवर्णं मेरोर्भागात् समर्जितम् ॥८९॥

ऐश्वर्येण च तत्रैव लक्ष्मीं नारायणं च सा ।
ब्रह्माणं चापि सावित्रीं सौवर्णीं मूर्तिमेव ह ॥९०॥
कृत्वा त्वावाह्य संस्नाप्य भूषयित्वा प्रपूज्य च ।
भोजयित्वा पाययित्वा प्रार्थ्य नीराजनं व्यधात् ॥९१॥
क्षमापयित्वा संस्तूय निवेद्यार्थं च हृद्गतम् ।
विसर्जयति यावत्तान्देवाँस्तावद्धरिः स्वयम् ॥९२॥
प्रादुर्बभूव सावित्र्यास्त्वग्रे लक्ष्मीयुतः प्रभुः ।
प्रसन्नवदनः सर्वशोभाढ्यो वरदानदः ॥९३॥
प्राहाऽस्यै वद कल्याणि किं ते मनसि वर्तते ।
सावित्री प्राह देवेशं देहि योगं तु वेधसः ॥९४॥
कृष्णनारायणः प्राह जातं ते मनसि स्थितम् ।
नेत्रे प्रमील्य मद्ध्यानं कुरु सावित्रि वै क्षणम् ॥९५॥
तावत्ते मानसं सर्वं भविष्यति करागतम् ।
नारायणेन यत्प्रोक्तं तथैवाऽऽचरदादरात् ॥९६॥
तावन्नारायणः कृष्णो व्यलीयत हि तत्क्षणम् ।
अथ प्रातः प्रपूज्यैवं मध्याह्नेऽपि तथाऽकरोत् ॥९७॥
सायं चापि तथा पूजामकरोज्जागरं तथा ।
दोलायां तां कृष्णनारायणं लक्ष्मीं तथा ह्यजम् ॥९८॥
सावित्रीं च निधायैव कन्यकाऽऽन्दोलयन्मुहुः ।
तावत्प्राह पुनस्तत्राऽऽगत्य श्रीपुरुषोत्तमः ॥९९॥
देवि ! पुष्पाञ्जलिं दत्वा दत्वा चार्घ्यं फलं जलम् ।
विसर्जनं कुरु मेऽत्र गच्छाम्यक्षरधाम यत् ॥१००॥
त्वं याह्यद्यैव वैराजं यस्माद् ब्रह्मा व्यजायत ।
वैराजे सूक्ष्मरूपेण प्रविश त्वं पुरा ततः ॥१०१॥
वैराजमानसी पुत्री तन्नाभेर्भव कन्यके ।
जातमात्रां युवतीं त्वां वैराजोऽजाय दास्यति ॥१०२॥
विधिना त्वैश्वरेणैव कर्मणा त्वां नियोक्ष्यते ।
कल्याणि गच्छ ते स्वस्ति सौभाग्यं शाश्वतं भवेत् ॥१०३॥
इत्युक्त्वा श्रीहरिर्नारायणस्तत्र तिरोऽभवत् ।
सावित्रीश्रीहरेमूर्त्यै पुष्पाञ्जलिं प्रदाय च ॥१०४॥
अर्घ्यं च श्रीफलं प्रार्प्याकरोद् देवविसर्जनम् ।
दानं ददौ सुवर्णस्य मूर्तीनां ब्रह्मवर्चसे ॥१०५॥
पत्नीव्रताख्यगुरवे गोलोकधामवासिने ।
आशिषं च ततः प्राप्य भव सौभाग्यसुन्दरी ॥१०६॥
ब्रह्मपत्नी जगतां च प्रसवित्री भवेति च ।
राधां कृष्णं ततो नत्वा द्रागेवाऽदृश्यतां ययौ ॥१०७॥
वैराजे प्रविवेशाऽस्य नाभिनाले समुद्गता ।
प्रसवं प्राप्य कन्या सा सावित्री युवती तदा ॥१०८॥
जातमात्राऽभवत्तां च विदित्वा ब्रह्मणः कृते ।
समुत्पन्नां ददौ चेशसमाजे विधिना विराट् ॥१०९॥
ब्रह्मणे चतुरास्याय सापि पूर्णमनोरथा ।
जगन्माताऽभवत्प्राप्य ब्रह्माणं पतिमीश्वरम् ॥११०॥
इति ते कथितं लक्ष्मि ! द्वादशीव्रतकारणात् ।
सावित्र्या ब्रह्मपत्नीत्वं यथाजातं तदिष्टदम् ॥१११॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पुरुषोत्तममासमाहात्म्ये राधिकाया मूर्तान्तरसावित्र्या समाधौ जीवेशब्रह्मसृष्टिविलोकने वेधसोंऽके स्वस्थितिं दृष्ट्वा पत्नीरूपेण वेधःप्राप्तीच्छया चिन्तने दुन्दुभिश्रवणे द्वादशीव्रतेन वैराजपुत्र्या तया ब्रह्मा पतिः प्राप्तइत्यादिनिरूपणनामा चतुरधिकत्रिशततमोऽध्यायः ॥ ३०४ ॥

श्रीनारायण उवाच—

शृणु लक्ष्मि ! ब्रह्मणस्तु पुत्रीणां प्राक् चतसृणाम् ।
त्रयोदश्या अधिमासे व्रतेन पुरुषोत्तमः ॥ १ ॥
स्वयं पतिरभूत् ताभ्यो ददौ धामाक्षरं गृहम् ।
भुक्तिं मुक्तिं ददौ ताभ्यः शाश्वतीं कृपया प्रभुः ॥ २ ॥
आद्ये कृते युगे लक्ष्मि ! सृष्ट्यर्थं ब्रह्मणा पुरा ।
बालाः सनकसनन्दसनातनसनन्द्विधाः ॥ ३ ॥
सृष्टाश्चत्वार ऐश्वर्यबलतेजःसमन्विताः ।
दाम्पत्यर्थं च तेषां वै चतस्रः शक्तयः कृताः ॥ ४ ॥
नाम्ना जया च ललिता पारवती प्रभा शुभाः ।
सहशास्ते सहस्यस्ताः मानस्यो मानसाश्च ते ॥ ५ ॥
कृत्वा चतुर्युगलानि प्रसन्नोऽभूदतीव सः ।
जातमात्राणि चैतानि विज्ञानवन्ति वीक्ष्य वै ॥ ६ ॥
नियोक्तुं सृष्टिकार्ये तान् प्रत्येकं प्राह विश्वसृट् ।
सनक त्वं गृहाणैनां जयां त्वदर्थकल्पिताम् ॥ ७ ॥
सनन्दन गृहाणैनां ललितां ते प्रकल्पिताम् ।
सनातन गृहाणैनां दत्तां पारवतीं च ते ॥ ८ ॥
सनत् गृहाण ते दत्तां प्रभां सहचरीं कुरु ।
युगलं युगलं भूत्वा चत्वारि युगलानि वै ॥ ९ ॥
सृजन्तु मानसीं सृष्टिं सर्वा युगलरूपिणीम् ।
गोलोकादीदृशी प्राप्ता गृहधर्मपरम्परा ॥१०॥

वैकुण्ठेऽपि तथा दृष्टा गृहधर्मपरम्परा ।
वयं कृष्णाज्ञया गृह्यान् धर्मान् गृह्णीम आदरात् ॥११॥
तथा पुत्रा ! भवन्तोऽपि गृहीत्वा पितृसम्मतान् ।
गृहधर्मान् पालयित्वा भवन्तु सुखिनोऽत्र वै ॥१२॥
नियुज्य भवतः सृष्टिकार्येऽप्यहं मनाक् पुनः ।
सृष्टिभारेण रहितो भवामीति कृतार्थकः ॥१३॥
गृहधर्मे सदा पुत्रा वंशा भवन्ति तारकाः ।
गृहधर्मे योषितोऽपि भवन्ति सुखदायिकाः ॥१४॥
गृहधर्मे यज्ञयागक्रिया जायन्त आदरात् ।
अतिथेः पूजनं देवपूजनं साधुपूजनम् ॥१५॥
सत्कारोऽन्याश्रमिणां सुप्रदं दानं च जायते ।
कामधर्मोऽप्यवितः स्यादर्थश्चोपार्जितो भवेत् ॥१६॥
पुरुषार्थत्रयं मोक्षः पश्चाल्लभ्येत शाश्वतः ।
गृहधर्मं विना गुणप्रवाहविरमो न वै ॥१७॥
बाल्ये वा यौवने ज्ञानं जायते न विरामदम् ।
तस्माद् भोगं प्रदायैव मानसं वै प्रशान्तयेत् ॥१८॥
प्रशान्तमानसानां तु मोक्षो भवति शाश्वतः ।
तस्मात् कुर्वन्तु कार्याणि सृष्टिध्रौव्याणि पुत्रकाः ! ॥१९॥
इति वै ब्रह्मणः श्रुत्वा वचो विश्वसृजः सुताः ।
चत्वारः पूर्वत एव ज्ञानिनो योगिनस्तथा ॥२०॥
ब्रह्मवेत्तार एवैते मोक्षमर्थं विनिश्चिताः ।
न कर्मणा भवेन्मोक्षः कर्म वै बन्धनं पितः ॥२१॥
तत्रापि गृह्यकर्माणि बन्धनान्येव सन्ति वै ।
नारीधर्मो विनिवृत्तेः कारणं जायते नहि ॥२२॥
कर्मोत्तरं पुनः कर्म कारयत्येव रागतः ।
धर्मार्थकामनास्तत्र सान्ता भवन्ति नैव हि ॥२३॥
विना ज्ञानं पितस्तस्माद् गृहधर्मो भयावहः ।
गृहधर्मो भाररूपो यथा त्यक्तुं त्वयेष्यते ॥२४॥
तथाऽस्माभिश्च तं वोढुमाद्यतो नैव चेष्यते ।
पुत्रा यत् तारकाः प्रोक्तास्तारकं ज्ञानमेव ह ॥२५॥
तद्वै पुत्राभिधानं स्यात् ज्ञानिनां योगिनां तथा ।
कर्मिणां तु सुताः पुत्रा न चिकीर्षालयात्मनाम् ॥२६॥
वंशस्तु ब्रह्मविज्ञानि मुक्ताः सन्तो भवन्तु नः ।
ब्रह्ममार्गप्रदेष्टारो ब्रह्मलोकनिवासिनः ॥२७॥
अध्रुवस्याऽन्वयस्याऽर्थे करिष्यामो न गृह्यकर्म् ।
योषित्संगो बही रम्यः परिणामेऽन्तरेऽसुखः ॥२८॥
कस्तां सेवेत तत्त्वज्ञः सुखं नैजं विहाय वै ।
आत्मसुखं परं प्रोक्तं तदन्यत्सुखमन्तकृत् ॥२९॥
गृहधर्मे यज्ञयागा ये तु प्रोक्ताः पितामह ।
ब्रह्माराधनकार्यस्य कूलयाऽपि समा न ते ॥३०॥
ब्रह्माराधनमेवात्र क्रतुर्नो ज्ञानिनां मतः ।
कृते ब्रह्माराधने तु कृतमातिथ्यपूजनम् ॥३१॥
कृतं च देवपूजादि कृतं साधुप्रपूजनम् ।
सत्कृते तु हरौ नित्यं सत्कृतं सर्वमेव ह ॥३२॥
दानं तु ब्रह्मविज्ञान कृतं स्याच्छाश्वतं पितः ।
स्वर्गं तल्लभ्यमेवाऽन्यन्मोक्षस्थानं तदेव ह ॥३३॥
यन्न दुःखादिसंभिन्नं न चान्ते ग्रस्यते तु यत् ।
सत्यसंकल्पलब्धिकृत् तत्स्वर्गं शाश्वतं पदम् ॥३४॥
कालधर्मः सतृष्णस्य नाऽऽत्मारामस्य कस्यचित् ।
अर्थश्चान्नजलवस्त्रैर्नान्यैरर्थैः प्रयोजनम् ॥३५॥
एवं वै वर्तमानस्य मोक्षः करतले स्थितः ।
गृहधर्मेण गुणकृत्प्रवाहस्य विसर्जनम् ॥३६॥
आशामात्रं प्रबोद्धव्यं मग्ना वै गुणधर्मिणः ।
येषां बाल्यं न वै चास्ति यौवनं त्वागतं नहि ॥३७॥
सर्वदात्मनि चास्त्येव विरामो भोगवर्जितः ।
मानसं ब्रह्मणा सम्यग् रञ्जितं शान्तिविग्रहम् ॥३८॥
तेषां मोक्षः सदेहे वा विदेहे वा न शिष्यते ।
सदा मुक्तः स वै प्रोक्तः सदा मुक्तः स वै मतः ॥३९॥
हर्षाऽमर्षभयोद्वेगैरस्पृष्टो मुक्त एव सः ।
तस्मान्नार्हा वयं सृष्टौ वयं ब्रह्माधिकारिणः ॥४०॥
निर्द्वन्द्वाद्वन्द्वशून्याँश्च करिष्यामोऽपरानपि ।
अयं वै पितृततपितृपितृपितृपितुः पितुः ॥४१॥
पुरुषोत्तमसंज्ञस्य धर्मोऽस्त्युपनिषन्मयः ।
यास्यामो येन पुरतस्तस्यैव परमात्मनः ॥४२॥
यद्वै पश्चात्प्रकर्तव्यं तदद्यैव विधीयताम् ।
यदि स्यात् तद्विधानस्य साधनं स्वीयकोशगम् ॥४३॥
अस्माकं तु पितुश्चानुग्रहेणाऽऽत्मनि संयमः ।
सहोत्थ एव सुखदो वर्तते मोक्षसाधकः ॥४४॥
तस्मादाबाल्यतो मोक्षे वत्स्यामो नान्यथा पितः ।
अस्मन्मोक्षे तव मोक्षो भविष्यति न संशयः ॥४५॥
वयं पुत्रास्तारकाः स्मो यथार्था इति विद्धि वै ।
इमाः कन्यास्तु योगिन्यो ज्ञानविज्ञानमूर्तयः ॥४६॥
ब्रह्मैव संप्रपश्यन्ते स्वल्पकालेन मा शुचः ।
इति संभाष्य पुत्रास्ते ययुर्विष्णुपदीं प्रति ॥४७॥
जया च ललिता पारवती प्रभेति कन्यकाः ।
अध्यात्मयोगसम्पन्नाः सस्मरुः पुरुषोत्तमम् ॥४८॥

कृष्णनारायणं त्वाराधयामासुः सदाऽऽदरात् ।
जपं चक्रुः ओंश्रीकृष्णनारायणाय ते नमः ॥४९॥
एवं वै वर्तमानाभिर्घोषणा दुन्दुभेः श्रुता ।
सत्यलोके त्रयोदश्यां प्रातरेव कृपामयी ॥५०॥
या काचिद् ब्रह्मसम्पन्ना यद्वा ब्रह्मवियोगिनी ।
सद्योजाता कुमारी वा वरारोहा विरागिणी ॥५१॥
स्थवीरा वा सुभगा वा सुवासिनी विवासिनी ।
सरागा वाऽऽत्मरागा वा कैवल्येहावती च वा ॥५२॥
अनाथा वा सनाथा वा संस्कृता वाऽप्यसंस्कृता ।
सुस्थाना वाऽकृतस्थानाऽथवा प्रस्थानशालिनी ॥५३॥
वाग्दाना वाऽप्यदाना वा दानार्हा दानवर्जिता ।
दानार्थं निर्मिता चापि कुर्यात् त्रयोदशीव्रतम् ॥५४॥
तासामभीष्टदाताऽस्मि श्रीकृष्णः पुरुषोत्तमः ।
अधिमासेऽत्र यस्यै यन्नवं नवमपेक्ष्यते ॥५५॥
अगम्यं वा सुगम्यं वा लभ्यं चालभ्यमित्यपि ।
पुण्यलभ्यं द्रव्यलभ्यं लभ्यं यत्साधनैरपि ॥५६॥
अतर्क्यं वा प्रतर्क्यं वा शाश्वतं चाऽध्रुवं तथा ।
भोग्यं चाऽभोग्यमेवाऽन्यद् यद्यद् वाञ्छति या हृदि ॥५७॥
तत्तत्सर्वं प्रदास्येऽहं प्रसन्नः पुरुषोत्तमः ।
त्रयोदश्यां कृतेनैकभुक्तेन च व्रतेन वै ॥५८॥
निशीथभोजनेनैव फलाहारेण वा व्रतम् ।
कुर्याद्वै श्रद्धया युक्तं मम पूजनपूर्वकम् ॥५९॥
तस्या नेता गमयिता त्राता पोष्टा च भद्रकृत् ।
आश्रयदस्तथा त्वानन्दयिताऽस्मि परेश्वरः ॥६०॥
नरा नार्योऽथवा चान्ये पूजयन्त्यधिमासके ।
त्रयोदश्यां चन्दनाद्यैर्यथेष्टं वितराम्यहम् ॥६१॥
अष्टोत्तरशतेनापि षट्पंचाशद्भिरेव वा ।
द्वात्रिंशद्भिश्चोपचारैः षोडशाद्यैश्च वस्तुभिः ॥६२॥
यथालब्धैश्च वा पत्रपुष्पजलान्नतण्डुलैः ।
मानसैर्वा पूजयन्तु प्रेमोपायनकैश्च माम् ॥६३॥
पुष्पांजलिं च वा प्रेमांजलिं ददतु मे जनाः ।
तेषामपि करिष्यामि मानसं दानपूरितम् ॥६४॥
मा संकोचं प्रकुर्वन्तु वदन्तु धारयन्तु वा ।
संकल्पयन्तु हृदये वितरिष्याम्यधिव्रते ॥६५॥
श्रुत्वैवं दुन्दुभिं प्रातस्त्रयोदश्यां हरिश्रितम् ।
जया च ललिता तत्राऽऽययुः पारवती प्रभा ॥६६॥
नेमुस्तं दुन्दुभिं चाथ पप्रच्छुः किं ददासि वै ।
दुन्दुभिः प्राह नाकं वा ददामि पुरुषोत्तमम् ॥६७॥
त्रयोदशीव्रतमूल्यं कृष्णनारायणं पतिम् ।
ददामि संपदस्तस्य धामाऽप्यक्षरसंज्ञितम् ॥६८॥
अधिमासेऽधिकदाता भवामि स्वल्पके व्रते ।
प्रकटोऽहमधिमासात्मकोऽस्मि सृष्टिमण्डले ॥६९॥
स्वर्गं सत्यं पारमेष्ठ्यं वैराजं भौमनं ध्रुवम् ।
गोलोकं चापि वैकुण्ठं ददामि ब्रह्मशाश्वतम् ॥७०॥
भवत्यः किन्नु वाञ्छन्ति ददामि व्रतसत्फलम् ।
श्रुत्वा तदा चतस्रस्ताः प्राहुस्तं दुन्दुभिं मुदा ॥७१॥
जातमात्रा वयं सर्वा असंस्कृताः स्म वै ततः ।
संस्कृताः स्याम कृष्णेन संगता धाम संगताः ॥७२॥
कृष्णनारायणः सोऽस्मानवाप्नोतु परेश्वरः ।
दास्यस्तस्य भवामोऽद्य व्रतेनेच्छाम एव तत् ॥७३॥
दुन्दुभिश्च तदा प्राह भवत्यश्चाद्य वै मुदा ।
स्नात्वा प्रातश्चार्चयन्तु सौवर्णं पुरुषोत्तमम् ॥७४॥
यथालब्धोपचारैश्च मानसैर्भावगर्भितैः ।
प्रेमक्षुधाश्रयः कृष्णनारायणो ग्रहीष्यति ॥७५॥
कृष्णनारायणयोग्या यूयं स्थ दिव्यविग्रहाः ।
कृत्वा व्रतार्चने त्वद्य प्राप्नुवन्तु हरिं वरम् ॥७६॥
इत्युक्त्वा दुन्दुभिस्तस्मात् स्थानादन्यत्र वै ययौ ।
जया च ललिता चक्रुः पारवती व्रतं प्रभा ॥७७॥
तास्तु स्नात्वा गृहं गत्वा कृत्वा मण्डपमुत्तमम् ।
त्रयोदश्यां प्रातरेव पुपूजुः पुरुषोत्तमम् ॥७८॥
मध्ये सिंहासनं कृत्वा कानकीं प्रतिमां हरेः ।
तत्र विन्यस्य चावाह्य ददुर्जलादिकं मुदा ॥७९॥
पञ्चामृतजलैः स्नानं कारयित्वाऽम्बराणि च ।
आभूषणानि सर्वाणि कुंकुमचन्दनादिकम् ॥८०॥
धूपदीपसुनैवेद्यजलपुष्पफलादिकम् ।
ताम्बूलव्यजनच्छत्रचामराऽऽरार्त्रिकादिकम् ॥८१॥
प्रदक्षिणं स्तुतिं क्षान्तिं चार्घ्यं पुष्पांजलिं ददुः ।
देवदेव हरे कृष्णनारायण जगत्प्रभो ! ॥८२॥
दासीनां ते कराऽऽदानं कुरु स्मो दास्य एव ह ।
एवं संकल्प्य कुसुमाञ्जलीन् सगद्गदा ददुः ॥८३॥
मध्याह्नेप्येवमेवेशं प्रपूज्याऽभोजयन् हरिम् ।
सायं चापि समर्च्यैव चक्रुर्नीराजनं हरेः ॥८४॥
ददुश्च भोजनं मिष्टं तृप्तस्तुष्टोऽभवद्धरिः ।
चक्रुस्ता जागरं रात्रौ नक्तं कृत्वा हरेः पुरः ॥८५॥
ननृतुस्ता जगुर्गीतिं मधुरां तालमिश्रिताम् ।
तावत् प्राविर्बभूवेशः श्रीकृष्णपुरुषोत्तमः ॥८६॥

चतुःस्वरूपो भगवान् प्रत्येकां तामुपाददे ।
चतूरूपैश्चतस्रस्ता वामे निधाय मालिकाः ॥८७॥
ताभिर्दत्ता नामयित्वा कंधरां समुपाददे ।
प्रसन्नश्च मुहुस्ताश्च परस्पर्शाऽऽश्लिष्टवान् मुदा ॥८८॥
अगम्यं चाऽवितर्क्यं चाऽभूतं चावर्ण्यमेव च ।
ताभ्यो दत्वा सुखं शीघ्रं निधाय गरुडोपरि ॥८९॥
नत्वा तु वेधसं प्राप्य यौतकं चाशिषस्तथा ।
विधिना ब्रह्मणा ताश्च नारायणाय चार्पिताः ॥९०॥
विवाहयित्वा प्रययौ कृष्णकान्तः स्वमन्दिरम् ।
यदक्षरं परं धाम ब्रह्म व्यापकमुत्तमम् ॥९१॥
अन्यधामानि यस्माद्वै प्राविर्भूतानि तद्वरम् ।
ययौ ताभिस्तु पत्नीभिः श्रीकृष्णपुरुषोत्तमः ॥९२॥
जया च ललिता पारवती प्रभाऽम्बरे परे ।
व्योम्नि मुक्तान्य एवैता जाताः पत्न्यो हरेश्च ताः ॥९३॥
दिव्या दिव्यप्रियतुल्या मोदन्तेऽक्षरधामगाः ।
एवं कृत्वा त्रयोदश्यां व्रतं श्रीपुरुषोत्तमे ॥९४॥
मासि श्रीकृष्णपूजां च कृत्वाऽवापुः परं पदम् ।
स्वल्पस्यापि फलं नित्यं दिव्यं वै चाप्यनन्तकम् ॥९५॥
श्रोष्यन्तीमं पठिष्यन्त्यध्यायं ये कृष्णमानसाः ।
तेषामपि फलं तद्वद् भविष्यति न संशयः ॥९६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पुरुषोत्तममासमाहात्म्ये चतुःसनकादिकार्थमुत्पादितानां ब्रह्मपुत्रीणां जयाललितापारवतीप्रभाभिधानानां पुरुषोत्तममासत्रयोदशीव्रतेन श्रीपुरुषोत्तमधाम्नि श्रीकृष्णनारायणस्य पत्नीत्वप्राप्तिः, सनकादीनां तु वैराग्यवृत्तिरित्यादिनिरूपणनामा पञ्चाधिकत्रिशततमोऽध्यायः ॥ ३०५ ॥

श्रीनारायण उवाच—

शृणु लक्ष्मि ! परे त्वाग्रे वैकुण्ठे प्रथमे तु यत् ।
सञ्जातं वै चतुर्दश्यां चरित्रं दुन्दुभेस्तु यत् ॥ १ ॥
अक्षरब्रह्मधाम्नस्तु सीम्नि संविद्यते तु यत् ।
वैकुण्ठं प्रथमं श्रेष्ठं गृहं गोलोकसदृशम् ॥ २ ॥
तत्र युक्तस्वरूपा वै वसन्ति कल्पशाखिनः ।
तत्पुत्री श्रीः सदा तत्र वर्तते वै कुमारिका ॥ ३ ॥
दिव्यभूमिस्वरूपा च दिव्या विभूतिरस्ति च ।
चेतनाधिष्ठिता देवी सर्वाधारस्वरूपिणी ॥ ४ ॥
तस्या विभूतेः पुत्री च माणिक्याऽस्ति कुमारिका ।
दिव्यदुग्धाऽमृताब्धिश्च वैकुण्ठे तत्र वर्तते ॥ ५ ॥
तस्य पुत्री कुमारी च लक्ष्मीस्त्वदात्मिकाऽस्ति च ।
ता एतास्तिस्र ईश्वर्यो राजन्ते धाम्नि तत्र वै ॥ ६ ॥
सख्यस्तिस्रः सवयस्याः कुमार्योऽतीव कोमलाः ।
माणिक्या श्रीश्च लक्ष्मीश्च ब्रह्मवेत्र्योऽभवन् सदा ॥ ७ ॥
ब्रह्मात्मज्ञानयोगिन्यो भक्तिमत्यश्च वै हरौ ।
कुर्वन्ति सेवनं नित्यं कृष्णनारायणस्य ताः ॥ ८ ॥
तस्यैव प्रतिमां नित्यं गृहे ध्यायन्ति भावतः ।
दिव्यविभूतिः कल्पद्रुः क्षीराब्धिश्चेति ते त्रयः ॥ ९ ॥
पुत्रीणां ध्यानसेवादि दृष्ट्वा तुष्यन्ति वै मुहुः ।
वितरन्त्याशिषस्ताभ्यो भवन्त्यानन्दमूर्तयः ॥१०॥
अनन्तधामसु कृष्णपत्न्यः सन्ति त्वनेकशः ।
भवत्यश्च भवन्त्येव परब्रह्मप्रियाः पराः ॥११॥
राजाधिराजरूपिण्यो याभ्यो नान्याः पराः क्वचित् ।
इति पित्राशिषः प्राप्ता दीव्यन्ति नित्यवर्धिताः ॥१२॥
प्रातः स्नान्ति हरिं स्मृत्वा ध्यायन्ति च हरिं ततः ।
कुर्वन्ति मण्डपं दिव्यं विद्युत्तोरणसूज्ज्वलम् ॥१३॥
विचित्ररत्नमणिभिर्नद्धस्तंभादिमण्डितम् ।
कृत्रिमोद्यानसंव्याप्तं दिव्याम्बरविभूषितम् ॥१४॥
कृष्णनारायणमूर्तिशोभितं सर्वतो दिशि ।
मध्ये सिंहासनं रम्यं मणिस्वर्णादिराजितम् ॥१५॥
स्थापयन्ति च तास्तत्र तूलिकाश्च सुखावहाः ।
मूर्तिं विन्यस्य तन्मध्ये कृष्णनारायणस्य ताः ॥१६॥
स्नापयन्ति क्षीरधाराभिश्चाद्भिः स्नापयन्ति च ।
सुगन्धं चन्दनं तैलं मर्दयन्ति च ता मुहुः ॥१७॥
स्नापयित्वा च वस्त्राणि दिव्यानि ददति प्रगे ।
धारयन्ति विभूषाश्च शृंगारं धारयन्ति च ॥१८॥
पत्रैः पुष्पैः फलैस्तोयैः पूजयन्ति मुहुर्मुहुः ।
धूपं दीपं सुगन्धं च कुर्वन्ति कृष्णसन्निधौ ॥१९॥
संवाहयन्ति चरणौ गृह्णन्ति चरणामृतम् ।
जिघ्रन्ति ता भक्तिमत्यो गन्धं कृष्णप्रसादजम् ॥२०॥
पश्यन्ति ता हरेः रूपं स्पृशन्ति कृष्णपत्कजम् ।
आस्वादयन्ति पूजायां दत्तं फलादिकं तु यत् ॥२१॥
शृण्वन्ति भगवत्स्तोत्रं गीतं परस्परेण यत् ।
वदन्ति गुणचारित्र्यं कृष्णनारायणस्य ताः ॥२२॥
आददति हरेः कार्ये गच्छन्ति च प्रदक्षिणम् ।
विलासं हावभावादि तथाऽऽनन्दं च मानसम् ॥२३॥

चिन्तनं निर्णयं स्वत्वं कुर्वन्ति कृष्णयोगजम् ।
मिष्टान्नामृतपात्राणि जलपात्राणि तत्पुरः ॥२४॥
स्वर्णस्थालानि नैवेद्यपूरितानि ददुश्च ताः ।
भोजयन्ति भावपूर्णं रामयन्ति हरिं पुनः ॥२५॥
वारिपानं कारयन्ति रमन्ते ता हरेः पुरः ।
वादयन्ति प्रवाद्यानि कुर्वन्त्यारात्रिकं मुदा ॥२६॥
नमन्ति हरये ताश्च प्रशंसन्ति च तद्गुणान् ।
वर्णयन्ति चरित्राणि कथयन्ति कथानकम् ॥२७॥
भावयन्ति कृष्णहृच्चार्पयन्ति हृदयं हरौ ।
पुष्पांजलिप्रदानैश्च तोषयन्ति नरायणम् ॥२८॥
स्तुबन्ति परमात्मानं स्मरन्त्यप्यभिधा हरेः ।
दास्यं कुर्वन्ति सततं सख्यं चात्मनिवेदनम् ॥२९॥
एवं भक्तिमयं दिव्यं कर्तव्यमाचरन्ति ताः ।
मध्याह्नेपि प्रपूज्यैनं श्रीः फलान्यर्पयत्यपि ॥३०॥
कल्पद्रुकन्यका कल्पपादपेभ्यो नयत्यपि ।
उत्तमं चोत्तमं रम्यं सुरसं मिष्टमम्ब्लकम् ॥३१॥
नवं नवं फलं वृक्षपुत्री श्रीरर्पयत्यपि ।
कदलानि सुपक्वानि कदलीभ्योऽभिगृह्य सा ॥३२॥
आहृत्य चाम्रवृक्षेभ्यश्चाम्राणि तूत्तमानि च ।
कर्मदेभ्यः कर्मदानि चाम्ब्लमिष्टान्यवाप्य च ॥३३॥
कर्कटिकाश्च वल्लीभ्य आहृत्य पक्वसद्रसाः ।
कलिंगानि सुपक्वानि शैत्यावहानि यान्यपि ॥३४॥
कपित्थानि च तद्द्रुभ्यः पक्वान्यानीय चाप्यथ ।
काजूफलानि मिष्टानि काजूद्रुभ्योऽभिहृत्य च ॥३५॥
कटीङ्कुदीभ्य आहृत्य कटीङ्कुन्दीफलानि च ।
इङ्गुदानि महान्त्येव पक्वस्निग्धरसानि च ॥३६॥
आहृत्याऽर्पयति श्रीश्च भुंक्ते नारायणः स्वयम् ।
अंजीराणि सुमिष्टानि द्राक्षाणि सुरसानि च ॥३७॥
खर्जूरखारिकादीनि तालानि श्रीफलानि च ।
भूफलानि सुमिष्टानि चिक्कणानि फलानि च ॥३८॥
क्षीरिकाणि पिशंगानि पनसानि महान्ति च ।
गर्जराणि विविधानि घृतघटानि चैव ह ॥३९॥
शिञ्जवः पक्वास्तथा जम्बूफलानि रावणानि च ।
अमृतानि सुमिष्टानि टिटीमा मिष्टसद्रसाः ॥४०॥
दाडिमानि चेक्षुदण्डान् बदराणि नवानि च ।
टिम्बूरवाँश्च मधुकान् बदामान् बहुबीजकान् ॥४१॥
रामफलानि च सीताफलानि मधुराणि च ।
नरपतीन्, सन्तराँश्चापि जम्बीराणि च पुष्पिनान् ॥४२॥
चिर्भटानि च सफलजनानि टिम्टिमानि च ।
नवरंगानि चान्यानि फलान्याहृत्य श्रीर्ददौ ॥४३॥
कृष्णनारायणाय श्रीपुरुषोत्तममूर्तये ।
भगवानपि भावेन समत्तिश्चर्पितानि वै ॥४४॥
दिव्यविभूतिकन्या तु माणिक्या भगवत्कृते ।
समानयति रत्नानि धारयत्यच्युतं स्वयम् ॥४५॥
रत्नमालास्तथा मुक्ताहारान् मौक्तिककंकणान् ।
वज्रमणीन् पद्मरागमणीन् मरकतान् मणीन् ॥४६॥
इन्द्रनीलमणींश्चापि कौस्तुभान् भीष्मकाँस्तथा ।
वैदूर्यान्पुष्परागाँश्च कर्केतकान् सुवर्णकान् ॥४७॥
हारितान् पुलकाँश्चैव रुधिरान् स्फटिकाँस्तथा ।
विद्रुमाँश्च प्रवालाँश्च माणिक्यान् चित्रकाँस्तथा ॥४८॥
गोमेदाँश्च महानीलान् कूर्प्याँश्चादाय सन्ददौ ।
कृष्णनारायणस्तानि मणिरत्नमयानि च ॥४९॥
भूषणानि धृतवाँश्च प्रसन्नोऽभूदतीव सः ।
अथ क्षीराब्धिकन्या वै लक्ष्मीः क्षैराणि भावुकी ॥५०॥
भोजनं कारयामास पाययामास तानि वै ।
दुग्धसारं पायसान्नं दुग्धपाकं सतण्डुलम् ॥५१॥
दुग्धस्तरं दुग्धमन्थं दुग्धघट्टं पयोबलिम् ।
दुग्धक्वाथं दुग्धपिण्डान् दुग्धमल्लयिनीं शुभाम् ॥५२॥
दधि सर्पिर्घृतं तक्रं नवनीतं पयःपुटम् ।
क्षीरौदनं पयोमिश्रं पयःपानादिकं ददौ ॥५३॥
कृष्णनारायणस्तत्तद् भुक्तवान् पीतवाँश्च वै ।
क्षीरोत्पन्नानि रत्नानि ददौ सा विविधानि च ॥५४॥
श्रिया माणिक्यया लक्ष्म्या यान्यर्पितानि भावतः ।
कृष्णनारायणस्तानि जग्राह भावपूरितः ॥५५॥

फलानि रत्नानि च पायसानि
भुंक्ते दधात्यत्ति च भावगर्भम् ।
श्रियं च मणिक्यवरां च लक्ष्मीं
सेवापरां वीक्ष्य हरिस्तुतोष ॥५६॥
सायं च ताः पूर्ववदेव पूजनं
चक्रुः समाराधनतत्पराः सुताः ।
नीराजनं भोजनमन्यदर्पणं
सदैव चक्रुर्बहुभक्तिभावतः ॥५७॥

चतुर्दश्यामधिमासे मध्याह्ने पूजनोत्तरम् ।
श्रुतस्ताभिर्दुन्दुभिश्च कृष्णनारायणस्य हि ॥५८॥
कुर्वन्तु पूजनं नित्यं कुर्वन्त्वाराधनं मम ।
अर्पयन्तु च मे किञ्चित्प्राप्नुवन्तु मम गृहम् ॥५९॥

पुरुषोत्तमसंज्ञोऽहं ब्रह्मधामाधिपः पुमान् ।
अधिमासाधिदैवोऽहं वदामि तद् ददामि वै ॥६०॥
गोलोकस्था अपि याश्च वैकुण्ठस्था अपि व्रतम् ।
अधिमासे चतुर्दश्यां कुर्वन्ति याश्च येऽपि च ॥६१॥
तासां तेषां मनोलभ्यं करिष्ये भगवानहम् ।
दास्यामि परमं धामाऽक्षरातीतनिवासनम् ॥६२॥
फलैः रत्नैः पायसान्नैः पूजयिष्यन्ति मां जनाः ।
प्राप्स्यन्ति परमं धाम यत्रास्मि पुरुषोत्तमः ॥६३॥
अन्येभ्यो धामवासिभ्यः स्थितिं श्रेष्ठां ददाम्यहम् ।
गृह्णन्तु भक्तिमत्यो मे भक्ताश्च परमं पदम् ॥६४॥
नेदृशं त्वस्ति वैकुण्ठं गोलोकश्चापि नैव ह ।
मम धाम्ना समं त्वन्यद् विद्यते नैव नैव च ॥६५॥

न मत्समो वाऽप्यधिकोऽस्ति कश्चित्,
न ब्रह्मणा सन्निभमस्ति किञ्चित् ।
नान्यत्सुखे मत्सुखसाम्यमस्ति,
स्वल्पप्रदानेन लिहन्तु चार्याः ॥६६॥
भवन्तु दास्यः प्रभवन्तु भक्ता,
आनन्दमात्रां मम मूर्तिलब्धाम् ।
भुञ्जन्तु नित्यं मयि संरमन्तु,
चतुर्दशीसद्व्रतकल्पनेन ॥६७॥

मानव्यो मां समाराध्य भवन्तु दिवि देवताः ।
देव्यश्च मां समाराध्य भवन्त्वार्षिण्य एव च ॥६८॥
आर्षिण्यो मां समाराध्य भवन्त्वीशान्य एव वा ।
त्वीशान्यो मां समाराध्य भवन्त्वीश्वर्य एव च ॥६९॥
ईश्वर्यो मां समाराध्य नारायण्यो भवन्तु च ।
नारायण्यः समाराध्य गोप्यो भवन्तु मां मुदा ॥७०॥
ताश्च सर्वाः समाराध्य मां वरं पुरुषोत्तमम् ।
भवन्तु पुरुषोत्तम्यो नित्यमुक्तान्य एव ह ॥७१॥
कृष्णनारायणं मां वै संराध्य पुरुषोत्तमम् ।
ममाऽक्षरं परं धाम गृह्णन्तु मद्व्रतार्थिनः ॥७२॥
चतुर्दश्यामधिमासे व्रतं श्रीपुरुषोत्तमे ।
कृतं येनाऽर्जितं तेन मामकं सर्वमेव ह ॥७३॥
वच्मि वच्मि पुनर्वच्मि ह्यागच्छन्तु मया सह ।
भवने त्वक्षरे मे वै निवसन्तु मया सह ॥७४॥
तुष्टोऽस्मि गर्जनां कृत्वा कथयामि पुनः पुनः ।
अधिमासे चतुर्दश्यां यान्तु व्रतेन मद्गृहम् ॥७५॥
वैकुण्ठे दुन्दुभिं श्रुत्वा कृष्णनारायणस्य ताः ।
सहर्षाः सत्वरं तत्र ययुर्यत्राऽस्ति घोषकृत् ॥७६॥
श्रीश्च दृष्ट्वा च माणिक्या लक्ष्मीर्दृष्ट्वा हृदन्तरे ।
नत्वा नत्वा पुनर्नत्वा प्राहुस्तं दुन्दुभिं हरेः ॥७७॥
नारायणस्य वैकुण्ठे वसामोऽत्र महासुखे ।
ततोऽतिश्रेष्ठसौभाग्यं प्रयच्छति यदि प्रभुः ॥७८॥
कन्यकाः स्मो वयं कुर्मोऽर्चनं तस्य हरेः सदा ।
अद्य व्रतं चतुर्दश्याः कुर्मोऽधिमासि निर्णयात् ॥७९॥
कदाऽक्षराधिपः कृष्णनारायणो मिलिष्यति ।
कदा नेष्यति परमः पुराणः पुरुषोत्तमः ॥८०॥
दुन्दुभिस्तु तदाकर्ण्य प्राह ताश्चाऽद्य वै प्रभुः ।
निशि पूजोत्तरं त्वायास्यति कुर्वन्तु जागरम् ॥८१॥
स्तुवन्तु परमात्मानं हृदयस्थं जनार्दनम् ।
भवतीनां सफलाश्च प्रभवन्तु मनोरथाः ॥८२॥
इत्युक्त्वाऽक्षतपुष्पैश्च पूजितो दुन्दुभिर्ययौ ।
कन्याः पुपूजुः श्रीकृष्णं निशीथे प्रतिघस्त्रवत् ॥८३॥
जागरं तत्र कुर्वन्त्यः श्रीश्चकार सुनर्तनम् ।
वाद्यं त्ववादयत्तत्र माणिक्या तालसंयुतम् ॥८४॥
लक्ष्मीस्तु गायनं चक्रे तिस्रश्च मिलिता जगुः ।
सुस्वरैश्च नद्धकिंकिणिकानूपुरकंकणैः ॥८५॥

सत्यं ब्रह्माऽक्षरपरमपरं लोकेशं परलोकेशं,
नित्यं ज्ञानमनन्तमपारमनेकाकारं कमलेशम् ।
शान्तं भास्करकान्तमघनुतं ब्रह्मानन्दमहानन्दं,
परमेश्वरमभिवन्दे प्राविर्भावेश्वरपरमानन्दम् ॥८६॥
धाम्नि ब्रह्माऽक्षरमुक्तेश्वरपार्षदवृन्दार्चितचरणं,
चैतन्यामृतधामविराजितमुक्तेशैकसुधाकरणम् ।
श्रीवत्सांकविरंचिगिरीशनतांऽघ्रितलं सुहृदानन्दं,
परमेश्वरमभिवन्दे प्राविर्भावेश्वरपरमानन्दम् ॥८७॥
दिव्याऽखण्डमनन्तमुनीश्वरमण्डलमध्यगताकारं,
निगमागमपटलैरभिवेद्यं साकारं परमाकारम् ।
दिव्यविहारमनुद्भवरूपमनादिं दिव्यगुणागारं,
परमेश्वरमभिवन्दे प्राविर्भावेश्वरपरमानन्दम् ॥८८॥
सौम्याभं चिन्मालाकुण्डलमुकुटपिशंगसुचेलधरम्,
सर्वज्ञामितशक्तियुतं हरिकृष्णमचिन्त्यानन्दकरम् ।
निगमागमवन्दितयशसं शंसन्तं धर्मं वेदमतम्,
परमेश्वरमभिवन्दे प्राविर्भावेश्वरपरमानन्दम् ॥८९॥
लोकालोकविभासिविभूतिमलोकनिवासमनिर्वाच्यं,
जन्माद्यस्य यतो भगवन्तमशरणाधारं वृषलालम् ।
कृष्णं करुणारसमयरूपं दीनदयालुं देववरं,
परमेश्वरमभिवन्दे प्राविर्भावेश्वरपरमानन्दम् ॥९०॥

भास्वरकार्तस्वरविद्युन्मणिभास्करचन्द्रविशेषाभं,
सद्रूपं घनवर्णमतर्क्यमजं हृत्स्थं त्रिभुवननाभम् ।
श्यामसरोरुहदलसमनयनं स्मेरास्यं सर्वानन्दं,
परमेश्वरमभिवन्दे प्राविर्भाविश्वरपरमानन्दम् ॥९१॥

श्यामं व्यापकमुत्तमपुरुषं परमात्मानं सुखकन्दं,
स्वांघ्रिसरोजसमुद्भवकान्तिद्योतितयावजनवृन्दम् ।
सत्यं नारायणपरमेश्वरमायेशेश्वरमुक्तवरं,
परमेश्वरमभिवन्दे प्राविर्भावेश्वरपरमानन्दम् ॥९२॥

कल्पद्रुमदुहिता श्रीर्नित्यं ध्यायति वल्लभमात्मानं,
दिव्यविभूतिसुता माणिक्या प्रार्थयति स्वाम्यात्मानम् ।
दिव्यक्षीराम्बिधिदुहिता लक्ष्मीरपि चेच्छति पतिमनघं,
पुरुषोत्तममक्षरधामस्थं स त्वं भवसि भवार्थकरः ॥९३॥

करान् गृहाण चास्माकं मा वै मुञ्च कदाचन ।
यावद्वै तेऽक्षरं धाम तावत्पत्न्यो भवामहे ॥९४॥
शीघ्रं कुरु कृपानाथ कृष्णनारायण प्रभो ।
वरमालां गृहाणाऽस्मद्धस्तेभ्यश्चैककालिकाः ॥९५॥
इति स्तुत्वा च तास्तिस्रो विरमुस्तावदेव तु ।
प्राविर्बभूव भगवान् कृष्णनारायणः प्रभुः ॥९६॥
सर्वाविर्भावहेतुर्यः सर्वकारणकारणम् ।
सर्वेशेशेश्वरः श्रेष्ठब्रह्म श्रीपुरुषोत्तमः ॥९७॥
श्वेतहस्तियुतं यानं विमानाख्यं चिदम्बरे ।
वाहयन् योजनकोटिविस्तृतं मुक्तपूरितम् ॥९८॥
तिस्र आश्वास्य वैकुण्ठे कल्पद्रून् दिव्यभूतिकम् ।
क्षीराब्धिं च नमस्कृत्य विधिना तैः समर्पिताः ॥९९॥
पितृभिस्त्वर्थितः कृष्णे जग्राह तिस्रकन्यकाः ।
किन्त्वस्माभिर्वियोगो मा स्यात्तथा कुरु केशव ॥१००॥
करे करान् समादाय ग्रहीता हरिणा तदा ।
श्रीश्च लक्ष्मीश्च माणिक्या कृष्णातुल्या विरेजिरे ॥१०१॥
तासां द्वेद्वे स्वरूपे च कारयित्वा पुमुत्तमः ।
छायारूपं त्रयं तासां पित्रधीनं सुरक्ष्य च ॥१०२॥
दिव्यरूपं त्रयं तासां पुरुषोत्तमयोग्यकम् ।
अक्षरधामवासार्हं पत्नीरूपं प्रगृह्य च ॥१०३॥
तिस्र आरोहयित्वैव विमाने पुरुषोत्तमः ।
ययौदिव्याक्षरं धाम पत्नीयुक्तः स्वयं हरिः ॥१०४॥
एवं चाधिकमासस्य चतुर्दश्या व्रतेन ताः ।
श्रीश्च लक्ष्मीश्च माणिक्या तिस्रः पत्न्यो हरेः सदा ॥१०५॥
बभूवुः शाश्वते धाम्नि किमत्र खलु दुर्लभम् ।
श्रोतुर्वक्तुरपि त्वेवं फलं स्यान्नात्र संशयः ॥१०६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पुरुषोत्तममासमाहात्म्ये वैकुण्ठे दुन्दुभिश्रवणेन कल्पद्रुमपुत्र्याः श्रियः दिव्यविभूतेः पुत्र्या माणिक्यायाः, दिव्यक्षीरोदधिपुत्र्या लक्ष्म्याश्च, अधिकमासस्य चतुर्दश्या व्रतेनाऽक्षरधाम्नि परब्रह्मपुरुषोत्तमश्रीकृष्णनारायणपत्नीत्वप्राप्त्यादिनिरूपणनामा षडधिकत्रिशततमोऽध्यायः ॥ ३०६ ॥

श्रीनारायण उवाच—

शृणु लक्ष्मि ! धर्मपत्न्या भक्तेः पुत्र्योः कथां शुभाम् ।
अधिमासे मध्यतिथौ जातां वै पावनोत्तमाम् ॥ १ ॥
आदौ कृते युगे भक्तेर्मानस्यौ द्वे कुमारिके ।
प्राविर्भूते सुते नाम्ना प्रेयसी श्रेयसी शुभे ॥ २ ॥
सेवेते पितरौ नित्यं यत्र तौ तत्र ते शुभौ ।
पितरौ ते परित्यज्य प्राणान् धर्तुं न शेकतुः ॥ ३ ॥
पितृसेवापरे नित्यं स्वकर्तव्यपरायणे ।
प्रातः स्नात्वा च ते पित्रोः पादयोर्नेमतुः सदा ॥ ४ ॥
पित्रोः स्नानादिविध्यर्थं ददतुश्च जलादिकम् ।
स्नापयित्वा च वस्त्राणि ददतुर्धारणाय ते ॥ ५ ॥
चन्दनाऽक्षतसुमनःकुंकुमाद्यैः पुपूजतुः ।
सुमिष्टमृष्टनैवेद्यं फलं ताम्बूलकं जलम् ॥ ६ ॥
समर्प्य चक्रतुश्चोभे वर्ष्मसंवाहनादिकम् ।
मातापित्रोर्यदिष्टं चक्रतुश्चान्यद्विहाय ते ॥ ७ ॥
शयनास्तरणाद्यं च पात्राणां मंजनं तथा ।
गृहस्य मार्जनं वस्त्रक्षालनं त्वन्नपाचनम् ॥ ८ ॥
जलस्याऽऽहरणं कामधेनूनां दोहनादिकम् ।
अन्नानां शोधनं पूजापुष्पाद्यानयनं तथा ॥ ९ ॥
कृष्णनारायणमन्त्रजपनं देवपूजनम् ।
पितृसन्तर्पणं भूतयज्ञं चातिथिपूजनम् ॥१०॥
दानं ज्ञानं चात्मबोधं विज्ञानं ब्राह्ममित्यपि ।
एवं सर्वं गृहकार्यं पित्रोः सेवां मुहुस्तथा ॥११॥
यथापेक्षं तथाऽन्यच्च चक्रतुश्च दिवानिशम् ।
तेनाऽऽशीर्वादपात्रे ते बभूवतुर्बहुप्रिये ॥१२॥
यथा नाम तथा तत्र गुणा वासं प्रचक्रिरे ।
यथाबलं यथाशक्ति सर्वभावेन सुन्दरी ॥१३॥

अनाहत्यैव देहं स्वं कष्टं यत्नं दिवानिशम् ।
सर्वस्वभोगदानेन सेवया प्रेयसी सदा ॥१४॥
अतिप्रिया ह्यतिप्रेमपात्रं पित्रोर्बभूव सा ।
प्रेयसी तेन सा भुक्तिरितिख्यातिं जगाम सा ॥१५॥
पित्रोः श्रेयः परेषां च श्रेयःकर्त्री सदाऽपरा ।
कन्यकाऽऽर्तिजनानां च विधूयाऽऽर्तीन् मुहुर्मुहुः ॥१६॥
सुखं मोक्षसमं सम्यक् करोतीति सुकर्मभिः ।
श्रेयसी तेन सा मुक्तिरिति ख्यातिं ययावपि ॥१७॥
प्रेयसीश्रेयसीपुत्र्यौ धर्मभक्त्योः कृपाकणात् ।
भुक्तिर्मुक्तिश्चेति दिव्ये नाम्नी दध्यतुरर्थवत् ॥१८॥
ययोः पिता स्वयं धर्मो जननी भक्तिरैश्वरी ।
निधानं परमं दिव्यं किमाश्चर्यं तयोर्गुणे ॥१९॥
पित्रोः पवित्रयोः सेवा कं न धत्ते गुणोत्तमम् ।
पितरौ तोषितौ येन तोषितस्तेन माधवः ॥२०॥
तोषिताश्च सुराः सर्वे तोषितं सकलं जगत् ।
अथाऽपुत्रवतोः पित्रोस्तोषदा स्यात् सुता यदि ॥२१॥
सा वै पुत्रसमा प्रोक्ता पितरौ तारितौ तया ।
यया त्वत्र स्वकौ वृद्धौ पितरौ तोषितौ धिया ॥२२॥
सास्ति पुत्रनिभा पुत्री दायभागाधिकारिणी ।
देहे यद्यपि कन्या सा हृदये सुत आत्मनि ॥२३॥
सुतवत् सा सदा रक्ष्या तया स्वर्गे तयोर्ध्रुवम् ।
तया दत्तं जलं चान्नं दानं पित्रोः प्रयाति हि ॥२४॥
यस्य सन्ति न वै पुत्राः पुत्री तस्य क्रियाश्चरेत् ।
यज्ञं दानं जपं होमं स्वाध्यायं पितृतर्पणम् ॥२५॥
सर्वं कुर्याद् विधिं पुत्री धारयेदुपवीतकम् ।
तिष्ठेच्च ब्रह्मचर्ये सा यावत् पित्रोः प्रसेवनम् ॥२६॥
जाते पुत्रेऽथवाऽऽदत्ते पश्चात् पित्राज्ञयाऽपि सा ।
ब्रह्मचर्यं प्रसमाप्य विधिना स्याद् विवाहिता ॥२७॥
ब्रह्मचर्यस्थितौ जाते राजस्वल्याद्यशुद्धिके ।
ब्रह्मचर्यस्य तपसः प्राबल्येन न दूषणम् ॥२८॥
अशुद्धिः पालनीया स्याद् यावद्दिनचतुष्टयम् ।
वार्षल्यं वान्यदोषो वा पापं वा नास्ति तत्कृते ॥२९॥
ब्रह्मचर्याग्निना सर्वं दैह्यं संयाति भस्मताम् ।
ब्रह्मचर्यसमो धर्मो न भूतो न भविष्यति ॥३०॥
कन्यां वा लग्नयुक्तां वा ह्यधवां वा धवान्विताम् ।
अयोगां वा सयोगां वा पावयेद् ब्रह्मचर्यकम् ॥३१॥
ब्रह्मचर्यं ब्रह्मभक्तिर्ब्रह्मव्रतं च यत्र वै ।
तत्र ब्रह्मातिरिक्तं वै भस्मसाद् याति वैशसम् ॥३२॥
बीजघ्नत्वं रजोघ्नत्वं ऋतुघ्नत्वादि दूषणम् ।
ब्रह्मचर्ये भूषणं तद् बीजादि मोक्षकृद्धि तत् ॥३३॥
एवं ते कन्यके पित्रोः सेवां चक्रतुरादरात् ।
ब्रह्मचर्यस्थिते नित्यं धर्मभक्तिगृहे शुभे ॥३४॥
प्रातस्ते सत्यलोके वै स्वर्णद्यां स्नानुमागते ।
ताभ्यां तु दुन्दुभिः कृष्णनारायणस्य संश्रुतः ॥३५॥
धाम्नां धाम्न्यवताराणामवतारी पुमुत्तमः ।
अत्राधिके महामासे ददामि पुरुषोत्तमः ॥३६॥
मध्यतिथेर्व्रतकर्त्रेऽक्षरं धाम च सम्पदः ।
मत्सान्निध्यं मम रूपं मदैश्वर्यं ददामि च ॥३७॥
मम साम्यं मम राज्यं मम लोकं ददामि च ।
मम योगं मम शक्तिं दिव्यतां मे ददामि च ॥३८॥
मदंकं मम मूर्तिं च मत्समख्यातिमित्यपि ।
मत्समां पूज्यतां चैव श्रेष्ठतां च ददामि वै ॥३९॥
मद्भावं मम दिव्यत्वं मम तेजो ददामि च ।
मम सिंहासनं दिव्यं मद्वद् व्यापकतां तथा ॥४०॥
मदात्मकत्वं तादात्म्यं मध्याव्रते ददामि च ।
अहं पूर्णोऽधर्मासेऽत्र व्रतं पुष्टफलप्रदम् ॥४१॥
शाश्वतं सत्फलं दास्ये गृह्णन्तु चार्जयन्तु च ।
पुरुषोत्तममासोऽयं मम मासोऽस्ति चोत्तमः ॥४२॥
तदेकदिनजं पुण्यं सर्वेभ्योऽप्यतिरिच्यते ।
अशाश्वतानि चान्यानि ह्येतत्पुण्यं तु शाश्वतम् ॥४३॥
अहं वै शाश्वतो देवो मासोऽपि मम शाश्वतः ।
व्रतं च शाश्वतं मेऽस्ति पुण्यं गृह्णन्तु शाश्वतम् ॥४४॥
माता सन्तोषिता येन भक्त्या संतोषितः पिता ।
मातापितृप्रसादेन फलं गृह्णन्तु शाश्वतम् ॥४५॥
यथेष्टं कल्पयित्वैव कुर्वन्तु मध्यमाव्रतम् ।
पूरयिष्यामि संकल्पान् योग्यान् योग्येतरानपि ॥४६॥
दुन्दुभिः श्रावयित्वैवं क्षणं मौनं दधार च ।
कन्यादत्तं पत्रपुष्पफलं त्वादाय निर्ययौ ॥४७॥
कन्यके कृतसंकल्पे मध्यातिथेर्व्रताय वै ।
गत्वा गृहं च विधिवत् पूजयामासतुः प्रभुम् ॥४८॥
सौवर्णीं प्रतिमां कृष्णनारायणस्य शोभनाम् ।
कारयित्वाऽऽवाहनं चक्रतुः षोडशवस्तुभिः ॥४९॥
क्रमेण पूजनं योग्यं प्रथमं पयआदिना ।
पञ्चामृतेन संस्नाप्य कारयामासतुस्ततः ॥५०॥
तीर्थोदकेन संस्नानं मार्जयामासतुस्ततः ।
वस्त्रेणाऽङ्गं च धौत्रादि धारयामासतुस्ततः ॥५१॥

भूषयामासतुराभूषणैश्चन्दनकज्जलैः ।
श्रृंगारयामासतुश्च पुष्पहारादिभिस्ततः ॥५२॥
शोभयामासतुः कृष्णनारायणं द्रवोच्चयैः ।
सुगन्धयामासतुश्च गन्धसारादिभिश्च ते ॥५३॥
कुंकुमाऽक्षततुलसीपत्रादि शेखरादिकम् ।
अर्पयामासतुस्तस्मै पुरुषोत्तमरूपिणे ॥५४॥
धूपं दीपं सुनैवेद्यं मिष्टान्नं पायसादिकम् ।
निवेदयामासतुश्च फलं ताम्बूलचूर्णकम् ॥५५॥
प्रदक्षिणां दण्डवच्च नमस्कारं क्षमापनम् ।
आरार्त्रिकं स्तुतिं पुष्पाञ्जलिं ददतुरादरात् ॥५६॥
अर्घ्यं दत्वा च संकल्पं पुरुषोत्तमलब्धिकम् ।
विज्ञापयामासतुश्च हृदा प्रार्थनया मुहुः ॥५७॥
कुमारीत्वं सदाकालं योग्यं वै ब्रह्मधामनि ।
मुक्तत्वं तत्र योग्यं वै दिव्यावस्थादिशोभितम् ॥५८॥
ब्रह्मचर्यं ब्रह्मरूपं ब्रह्मैव परमेश्वरः ।
आवयोः रक्षकश्चाऽस्तु कृष्णनारायणो हरिः ॥५९॥
रक्षकः प्रेरको धाता विधाता धारको हि सः ।
पोषकः सहजो नाथः सर्वेश्वरेश्वरेश्वरः ॥६०॥
अक्षराधिपतिः कृष्णो ब्रह्मेशः पुरुषोत्तमः ।
नाथः पाता तं विनाऽन्यः कश्चित्पाताऽस्ति नाऽऽवयोः ॥६१॥
कृपानाथ क्रियानाथ यत्ननाथ फलप्रद ।
वर्ष्मनाथाऽऽत्मनोर्नाथ सर्वनाथाऽक्षरं नय ॥६२॥
त्व स्वो दासिके कृष्णनारायण हृदिस्थित ।
अन्तर्यामिन् व्रतपुण्यप्रदातर्हृदयंगम ! ॥६३॥
हृन्निवास हृदयज्ञ भावज्ञ पूरयाऽऽन्तरम् ।
करौ संगृह्य नौ कृष्ण शीघ्रं नयाऽक्षरं प्रभो ॥६४॥
इति स्तुत्वा ददतुस्ते स्वक्षतान् मूर्तये यदा ।
तावत्तत्र दयालुः स आविर्बभूव सुन्दरः ॥६५॥
किशोरो दिव्यरूपश्च कृष्णनारायणो हरिः ।
गजपृष्ठे स्थितो दिव्यरूपानुवयवः पुमान् ॥६६॥
यत्केशानां प्रान्तभागाः कोटिविद्युत्समोज्ज्वलाः ।
आमूलात् स्निग्धकृष्णाभा मञ्जुलाश्च तरंगिताः ॥६७॥
चमत्कृतिभरा भंगीशोभितास्तस्य मूर्धजाः ।
पश्चात्तु कर्णयोर्मध्ये प्रान्तेऽप्याकर्षकाः शुभाः ॥६८॥
ललाटफलकं चोर्ध्वरेखाचन्द्रविराजितम् ।
भ्रूधनुःकोटिकामानां शुभं गर्वापहारकम् ॥६९॥
भालेऽविच्छिन्नसद्रेख ब्रह्ममार्गप्रसूचिका ।
कर्णयोर्निकषा गत्वा लोकद्वयविबोधिका ॥७०॥

शष्कुलीद्वयशोभाढ्यौ कर्णौ मोहकरावुभौ ।
सुरक्तपुण्डरीकाभे नेत्रे द्वे सुदलायते ॥७१॥
विद्युत्समातिसूक्ष्माभा रेखाः सन्ति मनोहराः ।
आकर्णान्तं सकोणं च भावगर्भं च कामिनम् ॥७२॥
एह्यागच्छेति हृदयस्थितस्य व्यञ्जकं हि तत् ।
सुरक्तं प्रोन्नतं हास्यबोधकं नेत्रगण्डकम् ॥७३॥
तस्यासीन्नासिका रम्या तिलपुष्पसमाकृतिः ।
ओष्ठौ पक्वसुरक्ताढ्यबिम्बतुल्यौ बभूवतुः ॥७४॥
सूक्ष्म रम्या नातिगम्या श्मश्रुरेखा स्म राजते ।
कम्बुकण्ठः पुष्टवक्षाः स्कन्धौ पुष्टौ तथा हरेः ॥७५॥
भुजंगभोगवद्धस्तौ नखचन्द्रावलिश्रियौ ।
ध्वजधनुर्महामीनबाणस्वस्तिकराजितौ ॥७६॥
शूलचक्राब्धिजरेखान्वितौ कराञ्जली हरेः ।
रोमराजिमयौ शुभ्ररक्तरंगौ करावुभौ ॥७७॥
श्रीवत्सकौस्तुभलक्ष्मीरेखाहारमुरःस्थलम् ।
उदरं त्रिवलीशोभं नाभौ ब्रह्मासनं शुभम् ॥७८॥
कटिः कृशा तथा गुप्तां सच्चिदानन्दपूरितम् ।
हस्तिकरोपमे रम्ये सक्थिनी रोमराजिते ॥७९॥
जानू च वर्तुलौ तस्य जङ्घे पुष्टोत्तरे कृशे ।
गुल्फत्रयं प्रतिपादं मध्योन्नतं प्रकाशकृत् ॥८०॥
षोडशांकसुरेखाभी राजन्नखमणिप्रभम् ।
सर्वं द्वयष्टसमं पुष्टं तेजःपूरितविग्रहम् ॥८१॥
सुरूपं श्रीकृष्णनारायणस्य परमाद्भुतम् ।
अपश्यतां च ते कन्ये प्रेयसीश्रेयसी शुभे ॥८२॥
जहर्षतुश्च वै तत्र प्राप्य श्रीपुरुषोत्तमम् ।
पुष्पमाले धारयामासतुः कण्ठे हरेरुभे ॥८३॥
उभे च सन्निधौ तस्य स्थिते भावाऽऽर्द्रतां गते ।
हरिस्ते प्राह भक्त्या मे व्रतेनाऽथ च भावतः ॥८४॥
वां नयामि मम धामाऽक्षरं सुखसुपूरितम् ।
मयि तादात्म्यभावेन वां नयामि च वर्ष्मणी ॥८५॥
इत्युक्त्वा भगवाँस्तत्र तिरोबभूव तत्क्षणम् ।
ते ह्युभे चाति संविग्ने ह्यभूतां तद्वियोगतः ॥८६॥
मध्याह्ने तादृशीं पूजां सायं चापि तथा निशि ।
चक्रतुर्विधिना कृष्णनारायणस्य जागरम् ॥८७॥
नर्तनं गायनं दिव्यं चक्रतुर्मध्यरात्रिके ।
तावत्पुनः समायातो द्रुतं रात्रौ महाप्रभुः ॥८८॥
स्वज्योत्स्नाव्याप्तधवलः सर्वेषां श्रेयसांकरः ।
यथा प्राप्तस्तथा रात्रौ राजते स्म हरिः स्वयम् ॥८९॥

गृहे तत्रोत्सवे प्राप्तं ज्ञात्वा श्रीपुरुषोत्तमम् ।
धर्मो भक्तिश्च तं नत्वा ज्ञात्वा श्रीहरिमागतम् ॥९०॥
पुत्रीद्वयं स्वकं धाम नेतुमाज्ञां प्रचक्रतुः ।
प्रेयसी श्रेयसी प्राप्य हरिं श्रीपुरुषोत्तमम् ॥९१॥
कृतकृत्येऽतिसम्पन्नेऽक्षरे धाम्नि विराजिते ।
भुक्तिर्मुक्तिश्च ते ख्याते दिव्ये धामनि तत्र वै ॥९२॥
धर्मभक्त्योश्च सेवार्थं कृष्णनारायणेन च ।
द्वेधा रूपे च ते कृत्वाऽर्पिते पित्रोर्गृहेऽपि च ॥९३॥
यत्र धर्मश्च भक्तिश्च तत्र भुक्तिश्च मुक्तिका ।
लोकेऽपि द्वे च वर्तते वर्तेते चापि धामनि ॥९४॥
तेऽश्नुवाते सर्वकामान् ब्रह्मणा सह शाश्वतान् ।
एवं ते प्राप्तवत्यौ वै धाम श्रीपरमात्मनः ॥९५॥
यश्चात्र धर्मवान् भक्तिमाँश्च स्यात्परमेश्वरे ।
भुक्तिं मुक्तिं स चासाद्य मोदते ब्रह्मणा सह ॥९६॥
प्रेयसीं श्रेयसीं प्राप्य मोदतेऽक्षरधामनि ।
श्रोता वक्ताऽस्य लभते पूर्णं व्रतफलं प्रिये ॥९७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पुरुषोत्तममासमाहात्म्ये धर्मभक्त्योर्मानसीपुत्र्योः प्रेयसी-श्रेयस्योः पितृसेवा, मासमध्यमायास्तिथेर्व्रतेनाऽक्षरधाम्नि श्रीपुरुषोत्तमप्राप्तिः, भुक्तिमुक्तिरिति ख्यातिश्चेत्यादि-निरूपणनामा सप्ताधिकत्रिशत-तमोऽध्यायः ॥३०७॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! ब्रह्मविष्णुमहेशजनकस्य वै ।
वैराजपुरुषस्यापि वैराज्यास्तिर्व्रताद्यथा ॥ १ ॥
प्राकृतपुरुषस्याऽस्ति पुत्रः प्रधानपूरुषः ।
तस्य हिरण्यगर्भाख्यो महाविष्णुः सुतोऽस्ति वै ॥ २ ॥
ततो विराडजायत वैराजो वेधसः पिता ।
तस्यायुः शतवर्षं वै तस्यैव वर्षसंख्यया ॥ ३ ॥
यदा पूर्णं भवत्येव तस्यास्ति निधनं ततः ।
वैराजोऽन्यश्च तत्पश्चाद् वैराज्यं प्रतिपद्यते ॥ ४ ॥
एवं वै क्रमशः सृष्टौ वैराजानामसंख्यता ।
पारम्पर्यप्रवाहेण महाविष्णोर्दिने दिने ॥ ५ ॥
एकैकस्य विनाशोऽस्ति वैराजस्येश्वरस्य वै ।
महाविष्णोर्वर्षमध्ये पञ्चषष्ट्यधिर्त्रिशतम् ॥ ६ ॥
वैराजानां भवत्येव क्रमेण शतवर्षके ।
षट्त्रिंशत्तु सहस्राणि तथा पञ्चशतानि वै ॥ ७ ॥
वैराजानां भवन्त्येव तत्सर्वं वेद्म्यहं प्रिये ! ।
अस्य वै वर्तमानस्य वैराजस्य कथां शृणु ॥ ८ ॥
महाविष्णोस्तु साम्राज्ये ऐश्वरीसृष्टिके स्तरे ।
अष्टावरणपारे वै त्वस्मात्पूर्वो विराट् पुमान् ॥ ९ ॥
स्वस्याऽन्तिमस्य वर्षस्याऽन्तिमाह्नस्त्वन्तिमक्षणे ।
वर्तमानेऽन्तिमवेधोब्रह्माण्डेऽस्तमनक्षणे ॥१०॥
सम्राडासीत्सहस्राक्षाऽभिधश्चक्रप्रवर्तकः ।
भक्तिमान् स सहस्राक्षः सत्ये पातालके भुवि ॥११॥
विमानेन सदा याति शृणोति व्योमतन्तुना ।
स्वच्छद्रव्येण संचष्टे स्पृशति क्षिप्रवायुना ॥१२॥
क्षणेन सर्वलोकानां व्यवहारं करोति च ।
सर्वसाधनयुक्तस्य गन्तव्यं नाऽवशिष्यते ॥१३॥
स्थित्वैकत्र गृहे तस्य प्रजाश्चतुर्दिशास्थिताः ।
व्यवहरन्तीव निकषा विदन्ति करगं यथा ॥१४॥
सहस्राक्षः स्वयं सत्यलोके संसदि वेधसः ।
यात्यायाति यथाकालं पूरितायां महाजनैः ॥१५॥
दिक्पालैर्मनुभिश्चापि सूर्येण शशिना तथा ।
ऋषिभिश्च महादेवैः सार्वभौमैर्नृपैस्तथा ॥१६॥
तत्रासनं स्वकीयं स न लेभे प्रथमे स्थले ।
इति वैषम्यदोषेण प्रेरितः स हृदन्तरे ॥१७॥
आहूय ब्रह्मविज्ञानान् पप्रच्छाऽभ्युदयं प्रति ।
पारमेष्ठ्यादधिकं चोत्तमं स्थानं मिलेत् कथम् ॥१८॥
विप्रा विज्ञापयामासुस्तमध्वरवरान् कुरु ।
अग्निष्टोमं वाजपेयं राजसूयं च वैष्णवम् ॥१९॥
महारौद्रं नरमेधं वाजिमेधं वृषक्रतुम् ।
सौत्रामणिं सुतेष्टिं च वह्निहोत्रं जपादिकम् ॥२०॥
एतान् यज्ञान् महारंभान् शतसंवत्सरान् कुरु ।
तेन पुण्येन ते राजन् पारमेष्ठ्योत्तरं पदम् ॥२१॥
भविष्यति ध्रुवं राज्यं स्थानं कारय तान्मखान् ।
शते पूर्णे त्विन्द्रपदं सहस्रे तु रवेः स्थलम् ॥२२॥
ध्रुवराज्यमयुते तु लक्षे तु वेधसः स्थलम् ।
कोटियज्ञेषु पूर्णेषु शतास्यब्रह्मणः पदम् ॥२३॥
यज्ञपरार्धे सम्पूर्णे वैराजपदमाप्यते ।
न तथाऽऽयुश्च समयः कस्याऽप्यत्र तु गोलके ॥२४॥
तस्माद् राजँस्तेन दत्तं भुञ्जीथा भव शान्तिमान् ।
तृष्णायास्तु पिशाचिन्या अन्तो भोगेन नाप्यते ॥२५॥
अत्रैवाप्तान् प्रभोगाँश्च संप्राऽनुभूय सर्वथा ।
रागद्वेषौ महादोषौ क्षपयित्वा हितं कुरु ॥२६॥

अयं मत्तो महानस्ति लक्ष्म्या बुद्ध्या जनैश्च वा ।
इति चिन्तयितुर्नैव सुखप्राप्तिर्भवेत् क्वचित् ॥२७॥
अहमस्मि महानात्माऽऽनन्देन पूरितो हरेः ।
इति मन्तुर्न वै दुःखं तृष्णादोषादिजं भवेत् ॥२८॥
अन्येषामधिकं दृष्ट्वा दुःखं मन्तव्यमेव न ।
स्वोपार्जितेन यत्प्राप्तं तत् सुखं शान्तिदं मतम् ॥२९॥
यदृच्छयोपपन्ने तु वस्तुनि तूद्यमार्जिते ।
अलंबुद्धिर्भवेद्यस्य स सदात्र सुखी भवेत् ॥३०॥
त्रैलोक्याऽहतशास्तिसाम्राज्यं तवास्ति वै दृढम् ।
यदि नाप्ता ततः शान्तिरधिकात् का भविष्यति ॥३१॥
अयं मम परश्चेति द्रष्टुर्नास्ति क्वचित् सुखम् ।
तारतम्यं तु सर्वत्र मायालोकेऽस्ति सर्वथा ॥३२॥
प्रकृतौ विकृतौ कार्ये निरतिक्रमवर्जिते ।
नहि क्वापि परा शान्तिर्लब्धा केनापि भूपते ॥३३॥
न कश्चिल्लप्स्यते शान्तिं यदि स्यात्प्रकृतेः पतिः ।
प्रधानस्य पतिर्वापि काऽन्यस्यात्र कथा नृप ॥३४॥
तस्माच्छान्तिं लभ राजन् मा तृष्णां वर्धय प्रभो ।
विरेमुश्चेति सन्दिश्य ब्राह्मणाः पारदर्शिनः ॥३५॥
सहस्राक्षस्तु कर्णौ तानदत्वैव मखान् बहून् ।
कारयामास विधिवत् प्रत्यब्दं तु महत्तमान् ॥३६॥
एतैः पुण्यं शतब्रह्मार्जितं प्राप्तं च तेन वै ।
अथाऽऽयुषोऽन्तिमे वर्षेऽधिमासेऽपरपक्षके ॥३७॥
दिने प्रतिपदि प्रातर्हरेः शुश्राव दुन्दुभिम् ।
यज्ञेषु वर्तमानस्य सहस्राक्षस्य भूपतेः ॥३८॥
पुरुषोत्तममासस्य दुन्दुभिः श्रवणं गतः ।
अधिमासे द्वितीये तु पक्षे वै प्रतिपद्व्रते ॥३९॥
कृष्णनारायणः सर्वेश्वरः श्रीपुरुषोत्तमः ।
यदिष्टं यस्य तद् दास्ये कोटिकल्पैरलभ्यकम् ॥४०॥
कोटियज्ञैः कोटिदानैर्यदलभ्यं ददाम्यहम् ।
अत्र व्रते प्रकर्तव्यं राज्ञा दानं यथाबलम् ॥४१॥
पूजनं मे प्रकर्तव्यं यथालब्धोपचारकैः ।
भोजनं मे च दातव्यं यथायोग्यान्नसद्रसैः ॥४२॥
दक्षिणा मे प्रदातव्या यथाश्रद्धा तथा धनैः ।
परोपकारः कर्तव्यः पुरुषोत्तमतुष्टये ॥४३॥
यदि सम्राट् सार्वभौमश्चतुर्दशभुवां पतिः ।
यथाविभवं कृष्णं मां पूजयेदुत्तमोत्तमैः ॥४४॥
प्रातः स्नानं स्वयं कृत्वा पञ्चरत्नजलेन माम् ।
सुगन्धसारवार्भिश्च दन्तशुद्धिं प्रकारयेत् ॥४५॥
सुगन्धं मञ्जनं दद्यान्नूतनं दन्तधावनम् ।
सुगन्धजलगण्डूषैर्जिह्वाशुद्ध्यादि कारयेत् ॥४६॥
पुष्परसाब्धसारैश्च सुगन्धिभिर्जलैश्च मे ।
शौचादि कारयेद् राजा हस्तशुद्ध्यादि कारयेत् ॥४७॥
चन्दनाक्तसुमृद्भिश्चाऽवयवानां पवित्रताम् ।
सुगन्धवारिभिश्चाऽद्भिः कारयेत् स्नापयेत्ततः ॥४८॥
दुग्धेन दध्ना चाप्येकाक्षरेण मधुना तथा ।
शर्कराभिश्चामृतैश्च स्नापयेद् वारिभिस्ततः ॥४९॥
सुगन्धितैलसारैश्च मर्दनं कारयेन्नृपः ।
तीर्थवार्भिः स्नापयेच्च वस्त्रैश्च मार्जयेज्जलम् ॥५०॥
अतिसूक्ष्मातिमूल्यैः सत्सुवर्णतारचन्द्रकैः ।
मृदुचित्रैश्चातिसूक्ष्मवस्त्रैर्मां शोभयेत् ततः ॥५१॥
राज्यासनार्हसौवर्णैर्मुकुटैः कटकादिभिः ।
स्वर्णोर्मिकाशृंखलाद्यैः कुण्डलैर्हारशेखरैः ॥५२॥
कोट्यधिकैर्मणिरत्नैर्मौक्तिकैर्नद्धभूषणैः ।
पुष्परागप्रवालैश्च वैदूर्यैः सूर्यकान्तकैः ॥५३॥
चन्द्रकान्तैर्मारकतैर्माणिक्यैः स्फटिकैस्तथा ।
वज्रैर्गारुत्मतैर्मुक्ताभिश्च सत्पद्मरागकैः ॥५४॥
इन्द्रनीलैः पुष्पराजैः कर्केतनैश्च भीष्मकैः ।
पुलकैः रुधिरैः स्वर्णे राजतैर्भूषणैस्तथा ॥५५॥
सामुद्रिकैः खनिजैश्च वह्निजैः स्वर्भवैस्तथा ।
रत्नमालाविभूषाभिः पूजयेत्परमेश्वरम् ॥५६॥
ऊर्णावस्त्रोत्तमैश्चान्यैः कार्पासकैश्च कौशुकैः ।
वार्क्षैः सुवर्णजैश्चान्यैः रसजैस्त्वक्कृतैश्च वै ॥५७॥
वस्त्रैः संशोभयेत् कृष्णं तैलैः सुगन्धसारकैः ।
कज्जलैर्नवनीतैश्च मर्द्यद्रव्यैः सुगन्धकैः ॥५८॥
सगन्धं कारयेत् कृष्णं कस्तूरीचन्दनादिभिः ।
कर्पूरैः केसरैर्मिश्रैः पूजयेत् तिलकादिभिः ॥५९॥
कुंकुमाऽक्षतपुष्पैश्च स्वर्णचम्पककुन्दकैः ।
पारिजातस्थलपद्मैः कमलैस्तुलसीदलैः ॥६०॥
कल्पपुष्पैः स्वर्णवल्लीकुसुमैः पूजयेत्प्रभुम् ।
स्वर्णाक्षतैर्वर्धयेच्च हारमालाः समर्पयेत् ॥६१॥
करपादतले गण्डौ कपोलौ कर्णसीमकौ ।
भुजौ जंघे नखानोष्ठौ रगैः संरंजयेद्धरेः ॥६२॥
सुवर्णमणिरत्नादिनद्धोपानद्युतौ पदौ ।
नक्तकयष्टिकागुच्छशृंखलासहितौ करौ ॥६३॥
शोभयेत् तिलकं पीतं रक्तं चन्द्रं प्रकारयेत् ।
धूपं दीपं कारयेच्च भोजनं शतमष्ट च ॥६४॥

अम्ब्लं मधुरं लवणं कटु तिक्तं कषायकम् ।
यथारुचि यथापेक्षं स्वादु सुगन्धि चार्पयेत् ॥६५॥
भक्ष्यं भोज्यं चोष्यलेह्ये पेयं चास्वाद्यमित्यपि ।
अन्नं शाकद्विदलाश्चौदनानि सुफलानि च ॥६६॥
पायसान्नं सुवर्णैः संस्कृतानि सद्रसानि च ।
अमृताढ्यानि मिष्टानि मृष्टानि दापयेन्नृपः ॥६७॥
मुखवासानि चूर्णानि ताम्बूलं चान्यचर्वणम् ।
उत्तेजकानि चान्यानि त्वर्पयेद्धरये नृपः ॥६८॥
शीतलान्यपि पेयानि चूर्णितरसवन्ति च ।
मादकानि विविधानि त्वर्पयेद्धरये नृपः ॥६९॥
गायनानि तु राज्ञीभिस्तालवाद्यस्वरान्वितैः ।
नर्तनैर्हावभावाद्यव्यंग्यरसप्रपूरितैः ॥७०॥
सखीभिः कारयेद्राजा वर्धयेद् बहुभावनैः ।
लाजाभिश्चन्दनकणैरक्षतैः स्वर्णतण्डुलैः ॥७१॥
मणिरत्नादिभिर्देवं वर्धयेत्तु पुनः पुनः ।
जयकारान् कारयेच्च नीराजयेत्प्रगे निशि ॥७२॥
शतैः सहस्रकैर्वर्तिकर्पूरादिभिरादरात् ।
आकटि सप्त चावर्तान् सप्त त्वामस्तकं तथा ॥७३॥
ततः सप्ताऽऽवर्तकाँश्च प्रत्येकसप्तचक्रकान् ।
ततश्च सप्तलहरीरूर्ध्वाऽधःप्रसृताश्चरेत् ॥७४॥
त्र्यावर्तान्पादयोश्चैवाऽऽवर्तयेत् क्रमशो हरिम् ।
ततो वस्त्रेण चावर्तांस्त्रीन् हरिं समवर्तयेत् ॥७५॥
ततः शंखजलेनापि त्र्यावर्तानवतारयेत् ।
आरार्त्रिकं तज्जलेन त्रिवारं समवर्धयेत् ॥७६॥
धूपं ततस्त्रिवारं चावर्तयेत्परमेश्वरम् ।
घण्टावादनमन्येषां वाद्यानां चापि वादनम् ॥७७॥
दुन्दुभिझल्लरीघण्टापटहानतिवादयेत् ।
ततः स्तुतिं नमस्कारं दण्डवत् प्रार्थनां चरेत् ॥७८॥
प्रदक्षिणादिकं कृत्वा पुष्पाञ्जलिमथार्पयेत् ।
एवं प्रातश्च मध्याह्ने निशि सम्राट् प्रपूजयेत् ॥७९॥
श्रृंगारयित्वा सत्सैन्यं विमाने च गजे रथे ।
स्थापयित्वा राजधान्युद्यानादौ भ्रामयेद्धरिम् ॥८०॥
जनता वर्धयेत् कृष्णनारायणं पुमुत्तमम् ।
पुनस्त्वानीय च राजसौधं जलादि चार्पयेत् ॥८१॥
विश्रामयेत् पादसंवाहनाद्यं वर्तयेन्नृपः ।
भगवत्तोषणार्थं च भूरिदानानि वै ददेत् ॥८२॥
हस्तिदानं वाजिदानं चोष्ट्रघोटकदानकम् ।
वृषभाऽजप्रदानं च गोगरुडप्रदानकम् ॥८३॥
शुकदानं सारिकाया मेनाया दानमित्यपि ।
नराणां दासदासीनां कन्यानां दानमित्यपि ॥८४॥
यानानां वाहनानां च पशूनां दानमित्यपि ।
कम्बलाम्बरवेषाद्युत्कृष्टवस्तूनि दापयेत् ॥८५॥
भवनानि नगराणि क्षेत्राणि पर्वताँस्तथा ।
सरोवराणि खनिजान् खनींश्चारण्यकानि च ॥८६॥
दद्याद् दाने द्विजातिभ्योऽनाथेभ्योऽन्नाम्बराणि च ।
वृक्षान् वल्लीः प्रदद्याच्च क्षेत्राणि वाटिकास्तथा ॥८७॥
दद्यान्नदीर्नदाँश्चैवाऽखातान् स्वर्गे महस्तपः ।
सत्यं लोकं प्रदद्याच्च पातालान्ततलानि च ॥८८॥
देशं प्रदेशं खण्डं च राज्यं द्वीपं च दापयेत् ।
दाता ब्रह्माण्डनेता चेद् ग्रहीताऽपि तथा भवेत् ॥८९॥
मिलेन्नैव ग्रहीता चेत् संकल्प्य हरये ददेत् ।
विश्वंभरो विश्वपोष्टा विश्वरक्षाकरः प्रभुः ॥९०॥
गृह्णात्येव न सन्देहो भावनाक्षुधितो हरिः ।
साम्राज्यमुकुटं दद्याद् दद्याद् राज्ञीं सुतास्तथा ॥९१॥
सर्वं दद्याच्छर्मदाय कृष्णाय परमात्मने ।
कोशं सैन्यानि राष्ट्राणि दद्याच्छ्रीकेशवाय वै ॥९२॥
यथाश्रद्धं प्रदद्याच्च सकामायाऽधिकारिणे ।
सत्पात्राय प्रदद्याच्च नारीभ्योऽपि ददेद् बहु ॥९३॥
बालाभ्यो विधवाभ्यश्च साध्वीभ्यो जीविकां ददेत् ।
सतीभ्यो योगिनीभ्यश्च रंकाभ्यो भोजनं ददेत् ॥९४॥
सन्तर्पयेद् यज्ञभागैस्त्रिलोकसुरमानवान् ।
काश्यपान् प्राणिनः सर्वांस्तोषयेदन्नवारिभिः ॥९५॥
एतत्सर्वं प्रदद्याद्वा दद्यादेकं च वा नृपः ।
वित्तशाठ्यं न चेत् कुर्याद् दद्याच्च श्रद्धया यदि ॥९६॥
कांस्यपात्रपुटदानं सुवर्णपुटदानकम् ।
अष्टावरणसंयुक्तं चतुर्दशदलान्तरम् ॥९७॥
सुवर्णरत्नसंव्याप्तं पुटं दद्यात्पुटानि च ।
तत्फलं सर्वथा कृष्णनारायणो यथेष्टकम् ॥९८॥
ददाति मास्यधिके वै शाश्वतं बहुतृप्तिदम् ।
सकामं चापि निष्कामं दास्यामि पुरुषोत्तमः ॥९९॥
कुर्वन्तु दानं वितरन्तु लक्ष्मीं क्षिपन्तु पात्रे भगवत्प्रबुद्धया ।
श्रीकृष्णनारायण एव दाता वैराजकं चापि ददामि राज्यम् ॥१००॥
इत्येवं दुन्दुभिर्वक्ति मासि श्रीपुरुषोत्तमे ।
सहस्राक्षः श्रृणोत्येव श्रीदं तं प्रतिपत्तिथौ ॥१०१॥
प्रातरेव तु राजाऽसौ कृष्णनारायणं प्रभुम् ।
श्रुत्वा तं दुन्दुभिं नत्वाऽपूजयच्छुद्धिमान्नृपः ॥१०२॥

दुन्दुभिना यथाप्रोक्तं राज्ञः श्रद्धा च यादृशी ।
तथा राज्ञा कृतं सर्वं पूजनं सविसर्जनम् ॥१०३॥
अथ दानं ददौ प्रातः पत्नीव्रतद्विजन्मने ।
आहूय ब्रह्मणः सत्ये लोके संसदि तं द्विजम् ॥१०४॥
ब्राह्ममूर्ते ! द्विजश्रेष्ठ ! त्वमेव पुरुषोत्तमः ।
अधिमासाधिदैवात्मन् ! फलदाताऽसि मूर्तिमान् ॥१०५॥
अहं वै दुन्दुभिं श्रुत्वा करोम्यत्र दिने व्रतम् ।
वैराजपदलब्ध्यर्थं दानं गृहाण सार्थकम् ॥१०६॥
चतुर्दशभुवनानां राजाऽस्मि च ददाम्यहम् ।
स्वर्णदीजलसाक्ष्येऽत्र वेधसः संसदि द्विज ॥१०७॥
चतुर्दशभुवनानि ददामि फललब्धये ।
दत्तानि च गृहीतानि प्रत्युवाच द्विजोत्तमः ॥१०८॥
तावत्पत्नीव्रतरूपे भगवान् पुरुषोत्तमः ।
प्राविर्बभूव सहसा कोटिभास्करकान्तिमान् ॥१०९॥
प्रहसँस्तं सहस्राक्षं प्रोवाच पुरुषोत्तमः ।
दानं प्राप्तं मया राजन् द्विजरूपेण सर्वथा ॥११०॥
मया दत्तं फलं तस्य ते वैराजपदं ध्रुवम् ।
आयुषोऽन्ते तु लब्धाऽसि वैराजं पदमैश्वरम् ॥१११॥
इति कृत्वा प्रसादं तं नृपं प्रदर्श्य विग्रहम् ।
तिरोबभूव सहसा स्पृशन् मूर्ध्नि नृपस्य सः ॥११२॥
राज्ञा व्रतं तथा पूजा सर्वं वै श्रद्धया कृतम् ।
ददौ ब्रह्माण्डदानं स यत्र किञ्चिन्न शिष्यते ॥११३॥
स्वयं दासोऽभवत्तस्य किंकरो ब्राह्मणस्य वै ।
वर्षान्तः पूर्णतां प्राप्तः सहस्राक्षः समाधिना ॥११४॥
पश्यति स्वकृते चाग्रे वैराजं पदमस्ति यत् ।
पूर्ववैराजविगमे नैकट्ये दृश्यते हि तत् ॥११५॥
इत्येवं वर्तमानेन राज्ञा तेन महात्मना ।
क्रमयोगाद् दैवयोगात् त्यक्तं देहं नृपात्मकम् ॥११६॥
सहस्राक्षशरीरं च विहायेमं तु गोलकम् ।
दिव्यमार्गे ययौ चेशसृष्टौ यत्रास्ति तत्स्थलम् ॥११७॥
प्राप्तवान् स सहस्राक्षो वैराजं पदमैश्वरम् ।
योऽद्यास्ति नाभिकमलः पिता वै वेधसः प्रभुः ॥११८॥
सोऽयं वैराजसाम्राज्यं प्राप्तवान् प्रतिपद्व्रतात् ।
भूम्ना हैरण्यगर्भेण तथाऽन्यैरीश्वरैरपि ॥११९॥
तत्राभिषिक्तो राजा सः योऽसौ नारायणोऽभवत् ।
यत्कमलेऽभवद् ब्रह्मा यल्ललाटाच्छिवापतिः ॥१२०॥
यस्य वै हृदयाद्विष्णुर्यस्योदरे त्विदं जगत् ।
सोऽयं व्रतप्रभावेण सहस्राक्षो नृपः खलु ॥१२१॥
पुरुषोत्तमसद्भक्त्या जातो नारायणो विराट् ।
एवं त्वधिकमासस्य मध्योऽर्ध्वप्रतिपद्दिने ॥१२२॥
व्रतपूजनदानेन फलं ते कथितं प्रिये ।
प्रसन्नः श्रीहरिस्तत्र किं न ददाति पद्मजे ॥१२३॥
अस्य श्रावयिता चापि पाठकर्तापि तादृशम् ।
फलं संलप्स्यते लक्ष्मि ! वदामि पुरुषोत्तमः ॥१२४॥
नास्तिकश्चाऽश्रद्दधानो मृषावादी प्रदूषकः ।
न प्रसादं फलं वापि लभते मम निन्दकः ॥१२५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पुरुषोत्तममासमाहात्म्ये प्राक्सृष्टौ सार्वभौमेन सहस्राक्षनामकराज्ञा सहस्रेषु यज्ञेषु कृतेषु ततोऽधिकमासोत्तरपक्षीयप्रतिपद्व्रतदानादिना प्राप्तं वैराजनारायणपदमित्यादिनिरूपणनामाऽष्टाधिकत्रिशततमोऽध्यायः ॥ ३०८ ॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! कथां दिव्यां प्राक्सम्पन्नां मनोहराम् ।
अस्मात्तु ब्रह्मणः पूर्वो ब्रह्मा वर्षशतोत्तरम् ॥ १ ॥
निधनोन्मुखतां प्राप्तस्तदानीं ब्रह्मगोलके ।
अन्तिमेऽजक्षणे राजा पृथ्व्यां सर्वहुताभिधः ॥ २ ॥
बभूव भगवद्भक्तो मम पूजापरायणः ।
मदर्थं कृतसर्वस्वो मदर्थं न्यस्तमानसः ॥ ३ ॥
मम कण्ठीं मम मालां ममैव तिलकं शुभम् ।
दधार बुभुजे चान्नं मे प्रसादात्मपावनम् ॥ ४ ॥
चातुर्मास्ये व्रतं तेन गृहीतं बहुदायिता ।
सप्तद्वीपेषु खण्डेषु सामुद्रद्वीपभूमिषु ॥ ५ ॥
यत्र यत्राऽभवत् स्वस्य राज्यं सर्वत्र तत्र च ।
ममान्नं वै प्रदातव्यं जलं पातव्यमेव मे ॥ ६ ॥
यावत्तृप्तिर्भिक्षुवर्गैरदनीयं ममैव ह ।
ब्राह्मणैर्मम भोक्तव्यं क्षत्रियर्षिभिरित्यपि ॥ ७ ॥
वैश्यर्षिभिस्तथा शूद्रैर्भक्तिकृद्भिर्ममान्नकम् ।
भोक्तव्यं सर्वथा ब्रह्मचारिभिर्वनवासिभिः ॥ ८ ॥
यतिभिः साधुभिस्त्यागिजनैः साध्वीभिरित्यपि ।
अनाथैश्चातिथिप्रख्यैर्याज्ञिकैर्देवपूजकैः ॥ ९ ॥
अन्नार्थिभिः कदर्यैश्च किंकरैर्वृत्तिवर्जितैः ।
ममान्नमेव भोक्तव्यं जलं पातव्यमेव मे ॥१०॥
वस्त्राणि मम धार्याणि नान्यग्राह्यं तु कैरपि ।
तदर्थं च मया राज्ये प्रतिस्थलं क्षणे क्षणे ॥११॥

अन्नसत्राणि वस्त्राणि प्रपावारीणि सर्वथा ।
संस्थापितानि सेवास्था नियुक्ताश्च प्रतिस्थलम् ॥१२॥
क्षुधितोऽन्नस्य पात्रं स्यात् तृषितो जलपात्रकम् ।
नग्नस्त्वम्बरपात्रं स्याद् ग्राह्यं तेन मुदा मम ॥१३॥
कदर्यं हृदयं यस्य यस्य तृष्णाऽस्ति मानसे ।
सोऽपि तृष्णादिनाशार्थं गृह्णात्वन्नं जलं मम ॥१४॥
इत्येवं घोषितं तेन कुड्यफलकलेखितम् ।
चातुर्मास्ये ममान्नं वै फलं वारि तथाऽम्बरम् ॥१५॥
ग्रहणीयं पुष्कलं नाऽन्यग्राह्यं धर्मभिक्षुकैः ।
इत्येवं वर्तमानस्य सर्वहुतस्य भूभृतः ॥१६॥
अग्निहोत्रेऽन्ययज्ञे च यत्किञ्चिद्धार्मिकं मतम् ।
देवानां पूजने वस्तुप्रदानं चापि तस्य वै ॥१७॥
विद्यार्थिनां च विद्याया दाने व्ययो गवां तृणे ।
श्वप्रभृतिग्राम्यपशुपक्षिणां च कणान्नकम् ॥१८॥
जलं वस्त्रं तथा चान्यद् यथापेक्षं सुवस्तुकम् ।
आसीत् सर्वहुतस्यैवाऽतिथीनां तृप्तिकृत्तथा ॥१९॥
ग्रामेषु खेटेषु जनस्थलेषु क्षेत्रेषु घोषेषु नदीतटेषु ।
वनेष्वरण्येषु च पर्वतेषु द्वीपेषु वार्धौ रणनिर्जनेषु ॥२०॥
उपत्यकाभ्यां नगरेषु राज्यविश्रान्तिभूमौ च करस्थलीषु ।
सर्वत्र वै सर्वहुतस्य राज्ञोऽभवन् सुसत्राणि सुदानकानि ॥२१॥
ग्रामान्तराणां युगमार्गसन्धौ वनान्तराणां स्रुतिमूलयोगे ।
नदीनदानां तरणार्थभूमौ कृतानि सत्राणि तु तेन राज्ञा ॥२२॥
सीमान्तरेषु प्रखनिस्थलेषु यानस्य मार्गेषु दिगन्तरेषु ।
तीर्थेषु यात्रालुगतागतेषु स्थलेषु सत्राणि हुतस्य राज्ञः ॥२३॥
देवानां पूजने नाम प्रोच्यते सर्वतोदिशि ।
प्रातः सायं च मध्याह्ने तस्य सर्वहुतस्य वै ॥२४॥
सत्ये तपसि तस्यैव जने महरि स्वर्गके ।
भुवि चाप्यथ पातालेष्वस्य कीर्तिर्हि गीयते ॥२५॥
देवाश्च ऋषयश्चापि दैत्याश्चान्येऽपि देहिनः ।
सर्वहुतं लोकितुं वै ययुर्हंसादिरूपिणः ॥२६॥
आश्चर्यं परमं प्रापुर्दृष्ट्वा पुण्योज्ज्वलं नृपम् ।
अतितेजोमण्डलाढ्यमुखमण्डलशोभितम् ॥२७॥
दूरे चातिप्रतेजस्काः सर्वे शुशुभिरे सुराः ।
किन्तु तन्निकटे गत्वा निस्तेजस्का बभूविरे ॥२८॥
इतिपुण्यप्रतापोऽसौ सर्वहुताऽर्थसार्थकः ।
अग्निप्रख्योऽभवद्भक्तो देवगर्वहरो नृपः ॥२९॥
देवैः सम्मानितः सर्वैरिन्द्रार्धासनयोजितः ।
दिक्पालैः पूजितः सोऽपि विस्मयं नाप वै मनाक् ॥३०॥
रागशून्यस्य तस्यैव पत्न्यासीत् पतिसेविनी ।
औदार्यगुणसम्पन्ना नाम्ना वै गोऋतम्भरा ॥३१॥
देवीभ्योऽप्यतिरूपाढ्या कायाकल्पातिसुन्दरी ।
कामरूपा कामभोगा कामकाराऽतिसात्त्विकी ॥३२॥
देवीषु तिष्ठते पश्चाद् देवदेवीसमाजके ।
सलज्जाऽवाङ्मुखी तत्र भवति क्षणमान्तरे ॥३३॥
तया स्वस्वामिने प्रोक्तं मया पश्चान्निषद्यते ।
यथापूर्वं तूत्तमे ह्यासने तिष्ठामि तत्कुरु ॥३४॥
इन्द्राणी वारुणी सौर्या चान्द्रयो वाऽन्यसुरस्त्रियः ।
प्रणमेयुश्च मां स्वामिन् ! यथा तत्कुरु भूपते ॥३५॥
राजा प्राह सतीं राज्ञीं मानुषी भवसि प्रिये ।
तत्रापि देवसंघेऽस्मद्वासोऽस्त्यतिमहत्तमः ॥३६॥
मा तृष्णां कुरु कल्याणि मानुषे तु न तद्भवेत् ।
तथापि पुण्यबाहुल्ये कदाचित् तद्विभाव्यते ॥३७॥
करिष्ये स्तवनं यत्नं नारायणसमीपतः ।
प्राप्ते योगे तथा स्याद्वै तृष्णाशान्तिस्तथापि न ॥३८॥
नित्यं राज्ञी नृपं काले प्रस्मारयति तद्वचः ।
राजाऽपि समयं प्राप्तं तदर्थद्वं प्रतीक्षते ॥३९॥
एकदाऽधिकमासस्य द्वितीयायां प्रगेऽसिते ।
स्नात्वा देवप्रपूजायां तिष्ठते तावदेव वै ॥४०॥
श्रुतवान् दुन्दुभिं रम्यं घोषयन्तं हरेर्वचः ।
शुश्राव सर्वहुतस्य राज्ञ्यपि गोऋतम्भरा ॥४१॥
उभौ स्थैर्येण तच्छब्दमानसौ संबभूवतुः ।
शुश्रुवाते दुन्दुभेस्तु घोषणां घोषणां हृदयंगमाम् ॥४२॥
अधिमासद्वितीयाया व्रतं कुर्वन्ति ये जनाः ।
तेषामभीष्टदाताऽहं मासः श्रीपुरुषोत्तमः ॥४३॥
एकभुक्तं च वा नक्तं फलभुक्तिर्जलाशनम् ।
वाय्वाशनं च वा कृत्वा करिष्यन्ति व्रतं तु ये ॥४४॥
तेभ्यो दास्ये सुतदाराधनसम्पद्गृहादिकान् ।
यानवाहनहस्त्यादीन् वारीक्षेत्रधरादिकान् ॥४५॥
खण्डं द्वीपं च सामुद्रं भौमं राज्यं भूमण्डलम् ।
स्वर्गं जनं तपः सत्यं चैन्द्रं सौर्यं च चान्द्रकम् ॥४६॥
साम्राज्यं चातलं पातालकं चापि रसातलम् ।
दास्ये चतुर्दशलोकाधिपत्यं पारमेष्ठ्यकम् ॥४७॥
वारुणं वाह्निकं चैशं याम्यं तथा च पावनम् ।
कौबेरं नैर्ऋतं चापि दिक्पालत्वं महत्पदम् ॥४८॥
लोकपालपदं दास्ये वासवं ग्रहमण्डलम् ।
नैधेयं चापि रौद्रं च मारुतं नाकपृष्ठकम् ॥४९॥

सिद्धीरष्टविधा दास्ये गुणं ब्रह्माण्डसर्जनम् ।
रक्षणं पालनं दास्ये सामर्थ्यं व्रतिने तु मे ॥५०॥
अधिमासस्य देवोऽहं श्रीकृष्णः पुरुषोत्तमः ।
स्वल्पेऽपि मत्कृते कृच्छ्रे फलं दास्ये त्वनन्तकम् ॥५१॥
ददामि नाऽन्यमासे यत् तद्ददाम्यत्र पुष्कलम् ।
अत्राहं कृपया दाता दातास्मि स्वेच्छया खलु ॥५२॥
मद्वचोधारयत्यद्धा मूर्ध्ना तस्मै ददाम्यहम् ।
उपायनं तथा पारितोषिकं वा स्वनुग्रहम् ॥५३॥
नात्र विनिमयो न्यायो न्यायस्त्वत्र कृपा मम ।
कृपयाऽहं स्वयं स्वामी वितरामि त्वशेषकम् ॥५४॥
कोटिगुणं वितरामि वितरामि त्वनन्तकम् ।
यथासंकल्पितं तस्माद् गृह्णन्तु पुरुषोत्तमात् ॥५५॥
इति शुश्रुषतुः सर्वहुतश्च गोऋतम्भरा ।
तौ नत्वा दुन्दुभिं पुष्पैः पूजयामासतुस्तदा ॥५६॥
दुन्दुभिस्तु गतोऽन्यत्र दम्पती दध्यतुः प्रभुम् ।
स्वेष्टलाभस्तथा कुत्र प्राप्स्यते चेति दध्यतुः ॥५७॥
सर्वहुतस्तदा राज्ञीं सम्प्राह गोऋतंभराम् ।
श्रुतं देवि द्वितीयाया व्रतेनेष्टमवाप्यते ॥५८॥
तवास्ति मानसं पूज्यस्थाने स्थातुं महत्तमे ।
चतुर्दशस्तरस्थानां सर्वासां सुरयोषिताम् ॥५९॥
तत्प्राप्त्यर्थं व्रतं कार्यमावाभ्यां फलदं भवेत् ।
दुन्दुभिना तदुक्तं वै स्वल्पेऽपि बहुलं फलम् ॥६०॥
अहं ब्रह्मा भविष्यामि भव त्वं सहचारिणी ।
ब्रह्माणी मम पत्नी च माता वै सुरयोषिताम् ॥६१॥
तथा सति तवेहा तु प्रपूर्णार्था भविष्यति ।
कृष्णनारायणो देवो फलं व्रतस्य दास्यति ॥६२॥
एवं कृत्वा तु संकल्पं व्रतं चक्रतुरादरात् ।
प्रातः स्नात्वा हरिं ध्यात्वा कारयित्वा तु कानकीम् ॥६३॥
मूर्तिं तत्राऽधिकदेवं श्रीकृष्णं पुरुषोत्तमम् ।
आवाह्याचमनं दत्वाऽऽसनं पाद्यं समर्प्य च ॥६४॥
तस्मै त्वाचमनं तीर्थजलस्य ददतुश्च तौ ।
दुग्धेन पिच्छलदध्ना घृतेन मधुना तथा ॥६५॥
शर्कराभिश्च संस्नाप्य कारयामासतुस्ततः ।
शुद्धजलैः सुगन्धैश्चाप्लवनं चन्दनान्वितैः ॥६६॥
मार्जयामासतुर्वस्त्रैः शोभयामासतुर्हरिम् ।
सुवर्णाऽम्बरभूषाभिर्मणिरत्नोत्तमादिभिः ॥६७॥
हारैश्चन्दनगन्धैश्च द्रवैः सारद्रवैस्तथा ।
कज्जलैस्तैलसारैश्च पुष्पैः कुंकुमतण्डुलैः ॥६८॥

पूजयामासतुः कृष्णं किरीटकटकादिभिः ।
सद्रत्नमणिहाराद्यैश्छत्रचामरयष्टिभिः ॥६९॥
धूपदीपसुनैवेद्यफलताम्बूलचूर्णकैः ।
कारयामासतुस्तृप्तिं श्रीहरिं पुरुषोत्तमम् ॥७०॥
जलं दत्वा सवाद्यं तौ नीराजनं प्रचक्रतुः ।
प्रदक्षिणां स्तुतिं नमस्कारांश्चक्रतुरादरात् ॥७१॥
प्रार्थयामासतुर्देवं व्रतेनानेन केशव ।
प्रसन्नो भव विश्वात्मन् गृहाणाऽर्घ्यं फलादिकम् ॥७२॥
इतिकृत्वा ददतुस्तौ फलार्घ्यं ससुवर्णकम् ।
पुष्पांजलिं ददतुश्च चक्रतुः सेवनं ततः ॥७३॥
मध्याह्नेऽपि तथा चोभौ चक्रतुः पूजनादिकम् ।
सायं प्रपूज्य देवेशं कृत्वा त्वारार्त्रिकं निशि ॥७४॥
चक्रतुर्जागरं वाद्यनृत्यकीर्तनसूत्सवम् ।
दानं कृष्णाय ददतुः सिंहासनं तु कानकम् ॥७५॥
छत्रचामरवेत्रादिशोभितं बहुलोज्ज्वलम् ।
मणिरत्नसुमौक्तिकदामभूषाविराजितम् ॥७६॥
भवनं चापि ददतुश्चतुर्दशप्रभूमिकम् ।
सौवर्णकूप्यवस्त्वाढ्योपस्कराद्यैर्विराजितम् ॥७७॥
शय्यास्तरणभोज्यादिभागभुवनशोभितम् ।
पुण्यसारगृहं यत्र यत्राग्निहोत्रसद्गृहम् ॥७८॥
पितृतर्पणभवनं यत्रास्ति दानसद्गृहम् ।
मणिरत्नादि पूर्णं च यत्र कोशगृहं त्वपि ॥७९॥
यानवाहनपूर्णं च गृहं चिदचिदात्मकम् ।
दासदासीवनोद्याननदीनदसमन्वितम् ॥८०॥
गृहं यत्रास्ति भूमौ च विश्रान्तिगृहमित्यपि ।
सुरतस्य गृहं चैव भोजनस्य गृहं तथा ॥८१॥
स्नानागारं तथा गुप्तपातालादि सुसम्पदम् ।
गृहं यत्रास्ति कल्पानां द्रुमाणां च गवां गृहम् ॥८२॥
एवमादीनि सर्वाणि भवनानि च यत्र वै ।
वर्तन्ते तन्महत्सौधं सप्राकारं सुशोभितम् ॥८३॥
ददतुस्तौ कृष्णनारायणायाऽर्पणमेव हि ।
तावत्तत्र समायातः श्रीकृष्णः पुरुषोत्तमः ॥८४॥
प्रोवाच तौ प्रसन्नोऽस्मि दानेन च व्रतेन च ।
ददाम्येषः कृपां कृत्वा वृणुतं वरदानकम् ॥८५॥
दम्पती प्राहतुस्तत्र पारमेष्ठ्यं पदं प्रभो ।
देहि पश्चात्तवधामाऽक्षरं मोक्षं च शाश्वतम् ॥८६॥
तथास्त्विति हरिः प्राह तथाऽऽह गोऋतम्भराम् ।
भाविनि पुष्करे तीर्थे पृथ्व्यां वै क्षत्रियो नृपः ॥८७॥

आभीराणां च गोपानां पुष्करारण्यवासिनाम् ।
नृपो भविष्यति नाम्ना गायत्रो वै विराट्सुतः ॥८८॥
तस्य भार्या ऋषीनाम्नी राज्ञी पुष्करपुत्रिका ।
भविष्यति तयोः पुत्री आर्षिनाम्नी सुकन्यका ॥८९॥
सेयं त्वं भाविनी गोपी गोमती गोऋतम्भरा ।
गायत्री गोकुलसेवाकर्त्री तत्र भविष्यसि ॥९०॥
अयं राजा सर्वहुतस्तत्र ब्रह्मा भविष्यति ।
आद्ये युगे च यज्ञार्थे पुष्करे स गमिष्यति ॥९१॥
सुरर्षिमुनिपित्राद्यैर्मानवैस्तलवासिभिः ।
चतुरशीतिलक्षात्मदेहिभिः सह विश्वसृट् ॥९२॥
यज्ञं करिष्यति त्वाद्यं प्रवृत्त्यर्थं जगत्त्रये ।
तत्राग्निषु प्रोद्धृतेषु दीक्षाकाले ह्युपागते ॥९३॥
अध्वर्युणा तदाऽऽहूता सावित्री दीर्घसूत्रिणी ।
सज्जा भूत्वा यज्ञभूमौ तत्काले नाऽऽगमिष्यति ॥९४॥
ब्रह्मा शक्रं समाहूय कथयिष्यति कालिकम् ।
पत्नीं त्वन्यां मदर्थे तु शीघ्रं शक्र समानय ॥९५॥
यथा प्रवर्तते यज्ञः कालहीनो न जायते ।
तथा शीघ्रं विधेहि त्वं नारीं पत्न्यर्थमानय ॥९६॥
एवमुक्तस्तथा शक्रो गायत्रराजकन्यकाम् ।
यज्ञभूमिविलोकायाऽऽगतां त्वां स हि नेष्यति ॥९७॥
आर्षिणीं कन्यकां रम्यां गायत्रीं नवयौवनाम् ।
गान्धर्वेण विवाहेन ग्रहीष्यति स विश्वसृट् ॥९८॥
प्रारप्स्यते ततो होत्रं ब्राह्मणैर्वेदपारगैः ।
यज्ञो दिनसहस्रं वै पुष्करे स भविष्यति ॥९९॥
तत आरभ्य गायत्री ब्रह्माणी त्वं भविष्यसि ।
लोकमाता वेदमाता सृष्टिमाता भविष्यसि ॥१००॥
सर्वपूज्या सर्वमान्या द्विजजाप्या भविष्यसि ।
ब्रह्मदात्री ब्रह्मवधूर्भविष्यसि ऋतम्भरे ॥१०१॥
अयं सर्वहुतो ब्रह्मा त्वं गायत्री च दम्पती ।
द्वितीयाया व्रतेनैव कृपया मे भविष्यथः ॥१०२॥
शतवर्षोत्तरं धामाऽक्षरं मे प्राप्स्यथो ध्रुवम् ।
महानगरतुल्यस्य सौधस्य दानकर्मणा ॥१०३॥
ब्रह्माण्डाख्यं गृहं राज्यं दास्ये स्मृद्धं परात्परम् ।
इत्युक्त्वा भगवान् कृष्णस्तिरोबभूव तत्स्थलात् ॥१०४॥
पूर्वजस्य ब्रह्मणोऽपि लये जातेऽथ दम्पती ।
पारमेष्ठ्यं पदं श्रेष्ठं प्रापतुः शाश्वतं चिरम् ॥१०५॥
एवं सर्वहुतो राजा तत्पत्नी गोऋतम्भरा ।
सञ्जातौ दंपती ब्रह्मा गायत्री पितरौ सृजेः ॥१०६॥
इति ते कथितं लक्ष्मि ! प्राक्सृष्टीयमुदन्तकम् ।
पुरुषोत्तममासस्य द्वितीयायास्तु सद्व्रतम् ॥१०७॥
पारमेष्ठ्यपददातृ श्रोतुर्वक्तुस्तथा फलम् ।
भविष्यति न सन्देहो वक्ति श्रीपुरुषोत्तमः ॥१०८॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पुरुषोत्तममासमाहात्म्ये प्राक्सृष्टौ सर्वहुतराज्ञा गोऋतम्भराराज्ञ्या च द्वितीयपक्षद्वितीयाव्रतेन नगरसमभवनदानादिना पूजनादिना च पारमेष्ठ्यपदे ब्रह्मणोऽवतारो गायत्र्यवतारश्च प्राप्त इत्यादिनिरूपणनामा नवाधिकत्रिशततमोऽध्यायः ॥३०९॥

**श्रीनारायण उवाच—**

श्रूयतां च त्वया लक्ष्मि ! प्राक्कल्पस्य कथानकम् ।
सृष्ट्यारंभे भुवो भागे सम्राडासीज्जनाऽधिपः ॥ १ ॥
नाम्ना ब्रह्मसविताख्यस्तस्य पत्नी पतिव्रता ।
पतिधर्मपरा भक्ता भूरिशृंगाभिधाऽभवत् ॥ २ ॥
सेवते सा सदा कृष्णनारायणात्मकं पतिम् ।
दम्पती भगवद्भक्तौ गृहधर्मपरायणौ ॥ ३ ॥
कुर्वन्तौ दानधर्मादि सेवयन्तौ गुरून् जनान् ।
वर्तयन्तौ हरेर्मार्गे विष्णुसेवापरायणौ ॥ ४ ॥
अतिथीन् पूजयन्तौ च वृद्धेषु विनयान्वितौ ।
गवां सेवां प्रकुर्वन्तौ दयावन्तौ प्रजासु च ॥ ५ ॥
दीनानां दुःखहन्तारौ निर्धनानां प्रपोषकौ ।
सतां सेवां प्रकुर्वन्तौ दुष्टानां तु नियामकौ ॥ ६ ॥
आस्तां धर्मपरौ त्राणपरौ कष्टहरौ हि तौ ।
राजा ब्रह्मसवित्राख्यो नित्यं स्नात्वा नदीजले ॥ ७ ॥
सन्ध्यां जपं तथा होमं स्वाध्यायं स्म करोति वै ।
अन्नदानं वस्त्रदानं द्रव्यदानं करोति च ॥ ८ ॥
देवालयेषु देवानां दर्शनार्थं प्रगच्छति ।
नैवेद्यार्थं सुमिष्टान्नं फलाद्यर्पयति प्रधीः ॥ ९ ॥
योग्ये तु समये पूजां कारयत्येव भावतः ।
भोजयत्यतिथीन् विप्रान् साधून् साध्वीर्यतीन् मुनीन् ॥१०॥
ददाति दक्षिणां स्वर्णरूप्यात्मिकां सुतोषदाम् ।
अन्नसत्रेषु चान्नानि दापयत्यपि कोशतः ॥११॥
दासदासीप्रवर्गाणां शृणोति प्रार्थनां मुहुः ।
अपेक्षितं प्रदत्त्वैव सुखयत्यतिधर्मवान् ॥१२॥

राज्ञी चापि तथा देवान् पूजयत्यनिशं गृहे ।
दर्शनार्थं च देवानां प्रयाति यानमन्तरा ॥१३॥
अनुपानचरणाभ्यां यात्रां करोति नित्यदा ।
जलं पत्रं फलं पुष्पं चन्दनं स्वर्णदक्षिणाम् ॥१४॥
देवाय गुरवे दत्वा समागच्छति तद्गृहम् ।
भोजयित्वा जनान् भुंक्ते सा नृपोऽत्ति तथोत्तरम् ॥१५॥
चातुर्मास्ये व्रतं राज्ञा गृहीतं घृतदीपकाः ।
दातव्या हरयेऽखण्डाः सर्वदेवालयेषु वै ॥१६॥
सप्तद्वीपेषु खण्डेषु सामुद्रद्वीपकेषु च ।
यत्र यत्राऽभवन् देवालया राज्ये स्वके भुवि ॥१७॥
परमेशावताराणामीश्वराणां च योगिनाम् ।
देवानां सर्वजातीनां चमत्कारात्मनां तथा ॥१८॥
विभूतीनां च तत्त्वानां देवीनां च चितां तथा ।
तीर्थानामधिदैवानां जडानां चेतनावताम् ॥१९॥
चैत्यानां स्थावराणां च जंगमानां चमत्कृताम् ।
यत्र यत्राऽभवन् सुरक्ष्मालयास्तत्र तत्र च ॥२०॥
घृतदीपानखण्डान् स सुतेजस्कानकारयत् ।
स्वर्णपात्रेषु संशुद्धगोघृतानि सुवर्तिकाः ॥२१॥
धारयित्वा प्रकाशं वै सर्वदेवेभ्य आददौ ।
तस्य राज्ये यदि कस्मैचिदप्यर्हसुराय चेत् ॥२२॥
अनर्पितः प्रदीपश्चेज्ज्ञानात्ययं नृपस्तदा ।
सोपवासः सुवर्णानां सहस्रं च ददात्यपि ॥२३॥
उद्घोषयति सर्वत्र चातुर्मास्ये व्रतं मम ।
मम राज्ये तु सर्वत्र देवेभ्यो मम दीपकाः ॥२४॥
प्रदेयाः पूजकैस्तीर्थजलेभ्यश्चैत्यशाखिने ।
देवालयेषु सर्वत्र भवन्तु मम दीपकाः ॥२५॥
सर्वपर्वकार्तिकादौ भवन्त्वाकाशदीपकाः ।
गवां घृतेन मे श्रेष्ठज्योतींषि सन्तु सर्वथा ॥२६॥
पञ्चामृताप्लवनं च देवानां मम भूयताम् ।
मिष्टान्नानि मम सन्तु देवेभ्यो विनिवेदने ॥२७॥
उपचारास्तथा सन्तु सर्वथा मम षोडश ।
नवधा श्रीहरेर्भक्तिर्जायतां मत्प्रभोजितैः ॥२८॥
चातुर्मास्ये तु शाकानि दुग्धानि च रसास्तथा ।
विप्राणां साधुसाध्वीनां देवानां भोजने मम ॥२९॥
दीनाऽनाथकृपणानां भोजनानि भवन्तु मे ।
गवां ग्रासाः शुनकादिग्राम्यादनानि सन्तु मे ॥३०॥
कणान्नादिप्रदानं च पारावतादिपक्षिणाम् ।
पिपीलिकाप्रभृतीनां पिष्टाद्यनं समस्तु मे ॥३१॥
यज्ञानां कर्मणा सिद्धिः साधनैरस्तु मे तथा ।
आरात्रिकादिकं देवालयेषु चास्तु मेऽन्वहम् ॥३२॥
जलदानं वस्त्रदानं ममास्तु वैभवात् सदा ।
स्वर्णरूप्यादिमुद्राणां प्रदानं चास्तु मे सदा ॥३३॥
इत्येवं ब्रह्मसविता राजा प्राघोषयद् भुवि ।
भूरिश्रृंगा च तत्पत्नी चक्रे पत्या सह व्रतम् ॥३४॥
नित्यं स्नात्वाऽर्चयति स्म श्रीकृष्णपुरुषोत्तमम् ।
मण्डपं कदलीस्तम्भैः शोभितं तोरणादिभिः ॥३५॥
कारयित्वा नवं नित्यं पूरयित्वा च मण्डलम् ।
सप्तधान्यमयं श्रेष्ठं सर्वतोभद्रनामकम् ॥३६॥
कारयित्वा च सौवर्णीं मूर्तिं श्रीपौरुषोत्तमीम् ।
उपचारैर्बहुविधैः पुपूज बहुमानतः ॥३७॥
मध्याह्ने भोजनं चापि षट्पंचाशद्विधं ददौ ।
सायं नीराजयित्वा च नृत्यति दासिकायुता ॥३८॥

एवं करोत्यनुदिनं पुरुषोत्तमस्य,
तोषाय मानमहतं विगणय्य राज्ञी ।
कृष्णोऽपि नृत्यमवलोक्य सुकण्ठमिश्रं,
तुष्टो भवत्यपि न दृष्टिपथं प्रयाति ॥३९॥

दम्पती तौ तथावृत्तौ नित्यभक्तौ हरिप्रियौ ।
तृतीयायाः प्रगे त्वाकर्णयामासतुरैश्वरीम् ॥४०॥
घोषणां दुन्दुभिप्रोक्तां महाश्चर्यकरीं यथा ।
श्रृण्वन्तु नागरास्तद्वदारण्यका दिवौकसः ॥४१॥
नरा नार्यश्च श्रृण्वन्तु वच्मि श्रीपुरुषोत्तमः ।
ब्रह्मधामेश्वरः साक्षादधिमासाधिदैवतः ॥४२॥
परपक्षतृतीयाया व्रतं तु श्रद्धयान्वितम् ।
करिष्यन्ति नरा नार्यो मम पूजनपूर्वकम् ॥४३॥
एकभुक्तेन नक्तेन फलेनाऽयाचितेन वा ।
राजानो यदि वा राज्ञ्यः प्राप्स्यन्ति परमं पदम् ॥४४॥
प्राप्स्यन्ति धर्मकामार्थमोक्षान् लोकानभीप्सितान् ।
पुत्रपौत्रादिवंशांश्च कुलविस्तारसद्यशः ॥४५॥
ऐश्वर्याणि समग्राणि प्राप्स्यन्ति मद्व्रतेन वै ।
गृह्णन्त्वेकदिवसस्य व्रतेन शाश्वतं सुखम् ॥४६॥
परमौदार्यसम्पन्नो दास्येऽहं पुरुषोत्तमः ।
कृष्णनारायणः सर्वसम्पदामस्मि योजकः ॥४७॥
अद्य भोजनदानेन दास्ये नवनिधीन् ध्रुवान् ।
अद्य सुवर्णदानेन दास्ये कुबेरगद्दिकाम् ॥४८॥
अद्य रसप्रदानेन दास्ये वारुणसत्पदम् ।
अद्य रत्नप्रदानेन दास्ये सुरेन्द्रतां शुभाम् ॥४९॥

अद्य पुण्यप्रदानेन दास्ये वै धर्मराजताम् ।
अद्य धनप्रदानेन दास्येऽष्टवसुविग्रहान् ॥५०॥
अद्य सर्वस्वदानेन दास्येऽष्टसिद्धिवैभवान् ।
अद्य दीपप्रदानेन दास्ये त्रिलोकनेत्रताम् ॥५१॥
अद्य पयःप्रदानेन दास्ये शीतामृतात्मताम् ।
अद्यान्नजलदानेन दास्ये साम्राज्यमर्थवत् ॥५२॥
अद्य रथादिदानेन दास्ये स्वर्गविमानकम् ।
अद्य वस्त्रप्रदानेन दास्ये वार्ध्यम्बरां क्षितिम् ॥५३॥
अद्य कन्यादिदानेन दास्ये सहस्रयोषितः ।
अद्य गवां प्रदानेन दास्ये पृथ्वीं रसान्विताम् ॥५४॥
अद्य गृहप्रदानेन दास्ये ब्रह्माण्डगह्वरम् ।
अद्य फलप्रदानेन दास्ये कल्पद्रुमावलिम् ॥५५॥
अद्य भूषाप्रदानेन दास्ये स्वर्गं सुभूषितम् ।
अद्य मे पूजया दास्ये त्रिलोकिपूज्यतां सदा ॥५६॥
यद्यदिच्छन्तु मे भक्तास्तत्तद् दास्ये न संशयः ।
दुन्दुभिस्त्वेवमाख्याय क्षणं मौनो बभूव ह ॥५७॥
राजा ब्रह्मसविता च भूरिश्रृंगा च तत्प्रिया ।
नत्वा तं दुन्दुभिं पूजां ददौ कृष्णप्रदूतकम् ॥५८॥
अधिमासे परपक्षे तृतीयायास्तु दम्पती ।
चकार व्रतमेकान्नं भुक्त्वा द्युमणिवाञ्छया ॥५९॥
चातुर्मास्ये दीपदाने सूर्यो भवामि केशव ।
सपत्नीकस्त्रिलोकानां नेत्रात्मा संभवाम्यहम् ॥६०॥
एवं संकल्प्य राजाऽसौ तत्पत्नी चक्रतुर्व्रतम् ।
प्रातः स्नात्वा हरिं स्मृत्वा ध्यात्वेष्टरूपमुज्ज्वलम् ॥६१॥
मण्डपे मण्डले कृष्णनारायणं घटे शुभे ।
आरोप्याऽऽनर्चतुर्भक्त्या सौवर्णं पुरुषोत्तमम् ॥६२॥
पञ्चामृतैः शुद्धवार्भिः संस्नाप्याऽऽदिश्य चाम्बरे ।
भूषाः पुष्पाणि हाराद्यान् समर्प्याऽथ चन्दनैः ॥६३॥
धूपदीपादिभिर्देवं संपूज्याऽक्षतकुंकुमैः ।
षट्पंचाशद्विधं त्वन्नं मिष्टं मृष्टं जलं फलम् ॥६४॥
अर्पयामासतुश्चोभौ भक्त्या श्रीपुरुषोत्तमम् ।
नीराजयामासतुश्च चक्रतुः सुप्रदक्षिणम् ॥६५॥
दण्डवन्नमनं कृत्वा चक्रतुः स्तवनं ततः ।
पुष्पांजलिं ददतुश्च प्रार्थयामासतुः क्षमाम् ॥६६॥
मध्याह्नेऽपि तथा सायं रात्रौ चक्रतुरर्चनम् ।
नृत्यं सजागरं तत्र चक्रतुर्बहुमानवैः ॥६७॥
प्रादुर्बभूव भगवान् सर्वतेजोनिधिर्हरिः ।
पूजया च व्रतेनापि चातुर्मास्यव्रतेन च ॥६८॥
दीपदानेन सर्वत्र प्रसन्नोऽस्म्यतिभक्तितः ।
तवेष्टं यत् त्रिलोकानां नेत्रस्थानं महत्तमम् ॥६९॥
दास्ये त्वम्बरसूर्यत्वं सभार्यस्त्वं रविर्भव ।
इत्याख्याय हरिस्तस्मात् स्थानादन्तर्हितोऽभवत् ॥७०॥
कृत्वा ब्रह्मसविता च नृत्यं प्रजागरं तथा ।
भूरिश्रृंगासहितः सः प्रातर्दानानि सन्ददौ ॥७१॥
मणिरत्नानि च गाश्च महिषीर्गजवाजिनः ।
अजाऽविकास्तथा स्वर्णरूप्यपात्राम्बराणि च ॥७२॥
दासदासीश्च पर्यंकान् गृहाणि भवनानि च ।
क्षेत्राणि वाटिकाश्चैवोद्यानानि च वनानि च ॥७३॥
अन्नानि कूपवापीश्च भूमिं कार्पासकानि च ।
कौशेयानि तथौर्णानि ददौ चानर्घ्यकाणि सः ॥७४॥
ब्राह्मणीभ्यस्तु श्रृंगारवस्तूनि विविधानि च ।
यतिभ्यस्तु बृसीपात्रकमण्डल्वादिकानि च ॥७५॥
गृहस्थेभ्यस्तु गार्हस्थ्ययोग्यवस्तूनि सन्ददौ ।
क्षुधितेभ्यो ददौ भोज्यं तृषितेभ्यो जलं ददौ ॥७६॥
तत्तत्सुखार्थिकेभ्यः स ददौ तत्सुखसाधनम् ।
अर्थिभ्यः प्रददौ त्वर्थान् सर्वं ददौ तु शार्ङ्गिणे ॥७७॥
एवं लक्ष्मि ! कृतं ब्रह्मसवित्रा दानमुत्तमम् ।
कृतं तथैव च भूरिश्रृंगया पतिसम्मतम् ॥७८॥
भोजयित्वाऽथ साध्वादीन् भोक्तुं याति च दम्पती ।
तत्राऽऽयातस्तदा भिक्षुरूपः श्रीपुरुषोत्तमः ॥७९॥
स्वर्णरेखात्मिका लक्ष्मीः राजते यस्य वक्षसि ।
पाण्डुराऽङ्कमयी श्रीश्च राजते सक्थिन वामके ॥८०॥
करे दक्षे ध्वजो मत्स्यः स्वस्तिकश्च धनुस्तथा ।
राजन्ते पद्मपत्राक्षतेजःपरिधिकस्य वै ॥८१॥
दृष्ट्वा राज्ञी नृपो भिक्षुं ज्ञात्वांऽकैस्तु नरायणम् ।
भोजयित्वा पादसंवाहनं चक्रतुरादरात् ॥८२॥
तावद् द्वयोस्तत्र मूर्तौ जातः समाधिरान्तरः ।
दृष्टं ब्रह्मसवित्रा तु सूर्याख्यं गोलकं महत् ॥८३॥
तत्र हिरण्मयं स्वस्य वर्ष्म दृष्टं परात्परम् ।
येन तेजोमयं सर्वं जगद् याति प्रकाशिताम् ॥८४॥
दृष्टं संज्ञास्वरूपं च स्वस्या वै भूरिश्रृंगया ।
हिरण्मयीं सूर्यपत्नीं दृष्ट्वा तुष्टिं जगाम सा ॥८५॥
हरिस्तिरोभवत् तावदुत्थितौ तौ समाधितः ।
आश्चर्यचकितौ जातौ मेनाते पूर्णमानसौ ॥८६॥
सेवेते स्म सदा कृष्णं प्रतीक्षेते स्म सूर्यताम् ।
तावद् बभूव कल्पस्य निधनं क्रमयोगतः ॥८७॥

राजा राज्ञी लयं यातौ प्राप्तौ सुदिव्यविग्रहौ ।
यानेन सूर्यकान्तेन ययतुश्च महस्स्तरम् ॥८८॥
निशां तु क्षपयित्वा तौ कल्पादौ सर्जनान्वये ।
सूर्यरूपो बभूवाऽयं ब्रह्मसवितृभूपतिः ॥८९॥
तत्पत्नी भूरिश्रृंगा च बभूव विश्वकर्मजा ।
संज्ञानाम्नी सुता सा च पित्राऽर्पितांऽशुमालिने ॥९०॥
भूरिश्रृंगासवितारौ संज्ञासूर्यौ बभूवतुः ।
सर्वनेत्रप्रदौ देवौ कोऽन्यो लभेद् रवेः पदम् ॥९१॥
इतिप्राप्तौ परं स्थानं यावत्स्वर्गे प्रकाशते ।
दीपदानप्रभावेण तृतीयाया व्रतेन च ॥९२॥
तस्माद् दीपाः प्रदातव्या देवालयेषु नित्यदा ।
अनन्धत्वं प्रकाशित्वं दिव्यत्वं तेन चाप्नुयात् ॥९३॥
यथा ब्रह्मसविता स प्राप्तवान् सूर्यतां नृपः ।
श्रोतुर्वक्तुः कथायाश्च लाभो वै तादृशो भवेत् ॥९४॥
इति ते कथितं लक्ष्मि! सूर्यनारायणीयकम् ।
आख्यानं परमं दिव्यं पावनं पुण्यदं हितम् ॥९५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पुरुषोत्तममासमाहात्म्ये पूर्वकल्पीयस्य ब्रह्मसवित्राख्यराज्ञो भूरिश्रृंगाख्यपत्नीसहितस्य द्वितीयपक्षतृतीयाया व्रतेन दीपादिविविधदानेन च सूर्यनारायणतायाः संज्ञाभिधपत्नीप्राप्तिसहिताया लब्धिरितिनिरूपण-नामा दशाऽधिकत्रिशततमोऽध्यायः ॥३१०॥

**श्रीनारायण उवाच—**

श्रूयतां च त्वया लक्ष्मि! पूर्वकल्पोद्भवा कथा ।
सौराष्ट्रे रैवतभूमौ समित्पीयूषनामकः ॥ १ ॥
राजा बभूव तत्पत्न्यो बभूवुः सप्तविंशतिः ।
ऊर्जाहुतिः पुष्करिणी पद्मपत्रा करीषिणी ॥ २ ॥
विश्वप्रियाऽऽदित्यवर्णा हरिणी हेममालिनी ।
वसुधीतिर्वह्निशिखा पद्माक्षी पद्ममालिनी ॥ ३ ॥
प्रभासा जगती पंक्तिर्बृहतीडा पिशंगिनी ।
सुषुम्णा च पुरीततिर्विश्वार्चिः पद्मनेमिका ॥ ४ ॥
हिरण्यवर्णा चन्द्रा च पद्मवर्णा च वम्रिका ।
विद्युल्लेखा च ताः सर्वाः पातिव्रत्यपरायणाः ॥ ५ ॥
कुर्वन्त्यो भगवद्भक्तिं दानधर्मपरायणाः ।
अतिथीनां च सत्कारं कुर्वन्त्यो भावपूर्वकम् ॥ ६ ॥

स्नानं ध्यानं देवपूजां जपं कुर्वन्ति चादरात् ।
होमं दैवं तथा पैत्र्यं भौतं कुर्वन्ति सत्क्रतुम् ॥ ७ ॥
आश्रितान् भोजयित्वैव भुञ्जन्ति च पिबन्ति च ।
शतसाहस्रदासीषु सतीष्वपि स्वहस्तकैः ॥ ८ ॥
विष्णोः सेवां धवसेवां कुर्वन्ति स्वीयधर्मतः ।
विष्णोरर्थे पाचनं च तण्डुलादिविशोधनम् ॥ ९ ॥
कण्डनं वारिभरणं गृहमार्जनमित्यपि ।
पात्राणां देवपूजाया घर्षणं क्षालनादिकम् ॥१०॥
तुलसीपत्रपुष्पाणामाहृत्याद्यं च ताः सदा ।
कुर्वन्त्येव महाभक्त्या नान्यद्वारा कदाचन ॥११॥
हर्यर्थं खलु भक्तानां किमकार्यं भवेन्ननु ।
सर्वस्वं त्वर्पितं यत्र वर्ष्मणा किं न जायते ॥१२॥
अनित्येन तु देहेन नित्यं पुण्यं समर्जयेत् ।
येन भुक्तिस्तथा मुक्तिः कृष्णस्य कृपया भवेत् ॥१३॥
स एव सर्वथा वन्द्यः पूज्यस्तोष्यः परेश्वरः ।
यस्मात् सर्वं प्रभवति भोग्यं भोज्यं सुखादिकम् ॥१४॥
सम्पत् स्मृद्धिर्धनं पत्नी पतिः सुतसुतादिकम् ।
क्षेत्रं स्वर्गं महाराज्यं यस्मात्तं वै भजेद् बुधः ॥१५॥
यावत् स्वास्थ्यं भवेद् देहे वश्यमिन्द्रियमण्डलम् ।
जाठराग्निर्युवा पक्वा. दैहिके सानुकूलता ॥१६॥
तावदात्महितं साध्यं काम्यं वा कामवर्जितम् ।
परमेशपदं नित्यानन्दपूर्णं तु शाश्वतम् ॥१७॥
विगमे विकले भावे न स्याद्वै दर्शनादिकम् ।
श्रीहरेस्तत् सदा कार्यं दर्शनं चक्षुषा मुदा ॥१८॥
विकर्णे बधिरे भावे न स्यान्नामश्रवो हरेः ।
सुगमे साऽनुकूलेऽस्मिन् कार्यं श्रवणमाच्युतम् ॥१९॥
वृकणे वा विकले सेवा न भवेद्वै सतां हरेः ।
सुबले सानुकूले च हस्ते सेव्यो हरिः स्वयम् ॥२०॥
प्रबले सुगमे पादे गम्यं मन्दिरमैश्वरम् ।
अनुद्विग्नेऽप्रमत्ते च मानसे वाजसंभृते ॥२१॥
मन्तव्यो भगवान् कृष्णनारायणः सुखप्रदः ।
अन्तरात्मा स्वात्मना वै समुपास्यः सदा प्रभुः ॥२२॥
भग्ने तु नगरे सर्वे त्यक्त्वा यास्यन्ति विष्टयः ।
दृढपादात्मके तत्र साध्यः श्रीपुरुषोत्तमः ॥२३॥
एवं निर्णीय सर्वास्ताः समित्पीयूषयोषितः ।
सेवन्ते श्रीहरिं नित्यं मन्दिरे निर्मिते शुभे ॥२४॥
समित्पीयूषनृपतिश्चक्रे त्रिषवणं सदा ।
त्रिकालं प्रार्चनं कृष्णनारायणस्य सन्दधे ॥२५॥

एवं वै वर्तमानानां तासां कालो महान् गतः ।
तत्कल्पे कार्तिककृष्णाष्टमी कृष्णाष्टमी ह्यभूत् ॥२६॥
दीपोत्सवतिथेः पूर्वं सप्ताहव्यवधानिकी ।
इषपूर्णां समारभ्य चक्रुस्ता एकभुक्तकम् ॥२७॥
अष्टम्यामुपवासं च चक्रुस्ता निर्जलं मुदा ।
पुरुषोत्तमसंज्ञस्य कृष्णस्य प्रतिमां शुभाम् ॥२८॥
कानकीं कारयित्वा च तथा कृष्णस्य मातरम् ।
कंभराख्यां कानकीं च कारयित्वा च तास्तथा ॥२९॥
गोपालं कृष्णपितरं कारयित्वा तु कानकम् ।
मण्डपं कारयित्वा चाऽऽनर्चुः श्रीपुरुषोत्तमम् ॥३०॥
नृत्यं सवाद्यं चक्रुस्ताः कण्ठस्वरविमिश्रितम् ।
तावदाविर्बभूव श्रीकृष्णनारायणो हरिः ॥३१॥
चतुर्भुजः कौस्तुभाढ्यः पीताम्बरादिकाम्बरः ।
नवीनजलदश्यामः श्वेतकान्तिविराजितः ॥३२॥
दृष्ट्वाऽऽश्चर्यं तु ताः प्रापुः क्षणं श्रीपुरुषोत्तमम् ।
ततस्ता मुमुहुस्तत्र दिव्यमूर्तौ मनोहरे ॥३३॥
दिव्याऽऽभूषादि चानीयाऽर्पयामासुः ससंभ्रमाः ।
ऊर्जाहुती ददौ तस्मै पौरटं मुकुटं तदा ॥३४॥
पुष्करिणी ददौ तस्मै पौरटे कुण्डले शुभे ।
पद्मपत्रा तल्ललाटे चक्रे पुण्ड्रं तु चान्दनम् ॥३५॥
करीषिणी दृशोस्तस्य चक्रे सत्कज्जलांजनम् ।
विश्वप्रिया स्वर्णपुष्पहारान् ददौ तु शार्ङ्गिणे ॥३६॥
आदित्यवर्णा प्रददौ कटके भुजबन्धकौ ।
हरिणी त्वर्पितवती ह्यूर्मिकाः कानकीर्नवाः ॥३७॥
हेममालिनी प्रददौ रशनां श्रृंखलां शुभाम् ।
वसुधीतिर्ददौ स्वर्णनूपुरौ किंकिणीयुतौ ॥३८॥
वह्निशिखाऽर्पितवती पादुके स्वर्णनिर्मिते ।
पद्माक्षी प्रददौ यज्ञोपवीतं योगपट्टकम् ॥३९॥
पद्ममालिनी प्रददौ मिष्टान्नं शाकपायसम् ।
प्रभासा प्रददौ तस्मै पानाय शीतलं जलम् ॥४०॥
जगती त्वर्पितवती फलं ताम्बूलकं तथा ।
पंक्तिर्ददौ सुगन्धं च पुष्पसारं च धूपकम् ॥४१॥
बृहती प्रददौ तस्मै घृतदीपं सुमंगलम् ।
इडा छत्रं दधाराऽस्य शिरसि स्वर्णभास्वरम् ॥४२॥
सुषुम्णा पिंगला श्वेते दध्यतुश्चामरे ह्युभे ।
पुरीतत् व्यजनं धृत्वा करोति पवनार्पणम् ॥४३॥
विश्वार्चिर्नक्तकं रम्यं कृष्णहस्ते ददौ तदा ।
पद्मनेमिर्ददौ पुष्पगुच्छं कृष्णकरे तदा ॥४४॥
हिरण्यवर्णा प्रददौ चक्रं सहस्रनेमिकम् ।
चन्द्रा ददौ कृष्णहस्ते पद्मं सुवर्णनिर्मितम् ॥४५॥
पद्मवर्णा ददौ शंखं वम्री ददौ तदा गदाम् ।
विद्युल्लेखा ददौ चास्मै चूम्बनं परमात्मने ॥४६॥
सा सर्वाभ्यो बभूवाऽतिप्रेमपात्रं परात्मनः ।
तत्पुण्येनाऽत्यधिकं सा पत्युः प्रेमास्पदा पुनः ॥४७॥
चन्द्रपत्नी रोहिणी सा जन्मान्तरे बभूव वै ।
इत्येवं तूपदाः दत्वाऽऽरार्त्रिकं ताश्च चक्रिरे ॥४८॥
अन्यास्तु चूम्बनं दृष्ट्वा लज्जां हृत्सु प्रपेदिरे ।
फलं तासां नातिमानं चन्द्रात् तास्तु प्रपेदिरे ॥४९॥
दासी सर्वजितानाम्नी पादसंवाहनं व्यधात् ।
सा तु सेवापरा यस्मात् स्नेहपात्रं तदाऽभवत् ॥५०॥
पुष्पाऽक्षताञ्जलीन् चार्घ्यं ताश्च सर्वा ददुस्ततः ।
प्रदक्षिणनमस्कारस्तवनाद्यं प्रचक्रिरे ॥५१॥
कृष्णस्त्वतिप्रसन्नश्च ददौ प्रसादपायसम् ।
गृहीत्वा तृप्तिमापन्ना दध्युस्तं हृदयाम्बुजे ॥५२॥
कृष्णः प्राह तु ता देवीर्भवन्त्वमृतभोजनाः ।
स्वर्णरत्नमणिहारा दिव्या दिवि कृतगृहाः ॥५३॥
इत्याशिषः प्रदायैवाऽदृश्यो बभूव केशवः ।
तास्तु पूजां समाप्यैव पतिं प्राहुरुदन्तकम् ॥५४॥
अतितुष्टो बभूवापि समीत्पीयूषभूपतिः ।
नित्यं पत्नीयुतः स्वर्गं वाञ्छति पूजनोत्तरम् ॥५५॥
पत्न्यश्चापि तु वाञ्छति कृष्णोक्तं नाकमैश्वरम् ।
एवं काले गते कल्पप्रान्ते कृष्णस्य वै श्रुतः ॥५६॥
दुन्दुभिर्घोषणां कुर्वन् पुरुषोत्तमशासनाम् ।
श्रृण्वन्तु वै नरा नार्यो देवा देव्योपि मद्वचः ॥५७॥
यासां येषां यथेष्टं यद् दास्यामि तत्तथाविधम् ।
पुरुषोत्तमसंज्ञोऽहं परंब्रह्म सनातनः ॥५८॥
प्रवदामि कृपया वै विना पुण्यस्य तोलनम् ।
स्वल्पे कृतेऽप्यसंख्यातं फलं ददामि सर्वथा ॥५९॥
ये जना मे फलं पुष्पं पत्रं चन्दनमक्षतान् ।
अर्पयिष्यन्त्यधिमासे चतुर्थ्यां काम्यकर्मकृत् ॥६०॥
तेषां तु कामनाः सर्वाः पूरयिष्ये पुमुत्तमः ।
सर्वं मेऽस्ति मयि सर्वं मया व्याप्तं चराचरम् ॥६१॥
नातिरिक्तं स्वतन्त्रं वै किञ्चिदस्ति जडाजडम् ।
जडं चाप्यजडं तत्त्वं मदीयं त्वस्ति सर्वथा ॥६२॥
मोक्षस्थानानि सर्वाणि सिद्ध्यैश्वर्यस्थलान्यपि ।
विभूतयश्चेश्वराणां देवानां च पदानि वै ॥६३॥

मानवानां तथा पातालस्थानां च समृद्धयः ।
सर्वं त्वस्ति ममैवेदं यदिच्छन्तु ददाम्यहम् ॥६४॥
पुरुषोत्तममासस्य व्रतं पाक्षिकमाह्निकम् ।
नैशं वापि कृतं येन तस्य किञ्चिन्न दुर्लभम् ॥६५॥
राजा यथाबलं कुर्याद् व्रतं दानं च पूजनम् ।
प्रजा यथाधनं कुर्याद् व्रतं दानं समर्पणम् ॥६६॥
नरो नारी यथाधर्मं कुर्यान्मेऽधिकमासिकम् ।
व्रतं ते मे जनं बाहं विस्मरामि कदाचन ॥६७॥
अद्य कालान्तरे वापि यथातोषं फलं बहु ।
ददाम्येव न सन्देहो न मे भक्तोऽफलो भवेत् ॥६८॥
सकामस्य कृते स्वर्गादयो लोकाः कृता मया ।
अकामस्य कृते ब्रह्मलोकोऽस्ति रक्षितो मया ॥६९॥
सर्वेषु सुखबाहुल्यं ब्रह्मलोके त्वनन्तकम् ।
ददाम्याश्रितभक्ताय मदर्थे व्रतकारिणे ॥७०॥
नात्र मूल्यं स्वकृतस्य मूल्यं तु वचसो मम ।
वचो मम धृतं येन फलं तस्याऽप्यनन्तकम् ॥७१॥
नहि वृष्टिप्रदे यज्ञे कृते वृष्टिर्हि तादृशी ।
यादृशी घनकाले स्यादमाना चाप्यनन्तका ॥७२॥
स्वयं वर्षामि भगवान् श्रीहरिः पुरुषोत्तमः ।
कृपया घनरूपोऽहं पुरुषोत्तममासि वै ॥७३॥
यथापात्रं यथापेक्षं प्रगृह्णन्तु मयाऽर्पितम् ।
वल्लफाले फलं कृत्वा विकीर्यतेऽनु यान्तु तत् ॥७४॥
पुरुषोत्तममासस्य करिष्यन्ति प्रशंसनम् ।
येऽपि तेऽप्यर्जयिष्यन्ति यथेष्टं सुखमुत्तमम् ॥७५॥
पुरुषोत्तममासस्य व्रतार्थे त्वन्यदेहिनाम् ।
अनुमोदं प्रदास्यन्ति तेऽपि स्वःसुखभागिनः ॥७६॥
अधिमासे व्रतकर्तुः साहाय्यं ये तु मानवाः ।
करिष्यन्ति च तेभ्योऽपि दास्ये यथेप्सितं सुखम् ॥७७॥
किमु स्याद् दुर्लभं चाधिमासे भक्तस्य मे खलु ।
धाम दास्ये धनं दास्ये दारान् दास्ये सुतान् पशून् ॥७८॥
पतिं दास्ये सुतां दास्ये गां राज्यं चिरजीविताम् ।
आरोग्यं चेन्द्रियानन्दं दास्येऽपि शाश्वतं सुखम् ॥७९॥
इति वै दुन्दुभिं श्रुत्वा समित्पीयूषभूपतिः ।
तत्पत्न्यश्चातिभक्तिस्था अपि वै सप्तविंशतिः ॥८०॥
दासी च दुन्दुभिं नत्वाऽक्षतपुष्पफलादिभिः ।
सम्पूज्य चक्रिरे कर्तुं चतुर्थीव्रतमुत्तमम् ॥८१॥
प्रातः पूजां हरेः कृत्वा मध्याह्नेऽपि सभोजनम् ।
पूजनं कारयित्वैव सायं चक्रुः प्रपूजनम् ॥८२॥
पायसं पूरिका भोजयित्वाऽऽरार्त्रिकमादधुः ।
नृत्यगीतप्रवाद्यैश्चक्रिरे जागरणं निशि ॥८३॥
प्रातः स्नात्वा कृष्णनारायणं सम्पूज्य भावतः ।
दानं ददुस्तु रत्नानां रसानां समिधां तथा ॥८४॥
हविष्याणां चामृतानां मिष्टान्नानां च दक्षिणाः ।
स्वर्णरूप्यात्मिकाश्चापि फलवस्तूनि वै ददुः ॥८५॥
चन्द्रकान्तान् ददुः सौम्यान् शीतलान् स्वर्णदान् ददुः ।
तदा विप्रस्वरूपेण श्रीकृष्णः पुरुषोत्तमः ॥८६॥
समाजगाम सत्पात्रं भूत्वा रत्नाभिलाषुकः ।
समित्पीयूषनृपतिस्तदा सर्वप्रियायुतः ॥८७॥
ददौ रत्नाढ्यमालां च नमश्चक्रेऽतिभावतः ।
विप्रः प्राह वरं राजन् याचस्व भविता तथा ॥८८॥
समित्पीयूष आकर्ण्य वव्रे चान्द्रं सुराज्यकम् ।
सुधावर्षित्वरूपं वै ययाचे समिधां कृते ॥८९॥
पत्न्यश्चापि तथा चन्द्रपत्नीत्वं वव्रिरे दिवि ।
तथास्त्विति वरं दत्वा तिरोबभूव भूसुरः ॥९०॥
कल्पान्ते प्रलयं प्राप्य सृष्ट्यादौ स तु भूपतिः ।
समित्पीयूषनाम्नोऽर्थे सार्थं कुर्वन् हरिच्छया ॥९१॥
अमृतांशुश्चौषधीनां पोषकश्चन्द्रमा दिवि ।
बभूव तस्य पत्न्यश्च दक्षपुत्र्यः प्रजज्ञिरे ॥९२॥
दक्षेण विधिना दत्तास्तस्मै ताः सप्तविंशतिः ।
विद्युल्लेखा बभूवाग्र्या रोहिणीनामतः प्रिया ॥९३॥
अन्याश्चापि मृगशीर्षा ह्यार्द्रा पुनर्वसुस्तथा ।
पुष्याऽऽश्लेषा मघा पूर्वफाल्गुन्युत्तरफाल्गुनी ॥९४॥
हस्तिश्चित्रा तथा स्वाती विशाखा चानुराधिका ।
ज्येष्ठा मूला पूर्वषाढोत्तराषाढा श्रवात्मिका ॥९५॥
धनिष्ठा शतभीषा च पूर्वभाद्रपदा तथा ।
उत्तरभद्रिका चैव रेवती त्वश्विनी तथा ॥९६॥
भरणी कृत्तिका चेति मिलिताः सप्तविंशतिः ।
बभूवुश्च दिवि चन्द्रपत्न्यो देव्योऽमृतप्रदाः ॥९७॥
दासी देवयुतीनाम्नी जाताऽभिजित्समाह्वया ।
मध्याह्नेऽस्याः कृतो वासः सर्वकार्यजयप्रदः ॥९८॥
आकल्पं ताश्च वर्तन्ते चतुर्थ्या व्रतपुण्यतः ।
तस्मात् कार्यमधिवासोऽपरचतुर्थ्युपोषणम् ॥९९॥

एकभुक्तं च वा नक्तं फलाहारं ममार्चनम् ।
श्रोता वक्ता तथा चास्य चतुर्थीव्रतभाग्भवेत् ॥१००॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पुरुषोत्तममासमाहात्म्ये समित्पीयूषराज्ञस्तत्सप्तविंशतिपत्नीनां दुन्दुभिश्रवणोत्तरं द्वितीयपक्षचतुर्थीव्रतकरणेन दिवि चन्द्रराज्यनक्षत्रराज्यप्राप्तिर्दास्या अभिजित्त्व-प्राप्तिश्चेत्यादिनिरूपणनामा एकादशा-धिकत्रिशततमोऽध्यायः ॥३११॥

**श्रीनारायण उवाच—**

श्रूयतां च त्वया लक्ष्मि ! कथा प्राक्सृष्टिसंभवा ।
वसुधानाख्यनृपतेः राध्यासायाश्च योषितः ॥ १ ॥
पूर्वसृष्ट्यन्तिमे काले नृपो बभूव दक्षिणे ।
वसुधानो महाभक्तो महादेवस्य सेवकः ॥ २ ॥
राध्यासा तस्य पत्नी च महादेवस्य सेविका ।
आराधनां महादेवात्मकस्य स्वामिनः सदा ॥ ३ ॥
करोत्यभिन्नभावेन पातिव्रत्यपरायणा ।
नित्यं प्रातः स्वयं स्नात्वा पतिं स्नापयति प्रभुम् ॥ ४ ॥
महादेवं विविधैस्तु जलैर्दुग्धादिभिस्तथा ।
पत्रं पुष्पं फलं वस्त्रं सर्पं च शर्करां जलम् ॥ ५ ॥
आरार्त्रिकं चन्दनं च धूपं दीपं समर्प्य सा ।
वसुधानस्य सेवायां दासीव समतिष्ठति ॥ ६ ॥
राजाऽपि प्रातराज्ञाय त्यक्त्वा निद्रां मुहूर्तकम् ।
ध्यात्वा श्रीशंकरं ब्रह्म स्नानं पूजां करोति च ॥ ७ ॥
हृदि ध्यानं तथा पूजां शंभोः कृत्वा विभज्य च ।
अन्नादिकं स्वाश्रितेभ्यो भुंक्तेऽन्नं स्त्रीयुतो नृपः ॥ ८ ॥
राज्यकार्यं प्रजाकार्यं कुरुतस्तौ कृपान्वितौ ।
देवकार्यं दानकार्यं कुरुतो नित्यमात्मवत् ॥ ९ ॥
ददतोऽन्नं भिक्षुकेभ्यो वस्त्राणि तदपेक्षिणे ।
पात्राणि दानपात्राय धनानि च फलानि च ॥१०॥
दानशब्दस्तयोर्द्वारि विरामं याति नैव ह ।
दानक्रियापि च शान्ता नैव भवत्यहर्निशम् ॥११॥
यज्ञानां ब्राह्मणानां च साध्वीनां च सतामपि ।
तयोर्गृहेऽर्हणां शंभोरहर्निशं प्रजायते ॥१२॥
गवां दानं रसदानं मिष्टदानं पुनः पुनः ।
कुरुतस्तौ पतिपत्न्यौ तुष्टा यथाऽर्थिनस्तथा ॥१३॥
न तद्राज्येऽवग्रहोऽस्ति वत्सरो न क्रतुं विना ।
न चोत्सवा विना कृष्णं विना शंभुं न कीर्तनम् ॥१४॥
प्रवर्तयामासतुस्तौ राज्ये धर्मान् शिवस्य वै ।
शिवालयेषु सर्वेषु पूजां कारयतश्च तौ ॥१५॥
ग्रामाधीशान् समाहूय सर्वांस्तौ विषयस्थितान् ।
आज्ञापयामासतुस्तौ पूजा देया शिवालये ॥१६॥
अन्यथा सत्यमेवेदं स नौ दण्ड्यो भविष्यति ।
पूजादानाच्छिवस्तुष्टो भविष्यति शिवायुतः ॥१७॥
घृतदीपास्त्वखण्डा वै तत्र देवाः शिवालये ।
यस्य यस्याभितो ग्रामं यावन्तश्च शिवालयाः ॥१८॥
तत्र तत्राऽखण्डदीपो द्योतनीयो नृपाज्ञया ।
नृपाज्ञाभंगकर्तुस्तु शिरश्छेदो भविष्यति ॥१९॥
नृपपूजा प्रदातव्या षोडशोपसुवस्तुभिः ।
न्यूनकर्तुस्तथा राजा शिरश्छेत्स्यत्यसंशयम् ॥२०॥
इति सर्वत्र ताभ्यां वै लक्ष्मि ! पूजा विनिर्मिता ।
तयोस्तु भयतो दीपा दीप्ताः प्रतिशिवालयम् ॥२१॥
जग्मतुस्तौ महाशंभुराज्यां दर्शनहेतवे ।
व्योमयानेन सर्वत्र राज्ये यत्र शिवालयाः ॥२२॥
आप्रातस्तौ तु सर्वत्र विधायाऽर्चनदर्शनम् ।
पुनरायात आवासं कुरुतः स्नानपूजनम् ॥२३॥
चिकीर्षतः पारणां तौ निषीदतः स्म यावता ।
तावत्तत्र समायातौ भिक्षुकौ तु शिवाशिवौ ॥२४॥
ज्ञात्वा वैक्षुधितौ साधू ददतस्तौ सुभोज्यकम् ।
रिक्तं तुलसीपत्रेण वीक्ष्याऽऽहतुस्तु तावुभौ ॥२५॥
नारायणप्रसादश्चेद् भोक्ष्यावहे पवित्रकम् ।
वैष्णवौ वैष्णवश्रेष्ठौ शिवाशिवौ न भोक्ष्यतः ॥२६॥
यदि प्रासादिकं न स्याच्छ्रीपुरुषोत्तमाऽर्पितम् ।
वैष्णवः परमो धर्मो वैष्णवत्वं परं तपः ॥२७॥
वैष्णवैस्तु कृतं दत्तं गृह्णीवोऽतीव भावतः ।
यदि वैष्णवदत्तं न गृह्णीवो न तु वै क्वचित् ॥२८॥
युवाभ्यामर्प्यते नित्यं पूजाभोजनदीपकम् ।
पश्यावो न तु गृह्णीवो गृह्णीवो ब्रह्मणेऽर्पितम् ॥२९॥
आत्मनिवेदिभक्तानां धर्मोऽयं सर्वदा मतः ।
ब्रह्मणेऽनर्पितं यत् तद्भोज्यं पेयं न वै क्वचित् ॥३०॥
वस्त्रं पत्रं फलं पुष्पं पयश्चान्नं तथाऽऽसनम् ।
औषधं कणमात्रं वा चूर्णं चर्वणमित्यपि ॥३१॥
अद्यं स्वाद्यं तथा खाद्यं भोग्यं धार्यं ममाऽर्ध्यकम् ।
मर्त्ये देयं तथाऽर्प्यं च सर्वं यद् ब्रह्मणेऽर्पितम् ॥३२॥
तद् गृह्णीवो न चाऽन्यद्वै धर्मोऽयं त्वावयोः सदा ।
सर्वं ब्रह्मार्पणं ग्राह्यं गृहवस्त्रधनादिकम् ॥३३॥

जडं यद्वा चेतनं वा स्वकीयं यद्धि मन्यते ।
तद्धै भगवते दत्वा शिष्टं भुञ्जीत भक्तराट् ॥३४॥
गृहस्तंभेषु वै वारि कुंभीषु मञ्जुलासु च ।
पेषणीषु च खट्वासु पर्यंकादिष्वपि गृहे ॥३५॥
तुलसीकण्ठिकां बद्ध्वा तूपयोक्तव्यमेव तत् ।
पशूनां पक्षिणां हर्म्यशाखिनां शकटस्य च ॥३६॥
वैष्णवत्वं विना नैव कर्तव्यमुपयोजनम् ।
अन्नानां त्वथ वस्त्राणां चक्राणां वाहनस्य च ॥३७॥
जीविकालोहभस्त्राणां कोशानां पण्यकस्य च ।
वैष्णवत्वमृते नैव कर्तव्यमुपयोजनम् ॥३८॥
वाद्यानां चापि शस्त्राणां हेतीनां वस्तुनामिनाम् ।
आत्मनिवेदिना कार्या भगवच्चिह्नयोगिता ॥३९॥
सुतः सुता धनं दारा दासा दास्यो गृहाणि च ।
पत्नी पतिः कुटुम्बं च सर्वं वै हरयेऽर्पयेत् ॥४०॥
अभक्ष्यं तदभोग्यं यद्धरये नाऽर्पितं भवेत् ।
भक्ष्यं भोग्यं तथा पेयं हरयेऽर्पितमेव यत् ॥४१॥
निबोधतं युवां तद्धै बदर्याश्रममुत्तमम् ।
प्रागहं प्राप्तवाँस्तत्र नारायणात्समन्त्रकम् ॥४२॥
वैष्णवत्वं ततो देव्यै पार्वत्यै च समन्त्रकम् ।
वैष्णवत्वं मया दत्तं गणेभ्यश्चापि सर्वथा ॥४३॥
मम पुत्रो गणेशस्तु श्रीकृष्णांशोऽस्ति वैष्णवः ।
स्कन्दोऽपि वैष्णवो जातो रुद्रा अपि च वैष्णवाः ॥४४॥
देव्यश्च वैष्णवीश्रेष्ठा नारायणपरायणाः ।
कैलासः सर्वथाऽभीष्टो वैष्णवोऽस्ति मया कृतः ॥४५॥
बदर्याश्रमयोगेन हिमालयोऽपि वैष्णवः ।
पितरो वैष्णवास्तेषां कन्या मेनाऽपि वैष्णवी ॥४६॥
क्षीरोऽपि सागरो विष्णुधारको वैष्णवः सदा ।
तत्पुत्री श्रीः रमा लक्ष्मीश्चन्द्रश्चैतेऽपि वैष्णवाः ॥४७॥
वामनस्य पदांगुष्ठस्पर्शा गंगापि वैष्णवी ।
वासुकिः शेषबन्धुश्च वैष्णवोऽस्ति मया धृतः ॥४८॥
त्रिशूलं सूर्यतो जातं द्वादशो विष्णुरर्कराट् ।
वृषभो गोकुलात्प्राप्तो गोलोके कृष्णभक्तराट् ॥४९॥
सिंहो नृसिंहवंशो यः स चास्ति वैष्णवो महान् ।
मेघा वैराजकेशाश्च वैष्णवा यज्ञपोषिताः ॥५०॥
मयूरो मेघमित्रं च पिच्छं मुकुटसंश्रितम् ।
कृष्णयोगान्मेघयोगाद् वैष्णवत्वं सदाऽस्ति वै ॥५१॥
किम्वधिकं प्रवक्ष्ये वै नृसिंहमस्तकं गले ।
दधन् वै वैष्णवश्चास्मि विष्णुभक्तोऽस्मि सर्वथा ॥५२॥
विष्णुर्वै व्यापकं ब्रह्म यत्तेजोऽहं सदाशिवः ।
बाणरूपोऽस्मि सञ्जातो ध्यायँस्तं मूर्तिमानपि ॥५३॥
सर्वात्मकं परंब्रह्म नारायणः परात्परः ।
तस्मादहं तथा सर्वं जायते तत्र लीयते ॥५४॥
ततो राजन् गृहाण त्वं वैष्णवं मनुमादरात् ।
अहं शंभुः प्रददामि राज्ञ्यै दास्यति पार्वती ॥५५॥
इत्यादिष्टो वसुधानो जग्राहाऽष्टाक्षरं मनुम् ।
कृष्णनारायणोऽव्यान्मामिति जग्राह शंकरात् ॥५६॥
तं च जग्राह राध्यासा राज्ञी वै पार्वतीमुखात् ।
जगृहतुश्च तुलसीकण्ठीं चन्द्रार्धपुण्ड्रकम् ॥५७॥
नारायणार्चनवारि प्रसादं चाच्युतस्य वै ।
आददाते तु तौ तत्र प्रजातौ वैष्णवौ ततः ॥५८॥
विष्णवे भोजनं पेयं तुलसीपत्रमिश्रितम् ।
निवेदयामासतुश्च ददतुश्चापि शंभवे ॥५९॥
पार्वत्यै ददतुश्चाऽथ जगृहतुश्च तौ मुदा ।
आदतुर्वारिपानं च चक्रतुर्वै सुखान्वितौ ॥६०॥
तृप्तौ बभूवतुश्चाति हर्षितौ वै शिवाशिवौ ।
आशीर्वादान् ददतुश्च धनवन्ता वखण्डितौ ॥६१॥
सुस्मृद्धौ शाश्वतराज्यौ भवतां भृत्यकोटिकौ ।
इति कृत्वा कथयित्वाऽदृश्यौ जातौ शिवाशिवौ ॥६२॥
राज्ञा राज्ञ्या च नित्यं श्रीकृष्णनारायणः प्रभुः ।
शिवात्माऽयं चेति भक्त्या पूज्यते वैष्णवीदिशा ॥६३॥
एवं ताभ्यां सदा कृष्णे पूजिते पुरुषोत्तमः ।
मासोऽतिदिव्यसमयः प्राप्तो व्येति दिनाद्दिनम् ॥६४॥
तावत् ताभ्यां परपक्षपञ्चम्यां दुन्दुभिः श्रुतः ।
शृण्वन्तु देवतनवो राजदेहाश्च मानवाः ॥६५॥
सुरा दिव्यसमृद्धाश्च स्थावरा जंगमाश्च ये ।
पुरुषोत्तममासस्याऽस्मि दुन्दुभिर्हरेः प्रियः ॥६६॥
हर्याज्ञयोद्घोषयामि मणिं कपर्दिकाफलम् ।
मासेऽत्रैकदिनकृच्छ्रात् प्राप्नुवन्तु वसुन्धराम् ॥६७॥
अलकां हेमनगरीं तथा भूमिं च कांचनीम् ।
गोलोकस्थां तथाऽन्येषां दिक्पालानां तु हाटकीम् ॥६८॥
राजधानीं तथा स्वर्णपुरीं हिरण्मयीं तनुम् ।
साम्राज्यं चापि वाऽन्यद्वै यथेष्टं यान्तु वै हरेः ॥६९॥
रसाधिपत्यं सौर्यं वा चान्द्रं गौरं पदं च वा ।
बार्हस्पत्यं तथैशानं त्वाग्नेयं वान्यदेव वा ॥७०॥
येषामिष्टं तु यद्वै स्याद् दास्ये तन्नात्र संशयः ।
अधिमासे तु सम्पूर्णे पाक्षिकं दैनिकं च वा ॥७१॥

व्रतं प्रपूजनं कृत्वाऽर्जयन्तु परमं सुखम् ।
परमेष्ठिपदं वापि वैराजं सत्यमित्यपि ॥७२॥
रौद्रं शैवं च वा ब्राह्मं वैष्णवं धाम चैत्यपि ।
गृह्णन्तु कृपया मेऽद्य पञ्चमीव्रतमात्रतः ॥७३॥
इत्युक्त्वा दुन्दुभिस्तत्र विररामाऽथ तावुभौ ।
नत्वा तं दुन्दुभिं ध्यात्वा श्रीकृष्णं पुरुषोत्तमम् ॥७४॥
पुपूजतुस्तं वाद्यं वै पुष्पाक्षतैस्तु कानकैः ।
अर्थयामासतुस्तत्र कांचनेयं पदं महत् ॥७५॥
तथास्त्वेवं दुन्दुभिश्च विचिन्त्य हृदये तदा ।
अन्यत्र प्रययौ तौ पञ्चमीव्रतं प्रचक्रतुः ॥७६॥
प्रातः स्नात्वा हरिं ध्यात्वा शंभुं नत्वा तथाऽऽदरात् ।
गुरुं प्रपूज्य विधिवच्चक्रतुर्नैत्यकार्चनम् ॥७७॥
मूर्तिं विधाय सौवर्णीं पुरुषोत्तमिरूपणीम् ।
आवाह्य तत्र च कृष्णनारायणं पुमुत्तमम् ॥७८॥
आचमनं प्रदायैव पञ्चामृतेन वारिणा ।
स्नापयामासतुस्तौ च मार्जयामासतुस्तथा ॥७९॥
मर्दयामासतुश्चैतौ चन्दनार्द्रसुगन्धिभिः ।
धारयामासतुश्चैव वस्त्राणि कानकान्यपि ॥८०॥
भूषयामासतुश्चापि मुकुटादि विभूषणैः ।
शृंगारयामासतुश्च कज्जलैः केसरादिभिः ॥८१॥
सुगन्धयामासतुश्च पुष्पधूपादिसारकैः ।
प्रकाशयामासतुश्च दीपनीराजनादिभिः ॥८२॥
प्रसादयामासतुश्च स्तुतिप्रदक्षिणादिभिः ।
क्षमापयामासतुश्चापराधानर्घ्यकार्पणैः ॥८३॥
सन्तर्पयामासतुश्च मिष्टान्नपायसादिभिः ।
सन्तोषयामासतुश्च ताम्बूलैलादिचर्वणैः ॥८४॥
एवं मध्याह्नसमये पूजयामासतुस्तथा ।
भोजयामासतुश्चापि निश्यप्येवं प्रचक्रतुः ॥८५॥
मण्डपं कदलीस्तंभैः पाल्लवैस्तोरणैस्तथा ।
सुमनोहारकैश्चापि कलशैर्दीपकैस्तथा ॥८६॥
रचयामासतू रम्यं पूरयामासतुश्च तौ ।
मण्डलं सर्वतोभद्रं मध्ये धान्यैर्नवैर्नवैः ॥८७॥
संस्थापयामासतुश्च सौवर्णं कलशं ततः ।
तत्र घटे पञ्चरत्नं जलं फलं तथाऽम्बरम् ॥८८॥
विन्यस्य तिलपूर्णां च स्थालीं दध्यतुरादरात् ।
तत्र मूर्तिं प्रतिष्ठाप्य पुपूजतुः सुवस्तुभिः ॥८९॥
स्नानं वस्त्रं चन्दनं कुंकुमं पुष्पाणि चाक्षतान् ।
विभूषणानि हारांश्च धूपं दीपं फलानि च ॥९०॥

आरार्त्रिकं स्तुतिं प्रदक्षिणां मिष्टान्नभोजनम् ।
जलं ताम्बूलकं पुष्पांजलिं चक्रतुरर्थनाम् ॥९१॥
नर्तनं गीतिकां वाद्यसहितां चक्रतुस्तदा ।
ततो जागरणे तत्र मध्यरात्रौ पुमुत्तमः ॥९२॥
कृष्णनारायणः साक्षाल्लक्ष्मीश्रीराधिकापतिः ।
पार्वतीमाणिकीस्वामी प्रभेशः पुरुषोत्तमः ॥९३॥
प्रेयसीश्रेयसीपाता श्रीजयाललितापतिः ।
अक्षराऽधिपतिर्मुक्तपतिर्गोपीपतिः प्रभुः ॥९४॥
सर्वपतिश्चान्तरात्मा मंगलायतनो हरिः ।
प्रादुर्बभूव सहसा विहसन् काशयन् दिशः ॥९५॥
प्राहाऽस्म्यतिप्रसन्नोऽहं पञ्चम्या व्रतवर्तनात् ।
वरदानं प्रयच्छामि वृणुतं यद्यथेप्सितम् ॥९६॥
भक्तौ मे वैष्णवौ जातौ तेनाऽस्म्यतिप्रतोषितः ।
ददामि मम सर्वस्वं किमन्यन्यत् सुदुर्लभम् ॥९७॥
श्रुत्वा नत्वा दण्डवच्च प्राहतुः पुरुषोत्तमम् ।
वसुधानश्च राध्यासा प्रभो नाऽविदितं तव ॥९८॥
चतुर्दशानां लोकानां धनाधिपत्यमल्पकम् ।
कांक्षावहे न तत्स्वामिन् रंकतुष्टिकरं हि तत् ॥९९॥
पारमेष्ठ्यपदं स्वामिन् कुंभकारक्रियामयम् ।
नेच्छावस्तत्पदं तस्मादैन्द्रं दैत्यप्रपीडनम् ॥१००॥
तत्पदानि न कांक्षावः कांक्षावस्तत्परं तु यत् ।
यावतामीश्वराणां वैराजादीनां परं तु यत् ॥१०१॥
महाविष्णोः परं यच्च हिरण्याधिपतेः पदम् ।
श्रीपुराख्यात्परं यच्च तेजो वैकुण्ठतः परम् ॥१०२॥
विष्णोर्वै स्थानतः श्रेष्ठं हिरण्याधिपतेः पदम् ।
माहाकौबेरकं पुंसो भूम्नः कोशमयं तु यत् ॥१०३॥
ईश्वराणां तु कोटौ तद् वर्तते यन्महत्तमम् ।
अनन्ताऽण्डकुबेराणां तृप्तिस्तस्य कणेन वै ॥१०४॥
जायते तन्महाराज्यं भूम्नः कोशाधिपात्मकम् ।
सर्वेशानां तु वै दिव्यहिरण्याऽऽप्तिर्यतोऽस्ति वै ॥१०५॥
तद्धिरण्याधिपत्यं वै समिच्छावः कृपाऽस्तु ते ।
भक्तानां तु कृते किञ्चिदधिकं स्वामिनोऽस्ति न ॥१०६॥
यद्ययुक्तं वाञ्छितं चेत् क्षम्यतां पुरुषोत्तम ।
नान्यत् कांक्षावहे कृष्ण तुष्टो यत्पुरुषोत्तमः ॥१०७॥
इत्यभ्यर्थ्य पादयोस्तौ पतितौ श्रीहरेस्तदा ।
तथास्त्विति हरिः प्राह प्राहापि पुनरेव तौ ॥१०८॥
वर्तमानस्य हैरण्याधिपतेरायुषः क्षये ।
सर्गान्तरे भवन्तो वै भविष्यथस्तथाविधौ ॥१०९॥

इत्युक्त्वा भगवान् कृष्णस्तिरोबभूव तत्स्थलात् ।
अनन्तानां हिरण्याधिपतीनां तत्र संक्षयः ॥११०॥
जायते वासुदेवस्य दिने दिने न संशयः ।
तत्रैकस्य हिरण्याधिपतेर्नाशोऽभवत्तदा ॥१११॥
वसुधानं च राध्यासां निनाय तत्पदं प्रभुः ।
महाकौबेरकं चैशं पदं ताभ्यां ददौ हरिः ॥११२॥
हिरण्याधिपतिर्भूत्वा राजते वसुधानकः ।
राध्यासाऽपीश्वरी श्रेष्ठा कुबेराणी विराजते ॥११३॥
यदस्य ब्रह्मणश्चतुर्मुखस्य पद्मजस्य वै ।
पिता विराट् तस्य पिता महाविष्णुस्ततः परः ॥११४॥
भूमा नाम पूरुषश्च भूमनारायणाभिधः ।
तस्य कोशेश्वरो भूत्वा वसुधानो नराधिपः ॥११५॥
वर्ततेऽयं भूमकोशाधिपः सर्वाधिपो यथा ।
प्राकृतप्रलयं यावद् वर्तिष्यते धनाधिपः ॥११६॥
साक्षात्प्रत्यक्षदर्शित्वाद् वेद्म्यहं पुरुषोत्तमः ।
लक्ष्मि ! प्रिये ! न चान्योऽस्ति सर्वज्ञो मां विना यतः ॥११७॥
परब्रह्मस्वरूपोऽहं वेद्मि सर्वज्ञसर्ववित् ।
इत्येवं वै मया ताभ्यां पूर्वसृष्ट्यन्तकालिकम् ॥११८॥
पञ्चम्यास्तु व्रतस्यान्ते फलं दत्तं हि शाश्वतम् ।
इदृग्विधं फलं दातुं शक्तः कः स्याद्धि मां विना ॥११९॥
सर्वे वै कालकवलाः ऋते नारायणं खलु ।
सर्वं सृष्ट्वा प्रविशामि वसामि विरमामि च ॥१२०॥
तथाऽप्यकुण्ठविज्ञानो भवाम्येको न चापरः ।
तदत्र कथितः पूर्वसृष्टिवृत्तान्त एव ते ॥१२१॥
पञ्चम्या व्रतकर्तुर्हि नरस्यापि स्त्रियास्तथा ।
श्रोतुर्वक्तुः फलं तादृगस्य वै भवते ध्रुवम् ॥१२२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पुरुषोत्तममासमाहात्म्ये द्वितीयपक्षस्य पञ्चम्यां व्रतकरणेन शिवभक्तयोः पूर्वसृष्टिस्थयोः राध्यासाराज्ञीवसुदाननृपयोः शिवप्रदत्तवैष्णवत्वोत्तरं वेधःपितृवैराजादप्यूर्ध्वमीश्वरसृष्टौ वर्तमानसृष्टौ हिरण्यकोशाधिपतित्वात्मकमहाकौबेरपदप्राप्तिवर्णननामा द्वादशाधिकत्रिशततमोऽध्यायः ॥३१२॥

**श्रीनारायण उवाच—**

श्रूयतां च त्वया लक्ष्मि ! श्रीपुरुषोत्तमाश्रिता ।
कथा सम्पत्प्रदा सौख्यप्रदा सर्वेष्टदा सदा ॥ १ ॥
पूर्वे कल्पे ब्रह्मणो वै मरुदेशेऽतिधार्मिकः ।
धनाढ्यो ब्राह्मणो नाम्ना देवयवो बभूव ह ॥ २ ॥
तस्य पत्नी देवजुष्टाऽप्यासीत्पतिव्रता शुभा ।
तयोर्भृत्यो गिरिक्षितो भृत्या चाद्रिद्युतिस्तथा ॥ ३ ॥
बभूवतुः सदा कृष्णनारायणपरायणौ ।
स्वामिकार्यं विधायैव कृष्णचर्यां प्रचक्रतुः ॥ ४ ॥
ब्रह्मकर्मपरा नित्यं षट्कर्मादिपरायणाः ।
चत्वारस्ते बभूवुर्वै कृष्णभक्तिपरायणाः ॥ ५ ॥
ब्राह्मणौ स्वामिनौ चापि विप्राण्यौ सेविके च ते ।
हर्यर्थं मनसा वाण्या तन्वा निन्युः क्षणात्क्षणम् ॥ ६ ॥
मरुदेशाधिपतिना राज्ञा देवसखेन वै ।
नगर्यां भास्वतीनाम्न्यां कारितं विष्णुमन्दिरम् ॥ ७ ॥
सप्तशिखरसंशोभं त्र्यग्रगोलमनोहरम् ।
स्वर्णस्तंभांगनरम्यं त्रिप्राकारमनोहरम् ॥ ८ ॥
मध्ये तु शिखराऽन्तःस्थसिंहासने चतुर्भुजः ।
कृष्णनारायणो विष्णुर्लक्ष्मीराधासमन्वितः ॥ ९ ॥
दक्षशिखरगर्भेषु श्रीप्रभापार्वतीत्रिकम् ।
स्वस्वदासीसमाजुष्टं प्रत्येकं राजते शुभम् ॥१०॥
वामशिखरगर्भेषु माणिक्या ललिता जया ।
स्वस्वदासीसमाजुष्टा प्रत्येकं राजते त्रिषु ॥११॥
तत्सेवायां नियुक्तास्ते चत्वारो वै पृथक् पृथक् ।
देवयवो मध्यभागे पूजां करोति सर्वदा ॥१२॥
गिरिक्षितो बहिश्चन्दनादिकार्यकरोऽभवत् ।
देवजुष्टा दक्षभागे पार्वतीश्रीप्रभार्चनम् ॥१३॥
अद्रिद्युतिर्वामभागे माणिक्याद्यर्चनादिकम् ।
करोत्येवं विभागेन राजा ददाति वेतनम् ॥१४॥
भवनं वासयोग्यं च जीविकां वाटिकादिकाम् ।
वार्षिकं च तथा द्रव्यं तथा स्वर्णसहस्रकम् ॥१५॥
वस्त्रान्नभूषणादीनि ददाति चोत्सवेऽधिकम् ।
देवपूजासुनैवेद्यादिकं ददाति भूपतिः ॥१६॥
एवं वै वर्तमानेन विप्रदेवयवेन वै ।
लोभाकृष्टेन मनसा गृह्यते ढब्बुकं क्वचित् ॥१७॥
क्वचित्तु रूप्यकं स्वर्णमुद्रा यात्रालुभिः खलु ।
देवायाऽर्पितमित्येतद्देवद्रव्यं मुमोष सः ॥१८॥
तेन चौर्यदुरितेन देवधनेन मिश्रितम् ।
देवयवस्य सद्द्रव्यं दूषितं त्वास चञ्चलम् ॥१९॥
इयेष गन्तुमन्यत्र चंचला हि श्रियो मताः ।
देवद्रव्यान्वितं यत्तत् समूलं नाशमेति वै ॥२०॥

यद्यपि न्यायलब्धं स्वं देवद्रव्यस्पृशि गतम् ।
दूषितं तद् विनश्येद्वै लक्षं नीत्वा प्रगच्छति ॥२१॥
अन्नं चापि सुरान्नादिमिश्रितं नश्यति द्रुतम् ।
वस्त्रं देवाम्बरयुक्तं नाशयत्येव देहिनम् ॥२२॥
वस्तुमात्रं चौर्यलब्धं यन्न प्रसादरूपतः ।
पूजकाचार्यगुरुभिर्दत्तं देवस्वरूपि तत् ॥२३॥
यत्र क्षिप्तं तु तत् सर्वं मूलीयमपि दह्यति ।
चुल्लीकाष्ठाऽनलोऽरण्यगतोऽरण्यं प्रदह्यति ॥२४॥
गवामन्नं भिक्षुकान्नं विप्रान्नं प्रमदान्नकम् ।
अनाथान्नं निराधारान्नमग्निः कुपितः स वै ॥२५॥
ब्रह्मस्वं विधवास्वं च देवस्वं भिक्षुनाणकम् ।
अनाढ्यस्वं महानग्निः पतेद् यत्र स दह्यति ॥२६॥
देवपूजाकृता किञ्चित्फलं चान्नं च ढब्बुकम् ।
न ग्राह्यं देवतास्वं चेद् यतो दहति तत्कुलम् ॥२७॥
पूर्वैः पूर्वतमैश्चापि मुषितं देवनाणकम् ।
तदेवान्यदपि न्याय्यं मुष्णाति मुषकस्य वै ॥२८॥
देवयवोऽपि देवस्य मन्दिरे हरिसन्निधौ ।
यात्रालुभिस्त्वर्पितं च प्रक्षिप्तं ढब्बुकादिकम् ॥२९॥
मुष्णात्येव स्वके द्रव्ये निक्षिपति च वृद्धये ।
येन केन निमित्तेन तस्य नाश उपागतः ॥३०॥
मरुकोसलयोः राज्ञोर्युद्धं घोरं बभूव ह ।
कोसलस्य तु सैन्यैर्वै विजितो मरुभूपतिः ॥३१॥
सैन्यैस्तु नगरी सर्वा भास्वती ध्वंसिता तदा ।
धनाढ्यानां नाणकानि हृतानि वै प्रसह्य तैः ॥३२॥
नृपमान्यं द्विजं ज्ञात्वा सर्वं तस्य हृतं धनम् ।
निष्कासितस्ततः स्थानात् सभार्याभृत्यमात्रकः ॥३३॥
ययौ स रैवतगिरौ हिरण्यायास्तटे शुभे ।
सोमनाथस्य निकषा वने मूलफलाशनः ॥३४॥
निर्गमयत्यहान्येव पर्यटन् भृत्यदारयुक् ।
सरस्वतीं नदीं प्राचीं गत्वा पिप्पलशाखिनम् ॥३५॥
निषसाद जलं पीत्वा विशश्राम क्षणं तदा ।
सस्मार च हरिं कृष्णनारायणं जगद्गुरुम् ॥३६॥
चिन्तयामासुरन्योन्यं शत्रुजन्यं पराभवम् ।
गिरिक्षितस्तदा भृत्यः प्राह देवयवं द्विजम् ॥३७॥
यस्य वै पूजनं सम्यक् कृतं तेनापि शार्ङ्गिणा ।
रक्षिता न वयं शत्रोरुपद्रवेऽपि सेवकाः ॥३८॥
सर्वस्वं वै हृतं सैन्यैर्मन्दिरस्यापि कांचनम् ।
तत्रापि रक्षणं नैव कृतं श्रीविष्णुना तदा ॥३९॥
परस्य रक्षणं कस्मात् कुर्याद् यः स्वं न रक्षयेत् ।
इत्युक्ते ब्राह्मणो देवयवः प्राह स्वभृत्यकम् ॥४०॥
मैवं वद तथा नास्ति यथा त्वं वदसि द्विज ! ।
रक्षति श्रीहरिः सर्वान् जीवतो रक्षिता वयम् ॥४१॥
रक्षा कृता चतुर्णां वै यज्जीवामोऽत्र संयुताः ।
देवद्रव्यापहारस्य पातकं त्वन्तवर्जितम् ॥४२॥
तत्कृतं वै मया तच्च द्रव्यं स्वद्रव्यमिश्रितम् ।
तेन सर्वं गतां नो वै द्रव्यं मत्पातकेन वै ॥४३॥
देवद्रव्यं च देवान्नं यस्य कोशे हि जीर्यति ।
तस्य सर्वस्वनाशाय फलं भवति निश्चितम् ॥४४॥
सर्वस्वं तद्गतं योग्यं फलमत्रैव चार्जितम् ।
यमलोकोऽपि भोक्तव्यो ह्यधुना शिष्यतेऽपि हि ॥४५॥
तथापि सेवनस्यैतत्फलं रक्षति नोऽत्र वै ।
यद्वयं घातिता नैव रक्षिताः परमात्मना ॥४६॥
देवद्रव्यं न भोक्तव्यं पत्रं पुष्पं फलादिकम् ।
वस्त्रं यानं गृहं पात्रं भोक्तव्यं नैव सर्वथा ॥४७॥
अन्यायेनापि लोभेनाऽज्ञानेनापि प्रसह्य वा ।
भुक्तं यदि तदा तत्तु भोक्तुर्नाशकरं भवेत् ॥४८॥
तद्वयं नाशिता नैव कृपा सेयं हरेर्द्विज ।
अथ यत्नः प्रकर्तव्यो यथा यमो न संचरेत् ॥४९॥
प्रपन्नानां हरिस्त्राता यमस्तत्र न संचरेत् ।
प्रपत्तौ षड्विधत्वं वै नारायणेन दर्शितम् ॥५०॥
विश्वासो वरणं न्यासः कार्पण्यं च स्थिरा मतिः ।
आनुकूल्यस्य संकल्पः प्रातिकूल्यविवर्जनम् ॥५१॥
तत्र हरिर्मदर्थं यत् करोति सकलं तु तत् ।
मदर्थं योग्यमेवाऽस्ति त्वेवं विश्वासमाचरेत् ॥५२॥
त्वं ममासि तवाहं चेत्येवं वरणमर्थयेत् ।
सर्वस्वोऽहं पादयोस्ते न्यस्तोऽस्मि न्यासमाचरेत् ॥५३॥
सत्यपि सार्वभौमेऽपि कार्पण्यं दासवच्चरेत् ।
सर्वनाशेऽपि खेदं न कुर्यान्मतिं स्थिरां चरेत् ॥५४॥
तव तोषो मम तोषो नान्यथेति सुकल्पयेत् ।
इत्येवं तस्य यद्रम्यं रम्यमेव ममापि तत् ॥५५॥
नान्यदिति प्रकुर्याद्वै मत्वा भक्तिं सदा हरेः ।
अपराधान् क्षमाप्यैव सोऽस्मान् संतारयिष्यति ॥५६॥
उदरार्थं प्रलोभेन कृतं चौर्यादि पातकम् ।
तत्सर्वं भगवान् भक्त्या ध्रुवं प्रज्वालयिष्यति ॥५७॥
कृष्णनारायणं ब्रह्म व्याहरँस्तं त्वनुस्मरन् ।
यः प्रयाति त्यजन्वर्ष्म स याति परमं पदम् ॥५८॥

तस्मादत्रैव सत्तीर्थे ह्युषित्वा चिरमेव तु ।
आराध्य तं कृष्णनारायणं यास्याम ईं पुनः ॥५९॥
यद्वाऽऽयुष्यक्षये तस्य धाम प्राप्स्याम ईप्सितम् ।
अपराधसहस्राणि स श्रीहरिः क्षमिष्यते ॥६०॥
इति विचार्य चत्वारः कृष्णनारायणाभिधाम् ।
जपयज्ञं प्रचक्रुस्ते प्राचीसरस्वतीस्थले ॥६१॥
प्रातः स्नात्वा हरिं ध्यात्वा पुपूजुर्नित्यमेव ते ।
दलं पुष्पं फलं तोयं कन्दादि यदुपस्थितम् ॥६२॥
अर्पयन्ति हरये ते जलार्घ्यं प्रार्थनादिकम् ।
कुर्वन्ति स्म प्रगे मध्ये सायं निशि पुनः पुनः ॥६३॥
एवं वै वर्तमानेषु व्योममार्गेण संश्रुतः ।
दुन्दुभिस्त्वधिमासस्य श्रीपुरुषोत्तमोदितः ॥६४॥
षष्ठ्यां प्रातर्दुन्दुभेस्तु पुरुषोत्तममासि वै ।
घोषणा मोक्षदा यद्वा सकामानां तु भोगदा ॥६५॥
प्रवर्तते स्म सा कर्णपथं प्राप्ता मनोरमा ।
चतुर्भिस्त्वपि सध्याना विचार्याऽवधृता हृदि ॥६६॥
शृण्वन्तु मानवाः सर्वे निर्धनाः सधना अपि ।
निरागसः सापराधास्तथा नार्यो नरा अपि ॥६७॥
पूजायां मे त्वपराधा भवन्ति बहवोऽपि वै ।
यदि कैश्चित् कृतास्तान् वै गणयिष्ये मनाङ् न वै ॥६८॥
कुर्वन्तु व्रतमद्यैव षष्ठ्यां द्वितीयपक्षके ।
पुरुषोत्तममास्यस्मिन् क्षमयिष्ये नु पातकम् ॥६९॥
वज्रलेपादिकं पापं क्षालयिष्येऽद्य वै व्रतात् ।
एकभुक्तं च वा नक्तं विना याञ्चां समागतम् ॥७०॥
गृहीत्वापि तु षष्ठ्यां वै व्रतं कार्यं ममात्र हि ।
फलं भुक्त्वा जलं पीत्वा ग्रसित्वा पवनं च वा ॥७१॥
व्रतं कार्यं मम षष्ठ्यां तस्मै दास्ये यथेप्सितम् ।
प्राक् कृतं मे विपरीतं स्मरिष्ये तन्न सर्वथा ॥७२॥
अद्याऽहं कृपया दास्ये तदिष्टं पुरुषोत्तमः ।
पुरुषोत्तममासोऽयं वर्तते भुवनत्रये ॥७३॥
ईशलोकेऽप्ययं मासो ममाऽऽज्ञया प्रवर्तते ।
सर्वमूर्धन्यमासोऽयं मूर्धन्यपुरुषोत्तमात् ॥७४॥
मूर्धन्यफलदस्तस्माद् वृणुतेप्सितमुत्तमम् ।
इत्युक्त्वा दुन्दुभिस्तस्मात् स्थानात् स्थानान्तरं ययौ ॥७५॥
चत्वारो ब्राह्मणास्ते तु दारिद्र्यदुःखपीडिताः ।
षष्ठ्यां व्रतं प्रचक्रुस्ते श्रुत्वा दुन्दुभिशब्दितम् ॥७६॥
दारिद्र्यं नष्टतां गच्छेत् सुखं वैभवसंभवम् ।
पूर्वतोऽप्यधिकं स्याच्च विशाला धनसम्पदः ॥७७॥
यानवाहनसौधानि दासा दास्यः समुज्ज्वलाः ।
राज्यादप्यधिकं सर्वं भवेत्तर्हि सुखं भवेत् ॥७८॥
इत्यभिलष्य तैः सर्वैस्तूपवासव्रतं कृतम् ।
पूर्वं संभोगिनः पश्चाद् वाञ्छन्ति भोगसम्पदः ॥७९॥
स्वभावं यान्ति भूतानि निग्रहस्तु दुराधरः ।
यावद्वाञ्छा न वै शान्ता तावज्ज्ञाता प्रवर्तते ॥८०॥
भक्तानामपि चेष्टेषु भोग्येष्वस्ति प्रवर्तनम् ।
रागशून्यस्य नास्त्येव समद्रष्टुः प्रवर्तनम् ॥८१॥
विचार्य विषवत् त्यक्तं यदि रागो न लीयते ।
तर्हि सुयोगे सम्पन्ने पुनरादातुमिच्छति ॥८२॥
तस्मादिन्द्रियनैर्बल्यं साधयन्ति सुयोगिनः ।
तपसा क्षालितपापबला जयन्ति मायिकम् ॥८३॥
अनाहारेण विजयो बहुक्लेशेन वा जयः ।
शैथिल्येन च विजयो भवत्याहारशालिनाम् ॥८४॥
एभिस्तु ब्राह्मणैर्दारायुक्तैर्न विजयः कृतः ।
इष्टं वै मायिकं तैस्तु राज्यं वै पूर्वतोऽधिकम् ॥८५॥
पारमेष्ठ्यपदं यद्वा सूर्यचन्द्रादिकं पदम् ।
इन्द्रपदसमं देवराजवन्नाऽन्यदस्ति तत् ॥८६॥
ब्रह्मणः सर्वदा त्वस्ति वार्धक्यं स्वप्रजाः प्रति ।
सूर्यचन्द्रादिका व्योम्नि भ्रमन्ति परवश्यगाः ॥८७॥
प्रवासिनां सुखं नास्ति विश्रामो नास्ति वै क्वचित् ।
अविश्रान्तः सदा क्लिष्टस्तस्मादैन्द्रपदं वरम् ॥८८॥
राज्यं सर्वसुराणां वै दाराधामधनादिकम् ।
स्वर्गे लक्ष्मीः शाश्वती च स्मृद्धिरिन्द्रस्य वर्तते ॥८९॥
तस्मादैन्द्रपदं ग्राह्यं भोगोत्तमप्रदं शुभम् ।
पश्चाद् भक्त्या समुपार्ज्य वैकुण्ठं दिव्यसाधनम् ॥९०॥
एवं निश्चित्य तैः सर्वैः कृतं षष्ठ्यां व्रतं शुभम् ।
प्रातः स्नात्वा मृदो मूर्तिं कारयित्वा हरेस्तदा ॥९१॥
पार्श्वे स्फटिकपाषाणं स्थापयित्वा ततश्च ते ।
आवाहयित्वा श्रीकृष्णनारायणं पुमुत्तमम् ॥९२॥
संस्नाप्य पंचदुग्धाद्यमृतेन च जलेन च ।
वस्त्राभूषाद्रवद्द्रव्याक्षतपुष्पादिचन्दनैः ॥९३॥
धूपदीपसुनैवेद्यैः फलपत्रजलादिभिः ।
संपूज्याऽर्घ्यं बिल्वफलैर्युक्तं दत्वा नमः स्तुतिम् ॥९४॥
प्रार्थनां स्तवनं पुष्पाञ्जलीन्समर्प्य विष्णवे ।
आन्दोलयांचक्रिरे च लतारज्ज्वादिदोलने ॥९५॥
मध्याह्ने च तथा सायं रात्रौ पूजां सजागराम् ।
चक्रुस्ते नृत्यगीतादि तत्राऽऽविरास केशवः ॥९६॥

वरान् वृणुत भक्ताः स्थ गतं दुःखं व्रतेन मे ।
यथेष्टं त्वर्पयितुं ह्यागतोऽस्मि तोषितोऽस्मि च ॥९७॥
दृष्ट्वा श्रुत्वा कृष्णनारायणं हरिं चतुर्भुजम् ।
नत्वा ते पादयोः पुष्पांजलिं वारि ददुस्तदा ॥९८॥
वव्रिरे देवसदनं महेन्द्रपदमृद्धिमत् ।
तथास्त्विति वरं दत्वा हरिस्तिरोबभूव ह ॥९९॥
अधिमासे सरस्वत्यास्तटे प्राच्याः सुपिप्पले ।
स्थले त्यक्त्वा शरीराणि चत्वारो दिवमागताः ॥१००॥
प्रान्तेन्द्रस्याऽऽयुषो नाशे दशलोकिक्षयोत्तरम् ।
चत्वारस्ते ययुः सौम्ये महर्लोके चिरंस्थिताः ॥१०१॥
पुनः कल्पान्तरारंभे चत्वारो दिवमागताः ।
देवयवो महेन्द्रो वै बभूव व्रतपुण्यतः ॥१०२॥
देवजुष्टा महेन्द्राणी संबभूव हरेः प्रिया ।
गिरिक्षितो बभूवेन्द्रपुत्रो जयन्तनामकः ॥१०३॥
अद्रिद्युतिर्विजयन्तपत्नी जाता तु मानसी ।
विश्वकर्मसुता त्वेषा स्नुषा त्विन्द्रस्य या मता ॥१०४॥
पुलोमजाऽभवदिन्द्राणीति सा मानसी सुता ।
इन्द्रपत्नी संबभूव दासीदासाऽर्बुदाऽन्विता ॥१०५॥
षष्ठीव्रतेन विप्रैस्तैरासं त्वैन्द्रपदं शुभम् ।
सुखं देवेश्वरपदं प्राप्तं श्रीहर्यनुग्रहात् ॥१०६॥
इमां कथां पठेद् यस्तु शृणुयाद्वा समाहितः ।
तस्य षष्ठीफलं स्याद्वै तथेष्टं संलभेत च ॥१०७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पुरुषोत्तममासमाहात्म्ये मरुदेशीयदेवयवगिरिक्षितविप्रयोस्तत्पत्न्योर्देवजुष्टाऽऽद्रेद्युत्योश्च देवद्रव्यचौर्येण सर्वस्वनाशोत्तरं त्वधिकमासस्य द्वितीयपक्षस्य षष्ठ्या व्रतेन महेन्द्रजयन्तमहेन्द्राणीजायन्तीपदप्राप्तिनिरूपणनामा त्रयोदशाधिकत्रिशततमोऽध्यायः ॥३१३॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! चमत्कारं सप्तम्यास्तु व्रतेन वै ।
ब्रह्मपुत्र्यास्तु सन्ध्याया जातो यस्तं वदाम्यहम् ॥ १ ॥
सृष्टिकर्ता स्वयं ब्रह्मा सृष्ट्यारंभे तु मानसान् ।
अत्रिं मरिचिं पुलहं पुलस्त्यांगिरसौ क्रतुम् ॥ २ ॥
वशिष्ठं नारदं दक्षं भृगुं चेति महाप्रभून् ।
प्रससर्ज जातमात्रान् सुरूपान् यौवनान्वितान् ॥ ३ ॥
कार्यदक्षान्मनःक्षोभकरान् दिव्यान् यदा ततः ।
तदाऽजमनसो जाता चारुरूपा वरांगना ॥ ४ ॥
नाम्ना सन्ध्या दिवक्षान्ता सायं सन्ध्या जपन्तिका ।
अतीव सुन्दरी सुभ्रूर्मुनिचेतोविमोहिनी ॥ ५ ॥
मानसस्यभूत्तदा सृष्टिर्न वै कामादिगर्भजा ।
ततो दक्षादयो ध्याता वेधसा कामसारिणः ॥ ६ ॥
कामस्तत्राऽऽविर्बभूव ब्रह्मणो मानसः सुतः ।
कांचनीकृतजाताभो लोलश्चन्द्रनिभाननः ॥ ७ ॥
आरक्तपाणिनयनाननपादकरादिकः ।
प्रफुल्लपद्मपत्राक्षः पुष्पकोदण्डमण्डितः ॥ ८ ॥
कान्तः कटाक्षपातेन भ्रामयन् नयनद्वयम् ।
तं वीक्ष्य पुरुषं रम्यं सन्ध्या दक्षादिकास्तदा ॥ ९ ॥
औत्सुक्यं परमं जग्मुश्चांचल्यं राजसं तथा ।
इन्द्रियानन्दभानं च प्रापुस्ते साऽऽप कामनाम् ॥१०॥
हर्षणं रोचनं चापि मोहनं शोषणं तथा ।
द्रावणं सुमनोऽस्त्राणि कामो जग्राह वै तदा ॥११॥
ब्रह्मा प्राह तदा कामं पुष्पबाणैस्तु पञ्चभिः ।
मोहयन्पुरुषान्स्त्रीश्च कुरु सृष्टिसहायताम् ॥१२॥
अहं वा वासुदेवो वा स्थाणुर्वा पुरुषोत्तमः ।
भविष्यामस्त्वद्वशेऽत्र किमन्ये प्राणधारकाः ॥१३॥
प्रच्छन्नरूपो जन्तूनां प्रविशन् हृदयं सदा ।
सुखहेतुः स्वयं भूत्वा सृष्टिं कुरु सनातनीम् ॥१४॥
आज्ञापयित्वा ब्रह्मा तं स्वासने निषसाद ह ।
दक्षादयो निषेदुश्च सन्ध्या चोपाविवेश ह ॥१५॥
तावत् कामस्तुतान्सर्वान्परीक्षार्थं प्रयत्नतः ।
आलीढस्थानमासाद्य धनुराकृष्य वै बलात् ॥१६॥
कामार्थं पुष्पजातैर्वै योजयामास मार्गणैः ।
दक्षाद्या मोहिताः सर्वे विकारं प्रापुरादितः ॥१७॥
सन्ध्यां सर्वे निरीक्षन्तो विकृतिं बहुधा ययुः ।
तदैव चोनपञ्चाशद्भावा जाताः शरीरतः ॥१८॥
सन्ध्यापि वीक्ष्यमाणा तैश्चक्रे भावान्कटाक्षगान् ।
अथ भावयुतां सन्ध्यां दृष्ट्वाऽतिविकृतिं गताः ॥१९॥
सन्ध्या यूनश्च तान्दृष्ट्वा विशिष्टां विकृतिं गता ।
मदनश्च निजे कार्ये श्रद्दधे फलभावनः ॥२०॥
यदिदं ब्रह्मणः कार्यं ममोद्दिष्टं मयापि तत् ।
कर्तुं शक्यमिति त्वद्धा निश्चितं सफलं ननु ॥२१॥
तदा तु विकृतान्दृष्ट्वा धर्मदेवः सुतः स्वयम् ।
पितरं च तथा भ्रातृन् सन्ध्यां प्राह विवेकतः ॥२२॥

धर्मार्थे मदनो जातो नाऽधर्मार्थे कदाचन।
कुटुम्बं विकृतिं प्राप्तं त्वन्योन्यं मदनेन हि ॥२३॥
नैतद्योग्यं प्रजानां हि क्षेमकृन्न भविष्यति।
यौवने जातमात्रे चेद् यदि कामप्रवेशनम् ॥२४॥

तदा माता च भगिनी भ्रातृपत्नी तथा सुता।
पिता भ्राता पतिः पुत्र इत्याम्नायो विनंक्ष्यति ॥२५॥
जातमात्रस्य तु कामो यौवनं न भवेद्यथा।
तथा कुरु विधातस्त्वं येन धर्मावनं भवेत् ॥२६॥
धर्म प्राहापि कामं च कृतवाँस्त्वं हि वैशसम्।
अयोग्ये चाप्यकाले च ततो भस्मीभविष्यसि ॥२७॥
धर्मः प्राह च दक्षादीन् यात बदरिकाश्रमम्।
गंगां स्नात्वा हरिं नत्वा तपस्तप्त्वा तु पावनाः ॥२८॥
भवन्त्वथ ततः सृष्टिं कुर्वन्तु धर्मतः सदा।
धर्मः प्राह च पितरं यज्ञं कुरु पितामह ॥२९॥
ब्रह्मा सृष्टौ प्रथमं तु यज्ञं चकार वैदिकम्।
ततो जातास्तु पर्जन्यास्तृप्तिदा अन्नदाः सदा ॥३०॥
धर्मः प्राह ततः सन्ध्यां विकारदोषयोगिनीम्।
श्वपचस्य भव पुत्री ततः शुद्धा भविष्यसि ॥३१॥
सन्ध्या प्राह तदा धर्मं यतिष्ये तपसा यथा।
जातमात्रस्य कामोऽयं न बाधेत तथा चिरम् ॥३२॥
इतिवृत्तोत्तरं सर्वे यथोद्दिष्टं ययुस्ततः।
सन्ध्याऽप्यमर्षमापन्ना तदा ध्यानपराभवत् ॥३३॥
इदं विममृशे योग्यं भविष्यत्सुखदं भवेत्।
उत्पन्नमात्रा चाहं सुयुवती काममोहिता ॥३४॥

दक्षाद्याश्च तथा जाता मयि कामेन मोहिताः।
सर्वेषां मथितं चित्तं मदनेन कुटुम्बिना ॥३५॥
प्राप्नुयां फलमेतस्य पापस्य त्वघरूपिणः।
करिष्याम्यस्य पापस्य प्रायश्चित्तमहं स्वयम् ॥३६॥
तच्छोधनफलं शीघ्रमहमिच्छामि साधनम्।
निजां तपसि होष्यामि धर्ममार्गानुसारतः ॥३७॥
किं त्वेकां स्थापयिष्यामि मर्यादामिह सर्वथा।
यथा नोत्पन्नमात्रा वै सकामाः स्युः शरीरिणः ॥३८॥
एतदर्थमहं कृत्वा तपः परमदारुणम्।
मर्यादां स्थापयिष्यामि त्यक्ष्यामि दुष्टजीवितम् ॥३९॥
मयाऽनेन शरीरेण कुटुम्बिस्वजनेषु वै।
उद्भावितः कामभावो न तत्सुकृतसाधनम् ॥४०॥
एवं विचार्य मनसा सन्ध्या योगसमाधिना।
तेनैव तु शरीरेण छायात्मकेन मानसी ॥४१॥

सूक्ष्मीभूय दुरितस्य नाशाय श्वपचगृहे।
जातिस्मरा सुता जाता जातमात्रा सयौवना ॥४२॥
राखालो जनकस्तस्या माता मातङ्गिनी तदा।
कर्मचाण्डालतां प्राप्तौ वसतः स्म हिमाचले ॥४३॥

यत्र नाऽवग्रहः कश्चिन्नास्ति निष्फलवृक्षता।
नास्ति यत्र मरुदेशस्तादृश्यां वसतो भुवि ॥४४॥
धर्मशापं पूर्वजन्म स्मृतवत्येव नित्यदा।
समयं क्षपयामास शुद्धिकृत्तपआदिना ॥४५॥
पितरौ सेवयामास पापक्षालनशक्तिकौ।
प्रतीक्षमाणा तं कालं येन शुद्धिर्भवेद् यथा ॥४६॥
तावद्भूमौ विचरन्तः पतितोद्धारकारकाः।
सप्तर्षयस्ततो व्योम्ना निर्जग्मुर्बदरीं प्रति ॥४७॥
वने तत्र स्थले तां तु दृष्ट्वा ते योगचक्षुषा।
अवतेरुश्च ते भिक्षामिषेण श्वपचगृहम् ॥४८॥
यद्यपि कर्मचाण्डालो ब्रह्मपुत्रो ह्ययं खलु।
फलाद्यर्थं भिक्षणीयो यत्र बाधो न विद्यते ॥४९॥
अपक्वान्नेऽपि न दोषः कणेषु नास्ति सूतकम्।
ययाचिरे विचार्येत्थं भिक्षां श्वपचवृक्षतः ॥५०॥
श्वपचस्तान् द्विजान् ज्ञात्वा कन्याऽभिज्ञाय सर्वथा।
सहर्षं प्रददौ भिक्षां वाणीबन्धनपूर्विकाम् ॥५१॥
श्वपचः पादयोर्नत्वा पीत्वा पादामृतं जलम्।
प्रार्थयामास सप्तर्षीन् जगदुद्धारकारकान् ॥५२॥
भिक्षां फलान्नकन्याढ्यां गृह्णन्तु मुनयोऽमलाः।
कन्यां चास्मानुद्धरन्तु कन्यां भिक्षां ददामि वः ॥५३॥

ऋषीणामानुमत्येन वशिष्ठो वेधसोंऽशकः।
जग्राह भिक्षां कन्यां च नीत्वा ययुश्च बद्रिकाम् ॥५४॥
तां कन्यां ते तु संस्नाप्य गंगायां बदरीवने।
कामधेनुशरीरान्तर्मुखात्प्रवेशनं तु ते ॥५५॥
कारयित्वा प्रभावेण मूत्रद्वारेण तां तदा।
बहिर्निष्कासयामासुर्जन्मान्तरगताऽभवत् ॥५६॥
बभूव पावनी सा तु ह्युपवीतेनसंस्कृता।
द्विजत्वं च तपोयोग्यं लब्धवती तु कन्यका ॥५७॥
अथापि सा तपसाऽर्थे मर्यादां कामयौवनाम्।
स्थापयितुं वाञ्छति स्म प्रोवाच ऋषये स्मिता ॥५८॥
महर्षे लोकमर्यादा जातमात्रे तु यौवने।
रक्ष्यते नैव भूतानां तस्याः स्थापनहेतवे ॥५९॥
तपः कर्तुं समिच्छामि चन्द्रभागानदीतटे।
यद्याज्ञा ब्रह्मदेवस्य वाञ्छामि चरितुं तपः ॥६०॥

ज्ञात्वा हार्दं तु गम्भीरं बहिष्टं तु निजस्य वै ।
ओमित्युवाच तां तत्र वसिष्ठस्तपसां निधिः ॥६१॥
वीक्षांचक्रे सरस्तत्र बृहल्लोहितसंज्ञकम् ।
चन्द्रभागानदीं तस्मात्प्राकाराद् दक्षिणाम्बुधिम् ॥६२॥
यान्तीं ददर्श सा चैव तथा सानुगिरेर्महत् ।
निर्भिद्य पश्चिमं सा तु चन्द्रभागगिरेर्नदी ॥६३॥
पावयन्ती जनान्देशान् शनैर्गच्छति सागरम् ।
तस्मिन् गिरौ चन्द्रभागे बृहल्लोहितसत्तटे ॥६४॥
अवतीर्य व्योममार्गाद् वशिष्ठस्तामुवाच ह ।
कुर्वन्त्रैव तपो देवि ! रक्षासूत्रं गृहाण च ॥६५॥
प्रकोष्ठे धार्यमेवैतद् रक्षणं ते भविष्यति ।
इत्युक्त्वा ते ययुस्तस्माद् ऋषयः सत्यलोककम् ॥६६॥
तत्राऽतपत्तपो घोरं स्वयं देवी त्वरुन्धती ।
सौभाग्यकांक्षमाणा सा गौरीपूजापरायणा ॥६७॥
पापनाशनयत्ना च कामनियमतत्परा ।
तपसा स्वल्पकालेन गौरी प्राविर्बभूव च ॥६८॥
उवाच परमाऽऽराध्योरुन्धति ! पुरुषोत्तमः ।
तमेकं जगतामाद्यं भजस्व पुरुषोत्तमम् ॥६९॥
ओंनमः श्रीकृष्णनारायणाय ओंनमोऽस्तु ते ।
मन्त्रेणानेन सर्वेशं कृष्णं भज शुभानने ॥७०॥
तेन ते सकलाऽवाप्तिर्भविष्यति न संशयः ।
स्नानं मौनेन कर्तव्यं मौनेन हरिपूजनम् ॥७१॥
जलाहारं फलाहारं कन्दाहारमुपोषणम् ।
वाय्वाहारं भोजनं वा षष्ठे काले समाचरेत् ॥७२॥
कुरु त्वेवं तपस्यां त्वं सर्वाभीष्टमवाप्स्यसि ।
मालानां तु सहस्रे द्वे सहस्रं वा जपोऽन्वहम् ॥७३॥
उक्तमन्त्रेण कर्तव्यो मूर्तिं कृष्णस्य चिन्तयेः ।
तामाभाष्य महागौरी तत्रैवाऽन्तर्दधे ततः ॥७४॥
सन्ध्याऽपि च तपोरीतिं ज्ञात्वा मोदमवाप ह ।
तपश्चर्तुं समारेभे बृहल्लोहिततीरगा ॥७५॥
दिव्यज्ञानं दिव्यचक्षुर्दिव्यां वाचमवाप सा ।
दिव्यकर्णौ प्राप्तवती तपश्चचार दारुणम् ॥७६॥
पुरुषोत्तममासस्य सप्तम्यां परपक्षके ।
शुश्राव दुन्दुभिं दिव्यं प्रातरेव त्वरुन्धती ॥७७॥
शृण्वन्तु तापसाः सर्वे तापस्यश्च कृपामयम् ।
पुरुषोत्तमवाद्योऽहं प्रवदाम्यत्यभीष्टदम् ॥७८॥
अधिकमाससप्तम्यां निराहारं व्रतं चरेत् ।
पूजयित्वा यथालब्धोपचारैर्भोजयेद्धरिम् ॥७९॥
रात्रौ जागरणं कुर्यात्प्रातर्वै पारणां चरेत् ।
दानं दद्यात्फलादीनां जलेनार्घ्यं ददेत्ततः ॥८०॥
विसर्जयेत् क्षमां प्रार्थ्य स यायात्सुखमुत्तमम् ।
श्रुत्वा तया दुन्दुभेश्चार्चनं कृतं कृतं व्रतम् ॥८१॥
पत्रपुष्पफलैर्वार्भिः पूजितः पुरुषोत्तमः ।
भोजितश्च फलैः पक्वैरर्थितो हृदयेन च ॥८२॥
रात्रौ जागरणं कृत्वा प्रातर्ब्राह्मे मुहूर्तके ।
ध्याने स्थिता क्षणं यावत्तावद्ददर्श तं हरिम् ॥८३॥
प्रत्यक्षं वीक्ष्य सा कृष्णं तुष्टाव जगतां पतिम् ।
स्थूलं सूक्ष्मं यस्य वश्यं नौमि त्वां पुरुषोत्तमम् ॥८४॥
नित्यानन्दं पावनानां पावनं त्वां नमाम्यहम् ।
श्रीदं स्वेष्टप्रदं कृष्णनारायणं नमाम्यहम् ॥८५॥
प्रधानपुरुषौ यस्य कायत्वेन व्यवस्थितौ ।
तस्मै कृष्णाय हृद्याय वारं वारं नमोनमः ॥८६॥
त्वं परः परमात्मा च परंब्रह्म पुमुत्तमः ।
स्त्रिया मया कथं वर्ण्यो भूयो भूयो नमोऽस्तु ते ॥८७॥
इत्याश्रुत्य वचस्तस्याः प्रसन्नः पुरुषोत्तमः ।
अरुन्धत्याः शरीरं तु वल्कलाजिनशोभितम् ॥८८॥
सजटं शान्तवदनं निरीक्ष्याऽऽह हरिः स्वयम् ।
प्रीतोऽस्मि तपसा चैव व्रतेन च स्तवेन ते ॥८९॥
येन ते विद्यते कार्यं वरं वरय साम्प्रतम् ।
तत् करिष्ये तु भद्रं ते प्रसन्नोऽहं तव व्रतैः ॥९०॥
इति श्रुत्वा सुप्रसन्ना सन्ध्योवाच प्रणम्य तम् ।
यदि देयो वरः प्रीत्या वरयोग्याऽस्म्यहं यदि ॥९१॥
यदि शुद्धाऽस्म्यहं जाता कामविकृतिपातकात् ।
यदि कृष्ण प्रसन्नोऽसि व्रतेन मम साम्प्रतम् ॥९२॥
वृतस्तदाऽयं प्रथमो वरो मम विधीयताम् ।
उत्पन्नमात्रास्ते सृष्टौ सकामा मा भवन्त्विति ॥९३॥
द्वितीयश्च वरो मेऽस्तु प्रथिता सर्वसृष्टिषु ।
भविष्यामि यथाऽहं वै तथा माऽन्या भवेदिति ॥९४॥
तृतीयश्च वरो मेऽस्तु सन्ध्यायां कामनावतः ।
पौरुषं नाशमायातु प्रजा पिशाचतां व्रजेत् ॥९५॥
चतुर्थस्तु वरो मेऽस्तु मम रूपचतुष्टयम् ।
भवतु प्रथमं तत्र प्रातः सन्ध्यामयं शुभम् ॥९६॥
द्वितीयं तु भवेत् सायं सन्ध्यारूपं सुपुण्यदम् ।
तृतीयं तु वशिष्ठस्य पत्नी स्वर्गे भवामि वै ॥९७॥
चतुर्थं तु तव दासीरूपं भवतु धामनि ।
इति वरान् समभ्यर्थ्य मौनां तामाह माधवः ॥९८॥

यद्यद् वृत्तं त्वया सन्ध्ये दत्तं तदखिलं मया ।
व्रतेन तपसा सन्ध्ये त्वत्पापं भस्मतां गतम् ॥९९॥
प्रथमं तु वरं तत्र शृणु कामस्य रोधताम् ।
प्रथमं शैशवो भावः कौमाराख्यो द्वितीयकः ॥१००॥
तृतीयो यौवनो भावश्चतुर्थो वार्धकस्तथा ।
तृतीये त्वथ संप्राप्ते यौवने कामना भवेत् ॥१०१॥
इति मर्यादया सृष्टौ इत आरभ्य कामना ।
सम्पत्स्यते जातमात्राः सकामा स्युर्न देहिनः ॥१०२॥
द्वितीयं तु वरं ख्याति सतीभावेन यास्यसि ।
त्रिषु लोकेषु नान्यस्यास्तथा कीर्तिर्भविष्यति ॥१०३॥
तृतीयं तु वरं सन्ध्याकाले त्वनंगसेविनः ।
पिशाचाः संभविष्यन्ति बलपौरुषवर्जिताः ॥१०४॥
चतुर्थं तु वरं प्रातः सायं सन्ध्याद्वयं भव ।
पतिर्यस्ते वशिष्ठोऽस्ति भवताच्छाश्वतः पतिः ॥१०५॥
सप्तकल्पान्तजीवी च तपोद्रव्यस्त्वया सह ।
स्वर्गे तेन सह वासो यथेष्टं ते भवेदिति ॥१०६॥
अथ दिव्यस्वरूपेण ब्रह्मतन्वा मया सह ।
कुरु वैकुण्ठवासं मे भव दास्यरुणाऽभिधा ॥१०७॥
इति ते ये वरा मत्तः प्रार्थितास्तेऽर्पिता मया ।
अन्यच्च शृणु कार्येऽस्मिन् कायाकल्पं समाचर ॥१०८॥
एतच्छैलोपत्यकायां चन्द्रभागानदीतटे ।
मेधातिथिः ऋषिर्यज्ञं करोति तापसाश्रमे ॥१०९॥
तपसा तत्समो नास्ति न भूतो न भविष्यति ।
तस्य ज्योतिष्टोमयज्ञे वह्नौ जनैरलक्षिता ॥११०॥
सूक्ष्मरूपं समापन्ना कायापरिणातिं कुरु ।
तदग्नौ शोधितां वर्ष्मचतुष्टयं गृहाण वै ॥१११॥
प्रातःसन्ध्या तथा सायंसन्ध्या भूत्वा स्थिरा भव ।
पतिं वशिष्ठं मां ध्यात्वा श्रेष्ठं कन्याद्वयं भव ॥११२॥
एका मेधातिथेः पुत्री वशिष्ठस्य प्रिया भव ।
द्वितीया मम दासी च अरुणाख्या प्रिया भव ॥११३॥
अयं तु पर्वतस्ते वै नाम्ना स्यादरुणाचलः ।
महत्तीर्थं पावनं वै लोकमान्यं भविष्यति ॥११४॥
इत्यभिधाय भगवान् करौ दत्वा तु मस्तके ।
प्रेम्णा निभाल्य तां तत्राऽन्तर्हितः संबभूव ह ॥११५॥
सन्ध्याऽप्यगच्छत्तत्रैव मेधातिथिमखस्थले ।
स्मृत्वा कान्तं वशिष्ठं च तथा श्रीपुरुषोत्तमम् ॥११६॥
सा विवेश समिद्धेऽग्नौ न केनाऽप्युपलक्षिता ।
शरीरं मलिनं तस्या वह्निना संस्कृतं तदा ॥११७॥
शोधितं दिव्यतां प्राप्तं देवार्हं ह्रासवर्जितम् ।
शुद्धं प्रवेशयामास वह्निस्तत्सूर्यमण्डलम् ॥११८॥
सूर्यस्त्वर्धं विभज्यैतच्छरीरं तु तदा रथे ।
स्वके संस्थापयामास प्रीतये पितृदेवयोः ॥११९॥
तदूर्ध्वभागोऽत्यरुणः प्रातःसन्ध्याऽभवच्छुभा ।
अरुणोदयवेला सा देवानां प्रीतिकारिणी ॥१२०॥
तच्छेषभागस्तस्यास्तु सायंसन्ध्याऽस्तमे रवौ ।
सूर्यास्तमनवेला सा पितॄणां मोदकारिणी ॥१२१॥
तस्याः प्राणास्तदा ध्याता हरिणा तत्तु शाश्वतम् ।
ब्राह्मं वर्ष्म बभूवास्याः सा दिव्या कन्यकाऽभवत् ॥१२२॥
अरुणा सा ब्रह्मधामगता गरुडगामिनी ।
अथ यज्ञावसाने तु मुनिना वह्निकुण्डतः ॥१२३॥
प्राप्ता पुत्री वह्निजन्या तप्तकांचनसन्निभा ।
अरुन्धतीति तस्यास्तु नाम चक्रे स वै मुनिः ॥१२४॥
न रुद्धणि यतो धर्मं सा कस्मादपि कारणात् ।
अस्य विष्णोः सदा धर्मं रुणद्धीति ह्यरुधन्ती ॥१२५॥
अथ सा ववृधे कन्या गुणैर्वर्षैर्मुनेर्गृहे ।
वशिष्ठेन विवाहं कारयामास पिता ततः ॥१२६॥
अस्या विवाहसत्कार्ये सुराश्च मुनयो ययुः ।
ब्रह्मविष्णुमहेशाश्चाऽभवन्नाशीर्वचःपराः ॥१२७॥
अरुन्धती महासाध्वी रेजे वशिष्ठसंगता ।
इति सन्ध्याचरित्रं ते कथितं लक्ष्मि ! पावनम् ॥१२८॥
धर्मदार्ढ्यकरं दिव्यं सर्वकामफलप्रदम् ।
अधिमासस्य चान्तस्य सप्तम्यास्तु व्रतेन वै ॥१२९॥
तपसा च प्रसन्नः श्रीकृष्णनारायणः प्रभुः ।
ददौ यथेष्टं रूपाणि त्वरुणायै पुमुत्तमः ॥१३०॥
येदं संश्रृणुयान्नारी नरो वा दृढमानसः ।
सर्वान् कामानवाप्नोति पुरुषोत्तमतोषणात् ॥१३१॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पुरुषोत्तममासमाहात्म्ये सृष्ट्यारंभे दक्षादीनां सन्ध्याया ब्रह्मणश्च कामेन पराभवे विकृतिभावोत्तरं धर्मदेववचनैः सन्ध्यायाः श्वपचपुत्रीत्वं, भिक्षामिषेण वशिष्ठादिसप्तर्षिभिः सन्ध्याया ग्रहणं, कामधेनुमुखे निक्षिप्य मूत्रद्वारेण निष्कासनं, तपोऽर्थं चन्द्रभागातीरेऽवस्थानं, गौरीप्राविर्भावः, सप्तमीव्रतेन पुरुषोत्तमप्राविर्भावः, कामदेवस्य यौवने उत्पत्तिरिति नियमनं, प्रातःसायंसन्ध्याद्वयभवनं, मेधातिथिऋषिकृतयज्ञकुण्डेऽदृश्यतया प्रवेशनं, कायाशोधनं, दिव्याऽरुणायाः स्वरूपेण ब्रह्मधामगमनं,अरुन्धत्याख्याया वह्निकुण्डोत्पन्नसुतात्मिकाया वशिष्ठेन विवाहोत्तरं स्वर्गगमनं, चेत्यादिनिरूपणनामा चतुर्दशाधिकत्रिशततमोऽध्यायः ॥३१४॥

श्रीनारायण उवाच—

शृणु लक्ष्मि ! कथां तेऽपि मेऽपि जातां पुरातनीम् ।
पुरुषोत्तममासस्य मिषेण जन्मबोधिनीम् ॥ १ ॥
यदा नारायणः कृष्णश्चोभौ यातौ पराऽक्षरे ।
मलमासस्य साहाय्यं कर्तुं श्रीहरिसन्निधौ ॥ २ ॥
धाम्न्यक्षरे तदा राजत्पुरुषोत्तममाधवः ।
श्रुत्वाऽर्थ्यं मलमासाय दत्तवाँश्चोत्तमां स्थितिम् ॥ ३ ॥
कृष्णस्य वचनं नारायणस्य वचनं तथा ।
मलमासोन्नतिदं तद् रक्षितं परमात्मना ॥ ४ ॥
स्वयं जातोऽधिदेवश्च मासोऽपि पुरुषोत्तमः ।
तेन तुष्टः परं कृष्णो नारायणस्तुतोष च ॥ ५ ॥
मलमासस्य वै द्वाभ्यां कृतमुद्धरणं महत् ।
तन्निमित्तं तु गोलोके गत्वा कृष्णः श्रिया युतः ॥ ६ ॥
महोत्सवं चकारोत्तमोत्तमं धामवासिषु ।
गोपगोपीगणास्तस्य पार्षदाः शक्तयः स्त्रियः ॥ ७ ॥
कोट्यर्बुदपरार्धानि चक्रुस्तस्य महोत्सवम् ।
मण्डपाः कोटिशस्तत्र निहिताः स्वर्णसद्द्रुमाः ॥ ८ ॥
कदली स्तंभशोभाढ्यास्तोरणादिविलासिताः ।
कलशैरंगचित्रैश्च पटैश्च वल्लिकादिभिः ॥ ९ ॥
प्रदर्शनैर्बहुविधैर्मल्लक्रीडादिभिस्तथा ।
अन्यत्र बहुयन्त्रैश्चान्यत्र वृषभयोधनैः ॥१०॥
नाटकैः पूर्ववृत्तैश्च कलाभिर्नूतनादिभिः ।
संगीतैर्नर्तनैश्चापि कथानकमखादिभिः ॥११॥
एवंविधे तत्र जाते महोत्सवे तदा श्रिया ।
रुक्मिण्याख्यमहालक्ष्म्याऽभिहितं स्वामिने मुदा ॥१२॥
कृष्णनारायण विष्णो परात्मन् पुरुषोत्तम ।
कुरूत्सवं तु मे सौधे नृत्यगायनवादनैः ॥१३॥
ओमित्युक्त्वा श्रियाः सौधे योजयामास सूत्सवम् ।
यथा धाम्नां महासम्राट् समायात्पुरुषोत्तमः ॥१४॥
तत्सम्माने प्रकुर्यादुत्सवं तद्वद् युयोज सः ।
सर्वधाम्नां तु या शोभा विशिष्टा साऽत्र कारिता ॥१५॥
सर्वधामपतीनां त्वासनसिंहासनान्यपि ।
तत्र वै मण्डपे चाभिस्थापितानि यथार्हणम् ॥१६॥
सर्वेषां दिव्यवस्तूनामुपायनानि तत्र च ।
संगृहीतानि सर्वेभ्यो धामभ्यः कृष्णशार्ङ्गिणा ॥१७॥
चित्राणां शुभदृश्यानां मनःस्निग्धाः शुभालयाः ।
संक्लृप्तास्तत्र तत्रैव न्यस्तपानसुभोजनाः ॥१८॥
विद्युतां तु प्रदीपानां प्रकाशाः सर्वतोऽभवन् ।
क्रीडाविद्युत्स्फटाकाणां क्रीडाऽपि सर्वतोऽभवत् ॥१९॥
अनन्ताऽतर्क्यरूपाणां यानि प्रदर्शनानि वै ।
नेपथ्यकारविद्याभिर्वर्तन्ते स्म च तानि हि ॥२०॥
गन्धर्वा देवगन्धर्वा गान्धर्वा धामवासिनः ।
गान्धर्व्यो देवगान्धर्व्यो गान्धर्व्यो धामसंस्थिताः ॥२१॥
चक्रुस्ते गायनं मिष्टमधुरालापसुस्वरैः ।
गायकाः स्वरपूराश्च पूरयन्ति स्म नादकैः ॥२२॥
नर्तकाश्चापि नर्तक्यो दास्यो दासाश्च सेविकाः ।
सेवकाश्च महाराज्ञ्यो राज्ञ्यश्च नर्तनं व्यधुः ॥२३॥
वादका नैकवाद्यज्ञा धामानुधामवासिनः ।
वादयन्ति स्म वाद्यानि यत्र किंचिन्न गौणभाक् ॥२४॥
रासे प्रवर्तमाने च गोपीनां कृष्णयोषिताम् ।
तदैश्वर्याणि भूषाश्च हेतयः पार्षदादयः ॥२५॥
मूर्तिमन्तस्तत्र रासे युयुजुः कृतनर्तनाः ।
कृष्णाऽऽनन्दाऽऽप्लुतं सर्वं ब्रह्मानन्दपरं ह्यभूत् ॥२६॥
दृश्यं स्पृश्यं तथा श्राव्यं रस्यं चाऽद्वैततां गतम् ।
सुखं सुखं परानन्दं आनन्दं नन्दनं ह्यभूत् ॥२७॥
स्निग्धं प्रेमातिमोदाढ्यं जातमानन्दमेव तत् ।
नान्यः परं विजानाति विनाऽऽनन्दं हि तत्त्वकम् ॥२८॥
एवं समुत्सवे राधा लक्ष्मीः श्रीश्च रमादयः ।
कृष्णं विकृष्य रासे तं रमयामास नर्तनम् ॥२९॥
सर्वस्मिन् तन्मये जाते सर्वं रसमयं त्वभूत् ।
कृष्णो रसप्रवेगेण कूर्दन् तद्भ्रमणोऽभवत् ॥३०॥
पत्न्याः पत्न्यन्तरं याते कूर्दनेन सतालवत् ।
चचालमुकुटोऽजस्रं चकम्पेऽतिमुहुर्मुहुः ॥३१॥
तमध्यात्वा महानन्दसुखव्याप्तो महाप्रभुः ।
पदात्पदान्तरं न्यस्य रेमे चोत्तोल्य कर्षयन् ॥३२॥
तावच्छैथिल्यमापन्नः पपात मुकुटान्मणिः ।
कोटिरत्नेषु यो नद्ध ऊर्ध्वस्थकलिगमूलकृत् ॥३३॥
मणेः पाते सह तेन पपात कलिगचन्द्रिका ।
तथापि नैव कृष्णः स रासाद्विरमते खलु ॥३४॥
पादमर्दनभीत्या तावुभौ दिव्यसुविग्रहौ ।
बभूवतुर्मणिः कलिगचन्द्रिका रेमतुश्च वै ॥३५॥
रासे मूर्तिधरौ जातौ रेमाते स्माति मण्डले ।
न तौ स्वस्वं स्थलं प्राप्तौ यावद्रासान्तमेव ह ॥३६॥
मुकुटे न स्वयं यातौ तावत्तत्र तु राधया ।
शापितौ निर्गतौ कृष्णमुकुटादिति शार्ङ्गिणे ॥३७॥

कृष्णो दृष्ट्वा तु तौ प्राह किमेवं निर्गतावुभौ ।
स्वस्वस्थानं न वै यातौ मुकुटः शोभते न मे ॥३८॥
नैनं वै धारये कलिगमणिशून्यं कभूषणम् ।
धारयिष्येऽन्यमुकुटं मायूरपिच्छशोभितम् ॥३९॥
इत्युच्यमाने श्रीकृष्णेऽधिमासस्य महोत्सवे ।
आनर्त्ताख्यो महान् भक्तो राजा गोलोकमाययौ ॥४०॥
कृष्णप्रीत्यर्थमेवाऽयं तपोभक्तिं चकार वै ।
तस्मै प्रसन्नः स कृष्णो नवं राज्यं तु दित्सति ॥४१॥
गोलोकस्य दिव्यभूमेः कणं त्वर्पितवान् प्रभुः ।
कणः स तत्र सौराष्ट्रो देशस्त्वानर्त्तसंज्ञकः ॥४२॥
त्रिजलावृत्तसुद्वीपो राज्यमानर्तभूभृतः ।
समभूपश्चिमवार्धिसंलग्नो भूमिसन्धितः ॥४३॥
प्रार्थयामास चानर्तो मम राज्यस्य मे तथा ।
गुप्तये रक्षकं देहि तव दूतं प्रतापिनम् ॥४४॥
ओमित्युक्त्वा ददौ कृष्ण आनर्ताय तु भूभृते ।
मुकुटस्य मणिर्यश्च वियुक्तो मुकुटात्तु तम् ॥४५॥
दिव्यः स पार्षदो भूत्वा स ययौ भूभृता सह ।
मणिमूलखचिता या वियुक्ता कलिगचन्द्रिका ॥४६॥
मूलं विना न वै स्थातुं शक्ता प्रार्थयदीश्वरम् ।
वासं मे देहि भगवन्न मूला न स्थितिर्मम ॥४७॥
हरिः प्राह तदा तां तु वियुक्ता मुकुटाद् यतः ।
याहि त्वं मणिना साकं भूत्वा दिव्यस्वरूपिणी ॥४८॥
आनर्तविषये स्थेयं द्विजेन मणिरूपिणा ।
द्विजपत्न्या त्वया भाव्यं गुरुरूपौ भविष्यथः ॥४९॥
आनर्तोऽपि हरिं नत्वा नीत्वा कलिंग मणिं कणम् ।
कृष्णाऽर्पितान्मुकुटाच्चापरान् मुक्तान् मणींस्तथा ॥५०॥
आययौ पश्चिमे वार्धौ कर्मम्वां मुक्तवान् कणम् ।
स तु द्राग् विस्तृतो भूत्वा जातः सौराष्ट्रसंज्ञकः ॥५१॥
तत्र मणिर्मुकुटस्य त्ववाततार चाम्बरात् ।
अन्येऽपि मणयस्तत्राऽवतेरुर्व्योममार्गतः ॥५२॥
मुख्यो मणिर्दिव्यदेहो निम्बदेवोऽभवद् द्विजः ।
व्याघ्रारण्ये रम्यदेशेऽश्वपट्टसरसस्तटे ॥५३॥
निवासमकरोत् तत्र पर्णकुट्यां स तापसः ।
या कलिगचन्द्रिका सा तु तत्रैव सरसस्तटे ॥५४॥
दिव्यदेहा निवासं चाऽकरोद् द्विजप्रसेवनम् ।
आनर्तेन तदा ताभ्यां प्रार्थितं भावगर्भितम् ॥५५॥
विना लौकिकदेहं वै जनानां श्रेय इच्छतोः ।
दर्शस्पर्शादिलाभश्च नाऽतः स्वीकुरुतं वपुः ॥५६॥
भक्तप्रार्थनया तौ च नृणां श्रेयो विचिन्त्य च ।
देहं ग्रहीतुमिच्छन्तौ हरिं संस्मरतुर्हृदा ॥५७॥
श्रीकृष्ण आविरासाऽत्र संकल्प्य मानसौ च तौ ।
देहौ समर्प्य तत्रैवाऽन्तरधीयत पूजितः ॥५८॥
अथैवं तौ कणलब्धस्थौल्यं प्राप्तौ ततः परम् ।
सर्वगोचरतां यातावश्वपट्टसरस्तटे ॥५९॥
तपस्यन्तौ च तत्रैव लक्ष्मीनारायणात्मिकाम् ।
संहितां वाचयामासतुश्च कालं सुनिन्यतुः ॥६०॥
मणिः स निम्बदेवाख्यो बभूव ख्यात एव ह ।
कलिगः सा ख्यातिमापन्ना मिष्टादेवीति सर्वथा ॥६१॥
अथ रैवतपौत्रो वै खट्वांगदजनाधिपः ।
तपस्तप्तुं समायातो निम्बदेवाश्रमान्तिके ॥६२॥
बद्रीतले सूपविश्य जजाप जपमुत्तमम् ।
ओंश्रीलक्ष्मीपते कृष्णनारायण नमोऽस्तु ते ॥६३॥
तस्य वै तपसा तत्राऽऽयातौ लक्ष्मीनरायणौ ।
वरदानाय तं भूपं रोधयामासतुस्तदा ॥६४॥
राज्ञा दर्शनलाभार्थं तयोर्वासोऽभिकांक्षितः ।
तथास्त्विति प्रति श्रुत्याऽदृश्यतां तौ गतावुभौ ॥६५॥
या लक्ष्मीः सा रुक्मिणी श्रीरूपाऽऽसीद् दिव्यरूपिणी ।
नारायणः स वै कृष्ण आस श्रीपतिरेव सः ॥६६॥
श्रिया जुष्टः स वै कृष्णो दध्यौ तु पितरौ तदा ।
कलिगमणिस्वरूपौ तौ ध्यातौ स्वेनैव रक्षितौ ॥६७॥
स्थापितौ दिव्यदेहेन चिन्तयामास तत्र ह ।
मिष्टादेवीनिम्बदेवगृहे कृष्णो बभूव वै ॥६८॥
यत्र जज्ञे तु गोपालस्तत्राऽश्वपट्टसन्निधौ ।
पर्णकुट्यां मानसः स जातमात्रः सयौवनः ॥६९॥
दिव्यो बभूव गोलोकदिव्यविग्रह एव सः ।
गां तु वाणीं पालयति गोपालः कृष्ण एव सः ॥७०॥
गोः पृथिव्याः पालकं राजानं लाति च रक्षति ।
गोपालः स प्रभुः कृष्णः संस्थितो नृपसन्निधौ ॥७१॥
आश्विनकृष्णपञ्चम्यां गोपालः कृष्ण एव ह ।
कुंकुमवाप्यां संजज्ञे निम्बदेवगृहे प्रगे ॥७२॥
अन्ये ये मणयस्त्वानर्तेन त्यक्ताः सुराष्ट्रके ।
सर्वेऽत्र कृष्णभक्तास्ते जाताः सुराष्ट्रके स्थले ॥७३॥
तत्र ओमालये शत्रूंजिताक्षेत्रे बभूव ह ।
प्रेममणिर्महादिव्यविग्रहः सूर्यसन्निभः ॥७४॥
प्रेमाख्यतद्विजक्षेत्रे दिव्या संकल्पमात्रजा ।
फाल्गुनकृष्णपंचम्यां जज्ञे लक्ष्मीस्तु कंभरा ॥७५॥

कं सुखं शाश्वतं कार्ष्णं बिभर्तीति हि कंभरा ।
जातमात्रा युवती सा दिव्याऽऽस श्रीस्वरूपिणी ॥७६॥
पिता विज्ञाय तां श्रीं वै कृष्णार्हां दिव्यचक्षुषा ।
विवाहविधिनाऽऽहूय गोपालं कृष्णमेव ह ॥७७॥
कंभरां श्रीं ददौ तस्मै कोटिदेवादिसन्निधौ ।
इत्येवं कंभरागोपालौ श्रीकृष्णौ तु दम्पती ॥७८॥
तापसौ भगवन्तौ तौ दिव्यमूर्ती बभूवतुः ।
सप्तभौमकशोभाढ्ये मन्दिरे स्थापितौ सदा ॥७९॥
एकदा दुन्दुभिस्ताभ्यां तिथ्यष्टम्यां प्रगेऽधिके ।
मासे श्रुतस्त्वश्वपट्टसरोवरान्तिके शुभः ॥८०॥
शृण्वन्तु मणिकल्याद्यास्तथा श्रीपतिसेवकाः ।
पुरुषोत्तमसंज्ञोऽहं तोषयितुं परेश्वरः ॥८१॥
अक्षरब्रह्मधामस्थो गोलोकाधिपतिं प्रभुम् ।
वैकुण्ठाधिपतिं चान्यधामाधिपाँश्च केशवान् ॥८२॥
कृतवान् मलमासं तु निर्मलं मत्स्वरूपिणम् ।
तदस्मिन्नधिके मासे पुरुषोत्तमसंज्ञके ॥८३॥
एकस्यापि दिनस्यात्र व्रतं कृत्वा व्रती जनः ।
प्राप्नुयात् कृपया मेऽत्र सर्वं मां धाम चापि मे ॥८४॥
व्रतं त्वद्याऽपरपक्षाऽष्टम्यास्त्वनन्तपुण्यदम् ।
यथेष्टं तत्र दास्येऽहं व्रतार्थिने स्वयं हरिः ॥८५॥
दुन्दुभिश्चेत्यभिधाय स्नात्वाऽश्वपट्टवारिषु ।
नत्वा काल्याणिकं निम्बदेवं मिष्टां महासतीम् ॥८६॥
प्रपूज्य कंभरां श्रीं च कृष्णं गोपालमित्यपि ।
ताभ्यां कृतं सुसत्कारं प्राप्य वै रैवतं ययौ ॥८७॥
कृतं त्वधिकमासस्य परपक्षाऽष्टमीव्रतम् ।
कंभरया सोपवासं गोपालेनापि निर्जलम् ॥८८॥
प्रातः संपूजितः सम्यङ् मध्याह्नेऽपि निशि प्रभुः ।
अष्टोत्तरशतसामग्रीभिः श्रीपुरुषोत्तमः ॥८९॥
षट्पंचाशद्भोजानि चार्पितानि तथा कृतम् ।
आष्टोत्तरशतवर्तिभिरारार्त्रिकमुज्ज्वलम् ॥९०॥
लक्षशो दक्षिणा दत्ता रात्रौ नीराजने हरिः ।
आविर्बभूव भगवान् धामस्थः पुरुषोत्तमः ॥९१॥
विहसन् हार्दिकं स्नेहं वर्षयन् रञ्जयन्नभौ ।
उवाचाऽस्मि प्रसन्नोऽहं गोलोकेश किमिष्यते ॥९२॥
श्रीरिव कंभरा लक्ष्मीः किमिच्छति व्रतार्थिनी ।
युवयोर्वसतिस्त्वत्र मदिच्छयैव सर्वथा ॥९३॥
वर्तते मिषमात्रं तु खट्वांगतप एव ह ।
मुकुटान्मणिकल्योश्च वियोगोऽपि मदिच्छया ॥९४॥
रासादिकं निमित्तं च सर्वथा वै मदिच्छया ।
तस्माद् वां वरदश्चास्मि वृणुतं तु यथेप्सितम् ॥९५॥
तदर्थं त्वागतोऽस्म्यत्र साक्षाच्छ्रीपुरुषोत्तमः ।
श्रुत्वैवं भावगर्भं तु हार्दं सर्वपरात्मनः ॥९६॥
ऊचतुस्तौ प्रणम्यैनं मूलरूपेऽभिचिन्त्य तौ ।
भगवँस्तेऽभिलाषा चेत् कारणं चात्र संस्थितौ ॥९७॥
आवाभ्यां प्रार्थ्यसे त्वं वै सर्वदाऽत्र स्थिरो भव ।
पुरुषोत्तमसेवायाः सर्वदा लाभ एव नौ ॥९८॥
अनादिकृष्णयोगस्तु भाग्यहीनस्य दुर्लभः ।
अस्मन्मूलस्वरूपस्त्वं रक्षाऽत्र स्थित एव नौ ॥९९॥
कृष्णनारायणोऽनादिर्लक्ष्म्या श्रिया प्रसेवितः ।
मुक्तैश्वर्यैः सेवितस्त्वं वसाऽत्र पुरुषोत्तम ॥१००॥
लालनं पालनं चापि क्रीडनं पोषणादिकम् ।
दिव्यस्यापि यथादेशकालानुगुणमेव ते ॥१०१॥
कृत्वा सुखं परानन्दं प्राप्स्यामोऽत्र तव स्थिरम् ।
इत्यभ्यर्थ्य कंभरागोपालौ श्रीपुरुषोत्तमम् ॥१०२॥
नेमतुस्तं कृष्णनारायणं श्रीपुरुषोत्तमम् ।
भगवानपि सर्वात्मा तथास्त्वित्यभिधाय च ॥१०३॥
स्वप्रियां धामलक्ष्मीं चाऽऽवेदयन्नेत्रसंज्ञया ।
याऽभिगम्य हरेर्हार्दं तिरोऽभूत् पुरुषोत्तमे ॥१०४॥
सोऽयं परात्परो ब्रह्मपरः श्रीपुरुषोत्तमः ।
बालरूपोऽभवत्तत्र जातमात्रो युवा प्रभुः ॥१०५॥
बभूवतुः प्रसन्नौ कंभरागोपालकृष्णकौ ।
पुत्रो दिव्यो व्रतलभ्यः स्वयं श्रीपुरुषोत्तमः ॥१०६॥
व्रतं निमित्तमात्रं वै कारणं तस्य मानसम् ।
लीलैव कारणं तस्य पुंसस्तु परमस्य वै ॥१०७॥
कृष्णनारायणोऽनादिपुरुषोत्तम एव सः ।
श्रीरमादिपार्षदादिसमैश्वर्यगुणान्वितः ॥१०८॥
स्वेच्छया धर्मरक्षार्थं भक्तिप्रवर्तनाय च ।
प्रादुर्भूतः स्वयं पत्नीव्रतस्वरूप एव सः ॥१०९॥
गोलोके यः कृष्णमुखात्पत्नीव्रताभिधो गुणः ।
पातिव्रत्याभिधलक्ष्म्या सहितोऽभूत् प्रकाशितः ॥११०॥
सोऽयं धर्मस्थापनाय स्वयं श्रीपुरुषोत्तमः ।
पुत्रोऽभवच्छ्रीकृष्णस्याऽधिमासे पुरुषोत्तमः ॥१११॥
देवदुन्दुभयो नेदुः पुष्पाणां वर्षणं ह्यभूत् ।
नृत्यं तत्राऽप्सरसां च गायनं गायकैः कृतम् ॥११२॥
प्रतिधामनिवासाश्चेश्वरा देवा महर्षयः ।
अवताराश्च तद्देव्यः शक्तयोऽब्जाऽर्बुदान्त्यकाः ॥११३॥

जयकारेण सहिताः पुपूजुः परमेश्वरम् ।
ब्रह्माण्डेष्वपि सर्वत्र जीवेशाऽवतरादिषु ॥११४॥
समुत्सवो महानासीदनन्तब्रह्मभोजनम् ।
प्रीणनं तर्पणं सृष्टिप्राणिनां संबभूव ह ॥११५॥
कार्तिकाऽधवलाऽष्टम्यां पुनर्वसौ घटीस्थिते ।
सूर्याऽस्तोत्तरघटिकापञ्चके समये गते ॥११६॥
निशापूर्वपदेऽनादिश्रीकृष्णपुरुषोत्तमः ।
कृष्णनारायणो जज्ञे गोपालकंभराऽऽलये ॥११७॥
प्रकाशश्चात्र सर्वत्र परत्रानेकसूर्यवत् ।
तदा जात इति ज्ञात्वा वेदा विद्याः समस्तुवन् ॥११८॥
कृष्णस्य वल्लभश्चाति सर्वविद्याधिशेवधिः ।
प्रभालक्ष्मीपार्वतीमाणिकीश्यादिपतिः प्रभुः ॥११९॥
चमत्कारानसंख्यान्दर्शयामास कृपाकरः ।
ऊर्जशुक्लैकादश्यां स प्राप दीक्षोपवीतकम् ॥१२०॥
माघशुक्लाष्टमीप्रातः काश्यामवाततार सः ।
नवम्यां ब्रह्मविद्यानां संचारं कृतवान् प्रभुः ॥१२१॥
स्वपितृमुखतः श्रुत्वा विज्ञानं स्वात्मनि स्थितम् ।
वेदविद्यामयं सर्वं लक्ष्म्यै ह्युपादिदेश ह ॥१२२॥
निबोध लक्ष्मि ! किं वच्मि यो हरिः पुरुषोत्तमः ।
परब्रह्माऽक्षराऽतीतोऽनादिकृष्णनरायणः ॥१२३॥
स एव विद्यते राधाधवो गोलोकधामनि ।
रुक्मिणीनाथ एवासौ गोपालः कंभरापतिः ॥१२४॥
वैकुण्ठाधिपतिः सोऽयं लक्ष्मीपतिर्नरायणः ।
कृष्णनारायणः सोऽयं सर्वेशः पुरुषोत्तमः ॥१२५॥
सोऽहं नारायणो लक्ष्मि ! सा त्वं लक्ष्मीर्मम प्रिया ।
स्थलभेदेन रूपाणां बाहुल्यं चेयते मया ॥१२६॥
निगमागमविद्यानां वक्ताऽहं पुरुषोत्तमः ।
श्रोतृव्यक्तिर्मम दासी प्रिया शिष्या त्वमन्वसि ॥१२७॥
मया नारायणेनात्र तुभ्यं लक्ष्मि ! प्रदीयते ।
ज्ञानं विज्ञानमात्मस्थं ह्यपरोक्षं सदा मम ॥१२८॥
सृष्टिकल्पलयपूर्वपूर्वतरतमाऽऽदिजम् ।
लक्ष्मीनारायणसंहितात्मकं श्लोककोटिकम् ॥१२९॥
वैराजाय त्वया देयं पञ्चाशल्लक्षसंख्यकम् ।
यत्रेश्वराणां वैशेष्यं वर्णितं चेशसृष्टये ॥१३०॥
वेधसे वै त्वया देयं पञ्चविंशतिलक्षकम् ।
यत्राऽगणितगोलादिब्रह्माण्डेतिकथादयः ॥१३१॥
सार्धद्वादशलक्षं च पितृभ्योऽर्प्यं त्वया प्रिये ! ।
यत्र तेषां सर्वकाण्डाः परमार्थतयाऽऽहृताः ॥१३२॥

पञ्चलक्षं त्वया देयं दिवि स्वर्गुरवे प्रिये ! ।
बार्हस्पत्यं सुराणां तज्ज्ञानं देवानुसारि वै ॥१३३॥
पञ्चलक्षं तु दैत्यानां पातालादिप्रवासिनाम् ।
शुक्राय च त्वया देयं तामसाद्यनुसारि यत् ॥१३४॥
सपादलक्षं दातव्यं ब्राह्ममार्षं विशोधकम् ।
त्यागिभ्यः परमर्षिभ्यो ब्रह्माऽवाप्तिकरं तु यत् ॥१३५॥
सपादक्षं दातव्यं विप्रेभ्यो मानवेषु वै ।
यदधीत्य चतुर्वर्गान् साधयिष्यन्ति मानवाः ॥१३६॥
कालान्तरे लयं याते भविष्यामि पुनः पुनः ।
तत्तज्ज्ञानप्रकाशाय व्यासाचार्यर्षिरूपतः ॥१३७॥
इति ते स्मारितं लक्ष्मि ! प्राग्वृत्तं ते च मे तथा ।
पूर्वे पूर्वा लयं यान्ति जलस्थलविवर्तनाः ॥१३८॥
वैराजाः कोटिशो नष्टा ब्रह्मादीनां तु का कथा ।
पुरुषोत्तमरूपोऽहं महाप्रलयकृत्तथा ॥१३९॥
सृष्टिकृन्नित्यविज्ञानोऽखिलाऽऽत्माऽन्तर्नियामकः ।
न विस्मराम्यण्वपि त्वचिन्त्यशक्तिनिधिर्ध्रुवः ॥१४०॥
यत्र वै पर्वतास्तत्र जलं कालान्तरे भवेत् ।
जलस्थाने स्थलं देह्यावासं वासे वनं तथा ॥१४१॥
रणेऽरण्यं तथाऽरण्ये पत्तनं विवरं च वा ।
विवरेषु महासेतुः स्तरं स्तरे तथाऽम्बरम् ॥१४२॥
क कदा किं भूतमेतज्जानामि भावि चाप्यहम् ।
सर्वं मयि भवत्येव किंचिन्मत्तो न रिच्यते ॥१४३॥
इदं सृष्टिसमारंभेऽस्मच्चरित्रकथामृतम् ।
अधिमासाऽपरपक्षाऽष्टमीव्रतमिषेण वै ॥१४४॥
स्मारितं ते मया लक्ष्मि ! पावनं श्रोतृदेहिनाम् ।
पाठकानां स्वर्गदं मोक्षदं व्रतप्रपुण्यदम् ॥१४५॥
अत्रोत्सवे व्रतकर्तुर्भुक्तिर्मुक्तिर्न संशयः ।
पुत्रार्थी लभते पुत्रं भार्यां भार्येच्छुको लभेत् ॥१४६॥
धनार्थी प्राप्नुयाद् द्रव्यं क्षेत्रार्थी भूमिमाप्नुयात् ।
धर्मार्थी पुण्यवान् स्याच्च सकामः कामनां लभेत् ॥१४७॥
यशः कीर्तिमवाप्नोति सतां प्रधानतां लभेत् ।
अशुभं नाशमायाति प्रपाठनेन सर्वथा ॥१४८॥
विप्रो विज्ञानवान् स्याच्च विजयं क्षत्रियो लभेत् ।
धनधान्यस्मृद्धिसम्पद्युक्तो वैश्यो भवेत्तथा ॥१४९॥
शूद्रः सर्वसमृद्धः स्यात् सुखी चास्य श्रवेण वै ।
श्रेयः श्रियं परां विन्देत् तेजोवीर्यं समाप्नुयात् ॥१५०॥
बलं रूपं गुणान् सम्पद् गोधनक्षेत्रवाटिकाः ।
दाराः सुता दासदासीर्गृहराज्यस्वरादिकम् ॥१५१॥

आरोग्यं च स्वतन्त्रत्वं निर्बन्धत्वं समाप्नुयात् ।
निर्भीकत्वं निरापत्त्वं प्राप्नुयान्मोक्षणं तथा ॥१५२॥
इत्यष्टमीव्रतजन्यं कथितं ते फलं प्रिये ।
व्रतं कृत्वा पूजयित्वा प्राप्नुयात् पुरुषोत्तमम् ॥१५३॥
मेऽवतारा असंख्याता ह्यहं श्रीपुरुषोत्तमः ।
अवतारी महाराजः परब्रह्म सनातनः ॥१५४॥
यावद् ब्रह्मा विराट् वापि वैकुण्ठभूमयस्तथा ।
सर्वत्राऽधिकमासोऽहं स्थास्यामि पुरुषोत्तमः ॥१५५॥
यावच्चन्द्रश्च सूर्यश्च स्थास्यन्ति मेदिनी तथा ।
कृष्णनारायणतीर्थं तावत् स्थास्यति शाश्वतम् ॥१५६॥
कृष्णनारायणश्चाहं ध्वजशार्ङ्गादिशोभितः ।
लक्ष्म्यादिसेवितस्तत्र स्थास्यामि पुरुषोत्तमः ॥१५७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पुरुषोत्तममासमाहात्म्ये मलमासस्याऽऽधिदैवे पुरुषोत्तमे जाते गोलोके कृतमहोत्सवरासे कृष्णमुकुटमणिकल्गिचन्द्रिकयोः मुकुटाद्वियोगे तयोर्भुवि आनर्तदेशे निम्बदेवमिष्टादेवीरूपेणाऽवतरणं, तयोर्गृहे कृष्णस्य गोपालकृष्णरूपेणाऽवतरणं, प्रेममणिगृहे रुक्मिणीलक्ष्म्याः कंभरारूपेणाऽवतरणं, कंभरालक्ष्मीगोपालकृष्णयोर्विवाहोत्तरं दुन्दुभिश्रवणेनाऽष्टमीव्रतकरणेन श्रीपुरुषोत्तमस्य तयोर्गृहेऽवतरणं, कोटिश्लोकसंहिताकरणं, चेत्यादिनिरूपणनामा पञ्चदशाधिकत्रिशततमोऽध्यायः ॥३१५॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! नवम्याश्चाधिकमासाऽन्तिमे दले ।
व्रतस्य पूर्वकल्पीयां कथां पापप्रणाशिनीम् ॥ १ ॥
पूर्वात् पूर्वतरे कल्पे बभूवेन्द्रो द्युमेरुजित् ।
सायं तस्य लये जाते पुण्यशेषेण वै पुनः ॥ २ ॥
सत्यलोके निशां भुक्त्वा कल्पाऽऽरंभे प्रगे तु सः ।
सृष्टौ त्रेतायुगे चाद्ये सम्राट् शतमखोऽभवत् ॥ ३ ॥
दानधर्मदयायुक्तो लोकरक्षणतत्परः ।
देवदानवमर्त्यानां मानकृद् विजितेन्द्रियः ॥ ४ ॥
व्योमयानेन विहरन् त्रिलोक्यां विचचार सः ।
गोभूतीर्थद्विजन्यासिसतीसाधुप्रपूजकः ॥ ५ ॥
यस्य हस्ततले वज्रच्छत्रखड्गांककानि वै ।
विद्योतन्ते स्म दिव्यानि देवत्वावेदकानि वै ॥ ६ ॥
तस्य पत्नी महाराज्ञी द्युवर्णाऽभूत् पतिव्रता ।
पतिसेवापरा नित्यं देवसेवापरा तथा ॥ ७ ॥
आतिथ्यधर्मिणी दीनाऽनाथदारिद्र्यनाशिनी ।
कन्यानामुन्नतिकर्त्री सदा स्त्रीजातिरक्षिका ॥ ८ ॥
गान्धर्व्यो नागकन्याश्च देव्यो दानव्य एत्य च ।
किन्नर्यश्चापि मानुष्यः शिक्षार्थं स्म वसन्ति वै ॥ ९ ॥
सावित्री चापि गायत्री संज्ञा स्वाहाऽप्यरुन्धती ।
महेन्द्राणी सती लक्ष्मीः रोहिणी पार्वती स्वधा ॥१०॥
प्रभा च माणिको श्रीश्च जया भक्तिर्दिशस्तथा ।
अन्या नद्यः कृत्तिकाद्यास्तस्याः सख्योऽभवँस्तदा ॥११॥
चम्पा दया रमा हेम्नी मुक्ता गोदा जयन्तिका ।
शान्तिः शान्ता प्रेमपात्रा दीपोत्सवी च नन्दिनी ॥१२॥
ओजस्वती सुरत्ना च दमयन्ती चतुर्मतिः ।
देविका कान्तिका रेवा सविता मूलयोगिनी ॥१३॥
कस्तूरिका मंगला च हंसा रुचिश्च मंजुला ।
निर्मला चामृता रालिजटिनी पानपुत्तली ॥१४॥
वनिता मिष्टिका पुष्पा मनुः कृष्णा च दासिकाः ।
कान्ता सरस्वती पद्मा शारदा उपदासिकाः ॥१५॥
कल्पद्रुमाश्च मणयः कामधेनव इष्टदाः ।
कल्पवल्ल्योऽभवँस्तस्या राज्ये प्राग्ज्योतिषाह्वये ॥१६॥
एवं शतमखो राजा राज्ञी द्युवर्णिका तथा ।
स्त्रीनरौ राज्यधर्मेण वर्तेते स्म भुवस्तले ॥१७॥
दैवयोगेन तद्राज्यमभूच्छीताद्रिदुर्गवत् ।
राजधानी कृता ताभ्यां साकेता सरयूमनु ॥१८॥
प्रधानं रक्षकं कृत्वा यात्रार्थं कृतनिश्चयौ ।
ततस्तौ संप्रयातौ वै बद्रीयात्रार्थमादरात् ॥१९॥
परिमेयचरचारभृत्यदासीजनौ शुभौ ।
तीर्थस्य नियमान्सर्वान्पालयन्तौ प्रजग्मतुः ॥२०॥
प्रातः स्नानं ब्रह्मचर्यं सत्यव्रतं फलादनम् ।
भूशायित्वं परित्यक्तशृंगारासनादिकम् ॥२१॥
अहिंसनं परिवादराहित्यं मालिकाजपम् ।
रागद्वेषविहीनत्वं दानं देवादिपूजनम् ॥२२॥
तीर्थवृद्धार्चनं तीर्थगुरुसाहाय्यकारिताम् ।
गोदर्शनं हरेः पादामृतपानं कथाश्रवम् ॥२३॥
विषयाणां परित्यागं साधुवद्वर्तनं तथा ।
रात्रौ नारायणध्यानं दिवा तीर्थाटनं शुभम् ॥२४॥
सायं नीराजनास्तोत्रकीर्तनस्मरणादिकम् ।
जंगमान्स्थावरान्प्रत्यनुद्वेजनं तितिक्षणम् ॥२५॥
पालयन्तौ तापसौ तौ भूत्वा बदरिकां गतौ ।
देवनद्यां तदाचम्य स्नात्वा पीत्वा जलं ततः ॥२६॥

दहशतुर्मुनींस्तीर्थात्मकौंस्तीर्थानि चांजसा ।
नरनारायणौ दृष्ट्वा पूजां कृत्वोपचारकैः ॥२७॥
साधुविप्रानतिथींश्च भोजयामासतुस्तदा ।
राज्ञा राज्ञ्या नरनारायणयोस्तोषणाय वै ॥२८॥
तत्रैव तु कृतं नृत्यं गायनं मूर्तिसन्निधौ ।
अर्पितं कानकच्छत्रयुगलं मुकुटद्वयम् ॥२९॥
युगकुण्डलयुगलं चामराणां चतुष्टयम् ।
यष्टिकायुगलं हाराश्चोर्मिकाविंशतिस्तथा ॥३०॥
कटकद्वययुगलं श्रृंखलारशनाद्वयम् ।
पादुकाद्वययुगलं तथा सिंहासनद्वयम् ॥३१॥
दक्षिणा भूयसी चैव स्वर्णपात्रोत्तमानि च ।
वल्कलाऽजिनवस्त्राणि फलानि दैशिकानि च ॥३२॥
समर्पितानि सर्वाणि तव स्व इति शब्दितम् ।
पादौ स्पृष्टौ जलं पीतं चरणामृतमित्यपि ॥३३॥
स्वर्णमालापादयोश्चार्पिता नरनरेशयोः ।
चन्दनादिसुवस्त्वाद्यैः पूजितौ परमेश्वरौ ॥३४॥
आशीर्वादास्तदा लब्धा पुत्रवान् भव पार्थिव ! ।
राज्ञी पुत्रवती भूयादिति श्रुत्वा प्रशं गतौ ॥३५॥
तावत्तत्राऽधिकमासनवम्यां प्रातरेव ह ।
संश्रुतो दुन्दुभिः सम्यङ्मनोवाञ्छाप्रपूरकः ॥३६॥
अद्य व्रतं प्रकुर्वन्तु गृह्णन्तु वाञ्छितं फलम् ।
पुरुषोत्तममासोऽयं फलदः पुरुषोत्तमः ॥३७॥
हृदि स्थितान् शुभान् कामान् गृह्णन्तु पुरुषोत्तमात् ।
मां च धाम विभूतिं च दास्ये स्मृद्धिं व्रतार्थिने ॥३८॥
अगम्यं बुद्धिगम्यं स्यादलभ्यं लभ्यमेव च ।
अतर्क्यं चापि तर्क्यं स्यान्नवमीव्रतकारिणः ॥३९॥
सर्वसंकल्पसिद्धिः स्यात् प्राप्तिः पुमुत्तमस्य च ।
दुन्दुभिश्चेत्यभिधाय दृष्ट्वा नरं नरेश्वरम् ॥४०॥
पूजयित्वा ऋषिवर्यौ जगामोत्तरदिग्भुवम् ।
दम्पती प्रसमाकर्ण्य ध्यात्वा नरनरेश्वरौ ॥४१॥
तल्लीनौ चाऽभवतां द्राङ् नरो नारायणस्तदा ।
तयोर्हृद्दोर्दहशाते दिव्यरूपौ सुशोभनौ ॥४२॥
मनोहरौ मञ्जुवाक्यौ मञ्जुलकेशसज्जटौ ।
पुष्टौ युवानौ दिव्यौ च तापसौ श्रीनिषेवितौ ॥४३॥
मुनिभिर्वन्दितपादौ वैकुण्ठवासिनावुभौ ।
राजभवनयोग्यौ तौ लालनपालनार्हणौ ॥४४॥
पद्मपत्रायतनेत्रौ सुचन्द्रास्यौ गुणालयौ ।
घनश्यामौ हृदयंगमौ मनोज्ञसुन्दरौ ॥४५॥
वीक्ष्य संकल्पितं पुत्राविदृशौ भवतां तु नौ ।
अथ ध्यानाद् बहिर्यातौ राज्ञीनृपौ विलोक्य च ॥४६॥
नरनारायणः प्राह संकल्पः फलतात्तु वाम् ।
श्रुत्वा तृप्तौ चाति जातौ तीर्थविधिं विधाय तौ ॥४७॥
निवर्तितौ ततः स्थानादाययतुर्नदीतटे ।
आचम्य कानकीं मूर्तिं स्नात्वा पुपूजतुस्तदा ॥४८॥
गंगाजलैर्हरिं तौ संस्नाप्य प्रमृज्य चाम्बरैः ।
पञ्चामृतं समर्प्यथाऽभिषेकं चक्रतुर्जलैः ॥४९॥
संप्रमृज्य सुवस्त्राण्याभूषणानि समर्प्य च ।
श्रृंगारशोभां संक्लृप्त्वा धूपदीपौ समर्प्य च ॥५०॥
चन्दनाऽक्षतकुंकुमकज्जलद्रवसारकैः ।
सुगन्धयित्वाऽऽरार्त्रिकं कारयामासतुस्ततः ॥५१॥
भोजयामासतुर्देवं वर्धयामासतुः स्तवैः ।
पुष्पांजलिं समर्पयामासतुश्च फलादिकम् ॥५२॥
ताम्बूलचर्वणं दत्वा याचयामासतुः क्षमाम् ।
एवं सूर्योदयात् पश्चात् पञ्चघटीगते पुनः ॥५३॥
समये चापि तौ कृत्वा स्नानार्चनस्तवादिकम् ।
नैवेद्यपानताम्बूलदक्षिणादिसमर्पणम् ॥५४॥
ऋषिदेवक्षितिदेवभोजनं दक्षिणां तथा ।
निर्वर्त्याऽर्घ्यं कुसुमानामञ्जलिं चाऽक्षताँस्तथा ॥५५॥
दत्वा स्तुतिं चक्रतुश्च विसर्जनं प्रचक्रतुः ।
एवं प्रपूज्य देवेशं श्रीकृष्णपुरुषोत्तमम् ॥५६॥
नरं नारायणं नत्वा तीर्थविधिं समाप्य च ।
पूर्वं मध्याह्नसमयाद् राजधानीं नवीकृताम् ॥५७॥
विमानेन समागत्य साकेतां सरयूमनु ।
उद्याने महती सौधे वृक्षवल्लीसुशोभिते ॥५८॥
मण्डपं कारयामासतुस्तौ स्वर्णादिशोभितम् ।
कलशैर्हारश्रृंगारैर्वस्त्रभूषाध्वजादिभिः ॥५९॥
शोभितं रंगवल्लीभिः सिक्तं गन्धजलादिभिः ।
वह्निकुण्डसमायुक्तं वेदिकासुविराजितम् ॥६०॥
कटपर्यंकबृसिकासूर्णास्तरणशोभितम् ।
कम्मानिकातोरणाढ्यं कदलीस्तंभसंधृतम् ॥६१॥
आदर्शचन्द्रकडंकानिशानभेरिकाऽऽनकैः ।
जलतरंगयन्त्रैश्च शीतवायुप्रवाहकैः ॥६२॥
शोभितं मण्डितं चित्रैरवतारसुरादिभिः ।
जलस्थलव्यत्ययेन दृष्टिर्जालैर्विलक्षितम् ॥६३॥
दूरश्रवणयन्त्रैश्च दूरदर्शनदर्पणैः ।
दूरग्रहणसिद्ध्याद्यैरलंकृतं विमानवत् ॥६४॥

तत्र मण्डपमध्ये तु सहकारतरू कृतौ ।
पार्श्वकोणेषु चत्वारोऽशोकवृक्षा विनिर्मिताः ॥६५॥
शाखासु दिव्यदोलां च बन्धयामासतुश्च तौ ।
तत्रमूर्तिमयान्देवान् शृंखलासु तु देविकाः ॥६६॥
संक्लृप्तयामासतुश्च कोमलास्तरणानि च ।
तत्र मूर्तिं कानकीं वै पुरुषोत्तमरूपिणीम् ॥६७॥
आरोप्याऽऽन्दोलयामासतुश्च राज्ञी नृपस्तथा ।
तत्र देवस्य निकषा सर्वतोभद्रमण्डलम् ॥६८॥
सप्तधान्यैः स्वर्णरत्नहीरकादिसुमिश्रितम् ।
रचयामासतुर्मध्ये सुवर्णकलशं शुभम् ॥६९॥
पंचरत्नजलपुष्पफलद्रव्याम्बरान्वितम् ।
स्थापयामासतुस्तस्योपरि स्थालीं तिलान्विताम् ॥७०॥
श्रीफलमुद्रिकायुक्तां धारयामासतुस्ततः ।
स्वर्णमूर्तिं द्वितीयां श्रीपुरुषोत्तमसंज्ञिताम् ॥७१॥
तत्स्थाल्यां स्थापयामासतुश्च षोडशवस्तुभिः ।
पूजयामासतुरारात्रिकं चक्रतुरादरात् ॥७२॥
नृत्यगीतानि तत्रैव कारयामासतुस्तदा ।
होमं त्वग्नौ कुण्डमध्ये कारयामासतुस्तथा ॥७३॥
भोजयामासतुर्विप्रान्देवान्साध्वीः सतस्तथा ।
दीनाऽनाथाऽबलावर्गान्दरिद्रान् भिक्षुकादिकान् ॥७४॥
दक्षिणा दापयामासतुश्च पुष्पाऽक्षताऽञ्जलीन् ।
अर्पयामासतुर्यावत् तावत्तत्र सुमण्डपे ॥७५॥
दिव्यरूपो युवा नूत्नजीमूतवर्णसुन्दरः ।
श्यामलः सजटो देवः सानुजः समदृश्यत ॥७६॥
मध्याह्नसमये दिव्यो मूर्तो वै पुरुषोत्तमः ।
दिव्यतेजःपरिध्याढ्याननहास्यसुरञ्जनः ॥७७॥
दिव्यनेत्रस्नेहपूर्णः पुष्टः पुष्टानुजान्वितः ।
पीताम्बरधनुश्चर्मखड्गशंखजटाधरः ॥७८॥
सुवर्णमुकुटाढ्यश्च सुवर्णकुण्डलान्वितः ।
आशीर्वादपरहस्तः सेवाकृपाढ्यमानसः ॥७९॥
स्थितिवाञ्छाभिसंचेष्टश्चारामशान्तिदः प्रभुः ।
आरामे मण्डपे जज्ञे मध्यादित्यसमुज्ज्वलः ॥८०॥
रामादित्येत्यनुजेनाऽऽहूतस्तत्र मुहुर्गिरा ।
रमन्ते योगिनो यत्राऽऽदित्योज्ज्वलपरेश्वरे ॥८१॥
रामादित्यो ह्ययं शतमखी जातोऽत्र केशवः ।
अयं रामावतारो वै प्रथमः परिकीर्तितः ॥८२॥
दृष्ट्वा तं जातमात्रं च युवानं केशवं प्रभुम् ।
आश्चर्यचकितौ राज्ञी राजा चोभौ बभूवतुः ॥८३॥
रामस्तु भगवान् दिव्यौ पितरौ प्राह तोषणात् ।
प्रसन्नोऽस्मि वरं याचतं यथेष्टं ददाम्यहम् ॥८४॥
मूर्तिरूपेण सेवा वामंगीकृता मया ततः ।
प्रादुर्भूय वरं दातुं प्रत्यक्षोऽस्मि पुमुत्तमः ॥८५॥
यो बदर्यां हरिर्दृष्टो नरेण सह तापसः ।
हृदि यौ ददृशाते च दिव्यरूपौ सुशोभनौ ॥८६॥
सोऽहं त्वत्र समायातः स्वभ्रात्रा पुरुषोत्तमः ।
नरादित्यो मम भ्राता तापसोऽपि मया सह ॥८७॥
दातुं नैजं दर्शनं चात्रागतोस्ति कृपावशः ।
प्रवृणुतं वरदानं मा चिरं त्वेष याम्यहम् ॥८८॥
इतिश्रुत्वा शतमखो नृपो राज्ञी द्युवर्णिका ।
बभूवतुश्चातिसंभ्रमौ संव्यग्रमानसौ ॥८९॥
वन्दन्तौ तिष्ठतं तिष्ठतं मा यातं न गच्छतम् ।
सर्वदा ददतं त्वत्र दर्शनं भवने प्रभू ॥९०॥
दर्शनीयौ कमनीयौ प्राप्स्येथे न पुनर्हरी ।
गृह्णीतं भोजनं रम्यं पेयं ताम्बूलमर्चनम् ॥९१॥
रमतं सर्वदा त्वत्रोद्याने ददतमीप्सितम् ।
वत्सौ किं वर्तते शैघ्र्यं यातं मा पुत्रकौ मम ॥९२॥
इत्युक्त्वा राजमहिषी निसर्गस्नेहसंभृता ।
सुतौ द्वौ निकटे कृत्वा स्पृष्ट्वा नेत्रजलाऽभवत् ॥९३॥
स्नुतदुग्धस्तनी जाता त्यक्तुं नोत्सहते स्म सा ।
राजाऽपि प्रेमपूर्णांगश्चाऽन्येऽपि मुमुहुर्हरौ ॥९४॥
भगवन्तौ प्राहतुश्च तथास्त्विवति सुमण्डपे ।
क्षणं बालौ तदा जातौ स्तन्यपानकराबुभौ ॥९५॥
द्युवर्णा तां पाययित्वा स्तन्यं प्राप्ता कृतार्थताम् ।
रामादित्यनरादित्याभिधपुत्रवती सती ॥९६॥
सुखिनी संबभूवाऽत्रानन्दोत्सवो महाँस्तदा ।
रामाविर्भावरूपो वै मध्याह्ने भूभृता कृतः ॥९७॥
ब्रह्मविष्णुमहेशाश्च मुनयः सनकादयः ।
नारदाद्याश्च ऋषयो भक्ता वैकुण्ठवासिनः ॥९८॥
सत्यलोकादिवसतिः स्वर्गदेवाश्च मानवाः ।
पातालादिस्थिताश्चान्ये जडाश्च चेतनाः प्रजाः ॥९९॥
तीर्थानि सरितः शैला अरण्यानि वनानि च ।
कल्पाश्च पादपाश्चिन्तामणयः कामधेनवः ॥१००॥
तत्रोत्सवे समायाता मन्त्रा वेदाश्च वित्तयः ।
तत्त्वानि चेतराः सर्वे ब्रह्मपुत्राश्च मानसाः ॥१०१॥
पितरो देवराजाश्च पार्थिवा लक्षकोट्यः ।
समायाता नवम्यां वर्धयितुं चाशिषाऽऽशिषा ॥१०२॥

अधिमासाऽपरपक्षनवम्यां मध्यगे रवौ ।
रामादित्यजयन्त्यां ते रामं वीक्ष्य नरं तथा ॥१०३॥
कृतार्थाश्चाऽभवन् लब्ध्वा सत्कारं भोजनादिकम् ।
रामप्रसन्नतां प्राप्य चक्रुर्गानं सुनर्तनम् ॥१०४॥
दानं शतमखः कोट्यर्बुदानि च गवां ददौ ।
वर्धका लोकपालाश्च दिक्पालाश्च सुरादयः ॥१०५॥
ययुर्निजस्थलं सर्वे स्वस्वलोकान् ययुर्जनाः ।
मध्याह्नपूजनं राज्ञ्या नृपेण तत्र मण्डपे ॥१०६॥
समाप्तं वै कृतं तद्वत् सायं निशि प्रपूजनम् ।
रात्रौ जागरणं चाथ प्रातः स्नानादिकं कृतम् ॥१०७॥
मूर्तेः संपूजनं पात्रभोजनं दक्षिणादिकम् ।
कृतं सर्वं सुविधिना व्रतं पूर्णं कृतं ततः ॥१०८॥
पारणा च कृता तेन पत्न्या सह सुपुत्रिणा ।
आनन्दः समभूत् तस्याऽतर्क्यो वै नवमीतिथेः ॥१०९॥
पुरुषोत्तममासस्य व्रतेन पुत्रदायिना ।
इति ते कथितं लक्ष्मि ! व्रतानामुत्तमं व्रतम् ॥११०॥
रामादित्यजयन्त्याख्यं व्रतपुण्यं महत्तमम् ।
इदं प्राग्रामचरितं पठेत् संश्रृणुयात्तु यः ॥१११॥
श्रावयेत्परया भक्त्या स भवेद् व्रतपुण्यभाक् ।
स्वेष्टं लभेल्लभेद्राज्यं लभेत् पुत्रं धनादिकम् ॥११२॥
लभेत् तीर्थफलं चापि साकेतसरयूकृतम् ।
लभेच्च बलवत्पुत्रं पुरुषोत्तमसन्निभम् ॥११३॥
भुक्तिं मुक्तिं सुखं स्वर्गं धाम वैकुण्ठमित्यपि ।
यद्यदिष्टं लभेत् सर्वं कृपया परमात्मनः ॥११४॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पुरुषोत्तममासमाहात्म्ये साकेतनगर्याः शतमखराज्ञः सुवर्णाराज्याश्च बदरिकाश्रमयात्रायां नरनारायणदर्शनोत्तरं द्वितीयपक्षनवमीव्रतकरणेन साकेतनगर्यां श्रीरामादित्यनरादित्यनामानौ प्रथमौ पुरुषोत्तमावतारौ दिव्यपुत्रौ बभूवतुरित्यादिनिरूपणनामा षोडशाधिकत्रिशततमोऽध्यायः ॥३१६॥

**श्रीनारायण उवाच—**

श्रृणु लक्ष्मि ! विकुण्ठा या गोलोके राधिकासुता ।
संकल्पमात्रजा कन्या तस्या वृत्तं व्रतान्वितम् ॥ १ ॥
अधिमासस्य देवोऽभूद् भगवान् पुरुषोत्तमः ।
राधया सहितः कृष्णो रासं चक्रे तदुत्सवे ॥ २ ॥
तत्राऽऽयाता गोपगोप्यः कन्याः कोट्यर्बुदार्बुदाः ।
कुटुम्बिनीः सकन्याश्च रूपलावण्यसम्पदः ॥ ३ ॥
गोपीर्वीक्ष्य स्वयं राधा त्वपुत्रीयेषु पुत्रिकाम् ।
गोपीनां कन्यका दिव्या आह्वयन्ति स्वमातृकाः ॥ ४ ॥
माँ अम्बे जननि चैवं ह्यानन्दयन्ति मातृकाः ।
पुत्रीहीना पतियुक्ता न पूर्णा सुखिनी हि सा ॥ ५ ॥
पुत्री मातृस्वरूपाऽस्ति मातुर्वै कार्यदासिका ।
सर्वथा साहचर्येण सेवते मातरं सुता ॥ ६ ॥
भोजने चोत्सवे याने रहस्याप्लवने गृहे ।
शयने वा प्रवासे वा साहाय्ये सेविका सुता ॥ ७ ॥
नारीवर्गस्य नार्येव शारीरसहसेविका ।
तत्रापि स्वसुता तुल्या न स्नुषा नापि भृत्यका ॥ ८ ॥
न वा कुटुम्बिनी तद्वद् यथा पुत्री तु सेविका ।
तस्मात् सुतां विना नारी त्वर्धसौभाग्यशालिनी ॥ ९ ॥
प्रातः पुत्रीमुखं दृष्ट्वा स्वर्गादप्यधिकं सुखम् ।
जननी विन्दति लोके न तथा पुत्रदर्शनात् ॥१०॥
पितुः पुत्रे यथा स्नेहो मातुः पुत्र्यां ततोऽधिकः ।
अबला गोसमा पुत्री कुमारी मातृसेविका ॥११॥
पश्चात् पतिपरा सा स्यात्तस्मान्मातुर्विशेषतः ।
पूर्णायुष्यसुखं पुत्र्याः कौमार्ये लभ्यमेव ह ॥१२॥
अतः पुत्री दशगुणा प्रेष्ठा भवति सर्वथा ।
मातुः कलासुकौशल्यं गृहकार्यादिशिक्षणम् ॥१३॥
पुत्र्यात्मके निजपात्रे वसत्येव सदा चिरम् ।
सत्पुत्र्या जायते माता यशस्विनी कुलद्वये ॥१४॥
पुत्री कीर्तिर्यशः पुत्री पुत्री पिण्डस्तु मातृजः ।
स्वात्मिकां पुत्रिकां दृष्ट्वा स्पृष्ट्वा हृष्यन्ति मातरः ॥१५॥
पुत्रः पितृस्वरूपोऽस्ति पुत्री मातृस्वरूपिणी ।
सुपुत्री जननी पुत्रीमत्सु मान्या भवत्यपि ॥१६॥
अपुत्री तु समाजादौ म्लानेव दृश्यते खलु ।
पुत्रीमण्डलमध्यस्था माता तत्र प्रकाशते ॥१७॥
अपुत्री तु यथा निद्रोत्थिता तद्वद्धि दृश्यते ।
बह्व्यः सुपुत्रिका यस्याः सा धनाढ्यासु पूज्यते ॥१८॥
पुत्र्यात्मकं धनं तस्याः सर्वश्रीभ्यो विशिष्यते ।
जामातारोऽपि बह्वो बहुपुत्र्या धनं महत् ॥१९॥
पुत्रीपुत्राश्च तत्पुत्रा धनं विस्तृतमेव तत् ।
बहुशाखस्य वृक्षस्य छायां श्रयन्ति लक्षशः ॥२०॥
अशाखस्य न वै छाया नाश्रिता नहि मान्यता ।
परोपकारो नाप्यस्ति तथाऽपुत्री विगण्यते ॥२१॥

पुत्रीसुखं परं दृष्ट्वा माता तोषं प्रयाति वै ।
न मे पुत्री न वा पुत्रः कथं राधा सुखाश्रया ॥२२॥
सपत्नीदुःखमापन्ना यदि पुत्रीमती भवेत् ।
तदा सापत्न्यदुःखं वै पुत्रीं दृष्ट्वा निवर्तते ॥२३॥
विरजा रुक्मिणी लक्ष्मीः रमा श्रीः पार्वती प्रभा ।
जया च विजया भामा मंगला माणिकी यमी ॥२४॥
अन्याश्चाऽसंख्यकोट्यश्च सपत्न्यः सान्ति मे सदा ।
सपुत्र्यस्ताः सदा दृश्या मया पुत्रीविहीनया ॥२५॥
तस्मात् पुत्री मया प्रार्थ्या कृष्णाच्छ्रीपुरुषोत्तमात् ।
यया पुत्रीमतीनां मौर्धन्यं मम यथा भवेत् ॥२६॥
इति संचिन्त्य राधा सा महोत्सवोत्तरं निजम् ।
भावं प्रकाशयामास रहः श्रीकृष्णसन्निधौ ॥२७॥
पुत्री मे दीयतां नाथ विना पुत्रीं मृतिर्वरा ।
पुत्रीमतीषु सर्वासु न शोभेऽहं समुत्सवे ॥२८॥
अपत्यानि विना नारी शोभते नैव चैकला ।
कदली शोभते नैव पार्श्वापत्यानि यत्र न ॥२९॥
विरुल्लता न शोभन्ते क्वचिच्छाखालतामृते ।
हरिणी शोभते नैव बालापत्यानि वै विना ॥३०॥
विद्युत्तु शोभते तत्र यत्र वृष्टिः प्रवर्तते ।
कुल्यां विना महत्त्वं न नद्याः क्वापि प्रसिद्ध्यति ॥३१॥
विनाऽङ्गुलीः फणा नैव शोभते शोभिताऽपि वै ।
शान्तिं विना न वा विद्या शोभते सा महत्यपि ॥३२॥
मुक्तिं विना पराविद्या शोभते न पराऽपि सा ।
तृप्तिं विना यथा भुक्तिर्निष्फलेव प्रजायते ॥३३॥
पत्नीं विना यथा शय्या यौवनोद्वेगदायिनी ।
पुत्रीं विना तथा माता वार्धक्ये दुःखदर्शिनी ॥३४॥
तस्मात् पुत्रीं समिच्छामि सर्वसद्गुणशालिनीम् ।
मात्राज्ञापालयित्रीं च कुलधर्मानुयायिनीम् ॥३५॥
मातृसेवाकरीं दिव्यां गृहकार्यसहायिनीम् ।
अन्नवारिसमित्पत्रशाकपुष्पादिरक्षिणीम् ॥३६॥
मार्जनं मज्जनं वस्तुरक्षणं क्षालनं तथा ।
पाचनं संस्करणं च जलाहरणप्रभृति ॥३७॥
कुर्यात् स्निग्धा सुता या स्यान्मातृवात्सल्यशोभिता ।
तस्मान्मया सुपुत्र्यत्र कृष्ण कान्त गुणालया ॥३८॥
सर्वश्रेष्ठा च विख्याता मातापितृसहायिनी ।
दृष्ट्वा स्मृत्वा च यां शान्तिर्भवेत् समिष्यते हरे ॥३९॥
यद्यहं ते प्रिया पत्नी मयि तुष्टो भवान् यदि ।
यद्यहं ते प्रिया दासी प्रियः कान्तोऽसि मे यदि ॥४०॥
तदा राधा वृणुतेऽत्र कृष्णात्पुत्रीं सुलक्षणाम् ।
सर्वपुत्रीमतीपुत्रीर्विस्मारयेत्तु या नु माम् ॥४१॥
इत्यभ्यर्थ्य प्रिया राधा कृष्णनारायणं प्रभुम् ।
कृत्वा वक्षसि संश्लिष्टं सेवयामास भावतः ॥४२॥
कृष्णस्त्वानन्दयित्वा तां ददौ तस्यै सुपुत्रिकाम् ।
दिव्यां राधासमाकारां राधारूपातिरूपिणीम् ॥४३॥
संकल्पमात्रजन्यां च जातमात्रां सुयौवनाम् ।
दिव्यां दिव्यसहस्राब्जगोपीरूपाऽतिरूपिणीम् ॥४४॥
यथा राधा तथा सास्ति यथा सा राधिका तथा ।
आन्तरं नैव सर्वात्मतुल्यतया विभासते ॥४५॥
मुमुहुर्गोपिकाः सर्वाः कृष्णपत्न्यश्च मोहिताः ।
स्तब्धाश्च चित्रिता यद्वत् तदानीमभवन् क्षणम् ॥४६॥
एतादृशी दर्शनार्हा वृत्तीनां कुण्ठिता परा ।
तत्रैव पुत्र्यां सर्वासां सर्वेषां चाऽभवत्तदा ॥४७॥
कृष्णोऽपि रूपसम्पन्नां सुतां दृष्ट्वा जहर्ष वै ।
वृत्तीनां कुण्ठितो भावो जातं स्थैर्यं यतोऽत्र वै ॥४८॥
पित्रा कृष्णेन वात्सल्याद् विकुण्ठेति समादरात् ।
समाहूता सुता तद्वत् समाहूता हि राधया ॥४९॥
विकुण्ठाख्या च सा कार्ष्णी राधेयीनामतोऽभवत् ।
गोलोकवसतिः सर्वा द्रष्टुं कन्यां समाययौ ॥५०॥
प्रशंसन्ति स्त्रियस्तां ता अहो राधा महोदया ।
अहो पुत्री दिव्यराधारूपाऽतिरूपभाजना ॥५१॥
अहो भाग्येन कस्यापि जातेयं सुमनोहरा ।
कृष्णादप्युत्तमं भाग्यं तस्य स्याद् यस्य सा भवेत् ॥५२॥
विवाहविधिना भार्या भवेद्यस्य तु कन्यका ।
स वै कृष्णोत्तमः कृष्णो भवेद्वै पुरुषोत्तमः ॥५३॥
इत्युक्त्वाऽऽशिष आयुज्य जग्मुः स्वस्वालयं जनाः ।
राधा तां पाययामास स्तन्यं तत्कालसंभवम् ॥५४॥
कृष्णः संस्कारयामास विधिना भोजनं ददौ ।
रमयामास माता तां लालनैः पालनादिभिः ॥५५॥
अथ सा राधिकासेवां करोति स्माऽतिभावतः ।
गृहकार्याणि सर्वाणि निर्वर्तयति शिक्षिता ॥५६॥
एवं विवर्तमाना सा वरारोहाऽतियौवना ।
नित्यं पित्रा समं याति द्रष्टुं श्रीपुरुषोत्तमम् ॥५७॥
अक्षराधिपतिं ब्रह्मपरं श्रीपरमेश्वरम् ।
अनन्तकृष्णसंसेव्यं नारायणाब्जवन्दितम् ॥५८॥
यत्कान्त्या लेशमात्रेण कान्ताः कृष्णादयो मताः ।
तमनादिब्रह्मयुक्तैः सेवितं पुरुषोत्तमम् ॥५९॥

प्रातः कृष्णः सदा याति परं पूजयितुं प्रभुम् ।
श्वेतदिव्यमहायुक्तसपक्षहस्तिसंस्थितः ॥६०॥
उपायनादिकं नीत्वा भगवान् राधिकापतिः ।
निवर्तते तु सम्पूज्य तदा कृष्णसुता तु सा ॥६१॥
चकमे राधिकापुत्री दृष्ट्वा श्रीपुरुषोत्तमम् ।
तस्या मनः समाकृष्य स्वस्मिन् स्थापयति प्रभुः ॥६२॥
विकुण्ठा ध्यायति दृष्टं कृष्णनारायणं हरिम् ।
सर्वक्रियासु स्नानादिकृष्णानारायणं प्रभुम् ॥६३॥
गायति स्मरति पश्यत्यपि श्रीपुरुषोत्तमम् ।
एवं नित्यं तया सार्धं समायाति च पूजनम् ॥६४॥
कृत्वा कृष्णः स्वकं धाम गच्छति नित्यमेव ह ।
विकुण्ठाऽपि तन्मयाऽभूत् सर्वक्रियासु सर्वदा ॥६५॥
पुरुषोत्तमपत्नीत्वं प्राप्तुं ध्यायत्यहर्निशम् ।
तावत्तत्र तदाऽवादीद् दुन्दुभिः श्रीहरेर्महान् ॥६६॥
अद्याऽस्ति दशमी रम्या पुण्यदाऽधिकमासिकी ।
परे पक्षेऽत्र व्रतकृल्लभते स्वेष्टवस्तुकम् ॥६७॥
अपि कन्या च वा नारी नरो वा दीनमानवः ।
अद्य व्रतेन वै स्वेष्टं प्राप्स्यत्येव न संशयः ॥६८॥
अक्षराधिपत्यनादिश्रीकृष्णपुरुषोत्तमः ।
यद्यदिच्छति तत्सर्वं प्रदास्ये वै व्रतार्थिने ॥६९॥
मा संकोचं प्रकुर्वन्तु प्रार्थनाकरणे जनाः ।
गोप्यं रक्ष्यं चाऽनिवेद्यं दास्ये संकल्पितं खलु ॥७०॥
इत्याश्रुत्य विकुण्ठा सा चक्रे वै दशमीव्रतम् ।
पुरुषोत्तमलब्ध्यर्थं सजागरं दिवानिशम् ॥७१॥
प्रातस्तया कृता पूजा शुभा षोडशवस्तुभिः ।
पुरुषोत्तममूर्तेश्च भोजनारार्त्रिकादिकम् ॥७२॥
स्नानपानसुनैवेद्यफलपुष्पजलादिकम् ।
प्रातर्मध्ये तथा सायं रात्रौ चकार पूजनम् ॥७३॥
कृष्णचन्द्रशीतरश्मितेजोमयेऽतिसूज्ज्वले ।
विरामाख्ये निशावाच्ये समये पुरुषोत्तमः ॥७४॥
समायात् तत्र मूर्त्याख्ये स्वरूपेऽक्षरधामतः ।
कोटिकृष्णसमः कान्तो विकुण्ठाभाग्यनिश्चितः ॥७५॥
प्रहसन् तां प्रभुः प्राहाऽऽगतोऽस्मि व्रतपुण्यदः ।
तव भक्त्या प्रसन्नोऽस्मि वृणु कृष्णसुतेऽनघे ॥७६॥
अदेयं नास्ति ते किञ्चित् स्मृतवत्यै सदा तु माम् ।
अनन्यायै भक्तिमत्यै कार्ष्ण्यै देयं यथेप्सितम् ॥७७॥
तदा प्राह विकुण्ठा तं प्रसन्ना लज्जिता तथा ।
हृदये प्राणनाथ त्वं वर्तसेऽविदितं न ते ॥७८॥
तथापि भक्तवात्सल्याज्जिज्ञासां त्वं करोषि वै ।
भगवन्मम नाथ त्वं भव प्राणपतिः प्रभुः ॥७९॥
इयं समर्प्यते स्वामिन् वरमालाऽऽदिश प्रभो ।
तथास्त्विति हरिः प्राह तथा प्राहाऽधिकं हरिः ॥८०॥
शृणु नैकस्वरूपोऽहं वसामि विविधाश्रयः ।
वसाम्यहं सदा धाम्न्यक्षरे श्रीपुरुषोत्तमः ॥८१॥
द्वितीयोऽहं वसाम्येव महावैकुण्ठधामनि ।
तथा जलावरणान्तवैकुण्ठेऽहं तृतीयकः ॥८२॥
श्वेतद्वीपाख्यवैकुण्ठे चतुर्थोऽहं वसाम्यपि ।
क्षीरान्तःस्थे तु वैकुण्ठे वसामि पंचमोऽप्यहम् ॥८३॥
तस्मात् त्वयापि सर्वत्र वस्तव्यं दिव्यरूपया ।
नैकेन वै स्वरूपेण स्थातुं सर्वत्र पार्यते ॥८४॥
ततोऽनेकस्वरूपत्वं कर्तव्यं भवति ध्रुवम् ।
किंच मात्रा तव राधिकया सेवार्थमित्यपि ॥८५॥
निर्मिता त्वं ततो तां वै त्यक्तुं नार्हसि सुन्दरि ! ।
राधासेवार्थमेवापि स्थातव्यं सर्वदा त्वया ॥८६॥
इति रूपाणि षट् कृत्वा स्थातव्यं सर्वथा त्वया ।
कृपया मम तस्मात्ते रूपाणि षड् भवन्तु वै ॥८७॥
इत्युक्ता सा षट्स्वरूपाऽभवत्तस्य कृपाकणात् ।
तत्रैकं त्वक्षरधामवासार्हं सर्वतोऽधिकम् ॥८८॥
पुरुषोत्तमयोग्यं संबभूव नित्यमुक्तिकम् ।
पत्नीत्वेन विकुण्ठां तां जग्राह पुरुषोत्तमः ॥८९॥
द्वितीयं राधिकासेवायोग्यं पुत्रीस्वरूपकम् ।
गोलोके तां कुमारीं वै स्थापयामास केशवः ॥९०॥
विकुण्ठा कन्यका पूर्वं यथा तत्रैव तिष्ठति ।
तृतीयं तु विकुण्ठाया व्यापकं मूर्तिमत्तथा ॥९१॥
रूपं द्वेधाऽभवत्तत्र व्यापकं तत्तु सर्वथा ।
वैकुण्ठाख्यं धामरूपमधिदैवं बभूव तत् ॥९२॥
महावैकुण्ठसंज्ञं तद् व्यापकं धाम चोच्यते ।
तत्र नारायणपत्नी महालक्ष्मीर्बभूव सा ॥९३॥
चतुर्थं तु विकुण्ठाया रूपं द्वेधाऽभवत्तथा ।
जलावरणवैकुण्ठं तेजोमयाधिदैवतम् ॥९४॥
व्यापकं संबभूवैकं लक्ष्मीरूपं द्वितीयकम् ।
विकुण्ठा सा विष्णुपत्नी सेवते विष्णुमादरात् ॥९५॥
पञ्चमं तु विकुण्ठाया रूपं द्वेधाऽभवत्तदा ।
श्वेतद्वीपाख्यवैकुण्ठं तेजोमयाधिदैवतम् ॥९६॥
व्यापकं संबभूवैकं लक्ष्मीरूपं द्वितीयकम् ।
विकुण्ठा सा विष्णुपत्नी सेवते विष्णुमादरात् ॥९७॥

षष्ठं चापि विकुण्ठाया रूपं द्वेधाऽभवत्तदा ।
क्षीरवैकुण्ठसंज्ञं तत्तेजोमयाधिदैवतम् ॥९८॥
व्यापकं सर्वभूवैकं लक्ष्मीरूपं द्वितीयकम् ।
विकुण्ठा सा विष्णुपत्नी सेवते विष्णुमादरात् ॥९९॥
एवं षण्मूर्तयस्तस्याः सुरूपा दिव्ययोषितः ।
षट्स्थलेषु हि वर्तन्ते विकुण्ठा भगवत्स्त्रियः ॥१००॥
वैकुण्ठानि तु चत्वारि धामानि दिव्यभूमयः ।
बभूवुस्तदधिष्ठात्रीदेवतास्ता हरीच्छया ॥१०१॥
चतस्रो व्यापिका देव्यो मिलित्वा दश ताः सदा ।
पृथग्रूपा बभूवुर्वै व्रतेन हरितोषणात् ॥१०२॥
कृष्णनारायणस्वामिपुरुषोत्तमसत्कृपा ।
किं किं न कुरुते लक्ष्मि ! सा विकुण्ठा भवत्यपि ॥१०३॥
स्वात्मानं त्वं विजानीहि स चाऽहं पुरुषोत्तमः ।
इत्यपि त्वं विजानीहि पतिं ते पुरुषोत्तमम् ॥१०४॥
ज्ञात्वा मां भजसे तत्र सर्वत्रात्र च मत्प्रिये ।
अहं जानामि तत्सर्वं नित्यप्रत्यक्षवत्तया ॥१०५॥
त्वं न वेत्सि तथा सर्वं मदिच्छा तत्र कारणम् ।
इति ते कथितं लक्ष्मि वृत्तं दशामिकाव्रतात् ॥१०६॥
विकुण्ठायास्तव रूपाण्यभवन् दशधा फलम् ।
मदिच्छया तथा जातं ममानुग्रहकारणम् ॥१०७॥
पठेद्वा शृणुयाद्वापि फलं तस्यापि तादृशम् ।
ददामीष्टं पूरयामि कृपया पुरुषोत्तमः ॥१०८॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पुरुषोत्तममासमाहात्म्ये श्रीकृष्णेन दत्ताया मानस्या राधिकापुत्र्या विकुण्ठानाम्न्याः दशमीव्रतेन सन्तुष्टपुरुषोत्तमकृपया षट्लक्ष्मीरूपाणि चत्वारि वैकुण्ठधामाधिदेवतारूपाणि चेत्यादिनिरूपणनामा सप्तदशाधिकत्रिशततमोऽध्यायः ॥३१७॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! पूर्वकल्पे भवां वभ्र्याः कथां शुभाम् ।
रुद्रपुत्री कृते चाद्ये समभूद् वभ्रिका सुता ॥ १ ॥
सत्याः सा मानसी पुत्री वटे तिष्ठति नित्यदा ।
मन्दरे पर्वते रुद्रावतारे वटपादपे ॥ २ ॥
पित्राश्रये कृताऽऽवासा त्वास्ते शुद्धा कुमारिका ।
सत्या चाऽप्रजया दृष्टा विकुण्ठा राधिकासुता ॥ ३ ॥
तदा पुत्रीमती स्यां चेत्यार्थयच्छंकरान्मुहुः ।
तथास्त्विति प्रसन्नः शंकरः संकल्पमाचरत् ॥ ४ ॥
यत्र वै मन्दरेऽरण्ये स्वावतारवटाश्रये ।
तत्रैव रमणात् सत्या मानसी दिव्यरूपिणी ॥ ५ ॥
जज्ञे कोटिचन्द्रतेजोऽधिकतेजोमयी सुता ।
जातमात्रा सुरूपा सुयौवना यादृशी सती ॥ ६ ॥
ततोऽप्यधिकसौन्दर्या सर्वदिव्यगुणालया ।
जातमात्रा दिव्यबोधा ननाम पादयोः पितुः ॥ ७ ॥
मातृचरणयोश्चापि ननाम सेविका यथा ।
सती चातिप्रसन्नाऽभूद् रुद्रोऽप्यतितरां सुखी ॥ ८ ॥
अनपत्यस्तु सापत्यो भवत्युत्सववर्धितः ।
कृतः सत्या शंभुना चोत्सवस्तत्र सुमन्दरे ॥ ९ ॥
देवा देव्यो मानवाश्च दिक्पाला मनवस्तथा ।
महर्षयोऽजपितरो विष्णुदक्षादयोऽपरे ॥१०॥
युगलानि ययुस्तत्र वभ्र्या जन्ममहोत्सवे ।
संस्कृता विधिना सप्तर्षिभिर्यज्ञोपवीतकम् ॥११॥
प्रार्पितं ब्रह्मवर्चस्कं सर्वतेजोधिका बभौ ।
जनकं ब्रह्मरूपं च तथा सा सेवते सतीम् ॥१२॥
पितराविव योगस्था समाधावपि तिष्ठति ।
वटवासा वटच्छायाकृतशाला वटाश्रया ॥१३॥
वटत्वक्संस्कृतवस्त्रा न्यग्रोधफलभोजना ।
न्यग्रोधदुग्धपाना च न्यग्रोधफलभूषणा ॥१४॥
न्यग्रोधस्य जटातन्तुशाटिका वटमूलके ।
वेदीकृतहोमकार्या वटपत्रसुकंचुकी ॥१५॥
वटकाष्ठसुवलया वटरूपा सदाऽभवत् ।
तापसी वटपुत्री सा सर्वसिद्धिमयी बभौ ॥१६॥
यद्यदिच्छति तत्सर्वं तत्र समुपतिष्ठते ।
सम्पदः स्मृद्धयो लक्ष्म्यो रसा भोग्यानि वै सुधा ॥१७॥
अमृतानि विचित्राणि दुग्धानि विविधानि च ।
सर्ववृक्षरसास्तत्र सर्वरत्नानि तत्र च ॥१८॥
सर्वभोग्योपकरणान्युपतिष्ठन्ति तद्वटे ।
सा तु योगबलात् सर्वं स्वस्या अग्रे प्रपश्यति ॥१९॥
मूलाधारे गुदे चक्रे गत्वा गणपतिं सुरम् ।
ध्यायति स्माऽस्य सामर्थ्यं वशीकरोति सर्वथा ॥२०॥
स्वाधिष्ठाने योनिमूले चक्रे गत्वा चतुर्मुखम् ।
ध्यायति स्माऽस्य सामर्थ्यं वशीकरोति सर्वतः ॥२१॥
मणिपूरे नाभिदेशे चक्रे गत्वा तु विष्णुकम् ।
ध्यायति स्माऽस्य सामर्थ्यं वशीकरोति सर्वथा ॥२२॥
हृदयेऽनाहते चक्रे गत्वा ध्यात्वा शिवं स्थितम् ।
तस्यापि सर्वसामर्थ्यं वशीकरोति योगिनी ॥२३॥

विशुद्धिचक्रे कण्ठस्थे स्वात्मनि संयमं परम् ।
कृत्वाऽऽत्मतत्त्वसामर्थ्यं वशीकरोति सर्वथा ॥२४॥
आज्ञाचक्रे भ्रुवोर्मध्ये ध्यात्वा हंसं गुरुं तथा ।
वशीकरोति ब्रह्मादि ज्ञानं सार्वज्ञ्यमेति या ॥२५॥
ब्रह्मरन्ध्रेऽपि सा गत्वा ब्रह्मलोकं गता सती ।
पश्यति श्रीपरात्मानं श्रीकृष्णपुरुषोत्तमम् ॥२६॥

क्वचित्समाधिना वम्री याति ब्रह्मपुरं प्रति ।
क्वचिद्वैकुण्ठलोकं च याति श्वेतं पुरं प्रति ॥२७॥
गोलोकं चामृतं धाम श्रीपुरं याति वासवम् ।
क्वचिच्छैवं क्वचिद् ब्राह्मं सौरं चान्द्रं च वारुणम् ॥२८॥
कौबेरं देवलोकाँश्च प्रकृतेः पुरुषस्य च ।
लोकान् सांकर्षणं धाम प्राद्युम्नं चानिरुद्धकम् ॥२९॥

चतुर्विंशतितत्त्वानां लोकान् याति समाधिना ।
असुराणां च नागानां देवीनामालयाँस्तथा ॥३०॥
भूगोले च खगोले च ब्रह्माण्डे याति योगिनी ।
इडायाः पिंगलायाश्च सुषुम्णादेश्च वर्त्मना ॥३१॥
सूर्यचन्द्रादिलोकाँश्च जगाम योगसंश्रया ।
संयमनीं धर्मपुरीं जगाम योगवर्त्मना ॥३२॥
नैकरूपधरा भूत्वा वम्री वटेऽपि तिष्ठति ।
तिष्ठत्यपरवृक्षेषु वैकुण्ठे श्रीपुरेऽपि च ॥३३॥

कुबेरस्य महाकोशे भूत्वा वम्री तु यक्षिणी ।
तिष्ठते सा धनयक्षिणीति रक्षाकरी तथा ॥३४॥
एवं भूत्वा बहुरूपा यथेष्टं रमते हि सा ।
वटाऽधः सूयमानत्वाद् वटसावित्रिका हि सा ॥३५॥

वटं स्वर्णं तस्य रक्षाकरी सा वटयक्षिणी ।
वृक्षेषु वसमानत्वाद् वार्क्षी वम्री सदाऽभवत् ॥३६॥
वटसावित्रिकाकृच्छ्रं पतिसंयोगदं सदा ।
वैधव्यं नैव चायाति वटसावित्रिकार्चने ॥३७॥
दारिद्र्यं नैव जायेत वटयक्षिणिकार्चने ।
लक्ष्मीं च सम्पदश्चैव धनं ददाति यक्षिणी ॥३८॥
सस्याऽन्नकणधान्यादि वार्क्षी ददाति पूजिता ।
वार्क्षी सर्वत्र वृक्षेषु तिष्ठते रसरूपिणी ॥३९॥

वटे वृक्षे मानिता या राति लक्ष्मीं ददाति सा ।
वम्री सतीसुता योगक्रियादक्षा स्थले स्थले ॥४०॥
योगाभ्यासेन गत्वैव ददर्श सर्वसृष्टिषु ।
युगलानि पतिपत्नीकृतानि मानसान्यपि ॥४१॥
ईश्वराणां सुराणां च मानवानां च शाखिनाम् ।
दिव्यानि देहयुक्तानि प्रिये ! पुण्यात्मकान्यपि ॥४२॥

दृष्ट्वा धर्मं विचार्यैव यौवनं वै पतिं विना ।
स्त्रीणां दोषकरं शुद्धिविहीनं भाति सृष्टिषु ॥४३॥
तस्मान्मयाऽपि योक्तव्यं पत्या सह सधर्मिणा ।
इतिविचार्य सा वम्री सतीपुत्री सुसुन्दरी ॥४४॥
निषसाद वटाऽधस्ताद् वेद्यां सा मन्दरे गिरौ ।
तावत्तत्पार्श्वतो याता दिव्याः प्रचेतसो दश ॥४५॥

स्वतुल्यान् रूपसम्पन्नान् पुष्टयौवनसंभृतान् ।
पुनस्तत्पार्श्वतो जग्मुः कृत्वा शंकरदर्शनम् ॥४६॥
मनस्तेषु तदा वम्र्याः किञ्चिद्वै स्निग्धतां गतम् ।
तानेव संस्मरन्त्यत्र वटे सा व्यग्रमानसा ॥४७॥
शुश्राव दुन्दुभिं चाधिकमासव्रतबोधकम् ।
अद्यैकादशिकापर्व पुण्यदं चाधिमासिकम् ॥४८॥

व्रतकर्त्री भवेत्स्वेष्टं सिद्धं प्रयत्नमन्तरा ।
पुरुषोत्तम कृष्णोऽहं ददामीष्टं व्रतार्थिने ॥४९॥
दुन्दुभिः संवदाम्यत्र साक्षाच्छ्रीपुरुषोत्तमः ।
गृह्णन्तु वरदानं मत् यथेष्टं सुरमानवाः ॥५०॥
नरा नार्यः सुरा देव्यः समायान्तु मदन्तिकम् ।
एकादश्या व्रतपुण्यं ददामि मनसेप्सितम् ॥५१॥
श्रुत्वा वम्री दुन्दुभिं तं प्रति शीघ्रं समाययौ ।
संपूज्य दुन्दुभिं कन्या प्रोवाच दशवारकम् ॥५२॥

पतिं देहि, पतिं देहि, पतिं देहि, पतिं, पतिम् ।
पतिं देहि, पतिं देहि, पतिं देहि, पतिं, पतिम् ॥५३॥
श्रुत्वा तथास्त्विति प्रोच्य दुन्दुभिर्निर्ययौ ततः ।
वटं सापि ययौ शीघ्रं यथा जानाति नो सती ॥५४॥

प्रसन्ना तुष्टहृदया वरदानधनान्विता ।
पुनः शुश्राव तं वाद्यं श्रीकृष्णपुरुषोत्तमः ॥५५॥
पूजया तोषितः शीघ्रं मानसं पूरयिष्यति ।
श्रुत्वैवं सा वटाऽधस्तात् प्रतिमां पौरुषोत्तमीम् ॥५६॥
विधाय पूजयामास वटपत्रफलादिभिः ।
आवाह्याचमनं कारयित्वाऽऽसनं समर्प्य च ॥५७॥
पाद्यमर्घ्यं संसमर्प्य दध्ना दुग्धेन वारिणा ।
शर्करया मधुना च घृतेनाऽस्नापयद्धरिम् ॥५८॥

वस्त्रेण मार्जयामास जलान्यंगेभ्य ईश्वरी ।
धौत्रं व्याघ्राम्बरं चोत्तरीयं हस्त्यम्बरं तथा ॥५९॥
वटत्वङ्नक्तकं यज्ञोपवीतं दर्भनिर्मितम् ।
समर्प्याऽऽभरणानीष्टपौष्पाणि फालिकानि च ॥६०॥
सौवर्णानि च रौप्याणि कस्तूरीचन्दनाऽक्षतान् ।
धूपदीपसुनैवेद्यताम्बूलफलचर्वणम् ॥६१॥

आरार्त्रिकं दण्डवच्च प्रदक्षिणां स्तुतिं तथा ।
पुष्पांजलिं समर्प्याऽथ जगौ संकीर्तनं ततः ॥६२॥
मध्याह्नेऽपि तथा सायं निशि प्रपूज्य केशवम् ।
वम्री सजागरं नृत्यं चकार हरिसन्निधौ ॥६३॥
डमरूं वादयमाना किंकिणीशब्दमिश्रितम् ।
गायनं गीतिकायुक्तं मधुरं वै चकार सा ॥६४॥
वनवृक्षाश्च तच्छ्रुत्वा लतास्तृणानि चाययुः ।
स्तबकाश्च समाजग्मुः श्रवणाऽऽकृष्टचेतनाः ॥६५॥
चेतनाऽऽरण्यकाः सर्वे सपक्षाः पक्षवर्जिताः ।
अपि श्रवणसंकृष्टाः समायाता वटस्थलम् ॥६६॥
पुरुषोत्तमदेवस्य पूजाया जलममृतम् ।
प्रासादिकं फलं चान्यत् पत्रं पुष्पादिकं तथा ॥६७॥
ददौ तेभ्यस्तु सर्वेभ्यः पश्चाज्जग्राह वम्रिका ।
सती च शंकरश्चैतद्भागवतप्रपूजनम् ॥६८॥
दृष्ट्वाऽऽश्चर्यं परं प्राप्तौ प्रशंसतुश्च पुत्रिकाम् ।
ददतुश्चाशिषः पुत्रि ! यथेष्टं सुखिनी भव ॥६९॥
वैष्णवी भव कल्याणि ! वनसौख्यकरी भव ।
तापसी ब्रह्मशक्तिश्च पुमुत्तमप्रिया भव ॥७०॥
पूज्या वटस्थिता मान्या वृक्षरसप्रदा भव ।
इत्याद्याशीर्वचनैस्तां योजयामासतुः शिवौ ॥७१॥
अथैवं पूजनं कृत्वा कृत्वा विसर्जनं हरेः ।
वटवेद्यां निषसाद समाजं विनिवृत्त्य सा ॥७२॥
तावत्तत्र समायातो दिव्यरूपधरः पुमान् ।
रूपानुरूपायऽवयवः कोटिशंभुसमोज्ज्वलः ॥७३॥
चन्द्राननसुशोभाढ्यो युवा योग्यो वरो यथा ।
प्रहस्य तां समाकृष्य प्रियेत्याह सकौस्तुभः ॥७४॥
वम्री नम्रमुखी भूत्वा ज्ञात्वा श्रीपुरुषोत्तमम् ।
पतिता पादयोस्तस्य चक्रपद्मधरस्य वै ॥७५॥
वद देवि ! व्रतेनाऽस्मि प्रसन्नः पुरुषोत्तमः ।
वरं ब्रूहि ददाम्यत्र यत्ते मनसि वर्तते ॥७६॥
वम्री तु पादयोर्नत्वा जलं धृत्वा मुखे तदा ।
रजश्च मस्तके कृत्वा स्तने कृत्वा पदाम्बुजम् ॥७७॥
कण्ठोपरि करौ स्थाप्य मनो दत्वा हृदम्बरे ।
नेत्रे तु नेत्रयोः कृत्वा गृहीत्वा पुरुषोत्तमम् ॥७८॥
पत्नीं भार्यां तव दासीं गृहाणेत्यवदत्तु सा ।
परं भावं हरिर्ज्ञात्वा तथास्त्वित्याह माधवः ॥७९॥
परं प्राह च तां वम्रीं स्मर पूर्वं तवाऽर्थितम् ।
सन्निधौ मे दुन्दुभेस्तु दशवारं पतिं पतिम् ॥८०॥
एकोऽहं ते पतिर्भाव्यः साक्षाच्छ्रीपुरुषोत्तमः ।
भव दिव्यस्वरूपा त्वं समागच्छ मया सह ॥८१॥
अक्षरे परमे धाम्नि मम पत्नी तु शाश्वती ।
भवाऽथ मानसी पुत्री सतीसेवा परा सदा ॥८२॥
वटसावित्रिका नित्यं सन्तिष्ठाऽत्र कुमारिका ।
रुद्रपुत्री वटयक्षिणीति द्रव्याधिरक्षिका ॥८३॥
खनिष्वपि पृथिव्यां त्वं तिष्ठ रुद्रीस्वरूपिणी ।
स्मर प्रचेतसो दृष्ट्वा मनस्ते स्निग्धतां गतम् ॥८४॥
अतस्ते पतयो भाव्या दश प्रचेतसोऽमलाः ।
किन्तु नानेन देहेन तव योग्या हि ते मताः ॥८५॥
तस्माद् वृक्षैरर्थितासि ये येऽत्र पूजनावधौ ।
उपस्थिताश्च तेषां त्वं पुत्री भव प्रिये ! तथा ॥८६॥
ममाऽऽज्ञयाऽभिधानं ते वार्क्षी भविष्यति ध्रुवम् ।
वृक्षपुत्री भव देवि दशधा रूपधारिणी ॥८७॥
शृणु त्वां कथयाम्यत्र तत्तद्रूपाणि संकुरु ।
वृक्षाः, स्तम्बाश्च, सस्यानि, शाकानि च, तृणानि च, ॥८८॥
नलाश्च, वल्लयश्चैव, दण्डाः, पत्राणि, कन्दकाः ।
दशस्वेतेषु पितृत्वं स्वीकृत्य दशधा भव ॥८९॥
सशाखफलमात्रेषु ह्यशाखपुष्पमात्रके ।
सशाखपुष्पमात्रेषु ह्यशाखफलमात्रके ॥९०॥
सशाखफलपुष्पेषु ह्यशाखफलपुष्पके ।
सशाखाऽफलपुष्पेषु ह्यशाखऽफलपुष्पके ॥९१॥
सशाखपत्रमात्रेषु ह्यशाखपत्रमात्रके ।
पुत्री भूत्वा रसान् देहि दशपुत्र्यो भवन्तु वै ॥९२॥
इत्युक्त्वा भगवान् कृष्णनारायणोऽतिभावतः ।
वम्रीरूपं धामयोग्यं कृत्वा नीत्वा ययौ मुदा ॥९३॥
एकं पुत्रीस्वरूपं तु स्थितं वम्र्याः सतीकृते ।
अपराणि च रूपाणि वृक्षकन्याः सुयौवनाः ॥९४॥
निष्पन्नास्तास्तदा निन्युर्वृक्षा विभिन्नजातयः ।
तैः प्रदत्ताः प्रचेतोभ्यो दशभ्य एव धर्मतः ॥९५॥
सर्वत्र रसदायिन्यः फलदायिन्य एव ताः ।
नारदस्योपदेशेन प्रचेतसां तु मोक्षणे ॥९६॥
वार्क्षीणामपि मोक्षो वै भविष्यति न संशयः ।
एकादशीव्रतं त्वेवं कृत्वा वम्री सतीसुता ॥९७॥
प्रपेदे परमं धाम तन्वा ब्राह्म्या हि शाश्वतम् ।
पुरुषोत्तमपत्नीत्वं प्राप्ता यथेष्टसौख्यदम् ॥९८॥
देव्यो वम्र्यस्तथा वार्क्ष्यो जाताः कृपाकणाद्धरेः ।
देव्यो वम्र्यस्तु रूद्रस्य वेद्यां प्रथमजा वरे ॥९९॥

मखस्य देवजयने बभूवुः समिधो भुवि ।
श्रावणात्पठनाच्चास्यैकादश्या व्रतजं फलम् ॥१००॥
लभते वाचयेद् यः स धनधान्यसमृद्धिमान् ।
भुक्तिं मुक्तिं च लभते पुरुषोत्तमतोषणात् ॥१०१॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पुरुषोत्तममासमाहात्म्ये सतीरुद्रयोर्मानसपुत्र्या योगिन्या वम्र्याऽधिकमासैकादशीव्रतकरणेन स्वेष्टब्रह्माऽक्षर-धामयोग्यब्राह्मीतनुर्लब्धा, रूपान्तरैर्दशप्रचेतःपत्नीत्वं वृक्षकन्यात्वं चेत्यादिनिरूपणनामाऽष्टा-दशाऽधिकत्रिशततमोऽध्यायः ॥३१८॥

**श्रीनारायण उवाच—**

श्रूयतां च त्वया लक्ष्मि ! कथां वैराजपादजाम् ।
जोष्ट्रीं देवीं समुद्भूतां सृष्ट्यारंभे तु सेविकाम् ॥ १ ॥
वैराजः पुरुषः पुत्रं ब्रह्माणं नाभिदेशतः ।
समुत्पाद्याऽऽपर्यन्तस्मै जोष्ट्र्याख्यां सेविकां ततः ॥ २ ॥
वैराजचरणोत्पन्नां जुषमाणां तु वेधसम् ।
सत्यलोके सदा दासीसमां त्वावासयद्ध्वजः ॥ ३ ॥
ब्रह्मणा मनसा ध्याता सेविका सा पुनः पुनः ।
सुषुवे सेविकां जातिं नैकधा स्वप्रजात्यिकाम् ॥ ४ ॥
ऋषिष्वनशनाख्यां स्वपुत्रीं प्रसूय संदधे ।
पिपासाख्यां सुतां पितृषु प्रसूय च संदधे ॥ ५ ॥
अशनाख्यां सुतां देवेषु च प्रसूय सन्दधे ।
भूतप्रेतपिशाचादौ प्रसूय वासनां दधे ॥ ६ ॥
भूभृत्सु च कराऽऽयां संप्रसूय पुत्रिकां दधे ।
मानवेषु व्यवसायां पुत्रीं प्रसूय सन्दधे ॥ ७ ॥
दानवेषु प्रसह्यां च पुत्रीं प्रसूय सन्दधे ।
दैत्येषु च विलासाख्यां सुतां प्रसूय सन्दधे ॥ ८ ॥
पशुपक्षिषु विश्वासां सुतां प्रसूय सन्दधे ।
वृक्षवल्लीषु तां मेघां पुत्रीं प्रसूय सन्दधे ॥ ९ ॥
कीटपतंगजन्त्वादौ दधे प्रसूय कर्दमाम् ।
जलवासेषु पुत्रीं कुंभिकां प्रसूय सन्दधे ॥१०॥
एवं द्वादशपुत्रीः सा सम्प्रसूय यथाप्रजम् ।
प्रददौ सा प्रजाभ्यः सेविकां प्रत्येकमादरात् ॥११॥
एवं सेवापरा जोष्ट्री वेधसः सेविका सदा ।
सत्यलोके वर्तते स्म सेवाधर्मे हि नित्यदा ॥१२॥
यथा विप्रस्य कर्माणि सन्ति षट् मोक्षदानि हि ।
तथा चतुर्थवर्णस्य सेवा मोक्षकरी मता ॥१३॥
यथा त्राणं क्षत्रियाणां निःश्रेयसकरं मतम् ।
तथा सेवकवर्गस्य सेवा निःश्रेयसप्रदा ॥१४॥
यथा दानं तु वैश्यस्य श्रेयस्कृत् तूभयत्र हि ।
तथा तु सेविका वर्गः श्रेयांसि सेवया लभेत् ॥१५॥
यथा दास्याः सदाऽऽज्ञायां वर्तनं मोक्षदं भवेत् ।
तथा सेवकवर्गस्य सेवा वै मोक्षदा भवेत् ॥१६॥
ब्रह्मचर्यव्रतं शीलं यथा रक्षणदं भवेत् ।
तथा सेवा सेविकायाः सदा रक्षणदा भवेत् ॥१७॥
यथा गार्हस्थ्यधर्मस्य सत्कारो रक्षको भवेत् ।
यथा सेवकवर्गस्य सेवा वै रक्षिका भवेत् ॥१८॥
यथा वनस्थितानां वै तपः सुखकरं मतम् ।
तथा सौख्यं परिचर्याकर्तुर्भवति सर्वदा ॥१९॥
यथा त्यागवतां त्यागः परमानन्ददो मतः ।
तथा भावेन सेवा वै सेवकाऽऽनन्ददायिनी ॥२०॥
यथा यज्ञस्तपो ध्यानं जपो दानं हवादिकम् ।
उभयत्र सुखदं सेवापि सर्वत्र सौख्यदा ॥२१॥
सेवया प्राप्यते स्वर्गं राज्यं लक्ष्मीर्धनादिकम् ।
यशः कीर्तिस्तथा पुण्यं शाश्वतं मोक्षणं ध्रुवम् ॥२२॥
कृष्णसेवा मातृसेवा पितृसेवाऽऽत्मसेवनम् ।
देवसेवा जनसेवा वृद्धसेवाऽऽर्त्तसेवनम् ॥२३॥
पतिसेवा सतीसेवा पत्नीसेवेश्वरार्चनम् ।
गोभूधर्माऽनाथसेवाऽऽश्रितसेवा प्रजार्हणम् ॥२४॥
स्वामिसेवाऽतिथिसेवा परात्मतोषणादिकम् ।
इहाऽमुत्र सुखदं च पुण्यदं शान्तिदं भवेत् ॥२५॥
पुरुषोत्तमबुद्ध्या तु कृतं मोक्षकरं भवेत् ।
देहसेवा धनसेवा पादसंवाहनादिकम् ॥२६॥
गुणसेवा वस्तुसेवाऽन्नसेवा जलसेवनम् ।
गृहसेवा रुग्णसेवा लोकसेवादिकं तथा ॥२७॥
सर्वं कृतं ब्रह्मदृष्ट्या सुखदं मोक्षदं भवेत् ।
सेवाधर्मस्ततो बोध्योऽगम्यो वै सर्वदेहिनाम् ॥२८॥
सर्वमन्यद्भवेत् सेवा न भवेच्छ्रद्धया विना ।
विना भावनया सेवा न भवेद् योजिताऽपि वै ॥२९॥
मोक्षेच्छया भवेत्सेवा भवेत्सुखेच्छयाऽपि वा ।
स्वार्थेच्छयाऽपि वा सेवा भवेत् फलाभिकाम्यया ॥३०॥
निष्कामेन कृता या तु कोटिगुणार्थदा हि सा ।
अकामस्य तु कार्यस्य फलदः पुरुषोत्तमः ॥३१॥
इति विचार्य सा जोष्ट्री सर्वलोकस्य सेवनम् ।
पुत्रीभिः कारयामासाऽऽन्तरात्मा यत्र तुष्यति ॥३२॥

सेवया तोषिताः सन्तो ददत्याशिष एव च।
वृद्धा विप्राः प्रयुञ्जन्ति समाशिषस्तु सेविने ॥३३॥
शरीरं नाशमायाति तेन सेवा कृता परे।
लोके सहायतां याति तस्मात् सेवां समाचरेत् ॥३४॥
परोपकारः कुत्रापि विफलो याति नैव ह।
सेवापि विफला नैव कालान्तरेऽपि जायते ॥३५॥
अदत्तं नोपतिष्ठेत दत्तमेवोपतिष्ठते।
असेवा नोपतिष्ठेत कृता सेवोपतिष्ठते ॥३६॥
देहेन मनसा वाचा पितरं गुरुमच्युतम्।
सेवेत सर्वदा प्राणी फलं तच्छाश्वतं भवेत् ॥३७॥
इति जोष्ट्री सदा सत्ये सेवते परमेष्ठिनम्।
पुत्रीभिश्च प्रजासेवां करोत्यनुदिवं शुभाम् ॥३८॥
एकदा तु समाजोऽभूत् सुधर्मायामजगृहे।
ऋषयो मुनयो देवाः पितरो मानवा द्रुमाः ॥३९॥
पिशाचाद्यास्तथा कन्दा वल्लयो दैत्यदानवाः।
समायाताश्चतुर्दशभुवनस्थास्तु देहिनः ॥४०॥
अदृश्याश्च तथा दृश्याः सस्त्रीकाः समुपाययुः।
तैस्तैः समाजमूर्धन्यैराययुर्द्वादशापि ताः ॥४१॥
सेविका दासिकारूपा जोष्ट्रीपुत्र्योऽशनादिकाः।
समाजाः सेवितास्ताभिर्योग्या येषां कृते तु या ॥४२॥
तां तां सेवां विधायैव तोषिताः सर्वयोनयः।
तुष्टास्ताभ्यो ददुः पारितोषिकाण्याशिषस्तथा ॥४३॥
सर्वा भवन्तु सद्भाग्याः शाश्वतानन्दपूरिताः।
धनधान्ययशःकीर्तिसम्मानगुणपूजिताः ॥४४॥
सिद्धयैश्वर्ययुता रम्यरूपधारिण्य एव च।
जोष्ट्रीवंशप्रवर्धिन्यो महातेजोधराः सदा ॥४५॥
लोकप्रकाशकारिण्यो देव्यो यद्यपि सेविकाः।
भवन्तु सर्वदा ब्राह्म्यः शाश्वतस्थिरयौवनाः ॥४६॥
इतिलब्धाशिषः सर्वाः समाजे तु निवर्तिते।
स्वसारो द्वादशमातुर्जोष्ट्र्या गृहं ययुः क्षणम् ॥४७॥
तत्र तावत् सत्यलोके दुन्दुभिः श्रीहरेर्महान्।
अश्रूयत वदन् शब्दं पुरुषोत्तमदेशितम् ॥४८॥
अत्राऽधिके तु मे मासे द्वादश्यां मम पूजनम्।
व्रतं ममैकशरणं कुर्वन्तु देहिनो यथा ॥४९॥
भवन्मनोऽभिलषितं दास्येऽहं पुरुषोत्तमः।
माऽत्र प्रमदितव्यं वै कृच्छ्रं स्वल्पं व्रतं बहु ॥५०॥
भाग्यं येषामुज्ज्वलं वै गृह्णन्तु तेऽति तत्फलम्।
दाताऽहं कृपया कृष्णनारायणोऽस्मि सर्वथा ॥५१॥
सिद्धीर्दास्ये धाम दास्ये दास्ये वै शाश्वतं सुखम्।
सर्वं दास्ये च मां दास्ये न दास्ये नेप्सितं तु यत् ॥५२॥
एकभुक्तेन नक्तेन फलाहारेण वा व्रतम्।
जलाहारेण दध्ना वा मुन्यन्नेन च भाजया ॥५३॥
पत्रेण कन्दमूलैश्च वायुभक्षेण वा व्रतम्।
मम प्रसादलेशेन कृतं वा यद्यपि व्रतम् ॥५४॥
तक्रेण पयसा वापि तिलैश्च माषमुषिभिः।
येन केनापि भावेन द्वादशीव्रतमाहितम् ॥५५॥
तस्याऽहं वाञ्छितं सर्वं पूरयिष्यामि सर्वथा।
पूजनं मम कर्तव्यं प्रातर्मध्ये निशामुखे ॥५६॥
जागरं च प्रकर्तव्यं देयानि भोजनानि च।
दानान्यपि प्रदेयानि यथाशक्ति यथार्जनम् ॥५७॥
मह्यं पुष्पांजलिं दद्याद् दद्यात्तथाऽक्षताञ्जलिम्।
जलांजलिं प्रदद्याच्च दद्याच्च भावनांजलिम् ॥५८॥
स्नेहांजलिं प्रदद्याच्च दद्यादात्मांजलिं व्रती।
प्रदद्यात्सर्वतः श्रेष्ठां सर्वसमर्पणांजलिम् ॥५९॥
भावगम्यः स्नेहगम्यः प्रेमगम्यो भवाम्यहम्।
वस्तुगम्यः स्वार्थगम्यो यद्वा तद्वा भवाम्यहम् ॥६०॥
गमिष्यति च दीर्घायुर्गमिष्यति च यौवनम्।
यास्यन्ति सम्पदो नाशं मत्कृपा शाश्वती मता ॥६१॥
यास्यन्ति शीर्णतां योगाः पुष्टिर्यास्यति जीर्णताम्।
वर्ष्म यास्यति भस्मत्वं मत्कृपा शाश्वती मता ॥६२॥
उत्पन्नं तद्विनष्टं स्यात् पुण्यं राज्यं धनादिकम्।
शाश्वती मे कृपा बोध्या यन्नाशो नैव विद्यते ॥६३॥
कृपां गृह्णन्तु कृपणा दूरयान्तु दरिद्रताम्।
मदाज्ञया व्रतेनैव शाश्वताढ्या भवन्तु वै ॥६४॥
इत्येवं दुन्दुभेः शब्दं श्रुत्वा ता मातृवर्धिताः।
व्रतं चक्रुर्हि पयसा द्वादश्या द्वादशैव ताः ॥६५॥
अपि जोष्ट्री व्रतं चक्रे वारिणा भावगर्भितम्।
स्नात्वा प्रातः कृष्णनारायणं स्मृत्वा त्रयोदश ॥६६॥
स्वर्णमूर्तिं विधायैवाऽपूजयन् पुरुषोत्तमम्।
मण्डपं कदलीस्तंभं ह्यशोकाम्रादितोरणम् ॥६७॥
पुष्पहारावलिजुष्टं स्वर्णवस्त्रादिशोभितम्।
रंगदीपसुकलशैर्मण्डितं तोरणादिभिः ॥६८॥
तन्मध्ये सर्वतोभद्रं कारयित्वा सुमण्डलम्।
रम्यं सुवर्णकलशं पञ्चरत्नसुपल्लवम् ॥६९॥
वस्त्रं फलं चन्दनं चाऽक्षतान् मध्ये निधाय च।
तन्मूर्ध्नि कानकं न्यस्य पात्रं सतिलशर्करम् ॥७०॥

तत्र निधाय देवेशं श्रीकृष्णपुरुषोत्तमम् ।
वै षोडशपदार्थैश्च पूजयामासुरादरात् ॥७१॥
आवाहनादिकं कृत्वा पञ्चामृतैश्च वारिभिः ।
संस्नाप्य मार्जनं कृत्वाऽम्बराण्याभूषणानि च ॥७२॥
कुंकुमैः कज्जलैर्गन्धसारैरक्षतचन्दनैः ।
शृंगारयित्वा श्रीकृष्णं धूपं दीपं विधाय च ॥७३॥
नैवेद्यं पायसं श्रेष्ठं मिष्टान्नं पूरिकादिकम् ।
फलं त्वाम्रादिकं पानं चामृतं मधुरं जलम् ॥७४॥
ताम्बूलकं फलं चान्यद् यद्यत्त्वपेक्षितं प्रभोः ।
तत्तत्सर्वं प्रदायैवाऽऽरार्त्रिकं दधिरे च ताः ॥७५॥
दण्डवत् नमनं स्तोत्रं प्रदक्षिणं सुमाऽञ्जलिम् ।
अपराधक्षमायाञ्चां चान्तिमार्घ्यं ददुः प्रगे ॥७६॥
मध्याह्नेऽपि तथा चक्रुः सेवनं निशि चापि ताः ।
रात्रौ जागरणं चक्रुर्नर्तनं गायनादिभिः ॥७७॥
द्वादशैव च ताः कन्या हावभावसमन्वितम् ।
यथा कृष्णहरिर्नारायणः श्रीपुरुषोत्तमः ॥७८॥
शृंगाररसभावेन प्रसन्नः स्यात्पुमुत्तमः ।
आकृष्टः सन् दयालुः स दर्शनं च ददेद्यथा ॥७९॥
तथा ताभिर्महाहर्षैः कृतं नर्तनगायनम् ।
प्रातर्हरिर्ब्राह्मकाले प्रादुर्बभूव संहसन् ॥८०॥
युवा पुष्टः सुरूपश्च युवतीमानसाश्रयः ।
कोटिकामातिसौन्दर्यो वीर्यसंभृतगात्रकः ॥८१॥
प्रतिरोमरतिव्याप्तः प्रत्यंगानंगभासितः ।
प्रसन्नोऽस्मि प्रसन्नोऽस्मि सेवया संवदन् मुहुः ॥८२॥
सेविका ! वरदानानि वृणुतेष्टानि सर्वथा ।
इन्द्राणीत्वं शिवात्वं वा ब्रह्माणीत्वं ततोऽपि च ॥८३॥
कृष्णात्वं वैष्णवीत्वं च ब्राह्मीत्वं तत्परं च वा ।
यद्यदिच्छा भवेत् तत्तद् ददाम्यद्य न संशयः ॥८४॥
द्वादशात्मभवतीभिर्जिता लोकाः परात्पराः ।
सेवया श्रद्धया भावनया स्नेहार्द्रयाऽङ्गनाः ॥८५॥
दास्योऽपि यूयमेवाऽद्याऽदास्यो जाता हि सेवया ।
मानसस्थं वृणुताऽद्य मा चिरं हृदयंगमाः ॥८६॥
सेविकानां सेवकोऽहं शास्त्रीणां शासकोऽस्म्यहम् ।
मित्राणीनामहं मित्रं वामानां दक्षिणोऽस्म्यहम् ॥८७॥
स्निग्धानां स्नेहिलश्चास्मि शरण्यानां तु रक्षकः ।
मदर्थत्यक्तसर्वस्वानां तु सर्वस्वदोऽस्म्यहम् ॥८८॥
तथा न तोषमाप्नोमि धनैर्भृत्यैश्च सेवया ।
यथा सन्तोषमाप्नोमि स्वेनैव कृतसेवया ॥८९॥

सेवकोऽहमहं स्वामी यत्र सेवा न भिद्यते ।
यत्र भक्तः स्वयं मां वै स्वयं भावेन सेवते ॥९०॥
तस्मात् प्रियाः प्रवदन्तु किं ददामि वदामि किम् ।
प्रियाभ्यः किं प्रयच्छामि सर्वस्वं हृदयान्वितम् ॥९१॥
प्रियाः प्राहुर्वयं सर्वा अर्पिताः परमात्मनि ।
सर्वकान्ते परे कान्ते पत्यौ श्रीपुरुषोत्तमे ॥९२॥
दासीनां तु तथा धर्मः सर्वार्पणं तु शास्तरि ।
प्रियाणां तु तथा धर्मः कान्ते सर्वार्पणं प्रिये ॥९३॥
स्वामिनश्च तथा धर्मोऽर्पितानां ग्रहणं सदा ।
कान्तप्रियस्य धर्मो वै कान्तानां प्रियकारिता ॥९४॥
प्रिया प्रियस्य सर्वस्वं प्रियः सर्वं प्रियाकृते ।
प्रियायाश्चापि सर्वस्वं प्रिय एव दयानिधिः ॥९५॥
इति चात्र महत्यर्थे यथेष्टं कुरु केशव ।
मानसं त्वयि सर्वस्वं चार्पितं कुरु यन्मतम् ॥९६॥
श्रुत्वा प्राह तदा कृष्णनारायणः प्रभूत्तमः ।
सर्वं वेद्मि तथा सर्वाः स्वीकरोमि हृदन्तरे ॥९७॥
बाह्यतोऽपि करान्धृत्वा करोमि हृदयंगमाः ।
भवन्तु मत्करस्पर्शाद् दिव्यरूपधरा मम ॥९८॥
प्रियाः पत्न्यो भवन्त्वक्षराख्ये धामनि सर्वदा ।
जोष्ट्री मम स्वरूपेऽस्तु तेजोमयी तु शक्तिका ॥९९॥
सर्वानन्दप्रदा देवी चिन्मयी मत्स्वरूपिणी ।
सच्चिदानन्दरूपे मे चिन्मयी सा मया कृता ॥१००॥
अन्याश्च द्वादशपत्न्यः सन्तु शाश्वतिका मम ।
तत्तन्नाम्ना तु ताः पत्न्यस्तत्र वसन्तु मद्गृहे ॥१०१॥
मत्समाकृतयः सर्वाः पत्न्यस्ता अर्थतो यथा ।
मां विनाऽन्यसुखादेर्याऽशनं नैव करोति हि ॥१०२॥
इति सार्थाऽनशनाख्या, पिपासां त्वर्थतः शृणु ।
मद्रसं सर्वदा पातुमिच्छति नान्यमेव या ॥१०३॥
सा पिपासा मया पत्नी रक्षिता मत्स्वरूपिणी ।
अथाऽशना मम पत्नी या समश्नाति मां सदा ॥१०४॥
सर्वान् कामानश्नुते सा ब्रह्मणा विदुषा सह ।
इति सार्थाऽशनाख्या सा पत्नी मे रक्षिता मया ॥१०५॥
या च स्वात्मनि नित्यं मां परं वासयते पतिम् ।
सा मया भावपूर्णा वासना पत्नी सुरक्षिता ॥१०६॥
यस्या नामाऽत्र वक्तव्यं भावना भाविता मया ।
आयाति मत्करं धृत्वा कराया मे प्रिया हि सा ॥१०७॥
कं मुखं मत्परानन्दं शं लक्ष्मीं दिव्यरूपप्रदम् ।
सेवया याति गृह्णाति मत्तो या सा करायिका ॥१०८॥

मदर्थमेव सर्वस्वं कृतं क्रियात्मकं यया ।
इति निश्चयसार्थक्या व्यवसाया प्रिया मम ॥१०९॥
सोढुं योग्या मम सर्वा क्रियाऽऽज्ञा सा प्रिया मम ।
प्रकर्षेण सहते या मद्रतिं सा प्रसह्यका ॥११०॥
मदर्थे सर्वथा दिव्या विलस्यति मदर्थिका ।
विलासाख्या मम पत्नी मेऽनुविलासकारिणी ॥१११॥
यस्याः श्वासो विना मां तु स्थातुं शक्तो भवेन्नहि ।
यस्या ह्यहं च मे साऽस्ति पतिर्मेऽस्ति सुखाय वै ॥११२॥
इति विश्वासमापन्ना विश्वासा सा मम प्रिया ।
मां विना जीवनं श्वासो नास्ति यस्याः प्रतिक्षणम् ॥११३॥
मेहति वर्षते पत्यौ प्रेम वर्षयति प्रभौ ।
मयि स्नेहं करोत्येव मेघा सा मत्प्रिया मता ॥११४॥
सर्वं कर्म मयि या स्वां दमयत्यतिभावतः ।
मदर्थे दमनं यस्याः कर्मणां कर्दमा प्रिया ॥११५॥
कुं क्षेत्रं स्वात्मकं या भावयति मत्कृतेऽन्वहम् ।
कुंभे जलं यथा तद्वन्मां बिभर्ति निजात्मनि ॥११६॥
सा पत्नी कुंभिका मेऽस्ति यूयं पत्न्यः प्रकीर्तिताः ।
दिव्या यास्ता द्वादशैवाऽक्षरे धाम्नि वसन्तु मे ॥११७॥
अथाऽन्यैस्तु स्वरूपैर्द्वादशशक्त्यात्मिकास्तु वै ।
वर्तन्तामन्यरूपिण्यो महाकालाय चार्पिताः ॥११८॥
ततो विश्वं संव्यक्रामत् साशनाऽनशने ह्यभि ।
पिपासया प्रवाहस्तु धावत्यग्रेऽस्य संसृतेः ॥११९॥
वासनया वसत्येतज्जडचेतनमिश्रितम् ।
करायया भवत्यत्र विनिमयस्तु देहिनोः ॥१२०॥
धार्यते पुष्यते कालवाहया व्यवसायया ।
प्रसह्यया क्षमते स्वार्तवान् द्वन्द्वाँश्च वत्सरः ॥१२१॥
विलासया श्रमं हापयित्वा जीवान् युनक्ति सः ।
विश्वासया फले लोभात्प्रवर्तन्ते तु देहिनः ॥१२२॥
मेघया स्नेहवृष्ट्या वै रञ्जयन्ति प्रजाः समाः ।
कर्दमया प्रजा भूता मयि तिष्ठन्ति कर्दमे ॥१२३॥
कुंभेष्वत्र गोलकेषु ब्रह्माण्डेषु च सर्वथा ।
तत्तत्स्थाने स्थापयित्री कुंभिका रक्षिका मता ॥१२४॥
एवं कालस्य मच्छक्तिभूतस्य शक्तयोऽन्वहम् ।
भवन्तु कार्यकारिण्यो लोके कालाय चार्पिताः ॥१२५॥
अथ यत्र जोष्ट्रिकायाः पुत्र्यः सन्त्युषिता यथा ।
तास्तथैव तु वेधः कृद्ब्रह्माण्डेऽपि वसन्त्विति ॥१२६॥
वसन्तु श्रीकृष्णनारायणस्य मम वाञ्छया ।
तृतीयैस्तु स्वरूपैः स्वैर्ज्योष्ट्रीजनन्य एव ह ॥१२७॥
एवं त्रिविधरूपैर्वै मया सम्यङ्नियोजिताः ।
कुर्वन्तु दास्यमेवाऽत्र महाकाले तथा मयि ॥१२८॥
भवतीनामहं स्वामी पतिः श्रीपुरुषोत्तमः ।
रमन्तां तु मया सार्धं स्वतन्त्रा अक्षरे परे ॥१२९॥
तथाऽन्या मच्छक्तिरूपमहाकालसहायिकाः ।
तथाऽपरा मम सृष्टौ तत्तत्कार्यवहाः सदा ॥१३०॥
इति त्रेधा मया दत्तं भवतीभ्यः प्रसेवनम् ।
द्वादश्यास्तु व्रतस्यैवं फलं दत्तं हि शाश्वतम् ॥१३१॥
इत्युक्त्वा भगवान् कृष्णनारायणः पुमुत्तमः ।
दिव्यास्ताः सह नीत्वैव व्यवस्थाप्य तथाऽपराः ॥१३२॥
महाकालाय दत्वाऽन्या ययौ धामाऽक्षरं हरिः ।
वद लक्ष्मि ! कृपापारावारः कृष्णः पुमुत्तमः ॥१३३॥
किं किं ददाति कृपया स्वल्पस्याऽनन्तकं फलम् ।
इति ते कथितं सर्वं जोष्ट्रीदेव्याः कथानकम् ॥१३४॥
देवी जोष्ट्री वसुधिती देवमिन्द्रं वयोधसम् ।
प्राप्याऽवर्धत बृहती ब्राह्म्यास पुरुषोत्तमम् ॥१३५॥
य इदं श्रावयेच्चापि शृणुयाद्वा पठेच्च वा ।
तस्यापि तादृशं स्याच्च फलं व्रतस्य निश्चितम् ॥१३६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पुरुषोत्तममासमाहात्म्ये वैराजपुत्र्या जोष्ट्र्या अनशनादि-द्वादशपुत्रीणां सेवया द्वादश्याव्रतेन च प्रसन्नस्य पुरुषोत्तमनारायणस्य प्राप्तिस्त्रेधारूपधारणादिकं चेत्यादिनिरूपणनामैकोनविंशाधिकत्रिशततमोऽध्यायः ॥ ३१९ ॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! राधिकां तु दृष्ट्वा पुत्रीमतीं वराम् ।
श्रीरपि प्राह देवेशं श्रीकृष्णं परमेश्वरम् ॥ १ ॥
कान्त राधा यथा पुत्रीमती संशोभते हरे ।
मान्यतां याति सर्वासु पुत्रीमतीषु सर्वथा ॥ २ ॥
यथा तथा कदा पुत्रीमती स्यां पुरुषोत्तम ।
कृपां कृत्वा तु मह्यं वै देहि पुत्रीं शुभाश्रयाम् ॥ ३ ॥
एवं तयाऽर्थितः कृष्णनारायणः श्रियं तदा ।
तथास्त्विति वरं दत्वा रेमे तया सुलीलया ॥ ४ ॥
श्रीकृष्णस्येक्षणादेव श्रियः पर्यंकशोभना ।
दिव्या कृष्णसमा रूपे सौन्दर्ये श्रीसमा सुता ॥ ५ ॥

प्रादुर्बभूव सहसा जातमात्रा सुयौवना।
कामदुघेव सम्पन्ना सुदुघा नामतः कृता ॥ ६ ॥
श्रीकृष्णेन श्रिया चाप्याहूता सा सुदुघेति वै।
प्रदोग्धि सर्वकामान् सा सुदुघा कृष्णकन्यका ॥ ७ ॥
श्रीतुल्या श्रीस्वरूपा च श्रीरिवाऽतिसमुज्ज्वला।
सर्वावयवपुष्टा च कानकीं छविमाश्रिता ॥ ८ ॥
जातमात्रा निसर्गात् सा गवां दोहनकर्मणि।
व्यवसायमयी रुच्या दृश्यते गोप्रिया तथा ॥ ९ ॥
सा तु ज्ञाता यदा तत्र महोत्सवोऽप्यभून्महान्।
श्रीकृष्णस्य श्रिया वासेऽवतारर्षिसुरकृतः ॥१०॥
देवीनां नर्तनं चाऽप्सरसां गीतं सुनर्तनम्।
गन्धर्वाणां गायनं वादनं चाभून्महोत्सवे ॥११॥
मुनीनामाशिषामासिरभूत् कन्यासुरक्षिका।
गोपगोपीगणानां च वाण्यो ह्यासन् सुवर्धिकाः ॥१२॥
तथांजलिकुसुमानि निपेतुः सुदुघोपरि।
दुग्धवत्कान्तिनिवहां दृष्ट्वा कन्यां तु कन्यकाः ॥१३॥
वयस्या जहृषुश्चाति रेमिरे च तया मुहुः।
रामयन्ति रमन्ते च विहरन्ति तया तु ताः ॥१४॥
अथ जिज्ञासमाना सा दुघा कार्यं मुहुर्मुहुः।
मया किमत्र कर्तव्यं मीमांसते हि भावतः ॥१५॥
पित्रा कृष्णेन चादिष्टं ज्ञात्वा योगबलं तथा।
ऊर्जाहुति ! दुघे ! पुत्रि ! पयसेन्द्रमवर्धताम् ॥१६॥
इत्याज्ञप्ताऽतिसंहृष्टा सुदुघा पितरौ तदा।
प्रणम्येन्द्रस्य वृद्ध्यर्थं पुष्ट्यर्थं समचिन्तयत् ॥१७॥
यत्र यत्र च गोलेषु ब्रह्माण्डेषु च यादृशम्।
माहेन्द्रं तु पदं देवसाम्राज्यं वर्तते दिवि ॥१८॥
तानि सर्वाणि राज्यानि ध्यात्वा हृदा पदानि च।
तेषां शाश्वतपुष्ट्यर्थं चिन्तयामास साधनम् ॥१९॥
श्रीपुत्री सुदुघा चाहं दुग्धरूपा भवामि च।
दिवि दुग्धामृतं दत्वा सुरेभ्यो निवसामि च ॥२०॥
महरादौ सुकृतात्माऽमृतं भूत्वा वसामि च।
पितृभ्यो वारिपिण्डादि पायसादि ददामि च ॥२१॥
पशुमानुषवृक्षेभ्यो दुग्धामृतं रसात्मकम्।
दत्वा पुष्टिं कारयामि भुवेऽपि सुरसामृतम् ॥२२॥
जले स्नेहामृतं कृत्वा प्रविदधामि पोषणम्।
वह्नये पाकमाधुर्यं ददामि पाचनामृतम् ॥२३॥
आत्मने देहवासाय ददामि विषयामृतम्।
इन्द्र आत्मेन्द्रियाण्यस्य शक्तयो विषयाश्रयाः ॥२४॥

ताभिरमृतभोक्तारो भवन्त्यात्मान एव हि।
तत्त्वगं नवनीतं च घृतं सर्वकृतेऽमृतम् ॥२५॥
एवं बहुस्वरूपाऽहं कार्यात्मिका भवामि च।
इन्द्रस्य सौख्यलाभाय दुघा शक्तिर्वसामि च ॥२६॥
यज्ञे ऊर्जाहुती चाहं भूत्वा पुष्टिं करोमि च।
इन्द्रस्य सर्वथा रक्षा यथा स्यात्तादृशी तथा ॥२७॥
भूत्वा भूत्वैव सर्वत्राद्यैव कुर्यां प्रवेशनम्।
इति विचार्य सा कन्या सुदुघा बहुरूपिणी ॥२८॥
बभूव दृश्या चाऽदृश्या प्रविवेश यथामतम्।
इन्द्रस्य रुचिरं स्वर्गं ततः स्मृद्ध्या व्यवर्धत ॥२९॥
सर्वाऽमृतानि दुग्धानि व्यवर्धन्ताऽतिवेगतः।
लोकेषु श्रीमयी भूमिः सम्पदासीन्मनोरमा ॥३०॥
देवा देव्यो व्यराजन्त पूर्वतोऽप्यधिकाऽधिकम्।
व्ययमाना भुज्यमाना अपि सर्वाः सुसम्पदः ॥३१॥
न वियन्ति मनाङ् नापि क्षीयन्ते सुदुघाऽन्वयात्।
अदृष्टा चाऽश्रुता सम्पद् बभूवाऽऽनन्दसम्मुखा ॥३२॥
एवं याते शुभे काले याते चाद्ये कृते युगे।
ऋषिर्मान्योऽभवन्नाम्ना मेधावी याज्ञिको महान् ॥३३॥
यज्ञान् करोति विधिभिः कारयत्यपि वृष्टये।
पुत्राद्यर्थं सुखाद्यर्थं स्वर्गार्थं सुकृताप्तये ॥३४॥
पुत्रपुत्रीयुगलार्थं पुत्रेष्टिं स चकार वै।
विष्णुर्नारायणः कृष्णो वह्नावाविर्बभूव ह ॥३५॥
जग्राह स्वकराभ्यां सुपुरोडाशं तदर्पितम्।
उवाच च प्रसन्नोऽस्मि वरं वृणु यथेप्सितम् ॥३६॥
पृथ्वीं राज्यं रसान् मिष्टं दुग्धं स्वर्गं सुतं सुताम्।
यथेच्छसि तथा तुभ्यं ददामि कुरु मा चिरम् ॥३७॥
श्रुत्वा विप्रस्तु मेधावी प्राह पुत्रं प्रदेहि मे।
यज्ञः पुत्रेष्टिनामाऽसौ पुत्रार्थं वर्तितो मया ॥३८॥
भगवान् प्राह पुत्रस्ते सप्तजन्मसु नास्ति वै।
पुत्रेष्ट्या जायते पुत्रश्चिरायुष्ट्रे तु संशयः ॥३९॥
जन्मना यस्तु सुखदोऽनन्तरं दुःखदो मृतेः।
तस्माद् विप्र वृणु पुत्रीं यदि चेत् ते प्ररोचते ॥४०॥
तव पत्न्या भालरेखा पुण्यर्या भाति चानघ।
पुत्रादप्यधिका कीर्तौ सेवायां सा भविष्यति ॥४१॥
यया शोको न वै स्याच्च तथा कुरु महीसुर।
पत्नीमतं समादाय विप्रो जग्राह तद्वचः ॥४२॥
ततो भगवता दत्तः प्रसादो भोजनाय वै।
गृहीत्वाऽऽह हरिं विप्रः पुत्री श्रीसदृशी मम ॥४३॥

सुखदा नाथ ! भवतु शान्ता कामदुघेव सा ।
या शक्तिः सर्वभूतानां सुधापानप्रदायिनी ॥४४॥
तथाऽस्त्विति हरिः प्राह प्रेरयच्छ्रीसुतां दुघाम् ।
मेधाविनस्तु पुत्र्यर्थे सुदुघापि तदाज्ञया ॥४५॥
प्राविर्बभूव मेधाविभार्यायाः शयने तदा ।
मानसी साऽभवद् दिव्या शोभते श्रीरिवाऽपरा ॥४६॥
जातमात्रातिसंशोभियौवना पुष्टिसंभृता ।
रूपलावण्यललिता नयनाऽपांगमोचिनी ॥४७॥
चातुर्यादिगुणोपेता पित्रोरेकैव शंस्थली ।
अति वै वल्लभा पित्रोः सर्वसद्गुणसुन्दरी ॥४८॥
लालिता पुत्रवन्नित्यं नोपालब्धा कदापि तु ।
नीतिसाहित्यकुशला चात्मतत्त्वविशारदा ॥४९॥
सेविका सर्वदा पित्रोः सेवया तुष्यतश्च तौ ।
कालेन गच्छता लक्ष्मि ! तन्माता निधनं गता ॥५०॥
पित्रा सा पालिता हर्षात् पुत्रस्थानां कुमारिकाम् ।
सापि काले गते चासीद् योगिनीव तथापि तु ॥५१॥
पार्श्वस्थाऽऽलिसुखं दृष्ट्वा पुत्रपौत्रसुखस्पृहा ।
मेधावती कुमारी सा गार्हस्थ्यार्थमनोरथा ॥५२॥
तर्कयति च मामेवं सुखं भाग्यं कथं भवेत् ।
गुणभाग्योदयो भर्ता सुखदाश्च सुताः कथम् ॥५३॥
तदर्थं कं मुनिं यद्वा कमुपास्ये सुरेश्वरम् ।
युवत्यहं सखीमध्ये कुमारी दुःखवेदिनी ॥५४॥
नाऽहं स्वामिसुखाऽभिज्ञा यथा मम सखीगणः ।
एवं चिन्ताकुलां बालां विज्ञायाऽपि च तत्पिता ॥५५॥
मेधावी विचचारोर्व्यां विचिन्वन् तत्समं वरम् ।
अप्राप्य भग्नसंकल्पो ज्वरं तीव्रमवाप सः ॥५६॥
आगच्छन्नेव भवनं हरौ चित्तमधारयत् ।
सस्मार श्रीहरिं कृष्णनारायणं पुमुत्तमम् ॥५७॥
गृहांगणे पपातासौ कृष्णदूताः समाययुः ।
करे धृत्वा मुनिं तं ते ययुः कृष्णसरोरुहम् ॥५८॥
प्राणोत्क्रमणमालोक्य हाहेति सा सुताऽरुदत् ।
अंके कृत्वा पितुर्देहं विललाप सुदुःखिता ॥५९॥
हा हा पितः कथं मातृहीनां त्यक्त्वा निजां सुताम् ।
पितृहीनां तथा कृत्वा ह्यनाथां क्व गतोऽसि वै ॥६०॥
न भ्राता नैव बन्धुश्च न माता न च रक्षकः ।
कथं तिष्ठाम्यहं तात ! मरिष्यामि न संशयः ॥६१॥
इत्यादिरोदनं श्रुत्वा तापसास्तत्र चाययुः ।
मृतं मुनिं ददहुस्ते सशोका ददहुस्ततः ॥६२॥
समाश्वास्य च तां कन्यां सर्वे ते स्वालयान् ययुः ।
कन्या धैर्यं समालम्ब्याऽकरोच्छक्त्यौर्ध्वदैहिकम् ॥६३॥
गते काले भाग्यवशाद् दुर्वासाः शांकरो मुनिः ।
समायात्तद्गृहं लक्ष्मि ! भविष्यद्वलनोदितः ॥६४॥
तमालोक्य समायान्तं कुमारी चरणौ मुनेः ।
ववन्दाऽर्घ्यादिभिः पुष्पैः पूजयामास सादरम् ॥६५॥
नमस्तेऽस्त्वत्रिपुत्राय कुतोऽधिगमनं मुने ।
मम भाग्योदयो जातो भवत्तीर्थनिषेवया ॥६६॥
अद्य मे सफलं जन्म सफलं त्वद्य मे व्रतम् ।
अद्य मे फलवत्पुण्यं यद् भवादृशदर्शनम् ॥६७॥
श्रुत्वाऽऽह तां तु दुर्वासाः साधु स्वस्ति सुते ! तव ।
कैलासादहमागच्छं गच्छामि बदरीवनम् ॥६८॥
द्रष्टुं नारायणं देवं त्वयाऽर्थश्चेन्निवेद्यताम् ।
मेधावती ऋषिं प्राह नाऽनावेद्यं प्रभोर्मनाक् ॥६९॥
अतः परं शुभं भावि त्वद्दर्शनादनुग्रहात् ।
न माता न पिता बन्धुर्न कश्चिद् रक्षकोऽस्ति मे ॥७०॥
न मां कामयते कश्चित् पाणिग्रहणहेतवे ।
ब्रह्मन् मुमूर्षुरस्म्येव किं करोमि हितं कुरु ॥७१॥
श्रुत्वा मुनिरुपायं सुविचार्याऽकथयत् सुताम् ।
इतस्तृतीयः सुभगे मासस्तु पुरुषोत्तमः ॥७२॥
तत्र स्नाता जनस्तीर्थे मुच्यते ब्रह्महत्यया ।
एतत्तुल्यो न कोऽप्यन्यो मासोत्तमो हि विद्यते ॥७३॥
सर्वे मासास्तथा पक्षाः पर्वाणि ऋतवस्तथा ।
पुरुषोत्तममासस्य कलां नार्हन्ति षोडशीम् ॥७४॥
साधनानि समस्तानि गंगागोदाऽऽप्लवानि च ।
सहस्राण्यधिमासस्य कलां नार्हन्ति षोडशीम् ॥७५॥
श्रीकृष्णवल्लभो मासो नाम्ना च पुरुषोत्तमः ।
तस्मिन् संसेविते बाले ! सर्वं सिद्ध्यति वाञ्छितम् ॥७६॥
तस्मान्निषेवयाऽऽशु त्वं मासं तं पुरुषोत्तमम् ।
मयाऽपि सेवते पुत्रि ! पुरुषोत्तमवत् सदा ॥७७॥
यदि चेदिष्टमास्तव्यं यथारुचि कुरु व्रतम् ।
अहं पुत्रि ! गमिष्यामि नरनारायणालयम् ॥७८॥
इत्युक्त्वा प्रययौ शीघ्रं ह्यथ मेधावती ततः ।
अधिमासप्रतीक्षाढ्या तत्कालफलदं शिवम् ॥७९॥
चित्ते धृत्वा तमुद्दिश्य चचार दुश्चरं तपः ।
दिवा पंचाग्निमध्यस्था रात्रौ शीतजलस्थिता ॥८०॥
अनाहारा हरध्याना समाधाविव तिष्ठति ।
सन्तुष्टस्तपसा तस्या भगवान्पार्वतीपतिः ॥८१॥

दर्शयामास बालायै स्वं रूपं चाक्षिगोचरम् ।
सा ववन्दे हरं पुष्पादिभिः पुपूज मानसैः ॥८२॥
तुष्टाव भक्तिभावेन ह्याशुतोषाय ते नमः ।
अनाधारसुताऽऽधारशंकराय च ते नमः ॥८३॥
नमः सूर्याग्निसोमत्रिनेत्राय मृत्यवे नमः ।
पार्वतीतापसीवाञ्च्छापूरकायेह ते नमः ॥८४॥
कुमार्याश्चाप्यनाथाया उद्धारं कुरु शंकर ।
इति स्तुत्वा पुनर्नत्वा विररामर्षिपुत्रिका ॥८५॥
श्रुत्वा प्रसन्नवदनस्तामुवाच सदाशिवः ।
वरं वरय भद्रं ते प्रसन्नोऽस्मि ददामि ते ॥८६॥
बालोवाच दयासिन्धो प्रसन्नश्चेन्ममोपरि ।
पतिं देहि पतिं देहि पतिं देहि पतिं पतिम् ॥८७॥
इत्याश्रुत्य महादेवो जगादर्षिसुतां तदा ।
पञ्चकृत्वस्त्वया यस्मात् प्रार्थितः पतिरीश्वरात् ॥८८॥
तस्मात् पंच भविष्यन्ति पतयस्तव धार्मिकाः ।
यज्वानः सत्यसन्धाश्च राजन्यास्त्वन्मयाः सुते ॥८९॥
इदानीं पंचसंख्याका इन्द्राः प्राक्कल्पसंभवाः ।
वसन्ति सत्यलोके ते भवन्तु पतयः सुते ॥९०॥
अनेनैव हि देहेन दिव्यतां प्रापितेन वै ।
मया साहाय्यदेनाऽद्याऽऽगच्छ सत्ये तदन्तिकम् ॥९१॥
इत्युक्त्वा शंकरस्तां सुदिव्यदेहां विधाय च ।
निनाय सत्यलोकं वै मार्गे मेधावती दिवि ॥९२॥
शुश्राव दुन्दुभिं दिव्यं कुर्वन्तु व्रतमुत्तमम् ।
त्रयोदश्यधिमासस्य यथेष्टफलदा भवेत् ॥९३॥
पतिप्राप्तिर्मम प्राप्तिर्भवेदेकव्रतेन वै ।
श्रुत्वा मेधावती प्राह कृष्णप्राप्तिः कथं भवेत् ॥९४॥
श्रुत्वा तु दुन्दुभिं चैनं जिज्ञासा जायते मम ।
तथा कुरु यथा कृष्णनारायणो मिलेन्मम ॥९५॥
शंभुः प्राह शुभे पुत्रि ! कल्याणं तेऽस्तु सर्वथा ।
प्रसन्नोऽस्मि तव वाक्यात् कृष्णप्राप्तिपरायणात् ॥९६॥
राज्यं स्वर्गं पारमेष्ठ्यं चैश्वरं पदमेव वा ।
सर्वं भवति निस्स्वादं विना कृष्णं पुमुत्तमम् ॥९७॥
भक्त्या स लभ्यते कृष्णनारायणः परः पुमान् ।
कुरु व्रतं त्रयोदश्या यथादुन्दुभिभाषितम् ॥९८॥
उपवासं फलाहारं कृत्वा षोडशवस्तुभिः ।
पूजयेत्परमात्मानं भोजयेल्लालयेत्तथा ॥९९॥
रात्रौ जागरणं कुर्यात् सर्वं ददेत् प्रतोषितः ।
इत्युक्त्वा तां सत्यलोकं गमयित्वेन्द्रपञ्चकम् ॥१००॥

दत्वा पत्नीस्वरूपेण पुनः प्राह सुतां हरः ।
पुरुषोत्तममासस्य त्रयोदश्या व्रतेन वै ॥१०१॥
मिलिष्यति हरिस्त्वां वै मानुषे कृतविग्रहे ।
अयोनिसंभवा तत्र भविष्यसि तपोबलात् ॥१०२॥
तत्रैते पञ्चभर्तारो भविष्यन्ति सुरांशजाः ।
धर्ममरुन्महेन्द्राश्विनीकुमारांशसंभवाः ॥१०३॥
श्रीपतिस्तु तदा कृष्णो मिलिष्यति च रक्षकः ।
भर्तृजं सुखमासाद्य ततो गन्त्री परं पदम् ॥१०४॥
पुरुषोत्तमभक्तास्तु पुत्रपौत्रधनान्विताः ।
ऐहिकाऽऽमुष्मिकीं सिद्धिं याता यास्यन्ति यान्ति च ॥१०५॥
वयं सर्वेऽपि नेतारः पुरुषोत्तमसेविनः ।
वदन्नेवं नीलकण्ठः क्षिप्रमन्तर्दधे हरः ॥१०६॥
मेधावत्या पतीन् पृष्ट्वा शंकरस्योपदेशनात् ।
त्रयोदश्या व्रतं सोपवासं सजागरं कृतम् ॥१०७॥
पञ्चामृतैर्जलैः कृष्णं संस्नाप्य पुरुषोत्तमम् ।
वस्त्रालंकारनैवेद्यफलताम्बूलकादिकम् ॥१०८॥
धूपदीपसुपुष्पाद्यक्षतां जलिक्षमार्थनम् ।
आरार्त्रिकादिकं कृत्वा ययाचे परमेश्वरात् ॥१०९॥
दर्शनं देहि मे तात ! भवे साहाय्यदो भव ।
तावत्तत्र समायातो गरुडस्थः श्रियः पतिः ॥११०॥
प्राहाऽस्मि ते सुते तुष्टस्त्रयोदश्या व्रतेन वै ।
रक्षयिष्ये सदा पुत्रि ! सह स्थास्ये यथाऽवनम् ॥१११॥
पुनः प्रोवाच सा पुत्री मोक्षो मे स्याद् यथा गुरो ।
तथाऽन्ते मे भवेत्तात ! नान्यं कांक्षे मनोरथम् ॥११२॥
तथाऽस्त्विति हरिः प्राह प्राह चापि विशेषतः ।
श्रृणु पुत्रि द्वापरान्ते कृष्णोऽहं भगवान् स्वयम् ॥११३॥
भूभारहरणार्थायाऽवतरियामि वै क्षितौ ।
यज्ञसेनाख्यनृपतेर्यज्ञकुण्डस्य मध्यतः ॥११४॥
भविष्यसि त्वमुद्भूता कुमारी कनकप्रभा ।
याज्ञसेनी च वैराजी कृष्णा ख्याता भविष्यसि ॥११५॥
तत्रैव च समे काले पञ्चेन्द्राः स्वामिनस्तव ।
भविष्यन्ति सुरांशास्ते पतयोऽमितविक्रमाः ॥११६॥
तद्द्वारा त्वन्मिषं कृत्वाऽसुरान्दैत्यांश्च दानवान् ।
नाशयित्वा स्वकं धाम यदा यास्ये तदा सुते ! ॥११७॥
नयिष्ये त्वां यथाकालं यथाकार्यं निरुद्धय च ।
पुनस्त्वं प्राप्स्यसे धाम गोलोकं यत्र ते जनुः ॥११८॥
तदा त्वां सुदुघे पुत्रि ! तन्वा ब्राह्म्याऽक्षरे परे ।
धाम्नि संप्रापयिष्ये मच्चरणं शरणं सुखम् ॥११९॥

इतिते कथितं पुत्रि ! भविष्यत्ते कथानकम् ।
सत्ये सुखं वस पुत्रि ! याम्यहं च ममालयम् ॥१२०॥
इत्युक्त्वाऽदृश्यतां यातस्तदा श्रीपुरुषोत्तमः ।
सुदुघा कृष्णपुत्री सा याज्ञसेनी भविष्यति ॥१२१॥
अधिमासपरपक्षत्रयोदश्या व्रतेन सा ।
प्राप्स्यतीयं परं धाम पुरुषोत्तमवाक्यतः ॥१२२॥

इति ते कथितं लक्ष्मि ! श्रीपुत्र्यास्तु कथानकम् ।
ते धन्या जन्मवन्तश्च ते पूज्याः पावनास्तथा ॥१२३॥
विविधैर्नियमैर्यस्तु पूजितः पुरुषोत्तमः ।
श्रवणात्पठनाच्चापि व्रतस्याऽत्र फलं लभेत् ॥१२४॥
लभते कृष्णसाहाय्यं पुरुषोत्तमसम्मतम् ।
भुक्तिं मुक्तिं लभेच्चापि नरो नारी परोऽपि वा ॥१२५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पुरुषोत्तममासमाहात्म्ये गोलोके श्रीपुत्र्याः सुदुघायाः श्रीकृष्णाज्ञया इन्द्रवृद्ध्यर्थं प्रवृत्ताया रसाऽमृतात्मकता, याज्ञिकस्य मेधाविविप्रस्य गृहेऽयोनिजायास्तस्या जन्म, पित्रोर्मरणं, दुर्वासस आगमनं, पुरुषोत्तममासव्रतोपदेशः, शंकरोपरि तपः, पञ्चकृत्वः पतिप्रार्थनम्, सत्यलोके पञ्चेन्द्रपतिप्राप्तिः, त्रयोदशीव्रतेन पुरुषोत्तमदर्शनं, भुवि पञ्चपतिमती याज्ञसेनी भूत्वा मोक्षं यास्यसीतिवरदानं, चेत्यादिनिरूपणनामा विंशत्यधिकत्रिशततमोऽध्यायः ॥३२०॥

श्रीनारायण उवाच—

शृणु लक्ष्मि ! चतुर्दश्या व्रतेन नृपसत्तमः ।
चित्रधर्मस्य सत्पुत्रो दृढधन्वेतिविश्रुतः ॥ १ ॥
प्रापद् राज्यं पुत्रपौत्रान् ललनां च पतिव्रताम् ।
अन्ते च भगवल्लोकमवाप योगिदुर्लभम् ॥ २ ॥
सर्वसद्गुणसम्पन्नो दृढवाग् वेदपारगः ।
प्रजारक्षाकरः पुत्रो बभूवेति च तत्पिता ॥ ३ ॥
विचार्य चित्रधर्मा तं स्वराज्ये त्वभ्यषेचयत् ।
अथ चाराधयामीशं कृष्णनारायणं प्रभुम् ॥ ४ ॥
तदर्थं वनभूमिर्वै योग्या भवति सर्वथा ।
ध्रुवाम्बरीषशर्यातिययातिशशबिन्दवः ॥ ५ ॥
भगीरथशिबिरन्तिदेवरुक्मांगदादयः ।
दिवोदासाऽभयखट्वांगदराजर्षिसत्तमाः ॥ ६ ॥
एते चान्ये च कल्पेषु कल्पान्तरेषु भूभृतः ।
वनं ययुर्महासत्त्वास्त्यक्त्वा भोगाननेकशः ॥ ७ ॥
अध्रुवेण ध्रुवं प्राप्ता आराध्य पुरुषोत्तमम् ।
अतो मयाऽपि कर्तव्यमरण्ये हरिसेवनम् ॥ ८ ॥
छित्वा पाशं वासनाख्यं दारापुत्रगृहादिषु ।
इति निश्चित्य मनसा चित्रधर्मा ययौ वनम् ॥ ९ ॥

पुलहाश्रममासाद्य तपस्तेपे हरिं स्मरन् ।
शुद्धो भूत्वा दिव्यतनुर्हरेर्धाम जगाम सः ॥१०॥
दृढधन्वा पितुश्चौर्ध्वदैहिकं चाकरोत्ततः ।
पुष्करावर्तनगरे राजधानीं विधाय सः ॥११॥
भार्यया गुणसुन्दर्या वैदर्भ्या सह भूपतिः ।
शशास सकलां पृथ्वीं चतुर्भिस्तनयैः सह ॥१२॥

चित्रवाक्चित्रवाट्चित्रकुण्डलमणिकुण्डलैः ।
एकदा निशि सुप्तस्य चिन्ताऽऽसीद् दृढधन्वनः ॥१३॥
दानं तपो जपं होमं नाऽहं वै कृतवान् क्वचित् ।
तथापि वैभवा राज्यं केन भाग्येन मे ननु ॥१४॥
ब्राह्मे मुहूर्ते उत्थाय स राजा मृगयामनाः ।
जगामाऽश्वं समारुह्याऽरण्ये वै सरसस्तटम् ॥१५॥
समागमद्वटे तत्र कश्चिन्मानुषवाक् शुकः ।
स तु पपाठ सुश्लोकमेकमेव पुनः पुनः ॥१६॥
'सत्यपि वैभवे राज्ये देहादौ सुखदे तथा ।
न चिन्तयसि लक्ष्मीशं कथं पारं समेष्यसि' ॥१७॥
श्रुत्वा राजा कीरवाक्यं मुमुदे भवतारकम् ।
कृत्वा तु मृगयां राजा कीरवाक्यं विचारयन् ॥१८॥

आजगाम गृहं तावत् तत्र वाल्मीकिराययौ ।
राजा प्रपूज्य वाल्मीकिं पप्रच्छ कीरभाषितम् ॥१९॥
किमुवाच कथं प्राह कोऽसावासीच्छुको मुने ! ।
श्रुत्वा क्षणं च तद्ध्यात्वा वाल्मीकिराह भूपतिम् ॥२०॥
शृणु राजँस्तव पूर्वजन्मनश्चरितं यथा ।
ताम्रपर्णीतटे देशे द्रविडे त्वं द्विजोऽभवः ॥२१॥
सुदेवाख्यश्च ते पत्नी गौतमी गौतमोद्भवा ।
अप्रजा सा पतिं प्राहाऽपत्यं विना सुदुःखिता ॥२२॥
सन्ततिः शुद्धवंश्या स्यादत्र परत्र शर्मणे ।
तमप्राप्य वरं पुत्रं जीवितं त्वत्र निष्फलम् ॥२३॥
तस्मात्सत्पुत्रलाभार्थमावाभ्यां परमेश्वरः ।
आराधनीयः सततं तपसा पुरुषोत्तमः ॥२४॥
धर्मपत्न्या वचो मत्वा ताम्रपर्णीतटे शुभे ।
शुष्कपर्णजलाहारौ पंचमे पंचमे दिने ॥२५॥

चत्वार्यब्दसहस्राणि चेरतुः परमं तपः।
लोकाश्चकम्पिरे तेन प्रादुर्बभूव माधवः ॥२६॥
गरुडस्थो हरिः प्राह सुदेव! भद्रमस्तु ते।
गौतमि! श्रीरस्तु तेऽपि कुरुतं मा तपो बहु ॥२७॥
श्रुत्वा तौ नेमतुः कृष्णमूचतुर्जय माधव!।
सुदेवः प्राह भगवन्! पुत्रं देहि हरे प्रभो! ॥२८॥
हरिः प्राह ललाटे ते वर्णाः सर्वे मयेक्षिताः।
तत्र नैवाऽस्ति ते पुत्रसुखं सप्तसु जन्मसु ॥२९॥
गौतम्युवाच भाग्याग्रे रमानाथो निरर्थकः।
दैवमालंबनीयं चेत्! हरिणा किं प्रयोजनम् ॥३०॥
श्रुत्वा हरिं गरुडस्तु प्राह कृष्णं जनार्दनम्।
भक्तदुःखांऽसहिष्णो! त्वं हर्यर्थं सार्थकं कुरु ॥३१॥
त्वदाराधनमाहात्म्यं निष्फलं नैव नैव हि।
कर्तुमकर्तुं सामर्थ्यं मा कुरु त्वं निरर्थकम् ॥३२॥
गरुडस्याऽऽग्रहं दृष्ट्वा तथास्त्वित्यवदद्धरिः।
परं तज्जनितं दुःखं दम्पत्योर्भविता ध्रुवम् ॥३३॥
इत्युक्त्वा गरुडे स्थित्वा गोलोकं हरिराययौ।
गते काले सुदेवस्य पत्न्यां पुत्रोऽभवच्छुभः ॥३४॥
व्यवर्धत गते काले चोपनीतोऽथ पाठितः।
देवलर्षिः क्वचित्तत्र समायात् पापनाशनः ॥३५॥
करं दृष्ट्वा छत्रपद्मयवचामरचिह्नितम्।
स्फुटदायुष्यरेखं च प्राहाऽऽधुन्वन् शिरस्तदा ॥३६॥
सुदेव! तनयोऽयं ते द्वादशे हायने जले।
मृत्युमेष्यति तस्मात्ते माऽस्तु शोकोऽनुभाविनि ॥३७॥
श्रुत्वा शुशूचतुस्तौ च देवलो निर्ययौ ततः।
अथ प्राप्तेऽनिष्टकालेऽगच्छद्वापीं हि तत्सुतः ॥३८॥
पतितोऽगाधतोयेऽसौ ममज्ज च ममार च।
ज्ञात्वा पुत्रस्य निधनं वयस्येभ्यः पिता प्रसूः ॥३९॥
ययतुस्तत्र संगृह्य शवं रुरुदतुर्बहु।
विलापं चक्रतुश्चाति तत्यजतुर्जलान्नकम् ॥४०॥
श्रीकृष्णवल्लभो मासः सोऽभवत्पुरुषोत्तमः।
अजानतोस्तयोरासीत्पुरुषोत्तमसेवनम् ॥४१॥
तेनाऽत्यन्तप्रसन्नः सन्प्रादुरासीद्धरिः स्वयम्।
सपत्नीको नमश्चक्रे दण्डवच्छ्रीहरिं द्विजः ॥४२॥
हरिः प्राह सुदेव! त्वं भाग्यवानसि साम्प्रतम्।
द्वादशाब्दसहस्रायुः पुत्रस्तेऽयं कृतो मया ॥४३॥
पुरुषोत्तममाहात्म्यात् प्रसन्नेन मया द्विज!।
सुचिरं जीवितोऽयं हि तनयः सुखदोऽस्तु ते ॥४४॥
गार्हस्थ्यमतुलं भुक्त्वा सह पुत्रेण सर्वदा।
ततस्त्वं ब्रह्मणो लोकं गत्वा तत्र महत् सुखम् ॥४५॥
दिव्याब्दवर्षसाहस्रं भुक्त्वा गन्तासि भूतले।
ततो राजा चक्रवर्ती दृढधन्वा भविष्यसि ॥४६॥
सम्वत्सराणामयुतं राज्यं भोक्ष्यसि पार्थिवम्।
गौतमीयं तव पत्नी नाम्ना तु गुणसुन्दरी ॥४७॥
पुत्राश्चत्वार एका च कन्या ते तत्र भाविनः।
यदा विरमसे मां त्वं कृष्णनारायणं प्रभुम् ॥४८॥
अयं ते तनयो विप्र! शुको भूत्वा तदा वने।
बोधयिष्यति भक्तेस्तु वाक्यं कृष्णविचिन्तकम् ॥४९॥
वाल्मीकिस्त्वां कथां सर्वां यथार्थां कथयिष्यति।
ततो वैराग्यमापन्नः कृत्वा भक्तिं परां हरेः ॥५०॥
गमिष्यसि सपत्नीको मोक्षं परं हरेः पदम्।
वदत्येवं महाविष्णौ समुत्तस्थौ द्विजात्मजः ॥५१॥
दम्पती तं सुतं दृष्ट्वा महानन्दौ बभूवतुः।
ननाम शुकदेवोऽपि श्रीहरिं पितरौ तु तौ ॥५२॥
गरुडो ब्राह्मणश्चापि नेमुर्हरिं सभार्यकः।
कृष्णः प्राहाऽधिमासस्याऽनायासेनापि पालनात् ॥५३॥
सुतदारापतिपत्नीक्षेत्रराज्यसुखानि वै।
भवन्त्येव न सन्देहः किमु पुत्रसजीवनम् ॥५४॥
एकमप्युपवासं यः करोति पुरुषोत्तमे।
दग्ध्वाऽनन्तान्यनिष्टानि लब्ध्वा पुण्यनिधीन् स तु ॥५५॥
सुरयानं समारुह्य वैकुण्ठं याति देहवान्।
एकतः सर्वपुण्यानि त्वेकतः पुरुषोत्तमम् ॥५६॥
तोलयामास वेधोऽभूद् गुरुर्वै पुरुषोत्तमः।
ईशसृष्टौ जीवसृष्टौ ब्रह्मसृष्टावपि स्वयम् ॥५७॥
पुरुषोत्तममासस्तु सर्वत्र वर्तते महान्।
तस्य वै पालनेनाऽत्र विजयस्ते भविष्यति ॥५८॥
इत्युक्त्वा श्रीहरिर्धाम ययौ गरुडवाहनः।
सदेवः सः सपत्नीकस्तं मासं समपूजयत् ॥५९॥
भुक्त्वाऽथ विषयान् सर्वान् सहस्राब्दान्यहर्निशम्।
जगाम ब्रह्मणो लोकं सपत्नीको द्विजोत्तमः ॥६०॥
तत्रत्यं सुखमासाद्य सपत्नीको भुवं गतः।
स एव दृढधन्वा त्वं प्रथितः पृथिवीपतिः ॥६१॥
महिषीयं तव पत्नी गौतमी गुणसुन्दरी।
शुकदेवश्च ते पुत्रो हरिणा योऽनुजीवितः ॥६२॥
द्वादशाब्दसहस्रायुर्भुक्त्वा वैकुण्ठमेयिवान्।
स एव वै शुको भूत्वाऽबोधयत् त्वां स्मृतिं हरेः ॥६३॥

पुन्नामनरकात् त्राता पुत्रस्ते सार्थकोऽभवत् ।
इत्येतत् कथितं राजन् प्राग्वृत्तं ते यथा ह्यभूत् ॥६४॥
शतधन्वा तदाऽपृच्छत् पूजाविधिं मुनिं तदा ।
वाल्मीकिस्त्वाह तं सर्वं विधिं विस्तरतो नृपम् ॥६५॥
ब्राह्मे मुहूर्ते चोत्थाय परंब्रह्म विचिन्तयेत् ।
ततो व्रजेन्नैर्ऋताशां शौचार्थं जलभाजनः ॥६६॥
कर्णे कृत्वा ब्रह्मसूत्रं शौचं मूत्रं विसर्जयेत् ।
जलेनेन्द्रिययुगलं प्रक्षाल्य मृज्जलादिभिः ॥६७॥
गन्धलेपक्षयशुद्धिं कृत्वा गण्डूषकान् बहून् ।
दन्तशुद्धिं तथा कृत्वा स्नायात्तीर्थादिवारिषु ॥६८॥
आयुर्बलं यशो वर्चः प्रजा पशुर्वसूनि च ।
ब्रह्म प्रज्ञा च मेधा च वर्धन्ते स्नायिनोऽन्वहम् ॥६९॥
शुद्धे वस्त्रे परिधाय प्राङ्मुखो बद्धसंशिखः ।
सपवित्रेण हस्तेन कुर्यादाचमनं ततः ॥७०॥
ऊर्ध्वपुण्ड्रं सबिन्दुं च कुर्याच्चन्दनमृत्स्नया ।
शंखचक्रादि कुर्याच्च धारयेत् तुलसीस्रजम् ॥७१॥
प्राणायामं तथा सन्ध्यां गायत्रीजपनं चरेत् ।
शुचौ देशे गोमयेन मण्डलं तण्डुलादिभिः ॥७२॥
कारयित्वा च तन्मध्ये कलशं सजलं न्यसेत् ।
कलशस्य मुखे विष्णुः कण्ठे रुद्रः सदा स्थितः ॥७३॥
तस्य मूले स्थितो ब्रह्मा मध्ये तिष्ठन्ति मातरः ।
कुक्षौ तिष्ठन्ति भूद्वीपसहिताः सप्त सागराः ॥७४॥
तिष्ठन्ति ऋग्यजुःसामाऽथर्वाणोऽङ्गयुतास्तथा ।
गंगा गोदावरी सौर्या कावेरी च सरस्वती ॥७५॥
तिष्ठन्त्वत्र जले नद्यः पापनाशविधायिकाः ।
चन्दनाऽक्षतपुष्पाणि समर्पयामि ओं नमः ॥७६॥
नैवेद्यं फलताम्बूले समर्पयामि ओं नमः ।
इत्यभ्यर्च्य ततः शंखं पूजयेदक्षतादिभिः ॥७७॥
घण्टां च पूजयेद् रम्यामक्षतैः कुंकुमादिभिः ।
पात्रं घटोपरि न्यस्येत् तिलयुक्शर्करान्वितम् ॥७८॥
पीताम्बरं शुभं चापि हैमं राधायुतं हरिम् ।
पुरुषोत्तममासस्य दैवतं तं प्रपूजयेत् ॥७९॥
अनलोत्तारणं कृत्वा कुर्वीत प्राणधारणाम् ।
स्पृष्ट्वा द्वौ तत्कपालौ तु दक्षिणेन करेण वै ॥८०॥
दत्वा च हृदयेऽङ्गुष्ठं प्राणाँस्तत्र सुधारयेत् ।
अस्यै प्राणाः प्रतिष्ठन्तु चास्यै प्राणाः क्षरन्तु च ॥८१॥
अस्यै देवत्वयुक्तायै स्वाहा नारायणाय वै ।
ध्यायेद् देवं तत आवाहयेन्नाथं हृदि स्थितम् ॥८२॥
आवाहयामि राधाश्रीसहितं पुरुषोत्तमम् ।
आसनं चार्पयाम्यस्मै श्रीकृष्णाय तु शार्ङ्गिणे ॥८३॥
समर्पयामि सलिलं पादप्रक्षालनाय ते ।
अर्घ्यं फलान्वितं चैवाऽर्पयामि परमात्मने ॥८४॥
तीर्थजलान्याचमनं तेऽर्पयामि राधिकापते ।
पयो दधि घृतं क्षौद्रं शर्करां चार्पयामि ते ॥८५॥
पञ्चस्नानं जलस्नानं तथा ते कारयाम्यहम् ।
पीतधौत्रं चोत्तरीयं समर्पयामि केशव ! ॥८६॥
कौस्तुभं ब्रह्मसूत्रं च भूषा ददामि ते प्रभो ।
सुगन्धतैलसारादि चन्दनं चार्पयामि ते ॥८७॥
कुंकुमाक्षतपुष्पाणि चार्पयानि गृहाण वै ।
धूपं दिव्यरसोपेतं त्वर्पयामि च ते प्रभो ॥८८॥
दीपं घृतोज्ज्वलं तुभ्यं चार्पयामि हरे प्रभो ।
पायसाद्यं च नैवेद्यं समर्पयामि केशव ॥८९॥
आचमनं जलपानं फलं ताम्बूलकं तथा ।
करोद्वर्तनकं चैव समर्पयामि माधव ॥९०॥
सुवर्णदक्षिणां हाराऽक्षतान् ददामि केशव ! ।
नीराजयामि देवेशं प्रदक्षिणं करोमि च ॥९१॥
पुष्पांजलिं चार्पयामि नमस्कारं करोमि च ।
न्यूनं ते पूजने किंचित् क्षमस्व पुरुषोत्तम ॥९२॥
होमं कुर्यादखण्डं च घृतदीपं समाचरेत् ।
पुरुषोत्तमतुष्ट्यर्थं सर्वार्थफलसिद्धये ॥९३॥
इति नित्यं पूजयेत्तं दद्याद्दानानि शक्तितः ।
भोजयेद् भोज्यपात्राणि वृद्धाँश्च पादयोर्नमेत् ॥९४॥
हविष्यभोजनं कुर्याद् व्रती देवप्रसादकम् ।
गोधूमाः शालयो मुद्गा यवास्तिलाश्च शर्कराः ॥९५॥
कङ्गूखर्जूरनीवारा द्राक्षाः कन्दाश्च कर्कटी ।
मूलं शाकानि पत्राणि खाद्यपुष्पाणि मूलकम् ॥९६॥
कान्दकानि कदलानि दधि दुग्धं तथाऽऽर्द्रकम् ।
शुण्ठी चाम्रफलं तक्रं पनसं च हरीतकी ॥९७॥
पिप्पलीजीरकं चामलकं तिन्तिडिका तथा ।
क्रमुकं चैक्षवं सर्वं सात्त्विकं व्रतिभोजनम् ॥९८॥
राजसं राजिकाराद्धं तामसं चामिषादिकम् ।
वातुलं द्विदलाद्यं च परान्नादि विवर्जयेत् ॥९९॥
ब्रह्मचर्यमधःशय्यां पत्रावल्यां च भोजनम् ।
एकभुक्तं च कुर्वीत निन्दामात्रं विवर्जयेत् ॥१००॥
उपोषणेन दुग्धेन दध्ना जलेन सर्पिषा ।
पत्रेणापि फलेनापि कर्तव्यः पुरुषोत्तमः ॥१०१॥

व्रतभंगो यथा न स्यात्तथा कार्यं प्रभोजनम् ।
तुलसीदललक्षेणाऽऽर्च्चने पुण्यमनन्तकम् ॥१०२॥
पुरुषोत्तममासस्य व्रत्यपि पुरुषोत्तमः ।
चतुर्भुजो भवेदेव वैकुण्ठे वसति ध्रुवम् ॥१०३॥
अखण्डदीपो दातव्यो मासे श्रीपुरुषोत्तमे ।
सौभाग्यनगरे राजा चित्रबाहुरभूत्पुरा ॥१०४॥
तस्य चन्द्रकला भार्या ह्युभावास्तां सुधार्मिकौ ।
अगस्त्यश्च मुनिस्तस्य भवनं त्वाजगाम ह ॥१०५॥
पूजयित्वा विनयेन चित्रबाहुरुवाच ह ।
अद्य मे गृहसाम्राज्यजन्मादि सफलं खलु ॥१०६॥
यस्त्वं समागतो मेऽद्य गृहे श्रीकृष्णवल्लभः ।
तुभ्यं सर्वं ददाम्यद्य वैष्णवाय महात्मने ॥१०७॥
मेरुतुल्यफलं स्याच्च मनागप्यर्पितं तु ते ।
विष्णवे विष्णुभक्तायाऽनर्पितो दिवसोऽफलः ॥१०८॥
वैष्णवा वाङ्मनःकायकर्मभिः सेवनार्हणाः ।
तस्य धन्याः प्रजाः सर्वा यद्गृहे वैष्णवो जनः ॥१०९॥
वस्तव्यं वैष्णवे देशे राज्ये वैष्णवभूभृति ।
अमंगलं तथा काणं बोध्यं राष्ट्रमवैष्णवम् ॥११०॥
श्रीकृष्णाश्रितभक्तस्य राज्ञो राज्यं विवर्धते ।
मुने ! लक्ष्मीर्विपुला मे तथा राज्यमकंटकम् ॥१११॥
पतिव्रता च मे पत्नी केन पुण्येन मे वद ।
श्रुत्वाऽगस्त्यश्च तं प्राह चमत्कारपुरे पुरा ॥११२॥
त्वमभूः शूद्रजातीयो मणिग्रीवोऽतिनास्तिकः ।
सुरामांसव्यवायातिचौर्यदुर्गुणवारिधिः ॥११३॥
पतिभक्ता त्वियं भार्या सदा सद्भावनावती ।
राज्ञा विवासितस्त्वं तु गतोऽरण्यं प्रियायुतः ॥११४॥
मृगयाजीवनस्त्वं तु वने संदृष्टवान् मुनिम् ।
तृषितं च मुमूर्षुं च ह्युग्रदेवं द्विजं तदा ॥११५॥
उत्थायोत्तोल्य सलिलं फलं दत्वाऽप्रमोदयत् ।
मुनिः प्राह सुसन्तुष्टो मणिग्रीव ! सुखी भव ॥११६॥
जीवितं दत्तवाँस्त्वं मे ब्रूहि किं ते ददाम्यहम् ।
मणिग्रीवस्तदा प्राह दारिद्र्यं नश्यतान्मम ॥११७॥
अतुला वैभवाः सन्तु पूर्णा मे स्युर्मनोरथाः ।
इतीच्छामि तदा प्राह मुनिस्तथा भवन्तु ते ॥११८॥
आगामिन्यधिमासे वै पावने पुरुषोत्तमे ।
दीपो देयो मन्दिरे श्रीपुरुषोत्तमतुष्टये ॥११९॥
न ते तीव्रदारिद्र्यं समूलं नाशमेष्यति ।
तिलतैलेन वाऽऽज्येनेङ्गुदीतैलेन वापि च ॥१२०॥
मासमेकं सदा स्नात्वा देवं नत्वा प्रदीपकम् ।
देहि तेन महाराज्यं पृथ्व्यां ते वै भविष्यति ॥१२१॥
यज्ञादीनि तु कर्माणि कृच्छ्रचान्द्रायणानि च ।
वेदपाठो गयाश्राद्धं कुरुक्षेत्रग्रहास्तथा ॥१२२॥
तीर्थानि सर्वदानानि धर्मकार्याणि यानि च ।
पुरुषोत्तमदीपस्य कलां नार्हन्ति षोडशीम् ॥१२३॥
अधिमासव्रतं श्रेष्ठं दीपश्चान्तःप्रकाशकः ।
धनधान्यपशुपुत्रपौत्रदारायशस्करम् ॥१२४॥
वन्ध्यात्वनाशकं नार्या अवैधव्यकरं व्रतम् ।
राज्यदं चेष्टदं भर्तृप्रदं पत्नीप्रदं व्रतम् ॥१२५॥
विद्यासिद्धिकोशमोक्षप्रदं दीपार्पणव्रतम् ।
इति पूर्वं त्वया दत्तो दीप श्रीहरये वने ॥१२६॥
तेन पुण्येन सद्राज्यं लक्ष्मीं पत्नीं पतिव्रताम् ।
प्राप्तवानसि राजेन्द्र ! पुनः कुर्या लभिष्यसि ॥१२७॥
इत्युक्त्वाऽगस्त्यऋषिराट् प्रयागं संजगाम ह ।
राज्ञा तेनापि विधिना प्राप्ते श्रीपुरुषोत्तमे ॥१२८॥
कृतं दीपप्रदानं च ततो मोक्षमवाप सः ।
इत्युक्त्वाऽर्हणमादाय वाल्मीको निर्जगाम ह ॥१२९॥
ततो मासे समायाते श्रेष्ठे श्रीपुरुषोत्तमे ।
चतुर्दश्यां प्रगे कृष्णदुन्दुभिर्दृढधन्वना ॥१३०॥
श्रुतः कुर्वन्तु चाऽद्यैव व्रतं दीपं सजागरम् ।
स्वर्गं मोक्षं प्राप्नुवन्तु तेन पुण्येन मद्वरात् ॥१३१॥
इतिश्रुत्वा दृढधन्वा स्मृत्वा सर्वं व्रतं तदा ।
सकुटुम्बो निराहारश्चक्रे सदीपजागरम् ॥१३२॥
महान्तमुत्सवं चक्रे ददौ दानानि गोभुवाम् ।
रात्रौ समाजगामाऽयं श्रीकृष्णः पुरुषोत्तमः ॥१३३॥
सकुटुम्बं गरुडेन ब्रह्मलोकं निनाय तम् ।
किमु कथ्यं महालक्ष्मि ! माहात्म्यमाधिमासिकम् ॥१३४॥
कर्ता धर्ता समुद्धर्ता यत्र श्रीपुरुषोत्तमः ।
पोष्टा तुष्टः प्रदाता च भोक्ता श्रीपुरुषोत्तमः ॥१३५॥
य इदं शृणुयाल्लक्ष्मि ! पठेद्वा पाठयेदपि ।
सोऽधिमासफलं लब्ध्वा ब्रह्मलोकं प्रयाति हि ॥१३६॥
सकामः स्वर्गमासाद्य पारमेष्ठ्यपदं तथा ।
महेशादिपदं प्राप्य ब्रह्मलोके महीयते ॥१३७॥
यैस्तु संपूजितो मासः सर्वं तैरभिपूजितम् ।
सर्वं प्राप्तं भवेत् तेन प्राप्तः श्रीपुरुषोत्तमः ॥१३८॥
येन नीतोऽधिमासोऽयं वन्ध्यस्तस्य तु सम्पदः ।
वन्ध्याः पुण्यं कृतं सर्वं वन्ध्यं स्यान्नात्र संशयः ॥१३९॥

ये केचित् सुखिनः सन्ति सुरमानवदानवाः ।
पुरुषोत्तममासस्य फलं लक्ष्मि ! न चेतरत् ॥१४०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पुरुषोत्तममासमाहात्म्ये दृढधन्वाऽरण्ये शुकोक्तश्लोकं श्रुत्वा तदर्थं वाल्मीकं पृष्ट्वा, स्वीयं प्राग्भवीयं सुदेवद्विजत्वं पुत्रवत्त्वं च पुत्रनिधने च पुरुषोत्तममासकरणेन पुत्रजीवितत्वं स त्वयं पुत्रः शुकः श्लोकवक्ता त्वं त्विदानीं दृढधन्वा जात इतिवृत्तान्तं ज्ञातवान्; पुरुषोत्तममासपूजाविधिं च ज्ञातवान्; अधिकमासे दीपदानेन मणिग्रीवशूद्रस्य जन्मान्तरे चित्रबाहुनृपतित्वं राज्यप्राप्तिश्चागस्त्येन कथिता, तदपि ज्ञातवान्; ततश्च चतुर्दशीव्रतं कृत्वा दृढधन्वा सकुटुम्बो मोक्षमवापेत्यादिनिरूपणनामा एकविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२१ ॥

श्रीनारायण उवाच—

शृणु लक्ष्म्यधिमासान्ते दिने त्वक्षरधामनि ।
कृतमुद्यापनं सर्वैः पुरुषोत्तममन्दिरे ॥ १ ॥
राधाकृष्णादयः सर्वे गोलोकस्थाः समाययुः ।
वासुदेवादयो व्यूहाः स्वप्रजाभिः समाययुः ॥ २ ॥
महावैकुण्ठलोकस्था वयं नारायणादयः ।
त्वया सह प्रजाभिश्च गता अभूम चाक्षरम् ॥ ३ ॥
अव्याकृताऽमृतधामभूमश्रीपुरतस्त्रियः ।
न्यायेश्वरादयः सर्वे मुदा तत्र ययुस्तदा ॥ ४ ॥
महाविष्णुप्रभृतयो हिरण्यगर्भसृष्टयः ।
प्रवैराजाश्चावरणा ईश्वरा जग्मुरक्षरम् ॥ ५ ॥
विष्णोर्जलावरणोर्ध्ववैकुण्ठस्था ययुस्तथा ।
सदाशिवस्य धामस्था महामायाप्रजा ययुः ॥ ६ ॥
एवं त ईश्वराश्चावतारा गत्वाऽक्षरं परम् ।
चक्रुरुद्यापनं तत्र पुरुषोत्तममासिकम् ॥ ७ ॥
ब्रह्मणः सत्यलोके चर्षयो मुनिजनास्तथा ।
मातृगणाः पितरश्च देवा जग्मुश्च वैष्णवः ॥ ८ ॥
उद्यापनप्रकर्तारो दिव्या ययुर्नरादयः ।
तीर्थानि देवताः सर्वा देव्यो जग्मुर्दिशस्तथा ॥ ९ ॥
तत्त्वान्यपि ययुस्तत्र सरितः सिन्धवस्तथा ।
पर्वताश्च तथाऽखाता द्वीपाः खण्डा ययुस्तथा ॥१०॥
ग्रहास्ताराश्च नक्षत्रमण्डलं वृक्षवल्लयः ।
दिव्या वै भक्तवर्यास्तु दैत्या दानवराक्षसाः ॥११॥
ओषधयस्तथा सर्पा नागाः पतत्त्रयोऽमलाः ।
जलवासाः स्थलवासा वायुवासा ययुस्तदा ॥१२॥
पातालस्था विवरस्था दिव्यादिव्या ययुस्तदा ।
व्रतिनः सहवासाश्च भक्ता उद्यापनकृते ॥१३॥
सत्ये पैतामहे लोके सन्निधौ ययुरादरात् ।
पुरुषोत्तममासस्योद्यापनार्थं ययुश्च ते ॥१४॥
गन्धर्वाः किन्नराः सूतादयश्च सुरमानवाः ।
भट्टचारणभृत्याश्च रौद्रा अपि च शांकराः ॥१५॥
एते चान्ये व्रतपूर्तिफलार्थं चोत्सवे गताः ।
शृणु लक्ष्मि ! तत्र तत्र यथाशक्ति यथाधनम् ॥१६॥
कृतमुद्यापनं सर्वैः सर्वेष्टसिद्धिदायकम् ।
भुक्तिमुक्तिप्रदं द्रव्यदानपूर्वं कृतं तु तैः ॥१७॥
शृणु तैस्तु कृतमुद्यापनं संश्रावयामि ते ।
पुरुषोत्तममासस्य यदुक्तं हरिणा स्वयम् ॥१८॥
पक्षद्वये चतुर्दश्याममायां पूर्णिमातिथौ ।
एकादश्यां नवम्यां वा व्रताहेऽष्टमिकातिथौ ॥१९॥
यत्र तिथौ भवेदानुकूल्यं तत्रापि वा तिथौ ।
उद्यापनं प्रकुर्याद्वै व्रतसम्पूर्तिहेतवे ॥२०॥
पुरुषोत्तममासस्य दुन्दुभिश्च स्थले स्थले ।
उद्घोषयति गत्वैव कुर्वन्तूद्यापनं शुभम् ॥२१॥
पुरुषोत्तममासस्य फलं पूर्णं भविष्यति ।
श्रुत्वाऽपि डिण्डमं चान्ये चक्रुरुद्यापनं गृहे ॥२२॥
रात्रौ भूशायिनो भूत्वा ब्रह्मचर्यं प्ररक्ष्य च ।
प्रातरुत्थाय ते सर्वे चक्रुर्ध्यानं हरेस्ततः ॥२३॥
कृत्वा शौचादिकाः सर्वा दैहिकीर्बाह्यतः क्रियाः ।
दिव्यादिव्यं यथावर्ष्म कृत्वा स्नानादिकं ततः ॥२४॥
जपं होमं तथा सन्ध्यां स्वाध्यायं तर्पणादिकम् ।
यथालोकं यथावर्ष्म यथायोग्यं विधाय ते ॥२५॥
नित्यां पूजां वृद्धपूजां कृत्वा पूज्यार्हणादिकम् ।
आचम्य च भुवं कृत्वा संस्कृतां बहुविस्तराम् ॥२६॥
चक्रुश्च मण्डपं तत्र बहुस्तंभसमन्वितम् ।
रत्नहीरकहाराद्यैराम्राऽशोकादितोरणैः ॥२७॥
कदलीस्तम्भपत्राद्यैः कल्पवल्ल्यास्तरोः फलैः ।
कलशैः रंगवल्लीभिश्चाम्बरैः कानकान्वितैः ॥२८॥
बन्धयित्वा प्रदीपैश्च शोभयित्वा सुगन्धिभिः ।
वासयित्वा च तन्मध्ये पञ्चधान्यैश्च सप्तभिः ॥२९॥
धान्यैर्वा कारयित्वैव सर्वतोभद्रमण्डलम् ।
सपत्नीकान् विष्णुभक्तान् निमन्त्र्य च यथाबलम् ॥३०॥

न्यमुश्चतुरः कलशाँश्चतुर्दिक्षु च मण्डले ।
सुवस्त्रश्रीफलपूगीनागवल्लीदलान्वितान् ॥३१॥
तत्राऽक्षतान् पूरयित्वा शर्कराद्रव्यमिश्रितान् ।
वासुदेवं संकर्षणं प्रद्युम्नं चानिरुद्धकम् ॥३२॥
ईशानतः क्रमान्न्यस्य मध्ये च कलशे शुभे ।
सफले साम्बरे पूगीस्वर्णमुद्राऽक्षतान्विते ॥३३॥
पञ्चरत्नयुते स्वर्णे न्यधुः श्रीपुरुषोत्तमम् ।
राधालक्ष्म्यादिसहितं सौवर्णे दिव्यरूपिणम् ॥३४॥
एवं तैर्व्रतिभिः सर्वैः स्थापनं श्रीहरेः कृतम् ।
आचार्यश्च गुरुस्तत्र पूजनार्थे प्रवेशितः ॥३५॥
देहशुद्धिः कारिता च यजमानस्य तेन वै ।
तत आवाहितो देवश्चासनं च प्रदापितः ॥३६॥
पादप्रक्षालनार्थं वै दत्तं जलं सुतीर्थजम् ।
चतुर्दिक्षु कृता दीपाः सुगन्धस्तत्र कारितः ॥३७॥
अर्घ्यं फलादिभिर्युक्तं दम्पत्या च समर्पितम् ।
आचमनीयसलिलं दत्तं देवाय तीर्थजम् ॥३८॥
दधि दुग्धं घृतं क्षौद्रं शर्करा चामृतं तथा ।
अभिषेकजलस्नानं दत्तानि केशवाय वै ॥३९॥
वस्त्रेण मार्जितो देवो वस्त्राभूषणभूषितः ।
गन्धसारोत्तरतैलसुगन्धाद्यैः सुवासितः ॥४०॥
कुंकुमकज्जलचूर्णचन्दनाद्यैः सुशोभितः ।
मणिहीरकमौक्तिकहारोपवीतभूषितः ॥४१॥
किरीटकुण्डलकटकोर्मिकाश्रृंखलान्वितः ।
छत्रयष्टिनक्तकचामरपत्त्राणरक्षितः ॥४२॥
पर्यंकगेन्दुककशिप्वादर्शादिप्रदापितः ।
पुष्पतुलसीपद्माद्यैः पुण्ड्रैश्चन्द्रैः सुशोभितः ॥४३॥
अथ तन्मण्डपे ताम्रपात्रे होमश्च कारितः ।
चतुर्थ्यन्तैर्नाममन्त्रैस्तिलैर्घृतेन सत्फलैः ॥४४॥
अष्टोत्तरशतवारं ततश्च तर्पणं कृतम् ।
देवाश्च पितरश्चेति तृप्यन्तां पुरुषोत्तमः ॥४५॥
अथ नीराजितो देवो बहुवर्त्यनलैस्तथा ।
नमस्कृतः स्तुतः प्रदक्षिणीकृतश्च वैष्णवैः ॥४६॥
दण्डवत्सत्कृतश्चापि ध्यातः श्रीपुरुषोत्तमः ।
क्षमापितो हरिः पुष्पांजलिर्दत्तश्च शार्ङ्गिणे ॥४७॥
अथ संभोजितो देवो मिष्टान्नैस्तर्पितोऽमृतैः ।
अर्पितश्च जलैर्मिष्टफलैस्ताम्बूलचर्वितः ॥४८॥
सुगन्धैरुद्वर्तितश्च करयोः पुरुषोत्तमः ।
स्वास्थ्यैर्विश्रमितो देवः पादयोरभिवाहितः ॥४९॥
एवं सर्वैः पूजितश्च भगवान् पुरुषोत्तमः ।
आविर्भूतोऽदृश्यताग्रे फलन्त्वनन्तकं ददौ ॥५०॥
अथाऽऽचार्याय संदत्ता दक्षिणा हेमरूप्यका ।
धेनुदानं कृतं चापि स्वर्णश्रृंगारभूषितम् ॥५१॥
घृतवस्त्रतिलपात्रं दत्तं विप्राय तत्र च ।
प्रतिमा च प्रदत्ता संहिताशास्त्रं समर्पितम् ॥५२॥
कांस्यानि संपुटात्मानि त्रिंशद्दत्तानि वै तदा ।
तदा त्रिंशत्त्रिंशदपूपैश्च मध्ये सम्पूरितानि वै ॥५३॥
एतद्ब्रह्माण्डदानं वै कल्पितं पुरुषोत्तमे ।
प्रत्यपूपं तु यावन्ति छिद्राणि सन्ति पद्मजे ॥५४॥
तावद्वर्षसहस्राणि वैकुण्ठे वसतिर्भवेत् ।
ततो वसतिर्गोलोके ततो धाम्न्यक्षरे परे ॥५५॥
अथवाऽपूपसामग्र्यपक्वा देया द्विजन्मने ।
अथ संभोजिता विप्राः सन्तः साध्व्यश्च बालकाः ॥५६॥
पायसान्नैश्च मिष्टान्नैर्व्यञ्जनैश्चामृतादिभिः ।
चतुर्धा भोजनैर्भक्ष्यभोज्यलेह्यसुचोष्यकैः ॥५७॥
रसैर्दुग्धादिभिर्वार्भिः शर्करैलादिमिश्रितैः ।
ततो जलं मुखशुद्धिस्ताम्बूलकं च दक्षिणा ॥५८॥
वस्त्राण्याभरणान्युत्तमोत्तमान्यर्पितानि वै ।
देवीभ्यो देवताभ्यश्च गुरुभ्योऽप्यर्पितानि च ॥५९॥
तत्तल्लोकजतत्त्वानि दानयोग्यानि यानि वै ।
भूतेभ्य आश्रितेभ्यश्चातिथिभ्योऽन्नं समर्पितम् ॥६०॥
ततो भुक्तं स्वजनैश्च सह व्रतिभिरादरात् ।
फलाहारादिकं योग्यं व्रतभंगाऽकरं हि यत् ॥६१॥
मध्याह्नेऽपि कृतं तद्वन्निशि रात्रौ च वै तथा ।
पूजितो भोजितो देवो जागरेण युतैर्जनैः ॥६२॥
गीतं च नर्तनं पुण्यं भजनं च कृतं जनैः ।
प्रातः स्नात्वा पूजितश्च क्षमाप्याऽथ विसर्जितः ॥६३॥
आचार्याय प्रदत्तः स मूर्तिरूपः परेश्वरः ।
एवमुद्यापनं कृत्वा ययुः सर्वे निजालयम् ॥६४॥
फलं चानन्तकं प्राप्तं पुरुषोत्तमसेवनात् ।
ततो लक्ष्मि ! यथाशक्ति व्रतमेतत्समाचरेत् ॥६५॥
दुःखदारिद्र्यदौर्भाग्यनाशः स्यादिष्टमाप्नुयात् ।
नियमानां परित्यागस्ततः कुर्याद् व्रती जनः ॥६६॥
मध्यभोजी नक्तभोजी ब्राह्मणान् भोजयेद् व्रती ।
अयाचिते व्रते लब्धे स्वर्णदानं समाचरेत् ॥६७॥
मासोपवासिना देया दोग्ध्री गौर्दक्षिणायुता ।
धात्रीव्रती प्रदद्याच्च दधि क्षीरं च शर्कराम् ॥६८॥

फलानां नियमे लक्ष्मि! फलदानं समाचरेत्।
तैलरोधे घृतं देयं घृतरोधे पयोऽपर्णम् ॥६९॥
धान्यानां नियमे दद्याद् धान्यानि तानि तानि च।
भूषायित्वे तु पर्यंकगेन्दुककशिपुच्छदान् ॥७०॥
फलपत्रादिनियमे तानि दद्याद् द्विजन्मने।
मौने घण्टाशंखवाद्यान् दद्याद् देवाय पद्मजे ॥७१॥
नखकेशधरो दद्यादादर्शं केशकर्चिकाम्।
उपानहौ प्रदद्याच ह्युपानदादिवर्जने ॥७२॥
क्षारत्यागे रसान् दद्याद् दीपदाने तु दीपकान्।
एकान्तरोपवासी च कुंभानष्टौ प्रदापयेत् ॥७३॥
राज्ञां यावत्य इष्टाश्च स्मृद्धयोऽत्र भवन्ति वै।
देया दाने च ताः सर्वा यथाशक्ति यथाधनम् ॥७४॥
एकान्नेन व्रती यायाच्चतुर्बाहुः परां गतिम्।
एकभोज्युपवास्येव सर्वान्कामानवाप्नुयात् ॥७५॥
पूर्वाह्णे भुंजते देवा मध्याह्ने मुनयस्तथा।
अपराह्णे पितृगणा नक्तभोजी नरो भवेत् ॥७६॥
दिने दिनेऽश्वमेधस्य फलं नक्तादनो लभेत्।
द्वादशीव्रतकृद् याति गरुडेन हरेः पदम् ॥७७॥
यस्य यस्य नियमः स्यात्तत्तद्दाने नियोजयेत्।
तेन पूर्णं व्रतं स्याच्च ब्रह्मलोकप्रदं भवेत् ॥७८॥
अनित्येन शरीरेण साध्यं मोक्षपदं सदा।
पुरुषोत्तमतुल्यं तु नास्ति लक्ष्मि! त्रिलोकके ॥७९॥
सहस्रजन्मतस्तेन तपसाऽपि न गम्यते।
यत्फलं गम्यते लोके पुरुषोत्तमसेवया ॥८०॥
त्रिरात्रस्नानतश्चात्र शाखामृगोऽक्षरं ययौ।
आसीद्वै केरले देशे द्विजो धनातिलोलुपः ॥८१॥
तेन कदर्यनाम्ना सः ख्यातिं जगाम देहिषु।
सदन्नवस्त्रं भुक्तं न स्वाहा स्वधा कृता न वा ॥८२॥
धनं पृथ्व्यां रक्षितं च धर्मकार्यं कृतं न च।
न व्रतं नोत्सवश्चापि न ग्रहणं न कुंभनम् ॥८३॥
कृतं कृतं भिक्षणं तु धनस्याऽटन् विदीनवत्।
सोऽगान्मालाकारवाटिकायां दुःखं रुदन्मुहुः ॥८४॥
मालाकारो दयां कृत्वा ररक्ष स्वान्तिके हि तम्।
वाटिकारक्षकं कृत्वा माली ग्रामे गतो भवेत् ॥८५॥
पश्चाज्जघास पक्वानि चाश्नीणत फलानि सः।
एवं स्तेनक्रियाकर्तुर्जग्मुरयुतवत्सराः ॥८६॥
ममार च वने तत्र नाऽवाप वह्निदारुणी।
यमदूतैर्नीयमानस्ताड्यमानो यमालयम् ॥८७॥
गच्छन्नुवाच दुष्कर्मफलं प्राप्तं मयाऽद्य वै।
मानुषं जन्म संप्राप्य न किञ्चित् सुकृतं कृतम् ॥८८॥
चौर्यादिसञ्चितं द्रव्यं स्थितं भूमौ निरर्थकम्।
न धृतं नाऽत्तमेवेति पुण्यं चापि कृतं नहि ॥८९॥
न कुटुम्बं पोषितं च भार्या कष्टेन योजिता।
कदर्यो बिलपन्नेवं गतो यमपुरं ततः ॥९०॥
चित्रगुप्तोऽवदद्धर्मं पापद्वयं बहूग्रकम्।
फलचौर्यं तथा विश्वासघातित्वं परं बहु ॥९१॥
श्रुत्वा प्राह यमो दूतान् प्रेतमेनं विधत्थ वै।
ततोऽस्तु वानरोऽयं तु मुहुर्नरकयातनः ॥९२॥
इति दूतैः प्रापितः सः प्रेततां निर्जले वने।
ततः कपिरभूत् कालंजरे शैले भयंकरे ॥९३॥
तत्रेन्द्रेण कृतः पूर्वं कुण्डो मृगसुतीर्थकः।
तत्रैव वानरो जातः पूर्वपुण्यात् तदल्पकात् ॥९४॥
शृणु पूर्वकृतं पुण्यं पुरुषोत्तमशंसनम्।
चित्रकुण्डलवैश्योऽभूत् पुरुषोत्तमसद्व्रती ॥९५॥
दानकृत् तं च भिक्षार्थं कदर्यो गतवान् पुरा।
प्रशशंस च तं वैश्यं धनलोभेन भिक्षुकः ॥९६॥
पुरुषोत्तममासस्य व्रतं यद् विधिना त्वया।
कृतं तादृक् कृतं नैव केनापि त्वत्र भूतले ॥९७॥
कृतार्थोऽसि त्वया यत्सेवितः श्रीपुरुषोत्तमः।
धन्यदो मोक्षदश्चायं मासः श्रीपुरुषोत्तमः ॥९८॥
देहि मह्यं धनं किञ्चिदिति मासं शशंस सः।
तेन पुण्येन तीर्थेऽत्र वानरत्वमुपागमत् ॥९९॥
जन्मतस्तस्य वक्त्रेऽभूत्पीडाऽसृग्व्रणसंभवा।
दन्ताः पेतुः क्षुधा व्याप्तो ज्वरातिपीडितोऽभवत् ॥१००॥
पतितः कुण्डनिकटे आयान्माः पुरुषोत्तमः।
दशमीदिनतः पञ्चाहानि कुण्डजले ययुः ॥१०१॥
व्यसुस्तीर्थजले जातस्तेन दिव्यवपुर्धरः।
चतुर्भुजोऽभवद् दिव्यदेवीपार्षसेवितः ॥१०२॥
तीर्थमृतेस्तथा जातः स्नानात् पञ्चाहसत्कृतान्।
अज्ञानाच्च तथा जातं किं पुनर्विधिना कृतात् ॥१०३॥
ते सदा सुभगाः पुण्यास्तेषां च सफलो भवः।
येषां पुमुत्तमो मासः स्नानदानजपैर्गतः ॥१०४॥
तानि कोटिगुणान्येव कृतानि पुरुषोत्तमे।
कपिर्जगाम गोलोकं विमानवरमास्थितः ॥१०५॥
एवं कदर्यश्चौरोऽपि वानरत्वं गतोऽपि च।
पुरुषोत्तमयोगेन प्राप्तो गौलोकमेव सः ॥१०६॥

पुरुषोत्तममासस्य कथायाः श्रवणादपि ।
मासोपोषणपूजादिफलं पूर्णमवाप्यते ॥१०७॥
श्रुत्वा धर्मं विजानाति श्रुत्वा पापं च नश्यति ।
श्रुत्वा निवर्तते मोहः श्रुत्वा ज्ञानामृतं मिलेत् ॥१०८॥
लक्ष्मीनारायणसंहिताख्यं वेदं पठेद् व्रती ।
शृणुयाच्छ्रीपुरुषोत्तममासे मोक्षदा हि सा ॥१०९॥
यया नार्या कृतो नैव मासः श्रीपुरुषोत्तमः ।
तत्पतिनाऽऽदृतश्चेत् सा लभेत् तत्फलं वरम् ॥११०॥
सती नारी सदा पातिव्रत्यधर्मपरा यदि ।
पतिरूपो भवत्यस्या मासः श्रीपुरुषोत्तमः ॥१११॥
कुरूपो वा कुवृत्तो वा दुःस्वभावोऽपि मद्यपः ।
रोगी क्रोधी स्थवीरो वा मूकोऽन्धो बधिरोऽपि वा ॥११२॥
रौद्रो दीनः कदर्यो वा दरिद्रः कुत्सितोऽपि वा ।
कातरः कितवो वापि विषयी लम्पटोऽपि वा ॥११३॥
सततं देववत्पूज्यः सत्या साध्व्या पतिर्हरिः ।
विधवया कन्यया च पतिरेव हरिः सदा ॥११४॥
सेवनीयः पूजनीयो ध्यातव्योऽध्यासितव्य उत् ।
वाचा च कर्मणा देहेनापि भावनया तथा ॥११५॥
न पत्युर्विषमं कार्यं नोद्वेजनीय ईश्वरः ।
बाला युवती जरठा पत्यधीना प्रिया भवेत् ॥११६॥
कामेन लोभेन बलेन वापि
दैन्येन भावेन समाश्रयेण ।
रूपेण वासेन धनादिना वा
संतृष्णया वेन्द्रियधातुपुष्ट्या ॥११७॥
सदम्बरैर्यानवरैश्च वाहनै-
राभूषणैर्हीरकरत्नकोटिभिः ।
सुनृत्यगीतैर्बहुलासनैरपि
नान्यं भजेत् सा खलु साधुलक्षणा ॥११८॥
अन्यस्मै दर्शनार्थं शृंगारं कुरुते न वै ।
स्वानुरूपं नरं या न चिन्तयति प्रिया सती ॥११९॥
सुरूपं तरुणं रम्यं कामिनीनां च वल्लभम् ।
दृष्ट्वा न विकृतिं याति सा वै बोध्या महासती ॥१२०॥
भुंक्ते भुक्ते यथा पत्यौ दुःखिते दुःखिना च या ।
मुदिते मुदिता सुप्ते सुप्ता जागर्ति जाग्रति ॥१२१॥
वृद्धभक्ता पतिकार्येऽनुकूला नाऽधिकव्यया ।
गृहाऽऽगतं पतिं प्रत्युत्तिष्ठत्यासनवारिभिः ॥१२२॥
प्रसन्नवदना काले भोजनादिप्रदायिनी ।
भुक्तवन्तं श्रावयेन्नाऽप्रियं शान्तिं ददेत्तथा ॥१२३॥
सेवार्थं सर्वदा भाव्यं प्रीत्यर्थं प्रियया सदा ।
वस्तुव्ययं न चात्यर्थं कुर्वीत गृहरक्षिका ॥१२४॥
शृंगारश्चातिभूषादि धारयेत् पतितुष्टये ।
त्रेतादौ प्रमदानां स्यादार्तवाऽशौचमेव ह ॥१२५॥
तत्र चतुरहान्येव गृहकार्ये न संस्पृशेत् ।
स्नात्वा सूर्यं पतिं कृष्णं दृष्ट्वा पश्चात् क्रियापरा ॥१२६॥
भवेत्, भवेत्पुत्रकामा युग्मरात्रिरतिप्रिया ।
पुत्रीकामा त्वयुग्मासु रात्रिषु स्वामिसेविका ॥१२७॥
आषोडशरात्रिकं वै गर्भाधानबलं भवेत् ।
तदुत्तरं कमलस्य द्वारं बद्धं प्रजायते ॥१२८॥
न बिभत्सा भवेत् क्वापि रूक्षवाणी भवेन्न च ।
शूर्पवातं नाऽऽददीत नोपाविशेत्तथांऽगने ॥१२९॥
द्वारदारौ चुल्लिकायां पेषण्यां निषदीत न ।
गुरुं वाऽत्युष्णमाहारमजीर्णे न समाचरेत् ॥१३०॥
तेनाऽपत्यवती स्यादन्यथा गर्भक्षरो भवेत् ।
सपत्नी स्थानमिर्ष्यायाः साध्वीर्ष्यां परिवर्जयेत् ॥१३१॥
गृहक्लेशं न जनयेद् रक्षयेत् सर्वथा गृहम् ।
नाऽऽक्रोशेत् पतिमालक्ष्य भर्त्सयेन्न विमानयेत् ॥१३२॥
रत्या दद्यात्सुखं तस्मै स्वामिने रक्षिणे सदा ।
पत्याज्ञया बहिर्गच्छेद् देवदर्शनहेतवे ॥१३३॥
पत्यौ देशान्तरं प्राप्ते साध्वी वर्तेत सर्वथा ।
रंगरागविहीना वै श्वश्र्वाद्याज्ञाकरी सदा ॥१३४॥
वस्त्रैरंगैश्च मलिना न भवेच्छुद्धिमाचरेत् ।
स्वामिशिष्टं प्रसादान्नजलं भुञ्जीत भावतः ॥१३५॥
स्नायान्न वस्त्रशून्या वै न नग्ना स्यात् कदाचन ।
नोलुखले न मुसले न घटादौ न चाश्मनि ॥१३६॥
न यन्त्रे न च रथ्यायां सती तूपाविशेत् क्वचित् ।
पतिपादोदकं तीर्थं पिबेत् तीर्थफलप्रदम् ॥१३७॥
व्रतोपवासनियमान् पतिमुल्लंघ्य नाऽऽचरेत् ।
भर्तुश्चरणावभ्यर्च्य भोक्तव्यं प्रियया सदा ॥१३८॥
पत्याक्षेप्त्री सरमा स्यादुलूकी स्वोदरंभरा ।
सूकरी चान्यपार्श्वस्था वागुरी गुप्तभक्षिका ॥१३९॥
अवमानकरी मूका सापत्नेर्ष्या तु दुर्भगा ।
पत्युः कष्टप्रदा नारी कुरूपा रोगिणी भवेत् ॥१४०॥
भर्ता ब्रह्मा हरो विष्णुर्गुरुस्तीर्थं व्रतं जपः ।
शुद्धिः स्वर्गं शुभं दानं तस्मात्पतिं सुसेवयेत् ॥१४१॥
जीवहीनोऽशुचिर्देहो भर्तृहीनाऽशुचिः सती ।
पतिव्रता प्रिया स्वस्याः पतिं स्वर्गं नयेत् सती ॥१४२॥

यमदूताः पलायन्ते सतीं दृष्ट्वा तु दूरतः ।
यावत्स्वलोमसंख्यास्ति तावत्कोट्ययुतानि वै ॥१४३॥
भर्त्रा स्वर्गसुखं भुंक्ते रममाणा पतिव्रता ।
विधवया पतिं स्मृत्वा तर्पणं कार्यमन्वहम् ॥१४४॥
दर्भतिलोदकैः पिष्टफलैर्गोग्रासकैस्तथा ।
अन्यैश्च दानकार्यैश्च पुण्यं समर्जयेत्तु सा ॥१४५॥
ब्रह्माण्डं संपुटाकारं कांस्यपात्रकृतं ददेत् ।
मध्यत्रिंशदपूपपूरितं तन्तुसुवेष्टितम् ॥१४६॥
पूजितं चाक्षतपुष्पकुंकुमैरर्पयेत् सती ।
पत्नीव्रतो भवेत् तद्वन्पुमान् पत्नीपरायणः ॥१४७॥
स्वस्य प्राणं तथा देहं क्षेत्रं शान्तिस्थलीं शुभाम् ।
पत्नीं सम्मानयेन्नित्यं माधुर्येण विलोकयेत् ॥१४८॥
मिष्टं दद्याच्च भाषेताऽऽकारयेत्प्रेमभावतः ।
तिरस्कुर्वीत नो पत्नीं ताडयेन्नाऽऽक्षिपेन्न च ॥१४९॥
वस्त्रभूषाद्यलंकारैर्द्रवचन्दनपुष्पकैः ।
तैलतन्तुकज्जलाद्यैस्तोषयेत् स्वप्रियां सदा ॥१५०॥
नोद्वेजयेन्न प्रसह्य भुञ्जीत न च रोधयेत् ।
क्षुधया तृषया पत्नीं कर्मणा दुःखयेन्न च ॥१५१॥
न चाऽविगणयेन्मानहीनां दासीं प्रियां पतिः ।
वंशदां रतिदां वल्लीवदाश्रितां प्रपोषयेत् ॥१५२॥
अथेच्छुकीं न प्रवदेन्नेत्यपि नोचरेत्पतिः ।
ओमित्युच्चार्य संदद्यादपेक्षितधनादिकम् ॥१५३॥
भोज्यकार्यं गृहकार्यं रतिकार्यं तनुक्रियाम् ।
पतिकार्यं तथाऽन्यच्च कुर्वाणां सुप्रमोदयेत् ॥१५४॥
नान्यां नारीं समीक्षेत नान्याव्यवायकृतद्भवेत् ।
नान्याप्रियो भवेत् क्वापि पत्नीं लक्ष्मीं विहाय वै ॥१५५॥
नान्यापुष्टिप्रदः स्याच्च नान्यया च रमेत वै ।
यानवाहनदेशाद्युत्सवसामाजकेषु च ॥१५६॥
नान्यापरो भवेत् क्वापि यदि स्वर्गं हि वाञ्छति ।
एवं धर्मपरौ त्वत्र दम्पती मोक्षभागिनौ ॥१५७॥
इन्द्रद्युम्नः शतद्युम्नो यौवनाश्वो भगीरथः ।
कल्पकल्पान्तरे चान्ये वैष्णवा राजभूसुराः ॥१५ ॥
पुरुषोत्तममाराध्य ययुर्भगवदन्तिकम् ।
पुरुषोत्तममासस्य दुन्दुभिर्येन संश्रुतः ॥१५९॥
तेन तेन च सर्वत्रोत्सवोऽनुष्ठित एव ह ।
दुन्दुभेस्तु प्रपूजा च कृता नारायणेन च ॥१६०॥
यदा यदाऽधिमासोऽपि समागच्छेत् तदा तदा ।
दुन्दुभिना पटहेन कर्तव्याऽऽज्ञाप्रघोषणा ॥१६१॥
धाम्न्यक्षरे रक्षितः श्रीपुमुत्तमेन सर्वदा ।
कृष्णनारायणेन श्रीपुरुषोत्तमशार्ङ्गिणा ॥१६२॥
राधया च श्रिया लक्ष्म्या पार्वत्या प्रभया तथा ।
माणिक्यया जयया च रमया सहितः प्रभुः ॥१६३॥
प्रत्यहं त्वधिमासेऽयं पूजनीयः परेश्वरः ।
भोजनीयः सेवनीयो ध्यातव्यः पुरुषोत्तमः ॥१६४॥
श्रोतव्यं मासमाहात्म्यं श्लोकोऽध्यायः प्रपूर्णकः ।
गंगादिसर्वतीर्थानां फलं स्यान्नात्र संशयः ॥१६५॥
पृथ्वीप्रदक्षिणापुण्यं ब्रह्माण्डोद्धारपुण्यकम् ।
श्रवणेन भवेदस्य मासो मुक्तिस्तथा भवेत् ॥१६६॥
वर्णास्तथाऽऽश्रमवन्तः श्रेष्ठतां सर्वथा गताः ।
श्रुत्वा मुक्तिं समायान्ति पशुचर्या जना अपि ॥१६७॥
पुरुषोत्तममाहात्म्यं लेखयित्वा सबन्धनम् ।
दद्यादस्य फलं वंशत्रयं गोलोकगं भवेत् ॥१६८॥
माहात्म्यपुस्तकाधारे गृहे तीर्थानि सर्वशः ।
वसन्ति देवताश्चापि वर्तते पुरुषोत्तमः ॥१६९॥
श्रोता वक्ता श्रावयिता वर्णयिता प्रशंसकः ।
रक्षको व्रतकृद् दाता सर्वे ते पुरुषोत्तमाः ॥१७०॥
कृष्णनारायणोऽनादिश्रीहरिः पुरुषोत्तमः ।
संहितोपसमादेष्टा पूजनीयो विशेषतः ॥१७१॥
लक्ष्मीः श्रुत्वा चातितृप्ता पुपूज पुरुषोत्तमम् ।
कृष्णनारायणं देवं पुपूज स्वपतिं हरिम् ॥१७२॥
त्वन्मुखामृतपानेन कृतार्थाऽस्मीत्युवाच सा ।
व्यासं पतिस्वरूपं संपुपूज च ननाम च ॥१७३॥
अहं नारायणो वक्ता लक्ष्मीस्त्वं च नरायणी ।
गृह्णामि त्वत्कृतां पूजां किमन्यच्छ्रोतुमिच्छसि ॥१७४॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पुरुषोत्तममासमाहात्म्येऽक्षरधाम्नि सर्वसृष्टीश्वरैः कृतः पुरुषोत्तममासव्रतोद्यापनविधिः, नियमपूर्त्यर्थं दानानि, दीपदानफलं, कदर्यमुक्तिः, वानरमोक्षणम्, पतिव्रता-धर्माः, पत्नीव्रतधर्माः, कांस्यसंपुटात्मकब्रह्माण्डदानं, दुन्दुभिपूजनं, श्रवणादिफलं, चेत्यादिनिरूपणनामा द्वाविंशत्यधिकत्रिशततमोऽध्यायः ॥३२२॥

श्रीलक्ष्मीरुवाच—

नारायण हरे स्वामिन् परमात्मन् परात्पर ।
कृष्णनारायण विष्णोऽन्तर्यामिन् परमेश्वर ॥ १ ॥

पुरुषोत्तम चात्मेश प्राणेश प्रिय मानद।
यदुक्ता भवता धर्मपत्न्यः सन्ति त्रयोदश ॥ २ ॥
कास्ताः कस्मात् कदा कुत्र समुत्पन्नाश्च हेतुना।
केन कार्ये च किं तासां वद वक्तव्यमेव चेत् ॥ ३ ॥
तारिता पाविता कीर्तिं गमिताऽहं कृपालुना।
श्रावयित्वा कथां दिव्यां पुरुषोत्तमयोगिनीम् ॥ ४ ॥
धर्मपत्नीस्मरणार्थं विस्तराद् वद नाथ मे।
स्वर्गमोक्षप्रदां दिव्यां कथां वै धर्मयोषिताम् ॥ ५ ॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! धर्मपत्नीनां कथां मोक्षदां शुभाम्।
सृष्ट्यादौ खलु संजातां कथयामि निबोध मे ॥ ६ ॥
अक्षरे तु परे धाम्नि वर्तते पुरुषोत्तमः।
तस्मिन् दिव्याः शक्तयश्च सन्ति शतसहस्रशः ॥ ७ ॥
तदैकोऽहं बहु प्रजायेयेति कल्पनां व्यधात्।
नित्या दिव्यगुणाः शक्त्यात्मका मूर्तास्तदाऽभवन् ॥ ८ ॥
श्रद्धा मैत्री दया शान्तिस्तुष्टिः पुष्टिः समुन्नतिः।
क्रिया बुद्धिश्च मेधा च तितिक्षा ह्रीश्च द्वादश ॥ ९ ॥
मूर्तिश्चेत्यधिका भक्तिनाम्ना तत्र सदोच्यते।
एता हरेः स्वरूपाद्वै जज्ञिरे शक्तयः स्त्रियः ॥१०॥
नित्या हरावपि छाया भवन्ति लोकमुक्तये।
द्वितीयरूपमाधाय वसन्ति जीवजातिषु ॥११॥
यदा ता रूपयुक्ताश्च संभूता ब्रह्मरूपतः।
तदा ताः प्रार्थयत् कृष्णनारायणं पुमुत्तमम् ॥१२॥
वयं भवतः संकल्पाद् यतो जाताः स्म केशव।
समूर्ताश्च भवन्मूर्तिमय्यः स्मो नान्यगा यतः ॥१३॥
आज्ञापय यथायोग्यं कार्यमस्मादृशं प्रभो।
इति चाभ्यर्थितः कृष्णनारायणः परेश्वरः ॥१४॥
विचार्य प्राह ताः सर्वाः छायारूपा भवन्तु वै।
छायात्मकानि यान्यत्र रूपाणि वो भवन्ति वै ॥१५॥
तानि सर्वाणि सृष्टौ तु देहिषु विचरन्त्विति।
इत्याज्ञां श्रीहरेः प्राप्य सृष्टौ जाता गुणात्मिकाः ॥१६॥
व्यापिकाः शक्तयस्तास्तु श्रीहरेरिच्छयाऽभवन्।
किन्त्वसुरेषु दैत्येषु दानवेषु च सर्वथा ॥१७॥
सुखं तासामभवन्न तामसानां गृहेषु च।
ततः सर्वा मिलित्वैव ययुः श्रीबदरीवनम् ॥१८॥
तपस्तेपुरतिरौद्रं परमेश्वरवाञ्छया।
गंगातीरं समासाद्य निर्जलाहारतः स्थिताः ॥१९॥
सहस्रवर्षपर्यन्तं पुरुषोत्तममानसाः।
आविरासीत्तदा कृष्णनारायणः स्वयं प्रभुः ॥२०॥
प्राह ताः किं कथं चेदृक् तप्यते दारुणं तपः।
भवतीनां तपश्चर्याप्रभावेणाऽस्मि वर्धितः ॥२१॥
मद्गुणाः शक्तयो मे च मम वृद्धिपरायणाः।
मत्पुष्टिदाः सुखदाश्च भवत्यः सन्ति सर्वथा ॥२२॥
साहाय्यार्थं भवतीनां समायातोऽस्मि वै यतः।
निवेदयन्त्वभिमतं तपोभिश्च किमिष्यते ॥२३॥
इत्यावेद्य हरिस्तत्र क्षणं मौनं स्थितस्ततः।
ऊचुस्ताः शक्तयः सर्वाः प्रभो ! दानवदैत्यके ॥२४॥
आसुरेषु सुखं नैव भवत्यस्माकमीश्वर !।
अधर्मस्य निवासेन वयं तत्र हि दुःखिताः ॥२५॥
तत आकृष्य भगवन् कुरु नः सुखिता सदा।
हरिः प्राह तदा तास्तु विचिन्त्य क्षणमात्रतः ॥२६॥
पुरुषोत्तममासान्तदिवसस्य व्रतं महत्।
कुरुताऽत्र देवनदीतीरे स्वेष्टं भविष्यति ॥२७॥
इत्युक्त्वाऽन्तर्हितो देवः तापस्यश्च यदा पुनः।
समयोऽधिकमासस्य ह्यायातस्तास्तदन्तिमे ॥२८॥
दिवसे पूजनं कृष्णनारायणस्य वस्तुभिः।
भावैश्च विविधैः सर्वाश्चक्रुः पुष्पाक्षतादिभिः ॥२९॥
सायं प्राविर्बभूवात्र भगवान् पुरुषोत्तमः।
वरं वृणुत वो देव्यो यथेष्टं दातुमागतः ॥३०॥
चकिताश्च तदा ताश्च वव्रिरे धर्मरक्षणम्।
धर्माश्रिता वयं कृष्ण रक्षिताः स्याम सर्वथा ॥३१॥
त्वया रक्षा प्रकर्तव्या सदा श्रीपुरुषोत्तम।
इति श्रुत्वा हरिः प्राह तथास्त्विति पुनस्ततः ॥३२॥
प्राह ताः शक्तयः सर्वा यान्तु दक्षगृहं शुभाः।
असिक्नीपुत्रिकाः सन्तु भवतीनां ततः पिता ॥३३॥
दक्षो दास्यति धर्माय पत्न्यर्थं वै त्रयोदश।
तैरेव नामभिः ख्याता भविष्यथ यथायथम् ॥३४॥
ततोऽहं मूर्तितो ब्रह्मचर्यधर्मो हरिः स्वयम्।
नारायणो नरसखा चोत्पत्स्ये बदरीवने ॥३५॥
भवतीनां सधर्माणां करिष्ये रक्षणं सदा।
इत्युक्त्वा प्रययौ कृष्णनारायणो विलीनताम् ॥३६॥
ताश्च तपः परित्यज्याऽसिक्न्यां प्रविविशुस्तदा।
दक्षसंकल्पमात्रात् ताः कन्यका अभवँस्तदा ॥३७॥
जातमात्रा युवत्यश्च सुन्दर्यो वरणाऽर्हणाः।
जातिस्मराः सुरूपाश्च धर्मार्थं कृतविग्रहाः ॥३८॥

धर्मकांक्षावतीर्दृष्ट्वा धर्मार्थे कृतनिश्चयः ।
दक्षः प्रतीक्षते धर्मयोगस्य समयं शुभम् ॥३९॥
तावत् तीर्थनिमित्तेन बदर्याश्रममार्गगम् ।
दक्षगृहं समालोक्य धर्मो विश्रान्तये क्षणम् ॥४०॥
ययौ दक्षगृहं ज्ञात्वाऽतिथिसत्कारशोभितम् ।
ब्रह्मपुत्रं भ्रातरं च ज्ञात्वा स्मृत्वा विशेषतः ॥४१॥
दक्षो दृष्ट्वाऽतिसन्तुष्टश्चातिथ्यं विदधे बहु ।
ददौ सम्पूज्य ताः सर्वा धर्माय तु त्रयोदश ॥४२॥
पुत्र्यो विवाहविधिना कृतकृत्योऽभवत्तदा ।
धर्मोऽपि ताः समादाय ययौ बदरिकाश्रमम् ॥४३॥
गंगा पीत्वा जले स्नात्वा धर्मारण्यं जगाम ह ।
नारायणो नरसखा धर्मे संप्रविवेश ह ॥४४॥
पत्नीभिः सहितो धर्मो जगाम वत्सरान्तरे ।
तीर्थानि संविधायैव सर्वाणि बदरीवनम् ॥४५॥
तत्र कृष्णेच्छया साक्षात् नरनारायणावुभौ ।
मूर्तेस्तु तपसा जातौ पुरुषोत्तमसद्व्रतात् ॥४६॥
धर्मपुत्रौ मूर्तिपुत्रौ जातमात्रौ महत्तमौ ।
युवानौ भगवन्तौ तौ ब्रह्मचर्यपरौ सदा ॥४७॥
तापसौ लोककल्याणकरौ प्राविर्बभूवतुः ।
श्रद्धायामथ धर्मस्य कामः पुत्रो बभूव ह ॥४८॥
कामः संकल्प इत्युक्तो धर्मपुण्यप्रभाववान् ।
संकल्पस्य सुतो जातो व्यवसायाऽभिधानकः ॥४९॥
मैत्री स्नेहं विजज्ञे चोपकारं सुषुवे दया ।
शान्तिः क्षेमं सुतं जज्ञे सन्तोषस्तुष्टिजः सुतः ॥५०॥
पुष्ट्यां लाभः सुतो ह्युन्नतेस्तु चाभ्युदयः सुतः ।
क्रियायां तु नयः पुत्रो दण्डः समय इत्यपि ॥५१॥
बुद्धेर्बोधः सुतश्चापि ह्यप्रमादश्च तावुभौ ।
मेधापुत्रौ शुभश्रुतौ तितिक्षाया विरामकः ॥५२॥
ह्रियाः पुत्रो नियमश्च मूर्तेर्नरनरायणौ ।
कृष्णहरीति चत्वारो धर्मवंशो हि बद्रिके ॥५३॥
वर्तते स्म सुखं लक्ष्मि ! सेवानुसेवने रतम् ।
अथ वै वेधसो लोके सत्ये ब्रह्मसभास्थले ॥५४॥
पुरुषोत्तममासान्ते पुरुषोत्तमपूजनम् ।
उत्सवेन च महता संभारैर्बहुकोटिभिः ॥५५॥
कृतं देवर्षिमुनिभिर्मानवैश्चान्यजातिभिः ।
बहुभक्त्याऽति भावैश्च सर्वस्वार्पणपूर्वकम् ॥५६॥
तेन धर्मश्च तत्पत्न्यः पुत्राश्च पुरुषोत्तमः ।
प्रसन्नाः संबभूवुश्चासीमतोषमुपागताः ॥५७॥
निशीथेऽमादिवसान्ते पूजानीरोजनोत्तरम् ।
तद्भक्तेभ्यो व्रतिभ्यश्च दर्शनं दातुमिच्छवः ॥५८॥
समाजग्मुरदृश्यास्ते व्योम्नि गीत्युपलक्षिताः ।
पुरुषोत्तमभक्तानां मध्ये त्वाविर्बभूव ह ॥५९॥
सहसा तेजसां पुंजः स च द्रागव्याप चाम्बरे ।
कोटिकोटीन्दुसदृशं घनीभूतं च तन्महः ॥६०॥
प्रादुर्भूतमथ स्थैर्यं प्राप विद्योतयद् दिशः ।
स्वरा ग्रामा मूर्छनाश्च नादाश्चासन्मनोहराः ॥६१॥
तदा तत्र च पश्यत्सु सुराद्येषु मनोहरा ।
युवत्यदृश्यतैका स्त्री दिव्यरूपा मनःप्रिया ॥६२॥
दिव्यकौसुंभवसना दिव्यालंकारशोभिता ।
रूपानुरूपसौन्दर्या प्रसन्ना स्वर्णसूज्ज्वला ॥६३॥
सर्वश्रृंगारशोभाढ्या सर्वाऽऽभरणभूषिता ।
केशभारधृतपुष्पा सुस्मितभ्रूविलासिनी ॥६४॥
निर्मलाऽम्बरसंवीता काञ्चीनूपुरभूषिता ।
मनांसि मोहयमाना लावण्येनापि योषिताम् ॥६५॥
विपञ्चीं वादयमाना सख्याऽनुपूरितस्वरा ।
गीत्यैव मानहन्त्री च गन्धर्वाप्सरसामपि ॥६६॥
अन्याश्च द्वादश नार्यो गानं नारायणस्य ह ।
चक्रुः सतालमानं वै हरन्त्यो मानसान्यपि ॥६७॥
तासां पुत्राश्च सुदिव्याः प्रसन्नाः कृतगायनाः ।
सवादित्राश्च तन्मध्ये कृष्णनारायणो हरिः ॥६८॥
अधिमासस्तथा राधालक्ष्म्याद्या दिव्ययोषितः ।
सर्वेऽदृश्यन्त तत्रैव सभायां वेधसो गृहे ॥६९॥
अक्षराधिपतिः कृष्णोऽनादिः श्रीपुरुषोत्तमः ।
आशीर्वादान् वदन् देवोऽदृश्यत पद्मलोचनः ॥७०॥
चतुर्हस्तो धर्मदेवोऽदृश्यत श्वेतभास्वरः ।
वेदवाक्यैर्वदन् भक्तान् दर्शयँश्च प्रसन्नताम् ॥७१॥
ब्रह्मादयश्च तान् दृष्ट्वा चात्यद्भुतं तदा विदुः ।
मुग्धास्तु क्षणमात्रं ते दृष्ट्वाश्चातिमुदा च तान् ॥७२॥
नेमुः कृष्णं विदित्वैव तथा श्रीपुरुषोत्तमम् ।
राधालक्ष्म्यादिकाश्चापि धर्मं मूर्तिं सुतौँस्तथा ॥७३॥
श्रद्धादिकास्तथा नत्वा तुष्टुवुः परमादरात् ।
नारायण ! नमस्तुभ्यं नारायण्यै नमोनमः ॥७४॥
धर्मदेव नमस्तुभ्यं धार्मिकेभ्यो नमोनमः ।
श्रद्धादिभ्यो नमश्चास्तु नमोऽस्तु भक्तिमूर्तये ॥७५॥
राधारमादिशक्तिभ्यो नमः पुमुत्तमाय च ।
उद्धरणाय लोकानामस्माकं तु विशेषतः ॥७६॥

दर्शनं दत्तवन्तः स्थ यूयं वै परमेश्वराः ।
कृतार्थाः स्म कृता देवा अथ युष्माभिरत्र वै ॥७७॥
कृपां कृत्वा निदेशश्चेज्ज्ञातव्यश्चोपदिश्यताम् ।
श्रुत्वोवाच तदा देवान् ब्रह्मादीन् पुरुषोत्तमः ॥७८॥
पुरुषोत्तममासेऽत्र भवद्भिर्लोकनायकैः ।
प्रजाभिश्च मम भक्तिः कृताऽस्मिन्पुरुषोत्तमे ॥७९॥
धर्मः कृतस्तथाऽत्यर्थं श्रद्धाद्याः पोषितास्तथा ।
सकुटुम्बः पोषितोऽहं भूत्वा दातुं स्वदर्शनम् ॥८०॥
समागतोऽस्मि कृपया भद्रं वोऽस्तु महत्तमम् ।
नान्यथा दर्शनं मे स्यात्प्रत्यक्षं योगिनामपि ॥८१॥
वरं वृणुत तुष्टोऽस्मि यूयं मत्त्वाभिवाञ्छितम् ।
इति कृपावचः श्रुत्वा प्रणेमुश्चक्रुरर्चनम् ॥८२॥
वव्रुश्चास्मद्धृदयेषु वसन्तु सर्वदा तथा ।
रक्षन्त्वस्मा न् निदेशस्थान् पाहि कार्ये गुरौ सदा ॥८३॥
भक्तान् स्वधाम दिव्यं त्वं निष्कामान्नय माधव ।
सकामान् पूरय स्वेष्टं कृपां वर्षय वर्षय ॥८४॥
इति स्तुत्वा विरेमुस्ते तथास्त्वित्याह केशवः ।
सकुटुम्बो वरं दत्वा ब्रह्मादिभ्यः पुमुत्तमः ॥८५॥
तिरोबभूव सहसा त्वाश्चर्यं जनयन्हरिः ।
एवं भगवता तेन स्वभक्तानां मनोरथाः ॥८६॥
पूर्यन्ते सकला लक्ष्मि ! रक्ष्यन्ते तु क्षणे क्षणे ।
पुरुषोत्तमभक्तानां नानवाप्यं हि विद्यते ॥८७॥
यः पठेच्छृणुयाच्चैतत्पुरुषोत्तमतोषणम् ।
तस्य सर्वमनःकामान् पूरयिष्यति वै हरिः ॥८८॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने पुरुषोत्तममासमाहात्म्ये धर्मदेवस्य तत्पत्नीनां तत्पुत्राणां च प्राविर्भावस्ततो ब्रह्मादिकृतपुरुषोत्तममासव्रतेन प्रसन्नश्रीहरिणा सकुटुम्बेन ब्रह्मादिभ्यो दर्शनं वरदानं च दत्तमित्यादिनिरूपणनामा त्रयोविंशत्यधिकत्रिशततमोऽध्यायः ॥३२३॥

**श्रीनारायण उवाच—**

अहं लक्ष्मि ! प्रसन्नः संभवाम्येषा कृपा मम ।
पुरुषोत्तममासे मे प्राप्तौ कृपैव कारणम् ॥ १ ॥
अन्यमासेष्वतितुष्टं कर्तुमिच्छति मां यदि ।
तुलसीपत्रमात्रेणाऽप्यतितुष्टो भवाम्यहम् ॥ २ ॥
मञ्जरीसहयुक्तेन पत्रेण पूजयेज्जनः ।
मञ्जरीयुक्तपत्राभ्यां मञ्जरीयुक्तपत्रकैः ॥ ३ ॥
शतेन वा दशशतैर्लक्षेण वा प्रपूजयेत् ।
दृष्ट्वा दृष्ट्वा च तुष्यामि तुलसीं त्वामिव प्रिये ॥ ४ ॥

**श्रीलक्ष्मीरुवाच—**

कथं नारायण कृष्ण पुरुषोत्तम केशव ! ।
तुलसीं मन्यसे तोषकारिणीं मामिव प्रभो ॥ ५ ॥
वद सर्वं यथावृत्तं यदि गोप्यं न विद्यते ।
गोप्यं चापि यदि पात्रं मताऽस्मि चेन्नु मे वद ॥ ६ ॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! कथां पूर्ववृत्तां विस्तारशालिनीम् ।
यथा वृन्दा मम तोषकारिणी स्वीकृता मया ॥ ७ ॥
संशयं तत्र कुरु मा श्रुत्वा चेर्ष्यां च मा कुरु ।
सर्वदा तु त्वया रक्ष्यं सौहार्दं वृन्दया सह ॥ ८ ॥
पतिव्रताया धर्मोऽस्ति दुःखं न गण्यते क्वचित् ।
सपत्नीजं सुखं पतिपरा तु गणयेत् सदा ॥ ९ ॥
श्रुत्वा श्रुत्वा पतिसुखं स्वान्यनारीसुयोगजम् ।
स्वात्मानन्दं परं मत्वा तुष्यति स्त्री पतिव्रता ॥१०॥
सहस्राणां सहस्राणि पत्नीनां मे भवन्ति वै ।
वृन्दापि च मया पत्नी कृता साऽपि रता मयि ॥११॥
शृण्वाख्यानं यथा जातं तथा ते वच्मि सर्वथा ।
कार्यसिद्धिं मिषं कृत्वा वृन्दा पत्नी मया कृता ॥१२॥
वृन्दा पत्नी ममैवाऽऽसीद् गोलोके राधिकासमा ।
राधिकया समं दृष्ट्वा रमन्तं मां पतिं स्वकम् ॥१३॥
ईर्ष्यया हृदये तापं प्राप्ता रतिविरोधिनी ।
मह्यं वक्तुमशक्ता सा नोवाच हृदयस्थितम् ॥१४॥
ततः क्षणान्तरे रन्तुं मयाऽऽहूताऽपि नाऽगता ।
तेन दोषेण 'दुष्टेयं न मां सेवितुमर्हति' ॥१५॥
इति संकल्पितं यावन्मया तावत्तु सा ततः ।
अवाप तदधोलोके गता चाऽसुरभावनाम् ॥१६॥
जलंधरं पतिं प्राप्य दुरितं स्वं समाप्य सा ।
जलंधरमृतेर्हेतुरूपां भुक्तां मया यदा ॥१७॥
तदा पूता पुनर्मां सा प्राप्ता मे पूर्वपत्निका ।
शृणु विस्तरतो लक्ष्मि ! तदाख्यानं यथाऽभवत् ॥१८॥
आद्ये कृतयुगे लक्ष्मि ! शंकरो लोकशंकरः ।
सतीपतिर्महादेवो लीलया व्यचरद्वने ॥१९॥
दिगम्बरस्वरूपेण वनिनां पावनेच्छया ।
सिंहारण्ये चचारेशः सिंहवन्निर्भयो हरः ॥२०॥

शिवरात्रिदिनं ज्ञात्वा महेन्द्रश्च बृहस्पतिः ।
साक्षाच्छिवस्य पूजार्थं स्वर्गात् पृथ्वीं प्रजग्मतुः ॥२१॥
व्योममार्गाद्विलोक्यैव चरन्तं शिवमेव तौ ।
सिंहारण्यं गुरुशक्राववातेरतुरादरात् ॥२२॥
तावच्छंभुस्तयोर्ज्ञानपरीक्षार्थं विचार्य च ।
रूपान्तरं विधायैव ह्यतिष्ठन्निकषा तयोः ॥२३॥
मार्गमारुद्ध्य तिष्ठन्तं जटासम्बद्धमस्तकम् ।
महातेजस्विनं नग्नं पूरुषमद्भुताकृतिम् ॥२४॥
महाबाहुं महोरस्कं मार्गरोधकरं दृढम् ।
पुरन्दरोऽपृच्छदेनं निसर्गान्नेत्रभीषणम् ॥२५॥
कथं मार्गे समारुद्ध्य संस्थितोऽसि भयंकर ।
अत्र दृष्टोऽम्बरपथगामिभ्यां शंकरो हरः ॥२६॥
स क्वाऽस्ते वद वै शीघ्रं पूजाकामौ हि सेवकौ ।
इतिपृष्टः पुमान्नैवाऽवदत् किंचित् ततः पुनः ॥२७॥
तथैवेन्द्रेण पृष्टोऽपि पुनर्मौनं समाश्रितः ।
नोवाच स महायोगी तूष्णीमास पुनः पुनः ॥२८॥
पृष्टोऽपि तापसो नैवोवाच चुक्रोध वासवः ।
उवाच वचनं शंभुं निर्भर्त्स्योग्रम्य दक्षिणम् ॥२९॥
हस्तं कृत्वोर्ध्वमादाय वज्रं चाधिक्षिपन् हरिः ।
रे मूढ पृच्छ्यमानोऽपि नोत्तरं दत्तवानसि ॥३०॥
एष त्वां हन्मि वज्रेण कस्ते त्राणं करिष्यति ।
इत्युदीर्य क्रुधा हन्तुं यतते यावदेव ह ॥३१॥
तावच्छ्रीशंकरस्तस्य चकार स्तंभनं तदा ।
सवज्रकरयुक्तश्च सदेहो लोष्ठकाष्ठवत् ॥३२॥
स्तब्धो जातो महेन्द्रो वै समदह्यत मन्युना ।
हरोऽपि विकरालाक्षो द्रुतमेव भयंकरः ॥३३॥
प्रजज्वाल प्रलयाग्निसमो दहन्निव स्थितः ।
बृहस्पतिस्तदा शंभुं ज्ञात्वा सत्त्वधिया हि तम् ॥३४॥
बद्धांजलिर्ननामेशं पपात दण्डवद्भुवि ।
सभयेन हृदयेन हरं स्तोतुं प्रचक्रमे ॥३५॥
नमोऽगम्यस्वरूपाय स्वतन्त्राय कपर्दिने ।
त्र्यम्बकाय महेशाय दिगम्बराय ते नमः ॥३६॥
नमो रौद्राय देवाय दीननाथाय शंभवे ।
विरूपाक्षाय शान्ताय भक्तत्रात्रे नमो नमः ॥३७॥
विरूपायाऽतितेजस्विस्वरूपाय च ते नमः ।
कालान्तकाय शर्वाय नमस्ते परमात्मने ॥३८॥
त्वमग्निस्त्वं महावायुर्व्योम त्वं सलिलं धरा ।
सूर्यस्त्वं चन्द्रमास्त्वं च नक्षत्राणि त्वमेव ह ॥३९॥
ज्योतिश्चक्रं त्वयि चास्ते विष्णुर्ब्रह्मा त्वमेव वै ।
इन्द्रो बृहस्पतिश्चान्ये त्वदाराधनतः सदा ॥४०॥
सुखिनः सम्पदां भोक्तारश्चोपद्रववर्जिताः ।
भवन्ति तत्कथं नाथ स्तंभोऽत्र सुरनायके ॥४१॥
इति स्तुत्वा पपाताऽस्य हरस्य पादयोर्गुरुः ।
पातयामास च शक्रं विनयेनाह वै पुनः ॥४२॥
प्रसन्नो भव लोकेश पाहीन्द्रं शरणागतम् ।
क्रोधं संहर शान्तश्च कृपां चेन्द्रोपरि प्रभो ॥४३॥
शीघ्रं कुरु शमं यातु भालनेत्रानलो ह्ययम् ।
क्षन्तव्यश्चापराधोऽस्याऽजानता यः कृतोऽधुना ॥४४॥
श्रुत्वा च विनयं ज्ञात्वा सः क्रोधानलभालकः ।
शंकरः प्राह तं भक्तं बृहस्पतिं शनैर्वरम् ॥४५॥
क्रोधोऽयं निर्गतो नेत्रानलो मूर्तोऽतिदारुणः ।
बहिर्यातो न धर्तुं तं मन्ये योग्यं बृहस्पते ! ॥४६॥
नहि सर्पं उज्झितां कञ्चुकीं धत्ते पुनश्च ताम् ।
तिरस्कुर्वन्त मेवैनं करिष्ये भस्मसाद्धरिम् ॥४७॥
इति श्रुत्वा भयं प्राप्तो दीनो बृहस्पतिः पुनः ।
प्रोवाच भगवान् भक्ता अनुकम्प्याः सदैव यत् ॥४८॥
भक्तवत्सलनामाऽसि सार्थकं कुरु शंकर ! ।
प्राहीन्द्रं चानलं क्षेप्तुमन्यत्राऽर्हसि वै जडे ॥४९॥
अथवेन्द्रगुरुं मां त्वं यथेष्टं भस्मसात् कुरु ।
परं देवपतिं मा त्वं दग्धुमर्हसि शंकर ! ॥५०॥
इति श्रुत्वाऽतिविनयं भक्तवत्सलनामधृक् ।
प्रणताऽऽर्तिहरः शंभुर्बृहस्पतिमुवाच ह ॥५१॥
प्रीतस्तवाऽऽग्रहेणाऽत्र विनयेनाऽर्पणेन च ।
जीवदानं महेन्द्राय ददामि निर्भयो भव ॥५२॥
इन्द्रो जीवेति संयातु त्वं च जीवात्विति प्रथाम् ।
सुखिनौ भवतां चोभौ कुरुतं मम पूजनम् ॥५३॥
यदर्थं वै समायातौ कृत्वा तत्पूजनं मम ।
प्रसन्नतां समागृह्याऽऽदाय निर्भयतां प्रथाम् ॥५४॥
यातं स्वर्गमहं क्रोधानलं भालाक्षिसंभवम् ।
स्वयं करे गृहीत्वैव त्यक्ष्यामि लवणांभसि ॥५५॥
इति कृत्वाऽऽक्षिपन्नेत्रानलं वह्नयश्रुरूपिणम् ।
पश्चिमेऽपांनिधौ पूजां गृहीत्वोभकृतां ततः ॥५६॥
तत्रैवाऽन्तर्दधे शंभुर्विद्युल्लेखेव भास्वरः ।
कृतार्थौ च गुरुशक्रौ स्वस्वस्थानं प्रजग्मतुः ॥५७॥
अथ क्षिप्तं भालनेत्रसमुत्थं चातिदारुणम् ।
जलं तेजोमलं चाविलं तु यल्लवणाम्भसि ॥५८॥

बालभावं समापन्नं सद्य एव व्यराजत ।
बालशब्दं प्रकुर्वन् स बालो जलतरङ्गके ॥५९॥
दोलारूढ इव प्रास्ते जलकल्लोलसेवितः ।
जातमात्रो युवा कश्चिद् वज्राङ्ग इव चाद्भुतः ॥६०॥
प्रहसन् स मुहुः शब्दं प्रकुर्वन् दिग्विभेदिनम् ।
पुनः पुनः प्रहसँश्च कुर्वन् हास्यपरम्पराम् ॥६१॥
नादितवान् दिशः सर्वाः स्वर्गं सत्यं व्यकम्पयत् ।
प्राकम्पत क्षितिः सर्वाः प्रजाश्च बधिरीकृताः ॥६२॥
तेन हास्यातिशब्देन सबलेनाऽतलादयः ।
प्राकम्पन् दानवाश्चापि सर्वे लोकाश्च तत्रसुः ॥६३॥
लोकपाला विह्वलाश्च चचाल सचराचरम् ।
अग्रगण्याः सुरा लोकेश्वराश्चकम्पिरे द्रुतम् ॥६४॥
मिलित्वा सत्यलोकं ते ब्रह्माणं शरणं ययुः ।
ऊचुर्भयान्विताः सर्वे पितर्भयमुपस्थितम् ॥६५॥
महाहास्यकृतश्चायं शब्दो लोकभयंकरः ।
त्रासकृत्सर्वथा भाति महाकालस्य किं भवेत् ॥६६॥
कश्चिद् ब्रह्माण्डयत्तुं वा समायातोऽसुरो महान् ।
इति भाति प्रभो! तस्मादस्मान् रक्षय पूर्वज! ॥६७॥
श्रुत्वैवं सुरपालानां वाक्यं लोकपितामहः ।
भयं गतोऽपि सर्वेषां साहाय्यमभिगम्य च ॥६८॥
गन्तुमैच्छत् स्थलं यत्र रौद्रं हास्यं वितन्यते ।
शब्ददिशामभिलक्ष्याऽवातरन् वै सुरादयः ॥६९॥
शब्दमूलमवाचीस्थं क्षारसागरवारिषु ।
अभिसन्धाय जग्मुस्ते व्योम्नि वै पश्चिमां दिशम् ॥७०॥
तावद् बालयुवानं प्रहसन्तं चाति कर्कशम् ।
समुद्रस्य तरंगेषु विचरन्तं भयंकरम् ॥७१॥
ददृशुस्तावदायातो ज्ञात्वा वार्धिः पुमान् वरः ।
ब्रह्मादीनागतान् दृष्ट्वा तेषां चक्रेऽतिथिक्रियाम् ॥७२॥
हास्यं विहाय बालोऽपि तत्राऽऽगमत् समाद्रवन् ।
समुद्रांके निषसाद पितः पितरिति गृणन् ॥७३॥
ब्रह्मणाऽब्धिस्तदा पृष्टः कुतोऽयं कस्य बालकः ।
ब्रह्माण्डत्रासकृद् यस्य हास्यं व्याप्नोति दिक्षु च ॥७४॥
शंकरस्य तु बालोऽयं वार्धिः प्राह पितामहम् ।
तावद् बालः समुत्थाय दुद्राव वेधसं प्रति ॥७५॥
ब्रह्माणमग्रहीत् कण्ठे निधनाय यथा भवेत् ।
विधेः कण्ठविधूननान्नेत्राभ्यामगमज्जलम् ॥७६॥
समुद्रेण समाकृष्य ब्रह्मा तस्माद्वियोजितः ।
एवं बलान्वितो बालो हरपुत्रः सुरादिभिः ॥७७॥
विलोकितो जलाधारो जलंधराभिधः कृतः ।
जलंधरः समुद्रोऽस्ति जालंधरोऽपि वार्धिजः ॥७८॥
जालंधर इति जातो जालंधरो जलंधरः ।
रुद्रपुत्रोऽस्त्यतो रौद्रो भविष्यति पराक्रमे ॥७९॥
शास्त्रज्ञः सर्वजेता च शस्त्रास्त्रज्ञो भविष्यति ।
अवध्यः सर्वभूतानां विना रुद्रं भविष्यति ॥८०॥
अयं दैत्यगुणश्चाद्य लोक्यतेऽतस्तथाविधः ।
दैत्येश्वरो दैत्यराजो भविष्यति न संशयः ॥८१॥
ब्रह्मा प्राह पुनर्भाग्यं तस्य दृष्ट्वा तु सागरम् ।
कृष्णपत्नी तु या राधाद्वेषिणी तस्य धामनि ॥८२॥
गोलोके राधिकाकृष्णरत्यसहाऽभवत् खलु ।
सा गोलोकाद् भगवता भूतलेऽत्र निराकृता ॥८३॥
कालनेमिगृहे जाता पुत्री साऽस्य प्रिया सती ।
पतिव्रता शुभा पत्नी भविष्यति न संशयः ॥८४॥
जातमात्रो युवा चासावभिषिक्तो यथा भवेत् ।
दैत्यानां राज्यकर्ता वै तथा सर्वैर्विधीयताम् ॥८५॥
इत्याज्ञां ब्रह्मगः प्राप्य चाहूय शुक्रमेव ह ।
आदिश्य सरितां नाथं तं राज्ये त्वभ्यषेचयन् ॥८६॥
पुनर्भयंकरं हास्यं मा कुर्विति प्रशिक्षया ।
शान्तयन्तः सुराः सर्वे ययुः स्वं स्वं निकेतनम् ॥८७॥
समुद्रः सुतमादाय स्वगेहमगमन्मुदा ।
अपोषयन्महोपायैः कालनेमिं समाह्वयत् ॥८८॥
वृन्दाभिधां सुतां तस्य तद्भार्यार्थमयाचत ।
कालनेम्यसुरो वार्धेर्याञ्चां मेनेऽतिवाञ्छिताम् ॥८९॥
ददौ सुतां विधानेन जालंधराय तत्क्षणम् ।
तदोत्सवो महानासीद् विवाहे च तयोस्तदा ॥९०॥
समुद्रोऽपि सुखं प्राप पुत्रं दृष्ट्वा हि सस्त्रियम् ।
दैत्याः पाताललोकस्था जालंधरं समाश्रिताः ॥९१॥
भुवमागत्य राज्यानि स्थापयामासुरीश्वराः ।
देवजयाय च सर्वे बभूवुर्दृढमानसाः ॥९२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने जालन्धरवृन्दाख्याने गोलोकस्थकृष्णपत्नीवृन्दायाः राधाकृष्णरतिं विलोक्य सपत्नीद्वेषदोषेण गोलोकादपगत्य कालनेमिपुत्रत्वं, शंकरदर्शनार्थे समागताभ्यां सिंहारण्ये शंकरं दृष्ट्वाऽवातरद्भ्यां बृहस्पतिमहेन्द्राभ्यां कस्त्वमितिप्रश्नोत्तराऽलब्धौ शंकरे वज्रप्रक्षेपायोत्थानितहस्तसहितेन्द्रस्य स्तंभनोत्तरं शंभुललाटनेत्रजक्रोधानलस्य समुद्रे प्रक्षेपाज्जालंधरोत्पत्तिः, वृन्दया सह विवाहश्चेत्यादिनिरूपणनामा चतुर्विंशत्यधिकत्रिशततमोऽध्यायः ॥३२४॥

श्रीनारायण उवाच—

शृणु लक्ष्म्येकदा जालन्धरो वृन्दापतिः स्वयम् ।
असुरैः सह शुक्रस्य पूजनार्थं समाययौ ॥ १ ॥
तत्राऽऽययुः पूजनार्थमाषाढपूर्णिमातिथौ ।
दैत्याश्च दानवाः सर्वे राहुकेत्वादयोऽपि च ॥ २ ॥
शुक्राचार्यः पूजितस्तैर्नमस्कृतश्च भावुकैः ।
दत्वाशीर्वचनं तेभ्यः पप्रच्छ कुशलादिकम् ॥ ३ ॥
दत्तासनेषु सर्वे ते निषेदुः संसदीष्टकृत् ।
जलंधरोऽतिसंहृष्टोऽपश्यद्राहुं शिरो विना ॥ ४ ॥
पप्रच्छाऽब्धिसुतस्तत्राश्चर्यपूर्वं तु भार्गवम् ।
केनेदं कर्तितं राहोश्छिरो ब्रूहि कथं कदा ॥ ५ ॥
इत्याकर्ण्य शिवं स्मृत्वा शुक्राचार्य उवाच तम् ।
हिरण्यकशिपोः पुत्रः प्रह्लादस्तस्य पुत्रकः ॥ ६ ॥
विरोचनस्तस्य पुत्रो बलिराजो महाबलः ।
वर्तते च रसातलराज्यं कुर्वन् प्रभक्तराट् ॥ ७ ॥
असुराणां तु सैन्यानि प्रबलान्यस्य संवशे ।
वर्तन्ते इति जानन्ति सुराः सर्वे सवासवाः ॥ ८ ॥
अथैकदा तु दुर्वासा वैकुण्ठात् समवातरत् ।
भुवं नारायणदत्तपुष्पमालां करे दधन् ॥ ९ ॥
ददर्शेन्द्रं विहरन्तं हस्तिना व्योममार्गके ।
ऋषिर्देवपतिं ज्ञात्वेन्द्राय मालां ददौ तदा ॥१०॥
विगणयन्निव मालां करे धृत्वा तु वासवः ।
स्थापितवान् करिकुंभे शुण्डादण्डेन तां करी ॥११॥
धृत्वा पत्तलके कृत्वा मर्दयामास तत्क्षणम् ।
दुर्वासाः क्रोधमापन्नः शशाप गर्वहारकः ॥१२॥
लक्ष्मीनाशो भवत्विन्द्र ! मालानाशफलं तव ।
इत्युक्ते स पपातेन्द्रो हस्तिपृष्ठाद् भुवस्तले ॥१३॥
लक्ष्मीः सर्वा विनष्टाऽभूत् प्रविवेश समुद्रके ।
सहस्रवर्षपर्यन्तमश्रीका देवतादयः ॥१४॥
दुःखिनस्ते सुराः सर्वे रमेशं शरणं ययुः ।
विना लक्ष्मीं दुःखिताः स्म इति स्वार्थपरायणाः ॥१५॥
विष्णुदर्शितमार्गेण सन्धिं चक्रुस्तदाऽसुरैः ।
स्वकार्यसिद्धये शूराश्छलधर्मपरायणाः ॥१६॥
विष्णुसहायका देवा मिलिता ह्यसुरैः सह ।
लक्ष्म्यर्थं चामृताद्यर्थं चक्रुः सिन्धोः प्रमन्थनम् ॥१७॥
रत्नानि ते पितुर्यानि तानि सर्वाणि ते सुराः ।
जगृहुर्यत्नतो हृष्टाः पपुरप्यमृतं छलात् ॥१८॥
अमृताश्च सुरा जाता गर्विष्ठा विष्णुपोषिताः ।
अमृतपानसंलब्धाऽमृतभावबलान्विताः ॥१९॥
तत आरभ्य दैत्यादीन् दुःखयन्ति सुराः सदा ।
पराभवश्चासुराणां सदा भवति सर्वथा ॥२०॥
राहुरयं तदमृतपानार्थं देवरूपधृक् ।
सूर्यचन्द्रान्तरे विष्टोऽमृतं संपरिवेषितम् ॥२१॥
विष्णुना पिबति यावत् तावच्चाभ्यां निवेदितः ।
द्रागेव विष्णुना चक्रधारयाऽयं निषूदितः ॥२२॥
अमृतं गण्डूषमात्रं गलेऽस्य लग्नतां गतम् ।
तेन नाऽयं मृतो राहुर्द्वेधा छिन्नोऽपि कण्ठतः ॥२३॥
द्वौ जातौ राहुरित्यत्र कबन्धोऽयं हि जीवति ।
केतुरिति शिरस्त्वस्य सशिखं चापि जीवति ॥२४॥
एवं तेन पराभूता विष्णुना दैत्यदानवाः ।
पिता ते च कृतो रिक्तो रत्नान्याहृत्य सर्वथा ॥२५॥
एवं शुक्रोदितं राहोः शिरश्छेदं च मन्थनम् ।
रत्नोपहरणं दैत्यपराभवादिकं सुरैः ॥२६॥
तदाकर्ण्य महाशक्तो जलंधरः प्रतापवान् ।
चुक्रोध रोषरक्ताक्षः श्रुत्वा च पितृधर्षणाम् ॥२७॥
दूतं तदैव चाहूय घस्मराख्यं शशंस तत् ।
सम्मान्याऽभयमादत्वा प्रेषयामास शिक्षयन् ॥२८॥
घस्मर गच्छ देवेन्द्रं निवेदय मदीरितम् ।
गृहाण शरणं यद्वा युद्धार्थं सुस्थिरो भव ॥२९॥
अन्यदपि च प्राग्जातं पितुर्मे धर्षणादिकम् ।
जलंधरो न सहते वैरमार्जनमिच्छति ॥३०॥
इत्याद्यादाय वाक्यानि जगाम घस्मरो द्रुतम् ।
वर्गाच्च घस्मरः सर्वं देवेन्द्रं वाक्यमब्रवीत् ॥३१॥
जलंधरो महावीरो दैत्येश्वरोऽब्धिपुत्रकः ।
तस्य वीरस्य दूतोऽहं घस्मरस्तन्निदेशकृत् ॥३२॥
प्रेषितस्तेन वीरेण चागतस्तव सन्निधौ ।
यदाह शत्रुजिद्राजाऽव्याहताज्ञः शृणुष्व तत् ॥३३॥
कस्मात् त्वं मम पितरं समुद्रं मन्दराद्रिणा ।
मथितवान् नीतवाँश्च सर्वरत्नानि मत्पितुः ॥३४॥
शरणं मे गृहाण त्वं रत्नानि मे प्रयच्छ च ।
अन्यथा ते भयं प्राप्तं राज्यनाशो भविष्यति ॥३५॥
इति दूतवचः श्रुत्वा प्रोवाच द्युसदां पतिः ।
यन्मया विहृताः शैलास्त्वत्पित्रा कुक्षिरक्षिताः ॥३६॥
अन्येऽपि मद्द्विषस्तेन रक्ष्यन्तेऽन्तः कथं वद ।
न मे शत्रुवरो भूत्वा द्रोही स्थास्यति कश्चन ॥३७॥

पूर्वं हृतानि रत्नानि हरिष्ये प्राणतोऽधुना ।
शंखासुरं मम शत्रुं ररक्ष त्वत्पिता कथम् ॥३८॥
यं शंखं चाऽनुजो मे वै हतवान् विष्णुरव्ययः ।
गच्छ दूत वद जालंधरं मन्थनकारणम् ॥३९॥
निर्दोषं न महेन्द्रो वै दण्ड्यं करोति कंचन ।
निर्दोषस्त्वं यदिद्वेषं करोषि मम नूतनम् ॥४०॥
फलं शीघ्रं प्रदास्येऽहं सज्जो भवाऽसुरेश्वर ! ।
इत्युक्तो घस्मरो वै सः शीघ्रं तत्र जगामहि ॥४१॥
जलंधरोऽस्ति यत्राऽब्धौ तत्रावेदितवानिदम् ।
इन्द्रोक्तं वचनं श्रुत्वा रोषताम्राक्ष एव सः ॥४२॥
दृष्ट्वाऽधरोऽकरोद् देवान् जेतुमुद्योगमासुरैः ।
सर्वदिग्भ्यः समाजग्मुरासुरा दैत्यदानवाः ॥४३॥
कोट्यब्जाऽर्बुदसंख्याका दिवं जग्मुर्जिगीषया ।
शुंभनिशुंभनामानौ कृत्वा सेनाधिनायकौ ॥४४॥
निर्जगाम स्वयं वीरो जलंधरोऽपि वार्धिजः ।
प्राप नाकं नन्दनस्थो दध्मौ शंखं रणाय सः ॥४५॥
वीरदैत्याः प्रणेदुश्चाऽऽवृत्याऽमरावतीपुरीम् ।
विज्ञायेन्द्रोऽपि युद्धाय दंशितैश्च सुरोत्तमैः ॥४६॥
सह पुर्या निर्ययौ वै कोटिकोट्यब्जयोधिभिः ।
तयोः समभवद् युद्धं सुराऽसुरप्रसेनयोः ॥४७॥
बाणैरस्त्रैस्तथा मन्त्रैर्मायाभिश्चेन्द्रजालिकैः ।
पाषाणैः पर्वतैर्वृक्षैरुल्काभिश्च शतच्छदैः ॥४८॥
वज्रैश्चक्रैः शतघ्नीभिर्नाराचैस्तोमरैर्द्रुमैः ।
मुशलैः परिघैः खण्डैः खड्गैः कुन्तैश्च शक्तिभिः ॥४९॥
गदाभिः परशुभिश्च हस्तिभिश्च रथैः करैः ।
पल्लताभिर्मुष्टिभिर्बाहुभिः कफोणिकादिभिः ॥५०॥
तेऽन्योन्यं जघ्नतुः सेने संमर्दोऽभूदसंख्यकः ।
रक्तनद्योऽभवन् भूमौ कृतवार्धिगमोर्मयः ॥५१॥
पतितैः पात्यमानैश्च गजवाजिप्रपत्तिभिः ।
व्यराजत रणे भूमिः सन्ध्याभ्रपटलं यथा ॥५२॥
मृतान् मृतान् रणे दैत्यान्दानवान् गजवाजिनः ।
संजीविन्याऽजीवयद्वै शुक्रो मन्त्रितवारिभिः ॥५३॥
सुरानपि मृताँस्तत्राऽजीवयच्च बृहस्पतिः ।
दिव्यौषधैर्द्रोणगिरेरानीतैर्विविधैर्मुहुः ॥५४॥
मृतोत्थितान् सुरान् दृष्ट्वा जालंधरोऽतिरोषवान् ।
शुक्रं प्राह कथं चैता मृता जीवन्ति देवताः ॥५५॥
मन्ये सञ्जीविनीविद्या सुरेष्वपि गता तव ।
श्रुत्वा शुक्रश्च तं जलंधरं प्राह सुनिश्चितम् ॥५६॥
विद्या सञ्जिविनी नैव सुरेष्वद्यापि संगता ।
किन्त्वौषधीः समानीय द्रोणशैलाद् बृहस्पतिः ॥५७॥
सुरान् जीवयति द्राक्च तस्माद् द्रोणाद्रिमानय ।
स्वाधीनं तं कुरु यद्वा समुद्रान्तः प्रवेशय ॥५८॥
यदलाभे सुरा नष्टा जीविष्यन्ति न वै पुनः ।
तथा कृते विजयस्ते भविष्यत्यन्यथा नहि ॥५९॥
श्रुत्वा जलंधरो गत्वा द्रुतं चोत्पाट्य पर्वतम् ।
द्रोणाचलं समानीय प्राक्षिपत्सागरान्तरे ॥६०॥
ततो दैवान् जघानाऽस्त्रैर्जलंधरो मुदान्वितः ।
हतान्देवाञ्जीवयितुमोषध्यर्थे बृहस्पतिः ॥६१॥
जगाम द्रोणभूमिं च तत्राद्रिं न ददर्श सः ।
निराशः स गुरुर्बुद्ध्या ज्ञात्वाऽद्रिं दैत्यसंहृतम् ॥६२॥
देवान्प्राह समागत्य पलायध्वं सुरा इतः ।
द्रोणाद्रिर्नाशितो जलंधरेण वाऽन्यतो हृतः ॥६३॥
रुद्रजन्यो ह्ययं दैत्यो जेतुं क्षमो न साम्प्रतम् ।
पलायध्वं पलायध्वं ये मृतास्ते गता यतः ॥६४॥
कथंचिच्छेषपत्रैस्तान् जीवयिष्ये मृतानहम् ।
इत्युक्ताश्च सुराः सर्वे रणं त्यक्त्वा पलायिताः ॥६५॥
देवान्पलायितान् दृष्ट्वा दैत्या जलंधरान्विताः ।
शंखभेरीजयघोषैर्विविशुस्त्वमरावतीम् ॥६६॥
स्वर्गं त्यक्त्वा भयाद् देवा देव्यश्च मेरुपर्वते ।
गह्वराणि समाश्रित्य न्यवसन् स्वरिरक्षया ॥६७॥
अथ दैत्यो महादुष्टो जलंधरोऽतिमत्सरात् ।
देवस्थानेषु रिक्तेषु दैत्यान् समभिषेचयत् ॥६८॥
स्वर्गराज्यं वशे कृत्वा ययौ मेरुवनानि सः ।
देवानां नाशनार्थाय दैत्यसैन्यसमन्वितः ॥६९॥
त्रस्तास्ततः सुराः सर्वे विहाय गह्वराण्यपि ।
अनाहूता अपि जग्मुर्ब्रह्माणं प्रति दुःखिताः ॥७०॥
तावत् तत्रापि तत्स्थानं रिक्तं दृष्टं सुरैस्तदा ।
सत्यलोकेऽपि दैत्यानां राज्यं दृष्ट्वा प्रदुद्रुवुः ॥७१॥
वैकुण्ठं जलतेजोन्तरावरणे स्थितं स्थलम् ।
जग्मुर्देवाश्च देव्यश्च ब्रह्मापि तत्र दृश्यते ॥७२॥
तुष्टुवुस्ते हरिं लक्ष्मीनारायणं प्रजेश्वराः ।
सुररक्षक शान्तात्मन् दैत्यनाशक ते नमः ॥७३॥
मत्स्यात्मने च ते विष्णो वेदान्नीतवते नमः ।
अमृतमन्थनेऽद्रिं बिभ्रते कूर्माय ते नमः ॥७४॥
पृथ्वीं दन्ते बिभ्रते ते वराहाय नमो नमः ।
बलिं छलयते विप्रवामनाय च ते नमः ॥७५॥

नमः परशुरामाय कापथक्षत्रनाशिने ।
रावणान्तकरायाऽऽशु रामचन्द्राय ते नमः ॥७६॥
कृष्णनारायणराधारमाश्रीपतये नमः ।
नमो बुद्धस्वरूपाय दैत्यमोहकराय ते ॥७७॥
नमः कपिलरूपाय तत्त्वज्ञानप्रदाय ते ।
नमो हंसस्वरूपाय विधात्रे ज्ञानदाय ते ॥७८॥
वेदव्यासस्वरूपाय विद्याश्रवाय ते नमः ।
कलिदोषविनाशकृत्कल्किरूपाय ते नमः ॥७९॥
पार्वत्याश्च प्रभायाश्च माणिक्याः पतये नमः ।
कंभरायाः सुपुत्राय गोपालसूनवे नमः ॥८०॥
शरण्याय सुररक्षाकर्त्रे विद्यावते नमः ।
साधुरूपाय कृष्णाय वल्लभाय च ते नमः ॥८१॥
ज्ञानाचार्याय दैवाय दासत्रात्रे च ते नमः ।
दैत्यदुःखितभक्तादिरक्षकाय नमो नमः ॥८२॥
सर्वनेत्राय हृत्स्थाय रमानाथाय ते नमः ।
ध्वजपद्मांकुशवज्रयवचिह्नवते नमः ॥८३॥
स्वस्तिकजाम्ब्वष्टकोणोर्ध्वरेखाधारिणे नमः ।
धनुस्त्रिकोणकलशाऽर्धचन्द्रधारिणे नमः ॥८४॥
गोष्पदव्योममत्स्यादिधारिणे पत्तले नमः ।
दक्षपाणौ ध्वजचक्रधनुस्त्रिशूलस्वस्तिकाः ॥८५॥
मीनदण्डयवरेखा यस्य तस्मै नमो नमः ।
बाहू नेत्रे जानुनी च नासिका च स्तनान्तरम् ॥८६॥
दीर्घाणि सन्ति ते पञ्च तस्मै कृष्णाय ते नमः ।
सुहृस्वजघनपृष्ठग्रीवाजङ्घावते नमः ॥८७॥
सूक्ष्मकेशाऽङ्गुलिपर्वरदाऽस्थिधारिणे नमः ।
कक्षा कुक्षिश्च वक्षश्च घ्राणं स्कन्धो ललाटकम् ॥८८॥
यस्योन्नतानि षट् सन्ति तस्मै श्रीहरये नमः ।
नेत्रप्रान्तौ नखास्तालु जिह्वोष्ठौ पादयोस्तले ॥८९॥
पाणितले च रक्तानि यस्य सन्ति च ते नमः ।
उरः शिरो ललाटं च यस्य ततानि ते नमः ॥९०॥
स्वर सत्त्वं च नाभिश्च गम्भीरं यस्य ते नमः ।
वामसक्थ्नि रमाचिह्नं यस्यास्ति ते नमो नमः ॥९१॥
हृदये दक्षिणावर्तवते कृष्णाय ते नमः ।
सत्रिवलयशोभाढ्यनाभियुक्ताय ते नमः ॥९२॥
शीतभास्वररूपायाऽमृतप्रदाय ते नमः ।
अक्षरायाऽव्याकृतनाम्ने गोलोकाय ते नमः ॥९३॥
वैकुण्ठाय बद्रीशाय श्वेतद्वीपाय ते नमः ।
क्षीरस्थानाय जीवाय जीवातवे च ते नमः ॥९४॥
आत्मने च तदात्मने सर्वात्मने नमो नमः ।
वह्निस्थाय रविस्थाय हिरण्यस्थाय ते नमः ॥९५॥
सुराऽसुरनिवासाय भक्तार्तिहारिणे नमः ।
अपक्षाय विपक्षाय भक्तपक्षाय ते नमः ॥९६॥
भगवँस्ते कथाधाम्ने वार्ताधाम्ने च ते नमः ।
सर्वविद्यानिवासाय ब्रह्मणे ते नमो नमः ॥९७॥
भगवन् देवदेवेश पाहि नः शरणागतान् ।
जलंधरेण वै स्वर्गं निराकृत्य सुराँस्ततः ॥९८॥
स्वायत्तीकृतमेवेति कथं त्वं सहसे प्रभो ।
सूर्यश्चन्द्रश्च वह्निश्च शेषो धर्मो निराकृताः ॥९९॥
शरणं ते वयं प्राप्ता वधस्तस्य विचिन्त्यताम् ।
वयं क्षुद्रा इव नाथ विचरामोऽटवीस्थलम् ॥१००॥
इति स्तुत्वा विरेमुस्ते देवा इन्द्रादयस्ततः ।
करुणासागरः कृष्णो जगाद निर्भयं वचः ॥१०१॥
भयं त्यजत वो देवास्तं गच्छामि जलंधरम् ।
नाशयाम्यद्य तं शत्रुं देवानां दुःखदं परम् ॥१०२॥
इत्युच्चार्य समुत्थाय गरुडारूढ एव सः ।
यावद्गन्तुं प्रैरयत् स्ववाहनं तावदेव ह ॥१०३॥
लक्ष्मीर्भ्रातुर्निधनं वै भविष्यतीति दुःखिता ।
बाष्पनेत्रा प्रांजलिश्च प्रोवाच वल्लभं हरिम् ॥१०४॥
मम भ्राता शालकस्ते कथं वध्यः कृपानिधे ।
यद्यहं ते वल्लभास्मि मा तन्नाशं कुरु प्रभो ॥१०५॥
विष्णुः प्राह सुरेशानां रक्षणाय मया ननु ।
गन्तव्यं सर्वथा तत्र मारयिष्ये न तेऽनुजम् ॥१०६॥
रुद्रांशत्वाद् ब्रह्मवाक्यात् से वाक्यान्न मम प्रिये ।
मारणीयोऽस्ति ते भ्राता मा विषादं कुरु प्रिये ॥१०७॥
इत्युक्त्वा सान्त्वयित्वा तां ययौ यत्र जलंधरः ।
देवादीन् सह नीत्वैव कृष्णनारायणः प्रभुः ॥१०८॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने जलंधरवृन्दाख्याने आषाढपूर्णिमायां शुक्राचार्यपूजकाऽसुरसंघेषु राहुं विशिरसं दृष्ट्वा तत्कारणं समुद्रमथनामृतपाने पक्षपातादि विज्ञाय सुरविष्णुप्रभृतिनाशार्थे जलंधरकृतसुरासुरयुद्धोत्तरं सुरपराजये वैकुण्ठविष्णुस्तवनादिनिरूपणनामा पञ्चविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२५ ॥

श्रीलक्ष्मीरुवाच—

नारायण हरे विष्णो मम भ्रात्रा तदुत्तरम् ।
विष्णुं दृष्ट्वाऽऽचरितं किं विष्णुना किं च मे वद ॥ १ ॥

श्रीनारायण उवाच—

श्रूयतां च त्वया लक्ष्मि ! पिता पुत्री सुतस्तथा ।
सर्वेऽपि चंचला लोलास्तत्र किं किं न जायते ॥ २ ॥
विष्णुं दृष्ट्वाऽतिसंक्रुद्धो बलगर्वसमन्वितः ।
युद्धोद्यतं देवसैन्यं विलोक्याऽतिरुषा ज्वलन् ॥ ३ ॥
दैत्यानाज्ञापयामास समरार्थं जलंधरः ।
भो भो दैत्यवराः सर्वे युद्धार्थममरैः सह ॥ ४ ॥
निर्गच्छन्तु महाशस्त्रा युद्धं कुर्वन्तु दुस्तरम् ।
यथा पुनर्नाऽऽगच्छेयुर्देवास्तथाऽन्तक्रन्महत् ॥ ५ ॥
तदा मौर्या लक्षसंख्या धौम्राश्च शतसंख्यकाः ।
असुराः कोटिसंख्याकाः कालकेयाश्च कोटयः ॥ ६ ॥
कंका लक्षास्तथा शुंभनिशुंभपरिरक्षिताः ।
तालजंघा महादैत्याः कोटिशस्तत्र निर्ययुः ॥ ७ ॥
राक्षसा दानवाश्चापि कोट्यर्बुदपदातयः ।
सन्धीभूय तदाऽऽयाताः सुरनाशार्थनिश्चयाः ॥ ८ ॥
रणध्वजास्तदा व्योम्नि व्यदृश्यन्त तु नेत्रवत् ।
भेर्यश्च रणशृंगाणि चक्रुशुर्भयदानि हि ॥ ९ ॥
जलंधराज्ञया दैत्या युयुधिरे सुरैः सह ।
अस्त्रैर्बाणैश्च भूशुण्डीशतघ्नीभिश्च दूरतः ॥१०॥
धावन्तोऽत्रित आगम्य गदाभिः शूलतोमरैः ।
पट्टिशैः परशुभिश्च खड्गैश्च मूशलादिभिः ॥११॥
वृक्षैश्च पर्वतैश्चापि वज्रैश्च शक्तिभिस्तथा ।
नाराचैश्चार्धचन्द्रैश्च सीताभिश्च परस्परम् ॥१२॥
निजघ्नुर्दैत्यसंघास्ते चक्रैश्च देवता अपि ।
युयुधुस्ते महावीराः कुर्वन्तः सिंहवद् रवान् ॥१३॥
केचिद् बाणैर्हताश्चान्ये हताः क्षताश्च तोमरैः ।
केचित्परशुशूलैश्च हता रणवनान्तरे ॥१४॥
दैत्यानां कदनं जातं महद् दृष्ट्वा जलंधरः ।
नादयित्वा रणशृंगं स्वयं चाक्रुश्य वै बलात् ॥१५॥
सबलान्दानवान् कृत्वाऽवातरद् रणमूर्धनि ।
अतो दैत्या महावीर्याः समुत्साहास्तदाऽभवन् ॥१६॥
समापेतुश्च संग्रामे त्वन्धा भूत्वाऽतिदारुणाः ।
मारयन्तु च्छेदयन्तु द्वैधीकुर्वन्तु देवताः ॥१७॥
मर्दयन्तु कूर्चयन्तु चूर्णयन्तु तिलांशवत् ।
माऽपसर्पन्तु संग्रामाद् होमं कुर्वन्तु चात्मनाम् ॥१८॥
शूराणां रणयज्ञो वै पुनर्नायाति नाऽऽप्यते ।
रक्तं पिबन्तु देवानां भुञ्जन्तु तत्प्रियास्ततः ॥१९॥
इत्याक्रोशो महानासीत्तदानीं दैत्यमण्डले ।
प्रहारा सबला ह्यासन् दैत्यानां सुरनाशकाः ॥२०॥
न प्रहारस्तदा कश्चित् सुराऽनाशी प्रवर्तते ।
यत्र वै दृश्यते तत्र दृश्यन्ते देवता हताः ॥२१॥
अरराटी तदा त्वासीद्विष्णोर्हृदन्तरे क्षणम् ।
वासवोऽपि विदुद्राव सुराः शेषा विदुद्रुवुः ॥२२॥
पलायनपरान् दृष्ट्वा विष्णुस्तेषु विवेश ह ।
सबलान् सर्वथा कृत्वा हतशेषान् सुरान् हरिः ॥२३॥
युद्धार्थमाह्वयाञ्चक्रे गरुडस्थः पुनः पुनः ।
जीवयिष्ये सुरान्सर्वान्नाशयिष्ये तु दानवान् ॥२४॥
मा पलायन्तु संग्रामादहं योत्स्येऽग्रगो भवन् ।
इत्युक्त्वा भगवान् विष्णुः स्वस्य सुदर्शनात्तदा ॥२५॥
सुदर्शनानां लक्षाणि रचयामास तत्क्षणम् ।
प्रेरयामास तान्येव हन्तुं सेनां तु दानवीम् ॥२६॥
अग्नींश्च लक्षशः कृत्वा प्रेरयामास चासुरीम् ।
सेनां हन्तुं हरिश्चापि सुदर्शनं समैरयत् ॥२७॥
अग्निचक्राण्यसुरान् – संप्रदेहुर्भस्मसाद्यथा ।
एतद्विलोक्य देवाश्च निजघ्नुर्वै पलायितान् ॥२८॥
आह्वयन्तोऽतिधृष्टाश्च जयेच्छवोऽतिदारुणाः ।
विष्णुर्जलेन संप्रोक्ष्य मृतानुत्थापयत्तथा ॥२९॥
तेऽपि जघ्नुर्वेगिशस्त्रैरस्त्रैश्च दानवाँस्तदा ।
विष्णुः पश्यति सर्वत्र दानवा त्रस्ततां गताः ॥३०॥
छिन्ना नष्टाः कर्तिताश्च दृश्यन्तेऽरण्यवत्तदा ।
शेषा विदुद्रुवुः स्वर्गात् परित्यज्य रणांगणम् ॥३१॥
एवं पराजयस्तत्राऽसुराणामभवन्महान् ।
असोढा तस्य सामुद्रो देववृन्दभयंकरः ॥३२॥
योद्धुमभ्याययौ शुक्रं निर्दिश्याऽऽसुरजीवनम् ।
शुक्रश्च विद्यया दैत्यान्दग्धानजीवयद् द्रुतम् ॥३३॥
जलंधरो महानादं चकार कर्णदीर्णकम् ।
भयंकरेण नादेन तदा चाऽऽपूरितं जगत् ॥३४॥
विष्णोश्चापि प्रणादेन चकम्पे सकलं जगत् ।
धनुंष्युभौ समादाय टंकाररवकारिणौ ॥३५॥
युयुधाते स्वस्वपतिशालाकौ हि विपक्षगौ ।
आकाशं कुर्वतो बाणैस्तदा निरवकाशवत् ॥३६॥
विष्णुर्बाणैरसुरस्य ध्वजं छत्रं धनुश्शरान् ।
चिच्छेद च हृदये तं बाणेनाऽताडयद् दृढम् ॥३७॥
तावदुत्प्लुत्य दैत्येन्द्रो गदापाणिर्हरिं प्रति ।
पद्भ्यां धावन् बलान्मूर्ध्नि गरुडं हतवान् रुषा ॥३८॥

विष्णुं जघान शूलेन हृदयेऽतिप्रसह्य वै।
विष्णुः खड्गेन तीक्ष्णेन गदां चिच्छेद शूलकम् ॥३९॥
तावद् दैत्यः पुनश्चान्यद् धनुः कृत्वा शरान्वितम्।
विष्णुं जघान हृदये खड्गं चिच्छेद चापि वै ॥४०॥
विष्णुश्चार्धेन खड्गेन छित्वा तं बाणमागतम्।
शार्ङ्गं शीघ्रं समादाय प्रैरयद् बाणमुल्बणम् ॥४१॥
दैत्यस्तं सीतया प्रच्याव्य रुट्छिन्नाधरो बली।
शरान्तरेण वै शार्ङ्गं धनुश्चिच्छेद वैष्णवम् ॥४२॥
पुनर्बाणैश्चातितीक्ष्णैर्विष्णुं जघान वक्षसि।
छिन्नधन्वा हरिः कौमुदकीं चिक्षेप वै गदाम् ॥४३॥
सा विद्युद्वद्प्रधृष्या सामुद्रोऽपि तथाबलः।
गदया ताड्यमानोऽपि न चचाल हि किञ्चन ॥४४॥
दैत्यस्त्रिशूलमनलावर्षि वै हरयेऽक्षिपत्।
हरिर्नन्दकखड्गेन चिच्छेद तत् त्रिशूलकम् ॥४५॥
दैत्यः शक्तिं वज्रजन्यां लम्बां योजनमात्रकाम्।
अष्टधारां च सहस्रघण्टां शैलादिनाशिनीम् ॥४६॥
समादाय प्राहिणोद्वै विनाशाय हरेस्तदा।
हाहाकारो महानासीत् सुरेषु वै भयंकरः ॥४७॥
दैत्यस्य चान्तिमं वज्रं तदभूच्छक्तिरूपकम्।
नाशयामि यदि चेद्वै नायं युद्धं करिष्यति ॥४८॥
तस्माद् गरुडचञ्च्वा तं गृहीत्वा स्ववशे ततः।
दास्ये प्राप्य विजयं च येन युद्धं भवेत्पुनः ॥४९॥
इति विचार्य हरिणा पक्षिचञ्च्वा धृता हि सा।
आयान्ती रक्षिता स्वस्य पक्षिपक्षैकपिच्छके ॥५०॥
दृष्ट्वाऽऽश्चर्यं महत्प्राप्तोऽसुर आगत्य चाम्बरात्।
निपत्य हृदये विष्णुं जघान दृढमुष्टिना ॥५१॥
गरुडस्य गले तद्वज्जघान पादलत्तया।
तदा तु विष्णुना दैत्यो धृतो शिरसि वै दृढम् ॥५२॥
गरुडेन तु दैत्यः स धृतश्चञ्च्वा तु पादयोः।
उत्तोल्य क्षिप्तः पतितो दूरे वै शतयोजनम् ॥५३॥
पुनरुत्थाय चायातो व्योममार्गेण चाब्धिजः।
तावद्विष्णुश्चातिरुष्टो जघान हृदि तं पुनः ॥५४॥
स च विष्णुं जघानैव हृदि मुष्ट्या पुनः पुनः।
गरुडोपरि तत्रैव युयुधाते महाबलौ ॥५५॥
बाहुभिर्मुष्टिभिश्चैव जानुभिर्मरणोन्मुखैः।
गणयित्वा न मरणं दैत्यस्तु युयुधे बली ॥५६॥
मर्तव्यं वा विजेतव्यं लाभो द्वयेऽपि मेऽस्ति हि।
क्व वै विष्णोः करान्मृत्युः क्व वा विष्णुविजेतृता ॥५७॥
द्वयोर्लाभो महानस्ति यद्भावि भवतु ध्रुवम्।
इत्यालोच्य मतिं तस्य मृत्युं शंभुकृतं तथा ॥५८॥
प्रहस्य भगवान्प्राह धन्यस्त्वं रणदुर्मदः।
ममाऽग्रेऽप्यविनाशिनो विनाशाय पतंगवत् ॥५९॥
यस्त्वं जीवं तथा प्राणान्समर्प्य रणमूर्धनि।
समायातः क्षात्रधर्मं पालयन् शंकरात्मजः ॥६०॥
ममाऽस्त्रैस्त्वं न वै भीतो यैर्वीरा बहवो हताः।
न दृष्टस्त्वत्समो वीरो गलग्राहप्रयुद्धकृत् ॥६१॥
वरं वरय दैत्येन्द्र प्रीतोऽस्मि तव विक्रमात्।
अदेयमपि देयं ते त्वादृशाय रणांगणे ॥६२॥
वरस्य समयं ज्ञात्वा जलंधरोऽपि बुद्धिमान्।
प्रत्युवाच हरिं लक्ष्मि! स्ववशं गमयन् प्रभुम् ॥६३॥
यदि तुष्टोऽसि भगवन्! वरं ददासि चेद् यदि।
मद्भगिन्या मया सार्धं मद्गेहे सगणो वस ॥६४॥
तच्छ्रुत्वा च तथास्त्विति जगाद भगवान् हि तम्।
ततो लक्ष्म्या तथा परिवारेण सहितः प्रभुः ॥६५॥
जलंधरगृहं गत्वा जलंधरेण पूजितः।
उवास वचनाद् बद्धः प्रतीक्षन् पुनरर्दनम् ॥६६॥
जलंधरेण मेदिन्यां पुरं जालंधरं कृतम्।
राज्यं च बहुलं पृथ्व्यामासमुद्रान्तमास्थितम् ॥६७॥
स्वर्गादौ दानवाः सर्वे नियुक्ता अधिकारिणः।
पातालादौ कृता दैत्या अधिकारपराः स्वयम् ॥६८॥
पृथ्व्यां पश्चिमवार्धेश्च मध्ये द्वीपे ह्युवास सः।
देवगन्धर्वसिद्धेषु यत्किंचिद्रत्नमाचितम् ॥६९॥
स्वायत्तीकृत्य तत्सर्वं बुभुजेऽकण्टकं तलम्।
देवगन्धर्वसिद्धेशान् सर्परक्षोनरेश्वरान् ॥७०॥
स्वद्वीपे नागरान् कृत्वा शशास भुवनत्रयम्।
देवा युद्धे मृता ये ये तान्पर्यजीवयद्धरिः ॥७१॥
दैत्या ये ये हतास्तांश्च शुक्रः संपर्यजीवयत्।
देवाः पुनर्गता मेर्वाद्यरण्यादौ यथा पुरा ॥७२॥
फलं लब्धं न वै किञ्चित्तुषावघातवद्द्वयभूत्।
सर्वत्र भुवनेष्वासीद् वार्ता विष्णुः पराजितः ॥७३॥
भक्त्याधीनो भवत्येव वशी नान्येन केनचित्।
लक्ष्म्या च शालकेनापि स्नेहेन स वशीकृतः ॥७४॥
देवकार्यं विहायैव शालकगृहमाश्रितः।
देवा निराश्रया जाता दुःखिताः शरणं विना ॥७५॥
देव्योऽपि दुःखमापन्ना असुरैर्भूरि चार्दिताः।
किं कर्तव्यं क्व गन्तव्यं विष्णुर्वृन्दालतां श्रितः ॥७६॥

अथ दैत्यविनाशो वै शीघ्रं स्यादित्यचिन्तयत् ।
अन्तरात्मगताद् देवात् कृष्णनारायणात्प्रभोः ॥७७॥
देवा देव्यश्च ये जालंधरद्वीपे तु नागराः ।
अभवँस्ते तथा चान्ये यथा ज्ञायेत् नाऽसुरः ॥७८॥
तथा विचार्य श्रेष्ठास्ते जग्मुः शंकरसन्निधौ ।
तुष्टुवुः शंकरं स्वेषां दुःखस्य विनिवृत्तये ॥७९॥
अथाऽऽहूय महादेवो नारदं कुशलक्रियम् ।
प्रेषयामास तत्पूर्यां देवकार्यचिकीर्षया ॥८०॥
नारदोऽपि ययौ शीघ्रं जालंधरपुरे तदा ।
देवान्पूर्वं मिलित्वा च ज्ञात्वा दुःखं ततः पुनः ॥८१॥
देवकृतं पूजनं च गृहीत्वाऽतिथिसत्क्रियाम् ।
श्रुत्वा सूर्यशशिधर्मवह्निनिःसारणादिकम् ॥८२॥
विष्णोः पराजयं श्रुत्वा जलंधरस्य चानयम् ।
सुरानाश्वासयित्वा ज्ञापयित्वा कार्यसिद्धये ॥८३॥
यथाबुद्धि देवकार्यं करिष्ये ह्यभिधाय च ।
नत्वा देवान् ययौ जलन्धरसभामृषिः स्वयम् ॥८४॥
आगतं मुनिं जलंधरो नत्वाऽऽसनं ददौ ।
संपूज्य विधिवद् दैत्यः प्रहस्याऽऽह तु नारदम् ॥८५॥
कुशलं ते मुनिश्रेष्ठ ! कुत आगम्यते इतः ? ।
यदर्थमिह चायातो विज्ञापय करोमि तत् ॥८६॥
प्रसन्नात्मा नारदस्तच्छ्रुत्वा प्रोवाच चासुरम् ।
धन्यस्त्वं बलवान् राजा राजेन्द्रो वर्तसेऽधुना ॥८७॥
सर्वरत्नप्रभोक्ताऽसि तथाऽहं श्रुतवान् दिवि ।
पश्चाच्च श्रुतवान् भोगान् शंकरस्योत्तमोत्तमान् ॥८८॥
योजनाऽयुतविस्तीर्णे कल्पद्रुममहावने ।
कामधेनुशताऽऽकीर्णे चिन्तामणिसुदीपिते ८९॥
सर्वरुक्ममये दिव्ये सर्वत्राऽद्भुतशोभिते ।
यानवाहनदासैश्च दासीभिः परिचारिते ॥९०॥
कैलाशशिखरे तत्र दृष्टवान् शंकरं ह्यहम् ।
सर्वांगसुन्दरं गौरं त्रिनेत्रं चन्द्रशेखरम् ॥९१॥
ऊनषोडशवर्षाभिर्युवतीभिः सुसेवितम् ।
चन्द्रपिण्डकृताभिर्वा सूर्यस्वर्णनिःसृताभिः ॥९२॥
नैकसुन्दरीभिः शिवो मोदते तत्र पर्वते ।
अथाऽविचारयं पश्चाच्छ्रुतं जालंधरं सुखम् ॥९३॥
कीदृग् भवेत्तथा स्मृद्धिरेतादृशी भवेन्न वा ? ।
इति वितर्क्य साश्चर्यं समागतोऽस्मि ते गृहम् ॥९४॥
तद्विलोकनकामोऽहं त्वत्सान्निध्यमिहागतः ।
द्वीपस्ते सुभगश्चास्ति ह्युद्यानवनमण्डितः ॥९५॥
परीतो जलखातेन शोभितोऽस्तीति सुन्दरम् ।
इत्युक्तवन्तं दैत्यः स दर्शयामास सर्वथा ॥९६॥
स्मृद्धिमन्तर्गृहां बाह्यगृहां गह्वरसंस्थिताम् ।
दृष्ट्वा शशंस मुनिराड् वितर्क्य देवलाभकृत् ॥९७॥
विष्णुप्रेरणया प्राह दैत्यं मोहं यथाऽऽविशेत् ।
अहो तव समृद्धेस्तु पारं नास्ति जलंधर ॥९८॥
त्रैलोक्याधिपतिगृहे भवेदेव न चित्रकम् ।
भवनानि विचित्राणि यानानि वाहनानि च ॥९९॥
उपकरणानि रत्नपूंजाश्च मणिशेवधिः ।
मौक्तिकानि हीरकाश्च सुवर्णशतभूमयः ॥१००॥
गजाद्या वाजिनश्चापि नाऽन्यत्र सन्ति ते यथा ।
शक्रस्यैरावतश्चात्र सूर्यस्योच्चैःश्रवा हयः ॥१०१॥
कल्पमन्दारवृक्षाश्च निधयो धनदस्य च ।
ब्रह्मणो हंसयानं च विष्णोः गरुडइत्यपि ॥१०२॥
यमस्य महिषश्चापि विष्णोः सुदर्शनं तथा ।
शेषराजमणिश्चापि चन्द्रस्य चामृतं तथा ॥१०३॥
मन्वन्तराणां छत्राणि सुवर्णयष्टयस्तथा ।
चामराणि दिगीशानां देवीनां कंकणानि च ॥१०४॥
एवं सर्वाणि रत्नानि भान्ति तानि गृहे तव ।
प्रमदानां च दासीनां श्रेष्ठत्वं चापि तेऽस्ति वै ॥१०५॥
किन्तु नैकमपि जायारत्नं ते भाति तादृशम् ।
यादृशं शंकराऽग्रेऽस्ति तावान् न्यूनोऽस्ति वै भवान् ॥१०६॥
श्रेष्ठेन जायारत्नेन सूर्यचन्द्रनिभेन वै ।
भवनानि प्रशोभन्ते राज्ञो न स्मृद्धिभिस्तथा ॥१०७॥
किरातीभिस्तु लक्षाभिः शोभते न नृपगृहम् ।
यथा त्वं दिग्यशा भासि न त्वत्पत्नी तथाऽस्ति वै ॥१०८॥
यद्वा किं शुभ्रदासीभिर्यशश्चेन्न विवाहिता ।
शुक्लां जायां विना सर्वं फेरुराजगृहोपमम् ॥१०९॥
न वै विवाहितां विना शोभा राज्ञो भवेत्क्वचित् ।
राज्यमाता भवेद् देवी दिव्या वंशविवर्धिनी ॥११०॥
नहि दासीप्रलक्षासु कुमारो नृपतेर्मतः ।
दासीजाः शतशश्चापि नाभिषेकाऽर्हणा मताः ॥१११॥
तदानेतुं कुमारीं त्वं स्त्रीरत्नं चार्हसि ध्रुवम् ।
अहं गच्छामि लोकेषु रत्नानां यत्र संग्रहः ॥११२॥
श्रुत्वैवं चाह देवर्षिं जलंधरोऽतिमानवान् ।
देवर्षे च यथासर्वरत्नानां श्रैष्ठ्यमस्ति मे ॥११३॥
चतुर्दशसु लोकेषु तादृक् श्रेष्ठोत्तमोत्तमम् ।
भविता यदि विज्ञातं भवेद् दर्शय मे मतम् ॥११४॥

भवता सर्वतो दृष्टा नार्यो राज्ञ्यश्च कन्यकाः ।
वेधसां शंकराणां च विष्णूनां चापि कन्यकाः ॥११५॥
ऋषीणां चापि पितॄणां देवानां चापि कन्यकाः ।
मानवानां च नागानां दैत्यदानवरक्षसाम् ॥११६॥
सर्वाश्च कन्यका मुने त्वया दृष्टाः समन्ततः ।
सर्वातिशयसौन्दर्यरूपयौवनसद्गुणाः ॥११७॥
यत्र वसन्ति तद्रत्नं प्रदर्शय नयामि तत् ।
चतुर्दशभुवनानां राज्ञीनां संसदि मम ॥११८॥
पत्नीरूपं प्रकाश्येत सूर्य इव महोज्ज्वलम् ।
यत्समं न भवेदन्यदधिकं तु कथं भवेत् ॥११९॥
तादृशं दर्शय विद्वन् नयामि विवहामि च ।
यदग्रे सर्वराज्ञ्यश्च पतङ्गय इव सर्वथा ॥१२०॥
भवेयुस्तादृशं कुमारिकारत्नं वहाम्यहम् ।
श्रुत्वैवं नारदः प्राह वर्तते तादृशं खलु ॥१२१॥
एकमेवात्र ब्रह्माण्डे कुमारीरत्नमुत्तमम् ।
यदग्रे सर्वनारीणां सौन्दर्यं भस्मितेन्धनम् ॥१२२॥
मयाऽपि यद्दिनाद्दृष्टं तद्दिनात् तदवाप्तये ।
प्रयत्यते पुनर्गत्वा निद्रां लभे न शर्मदाम् ॥१२३॥
हृदये चक्षुषोर्वृत्तौ स्वप्ने तथा च जागरे ।
मस्तकेऽपि च सा कन्या रमते स्मृतिमागता ॥१२४॥
किं सौन्दर्यं च किं रूपं कीदृशं यौवनं तथा ।
यन्नखाग्रेऽपि तेजोऽस्ति यत्र कृष्णायते शशी ॥१२५॥
यन्मुखे गण्डयोर्भागौ तथा चापि कपोलयोः ।
वलक्षाश्चत्वार एवात्र सूर्याः किं स्तश्च तादृशौ ॥१२६॥
कियन्मध्यकटिस्तस्याः कियत्कामस्थलं तथा ।
कियत्प्रोद्भिन्नभावाढ्यस्तनद्वयं कियत् कियत् ॥१२७॥
विद्युल्लता यथा तत्र तत्र वसन्ति वै किमु ।
मया न प्राप्यते राजँस्त्वया कथं स चाप्यते ॥१२८॥
तथापि कुरु यत्नं त्वं प्राप्स्यते तज्जयस्तव ।
प्राप्तव्यं वापि मर्तव्यमिति कृत्वा प्रयत्यताम् ॥१२९॥
नाऽन्यथा तद्भवेत्कार्यं शूराणां किमसाध्यकम् ।
कैलासे तद्वर्ततेऽद्य शंभोर्हस्ततले स्थितम् ॥१३०॥
शंभोः पत्नीस्वरूपेण चाऽक्षतं तेन योगिना ।
शंभुस्तु वर्तते योगी समाधौ तिष्ठति ध्रुवम् ॥१३१॥
न स्पृशति तां नारीं कन्यारूपां विचिन्त्य सः ।
अत्यद्भुतां रक्षति स्म सर्वथा योगसिद्धिभिः ॥१३२॥
जायारत्नेन सदृशास्त्रिलोक्यां शंभुना खलु ।
नास्ति कश्चिदिति मन्ये प्रत्यक्षं दृष्टवान् यतः ॥१३३॥
यस्याः पादावलोकेन ब्रह्मा रेतो ह्यवासृजत् ।
कामोऽपि तां विलोक्यैव मुमोह भस्मतांगतः ॥१३४॥
तद्रत्नं त्वक्षतं प्राप्य कृतकृत्यो भवात्र वै ।
नो चेत् प्राणान् विहायैव परलोकं समाश्रय ॥१३५॥
इत्युक्त्वा नारदो देवपूज्यो देवहितार्थकृत् ।
ययौ देवाँश्च विज्ञाप्य कलां दैत्यविनाशिनीम् ॥१३६॥
देवा अपि सुतुष्टाश्च विष्णुं गत्वा स नारदः ।
सर्वं तदब्रवीन्नत्वा ययौ सत्यं स्वकं स्थलम् ॥१३७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने जलंधरवृन्दाख्यानेऽसुरसुरसैन्ययुद्धं, मृताऽसुरसुराणामुज्जीवनं, जलंधरविष्णवोश्च युद्धं, प्रसन्नेन विष्णुना जलंधरगृहे वासात्मकवरप्रदानं, पुनर्देवानां दुःखं, शंकराय निवेदनं, नारदस्य जलन्धरगृहं प्रतिगमनं, सुरूपाया भार्याया पार्वत्या आनयनाय जलन्धरस्य मोहनमित्यादि-निरूपणनामा षड्विंशत्यधिकत्रिशत-तमोऽध्यायः ॥ ३२६ ॥

**श्रीलक्ष्मीरुवाच—**

नारायण महाराज जलंधरेण शत्रुणा ।
नारदे तु प्रयाते वै ततोऽनुष्ठितमेव किम् ॥ १ ॥
वद विस्तरतो नाथ कृष्णनारायण प्रभो ।
जलंधरो महादैत्यः पार्वत्यर्थं किमाचरत् ॥ २ ॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि! ततो दैत्यो नारदोक्तानुसारतः ।
प्रयत्नं कृतवान् सम्यक् कथयामि यथातथम् ॥ ३ ॥
तामेव चिन्तयन् तन्वीमनंगशरपीडितः ।
कालाधीनाऽल्पभाग्यः सः प्रणष्टधीर्विमोहितः ॥ ४ ॥
सुदूतमाह्वयामास सैंहिकेयं विचक्षणम् ।
आगतं तं महाराहुं प्राह कार्यप्रसाधक! ॥ ५ ॥
मम कार्यस्य सिद्ध्यर्थं कैलासं गच्छ पर्वतम् ।
तत्र योगी शंकरोऽस्ति यो न स्पृशति स्त्रीवराम् ॥ ६ ॥
तस्य हस्तगतं कन्यारत्नं चास्तीति नारदः ।
मामुवाच च तद्रत्नं मया प्राप्तव्यमेव ह ॥ ७ ॥
पार्वतीत्यभिधानं तन्मया प्राप्तव्यमेव हि ।
तत्र गत्वा तु वक्तव्यं निर्भयेन हृदा त्वया ॥ ८ ॥
वनवासिन्महायोगिन् जायारत्नेन किं नु ते ।
देहि तन्मे जलंधरनाम्ने रत्नभुजे हर ॥ ९ ॥

यानि यानि तु रत्नानि त्रैलोक्ये तानि सर्वशः ।
मम गृहे मया राज्ञा चानीतानि बलात्ततः ॥१०॥
ऐरावत उच्चैःश्रवाः कल्पश्च पारिजातकः ।
हंसयुक्तविमानं च वज्रं शक्तिश्च चामरम् ॥११॥
मौक्तिकानि हीरकाश्च छत्रं प्रख्यातिमच्च यत् ।
तत्सर्वं मम भोग्यं वै मयाऽऽनीतं मम गृहे ॥१२॥
निधयश्च महामाला पाशो दण्डस्तथाऽमृतम् ।
सर्वं तन्मद्गृहे चास्ति कन्यारत्नं विना हर ॥१३॥
योगिनस्ते नवकन्या न स्पृश्या दीयतां हि मे ।
इत्याज्ञां प्राप्य राहुश्च ययौ यत्र स शंकरः ॥१४॥
नन्दिनाऽऽदिष्टदूतत्वात् सभामध्यं प्रवेशितः ।
शंकरं दिव्यसर्वांगं दिव्यभूषणभूषितम् ॥१५॥
प्रणनाम हरं तत्र गतवान् निकटं तथा ।
उवाच शंकरं चास्मि दूतो जलंधरस्य वै ॥१६॥
त्रैलोक्यपतिना मुक्तस्त्वत्सकाशमिहाऽऽगतः ।
योगिनं त्वां समुद्दिश्य स यदाह शृणुष्व तत् ॥१७॥
कन्यारत्नं स्वर्णकान्तं चन्द्रपिण्डसमं तव ।
योगिनो नोपयुक्तं स्याद् देहि मे त्वं दिगम्बर ॥१८॥
अहं रत्नप्रभोक्ताऽस्मि तत् स्त्रीरत्नं न ते भवेत् ।
भिक्षाशिनः कुतो रत्नं भार्यारत्नं तु भूभृतः ॥१९॥
त्रैलोक्ये यानि रत्नानि तान्याहृतानि सर्वशः ।
मया चेयं शुभा कन्या चेष्यते दीयतां नु मे ॥२०॥
स्वस्त्रीरत्नं देहि मह्यं राज्ञः सुखकराः प्रजाः ।
त्रैलोक्यान्तर्गतत्वात् त्वं प्रजा भवसि मे हर ॥२१॥
पश्य लक्ष्मि ! हतबुद्धिः पितरं प्राह मातरम् ।
पार्वतीं मे देहि चेति माया वै कीदृशी हरेः ॥२२॥
हतधियोऽत्र लोके वै मातृकामाऽभिचिन्तकाः ।
सर्वे जलन्धरा बोध्या विष्णुमायाविमोहिताः ॥२३॥
सतीष्वपि च दासीषु परांगनां समीहते ।
सोऽपि जलंधरो बोध्यो विनाशमुखमन्त्रितः ॥२४॥
शृणु पश्चात्तु यज्जातं राहौ वदति तत्क्षणम् ।
समुत्पन्नो महारौद्रो गणस्तीव्राशनिस्वनः ॥२५॥
भ्रूमध्यादीशरोषाद्वो सज्वालनयनो महान् ।
सिंहाऽऽस्यप्रचलज्जिह्वश्चोर्ध्वकेशो भयंकरः ॥२६॥
तालजंघोऽभिदुद्राव क्षुधया राहुमातुरः ।
खादितुं तु समायान्तं दृष्ट्वाऽधावच्च राहुकः ॥२७॥
तथापि तं सः प्रसह्य राहुं दधार खादितुम् ।
आक्रश्य शंकरं प्राह राहुः पाहि प्रपन्नकम् ॥२८॥

त्राहि त्राहि प्रभो पाहि रक्ष रक्ष कृपानिधे ।
खादत्ययं सेवकस्ते दूतं मां शरणागतम् ॥२९॥
न खादेत्तु यथायं मां तथा रक्षय शंकर ।
ब्राह्मणं मां न खादेद्वै नमस्तेऽस्तु कृपां कुरु ॥३०॥
ब्राह्मणेति वचःश्रुत्वा शंकरः स्वगणं तदा ।
अब्रवीद् दूत मा खाद ब्राह्मणं राहुनामकम् ॥३१॥
इतिश्रुत्वा दूतवचो मुमोच तं सुभोजनम् ।
शंभुं प्राह क्षुधितोऽस्मि त्याजितं मम भक्ष्यकम् ॥३२॥
क्षुधा मां बाधते शंभो देहि भक्ष्यं महेश्वर ।
शिवः प्राह बुभुक्षा ते यद्यतीव प्रवर्तते ॥३३॥
क्षुधा त्वां बाधतेऽत्यर्थं स्वमांसं भक्षयाऽत्र वै ।
हस्तपादादिकं स्वस्य भक्षयाऽत्रेति चाज्ञया ॥३४॥
चखाद स गणः सर्वं स्वमांसं स्वकबन्धजम् ।
यदाऽभवच्छिरः शिष्टं प्रसन्नः शंकरस्तदा ॥३५॥
उवाच हे महाभक्त मदाज्ञाप्रतिपालक ! ।
सन्तुष्टोऽस्मि वद तुभ्यं किं ददामि भयंकर ! ॥३६॥
मया सह प्रपूज्यत्वं कीर्तिमुखाभिधानकम् ।
ददामि ते महावीर ! वस द्वारि मम गृहे ॥३७॥
तदाप्रभृति शंभोश्चालयद्वारि स तिष्ठति ।
पूजनीयो विशेषेण शंभोः सन्तोषहेतवे ॥३८॥
अथ राहुर्गतो यत्र जलंधरः प्रतिष्ठति ।
स्वस्व मृत्युं निवेदयामास यथा च जीवनम् ॥३९॥
जलंधरस्तु संक्रुद्धः श्रुत्वा शंकरचेष्टितम् ।
दूताऽवमानं गणयन् स्वावमानं महत् कृतम् ॥४०॥
उवाच दैत्यमूर्धन्यान् सज्जा भवन्तु वै क्षणात् ।
निर्गच्छन्त्वखिला दैत्याः कालनेम्यादयस्तथा ॥४१॥
शुंभनिशुंभमुख्याश्च कोट्यो वीरवंशजाः ।
कंबुवंश्या दौर्हृदाश्च कालकेयाश्च कालकाः ॥४२॥
मौर्या धौम्रास्तथाचान्ये दानवाश्चासुरास्तथा ।
सज्जाः समागताः सर्वे तानादय जलंधरः ॥४३॥
निर्जगामाशु दैत्यानां कोटिभिः परिवारितः ।
अग्रे राहुश्छिन्नशिरोऽमंगलाय कृतोऽभवत् ॥४४॥
शुक्रः काणोऽमंगलाय द्वितीयोऽप्यग्रगोऽभवत् ।
शुंभस्य तु खड्गो हस्तात्पतितोऽमंगलाय सः ॥४५॥
निशुंभादेः क्षुवनं च गतौ स्खलनमित्यपि ।
जलंधरस्य शिरसो मुकुटोऽपतदित्यपि ॥४६॥
अमंगलाय तत्सर्वं प्रस्थानेऽभवदार्तिकृत् ।
महानिद्रासूचकाश्चाऽशकुनान्यभवन्नपि ॥४७॥

तदा त्रस्ताः सुरा गुप्ता अगच्छन् शंकरं प्रति ।
तुष्टुवुर्दुष्टनाशाय देवानां सुखलब्धये ॥४८॥
ध्यानमग्न महादेव ! समाधिस्थ ! नमोऽस्तुते ।
जलंधरस्तव पुत्रो विनाशाय समर्पितः ॥४९॥
सुराणां कदनं कृत्वा पार्वत्या घर्षणं तथा ।
तवाऽवमानं कृत्वा च ततो नाशाय कल्पितः ॥५०॥
किं वा पूर्वं कृपानाथ दैत्यो नाशाय कल्पितः ।
किं वै त्वया तथा लक्ष्मीपतिनाऽरति प्रणिश्चितम् ॥५१॥
विषप्राशोत्तरात् पूर्वं वरं विषविनाशनम् ।
दुष्टकृद्धर्षणात् पूर्वं वरं दुष्टे प्रदण्डनम् ॥५२॥
विष्णुस्तस्य गृहे शेते वृन्दया परिसेवितः ।
शंकरः स्वगृहे शेते ब्रह्मणि स्वसमाधिना ॥५३॥
पार्वत्याश्चात्र किं भावि विचारय प्रभोलक ।
देवानां दुर्दशां चापि विलोकय प्रशंकर ॥५४॥
ब्रह्मा ब्रह्माण्डरचने निवृत्तिं नैव याति च ।
दिक्पाला लोकपालाश्च जलंधरवशंगताः ॥५५॥
रक्षको विद्यते नैव लक्ष्मीस्तस्य सहायिनी ।
त्वं भव रक्षकोऽस्माकं स्थानभ्रष्टाऽकृतात्मनाम् ॥५६॥
जहि नो रक्षणार्थाय पुत्रं ते सागरात्मजम् ।
स चायाति त्वया कर्तुं रणं बलेन गर्वितः ॥५७॥
हन्तुमर्हस्यविलम्बात् तं विरुद्धार्थगामिनम् ।
दुःखितांश्च सुरान् सर्वान् पाहि नः शरणागतान् ॥५८॥
इति देववचः श्रुत्वा विष्णुं सस्मार शंकरः ।
विष्णुः शीघ्रं समायातो न जानीयाद् यथाऽसुरः ॥५९॥
शंभुः प्राह हरिं विष्णो ! जलंधरः कथं त्वया ।
निषूदितो न चाद्यापि कथं वससि तद्गृहे ॥६०॥
विष्णुः प्राह महादेवं श्रीभ्राता च तवात्मजः ।
इतिहेतोर्हतो नैव त्वमेनं जहि शंकर ! ॥६१॥
मया कृतो रणस्तेन प्राणग्राहेण सर्वथा ।
लक्ष्म्या निवारितश्चाहं मारयामास नैव तम् ॥६२॥
न स वै मारितः शंभो तव गौरवकारणात् ।
वरेण स्वालये चाहं वासितोऽस्मि न पक्षगः ॥६३॥
तस्य पत्नी महाभागा कृष्णगोलोकवासिनी ।
वृन्दा भवति धर्माढ्या सती पतिव्रता सदा ॥६४॥
तस्या बलेन दैत्योऽसौ म्रियते नेति वै मया ।
हेतुजिज्ञासया चापि वसतिस्तद्गृहे कृता ॥६५॥
तज्ज्ञातं सर्वथा शंभो कारणं प्रबलं यतः ।
युद्धं कुरु महादेव साहाय्ये विचराम्यहम् ॥६६॥
वृन्दायां तत्र कापट्यं किंचित् कर्तुं भविष्यति ।
न्यायेनैव करिष्यामि नाऽन्यायेन कदाचन ॥६७॥
स च दैत्यस्तव पत्नीं कामेनादातुमिच्छति ।
तत्र छिद्रे मया किंचित् कर्तव्यमुपतिष्ठति ॥६८॥
अवश्यं तस्य नाशः स्यान्मातृदुष्टार्थगामिनः ।
नाऽयं पुत्रः किन्तु शत्रुरिन्द्रं दृष्ट्वा त्वया कृतः ॥६९॥
स एवाऽन्यायगो नाश्यो नात्र कार्या विचारणा ।
एतस्मिन्नन्तरे दैत्यो महासेनासमन्वितः ॥७०॥
कैलासप्रान्तमायातोऽवरुध्याऽद्रिं जगर्ज ह ।
सैन्यकोलाहलं श्रुत्वा चुक्रोध शंकरस्तदा ॥७१॥
समादिदेश युद्धार्थं नन्द्यादिगणपुंगवान् ।
नन्दीभमुखसेनानीमुखा युद्धविशारदाः ॥७२॥
अवतेरुर्गणाः सर्वे कैलासात् क्रोधसंभृताः ।
कोटिशस्ते गणाश्चैव कोटिशो दैत्यपुंगवाः ॥७३॥
कुर्वन्तो रणशब्दांश्च कैलासोपत्यकासु वै ।
गर्जन्तो भैरवं वीराः प्रमथेशाश्च दानवाः ॥७४॥
शक्तितोमरबाणौघैर्मुसलैः पाशपट्टिशैः ।
व्यराजन्त त्रिशूलास्त्रवज्रमुद्गरशस्त्रकैः ॥७५॥
भेरीमृदंगशंखौघैर्निःस्वानैर्वीरहर्षणैः ।
गजाश्वरथशब्दैश्च नादिता भूर्व्यकम्पत ॥७६॥
सेनयोरुभयोस्तत्राऽभवन् शब्दा भयंकराः ।
गर्जनया समं परस्परं हननमुल्बणम् ॥७७॥
प्रावर्तत तदा लक्ष्मि ! नाशनं चातिदारुणम् ।
हता नागा हताश्चाश्वा हता वीराः सहस्रशः ॥७८॥
प्रमथाहतदैत्यौघा दैत्याहतगणास्तथा ।
महानिद्रांगतास्तैश्च भूर्व्यराजत संवृता ॥७९॥
वसाऽसृङ्मांसपंकाढ्या भूरगम्याऽभवत्तदा ।
दैत्यानजीवयच्छुक्रो मृतसंजीवनीबलात् ॥८०॥
गणा मृता नोत्तिष्ठन्ति भयंकरमिदं महत् ।
शशंसुश्च गणास्तस्मै शंकराय विनाशनम् ॥८१॥
शुक्रस्य चेष्टितं सर्वं ज्ञात्वा तु चुक्रुधे हरः ।
तन्मुखात् क्रोधताम्राक्षी कृत्या बभूव भीषणा ॥८२॥
तालजंघा दरीवक्त्रा ताडांगुली गिरिस्तनी ।
आससाद रणभूमिं विचचाराऽसुरेषु सा ॥८३॥
भक्षयमाणा तान्दैत्यान् जगाम भार्गवो यतः ।
शुक्राचार्यं गले धृत्वा योनिमध्येऽक्षिपद्धि सा ॥८४॥
स्वभगे धृत्वा जगामाऽन्तर्हिता नभः ।
दैत्याः प्रम्लानवदना दृष्ट्वैतच्छुक्रनाशनम् ॥८५॥

विनिर्जग्मुर्युद्धभूमेः प्राणरक्षापरायणाः ।
अभज्यत महासैन्यं गणैः सन्ताडितं तदा ॥८६॥
शुंभो निशुंभनामा च कालनेमिश्च ते त्रयः ।
युद्धं चरन्तः प्रमथपृतनां जघ्नुरैश्वरीम् ॥८७॥
मुञ्चन्तः शरवर्षाणि गणसेनामकम्पयन् ।
रुरुधुश्च गणाश्चापि दैत्यान् मार्गणवृष्टिभिः ॥८८॥
वसन्तकिंशुकाभासा जाता गणाश्च दानवाः ।
अथ दानवसैन्यं तद् व्योमाश्रयं समाचरत् ॥८९॥
रुरोध गणसैन्यं तद् व्योमवृष्ट्याऽतिघोरया ।
तदा प्रमथसैन्यं संभग्नं दुद्राव गह्वरम् ॥९०॥
दृष्ट्वा चैतद् वैपरीत्यं नन्दीभमुखषण्मुखाः ।
अन्येगणाश्चातिबला आकाशमवलम्ब्य च ॥९१॥
सैन्यान्याकाशमालम्ब्य नीत्वा पाषाणपुंगवान् ।
आमर्षादभ्यधावन्त संहर्तुं दैत्यपुंगवान् ॥९२॥
उत्प्लुत्य चोत्प्लुत्य विजघ्नुरैश्वरा,
जालंधराऽऽरक्षितदैत्यपुंगवान् ।
पाषाणशस्त्रैरतिभग्नमस्तका,
निपेतुरुर्व्यामपरे तु दुद्रुवुः ॥९३॥
एवमासुरसैन्यं तद्भग्नं व्योम विहाय च ।
कैलासारण्यमाश्रित्य प्रच्छन्नं समभूत् क्षणम् ॥९४॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने जालंधरवृन्दाख्याने जालंधरेण राहुर्दूतः शंकरं प्रति प्रेषितः, स कीर्तिमुखेन विद्रावितः, ततो जलन्धर-सैन्यमागतम्, शुक्राचार्यः कृत्यया योनौ निक्षिप्तः, घोरं युद्धमभूचेत्यादिनिरूपणनामा सप्तविंशत्यधिकत्रिशततमोऽध्यायः ॥३२७॥

**श्रीलक्ष्मीरुवाच—**

कृत्यायोनौ निहितस्य शुक्राचार्यस्य वै ततः ।
किमभूत् तत्र युद्धं च कीदृशं चेति मे वद ॥ १ ॥

**श्रीनारायण उवाच—**

यावज्जालंधरनाशो भवेत् तावत्तु कृत्यया ।
स्वयोनौ मर्दितः शुक्रो निर्गन्तुं नाऽशकत् तदा ॥ २ ॥
योगमन्त्रबलेनायं मुमुर्षुरपि संयमात् ।
कथंचिज्जीवनं धृत्वा प्रसुप्तस्तत्र मूर्छितः ॥ ३ ॥
जालंधरे विनष्टे च कृत्यया मूत्रितो बहिः ।
मूर्छितश्चिरकालान्ते जागरं स च लब्धवान् ॥ ४ ॥
अथ प्रासंगिकं युद्धं शृणु लक्ष्मि ! परस्परम् ।
द्वन्द्वात्मकं ततो जातं महतोर्महतोरति ॥ ५ ॥
अभ्यधावत नन्द्याख्यं कालनेमिर्महासुरः ।
शुंभो लम्बोदरं चापि निशुंभस्तु षडाननम् ॥ ६ ॥
निशुंभः पञ्चभिर्बाणैर्विव्याध शिखिनं हृदि ।
कार्तिकेयस्ततो बाणैः पञ्चभिस्त्वतिसूत्वणैः ॥ ७ ॥
विव्याध वाजिनस्तस्य सारथिं ध्वजमेव च ।
शरेणैकेन तीक्ष्णेन निशुंभं प्रजघान ह ॥ ८ ॥
जगर्ज च निशुंभोऽपि गर्जन्तं तु षडाननम् ।
जघान बहुभिर्बाणैर्विव्याध वर्म धारितम् ॥ ९ ॥
कार्तिकेयस्तदा क्रुद्धः शक्तिं जग्राह पाणिना ।
प्रसह्य बलवान् वेगात् प्राहिणोत् प्राणघातिनीम् ॥१०॥
निशुंभोऽपि रुमयज्ञः स्वशक्त्या तां व्यपातयत् ।
तावत् स्कन्दो द्वितीयां तां तदा प्राणान्तकारिणीम् ॥११॥
प्राहिणोदतिवेगात् सा हृल्लग्ना तमपातयत् ।
अथ नन्दीश्वरस्तत्र कालानेमिं महासुरम् ॥१२॥
अविध्यत शरैस्तीक्ष्णैः पञ्चभिः सप्तभिस्तथा ।
चतुर्भिश्च हयान् द्वाभ्यां केतुं चैकेन सारथिम् ॥१३॥
कालनेमिस्ततो बाणैर्धनुश्चिच्छेद नन्दिनः ।
शिलीमुखैस्तथा नन्दीश्वरं विव्याध मस्तके ॥१४॥
नन्दीशोऽपि त्रिशूलेन जघान हृदि कालकम् ।
कालको हृतसर्वस्वः शूलभिन्नहृदन्तरः ॥१५॥
उत्पाट्य शिखरं चाद्रेर्नन्दिनं समताडयत् ।
नन्दिः शक्तिं समादाय जघान कालवक्षसि ॥१६॥
कालः पपात मूर्छायां हस्तपादौ प्रसार्य वै ।
अथ हस्त्याननः शुंभं विव्याध हृदि पत्रिणा ॥१७॥
अश्वान् विव्याधाऽष्टभिश्चैकेन विव्याध सारथिम् ।
शुंभस्तदातिवेगाद्वै बाणेनैकेन मूषकम् ॥१८॥
विव्याध मस्तके चूंचूं कृत्वा ह्याखुरपासरत् ।
गणेशस्तं परित्यज्य पदातिर्गणनायकः ॥१९॥
शक्त्या विव्याध शुंभं च पृथ्व्यामपातयत् तदा ।
अथ मूर्छां विहायैव कालनेमिर्निशुंभकः ॥२०॥
उभौ गणेशं हन्तुं वै समाजग्मतुरुल्बणौ ।
गृहीत्वा पातयामासतुश्च विव्यधतुः शरैः ॥२१॥
तं पीडितमवालोक्य वीरभद्रोऽभ्यधावत ।
जग्राह द्वौ कुक्षयोश्च मर्दयामास वै मुहुः ॥२२॥
प्रक्षिप्तौ पृथ्व्यां तौ द्वौ मृतप्रायौ महासुरौ ।
कूष्माण्डा भैरवास्तावत् प्रेता भूताः पिशाचकाः ॥२३॥

विनायकाश्च वेताला वीराः पक्षाश्च राक्षसाः ।
योगिन्यः कृत्यका डाकिन्यश्च सैन्यानि संययुः ॥२४॥
ततः किलकिलाशब्दाः सिंहनादाः सघर्घराः ।
डमरूजप्रणादाश्चाऽकम्पयन् पृथिवीं तदा ॥२५॥
भक्षयन्ति दानवाँश्च मारयन्ति त्रिशूलकैः ।
छेदयन्ति गलाँस्तेषां मर्दयन्ति महासुरान् ॥२६॥
जघ्नुर्दैत्यान्दानवाँश्च शिखरैः पर्वतोपमैः ।
हस्तिभिर्वाजिभिश्चैव रथैः शस्त्रीकृतैस्तदा ॥२७॥
दानवैश्चापि दैत्यैश्च शस्त्रीकृतैर्जडाऽजडैः ।
पद्भ्यां पद्भ्यां प्रगृह्यैव ताडयन्ति स्म ताँश्च तैः ॥२८॥
एवं भूतादिसेनाभिः कृतं वै कदनं महत् ।
ये योद्धारोऽभवन्दैत्यादयस्ते शस्त्रतां गताः ॥२९॥
तैरेव शस्त्रतां प्राप्तैर्नष्टाः स्वसैन्यपुंगवाः ।
यत्र भूता राक्षसाश्च वेतालाश्च विनायकाः ॥३०॥
योद्धारस्तत्र किंकिं न संभाव्यते घटाऽघटम् ।
जलंधरस्य तत्सैन्यं छिन्नं भिन्नं विनाशितम् ॥३१॥
मर्दितं नाशितं चापि चूर्णितं शकलीकृतम् ।
नाऽवशिष्टो यदा तत्र दृश्यतेऽसुरदानवः ॥३२॥
तदाऽतिखेदमापन्नश्चाश्रूणि व्यासृंजन्मुहुः ।
जलंधरो महावीरः शुक्रनाशातिशोकवान् ॥३३॥
उज्जीवकस्य नाशेन सर्वं नष्टं ममाद्य वै ।
मयापि चात्र मर्तव्यं कृत्वा युद्धपराक्रमम् ॥३४॥
इति निश्चित्य सहसा कृत्यां जग्राह पादयोः ।
विदारणाय तावत्साऽमुञ्चच्छुक्रं स्वमूत्रगम् ॥३५॥
रथे निक्षिप्य स तत्र विशश्राम क्षणं यदा ।
तावच्छुक्रः समवाप संज्ञां ततोऽथ विद्यया ॥३६॥
संजीविन्या पुनर्दैत्यानुत्थापयन् जगर्ज च ।
तावद्वै वीरभद्रस्तं शुक्राचार्यं जलंधरम् ॥३७॥
रथं सर्वं समानीय गह्वरं प्रविवेश ह ।
शुक्राचार्यं तु कृत्याभ्यो दत्वा नीत्वा जलंधरम् ॥३८॥
आनीनाय हरस्याग्रे वीरभद्रो जगर्ज ह ।
तावज्जलंधरो रूपाण्यनेकानि विधाय तु ॥३९॥
मूलरूपेण तत्स्थानादपासरन्मृतेर्भिया ।
भूतप्रेतपिशाचैश्च कूष्माण्डैर्गणनायकैः ॥४०॥
छिन्ना भिन्ना हता दैत्या ये तु शुक्रेण जीविताः ।
प्रविध्वस्तां ततः सेनां दृष्ट्वा जलंधरस्तदा ॥४१॥
रथेनाऽतिपताकेन गणानभिययौ पुनः ।
मेघवद्बाणवृष्टिं स मुमोच शिवसैन्यके ॥४२॥
जलंधरशरमेघैश्छन्नं व्योमाऽभवत्तदा ।
शैलादिः पञ्चभिर्विद्धो गणेशः पञ्चसायकैः ॥४३॥
वीरभद्रश्च विंशत्या कार्तिकेयस्तु सप्तभिः ।
विद्धस्तेन तु दैत्येन कार्तिकेयोऽपि सत्वरम् ॥४४॥
शक्त्या विव्याध तं वीरं पातयामास भूतले ।
जलंधरस्ततः क्षणात् समुत्थाय रुषा ज्वलन् ॥४५॥
गदया ताडयामास कार्तिकेयमपोथयत् ।
वीरभद्रस्तदा शक्त्या पोथयामास वार्धिजम् ॥४६॥
जलंधरः समुत्थाय पुप्लुवे परिघायुधः ।
अभिधावन्द्रुतं गत्वा वीरभद्रं जघान सः ॥४७॥
वीरभद्रः पपातोर्व्यां जलंधरो जगर्ज ह ।
कोलाहलो महानासीद् भूतानां रुद्रसन्निधौ ॥४८॥
श्रुत्वा रौद्रो महारुद्रोऽभ्यगात् संग्राममाहसन् ।
दैत्या हि भीषणं रुद्रं दृष्ट्वा सर्वे विदुद्रुवुः ॥४९॥
जलंधरस्तदा दैत्यो मृत्यर्थं कृतनिश्चयः ।
अभ्यधावत् स चण्डीशं मुञ्चन् बाणान् सहस्रशः ॥५०॥
ये तु शुक्रेण पुनरुज्जीविता दैत्यपुंगवाः ।
हताऽवशेषास्ते चान्येऽभ्यधावन् शंकरं प्रति ॥५१॥
शुंभनिशुंभघस्मरकालनेमिबलाहकाः ।
प्रचण्डखड्गरोमाणौ रोषात्संदष्टदच्छदाः ॥५२॥
बाणैः संछोदयामासू रुद्रं रुद्रगणाँश्च ते ।
बाणान्धकारसंछन्नमभवद्व्योम सर्वतः ॥५३॥
हरस्तज्जालमाच्छिद्य बाणैरावव्रते नभः ।
खड्गरोमशिरः कायादच्छिनच्छंकरस्तदा ॥५४॥
बलाहकं मारयित्वा घस्मरं चाप्यमारयत् ।
महावीरं प्रचण्डं च चकर्त त्रिशिखेन सः ॥५५॥
एवं वै बहवस्तत्र हताः पुनर्न चोत्थिताः ।
जलंधरं महाशक्तिं प्राहिणोच्छंकरः स्वयम् ॥५६॥
स रूपान्तरमास्थाय व्यलीयताऽम्बरे क्षणम् ।
शक्तिः सा निष्फला पृथ्व्यामन्यान्दैत्यान् व्यपोथयत् ॥५७॥
तदा शेषा महादैत्या भयात् प्रदुद्रुवुः रणात् ।
जलंधरस्तु तान्वीक्ष्य प्रोवाच धिग्वदन् पुनः ॥५८॥
किं युष्माभिर्मातृदुग्धपानकृद्भिः पलायितैः ।
पृष्ठतश्च हतैः किं वै स्वर्गो मोक्षो न वाऽऽप्यते ॥५९॥
रणमृत्युः प्रशूराणां स्वर्गदो मोक्षदोऽपि च ।
आभिमुख्येऽस्तु निधनं शस्त्रैरमृतदायकैः ॥६०॥
मा वैमुख्ये मृत्युरस्तु यो ददेन्नारकीं गतिम् ।
सूर्यस्य मण्डलं भित्त्वा यायाद् रणी परं पदम् ॥६१॥

परिव्राट् स महायोगी यो रणे सम्मुखे हतः ।
अनिवार्यस्य वै मृत्योर्भयं कार्यं न वै बुधैः ॥६२॥
उत्पत्त्या सह देहस्य मृत्युर्लग्नोऽस्ति वै ध्रुवः ।
तन्मृत्योर्भयमुत्सृत्य युध्यध्वं समरेऽसुराः ॥६३॥
इत्युक्त्वा अपि दैत्यास्ते भीता वै शंकरात्तदा ।
नाऽऽययूरणसंग्रामे चुक्रोधाति जलंधरः ॥६४॥
प्रोवाच शंकरं यत्ते बलं तद् दर्शयात्र माम् ।
इत्युक्त्वा बाणसप्तत्या जघान जनकं हरम् ॥६५॥
तानप्राप्तान् महादेवो चिच्छेद निशितैः शरैः ।
अथाऽभ्यधावज्जलधृग्गदां चिक्षेप शंकरे ॥६६॥
शिवः शक्त्या तु तां द्वेधा ह्यकरोद् व्योममार्गगाम् ।
ततो दैत्यो हरं मुष्ट्या हन्तुमभ्युद्ययौ तदा ॥६७॥
शंकरेण त्रिशूलेन योजनं स विपोथितः ।
अथ जलंधरो मत्वा रुद्रं बहुबलाश्रयम् ॥६८॥
मायां ससर्ज गन्धर्वाऽप्सरसां रुद्रमोहिनीम् ।
आविर्भूय च गन्धर्वा जगुः श्रुतिमनोहरम् ॥६९॥
अप्सरसो ननृतुश्च मिष्टस्वरप्रगीतिभिः ।
तालवेणुमृदंगाँश्च वादयन्ति स्म चापराः ॥७०॥
तत्र शंभोस्तथा तस्य गणानां मोहमास ह ।
युद्धं विस्मृत्य शुश्रुवुस्तल्लीनाः शंभुशांकराः ॥७१॥
दैत्यो लीनान् वीक्ष्य शुंभादीनवस्थाप्य तद्रणे ।
कामव्याप्तो जगामाशु यत्र गौरी गृहेऽभवत् ॥७२॥
दशहस्तश्च पञ्चास्यस्त्रिनेत्रश्च जटाधरः ।
रुद्राक्षवासुकिशूलचर्माऽम्बरादिभूषितः ॥७३॥
आसुर्या मायया रुद्रो भूत्वा गृहान्तरं ययौ ।
आयान्तं रुद्रमालोक्य पार्वती भववल्लभा ॥७४॥
सुरतेच्छुं च तं ज्ञात्वा गृहे पर्यंकगाऽभवत् ।
सूर्यचन्द्राग्निकनकविद्युद्वत् सूज्ज्वलां सतीम् ॥७५॥
यावद् ददर्श तावत्स वीर्यं स्रावितवान् जडः ।
पार्वतीं तादृशं वीक्ष्य विचारयति चान्तरे ॥७६॥
नायं वै स्पृष्टवान् मां तु न वा पर्यंकमागतः ।
न मां ददर्श नग्नां वा कथं वीर्यममुञ्चत ॥७७॥
तस्मान्नायं महादेवः किन्त्वन्यो दानवो भवेत् ।
स्तन्यबिन्दुलवो जातः किं वाऽयं शांकरो भवेत् ॥७८॥
इति विचार्य सहसा भीतेवाऽदृश्यतां गता ।
तामदृष्ट्वा नष्टवीर्योऽगाद् योद्धुं शंभुना सह ॥७९॥
पार्वत्यपि महाविष्णुं सस्मार मनसा मुहुः ।
कृष्णस्तत्र समायातः पार्वत्युवाच केशवम् ॥८०॥

विष्णो ! जलंधरो रुद्रो भूत्वाऽऽयातोऽत्र मद्गृहे ।
कामातुरो वञ्चयितुं तत् किं न विदितं तव ॥८१॥
विष्णुः प्राह विदितं मे कुर्यामाज्ञापयाऽत्र तत् ।
पार्वती प्राह लक्ष्मीशं तादृशाय तु तादृशम् ॥८२॥
तेनैव दर्शितं कृत्यं कुरु तस्मिन् तथैव हि ।
वृन्दासतीत्वधर्मं त्वं विनाशय मदाज्ञया ॥८३॥
अन्यथा स महादैत्यो मरिष्यति न तद्बलात् ।
पातिव्रत्यं महान्धर्मः रक्षाक्रुन्मोक्षदस्तथा ॥८४॥
गोलोके सा तवैवासीत् तद्भोगे त्वं न दोषभाग् ।
सर्वे जीवास्तव पत्न्यः किमत्र त्वत्कृते प्रभो ॥८५॥
इति लक्ष्मि ! स्वयं विष्णुः श्रुत्वा हरं निवेद्य च ।
जलंधरविनाशार्थं छलं कर्तुं ययौ प्रभुः ॥८६॥
यत्र जालन्धरे द्वीपे पुरे वृन्दा प्रतिष्ठति ।
पतिं प्रतीक्षते युद्धे जयिनं दर्शनातुरा ॥८७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने जलंधरवृन्दाख्याने सेनापतीनां युद्धे मृत्युः, शुक्राचार्यकृत-जीवनं, शुक्राचार्यस्य कृत्यायोनौ निक्षेपः, ततो दैत्यानां नाशः, द्वन्द्वात्मकं जलंधरविरभद्रयुद्धं, जलंधरशंकरयुद्धं, गान्धर्वीमायामुत्पाद्य जलंधरो रुद्ररूपेण पार्वतीं छलयितुं जगाम, विष्णुर्वृन्दां छलयितुं जगा-मेत्यादिनिरूपणनामाऽष्टाविंशत्यधिकत्रिशत-तमोऽध्यायः ॥३२८॥

**श्रीलक्ष्मीरुवाच—**

विष्णो नारायण कृष्ण विष्णुना किं कृतं ततः ।
वृन्दायाश्छलनार्थाय कथं जालन्धरो मृतः ॥ १ ॥

**श्रीनारायण उवाच—**

जालंधरबलं लक्ष्मि ! वृन्दास्वामिव्रतेऽभवत् ।
वृन्दायाः पातिव्रत्यस्य भंगाय विष्णुराचरत् ॥ २ ॥
विष्णुस्तत्र गतो रात्रौ समुद्यानकृताश्रयः ।
वृन्दां स दर्शयामास स्वप्नं वैधव्यसूचकम् ॥ ३ ॥
जालंधरशिरः पुंसा कर्तितं शंकरेण वै ।
गृध्रेणाऽऽकृष्टनयनं छिन्नकर्णाग्रनासिकम् ॥ ४ ॥
प्रयान्तं महिषारूढं तैलाभ्यक्तं दिगम्बरम् ।
कृष्णपुष्पाभूषणाढ्यं क्रव्यादगणसेवितम् ॥ ५ ॥

मुक्तकेशी आलास्या कृष्णवर्णाऽरुणाम्बरा ।
काली चखाद कण्ठाऽधो मुण्डं गतं तु दक्षिणाम् ॥ ६ ॥
स्वपुरं सागरे मग्नं सहसैवाऽऽत्मना सह ।
दैत्यक्षयगुणोपेतं वृन्दा स्वप्नं ददर्श ह ॥ ७ ॥
ततः प्रबुद्धा वृन्दा विप्रेभ्यः स्वप्नं न्यवेदयत् ।
श्रुत्वा तु ब्राह्मणाः प्राहुरत्युग्रं स्वप्नमेव तत् ॥ ८ ॥
अचिन्त्यफलदं तद्वै सर्वाऽनिष्टकरं महत् ।
देहि दानं द्विजातिभ्यो ह्यचिन्त्यभयनाशकम् ॥ ९ ॥
धेनूर्वासांसि रत्नानि गजाँश्चाऽऽभरणानि च ।
तया दानानि दत्तानि ह्यनिष्टशान्तिदानि वै ॥१०॥
अथापि दक्षिणांगानां स्फुरणान्यभवँस्तदा ।
ददर्शोदितमादित्यं सच्छिद्रं निष्प्रभं तथा ॥११॥
तदप्यनिष्टं विज्ञाय शोकसागरमज्जिता ।
कुत्रचिन्नाप सा शर्म भवनाट्टालभूमिषु ॥१२॥
विष्णुना माययाऽऽकृष्टा जगामोद्यानमातुरा ।
सखीद्वययुता तत्र न प्राप कुत्रचित्सुखम् ॥१३॥
वनाद्वनान्तरं भ्रममाणा ददर्श भीषणौ ।
राक्षसौ सिंहवदनौ प्रेरितौ विष्णुना निजौ ॥१४॥
सेवकौ मायया कृतौ दृष्ट्वा साऽतीव विह्वला ।
पलायनपरा रक्षाकर्तारं प्रति धावति ॥१५॥
यावत् तत्र वने दृष्टो मुनिर्विष्णुकृतस्तदा ।
रक्षकं तं तु सा मत्वाऽऽसाद्य तच्छरणं तदा ॥१६॥
तत्कण्ठं बाहुभ्यां धृत्वा रक्ष रक्षेत्युवाच तम् ।
मुनिना स्वबलेनापि हुंकारेण च तावुभौ ॥१७॥
विद्रावितौ राक्षसौ च रक्षिता तद्भयात् सती ।
अथ वृन्दा स्वस्थचित्ता नत्वा वचनमब्रवीत् ॥१८॥
आर्तिनिवारक साधो रक्षिता खलजाद्भयात् ।
जानासि चेद् वद विप्र जलन्धरः पतिर्मम ॥१९॥
युद्धाय वै गतो रुद्रं प्रति तस्याऽधुनाऽस्ति का ।
दशा स्थितिस्तथा स्वास्थ्यं जयो वाऽन्यद् वदात्र मे ॥२०॥
मुनिः प्राह भरद्वाजात्मजोऽहं प्रब्रवीमि ते ।
महानिद्रा दशा पुनरनुत्थाना स्थितिस्तव ॥२१॥
पत्युः स्वर्गगतं स्वास्थ्यं जयः परत्र वै गतः ।
इत्याकर्ण्य महाघोरं रुरोद चातिविह्वला ॥२२॥
तावत् कपीशावायातौ वृन्दाया अग्रतः स्थितौ ।
तस्यैव कं कबन्धं च गृहीत्वा करयोरुभौ ॥२३॥
एतद् दृष्ट्वा पुनर्वृन्दा रुरोदाऽतीव सुस्वना ।
जलंधरं मृतं दृष्ट्वा ह्याक्रन्दत् कुररीव सा ॥२४॥

अहो भग्नं मम दैवं सर्वं नष्टं धनं मम ।
याऽहं वैधव्यमापन्ना मांगल्यं वै गतं मम ॥२५॥
शंभुना नैव योद्धव्यं गमने प्रार्थितं मया ।
तथापि वीरभावत्वात् त्वया नाथ मतं न मे ॥२६॥
मयाऽद्यापि च मर्तव्यं तव देहेन वीरक ।
इति कृत्वा यदा वृन्दा दग्धुमिच्छति तच्छवम् ॥२७॥
स्वोत्पादिताऽनलेनैव तावत्स मुनिपुंगवः ।
धैर्यं प्रदाय कृपया तामाह जीवयामि तम् ॥२८॥
इत्युक्त्वा स मुनिर्विष्णुर्जीवयित्वा तु तत्पतिम् ।
मायाशवं सजीवं वै स्वात्मकं तं जलंधरम् ॥२९॥
रचयित्वा कारयित्वा दर्शयित्वा ततः स हि ।
महोत्सवं वने तत्र चकार जीवकारणात् ॥३०॥
वृन्दाऽपि निजभर्तारं जीवितं प्राप्य तत्क्षणम् ।
जहौ शोकं समालिंग्य प्रचुचुम्ब तदाननम् ॥३१॥
रेमे तत्रैव कामेन शय्यायां वै पुनः पुनः ।
मायाजालंधरो विष्णुरवर्णयद् रणांगणम् ॥३२॥
प्रिये रुद्रेण रौद्रेण च्छिन्नं चक्रेण मे शिरः ।
तव दूतेन तच्छिन्नमानीतं तव सन्निधौ ॥३३॥
मुनिनाऽनेन मन्त्रेण जीवितं ते सतीत्वतः ।
गृहाण देवि ताम्बूलं सुरते रम कौशलम् ॥३४॥
इत्युक्त्वा च महाविष्णुः रेमे मुहुर्मुहुस्तया ।
वृन्दांगस्वेदतो भूम्यां प्रादुर्भूतातिपावनी ॥३५॥
वृन्दा सा तुलसी प्रोक्ता वृन्दावनं च तत्स्थलम् ।
जालंधरस्य च पीठं राज्यं जालंधरात्मकम् ॥३६॥
एवं तत्र प्रसिद्धं वै समभूत् प्राक् समुद्रजे ।
अत्र विष्णुर्वृन्दया वै रेमेऽतिसुरतक्रियाम् ॥३७॥
सतीपतिव्रताधर्मभंगेन स्वामिनस्ततः ।
जलंधरस्य तेजश्च बलं च क्षीणतां यथा ॥३८॥
यथा प्रयाति रमते तथा तथा तु तत्र वै ।
जलंधरो भवत्येव क्षीणः प्रतिक्षणं प्रिये ॥३९॥
युद्धं पञ्चदिनान्येव ततोऽप्यभूद् भयंकरम् ।
विष्णुश्चोद्यानभवने भुंक्ते वृन्दां पुनः पुनः ॥४०॥
गरुडं गुप्तरूपेण संप्रेषयत्यहर्निशम् ।
जलंधरो मृतो न वा विज्ञातुं केशवो हरिः ॥४१॥
पञ्चमे तु दिने कृत्वा सुरतं शयने यदा ।
निद्रां गताऽभवद् वृन्दा गरुडस्तावदाययौ ॥४२॥
गृहान्तरे गतो विष्णुश्चतुर्भुजोऽभवद् यतः ।
गरुडः सर्ववृत्तान्तं विष्णवे च न्यवेदयत् ॥४३॥

नाऽद्ययावन्मृतो दैत्यो मुमुर्षुरस्ति मा चिरम् ।
अद्य श्वो वा परश्वो वा मरिष्यति न संशयः ॥४४॥
इत्याद्युक्त्वा गरुडश्च यावद् याति बहिर्गृहात् ।
तावत्तु वृन्दया दृष्टः शीघ्रं सोत्थाय शंकया ॥४५॥
पश्यत्यन्तर्गृहे तावद् दृष्टो विष्णुश्चतुर्भुजः ।
कोऽयं कोऽयं पुमानन्यो मद्गृहान्तः समागतः ॥४६॥
इत्याक्रुश्य स्वपतिं सा यावन्मार्गयति गृहे ।
तावद् विष्णुस्तदा जालंधरो भूत्वा समागतः ॥४७॥
वद वृन्दे कथं कोऽत्र क्वाऽस्तीत्युक्त्वापि केशवः ।
अजानन्निव संजातो न कश्चिन्मिलितस्तदा ॥४८॥
वृन्दा शंकान्विता जाता पुनरेवं दिनान्तरे ।
मृषा सुप्ता सुरतान्ते किमित्यवगमाय सा ॥४९॥
तावत्तत्र समायातो गरुडस्तं च माधवः ।
भूत्वा चतुर्भुजः प्राप्तो गृहान्तरं तु तावता ॥५०॥
तावत्तया ह्ययं विष्णुरिति दृष्टस्तु निश्चितः ।
सा निर्भर्त्स्य रुषा युक्ता विष्णुं वचनमब्रवीत् ॥५१॥
धिगस्तु ते परदाराभिमर्शिन् कपटाकृते ।
धर्मपुत्रो हरिर्भूत्वा ह्यधर्मं कृतवान् स्वयम् ॥५२॥
फलं भुंक्ष्व ददाम्यत्र शापं ते त्वं तथा भव ।
यौ त्वया मायया चात्र दर्शितौ राक्षसौ मम ॥५३॥
तावेव तव भार्यां च हरिष्यतो हि राक्षसौ ।
त्वं चापि भार्यादुःखार्तो वने कपिसहायवान् ॥५४॥
भ्रमाऽनेन च सर्पेण सह यस्तेऽत्र सेवकः ।
इति शप्तस्तया विष्णुर्जगामाऽदृश्यतां क्षणात् ॥५५॥
वृन्दा प्राह सखीं पश्य जिह्मं तद्विष्णुना कृतम् ।
पातिव्रत्यं गतं मे च कान्तः सन्देहतां गतः ॥५६॥
इत्युक्त्वा स्नानमकरोत् पार्श्वसरोवराम्बुना ।
तीरे पद्मासनं कृत्वा कृत्वा निर्विषयं मनः ॥५७॥
शुष्ककाष्ठचयं कृत्वा तत्र वृन्दा स्वयं तदा ।
चिन्तयाना विष्णुशाठ्यं प्राविशद्धव्यवाहनम् ॥५८॥
प्रजज्वाल तदा वृन्दा भस्मरूपाऽभवत् क्षणात् ।
तच्च भस्म तत्र जातं श्यामलं तुलसीवनम् ॥५९॥
वृन्दास्वेदस्तु संजातं हरितं तुलसीवनम् ।
तुलस्युद्वाहविधिना हरिं प्राप पतिं पुनः ॥६०॥
विष्णुं सा ध्यायमाना वै लीनेति विष्णुतन्मया ।
विष्णोस्तु वाञ्छया विष्णुं पुनः प्राप्ता तु तुलसी ॥६१॥
वृक्षरूपापि सा देवी विष्णुना स्वीकृता सदा ।
गोलोके या स्वकीयाऽऽसीत् चत्र स्वर्णाऽप्सरःसुता ॥६२॥
कालनेमिगृहे पुत्री जाता विष्णुप्रिया तु सा ।
राधासापत्नदोषेण जलंधरप्रियाऽभवत् ॥६३॥
पुनर्विष्णुं समालिङ्ग्य विष्णुप्रिया ह्यजायत ।
वृन्दा तेजस्तदा तत्र विष्णुशक्तौ व्यलीयत ॥६४॥
वृन्दा तुलसी सा वृक्षरूपा पृथ्व्यां ह्यजायत ।
अन्ते वै यादृशी वृत्तिर्गतिश्चापि च तादृशी ॥६५॥
इति ते कथितं लक्ष्मि ! वृन्दाधर्मप्रतारणम् ।
जलंधरविनाशाय विष्णुनाऽऽचरितं तदा ॥६६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने जलंधरवृन्दाख्याने वृन्दाया विष्णुप्रदर्शिताऽशुभस्वप्नम्, सूर्योदयादावपशकुनानि, उद्याने कृत्रिमराक्षसाभ्यां भीताया वृन्दाया साधुरूपेण विष्णुना रक्षणम् , कृत्रिमजालंधररूपस्य मृतस्य कृत्रिममुनिरूपेण समुज्जीवनम्, कृत्रिमजालंधरभूतेन विष्णुना वृन्दायां रतिकरणम् , वृन्दास्वेदाद् वृन्दावृक्षः, ततो ज्ञात्वा वृन्दायाश्चिताप्रवेशेन भस्मनः तुलसीरूपता, विष्णोः राक्षसाभ्यां हृतस्त्रीनिमित्तं दुःखित्वशापश्चेत्यादि-निरूपणनामैकोनत्रिंशदधिकत्रिशत-तमोऽध्यायः ॥३२९॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! ततो दूतो गत्वा शीघ्रं जलंधरम् ।
उवाच वृन्दाज्वलनं श्रुत्वा रुरोद वार्धिजः ॥ १ ॥
येन यत् क्रियते कर्म तथा तेनैव भुज्यते ।
मया तु वञ्चिता गौरी हरिणा वञ्चिता वधूः ॥ २ ॥
स्वस्रुपतिं गृहे नैव स्थापयेत्सर्वथा जनः ।
धनदारादिकं सर्वं स गृह्णाति शनैः शनैः ॥ ३ ॥
गृहे स्थितस्य जामातुर्विश्वसेन्नैव बुद्धिमान् ।
नूनं तस्मै प्रदत्वा च कन्यकां विसृजेद् बुधः ॥ ४ ॥
मायामाश्रित्य मे पत्नी विष्णुना वञ्चिता ध्रुवम् ।
किं प्रयामि हरिं जेतुमथवा हरमुल्बणम् ॥ ५ ॥
यदि यामि हरिं जेतुं हरः पृष्ठे हनिष्यति ।
उपस्थितं परित्यज्याऽन्याऽनुगो वै विनश्यति ॥ ६ ॥
उभौ मे सुबलौ शत्रू जयः सन्दिग्धतां गतः ।
अर्धः पराजितश्चाऽहं या पत्नी भस्मतां गता ॥ ७ ॥
तस्मात् पशुपतिं जित्वा पश्चाद् विष्णुं प्रयामि वै ।
शम्भुं जित्वा भविष्यामि लोके सर्वेश्वरेश्वरः ॥ ८ ॥
अथवा शिवनाराचैर्मृतो यास्यामि तत्पदम् ।
इति विचार्य तत्रैव ययौ योद्धुं पिनाकिना ॥ ९ ॥

रणं जालंधरोऽपश्यत् कबन्धचयभीषणम् ।
शवरुधिरमांसौघमज्जमेदोऽस्थिदुर्गमम् ॥१०॥
रणे विलोकयामास वृषस्थं पार्वतीपतिम् ।
बाणाँस्तीक्ष्णानतिस्थूलाँल्लोहस्तंभाँस्तथा बहून् ॥११॥
मुमोच युधि दुर्धर्षो वर्षन्मेघ इवागमे ।
ततो रुद्रेण रौद्रैश्च शरौघैस्ताडितो रुषा ॥१२॥
रुद्रबाणैस्तदा तस्य कवचं भुवि पातितम् ।
शरीरं कीलितं बाणैः किंशुकवर्णतां गतः ॥१३॥
रुधिरं बहु सुस्राव जालंधरशरीरतः ।
देवास्तु सबला जाता दानवास्तु चकम्पिरे ॥१४॥
हरस्तीक्ष्णशरेणाशु विव्याध हृदि सिन्धुजम् ।
पपात शरभिन्नांगो मूर्छितः सिन्धुजोऽभवत् ॥१५॥
तावद् रुद्रेण नाराचैर्हता जालंधरी चमूः ।
जलंधरस्तु मनसा शुक्रं सस्मार चात्यति ॥१६॥
स तु कृत्यावशे चाद्रिगह्वरे परतन्त्रकैः ।
आगन्तुं नाशकत्तत्र रणो यत्र प्रवर्तते ॥१७॥
जलंधरः शनैर्मूर्छां परित्यज्योत्थितोऽभवत् ।
शीघ्रं मायामयीं गौरीं विदधे तादृशीं शुभाम् ॥१८॥
रथोपरि गतां बद्धां साऽऽक्रन्दां पार्वतीं शिवः ।
निशुंभशुंभदैत्यैश्च वध्यमानां ददर्श ह ॥१९॥
गौरीं तथाविधां दृष्ट्वा शिवोऽस्त्युद्विग्नमानसः ।
शिथिलांगो विषण्णात्मा ह्यवाङ्मुखस्तदाऽभवत् ॥२०॥
ततो जलंधरो वेगात् त्रिभिर्विव्याध सायकैः ।
आपुंखमग्नैस्तं रुद्रं शिरस्युरसि चोदरे ॥२१॥
ततः परमसंक्रुद्धो रुद्रो रौद्रवपुर्धरः ।
प्रलयानलवद् घोरो बभूव शंकरस्तदा ॥२२॥
तावच्छुंभो रथात्तां तु व्योम्नि मायिकपार्वतीम् ।
नीत्वा मुमोच शूलाग्रे शूलोपरि पपात सा ॥२३॥
रुदती शंकरस्याऽग्रे शूलविद्धा ममार सा ।
मायागौरीं मृतां दृष्ट्वा शोकमोहप्लुतो हरः ॥२४॥
शशाप शुंभप्रमुखान् गौरी युष्मान् हनिष्यति ।
चण्डी भूत्वा च तान् सर्वान् जघान समरांगणे ॥२५॥
ब्रह्मा तत्र समागत्योवाच श्रीशंकरं तदा ।
जालंधरेण रचिता मायेयं पार्वती हर ॥२६॥
सत्या तु पार्वती मया विष्णुना चापि रक्षिता ।
कमलस्याऽन्तरे कोशे तिष्ठति सूक्ष्मतां गता ॥२७॥
युध्यस्व वैरिनिवहं जहि मायां तु पार्वतीम् ।
श्रुत्वेति ब्रह्मणो वाक्यं महाविज्ञो महेश्वरः ॥२८॥
ज्ञात्वा तां दानवीं मायां मुमोच महतीं शिलाम् ।
बभञ्ज कपटां मूर्तिं चूर्णां चकार तत्क्षणम् ॥२९॥
अथ मायापरित्यक्तं शर्वमालोक्य सिन्धुजः ।
अन्यदाविश्वकाराऽऽशु भृशं मायामहाबलम् ॥३०॥
जालंधरोऽयुतभुजो बभूवाश्मद्रुमायुधः ।
रुरोध समरे शंभुं क्रुद्धोऽस्त्रशस्त्रवान् मुहुः ॥३१॥
उवाच बलवद्वाक्यं तिरस्कुर्वन् हरं तदा ।
पश्य शंकर कीदृङ्मे बलं जानासि नैव किम् ॥३२॥
को महेश्वर मद्बाणैरभेद्यो भुवनत्रये ।
बालभावेन विष्णुस्तु विष्णुर्गृहेऽभिरक्षितः ॥३३॥
तपसा च स्वयं ब्रह्मा तोषितो वरदानदः ।
इन्द्राग्नियमवित्तेशा वायुवारीश्वरादयः ॥३४॥
मदधीनीकृताः सर्वे वाहान्याहृतवानहम् ।
पर्वता धर्षिताः सर्वे निरुद्धा लीलयाऽऽपगाः ॥३५॥
दिवौकसो वै विजिताः सुबद्धं वडवामुखम् ।
ऐरावतादयः क्षिप्ताः क्षिप्तश्चेन्द्रो रथाऽन्वितः ॥३६॥
गरुडोऽपि मया बद्धो देव्यो नीता गृहं मम ।
मां न जानासि रुद्र त्वं त्रैलोक्यजयकारिणम् ॥३७॥
इति श्रुत्वा विजहास महादेवः पुनः पुनः ।
जलंधरो जघानाशु हसन्तं विशिखैः शिवम् ॥३८॥
ततः शूलेन निहतो रुद्रेणोरसि दानवः ।
दानवस्य मुखात्तत्र निःससार ज्वरः परः ॥३९॥
सिंहमुखो नराकारो जम्भोऽभ्यधावदीश्वरम् ।
ईशो हुंकारमकरोत् तत्र शरभ आबभौ ॥४०॥
शरभेण हतः सिंहो दानवो वृषभं तदा ।
बलात्पुच्छे गृहीत्वा च भ्रामयामास भूतले ॥४१॥
ततस्त्रिशूलमत्युग्रं मुमोच गिरिजापतिः ।
हस्तेनादाय दैत्यस्तं समधावद्धरं प्रति ॥४२॥
ततोऽयुतभुजो दैत्यो बबन्ध समरे शिवम् ।
शिवः स्वस्य कृपाणेन चिच्छेद करकाननम् ॥४३॥
छिन्नहस्तोऽपि युयुधे तदा तुष्टो महेश्वरः ।
उवाच वरदानार्थं दैत्यो वव्रे हरात्तदा ॥४४॥
शीघ्रं प्रयच्छ मे सिद्धिं मह्यं देह्यात्मनः पदम् ।
तथास्त्विति हरः प्राह जग्राहानलपूरितम् ॥४५॥
चक्रं सुदर्शनं सूर्यकोटितुल्यपराक्रमम् ।
जलंधरविनाशाय चिक्षेप भगवान् हरः ॥४६॥
जहार तच्छिरो वेगान्महदायतलोचनम् ।
द्विधा पपात तद्देहो ह्यंजनाद्रिरिवाचलः ॥४७॥

तस्य कण्ठात् समुद्भूता दैत्याः शतसहस्रशः ।
ते हतास्तेन चक्रेण जालंधरसमा युधि ॥४८॥
जालंधरकबन्धं तन्ननर्त रुधिरारुणम् ।
मेदसा सिन्धुपुत्रस्य पूरिता सकला मही ॥४९॥
तस्य रौद्रेण रक्तेन सम्पूर्णमभवज्जगत् ।
शोणितं यत्र शुष्कं तज्जातं वै शोणितं पुरम् ॥५०॥
अथ मांसचयान् ब्राह्मी माहेश्वरी च वैष्णवी ।
वाराही चैव माहेन्द्री कौमारी चेति याश्च याः ॥५१॥
योगिन्यस्ताः सर्वदिक्षु नीत्वाऽकुर्वन् विनाशितान् ।
तस्य देहाद्बहिर्यातं तेजो लिल्ये हरे तदा ॥५२॥
योगिनीनां गणा जालंधरस्याऽदन्ति मांसकम् ।
पिबन्त्यसृक् तेनाद्यापि नोत्तिष्ठति रणे हतः ॥५३॥
जलंधरं हतं दृष्ट्वा सुराः प्रसन्नतां गताः ।
अब्रुवन् साधुवादाँश्च देवसिद्धमुनीश्वराः ॥५४॥
पुष्पवृष्टिं प्रकुर्वाणाः शिवकीर्तिं जगुः शुभाम् ।
देवश्च ननृतुः पर्योऽप्सरोभिश्चाभिपूजिताः ॥५५॥
प्रसेदुश्च दिशः सर्वा विबन्धनाः सुरादयः ।
सूर्यचन्द्रजलेशाद्या निर्मुक्तास्तस्य बन्धनात् ॥५६॥
विष्णुना च हरेणापि ब्रह्मणाऽधिकृताः पुनः ।
तेषां रत्नानि तेभ्यश्च प्रदत्तानि सुरेश्वरैः ॥५७॥
कृत्याभिः शुक्र उत्सृष्टो ययौ स्थानं स्वकं पुनः ।
देवराज्यमभूद् दैत्यनाशोर्ध्वं च प्रतिस्थलम् ॥५८॥
बुभुजुर्यज्ञभागांश्च देवा लोकेशतां गताः ।
देव्यश्चान्ये सुराश्चापि स्वस्वस्थानं सुखं स्थिताः ॥५९॥
द्रोणाचलं समुद्राश्च बहिरानीय जीवनीम् ।
ओषधिं प्राप्य देवानां गुरुर्बृहस्पतिस्तदा ॥६०॥
यत्र वै प्रमथाः शंभुगणा नष्टा युधि स्थले ।
तत्र प्रयोजयामासाऽस्थिमांसशवप्रभृतौ ॥६१॥
सर्वे रुद्रगणा युद्धे हतास्ते जीविताः पुनः ।
निरवशेषतः सर्वे कैलासं प्रययुः सुखम् ॥६२॥
पर्वतोऽपि यथाऽऽसीत्प्राक् तत्स्थले लोकहेतवे ।
स्थापितो विष्णुवाहेन काले योग्यं प्रजायते ॥६३॥
सर्वोऽपि भुंक्ते स्वं कर्म लक्ष्मि ! तद् विद्ध्यसंशयम् ।
यावद् देहोऽस्ति कर्माणि सुखदुःखादि वर्तते ॥६४॥
इतिहासमिमं श्रुत्वा न दुःखैः परिभूयते ।
क्लेशा दूरे भवन्त्यस्य जाता अपि पुनः पुनः ॥६५॥
यादृशो यस्य संयोगो बन्धनं चापि तादृशम् ।
वृन्दायाः कृतयोगेन विष्णोश्चापि सुबन्धनम् ॥६६॥

लोकरीत्याऽभवत् सर्वं शृणु लक्ष्मि ! ततः पुनः ।
वृन्दया मोहितो विष्णुर्वृन्दायाः प्राप्तये पुनः ॥६७॥
वृन्दामृतिस्थलं नैवाऽत्यजद्देवादिबोधितः ।
वृन्दापि तं ध्यायमाना सती जाता ह्यतः खलु ॥६८॥
विष्णुं वाञ्छति तत्रैव पुनर्वृन्दावने पुनः ।
सूक्ष्मरूपेण विष्णोर्वै शरीरात्तु बहिर्बहिः ॥६९॥
प्राकट्यं याति विजने पुनर्विष्णौ विलीयते ।
विष्णोः शक्तिस्त्रिविधा या गौरी लक्ष्मीः रमा तथा ॥७०॥
दृश्याऽदृश्यस्वरूपिण्यो वर्तन्ते या हरौ सदा ।
ताभिर्दृष्टो हरिस्तत्र वृन्दायां चाति मोहितः ॥७१॥
वृन्दा चापि पतिध्वंसे पत्यन्तरं समिच्छति ।
विष्णुनांगीकृता चेयं विष्णुमादातुमिच्छति ॥७२॥
निर्जने सा समूर्ता वै भूत्वा विष्णुं प्रसेवते ।
विष्णुं प्राह त्वया यस्मादंगीकृताऽस्मि सर्वथा ॥७३॥
तस्माद् गृहाण हस्तं मे विवाहविधिना प्रभो ।
पूर्वं गोलोकधामस्था पश्चाज्जलंधरप्रिया ॥७४॥
पुनस्त्वया कृता नैजा तस्माद् वह निजां तु माम् ।
विष्णुः प्राह भव केदारस्य पुत्री वहामि ताम् ॥७५॥
तद्वै विलोकितं दृष्टं गौर्या लक्ष्म्या रमाख्यया ।
ततस्ताभिश्च शक्तिभिर्दत्तानि तत्र वै तदा ॥७६॥
बीजानि देवताभ्यश्च क्षिप्तानि तत्स्थले च तैः ।
क्षिप्तेभ्यस्तत्र बीजेभ्यो वृक्षास्त्रयोऽभवन् शुभाः ॥७७॥
धात्री च मालती चैव तुलसी चेति ते त्रयः ।
गौर्यंशा सा स्मृता धात्री लक्ष्म्यंशा मालती स्मृता ॥७८॥
रमा वृन्दा तु तुलसी समभूद् वृक्षरूपिणी ।
ताश्च नार्योऽभवँस्तत्र दिव्यरूपधरा अपि ॥७९॥
सुस्त्रीरूपिवनस्पतीन्दृष्ट्वा विष्णुः प्रहर्षितः ।
विष्णुं दृष्ट्वा च तुलसी वृन्दाऽप्यतिप्रहर्षिता ॥८०॥
एवं परस्परं सा स रागेणैव व्यलोकयत् ।
तं विष्णुं तुलसी धात्री रागेणैव व्यलोकयत् ॥८१॥
त्वया लक्ष्म्या तदा बीजमीर्ष्ययैव समर्पितम् ।
तस्मात्तदुद्भवा नारी विष्णावीर्ष्यायुताऽभवत् ॥८२॥
अतः बर्बरीत्याख्यामवाप चातिगर्हिताम् ।
धात्रीतुलस्यौ तद्रागाद् विष्णुप्रीतिप्रदे सदा ॥८३॥
अभवतां च ते नीत्वा विष्णुर्वैकुण्ठमाप्तवान् ।
तत्रैव ते विवाह्यैव विष्णुर्वृन्दायुतोऽभवत् ॥८४॥
केदारस्य सुता भूत्वा वृन्दा विष्णुमवाप ह ।
वृन्दया ग्रथिता तत्र वने माला मनोहरा ॥८५॥

मन्दारपारिजातानां पुष्पाणां वरवर्णिनी।
देव्यो देवाः समायाता शुभे वृन्दावने स्थले ॥८६॥
मण्डपं कारयित्वा च यज्ञकुण्डं विधाय च।
वह्निं प्रज्वाल्य तत्रैव होमं कृत्वा विधानतः ॥८७॥
देहशुद्धिं तुलस्याश्च कारयित्वा च मण्डनम्।
वस्त्राभरणभूषादि सुगन्धस्नानमंगलम् ॥८८॥
कारयित्वा तु तुलसीं भोजयामास भावतः।
विष्णुं श्रृंगारयित्वा च ब्रह्माद्या देवकोटयः ॥८९॥
यानवाहनयुक्ताश्च देवीभिरनुयायिनः।
सगायकगणयुक्ताः सवादित्रनिनादनाः ॥९०॥
सद्दिव्यवाहनाः सर्वे याता गौर्या गृहं तु ते।
गौरीलक्ष्मीरमाद्याश्च विष्णुं पुपूजुरादरात् ॥९१॥
लोकाचारं विधायैव मण्डपाऽन्तर्न्यवेशयन्।
तत्रानीय नवां वृन्दां कन्यकां युवतीं तु ताः ॥९२॥
होमं प्रकारयित्वैव प्रदक्षिणं विधाप्य च।
अनलं तं नमस्कृत्य बृहस्पतिस्तयोर्द्वयोः ॥९३॥
करे करं प्रदत्त्वैव वरमालां निधाप्य च।
वृन्दादानं कृतवाँश्च तदा गौर्याद्यनुज्ञया ॥९४॥
जयशब्दाश्च देवानां देवीनां गीतमंगलम्।
पुष्पवृष्टिवृद्धिवाचो जातास्तत्रोभयोः कृते ॥९५॥
यौतकानि भोजनानि प्रदत्तानि ततश्च ते।
वृन्दावनाद् ययुः सर्वे स्वस्वदेशं सुरादयः ॥९६॥
स्वर्ग्यं पापहरं पुण्यं शोकमोहविनाशनम्।
आख्यानमेतदनघं श्रुत्वा सज्जनहृत्प्रियम् ॥९७॥
ब्राह्मणो ज्ञानमाप्नोति क्षत्रियो राज्यवान् भवेत्।
वैश्यस्तु सम्पदा युक्तः श्रुत्वा शूद्रः सुखी भवेत् ॥९८॥
हिरण्यतिलवस्त्राद्यैर्धेनुभूमिप्रदानकैः।
सन्तोषयेद् वाचकं तु तस्मिँस्तुष्टे फलं भवेत् ॥९९॥
देवताश्च प्रसीदेयुरर्चिते वाचके गुरौ।
अन्नदानं प्रदायाऽथ ब्राह्मणादीन् प्रपूजयेत् ॥१००॥
जायते विजयी नित्यं पुत्रपौत्रसमृद्धिमान्।
इति व्याजेन ते लक्ष्मि! तुलस्युत्पत्तिकारणम् ॥१०१॥
प्रकथितं च तच्छ्रुत्वा लभते पुण्यमुत्तमम्।
स्वगृहे रोपिता चापि तुलसी पापनाशिनी ॥१०२॥
दर्शनाद् ब्रह्महत्यादि नश्यति नात्र संशयः।
वैशाखे कार्तिके माघे तुलसीं बहु पूजयेत् ॥१०३॥
तुलस्या पूजयेद् विष्णुं सहस्रमञ्जरीस्तथा।
अर्पयेद् विष्णवे प्रातः कोटियज्ञफलं भवेत् ॥१०४॥
यत्र वृन्दा च हरिता तुलसी श्यामलप्रभा।
जाता वृन्दावने तत्र विष्णुश्चातीव मोहितः ॥१०५॥
वासं चकार मोहं च नैव तत्याज केशवः।
तदा तस्याऽऽत्मनस्तिस्रः शक्तयः प्रकटीकृताः ॥१०६॥
महाद्भुतैः स्वतेजोभिर्भासयन्ति दिगम्बरम्।
ताभिर्बीजानि तत्रैव न्यस्तानि स्वांशतस्तदा ॥१०७॥
वृन्दावने तदा धात्री मालती तुलसी तथा।
अभवन् वृक्षरूपिण्यस्ता दृष्ट्वा तत्र केशवः ॥१०८॥
मुमोह तस्मिंस्तुलसी धात्री च रागमापतुः।
धात्री तुलस्यौ तद्रागात् तस्य प्रीतिपदे सदा ॥१०९॥
ततो विष्णुश्च ते नीत्वा वैकुण्ठमगमत् पुनः।
लक्ष्मीश्चेर्ष्याकरी तत्र बर्बरीति वियोजिता ॥११०॥
य इदं हि पठेन्नित्यं पाठयेच्छृणुयात्तथा।
सद्गतिः स्वर्गवासश्च मोक्षस्तस्य तथा भवेत् ॥१११॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने जालंधरवृन्दाख्याने जालंधरेण मायया कपटगौरीनाशदर्शनं, मायया युद्धं, शंकरचक्रद्वारा जालंधरनाशः, वृन्दाया विष्णुतो वरणयाञ्चा, वृन्दायाः केदारराजपुत्रीत्वं, विष्णुना तुलसीविवाहः, वृन्दावने गौरीलक्ष्मीरमांशा धात्रीमालतीवृन्दावृक्षरूपाः, लक्ष्म्या बर्बरीत्वं, चेत्यादिनिरूपणनामा त्रिंशत्यधिकत्रिशततमोऽध्यायः ॥३३०॥

श्रीनारायण उवाच—

शृणु लक्ष्मि! तुलस्यास्तु माहात्म्यं विष्णुसदृशम्।
यच्छ्रुत्वापि भवेन्मुक्तिर्विष्णोः सान्निध्यदायिनीम् ॥ १ ॥
या तु यस्य कृते नित्या सा नान्यस्य भवेद् ध्रुवा।
विष्णोः पत्नी पुनर्विष्णुं प्राप्ता वृन्दा च वृक्षिणी ॥ २ ॥

श्रीलक्ष्मीरुवाच—

ननु वृन्दाऽभवद् यत्र भस्मीभूता तु तत्स्थले।
अदृश्या सा कियत्कालं स्थिता विष्णुमचिन्तयत् ॥ ३ ॥
स्त्रीजातिर्वास्तवी शुद्धा ताश्च सर्वाः पतिव्रताः।
सर्वा जातिश्चैकविधा त्वादौ सृष्टा हि वेधसा ॥ ४ ॥
ताः सर्वाः प्रकृतेरंशाः पवित्राः पण्डिताः श्रियः।
कथं धर्मो विनाशं वै गतः पतिव्रतात्मकः ॥ ५ ॥
विष्णुः पतिर्हि नारीणां स च धर्मः सनातनः।
नरा विष्णोः सदंशाश्च कथं धर्मः क्षयं गतः ॥ ६ ॥

प्राक् सृष्टौ प्रकृतीनां हि पुंसां संसेवने तदा ।
धर्म एव परश्चासीत् कथं स वै क्षयं गतः ॥ ७ ॥

श्रीनारायण उवाच—

शृणु लक्ष्मि ! कथां दिव्यां बहुसंशयनाशिनीम् ।
पूर्वः स्त्रियः सदा शुद्धाः शुद्धान्तःकरणास्तथा ॥ ८ ॥
नार्या नरः सदा सेव्यः सृष्टिवृद्ध्यर्थमेव यत् ।
एष धर्मः पुरा ह्यासीत् सनातनतमस्तदा ॥ ९ ॥
यं कमपि संसेव्य गर्भवत्योऽभवन् यदा ।
तदा नार्या नरमात्रसेवा धर्मः सनातनः ॥१०॥
नासीद्वै कामना तत्र तृष्णा रागमयी तदा ।
केदारकन्याशापेन स हि धर्मः क्षयं गतः ॥११॥
तदा कोपेन धात्रा च स्त्रियो रागान्विताः कृताः ।
तत आरभ्य धर्मः सः स्त्रीणामन्योऽभवत् कृतः ॥१२॥
सरागः कामतृप्त्यर्थं स्त्रीभिर्यो गम्यते नरः ।
तत्र रागो ह्यधर्मोऽभूद् युगभेदेन पद्मजे ॥१३॥
यदि स्त्रिया न रागोऽस्ति पुंसोऽपि नैव रागिता ।
गर्भार्थमेव योगश्चेद् धर्मो बीजप्रदानकम् ॥१४॥
यदि भोगेच्छया योगः स त्वधर्मः प्रकीर्तितः ।
युगभेदेन लोकानां रागतृष्णे बभूवतुः ॥१५॥
तेन कामप्रवृत्तिश्चाधर्मरूपाऽभवद् यतः ।
ततः पतिव्रताधर्मो धर्माभासमयोऽभवत् ॥१६॥
पूर्वधर्मो विनष्टश्च धर्मान्तरमभून्नवम् ।
एतत्सर्वं तु वृन्दाया निमित्तेनाऽप्यभूत्पुरा ॥१७॥
कथयामि समासेन यथाऽभूत्तन्निबोध मे ।
पुरा तु ब्रह्मणः पुत्रो मनुः स्वायंभुवोऽभवत् ॥१८॥
तस्य पत्नी शतरूपाऽभवत् सा तु पतिव्रता ।
प्रियव्रतोत्तानपादौ तयोः पुत्रौ बभूवतुः ॥१९॥
उत्तानपादपुत्रश्चाऽभवद् ध्रुवस्तु वैष्णवः ।
तत्पुत्रो नन्दसावर्णिः केदारश्चेति तत्सुतः ॥२०॥
सप्तद्वीपपतिश्चायं केदारो वैष्णवोऽभवत् ।
तद्रक्षार्थं सदा विष्णोः सुदर्शनमभूद् गृहे ॥२१॥
गवां लक्षं स्वर्णशृंगं वस्त्राणि विविधानि च ।
सुवर्णानां तथा लक्षं नित्यं दाने ददाति सः ॥२२॥
मणिहीरकमुक्तानां दानं करोति नित्यशः ।
लक्षं लक्षं द्विजानां स भोजयामास नित्यशः ॥२३॥
जलभोजनपात्राणि सुवर्णानां ददाति सः ।
यज्ञसूत्रांऽगुलीयकासनानि स्वर्णजानि च ॥२४॥
दाने ददाति राजाऽसौ दीनाऽनाथ द्विजातये ।
लक्षविप्राः सूपकारा द्वे लक्षे परिवेषकाः ॥२५॥
शतलक्षप्रभोक्तारः प्रतिपर्वाऽस्य सन्ति वै ।
घृतकुल्या मधुकुल्या दधिकुल्या मनोहराः ॥२६॥
गुडकुल्या दुग्धकुल्या भवन्त्यस्य दिवानिशम् ।
साधूनां पूजनं नित्यं साध्वीनां पूजनं तथा ॥२७॥
करोति नित्यसत्कारं वृद्धानां पूजनादिकम् ।
गवां सुराणां विप्राणां करोति नित्यपूजनम् ॥२८॥
फलमूलाशनो राजा मदर्पणपरायणः ।
सर्वं मदर्पणं कृत्वा गृह्णाति पद्मजे ! सदा ॥२९॥
मामेव नित्यं जपति स्मरति श्रीयुतं च माम् ।
भजते सर्वदा लक्ष्मीनारायणममुं हिमाम् ॥३०॥
एकदा द्वादशीप्रातः पारणायां नृपगृहे ।
विप्राणां भोजनायैव दशलक्षमुपस्थितम् ॥३१॥
द्रागेव यज्ञहवनं कारयित्वा नृपेण हि ।
भोजिता मिष्टवस्त्वाद्यैरन्नैर्व्यञ्जनपायसैः ॥३२॥
पूरिकाभिर्विविधाभिर्दुग्धाद्ध्यादिभिस्तथा ।
सद्द्विजैस्तृप्तिमापन्नैर्दक्षिणापूर्णमानसैः ॥३३॥
शुभाशिषः प्रदत्तास्ते लक्ष्मीर्वसतु वै गृहे ।
अथ मध्याह्नहोमे तु हवनं बहुधा घृतैः ॥३४॥
तिलैः फलैः पायसान्नैः पुष्पैः पत्रैश्च कारितम् ।
तदा विष्णोर्हि कृपया वृन्दा वृन्दवनस्थिता ॥३५॥
तपसिस्था तु पत्यर्थं विष्णोरर्थं पतिव्रता ।
जलंधरविनाशाद्धि रूपान्तरेण संस्थिता ॥३६॥
नारायणाज्ञया केदारस्य यज्ञमुपस्थिता ।
कमला कलया जाता यज्ञकुण्डसमुद्भवा ॥३७॥
वह्निशुद्धांशुकाधाना रत्नभूषणभूषिता ।
कामुकी दिव्यशोभाढ्या कन्या कमललोचना ॥३८॥
जातमात्रा युवती सा वृन्दाऽऽदेशकरी प्रभोः ।
कन्याऽस्मि ते महाराजेत्युवाच नृपतिं हि सा ॥३९॥
राजा संपूज्य तां पुत्रीं तस्थौ पत्नीं समर्प्य च ।
सापिप्रसूं तु तां राज्ञीं केदारं जनकं जगौ ॥४०॥
तत आरभ्य लक्ष्म्या वै प्रतापेनाऽस्य भूपतेः ।
राजेन्द्राणां पञ्चलक्षं नित्यं केदारसंसदि ॥४१॥
अमूल्यरत्नमाणिक्यं मुक्ताहारं मणीश्वरम् ।
गजरत्नमश्वरत्नं केदाराय करं ददौ ॥४२॥
एवं समृद्धिमयं राज्यं सप्तद्वीपमयं ह्यभूत् ।
कन्या तु विष्णुकामाढ्या तपस्येव मनो दधे ॥४३॥

प्रसूं तातं नमस्कृत्य ययौ वृन्दावनं पुनः।
यमुनान्तिकमेवेयं यत्र प्राग् भस्मतां गता ॥४४॥
तपसा वरयामास मां वरं च वरोत्तमम्।
ब्रह्मा ददौ वरं तस्यै विष्णुं कृष्णं लभिष्यसि ॥४५॥
अथैकदा यमुनायास्तीरे स्वपिति सुन्दरी।
धर्मः परीक्षितुं यातो वृन्दां तां तापसीं ततः ॥४६॥
ददर्श कन्या रहसि युवानं पुरुषं परम्।
यथा षोडशर्षीयं कामेन कनकप्रभम् ॥४७॥
सुगन्धाढ्यं साभरणं रमणीनां मनोहरम्।
कामुकं कोटिकन्दर्पलावण्यं पार्वणाननम् ॥४८॥
पद्मपत्रनिभनेत्रं सस्मितं भावपूरितम्।
पार्श्वतो गायनं कुर्वन् वीणां रम्यां च वादयन् ॥४९॥
ययावितस्ततः सोऽपि भावं हृदि प्रदर्शयन्।
दृष्ट्वा तत्र निषसाद सुन्दरीं मानयन् बहु ॥५०॥
वृन्दाऽपि तं समुत्थायाऽऽतिथ्यं कृतवती तदा।
अपूजयत्फलैर्मूलैः पुष्पपत्रैर्जलादिभिः ॥५१॥
पूजां गृहीत्वा मुदितः सस्नेहां तामुवाच सः।
भवती कस्य कन्याऽसि तपश्चरसि दारुणम् ॥५२॥
किमत्र कारणं कन्ये! किं ते नाम वदात्र मे।
निर्जनेऽत्र वसस्येकाकिनी वाञ्छसि किं शुभे ॥५३॥
वरं वृणीष्व भद्रं ते यत्ते मनसि वर्तते।
वृन्दोवाच तु तं विप्रं केदारनृपकन्यका ॥५४॥
वृन्दा तपः करोम्यत्र चिन्तयामि हरिं पतिम्।
यदि दातुं समर्थोऽसि देहि मे वरमुत्तमम् ॥५५॥
असमर्थोऽसि चेद्विप्र! पूजयाम्यन्यतः सर।
धर्म उवाच तां वृन्दां परमात्मानमीश्वरम् ॥५६॥
का क्षमा तं पतिं कर्तुं विना लक्ष्मीं सतीं श्रियम्।
राधां रमां पार्वतीं च शारदां च प्रभां तथा ॥५७॥
सरस्वतीं माणिकीं च शारदां विरजां च वा।
चतुर्भुजः स वैकुण्ठे गोलोके तु द्विबाहुकः ॥५८॥
अक्षराख्ये परे धाम्नि द्विभुजः स हि वर्तते।
तस्य पत्न्यस्त्वसंख्याताः सन्ति मुक्तान्य एव ताः ॥५९॥
राधालक्ष्म्यादयस्तं तु भजन्तेऽनादियोषितः।
कोटिकन्दर्पवीर्यादिसंपूर्णं कान्तसुन्दरम् ॥६०॥
यन्निमेषो भवेद् वृन्दे! ब्रह्मणः पतनेन वै।
एकोर्ध्वसप्ततिसत्ययुगैस्त्विन्द्रस्य पातनम् ॥६१॥
चतुर्दशेन्द्रावच्छिन्नकालेन ब्रह्मणो दिनम्।
निशाऽपि तावती तस्य शतायुष्टं भवत्यपि ॥६२॥
यावज्जीवनपर्यन्तं सेवन्ते सनकादयः।
कल्पानां कोटिकोटिं च तन्न साध्योऽस्ति यन्महान् ॥६३॥
सहस्रवक्त्रशेषश्च सेवते च जपत्यपि।
दिवानिशं तु तं भक्त्या कल्पकोटिशतं शतम् ॥६४॥
तथापि नैव चाप्नोति दुराराध्यः परात्परः।
ब्रह्मा ब्रह्मस्वरूपस्तं भजेज्जन्मनि जन्मनि ॥६५॥
तेनाऽप्यसाध्यो भगवान्, त्वया कथमवाप्यते।
संहारकर्ता जगतां रुद्रोऽप्यन्तं न गच्छति ॥६६॥
स नाऽऽप्नोति तदा त्वं वै कथमाप्स्यसि बालिके!।
ब्रह्मस्वरूपा परमा मूलप्रकृतिरीश्वरी ॥६७॥
नारायणी विष्णुमाया वैष्णवी सा सनातनी।
सरस्वती च यं स्तोतुमशक्ता परमेश्वरी ॥६८॥
कथमिच्छसि कल्याणि! प्रकृतेः परगं पतिम्।
मां भजस्व महाभागे नृपाणामीश्वरं पतिम् ॥६९॥
भुंक्ष्व सुखानि सर्वाणि मद्गृहे वरवर्णिनि!।
सप्तसागरपारे तु काञ्चनी नगरी मम ॥७०॥
तत्रैवाऽऽगच्छ भद्रं ते रम रामे! मया सह।
एद्यंके मम संभोक्तुं मां युवानं मनः कुरु ॥७१॥
इत्युक्ता सा नृपसुता कोपाद्धर्म्यमुवाच तम्।
धैर्यं कुरु क्षितिस्वामिन्! तपः सत्यं च ते व्रतम् ॥७२॥
अपत्नीसहयोगस्तु त्वदर्थेऽधर्म इत्ययम्।
तेनाऽभद्रं भवेत् तादृक् समूलस्य विनाशकम् ॥७३॥
तपोनाशो भवेन्मेऽत्र तव नाशो भवेत्तथा।
रहस्यं चापदं दृष्ट्वा मां त्वं धर्षितुमिच्छसि ॥७४॥
किन्त्वत्र लोकपालाश्च धर्मो यमो हरिः शशी।
सूर्यः पृथ्वी जलं वह्निर्बुद्धिः साक्षी तथाऽपरे ॥७५॥
सर्वप्राणिषु तिष्ठन्ति क्व गुप्तं क्व रहस्यकम्।
क्षमस्व गच्छ भद्रं ते ह्यवध्यो ब्राह्मणो मतः ॥७६॥
शक्ताऽहं भस्मसात् कर्तुं गच्छ विप्र यथासुखम्।
सर्वान्तरात्मा भगवान् विष्णुः रक्षति मां द्विज! ॥७७॥
अनाथबालवृद्धानां विष्णुः संरक्षकः सदा।
एवमुक्तोऽपि कामेन संभोक्तुं याति यावता ॥७८॥
कोपाच्छशाप सा धर्मं ब्रह्मबन्धो क्षयं व्रज।
क्षयं व्रज दुराचार हे धर्महन् क्षयं व्रज ॥७९॥
तावत् तत्र समायाता ब्रह्मविष्णुमहेश्वराः।
धर्मं दृष्ट्वा प्रशप्तं तं रुरुदुस्त्रिदशेश्वराः ॥८०॥
निश्चेष्टं मलिनं दग्धं सतीकोपाग्निना हतम्।
धर्मं क्षमस्व वृन्दे त्वं जन्ममृत्युजराहरम् ॥८१॥

धर्मं जीवय पितरं रक्ष धर्मं पतिव्रते ! ।
इति विष्णुस्तदोवाच तथा ब्रह्माऽप्युवाच ताम् ॥८२॥
ध्वान्तपूर्णं जगज्जातं विना धर्मेण वृन्दिके ! ।
कम्पितौ चन्द्रसूर्यौ च शेषश्चापि वसुन्धरा ॥८३॥
स्वस्ति तेऽस्तु च भद्रं ते जीवयैनं वृषं शुभे ! ।
धर्मं करोषि तपसां कथं धर्मं विहंसि च ॥८४॥
द्विजरूपधरो धर्मस्त्वां परीक्षितुमागतः ।
ब्रह्मणा प्रेरितश्चायं निर्दोषोपि विहंसितः ॥८५॥
तपसोपार्जितो धर्मो धर्मेण च फलं नृणाम् ।
कथं फलं स्यात् तपसां यदि धर्मः क्षयं गतः ॥८६॥
निष्फलं कर्मिणां कर्म विना धर्मेण धार्मिके ।
धर्मे प्रणष्टे तपसां तवाऽपूर्वे विनंक्ष्यति ॥८७॥
स्वधर्मोपार्जनं कर्तुमागताऽस्यत्र सुन्दरि ! ।
विहंसि धर्ममज्ञात्वा धर्मं जीवय सत्वरम् ॥८८॥
इति श्रुत्वा तदा वृन्दा देवान्प्राह तपस्विनी ।
अहं देवा न जानामि धर्मं ब्राह्मणरूपिणम् ॥८९॥
कुतः क्षयो मया कोपान्मां प्रधर्षितुमिच्छतः ।
जीवयामि ध्रुवं धर्मं मृतं सनातनं पुनः ॥९०॥
किन्तु मृतः पुनर्नैव स एवात्र भविष्यति ।
देशकालादिभेदेन धर्मोऽन्योऽयं भविष्यति ॥९१॥
तपः सत्यं तु चेन्मेऽत्र सत्यं चेद् विष्णुपूजनम् ।
तेन पुण्येन विप्रोऽत्र सद्यो भवतु जीवितः ॥९२॥
मम सत्यव्रतं सत्यं तपः सत्यं च मे यदि ।
तेन पुण्येन विप्रोऽत्र सद्यो भवतु जीवितः ॥९३॥
धर्मपत्नी तदा मूर्तिरुवाच कमलापतिम् ।
यद्यस्मि धर्मपरमा धर्मो भवतु जीवितः ॥९४॥
नारायणपदे नत्वा मूर्तिर्वृन्दा प्रचक्रतुः ।
वन्दनं धर्मजीवार्थे नारायणस्तदाऽऽह च ॥९५॥
मूर्ते ! वृन्दे ! च धर्मोऽयं जीवतु भवतु कृते ।
चतुष्पादोऽथ त्रेतायां त्रिपादो द्वापरे द्विपात् ॥९६॥
कलौ त्वस्तु त्वेकपादस्त्रेधा क्षयार्थशापवान् ।
इत्युक्त्वा स हरिर्धर्ममाह्वयामास शब्दतः ॥९७॥
धर्मस्तु जीवनं प्राप्तो मूर्तिर्वृन्दाऽप्रसीदताम् ।
सर्वैर्देवैः पूजितश्च वृन्दा तत्र प्रशंसिता ॥९८॥
वरदानार्थमाज्ञप्ता ययाचे विष्णुमेव सा ।
विष्णोरर्थं तपस्तप्तं पतिर्विष्णुश्च मे भवेत् ॥९९॥
मां विवाह्य तु वैकुण्ठं नयताद् विष्णुरेव ह ।
तथास्त्विति हरिः प्राह वृन्दा प्रसन्नतां गता ॥१००॥

इत्येवं देवदेवीभिर्विष्णुर्विवाहितोऽभवत् ।
बृन्दाविवाहिता तत्र विष्णुना सह कन्यका ॥१०१॥
वैकुण्ठं च गता विष्णुं प्राप्य सा राजकन्यका ।
अथ वृन्दावनं रम्यं मोक्तुं वृन्दा न चेच्छति ॥१०२॥
विष्णुः प्राह तदा वृन्दां तिष्ठात्र तुलसीमयी ।
विवाहयिष्ये त्वागत्य बहुमानपुरःसरम् ॥१०३॥
एतद् वृन्दावनं रम्यं त्यक्तुमहं न चोत्सहे ।
निमित्तान्तरमासाद्य स्थास्ये त्वत्र त्वया सह ॥१०४॥
विष्णोस्तुलसीवैवाह्यं लोके ख्यातिं गमिष्यति ।
तथा करिष्ये वृन्देऽहं वसाऽत्र तुलसीमयी ॥१०५॥
अथ कालान्तरे राधाछाया त्वं वै भविष्यसि ।
तदा रापाणपुत्रीं त्वां विवहिष्यामि वै पुनः ॥१०६॥
वसुदेवस्य पुत्रोऽहं कृष्णो राधापतिः स्वयम् ।
कृष्णनारायणस्तेऽत्र भविष्यामि पतिः प्रिये ॥१०७॥
विष्णुस्तां तुलसीं कृत्वा नीत्वा वृन्दां सहाऽच्युतः ।
ययौ वैकुण्ठमेवाऽन्ये सुराः स्वं केतनं ययुः ॥१०८॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने जालंधरवृन्दाख्याने वृन्दाया ध्रुवपौत्रकेदारपुत्रीत्वं वृन्दावने तपश्चर्या, धर्मकृतपरीक्षा, धर्मेण धर्षिताम्रियस्वेति धर्मं शशाप, त्रिदेवागमनं, धर्मोज्जीवनम्, धर्मस्य क्षयशीलरूपान्तरता, वृन्दायास्तुलसीरूपेण स्थितिः, वृन्दारूपेण वैकुण्ठगतिश्चेत्यादिनिरूपणनामैकत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३१ ॥

**श्रीनारायण उवाच—**

शृणु लक्ष्मि ! प्रवक्ष्यामि कथां वृन्दासुयोगिनीम् ।
तुलसी भगवत्पत्नी वृन्दावने तु वृक्षिका ॥ १ ॥
जाता यथा तथा कालान्तरे विष्णुविवाहिता ।
यथावृत्तं कथयामि तव वृत्तं निबोध मे ॥ २ ॥
गोलोके मम धाम्न्येवाऽभवद् वृत्तं निबोध मे ।
यस्य श्रवणमात्रेण सर्वपापात् प्रमुच्यते ॥ ३ ॥
लक्ष्मीः सरस्वती गंगा तिस्रो भार्या हरेरपि ।
प्रेम्णा समास्तास्तिष्ठन्ति सततं हरिसन्निधौ ॥ ४ ॥
गंगैकदा सकामा सकटाक्षाऽपश्यदच्युतम् ।
पुनः पुनस्त्वपश्यत्सरस्वत्युद्वेजनाय च ॥ ५ ॥
कृष्णो जहास बहुधा मुधा गंगां निरीक्ष्य वै ।
रेमे स गंगया सार्धं न तु सरस्वतीं हरिः ॥ ६ ॥

रमयामास कामेन व्याप्तां चेच्छावतीमपि ।
लक्ष्मीः क्षमावती नैव मनुते तापमान्तरम् ॥ ७ ॥
सरस्वती चंचला च न सेहे तापमान्तरम् ।
लक्ष्मीस्तां बोधयामास सान्त्वयामास दुःखिनीम् ॥ ८ ॥
तथापि क्रोधमापन्ना वाणी शान्ता बभूव न ।
कम्पिता कोपवेगेन गंगां साऽऽह पतिं च वै ॥ ९ ॥
सर्वासु समताबुद्धिः सद्भर्तुः कामिनीः प्रति ।
असद्भर्तुस्तु विषमा स्वार्थिनश्च खलस्य च ॥१०॥
ज्ञातः स्नेहश्च ते गंगां प्रति लक्ष्मीं प्रति ध्रुवः ।
मयि न्यूनो दृश्यते वै रमणे सहवासने ॥११॥
निष्फलं जीवनं तस्या या पत्युः प्रेमवञ्चिता ।
श्रुत्वा तु भगवान् कृष्णस्तूष्णीं गृहाद् बहिर्ययौ ॥१२॥
गते नारायणे गंगामुवाच शब्ददेवता ।
रे निर्लज्जे सकामे त्वं हरिं रोधयसि गृहे ॥१३॥
रूपयौवनगर्वाढ्यां ताडयामि फलं लभ ।
किं करिष्यति ते कान्तो मम वै कान्तवल्लभे ! ॥१४॥
इति निर्भर्त्स्य गंगाया जिघृक्षुं केशमुद्यताम् ।
मध्ये गत्वा तदा पद्मा वारयामास वाङ्मयीम् ॥१५॥
क्रुद्धा पद्मां प्रशशाप वृक्षरूपा भविष्यसि ।
गंगां शशाप संक्रुद्धा सरिद्रूपा भविष्यसि ॥१६॥
शापं श्रुत्वा तु ते देव्यौ विज्ञाय विष्णुचेष्टितम् ।
न शेपतुस्तु तां वाणीं गंगा पद्मामुवाच ह ॥१७॥
पद्मे स्वभावतश्चेयं चंचला वाग्विलासिनी ।
वाच्याऽवाच्ये न जानाति शपाम्येनां कथं न वै ॥१८॥
सरिद्रूपा त्वं च वाणी भव वन्ध्या ऋतुं विना ।
अराजस्वल्यमेवाऽस्यै सदा भवत्वकामदम् ॥१९॥
इति शापं तु सा प्राप्ता तदा सरस्वती प्रिये ! ।
एतस्मिन्नन्तरे तत्र भगवानाजगाम ह ॥२०॥
कलहं सान्त्वयित्वा च दुःखितास्ता उवाच सः ।
मदिच्छयैव संजातं शोकं मा कुरुत प्रियाः ॥२१॥
लक्ष्मि ! त्वं कलया याहि शुभं धर्मध्वजगृहम् ।
अयोनिसंभवा कन्या भूत्वा पश्चान्निमिषेण वै ॥२२॥
संभूय तुलसी पश्चाच्छंखचूडस्य कामिनी ।
भूत्वा विवाह विधिना मत्पत्नी संभविष्यसि ॥२३॥
कलया त्वं सरित्पद्मावतीनाम्ना भविष्यसि ।
अथ गंगे ! सरिद्रूपा पापघ्नी देहिनां भव ॥२४॥
सागराणां तु मोक्षार्थे सागरस्य प्रिया भव ।
भव सरस्वति ! ब्रह्मसदने ब्रह्मकामिनी ॥२५॥
सरस्वतीनदीरूपा राजस्वल्यविवर्जिता ।
भव मोक्षकरी नित्यब्रह्मचर्यपरा भव ॥२६॥
अहमन्ते भवतीनां योगक्षेमौ यथायथम् ।
वहिष्यामि न मन्तव्यौ शोकमोहौ मम प्रियाः ! ॥२७॥
तिस्रो भार्यास्त्रयः शालास्त्रयो भृत्याश्च बान्धवाः ।
ध्रुवं शुभविरुद्धाश्च न ह्येते मंगलप्रदाः ॥२८॥
स्त्रीपुंवच्च गृहे येषां गृहिणां स्त्रीवशः पुमान् ।
निष्फलं जन्म वै तेषामशुभं च पदे पदे ॥२९॥
मुखदुष्टा योनिदुष्टा यस्य भार्या कलिप्रिया ।
अरण्ये तेन वस्तव्यं न स्त्रिया वै कदाचन ॥३०॥
वरो व्याघ्राकुले वासो न दुष्टप्रमदागृहे ।
वरा व्याधिविषज्वाला न दुष्टस्त्रीमुखानलः ॥३१॥
पुंसस्तु स्त्रीजितस्येह जीवितं निष्फलं भवेत् ।
बह्वीनां तु सपत्नीनां नैकत्र श्रेयसी स्थितिः ॥३२॥
एकभार्यः सुखी क्वापि न त्वनेकवधूवरः ।
जीवन्मृतोऽशुचिर्दुःखी बहुभार्यापतिः खलु ॥३३॥
गच्छ गंगे ! शिवस्थानं, ब्रह्मस्थानं सरस्वति ! ।
अत्र तिष्ठतु कमला सर्वसहा मम कृते ॥३४॥
सुसाध्या यस्य पत्नी च सुशीला च पतिव्रता ।
इह स्वर्गसुखं तस्य धर्मो मोक्षः परत्र च ॥३५॥
इत्युक्त्वा विररामैव कृष्णस्ता रुरुदुस्तदा ।
ऊचुश्च कम्पिताः साश्रुनेत्रा वियोगदुःखिताः ॥३६॥
तिसृषु नाथ ! यद् योग्यं प्रायश्चित्तं प्रदेहि तत् ।
प्रसादं कुरु त्वस्मभ्यं शापान्तश्च यथा भवेत् ॥३७॥
नदीरूपा वयं गत्वा द्रक्ष्यामस्ते पदं कदा ।
कतिकालं स्थितिस्तत्र प्राप्स्यामस्त्वां कदा पुनः ॥३८॥
लक्ष्म्यहं तुलसीनाम्नी धर्मध्वजसुता सती ।
वृक्षरूपा तथा भूत्वा कदा प्राप्स्यामि ते पदम् ॥३९॥
गंगा सरस्वतीशापाद् गंगाशापात्सरस्वती ।
शापमुक्ते कदा स्यातां कदा वा त्वां लभिष्यतः ॥४०॥
तस्मात् क्षमस्व हे नाथ मा प्रेषय स्थलान्तरम् ।
इत्युक्त्वा कमला कान्तपदं धृत्वा रुरोद ह ॥४१॥
उवाच तां प्रभां कृत्वा वक्षसि करुणाकरः ।
तिस्रोऽपि त्वन्यरूपैस्तु भुवं यान्तु यथावचः ॥४२॥
दिव्यरूपाः सदा त्वत्र तिष्ठन्त्विति कृपा मम ।
यन्निमित्तानि कार्याणि कर्तव्यानि भवन्ति वै ॥४३॥
तानि निर्वर्त्य च ततो व आनिष्येऽत्र वै स्वयम् ।
पद्मावती सरिद्रूपा तुलसीवृक्षरूपिणी ॥४४॥

सरस्वती सरिद्रूपा गच्छन्तु भुवनान्तरम् ।
कलेश्चतुःसहस्रे तु गते वर्षे सरिद्वराः ॥४५॥
युगे युगे भूयो भूयो मद्देहे त्वागमिष्यथ ।
विपत्तिः सम्पदां हेतुर्दुःखं सुखस्य कारणम् ॥४६॥
विना विपत्तेर्महिमा सम्पदां जायते नहि ।
पूर्वं विपत् प्रभोक्तव्या तेन मूल्यं हि सम्पदाम् ॥४७॥
पापिनां पापनाशार्थं मयैताः सरितः कृताः ।
मद्भक्तानां सतां स्नानाद् युष्मत्पापविनाशनम् ॥४८॥
असंख्यतीर्थपूतत्वं मद्भक्तस्पर्शदर्शनात् ।
मद्भक्ताः पृथिवीं सर्वां पावयन्ति पदक्रमैः ॥४९॥
मद्भक्ता यत्र तिष्ठन्ति क्षालयन्ति पदाम्बुजम् ।
तत्स्थानं तु महातीर्थं तारकं पापिनां भवेत् ॥५०॥
स्त्रीघ्नो गोघ्नः कृतघ्नश्च ब्रह्मघ्नो गुरुतल्पगः ।
व्रतघ्नो नास्तिकः पूतो भवेन्मद्भक्तसेवनात् ॥५१॥
विश्वासघ्नो धर्महन्ता मिथ्याकलंकदस्तथा ।
मित्रघ्नो न्यासकर्ता च पूतो मद्भक्तदर्शनात् ॥५२॥
अदीक्षितोऽसंस्कृतश्चाऽशुचिरन्यविनिन्दकः ।
अनिवेदितभोज्यत्र पूतो मद्भक्तसेवनात् ॥५३॥
मातरं पितरं भार्यां भ्रातरं तनयं सुताम् ।
गुरुं कुलं च भगिनीं स्वाश्रितं बान्धवादिकम् ॥५४॥
श्वश्रूं श्वशुरं वृद्धाँश्च पत्नीं पुष्णाति नैव यः ।
स भवेत् पातकी पूतो मद्भक्तस्पर्शदर्शनात् ॥५५॥
देवविप्रादिधनहृत् विक्रेता दुहितुस्तथा ।
रससांकर्यकर्तारः पूता मद्भक्तसेवनात् ॥५६॥
तेषां संगेन सरितः पूता भवन्तु सर्वदा ।
तेषां तु पादरजसा पूता पादोदकान्मही ॥५७॥
पुनन्ति सर्वतीर्थानि सतां स्नानाऽवगाहनात् ।
तेषां सन्दर्शनं स्पर्शं देवा वाञ्छन्ति सर्वथा ॥५८॥
लाभानां परमो लाभो वैष्णवानां समागमः ।
न तथा जलतीर्थानि न तथा पार्थिवाः सुराः ॥५९॥
न वा तैजसयज्ञाद्या न वै प्राणसमाधयः ।
ते पुनन्ति चिरं काले विष्णुभक्ताः क्षणादहो ॥६०॥
गुरोर्वक्त्राद् विष्णुमन्त्रो यस्य कर्णे विशेद् वरः ।
वेदवेदांगशास्त्रज्ञो विष्णुभक्तोऽतिसूत्तमः ॥६१॥
यस्य जन्मनि संजाते नारका मोक्षणं गताः ।
भवन्ति स महान् भक्तो विष्णोः सर्वोत्तमोत्तमः ॥६२॥
तिर्यगादिषु जन्मसंग्रहणेनैव जन्तवः ।
मुक्ता भवन्ति यद्योगाद्विष्णोभक्तो महोत्तमः ॥६३॥
मद्भक्तियुक्तो मत्पूजानियुक्तो मद्गुणान्वितः ।
मद्गुणश्लाघनीयश्च मन्निविष्टश्च मन्मयः ॥६४॥
मद्गुणश्रुतिमात्रेण सानन्दः पुलकाञ्चितः ।
सगद्गदः साश्रुनेत्रः स्वात्मविस्मृतिरेव च ॥६५॥
न वाञ्छति सुखं मुक्तिं सालोक्यादि चतुष्टयम् ।
मत्पादसेवनं ये तु वाञ्छन्त्येव दिवानिशम् ॥६६॥
एतादृशाश्च मे भक्ताः सन्तः साध्व्यो मदर्थिकाः ।
पावयिष्यन्ति सरितो मा शोकं कुरुत प्रियाः ॥६७॥
यान्तु सर्वाश्च तिष्ठन्तु जलवृक्षादिरूपतः ।
सरस्वती तदा दिव्या स्वयं तस्थौ हरेः पदे ॥६८॥
द्वितीयेन स्वरूपेण ब्राह्मी जाता सरस्वती ।
वागधिष्ठातृदेवी सा वेधःप्रियाऽत्र कीर्त्यते ॥६९॥
अथ जलस्वरूपेण ब्रह्मणा नोदिता हि सा ।
सरस्वती नदी जाता तीर्थरूपाऽतिपावनी ॥७०॥
अथ गंगाऽण्डकूचले दिव्यरूपा जलात्मिका ।
ब्रह्मकमण्डलुस्थाना वामनांगुष्ठसंस्पृशा ॥७१॥
भगीरथसमानीता शर्वजटोर्ध्वसंगिनी ।
समाजगाम कलया सरिल्लोकस्य पावनी ॥७२॥
दिव्यरूपा तु युवती स्वयं तस्थौ हरेः पदे ।
पद्मा च कलया पद्मावती जाता शुभाऽऽपगा ॥७३॥
द्वितीयेन स्वरूपेण लक्ष्मीर्धर्मध्वजगृहे ।
पुत्री जाता तुलसीतिनाम्नी कन्यास्वरूपिणी ॥७४॥
दिव्यरूपा तु तत्रैव लक्ष्मीर्वसति नित्यशः ।
इत्येवं कथितं लक्ष्मि ! प्राग्भवं तव चेष्टितम् ॥७५॥
या वृन्दा सा रमा लक्ष्मीर्या लक्ष्मीः सा रमा च सा ।
या रमा सा वृन्दालक्ष्मीर्या लक्ष्मीः सा च वृन्दिका ॥७६॥
वृन्दावने वृक्षरूपाऽभवद् रमैव सैव सा ।
गणेशेनाऽथ संशप्ता शंखचूडप्रियाऽभवत् ॥७७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने तुलसीविवाहाख्याने गोलोके श्रीकृष्णपत्नीनां रतिनिमित्तकपरस्परशापेन द्वेधा भूत्वा गंगासरस्वतीलक्ष्मीनां सरिद्रूपता लक्ष्म्यास्तुलसीरूपतेत्यादिनिरूपणनामा द्वात्रिंशदधिकद्विशततमोऽध्यायः ॥२३२॥

श्रीलक्ष्मीरुवाच—

कथं कदा तुलसी सा शंखचूडप्रियाऽभवत् ।
गणेशेन कुतः शप्ता कदा तद्वद केशव ॥ १ ॥

श्रीनारायण उवाच—

शृणु लक्ष्मि ! हरेराज्ञामादाय पद्मसंभवा ।
लक्ष्मीः पद्मावती जाता नदी तीर्थस्वरूपिणी ॥ २ ॥
एकदा सा सुरूपाऽभूद् यौवनोज्ज्वलभास्वरा ।
कन्या स्वर्णसमा वरारोहा कामेन विह्वला ॥ ३ ॥
तीर्थेऽटमाना तपसा नारायणपरायणा ।
ददर्श गंगातीरे सा गणेशं यौवनान्वितम् ॥ ४ ॥
अतीव सुन्दरं चित्तहरं चन्दनगन्धितम् ।
सद्भूषाभिर्दीपितं च वक्त्रशोभातिहृच्छ्रयम् ॥ ५ ॥
सुरूपपुष्टावयवं निष्कामं कामनावती ।
तुलस्युवाच भो विप्र ध्यायसि कां सुरूपिणीम् ॥ ६ ॥
कथं लम्बमुदरं ते करिवक्त्रं कथं तव ।
कथं वक्त्रं त्वेकदन्तं हरेर्ध्यानं करोषि किम् ॥ ७ ॥
त्यज ध्यानं महापुष्ट सायंकाल उपस्थितः ।
एकाकिना न वस्तव्यं सायंकाले निशामुखे ॥ ८ ॥
इत्युक्त्वा करसंयोगं तस्योदरे चकार सा ।
कामबाणैः प्रदग्धा सा प्रजहास पुनः पुनः ॥ ९ ॥
कपोलयोर्गण्डयोश्च वक्षस्युदरमण्डले ।
ततोऽप्यधःप्रदेशेऽपि पस्पर्श करमुद्रया ॥१०॥
बभूव ध्यानभंगोऽस्य तदा सा तु रतिप्रिया ।
जघान तर्जन्यग्रेण लिंगं च जघनं मुधा ॥११॥
ध्याननाशे गणेशस्याऽभवद् रोषोऽनिवारणः ।
नेत्रे उन्मील्य रमणीं त्वपश्यत् कामनावतीम् ॥१२॥
नवयौवनसम्पूर्णा कामवेगप्रपूरिताम् ।
दीनां नर्मपरां कामदावानलातितापिताम् ॥१३॥
लम्बोदरस्तु तां वीक्ष्याऽविचारयत् क्षणं कृपः ।
आर्तानां दुःखहारित्वं सज्जनानां हि साधुता ॥१४॥
कथं मया तिरस्कार्या कामदावानलार्दिता ।
तिरस्कारे महद् दुःखं फलं चानिष्टमाप्नुयाम् ॥१५॥
ग्रहणेऽपि महादोषः सगर्भात्वं भवेदिति ।
तस्मादेनं विचार्यैव परं विनयपूर्वकम् ॥१६॥
सान्त्वयामि शान्तिवाक्यैः कामवेगप्रपीडिताम् ।
एहि कन्ये तापसि त्वं नारायणपरायणे ! ॥१७॥
तिष्ठ निषीद सुस्थाने विहरात्र सुखेन वै ।
किं तेऽपेक्ष्यं भोजनं वा जलं वाऽन्यद् वदात्र मे ॥१८॥
अहं लम्बोदरो देवः कुरूपोऽस्मि च वृन्दलः ।
जले स्नानं कुरु देवि ! विष्णुं स्मर स्थिरा भव ॥१९॥
धैर्यं धारय भद्रं ते मम स्पर्शो भविष्यति ।
एह्यस्मिन् सरसि स्नानं कुर्वो विहरणं ततः ॥२०॥
तव तापो भवेच्छान्तस्तथा स्नानादिकं कुरु ।
का त्वं वत्से कस्य कन्या लक्ष्मीरूपाऽसि किं शुभे ॥२१॥
पूज्या वन्द्या जगन्माता भासि मे ब्रूहि किं कथम् ।
कृष्णपत्नि ! ध्यानभंगस्तपस्वितपसां क्षयः ॥२२॥
कृष्णः करोतु कल्याणं हन्तुं विघ्नं द्वयोर्हि नौ ।
मा चञ्चलं मनः कार्यं चाञ्चल्यं व्रतभंगकृत् ॥२३॥
ध्यानिनां व्रतिनां रागः कामना व्रतभंगदा ।
खर्जनं चेन्द्रियाणां तु सहनीयं विशेषतः ॥२४॥
संकल्पो मारयितव्यो विशेषेण तपस्विना ।
त्वमसि तापसी सुभ्रु ! व्रती चाहं समाधिमान् ॥२५॥
आवां शक्तो मनो जेतुं निरोद्धुं काममेव च ।
तस्माल्लक्ष्मि ! कृष्णपत्नि ! मा कृष्णं कर्म चाचर ॥२६॥
भव धैर्यवती बाले गणेशोऽहं गणं जय ।
गणेशवचनं श्रुत्वा तमुवाच स्मरार्दिता ॥२७॥
धर्मात्मजस्य कन्याऽहं पत्यर्थं च तपस्विनी ।
तपःफलं स्वामिलब्धिस्त्वं स्वामी भव मे पतिः ॥२८॥
तुलसीवचनं श्रुत्वा तामुवाच हरिं स्मरन् ।
मातर्दारग्रहे नास्ति मदिच्छा यद्धि दुःखकृत् ॥२९॥
दारग्रहो महाजालं बन्धनं कलहगृहम् ।
कामसेवा हरेः प्राप्तौ विरोधिनी न मुक्तिदा ॥३०॥
तपस्यानाशिका मोक्षद्वारे कपाटिका मता ।
गलपाशकरी गर्भकारागृहनिवासदा ॥३१॥
तत्त्वज्ञानविनाशा संशयाधाना जनुप्रदा ।
साहसानां परा माता सर्वमायाकरण्डिका ॥३२॥
दोषाश्रया न कर्तव्या कामस्तुतिर्विनाशिनी ।
निवर्तस्व महामाये ! मार्गयाऽन्यं तु कामुकम् ॥३३॥
कामुकेनैव कामुक्याः संगमोऽर्थप्रदो भवेत् ।
श्रुत्वैवं तुलसी कन्या संतप्ता कामनातुरा ॥३४॥
गणेशं प्राह गृह्णासि भजमानां न वै यतः ।
अभजमाना ते पत्नी भाविनी मम शापतः ॥३५॥
गणेशस्तां तदा प्राहाऽसुरग्रस्ता भविष्यसि ।
पश्चाद् वृक्षमयी भविष्यसि ममापि शापतः ॥३६॥
श्रुत्वा शापं तुलसी सा रुरोद प्राह तां गणः ।
मा रोदीहि मम पूज्ये ! पुष्पसारा भविष्यसि ॥३७॥
पत्रसारा सदा स्निग्धा विष्णौ कृष्णे भविष्यसि ।
भविष्यति त्वया त्वर्च्ये विष्णुर्मुक्तिप्रदः सदा ॥३८॥

नाहं भोक्ष्ये तव पत्रं मञ्जरीं काष्ठमित्यपि ।
कृष्णभोग्या भव सुभ्रु ! कल्याणं ते भविष्यति ॥३९॥
इत्युक्त्वा स गणेशस्तु ययौ बदरिकावनम् ।
तुलस्यपि ययौ दूयमानाऽन्तरा तु पुष्करम् ॥४०॥
तत्र कृत्वा तपः पश्चाच्छंखचूडप्रियाऽभवत् ।
ततः शंकरशूलेन स ममाराऽसुराधिपः ॥४१॥
सा कलांशेन वृक्षत्वं प्राप्ता नारायणप्रिया ।
नारायणेन विधिवद् विवाहिता च कन्यका ॥४२॥
पुनः प्राप्ता कृष्णनारायणं गोलोकवासिनम् ।
इति ते कथिता लक्ष्मि ! तुलस्याः पुनरावृतिः ॥४३॥
हरिणा संगृहीता सा हर्यंगा वै हरेर्वधूः ।
तुलसी सर्वपापानि प्रक्षालयति पद्मजे ॥४४॥
पत्रं पुष्पं फलं मूलं शाखा त्वक् स्कन्धसंज्ञितम् ।
तुलसीसंभवं सर्वं पावनं मृत्तिकादिकम् ॥४५॥
यस्य शवस्य दाहोऽपि तुलसीकाष्ठसंभवः ।
न तस्य पुनरावृत्तिर्मोक्षगस्य कदाचन ॥४६॥
महापापातिपापादिसंभूतोऽपि नरो यदि ।
तुलसीकाष्ठदग्धः स्यान्मृत्युवेगात्प्रमुच्यते ॥४७॥
तुलसीस्पर्शकर्ताऽपि सर्वपापात्प्रमुच्यते ।
यस्य मृतौ हरेर्नाम दाहे च तुलसीसमिध् ॥४८॥
श्राद्धे च भगवद्दानं न तस्य पुनरागतिः ।
यद्दाहे काष्ठनिचये काष्ठमेकमथो भवेत् ॥४९॥
तस्य पापानि नश्यन्ति मुक्तिगो जायते तु सः ।
गंगांभसा सुमिश्राणि वारीणि यान्ति पुण्यताम् ॥५०॥
हरेर्नाम्ना प्रमिश्राणि वाक्यानि यान्ति पुण्यताम् ।
तुलसीकाष्ठमिश्राणि दारूणि यान्ति पुण्यताम् ॥५१॥
तुलसीकाष्ठसंमिश्रा यावत्प्रज्वलिता चिता ।
दह्यन्ते तस्य पापानि कल्पकोटिभवानि च ॥५२॥
तुलसीकाष्ठनिक्षिप्तं शवं दृष्ट्वा यमानुगाः ।
पलायन्ते नरं त्यक्त्वा नयन्ति विष्णुपार्षदाः ॥५३॥
तुलसीकाष्ठसंयुक्तो मुक्तो याति हरेः पदम् ।
सुरवर्गेऽप्सरसो देवा वर्धयन्ति क्षिपन्ति च ॥५४॥
पुष्पाञ्जलिं प्रगन्तारं तुलसीशववासिनम् ।
विष्णुश्चास्याऽतिसंतुष्टो भवते तुलसीजुषः ॥५५॥
तुलसीकाष्ठसंभूतोऽनलो यत्र प्रवर्तते ।
सा भूमिः पापसंनाशकारिणी तीर्थरूपिणी ॥५६॥
यत्र होमो भवेद् वृन्दाकाष्ठैः क्वचित्तु पर्वणि ।
तद्धोस्तस्य भवेत् काष्ठे काष्ठेऽग्निष्टोमजं फलम् ॥५७॥

तुलस्या धूपदानेन कृष्णस्य मन्दिरे लभेत् ।
शतयज्ञसमं पुण्यं फलं गोशतदानजम् ॥५८॥
तुलसीकाष्ठदाहेन रन्धितं केशवाय यः ।
नैवेद्यं ददते तस्य मेरुतुल्यं फलं भवेत् ॥५९॥
तुलसीपावकेनापि दीपं ददाति विष्णवे ।
तस्य दीपसहस्राणां पुण्यमाज्यकृतं भवेत् ॥६०॥
तुलसीकाष्ठसंभूतद्रवचन्दनदायिने ।
विष्णुपदं ददातीशो विष्णुः स्वसाम्यतां ददेत् ॥६१॥
तुलसीघृष्टजातेन चन्दनेनाऽर्चयेद्धरिम् ।
तस्य कृपा हरेर्बोध्या भुक्तिमुक्तिप्रदायिनी ॥६२॥
तुलसीचन्दनैर्लिप्तः कुरुते हरिपूजनम् ।
हरेर्धाम्नि तुलस्या सम्मानितो रमते तु सः ॥६३॥
पितॄणां पिण्डदानेऽपि तुलसीदलमेव यः ।
समर्पयति तस्याऽत्र पुण्यं भोगसुखप्रदम् ॥६४॥
पितॄणां चापि सन्तृप्तिर्दले पत्रे शताब्दिकी ।
तुलसीमृत्तिकास्नानं तीर्थस्नानं हि तत्स्मृतम् ॥६५॥
नवीनमञ्जरीपत्रैः पूजां विष्णोः करोति यः ।
सर्वपुष्पैः कृता तेन पूजा मोक्षप्रदायिनी ॥६६॥
गृहे तुलसी संरक्ष्या पाल्या पोष्या विशेषतः ।
दर्शनात्स्पर्शनात्तस्या ब्रह्महत्यादि लीयते ॥६७॥
यत्र ग्रामे गृहे वाप्यामुद्याने तुलसी भवेत् ।
तत्र सर्वत्र वसति कृष्णनारायणो हरिः ॥६८॥
तुलसी विद्यते यत्र गृहे तत्र न रुग्णता ।
भयं दुःखं न दारिद्र्यं न वियोगः कुटुम्बिनाम् ॥६९॥
देवक्षेत्रे विशेषण तुलस्यारोपणे कृते ।
सर्ववृक्षारोपणानां पुण्यं पोषणजं लभेत् ॥७०॥
मन्दिरे तुलसीदानं लक्ष्मीदानाधिकं भवेत् ।
तुलस्यारोपणेनात्र सुखं चान्ते हरेः पदम् ॥७१॥
उत्पातान् भयदान् भाग्यहानिदान् दुर्निमित्तकान् ।
दूरीकरोति तुलसी ह्यकस्मात्समुपस्थितान् ॥७२॥
तुलसीपत्रगन्धादिमिश्रितो याति मारुतः ।
यत्र यत्र दशदिक्षु पवित्रयति देहिनः ॥७३॥
यत्र वृन्दामूलयोगस्तत्र ब्रह्मेशविष्णवः ।
यत्र वृन्दापत्रयोगस्तत्र देवादिमण्डलम् ॥७४॥
यत्र तन्मञ्जरीयोगस्तत्रर्षिमुनयः स्मृताः ।
यत्र वारि तुलस्याश्च तत्र पितृगणः स्मृतः ॥७५॥
यत्र काण्डस्तुलस्या वै तत्र वैकुण्ठमेव ह ।
यत्र मणिस्तुलस्या वै तत्र लक्ष्मीयुतो हरिः ॥७६॥

यत्र वै तुलसीछाया पितृतृप्तिस्तु शाश्वती ।
तुलसीनिकरो यत्र तत्र दत्तं तु शाश्वतम् ॥७७॥
तस्या मूले सदा ब्रह्मा विष्णुः शाखासु तिष्ठति ।
मंजर्यादौ शंभुरस्ति तुलसी त्रिसुरात्मिका ॥७८॥
शिवालये तुलस्या रोपणं कार्यं जनैः सदा ।
तस्या यावन्ति बीजानि जायन्ते प्रतिवत्सरम् ॥७९॥
प्रतिबीजं युगमानं स्वर्गे तेषामखण्डितम् ।
एकादश्यां पूर्णिमायाममायां व्रतवासरे ॥८०॥
संक्रान्तौ पुण्यकाले मन्दिरे तुलसीमर्पयेत् ।
रोपयेद् बहुभावेन वर्धयेज्जलसेचनैः ॥८१॥
पूजयेद् दीपदानाद्यैर्दरिद्रो धनवान् भवेत् ।
शालग्रामशिला यत्र यत्र वा तुलसी भवेत् ॥८२॥
तत्र स्नानं जपो दानं वाराणस्याः शताधिकम् ।
कुरुक्षेत्रात्प्रयागाच्च नैमिषेयाच्छताधिकम् ॥८३॥
तुलसी तुलसी कृत्वा निधनं याति यो जनः ।
तुलसी तं महालक्ष्मि! नयति हरिमन्दिरम् ॥८४॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने तुलसीविवाहाख्याने लक्ष्मीरूपपद्मावतीनद्या यौवनवेगेन युवतीरूपधराया गणेशं प्रतियानं, कामेन पत्यर्थ-मभ्यर्थनम्, गणेशकृतो वृक्षरूपिणी भव दैत्यपत्नी भवेत्यादिशापः, तुलसीमाहात्म्यं चेत्यादिनिरूपण-नामा त्रयस्त्रिंशदधिकत्रिशततमोऽध्यायः ॥३३३॥

**श्रीलक्ष्मीरुवाच—**

नारायणप्रिया कुत्र सम्भूता तुलसी ततः ।
कस्य वा सा कुले जाता कस्य दैत्यस्य सा वधूः ॥ १॥
केन वा तपसा प्राप पुनर्नारायणं पतिम् ।
विस्तरेण हरे! ब्रूहि मत्कथां विस्मृतां मया ॥ २ ॥

**श्रीनारायण उवाच—**

वच्मि मनोः समारभ्य शृणु लक्ष्मि! कथां तव ।
विस्मृतां प्रश्नरूपेण स्मारितां कथयामि ते ॥ ३ ॥
विष्णोरंशो मनुर्दक्षसावर्णिः संबभूव ह ।
तत्सुतो धर्मसावर्णिवैष्णवश्चाथ तत्सुतः ॥ ४ ॥
विष्णुसावर्णिरित्युक्तस्तस्यापि वैष्णवः सुतः ।
देवसावर्णिरेतस्य राजसावर्णिरंगजः ॥ ५ ॥
तस्य पुत्रोवृषध्वजो बभूव शिवभक्तिमान् ।
पुत्रादपि परः स्नेहो वृषध्वजे शिवस्य यत् ॥ ६ ॥

राजा नारायणं लक्ष्मीं मेने नापि सरस्वतीम् ।
यज्ञं दिवाकरं देवान् न मेने मत्तवद् यदा ॥ ७ ॥
भ्रष्टश्रीर्भव भूपेति त्वशपत् तं रविस्तदा ।
राजा शिवस्य शरणं रक्षणार्थं ययौ द्रुतम् ॥ ८ ॥
शंभुस्त्रिशूलमादाय रविं प्रहर्तुमागतः ।
भयात् पलायितः सूर्यो ब्रह्माणं शरणं ययौ ॥ ९ ॥
ब्रह्मा सूर्यं पुरस्कृत्य वैकुण्ठं प्रययौ द्रुतम् ।
नारायणं प्रणेमुस्ते चक्रुः सर्वे निवेदनम् ॥१०॥
नारायणस्तु कृपयाह्यभयं दत्तवाँस्तदा ।
शिवस्त्रिशूलहस्तश्च तेषां पृष्ठं ययौ क्रुधा ॥११॥
नारायणं नमस्कृत्य निषसादाऽर्पितासने ।
शिवं नारायणः प्राह ब्रूह्यागमनकारणम् ॥१२॥
महादेवस्ततः प्राह कृष्णनारायणं हरिम् ।
सूर्यः शशाप मे भक्तं वृषध्वजमसुप्रियम् ॥१३॥
भक्तवात्सल्यशोकेन सूर्यं हन्तुमहं गतः ।
स ब्रह्माणं पुरस्कृत्य त्वां शरण्यं समागतः ॥१४॥
त्वां ये शरणमापन्ना ध्यानेन वचसाऽपि वा ।
निरापदस्ते निःशंका जरामृत्यू जितौ तु तैः ॥१५॥
किन्तु नारायण! सूर्यशापेन श्रीहतस्य वै ।
किं मे भक्तस्य भविता तन्मे ब्रूहि जगत्प्रभो ॥१६॥
नारायणो हरं प्राह वृषध्वजोऽत्र चागतः ।
हंसध्वजस्तु तत्पुत्रो राजापि वृद्धतां गतः ॥१७॥
तत्पुत्रौ वैष्णवौ त्वत्र धर्मध्वजकुशध्वजौ ।
वर्तेते तौ श्रिया भ्रष्टौ तयोस्तु भार्ययोर्हर! ॥१८॥
लक्ष्मीर्द्वेधा मम पत्नी पुत्रीद्वयं भविष्यति ।
सम्पद्युक्तौ च मद्भक्तौ नृपश्रेष्ठौ भविष्यतः ॥१९॥
वैकुण्ठे घटिकार्धे वै भूमौ युगैकविंशतिः ।
व्यतीतो भवते कालस्तस्माच्छंभो न चित्रता ॥२०॥
इत्युक्तास्ते ययुः सर्वे यथास्थानं स्वकं स्वकम् ।
वृषध्वजो निजं राज्यमागत्य निधनं गतः ॥२१॥
हंसध्वजोऽपि कालेन ततो वै निधनं गतः ।
अथोग्रतपसा भूपौ धर्मध्वजकुशध्वजौ ॥२२॥
नारायणं प्रसाद्यैव वरं प्रापतुरीप्सितम् ।
लक्ष्मीर्द्वेधा युवयोर्वै पुत्री भविष्यति ध्रुवम् ॥२३॥
तत्प्रतापेन सम्पन्नौ राज्यश्रेष्ठौ भविष्यथः ।
अथ तौ कारयामासतुश्च लक्ष्म्याः समर्चनम् ॥२४॥
व्रतं चापि प्रसन्नाऽभूल्लक्ष्मीः प्राह वरं च तौ ।
धनवन्तौ पुत्रवन्तौ पृथ्वीशौ श्रिया युतौ ॥२५॥

नारायणस्य कृपया भवतं नृपपूजितौ ।
इत्याशिषा परिप्लुतावबदतां तथास्त्विति ॥२६॥
श्रिया युताविति वाक्यं यथार्थं कुरु पद्मजे ।
इत्याचिन्त्य च लक्ष्मीः सा द्वेधा रूपमथाऽकरोत् ॥२७॥
कुशध्वजगृहे कन्या जाता कालेन श्रीकरी ।
कुशध्वजप्रिया पुत्रीं सुषुवे कमलांशजाम् ॥२८॥
जातमात्रा वेदवती ध्वनिं चकार कन्यका ।
तेन वेदवती नाम्ना ख्यातिमाप तदैव ह ॥२९॥
पितरौ सा नमस्कृत्य ययौ तपसे सद्वनम् ।
पुष्करे तपसा साध्वी शुश्राव व्योमभारतीम् ॥३०॥
जन्मान्तरे तु ते भर्ता भविष्यति हरिः स्वयम् ।
इति श्रुत्वा पुना रुष्टा चकार तु पुनस्तपः ॥३१॥
गन्धमादनमाश्रित्य स्थिता चिरं ततापं च ।
ददर्श पुरतस्तत्र ब्राह्मणं रावणाभिधम् ॥३२॥
सा त्वतिथिं नमस्कृत्य पाद्यं फलं जलादिकम् ।
ददौ तस्मै सोऽपि दुष्टो मनोविकृतिमाप वै ॥३३॥
तां करेण समाकृष्य संभोगं कर्तुमुद्यतः ।
वेदवती कोपदृष्ट्या स्तंभितं तं चकार ह ॥३४॥
शशाप च मदर्थे त्वं विनश्यसि सबान्धवः ।
इत्युक्त्वा सा सती देहं विलीयाऽदृश्यतां गता ॥३५॥
सा तु वेदवती पृथ्व्याः पुत्री जनकनन्दिनी ।
सीतादेवी प्रसंजाता यदर्थे रावणो हतः ॥३६॥
सेयं लक्ष्मीस्त्वमेवाऽऽसीः कल्पान्तरेषु सर्वथा ।
सीतारूपा भवसि त्वमहं रामो भवामि च ॥३७॥
राक्षसानां विनाशाय तथावलतं मयास्ति वै ।
त्वां विना तामसानां तु नान्यद् विनाशकारणम् ॥३८॥
महातपस्विनी लक्ष्मीर्लेभे रामं पतिं हरिम् ।
जातिस्मरा स्म स्मरति विषेहे दुःखमेव सा ॥३९॥
रामः पितुर्वचनेन शतरथस्य काननम् ।
जगाम सीतया साकं लक्ष्मणेनाऽनुजेन वै ॥४०॥
संददर्श तत्र वह्निं रामो ब्राह्मणरूपिणम् ।
वह्निरुवाच भगवान् रावणान्तकरो स्वयम् ॥४१॥
सीताहरणद्वारेण समयः समुपागतः ।
अहमग्निः सुरैः प्रस्थापितोऽस्मि विप्ररूपधृक् ॥४२॥
सीतां मयि तु सन्न्यस्य छायां सीतां गृहाण वै ।
दास्यामि सीतां समये मत्प्रसूं वै परीक्षणे ॥४३॥
रामस्तद्वचनं श्रुत्वा द्रागेव कृतवाँस्तथा ।
लक्ष्मणो नैव बुबुधे गोप्यमन्यस्य का कथा ॥४४॥

एतस्मिन्नन्तरे रामो ददर्श कानकं मृगम् ।
जगाम तद्विनाशाय सीताया आग्रहेण वै ॥४५॥
लक्ष्मणोऽपि ययौ पश्चात् सीतां निनाय रावणः ।
विजयाख्यः पार्षदः स मृधे मृत्वा ययौ पुनः ॥४६॥
प्रेतत्वमथ च जयः सवर्णोऽपि रणान्तरे ।
मृत्वा जगाम वै प्रेतत्वं तृतीयजनेः कृते ॥४७॥
रामत्राणेन लंकायां राक्षसा बहवो हताः ।
विभीषणोऽभवद्भक्तस्तस्मै राज्यं ददौ हरिः ॥४८॥
शुद्ध्यर्थं च ततो रामो वह्नौ परीक्षणं व्यधात् ।
तत्र हुताशनस्तस्मै वास्तवीं जानकीं ददौ ॥४९॥
छायां प्रोवाच भगवान् गच्छ त्वं पुष्करं प्रिये ।
तपस्यां तत्र कृत्वाऽथ स्वर्गलक्ष्मीर्भविष्यसि ॥५०॥
सा तप्त्वाऽयुतवर्षाणि स्वर्गे लक्ष्मीर्बभूव ह ।
सैव लक्ष्मीर्यज्ञकुण्डे द्रौपदी संभविष्यति ॥५१॥
सत्ययुगे वेदवती कुशध्वजसुता तु सा ।
त्रेतायां रामपत्नी सा सीतेति जनकात्मजा ॥५२॥
तच्छाया द्रौपदी देवी द्वापरान्ते तु भाविनी ।
कलौ तु माणिकी देवी नारायणपरायणा ॥५३॥
कृष्णनारायणारोहा भवत्येवं युगे युगे ।
इति तेऽभिहितं चैकरूपं शृणु द्वितीयकम् ॥५४॥
धर्मध्वजस्य पत्नी तु माधवीति च विश्रुता ।
गन्धमादनशिखरे गर्भवती बभूव सा ॥५५॥
कार्तिकीपूर्णिमायां सा सुषाव पद्मिनीं सुताम् ।
पादपद्मयुगे तां तु पद्मरागविराजिताम् ॥५६॥
राजराजेश्वरीं लक्ष्मीं सर्वावयवसुन्दरीम् ।
राजलक्ष्मीलक्ष्मयुक्तां राजलक्ष्म्यधिदेवताम् ॥५७॥
चन्द्राननां पद्मपत्रनेत्रां बिम्बाधरां शुभाम् ।
करपादतलाऽऽरक्तां निम्ननाभिं वलित्रयाम् ॥५८॥
श्वेतचम्पकवर्णाभां तुलसीं नामतः कृताम् ।
तुलना सीदति यत्राऽन्यासां सा तुलसी सुता ॥५९॥
जातमात्रा युवती सा जातिस्मेराऽतिसुन्दरी ।
मम नारायणः स्वामी भवितेति विनिश्चिता ॥६०॥
कृष्णनारायणप्राप्त्यै जगाम बदरीवनम् ।
तत्र चिरं तया चीर्णं कृष्णदं परमं तपः ॥६१॥
ग्रीष्मे पञ्चतपाः शीते जलस्था सा च कन्यका ।
वृष्टिधारां सहमाना वर्षासु त्वकरोत् तपः ॥६२॥
पूर्वं फलाशना पश्चात्पत्राशना जलाशना ।
वाय्वशना निराहारा चैकपादस्थिताऽभवत् ॥६३॥

ब्रह्मा समाययौ दृष्ट्वा तपश्चोग्रं चिरंतनम् ।
समागतं वरं दातुं तत्र बदरिकाश्रमे ॥६४॥
ब्रह्माणं सा प्रणनाम ब्रह्मा तां समुवाच ह ।
वरं वृणुष्व तुलसि ! यत्ते मनसि वाञ्छितम् ॥६५॥
कृष्णभक्तिं च मुक्तिं वाऽप्यजरामरतामपि ।
शृणु तात ! परे धाम्नि गोलोकेऽहं स्थिता पुरा ॥६६॥
कृष्णपत्नी किंकरी च तदंशा तत्सखी प्रिया ।
रमा वृन्दा तथा लक्ष्मीरहमेवाऽभवं तदा ॥६७॥
रमारूपां तदा वृन्दां गोविन्दासक्तमानसाम् ।
रतिस्थां राधिका क्रोधात् शशाप मां तु सेविकाम् ॥६८॥
तथैव वाणी पद्मां मां शशाप चापि वै पुनः ।
याहि त्वं मानवीं योनिं स्मराम्येतत् पुराभवम् ॥६९॥
ततः पद्मावतीं मां च गणेशः शप्तवान् पुरा ।
वृक्षत्वं याहि चेत्येवं दैत्यपत्नी भवेत्यपि ॥७०॥
शापोत्तरं तु गोलोके कृष्णः प्राह मुदा हसन् ।
ममैव पार्षदो लक्ष्मि ! सुदामा यो मदंशकः ॥७१॥
सोऽपि राधाकृतशापाच्छंखचूडो भविष्यति ।
तस्य पत्नी भाविनी त्वं गणेशोक्तानुसारतः ॥७२॥
ततो मां त्वं तपस्तप्त्वा लभिष्यसि न संशयः ।
अहं नारायणं कान्तं पतिं मम पुरातनम् ॥७३॥
साम्प्रतं लब्धुमिच्छामि वरमेवं प्रदेहि मे ।
जातिस्मरा यथा वेद्मि तत्सर्वं कथितं तु ते ॥७४॥
तस्माद् ब्रह्मन् यथाशापं कुरु योग्यं यथा भवेत् ।
ब्रह्मोवाच तदा लक्ष्मीं सर्वं जानासि सुन्दरी ॥७५॥
जातिस्मरा स्वयं चासि धर्मध्वजस्य पुत्रिका ।
सुदामा शंखचूडोऽसौ जातोऽस्ति भूतलेऽसुरः ॥७६॥
अधुना तस्य पत्नी त्वं भव भाविनि शोभने ।
पश्चान्नारायणं कान्तं कृष्णमेव लभिष्यसि ॥७७॥
तुलसी त्वं वृक्षरूपा वृन्दावने भविष्यसि ।
प्रधाना सर्वपुष्पाणां पावनी संभविष्यसि ॥७८॥
त्वया विना तु सर्वेषां पूजा स्याद् विफला यथा ।
तथा कृष्णः प्राणतोऽपि वल्लभां त्वां विधास्यति ॥७९॥
वृन्दावने वृक्षरूपा वृन्दा वृन्दावनीति वै ।
भविष्यसि तव दलैः पूजयिष्यन्ति केशवम् ॥८०॥
जनास्तथा तेन सार्धं विहरिष्यसि सन्ततम् ।
राधासमा त्वं सुभगा गोविन्दस्य भविष्यसि ॥८१॥
राधिकायाः प्राणतुल्या कृष्णप्राणा भविष्यसि ।
श्रुत्वैतत्तुलसी प्राह शीघ्रं स्यात्तत्तथा कुरु ॥८२॥
ब्रह्मा लक्ष्म्यै तदा प्राह जपार्थं मन्त्रमुत्तमम् ।
राधाकृष्णाय चात्मानं समर्पयामि ओं नमः ॥८३॥
इति षोडशवर्णाढ्यं दत्वा चादृश्यतां ययौ ।
सापि जजाप तं मन्त्रं पुण्ये बदरिकाश्रमे ॥८४॥
स्वल्पकालेन मन्त्रेण तपःसिद्धिरजायत ।
दिव्या प्रसन्नमनसा ददर्श कृष्णमग्रतः ॥८५॥
कृष्ण प्राह तुलसीं ते तपः सिद्धिरजायत ।
अग्रतः पार्षदभार्या भूत्वा मां प्राप्स्यसे प्रिये ! ॥८६॥
इत्युक्त्वाऽदृश्यतां यातः साऽपि तत्याज तत्तपः ।
भुक्त्वा पीत्वा च सन्तुष्टा सुष्वाप शयने शुभे ॥८७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने तुलसीविवाहाख्याने, मनुवंशीयवृषध्वजस्य सूर्यशापः, वैकुण्ठे प्रार्थनया तद्वंशे कुशध्वजगृहे सीताख्या लक्ष्मीरभवत्, धर्मध्वजगृहे तुलस्याख्या लक्ष्मीरभवत् , बदर्यां तुलस्यास्तपस्तत्सिद्धिश्चेत्यादि-निरूपणनामा चतुस्त्रिंशदधिकत्रिशततमोऽध्यायः ॥३३४॥

श्रीलक्ष्मीरुवाच—

ततस्तुलस्याः किं जातं बदर्याख्ये वने प्रभो ! ।
तत्सर्वं वद मे नाथ कृष्णनारायणाऽऽर्तिहन् ! ॥ १ ॥

श्रीनारायण उवाच—

शृणु पश्चाद् यथाजातं प्रवदामि निबोध मे ।
त्वया तु विस्मृतं सर्वं स्मारयामि यथातथम् ॥ २ ॥
शुभे सा शयने सुप्ता स्वप्नं ददर्श वै क्षणम् ।
तुलसी पश्यति स्वप्ने सुदामानं समागतम् ॥ ३ ॥
स एव शंखचूडाख्यः स्वप्ने विलोकितस्तया ।
गृहीतश्च करे धृत्वा करं प्रचूम्बितश्च सः ॥ ४ ॥
अदृश्यतां गतो द्राक्च स तु मोहवशा ततः ।
उन्निद्रा ह्यभवत्तूर्णं क्षणमुद्विग्नतां गता ॥ ५ ॥
क्षणं सा दहनं प्राप्ता क्षणं प्राप्ता प्रमत्तताम् ।
क्षणं सा चेतनां प्राप्ता क्षणं प्राप्ता विषण्णताम् ॥ ६ ॥
उत्तिष्ठति क्षणं तल्पात् प्रयाति निकटं क्षणात् ।
भ्राम्यति क्षणमुद्वेगाद् विशत्येव गृहं क्षणात् ॥ ७ ॥
क्षणमेव समुद्वेगादस्वाप्सीत्पुनरेव सा ।
पुनर्ददर्श निद्रायां सुवेषं पुरुषं तु तम् ॥ ८ ॥

सुन्दरं च युवानं च सस्मितं रसिकेश्वरम् ।
कथयन्तं रविकथां चुम्बयन्तं मुहुर्मुहुः ॥ ९ ॥
तस्यास्तल्पे सुशयानं समाश्लिष्यन्तमादरात् ।
पुनरेव तु गच्छन्तं समुवाच ततः सती ॥१०॥
क्व यासि प्राणवत् स्निग्ध ! तिष्ठेत्येवमुवाच तम् ।
पुनस्तु चेतनां लब्ध्वा विललाप तदर्थिनी ॥११॥
एवं तपोवने तत्र सा स्थितिमाप भाविनीम् ।
एतस्मिन् समये शंखचूडो योगी तु पुष्करे ॥१२॥
जैगीषव्यान्मुनेः सिद्धिं तपसः प्राप्य मन्त्रजाम् ।
ब्रह्मणो वरदानं च लब्ध्वाऽऽज्ञया तु वेधसः ॥१३॥
यत्र सा तुलसी त्वास्ते बदरीं तां समाययौ ।
आगच्छन्तं युवानं च कामदेवसमप्रभम् ॥१४॥
श्वेतचम्पकवर्णाभं सर्वाऽऽभूषणभूषितम् ।
सुरूपं सुदृढांगं च शंखचूडं विलोक्य सा ॥१५॥
सकुण्डलं सतिलकं गलकण्ठीयुतं नवम् ।
सुदामानं विनिश्चित्य शंखचूडममन्यत ॥१६॥
सलज्जा तं त्वीक्षमाणा नम्रमुखी बभूव सा ।
वाससा मुखमाच्छाद्य नवसंगमलज्जिता ॥१७॥
सद्दृष्टिस्तन्मुखाम्भोजे बभूव पुलकान्विता ।
शंखचूडोऽपि तां तत्र सुस्थितां वाससाऽऽवृताम् ॥१८॥
तुलसीयमिति स्मृत्वा ददर्शाऽऽयतलोचनाम् ।
करपादतलाऽऽरक्तां परिवृतां स्वतेजसा ॥१९॥
पीनांगीं कांचनवर्णां प्रोद्भिन्ननवयौवनाम् ।
सिन्दूररेखां दधतीं कबरीं मालतीयुताम् ॥२०॥
कंकणाढ्यप्रकोष्ठां च ललितां सुदतीं सतीम् ।
एवं विलोक्य निश्चित्योवाच तां भावगर्भितम् ॥२१॥
का त्वं कामिनि ! कस्याऽसि कन्यका मुनिमोहिनी ।
मौनं त्यक्त्वोपागतं मां सम्भाषां कुरु चेन्मताम् ॥२२॥
श्रुत्वा नम्रस्मितमुखी सकामं तमुवाच सा ।
धर्मध्वजसुता चाहं तपस्यायां स्थिताऽस्मि च ॥२३॥
यत्र गच्छसि गच्छ त्वं कोऽस्यसमयप्रश्नकृत् ।
न पृच्छति कुले जात एकाकिनीं रहोगताम् ॥२४॥
नारीजने दृष्टमात्रे न योक्तव्यं हृदा क्वचित् ।
आपत्तिस्तत्र जायेत यद्यनिच्छावती भवेत् ॥२५॥
हृदये क्षुरधाराभा जिह्वायां मधुराक्षरा ।
आपातपूर्वं मधुरा पश्चादन्तकवद्ग्रहा ॥२६॥
इन्द्रवल्लीफलतुल्या बहिःसौम्याऽऽन्तरेऽशुभा ।
स्वार्थे स्वाम्यधीनभावा पश्चादन्याश्रया सदा ॥२७॥
बाह्ये छलाद् विरक्तेव स्वान्तर्भोगादिलालसा ।
बाह्ये नेत्यभिवचना सकामाऽन्तर्नवं नवम् ॥२८॥
बाह्ये स्वात्मसती त्वादिविज्ञापनाऽतियत्नतः ।
सुदुःसाहसरूपा च सर्वदोषाश्रया तथा ॥२९॥
तपोमार्गार्गला शश्वन्मुक्तिद्वारकपाटिका ।
हरेर्भक्तौ व्यवधानात्मिका निगडरूपिणी ॥३०॥
इन्द्रजालसमारूपा मिथ्यावादविवादिनी ।
न नरैर्विश्वसितव्या या न विश्वासभूमिका ॥३१॥
इत्युक्त्वा भावगर्भं सा विररामाऽतिभावुकी ।
शंखचूडश्च तां प्राह प्राग्विश्वाससुभूमिकाम् ॥३२॥
इच्छावतीं परिज्ञाय स्वप्नभुक्तां विलोक्य च ।
श्रृणु धात्रा कृतं द्वेधा नारीरूपं जगत्त्रये ॥३३॥
कृत्यास्वरूपं यत् तत्तु वंचकं दुःखकृत् सदा ।
सतीरूपं प्रशस्तं वै न त्वदुक्ताऽगुणाश्रयम् ॥३४॥
लक्ष्मीसरस्वतीदुर्गासावित्रीमाणिकीप्रभाः ।
पार्वतीराधिकाकृष्णारमापद्माजयादिकाः ॥३५॥
एताश्चान्यास्तदंशाश्च मान्याः साध्व्यः पतिव्रताः ।
शतरूपा देवहूतिः स्वधा स्वाहा च कंभरा ॥३६॥
दक्षिणा रोहिणी छाया संज्ञा शची च वारुणी ।
कुबेराणी पवनानी ह्यदितिश्च दितिस्तथा ॥३७॥
लोपामुद्राऽनसूया च मुक्ता तुलसी कैटभी ।
अहल्याऽरुन्धती मेना तारा मन्दोदरी दया ॥३८॥
दमयन्ती वेदवती वृन्दा गंगा यमी मनुः ।
पुष्टिस्तुष्टिः स्मृतिर्मेधा षष्ठी काली वसुन्धरा ॥३९॥
चण्डी मूर्तिः स्वस्तिः श्रद्धा शान्तिः कान्तिश्च तुष्टिका ।
एता नार्यः प्रतियुगं साध्व्यो जाताः सुराश्रिताः ॥४०॥
न पृच्छति कुले जातः कृत्यासमां परस्त्रियम् ।
जातिस्मरां त्वां तुलसीं विदित्वा त्वागतोऽस्म्यहम् ॥४१॥
सुदामाऽहं हरेर्दासः पुराऽद्य दनुवंशजः ।
शंखचूडो जातिस्मरो ब्रह्मण आज्ञयाऽऽगतः ॥४२॥
गान्धर्वेण विवाहेन त्वां ग्रहीष्यामि शोभने ।
तुलसी तत्समाकर्ण्य प्रवक्तुमुपचक्रमे ॥४३॥
विद्याप्रभावबोधाय मया त्वं हि परीक्षितः ।
कृत्वा परीक्षां कान्तस्य वृणोति कामिनी वरम् ॥४४॥
शान्ताय गुणिने चैव यूने च विदुषेऽपि च ।
वैष्णवाया सुता देया दशवाजिफलं भवेत् ॥४५॥
वराय गुणहीनाय वृद्धायाऽज्ञानिने तथा ।
दरिद्राय च मूर्खाय रोगिणे कुत्सिताय च ॥४६॥

अत्यन्तकोपयुक्तस्य चात्यन्तदुर्मुखाय च ।
पंगुलायाऽङ्गहीनाय चान्धाय बधिराय च ॥४७॥
जडाय चैव मूकाय क्लीबतुल्याय पापिने ।
व्यसनिने न वै देया कुंभीपाकगतो भवेत् ॥४८॥
एतस्मिन्नन्तरे ब्रह्मा तत्राऽऽजगाम पद्मजे ! ।
मूर्ध्ना ननाम तुलसी शंखचूडो ननाम च ॥४९॥
ब्रह्मा प्राह च गान्धर्वं विवाहं कुरुतं युवाम् ।
अविरोधसुखं चास्तु युवयोः संगमे सदा ॥५०॥
स्त्रीरत्नं नररत्नं च मिलित्वाऽऽनन्दवद् भवेत् ।
यथा लक्ष्मीश्च लक्ष्मीशे यथा कृष्णे च राधिका ॥५१॥
यथा मयि च सावित्री भवानी च भवे यथा ।
यथा धरा वराहे च यथा मेना हिमालये ॥५२॥
अनसूया यथा चात्रौ दमयन्ती नले यथा ।
रोहिणी च यथा चन्द्रे यथा कामे रतिः सती ॥५३॥
दितिर्यथा कश्यपे च वसिष्ठेऽरुन्धती यथा ।
यथाऽहल्या गौतमे च देवहूतिश्च कर्दमे ॥५४॥
यथा बृहस्पतौ तारा शतरूपा मनौ यथा ।
यथा च दक्षिणा यज्ञे यथा स्वाहा हुताशने ॥५५॥
यथा शची महेन्द्रे च यथा पुष्टिर्गणेश्वरे ।
देवसेना यथा स्कन्दे धर्मे मूर्तिर्यथा सती ॥५६॥
पत्नीव्रते पतिव्रता गोपाले कंभरा यथा ।
वृन्देयं तुलसी त्वं वै शंखचूडे तथा भव ॥५७॥
पारवती प्रभा कृष्णनारायणे तथा भव ।
बहुकालं सुखं भुक्त्वा शंखचूडस्य मोक्षणे ॥५८॥
पश्चात्त्वं तुलसीवृक्षो भविष्यसि न संशयः ।
तदा विवाहविधिना कृष्णो नेष्यति त्वां ततः ॥५९॥
इत्येवमाशिषं दत्वा योजयित्वा च दम्पतिम् ।
गान्धर्वेण विवाहेन ययौ सत्यं तु विश्वसृट् ॥६०॥
स्वर्गे दुन्दुभयो नेदुः पुष्पवृष्टिर्बभूव च ।
रेमे तुलस्याः शयने शंखचूडो हरेः प्रियः ॥६१॥
मूर्छां सम्प्राप तुलसी नवसंगमसंगता ।
चतुःषष्टिकलामानं चतुःषष्टिविधं सुखम् ॥६२॥
अंगप्रत्यंगसंश्लेषपूर्वकं स्त्रीमनोहरम् ।
तत्सर्वं सुखश्रृंगारं चकार रसिकेश्वरः ॥६३॥
सापि दासी तवास्मीति सिषेवे बहुवत्सरान् ।
वनेष्वद्रिष्वापगास्वब्धिष्वम्बरे च रैवते ॥६४॥
मेरौ हैमेऽस्य सेवां सा चक्रे शंखस्तया ययौ ।
चन्द्रभागातटे राज्यमस्थापयत् तपोबलः ॥६५॥
नृपान् कृत्वा वशे चोर्वीं संबुभुजे तया सह ।
दैत्यानां राक्षसानां च दानवानां सहायवान् ॥६६॥
सुरराज्यानि हृतवाँस्तेष्वसुरानयोजयत् ।
हृताधिकारा देवास्तु चरन्ति भिक्षुका यथा ॥६७॥
स्थानं पूजां चामृतं च जहार शंखदानवः ।
निरुद्यमाः सुरा जाताश्चित्रपुत्तलिका इव ॥६८॥
ते तु सर्वे विषण्णाश्च प्रजग्मुर्ब्रह्मणः सभाम् ।
वृत्तान्तं कथयामासुः रुरुदुश्च भृशं बहु ॥६९॥
तदा ब्रह्मा सुरैः सार्धं ययौ शंकरसन्निधौ ।
सर्वं संकथयामास ब्रह्मा तं शंकरं ततः ॥७०॥
ब्रह्मेशदेवताः सर्वे ययुर्वैकुण्ठमुत्सुकाः ।
सभामार्गं प्रविविशुः पार्षदादिसुशोभितम् ॥७१॥
चतुर्भुजान्पार्षदाँश्च द्वारपाननुनीय च ।
श्यामलान् शंखचक्रादिचिह्नितान् पीतवस्त्रकान् ॥७२॥
षोडशद्वारसंस्थाँश्च समतीत्य हरेः पुरः ।
ययुस्ते देवसंघैश्च पार्षदैश्च चतुर्भुजैः ॥७३॥
सेवितं श्रीहरिं नारायणरूपैः सकौस्तुभैः ।
सभा संशोभते दिव्या नारायणनिवासिता ॥७४॥
पूर्णेन्दुमण्डलाकारा श्रेष्ठमणीन्द्रभासिता ।
रत्नहीरादिखचितामुक्तामाणिक्यभूषिता ॥७५॥
रत्नाढ्यदर्पणपार्श्वा विचित्रचित्रचित्रिता ।
पद्मरागकृतपद्मप्रफुल्ला मनोहरा ॥७६॥
स्यमन्तककृतरम्यसोपानशतमण्डिता ।
स्वर्णसूत्रवस्त्रपत्रवेष्टितस्तंभनिर्मिता ॥७७॥
सद्रत्नपूर्णकुंभाद्यैर्मालाजालैर्विराजिता ।
कस्तूरीकुंकुमपद्मजलचन्दनसूक्षिता ॥७८॥
सुगन्धिवासिता विद्याधरीगीतिप्रघोषिता ।
सहस्रयोजनायामा सिद्धर्षिपार्षदान्विता ॥७९॥
तत्र मध्ये विराजन्तमपश्यन् श्रीहरिं च ते ।
हरेः सिंहासनं दिव्यं राजते रत्नकानकम् ॥८०॥
तत्र स्थितं कृष्णनारायणं कुण्डलिनं शुभम् ।
किरीटिनं वनमालाचक्रपद्मादिभूषितम् ॥८१॥
चतुर्भुजं घनश्यामं सर्वाभरणभूषितम् ।
चन्दनार्चितभालं च पश्यन्तं नृत्यगीतिकाम् ॥८२॥
वाणीलक्ष्मीरमाप्रभामाणिकीपार्वतीपतिम् ।
गंगाजयाविजयामंगलाऽमृतादिसेवितम् ॥८३॥
राजाधिराजशोभाढ्यं छत्रचामरराजितम् ।
विशिष्टं सुन्दरं कान्तं दृष्ट्वा प्रणम्य दण्डवत् ॥८४॥

तुष्टुवुः पुलकितांगा भक्त्या गद्गदभावया ।
ब्रह्मा वृत्तान्तमाहाऽथ श्रुत्वा तत्सर्वभाववित् ॥८५॥
प्रहस्योवाच देवान् श्रीकृष्णनारायणः प्रभुः ।
शंखचूडस्य गोपस्य मद्भक्तस्य पुराविदः ॥८६॥
वृत्तान्तं सर्वं जानामि सुदामा मम पार्षदः ।
राधाशापात्प्राप योनिं दानवीं शंखचूडकः ॥८७॥

**श्रीलक्ष्मीरुवाच—**

कथं राधा ददौ तस्मै शापं भक्ताय मे वद ।
तवेच्छया भवन्त्येव भवपुष्टिलयादयः ॥८८॥

**श्रीनारायण उवाच—**

शृणु लक्ष्म्येकदाऽगच्छमहं वै रासमण्डलम् ।
विहाय मानिनीं राधां प्राणाधिकातिहृच्छ्रयाम् ॥८९॥
नीत्वा च विरजां पत्नीं बहुस्नेहानुपातिनीम् ।
राधा मां विरजायुक्तं विज्ञाय किंकरीमुखात् ॥९०॥
सक्रोधा साऽऽययौ तत्र यत्राहं विरजायुतः ।
तत्र रमामि रासे वै विरजायां यदा तदा ॥९१॥
दृष्ट्वा साऽतिप्रचुकोप यथाऽनिष्टं भवेत्तथा ।
विरजां सा तदा प्राह नदीरूपाऽत्र वै भव ॥९२॥
अहं लीनोऽभवंतत्र विरजायां ततस्तु सा ।
विरजां तु नदीरूपां मां च ज्ञात्वा तिरोहितम् ॥९३॥
निववृते ततो रासमण्डलात् स्वालयं ययौ ।
अहं मे मण्डपे तत्र चाऽऽययौ मम मन्दिरे ॥९४॥
सा समागत्य तत्रैव सुदाम्नः सन्निधौ प्रिया ।
भृशं मां भर्त्सयामास सुदामा तां चुकोप ह ॥९५॥
स च तां भर्त्सयामास साऽपि क्रुद्धाऽभवच्च तम् ।
राधा मामाह रे मूढ ! कामलम्पट ! कृष्णकृत् ॥९६॥
यथा नाम तथा कुर्वन् रासेश्वरीं विराय वै ।
लज्जसे न कथं कृष्ण ! स्त्रीहृतात्मन् ! दुरोदर ! ॥९७॥
नहि राज्ञीसमा त्वन्या शुनी भवति काचन ।
कथं शुन्या समं तेऽस्ति मैत्री श्वेव न लज्जसे ॥९८॥
गच्छ गोलोकराज्यात् त्वं विरजाया गृहे वस ।
नाऽत्र तेऽस्ति मम कार्यं छलधर्माऽसि सर्वथा ॥९९॥
उत्तिष्ठाऽस्मादासनाद्वै गच्छ तां विरजां प्रति ।
लिह्यतां सा पुनर्नित्यं माऽऽयाहि मां प्रतिक्वचित् ॥१००॥
इत्युक्तवतीं संक्रुद्धां राधां नोवाच माधवः ।
सुदामा प्राह रे मातः कथमेवं विकत्थसे ॥१०१॥
राज्ञः पूज्यस्य राज्ञ्या वै नाऽवमानं तथोचितम् ।
क्रोधं शमय भद्रं ते माऽवोचः पुनरेव तम् ॥१०२॥
तदा राधातिरुष्टा सा सुदामानं सुभक्तकम् ।
भर्त्सयामास रे मूर्ख ! कृष्णपृष्ठाश्रयाऽधम ! ॥१०३॥
नीचोऽसि किंकरोऽस्येवं कथं वारयसे नु माम् ।
त्वमस्य कुटिलं सर्वं नित्यं शिक्षयसि ध्रुवम् ॥१०४॥
शठ ! एकान्तकामिन्या योगकारक ! लम्पट ! ।
गच्छाऽस्माद्भवनात् तूर्णं पृथ्व्यां वै दानवो भव ॥१०५॥
बह्वीभिः रमते स्वामी वञ्चयित्वा पुनः पुनः ।
त्वं च नेत्रकटाक्षेण लक्ष्मीं पश्यसि कामतः ॥१०६॥
नाऽत्र तेऽस्ति निवासाय योग्यता वञ्चनाकृतः ।
इत्याद्युक्तः सुदामा वै कृष्णहार्दे समाश्रयन् ॥१०७॥
उवाच तां तदा राधां शठे ! कामिनि ! लम्पटे ! ।
सेर्ष्ये ! बिडालिके ! छच्छुन्दरि ! शुनि ! न लज्जसे ॥१०८॥
गृहगोधेऽभिमानान्न गणयस्येव कांचन ।
पतिं सर्वेश्वरं चापि निर्भर्त्सयसि रण्डिके ॥१०९॥
वन्ध्ये ! वन्ध्यफले ! स्वार्थपरे ! भानविवर्जिते ! ।
अवाच्यवादिनि ! सूर्मि ! पूत्तलि ! भषणि ! भ्रमे ! ॥११०॥
काऽसि गोवालिनि ! ताडनार्हेऽयोग्ये ! हरेर्गृहे ।
जाज्वल्यमाने ! विधुरे ! आम्नायवर्जितेऽशुभे ! ॥१११॥
गच्छ गोलोकसीम्नस्त्वं बहिरेव पशुप्रये ! ।
महिषि ! महिषोतुल्ये ! गृहनाशकवर्तने ! ॥११२॥
अधः पत भुवं याहि भवाऽरण्यनिवासिनी ।
शकुन्मेलनजातीया धर्महीनकुलंगमा ॥११३॥
येन नैवं पुनस्त्वं त्वाऽऽचरिष्यसि कदाचन ।
दण्डये ! स्वामितिरस्कर्त्रि ! तिरस्कारपरा भव ॥११४॥
इत्युक्तवन्तं भगवान् सान्त्वयामास केशवः ।
राधां च सान्त्वयामास शान्तिं नाप तथापि सा ॥११५॥
सुदामानं बहिष्कर्तुं चकाराऽऽज्ञां सखीगणम् ।
सख्यश्चक्रुर्बहिः सुदामानं कृष्णगृहात्ततः ॥११६॥
राधापि शापमापन्ना रुरोदातीव विह्वला ।
सुदामा तु तया शप्तो ययौ गोलोकसीमतः ॥११७॥
गोप्यो गोपा रुरुदुश्च वारयामासुरेव तम् ।
तां तथा वारयामासुः स च सा च परस्परम् ॥११८॥
तथापि न भवेद् भावि मिथ्या कृष्णेहया कृतम् ।
तत्पश्चाद् वै मया तत्र राधिका बोधिता प्रिये ! ॥११९॥
आयास्यति क्षणाऽर्धेन कृत्वा शापस्य पालनम् ।
गोलोकस्य क्षणार्धेन चैकमन्वन्तरं भवेत् ॥१२०॥

ततः स शंखचूडो वै पुनरत्रैव यास्यति ।
त्वं च राधा रमारूपा पद्मा लक्ष्मीः सरस्वती ॥१२१॥
द्वापरान्ते मम पत्नी राधिका संभविष्यसि ।
अहमप्यागमिष्यामि ब्रह्मादीनां द्युवासिनाम् ॥१२२॥
संकल्पपूरणार्थाय नयिष्ये धाम च स्वकम् ।
इति वृत्तं कथितं वो दैत्यशंखाभिधस्य च ॥१२३॥
स कण्ठे कवचं मन्त्रयुतं मे रक्षति ध्रुवम् ।
तेनाऽवध्यो भवतीति संसारविजयी ततः ॥१२४॥
मम शूलं गृहीत्वाऽयं शिवो गच्छतु तं प्रति ।
अहं ब्राह्मणरूपेण याचिष्ये कवचं हि तत् ॥१२५॥
सतीत्वभंगस्तत्पत्न्याः करिष्ये छलतो यदा ।
तदा मृत्युध्रुवस्तस्य भविष्यति न संशयः ॥१२६॥
तदाऽनेन त्रिशूलेन हन्तव्यः शंखचूडकः ।
हते पत्यौ तुलसी सा भविष्यति मम प्रिया ॥१२७॥
इत्याभिधाय शूलं च दत्वा हराय माधवः ।
गृहान्तरेऽविशद् देवा ययुर्नैजालयान् प्रति ॥१२८॥
इति ते कथितं लक्ष्मि ! सुदाम्नश्चरितं यथा ।
राधयाश्च कलहेन दानवत्वं पुराऽभवत् ॥१२९॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां प्रथमे कृतयुगसन्ताने तुलसीविवाहाख्याने तुलस्याः स्वप्ने शंखचूडात्मकस्य सुदाम्नो दर्शनं, शंखचूडस्य बदर्या गमनं, तुलसीशंखचूडयोः संवादोत्तरं गान्धर्वविवाहः, शंखचूडपीडितदेवा वैकुण्ठं जग्मुः, नारायणः सुदामविरजाराधानां परस्परं पूर्वे जातं शापं श्रावयामास, सुदामा शंखचूडो जातः, शंखचूडनाशार्थं हराय त्रिशूलदानमित्यादिनिरूपणनामा पञ्चत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३५ ॥

**श्रीनारायण उवाच—**

शिवस्त्रिशूलमादाय चन्द्रभागानदीतटे ।
वटाऽधस्तान्निवासं स्वं त्वकरोदन्यरूपधृक् ॥ १ ॥
पुष्पदन्तं पार्षदं च दूतं कृत्वा सुरान्तिकम् ।
हरः प्रस्थापयामास गन्धर्वोत्तममादरात् ॥ २ ॥
पार्षदोऽपि ययौ शंखचूडस्य नगरं प्रति ।
पञ्चयोजनविस्तीर्णं दशयोजनमायतम् ॥ ३ ॥
सर्वस्फाटिकपाषाणप्राकारपरिवेष्टितम् ।
सप्तभिः परिखाभिश्च सजलाभिः सुरक्षितम् ॥ ४ ॥
मध्ये प्रजानां सुगमं शंखचूडालयं वरम् ।
ददर्श वलयाकारं चतुःप्राकाररक्षितम् ॥ ५ ॥
राजितं द्वादशद्वारैर्द्वारपालाभिरक्षतैः ।
मणिमुक्तादर्शरत्नस्वर्णमन्दिरशोभितम् ॥ ६ ॥
परितो रक्षितं शश्वद् दानवैः शूरजातिभिः ।
पुष्पदन्तो नवद्वारं प्रविष्याऽभ्यन्तरं गतः ॥ ७ ॥
तदन्तर्द्वारपेनाऽयं दूत इत्यवबोधितः ।
शंखचूडस्तमाशुहावाऽभिज्ञातुमुदन्तकम् ॥ ८ ॥
पुष्पदन्तः शंखचूडालयं ददर्श शोभितम् ।
मध्ये सिंहासनं स्वर्णं परितो रासभूमिकाः ॥ ९ ॥
मणयः खचितास्तासु रत्नपुष्पादिशोभिताः ।
कोटिशो दानवा यत्र भ्रमन्ति शस्त्रधारिणः ॥१०॥
स्वर्णसिंहासने छत्रचामरादिसुशोभिते ।
राजमानं पूर्वमित्रं शंखचूडमुवाच ह ॥११॥
राजेन्द्र ! शिवदूतोऽहं पुष्पदन्ताभिधानकः ।
यदुक्तं शंकरेणैव तद् ब्रवीमि निशामय ॥१२॥
राज्यं देहि च देवानामधिकारान् प्रदेहि च ।
विषयं देहि तेषां च युद्धं वा कुरु निश्चितम् ॥१३॥
गत्वा वक्ष्यामि किं शंभुं तद्भवान् वक्तुमर्हसि ।
प्रहस्य शंखचूडश्च प्राह तं योधनाय वै ॥१४॥
प्रभाते त्वागमिष्यामि गच्छ कथय शंकरम् ।
पुष्पदन्तो वटं गत्वा शंभुं प्राह यथोदितम् ॥१५॥
शिवेन तु स्मृतास्तत्र तदाऽऽजग्मुर्गणेश्वराः ।
स्कन्दो गणेश्वरो वीरभद्रो नन्दी सुभद्रकः ॥१६॥
महाकालो विशालाक्षो बाणः पिंगाक्षकम्पनौ ।
विरूपो विकृतिर्मणिभद्रविकरबाष्कलाः ॥१७॥
कपिलाक्षो दीर्घदंष्ट्रो बलीभद्रः कुटीचरः ।
कालटंकः कालजिह्वस्ताम्राक्षो दुर्जयोऽगमः ॥१८॥
अष्टौ च भैरवा रुद्राश्चैकादशाष्टवासवाः ।
आदित्या द्वादश चापि वह्निश्चन्द्रोऽश्विनौ तथा ॥१९॥
विश्वकर्मा कुबेरश्च यमश्च नलकूबरः ।
वायुर्जयन्तो वरुणो बुधो धर्मश्च मंगलः ॥२०॥
शनिरीशश्च कामश्च तथाऽन्ये गणपुंगवाः ।
उग्रदंष्ट्रा चोग्रचण्डा कोटरी कैटभी तथा ॥२१॥
भद्रकाली तथा चण्डी काली कात्यायनी तथा ।
आययुश्च तदा तत्र नृत्यन्त्यः शंभुसंस्मृताः ॥२२॥
त्रिशूलशक्तिमुद्गरशंखचक्रगदाशरान् ।
वज्रखड्गचापचर्ममुशलपरिघादिकान् ॥२३॥

बिभ्रन्त्यस्ते च बिभ्रन्तः प्रस्तरोपलवर्बुरान् ।
वैष्णवास्त्रं वारुणास्त्रमाग्नेयं नागपाशकम् ॥२४॥
नारायणास्त्रं ब्रह्मास्त्रं गान्धर्वं गारुडं तथा ।
पार्जन्यं वै पाशुपतं जृम्भणार्थं च पार्वतम् ॥२५॥
माहेश्वरास्त्रं वायव्यं दण्डं संमोहनं तथा ।
धारयन्त्योऽथ योगिन्यो डाकिन्यो विकटास्तथा ॥२६॥
भूतप्रेतपिशाचाश्च कूष्माण्डब्रह्मराक्षसाः ।
वेतालाश्चैव यक्षाश्च राक्षसाश्चैव किन्नराः ॥२७॥
शंखचूडादिनाशार्थं समाजग्मुर्हरस्थलीम् ।
स्कन्दो नत्वा हरं तत्र वटाधो निषसाद ह ॥२८॥
शंखचूडोऽपि तुलसीं रात्रौ दूतोदितां कथाम् ।
शंकरं प्रति युद्धाय प्रातर्गन्तव्यमाह ताम् ॥२९॥
तुलसी रणवार्तां तु श्रुत्वा शुष्काननाऽभवत् ।
उवाच दुःखमापन्ना हृदयेन विदूयता ॥३०॥
दक्षांगानि स्फुरन्त्यत्र मम नाथ न शोभनम् ।
दुःस्वप्नं च गतरात्रौ दृष्टं महिषवाहनम् ॥३१॥
भवनं मूलतो नष्टं पतितं जलपूरितम् ।
अग्निस्ततः पुनर्जातोऽवशिष्टेषु वने यथा ॥३२॥
अहं केनापि नीता च वृक्षशाखालयं गता ।
नाथाऽन्तोऽयं तु सम्प्राप्तः सम्पत्तेर्वाऽऽत्मनोऽपि वा ॥३३॥
आन्दोलयन्ति प्राणा मां मनो नष्टमिवाऽस्ति मे ।
इति तुलसीवाक्यानि श्रुत्वा भुक्त्वा निपीय च ॥३४॥
शंखचूडः प्राप्तकालं ह्युवाच तां तु तुलसीम् ।
कालेन योजितं सर्वं प्रिये ! समुपतिष्ठति ॥३५॥
शुभं हर्षं सुखं दुःखं भयं शोकममंगलम् ।
काले वृक्षाः प्रजायन्ते फलन्ति च लिनन्ति च ॥३६॥
तथाऽण्डानि प्रजाश्चापि ब्रह्मादयोऽपि तत्तथा ।
स्रष्टा पाता च संहर्ता कालात्मा कृष्ण एव ह ॥३७॥
भज कृष्णं तुलसि त्वं भावि तद् भवतु ध्रुवम् ।
जन्ममृत्युहरं कृष्णनारायणं भज प्रिये ! ॥३८॥
कालस्य कालमेवैनं कृष्णं तं शरणं व्रज ।
को बन्धुः रक्षकश्चान्यो बन्धुं तं रक्षकं भज ॥३९॥
आवां तु कर्मणा तेन योजितौ स वियोक्ष्यति ।
अज्ञानी कातरः शोके विपत्तौ न तु पण्डितः ॥४०॥
मृत्यौ नारायणं कान्तं प्राप्स्यसि स्मर तुलसि ! ।
तपः कृतं यदर्थं च पुरा बदरिकाश्रमे ॥४१॥
मया त्वं तपसा लब्धा त्वयाऽहं गणशापतः ।
हरेरर्थे तव तपो हरिं प्राप्स्यसि कामिनि ! ॥४२॥
वृन्दावने तु गोविन्दं गोलोके कृष्णमेव तम् ।
लभिष्यसि तथा चाऽहं लभिष्यामि परं प्रभुम् ॥४३॥
दानवीं तु तनुं त्यक्त्वा मुक्तिं यास्यामि शाश्वतीम् ।
तत्र द्रक्ष्यसि मां त्वं च त्वां च द्रक्ष्यामि सन्ततम् ॥४४॥
त्वं हि देहं परित्यज्य दिव्यरूपं विधाय च ।
हरिं द्रक्ष्यसि कान्तं तं मा कान्ते ! कातरा भव ॥४५॥
दम्पती संविचार्यैवं क्रीडाकौतुकमंगलैः ।
सर्वं वै नश्वरं मत्वा निमग्नौ सुखसागरे ॥४६॥
पुलकांकितसर्वांगौ सुप्रीतौ सुरतोत्सुकौ ।
सुखसुप्तौ कथयन्तौ कथां रसभरां तथा ॥४७॥
हसन्तौ भुक्तवन्तौ च ताम्बूलं तु परस्परम् ।
ददन्तौ निद्रया व्याप्तौ रात्रिं निन्यतुरेव तौ ॥४८॥
प्रातरुत्थाय मनसा ध्यात्वा कृष्णं स दानवः ।
स्नात्वा वस्त्राणि धृत्वा च कृत्वा तिलकचन्द्रकौ ॥४९॥
देवपूजां पितृतृप्तिं गुरोर्वन्दनमित्यपि ।
कृत्वा गोपूजनं लाजादधिमध्वाज्यदर्शनम् ॥५०॥
रत्नाम्बरमणिस्वर्णाद्यं ददौ स द्विजातये ।
ददौ विप्राय शकुने मुक्तामाणिक्यहीरकान् ॥५१॥
गजाश्वधेनूः प्रददौ यात्रामंगलहेतवे ।
कोशक्षेत्रपत्तनानि ब्राह्मणेभ्यो ददौ मुदा ॥५२॥
पुत्रं कृत्वा च राजेन्द्रं सुचन्द्रं दानवेषु च ।
पुत्रे समर्प्य भार्यां च स्वराज्यं सर्वसम्पदम् ॥५३॥
स्वयं भुक्त्वा तथा पीत्वा प्रसम्मील्य सुतादिकान् ।
वर्म धृत्वाऽस्त्रशस्त्राणि धनुष्पाणिर्बभूव ह ॥५४॥
आहूय तत्र सैन्यानि समसज्जोऽभवत्तदा ।
अश्वानां लक्षमेकं द्वे पञ्चलक्षं च हस्तिनाम् ॥५५॥
रथानामयुतं धानुष्काणां कोटित्रयं तथा ।
चर्मिणां शूलिनां कोटित्रयं प्रत्येकमित्यपि ॥५६॥
दैत्यानां दानवानां च पत्तीनां गणना तु न ।
यत्र सेनापतिः सर्वशस्त्राऽस्त्रमन्त्रमायिकः ॥५७॥
वायुयानवारियानपातालयानशारदः ।
त्रिलक्षाणां सैनिकानामक्षौहिणीश्च तत्र वै ॥५८॥
त्रिंशत्कृत्वा श्रेष्ठभटमूर्धन्यानां महासुरः ।
बहिर्बभूवशिबिरान्मनसा श्रीहरिं स्मरन् ॥५९॥
शंकरस्यापि सैन्यानि पञ्चविंशतिकोटयः ।
सर्वयोद्धृप्रमुख्यानामभवँस्तत्र पद्मजे ॥६०॥
अन्येषां तु गणना वै नास्ति ते शतकोटयः ।
शंकरस्याऽभवत् सेनापतिः स्कन्दो महाबलः ॥६१॥

शंखचूडस्य तु सेनापतिः राहुस्तदाऽभवत् ।
तयोरवादयँस्तत्र रणे वाद्यानि वै मुहुः ॥६२॥
पुष्पभद्रानदीतीरे शंखचूडो विमानगः ।
ददर्श वटमूले तं शंकरं योगमास्थितम् ॥६३॥
त्रिशूलपट्टिशधरं व्याघ्रचर्माम्बरं वरम् ।
तप्तकांचनवर्णाभं जटाजालसुशोभितम् ॥६४॥
त्रिनेत्रं पञ्चवक्त्रं च नागयज्ञोपवीतकम् ।
भक्तमृत्युहरं शान्तं दृष्ट्वा मृत्युपतिं हरम् ॥६५॥
अवरुह्य विमानात्तु भक्त्या ननाम शंकरम् ।
महादेवश्च कृपया तं वै दत्वा शुभाशिषः ॥६६॥
उवाच ब्रह्मणः पुत्रो मरीचिस्तस्य कश्यपः ।
तस्मै दक्षो ददौ कन्यास्त्रयोदश हि धर्मतः ॥६७॥
अदितिर्दितिर्दनुः कालाऽरिष्टा सुरसा तथा ।
सुरभिर्विनता चापि ताम्रा क्रोधवशा इरा ॥६८॥
कद्रूर्मुनिश्च तासां वै प्रजा जाता विजातयः ।
अदितेर्द्वादशाऽऽदित्या जाताः प्रथमसूनवः ॥६९॥
धाताऽर्यमा च मित्रश्च वरुणोंऽशो भगस्तथा ।
इन्द्रो विवस्वान् पूषा च पर्जन्यो दशमः स्मृतः ॥७०॥
ततस्त्वष्टा ततो विष्णुरेते कश्यपपुत्रकाः ।
दितेः पुत्रद्वयं हिरण्यकशिपुः सहाऽग्रजः ॥७१॥
हिरण्याऽक्षस्त्वपरश्चेत्युभौ पुत्री च संहिका ।
राहोः सा जननी देवी विप्रचित्तेः परिग्रहः ॥७२॥
हिरण्यकशिपोः पुत्राश्चत्वारश्च महाबलाः ।
प्रह्लादश्चानुह्लादश्च संह्लादो ह्लाद इत्यथ ॥७३॥
हिरण्याक्षस्य पुत्राश्च षड् वै सर्वे महाबलाः ।
उत्करः शकुनिश्चैव कालनाभस्तथाऽपरः ॥७४॥
महानाभश्च विक्रान्तो भूतसन्तापनस्तथा ।
दनोः पुत्राः शतं विप्रचितिमुख्यास्तु दानवाः ॥७५॥
द्विमूर्धा शंकुकर्णश्च तथा शंकुनिरामयः ।
शंकुनासो महाविश्वो गवेष्ठिर्दुन्दुभिस्तथा ॥७६॥
अजामुखोऽथ भगद्वत् शिलो वामनसस्तथा ।
मरीचिरक्षकश्चापि महागार्ग्योऽङ्गिरावृतः ॥७७॥
विक्षोभ्यश्च सुकेतुश्च सुवीर्यः सुहृदस्तथा ।
इन्द्रजिद् विश्वजिच्चापि तथा सुरविमर्दनः ॥७८॥
एकचक्रः सुबाहुश्च तारकश्च महाबलः ।
वैश्वानरः पुलोमा च प्रवीणोऽथ महाशिराः ॥७९॥
स्वर्भानुर्वृषपर्वा च मुण्डकश्च महासुरः ।
धृतराष्ट्रश्च सूर्यश्च चन्द्र इन्द्रश्च तापनः ॥८०॥
सूक्ष्मश्चापि निचन्द्रश्च ऊर्णनाभो महागिरिः ।
असिलोमा सुकेशश्च सदश्च बलकस्तथा ॥८१॥
व्योममूर्धा कुंभनाभो महोदरो महाहनुः ।
प्रमोदाहश्च कुपथो हयग्रीवश्च वीर्यवान् ॥८२॥
असुरश्च विरूपाक्षः सुपथोऽथ महासुरः ।
अजो हिरण्मयश्चापि शतमायुश्च शम्बरः ॥८३॥
शरभः शलभश्चापि प्रधाना दनुसूनवः ।
एते चान्येऽपि युद्धे वै दानवास्ते ह्युपस्थिताः ॥८४॥
कालायाः कालरूपाश्चाऽभवन् पुत्राः क्षणादयः ।
अरिष्टाया आरिष्टेया विघ्नाः पुत्राः सहस्रशः ॥८५॥
सुरसाया नागसर्पा वासुकितक्षकादयः ।
सुरभिः कश्यपाज्जज्ञे रुद्रानेकादशात्मजान् ॥८६॥
अंगारकं तथा सर्पं निर्ऋतिं सदसस्पतिम् ।
अजैकपादहिर्बुध्नावूर्ध्वकेतुं ज्वरं तथा ॥८७॥
भुवनं चेश्वरं मृत्युं कपालं चैव विश्रुतम् ।
विनतायास्तु पुत्रौ द्वावरुणो गरुडश्च ह ॥८८॥
षड्त्रिंशत् तु स्वसारश्च यवीयस्यस्तु ताः स्मृताः ।
ताम्रायास्तु शुकी क्रौंची धृतराष्ट्री च पक्षिणी ॥८९॥
श्येनी भासी तथा चान्या पक्षिण्यो ह्यभवन् प्रजाः ।
अथ क्रोधवशायास्तु कन्यका द्वादश स्मृताः ॥९०॥
मृगी च मृगमन्दा च हरिभद्रा इरावती ।
भूता च कपिशा दंष्ट्रा निशा तिर्या तथाऽपरा ॥९१॥
श्वेता चापि स्वरा चापि सुरसा चेति विश्रुताः ।
अथ इरा प्रजज्ञे वै तिस्रः कन्याः सुलोचनाः ॥९२॥
लतां वल्लीं विरुधां च तदपत्यानि भूरिशः ।
कद्रूर्नागसहस्रं वै काद्रवेयाश्च ते स्मृताः ॥९३॥
अथ मुनेस्तु मौनेया गन्धर्वाऽप्सरसश्च ते ।
एतेषां वंशविस्तारो कोटिसंख्याधिकोऽभवत् ॥९४॥
अदितिर्धर्मशीलाऽस्ति बलशीला दितिः स्मृता ।
तपःशीला तु सुरभिर्मायाशीला दनुः स्मृता ॥९५॥
मुनिश्च गन्धशीला वै गतिशीला त्वरिष्टिका ।
क्षुधाशीला तु कालाख्या कद्रूः क्रूरस्वभाविनी ॥९६॥
इराऽनुग्रहशीला च अरिष्टा क्रोधशालिनी ।
वाहशीला तु विनता ताम्रा वै पाशशालिनी ॥९७॥
धर्मतः शीलतो बुद्धया क्षमया बलरूपतः ।
मातृतुल्याश्चाभिजाताः कश्यपस्याऽऽत्मजाः प्रजाः ॥९८॥
देवताऽसुरगन्धर्वा यक्षराक्षसपन्नगाः ।
पिशाचाः पशवश्चापि मृगाः पतगवीरुधः ॥९९॥

